# ॥ श्रीहैमशब्दानुशासनम् (बृहद्वृत्तिः) लघुन्याससहितम् ॥

॥ अर्हं ॥ ॥ प्रणम्य परमात्मानं श्रेयः शब्दानुशासनम् ॥ आचार्यहेमचन्द्रेण स्मृत्वा किञ्चित्प्रकाश्यते ॥ १ ॥ अर्हं । १ । १ । १ ॥ अर्हमित्येतदक्ष- ॥ कव-

अर्हं ॥ प्रणम्य केवलालोकावलोकितजगत्त्रयम् ॥ जिनेशं श्रीसिद्धहेमचन्द्रशब्दानुशासने ॥ १ ॥ शब्दशिक्षाविदां नव्योद्गचन्द्रोपदेशत ॥ न्यासतः कतिचिद्दुर्गपदव्याख्याभिधीयते ॥ २ ॥ इह नि शेषशेमुषीसमुन्मेषनिर्मितानेकविद्वज्जनमनश्चमत्कारकारिशारनिकरविस्मापितविशदप्रज्ञाधिमहर्धिकानेकसूरिः निष्प्रतिमप्रतिभाप्रभारापहस्तितत्रिदशसूरिः श्रीकुमारपालक्ष्मापालप्रतिबोधाभिधाननिखिलक्षोणिमण्डलाभयप्रदानप्रभृतिसंख्यातिक्रान्तप्रभावनानिर्माणस्मृतिगोचरसञ्चरिष्णूकृतचिरतनवैरस्वाम्यादिप्रवरसूरिः सुगृहीतनामधेयः श्रीहेमचन्द्रसूरिर्निखिलजाड्यग्रस्तं समस्तमपि विश्वमवलोक्य तदनुकम्पापरीतचेता शब्दानुशासनं कर्तुकामः प्रथमं मङ्गलार्थमभिधेयादिप्रतिपादनार्थं चेष्टदेवतानमस्कारमाह—प्रणम्येति ॥ ननु प्रयोगोऽयं भावे कर्मणि वा । उच्यते । भावे एव । तर्हि कथं परमात्मानमिति कर्म । उच्यते । 'सकर्मकाणामुत्पन्नस्याविर्भावविवक्षया ॥ अपाकरोति कर्मार्थं स्वभावात्तु पुनः कृतः' ॥ १ ॥ नन्वेत्यनेनापि सिध्यति किं प्रकारेण । प्रकारो मानसिक गोतगति उपहास्यनमस्कारं च निराकरोति । 'नमस्य तत्सरसि प्रेम वण्टारासितसोदरम् । क्रमक्रशिमानि सारमारम्भगुरुडम्बरम् ॥ १ ॥—इत्यादिवत् ॥ परमेति । परमात्मानमित्यत्र 'कर्मणि कृतः' इति षष्ठी प्राप्नोति परं 'तृन्नुदन्त'-इति निषेधः ॥—श्रेय इति 'प्रशस्यस्य श्र' इति श्रादेशविधानबलात् क्रियाशब्दत्वेनागुणाङ्गादपि प्रशस्यशब्दादीयस् । 'नैकस्वरस्य' इति निषेधात् 'अन्त्यस्वरादेः' इति नान्त्यस्वरादिलोपः । 'अवर्णेवर्णस्य' इत्यपि न प्रवर्तते । अन्त्यस्वरादेरनेकस्वरस्य' इत्येकयोगेनैव सिद्धे पृथग्योगकरणमस्यापि बाधनार्थमिति ॥—शब्दानुशासनमिति । अत्र कथं षष्ठीसमासस्तृती- ...पमिति निषेधात् । सत्यम् । प्रत्यासत्तिन्यायेन यस्य कृत्प्रत्ययस्यापेक्षया षष्ठी यदि तदपेक्षयैव तृतीया स्यात् । अत्र तु प्रकाश्यते इत्यस्यापेक्षया तृतीया अनुशासनं इत्यपेक्षया न षष्ठीति न सम... ॥—आचार्येति । आचर्यते सेव्यते विनयार्थमिति घ्यण् १ । आचारे साधु । 'तत्र साधौ' यः २ । आचारान् यातीति, कनिञ् ३ । आचारानाचष्टे णिज् बहुलम्'—इत्यनेन णिच् । आ...चारे...ति 'शिक्यास्याढ्य'-इत्यनेन निपात्यते ४ । आचारान् गृह्णाति ग्राहयति वा 'कर्मणोऽण्' पृषोदरादित्वात् साधुः ५ ॥ किमपि चिनोति क्विप्, किम सर्वविभक्त्यन्तात् 'चित्चनौ' इति वा- किञ्चिदिति । अखण्डमव्ययं वा ॥ मौलोऽर्थः प्रतीत एव ॥ अथ पूर्वार्धसानूत्या व्याख्यायते । परम् आत्मानं च प्रणम्य प्रह्वीकृत्य सावधानीकृत्येति योगः । किंविशिष्टं परम्, श्रेय...ब्दाननुशासयति श्रेय शब्दानुशासनस्तम् । किंविशिष्टं चात्मानम्, श्रेय शब्दाननुशास्ति श्रेय शब्दानुशासनस्तम् । उभयत्र 'रम्यादिभ्य.' इत्यनट् ॥ पूर्वं तावद्बौद्धोक्ता अतिशया कथ्यन्ते । प...त्मानामित्यनेन स्वार्थसंपत्ति स्वार्थसंपत्त्युपायलक्षणश्च द्वौ, श्रेय शब्दानुशासनमित्यनेन परार्थसंपत्ति परार्थसंपत्त्युपायलक्षणश्च द्वौ लभ्येते । एवं सर्वदर्शनानुयायित्वेनातिशया भावनीया । अत्र च नमस्कारे चतुस्त्रिंशदतिशयसम्राडेकातिशयचतुष्टयमध्ये क केन पदेनोच्यते सूच्यते वा इत्यभिधीयते । परमात्मानमित्यनेन पूजातिशयः । अत एव 'सन्महत्परम'-इत्यनेन पूजाया समास । द्वितीयपादेन वचनातिशय ...याश्च ३ एकशेषे श्रेयांसः, ते च ते शब्दाश्चताननुशास्तीति व्युत्पत्तेर्वचनातिशय । वचनातिशयश्च न ज्ञानातिशयं विनेति वचनातिशयेन ज्ञानातिशय आक्षिप्यते । ज्ञानातिशयश्च नापायापगमा...शयं विनेति तेनापायापगमातिशयाक्षेप । अपायभूता हि रागादयस्तेषामपगम स एवातिशय इति ॥—अर्हमिति । अर्हति पूजामित्यर्हं ...पृषोदरादित्वात्ऽनुनासिक-

परमेश्वरस्य परमेष्ठिनो वाचकं सिद्धचक्रस्यादिबीजं सकलागमोपनिषद्भूतमशेषविघ्नविघातनिघ्नमखिलदृष्टादृष्टफलसंकल्पकल्पद्रुमोपममाशास्त्राध्ययनाध्यापनावधि प्रणिधेयम् । प्रणिधानं च 'अनेनात्मनः सर्वतः संभेदस्तदभिधेयेन चाभेदः' । वयमपि चैतच्छास्त्रारम्भे प्रणिदध्महेऽयमेव हि तात्त्विको नमस्कार इति ॥ १ ॥ सिद्धिः स्याद्वादात् । १ । १ । २ ॥ स्यादित्यव्ययमनेकान्तद्योतकम् । ततः स्याद्वादोऽनेकान्तवादः नित्यानित्याद्यनेकधर्मशबलैकवस्त्वभ्युपगम इति यावत् । ततः सिद्धिर्नि-

अर्हमिति मान्तोऽप्यस्ति निपात ॥ ननु अर्हमिति अव्यय स्वरादौ चादौ च न दृष्टम् तत्कथमव्ययम् । सत्यम् । 'इयन्त इति सख्यान निपाताना न विद्यते । प्रयोजनवशादेते निपात्यन्ते पदे पदे' । १ ॥ ननु अर्हमिति वर्णसमुदायत्वात्कथमक्षरम् । सत्यम् । न क्षरति न चलति स्वस्मात्स्वरूपादिति अक्षरम् । तच्च ध्येय परमब्रह्मेति यावत् ॥ व्याख्यान त्रिधा स्यात् । स्वरूपाख्यानम् अभिधा तात्पर्यं चेति । अक्षरमिति स्वरूपाख्यानम् । परमेष्ठिनो वाचकमित्यभिधा । सिद्धचक्रस्यादिबीजमिति तात्पर्यव्याख्यानमिति ॥ परमेष्ठिन पञ्च तत शेषचतुष्टयव्यवच्छेदायाह—परमेश्वरस्येति । चतुस्त्रिंशदतिशयरूपपरमैश्वर्यभाजो जिनस्येत्यर्थ ॥ ननु यद्यपि परमेष्ठीति सामान्य पद तथापि अर्हमिति भणनादर्हन्नेव लभ्यते कि परमेश्वरस्येति पदेन । सत्यम् । 'देवताना गुरूणा च नाम नोपपद विना ॥ उच्चरेन्नैव जायाया कथ चिनात्मनस्तथा ॥ १ ॥ इति—सिद्धेति । सिद्धा विद्यासिद्धादयस्तेषा चक्रमिव चक्र तस्य पञ्च बीजानि तेषु चेदमादिबीजम् ॥—सकलेति । सकला समस्ता ये आगमा लौकिका लोकोत्तराश्च तेषामुपनिषद्भूत रहस्यभूतम् ॥ ननु अर्हमित्यस्यार्हद्वाचकत्वे सति कथ लौकिकागमानामुपनिषद्भूतमिदमिति । सत्यम् । सर्वपार्षदत्वाच्छब्दानुशासनस्य समग्रदर्शनानुयायी नमस्कारो वाच्य, अयं चार्हमपि तथा । तथाहि—'अकारेणोच्यते विष्णू रेफे ब्रह्मा व्यवस्थित' ॥ हकारेण हर' प्रोक्तस्तदन्ते परम पदम् ' १ इति श्लोकेनार्हंशब्दस्य विष्णुप्रभृतिदेवतात्रयाभिधायित्वेन लौकिकागमेष्वपि अर्हमिति पदमुपनिषद्भूतमित्यावेदित भवति ॥ तदन्त इति तुरीयपादस्यायमर्थ, तस्यार्हंशब्दस्यान्त उपरितने भागे परम पद सिद्धिशिलारूप तदाकारत्वादनुनासिकरूपा कलापि परम पदमित्युक्तम् ॥—निघ्नमिति । नियमेन हन्यते ज्ञायते पारतन्त्र्येणेति 'स्थादिभ्य क' । बाहुलकान्नपुसकत्वम् ॥—दृष्टेति । दृष्ट राज्यादि । अदृष्ट स्वर्गादि ॥—आशास्त्रेति । आङभिविधौ स च शास्त्रेण सह सबध्यते । अवधिशब्दस्तु मर्यादायाम् । स चाध्ययनाध्यापनाभ्याम् । ततोऽयमर्थ । शास्त्रमभिव्याप्य ये अध्ययनाध्यापने ते मर्यादीकृत्य प्रणिधेयमिदमित्यर्थः ॥ प्रणिधानं चतुर्धा पदस्थ पिण्डस्थ रूपस्थं रूपातीत चेति । पदस्थमर्हंशब्दस्थस्य, पिण्डस्थ शरीरस्थस्य, रूपस्थ प्रतिमारूपस्य, रूपातीत योगिगम्यमर्हतो ध्यानमिति । एष्वाद्ये द्वे शास्त्रारम्भे संभवतो नोत्तरे द्वे ॥ अनेनात्मन सर्वत सभेद इत्युक्ते पदस्थम् । तदभिधेयेनेत्यादिना पिण्डस्थमिति ॥—वयमपीति । विशिष्टप्रणिधेयप्रणिधानादिगुणप्रकर्षादात्मन्युत्कर्षाधानात् गुणबहुत्वेनात्मनोऽपि तदभिन्नतया बहुत्वाद्वयमिति बहुवचनेन निर्देश ॥—तात्त्विक इति । तत्त्वमेव 'विनयादिभ्य इकण्' 'तत्त्व प्रयोजनमस्येति वा' ॥ लोके प्रसिद्धसाधुत्वानां शब्दानामन्वाख्यानार्थमिद शब्दानुशासनमारभ्यते । अन्वाख्यान च शब्दाना प्रकृत्यादिविभागेन सामान्यविशेषवता लक्षणेन व्युत्पादनम् । तच्च शब्दार्थसबन्धमन्तरेण न सभवति । शब्दार्थसबन्धासिद्धिश्च स्याद्वादाधीना इत्यत आह—सिद्धिः स्याद्वादात् ॥ दशधा सूत्राणि । सज्ञा १ परिभाषा २ (अ)धिकार ३ विधि ४ प्रतिषेध ५ नियम ६ विकल्प ७ समुच्चयाऽ ८ (अ)तिदेशाऽ ९ (अ)नुवाद १० रूपाणि । तत्र 'औदन्ता स्वरा' इति १ । 'प्रत्यय प्रकृत्यादे' इति २ । 'घुटि' इति ३ । 'नाम्यन्तस्थाकवर्गात्–' इति ४ । 'न स्त मत्वर्थे' इति ५ । 'नाम सिदय्व्यञ्जने' इति ६ । 'सौ नवेतो' इति ७ । 'शसोऽता' इति ८ । 'ईदितो वा' इति ९ । तयो समूहवच्च बहुषु' १० इत्यादीनि सूत्राणि प्रत्येक ज्ञातव्यानि । एतेषा मध्ये इदमधिकारसूत्रमा शास्त्रपरिसे ॥—स्यादित्यव्ययमिति । विभक्त्यन्ताभत्वेन स्वरादित्वाद्वाऽनेकान्त द्योतयति वाचकत्वनेत्यनेकान्तद्योतकम् ॥—अनेकान्तवाद इति । अमति गच्छति धर्मिणमिति 'दम्यमि'–धर्म । न एकोऽनेकः । अनेकोऽन्तोऽस्यासावनेकान्त । तस्य वदन याथातथ्येन प्रतिपादनम् तच्चाभ्युपगतस्यैव भवतीति ॥—नित्यानित्यादीति । आदिशब्दात्सदसदात्मकत्वसा–

ष्पत्तिर्ज्ञप्तिर्वा प्रकृतानां शब्दानां वेदितव्या । एकस्यैव हि ह्रस्वदीर्घादिविधयोऽनेककारकसंनिपातः सामानाधिकरण्यं विशेषणविशेष्यभावादयश्च नोपपद्यन्ते । सर्वपार्षदत्वाच्च शब्दानुशासनस्य सकलदर्शनसमूहात्मकस्याद्वादसमाश्रयणमतिरमणीयम् । यदवोचाम स्तुतिषु—अन्योन्यपक्षप्रतिपक्षभावाद्यथा परे मत्सरिणः प्रवादाः । नयानशेषानविशेषमिच्छन् न पक्षपाती समयस्तथा ते ॥

भिलाप्यानभिलाप्यत्वग्रह' ॥ 'नेर्ध्रुवे' इति त्यचि, नित्यमुभयाद्यन्तापरिच्छिन्नसत्ताकं वस्तु । तद्विपरीतमनित्यम् ॥ आदीयते गृह्यतेऽर्थोऽस्मादिति 'उपसर्गाद् दः किः' इति कौ आदि. । ध धर्मिणो धर्मिरूपतामिति धर्मा वस्तुपर्याया. । ते च सहभुवः सामान्यादयः क्रमभुवश्च नवपुराणादय' पर्याया. । धर्ममन्तरेण धर्मिण' स्वरूपनाशात् ॥ शाम्यति विरुद्धैर्धर्मैर्युगपत्परिणतिमुपयाति 'शमेर्व च' इत्यले शवलम् ॥ एत्यभेदं गच्छति 'भीणूशलि'–इति के एकम् ॥ वसन्ति सामान्यविशेषरूपा धर्मा अस्मिन्निति 'वसेर्णिद्वा' इति तुनि वस्तु । नित्यानित्यादिभिरनेकधर्मैः शवलं यदेकं वस्तु तस्याऽभ्युपगम. प्रमाणाविरुद्धोऽङ्गीकार ॥ तत एव शब्दानां सिद्धिर्भवति नान्यथेत्यत आह—**एकस्यैवेति** । तथाहि—यस्यैव वर्णस्य ह्रस्वत्वं विधीयते तस्यैव दीर्घत्वादि । तस्य च सर्वात्मना नित्यत्वे पूर्वधर्मनिवृत्तिपूर्वकस्य ह्रस्वादिविधेरसंभवः । एवमनित्यत्वेऽपि जन्मानन्तरमेव विनाशात् कस्य ह्रस्वादिविधिरिति वर्णरूपसामान्यात्मना नित्यो, ह्रस्वादिधर्मात्मना त्वनित्य इति ॥ तथा द्रव्याणां स्वपराश्रयसमवेतक्रियानिर्वर्तकं सामर्थ्यं कारकम् । तच्च कर्त्राद्यनेकप्रकारमेकस्याप्युपलभ्यते । यथा, पीयमानं मधु मदयति, वृक्षमारुह्य तत. फलान्यवचिनोति, विषयेभ्यो विभ्यदनात्मज्ञस्तेभ्य एवात्मानं प्रयच्छंस्तैरेव बन्धमाप्नोति इत्यादि । तच्च कथमेकस्य सर्वथा नित्यत्वे एकरूपां वृत्तिमवलम्बमानस्याऽवस्थान्तराभिव्यक्तरूपोपालम्भाभावाद्घटते इति साध्यसाधनरूपकारकव्यवहारविलोप' ॥ अनित्यत्वेऽपि न घटते । तथाहि–स्वातन्त्र्यं कर्तृत्वम् । तच्च 'इदं फलमियं क्रिया करणमेतदेष क्रमोऽव्ययोऽयमनुपङ्गजं फलमिदं दशेयं मम ॥ अयं सुहृदयं द्विषन्प्रकृतदेशकालाविमाविति प्रतिवितर्कयन्प्रयतते बुधो नेतरः' १ इत्येवमात्मकपरिदृष्टसामर्थ्यं कारकप्रयोक्तृत्वलक्षणम् । तदपि नानित्यस्य क्षणमात्रावस्थायित्वेनोपजननानन्तरमेव विनष्टस्य युज्यते किं पुनः कारकसंनिपात इति नित्यानित्यात्मकः स्याद्वादोऽङ्गीकर्तव्यः ॥ तथा तमन्तरेण सामानाधिकरण्यं विशेषणविशेष्यभावोऽपि नोपपद्यते तथाहि–भिन्नप्रवृत्तिनिमित्तयो शब्दयोरेकत्रार्थे वृत्तिः सामानाधिकरण्यम् । तयोश्चात्यन्तभेदे घटपटयोरिव नैकत्र वृत्ति. । नाप्यत्यन्ताभेदे, भेदनिबन्धनत्वात्तस्य । नहि भवति नीलं नीलमिति ॥ किं च नीलशब्दादेव तदर्थप्रतिपत्तौ उत्पलशब्दानर्थक्यप्रसङ्गः ॥ तथैकं वस्तु सदेवेति नियम्यमाने विशेषणविशेष्यभावाभाव' । विशेषणाद्विशेष्य कथंचिदर्थान्तरभूतमवगन्तव्यम् । अस्तित्वं चेह विशेषणम् । तस्य विशेष्यं वस्तु । तदेव वा स्यादन्यदेव वा । न तावत्तदेव । नहि तदेव तस्य विशेषणं भवितुमर्हति । असति च विशेष्ये विशेषणत्वमपि न स्यात् । विशेष्य विशिष्यते येन तद्विशेषणमिति व्युत्पत्तेः । अथान्यत्तर्हि अन्यत्वाविशेषात्सर्वं सर्वस्य विशेषणं स्यात् । समवायात् प्रतिनियतो विशेषणविशेष्यभाव इति चेत्, न । सोऽपिअविष्वग्भावलक्षण एवैष्टव्य । रूपान्तरपरिकल्पनायामनवस्थाप्रसङ्गः । अतो नासावत्यन्त भेदेऽभेदे वा सभवतीति भेदाभेदलक्षण. स्याद्वादोऽकामेनाप्यभ्युपगन्तव्य इति ॥ आदिग्रहणात्स्थान्यादेशनिमित्तनिमित्तिप्रकृतिविकारभावादिग्रह ॥ किं च, शब्दानुशासनमिदम् । शब्दं च प्रति विप्रतिपद्यन्ते नित्य इत्येके, अनित्य इत्यपरे, नित्यानित्य इति चान्ये । तत्र नित्यत्वानित्यत्वयोरन्यतरपक्षपरिग्रहे सर्वोपादेयत्वविरह. स्यादिति आह—**सर्वपार्षदत्वाच्चेति** । स्वेन रूपेण व्यवस्थितं वस्तुतत्त्वं पृणाति पालयतीति 'प्र. सद्' इति सदि पर्षद् । तत्र साधुः 'पर्षदो ण्यणौ' इति णे पार्षदं साधारणमित्यर्थ' । अथवा, पार्षदः परिचारक उच्यते । स च पर्षत्साधारण इत्यर्थ. । पार्षदत्वेन च साधारणत्वं लक्ष्यते । तेन सर्वेषां पार्षदं सर्वसाधारणमित्यर्थ. । दृश्यते तत्त्वमेकदेशेनैभिरिति, दर्शनानि नया । समस्तदर्शनानां य. समुदाय' तत्साधारणस्याद्वादस्याभ्युपगमोऽतितरां निर्दोष इत्यर्थ' ॥—**अतिरमणीयमिति** । णिगन्तात् 'प्रवचनीयादय.' इत्यनीय. ॥ एतदेव स्वोक्तेन द्रढयति—**अन्योन्येत्यादि** । साध्यधर्मवैशिष्ट्येन पच्यते व्यक्तीक्रियते हेत्वादिभिरिति 'मावावदि'–इति से पक्ष साध्यधर्मविशिष्टो धर्मी । शब्दोऽनित्य इत्यादि प्रतिकूल. पक्षः प्रतिपक्षः । अन्योन्यं पक्षप्रतिपक्षास्तेषां भाव', एकस्मिन्धर्मिणि परस्परविरुद्धधर्मोपन्यास इत्यर्थः । तत. ॥—**यथेति** दृष्टान्तोपन्यासे ॥—**परे** भवच्छासनादन्ये ॥ सातिशयो मत्सरोऽसहनतास्त्येषामतिशायने मत्वर्थीये—**मत्सरिणः** ॥

प्रवादाः ॥ नयानशेषानविशेषमिच्छन्न पक्षपाती समयस्तथा ते ॥ १ ॥ स्तुतिकारोऽप्याह 'नयास्तव स्यात्पदलाञ्छना इमे रसोपविद्धा इव लोहधातवः ॥ भवन्त्यभिप्रेतफला यतस्ततो भवन्तमार्याः प्रणता हितैषिणः' ॥ १ ॥ इति। अथवा, वादाद्विविक्तशब्दप्रयोगात्सिद्धिः सम्यग्ज्ञानं तद्द्वारेण च निःश्रेयसं स्याद्भवेदिति शब्दानुशासनमिदमारभ्यत इत्यभिधेयप्रयोजनपरतयापीदं व्याख्येयम् ॥ २ ॥ लोकात् । १ । १ । ३ ॥ उक्तातिरिक्तानां क्रियागुणद्रव्यजातिकाललिङ्गस्वाङ्गसंख्यापरिमाणापत्यवीप्सालुगवर्णादीनां संज्ञानां परान्नित्यं नित्यादन्तरङ्गमन्तरङ्गाच्चानवकाशं बलीय इत्यादीनां न्यायानां च लोकाद्वैयाकरणसमयविदः प्रामाणिकादेश्च शास्त्रप्रवृत्तये

प्रकर्षेणोद्यते प्रतिपाद्यते स्वाभ्युपगतोऽर्थो यैरिति 'व्यञ्जनाद् घञ्' इति घञि—प्रवादाः प्रवचनानि ॥ यथा परस्परविरोधात्परे प्रवादा मत्सरिणो न तथा त्वत्समय इति ॥ अत्र विशेषणद्वारेण हेतुमाह—पक्षपातीति । यतो रागनिमित्तवस्तुस्वीकाररूप पक्ष पातयति नाशयतीत्येवंशीलो रागस्य जीवनाश नष्टत्वात् ॥ अत्रैव हेतुमाह—नयानशेषानविशेषमिच्छन्निति । नयान् नैगमादीन् समरतानाविशेषमभेद यथा भवत्येवमङ्गीकुर्वन् । अय भाव. । नयाना समत्वेन दर्शनाद्रागमयस्य पक्षस्य पातितत्वात्समयस्य मत्सराभाव., परेषा तु विपर्ययात् तत्सद्भाव इति ॥ सम्यगेति गच्छति शब्दोऽर्थमनेनेति 'पुन्नाम्नि' इति घे—समयः सङ्केत । यद्वा, सम्यगयन्ति गच्छन्ति जीवादय पदार्था. स्वस्मिन्रूपे प्रतिष्ठा प्राप्नुवन्त्यस्मिन्निति समय आगमः । मत्सरित्वस्य विधेयत्वात्तेनैव नञ्सबन्धात् पक्षपातिशब्देन त्वसबन्धात् प्रक्रमभेदाभाव ॥ परोक्तेनापि द्रढयति—नया इत्यादि । नीयन्ते प्राप्यन्ते जीवादयोऽर्था एकदेशविशिष्टा एभिरिति नया निरवधारणा अभिप्रायविशेषा । सावधारणस्य दुर्नयत्वात् । समस्तार्थप्राप्तेस्तु प्रमाणाधीनत्वात् । ते च नैगमादय सप्त तव स्यात्पदेन चिह्निता अभिप्रेत फलन्ति, लिहाद्यच् । अभिप्रेत फल येभ्य इति बहुव्रीहिर्वा ॥—प्रणता इति । प्रणन्तुमारब्धवन्त. ॥—हितैषिण इति । विशेषणद्वारेण हेतु, हितैषित्वादित्यर्थ ॥ आराद्दूरान्तिकयो. । सम्यग्ज्ञानाद्यात्मकमोक्षमार्गस्यारात्समीप याता प्राप्ता', दूर वा पापक्रियाभ्यो याता इत्यार्याः ॥ ननु अस्तु युक्तियुक्त स्याद्वादस्तदधीनत्वाच्छब्दसिद्धे, तथापि अनभिहिताभिधेयप्रयोजनत्वात्कथमिद प्रेक्षावत्प्रवृत्तिविषयमित्याशङ्क्याह अथवेति । विविक्तानामसाधुत्वविमुक्ताना शब्दाना प्रयुक्ते सम्यग्ज्ञानरूपा सिद्धिः । साधुशब्दाश्चात्राभिधेया ॥ यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनमिति सम्यग्ज्ञानमनन्तर प्रयोजन तद्द्वारेण तु नि.श्रेयस परं परमिति । यत., 'द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् । शब्दब्रह्मणि निष्णात परं ब्रह्माधिगच्छति ॥ १ ॥' 'व्याकरणात्पदसिद्धि. पदसिद्धेरर्थनिर्णयो भवति । अर्थात्तत्त्वज्ञानं तत्त्वज्ञानात्पर श्रेय.' ॥ १ ॥ इति ॥ सबन्धस्त्वभिधेयप्रयोजनयो साध्यसाधनभाव. । शब्दानुशासनाभिधेययोस्तु अभिधानाभिधेयरूप । स च तयोरेवान्तर्भूतत्वात्पृथग्नोपदर्शित इति ॥ २ ॥—लोकात् ॥ लोक्यते तत्त्वनिश्चयाय, घञ् । लोकते सम्यक्पदार्थानित्याचि वा लोक ॥—उक्तेति । उक्ताभ्य स्वरादिसज्ञाभ्योऽतिरिक्ता अधिकारस्तासाम् ॥ साध्यरूपा पूर्वापरीभूतावयवा क्रिया ॥ विशेषण गुणः । 'सत्त्वे निविशतेऽपैति—' इत्यादिलक्षणो वा ॥ विशेष्य द्रव्यम् ॥ 'आकृतिग्रहणा' इत्यादिरूपा जातिः ॥ त्रुट्यादिलक्षण कालः ॥ लिङ्गं पुस्त्रीनपुंसकरूपम् ॥ 'अविकारोऽद्रवम्' इत्यादि स्वाङ्गम् ॥ एकाद्यभिधानप्रत्ययहेतु' संख्या ॥ सर्व... मान परिमाणम् ॥ अपत्य प्रसिद्धम् ॥ नानाभिधायिना शब्दाना क्रियागुणद्रव्यैर्युगपत्प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा ॥ अदर्शन लुक् । अष्टादशभेदोऽकारादिसमुदायोऽवर्णः । आदिशब्दादिवर्णो इति वैयाकरणा । कर्म उत्क्षेपणादि । द्रव्याश्रयो गुणः । गुणाश्रयो द्रव्यम् । अनुवृत्तिप्रत्ययहेतु सामान्य जातिः । परापरादिप्रत्ययहेतु कालः । अनुमान लिङ्गम् । स्वाङ्गयारम्भ स्वाङ्गम् । अणुमहदादिप्रत्ययहेतु' परिमाणमिति तार्किका ॥-परान्नित्यमिति । तथाहि-वनानीत्यादौ 'शसोऽता'-इति दीर्घ बाधित्वा परत्वात् 'नपुंसकस्य शि' इत्येव

सिद्धिर्भवतीति वेदितव्यम् वर्णसमाम्नायस्य च, तत्र ॥ ३ ॥ औदन्ताः स्वराः । १ । १ । ४ ॥ औकारावसाना वर्णाः स्वरसंज्ञा भवन्ति । तद्यथा ॥ कव-
अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ । औदन्ता इति बहुवचनं वर्णेष्वपठितानां दीर्घपाठोपलक्षितानां प्लुतानां संग्रहार्थं, तेन तेषामपि स्वरसंज्ञा । ॥
'इवर्णादेरस्वे स्वरे यवरलम्' ( १ । २ । २१ ) इत्येवमादयः ॥ ४ ॥ एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः । १ । १ । ५ ॥ मात्रा कालविशेषः । एकाद्विषु,
मात्रा औदन्ता वर्णा यथासंख्यं ह्रस्वदीर्घप्लुतसंज्ञा भवन्ति । एकमात्रो ह्रस्वः । अ इ उ ऋ ऌ । द्विमात्रो दीर्घः । आ ई ऊ ॠ ॡ ए ऐ ओ औ । त्रिमात्रः प्लुतः ।
आ ३ ई ३ ऊ ३ इत्यादि । ऐदौतौ चतुर्मात्रावपीत्यन्ये । औदन्ता इत्येव । मतक्ष्य । अत्रार्धमात्रिकयोर्व्यञ्जनयोः समुदायस्यैकमात्रत्वेऽपि ह्रस्वसंज्ञाया अभावात्तोऽ-
न्तो न भवति । वर्णानां च ह्रस्वादिसंज्ञाविधानात्तितउच्छत्रमित्यादावकारोकारलक्षणवर्णसमुदायस्य द्विमात्रत्वेऽपि दीर्घसंज्ञाया अभावाद्द्वित्वविकल्पो न भवति ।

---

नित्य बलीय । यथा, स्योन इत्यत्र परमपि गुण बाधित्वा नित्यत्वादूट् ॥ तथा नित्यादन्तरङ्गम् । यथा, ज्ञाया ओदनो ज्ञौदनस्तमिच्छति वयन् । तत सनि, अकृतव्यूहत्वात् ज्ञा ओदनीय स ति इति स्थिते द्वित्व प्राप्नोति औत्व च । ततो नित्यत्वाद्द्वित्वे प्राप्ते तद्बाधित्वाऽन्तरङ्गत्वादौत्वं भवति । जुज्ञौदनीयिषति इति । तथान्तरङ्गादनवकाशम् । यथा, गर्गस्यापत्यानि यञ् । तेषा छात्रा· 'दोरीय' । ततोऽन्तरङ्गत्वाद् 'यजिज' इति यञो लुप् 'न प्रागजितीये'-इति तन्निषेधश्च प्राप्नुत । परमनवकाशत्वात् 'न प्रागजितीये' इत्येव प्रवर्तते । ततो गार्गीया इति सिद्धम् ॥ तथा आदिशब्दात् परादन्तरङ्गमपि । यथा, सिवे 'प्याधापन्यनि'-इति नेऽपवादत्वाद्वलोप बाधित्वा गुणात्पूर्वं नित्यत्वादूटि च कृते परत्वाद्गुणे प्राप्तेऽन्तरङ्गत्वात्त बाधित्वा यत्व भवति स्योन इति । एतासा क्रियादीना सज्ञाना न्यायाना च शास्त्रप्रवृत्तये लोकात् सिद्धिर्वेदितव्या । न च लोकमन्तरेण तज्ज्ञानोपायोऽस्ति । न च तज्ज्ञान विना 'क्रियार्थो धातु·' 'गुणादस्त्रियां नवा' 'जा-तिकालसुखादेर्नवा' 'खाङ्गादेरकृतमित'-इति 'सख्याना ष्णम्' परिमाणात्तद्धित'-इति 'ङसोऽपत्ये' 'वीप्सायाम्' 'लुगस्यादेत्यपदे' 'अवर्णस्येवर्णादिना'-इति 'इवर्णादेरस्वे स्वरे'-इत्यादिशा-स्त्रप्रवृत्ति ॥ नीयते प्राप्यते सदेहदोलामधिरूढोऽर्थो निर्णयपदमेभिरिति 'न्यायावाय-'-इति घञि न्याया युक्तय· ॥-औदन्ताः-॥ अत्रान्तशब्दोवयववाचीत्यवयवेन विग्रह· । समुदाय समासार्थ· । अवयवस्य चावश्यं समुदायरूपेऽन्यपदार्थेऽन्तर्भाव । अत एवात्र तद्गुणसंविज्ञानोऽयं बहुव्रीहि । यथा लम्बकर्ण इत्यादौ । न त्वतद्गुणसंविज्ञानो यथा चित्रगु इत्यादौ । ज्ञापक चात्र 'अष्ट और्ज-स्शसो' 'आतो णव औ' 'उत और्विति व्यञ्जनेऽद्वे' इत्यादि । औकारस्य हि स्वरत्वाभावे 'अष्ट औ'—इत्यादिसूत्रेषु 'स्वरे वा' इत्यनेन यलोपो न स्यात् ॥—तकार इति । उच्चार्यते स्वरूपेण स्वीक्रियतेऽनेनेत्युच्चारण स्वरूपपरिग्रह इति भाव । तपरत्वान्निर्देशस्य औत् इत्युक्ते औकारस्वरूप प्रतीयते । तकाराभावे तु आवन्ता इति कृते कष्टा प्रतीतिर्भवेदिति भाव ॥ ननु ऌकार· कॢपिस्थ एव प्रयुज्यते न च तत्र स्वरसज्ञाया किमपि प्रयोजनम् । ॡकारस्य तु सर्वथा प्रयोग एव नास्तीति । नैवम् । कॢप्त कॢ३प्तशिखेत्यादौ द्वित्वप्लुतादे स्वरकार्यस्य दर्शनात् । तथाहि—'अदीर्घाद्विरामैक'—इत्यनेन द्वित्वम् 'दूरादामन्त्र्यस्य'—इत्यनेन प्लुतश्च स्वराश्रित· प्रतिपादित । स्वरस्याधिकृतत्वात् असति स्वरत्वे तन्न स्यात् इति ॥—प्रदेशा इति । प्रादिश्यन्ते सज्ञाप्रयोज-नान्येषु इति 'व्यञ्जनाद् घञ्'इति घञि प्रदेशा·, सज्ञाप्रयोजनस्थानानीत्यर्थ ॥ ४ ॥ एकद्वि ॥—एकमात्र इति । स्वरस्यात्यन्तापकृष्टो निमेषोन्मेषक्रियापरिच्छिन्न उच्चारणकालो मात्रा ॥—अर्धमात्रिकयो-रिति । मात्राया अर्धमर्धमात्रा सास्त्यनयो 'व्रीह्यादिभ्यस्तौ' इति इक ॥—वर्णसमुदायस्येति । औदन्ता इत्यनुवृत्त्या वर्णा इति लाभात् तितउ इत्यत्र अउ इत्येवंरूपवर्णसमुदायस्य दीर्घत्वनिषे-

संध्यक्षराणां तु एकमात्रिकत्वाभावाद्ध्रस्वसंज्ञा न भवति । ह्रस्वादिप्रदेशा 'ऋलृति ह्रस्वो वा' ( १ । २ । २ ) इत्यादयः ॥ ५ ॥ अनवर्णा नामी । १ । १ । ६ ॥ अवर्णरहिता औदन्ता वर्णा नामिसंज्ञा भवन्ति । इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ । बहुवचनं प्लुतसंग्रहार्थम् । एवमुत्तरत्रापि । नामिप्रदेशा 'नामिनस्तयोः षः' ( २ । ३ । ८ ) इत्येवमादयः ॥ ६ ॥ ॡदन्ताः समानाः । १ । १ । ७ ॥ ॡकारावसाना वर्णाः समानसंज्ञा भवन्ति । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ । समानप्रदेशाः 'समानानां तेन दीर्घः' ( १ । २ । १ ) इत्यादयः ॥ ७ ॥ ए ऐ ओ औ संध्यक्षरम् । १ । १ । ८ ॥ ए ऐ ओ औ इत्येते वर्णाः संध्यक्षरसंज्ञा भवन्ति । संध्यक्षरप्रदेशा 'ऐदौत्संध्यक्षरैः' ( १ । २ । १२ ) इत्येवमादयः ॥ ८ ॥ अं अः अनुस्वारविसर्गौ । १ । १ । ९ ॥ अकारावुच्चारणार्थौ । अं इति नासिक्यो वर्णः, अः इति कण्ठ्यः, तौ यथासंख्यमनुस्वारविसर्गसंज्ञौ भवतः । अनुस्वारविसर्गप्रदेशा 'नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे' ( १ । ३ । ८ ) 'रः पदान्ते विसर्गस्तयोः' ( १ । ३ । ५३ ) इत्यादयः ॥ ९ ॥ कादिर्व्यञ्जनम् । १ । १ । १० ॥ कादिर्वर्णो हकारपर्यन्तो व्यञ्जनसंज्ञो भवति । क ख ग घ ङ,

---

ध ॥—संध्यक्षराणांत्विति ।,अन्यै कालापकाद्यै सध्यक्षराणा दीर्घसञ्ज्ञापि न कृता । ततोऽत्र संज्ञाद्वयेऽपि संदेह, यद्वा, अआ इत्यादौ क्रमेण ह्रस्वदीर्घसञ्ज्ञा दृष्टा, ए ऐ इत्यादावपि कि तथैवेत्याशङ्कायामिदमुक्त संध्यक्षराणा त्वित्यादि ॥—अनवर्णा नामी ॥ अविद्यमानोऽवर्णो येषु तेऽनवर्णा ॥ ननु सञ्ज्ञिसमानाधिकरणत्वेन सञ्ज्ञानिर्देशे सति 'औदन्ता स्वरा' इतिवन्नामिन इति बहुवचनेन निर्देशो युज्यते तत्कि नामीत्येकवचननिर्देश । सत्यम् । वचनभेदेन सञ्ज्ञा कुर्वन्नेव बोधयति 'यत्र नामिन कार्यं क्रियते तत्र कार्याद्यादि कार्यी स्वरो न्यूनो भवति तत्रैव नामिसञ्ज्ञाप्रवृत्तिर्नान्यथा' तेन ग्लायति ग्लायतीत्यादौ न गुण । अत एव तत्राह 'ऐकारोपदेशबलान्नामित्वाभावाद्गुणाभाव' इति । अत्रोत्तरयोश्च बहुवचन प्लुतसग्रहार्थम् । विशेषणविशेष्यभावस्तु वचनभेदेऽपि सामान्यविशेषभावेन । यथा पञ्चादौ घुट्, वेदा प्रमाणम् इति ॥—ॡदन्ताः—॥ उदात्तानुदात्तस्वरितसानुनासिकनिरनुनासिकभेदादष्टादशधा भिद्यन्ते अवर्णादय इति समान तुल्य मान परिमाण परिच्छेदो वा येषां ते समाना परस्परविलक्षणाकार बिभ्राणा अपीति । तथा ऌकारस्य समानसञ्ज्ञाया, कल्पन क्लृप्, 'क्रुत्सपदादिभ्य क्विप्', क्लाया क्लृप् तामकार्षीत् णिचि अन्त्यस्वरादिलोपे समानलोपात् 'उपान्त्यस्यासमानलोपि'—इति ह्रस्वत्वाभावे 'असमानलोपे'—इति सन्वद्भावाभावे च अचकलाक्लृत् इति भवति, ऌकार इति समानदीर्घत्व च फलम् ॥—एऐ—॥ सधौ सति अक्षर सध्यक्षरम् । तथाहि—अवर्णस्येवर्णेन सह संधावेकार । एकारैकाराभ्यामैकार । अवर्णस्योवर्णेनोकार । ओकारोकाराभ्यामौकार ॥—अंअः—॥ विसृज्यते विरम्यते वाग्नि विसर्ग । कर्मप्रत्ययोपलक्षण चेदम् । तेन विसृष्टो विसर्जनीय इत्यपि सञ्ज्ञाद्वय द्रष्टव्यम् ॥—कादि—॥ आदीयते गृह्यतेऽस्मादर्थ इत्यादि । स च सामीप्यव्यवस्थाप्रकारावयवादिवृत्ति । यथा ग्रामादौ घोष इति सामीप्ये । ब्राह्मणादयो वर्णा इति व्यवस्थायाम् । आढ्या देवदत्तादय इति प्रकारे । देवदत्तसदृशा इत्यर्थ । स्तम्भादयो गृहा इति अवयवे । स्तम्भावयवा इत्यर्थ । नत्र सामीप्यार्थवृत्तिग्रहणे ककारस्य व्यञ्जनसञ्ज्ञा न स्यात् । उपलक्षणं कार्ये अनुपयोगात् । यथा चित्रगुरानीयतामित्युक्ते चित्रगवोपलक्षित पुमानेवानीयते न तु चित्रा गौरिति । व्यवस्थार्थोऽपि न घटते । वर्णसमाम्नायस्य व्यवस्थितत्वेन व्यभिचाराभावात् । सभवे व्यभिचारे च विशेषणमर्थवदिति हि न्याय । कादीनां परस्परमत्यन्तैवसदृश्यात्प्रकारार्थोऽपि न समीचीनतामञ्चति । अवयवार्थवृत्तिस्तु सगच्छते । ककार आदिरवयवो यस्य वर्णसमुदायस्य स कादि । अत ज्ञानो बहुव्रीहि । समुदायस्यावयवेषु समवेतत्वादन्यभूतावयवत्वेन च समुदायप्राधान्यादेकवचनम् । सञ्ज्ञिसमानाधिकरणेऽपि स्मृतय प्रमाणमितिवदाविष्टलिङ्गत्वात् व्यञ्जनमिति

च छ ज झ ञ, ट ठ ड ढ ण, त थ द ध न, प फ ब भ म, य र ल व, श ष स ह। व्यञ्जनप्रदेशा 'नाम सिद्य्व्यञ्जने' ( १ । १ । २१ ) इत्ये... ॥ अपञ्चमान्तस्थो धुट्। १ । १ । ११ ॥ वर्गपञ्चमान्तस्थावर्जितः कादिर्वर्णो धुट्संज्ञो भवति। क ख ग घ, च छ ज झ, ट ठ ड ढ, त थ द ध, प... ष स ह। धुट्प्रदेशा 'धुटो धुटि स्वे वा' ( १ । ३ । ४८ ) इत्यादयः ॥ ११ ॥ पञ्चको वर्गः । १ । १ । १२ ॥ कादिषु वर्णेषु यो यः पञ्चसंख्यापो... वर्णः स स वर्गसंज्ञो भवति। क ख ग घ ङ। च छ ज झ ञ। ट ठ ड ढ ण। त थ द ध न। प फ ब भ म। वर्गप्रदेशाः 'कवर्गैकस्वरवति' ( २ । ३ । ७७ ) इत्यादयः ॥ १२ ॥ आद्यद्वितीयशषसा अघोषाः । १ । १ । १३ ॥ वर्गाणामाद्यद्वितीया वर्णाः शषसाश्चाघोषा भवन्ति। क ख, च छ, ट ठ, त थ, प फ, श ष स। बहुवचनं सर्ववर्गाणामाद्यद्वितीयपरिग्रहार्थम्। अघोषप्रदेशा 'अघोषे प्रथमोऽशिटः' ( १ । ३ । ५० ) इत्यादयः ॥ १३ ॥ अन्यो घोषवान्। १ । १ । १४ ॥ अघोषेभ्योऽन्यः कादिर्वर्णो घोषवत्संज्ञो भवति। ग घ ङ ज झ ञ ड ढ ण द ध न ब भ म य र ल व ह। घोषवत्प्रदेशा 'घोषवति' ( १ । ३ । २१ ) इत्यादयः ॥ १४ ॥ यरलवा अन्तस्थाः । १ । १ । १५ ॥ यरलव इत्येते वर्णा अन्तस्थासंज्ञा भवन्ति। बहुवचनं सानुनासिकादिभेदपरिग्रहार्थम्। अन्तस्थाप्रदेशा 'अञ्वर्गस्यान्तस्थातः' ( १ । ३ । ३३ ) इत्यादयः ॥ १५ ॥ अं अः ×क ⌓प शषसाः शिट्। १ । १ । १६ ॥ अनुस्वारो विसर्गो वज्राकृतिर्गजकुम्भाकृतिश्च



---

प्रकटीक्रियतेऽर्थोऽनेनेति व्यञ्जन स्वराणामर्थप्रकाशने उपकारक यथा सूपादीन्योदनस्येति । कस्य आदि॰ कादिरिति व्याख्याने व्यवस्थावाच्यप्यादिशब्द । तेन स्वराणा न व्यञ्जनसंज्ञा अनुस्वारविसर्गयोस्तु भवति । ततोऽनुस्वारस्य व्यञ्जनसंज्ञाया संस्कर्तैत्यत्रानुस्वाररूपव्यञ्जनात्परस्य सस्य 'धुटो धुटि स्वे वा' इत्यनेन लुक् सिद्ध । विसर्गस्य तु व्यञ्जनत्वे सुपूर्वस्य दु खयते क्विपि णिलुकि सेश्च लुकि 'पदस्' इति विसर्गरूपसंयोगान्तस्थस्य खस्य लुक् सिद्ध॰, विसर्गस्य च कस्याटिरिति व्युत्पत्त्या 'अपञ्चमान्तस्थ'—इति धुट्त्वे च धुटस्तृतीय इति स्थान्यासन्ने गत्वे सति सुदुगिति सिद्धम् ॥—पञ्चको—॥ सजातीयसमुदायो वर्ग । स च वर्ग कवर्गादिभेदेनाष्टधा वर्णसमाम्नाये केवलिकादिशास्त्रेषु प्रसिद्ध । तत्र च य पञ्चसंख्यात्वेन व्यवस्थितस्तस्येह वर्गसंज्ञेति अत आह—कादिष्विति ॥—योय इति । सञ्ज्ञिना बहुत्वादगृहीतवीप्सोऽपि पञ्चशब्दो वीप्सा गमयति ॥ वृणोत्यात्मीयमेकत्वेन व्यवस्थापयति 'गम्यमि'-इति गे वर्ग । जात्यपेक्षमेकवचनम् ॥—आद्य—॥ अविद्यमानो घोषो येषा, यथाऽनुदरा कन्येति। वहुव्रीहिणा गतत्वान्न मतु॰ ॥ ननु लाघवार्थं समाहार एव युक्तो यतो मात्रालाघवमपि उत्सवाय मन्यन्ते वैयाकरणा इत्याह—बहुवचनमिति । अन्यथा शषससाहचर्यात् कखयो॰ केवलयोरेव ग्रह स्यात्। अव्यभिचारिणा व्यभिचारी यत्र नियम्यते तत्साहचर्यम् ॥—अन्यो—॥ घोषो ध्वनिर्विद्यते यस्य स तथा । अन्वर्थता च 'तुल्यस्थानास्य'—इत्यत्र दर्शयिष्यते । घोषवानिति जातिनिर्देश॰ । अघोषापेक्षया चान्यत्वम् । तेन येषामतिशायी घोषस्तेऽन्यत्वजात्यध्यासिता घोषवन्त इत्यर्थः ॥—यर—॥ लिङ्गमशिष्य लोकाश्रयत्वात् इति वर्णविशेषणमपि अन्तस्थाशब्द॰ स्त्रीलिङ्गो बाहुलकात् शब्दशक्तिस्वाभाव्यात् बहुत्ववृत्तिश्च प्राय इति ॥—यरलव इतीति । अर्थवत्त्वाभावे नामत्वाभावान्न स्यादि॰ ॥—अं अ —॥ शिट्धुट्शब्दयोर्विपयनामत्वात्पुंस्त्वम् ॥ ×क ⌓प पयोर्देशकाललिपिभेदेऽपि रूपाभेदादृदृष्टान्तमाह—वज्राकृतिरिति । वज्रस्येव आकृतिर्यस्य स तथा । गजकुम्भयोरिवाकृतिर्यस्य सोऽपि तथा । ककारपकारौ चानयो॰ परदेशस्थावुच्चार्यैते । सर्वत्र परसबद्धावेवैतौ भवतो न स्वतन्त्रौ । नापि पूर्वसंबद्धावनुस्वारवदिति । रेफादेशत्वात्कखपफसंनिधावेव तयो॰ प्रयोगादल्पविषयत्वम् । अत एव सत्यपि संज्ञि-

वर्णः शषसाश्च शिट्संज्ञा भवन्ति । अकारककारपकारा उच्चारणार्थाः । बहुवचनं वर्णेष्वपठितयोरपि ᳲक ᳲप योर्वर्णत्वार्थम् । शिट्प्रदेशाः 'शिटः प्रथमद्वितीयस्य' ( १ । ३ । ३८ ) इत्यादयः ॥ १६ ॥ तुल्यस्थानास्यप्रयत्नः स्वः । १ । १ । १७ ॥ यत्र पुद्गलस्कन्धस्य वर्णभावापत्तिस्तत्स्थानं कण्ठादि । यदाहुः—'अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ॥ जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च' ॥ १ ॥ अस्यत्यनेन वर्णानित्यास्यम् ओष्ठात्प्रभृति प्राक् काकलकसंज्ञकात्कण्ठमणेः । आस्ये प्रयत्न आस्यप्रयत्नः, आन्तरः संरम्भः । स चतुर्धा, स्पृष्टता १ ईषत्स्पृष्टता २ विवृतता ३ ईषद्विवृतता ४ । तुल्यौ वर्णान्तरेण सदृशौ स्थानास्यप्रयत्नौ यस्य स वर्णस्तं प्रति स्वसंज्ञो भवति । करणं तु जिह्वामूलमध्याग्रोपाग्ररूपं स्थानास्यप्रयत्नतुल्यत्वे सति नातुल्यं भवतीति पृथग्नोक्तम् । तत्र स्थानम् अवर्णहविसर्गकवर्गाः कण्ठ्याः । 'सर्वमुखस्थानमवर्णं हविसर्गावुरस्यौ कवर्गो जिह्वामूल' इत्यन्ये । इवर्णचवर्गयशास्तालव्याः । उवर्णपवर्गोपध्मानीया ओष्ठ्याः । ऋवर्णटवर्गरषा मूर्धन्याः । 'रेफो दन्तमूल' इत्येके । ऌवर्णतवर्गलसा दन्त्याः । ए ऐ तालव्यौ । 'कण्ठतालव्यौ' इत्यन्ये । ओ औ ओष्ठ्यौ । 'कण्ठोष्ठ्यौ' इत्यन्ये । वो दन्त्यौष्ठ्यः । 'सृक्कस्थानः' इत्यन्ये । जिह्वामूलीयो जिह्व्यः । 'कण्ठ्यः' इत्यन्ये । नासिक्योऽनुस्वारः । 'कण्ठ्यनासिक्यः' इत्यन्ये । ङञणनमाः स्वस्थाननासिकास्थानाः ॥ अथास्यप्रयत्नः । स्पृष्टं करणं स्पर्शानाम् । स्पर्शा वर्ग्याः । ईषत्स्पृष्टं करणमन्तस्थानाम् । ईषद्विवृतं करणमूष्मणाम् । विवृतं करणं स्वराणाम् । 'ऊष्मणां च' इत्यन्ये । ऊष्माणः शषसहाः । स्वरेषु एओ विवृततरौ । ताभ्यामपि ऐ औ । ताभ्यामप्यवर्णः । 'अकारः संवृतः' इत्यन्ये । तत्र त्रयोऽकारा उदात्तानुदात्तस्वरिताः प्रत्येकं

---

सामानाधिकरण्येऽल्पीयस्त्वज्ञापनाय शिडित्येकवचनेन निर्देश कृत ॥ अथ कथमनयोर्वर्णत्वम्, वर्णसमाम्नाये पाठाभावात् । सत्यम् । रेफस्य वर्णत्वात्तयोश्च रेफादेशत्वाद्वर्णत्वसिद्धि । नच वर्णोदेशत्वेन लोपस्यापि वर्णत्वमाशङ्कनीयम् । तस्याभावरूपत्वात् । नचाभावो भावस्याश्रयो भवितुमर्हति, अतिप्रसगात् । अयमेवार्थो बहुवचनेन सूच्यते । अनुवादकत्वेन तस्य साधकत्वाभावादित्याह—बहुवचनमिति ॥ ननु ᳲक ᳲप योर्व्यञ्जनसञ्ज्ञाऽपि पूर्वेषामस्ति तत्कथ तै सह न विरोध । उच्यते । रेफस्थानित्वेन व्यञ्जनसञ्ज्ञापीति न विरोधः ॥—तुल्य—॥ तोल्यतेऽनया भिदाद्यङि तुला । तुलया समितस्तुल्य । 'हृद्यपद्य'–इत्यादिना य । प्रयत्न उत्साह ॥—नासिकौष्ठौचेति । व्यस्तावेतौ, समासे तु 'प्राणितूर्यं'–इति समाहार स्यात् ॥ कलयति ईषदास्यभावम्, अच्, अल्पाद्यर्थे कपि णके वा, कु ईषत्कलक काकलक । 'अल्पे' इति कादेश । काकलक इति सञ्ज्ञा यस्य स तथा । ग्रीवायामुन्नतप्रदेश ॥—आन्तर इति । अन्तरा भव 'भवे' अण् । अन्तर्जातो वा, भवे त्वर्थे दिगादित्वाद्य स्यात् ॥ स्पृश्यन्ते स्म स्पृष्टा वर्णा । तेषां भाव स्पृष्टता वर्णाना प्रवृत्तिनिमित्तम् । स्पृष्टताहेतुत्वात्प्रयत्नोऽपि स्पृष्टता । 'अश्रादिभ्य' इत्यप्रत्यये वा । सञ्ज्ञाशब्दत्वात् स्त्रीत्वम् । प्रयत्नाना सञ्ज्ञा इमा यथाकथचित् व्युत्पाद्यन्ते । एव सर्वत्र । एवमीषत्स्पृष्टताऽपि । विव्रियन्ते स्म विवृता वर्णास्तेषां भाव ॥ ईषद्विव्रियन्ते स्मेत्यादि—करणं वर्णोत्पत्तिकाले स्थानाना प्रयत्नाना च सहकारि कारणम् ॥—सर्वेति । सर्व मुख स्थानमस्य । मुखस्थितानि सर्वाण्यपि स्थानानि अवर्णस्येत्यर्थ ॥—कण्ठताल्व्याविति । कण्ठतालु देहांशसमुदायादपि य ॥—स्वरेषु एओ विवृततराविति ॥ ननु विवृततरताविवृततमताऽतिविवृततमतारूपाणां प्रयत्नान्तराणा सद्भावात् ससधा प्रयत्न इति वक्तुमुचितं कथ सत्यम् । विवृतरतादीन्यपि विवृततया परिगृह्योक्त चतुर्धा इति । विशेषस्य सामान्येऽन्तर्भावात् ॥—अकारः संवृत इत्यन्ये इति । सवृतताख्य पञ्चम प्रयत्नमन्ये मन्यन्त इत्य

घुन्य

सानुनासिकनिरनुनासिकभेदात् षट् । एवं दीर्घप्लुताविति अष्टादश भेदा अवर्णस्य । ते सर्वे कण्ठस्थाना विवृतकरणाः परस्परं स्वाः । एवमिवर्णास्ता- विवृतकरणाः स्वाः । उवर्णा ओष्ठ्या विवृतकरणाः स्वाः । ऋवर्णा मूर्धन्या विवृतकरणाः स्वाः । लृवर्णा दन्त्या विवृतकरणाः स्वाः । 'लृवर्णस्य दीर्घा न ॥ कव- द्वादश' इत्यन्ये । संध्यक्षराणां ह्रस्वा न सन्तीति तानि प्रत्येकं द्वादशभेदानि । तत्र एकारास्तालव्या विवृततराः स्वाः । ऐकारास्तालव्या अतिविवृततराः स ५॥ ओकारा ओष्ठ्या विवृततराः स्वाः । औकारा ओष्ठ्या अतिविवृततराः स्वाः । वर्ग्याः पञ्च पञ्च परस्परं स्वाः । यलवानामनुनासिकोऽननुनासिकश्च द्वौ भेदौ परस्प- स्वौ । रेफोष्मणां त्वतुल्यस्थानास्यप्रयत्नत्वात् स्वा न भवन्ति । आस्यग्रहणं बाह्यप्रयत्ननिवृत्त्यर्थम् । ते हि 'आसन्नः' (७ । ४ । १२० ) इत्यत्रैवोपयुज्यन्ते न स्वसं- ज्ञायाम् । के पुनस्ते ? विवारसंवारौ श्वासनादौ घोषवदघोषता अल्पप्राणमहाप्राणता उदात्तोऽनुदात्तः स्वरितश्चेत्येकादश । कथं पुनरेते आस्याद्बाह्याः स्पृष्टतादयस्तु आन्तराः । उच्यते । वायुना कोष्ठेऽभिहन्यमानेऽमीषां प्रादुर्भावात् । स्पृष्टतादीनां तु कण्ठादिस्थानाभिघाते भावात् । तथा चापिशलिः शिक्षामधीते—'नाभिप्रदेशात्प्र- यत्नप्रेरितः प्राणो नाम वायुरूर्ध्वमाक्रामन्नुरःप्रभृतीनां स्थानानामन्यतमस्मिन् स्थाने प्रयत्नेन विधार्यते । स विधार्यमाणः स्थानमभिहन्ति । तस्मात् स्थानाभिघाता- द्ध्वनिरुत्पद्यते आकाशे, सा वर्णश्रुतिः, स वर्णस्यात्मलाभः । तत्र वर्णध्वनावुत्पद्यमाने यदा स्थानकरणप्रयत्नाः परस्परं स्पृशन्ति सा स्पृष्टता । यदेषत्स्पृशन्ति सेष- त्स्पृष्टता । यदा सामीप्येन स्पृशन्ति सा संवृतता । दूरेण यदा स्पृशन्ति सा विवृतता । एषोऽन्तःप्रयत्नः । स इदानीं प्राणो नाम वायुरूर्ध्वमाक्रामन्मूर्ध्नि प्रतिहतो निवृत्तः कोष्ठमभिहन्ति । तत्र कोष्ठेऽभिहन्यमाने कण्ठबिलस्य विवृतत्वाद्विवारः । संवृतत्वात्संवारः । तत्र यदा कण्ठबिलं विवृतं भवति तदा श्वासो जायते । संवृते तु नादः । तावनुप्रदानमाचक्षते । अन्ये तु ब्रुवते 'अनुप्रदानमनुस्वानो घण्टादिनिर्ह्रादवदिति' । तत्र यदा स्थानकरणाभिघातजे ध्वनौ नादोऽनुप्रदीयते तदा नादध्व-

---

शिक्षायामेके पठन्ति । तेनाकाराकारयोः संवृतविवृतयोर्भिन्नप्रयत्नत्वात् स्वसञ्ज्ञा न प्राप्नोतीति विवृत एवात्र प्रतिज्ञायान्य इत्युक्तम् । तर्हि प्रयोगेऽपि सवृत एवासौ स्वरूपेणेत्यभ्युपगम्यते ॥—सा- नुनासिकेति । नासिकामनुगतो यो वर्णधर्मः स तथा ॥ सह तेन वर्तते यो वर्ण. स तथा ॥ निर्गतोऽनुनासिकाद्य स तथा ॥ स्वर सजातो येषां ते स्वरिता' । यथाकथंचित् व्युत्पत्ति' ॥— अनुनासिक इति । अनुनासिको धर्मोऽस्यास्तीति अश्रादित्वाद । तद्धर्मरहितोऽननुनासिक इति ॥—रेफोष्मणां त्विति । अन्यवर्णापेक्षया तेषां स्वत्वाभावो रेफस्य तु रेफ स्वो भवत्येव । एवमूष्मणामपि स्वा न भवन्तीति॥ ननु वर्णानां तुल्यास्यप्रयत्नत्वे कथ श्रुतिभेद । उच्यते । कालपरिमाणकरणप्राणकृतगुणभेदात् श्रुतिभेद' । तथाहि—यावता कालेनाक्ष्ण उन्मेषो निमेषो वा भवति तावान्कालो मात्रा । मात्राकालो वर्णो मात्रिक । द्विस्तावान् द्विमात्र. । त्रिस्तावान् त्रिमात्रः । अर्धमात्राकाल व्यञ्जनम् । तदिदं वर्णेषु चतुर्विधं कालपरिमाणं भेदकृद् भवति । करणं च श्रुतिभेदकरं भवति । तत्प्रागेवोक्तम् । प्राणकृताश्च गुणभेदा घोषाघोषादय इति ॥—निवृत्त्यर्थमिति । तेनारुकृश्च्योततीत्यत्र शकारचकारयोस्तुल्यस्थानबाह्यप्रयत्नत्वे सत्यपि 'शुटो श्रुटि'—इति शकारस्य चकारे लोपो न भवति ॥— ते ह्यासन्न इत्यत्रैवेति । 'आसन्नः' इत्यत्रापि महाप्राणस्यैवावकाश' । अन्येषां च वेदे प्रयोजनम् ॥—उपयुज्यन्त इति । उपयुक्ता भवन्तीत्यर्थः ॥—शिक्षामिति । वर्णोत्पत्तिप्रतिपादकं शा- स्त्रम् ॥—कोष्ठे उदरे ॥—अन्यतमस्मिन्निति । मतान्तरेणाय साधु' । स्वमतेऽन्यतरग्रहणादन्यस्वार्थिकप्रत्ययान्तानां सर्वादित्वनिषेधान्न सिध्यति ॥—अनुप्रदानमिति । अनुप्रदीयते वर्णान्त-

निसंसर्गाद्घोषो जायते । यदा तु श्वासोऽनुप्रदीयते तदा श्वासध्वनिसंसर्गादघोषो जायते । अल्पे वायावल्पप्राणता, महति महाप्राणता जायते । महाप्राणत्वादूष्मत्वम् । यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति तदा गात्रस्य निग्रहः कण्ठविलस्य चाणुत्वं स्वरस्य च वायोस्तीव्रगतित्वाद्रौक्ष्यं भवति तमुदात्तमाचक्षते । यदा तु मन्दः प्रयत्नो भवति तदा गात्रस्य स्रंसनं कण्ठविलस्य च महत्त्वं स्वरस्य च वायोर्मन्दगतित्वात्स्निग्धता भवति तमनुदात्तमाचक्षते । उदात्तानुदात्तस्वरसंनिपातात्स्वरित इत्येष कृत्स्नो वाह्यः प्रयत्न इति ॥ अथवा, विवारादयो वर्णनिष्पत्तिकालादूर्ध्वं वायुवशेनोत्पद्यन्ते स्पृष्टतादयस्तु स्थानास्यप्रयत्नव्यापारेण वर्णोत्पत्तिकाल एवेति वर्णनिष्पत्तिकालभावाभावाभ्यां विवारादीनां वाह्यत्वं स्पृष्टतादीनां चाभ्यन्तरत्वम् ॥ तत्र वर्गाणां प्रथमद्वितीयाः शषसविसर्गजिह्वामूलीयोपध्मानीयाश्च विवृतकण्ठाः श्वासानुप्रदाना अघोषाः । वर्गाणां तृतीयचतुर्थपञ्चमा अन्तस्था हकारानुस्वारौ च संवृतकण्ठा नादानुप्रदाना घोषवन्तः । वर्गाणां प्रथमतृतीयपञ्चमा अन्तस्थाश्चाल्पप्राणाः । इतरे सर्वे महाप्राणाः ॥ स्थानग्रहणं किम् । कचटतपानां तुल्यास्यप्रयत्नानामपि भिन्नस्थानानां माभूत् । किं च स्यात् । तप्तां, तप्तुमित्यत्र 'धुटो धुटि स्वे वा' (१ । ३ । ४८) इति पकारस्य तकारे लोपः स्यात् । आस्यप्रयत्नग्रहणं किम् । चवर्गयशानां तुल्यस्थानानामपि भिन्नास्यप्रयत्नानां माभूत् । किं च स्यात् । अरुक् श्चोततीत्यत्र 'धुटो धुटि स्वे वा' (१ । ३ । ४८) इति शकारस्य चकारे लोपः स्यात् । स्वप्रदेशा 'इवर्णादेरस्वे स्वरे यवरलम्' (१ । २ । २१) इत्यादयः ॥ १७ ॥ स्यौजसमौशस्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङस्ओसांङ्योस्सुपां त्रयीत्रयी प्रथमादिः । १ । १ । १७ ॥ स्यादीनां प्रत्ययानां त्रयी त्रयी यथासंख्यं प्रथमाद्वितीयातृतीयाचतुर्थीपञ्चमीषष्ठीसप्तमीसंज्ञा भवति । इजशटङपा अनुबन्धाः 'सौ नवेतौ' (१ । २ । ३८) इत्यादौ विशेषणार्थाः । बहुवचनं स्याद्यादेशानामपि प्रथमादिसंज्ञाप्रतिपत्त्यर्थम् । प्रथमादिप्रदेशा 'नाम्नः प्रथमैकद्विबहौ' (२ । २ । ३१) इत्यादयः ॥ १८ ॥ स्त्यादिर्विभक्तिः । १ । १ । १९ ॥ स् इत्युत्सृष्टानुबन्धस्य सेर्ग्रहणम् । ति इति उत्सृष्टानुबन्धस्य तिवः । आदिशब्दो व्यवस्थावाची । स्यादयस्तिवादयश्च प्रत्ययाः सुप्स्यामहिपर्यन्ता विभक्तिसंज्ञा भवन्ति । विभक्तिप्रदेशा

---

रसजननार्थमेकत्र मील्यते । 'भुजिपत्यादिभ्य' ॥—निग्रह इति । स्तब्धत्व काठिनत्वमिति यावत् ॥—अणुत्वम् । सूक्ष्मत्वम् ॥—स्रंसनम् । श्लथत्वमित्यर्थ ॥—वर्णनिष्पत्तिकालभावेति । अत्राल्पस्वरत्वेन भावशब्दस्य पूर्वनिपात ॥ श्वासलक्षणमनुप्रदान येषां ते तथा ॥—इतरे इति । इतरत्व पूर्ववाक्यापेक्ष न सर्वेषामित्यर्थ ॥ उदात्तादीना स्वरेष्वेव सम्भवान्न व्यञ्जनेषु इति व्यञ्जनोत्पत्तौ न कथ्यन्ते उदात्तादयो बाह्यप्रयता ॥—स्यौजस्—॥ त्रयी त्रयीति भवनक्रियाया वीप्सा ॥—विशेषणार्थां इति । विशेषो विशेषण व्यवच्छेद इति यावत् । तत्प्रयोजना इत्यर्थ प्रथमा आदिर्यस्य सञ्ज्ञासमूहस्य ॥—बहुवचनमिति । तदादेशास्तद्वद्भवन्तीति न्यायात् साध्यसिद्धिर्भविष्यति किं बहुवचनेन । सत्यम् । न्याय विनापीत्थ साधितम् । इय हि महती शरिभाषा न्यायाश्च विना साध्यत इति ॥—स्त्यादिः—॥ विभज्यन्ते विभागशः प्रकाश्यन्ते कर्तृकर्मादयोऽर्था अनयेति विभजन वा । 'श्रादिभ्य' इति क्ति. ॥ अनुबध्यते कार्यार्थमित्यनुबन्ध इत् । उत्सृष्टस्त्यक्तोऽनुबन्धो येन यस्य वा स तथा तस्य ॥—व्यवस्थावाचीति । तेन ये यदनुबन्धा यावन्तो विभक्तिसञ्ज्ञाया पूर्वाचार्यैर्व्यवस्थापितास्त एव तदनु-

'अधातुविभक्तिवाक्यमर्थवन्नाम' ( १ । १ । २७ ) इत्यादयः ॥ १९ ॥ तदन्तं पदम् । १ । १ । २० ॥ स्याद्यन्तं त्याद्यन्तं च शब्दरूपं पदसंज्ञं भवति । ... ॥ कन-स्वं, ददाति नः शास्त्रम् । अन्तग्रहणं पूर्वसूत्रे तदन्तप्रतिषेधार्थम् । पदप्रदेशाः 'पदस्य' ( २ । १ । ८९ ) इत्यादयः ॥ २० ॥ नाम सिद्व्यञ्जने । १ । १ । २१ ॥ सिति प्रत्यये यकारवर्जितव्यञ्जनादौ च परे पूर्वं नाम पदसंज्ञं भवति । भवदीयः । ऊर्णायुः । अहंयुः । अहम्युः । शुभंयुः । शुभम्युः । व्यञ्जने । पयोभ्याम् । पयस्सु । राजता । दक्त्वम् । राजकाम्यति । नामेति किम् । धातोर्मा भूत् । वच्मि । यज्वा । सिद्व्यञ्जन इति किम् । भवन्तौ । राजानौ । यवर्जनं किम् । वाचमिच्छति वाच्यति । अन्तर्वर्तिन्यैव विभक्त्या तदन्तस्य पदत्वे सिद्धे सिद्ग्रहणं नियमार्थम् । तेन प्रत्ययान्तरे न भवति । सौश्रुतम् । भागवतम् ॥ २१ ॥ नं क्ये । १ । १ । २२ ॥ क्य इति उत्सृष्टानुबन्धानां क्यन्क्यङ्क्यङ्षां ग्रहणम् । नकारान्तं नाम क्ये प्रत्यये परे पदसंज्ञं भवति । राजानमिच्छति क्यन् । राजीयति । राजेवाचरति क्यङ् । राजायते । अचर्म चर्म भवति क्यङ्ष् । चर्मायति । चर्मायते । पदत्वान्नलोपः । नमिति किम् । वाच्यति । क्य इति किम् । नामनि साधुः सामन्यः । एवं वेमन्यः । अयितिप्रतिषेधात्पूर्वेणाप्राप्ते वचनम् ॥ २२ ॥ न स्तं मत्वर्थे । १ । १ । २३ ॥ सकारान्तं तकारान्तं च नाम मत्वर्थे प्रत्यये परे पदसंज्ञं न भवति । यशस्वी ।

...संज्ञा
...न्यत्र
...मिति
...इति ते
...प्रत्यो
...ते सूत्र
...र्त्वं न
...। निय-
...न्तोऽपि
...न प्रा-
...स्सेना-
...तेषु-

मतोरपि मत्वर्थाव्यभिचारात् मत्वर्थशब्देन ग्रहणम्। पेचुष्मान्। विदुष्मान्। यशस्वान्। तडित्वान्। मरुत्वान्। विद्युत्त्वान्। स्तमिति किम्। तक्षवान्। राजवान्। मत्वर्थ इति किम्। पयोभ्याम्। अग्न्यञ्जन इति प्राप्ते प्रतिषेधोऽयम् ॥ २३ ॥ **मनुर्नभोऽङ्गिरो वति। १। १। २४ ॥** मनुस् नभस् अङ्गिरस् इत्येतानि नामानि वति प्रत्यये परे पदसंज्ञानि न भवन्ति। मनुरिव मनुष्वत्। एवं नभस्वत्, अङ्गिरस्वत्। पदत्वाभावाद्रुर्न भवति षत्वं तु भवति ॥ २४ ॥ **वृत्त्यन्तोऽसषे। १। १। २५ ॥** परार्थाभिधानं वृत्तिः। तद्वांश्च पदसमुदायः समासादिः। तस्या अन्तोऽवसानं पदसंज्ञो न भवति। 'असषे' सस्य षत्वे तु पदसंज्ञैव। परमदिवौ। श्वलिहौ। गोदुहौ। परमवाचौ। बहुदण्डिनौ। एषु पदत्वाभावादुत्वढत्वघत्वकत्वलुगादीनि न भवन्ति। वृत्तिग्रहणं किम्। चैत्रस्य कर्म। अन्तग्रहणं किम्। राजवाक्। अत्र नलोपो भवति। वाक्त्वक्स्रुच इति त्रयाणां वृत्तौ न द्वयोः पृथग्वृत्तिरिति मध्यमस्य निषेधो न भवति ॥ अथ वाक्त्वचामित्यत्र समासान्ते सति वृत्त्यन्तत्वाभावात्पदत्वं प्राप्नोति। तथा च कत्वं स्यात्। उच्यते। समासात्समासान्तो विधीयत इति त्वचो वृत्त्यन्तत्वम्। असष इति किम्। सिञ्चतीति विच्, सेक्। दध्नः सेक्

---

प्रमुग इत्यन । न हि प्राणी प्राण्यन्तरस्य साक्षान्मुख भवतीति सामर्थ्यात्सादृश्यप्रतीति । समग्रेण चोष्ट्रेण सह सादृश्याभावादुष्ट्रशब्दोऽवयवे वर्तते । मुखेनैव च मुखसादृश्य प्रसिद्धमिति सामर्थ्यान्मुखमिव मुखमस्येत्यर्थोऽवतिष्ठते । एवमिहापि मतुशब्दस्यार्थेन सामानाधिकरण्यमनुपपद्यमानं मतुशब्द मत्वर्थवृत्ति गमयतीत्युक्तम् —**मतोरपीति** । मतुशब्दस्यापि मत्वर्थाव्यभिचारात् मत्वर्थेन ग्रहणमिति ॥—**पेचुष्मानिति** । 'स्थानीवावर्णविधौ' इति न्यायेन अपदसञ्ज्ञस्यादेशोऽप्यपदमित्युपादेशे कृते सन्तत्वाभावेऽप्यपदत्वात् 'धुटस्तृतीय' इति षस्य उत्व न भवति ॥—**वृत्त्यन्तो**—॥ वर्तन वृत्ति क्ति । वर्तनव्यापारवतीत्यर्थ । वर्तन तु अवयवार्थापेक्षया परस्य समुदायार्थस्य प्रतिपादनम् यद्वा वर्तिपीष्ट परार्थमभिधेयात् इत्याशास्यमाना वृत्ति. । कर्तरि तिक् । यद्वा वर्तन्ते स्वार्थपरित्यागेन पदान्यत्रेति आधारे क्तौ वृत्ति पदसमुदायादिरूपा । सा त्रेधा । समासवृत्ति १ तद्धितान्तवृत्ति २ नामधातुवृत्तिश्चेति । राजपुरुष. । औपगव । पुत्रकाम्यतीत्यादि ॥ —**परार्थाभिधानमिति** । अवयवार्थापेक्षया परोऽर्थ समुदायार्थ । यद्वा अवयवपदापेक्षया समुदाय परमदिव्लक्षण. परस्तस्यार्थस्तस्याभिधानम् । अनेकार्थत्वात्परार्थाभिधानेऽपि वृत्तिशब्द ॥ **अवसानमिति** । अवसीयतेऽस्मिन् इत्यवसानम् ॥ लीढ इति लिहौ, क्विप् । शुनो लिहौ श्वलिहौ । 'षष्ठ्ययत्नाच्छेषे' इति समास इति कर्तव्यम्, न तु ध्यान लीढ इति । यतस्तस्मिन् कृते 'गतिकारक' इति क्विबन्तेन लिह्इत्यनेन समासे सति लिहित्यस्याविभक्त्यन्तत्वेन पदत्वप्राप्तिरेव नास्तीति ॥—**लुगादीनीति**—आदिशब्दात् ढत्वे सत्यस्यैव उत्व वत्वे सति 'गडदबादे'—इति दस्य धत्व कत्वे सति गत्वम् लुगभावे 'ह्रस्वान्ङणनो द्वे' इति द्वित्व च न भवति ॥—**राजवागिति** । अत्रान्तग्रहणात् पूर्वस्य पदत्वे सति नलोप । तथाऽवयवाश्रितपदत्वप्रतिषेधेऽपि समुदायविभक्त्याश्रित पदत्वमस्तीति कत्व बभूवेति ॥—**वाक्त्वक्स्रुच** इति । अत्र वाक्शब्दापेक्षया त्वक्शब्दो वृत्त्यन्त इति परस्याशय ॥—**वाक्त्वचमिति** । अत्र समासान्ते कृते वृत्तिरकारान्ता भवति । न च तत्र त्वगिति वृत्त्यन्त । ततो 'वृत्त्यन्तोऽसषे' इति पदत्वप्रतिषेधस्त्वचो न प्राप्नोति ॥ समाधत्ते—**उच्यते** इत्यादिना । अयमर्थ । समासात्समासान्तो विधीयमानस्तस्यैवान्तत्व व्याहन्ति न तु तदवयवस्य त्वचस्तस्य समासावयवत्वात् । नहि समुदायावयवोऽवयवस्यावयवो भवति । यद्वेत्थं व्याख्या । समासशब्देन समासावयवोऽभिधीयते । तत समासावयवात् त्वच समासान्तो विधीयत इति भवत्ववृत्त्यन्तत्व त्वचस्तथापि सित्येवेति नियमेन पदत्व निवर्तते इति भाव. । अथवा । समासात्पर समासान्तो विधीयत इति भवत्ववृत्त्यन्तत्व त्वच स्यादे पूर्वस्त्वच एव परो भवति इति अस्तु अवृत्त्यन्तत्व त्वच । तत्र च पदत्वप्राप्तिरेव नास्तीति कत्वाभाव इति । समासशब्दस्तु लक्ष्यवशात् क्वचित्समासावयव क्वचित्समास =

धौ

दधिसेक् । दधिसेचौ । ईषदूनः सेक्, बहुसेक् । बहुसेचौ । अत्र पदसंज्ञायां पदादित्वात्सकारस्य 'नाम्यन्तस्था–' ( २ । ३ । १५ ) इत्यादिना षत्वं प्राप्तम्, तत्र अन्तर्वर्तिन्या विभक्तेः स्थानिवद्भावेन पदत्वं प्राप्तमनेन निषिध्यते । न च सिसेवेति नियमेन तन्निवर्तयितुं शक्यम् । 'प्रत्ययः प्रकृत्यादेः' ( ७ । ४ । ११५ ) ॥ कव-यस्मात्समुदायात्प्रत्ययविधानं तस्यैव पदत्वं नियमेन निवर्त्यते नतु तदवयवस्येति ॥ २५ ॥ सविशेषणमाख्यातं वाक्यम् । १ । १ । २६ ॥ साद्यन्ते १५॥ ख्यातम् । साक्षात्पारंपर्येण वा यान्याख्यातविशेषणानि तैः प्रयुज्यमानैरप्रयुज्यमानैर्वा सहितं प्रयुज्यमानमप्रयुज्यमानं वाख्यातं वाक्यसंज्ञं भवति । धर्मो वो रक्षतु । धर्मो नो रक्षतु । साधु वो रक्षतु । साधु नो रक्षतु । उच्चैर्वो वदति । उच्चैर्नो वदति । भोक्तुं त्वा याचते । भोक्तुं मा याचते । शालीनां ते ओदनं ददाति । शालीनां मे ओदनं ददाति । अप्रयुज्यमानविशेषणम्, लुनीहि ३ पृथुकांश्च खाद । पुनीहि ३ सक्तूंश्च पिव । अप्रयुज्यमानमाख्यातं, शीलं ते स्वम् । शीलं मे स्वम् । अर्था-त्प्रकरणाद्वाख्यातादेर्गतावप्रयोगः । लोकादेव वाक्यसिद्धौ साकाङ्क्षत्वेऽप्याख्यातभेदे वाक्यभेदार्थं वचनम् । आख्यातमित्यत्रैकत्वस्य विवक्षितत्वात् । तेन ओदनं पच तव भविष्यति मम भविष्यति पच तव भविष्यति मम भविष्यति ओदनं तव भविष्यति मम भविष्यतीत्यादौ श्रूयमाणे गम्यमाने वाख्यातान्तरे भिन्नवाक्यत्वा-द्वस्त्रसादयो न भवन्ति । लौकिके हि वाक्येऽङ्गीक्रियमाणे आख्यातभेदेऽप्येकवाक्यत्वाद्वस्त्रसादयः प्रसज्जेरन्निति । कुरुकुरु नः कटमित्यादौ तु कृते द्विर्वचनेऽर्थभेदा-देकमेवाख्यातमित्येकवाक्यत्वाद्वस्त्रसादयो भवन्ति । वाक्यप्रदेशाः 'पदाद्युग्विभक्त्यैकवाक्ये वस्नसौ बहुत्वे' ( २ । १ । २१ ) इत्यादयः ॥ २६ ॥ अधातुविभ-क्तिवाक्यमर्थवन्नाम । १ । १ । २७ ॥ अर्थोऽभिधेयः स्वार्थो द्रव्यं लिङ्गं संख्या शक्तिरिति, द्योत्यश्च समुच्चयादिः । तद्वच्छब्दरूपं धातुविभक्त्यन्तवाक्यवर्जितं

---

—दधिसेगिति ॥ सिञ्चतीति विच् । ततो दध्न. सेगित्येव कार्यम् । दधि सिञ्चतीति तु न । यत. 'सोपपदात् सिचो विज्नेष्यते' इति न्यासः ॥—सविशे—॥ आख्यायते स क्रियाप्रधा-नत्वेन साध्यार्थाभिधायितया वा इत्याख्यातम् । तच्च त्याद्यन्तमिति । क्रियोपलक्षण चैतत् । तेन देवदत्तेन शयितव्यमित्याद्यपि वाक्य भवति ॥—साक्षादित्यादि । यत्क्रियाया साधनस्य वा तदतदात्मनोऽतद्रूपादव्यवधानेन व्यवच्छेदक कचित्तत्साक्षाद्विशेपणम् । यत्तद्विशेपणस्य विशेपण तत्पारपर्येण । धर्म इत्यादौ यत्र क्रियापद कर्तरि तत्र कर्ता क्रियापदस्य समानाधिकरण विशेप-णमन्यानि व्यधिकरणानि । कर्मणि तु क्रियापदे कर्म समानाधिकरणम् । साधु वो रक्षत्वित्यादौ साध्विति रक्षणादिक्रियाया. समानाधिकरणम् । रक्षत्वित्यादिक्रियापदस्य तु व्यधिकरणमिति । शालीना ते इति । अत्रौदनस्य साक्षाद्विशेपणस्य विशेपणत्वाच्छालीनामिति पारपर्येण विशेपणम् ॥—शीलं ते स्वमिति । अत्रास्तीत्यादि क्रियापद न प्रयुज्यते पर तस्याप्रयुज्यमानस्यापि स्वमिति समा-नाधिकरणम् ॥ ननु शब्दप्रयोगोऽर्थप्रतिपत्त्युपायः, तस्य चाप्रयुज्यमानस्यापि विशेपणविशेष्यभावेऽतिप्रसङ्ग. अप्रयुज्यमानत्वाविशेपात् सर्वं सर्वस्य विशेपण विशेष्यं च स्यात् । किञ्च, यद्यप्रयुज्य-मानमपि शब्दरूप विशेष्य विशेपण वा गमयेत् तदाऽनर्थक सर्वत्र तत्प्रयोग इत्याह—अर्थात् इत्यादि ॥—लोकादेवेति । लोको हि साकाङ्क्षत्वे सति क्रियाभेदेऽप्येकवाक्यत्व प्रतिपद्यते इति साकाङ्क्षत्वेऽपि क्रियाभेदे वाक्यभेदार्थं वचनमिति भाव. ॥—कुरु कुरु न इति । अत्र युगपद्वाक्यद्वयप्रयोग इति एकवाक्यत्वाभावान्नसादेशस्य न प्राप्तिरिति पराभिप्रायः ॥—अधातु—॥ उ-च्यते विशिष्टोऽर्थोऽनेनेति बाहुलकात्करणेऽपि व्यणि वाक्यम् । कर्मणि तु प्रतीतमेव ॥ अर्थो द्वेधा अभिधेयो द्योत्यश्च । तत्राभिधेय. स्वार्थादिभेदात्पञ्चधा । द्योत्यश्च समुच्चयादिरिति ॥ यद्वा चका-रादिना द्योत्यस्यापि समुच्चयादे. समासादिनाऽभिधीयमानत्वादभिधेयत्वमस्तीत्याह—द्योत्यश्चेत्यादि ॥ अभिधेय इति शेप· । न केवल स्वार्थादिरभिधेयो द्योत्यश्च समुच्चयादिरभिधेय इति चार्थ ॥

नामसंज्ञं भवति । वृक्षः । प्लक्षः । शुक्रः । कृष्णः । डित्थः । डवित्थः । स्वः । प्रातः । धवश्च । खदिरश्च । धातुविभक्तिवर्जनं किम् । अहन् । वृक्षान् । अयजन् । अत्र नामत्वाभावे 'नाम्नो नोऽनह्नः' ( २ । १ । ९१ ) इति नलोपो न भवति । विभक्त्यन्तवर्जनाच्चाबादिमत्ययान्तानां नामसंज्ञा भवत्येव । आप्, अजा । बहुराजा । ङी, गौरी । कुमारी । डायनि, गार्ग्यायणी । गौकक्ष्यायणी । ति, युवतिः । ऊङ्, ब्रह्मबन्धूः । करभोरूः । कृत्, कारकः । कर्ता । भिनत्तीति भिद् । एवं छित् । तद्धित, औपगवः । आक्षिकः । वाक्यवर्जनं किम् । साधुर्धर्मं ब्रूते । अर्थवत्समुदायस्य वाक्यस्य नामसंज्ञाप्रतिषेधात् समासादेर्भवत्येव । चित्रगुः । राजपुरुषः । ईषदपरिसमाप्तो गुडो बहुगुडो द्राक्षा । अर्थवदिति किम् । वनम् । धनम् । नान्तस्यावधेर्मा भूत् । नामत्वे हि स्याद्युत्पत्तौ पदत्वान्नलोपः स्यात् । यदानुकार्यानुकरणयोः स्याद्वादाश्रयणेनाभेदविवक्षा तदार्थवत्त्वाभावान्न भवति नामसंज्ञा । यथा गवित्ययमाहेति । यदा तु भेदविवक्षा तदानुकार्येणार्थेनार्थवत्त्वाद्भवत्येव । पचतिमाह । चः समुच्चये । नेर्विशः । परावेर्जेरित्यादि । नामप्रदेशा 'नाम सिद्य्व्यञ्जने' ( १ । १ । २१ ) इत्यादयः ॥ २७ ॥ **शिर्घुट् । १ । १ । २८ ॥** जस्शसादेशः शिर्घुट्संज्ञो भवति । पद्मानि तिष्ठन्ति । पद्मानि पश्य । घुट्प्रदेशा 'घुटि' ( १ । ४ । ६८ ) इत्यादयः ॥ २८ ॥ **पुंस्त्रियोः स्यमौजस् । १ । १ । २९ ॥** औरिति प्रथमाद्वितीयाद्विवचनयोरविशेषेण ग्रहणम् । सि अम् औ २ जस् इत्येते प्रत्ययाः पुंलिङ्गे स्त्रीलिङ्गे च घुट्संज्ञा भवन्ति । राजा । राजानम् । राजानौ तिष्ठतः । राजानौ पश्य । राजानः ।

---

—**समुच्चयादिरिति** । आदिपदाद्वा विकल्पादो एवोऽवधारणे इत्यादि बोध्यम् । तथा द्योतकानां विशेषणं नास्ति । यथा घटश्च भव्यमिति । तथा चादीनां स्वार्थोऽपि द्योत्यतया न वाचकतयेत्येकोऽप्यभिधेयो नास्ति । स्वरादीना तु लिङ्गसंख्ये न स्त ॥ ननु अहन्नित्यत्र विभक्त्यन्तद्वारेणैव नामत्व न भविष्यति किं धातुवर्जनेन । सत्यम् । तथापि हन्तीत्यत्र धातुवर्जनाभावे विभक्त्याक्रान्तस्य एन् इत्यस्य नामत्वे 'नाम सिद्'–इति व्यञ्जनद्वारा पदत्वे च नलोप स्यादिति धातुवर्जनमिति ॥ अथ वृक्षानित्यत्र नकारविधानसामर्थ्यादेव नलुग् न भविष्यति किं विभक्तिवर्जनेनेति । सत्यम् । कारकान् इत्यादौ 'शसोऽता'–इति नविधान चरितार्थम् इत्यत्र नलोप स्यात् इति ॥ ननु साधुर्धर्मं ब्रूते इत्यत्र विभक्त्यन्तत्वादेव नामत्व न भविष्यति किं वाक्यवर्जनेन । सत्यम् । 'प्रत्यय प्रकृत्यादे' इति परिभाषया ब्रूधातोरेव विभक्त्यन्तत्वम् न तु समग्रवाक्यस्य । ततो वाक्यस्य नामत्वे साधुर्धर्मंब्रूते इत्येवंरूपाद्वाक्याद्विभक्तावनिष्टरूपप्रसङ्ग इति ॥ – **समासादेर्भवत्येवेति** । अन्यथा ह्यर्थवच्छब्दरूपस्य नामत्वे विधीयमानेऽर्थवत्समुदायरूपस्य वाक्यस्य प्रसङ्ग एव नास्ति किं वाक्यवर्जनेन । ततश्चैतदेव वाक्यवर्जनं बोधयति समासादेः समुदायस्य भवत्येवेति ननु अधातुविभक्तीत्यत्र पर्युदासाश्रयणादर्थवत एव नामत्व भविष्यति नार्थोऽर्थवदित्यनेन । सत्यम् । अर्थवदिति सञ्ज्ञिनिर्देशार्थम् । पर्युदासाश्रयणे हि केन धर्मेण सादृश्यमाश्रीयत इत्य स्यात् । ततश्चानर्थकानामपि धर्मान्तरेण सदृशत्वे नामसंज्ञाप्रसङ्ग इत्याह—**अर्थवदिति** । अव्युत्पत्तिपक्षाश्रयणे वन इत्यादेरखण्डस्यैवार्थवत्त्व ननु तदवयवस्य वन् इत्यादेर्नान्तस्येति तु धात्वर्थेनार्थवत्तायामपि धातुद्वारेणैव वर्जनसिद्धिरिति ॥ ननु गौरिति वक्तव्ये शक्तिवैकल्याद्गौ इति केनचिदुक्तं तत्समीपवर्ती च तदुक्तमपरेण पृष्टः सन्ननुकरोति तदा तदनुकरणस्य न वेत्याह—**यदेत्यादि** ॥—**अनुकार्येणेति** । वर्णावलीरूपेणेत्यर्थः ॥—**पुंस्त्रियोः**—॥ अलौकिकोऽयं निर्देश । अन्यथा पुमांश्च स्त्री चेति कृतेऽर्च्यत्वात्स्त्रीशब्दस्य प्रागुनिपाते इति समासान्ते च स्त्रीपुंसयोरिति स्यात् । अनेन चैतज्ज्ञाप्यते क्वचिदलौकिको निर्देशो भवतीति ॥—**स्यमौजासेति** । अत्र व्यतिक्रमनिर्देश एवावृत्त्यौकारद्वयं सा॰

स्त्रियां, सीमा । सीमानम्, सीमानौ तिष्ठतः पश्य वा । सीमानः । नि दीर्घ इति दीर्घः । पुंस्त्रियोरिति किम् । सामनी । वेमनी । ह्रुद्त्वाभावा... ॥ कव-
पुनः पुमान् स्त्री वा । लिङ्गम् । किं पुनस्तत् । अयमियमिदमिति यतस्तत्पुमान् स्त्री नपुंसकम् इति लिङ्गम् । तच्चार्थधर्म इत्येके । शब्दधर्म इत्यन्ये । उभयथापि ... १८॥

# ॥ अथ लिङ्गानुशासनम् ॥

पुंलिङ्गं कटणथपभमयरषसस्त्वन्तमिमनलौ किङितव् ॥ ननङौ घघञौ दः किर्भावे खोऽकर्तरि च कः स्यात् ॥ १ ॥ हस्तस्तनौष्ठनखदन्तकपोलगुल्फ, केशान्धुगुच्छ-

---

अमौ । तत. सिश्च अमौ च जसूचेति कृतेऽमूसहचरितस्य द्वितीयाद्विवचनस्य ग्रह । आवृत्त्या तु व्याख्याने औश्च जस् च औजस् । सिश्च अम् च औजसूचेति कृते जसूसाहचर्यात्प्रथमाद्विवचनस्य ग्रहः । एकशेषो वा क्रियते । औश्च औश्च आवौ । ततः सिश्च अम् च आवौ च जसूच तत्तथेति, इत्याह—औरिति ॥ × × × × × ॥ ॥ अथ लिङ्गानुशासनावचूरिः——

ओं नमः सर्वज्ञाय ॥ ॥ लिङ्गानुशासनमन्तरेण शब्दानुशासनं नाविकलमिति सामान्यविशेषलक्षणाभ्यां लिङ्गमनुशिष्यते ॥ नामेति वक्ष्यमाणमिह संबध्यते । कटणथपभमयरषसान्तं स्त्वन्तं च नाम पुलिङ्ग स्यात् । कादयोऽकारान्ता गृह्यन्ते पृथक् सन्तनिर्देशात् । द्विस्वरसन्तानां नपुंसकत्वस्य वक्ष्यमाणत्वेन एकत्रिस्वरादिसन्ता गृह्यन्ते । कान्तः, आनकः पटहो दुन्दुभिश्च । इत्यादि ॥ टान्त, कक्षापुट सारसंग्रहग्रन्थ. । इत्यादि ॥ णान्तः, गुणः शुम्बेऽप्रधानादौ । इत्यादि ॥ थान्त., निशीथः अर्धरात्रः । शपथः समयः । इत्यादि ॥ पान्त', क्षुपो लतासमुदाय. । इत्यादि ॥ भान्त., दर्भो बर्हि । इत्यादि ॥ मान्त., गोधूमो नागरङ्गे स्यादित्यादि ॥ यान्तः, भागधेयो दायादः । राजदेये तु पुंस्त्रियोर्वक्ष्यते । शुभे तु तन्नामत्वादेव क्लीबत्वम् । तन्दुलीयः शाकविशेषः । इत्यादि ॥ रान्तः, निदुर कन्दरी । इत्यादि ॥ षान्त, गवाक्ष' । 'गवाक्षी शक्रवारुण्यां गवाक्षो जालके कपौ' । इत्यादि । सान्त', कूर्पासः कञ्चुके । हंसो विहङ्गभेदे । इत्यादि ॥ स्तन्तः, माश्चन्द्रमासयोः पुंसि । अनेहा. काल. । इत्यादि ॥ नन्त', ग्रावा पाषाणो गिरिश्च । इत्यादि ॥ उकारान्त, तर्कु. सूत्रवेष्टनमग्न्याधारभाण्डं च । मन्तुः अपराधः । इत्यादि ॥ अन्तान्तं नाम पुंलिङ्गम् । पर्यन्तोऽवसानम् । विष्टान्तः मरणम् । प्रत्यन्तस्य बाहुलकत्वान्नपुंसकत्वमेव ॥ इमन्प्रत्ययान्तम् अल्प्रत्ययान्तं च नाम पुलिङ्गम् ॥ इमन्, प्रथिमा । म्रदिमा । द्रढिमा । इत्यादि । नन्तत्वेनैव सिद्धे इमन्ग्रहणम् 'आत्वात् त्वादिः' इति नपुंसकबाधनार्थम् । यस्त्वौणादिकस्तस्याश्रयलिङ्गता । भरिमा पृथ्वी, वरिमा तपस्वी इत्यादि ॥ अल्, प्रभवः । 'प्रभवस्तु पराक्रमे । मोक्षेऽपवर्गः' इत्यादि ॥ तथा क्यन्त ङितवन्तं (च) नाम पुलिङ्गम् ॥ कि', अयं वृतिः वृतूङ् धातुस्तदर्थश्च ॥ ङितव्, अयं पचतिः डुपचीष् धातुस्तदर्थश्च ॥ ङितव्साहचर्यात् 'इकिश्तिव् स्वरूपार्थे' इति विहितस्यैव केर्ग्रहणम् ॥ तथा नप्रत्ययान्तं नङ्प्रत्ययान्तं (च) नाम पुंलिङ्गम् ॥ 'स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शनेऽपि च' ॥ प्रश्नः पृच्छा । नङ्, विश्नो गमनम् ॥ तथा घप्रत्ययान्तं घञ्प्रत्ययान्तं च नाम पुलिङ्गम् । घ', करः । 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः' ॥ परिसरो मृत्यौ देवोपान्तप्रदेशयोः ॥ उरश्छदः कवचं प्रच्छदश्चोत्तरपट' । छदस्य तु नपुंसकता वक्ष्यते । इत्यादि । घञन्तम्, पादः । पादो बुध्नांह्रितुर्यांशरश्मिप्रत्यन्तपर्वतादिषु ॥ आप्लाव. स्नानम् ॥ भाव । 'भाव' सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ॥ क्रियालीलापदार्थेषु विभूतिवन्धजन्तुषु' ॥ अनुबन्ध. प्रकृत्यादेरुपयोगी ॥ दासंज्ञकाद्धातोर्य. कि' प्रत्ययो विहितस्तदन्तं नाम पुलिङ्गम् ॥ आदि प्राथम्यम् । व्याधि. रोग. । उपाधिर्धर्मचिन्ता कैतवं कुटुम्बव्यापृतो विशेषणं च । उपधिः कपटम् । उपनिधिः न्यास. । प्रतिनिधि प्रतिबिम्बम् । संधिः पुमान् सुरङ्गादौ । परिधि. परिवेष. । अवधिस्त्ववधानादौ । प्रणिधिः प्रार्थनमवधानं चरश्च । समाधिः प्रतिसमाधान

...ग्रहाणाम् ॥ निर्यासनाकरसकण्ठकुठारकोष्ठ, हैमारिवर्षविषबोलरथाशनीनाम् ॥ २ ॥ श्वेतप्लवात्मसुरजासिकफाभ्रपङ्क, मन्थत्विषां जलधिशेवधिदेहभाजाम् ॥

नियमो मोन चित्तैकार्थ्य च । विधि. काल कल्पो ब्रह्मा विधिवाक्य विधान दैव प्रकारश्च । वालधि पुच्छम् । शब्दधि. कर्ण. । जलधि' समुद्र । अन्तर्द्धिर्व्यवधा । प्रधेस्तु नेमौ स्त्रीपुंसत्व
रोगविशेषे स्त्रीत्व, शिरोधेस्तु स्त्रीत्वम्, इषुधेस्तु स्त्रीपुंसत्व वक्ष्यते । इत्यादि ॥ भावे खः, भावेऽर्थे य खो विहितस्तदन्त नाम पुलिङ्गम् । आशितस्य भवनम् आशितभवो वर्तते, तृप्तिरित्यर्थ. ॥
भाव इति किम् । आशितो भवत्यनया आशितंभवा पञ्चपूली ॥ अकर्तरि च क' स्यात् । भावे कर्तृवर्जिते च कारके य क. प्रत्ययस्तदन्त नाम पुंलिङ्गम् ॥ आखूनामुत्थानमाखूत्थ' ॥ विहन्य-
तेऽनेनास्मिन्वा विघ्न अन्तरायः । इत्यादि । अकर्तरि चेति किम् । जानातीति ज्ञ परिषद् ॥ १ ॥ हस्तादीना नाम जलध्यादीना तु सभिदा सप्रभेदानामपि पुलिङ्ग भवति । हस्तनाम, पञ्चशाख ।
कर । शय. । अथ शय्यायामपि यान्तत्वात्पुंसि । हस्तस्य तु पुनपुंसकत्वम् ॥ स्तननाम, स्तन' । पयोधर । कुच । वक्षोज । इत्यादि ॥ ओष्ठनाम, ओष्ठः । अधर. । दन्तच्छद । इत्यादि ॥
नखनाम, करजः । कररुह । मदनाङ्कुश. । इत्यादि ॥ नखः पुक्लीब' ॥ नखरस्तु त्रिलिङ्ग ॥ दन्तनाम, दन्त । दशन । अथ रुद्रटेन क्लीबेऽपि निबद्ध 'दशनानि च कुन्दकलिका स्यु.
इति तच्चिन्त्यम् । द्विज । रदः । रदन । इत्यादि ॥ कपोलनाम, कपोल. । गण्ड । गल्लः । इत्यादि ॥ गुल्फनाम, गुल्फः । घुट । प्रपदः । आप्रपद' । खुरकः । निस्तोद । पादशीर्ष. ।
इत्यादि । हस्तिगुल्फस्तु प्रोह. । घुटिकघुण्टिघुण्टगुल्फास्तु स्त्रीपुंसलिङ्गा वक्ष्यन्ते ॥ केशनाम, केश. । शिरोज । शिरोरुह. । चिकुर. । चिहुर. । कच. । अयं बाहुलकाद्व्रणेऽपि पुंसि । गुरोः पुत्रे
तु देहिनामत्वात्सिद्धम् । इभ्या तु योनिमत्त्वात्स्त्रीत्वम् । अस्त्रः । वेल्लिताग्र । इत्यादि । वृजिनश्च । यद्वौडः । 'वृजिन कल्मषे क्लीब केशे ना कुटिले त्रिषु' । कुन्तलश्च । 'कुन्तला स्युर्जन-
पदो हलो वालश्च कुन्तल' । हले बाहुलकात्पुंसि । वाल. पुंनपुंसको वक्ष्यते । तद्विशेषोऽपि केश. । कुरल. । अलक. ॥ अन्धु. कूपस्तन्नाम, अन्धु. । प्रहि । प्रहि. । इत्यादि । कूपस्तु
स्त्रीपुंसलिङ्ग. ॥ गुच्छनाम, गुच्छः । गुत्स. । गुलुञ्छ । स्तबकस्तु पुक्लीब ॥ दिननाम, घस्र. । सूर्याङ्क । दण्डयाम. । दिनदिवसवासराणां पुनपुंसकत्वम् । दिवाह्नोस्तु नपुंसकत्वम् ॥ स इति
समासस्याख्या पूर्वाचार्याणाम् । तन्नाम, बहुव्रीहि. । अव्ययीभावः । द्वन्द्व. । इत्यादि ॥ ऋतुनाम, हेमन्त । वसन्तशिशिरनिदाघा पुंनपुंसका । शरत्प्रावृड्वर्षाश्च स्त्रीलिङ्गा. । ऋतुस्तु उदन्तत्वा-
त्पुंसि । पतद्ग्रह आचेलकाधारस्तन्नाम, प्रतिग्रहः । प्रतिग्राह । इत्यादि । निर्यासनाम, वृक्षादीना रस । गुग्गुल' । श्रीपृष्ट. । श्रीवेष्ट. । सर्जरस. । उप. । उलूखल नपुंसकम् । निर्यासस्तु पुंन-
पुंसक । कुम्भकुन्दोलूपले तु बाहुलकान्नपुंसके ॥ नाकनाम, स्वर्ग । स्व' अव्ययम् । नाकत्रिदिवौ पुनपुंसकौ । दिवं त्रिविष्टप क्लीबे । द्योदिवौ स्त्री ॥ रसा. शृङ्गारादयस्तन्नाम, शृङ्गारहास्यकरु-
णरौद्रवीरभयानकशान्तबीभत्साद्भुता इति । वत्सलस्तु पुत्रादिस्नेहात्मा रतिभेद एव । शृङ्गार पुक्लीब । गौडस्तु 'शृङ्गारवीरौ बीभत्स रौद्रं हास्य भयानकम् ॥ करुणा चाद्भुत शान्त वात्सल्य च
रसा दश' १ इति ॥ कण्ठनाम, गलः । नाल ॥ कुठारनाम, परशु । पर्शु । स्वधिति । इत्यादि । कुठार. पुस्त्री ॥ कोष्ठनाम, कुशूल. । इत्यादि । हैमनाम, हैमो भेषजभेद.
किरातकसञ्ज्ञ ॥ अरिनाम, द्विषन् । प्रत्यर्थी । रिपु । इत्यादि ॥ वर्षनाम, । वत्स' । संवत्सर. । सवदित्ययमव्ययमपीति काश्चित् । वर्षहायनाब्दास्तु पुक्लीबाः । शरत्समे तु स्त्रीलिङ्गे ॥
गर' । ब्रह्मसुत. । क्ष्वेड । वत्सनाभ. । इत्यादि । विषकालकूटगरलहालाहलकाकोला पुंनपुंसका' । मधुरस्य बाहुलकात् क्लीबत्वम् ॥ बोल औषधविशेषस्तन्नाम, गन्धरस. । प्राण
रथनाम, पताकी । स्यन्दनः । पुनपुंसकोऽयमिति गौडशेष. । रथ. पुस्त्री ॥ अशनिनाम, पवि' । इत्यादि । अशनि. पुस्त्री । वज्रकुलिशौ पुक्लीबौ । भिदुर बाहुलकात् .
श्वेत' । कपर्द' ॥ प्लवनाम, । कोल । भेल' । उडुपस्तु पुक्लीब । आत्मनाम, जीव । पुद्गल । क्षेत्रज्ञ । प्रधाने त्वाश्रयलिङ्गता । पुरुष. । इत्यादि ॥ सुरजो

मानद्रुमाद्रिविषयाशुगशोणमास, धान्याध्वराग्निमरुतां सभिदां तु नाम ॥ ३ ॥ बर्होऽच्छदेऽहिर्वप्रे व्रीह्यद्र्योर्हायनबर्हिषौ ॥ मस्तुः सक्तौ स्फटिकेऽच्छो ... ॥ कव-
नयोः ॥ ४ ॥ कोणेऽस्त्रश्चपके कोशस्तलस्तालचपेटयोः ॥ अनातोद्ये घनो भूम्नि दारप्राणासुवल्वजाः ॥ ५ ॥ कान्तश्चन्द्रार्कनामायःपरो यानार्थतो युगः ॥ ... १८॥
दसमाहारे द्वन्द्वोऽश्ववडवाविति ॥ ६ ॥ वाकोत्तरा नक्तकरल्लकाङ्का, न्युङ्खोत्तरासङ्गतरङ्गरङ्गाः ॥ परागपूगौ स्तगमस्तुलुङ्गकुडङ्गकालिङ्गमतङ्गमङ्गाः ॥ ७ ॥ वेगरं...

भेदोऽपि । मुरज ॥ असिनाम, निस्त्रिश. । खड्ग । ऋष्टेस्तु पुस्त्रीत्वम् ॥ कफ । श्लेष्मा । रेटस्तु पुक्लीव' । अभ्र मेघ । अभ्रस्तु पुक्लीव. ॥ पङ्को निषद्वर । पङ्कजम्बालौ पुक्लीबौ ॥ मन्थ । मन्थान ॥ त्विट् कान्ति । अशु । अय रवावपि । अभीषु । मूर्धन्योपान्त्योऽयम् । मयूख । अयं शोभाज्वालयोरपि बाहुलकात्पुसि ॥ रुचित्विट्द्युतिदीधतय. स्त्रीलिङ्गा । रोचि शोचिषी तु द्विस्व-रसन्तत्वात् क्लीबे । गोमरीचिप्रश्नयस्तु पुस्त्रीलिङ्गा. । रश्मि. । अय रज्जौ स्त्रियाम् ॥ जलधिः । अर्णव' । समुद्र । महाकच्छः । पश्चिमाशापतौ तु देहिनामत्वात्पुसि । तत्प्रभेदनाम, क्षीरोद । लवणोद । इत्यादि ॥ शेवधि. । निधि । तत्प्रभेद । 'महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ॥ मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव' १ । पद्मस्य त्विभविन्दौ नपुंसकत्वम् ॥ देही। जन्तु.। जन्मी । जन्मशब्दोऽकारान्तोऽप्यस्ति । जन्तु पुंनपुसकः । तत्प्रभेद । ब्राह्मण. । क्षत्रिय । वैश्य. । शूद्र । इत्यादि ॥ देव । सुर । इत्यादि । तत्प्रभेद । इन्द्र । चन्द्र । इत्यादि ॥ मान-नाम, तूल । कुडव । प्रस्थ पुनपुसक । आढकस्तु त्रिलिङ्ग ॥ द्रुमनाम, अहिप । वनस्पति ॥ विषयनाम, विषय इन्द्रियग्राह्यो गन्धशब्दस्पर्शादि । देशश्च । तुवररावकपायकोलाहलनीलाना पुक्लीबत्वम् । रूपस्य तु नपुसकत्वम् ॥ आशुगनाम, पतत्रि । शरबाणकाण्डा पुनपुसका' । इपुस्त्रिलिङ्ग. ॥ धान्यनाम, व्रीहि । स्तम्बकरि । धान्यसीत्यशस्याना सयुक्तयान्तत्वेन नपुंसकत्वम् । सापाणू पुनपुसकौ । आढकीप्रियगू स्त्री । मसूर स्त्रीपुस । शणं नपुसकम् ॥ अध्वरनाम, अध्वर । मख । यज्ञ । वितानवाजपेयराजसूयाना यज्ञविशेषाणा पुंनपुसकत्वम् । बर्हिःसत्रयोस्तु नपुसकत्वम् ॥ अग्निनाम, भास्कर आशुशुक्षणि. । अयमण्यन्तोऽपि बाहुलकात्पुसि ॥ मरुन्नाम, वात. । समानस्तु पुनपुसक ॥ ३ ॥ छद पर्णे पिच्छ च । ततोऽन्यस्मिन्बर्ह' पुसि । बर्ह. परिवार । तयोस्तु पुनपुसक. ॥ वप्रे केदारेऽहि पुसि । सर्पे तु पुस्त्री । हायनबर्हिषौ व्रीहावद्रौ च पुसि । वर्षरश्म्योश्च भेदे पुनपुसकौ । बर्हिषोऽग्निनामत्वादेव सिद्धे द्विस्वरसन्तक्लीबत्वबाध-नार्थम् ॥ सक्तौ धानाविकारे मस्तु । अन्यत्र तु स्वन्तत्वात् क्लीबत्वम् ॥ स्फटिकेऽच्छ । अयमव्ययमाभिमुख्येऽप्यस्ति ॥ मणौ रत्ने इने सूर्ये क्रमेण नील मित्रौ पुंसि। नीलान्तत्वान्महीनीलोऽपि । मित्रस्य देहिनामत्वादेव सिद्धे नियमार्थं, तेन सुहृदि सयुक्तरान्तत्वेन क्लीबत्वम् ॥ ४ ॥ कोणेऽस्र. पुसि । कोण अस्र । अन्यत्रेदमस्रं रुधिरम् । सयुक्तरान्तत्वान्नपुसकत्वम् । केशे तु तन्नामत्वादेव पुस्त्वम् ॥ चपके कोश पुसि । कोशश्चपक । प्रत्याकारे शम्बायां च त्रिषु । भाण्डागारादौ तु पुनपुंसक. ॥ तालो वृक्षविशेषो वितस्तिश्च तयोश्चपेटे च तल. पुसि । तलान्तत्वाद्धतलोऽपि चपेटे ॥ आतोद्यमुपलक्षण नृत्यस्य । आतोद्यान्मध्यमनृत्ताच्चान्यत्र घन. पुसि ॥ दारा कलत्रम् । प्राणा असवो जीवित च । असव प्राणा. । वल्वजा उपलाख्यस्तृणभेद. । एते पुलिङ्गा., भूम्नि बहुत्व एव । क्वचिदेपामेकत्वमपि । असुसाहचर्यात्तद्वाचिन एव प्राणस्य बहुत्वम् । पुंस्त्व तु णान्तत्वादेव सिद्धम् ॥ ५ ॥ चन्द्रार्कनामभ्योऽय शब्दाच्च पर कान्तो यानार्थवाचिन. परो युगश्च पुंलिङ्ग. । चन्द्र-कान्त । सूर्यकान्तः । अयस्कान्त. लोहाकर्षण. । (यूपयुग्मयोरपि) यानयुग । शकटयुग ॥ यश्चासमाहारे इतरेतरयोगे द्वन्द्वोऽश्ववडवाविति स पुसि । अश्वश्च वडवा चेमावश्ववडवौ । द्विवचनम-तन्त्रम् । तेनेमेऽश्ववडवा । अश्ववडवान् पश्य । 'अश्ववडवपूर्वापराधरोत्तरा' इति निर्देशाद्ध्रस्वत्वम् । असमाहार इति किम् । अश्ववडवम् । द्वन्द्व इति किम् । अश्वो वडवाऽस्याश्ववडवमुन्मुग्ध कुलम् । अश्ववडवा स्त्री । द्वन्द्वस्यापरवल्लिङ्गत्वप्राप्तौ वचनम् ॥ ६ ॥ अत. पर स्वरान्तक्रमेण शब्दा उदाह्रियन्ते । तत्र स्वरान्तेषु ककारोपान्त्यादिक्रमेणाकारान्ता उदाह्रियन्ते ॥ वाकोत्तरपदा नक्तकादय-श्च शब्दा पुलिङ्गा ॥ अनूच्यत इति अनुवाकः ऋग्यजु समूहात्मक वचनम् । वजन्तत्वादेव सिद्धे नियमार्थं वचन 'भाव एव पुस्त्वमिति' तेन वक्तं काष्ठमित्यादौ भावादन्यत्र वजन्तस्याश्रयलि-

वपाङ्गवर्गौघार्घा मश्मसपुच्छागिच्छगच्छाः ॥ व्राजौजकलिञ्जपुञ्जमुञ्जा अवटः पट्टहठमकोष्ठकोष्ठाः ॥ ८ ॥ अङ्गुष्ठगण्डौ लगुडप्रगण्डकरण्डकूष्माण्डगुडाः शिखण्डः ॥
वरुण्डरुण्डौ च पिचण्डनाडीव्रणौ गुणभ्रूणमलक्तकुन्तौ ॥ ९ ॥ पोतः पिष्टातः पृपतश्चोत्पातव्रातावर्थकपर्दौ ॥ बुद्बुदगदमगदौ मकरन्दो जनपदगन्धस्कन्धमगाधाः ॥ १० ॥
अर्धसुदर्शनदेवनमहाभिजनजनाः परिघातनफेनौ ॥ पूपापूपौ सूपकलापौ रेफः शोफः स्तम्बनितम्बौ ॥ ११ ॥ शम्बाम्बौ पाञ्चजन्यतिष्यौ पुष्यः सिचयनिकाय्यरात्र-

---

ता । अथवा, अनुगतो वाकोऽनेन तदनुवाक इति अन्यपदार्थत्वेऽपि पुस्त्वार्थम् । नक्को गलनम् ॥ रल्लक. पक्ष्मकम्बल ॥ अङ्ग' समीपम् । नक्ककरल्लकयोर्वैरानामत्वेनाङ्गस्यान्तिकनामत्वेन क्ली-
वत्वे प्राप्ते वचनम् ॥ न्युङ्ग' पजोङ्कारा' । सम्यग्मनोज्ञे त्वाश्रयलिङ्ग' ॥ उत्तरासङ्ग' वैकक्ष्यम् । तद्वाची अर्थप्राधान्यात्कम्बलोऽपि ॥ तरङ्ग. ऊर्मि । रङ्गो नर्तनभूमि ॥ परागो धूल्यादि ॥ पूग
क्रमुक' सघोऽपि । अग्र क्लीनोऽपीति कश्चित् ॥ सृगो भिन्दिपालाख्य शस्त्रविशेषोऽर्थप्राधान्याद्भिन्दि(द)पालोऽपि ॥ मस्तुलिङ्गो मस्तिष्क । कुञ्जो वृक्षगहनम् ॥ कालिङ्ग' कालिङ्गिनी तत्फल च ।
चिर्भट्यां वल्लिनामत्वादेव स्त्रीत्वम् । वाल्लिनामत्वेन स्त्रीत्वे फलनामत्वेन क्लीबत्वे प्राप्ते वचनम् । तमङ्ग छन्दःकोश ॥ मङ्गो धर्मो नो शिरश्च ॥ ७ ॥ वेगो रय' किपाकफलं प्रवाहो मूत्रादिप्रवृत्तिश्च ॥
समुद्ग' संपुट ॥ अपाङ्गो नेत्रान्ततिलकश्च ॥ वर्ग' संघात ॥ ओघ' समूहादि ॥ अर्घो मूल्य पूजाविशेषश्च ॥ वेगवर्गाङ्गोघार्घाणामौणादिकगान्तानां समुद्गस्य च उान्तस्य ग्रहणम् । घजन्तत्वे तु
सिद्धमेव ॥ मञ्जो राजासनम् । पुच्छ पश्चाद्भाग । लाङ्गूले तु पुनपुसकः ॥ पिच्छ लाङ्गूलम् । गच्छोऽभिमतसख्यावसानम् ॥ वाज पिच्छम् ॥ ओजो विषमसख्या ॥ किलिञ्ज कट ॥ मुञ्ज
शरेषीका ॥ अवटो रन्ध्रम् ॥ पट्ट पेषणपाषाण. पीठं च । ललाटभूषायां बाहुलकत्वात् स्त्रीत्वे पटी ॥ हठ बलात्कार वारिपर्णी च ॥ प्रकोष्ठ' कूर्परादध ॥ कोष्ठ कुक्षिगृहयोरन्तरालम् आत्मीय-
श्च ॥ ८ ॥ अङ्गुष्ठोऽङ्गुलिविशेष ॥ अथ डान्ता ढश ॥ गण्ड. पिटक. । लगुडो लोहमय शस्त्रम् ॥ प्रगण्ड' कूर्परांसयोर्मध्यम् ॥ करण्डो भाण्डविशेष ॥ कूष्माण्ड' कर्कारु भ्रूणश्च ॥ गुडो गोलक
॥ शिखण्डश्चूडा ॥ वरण्डोऽन्तरावेदो ॥ रुण्ड कबन्ध' । रुण्डान्तत्वाद्वरुण्ड' सेकपात्रम् ॥ पिचण्ड उदरम् ॥ णान्तास्त्रय' ॥ नाडीव्रणो रोगविशेष' । व्रणस्य पुनपुंसकत्वेन तत्पुरुषेण परवल्लिङ्गता-
प्राप्तौ वचनम् ॥ गुण' पट । भ्रूणो गर्भिणी स्त्री शिशुश्च । गुणस्याशुकनामत्वेन नपुंसकत्वे भ्रूणस्य तु योनिसन्नामत्वेन स्त्रीत्वे प्राप्ते पाठ । अथ तान्ता. सप्त ॥ अलक्तो यावक ॥ कुन्त. प्रासः ।
अर्थप्राधान्यात् शल्यपराचदीर्घायुधा अपि ॥ ९ ॥ पोत प्रवहण शिशुश्च ॥ पिष्टात पटवासक: ॥ पृपता निन्दव । प्रायेण बहुवचनान्तोऽयम् । धननामत्वेन क्लीबत्वे प्राप्तेऽस्य पाठ ॥ मृगवाचिनस्तु देहिनामत्वादेव पुस्त्वम् । उत्पात
उपसर्ग ॥ व्रात समूह: ॥ अथ शान्त' । 'अर्थ प्रकारे विषये चित्तकारणवस्तुषु । अभिधेयेऽपि शब्दानाम्' । धननामत्वेन क्लीबत्वे प्राप्तेऽस्य पाठ ॥ अथ दान्ता षट् । कपर्दो हरजटाबन्ध. ।
वराटवाचिनस्तु तन्नामत्वान्नैव सिद्धं पुस्त्वम् ॥ बुद्बुद जलादिसंस्थानविशेष' ॥ गदो व्याधि विष्णोरनुजश्च ॥ अगद औषधम् ॥ मकरन्द पुष्परस । अर्थप्राधान्यान्मरन्द इति ॥ जनपदो जन-
समूहो विषय' करदश्च कुटुम्बी ॥ अगदजनपदयोर्भेषजनामपदान्तत्वाभ्या नपुसकत्वे प्राप्ते पाठ ॥ अथ धान्ता ॥ 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयो' ॥ स्कन्ध. 'प्रकाण्डेंऽशे नृपे स्कन्ध
काये व्यूहसमूहयो' ॥ अगाध विरलम् । बिलनामत्वादेव क्लीबत्वे प्राप्ते पाठ ॥ विर छन्द' ॥ १० ॥ अर्ध खण्डम् । ग्रामार्ध । अर्ध पटी । अर्ध नगरम् । समांशे तु क्लीबत्वस्य व '
माणतया विषमांशवृत्तीरिहार्धशब्द ॥ अथ नान्ता' सप्त ॥ सुदर्शन विष्णुचक्र शक्रपुर च । मेरुजस्त्वा स्त्रीपुसलिङ्गः ॥ देवन अक्ष । क्रीडाविहारविजिगीषासु नान्तत्वान्नपुसकत्वमेव ॥ ७
'सख्यात'—इति 'सर्वांश'—इति च कृतसमासान्तोऽहन्शब्द । सख्याताह: । सर्वमह' सर्वाह्ण । पूर्वमह पूर्वाह्ण । एव सायाह्न । प्रारम्भो मध्य चाह्न प्राह्ण. मध्याह्न. ॥
पुल्लीव । परवल्लिङ्गतापवादोऽस्य पाठ. ॥ अभिजन. कुले ख्यातावभिजनो जन्मभूम्यां कुलध्वजो ॥ जन लोक. ॥ परिघातन अयोबद्धो लगुड ॥ फेन डिण्डीर । अर्थप्राधान -
॥ अथ पान्ताश्चत्वार. ४ ॥ पूपोऽपूपश्च गुणभेद. सूप' मुद्गादिविकार सूपकारे देहिनामत्वादेव सिद्धम् । अर्थप्राधान्यात्सूद इत्यपि । पूपादीनां नपुंसकत्वे प्राप्तेऽस्य पाठ'

लघु

वृत्राः ॥ मन्त्रामित्रौ कटप्रपुण्ड्राराः कल्लोलोञ्छौ च खल्लतल्लौ ॥ १२ ॥ कण्डोलपोटगलपुद्गलकालवालावेला गलो जगलहिङ्गुलगोलफालाः ॥ स्यादेव पत्रपालवातूलतालजडुला भूमलो निचोलः ॥ १३ ॥ कामलकुद्दालावयवस्वाः स्रुवरौरवयावाः शिवदावौ ॥ माधवपणवादीनवहावध्रुवकोटीशांशाः स्पशवंशू ॥ कव-कुशोड्डीशपुरोडाशवृषकुल्मासनिष्कुहाः ॥ अहनिर्यूहकलहाः पक्षराशिवराड्यृषिः ॥ १५ ॥ दुन्दुभिर्वमतिष्टाष्णिपाण्यविज्ञातिरालिकलयोऽञ्जलिर्घृणिः ॥ अग्निवह्निकृ१६॥

काञ्च्याम् भूषणतूणयो.' ॥ पिच्छनामत्वान्नपुसकत्वेऽस्य पाठ ॥ अथ फान्तौ । रेफोऽवद्यम् । वर्णविशेषे तु विषयनामत्वेनैव पुस्त्वम् ॥ शोफ श्वयथु' ॥ अथ बान्ता. ४ ॥ स्तम्ब' आलान व्रीह्यादीना प्रकाण्डविशेषश्च । तत्र चार्थप्राधान्याद् गुच्छोऽपि ॥ नितम्ब. 'स्त्रिया' पश्चात्कटौ सानौ नितम्ब कटरोधसो.' ॥ ११ ॥ शम्ब मुसलाग्रस्थो लोहमण्डलक. । अशनौ तु तन्नामत्वादेव पुंस्त्वम् ॥ अम्ब. सरकादीनाम् ॥ अथ यान्ता ॥ पाञ्चजन्यो विष्णो शङ्ख पोटगलश्च ॥ तिष्य. पुष्यश्च कलियुगम् । नक्षत्रे बहुल नक्षत्रेत्यनेन मासविशेषे तु मासनामत्वादेव पुस्त्वम् ॥ सिचयो वस्त्रम् । अशुकनामत्वेन क्लीवत्वे प्राप्तेऽस्य पाठ ॥ निकाय्यो निवास' ॥ अथ रान्ता ॥ रात्र इति कृतसमासान्त 'सख्यातैक'—इति 'ऋक्साम'—इति च रात्रिशब्द । पुण्या रात्रि पुण्यरात्र । वर्षारात्र. । दीर्घरात्र । चिररात्र. । पूर्वरात्र । अपररात्र । अर्धरात्र । अहोरात्राविमौ । एकात्समाहारे च पुक्लीव । परवल्लिङ्गतापवादोऽस्य पाठ. ॥ वृत्रोऽन्धकार रिपुश्च ॥ मन्त्र. ऋगादिलक्षण. ॥ अमित्रो वैरी । अरिनामत्वादेव सिद्धे संयुक्तरान्तत्वात् क्लीबत्वबाधनार्थं वचनम् ॥ कटप्र. समूह ॥ 'पुण्ड्रो दैत्यविशेषेक्षुभेदयोरतिमुक्तके' ॥ आर आरकूट ॥ द्रवनामत्वात् क्लीवत्वे प्राप्तेऽस्य पाठः । अथ लान्ता २६ । कल्लोलस्तरङ्ग । अर्थप्राधान्यादुल्लोलोऽपि । उल्ल सूरण ॥ खल्ल कृतौ हस्तपादावमर्दनारयरुजि च ॥ तल्लस्तडाग ॥ १२ ॥ कण्डोल पिटकाख्य भाजनम् ॥ पोटगल काश नडश्च । पुद्गल परमाणु' देहश्च । कालो मृत्यु । वालोऽश्वकरिवालधि । तुटौ तु बाहुलकात् स्त्रियाम् ॥ आवेलश्चर्विततान्बूलम् ॥ गल सर्जरस ॥ अर्थप्राधान्यात् कलकल इत्यपि । कण्ठे तु तन्नामत्वादेव पुंस्त्वम् ॥ द्रवनामत्वात् क्लीबत्वे प्राप्तेऽस्य पाठ. ॥ जगल पिष्टमद्यम् ॥ हिङ्गुलं दारदम् ॥ गोल सर्वतोवृत्त बालक्रीडनकाष्टे स्त्रीपत्राञ्जनादौ क्लीब । यस्तु गोल एव गोलक इति स्वार्थिकप्रत्ययान्तो मृते भर्तरि जारजस्य वाचक स आश्रयलिङ्ग. ॥ फाल कुशी । देवल देवायतनम् ॥ बहुल कृष्णपक्ष. ॥ तण्डुल धान्यसार विडङ्ग च ॥ पत्रपाल दीर्घा छुरी ॥ वातूल वातसमूह । वातासहे चोन्मत्ते चाश्रयलिङ्ग ॥ ताल गीतकालक्रियामानकरतलादौ । जडुलो देहे कृष्ण लक्ष्म ॥ भूमलो रोगविशेष ॥ निचोल निचुलकम् । उपसर्गस्यातन्त्रत्वात् चोल स्त्रीणा कूर्पासकश्चोल ॥ १३ ॥ कामलो 'मरौ रोगेऽवतसे ना कामलस्त्रिषु कामुके' ॥ कुद्दाल खनित्रविशेष ॥ अथ वान्ता १२ ॥ अवयव अङ्गम् ॥ स्व आत्मा स्वभाव ज्ञातिश्च । अर्थे तु पुक्लीव । आत्मीये तु गुणवृत्तित्वादाश्रयलिङ्ग ॥ स्रुव स्रुग्भेद ॥ रौरवो नरकभेद ॥ याव अलक्तक ॥ शिवो वेदादि. ॥ दावोऽरण्यम् । वह्निविशेषे तु पुस्त्वं सिद्धमेव । अर्थप्राधान्याद्दव इत्यपि 'कानने वनवह्नौ च स्याद्दावो दववन्नरि' ॥ माधवो मधुमिश्र आसव । स्वार्थिके के माधवक । माघे मासभेदे मधौ विष्णौ च सिद्धमेव पुस्त्वम् । स्त्रियामपीति कश्चित् । पणव पटह ॥ आदीनवो दोष परिक्लिष्ट दुरन्तश्च ॥ हाव भावसूचक ॥ ध्रुव आतौशिवे शङ्कौ इत्यादि ॥ अथ शान्ता ७ ॥ कोटीशो लोष्टभेदन । अर्थप्राधान्यात्कोटिशोऽपि ॥ अश भाग. ॥ स्पश सपराय प्रणिधिश्च ॥ 'वंशो वर्गे कुले वेणौ पृष्ठस्यावयवेऽपि च' ॥ १४ ॥ कुश योक्त्रम् द्वीपश्च ॥ उड्डीशो ग्रन्थविशेष । हरे तु देहिनामत्वात्पुस्त्वम् ॥ 'पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च ॥ रसे सोमलतायाश्च हुतशेषे च पुस्यपि' ॥ अथ षान्त ॥ वृष गवादि । व्रतिनामासन वृषी ॥ अथ सान्त. ॥ कुल्मास अर्धस्विन्नो मापादि । अन्ननामत्वात् क्लीबत्वे प्राप्तेऽस्य पाठ । मूर्धन्योपान्त्योऽप्ययम् ॥ अथ हान्ता ४ ॥ निष्कुह कोटरम् । ये तु टान्तमाहुस्तन्मते टान्तत्वात्पुस्त्वम् ॥ अह इति 'द्विगो'—इति 'अह्न' इति च कृतसमासान्तोऽहन्शब्द । द्वयोरह्नो समाहारो द्व्यह । त्र्यह । पञ्चाह । सप्ताह । द्विगुरन्नेति स्त्रीनपुसकत्वे परमाह उत्तराह इत्यादौ परवल्लिङ्गताप्राप्तौ वचनम् । सुदिनैकाभ्या क्लीबत्वम्, पुण्याहस्य तु पुनपुसकत्वम् ॥ निर्यूह

हिदीदिविग्रन्थिकुक्षिद्दतयोऽर्दनिर्ध्वनिः ॥ १६ ॥ गिरिशिश्रुजायुकर्पूौ हाहाहूहूश्च नमहूर्गर्मुत् ॥ पादश्मानावात्मा पाप्मस्थेमौष्मयक्ष्माणः ॥१७॥ इति पुंलिङ्गं समाप्तम् ॥
स्त्रीलिङ्गं योनिमद्ग्रीसेनावल्लितडिन्निशाम् ॥ वीचितन्द्राऽवटुग्रीवाजिह्वाशस्त्रीदयादिशाम् ॥ १ ॥ शिशपाद्या नदीवीणाज्योत्स्नाचीरीतिथीधियाम् ॥ अङ्गुलीकल-
शिकङ्गुहिङ्गुपत्रीसुरानसाम् ॥ २ ॥ रास्नाशिलावचालालाशिम्बाकृष्णोणिकाश्रियाम् ॥ स्रक्त्वापण्यातसीधाय्यासरघारोचनाभुवाम् ॥ ३ ॥ हरिद्रामांसिदूर्वाऽऽलूबला-

शेखरे नागदन्ते निर्यासेऽपि ॥ कलह खङ्गकोशे भण्डने च ॥ अथ क्षान्त । पक्ष पिच्छम् । युद्धपिच्छनामत्वात्क्लीवत्वे प्राप्ते वचनम् । प्रतिज्ञार्थादौ च पक्षस्य पान्तत्वादेव पुंस्त्वम् ॥ अथेकारा-न्ता ॥ राशिर्मेषादि पुञ्जश्च ॥ वराशि स्थूलशाट ॥ वस्त्रनामत्वात् क्लीवत्वे प्राप्तेऽस्य पाठ ॥ ऋषिर्वेदविशिष्टादौ ॥ १५ ॥ दुन्दुभिर्भेरीविशेषे । दैत्ये तु सिद्धमेव । अक्षे स्त्रीत्वम् ॥ वमतिर्वान्ति ॥ वृष्णि कुलविशेष मेषश्च ॥ पाणि हस्त ॥ अवि मूषककम्बल ॥ ज्ञाति स्वजन ॥ रालि कलह ॥ कालि अन्त्ययुगम् ॥ अञ्जलि पाणिपुट ॥ घृणिरभीशु ॥ अग्नि कृशानु ॥ वह्नि स एव ॥ कृमि कीट । अर्थप्राधान्यात् क्रिमिरपि ॥ अङ्घ्रि पाद ॥ अर्थप्राधान्यादङ्घ्रिरपि ॥ दीदिवि ओदनम् । अर्थप्राधान्यात् कुरुश्च ॥ अन्थि रज्ज्वादिवेष्टनवन्ध ॥ कुक्षिर्जठरम् ॥ इतिश्चर्म-चर्मप्रसेवकश्च ॥ अर्दनि अग्नि ॥ ध्वनि प्रतीयमानोऽर्थ । वृष्णिघृष्ण्योर्यन्तत्वात् अग्निवल्लयोश्च न्यन्तत्वात् अर्दनेरन्यन्तत्वात् कृमेर्म्यन्तत्वात् पाणिकुक्ष्यह्रीणा प्राण्यङ्गवाचीदन्तत्वात् स्त्रीत्वे टीदियेरज्ञ-नामत्वान्नालेश्च युज्ञामत्वात्क्लीवत्वे प्राप्ते वचनम् ॥ १६ ॥ गिरि कन्दुक ॥ शिश्रु श्रोत्रम् ॥ जायुरौषधम् । कर्पू करापाग्नि ॥ हाहाहूहूरित्यखण्ड नाम देवगायनवाचि । केचित् खण्डयन्ति । अव्ययत्वादलिङ्गाविति केचित् । गन्धर्वौ च हाहा हूहूरिति तु लक्ष्यम् । एकदेशविकृतस्यानन्यत्वादर्थप्राधान्याद्वा निर्देशस्य तदपि सगृहीतम् । देहिनामत्वादेव पुंस्त्वसिद्धौ विमतिज्ञापनार्थम् हूहू-रित्यस्य कृत इति स्त्रीत्वबाधनार्थम् ॥ नमहूर्मापदलिन्यादिवीजम् । अर्थप्राधान्यान्नमहुरित्यपि ॥ नमान् ह्वयतीति व्युत्पत्तिप्राधान्ये स्वाश्रयलिङ्गता ॥ अथ व्यञ्जनान्ता ८ ॥ गर्मुत् सुवर्णम् सरघा च । द्रवनामत्वान्नपुंसकत्वे प्राप्तेऽस्य पाठ ॥ पाद् चरण । अदन्तोऽप्ययम् ॥ अश्मा पाषाण ॥ उपलक्षणत्वाद्धेमलोऽपि ॥ आत्मा शरीर स्वभावश्च ॥ पाप्मा पाप रोगश्च ॥ स्थेमा स्थैर्यम् ॥ इमन्नन्तत्वादेव सिद्धे द्विस्वर मन्नकर्तरि इति क्लीवत्वबाधनार्थमस्य पाठ ॥ ऊष्मा सताप सम्राट्श्च ॥ यक्ष्मा क्षयरोग । तदन्तत्वाद्राजयक्ष्मापि । अश्मादीनामन्नन्तत्वेन क्लीवत्वे प्राप्ते वचनम् एव शेषेष्वपि लिङ्गेषु स्वरव्यञ्जनान्तक्रमो ज्ञेय ॥ १७ ॥ इति पुलिङ्गस्यावचूरि ॥—नामेति स्मर्यते । योनिमदादीना नाम स्त्रीलिङ्ग भवति । पुरुषी । स्त्री । रामा । वामा । हस्तिनी । वशा । वृषी । अश्वा । मकरी । मत्सी । मयूरी । इत्यादि ॥ वम्रीनाम उपदेहिका इत्यादि । सेनानाम चमू । पृतना । वाहिनी । इत्यादि । वल्लिनाम । लता । प्रताननी । वल्लरी । इ-त्यादि । वल्ली । अजमोदाया तु अस्य बाहुल्यात् स्त्रीत्वम् ॥ तडिन्नाम । शवा । चपला । चरा । इत्यादि । निशानाम । तुङ्गी । तमी । निद्शब्दोऽप्यस्ति निशावाची ॥ वीचिनाम । वीचि । उत्कलिका । लहरी । भङ्गि । इत्यादि । तरङ्गोल्लोलकल्लोलाना । पुंस्त्वमुक्तम् ॥ तन्द्राशब्देनालस्यनिद्रे गृह्येते ॥ अवटुनाम । घाटा । कृकाटिका । इत्यादि । अवटोस्तु स्त्रीपुंसत्वम् ॥ ग्रीवा-नाम । ग्रीवा । अयं तच्छिरायामपि ॥ जिह्वानाम । रसज्ञेत्यादि ॥ शस्त्रीनाम । रास्नी । असिपुत्री । इत्यादि ॥ दयानाम । दया । करुणा । इत्यादि । दिग्नाम । आशा । ककुप् । इत्-॥ १ ॥ शिशपादिगणो नद्यादीना नाम च स्त्रीलिङ्ग भवति । शिशपादि । शिशपा । वीरुत् । पाटला । विडा । फल्गुका । स्नुक्स्नुह्यौ । निर्गुण्डी । क्षुण्टी । जम्बू । श्रीपर्णी । भद्रपर्णी इत्यादिगणपाठ ॥ नदीनाम, नदी । धुनी । निम्नगा । इत्यादि । वीणानाम । घोषवती । तन्त्रीदोऽपि । विपञ्ची इत्यादि ॥ ज्योत्स्नानाम । चन्द्रिका । कौमुदी । इत्यादि विशेष ॥ तिथीति ङ्यन्त पदम् ॥ प्रतिपदाद्या द्वितीया तृतीया चतुर्थी इत्यादि यावत् पञ्चदशी । सैव पूर्णचन्द्रा राका । पूर्णिमा । न्यूनचन्द्राऽनुमति । नाम । धिषणा । पण्डा । अङ्गुलीनाम । अङ्गुली । करशाखा ॥ कलशी । गर्गरी ॥ कङ्गुर्धान्यविशेष ॥ हिङ्गुपत्री गुल्मभेद । सुरा वारुणी । नसा नासिका ॥ २ ॥ रास्ना

काक्रुष्णलागिराम् ॥ इत्तु प्राण्यङ्गवाचि स्यादीदूदेकस्वरं कृतः ॥ ४ ॥ पात्रादिवर्जितादन्तोत्तरपदः समाहारे ॥ द्विगुरन्नाबन्तान्तो वाऽन्यस्तु सर्वो स् ॥ कव-
लिन्मिन्यनिण्यणिरुयुक्ताः क्वचित्तिगल्पह्रस्वे कप् ॥ विंशत्याद्या शताद्द्वन्द्वे सा चैक्ये द्वन्द्वमेययोः ॥ ६ ॥ स्रुग्गीतिलताभिदि ध्रुवा विडनारि वारि घटी ॥१८॥

मनःशिला ॥ वचा शतपर्विका ॥ गोलोमी । जीवा षड्ग्रन्था । उग्रगन्धा इत्यादि ॥ लाला सृणीका ॥ शिम्बा बीजकोशी ॥ कृष्णा कृष्णजीरकं राजिका च । पिप्पल्यां वह्निनामत्वात् सिद्धं । उष्णिका यवागू. ॥ श्रीः । लक्ष्मी. । कमला । पद्मा । पद्मवासा । हरिप्रिया । क्षीरोदतनया । मा । रमा । इन्दिरा । इत्यादि ॥ स्पृक्का गन्धद्रव्यविशेषः । तन्नाम । मरुन्माला । पिशुना । स्पृक्का । देवीलता । इत्यादि ॥ पण्यानाम । पण्या । कटती । सुवर्णलता । ज्योतिष्का । इत्यादि ॥ अतसीनाम । कृष्णाप्रिया । चण्डिका । मसृणा । क्षुमा । उमा । इत्यादि ॥ धाय्यानाम । सामिधेनी ऋक् । इत्यादि ॥ सरघानाम । क्षुद्रा । मधुमक्षिका । इत्यादि ॥ रोचनेति गोरोचना वशरोचना च गृह्यते । तत्राद्यानाम । 'वन्दनीया तु रोचना । भूतघ्नी भूतनाशिनी' ॥ वंशरोचना तु वाशी तु काक्षीरी तुका शुभा । इत्यादि ॥ भूनाम । भू । भूमि. । पृथ्वी । मही । इत्यादि ॥ हरिद्रा । पीतिका ॥ मांसिर्गन्धद्रव्यविशेषः ॥ दूर्वा हरिताली ॥ आलूः कर्करी, गलान्तिका च ॥ बलाका पुंध्वजेऽपि स्त्रीत्वमेव । बलाका विसकण्ठिका ॥ कृष्णला गुञ्जा ॥ गीर्वाक् ॥ प्राण्यङ्गवाचि इकारान्त नाम स्त्रीलिङ्गम् ॥ गोधिर्ललाटम् । कटिः । पालि. । इत्यादि । इदिति किम् । कर्ण । प्राण्यङ्गवाचीति किम् । नाभि. क्षत्रियः । प्राण्यङ्गवाचिनस्तु स्त्रीपुंसत्वम् । चक्रपिण्डिकायां तु स्त्रीत्वम् ॥ ईकारान्तमूकारान्तं चैकस्वरं स्त्रीलिङ्गम् ॥ ह्रीः । प्री. । श्रीः । भ्रू. । सू । द्रूः । जूः ॥ एकस्वरमिति किम् । स्वयभूर्वेधा । नीः लूरित्यादौ तु गुणवृत्तित्वादाश्रयलिङ्गता ॥ कृत्सबन्धिनौ यावीदूतौ तदन्त नाम स्त्रीलिङ्गम् । अनेकस्वरार्थ आरम्भः । लक्ष्मीः । पपी. । ययी । इत्यादि । यवागूः । कुकू. । कच्छूः । भजू । तनू । इत्यादि ॥ ४ ॥ पात्रादिवर्जितमकारान्तमुत्तरपदं यस्य स द्विगुः समाहारे स्त्री ॥ पञ्चानां पूलानां समाहारः पञ्चपूली । पात्रादिवर्जित इति किम् । द्विपात्रम् । द्विमासम् । त्रिभुवनम् । चतुर्युगम् । द्वित्रिचतुर्भ्यः परः पथ. । त्रिपुरम् । इत्यादि । अदन्तेति किम् । पञ्चसमिति । त्रिगुप्ति । पञ्चकुमारि । दशकुमारि । अन्त्ययोः स्त्रीपुंसत्वमपीत्येके ॥ उत्तरपदेति किम् पञ्च गावः समाहृताः पञ्चगवम् । एव दशगवम् । सप्तभूमम् । अत्र द्विगुरदन्तो नोत्तरपदम् । समाहार इति किम् । पञ्चाम्रप्रियः ॥ अन्नन्तमाबन्त च यदुत्तरपद तदन्तो द्विगुर्वा स्त्री । पञ्चराजी । पञ्चराजम् । पञ्चमाली । पञ्चमालम् । त्रिसंध्यं तु क्लीबम् । अन्नन्तं चाबन्तं चोत्तरपदं न द्विगुरिति द्विरन्तग्रहणम् ॥ उक्तस्त्रीत्वादन्यो द्विगुः समाहारे वर्तमानो नपुंसकम् । तेन पात्राद्युत्तरपदस्यानदन्तोत्तरपदस्य विकल्पितस्त्रीत्वस्य च पक्षे क्लीबत्वम् ॥ ५ ॥ लिप्रत्ययान्तं मि-नि-अनि-अणिप्रत्ययान्तं स्त्रियामुक्ता. रुयुक्ताः क्ति क्यप् श य. अः अङ् अनः क्विप् ञः अनि इञ् णकश्च इत्येतदन्तं च नाम स्त्रीलिङ्गं स्यात् । लित् । गवां समूहो गोत्रा । एवं रथकट्यातृण्याजनतादयोऽपि । शुक्लस्य भावः शुक्लता । देव एव देवता । इत्यादि ॥ मिः, नेमिः कूपस्यान्ते त्र्यस्रं काष्ठं चक्रधारा च । वल्मिरिन्द्रः । दल्मिः शस्त्रम् । नि, वेनि. केशरचना ॥ अनिः, वर्तनिः मार्गः । अटनिर्धनुष्प्रान्तः ॥ णिः, वाणि: मूल्यम् । वेणि केशरचना प्रवाहश्च ॥ अणि, सरणिः पन्था. । तरणि सक्रमो यवागूश्च । समुद्रादौ तु स्त्रीपुंसत्वम् । क्ति., भूत्यादयः । क्यप्, आस्या आसनम् । अट्या, व्रज्या, ईर्या च गमने । श, क्रिया । य., जागर्या । अ., शंसा । इच्छा । शुश्रूषा श्रवणेच्छा ॥ अङ्, भिदा । छिदा । पूजा ॥ अन., वन्दना स्तुति । चेतना संवित्तिः । याचेरपि बाहुलकादने याचना । एषां भावे क्लीबत्वम् । क्विप्, संपत् । समित् एधो रणश्च ॥ रुक् त्विट् शुच कान्ति ॥ ञ, व्यात्युक्षी व्यतिहारेण सेचनम् ॥ अनि., अजननिस्ते वृषल भूयात् ॥ इञ्, कां त्वं कारिमकार्षीः. सर्वां कारिमकार्षम् ॥ णक, भवत शायिका शयितुं पर्याय इत्यर्थ ॥ क्वचिल्लक्ष्यानुसारेण तिगन्त नाम स्त्रीलिङ्गम् । तनुतात्तन्तिरित्यादि ॥ अल्पे ह्रस्वे चार्थे यः कप् तदन्तं नाम स्त्रीलिङ्गम् । अल्प क्रय क्रयिका । ह्रस्व. पुट. पुटिका । क्वचिदिति किम् । पुटक ॥ विंशत्याद्या सख्या सख्येये सख्याने वर्तमाना च स्त्रीलिङ्गम् । इयं विंशतिः घटा घटानां वा । एवं त्रिंशदादयोऽपि ॥

शल्यध्वनिवाद्यभित्सु तु क्ष्वेडा दुन्दुभिरक्षबिन्दुषु ॥ ७ ॥ गृह्या शाखापुरेऽश्मन्तेऽन्तिका कीला रताहतौ ॥ रज्जौ रश्मिर्यवादिर्दोषादौ गञ्जा सुरागृहे ॥ ८ ॥ अहंपूर्विकादिर्वर्षामघा अप्क्रुत्तिका बहौ ॥ वा तु जलौकाप्सरसः सिकतासुमनःसमाः ॥९॥ गायत्र्यादय इष्टका बृहतिका संवर्तिका सर्जिका,–दूषीके अपि पादुका ढिरुकया पर्यस्तिका मानिका ॥ नीका कञ्चुलिकाऽऽलुका कलिकया राका पताकान्धिका, शुका पूपलिका त्रिका चविकयोल्का पञ्चिका पिण्डिका ॥ १० ॥ ध्रुवका क्षिपका कनीनिका शम्बूका शिविका गवेधुका ॥ कणिका केका विपादिका महिका यूका मक्षिकाष्टका ॥ ११ ॥ कूर्चिका कूचिका टीका कोशिका केणिकोर्मिका ॥ जलौका

पष्टिस्त्रिलिङ्ग । शताद्याना पुनपुसकत्वम् । नन्तसख्या स्वलिङ्गा । द्वन्द्वे विशत्याद्या सख्या शतादर्वाक् स्त्रीलिङ्गम् एकविशतिर्यावन्नवनवति । द्वन्द्वैकत्वे इति क्लीबत्वबाधनार्थं वचनम् ॥ सा विशत्याद्या सख्या द्वन्द्वे इतरेतरसमासे मेये सख्येये च वर्तमाना एकत्व एव प्रयोक्तव्या । इतरेतरार्थ वचनम् । एकविशतिर्घटा घटाना वा । एकशतम् । द्विलक्षम् । द्विसहस्रम् । द्वन्द्वमेययोरिति किम् । द्वे विशती घटानाम् तिस्रो वा विंशत्य. । विशत्यादे. सख्यास्थानस्यैव द्वित्वबहुत्वविवक्षाया द्विवचनबहुवचने । साचेति प्रसिद्धसख्यापरामर्शादिह न स्यात् । एकश्चैत्राय विशतिभैत्रायेति एकविशती आभ्या दीयतामिति द्विवचनमेव ॥६॥ सुगुभेदे यज्ञभाण्डभेदे गीतिलताभिदो. शालिपर्णीमूर्वयोश्च ध्रुवाशब्द. स्त्रीलिङ्ग । नरादन्यत्र विट् । वारीति शब्दरूप घट्यामिभबन्धनभुवां वा । शल्याभिदि वेणुशलाकाया, ध्वनिभिदि भटानां सिंहनादे, वाद्यभिदि च दन्तोष्ठवाद्ये क्ष्वेडा स्त्री ॥ अक्षबिन्दुषु पासकबिन्दुषु दुन्दुभि. स्त्री ॥ ७ ॥ शाखापुर समीपस्थपुर तत्र गृह्या, अश्मन्ते चुल्यामन्तिका, रताहतौ सुरतग्रहणने कीला स्त्री ॥ रज्जौ वाच्याया रश्मि स्त्री । इह यवादयो यवयवनेति सूत्रोक्ता. शब्दा दोषादयश्चार्था गृह्यन्ते । दुष्टो यवो यवानी । यवनानां लिपिर्यवनानी । उरु अरण्यमरण्यानी । महद्धिम हिमानी । दोषादाविति किम् । यव । यवनाः । धान्यविषयनामत्वात्पुस्त्वमेव । अरण्यहिमयोस्तु प्रतिपदपाठान्नपुसकत्वम् ॥ सुरागृहे वाच्ये गञ्जा स्त्री । खानौ स्त्रीपुसलिङ्ग ॥ ८ ॥ अहंपूर्विकादयो मयूरव्यसकादिषु कृतनिपाता स्त्रीलिङ्गा । 'अह पूर्वोऽह पूर्व इत्यहपूर्विका स्त्रियाम् । आहोपुरुषिका दर्पाद्या स्यात्सभावनात्मनि ॥ अहमहमिका तु सा स्यात्परस्परमहङ्कृति' ॥ वर्षामघाऽप्कृत्तिका स्त्रीबहुवचनान्ताश्च । जलौकआदयोऽपि स्त्री० विकल्पेन बहुवचनान्ताश्च । कृत्तिकाऽर्थप्राधान्याद्बहुलापि ॥ समान्तत्वात्सुषमाऽपि कालभेदे परमशोभाया च ॥ ९ ॥ षडक्षरी गायत्रीमादीकृत्य षड्विंशत्यक्षरीमुत्कृष्टि यावत् छन्दोजातिनामानि स्त्री० । शर्करी मेखलानद्योरपि । अक्षरनियमात्मक छन्दः । गुरुलघुनियमात्मक वृत्तम् । इति बहुल वृत्तेत्यादिना न सिध्यति ॥ इष्टका मृद्विकार । बृहतिका उत्तरासङ्ग । कप्रत्ययाभावे बृहती रिङ्गिणी । संवर्तिका पद्मादीना नवोद्भिन्न दलम् ॥ सर्जिका क्षारविशेष । अर्थप्राधान्यात्सर्जिकापि । सुवर्चिका । सृज्जी इत्यादि ॥ दूषीका नेत्रमलम् । अर्थप्राधान्यात् दूषिका इत्यादि ॥ पादुका उपानत् । अर्थप्राधान्यादुपानदादयोऽपि तत्पर्याया सर्वे । ढिरुका कोष्ठिकाख्यो मृद्विकार । पर्यस्तिका परिकर. । अर्थप्राधान्यादवसक्थिकापि ॥ मानिका द्रोणचतुष्टयम् ॥ नीका सारणि ॥ कञ्चुलिका कञ्चुक । अलुका धान्यकम् ॥ कलिका कुड्मलम् । कलिकान्तत्वादुत्कालिकापि हेलोत्कण्ठयो ॥ राका कच्छू ॥ पताका सौभाग्य ध्वजश्च । अर्थप्राधान्यात्पटाकावैजयन्तीजयन्त्योऽपि । अन्धिका कैतवम् ॥ शुका हृल्लेखा ॥ पूपलिकाऽपूप । काभावे पूपली । अर्थप्राधान्यात्पोली । त्रिका कूपस्यान्ते ऽयस्त्र काष्ठम् ॥ चविका श्लेष्मप्रश्नव्याख्यो भेषज । अर्थप्राधान्यात् सुगन्धापि ॥ उल्का ज्वाला ॥ पञ्चिका न्यास ॥ पिण्डिका चक्रनाभि ॥ १० ॥ ध्रुवका ०-शेप । उपलक्षणत्वात् ध्रुवकापि ॥ क्षिपका शस्त्रविशेष ॥ कनीनिका नेत्रतारा ॥ शम्बूका शुक्ति ॥ शिविका याप्ययानम् । गवेधुका तृणधान्यविशेष । अर्थप्राधान्यात् गवीधुका गोधूमचूर्णम् । अर्थप्राधान्यात् शुद्धसमितापि । केका मयूरध्वनि ॥ विपादिका पादस्फोट ॥ मिहिका हिमम् ॥ यूका क्षुद्रजीवविशेष । मक्षिकापि । अष्टका पितृदैवत्य कर्म । क्षीरविकृति. ॥ कूचिका कपाटाङ्कुट ॥ अर्थप्राधान्यात् कुञ्चिकापि ॥ टीका वृत्ति ॥ कोशिका दीपभाजनम् ॥ कोणिका गुणलयनी । ऊर्मिका अङ्गुलीयकम् । जलौका रक्ताकर्षे

प्राविका धूका कालिका दीर्घिकोष्ट्रिका ॥ १२ ॥ श(शि)लाका वालुकेषीका विहङ्गिकेषिके उखा ॥ परिखा विशिखा शाखा शिखा भङ्गा सुरङ्गया [illegible] ॥ कव-
चञ्चा कच्छा पिच्छा पिञ्जा गुञ्जा खजा प्रजा ॥ झञ्झा घण्टा जटा घोण्टा पोटा भिस्सटया छटा ॥ १४ ॥ विष्ठा मञ्जिष्ठया काष्ठा पाठा शुण्डा गुडा ॥१५॥
वेडा वितण्डया दाढा राढा रीढाऽवलीढया ॥ १५ ॥ घृणोर्णा वर्वणा स्थूणा दक्षिणा लिखिता लता ॥ तृणता त्रिवृता त्रेता गीता सीता सिता चिता ॥ १६ ॥
मुक्ता वार्ता लूताऽनन्ता प्रसृता मार्जिताऽमृता ॥ कन्था मर्यादा गदेक्षुगन्धा गोधा स्वधा सुधा ॥ १७ ॥ सास्ना सूना धाना पम्पा झम्पा रम्पा प्रपा शिफा ॥ कम्बा
भम्भा सभा हम्भा सीमा पामारुमे उमा ॥ १८ ॥ चिल्ला पद्या पर्या योग्या छाया माया पेया कक्ष्या ॥ दूष्या नस्या शम्या संध्या रथ्या कुल्या ज्या मल्लिल्या
॥ १९ ॥ उपकार्या जलार्द्रेरा प्रतिसीरा परंपरा ॥ कण्डराऽस्तग्धरा होरा वागुरा शर्करा शिरा ॥ २० ॥ गुन्द्रा मुद्रा क्षुद्रा भद्रा भस्त्रा छत्रा यात्रा मात्रा ॥ दंष्ट्रा फेला

जलूकाऽपि ॥ प्राविका श्येन ॥ धूका पताका ॥ कालिका क्षारविशेष कीटश्च ॥ दीर्घिका परिखा ॥ उष्ट्रिका अलिञ्जर । अर्थप्राधान्यान्नन्दापि ॥ १२ ॥ शलाका चित्रकूर्चिका ॥ वालुका सिकता ॥ वालुकान्तत्वाद्धिमवालुकापि कर्पूरे ॥ इषीका वीरणशलाकाविशेष ॥ विहङ्गिका भारयष्टि ॥ ईषिका गजाक्षिकूटम् ॥ उखा स्थाली ॥ परिखा खेयविशेष ॥ विशिखा प्रतोली । शाखा भुज ॥ शिखा चूडा ॥ भङ्गा तृणधान्यम् ॥ सुरङ्गा गूढमार्ग. ॥ अर्थप्राधान्यात् । सधिलापि ॥ १३ ॥ जङ्घाऽङ्गविशेष ॥ चञ्चा तृणमयः पुरुष । कच्छा कच्छोटिका । अर्थप्राधान्यात् कच्छाटिकापि ॥ पिच्छा काञ्चिकम् ॥ पिञ्जा तूलम् ॥ गुञ्जा पटह ॥ खजा मन्थ दर्विश्च । अर्थप्राधान्यात् खजाकापि ॥ प्रजा लोक ॥ झञ्झा सशीकरो मेघवात ॥ घण्टा वाद्यविशेष । अर्थप्राधान्यात् किङ्किणीक्षुद्रघण्टिके अपि ॥ जटा कचविकार ॥ घोण्टा बदरीफलम् ॥ पोटा शण्ढ । अर्थप्राधान्यात् तृतीयाप्रकृतिरपि ॥ भिस्सटा दग्धिका ॥ छटा समूहविशेष ॥ १४ ॥ विष्ठा पुरीषम् ॥ मञ्जिष्ठा रागद्रव्यविशेषोऽर्थप्राधान्यात् अरुणापि ॥ काष्ठा मर्यादा ॥ पाठा औषधविशेष ॥ शुण्डा करिहस्त ॥ गुडा स्नुही । गुडिकापि च ॥ जडा शूकशिम्बी ॥ वेडा नौ ॥ वितण्डा वादभेद ॥ दाढा दंष्ट्रा ॥ राढा शोभा ॥ रीढा अवहेला ॥ अवलीढापि ॥ १५ ॥ घृणा निन्दा ॥ ऊर्णा मेषरोम ॥ वर्वणा मक्षिका ॥ स्थूणा गृहादीनामुत्तम्भनकाष्ठम् ॥ दक्षिणा यज्ञदानम् ॥ लिखिता लिपि ॥ तृणता चापम् ॥ त्रिवृता औषधि । अर्थप्राधान्यादरुणादयोऽपि तत्पर्याया । त्रेता युगविशेष ॥ गीता शास्त्रविशेष ॥ सीता लाङ्गलपद्धति ॥ सिता शर्करा । अर्थप्राधान्यात्कठिन्यपि ॥ चिता मृतकदाहाय काष्ठशय्या ॥ १६ ॥ मुक्ता मौक्तिकम् ॥ वार्ता वृत्ति. ॥ लूता ऊर्णनाभ ॥ अनन्ता दूर्वा ॥ प्रसृता जङ्घा ॥ मार्जिता शिखरिणी ॥ अर्थप्राधान्यात् मर्जिताशिखरिण्यावपि ॥ अमृता पथ्या गुडूची च ॥ कन्था स्यूतजीर्णवस्त्रप्रावरणम् ॥ मर्यादाऽवधि ॥ गदा प्रहरणविशेष ॥ इक्षुगन्धा कोकिलाक्षे गोक्षुरकाशक्रोष्ट्रीषु ॥ गोधा दोस्त्राणं प्राणिविशेषश्च । पुंध्वजोऽपि ॥ गोधान्तत्वात् तृणगोधा कृकलास ॥ स्वधा पितृदानार्थो मन्त्रविशेष । सुधा पीयूष लेपन च ॥ १७ ॥ सास्ना गोगलचर्म ॥ सूना वातस्थानम् ॥ धाना भ्रष्टयवोऽङ्कुरश्च ॥ पम्पा सरोवरविशेष ॥ झम्पा उच्चादध पतनम् ॥ रम्पा चर्मकृदुपकरणम् । प्रपाऽम्बुशाला । अकर्तरि क स्यादिति पुंस्त्वे प्राप्तेऽस्य पाठ । शिफा तरुजटा । कम्बा काम्बि । भम्भा भेरी । सभा वृन्दम् सभासदश्च । हम्भा गोध्वनि । अर्थप्राधान्याद्धम्भापि । सीमा मर्यादा । पामा कण्डू । अर्थप्राधान्याद्विचर्चिकापि । रुमा लवणाकर । उमा कीर्ति. ॥ १८ ॥ चिल्ला चिता । पद्या मार्ग । पर्या क्रम । सहयोगे सपर्या पूजा । योग्याभ्यास । छाया शोभातम.प्रतिबिम्बेषु पालनोत्कोचयो पङ्क्त्यर्कयोषित्कान्त्यादिषु च । माया दम्भ. । अर्थप्राधान्यात् शाम्बरी । पेया श्रृत दुग्धादि । कक्ष्या काञ्ची हर्म्यादेर्मध्यभागश्च । दूष्या रज्जु । नस्या वृषादीनां नासारज्जु । शम्या युगकीलकः । सध्या चिन्तामर्यादादिषु । रथ्या रथानां समूह प्रतोली पन्थाश्च । कुल्या सारणि । ज्या मूर्वी । मल्लिल्या मल्लिकागन्ध्यगुरुश्च ॥ १९ ॥ उपकार्या नृपमन्दिरम् । अर्थप्राधान्यादुपकारिकापि । जलार्द्रा आर्द्रवस्त्रम् । इरा जलमद्य गीश्च । प्रतिसीरा जवनिका । परपरा परिपाटि सन्तानकश्च ।

सिध्मला लीला रसाला सर्वेला वला ॥ कुद्दाला शष्कुला हेला शिला सुवर्चला कला ॥ २२ ॥ उपला
वेला मेला गोला दोला शाला माला ॥ २१ ॥ मेखला सिध्मला लीला रसाला सर्वेला वला ॥ कुद्दाला शष्कुला हेला शिला सुवर्चला कला ॥ २२ ॥ उपला कशाऽऽमिक्षा रिक्षा
शारिवा मूर्वा लट्वा खट्वा शिवा दशा ॥ कशा कुशेशा मञ्जूषा शेपा मूषेषया स्नसा ॥ २३ ॥ वस्नसा विस्नसा भिस्सा नासा वाहा गुहा स्वाहा ॥ कक्षाऽऽमिक्षा रिक्षा
राक्षा भङ्गावल्यायतिस्नोटिः ॥ २४ ॥ पेशिर्वास्विर्वसतिविपणी नाभिनाल्यालिपालि,–भल्लिः पल्लिर्भ्रकुटिशकटी चर्चरिः शाटिभाटी ॥ खाटिर्वर्तिव्रततिवमिशुण्ठीति-
रीतिर्वितर्दि,–र्दर्विर्नीविच्छविलिविशाढिश्रेढिजात्याजिराजि ॥ २५ ॥ रुचिः सूचिसाची खनिः खानिखारी खलिः कीलितूली क्रमिर्वापिधूली ॥ कृषिः स्थालिहिण्डी

कण्डरा महास्नायु । असृग्धराऽजिनम् । होरा लग्नम् । वागुरा मृगबन्धिनी । शर्करा उपला । शिरा धमनी ॥२०॥ गुन्द्रा मुस्ताविशेष । अर्थप्राधान्यान्महिलापि । मुद्रा शाण्यङ्गुलिसन्निवेशः
धुम्रा वेश्या नदी कण्टकारिका च । भद्रा विष्टि । भस्त्रा लोहधमनी । छत्रा मधुरिका कुस्तुम्बरुशिलीन्ध्रयोश्च । यात्रा प्रयाणी देवोत्सवो वृत्तिश्च । मात्रा परिच्छद मानमल्प च । दंष्ट्रा दाढा ।
अर्थप्राधान्याद्राक्षस्यपि । फेला भोजनोज्झितम् । अर्थप्राधान्यात्पिण्डोक्ति फेलिश्च । वेला काले बुधग्रहस्त्रियां सीम्नि वाचि च । अकारप्रश्लेषाद्वेला पूगचूर्ण । मेला मसि । गोला बालक्रीडन-
काष्ठम् । दोला प्रेङ्खा । शाला गृहम् । अर्थप्राधान्यात् किमीत्यपि । माला पङ्क्ति । स्वार्थिके के मालिका पुष्पमाल्यम् सरिद्भेद पक्षी ग्रैवेयक च ॥ २१ ॥ मेखला काञ्चीशैलनितम्बखड्गब-
न्धेषु । सिध्मला मत्स्यचूर्णम् । लीला केलि । रसाला मार्जिता जिह्वा च । सर्वेला बाणभेद । बला औषधिविशेष । अर्थप्राधान्याद्विनयापि । बलान्तत्वादतिबलामहाबले अपि । कुद्दाला काष्ठला ।
अर्थप्राधान्याच्चण्डकोलाहला पिच्छला पनकाष्ठला च । शष्कुला फीउनशष्कु । हेलावहेला । शिला दृषत् स्तम्भाधारभूत दारु च । गण्डूपया तु उर्या शिली । सुवर्चला शाकविशेष ।
कला शिल्पादि ॥ २२ ॥ उपलाऽश्मरूपा मृत् शर्करा च । अत्र चोपलक्षणत्वात् माधवी मधुन शर्करा ॥ अथ वान्ता पञ्च ॥ शारिवा औषधविशेष शालिविशेष । मूर्वा ज्याहेतुस्तृणविशेष ।
अर्थप्राधान्यान्मोरटास्रवे अपि । कटभरापि च ॥ लट्वा कुसुम्भ भ्रमरश्च ॥ खट्वा शयनम् ॥ शिवा क्रोष्ट्री ॥ दशावस्था वर्तिश्च ॥ कशाऽश्वताडनं चर्मदण्ड । अर्थप्राधान्यात्सप्तलापि ॥ कुशा वला
दा ॥ कुशी आयसी चेत् ॥ ईशा हलदण्ड. ॥ मञ्जूषा पेटा । अर्थप्राधान्यात् पेटीपेटे अपि ॥ शेपा देवनिर्माल्यम् ॥ मूषा स्वर्णविलयनभाण्डम् ॥ ईषा हलावयव ॥ स्नसा स्नायु ॥ २३ ॥
वस्नसा स्नायु । विस्नसा जरा ॥ भिस्सा ओदन ॥ नासा स्तम्भादीनामुपरि दारु ॥ वाहा बाहु ॥ गुहा गिरिविवरम् ॥ स्वाहाग्निभार्या ॥ कक्षा उद्ग्राहणिका स्पर्धा पद कटाटिका च ॥ आमिक्षा
शृतक्षीरक्षिप्तदधि ॥ रिक्षा यूकाण्डम् । लत्वे लिक्षा ॥ राक्षा जतु । लत्वे लाक्षा ॥ अर्थप्राधान्यात् वरवर्णिनी रजनी पलंकषा च ॥ अथ चेदन्ता ॥ भङ्गिर्विच्छित्ति ॥ आवलि पङ्क्ति ॥
आयतिरुत्तरकाल प्रभाव दैर्घ्यं च ॥ त्रोटिर्मत्स्यभेदे चञ्चा च ॥ २४ ॥ पेशिर्मांसपिण्डी सशपिधान च ॥ वासिस्तक्षोपकरणम् । अर्थप्राधान्यात्तक्षण्यपि ॥ वसतिर्वेश्म ॥ विपणि पण्यमापण
पण्यवीथी च ॥ अस्या च पुस्यपीति कश्चित् ॥ नाभिश्चक्रादिनाभि ॥ नालि कालमान कन्दल च ॥ लत्वाभावे नाडिर्नालम् शिरा च ॥ शिरायां चार्थप्राधान्याल्ललनापि ॥ आलिरनर्थ सेतुश्च ॥
पालि कर्णलताग्रम् अस्त्रिरुत्सङ्गप्रान्तश्च ॥ पाल्यन्तत्वादङ्कपाल्यपि ॥ भल्लिर्बाणभेद ॥ पल्लि कुटी ह्रस्वग्रामश्च ॥ भ्रकुटिर्भ्रूभङ्ग । उपलक्षणत्वात् भृकुटि भ्रुकुटी अपि ॥ शकटि शकटम् ॥
चर्चरि हर्षक्रीडा ॥ शाटि प्रावरणविशेष ॥ भाटि सुरतमूल्यम् ॥ खाटि किण । वर्त्तिर्दीपस्तद्दशा च ॥ व्रततिर्विस्तार ॥ वमिर्वान्ति ॥ शुण्ठिर्नागरम् । ईतिरुपद्रव ॥ अर्थप्राधान्यात् श्लगाल्य-
पि ॥ 'अतिवृष्टिरनावृष्टिर्मूषका शलभा शुका ॥ अत्यासन्नाश्च राजानो षडेता ईतय स्मृता ' ॥ रीतिरारकूटम् ॥ अर्थप्राधान्याद्दरीरी अपि । वितर्दिर्वेदिका ॥ दर्विर्दारुहस्त ॥ नीविर्मूल-
छवि कान्ति शोभा ॥ लिविर्लिपि ॥ अर्थप्राधान्याल्लिपिरपि ॥ शढिरोषधविशेष ॥ श्रेढिर्गणितव्यवहारविशेष ॥ जातिर्मालती ॥ आजि सङ्ग्राम । पुंस्यपीति कश्चित् । राजि पङ्क्ति ॥ तूलि
केदार ॥ २५ ॥ रुचि कान्तिः ॥ सूचि सेवनी ॥ साचि तिर्यग् ॥ खनिराकर ॥ खानि स एव ॥ खारिर्मानविशेष ॥ खलि. पिण्याकादिः ॥ कीलि. कीलिका ॥

त्रुटिर्वेदिनान्दी किकिः कुकुटिः काकलिः शुक्तिपङ्क्ती ॥ २६ ॥ किखिस्ताडिकम्वी द्युतिः शारिरातिस्तटिः कोटिविष्टी वटिर्गृष्टिवीथी ॥ दरिर्वेल्लि-
भेरी शरारिस्तुरिः पिण्डिमाढी मुषण्ढिः ॥ २७ ॥ राटिराटिरटविः परिपाटिः फालिगालिजनिकाकनिकानि ॥ चारिहानिवलभि प्रधिकम्पी चुल्लिचुण्टि ॥ कव-
शाणी ॥ २८ ॥ सनिः सानिमेनी मरिर्मारिरश्र्योषधी विद्रधिर्झल्लरिः पारिरभ्रिः ॥ शिरोधिः कविः कीर्तिगन्त्रीकबर्यः कुमार्याढकी स्वेदनी ह्रादिनीली ॥२९॥ ॥१५॥
श्मरी कर्तरीस्थग्यपव्यः करीर्येकपद्यक्षवत्यः प्रतोली ॥ कृपाणीकदल्यौ पलालीहसन्यौ वृसी गृध्रसी घर्घरी कर्परी च ॥ ३० ॥ काण्डी खल्ली मदी घटी गोणी खण्डो-
ल्येपणी द्रुणी ॥ तिलपर्णी केवली खटी नध्रीरसवत्यौ च पातली ॥ ३१ ॥ बाली गन्धोली काकली गोष्ठ्यजाजीन्द्राणी मत्स्यण्डी दामनी शिञ्जिनी च ॥ शृङ्गी

---

कृमि क्रम. ॥ वापि' कूप ॥ धूलि पांशुः ॥ कृपिः कर्षणम् ॥ उपलक्षण चेद किप्रत्ययान्तानाम् । तेन छिदिभिदिदिविप्यादयोऽपि सिद्धा' ॥ स्थालिरखा ॥ हिण्डि रात्रौ रक्षाचारः ॥ त्रुटि सश-
येऽल्पेऽपि ॥ वेदिर्यज्ञोपकरणी भूः ॥ नान्दि पूर्वरङ्गाङ्गम् ॥ काकि. पक्षविशेष. ॥ कुकुटि' कुहनी ॥ काकलिर्ध्वनिविशेष ॥ शुक्ति. कपालशकले । पङ्क्तिर्दशसंख्या ॥२६॥ किखि. कालस्य गोत्रविशेष. ॥ ताडिराभ-
रणविशेषः ॥ कम्बिर्दर्वि. ॥ द्युति कान्ति. ॥ शारिरक्षोपकरणम् ॥ आति शरारिः ॥ तटि' नद्यादौ जलास्फोटनस्थानम् ॥ कोटिरग्रम् ॥ विष्टिर्भद्रा ॥ वटिर्गुलिका ॥ गृष्टिर्मानविशेष ॥ वीथि. पङ्क्त्या-
दिपु ॥ दरिः कन्दरा ॥ वल्लरिमञ्जर्यौ एकार्थे ॥ पुञ्जि. सहति. ॥ भेरि. वाद्यम् ॥ शरारिराटिः ॥ तुरिस्तन्तुवायोपकरणम् ॥ पिण्डिर्निष्पीडितस्नेहपिण्डः ॥ माढि. पत्रस्नसा ॥ मुपण्डिरायुधविशेप.
॥ २७ ॥ राटिः कलह. ॥ आटि. शरारि ॥ अटविः अरण्यम् ॥ परिपाटि. क्रम ॥ फालिर्दलम् ॥ गालिरवद्योद्भावनम् ॥ जनिर्जन्म ॥ काकिनिर्मापचतुर्भाग. ॥ कानि' सकोच. ॥ चारि. पशुभ-
क्ष्यम् । हानिरर्थनाशः ॥ वलभि. पटलाधारो वशपञ्जर ॥ इदन्तत्वात् ङ्यां वलभी ॥ अर्थप्राधान्यात् गोपानसी ॥ प्रधि रोगविशेप. ॥ कम्पि कम्पनम् ॥ चुल्लिरुद्धानम् ॥ चुण्टि' क्षुद्रवापी ।
तरिः नौः ॥ अर्थप्राधान्यात् द्रोण्यपि ॥ अंहतिर्दानम् ॥ शाणिः शाण. ॥ २८ ॥ सनिर्याञ्चा । सानिर्वस्त्रभेदः ॥ मेनि सकल्प ॥ मरिर्मारिश्च मरकम् ॥ अश्रि. कोटिः ॥ ओपधिरौपधम् ॥
विद्रधि रोगविशेप. ॥ झल्लरिर्वाद्यविशेप ॥ अर्थप्राधान्यात् कलरिरपि ॥ पारिस्तैलाद्याधार. ॥ अभ्रि खनित्रम् ॥ शिरोधि. कन्धरा ॥ कवि खलीनम् ॥ कीर्तिर्यश ॥ अथेदन्ता ॥ गन्त्री शक-
टिका ॥ कबरी वेणि. ॥ कुमारी रामतरुणी ॥ आढकी धान्यभेद' ॥ अर्थप्राधान्यात् तुवर्यपि ॥ स्वेदिनी कण्डू. ॥ ह्रादिनी वज्रम् ॥ ईली एकधारोऽसि' ॥ २९ ॥ हरणी स्वर्णप्रतिमा ॥ अश्मरी
मूत्रकृच्छ्रम् ॥ कर्तिनी तर्कु. ॥ स्थगी ताम्बूलकरङ्क. ॥ अपटी काण्डपट ॥ करीरी करिदन्तमूलम् ॥ एकपदी मार्ग ॥ अर्थप्राधान्यात्पदविरपि ॥ अक्षवती द्यूतम् ॥ प्रतोली विशिखा ॥ कृपाणि
कर्तरि ॥ अर्थप्राधान्यात्कर्तर्यपि ॥ कदली पताका ॥ पलाली क्षोद. ॥ हसनी अङ्गारशकटी ॥ अर्थप्राधान्यात् हसन्त्यपि ॥ वृसी व्रतिनामासनम् मूर्धन्योपान्त्यो दन्त्योपान्तश्च ॥ गृध्रसी ऊरसधौ
वातरुक् ॥ घर्घरी किङ्किणी ॥ कर्परी तुत्थाञ्जनम् ॥ अर्थप्राधान्याद्दर्विकापि ॥ ३० ॥ काण्डी वेदविषयो ग्रन्थ ॥ खल्ली हस्तपादावमर्दनाख्यो रोग. । मदी कृपिवस्तुविशेपः ॥ घटी वस्त्रखण्डम् ॥
गोणी धान्यभाजनविशेप. ॥ अर्थप्राधान्यात् कण्ठालापि ॥ खण्डोली सरसी तैलमानं च ॥ एपणी वैद्यशलाका ॥ अर्थप्राधान्यात् नाराच्यपि ॥ द्रुणी वर्णजलौका ॥ तिलपर्णी रक्तचन्दनम् ॥ पर्य-
न्तत्वेन मापपर्णीत्याद्यपि ॥ केवली ज्योतिःशास्त्रम् ॥ खटी खटिनी ॥ अर्थप्राधान्यात् कष्कटी कठिन्यामपि ॥ नध्री वध्री ॥ रसवती महानसम् ॥ पातली वागुरा ॥ ३१ ॥ बाली कर्णभूषणम् ॥
कप्रत्यये वालिका सिकता ॥ गन्धोली क्षुद्रजन्तु. ॥ काकली ध्वनिविशेप ॥ गोष्ठी सभा सलापश्च ॥ अजाजी जीरक ॥ इन्द्राणी करणविशेप. सिन्दुवारश्च ॥ मत्स्यण्डी शर्कराभेद. ॥ अर्थप्राधा-
न्यात् मात्स्यण्डी मीनाण्डी च ॥ दामनी पशुरज्जु ॥ शिञ्जिनी ज्या ॥ शृङ्गी स्वर्णविशेप. ॥ कस्तूरी मृगमद ॥ अर्थप्राधान्याद्योजनगन्धापि ॥ देहली गेहद्वाराग्रस्थली ॥ मौर्वी ज्या ॥ अति-

कस्तूरी देहली मौर्व्यतिभ्यासन्दीक्षैरेय्यः शष्कुली दद्रुपर्शू ॥ ३२ ॥ कर्णान्दुकच्छू तनू रज्जुचञ्चु स्नायुर्जुहूः सीमधुरौ स्फिग्गवाक् ॥ द्वार्योदिवौ स्रुक्त्वग्रुचः शरद्दाश्छदिर्दरत्पामदृपदृदृशो नौः ॥ ३३ ॥ ॥ इति स्त्रीलिङ्गाः ॥ नलस्तुतत्तसंयुक्तररुयान्तं नपुंसकम् ॥ वेधआदीन् विना सन्तं द्विस्वरं मन्नकर्तरि ॥ १ ॥ धनरत्नभोऽन्नहृपीकतमोघुसृणाङ्गणशुल्कशुभाम्बुरुहाम् ॥ अघगूथजलांशुकदारुमनोविलपिच्छधनुर्दलतालुहृदाम् ॥ २ ॥ हलदुःखसुखागुरुहिङ्गुरुचत्वचभेषजतुत्थकुसुम्भदृशाम् ॥

भीर्नेषाज्वाला ॥ आसन्दी वेत्रासनम् ॥ क्षैरेयी पायसम् ॥ शष्कुली अन्नभेद. ॥ अशोदन्ता ॥ दद्रु कुष्ठभेद' ॥ पर्शु' पार्श्वास्थि ॥ ३२ ॥ कर्णान्दुरक्षिकासिका ॥ कच्छु' पामा ॥ तनु काय' ॥ रज्जुर्गुण. ॥ अर्थप्राधान्यादुदरमापि ॥ चञ्चुः पक्षिमुखाग्रम् ॥ स्नायु' शिरा ॥ जुहूः स्रुग्भेद. ॥ सीमा मर्यादा ॥ धू शकटाङ्गम् ॥ स्फिग् क्षुतम् ॥ अर्वाक् अवान्तरम् ॥ द्वार् द्वारम् ॥ द्योदिविलोतो स्वर्गाकाशवाचिनो ओकारान्तवन्तौ ॥ स्रुग् होमभाण्डम् ॥ त्वक् चर्म वल्कल च ॥ वल्कले चार्थप्राधान्यात् छल्लिरपि ॥ रुग् गात्र्यादि. ॥ एते त्रयोऽपि चान्ता ॥ शरत् ऋतुविशेष' वर्षश्च ॥ वा. वारि ॥ क्वचित् क्लीबत्वमपि ॥ छर्दिर्वान्ति ॥ दरत् म्लेच्छविशेषः ॥ पामा कच्छू ॥ दृषत्पाषाण' ॥ दृग् लोचनम् ॥ नौस्तारी ॥ ३३ ॥ इति स्त्रीलिङ्गं समाप्तम् ॥ नान्त लान्तं स्वन्त तान्तं त्तान्त संयुक्ता ये रुयास्तदन्त च नपुंसकलिङ्गं स्यात् ॥ नान्तमाजिन चर्मेत्यादि ॥ लान्तं, चक्रवालं समूह' । दलं शकलम् ॥ स्वन्तं वस्तु तत्त्व पदार्थश्च ॥ मस्तु दधिनिस्यन्द ॥ तान्त शीतमनुष्णम्, अनृतमार्गमित्यादि ॥ त्तान्त भित्तं शकलम्, निमित्त हेतुरित्यादि ॥ तस्य संयुक्तस्य पृथगुपन्यासात्पूर्वेऽसंयुक्ता गृह्यन्ते ॥ संयुक्तरान्तम् अग्र पुर' अभिक च ॥ गोत्रं नाम कुल क्षेत्र च ॥ शुक्र सप्तमो धातुः । इत्यादि ॥ संयुक्तरशब्दान्तम् श्मश्रु कूर्चम् इत्यादि ॥ संयुक्तयान्त शरव्य लक्ष्य वेध्यं च । सान्नाय्य हव्यमित्यादि ॥ वेधस्प्रभृतीन् वर्जयित्वा सकारान्त द्विस्वर नपुंसकम् ॥ इद रक्ष' निशाचर' ॥ उष' प्रभात संध्यायां तु पुंसी ॥ तप' कृच्छ्राचरणम् ॥ माघे पुनपुंसकम् ॥ रजो रेणु' । पुंसीति गौड ॥ जोपान्त्योऽग्रम् ॥ यादो जलचर ॥ रोचि शोचिष दीप्ती ॥ वेध आदीनिति किम् । वेधा उभो विष्णुर्विधिश्च ॥ सहा हेमन्त. ॥ नभा मेघादि' ॥ ओका आश्रय ॥ ओकस्य तु कान्तत्वात्पुंस्त्वम् । पूर्वापवादो योग । तेनाम्भ स्रोतो याद इत्यादीनां नत्रादिनामत्वेऽपि क्लीबत्वमेव ॥ गुणवृत्तेस्त्वाश्रयलिङ्गता परत्वात् ॥ द्विस्वरमिति अनुवर्तते, अकर्तरि विहितो यो मन्तदन्त नाम नपुंसकम् ॥ धाम तेज । वर्त्म प्रमाण शरीर च ॥ तर्म यूपाग्रम् । वर्त्म मार्ग' ॥ अकर्तरीति किम् ॥ ददातीति दामा ॥ करोतीति कर्मा ॥ १ ॥ धनादीनां नाम नपुंसकम् ॥ धननाम, द्रविण वस्तु इत्यादि ॥ रत्न माणिकमित्यादि ॥ नभो वियदित्यादि ॥ अन्न सिक्थ भक्तम् ॥ हृषीकम् इन्द्रियम् अक्षम् ॥ तमोऽन्धतमसम् इत्यादि ॥ दिगम्बरस्य तु बाहुलकात् पुंस्त्वम् । घुसृणम् कुङ्कुम' । पुंसीति वाचस्पति ॥ कश्मीरजम् इत्यादि ॥ अङ्गणम् प्राङ्गणम् अजिरम् । इत्यादि । शुल्कम् आरनालम् तुषोदकमित्यादि ॥ शुभम् श श्रेयसम् कल्याणमित्यादि ॥ शम्भावपि निश्रेयसशब्दो बाहुलकात् नपुंसकः ॥ अम्बुरुहम् अब्जम् कुशेशयम् इत्यादि ॥ अम्बुरुहवाचिनां नलिनाम्बुजपद्मकमलनालीकाना पुनपुंसकत्वम् ॥ अघम् पापम् । गूथम् अशुचिः ॥ जलम् सलिलम् कीलालम् क्षीरम् । दधिसारवाणयोस्तु पुनपुंसकत्वम् ॥ गोऽस्तु घनरसस्यापि ॥ वरुणस्य तद्वाचिनो बाहुलकात् पुंस्त्वम् ॥ अंशुकम् वराम् ॥ दारु काष्ठम् ॥ काष्ठान्तत्वात्पूतिकाष्ठमपि ॥ सरलो देवदारुश्च द्रुमौ ॥ एधस्तु घञन्तत्वेन समिधस्तु स्युक्तत्वात् स्त्रीत्वम् ॥ मनो मानसमित्यादि ॥ बिलम् रन्ध्रम् इत्यादि ॥ पिच्छम् पतत्रम् पत्रम् । तनूरुहगरुत्पर्हास्तु पुनपुंसका ॥ धनु कार्मुकम् । पिनाककोदण्डगाण्डी पुनपुंसकत्वम् ॥ दलम् किसलयम् ॥ तालु काकुदम् ॥ हृत् हृदयम् । वक्ष. पुनपुंसकम् ॥ २ ॥ हलम् लाङ्गलम् ॥ दु खम् कष्टम् ॥ सुख शर्म ॥ सुरादीनां गुणवृत्तेस्त्वाश्रय। सुखा ॥ अगुरु लोहम् ॥ हिङ्गु सहस्रवेधि ॥ रुचम् ह्रीबेरम् ॥ त्वचम् गन्धद्रव्यविशेष' ॥ तुत्थम् चक्षुष्यो द्रव्यविशेष' ॥ भेषजम् शमनम् ॥ ओषधस्तु पुंनपुंसक. ॥ कुसुम्भ रजतम् ॥ कुसुम्भस्तु पुनपुंसकः ॥ अक्षि, ईक्षणम् । दृग् दृष्टि' स्त्रीलिङ्गे ॥ मरिचम् वेल्लजम् ॥ अस्थि कीकसम् ॥ शिलाभवं शिलाया. सार निस्यन्द' शैलेयसञ्ज्ञम् ।

मरिचास्थिशिलाभवस्रक्कयकृन्नलदान्तिकवल्कलसिध्मयुधाम् ॥ ३ ॥ सौवीरस्थानकद्वारक्लोमधौतेयकासृजाम् ॥ लवणव्यञ्जनफलप्रसूनद्रवतां साऽकम् ॥ कव-सद्माङ्गयोश्छत्रशीर्षयोः पुण्डरीकके ॥ मधु द्रवे ध्रुवं शश्वत्तर्कयोः खपुरं घटे ॥ ५ ॥ अयूपे दैवेऽकार्यादौ युगं दिष्टं तथा कटु॥ असं द्वन्द्वं स्थले धन्वारिष्टम् ॥१५॥ ॥ ६ ॥ धर्मं दानादिके तुल्यभागेऽर्धं ब्राह्मणं श्रुतौ ॥ न्याय्ये सारं पद्ममिभविन्दौ काममनुमतौ ॥ ७ ॥ खलं भुवि तथा लक्षं वेध्येऽहः सुदिनैकतः ॥ भूमोऽस्त्रग्-एकार्थे पथः संख्याव्ययोत्तरः ॥ ८ ॥ द्वन्द्वैकत्वाव्ययीभावौ क्रियाव्ययविशेषणे ॥ कृत्याः क्तानाः खल् ञिन् भावे आ त्वाव् त्वादिः समूहजः ॥ ९ ॥ गायत्र्याद्य

दक्षिणपार्श्वे कृष्णमासांश· ॥ नलदं तृणविशेष· ॥ अन्तिकम् समीपम् अभ्यर्णम् अभ्याशम् ॥ दन्त्योपान्त्ये तु बाहुलकात्पुस्त्वम् ॥ सिध्म किलासम् ॥ युत् युद्धम् । युधस्तु स्त्रीत्वम् । सयतो नपुसकत्वम् ॥ ३ ॥ सौवीरादीना लवणादीनां तु सभेदमपि क्लीबम् ॥ वाच्यस्य सभेदत्वान्नामापि सभेदम् । सौवीरम् सौवीराञ्जनम् ॥ स्थानक योधानामालीढादिसस्थानविशेष· ॥ द्वारमुपायेऽपि बाहुलकात् क्लीबम् ॥ क्लोमसुदर्यो जलाधारो हृदयस्य दक्षिणे यकृत् क्लोमं च वामे प्लीहा पुप्पसाश्चेति वैद्या ॥ धौतेयक ग्रन्थिपर्णम् ॥ तद्वाची जीवदस्तु बाहुलकात्पुसि ॥ असृग् रुधिरम् ॥ लवणम् तद्भेदा, अक्षीवमाणिवन्धविडादयः ॥ व्यञ्जनभेदा· दधिदुग्धाज्यतक्रादय· ॥ गोरसस्य सान्तत्वात्पुस्त्वम् ॥ फलभेदा नालिकेरादयः ॥ प्रसूनभेदाश्चम्पकादय ॥ अग्निसपर्के ये द्रवन्ति विलीयन्ते ते द्रवन्तस्तेषां भेदा लोहादय ॥ स्वर्णवाचिनस्तु चाम्पेयस्य आरकूटवाचिनो मदनस्य तु बाहुलकात् पुस्त्वम् ॥ इह पृथग्ग्रहणात् जलसंपर्काद्ये द्रवन्ति न तेषां परिग्रह ॥ तेन न मृदोऽपि परिग्रह· ॥ ४ ॥ सद्मनि अङ्गे च पुर क्लीबम् ॥ नगरे तु त्रिलिङ्ग· ॥ पुण्डरीक क च क्रमेण छत्रे शीर्षे च ॥ द्रवति वस्तुनि मधु क्लीबम् ॥ मधु मकरन्द ॥ शश्वन्निले तर्के ऊहे च ध्रुवम् ॥ अन्यत्र तु यथाप्रासम् ॥ खपुरं घटे वाच्ये क्लीवम् ॥ अयूपादिष्वर्थेषु यथासंख्य युगदिष्टकटुशब्दा· क्लीवा· ॥ युगं युग्मम् कृतादि ॥ यूपे तु पुनपुंसकम् ॥ गोगोयुगम् इत्यादौ तु गोयुगप्रत्ययान्तादेव सिद्धम् ॥ दिष्टम् दैवम् ॥ काले तु पुंसि ॥ कटु अकार्यम् दूषणं च ॥ समासादन्यत्र द्वन्द्व क्लीबम् ॥ द्वद्वं युग्मम् ॥ अर्थप्राधान्याद्वन्द्वमपि ॥ धन्वन् शब्द· स्थले क्लीव ॥ मरौ तु पुनपुसक ॥ द्रुम च पक्षिण च वर्जयित्वाऽरिष्टम् क्लीबम् ॥ अरिष्टम् सूतिकागृहम् मरणम् अशुभम् ॥ ६ ॥ दानादिके पुण्यस्योपाये धर्म· क्लीव· ॥ तानि धर्माणि प्रथमान्यासन् ॥ पुण्ये तु मान्तत्वात्पुंस्त्वम् ॥ स्वभावे तु पुनपुसक ॥ समेऽशे वाच्येऽर्धशब्दः ॥ अर्ध पिप्पल्या· अर्धपिप्पली ॥ अतुल्ये भागे तु पुस्त्वम् ॥ केचिदाश्रयलिङ्गतामाहु ॥ श्रुतौ वेदविषये ब्राह्मण नपुसकम् ॥ न्यायादनपेतं न्याय्यम् तस्मिन् वाच्ये सारशब्द· ॥ बलादौ तु पुंस्त्वम् ॥ इभबिन्दौ वाच्ये पद्म नपुसकम् ॥ अन्यत्र तु यथाप्राप्तम् ॥ अनुज्ञायां काम क्लीवम् ॥ अयमव्ययमप्यस्ति ॥ ७ ॥ भुवि वाच्यायां क्लीब खलम् ॥ पिण्याके दुर्जने च पुनपुंसकः ॥ स्थाने तु त्रिलिङ्ग ॥ वेध्ये वाच्ये लक्षम् । व्याजे तु पुनपुसक· ॥ संख्यायां तु पुस्त्री ॥ शोभनवाचिसुदिनशब्दादेकशब्दाच्च परो अह इति कृतसमासान्तोऽहन् शब्द क्लीव· ॥ भूम इति कृतसमासान्तो भूमिशब्द सख्याया अन्येभ्य· पर· एकार्थे कर्मधारये वर्तमान क्लीव· ॥ पाण्डुर्भूमि· पाण्डुभूमम् ॥ एवमुदग्भूमम् । कृष्णभूमम् ॥ असंख्यात इति किम् । द्वयोर्भूम्यो समाहारो द्विभूमम् ‘अन्यस्तु सर्वो नपुसक· ’ इति नपुसकत्वम् ॥ ननु चेत्संख्यापूर्वस्यापि क्लीवत्वम् तर्हि निषेधोऽनर्थक· ॥ नैवम् ॥ द्वयोर्भूम्यो· क्रीत इति कृतसमासान्तादिकाणि तस्य लुपि क्लीवत्वम् आश्रयलिङ्गता चेष्यते । एतच्च विशिष्ट व्यावृत्ते· फलम् । संख्यावाचिनोऽव्ययाच्च पर· कृतसमासान्तोऽय पथिन्शब्द· पथशब्दो वा क्लीबे । द्वयो· पन्था· द्विपथम् ॥ व्यवयवो वायम् ॥८॥ द्वन्द्वैकत्व सुखदु खम् । अव्ययीभावः दण्डादण्डि । तूष्णींगङ्ग देश ॥ पञ्चनदम् । पारेगङ्गमित्यादि ॥ क्रियाया अव्ययस्य च यद्विशेषणं समानाधिकरणं तद्वाचि नपुंसकम् ॥ साधु पचति । प्राग्रमणीयम् दिग् देश· कालो वा ॥ एवमुदग् प्रत्यगित्यादि ॥ भावे ये विहिता· कृत्या· क्तानाः खल् ञिन् तदन्त नाम क्लीबम् ॥ चैत्रेण कार्यं पाक्यं कर्तव्यं करणीयं देयं ब्रह्मभूयं ब्रह्मत्वमित्यादि ॥ क्ताना इति प्रश्लेषात् आनानानटो गृह्यन्ते । क्ते चैत्रेण कृतम् ॥ आनेति कानानशोर्ग्रहणम् ॥ पेचानम् पच्यमानं चैत्रेण ॥ अनट् निर्वाणम् । अन ईषत्स्थानं मैत्रेण ॥ खल् दुराढ्यंभवं मैत्रेण । ञिन् सम-

स्वार्थेऽव्यक्तमथानञ्कर्मधारयः ॥ तत्पुरुषो बहूनां चेच्छाया शालां विना सभा ॥ १० ॥ राजवर्जितराजार्थराक्षसादेः पराऽपि च ॥ आदावुपक्रमोपज्ञे कन्थोशीनर-नामनि ॥ ११ ॥ सेनाशालासुराच्छायानिशा वोर्णा शशात्परा ॥ भाद्गणो गृहतः स्थूणा संख्यादन्ता शतादिका ॥ १२॥ मौक्तिकं माक्षिकं सौप्तिकं क्लीतकं, नाणकं

न्ताद्भाव. साराविणम् ॥ 'भावे त्वतल्' इति त्वप्रत्ययादारभ्य ब्रह्मणस्त्वामिति त्वमभिव्याप्य ये प्रत्यया त्व-य-एयण्-अञ्-अण्-अकञ्-ईय-त्वरूपास्तदन्त नाम क्लीबम् ॥ त्व, तदात्वम् तत्काल । य, सख्यम् मैत्री । वणिज्य तु स्त्रीक्लीबम् । एयण्, कापेयम् कपे. क्रीडादिकम् ॥ अञ् द्वैपम् द्वीपिनो जाति कर्म च ॥ अण् चापलम् ॥ अकञ् आचार्यकम् आचार्यता ॥ ईय होनीयम् ॥ त्व, ब्रह्मत्वम् ॥ समूहे जाता ये प्रत्यया अण्-अकञ्-ण्य-इकण्-य-ईय-उवण्-अञ्-एयञ्-रूपास्तदन्त नाम क्लीबम् ॥ अण् भैक्षम् ॥ अकञ् औपगवकम् ॥ ण्य, कैदार्यम् ॥ इकण् कावचि-कम् ॥ य, ब्राह्मण्यम् ॥ ईय, अश्वीयम् ॥ उवण्, पार्श्वम् ॥ अञ्, शौवम् ॥ एयञ्, पौरुषेयम् । इत्यादि ॥ ९ ॥ गायत्र्यादीनि च्छन्दोनामानि स्वार्थे योऽण् तदन्तानि क्लीबानि ॥ गाय-त्र्येव गायत्रम् ॥ एवमानुष्टुभादीन्यपि ॥ अव्यक्तम् अव्यक्तलिङ्गवाचि क्लीबम् ॥ कि तस्या गर्भे जातम् ॥ यत्तत्रोत्पद्यते तदानय ॥ इद च शिष्टप्रयुक्तेष्वेव द्रष्टव्यम् ॥ अधिकारोऽयम् गृहत स्थूणा इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र नञ्समास कर्मधारय च वर्जयित्वा योऽन्यस्तत्पुरुष स नपुसक भवतीति अधिकृतं वेदितव्यम् ॥ छायान्तस्तत्पुरुषः क्लीब. ॥ सा यदि येषा बहूना समुदिताना सभवति ॥ शलभाना छाया शलभच्छायम् ॥ शरच्छायम् ॥ बहूनामिति किम् ॥ कुड्यस्य च्छाया कुड्यच्छाया ॥ सेनाशालेत्यादिना विकल्पे प्राप्ते वचन नित्यार्थम् ॥ शाला मुक्त्वाऽन्यत्रार्थे य सभाशब्दस्तदन्तस्तत्पुरुष क्लीब. ॥ स्त्रीसभ दासीसभ मनुष्यसभं तत्समूह इत्यर्थ ॥ अनञ् कर्मधारय इत्येव ॥ असभा । परमसभा ॥ परमसभाया उत्तरपदत्वविज्ञानादिह न स्यात् ॥ स्त्रीणां परमसभा स्त्रीपरमसभा ॥ एवमुत्तरनापि ॥ १० ॥ राजार्था ईश्वरादयस्तेभ्यो राजवर्जितेभ्यो राक्षसादय पिशाचादयश्च प्राणिनोऽमनुष्यास्तेभ्य. परा या सभा तदन्तस्तत्पुरुष क्लीब ॥ शालार्थ आरम्भ ॥ इनसभम् ईश्वरसभम् नृपसभम् ॥ पिशाचसभम् । रक्षःसभम् । तद्वृन्द तत्सघो चेत्यर्थ ॥ नृपतिसभामगमदिति बाहुलकात् ॥ राजवर्जितेति किम् ॥ राजसभा । समूहार्थस्य भवत्येव पूर्वेण राजसभम् ॥ राजार्थराक्षसादेरिति किम् । नरसभा ॥ आदौ उपक्रमस्योपज्ञानस्य च प्राथम्ये विवक्षिते उपक्रमोपज्ञेत्येतदन्तस्तत्पुरुष क्लीब. ॥ श्रेयासस्योपक्रम श्रेयासोपक्रम दा-नम् । श्रेयासेन श्रेयसे प्रथम प्रवर्तितमित्यर्थ ॥ आदिदेवस्योपज्ञा आदिदेवोपज्ञ धर्मव्यवस्था ॥ आदिदेवेन प्रथम ज्ञात्वा प्रवर्तितेत्यर्थ ॥ उपक्रम्यते इत्युपक्रम । उपज्ञायते इत्युपज्ञा ॥ कर्मणि घञडावित्यनुयोगेन सामानाधिकरण्यम् ॥ उशीनरा नाम देशस्तत्र चेत्कस्यचित्सञ्ज्ञायां वर्तमान कन्थान्तस्तत्पुरुष क्लीब ॥ सौशमीना कन्था सौशमिकन्थम्, आह्वरकन्थ नाम उशीनरेषु ग्राम ॥ उशीनरेति किम् । दाक्षिणकन्था नाम ग्रामसंज्ञा किन्तु उशीनरेषु न ॥ ११ ॥ सेनाद्यन्तस्तत्पुरुषो वा क्लीब । कपिसेनम् । कपिसेना । हस्तिशालम् । हस्तिशाला ॥ यवसुरम् यवसुरा ॥ छग-च्छायम् छगच्छाया ॥ चौरनिशम् चौरनिशा ॥ अनञ् कर्मधारय इति किम् । असेना । परमसेना ॥ शशात्परो य ऊर्णाशब्दस्तदन्तस्तत्पुरुष क्लीब ॥ शशोर्णम् । अन्यत्र तु न । छागोर्णा ॥ भात्परो यो गणस्तदन्तस्तत्पुरुष क्लीब । भगणम् । अन्यत्र न । गोगण ॥ गृहात्परा या स्थूणा तदन्तस्तत्पुरुष क्लीब. ॥ गृहस्थूणम् गृहधारणम् । अन्यत्र तु न । शालास्थूणा ॥ अकारान्त शतप्रभृतिसख्या क्लीबा ॥ अब्ज खर्व निखर्व महासरोजमित्यादि ॥ शतसहस्रायुतप्रयुतानां पुनपुसकत्वम् । लक्षस्य तु पुस्त्रीत्वम् ॥१२॥ अथ कान्ता ४७ ॥ मौक्तिक मुक्ता ॥ माक्षिकं यस्मात्ताम्रा-स धातुविशेष ॥ सौप्तिक रात्रीधाटी ॥ क्लीतक मधुकम् ॥ नाणक रूपकादि ॥ नाटक दशरूपकभेद ॥ खेटक फलकम् ॥ तोटकं दशरूपकभेद. वृत्तं च ॥ आह्निक नित्यक्रिया रूपक काव्यालंकारविशेष ॥ उपलक्षणत्वाद्यमक दीपक च ॥ जापक दर्वी सुगन्धिद्रव्यविशेषश्च ॥ अर्थप्राधान्यात् कालापकमपि ॥ दर्व्या च पुलिङ्गोऽप्ययमित्येके ॥ जालकम् -

नाटकं खेटकं तोटकम् ॥ आह्निकं रूपकं जापकं जालकं, वेणुकं गैरकं कारकं वास्तुकम् ॥ १३ ॥ रुचकं धान्याकनिःशलाकालीकालिकशल्कोपसूर्यकाल्कम् ॥ कवकिकिवुकतोकतिन्तिडीकैडूकं छत्राकत्रिकोल्मुकानि ॥ १४ ॥ मार्द्वीककदम्बके वुकं चिवुकं कुतुकमनूकचित्रके ॥ कुहुकं मधुपर्कशीर्षके शालूकं कुलकं प्रकीर्णकम् ॥१५॥ हल्लीसकपुष्पके खलिङ्गं स्फिगमङ्गं प्रगचोचबीजपिञ्जम् ॥ रिष्टं फाण्टं ललाटमिष्टव्युष्टं करोटकूपीटचीनपिष्टम् ॥१६॥ शृङ्गाटमोरटपिटान्यथ पृष्ठगोष्ठभाण्डाण्डतुण्डशरणग्रहणेरणानि ॥ पिङ्गाणतीक्ष्णलवणद्रविणं पुराणं त्राणं शणं हिरणकारणकार्मणानि ॥ १७ ॥ पर्याणर्णघ्राणपारायणानि श्रीपर्णोष्णे धोरणक्षूणभूतम् ॥ प्रादेशान्ताश्मन्तशीतं निशान्तं वृन्तं तूस्तं वार्त्तवाहित्थमुक्थम् ॥ १८ ॥ अच्छोदगोदकुसिदानि कुसीदतुन्दवृन्दास्पदं दपदनिम्नसशिल्पतल्पम् ॥ कूर्पत्रिविष्टपपरीपत्रदन्तरीपरूपं च

गजयोत्रम् ॥ गैरिक धातुविशेष ॥ कारक कर्त्रादि ॥ गुणवृत्तिस्त्वाश्रयलिङ्ग ॥ वास्तुक शाकविशेष ॥ १३ ॥ रुचक चन्दनपेषणी शिला ॥ धान्याकम् अल्लुका ॥ अर्थप्राधान्यात् धानेयकम् धान्यकम् धानीयकम् अपि । नि शलाक रह ॥ अर्थप्राधान्याज्जनान्तिकमपि ॥ अलीकं ललाटम् अलिक च ॥ शल्क खण्डम् ॥ उपसूर्यक परिवेष ॥ अल्कश्च रोग. ॥ कवक भूकन्दविशेष ॥ किवुक जलोपन्नद्रव्यविशेष ॥ तोकमपत्यम् ॥ तितिडीक चुक्रम् ॥ एडूकम् अन्तर्न्यस्तास्थि कुड्यम् ॥ छत्राक भूकन्दविशेष ॥ त्रिकम् पृष्ठाधोभाग ॥ उल्मुकम् अलातम् ॥ १४ ॥ मार्द्वीक मृद्वीकासव ॥ अर्थप्राधान्यात् माध्वीकमपि हारहूर च॥ सुरानामत्वेन स्त्रीत्वे प्राप्ते वचनम् ॥ कदम्बक समूह ॥ काभावे कदम्बम् ॥ वुक तृणविशेष ॥ चिवुकमधरस्याध. ॥ कुतुक कुतूहलम् ॥ अनूकमन्वय' ॥ चित्रक पुण्ड्रम् ॥ कुहुकमाश्चर्यम् ॥ मधुपर्क दधिमध्वादि देवादीनामर्घ ॥ शीर्षकम् शिरस्त्राणम् ॥ शालूकमुत्पलादिकन्द. ॥ कुलक वृत्तसमूह. ॥ प्रकीर्णक चामरम् ॥ १५ ॥ हल्लीसक स्त्रीणा नृत्तभेद ॥ पुष्पक नेत्ररोग ॥ ख सवेदनम् ॥ लिङ्ग हेतुश्चिह्न च ॥ अर्थप्राधान्याच्चिह्नमपि ॥ स्फिग स्फिग् ॥ अङ्ग प्रतीक समीप च ॥ अङ्गान्तत्वाद्वराङ्ग चक्राङ्ग च ॥ प्रगम् प्रभातम् ॥ चोचमुपभुक्तफलावशेषश्छल्ल्यादि ॥ बीजम् हेतु आधान च ॥ पिञ्जम् वलम् ॥ रिष्ट क्षेमम् ॥ फाण्टमनायासम् ॥ ललाट भालम् ॥ इष्ट क्रतुकर्म ॥ व्युष्ट प्रभातम् ॥ करोट मस्तकम् कास्यभाजन च ॥ कूपीटमुदरम् ॥ चीनपृष्टम् सिन्दूरम् ॥ १६ ॥ शृङ्गाट जलोद्भवकन्द चतुष्पथ च ॥ मोरटमिक्षुमूलम् ॥ पिट छर्दि ॥ टान्ताना तु पुस्त्वे प्राप्तेऽस्य पाठ ॥ अथ ठान्तौ ॥ पृष्ठम् प्राण्यङ्गम् ॥ गोष्ठ गोकुलम् । गोष्ठप्रत्ययान्तमपि ॥ गोगोष्ठम् । अश्वगोष्ठम् ॥ 'पशुभ्य स्थाने गोष्ठ' इति गोष्ठ ॥ भाण्ड भाजनं गेह च ॥ अण्ड वृषण ॥ तुण्ड मुण्डम् ॥ अर्थप्राधान्यात् द्विजालयमपि ॥ शरण गृह त्राण च ॥ ग्रहणमादर ॥ इरिणमूषरम् ॥ अर्थप्राधान्यादूषमपि ॥ पिङ्गाण काचभाजनम् गेह च ॥ तीक्ष्ण विषादि । लवण लावण्यम् ॥ द्रविण पराक्रम ॥ अर्थप्राधान्यात् द्युम्नमपि ॥ पुराण पञ्चलक्षणम् ॥ त्राण त्रायमानाख्यो विधिविशेष ॥ शण धान्यविशेष ॥ हिरणम् 'विराटहेमरेतसु हिरण स्याद्धिरण्यवत्' ॥ कारण हेतु. । कार्मण सवननमपि ॥ १७ ॥ पर्याण पल्ययनम् ॥ ऋणमुत्तमर्णदेयम् ॥ घ्राण घ्राणा ॥ पारायण शास्त्रविशेष ॥ श्रीपर्णमग्निमन्थ ॥ उष्ण शीतविरोध ॥ धोरण वाहनम् ॥ क्षूण विकलता ॥ भूत प्राणी ॥ प्रादेशान्त प्रमाणविशेषावस्थानम् ॥ अश्मन्त चुल्लि ॥ शीतम् ऋतुविशेष उष्णविरोधश्च ॥ निशान्तं गृहम् अवरोधश्च ॥ अन्तान्तत्वात्पुस्त्वे प्राप्तेऽस्य पाठ ॥ वृन्त प्रसवबन्धनम् ॥ वृन्तान्तत्वात्तालवृन्तमपि ॥ तूस्त केशजटा, जरद्वस्त्रम् । खण्डे तु सिद्धमेव । वार्तमारोग्य नि सार च ॥ अथ थान्तौ ॥ वाहित्थ गजकुम्भयोरध. ॥ उक्थ साम ॥ १८ ॥ अथ दान्ता ११ ॥ अच्छोद देवसर ॥ उपलक्षणत्वान्मानसमपि ॥ गोद मस्तकस्नेह ॥ कुसिद ऋणम् ॥ कुसीद विज्ञानम् ॥ तुन्दमुदरम् ॥ वृन्दम् समूह ॥ आस्पदं प्रतिष्ठा कृत्यम् च ॥ द कलत्र त्राण च ॥ पद त्राण स्थानम् ॥ पादे पुस्यपि पदान्तत्वात् गोष्पदप्रपदादयोऽपि ॥ निम्न गम्भीरम् ॥ शिल्प विज्ञानम् ॥ तल्प रणमण्डप अट्ट' दाराश्च ॥ शयनीये तु पुक्लीव ॥ कूर्प भ्रुवोर्मध्यरोम ॥ कूपमिति भार्गवि ॥ त्रिविष्टप स्वर्ग । त्रिपिष्टपमपि ॥ परीप परिगता आपो यत्र । अन्तरीप मध्येजलप्रदेश ॥ रूप चक्षुर्विषय. सौन्दर्य च ॥ पुष्प स्त्रीरजोनेत्ररोगश्रीदविमानप्रसूनेषु ॥ निकुरम्ब समूह ॥ कुटुम्ब

पुष्पनिकुरम्बकुटुम्बशुल्वम् ॥ १९ ॥ प्रसभतलभशुष्माध्यात्मधामेर्मसूक्ष्मं किलिमतलिमतोक्मं युग्मतिग्मं त्रिसंध्यम् ॥ किसलयशयनीये सायखेयेन्द्रियाणि द्रुवयभयक-
लत्रद्वापरक्षेत्रसत्रम् ॥ २० ॥ शृङ्गवेरमजिराभ्रपुष्करं तीरमुत्तरमगारनागरे ॥ स्फारमक्षरकुकुन्दरोदरमान्तराणि शिविरं कलेवरम् ॥ २१ ॥ सिन्दूरमण्डूरकुटीरचामर-
क्रूराणि दूरारवैरचत्वरम् ॥ औशीरपातालमुलूखलार्तवे सत्वं च सान्त्वं दिवकिण्वयौतवम् ॥ २२ ॥ विश्वं वृशपलिशमर्पिशाकिल्विषानुतर्षार्विषं मिषमृचीषमृजीषशीर्षे ॥
पीयूषसाध्वसमहानससाध्वसानि कासीसमत्ससतरसं यवसं विसं च ॥२३ ॥ मन्दाक्षवीक्षमथ सक्थि शयातु यातु स्वाद्वाशु तुम्बरु कशेरु शलालु चालु ॥ संयत्ककुन्महद्-

पुराद्वारादि ॥ शुल्व रज्जु ॥ १९ ॥ अथ मान्तौ ॥ प्रसभ वलात्कार ॥ तलभ करिकराघात ॥ मान्तत्वेन पुस्त्वे प्राप्तेऽस्य वचनम् ॥ अथ मान्ता दश १० ॥ शुष्ममोज ॥ आत्मानमधिष्ठि-
तमध्यात्मम् योगशारम् ॥ बाहुलकात् तत्पुरुषादपि समासान्त ॥ अव्ययीभावस्य तु 'द्वन्द्वैकत्व '-इति नपुसकत्वम् ॥ धाम गेह तेजश्च ॥ नन्तस्य तु मन्नन्तत्वादेव सिद्धम् ॥ ईर्म व्रणम् ॥
सूक्ष्ममणौ ॥ किलिम देवदारु ॥ तलिम कुट्टिमम् तल्प चन्द्रहास वितान च ॥ तोक्म कर्णमल ॥ युग्म युगम् ॥ तिग्म तीक्ष्णम् ॥ अर्थप्राधान्यात् तीक्ष्ण खर तीव्रमपि ॥ अथ यान्ता ८ ॥
निसन्ध्यमुपवैणवम् सन्ध्यानयसमाहार ॥ 'अत्रावन्तान्तो वा '-इति पक्षे स्त्रीत्वे प्राप्तेऽस्य पाठ ॥ किसलय पल्लव ॥ शयनीय शय्या ॥ साय दिनावसानम् ॥ खेय परिखा ॥ इन्द्रियम् रेत ॥
द्रुवय मानम् ॥ पाथ्यमपि ॥ भय प्रतिभयम् कुब्जकप्रसूनेऽपि ॥ शुष्मादीना मान्तत्वात् किसलयादीना यान्तत्वात् पुस्त्वे प्राप्ते पाठ ॥ अथ रान्ता २१ ॥ कलत्र भार्या ॥ द्वापर युगविशेष ॥
क्षेत्र केदार ॥ क्षेत्रकलत्रयोर्योनिमन्नामत्वेन रीत्वप्राप्तौ वचनम् ॥ सत्र गृहम् आच्छादनम् सदादानम् वन दम्भ साधन यज्ञश्च ॥ २० ॥ शृङ्गवेरमार्द्रकम् ॥ आजिर प्राङ्गणे वाते विषये दर्दुरे
तनौ ॥ अभ्र मेघ नाकश्च ॥ स्वार्थिके के अभ्रक गिरिजामलम् ॥ अर्थप्राधान्यात् शैलाभ्रादयोऽपि ॥ पुष्कर पङ्कजव्योमपय करिकराग्रेषु ॥ तीर तटम् ॥ त्रपुवाची तु तीरो बाहुलकात् पुंसि ॥
उत्तर प्रतिवचनम् ॥ अगार गृहम् ॥ नागर मुस्तक शुण्ठी च ॥ स्फार विपुलम् ॥ गुणवृत्तेस्त्वाश्रयलिङ्गता ॥ अक्षर वर्ण मोक्ष परब्रह्म च ॥ कुकुन्दर जघनकूप ॥ अर्थप्राधान्यात् ककुन्दर-
रतावुके अपि ॥ उदर जठरन्माधियुद्धानि ॥ जठरे निलिङ्गोऽयमिति बुद्धिसागर ॥ प्रान्तर विपिने दूरशून्यवर्त्मनि कोटरे च ॥ शिविर सैन्यम् तन्निवेशश्च ॥ कलेवर शरीरम् ॥ २१ ॥ सिंदूर धा-
तुविशेष ॥ अर्थप्राधान्यात् मसिवर्द्धनम् गन्धोरम् नागसभवमित्यपि ॥ मण्डूर लोहमलम् ॥ कटीरम् कटी ॥ चामरम् प्रकीर्णकम् ॥ पुस्यपीति कश्चित् ॥ क्रूर क्रौर्यम् ॥ दूर विप्रकृष्टम् ॥ अन-
योर्गुणवृत्तेस्त्वाश्रयलिङ्गतैव ॥ अरर कपाटम् रण च ॥ वैरम् विरोध ॥ चत्वर चतुष्पथम् ॥ औशीर शयनासने चामर यष्टिश्च ॥ अथ लान्तौ ॥ पाताल वडवानल । उलूखल गुग्गुल ॥ निर्यासनाम-
त्वात्पुस्त्वे प्राप्ते पाठ ॥ आर्तव पुष्प स्त्रीरजश्च ॥ सत्व व्यवसाये स्वभावे विलम्बिते चित्ते गुणे द्रव्यात्मभावयो ॥ चस्यानुक्तसमुच्चयार्थत्वात् तत्त्व स्वरूपे वाद्यभेदे परमात्मनि च ॥ प्लव मुस्त
गन्धतृण च ॥ सान्त्व साम दाक्षिण्य च ॥ द्विव दिवस स्वर्गश्च ॥ किण्व सुराबीजम् ॥ यौतव मानविशेष ॥ २२ ॥ विश्व जगत् ॥ वृश शृङ्गवेर लशुन मूलक च ॥ पलिश यन स्थित्वा
मृगादि व्यापाद्यते । अर्पिशम् आर्द्रमासम् ॥ वालवत्साया दुग्ध च ॥ अथ षान्ता ८ ॥ किल्विष रोग अपराध विष च ॥ अनुतर्ष मद्यम् ॥ अर्पिषम् आर्द्रमासम् ॥ मिष व्याज ॥ ऋचीषम्
ऋजीष च पिष्टपचनभाजनम् ॥ शीर्ष शिर ॥ शीर्षान्तत्वात् कपिशीर्षमपि ॥ पीयूषममृतम् प्रत्यग्रप्रसवगव्यादिक्षीरविकारश्च ॥ अथ सान्ता ८ ॥ साध्वस भयम् ॥ महानस पाकस्थानम् ॥ साहस
दुष्करकर्म वैयात्यमविमृश्यकारिता दमश्च ॥ कासीस धातुविशेष ॥ अर्थप्राधान्यात् धातुकासीसम् धातुशेखरमपि ॥ मत्स सधिस्थानम् ॥ तरस मासम् ॥ अर्थप्राधान्यात् उत्तप्त शुष्कमासम् ॥
यवसमश्वादिघास ॥ विस पद्मकन्द ॥ २३ ॥ मन्दाक्ष लज्जा शूका च ॥ वीक्ष विस्मय दृश्य च ॥ सक्थि ऊरु ॥ 'इगु प्राण्यङ्ग '—इति स्त्रीत्वप्राप्तो वचनम् ॥ अथोदन्ता ॥ शयातु
अजगर ॥ यातु राक्षस ॥ स्वादु पय ॥ आशु शीघ्रम् ॥ तुम्बरु औषधिविशेष ॥ उकारान्तत्वात्पुस्त्वे प्राप्ते वचनम् ॥ कसेरु कन्दविशेष पृष्ठास्थि च ॥ अर्थप्राधान्यात् गाङ्गेयमपि ॥ शलालु

हानि पृषत्पुरीतत्पर्वाणि रोम च भसच्च जगल्ललाम ॥ २४ ॥ ॥ इति नपुंसकलिङ्गं समासम् ॥ पुंस्त्रीलिङ्गं चतुर्दशके शङ्कुर्निरये च दुर्गतिः ॥ दोर्मूले कक्ष आकरे गञ्जो भूरुहि बाणपिप्पलौ ॥ १ ॥ नाभिः प्राण्यङ्गके प्रधिर्नेमौ क्वचन वलिर्गृहे कुटः ॥ श्रोण्योषध्योः कटो भ्रमो मोहे पिण्डो वृन्दगोलयोः ॥ २ ॥ भकनीनिकयोस्तारो भेऽश्लेषहस्तश्रवणाः ॥ कणः स्फुलिङ्गे लेशे च वराटो रज्जुशस्त्रयोः ॥ ३ ॥ कुम्भः कलशे तरणिः समुद्रार्कांशुयष्टिषु ॥ भागधेयो राजदेये मेरुजम्ब्वां सुदर्शनः ॥ ४ ॥ करेणुर्गजहस्तिन्योरल्पाख्यापसतद्धितः ॥ लाजवस्त्रदशौ भूम्नीहाद्याः प्रत्ययभेदतः ॥ ५ ॥ शुण्डिकचर्मप्रसेवकौ सल्लकमल्लकवृश्चिका अपि ॥ शल्यकघुटिकौ पिपीलि-

---

गन्धद्रव्यम् ॥ आलु कन्दविशेष. ॥ अथ व्यञ्जनान्ता ११ ॥ सयत् सग्राम ॥ ककुत् वृषस्कन्ध. ॥ महत् राज्यं बुद्धितत्त्व च ॥ अय पुस्यपि । महान् प्रकृति. । अहर्दिनम् ॥ पृषत् बिन्दु ॥ पुरीतत् अन्त्रम् ॥ पर्व दर्शप्रतिपदो. संधि. । ग्रन्थिप्रस्तावयोरपि ॥ पर्व क्लीबमाहवे च विषुवत्प्रभृतिष्वपि ॥ रोम तनूरुहम् ॥ रोमणी इति द्विवचनम् ॥ मन्नन्तत्वेनैव सिद्धे कर्त्रर्थ वचनम् ॥ पुस्यपि कश्चित् ॥ भसदास्य जघनमामाश्रयस्थानम् । दकारान्तोऽयम् ॥ जगत् विश्वम् ॥ ललाम ध्वजादौ रम्ये च ॥ ललामस्य तु पुन्नपुसकत्वम् ॥ इति नपुंसकलिङ्गम्॥ चतुर्दशके स्थाने वर्तमान. शङ्कुशब्द. स्त्रीपुंसलिङ्ग ॥ अयमिय वा शङ्कु ॥ 'एक दश शत तस्मात्सहस्रमयुत तत. पर लक्षम् ॥ प्रयुत कोटिमथार्बुदमब्जं खर्व निखर्व च ॥१॥ तस्मान्महासरोजं शङ्कु सरितां पति ततस्त्वन्त्यम् ॥ मध्य परार्धमाहुर्यथोत्तरं दशगुण तज्ज्ञा ॥२॥' निरये वाच्ये दुर्गतिशब्द. स्त्रीपुसलिङ्ग. ॥ अयमिय वा दुर्गति. ॥ भुजमूलेऽभिधेये कक्षशब्द. स्त्रीपुसलिङ्ग. ॥ कक्ष. कक्षा दोर्मूलम् ॥ आकरे वाच्ये गञ्ज स्त्रीपुसलिङ्ग ॥ गञ्जः गञ्जा आकर ॥ भाण्डागारे तु पुनपुसकत्वमसुरालये तु स्त्रीत्व प्रतिपदपाठेनोक्तम् ॥ भूरुहि वृक्षे वाच्ये बाणपिप्पलशब्दौ स्त्रीपुसकौ ॥ बाण बाणा झिण्टी॥ पिप्पल. पिप्पली अश्वत्थ ॥ वस्त्रच्छेदनोपकरणे प्रतिपदपाठात्पुनपुंसकत्वम् ॥ जले तु तन्नामत्वान्नपुसकत्वम् ॥ १ ॥ प्राण्यङ्गे वाच्ये नाभिशब्द. स्त्रीपुंसलिङ्ग. ॥ अय नाभिरिय नाभि प्राण्यङ्गविशेष. ॥ नेमौ चक्रधाराया वाच्याया प्रधिः ॥ अयमिय वा प्रधि ॥ क्वचनार्थविशेषे बलिशब्द स्त्रीपुंसलिङ्ग ॥ ववयोरैक्येन निर्देश । अयमिय वा वलि उपहार त्वग् मासससकोचश्च जठरावयवश्च॥ गृहे वाच्ये कुटशब्द' ॥ कुटः कुटी ॥ घटे हलाङ्गे च पुक्लीव ॥ श्रोणावौषधिविशेषे च कट पुस्त्रीलिङ्ग ॥ कट कटी श्रोणि, कटः कटा औषधि ॥ मोहे अज्ञानविशेषे च भ्रम पुस्त्री ॥ भ्रम भ्रमी अज्ञानविशेषे सदेहे भ्रमणे च ॥ वृन्दे सक्त्वादीना गोले च वाच्ये पिण्ड पुस्त्री ॥ पिण्ड पिण्डी वृन्द गोलकश्च ॥ २ ॥ भे नक्षत्रे कनीनिकाया तारकायां च तारशब्दः स्त्रीपुसलिङ्ग ॥ तारस्तारा नक्षत्रम् कनीनिका च ॥ भे नक्षत्रविशेषे अश्लेषहस्तश्रवणा स्त्रीपुसलिङ्गा. ॥ अश्लेष अश्लेषा, हस्तो हस्ता, श्रवण श्रवणा नक्षत्राणि ॥ स्फुलिङ्गे लेशे च वाच्ये कण. स्त्रीपुसलिङ्ग ॥ कण कणा स्फुलिङ्गो लेशश्च ॥ वराट वराटा रज्जुशस्त्रविशेषौ ॥ अन्यत्र तु कपर्दे श्वेतनामत्वात् पुस्त्वमेव ॥ ३ ॥ कलशे वाच्ये कुम्भ पुस्त्री । कुम्भ. कुम्भी कलश ॥ अन्यत्र तु यथाप्राप्तम् ॥ गुग्गुलौ बाहुलकान्नपुसकत्वम् ॥ अयमिय वा तरणि समुद्र अर्कः अशु पतितगोरूपोत्थापनी यष्टिश्च ॥ अन्यत्र तु 'लिन्मिन्यनिण्यणिस्त्र्युक्ता'—इति स्त्रीत्वमेव ॥ भागधेयो भागधेयी राजदेय कर' ॥ मेरुजम्ब्वा सुदर्शनशब्द. स्त्रीपुसलिङ्ग । सुदर्शन सुदर्शना मेरुजम्बू ॥ अन्यत्र तु विष्णुचक्रे शक्रपुरे च प्रतिपदपाठात्पुस्त्वमेव ॥ ४ ॥ गजे हस्तिन्या च वाच्ये करेणु स्त्रीपुसलिङ्ग ॥ अयमिय वा करेणु गज हस्तिनी च ॥ अलेर्भ्रमरस्याख्या पुस्त्री ॥ अयमालि. । इयमालि । एवमली अलिनी, भृङ्ग भृङ्गी इत्यादि ॥ देहिनामत्वात्पुस्त्वे प्राप्ते योनिमन्नामत्वाभावाच्च स्त्रीपुसार्थ वचनम् ॥ अपत्येऽर्थे जातस्तद्धितस्तदन्त नाम पुंस्त्रीलिङ्गम् ॥ अयमौपगव. इयमौपगवी ॥ एव बैद बैदी गार्ग्य गार्गी इत्याद्यपि ॥ आश्रयलिङ्गत्वमपीति कश्चित् ॥ औपगव ना औपगवी स्त्री औपगव कुलमित्यादि ॥ लाजशब्द. वस्त्रसवन्धिदशावाची च दशशब्द स्त्रीपुसौ तौ च बहुत्व एव प्रयोक्तव्यौ ॥ अघञ्प्रत्ययभेदेनेहाद्या शब्दा स्त्रीपुंसलिङ्गाः ॥ ईह ईहा वाञ्छा उद्यमश्चेष्टा च ॥ ऊह. ऊहा तर्क । स्पर्ध. स्पर्धा सघर्ष ॥ इत्यादि ॥ ५ ॥ अथ कान्ता. १२ ॥ शुण्डिक शुण्डिका सुरापण. ॥ चर्मप्रसेवक चर्मप्रसेवका दृति. ॥ सल्लक सल्लकी गजप्रियतरु निर्यासवि-

कश्चुलुकहुडुकतुरुष्कतिन्दुकाः ॥ ६ ॥ शृङ्गोऽथ लञ्जभुजशाटसटाः सृपाटः कीटः किटिस्फटघटा वरटः किलाटः ॥ चोटश्चपेटफटशुण्डगुडाः सशाणाः स्युर्वारिपर्णफल-
गर्तरथाजमोदाः ॥ ७ ॥ विधकूपकलम्बजित्यवर्ध्राः सहचरमुद्गरनालिकेरहाराः ॥ वहुकरकृसरौ कुठारशारौ वल्लरशफरमसूरकीलरालाः ॥ ८ ॥ पटोलः कम्बलो भल्लो
दंशो गण्डूपवेतसौ॥लालसो रभसो वर्तिवितस्तितुटयस्त्रुटिः॥९॥ ऊर्मीशम्यौ रत्न्यरत्नी अवीचिर्लव्यण्याणिश्रेणयः श्रोण्यरण्यौ॥ पार्ष्णीशल्यौ शाल्मलिर्यष्टिमुष्टी योनीमुन्यौ

---

शेपश्चेत्यरण ॥ मल्लक मल्लिका दीपवर्त्याधार ॥ वृश्चिक वृश्चिकी सविष. कीट ॥ शल्यक शल्यकी श्वावित् ॥ घुटिक घुटिका गुल्फ ॥ अर्थप्राधान्यात् घुण्टिक घुण्टिका, घुट घुटी, गुल्फ
गुल्फा इत्यादि ॥ पिपीलक पिपीलिका वल्मीककृमि । चुलुक चुलुका आस्यपूर्णं वारि ॥ हुडुक हुडुकातोद्यम् ॥ तुरुष्क तुरुष्का सिह्लक ॥ तिन्दुक तिन्दुकी वृक्षविशेष ॥ ६ ॥ शृङ्ग
शृङ्गा कन्दल ॥ अथ चान्त ॥ लञ्ज लञ्जा उपचार ॥ भुज भुजा बाहु ॥ शाट शाटी परिधानम् ॥ सट सटा सिंहस्कन्धकेशा ॥ सृपाट. सृपाटी परिमाणविशेष ॥ किटि किटी वशादि-
पुत्तलिका ॥ स्फट स्फटा फण ॥ घट घटी कलश ॥ वरट वरटा क्षुद्रजन्तुविशेष ॥ किलाट किलाटी क्षीरविकार ॥ किलाटिकेत्यमरटीका ॥ चोट चोटी शाटिका ॥ चपेट चपेटा विस्तृता-
ङ्गुलिपाणितलम् ॥ फट फटा फण ॥ शुण्ड शुण्डा सुरा ॥ गुड गुडा हस्तिसन्नाह ॥ शाण शाणा निकष ॥ वारिपर्ण वारिपर्णी फञ्जानामशाकम् ॥ फण फणा फटा ॥ गर्त गर्ता श्वभ्रम् ॥
रथ रथी स्यन्दन ॥ अजमोद अजमोदा ब्रह्मकुशा ॥ ७ ॥ विध विधा प्रकार ॥ कूप कूपी अन्धु ॥ कलम्ब कलम्बी शाकविशेष ॥ जित्य जित्या हलि ॥ अथ रान्ता १२ ॥ वर्ध्र वर्ध्री
चर्मरज्जु ॥ सहचर सहचरी लता समूहविशेषश्च ॥ मुद्गर मुद्गरी लोष्टादिभेदनोपकरणम् ॥ नालिकेर नालिकेरी तरुविशेष ॥ फले तु तन्नामत्वात् क्लीवत्वम् ॥ हार हारा मुक्तादाम ॥ वहुकर
वहुकरी समार्जनी ॥ कृसर कृसरी तिलौदन ॥ कुठार कुठारी पर्शु ॥ शार शारी आयानयीन वराटश्चेति हर्ष ॥ वल्लर वल्लरी मञ्जरी । अर्थप्राधान्यान्मञ्जर मञ्जरीत्यपि ॥ शफर शफरी
मत्स्यविशेष' ॥ मसूर मसूरी माषविशेष अर्थप्राधान्यान्मसुरोऽपि ॥ कील कीला कफण्यादि ॥ राल राला सर्जरस' ॥ ८ ॥ पटोल पटोला औषधिविशेष ॥ कम्बल कम्बली ऊर्णावस्त्रम्
गोगलचर्म च ॥ भल्ल भल्ली शस्त्रभेद ॥ अथ शान्त ॥ दश दशी क्षुद्रजन्तुविशेष ॥ गण्डूप गण्डूपा करजलादिमुखपूरणम् ॥ अथ सान्ता ॥ वेतस वेतसी वानीर ॥ लालस लालसा
तृष्णातिरेकौत्सुक्ययाच्ञासु ॥ अन्यत्र तु आश्रयलिङ्ग ॥ रभस रभसा पौर्वापर्याविचार ॥ रभसो हर्षवेगयो ॥ माघे तु स्त्रियाम् 'क्रमते नभो रभसयैव' ॥ अथेदन्ता ३४ ॥ अय वर्तिरिय
वर्तिर्वस्त्रस्य दशा ॥ अय वितस्तिरिय वितस्ति विततङ्गुष्ठकनिष्ठ कर ॥ अय कुटिरिय कुटि स्वल्पवास ॥ अय त्रुटिरिय त्रुटि अवस्था क्षणद्वयम् चेत्यरुण ॥ ९ ॥ अयमूर्मिरियमूर्मि वी-
च्यादि ॥ अयमिय वा शमिस्तरुविशेष ॥ अयमिय वा रत्नि बद्धमुष्टि कर ॥ अयमिय वाऽरत्नि सकनिष्ठ कर ॥ अयमिय वाऽवीचि नरकभेद ॥ अयमिय वा लविर्दात्रम् ॥ अयमिय
वा अणि अक्षाग्रकीलिका अश्रि सीमा च ॥ अयमिय वाणि सेव ॥ अयमिय वा श्रेणि पङ्क्ति ॥ अयमिय वा श्रोणि कटि ॥ अयमियमरणि अग्निनिर्मन्थनकाष्ठम् ॥ अयमिय वा पार्ष्णि
गुल्फयोरध' पादावयव ॥ सैन्यपृष्ठे तु बाहुलकात्पुंसि ॥ अयमिय वा शल्लि कौटिल्यम् ॥ अयमिय वा शाल्मलिर्वृक्षविशेष ॥ एकदेशविकृतस्यानन्यत्वात्शल्मलि ॥ अयमिय वा यष्टि आलम्ब-
नदण्ड ॥ अयमिय वा मुष्टि सपीडिताङ्गुलि कर ॥ अयमिय वा योनिरुत्पत्तिस्थान श्रोणिश्च ॥ यद्गौड 'द्वयोर्योनिर्भगाकारे' ॥ अयमिय वा मुनिस्तपस्वी ॥ अयमिय वा स्वातिर्नक्षत्रम् ॥
अयमिय वा गव्यूति क्रोशद्वयम् ॥ अयमिय वा बस्तिर्मूत्राधार ॥१०॥ अयमिय वा मेथि पशुबन्धनार्थं खलमध्ये स्थूणा ॥ अयमिय मेधि सेव॥ अयमिय मसि कज्जलम्॥ अयमिय मषिस्तदेय ॥
अयमियमिषुधिस्तूणीर ॥ अयमियमृष्टि खड्ग ॥ व्यञ्जनादिरपि ॥ अयमिय पाटलिस्तरुविशेष ॥ अयमिय जाटलि स एव ॥ अयमियमहि सर्प ॥ अयमिय प्रश्नि किरण ॥ अयमिय तिथि
प्रतिपदादि' ॥ अयमियमशनिर्वज्रम् विद्युच्च ॥ अयमिय मणि रत्नादि ॥ अयमिय सृणिरङ्कुश ॥ अयमिय मौलि चूडा मुकुट केशाश्च ॥ अयमिय कलि परिहास ॥ अयमिय हलि सहाह-

॥

स्वातिगव्यूतिविस्त्यः ॥१०॥ मेथिर्मेधिमशी मपीपुधी ऋष्टिः पाटलिजाटली अहिः ॥ प्रश्निस्तिथ्यशनी माणिः सृणिमौलिः केलिहलीमरीचयः ॥११॥ हन्वाखू कर्कन्धुः सिन्धुर्मृत्युमन्वावट्वेर्वारुः ॥ ऊरुः कन्दुः काकुः किष्कुर्वाहुर्गवेधू रा गौर्भाः ॥१२॥ इति स्त्रीपुंसलिङ्गम् ॥ पुंनपुंसकलिङ्गोऽब्जः शङ्खे पद्मोऽब्जसंख्ययोः ॥ कंसोऽपुंसि कुशो वर्हिर्वालो ह्रीवेरकेशयोः ॥ १ ॥ द्वापरः संशये छदे पिष्पलो विष्टरस्तरौ ॥ अब्दो वर्षे दरस्त्रासे कुकूलस्तुषपावके ॥ २ ॥ परीवादपर्यङ्कयोर्जन्यतल्पौ तपोघर्मवत्सानि माघोष्णहृत्सु ॥ वटस्तुल्यतागोलभक्ष्येषु वर्णः सितादिस्वराद्यो रणे संपरायः ॥ ३ ॥ सैन्धवो लवणे भूतः प्रेते तमो विधुंतुदे ॥ स्वदायौ कस्वरे कृच्छ्रं व्रते शुक्रोऽग्नि-

---

लम् ॥ अयमियं मरीचि. कर ॥ ११ ॥ अयमिय हनु कपोलयोरधोवर्ती मुखावयव. ॥ अयमियमाखु मूपिक ॥ अयमियं कर्कन्धु बदरी ॥ अयमियं सिन्धु सरिदर्णवश्च ॥ अयमिय मृत्यु प्राणवियोग ॥ अयमिय मनु प्रजापति ॥ अयमियमवटु कृकाटिका ॥ अयमियमेर्वारु चिर्भट ॥ उपलक्षणत्वादीर्वारुरपि ॥ स्वार्थिके तु के प्रकृतिलिङ्गबाधया एर्वारुकमपि ॥ अयमियमूरु सक्थि॥ अयमिय कन्दु स्वेदनिका ॥ अयमियं काकु. ध्वनिर्विकार ॥ अयमियं 'किष्कु हस्ते वितस्तौ च प्रकोष्ठे वा नपुंसकम्' ॥ अयमिय बाहु हस्त ॥ अयमियं गवेधु तृणधान्यविशेष ॥ अयमिय रा द्रव्यम् ॥ अयमियं गौ ॥ अयमिय भा कान्ति प्रभावश्च ॥ अन्यत्र प्रभायामपि भा शब्द सन्त पुलिङ्ग एव चेत्याह ॥ १२ ॥ इति स्त्रीपुंसलिङ्गावचूरिः ॥ शङ्खे वाच्येऽब्जशब्द पुनपुंसकलिङ्ग ॥ अब्ज अब्ज शख ॥ यदुक्तम् 'अब्जो धन्वन्तरौ चन्द्रे शंखे स्त्रीक्लीबमम्बुजे' ॥ अब्जे सख्याविशेषे च पद्म पुनपुंसकम् ॥ पद्म पद्ममब्जं संख्याविशेपश्च ॥ पद्मकादावपीत्यन्ये ॥ अपुसि नरादन्यत्रार्थे कसशब्द पुनपुंसक ॥ कस कंसं मानविशेप. पानपात्र कास्य च ॥ कुशशब्द पुंनपुंसको बर्हिर्दर्भश्चेद्वाच्य. । कुश कुशम् दर्भ ॥ रामसुते तु देहिनामत्वाद्योक्त्रद्वीपान्तरयोस्तु प्रतिपदपाठात् पुसि ॥ अपरोऽप्यर्थ ॥ बर्हि शब्द पुंनपुंसक कुशो दर्भश्चेद्वाच्यो भवति ॥ अयमिद वा बर्हि कुश ॥ ह्रीवेरे केशे च वाच्ये वालशब्द । वाल वाल ह्रीवेर केशश्च ॥ करिवालधि प्रतिपदपाठात्पुंसि ॥ १ ॥ सशये सदेहे वाच्ये द्वापरशब्द पुनपुंसक । द्वापर द्वापरं संशय. ॥ अन्यत्र तु यथाप्राप्तम् । द्वापरं युगविशेष प्रतिपदपाठात् नपुंसक ॥ छिद्यतेऽनेनेति च्छेदो वस्त्रोपकरणम् ॥ तस्मिन् वाच्ये पिप्पल पुनपुसक ॥ पिप्पल पिप्पलं वस्त्रच्छेदोपकरणम् ॥ तरोरन्यत्रार्थे विष्टर पुनपुंसक ॥ विष्टर विष्टरम् आसनं बर्हिर्मुष्टिश्च ॥ अब्द अब्द वर्षम् ॥ दरो दरं भयम् ॥ कन्दरे तु त्रिलिङ्ग. ॥ ईषदर्थे त्वव्ययम् देश्यपदं वा ॥ यथा 'दरदलितहरिद्रापिञ्जराण्यङ्कानि' ॥ तुपपावके तुषाग्नौ वाच्ये कुकूल. पुंनपुसक ॥ कुकूल कुकूल तुपपावकः ॥ अन्यत्र तु लान्तत्वान्नपुसकम् ॥ कुकूलं शकुमान् गर्त. ॥ २ ॥ जन्यशब्द परीवादे कौलीने वाच्ये तल्पश्च पल्यङ्के पुंनपुंसक. ॥ जन्य जन्य परीवाद ॥ 'जन्यः स्याज्जनवादेऽपि' इत्यमर ॥ तल्प तल्प. पर्यङ्क ॥ तप शब्दो माघमासे, घर्मशब्द उष्णे शीतविरोधिनि, वत्स हृदि पुंनपुसक. ॥ अय तपा इद तपः माघ ॥ घर्म घर्ममुष्ण ॥ वत्स वत्सं हृत् ॥ वटशब्दस्तुल्यतायां गोलके भक्ष्यविशेषे च वाच्ये पुनपुंसक ॥ वट· वटम् तुल्यता गोलक भक्ष्यविशेष ॥ न्यग्रोधे रज्जौ च त्रिलिङ्ग ॥ भक्ष्ये स्वार्थिके केऽपि वटक. वटकम् ॥ न्यग्रोधफले फलनामत्वान्नपुसकम् ॥ वर्णशब्द, सितादौ स्वरादौ च वाच्ये पुनपुसक ॥ वर्ण वर्ण सितकृष्णादि रूपम्, स्वराद्यक्षर, च ॥ अन्यत्र तु णान्तत्वात्पुस्येव ॥ विलेपनेऽप्येके ॥ रणे युद्धे वाच्ये सपराय. पुनपुसक ॥ सपराय संपराय रणम् ॥ ३ ॥ लवणे वाच्ये सैन्धव पुंनपुंसक. ॥ सैन्धव सैन्धव लवणम् ॥ प्रेते वाच्ये भूत पुनपुंसक. ॥ भूत. भूतं प्रेत ॥ अन्यत्र तु पृथिव्यादौ प्राणिनि च क्लीव ॥ विधुतुदे राहौ वाच्ये तम शब्द. पुंनपुसकलिङ्ग ॥ अय तमा इदं तमो राहु. ॥ स्वदायशब्दौ कस्वरे धने वाच्ये पुनपुंसकौ । स्व स्वं कस्वरम् ॥ अन्यत्र स्व आत्मा स्वभावो ज्ञातिश्च ॥ प्रतिपदपाठात् पुस्त्वमेव ॥ दाय दाय धनम् ॥ कृछ्रशब्दो व्रते वाच्ये पुनपुसक ॥ कृच्छ्र कृच्छ्र सान्तपनादि व्रतम् ॥ अग्नौ ज्येष्ठमासे च शुक्र शब्द. पुंनपुंसक ॥ शुक्र शुक्रमग्नि-

मासयोः ॥ ४ ॥ कर्पूरस्वर्णयोश्चन्द्र उडावृक्षं छदे दलः ॥ धर्मः स्वभावे रुचको भूपाभिन्मातुलिङ्गयोः ॥ ५ ॥ पाताले वाडवो वर्ध्रः सीस आमलकः फले ॥ पिटजङ्गलसत्वानि पिटकामांसजन्तुषु ॥ ६ ॥ मधुपिण्डौ सुरातन्वोर्नाम शेवालमध्ययोः ॥ एकाद्रात्रः समाहारे तथा सूतककूलकौ ॥ ७ ॥ वैनीतकभ्रमरकौ मरको वलीकवल्मीककल्कपुलकाः फरकव्यलीकौ ॥ किंजल्ककल्कमणिकस्तवका वितङ्कवर्चस्कचूचुकतडाकतटाकतङ्काः ॥ ८ ॥ वालकः फलकमालकालका मूलकास्तिलकपङ्कपातकाः ॥ कोरकः करककन्दुकान्दुकानीकनिष्कचपका विशेषकः ॥ ९ ॥ शाटककण्टकटङ्कविटङ्का मञ्चकमेचकनाकपिनाकाः ॥ पुस्तकमस्तकमुस्तकशाका वर्णकमोदकमूषिकमुष्काः

ज्येष्ठमासश्च ॥४॥ कर्पूरे स्वर्णे च वाच्ये चन्द्रशब्द पुंनपुसक ॥ चन्द्र चन्द्र कर्पूरम् स्वर्ण च ॥ उडौ नक्षत्रे वाच्ये ऋक्षशब्द पुनपुसक ॥ ऋक्ष ऋक्ष भम् ॥ छदे पर्णे वाच्ये दलशब्द पुनपुसक ॥ दल. दल छद ॥ स्वभावे स्वरूपे वाच्ये धर्मशब्द पुनपुसक ॥ धर्म धर्म स्वभाव ॥ अन्यत्र तु पुण्योपाये क्लीबत्वमुक्तम् ॥ अन्यत्र तु पुंलिङ्ग एव ॥ भूपाभिदि ग्रैवेयके मातुलिङ्गे च बीजपूरे वाच्ये रुचक पुंनपुसक ॥ रुचक रुचक ग्रैवेयक बीजपूर च । सौवर्चले चन्दनपेषण्या शिलाया च क्लीब ॥ ५ ॥ पाताले वाच्ये वाडवशब्द पुनपुंसक ॥ वाडव वाडव पातालम् ॥ वर्ध्र सीसे सीसके वाच्ये ॥ फले वाच्ये आमलक पुंनपुसक ॥ आमलक आमलकम् फलम् ॥ पिटकाख्ये भाजनविशेषे मासे जन्तौ च यथासख्य पिटजङ्गलसत्वा पुनपुसका ॥ पिट पिटम् पिटका । अन्यत्र छदौं आकर्पफले च प्रतिपदपाठान्नपुसकत्वम् ॥ जङ्गल जङ्गलम् मासम् । जङ्गलो निर्जले देशे त्रिलिङ्ग पिशितेऽस्त्रियाम् ॥ सत्व सत्व जन्तु । जन्तुविशेषोऽपि जन्तु । तेन पिशाचादावपि पुनपुसकत्वम् ॥ उपलक्षणत्वाद्गुणप्राणयोरपि । अन्यत्र तु क्लीब ॥ ६ ॥ सुराया मृद्वीकामद्ये तनौ च वाच्याया मधुपिण्डशब्दौ पुनपुसकौ ॥ अय मधु इद मधु सुरा । अय पिण्ड इद पिण्ड तनु ॥ शेवालमध्ययोर्नाम पुनपुसकम् ॥ शेवाल शेवालम् । शेवल शेवलमित्यादि ॥ मध्य मध्य मध्यस मध्यमम् अवलग्न अवलग्नम् विलग्न विलग्नम् इत्यादि ॥ रात्र इति कृतसमासान्तो रात्रिशब्दो गृह्यते स एकशब्दात्पर पुनपुसक ॥ असमाहारार्थ वचनम् ॥ एका चासौ रात्रिश्च एकरात्र एकरात्रम् ॥ समाहारे द्विगुसमाहारो द्वद्वसमाहारश्च गृह्यते तस्मिन् वर्तमानो यो रात्रशब्द स पुनपुंसक ॥ द्वे रात्री समाहृते द्विरात्र द्विरात्रम् ॥ एव त्रिरात्र त्रिरात्रमित्यादि ॥ द्वद्वसमाहारे, अहश्च रात्रिश्च अहोरात्र. अहोरात्रम् ॥ समाहार इति किम् । पूर्वो रात्रेरश पूर्वरात्र ॥ अथ कान्ता १९ ॥ सूतक सूतक पारद ॥ कूलक कूलकम् स्तूप ॥ ७ ॥ वैनीतक वैनीतकम् परपरावाह्य याप्ययानादि ॥ भ्रमरक भ्रमरक ललाटस्थोऽलक ॥ मरक मरकम् बहुप्राणिमरणम् ॥ वलीक वलीक नीव्रम् ॥ वल्मीक वल्मीक पिपीलिकादिकृतो मृत्संचय ॥ वल्क वल्कम् तरुत्वक् ॥ पुलक पुलक रोमाञ्च ॥ फरक फरकं खेटक ॥ रलयोरैक्येन फलकमपि ॥ व्यलीक. व्यलीकमप्रियमकार्यंच ॥ किञ्जल्क किञ्जल्क केसरम् ॥ कल्क कल्क कषाय तिलादे. खलश्च ॥ मणिक मणिकमलिञ्जर ॥ स्तबक स्तवक गुच्छक ॥ वितङ्क वितङ्कम् आरोग्यम् ॥ वर्चस्क वर्चस्कमवस्कर ॥ चूचुक चूचुक कुचाग्रम् ॥ तडाक तडाकं सर । तटाक तटाक तदेव ॥ अर्थप्राधान्यात्तडागोऽपि ॥ तङ्क तङ्कम् आतङ्क ॥ ८ ॥ वालक २ परिहार्यमङ्गुलीयक च ॥ फलक फलकं खेटकम् ॥ तदन्तत्वात् शालिफलकोऽपि अष्टापद ॥ मालक मालक ग्रामान्तराटवी ॥ अलक अलक चूर्णकुन्तल ॥ मूलक मूलक शाकविशेष ॥ तिलक तिलक पुण्ड्र ॥ पङ्क पङ्क कर्दम पाप च ॥ पातक पातक पापम् ॥ कोरक कोरकम् कुड्मलम् ॥ अर्थप्राधान्यात् क्षारकोऽपि ॥ करक करक कमण्डलु करकश्च ॥ कन्दुक कन्दुक गिरि ॥ अन्दुक अन्दुकं गजपाद बन्धनम् ॥ अनीक अनीक युद्धं सेना च ॥ निष्क निष्क हेम्न अष्टोत्तर शत पल कर्ष हेम्न उरोभूषणं दीनारश्च ॥ चपक चपक मद्यपानभाजनम् ॥ विशेषक विशेषक तिलक ॥ ९ ॥ शाटक शाटकं वस्त्रविशेष ॥ कण्टक कण्टक रोमाञ्च वृक्षभेदी च ॥ टङ्क पाषाणादिच्छेदोपकरण गिरिशृङ्ग च ॥ विटङ्क विटङ्क कपोतपालीसज्ञ पक्षिविश्रामार्थ बहिर्निर्गत दारु,

॥ १० ॥ चण्डातकश्चरकरोचककञ्चुकानि मस्तिष्कयावककरण्डकतण्डकानि ॥ आतङ्कशूकसरकाः कटकः सशुल्कः पिण्याकझर्झरकहंसकशंखपुंखाः ॥ ११ ॥ नखमुखमधिकाङ्गः संयुगः पद्मरागो भगयुगमथ टङ्कोद्योगशृङ्गा निदाघः ॥ क्रकचकवचकूर्चार्धर्चपुच्छोञ्छकच्छा व्रजमुटजनिकुञ्जौ कुञ्जभूर्जाम्बुजाश्च ॥ १२ ॥ ध्वजमलयजकूटाः कालकूटारकूटौ कवटकपटखेटाः कर्पटः पिष्टलोष्टौ ॥ नटनिकटकिरीटाः कर्बटः कुक्कुटाट्टौ, कुट्यकुटविटानि त्र्यङ्गटः कोट्टकुष्टौ ॥ १३ ॥ कमठो वारुण्डखण्डपण्डा निगडाक्रीडनडप्रकाण्डकाण्डाः ॥ कोदण्डतरण्डमण्डमुण्डा दण्डाण्डौ दृढवारवाणवाणाः ॥ १४ ॥ कर्षापणः श्रवणपक्कणकङ्कणानि द्रोणापराह्णचरणानि तृणं सुवर्णम् ॥

वक्रदार्वाधार तत्र हि कपोतपङ्क्तिरुत्कीर्यते । मञ्चक २ पल्यङ्क ॥ मेचक २ वर्णविशेष ॥ नाक २ स्वर्ग आकाश च ॥ पिनाक २ रुद्रधनु ॥ पुस्तक २ लिखितपत्रसञ्चय ॥ णकप्रत्ययान्तोऽयम् । तेन पुस्तात् स्वार्थिककेन न सिध्यति ॥ मस्तक २ शिर ॥ उणादौ तु कान्तोऽयम् तप्रत्ययान्ताद्वा स्वार्थिक क । मुस्तक २ मुस्ता ॥ शाक २ मूलकादि ॥ वर्णक २ विलेपनम् ॥ मोदक २ लड्डुक ॥ मूषिक २ आखु ॥ मुष्क २ वृषण ॥ १० ॥ चण्डातक २ अर्धोरुकवस्त्रम् ॥ चरक २ शस्त्रविशेष ॥ रोचक २ क्षुत् ॥ कञ्चुक २ सन्नाहादि ॥ मस्तिष्क २ मस्तकस्नेह ॥ यावक २ अलक्तक ॥ करण्डक. २ पुष्पाद्याधार ॥ तण्डक. २ शाल्यादिसार ॥ आतङ्क २ इष्टवियोगतापरुक्शङ्कादिषु ॥ घजन्तत्वात्पुंसि ॥ शूक २ धान्यादे शृङ्ग. ॥ सरक २ मद्यभाजनम् ॥ मद्यपाने तु त्रिलिङ्ग. ॥ कटक २ सैन्य सानु वलयोऽद्रिशृङ्ग च ॥ शुल्क २ मार्गादौ राजदेय स्त्रीविवाहपरिग्राह्य धान्य च ॥ पिण्याक २ तिलादिखल ॥ झर्झरक २ कलियुगम् ॥ हसक २ नूपुरम् ॥ शख. २ कम्बु वलय प्राण्यङ्गम् ॥ पुङ्ख २ शरपृष्ठम् ॥११॥ नखमुखे प्रसिद्धे ॥ अधिकाङ्गः २ सारसन यद् हृदि वध्यते युधि ॥ सयुगः २ सग्राम ॥ पद्मराग' २ शोणमणिः ॥ भग २ उपस्थ ॥ युगो २ यूप ॥ टङ्कः २ खनित्रम् ॥ उद्योग २ पराक्रम ॥ शृङ्ग २ शिखरम् ॥ निदाघ. २ ग्रीष्म ॥ क्रकच. २ करपत्रम् ॥ कवच २ वर्म ॥ कूर्च. २ भ्रूमध्यम् दीर्घश्मश्रु कैतव च ॥ ऋचोऽर्धमर्धर्च. २ ॥ 'परलिङ्गो द्वन्द्वोऽशी' इत्यस्यापवाद ॥ पुच्छ २ लाङ्गूलम् ॥ उञ्छ २ जीविकाविशेषः ॥ कच्छो २ बहुजलो देश. ॥ व्रज. २ पन्था. ॥ उटज' २ तापसपर्णकुटी ॥ निकुञ्ज. २ गह्वरम् ॥ कुञ्ज. २ गह्वर गजकुम्भाधो दन्तिदन्त हनुश्च ॥ भूर्ज २ च तरुविशेषत्वक् ॥ अम्बुज. २ कमलम् ॥ चकारोऽनुक्तसमुच्चये । तेन चान्तेषु अध्यर्चौ २ नमस्या ॥१२॥ ध्वज २ पताकादि ॥ मलयज. २ श्रीखण्डम् ॥ कूट २ मायादि ॥ कालकूट २ विषम् ॥ आरकूटो २ रीति ॥ कवट २ उच्छिष्टम् । कपटः २ दम्भ ॥ खेट २ फलकम् कफश्च ॥ कर्पट. २ वास ॥ पिष्ट' २ अपूप ॥ लोष्ट २ मृच्छकलम् ॥ नट २ नर्तकविशेष. ॥ निकट २ समीपम् ॥ किरीटः २ मुकुटम् ॥ कर्बट' २ पर्वतावृतग्रामविशेष ॥ कुक्कुट. २ ताम्रचूडः ॥ अट्ट २ क्षौमम् गेहभेदश्च ॥ कुटो २ घट हलाङ्गविशेषश्च ॥ यकुट. २ वार्ताकीकुसुमम् ॥ विट. २ खिङ्ग. गोविशेषश्च ॥ त्र्यङ्गट. २ शिक्यभेद ॥ कोट्ट २ दुर्ग. ॥ अथ ठान्तौ ॥ कुष्ठ २ त्वग्दोष गन्धद्रव्यविशेषश्च ॥ १३ ॥ कमठ. २ असुरविशेष भाजनं च ॥ कूर्मे तु देहिनामत्वात् पुस्त्वमेव ॥ वारुण्ड २ दृक्कर्णमल गणिस्थराजश्च ॥ खण्ड २ शकलमिक्षुविकारश्च ॥ गुणवृत्तेस्त्वाश्रयलिङ्गता ॥ खण्ड खण्डी खण्डामिति ॥ पण्ड २ वृक्षादिसमूह ॥ निगड २ पादबन्धनम् ॥ आक्रीड. २ उद्यानविशेषः ॥ नड २ नड्वलजस्तृणविशेष. ॥ प्रकाण्ड २ स्तम्बः शस्तं तरोश्च मूलशाखान्तरम् ॥ काण्ड २ शर. समयश्च प्रकरण समूह जल वालं कुत्सितम् वृषस्कन्धः लता च ॥ कोडण्डं २ चापम् ॥ तरण्ड २ उडुप ॥ मण्ड. २ द्रवद्द्रव्याणामुपरिस्थो भाग. भक्तादिनिर्यास एरण्ड मस्तु च ॥ मुण्डम् २ शिर ॥ दण्ड २ यष्टि मन्था सैन्य दमन च ॥ अण्ड' २ पक्ष्यादिप्रसव ॥ अथ ढान्त. ॥ दृढ' २ स्थूलं बलवांश्च ॥ वारवाणं २ चर्म ॥ वाण. २ शर. पुष्पविशेषश्च ॥ १४ ॥ कर्षापण. २ मानविशेष पणषोडषकं च ॥ प्रज्ञाद्यणि कार्षापणोऽपि ॥ श्रवण २ कर्ण ॥ पक्कण' २ शबरालय ॥ कङ्कण. २ हस्तरक्षासूत्रम् ॥ द्रोण २ परिमाणविशेष ॥ अपराह्ण २ दिवसापरभागश्च ॥ चरण २ गोत्रादि ॥ तृण. २ उपलादि. ॥ सुवर्ण २ स्वर्ण. २ हेमम् ॥ व्रण. २ ऊरु. ॥ वृषण. २ मुष्क. ॥ भूषणः २ अलकार ॥ अर्थ-

स्वर्णव्रणौ दृपणभूपणदूपणानि भाणस्तथा किणरणप्रवणानि चूर्णः ॥ १५ ॥ तोरणपूर्तनिकेतनिवाताः पारतमन्तयुतप्रयुतानि ॥ क्ष्वेडितमक्षतदैवतवृत्तैरावतलोहितहस्त-
शतानि ॥ १६ ॥ व्रतोपवीतौ पलितो वसन्तध्वान्तायुतद्यूतघृतानि पुस्तः ॥ शुद्धान्तबुस्तौ रजतो मुहूर्तद्वियूथयूथानि वरूथगूथौ ॥ १७ ॥ प्रस्थं तीर्थं प्रोथमलिन्दः
ककुदः कुकुदाष्टापदकुन्दाः ॥ गुददोहदकुमुदच्छदकन्दार्बुदसौधमथोत्सेधकबन्धौ ॥ १८ ॥ श्राद्धायुधान्धौपधगन्धमादनप्रस्फोटना लग्नपिधानचन्दनाः ॥ वितानराजादन-
शिश्नयौवनापीनोदपानासनकेतनाशनम् ॥ १९ ॥ नलिनपुलिनमौना वर्धमानः समानौदनदिनशतमाना हायनस्थानमानाः ॥ धननिधनविमानास्ताडनस्तेनवस्त्रा भवनसु-

---

प्राधान्यात् मण्डनोऽपि ॥ दूपण २ उपालम्भ ॥ भाण २ प्रबन्धभेद ॥ किण २ त्वग्ग्रन्थि ॥ रण' २ सपराय' ॥ प्रवण २ चतुष्पथम् ॥ चूर्ण २ क्षोद ॥ १५ ॥ तोरण २ वन्दन-
माला वहिर्द्वारि निर्यूहश्च ॥ पूर्त २ खानादि कर्म ॥ निकेत २ आवास । निवात २ गृह दुर्भेद चर्म च ॥ वातरहिते प्रदेशे त्वाश्रयलिङ्गता ॥ पारत २ रसेन्द्र ॥ अर्थप्राधान्यात्पारदमपि ॥
अन्त २ प्रान्त समीप स्वरूप च ॥ उपलक्षणत्वात्प्रान्त प्रान्तमपि ॥ युतम् २ अपानम् । प्रयुत २ दश लक्षाणि ॥ क्ष्वेडित २ सिहनादविशेप ॥ अक्षता अक्षतम् मङ्गलस्यतण्डुला ॥ पुसि
बहुत्व गवायम् ॥ दैवत २ देवता ॥ वृत्तम् २ शील निस्तल च ॥ ऐरावत २ सुरेन्द्रदन्ती ॥ लोहित २ शोणितम् ॥ गुणवृत्तिस्त्वाश्रयलिङ्ग ॥ हस्त २ कर ॥ शत २ पञ्च विशतय
॥ १६ ॥ व्रत २ शास्तितो नियम ॥ उपवीत २ कण्ठसूत्रम् ॥ पलित २ पक्वकेश । केशपाके कर्दमे च तान्तत्वान्नपुसकत्वम् ॥ वसन्त २ सुरभि देवपुत्रविशेपश्च ॥ ध्वान्त २ तम ॥
अयुत २ दशसहस्राणि ॥ द्यूत २ दुरोदरम् ॥ घृतम् २ आज्यम् ॥ पुस्त २ लेख्यपत्रसंघात लेपादिकर्म च ॥ शुद्धान्त २ अन्त पुरम् ॥ बुस्त २ पक्वमासविशेप ॥ रजतो २ रूप्य श्वेत च ॥
मुहूर्त २ घटिकाद्वयम् ॥ द्वयोर्यूथयो समाहारो द्वियूथ २ ॥ यूथ २ सजातीयपश्वादिसघात ॥ वरूथ २ रथगुप्ति ॥ गूथ २ विष्ठा ॥ १७ ॥ प्रस्थ २ मानम् ॥ तन्मित वस्तुमात्र च ॥
तीर्थ २ पुण्यस्थान जलावतारश्च ॥ प्रोथ २ अश्वादेर्घोणान्तरम् ॥ अलिन्द २ गृहद्वारस्था स्थली ॥ ककुद २ कुकुदश्च श्रेष्ठ वृपस्कन्ध राजचिह्न च ॥ अष्टापद २ सुवर्ण द्यूतफलक च ॥ अर्थ-
प्राधान्यात् शारिफलकमपि । गिरौ शलभे कपौ चाद्रिदेहिनामत्वात् पुस्त्री ॥ कुन्द २ पुष्पविशेप । निधिभेदमुरभिदोस्तु पुस्त्वमुक्तमेव ॥ चक्रभ्रमौ च बाहुलकात्पुसि ॥ गुदम् २ अपानम् ॥
दोहद २ श्रद्धादौ ॥ हृदयस्य तु बाहुलकान्नपुसकत्वम् ॥ कुमुद २ कैरवम् । छद २ दल पिच्छ च ॥ कन्द २ पयोधर सस्यमूल च ॥ अर्बुदो २ दश कोटय ॥ कोटिरित्यन्ये ॥ स्थान-
विशेप अक्षिरोगविशेपश्च ॥ पर्वतविशेपे तु पुस्त्वमेव ॥ अथ धान्ता ॥ सौध २ राजगृहम् ॥ उत्सेध २ उन्नति ॥ कबन्ध २ शिरोरहित काय ॥ १८ ॥ श्राद्ध २ पितृकर्म ॥ यस्तु
मत्वर्थीयाणन्त स आश्रयलिङ्ग ॥ आयुध २ प्रहरणम् ॥ अन्ध २ तम ॥ औपधो २ भेपजम् ॥ गन्धमादन २ पर्वतविशेप ॥ प्रस्फोटन २ शूर्पम् ॥ लग्न २ मेपादि ॥ पिधान २ सवरणम् ॥
अपे प्यादेशाभावेऽपिधानमपि ॥ चन्दन २ मलयजतरु ॥ चन्दनान्तत्वाद्धरिचन्दनो देवदारु चन्दनविशेपश्च ॥ वितान २ विस्तार उल्लोच शून्य यज्ञश्च ॥ राजादन २ पियाल क्षीरिका
च ॥ शिश्न २ मेण्ढ्र ॥ यौवन २ द्वितीय वय ॥ आपीनम् २ ऊध ॥ उदपान २ कूप ॥ असन २ वृक्षविशेप ॥ श्लेपनिर्देशादासनमुपवेशनम् ॥ केतन २ ध्वज ॥ अशन २ ओदन ॥१९॥
नलिन २ पद्मम् ॥ पुलिन २ सैकतम् ॥ मौनो २ वाग्यम ॥ वर्धमान २ शराव ॥ समान २ तुल्य शरीरस्थो वायुविशेपश्च ॥ ओदन २ कूरम् ॥ दिनो २ दिवस ॥ शत मानान्यस्य
शतमान २ भूभागविशेप रूप्यमान च ॥ हायन २ वर्ष रश्मिश्च ॥ स्थानम् २ आश्रय ॥ मान २ दर्प ॥ धनो २ द्रव्यम् ॥ निधन २ विनाश कुल च ॥ विमानं २ व्योमयानादि ॥
ताडन २ व्यधनम् ॥ स्तेन २ चौर चौर्य च ॥ वस्त्र २ अवक्रय ॥ धनवस्त्रयोस्तु क्लीबत्वम् ॥ भवन २ गेहम् ॥ भुवन २ जगत् ॥ यान. २ वाहनम् ॥ उद्यान २ क्रीडास्थानम् ॥

वनयानोद्यानवातायनानि ॥ २० ॥ अभिधानद्वीपिनौ निपानं शयनं लशुनरसोनगृञ्जनानि ॥ खलिनखलीनानुमानदीपाः कुणपः कुतपावापचापसूर्पाः ॥ २१ ॥ स्तूपो-डुपौ विटपमण्डपशष्पवाष्पद्वीपानि विष्टपानिपौ शफडिम्बाबिम्बाः ॥ जम्भः कुसुम्भककुभौ कलभो निभार्मसंक्रामसंक्रमललामाहिमानि हेमम् ॥ २२ ॥ उद्यमकामोद्यामाश्रम-कुट्टिमकुसुमसंगमा गुल्मः ॥ क्षेमक्षौमौ कम्बलिवाह्यो मैरेयतूर्यौ च ॥ २३ ॥ पूयाऽजन्यप्रमयसमया राजसूयो हिरण्यारण्ये संख्यं मलयवलयौ वाजपेयः कपायः ॥ शल्यं कुल्याव्ययकवियवद्गोमयं पारिहार्यः पारावारातिखरशिखरक्षत्रवस्त्रोपवस्ताः ॥ २४ ॥ अलिञ्जरः कूवरकूरवेरनीहारहिञ्जीररहस्यमेद्राः ॥ संसारसीरौ तुवरश्च सूत्रशृङ्गार-पद्रान्तरकर्णपूराः ॥ २५ ॥ नेत्रं वक्त्रपवित्रपत्रसमरौशीरान्धकारा वरः केदारप्रवरौ कुलीरशिशिरावाडम्बरो गह्वरः ॥ क्षीरं कोटरचक्रचुक्रतिमिराङ्गारास्तुपारः शर-

वातायन २ गवाक्ष ॥ २० ॥ अभिधान २ सज्ञा शब्दश्च ॥ द्वीपिन २ व्याघ्र ॥ निपानम् २ आहाव ॥ शयन २ शय्या ॥ लशुनरसोनगृञ्जना २ महाकन्दा ॥ खलिन २ खलीनं २ च कवियम् ॥ अनुमानो २ हेतु ॥ अकर्त्रनडन्तोऽयम् ॥ भावे तु क्लीवत्वमेव ॥ दीप. २ प्रदीप' ॥ कुणप २ शवम् ॥ कुतप २ छागरोमकृतकम्बल. दर्भ' अपराह्णकालश्च ॥ आवापो २ वलय. ॥ चाप २ धनु ॥ शूर्प २ धान्यादिपवन भाण्डम् ॥ २१ ॥ स्तूपो २ मृदादिकूट. ॥ उडुप २ प्लव. ॥ चन्द्रे तु पुस्त्वम् ॥ विटप २ तरो स्कन्धादूर्ध्वं शाखा ॥ मण्डपो २ जनाश्रय ॥ शष्प २ बालतृण प्रोक्तम् ॥ वाष्प २ नेत्रवारि ऊष्मा च ॥ द्वीप २ मध्येजल देश. ॥ विष्टप २ जगत् ॥ निप २ घट ॥ शफ २ खुर' ॥ डिम्ब' २ उदरान्तोऽवयव ॥ बिम्ब २ प्रतिबिम्ब मण्डल च ॥ जम्भो २ जम्बीर ॥ कुसुम्भ २ कमण्डलु महारजत च ॥ ककुभ २ वीणाप्रसेव. ॥ कलभ २ करिपोत. ॥ निभो २ व्याज ॥ अर्म' २ चक्षुरोग. ॥ संक्राम संक्रमश्च २ जलतरणविशेप ॥ ललाम २ शृङ्गं पुच्छम् हयमुखेऽन्यवर्ण पुण्ड्र केतुश्च ॥ हिम' २ तुपार. ॥ हेमम् २ स्वर्ण. ॥ २२ ॥ उद्यम २ उत्साह ॥ काम २ अभिलाप ॥ उद्याम २ ' उद्यमो-परमौ ' इति निपातनाद्वृद्धिनिषेधेऽपि अत एव निपातनादात्वमपि ॥ आश्रम २ मुनिस्थानम् ब्रह्मचर्यादिश्च ॥ कुट्टिम २ सस्कृतभूमिविशेपः ॥ कुसुम २ पुष्पे स्त्रीरजस्यपि च ॥ नेत्ररोगे तु बाहुलकात्क्लीवत्वमेव ॥ सङ्गम. २ संगम ॥ गुल्म २ विटप प्रकाण्ड च ॥ क्षेम २ कुशलम् लब्धरक्षण च ॥ क्षौमम् २ अट्टालक' अभ्यन्तरे प्राकारधारणार्थं रोमास्यश्च ॥ कम्बलिवाह्य २ गन्त्री ॥ मैरेय २ सीधु ॥ तूर्य २ वाद्यम् ॥ २३ ॥ पूय २ क्लिन्नासृग् ॥ अजन्य २ उत्पात. ॥ प्रमय. २ मरणम् ॥ समय २ काल' । अन्यत्र पुसि ॥ राजसूयः २ क्रतु ॥ हिरण्य २ स्वर्णम् ॥ अरण्य' २ अटवी ॥ सख्य २ आहव ॥ मलय. २ गिरिविशेप. ॥ वलय २ कटकम् ॥ वाजपेय' २ क्रतुभेद ॥ कपायो २ रसभेदेऽङ्गरोगे च ॥ शल्यं २ देहगत शस्त्रादि ॥ कुल्य २ अस्थि ॥ अव्ययं २ स्वरादि ॥ कविय. २ खलिनम् ॥ गोमय. २ गोशकृत् ॥ पारिहार्य २ वलयम् ॥ अथ रान्ता २७ ॥ पार २ परतीरम् समासेश्च ॥ अवारम् २ अर्वाक्तीरम् ॥ अतिखर २ औपधविशेप ॥ शिखर २ शैलवृक्षाग्र पुलक पक्वदाडिमबीजाभमाणिक्य च ॥ क्षत्रम् २ क्षत्रिय' ॥ वस्त्रं २ वास ॥ उपवस्त्रम् २ उपवास ॥ यत्तूपवस्ता प्राप्तोऽस्येति कृत्वाणि औपवस्त्रमुपवासः तत्सयुक्तरान्तत्वान्नपुंसकम् ॥ २४ ॥ अलिञ्जर २ मणिक ॥ कूवर २ युगधर' ॥ कूर. २ ओदनम् ॥ वेरो २ देह ॥ नीहार. २ हिमम् ॥ हिञ्जीरः २ अन्दुक ॥ सहस्र २ दश शतानि ॥ मेण्ढ्र २ शफ. ॥ ससार. २ जगत् ॥ सीर २ हलम् ॥ तुवर २ कपाय ॥ सूत्र २ तन्तु सूत्रणा च ॥ शृङ्गारो २ रसविशेप ॥ पद्र २ ग्रामस्थानविशेप. ॥ अन्तर २ मध्य छिद्रं विनार्थश्च अवधि अवकाश' विशेपश्च ॥ कर्णपूर. २ अवतस. नीलोत्पल च ॥ २५ ॥ नेत्रो २ नयनम् परिधानविशेपश्च ॥ वक्त्रो २ मुखम् ॥ पवित्र २ पावनम् । गुणवृत्तेस्त्वाश्रयलिङ्गता ॥ पत्र २ पर्ण वाहन च ॥ समर २ रणम् ॥ उशीर २ वीरणीमूलम् ॥ अन्धकार २ तम. ॥ अर्थप्राधान्यान्नीलपङ्कदिनकेसरावपि ॥ वर २ श्रेष्ठ देवतादेश्च । मनागिष्टे त्वव्ययम् ॥

भ्राष्ट्रोपह्वरराष्ट्रतक्रजठरार्द्राः कुञ्जरः पञ्जरः ॥ २६ ॥ कर्पूरनूपुरकुटीरविहारवारकान्तारतोमरदुरोदरवासराणि॥ कासारकेसरकरीरशरीरजीरमञ्जीरशेखरयुगंधरवज्रव-
प्राः ॥ २७ ॥ आलवालपलभालपलालाः पल्वलः खलचपालविशालाः ॥ शूलमूलमुकुलास्तलतैलौ तूलकुड्मलतमालकपालाः ॥ २८ ॥ कवलप्रवालवलशम्बलोत्पलोपल-
शीलशैलशकलाङ्गुलाञ्चलाः ॥ कमलं मलं मुशलशालकुण्डलाः कललं नलं निगलनीलमङ्गलाः ॥ २९ ॥ काकोलहलाहलौ हलं कोलाहलकङ्कालवल्कलाः ॥ सौवर्च-
लधूमले फलं हालाहलजम्बालखण्डलाः ॥ ३० ॥ लाङ्गूलगरलाविन्द्रनीलगाण्डीवगाण्डिवाः ॥ उल्वः पारशवः पार्श्वापूर्वत्रिदिवताण्डवाः ॥ ३१ ॥ निष्ठेवः प्रग्रीवः

अन्ये तु क्लीवम् ॥ केदार २ वप्र ॥ प्रवरो २ गोत्रविशेष हिम च ॥ कुलीर २ कर्कटक ॥ शिशिर २ ऋतुविशेष ॥ आडम्बर २ करिगर्जितम् पटह उद्धतवेषादिश्च ॥ गह्वर २ विल
निकुञ्ज दम्भश्च ॥ क्षीर २ दुग्धम् ॥ जले तु नपुंसकत्वम् ॥ कोटर २ छिद्रम् निष्कुहश्च ॥ चक्र २ आयुधम् रथाङ्गम् सघात राष्ट्र कटक च ॥ स्वल्पह्रस्वयो कपि चक्रिका दुरुद्योग घु-
णावर्तश्च ॥ चुक्रम् २ अम्लो रस अम्लव्यञ्जन च ॥ तिमिर २ तम ॥ अङ्गार २ अग्निदग्धकाष्ठशकलम् ॥ तुषार २ हिमम् ॥ शर २ बाण दधिसारश्च ॥ भ्राष्ट्रम् २ अम्बरीष ॥ उपह्व-
र २ उपसर रह समीप च ॥ राष्ट्र २ जनपद उपद्रवश्च ॥ तक्रम् २ उदश्वित् ॥ जठरम् २ उदरम् ॥ आर्द्र २ शृङ्गवेरम् ॥ कुञ्जर २ गज ॥ पञ्जरम् २ वीतसम् ॥ २६ ॥ कर्पूरम् २
घनसार ॥ नूपुरो २ गञ्जीर ॥ कुटीर २ ह्रस्वा कुटी ॥ विहार २ भिक्षुस्थानम् यतिचर्या च ॥ वार २ परिपाटि अवसर समूहश्च ॥ कान्तारो २ महारण्यम् ॥ तोमर २ शस्त्रविशेष ॥ दुरोद-
रम् २ पण ॥ वासरम् २ दिनम् ॥ कासार २ पल्वलम् ॥ केसर २ किञ्जल्क सटा च ॥ करीर २ वंशाद्यङ्कुर घटश्च ॥ शरीर २ काय ॥ जीरम् २ अजाजीक । जीरकोऽपि च ॥
मञ्जीर २ नूपुरम् ॥ शेखरम् २ शिरोभूषणम् ॥ युगधरम् २ कूबरम् ॥ वज्रम् २ अशनि रत्न च ॥ वप्रम् २ क्षेत्र रोधश्च ॥ २७ ॥ आलवालम् २ आवालम् ॥ पलम् २ मास मानविशे-
षश्च ॥ भाल २ ललाटम् ॥ पलाल २ धान्यादे शुष्कनालम् ॥ पल्वल २ कासार ॥ खल २ पिण्याक दुर्जनश्च ॥ दुर्जने आश्रयलिङ्गोऽप्ययमित्येके ॥ चपाल २ यज्ञपात्रम् ॥ विशाल २
विस्तीर्णता । गुणवृत्तेस्त्वाश्रयलिङ्गता ॥ शूलम् २ आयुधम् ॥ मूलम् २ आदि प्रतिष्ठा च ॥ मुकुलम् २ कुड्मल ॥ तलम् २ अध स्वभावश्च ॥ पृष्ठे तु लान्तत्वान्नपुंसक ॥ तैलम् २
तिलादिस्नेह ॥ तूलम् २ पिचु ॥ कुड्मलो २ मुकुल ॥ तमालो २ वृक्षविशेष ॥ कपालम् २ शिरोऽस्थि । घटादिशकले व्रजे भिक्षाभाजने च स्त्रीक्लीव ॥ २८ ॥ कवल २ भक्ष्यपिण्ड ॥
प्रवालम् २ नवकिशलय विद्रुमश्च ॥ बल २ प्राण ॥ अर्थप्राधान्यात् सहोऽपि ॥ सैन्यस्थौल्यरूपेषु तु क्लीव ॥ शम्बलम् २ पाथेयम् ॥ उत्पल २ सरोजम् अर्थप्राधान्यात् कुवलयमपि ॥
उपल २ पाषाण ॥ शील २ सद्वृत्त स्वभावश्च ॥ शैलम् २ गड ॥ शकल २ खण्डम् ॥ अङ्गुल २ अङ्गुलीयमानम् ॥ अञ्चलम् २ वस्त्रैकदेश ॥ कमल २ पद्मम् ॥ जले तु क्लीव ॥ अर्थ-
प्राधान्यान्नालीकमपि ॥ मल २ किट्टम् पाप च ॥ किट्टे चार्थप्राधान्यात् किट्ट किट्टम् ॥ मुसल २ क्षोदनोपकरणम् ॥ अर्थप्राधान्यात् अयोऽग्र ॥ शालम् २ वृक्षविशेष ॥ कुण्डल २ कर्णाभ-
रणम् ॥ कललम् २ शुक्रशोणितयोरीषद्घन परिणाम ॥ नलम् २ अन्त शुषिरस्तृणविशेष ॥ नल् गन्धे इत्यस्येदं रूपमिति कृतलत्वान्नडादस्य भेद ॥ निगल्यते वध्यतेऽनेनेति निगल पाद-
बन्धनम् ॥ अयमपि धातुभेदे कृतलत्वान्न सिध्यति ॥ नील २ वर्णविशेष ॥ मङ्गल २ प्रशस्तम् ॥ २९ ॥ काकोलो २ विषभेद ॥ हलाहल २ स एव ॥ हल २ सीर ॥ कोलाहल २
कलकल ॥ कङ्काल २ शरीरास्थि ॥ वल्कल २ वृक्षादीना त्वक् ॥ सौवर्चलम् २ रुचकम् ॥ धूमल २ तूर्य ॥ फल २ प्रयोजन पुष्पादिभव च ॥ हालाहलो २ विषभेद । एकदेशविकृत-
स्यानन्यत्वेन हालहलमपि ॥ जम्बाल २ कर्दम ॥ खण्डल २ खण्डम् ॥ ३० ॥ लाङ्गूल २ पुच्छम् ॥ गरल २ विषम् ॥ इन्द्रनील २ रत्नभेद ॥ गाण्डीव २ धनु पार्थधनुश्च ॥
गाण्डिव २ तदेव ॥ उल्व २ कललम् ॥ पारशव २ शस्त्रम् ॥ पार्श्व २ कक्षाध शरीरदेश ॥ अपूर्व २ धर्माधर्मौ ॥ त्रिदिव २ स्वर्ग ॥ ताण्डवम् २ उद्धत नृत्यम् ॥ ३१ ॥ निष्ठेव २

शरावरावौ भावक्लीवशवानि ॥ देवः पूर्वः पल्लवनल्वौ पाशं कुलिशं कर्कशकोशौ ॥ ३२ ॥ आकाशकाशकणिशाङ्कुशशेपवेपोष्णीपाम्बरीपाविपरोहिपमापमेपाः ॥ प्रत्यूपयूपमथ कोपकरीपकर्पवर्पामिपा रसवुसेक्कसचिक्कसाश्च ॥ ३३ ॥ कर्पास आसो दिवसावतंसवीतंसमांसाः पनसोपवासौ ॥ निर्यासमासौ चमसांसकांसस्नेहानि वर्हो गृहगेहलोहाः ॥ ३४ ॥ पुण्याहदेहौ पटहस्तनूरुहो लक्षाररिस्थाणुकमण्डलूनि च ॥ चाटुश्चटुर्जन्तुकशिप्वणुस्तथा जीवातुकुस्तुम्बुरु जानु सानु च ॥ ३५ ॥ कम्बुः सक्तुर्दार्वगुरुर्वास्तु पलाण्डुर्हिङ्गुः शिग्रुर्दोस्तितउः सीध्वथ भूम ॥ वेम प्रेम ब्रह्म गरुल्लोम विहायः कर्माष्ठीवत्पक्ष्मधनुर्नाममहिम्नी ॥ ३६ ॥ इति

निष्ठेवनम् ॥ अत्र यज्ञोपकरणवाचिन पात्रीवशब्द केचित्पठन्ति स त्वाश्रयलिङ्ग ॥ प्रग्रीवो २ वातायनम् ॥ शरावो २ वर्धमानम् ॥ राव २ ध्वनिविशेप ॥ भाव २ स्वभावादिः ॥ क्लीव' २ तृतीयाप्रकृति ॥ अर्थप्राधान्यात् नपुंसकमपि ॥ शवो २ मृतशरीरम् ॥ देवो २ विधि ॥ पूर्व २ प्रथमता ॥ गुणवृत्तिस्त्वाश्रयलिङ्ग ॥ पल्लव' २ किशलयम् ॥ पल्लवान्तत्वात् सपल्लवो २ वास ॥ नल्वो २ हस्तचतु शती ॥ अथ शान्ता ८ ॥ पाशो २ बन्धनम् ॥ कुलिशो २ वज्रम् ॥ कर्कशो २ ऽमृदुत्वम् ॥ गुणवृत्तेस्त्वाश्रयलिङ्गता ॥ कोशो २ भाण्डागार कुड्मल शपथश्च ॥ भाण्डागारेऽर्थप्राधान्यात् गञ्जोऽपि तालव्योपान्त्य ॥ समानार्थ मूर्धन्योपान्त्य कोपशब्दो वक्ष्यते ॥ ३२ ॥ आकाशो २ नभ ॥ काश २ तृणविशेप ॥ कणिश २ धान्यशीर्षकम् ॥ अङ्कुश २ सृणि ॥ अथ पान्ता १५ ॥ शेप २ उपयुक्तेतरत् ॥ वेप २ आकल्प ॥ तालव्योपान्त्योऽप्ययम् ॥ उष्णीप २ किरीटम् शिरोवेष्टन च ॥ अम्बरीप २ भ्राष्ट्र ॥ विप २ गरलम् ॥ रोहिप २ रक्ततृणम् ॥ माप २ धान्यविशेप ॥ मेप २ मेण्ढ्रम् ॥ प्रत्यूप २ प्रभातम् ॥ यूप २ मुद्गादिरसविशेप ॥ कोप २ कुड्मलम् ॥ करीप २ शुष्कगोमयं तदग्निश्च ॥ कर्प. २ पलचतुर्थांश ॥ वर्प २ सवत्सर वृष्टि खण्ड भरतक्षेत्रादि च ॥ आमिपम् २ उत्कोच मास भोग्यवस्तु च ॥ रसं २ मधुरादि श्रृंगारादि विप वीर्य रागश्च ॥ वुसम् २ कडङ्गर ॥ इक्कस २ वस्तुविशेप ॥ चिक्कसं २ यवान्नविशेप ॥ चकारात् पायस २ परमान्न २ च ॥ ३३ ॥ कर्पास २ तूलकारणम् ॥ आसो २ धनु ॥ दिवसं २ दिनम् ॥ अवतस २ शेखर ॥ अवस्य वादेशे वतसोऽपि ॥ अर्थप्राधान्यादुत्तसो २ ऽपि ॥ वीतस २ पञ्जर ॥ मास २ जङ्गलम् ॥ पनसो २ वृक्षविशेप ॥ उपवास अहोरात्रनिरशनता ॥ निर्यासो २ वृक्षादेर्निस्यन्द ॥ मास २ पक्षद्वयम् ॥ चमसम् २ यज्ञपात्रम् ॥ मसूरादिपिष्टे तु बाहुलकात्स्त्रीत्वम् । चमसी ॥ अस २ स्कन्ध ॥ कांसो २ भाण्डविशेप ॥ स्नेह २ सौहृद तैलं च ॥ वर्ह २ कलाप वर्ण च ॥ गृहाणि २ दारा वेश्म च ॥ गेह २ सदनम् ॥ लोह २ अय अगुरु च ॥ ३४ ॥ पुण्याह २ पुण्यदिनम् ॥ देह २ काय ॥ पटह २ आनक ॥ तनूरुह २ गरुल्लोम्नी ॥ लक्ष २ व्याज ॥ वेध्ये क्लीव ॥ सख्यायां तु स्त्रीक्लीव ॥ अररि २ कपाटम् ॥ अथोदन्ता ॥ स्थाणु २ शङ्कु ॥ शिवे तु देहिनामत्वात्पुस्त्वम् ॥ कमण्डलु' २ करक ॥ चाटु २ प्रियवाक्यम् ॥ चटु २ तदेव ॥ जन्तु २ प्राणी ॥ कशिपु २ भोजनाच्छादने ॥ अणु २ परमाणु सूक्ष्मपरिमाणविशेप इत्यर्थ ॥ जीवातु २ जीवनौपधम् ॥ कुस्तुम्बुरु २ धान्यविशेप ॥ जानु २ अष्ठीवान् ॥ सानु २ गिरितटम् ॥ ३५ ॥ कम्बु २ शंख ॥ वलये शम्बूके गजे कचूरे च पुसि ॥ सक्तु २ यवादिविकृति ॥ केचिदेन बहुवचनान्त पठन्ति ॥ दारु २ काष्ठम् ॥ दार्वन्तत्वादेव महादार्वादयोऽपि पुक्लीवा ॥ सर्वेऽप्येते एकार्था ॥ अगुरु २ गन्धद्रव्यविशेप ॥ वास्तु २ गृहभूमि ॥ पलाण्डु २ कन्दविशेप ॥ हिङ्गु २ रामठम् ॥ शिग्रु' २ शोभाञ्जनम् ॥ अथोदन्तप्रक्रम एव छन्दोऽनुसधानात् सन्त ॥ दो २ बाहु ॥ तितउ २ शूर्पम् ॥ सीधु २ मैरेयम् ॥ अथ व्यञ्जनान्ता १३ ॥ भूमा २ बहुत्वम् ॥ वेमा २ तन्तुवायशलाका ॥ प्रेमा २ स्नेह नर्म च ॥ ब्रह्म २ तप वेद ज्ञानम् आत्मा प्रजापति ॥ गरुत् २ स्वर्ण पिच्छ च ॥ लोम २ तनूरुहम् ॥ विहाया. २ शकुनिर्नभश्च ॥ कर्म २ क्रिया व्याप्य च ॥ अष्ठीवान् २ जानु' ॥ पक्ष्म २ अक्षिरोम तूलं च ॥ धनु २ चापम् ॥ नाम २ सज्ञा ॥ महिमा २ महत्त्वम् ॥ ३६ ॥ इति पुंनपुंसकलिङ्गं समाप्तम् ॥ शुक्तौ गन्धद्रव्यविशेपे नखशब्द स्त्रीक्लीवलिङ्ग ॥ नखी । नखम् ॥ विश्वमधुकनाम्नी औपधवाचिनी

पुंनपुंसकलिङ्गाः ॥ क्लीबयोर्नखं शुक्तौ विश्वं मधुकमौषधे ॥ माने लक्षं मधौ कल्यं कोडोऽङ्के तिन्दुकं फले ॥ १ ॥ तरलं यवाग्वां पुष्पे पाटलं पटलं चये ॥ वसन्ततिलकं वृत्ते कपालं भिक्षुभाजने ॥ २ ॥ अर्धपूर्वपदो नावष्ट्यणकर्त्रनटौ क्वचित् ॥ चोराद्यमनोज्ञाद्यकञ् कथानककशेरुके ॥ ३ ॥ वंशिकवक्रोष्ठिककन्यकुब्जपीठानि नक्तमवहित्थम् ॥ रशनं रसनाच्छोटनशुम्बं तुम्बं महोदयं कांस्यम् ॥ ४ ॥ मृगव्यचव्ये च वणिज्यवीर्यनासीरगात्रापरमन्दिराणि ॥ तमिस्रशस्त्रे नगरं मसूरत्वक्षीरकाद-

नीलीवे ॥ विश्वा विश्वं शुण्ठी ॥ मधुका मधुकं मधुयष्टि ॥ माने संख्यायां लक्षं क्लीबनम् ॥ लक्षा लक्षं सहस्रशतम् ॥ मधौ मद्ये वाच्ये कल्यशब्दः क्लीबे ॥ कल्या कल्यम् ॥ अङ्के उरसि वाच्ये क्रोडशब्दः क्लीबे ॥ क्रोडा । क्रोडम् ॥ फलविशेषे तिन्दुकः क्लीबम् ॥ तिन्दुकी । तिन्दुकम् ॥ १ ॥ यवाग्वा वाच्यायां तरलम् । तरला । तरलम् ॥ हारे तन्मध्यमणौ चाभरणनामत्वात्पुंस्त्वम् ॥ पुष्पविशेषे वाच्ये पाटलम् ॥ पाटली पाटलम् ॥ चये समूहे वाच्ये पटलम् । पटली पटलम् । पिटकतिलकपरिच्छेदेषु लाक्षत्वान्नपुंसकत्वम् ॥ वृत्तविशेषे वसन्ततिलकम् ॥ वसन्ततिलका । वसन्ततिलकम् ॥ भिक्षुभाजने वाच्ये कपालं क्लीबम् ॥ कपाली । कपालम् ॥ २ ॥ अर्धशब्दपूर्वपदोऽद्समासान्तो नौशब्दः क्लीबे ॥ अर्धनावी । अर्धनावम् ॥ ट्यण्प्रत्ययान्ता कर्तृवर्जिते कारके विहितो योऽनट्प्रत्ययस्तदन्तं च क्वचिल्लक्ष्यानुसारेण क्लीबम् ॥ ट्यण्, उचितस्य भावः कर्म वा औचिती । औचित्यम् ॥ एवं याथाकामी याथाकाम्यम् ॥ वैदग्धी वैदग्ध्यम् ॥ मैत्री मैत्र्यम् ॥ आनुपूर्वी । आनुपूर्व्यम् ॥ इत्यादि ॥ क्वचिद्वचनात् क्वचित्स्त्रीत्वमेव ॥ शीलमेव शैली । क्वचित्क्लीबत्वमेव । शैल्यम् ॥ एवं दार्ढ्यम् । जाड्यम् । ब्राह्मण्यम् । त्रैलोक्यम् । सैन्यम् ॥ इत्यादि ॥ अकर्त्रनट् ॥ आस्थानी आस्थानम् राजसभा ॥ राजधानी राजधानम् स्कन्धावारः ॥ चालिनी चालनम् तितउ ॥ एवं करणी करणम् ॥ प्रमाणी प्रमाणम् ॥ इत्यादि ॥ क्वचित्स्त्रीत्वमेव ॥ गुणलयनी तूण्यम् ॥ भ्रमणी राज्ञः क्रीडा ॥ प्रसाधनी कङ्कतिका ॥ वेषे तु क्लीबत्वमेव ॥ गवादनी गवां घासस्थानम् इत्यादि ॥ क्वचिन्नपुंसकत्वमेव ॥ प्रधीयतेऽस्मिन्निति प्रधानम् ॥ 'प्रकृतौ च महामाने प्रज्ञायां परमात्मनि ॥ नपुंसकं प्रधानं स्यात् एकत्वे तूत्तमे सदा' १ ॥ साध्यतेऽनेनेति साधनं प्रमाणं तुरगादिसमूहश्च ॥ लक्षणं लक्ष्म चिह्नं नाम च ॥ उपवर्तनं देशः ॥ स्थानं स्थितिः सादृश्यं च ॥ गुह्यार्थे करणार्थे च स्थाने इत्यव्ययम् ॥ केतनं २ गृहम् ॥ केतौ तु पुंनपुंसकम् ॥ प्रमाणं २ सम्यक् प्रवक्ता ॥ कारणं २ मर्यादा मानं च ॥ उपसर्जनं २ गौणमित्यादयः ॥ केचित्तु आश्रयलिङ्गभाजः ॥ राजभोजनः शालिः ॥ राजभोजनी द्राक्षा ॥ राजभोजनमन्नम् इत्यादिकाः ॥ मनोज्ञाद्यन्तर्गणवर्जितेभ्यश्चोरादिभ्यो योऽकञ्प्रत्ययस्तदन्तं नाम स्त्रीनपुंसकम् ॥ चोरिका । चौरकम् ॥ धौर्तिका । धौर्तकम् ॥ यौवनिका । यौवनकम् इत्यादि ॥ अमनोज्ञादीति किम् । मानोज्ञकम् प्रैयरूपकम् इत्यादौ 'आ त्वात्त्वादि'-इत्यनेन क्लीबत्वमेव ॥ चोर । धूर्त । युवन् । ग्रामपुत्र । ग्रामषण्ड । ग्रामभाण्ड । ग्रामकुमार । ग्रामकुल । ग्रामकुलाल । अमुष्यपुत्र । अमुष्यकुल । शरपुत्र । शारपुत्र । मनोज्ञ । प्रियरूप । अभिरूप । बहुल । मेधाविन् । कल्याण । आढ्य । सुकुमार । छान्दस । छात्र । श्रोत्रिय । विश्वदेव । ग्रामिक । कुलपुत्र । सारपुत्र । वृद्ध । अवश्य ॥ इति चौरादि ॥ अथ कान्ताश्चत्वार ॥ कथानिका कथानकम् आख्यानम् ॥ कशेरुका कशेरुकं पृष्ठास्थि ॥ ३ ॥ वंशिका । वंशिकम् अगुरु ॥ वक्रोष्ठिका । वक्रोष्ठिकं स्मितम् ॥ अथ जान्तः ॥ कन्यकुब्जा कन्यकुब्जं महोदयाख्यो देशः ॥ अथ ठान्तः ॥ पीठी पीठमासनम् ॥ नक्ता नक्तं रात्रिः ॥ नक्तमिति मन्तमव्ययमपि ॥ अवहित्था अवहित्थमाकारगोपनम् ॥ रशना रशना काञ्ची ॥ रसना रसनं जिह्वा ॥ अच्छोटना आच्छोटनं मृगया ॥ शुम्बा शुम्बं रज्जुः ॥ तुम्बी तुम्बं वल्लिविशेषः ॥ महोदया महोदयः कन्यकुब्जाख्यो देशः ॥ कांस्यी । कांस्यं सौराष्ट्रिका ॥ अर्थप्राधान्यात् सौराष्ट्रिका सौराष्ट्रिकमपि ॥ ४ ॥ मृगव्या मृगव्यं पापर्द्धिः ॥ चव्या चव्यं नागवल्लिमूलम् । वचायां तु स्त्रीत्वमेव ॥ वणिज्या । वणिज्यं वणिक्कर्म ॥ वीर्या वीर्यम् अतिशयशक्तिः ॥ अथ रान्ता दश ॥ नासीरा नासीरमग्रयानम् ॥ गात्रा गात्रं गजस्य पूर्वजङ्घादिभागः ॥ अपरा अपरं गजस्य पाश्चात्यजङ्घा ॥ मन्दिरा मन्दिरं गृहम् ॥ समुद्रे तु पुंस्त्वमेव ॥ नगरे तु क्लीबम् ॥ तमिस्रं तमः । तमिस्रा निबिडं तमः ॥ सामान्यविशे-

म्वरकाहलानि ॥ ५ ॥ स्थालीकदल्यौ स्थलजालपित्तला गोलायुगल्यौ वडिशं च छर्दि च ॥ अलाबु जम्बूडुरुपः सरः सदो रोदोऽर्चिपी दाम गुणे त्वयद् तयट् ॥ ६ ॥ इति स्त्रीक्लीबलिङ्गाः ॥ स्वतस्त्रिलिङ्गः सरकोऽनुतर्षे शललः शले ॥ करकोऽब्दोपले कोशः शिम्बाखड्गपिधानयोः ॥ १ ॥ जीवः प्राणेषु केदारे वलजः पवने खलः ॥ बहुलं वृत्तनक्षत्रपुराद्याभरणाभिधाः ॥ २ ॥ भल्लातक आमलको हरीतकविभीतकौ ॥ तारकाढकपिटकस्फुलिङ्गा विडङ्गतटौ ॥ ३ ॥ पटः पुटो वटो वाटः कपाटशकटौ

---

पयोरभेदविवक्षया ऐकार्थ्यम् ॥ कोपे तु क्लीबम् ॥ कृष्णपक्षनिशायां तु स्त्री ॥ शस्त्री शस्त्रमायुधविशेप ॥ नगरी नगर पुरी ॥ मसूरी मसूरं चर्मासनम् ॥ त्वक्क्षीरी त्वक्क्षीरं वशलोचना ॥ काडम्बरी काडम्बर मद्यविशेप ॥ सामान्यविशेपयोरभेदविवक्षायामित्थ निर्देश ॥ यदाह—' कादवरं मद्यभेदे दधिसारे सीधुनि स्त्रियाम् ' ॥ अथ लान्ता अष्ट ॥ काहला काहल शुपिरो वाद्यभेद ॥ ५ ॥ स्थाली स्थाल भाजनविशेप ॥ कदली कदलम् शाकादेर्नवनालम् ॥ स्थली अकृत्रिमाचेत् कृत्रिमा तु स्थला । स्थलम् उन्नतो भूभाग ॥ जाली जालम् आनाय समूह गवाक्षश्च ॥ पित्तला पित्तलमारकूटम् ॥ गोला गोल ' पत्राञ्जने कुनद्या च गोदावर्या च मण्डले ॥ सखीमणिकयोर्गोला गोल लक्ष्यानुसारत ' ॥ १ ॥ युगली युगल युगम् ॥ अथ शान्त ॥ वडिशा वडिशं मत्स्य-बन्धनम् ॥ वडिशीत्यपि क्वचित् ॥ अथेदन्त ॥ इय छर्दि इद छर्दि वान्ति ॥ इयमलावू इदमलावु तुम्बीलता ॥ इय जम्बू इद जम्बु जम्बूवृक्षफलम् ॥ अनयो क्लीवत्वे ह्रस्वता ॥ उडु उडु नक्षत्रम् ॥ उषा उप सन्ध्या ॥ प्रभाते पुनपुसकम् ॥ सर सरसी तडाग ॥ सद सदा सभा ॥ रोदसी द्यावापृथिव्यौ ॥ आर्चि २ अग्निशिखा रश्मिश्च । दाम २ बन्धनम् ॥ गुणवाचि अयट्तयडन्त नाम स्त्रीनपुसकम् ॥ द्वयी द्वयम् । त्रयी त्रयम् । चतुष्टयी चतुष्टयम् । गुणिनि त्वाश्रयलिङ्गतैव ॥ द्वये पदार्था द्वयी गति । द्वयं वस्तु ॥ त्रयाणि जगन्ति ॥ चतुष्टये कपाया ॥ चतुष्टयी शब्दाना प्रवृत्ति इत्यादि ॥ ६ ॥ इति स्त्रीक्लीवलिङ्गम् ॥ स्वतो नतु विशेप्यवशात् । अनुतर्षे मद्यपाने वाच्ये सरकशब्दस्त्रिलिङ्ग ॥ सरक । सरका । सरकम् ॥ स्वत-स्त्रिलिङ्ग इत्यधिकार ॥ शले श्वाविद्रोमणि वाच्ये शललशब्दस्त्रिलिङ्ग ॥ शलल । शलली । शललम् ॥ अब्दोपले मेघपापाणे वाच्ये करकशब्दस्त्रिलिङ्ग ॥ शिम्बाया वीजकोशे खड्गपिधाने प्रत्याकारे च कोशशब्दस्त्रिलिङ्ग ॥ प्राणेपु असुपु वाच्येपु जीव स्वतस्त्रिलिङ्ग ॥ १ ॥ जीव । जीवा । जीवम् प्राणा ॥ केदारे वाच्ये वलजस्त्रिलिङ्ग ॥ पवने धान्यपवनस्थाने खलशब्दस्त्रि-लिङ्ग ॥ वृत्त मात्रादिच्छन्द ॥ वृत्तादीनामभिधा नामानि बहुल लक्ष्यानुरोधेन त्रिलिङ्गानि ॥ वृत्ताभिधा श्लोक पुट पणव इत्यादि पुसि ॥ प्रमाणी समानी कलिका गाथा आर्या इत्यादि स्त्रियाम् ॥ पक्त्र वितानमित्यादि क्लीवे ॥ दण्डक पुनपुसक ॥ वसततिलक स्त्रीक्लीवे उक्तम् ॥ नक्षत्राभिधा तिष्य पुनर्वसू इत्यादि पुसि । अश्विनी इल्वला चित्रा इत्यादि स्त्रियाम् ॥ भ नक्षत्रम् इत्यादि नपुसकम् ॥ मृगशिर पुनपुसक ॥ कस्य चित्पुरस्याभिधा प्रज्ञ- प्राज्ञ निगम इत्यादि पुंसि ॥ पू अमरावती अलकेत्यादि स्त्रियाम् ॥ अधिष्ठानं पत्तनं दुर्गम् इत्यादि क्लीवम् ॥ आदिशब्दो ग्रामदेशोपलक्षणम् ॥ तेन वरणा ग्राम गोदौ ग्राम इत्यादि पुसि ॥ शाल्मकिनी ग्राम । काञ्ची मादिश्च देश इत्यादि स्त्रियाम् ॥ क्रोड ग्राम कुरुक्षेत्रं च देश इत्यादि क्लीवे ॥ आभरणाभिधा । तुलाकोटि ताडङ्क इत्यादि पुसि ॥ वालपाश्या पारितथ्याशब्दौ केशाभरणे, मेखला सप्तकी इत्यादि स्त्रियाम् ॥ केयूराङ्गदे मुकुटम् अङ्गुलीयकम् इत्यादि क्लीवे ॥ आवाप्याद्य पुनपुसका ॥ हार पुनपुसक ॥ रशन स्त्रीक्लीवम् ॥ २ ॥ भल्लातकी आमलकी हरीतकी विभीतक्यादयो वृक्षभेदा । तारका भम् । आढकी मानविशेप. । पिटका भाजनविशेप फोटश्च । स्फु-लिङ्गा अग्निकणा । विडङ्गा औपधिविशेप । अभिन्ने त्वाश्रयलिङ्ग । तटी रोध ॥ ३ ॥ पटी वस्त्रविशेप । पुटी पत्रभाजनम् । भूर्जाद्यवयवे तु टान्तत्वात् पुस्त्वमेव ॥ वटी न्यग्रोधतरु रज्जुश्च ॥ वाटी वृत्ति । यवविकारे वरण्डेऽङ्गे च वाहुलकात्पुनपुसक ॥ वर्त्मनि पुस्त्वमेव ॥ इक्टीवास्तुनोस्तु स्त्रियाम् ॥ कपाटी अररि । जपादित्वाद्वत्वे कवाटी ॥ शकटी अन । कटी वीरणादिकृत ।

**रुटः ॥ पेटो मठः कुण्डनीडविषाणास्तूणकङ्कतौ ॥ ४ ॥ मुस्तकुथेङ्गुदजृम्भदाडिमाः पिठरप्रतिसरपात्रकन्दराः ॥ नखरो वल्लूरो दरः पुरश्छत्रकुवलमृणालमण्डलाः ॥ ५ ॥ नालप्रणालपटलार्गलशृङ्खलकन्दलाः ॥ पूलावहेलौ कलशकटाहौ षष्टिरेणविषु ॥ ६ ॥ इति स्वतस्त्रिलिङ्गाः ॥ परलिङ्गो द्वंद्वोऽशी ङेऽर्थो वाच्यवदपत्यमिति**

पेटी सवात परिच्छदश्च ॥ स्वार्थे के पेटिका ॥ मठी आश्रयविशेष । कुण्डी भाजनभेद ॥ नीडा कुलाय ॥ विषाणी विषाणा वा गवादिशृङ्गम् दन्तिदन्तश्च ॥ तूणी तूणा वा इषुधि ॥ ककती केशमार्जनम् ॥ ४ ॥ मुस्ता कन्दविशेष । कुथा वर्णकम्बल । इङ्गुदी वृक्षविशेष ॥ जृम्भा जृम्भणम् ॥ दाडिमा उचितलिङ्गतरु तत्फल तत्कणश्च ॥ पिठरी स्थाली ॥ मुस्त मन्थानदण्डयोस्तु क्लीबम् ॥ प्रतिसरा मङ्गल्यसूत्रम् सेनाया पश्चाद्भागश्च ॥ पात्री भाजनम् ॥ योग्ये यज्ञभाण्डे नाट्यानुकर्तरि च क्लीब ॥ कन्दरी कन्दरा च दरी । अङ्कुशे तु पुंसि ॥ नखरी नखरा वा नख ॥ वल्लूरा सौकर शुष्क वा मांसम् ॥ ऊपरे नक्षत्रे वाहने च क्लीबम् ॥ दरी श्वभ्रम् ॥ पुरी नगरी ॥ छत्री आतपत्रम् ॥ कुवली वृक्षविशेष तत्फल च ॥ मृणाली विसम् ॥ मण्डली देश समदृश्य निम्न चतुरस्रता च ॥ ५ ॥ नाली नाला वा पद्मादिवृन्तम् ॥ जलनिर्गमे तु बाहुलकात्पुंसि लत्वाभावे, नाड । प्रणाली जलपद्धति ॥ पटली गृहोपरिभाग अक्षिरोगश्च ॥ 'अर्गला त्रिषु कल्लोले दण्डे चान्त कपाटयो ॥ शृङ्खल शृङ्खला शृङ्खलसयोमयी रज्जु ॥ कन्दली उपराग समूह नवाङ्कुर द्रुमभेदश्च ॥ पूली पूला वा बद्धतृणसचय ॥ अवहेलाऽवज्ञा ॥ कलशी जलाधाराविशेष ॥ दन्त्योपान्त्योयमपि ॥ कटाही भाण्डविशेष ॥ षष्टि सख्याविशेष रेणुर्धूलि ॥ इषुर्बाण ॥ ६ ॥ इति स्वतस्त्रिलिङ्गावचूरि ॥ द्वन्द्व समासो द्वन्द्वस्यैव यत्परमुत्तरपद तत्समानलिङ्गो भवति ॥ स च समाहारादन्यो भिन्नलिङ्गवर्तिपदो वचन प्रयोजयति ॥ समाहारस्तु नपुसक उक्त ॥ समानलिङ्गवर्तिपदोऽपि सिद्धलिङ्ग एव ॥ इमौ मयूरीकुक्कुटौ ॥ इमे कुक्कुटमयूर्यौ । इत्यादि ॥ अशितत्पुरुषसमास परलिङ्गो भवति ॥ अर्ध पिप्पल्या अर्धपिप्पली ॥ अय 'समेऽशेऽर्ध नवा' इति समास ॥ अर्धो जरत्या' अर्धजरतीयम् ॥ 'जरत्यादिभि', इति समास' ॥ द्वितीय भिक्षाया द्वितीयभिक्षा 'हिनि'–इति समास ॥ पूर्वाह्णपूर्वरात्रादीनाम् 'अह'–इति 'रात्र'–इति च पुंस्त्वम् ॥ ङेर्थश्चतुर्थ्यर्थोऽर्थशब्दो यत्र प्रस्तावात् तत्पुरुषसमासे स वाच्यस्य यल्लिङ्ग तत्समानलिङ्गो भवति ॥ ब्राह्मणायाय ब्राह्मणार्थ सूप ॥ एव ब्राह्मणार्था पेया ॥ ब्राह्मणार्थ पय ॥ ङे इति किम् । धान्येनार्थ धान्यार्थ ॥ पुंस्त्वापवादो योग ॥ अपत्यमिति अपत्यादय शब्दा नियता नियते अजहल्लिङ्गवर्तिनी व्यस्ते समस्ते वा लिङ्गवचने येषा ते तथा ॥ अपत्य दुहिता पुत्रश्च ॥ इति शब्दस्याद्यर्थत्वादेव तोक रक्ष सारथि सादी निषादी अतिथि स्त्री पुमान् कुल वा ॥ स्याद्वाद प्रमाणम्, अनेकान्तात्मक वस्तु सविदा गोचर, दण्ड उपसर्जन, विद्या गुण, गौ प्रकाण्ड, कुमारी तल्लज, अश्वो मतल्लिका ॥ स्वार्थिककप्रत्ययान्तास्तु क्वचिद्वाच्यलिङ्गा अपि भवन्ति ॥ वीरो रक्ष प्रकाण्डकौ । कुमारी तल्लजका इत्यादि ॥ बाहुलकात्क्वचिदाश्रयलिङ्गा अपि ॥ प्रमाणी ब्राह्मणी ॥ गुणो विशेषण तस्मात्प्रवृत्तिनिमित्ताद्विशेष्ये वृत्तिर्यस्य स गुणवृत्ति शब्द तस्याश्रयाद्विशेष्यवशाल्लिङ्गवचने स्याताम् ॥ परत्वात् सकलशास्त्रापवाद ॥ अस्त्यारोपेति—आरोपोऽर्थान्तरे निवेशनम्, अस्त्रियामारोपोऽस्त्यारोप तस्याभावे सति ॥ गुणवृत्तिश्च गुणद्रव्यक्रियोपाधिभेदादनेकधा ॥ गुणोपाधि शुक्ल पट शुक्ला शाटी शुक्ल वस्त्रम् । मूर्खो ना मूर्खा स्त्री मूर्ख कुलम् इत्यादि ॥ द्रव्योपाधि दण्डी ना दण्डिनी स्त्री दण्डि कुलम् इत्यादि ॥ क्रियोपाधि, पाचको ना पाचिका स्त्री पाचक कुलम् इत्यादि ॥ सर्वादि केवलस्तदन्तश्च गुणवृत्ति । एव सख्यापि । सर्व सूप सर्वा यवागू सर्वमन्नम् ॥ एव स सा तत् ॥ अन्य अन्या अन्यत् ॥ द्वाभ्यामन्य अन्य अन्या अन्यत् । एक पट । एका पटी । एक वस्त्रम् ॥ एव द्वौ द्वे द्वे । त्रय तिस्र त्रीणि ॥ बहुव्रीहिरदिग्वृत्तिर्गुणवृत्ति ॥ चित्रा गावोऽस्य चित्रगुर्ना चित्रगु स्त्री चित्रगु कुलम् इत्यादि ॥ दिग्वाची तु दिङ्नामत्वात्स्त्रीलिङ्ग ॥ दक्षिणस्या पूर्वस्याश्च यदन्तराल दिक् सा दक्षिणपूर्वा दिग् ॥ एव दक्षिणपश्चिमा ॥ पूर्वपदप्रधानस्तत्पुरुषस्तद्धितार्थद्विगुश्च गुणवृत्ति ॥ अतिक्रान्त खट्वामतिखट्व अतिखट्वा अतिखट्वम् ॥ एवमवक्रुष्ट कोकिलया अवकोकिल ३ । परिग्लानोऽध्ययनाय पर्यध्ययन ३ । अल जीविकायै अलजीविक ३ ॥ निष्क्रान्त कौशाम्ब्या

नियताः ॥ अद्ब्यारोपाभावे गुणवृत्तेराश्रयाद्वचनलिङ्गे ॥ १ ॥ प्रकृतेर्लिङ्गवचने बाधन्ते स्वार्थिकाः कचित् ॥ प्रकृतिर्हरीतक्यादिर्न लिङ्गमतिवर्तते ॥ २ ॥ वचनं तु खलतिकादिर्बह्वर्थात्येति पूर्वपदभूता ॥ स्त्रीपुंनपुंसकानां सहवचने स्यात् परं लिङ्गम् ॥ ३ ॥ नन्ता संख्या डतिर्युष्मदस्मच्च स्युरलिङ्गकाः ॥ पदं वाक्यमव्ययं चेत्यसंख्यं च तद्बहुलम् ॥ ४ ॥ निःशेषनामलिङ्गानुशासनान्यभिसमीक्ष्य संक्षेपात् ॥ आचार्यहेमचन्द्रः समदृभदनुशासनानि लिङ्गानाम् ॥ ५ ॥

॥ इति लिङ्गानुशासनं संपूर्णम् ॥

स्वरादयोऽव्ययम् । १ । १ । ३० ॥ स्वरादयः शब्दा अव्ययसंज्ञा भवन्ति । स्वः सुखयति । एहि जाये स्वा रोहाव । स्वः संजानीते । स्वः स्पृहयति । स्वरागच्छति । छायेव या स्वर्जलधेर्जलेषु । स्वर्वसति । अन्तर्यामि । अन्तर्वसति ॥ अत्युच्चैसौ, अत्युच्चैस इत्यत्रोच्चैरतिक्रान्तो यस्तदभिधायकस्य पूर्वपदार्थ-

---

निष्कौशाम्बि ३ । प्राप्तो जीविका प्राप्तजीविक ३ इत्यादय. ॥ शतात्परे पर शता ३ ॥ एव पर सहस्रा. ३ । परोलक्षा ३ । उत्तरपदप्रधानस्य तु यथास्व लिङ्गम् ॥ ताद्धितार्थद्विगु ॥ पञ्चसु कपालेषु सस्कृत पञ्चकपाल । पञ्चकपाला । पञ्चकपालम् ॥ रक्ताद्यर्थेऽणाद्यन्ताश्च गुणवृत्तय । हरिद्रया रक्त हारिद्र' हारिद्री हारिद्रम् ॥ एव सर्वताद्धितेषु यथायोगसपवादवर्जमुदाहार्यम् ॥ आरोपाभावे इति किम् । चञ्चेव चञ्चा पुरुष । अत्र समतया आरोप । एवमन्येष्वप्यारोपेपूदाहार्यम् ॥ अश्वीति किम् । धवनाम्नो योगात्तद्भार्यायामध्यारोपे आश्रयलिङ्गतैव ॥ प्रष्ठस्य भार्या स एवेयमित्यभेदोपचारेण प्रष्ठी ॥ एव भवान्यादयोऽपि ॥ १ ॥ स्वार्थे प्रकृत्यर्थे भवन्ति इति स्वार्थिका ॥ ते च कचिलक्ष्यानुसारेण प्रकृतेर्लिङ्ग वचन च बाधन्ते । बाधिते च लिङ्गे बहुल लिङ्ग-व्यवस्था ॥ सदिष्टा वाक् वाचिकम् ॥ विनय एव वैनयिकम् ॥ उपाय एव औपयिकम् ॥ योग्ये त्वाश्रयलिङ्गता ॥ वृत्तिरेव वार्तिकम् ॥ ह्रस्वा शुण्डा शमी वा शुण्डार शमीर ॥ कचिदनु-वर्तते ॥ राज्ञो धू राजधुरा ॥ मृदेव मृत्तिका मृत्सा मृत्स्ना ॥ कचिद्विकल्प ॥ ईषदपरिसमाप्तो गुडो बहुगुडो बहुगुडा वा द्राक्षा ॥ प्रकृतिलिङ्गप्रतिपत्तिव्युदासार्थं वचनम् ॥ हरीतक्यादिका प्रकृति प्रत्ययार्थे वर्तमानापि प्रकृत्यर्थलिङ्ग नातिक्रामति ॥ हरीतक्या विकारोऽवयवो वा हरीतकी हरीतक्यौ हरीतक्य फलानि । एव पिप्पल्यादयोऽपि ॥ मल्लिकाया विकारोऽवयवो वा पुष्प मल्लिका ॥ एव मालती यूथिका मागधी नवमालिकादयोऽपि ॥ २ ॥ खलतिकादिका प्रकृतिर्वचनमेव नातिक्रामति । लिङ्ग तु अतिक्रामति ॥ तुरेवार्थे । खलतिको नाम पर्वतस्तस्यादूरभवानि खलतिक वनानि ॥ बहुविषया प्रकृति पञ्चालादिका पूर्वपदभूता सती स्वगत वचनमतिक्रामति । ' अद्ब्यारोपाभावे —इत्यस्यापवाद ॥ पञ्चालाश्च निवास मथुरा च पञ्चालमथुरे ॥—स्त्रीपुंनपुं-सकानामिति । स्त्रीपुनपुसकलिङ्गाना सहवचने पर पुलिङ्ग नपुसकलिङ्ग वा भवति ॥ स्त्रीपुसयो सहवचने पुलिङ्ग भवति । सा च स च तौ ॥ स च शाटी च तौ । स्त्रीनपुसकयोर्नपुसकम् । सा च वस्त्र च ते । पुनपुसकयोर्नपुसकम् । स च तच्च ते । स्त्रीपुनपुसकाना नपुसकम् । सा च स च तच्च तानि ॥ ३ ॥ नन्ता सख्या डत्यन्त युष्मदस्मदी च अलिङ्गा शब्दा ॥ पञ्च कति यति वा स्त्रिय ॥ अत्र ङीर्न भवति ॥ युष्मभ्यम् अस्मभ्यम् अत्राप् न भवति ॥ विभक्त्यन्त पद, सविशेषणमाख्यात वाक्यम्, स्वराद्यव्यय च अलिङ्गानि असख्यानि च ॥ काण्डे । कुलम् पचते । काण्डीभूत कुलम् । एषु ' क्लीबे ' इति ह्रस्वो न भवति ॥ तद्बहुलम् ॥ तत्पूर्वोक्त लिङ्गलक्षण बहुल द्रष्टव्यम् ॥ तेन ' पिङ्ग पिशङ्गे पिङ्गी तु शम्या पिङ्गे तु बालकम् ॥ रामठे नालिकाया तु पिङ्गा गोरोचनामयो ' १ इत्येवमादि लिङ्ग शिष्टप्रयोगानुसारेण वेदितव्यम् ॥ तदुक्तम्—' वाग्विषयस्य तु महत सक्षेपत एव लिङ्गविधिरक्त ॥ यन्नोक्तमत्र सद्भिस्तल्लोकत एव विज्ञेयम् ' ॥ १ ॥ श्री ॥ इति लिङ्गानुशासनावचूरिः समाप्ता ॥—स्वरा—॥—अत्युच्चैसाविति । ननु पूर्वपदमप्यत्राव्ययम्, ततस्तत्सम्बन्धित्वात्लुप् प्राप्नोतीति । सत्यम् । अतिक्रान्तेऽर्थे

प्रधानस्य समासस्य संबन्धी स्यादिर्नोच्चैः शब्दस्य, तेन 'अव्ययस्य' (३ । २ । ७) इति लुप् न भवति । परमोच्चैः, परमनीचैरित्यत्र तु उत्तरपदार्थ-प्रधानत्वात्समासस्याव्ययसंबन्ध्येव स्यादिरिति भवत्येव । अन्वर्थसंज्ञा चेयमव्ययमिति, लिङ्गकारकविभक्तिनानात्वेऽपि न नानारूपतां प्रतिपद्यत इति । यदुक्तम्—सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ॥ वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥ अन्वर्थाश्रयणे च स्वराद्यव्ययमव्ययं भवतीति स्वरादेर्विशे-षणत्वेन तदन्तविज्ञानात्परमोच्चैः परमनीचैरित्यादावप्यव्ययसंज्ञा भवति । स्वर् अन्तर् सनुतर् पुनर् प्रातर् ५ सायम् नक्तम् अस्तम् दिवा दोषा १० ह्यस् श्वस् कम् शम् योस् १५ मयस् विहायसा रोदसी ओम् भूस् २० भुवस् स्वस्ति समया निकषा अन्तरा २५ पुरा बहिस् अवस् अधस् असांप्रतम् ३० अद्धा ऋतं सत्यम् इद्धा मुधा ३५ मृषा वृथा मिथ्या मिथो मिथु ४० मिथस् मिथुस् मिथुनम् अनिशम् मुहुस् ४५ अभीक्ष्णम् मङ्क्षु झटिति उच्चैस् नीचैस् ५० शनैस् अवश्यम् सामि साचि विष्वक् ५५ अन्वक् ताजक् द्राक् स्राक् ऋधक् ६० पृथक् धिक् हिरुक् ज्योक् मनाक् ६५ ईषत् ज्योषम् जोषम् तूष्णीम् काम् ७० निकामम् प्रकामम्

---

लिङ्गसंख्यायोगादतिशब्दः सत्वे वर्तते इति नाव्ययम् । 'अतिरतिक्रमे च' इत्यत्र बाहुलकात्क्वचित्समासाभावेऽति स्तुत्वेत्यादौ क्रियासंबद्धस्यातिशब्दस्य द्योतकत्वमेवेति ॥—परमनीचैरित्यत्र त्विल्यादि । अत्र तु शब्दो विशेषणार्थः पूर्वस्माद्विशेषं द्योतयति । तेन किं सिद्धं यत्रानुपसर्जनं स्वराद्यन्तो भवति तत्रावयवः समुदायश्चोभयमप्यव्ययं भवत्येव । समासस्योत्तरपदार्थप्रधानत्वात् ॥ ननु भवत्वेवम् तथापि संज्ञाविधौ तदन्तप्रतिषेधस्य ज्ञापितत्वात् 'ग्रहणवता नाम्ना न तदन्तविधिः' इति प्रतिषेधाच्च कथं परमोच्चैरित्यादौ तदन्तस्याव्ययसंज्ञेत्याह—अन्वर्थाश्रयणे चेत्यादि । न व्येति न नानात्वं गच्छति सत्वधर्मांश्च गृह्णाति इत्यन्वर्थसिद्धिः । अयमर्थो यदन्वर्थसंज्ञाकरणात् द्वितीयमव्ययमित्युपस्थापितं तद्विशेष्यत्वेन विज्ञायते तस्य स्वरादीति विशेषणत्वेन । ततश्च 'विशेषणमन्तः' इति न्यायात् तदन्तविज्ञानम् । केवलस्य तु व्यपदेशिवद्भावात् परमोच्चैरित्यादावप्यव्ययसंज्ञा विज्ञायते इत्यर्थः । यत् अव्ययम् अक्षयं शब्दरूपं किंविशिष्टं स्वरादि स्वराद्यन्तं तदव्ययसंज्ञं भवतीति च सूत्रार्थः समजनि ॥ ( अथाव्ययार्थाः ॥ स्वर् दिवि । अन्तर् मध्ये । सनुतर् अधोभागे । पुनर् भूयोऽर्थे । प्रातर् प्रभाते ॥ ५ ॥ सायं सन्ध्यायाम् । नक्तं रात्रौ । अस्तम् शैलविशेषादर्शनयोः । दिवा दिनम् । दोषा रात्रिः ॥ १० ॥ ह्यस् अतीतदिनम् । श्वस् भविष्यद्दिनम् । कम् मस्तके । शं सुखे । योस् विषयसुखम् ॥ १५ ॥ मयस् सुखम् । विहायसा गगनम् । रोदसी द्यावाभूमी । ओम् अङ्गीकारे । भूस् भूमिः ॥ २० ॥ भुवस् गगने । स्वस्ति श्रेयसि । समया, निकषा द्वयमपि सामीप्ये । अन्तरा मध्ये ॥ २५ ॥ पुरा पूर्वार्थे । बहिस् कालवाची । अवस्, अधस् अधोभागे । असांप्रतम् अयुक्तम् ॥ ३० ॥ अद्धा निश्चये कालवाची च । ऋतम्, सत्यम् प्राकाश्ये । इद्धा, मुधा वैफल्ये ॥ ३५ ॥ मृषा, वृथा, मिथ्या अनृते । मिथो रहःसहार्थयोः । मिथु, ॥ ४० ॥ मिथस्, मिथुस्, मिथुनम् प्रीतिबन्धे । अनिशम् अनवरतम् । मुहुस् ॥ ४५ ॥ आभीक्ष्ण्यम् पौनःपुन्यम् । मङ्क्षु शीघ्रम् । झटिति सत्वरे सत्ये । उच्चैस् उच्चे । नीचैस् नीचे ॥ ५० ॥ शनैस् मन्दे । अवश्यम् निश्चये । सामि अर्धे । साचि वक्रत्वे । विष्वक् सामस्त्ये ॥ ५५ ॥ अन्वक् आनुकूल्ये पश्चादर्थे वा । ताजक्, द्राक्, स्राक् शीघ्रे । ऋधक् सत्ये ॥ ६० ॥ पृथक् भिन्ने । धिक् निन्दायाम् । हिरुक्, ज्योक् वियोगहिंसावर्जनेषु । मनाक् कालाल्पत्वे ॥ ६५ ॥ ईषत् अल्पे । ज्योषम्, जोषम्, तूष्णीम् मौने । कामम्, ॥७०॥

अरम् वरम् परम् ७५ आरात् तिरस् मनस् नमस् भूयस् ८० मायस् प्रबाहु प्रबाहुक् प्रबाहुकम् आर्यं ८५ हलम् आर्यहलम् स्वयम् अलम् कु ९० बलवत् अतीव सुष्ठु दुष्ठु ऋते ९५ सपदि साक्षात् सन् प्रशान् सनात् १०० सनत् सना नाना विना क्षमा १०५ शु सहसा युगपत् उपांशु पुरतस् ११० पुरस् पुरस्तात् शश्वत् कुवित् आविस् प्रादुस् ११६ इति स्वरादयः ॥ बहुवचनमाकृतिगणार्थम् । तेनान्येषामपि चादिष्वपात्तानामनुपात्तानां च स्वरादिसधर्मणामव्ययसंज्ञा भवति । स्वरादयो हि स्वार्थस्य वाचका न तु चादिवद्द्योतका इति । अव्ययप्रदेशा 'अव्ययस्य' (३ । २ । ७) इत्यादयः ॥ ३० ॥ चादयोऽसत्वे । १ । १ । ३१ ॥ सीदतोऽस्मिँल्लिङ्गसङ्ख्ये इति सत्वं लिङ्गसङ्ख्यावद्द्रव्यम् । इदंतदित्यादिसर्वनामव्यपदेश्यं, विशेष्यमिति यावत् । ततोऽन्यत्र वर्तमानाश्चादयः शब्दा अव्ययसंज्ञा भवन्ति । निपाता इत्यपि पूर्वेषाम् । वृक्षश्च प्लक्षश्च । असत्वे इति किम् । यत्रैषां सत्वरूपेऽनुकार्यादावर्थे वृत्तिस्तत्र माभूत् । चः समुच्चये । इव उपमायाम् । एवोऽवधारणे । च अह ह वा एव एवम् नूनम् शश्वत् सूपत् कूपत् कुवित् नेत् चेत् नचेत् चण कच्चित् यत्र नह नहि हन्त माकिस् नकिस् मा माङ्

निकामम्, प्रकामम् अतिशये । अरम् शीघ्रम् । वरम् मनागिष्टे । परम् केवले ॥ ७५ ॥ आरात् दूरान्तिकयो । तिरस् व्यवधाने । मनस् नियमे । नमस् नतौ । भूयस् प्राचुर्ये ॥ ८० ॥ प्रायस् बाहुल्ये । प्रबाहु ऊर्ध्वार्थे । प्रबाहुक् समकाले । प्रबाहुकम् प्रीतिबन्धे । आर्य प्रीतिसबोधने ॥ ८५ ॥ हलम् प्रतिषेधविषादयो । आर्यहलम् विशिष्टशीले । स्वयम् आत्मनि । अलम् अतिशये । कु कुत्सायाम् ॥ ९० ॥ बलवत् प्राकाश्ये । अतीव अतिशये । सुष्ठु शोभनत्वे । दुष्ठु अशोभनत्वे । ऋते विनार्थे ॥ ९५ ॥ सपदि झटिति । साक्षात् प्रत्यक्षे । सन्, प्रशान् चिरतने । सनात् हिसायाम् ॥ १०० ॥ सनत्, सना कल्पने । नाना अनेकत्वे । विना अभावे । क्षमा सहने ॥ १०५ ॥ शु पूजायाम् । सहसा, युगपत् एककाले । उपांशु एकान्ते । पुरतस्, ॥ ११० ॥ पुरस्, पुरस्तात् अग्रार्थे । शश्वत् निरन्तरे । कुवित् योगप्रशस्तिभावेषु । आविस्, प्रादुस् द्वौ प्राकाश्ये ॥ ११६ ॥ ) ॥—इति स्वरादय इति । इतिशब्द एवप्रकारार्थ । एवप्रकारा स्वरादयो गृह्यन्ते न त्वेतावन्त इत्यर्थ' । यत —' इयन्त इति सख्यान निपाताना न विद्यते ॥ प्रयोजनवशादेते निपात्यन्ते पदे पदे ' ॥ १ ॥—आकृतिगणार्थमिति । आक्रियतेऽनयेति आकृतिर्वर्णकाप्रकार । तस्या गणस्तदर्थमिति ॥ अव्ययीभावस्य चाव्ययत्व नाङ्गीकर्तव्यम् । तदङ्गीकारेण हि उच्चकैर्नीचकैरित्यादिवत् उपाग्नि प्रत्यग्नीत्यत्रापि ' अव्ययस्य को द् च ' इति अक् प्रसज्येत । तथा उपकुम्भमन्यमित्यादौ दोषामन्यमहरित्यादिवत् मागमप्रतिषेध स्यात् ॥ अथाव्ययीभावस्य ' तृप्तार्थपूरणाव्यय '—इति षष्ठीसमासप्रतिषेधोऽव्ययसज्ञाफलमिति चेत्। न । तत्र समासकाण्डे बहुलाधिकारादेव सेत्स्यतीति । किं च, अव्ययीभाव इति महती सज्ञां यच्च कृतवान् आचार्यस्तज्ज्ञापयति क्वचिदव्ययत्वमपीति । तेन चैत्यस्योपकुम्भमित्यत्र न समास ॥—चाद—॥—अनुकार्यादाविति । आदिशब्दादत्युच्चैसावित्यत्र वाचकस्यातिशब्दस्य चिनोतीति च इत्येवङ्क्रियाप्रधानस्य च चशब्दस्य नाव्ययसज्ञेति ॥ × × × ( च अन्वाचयसमाहारेतरेतरयोगसमुच्चयेषु । अह निर्देशविनियोगकिलार्थेषु । ह अवधारणे पादपूरणे च । वा विकल्पोपमयो । एव अवधारणपृथक्त्वपरिमाणेषु । एवम् उपमानोपदेशप्रश्नावधारणप्रतिज्ञानेषु । नूनम् तर्केऽर्थनिश्चये च ॥ शश्वदिति स्वरादावपि पठित ॥ सूपत्, कूपत् द्वावपि प्रश्नवितर्कप्रशसासु ॥ कुविदिति स्वरादावप्यधीत ॥ नेत्, चेत् द्वावपि प्रतिषेधविचारसमुच्चयेषु । नचेत् निषेधे । चण चेदर्थे । कच्चित् इष्टप्रश्ने । यत्र कालेऽधिकरणे । नह प्रत्यारम्भविषादप्रतिविधिषु । नहि अभावे । हन्त प्रीतिविषादसंप्रदानेषु। माकिस्, नकिस् द्वावपि निषेधे वर्जने च। मा, माङ्, न, नञ् एते सर्वेऽपि

न नञ् वाव त्वाव न्वाव वावत् त्वावत् न्वावत् त्वै तुवै न्वै नुवै रै वै श्रौषट् वौषट् वषट् वट् वाट् वेट् पाट् प्याट् फट् हुंफट् छंवट् अथ आत् स्वधा स्वाहा अलम् चन हि अथ ओम् अथो नो नोहि भोस् भगोस् अघोस् अंघो हंहो हो अहो आहो उताहो हा ही हे है हये अयि अये अररे अङ्ग रे अरे अवे ननु शुकम् सुकम् नुकम् हिकम् नहिकम् ऊम् हुम् कुम् उञ् सुञ् कम् हम् किम् हिम् अद् कद् यद् तद् इद् चिद् क्विद् स्विद् उत वत इव तु नु यच्च कच्चन किमुत किल किंकिल किंस्वित् उदस्वित् आहोस्वित् अहह नहवै नवै नवा अन्यत् अन्यत्र शव् शप् अथकिम् विपु पट् पशु खलु यदिनाम यदुत प्रत्युत यदा जातु यदि यथाकथाच यथा तथा पुद् अथ पुरा यावत् तावत् दिष्ट्या मर्या आम नाम स्म इतिह सह अमा समम् सत्रा साकम् सार्धम् ईम् सीम् कीम् आम् आस् इति अव अड अट वाह्रा अनुपक् खोस् अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ प्र परा अप सम् अनु अव निस् दुस्। एतौ रान्तावपि। आङ् नि वि प्रति परि उप अधि अपि सु उद् अति अभि इति

निषेधे। वाव सबोधने। त्वाव, न्वाव, वावत्, त्वावत्, न्वावत् एते सर्वेऽपि अनुमानप्रतिज्ञाप्रेषसमाक्षिपु। त्वै, तुवै, न्वै, नुवै चत्वारोऽप्येते वितर्के पादपूरणे च। रै दाने। वै स्फुटार्थे। श्रौषट्, वौषट्, वषट् देवहविर्दानादौ। वट्, वाट्, वेट् त्रयोऽपि वियोगवाक्यपादपूरणयो। पाट्, प्याट् द्वावप्येतौ सबोधने। फट्, हुफट्, छवट् त्रयोऽप्येते भर्त्सनसबोधने। अध अधोऽर्थे। आत् कोपपीडयो। स्वधा पितृबलौ। स्वाहा हविर्दाने। अलमिति स्वरादौ निरूपितम्। चन अप्यर्थे पदे पूरणे च। हि हेतावधारणे च। अथ मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येषु। ओमिति स्वरादौ पठितम्। अथो अन्वादेशादौ। नो निषेधे। नोहि निषेधे। भोस्, भगोस्, अघोस्, अङ्घो, हहो, हो, अहो, आहो, उताहो नवाप्येते सबुद्धौ। हा विषादे। ही विस्मये। हे, है, हये, अयि, अये, अररे, अङ्ग, रे, अरे अवे एतेऽनुशयसबोधनयो। ननु विरोधोक्तौ अनव्ययादौ वा। शुकम्, सुकम्, नुकम्, हिकम्, नहिकम् पञ्चैते प्रत्याख्याने। ऊम् प्रश्ने। हुम् भर्त्सने। कुम् प्रश्ने। उञ् अस्ति सत्वे रुपोक्तौ च। सुञ् पूर्ववत्। कमिति स्वरादौ ज्ञातव्यम्। हम् रोषानुकम्पादौ। किम् प्रश्ने वितर्के च। हिम् सभ्रमभर्त्सनयो। अद् विस्मये। कद् कुत्सायाम्। यद्, तद् हेत्वर्थवाक्योपन्यासयो। इद् अपूर्वेऽर्थे ईषदर्थे च। चिद् प्रश्नावधारणयो। क्विद् भर्त्सनपादपूरणयो। स्विद् विमर्शप्रश्नयो। उत विकल्पे। बत खेदानुकम्पासंतोषविस्मयामन्त्रणेषु। इव उपमायाम्। तु विशेषणपादपूरणयो। नु वितर्के पादपूरणे च। यच्च वाक्यान्तरोपक्रमे। कच्चन कच्चिदर्थे। किमुत विकल्पे। किऊ सप्रश्नवार्तयो। किंकिल किलार्थे। किंस्वित्, उदस्विद्, आहोस्वित् एते प्रश्नवितर्कविकल्पेषु। अहह अद्भुतखेदयो। नहवै नवै द्वावपि प्रत्याख्याने। नवा विभाषायाम्। अन्यत् अन्यार्थे। अन्यत्र अन्याधिकरणकाले। शव्, शप् द्वावपि प्रतिग्रहे। अथकिम् अङ्गीकारे। विपु नानात्वे। पट् पशु दृश्यर्थे। खलु निषेधवाक्यालङ्कारजिज्ञासानुनयेषु। यदिनाम पक्षान्तरे। यदुत पराशयप्रकाशनादौ। प्रत्युत उक्तवैपरीत्ये। यदा देशाद्यधिकरणे। जातु अवधारणपादपूरणयो। यदि पक्षान्तरे। यथाकथाच अनादरेणेत्यर्थे। यथा योग्यतावीप्सार्थानतिवृत्तिसादृश्येषु। तथा साम्ये। पुदिति कुत्सायाम्। घ हिंसाप्रातिलोम्ययो। पुरा असत्त्वभूते काले पूर्वं पठितस्तु स्वरादिवत्सत्वभूते काले इति विवेक। यावत् मर्यादावधारणपरिमाणेषु। तावत् अर्थं प्राग्वत्। दिष्ट्या प्रीतिसेवनयो सभाजनप्रातिलोम्ययोर्वा। मर्या सीमबन्धे। आम पीडायाम्। नाम प्राकाश्यसभाव्यक्रोधोपगमकुत्सनेषु। स्म अतीते पादपूरणे च। इतिह पुराश्रुतौ। सह तुल्ययोगविद्यमानयो। अमा सहार्थे समीपे च। समम् समन्ततोऽर्थे। सत्रा, साकम्, सार्धम् त्रयोऽपि सहार्थे। ईम्, कीम्, सीम् निर्देशनिवेदनवाक्यपादपूरणेषु। आम् प्रतिवचनावधारणयो। आस् स्मृतिखेदयो कोपे च। इति एवमर्थे, आद्यर्थे, हेत्वर्थे, प्रकारार्थे, शब्दप्रादुर्भावे, ग्रन्थसमाप्तौ पदार्थविपर्यासादौ च। अव, अड, अट त्रयोऽपि भर्त्सने। वाह्रा निष्पत्तौ। अनुपक् अनुमाने। खोस् कुत्सायाम्। अ, आ, इ, ई, उ, ऊ,

चादयः ॥ वहुवचनमाकृतिगणार्थम् ॥ ३१ ॥ अधण्तस्वाद्या शसः । १ । १ । ३२ ॥ धण्वर्जितास्तस्वादयः शसपर्यन्ता ये प्रत्ययास्तदन्तं शब्दरूपमव्ययसंज्ञं भवति । देवा अर्जुनतोऽभवन् । अत्र षष्ठ्यन्तात् 'व्याश्रये तसुः' ( ७ । २ । ८१ )। ततः । अत्र पित्तस् । तत्र । इह । क्व । कदा । एतर्हि । अधुना । इदानीम् । सद्यः । परेद्यवि । पूर्वेद्युः । उभयेद्युः । परुत् । परारि । ऐषमः । कर्हि । यथा । कथम् । पञ्चधा । एकधा । ऐकध्यम् । द्वैधम् । द्वेधा । पञ्चकृत्वः । द्विः । सकृत् । बहुधा । प्राक् । दक्षिणतः । पश्चात् । पुरः । पुरस्तात् । उपरि । उपरिष्टात् । दक्षिणा । दक्षिणाहि । दक्षिणेन । द्वितीया करोति क्षेत्रम् । शुक्लीकरोति । अग्निसात् संपद्यते । देवत्रा करोति । बहुशः । अधणिति किम् । पथि द्वैधानि । संशयत्रैधानि । आ शस इति किम् पचातिरूपम् ॥ ३१ ॥ विभक्तिथमन्ततसाद्याभाः । १ । १ । ३३ ॥ विभक्त्यन्तप्रतिरूपकास्थमवसाना ये तसादयः प्रत्ययास्तदन्तप्रतिरूपकाश्च शब्दा अव्ययसंज्ञा भवन्ति । अहंयुः । शुभंयुः । अस्तिक्षीरा ब्राह्मणी । कुतः । यथा । तथा । कथमिति । अहं शुभं १ कृतं पर्याप्तं २ येन तेन चिरेण अन्तरेण ३ ते मे चिराय अह्नाय ४ चिरात् अकस्मात् ५ चिरस्य अन्योन्यस्य मम ६ एकपदे अग्रे प्रगे प्राह्णे हेतौ रात्रौ वेलायां मात्रायाम् ७ । एते प्रथमादिविभक्त्यन्तप्रतिरूपकाः । 'अस्ति नास्ति असि अस्मि विद्यते भवति एहि ब्रूहि मन्ये शङ्कये अस्तु भवतु पूर्यते स्यात् आस आह वर्तते नवर्तते याति नयाति पश्य पश्यत आदह आदङ्क आतङ्क' इति तिवादिविभक्त्यन्तप्रतिरूपकाः ॥ ३३ ॥ वत्तस्याम् । १ । १ । ३४ ॥ वत्तस्याम्प्रत्ययान्तः शब्दोऽव्ययसंज्ञो भवति । वत्तसिसाहचर्यादामिति ताद्धितस्य 'कित्याद्येऽव्यय–' ( ७ । ३ । ८ ) इत्यादिना विहितस्यामो ग्रहणम् । मुनेरर्हं मुनिवद्वृत्तम् । 'तस्यार्हे क्रियायां वत्' ( ७ । १ । ५१ ) इति वत् । क्षत्रिया इव क्षत्रियवद्युध्यन्ते । 'स्यादेरिवे' ( ७ । १ । ५२ ) इति वत् । पीलुमूलेनैकदिक् पीलुमूलतो विद्योतते विद्युत् । 'तसिः' ( ६ । ३ । २११ ) इति तसिः । उरसैकादिक् उरस्तः । 'यश्चोरसः' ( ६ । ३ । २१२ ) इति तसिः । आम् । उच्चैस्त-

ऋ, ॠ, ऌ, ॡ, ए, ऐ, ओ, औ एते चतुर्दशापि पूरणभर्त्सनामन्त्रणनिषेधेषु । ) ॥—अधण्तस्वाद्या शसः ॥ तस्वादय प्रत्ययास्ते च प्रकृत्यविनाभाविन इति ते प्रकृतिरनुमीयते । तस्याश्रिते विशेषणत्वेनाश्रीयन्ते । ततो 'विशेषणमन्त' इति तदन्तविज्ञान भवतीत्याह— तदन्तमिति ॥ किं च प्रत्ययस्यैवाव्ययत्वे अर्जुनत इत्यादौ प्रत्ययमात्राद्व्ययादर्थवत्त्वेन नामत्वे स्याद्युत्पत्तौ 'प्रत्ययः प्रकृत्यादे' इति वचनात् प्रत्ययमात्रस्यैव प्रकृतित्वेन तदन्तत्वे पूर्वस्य च 'नाम सिद' —इति पदत्वे 'सपूर्वात्प्रथमान्ताद्वा' इति विकल्पप्रसङ्ग । तस्मात्तदन्त समुदाय एवाव्ययम् न प्रत्ययमात्रमिति ॥— अर्जुनत इति ॥ अत्र सप्तम्येकवचनस्य लुप् ॥— विभक्तिथमन्त—॥—आदङ्केति ॥ अत्र 'तकु कृच्छ्रजीवने' इत्यस्य स्थाने दकुरिति पठन्ति ॥— वत्तस्याम् ॥ आमिति षष्ठीबहुवचनस्य तद्धितस्य परोक्षास्थाननिष्पन्नस्य चाविशेषेण त्रयाणामपि ग्रहण प्राप्नोति, द्वयोरेव चेष्यतेऽतोऽतिव्याप्त्युपहतत्वादलक्षणमेतत् इत्याह— वत्तसीति ॥ तद्धितस्येत्युपलक्षणम् ततो 'धातोरनेकस्वरात्—' इत्यादिना विहितस्याप्यामो ग्रहणम् । तेन पाचया चकुपेत्यादौ टालोपे पदत्वादनुस्वारसिद्धि ॥ न चोपलक्षणात्षष्ठी बहुवचनस्यापिग्रहण किं न स्यादिति वाच्यम् ॥ यतो य आम् आमेव भवति स एव गृह्यते अयं तु नाम् साम् वा भवतीति ॥ यद्वा वत्तसी अविभक्ती तत्साहचर्यादामोऽपि अविभक्तेरेव ग्रहण ततो द्वरिद्राचकृवाञ्चिरित्यत्र णसुस्थाननिष्पन्नस्य पचतितरामित्यत्र 'कित्याद्येऽव्यय'—इति विहितस्य च ग्रहणं भवति, यत एतावेव तयोर्वत्तस्योरविभक्तित्वेन हिताविति व्युत्पत्त्या तद्धितावित्यभिधीयते । अस्मिंश्च व्याख्याने 'कित्याद्येऽव्यय —इत्यनेन

भवति । कृत्वा । हृत्वा । प्रकृत्य । प्रहृत्य । तुम्, ॥ क्त्वा तुम् अम् इत्येतत्प्रत्ययान्तं शब्दरूपमव्ययसंज्ञं भवति । कृत्वा । हृत्वा । प्रकृत्य । प्रहृत्य । तुम्,
राम् । उच्चैस्तमाम् ॥ ३४ ॥ क्त्वातुमम् । १ । १ । ३५ ॥ क्त्वा तुम् अम् इत्येतत्प्रत्ययान्तं शब्दरूपमव्ययसंज्ञं भवति । कृत्वा । हृत्वा । प्रकृत्य । प्रहृत्य । तुम्,
कर्तुम् । हर्तुम् । अमिति णमृख्णमोरुत्सृष्टानुबन्धयोर्ग्रहणं न द्वितीयैकवचनस्य क्त्वातुमुसाहचर्यात् । यावज्जीवमदात् । स्वादुंकारं भुङ्क्ते ॥ ३५ ॥ गतिः । १ । १ ।
३६ ॥ गतिसंज्ञाः शब्दा अव्ययसंज्ञा भवन्ति । अदःकृत्य । अत्राव्ययत्वे 'अतः कृकमिकंसकुम्भकुशाकर्णीपात्रेऽनव्ययस्य' ( २ । ३ । ५ ) इति सकारो न
भवति ॥ ३६ ॥ अप्रयोगीत् । १ । १ । ३७ ॥ इह शास्त्र उपदिश्यमानो वर्णस्तत्समुदायो वा यो लौकिके शब्दप्रयोगे न दृश्यते स एत्सपगच्छतीति इत्संज्ञो
भवति । अप्रयोगित्वानुवादेनेत्संज्ञाविधानाच्चास्य प्रयोगाभाव सिद्ध । उपदेशस्तु धातुनामप्रत्ययविकारागमेषु कार्यार्थः । धातौ, एधि, एधते । शीङ्, शेते । इङि-
त्त्वादात्मनेपदम् । यजी, यजते यजति । चिञ्, चिनुते चिनोति । कण्डूञ्, कण्डूयते कण्डूयति । ईगित्त्वात् फलवत्यात्मनेपदम् । टुदु, दवथुः । ट्वित्त्वादथुः । नाम्नि,
चित्रङ् आश्चर्ये । चित्रीयते । माङ् मा भवान्कार्षीत् । अत्र माङ्यद्यतनी प्रत्ययो भवति । विकारे, व्थाख्यातासे व्याख्यातासि । आगमे, पपिथ । इत्प्रदेशा 'इङित
कर्तरि' ( ३ । ३ । २२ ) इत्यादयः ॥ ३७ ॥ अनन्तः पञ्चम्याः प्रत्ययः । १ । १ । ३८ ॥ पञ्चम्यर्थाद्विधीयमानः शब्दः प्रत्ययसंज्ञो भवति । अनन्तो-न चेदन्त-
शब्दोच्चारणेन विहितो भवति । 'नाम्नः प्रथमैकद्विबहौ' ( २ । २ । ३१ ) वृक्षः । वृक्षौ । वृक्षाः । 'स्त्रियां नृतोऽस्वस्रादेर्ङीः' ( २ । ४ । १ ) राज्ञी । कर्त्री ।
'आत्' ( २ । ४ । १८ ) खट्वा । 'गुपौधूपविच्छिपणिपनेरायः' ( ३ । ४ । १ ) गोपायति । धूपायति । 'ऋवर्णव्यञ्जनाद्घ्यण्' ( ५ । १ । १७ ) कार्यम् ।

---

इत्यन्तेन इदमेव सूत्र सपूर्ण गृह्यते, आदिशब्देन तु 'धातोरनेकस्वर'— इति विहितस्य क्वसुकानस्थानस्येति ॥ तथा दरिद्राचक्रवद्भिरित्यत्रामन्तस्याव्ययत्वेऽपि कुत्सिताद्यर्थे 'अव्ययस्य को द् च' इति अक् न भवति, अपरिसमाप्तार्थत्वेनामन्तस्य कुत्सितार्थासभवात् इति ॥—उच्चैस्तरामिति ॥ काचित्स्वार्थे इति प्रकृष्टे वार्थे तरप् ॥—क्त्वातुमम् ॥ क्त्वेति ककारोऽसदेहार्थ ॥ अन्यथा त्वा इति निर्देशे सदेह स्यात् किमय क्त्वाप्रत्ययस्य निर्देश किवा विदित गोत्व यकाभिस्ता विदितगोत्वा इति त्वप्रत्ययस्यावन्तस्येति ॥—न द्वितीयैकवचनस्येति ॥ द्वितीयैकवचनान्तस्याव्ययत्वे 'अव्ययस्य कोऽद् च' इति अक् स्यात् ॥ तथा देवस्य दर्शन कुर्वित्यादौ 'तृन्नुदन्त'—इत्यनेन षष्ठी न स्यात् ॥ नन्वेव ह्यस्तन्यद्यतन्यमन्तस्याव्ययत्व कथ निषिध्यते । सत्यम् । द्वितीय च तदेकवचन चेति विग्रहे तस्यापि संग्रह । द्वितीयापेक्षया द्वितीय चैकवचन ह्यस्तन्यद्यतन्योरमिति ॥—अप्रयोगीत् ॥ प्रयोग शब्दस्योच्चारण सोऽस्यास्तीति प्रयोगी न प्रयोगी अप्रयोगी इति सञ्ज्ञिनिर्देश, इदिति च सञ्ज्ञेति ॥—लौकिक इति ॥ लोकस्य ज्ञाते 'लोकसर्वलोकाज्ज्ञाते' इतीकण् ॥—अनन्तः—॥ न विद्यतेऽन्तशब्दो वाचकोऽभिधायको यस्य स तथा ॥ पञ्चमीति प्र-त्ययोऽभिधीयते । स च प्रकृत्यविनाभावीति तेन प्रकृतिराक्षिप्यते तया चार्थ इत्याह—पञ्चम्यर्थादित्यादि ॥—शब्द इति ॥ स च शब्दो वर्णस्तत्समुदायो वा भवति शब्द्यत इति कृत्वा शब्द-शब्देनोच्यत इति ॥ ननु नागमस्य प्रत्ययत्वे को दोष इति । सत्यम् । अनन्ददित्यादौ नागमेन धातो खण्डितत्वात् नन्दूधातो प्राक् 'अड् धातो'—इत्यडागमो न स्यात् ॥ अथ अरुणदि-त्यादौ श्नप्रत्ययवत् 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति भविष्यति । तर्हि अस्य न्यायस्यानित्यत्वज्ञापनार्थमन्तग्रहणम् ॥ तेन यका सका इत्यादौ इत्वप्रतिषेध सार्थक । कस्य प्रकृत्यवयवत्वे त्वित्वप्राप्तिप्रसङ्ग एव न स्यात् ॥ तथाऽन्तग्रहणाभावे लाङ्ककायानिरित्यत्र 'चार्मिवार्मि'—इत्यायनिञि कागमे तस्य प्रत्ययत्वे 'ङ्यादीदूत के' इत्यनेन ह्रस्व स्यात् इति ॥ तथान्तग्रहणाभावे

पाक्यम् । अनन्त इति किम् । अन्तशब्दोच्चारणेन विहितस्यागमस्य माभूत् । यथा 'उदितः स्वरान्नोऽन्तः' (४।४।९९) इत्यादि । प्रत्ययप्रदेशाः 'प्रत्यये च' (१।३।२) इत्यादयः ॥ ३८ ॥ **डत्यतु संख्यावत् । १ । १ । ३९ ॥** डतिप्रत्ययान्तमतुप्रत्ययान्तं च नाम संख्यावद्भवति । एकद्व्यादिका लोकप्रसिद्धा संख्या, तत्कार्यं भजत इत्यर्थः । कतिभिः क्रीतः कतिकः । 'संख्याडतेश्चाशत्तिष्टेः कः' (६।४।१३०) इति कः । कतिभिः प्रकारैः कतिधा । संख्याया धा' (७।२।१०४) इति धा । कति वारा अस्य कतिकृत्वः । 'वारे कृत्वस्' (७।२।१०९) इति कृत्वस् । एवं यतिकः । यतिधा । यतिकृत्वः । ततिकः । ततिधा । ततिकृत्वः । अतु, यावत्कः । यावद्धा । यावत्कृत्वः । तावत्कः । तावद्धा । तावत्कृत्वः । कियत्कः । कियद्धा । कियत्कृत्वः ॥ ३९ ॥ **बहुगणं भेदे । १ । १ । ४० ॥** बहु गण इत्येतौ शब्दौ भेदे वर्तमानौ संख्यावद्भवतः । भेदो नानात्वमेकत्वप्रतियोगि । बहुकः । बहुधा । बहुकृत्वः । गणकः । गणधा । गणकृत्वः । भेद इति किम् । वैपुल्ये संघे च संख्याकार्यं माभूत् । बहुगणौ न नियतावधिभेदाभिधायकाविति संख्याप्रसिद्धेरभावाद्वचनम् । अत एव भूर्यादिनिवृत्तिः ॥ ४० ॥ **कसमासेऽध्यर्धः । १ । १ । ४१ ॥** अध्यर्धशब्दः कप्रत्यये समासे च विधातव्ये संख्यावद्भवति । अध्यर्द्धेन क्रीतम् अध्यर्धकम् । 'संख्याडतेश्चाशत्तिष्टेः कः' (६।४।१३०) इति कः । अध्यर्धेन शूर्पेण क्रीतम् अध्यर्धशूर्पम् । अत्र संख्यापूर्वत्वेन द्विगुत्वे क्रीतार्थस्येकणः 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इति लुप् । कसमास इति किम् । धादिप्रत्ययविधौ न भवति ॥ ४१ ॥ **अर्धपूर्वपदः पूरणः ॥ १।१। ४२ ॥** समासावयवभूते पदे पूर्वपदमुत्तरपदं चेति प्रसिद्धिः । अर्धपूर्वपदः पूरणप्रत्ययान्तः शब्दः कप्रत्यये समासे च विधातव्ये संख्यावद्भवति । अर्ध-

---

पञ्चम्यर्थाद्विधीयमानत्वेनागमस्यापि प्रत्ययत्वे 'प्रत्ययाप्रत्यययो प्रत्ययस्यैव' इति न्यायात् प्रेण्वनमित्यादावेव 'वोत्तरपदान्त' इत्यनेन णत्व स्यात् नतु मद्रबाहुणा कुलेनेत्यादौ 'अनाम्स्वरे' इति षष्ठ्यन्ताद्विधीयमानस्य प्रत्ययत्वाभावादिति ॥ अपर च, 'ऋतृपमृप' इत्यत्र श्रथुङ् शैथिल्ये इत्यस्य प्रत्ययाप्रत्यययोरिति न्यायेन नागमस्य प्रत्ययत्वे सत्यस्यैव ग्रहण स्यात् न तु श्रथश् मोचनप्रतिहर्षयोरित्यस्य ॥ तस्मादन्तग्रहणमवश्य विधेयमिति ॥ उभयथापि पञ्चम्या सभवन्त्या 'पर' इति परिभाषया प्रत्ययो नियन्त्र्यते प्रकृते पर एवेति ॥ तर्हि स्वरात्पूर्वो नोऽन्त इत्यपि कथ न लभ्यते इति चेत् । सत्यम् । 'नो व्यञ्जनस्य'—इत्यत्रानुदित इति भणनात् ॥ अन्यथोपान्त्यत्वाभावात्प्राप्तिरेव लोपस्य नास्तीति ॥—**डत्यतु**—॥ वत्करणाभावे 'कृत्रिमाकृत्रिमयो'—इति न्यायात् एकद्व्यादीनामकृत्रिमाणा न स्यात् इति ॥—**बहु**—॥—**वैपुल्ये**—इति ॥ यथा रजोगणः रज सघात इत्यर्थ ॥ अथ बहुगणशब्दयोर्भेदवचनत्वात् सख्यात्वमस्त्येव यतो भेद परिगणन सख्येति, तत्रैकद्व्यादीनामिव बहुगणशब्दयोरपि लोकादेव सख्यात्वसिद्धौ किमनेनातिदेशवचनेन । अतिदेशो हि अन्यत्र प्रसिद्धस्यान्यत्र प्रसिद्धिप्रापणार्थ इत्याह—**बहुगणा**वित्यादि ॥ लोके ह्येकद्व्यादीना

प्यकम् । अर्धपञ्चमसर्वम् ॥४२॥ ॥इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः॥१॥

हरिरिव बलिबन्धकरस्त्रिशक्तियुक्तः पिनाकपाणिरिव ॥ कमलाश्रयश्च विधिरिव जयति श्रीमूलराजनृपः ॥ १ ॥

## द्वितीयः पादः

**समानानां तेन दीर्घः । १ । २ । १ ॥** समानसंज्ञकानां वर्णानां तेन परेण समानेन सहितानां दीर्घो भवति । 'आसन्नः' ( ७ । ४ । १२० )
दण्डाग्रम् । तवायुः । खट्वाग्र । सागता । दधीदम् । दधीहते । नदीन्द्रः । नदीहते । मधूदकम् । मधूहनम् । वधूदरम् । वधूढा । पितॄषभः । मातॄकारः । क्लॄकारः ।
समानानामिति किम् । वागत्र । तेनेति किम् । दधि शीतम् । बहुवचनं व्याप्त्यर्थम् । तेनोत्तरसूत्रेण ऋलृतोरपि ऋलृति ह्रस्वो भवति । क्लृ ऋषभः । होतृ लृ-
कारः । अन्यथा 'ऋस्तयोः' ( १ । २ । ५ ) इति परत्वादृरेव स्यात् ॥ १ ॥ **ऋलृति ह्रस्वो वा । १ । २ । २ ॥** समानानामृकारे लृकारे च परे
ह्रस्वो वा भवति । बालऋश्यः, बालर्श्यः । खट्वऋश्यः, खट्वर्श्यः । महऋषिः, महर्षिः । धूलिऋतुः, धूल्यृतुः । नदिऋच्छति, नद्यृच्छति । तनुऋजुता, तन्वृजुता ।
वधुऋणम् । वध्वृणम् । कर्तृऋषभः, कर्तृषभः । बालऌकारः, बालल्कारः । कन्यऌकारः, कन्यल्कारः । इत्यादि । ह्रस्वकरणसामर्थ्यादेव कार्यान्तरं न भवति
अत एव ह्रस्वस्यापि ह्रस्वः क्रियते । समानानामित्येव । वृक्षादृच्छति । ऋलृतीति किम् । दण्डाग्रम् । कन्याया ऋकारः कन्यर्कारः । तकार उच्चारणार्थः । कश्चित्तु
ह्रस्वत्वाभावपक्षे प्रकृतिभावमपाच्छति । तन्मते खट्वाऋश्यः, नदीऋश्य इत्याद्यपि भवति । प्राच्छतीत्यादौ तु परत्वादारेव भवति । 'ह्रस्वोऽपदे वा' ( १ । २ ।

॥ ॥ इति प्रथमः पादः सपूर्णः ॥ ॥ ॥ ॥ ॥ ॥

निगतानथिभेदाभिधायित्वे सख्याप्रसिद्धि., अनयोश्च न तथेति सख्याप्रसिद्धेरभाव इति ॥ ॥ ॥ नु तेनस्थाने रोन क्रियता कि तेनेति एव सति 'इवर्णादेरस्वे स्वरे'—इत्य-
**समानानां—॥** भवानन्तरानन्तरविभागसम्बन्धे षष्ठी ॥—**तेनेति** ॥ तृतीयानिर्देश स्थानित्वप्रतिपत्त्यर्थं ॥ ननु तेनेति सहार्थे तृतीयेति द्वयोर्दीर्घत्व प्राप्नोति यथा
नारग्रहण न कृत स्यात् इति फलम, उच्यते । 'दुर्वर्णनवर्गयशास्तात्तुल्या' इति न्यायादधि शीतमित्यत्र दीर्घत्व स्यात्तन्माभूदित्येवमर्थम् ॥ ननु तेनेति सहार्थे तृतीयेति द्वयोर्दीर्घत्व प्राप्नोति यथा 'लुगस्य'—इति कथ
पुत्रेण सह स्थूल इति । नैवम् । अनाजाक्षीरेण सहोपभ विपर्दिताद् एक एव दीर्घ इति ज्ञातव्यम् ॥ दण्डाग्रमित्यत्र 'वृत्यन्त'—इत्यग्रशब्दस्य पदत्वाभावे दण्डशब्दाकारस्य 'लुगस्य'—इति कथ
लुग् न भवतीति चेत् । उच्यते । सर्वं वाक्य सावधारण भवतीति न्यायात् अपदे इति सावधारण व्याख्येयम् अपदे एव यत्कारो भवतीति ॥ अग तु वाक्यावस्थाया पदेऽप्यस्ति ॥ तर्हि 'गतिका-
लुग् न भवतीति चेत् । उच्यते । सर्वं वाक्य सावधारण भवतीति न्यायात् अपदे इति सावधारण व्याख्येयम् । अपदे इत्युत्तरपदमपि गृह्यते, उत्तर च तत् पदं चेति कृते 'ते लुग्वा' इति उत्तरशब्दलोपाधित
रक'—इति न्यायात् प्राग्गणमित्यादौ विभक्त्युत्पत्ते प्रागेव समासे कथ न भवतीति । सत्यम् । अपदे इत्युत्तरपदमपि गृह्यते, उत्तर च तत् पदं चेति कृते 'ते लुग्वा' इति उत्तरशब्दलोपाधित ॥—**लृत—**॥ ऋ इति दीर्घवेधुत्तरेण सिद्धत्वादत्र
॥—**ऋलृति—**॥ अत्र तकारमन्तरेण लृकारात् सप्तम्येकवचने कृते न लृकाररूपस्य विकृतत्वात् किमयं लृकार उत लकार इति सदेह स्यात्

२२ ) इत्येव सिद्धाववर्णार्थे पदार्थे च वचनम् ॥ २ ॥ **लृत ॠॢ ॠलृभ्यां वा । १ । २ । ३ ॥** लृतः स्थाने ॠता लृता च परेण सहितस्य यथासंख्यम् ॠ ॡ इत्यादेशौ वा भवतः । ॠ इति स्वरसमुदायो वा स्वरव्यञ्जनसमुदायो वा वर्णान्तरं वा । तदपोषत्स्पृष्टकरणं द्विरेफतुरीयमध्यर्धस्वरमात्रमित्येके । संवृततरं सकलरेफकारमर्धमात्रस्वरभक्तिकमित्यन्ये । द्विरेफश्रुतिकमध्यर्धस्वरमात्रमित्यपरे । एवम् ॡ इत्यपि । ॠता, कॄकारः । पक्षे पूर्वेण ह्रस्व उत्तरेण ॠकारश्च । क्लृॠकारः । कॄकारः । लृता, क्लॄकारः । पक्षे दीर्घत्वं ह्रस्वत्वं च । क्लॄकारः । क्लृ लृकारः । लृवर्णस्य स्थानित्वमिच्छन्त्येके ॥ ३ ॥ **ॠतो वा तौ च । १ । २ । ४ ॥** ॠकारस्य स्थाने ॠता लृता च परेण सहितस्य यथासंख्यम् ॠॡ इत्यादेशौ वा भवतः । तौ च—ॠकारलृकारौ ॠता लृता च सह ॠकारस्य वा भवतः । ॠता, पितॄषभः । पितॄषभः । पितृॠषभः । लृता, होतॣकारः । पक्षे होतॄकारः । होतृ लृकारः । तौ च, पितॄषभः । होतॣकारः । पक्षे यथाप्राप्तम् । अत्रापि ॠवर्णस्य स्थानित्वमिच्छन्त्येके ॥ ४ ॥ **ॠस्तयोः । १ । २ । ५ ॥** तयोः—पूर्वस्थानिनोर्लृकारॠकारयोः स्थाने यथासंख्यमृता लृता च परेण सहितयोॠकारो द्विमात्र आदेशो भवति । कॄषभः । होतॄकारः ॥ ५ ॥ **अवर्णस्येवर्णादिनैदोदरल् । १ । २ । ६ ॥** अवर्णस्य स्थाने इवर्णोवर्णॠवर्णलृवर्णैः परैः सहितस्य यथासंख्यमेत् ओत् अर् अल् इत्येते आदेशा भवन्ति । देवेन्द्रः । तवेहा । मालेयम् । सेक्षते । नवोदकम् । नवोढा । गङ्गोदकम् । सोढा । वृक्ष इन्द्रं त इन्द्रमित्यादौ च ङौ जस इकारे चैकपदाश्रयत्वेनान्तरङ्गमेत्वमेव भवति न तु परपदाश्रितं बहिरङ्गमिकारस्य दीर्घत्वम् । परमर्षिः । तवर्कारः । सर्कारेण । तवल्कारः । सल्कारेण । त्रिमात्रादेरपि स्थानिनः स्थाने द्विमात्रावेदोतौ भवतः सूत्रे तयोरेव विवक्षितत्वात् । अवर्णस्येति किम् । दधीदम् । मधूदकम् । पितॄषभः । क्लॄकारः । इवर्णादिनेति किम् । दण्डाग्रम् ॥ ६ ॥ **ॠणे प्रदशार्णवसनकम्बलवत्सरवत्सतरस्यार् ।१।२।७॥** प्रादीनामवर्णस्य ॠणशब्दे परे परेण ॠकारेण सहितस्यारित्ययमादेशो भवति । अरोऽपवादः । प्रगतमृणं प्रार्णम् । दशानामृणं दशार्णम् । दश ॠणान्यस्य द-

---

विधानमनर्थकमिति सविशेषमादेशमाह—**ॠ इति स्वरसमुदायो वेति** ॥ वर्णान्तरत्वे मतभेदानाह—**तदपीति** ॥—**द्विरेफतुरीयमिति** ॥ रेफस्य तुरीयौ रेफतुरीयौ एकस्य रेफस्य चतुर्भागीकृतस्य द्वौ चतुर्थभागावित्यर्थ ॥ द्वौ रेफतुरीयावस्मिन्निति ॥ अधिकमर्धं यस्या सा अध्यारूढाऽर्धेन वा अध्यर्धा स्वरस्य मात्रा स्वरमात्रा अध्यर्धा स्वरमात्रा ऽस्मिन्निति अध्यर्धस्वरमात्रम् पादोनं मात्राद्वयमित्यर्थ ॥—**सकलरेफकारमिति** ॥ सकल परिपूर्णो रेफ ॠकारश्चात्र तत्तथा ॥ अर्ध मात्रा यस्या सा अर्धमात्रा, स्वरस्य भक्तिर्भाग स्वरभक्ति । अर्धमात्रा स्वरभक्तिर्यस्य तत्तथा ॥ **ॠतो**—॥—**होतॢकार** इति ॥ होतुर्लृकार इति षष्ठीसमास । होतृसंबन्धी होत्रा लिखित उच्चारितो वा लृकार इत्यर्थ ॥—**ॠस्तयो** ॥ अथ ॠकारलृकारयो सजातीयत्वस्य पूर्वं प्रतिपादितत्वात् 'समानाना तेन'—इत्यनेनैव द्विमात्र ॠकार सेत्स्यति किमनेन । नच वाच्य क्लृॠषभ इति अत्र लृकारस्य स्थानित्वात् दीर्घत्वे प्रत्यासन्नत्वात् ॡकार स्यादित्यादि यतो द्वयो स्थानित्वमुक्त तत्र ॠकारमेव स्थानिनमाश्रित्य दीर्घे क्रियमाणे प्रत्यासत्त्या ॠकार एव भविष्यति । सत्य स्यादेवम् यदि ॠकारस्यैव स्थानित्वे किञ्चिन्नियामक स्यात् । यावता द्वयो षष्ठीतृतीयानिर्दिष्टयो स्थानित्वमिति पूर्वं पर वा लृकाररूप स्थानिनमाश्रित्य दीर्घे क्रियमाणे ॡकारोऽपि स्यात् । ॠकार एव चेष्यते इत्येतदर्थमस्यारम्भ इति ॥—**ॠणे**—॥—**दश ॠणानि अस्येति** ॥ वर्णानुपूर्वीविज्ञानार्थं

वसनानामृणं वसनार्णम्। एवं कम्बलार्णम्। वत्सरा- ऋणस्यावयवतया संवन्धि ऋणमृणार्णम्।
शार्णः क्षत्रियः। दश ऋणानि जलदुर्गाण्यस्यां दशार्णा नदी। ऋणस्यावयवतया संवन्धि ऋणमृणार्णम्। वसनानामृणं वसनार्णम्। एवं कम्बलार्णम्। वत्सरा-
शार्णः क्षत्रियः। दश ऋणानि जलदुर्गाण्यस्यां दशार्णा नदी। हस्वोऽपि भवति प्रऋणम् दशऋणमित्यादि। वत्सरशब्दस्यारं नेच्छन्त्येके॥७॥
र्णम्। वत्सतरार्णम्। समानानामिति वहुवचनस्य व्याप्त्यर्थत्वेनोक्तत्वादिहोत्तरत्र च ह्रस्वोऽपि भवति प्रऋणम् दशऋणमित्यादि। वत्सरशब्दस्यारं नेच्छन्त्येके॥७॥

**ऋते तृतीयासमासे। १। २। ८॥** ऋतशब्दे परे यदवर्णं तस्य स्थाने परेण ऋकारेण सहितस्यारित्ययमादेशो भवति, तौ चेन्निमित्तनिमित्तिनावेकत्र तृतीयासमासे भवतः। शीतेन ऋतः शीतार्तः। दुःखेन ऋतो दुःखार्तः। ह्रस्वोऽपि भवति। शीतऋतः। दु:खऋतः। ऋत इति किम्। सुखेतः। दुःखेतः। तृतीयाग्रहणं किम्। परमर्तः। समास इति किम्। सुखेनर्तः। दु:खेनर्तः। ऋतेन कृतः ऋतकृतः, परमश्चासौ ऋतकृतश्च परमर्तकृत इत्यत्र तु निमित्तनिमित्तिनौ नैकत्र तृतीयासमास इति न भवति। अवर्णस्येत्येव। पितृतः। कथं 'क्षुधार्तः सन् शालीन् कवलयति मांसपाकवलितान्' क्षुध्शब्दस्य हि व्यञ्जनान्तत्वात् क्षुदृत इति प्राप्नोति। नैवम्। आङ्पूर्व ऋते तृतीयान्तस्यासमस्तस्यायं प्रयोगः। आ ऋत इति उत्तरेणार्। आर्तः। ततः क्षुधेत्यनेन संवन्धः। यस्य तु व्यञ्जनान्तादप्याप् तन्मते क्षुधया ऋत इति समस्तप्रयोग एवायम्॥ ८॥ **ऋत्यारुपसर्गस्य।१।२।९॥** उपसर्गस्य संवन्धिनोऽवर्णस्य स्थाने ऋकारादौ धातौ परे परेण ऋकारेण सहितस्यारादेशो भवति। सर्वापवादः। प्रार्च्छति। परार्च्छति। प्रार्ध्नोति। परार्ध्नोति। ऋतीति किम्। उपेतः। उपसर्गस्येति किम्। इहर्च्छति। इहऋच्छति। येन धातुना युक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञाः, तेनेह न भवति। प्रगता ऋच्छका अस्मात्प्रर्च्छको देशः। एवं प्रर्षभं प्रर्श्यं वनम्। आरिति वर्तमाने पुनरार्ग्रहणमारेव यथा स्यादित्येवमर्थम्। तेनेहोत्तरयोश्च ह्रस्वत्वं वाध्यते॥ ९॥ **नाम्नि वा। १। २। १०॥** उपसर्गस्य संवन्धिनोऽवर्णस्य स्थाने ऋकारादौ 'नाम्नि'

---

यद्यपि परत्वात्सर्वत्रार् प्राप्नोति तथाप्यर एव बाधक आरादेशो न ह्रस्वस्येत्याह—**समानानामितीति** ॥—**ऋते**—॥—**क्षुधार्त** इति ॥ अत्र तृतीयान्त-व्युत्पत्तिमात्रमेतत् यावता सञ्ज्ञाशब्दोऽयम् ॥ यद्यपि परत्वात्सर्वत्रार् प्राप्नोति तथाप्यर एव बाधक आरादेशो न ह्रस्वस्येत्याह ॥ उपसृत्य धातुमर्थविशेषं सृजतीति लिहाद्यचि न्यङ्क्वादित्वाद्गत्वे उपसर्ग ॥—**सर्वापवाद** स्य क्षुध्शब्दस्य 'ओमाङि' इति आलोपे 'असिद्धं बहिरङ्गमन्तरङ्गे' इति न्यायान्न धस्य दत्वम् ॥—**ऋत्या**—॥ उपसृत्य धातुमर्थविशेषं सृजतीति लिहाद्यचि न्यङ्क्वादित्वाद्गत्वे उपसर्ग ॥—**सर्वापवाद** इति ॥ पूर्वसूत्रविहित आरादेश 'अवर्णस्य'—इत्यर एव बाधको न ह्रस्वस्य अय त्वरो ह्रस्वस्य च सर्वस्य प्राप्नुवतो बाधक इत्यर्थ ॥—**प्रार्च्छतीति** ॥ ऋच्छेरर्त्तेर्वा 'श्रौति'—इति ऋच्छादेशे ॥—**येन धातुनेति** ॥ यथैव प्रणस मुखमित्यादौ प्रशब्दस्योपसर्गत्वाभावे 'उपसर्गात्' इत्यनेन नसादेशो न प्राप्नोति। उच्यते। यत्रोपसर्गत्व न सभवति तत्रोपसर्गशब्देन प्रादयो लक्ष्यन्ते न तु सभ-वत्युपसर्गत्वे इति ॥ नन्वेव प्रगता ऋच्छका यस्मात् स प्रर्च्छक इत्यादौ प्रादित्वेन प्रशब्दस्योपसर्गत्वादार् प्राप्नोति। नैवम्। प्रशब्दोऽत्र गतार्थमन्तर्भाव्य प्रवर्तमानो णकप्रत्ययस्यार्थं कर्तारं विशिनष्टि न ऋच्छेर्धातोरर्थमित्येतद्धातुसवन्धाभावात् एन प्रति अनुपसर्गत्वमस्योच्यते इति ॥—**नाम्नि वा** ॥ नामीत्यनेन ऋकारादिर्धातु सामानाधिकरण्येन विशेषयितु न शक्यते इत्यवयवद्वारेण ऋकारादिसमुदायो

नामावयवे धातौ परे परेण ऋकारेण सहितस्यारादेशो वा भवति । प्रार्षभीयति । केचित्तु पक्षे ह्रस्वत्वमपि मन्यन्ते । प्रऋषभीयति । उपसर्गस्येत्येव । इहर्षभीयति । ऋतीत्येव । उपोष्ट्रीयति । ऋकारमिच्छति उपकारीयति ॥ १० ॥ **लृत्याल्वा । १ । २ । ११ ॥** उपसर्गस्य संबन्धिनोऽवर्णस्य लृति लृकारादौ नामावयवे धातौ परे परेण लृकारेण सहितस्याल् वा भवति । अलोऽपवादः । उपाल्कारीयति । उपल्कारीयति । अत्रापि पक्षे ह्रस्वत्वमिच्छन्त्येके । उपलृकारीयति । उपसर्गस्येत्येव । इहल्कारीयति । लृतीति किम् । लृकारमिच्छति उपलकारीयति ॥ ११ ॥ **ऐदौत्संध्यक्षरैः । १ । २ । १२ ॥** अवर्णस्य स्थाने संध्यक्षरैः परैः सहितस्यैत् औत् इत्यादेशावासन्नौ भवतः । एवं चैकारैकाराभ्यां सहितस्यैकारः, ओकारौकाराभ्यां सहितस्य चौकारः । तवैषा । खट्वैषा । तवैन्द्री । सैन्द्री । तवौदनः । खट्वौदनः । तवौपगवः । खट्वौपगवः । अवर्णस्येत्येव । दध्येतत् । दध्यैच्छत् । मध्वोदनः । साध्वौषधम् । संध्यक्षरैरित्यैत्वनिर्देशादुपसर्गस्येति निवृत्तम् ॥ १२ ॥ **ऊटा । १ । २ । १३ ॥** अवर्णस्य परेणोटा सहितस्य स्थाने औकारादेशो भवति आसन्नः । धौतः । धौतवान् । लावयति पावयति इति क्विपि णिलोपे 'अनुनासिके च च्छ्वः शूट्' ( ४ । १ । १०८ ) इत्यूटि, लौः पौः । ओकारापवादो योगः ॥ १३ ॥ **प्रस्यैषैष्योढोढ्यूहे स्वरेण । १ । २ । १४ ॥** प्रशब्दसंबन्धिनोऽवर्णस्य एष एष्य ऊढ ऊढि ऊह इत्येतेषु परेषु परेण स्वरेण सहितस्य स्थाने ऐदौतावादेशौ भवत आसन्नौ । प्रैषः । प्रैष्यः । प्रौढः । प्रौढिः । प्रौहः । ऊहे नेच्छन्त्येके । प्रस्येति किम् । अपोढः । उपोढः । एषादिष्विति किम् । प्रेतः । प्रोतः । कथं प्रेषः प्रेष्यः । ईषे ईष्ये च भविष्यति । यदापि आ ईष्य एष्य इति तदापि 'ओमाङि' ( १ । २ । १८ ) इत्यवर्णलोपे प्रेष्य इत्येव भवति । 'यस्मिन्प्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति न्यायात् 'उपसर्गस्यानिणेधेदोति' ( १ । २ । १९ ) इत्यस्यैवायं बाधको न ओमाङीत्यस्य । अथेह कस्मान्न भवति प्रेषते प्रेष्यते प्रोढवानिति । अर्थवद्ग्रहणेऽनर्थकस्याग्रहणात् । कथं तर्हि ऊढिशब्दस्य ण्यन्तस्य सार्थकस्य प्रयोगे प्रोढयतीति । ऊढशब्देन सार्थकेन स्याद्यन्तेन साहचर्याण्ण्यन्ते औत्वाभावात् । प्रौढादिशब्दात्तु णौ प्रौढयतीत्यादि भवत्येव ॥ १४ ॥ **स्वैरस्वैर्यक्षौहिण्याम् । १ । २ । १५ ॥**

---

धातुर्नास्तीत्यनेन विशेष्यत इत्याह—**नामावयवे**—इति ॥—**ऐदौत्**—॥ नन्वत्र त्रिमात्रचतुर्मात्रयोरादेशिनो स्थाने कथ द्विमात्राववादेशौ भवत । यावता 'स्थान्यासन्न' इति न्यायात्रिमात्रौ चतुर्मात्रौ च प्राप्नुत इति ॥ सत्यम् ॥ सध्यक्षरैरिति बहुवचन द्विमात्रादेश प्रतिपत्त्यर्थम् । अन्यथैकवचनेन निर्दिशेत् । एतदर्थं च सत् उपसर्गनिवृत्तिमपि करोति इत्याह—**संध्यक्षरैरिति** ॥—**ऊटा** ॥ ऐदौदिति समुदायानुवृत्तावपि 'आसन्न' इति न्यायादौदेव भवतीत्याह—**औकारादेश** इति ॥—**लौः । पौ इति** ॥ अकारस्याप्युदाहरणमिदमेव ॥ लूपूभ्यामजन्ताभ्यामलन्ताभ्या वा लवमाचष्टे पवमाचष्टे 'णिज् बहुलम्'—इति णिचि क्विबादि पूर्ववत् ॥—**प्रस्यै**—॥ अवर्णस्य कार्यिणोऽनुवृत्तेस्तस्य च प्रशब्देन सामानाधिकरण्यायोगात् अवयवावयविसबन्धे षष्ठीत्याह—**प्रशब्दसंबन्धिनोऽवर्णस्येति** ॥ यदा आ ईष्य इति क्रियते तदापि 'ओमाडि' इत्यस्य विषयेऽपि 'उपसर्गस्यानिणे'—इत्यस्य प्राप्तिरेव 'उभयो स्थाने'—इति न्यायेन आइई इत्येतयोरुभयो स्थाने निष्पन्नस्य एतो यदा आङा व्यपदेशस्तदा 'ओमाडि' इत्यस्य अन्यथा 'उपसर्गस्य'—इत्यस्येत्यत आह—**यस्मिन् प्राप्ते** इति ॥ प्राप्त एवेत्यवधारण व्याख्यानात् ॥—**स्वैर**—॥ यथा सममात्रौषधनिष्पन्नश्चूर्णोऽपि

स्वैर स्वैरिन् अक्षौहिणीत्येतेषु अवर्णस्य परेण स्वरेण सहितस्य ऐत् औत् इत्येतावादेशौ भवतः । स्वस्येरः स्वैर. । घञ् । स्व ईरोऽत्रेति स्वैरमास्यताम् । स्वय-
मीरति ईर्ते वा स्वैरः । नाम्युपान्त्यलक्षणः कः । स्वयमीरितुं शीलमस्येति स्वैरी । नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्वैरिणी । अक्षाणामूहोऽस्यामस्ती-
ति अक्षौहिणी । स्वैरशब्दान्मत्वर्थीयेनैव इना सिद्धे पृथक् स्वैरिन्ग्रहणं ताच्छीलिकादिणिन्नन्तेऽपीरिन्शब्दे ऐत्वार्थम् ॥१५॥ **अनियोगे लुगेवे** । १ । २ ।
॥ १६ ॥ नियोगो नियमोऽवधारणम्, तदभावोऽनियोगोऽनवक्लृप्तिः । तद्विषये एवशब्दे परेऽवर्णस्य लुग्लोपोऽदर्शनं भवति । इहेव तिष्ठ । अद्येव गच्छ ।
स्वेच्छावृत्तिरत्र गम्यते नावधारणम् । नियोगे तु इहैव तिष्ठ, मागाः । ये त्वनियोगेऽव्यापारणे इच्छन्ति तन्मते शास्त्रलोकप्रतीतप्रयोगविरोधः । तथा हि—
'अमैवाव्ययेन' [ २ । २ । २० पा० ] 'धातोस्तन्निमित्तस्यैव' [ ६ । १ । ८०। पा०] 'तपस्तपःकर्मकस्यैव' [ ३ । १ । ८८ । पा०] 'लङः शाकटा-
यनस्यैव' [ ३ । ४ । १११ पा० ] । येनैव हेतुना वाक्यं भवति तेनैव वृत्तिरपि प्राप्नोति । यथैव तर्हि । इहैव स्यादिति । 'यदैव पूर्वे जनने शरीरम्' ।
दृशैव कोपारुणया रिपोरुरः ॥ अद्यैवावा रणमुपगतौ तातमम्बाञ्च नत्वा । तरसैव कोऽपि भुवनैकपुरुषस्तपस्यतीति । कथं शकानामन्धुः शकन्धुः ।
अटतीत्यटा, कुलात् कुलस्य वाऽटा कुलटा । पततीति पतः, पतोऽञ्जलेः पतञ्जलिः । सीम्नोऽन्तः सीमन्तः केशविन्यास एव । प्रार्थनायाऽध्ययनं
प्रध्ययनम् । हलस्य ईषा हलीषा । एवं लाङ्गलीषा । मनस् ईषा मनीषा । हलीशा । लाङ्गलीशेत्यादि पृषोदरादित्वाद्भविष्यति । कथं तुवै त्वै
नुवै न्वै । निपातान्तरमेतत् ॥ १६ ॥ **वौष्ठौतौ समासे** । १ । २ । १७ ॥ ओष्ठशब्दे ओतुशब्दे च परेऽवर्णस्य लुग्वा स्यात्, तौ चेन्निमित्त-

---

सम इत्यवयवधर्मेण समुदायस्य व्यपदेश एवमिहापि स्वैरावयवयोगात् समुदायोऽपि त्र्यात्मक स्वैर, स्वैर्यवयवयोगात् स्वैरी, अक्षौहिण्यवयवयोगादक्षौहिणी ॥ तत स्वैरश्चासौ स्वैरी च स चासावक्षौहिणी
चेति कर्मधारय । यथा 'मर्यादाभिविधौ च य' इत्यत्र समुदायोऽवयवशब्देन मर्यादावयवत्वान्मर्यादा, अभिविध्यवयवत्वादभिविधिरिति व्यपदिश्यते ततो विशेषणसमासो भवति । समुदाये च स्वैरस्वै-
र्यक्षौहिणीरूपे कार्यासंभवादवयव एव स्वैर इत्यादि' कार्यभागिति ॥ सौत्रो वा निर्देश । तेनेतरेतरयोगे बहुवचन समाहारे च ह्रस्वत्व च न भवति ॥ एवमन्यत्रापि ॥ तथात्र सूत्रे विषयसप्तमी । तेन
स्वैरादिषु निष्पत्स्यमानेषु योऽकार इत्यर्थ ॥ स्वेन आत्मना ईर स्वैर ॥ 'कारक कृता' इति समास ॥ ईर इति सामान्येन घञन्तस्य कान्तस्य च परिग्रह इत्युभयत्रापि कार्यम् । स्वैरशब्दस्य घ-
ञन्तस्यापि अभ्रादिदर्शनान्मत्वर्थीयेनाप्रत्ययेन कर्त्रभिधान भवति ॥—**स्वयमीरतीति** ॥ युजादित्वात्पाक्षिकणिजन्ततया प्रयोगोऽयम् ॥—**ऐत्वार्थमिति** ॥ अन्यथा णिनि स्वेरीति अनिष्टरूपमापद्येत ॥—
**अनियोगे**—॥ अवधारणमवश्यभाव इत्यर्थ ॥—**इहेवेति** ॥ वाक्यालकारे एवशब्द' ॥—**अमैवेति** ॥ एतेषु सर्वेषु स्वरूपाख्यानमेवास्ति न तु व्यापारणमिति । यद्यव्ययेन सह समासस्तदा अमाऽमन्तेनैवेत्यर्थ,
निमूलकाप कषतीत्यादाविति ॥—**वृत्तिरपीति** ॥ मुमूर्षइत्येवरूपा सन्प्रत्ययस्य वा वृत्ति प्रवृत्तिरित्यर्थ ॥ सीम्नोऽन्त एकदेश ॥—**प्रध्ययनमिति** ॥ प्रशब्दस्य डेप्रत्ययान्तस्य हितादित्वात्
समासः ॥—**त्वै इति** ॥ तुशब्दस्योकारलोपे त्वै इति रूप मन्यते पर., ततः केन सूत्रेणोवर्णलोप इति परस्याशयः ॥—**वौष्ठौ**—॥ अत्र सौत्रत्वात्समाहारोऽन्यथा 'प्राणितुर्य'—इति 'स्वैः' इति व्या-

निमित्तिनावेकत्र समासे भवतः ।*विम्बोष्ठी । विम्बौष्ठी । विम्बोष्ठा । विम्बौष्ठा । स्थूलोतुः । स्थूलौतुः । समास इति किम् । हे राजपुत्रौष्ठं पश्य । हे छात्रौतुस्वरं शृणु । अवर्णस्येत्येव । शुच्योष्ठी ॥ १७ ॥ *ओमाङि । १ । २ । १८ ॥ अवर्णस्य ओमि आङादेशे च परे लुग्भवति । आङि दीर्घत्वेनैव सिद्धे लुग्विधानमनर्थकं स्यादिति आङिति आङादेशो गृह्यते । अद्योङ्कारः । सोमित्यवोचत् । आङि, *आ ऊढा ओढा अद्य ओढा अद्योढा । सा ऊढा सोढा । आ ऋश्यात् अर्श्यात् । अद्य अर्श्यात् अद्यर्श्यात् । खट्वा अर्श्यात् *खट्वर्श्यात् । आ इहि एहि । उप एहि उपेहि । परा एहि परेहि । एवमुपेतः । ओमाङीति किम् । तवौदनः । अवर्णस्येत्येव । आ ऋतोः अर्तोः । *दध्यर्तोः ॥ १८ ॥ *उपसर्गस्यानिणेधेदोति । १ । २ । ॥ १९ ॥ उपसर्गसंबन्धिनोऽवर्णस्येणेधतिवर्जिते एकारादावोकारादौ च धातौ परे लुग् भवति । प्रेलयति । परेलयति । परोखति । उपसर्गस्येति किम् । प्रगता एलका अस्मात्प्रैलको देशः । अनिणेधिति किम् । उपैति । परैति । उपैधते । परैधते । एदोतीति किम् । उपायते । प्लायते ॥१९॥ *वा नाम्नि ।१।२।२० ॥ नामावयव एकारादावोकारादौ च धातौ परे उपसर्गसंबन्धिनोऽवर्णस्य लुग्वा भवति । *उपेकीयति । उपैकीयति । प्रोषधीयति । प्रौषधीयति ॥ २० ॥ *इवर्णादेरस्वे स्वरे यवरलम् । १ । २ । २१ ॥ इवर्णोवर्णऋवर्णऌवर्णानामस्वे स्वरे परे यथासंख्यं य् व् र् ल् इत्येते आदेशा भवन्ति । दध्यत्र । नद्येषा । मध्वत्र । वध्वासनम् । *पित्रर्थः । क्रादयः । लनुबन्धः । लाकृतिः । इवर्णादेरिति किम् । पचति । अस्व इति किम् । दधीदम् । स्वर इति किम् । मधु पिबति । *केचित्त्विवर्णादिभ्यः परान् यवरलानिच्छन्ति । दधियत्र । तिरियङ् । मधुवत्र । भूवादयः । तन्मतसंग्रहार्थमिवर्णादेरिति पञ्चमी व्याख्येया ॥ २१ ॥

---

वृत्त्या निषेध स्यात् ॥ यद्वा, पुटापुटिकेतिवत् ओष्ठावयवयोगात् समुदायोऽप्योष्ठ इति प्रक्रियया कर्मधारयः ॥—तौ चेन्निमित्तेति ॥ तेन आ ईषत् ओष्ठोऽनेनैवाडो लोपे ओष्ठ, परम ओष्ठो यासा ता परमौष्ठा इत्यत्र लुग् न भवति ॥ विम्ब्या फल—बिम्बम् ॥ 'हेमादिभ्योऽञ्' ॥—ओमाङि ॥—आ ऊढा ओढेति ॥ 'गतिक्वन्यः'—इति समास ॥ ऋशे' सौत्रात् गत्यर्थात् स्तुत्यर्थाद्वा 'ऋशिजनि'—इति किति ये ऋश्य —खट्वर्श्यात् ॥ निक्षेपणीयेत्यादिक्रिया योज्या ॥ तथा—दध्यर्तोरिति । भक्षणीय वर्जनीय वेति योग ॥—उपस—॥ इण् च एच इणेत्, न इणेत् अनिणेत् । अनिणेच्च तत् एच अनिणेधेत् । अनिणेधेच्च ओचेत्यादिविग्रह ॥ न विद्येते इणेधौ यत्र सोऽनिणेध् स चासावेच ततो द्वन्द्व इति वा ॥—वा नाम्नि ॥—उपेकीयतीति ॥ अत्र पस्य 'धुटस्तृतीय' इति नत्व न । 'असिद्ध बहिरङ्गम्' इति न्यायात् ॥ न च वाच्य 'स्वरस्य परे'—इत्यस्य 'न सधि'—इत्यादिना बाधितत्वात् प्राप्नोतीति । यतस्तत्र परिभाषापि 'असिद्ध बहिरङ्गम्'—इत्यनेन न्यायेनाबाधि । तत्र सूत्रे सधावपि सिद्धे द्विग्रहणात् ॥—इवर्णा—॥—"केचिदिति ॥ देवनन्द्यादय ॥ अस्वे स्वरे इति असमस्तनिर्देश स्वरसबन्धनिवृत्त्यर्थ ॥ तेन 'एदैतोऽयाय्' इत्यादौ स्वरस्यैवानुवृत्तिर्न त्वस्व इत्यस्य । तेन रायैन्द्रीत्यादौ स्वेऽपि भवति" ॥—पित्रर्थ इति ॥ पित्रे अयमिति अस्वपदेन विग्रह 'तदर्थार्थेन' इति । अर्थशब्देनैव चतुर्थ्या अभिहितत्वात् वाक्याभावेऽर्थशब्देन नित्यसमा-

**ह्रस्वोऽपदे वा ।** १ । २ । २२ ॥ इवर्णादीनामस्वे स्वरे परे ह्रस्वो वा भवति । अपदे—न चेत्तौ निमित्तनिमित्तिनावेकत्र पदे भवतः। नदि एषा । नद्येषा । दधि अत्र । दध्यत्र । मधुअत्र । मध्वत्र । *अति एति । अत्येति । अनु एति । अन्वेति । *ह्रस्वस्यापि ह्रस्वः पर्जन्यवल्लक्षणप्रवृत्ते । ह्रस्वविधानसामर्थ्याच्च कार्यान्तरं न भवति । कश्चित्तु पक्षे प्रकृतिभावमपीच्छति । कुमारी अत्र । अपदे इति किम् । नद्यौ । वध्वौ । नद्युदकम् । वध्वासनम् । नद्यर्थः । गौर्याराधः । अन्तर्वर्तिविभक्त्यपेक्षया पदभेदेऽपि समासे सत्यैकपद्यम् । *एवमनुव्यचलत् । *अथवा, अनुप्राविशदित्यादिवदखण्डमव्ययं विभक्त्यन्तत्वाच्चैकपदत्वम् । अत एवैतद्योगे 'सपूर्वात्प्रथमान्ताद्वा' ( २ । १ । ३२ ) इति विकल्पेन वस्नसादयो भवन्ति । अथो अनुव्यचलद्वो देवदत्तः । अथो अनुव्यचलद्युष्माकं देवदत्तः । अथो अनुप्राविशद्वो जिनदत्तः । अथो अनुप्राविशद्युष्माकं जिनदत्त इत्यादि । इवर्णादेरित्येव । मुनयाचर । साधवाचर । स्वर इत्येव । नदी वहति । अस्व इत्येव । दधीदम् ॥ २२ ॥ ***एदैतोऽयाय् ।** १ । २ । २३ ॥ एकारैकारयोः स्थाने स्वरे परे यथासंख्यम् अय् आय् इत्येतावादेशौ भवतः । नयनम् । नायकः । अस्व इति इवर्णादिसम्बद्धं तन्निवृत्तौ निवृत्तम् । तेन स्वेऽपि भवति । वृक्षयेव । रायैन्द्री । स्वर इत्येव । जले पद्मम् । रैधृतिः ॥ २३ ॥ **ओदौतोऽवाव् ।** १ । २ । २४ ॥ ओकारौकारयोः स्थाने स्वरे परे यथासंख्यमव् आव् इत्येतावादेशौ भवतः । लवनम् । लावकः । पटवोतुः । गावौ । स्वर इत्येव । गोशृङ्गम् । नौकाष्ठम् ॥ २४ ॥ ***य्यक्ये ।** १ । २ । २५ ॥ ओकारौकारयोः स्थाने क्यवर्जिते यकारादौ प्रत्यये परे यथासंख्यमव् आव् इत्येतावादेशौ भवतः । गव्यति । गव्यते । नाव्यति । नाव्यते । लव्यम् । पव्यम् । अवश्यलाव्यम् । अवश्यपाव्यम् । *गव्यम् । नाव्यम् । यीति किम् । गोभ्याम् । नौभ्याम् । अक्य इति

---

स ॥—**ह्रस्वो**—॥—**अति एतीति** ॥ ह्रस्वोऽपि सधिकार्यमिति 'नित्या धातूपसर्गयो' इति प्रवर्तत एवेति ॥—**ह्रस्वस्यापीति** ॥ अयमर्थ 'व्यक्ति पदार्थ' तत्र च प्रतिव्यक्ति लक्षणेन प्रवर्तितव्यम् अप्रवृत्तो चानर्थक्य तस्य स्यात इति पर्जन्यवत् फलाभावेऽपि तेन प्रवर्तितव्यम् । पर्जन्यो हि यावदून पूर्ण च सर्वमभिवर्षति ॥—**वध्वाविति** ॥ ननु ऊकारस्य औकारस्य च ओष्ठ्यत्वात् अस्वस्वराभाविनापद इति व्यावृत्तेर्व्यर्थद्वविकलतेति ॥ सत्यम ॥ मतान्तरेण औकार कण्ठोष्ठ्य इति ऊकारमोष्ठ्य प्रति अस्व इति न व्यद्वविकलतेति ॥ एव नद्येषा इत्यत्राप्यस्वस्वरत्वमभ्यूह्यम् । नद्युदकम इत्यादौ षष्ठीसमासे सत्यप्यन्तर्वर्तिविभक्त्यपेक्षया पदत्वमपीति युगपत्पदत्वापदत्वे । अत्र च सत्रेऽपद इति सत्राशे नञ प्रसज्यस्याश्रयण, तत्र च विधे सामर्थ्यप्राप्ततया गौणत्वात् प्रतिषेधस्य च विधीयमानतया प्राधान्यात् तदाश्रितमेव कार्य भवतीति भाव ॥—**एवमिति** ॥ 'नाम नाम्नैकार्थ्ये'—इति समासे सतीत्यर्थ ॥ ततोऽनुव्यचलत् इत्यत समासात् सेलुग् 'दीर्घङ्याप्'—इत्यनेन ॥—**अथवेति** ॥ स्वरादिराकृतिगणत्वात् विभक्त्यन्ताभत्वाद्वा अव्ययत्वमित्यर्थ ॥ अव्ययत्वात् स्याद्युत्पत्ति, अर्थश्च स एवेति ॥—**एदैतो**—॥ राय ऐन्द्रीति षष्ठीसमास ॥ धृङ्त् स्थाने । ध्रियते स्वेन रूपेणात्मान येति 'श्वादिभ्य' इति कर्ता धृति । तत षष्ठीसमास ॥—**य्यक्ये** ॥—**गव्यमिति** ॥ गोशब्दस्य युगादौ पाठो हितादावर्थे तदन्तार्थे । तेन सुगव्यमतिगव्यमित्यादावपि 'उवर्ण-

किम्। उपोयते। औयत। लौयमानिः। क्यवर्जनाद्यकारादिः प्रत्ययो गृह्यते तेनेह न भवति। गोयूतिः। नौयानम्। कथं गव्यूतिः क्रोशद्वयम्। क्रोशयोजनादिवदव्युत्पन्नः संज्ञाशब्दोऽयम्। गवा यूतिर्गव्यूतिरिति व्युत्पत्तिपक्षे तु पृषोदरादित्वाद्भविष्यति। *शरव्यमिति तु शरसमानार्थात् शरुशब्दादुवर्णान्तलक्षणे ये, शरान् व्ययतीति वा डे भविष्यतीति ॥ २५ ॥ *ऋतो रस्तद्धिते ॥ १ ॥ २ ॥ २६ ॥ ऋत ऋकारस्य यकारादौ तद्धिते परे रादेशो भवति। पितरि साधु पित्र्यम्। भ्रात्र्यम्। तद्धिते इति किम्। कार्यम् ॥ २६ ॥ *एदोतः पदान्तेऽस्य लुक्। १। २। २७ ॥ एदोद्भ्यां पदान्ते वर्तमानाभ्यां परस्याकारस्य लुग्भवति। तेऽत्र। पटोऽत्र। यजन्तेऽत्र। एदोत इति किम्। दध्यत्र। पदान्त इति किम्। नयनम्। लवनम्। अस्येति किम्। तयिह। पटविह ॥ २७ ॥ *गोर्नाम्न्यवोऽक्षे ॥१॥ २ ॥ २८ ॥ गोरोकारस्य पदान्ते वर्तमानस्याक्षशब्दे परे *नाम्नि संज्ञायां *गम्यमानायामव इत्ययमादेशो भवति। गोरक्षीव, अप्राण्यङ्गत्वात्समासान्तेऽति गवाक्षो वातायनः। नाम्नीति किम्। गवामक्षाणि गोऽक्षाणि। गो अक्षाणि। कश्चित्त्वसंज्ञायां गवाक्षाणीत्यपीच्छति ॥ २८ ॥ *स्वरे वानक्षे। १। २। २९ ॥ गोरोकारस्य पदान्ते वर्तमानस्य स्वरे परेऽव इत्ययमादेशो वा भवति, अनक्षे—*स चेत्स्वरोऽक्षशब्दस्थो न भवति। गवाग्रम्। गवाजिनम्। गवोष्ट्रः। गवौदनः। गवेश्वरः। पक्षे यथाप्राप्तम्। गोऽग्रम्। गोऽजिनम्। गोअग्रम्। गोअजिनम्। गवुष्ट्रः। गवोदनः। गवीश्वरः। स्वर इति किम्। गोकुलम्। अनक्ष इति किम्। गोऽक्षम्। गोअक्षम्। पदान्त इत्येव। गवि। *ओत इत्येव। चित्रग्वर्थः। गोरित्येव। द्योऽग्रम्। हे चित्रगवुदकमित्यत्र तु लाक्षणिकत्वाद्गोशब्दस्य न भवति ॥२९॥ *इन्द्रे। १। २। ३० ॥ गोरोकारस्य पदान्ते वर्तमानस्येन्द्रस्थे स्वरे परेऽव इत्ययमादेशो भवति। गवेन्द्रः। गवेन्द्रयज्ञः।

---

युगादेर्य' सिद्ध ॥ शरशब्दाद्यप्रत्यये ओकाराभावाद्यादेशाभावे कथ शरव्यमित्याशङ्क्याह—**शरव्यमितीति** ॥—**ऋतो**—॥ ननु कार्यमित्यत्र परत्वात् ध्यणित्यत्र णोपदेशाद्वा वृद्धिरेव भविष्यति किं तद्धितग्रहणेन। सत्यम्। अत्र तद्धितग्रहण विना जागृयात् इयृयात् इत्यनयो रत्व स्यात् ॥ ननु परिसर्येत्यत्रापि प्राप्नोति। न। तत्रान्यदपि वक्तु शक्यम् क्यपोऽधिकारे यग्रहण गुणार्थमिति ॥—**एदोतः**—॥ यद्यपि पदान्त इति व्यधिकरण विशेषणमकारस्यैदोतश्च सभवति, तथाप्येदोतोरेव कर्तव्यम् ॥ 'गोर्नाम्न्यवोऽक्षे' इत्यत्राकारलोपबाधनार्थमवादेशविधानात्। अकारस्य पदान्त इति विशेषणे गवाक्ष इत्यत्रापदान्तत्वादकारस्य लोपप्राप्तिरेव नास्ति कुतस्तदपवादोऽवादेश सभवति। किंच 'एदोत'—इत्यत्रैव सूत्रेऽस्येत्यस्मिन्नेव सत्राशेऽकारस्य नामसिद्धिति पदत्वे 'एदोत पदान्ते' इत्यनेन लोपप्राप्तिर्नान्यत्रेति एदोतोरेव पदान्त इति विशेषणमिति ॥—**गोर्नाम्न्य**—॥—**नाम्नि संज्ञायामिति**। 'कृत्रिमाकृत्रिमयो कृत्रिमे कार्यसंप्रत्यय' इति न्यायेन नात्र पारिभाषिकस्य नाम्नो ग्रहण गोऽक्षयोर्नामत्वाव्यभिचारात्, किंतु निरूढ लौकिकमेवेत्याह—**नाम्नि संज्ञायामिति** ॥ सा च समुदायेनैव गम्यते नावयवैरित्याह—**गम्यमानायामिति** ॥—**स्वरे वा**—॥ न अक्षोऽनक्ष इति प्रसज्यवृत्तिर्नञ्। पर्युदासे हि विधे प्राधान्यात् प्रतिषेधस्य तु सामर्थ्यप्रापितत्वात् गोऽक्षसघात इत्यादौ अनक्षविधिरेव स्यात् न त्वक्षाश्रित प्रतिषेध। प्रसज्ये तु प्रतिषेधस्य प्रधानत्वात् अक्षादिसमुदायस्थेऽप्यक्षशब्देऽक्षाश्रित प्रतिषेध सिध्यतीत्याह—**स चेत् स्वर** इत्यादि ॥—**ओत इत्येवेति** ॥ चित्रा गावो यस्य स चित्रगु। पुवद्भावो ह्रस्वत्व च ॥ ततश्चित्रगवेऽय चित्रग्वर्थ इति। अत्र ओत इत्यनुवृत्तिमन्तरेण ह्रस्वत्वे कृते 'एकदेशविकृतमनन्यवत्' इति एकदेशविकृतोऽप्यय गोशब्द एवेत्यत्रापि स्यादित्यर्थ ॥—**इन्द्रे**॥ स्वर इत्यस्या-

गोरोकारस्य पदान्ते वर्तमानस्यात्यकारे स्वरे परेऽसंधिः प्रकृतिभावो वा भवति । गो अग्रम् । गो अ-
नित्यार्थं वचनम् ॥ ३० ॥ **वाऽत्यसंधिः** । १ । २ । ३१ ॥ गोरोकारस्य पदान्ते वर्तमानस्यात्यकारे स्वरे ... अतीति किम् । गवेङ्गितम् । गवाननम् । गोरित्येव । द्योऽग्रम् । ओत इत्येव । चित्रग्व-
जिनम् । पक्षे यथाप्राप्तम् । गोऽग्रम् । गवाग्रम् । गोऽजिनम् । गवाजिनम् । अतीति किम् । गवेङ्गितम् । गवाननम् । गोरित्येव । द्योऽग्रम् । ओत इत्येव । चित्रग्व-
ग्रम् । हे चित्रगोऽग्रमित्यत्र तु लाक्षणिकत्वान्न भवति । पदान्त इत्येव । गौरिवाचरति, गवति ॥ ३१ ॥ ***प्लुतोऽनितौ** । १ । २ । ३२ ॥ *इतिशब्दवर्जिते स्वरे
परे प्लुतोऽ*संधिर्भवति । संधिकार्यभाग् न भवतीत्यर्थः । *देवदत्त ३ अत्र न्वसि । जिनदत्त ३ इदमानय । सुश्लोक ३ आगच्छ । सुमङ्गल ३ इदमानय । अनिता-
विति किम् । सुश्लोकेति । सुमङ्गलेति । केचित्तु इतिशब्दे विकल्पमिच्छन्ति । सुश्लोक ३ इति, सुश्लोकेति । सुमङ्गल ३ इति, सुमङ्गलेति ॥ ३२ ॥ **इ ३ वा**
। १ । २ । ३३ ॥ इ ३ इति प्लुतः स्वरे परे वाऽसन्धिर्भवति । इतावप्राप्तेऽन्यत्र च प्राप्ते उभयत्र विकल्पोऽयम् । लुनीहि ३ इति, लुनीहीति । चिनुहि ३ इदम्,
चिनुहीदम् । कथं वशा ३ इयम् वशेयम् । छान्दसावेतौ ॥ ३३ ॥ **ईदूदेत् द्विवचनम्** । १ । २ । ३४ ॥ ईत् ऊत् एत् इत्येवमन्तं द्विवचनं स्वरे परेऽसंधिर्भवति ।
त्रपुणी अत्र । मुनी इह । साधू एतौ । अमू इति । कुण्डे अत्र । माले इति । पचेते इति । पचेथे इति । पचावहे आवाम् । ईदूदेदिति किम् । वृक्षावत्र । द्विवचनमिति किम् ।
कुमार्यत्र । एषां प्लुतानामितावपि संधिर्न भवति । अग्नी ३ इति । वायू इति । स्वर इत्येव । तव ई कामौ तवे* । *प्रत्यासत्तेः स्वर निमित्तककार्यप्रतिषेधादिह भवत्येव । तव ई
तवे आसाते । केचित्तु 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इति प्रयोगदर्शनात् मणी इव मणीवेत्यादावसन्धिप्रतिषेधं वर्णयन्ति । तदयुक्तम् । *वाशब्देनोपमा-
र्थेन सिद्धत्वात् । 'मणी इवोद्भिन्नमनोहरत्विषौ' इत्यादावसंधिदर्शनाच्च । अन्ये तु यथादर्शनं संधिमसंधिं वेच्छन्ति । मणीव । दंपतीव । रोदसीव । मणी इव

---

इतीति नानुवर्तते, इतिशब्दवर्जनवैयर्थ्यात्, इत्याह—**इतिशब्देत्यादि** ॥—**अस-**
धिकरणमिन्द्रे इति ततस्तदादाविति वक्तव्यम्, गवेन्द्रयज्ञ इत्यादार्थं केवले च व्यपदेशिवद्भावाद्भवति ॥—**प्लुतो**—॥ अतीति नानुवर्तते, इतिशब्दवर्जनवैयर्थ्यात्, इत्याह—**इतिशब्देत्यादि** ॥—**अस-**
**न्धिरिति** ॥ न विद्यते सधिर्यस्य इति बहुव्रीहिणा व्याख्येयम् । एवमुत्तरत्र ॥—**देवदत्त३ अत्र न्वसीति** ॥ देवदत्तशब्दादामन्त्र्यविहितस्य से 'अदेत स्यमोर्लुग्' इति लुकि 'दूरादामन्त्र्यस्य'—
इति प्लुत ॥ आगच्छ भो देवदत्तेति कस्यचिद्वाक्यस्यान्ते इदमामन्त्र्यपद द्रष्टव्यम् वाक्यान्ते प्लुतस्य विधानात् इति ॥—**इ३ वा** ॥ वशा ३ इयमित्यत्र प्लुतोऽपि छान्दसत्वाद्भवति ॥—**इदूदेत्**—॥
अग्नी ३ इतीत्यादो 'दूरादामन्त्र्यस्य'—इति प्लुत ॥—**तवे** इति ॥ ननु यथा स्वरे परे सधिकार्यनिषेधस्तथा पूर्वदेशस्थितेऽपि किं नेति । सत्यम् । 'सप्तम्या निर्दिष्टे पूर्वस्य' इति न्यायात् स्वरापेक्षया
पूर्वदेशव्यवस्थितस्यैव ईदादे सधिनिषेधो न तु पूर्वस्थिते स्वरे । यद्येव यत्र परत्र स्वरो भवति तत्रे आसाते इति तत्र पूर्वेणापि सह सधिप्रतिषेध प्राप्नोतीत्यत आह—**प्रत्यासत्तेरि**त्यादि ॥ अयमर्थो
यस्मिन् सति यद्भवति तत्तस्य निमित्तमिति परस्पराश्रितत्वात् इति प्रथम यत्वस्य तदनु अयादेशस्य च निषेध । ते एव च परस्य स्वरस्य प्रत्यासन्ने, एत्व तु पर स्वरमन्तरेणापि भवतीति न तत् स्व-
रनिमित्तम् न तत्प्रत्यासन्न चेति प्रत्यासत्तिन्यायात्तन्निमित्तकस्यैव कार्यस्य निषेधो नातन्निमित्तकस्येति ॥—**वाशब्देनेत्यादि** ॥ भाष्यकारवार्तिककारयोरसमतत्वाच्चेति ॥ दपती इत्यत्र राजदन्तादित्वात्

॥३४॥ *अदोमुमी । १ । २ । ३५ ॥ अदस्संबन्धिनौ मुमी इत्येतावसंधी भवतः स्वरे परे । अमुमुईचा । अमी आसते । अमी अश्वाः । अदसिति किम् । *अम्यत्र ॥३५॥ *चादिःस्वरोऽनाङ् । १ । २ । ३६ ॥ *आङ्वर्जितश्चादिरव्ययसंज्ञकः स्वरः स्वरे परेऽसंधिर्भवति । अ अपेहि । *आ एवं किल मन्यसे । *आ एवं नु तत् । विस्मये, इ इन्द्रं पश्य । ई ईदृशः संसारः । उ उत्तिष्ठ । ऊ *ऊषरे बीजं वपसि । ए इतो भव । ओ *ओश्रावय । चादिरिति किम् । अ विष्णो आगच्छ, आगच्छ । कथं तितउः परिपवनम् । तनेर्डउरिति डउविधानबलादसंधिर्भविष्यति । उत्तरत्रान्तग्रहणादिह केवलो गृह्यते तेनेह न भवति । चेति । इतीह । नन्विति । वेति । स्वर इत्येव । जानु उ जानू । स्वर इति प्रत्यासत्तेस्तन्निमित्तकसंधिप्रतिषेधादिह दीर्घत्वलक्षणः संधिर्भवत्येव । जानु उ अस्य रुजति, जानू अस्य रुजति । केचित्तु चाद्यचादिस्थानस्याचादिरूपत्वात्स्वरनिमित्तकमपि संधिमिच्छन्ति । जानु उ अस्य रुजति, जान्वस्य रुजति । अनाङिति किम् । आ ईषदुष्णमोष्णम् । आ इहि एहि । *आ उदकान्तात्, ओदकान्तात्प्रियं प्रोथमनुव्रजेत् । *आ आर्येभ्यः, आर्येभ्यो यशो गतं गौतमस्य । 'ईषदर्थे क्रियायोगे *मर्यादाभिविधौ च यः ॥ एतमातं ङितं *विद्याद्वाक्यस्मरणयोराङित्' ॥ १ ॥ ३६ ॥ *ओदन्तः । १ । २ । ३७ ॥ ओकारान्तश्चादिः स्वरे परेऽसंधिर्भवति । अहो अत्र । उताहो इदम् । आहो एतत् । अथो अस्मै । हंहो आगच्छ । अघो एहि । नो इन्द्रियम् । चादिरित्येव । गवीश्वरः । अगौर्गौः *समपद्यत, *गोऽभवत् ।

---

जायाया दम्भाव ॥ द्यौश्च पृथिवी च पृषोदरादित्वात् रोदसि इदन्त आदेशस्ततो द्विवचनम् ॥—**अदो**—॥ अदसो मुमी इति विग्रह ॥ ननु अमुष्य मुमी इति विग्रह प्राप्नोति कथमदस इति । सत्यम् । अविवक्षितार्थस्य प्रायोगिकस्यादस्शब्दस्यात्र प्रयोग, तत्र तु सार्थको गृह्यते इति अदस्शब्दसबन्धिकार्याभावेऽदस इति भवति । ह्रस्वत्वाभावे तु स्वैरादिसूत्रवत् सर्वं द्रष्टव्यम् सौत्रत्वाद्वा समाहारेऽपि न ह्रस्व ॥—**अम्यत्रे**ति ॥ अम् गतावित्यतो भावे घञि अम सोऽस्यास्तीति इन् ॥—**चादि**—॥ अनाडित्यत्र पर्युदासाश्रयणेन सदृशग्रहणात् चादिना स्वरस्य विशेषणात् तदन्तत्वासभवात् सामानाधिकरण्यलाभात् केवलस्य ग्रहणमित्याह—**आङ्वर्जितश्चादिरव्ययसज्ञक स्वर** इति । वृत्तौ तु द्वितीयमुत्तरम् ॥—**आ एवं किल मन्यसे** इति ॥ अत्राकारो वाक्यालङ्कारे । पूर्ववाक्यार्थविपर्ययद्योतको वा ॥ ऊष्यते पीड्यते बीजादि वस्त्वनेनेति व्यञ्जनाद्घञि ऊष, सोऽस्मिन्नस्ति 'मध्वादिभ्यो र' इति रे **ऊषर** ॥ शृणोतेर्णिगि अलि श्राव । ओ श्राव ओश्रावस्त करोति णिचि पूर्ववद्वृद्धौ **ओश्रावये**ति क्रियापदमखण्डम् ॥—**आ उदकान्ता**दिति ॥ अत्राङ् मर्यादायाम् तेन प्रियप्रोथानुव्रजनस्योदकमर्यादाभाव आङा द्योत्यते ॥—**आ आर्येभ्य** इति । अत्राङभिविधौ तेन यशोगतिं प्रति आर्याणामभिविधित्व द्योत्यते ॥—**मर्यादाभिविधौ चे**ति ॥ अवधिमता सबद्धोऽवधिरभिविधिरभिव्याप्ति· अवाधिमपि यो व्याप्नोतीत्यर्थ । अवधिमताऽसबद्धो योऽवधि स मर्यादा त परित्यज्य यो वर्तते इत्यर्थ ॥—**वाक्यस्मरणयो**रिति ॥ वाक्यशब्देन वाक्यार्थ उच्यते, चादीना द्योतकत्वात् अर्थस्यैव च द्योत्यत्वात् न तु शब्दस्येति ॥—"**आ एवं किल मन्यसे** ॥ पूर्वप्रक्रान्तवाक्यार्थस्यान्यथात्वद्योतनायायमत्राकार ॥ अन्ये तु वाक्यशब्देन वाक्यमेवाहु । तत आ एव किल मन्यसे, नैव पूर्वममस्था सप्रति मन्यसे इति वाक्यसूचनायाकार प्रयुज्यते ॥ तथा स्मृते सूचक आकार प्रयुज्यते तत स्मृत्यर्थो निर्दिश्यते—**आ एवं नु तादि**ति" ॥—**ओदन्त** ॥—**समपद्यते**ति वृत्तान्वर्थकथन न तु च्वेरारम्भकमिद वाक्यम् । कृभ्वस्तियोगे एव च्वेर्विधानात् ॥—**गोऽभवदि**ति

मिथोऽत्र । मिथोशब्दः *स्वरादिर्नतु चादिः । तिरोऽभवत्, नमोऽकरोत्, अदोऽभवदित्यादिषु लाक्षणिकत्वाच्च न भवति । *अहो इत्यादयोऽखण्डाश्चादय इति पृथग्योगः ॥ ३७ ॥ *सौ नवेतौ । १ । २ । ३८ ॥ सिनिमित्तो य ओदन्तः स इतौ परेऽसंधिर्वा भवति । पटो इति । पटविति । साधो इति । साधविति । साविति किम् । अहो इति । गावित्ययमाह । गौरिति वक्तव्येऽशक्त्या गो इत्युक्तमनुक्रियते । स्याद्वादाश्रयणाच्चानुकार्यानुकारणयोरभेदविवक्षायामसत्यर्थवत्त्वे विभक्तिर्न भवति । इताविति किम् । पटोऽत्र ॥ ३८ ॥ *ऊँ चोञ् । १ । २ । ३९ ॥ उञ्शब्दश्चादिरितिशब्दे परे वाऽसंधिर्भवति । असंधिपक्षे च उञ ऊँ इत्येवंरूपो दीर्घोऽनुनासिको वा भवति । तथा च सति त्रैरूप्यं सिद्धं भवति । उइति १ ऊँ इति २ विति ३ । इतावित्येव । उ उत्तिष्ठ । ञित्करणं स्वरूपपरिग्रहार्थम् । *तेन विकृतस्य न भवति । अहउ अहो, अहो इति । एवमुताहो इति ॥ अथ ऊँ इत्येव चादिषु पठ्यता किमादेशेन । नैवम् । तस्यानितावपि प्रयोगः प्रसज्येत तन्निषेधार्थमादेशवचनम् ॥ ३९ ॥ * अञ्वर्गात्स्वरे वोऽसन् । १ । २ । ४० ॥ ञकाररहितेभ्यो वर्गेभ्यः पर उञ् स्वरे परे वकारो वा भवति, स *चासन्-अभूतवत् । क्रुङ्ङ्वास्ते । क्रुङ्ङु आस्ते । किम्वापनम् । किमुआवपनम् । किम्वुष्णम् । किमु उष्णम् । किम्विति । किमु इति । किमूँ इति । *किंविति । *किँव्विति । जानु उ जानू । जान्वस्य रुजति । जानू अस्य रुजति । *तद्वृस्य मतम् । तदु अस्य मतम् । वर्गादिति किम् । स्वरु उपैति । अन्तरु उपैति । अञिति किम् । घञु

---

॥ अत्र 'अधणतसु'—इति 'गति' इति वाऽव्ययत्वे सेलुपि 'एदोत पदान्तेऽस'—इति अलोप ॥—इत्याद्यपीति । तिरस् नमस् अ॒स् इत्याद्यपि स्वरादिर्न तु चादिरित्यर्थ ॥—अहो इत्यादय इति ॥ अह उ अहो इति, उत अह उ उताहो इति, आह उ आहो इत्यादावर्थभेदात् चादिसमुदायस्यापि चादित्वात् पूर्वेणैव सिद्धत्वात् अनर्थकमिदमिति परस्याशय । नैवम् । एकनिपातत्वाच्चादिषु तथैव पाठात् पूर्वेण न प्राप्नोतीति पृथग्योगारम्भ इत्याह--अहो इत्यादय इति ॥—सौ न—॥ आमन्त्र्यविहित सिरत्र ग्राह्य । अन्येन स्वरस्य व्यवधानात् ओकारस्यासम्भवाच्च प्राप्तेरभावात् प्रतिषेधोऽनर्थक ॥ वेत्युक्तेऽपि विकल्पे सिद्धे नवेत्यधिकारार्थं कृतम् । तेन सर्वत्र यत्र नवेति तत्राधिकारो यत्र तु वेति तत्र नाधिकार इति ॥—ऊँ चोञ् ॥—तेन विकृतस्येति ॥ विकृतस्याश्रितो विकृतौ सत्या स्वरूपहानेरित्यर्थ ॥ अयमभिप्राय. द्वाविमावुकारौ एको निरनुबन्धोऽपर सानुबन्ध इति तत्र यो निरनुबन्धस्तस्य अहो इत्यत्रौकारोदेश इष्यते नापरस्य । अतोऽहो इत्यत्राश्रित एव कृतादेशत्वात् इद सूत्र न प्रवर्तते इत्यर्थ ॥ अत एव जान्वस्य रुजतीत्यत्र उत्तरसूत्रेण वत्व सिद्धम् ॥ उञा सह जानोरुकारस्य दीर्घीभूतत्वात् । अथ वा, अत्र सूत्रे उकारप्रश्लेषात् उ उञ् ऊञ् इत्युकारेण उञो विशेषणात् उकाररूपस्य उञो ग्रहणात् अहो इत्यादौ न भवति, उत्तरत्र तु जात्याश्रयणात् दीर्घीभूतस्यापि जान्वस्य रुजतीत्यादौ वत्व भवति ॥—अञ्वर्गात्—॥ नञ्तत्पुरुषगर्भकर्मधारयात् पञ्चमी । अत्रासन्नित्युक्ते यदि वकाररूपादेशस्य स्वरूपेणाभावो विधीयते तदादेशविधानमनर्थक स्यात् । अथ उञ्रूपस्य स्थानिनो निवृत्त्यर्थं तदिति चेत् । सत्यम् । एव सति उञ एव निवृत्ति कुर्यात् । तस्मादसन्निति मुख्यार्थबाधाया गुणकल्पनाश्रीयते इत्याह—असन्नभूतवदिति । असिद्धवदकृतवदित्यर्थ ॥ ततश्च स्थान्याश्रय कार्यं सिद्ध भवति । ननु असन्निति विनापि प्रथममेव द्वित्वे क्रुङ्ङ्वास्ते इति सेत्स्यति तत्किमनेनात्र दर्शितेन । सत्यम् । अत्र परत्वात् 'ह्रस्वान्ङणनो द्वे' इत्यनेन जायमान द्वित्व बाधित्वा नित्यत्वादनेन वकार । तस्य चासत्त्वाद्द्वित्वम् ॥—किंविति । किँव्वितीति । अत्र 'इवर्णादे—' इति यत्वे कृते 'तो मुमो व्यञ्जने'—इति अनुस्वारानुनासिको ॥—तद्वृस्य मतम् इति । यत्र 'ततो ऽस्या.' इत्यस्य प्राप्तिस्तत्र 'अदीर्घात्'—

एति। स्वर इति किम्। किमु गच्छति। *असत्त्वाद्द्वित्वमनुस्वारानुनासिकाभावश्च ॥ ४० ॥ *अइउवर्णस्यान्तेऽनुनासिकोऽनीदादेः । १ । २ । ४१ ॥ अवर्णस्येवर्णस्योवर्णस्य चान्ते विरामे वर्तमानस्यानुनासिक आदेशो वा भवति, अनीदादेः—न चेदयमीदूदेद्द्विवचनम् ( १ । २ । ३४ ) इत्यादिसूत्रसंबन्धी भवति। पदान्ताधिकारेऽन्तग्रहण विरामप्रतिपत्त्यर्थम्। स च विरामे भवन्पदस्यान्ते भवति, केवलमुपसर्गस्य समासान्तर्वर्तिनश्च न भवति। सामँ। साम। खट्वाँ। खट्वा। दधिँ। दधि। कुमारीँ। कुमारी। मधुँ। मधु। वृक्षेणँ। वृक्षेण। नामँ अत्र। नाम अत्र। दधिँ अत्र। दधि अत्र। मधुँ अत्र। मधु अत्र। वृक्षेणँ अत्र। वृक्षेण अत्र। विरामत्वाच्च संधिर्न भवति। अइउवर्णस्येति किम्। कर्तृ। हर्तृ। अन्त इति किम्। दधि करोति। मधु करोति। *वृक्षः। अनीदादेरिति किम्। अग्नी। वायू। अमू। अमी। किमु। चादिसूत्रे चादेः स्वरस्य केवलस्याङ्वर्जितस्य च ग्रहणादिह भवत्येव। अँ इति विष्णोः संबोधनम्। प्लक्षश्चँ न्यग्रोधश्चँ। पाटलिपुत्रादाँ ॥ ४१ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ २ ॥

पूर्वभवदारगोपी,-हरणस्मरणादिव ज्वलितमन्युः ॥ श्रीमूलराजपुरुषो,-न्यमोऽवधोद्दुर्मदाभीरान् ॥ १ ॥

# तृतीयः पादः

*तृतीयस्य पञ्चमे । १ । ३ । १ ॥ *वेति पदान्त इति अनुनासिक इति चानुवर्तते। *वर्गतृतीयस्य पदान्ते वर्तमानस्य वर्गपञ्चमे परे वानुनासिको भवति। *स्थान्यासन्नः। वाङ् ङवते। वाग् ङवते। वाङ् ञकारः। वाग् ञकारः। वाङ् णकारीयति। वाग् णकारीयति। वाङ् नयति। वाग् नयति। वाङ् मधुरा। वाग् मधुरा। एवं पण् नयाः। पड् नयाः। *तन्नयनम्। तद्नयनम्। *ककुम्मण्डलम्। ककुब्मण्डलम्। तृतीयस्येति किम्। स्वर्नयति। हल्मात्रम्। पदान्त

---

इति प्राप्तमपि द्वित्वं न प्रवर्तते नित्यत्वादिकारणेभ्य ॥—असत्त्वाद्द्वित्वमिति। 'अदीर्घात्' इति 'ततोऽस्या' इति च द्वित्वार्थे कर्तव्ये सत्त्वेव, यतोऽसन्नित्यत्रापि वा योजनीय। वकारादेशोऽपि वाऽसन् भवतीत्यर्थ। ततः पक्षेऽसत्त्वविधानात् कार्यविशेष प्रति सत्त्वमेव। तेन तद्वस्य मुख (मतम्) जान्वस्य रुजति इत्याद्यपि सिद्धम् ॥—अइउ—॥—वृक्ष इति। कादिर्व्यञ्जनमिति सूत्रे कसादिरिति तत्पुरुषसमासे विसर्गस्यापि व्यञ्जनत्वे 'नाम सित्--' इति वृक्षाकारस्य पदत्वात् अन्त इति व्यावृत्तेर्न ह्यन्नविकलतेति ॥ ॥ इति द्वितीयपादः संपूर्णः ॥ तृतीय—॥ तृतीयस्येत्युत्तरार्थम्। अन्यथा वर्गस्येति क्रियेत। तेन प्राड्ङसतीति सिद्धम् ॥—वेति ॥ 'सौ नवेतौ' इत्यतो नवेति, 'एदोत' - इत्यत पदान्ते इति, 'अइउवर्ण'—इत्यतोऽनुनासिक इत्यधिकारत्रय पादान्तरगतमप्यनुवर्ततेऽपेक्षातोऽधिकार इति न्यायात् ॥ प्रथमद्वितीयतृतीयादित्व वर्गस्यैव धर्म इति वर्गस्यैव तृतीय पञ्चमश्चेत्याह—वर्गतृतीयस्येति ॥—स्थान्यासन्न इति। यद्वर्गसत्कस्तृतीयस्तद्वर्गसत्क एवानुनासिक इत्यर्थ ॥—तन्नयनमिति। अत्र तृतीयस्य दस्यासत्त्वे तत्स्थानस्य नस्याप्यसत्त्वात् नलोपो न भवति॥—ककुम्मण्डलमिति। अत्र 'तौ मुम'—

इत्येव । विघ्नः । पञ्चम इति किम् । वागत्र । पड् गच्छन्ति । केचित्तु व्यञ्जनस्य स्थानेऽनुनासिके परे वाऽनुनासिकमिच्छन्ति । तस्य तु 'ह्रस्वान्ङणनो द्वे' ( १ । ३ । २७ ) इति द्वित्वं च नेच्छन्ति । तन्मते, त्वङ्ँ इति । त्वगँ इति । श्वलिण्ँ इति । श्वलिड्ँ इति । तन्ँ इति । तद्ँ इति । *हल्ँमात्रम् । *हलँमात्रम् ॥ ननु पण्नया इत्यादौ 'अदीर्घाद्विरामैकव्यञ्जने' ( १ । ३ । ३२ ) इत्यनेन तृतीयस्य द्वित्वे कृतेऽन्तस्यानुनासिके च तृतीयस्यापि श्रुतिः प्राप्नोति । नैवम् । अनुनासिके कृते पश्चाद् द्वित्वस्य भावात् । तेन पण्णूनयाः, पड्डूनया इत्यादि सिद्धम् ॥ १ ॥ *प्रत्यये च । १ । ३ । २ ॥ पदान्ते वर्तमानस्य तृतीयस्य स्थाने पञ्चमादौ प्रत्यये परेऽनुनासिको भवति । नित्यार्थं वचनम् । *वाङ्मयम् । *गुडलिण्मान् । पण्णाम् । पदान्त इत्येव । यज्ञः । सद्म । *चकार उत्तरत्र विकल्पानुवृत्त्यर्थः ॥ २ ॥ *ततो हश्चतुर्थः । १ । ३ । ३ ॥ पदान्ते वर्तमानात्ततस्तृतीयात्परस्य हकारस्य स्थाने *प्रत्यासत्त्या पूर्वसवर्गश्चतुर्थो वा भवति । वाग्घीनः । वाग्हीनः । *अज्झलौ । अज्हलौ । पड्ढलानि । पड्हलानि । ताद्धितम् । तद्हितम् । ककुब्भासः । ककुब्हासः । तत इति किम् । प्राङ् हसति । भवान् हरति ॥ ३ ॥ *प्रथमादधुटि शश्छः । १ । ३ । ४ ॥ पदान्ते वर्तमानात्प्रथमात्परस्य शकारस्य स्थानेऽधुटि परे छकारादेशो वा भवति । वाक्छूरः । वाक्शूरः । वाक्छ्लक्ष्णः । वाक्श्लक्ष्णः । तच्छ्वेतम् । तच्श्वेतम् । उच्छ्मश्रुः । उच्श्मश्रुः । तच्छ्लीलति । तच्श्मीलति । पट्छ्यामाः । पट्श्यामाः । त्रिष्टुप्छ्रुतम् । त्रिष्टुप्श्रुतम् । प्रथमादिति

---

इत्यनेन नानुस्वार, 'अनुवर्गात्'—इत्यतोऽसदधिकारस्य प्रयोजनवशादिष्टत्वात् लाक्षणिकत्वात् असिद्ध बहिरङ्गमित्यसिद्धत्वाद्वेति ॥—**केचित्त्विति** । विश्रान्तविद्याधरादय ॥ मात्रमवधारणे, हल् च तत् मात्र च, हल् मात्रास्येति वा—**हल्मात्रमिति** ॥—**हल्मात्रमिति** । अत्र लकारस्य सानुनासिको लकार इति ॥ ननु पण्णूनया इत्यत्र परत्वात् तृतीयस्यानुनासिक बाधित्वा 'अदीर्घात्'—इत्यनेन द्वित्वे कृते पड्ण्नया इति प्राप्नोतीत्याह—**अनुनासिके कृते पश्चाद्द्वित्वस्य भावादिति** । 'अदीर्घात्'—इत्यनेन पूर्वं द्वित्व न प्रवर्तते, तत्रान्त्विति्यधिकारात् । कृते त्वनुनासिके प्रवर्तते इत्यर्थ ॥—**प्रत्यये**—॥—**वाङ्मयमिति** । वाचा विकारोऽवयवो वा । एकस्वरान्मयट् । वाच आगत 'नृहेतुभ्य' इति मयट् वा ॥—**गुडलिण्मानिति** । अत्र 'मावर्ण'—इति वत्वे कर्तव्ये ह्रस्वत्वमसिद्ध द्रष्टव्यम् इति ॥—**चकार** इति । अयमर्थ । अत्र चकार पूर्वयोगस्यैवास्य योगस्य शेषता प्रतिपादयन् आत्मनि वेत्यस्य सबन्धाभाव यानुवृत्तेश्चोत्तरत्राव्यवधान सूचयतीति ॥—**ततो ह**—॥ ननु हस्य कण्ठ्यत्वात्तदासन्नेन हस्य घेनैव भाव्यम् न झढधभेरित्यत पूर्वचतुर्थ इति कर्तव्यम इति । नैवम् । चतुर्थ इति गुरुकरणात् पूर्वप्रत्यासत्तिर्लभ्यते अन्यथा ततो हो घ इत्येव कुर्यात् इत्याह—**प्रत्यासत्त्या पूर्वसवर्ग** इति ॥—**अज्झलाविति** । अत्र सज्ञाशब्दत्वात्कत्वाभाव । यतोऽर्थप्रत्यायनाय शब्दप्रयोग । अच् इति हि स्वरप्रत्यायनमिष्टम् । कत्वे तु कृते अक् इत्युक्ते समानप्रतीति स्यादिति । अत एव च 'सिजयतन्याम्' इत्यादौ विवक्षितार्थप्रतीत्यभावात् सिचश्चकारस्य कत्व न कृतमिति । अन्यथौणादिकस्य सिक्प्रत्ययस्याद्यतन्या सत्या प्रतीति स्यादिति ॥—**प्रथमा**—॥ वाक् छूर इत्यादिप्रयोगेषु सर्वेषु तृतीयस्य प्रथमे कृते तादृक्षात्प्रथमात् शकारस्यानेन छ प्रवर्तते, ततस्तृतीयाधिकारेणैव सिध्यति । न च परत्वात् 'अघोषे प्रथमोऽशिट' इति प्रागेव प्रथमो भविष्यति ततस्तृतीयाभावात्कथ शस्य छादेशो भविष्यति इति वाच्यम् । यतस्तत्रान्त्वित्यधिकारात् न प्रागेव प्रथमत्वमिति । सत्यम् । तृतीयाद्विधीयमाने छे तृतीयस्य प्रथमत्व पश्चात् न प्राप्नोति विधानसामर्थ्यात्, यथा

किम्। प्राङ्शूरः। भवान्*शोभनः। अधुटीति किम्। वाक्श्च्योतति ॥ ४ ॥ *रः कखपफयोः ᳲक ᳳपौ। १। ३। ५॥ पदान्ते वर्तमानस्य रेफस्य कखे पफे च परे यथासंख्यम ᳲक ᳳपौ–जिह्वामूलीयोपध्मानीयावादेशौ वा भवतः। ककारपकाराकारा उच्चारणार्थाः। कᳲ करोति। कᳲ खनति। कᳳपचति। कᳳफलति। अन्तᳲकरोति। अन्तᳳफलति। पक्षे 'रः पदान्ते विसर्गस्तयोः' (१। ३। ५३) इत्यनेन विसर्गः। कः करोति। कः खनति। कः पचति। कः फलति। अन्तः करोति। अन्तः फलति। विसर्गापवादोऽयम्। एवमुत्तरावपि ॥ ५ ॥ *शषसे शषसं वा। १। ३। ६ ॥ पदान्ते वर्तमानस्य रेफस्य शषसेषु परेषु यथासंख्यं शषस इत्येते आदेशा वा भवन्ति। कश्शेते। कः शेते। कष्षण्डः। कः षण्डः। कस्साधुः। कः साधुः। अन्तश्शेते। अन्तः शेते। मातष्षण्डे। मातः षण्डे। पयस्सु। पयःसु॥ कथं गीर्षु, धूर्षु। अरो रेफस्य सुपि रेफो वक्ष्यते। कः श्शकार इत्यादिषु त्वघोषे शिट्परे विसर्जनीयस्य विधानाद्रेफ एव नास्तीति न भवति। एवं पूर्वोत्तरयोरपि योगयोर्द्रष्टव्यम्। वासः क्षौमम्। अद्भिः प्सातम्। असेः त्सरुः। नवाधिकारे वाग्रहणमुत्तरत्र विकल्पनिवृत्त्यर्थम् ॥ ६ ॥ *चटते सद्वितीये। १। ३। ७॥ पदान्ते वर्तमानस्य रेफस्य चटतेषु सद्वितीयेषु परेषु *यथासंख्यं शषस इत्येते आदेशा भवन्ति। चछयोः शः। कश्चरति। कश्छादयति। अन्तश्चरति। अन्तश्छादयति। टठयोः षः। कष्टीकते। कष्ठकारेण। पुनष्टीकते। पुनष्ठकारेण। तथयोः सः। कस्तरति। कस्थुडति।

---

'ङ्न. स. त्सोऽश्च.' इत्यत्र सूत्रे ङकारात्परे त्से कृते टत्व न भवति पड्त्सीदन्तीत्यत्र। किंच प्राङ्क् छेते, सुगण्ट् छेते इत्यादौ तृतीयाभावात् छत्व न स्यात् इति विध्यर्थमिति ॥ शोभत इत्येवशील शोभन.। 'इडितो व्यञ्जन'—इत्यन ॥ अधुटीति पर्युदासात् स्वरान्तस्थानुनासिकपरस्य शस्य छो भवतीति तेन वाक्श् इत्यत्र छो न भवति। वाक्छूर इत्यादौ 'ऊनार्थपूर्वाद्ये' इति समास ॥—र कख—॥ ननु निरनुबन्धग्रहणे न सानुबन्धस्येति न्यायात् क करोतीत्यादौ सानुबन्धस्य रेफस्यादेशो न प्राप्नोति। सत्यम्। 'अरो. सुपि'—इत्यत्र रुवर्जनात् रोरप्यादेश। तर्हि 'र पदान्ते'--इति सूत्रात् निरनुबन्धे रेफेऽनुवर्तमाने स्वयमेव सिद्ध सत् ज्ञापयति 'निरनुबन्धग्रहणे सामान्यग्रहणम्' इत्यपि न्यायोऽस्तीति ॥—शषसे—॥ ननु शषसे सो वेत्येव सकार एव विधीयताम्। तस्य च सस्य शषौ' इति कृते कश्शेते कष्षण्ड इत्यादौ शकारषकारौ सेत्स्यत। एवमुत्तरत्रापि कश्चरति कष्टीकते भवाँश्चरति भवाँष्टीकते इत्यादौ शषौ सेत्स्यत इत्युत्तरार्थमिति न वक्तव्यम्। तथा कश्शेते इत्यादौ 'धुटस्तृतीय' इति अस्मिन् कर्तव्ये रुत्वस्य, अन्तश्शेते इत्यादौ त्वसिद्ध बहिरङ्गमिति न्यायेन शत्वस्यासिद्धत्वे तृतीयत्वमपि न प्रवर्त्स्यति तत्कि शषयो पृथग्विधानेनेति। सत्यम्। असिद्ध बहिरङ्गमन्तरङ्गे इति न्यायस्यानित्यत्वज्ञापनार्थम्। तेन बभूवुषेत्यादौ स्वरनिमित्तमुवादि सिद्धम्। किंच, शषसग्रहण व्यक्त्यर्थम्। तेनैतेषु कृतेष्वेतद्विलक्षण कार्यान्तर न भवति। ततश्चान्तश्शेते मातष्षण्ड इत्यादौ 'धुटस्तृतीय' इति जत्वडत्वादिक न भवति। कश्शेते इत्यादौ तु तृतीयाभावो रो परेऽसत्त्वादपि सिध्यतीति न्यास। कथ तर्हि सर्पिष्षु इत्यादौ षत्वमिति। सत्यम्। शषसविलक्षण तृतीयत्वादिक न भवति शषसरूप तु भवत्येवेति दिक् ॥—चटते—॥ नन्वत्रासदेहार्थं चछटठतथे इत्येव किं न क्रियते सद्वितीयग्रहणमपनीयेति। सत्यम्। निमित्तबहुत्वे यथासख्य न स्यात् अत आह—यथासख्यमिति ॥ न च सद्वितीयग्रहणे सत्यपि चकाराक्रान्तश्छकारो यत्र, एव टकाराक्रान्त ठ, तकाराक्रान्तस्थकारश्च यत्र भवेत् तत्रैव कार्यं प्राप्नोतीत्याशङ्कनीयम्। 'उ-

अन्तस्तरति । अन्तस्थुडति ॥ ७ ॥ ***नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे** । १ । ३ । ८ ॥ पदान्ते वर्तमानस्य प्रशान्वर्जितशब्दसंबन्धिनो नकारस्य स्थाने चटतेषु मद्द्वितीयेष्वधुट्परेषु परेषु यथासख्यं शषस इत्येते आदेशा भवन्ति । अनुस्वारानुनासिकौ च पूर्वस्य-अनुस्वार आगमोऽनुनासिकश्चादेशः पूर्वस्य क्रमेण भवत इत्यर्थः । भवाँश्चरति । भवांश्चरति । भवाँश्छादयति । भवांश्छादयति । भवाँष्टीकते । भवांष्टीकते । भवाँष्ठकारेण । भवांष्ठकारेण । भवाँस्तरति । भवांस्तरति । भवाँस्थुडति । भवांस्थुडति । अप्रशान इति किम् । प्रशाञ् चरति । प्रशाण्टीकते । प्रशान्तरति । अधुट्पर इति किम् । भवान्त्सरुकः । पदान्त इत्येव । भवन्तः । विरामे प्रतिषेधस्य वक्ष्यमाणत्वादिह न भवति । भवान् चरति । भवान् टीकते । भवान् तरति ॥ ८ ॥ ***पुमोऽशिट्यघोषेऽख्यागि रः** । १ । ३ । ९ ॥ पुमिति पुम्सोः कृतसंयोगान्तलोपस्यानुकरणम् । अधुट्परेऽघोषे शिट्ख्याग्वर्जिते परे पुमित्येतस्य रोऽन्तादेशो भवति अनुस्वारानुनासिकौ च पूर्वस्य । पुंस्कामा । *पुँस्कामा । पुंस्कोकिलः । पुँस्कोकिल । पुंस्खानम् । पुँस्खानम् । पुंश्चली । पुँश्चली । पुंश्छत्रम् । पुँश्छत्रम् । पुंष्टिट्टिभः । पुँष्टिट्टिभ । पुंस्पुत्रः । पुँस्पुत्रः । पुंस्फलम् । पुँस्फलम् । अशिटीति किम् । *पुंशरः । अघोष इति किम् । पुंदासः । पुंगवः । अधुट्परे इत्येव । *पुंक्षुरः । *पुंक्षारः । अख्यागीति किम् । पुंख्यातः । पुंख्यातिः ॥ ९ ॥ ***नॄनः पेषु वा** । १ । ३ । १० ॥ नॄनिति शसन्तस्य नृशब्दस्यानुकरणम् । नॄनः पकारे परे रोऽन्तादेशो वा भवति, अनुस्वारानुनासिकौ च पूर्वस्य । नॄं ऽपाहि । नॄँ ऽपाहि । नॄंः पाहि । नॄँः पाहि । नॄन्पाहि । नॄं ऽप्रीणीहि नॄँ ऽप्रीणीहि । नॄंः प्रीणीहि नॄँः प्रीणीहि । नॄन्प्रीणीहि । पेष्विति किम् । नॄन् यापयति । बहुवचनस्य *व्याप्त्यर्थत्वादधुट्पर इति निवृत्तम् ॥ १० ॥ ***द्विः कानः कानि सः** । १ । ३ । ११ । कानिति

---

दश्वर साप्यात्' 'चरेष्ट' 'व्रीह्यादिभ्यस्तो' इत्यादिज्ञापकात् केवलेष्वेव भवतीति ॥—**नोऽप्र**—॥—**अधुट्पर** इति । अधुट् परो यस्मादिति कार्यम् । न तु धुट् परोऽस्मादिति कृत्वा नञा योग कार्य । यत प्रसज्यशङ्कया वर्णाभावेऽपि स्यात् भवान् त इत्यत्रेति ॥ ननु परग्रहण किमर्थम् । यावताऽधुटीत्युक्तेऽपि अधुटि परतो यच्चटत तस्मिन्नस्य शादयो विज्ञातु शक्यन्ते एवेति । नैवम् । चटते परतो योऽधुट् तस्मिन् नकारस्यैते भवन्तीति कस्मान्न विज्ञायते । ततश्च भवानाचरति, भवानाच्छादयति इत्यादावेव स्यान् न तु भवाँश्चरतीत्यादौ । परग्रहणे तु वर्तिपदार्थापेक्षयाऽन्तरङ्गमपि तत्पुरुष बाधित्वा बहुव्रीहेराश्रयणात् पूर्वोक्तदोषाभाव इति ॥ अनुस्वारापेक्षयावयवावयविभावेऽनुनासिकापेक्षया स्थान्यादेशभावे पूर्वस्येति षष्ठी ॥—**पुमो**—॥ अत्र रमपनीय स इति कृते विधानसाम-र्थ्यात् रुत्वाभावे पुँश्चलीत्यादि न सिध्यतीति स इति न कृतम् ॥—**पुँस्कामे**ति । पुमास कामयते 'शीलिकामि'—इति ण । यद्वा कर्मणिडन्तात्कामना काम । 'युवर्ण'—इत्यल् । णिङभावे कम-न वा घञि वृद्धौ काम । पुस कामोऽस्या आपि 'पुस' इति स ॥ पुमास चलयति 'कर्मणोऽण्' ॥ शीर्यते परपक्षोऽनेन 'पुनाम्नि'—घे **शर** ॥—**क्षुर** इति । क्षुरत् विरवनने । 'नाम्युपान्त्य'—इति क ॥—**क्षार** इति । ज्वलादित्वाण ॥ अत्र ख्याग एव वर्जनात् ख्याक् प्रकथने इत्यस्मिन् पुम्ख्यात, पुँस्ख्यात इति भवत्येव ॥—**नॄन**—॥—**व्याप्त्यर्थत्वादि**ति । अधुट्परे धुट्परे च पकारमात्रे निमित्तेऽस्य सूत्रस्य प्रवृत्तिर्व्याप्तिस्तदर्थत्वादित्यर्थ । तेन नॄ प्सातीत्यादि सिद्धम् ॥—**द्विः का**—॥ अनुकार्यानुकरणयोर्भेदस्य विवक्षितत्वात् शसन्तानुकरणादपि षष्ठी तथा सप्तम्यपि ॥

किमः शसन्तस्यानुकरणम् । द्विरुक्तस्य कानः कानि परे सकारान्तादेशो भवति, अनुस्वारानुनासिकौ च पूर्वस्य । काँस्कान् । कांस्कान् । द्विरिति किम् । कान् कान् पश्यति । अत्रैकः किं प्रश्नेऽन्यस्तु क्षेपे । कानीति किम् । कांस्कान् पश्यति । *रस्याधिकारेणैव सिद्धे सविधान रुत्वबाधनार्थम् ॥ ११ ॥ ***स्सटि समः** । १ । ३ । १२ ॥ समित्येतस्य स्सटि परे सकारोऽन्तादेशो भवति, अनुस्वारानुनासिकौ च पूर्वस्य । सँस्स्कर्ता । संस्स्कर्ता । सँस्स्कर्तुम् । संस्स्कर्तुम् । स्सटीति किम् । संकृतिः । *संचस्कारेत्यत्र तु व्यवधानान्न भवति । सम इति किम् । उपस्कर्ता ॥ १२ ॥ ***लुक्** । १ । ३ । १३ ॥ समित्येतस्य स्सटि परे लुगन्तादेशो भवति । *पृथग्योगादनुस्वारानुनासिकौ च पूर्वस्येति निवृत्तम् । सस्कर्ता । सस्कर्तुम् । केचित्त्वत्राप्यनुनासिकमिच्छन्ति । सँस्कर्ता । सँस्कर्तुम् ॥ १३ ॥ ***तौ मुमो व्यञ्जने स्वौ** । १ । ३ १४ ॥ मोमागमस्य पदान्ते वर्तमानस्य च मकारस्य व्यञ्जने परे तस्यैव स्वौ *तावनुस्वारानुनासिकौ वर्णौ पर्यायेण भवतः । मग्रहणेनैव सिद्धे मुग्रहणमपदान्तार्थम् । स्वेत्यनुनासिकस्य विशेषणं, नानुस्वारस्यासंभवात् । चंक्रम्यते । चङ्क्रम्यते । चंचूर्यते । चञ्चूर्यते ।

---

द्विरिति कान्सत्कभवनक्रियापेक्षया क्रियाविशेषणमिदम् ॥ अथात्र सकारे कृते 'सो रु' इति रुत्व कथ न भवतीत्याह—**रस्येत्यादि** । अयमर्थो यदि सस्य रुत्व स्यात्, तदा रेफाधिकारेणैव सिद्धम् किं सविधानेन । प्रक्रियागौरव च परिहृत भवति ॥ अथात्रानुस्वारस्य व्यञ्जनत्वात् 'पदस्य' इति सयोगान्तलोप कथ न भवति । नैवम् । तत्र मुख्यव्यञ्जनसयोगस्यैवाश्रितत्वात् । अस्य तु सामर्थ्य-प्रापितत्वेनामुख्यव्यञ्जनत्वात् ॥—**स्सटि—**॥ सम इति प्रादिपठितस्यैव समो ग्रहणम् नतु षम् ष्टम् वैक्लव्ये इत्यस्य विजन्तस्य 'सस्कृते भक्ष्ये' इत्यादिज्ञापकात् ॥ अनुस्वारस्य व्यञ्जनत्वात् 'धुटो धुटि स्वे वा' इति पक्षे सकारलोपे द्विसकारमेकसकार च सस्कर्ता सस्स्कर्तेति रुपद्वय द्रष्टव्यम् । सकृतिरित्यत्र गर्गादिपाठात्सट् न ॥—**सचस्कारेति** ।—न चात्र सम् स्कृ इति स्थिते प्र-त्ययोत्पत्ते प्रागेवादेशप्रसङ्ग इति वाच्यम् । यतोऽत्र परत्वान्नित्यत्वाद्धातुमात्राश्रयेणान्तरङ्गत्वाच्च प्रथममेव प्रत्ययस्ततस्तदाश्रित कार्यं द्वित्वम्, तेन च सटो व्यवधानमिति । ननु 'अघोषे शिट' इति लुप्तस्य सस्य 'स्थानीव'—इति स्थानित्वे सति कथ न भवति, न च वाच्यमवर्णविधौ स्थानित्वमिति, स्सटीति वर्णसमुदायाश्रयणेनावर्णविधित्वात् । न । स्साडिति सकारादि सट् स्सट् इति कृते वर्ण-विधित्वात् ॥ ननु 'निमित्ताभावे'—इति न्यायेन द्वित्वेन समो व्यवधानात् कृग सद्भाव प्राप्नोति । नैवम् । स्वाङ्गमव्यवधायकमिति न्यायात् द्वित्वरूपस्य स्वाङ्गस्य कृग प्रति व्यवधायकत्वायोगादिति ॥—**लुक्** ॥ ननु पृथग्योग किमर्थं पूर्वसूत्र एव लुगुच्यताम् । न च वाच्य लुक्पक्षेऽपि अनुस्वारानुनासिकौ स्याता सकारप्रतिबद्धत्वात्तयोस्तन्निवृत्तौ न प्रवृत्ति । नैवम् । अनुस्वारानुनासिकौ कार्यप्रतिब-द्धावेव विज्ञायेते लुचोऽपि कार्यतया तत्प्रतिबद्धतया लुक्पक्षेऽपि स्याताम् इत्याह—**पृथग्योगादिति** ॥—**तौ मु**—॥ ननु तौग्रहण किमर्थम् स्वाविति विशेषणस्य विशेष्यसापेक्षत्वात् समानाधिकरणौ अधिकारानुविद्धौ अनुस्वारानुनासिकावेवानुवर्त्स्यत । सत्यम् । तौग्रहणमवधारणार्थम् । अन्यथाऽनन्तरोक्ता लुगनुवर्तेत पूर्वस्येति च । ततश्च मुमोर्लुग्भवति पूर्वस्य चानुस्वार, चक्रम्यते इत्यादौ निमि-त्तभूतवर्णापेक्षया पूर्वस्याकारादे स्थानेऽनुनासिकश्चेति सूत्रार्थेऽनिष्ट रुप चङ्क्रम्यत इत्याद्यापद्येत । तौग्रहणात् तु तावेवेति नियमितावनुस्वारानुनासिकावनुवर्तेते । तच्छब्दस्य पूर्ववस्तुपरामर्शित्वेऽपि सकारलुको स्वत्वासभवात् अनुनासिकस्य च समवात् तस्यैव परामर्शे द्विवचनोपादानात् तत्प्रतिबद्धस्यानुस्वारस्य चेत्याह—**ताविति** ॥—**मन**—॥ मनयवला परे यस्मादिति बहुव्रीहिर्न तु तत्पुरुष

। वह्लिहो गौः । वहल्ँलिहो गौः । त्वं करोषि । त्वङ्करोषि । दद्रम्यते । दन्द्रम्यते । वंभण्यते । वम्भण्यते । यंयम्यते यय्ँयम्यते । वंवम्यते । वव्ँवम्यते । म । वह्ंलिहो गौः । वहल्ँलिहो गौः । त्वं करोपि । त्वङ् करोषि । सं चरसि । त्वञ्चरति । त्वं टीकसे । त्वण्टीकसे । त्वं तरसि । त्वन्तरसि । नकारस्य लाक्षणिकत्वादत्र 'नोऽप्रशानः'–( १ । ३ । ८ ) इत्यादिना सकारो न भवति । त्वं पचासि । त्वम्पचसि । संयतः । सय्ँयतः । अहंयुः । अहय्ँयुः । त्वं लोकः । त्वल्ँलोकः । संवत्सरः । सव्ँवत्सरः । कंवः । कव्ँवः । किंतराम् । किन्तराम् । पदान्ते इत्येव । गम्यते । रम्यते । व्यञ्जन इति किम् । किमत्र । स्वाविति किम् । रंरम्यते । शंशम्यते । त्वं रमसे । त्वं शण्ढः । त्वं षण्ढः । त्वं साधुः । त्वं हससि ॥ १४ ॥ *मनयवलपरे हे । १ । ३ । १५ ॥ मनयवलपरे हकारे परे पदान्ते वर्तमानस्य मकारस्य स्थानेऽनुस्वारानुनासिकौ स्तौ पर्यायेण भवत । किं ह्मलयति । किम् ह्मलयति । किं ह्नुते । किन् ह्नुते । किं ह्यः । किय्ँ ह्यः । किं ह्वलयति । किव्ँ ह्वलयति । किं ह्लादते । किल्ँ ह्लादते । मादिपर इति किम् । किं हसति । ह इति किम् । किं ज्वलति ॥ १५ ॥ *सम्राट् । १ । ३ । १६ ॥ समो मकारस्य राजतौ क्विबन्ते *परेऽनुस्वाराभावो निपात्यते । सम्राट् भरतः । सम्राजौ । सम्राजः । साम्राज्यम् ॥१६॥ *ङ्णोः कटावन्तौ शिटि नवा । १ । ३ । १७ ॥ पदान्ते वर्तमानयोर्ङकारणकारयोः शिटि परे यथासंख्यं क् ट्

परग्रहणात् । यद्येवं मनयवलपरे इति कस्मान्नोक्तम् सप्तम्येव हि परशब्दार्थं प्रतिपादयिष्यति मकारादौ परे यो हकारस्तस्मिन्निति । नैवम् । विपर्ययोऽपि विज्ञायेत हकारपरे मकारादाविति । ततश्च किं महयति, किं नह्यति, किं याहि, किं वहसि, किं लिख्यते इत्यत्रैव स्यात् । अकारादिना व्यवधानान्न भविष्यतीति चेत् । न । 'येन नाव्यवधानं तेन व्यवहितेऽपि स्यात्' इति न्यायात् एकेन वर्णेन व्यवधानमाश्रीयते । अथ प्रथमपक्षे किं ह्मलयतीत्यादौ सूत्रं चरितार्थमिति किमिति व्यवधानमाश्रीयते इति चेत् । न । येन प्रतिपादकेन हकारपरे मकारादावित्येष सूत्रार्थः स्वीकृतस्तं प्रति पक्षान्तरस्यासम्भवात् विपरीतप्रतीतिः स्यादिति तन्निरासाय परग्रहणं कर्तव्यमेवेति । तथापि न कर्तव्यम् । विपर्ययप्रतीतौ हि अस्य वैयर्थ्यं स्यात्तौ मुम इत्यनेनैव रूपद्वयस्य सिद्धत्वात् । सत्यम् । तर्हि नियमार्थमेतत् स्यात् ततो मकारादौ हपरे एव स्यात् नान्यत्र । ततश्च त्वं मन्यसे इत्यादौ पूर्वेणापि न स्यादिति परग्रहणम् । तथा हकारस्य स्वो नास्तीति व्यवहितमकाराद्यपेक्षया स्वोऽनुनासिको भवन् मकारादिरूप एव भवतीति । मस्य पदान्ते वर्तमानस्येति व्याप्त्यर्थम् । यावताऽपदान्तेऽपि म्नागमे पूर्वसूत्रोपात्तानुवृत्ते लकारस्य सानुनासिकत्वेऽङ्गीक्रियमाणे जह्मल्ँयते जम्ह्मल्ँयते जव्ँह्वल्यँते जह्वल्यते इत्याद्यपि भवति, यथा चञ्चलाँदि ॥– सम्राट् ॥ रेफस्य स्वत्वाभावादनुनासिकप्राप्तिरेव नास्तीत्याह—अनुस्वाराभाव इति । एकवचनस्यातन्त्रत्वाद्द्विवचनादावपि भवति ॥—ङ्णो — ॥ नन्वत्रान्तग्रहणं किमर्थम् ङ्णो कटावित्येवोच्यताम् । नैवम् । एवं कृते ङ्णो षष्ठ्यन्तत्वेन कटयोरादेशत्वं स्यात्तन्निरासायान्तग्रहणम् । तर्हि ङ्ण कटमिति समाहारं कृत्वा ङ्ण इति पञ्चम्यन्तमादेशत्वनिरासाय व्याख्यायताम् । न । अन्तग्रहणाभावे कस्य प्रत्ययत्वे चतुष्कवृत्तित्वादैकार्थ्ये सति विभक्तेर्लुपि नकारस्य निवृत्तिः स्यात् धुड्निमित्तत्वात्तस्य तथा च प्राङ्ह्शेते इति न स्यात् । प्राङ्ह्छेते इत्यत्र पूर्वपदभक्तत्वेन पदान्तत्वात् 'प्रथमादधुटि शश्छः' इति शकारस्य छत्वम् भवति । अन्तग्रहणे सति प्राङ्क् साये इत्यत्र ककारस्य पदान्तत्वात् 'नाम्यन्तस्था'—इत्यनेन पदमध्ये विधीयमानं षत्वं न भवति । अन्यथा परादित्वेन ककारेण सकारस्य पदादित्वविघातात् षत्वं स्यादिति । तथा सगुण्ट्सु इत्यत्र 'नाम सिदय्'—इति टकारस्य पूर्वपदभक्तत्वेन पदान्तत्वे 'पदान्तात् टवर्गात्—' इति

इत्येतावन्तौ भवतः । प्राङ्क्शेते । प्राङ्कछेते । प्राङ्शेते । प्राङ्क्षण्डे । प्राङ्षण्डे । प्राङ्क साये । प्राङ् साये । सुगण्ट् शेते । सुगण्ट्छेते । सुगण्शेते । वण्ट्षण्डे । *वण्षण्डे । वण्ट्साये । वण् साये । कुङ्क्षु । कुङ्षु । सुगण्ट्सु । सुगण्सु । ङ्णोरिति किम् । भवाञ् शेते । *महान षण्डे । शिटीति किम् । प्राङ्करोषि । सुगण्णटति । पदान्ते इत्येव । बंभणिष ॥ १७ ॥ *ड्नः सः त्सोऽश्वः । १ । ३ । १८ ॥ पदान्ते वर्तमानाड्डकारान्नकाराच्च परस्य सकारस्य स्थाने त्स इत्ययं तकारादिः सकारादेशो वा भवति, अश्वः—श्वसंयोगावयवश्चेत् शकारो न भवति । *षड्त्सीदन्ति । *डकारनिर्देशाट्टत्वं न भवति । केचित्तु टत्वमपीच्छन्ति । षट्त्सीदन्ति । *भवान्त्साधुः । पक्षे, षट्सीदन्ति । भवान् साधुः । स इति किम् । षड् भवन्ति । महान् षण्डः । अश्व इति किम् । षट्श्च्योतन्ति । भवाञ् श्च्योतति । श्च्युतेः सोपदेशत्वाच्छकारस्य सकारोपदिष्टं कार्यं विज्ञायते, तेन मधु श्च्योततीति क्विप्, मधुश्च्युतमाचष्ट इति णावन्त्यस्वरादिलोपे, पुनः क्विपि, णिलोपे, मौ, तल्लुकि च, यलोपे, 'संयोगस्यादौ स्कोर्लुक्' (२ । १ । ८८) इति शलोपे, चस्य कत्वे मधुगिति सिद्धम् ॥ १८ ॥ *नः शि ञ्च् । १ । ३ । १९ ॥ पदान्ते वर्तमानस्य नकारस्य स्थाने शि शकारे परे ञ्च् इत्ययमादेशो वा भवति, अश्वः—श्वसंयोगावयवश्चेच्छकारो न भवति । भवाञ्च्छूरः । भवाञ्च्शूरः । पक्षे भवाञ् शूरः । एवं कुर्वञ्च्छेते । कुर्वञ्च्शेते । कुर्वञ् शेते । आदेशबलात्कत्वं *न भवति । शीति किम् । भवान् करोति । अश्व इत्येव । भवाञ्श्च्योतति । राजा शेते इत्यत्र तु परत्वान्नलोपः ॥ १९ ॥ *अतोऽति रोरुः । १ । ३ । २० । *वेति निवृत्तम् । अतोऽकारात्परस्य पदान्ते वर्तमानस्य रोः स्थाने अति अकारे परे

---

प्रतिषेधात् 'सस्य शषौ' इति सकारस्य षत्वं न भवति । परावयवत्वे त्वपदान्तत्वात् प्रतिषेधाभावात् स्यादेवेति । अन्यच्च कटयो प्रत्ययत्वान्नामत्वे यावक इत्यादिवत् हेत्वर्थयोगे तृतीयादयो विभक्तय स्यु । वण् शब्दे इत्यतो विचि वण्, क्विपि तु दीर्घत्वे वाण् । तथा सुगण् इत्यत्राकारणिगोर्लोपस्य 'अहन् पञ्चमस्य'—इति स्थानित्वाभावात् कथं न दीर्घ इति चेत् । सत्यम् । तत्र हन्वर्जनस्योपदेशावस्थाया पञ्चमान्तग्रहणार्थत्वेन व्याख्यास्यमानत्वात् ॥—महान् षण्डे इति । अत्र 'षि तवर्गस्य' इति निषेधात् 'तवर्गस्य' ... श्र नश्च ङ्नम् । ततोऽस्वराड्डसि. । विग्रहस्तु उच्चारणार्थं स्वरेण क्रियते । यथा घृतादिकमानयेत्युक्ते द्रवद्रव्यत्वात् केवलस्य दुरानयनत्वात् भाजने आनीयते ॥— ... टवर्गात्—' इति निषेधात् 'तवर्गस्य'—इति न टत्वम् ॥ षडितिप्रयोगस्थो डकार सूत्रे अनुकृतस्तत एव 'अघोषे प्रथमोऽशिट' इति टत्व न भवति इत्याह— ... न्त्साधुरिति । अथात्र नकारस्य 'नोऽप्रशान—' इत्यनुस्वारानुनासिकपूर्व सकार कस्मान्न भवति । उच्यते । अधुट्पर इति वचनात् । अत्र हि धुट्परस्नकार ... त्र 'सस्य शषौ' इत्यत्रातु इत्यधिकारे वर्तमाने श्ववर्जनाभावे दन्त्यसकारस्य त्सः स्यात् इति । ननु तर्हि उपदेशावस्थायामेव (मपि) तालव्य पठनी । किं दन्त्यपठनेनेति । सत्यम् । दन्त्य पठनेव ज्ञापयति । दन्त्यापदिष्ट कार्यं तालव्यस्यापि भवति पर दन्त्यस्थाननिष्पन्नस्य न सर्वस्य तेन भवान् शेते इत्यादौ त्सो न भवति । ननु मधुगित्यत्र 'स्वरस्य परे'— इति सूत्रेण णिलोपरूपस्य स्वरादेशस्य स्थानिवत्त्वात् शलोपो न प्राप्नोति । न च वाच्य 'न सधि'—इत्युपतिष्ठते इति । अक्कुकीति वचनात् । यथा सुपूर्वात् कुस्मयते सुकूरित्यत्र । न । अस्कुकीत्यत्र नञ्निर्देशेन 'नञा निर्दिष्टमनित्यम्' इति न्यायात् स्थानित्वाभाव इति ॥—न शि ञ्च् ॥—कत्वं न भवतीति अत्रोपलक्षणव्याख्यानात् 'पदस' इत्यपि न भवति ॥—अतो—॥—वेति निवृत्तमिति । कार्यो निमित्त कार्यम्

उकारादेशो भवति। कोऽत्र। कोऽर्थः। अत इति किम्। अग्निरत्र। देवा अत्र। *सुश्रोत३यत्र न्वसि। अतीति किम्। क इह। सर्वश आस्ते। पय अश्वदत्त।
रोरिति किम्। पुनरत्र ॥ २० ॥ घोषवति । १ । ३ । २१ ॥ अतः परस्य पदान्ते वर्तमानस्य रोः स्थाने घोषवति परे उकारो भवति। को गच्छति।
धर्मो जयति। अहोभ्याम्। घोषवतीति किम्। कः करोति। अत इत्येव। मुनिर्गच्छति। सुश्रोत ३ देहि। रोरित्येव। स्वर्याति। पुनर्वक्ति। उत्तरेण लुकि
प्राप्तेऽपवादोऽयम् ॥ २१ ॥ *अवर्णभोभगोऽघोर्लुगसंधिः । १ । ३ । २२ ॥ अवर्णाद्भोभगोऽघोभ्यश्च परस्य पदान्तस्थस्य रोर्घोषवति परे लुग्भवति, स
चासंधिः—*संधेर्निमित्तं न भवति। श्रमणा गच्छन्ति। धार्मिका जयन्ति। अकारात्तु परस्य रोः पूर्वेणापवादत्वादुत्वमेव। भो गच्छसि। भगो हससि। अघो
यासि। भोभगोअघो इत्येते आमन्त्रणार्थाः सकारान्ता अव्ययाः॥ *केचित्तु *भवद्भगवदघवतां संबोधने सौ परतो वशब्दस्योत्वे तकारस्य च रुत्वं कृत्वा एतानि
रूपाणीच्छन्ति, तेषां द्विवचनबहुवचनयोः स्त्रियां च न सिध्यति । भो ब्राह्मणौ। भो ब्राह्मणाः। भो ब्राह्मणि । भगो ब्राह्मणौ । भगो ब्राह्मणाः। भगो
ब्राह्मणि। अघो ब्राह्मणौ। अघो ब्राह्मणाः। अघो ब्राह्मणि। घोषवतीत्येव। कुमाराः क्रीडन्ति ॥ *असधिरित्युत्तरार्थम् ॥ २२ ॥ *व्योः । १ । ३ । २३ ॥
अवर्णात्परयोः पदान्ते वर्तमानयोर्व्योर्विकारयकारयोर्घोषवति परे लुग्भवति स चासंधिः । वृक्षं वृश्चति क्विप् । वृक्षवृश्चमाचष्टे इति णावन्त्यस्वरादिलोपे
वृक्षवयतीति *णिचि सिद्धं वृक्षव्। वृक्ष गच्छति। एन माला हसति। अव्य गच्छति। घोषवतीत्येव। वृक्षव् करोति। अव्यय् करोति। अवर्णादित्येव। तरुव्

लोप इति निर्देशक्रम। अत्र तु काराण पूर्व निमित्तोपादानेन निर्देशक्रमातिक्रम कुर्वन्नधिकारातिक्रम सूचयति। शिड्निवृत्तिर्वा। तथाऽतोऽतीति निर्देशात् सन्निपातलक्षणन्यायो नोपतिष्ठते। तथा
'इवर्णादे'—इति यत्व प्राप्नोति। परम् 'अन्तरङ्गबहिरङ्गयो'—इति न्यायान्न भवति यत्नम। ननु तरावयव तर्वयाम् इत्यत्र रुशब्दस्यैव ग्रहण कस्मान्न विज्ञायते किमित्युदित एवेति। सत्यम्।
अतोऽतिरोरित्यत एव ज्ञापकात्। इक च एतत्रानोपात्तस्य रोर्नोत्तरत्रानुवृत्तिस्तत्र च भोभगोऽघोभ्य परस्य पदान्तस्वरस्य रोरन्यस्यासम्भवात् सानुबन्धस्यैव ग्रहण भवतीति ॥—सुश्रोत ३ यत्र-
न्वसीति। अत इति तपरनिर्देशेन स्वरूपग्रहणात् प्लुते सति न भवति। परस्मादन्तरङ्गत्वादोकारात्पूर्वमेव प्लुत ॥—अवर्ण—॥ ननु संधिरूपताया सत्यामसंधिरिति प्रतिषेधो युक्त, लुक् तु अभा-
वरूपत्वात्संधिरूप एव न भवतीति कथ निषिध्यते स चासंधिरित्यत आह—संधेरित्यादि। अत्र संधिशब्देन संधिनिमित्तस्योपचारादभिधानम् ॥—केचित्त्विति। इन्द्रगोमिकालापकप्रभृतय. ॥—
भगवदघवतामिति। भज्यन्ते सेव्यन्ते येन रूपेण स्याप्यन्ते पदार्था अनेनेति 'गोचरसचर'—इति घे भगम्। तदस्यास्तीति मतौ भगवानिति रूपम्। अघम् पापकरणेऽतोऽलि मतौ अघवत्।
आमन्त्रितस्यान्यत न्यासक्तस्याभिमुखीकरण संबोधनमामन्त्रणमित्यर्थ ॥—असधिरित्युत्तरार्थमिति। ननु तर्हि 'स्वरे वा' इत्येव असन्धिग्रहण क्रियताम्। नैवम्। लुक्सनियोगशिष्टत्वज्ञापना-
र्थत्वादत्रोपादानस्य। तेन यत्नान्तेनाधिकारेण लुक् तत्रैवासंधि। ततश्चात्रागच्छतीत्यादा संधिप्रतिषेधो न भवति। किंचैव कृते संदेह स्यात स्वरे निमित्तेऽसंधिर्वा भवतीति। ततो दण्ड अग्रमित्यनिष्ट-
रूप स्यादिति। तथा असंधिरित्यस्य सनियोगशिष्टत्व यत्र लुगनुवृत्तिरतत्र तत्तत्रद्धोऽसंधिरित्यपि निवर्तत इति ॥—व्यो—॥ वृक्षमित्यत्र क्विपि सत्यूट् स्यादिति णिचि सिद्धमित्युक्तम्। णिच
'स्वरस्य'—इति णिलुक स्थानित्वम्। 'न संधि'—इत्युपस्थानात्। तर्हि 'य्वो'—इति कथ नस्य लुक्, न। सत्यम्। तदा स्थानित्वात्। अव्ययतीति णिच् क्विप् वा। णिचि तावत्स्य न
लट्। 'स्वरस्य'—इति णिज स्थानित्वात। क्विपि तु यद्यपि णिज स्थानित्वन्न भवति 'न संधि'—इति निषेधात्। तथापि न यस्य लुक् इसास इत्यनेन व्यञ्जनद्वारा सिद्धे कानिति सूत्र

गच्छति । पदान्त इत्येव । भव्यम् । जय्यम् । *कश्चित्तु स्वरजयोग्नादिस्थयोर्यकारवकारयोर्घोषवत्यवर्णादन्यतोऽपि लोपमिच्छति । अध्यारूढ उम्-ईशम् , अध्युः । स चासाविन्दुश्च, अध्विन्दुः । साधोरीः-श्री , साध्वी । तस्या उदयः, साध्युदय इत्यादि ॥ २३ ॥ *स्वरे वा । १ । ३ । २४ ॥ अवर्णभोभगोऽघोभ्य परयोः पदान्ते वर्तमानयोर्वकारयकारयोः स्वरे परे लुग्वा भवति स चासंधिः । पट इह । पटविह । अवर्णादीषत्स्पृष्टतरस्य विकल्पेन विधास्यमानत्वात्त्रैरूप्यम् । पटविँह । वृक्ष अत्र । वृक्षवत्र । वृक्षवँत्र । वृक्षा इह । वृक्षाविह । वृक्षाविँह । त आहुः । तयाहुः । तयाँहुः । तस्मा इदम् । तस्मायिदम् । तस्माँयिदम् । क आस्ते । कयास्ते । कयाँस्ते । देवा आहुः । देवायाहुः । देवायाँहुः । भो अत्र । भोप्रभृतिभ्य उत्तरेणेषत्स्पृष्टतरस्य नित्यं विधानाद्द्वैरूप्यम् । भोयँत्र । भगो अत्र । भगोयँत्र । अघो अत्र । अघोयँत्र । उञ्यपि द्वैरूप्यमेव । पट उ । पटवुँ । इत्यादि । पदान्त इत्येव । लवनम् । नयनम् । अवर्णादिभ्य इत्येव । मध्वत्र । दध्यत्र । स्वर इति किम् । वृक्षव् करोति ॥ २४ ॥ *अस्पष्टाववर्णात्त्वनुञि वा । १ । ३ । २५ ॥ अवर्णभोभगोऽघोभ्यः परयोः पदान्ते वर्तमानयोर्वकारयकारयोः स्थानेऽस्पष्टावीषत्स्पृष्टतरौ प्रत्यासत्तेर्वकारयकारावेवादेशौ स्वरे परे भवतः, अवर्णात्तु परयोर्व्योरुञ्वर्जिते स्वरे परेऽस्पष्टौ वा भवतः । पटवुँ । वृक्षवुँ । असावुँ । कयुँ । देवायुँ । भोयँत्र । भोयुँ । भगोयँत्र । भगोयुँ । अघोयँत्र । अघोयुँ । अवर्णात्त्वनुञि वा । पटविह । पटविह । असाविन्दुः । असाविन्दुः । तयिह । तयिह । तस्मायिदम् । तस्मायिँदम् । कयिह । कयिँह । देवायाहुः । देवायाँहुः । अनुञीति किम् । उञि अस्पष्टावेव यथा स्याताम् । तथा चोदाहृतम् । केचित्तु रुस्थानस्य यकारस्योञि परे लोपमेवेच्छन्ति । क उ आगतः । भो उ एहि । भगो उ एहि । अघो उ याहि ॥ *अपरे तु भोभगोऽघोभ्यः स्वरे नित्यं लोपमेवेच्छन्ति । भो अत्र । भगो अत्र ॥ २५ ॥ *रोर्यः । १ । ३ । २६ ॥ *अवर्णभोभगोऽघोभ्यः परस्य पदान्ते वर्तमानस्य रोः स्थाने स्वरे परे यकार आदेशो भवति । कयास्ते । देवायास्ते । भोयत्र । भगोयत्र । अघोयत्र । रोरिति किम् । पुनरिह । अवर्णादिभ्य इत्येव । मुनिरत्र । स्वर इत्येव । कः करोति । भोः करोषि ॥ २६ ॥ *ह्रस्वान्ङ्णनो द्वे । १ । ३ । २७ ॥ ह्रस्वात्परेषां पदान्ते वर्तमानानां ङ्णन् इत्येषां वर्णानां स्थाने स्वरे परे द्वे रूपे भवतः । कुङ्ङास्ते । सुगण्णिह । पचन्नास्ते । *कुर्वन्नास्ते, कृषन्नास्ते इत्यत्र तु *बहिरङ्गस्य द्वित्वस्यासिद्धत्वाण्णत्वं न भवति । ह्रस्वादिति किम् । प्राङास्ते । *वाणास्ते । भवानास्ते । *राजन्निह ।

क्विपि क्वचित् व्यञ्जनकार्यमनित्यमिति ज्ञापनार्थम् । ततो यलुग न भवतीति । यद्वा लुगिति सज्ञा सञ्ज्ञापूर्वको विधिरनित्य इति । ननु वृक्षव् करोतीत्यत्र पदान्तत्व नास्ति णिलोपस्य स्थानिवत्त्वात् ततो ध्वन्द्विकलत्व व्यावृत्तेरिति । नैवम् । 'न सधि'—इत्यनेन सधिविधौ स्थानित्वाभाव इति ॥—कश्चित्त्विति । विश्रान्तविद्याधर ॥—स्वरे—॥ कयास्ते तयाहुरित्यादिषु स्यादिविधौ गेरसत्त्वात् असिद्ध बहिरङ्गमिति न्यायाच्च 'अत आ स्यादौ'—इति न दीर्घ ॥—अस्पष्टा—॥ स्पर्शेणिजन्तात् क्ते 'णौ दान्त'—इति निपातनात् स्पष्ट ॥—अपरे त्विति । काशिकाकारादय ॥—रोर्यः ॥ अत्रानन्तरोप्यवर्णादित्येव नानुवर्तते । भोप्रभृतिभ्यो यकारस्यास्पष्टयकारविधानात् इति व्यवहितोऽपि अवर्णादिसमुदायोऽनुवर्तते इत्याह—अवर्णभो इत्यादि । ननु तरोरयन तर्वयन चार्वयनमित्यत्रैव 'रोर्य' इति प्राप्नोति उकारसद्भावात् । नैवम । एव कृते भो प्रभृतिभ्यो यकारासभवात् 'स्वरे वा' इत्यादीनि सूत्राणि निरर्थकानि स्यु, ॥—ह्रस्वा—॥—कुर्वन्नास्ते इत्यादि । नन्वत्र द्वित्वे कृते पूर्वस्य नस्यानन्त्यत्वात् णत्व प्राप्नोति इत्याह—बहिरङ्गस्येति । उभयपदापेक्षत्वेनेति । वणतीति क्विप् 'अहन् पञ्चमस्य'—इति दीर्घत्वे—वाण् ॥—राजन्निहेति । परत्वात्

इति निवृत्तम्। स्वरात्परस्य छकारस्य पदान्तेऽपदान्ते च द्वे रूपे भवतः। इच्छति। गच्छति। ह्रीच्छति। म्लेच्छति। चाच्छायते। चोच्छुप्यते। वृक्षच्छाया। आगच्छ भो इन्द्रभूते ३ छत्रमानय। दीर्घादित्येव। *आगच्छ भो देवदत्त ३ छत्रमानय ॥ २९ ॥ *स्वरेभ्यः। १। ३। ३०॥ बहुवचनं व्याप्त्यर्थम्। तेन *पदान्त ह्रीच्छति ॥ २८ ॥ *प्लुताद्वा। १। ३। २९ ॥ पदान्ते *वर्तमानाद्दीर्घस्थानात्प्लुतात्परस्य छकारस्य द्वे रूपे वा भवतः। आगच्छ भो इन्द्रभूते ३ च्छत्रमानय। माङो ग्रहणादिहापि विकल्प एव। प्रमिमीत इति प्रमाः, विच्। प्रमाच्छात्रः। प्रमाछात्रः। दीर्घादिति किम्। श्वेतच्छत्रम्। वाक्छत्रम्। पदान्त इत्येव। मा भूत्। *वाक्यस्मरणयोरमाकारः। मा च्छिन्धि। मा छिन्धि। प्रमाच्छन्दः। *प्रमाछन्दः। पुत्रो मा च्छिनत्ति। पत्रो मा छिनत्ति। आङ्साहचर्येणाव्ययस्य माच्छिदत्। 'स्वरेभ्यः' (१। ३। ३०) इति नित्यमेव। ङित्करणादिषु विकल्प एव। आ च्छायां मन्यमे। आ छायां मन्यमे। आ च्छाया मा भूत्। आ छाया *मुने छाया। रैच्छाया। रैछाया। गोच्छाया। गोछाया। नौच्छाया। नौछाया। अनाङ्माङ इति किम्। आच्छाया। *आच्छिनत्ति। *आ च्छायायाः। दीर्घात्पदान्ते वर्तमानात्परस्य छकारस्य द्वे रूपे वा भवतः। कन्याच्छत्रम्। कन्याछत्रम्। कुटीच्छाया। कुटीछाया। जम्बूच्छाया। जम्बूछाया। मुनेच्छाया। देशात्, 'अनतः'—(१। ४। ५९) इत्यादौ त्वन्विधानबलान्न भवति ॥ २७॥ *अनाङ्माङो दीर्घाद्वा छः। १। ३। २८॥ आङ्माङ्वर्जितपदसम्बन्धिनो लूण्न इति किम्। त्वमत्र। स्वर इत्येव। *प्रत्यङ् शेते। गच्छन् भुङ्क्ते। पदान्त इत्येव। *वृत्रहणौ। दण्डिनौ ॥ उणादयः (५। २। ९३) इत्यादौ स्वरूपनि-

प्रथम प्लुत'। 'नामन्त्र्ये' इति नलोपाभाव ॥—प्रत्यङ्शेते इति। अत्र माभूदनेन द्वित्व 'अदीर्घाद्विराम'—इत्यनेन भविष्यति तत् किमर्थमेतन्निवृत्तये स्वर इत्युच्यते। यद्यनेन स्यात् नित्य स्यात् तेन तु विकल्पेनेति तदर्थं स्वर इत्युच्यते ॥—वृत्रहणाविति। अत्र सज्ञाया पूर्वपदस्यादिति असज्ञाया तु 'कार्गेक'—इति णत्वम् ॥—अनाङ्—॥ पदान्ते इति दीर्घस्य विशेषणम् न छ-स्यासभवात्। पदान्ते हि तस्य विकारेण भाव्यम् शब्दप्राद् इति। आङ्माङ्वर्जनादेव दीर्घादिति पदे लब्धे किमर्थं दीर्घादित्युक्ते। सत्यम्। आङ्माङाव्ययो तत्पर्युदासादन्यस्मादप्यव्ययाद्दीर्घादित्यपि प्रसज्ज स्यादिति ॥—मुने छायेति। मुनि छायेति स्थिते 'स्वरेभ्य' इति द्वित्व प्राप्नोति 'आमन्त्र्ये' इति सिद्ध। तत्रान्तरङ्गत्वात् नित्यत्वाच्चामन्त्र्ये इति पूर्वं सि, ततो '-ह्रस्वस्य गुण' इति सिना सह गुणे अनेन विकल्पेन छस्य द्वित्वमिति। 'स्वरेभ्य' इति नित्य द्वित्वे प्राप्ते विकल्पार्थोऽयमारम्भ इति ॥ आङो ङित ईषदर्थादिषु चतुर्ष्वर्थेषु वर्तमानस्य प्रतिषेध माङस्तु प्रतिषेधवच-नस्य इति क्रमेणोदाहरति—आछायेति ईषदर्थे ॥—आच्छिनत्तीति क्रियायोगे। छिदिरन् हठात् ग्रहणे विद्यते स चाङा विशिष्यते ॥—आ छायाया इति। अत्राङ्मर्यादाया छाया परिहृत्येत्यर्थ। अभिविधौ तु छायामभिव्याप्येत्यर्थ ॥—वाक्यस्मरणयोरिति। वाक्य पूर्ववाक्यार्थविपरीतकरणरूप, स्मरण विस्मृतार्थपरिज्ञानम् ॥—प्रमाछन्द इति। प्रमीयत इति 'उपसर्गादात.' इत्यङ्। प्रमा चासौ छन्दश्च प्रमाछन्द ॥ प्लुता—॥ दीर्घादित्यनुवृत्तावपि द्विमात्रत्रिमात्रयोर्विरोधात् सामानाधिकरण्यासम्भवेऽपि यथा क्रोशन्तीत्यादिवत् स्थानोपचारात् तद्व्यपदेशाद्विशेषणविशेष्यभाव। दीर्घोऽस्यास्ति स्थानित्वेनेत्यभ्रादित्वादति वा दीर्घशब्देन प्लुतोऽभिधीयते इत्याह—दीर्घस्थानादिति। ननु किमर्थमिदम् यतो दीर्घत्वमाश्रित्य 'अनाङ्माङ'—इत्यनेनैव द्वित्व वा भविष्यति। सत्यम्। प्लुतात् प्रथम सेर्लुक् 'अदेत'—इत्यनेन। अन्यथा प्रथम न कुर्यात् यदि पश्चादपि स्यात् ॥ इदमेव ज्ञापक दीर्घापदिष्ट न प्लुतस्येति। ह्रस्वकार्यं च न यथा ॥—आगच्छ भो देवदत्त ३। प्लुतात् प्रथम सेर्लुक् ॥—ह्रीद—॥ अर्च्यते इति भीण्शलीति के चज कगमिति कत्वम्। अर्च्यत इति घञि न्यङ्क्वादित्वात् —स्वरेभ्य.॥—पदान्त इति निवृत्तमिति। 'गच्छति पथिदूते' इत्यत्र गच्छतीति निर्देशाच्च ॥

स्वरेभ्य इति किम्। वाक्छत्रम्॥ ३०॥ ***हादर्हस्वरस्यानु नवा** । १ । ३ । ३१ ॥ स्वरेभ्यः परौ यौ रेफहकारौ ताभ्यां परस्यार्हस्वरस्य रेफहकारस्वरवर्जितस्य वर्णस्य स्थाने द्वे रूपे वा भवतः, अनु–यदन्यत्कार्यं प्राप्नोति तस्मिन् कृते पश्चादित्यर्थः। अर्क्कः। अर्कः। मूर्क्खः। मूर्खः। स्वर्ग्गः। स्वर्गः। अर्ग्घः। अर्घः। अर्च्चा। अर्चा। ब्रह्मा। ब्रह्मा। जिह्मः। जिह्मः। बाह्य्यम्। बाह्यम्। जिह्व्वा। जिह्वा। अर्हस्वरस्येति किम्। *पद्मह्रदः। अर्हः। करः। स्वरेभ्य इत्येव। अभ्यूह्यते। ह्नुते। अन्विति किम्। *प्रोर्ण्णुनाव। अत्र द्विर्वचने कृते यथा स्यात्॥३१॥ ***अदीर्घाद्विरामैकव्यञ्जने** । १ । ३ । ३२॥ *अदीर्घात्स्वरात्परस्य र्हस्वरवर्जितस्य वर्णस्य स्थाने विरामैकव्यञ्जने विरामेऽसंयुक्तव्यञ्जने च परेऽनु द्वे रूपे वा भवतः। त्वक्क्। त्वक्। त्वग्ग्। त्वग्। षट्ट्। षट्। षड्ड्। षड्। तत्त्। तत्। तद्द्। तद्। एकव्यञ्जने। दद्ध्यत्र। दध्यत्र। पत्थ्यदनम्। पथ्यदनम्। मद्ध्वत्र। मध्वत्र। पित्त्रर्थः। पित्रर्थः। त्वङ्ङ्मधुरा। त्वङ्मधुरा। त्वङ्ङ् करोषि। त्वङ्करोषि। *सय्य्ँयतः। सय्ँयतः। उर ᳲᳲकः। उरᳲकः। उर ᳳᳳपः। उर ᳳपः। उरःःकः। उरःकः। *गो ३ त्त्रात। गो ३ त्रात। नौ ३त्त्रात। नौ ३ त्रात। अन्वित्यधिकारात्कत्वगत्वादिषु कृतेषु पश्चाद् द्वित्वम्। अदीर्घादिति किम्। वाक्। भवान्। सूत्रम्। पात्रम्। नेत्रम्। हौत्रम्। विरामैकव्यञ्जन इति किम्। इन्द्रः। चन्द्रः। कृत्स्नम्। मृत्स्ना। उष्ट्रः। दधि। मधु॥ *संयुक्तव्यञ्जनेऽपीच्छन्त्येके। मत्त्रम्। पत्त्रम्। अर्हस्वरस्येत्येव। चर्या। दह्यम्। *तितउ। अत एवादेशबलात्सं-

---

करेत्र अनेन वा द्वित्वम्। औणादिकेऽर्के प्रथममेव कस्य द्विरूपत्वान्नानेन द्वित्वम्॥ बहिर्जातम् 'बहिषष्ठीकणुच' ञ्य। यदा तु बहिर्भव तदा 'गम्भीरपञ्च'—इति ञ्य॥—**पद्मह्रद** इति। ह्रादते इत्यच् पृषोदरादित्वात् ह्रस्व। नन्वत्र द्वित्वे कृतेऽपि 'रो रे लुग्'—इत्यनेन रलोपे सति न किंचिद्विनङ्क्ष्यति। सत्यम्। यद्यत्र रवर्जन न स्यात् तदोत्तरसूत्रेऽपि वर्जनाभावेऽर्ह इत्यत्रोत्तरेण द्वित्वे रो रे लुकि आर्ह इति अनिष्ट रूप स्यादिति॥ ननु कर इत्यत्र द्वित्वे कृतेऽपि 'लुगस'—इत्यादिनास्य लुक् भविष्यति किं स्वरवर्जनेन। सत्यम्। चारु दारु वारीत्यादौ चारू दारू वारीत्याद्यनिष्ट भवेदिति स्वरवर्जनम्॥—**प्रोर्ण्णुनावे**ति। अत्रान्वित्यस्याभावे सत्यन्तरङ्गत्वात् द्वित्वे कृते पश्चात् परोक्षानिमित्तत्वेन बहिरङ्ग द्विर्वचन स्यात्। ततश्च प्रोर्णुन्नावेत्यनिष्टरूपापत्ति। ननु द्वित्व कृतमपि निमित्ताभावे–इति निवर्त्स्यति किमनुग्रहणेन। सत्यम्। अनुग्रहणादेवाय न्यायोऽनित्य इति। यद्वा नाय सार्वत्रिको न्याय कुम्भकारस्य विनाशे घटस्य दर्शनात्॥—**अदीर्घात्**—॥ अदीर्घादिति पर्युदासात् अनुवृत्तस्य स्वरस्य विशेषणमित्याह—**अदीर्घात् स्वरा**दिति। अथ सयोगान्तलोपो माभूत् त्वक्क् इत्यत्र प्रथमककारस 'सयोगस्यादौ'—इति लुकस्मान्न भवति। न च वाच्यमय द्वित्वादेशोऽनर्थक इति, अन्यत्र द्वित्वश्रुतेश्चरितार्थत्वात् इति। सत्यम्। अर्हस्वरस्येति र्होपादानात् व्यक्ति पदार्थ आश्रीयते। तत्र च ककारविषयस्य द्वित्वस्यानर्थक्य मा भूदिति न भवति। ननु 'लिलौ' इति सूत्रे द्विवचनेनेद ज्ञापितम् यथा सानुनासिकस्यापि निरनुनासिक एवादेश इति तत् कथ सानुनासिको यकार **सय्य्ँयत** इत्यत्रेति। सत्यम्। स एव सानुनासिको यकारो द्विरूपो भवति न त्वयं भिन्न आदेश· क्रियत इति सानुनासिक एव भवतीति। एकयापि चार्धकलया द्वावपि यकारौ सानुनासिकौ ज्ञायेते सानुनासिकयकारस्यैव द्वित्वापन्नत्वादिति एकैव कलोदाहरणे॥—**गो३त्त्रात**। गाव एन त्रासरिन्निति 'तिक्कृतौ नाम्नि' इति क्त॥—**इच्छन्त्येके** इति। इन्द्रगोमिचन्द्रप्रभृतय। म्रियते इति वर्या। 'वर्योपसर्य'—इति य। अत्र द्वित्वे कृते रलोपे च वार्येति स्यात्। डउ-

गोगान्तलोपो न भवति। *प्रथमत्वादिकं तु द्वित्वाभावाभावनाद्भवत्येव ॥३२॥ *अञ्वर्गस्यान्तस्थातः। १। ३।३३॥ *अन्तस्थातः परस्य जकारवर्जितस्य वर्गस्य स्थानेऽनु द्वे रूपे वा भवतः। उल्का। उल्का। वल्ल्मीकः। वल्मीकः। वृक्षव् करोति। वृक्षव् करोति। वर्गस्येति किम्। सव्यम्। अजिति किम्। हल्जकारो। अन्तस्थात इति किम्। भवान्मधुरः ॥ ३३ ॥ *ततोऽस्याः। १। ३। ३४॥ ततोऽञ्वर्गात् परस्या अन्तस्थायाः स्थाने द्वे रूपे वा भवतः। दध्य्यत्र। दध्यत्र। मध्व्वत्र। मध्वत्र। तत इति किम्। वाल्यम्। अस्या इति किम्। वाग् जयति॥ ३४ ॥ *शिटः प्रथमद्वितीयस्य। १। ३। ३५॥ शिटः परयोः प्रथमद्वितीययोः स्थाने द्वे रूपे वा भवतः। त्वं करोषि। त्वं करोषि। त्वं क्खनसि त्वं खनसि। कः क्खनति। कः खनति। कः प्पचति। कः पचति। क ꣳ क्खनति। क ꣳ खनति। क ꣳ प्फलति। क ꣳ फलति। कश्चरति। कश्चरति। कश्च्छादयति। कश्छादयति। कष्ट्टीकते। कष्टीकते। कष्ठकारः। कष्ठकारः। स्त्थाली। *स्थाली। स्फ्फीता। स्फीता। शिट इति किम्। भवान् करोति। प्रथमद्वितीयस्येति किम्। *आस्यम् ॥ अनुनासिकादप्यादेशरूपात् *केचिदिच्छन्ति। *त्वञ्च्छात्रः। त्वञ्छात्रः। इत्यादि ॥ ३५ ॥ *ततः शिटः। १। ३। ३६ ॥ ततः प्रथमद्वितीयाभ्यां परस्य शिटः स्थाने द्वे रूपे वा भवतः। तच्छ्शेते। तच्शेते। पट्ष्षण्डे। पट्षण्डे। तत्स्साधुः। तत्साधुः। वत्स्सः। वत्सः। क्ष्षीरम्। क्षीरम्। अप्स्सराः। अप्सराः। तत इति किम्। भवान् साधुः। शिट इति किम्। मथ्नाति। ख्यानति। ख्यानति॥ ३६ ॥ **न रात्स्वरे**। १। ३। ३७॥ रात्परस्य शिटः स्थाने स्वरे परे द्वे रूपे न भवतः। दर्शनम्। विमर्शः। कर्षति। वर्षति। *वृस्या इदं वार्स्यम्। कुसराया इदं कार्सरम्। रादिति किम्। तच्छ्शेते। पट्ष्षण्डे। वत्स्सः। स्वर इति इति किम्। *कश्र्यते। *वर्ष्र्यते। शिट इत्येव। अर्कः। वर्चः। 'ह्रादर्हस्वरस्य' —(१। ३। ३१) इति विकल्पे प्राप्ते प्रतिषेधः॥ ३७॥ **पुत्रस्यादिन्पुत्रादिन्याक्रोशे**। १। ३। ३८॥ आदिन्शब्दे पुत्रादिन्शब्दे च परे पुत्रशब्दसंबन्धि-

---

विधानस्य पुंसि विसर्गान्तस्य चरितार्थत्वात्नपुंसके तितउ इत्यत्र विभक्त्यन्तस्योकारस्य द्वित्वं स्यात् ॥—प्रथमत्वादिकमिति। पदान्यदनमिलादिषु ॥—अञ्—॥—अन्तस्थात इति। अनाद्यादित्वात्तत् ॥—ततो—॥ दध्य्यत्रेत्यादौ 'असिद्धं बहिरङ्गम्' इति न्यायात् अन्तरङ्गे द्वित्वे कर्तव्ये बहिरङ्गो यादेशोऽसिद्ध कस्मान्न भवति। न चास्यासिद्धत्वे सूत्रमिदमनर्थकमिति वाच्यम्। ध्यानमित्यादावनादेशरूपे यादौ तस्य सावकाशत्वात् इति। उच्यते। 'न सन्धिङीयक्विं'—इत्यत्र द्वित्वस्य सन्धिविधित्वेन स्थानिवद्भावप्रतिषेधे सिद्धे द्विग्रहणमसिद्धं बहिरङ्गमन्तरङ्ग इति न्यायस्य बाधनार्थम् इति द्वित्वमुपपद्यते। तथानेनात्र रस्य न द्वित्वम् अर्हस्वरस्येत्यधिकारात्। लस्य तु द्वित्वे कात्यायनीयादि द्रष्टव्यम् ॥—शिटः—॥ छल स्थाने इत्यत कर्तरि 'णा ज्वल'—इति णे वृत्तौ 'जातेरयान्त'—इति ङ्या—स्थाली। स्थालयतीति वा 'इर्मेभ्य इ' स्थाली ॥ अस्यत इति घ्यणि 'शिक्यास्य'—इति वा—आस्यम् ॥—केचिदिति। शाकटायनादय ॥—त्वञ्छात्र इति। त्वाम् छात्र इति स्थिते 'तो मुम'—इत्यनुनासिको जकार। तत छस्य द्वित्वे 'अघोषे प्रथम'—इति छस्य च ॥—तत—॥ ताभ्या तत। तच्छब्दस्यानन्तरपूर्ववस्तुपरामर्शित्वेन प्रथमद्वितीययोरनुवृत्ति इति ॥ 'शिक्यास्य'—इति पकारस्य फकारे कृते द्वितीयादपि सस्य द्वित्वे अफ्स्सरा इत्यपि दृश्यम्। नरा, ग्रुन्त सीदन्ति अस्यामिति पृषोदरादित्वात्—वृसी।—कश्र्यते इति णि-

नस्तकारस्याक्रोशविषये द्वे रूपे न भवतः । 'अदीर्घाद्विरामैकव्यञ्जने' ( १ । ३ । ३२ ) इति विकल्पे प्राप्ते प्रतिषेधः । पुत्रादिनी त्वमसि पापे । पुत्रपुत्रादिनी भव । आदिन्पुत्रादिनीति किम् । पुत्रहती । पुत्रहती । पुत्रजग्धी । पुत्रजग्धी । 'अनाच्छादजात्यादेर्नवा' (२ । ४ । ४७) इति वा ङीः । आक्रोश इति किम् । *पुत्रादिनी शिशुमारी । पुत्रादिनीति वा । पुत्रपुत्रादिनी *नागी । पुत्रपुत्रादिनीति वा ॥ ३८ ॥ ***म्नां धुड्वर्गेऽन्त्योऽपदान्ते** । १ । ३ । ३९ ॥ अन्विति वर्तते । अपदान्ते वर्तमानानां मकारनकाराणा धुट्संज्ञके वर्गे परे प्रत्यासत्तेर्निमित्तवर्गस्यैवान्त्योऽनु भवति । म गन्ता । गन्तुम् । शङ्किता । शङ्कितुम् । अञ्चिता । अञ्चितुम् । कुण्ठिता । कुण्ठितुम् । नन्दिता । नन्दितुम् । कम्पिता । कम्पितुम् । म्नामिति *बहुवचनं वर्णान्तरबाधनार्थम् । तेन कुर्वन्ति, कृपन्ति, विस्रम्भ., संरम्भः, इत्यत्र नकारस्य णत्वं बाधित्वा अनेन वर्गान्त्य एव भवति । क्रान्त्वा, भ्रान्त्वा, इत्यत्रापि नकारे कृते णत्वबाधनार्थं पुनर्नकारः । धुडिति किम् । आहन्महे । प्रहन्मः । धुड्वर्ग इति किम् । *गम्यते । हन्यते । अपदान्त इति किम् । भवान् करोति । अन्वित्यधिकारात् व्यङ्क्ता, व्यङ्क्तुमित्यत्राञ्जेर्गत्वे कत्वे च कृते पश्चात्कवर्गान्त्यः । अन्यथा चवर्गान्त्यः स्यात् ॥ ३९ ॥ ***शिड्हेऽनुस्वारः** । १ । ३ । ४० ॥ अपदान्ते वर्तमानाना म्नां स्थाने शिटि हकारे च परे अनुस्वार आदेशोऽनु भवति । म्, पुंसि । गंस्यते । न्, दंशः । सुदंशि कुलानि । वपूंषि । धनूंषि । यशांसि । पयांसि । गुडलिंहि । स्वनड्वांहि कुलानि । म्नामिति बहुवचनादव्ग्रहणमित्यत्र णत्वं दंश इत्यादौ ञत्वं च बाधित्वाऽनेनानुस्वार एव भवति । एवं सर्पींषि । सुदंशि । शिट इति किम् । गम्यते । हन्यते । अपदान्त इत्येव । भवान्साधुः । श्रेयान्हेतुः । अन्वित्येव । पिण्ढि । शिण्ढि । अत्र पिष्शिषोर्हौ तस्य धित्वे षस्य डत्वे च शिडभावान्नकारस्यानुस्वारो न भवति ॥४०॥ ***रो रे लुग्दीर्घश्चादिदुतः** । १ । ३ । ४१ ॥ अपदान्ते

---

गन्तस्य । एव **वर्ष्यत** इत्यपि । स्त्रीवत् पुंसोऽपि पुत्रादनाक्रोशे तत्रापि प्रतिषेधो भवत्येव । पुत्रादि भवेति । अभीक्ष्ण पुत्रानत्सीति 'व्रताभीक्ष्ण्ये' इति णिन् ॥—**पुत्रादिनी शिशुमारीति।** अध्यारोपेण हि निन्दाक्रोश । तत्त्वाख्याने तु तदसभव इति प्रतिषेधाभावात् 'अदीर्घात्'—इति द्वित्व भवत्येव ॥—**नागीति** । 'जातेरयान्त'—इति ङी ॥—**म्नां धुट्**—॥ यद्यत्र वर्गग्रहण न स्यात् तदा गन्तेत्यत्र थकार. स्यात् । तस्यापि तकारापेक्षयाऽन्त्यत्वात् इत्यव्यवस्थानिरासाय वर्गग्रहणमिति ॥—**निमित्तवर्गस्यैवेति** । मकारनकारापेक्षयाऽन्यस्य वर्णस्यान्त्यस्याभावात् इति ॥—**बहुवचनमिति** । अयमर्थ । वर्णग्रहणे जातिग्रहणमिति जातिनिर्देशे प्राप्ते बहुवचन व्यक्तिनिर्देशार्थम् तेन यावान् मकारो नकारश्चापदान्तस्तत्र सर्वत्र व्यक्त्यपेक्षया वैयर्थ्य मा भूदिति प्रवर्तमानोऽन्त्य कार्यान्तरबाधायै प्रभवति ॥—**गम्यते** । **हन्यते** इत्यत्र म्नोर्निमित्तयकारस्यान्त्यो र स्यात् ॥—**शिड्हे**—॥ ननु पिण्ड्ढि इत्यादौ श्नस्यालुक स्थानिवत्त्वादकारेण षस्य व्यवधानात् अनुस्वारो न प्राप्नोति किमन्वित्याश्रयणेन । नैवम् । 'न सधि'—इति सधिविधौ स्थानित्वनिषेधात् ॥ ननु हस्य शिट्सज्ञा कृत्वा शिट्यनुस्वार इत्येवोच्यताम् । सत्यम् । यदि हस्य शिट्सज्ञा कृत्वा इह हग्रहण न क्रियते तदा ओजढदित्यत्र 'अघोषे शिट' इति हलोपेऽनिष्ट रूप स्यादिति ॥—**रो रे** –॥ नन्वपदान्त इत्याधिकारात् अजर्घा अपास्पा अचोकू अचाखा अचाका अपापा इत्यादिष्वेव प्राप्नोति न तु स्वाराज्यमित्यादाविति । नैवम् । अदिदुत इति इद्ग्रहणादपदान्त इति नानुवर्तते । यत इकारातपरस्य रेफस्य रेफेऽपदान्ते सभवो नास्तीति । भिन्नस्थानिनिमित्तभणनाद्वा । किं पुनरिद सानुबन्धस्य कार्यिणो रेफस्य ग्रहण

इति नानुवर्तते। *रेफस्य रेफे परे लुग्भवति, अकारेकारोकाराणां *चानन्तराणां दीर्घो भवति। पुना रमते। प्राता रौति। अग्नी रथेन। नीरक्तम्। दूरक्तम्। पटू राजा। उच्चै रौति। अन्वित्येव। अहोरूपम्। अत्र पूर्वमेव रोरुत्वे रेफाभावाल्लुग्दीर्घाभावः सिद्धः ॥ ४१ ॥ ***ढस्तड्ढे** ।१।३।४२॥ तन्निमित्तो ढस्तड्ढः। ढकारस्य तड्ढे *परेऽनु लुग्भवति। अकारेकारोकाराणां च दीर्घो भवति। महतेः क्तौ, माढिः। लीढम्। मीढम्। गूढम्। तड्ढ इति किम्। मधुलिड्ढौकते। नायं लुप्यमानढकारनिमित्तो ढः। एवं *चकृड्ढ्वे, ललुविड्ढ्वे इत्यादावपि ढकारस्य द्वित्वे सति ढकारयोर्निमित्तनिमित्तिभावो नास्तीति लुग्न भवति। अदिदुत इत्येव। *आतृढम्। आवृढम्। अन्वित्येव। *लेढा। मोढा। अत्र गुणे कृते पश्चात् ढलोपः। अन्यथा हि पूर्वमेव ढलोपे दीर्घे च लीढा मूढेत्यनिष्टं रूपं स्यात् ॥ ४२ ॥ **सहिवहेरोच्चावर्णस्य** ।१।३।४३॥ सहिवहि इत्येतयोर्ढस्य तड्ढे परेऽनु लुग्भवति, अवर्णस्य चौकारो भवति। सोढा। वोढा। उदवोढाम्। अवर्णस्येति किम्। ऊढः ॥ ४३ ॥ ***उदः स्थास्तम्भः सः** ।१।३।४४॥ उदः परयोः स्थास्तम्भ इत्येतयोः सकारस्य लुग् भवति। उत्थाता। उत्थातुम्। उत्तम्भिता। उत्तम्भितुम्। उद इति किम्। संस्थाता। संस्ताम्भिता। स्थास्तम्भ इति किम्। उत्स्नोता। उत्स्कन्नः। स इति किम्। उच्चिष्ठति। उदस्थात्। उदस्तम्भत्। उच्चिस्तम्भिषति। प्रत्यासत्तेः स्थास्तम्भविशेषणस्यैवोदो ग्रहणादिह न भवति। ऊर्ध्वं *स्थानमस्योत्स्थानः॥ कथमुत्स्कन्दतीति उत्कन्दको रोग इति पृषोदरादित्वाद्भविष्यति

---

निरनुबन्धस्य वा। तत्राद्यपक्षे अग्नी रथेनेत्यादि सिध्यति न तु पुना रमते इत्यादि। द्वितीयपक्षे पुना रमते इत्यादि सिध्यति न त्वग्नी रथेनेत्यादि। न चोभयपरिग्रहे कश्चिन्नियामकमस्ति। उच्यते। अत्र 'रो रे'—इत्येकप्रयत्नेन सूत्रे उभयोच्चारणादेकत्र सानुबन्धस्यापरत्र निरनुबन्धस्य च निर्देशात् निरनुबन्धग्रहणे सामान्यग्रहणमिति न्यायाच्च सामान्येन ग्रहणं भवतीत्याह—**रेफस्येति** ॥—**अनन्तराणामिति**। ननु सामान्यनिर्देशादनन्तराणामेवेति कुतो लभ्यते इति चेदुच्यते। रे इत्युपश्लेषसप्तमीनिर्देशात् लुगिव दीर्घोऽपि रेफोपश्लिष्टस्यैव भवतीति ॥—**ढस्तड्ढे** ॥—**अन्विति**। इदं सूत्रं पदान्ते 'धुटस्तृतीय' इत्यस्य बाधकम् अपदान्ते तु 'तृतीयस्तृतीयचतुर्थे' इत्यस्य चेति ततोऽन्वित्यधिकार एतयोः सूत्रयोर्विषयं मुक्त्वा ज्ञातव्यः। अत एव मधुलिड्ढौकते इत्यत्र पूर्वं तृतीयत्वाभावे सति न द्व्यङ्गविकलतेति ॥—**चकृड्ढ्वे इति**। अत्र 'नाम्यन्तात्'—इति धस्य ढत्वे 'अदीर्घात्'—इति तस्य द्वित्वे 'तृतीयस्तृतीय'—इति ढस्य डः ॥—**आतृढम्। आवृढमिति**। तृहो तृहोत् हिंसायाम्, वृहोत् उद्यमने इति धातू 'वेटोऽपत' इतीण्निषेधः ॥—**लेढा इति**। नन्वत्र परत्वाद्गुणो भविष्यति किमन्वित्यधिकारेण। सत्यम्। ढलोपस्याल्पाश्रितत्वेनान्तरङ्गत्वात् प्रथमं ढलोपो दीर्घत्वं च प्राप्नोति ॥ ननु ढस्यासत्त्वात् सर्वमप्यसत्। ततो गुणो भविष्यति। सत्यम्। तथापि असिद्धं बहिरङ्गमन्तरङ्गे इति ढत्वे सति दीर्घत्वं स्यात्। 'वर्णो विधि'—इति न्यायेनान्तरङ्गं ढत्वम्। ततस्तस्मिन् विधेये गुणोऽसिद्धो यतो गुणोऽवर्णो विधिरिति। कार्यासत्त्वपक्षे इदमुक्तम्। शास्त्रासत्त्वपक्षे तु गुणे कृते ढत्वं भवति ॥—**उद** —॥ ननु उदस्थादित्यत्र सकारलोपः कस्मान्न भवति। न च वाच्यमडागमेन व्यवधानम्। यतोऽङ्गिनोऽङ्गं व्यवधायकं न भवति। सत्यम्। आवृत्त्या उद इति पदं स्थास्तम्भ सकारस्य च सम्बन्धनीयम् उदस्थात् उदस्तम्भत् इत्यनयोः सिद्ध्यर्थम्। उदस्थादित्यत्राडागमात्पूर्वमन्वित्यधिकारात् न भवति। अडागमे च सति पञ्चम्या निर्दिष्टे परस्य तच्चानन्तरस्यैव न व्यवहितस्येति न भवति ॥—**उत्स्थान** इत्यत्र स्थानस्य विशेषणम् उत् न तु तिष्ठतेरिति ॥—**तद** —॥

॥४४॥ *तदः सेः स्वरे *पादार्था । १ । ३ । ४५ ॥ तदः परस्य सेः स्वरे परे लुग्भवति, सा चेत्पादार्था—पादपूरणी भवति । सैष दाशरथी रामः सैष राजा युधिष्ठिरः ॥ सौषधीरनुरुध्यते । पादार्थेति किम् । 'स एष भरतो राजा' ॥ ४५ ॥ *एतदश्च व्यञ्जनेऽनग्नञ्समासे । १ । ३ । ४६ ॥ एतदस्तदश्च परस्य सेर्व्यञ्जने परे लुग्भवति, अकि *नञ्समासे च सति न भवति । एष ददाति । स ददाति । परमैष करोति । परमस ददाति । एतदश्चेति किम् । को दाता । यो *धन्यः । सेरित्येव । एतौ गच्छतः । तौ तिष्ठतः । *अनुबन्धग्रहणादिह न भवति । एतेषु चरति । तेषु याति । अनग्नञ्समास इति किम् । एषकः करोति । सको याति । 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति साकोऽपि प्राप्तिरिति प्रतिषेधः । अनेषो गच्छति । असो याति । व्यञ्जन इति किम् । एषोऽत्र । सोऽत्र ॥ ४६ ॥ **व्यञ्जनात्पञ्चमान्तस्थायाः सरूपे वा । १ । ३ । ४७ ॥** व्यञ्जनात्परस्य पञ्चमस्यान्तस्थायाश्च सरूपे वर्णे परे लुग्वा भवति । कुञ्चो ङ्ङौ कुङ्ङौ । कुङ्ङौ । अदितेरयमादित्यः । *स देवता अस्य आदित्यः स्थालीपाकः । आदित्य्य इति वा । व्यञ्जनादिति किम् । अन्नम् । भिन्नम् । सरूप इति किम् । वर्ण्यते । पित्र्यम् ॥ *केचित्तु पञ्चमान्तस्थायाः पञ्चमान्तस्थामात्रे लोपमिच्छन्ति न तु सरूप एव । तन्मते वभ्यते, वश्यते, मभ्यते, मश्यते, इत्यादावपि भवति ॥ *अपरे तु अभ्रवभ्रमभ्राणां त्रयाणां धातूनां धुटि रेफलोपं नित्यमिच्छन्ति । अभ्रतेः 'तिक्कृतौ नाम्नि' (५ । १ । ७१) इति तिकि, अब्धिः । वभ्रमभ्रोर्यङ्लुपि, वावब्धिः । मामब्धिः । *सिद्धान्ते तु, अभ्रितः । वावाभ्रितः । मामाभ्रितः ॥ ४७ ॥ *धुटो धुटि स्वे वा ।१।३।४८॥ व्यञ्जनात्परस्य धुटो धुटि स्वे परे लुग्वा भवति । *प्रत्तम् ।

---

तद इत्यनेन तदादेशस्य सस्य ग्रहणम् । अन्यथा व्यञ्जनात्सिलोप सिद्ध एव । अनुकरणत्वात्तद इत्यत्र त्यदाद्यत्वाभाव । शब्दार्थानुकरणे हि प्रकृतिवदनुकरणमिति न्याय प्रवर्तते । शब्दानुकरणे तु नेति । कथमिदमिति चेत् । 'तद से स्वरे'—इति सूत्रसूत्रणात् ॥ पादाय इय पादोऽर्थो यस्यामिति वा—**पादार्था** । ननु सोऽह तथापि तवेत्यस्मिन् प्रयोगे 'तद से स्वरे पादार्था' इत्यनेन प्रतिष्णातेन निमित्तस्वरे परत्रावतिष्ठमाने सति सेर्लुक्कथ न भवति । उच्यते । 'तद से स्वरे'—इति सूत्र 'रोर्य' इति सामान्यस्वरनिमित्तसूत्रविषये 'सो रु' इत्यस्य बाधक न पुन स्वरविशेषनिमित्तस्य 'अतोऽति रोरु' इत्यस्य विषये । कुत, सर्वत्रापि विशेषेण सामान्य बाध्यते न सामान्येन विशेष इति न्यायात् ॥—**एतद**—॥ प्रकृते पर श्रूयमाणश्चकार प्रकृत्यन्तरसद्वितीयता गमयन् पूर्वसूत्रश्रुतप्रकृत्यैव सद्वितीयता गमयति ॥ नञ समासो नञ्समासस्ततो द्वद्वगर्भो नञ्तत्पुरुष ॥—**नञ्समासे च सति न भवती**ति । अनेन नञ क्रियासबन्ध दर्शयन् अनग्नञ्समास इति प्रसज्यप्रतिषेधोऽयमिति दर्शयति । पर्युदासे हि सति 'नञ्युक्त तत्सदृशे'—इति न्यायेन नञ्समासादन्यत्रापि समास एव वर्तमानाभ्यामेतत्तच्छब्दाभ्या सिलोप स्यात् इति । अनग्नञ्समासे इति प्रतिषेधात् परमैष करोतीत्यादौ तदन्तादपि सेर्लुक् ॥ धन लब्धा 'धनगणाल्लब्धरि' इति ये—**धन्य** ॥—**अनुबन्धग्रहणादि**ति । अयमर्थ । व्यञ्जन इति विषयसप्तम्यामपि सेरिति इत्नुबन्धग्रहणात् अन्यानुबन्धसमुदायस्य लोपाभाव एतेषु चरतीत्यादौ । अथात्र परत्वादेत्वे पत्वे च कृते सकारस्याभावाल्लोपो न भविष्यति । सत्यम् । विशेषविहितत्वादेत्वषत्वाभ्या पूर्वमेव लोप स्यादिति । किच एतत्स्कुभ्नातीत्यादावपि स्यात् ॥—**व्यञ**— ॥ समाहारेऽपि सौत्रत्वाद्ह्रस्वाभाव ॥—**आदित्यो देवतास्येत्यादित्य** इति । अत्राकारलोपे लुक सधिविधित्वात् स्थानिवद्भावप्रतिषेधेऽनेन पक्षे यलुक् ॥—**केचित्त्वि**ति । चान्द्रप्रभृतय ॥—**अपरे त्वि**ति । शाकटायनादय ॥—**सिद्धान्त** इति । शुद्धपक्षे स्वमत इत्यर्थः । स्व इति कृते शार्ङ्ग इत्यादिष्वपि स्यात् ॥—**धुटो**— ॥—**प्रत्ता**मति । प्रपूर्वाद्ददातेरारम्भेऽर्थे

भन्त्तम् । अवत्तम् । अवत्त्तम् । अत्र त्रयस्तकारा मध्यमस्य वा लोपः । *शिण्ढि । शिण्ड्ढि । पिण्ढि । पिण्ड्ढि । भिन्थः । भिन्त्थः । धुट इति किम् । शार्ङ्गम् । *भार्ङ्गम् । धुटीति किम् । सक्थ्ना । सक्थ्ने । स्व इति किम् । तर्प्ता । दर्प्ता । व्यञ्जनादित्येव । बोद्धा । योद्धा ॥ ४८ ॥ *तृतीयस्तृतीयचतुर्थे ।१।३।४९॥ धुटां स्थाने तृतीये चतुर्थे च परे स्थानिप्रत्यासन्नस्तृतीयो भवति । मज्जति । भृज्जति । दग्धा । दोग्धुम् । पिण्ड्ढि । शिण्ड्ढि । योद्धा । योद्धुम् । लब्धा । लब्धुम् । तृतीयचतुर्थे इति किम् । लिख्यते । धुट इत्येव । वल्भते । पदान्ते 'धुटस्तृतीयः' (२।१।७६) इति अपदान्तार्थं वचनम् ॥ ४९ ॥ *अघोषे प्रथमोऽशिटः ।१।३।५०॥ शिड्वर्जितस्य धुटः स्थानेऽघोषे परे प्रथमो भवति । वाक्पूता । देवच्छत्रम् । षट् कुर्वन्ति । दृषत्कल्पः। ककुप्सु । भेत्ता । लप्स्यते । अघोषे इति किम् । भज्यते । भिद्यते । धुट इत्येव । भवान् खनति । कण्ठः । कन्था । अशिट इति किम् । श्र्योतति। कष्टीकते। पयस्सु ॥५०॥ *विरामे वा ।१।३।५१॥ विरामे वर्तमानस्याशिटो धुटः स्थाने प्रथमो वा भवति । वाक् । वाग् । षट् । षड् । तत् । तद् । ककुप् । ककुब् । विराम इति किम् । वागत्र । धुट इत्येव । *क्रुङ् । सुगण् । भवान् । त्वम् ॥ ५१ ॥ *न संधिः ।१।३।५२॥ उक्तो वक्ष्यमाणश्च विरामे संधिर्न भवति । दधि अत्र । ते आहुः । तत् लुनाति । भवान् लुनाति । कुर्वन् शेते । वृक्षस्य छाया । ब्राह्मणस्य छत्रम् । भवान् छादयति । नॄन् पाहि । कुण्डम् हसति । वृक्षव् याति । कुर्वन् आस्ते । विरामादन्यत्र तु *संहितायां संधिरेव । सा च—*संहितैकपदे नित्या नित्या *धातूपसर्गयो' ॥ नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ १ ॥ ५२ ॥ *रः पदान्ते विसर्गस्तयोः ।१।३।५३॥ पदान्ते वर्तमानस्य रेफस्य स्थाने विसर्ग आदेशो भवति, तयोर्विरामेऽघोषे च । वृक्षः । प्लक्षः । प्रातः । पुनः । अग्निः अत्र । पटुः इह । अघोषे, कः करोति । कः खनति । पुनः पचति । पुनः फलति । कः शेते । कः षण्डे । कः साधु । कश्चरति, कष्टीकते, कस्तरतीत्यादिषु

क्ते 'प्राद्दागस्त'—इति त्तादेश । अवदीयते स्म क्त । 'निविस्वन्ववात्' इति त्त ॥—शिण्ढि । पिण्ढीति । शिष्पिषो पञ्चम्या हौ 'रुधा स्वरात्'—इति श्नप्रत्यये 'श्नास्त्योर्लुग्' इति अलोपे 'हुधुट'—इति हेर्धिभावे 'तृतीयस्तृतीय'—इति तृतीयत्वे तवर्गस्येति ढत्वे 'म्ना धुट्'—इति णत्वेऽनेन पक्षे ढलोपे चेति ॥—भार्ङ्गमिति । भृगो 'भृवृभ्या नोऽन्तश्च' इति किति गे नागमे च भृङ्ग' तस्येदमित्यणि ॥—तृतीय—॥ लिख्यते इत्यत्र खस्य ग वल्भते इत्यत्र दस्य ल आसन्न प्राप्नोति ॥—अघोषे—ननु पयस्सु इत्यत्र 'शषसे शषस वा' इति विधानादपि न प्राप्नोति किमशिट इति वचनेन । सत्यम् । श्र्योततीत्याद्यर्थम् । तथाऽशिट इत्यभावे वृक्ष पुरुष इत्यादौ कसादि कादिरिति व्याख्यया विसर्गस्याप्यपञ्चमान्तस्थेति धुट्त्वे अवर्णहविसर्गकवर्ग्या कण्ठ्या इति कत्व स्यात् । श्र्योततीत्यादिप्रयोगत्रये यथासख्य चटता स्युरिति । अस्थि (स्ति) आस्ते इत्यादिषु च तकार स्यात् ॥—विरामे ॥ वैषयिकमिदमधिकरणम् ॥—क्रुङ् इत्यादि । चवर्गजो ञकार 'पदरुजविशस्पृशो घञ्' इत्यादौ दृश्य । क्रुङ् इत्यादिचतुष्टये कटनपा स्यु । घञ इत्यत्र च स्यादिति ॥—न सधि ॥—सहितायामिति । सधीयते वर्णा अस्यामिनि 'शीरीभू' इति किति ते सहिता वर्णाना परस्पर सनिकर्ष ॥—एकपद इति । विषयसप्तमी । ते भवन्तीत्यादौ एकपदे नित्य सहिता ॥—धातूपसर्गयोरिति । धातूपसर्गयो' प्रेलयतीत्यादौ नित्यसमुदितत्वात् समासस्यापि निरन्तरानेकपदात्मकत्वात् पदधातूपसर्गसमासाना नियमेनैकप्रयत्नोच्चार्य्यत्वाच्च विरामाभावान्नित्य सहितेति । वाक्ये तु सर्वत्रैकप्रयत्नोच्चार्यत्वस्यानियमात् विरामाभावे न सहितेति ॥—र पदान्ते—॥ विसर्ग. शब्दपुरोवर्ति

तु शादय एवापवादत्वाद्भवन्ति । पदान्त इति किम् । ईर्ते । अर्कः । सूर्पः । सर्पः ॥ कथं नृपतेरपत्यं नार्पत्यं, नृकुट्यां भवो नार्कुटः, तवकारः, प्राच्छैतीत्यादि । '*असिद्धं बहिरङ्गमन्तरङ्गे' इति वृध्व्यरारादेशाश्रयस्य रेफस्यासिद्धत्वाद्विसर्गो न भवति । एवं ᳲक ᳲप पावपि । अन्वित्यधिकारात् गीः, धूः, सजूःषु, आशीःषु इत्यादिषु दीर्घत्वे कृते पश्चाद्विसर्गः । अन्यथा हि पूर्वं विसर्गे कृते इरुरोरभावाद्दीर्घो न स्यात् ॥ ५३ ॥ *ख्यागि । १ । ३ । ५४ ॥ पदान्ते वर्तमानस्य रेफस्य ख्यागि परे विसर्ग एव भवति । कः ख्यातः । नमः ख्यात्रे । पूर्वेणैव सिद्धे नियमार्थमिदम् । तेन जिह्वामूलीयो न भवति ॥ । ५४ ॥ *शिट्यघोषात् । १ । ३ । ५५ ॥ *अघोषात्परे शिटि परतः पदान्ते वर्तमानस्य रेफस्य विसर्ग एव भवति । परुषः त्सरुकः । सर्पिः प्सातिः । सर्पिः प्सातम् । वासः क्षौमम् । अद्भिः प्सातम् । इदमपि नियमार्थम् । तेन सत्वषत्वᳲकᳲपा न भवन्ति ॥ ५५ ॥ व्यत्यये लुग्वा । १ । ३ । ५६ ॥ शिटः परोऽघोष इति व्यत्ययः । तस्मिन् सति पदान्ते वर्तमानस्य रेफस्य लुग्वा भवति । चक्षु श्च्योतति । पक्षे, चक्षुश्श्च्योतति । चक्षुः श्चोतति । क ष्ठीवति । कष्ष्ठीवति । कः ष्ठीवति । चेत स्खलति । चेतस्स्खलति । चेतः स्खलति । चक्षु स्पन्दते । चक्षुस्स्पन्दते । चक्षुः स्पन्दते । पुन स्पन्दते । पुनस्स्पन्दते । पुनः स्पन्दते ॥५६॥ *अरोः सुपि रः । १ । ३ । ५७ ॥ रुवर्जितस्य रेफस्य स्थाने सुपि परे रेफ एव भवति कार्यान्तरबाधनार्थः । गीर्षु । धूर्षु । वार्षु । द्वार्षु । *विसर्गषकारौ न भवतः । अरोरिति किम् । पयःसु । पयस्सु । अहःसु । अहस्सु । सुपीति किम् । गीः । धूः । र इत्येव । महत्सु ॥ ५७ ॥ *वाहर्पत्यादयः । १ । ३ । ५८ ॥ अहर्पत्यादयः शब्दा यथायोगमकृतविसर्गाः कृतोत्वाभावाश्च वा निपात्यन्ते । अहर्पतिः । अहःपतिः। अहᳲपति । *गीर्पतिः । गीःपति । गीᳲपति । धूर्पतिः। धूःपतिः। धूᳲपतिः। एषु पक्षे विसर्गाभावो निपात्यते। हे *प्रचेता राजन् । हे प्रचेतो राजन् । अत्र पक्षे उत्वाभावो निपात्यते । बहुवचनमाकृतिगणार्थम् ॥ ५८ ॥*शिट्याद्यस्य द्वितीयो वा । १ । ३ । ५९ ॥ आ-

---

विन्दुद्वय रूढे । तयोरित्यत्रैकाऽपि सप्तम्यर्थवशात् द्विधा भिद्यते । एका वैषयिकेऽधिकरणेऽपरा त्वौपश्लेषिक इति ॥--असिद्धमिति । प्रत्ययाश्रितत्वेन बहुस्थान्याश्रितत्वेन च बहिरङ्गता । वर्णमात्राश्रितत्वेन त्वन्तरङ्गता । पदादेश पदवदिति च वृद्ध्यादौ कृते रेफस्य पदान्तत्वम् इति ॥—ख्यागि । ख्याग्येव विसर्गनियमात् ख्याक् प्रथने इत्यस्मिन् जिह्वामूलीयोऽपि ॥—शिट्य—॥ अघोषात्परस्य पदान्ते रेफस्यासभवात् अघोषादिति शिटीत्यस्य विशेषणमित्याह—अघोषात्परे शिटीति ॥—अरो —॥—विसर्गेति । अन्तरङ्गत्वात् शषसे इति सत्व प्राप्नोति अत सकार इत्युक्तम् । ननु पयःसु इत्यादिषु 'सो रु ' इति कृते अन्तस्थाद्वारेण रेफात्पर षकारः कथ न भवति । सत्यम् । नित्यत्वात् 'र. पदान्ते '—इत्यादयो भवन्ति । रुवर्जनात् लाक्षणिकन्यायो निरनुबन्धन्यायश्चानित्यस्तेन ' र: कखकफयो '—इत्यादौ लाक्षणिस्यापि भवति ॥--वाह-- ॥ निपातनात्पदान्ताधिकारो निवर्तते तेनोत्तरसूत्रे न याति । तथा च खर्षीरमित्यादि सिद्धम् ॥--गीर्पतिरिति । अत्र क्षीरस्वामिना भ्रातुष्पुत्रादित्वात् षत्वमिष्यते ॥--प्रचेता राजन्निति । सबोधने विशेषज्ञापनाय सबोधनादन्यत्राप्युदाहार्यम् । तच्च समासे एव अन्यत्र तु अभ्वादेरिति दीर्घत्वे विशेषाभावः । यदुत्पलः । कर्मधारयात्समासान्ते प्रचेताराज प्रचेतोराज । शकटोऽप्याह--प्रचेतसो राजा प्रचेताराज । प्रचेतोराज । प्रचेता राजा अस्येति प्रचेताराजा प्रचेतोराजेति । आकृतिगणार्थत्वाद्बहुवचनस्य वारि चरति क्वचिदिति डे वार्चो हस । उषसि बुध्यते ' नाम्युपान्त्य '—इति के उषर्बुध' । अनयोः शत्वमुत्व च न भवति । व्यवस्थितवाशब्दाच न विकल्प. ॥—शिट्याद्य— ॥ अत्रायत्व प्रतिवर्गपञ्चक प्रथमाक्षरापेक्षम् तद-

अफ्सरा: । अप्सरा: । आद्यस्येति किम् । भवान् साधु: । शिटीति किम् । वाक् करोति । सत्यम् ॥ ५९ ॥ *तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ । १ ।
३ । ६० ॥ तवर्गस्य स्थाने शकारचवर्गाभ्यां षकारटवर्गाभ्यां च योगे यथासंख्यं चवर्गटवर्गावादेशौ भवतः स्थान्यासन्नौ । समुदायद्वयापेक्षया यथासंख्यार्थं तृती-
याद्विवचनम् । योगग्रहण *स्थानित्वाशङ्कानिरासार्थं पूर्वापरभावानियमार्थं च । शकारेण योगे, तच्शेते । तच्श्च्योतति । भवाञ्शेते । चवर्गेण, तच्चरति । *तच्छादयति ।
तज्जयति । *तज्झाषयति । तञ्ञकारेण । अत्र दकारस्य जकारे 'तृतीयस्य पञ्चमे' (१ । ३ । १) इति ञकारः । प्रशाञ् चरति । प्रशाञ् छिनत्ति । भवाञ् जयति ।
भवाञ् झाषयति । भवाञ् ञकारेण । पूर्वेण चवर्गेण, याच्ञा । यज्ञः । *राज्ञः ॥ *पूर्वेण शकारेण *परेण च षकारेण प्रतिषेधो वक्ष्यते । पूर्वेण तु षकारेण, पेष्टा । पेष्टुम् ।
पूष्णः, तृष्णः, पुष्णा, दोष्णा' इत्यादि णत्वेनापि सिध्यति । टवर्गेण, तट्टीकते । तट्ठकारेण । तड्डीनम् । तड्ढौकते । तण्णकारेण । अड्ड् । अड्डति । अड्टि । अ-
ट्टते । भवाण्डीनः । भवाण्ढौकते । भवाण्णकारेण । पूर्वेण टवर्गेण, ईट्टे ॥ तवर्गस्य चवर्गे कृते 'चजः कगम्' ( २ । १ । ८६ ) इति न भवति. 'असिद्धं बहिरङ्गम-
न्तरङ्गे', इति । तत्र च प्रत्ययाधिकारान्मज्जतीसादावपि न भवति । एवमुत्तरत्रापि *शकारस्य षत्वमपि न भवति ॥ ६० ॥ सस्य शषौ । १ । ३ । ६१ ॥
सकारस्य स्थाने श्चवर्गष्टवर्गाभ्यां योगे यथासंख्य शकारषकारावादेशौ भवतः । चवर्गेण, श्च्योतति । वृश्चति । मज्जति । लज्जते । भृज्जति । सज्जति । षकारेण,

---

पेक्ष च द्वितीयत्वमिति । तेन कचटतपाना खछठथफा शिटि भवन्ति । क्रमेणोदाहरणानि ॥--तवर्ग--॥--स्थानित्वाशङ्केत्यादि । अयमर्थ, योगग्रहण विना सहार्थतृतीयायाम् 'अवर्णस्येवर्णादिना'—
इत्यादिवत् श्चवर्गादेरपि स्थानित्वाशङ्का । परदिग्योगपञ्चम्या तु 'पञ्चम्या निर्दिष्टे परस्य' इति न्यायात्परस्यैव तवर्गस्य स्यात् न पूर्वस्येति योगग्रहणम् । ननु तवर्गस्य कार्यित्वात्तेन च विशिष्टवर्णसमुदाय-
स्याभिधानात् तच् शेते इत्यादिषु एकैकस्य तवर्गशब्दाप्रतीतौ कथ कार्यित्वमिति । सत्यम् । समुदायैकदेशस्यापि तदात्मकत्वात् ग्रामो दग्ध इतिवत् समुदायशब्देनाभिधानात् दस्यापि तवर्गत्वे सति दका-
रूपतवर्गस्यानेन जकार । यद्वा यथा ग्रामे वसतीत्यादौ ग्रामाद्येकदेशादेरपि ग्रामादिशब्दाभिधानम् । न हि देवदत्तादिरेवमभिधीयमानो ग्राम गृह वा व्याप्य वसति किंतु तदेकदेशे । तत्र स एवैकदेशो
ग्रामो गृह चोच्यते तद्वदत्रापीत्यदोष ॥—तच्छादयतीति । छदण् सवरणे इत्यस्य छदण् अपवारणे इत्यस्य वा युजादे स्वार्थणिजन्तस्य रुपम् ॥--तज्झाषयतीति प्रयोक्तृव्यापारे णिग् । 'हन्त्यर्थाश्च'
इति णिजन्तस्य वा रूपम् ॥—राज्ञ इति । शसि ङसौ ङसि च रूपम् । एव मज्ञा इत्यपि ॥—पूर्वेण शकारेणेति । 'न शात्' इत्यनेन निषेधो वक्ष्यते ॥—परेण षकारेणेति । 'षि तवर्ग-
स्य' इत्यनेन । अन्वित्यधिकारात् अड्डिडिषतीत्यत्र द्वित्वे कृते पश्चात् टवर्गः । अन्यथा अडिड्डिषतीत्यनिष्ट रूप स्यात् । एवमटिटिषते इत्याद्यपि । एवमुत्तरसूत्रेऽपि ॥—'चज' कगम्' इति न भ-
वतीति । तच् शेते तच्चरतीत्यादौ उभयाश्रितत्वाच्चत्व बहिरङ्ग पदमात्राश्रितत्वात् कत्वमन्तरङ्गम् इति ॥—शकारस्य षत्वमपीति । वृश्चतीत्यादौ 'शस्य शषौ' इति कृतस्य शकारस्य 'यजसृज'—
इत्यनेन धुडाश्रित षत्व प्रत्ययाभावान्न भवति इत्यर्थ ॥—सस्य—॥ ननु वृश्चतीत्यादौ दन्त्यापदिष्ट कार्य तालव्येऽपि भवतीति भणनात् 'नाम्यन्तस्था'—इति षत्व कथ न भवतीति । उच्यते । पा-

सर्पिष्षु । धनुष्षु । दोष्षु । अत्र सो रुत्वं, तस्य सत्वं, सुपः षत्वं, ततोऽनेन पूर्वसस्य षत्वम् । टवर्गेण, पापट्टिष । वंभणिष ॥६१॥ *न शात् ।१।३।६२॥ शकारात्परस्य *तवर्गस्य स्थाने यदुक्तं तन्न भवति । किमुक्तम् । चवर्गः । अश्नाति । अश्नुते । विश्न । प्रश्नः ॥६२॥ *पदान्ताट्टवर्गादनाम्नगरीनवतेः।१।३।६३॥ पदस्यान्ते वर्तमानाट्टवर्गात्परस्य नाम्नगरीनवतिसंबन्धिवर्जितस्य *तवर्गस्य सकारस्य च यदुक्तं तन्न भवति । किमुक्तम् । टवर्गषकारौ । षट्नयम् । मधुलिट्तरति । मधुलिड् धुडति । मधुलिड् दुनोति । मधुलिड् धुनोति । षण्नयाः । मधुलिट् सीदति । मधुलिट् साये । मधुलिट् स्यात् । मधुलिट्सु । टवर्गादिति किम् । चतुष्टयम् । सर्पिष्टम् । पदान्तादिति किम् । ईट्टे । अनाम्नगरीनवतेरिति किम् । षण्णाम् । षण्णगरी । षण्णवतिः । *नामित्यामादेशस्य ग्रहणादिह प्रतिषेधो भवत्येव । *षड्नाम ॥६३॥ षि तवर्गस्य ।१।३॥६४॥ पदान्ते वर्तमानस्य तवर्गस्य स्थाने षकारे परे यदुक्तं तन्न भवति । किमुक्तम् । टवर्गः । तीर्थकृत् षोडशः शान्तिः । भवान् षण्डः । षीति किम् । तट्टीकते । तवर्गस्येति किम् । सर्पिष्षु ॥६४॥ *लि लौ ।१।३।६५॥ पदान्ते वर्तमानस्य तवर्गस्य स्थाने लकारे परे स्थान्यासन्नावनुनासिकाऽननुनासिकौ लकारौ भवतः । तल्लुनाति । भवाल्ँ लुनाति । 'आसन्नः' (७।४।१२०) इत्येव सिद्धे द्विवचनमन्यत्राऽनुनासिकस्यापि स्थानेऽननुनासिकार्थम् । तेन 'वाष्टन आः स्यादौ' (१।४।५२) इत्यादावननुनासिक* एव भवति ॥६५॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ प्रथमस्याध्यायस्य तृतीयः पादः समाप्तः ॥३॥

चक्रे श्रीमूलराजेन नवः कोऽपि यशोऽर्णवः ॥ परकीर्तिस्रवन्तीनां न प्रवेशमदत्त यः ॥१॥

## चतुर्थः पादः

*अत आः स्यादौ जस्भ्याम्ये ।१।४॥१॥ स्यादौ जसि भ्यामि यकारे च परेऽतोऽकारस्याकारो भवति । *वृक्षाः । प्लक्षाः । *आभ्याम् ।

---

ठकाले यो दन्त्यसकारस्तस्य कृतत्वाभावात् इति । सर्पिष्षु इत्यादिषु पदान्तत्वात् नाम्यन्तस्थेत्यादिना षत्व न भवति प्रकृते सस्य ॥—न शात् ॥—तवर्गस्येति । असभवात् सस्येति न व्याख्यातम् ॥—पदान्तात्—॥-तवर्गस्येति । उत्तरत्र तवर्गस्येति भणनात् तवर्गस्य सस्य चेति लभ्यतेऽत्र ॥—नामित्यामादेशस्येति । अन्प्रत्ययान्तस्य घञन्तस्य च नमतेरवयव एक अपरश्चामादेश । अत्र य आमादेशो नाम् तस्यैवार्थवत्त्वात्प्रत्ययाप्रत्यययो प्रत्ययस्यैवेति न्यायाद्वा ग्रहणमित्याह—पड्नाम । नामशब्दो नकारान्तोऽकारान्तो वाव्यय इति ॥—लि लौ ॥—अनुनासिक एव भवतीति । विपरीतनियमस्तु निरनुनासिकस्य सानुनासिक इति 'हृदयस्य हृल्लास'—इत्यत्र हृल्लासेति करणान्न भवति । प्रायिक चैतज् ज्ञापकम् । तेन 'समानाना तेन दीर्घ' इत्यादौ आसन्न एव भवतीति ॥ इति प्रथमस्याध्यायस्य तृतीय पाद ॥ अत आ स्यादाविति— ॥ अत्र प्रत्ययाप्रत्यययोरिति सिद्धे स्यादिग्रहण 'णषमसत्परे'—इत्यादौ प्रयोजनार्थम् । तेन राजभ्यामित्यादौ नलोपस्य

*श्रमणाभ्याम्। *श्रमणाय। संयताय। अत इति किम्। मुनय। मुनिभ्याम्। स्यादाविति किम्। वाणान् जस्यतीति क्विप्। बाणजः। अग्नये। वृक्षयोः॥ १॥

*भिस ऐस्।१।४।२॥ अकारात्परस्य स्यादेर्भिसः स्थाने ऐस् इत्ययमादेशो भवति। श्रमणैः। संयतैः। अतिजरैः। *एसादेशेनैव सिद्धे ऐस्करणं 'संनिपातलक्षण'—न्यायस्यानित्यत्वज्ञापनार्थम्। *तेनातिजरसैरित्यपि सिद्धम्। अन्ये त्वतिजरैरित्येवेच्छन्ति॥ अत इत्येव। मुनिभिः। शालाभिः। दृषद्भिः। स्यादेरित्येव। चैत्रभिस्सा*। ओदनं भिस्सा॥ २॥

*इदमदसोऽक्येव।१।४।३॥ इदम् अदस् इत्येतयोरक्येव सत्यकारात्परस्य भिस ऐस् भवति। इमकैः। अमुकैः। अक्येवेति किम्। एभिः। अमीभिः। पूर्वेणैव सिद्धे नियमार्थमिदम्। *एवकारस्त्विष्टावधारणार्थः॥ ३॥

एद्बहुस्भोसि।१।४।४॥ बह्वर्थविपये सकारादौ भकारादावोसि च स्यादौ परेऽकारस्यैकारादेशो भवति। एषु। एषाम्। अमीषाम्। सर्वेषाम्। एभिः। एभ्यः। वृक्षेभ्य। श्रमणयोः। संयतयोः। वह्विति किम्। वृक्षस्य। वृक्षाभ्याम्। स्भोसीति किम्। सर्वे। अत इत्येव। साधुषु। साधुभ्यः। खट्वासु। खट्वाभ्यः। अग्न्योः। दृषदोः॥ ४॥

*टाङसोरिनस्यौ।१।४।५॥ अकारात्परयोष्टाङसोः स्याद्योः स्थाने यथासङ्ख्यमिन स्य इत्येतावादेशौ भवतः। वृक्षेण। अतिजरेण। वृक्षस्य। आतिजरस्य। अत इत्येव। अतिजरसा। अतिजरसः। अत्र परत्वान्नित्यत्वाच्च प्रागेव जरसादेशे कृते अकारान्तत्वाभावः॥ *अन्ये तु प्रागेवेनादेशं 'संनिपातलक्षण'—न्यायस्यानि-

---

स्यादिविधो विधेयेऽसिद्धत्वादाकारो न भवतीति। न चात्र स्यादिग्रहणाभावे 'त्रिचतुर–' इत्यादिविहितस्य स्यादेर्ग्रहण भविष्यति। यतस्तत्र तस्य ग्रहणेऽपि न किमपि फलम्। अन्यच्च स्यादिग्रहणे शुचिशब्दात् ङ्या प्रत्ययत्वात् 'ङित्यदिति' इत्येत्व प्राप्त निषिध्यते। किञ्चात्र स्यादिग्रहणाभावे वन्य इत्यत्रापि 'अवर्णेवर्णस्य' इत्येतत् बाधित्वाकार स्यात्। यद्वा इत्थ चालना प्रत्ययाप्रत्यययोरिति न्यायेन सिद्धे स्यादिग्रहण 'णषमसत्'—इति सूत्रेऽसदिति कार्यार्थम्। तेन राजभ्यामिति सिद्धम्। इद च न वक्तव्य यत् वने साधुस्तत्र साधौ ये प्रत्यये आकार प्राप्नोतीति स्यादिग्रहण, यतो जस्भ्यासाहचर्यात् यकारोऽपि स्यादेरेव लप्स्यते किं स्यादिग्रहणेन। सत्यम्। तर्हि अधिकारार्थम् तेन शुची स्त्रीत्यादौ ङीप्रत्यये 'ङित्यदिति' इत्येकारो न भवतीति॥ —वृक्षा इति। अत्र जसि अपवादत्वात् समानदीर्घत्वबाधकस्य 'लुगस्यादेत्यपदे' इत्यस्य बाधकोऽयमाकार॥—आभ्यामिति। इदशब्दस्य अतते 'क्वचित्' इति डे अप्रकृतेर्वा सिद्धम्॥—श्रमणाभ्यामिति। स्यादे पूर्वमेकपदत्वाभावात् कथ 'रषृवर्णे'—इति णत्व श्रमणप्रकृते। उच्यते। भाविनि भूतवत् इति न्यायाद्भवति॥—श्रमणायेति। अकारसंनिपातेन विधीयमानो यकारस्तद्विघाताय कथ प्रभवतीति न वाच्यम्। यग्रहणवैयर्थ्यप्रसङ्गात्॥—भिस ऐस्॥—एसादेशेनैवेति। एसादेशे कृते 'लुगस्य'—इति तु न वाच्यम्। विधानसामर्थ्यात्। अन्यथा यदि देवैरित्यभीष्टं स्यात्तदा इसिति कुर्यात्॥—अतिजरसैरिति। एकदेशविकृतस्यानन्यत्वात् कृतह्रस्वोऽपि जराशब्द एवेति॥ भिस्सटेति। प्साक् इत्यस्याभिपूर्वस्याभिप्सायते इति 'उपसर्गादातः' इति अङि पृषोदरादित्वादभेरकारलोपे पकारस्य सकारे आपि लक्ष्यानुरोधात् विकल्पेन टागमे भिस्सा भिस्सटा॥- इदमदसो— ॥—इष्टावधारणार्थ इति। तेन प्रत्ययनियमो न भवति। तदभावे च तकैः विश्वकैरित्यादि सिद्धम्॥—टाङसो—॥—अन्ये त्विति। यदि हि अतिजरसिनेत्येतत् सूत्रकारस्य नाभिमत स्यात् तदा टा इत्येतस्य नकारादेशमेव कुर्यात्। तत्रापि एत्वे कृते वृक्षेणेत्यादि सिध्यत्येव। कथमेत्वमिति चेत् एद्बहु-

त्यत्वाश्रयणात्पश्चाज्जरसादेश चेच्छन्तोऽतिजरसिनेत्यपि मन्यन्ते ॥ ५ ॥ ***ङेङस्योर्यातौ** । १ । ४ । ६ ॥ अकारात्परयोर्ङेङसि इत्येतयोर्यथासंख्यं य आत् इत्येतावादेशौ भवतः । वृक्षाय । वृक्षात् । अतिजराय । अतिजरात् । अत इत्येव । अतिजरसे अतिजरसः ॥ केचित्तु प्रागेवादादेशे जरसादेशमिच्छन्तोऽतिजरसादित्यपि मन्यन्ते ॥ ६ ॥ ***सर्वादेः स्मैस्मातौ** । १ । ४ । ७ ॥ सर्वादेरकारान्तस्य संबन्धिनोर्ङेङस्योर्यथासंख्यं स्मै स्मादित्येतावादेशौ भवतः। सर्वस्मै । *परमसर्वस्मै । सर्वस्मात् । परमसर्वस्मात् । असर्वस्मै । असर्वस्मात् । किंसर्वस्मै । किंसर्वस्मात् ॥ एवं *विश्वस्मै । विश्वस्मात् । उभशब्दस्य द्विवचन *स्वार्थिकप्रत्ययविषयत्वात्स्मैप्रभृतयो न भवन्ति । गणपाठस्तु हेत्वर्थप्रयोगे सर्वविभक्त्यर्थः । उभौ हेतू १ । उभौ हेतू २ । उभाभ्यां हेतुभ्याम् ३ । उभाभ्या हेतुभ्याम् ४ । उभाभ्या हेतुभ्याम् ५ । उभयोर्हेत्वोः ६ । उभयोर्हेत्वो ७ इति । उभयस्मै । उभयस्मात् । अन्यस्मै । अन्यस्मात् । अन्यतरस्मै । अन्यतरस्मात् । डतरग्रहणेनैव सिद्धेऽन्यतरग्रहणं डतमप्रत्ययान्तस्यान्यशब्दस्य सर्वादित्वनिवृत्त्यर्थम् । अन्यतमाय । अन्यतमं वस्त्रम् । अन्यतमे ॥ एके त्वाहुः— ' नायं डतरप्रत्ययान्तोऽन्यतरशब्दः, किं तु अव्युत्पन्नस्तरोत्तरपदस्तरवन्तो वा ' तन्मते डतमान्तस्याप्यन्यशब्दस्य सर्वादित्वम । अन्यतमस्मिन् । इतरस्मै । इतरस्मात् । डतरडतमौ प्रत्ययौ । तयोः स्वार्थिकत्वात्प्रकृतिद्वारेणैव सिद्धे पृथगुपादानमत्र प्रकरणेऽन्यस्वार्थिकप्रत्ययान्तानामग्रहणार्थमन्यादिलक्षणदार्थं च । कतरस्मै । कतमस्मै । यतरस्मै । यतमस्मै । ततरस्मै । ततमस्मै । एकतरस्मै । एकतमस्मै । इह न भवति । सर्वतमाय । सर्वतमात् । त्वशब्दोऽन्यार्थः । त्वस्मै । त्वस्मात् । त्वच्छब्दः समुच्चयपर्यायः । तस्य स्मायादयो न संभवन्तीति हेत्वर्थयोगे सर्वविभक्तित्वमक्प्रत्ययश्च प्रयोजनम् । त्वतं हेतुम् । त्वता हेतुना वसति । अज्ञातात्त्वतस्त्वकतः । नेमशब्दोऽर्धार्थः । नेमस्मै । नेमस्मात् । समसिमौ सर्वार्थौ । समस्मै । समस्मात् । सिमस्मै । सिमस्मात् । सर्वार्थत्वाभावे न भवति । समाय देशाय । समादेशाद्धावति । *स्वाभिधेयापेक्षे चावधिनियमे व्यवस्थापरपर्याये

---

स्मोसीत्यत्र टावचनप्रक्षेपात् । अत्र जयादित्य । यथा तु भाष्य तथा नैतल्लक्ष्यते ॥—**ङेङस्यो** —॥ नन्वत्र अत् इत्येव क्रियताम् किं दीर्घकरणेन । नचैव कृते ' लुगस्या '—इति प्राप्स्यतीति तदा हि त् इत्येव कुर्यात् । सत्यम् । मतान्तरेऽतिजरसादित्यपि मन्यते तत्सिद्ध्यर्थं दीर्घकरणम् । दीर्घकरणाच्च स्वमतेऽपि समतमिति बोध्यम् ॥—**सर्वादे** —॥—**परमसर्वस्मा**यिति । स्याद्याक्षिप्तस्य नाम्न सर्वादिविशेषणात् विशेषणेन च तदन्तविधेर्भावात् न सर्वादिरिति द्वन्द्वनिषेधाद्वा ग्रहणवता नाम्ना न तदन्तविधिरित्यस्यानुपस्थानात् तदन्त परमसर्वस्मायित्युदाहृतम् । केवलस्य व्यपदेशिवद्भावात् तदन्तत्व दृश्यम् ॥—**विश्वस्मा**यिति । सर्वशब्दसाहचर्याद्विश्वशब्दस्यापि समस्तार्थस्यैव ग्रहण न तु जगदर्थस्य ॥—**स्वार्थिकप्रत्यये**ति । इत्यवदतोऽयमाशय । स्वार्थिकप्रत्ययोऽपि गणपाठफलमिति । सिमोऽश्वाद्यर्थोऽपि ॥—**अधराणी**ति । शब्दरूपापेक्षया नपुसकनिर्देशो नार्थापेक्षया । तेन स्त्रीपुनपुसकेषु सर्वेष्वप्यर्थेषु सर्वादित्वम् इति ॥—**स्वाभिधेये**ति । पूर्वादीना शब्दानां स्वाभिधेयो दिग्देशकालस्वभावोऽर्थ । तमपेक्षते य स स्वाभिधेयापेक्ष । चोऽवधारणे । दिगादीना ह्यर्थाना पूर्वादिशब्दाभिधेयाना यत् पूर्वादित्व तत् नियमेन क चिदवधिमपेक्ष्य सपद्यते न त्ववधिनिरपेक्षम् । तथा हि—पूर्वस्य देशस्य यत्पूर्वत्व तत्पर देशमवधिमपेक्ष्य भवति । परस्यापि यत्परत्व तत् पूर्वदेशमपेक्ष्य भवति । तस्मात् पूर्वादिशब्दवाच्यापेक्षणेऽवश्य केनचिदवधिना भाव्यम् । तत्र तस्यैवावधेर्य पूर्वादिशब्दाभिधेयापे-

। *पूर्वस्मै । पूर्वस्मात् । परस्मै । परस्मात् । अवरस्मै । अवरस्मात । दक्षिणस्मै । दक्षिणस्मात् । उत्तरस्मै ।
गम्यमाने पूर्वपरावरदक्षिणोत्तरापराधराणि* । *पूर्वस्मै । पूर्वस्मात् । परस्मै । परस्मात् ॥ व्यवस्थाया अन्यत्र न भवति । दक्षिणाय गाथकाय देहि । प्रवीणायेत्यर्थः । *दक्षिणायै द्विजाः
उत्तरस्मात् । अपरस्मै । अपरस्मात् । अधरस्मै । अधरस्मात् ॥ व्यवस्थाया अन्यत्र न भवति । यदात्मने रोचते तदात्मीयाय ददातीत्यर्थः । ज्ञातिधन-
स्पृहयन्ति ॥ आत्मात्मीयज्ञातिधनार्थवृत्तिः स्वशब्दः । आत्मात्मीययोः, यत्स्वस्मै रोचते तत्स्वस्मै ददाति । *वहिर्भावेन वाह्येन वा योगे उपसंख्याने उपसंवीयमाने चार्थे वर्तमानो-
योस्तु न भवति । स्वाय दातुं स्वाय स्पृहयति । ज्ञातये दातुं धनाय स्पृहयतीत्यर्थः । चण्डालादिगृहयुक्ताय वा नगराभ्यन्तरगृहायेत्यर्थ. ।
ऽन्तरशब्दो, न चेद् वहियोगेऽपि *पुरि वर्तते । अन्तरस्मै गृहाय । नगरवाह्याय चाण्डालादिगृहायेत्यर्थः । पुरि तु न भवति । अन्तरायै पुरे क्रुध्यति ।
अन्तरस्मै पटाय । पटचतुष्टगे तृतीयाय चतुर्थाय वेत्यर्थः । प्रथमद्वितीययोर्वहियोगेणैव सिद्धत्वात् । मध्यादित्यर्थः । त्यस्मै । तस्मै । यस्मै । अमुष्मै ।
चण्डालादिपुर्यै इत्यर्थः । वहिर्योगोपसंव्यानादेरन्यत्र तु न भवति । अयमनयोर्ग्रामयोरन्तरात्तापस आयातः । (द्वौ हेतू) २ । *द्वाभ्यां हेतुभ्याम् ३ । द्वयोर्हेत्वोः २ । अज्ञाते
अस्मै । एतस्मै । एकस्मै । द्वियुष्मद्भवत्वस्मदां स्मायादयो न संभवन्तीति *सर्वविभक्त्यादयः प्रयोजनम् । (द्वौ हेतू) २ । भवद्भ्यां हेतुभ्याम् ३ । भवतोर्हेत्वोः २ । भवकान् । भवा-
द्वे, द्वके स्त्रियौ कुले वा । द्वकौ पुरुषौ । युवाभ्यां हेतुभ्याम् ३ । युवयोर्हेत्वोः २ । युवकाभ्याम् । युष्मादृशः । भवतोऽपत्यं भावतायनिः ।
दृशः । स च भवांश्च भवन्तौ । अत्र त्यदादित्वात्परत्वाच्च भवच्छेषः । भवान् पुत्रोऽस्येति भवत्पुत्रः । अत्र सर्वादित्वात्पूर्वनिपातः । भवन्तमञ्चतीति क्विपि, भवद्र्यङ् । अत्र 'सर्वादिविष्वग्देवाड्डद्रिः क्व्यञ्चौ'
अत्र त्यदादित्वादायनिञ् । भवत्याः पुत्रो भवत्पुत्रः । अत्र सर्वादित्वात्पुंवद्भावः । भवती । भवान् । आवाभ्यां हेतुभ्याम् ३ । आवयोर्हेत्वोः २ । आवकाभ्याम् । अ-
( ३ । २ । १२२ ) इति डद्र्यागमः । उकारो नागमार्थो ङ्यर्थो दीर्घार्थश्च ।

---

। यो हि पूर्वादिशब्दाभिधेयादर्थादन्यस्यावधिभूतस्य
क्षोऽवधिभाव एकान्तिक स नियमो व्यवस्थापरपर्याय । तस्मिन् गम्यमाने पूर्वादीना शब्दाना स्वाभिधेय एव वर्तमानाना सर्वादिकार्यम्, न तु वाच्ये । अवधिमति दिगादिल
नियम स कथ पूर्वादिशब्दवाच्यो भविष्यति इति । अतस्तस्मिन्नान्तरीयकतया गम्यमाने पूर्व पर अवर दक्षिण उत्तर अपर अधर इत्येतानि सप्त शब्दरूपाणि सर्वादीनि भवन्ति । धर्मे वहिष्ट्वे धर्मिणि च वहिर्भव वहि शब्द ।
क्षणे वर्तमानानि पूर्वादीनि सर्वादीनि भवन्ति इत्युदाहरति—पूर्वस्मै इत्यादि ॥—दक्षिणायै इति । यज्ञकर्मकृता वेतनदान दक्षिणा ।—वहिर्भावेनेति । यदा अकारान्त ई-
अन्त रातीति 'आतो डोऽह्वावा'—इति ड ॥—पुरि वर्तते इति । पुरि इति शब्दप्रधानो निर्देश । यदा अन्तरशब्दस्य पुरव्यञ्जनान्तो वाच्यो भवति तदा सर्वादित्वस्य निषध । तृतीया प्रारभ्यात्रोदाहरणानि दर्शितानि ।
कारान्तो वा पुर पुरी द्वाद्यश्च वाच्या भवन्ति तदा सर्वादित्वमस्त्येव ॥—द्वाभ्यामिति । 'सर्वादे सर्वा' इत्यत्र मतद्वयाभिप्रायेण प्रथमाद्वितीयावर्जनात् । अत्र सर्वमादीयते गृह्यतेऽभि-
स्वमते द्वौ हेतू इत्यादि भवत्येव ॥—सर्वविभक्त्यादय इति । आदिशब्दाद्यथायोगमेकशेषपूर्वनिपातपुंवद्भावडद्रि आत् आयनिञ् मयट् अक प्रयोजनानि ज्ञायन्ते इति । तदा प्रसिद्धप्रवृत्तिनिमित्तपरित्यागात्स्वरूपमात्रोप-
धेयत्वेन येनेत्यन्वर्थाश्रयणात् सर्वेषा यानि नामानि तानि सर्वादीनि । सञ्ज्ञोपसर्जने च विशेषेऽवतिष्ठेते । तथाहि यदा सर्वशब्द सञ्ज्ञात्वेन नियुज्यते

स्मादशः । कस्मै । कस्मात् । सर्वेऽपि चामी संज्ञायां सर्वादयो न भवन्ति । तेनेह न भवति । सर्वो नाम कश्चित् । सर्वाय । सर्वात् । उत्तराय कुरवे स्पृहयति । अत इत्येव । भवते । भवतः । सर्वादेरिति षष्ठीनिर्देशेन तत्सबन्धिविज्ञानादिह न भवति । प्रियाः सर्वे यस्य तस्मै प्रियसर्वाय । सर्वानतिक्रान्तायातिसर्वाय । द्वावन्यावस्य तस्मै द्व्यन्याय । त्र्यन्याय । प्रियपूर्वाय ॥ सर्व, विश्व, *उभ, *उभयट्, अन्य, अन्यतर, इतर, *डतर, डतम, *त्व, *त्वत्, नेम, समसिमौ सर्वार्थौ, पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम्, स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंख्यानयोरपुरि, सद, तद्, यद्, अदस्, इदम्, एतद्, एक, द्वि, युष्मद्, भवतु, अस्मद्, किम्, इत्यसंज्ञायां सर्वादिः । उभयडिति टकारो ङ्यर्थः । उभयी दृष्टिः ॥ ७ ॥ **ङेः स्मिन्** । १ । ४ । ८ ॥ सर्वादेरकारान्तस्य संबन्धिनः सप्तम्येकवचनस्य ङेः स्थाने स्मिन्नित्ययमादेशो भवति । सर्वस्मिन् । विश्वस्मिन् । अत इत्येव । भवति । सर्वादेरित्येव । सर्वो नाम कश्चित् । सर्वे । समे देशे धावति । तत्संबन्धिविज्ञानादिह न भवति । प्रियसर्वे । अतिविश्वे ॥ ८ ॥ **जस इः** । १ । ४ । ९ ॥ सर्वादेरकारान्तस्य संबन्धिनो जसः स्थाने इकार आदेशो भवति । एकवर्णोऽपि 'प्रत्ययस्य' ( ७ । ४ । १०८ ) इति सर्वस्य भवति । सर्वे । विश्वे । उभये । ते । अत इत्येव । भवन्तः । सर्वाः । तत्संबन्धिविज्ञानादिह न भवति । प्रियसर्वाः पुमांसः । सर्वाणि कुलानि इत्यत्र तु परत्वान्नपुंसके शिरेव ॥ ९ ॥ ***नेमार्धप्रथमचरमतयायाल्पकतिपयस्य वा** । १ । ४ । १० ॥ नेमादीनि नामानि । *तयायौ प्रत्ययौ । तेषामकारान्तानां संबन्धिनो जसः स्थाने इर्वा भवति । नेमस्य प्राप्ते इतरेषामप्राप्ते विभाषा । नेमे । नेमाः । अर्धे । अर्धाः । प्रथमे । प्रथमाः । चरमे । चरमाः । *द्वितये । द्वितयाः । त्रितये । त्रितयाः । द्वये । द्वयाः । त्रये । त्रयाः । उभयट्शब्दस्य त्वयट्प्रत्ययरहितस्याखण्डस्य सर्वादौ पाठात्पूर्वेण नित्यमेवेत्वं भवति । उभये । अल्पे । अल्पाः । कतिपये । कतिपयाः । परमनेमे । परमनेमाः । इत्यादि । तत्संबन्धिविज्ञानादिह न भवति । प्रियनेमाः । अतिनेमाः । स्वार्थिकप्रत्ययान्ताग्रहणादिह न भवति । अर्धकाः । सर्वादेरित्येव । नेमा नाम केचित् । *व्यवस्थितविभाषाविज्ञानादर्धादीनामपि संज्ञायां न भवति । *अर्धा नाम केचित् । अत इत्येव । नेमाः स्त्रियः ॥ १० ॥ ***द्वन्द्वे वा** । १ । ४ । ११ ॥ द्वन्द्वे समासे वर्तमानस्याकारान्तस्य सर्वादेः संबन्धिनो जसः स्थाने इर्वा भवति । पूर्वोत्तरे । पूर्वोत्त-

---

कारी प्रवर्तत इति विशेष एवावतिष्ठते । उपसर्जनमपि जहत् स्वार्थमजहद्वाऽतिक्रान्तार्थविशेषणतामापन्नम् अतिसर्वायेत्यादावतिक्रान्तार्थवृत्ति भवति । एव बहुव्रीहावपि प्रियसर्वाय द्व्यन्यायेत्यादावन्यपदार्थसक्रमाद्विशेषार्थवृत्ति । वाक्ये त्वसश्लिष्टार्थत्वात् स्वार्थमात्रं प्रतिपादयतो न विशेषेऽवस्थानमिति स्यात्सर्वादित्वम् । उभत् पूरणेऽतो 'नाम्युपान्त्य'—इति के **उभ** । तत्पूर्वाद्याते 'आतो डोऽह्वावाम' इति डे निपातनात् टित्वे **उभयट्** ॥—**डतरेति** । प्रत्ययानुकरणम् ॥—**त्व** ॥ त्वित्वरिषु सम्भ्रमेऽत 'क्वचित्' इति डे ॥—**त्वत्** । अस्यैव धातो 'शश्वत्वेहत्साक्षादादय' इति निपातनात् ॥—**नेमार्धप्रथमेति** ॥—**तयेति** । तयि रक्षणे च, अयि गतावित्याभ्यामचि तयायौ शब्दावपि स्त । पर व्याख्यानात् तयायौ प्रत्ययौ । तयोश्च केवलयोरसभवात् तदन्तस्य कार्यं दर्शयति—**द्वितये** इत्यादि ॥ व्युत्पत्तिपक्षेऽपि तयट्साहचर्यात् अयस्य तद्धितस्य ग्रहणम् न तु 'गयहृदय'—इत्यौणादिकस्य॥—**व्यवस्थितविभाषेति** । व्यवस्थित मर्यादानतिक्रान्त प्रयोगजात विशेषेण भाषते इति॥—**अर्धा नाम केचिदिति** । नामेत्यदन्तमव्ययम् । नामनाम्ना सज्ञया नाम प्रसिद्धार्थो वा । केचित् वर्तन्ते किं नाम अर्धा नाम तदा क्लीब ॥—**द्वन्द्वे वा** ॥ कतरे च दशनाश्चेति कृते द्वद्वस्योभय-

दन्तकतमे । दन्तकतमाः । परमकतरकतमे । परमकतरकतमाः । तत्संबन्धिविज्ञानादिह न भवति । प्रियकतरकतमाः । *वस्त्रान्तरवसनान्तराः । उत्तरेण निषेधे प्राप्ते प्रतिप्रसवार्थो योगः ॥ ११ ॥ *न सर्वादिः । १ । ४ । १२ ॥ द्वन्द्वे समासे सर्वादिः सर्वादिर्न भवति । सर्वं *सर्वादिकार्यं न भवतीत्यर्थः । पूर्वापराय । पूर्वापरात् । पूर्वापरे । कतरकतमानाम् । दक्षिणोत्तरपूर्वाणाम् । अत्र 'सर्वादयोऽस्यादौ' ( ३ । २ । ६२ ) इति पुंवद्भावो भवत्येव । तत्र भूतपूर्वस्यापि सर्वादेर्ग्रहणात् । *कतरकतमकाः । अत्र सर्वादित्वनिषेधादक्प्रत्ययाभावे कप्प्रत्यये सति स्वार्थिकप्रत्ययान्ताग्रहणाद् 'द्वन्द्वे वा' (१ । ४ । ११) इति जस इर्न भवति ॥ १२ ॥ *तृतीयान्तात्पूर्वावरं योगे । १ । ४ । १३ ॥ पूर्व अवर इत्येतौ सर्वादी तृतीयान्तात्पदात्परौ *योगे संबन्धे सति सर्वादी न भवतः । मासेन पूर्वाय । *मासपूर्वाय । संवत्सरेणावराय । संवत्सरावराय । मासेनाऽवराः । मासवराः । तृतीयान्तादिति किम् । ग्रामात्पूर्वस्मै । पूर्वस्मै मासेन । अवरस्मै पक्षेण । पूर्वावरमिति किम् । मासपरस्मै । योगे इति किम् । यास्यति चैत्रो मासेन पूर्वस्मै दीयतां कम्बलः ॥ १३ ॥ *तीयं ङित्कार्ये वा । १ । ४ । १४ ॥ द्वितीयप्रत्ययान्तं शब्दरूपं ङिता ङेङसिङसृङीना कार्ये कर्तव्ये वा सर्वादि भवति । द्वितीयस्मै । द्वितीयाय । द्वितीयस्यै । द्वितीयायै । द्वितीयस्मात् । द्वितीयात् । द्वितीयस्याः द्वितीयायाः स्वम् । द्वितीयस्मिन् । द्वितीये । द्वितीयस्याम् । द्वितीयायाम् । एवं तृतीयस्मै । तृतीयाय इत्यादि । ङित्कार्ये इति किम् । नत्रैव सर्वादित्वं यथा स्यात् नान्यत्र तेनाक् न भवति । तथा च कप्प्रत्यये सति स्वार्थिकप्रत्ययान्ताग्रहणात्स्मैप्रभृतयो न भवन्ति । द्वितीयकाय । तृतीयस्या द्वितीयाया आगतः ।

---

पदप्राधान्येऽपि कतरदशना इत्यत्र 'द्वन्द्वे वा' इति न विकल्प । सर्वादेरित्यानन्तर्यषष्ठीविज्ञानात् । यद्वा सर्वादेरित्यावृत्त्या पञ्चमी व्याख्येया । 'पञ्चम्या निर्दिष्टे परस्य' इति न्यायात् च स्यादेर्व्यवहितत्वान्न भवति ॥—वस्त्रान्तरवसनान्तरा इति । वस्त्रमन्तर येषा ते वस्त्रान्तरा । सर्वादित्वादन्तरशब्दस्य पूर्वनिपाते प्राप्ते राजदन्तादित्वाद्वस्त्रस्य पूर्व निपात । एव वसनान्तरा । ततो वस्त्रान्तराश्च वसनान्तराश्चेति कृते समानार्थत्वादेकशेष प्राप्नोति । नैवम् । अत्र वसनशब्दो गृहपर्याय इति न समानार्थत्वम् । यद्वा एकोऽन्तरशब्दो व्यवधानार्थी अन्यस्तु विशेषार्थी । ननु चान्तरशब्दो बहुव्रीहौ वर्तते न द्वन्द्वे इति कथमद प्रत्युदाहरणम् । न । तदवयवको बहुव्रीहिर्द्वन्द्व इति सोऽपि द्वन्द्व इति प्रत्युदाह्रियते ॥—न सर्वादिः॥—सर्वादिकार्यमिति । सर्वादिकार्य कर्मतामापेदान न प्राप्नोतीत्यर्थ प्राप्तावपि परस्मैपदमते ॥—कतरकतमकाः । स्वार्थिकप्रत्ययान्ताग्रहण डतरडतमग्रहणेन ज्ञापितम् । तौ च प्रकृतेरन्ते समागच्छतस्ततोऽन्योऽपि स्वार्थिक प्रत्ययो योऽन्ते समभ्येति तदन्तस्यैवाग्रहणम् । तेन अक्प्रत्यये सति एतत्प्रकरणविहित कार्यं भवत्येव । ततस्सर्वके इति सिद्धम् ॥—तृतीयान्तात्—॥ अश्ववडवेति पूर्वशब्दस्यापरेण स्वेन समाहृतिर्भणिष्यते इति सूत्रत्वात् समाहार । कर्मधारयो वा पूर्वावयवयोगादिति ॥—योगे सबन्धे इति । योग एकार्थीभावो व्यपेक्षा चोभय गृह्यते ॥—मासपूर्वायेति । 'ऊनार्थे'—इति समास । लुप्तायां अपि तृतीयाया 'स्थानीव'—इति स्थानित्वेन तृतीयान्तत्वम् । 'लुप्यग्वृल्लेनत्' इति परिभाषया पूर्वस्य यत् कार्यं प्राप्त लुपि निमित्तभूताया तदेव निषिध्यते । अत 'स्थानीवावर्णविधौ' इति स्थानित्व ततस्तृतीयान्तत्व सिद्धम् । ननु यास्यति चैत्रो मासेनेत्यत्र योगग्रहण विनापि 'समर्थ पदविधि' इति न्यायेन भविष्यति निषेध कि योगग्रहणेन । उच्यते । योगग्रहणादन्यदपि सिद्धम् । अपरे सामान्येन तृतीयान्तेन योगे प्रतिषेध कृत न तृतीयान्तात् तेषा मते पूर्वाय मासेनेत्यपि भवति तन्मतसग्रहार्थं तु पूर्वदिग्योगेऽपि पञ्चमी व्याख्येया ॥—तीयं ङि—॥—द्वितीयिकायै इति । 'स्वज्ञाजभस्त्रा'—इति आप इ । यत्र तु इत्व न द्वि-

तीयकाय । *द्वितीयिकायै । तृतीयिकायै इत्यादि । अर्थवतः प्रतिपदोक्तस्य च ग्रहणादिह न भवति । पटुजातीयाय । मुखतो भवो मुखतीय' । गहादिपाठादीयः । मुखतीयाय । एवं पार्श्वतीयाय ॥ १४ ॥ *अवर्णस्यामः साम् । १ । ४ । १५ ॥ अवर्णान्तस्य सर्वादेः संबन्धिनः *षष्ठीबहुवचनस्यामः स्थाने सामित्ययमादेशो भवति । सर्वेषाम् । विश्वेषाम् । 'संनिपातलक्षण'—न्यायस्यानित्यत्वादेत्वम् । सर्वासाम् । विश्वासाम् । परमसर्वेषाम् । परमसर्वासाम् । सर्वादेरित्येव । द्वयानाम् । द्वितयानाम् ॥ कथं 'व्यथा द्वयेषामपि मेदिनीभृताम्' इति । अपपाठ एषः । तत्संबन्धिविज्ञानादिह न भवति । प्रियसर्वाणाम् । अवर्णस्येति किम् । भवताम् । भवतीनाम् ॥ १५ ॥ **नवभ्यः पूर्वेभ्य इस्मात्स्मिन् वा** । १ । ४ । १६ ॥ पूर्वादिभ्यो नवभ्यो यथास्थानं ये इः स्मात् स्मिन् आदेशा उक्तास्ते वा भवन्ति । पूर्वे । पूर्वाः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । परे । पराः । परस्मात् । परात् । परस्मिन् । परे । नवभ्य इति किम् । त्ये । त्यस्मात् । त्यस्मिन् । पूर्वेभ्य इति किम् । सर्वे । सर्वस्मात् । सर्वस्मिन् । पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व, अन्तर इति पूर्वादयो नव ॥ १६ ॥ ***आपो ङितां यै यास् यास् याम्** । १ । ४ । १७ ॥ *आबन्तसंबन्धिनां सादेर्ङितां ङेङसिङस्ङीनां स्थाने यथासंख्यं यै यास् यास् याम् इत्येते आदेशा भवन्ति । खट्वायै । खट्वायाः । खट्वायाः । खट्वायाम् । बहुराजायै । बहुराजायाः । बहुराजायाः । बहुराजायाम् । *कारीषगन्ध्यायै । कारीषगन्ध्यायाः । कारीषगन्ध्यायाः । कारीषगन्ध्यायाम् । आप इति पकारः किम् । कीलालपे । तत्संबन्धिविज्ञानादिह न भवति । बहुखट्वाय पुरुषाय । इह तु भवति, बहुखट्वायै विष्टराय इत्यादि ॥१७॥ ***सर्वादेर्डस्पूर्वाः** । १ । ४ । १८ ॥ सर्वादेराबन्तस्य संबन्धिनां ङितां यैयास्यास्यामस्ते डस्पूर्वा भवन्ति । सर्वस्यै । सर्वस्याः । सर्वस्याः । सर्वस्याम् । परमसर्वस्यै । परमसर्वस्याः । परमसर्वस्याः । परमसर्वस्याम् । *अस्यै । अस्याः । अस्याः । अस्याम् । अत्र *परत्वात्पूर्वमदादेशे पश्चाड् डस् । तीयस्य विकल्पेन ङित्कार्ये सर्वादित्वात्, द्वितीयस्यै । द्वितीयायै । सर्वादेरिति किम् । सर्वा नाम काचित् । सर्वायै । तत्संबन्धिविज्ञानादिह न भवति । *प्रियसर्वायै । अतिसर्वायै । दक्षिणस्याश्च

---

श्यते तत्र 'ङयादीदूतः के' इति ह्रस्वत्वम् ॥—**अवर्णस्या**—परस्पराद्याम सामादेशे तत्रैव सामादेश एवोच्येत । न ह्यामादेशं कृत्वा साम्वचने किंचित्प्रयोजनमस्ति । प्रक्रियागौरवं च परिहृतं भवति । परोक्षादेशस्तु आम् धातोर्विधीयमानं सर्वादेर्न संभवति । 'कर्तु क्विप्'—इति क्विप्प्रत्ययान्ततया संभवेऽपि स्यादेरित्यधिकारान्निरस्यते इत्याह—**षष्ठीति** ॥—'समूर्छदुच्छृङ्खलशङ्खनिस्वनः स्वनः प्रयाते पटहस्य शार्ङ्गिणि ॥ सत्वानि निन्ये नितरां महान्त्यपि व्यथां द्वयेषामपि मेदिनीभृताम्' माघोक्तम् ॥—**आपो ङिताम्**—॥—**आबन्तेति** । पूर्वसूत्रेषु सर्वादेरव्यभिचारेऽपि उत्तरसूत्रे सर्वादिग्रहणात् इह सामान्यमवगम्यते ॥—**कारीषगन्ध्यायै** इति । ननु अणि अणन्तत्वात् 'अणञेये'—इति इञि तु 'नुर्जाते' इति ङी प्राप्नोति । नैवम् । अत्र ष्यादेश समजनि । 'अणञेयेकण्'—इति सूत्रे तु स्वरूपस्याणो ग्रहणं न ष्यादेशरूपस्य । एतत् व्याख्यानतो लभ्यते । इञस्तु इकारान्तस्य ङीरुक्त ॥—**सर्वादेर्डस्**—॥—**अस्यै** इति । इदशब्दस्य 'आ द्वेर' इत्यत्वे 'लुगस्य'—इत्यकारलोपे 'आत्' इत्यापि 'आपो ङिताम्'—इति यायाद्यादेशे 'अनक्' इत्यदादेशे अनेन डस्पूर्वत्वे 'डित्यन्त्य'—इत्यकारलोपे । अथात्र यायाद्यादेशे कृते सर्वादित्वेन तत्पृष्ठभावित्वात् डसि कृते व्यञ्जनादित्वाभावात्कथमदादेश इत्याह—**परत्वादिति** ॥—**प्रियसर्वायै** इति । सर्वशब्दस्य प्राग्निपाते प्राप्ते 'प्रिय' इत्यनेन प्रियस्य प्राग्निपात ॥—**अथ बहुव्रीह्यादेरिति** । परेण बहुव्रीह्यादेरिति प्रागभिदधे

पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा दिक्। दक्षिणपूर्वायै । दक्षिणपूर्वायाः । दक्षिणपूर्वायाः। दक्षिणपूर्वायाम् । एपु बहुव्रीह्यादेरन्यपदार्थादिप्रधानत्वात्सर्वादि-
त्वाभावः । यद्येवं, कथ दक्षिणपूर्वस्यै, दक्षिणपूर्वस्याः, दक्षिणपूर्वस्याः, दक्षिणपूर्वस्याम् इति । दक्षिणा चासौ पूर्वा चेति कर्मधारये भविष्यति । *अथ च बहुव्री-
ह्यादेः सर्वादित्वाभावे कथ त्वकत्पितृकः, मकत्पितृकः, द्वकिपुत्रः, ककिसब्रह्मचारी इत्यादावक्प्रत्ययः। उच्यते । अन्तरङ्गत्वात्पूर्वमेवाक् भविष्यति । *अन्ये तु ब-
हुव्रीहावन्तरङ्गस्याप्यकः प्रतिषेधमिच्छन्ति । तन्मते कप्प्रत्यय एव । त्वत्कपितृको मत्कपितृकः ॥ १८ ॥ *टौस्येत् । १ । ४ । १९ ॥ आबन्तस्य संबन्धिनोष्टौसोः
परयोरेकारोऽन्तादेशो भवति । खट्वया । खट्वयोः । बहुराजया । बहुराजयोः । कारीषगन्ध्यया । कारीषगन्ध्ययोः । आप इत्येव । कीलालपा ब्राह्मणेन । त-
त्संबन्धिविज्ञानादिह न भवति । बहुखट्वेन पुरुषेण । इह तु भवति । ईषदपरिसमाप्तया खट्वया बहुखट्वया विष्टरेण ॥ १९ ॥ *औता । १ । ४ । २० ॥ *आ-
बन्तस्य संबन्धिना औता प्रथमाद्वितीयाद्विवचनेनौकारेण सहाबन्तस्यैवैकारोऽन्तादेशो भवति। माले तिष्ठतः । माले पश्य । एवं बहुराजे २ नगर्यौ । कारीषगन्ध्ये
कन्ये । आप इत्येव । कीलालपौ पुरुषौ । तत्संबन्धिविज्ञानादिह न भवति । *बहुखट्वौ पुरुषौ । इह तु भवति । ईषदपरिसमाप्ते खट्वे बहुखट्वे मञ्चकौ ॥ २० ॥
*इदुतोऽस्त्रेरीदूत् । १ । ४ । २१ ॥ स्त्रिशब्दवर्जितस्येदन्तस्योदन्तस्य च औता सह यथासंख्यमीत् ऊत् इत्येतावन्तादेशौ भवतः । मुनी तिष्ठतः । मुनी पश्य ।
साधू तिष्ठतः । साधू पश्य । इदुत इति किम् । वृक्षौ । नद्यौ । वध्वौ । औता इत्येव । मुनिः । साधुः ॥ सख्यौ, पत्यौ इत्यत्र तु *विधानसामर्थ्यान्न भवति। अस्त्रेरिति
किम् । अतिस्त्रियौ पुरुषौ ॥ कथं शस्त्रीमतिक्रान्तौ अतिशस्त्री पुरुषौ । ' अर्थवद्ग्रहणे नानर्थकस्य ' इति प्रतिषेधाभावात् । इदमेव चास्त्रिग्रहणं ज्ञापकम् ' परेणापी
यादेशेनेदुत्कार्यं न बाध्यते ' इति । तेनातिस्त्रयः, *सहस्त्रियस्तिष्ठन्ति । अतिस्त्रये । अतिस्त्रेः । अतिस्त्रीणाम् । अतिस्त्रौ निधेहीत्यादि सिद्धम् ॥ २१ ॥ जस्येदोत्
। १ । ४ । २२ ॥ इदन्तस्योदन्तस्य च जसि परे यथासंख्यमेत् ओत् इत्येतावन्तादेशौ भवतः । मुनयः । साधवः । बुद्धयः । धेनवः । अतिस्त्रयः । जसीति किम् ।
मुनिः । साधुः ॥ २२ ॥ *ङित्यदिति । १ । ४ । २३ ॥ अदिति ङिति स्यादौ परे इदन्तस्योदन्तस्य च यथासंख्यमेदोतावन्तादेशौ भवतः । मुनये । साधवे ।
अतिस्त्रये । मुनेः । साधोः । अतिस्त्रेः, आगतं स्वं वा । बुद्धये । *धेनवे । बुद्धेः । धेनोः आगतं स्वं वा । ङितीति किम् । मुनि । साधुः । अदितीति किम् ।

तदेव अनूदितम् । अत आदे फल न निरीक्ष्यम् । त्वक पितास्य, अहक पितास्य, द्वकौ पुत्रावस्य, ककि सब्रह्मचारिणोऽस्येति ॥—अन्ये त्विति । उत्पलादय ॥—टौस्येत् ॥ एदिति तकारोऽसदे-
हार्थोऽन्यथाऽन्तरेण तकारमेरित्युच्यमाने किमेकार आदेशो भवत्याहो स्वित् इकारस्य टोसो परयो पूर्वे आदेशा इति सदेह स्यात् ॥—औता ॥ आबन्तस्येत्येकापि षष्ठी द्विधार्थवशाद्भिद्यते सबन्धेन
स्थानितया चेत्याह—आबन्तस्य सबन्धिना औता सह आबन्तस्यैव स्थाने इति । बहुखट्वौ। एकदेशेति स्थानीवेति वा आबन्तत्वम् ॥—इदुतो—॥ स्त्रिवर्जनात् तत्सबन्धीति न सब-
ध्यते । षष्ठ्यन्त्यस्येति निर्दिश्यमानेति वा इदुतो स्थानिनो ॥—विधानेति । अन्यथाईकारमेवाविदध्यात् ॥—सहस्त्रय । सहात्तुल्ययोगे कचूनिषेध ॥—ङित्यदिति ॥—धेनवे । धीयते पयोऽस्या

*बुध्यै। धेन्वै। बुध्याः। धेन्वाः आगतं स्वं वा। बुध्याम्। धेन्वाम्। स्यादाविसेव। शुची। पट्वी ॥२३॥ **टः पुंसि ना** ।१।४।२४॥ इदुदन्तात्परस्य पुंसि पुंविषयस्य टस्तृतीयैकवचनस्य स्थाने ना इत्ययमादेशो भवति। मुनिना। साधुना। अतिस्त्रिणा। अमुना। अत्र 'प्रागिनात्' (२।१।४८) इति वचनात्पूर्वममुत्वं पश्चान्नाभावः। पुंसि इति किम्। बुध्याम्। धेन्वाम्॥ कथममुना कुलेन। 'अनाम्स्वरे नोऽन्तः' (१।४।६४) इति भविष्यति॥ २४॥ ***ङिर्डौ** ।१।४।२५॥ इदुदन्तात्परो ङिः सप्तम्येकवचनं डौर्भवति। अभेदनिर्देशश्चतुर्थ्येकवचनशङ्कानिरासार्थः। डकारोऽन्त्यस्वरादिलोपार्थः। मुनौ। साधौ। बुद्धौ। धेनौ। अतिस्त्रौ। विंशतौ। अदिदित्येव। *बुध्याम्। धेन्वाम् ॥२५॥ ***केवलसखिपतेरौ** ।१।४।२६॥ केवलसखिपतिभ्यामिदन्ताभ्यां परो ङिरौर्भवति। सख्यौ। पत्यौ। पताविति *कश्चित्। इत इत्येव। सखायमिच्छति क्यनि दीर्घत्वे, सखीयतीति क्विपि, यलोपे, सखीः। *सख्यि। एवं पत्यि। केवलग्रहणं किम्। प्रियसखौ। नरपतौ। पूजितः सखा, सुसखा। तस्मिन् सुसखौ। एवमतिसखौ। ईषदूनः सखा बहुसखा। बहुसखौ। एवं बहुपतौ। एषु पूर्वेण डौरेव॥ *अन्ये तु बहुप्रत्ययपूर्वादपि पतिशब्दादौकारमेवेच्छन्ति। तन्मते, बहुपत्यौ॥ २६॥ ***न ना ङिदेत्** ।१।४।२७॥ केवलसखिपतेः परस्य टावचनस्य नादेशो ङिति परे एकारश्च य उक्तः स न भवति। सख्या। पत्या। सख्ये। पत्ये। सख्युः। पत्युः आगतं स्वं वा। *सख्यौ। पत्यौ। ङिदिति विशेषणं किम्। जस्येद्वत्त्येव। पतयः। केवलादित्येव। प्रियसखिना। सुसखिना। बहुसखिना। साधुपतिना। बहुपतिना। प्रियसखये। नरपतये। प्रियसखेः। नरपतेः आगतं स्वं वा॥ बहुप्रत्ययपूर्वादपि पतिशब्दात्म-

---

इति अपादाने 'धे शित्' इति तु। कर्मणि तु क्य स्यात्। नपुंसके त्वसभवित्वान्न दर्शितम्। तत्र हि 'अनाम्स्वरे'—इति नान्तेन भाव्यम्॥—बुद्ध्यै इत्यादि। नन्विकारोकारमात्रापेक्षत्वेनान्तरङ्गत्वात् पूर्वमेव एदोतौ स्याताम् न दायाद्यादेशा तेषां स्त्रीत्वविशिष्टेकारोकारापेक्षत्वेन बहिरङ्गत्वात्, कृतयोरप्येदोतोरिकारोकाराभावात् वर्णविधित्वाच्च स्थानित्त्वाभावात् दैदासाद्यादेशाभावात् प्रतिषेधो न युक्तः। न च तदन्तादादेशविधानात् अवर्णविधित्वात् स्थानित्त्वम्। अप्रधानेऽपि वर्णविधिप्रतिषेधात्। एवं तर्हि अनवकाशत्वात् पूर्वं दैप्रभृतय आदेशाः प्रवर्तन्ते पश्चाददितीति प्रतिषेध। तथापि इदुत्संनिपातेन जायमानत्वात् दैदासाद्यादेशैनैव एदोद्बाधो भविष्यति इत्यदितीति प्रतिषेधो व्यर्थ। यथैव यत्वमपि न प्राप्नोति। तस्माददितीति प्रतिषेधो वर्णविधावय न्यायो नोपतिष्ठते इति ज्ञापनार्थं। तेन दैदासादिषु कृतेषु एदोतौ न भवत। यत्व तु भवति॥—ङिर्डौ॥—बुद्ध्यामिति। ननु दाम्करणसामर्थ्यादेव डौर्न स्यात् किं व्यावृत्तावदितीति दर्शनेन। न। ङित्यदितीत्येतन्निषेधकत्वेन तस्य चरितार्थत्वात्डौ स्यात् इति व्यावृत्ति सफला। यथा 'इश्च स्याद' इत्यत्र सिच्लोपविधायकत्वेन -ह्रस्वकरणस्य चरितार्थत्वे गुणबाधकं कित्करणम्। किंच यथासख्यार्थं 'स्त्रिया ङिताम्'—इत्यत्र दाम्ग्रहणं कार्यम्। अन्यथा इद सूत्रमन्यथा उत्तरं चान्यथा कार्यं स्यात् तथा च गरीयसी रचना स्यात् इति॥—**केवलसखि**—॥—**कश्चिदिति**। दुर्गसिंहश्रुतपालादि॥—**सख्यि** इति। अत्र 'स्थानीवावर्णविधौ' इति न्यायात् क्विपः स्थानित्त्वे सति 'य्वो प्वय्'—इति यलोप कस्मान्न भवति। असिद्धं बहिरङ्गमिति न्यायात् अन्तरङ्गे क्विबाश्रिते कार्ये यत्वमसिद्धं द्रष्टव्यम्॥—**अन्ये त्विति**। शाकटायनादय॥—**न ना**—॥ सखिपतेर्नाङिदेता सह न यथासख्यम्, 'खितिखीती'—इति सूत्रे खिग्रहणात् सख्युरितो निर्देशाद्वा॥—**सख्याविति**। अत्रादेशे कृते 'ङित्यदिति' इति प्राप्नोति

तिषेधं केचिदिच्छन्ति। बहुपत्या। बहुपत्ये। बहुपत्युः आगतं स्वं वा॥ अन्ये तु सख्यन्तादपि प्रतिषेधं पूर्वेण ङेरौत्वं चेच्छन्ति। बहवः सखायो यस्य तेन बहुसख्या। एवं बहुसख्ये। बहुसख्युरागतं स्वं वा। बहुसख्यौ निधेहि॥ २७॥ ***स्त्रिया ङितां वा दैदास्दास्दाम्।** १।४।२८॥ स्त्रियाः स्त्रीलिङ्गादिदुदन्ताच्छब्दात्परेषां* तत्संबन्धिनामन्यसंबन्धिना वा स्यादेर्ङितां ङेङसिङस्ङीनां स्थाने यथासंख्यं दै दास् दास् दाम् इत्येते आदेशा वा भवन्ति। दकारो 'ङित्यदिति' (१।४।२३॥ इति विशेषणार्थः। बुध्द्यै। बुद्धये। बुध्द्याः। बुद्धेः आगतं स्वं वा। बुध्द्याम्। बुद्धौ। धेन्वै। धेनवे। धेन्वाः, धेनोः २। धेन्वाम्। धेनौ। एवं मुष्ट्यै। मुष्टये। इष्वै। इषवे। शुच्यै। शुचये। पट्वै। पटवे। पत्यै। पत्ये। जीवपत्यै। जीवपतये स्त्रियै। कन्या पतिर्यस्य यस्या वा कन्यापत्यै। कन्यापतये। एवं प्रियबुध्द्यै। प्रियबुद्धये। प्रियधेन्वै। प्रियधेनवे। प्रियाशन्यै। प्रियाशनये। अतिशकट्यै। अतिशकटये। स्त्रियै पुरुषाय वा। एषु समासार्थस्य पुरुषत्वेऽपि पत्यादिशब्दानां स्त्रीत्वमस्ति॥ *अन्ये तु पुरुषस्य समासार्थत्वे सति नेच्छन्ति। तन्मते प्रियबुद्धये, प्रियधेनवे पुरुषायेत्येव भवति॥ *अन्यस्तु पुरुषस्यैव समासार्थत्वे सति इच्छति न स्त्रियाः। तन्मते अतिशकट्यै, प्रियधेन्वै पुरुषाय इत्यत्रैव भवति, न त्वतिशकटये, प्रियधेनवे स्त्रियै इत्यत्र। स्त्रिया इति किम्। *मुनये, साधवे। इदुत इत्येव। गवे। नावे॥ २८॥ ***स्त्रीदूतः।** १।४।२९॥ नित्यस्त्रीलिङ्गादीकारान्तादूकारान्ताच्च शब्दात्परेषां तत्संबन्धिनामन्यसंबन्धिनां वा स्यादेर्ङितां स्थाने यथासंख्यं दै दास् दास् दाम् इत्येते आदेशा भवन्ति। नद्यै। नद्याः। नद्याः। नद्याम्। लक्ष्म्यै। लक्ष्म्याः। लक्ष्म्याः। लक्ष्म्याम्। कुरोरपत्यं स्त्री 'दुनादि'—(६।१।११८) इत्यादिना ञ्यः, तस्य 'कुरोर्वा' (६।१।१२२) इति लुपि, 'उतोऽप्राणिनश्च'—(२।४।७३) इत्यादिनोङि, कुरूः। कुर्वै। कुर्वाः। कुर्वाः। कुर्वाम्। वध्वै। वध्वाः। वध्वाः। वध्वाम्। एवं ब्रह्मबन्ध्वै। ब्रह्मबन्ध्वाः। ब्रह्मबन्ध्वाम्। वर्षाभ्वै। वर्षाभ्वाः। अतिलक्ष्म्यै, अतितन्त्र्यै, अतिवध्वै स्त्रियै पुरुषाय वा। कुमारीमिच्छतीति क्यनन्तात् कुमारीवाचरतीति क्विबन्ताद्वा कर्तरि क्विप्, कुमारी तस्मै कुमार्यै ब्राह्मणाय ब्राह्मण्यै वा। खरकुटीव खरकुटी तस्मै खरकुट्यै ब्राह्मणाय ब्राह्मण्यै वा। स्त्रिया इत्यनुवर्तमाने पुनः स्त्रीग्रहणं नित्यस्त्रीविषयार्थम्। तेनेह न भवति। ग्रामण्ये खलप्वे *स्त्रियै। ईदूत इति किम्। मात्रे।

---

न तु पूर्वम्। यतस्तद्बाधक ङिडौं ततोऽपि केवलसखीति औत्वम्। ततस्तदादेशेति न्यायात् स्यादित्वे सति एत्व प्राप्त निषिद्धम्॥—स्त्रिया ङितां—॥ पत्युर्न इति निर्देशात् सखिपती नानुवर्तेते। स्त्रिया इति विशेषणस्य विशेष्यसापेक्षत्वात् सखिपतिभ्या परेषा ङिता खितिरोतीय उरित्येवमादिभिर्विशेषविधिभिराघ्रातत्वात् दित्करणस्य तु प्रयोजनवत्त्वात् सामान्यमिदुदन्तमधिकृत गम्यते इत्याह —इदुदन्ताच्छब्दादिति॥—कन्यापत्ये इत्यादौ नपुसके तु परत्वानागमे कन्यापतिन कुलस्य 'वान्यत'—इति कन्यापत्या कन्यापतेर्वा॥—अन्ये त्विति। चन्द्रेन्दुगोमिप्रभृतय॥—अन्यस्त्विति। क्षीरस्वामी॥—मुनय इति। अत्र पुस्त्रीत्वेऽपि पुस्त्वमेव विवक्षितम्॥—स्त्रीदूतः॥—स्त्रियै इति। ग्रामण्यादिशब्दो हि क्रियाशब्दत्वात् त्रिलिङ्गत्वात् नित्यस्त्रीविषयो न भवतीति स्त्रियामपि वर्त-

दुहित्रे । बुद्धये । धेनवे । *आमलक्याः फलाय आमलकाय, अतिकुरवे, अतिकुमारये, इत्यत्रेदूत इति *वर्णविधित्वेन स्थानिवद्भावाभावादीकारोकारान्तता नास्तीति न भवति । ङितामित्येव । नद्यः । वध्वः ॥ २९ ॥ *वेयुवोऽस्त्रियाः । १ । ४ । ३० ॥ इयुवोः संवन्धिनौ यौ स्त्रीदूतौ तदन्ताच्छब्दात्परेषां तत्संवन्धिनामन्यसंवन्धिनां वा स्यादेर्ङितां स्थाने यथासंख्यं दै दास् दास् दाम् इत्येते आदेशा वा भवन्ति, अस्त्रियाः—स्त्रीशब्दं वर्जयित्वा । श्रियै । श्रिये । श्रियाः । श्रियः । श्रियाः । श्रियः । श्रियाम् । श्रियि । भ्रुवै । भ्रुवे । भ्रुवाः भ्रुवः भ्रुवाः । भ्रुवः भ्रुवाम् । भ्रुवि । श्रियमतिक्रान्ताय, अतिश्रियै । अतिश्रिये । ब्राह्मणाय ब्राह्मण्यै वा । एवमतिभ्रुवै अतिभ्रुवे । पृथुः श्रीर्यस्य तस्मै पृथुश्रियै पृथुश्रिये पुरुषाय स्त्रियै वा । एवं पृथुभ्रुवै पृथुभ्रुवे ॥ केचितु समासार्थस्य स्त्रीत्व एवेच्छान्ति न पुंस्त्वे । तन्मते अतिश्रियै, अतिश्रिये स्त्रियै इत्यत्र भवति । इह न भवति ॥ अतिश्रिये, अतिभ्रुवे पुरुषाय । पूर्वेण *नित्यमपि न भवति ॥ कश्चित्तु पूर्वमतविपर्ययमेवेच्छति । अतिश्रियै अतिश्रिये पुरुषाय । इह न भवति । अतिश्रिये स्त्रियै । इयुव इति किम् । *आध्यै । प्रध्यै । वर्षाभ्वै । पुनर्भ्वै । पूर्वेण नित्यमेव । स्त्रीदूत इत्येव । यवक्रियै कटप्रुवे स्त्रियै । अस्त्रिया इति निर्देशात्परादपि इयुव्यत्वादिकार्यात्प्रागेव स्त्रीदूदाश्रितं कार्यं भवति । तेन स्त्रियै, स्त्रीणाम्, भ्रूणाम्, आध्यै इत्यादि सिद्धम् ॥३०॥ *आमो नाम् वा । १ । ४ ।३१॥ इयुवोः संवन्धिनौ यौ स्त्रीदूतौ तदन्ताच्छब्दात्परस्य तत्संवन्धिनोऽन्यसंवन्धिनो वा आमः *षष्ठीबहुवचनस्य नामित्ययमादेशो वा भवति, अस्त्रियाः—स्त्रीशब्दं वर्जयित्वा । श्रीणाम् । श्रियाम् । भ्रूणाम् । भ्रुवाम् । अतिश्रीणाम् । अतिश्रियाम् । पृथुश्रीणाम् । पृथुश्रियाम् । अतिभ्रूणाम् । अतिभ्रुवाम् । पृथुभ्रूणाम् । पृथुभ्रुवाम् । स्त्रीणां पुरुषाणां वा । शोभना धीरेषां सुधीनाम् । सुधियाम् । अस्त्रिया इत्येव । स्त्रीणाम् । परमस्त्रीणाम् । उत्तरेण नित्यमेव । नपुंसकेऽपि ह्रस्वत्वेन भाव्यमित्युत्तरेण नित्यमेव । अतिश्रीणाम् । अतिभ्रूणां कुलानामिति ॥३१॥ *ह्रस्वापश्च । १ । ४ । ३२ ॥ ह्रस्वान्तादाबन्तात्स्त्रीदूदन्ताच्च शब्दात्परस्यामः स्थाने नाम् इत्ययमादेशो भवति । ह्रस्व, श्रमणानाम् । संयतानाम् । वनानाम् । धनानाम् । मुनीनाम् । साधूनाम् । बुद्धीनाम् । धेनूनाम् । पितृणाम् । मातृणाम् । आप्, खट्वानाम् । वहुराजानाम् । स्त्रीदूतः । नदीनाम् । वधूनाम् । स्त्रीणाम् । लक्ष्मीणाम् । स्त्रीशब्दवर्जितयोरियुवादेशसंबन्धिनोः स्त्रीदूतोः पूर्वेण विकल्प एव । श्रीणाम् । श्रियाम् । भ्रूणाम् । भ्रुवाम् । ह्रस्वापश्चेति किम् । सोमपाम् । सेनान्याम् ॥ ३२ ॥ *संख्यानां र्ष्णाम् । १ । ४ । ३३ ॥ रेफषकारन-

---

मानादादेशाभाव ॥—**आमलक्या** इति । आमलकात् उणादिप्रत्ययान्तात् ङयाम् आमलकी वृक्षवाची ध्वनि । यद्वा आमलकस्य फलस्य विकारो वृक्ष दुसञ्ज्ञकस्य मयटो यदा बाहुलकाल्लुप् गौरादित्वात् ङी तदापि आमलकीशब्दस्तरुवाची ॥—**वर्णविधित्वेनेति** । ईकारोकारौ वर्णौ तदाश्रिता दायादय ॥—**वेयुवो** ॥—**नित्यमपीति** । कोऽर्थस्तन्मते स्त्रीदूत इत्यत्रापि समासार्थस्य स्त्रीत्व एव भवति ॥ —**आध्यै** । आध्यायति प्रध्यायति आदधाति प्रदधाति इत्येवशीलाया बुद्धेर्वाचकौ वर्षाभूवत् नित्यस्त्रीलिङ्गौ आधीप्रधीशब्दौ । क्रियाशब्दत्वेन सर्वलिङ्गत्वात् ग्रामण्यादिशब्दवन्नित्यस्त्रीविषयौ नेति चिन्त्यमेतदित्येके ॥—**आमो नाम् वा** ॥—**षष्ठीवचनस्येति** । अत्र ङिस्थानिकस्य सानुबन्धत्वादपरस्य चासम्भवात् स्याद्यधिकाराच्च षष्ठीबहुवचनस्यैवामो ग्रहणम ॥—**ह्रस्वा**—॥—**पूर्वेण विकल्प एवेति** । इयुवुस्थानित्वेन विशेषविहितत्वात् इति शेष ॥—**संख्यानां**— ॥ र् च ष् च न् च तेषाम् र्ष्णाम् । तवर्गस्येति णत्वम् । रषृवर्णेति तु न एकपदत्वाभावात् । वोत्तरपदान्तेत्यपि न यत षकारो न

कारान्ताना संख्यावाचिनां शब्दाना सवन्धिन आमः स्थाने नाम् इत्ययमादेशो भवति । चतुर्णाम् । षण्णाम् । पञ्चानाम् । सप्तानाम् । परमचतुर्णाम् । परमषण्णा-
म् । परमपञ्चानाम् । तत्सवन्धविज्ञानादिह न भवति । प्रियचतुराम् । प्रियषषाम् । प्रियपञ्चन्म् । संख्यानामिति किम् । गिराम् । विप्रुषाम् । यतिनाम् । ष्णामिति
किम् । *त्रिशताम् । पञ्चाशताम् । वहुवचनं व्याप्त्यर्थम् । तेन *भूतपूर्वनान्ताया अपि । *अष्टानाम् । परमाष्टानाम् ॥३३॥ *त्रेस्त्रयः । १ । ४ । ३४ ॥ *आमः सव-
न्धिनस्त्रिशब्दस्य त्रयादेशो भवति । त्रयाणाम् । परमत्रयाणाम् । आम्संबन्धिविज्ञानादिह न भवति । अतित्रीणाम् । प्रियत्रीणाम् । अतत्संबन्धिनोऽपि भवतीत्येके ।
अतित्रयाणाम् । प्रियत्रयाणाम् । स्त्रिया तु परत्वात्तिसृभावो भवति । तिसृणाम् ॥ ३४ ॥ *एदोद्भ्यां ङसिङसो रः । १ । ४ । ३५ ॥ एदोद्भ्यां परयोर्ङसिङसोः
स्थाने रेफो भवति । अकार उच्चारणार्थः । मुनेः । मुनेः । साधोः । साधोः । गोः । गोः । द्योः । द्योः । परमश्चासाविश्च *परमेः । परमेः । नयतीति विच् । नेः ।
नेः । एवं लोः । लोः । वचनभेदो यथासंख्यनिवृत्त्यर्थः ॥ ३६ ॥ *खितिखीतीय उर् । १ । ४ । ३६ ॥ खितिखीतीसंबन्धिन इवर्णस्थानादकारात्परयोर्ङसि-
ङसोः स्थाने उर् आदेशो भवति । खि, सख्युः । सख्युः । ति, पत्युः । पत्युः । खी ती । सह खेन वर्तते सखः । सखं सखायं वेच्छति इति क्यनि क्विपि, सखीः ।
पततीति पतः । पतं पतिं वेच्छतीति क्यनि क्विपि, पतीः । सख्युः । पत्युः । तथा सुखमिच्छति, सातमिच्छति, क्यनि, सुख्युः । *सात्युः । लूनं पूनं वेच्छतः,
लून्युः । पून्युः । 'क्तादेशोऽपि' (२ । १ । ६१) इति नत्वस्यासत्त्वात्तीरूपत्वम् । य इति किम् । यत्र यत्वादेशस्तत्र यथा स्यात् । इह माभूत् । अतिसखेः
अतिपतेः । खितिखीतीति किम् । मुख्यमपत्यं चाचष्टे णिच्, विच् । *मुख्यः, अपत्यः आगतं स्वं वा । अदितीत्येव । सख्याः । पत्याः ॥ ३६ ॥

---

पूर्वपदस्थ किंतु मध्यपदस्थ । तर्हि रेफ पूर्वपदस्थोऽस्ति तदपेक्षया णत्व भवतु । न । पदेऽन्तरे निषेधात् । ननु ष्णामिति शब्दनिर्देश सख्या चेकत्वादिरर्थ । तत शब्दार्थयो सामानाधिकरण्य न
सगच्छते । सताम् । उपचारात सख्यार्था शब्दा सख्याशब्देनाभिधीयन्ते । यद्वा, सख्यायते आभिरिति उपसर्गादात इति करणाधारे परमप्यनट बाधित्वा बहुलवचनाददि आपि च सख्याशब्देनैकादय
शब्दा एवोच्यन्ते इति ॥—त्रिशतामिति । ननु च त्रिशदादय शब्दा सख्येयेष्वपि वर्तमाना 'विंशत्याद्या शतात् द्वन्द्वे' इति वचनात् एकत्वे एव वर्तन्ते इत्यत्रैकवचनान्ता एव भवितुमर्हन्ति कथ
बहुवचनम् । सत्यम् । एकशेषात् त्रिंशच्च त्रिंशच्च त्रिंशच्च त्रिंशत ॥—अष्टानामिति । अथाष्टन्शब्दादामि परत्वात् वाष्टन इत्याकारे नान्तत्वाभावात् कथ नाम्भावोऽत आह—भूतपूर्वेति ॥—त्रेस्त्रय ॥—
आमः सबन्धिनः इति । सवन्धस्योभयनिष्ठत्वेनाम सवन्धिन इत्यपि युक्तम् । आम सवन्धित्व च त्रेरर्थद्वारकम् । यस्मादाम सवन्धी त्रेरर्थस्ततत स आम इत्युच्यते । आम सवन्धीति कार्यकार-
णभावे षष्ठी । त्रिशब्द कारणमाम् च कार्यम् । यतस्त्रिशब्दवहुत्वे आम् ॥—एदोद्भ्याम्—॥ अत्र तकार स्वरूपग्रहणार्थ. । तेन लाक्षणिकयोरप्येदोतो' परिग्रहः ॥—परमेरिति । आतौ नेन्द्रवरुण-
स्येति ज्ञापकात् पूर्व पूर्वोत्तरपदयो कार्यम् तत सधिकार्यम् अत परमेरिति प्राप्नोति । नैवम् । ज्ञापकज्ञापिता विधयो ह्यनित्या इति ॥—खिति—षणूग्, सनोति दत्ते परस्पर भोजनादिकमिति सखा,
सने कखि । पाति अपायादिति 'पातेर्डति' इति डति ॥—सात्युरिति । सायते स्म दीयते स्म पुण्यैरिति सातम् । साति सौत्र सुखे, सातति वा ॥—मुख्य इति । अत्र विचि कृते य्वो प्विति
यस्य लुग् न । यत स्वरस्य परे इति णिलोप. स्थानी । न च न सधीत्यस्यावकाश. । नत्रा निर्दिष्टस्यानित्यत्वात् । भवतु वावकाशस्तदेदमुत्तरम् । य्वो. प्वयीति सूत्रे लुगु इति सज्ञा सज्ञापूर्वको

*ऋतो ङुर् ।१।४।३७॥ ऋकारात्परयोर्ङसिङसोः स्थाने ङुर् इत्ययमादेशो भवति। पितुः पितुः। मातुः मातुः। ङसिङस इत्येव। पितॄन्। ऋत इति किम्। ग्रः॥३७॥
*तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो घुट्यार् १।४।३८॥ तृच्तृन्प्रत्ययान्तस्य स्वस्त्रादिशब्दानां च संबन्धिन ऋकारस्य स्थाने तत्संबन्धिन्यन्यसंबन्धिनि वा घुटि परे आर् इत्ययमादेशो भवति। कर्तारम्। कर्तारौ२। कर्तारः कटस्य। वदितारम्। वदितारौ। वदितारौ। वदितारः, जनापवादान्। स्वसारम्। स्वसारौ। स्वसारौ। स्वसारः। नप्तारम्। नप्तारौ। नप्तारौ नप्तारः। नेष्टारम्। नेष्टारौ। नेष्टारौ। नेष्टारः। त्वष्टारम्। त्वष्टारौ। त्वष्टारौ। त्वष्टारः। क्षत्तारम्। क्षत्तारौ। क्षत्तारौ। क्षत्तारः। होतारम्। होतारौ। होतारौ। होतारः। पोतारम्। पोतारौ। पोतारौ। पोतारः। प्रशास्तारम्। प्रशास्तारौ। प्रशास्तारौ। प्रशास्तारः। *अतिकर्तारम्। अतिकर्तारौ। अतिकर्तारौ। अतिकर्तारः। घुटीति किम्। कर्तृ कुलं पश्य। सौ तु परत्वात् डागुणौ। कर्ता। हे कर्तः। तृशब्दस्यार्थवतो ग्रहणेन प्रत्ययग्रहणान्नप्त्रादीनामव्युत्पन्नानां संज्ञाशब्दानां तृशब्दस्य ग्रहणं न भवतीति तेषां पृथगुपादानम्। इदमेव च ज्ञापकम् 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणं भवतीति'। व्युत्पत्तिपक्षे तु तृग्रहणेनैव सिद्धे नप्त्रादिग्रहणं नियमार्थम्। तेनान्येषामौणादिकानां न भवति। पितरौ। भ्रातरौ। मातरौ। जामातरौ॥ *केचित्तु प्रस्तोत्रुन्नेत्रुद्गातृप्रतिहर्तृप्रतिस्थातृशब्दानामौणादिकानामप्यारं मन्यते। प्रस्तोतारम्। प्रस्तोतारौ। प्रस्तोतारौ। प्रस्तोतारः। इत्यादि॥ ३८॥ *अर्ङौ च। १।४।३९॥ ऋकारस्य स्थाने *ङौ घुटि च परेऽर् इत्ययमादेशो भवति। पितरि। पितरम्। पितरौ २। पितरः। मातरि। मातरम्। मातरौ २। मातरः। ङौ चेति किम्। पित्रा। मात्रा। *कर्तृणि कुले, कर्तृणि कुलानीत्यत्र तु परत्वात्पूर्वं न एव। तस्मिंस्तु सति व्यवधानान्न भवति। ऋत इत्येव। ग्रि॥ ३९॥
*मातुर्मातः पुत्रेऽर्हे सिनामन्त्र्ये।१।४।४०॥ मातृशब्दस्यामन्त्र्ये पुत्रे वर्तमानस्य *सामर्थ्याद्बहुव्रीहौ समासे सिना सह मात इत्यकारान्त आदेशो भवति,

---

विधिरनित्य। यद्वा, क्वाविति सूत्रकरणात् क्विप्विचोर्व्यञ्जनकार्यमनित्यम्। न च वाच्य कथ विच्यपि व्यञ्जनकार्यानित्यता। यतोऽप्रयोगिनामुपलक्षण क्विप् ॥—ऋतो ङुर्। ऋकारोपदिष्ट ऌकारस्यापि तेन ऋफिडादिलत्वम्। कुल् ऌकार। यदाह उपाध्याय आप्ऌ इत्येतस्मात् पष्ठयामापुल् इत्येव भवति ॥—तृस्वसृ— ॥ सूत्रत्वादनाम् स्वरे इति न। सूत्रे ऋकारोपादानाद्वा। कथमिति चेत् प्रशास्तृणा ऋ प्रशास्तृ तस्य ॥—अतिकर्तारमिति। अत्र तत्पुरुषो न बहुव्रीहि कच्प्रसङ्गात् तेन च व्यवधानेन प्राप्त्यभावात्। नन्वत्र सूत्रे शौ निमित्ते किं न दर्शितम्। स्वराच्छाविति नागमेन व्यवधानान्न प्राप्नोतीति चेन्न। नागम प्रकृतेरेवाश इति। सत्यम्। अवयवेनावयवस्य ऋलक्षणस्य व्यवधान भवतीति न दर्शितम्। सुष्ठु अस्यति क्षिपति भ्रातुरमाङ्गल्यमिति स्वसा सोरसे, नमति पूर्वजेभ्य इति नप्ता नमे प् च, नयति प्राप्नोति वेदशाखाम् इति नेष्टा निय पादि तृप्रत्यय। त्विषी दीप्तौ। त्वेपते दीप्तो भवति स्वर्गनिर्माणनैपुणेनेति त्वष्टा। क्षद् खदने इति सौत्र। क्षत्ता। 'त्वष्टृक्षत्तृदुहितृादय' इत्यनेन निपात। जुहोति व्रीह्यादिकान्, पुनाति आत्मान वेदपाठेन 'हुपूद्रान्नीप्रस्तु' इत्यादिना होता पोता। प्रशास्ति दिशति शस्त्राणि इति प्रशास्ता। 'शासिशसिनी' इत्यादिना तृ प्रत्यय। जायत इति जा पुत्री 'क्वचित्' ड प्रत्यय। जा मिनोति जाया मिगस्तृप्रत्यय। 'मिग्मीग'—इत्याकार ॥—केचित्त्विति। भोजप्रभृतय ॥—अर्ङौ च ॥—ङौ घुटि चेति। अत्र निमित्तात्पर श्रूयमाणश्चकारो निमित्तान्तरसव्यपेक्ष, प्रत्यासत्तेरनन्तरसूत्रोपात्तमेव निमित्तमुपस्थापयति ॥—कर्तृणि कुले इति। पितरि वारिणीत्यादावुभयो सावकाशत्वेन परत्वान्नागमे ऋकारान्तत्वाभावान्न भवतीति ॥—मातुर्मात— ॥ ननु कथ मातृशब्दस्य पुत्रार्थे वृत्ति नह्यसौ पुत्रार्थे वर्तमान' क्वचिद्दृष्ट इत्याह—सामर्थ्यादिति। अयमर्थ, केवलो न वर्तते बहुव्रीहौ तु स्वार्थोपसर्जनत-

अर्हे-मातृद्वारेण पुत्रप्रशंसायां गम्यमानायाम्। *कचोऽपवादः। गार्गी माता यस्य तस्यामन्त्रणं हे गार्गीमात। एवं हे वात्सीमात। अत्र पुत्रः संभावितोत्कर्षया श्लाघया मात्रा तत्पुत्रव्यपदेशयोग्यतया प्रशस्यते॥ मातुरिति किम्। हे गार्ग्यपितृक। पुत्र इति किम्। हे मातः। हे गार्गीमातृके वत्से। अर्हे इति किम्। *अरे गार्गीमातृक। आमन्त्र्य इति किम्। गार्गीमातृकः। सिनेति किम्। हे गार्गीमातृकौ॥ ४०॥ ***ह्रस्वस्य गुणः**।१।४।४१॥ आमन्त्र्येऽर्थे वर्तमानस्य *ह्रस्वान्तस्य सिना सह *श्रुतत्वाद्ध्रस्वस्यैव गुणो भवति। 'आसन्नः'। हे पितः। हे मातः। हे कर्तः। हे स्वसः। हे मुने। हे साधो। हे बुद्धे। हे धेनो। सिनेत्येव। हे कर्तृकुल। हे वारि। हे त्रपु। अत्र परत्वात्पूर्वं सेर्लुपि सेरन्नावान्न भवति। 'नामिनो लुग्वा' (१।४।६१) इति लुकि तु स्थानिवद्भावाद्भवत्येव। हे कर्तः कुल। हे वारे। हे त्रपो। आमन्त्र्य इत्येव। पिता। मुनिः। साधुः। ह्रस्वस्येति किम्। हे श्रीः। हे भ्रूः॥ हे नदि, हे वधु, इत्यत्र तु *ह्रस्वविधानसामर्थ्यात्सेरन्नावाच्च न भवति॥ ४१॥ ***एदापः**।१।४।४२॥ आमन्त्र्येऽर्थे वर्तमानस्यावन्तस्य सिना सह एकारान्तादेशो भवति। हे खट्वे। हे बहुराजे। हे बहुखट्वे विष्टर। आ आप इत्याकारप्रश्लेषादिह न भवति। हे प्रियखट्व। आप इति किम्। हे कीलालपाः। आमन्त्र्य इत्येव। खट्वा॥ ४२॥ ***नित्यदिद्द्विस्वराम्बार्थस्य ह्रस्वः**।१।४।४३॥ नित्यं दित् दैदास्दास्दाम्लक्षण आदेशो येभ्यस्तेषां द्विस्वराम्बार्थानां चावन्तानामामन्त्र्येऽर्थे वर्तमानानां सिना सह ह्रस्वान्तादेशो भवति। नित्यदित्, हे स्त्रि। हे गौरि। हे शार्ङ्गरवि। हे आस्त्रि। हे लक्ष्मि। हे तन्त्रि। हे ब्रह्मबन्धु। हे करभोरु। हे श्वश्रु। हे वधु। हे कर्कन्धु। हे अलाबु। हे वर्षाभु। हे पुनर्भु। हे अतिलक्ष्मि। द्विस्वराम्बार्थ, *हे अम्ब। *हे अक्क। हे अत्त। हे अल्ल। हे अनम्ब। हे परमाम्ब। हे प्रियाम्ब। नित्यदिदिति किम्। *हे वातप्रमीः। *हे हूहूः। *हे ग्रामणीः। हे खलपूर्वधूटि। नित्यग्रहणादिह न भवति। हे श्रीः। हे ह्रीः। हे भ्रूः॥ कथं *हे सुभ्रु हे भीरु। स्त्रीपर्यायत्वादूङि कृते नविष्य-

---

याऽर्थान्तर प्रतिपादयत्येव ॥—**कचोऽपवाद** इति। अनन्तरानन्तरविधावे षष्ठी व्याख्येया। तेन कचा व्यवधाने न स्यात्। सभावित उत्कर्षो यस्या सकाशात् तत्पुत्र इति व्यपदेश कथन तस्य
योग ॥—**अरे गार्गीमातृके**ति। अज्ञातपितृकत्वेनानेकपितृकत्वेन च निन्द्यया मात्रा विगुण पुत्रो निन्द्यते इति ॥—**ह्रस्वस्य**— ॥ अधिकृतस्य नाम्नो विशेषणात् विशेषणेन च तदन्तविधिसम्भवा
दाह—**ह्रस्वान्तस्ये**ति ॥—**श्रुतत्वादि**ति। श्रुतो ह्रस्वो ह्रस्वान्तत्वं त्वनुमितम् 'श्रुतानुमितयोश्च श्रौतो विधिर्बलीयानिति न्याय ॥—**ह्रस्वविधाने**ति। 'उभयो स्थाने य' इति न्यायेन यदा
सिव्यपदेशस्तदा सिर्ह्रस्वश्चास्ति अतो विधानसामर्थ्यात् यदा तु ह्रस्वव्यपदेशस्तदा सेरभावान्न भवति ॥—**एदाप**। आश्वासाताप् चेति आकारप्रश्लेषाद्धे प्रियखट्वेत्यत्र 'गोश्चान्ते'—इति ह्रस्वत्वे
एकदेशविकृतेति न्यायात् प्राप्तोऽपि एकारादेशो न भवति ॥—**नित्यदित्**— ॥ शृ गृणाति शृङ्गरुर्ऋषिस्तस्यापत्यं शार्ङ्गरवी। यद्वा शृणोतीति 'शिग्रुमेरुनमेर्वादय' इति निपातनाद्रो अन्तस्य चार्दिशे
शार्ङ्गरु। यदा तु अनेनैव शृङ्गरुरिति निपात्यते तदापि ङ्या च शार्ङ्गरवी। अथवा शार्ङ्गवत् रवो यस्या गौरादित्वात् ङ्या शार्ङ्गरवी ॥—**हे अम्बे**ति। अबुङ् अम्बतेऽच् अम्बा ॥—**हे अक्के**ति।
अक्र कुटिलाया गतौ इत्यस्य निष्कतुरुष्केत्यादिनिपातनात् कप्रत्यये ॥ अतते पुतपित्तेति निपातनाद**त्ता** ॥ अली भूषणादौ। अस्य भिल्लाच्छभल्लेति निपातनाल्ले **अल्ला** ॥—**हे हूहू**। जहाते
पृषोदरादित्वादूप्रत्यये द्विर्वचनादौ ॥—**हे वातप्रमी**। वात प्रमिमीते वातात् प्रम क्वित् ईप्रत्यय ॥—**हे ग्रामणी**। नायमीकारान्तो नित्यदित् किंतु पुलिङ्गोऽपि ॥—**हे सुभ्रु** इति। केचिन्निति

ति। अम्बार्थानां द्विस्वरविशेषणं किम्। हे अम्बाडे। हे अम्बाले। हे अम्बिके। आप इत्येव। हे मातः ॥ ४३॥ *अदेतः स्यमोर्लुक्। १।४।४४॥ अकारान्तादेकारान्ताचामन्त्र्येऽर्थे वर्तमानात्परस्य सेस्तदादेशस्यामश्च लुग्भवति। हे श्रमण। हे संयत। अम्, हे वन। हे धन। हे उपकुम्भ॥ हे अतिहे। परमश्वासाविश्च, हे परमे। हे से। अदेत इति किम्। हे गौः। हे नौः। हे परमौः। *स्यादेशत्वेनैवामोऽपि लुचि सिद्धायां पृथग्वचनमन्यस्यादेशस्य लुगभावार्थम्। तेन *हे कतरदित्यादौ लुम्न भवति॥ ४४॥ *दीर्घङ्याब्व्यञ्जनात्सेः। १।४।४५॥ दीर्घाभ्यां ङ्याब्भ्यां व्यञ्जनाच परस्य सेर्लुग् भवति। ङी, गौरी। कुमारी। बहूव्यः श्रेयस्यो यस्य स बहुश्रेयसी चैत्रः। एवं बहुप्रेयसी। खरकुटीव खरकुटी ब्राह्मणः। कुमारीवाचरति क्विप् लुक् क्विप् कुमारी ब्राह्मणः। आप्, खट्वा। बहुराजा। व्यञ्जन, राजा। तक्षा। हे राजन्। एभ्य इति किम्। वृक्षः। ङ्याब्ग्रहणं किम्। लक्ष्मीः। तन्त्रीः। ग्रामणीः। कीलालपाः। दीर्घग्रहणं किम्। निष्कौशाम्बिः। अतिखट्वः। नपुंसकेषु परत्वात् 'अनतो लुप्' (१।४।५९) इति लुबेव। तेन यत्कुलं तत्कुलमिति सिद्धम्। 'पदस्य' (२।१।८९) इति सिद्धे व्यञ्जनग्रहणं राजेत्यादौ सिलोपार्थम्। अन्यथा सावपि पदत्वात् 'पदस्य' इति च परेऽसत्त्वात्पूर्वं नलोपे सेर्लुप्, उखास्रदित्यादौ संयोगस्यादौ स्कोर्लुकि *दत्वं च न स्यात्॥ ४५॥ *समानादमोऽतः। १।४।४६॥ समानात्परस्यामोऽकारस्य लुग्भवति। वृक्षम्। खट्वाम्। मुनिम्। साधुम्। बुद्धिम्। धेनुम्। नदीम्। वधूम्। पितरमित्यादिषु विशेषविधानात्प्रथममेवार्। समानादिति किम्। रायम्। नावम्। अम इति किम्। नद्यः। स्यादेरिति किम्। *अचिनवम्॥४६॥ *दीर्घो नाम्यतिसृचतसृषः। १।४।४७॥ तिसृचतसृषकाररेफान्तवर्जितशब्दसंबन्धिनः पूर्वस्य *समानस्यामादेशे नामि परे दीर्घो भवति। श्रमणानाम्। मुनीनाम्। साधूनाम्। बुद्धीनाम्। धेनूनाम्। वारीणाम्। त्रपूणाम्। पितॄणाम्। मातॄणाम्। कर्तॄणाम्। अतिसृचतसृष इति किम्। तिसृणाम्। चतसृणाम्। षण्णाम्। चतुर्णाम्। *अषू इति प्रतिषेधेन *नकारेण व्यवहितेऽपि नामि दीर्घो ज्ञाप्यते। पञ्चानाम्। सप्तानाम्। नामीति किम्। चर्मणाम्। स्यादावित्येव दधिनाम्।

---

निपातनात् भ्राम्यतेर्भ्रुं। शोभन भ्रु भ्रमण यस्या। सुभ्रुशब्दात् भीरुध्वनेश्च जातित्वादूङ्। परस्य विकल्पेन दित्वात् हे सुभ्रू हे भीरो प्राप्तमित्यभिप्राय। अम्बामडतीति लिहादित्वादच्। अम्बा लातीति 'आतो डोऽह्वावाम' इति डप्रत्यय। अम्बते णकतृचौ णक आप्। अस्यायत्तदिति इकार॥—अदेत—॥ आमन्त्र्य इति वर्तते। तत्र च स्यादेश एवाम् सभवतीत्याह—स्यादेशेति॥—हे कतरदिति। ननु अम्ग्रहणस्य अन्यदपि फल कस्मान्न भवति। यथा कुम्भस्य समीपानि उपकुम्भमित्यत्र लुगर्थम्। नैवम्। सिसाहचर्यादेकवचनस्यामो ग्रहण न बहुवचनस्थानस्य॥—दीर्घ—॥ कुमारी ब्राह्मण इत्यत्र नैषा क्विवादीना डीसयोर्व्यवधायकत्वे स्थानित्वम्। यत स्थान्याश्रये वृद्ध्यादिके कार्ये कर्तव्ये स्थानित्वम् न तु व्यवधायकत्वे। न हि व्यवधायकत्व कार्य नाम अपि तु वृद्ध्यादीनि कार्याणि इति। एवमच्योद्वमित्यादिषु सिचो लोपस्य ढत्वे कर्तव्ये न स्थानित्वम्॥—दत्व चेति। सौ परे लुक पूर्व दत्व प्राप्नोतीति न वाच्यम्। परे लुकि 'स्रसृध्वस्'—इति सूत्रस्यासिद्धत्वात्॥—समाना—॥—अचिनवमिति। न च वाच्य परत्वान्नित्यत्वाच्च गुणेन भाव्यमिति प्राप्तौ सत्या हि परत्व नित्यत्व च चिन्त्यते इति॥—दीर्घो नाम्य—॥—आमादेश इति। स्याद्यधिकारादादेश एव गृह्यतेऽत इदमुक्तम्॥—अषू इति। ननु षकाररेफाभ्या व्यवधानादेव न भविष्यति दीर्घ किं पूर्वजनेन इत्याह—नकारेणेति। अन्यव्यञ्जनेन तु असभव इति॥—शसोऽता—॥—समानस्येनि।

चर्मनाम। अनर्थकत्वाद्वा ॥ ४७ ॥ **नुर्वा । १ । ४ । ४८ ॥** नृशब्दसंबन्धिनः समानस्य नामि परे दीर्घो वा भवति । नॄणाम् । नृणाम् । अतिनॄणाम् ।
अतिनृणाम् ॥ ४८ ॥ ***शसोऽता सश्च नः पुंसि । १ । ४ । ४९ ॥** शसः संबन्धिनोऽकारेण सह *समानस्य प्रधानस्थान्यासन्नो दीर्घो भवति,
तत्संनियोगे च पुंलिङ्गविषये शसः सकारस्य नकारो भवति । श्रमणान् । मुनीन् । साधून् । *वातप्रमीन् । हूहून् । पितॄन् । पुंलिङ्गाभावे तु दीर्घत्वमेव ।
शालाः । बुद्धीः । नदीः । धेनूः । वधूः । मातॄः । चञ्चाः, खरकुटीः, यष्टीः, पुरुषान्पश्येत्यत्र चञ्चादयः शब्दाः पुरुषे वर्तमाना अपि स्त्रीलिङ्गत्वं नोज्झन्तीति
नकारो न भवति । यदा तु शब्दस्य पुंलिङ्गत्वं तदा वस्तुनः स्त्रीत्वे नपुंसकत्वे वा नकारो भवत्येव । दारान् भ्रुकुंसान् स्त्रीः पश्य । षण्ढान् षण्डकान्
पश्य । दीर्घसंनियोगविज्ञानादिह नो न भवति । एतान् गाः पश्य । समानस्येत्येव । रायः, नावः पश्य । वनानि पश्येत्यत्र परत्वाच्छिरेव ॥ ४९ ॥
***संख्यासायवेरह्नस्याहन् ङौ वा ।१।४।५०॥** संख्यावाचिभ्यः सायशब्दाद्विशब्दाश्च परस्याह्नस्य शब्दस्य ङौ परेऽहन्नित्ययमादेशो वा भवति । द्वयोर-
ह्नोर्भव इति विगृह्य 'भवे' ( ६ । ३ । १२३ ) इत्यण्विषये *'सर्वांश'—( ७ । ३ । ११८ ) इत्यादिनाऽट् अह्नादेशश्च । ततो 'द्विगोरनपत्ये'—( ६ । १ । २४ )
इत्यादिनाऽणो लुपि द्व्यह्नस्तस्मिन् द्व्यह्नि । द्व्यहनि । द्व्यह्ने । एवं त्र्यह्नि । त्र्यहनि । त्र्यह्ने । यावदह्नि । यावदहनि । यावदह्ने । तावदह्नि । तावदहनि ।
तावदह्ने । सायमह्नः सायाह्नस्तस्मिन् सायाह्नि । सायाहनि । सायाह्ने । अत एव सूत्रनिर्देशात्सायंशब्दस्य मकारलोपः । सायेत्यकारान्तो वा । विगतमहो
व्यह्नस्तस्मिन्व्यह्नि । व्यहनि । व्यह्ने । संख्यासायवेरिति किम् । मध्याह्ने । अह्नस्येति किम् । द्वयोरह्नोः समाहारो द्व्यहस्तस्मिन् *द्व्यहे । ङाविति किम् ।
द्व्यह्नः ॥ ५० ॥ ***निय आम् ।१।४।५१॥** नियः परस्य ङेः स्थाने आम् इत्ययमादेशो भवति। नियाम् । ग्रामण्याम् ॥ ५१ ॥ ***वाष्टन आः स्यादौ
। १ । ४ । ५२ ॥** अष्टन्शब्दस्य तत्संबन्धिन्यन्यसंबन्धिनि वा स्यादौ परे आकारोऽन्तादेशो वा भवति । अष्टाभिः । अष्टभिः । अष्टाभ्यः । अष्टभ्यः । अष्टासु ।

---

अत्र यद्यपि समानस्य शसोऽकारस्य च स्थानित्वम् तथापि प्रधानानुयायिनो व्यवहारा भवन्तीति प्रधानस्थान्यासन्न एव दीर्घो भवति । प्रधानत्व च षष्ठीनिर्दिष्टस्य समानस्यैवेति प्रधानस्थान्यासन्न इति
वचनात् मुनीनित्यादौ शसोऽकारस्यावर्णहविसर्गेति आसन्नत्वेऽप्याकारो न भवति ॥—**वातप्रमी**निति । वात प्रमिमते वातात् प्रम क्वित् ईप्रत्यय । देवनन्दिना मृगेऽपि स्त्रीलिङ्ग उक्त ॥—
**संख्यासाय—** ॥—**अण्विषये** इति । द्वयोरह्नोर्भव 'सख्या समाहारे च' इति तद्धितविषये द्विगुसमासेऽण्विषयेऽटि अह्नादेश । शाकटायनस्तु 'वर्षाकालेभ्य' इति इकण्विषयेऽट्प्रत्ययमिच्छति ।
स्वमते तु न ह्यह्न इत्यस्याकालवाचित्वात् । यावदह्नि इत्यादिषु दुसञ्ज्ञकेषु दोरीयविषयेऽटि तत ईय, नस्य च 'द्विगोरनपत्ये' इति लुक् ॥—**द्व्यहे** इति । द्विगोरनह्न इत्यत्र अहन्ग्रहणात् ज्ञापकात्
'सर्वांश—इति परमप्यट बाधित्वा 'द्विगोरनह्न' इत्यट् ॥ ततोऽह्नाभाव ॥—**निय—** ॥—ननु ग्रामण्यामित्यत्र नी साक्षान्नास्ति किंतु णी इत्यामो न प्राप्ति । सत्यम् । स्यादिविधौ णत्वमसिद्धम् ॥ अस्याम
'आमो नाम्वा' इति नामादेशो न भवति । तत्र नित्यस्त्रीदूतोरधिकृतत्वात् । नन्वेकदेशविकृतेति क्लीबेऽपि प्राप्तिरस्ति । न । निय ई नी इतीकारप्रश्लेषात् निनि ग्रामणिनि कुले इत्येव भवति । भोजेन
तु भूतपूर्वन्यायेन नपुसकेऽपि नियामित्युक्तम् ॥—**वाष्टन —** ॥ पूर्वसूत्रात् ङेरनुवृत्तिर्माभूदिति स्यादिग्रहणम् । अथ 'अष्ट ओर्जस्शसो' इत्यत्राष्ट इति ज्ञापकात् ङेरनुवृत्तिर्न भविष्यति । सत्यम् ।

अष्टसु। प्रियाष्टाः। प्रियाष्टा। प्रियाष्टौ प्रियाष्टानौ। प्रियाष्टाः। प्रियाष्टानः। प्रियाष्टाम्। प्रियाष्टानम्। प्रियाष्टौ। प्रियाष्टानौ। प्रियाष्टः। प्रियाष्ट्नः। प्रियाष्टाभिः। प्रियाष्टभिः। हे प्रियाष्टाः। हे प्रियाष्टन्। अन्यसंबन्धिनोर्जस्शसोर्नेच्छन्त्येके। प्रियाष्टानस्तिष्ठन्ति प्रियाष्ट्नः पश्येत्येव भवति। स्यादाविति किम्। अष्टकः संघः। अष्टता। अष्टत्वम्। अष्टपुष्पी। केचित्तु सकारभकारादावेव स्यादाविच्छन्ति॥ ५२॥ **अष्ट और्जस्शसोः।१।४।५३॥** अष्ट इति कृतात्वस्याष्टन्शब्दस्य निर्देशः। अष्टाशब्दसंबन्धिनोर्जस्शसोः स्थाने औकारादेशो भवति। अष्टौ तिष्ठन्ति। अष्टौ पश्य। परमाष्टौ। अनष्टौ। कृतात्वस्य निर्देशादिह न भवति। अष्ट तिष्ठन्ति। अष्ट पश्य। परमाष्ट। अनष्ट। तत्संबन्धिविज्ञानादिह न भवति। प्रियाष्टास्तिष्ठन्ति। प्रियाष्टः पश्य। अतत्संबन्धिनोरपीच्छन्त्येके। प्रियाष्टौ तिष्ठन्ति। प्रियाष्टौ पश्य। केचित्तु अष्टावाचक्षत इति णिचि क्विपि अष्टौ तिष्ठन्ति अष्टौ पश्येतीच्छन्ति। तदप्यष्ट इति तन्त्रेण संगृहीतम्॥५३॥ ***डतिष्णः संख्याया लुप्।१।४।५४॥** डतिषकारनकारान्तायाः संख्यायाः संबन्धिनोर्जस्शसोर्लुप् भवति। कति तिष्ठन्ति। कति पश्य। यति तिष्ठन्ति। यति पश्य। तति तिष्ठन्ति। तति पश्य। षट् तिष्ठन्ति। षट् पश्य। पञ्च तिष्ठन्ति। पञ्च पश्य। एवं सप्त, नव, दश। परमषट्। परमपञ्च। डतिष्ण इति किम्। त्रयः। चत्वारः। तावन्तः। शतानि सहस्राणीत्यत्र *संनिपातलक्षणत्वान्नान्तस्य न भवति। संख्याया इति किम्। विप्रुषः। राजानः। तत्संबन्धिविज्ञानादिह न भवति। प्रियकनयास्तिष्ठन्ति। प्रियकतीन् पश्य। प्रियषषः। प्रियषषः। प्रियपञ्चानः। प्रियपञ्च्नः॥ *केचित्तु डसन्तात्कतिशब्दादेवेच्छन्ति॥ ५४॥ ***नपुंसकस्य शिः।१।४।५५॥** नपुंसकस्य संबन्धिनोर्जस्शसोः स्थाने शिर्भवति। कुण्डानि तिष्ठन्ति। कुण्डानि पश्य। एवं दधीनि। मधूनि। कर्तॄणि। पयांसि। यशांसि। स्याद्यधिकारादिह न भवति। कुण्डशो ददाति। नपुंसकस्येति किम्। वृक्षाः। वृक्षान्। तत्संबन्धिविज्ञानादिह न भवति। प्रियकुण्डाः। प्रियकुण्डान्। इह तु भवति। परमकुण्डानि। शकारः 'शौ वा' (४।२९९) इत्यादौ विशेषणार्थः॥ ५५॥ ***औरी।१।४॥५६॥** नपुंसकस्य संबन्धी औकार ईकारो भवति। कुण्डे तिष्ठतः। कुण्डे पश्य। एवं दधिनी। मधुनी। कर्तृणी। पयसी। तत्संबन्धिविज्ञानादिह न भवति। प्रियकुण्डौ पुरुषौ। इह तु भवति। परमकुण्डे॥ ५६॥ ***अतः स्यमोऽम्।१।४।५७॥** *अकारान्तस्य नपुंसकलिङ्गस्य संबन्धिनोः स्यमोरमित्ययमादेशो भवति। कुण्डं तिष्ठति। कुण्डं पश्य। कीलालपम्। अ-

---

तद्धि मतान्तरसग्रहार्थम्॥—**डतिष्ण —**॥—**संनिपातलक्षणत्वादिति**। सनिपतति कार्यमस्मिन् सनिपातो निमित्त शिलक्षणम् स लक्षण चिह्न यस्य तस्य॥—**केचित्त्विति**। वामनादय। तन्मते इद न सिद्ध्यति। 'यति ते नाग शीर्षाणि तति ते नाग वेदना.। न सन्ति नाग शीर्षाणि न सन्ति नाग वेदना'॥—**नपुसक—**॥ स्त्री च पुमाश्च स्त्रीपुसौ। 'स्त्रिया पुस' इति समासान्त। न स्त्रीपुसौ नखादित्वात् नञोऽदभाव। पृषोदरादित्वात् स्त्रीपुसशब्दस्य पुसक आदेश॥—**औरी**॥ कार्यकार्यिणोरभेदनिर्देश सर्वादेशार्थ। अन्यथा 'षष्ठ्यान्त्यस्य' इति न्यायात् विश्लिष्टावर्णस्यौकारस्य स्यात्। यत अओ इति प्रकृतौ 'ऐदौत्सन्ध्यक्षरै' इत्यनेन औकारो निष्पादित॥—**अत स्य—**॥ नन्वत्रात्ग्रहण किमर्थम्। न च वाच्यमद्ग्रहणाभावे दधीत्यत्राप्यमादेश स्यात् यतोऽनतो लुबिति सूत्र बाधक विद्यते इति। ननु अनत इत्यत्र पर्युदास प्रसज्यो वा नञ् गृह्यते इति सदेह। न च वाच्य पर्युदासे हि नामिनो लुप् इति सूत्र कुर्यात् तस्मात् प्रसज्य एवेति। कुत काष्ठा पर प्रकर्षमध्यायक

तिखद्वं कुलम् । हे कुण्ड । अत्रामादेशे अति 'अदेतः स्यमोर्लुक्' ( १ । ४ । ४४ ) इत्यमो लुक् । नपुंसकस्येत्येव । वृक्षः । अत इति किम् । दधि तिष्ठति । दधि पश्य । तत्संबन्धिविज्ञानादिह न भवति । प्रियकुण्डः पुरुषः । अमोऽकारोच्चारणं जरसादेशार्थम् । तेनातिजरसं कुलं तिष्ठतीति सिद्धम् ॥ ५७ ॥ ***पञ्चतोऽन्यादेरनेकतरस्य दः । १ । ४ । ५८ ॥** नपुंसकानामन्यादीनां सर्वाद्यन्तर्वर्तिनां पञ्चपरिमाणाना संबन्धिनोः स्यमोः स्थाने द इत्ययमादेशो भवति, एकतरशब्दं वर्जयित्वा । अकार उच्चारणार्थः । अन्यत्तिष्ठति । अन्यत्पश्य । एवमन्यतरत् । इतरत् । कतरत् तिष्ठति । कतरत्पश्य । एवं यतरत् । ततरत् । कतमत्तिष्ठति । कतमत्पश्य । एवं यतमत् । ततमत् । एकतमत् । हे अन्यत् । हे अन्यतरत् । हे इतरत् । हे कतरत् । हे कतमत् । हे एकतमत् । अनेकतरस्येति किम् । एकतरं तिष्ठति । एकतरं पश्य । पञ्चत इति किम् । नेम तिष्ठति । नेमं पश्य । नपुंसकस्येत्येव । अन्यः पुरुषः । अन्या स्त्री । अन्यादिसंबन्धिनोः स्यमोर्ग्रहणादिह न भवति । प्रियान्यम् अत्यन्यं कुलम् । इह तु भवति । परमान्यत् तिष्ठति । परमान्यत्पश्य । अनन्यत् ॥ ५८ ॥ ***अनतो लुप् । १ । ४ । ५९ ॥** अनकारान्तस्य नपुंसकस्य संबन्धिनोः स्यमोर्लुब् भवति । दधि तिष्ठति पश्य वा । एवं दधि, मधु, कर्तृ, पयः, उदश्वित् । अनत इति किम् । कुण्डं तिष्ठति पश्य वा । *लुकमकृत्वा लुप्करणं स्यमोः स्थानिवद्भावेन यत्कार्यं तस्य प्रतिषेधार्थम् । यत् । तत् । अत्र त्यदाद्यत्वं न भवति ॥ ५९ ॥ ***जरसो वा । १ । ४ । ६० ॥** जरसन्तस्य नपुंसकस्य संबन्धिनोः स्यमोर्लुब् वा भवति । अतिजरः, अतिजरसं कुलं तिष्ठति पश्य वा ॥ *अन्ये तु द्वितीयैकवचनस्यैवामो योऽमादेशस्तस्यैव लुब्विकल्पमिच्छन्ति न स्यादेशस्य । तन्मते अतिजरसं कुलं तिष्ठतीत्येव भवति ॥ केचिज्जरसः स्यमोर्लोपं नेच्छन्ति । तन्मते अतिजरसं तिष्ठति पश्य वेत्येव भवति ॥ ६० ॥ ***नामिनो लुग्वा । १ । ४ । ६१ ॥** नाम्यन्तस्य नपुंसकस्य संबन्धिनोः स्यमोर्लुग्वा भवति । हे वारे । हे त्रपो । हे कर्तः कुल। *प्रियतिसृ कुल तिष्ठति पश्य वा । अमो लुकं *नेच्छन्त्येके । तन्मते प्रियत्रि कुलं पश्येत्येव भवति । नामिन इति किम्। यद् । तद् । प्रियचतुष्कुलम् ॥ चतुःशब्दस्यापि *लुक्विकल्पमिच्छन्त्यन्ये । प्रियचतसृ कुलम् । प्रियचतुष्कुलम् । लुपैव सिद्धे लुग्वचनं स्थानिवद्भावार्थम् ॥ ६१ ॥ ***वान्यतः पुमांष्टादौ स्वरे । १ । ४ । ६२ ॥** यो नाम्यन्तः

इत्यत्र क्रियाविशेषणत्वेन आकारादप्यमो लुग् दृश्यते । अतोऽनत इति कर्तव्यमेव । अत सदेहस्तदवस्थ एव । अतोऽत्ग्रहणेन ज्ञाप्यते प्रसज्य एव गृह्यते । तथा च पय इत्यादौ लुप् सिद्धा नत्वमादेश ॥ अत इति नपुसकस्य विशेषणम् अतस्तदन्तप्रतिपत्तिर्भवतीत्याह—**अकारान्तस्ये**ति । अमूग्रहणमुत्तरार्थं तेनान्यत् पश्येति सिद्धम् ॥—**पञ्चतो**— ॥ पञ्च सख्या परिमाणमस्य 'पञ्चद्दशतौ वर्गे वा' इति डत् प्रत्यय ॥—**अनतो**— ॥ ननु अनत इति किमर्थम् । न च वाच्य कुण्डमित्यत्रापि स्यात् । 'अत स्यमोऽम्' इति बाधकात् । अत्रोच्यते । अनत इत्यस्याभावे 'पञ्चतोऽन्यादे'— इत्यतोऽन्यादेरित्यागच्छेत् । न च वाच्यम् अन्याद्यभीष्टौ हि एकमेव योग कुर्यात् । पूर्वमेकतरवर्जितस्यान्यादेर्ग्रहणम्, इह तु एकतरस्यापीति पृथग्योगस्य साफल्यात् । हे कर्तृ इत्यादौ परत्वात् प्रथम सेर्लोपे प्रत्ययलोपलक्षणन्यायेन ह्रस्वस्येति गुण कस्मान्न भवति इत्याह—**लुकमकृत्वे**ति ॥—**जरसो**— ॥—**अन्ये त्वि**ति । उत्पलादय —**नामिनो**— ॥—**प्रियतिसृ कुलमि**ति । ऋदुशनसित्यत्र घुट सेर्ग्रहणादत्र क्लीबत्वेन घुट्त्वाभावे से. स्थानित्वेऽपि न डा. ॥—**नेच्छन्त्येके** । देवनन्द्यादय. ॥—**इच्छेन्त्यन्ये** । उत्पलादय. ॥—**वान्यत.**— ॥—**पुंवद्वे**ति । परार्थे प्रयुज्यमान. शब्दो वतिमन्तरे-

वारिणा। वारिणे। वारिणः २। वारिणोः २। वारिणि। त्रपुणी २। त्रपुणा। त्रपुणे। त्रपुणः २। त्रपुणोः २। त्रपुणि। कर्तृणी कुले २। कर्तृणा। कर्तृणे। कर्तृणः २। कर्तृणोः २। कर्तृणि। प्रियगुरुणे। *प्रियतिसृणः २। अत्र परत्वात्तिस्रादेशे सति नोऽन्तः। अनामिति किम्। वारीणाम्। त्रपूणाम्। कर्तृणाम्। एषु नागमाभावे नामि सति 'दीर्घो नाम्यतिसृ'—(१।४।१४७) इत्यादिना दीर्घः सिद्धः। स्वरे इति किम्। हे वारे। हे त्रपो। स्यादावित्येव। *तौम्बुरवं चूर्णम्। *नामिन इत्येव। काण्डे। कुण्डे। नपुंसकस्येत्येव। मुनी। साधू। तत्संबन्धिविज्ञानादिह न भवति। प्रियवारये पुंसे। प्रियमधोः पुंसः ॥ ६४ ॥ *स्वराच्छौ। १। ४। ६५ ॥ जस्शसादेशे शौ परे स्वरान्तान्नपुंसकात्परो नोऽन्तो भवति। कुण्डानि। वनानि। प्रियत्रक्षाणि कुलानि। वारीणि। त्रपूणि। कर्तृणि। स्वरादिति किम्। चत्वारि। अहानि। विमलदिवि। सुगणि। *अत इत्येव सिद्धे स्वरग्रहणम्*उत्तरार्थम् ॥ ६५ ॥ *धुटां प्राक्। १। ४। ६६ ॥ स्वरात्परा या धुड्जातिस्तदन्तस्य नपुसकस्य धुड्भ्य एव प्राक् शौ परे नोऽन्तो भवति। पयांसि तिष्ठन्ति। पयांसि पश्य। उदश्विन्ति। सर्पींषि। धनूंषि। अतिजरांसि कुलानि। धुटामिति बहुवचनं जातिपरिग्रहार्थम्। तेन काष्ठतङ्क्षि गोरङ्क्षि कुलानीति सिद्धम्। स्वरादित्येव। *गोमन्ति कुलानि। शावित्येव। उदश्विता ॥ ६६ ॥ र्लो वा। १। ४। ६७ ॥ रेफलकाराभ्यां परा या धुड्जातिस्तदन्तस्य नपुंसकस्य धुटः प्राग् नोऽन्तो वा भवति शौ परे। बहूर्ञ्जि। बहूर्जि। सूर्ञ्जि। सूर्जि। सुवल्ङ्गि। सुवल्गि। र्ल इति किम्। काष्ठतङ्क्षि। पूर्वेण नित्यमेव। धुटामित्येव। सुफुल्लि वनानि। शावित्येव। बहूर्जा कुलेन ॥ ६७ ॥ *घुटि। १। ४। ६८ ॥ *अधिकारोऽयम्। निमित्तविशेषोपादानमन्तरेणापादपरिसमाप्तेर्यत्कार्यं वक्ष्यते तद् घुटि वेदितव्यम् ॥ ६८ ॥ अचः। १। ४। ६९ ॥

निमित्ताभावे इति तिस्रादेशो निवर्तेत। तथा प्रत्ययाप्रत्यययोरिति न्यायेनास्य नकारस्य प्रत्ययस्यापि सम्भवे वनानीत्यादावेव दीर्घ स्यात् न तु राजानमित्यादौ ॥—प्रियतिसृण इति। यदि पूर्वं नागम स्यात् तदानीं कि विनश्येत् यत स्वाङ्गमव्यवधायकमिति कृत्वा कृतेऽपि नागमे तिस्रादेशो भविष्यति। तत् कथ परत्वादित्युक्तम्। अत्रोच्यते। यस्माच्छब्दान्नागम समानीत तस्य यदि किमपि प्राप्नोति तदानीमय न्याय उपतिष्ठते। अत्र तु प्रियत्रिन् इत्यस्य न किमपि प्राप्नोति। अपि तर्हि अवयवस्य तिस्रादेश, ततश्चावयवस्यावयवेन व्यवधानम् न तु अवयवेनावयविन। यथा देवदत्तस्य श्मश्रु न दृष्ट हस्तेन व्यवहितत्वात्। नहि कोऽपीत्थ वदति यदुत देवदत्तो न दृष्ट हस्तेन व्यवहितत्वात् ॥—तौम्बुरव चूर्णम् ॥ तुम्बुरुण विकार 'प्राण्यौषधि'—इत्यादिना अण्। तस्य लुप्। तस्य विकार विकारे पुनरण्। तुम्बुरुणो वृक्षस्य विकारश्चूर्णम् एकस्मिन्नणि वा। 'अत्वयभुवोऽञ्' इति परत्वाद्भविष्यतीति न वाच्यम्। पुस्त्रीलिङ्गयोरेव सावकाशो नपुसके तु विशेषविधानादिद प्राप्नोति ॥—नामिन इत्येवेति। क्लीबे नाम्यन्तस्य सत्त्वे स्यादौ विज्ञानात् कुलयोरित्यत्रैत्वे कृते न नागम। द्वयोरित्यत्रापि आदेशादागम इति न्यायेन नागम प्राप्नोति। न। परत्वादन्तरङ्गत्वाच्च 'आद्वेर' इत्यत्वम् पश्चात् एत्वे कृते सकृदिति न्याय ॥—स्वराच्छौ ॥—अत इत्येवेति। ननु इवर्णादे 'अनामस्वरे नोऽन्तः' इति शौ नागम सिद्ध एव, आकारान्तस्य तु अन्त्यस्य नपुसके ह्रस्वविधानात् स्थितिरव नास्तीति अत इत्येव युज्यते किं स्वरग्रहणेन अत आह—उत्तरार्थमिति ॥—धुटाम्— ॥ प्रागित्यनेन सह सबन्धाभावात् धुटामित्यत्र 'प्रभृत्यन्यार्थ'—इति न पञ्चमी ॥—गोमन्ति। 'ऋदुदित' इत्यनेन परत्वात् नागमेऽनेन नोऽन्तो न भवति ॥—घुटि ॥—अधिकारोऽयमिति। नपुसकस्य घुटि परतो नोऽन्तो भवति इति विधिरेव कस्मान्न भवति। उच्यते। नपुसकस्य

अश्वतेर्धातोर्धुडन्तस्य तत्संबन्धिन्यन्यसंबन्धिनि वा घुटि परे धुटः प्राग्नोऽन्तो भवति । प्राङ् । अतिप्राङ् । प्राञ्चौ । प्राञ्चः । प्राञ्चम् । प्राञ्चि कुलानि । घुटीत्येव । प्राचः पश्य ॥ ६९ ॥ *ऋदुदितः । १ । ४ । ७० ॥ ऋदित उदितश्च धुडन्तस्य तत्संबन्धिन्यन्यसंबन्धिनि वा घुटि परे धुटः प्राक् स्वरात्परो नोऽन्तो भवति । कुर्वन् । अधीयन् । महान् । सुदन् बालः। उदितः, चक्रिवान् । विद्वान् । गोमान् । श्रेयान् । घुटीत्येव । गोमता । *पृथग्योगो भ्वादिव्युदासार्थः । सम्राट् ॥७०॥

*युज्रोऽसमासे । १ । ४ । ७१ ॥ युजूंपी योगे इत्यस्यासमासे धुडन्तस्य धुटः प्राक् घुटि परे नोऽन्तो भवति । युङ् । युञ्जौ । युञ्जः । युञ्जम् । युञ्जि कुलानि । ईषदपरिसमाप्तो युङ् बहुयुङ् । बहुयुञ्जौ । बहुयुञ्जः । *असमास इति किम् । अश्वयुक् । अश्वयुजौ । अश्वयुजः । ऋदिन्निर्देशः किम् । युजिंच् समाधावित्यस्य माभूत् । युजमापन्ना मुनयः । समाधिं प्राप्ता इत्यर्थः । घुटीत्येव । युजः पश्य । युञ्जी कुले ॥ ७१ ॥ *अनडुहः सौ । १ । ४ । ७२ ॥ अनडुह्शब्दस्य धुडन्तस्य तत्संबन्धिन्यन्यसंबन्धिनि वा सौ परे धुटः प्राक् नोऽन्तो भवति । अनड्वान् । प्रियानड्वान् । हे अनड्वन् । हे प्रियानड्वन् । साविति किम् । अनड्वाहौ ॥७२॥

*पुंसोः पुमन्स् । १ । ४ । ७३ ॥ पुंसु इत्येतस्योदितस्तत्संबन्धिन्यन्यसंबन्धिनि वा घुटि परे पुमन्स् इत्ययमादेशो भवति । पुमान् । पुमांसौ । पुमांसः । पुमासम् । ईषदूनः पुमान् बहुपुमान् । *प्रियपुमान् । प्रियपुमांसि कुलानि । हे पुमन् । घुटीत्येव । पुंसः पश्य । बहुपुंसी कुले । *पुंसोरुदित्त्वात् प्रियपुंसितरा, प्रियपुंस्तरा, प्रियपुंसीतरेत्यादौ *ङीह्रस्वपुंवद्विकल्पश्च भवति ॥ ७३ ॥ *ओत औः । १ । ४ । ७४ ॥ ओकारस्य ओत एव विहिते घुटि परे औकार आदेशो भवति । गौः । गावौ । गावः । द्यौः । द्यावौ । द्यावः । लुनातीति विच् लौः । शोभनो गौः सुगौः । एवमतिगौः । प्रियद्यावौ । अतिद्यावौ । हे गौः । हे द्यौः । किंगौः । अगौः । ओत इति किम् । चित्रा गौर्यस्य *चित्रगुः । चित्रगू । विहितविशेषणादिह न भवति । हे चित्रगवः । घुटीत्येव । गवा । द्यवा ॥ ७४ ॥

---

शिमन्तरेणान्यस्य धुट्त्वाभावात् । तत्र च स्वराच्छावित्यादिभिर्नागमस्य विहितत्वात् पारिशेष्यादधिकारोऽयमिति ॥—ऋदु—॥—पृथग्योगो भ्वादिव्युदासार्थ इति । अयमभिप्रायः । ' उदितः स्वरान्नोऽन्त ' इत्यत्र धात्वधिकारात् भ्वादेरुदित ' उदितः स्वरान्नोऽन्त ' इत्यनेनैव सिद्धत्वात् अत्र उदित पृथगारम्भादुदितोऽभ्वादेरेव तत्साहचर्यादृदितोऽपि अभ्वादेरेवेति नियमात् समाट् इत्यादौ न भवति ॥—युज्रो—॥—असमासे इति । साक्षाक्षिप्तस्य नाम्नो युज इति विशेषणात्तत्र च तदन्तविधेर्भावात् समासेऽपि प्राप्तिरिति असमासग्रहणमिदमेव ज्ञापयत्यत्र प्रकरणे तदन्तविधिरस्तीति ॥—अनडु—॥ सत्यपि नामग्रहणे इति न्याये अनडुहीत्यत्र धुडन्तत्वाभावान्न भवतीति । ननु अनड्वानित्यत्र ' स्रस्ध्वस्क्वस ' —इत्यादिना दकारः कथं न भवति । सत्यम् । प्राप्नोति परं विधानसामर्थ्यान्न भवति ॥—पुंसोः— ॥—पुंसोरुदित्त्वादिति । ननु पातेर्डुम्सुरिति उदनुबन्ध कृतोऽस्ति तेनापि प्रियपुंसीतरेत्यादि रूपत्रयं सेत्स्यति किमत्रोदनुबन्धेन । उच्यते । यदा अव्युत्पत्त्याश्रयणं तदात्र सूत्रे कृतस्योकारस्य फलम् । व्युत्पत्तौ तु फलमौणादिकस्य । यथा भवतुशब्दो भातेर्डवतुरिति व्युत्पादितोऽपि सर्वादौ उदनुबन्ध पठितोऽव्युत्पत्तिपक्षार्थम् ॥—प्रियपुमानिति । बहुत्वे वाक्यम् एकत्वे तु ' पुमनड्वन्नौ ' —इति कच् स्यात् ॥—ङीह्रस्वपुंवद्विकल्पेति । ङीर्नित्य ह्रस्वपुंवत्त्वयोश्च विकल्प ॥—ओत औः ॥—चित्रगुरिति । अत्र परत्वात् पूर्वं ह्रस्वत्वे कृते पश्चाद् घुटि ओकाराभावात् ओत इति वचनादौकारो न भवति । वर्णविधित्वाच्च स्थानिवद्भावो नास्ति । अथ हे चित्रगो इत्यत्र ओकारस्य विद्यमानत्वात् उभयोः स्थानिनोः स्थाने इति न्यायेन सेर्व्यपदेशे सति

*आ अम्शसोऽता । १ । ४ । ७५ ॥ ओकारस्याम्शसोरकारेण सह आकारो भवति । गाम् । सुगाम् । गाः । सुगाः पश्य । द्याम् । अतिद्याम् । द्याः । सुद्याः पश्य । स्यादावित्येव । *अचिनवम् ॥ ७५ ॥ *पथिन्मथिन्नृभुक्षः सौ । १ । ४ । ७६ ॥ पथिन् मथिन् ऋभुक्षिन् इत्येतेषां नकारान्तानामन्तस्य सौ परे आकारो भवति । *पन्थाः । हे पन्थाः। मन्थाः। हे मन्थाः। ऋभुक्षाः। हे ऋभुक्षाः। अमन्थाः। सुमन्थाः। *बहुऋभुक्षा । साविति किम् । पन्थानौ ॥ कथं *हे सुपथिन् हे सुपथि कुल, हे सुमथिन् हे सुमथि कुल । अत्र नित्यत्वान्नपुंसकलक्षणायाः सेर्लुपि सेरभावान्न भवति । नकारान्तनिर्देशादिह न भवति । पन्थानमिच्छति क्यनि नलोपे क्विपि च *पथीः । एवं मथीः । ऋभुक्षी ॥७६॥ *एः । १ । ४ । ७७ ॥ पथ्यादीनां नकारान्तानामिकारस्य *घुटि परे आकारो भवति । पन्थाः । पन्थानौ । पन्थानः । पन्थानम् । पन्थानौ । मन्थाः । मन्थानौ । मन्थानः । मन्थानम् । मन्थानौ । ऋभुक्षाः । ऋभुक्षाणौ । ऋभुक्षाणः । ऋभुक्षाणम् । ऋभुक्षाणौ । सुपन्थानि वनानि । 'पूजास्वतेः प्राक् टात्' ( ७ । ३ । ७२ ) इति समासान्तप्रतिषेधः । बहुमन्थानि कुलानि । अनृभुक्षाणि बलानि । सुपन्थानौ । परममन्थानौ ।

---

प्राप्नोति कस्मान्न भवति उच्यते । यदा उकारव्यपदेशस्तदा सेरभावात्, यदा तु सेर्व्यपदेशस्तदा लाक्षणिकत्वान्न भवति ॥—आ अम्— ॥ नन्वत्र अतेति किमर्थं यत एतद्विनापि गा इत्यादिप्रयोगजात समानानामिति दीर्घे सिध्यतीति । उच्यते । अतेति पदं विना पुलिङ्गे 'शसोऽता'—इति स्त्रीलिङ्गे 'लुगात'—इति प्रवर्तेयाताम् ततश्च गान् ग इत्याद्यनिष्टं स्यात् । स्थिते तु 'शसोऽता'—इत्यनेनैव दीर्घस्य सन्नियोगे नकारोऽभाणि ॥—अचिनवमिति । अत्र आदौ 'समानादमोत' इत्यमोकारस्यापि लुग भवति तत्रापि स्याद्यधिकारात् ॥—पथिन्— ॥ अत्र घुटीति सम्बन्धात् साविति श्लिष्टनिर्देशेन सुप् न गृह्यते ॥—पन्था इति । अत्र सानुनासिकस्याप्यादेशो भवन् 'लि लो' इत्यत्र द्विवचनेनैव ज्ञापितत्वात् निरनुनासिक एव भवति ॥—पथीरिति । पन्थानमिच्छति क्यनि नलोप, स च दीर्घश्च्वीति परे कार्येऽसन्न भवति । यत 'रात्स' इत्यत प्रागेव यत्सूत्रं तदेवासद्भवति, इदं तु 'रात्स' इत्यत परम् इति नासत् । तत पथीयतीति क्विपि अलोपे यलोपे चेदं रूपम् । नन्वनेनात्वरूपे स्यादिविधौ विधातव्ये नलोपस्यासिद्धत्वान्नान्तत्वमस्ति । न च वाच्यम् 'अत' इत्यल्लुक 'स्वरस्य परे'—इति स्थानिवद्भावेन नान्तत्वानुपपत्तिरिति, यत, प्रत्यासत्तेर्यन्निमित्तो लुक् विधिरपि यदि तन्निमित्तो भवतीति व्याख्यानात् । अत्र तु अस्य लुक् क्विपि आत्वं तु सौ प्रत्यये प्राप्नोतीति कृत्वान्न नान्तत्वमस्त्येवेति प्राप्नोत्यात्वम् । सत्यम् । नान्तेत्यव्यावृत्तिनलादेव न भवति । अन्यथा यत्रकुत्रापि नलोपस्तत्र सर्वत्राप्यमीषां पथ्यादीनां ध्वनीनामनेनात्वलक्षणे स्यादिविधौ कर्तव्ये 'णषमसत्परे'—इति न्यायेन नलोपस्यासिद्धत्वे नान्तत्वसद्भावादनेनात्वं भवेदेवेति अत्र सूत्रे नान्तनिर्देशोऽनर्थकः स्यात् । तस्माद्यत्र साक्षान्नान्तत्वममीषां भवति तत्रेदं प्रवर्ततेऽन्यत्र तु व्यावृत्तिरिति सर्वं समीचीनम् । तर्हि दीर्घङ्याबिति सूत्रेण सेर्लुक् कस्मान्न भवति यतोऽयमपि स्यादेर्विधि स्यादिविधौ च नलोपोऽसन् भवतीति । सत्यम् । दीर्घङ्याबित्यत्र सावधारणं व्याख्येयम् । व्यञ्जनान्तादेव यदि सिर्भवतीति । विहितविशेषणाद्वा । यत्र एभ्य परं सिर्विहितो भवति तत्र लुग् भवति अत्र त्वीकारान्ताद्विहितो न व्यञ्जनान्तादिति । तर्हि या सा इत्येवमादिषु सेर्लुक् न प्राप्नोति । सत्यम् । यत्रैतेषां मध्यादेकस्माद्विहितो भवति कार्यान्तरेषु च कृतेष्वेतेषामेव मध्येऽन्यतमस्मात्परो भवति तत्रापि भवति । तेनानयोः प्रयोगयोर्व्यञ्जनान्तात् परो विहितः कार्यान्तरेषु च सत्सु विद्यते आबन्तादिति सेर्लुक् भवत्येव । य स इत्यनयोस्तु व्यञ्जनान्ताद्विहितोऽसि परम् आद्दर इत्यादिकार्येषु कृतेषु सत्सु पश्चादमीषां मध्यादेकस्मादपि परो नास्तीति न सेर्लुक् ॥—बहुऋभुक्षा इति । 'ऋलति ह्रस्वो वा' इति ह्रस्व । स्त्रीत्वाभावादिन, कच् न भवति ॥—हे सुपथिन्, हे सुपथीति । 'क्लीबे वा' इत्यनेन वा नस्य लोप ॥—एः॥ पथ्यादीनामेकारस्यासम्भवात् एरिति इकारात् षष्ठीत्याह—इकारस्येति ॥—

नकारान्तनिर्देशादर्भावाचेह न भवति। पन्थानमिच्छति क्यन् क्विप्। पथ्यौ। पथ्यः। पथ्यम्। घुटीत्येव। सुपथी वने। पथिभ्याम्। सुमथी कुले। मथिभ्याम् ॥ ७७ ॥ *थो न्थ् । १ । ४ । ७८ ॥ पथिन् मथिन् इत्येतयोर्नकारान्तयोस्थकारस्य स्थाने घुटि परे न्थ् इत्ययमादेशो भवति। तथैवोदाहृतम्। घुटीत्येव। सुपथी। बहुपथी कुले। पथः पश्य ॥ ७८ ॥ *इन् ङीस्वरे लुक् । १ । ४ । ७९ । पथ्यादीनां नकारान्तानां ङीप्रत्यये*अघुट्स्वरादौ च स्यादौ परे इन् अवयवो लुक् भवति। *सुपथी स्त्री कुले वा। पथः। पथा। पथे। पथः २। पथोः २। पथाम्। पथि। एवं सुमथी स्त्री कुले वा। मथः। मथा। अनृभुक्षी सेना कुले वा। ऋभुक्षः। ऋभुक्षा। अभेदनिर्देशः सर्वादेशार्थः॥ ७९ ॥ *वोशनसो नश्चामन्त्र्ये सौ । १ । ४ । ८०॥ आमन्त्र्येऽर्थे वर्तमानस्योशनस्शब्दस्य सौ परे नकारो लुक्चान्तादेशौ वा भवतः। हे उशनन्। हे उशनः। आमन्त्र्य इति किम्। उशना। साविति किम्। हे उशनसौ ॥ ८० ॥ *उतोऽनडुच्चतुरो वः ।१।४।८१॥ अनडुह् चतुर् इत्येतयोरामन्त्र्येऽर्थे वर्तमानयोरुकारस्य सौ परे व इति सस्वरवकारादेशो भवति। हे अनड्वन्। हे प्रियानड्वन्। हे अतिचत्वः। हे प्रियचत्वः। आमन्त्र्य इत्येव। अनड्वान्। प्रियचत्वाः। सावित्येव। हे अनड्वाहौ। हे प्रियचत्वारः ॥८१॥ *वाः शेषे । १ । ४ । ८२ ॥ आमन्त्र्यार्थविहितात्सेरन्यो घुट् *इह शेषः, तस्मिन्परेऽनडुह्चतुरित्येतयोरुकारस्य वा इत्याकारान्तो वकार आदेशो भवति। अनड्वान्। अनड्वाहौ। अनड्वाहः। अनड्वाहम्। अनड्वाहौ। प्रियानड्वांहि कुलानि। प्रियचत्वाः। प्रियचत्वारौ। प्रियचत्वारः। प्रियचत्वारम्। प्रियचत्वारौ। चत्वारि। चत्वारः। शेष इति किम्। हे प्रियानड्वन्। हे प्रियचत्वः। घुटीत्येव। अनडुहः पश्य। प्रियानडुही कुले। प्रियचतुरी कुले। इह शेषे घुटि वादेशविधानात्पूर्वत्रामन्त्र्ये साविति संबध्यते ॥८२॥ *सख्युरितोऽशावैत् । १ । ४ । ॥ ८३ ॥ सखिशब्दस्येकारान्तस्य तत्संबन्धिन्यन्यसंबन्धिनि वा शिवर्जिते शेषे घुटि परे ऐकारान्तादेशो भवति। सखायौ। सखायः। सखायम्। सखायौ। हे

---

थो न्थ् ॥ अनेकवर्णत्वात्सर्वस्य प्राप्तौ थ इति स्थानिविशेषार्थमृभुक्षिनिवृत्त्यर्थं च ॥–इन् ङी–॥–अघुट्स्वरादाविति। ङीसाहचर्यात् अघुटीति विशेषणं ज्ञेयम्। तर्हि स्यादिमन्तरेणापि प्राप्नोतीति न वाच्यम्। स्याद्यधिकाराश्रयणात् ङीग्रहणस्य वैयर्थ्यप्रसङ्गाच्च। निमित्तविशेषानुपादाने घुटीत्यधिकारस्य निर्णीतत्वात्स्वर इति निमित्तविशेषोपादानात् घुटि च पथ्यादीनामिनो विशेषविधिविषयत्वादघुट्स्वरे इत्यवसीयते ॥–सुपथी स्त्री कुले वेति। व्युत्पत्तिपक्षे सुभ्र्वादित्वात्, उणादीनामव्युत्पन्नानि नामानीति पक्षाश्रयणात् इन्नन्तत्वाभावादिनः कच् न भवति। समासान्तविधेरनित्यत्वात् 'ऋक्पूर्'—इत्यपि न। नान्तत्वात् 'स्त्रियां नृत' इति ङी ॥–वोशनसो–॥ यदा सर्वविधिभ्यो लोप इति न्याय आश्रीयते तदा से स्थानिवद्भावेन कार्यम् ॥–उतोऽनडु–॥ उत्तरत्र शेषग्रहणादामन्त्र्यसिरेवानुवर्तते न तु विशेषनिमित्तानुपादानात् घुटीति॥ सत्यपि नामग्रहणे लिङ्गविशिष्टस्येति हे अनडुहीत्यत्र गौरादिनिपातनाद्वत्वाभावः। एवमुत्तरत्रापि ॥ चतुःशब्दस्यार्थप्राधान्येन एकामन्त्रणासम्भवे समासे उपसर्जनीभूत एवोदाह्रियते ॥–वाः शेषे ॥–इह शेष इति। अत्र सूत्रे शेषस्य घुट आघ्रातत्वात् एतत्सूत्रमुक्तं प्राक्तनसूत्रविषय इति भावः ॥—सख्युरि—॥ ननु प्रक्रियालाघवार्थं सख्युरितोऽशावाय् इति क्रियताम् किमैत्करणेन। न। अनेकवर्णेति सकलस्यापि स्यात्। न च

पश्य वा । इत इति किम् । इमे सख्यौ । स-
सखायौ । हे सखायः। सुसखायौ । प्रियसखायः। *अशाविति किम् । *अतिसखीनि प्रियसखीनि कुलानि तिष्ठन्ति । खीयतीति क्यनि क्विपि, सख्यौ । सख्यः । घुटीत्येव । सखीन् । सख्या । शेष इत्येव । हे सखे । इदमेवेद्ग्रहणं ज्ञापयति 'नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' 'एकदेशविकृतमनन्यवद्' इति च ॥ ८३ ॥ *ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डाः । १ । ४ । ८४ ॥ ऋकारान्तादुशनस्पुरुदंशसनेहस् इत्येतेभ्यः सख्युरितश्च परस्य शेषस्य सेः स्थाने डा इत्ययमादेशो भवति । पिता । अतिपिता । कर्ता । उशना । पुरुदंशा । अनेहा । सखा । अत्युशना । प्रियपुरुदंशा । अत्यनेहा । किं-सखा । सुसखा । प्रियसखा । सख्युरित इत्येव । इय सखी । सखीयतेः क्विप् । सखीः । सेरिति किम् । उशनसौ । सखायौ । शेषस्येत्येव । हे कर्तः । हे उशनन् । हे उशन । हे उशनः । हे पुरुदंशः । *हे अनेहः । हे सखे ॥ ८४ ॥ *नि दीर्घः । १ । ४ । ८५ ॥ शेषे घुटि परे यो नकारस्तस्मिन्परे पूर्वस्य स्वरस्य दीर्घो भवति । *राजा । राजानौ । राजानः । राजानम् । राजानौ । सीमा । सीमानौ । सीमानः । सीमानम् । सीमानौ । सामानि । दामानि । लोमानि । वनानि । धनानि । दधीनि । मधूनि । कर्तॄणि । हर्तॄणि । नोति किम् । दृषद् । दृषदौ । दृषदः । 'स्वरस्य ह्रस्वदीर्घप्लुताः' इति *सुगण्यतेः क्विप् । सुक् सुग्, सुगण्यौ, सुगण्यः इत्यत्र घकारस्य दीर्घो न भवति । घुटीत्येव । चर्मणा । वारिणी । मधुनी । शेष इत्येव । हे राजन् । हे सीमन् ॥ ८५ ॥ *न्स्महतोः । १ । ४ । ८६ ॥ न्सन्तस्य महच्छब्दस्य च संबन्धिनः स्वरस्य शेषे घुटि परे दीर्घो भवति । श्रेयान् । श्रेयांसौ । श्रेयांसः । श्रेयासम् । श्रेयांसौ । परमश्रेयान् । अतिश्रेयान् । प्रियश्रेयान् । श्रेयांसि । यशांसि । *सर्पींषि । धनूंषि । प्रियपुमांसि कुलानि । महान् । महान्तौ । महान्तः । महान्तम् । महान्तौ । परममहान् । अतिमहान् । प्रियमहान् । महान्ति ।

॥—अशाविति । अथ शौ सति आदेशादागम इति न्यायात् निर्दिश्यमानानामिति इत एवायिति वाच्यम् । यतो विभक्तिसामान्येन सखिशब्दस्य विशेष्यत्वेन इकारस्य विशेषणत्वेन च निर्दिश्यमानत्वाभावात् । कृतेऽप्यैकारे क्लीब इति ह्रस्वत्वे ततो नागमे दीर्घत्वे च न ऐत्वात् प्रथममेव नागमेन भाव्यम् ततस्तेन व्यवधानादैकारो न भविष्यतीति । न च द्वयोरप्यन्यत्र सावकाशत्वादैकार स्यादिति वाच्यम् । कृतेऽप्यैकारे क्लीब इति ह्रस्वत्वे ततो नागमे दीर्घत्वे च न कश्चिद्दोष । नैवम् । असिद्धं बहिरङ्गमिति घुट्निमित्तस्यैकारस्य बहिरङ्गत्वात् ह्रस्वत्वे कर्तव्येऽसिद्धत्वात् । ननु भवत्वेव तथापि कृताकृतप्रसङ्गित्वेन नित्यत्वात् पूर्वं नागम इति घुड्व्यवधायको भविष्यति । नैवम् । कृतेऽपि नागमे प्रकृतिभक्तत्वेनाव्यवधायकत्वात् ऐकारोऽपि नित्य इति द्वयोर्नित्ययो परत्वादैकार एव स्यादिति शिप्रतिषेध ॥—अतिसखीनि । पूजित सखा येषु कुलेषु । यद्वा सखिशब्दो नपुसकोऽपि लक्ष्येषु दृश्यते ॥—ऋदुशनस्— ॥ ऋकारान्तस्याडौचेत्यरि, त्रयाणा 'दीर्घङयाब्'—इति सिलोपे अभ्वादेरिति दीर्घत्वे सोरुरिति रुत्वे च, सखिशब्दस्य तु ऐत्वे प्राप्ते आरम्भ ॥—हे अनेह इत्यत्र 'न सधि' इति सधिनिषेध ॥—नि दीर्घः ॥—राजेति ॥ स्यादिविधौ कर्तव्ये नलोपस्यासत्त्वात् प्रथम लुक् न ॥—सुगण्यते क्विबिति । सुचो हन्ति अचित्ते टक् । अधिकरणे तु स्यादिभ्य क 'गमहन्'—इत्यलुक् ॥ हनो ह्नो घ्न ॥ दीर्घविधित्वात् णे स्थानिवद्भावो न भवति सौ 'नाम्नो नोऽनह' इति नलोप । तत 'पदस्य' इति घलोप ॥—न्स्महतो ॥ अत्र औणादिको 'द्रुहिवृहि'—इत्यनेन कतप्रत्ययान्तो व्युत्पन्नोऽव्युत्पन्नो वा महच्छब्दो ग्राह्य । यस्तु शत्रन्तस्तस्य महन्नित्येव, न त्वनेन दीर्घ । लक्षणप्रतिपदोक्तयोरिति न्यायात् । यत शतृप्रत्ययान्त महदिति रूप लाक्षणिक कतप्रत्ययान्त तु प्रतिपदोक्तम् । एतच्च वत्सतृषभावूचतु ॥—सर्पींषीति । अत्र 'न्स्महतो' इत्यनेन दीर्घलक्षणे सादिविधौ विधातव्ये 'णषमसत् परे'—इत्यनेन

*महत्साहचर्याच्छुद्धधातोः क्विबन्तस्य न भवति। सुहिंसौ। सुहिंसः। सुकंसौ। सुकंसः। नामधातोस्तु भवत्येव। श्रेयस्यति क्विपि, श्रेयान्। महान्। घुटीत्येव। श्रेयस., महतः पश्य। *महती कुले। शेष इत्येव। हे श्रेयन्। हे महन् ॥ ८६ ॥ *इन्हन्पूषार्यम्णः शिस्योः। १। ४। ८७॥ इनन्तस्य हनादीनां च संबन्धिनः स्वरस्य शौ शेषे सौ च परे दीर्घो भवति। दण्डीनि। स्रग्वीणि। वाग्ग्मीनि कुलानि। दण्डी। स्रग्वी। वाग्मी। *भ्रूणहानि। बहुवृत्रहाणि। भ्रूणहा। वृत्रहा। *बहुपूषाणि। पूषा। स्वर्यमाणि। अर्यमा॥ 'नि दीर्घः' (१। ४। ८५) इति सिद्धे नियमार्थं वचनम्। *एषां शिस्योरेव यथा स्यात् नान्यत्र। दण्डिनौ। दण्डिनः। दण्डिनम्। *वृत्रहणौ। वृत्रहणः। वृत्रहणम्। पूषणौ। पूषणः। पूषणम्। अर्यमणौ। अर्यमणः। अर्यमणम्। शेष इत्येव। हे दण्डिन्। हे वृत्रहन्। हे पूषन्। हे अर्यमन्। 'अर्थवद्ग्रहणे नानर्थकस्य' इति प्लीहानौ प्लीहान प्लीहानमित्यत्र नियमो न भवति। वाग्ग्मिनौ वाग्ग्मिन इत्यादौ तु 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च *तदन्तविधिं प्रयोजयन्ति' इति न्यायाद्भवति ॥ ८७ ॥ अपः। १। ४। ८८॥ अपः स्वरस्य शेषे घुटि परे दीर्घो भवति। आपः। शोभना आपो यत्र स्वाप्। स्वापौ। स्वापः। बह्वपा इत्यत्र समासान्तेन व्यवधानान्न भवति। घुटीत्येव। अपः पश्य। शेष इत्येव। हे स्वप् ॥ ८८ ॥ नि वा। १। ४। ८९॥ अप स्वरस्य नागमे सति घुटि परे वा दीर्घो भवति। स्वाम्पि। स्वम्पि। अत्याम्पि। अत्यम्पि। समासान्तविधेरनित्यत्वात् बह्वाम्पि बह्वम्पि ॥ ८९ ॥ *अभ्वादेरत्वसः सौ। १। ४। ९०॥ अत्वन्तस्यासन्तस्य च भ्वादिवर्जितस्य संबन्धिनः स्वरस्य शेषे सौ परे दीर्घो भवति। अतु,*भवान्। कृतवान्। गोमान्। यवमान्। एतावान्। अस्, अप्सराः। अङ्गिराः। चन्द्रमाः। स्थूलशिराः। सुमनाः। अभ्वादेरिति किम्। पिण्डं ग्रसते पिण्डग्र। चर्म वस्ते चर्मवः। 'अर्थवद्ग्रहणे नानर्थकस्य' इत्येव सिद्धे भ्वादेरिति वचनम् 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति न्यायज्ञापनार्थम्। तेनात्रापि भवति। खरणाः। खुरणा.। अधातोरित्यकृत्वाभ्वादेरिति करणं भ्वादीनामेव वर्जनार्थम्। तेनेह भवति। गोमन्तमिच्छति क्यन् क्विप्। गोमान्। एवं स्थूलशिराः। शेष

---

त्वमसत् ॥—महत्साहचर्यादिति। महदिति शुद्धो धातु क्विबन्तो न सभवति तत्साहचर्यादन्यस्यापि शुद्धधातो क्विबन्तस्य न भवति। नामधातुस्तु महदपि क्विबन्त सभवति। अतोऽन्यस्यापि नामधातो क्विबन्तस्य भवति। महच्छन्दस्तावन्नामत्व न व्यभिचरति तत्सनियोगनिर्दिष्टस्य न्सन्तस्यापि नामत्वाव्यभिचारिण एव ग्रहणम् ॥—महती कुले इति। श्रेयस पश्य। श्रेयसी कुले इति तु न दर्श्यते। न्सन्तत्वाभावेन व्यङ्गविकलत्वात् ॥—इन्हन्—॥—भ्रूणहानीति। हन्निति हन्ते क्विबन्तस्यैद ग्रहणम्। न च हन्ते केवलस्य क्विप् दृश्यते इति तदन्तमुदाहरति ॥—बहुपूषाणीति। पूषार्यम्णोः स्वप्रधानाया वृत्तौ शेरसभवात् तौ समासे उपसर्जनभूतावुदाहरति ॥—एषां शिस्योरेवेति। एषामेव शिस्योरिति विपरीतनियमस्तु न भवति। 'वश्यज्याय'—इत्यत्र युवेति, 'पराणि कान'—इत्यत्र तु पराणीति निर्देशात् ॥—वृत्रहणाविति। सज्ञाया 'पूर्वपदस्था'—इत्यनेन, असज्ञाया तु 'कवर्गैकस्वरवति' इति णत्वम् ॥—तदन्तविधिमिति। ननु 'अनिनस्मन्' इत्यत्रातोरनिर्देशात् अनर्थकेन तदन्तविधेरप्रयोगात् अर्थवद्ग्रहणन्यायात् क्रियानित्यत्रैव दीर्घं प्राप्नोति न गोमानित्यादौ। सत्यम्। अतुरनर्थकोऽपि तदन्तविधि प्रयोजयति। मत्वादीनामुकारानुबन्धकरणात्। अन्यथा तेषामपि शतृवत् ऋकारमेवानुबन्ध कुर्यात् ॥—अभ्वादे—॥—भवानिति। नोन्ते सत्यपि 'आगमोऽनुपघातेन' इति न्यायात् भवत्येव दीर्घ ॥—कृशस्तुन—॥—तृजादेश इति। आदेश इत्युक्ते सकल

इत्येव । हे भवन् । हे सुमन. । अतु इति उदित्करणादृदितो न भवति । पचन् । जरन् ॥ ९० ॥ *क्रुशस्तुनस्तृच् पुंसि । १ । ४ । ९१ ॥ क्रुश परो यस्तुन्
तस्य शेषे घुटि परे *तृजादेशो भवति पुंसि *पुंलिङ्गविषये । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । अतिक्रोष्टा । प्रियक्रोष्टा । बहुव्रीहौ 'असिद्धं बहि-
रङ्गमन्तरङ्गे' इति ऋदिल्लक्षणः कच् न भवति । पुंसीत्येव । कुशक्रोष्टूनि वनानि । घुटीत्येव । क्रोष्टून् । शेष इत्येव । हे क्रोष्टो । *'क्रोष्टो' क्रोष्टृ' इत्यकृत्वा तृज्व-
चनं स्वस्रादिसूत्रेणारर्थम् ॥ ९१ ॥ *टादौ स्वरे वा । १ । ४ । ९२ ॥ टादौ स्वरादौ परे क्रुशः परस्य तुनस्तृजादेशो वा भवति पुंसि । क्रोष्ट्रा । क्रोष्टुना ।
क्रोष्ट्रे । क्रोष्टवे । क्रोष्टुः । क्रोष्टोः । क्रोष्ट्रोः । क्रोष्ट्वोः । क्रोष्टरि । क्रोष्टौ । क्रोष्टूनामित्यत्र तु *नित्यत्वात्पूर्वं नामादेशे स्वराभावान्न भवति । टादाविति किम् ।
क्रोष्टून् । क्रोष्टूनित्यपीति कश्चित् । स्वर इति किम् । क्रोष्टुभ्याम् । क्रोष्टुभिः । पुंसीत्येव । कुशक्रोष्टुने वनाय । यद्यपि तृप्रत्ययान्तो *मृगवाची स्यात् , *तथापि
प्रयोगनियमो *दुर्विज्ञान इत्यादेशवचनम् ॥ ९२ ॥ *स्त्रियाम् । १ । ४ । ९३ ॥ घुटीति न संबध्यते । क्रुशस्तुनस्तृच्पुंसि स्त्रियां चेत्येकयोगाकरणात् । स्त्रियां
वर्तमानस्य क्रुश. परस्य तुनस्तृजादेशो भवति *निर्निमित्त एव । क्रोष्ट्री । अत्र प्रागेव तृजादेशे ऋदन्तत्वान्ङीः । क्रोष्ट्र्यौ । क्रोष्ट्र्य । क्रोष्ट्रीम् । क्रोष्ट्र्या ।

---

स्यापि तुनस्तृजादेशो भवति । तथा चोक्तम् – एकस्यावयवस्य यो भवति स प्रोक्तो विकारो बुधैरादेशस्त्वसभूरिव प्रकटित सर्वोपमर्दात्मक ॥—**पुंलिङ्गविषये** इति । समासेऽपि यदि पुलिङ्गविषय
एव । तेन प्रिय क्रोष्टा यस्या यस्य वा कुलस्येत्यत्र न भवत्येव आदेश । अत एव व्यावृत्तिः क्लीबविषये दर्शिता ॥—**कोष्टोरिति** । क्रोष्टो क्रोष्टृ पुसि इति द्रष्टव्यम् ॥—**टादौ** ॥—**नित्यत्वादिति** ।
कृताकृतप्रसङ्गिन्यायेनेति । क्रोष्टूनित्यपि कश्चित् तन्मतसग्रहार्थं टाया आदिष्टादिरिति व्याख्यान कर्तव्यम् ॥—**मृगवाचीति** । मृगशब्दस्यारण्यपशुवाचित्वेऽपि शृगाल एवार्थेऽत्र वृत्तिर्दृश्या ॥—**दुर्विज्ञान**
इति ॥ ननु यदा ऋदन्तेन प्रयोजन तदा तृचि यदा तु उदन्तेन तदा तुनि साध्यसिद्धिर्भविष्यति किं तृजादेशविधानेन । सत्यम् । शेषे घुटि पुसि च नित्य टादौ स्वरे वा इत्येतस्माद्विषयादन्यत्रापि
तृच् प्रत्यय स्यात् । स्थिते तु यत्र तुनस्तृजादेशस्तत्रैव मृगवाचित्वम् । तृचि प्रत्यये तु क्रियाशब्दत्वमिति नियमसिद्धि ॥—**तथापि प्रयोगनियम** इति । अथ परो ब्रूते क्रोष्टा क्रोष्ट्रे क्रोष्टु क्रोष्टु
क्रोष्ट्रो क्रोष्ट्रो इत्याद्यर्थं तृच् अनिष्यते । न च वक्तव्यम् तृप्रत्ययान्तस्य सज्ञित्व न प्रतीयते भीरुरमणीत्यादिवत् प्रतीयते एव । क्रोष्टुना क्रोष्टवे इत्यर्थं तु विधायिष्यते एव अतो निरर्थक सूत्रमिदम् ।
न । यद्यपि तृप्रत्ययान्तस्यापि मृगवाचित्वमुन्मज्जति तथापि प्रयोगनियमो दुर्घट सूत्र विना न ज्ञायते कस्मिन् विषये तुन् कस्मिन् विषये तृच् यदा व्यञ्जनादावपि तृच् स्यात् तदा चानिष्टानि रूपाणि स्यु
क्रोष्टृभ्याम् क्रोष्टृभि क्रोष्टृष्विति । इष्टानि तु तुन्नन्तान्येव व्यञ्जनादौ । कृते सूत्रे मृगे वाच्ये टादौ स्वर एव तृ पूर्वेण घुट्येव तृ । अन्यत्र तुनेव । क्रियाशब्दस्य तु सर्वत्रास्त्येव तृच् ॥—
**तथापीति** । तुन्नन्तो मृगवाच्येव तृच्प्रत्ययान्तस्तु कस्मिन् विषये मृगवाचीति न ज्ञायते । तुनस्स्थानप्रवृत्तेन तु तृचा ज्ञाप्यते यत्र घुटि टादौ स्वरादौ च तृच् तत्रैव मृगवाचित्वम् । तेन मृगे वाच्ये
क्रोष्टृभ्यामित्यादि न भवतीति नियमसिद्धि ॥—**स्त्रियाम्** ॥ स्त्रिया चेति एकयोगेऽपि स्त्रिया चेत्यसमस्तनिर्देशस्येद फलम् यत् स्त्रियामित्युत्तरसूत्रे याति । अन्यथा पुस्त्रियोरित्येव कुर्यात् ॥—**निर्निमित्त**
**एवेति** । ननु निमित्तत्वाश्रयणे ऋकारान्तत्वाभावात क्रोष्टुशब्दस्य कथ ङी स्यात् । सत्यम । गौरादौ पाठात् ङी स्यादेवेति ङीसिद्धि पर निमित्तव्याख्याया स्त्रिया ङ्यामिति सूत्र कुर्यात् ॥ इति प्रथम-
स्याध्यायस्य चतुर्थ पाद ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ इति प्रथमाध्याय समाप्त ॥

क्रोष्ट्रीभ्याम्। हे क्रोष्ट्रि। पञ्चभिः क्रोष्ट्रीभिः क्रीतैरिति विगृह्य 'मूल्यैः क्रीते' (६।४।१५०) इतीकण्। तस्य 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इति लुपि, 'ङ्यादेर्गौणस्य'—(२।४।९५) इत्यादिना ङीनिवृत्तौ, पञ्चक्रोष्टृभी रथैः। अत्र निर्निमित्तत्वादादेशस्य ङीनिवृत्तावपि निवृत्तिर्न भवति। अत एव च 'क्यङ्मानिपित्तद्धिते' (३।२।५०) इति पुंवद्भावो न भवति। पुंवद्भावेनापि हि आदेश एव निवर्तनीय। स च निमित्तत्वाश्रयणेन ङीनिवृत्तावपि निवर्तते एव ॥ ९३ ॥ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ प्रथमस्याध्यायस्य चतुर्थः पादः ॥ १।४ ॥

सोत्कण्ठमङ्गलगतैः कचकर्षणैश्च वक्त्राब्जचुम्बननखक्षतकर्मभिश्च ॥
श्रीमूलराजहतभूपतिभिर्विलेसुः संख्येऽपि खेऽपि च शिवाश्च सुरस्त्रियश्च ॥ १ ॥

॥ समाप्तोऽयं बृहद्वृत्तौ प्रथमोऽध्यायः ॥

# ॥ द्वितीयोऽध्यायः ॥

॥ अर्हं ॥

**त्रिचतुरस्तिसृचतसृ स्यादौ । २ । १ । १ ॥** स्त्रियामित्यनुवर्तते । त्रि चतुर् इत्येतयोः स्त्रीलिङ्गे वर्तमानयोस्तत्संबन्धिन्यन्यसंबन्धिनि वा स्यादौ विभक्तौ तिसृ चतसृ इत्येतावादेशौ यथासंख्यं भवतः । तिस्रस्तिष्ठन्ति । तिस्रः पश्य । चतस्रस्तिष्ठन्ति । चतस्रः पश्य । तिसृभिः । चतसृभिः । तिसृभ्यः । चतसृभ्यः । तिसृणाम् । चतसृणाम् । तिसृषु । चतसृषु । प्रियास्तिस्रोऽस्येति प्रियतिसा पुरुषः । प्रियतिस्रौ । प्रियतिस्रः । एवं प्रियचतसा । प्रियचतस्रौ । प्रियचतस्रः । प्रियास्तिस्रोऽस्य कुलस्य प्रियतिसृ कुलम् । प्रियतिसृणी । प्रियतिसृृणि । एवं प्रियचतसृणी । प्रियचतसृृणि । एषु विभक्त्याश्रयत्वेन बहिरङ्गलक्षणस्य तिसृचतस्रादेशस्यासिद्धत्वात्समासान्तः कज् न भवति । परत्वाच्च तिस्रादेशे कृते पश्चान्नागमः । स्यादाविति किम् । प्रियत्रिकः । प्रियचतुष्कः । तिसृणां प्रियस्त्रिप्रियः । चतुष्प्रियः । प्रियत्रि कुलम् । प्रियचतुष्कुलम् ॥ कथं तर्हि प्रियतिसृ कुलम् । 'नामिनो लुग्वा' (१ । ४ । ६१ ) इति लुकि सति स्थानिवद्भावाद्भविष्यति । यथा हे त्रपो ॥ स्त्रियामित्येव । त्रयः । चत्वारः । त्रीणि । चत्वारि । प्रियास्त्रयः त्रीणि वा यस्याः सा प्रियत्रिः । प्रियत्री । प्रियत्रयः । एवं प्रियचत्वाः । प्रियचत्वारौ । प्रियचत्वारः । अत्र त्रिचतुरावस्त्रियां समास एव तु स्त्रियामित्यादेशौ न भवतः ॥ कथं तिसृका नाम ग्रामः । संज्ञाशब्दोऽयम् ॥ १ ॥ **ऋतो रः स्वरेऽनि । २ । १ । २ ॥** तिसृचतसृसंबन्धिन ऋका-

---

त्रिचतुर• ॥—**स्त्रियामित्यनुवर्तते** इति । पूर्वसूत्रादिति शेष । तच्च श्रुतत्वात् त्रिचतुर इत्यस्यैव विशेषणम् ॥—**तिस्र** इत्यादौ विधानसामर्थ्यान्न णत्वम् ॥—**परत्वादिति** । ननु कृताकृतप्रसङ्गित्वेन नित्यत्वात् आदेशादागम इति च न्यायात् पूर्वं नागम एव प्राप्नोति । नेवम् । शब्दान्तरप्राप्त्या नागमोऽप्यनित्य । यद्वा, परत्वादिति कोऽर्थ प्रकृष्टत्वादित्यर्थ । प्रकृष्टत्व च आगमात्सर्वादेश इति न्यायात् । किंच । ऋतो र स्वरेऽनीत्यत्रानीति वचनमनर्थकं स्यात् । स्वरादौ पूर्वं नकारे तिस्राद्यादेशाभावात् रत्वप्रसङ्ग एव नास्तीति अनीति वचनात् पूर्वं नागमादेस्ति स्राद्यादेश इति ॥—**प्रियतिसृ कुलमिति** । 'नामिनो लुग्वा' इत्यत्र चतुर्शब्दस्यापि लुग्विकल्पमिच्छन्त्येके । तन्मते प्रियचतसृ कुल प्रियचतुर्वा कुलमिति ॥—**प्रियत्रिरित्यादि** । स्त्रीलिङ्गविवक्षायामपि समासात् ङीप्रत्यये प्रियत्र्येव । शेषाद्वेति कचि प्रियत्रिकैवमादेशो न भवति । प्रथम ङीप्रत्यये पश्चात् बहुव्रीहिसमासे 'ऋन्नित्यदित' इति कवेव । यदा तु केवलात् त्रिशब्दात् ङीस्तदा तु एकदेशविकृतत्वेनादेशो भवति ॥—**कथं तिसृका नामेति** । त्रिशब्दात् सज्ञाया के आपि बहुवचने च स्यादेर्व्यवधानात् कथ तिसृभाव इति प्रष्टु सशय । समाधत्ते-( **स्त्रीलिङ्गो बहुवचनविषयः** ) **संज्ञाशब्दोऽयमिति** । तस्यन्ति परवलान्यासु 'निष्कतुरुष्क—' इति निपात्यते ॥—**ऋतो र**—॥ अनीति नकार प्रत्ययरूप आगमरूपो वा ॥—**समानदीर्घत्वेति** । श-

रस्य स्थाने तत्संबन्धिन्यन्यसंबन्धिनि वा स्वरादौ स्यादौ परतो रादेशो भवति, अनि नकारविषयादन्यत्र ।*समानदीर्घत्वाद्डुरागमपवादः । तिस्रः चतस्रस्तिष्ठन्ति, प-
श्य वा । प्रियतिसौ । प्रियचतसौ । प्रियतिसम् । प्रियचतसम् । प्रियतिसः प्रियचतसः आगतं स्वं वा । प्रियतिसि प्रियचतसि निधेहि । स्वर इति किम् । तिसृभिः
। चतसृभिः । अनीति किम् । प्रियतिसृणी । प्रियचतसृणी । प्रियतिसृणि । प्रियचतसृणि । तिसृणाम् । चतसृणाम् । ऋत इति तिसृचतसोः प्रतिपत्त्यर्थम् । इतरथा हि
*तदपवादत्वाच्चतुरोरेवागमादेशो विज्ञायेत ॥ *अन्ये तूपसर्जनयोस्तिसृचतसृशब्दयोर्ङौ घुटि चानि स्वरादौ रत्वविकल्पमिच्छन्ति । तन्मते प्रियतिसि प्रियतिसरि । प्रि-
यचतसि प्रियचतसरि । प्रियतिसौ । प्रियतिसरौ । प्रियचतसौ प्रियचतसरौ । प्रियतिसः प्रियतिसरः । प्रियचतसः प्रियचतसरः । प्रियतिसम् । प्रियतिसरम् । प्रिय-
चतसम् । प्रियचतसरम् । प्रधानस्य तु नित्यमेव रत्वम् । तिस्रः । परमतिस्रः । चतस्रः परमचतस्रः ॥ *अपरे त्वनि स्वरे सर्वत्र विकल्पं जस्शसोस्तु नित्यं मन्यन्ते । तन्मते
प्रियतिसौ प्रियतिसरौ । प्रियचतसौ प्रियचतसरौ । प्रियतिसः प्रियतिसुः प्रियचतसः प्रियचतसुः आगतं स्वं वा इत्यादि । जस्शसोस्तु, तिस्रः । चतस्रः । परमतिस्रः । परम-
चतस्रः । प्रियतिसः प्रियचतसः तिष्ठन्ति पश्य वेति नित्यमेव रत्वम् ॥ २ ॥ जराया जरस् वा ।२।१।३॥ जराशब्दस्य स्वसंबन्धिन्यन्यसंबन्धिनि वा स्वरादौ स्यादौ परतो
जरस् इत्ययमादेशो वा भवति । जरसौ । जरसः । जरसम् । जरसौ । जरसः । जरसा । जरसे । जररः । जरसः । जरसोः । जरसाम् । जरसि । जरसोः । पक्षे, जरे । जराः ।
जराम् । जरे । जराः । जरया । जरायै । जरायाः २ । जरयोः २ । जराणाम् । जराणाम् । एकदेशविकृतस्यानन्यत्वात् अतिजरसौ । अतिजरौ । अतिजरसः । अतिजराः । अतिज-
रसम् । अतिजरम् । अतिजरसः । अतिजरान् । अतिजरसा । अतिजरेण । अतिजररोः । अतिजरैः । अतिजरसे । अतिजराय । अतिजरसः । अतिजरात् । अतिजरसः
। अतिजररय । अतिजररोः अतिजरयोः २ । अतिजरसाम् । अतिजराणाम् । अतिजरासि । अतिजरे । नपुंसके स्यमोरम्भावे, अतिजरसम् अतिजरम् । 'जरसो वा'
( १ । ४ । ६० ) इति लुपि, अतिजरः । अतिजरसी, अतिजरे तिष्ठतः पश्य वा ।*शौ परत्वाज्जरसादेशस्ततो नागमः । अतिजरांसि अतिजराणि तिष्ठन्ति पश्य वा ।

सोऽतेति अर्जौ नेति ऋतो डुरिति प्राप्तानाम् ॥-तदपवाद इति । व्यञ्जनादौ स्यादौ पूर्वयोग सावकाश स्वरादौ तु अगमेव स्यात् ॥- अन्ये तु इति । शाकटायनादय ॥-अपरे तु इति । विश्रान्तविद्याधरादय ॥- जराया ज- ॥ जरसा कुण्डानि इत्यत्र ङसो. सावकाशत्वात् परत्वाज्जरसादेश पुनेत्याह—शौ परत्वादिति । ननु पूर्वमपि नागमे कृते सनागमस्यादेशे पुनर्धुडन्तलक्षण नागमे च रूपस्य सिद्धत्वात् किं परत्वचिन्तयेति । उच्यते । यदि पूर्वं नागमः स्यात् स च पूर्वभक्त प्रकृतिमेवानन्यवद्विदध्यात् अवयवस्य तु जरशब्दस्य विभक्तौ जरसादेशो विधीयमानो न प्राप्नोति । अथवा पूर्वं नागमस्तत्र 'आगमोऽनुपघाती' इति अनेन न्यायेन जरसादेशे कृते सकारात्परस्य नागमस्य श्रवणं स्यात् यथा अतिजरसन् इति तस्मात् परत्वाज्जरसादेश इति ॥—

स्त्रियां तु विभक्तेरापा व्यवधानान्न भवति । स्वर इत्येव । जरा । जराभ्याम् । जराभिः । स्यादावित्येव । जराग्रम् । जारः । जारेयः ॥ ३ ॥*अपोऽद्भे । २।१।४॥ अप् इत्येतस्य स्वसंबन्धिन्यन्यसंबन्धिनि वा भकारादौ स्यादौ परतोऽद् इत्ययमादेशो भवति। अद्भिः । अद्भ्य । स्वद्भ्याम् । अत्यद्भ्याम् । भ इति किम् । आपस्तिष्ठन्ति । अपः पश्य । अपाम् । अप्सु । स्यादावित्येव । अब्भक्षः ॥४॥ आ रायो व्यञ्जने । २ । १ । ५ ॥ स्वसंबन्धिन्यन्यसंबन्धिनि वा व्यञ्जनादौ स्यादौ परे रैशब्दस्याकारोऽन्तादेशो भवति । राः । हे राः । अतिराः । राभ्याम् । राभिः । राभ्य । रासु । एकदेशविकृतस्यानन्यत्वात् अतिराभ्यां कुलाभ्याम्। अतिरासु कुलेषु। व्यञ्जन इति किम् । रायौ । रायः । स्यादावित्येव । रैसूत्रम् । रैभयम् । स्मीत्येव सिद्धे व्यञ्जनग्रहणमुत्तरार्थम् ॥ ५ ॥*युष्मदस्मदोः । २ । १ । ६ ॥ युष्मदस्मदित्येतयोः शब्दयोः स्वसंबन्धिनि अन्यसंबन्धिनि वा व्यञ्जनादौ स्यादौ परे आकारोऽन्तादेशो भवति । त्वाम् । माम् । अतित्वाम् । अतिमाम् । युवाम् । आवाम् । अतियुवाम् । अत्यावाम् । युष्मान् । अस्मान् । अतियुष्मान् । अत्यस्मान् । युवाभ्याम् । आवाभ्याम् । अतियुवाभ्याम् । अत्यावाभ्याम् । युष्माभिः । अस्माभिः । अतियुष्माभिः । अत्यस्माभि । युष्मासु । अस्मासु । अतियुष्मासु । अत्यस्मासु । युष्मयतेरस्मयतेश्च क्विप् । युष्म्, अस्म् । अनयोरमौभ्यांसु परत्वात्त्वमाद्यादेशे कृते पश्चा-

---

स्त्रियां त्विति । अतिजरयेत्यत्र हि अतिजरशब्दात् प्रवृत्तेनापूप्रत्ययेन जराशब्दो व्यवधीयते ॥—जारः । जारेयः ॥ जराया अयम् । 'तस्येदम्' इत्यण् । जराया अपत्यम् । 'द्विस्वरादनद्याः' इति एयण् ॥—अपोऽद् भे—॥—स्वभ्याम् । शोभना अतिशयिता वा आपो ययोरिति विग्रहे 'पूजास्वते प्राक्टात्' इति समासान्तप्रतिषेधे भ्यामि सत्यपि तदन्तग्रहणे 'निर्दिश्यमानस्यादेशा भवन्ति' इत्यप एवादेश ॥—अब्भक्ष इति । 'शीलिकामि—' इति ण ॥—आ रायो—॥ आकारस्यैकवर्णत्वात् 'षष्ठ्या अन्त्यस्य' इति रैशब्दान्तस्यैव भवति ॥—स्मीत्येव सिद्धे इति । आमि तु रायमतिक्रान्तानि यानि तेषां 'क्लीबे' इत्यनेन ह्रस्वत्वे सति 'सनिपातलक्षण'—न्यायात् इकाररूप ह्रस्वमाश्रित्य समुत्पन्नो नाम् तद्विघाताय नोत्सहते । तर्हि 'दीर्घो नामि'—इत्यपि न प्राप्नोति । सत्यम् । तदानित्यत्वादस्य न्यायस्य भवत्येव दीर्घ । यतो न्याया हि स्थविरयष्टिन्यायेन प्रवर्तन्ते ॥—उत्तरार्थमिति । यद्येव तत्रैव क्रियता किमत्रानेन सदेहास्पदेन । नैवम् । केचित्सनिपातन्यायमनित्यमाश्रित्य अतिराणामित्याकारमपीच्छन्ति तन्मतसग्रहार्थं व्यञ्जनग्रहणमिहार्थमपि तेन स्वमतेऽपि समतम् ॥—युष्मदस्मदोः ॥ अत्राविवक्षितार्थयोर्युष्मदस्मदोरेतावनुकरणे इति त्यदादिकार्यमेकशेष 'टाङ्योसि—' इत्यनेन युष्मदस्मदादिकार्यं च यत्वादि न प्रवर्तते ॥—अतित्वामिति । नामाधिकारात्तदन्तप्रतिपत्तौ तदन्तमुदाहरति ॥—युष्मयतेरिति । युवां युष्मान्वेति विग्रेयम् न तु त्वामिति, णिचि सति त्वमौ स्याताम् ॥—अमौभ्यांस्विति । अयमर्थ । द्वयोरन्यत्र सावकाशत्वात् शब्दान्तरप्राप्त्या चानित्यत्वात्परत्वात्पूर्वं त्वमाद्यादेश इति । प्रथममात्वे तु

*व्यञ्जन इत्येव ।*युष्मभ्यम् । अस्मभ्यम् ॥ ६ ॥ टाङ्योसि यः । २ । १ । ७ ॥ युष्मदस्मदित्येतयोः स्वसंबन्धिषु अन्यसंबन्धिषु वा टाङिओस् इत्येतेषु स्यादिषु परेषु यकारोऽन्तादेशो भवति । त्वया । मया । अतित्वया । अतिमया । अतियुवया । अतियुष्मया । अत्यस्मया । त्वयि । मयि । अतित्वयि । अतिमयि । प्रिययुवयि । प्रियावयि । प्रिययुष्मयि । प्रियास्मयि । युवयो । आवयोः । अतियुवयोः । अत्यावयो । अतित्वयोः । अतिमयोः अतियुष्मयो । अत्यस्मयोः । टाङ्योसीति किम् । त्वत् । मत् । लुगपवादौ योगौ ॥७॥ *शेषे लुक् । २ । १ । ८ ॥ यस्मिन् प्रत्यये आत्वयकारौ विहितौ ततोऽन्य शेषस्तस्मिन् स्यादौ परे युष्मदस्मदोरन्तस्य लुग्भवति । युष्मभ्यम् । अस्मभ्यम् । अतियुष्मभ्यम् । अत्यस्मभ्यम् । त्वद् । मद् । अतित्वद् । अतिमद् । युष्मद् । अस्मद् । अतियुष्मद् । अत्यस्मद् । युष्माकम् । अस्माकम् । अतियुष्माकम् । अत्यस्माकम् । अलिङ्गे युष्मदस्मदी इति अन्तलोपे *स्त्रियामाप् न भवति । शेष इति किम् । त्वयि । मयि ॥ ८ ॥ *मोर्वा । २ । १ । ९ ॥ युष्मदस्मदित्येतयोर्मकारान्तयोः स्वसंबन्धिनि अन्यसंबन्धिनि वा शेषे स्यादौ परे मकार-

---

॥—व्यञ्जन इत्येवेति । ननु व्यञ्जनग्रहण विनापि युष्मभ्यमित्यादय प्रयोगा सति मन्तत्वाभावात् त्वमादयो न स्यु । णिज्वाक्यावस्थायि यद्बहुवचन तत् क्विवृतौ गौण बभूव इति त्वमौ भवत ॥—व्यञ्जन इत्येवेति । ननु व्यञ्जनग्रहण विनापि युष्मभ्यमित्यादय प्रयोगा अनेनात्वे कृते 'लुगातोऽनाप' इत्याकारलोपे सिध्यन्ति । कि व्यञ्जनाधिकारेण । सत्यम् । सूत्रस्य व्यक्त्या प्रवर्त्तनात् आत्वे कृते लुबादिक न प्रवर्त्तेत इति व्यञ्जनग्रहणम् । तथा व्यञ्जनाभावे युष्माक युपाकमित्यादौ अनेन सूत्रेण आकार एव स्यात् । न तु 'मोर्वा' इति मकारलोप ॥—युष्मभ्यमिति । ननु लुगस्येत्यल्लोपे मोर्वा कथ न । उच्यते । स्वरस्य स्थानिवत्त्वात् । तर्हि युष्मच्छब्दाद्भ्यसोऽभ्यमादेशे लुक् न प्राप्नोति । नैवम् । प्रत्यासत्त्या यस्मिन् प्रत्यये लुग् भवति । तस्मिन्नेव प्रत्यये पूर्वस्य यदि कार्य भवति तदा स्थानित्वमत्र तु प्रत्ययान्तरे लुक् अत स्थानित्वाभाव । मोर्वेति सूत्रस्यानवकाशत्वाद्वा स्थानित्वाभाव ॥—टाङ्यो—॥ ओश्च ओश्च ओसौ 'स्यादावसख्येय' इत्येकशेष । तत टाश्च ङिश्च ओसौ चेति कार्यं तेन षष्ठीसप्तम्योरपि ग्रह । अन्यथा ङिना साहचर्यात् सप्तम्या एव ओसो ग्रहण स्यात् । नन्वत्र ओसग्रहणाभावेऽपि 'शेषे लुग्' इति दलोपे एद्बहुस्भोसीत्यनेन एत्वे एदैतोऽयायित्ययादेशे च अतियुवयोरित्यादि सिध्यतीति । सत्यम् । णिचि अन्त्यस्वरादिलोपे युवावादेशे 'शेषे लुग्' इत्यकारलोपे अकारस्याभावात् युव्योरित्यादौ यत्व न सिध्यतीति ओसग्रहणम् ॥—शेषे—॥ शेषग्रहणाभावे टाङ्योसीत्यधिकार आगच्छेत् । न च वाच्य टाङ्योसीत्यधिकारो यद्यभिप्रेत स्यात्तदा टाङ्योसि यलुकावित्येकमेव कुर्यात् । यतो लुगिति उत्तरार्थ पृथक्करण कर्त्तव्यमेव । अन्यथा टाङ्योसि यलुकावित्यधिकारोऽग्रेतनेऽपि सूत्रे गच्छेत् इत्याशङ्कायां शेषग्रहणम् ॥—स्त्रियामाप्न भवतीति । केवलयोर्युष्मदस्मदोर्नन्ता सख्येति लक्षणेनालिङ्गत्वभणनात् । अथ बहुव्रीहौ तत्पुरुषे चाऽन्यपदार्थादिप्रधानत्वेन युष्मदस्मदन्तस्य स्त्रीत्वे आप् कथ न भवति । उच्यते । सनिपातलक्षणन्यायात् दलोपोऽभ्यम सनिधानव्यवधाने न निमित्तम् । तर्हि युष्मभ्यमित्यादिषु केवलष्वप्यत एव न्यायादाप् न भविष्यति । कि लिङ्गानुशासने तयोर्वर्जनेन । सत्यम् । न्यायाना स्थविरयष्टिन्यायेन प्रवृत्तेर्विश्वास कर्तुमशक्य ॥—मोर्वा । ननु युवामाचष्टे इति वाक्ये णिचि क्विपि स्यादौ युवादेश कथ न भवति । सत्यम् । यदा युष्मदस्मदी द्वित्वे तदा स्यादिर्न यदा

स्य लुग्वा भवति । युवां युष्मान् वा आवामस्मान् वाऽऽचष्टे, णिचि क्विपि तल्लुकि च युष्म् अस्म् इति मान्तत्वम् । युष्मभ्यम् । अस्मभ्यम् । युषभ्यम् । असभ्यम् । युष्मद् । युषद् । अस्मद् । असद् । युष्माकम् । युषाकम् । अस्माकम् । असाकम् । शेष इत्येव । युषान् । असान् । युषाभिः । असाभिः । युषासु । असासु । एषु पूर्वेण मकारस्यात्वम् । टाङ्योसि नित्यत्वात्त्वमादिकार्येभ्यः प्रथममेव पूर्वेण मकारस्य यत्वे, युष्या । अस्या । युष्यि । अस्यि । युष्योः । अस्योः ॥ अथ *शब्दान्तरप्राप्त्या यत्वमप्यनित्यमित्याश्रीयते तदा परत्वात्पूर्वं त्वमाद्यादेशे अकारस्य यत्वे त्व्या । म्या । त्व्यि । म्यि । युव्योः । आव्योः । अथ ' सकृद्गते स्पर्द्धे यद्बाधितं तद्बाधितमेव ' इत्याश्रीयते तदा यत्वाभावे, त्वेन । मेन । युवयोः । आवयोः । त्वे । मे । *अत्रासर्वादिसंबन्धित्वात् ङेः स्मिन्नादेशो न भवति । अथ *'किवर्थं प्रकृतिरेवाह' इति सर्वादिसंबन्धित्वम् तदा भवत्येव *स्मिन्नादेशः ॥ *सिजस्ङेङस्प्रत्यये तु परत्वात् त्वमहमादय एवादेशा भवन्ति । त्वम् । अहम् । यूयम् । वयम् । तुभ्यम् । मह्यम् । तव । मम । एके तु मन्तयोर्युष्मदस्मदोरादेशान्नेच्छन्ति ॥ ९ ॥ मन्तस्य युवावौ द्वयोः । २ । १ । १० ॥ द्वित्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मन्तस्य मकारावसानस्यात्रयवस्य तत्संबन्धिनि अन्यसंबन्धिनि वा स्यादौ परे यथासंख्यं युव आव इत्येतावादेशौ भवतः । युवाम् । आवाम् । युवाभ्याम् । आवाभ्याम् । युवयोः । आवयोः । अतिक्रान्तौ युवाम् आवां वा अतियुवाम् । अत्यावाम् । अतिक्रान्तं युवाम् आवां वा अतियुवाम्, अत्यावां पश्य । अतिक्रान्तौ युवामावां वा अतियुवाम् अत्यावां पश्य । एवम् अतियुवान् । अत्यावान् अतियुवया । अत्यावया । अतियुवाभ्याम् । अत्यावाभ्याम् । अतियुवाभिः । अत्यावाभिः । अतियुवाभ्याम् । अत्यावाभ्याम् । अतियुवत् । अत्यावत् । अतियुवाभ्याम् । अत्यावाभ्याम् । आगतम् । अतियुवत् । अत्यावत् । अतियुवयोः । अत्यावयोः स्वम् । अतियुवाकम् । अत्यावाकम् । अतियुवयि । अत्यावयि । अतियुवयोः । । अत्यावयोः । अतियुवासु । अत्यावासु ॥ सिजस्ङेङस् इत्येतेषु पुनः *परत्वात्त्वमहमादयः । मन्तस्येति किम् । मकारावधेर्यथा स्यात् न तु सर्वस्य । तेन युवकाभ्यामावकाभ्यामित्यत्राकृश्रुतिः, युवयोरावयोरित्यत्र तु दकारस्य यत्वं सिद्धम् । अन्यथा युव्योराव्योरित्यनिष्टं स्यात् । द्वयोरिति किम् । युष्मान् । अस्मान् । युष्माभिः । अस्माभिः । युष्मभ्यम् । अस्मभ्यम् । युष्मत् । अस्मत् । युष्माकम् । अस्माकम् । युष्मासु । अस्मासु । द्वयोरपि युष्मदस्मद्विशेषणं तु स्यादिस्तदा न द्वित्वे इति न युवादेश ॥

---

—शब्दान्तरेति । प्राक् मकारस्य पश्चात् अकारस्य यप्राप्ति । अथवा पूर्वं युष्मिति प्रकृते पश्चात्त्वेति प्रकृते ॥—अत्रासर्वादिसंबन्धित्वादिति । युष्मदस्मदौ त्वमहवाचके सर्वादिगणमध्ये दृश्येते । अत्र तु त्वा मा वक्ति यस्तद्वाचके इति न सर्वादिनी ॥—अथ किवर्थमिति । क्विबन्तयोर्युष्मदस्मदोर्योऽर्थस्तमर्थं क्विप्सहिता युष्मदस्मद्रूपा प्रकृतिरेवाह । न हि प्रकृतिं विना क्विप् भवति ॥—स्मिन्नादेश इति । तेन त्वस्मिन् मस्मिन् सन्निपातन्यायस्याऽनित्यत्वे त्वास्मिन् मास्मिन्नित्यपि ॥—सिजसिति । एतेन प्रक्रियागौरव निरस्त भवति । अन्यथाऽनेन मकारलोपेऽपि सिप्रत्ययाविना सह त्वमहमाद्यादेशे सर्वेऽपि प्रयोगा सिध्यन्ति ॥—मन्तस्य ॥ द्वित्वेति वृत्यश । द्वयोरित्यनेन द्रव्यप्रधानत्वात् सामान्यवाचिनापि युष्मदस्मदर्थ एव द्वित्वविशिष्टो निर्दिश्यतेऽर्थान्तरे तयोर्वृत्त्यभावात् । स्यादिविशेषणत्वे तु गुणाभिधायित्वात् स्यादेर्गुणप्रधानतया द्वित्वे इति भावप्रत्ययान्तेन निर्दिश्येत । यथा द्वित्वे वाम्नाविति ॥ युवावादेशयो सस्वरत्वे णिगि क्विपि तल्लोपे च युव्योराव्योरित्यादिषु फल दृश्यम् । एवमुत्तरसूत्रे त्व्यि म्यि ॥—परत्वात् त्वमहमादय इति । यदि परत्वेन त्वमहमादय करिष्यन्ते तर्हि परादन्तरङ्ग बलीय इति

अतियुष्मयोः । अत्यस्मयोः । अत्र समास एव द्वित्वविशिष्टेऽर्थे व-
किम् । युष्मानस्मानतिक्रान्तौ, अतियुष्माम् । अत्यस्माम् । अतियुष्माभ्याम् । अत्यस्माभ्याम् । अतियुष्मयोः । अत्यस्मयोः । अत्र समास एव द्वित्वविशिष्टेऽर्थे व-
र्तते, न युष्मदस्मदी इति युवावादेशौ न भवतः। स्यादावित्येव । युवयोः पुत्रः युष्मत्पुत्रः। आवयोः पुत्रः अस्मत्पुत्रः । युवयोरिदम् युष्मदीयम् । आवयोरिदम् अस्म-
दीयम् ॥ १० ॥ त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् । २ । १ । ११ ॥ एकत्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मकारान्तस्यावयवस्य स्वसंबन्धिन्यन्यसंबन्धिनि
वा स्यादौ परे प्रत्ययोत्तरपदयोश्च परयोर्यथासंख्यं त्व म इत्येतावादेशौ भवतः । त्वाम् । माम् । त्वया । मया । त्वद् । मद् । त्वयि । मयि । अतिक्रान्तो त्वामतित्वाम्।
अतिमाम् तिष्ठतः । अतिक्रान्तं त्वा मां वा अतित्वाम् । अतिमां पश्य । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वा-
भिः । अतिमाभिः । अतित्वाभ्याम् । अतिमाभ्या देहि । अतित्वभ्यम् । अतिमभ्यम् । अतित्वत् । अतिमत् । अतित्वाभ्याम् । अतिमाभ्याम् आगतम् । अतित्वद् ।
अतिमद् । अतित्वयोः । अतिमयोः स्वम् । अतित्वाकम् । अतिमाकम् । अतित्वयि । अतिमयि । अतित्वयोः । अतिमयोः । अतित्वासु । अतिमासु । सिजस्ङेङसुसु
पुनः परत्वात्त्वमहमादयो भवन्ति। प्रत्ययोत्तरपदयोः खल्वपि। तवायं त्वदीयः। मदीयः । त्वन्मयम् । मन्मयम् । त्वामिच्छति त्वद्यति। मद्यति । त्वमिवाचरति त्वद्यते।
मद्यते । त्वया कृतं त्वत्कृतम् । मत्कृतम् । त्वत्पुत्रः । मत्पुत्रः । त्वद्धितम् । मद्धितम् । त्वत्प्रधानः । मत्प्रधानः । त्वामाचष्टे त्वदयति मदयतीत्यत्र नित्यत्वादन्त्यस्वरादि-
लोपात्प्रागेव त्वमादेशौ ।*कश्चित्तु पूर्वमन्त्यस्वरादिलोपे त्वमादेशे*अकारस्य वृद्धौ प्वागमे त्वापयति मापयति, क्विपि तु त्वाम् माप् इत्याह। एकस्मिन्निति किम् । युष्मा-
कम् । एकत्वेन युष्मदस्मदोर्विशेषणादिह न भवति । अतिक्रान्तं युष्मान् अतियुष्माम् । अत्यस्माम् । अतियुष्मया । अत्यस्मया । अतियुष्मद् । अत्यस्मद् । अतियुष्मयि।
अत्यस्मयि । प्रत्ययोत्तरपदे चेति किम् । त्वय्यधि अधियुष्मद् । अध्यस्मद् । *अन्तरङ्गत्वात्स्यादिद्वारेणैव त्वमादेशे सिद्धे प्रत्ययोत्तरपदग्रहणं ' बहिरङ्गाऽपि लुप् अन्त-

---

॥—त्वमौ—॥—त्वदयतीति । अत्र नित्यत्वादिऽन्त्यस्वरादिलोपात् प्रागेव त्वमादेशो पश्चादपि
न्यायात् युवावादय एवादेशा प्राप्स्यन्ति न त्वमहमादय । सत्यम् । परत्वाद्विशेषविहितत्वेन प्रकृष्टत्वादित्यर्थ ॥—त्वमौ—॥—त्वदयतीति । अत्र नित्यत्वादिऽन्त्यस्वरादिलोपात् प्रागेव त्वमादेशो पश्चादपि
अन्त्यस्वरादिलोपो न लोपात् स्वरादेश इति न्यायात् लुगस्येत्येव प्रवर्त्तते । तस्मिन्नपि कृते न भवति । ' नैकस्वरस्य ' इति निषेधात् । ' ञ्णिति ' इत्यनेन वृद्धिरपि न अधातुत्वात् ॥—कश्चि-
त्त्विति उत्पल । शब्दान्तरप्रवृत्त्या द्वयोरप्यनित्यत्वादन्यत्र सावकाशत्वात्परत्वादन्त्यस्वरादिलोप इत्यर्थ ॥—अकारस्य वृद्धाविति । अतो ञ्णितीत्यनेन सूत्रेण । ननु प्रत्ययोत्तरपदग्रहण किमर्थं स्यादा-
वित्येव सिद्धत्वात् । न च परत्वात् ' ऐकार्थ्ये' इति स्यादेर्लुपि प्रत्ययलोप इति न्यायस्य ' लुप्यय्वृल्लेनत् ' इति प्रतिषेधात् स्यादेरभाव इति वाच्यम् । यत ऐकार्थ्ये लुबुच्यते । ऐकार्थ्यं च प्रकृति-
प्रत्ययो पूर्वोत्तरपदे चाश्रित्य भवतीति तस्य बहिरङ्गत्वात्तदाश्रया लुबपि बहिरङ्गा । विभक्तिमात्रमाश्रित्य विधानात् त्वमादेशयोरन्तरङ्गत्वम् । ततोऽसिद्धं बहिरङ्गमन्तरङ्ग इति न्यायान्नित्यादप्यन्तरङ्गस्य
बलीयस्त्वात् त्वमादेशयो कर्त्तव्ययो लुपोऽसिद्धत्वात्ताभ्यामेव पूर्वं प्रवर्त्तितव्य ततो लुबिति न किंचिदनिष्टमित्याह–अन्तरङ्गत्वादिति । ननु यदा स्यादिग्रहणमेव क्रियते न प्रत्ययोत्तरपदग्रहण तदा त्वदीय
त्वत्पुत्र इत्यादौ प्रागेव परत्वान ङसा सह तवममादेशौ प्राप्नुत, तत्कथमन्तरङ्गत्वात्स्यादिद्वारेणैव सिध्यतीति । सत्यम् । यौ त्वमौ भवतस्तावल्पाश्रितौ यत प्रकृतिमेवाश्रयत यौ तु ' ' मौ तौ प्रकृते

रङ्गान् विधीन् बाधते' इति न्यायज्ञापनार्थम्। तेन यद् तद् इत्यादावन्तरङ्गमपि त्यदाद्यत्वादि न भवति ॥*एके तु निमित्तनिरपेक्षमेकत्वविशिष्टेऽर्थे वर्तमानयोस्त्वमादेशाविच्छन्ति। तन्मते, अधित्वत्। अधिमत् ॥ मन्तस्येत्येव। त्वकं पिताऽस्य त्वकत्पितृकः। अत्राक्सहितस्य माभूत्। प्रत्ययग्रहणेनैव सिद्धे स्यादावित्युत्तरार्थमनुवर्तते ॥ ११ ॥ त्वमहं सिना प्राक् चाकः । २ । १ । १२ ॥ युष्मदस्मदोः स्वसंबन्धिनाऽन्यसंबन्धिना वा सिना सह यथासंख्यं त्वम् अहम् इत्येतावादेशौ भवतः, तौ चाक्प्रत्ययप्रसङ्गेऽकः प्रागेव भवतः। त्वम्। अहम्। अतिक्रान्तस्त्वाम् अतित्वम्। अत्यहम्। अतिक्रान्तो युवाम् अतित्वम्। अत्यहम्। अतिक्रान्तो युष्मान् अतित्वम्। अत्यहम्। प्रियस्त्वं प्रियौ युवां प्रिया यूयं वा यस्य स प्रियत्वम्। प्रियाहम्। एषु परत्वात्त्वमौ युवावौ च बाधित्वा त्वमहमावेव भवतः। सिनेति किम्। युष्माभिः। अस्माभिः। सिलुपि च 'लुप्यय्वृल्लेनत्' (७।४।११२) इति निषेधान्न भवति। त्वं पुत्रोऽस्य त्वत्पुत्रः। मत्पुत्रः। एवमुत्तरेष्वपि। प्राक् चाक इति किम्। *त्वकमहकमित्यत्राकः श्रुतिर्यथा स्यात्। अन्यथा पूर्वमकि सति 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायात् साकोऽप्यादेशः स्यात्॥ *केचित्तु त्वां मां चाचष्ट इति णौ *त्वमादेशे वृद्धौ क्विपि मन्तयोरेव *त्वाहादेशविधानात्सौ त्वाम् माम् इति, धातोरेव वृद्धिरिति मते त्वं मम् इत्येव च भवतीति मन्यन्ते। ते हि प्रकृतिमात्रस्यैँदेशान् ङेजस्सीनाममादेशं ङसस्त्वकारं चेच्छन्ति ॥ १२ ॥ *यूयं वयं जसा । २ । १ । १३ ॥ युष्मदस्मदोः स्वसंबन्धिनाऽन्यसंबन्धिना वा जसा सह यथासंख्यं यूयं वयमित्येतावादेशौ भवतः, प्राक् चाकः। यूयम्। वयम्। परमयूयम्। परमवयम्। प्रियस्त्वं प्रियौ युवां प्रिया यूयं च येषां ते प्रिययूयम्। प्रियवयम्। अतिक्रान्तास्त्वां युवां युष्मान्वा अतियूयम्। अतिवयम्। जसेति किम्। यूयं पुत्रा अस्य युष्मत्पुत्रः। अस्मत्पुत्रः। प्राक् चाक इत्येव। यूयकम्। वयकम् ॥ १३ ॥ तुभ्यं मह्यं ङ्या । २ । १ । १४ ॥ युष्मदस्मदोः स्वसंबन्धिनान्यसंबन्धिना वा ङेप्रत्ययेन सह यथासंख्यं तुभ्यम् मह्यम् इत्येतावादेशौ भवतः, प्राक् चाकः। तुभ्यम्। मह्यम्। परमतुभ्यम्। परममह्यम्। प्रियस्त्वं प्रियौ युवां प्रिया यूयं वा यस्य तस्मै प्रियतुभ्यम्। प्रियमह्यम्। अतिक्रान्तस्त्वां युवां युष्मान् वा तस्मै अतितुभ्यम्। अतिमह्यम्। ङ्येति किम्। तुभ्यं हितं त्वद्धितम्।

---

प्रत्ययस्य च स्थाने भवत इति बह्वाश्रितावित्यन्तरङ्गत्वात् त्वमौ प्राप्नुत इति स्यादिद्वारेणैव सिध्यतीति। तवममादेशे तु कर्तव्ये एकस्थानित्वेनान्तरङ्गत्वात् परत्वाच्च ङसो लुग्वेति ॥—एके त्विति। चन्द्रादय ॥—त्वमहं—॥-सिनेति किमिति। ननु साविति कृते 'दीर्घङ्याब्—' इति सेर्लुकि च सर्वे प्रयोगा निष्पद्यन्ते इति। न। युष्मदस्मदोरित्यात्व स्यात्। आदेशविधानसामर्थ्यान्न भविष्यतीति चेत्। सत्यम्। तदा आत्वाभावेऽस्यापि से शेषत्व स्यात्तथा च 'मोर्वा' इति वा लोप स्यात् पक्षे च चरितार्थता सूत्रस्य स्यादिति ॥—त्वकम् अहकमिति। 'युष्मदस्मदोऽसोभादि—' इति अक् ॥—पूर्वमकीति। निरपेक्षत्वेनान्तरङ्गत्वात् ॥—केचित्त्विति। पाणिनीयादय. ॥—त्वमादेशे वृद्धाविति। त्वादयतीति वाक्ये कृते क्विप् ॥—त्वअहादेशविधानादिति। त्वअहादेशौ न भवत इति शेष। धातोरेव वृद्धिरिति मते तु त्वदयतीति वाक्यम्। ननु तन्मते त्वम्, अहं, यूय, वयमित्यादय' कथ सिध्यन्तीत्याह—ते हीति ॥—प्रकृतिमात्रस्येति। विभक्तिरहितस्येत्यर्थ ॥—आदेशानिति। तुभ्यमह्यौ ङयि, यूयवयौ जसि, त्वाहौ साविति तुभ्यादीन् आदेशान् ङेजस्सीना ङेप्रथमयोर्रमित्यमादेश ङसस्तु युष्मदस्मद्भ्या टसोऽश् इत्यकार चेच्छन्तीत्यर्थ। स्वमते न त्वमहामित्येव भवति ॥—यूयं वयं—॥ प्रियस्त्व प्रियौ युवामिति वाक्यम्। एकत्वद्वित्वयोर्युष्मदस्मदोर्वर्तमानत्वात् 'त्वमौ प्रत्ययोत्तरपदे च—' इति 'मन्तस्य युवावौ—' इति च त्वमाद्यादेश.नऽन्यत्र

युष्मदस्मदोः स्वसंबन्धिनाऽन्यसंबन्धिना वा ङस्प्रत्ययेन सह
मद्भितम् । प्राक् चाक इत्येव । तुभ्यकम् । मत्यकम् ॥ १४ ॥ तव मम ङसा । २ । १ । १५ ॥ युष्मदस्मदोः स्वसंबन्धिनाऽन्यसंबन्धिना वा ङस्प्रत्ययेन सह
यथासंख्यं तव मम इत्येतावादेशौ भवतः प्राक् चाकः । तव । मम । प्रियस्त्वं प्रियौ युवां प्रिया यूयं वा यस्य तस्य प्रियतव । प्रियमम । अतिक्रान्तस्त्वां युवां
युष्मान् वा तस्य अतितव । अतिमम । ङसेति किम् । तव प्रियस्त्वत्प्रियः । मत्प्रियः । प्राक् चाक इत्येव । तवक । ममक ॥ १५ ॥ अमौ मः । २ । १ । १६ ॥
युष्मदस्मद्भ्यां परयोस्तत्संबन्धिनोरन्यसंबन्धिनोर्वा अम् औ इत्येतयोर्म इत्ययमादेशो भवति । अकार उच्चारणार्थः । त्वाम् । माम् । अतित्वाम् । अतिमाम् । युवाम् ।
आवाम् । अतियुवाम् । अत्यावाम् तिष्ठतः पश्य वा ॥ १६ ॥ शसो नः । २ । १ । १७ ॥ युष्मदस्मद्भ्यां परस्य तत्संबन्धिनोऽन्यसंबन्धिनो वा शसः स्थाने न
इत्ययमादेशो भवति । अकार उच्चारणार्थः । युष्मान् । अस्मान् । प्रिययुष्मान् । प्रियास्मान् । प्रियस्त्वं येषां तान् प्रियत्वान् । प्रियमान् । प्रियौ युवां येषां तान्
प्रिययुवान् । प्रियावान् ॥ १७ ॥ अभ्यम् भ्यसः । २ । १ । १८ ॥ युष्मदस्मद्भ्यां परस्य स्वसंबन्धिनोऽन्यसंबन्धिनो वा भ्यसश्चतुर्थीबहुवचनस्य स्थानेऽभ्यमादेशो
भवति । युष्मभ्यम् । अस्मभ्यम् दीयते । प्रिययुष्मभ्यम् । प्रियास्मभ्यम् । त्वामतिक्रान्तेभ्यः, अतित्वभ्यम् । अतिमभ्यम् । युवामतिक्रान्तेभ्यः, अतियुवभ्यम् । अत्या-
वभ्यम् । अकारादिकरणमात्वबाधनार्थम् ॥ १८ ॥ ङसेश्चाद् । २ । १ । १९ ॥ युष्मदस्मद्भ्यां परस्य स्वसंबन्धिनोऽन्यसंबन्धिनो वा ङसेश्चकाराद् तत्सहचरितस्य
भ्यसः स्थानेऽद् इत्ययमादेशो भवति । त्वद् । मद् । त्वां युवां युष्मान्वाऽतिक्रान्तात् अतित्वद् । अतिमद् । अतियुवद् । अत्यावद् । अतियुष्मद् । अत्यस्मद् । भ्यस्,
युष्मद् । अस्मद् । त्वा युवां युष्मान्वाऽतिक्रान्तेभ्यः, अतित्वद् । अतिमद् । अतियुवद् । अत्यावद् । अतियुष्मद् । अत्यस्मद् । पञ्चमीभ्यसो ग्रहणाच्चतुर्थीभ्यसो न
भवति । युष्मभ्यम् । अस्मभ्यम् ॥ १९ ॥ आम आकम् । २ । १ । २० ॥ युष्मदस्मदित्येताभ्यां परस्य तत्संबन्धिनोऽन्यसंबन्धिनो वाऽऽमः स्थाने आकमित्या-

---

सावकाशान् बाधित्वा यूय वयमित्यत्र सावकाशौ यूयंवयमादेशौ परत्वादुभयप्राप्तौ सत्या तावेव भवत । यूयकमित्यादौ कुत्सिताद्यर्थे ' युष्मदस्मदोऽसोभादि '–इत्यक् । एवमुत्तरत्रापि ॥—तवमम
—॥ कथ तवता ममता तवायित ममायितम् । सत्यम् । स्याद्यन्तप्रतिरूपकाण्यव्ययान्येतानीति शब्दान्तरत्वात्सिद्धम् ॥—अमौ—॥ औश्च औश्च आवो 'स्यादावसख्येये.' इत्येकशेष. । ततोऽम् च आवो
च अमो तस्य अमौ । लुप्तषष्ठ्येकवचनान्त पदम् । एकशेषाभावे तु अमा साहचर्यात् द्वितीयासत्कस्यैव ग्रहण स्यात् । ननु अम्ग्रहण किमर्थ यावता त्वामिति निष्पाद्यम् । नच युष्मदोऽमि नि-
मित्ते त्वादेशे ' शेषे लुग् ' इति दस्य लुकि ' समानादमोऽत ' इत्यमोऽस्य लुकि ' युष्मदस्मदो ' इत्यन्तस्यात्वे च सिद्धम् । नैवम् । अन्तरङ्गेऽन्तस्यात्वे कार्ये बहिरङ्गोऽमोऽकारस्य लुगसिद्ध इति॥—
शसो न' । ननु युष्मानित्यादौ ऽय प्राप्नोति । ' शेषे– ' इत्यन्तलोपोऽनेन नकारश्च तत्र कृताकृतप्रसङ्गित्वेन नकारस्य नित्यत्वाल्लोपस्य च कृते नकारे शेषत्वाभावादप्रसङ्गित्वेनानित्यत्वात्पूर्व नकार
एव भवतीति । यद्येव किमनेन ' शसोता– ' इत्यनेनैव सिद्धत्वात् । नैवम् । अलिङ्गे युष्मदस्मदी इति पुस्त्वाभावान्नकारो न सिध्यतीति वचनम् । बहुव्रीह्यादावभ्युपगमे वा लिङ्गस्य स्त्रीनपुसकार्थ
प्रिययुष्मान् ब्राह्मणी , प्रिययुष्मान् कुलानीत्यादि ॥—अभ्यं—॥ कार्यिण प्रथम निर्देशे प्राप्ते कार्यस्य प्रथममुपादान प्रत्यासत्तिसूचनार्थम् । पाठापेक्षया च चतुर्थ्येव प्रत्यासन्नेति तस्या एवादेश ।
यद्वा ' ङसेश्चात् ' इत्यत्र चकारो भ्यसोऽनुकर्षणार्थ । स च ङसिसाहचर्यात्पञ्चमीसबन्ध्येव गृह्यते इति पारिशेष्यादिह चतुर्थीभ्यसो ग्रहणमित्याह—चतुर्थीबहुवचनस्येति ॥—ङसे—॥ चकारेण
भ्यसोऽनुकर्षणेऽपि भ्यसो ङसेश्चैकवचनान्तनिर्देशेन द्विवचनान्तनिर्दिष्टाभ्यां युष्मदस्मद्भ्या सह वैषम्याद्यथासख्याऽभाव इति ॥—आम—॥ आम. कमिति कृते 'युष्मदस्मदो' इत्यात्वे कृते युष्माकमि-

देशो भवति । युष्माकम् । अस्माकम् । प्रिययुष्माकम् । प्रियास्माकम् । त्वां युवां युष्मान्वा अतिक्रान्तानाम्, अतित्वाकम् । अतिमाकम् । अतियुवाकम् । अत्यावाकम् । अतियुष्माकम् । अत्यस्माकम् । आकमित्याकारो ण्यन्तार्थम् । युष्मानाचक्षाणानां, णौ, क्विपि, युष्माकम् । अस्माकम् ॥*केचित्तु तत्संबन्धिन एवाम आकमादेशमिच्छन्ति । तथाम्प्रत्यये दकारस्य यत्वमपीच्छन्ति । तन्मते प्रिया यूयं येषां तेषां प्रिययुष्मयाम् । प्रियास्मयाम् । एवमतियुष्मयाम् । अत्यस्मयाम् ॥ २० ॥ *पदाद्युग्विभक्त्यैकवाक्ये वस्नसौ बहुत्वे । २ । १ । २१ ॥ द्वितीया चतुर्थी षष्ठी च युग्विभक्तिः । तया बहुत्वविषयया सह पदात्परयोर्युष्मदस्मदोर्यथासंख्यं वस्नस् इत्येतावादेशौ वा भवतः, तच्चेत्पदं युष्मदस्मदी चैकवाक्ये भवतः । अन्वादेशे नित्यं विधास्यमानत्वादिह विकल्पो लभ्यते । एवमुत्तरसूत्रत्रयेऽपि ।*धर्मो वो रक्षतु । धर्मो नो रक्षतु । धर्मो युष्मान् रक्षतु । धर्मोऽस्मान्रक्षतु । तपो वो दीयते । तपो नो दीयते । तपो युष्मभ्यं दीयते । तपोऽस्मभ्यं दीयते । शीलं वः स्वम् । शीलं नः स्वम् । शीलं युष्माकं स्वम् । शीलमस्माकं स्वम् । पदादिति किम् । युष्मान् धर्मो रक्षतु । अस्मान् धर्मो रक्षतु । युग्विभक्त्येति किम् । ज्ञाने यूयं तिष्ठत । शीले वयं स्थास्यामः । ज्ञाने युष्माभिः स्थितम् । शीलेऽस्माभिः स्थितम् । ज्ञानं युष्मदागतम् । शीलमस्मदागतम् । ज्ञानं युष्मासु तिष्ठति । शीलमस्मास्वायतते । ग्रामे युष्मत्पुत्रः । नगरेऽस्मत्पुत्रः । इति युष्मदुपाध्यायो ब्रूते । इत्यस्मदाचार्योऽनुशास्ति । एकवाक्य इति किम् । एकस्मिन्पदे निमित्तनिमित्तिनोर्भावे माभूत् । अतियुष्मान्पश्यति । अत्यस्मान्पश्यति । वाक्यान्तरे च माभूत् ओदनं पचत युष्माकं भविष्यति । पटं वयत अस्माकं भविष्यति । ननु च वाक्यान्तरस्थात्परयोर्युष्मदस्मदोः*सामर्थ्याभावादेव वस्नसादयो न भविष्यन्ति. किमेकवाक्यग्रहणेन । नैवं शङ्क्यम् ।*युक्तयुक्तादपि पदादसमर्थत्वान्न प्राप्नुवन्ति ।*इति स्म नः पिता कथयति । इति वः श्रेयसी ब्रवीमि । इति मे माताऽवोचत् । शालीनां त ओदनं दारयामि । अत्र हि युष्मदस्मदी पित्रादिभिर्युक्ते न पित्रादियुक्तैरितिस्मादिभिरिति वस्नसादयो न स्युः । अतः पारंपर्येणापि युक्तादेकवाक्यस्थात्पदात्परयोर्युष्मदस्मदोर्वस्नसादयो भवन्त्वित्येकवाक्यग्रहणमर्थवत् । बहुत्व इति किम् । धर्मो युवां रक्षतु । धर्मस्त्वां रक्षतु । स्याद्यधिकारे विभक्तिग्रहणं यकुस्यादिवचननिवृत्त्यर्थम् । तेन ज्ञाने युवां

---

त्यादि सिध्यति किमाकारकरणेनेत्याह—**आकमित्यादि** ॥—**केचित्त्विति** । पाणिनिसूत्रानुसारिण । ते हि साम आकमिति पठन्त कृतसामादेशस्याम आकममिच्छन्ति । स चावर्णस्याम इति तत्सवन्धिन एवेति ॥—**पदाद्**—॥ पद्यते गम्यते कर्तृकर्मविशिष्टोऽर्थोऽनेनेति पदम् । विभक्त्या सह सामानाधिकरण्यार्थं युनक्तीति युड् कर्तरि क्विप् । यद्वा योजन युड् सममविषम सख्यास्थानम् । युग्ममिति यत्सख्यायते । तेन परिछिन्न **वस्नमपि** युगित्युच्यते । तत समसख्या द्वितीयाचतुर्थीषष्ठीरूपा विभक्तयो युग्शब्देनोच्यन्त इति ॥—**धर्म्मो वो रक्षत्विति** । अत्र पदादेश पदवदिति वम् इत्यस्य पदत्वे 'सो रु' इति रुत्व बभूव । तथा 'शसो न' 'शेषे लुग्' इत्यादीनि वाधित्वा नित्यत्वात् निरवकाशत्वाच्च वस्नसावेव भवत इति ॥—**एकवाक्य इति** । एक च तत् वाक्य चेति 'पूर्वकालैक'—इत्यनेन समासे एकस्य पूर्वनिपात । ततो विशेषणस्य व्यवच्छेदकत्वात् सर्व वाक्य सावधारण भवतीति न्यायाच्च एकस्मिन् वाक्य एव भवतीति न तु पदे । अतियुष्मान् पश्यतीत्यादौ तु यथैकस्मिन् वाक्ये तथा एकविभक्त्यपेक्षया एकस्मिन् पदेऽपि युष्मदस्मदी स्त इति । तथा एकस्मिन्नेव वाक्य इत्यवधारणात् यदि पद युष्मदस्मदी चैकस्मिन्नेव वाक्ये भवतो न तु वाक्यान्तरे तदा वस्नसौ भवत ॥—**सामर्थ्याभावादेवेति** । परस्परव्यपेक्षालक्षणसवन्धाभावादेवेत्यर्थ ॥—**किमेकवाक्यग्रहणेनेति** । कि सविशेषणेन वाक्यग्रहणेन वाक्यग्रहणमेव पदव्यवछेदाय कर्तुं युक्त किमेकग्रहणेनेत्यर्थ ॥—**युक्तयुक्तादिति** । युक्तेन युष्मदस्मत्सबद्धेन पित्रादिना यद् युक्तमितिस्मेत्यादि तस्मादित्यर्थ ॥—**इतिस्मेत्यादि** । अत्रेतिस्मेत्यादि पद साक्षात् युष्मदादिक नापेक्षते किं तर्हि पित्रादिकमिति एकवाक्यग्रहणात सामर्थ्याभावेऽपि एकवाक्ये पदात्परस्य युष्मदादेरादेश सिद्ध । तथा युग्बहुत्वे इत्यप्युक्ते द्वितीयाचतुर्थीषष्ठीबहुवचनानि लब्धानि । विभक्तिग्रहण तूत्तरार्थमिह

पदात्परयोर्युष्मदस्मदोर्द्वित्वविषययां युग्विभक्त्या

तिष्ठतः, शीले आवां तिष्ठाव इत्यत्रोत्तरेण वाम्नावादेशौ न भवतः ॥ २१ ॥ द्वित्वे वान्नौ । २ । १ । २२ ॥ पदात्परयोर्युष्मदस्मदोर्द्वित्वविषयया युग्विभक्त्या
सह यथासंख्यं वान्नावित्येतावादेशौ वा भवतः, तच्चेत्पदं युष्मदस्मदी चैकवाक्ये भवतः । धर्मो वां रक्षतु । धर्मो नौ रक्षतु । धर्मो युवां रक्षतु । धर्म आवां रक्षतु ।
शीलं वां दीयते । शीलं नौ दीयते । शीलं युवाभ्यां दीयते । शीलमावाभ्यां दीयते । ज्ञानं वां स्वम् । ज्ञानं नौ स्वम् । ज्ञानं युवयोः स्वम् । ज्ञानमावयोः स्वम् ।
युग्विभक्त्येत्येव । ग्रामे युष्मत्पुत्रः । नगरेऽस्मत्पुत्रः । पदादित्येव । युवां धर्मो रक्षतु । आवां धर्मो रक्षतु । एकवाक्य इत्येव । ओदनं पचत युवयोर्भविष्यति आवयो-
भविष्यति ॥ २२ ॥ ङेङसा तेमे । २ । १ । २३ ॥ तेमे इति लुप्तद्विवचनान्तं पदम् । पदात्परयोर्युष्मदस्मदोर्ङेङस् इत्येताभ्यां सह तेमे इत्येतावादेशौ वा भवत
एकवाक्ये । ङेङसेत्येकवचनं स्थानिभ्यामादेशाभ्यां च यथासंख्यनिवृत्त्यर्थम् । धर्मस्ते दीयते । धर्मस्तुभ्यं दीयते । धर्मो मे दीयते । धर्मो मह्यं दीयते । शीलं ते स्वम् ।
शीलं तव स्वम् । शीलं मे स्वम् । शीलं मम स्वम् । एकवाक्य इत्येव । ओदनं पच तव भविष्यति मम भविष्यति । त्वां युवां युष्मान्वाऽतिक्रान्ताय अतितुभ्यम् । ङेङ-
सेति किम् । । पटस्त्वया क्रियते । धर्मो मया क्रियते ॥ कथं ' न मे श्रुता नापि च दृष्टपूर्वा । न मे न मयेति ह्यत्रार्थः । असाधुरेवायम् । स्यादिप्रतिरूपकमव्ययं वा ॥ २३ ॥
अमा त्वामा । २ । १ । २४ ॥ पदात्परयोर्युष्मदस्मदोरमा द्वितीयैकवचनेन सह त्वा मा इत्येतावादेशौ यथासंख्यं वा भवत एकवाक्ये । धर्मस्त्वा रक्षतु । धर्मो मा रक्षतु । धर्मस्त्वां
रक्षतु । धर्मो मां रक्षतु । पदादित्येव । त्वामीक्षते । मामीक्षते । एकवाक्य इत्येव । अतित्वां पश्यतु । अतिमां पश्यतु ॥ २४ ॥ असदिवामन्त्र्यं पूर्वम् । २ । १ । २५ ॥ आमन्त्र्यते
यत्तदामन्त्र्यम् । तद्वाचि पदं युष्मदस्मद्भ्यां पूर्वमसदिवाविद्यमानमिव भवति । सति तस्मिन्यत्कार्यं तन्न भवति असति यत्तद्भवतीत्यर्थः । श्रमणा युष्मान् रक्षतु धर्मः ।
श्रमणा अस्मान् रक्षतु धर्मः । श्रमणा युष्मभ्यं दीयते । श्रमणा अस्मभ्यं दीयते । श्रमणा युष्माकं शीलम् । श्रमणा अस्माकं शीलम् । श्रमणौ युवां रक्षतु धर्मः ।
श्रमणौ आवां रक्षतु धर्मः । श्रमणौ युवाभ्यां दीयते आवाभ्यां दीयते । श्रमणौ युवयोः स्वमावयोः स्वम् । श्रमण त्वां रक्षतु तपः मां रक्षतु तपः । श्रमण तुभ्यं दीयते
मह्यं दीयते । श्रमण तव शीलम् मम शीलम् । एष्वामन्त्र्यस्यासत्त्वाद्वस्नसादयो न भवन्ति ॥ ग्रामाश्चैत्र ते स्वमथो इत्यादौ चैत्रपदस्यामन्त्र्यस्यासत्त्वाद्ग्रामपदापेक्षयाऽ-
न्वादेशे नित्यं तेमयादिविधिः, न तु ' सपूर्वात्प्रथमान्ताद्वा ' ( २ । १ । ३२ ) इति विकल्पः । इवकरणं किम् । श्रवणं यथा स्यात् । आमन्त्र्यमिति किम् । धर्मो वो

---

च क्लिष्टतापरिहारार्थमिति ॥—द्वित्वे—॥ द्वित्व इति भावप्रत्ययान्तेन सख्या निर्दिश्यते । सङ्ख्यायां च विभक्तिर्वर्त्तते न युष्मदस्मदी द्रव्यवृत्तित्वात्तयोरिति द्वित्व इति विभक्तेरेव विशेषणमित्याह-
द्वित्वविषययेति ॥—ङेङसा—॥—दृष्टपूर्वेति । पूर्वं दृष्टा ' नाम नाम्ना '—इति स ( स्त्री चेत् ) ॥—अमा त्वा मा ॥ अम् यद्यप्यनेकप्रकारोऽस्ति तथाहि एकोऽत स्यमोऽम् द्वितीयोऽमव्ययी-
भावस्येति तृतीय आख्यातविभक्तेरम्वऽम् इति तथापि युष्मदस्मद्भ्यामव्ययस्यासभवाद्द्वितीयैकवचनमेव गृह्यते इत्याह—अमा द्वितीयैकवचनेनेति ॥—असदिवा—॥ योऽर्थ स्वेन धर्मेण प्रसिद्धो
धर्मान्तरसबन्ध प्रत्यभिमुखीक्रियते स आमन्त्र्य । यथा देवदत्तो देवदत्तत्वेन प्रसिद्धो धर्मान्तरेऽभिमुखीक्रियते यथा पच पठेत्यादि । तत्रार्थे कार्यासभवादुपचारादामन्त्रणाभिधायि पदमामन्त्र्य विज्ञायत
इति । तथोत्तरत्र नित्यग्रहणादस्मिन् सूत्रे कथ विकल्पो न लभ्यत इति । उच्यते । नित्य विधास्यमानत्वादिति भणनादत्रैव वस्नसादयो विधीयन्ते तत्रैव विकल्प उपतिष्ठते न वस्नसादीना निषेधे
इति । अथवा यद्यत्रापि सूत्रे विकल्प स्यात्तदा किमेतत्सूत्रकरणेन । यतोऽसदिवामन्त्र्य पूर्वम् इति कृतेऽपि वस्नसादयो विकल्प्यन्ते । ते च ' पदाद्युग्विभक्त्या— ' इत्यनेनैव विकल्पेन भविष्य-

रक्षतु । धर्मो नो रक्षतु । पूर्वमिति किम् । ‘ मयैतत्सर्वमाख्यातं युष्माकं मुनिपुंगवाः ’ ॥ परस्य ह्यसद्भावे *पादादिलक्षणः प्रतिषेधो न स्यात् । *व्यवहितेऽपि *पूर्वशब्दो वर्तते । तेन ‘ चैत्र धर्मो वोऽथो रक्षतु, चैत्र धर्मो नोऽथो रक्षतु ’ अत्र ‘ सपूर्वात्प्रथमान्ताद्वा ’ ( २ । १ । ३२ ) इति विकल्पो न भवति ॥ २५ ॥ **जस्विशेष्यं वाऽऽमन्त्र्ये । २ । १ । २६ ॥** *तदतद्विषयं विशेष्यम् । तस्य व्यवच्छेदकं विशेषणम् । युष्मदस्मद्भ्यां पूर्वं जसन्तमामन्त्र्यं पदं विशेष्यमामन्त्र्ये पदे *सामर्थ्यात्तद्विशेषणभूते परेऽसदिव वा भवति । पूर्वेण नित्यं प्राप्ते विकल्पः । *जिनाः शरण्या युष्मान् शरणं प्रपद्ये । जिनाः शरण्या वः शरणं प्रपद्ये । जिनाः शरण्या अस्मान् रक्षत । जिनाः शरण्या नो रक्षत । सिद्धाः शरण्या युष्मानथो शरणं प्रपद्ये । सिद्धाः शरण्या वोऽथो शरणं प्रपद्ये । सिद्धाः शरण्या अस्मानथो रक्षत । सिद्धा शरण्या नोऽथो रक्षत । *जसिति किम् । साधो सुविहित वोऽथो शरणं प्रपद्ये । साधो सुविहित नोऽथो रक्ष । विशेष्यमिति किम् । *शरण्याः साधवो युष्मान् शरणं प्रपद्ये । शरण्याः साधवोऽस्मान् रक्षत । आमन्त्र्य इति किम् । *आचार्या युष्मान् शरण्याः शरणं प्रपद्ये । अत्रामन्त्र्यं विशेषणं व्यवहितत्वान्न परमिति न भवति । सामर्थ्यात्तद्विशेषणभूत इति किम् । *आचार्या उपाध्याया युष्मान् शरणं प्रपद्ये ॥ २६ ॥ ***नान्यत् ॥ २ । १ । २७ ॥** युष्मदस्मद्भ्यां पूर्वं जसन्तादन्यदामन्त्र्यं पदं विशेष्यमामन्त्र्ये पदे तद्विशेषणभूते परेऽसदिव न भवति । साधो सुविहित त्वा शरणं प्रपद्ये । साधू सुविहितौ वां शरणं प्रपद्ये । साधो सुविहित मा रक्ष । साधू सुविहितौ नौ रक्षतम् । साधो सुविहित ते ज्ञानं दीयते, मे ज्ञानं दीयताम् । साधू सुविहितौ वां ज्ञानं दीयते, नौ ज्ञानं दीयताम् । साधो सुविहित ते शीलं स्वम्, मे शीलं स्वम् । साधू सुविहितौ वां शीलं स्वम्, नौ शीलं स्वम् । अत्र परस्य ‘ असदिवामन्त्र्यं पूर्वम् ’ ( २ । १ । २५ ) इत्यसत्त्वेऽपि पूर्वविशेष्यपदाश्रया युष्मदस्मदादेशा भवन्ति । विशेष्यमित्येव । सुविहित साधो तव शीलम् मम शीलम् ॥ २७ ॥ **पादाद्योः । २ । १ । २८ ॥** नियतपरिमाणमात्राक्षरपिण्डः पादः । पदात्परयोर्युष्मदस्मदोर्यदुक्तं वस्नसादि तत्पादस्यादिभूतयोर्न

---

न्ति ॥—श्रवणं यथा स्यादिति । अन्यथा लोप स्यात् ‘ ते लुग्वा ’ इत्यनेनैव ॥—**पादादिलक्षण** इति । मुनिपुङ्गवा इत्यस्य पदस्याऽसत्त्वे पादस्याभावादित्यर्थः । मुनिपुङ्गवा इति सिंहादित्वात् समास कर्मधारयो वा ॥—व्यवहितेऽपीति । यथा मथुराया पूर्वं पाटलिपुत्रमिति ॥—**पूर्वशब्दो वर्त्तत** इति । अयमर्थो यद्यव्यवहितस्यैव पूर्वस्यानेनाऽसद्भावो विधीयेत न व्यवहितस्य तदा पूर्वग्रहणमपनीय असदिवामन्त्र्यमित्येव क्रियेत यत पूर्वस्याविद्यमानवद्भावे वस्नसाद्यभाव प्रयोजनम् । तच्चेत्थमपि कृते सिध्यति । तथोत्तरसूत्रेऽप्येतदनुगुण्येन जस्विशेष्यादित्येव विधीयेतेति ॥—जस्वि—॥—**तदतद्विषयमिति** । शब्दप्रधानत्वात् स्याद्वादाश्रयणेन शब्दार्थयोरैक्याद्वाऽर्थाभावे त्यदादित्वाभावात् तरच्छब्दावयवयोगात्समुदायोऽपि तद् इत्यादि कृत्वा कर्मधारयकरणात् बाहुलकाद्वा नैकशेष । तच्च अतच्च तदतदी इति द्वन्द्वे ‘ आ द्वेर ’ इति न । ‘ न सर्वादि ’ इति निषेधात् ॥—**सामर्थ्यात्तद्विशेषणभूत** इति । विशेष्यस्य विशेषणाकाङ्क्षिण एकवाक्योपात्तत्वेन सामर्थ्यात्सन्निहितत्वाद्विशेष्यत्वनिमित्तमामन्त्र्य इत्येतदेव विशेषण विज्ञायत इति ॥—**जिनाः शरण्या** इत्यत्र शरणमिति सामान्यकर्म्म युष्मानिति विशेषकर्म । सिद्धा शरण्या युष्मानथो शरण प्रपद्ये इत्यादौ ‘ सपूर्वात्– ’ इति वा वस्नसौ प्राप्तावपि ‘ असदिवा ’–इत्यनेन निषिद्धौ पुनरऽनेन विकल्प्येते ॥—जसिति किं, **साधो सुविहितेति** । अत्र द्वयोरपि पदयो ‘ असदिवा ’– इत्यसत्त्वे प्राप्ते ‘ नान्यत् ’ इत्यनेन साधो इत्यस्याऽसत्त्वाभाव । ‘ नित्यमन्वादेशे ’ इत्यनेन च वस्नसौ ॥—**शरण्या साधवो युष्मानिति** । अत्र द्वयोरपि ‘ असदिवा ’–इत्यसद्भाव ॥—**आचार्या युष्मान् शरण्या** इति । अत्रामन्त्र्यस्य विशेष्यस्य व्यवहितत्वेन परत्रोपश्लेषाभावान्न भवति ॥—**आचार्या उपाध्याया** इति । अत्र भिन्नाविकरणयो पदयोर्न पूर्वं विशेष्य न परं विशेषणमिति सामर्थ्यात्तद्विशेषणभूत इति भणनान्न भवति ॥—**नान्यत्** ॥—‘ जस्विशेष्यम् ’–इत्यस्य प्रधानतयाऽन्यदिति सम्बध्यते इत्याह —**जसन्तादिति** ॥—**पादा**—॥ मात्राश्च अक्षराणि च मात्राक्षराणि नियतप-

ाते । 'वीरो विश्वेश्वरो देवो युष्माकं कुलदेवता ॥ स एव नाथो भगवानस्माकं पापनाशनः ॥ १ ॥ पादाद्योरिति द्विवचनं युष्मदस्मदोरभिसंबन्धार्थम्। -पादादाविति
गुच्यमाने आमन्त्र्यमभिसंबध्येत । पादाद्योरिति किम् । 'पान्तु वो*देशनाकाले जैनेन्द्रा दशनांशवः ॥ भवकूपपतज्जन्तुजातोद्धरणरज्जवः '॥ १ ॥ २८ ॥ च्वाह-
त्वैवयोगे । २ । १ । २९ ॥ च अह ह वा एव इत्येतैर्योगे*संबन्धे पदात्परयोर्युष्मदस्मदोर्यदुक्तं वस्नसादि तन्न भवति । ज्ञानं युष्मांश्च रक्षतु अस्मांश्च रक्षतु । ज्ञानं
युष्मानह रक्षतु अस्मानह रक्षतु । ज्ञानं युष्मान् ह रक्षतु । अस्मान् ह रक्षतु । ज्ञानं युष्मान्वा रक्षतु, अस्मान्वा रक्षतु । ज्ञानं युष्मानेव रक्षतु, अस्मानेव रक्षतु । ज्ञानं युष्मभ्यं च दीयते
अस्मभ्यं च दीयते । ज्ञानं युष्माकं च स्वम्, अस्माकं च स्वम् । ज्ञानं युवां च रक्षतु । ज्ञानमावां च रक्षतु । ज्ञानं युवाभ्यां च दीयते, आवाभ्यां च दीयते । ज्ञानं
युवयोश्च स्वम् , आवयोश्च स्वम् । ज्ञानं त्वां च रक्षतु, मां च रक्षतु । ज्ञानं तुभ्यं च दीयते, मह्यं च दीयते । ज्ञानं तव च स्वम्, मम च स्वम् । योगग्रहणं किम् । ज्ञानं
च शीलं च वो रक्षतु, नो रक्षतु । ज्ञानं च शीलं च वां दीयते, नौ दीयते । ज्ञानं च शीलं च ते स्वम्, मे स्वम् । नैतेषु चशब्देन युष्मदस्मदोर्योगोऽपि तु ज्ञानशी-
लयो । 'चाहहैवे' इत्येव सिद्धे योगग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम् ॥ २९ ॥ दृश्यर्थैश्चिन्तायाम् । २ । १ । ३० ॥ दृशिना समानार्था दृश्यर्थाः । तैर्धातुभि-
श्चिन्तायां वर्तमानैर्योगे युष्मदस्मदोर्यदुक्तं वस्नसादि तन्न भवति । जनो युष्मान्संदृश्यागतः । जनोऽस्मान्संदृश्यागतः । जनो युवां समीक्ष्यागतः । जन आवां स-
मीक्ष्यागतः । जनस्त्वामपेक्षते । जनो मामपेक्षते । ज्ञानं युष्मभ्यं दीयमानमुत्पश्यति । ज्ञानमस्मभ्यं दीयमानमुत्पश्यति । ज्ञानं युवाभ्यां दीयमानं निरूपयति । ज्ञानमावाभ्यां
दीयमानं निरूपयति । ज्ञानं तुभ्यं दीयमानं निध्यायति । ज्ञानं मह्यं दीयमानं निध्यायति । जनो युष्माकं चित्तमुपलक्षयति । जनोऽस्माकं चित्तमुपलक्षयति । जनो
युवयोः कार्यं संपश्यति । जन आवयोः कार्यं संपश्यति । गुरुस्तव कार्यमालोचयति । गुरुर्मम कार्यमालोचयति । सर्वत्र मनसा चिन्तितं दृश्यर्थानामर्थः । दृश्यर्थैरिति
किम् । जनो वो मन्यते । जनो नो मन्यते । चिन्तायामिति किम् । जनो वः पश्यति । जनो नः पश्यति । जनो वामीक्षते । जनो नावीक्षते । जनस्त्वालोकयति । जनो
मालोकयति । सर्वत्र चक्षुषा पश्यतीत्यर्थः ॥ ३० ॥ **नित्यमन्वादेशे । २ । १ । ३१ ॥** कथितानुकथनमन्वादेशः, कस्यचिद् वस्तुनः किञ्चित्क्रियादिकं विधातुं क-

रिमाणानि च तानि मात्राक्षराणि च तेषां पिण्ड । यद्वा मात्राक्षराणां पिण्ड २ नियतपरिमाणश्चासो मानाक्षरपिण्डश्च २ ॥—पादादाविति ह्युच्यमाने इति । पादादावित्यस्यामन्त्र्याभिसंबन्धे
किं स्यात । 'जिनेश त्वां नमस्कृत्य यन्नरो मुक्तिमिच्छति ॥ अतो नरसुराधीश स्तुत्यस्तोत्र त्वमर्हसि ' १ इत्यत्रामन्त्र्यस्य पदस्यादिभूतस्य सत्त्वात् त्वादेश प्रसज्यतेऽतो द्विवचनमदात् सूरि ॥—
देशनाकाल इति । देशनं देशस्त करोति 'णिज्बहुल-' देश्यते इति 'णिवेत्यास' इत्यन ॥—चाहह—॥—योग इति । चादिद्योत्यसमुच्चयाद्यर्थस्य साक्षाद्युष्मदस्मदर्थसंबन्धे इत्यर्थ । ज्ञानं च शील
चेत्यत्र चशब्देन ज्ञानशीलयो सद्वितीयता द्योत्यते न तु युष्मदस्मदर्थयोरिति योगग्रहणमिति । अयमर्थो योगग्रहणं विना अर्थात्प्रकरणाद्वा चादिषु गम्यमानेष्वपि स्यादिति ॥—दृश्यर्थैः—॥ अत्रार्थे
स्वरूपे वा किं । तत्र यदाऽर्थे तदा दृशिरर्थो येषाम् । स्वरूपे तु दृशेरर्थो दर्शनमालोचनं येषां धातूनाम् ॥—जनो वो मन्यत इति । नायं दृश्यर्थः । दृश्यर्थो नाम यश्चक्षुःसाधने विज्ञाने
वर्त्ततेऽतो न निषेध इति ॥—नित्यम—॥ नन्वत्र निषेधाधिकारे कथमिदं विधायकमभूत् । सत्यम् । नित्यनिषेधाधिकारे यन्नित्यग्रहणं तदेव बोधयति विधानसूत्रमिदमिति । न चेद वाच्यमत्र

थितस्य*तेनान्येन वा शब्देन*पुनरन्यद्विधातुं कथनमित्यर्थः । तस्मिन्विषये पदात्परयोर्युष्मदस्मदोर्यदुक्तं वस्नसादि तन्नित्यं भवति ।*यूयं विनीतास्तद्वो गुरवो मानयन्ति । वयं विनीतास्तन्नो गुरवो मानयन्ति । युवां शीलवन्तौ तद्वां गुरवो मानयन्ति । आवां शीलवन्तौ तन्नौ गुरवो मानयन्ति । त्वं विद्वानथो ते क्षमाश्रमणैर्ज्ञानं दीयते । अहं विद्वानथो मे क्षमाश्रमणैर्ज्ञानं दीयते । धनवांस्त्वमथो त्वा लोको मानयति । धनवानहमथो मा लोको मानयति ॥ ३१ ॥*सपूर्वात्प्रथमान्ताद्वा । २ । १ । ३२ ॥ विद्यमानपूर्वपदात्प्रथमान्तात्पदात्परयोर्युष्मदस्मदोरन्वादेशे वस्नसादय आदेशा वा भवन्ति । यूयं विनीतास्तद्गुरवो वो मानयन्ति । तद्गुरवो युष्मान् मानयन्ति ॥ वयं विनीतास्तद्गुरवो नो मानयन्ति । तद्गुरवोऽस्मान्मानयन्ति । युवां सुशीलौ तज्ज्ञानं वां दीयते । तज्ज्ञानं युवाभ्यां दीयते । आवां सुशीलौ तज्ज्ञानं नौ दीयते । तज्ज्ञानमावाभ्यां दीयते । सुशीलस्त्वमथो क्षमाश्रमणास्ते ज्ञानं प्रयच्छन्ति । अथो क्षमाश्रमणास्तुभ्यं ज्ञानं प्रयच्छन्ति । सुशीलोऽहमथो क्षमाश्रमणा मे ज्ञानं प्रयच्छन्ति । अथो क्षमाश्रमणा मह्यं ज्ञानं प्रयच्छन्ति ।*धनवानसि अथो ग्रामे कम्बलस्ते स्वम् । अथो ग्रामे कम्बलस्तव स्वम् । धनवानहमथो ग्रामे कम्बलो मे स्वम् । अथो ग्रामे कम्बलो मम स्वम् । धनवांस्त्वं तल्लोकस्त्वा पूजयति । तल्लोकस्त्वां पूजयति । धनवानहं तल्लोको मा पूजयति । तल्लोको मां पूजयति ।*गम्येऽप्यन्वादेशे भवति । ग्रामे कम्बलो वः स्वमथो ग्रामे कम्बलो युष्माकं स्वमथो इत्यादि । सपूर्वादिति किम् । पटो युष्माकं स्वम् । अथो वः कम्बलः स्वम् । प्रथमान्तादिति किम् । पटो नगरे युष्माकं स्वम् । अथो कम्बलो ग्रामे वः स्वम् । 'माणवक जटिलक ते स्वमथो' इत्यादौ तु विशेषणपदस्य 'असदिवामन्त्र्यं पूर्वम्' ( २ । १ ।

---

नित्यग्रहणाभावे 'पदात्'–इति सूत्रे कथं विकल्प इति । तदा हि तत्रैव न वेति कुर्यादिति । कस्य चिद्द्रव्यस्य काचित् क्रिया जाति गुण द्रव्य वा प्रतिपादयितु कथितस्य तेन तदितरेण वा शब्देन पौनरुक्त्य माभूदिति विशेषान्तर प्रतिपादयितु पुन कथनमन्वादेश इति यावत् ॥—तेनान्येन वेति । युष्मदस्मद्शब्दाभ्या कृत्वा विनीतत्वादिक विधाय पुनर्युष्मदस्मद्भ्या गुरुमाननादिक विधीयते । अत्र सूत्रे तेनैव शब्देन कथनमास्ति । अन्येन तु कथनमुत्तरत्रैव ज्ञेयम् ॥—पुनरन्यद्विधातुमिति । पुन शब्दोपादानात्तस्यैव कथन यदि भवति तदैवान्वादेश । न ह्यन्यस्य कथने पुन शब्दार्थो घटते । तेन यत्रान्यस्य कथन तत्र नान्वादेश । ततश्च जिनदत्तमध्यापय एत च गुरुदत्तमित्यत्र तस्यैव जिनदत्तस्य पुन कथनाभावादन्वादेशाभावात् 'त्यदामेनद्'—इत्यनेन एनदादेशो न भवति ॥—यूयं विनीता इति । अन्वादेशदर्शनार्थं वाक्यान्तरमिदमुपदर्शितम् । न तूत्तरपदसबद्ध बोद्धव्यम् । तेन तदित्यस्य पदस्य सपूर्वत्वाभावादुत्तरेण न विकल्प । तदित्यव्यय तस्मादित्यर्थे । विनीततामात्रमत्रानूद्यते नापूर्वं किंचिद्विधीयते ॥ यूय विनीता इति प्रथमादेश उत्तरस्यान्वादेशत्वख्यापनार्थम् ॥ विनीता इति विनीतत्व प्रतिपादयितु यूयमित्युक्तम् ॥—तद्वो गुरवो मानयन्ति इति । अयमन्वादेश । यूयमिति यत्प्रथममुक्त तस्यैव च गुरवो मानयन्तीति प्रतिपादयितु द्वितीय कथन तत्र वसादेश । एव सर्वत्र ॥— सपूर्वात्—॥ सहशब्दो विद्यमानवचन । पूर्वशब्दो व्यवस्थार्थे । सह विद्यमान पूर्वपद यस्मात् 'एकार्थं च–' इति समास ॥—प्रथमान्ताद्वेति । प्रथमाया प्रत्ययत्वात्प्रत्यय प्रकृत्यादेरित्यादिनाऽन्तस्य लब्धत्वादन्तग्रहण न्यायानुवादार्थमिति ॥—धनवानसीत्यादि । अत्र अन्येन कथनमन्वादेश । यतो धनवानसीत्यस्मिन्नन्वादेशदर्शके वाक्यान्तरे प्रथममसीत्युक्तम् । अथो ग्रामे कम्बलस्ते स्वमित्यत्र तु ते इत्युक्तम् ॥—गम्येऽप्यन्वादेशे भवतीति । यूय धनवन्त इत्यादिपदोपादाने हि साक्षादन्वादेशो भवति । अथो इत्यादेस्तु द्योतकमात्रस्योपादाने गम्य एव । माणवक जटिलक ते स्वमथो इत्यादौ तु विशेषण-

२९ ) इससद्भावान्नास्ति सपूर्वप्रथमान्तमिति न भवत्येव विकल्पः । पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम् ॥ ३२ ॥*त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते । २ । १ । ३३ ॥ त्यदादीनां संबन्धिन एतदित्यस्य द्वितीयाया टायामोसि च परेऽन्वादेशे एनद् इत्ययमादेशो भवति, अवृत्त्यन्ते न चेदयमेतच्छब्दो वृत्तेरन्ते भवति । उद्दिष्टमेतदध्ययनमथो एनदनुजानीत । एतकं साधुमावश्यकमध्यापयाथो एनमेव सूत्राणि । अत्र साकोऽप्यादेशः । सुशीलावेतौ तदेनौ गुरवो मानयन्ति । सुस्थिता एते तदेनान्देवा अपि नमस्यन्ति । टा, एतेन रात्रिरधीता अथो एनेनाहरप्यधीतम् । ओम्, एतयोः शोभनं शीलमथो एनयोर्महती कीर्तिः । सर्वाणि शास्त्राणि ज्ञातवन्तावेतौ अथो एनयोस्तिष्ठतोर्नान्यः पूजार्हः । त्यदामिति किम् । एतदं संगृहाण अथो एतदमध्यापय । संज्ञायामसर्वादित्वादत्यदादिः । अवृत्त्यन्त इति किम् । अथो परमेतं पश्य । अन्तग्रहणं किम् । एनच्छ्रितकः । अत्रार्थात्प्रकरणाद्वापेक्ष्ये निर्ज्ञाते सति समासोऽन्वादेशश्च । द्वितीयाटौसीति किम् । एते मेधाविनो विनीता अथो एते शास्त्रस्य पात्रम् ।*एताभ्यां रात्रिरधीता अथो एताभ्यामहरप्यधीतम् । एतस्मै सूत्रं देहि अथो एतस्मै अनुयोगमपि देहि । अभ्युदयनिःश्रेयसपदमेतच्छासनमथो एतस्मै नमो भगवते । अन्वादेश इत्येव । जिनदत्तमध्यापय एतं च गुरुदत्तम् । न पश्चात्कथनमात्रमन्वादेशः । यत्रापि वस्तुमात्रनिर्देशं कृत्वा विधानं क्रियते*तत्रापि न भवति । ' ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ॥ एतमातं ङितं विद्यात् ॥ ३३ ॥ इदमः । २ । १ । ३४ ॥ त्यदादीनां संबन्धिन इदमित्यस्य द्वितीयाया टायामोसि च परेऽन्वादेशे एनद् इत्ययमादेशो भवति अवृत्त्यन्ते । उद्दिष्टमिदमध्ययनमथो एनदनुजानीत । इमकं साधुमावश्यकमध्यापय अथो एनमेव सूत्राणि । अत्र साकोऽप्यादेशः । सुशीलाविमौ तदेनौ गुरवो मानयन्ति । सुस्थिता इमे तदेनान्देवा अपि नमस्यन्ति । अनेन रात्रिरधीता अथो एनेनाहरप्यधीतम् । अनयोः शोभनं शीलमथो एनयोर्महती कीर्तिः । सर्वाणि शास्त्राणि ज्ञातवन्ताविमौ अथो एनयोस्तिष्ठतोर्नान्यः पूजार्हः । द्वितीयाटौसीत्येव । मत्पुत्रकौ*शीलवन्ताविमकौ तिष्ठतः ।

---

पदस्य जटिलक इत्यस्य ' असदिवा '–इत्यसत्वम् । माणवकइत्यस्य तु विशेष्यपदस्य ' असदिवामन्त्र्यम् '–इति नाऽसद्वत्त्व ' नान्यत् ' इति प्रतिषेधात् ॥— त्यदामेनदे—॥ त्यच्च त्यदश्च त्यद । ' त्यदादि. ' इत्येकशेष । ' आ द्वेर ' इति तु न भवति । सूत्रत्वात् । शब्दार्थयोर्भेदविवक्षाया निरर्थकत्वेन त्यदादित्वाभावाद्वा ॥—एताभ्यां रात्रिरधीतेति । अत्राविवक्षितकर्मण इङ्धातोर्योगे रात्रिलक्षणस्याधारस्य ' कालाध्वभावदेश '–इति कालस्य कर्मत्वे ततश्चाऽधीतेत्यत्र कर्मणि क्ते सति कर्मण उक्तत्वात् रात्रिशब्दात्प्रथमा । यदि वा रात्रिसहचरितमध्ययनमपि उपचारात् रात्रिशब्देनोच्यते । तत साऽधीतेति ॥—अर्थात्प्रकरणाद्वेति । प्रथमादेशसापेक्षत्वादन्वादेशस्य । ननु तत्राऽसामर्थ्यात् ऋद्धस्य राज्ञ पुरुष इत्यादिवत् समासाभाव । सामर्थ्यात् समासश्चेत् पूर्वकथनसापेक्षस्यान्वादेशस्याभाव इति परस्परविरोधादुभयाभावादत्रादेशाभाव इत्याह—अर्थादित्यादि । अर्थो वा तादृशो भवति प्रकरण वा येन ताभ्यामेवाऽपेक्ष्यस्य प्रथमादेशस्य निश्चितत्वाद्वृत्तावेवान्तर्भावान्निरपेक्षत्वात्समासो भवति । यथा देवदत्तस्य गुरुकुलम् ॥—वस्तुमात्रनिर्देश कृत्वेति । अनुवादमात्र कृत्वेत्यर्थ ॥—तत्रापि न भवतीति । यथा एतमात ङितमित्यत्र ॥—इदमः ॥ ' टौस्य-न ' इति ' दो म–' इति च प्राप्तेऽयमपवाद ॥—मत्पुत्रकाविति । कृत्रिमौ मत्पुत्रौ न तु पुत्राविति क । अनुकम्प्यौ वा मत्पुत्रौ ' अनुकम्पा '–इति क ॥—शीलवन्ताविमकौ तिष्ठत इति ।

अवृत्त्यन्त इत्येव । अथो परमेमं पश्य । वृत्त्यादौ तु भवत्येव । एनमेनां वा श्रित एनच्छ्रितकः । अन्वादेश इत्येव । चैत्रमध्यापय इमं च मैत्रम् । यत्रापि वस्तुमात्रनिर्देशं कृत्वा किञ्चिद्विधीयते तत्रापि न भवति । अयं दण्डो हरानेन फलानि ॥*केचित्त्विदम आदेशमेनम् इति मकारान्तं द्वितीयैकवचने आहुः, तन्मते इदं कुण्डमानयाथो एनं परिवर्तयेत्येव भवति । योगविभाग उत्तरार्थः ॥ ३४ ॥अव्यञ्जने । २ । १ । ३५ ॥ इदम इति षष्ठ्यन्तमपि सर्वादेशार्थं प्रथमान्ततयेह विपरिणम्यते । त्यदादिसंबन्धीदम्शब्दो व्यञ्जनादौ स्यादौ परेऽन्वादेशे गम्यमानेऽद् भवति, अवृत्त्यन्ते । तकार उच्चारणार्थः । इमकाभ्यां शैक्षकाभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतम् । इमकैः शैक्षकै रात्रिरधीता अथो एभिरहरप्यधीतम् । एवमिमकस्मै अथो अस्मै । इमिकस्यै अथो अस्यै । इमकस्मादथो अस्मात् । इमकस्याथो अस्य । इमकेषामथो एषाम् । इमकस्मिन् अथो अस्मिन् । इमिकस्यामथो अस्याम् । इमकेषु अथो एषु । इमिकासु अथो आसु । सौ तु परत्वादयमाद्यादेशः । अथो अयं शीलवान् ॥*केचिदेतदोऽपीच्छन्ति । एताभ्यां छात्राभ्यां रात्रिरधीता आभ्यामहरप्यधीतम् । एवमेतैः, एभिः । एतस्मै अस्मै इत्यादि । अन्वादेश इत्येव । इमकस्मै देहि । अवृत्त्यन्त इत्येव । अथो परमेमकाभ्यां रात्रिरधीता । व्यञ्जन इति किम् । अथो इमके तिष्ठन्ति । उत्तरत्र ' अनक् ' ( २ । १ । ३ ६) इति वचनादिह साक एव विधिः ॥ ३५ ॥अनक् । २ । १ । ३६ ॥ अन्वादेश इति निवृत्तम् । पृथग्योग उत्तरार्थः । त्यदादिसंबन्धिनि व्यञ्जनादौ स्यादौ परेऽग्वर्जित इदम् अद् भवति । आभ्याम् । एभिः । आभिः । अस्मै । अस्यै । अस्मात् । अस्याः । अस्य । अस्याः । एषाम् । आसाम् । अस्मिन् । अस्याम् । एषु । आसु । अनगिति किम् । इमकाभ्याम् । इमकेभ्यः । इमकस्मै । इमिकस्यै । इमकेषाम् । तत्संबन्धिविज्ञानादिह न भवति । अतीदंभ्याम् । अतीदंसु । प्रियेदंसु । इह तु भवति । परमाभ्याम् । परमै-

---

अत्रापि पूर्ववद्गम्यमानोऽन्वादेश । अथो इत्यादि तु द्योतकत्वात् क्वापि प्रयुज्यते क्वापि न ॥—अयं दण्डो हरानेनेति । अत्र ह्यनुवादमात्रमेव न तु निभाल्यतामित्यादि विधीयते ॥—केचित्त्विति । पाणिनिप्रभृतय ॥–अथो एनं परिवर्त्तयेत्येव भवतीति । न तु कुण्डशब्दस्य नपुसकस्य विशेषणत्वे एनदिति ॥— अव्यञ्जने ॥ तकार उच्चारणार्थ । अन्यथा सौ ' सो रु ' इत्यादौ कृते ओ इत्यनिष्टं रूप स्यात् ॥—प्रथमान्ततयेह विपरिणम्यत इति । अत एव कार्यी निमित्त कार्यमिति निर्देशक्रमे प्राप्ते निमित्तात्पूर्वं कार्यनिर्देश । उत्तरत्रानगिति प्रथमान्तविशेषणोपादानाद्वा ॥—शैक्षकाभ्यामिति । शिक्षेते इति शिक्षकौ । तत स्वार्थे प्रज्ञाद्यण् । शिक्षण शिक्षा ' क्तेटो गुरो '–इत्यऽप्रत्ययस्तत. शिक्षां वित्तोऽधीयाते वा ' पदक्रमशिक्षा '–इत्यक. । ततः शिक्षकावेव प्रज्ञाद्यण् । अथ वा शिक्षायां भवौ ' शिक्षादेश्चाण् '। ततो यावादित्वात् क । अथ सावपि व्यञ्जनादित्वात् कथं नायमादेश इत्याह—सौ तु परत्वादिति ॥—केचिदिति । चान्द्रभोजक्षीरस्वामिप्रभृतय ॥—साक एव विधिरिति । विश्रान्तादौ अन्वादेशे साको निरकश्चादादेशविधानादिह एवमपि व्याख्या । साको यद्यादेशस्तदा अन्वादेश एवेति । तेन निरकोऽन्वादेशे अनन्वादेशे चोत्तरेणादादेश सिद्ध ॥—अनक् ॥—पृथग्योगादिति? । पृथग्योगारम्भादिति भाव. । अन्यथा साकोऽनकोऽप्यन्वादेशे पूर्वसूत्रेणैव सामान्यविधानेन सिद्धत्वात् सूत्रारम्भवैयर्थ्यमिति । अन्वादेशनिवृत्तौ तत्सबद्धमवृत्त्यन्त

भिः। परमैभ्यः । परमास्मै । परमास्यै । परमास्मात् । परमास्याः ।*अत्रः पूर्वोत्तरयो. पदयोः पूर्वं कार्ये कृते पश्चात्संधिकार्यम् ।*एतच्च ' आतो नेन्द्रवरुणस्य ' ( ७ । ४ । २९ ) इत्यत्र ज्ञापयिष्यते । अभेदनिर्देश' सर्वादेशार्थ. ॥ ३६ ॥ टौस्यनः । २ । १ । ३७ ॥ त्यदादिसंबन्धिनि टायामोसि च परेऽग्वर्जितस्येदमः स्थाने अन इत्ययमादेशो भवति । अनेन । अनया । अनयोः स्वम् । अनयोर्निधेहि । परमानयोः । त्यदादिसंबन्धिविज्ञानादिह न भवति । अतीदमा । अतीदमोः । प्रियेदमा । प्रियेदमोः । अनक् इत्येव । इमकेन । इमिकया । इमिकयोः । इमकयोः ॥ ३७ ॥*अयमियं पुंस्त्रियोः सौ । २ । १ । ३८ ॥ त्यदां संबन्धिनि सौ परे पुंलिङ्गस्त्रीलिङ्गयोरिदमः स्थाने यथासंख्यमयम् इयमित्येतावादेशौ भवतः । अयं पुमान् । इयं स्त्री । परमायम् । अनयम् । परमेयम् । अनियम् । साविति किम् । इमौ । इमे । त्यदादिसंबन्धि-विज्ञानादिह न भवति । अतीदम् पुमान् स्त्री वा । एवं प्रियेदम् ।*पुंस्त्रियोरिति किम् । पुंसि इयम् स्त्रियामयम् माभूत् ।*नपुंसके तु नित्यत्वात्प्रथममेव सेर्लुपि इदं कुण्डमित्यत्र प्रसङ्ग एव नास्ति । साकोऽप्ययमियमादेशौ भवतः । अयम् । इयम् ॥ अन्ये त्यादेशे कृते पश्चादकमिच्छन्ति । अयकम् । इयकम् ॥ ३८ ॥*दो मः स्यादौ । २ । १ । ३९ ॥ त्यदां संबन्धिनि*स्यादौ परत इदमो दकारस्य मकारादेशो भवति । इमौ । परमेमौ । इमे । इमम् । इमौ । इमान् । इमकौ । इमकेन । इमकाभ्याम्। त्यदादिसंबन्धिविज्ञानादिह न भवति । अतीदमौ । प्रियेदमौ ॥ ३९ ॥ किमः कस्तसादौ च । २ । १ । ४० ॥ त्यदादिसंबन्धिनि स्यादौ तसादौ च प्रत्यये परे किम्शब्दस्य स्थाने क इत्यकारान्त आदेशो भवति । कः । कौ । के । कम् । कौ । कान् । केन । काभ्याम् । कै । स्त्रियाम्, का । के । काः । काम् । के । काः । नपुंसके, के । कानि । परमकः । परमकौ । अकः । अकौ । साकोऽपि । कः । कौ । तसादौ, कदा । कर्हि । तसादौ चेति किम् । कि तिष्ठति । कि पश्य । कित-

---

इति च निवृत्तम् । ननु परमास्यामित्यादौ परादप्यदादेशात्समासे सति स्याद्युत्पत्तिसापेक्षत्वेन वहिरङ्गादन्तरङ्गे अवर्णस्यैत्वे कृते इदम्रूपाभावादऽदादेशाभाव प्राप्नोतीत्याह—अनेनेति । किच परमैभि-रित्यादिपु परमशब्दसबन्धिना अकारेण सह यदि एत्वलक्षण सधि प्रथममेव क्रियते तदा उभयो स्थाने य समुत्पद्यते स लभते अन्यतरव्यपदेशमिति न्यायात् यदा एकारस्य इदम्शब्दसबन्धिता तदा एकारेण सह इदमोऽत्त्व स्यात् । तत पूर्वस्य व्यञ्जनान्ततायामनिष्टरूपापत्ति । यदा तु एत्वस्य इदम्सबन्धिता न भवति तदा एकारस्य स्थिति स्यात् इत्युभयथापि अनिष्टापत्ति ॥—एतच्चेति । कथम् आग्नेन्द्रमित्यत्र प्रयोगे आकारात् इन्द्रवरुणस्थस्य स्वरस्य वृद्धिर्न भवतीत्युक्तम् । ततश्च यदि पूर्वमेव सधिकार्य स्यात्तदा निषेधोऽनेन व्यर्थ एवेत्यर्थ ॥—अयमियम्—॥ पूर्वव-दलौकिको निर्देश । लुप्तप्रथमाद्विवचनान्त पदम् ॥—पुंस्त्रियोरिति कि । पुसि इय स्त्रियामय माभूदिति । ननु कथमिदमुक्त यावता नपुसके अयमियमादेशनिवृत्त्यर्थं पुंस्त्रियोरिति वचन स्यात् तत्राह-नपुंसके तु नित्यत्वादित्यादि । अपेक्षातोऽधिकार इति ' अनक् ' इत्यन न सबध्यते । तेन मतान्तरे साकोऽपि आदेश । केषा चिन्मते अकारान्त आदेश से स्थाने म् ॥—दो मः स्यादौ । स्याद्यधिकारे स्यादावित्युपादानात् स्यादिरेवाऽनुवर्तते न कि चित्तद्विशेषणमित्याह—स्यादाविति ॥—किमः कः—॥ न च वाच्यमिद सूत्र किमर्थं यत आ द्वेरस्तसादौ च अग्रे इम इति क्रियमाणे साकस्यानिष्ट रूप स्यात् । कक । ककौ । नन्वत्र तसादाविति किमर्थं तसि तावत् ' इतोऽत कुत ' इति निपातन वक्ष्यते । सत्यम् । उत्तरार्थमिदम् । अथवा थमन्तार्थं तसादिग्रह-

राम् । त्यदादिसंबन्धिविज्ञानादिह न भवति । अतिकिम् । अतिकिमौ । अतिकिमः । प्रियकिम् । प्रियकिमौ । प्रियकिमः । आदिशब्दस्य व्यवस्थावाचित्वात्तसादयस्थमवसाना ग्राह्याः ॥ ४० ॥ आ द्वेरः । २ । १ । ४१ ॥ द्विशब्दमभिव्याप्य त्यदादीनामन्तस्य तत्संबन्धिनि स्यादौ तसादौ च परेऽकार आदेशो भवति । स्यः । त्यौ । त्ये । सः । तौ । ते । यः । यौ । ये । अमू । अमी । इमौ । इमे । एप । एतौ । एते ।*एकः। एवं द्वौ । त्यकौ । परमत्यौ । स्त्रियां, स्या । त्ये । त्याः । द्वे । नपुंसके, त्ये । त्यानि । द्वे । तसादौ, ततः । तत्र । तथा । तर्हि । यतः । यत्र । यदा । यथा । त्यदादिसंबन्धिविज्ञानादिह न भवति । अतितद् । अतितदौ । अतितदः । प्रियतद् । प्रियतदौ । प्रियतदः । आ द्वेरिति किम् । किम् ॥ ४१ ॥*तः सौ सः । २ । १ । ४२ ॥ आ द्वेस्त्यदादीनां संबन्धिनि सौ परे तकारस्य सकारादेशो भवति । स्यः । स्या । स्यकः । परमस्यः । सः । सा । सकः । परमसः । एपः । एषा । एषकः । परमैषः । हे स । हे परमस । हे परमैप । त इति किम् । यः। साविति किम् । त्यद् । तद् । त्यौ । तौ । त्यदादिसंबन्धिविज्ञानादिह न भवति । प्रियत्यद्, प्रियैतत् पुमान् । आ द्वेरित्येव । भवती ॥ ४२ ॥*अदसो दः सेस्तु डौ । २ । १ । ४३ ॥ त्यदादिसंबन्धिनि सौ परेऽदसो दकारस्य सकारादेशो भवति, सेस्तु डौ । असौ । असकौ । हे असौ, हे असकौ विद्वन् । असौ । असकौ स्त्री । हे असौ, हे असकौ स्त्रि । सावित्येव । अद । अमू । त्यदादिसंबन्धिविज्ञानादिह न भवति । अत्यदाः । डित्करणमन्त्यस्वरादिलोपार्थम् । तेन 'औता' ( १ । ४ । २० ) 'एदाप.' ( १ । ४ । ४२ ) 'दीर्घङ्याब्व्यञ्जनात्सेः' ( १ । ४ । ४५ । 'अस्यायत्तत्क्षिपकादीनाम्' ( २ । ४ । ११० ) इति*कार्याणि न भवन्ति । अन्यथा दः सौ इत्येतत् क्रियेत ॥ ४३ ॥*असुको वाऽकि । २ । १ । ४४ । त्यदादिसंबन्धिनि सौ परेऽदसोऽकि सत्यसुक इति दस्य सः सकारात्परस्याकारस्योकार सेश्च डौत्वाभावो वा निपात्यते । असुकः । असकौ । हे असुक । हे असकौ । असुका । असकौ स्त्री ॥*केचित्तु असुकसिति सान्तं सिना सह निपातयन्ति ॥ ४४ ॥*मोऽवर्णस्य

---

णम् अन्यथाऽनवधिक ज्ञायेत । अत्र पूर्वसूत्रात् स्यादावित्यनुवर्त्तमानेन सह तसादावित्यस्य समुच्चयार्थश्चकार ॥ यथा 'विशेषण विशेष्येण'–इत्यत्र । अत एव 'आ द्वेर' इत्यत्र स्यादावित्यस्यानुवृत्तिरन्यथा चानुकृष्टत्वान्नानुवर्त्तेत ॥—थमवसाना इति । तेन कितरामित्यादौ तदुत्तरेषु न भवति ॥—आ द्वेरः ॥ द्वाविच्छति क्यनि क्विपि तयोर्लोपे सौ अनेन ईकारस्य अत्व न त्यदादिसंबन्धिस्याद्यभावात् द्वीरित्येव भवति ॥—एक इति । रूपनिर्णयार्थमिद दर्शित न तु किंचित्फलम् ॥— तः सौ सः ॥—भवतीति । 'नामग्रहणे–' इति न्यायादत्रापि सत्वे भवसीति स्यात् । नपुंसके सेरभावात् पुलिङ्गे तु से स्थानित्वेन सत्वे कृतेऽपि 'पदस्य' इति सलोपे विशेषाभावात् स्त्रियामुदाहृतम् ॥—अदसो—॥—असाविति । सेरनेन डौ 'डित्यन्त्यस्वरादे.' इत्येव कार्यं न तु 'आ द्वेर' इति प्रक्रियालाघवार्थं डित्करणस्य सर्वकार्यबाधकत्वेन व्याख्यास्यमानत्वाच्च ॥–हे असौ । हे असकौ विद्वन्निति । अत्र औरित्यपि कृते तदादेशा इति से स्थानित्वेऽपि 'अदेत स्यमो.'–इत्यस्य न प्रसङ्ग । सिद्वारेणाऽमोऽपि लुपि सिद्धाया यत् अमूग्रहण तदन्यस्य स्यादेशस्य निवृत्त्यर्थमिति तत्र व्याख्यानात् ॥—कार्याणि न भवन्तीति । एतानि च स्त्रियां प्राप्नुवन्ति । तथाहि अदस्शब्दात् सौ अनेन औकारे 'आ द्वेर' इत्यत्वे आपि औव्यपदेशे औतेत्यस्य सिव्यपदेशे तु आमन्त्र्ये 'एदाप' इत्यस्य, अनामन्त्र्ये तु 'दीर्घङ्याव्' इत्यस्य, अकि तु 'अस्यायत्तत्'–इत्यस्य प्राप्ति । अथ औतेत्यत्र प्रथमाद्वितीयाद्विवचनेनेति व्याख्यानात् कथ सिस्थानौकारस्य प्राप्ति । सत्यम् । अत्रैव स्थिते तत्रैव व्याख्यातमिति औतेति प्राप्नोत्येव ॥—असुको—॥—असुक इति । अत्र परत्वान्नित्यत्वाच्च 'अभ्वादे'–इति बाधित्वा सस्य 'आ द्वेर' 'लुगस्या–' इत्यलोप । सो रु ॥—केचित्त्वसुकसिति । तन्मते सबोधने स्त्रियां चाऽसुक इति विसर्गान्त एव ।

। २ । १ । ४५ ॥ अवर्णान्तस्य त्यदादिसंबन्धिनोऽदसो दकारस्य मकार आदेशो भवति। अमू नरौ, स्त्रियौ, कुले वा । अमी नराः। अमूः स्त्रियः। अमूनि कुलानि। अमुं नरम्। अमूं स्त्रियम्। अमूः स्त्री । अमून् नरान्। अमूनि कुलानि। अमुकौ नरौ। अमुके स्त्रियौ कुले वा। परमामुम्। अमूदृक्। अमूदृशः। अमूदृक्षः। अत्र 'अन्यत्यदादेराः' इत्यात्वे सत्यवर्णान्तत्वम्। अवर्णस्येति किम्। अदः कुलम्। अदस्यति ॥ ४५ ॥ वाऽद्रौ। २। १। ४६ ॥ अदसोऽद्रावन्ते सति दकारस्य मकारो वा भवति। द्वावत्र दकारौ तत्र विकल्पे सति चातूरूप्यं भवति। अदमुयङ्। अमुद्र्यङ्। अमुमुयङ्। अदद्र्यङ्। तदाह 'परतः केचिदिच्छन्ति केचिदिच्छन्ति पूर्वतः। उभयोः केचिदिच्छन्ति केचिदिच्छन्ति नोभयोः' ॥ १ ॥ ४६ ॥ मादुवर्णोऽनु। २। १। ४७ ॥ अदसः संबन्धिनो मकारात्परस्य वर्णमात्रस्योवर्ण आदेशो भवति, 'अनुपश्चात्कार्यान्तरेभ्यः। आसन्नत्वान्मात्रिकस्य स्थाने मात्रिकः। द्विमात्रस्य द्विमात्रः। त्रिमात्रस्य त्रिमात्रः। अमुम्। अमू। अमू ३ इति। 'प्रश्ने च प्रतिपदम्' (७। ४। ९८) इति प्लुतः। अमुमुयङ्। अमुमुईचः। अदमुईच अदमुईचा। 'अदोमुमी' (१। २। ३५) इति संधिप्रतिषेधः। आन्विति किमर्थम्। अमुष्मै। अमुष्मात्। अमुष्य। अमुष्मिन्। अमूषाम्। अमुया। अमुयोः। इत्यादिषु स्मैप्रभृतिकार्येषु कृतेषूवर्णो यथा स्यादित्येवमर्थम् ॥ ४७ ॥ प्रागिनात्। २। १। ४८ ॥

स्वमते तु स्त्रियामऽमुका इति। स्त्रीसंबोधने तु हे अमुके इति ॥—मोऽवर्णस्य। ननु अद कुलमिच्छतीत्यस्मिन् वाक्ये अदस्शब्दान्नपुंसकादमो लुपि 'सो रु' इति रुत्वे 'रोर्यः' इति यत्वे 'स्वरे वा' इति यलोपेऽवर्णान्तत्वान्मत्वप्रसङ्ग इति। सत्यम्। पदान्तरापेक्षत्वेन यलोपस्य बहिरङ्गत्वात्तदनपेक्षत्वेन मत्वविधेरन्तरङ्गत्वादसिद्धं बहिरङ्गमिति लोपस्यासिद्धत्वेऽनवर्णान्तत्वात् मकाराभाव ॥—वाद्रौ ॥ अदसोऽवयवस्याऽद्र्यागमस्य तद्ग्रहणेन ग्रहणात्तस्मिन् सत्यदस इकारान्तत्वेन अवर्णान्तत्वाभावादप्राप्तेऽय योग ॥—अमुमुयङिति। समुदाये प्रवृत्ता अपि शब्दा अवयवेऽपि वर्त्तन्ते इति मात्राशब्दोऽर्धमात्रायामपि तेन अमुमुयङित्यत्र अर्द्धमात्रिकस्यापि र स्थाने एकमात्रिक उकारादेशो भवति। अत्र वा व्यवस्थितविभाषार्थो न विकल्पार्थ। तेन क्वापि कथंचित् विकल्प प्रवर्त्तते। यदि तु विकल्पार्थ स्यात्तदा प्रथममेव प्रयोगद्वय स्यात्। तावतैव विकल्पस्य चरितार्थत्वात् ॥—अदसो दकारस्येति। अद्र्यागमत्वादऽदस्ग्रहणेन ग्रहणाददसो दकारस्येत्युक्तेऽपि अदसोऽद्रेश्च दस्य म सिद्धः। दकारस्येत्यत्र एकवचनान्तत्वादेकस्यैव दस्य म इति तु न वाच्यम्। दजात्याश्रयणात् ॥—चातूरूप्यमिति। चत्वारि रूपाण्येव स्वार्थे भेषजादित्वात् ट्यण्। चतुर्णां रूपाणां भाव 'पतिराजान्त'—इत्यनेन वा ॥—मादुव—॥ ननु पञ्चम्या निर्देशात् उवर्ण प्रत्यय कथं न भवति। सत्यम्। अदोमुमी इति सूत्रनिर्देशात् वर्णमात्रस्य स्थानित्वं लब्धमिति ॥—अनु पश्चादिति। अनानुना पूर्वं सबन्धस्तस्य च पश्चादर्थत्वात् 'प्रभृत्यन्यार्थ'—इति दिग्योगलक्षणा पञ्चमी। यदि तु पूर्वं पश्चादित्यनेन योगो विवक्ष्यते। तदा 'रिरिष्टात्' इत्यनेन कार्यान्तरेभ्य इत्यत्र षष्ठी स्यात् ॥ पश्चादिति अखण्डमव्ययं वा। अथात्रानुग्रहणं किमर्थं यतो यदि कार्यान्तरात्प्रागुवर्णो भवति तदा इनादेवेत्युत्तरसूत्रे नियमार्थे व्याख्यायमानेऽन्वर्थस्य लब्धत्वात्। सत्यम्। एवमपि नियमाशङ्का स्यात् इनादेशस्तावत्प्रत्ययादेशस्ततोऽन्यस्मादपि प्रत्ययादेशादेव पश्चादुवर्ण प्रकृत्यादेशात् परत्वात् पूर्वमपि भवेत्। तथा चामुया अमुयोरित्यादयो न सिध्येयु ॥—अमुष्मै इति। नत्वत्र 'ङित्यदिति' इति ओत्वं स्मैआदेशे कृते कथं न भवति। उच्यते। अदितीत्यत्र नञ पर्युदासाश्रयणात्। स हि सदृशग्राही ततो यत्र साक्षात् स्वरोऽग्रे भवति तत्रैव पूर्वस्योकारस्य ओकारस्तत्रादिति साक्षात्-

अदसो मात्परस्य वर्णमात्रस्येनादेशात्प्रागुवर्णो भवति । अन्वित्यस्यापवादोऽयम् । अमुना पुंसा कुलेन वा । इनादिति किम् । अमुया स्त्रिया ॥ ४८ ॥ बहुष्वेरी । २ । १ । ४९ ॥ बहुष्वर्थेषु वर्तमानस्यादसो मकारात्परस्यैकारस्य स्थाने ईकार आदेशो भवति । अमी । अमीभिः । अमीभ्यः २ । अमीषाम् । अमीषु । बहुष्विति किम् । अमू कन्ये । अमू कुले । एरिति किम् । अमूः कन्याः । अमून् । नरान् । मादित्येव । अमुके । अमुकेभ्यः ॥ ४९ ॥ धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये । २ । १ । ५० ॥ धातुसंबन्धिन इवर्णस्योवर्णस्य स्थाने स्वरादौ प्रत्यये परे यथासंख्यमियु उव् इत्येतावादेशौ भवत । नियौ । नियः । लुवौ । लुवः । अधीयाते । अधीयते । लुलुवतुः । लुलुवुः । स्त्रमिच्छति क्यन् क्विप् । स्त्रीः । स्त्रियौ । स्त्रियः । एवं श्रियौ । श्रियः । अधीयन् । धातोरिति किम् । लक्ष्म्याः । इवर्णोवर्णस्येति किम् । म्लायति । वाचः । स्वर इति किम् । नीः । लूः । प्रत्यय इति किम् । न्यर्थः । ल्वर्थः । इयुवूभ्यां गुणवृद्धी परत्वाद्भवतः । नयनम् । लवनम् । नायकः । लावकः ॥ ५० ॥ इणः । २ । १ । ५१ ॥ इणो धातोः स्वरादौ प्रत्यये परे इय् इत्ययमादेशो भवति । यत्वापवादः । ईयतुः । ईयुः । कथ यन्ति, यन्तु । परत्वेन ' ह्णिणोरप्विति व्यौ ' ( ४ । ३ । १९ ) इति यत्वस्यैव भावात् । अयनम्, आयक इत्यत्रापि परत्वाद्गुणवृद्धी एव ॥ ५१ ॥ संयोगात् । २ । १ । ५२ ॥ धातुसंबन्धिन इवर्णस्योवर्णस्य च धातुसंबन्धिन एव संयोगात्परस्य स्वरादौ प्रत्यये परे इयुवावादेशौ य्वोरपवादौ भवतः । यवक्रियौ । यवक्रियः । कटप्रुवौ । कटप्रुवः । शिश्रियतुः । शिश्रियुः । धातुना संयोगस्य विशेषणादिह न भवति । उन्न्यौ । उन्न्यः । सकृल्वौ । सकृल्वः ॥ ५२ ॥ भ्रूश्नोः । २ । १ । ५३ ॥ भ्रूश्नु इत्येतयोरुवर्णस्य संयोगात्परस्य स्वरादौ प्रत्यये परे उवादेशो भवति । भ्रुवौ । भ्रुवः । क्यन्क्विबन्तस्य ' धातोरिवर्णोवर्णस्य ' इत्यादिनैवोवादेशः । आप्नुवन्ति । राध्नुवन्ति । तक्ष्णुवन्ति । संयोगादित्येव । सुन्वन्ति । चिन्वन्ति । स्वर इत्येव । भ्रूः । आप्नुतः । प्रत्यय इत्येव । भ्र्वर्थम् । ॥ ५३ ॥ स्त्रियाः । २ । १ । ५४ ॥ स्त्रीशब्दसंबन्धिन इवर्णस्य स्वरादौ प्रत्यये परे इयादेशो

---

स्वरवर्जनात् इति कक्कलस्य व्याख्या । तथाऽदितीति विषयसप्तम्या प्रकृतेरपि विशेषणाद्दकारात् एति उत्पद्यते यस्तद्विषयवर्जनान्मकारस्य तदादेशत्वेन दकारत्वात् । अत एव देदास इत्यत्र एदिति न कृतमिति न्यासकारव्याख्या ॥— बहुष्वेरी ॥—अमुकेभ्यः । अत्राकस्तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणेऽपि उकारेण व्यवधानात् अनने ईत्वाभाव ॥—धातोरिवर्णो—॥ युवर्णस्येति कर्त्तव्ये यदिवर्णोवर्णस्येति कृत तद्विचित्रा सूत्रकृतिरिति दर्शनार्थम् ॥—प्रत्यये इति । प्रत्ययाऽप्रत्ययगोरिति न्यायेन प्रत्यय एव भविष्यति कि तद्ग्रहणेन । सत्यम् । न्यायाना स्थविरयष्टिन्यायेन प्रवृत्ते ॥—नियौ । निय इति । ननु गौणमुख्ययोरिति मुख्यस्यैवेयुवौ प्राप्नुत । नैवम् । ' स्यादो व ' इति सूत्रस्यैतदपवादत्वात् गौणस्यापि भवति ॥—स्त्रियाविति । ननु ' स्त्रिया ' इत्यनेनापि इय् सिद्ध किमत्रोदाहरणेन । सत्य । तेन नाम्न इय् भवति । अनेन तु धातो । अत एव यत्र क्विबन्त स्त्रीशब्दो भवति तत्रानेन ' वाम्शसि ' इति विकल्पो बाध्यते ॥—इणः ॥ अत्र व्यभिचाराभावेऽपि धातोरित्युत्तरार्थमनुवर्त्तनीयम् ॥—यत्वापवाद इति । ' योऽनेकस्वरस्य ' इति प्राप्तस्य ॥—परत्वेनेति । शितीति विशेषविहितत्वात् प्रकृष्टत्वेनेत्यर्थ । परत्व तु स्पर्द्धाभावान्न घटते ॥—परत्वादिति । पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति ' योऽनेकस्वरस्य ' इति प्राप्तं यत्व बाधते न तु गुणवृद्धी । ईयतुरित्यत्र द्वित्वे कृते वार्णात्प्राकृत बलीय इति न्यायात् प्रथममियादेशस्ततो दीर्घ ॥—संयोगात् ॥—य्वोरपवादाविति । ' क्विवृत्ते '–' योऽनेकस्वरस्य ' इति विहितयो ॥—भ्रूश्नोः ॥ सयोगात्परस्येति विशेषण श्नोर्न तु भ्रूशब्दस्याव्यभिचारात् ॥— स्त्रियाः ॥

भवति । स्त्रियौ । स्त्रियः । स्त्रियाम् । परमस्त्रियौ । अतिस्त्रियौ नरौ । शस्त्रीशब्दसंबन्धिनस्त्वनर्थकत्वान्न भवति । स्वर इत्येव । स्त्रीभिः । प्रत्यय इत्येव । स्त्र्यर्थः । कथम् अतिस्त्रियः, अतिस्त्रिणा । अतिस्त्रये । अतिस्त्रेः २ । अतिस्त्रौ । 'इदुतोऽस्त्रेरीदूत्' (१।४।२१) इत्यत्र स्त्रिशब्दवर्जनात्परोऽपीयादेशो बाध्यते । स्त्रीणामित्यत्र तु प्रागेव नाम् । एतच्च 'वेयुवोऽस्त्रियाः' (१।४।३०) इत्यत्रोक्तम् । पृथग्योग उत्तरार्थः ॥ ५४ ॥ **वाम्शसि । २ । १ । ५५ ॥** स्त्रीशब्दसंबन्धिन इवर्णस्यामि शसि च परे इयादेशो वा भवति । स्त्रियम् । स्त्रीम् । स्त्रियः । स्त्रीः । परमस्त्रियम् । परमस्त्रीम् । परमस्त्रियः । परमस्त्रीः । अतिस्त्रियम्, अतिस्त्रिम् नरम् । अतिस्त्रियः, अतिस्त्रीन् नरान् । क्यन्नाद्यन्तस्य तु धातुत्वात् 'धातोरिवर्ण–' (२।१।५०) इत्यादिना नित्यमियादेशः । स्त्रीमिच्छति, स्त्रीवाचरति स्त्री ब्राह्मणः । स्त्रियम् । तान् स्त्रियः ॥ ५५ ॥ **योऽनेकस्वरस्य । २ । १ । ५६ ॥** धातोरित्यनुवर्तते । अनेकस्वरस्य धातोः संबन्धिनः प्रत्यासत्तेरिवर्णस्य स्थाने स्वरादौ प्रत्यये परे यकारादेशो भवति । चिच्यतुः । चिच्युः । निन्यतुः । निन्युः । सखायमिच्छति क्यन् क्विप् । सखीः । सख्युः । एवं पत्युः । सख्य । पत्य । अनेकस्वरस्येति किम् । नियौ । नियः । परमनियौ । परमनियः । रिं पिं गतौ । रियति । पियति । इवर्णस्येत्येव । लुलुवतुः । लुलुवुः ॥ ५६ ॥ **स्यादौ वः । २ । १ । ५७ ॥** अनेकस्वरस्य धातोः संबन्धिनः प्रत्यासत्तेरुवर्णस्य स्थाने स्वरादौ स्यादौ प्रत्यये परे वकारादेशो भवति । वसुमिच्छति क्यन् क्विप् वसूः । वस्वौ । वस्वः । स्यादाविति किम् । लुलुवुः ॥ ५७ ॥ **क्विब्वृत्तेरसुधियस्तौ । २ । १ । ५८ ॥** क्विबन्तेनैव या वृत्ति समासस्तस्या असुधियः सुधीशब्दवर्जितायाः संबन्धिनो धातोरिवर्णोवर्णस्य स्थाने स्वरादौ स्यादौ प्रत्यये परे तौ यकारवकारादेशौ भवत. । उन्न्यौ । उन्न्यः । सुल्वौ । सुल्वः । तिरोन्यौ । तिरोन्यः । तिरोल्वौ । तिरोल्वः । ग्रामण्यौ । ग्रामण्यः । खलप्वौ ।

---

रियामित्यत्र निरनुबन्धग्रहणे इति न्यायात् 'ह्रस्वापश्च' इत्यनेन नाम् न ॥—परमस्त्रियाविति । ग्रहणवतेति नोपतिष्ठते । 'वेयुव'—इत्यत्र अस्त्रिया इति निर्देशात् । यद्वा स्वरादिप्रत्ययेन प्रकृतेराक्षेपात् स्त्रिया इति तस्या विशेषणत्वेन तदन्तसप्रत्ययात्तदन्तस्याप्युदाहरणम् । तर्हि शस्त्रीशब्दस्यापि स्त्र्यन्तत्वादियादेश प्राप्नोतीत्याह—अनर्थकत्वादिति ॥—एतच्चेति । अस्त्रिया इति निर्देशात् परादपि इयुवय्वादिकार्यात् प्रथममेव स्त्रीदूदाश्रितं कार्यं भवति इत्याद्युक्त तत्रेत्यर्थ ॥—वाम्शसि ॥ अत्र षष्ठीबहुवचनस्य नाम्विषयत्वेन स्वरादित्वाभावात् शस्साहचर्याच्च तुल्यायामपि संहिताया द्वितीयैकवचनस्यैव ग्रहणम् । स्त्रीशब्दस्य सख्यैकार्थत्वाभावात् तद्धितशसोऽनुत्पत्ते सख्यैकार्थत्वयोगादुत्पत्तौ वा स्वरादित्वाभावात् द्वितीयाबहुवचनस्यैव शसो ग्रहणात् । अतस्तस्याऽव्यभिचारात्तेन साहचर्यम् ॥—क्यन्नाद्यन्तस्येति । अथ धातुरूपस्यैव स्त्रीशब्दस्य विकल्पार्थमिद कस्मान्न भवति कथमुक्त 'धातोरिवर्णोवर्ण–' इत्यादिना नित्यमियादेश इति । उच्यते । स्त्रिया इति प्राग् आरम्भात् अधातोरेव स्त्रीशब्दस्य ग्रहणम् । स एव चाऽनुवर्त्तते । न चानुवर्त्तमानस्यान्यथात्व भवति । यदाह श्रीशेषराज—न हि गोधा सर्पन्ती सर्पणादहिर्भवति इति । तस्माद्युक्तमुक्त 'धातोरिवर्णोवर्ण–' इत्यादिना इयादेश इति ॥— योऽनेक—॥ धातोरित्यनुवर्त्तत इति ॥ विशेषातिदिष्ट' प्रकृत न बाधत इति न्यायात् इयुबाधकमिदम् ॥—परमनियाविति । अत्र समासस्यानेकस्वरत्व न धातो ॥—स्यादौ वः ॥ उव्बाधनार्थमिदम् ॥—वसुमिछतीति । देवमग्नि राजान वेत्यर्थ । द्रव्यवृत्तिस्तु नपुसक ॥—क्विब्वृत्ते—॥—क्विबन्तेनैवेति । नन्वत्रावधारण कस्माल्लब्धम् । उच्यते । वृत्तिस्थस्य धातो स्यादौ कार्यविधानात्तस्य च केवलस्य वृत्त्यसभवाद्वृत्तिग्रहणादेव क्विपि लब्धे क्विप्ग्रहणमवधारणार्थम् । अत एवावधारणस्य शब्दाश्रयत्वादऽसामर्थ्यमपि

खलप्वः । एषु स्याद्युत्पत्तेः प्रागेव क्विबन्तेन समासः । एवं नयनशीलो नीः । सेनां नेता*सेनानीः । सेनान्यौ । सेनान्यः ।*यद्वा । नयतीति नीः पश्चात्साधनेन योगः । परमस्य नेता परमनीः । परमन्यौ । परमन्यः । क्विब्ग्रहणादिह न भवति । परमश्चासौ नीश्च*परमनीः । परमनियौ । परमनियः । स्याद्यन्तेनात्र विशेषणसमासो न तु क्विबन्तेन । वृत्तिग्रहणादिह न भवति । ब्राह्मणस्य नियौ । असुधिय इति किम् । सुष्ठु ध्यायति दधाति वा सुधीः । 'दिद्युद्' ( ५ । २ । ८३ ) इत्यादिना क्विप् धीभावश्च । सुधियौ । सुधियः । सुपूर्वस्यैव वर्जनादिह भवत्येव । प्रध्यौ । आध्यौ । उध्यौ ॥ ५८ ॥*दृन्पुनर्वर्षाकारैर्भुवः । २ । १ । ५९ ॥ दृन् पुनर् वर्षा कार इत्येतैः सह या क्विब्वृत्तिस्तत्संबन्धिनो भुवो धातोरुवर्णस्य स्वरादौ स्यादौ प्रत्यये परे वकारादेशो भवति । दृन् हिंसन् भवतीति दृन्भ्वौ । दृन्भ्वः । पुनर्भूः पुनरूढा स्त्री । पुनर्भ्वौ । पुनर्भ्वः ।*वर्षाभूरोपधीविशेषो दर्दुरश्च । वर्षाभ्वौ । वर्षाभ्वः । कारे कारेण वा भवति कारभूः । कारभ्वौ । कारभ्वः । करशब्देनापीच्छन्त्येके । करभ्वौ । करभ्वः । । काराशब्देनाप्यन्ये । काराभ्वौ । काराभ्वः । दृनादिभिरिति किम् ।*स्वयंभुवौ । प्रतिभुवौ । मित्रभुवौ । विभुवौ । आत्मभुवौ । पूर्वेणैव सिद्धे नियमार्थमिदम् *एतैरेव भुवो नान्यैरिति ॥ ५९ ॥*णषमसत्परे स्यादिविधौ च । २ । १ । ६० ॥ इतः सूत्रादारभ्य यत्परं कार्यं विधास्यते तस्मिन्पूर्वस्मिंश्च स्याद्यधिकारविहिते विधौ कर्तव्ये णत्वं षत्वं वासदसिद्धं द्रष्टव्यम् ।*एतत्सूत्रनिर्दिष्टयोश्च णत्वषत्वयोः परे षत्वे णत्वमसद्द्रष्टव्यम् ।

---

नास्ति ॥—सेनानीरिति । सेनां नेतेत्यर्थकथनम् । यावता सेनाशब्दस्य षष्ठ्यन्तस्य गतिकारकेति न्यायेन नीशब्देन क्विबन्तेन 'कृति' इति समास ॥ न च वाच्य 'न नाम्येक-' इति नियमेन द्वितीयैव प्राप्नोति न षष्ठी तत्कथ कृतीति समास. । उच्यते । 'ङस्युक्त कृता' इत्यस्यैव विषयेऽय नियमो न कृतीत्यस्य ॥ यदापि नयतीति नी. पश्चात्तु परमशब्देन कर्मषष्ठ्यन्तेन कारकत्वात् स्याद्युत्पत्ते पूर्वं क्विबन्तेन समासस्तदापि यत्व भवतीत्याह—यद्वेत्यादि । उभयत्राप्यर्थभेदाभावात् प्रक्रियाभेदमात्रमेतदुपदर्शितमिति । परमार्थस्तु सोपपदादेव क्विप् । ननु बहव सेनान्यो यस्येति कृते यत्व भवति वा न वा । भवत्येव । यत सेनानीशब्दस्य क्विबन्तेन वृत्तिरस्ति ॥—परमनीरिति । परमशब्दस्याकारकत्वात् क्विबन्तेन समासाभावात् क्विब्ग्रहणादिह यत्व न भवति ॥—दृन्पुन—॥—दृन् हिंसन्निति । दृहदृ इति धातु । दृहतीति क्विपि तल्लोपे सिलोपे च 'पदस्य' इति हलोपे दृन् इति रूपम् ॥—वर्षाभूरिति । भेक्या पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे ( नपस्त्रीण् ) पुमान् इति वैजयन्तीकार ॥—कारेति । क्रियत इति कार । राजलभ्यो भाग ॥—करभ्वाविति । उभय शाकटायन. । स हि करशब्द पठित्वा करकारशब्दयोरेकार्थत्वादेकदेशविकृत तदेवेति कारशब्देनापीच्छति । काराशब्द तु देवनन्दी ॥—स्वयंभुवाविति । अत्रापि 'दिद्युद्दृत्-' इत्यादिना क्विप् । न तु 'शसस्वयम्-' इत्यादिना डु । तदा हि धातुत्व न स्यात् ॥—एतैरेवेति । प्रकृतिनियमोऽयम् । एतैर्योगे भुव एव नान्यस्य धातोरिति तूपपदनियमो न भवति । 'अस्वयभुवोऽव्' इति सूत्रनिर्देशात् । एवविधे हि नियमे क्रियमाणे एतैर्भुव एव नान्यस्येत्यन्ये धातवो नियन्त्रिता स्यु' । भुवस्तु एतैरन्यैश्च योगे वत्व स्यात् । तथा चास्वयभुव इति न स्यात् ॥—णषम—॥ णो विधेयत्वेन एप्वस्तीत्यभ्राद्यकारे णशब्देन णत्वविधायकानि सूत्राण्युच्यन्ते । एव षशब्देनापि षत्वविधायकानीति ॥—एतत्सूत्रनिर्दिष्टयोरिति । यदि तु सप्तमपादोक्तक्रमेण षण इति क्रियते (तदा णत्वमसद्द्रष्टव्यम् । पूर्वं कृतस्य णत्वस्यासत्त्वात् प्रनष्ट इति सिद्धम् । न च श इति व्यावृत्त्या पूर्वमेव न भविष्यति । धातो. पश्चादुपसर्गसंबन्ध इति मते व्यावृत्तेश्चरितार्थत्वात् अभिषुणोतीत्यादि न सिध्यति । 'उपसर्गात्सुग्'-इत्यनेन विहितस्य षत्वस्य णत्वे परेऽसत्त्वात् )

*णपशास्त्रं वा परे स्यादिविधौ च शास्त्रे प्रवर्तमानेऽसद्द्रष्टव्यम् । पूष्णः । तक्ष्णः । अत्र णत्वस्यासत्त्वादनोऽकारलोपो भवति । पिपठीः । अत्र षत्वस्यासत्त्वात्सकारस्य रुर्भवति । स्यादिविधौ च, अवार्णौ । सर्पीषि । अत्र णत्वषत्वयोरसिद्धत्वादुपान्त्यदीर्घत्वं सिद्धम् । असत्पर इत्यधिकारो 'रात्सः १ ( २ । १ । ९० ) इति यावत् । स्यादिविधौ चेति तु 'नोर्म्यादिभ्यः' ( २ । १ । ९८ ) इति यावत् ॥ ६० ॥ *क्तादेशोऽषि । २ । १ । ६१ ॥ *ककारेण उपलक्षितस्य तकारस्य स्थाने य आदेशः स पकारादन्यस्मिन् *परे कार्ये स्यादिविधौ च कर्तव्येऽसन् द्रष्टव्यः । *क्षामिमान् । अत्र 'क्षैशुषिपचो मकवम्' (४ । २ । ७८) इति क्तादेशस्य मकारस्यासत्त्वात् 'मा-वर्णान्त—' इत्यादिना मतोर्मो वो न भवति । शुष्किका । अत्र ककारस्यासत्त्वात् 'स्वज्ञाज'—इत्यादिनेत्वविकल्पो न भवति । 'अस्यायत्तत्क्षिपकादीनाम्' ( २ । ४ । ११० ) इति तु नित्यमेवेत्वम् । पक्कम् । अत्र वत्वस्यासत्त्वाद्धुटि कत्वं भवति । बुद्ध्वा । दग्ध्वा । अत्र क्तादेशस्य धकारस्यासत्त्वात् 'गडदबादेः' इत्यादिनादेश्च-तुर्थो न भवति । स्यादिविधौ च, *लून्युः । पून्युः । अत्र क्तादेशस्य नत्वस्यासत्त्वात्याश्रित उर् भवति । अपीति किम् । वृक्णः । वृक्णवान् । अत्र क्तादेशस्य नत्वस्य सत्त्वात् 'यजसृज' ( २ । १ । ८७ ) इत्यादिना धुण्निमित्तः षो न भवति । कत्वे त्वसत्त्वात्तद्भवत्येव । परे स्यादिवधौ चेत्येव । लग्नः । *मग्नः । अत्रास्यादिविधौ पूर्वसूत्रकार्ये 'अघोषे प्रथमोऽशिटः' ( १ । ३ । ५० ) इति प्रथमत्वे नत्वस्यासत्त्वाभावादघोषनिमित्तः प्रथमो न भवत्येव ॥ एवं क्षामेण शुष्केणेत्यादौ पूर्वं णत्वं

---

तदाभिपुणोतीत्यादि न सिध्यति । 'उपसर्गात्सुग्'–इत्यनेन विहितस्य षत्वस्य णत्वे परेऽसत्त्वात् 'रपृवर्णात्'–इत्यनेन षकारात् विधीयमान णत्व न स्यात् ॥—णपशास्त्र वेति । अयमभिप्राय । शास्त्रस्यैवासिद्धत्व युक्तम् । कार्यासिद्धत्वाश्रयणे हि यथा देवदत्तस्य हन्तारि हतेऽपि पुनर्देवदत्तस्य प्रादुर्भावो भवति तथा कार्येऽसिद्धत्वमापादितेऽपि न प्रकृते पुन प्रत्यापत्तिर्भवति । तत पूष्ण इत्यत्र णत्वस्यासिद्धत्वेऽपि नकारप्रत्यापत्तेरभावान्नाऽनन्ता प्रकृतिरिति तन्निबन्धनोऽनोऽकारलोपो न स्यात् । शास्त्रासिद्धत्वे त्वकारलोपशास्त्रमेव तावत्प्रवर्त्तते न णत्वशास्त्रमिति ॥—अधिकार इति । अधि उपरि क्रियतेऽनुवर्त्यत इत्यधिकार घञि ॥—क्तादेशोऽपि ॥ ककारेण उपलक्षितस्त क्त इति व्युत्पत्तिकरणात् क्तक्तवतुक्तिक्त्वाना ग्रहण सिद्ध ककारोपलक्षितस्य तकारस्य सर्वेष्वेषु विद्यमानत्वात् ॥—परे कार्ये इति । परत्वमेतत्सूत्रापेक्ष विज्ञायते न क्तादेशविधायकसूत्रापेक्षम् । अपीति प्रतिषेधात् । एतत्सूत्रापेक्षे हि परत्वे 'यजसृज'–इति षत्वमपि परम् । तस्मिन्नप्यसत्त्वे प्राप्तेऽपीति प्रतिषेधो युज्यते ॥—क्षामिमानिति । क्षामस्यापत्यम् 'अत इञ्' । ततो मतु । यद्वा क्षामोऽस्यास्ति इन् तत क्षाम्यनास्ति मतु ॥—लून्युः । पून्युरिति । लून पून चेच्छति क्यन् 'क्यनि' इति ईकार । ततो उस् । यदापि लवन लूनि । तामिच्छति या री क्यन् लूनीयतीत्यादि प्रक्रिया क्रियते । तदापि ग्रामणीशब्दवत् विशेषेण नित्यस्त्रीत्वाभावात् 'योऽनेकस्वरस्य' इति यत्वे लून्यु' पून्युरित्येव भवति । यदा तु लूनिमिच्छति य पुमान् इत्यादि क्रियते । तदा यो लूनिशब्द स्त्रीलिङ्ग स ईदन्तो न भवति यस्तु क्यनन्त स न ईदन्त स न स्त्रीलिङ्ग इति 'स्त्रीदूत' इत्यस्य प्राप्तिरेव नास्तीति यत्वे लून्यु पून्युरित्येव । यदा तु क्त्यन्तादेव उस् तदा 'स्त्रिया ङिता वा'–इति दासि तत्पक्षे तु 'ङित्यदिति' इत्येत्वे लून्या लूनेरिति रूपद्वयम् । ननु अपीति किमर्थं यत पत्वरूपे परे कार्ये कर्त्तव्ये क्तादेशस्याऽसत्त्व प्राप्तमनेन निषिध्यते । तच्च परे कार्ये इति भणनान्न प्राप्नोति । णत्वषत्वयो पूर्वसूत्रे ग्रहणादिति । सत्यम् । अत एव प्रतिषेधात् पूर्वेन णत्वसहचरित सप्तमपादनिर्दिष्ट षत्व गृह्यते । तेन अद्राक्षीदित्यादि सिद्धम् । अन्यथा यदि पूर्वसूत्रे सामान्येन षत्वमङ्गीक्रियते तदाऽत्र 'षढो कस्सि' इति परे कार्ये कर्त्तव्ये

पठीः । पिपठीर्भ्यः । पदान्त इति किम् । गिरौ । गिरः । लुवौ । लुवः । नामिन इत्येव । अजागः । वोरित्येव । मधुलिट् । भ्वादेरित्येव । अग्निः । वायुः । चतुर्भिः ॥ ६४ ॥-न यि तद्धिते । २ । १ । ६५ ॥ यकारादौ तद्धिते परे यौ वौ तयोः परयोर्नामिनो दीर्घो न भवति । धुरं वहति, धुर्यः । गिरि साधुः, गिर्यः । वकारान्तो धातुर्नाम्युपान्त्यस्तद्धिते न संभवति । यीति किम् । गीर्वत् । धूर्वत् । तद्धित इति किम् । गिरमिच्छति गीर्यति । धूर्यति । गीरिवाचरति गीर्यते । धूर्यते । क्ये, कीर्यते । गीर्यते । दीव्यति । सीव्यति । कीर्यात् । गीर्यात् । दीव्यात् । सीव्यात् । केचित्तु क्यन्क्यङोरपि प्रतिषेधमिच्छन्ति । तन्मते, गिर्यति गिर्यते धुर्यति धुर्यते इत्येव भवति ॥ इह कस्मान्न भवति-पुर्याम्, गिर्योः, किर्योः । बहिरङ्गलक्षणस्य यत्वस्यासिद्धत्वेन व्यञ्जनस्याभावात् ॥ ६५ ॥-कुरुच्छुरः । २ । १ । ६६ ॥ कुरुच्छुरोः संबन्धिनो नामिनो रेफे परे दीर्घो न भवति । कुर्यात् । कुर्वः । कुर्मः । छुर्यात् । छुर्यते । कुर्वित्युकारः किम् । कुरत् शब्दे । कूर्यात् । कूर्यते ॥ केचिदस्यापि प्रतिषेधमिच्छन्ति ॥ अथ द्विर्वचने पूर्वस्य कस्माद् दीर्घो न भवति । रीः रिर्वा । रिर्यतुः । रिर्युः । वीः । विव्यतुः । विव्युः । बहिरङ्गलक्षणस्य यत्वस्यासिद्धत्वेन व्यञ्जनस्याभावात् । संविव्याय विव्याधेत्यादौ तु नामिनोऽसिद्धत्वात् ॥ ६६ ॥ मो नो म्वोश्च । २ । १ । ६७ ॥ मकारान्तस्य भ्वादेरन्तस्य पदान्ते वर्तमानस्य मकारवकारयोश्च परयोर्नकारादेशो भवति ।

---

यदा दिव् इत्यादे. क्विप् तदा ऊटा भाव्यम् इति न वकारान्तत्वम् । यदा तु विच् तदा गुणे कृते एकारस्य दीर्घरूपस्य दीर्घकरण व्यर्थम् । ननु दिव्यमित्यत्र सभवति वान्तो नाम्युपान्त्यश्च धातु । सत्यम् । अत्रापि डिव्प्रत्ययान्तस्य औणादिकत्वाद्दिवो न धातुत्वमिति न वान्तो नाम्युपान्त्यश्च धातु सभवति ॥—पुर्यामिति । पुरशब्दाज्जातित्वात् ङया पृ्ृ पालनपूरणयोरित्यस्मात् कृगृशृपृपूडुभ्य कित्' इति किति इप्रत्यये वा । एव गिर्योः किर्योरिति ॥—बहिरङ्गलक्षणस्येति । प्रत्ययाश्रितत्वेन यत्व बहिरङ्ग दीर्घत्व तु प्रकृतिमात्राश्रितत्वेनान्तरङ्गम् ॥—कुरु—॥-कुर्वित्युकारः किमिति । अन्यथा प्रतिपदोक्तत्वात् कुरत् शब्दे इत्यस्यैव ग्रहण स्यात् । तर्हि कुच्छुर इति निर्विवाद क्रियताम् । न च वाच्य कुच्छुर इति कृते कुरट् हिसायामित्यस्यापि ग्रहण स्यात् कृणोतीत्यादौ रेफाभावात्करिष्यतीत्यादौ तु नाम्यभावेन दीर्घत्वप्राप्तेरभावाच्चेति । उच्यते । एवविधे सूत्रे कृते चिकीर्षतीत्यादौ दीर्घनिषेध स्यात् ॥—संविव्याय । विव्याधेति ॥ व्येग् व्यधच् आभ्या णवि 'व्यस्थवृणवि' इत्यात्वप्रतिषेधे द्वित्वे अनादिव्यञ्जनलोपे 'ह्रस्व' इत्यनेन ह्रस्वत्वे तस्य च कार्यान्तरबाधनार्थं 'ज्याव्येव्यधि'-इति इकारस्यापीत्वे प्रथमे प्रयोगे 'नामिनोऽकलिहले'-इति एत ऐत्वे आयि च सिद्धम् ॥—नामिनोऽसिद्धत्वादिति । द्वित्वे कृते प्रत्ययाश्रितत्वेन बहिरङ्गस्य प्रकृत्याश्रितत्वेनान्तरङ्गे दीर्घत्वे कर्त्तव्ये 'ह्रस्व' इत्यनेन कृतस्य इकारस्य इत्यर्थ । न तु य्वृद्धाधनार्थं 'ज्याव्येव्यधि'-इति कृतस्य इकारस्यापि मध्ये इकारस्यासिद्धत्व यतस्तस्यासिद्धत्वे 'ह्रस्व' इत्यनेन कृत इकार सिद्ध स्यात् तस्य च नामित्वात् ततो नामिनोऽसिद्धत्वादिति यदुक्त तद्व्याहत स्यात् । ननु नामिनोऽसिद्धत्वादिति किमित्युक्त यावता यद्यप्यत्रानेन दीर्घो भविष्यति तथापि 'ह्रस्व' इत्यनेन ह्रस्वे कृते सविव्यायेत्यादि सेत्स्यति । सत्यम् ॥ ह्रस्वरूपे परस्मिन् कार्ये विधेये दीर्घत्व दीर्घत्वशास्त्र वाऽसिद्ध भवतीति । यदापि नित्यत्वाद्विशेषविधानाद्वा 'ह्रस्व' इति बाधित्वा 'ज्याव्येव्यधि'-इति प्रवर्त्तते तदापि प्रत्ययाश्रितत्वेन बहिरङ्गत्वेनासिद्धत्वान्नामिनोऽभावाद्दीर्घाऽभाव । कुर्द्दते कुर्दनेत्यादिषु दूवोस्फूर्जेति ज्ञापकाद्दीर्घत्व न भवति कथ यदि रेफोपान्त्यानां दीर्घः स्यात्तदा दूवोस्फूर्जा वज्रनिर्घोष इत्यस्यापि दीर्घ. सिद्ध इति दीर्घोच्चारणं न कर्त्तव्यम् । तस्मादत्र दीर्घं कुर्वन् ज्ञापयति भ्वादेरित्यय विधिरनित्य. ॥—मो

प्रति मत्वकत्वयोः सत्त्वात्तकारेण व्यवधानं नास्तीति णत्वं भवति ॥ ६१ ॥*षढोः कः सि । २ । १ । ६२ ॥ षकारढकारयोः स्थाने सकारे परे ककार आदेशो भवति । पिष् पेक्ष्यति । पिपिक्षति । दृश्, अद्राक्षीत् । सृज्, अस्राक्षीत् । यज्, अयाक्षीत् । ढ लिह्, लेक्ष्यति । लिलिक्षति । वह्, वक्ष्यति । गुहौ, निघोक्ष्यति । सीति किम् । पिनष्टि । असत्परे इत्यधिकारात् निघोक्ष्यतीत्यत्र ढस्थानस्य ककारस्यासत्त्वाच्चतुर्थान्तलक्षण आदेशश्चतुर्थो भवति ॥ ६२ ॥*भ्वादेर्नामिनो दीर्घो र्वोर्व्यञ्जने । २ । १ । ६३ ॥ भ्वादेर्धातोरवयवभूतौ यौ रेफवकारौ तयोः परयोस्तस्यैव भ्वादेर्नामिनो दीर्घो भवति व्यञ्जने ताभ्यां चेत्परं व्यञ्जनं भवति ।*हूर्छा । हूर्छिता ।*मूर्छा । मूर्छिता । आस्तीर्णम् । प्रस्तीर्णम् । पूर्तम् । अवगूर्णम् । कूर्दते । ऊर्दिदिषते । चिकीर्षति । *बुभूर्षति । बुभूर्षति । दीव्यति । सीव्यति । *दीव्यात् । सीव्यात् ।* असद्विधौ स्वरादेशस्य लोपस्य स्थानिवद्भावप्रतिषेधात्, प्रतिदीव्ना । प्रतिदीव्ने । भ्वादेरिति किम् । चतुर्भिः । चतुर्थः । कुर्कुरमिच्छति कुर्कुरीयति । एवं चतुर्यति । दिव्यति । नामिन इति किम् । स्मर्यते । भव्यम् । र्वोरिति किम् । बुध्यते । व्यञ्जन इति किम् । विकरति । । र्वोर्भ्वादिसंबन्धिविशेषणं किम् । दीव्यतेः क्वनिपि वकारलोपे दिवन् ।*दिव्ना । दिव्ने । नामिनो भ्वादिसंबन्धिविशेषणं किम् । दधिव्र्ज्या ।*प्रत्यासत्त्या तस्यैवेति विशेषणं किम् । ग्रामणिव्रज्या ॥ ६३ ॥*पदान्ते । २ । १ । ६४ ॥ पदान्ते वर्तमानयो-र्भ्वादिसंबन्धिनो रेफवकारयोः परयोस्तस्यैव भ्वादेर्नामिनो दीर्घो भवति । गीर्भ्याम् । गीर्षु । गीस्तरा । गीरर्थः । धूः । धूर्मान् ।*आशीः । आशीर्भिः । सजूः । सजूःषु ।*पि-

---

पत्वस्याऽसत्त्वात् कत्वं न स्यादिति ॥—मञ इति । 'मस्जे स' इति सस्य न । 'नो व्यञ्जन-' इति लुप् ॥—षढो॰ कस्सि ॥-निघोक्ष्यति । स्यतिप्रत्यये गुणे 'हो धुट्पदान्ते' इति दत्वे नित्यस्यापि कादेशस्य परेऽसत्त्वात् 'गडदबादे'-इत्यादेश्चतुर्थत्वे ततोऽनेन कत्वं सिद्धम् । कश्चिच्छासेरपि सौ विकल्पेन ककारमिच्छति । तन्मते शाक्षि शास्सि ॥—भ्वादेर्नामिनो—॥ 'रदादमूर्छ'-इति सूत्रे मूर्छ इति निर्देशात् प्रत्ययाप्रत्यययोरिति नाश्रीयते । भ्वादेरिति आवृत्त्या नामिन इत्यनेन र्वोरित्यनेन च सबध्यते ॥—हूर्छेति । अनाच् ॥—मूर्छेति । अत्र भिदाद्यङ् ॥—बुभूर्षति । 'इवृध'-इति वेट् ॥—दीव्यात् । अनाशी क्यात् । सप्तम्या तु दीव्येत् । सीव्येत् ॥—असद्विधाविति । अथात्र दीर्घद्वारेणैव स्थानिवद्भावप्रतिषेधो भविष्यति । किमऽनेन सूत्रेणाऽसदधिकार-विहितेन । नैवम् । ओर्मा मोर्मा इत्यत्र सार्थकत्वात् । तथाहि ऊर्वतीति मूर्छतीति मनि 'राल्लुक्' इति वकारछकारयोर्लोपे एतत्सूत्रविहितदीर्घस्यासद्विधित्वेनाऽसत्त्वे 'लघोरुपान्त्यस्य' इति गुणो भवति । अन्यथा लघ्वऽभावात्स न स्यात् ॥—दिव्ना । दिव्ने इति । गत्वाना सानुनासिकनिरनुनासिकत्वेऽप्यत्र निरनुनासिकत्वं विवक्षितमिति 'अनुनासिके च-' इत्यूट् न भवति । 'मन्व-न्क्वनिब्-' इति क्वनिब्विधायके सूत्रे क्वचिद्ग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात्क्वचिदय स्वरूपेण न भवति । क्वचित् पानुबन्धो न भवतीति तागमाभाव ॥—प्रत्यासत्त्येति । अनेकेन प्रयत्नेन द्वयो-रुपादानं प्रत्यासत्ति । शब्दान्तरं प्रतीत्य शब्दान्तरस्यासत्तिरिति व्युत्पत्तेः । इयमेव हि शब्दस्य शब्दान्तरेण प्रत्यासत्ति । यदेकप्रयत्नेनोच्चारणं नाम । एकवाक्योपात्तलक्षणप्रत्यासत्तिर्नेहोपयुज्यते ॥—पदान्ते ॥-पिपठीरिति । ननु भ्वादे सबन्धिनो नामिनो दीर्घ इत्युक्तम् । तत्कथमत्र पिपठिषित्यस्याऽभ्वादिरूपस्य सबन्धिनो नामिनो दीर्घ इति । सत्यम् । भ्वाद्यवयवेन पठ्इत्यनेन योगात्समु-दायोऽपि पिपठिष इत्येवरूपो भ्वादि ॥ यद्येवं पूर्वसूत्रोदाहृतेषु चतुर्भि चतुर्थ इत्यादिष्वप्यनेन प्रकारेण भ्वादिसबन्धित्वमस्त्येव तत्कथं न दीर्घ । सत्यम् । धातुत्वे सति भ्वाद्यभ्वादिचिन्ता क्रिय-ते । अत्र तु धातुत्वस्याप्यभाव । तर्हि कुर्कुरीयति, चतुर्यति, दिव्यतीत्यादिषु धातुत्वमस्ति ततोऽनेन प्रकारेण भ्वादित्वमप्यस्ति ततो दीर्घ स्यात् । सत्यम् । यद्यप्येषां प्रत्ययान्तानां धातुत्वमस्ति । तथापि पिपठीरित्यादिवदेतेषु न भ्वाद्यवयवात् प्रत्ययो विधीयते । किं तर्हि नाम्न एव । ततो भ्वाद्यवयवयोगाभावात् कुर्कुरीयइत्यादे समुदायस्य न भ्वादित्वम् ॥—आशीरिति । अत्र नित्यमपि

स चासन् परे । प्रशान् । प्रतान् । प्रदान् । परिक्लान् । प्रशान्भ्याम् । प्रतान्भ्याम् । प्रदान्भ्याम् ।*नत्वस्यासत्त्वान्नलोपाभावः । म्वोः*खल्वपि । जंगन्मि । जंगन्व । जंगन्मः । जगन्वान् । नंनन्मि । नंनन्मः । म्वोश्चेति किम् । प्रशामौ । प्रतामौ । म इति किम् । छित् । भित् । भ्वादेरित्येव । इदम् । किम् ॥ ६७ ॥*स्रन्स्ध्वन्स्क्वस्सनडुहो दः । २ । १ । ६८ ॥ स्रन्स्ध्वन्सोः क्सप्रत्ययान्तस्य सकारान्तस्यानडुह्शब्दस्य च योऽन्त्यस्तस्य पदान्ते वर्तमानस्य दकारो भवति ।*उखास्रत् । उखास्रद् । पर्णध्वत् । पर्णध्वद् । विद्वद्, विद्वत् कुलम् । उपसेदिवद्, उपसेदिवत्कुलम् ।*स्वनडुद्, स्वनडुत्कुलम् । उखास्रद्भ्याम् । पर्णध्वद्भिः । विद्वत्सु । विद्वत्ता । उपसेदिवत्तमः । अनडुद्भ्याम् ।*क्वस्सिति द्विसकारपाठः किम् । सान्तस्यैव यथा स्यात् । इह मा भूत् । विद्वान् । हे विद्वन् । उपसेदिवान् । उपसेदिवन् । सकारस्य 'पदस्य' ( २ । १ । ८९ ) इति लोपेन निवर्तितत्वात् ॥ एवं तर्हि अनड्वान् हे अनड्वन् इत्यत्र नकारस्यापि प्राप्नोति । तत्र विशेषणाभावात् । नैवम् । नकारविधानसामर्थ्यान्न भविष्यति । एतच्च दत्वं 'येन नाप्राप्ते' इति न्यायात्*रुत्वढत्वयोरेव बाधकम् । संयोगान्तलोपे पुन*प्राप्ते चाऽप्राप्ते चारभ्यते इति तस्य बाधकं न भवति ॥ पदान्त इत्येव । उखास्रसौ । पर्णध्वसौ । विद्वांसौ । अनड्वाहौ ॥ ६८ ॥*ऋत्विज्दिश्दृश्स्पृश्स्रज्दधृषुष्णिहो गः । २ । १ । ६९ ॥ एषां पदान्ते वर्तमानानां गोऽन्तादेशो भवति । ऋतुम् ऋतौ ऋतवे ऋतुप्रयोजनो वा यजते*ऋत्विक्, ऋत्विग् । दिश्यते इति दिक्, दिग् । पश्यति दर्शनं वा दृक्, दृग् । अन्य इव दृश्यते अन्यादृग्, अन्यादृक् । एवं यादृग्, यादृक् । तादृग्, तादृक् । घृतं स्पृशति घृतस्पृग्, घृतस्पृक् । मन्त्रेण स्पृशति मन्त्रस्पृग्, मन्त्रस्पृक् । सृज्यत इति क्रुध्संपदादित्वात् क्विप् ।

---

नो ॥-पदान्त इत्यनुवर्त्तमानेन समुच्चयार्थश्चकारो न तु पदान्त इत्यऽस्याऽनुकर्षणार्थ । विधानसामर्थ्याल्लोपाभावो नाशङ्कनीयो म्वोर्विधानस्य चरितार्थत्वात् इत्याह —नत्वस्यासत्वादिति ॥—खल्वपीति । अप्यऽर्थेऽखण्डमव्ययम् ॥—स्रस्ध्वंस्क्वस्स—॥—उखास्रदिति । उखया युतेन स्थाल्या वा स्रसते । ननु दकारकरण किमर्थं तकार एव क्रियताम् । यतस्तकारेऽपि कृते 'धुटस्तृतीय.' इत्यनेन दकारो भविष्यति । नैवम् ॥ तकारे विधीयमाने परेऽसदितिवचनात् 'धुटस्तृतीय' इति दत्वाभावाद्दकारस्य श्रवण न स्यात् ॥ - स्वनडुदिति । अत्र बहुत्वे वाक्य कार्यमेकत्वे तु 'पुमनडुत्रौ'-इति कच् स्यात् ॥—क्वस्सितीति । क्वसो ककारो वस निवासे वसिक् आच्छादनेऽनयोर्व्युदासार्थ । तेन वसे क्विपि यजादित्वात् य्वृति दीर्घत्वे ऊ । क्षौम वस्ते क्विपि क्षोमव । अथ वसतिवस्त्यो सकारान्तत्वाव्यभिचारात् व्यभिचारे च विशेषणस्यार्थवत्त्वाद्व्यभिचारिण क्वस एव ग्रहण भविष्यति । कुत वास्सिति सकारोपादानात् । नैवम् । अन्यथापि प्रतीति स्यात् । यङ्लुवन्तयोरेतयोरेव ह्यस्तनीसिवन्तयोर्विशेषविहितत्वेन 'से स्द्धा च'-इति सिव्लोपाभावे वस्सिति द्वि सकाररूप ग्रहण स्यात् इतहि माभूदिति ककारकरणम् ॥—रुत्वढत्वयोरेव बाधकमिति । अनडुह्शब्दे 'हो धुट्पदान्ते' इत्यनेन ढत्वस्य शेपेषु रुत्वस्य प्राप्ति ॥—प्राप्ते चाप्राप्ते चेति । क्लीबे विद्वद्कुलमित्यादिष्वप्राप्ते पुंस्त्वे तु विद्वानित्यादौ प्राप्ते इति तस्य न बाधकम् ॥—ऋत्विज्—॥—ऋत्विगिति । ऋतु प्रयोजन प्रवर्त्तको यस्येति वाक्ये 'मयूर'—इति प्रयोजनशब्दलोप । अतएव निपातनाद्वा । ऋतुप्रयोजन इति अर्थकथन वा ॥ तत्र पक्षे ऋतुना हेतुभूतेन यजत इत्यर्थ । ननु ऋत्विग्दिग्दृगिति गान्ता निपाता. क्रियन्ता कि गविधानेन । सत्यम् । गनिपातने गत्वसानियोगशिष्टतैव ज्ञायेत ततो व्यावृत्तौ दधृषौ उष्णिहाविति न स्याताम् । गत्वे तु

ऊर्ध्वं स्निह्यति नह्यति वा ।
अत एव निर्देशाद्दतो रत्वं च । सृं गतावित्यस्य वाऽकज् ।*स्रग् । स्रक् । धृष्णोतीति दधृष् । अत एव निर्देशाद्द्वित्वम् । दधृग्, दधृक् । स्रग्भ्या-
अत एव निर्देशात् उदो दकारस्य लोपे सस्य षत्वं, नहेर्नकारस्य च ष्णिरादेशः । उष्णिग्, उष्णिक् । ऋत्विग्भ्याम् । दिग्भ्याम् । दृग्भ्याम् । घृतस्पृग्भ्याम् । स्रग्भ्या-
म् । दधृग्भ्याम् । उष्णिग्भ्याम् । पदान्त इत्येव । ऋत्विजौ । दिशौ । दृशौ । घृतस्पृशौ । स्रजौ । दधृषौ । उष्णिहौ ॥ ६९ ॥ःनशो वा । २ । १ । ७० ॥ नशे
पदान्ते गोऽन्तादेशो वा भवति । जीवस्य नशनम्, जीवनग् । जीवनक् । पक्षे, जीवनड् । जीवनट् । जीवनग्भ्याम् । जीवनड्भ्याम् । पदान्त इत्येव । जीवनशौ
॥ ७१ ॥ःयुजञ्चक्रुञ्चो नो ङः ॥ २ । १ । ७१ ॥ युज्अञ्चक्रुञ्चां नकारस्य पदान्ते वर्तमानस्य ङकार आदेशो भवति । युनक्तेः क्विपि घुटि नागमे संयोगान्तलोपे,
युङ् । अञ्चतेरनर्चायां नलोपे घुटि नागमे, अर्चायां तु नलोपाभावे, प्राङ् । प्राङ्भ्याम् । प्राङ्षु । प्राङ्क्षु । क्रुञ्चेरत एव निर्देशात् 'नो व्यञ्जनस्यानुदितः' ( ४ ।
२ । ४५ ) इति नलोपाभावे, क्रुङ् । क्रुङ्भ्याम् । क्रुङ्षु । क्रुङ्क्षु । पदान्त इत्येव । युञ्जौ । युञ्जः । प्राञ्चौ । प्राञ्चः । क्रुञ्चौ । क्रुञ्चः ॥ ७१ ॥ सो रुः । २ । १ ।
७२ ॥ पदान्ते वर्तमानस्य सकारस्य रुरादेशो भवति । मित्रशीः । आशीः । अग्निरत्र । वायुरत्र । अग्निर्गच्छति । पयः । पयोभ्याम् । पयोवत् । उकारः 'अरोः सुपि
रः' ( १ । ३ । ५७ ) इत्यत्र विशेषणार्थः ॥ ७२ ॥ःसजुषः । २ । १ । ७३ ॥ सजुष् इत्येतस्य पदान्ते वर्तमानस्य रुरन्तादेशो भवति । सजूर्देवैः । सजूर्ऋषिभिः ।
सहपूर्वस्य जुषेः क्विपि सहस्य सभावे रूपमेतत् । सजूर्भ्याम् । सजूर्वत् । पदान्त इत्येव । सजुषौ ॥ ॥ ७३ ॥*अन्हः । २ । १ । ७४ ॥ अहन्शब्दस्य पदान्ते रुरिस-
यमादेशो भवति, स चासन् परे स्यादिविधौ च । दीर्घाण्यहान्यस्मिन् हे दीर्घाहो निदाघ । दीर्घाहा निदाघः । अत्र रुत्वस्यासत्त्वान्नान्तलक्षणो दीर्घो भवति ॥*काश्चित्तु
दीर्घत्वं नेच्छति, तन्मते दीर्घाहो निदाघः । अहोभ्याम् । अहस्सु । अहन् शत्रुमित्यत्राहन्शब्दस्य त्याद्यन्तस्य*लाक्षणिकत्वान्न भवति ॥ ७४ ॥*रो लुप्यरि । २ । १ ।
७५ ॥ अहन्शब्दस्य लुपि सत्यामरेफे परे पदान्ते रोऽन्तादेशो भवति । रोरपवादः ।*अहरधीते । अहरेति । अहर्ददाति । अहर्भुङ्क्ते । दीर्घाहाश्चासौ मासश्च
दीर्घाहर्मासः ।*अहःकाम्यति । अहर्वान् । लुपीति किम् ।*हे दीर्घाहोऽत्र । अरीति किम् । अरोरूपम् । अहोरात्रः । गतमहो रात्रिरागता । कृत्स्नमहो

विहिते निपातन सर्वत्र भवति । गत्व तु पदान्त एव भवतीति ॥—स्रगिति । सरति मस्तकादिकमिति 'ऋाधिपृथि'–इत्यनेन बहुवचनात् किदज् ॥—नशो वा ॥ जीवतीति अच् । जीवस्य
कोऽर्थ । जीवस्य जीवतो वा नशन 'भ्यादिभ्यो वा' इति क्विप् ॥—युजञ्च्—॥ ननु न इति किमर्थ 'षष्ठ्यान्त्यस्य' इति सर्वेषामन्तस्यैव नस्य भविष्यति । सत्यम् । युजिच्समाधावित्यस्यापि
पदान्ते युङ् इत्यनिष्टम्, अपदान्ते क्रुञ्च गतावित्यस्य क्रुचौ क्रुच इत्यपि अनिष्टे स्याताम् । अधुना तु नकारे कृते सूत्रसामर्थ्यान्न तस्य लुग् इत्यपि फलम् ॥—सजुषः ॥ डत्वापवाद ॥—
सजूरिति । प्रथमे सर्वज्ञवचन द्वितीये मुनिवचन ॥—सभावे इति । अस्मादेव निर्देशात् ॥—अन्हः ॥—काश्चित्त्विति । दुर्गसिंह ॥—लाक्षणिकत्वादिति । अयमभिप्राय । उणादयोऽव्युत्पन्नानि
नामानीत्यस्मिन् पक्षे नाह्न प्रतिपदोक्तस्य सम्भवात् लाक्षणिकस्य न ग्रहणमिति । व्युत्पत्तिपक्षस्तु इह नाश्रितः ॥—रो लुप्यरि ॥—अहरधीते इति । कालाध्वनोर्द्वितीया ॥—अहःकाम्यतीति ॥
'रो काम्ये' इति नियमात् 'प्रत्यये' इत्यनेन न सकार ॥—हे दीर्घाहोऽत्रेति । अत्र वाक्ये विभक्तेर्लुबास्ति तत्कथ रो न भवति । सत्यम् । लुपीति प्रत्यासत्त्या व्याख्येयम् यदपेक्षया लुप्

रथन्तरं गायति। सर्वमहो रमयस्व । यातं शनैः सर्वमहो रथेन ॥ अन्ये तु रात्रिरूपरथंतरेष्वेव रेफादिषु परेषु रेफप्रतिषेधमिच्छन्ति ॥ ७५ ॥ झुटस्तृतीयः । २ । १ । ७६ ॥ धुटां पदान्ते वर्तमानानां तृतीयो भवति । वाग् । वाग्भिः । अज् । अज्भिः । पड् । पड्भिः । विद्युद् । विद्युद्भिः । ककुब् । ककुब्भिः । विड् । विड्भिः ॥ केचित्तु विसर्गजिह्वामूलीययोरप्यलाक्षणिकयोस्तृतीयत्वं गत्वमिच्छन्तीति तन्मते, सुपूर्वात् दुःखयतेर्दुᳵखयतेर्वा क्विपि संयोगान्तलोपे, सुदुग्, सुदुग्भ्याम् इति सिद्धम् । पदान्त इत्येव । वाचौ । कश्चरति, कष्टीकते, कस्तरतीत्यादिष्वादेशविधानसामर्थ्यात्, पष्ठ इत्यत्र तु 'पष्ठी' इति निर्देशात् न भवति ॥ ७६ ॥ गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये । २ । १ । ७७ ॥ गडदबादेश्चतुर्थान्तस्यैकस्वरस्य धातुरूपावयवस्यादेश्चतुर्थ आसन्नो भवति पदान्ते सकारादौ ध्वशब्दादौ च प्रत्यये परे। पर्णघुट्। पर्णघुड्भ्याम् पर्णघुट्त्वम् । तुण्डिभमाचष्टे णौ क्विपि, तुण्ढिब्भ्याम् । तुण्ढिप्त्वम् । गोधुक् । गोधुग्भ्याम् । गोधुक्त्वम् । गर्दभमाचष्टे णौ क्विप् । गर्धप् । गर्धब्भ्याम् । गर्धप्त्वम् । धर्मभुत् । धर्मभुद्भ्याम् । धर्मभुत्त्वम् । स्ध्वोः, गुहौ, निघोक्ष्यते । न्यघूढ्वम् । दुह्, धोक्ष्यते । अधुग्ध्वम् । बुध्, भोत्स्यते । बुभुत्सते । अभुद्ध्वम् । गडद-

---

पदत्वमपि यदि तदपेक्षया भवति । अत्र तु वाक्यविभक्त्यपेक्षया लुप् साक्षाद्विभक्त्यपेक्षया तु पदत्वम् । वाक्यविभक्त्यपेक्षयैव पदत्वमपीति न च वाच्यम् । 'वृत्त्यन्तोऽसषे' इति निषेधात् ॥— रथंतरमिति । रथ रथस्थ तरत्यतिक्रामति 'भृवृजि'–इति ख । सामविशेष ॥—यातमिति । कर्मणि क्त ॥—धुटः—॥—अज्भिरिति । अत्र सञ्ज्ञाशब्दत्वात् 'चज कगम्' इति न भवति ॥—अलाक्षणिकयोरिति । 'र कखपफ'–इत्यादिलक्षणेनाकृतयोरित्यर्थः ॥—दुःखयतेर्दुᳵखयतेर्वेति । सुखदु खणित्यत्र दु खधातुर्विसर्गान्वितो मतान्तरेण जिह्वामूलीयान्वितश्च पठ्यते ॥— संयोगान्तलोपे इति । ननु व्यञ्जननैरन्तर्यं संयोग. । न च विसर्जनीयजिह्वामूलीययोर्व्यञ्जनसञ्ज्ञास्ति । तत्कथ 'पदस' इत्यन्तलोप । सत्यम् । कस्यादि कादिरिति व्युत्पत्त्या अंअ इत्येतयो- र्व्यञ्जनत्वे ततश्च 'अ अः ᳵक ᳶप'–इति सूत्रे अअः इति साहचर्यात् ᳵक इत्यस्यापि व्यञ्जनत्वे संयोगान्तलोपो भवति । कण्ठ्यत्वाच्च स्थान्यासन्नो गकार । न तु ᳵ प इत्यनेन साहचर्यात् वर्णमात्रत्वनिबन्धनो व्यञ्जनत्वाभाव । कुत. । अंअ ᳵ प ᳶक इत्यकरणात् ॥—कश्चरतीति । यद्यप्यत्र रुत्वस्य परे असत्त्वात्तृतीयस्याप्राप्तिस्तथापि मातश्चरतीत्यादिषु प्राप्नोतीत्याह —विधानसामर्थ्या- दिति ॥—गडदबादे—॥—धातुरूपावयवस्येति । अत्र धातुरूपावयवस्येति विशेष्यम् । अस्य च समासद्वयं, पर्णघुडित्यादौ सिसाधयिषिते धातुरूपश्चाऽसौ अवयवश्च गुहइत्यादि. । अवयवश्चावय- विव्यपेक्षयाभिधीयत इति पर्णगुहइत्यादिसमुदायोऽवयवी । तुण्ढिब् इत्यादौ तु साधयितुमिष्टे धातुरूपस्यावयव इति षष्ठीसमास । धातुरूप तुण्डिभ् इत्यादि । तस्याऽवयवो डिभ्इत्यादि । समासद्वयेऽपि च कुण्डमुम्भति कुण्टोब् इति निरस्तम् । नहि कुण्ढोब् इत्यस्य समुदायस्य मध्ये डोप् इति धातुरूपोऽवयवो नापि धातुरूपस्य अवयव इति आदिचतुर्थत्वाभाव । यद्वा धातुरूपस्या- वयव इत्येव षष्ठीसमास एव क्रियते एव च क्रियमाणे तुण्ढिब् इत्यादीनि आद्यन्तवदेकस्मिन्निति न्यायनिरपेक्षाणि सिध्यन्ति । पर्णघुडित्यादीनि त्वाद्यन्तवदेकस्मिन्निति न्यायेन ॥ अन्यच्च स्ध्वौ प्रत्ययौ धातोरव्यभिचारिणौ इति चानुकृष्टत्वेनानयो. साहचर्यात्पदान्त इत्यपि धातोरेवेति धातुरूपावयवस्येति तस्यैव युक्तत्वादिति । रूपशब्दस्तु भ्वाद्यभ्वादिधातुमात्रपरिग्रहार्थ ॥—सकारादौ चेति । ध्वस्यादिप्रत्ययस्तदेकविभक्तिनिर्दिष्टत्वेन सकारोऽपि त्यादिरेवेति ॥—तुण्डिभेति । तुडुड्तोडनेऽस्य 'उदित' स्वराच्चोऽन्तः' इति नागमे 'किलिपिलि' इति इप्रत्यये तुण्डि' साऽस्याऽस्तीति 'वलिवटितुण्डेर्भः' इति भ ॥—न्यघूढ्वमिति । अद्यतन्या ध्वमि सकि 'दुहदिह'–इति तस्य लुकि अटि ढत्वे घत्वे 'तवर्गस्य'–इति धस्य ढत्वे 'ढस्तड्ढे' इति ढलोपे रूपमिदम् ॥—

वादेरिति किम् । क्रुत् । क्रोत्स्यति । जभेर्यङ्लुपिअजंझप् । चतुर्थान्तस्येति किम् । सुगण् । दास्यति । एकस्वरस्येति किम् । दाम लेढि क्विप्, दामलिहमिच्छति क्यन्, दामलिह्यति क्विप्, दामलिट् । स्वोश्चेति किम् । धर्मबुधौ । बोद्धा ।*वर्णविधित्वेन स्थानिवद्भावो नास्तीति अबुद्ध, अबुद्धाः इत्यत्र+सिज्लुकि न भवति । धकारस्य वकारोपश्लिष्टस्य ग्रहणं किम् । 'दधि धारणे' इत्यस्य यङ्लुपि हौ धिभावे, दादाद्धि । प्रत्यय इति किम् । धाग् वस् द्वित्वम् । 'श्नश्चातः' ( ४ । २ । ९६ ) इत्याकार-लोपे 'अदीर्घाद्विरामैकव्यञ्जने' ( १ । ३ । ३२ ) इति धकारस्य द्विर्भावे, दद्ध्वः । दद्ध्वहे ॥ ७७ ॥+धागस्तथोश्च । २ । १ । ७८ ॥ दधातेश्चतुर्थान्तस्य दकारादे-राद्देर्दकारस्य तथयोश्च परयोश्चतुर्थो भवति । धत्तः । धत्थः । धत्थ । धत्से । धत्स्व । धद्ध्वे । धद्ध्वम् । अत्रासद्विधित्वाद्वचनसामर्थ्याद्वातो लोपस्य स्वरादेशत्वेऽपि स्थानिवद्भावो न भवति । गकार किम् । धयतेर्माभूत् । दधेर्यङ्लुपि, दात्त । दात्थः । दधातेरपि यङ्लुबन्तस्य मा भूत् । 'तिवा शवाऽनुबन्धेन निर्दिष्टं यद्गणेन च ॥ एकस्वरनिमित्तं च पञ्चैतानि न यङ्लुपि' इति न्यायात्' दात्तः । दात्थः ॥ केचित्तु यङ्लुबन्तस्यापीच्छन्ति । धात्तः । धात्थः । तयोश्चेति किम् । दध्वः । दध्मः । चतुर्थान्तस्येत्येव । दधाति । दधासि ॥ ७८ ॥+अधश्चतुर्थात्तथोर्धः । २ । १ । ७९ ॥+चतुर्थात्परयोस्तकारथकारयोर्धारूपवर्जिताद्धातोर्विहितयोः स्थाने धकार आदेशो भवति । दोग्धा । दोग्धुम् । अदुग्ध । अदुग्धाः । लेढा । लेढुम् । अलीढ । अलीढा । बोद्धा । बोद्धुम् । अबुद्ध । अबुद्धाः । लब्धा । लब्धुम् । अलब्ध । अलब्धाः । अध इति किम् । दधातेर्यङ्लुबन्तधयतेश्च माभूत् । धत्तः । धत्थ । दात्तः । दात्थः ॥ केचित्तु यङ्लुबन्तधयतेरपीच्छन्ति । दाद्धः । दाद्ध । विहितविशेषणं किम् । ज्ञानभुत्त्वम् । अत्र*नामविहिते त्वे मा भूत् ॥ ७९ ॥*नाम्यन्तात्परोक्षाद्यतन्याशिषो धो ढः । २ । १ । ८० ॥ रेफान्तान्नाम्यन्ताच्च धातोः परासां परोक्षाद्यतन्याशिषां विभक्तीनां यो धकारस्तस्य ढकार आदेशो भवति । अतीर्ढ्वम् । तीर्पीढ्वम् । तुष्टुढ्वे । चकृढ्वे । अदिढ्वम् । अधिढ्वम् । अचेढ्वम् । अच्योढ्वम् ।

---

वर्णविधित्वेनेति । वर्णे सकाररूपे परतो विधि ॥—सिज्लुकि न भवतीति । ननु सिज्लोपात् पूर्वमेव किमिति नादिचतुर्थत्वम् । नैवम् । परस्मिन् सिच्लोपरूपे कार्ये विधेये आदिचतुर्थ-त्वस्याऽसदधिकारविहितत्वेनाऽसत्त्वात् ॥—प्रत्यय इति किमिति ॥ ननु प्रत्ययाऽप्रत्यययो प्रत्ययस्यैवेति न्यायेन प्रत्यये एव भविष्यति किं प्रत्ययग्रहणेन । सत्यम् । दद्ध्व दद्ध्वहे इत्यत्र यदा उभयो स्थाने इति न्यायेन ध्वइत्यस्य प्रकृतिप्रत्ययस्थाननिष्पन्नस्य प्रत्ययव्यपदेश स्यात्तदा आदिचतुर्थत्व भवेत् । सति तु प्रत्ययग्रहणे न्यायनिरपेक्षो य प्रत्ययस्तस्मिन्नेव भवति नेतरस्मिन् प्रत्ययग्रहण-सामर्थ्यात् ॥—धागः—॥ नन्वन चकारकरण किमर्थं स्थो पूर्वेणैव सिद्धत्वात् । सत्यम् । यङ्लुपि 'क्रियाव्यतिहार' इति आत्मनेपदे से व्यतिधात्से इति स्यात् । कृते चकारे व्यतिदात्से इत्येव न त्वादेश्चतुर्थस्तिवा शवेति न्यायात् ॥—अधश्चतुर्था-॥ पूर्वसूत्रे निमित्तत्वेनोपादानात् इट तथोरित्यस्य पुनरुपादान कार्यित्वार्थम् ॥—चतुर्थादिति । ननु गडदबादेरित्यतश्चतुर्थान्तस्येत्यधिकारोऽनु-वर्त्य । अर्थवशादिति पञ्चम्यन्त कृत्वा रूपाणि साधयिष्यन्ते कि चतुर्थादित्यनेन । सत्यम् । क्लिष्टा प्रतिपत्तिरियमिति सुखार्थम् ॥—यङ्लुबन्तधयतेश्चेति । केवलस्य तु शवा व्यवधानाच्चतुर्थान्त-त्वाभाव ॥--नामविहिते इति । क्विबन्ता धातुत्व न त्यजन्तीति न्यायादपि न भवत्यऽध इति वर्जनेन पर्युदासाश्रयणाच्छुद्धधातोरेव परिग्रहात् ॥—नाम्यन्तात्-॥ धातोर्नामीति विशेषणाद्विशेप-णेन च तदन्तविधेर्भावात्तदन्तत्वे लब्धे अन्तग्रहण सुखार्थ रान्तादनिट परोक्षा न सभवति । सेटस्तु तत्वरिध्वे इत्यादिपूत्तरेण विकल्प एव । तथाऽत्र रग्रहणाभावेऽपि नाम्यन्तादित्यत्र विहितत्व्या-

*अकृढ्वम् । चेषीढ्वम् । कृषीढ्वम् । नाम्यन्तादिति किम् । *अपग्ध्वम् । पक्षीध्वम् । नाम्यन्तादिति धातोर्विशेषणं किम् । ववसिध्वे । आसिध्वम् । आसिपीध्वम् । परोक्षाद्यतन्याशिष इति किम् । स्तुध्वे । स्तुध्वम् । अस्तुध्वम् ॥ ८० ॥ *हान्तस्थाञ्ञीड्भ्यां वा । २ । १ । ८१ ॥ हकारादन्तस्थायाश्च परान् ञेरिटश्च परासां परोक्षाद्यतन्याशिषां संबन्धिनो धकारस्य ढकारो वा भवति । वचनभेदो यथासंख्यनिवृत्त्यर्थः । अग्राहिढ्वम् । अग्राहिध्वम् । ग्राहिषीढ्वम् । ग्राहिषीध्वम् । अनायिढ्वम् । अनायिध्वम् । नायिषीढ्वम् । नायिषीध्वम् । अकारिढ्वम् । अकारिध्वम् । कारिषीढ्वम् । कारिषीध्वम् । अलाविढ्वम् । अलाविध्वम् । लाविषीढ्वम् । लाविषीध्वम् । परोक्षायां ञिर्न संभवतीति नोदाहृतः । इटः, जगृहिढ्वे । जगृहिध्वे । अग्रहीढ्वम् । अग्रहीध्वम् । ग्रहीषीढ्वम् । ग्रहीषीध्वम् । उपदिदीयिढ्वे । उपदिदीयिध्वे । आयिढ्वम् । आयिध्वम् । अयिषीढ्वम् । अयिषीध्वम् । तत्वरिढ्वे । तत्वरिध्वे । अत्वरिढ्वम् । अत्वरिध्वम् । त्वरिषीढ्वम् । त्वरिषीध्वम् । ववलिढ्वे । ववलिध्वे । अवलिढ्वम् । अवलिध्वम् । संवलिषीढ्वम् । संवलिषीध्वम् । लुलुविढ्वे । लुलुविध्वे । अलविढ्वम् । अलविध्वम् । लविषीढ्वम् । लविषीध्वम् । हान्तस्थादिति किम् । घानिषीध्वम् । आसिषीध्वम् ॥ ८१ ॥ हो धुट्पदान्ते । २ । १ । ८२ ॥ हकारस्य धुटि प्रत्यये परे पदान्ते च ढकारादेशो भवति । लेढा । लेक्ष्यति वोढा । वक्ष्यति । पदान्ते, मधुलिट् । मधुलिड्भ्याम् । मधुलिड्भिः मधुलिट्त्वम् । मधुलिड्वत् । मधुलिट्कल्पः । धुट्पदान्त इति किम् । मधुलिहौ । असत्पर इत्येव । रुडलिण्मान् । अत्र ढत्वतृतीयत्वयोरसत्त्वात् 'मावर्ण'—( २ । १ । ९४ ) इत्यादिना मतो र्मो वत्वं न भवति । ऊढमाख्यत् औजढत् । अत्र ढत्वधत्वयोरसत्त्वादन्त्यस्वरादिलोपस्य च द्वित्वे स्थानिवत्त्वादकारेण सह ह्तेति द्विर्वचनम् ॥ केचित्त्वन्त्यस्वरादिलोपस्य स्थानित्वमनिच्छन्तो ह्तीति द्वित्वे ऊढमूढि वाख्यत् औजिढदिति मन्यन्ते ॥ ८२ ॥ भ्वोदेर्दादेर्घः । २ । १ । ८३ ॥ भ्वादेधातोर्यो दकारादिरवयवस्तदव-

---

स्थाने क्रियमाणे परत्वात् 'ऋता क्ङितीर्' इत्यनेन इरादेशे सत्यपि अतीर्ढ्वमित्यादीनि सिध्यन्ति । किंतु अदिढ्व अधिढ्वमित्यादीनि न सिध्यन्तीति रग्रहणमिति । अतीर्ढ्वमित्यत्र 'ऋवर्णात्' इति सिच किर्त्वम् । अदिढ्वमित्यादौ 'इश्च स्थाद' इत्यनेन इत्व सिच किर्त्व च । इत्वविधानादेव गुणो न भविष्यति किं कित्वेनेति न वाच्यं विधानस्य अदितेत्यादौ ह्रस्वद्वारेण सिचो लुपि चरितार्थत्वादिति ॥—अकृढ्वं कृषीढ्वमित्यनयो 'ऋवर्णात्' इत्यनेन सिच्सीध्वमो कित्त्वाद्गुणाभाव ॥—अपग्ध्वमिति । 'सो धि वा' इति विकल्पेन सिचो लुप्प्रवृत्ते पक्षे अपगड्ढ्वमित्यत्राऽद्यतनीध्वमि सिचि धातुचकारस्य 'चज कगम्' इति कत्वे 'नाम्यन्तस्था' इत्यनेन सिच पत्वे 'तृतीयस्तृतीय–' इति पस्य डत्वे 'तवर्गस्य'–इति ध्वमो धस्य ढत्वे च सिद्धि ॥—हान्त— ॥ जिट स्वतन्त्रत्वात् इटस्तु प्रत्ययावयवत्वेन प्रत्ययत्वात् धातोर्नाम्यन्तत्वाभावे पूर्वेण न प्राप्नोतीत्यप्राप्ते विभाषेयम् ॥—हो धुट्—॥—मधुलिहाविति । यदा गतिकारकेति न्यायात् मधुशब्दस्य लिह् इत्यनेनाऽविभक्त्यन्तेन समासस्तदाऽन्तर्वर्त्तिविभक्त्यभावात्पदत्वप्राप्तिरेव नास्तीति । यदापि लीढ इति कृत्वा मधुनो लिहाविति विभक्त्यन्तेन समासस्तदापि 'वृत्यन्तोऽसषे' इति पदत्वाभाव इत्युभयथाप्यपदत्व लिह्इत्यस्येति ॥—द्वित्वे स्थानिवत्वादिति । ननु कथमऽत्र स्थानित्वमकारेण सह ह्तेति द्विर्वचने कर्त्तव्ये पूर्वविधित्वाभावात् । सत्यम् । निमित्तापेक्षयापीह प्राग्विधिरिष्यते । यद्वा, हृत्इत्यनयो प्राग्विधित्वमस्त्येव । अवयवयोश्च समुदायोपचारात् हृतइत्यस्यापि स्वरादेशस्थान्यन्तस्य प्राग्विधित्वमिति । यदि निमित्तापेक्षया प्राग्विधिरिष्यते । तर्हि नयनमित्यत्र स्वरादेशस्य गुणस्य स्थानित्वेऽयादेशो न प्राप्नोति । सत्यम् । निमित्तापेक्षया प्राग्विधित्व प्रायिकमिति ॥—केचित्त्विति । चन्द्रगोमिदेवनन्द्यादय ॥—भ्वादे—॥ यदि भ्वादेरित्यस्य दादेरिति समा-

यवस्य हकारस्य धुटि प्रत्यये परे पदान्ते च घकारादेशो भवति । ढस्यापवादः । दग्धा । दग्धुम् । घक्ष्यति । दोग्धा । दोग्धुम् । धोक्ष्यति । एषु व्यपदेशिवद्भावाद्धा-
तोरवयवस्य दादित्वम् । अधाक्षीत् । पदान्ते, अधोग् । गोधुक् । काष्ठधक् । गोधुग्भ्याम् । काष्ठधग्भ्याम् । गोधुक्षु । काष्ठधक्षु । भ्वादेरिति किम् । दामलिहमिच्छति
क्यन् क्विप्, दामलिट् । एवं दृपद्घुट् । दादेरिति किम् । सोढा । मधुलिट् । ह इत्येव । अदात् । धुट्पदान्त इत्येव । गोदुहौ । गोदुहः ॥ ८३ ॥ मुहद्रुहस्नुहस्नि-
हो वा । २ । १ । ८४ ॥ एषां संबन्धिनो हकारस्य धुटि प्रत्यये पदान्ते च घकारादेशो वा भवति । ढुहः प्राप्तेऽन्येषामप्राप्ते विकल्पः । मुह्, मोग्धा । मोढा ।
उन्मुक् । उन्मुट् । उन्मुग्भ्याम् । उन्मुड्भ्याम् । द्रुह्, द्रोग्धा । द्रोढा । मित्रध्रुक् । मित्रध्रुट् । मित्रध्रुग्भ्याम् । मित्रध्रुड्भ्याम् । स्नुह्, स्नोग्धा । स्नोढा । उत्स्नुक् । उत्स्नुट् ।
उत्स्नुग्भ्याम् । उत्स्नुड्भ्याम् । स्निह्, स्नेग्धा । स्नेढा । चेलस्निक् । चेलस्निट् । चेलस्निग्भ्याम् । चेलस्निड्भ्याम् । धुट्पदान्त इत्येव । उन्मुहौ । उन्मुहः । मुहादेरिति
गणनिर्देशमकृत्वा धातुपरिगणनं यङ्लुप्यपि विध्यर्थम् । मोमोग्धि । मोमोढि । दोद्रोग्धि । दोद्रोढि ॥ ८४ ॥ नहाहोर्धतौ । २ । १ । ८५ ॥ नहेर्भ्रूस्थानाहश्च धातोः
संबन्धिनो हकारस्य धुटि प्रत्यये पदान्ते च यथासंख्यं धकारतकारावादेशौ भवतः । नद्धा । नत्स्यति । उपानत् । परीणत् । उपानद्भ्याम् । उपानत्कल्पः । आत्,
आत्थ । आहेर्नियतविषयत्वात्पदान्तता नास्ति । धुट्पदान्त इत्येव । उपनह्यति । उपानहौ । उपानहः । आह । आहतुः । आहुः । आहेरादेशान्तरकरणम् 'अधश्चतुर्था-
त्तथोर्धः' ( २ । १ । ७९ ) इति थकारस्य धत्वनिवृत्त्यर्थम् ॥ ८५ ॥ चजः कगम् । २ । १ । ८६ ॥ चकारजकारयोर्धुटि प्रत्यये परे पदान्ते च ककारगकारावा-
देशौ भवतः । वक्ता । वक्तुम् । वक्ष्यति । ओदनपक् । त्वक् । वाक् । वाग्भिः । वाक्त्वम् । जः, त्यक्ता । त्यक्तुम् । त्यक्ष्यति । अर्धभाग् । स्रग् । तृणक् ।
धुट्पदान्त इत्येव । वच्मि । वाचौ । वाचः । प्रत्यय इत्येव । इच्छति । मज्जति । कथं तच्चञ्चुः, तच्चणः, तच्चरति । उच्यते । अत्र दस्य परत्वाच्चृतीयत्वे पश्चाच्चवर्ग-

नाधिकरण विशेषण भवेत्तदाऽदुग्धेत्यादयोऽडागमे कृते दादित्वाभावान्न सिध्येयुरिति भ्वादेरित्यस्य दादेरिति व्यधिकरण विशेषण व्याख्यातम् । नन्वत्र सर्वेष्वपि प्रयोगेषु घस्य ग क्रियते । ततो ग
एव क्रियताम् । किं घकरणेनेति । सत्यम् । गकारे क्रियमाणे चतुर्थान्तत्वाभावादधोगित्यादौ 'गडदब'-इत्यादिना चतुर्थत्वं न स्यात् ॥—मुह—॥—चेलस्निक् ॥ चेल स्निह्यति स्निह्यतीत्यर्थे ।
सेचनार्थत्वं स्वस्य 'स्वसेहन' इति सूत्रे स्निह्यतेऽनेनेति सेहनमुदकादीति दर्शनाद्विज्ञायत इति ॥ ननु किं मुहादय स्वरूपेणोपादीयन्ते मुहादेरित्येवोच्यताम् । नचैव कृतेऽभिकाना प्रसङ्गस्तदनन्तर
तुल्करणात् । तद्धि पुषादिवत् मुहादिपरिसमाप्त्यर्थमपि भविष्यतीत्याह—मुहादेरिति ॥—नहाहो—॥—भ्रूस्थानस्येति ॥ अन्यस्यासभवात् ॥—आत्थेति । नन्वाहेरपि धकारे 'अघोषे प्रथम-'
इति तकारे कृते आत्थेति सिध्यतीत्युभयोरपि धकार एव क्रियतां किं तकारकरणेनेत्याह—आहेरादेशान्तरेत्यादि । न च सिवस्थवृविधानादेव धत्व न भविष्यत्यन्यथा सिवो धत्वमेव विदध्या-
दिति वाच्यम् । यतो लाघवार्थं तत्रत्वं अन्यथा 'भ्रूग पञ्चानाम्'-इत्यत्र सिवो ध इति सूत्रान्तरे कृते गौरवं स्यात्तस्मात्सूक्ष्म धत्वनिवृत्त्यर्थमिति ॥—चजः—॥ धुट्पदान्त इत्यस्य चजाभ्यां
कगाभ्या प्रत्येकमभिसंबन्धात् यथासंख्याभावः । प्रत्येकमभिसंबन्धश्च 'प्रागिनात्' 'स्त्यादिर्विभक्तिः' इति सूत्रानिर्दिष्टकत्वगत्वरूपज्ञापकात् । किंच यदि धुट्पदान्तद्वयेन सह यथासंख्यमभिप्रेतं
स्यात्तदा 'न्यङ्क्वादि'-इत्यधिकारे जग्रहणं कृत्वा गत्वं विदध्यादिति । अथात्र सूत्रे किमर्थमादेशद्वयविधानं यावता कविधानं गविधानं वा क्रियतां, यथालक्षणं कस्य गत्वे गस्य कत्वे च सर्वसाध्य-

त्वे प्रथमत्वम् । ततस्तृतीयस्य 'चजः कगम्' ( २ । १ । ८६ ) इति परेऽसत्त्वेन चजयोरभावात्कत्वगत्वे न भवतः । अञ्जलावित्यत्र तु संज्ञाशब्दत्वान्न भवति ॥ ८६ ॥*यजसृजमृजराजभ्राजभ्रस्जव्रस्चपरिव्राजः शः षः । २ । १ । ८७ ॥ यजादीनां धातूनां चजः शकारस्य च धुटि प्रत्यये परे पदान्ते च षकार आदेशो भवति । यज्, यष्टा । यष्टुम् । देवेट् । उपयट् । उपयड्भ्याम् । सृज्, स्रष्टा । स्रष्टुम् । तीर्थसृट् । तीर्थसृड्भ्याम् । मृज्, मार्ष्टा । मार्ष्टुम् । कंसपरिमृट् । कंसपरिमृड्भ्याम् । राज्, सम्राट् । सम्राड्भ्याम् । भ्राज्, विभ्राट् । विभ्राड्भ्याम् । राजभ्राजोः क्विरेव धुट् । अन्यस्तु इटा व्यवधीयते । राष्टिः । भ्राष्टिः । केचित्तु क्तिं नेच्छन्ति । भ्रस्ज्, भ्रष्टा । भ्रष्टुम् । भर्ष्टा । भर्ष्टुम् । धानाभृट् । धानाभृड्भ्याम् । व्रश्च्, व्रष्टा । व्रष्टुम् । मूलवृट् । मूलवृड्भ्याम् । परिव्राज्, परिव्राट् । परिव्राड्भ्याम् । 'दिद्युद्दद्' -इत्यादिना क्विबन्तस्यैव निपातनात् धुट्यसंभवान्नोदाहृतम् । शकारान्त, लिश्, लेष्टा । लेष्टुम् । लिट् । लिड्भ्याम् । आदेशोऽपि शकारो गृह्यते । प्रष्टा । प्रष्टुम् । शब्दप्राड् । शब्दप्राड्भ्याम् । राजिसहचरितस्य भ्राजेर्ग्रहणात् एजृङ् भ्रेजृङ् भ्राजि दीप्तावित्यस्य गत्वमेव । विभ्राक् । विभ्राग्भ्याम् । अत एव भ्राजेरात्मनेपदिनोऽपि राजृग् टु भ्राजृग् दीप्तावित्युभयपदिषु पुनः पाठः*साहचर्यार्थम् । धुट्पदान्त इत्येव । देवेजौ । देवेजः । रज्जुसृजौ । कंसपरिमृजौ । सम्राजौ । विभ्राजौ । धानाभृज्जौ । मूलवृश्चौ । परिव्राजौ । शब्दप्राशौ । उच्छै, समुशौ । यजादिधातुसाहचर्यात् शकारस्यापि धातोः संबन्धिन एव ग्रहणादिह न भवति । निशाशब्दस्यान्तलोपे 'धुटस्तृतीयः' ( २ । १ । ७६ ) इति जकारे, निज्भ्याम् । सुपि तु जकारस्य प्रथमत्वे 'रात्स्य शषौ' ( १ । ३ । ६१ ) इति सुपः सकारस्य शत्वे 'प्रथमादधुटि शश्छः' ( १ । ३ । ४ ) इति छत्वे, निच्छु, । जकारस्य तु परे गत्वेऽसत्त्वात् 'चजः कगम्' ( २ । १ । ८६ ) इति गत्वं न भवति । चज इत्येव । वृक्षवृश्चमाचष्टे णौ विचि, वृक्षव् । अत्र वकारस्य माभूत् ।*कथमसृग्, असृग्भ्याम्, रज्जुसृग्, रज्जुसृग्भ्याम् । असृज्रज्जुसृज्शब्दयोरौणादिकयोर्भविष्यति । कश्चित्तु 'अनुनासिके च च्छ्वः शूट्' ( ४ । १ । १०८ ) इति शत्वविधेरनित्यत्वज्ञापनार्थं छकारस्यापि षत्वमिच्छति । तन्मते* पथिप्राच्छौ, पथिप्राच्छः ।

---

सिद्धे । सत्यम् । गाऽभावे लग्नादय, काऽभावे पक्वादयो न सिध्येयुरिति कगग्रहणम् ॥—यजसृज—॥—क्विरेव धुडिति । 'तेर्ग्रहादिभ्य' इति नियमात् क्तौ इडभाव इत्यर्थ ॥ ननु यङ्लुबन्तयोरनयोरन्योपि तिवादिर्धुट् संभवति तत्कथ क्विरेव धुडिति । सत्यम् । यङ्लुबन्तयोरनयोर्धातुपारायणिकानामेव मते प्रयोग इष्यते न वैयाकरणानामिति क्विरेवेत्युक्तम् ॥—साहचर्यार्थमिति ॥ न चात्मनेपदानित्यत्वज्ञापनार्थं पुन पाठ इति वाच्यं तदा ह्यात्मनेपदिष्वेव पुन पठ्येत । नाप्येकस्य ट्वऽनुबन्धत्वादथुर्भवत्यन्यस्य नेति वाच्य यत. ट्वनुबन्धादपि 'असरूप'-इति सूत्रात् उत्सर्ग. प्रवर्त्स्यते तस्मादेकेनापि धातुनार्थभेदेन प्रयोगद्वयं सिध्यति परं साहचर्याय द्वि पाठ इति ॥—कथमसृगिति । नम्पूर्वस्य सृजेः क्विबन्तस्य षत्वेन भाव्य तत्कथ गत्वमित्याह—औणादिकयोरिति । अस्यत इति न सृज्यत इति वा 'रुधिपृथि'-इति किदजि बाहुलकादेकत्राऽस्य ऋत्वेऽन्यत्र जकाराकारयोर्लोपे. धाऽसृज्शब्दसिद्धि ॥—पथिप्राच्छाविति । पन्थान पृच्छत ।

शब्दप्राच्छौ, शब्दप्राच्छः । उच्छैव् विवासे, समुच्छौ, समुच्छः ॥ ८७ ॥* संयोगस्यादौ स्कोर्लुक् । २ । १ । ८८ ॥ धुटि प्रत्यये पदान्ते च यः संयोगस्तस्यादौ वर्तमानयोः सकारककारयोर्लुग् भवति । ओ लस्जैति, लग्नः । लग्नवान् । साधुलग् । साधुलग्भ्याम् । मस्ज्, साधुमक् । साधुमग्भ्याम् । ओ व्रश्चौत्, वृक्णः । वृक्णवान् । मूलवृट् । मूलवृड्भ्याम् । भ्रस्ज्, भृष्टः । भृष्टवान् । यवभृड् । यवभृड्भ्याम् । क्, तक्षौ, तष्टः । तष्टवान् । काष्ठतड् । काष्ठतड्भ्याम् । अक्षौ, अष्टः । अष्टवान् । तृणाट् । तृणाड्भ्याम् । तृणाट्कल्पः । चक्षि, आचष्टे । ननु स्कोर्लुकः परस्मिन्नसत्त्वात् 'पदस्य' ( २ । १ । ८९ ) इति संयोगान्तस्य लोपः स्यात् । नैवम् । स्कोः पदान्ते लुको विधानादसत्त्वाभावः । अन्यथा हि समुदायस्यैव लोपं विदध्यात् । संयोगान्तस्येति किम् । सातम् । कृतम् । आदाविति किम् । शङ्केर्वङ्केश्च यङ्लुपि शाशङ्क्ति, वावङ्क्ति । स्कोरिति किम् । नर्नर्ति । अदृड् अभियोगे, अद्द् हिसातिक्रमयोः, अनयोः क्विपि उत्तरसूत्रेण डकारटकारयोर्लुकि दकारस्य च प्रथमत्वे क्षेत्रमात् । अन्ये तु अट्ट तोपान्त्यं पठन्ति । तन्मते क्विपि अत्, अद् । अन्यस्त्वद्डतेः संयोगादेर्दकारस्यापि लोपमिच्छति । तन्मते अद्, अड्भ्याम् । तथा अट्ट अतिक्रमहिसयोरिति पठन् संयोगादेष्टकारस्यापि लोपमिच्छति । अद्, अड्भ्याम् । धुट्पदान्त इत्येव । साधुमज्जौ । काष्ठतक्षौ । प्रत्यय इत्येव ।*पृथक्स्थाता । वास्यर्थम्, वाक्यर्थमित्यत्र तु यत्वस्य बहिरङ्गत्वेनासिद्धत्वात्संयोगादित्वे सत्यनेनादेरुत्तरेण वान्तस्य लुग् न भवति । कथं मांसं पिपक्षति क्विप्*मांसपिपक्; वचो विवक्षते वचोविवक् । कत्वस्य परस्मिँल्लोपेऽसिद्धत्वान्न भवति ॥ ८८ ॥ पदस्य । २ । १ । ८९ ॥ पदान्ते वर्तमानस्य संयोगस्य लुगन्तादेशो भवति स च परे स्यादिविधौ च पूर्वस्मिन्नसन् द्रष्टव्यः । पुमान् । पुमुभ्याम् । पुंभिः । पुंभ्यः । पुंसु । पुंरूप्यः । पुंमयः । पुंजातीयः । एवं गोमान् । अनड्वान् । महान् । भूयान् । कुर्वन् । श्रेयाने-

'दिशुत्'-इति क्विप् । धुटि पदान्ते च पूर्वाण्येवोदाहरणानि व्यावृत्तौ तु विशेष । स्वमते तु पशिप्राशावित्याद्येव भवति ॥—संयोग—॥ सयुज्यन्ते वर्णा अनेति व्यञ्जनाद् घञि सयोग । स च वैयाकरणसप्रदायाद्व्यञ्जननैरन्तर्यमुच्यते । दन्त्यापदिष्टमिति न्यायात्तालव्यशस्य लुक् दर्शित । दन्त्यस्य तु सस्याऽवावागित्यत्र ककुड्भकुडिति पठितस्य वस्केर्ज्ञेय इति ॥—समुदायस्यैव लोपं विदध्यादिति । कया युक्त्या सयोगेति प्रथम, पदस्येति द्वितीयम्, अन्ते चेति तृतीय, सून कुर्यात् । तनाद्यस्यार्थ धुटि प्रत्यये सयोगादिस्थयो सकारककारयोर्लुग् भवति । द्वितीयस्यार्थ पदान्ते वर्त्तमानस्य सकारककारादिसयोगस्य सकलस्यापि लुक् । तृतीयस्यार्थ., पदस्येत्यत पदान्ते इत्यनुवर्त्तते । तत पदान्ते सयोगसवन्धिनोऽन्तस्य लुग् भवतीत्यकरणात् लुक स्थानित्व न भवति ॥—अन्ये तु अत्ट्टिमिति । तन्मतस्वमतयो 'न वदनम्'-इत्यत्र विशेष । तन्मते अतिट्टिपते स्वमते तु, अट्टिटिपत इति ॥—पृथक्स्थातेति । पृथक्शब्द कान्तोऽव्ययम् । न तु 'हधिपृथि'-इत्यनेनाऽजन्त । तदा 'चज'-इति गत्वस्य परेऽसत्त्वात्तदादेशस्य कत्वस्याप्यसत्त्वे ध्यङ्गविकलता स्यात् ॥—मांसपिपकिति । नन्वत्र 'स्वरस्य'-इति स्थानिवद्भावेन पदान्ते सयोगस्याभावात् ककारलोपो न प्राप्नोति । न चासद्विधौ स्थानित्वनिषेध इति वाच्यम् । अस्क्लुकीति भणनात् । सत्यम् । नञ्निर्दिष्टस्याऽनित्यत्वेन स्थानित्वाभावात् प्राप्तिर्विद्यते । यथा मधुगित्यत्र ॥—पदस्य ॥—पदान्ते वर्त्तमानस्येति ॥ पदस्य विशेष्यस्य 'विशेषणमन्त.' इति परिभाषया सयोगान्तस्येति स्थिते पदान्ते वर्त्तमानस्य इति व्याख्यातम् । अत्र पदान्ते सयोगस्य लुग्भवतीत्युच्यमानेऽपि सयोगान्तस्य पदस्यैव लोप इत्यर्थस्य सिद्धत्वात्पदस्येति वचन पदान्तसवद्धधुट्निवृत्त्यर्थम् । तेन स्कन्त्वा इत्यादौ धुडादौ लुक् न भवति ॥—भूयानिति । अपदसज्ञकेऽपि तद्धिते 'अस्वयम्भुवोऽव्'

त्यादौ संयोगान्तलोपस्य परकार्येऽसत्त्वादुत्तरसूत्रेण लोपो न भवति । स्यादिविधौ चासत्त्वादत्वादिलक्षणो दीर्घो भवति । पदस्येति किम् । स्कन्त्वा । स्यन्त्वा । भवान्भ्रूशेते इत्यादौ तु श्चादेर्विधानसामर्थ्यान्न भवति ॥ ८९ ॥ ⁂ रात्सः । २ । १ । ९० ॥ पदान्ते वर्तमानस्य संयोगस्य संबन्धिनो रेफात्परस्य सकारस्यैव लुग् भवति । चिकीः । चिकीर्भ्याम् । चिकीर्षु । अत्र चिकीर्षतीति क्विपि 'अतः' ( ४ । ३ । ८२ ) इत्यकारलोपे षत्वस्य परेऽसत्त्वात्सकारस्यैव लोपः । एवं जिहीः । जिहीर्भ्याम् । जिहीर्षु । कटचिकीः । पटजिहीः । पूर्वेणैव सिद्धे नियमार्थं वचनम् । तेन रात्परस्य संयोगान्तस्य सस्यैव लोपो नान्यस्य । ऊर्क् । ऊर्ग्भ्याम् । न्यमार्ट् । गृधेः स्पर्धेश्च यङ्लुपि द्वित्वे, 'रिरौ च लुपि' ( ४ । १ । ५६ ) इति पूर्वस्य रागमे 'आगुणावन्यादेः' ( ४ । १ । ४८ ) इति दीर्घत्वे चाडागमे च सिद्धम्⁂अजर्घाः । अपास्पाः । रादेव सस्येति तु विपरीतनियमो न भवति । 'पुंवत्कर्मधारय'–इत्यत्र पुंवदिति निर्देशात् ॥ ९० ॥ ⁂ नाम्नो नोऽनह्नः । २ । १ । ९१ ॥ पदान्ते वर्तमानस्य नाम्नो नकारस्य लुग् भवति अनह्नः–स चेदहन्‌शब्दसंबन्धी न भवति स चासन् स्यादिविधौ । पर इति निवृत्तम् । राजा । वृत्रहा । दण्डी । वाग्मी । राजपुरुषः । राजकाम्यति । राजकल्पः । स्यादिविधावसत्त्वात् राजभ्याम् राजभिः राजसु इत्यादौ दीर्घत्वैस्त्वैत्वान्यकारान्तत्वाभावान्न भवन्ति । अनह्न इति किम् । अहरेति । अहरधीते । अहोरूपम् । दीर्घाहा निदाघः । अत्र परविधौ रेफरुत्वयोरसत्त्वान्नलोपः स्यात् ।⁂सावकाशं च⁂तदुभयं⁂संबोधने । हे अहः । हे दीर्घाहः । पदस्येत्येव । राजानौ । स्यादिविधावित्येव । राजायते । चर्मायते । अत्र क्यविधौ सत्त्वात् 'दीर्घश्च्वियङ्यक्क्येषु च' ( ४ । ३ । १०८ ) इति क्येऽन्त्याकारदीर्घः सिद्धः। नाम्न इति किम् ।⁂अहन्नहितम् । कुर्वीरन् । सर्वस्मिन् । वृक्षान् ।⁂वृत्रहभ्याम्, वृत्रहभिरित्यत्र तु असिद्धं बहिरङ्गमन्तरङ्गे इति नलोपस्यासिद्धत्वात् 'ह्रस्वस्य तः पि-

---

न । 'भूर्लुक् च'–इत्यत्र ऊकारप्रश्लेषात् ॥ न च भूविधानादेव न भविष्यतीति वाच्यम् । विधान भूमेत्यत्र पदसंज्ञके चरितार्थम् ॥—सामर्थ्यान्न भवतीति ॥ अन्यथा प्रक्रियालाघवार्थं जकारमेव विदध्यादित्यर्थ ॥—रात्सः—॥—रात्परस्य सस्यैवेति । यद्येवं अबिभ. अजाग इत्यादौ विभर्तेर्जागर्तेश्च ह्यस्तन्या दिवि 'हव'–इति द्वित्वे अत्वे 'पृभृ'–इतीत्वे 'द्वितीय'–इति वत्वे गुणे च नियमाल्लोपो न प्राप्नोतीति । नैवम् । प्रकरणात्पूर्वसूत्रविहितस्यैवायं नियमो न 'व्यञ्जनादे'–इत्युत्तरसूत्रविहितस्य । यद्वा, सूत्रे द्वितकारनिर्देशो ज्ञातव्य । द्वितकारनिर्देशेऽपि न कोऽप्युच्चारणकृतो भेदोऽस्ति ततश्च रात्परस्य तकारसकारस्यैव लुक् नान्यस्येति सूत्रार्थ. समजनि । यद्येव तर्हि कीर्तयते क्विपि कीरिति प्राप्नोति । अत्र भाष्य लोके प्रयुक्तानामिदमन्वाख्यानं लोके च कीर्त् इत्येव दृश्यते न कीरिति ॥—अजर्घा इति । नन्वत्र 'सेः सृद्धाम्'–इति सेर्लुकि रुत्वे च कर्त्तव्ये 'गडदबा'–इति घत्वस्यासत्त्वात्कृते रुत्वे चतुर्थान्तत्वाभावात्कथं घकार. । सत्यम् । 'असिद्ध बहिरङ्गम्'–इति भविष्यति । अन्वित्यधिकाराच्च 'रो रे लुग्'–इति न पूर्वं लुगिति प्राप्ति. ॥—नाम्नो—॥ नन्वत्र विशेषविधानात् 'रो लुप्यरि' इति 'अह्न' इति च रेफरुत्वे एव भविष्यत. किमहन्‌प्रतिषेधेनेत्याह—असत्त्वादिति । नचैवं तयोरनवकाशतेत्याह —सावकाशमिति ॥—तदुभयमिति । रेफरुत्वलक्षणम् ॥—संबोधने इति । 'नामन्त्र्ये' इति नलोपप्रतिषेधात् ॥—अहन्नहितमिति । लक्षणप्रतिपदोक्तयोरिति प्रतिपदोक्तस्यैवाहन्‌शब्दस्य निषेध इत्यत्र प्राप्ति. । परं नाम्न इति व्यावृत्त्या निषिध्यते ॥—वृत्रहभ्यामिति । धातुमात्राश्रितत्वेन तोऽ-

आमन्त्र्येऽर्थे वर्तमानस्य नाम्नः संबन्धिनो नकारस्य लुग् न भवति ।
त्कृति' ( ४ । ४ । ११४ ) इति तोऽन्तो न भवति ॥ ९१ ॥ *नामन्त्र्ये । २ । १ । ९२ ॥
हे राजन् । हे तक्षन् । हे सीमन् । हे बहुराजन् ।*एतदेव प्रतिषेधवचनं ज्ञापकम् सिलुकः स्थानिवद्भावेन 'अधातुविभक्ति'-( १ । १ । २७ ) इति नामसंज्ञाप्रतिषेधो
न भवति इति । हे राजवृन्दारक इत्यत्र समुदायार्थ आमन्त्र्यो नावयवार्थ इति नलोपप्रतिषेधो न भवति । अवयवार्थस्य त्वामन्त्र्यत्वे असामर्थ्यात् समास एव न
स्यात् ॥ ९२ ॥ क्लीबे वा । २ । १ । ९३ ॥ आमन्त्र्यविषयस्य नाम्नः क्लीबे नपुंसकलिङ्गे वर्तमानस्य नस्य लुग् वा भवति । हे चर्म । हे चर्मन् । हे दाम । हे
दामन् ॥ ९३ ॥ *मावर्णान्तोपान्त्यापञ्चमवर्गान्मतोर्मो वः । २ । १ । ९४ ॥ मश्चावर्णश्च मावर्णौ तौ प्रत्येकमन्तोपान्तौ यस्य तस्मान्मकारान्तान्मकारोपान्ता-
ज्ञावर्णान्तादवर्णोपान्ताच्च पञ्चमरहितवर्गान्ताच्च नाम्नः परस्य मतोर्मकारस्य वकार आदेशो भवति । मकारान्तात्, किंवान् । इदंवान् । शंवान् । मकारोपान्तात्, शमी-
वान्, लक्ष्मीवान् । दाडिमीवान् । अवर्णान्तात्, वृक्षवान्, प्लक्षवान् । खट्वावान् । मालावान् । अवर्णोपान्तात्, अहर्वान् । सुगण्वान् । पयस्वान् । दृषद्वान् । वार्वान् ।
भास्वान् । अपञ्चमवर्गात्, मरुत्वान् । विद्युत्वान् । उदश्वित्वान् । तडित्वान् । समिद्वान् । मावर्णान्तोपान्त्यापञ्चमवर्गादिति । किम् । अग्निमान् । वायुमान् । पितृमान् ।
नृमान् । नृमतोरपत्यं नार्मत इत्यत्र तु वृद्धेर्बहिरङ्गलक्षणत्वान्न भवति ॥ ९४ ॥*नाम्नि । २ । १ । ९५ ॥ नाम्नि संज्ञायां विषये मतोर्मकारस्य वकारादेशो भवति ।
अहीवती । कपीवती । मणीवती । मुनीवती । ऋषीवती । एवंनामानो नद्यः । '*नद्यां मतुः' ( ६ । २ । ७२ ) इति चातुरर्थिको मतुः ।*आसन्दीवान् नाम ग्रामः ॥९५॥

न भवतीति चन्द्रगोमीयमतम् ॥ अन्ये त्वेतेषामामन्त्रणमपि नेच्छन्ति ।
न्तोऽन्तरङ्गो आगमस्यानपेक्षणान्नलोपो बहिरङ्ग ॥—नामन्त्र्ये ॥ आमन्त्र्य इत्येकवचनात्पञ्च सप्त इत्यादीना नलोपनिषेधो न भवतीति चन्द्रगोमीयमतम् ॥ अन्ये त्वेतेषामामन्त्रणमपि नेच्छन्ति । सख्येयेऽपि
अमुमेवार्थं न्यासकार स्पष्टयति—आमन्त्र्य इति सामान्याभिधानेऽपि ओजसोर्नकारस्य पदान्तत्वाभावात् द्वयस्यैव संबोधनार्हत्वासङ्ख्यायाश्चाऽसत्त्वरूपत्वात् परिशिष्ट सिरेव लभ्यते । सङ्ख्येयेऽपि
वर्तमानाया सङ्ख्याया आमन्त्रणादर्शनात् । दर्शने तु आमन्त्र्य इत्येकत्वस्य विवक्षितत्वाद्द्विवचनबहुवचनयोर्नलोपाभाव ॥ आमन्त्र्य इत्येकवचनात् यनेक एवामन्त्र्यस्तत्रैवानेन लोपनिषेधो यत्र वाक्यस्तत्र
न । यथा, हे पञ्च पुरुषा इत्यादौ । ननु हे राजन्नित्यादौ सिलुक स्थानिवद्भावेन 'अधातुविभक्ति'–इत्यनेन नामत्वाभावे पूर्वेण प्राप्तिरेव न कि प्रतिषेधेनेत्याह—एतदेवेति ॥ न च वाच्य
सिलुक स्थानित्वेन 'नाम सिद्'–इति पदत्वं प्राप्नोति तस्मिश्च सति नलुक् भविष्यतीति । यत 'स्थानीवाऽवर्णविधौ' अत्र तु व्यञ्जनलक्षणो वर्णविधिरिति स्थानित्व न प्रवर्तत इति ॥—
मावर्णा—॥ अत्र मकारावर्णयोरन्तोपान्ताभ्यां सह यथासङ्ख्य न 'नोर्म्यादिभ्य' इति निषेधस्य व्यर्थत्वात् । यत ऊर्म्मिमानित्यत्र मान्तत्वस्य यवमानित्यत्रावर्णोपान्तत्वस्याभावात् । भोगवद्-
गौरिमतोरिति निर्देशाद्वा ॥—बहिरङ्गलक्षणत्वादिति । तद्धितापेक्षत्वेन वृद्धिर्बहिरङ्गा तदनपेक्ष तु वत्वमन्तरङ्गमिति ॥—नाम्नि ॥ नाम द्विविध देवदत्तादिनिरूढलक्षणाक लौकिक यत्सज्ञेति
प्रसिद्धम् । अधातुविभक्तीति शास्त्रीय च । तत्र प्रत्यासन्नत्वाच्छास्त्रीयस्यैव ग्रहणे प्राप्ते नामाधिकारेणैव तदर्थस्य लाभात्प्राप्तीत्यतिरिच्यमानमभिकार्थपरिग्रहाय भवत् लौकिकमेव ज्ञापयतीत्याह—
सञ्ज्ञायामिति ॥—आसन्दीवानिति । आसते जना अस्मिन्निति आसन तद्विद्यते यस्मिन् ग्रामे इत्यासनशब्दस्य पृषोदरादित्वादासन्दीभावेऽनेन मतोर्वत्वे आसन्दीवान् ग्राम । आसन्दीवदऽहि-
स्थलम् ॥ संज्ञाया अन्यत्र आसनवानित्येव भवति । यथा च सञ्ज्ञाया अभावात् वत्वासन्दीभावयोरभावस्तथा अनजिरादिबहुस्वरादिदीर्घत्वस्यापि । अपरे त्वासन्दीशब्दोऽस्तीति मन्यन्ते आसमासिक्रिया

*चर्मण्वत्यष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वत् । २ । १ । ९६ ॥ एते शब्दा मत्वन्ता नाम्नि विषये निपात्यन्ते । चर्मन्शब्दस्य नलोपाभावो णत्वं च निपात्यते । चर्मण्वती नाम नदी । अस्थिशब्दस्याष्ठीभावः । अष्ठीवान् जङ्घोरुसंधिः । चक्रशब्दस्य चक्रीभावः । चक्रीवान् नाम गर्दभः । चक्रीवान्नाम राजा । *कक्ष्याशब्दस्य कक्षीभावः । कक्षीवान्नाम ऋषिः । *लवणस्य रुमणभावः । रुमण्वान्नाम पर्वतः । अन्ये त्वाहुः—रुमन्निति प्रकृत्यन्तरमस्ति तस्यैतन्निपातनम् नकारलोपाभावार्थम् णत्वार्थं च । वत्वं तु यथायोगमस्त्येव । नाम्नीत्येव । चर्मवती । अस्थिमान् । चक्रवान् । कक्ष्यावान् । लवणवान् ॥ ९६ ॥ *उदन्वानब्धौ च । २ । १ । ९७ ॥ आपो धीयन्तेऽस्मिन्नित्यब्धिः । अब्धौ नाम्नि चोदन्वानिति उदकशब्दस्य मतावुदन्भावो निपात्यते । उदन्वान् घटः । उदन्वान्मेघः । यस्मिन्नुदकं धीयते स एवमुच्यते । नाम्नि उदन्वान्समुद्रः । उदन्वान्नाम ऋषिः । यस्यौदन्वतः पुत्रः । उदन्वान्नाम आश्रमः । अब्धौ चेति किम् । उदकवान् घटः । अत्र घटस्योदकसंबन्धमात्रं विवक्षितं न दधातीत्यर्थः ॥ ९७ ॥ *राजन्वान् सुराज्ञि । २ । १ । ९८ ॥ शोभनो राजा यस्य तस्मिन् अभिधेये राजन्वानिति मतौ नलोपाभावो निपात्यते । राजन्वान् देशः । राजन्वती पृथ्वी । राजन्वत्यः प्रजाः । *सुराज्ञीति किम् । राजवान् देशः ॥ ९८ ॥ *नोर्म्यादिभ्यः । २ । १ । ९९ ॥ ऊर्मि इत्येवमादिभ्यो नामभ्यः परस्य मतोर्मकारस्य वकारादेशो न भवति । ऊर्मिमान् । *दल्मिमान् । भूमिमान् । *तिमिमान् । *क्रिमिमान् । एभ्यो मोपान्त्यत्वात्प्राप्ते, यवमान् कुञ्चामान् द्राक्षामान् ध्राङ्क्षामान् वासामान् एभ्योऽवर्णान्तत्वात्प्राप्ते, हरित्मान् गरुत्मान् *ध्वजित्मान् *ककुद्मान् एभ्योऽपञ्चमवर्गादिति प्राप्ते, ज्योतिष्मती *महिष्मान् गोमती कान्तिमती *शिम्बीमती हरिमती वासमती इक्षुमती बन्धुमती *मधुमती विन्दुमती इन्दुमती द्रुमती वसुमती अंशुमती श्रुमती *हनूमान् सानुमती एभ्यो 'नाम्नि' ( २ । ४ । १२ ) इति प्राप्ते प्रतिषेधोऽयम् । ऊर्मि । दल्मि । भूमि । तिमि । क्रिमि । यव । कुञ्चा । द्राक्षा । ध्राङ्क्षा । वासा । हरित् । गरुत् । ध्वजित् । ककुद् । ज्योतिस् । महिष । गो । कान्ति । शिम्बी । चारु । इक्षु । बन्धु ।

---

नन्दति अणि पृषोदरादित्वात् । आसेर्द्वांतो 'कुमुद'–इति वा आसन्दी वेत्रासन साऽत्रास्ति मध्वादि । वेदे यथा आसन्दीमारुह्य उद्गातेति । लोके यथा औदुम्बरी राजासन्दी भवति । उदुम्बरस्य विकार औदुम्बरी । राज्ञ आसन्दी राजासन्दी । सोमासनमित्यर्थ ॥—चर्मण्वत्यष्ठीव—॥—कक्ष्याशब्दस्येति । कक्षे भवा कक्षाय हिता वा कक्षे साधुर्वा 'दिगादिदेहांशाद्य' इत्यादिभिर्ये कक्ष्या ब्रह्मण. सादृश्यमुद्योगश्चेत्यर्थ ॥—लवणस्येति । लुनाति वैरस्य नन्द्यादन' ॥ अत एव गणपाठाण्णत्वम् ॥—उदन्वान्—॥ उदन्भावसामर्थ्यान्नलोपो नाऽन्यथा उदभावो निपात्येत ॥—राजन्वान्—॥—सुराज्ञीति । शोभननृपतौ वाच्ये । यदा तु राजन्शब्देन चन्द्रोऽभिधीयते तदा राजवान् देश इत्येव । निपातनस्येष्टविषयत्वात् ॥—नोर्म्यादिभ्यः ॥—दल्मिमानिति । दल्मिरिन्द्र प्रहरणविशेषो वा सोऽस्यास्ति ॥—तिमिमान् ॥—क्रिमिमानिति । 'क्रमितमि'–इति द्वयोरपि निपातनम् । क्रिमि क्षुद्रजन्तु । तिमिर्महामत्स्य । गरुत् पिच्छं तदऽस्यास्ति ॥—ध्वजित्मानिति । अध्वान जयति क्विप् पृषोदरादि ॥—ककुद्मानिति । ककतेर्बाहुलकादुदप्रत्यये गणे द्विदकारपाठात् मतौ नानुनासिक ॥—महिष्मानिति । 'नडकुमुद'–इति मतौ 'असिद्ध वहिरङ्गम्'–इति अकारलोपस्यासिद्धत्वान्न धुटस्तृतीय. ॥ न च वाच्य 'स्वरस्य परे'—इति स्थानित्व तस्यासद्विधौ 'न सन्धि'–इति निषेधात् । कान्तिमतीप्रभृति बन्धुमती यावत्सर्वेषु 'नद्यां मतु' ॥—शिम्बीमती । 'ङीनीबन्धिश्रधि'–इति डित् इम्वः । गौरादिङी. ॥—मधुमती । मध्वादेर्मतु' । श्रृणोतीति क्विप् आगमशासनमनित्यमिति तागमाभावे श्रुशब्दः ॥—

मधु । विन्दु । इन्दु । द्रु । वसु । अंशु । श्रु । हनु । सानु । भानु । इत्यूर्म्यादिः ॥ बहुवचनमाकृतिगणार्थम् । तेन यस्य सति निमित्ते मतोर्वत्वं न दृश्यते स ऊर्म्यादिषु द्रष्टव्यः ॥ ९९ ॥ *मासनिशासनस्य शसादौ लुग् वा । २ । १ । १०० ॥ एषां शसादौ*स्यादौ परे लुगन्तादेशो वा भवति । मासः । मासान् । मासि । मासे । निशः । निशाः । निशि । निशायाम् ।*निज्भ्याम् । निशाभ्याम् । निच्छु । निशासु । आसनि । आसने । शसादाविति किम् । मासौ । मासाः । मासरूप्यः ॥ ॥ १०० ॥ *दन्तपादनासिकाहृदयासृग्यूषोदकदोर्यकृच्छकृतो दत्पन्नस्हृदसन्यूषन्नुदन्दोषन्यकञ्शकन् वा । २ । १ । १०१ ॥ दन्तादीनां यथासंख्यं शसादौ स्यादौ परे दत् इत्येवमादय आदेशा वा भवन्ति । दन्त, दतः । दन्तान् पश्य । दता । दन्तेन । दद्भ्याम् ३ । दन्ताभ्याम् ३ । दद्भिः । दन्तैः । दत्सु । दन्तेषु । पाद, पदः । पादान् । पदा । पादेन । नासिका, नसः । नासिकाः । नसा । नासिकया । हृदय, हृदि । हृदये । असृज्, अस्रा । असृजा । यूष, यूष्णा । यूषेण । उदक, उद्ना । उदकेन । दोस्, दोष्णा । दोषा । यकृत्, यक्ना । यकृता । शकृत्, शक्ना । शकृता । शक्नि । शकनि । शकृति । शसादावित्येव । दन्तौ । दन्तकल्पः ॥ १०१ ॥ *यस्वरे पादः पदणिक्यघुटि । २ । १ । १०२ ॥ पादिति पादशब्दस्य लुप्ताकारस्य पादयतेर्वा कृतणिलोपस्य निर्देशः ।*पादन्तस्य नाम्नो णिक्यघुड्वर्जिते यकारादौ स्वरादौ च प्रत्यये परे पदित्ययमादेशो भवति । स च निर्दिश्यमानस्यैव भवतीति पच्छब्दस्यैव भवति न तदन्तस्य सर्वस्य । व्याघ्रस्येव पादावस्य व्याघ्रपात् तस्यापत्यं वैयाघ्रपद्यः । द्वौ पादावस्य द्विपात्, द्विपदः पश्य । द्विपदा । द्विपदे । त्रिपदी गाथा । व्याघ्रपदी स्त्री कुले वा । द्वौ द्वौ पादौ ददाति द्विपादिकां ददाति । द्विपदे हितम् द्विपदीयम् ।*पादमाचष्टे पद्यमानं प्रयुङ्क्ते वेति पादयतेः क्विपि, पाद् । पदः पश्य । पदा । पदे । पदी कुले । अत्र व्यपदेशिवद्भावेन

---

हनूमानिति । 'अनजिरादि '-इति दीर्घ ॥—मासनिशा—॥—स्यादाविति । स्यादेरन्य शसादिर्न संभवति इति स्यादावुदाहारि । अथ 'सख्यैकार्थात् '-इति शस्संभवस्तदादिशब्दस्याऽकलादीनामऽसंभवेनानर्थक्यम् । यद्वा मण्डूकप्लुतन्यायेन स्यादिरऽनुवर्त्तनीय इति । आदिशब्दरग व्यवस्थावाचित्वाद्वा स्यादिरेव लभ्यते । मासशब्दस्य भ्यामि अनेनान्तलोपेऽसिद्ध बहिरङ्गमिति अकारस्थानित्वेन 'सो रु ' रुत्वाभावे 'धुटस्तृतीय ' इति दत्वे तु न्यायानित्यत्वात् माद्भ्यामिति मन्यते भाष्यकृत् । दुर्गस्तु मास्भ्यामिति । स्वमते तु द्वयमपि भवति ॥—निज्भ्यामिति । अत्र निश्शब्दे सत्यपि निशाग्रहण निज्भ्यामित्यस्य सिद्ध्यर्थं निश्शब्दस्य हि भ्यामि निड्भ्यामित्येव भवति । क्विबन्तत्वाद्धातुत्वे 'यजसृज '-इत्यादिना षत्वप्राप्ते ॥—दन्तपाद—॥ ननु पूर्वैश्छन्दोविषयत्वमेषामुक्तमिति 'मासनिशा '-इत्यादिसूत्र निरर्थकम् । सत्यम् । भाषायामपि क्वचित्पदादय प्रयुज्यन्ते इति ज्ञापनार्थत्वात् । अत एव प्रविरलप्रयोगविषयत्वात्सर्वासु विभक्तिषु नोदाहियते । अत एव चान्द्रभोजौ मन्येते पादपद्शब्दाभ्यामपि पदा पादेनेत्यादि सिद्ध पर पद्शब्दश्चरणवाच्येव पादशब्दस्य त्वनेकार्थस्यापि पदा पादेनेत्यादिसिद्ध्यर्थं पादशब्दोपादानम् । हृदयहृद्भ्यां सिद्धे हृदयोपादानमृषो विशेषार्थम् । हृद हृदयान् ऋपीन् ॥ हृद्शब्दस्तु ऋपिवचनो नास्ति ॥—य स्वरे—॥—पादन्तस्य नाम्न इति । पूर्वसूत्रेषु नाम्न इति अधिचक्राणोऽपि नाऽध्याहारि धातोस्तत्राऽसंभवात् । अत्र धातुसंभवे नाम्न इति विशेषण चक्रे ॥ अनेकवर्णत्वात् सर्वस्य पादन्तस्य प्राप्नोतीत्याह—निर्दिश्यमानस्येति ॥—द्विपदिकामिति । 'सख्या समाहारे च '-इति स ॥ सप्रख्यादेरित्यकल् । अलोपश्च । ननु 'अवर्णेवर्णस्य ' इति सिद्धे अकल्सनियोगे किमऽल्लोपेन । सत्यम् । स्थानित्वाभावार्थम् । अन्यथा 'स्वरस्य '-इति स्थानित्वे पादशब्दाभावान्न स्यात् पदादेश ॥—

पादन्तत्वम् । यस्वर इति किम् । द्विपाद्भ्याम् । द्विपाद्भिः । द्विपात्काम्यति । अणिक्यघुटीति किम् ।*पादमाचष्टे पादयति । क्येति क्यन्क्यङोरविशेषेण ग्रहणम् । व्याघ्रपादमिच्छति स इवाचरतीति च व्याघ्रपाद्यति । व्याघ्रपाद्यते । द्विपादौ । द्विपादः । द्विपान्दि कुलानि । नाम्न इत्येव । उपपद्यते इत्येवंशील उपपादुकः । पादयतेः क्विबन्तस्य प्रयोगो नास्तीति*कश्चित् ॥ १०२ ॥*उदच उदीच् । २ । १ । १०३ ॥ उदनिति उत्पूर्वस्याञ्चतेः कृतनलोपस्य निर्देशः । उदचो नाम्नोऽणिक्यघुटि यकारादौ स्वरादौ च प्रत्यये परे उदीच् इत्ययमादेशो भवति । उदीच्यः । उदीचः पश्य । उदीची स्त्री कुले वा । उदीचा । उदीचे । यस्वरे इत्येव । उदग्भ्याम् । उदक्काम्यति । अणिक्यघुटीत्येव । उदञ्चमाचष्टे*उदयति । उदञ्चमिच्छति उदच्यति । उदगिवाचरति उदच्यते । उदञ्चौ । उदञ्चः । उदञ्चि कुलानि । अच इति लुप्तनकारस्याञ्चतेर्निर्देशात् उदञ्चा । उदञ्चे । क्विप्यर्चायां निषेधान्नलोपाभावः ॥ १०३ ॥*अच्च् प्राग्दीर्घश्च । २ । १ । १०४ ॥ अचिति अनकारास्याञ्चेर्निर्देशः । अचिति नाम णिक्यघुड्वर्जिते यकारादौ स्वरादौ च प्रत्यये परे चकारमात्रं भवति प्राक् पूर्वोऽनन्तरस्वरश्च दीर्घो भवति । प्राच्यः । प्रतीच्यः । प्राचः । प्राचा । दधीचः । दधीचा । मधूचः । मधूचा । पितॄचः । पितॄचा । प्राची । प्रतीची स्त्री कुले वा ।*अन्वाचयशिष्टत्वाद्दीर्घत्वस्य तदभावेऽपि चादेशो भवति । दृषचा । दृषचे । अत्र 'स्वरस्य ह्रस्वदीर्घप्लुता' इति न्यायाद्दृषदो*दीर्घो न भवति । यस्वर इत्येव । प्रत्यग्भ्याम् । मध्वग्भ्याम् । अणिक्यघुटीत्येव । दध्यञ्चमाचष्टे*दध्ययति । दध्यच्यति । दध्यच्यते । दध्यञ्चौ । दध्यञ्चः । दध्यञ्चि कुलानि । अच् इति लुप्तनकारस्याञ्चतेर्ग्रहणादिह न भवति । साध्वञ्चं पश्य । साध्वञ्चा । साध्वञ्चे ॥ १०४ ॥*क्वसुष्मतौ च । २ । १ । १०५ ॥ णिक्यघुड्वर्जिते यकारादौ स्वरादौ मतौ च प्रत्यये परे क्वसु उष् भवति । विदुषि साधुः विदुष्यः । पेचुषि साधुः *पेचुष्यः । विदुषः । विदुषा । विदुषे । विदुषी स्त्री कुले वा । विदुष इदं वैदुषम् । पेचुषः । पेचुषा । पेचुषे । पेचुषी स्त्री कुले वा । पेचुष इदं पैचुषम् । विदुष्मान् ।

---

पादमाचष्टे पादयतीति । अत्र व्यञ्जनान्त पाच्छब्दो लिख्यते सस्वरे तु णिजि अल्लोपे 'स्वरस्य'–इति स्थानित्वे पाद्शब्दाऽभावात् अप्रविकलत्वं स्यात् । तर्हि पादमाचष्टे इति वाक्ये पद पश्यति यद्दर्शितं तत्कथम् । उच्यते । प्रत्यासत्तिन्यायात् । यस्मिन् प्रत्ययेऽकारलोपस्तस्मिन् यद्यादेशोऽपि प्राप्नोति । अत्र तु णौ अकारलोप शसि त्वादेश । यदा व्यञ्जनान्ताण्णिज् तदा 'नैक-स्वरस्य' इत्यऽन्त्यस्वरादिलोपाऽभाव ॥—कश्चिदिति । देवनन्दी ॥—उदच—॥—उदयतीति । ननु णिवर्जन किमर्थम् । न च वाच्य णिवर्जनाभावे उदीचादेश स्यात् । यतो भवतु उदीचादेश । तथापि 'त्र्यन्त्यस्वरादे' इति लोपे उदयतीति भविष्यति । अत्रोच्यते । विशेषविहितत्वात् लुक बाधित्वा प्रथममेवादेश स्यात् तथा च 'सकृद्गते स्पर्द्धे' इति न्यायात्पश्चादपि न स्यात् ॥—अच्च् प्राग्—॥ अथ दृषदमञ्चतीति क्विपि टादावऽनन्तरपूर्वस्वराभावे दीर्घत्वाभावादेकयोगनिर्दिष्टत्वादादेशस्यापि अभावात् कथ दृषचेत्यादि सिध्यतीत्याह—अन्वाचयशिष्टत्वादिति । अथ व्यवहित-स्यापि कथ न भवति । सत्यम् । प्राक्शब्दस्यानन्तरार्थत्वात् । अत एव पूर्वशब्दमपास्य प्राक्शब्दोपादानमऽनन्तरार्थम् । अनु पश्चादाचयन मीलनमऽन्वाचयस्तेन शिष्टोऽन्वाचयशिष्ट ॥—दीर्घो न भवतीति । स्थान्यासन्नत्वात् ऋकार ॥—दध्ययतीति । परत्वात् 'समानाना'–इति दीर्घ बाधित्वा गुण । तथाऽत्र मतान्तराभिप्रायेण 'न वृद्धिश्चाविति'–इति दधीकारवृद्धिनिषेध । क्विल्लोपे सति अविति प्रत्यये परे गुणवृद्धी न भवत इति मतान्तरे व्याख्या ॥ अथवा स्वरव्यञ्जनयोरभेदन्यायेन 'स्वरस्य'–इति अच्स्थानित्वमतो वृद्धेरभाव ॥—क्वसुष्म—॥—पेचुष्य इति । आगगा

पेचुष्मान् । मतौ चेति किम् । विद्वद्भिः । पेचिवद्भिः । विद्वत्काम्यति । अणिक्यघुटीत्येव । विद्वांसमाचष्टे विद्वयति । विद्वस्यति । विद्वस्यते । विद्वांसौ । विद्वांसः । विद्वांसि कुलानि ॥ १०५ ॥ *श्वन्युवन्मघोनो ङीस्याद्यघुट्स्वरे व उः । २ । १ । १०६ ॥ श्वन् युवन् मघवन्नित्येतेषां सस्वरो वकारो ङीस्याद्यघुट्स्वरे परे उर्भवति । शुनी स्त्री । *प्रियशुनी कुले । शुनः । शुना । शुने । अतियूनी स्त्री । प्रिययूनी कुले । यूनः । यूना । यूने । मघोनी । अतिमघोनी स्त्री । प्रियमघोनी कुले । मघोनः । मघोना । ङीस्याद्यघुट्स्वर इति किम् । *शौवनम् । यौवनम् । माघवनम् । अघुटिति किम् । श्वानौ । युवानौ । मघवानौ । *अतिश्वानि । अतियुवानि । अतिमघवानि कुलानि । स्वरे इति किम् । श्वभ्याम् । नकारान्तनिर्देशादिह न भवति । गोष्ठश्वेन । युवतीः पश्य । युवत्या । *मघवतः पश्य । मघवता । अर्थवद्ग्रहणादिह न भवति । तत्त्वदश्वना । *मातरिश्वना ॥ १०६ ॥ *लुगातोऽनापः । २ । १ । १०७ ॥ आप्वर्जितस्याकारस्य ङीस्याद्यघुट्स्वरे परे लुग् भवति । कीलालपः । कीलालपा । कीलालपे । शुभंयः । शुभंया । शुभंये । क्त्वः । क्त्वे । हाहे देहि । आत इति किम् । नदीः । अनाप इति किम् । खट्वाः । शालाः । मालाः पश्य । ङीस्याद्यघुट्स्वर इत्येव । कीलालपास्तिष्ठन्ति । कीलालपां पश्य । कीलालपाभ्याम् ॥ १०७ ॥ अनोऽस्य । २ । १ । १०८ ॥ अनोऽकारस्य ङीस्याद्यघुट्स्वरे परे लुग् भवति । राज्ञी । राज्ञः । राज्ञा । राज्ञे । तक्ष्णः । तक्ष्णा । तक्ष्णे । ङीस्याद्यघुट्स्वर इत्येव । राजानौ । राजानः । सुराजानि कुलानि । राजभ्याम् ॥ १०८ ॥ *ईङौ वा । २ । १ । १०९ ॥ अनोऽकारस्येकारे ङौ च परे लुग् वा भवति । साम्नी । सामनी । दाम्नी । दामनी । सुराज्ञी । सुराजनी कुले । राज्ञि । राजनि ।

---

यद्गुणीभूता इति इट्सहितस्य क्स उप् । उपिति पकारस्य 'नाम्यन्तस्था'–इति सिद्धे प्रक्रियालाघवार्थं पकारकरणम् ॥—श्वन्युवन्—॥ ङीग्रहणात् स्याद्यघुट्स्वरे लब्धे स्यादिग्रहणमघुट्स्वरस्याऽप्रत्ययत्वशङ्कानिरासार्थम् । शङ्का हि कथम् । ङी प्रत्यय अघुट्स्वरोऽपि प्रत्यय एवेति नाशङ्कनीय ङीग्रहणात् । अप्रत्ययाऽघुट्स्वरश्च श्वोदन इत्यादिषु । अथाऽघुट्स्वरस्य पर्युदासात् स्यादिलक्ष्यते । तत्र । प्रसज्यवृत्तिनिराकरणे हेतोरभावात् ॥—प्रियशुनी इति ॥ स्त्रियां तु बहुव्रीहौ 'नोपान्त्यवत' इति त्रयाणामपि ङीप्रतिषेध । उपान्त्यवत्ता च श्वन्शब्दस्य 'न नमन्त'–इति प्रतिषेधादितरयोरुत्वनेन उत्वविधानात् । यत्तु प्रियशुनीति दृश्यते । तत् प्रथममेव ङ्या कर्मधारये ॥—शौवनम् ॥ शुन इदमिति कार्ये विकारे तु 'एकस्वरात् मयट्' स्यात् ॥—अतिश्वानीति । अतिक्रान्त श्वा येरिति वाक्यम् । तत्पुरुषे तु 'गोष्ठाते शुन' इति समासान्त स्यात् ॥—गोष्ठश्वेनेति । गोष्ठे श्वेव 'सप्तमी शौण्डाद्यैः' स 'गोष्ठाते'–इत्यट् । नन्वत्र समासान्त समासस्याऽवयवो भवति ततश्चाऽनेनाऽघुट्स्वरादिप्रत्ययस्य व्यवधानात्प्राप्तिरेव नास्तीति किमित्युक्त नकारान्तनिर्देशात् इति । अत्रोच्यते । भाष्यकारवचनात् यथा समासान्त समासावयवो भवति एवमुत्तरपदावयवोऽपीष्यते । ततश्च श्वन्ग्रहणेन तदवयवत्वादस्यापि ग्रहणमित्यघुट्स्वरादिप्रत्ययस्य न व्यवधानमतो यदुक्त नकारान्तनिर्देशादिति तत्साध्वेव ॥—मघवत इति । मघो ज्ञान सुखं वाऽस्याऽस्ति, मघा वा आराधका सन्त्यस्य 'ङ्यापो बहुलम्'–इति ह्रस्व ॥—मातरिश्वनेति । मा तरति विच् मातरि अन्तरिक्षे श्वयति 'मातरिश्वन्' इति साधु । अत एव निर्देशात् सप्तम्यऽलुप् ॥—लुगा—॥ क्त्वाटाशब्दयो केचिदऽस्त्रीत्वं केचित् स्त्रीत्व चेच्छन्ति । तत्र स्त्रीत्वे अनाप इति वचनात् अनेन लुगभावे क्त्वाया टाया इत्येव भवति । अस्त्रीत्वे तु अनेन लुकि क्त्व ट इत्याद्येव ॥—हाहे देहीति ॥ ओ हाङ्क् गतौ । हाशब्द जिहीते गीतकाले कर्तव्यतया आप्नोतीति विच् ॥—ईङौ वा ॥ ङिर्विभक्ति त्साहचर्यादीकारोऽपि विभक्तिरूप एव प्राप्यतेनेन ओकारस्था-

दध्नि । दधनि ॥ १०९ ॥ पादिहन्धृतराज्ञोऽणि । २ । १ । ११० ॥ षकारादेरनो हन्धृतराजन्नित्येतयोश्चाकारस्याणि प्रत्यये परे लुग् भवति । औक्ष्णः । *ताक्ष्णः । भौणघ्नः । वार्त्रघ्नः । धार्तराज्ञः । पादीनामिति किम् । *सामनः । वैमन । अणीति किम् । *ताक्षण्यः ॥ ११० ॥ न वमन्तसंयोगात् । २ । १ । १११ ॥ वकारान्तान्मकारान्ताच्च संयोगात्परस्यानोऽकारस्य लुग् न भवति । पर्वणा । पर्वणे । तत्त्वदृश्वना । तत्त्वदृश्वने । कर्मणा । कर्मणे । भस्मना । अश्मना । पर्वणी । कर्मणी । पर्वणि । कर्मणि । संयोगादिति किम् । *प्रतिदीव्ना । साम्ना । वमन्तेति किम् । तक्ष्णा । मूर्ध्ना ॥ १११ ॥ *हनो ह्नो घ्नः । २ । १ । ११२ ॥ हन्तेर्ह्न इत्येवंरूपस्य घ्न इत्ययमादेशो भवति । *भ्रूणघ्नी स्त्री । भ्रूणघ्ना । भ्रूणघ्ने । भ्रूणघ्नी कुले । भ्रूणघ्नि । घ्नन् । घ्नन्ति । अघ्नन् । हन इति किम् । *प्लीह्नः । अन्हः । अन्ही । अहि । ह्न इति किम् । वृत्रहणौ । वृत्रहयति ॥ ११२ ॥ *लुगस्यादेत्यपदे । २ । १ । ११३ ॥ अपदेऽपदादावकारे एकारे च परेऽकारस्य लुग् भवति । सः । ता । ते । युष्मभ्यम् । अस्मभ्यम् । पचन्ति । पठन्ति । विवक्षन् । पचे । यजे । अस्येति किम् । अदन्ति । अदेतीति किम् । श्रमणे । संयते । अपद इति किम् । *दण्डाग्रम् । तवैषा ॥ ११३ ॥ *डित्यन्त्यस्वरादेः । २ । १ । ११४ ॥ स्वराणां संनिविष्टानां योऽन्त्यः स्वरस्तदादेः शब्दरूपस्य डिति परे लुग् भवति । *मुनौ । साधौ । पितुः । मातुः । पिता । माता । एषु व्यपदेशिवद्भावादन्त्यस्वरादित्वम् । महत्याः करः महाकरः । महावासः । *उपसरजः । मन्दुरजः । त्रिशता क्रीतम् त्रिशकम् । आमन्त्राश्चत्वारो येषामासन्नचताः । अदूरचताः । डितीति किम् । दृषदौ । दृषदः ॥ ११४ ॥ *अवर्णादश्नोऽन्तो वाऽतुरीङ्योः । २ । १ । ११५ ॥ श्नावर्जितादवर्णात्परस्यातुः स्थानेऽन्त इत्यादेशो वा भवति ईङ्योः ईप्रत्यये ङीप्रत्यये च परे । तुदन्ती तुदती । कुले । तुदन्ती । तुदती स्त्री । करिष्यन्ती । करिष्यती स्त्री । भान्ती । भाती । कुले ।

---

निनि ईकारेऽनेन विकल्प ॥ ङीप्रत्यये तु राज्ञीत्यादिषु पूर्वेण नित्यमेव । निरनुबन्धग्रहणन्यायाद्वा ॥—पादिहन्—॥—ताक्ष्ण इति । 'सेनान्त'-इत्यनेन कारद्वारा प्राप्तस्य ज्यस्य बाधक शिवादेरण् ॥—सामन इति । द्वयोरपि देवतार्थे वेत्त्यऽधीते वेत्यर्थे इदमर्थे वाऽण् । 'अणि' इत्यऽनो लोपाभाव ॥—ताक्षण्य इति । अत्र 'कुर्वादेर्ञ्य' ॥—न वमन्त—॥ अत्र वकारमकारयोः संयोगविशेषणत्वेन 'विशेषणमन्त' इति तदन्तत्वे लब्धेऽन्तग्रहणं स्पष्टार्थम् । अन्यथा वमसंयोगादिति समस्तनिर्देशेऽनयोरेव संयोगादित्याशङ्का स्यात् । वम संयोगादिति व्यस्तनिर्देशेऽपि वकारमकाराभ्यां परो य संयोग तस्मादित्यपि प्रतीयेतेति न्यासकार ॥—प्रतिदीव्नेति । प्रतिदिवा अह अपराह्णश्च ॥—हनो—॥—भ्रूणघ्नीति—। 'नवा शोणादे' इति ङी प्रत्यय ॥—प्लीह्न इत्यादिषु हन इति हन्तेरनुकरणादऽर्थवद्ग्रहण इति न्यायाद्वाऽन्यस्य न भवति ॥—लुगस्या—॥ अपद इति अदेतोर्विशेषणम् ॥—दण्डाग्रमिति । नन्वऽत्र 'वृत्यन्तोऽसषे' इति प्रातिपेधात् अग्रे इत्यस्य पदत्वाऽभावात्कथ नाकारलोप । सत्यम् । सावधारणव्याख्यानात् । अपदे एवेति । अत्र तु वृत्ते पूर्व पदत्वमासीदिति । तर्हि प्रायणमित्यत्र गतिकारकेति न्यायादऽविभक्त्यन्तेनाऽप्यनेत्यनेन समासे प्राप्नोति । सत्यम् । अपद इत्युत्तरपदमपि गृह्यते । 'ते लुग्वा' इति उत्तरशब्दलोपादिति । यथा 'वेदूतोऽनव्यय'-इत्यत्र ॥—डित्यन्त्य—॥ सति यस्मिन्यस्मात्पूर्वमस्ति पर नास्ति सोऽन्तस्तत्र भवोऽन्त्य ॥—मुनौ । अत्र सर्वत्र 'इवर्णादेरस्व'-इति प्राप्ते परत्वादऽनवकाशत्वाच्च डित्त्वस्य लुगेव ॥—उपसरज इति । उपसरे देशे जात ॥—मन्दुरजः । मन्दुरे मन्दुराया वा जात 'ङ्यापो बहुलं नाम्नि' इति ह्रस्व ॥—अवर्णादश्नो—॥ ननु तुदन्ती भान्ती इत्यादौ ईङ्योरनपेक्षत्वेन वर्णमात्राश्रयत्वेन चान्तरङ्गत्वात् 'लुगस्यादेत्यपदे' इति 'समानानाम्' इति च

भान्ती भान्ती स्त्री। प्सान्ती। प्साती कुले। प्सान्ती प्साती स्त्री। अवर्णादिति किम्। अदती। सुन्वती। रुन्धती। तन्वती स्त्री कुले वा। एषु शतृः। अधीयती स्त्री कुले वा। अत्रातृश्। जरती स्त्री कुले वा। अत्रातृः। अश्न इति किम्। क्रीणती स्त्री लुनती स्त्री। कुले वा। ईङ्योरिति किम्। तुदता कुलेन।*अवर्णादिति विशेषणादश्न इति प्रतिषेधाच्च लोपदीर्घाभ्यां पूर्वमेवानेनान्तः।*भूतपूर्वतया वा पश्चात्। ददती स्त्री ददती कुले इत्यत्र तु कृतेऽप्यन्तादेशे 'अन्तो नो लुक्' (४।२।९४) इति नलोपः॥ ११५॥ श्यशवः। २।१।११६॥ श्यात् शवश्च परस्यातुरीङ्योः परतोऽन्त इत्यादेशो भवति। दीव्यन्ती। सीव्यन्ती स्त्री कुले वा। भवन्ती। चोरयन्ती स्त्री कुले वा। धारयन्ती स्त्री कुले वा। श्यशव इति किम्। जरती स्त्री कुले वा। ईङ्योरित्येव। दीव्यता। सीव्यता॥ ११६॥*दिव औः सौ। २।१।११७॥ दिवोऽन्तस्य सौ परे और्भवति।*द्यौः।*प्रियद्यौः। हे द्यौः। अतिद्यौः। 'निरनुबन्धग्रहणे न सानुबन्धस्य' इति धातोर्न भवति। अक्षैर्दीव्यति, क्विप्, ऊट्, *अक्षद्यूः। साविति किम्। दिवं पश्य। द्यामिति तु द्योशब्दस्य 'आ अम्शसोऽता' इत्याकारे रूपम्॥ ११७॥*उः पदान्तेऽनूत्। २।१।११८। पदान्ते वर्तमानस्य दिवोऽन्तस्योकारादेशो भवति, स, चानूत्तस्योकारस्य दीर्घत्वं न भवतीत्यर्थः। द्युभ्याम्। द्युभिः। द्युभ्यः। द्युषु। अतिद्युभ्याम्। परमद्युभ्याम्। द्युगतः। द्युकामः। द्युत्वम्। द्युकल्पः। विमलद्यु दिनम्। पदान्त इति किम्। दिवान्ति। दिव्यम्। दिवौ।*दिवम्। दिवि। अनूदिति किम्। अद्यौ द्यौर्भवति द्युभवतीत्यत्र 'दीर्घश्चियङ्यक्येषु च' (४।३।१०८) इत्यनेन च्वौ दीर्घत्वं न भवति। ऊकारस्य प्रतिषेधाद्वृद्धिर्भवत्येव। द्युकामस्यापत्यं द्यौकामि। दिवाश्रयः, दिवौकस इति तु पृषोदरादित्वादकारागमे भविष्यति।*वृत्तिविषये वाऽकारान्तो दिवशब्दोऽस्ति॥ ११८॥ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ द्वितीयस्याध्यायस्य प्रथमः पादः समाप्तः॥ २।१॥

प्रावृड्जातेति हे भूपा मा स्म त्यजत काननम्॥ हरिः शेतेऽत्र न त्वेषो मूलराजमहीपतिः॥ १॥

---

अकारलोपदीर्घत्वयो कृतयोरवर्णात्परत्व शतृप्रत्ययस्य नास्ति तत्कथमकाराऽवर्णशतृप्रत्ययडीभावापेक्षत्वेन बहिरङ्गोऽन्त इत्यादेश इत्याह॥—अवर्णादित्यादि॥—भूतपूर्वतयेति। वार्णात्प्राकृत बलीय इति तु नेहोपतिष्ठते भिन्नकालत्वात्। तथाहि-ईङ्यो सद्भावेऽन्तादेश प्राप्नोति। लोपदीर्घौ तु तत प्रागेव। यत्र हि वार्णप्राकृतयोर्युगपत्प्राप्ति कारक इत्यादौ तत्रेदमुपतिष्ठत इति॥—दिव औः सौ॥—द्यौरिति। अत्र 'उ पदान्ते'-इति प्राप्तेऽप्यऽचरितार्थत्वात् साविति विशेषविधानाद्वा औरेवानेन प्रवर्तते। न तु उकार॥ दिव औकारेण सयन्धात्से परत्वमात्रविज्ञानात्त-सबन्धिन्यसबान्धिन्यप्युदाहरति- प्रियद्यौरित्यादि॥—अक्षद्यूरिति। एकदेशविकृतमिति प्राप्ति॥—उः पदान्ते—॥—दिवमिति। कलापकेऽस्य दिव्शब्दस्याऽमि सति अन्त्यस्यात्व विकल्पेन भवति। तत द्यामित्यपि भवति। शस्यपि विकल्पेनाकारमिच्छन्ति केचित्॥ अन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वेऽनेनोत्वे कथ दिवाश्रम इत्यादीत्यतआह—अकारागमे भविष्यतीति। अकारागमे चाऽकारागमकरणसामर्थ्यादेव उत्वं। विभक्ते पूर्वं वाऽकारागमे पदान्तत्वाभावादेव वा॥—वृत्तिविषये इति। समासविषये प्रयुज्यते। केवलस्तु न प्रयुज्यत इत्यर्थ॥ इति द्वितीयस्य प्रथम पाद॥—

# द्वितीयः पादः ॥ २ ॥

**क्रियाहेतुः कारकम् । २ । १ । १ ॥** क्रियाया हेतुः कारणं कर्त्रादि कारकसंज्ञं भवति । तच्च *द्रव्याणां *स्वपराश्रयसमेवतक्रियानिर्वर्तकं सामर्थ्यं शक्तिरित्याचक्षते । शक्तिश्च सहभूर्यावद्द्रव्यभाविनी च *क्रियाकाल एवाभिव्यज्यते । करोतीति कारकमिति *अन्वर्थसंज्ञासमाश्रयणाच्चानाश्रितव्यापारस्य निमित्तत्वमात्रेण हेत्वादेः कारकसंज्ञा न भवति । कारकप्रदेशाः 'कारकं कृता' ( ३ । १ । ६८ ) इत्येवमादयः ॥ १ ॥ *स्वतन्त्रः कर्ता । २ । १ । २ ॥ क्रियाहेतुभूतो यः क्रियासिद्धा-

---

**क्रियाहेतुः**—॥ क्रियत इति क्रिया 'कृग श च वा' 'क्य शिति' 'रिः शक्याशीर्ये'। भावकर्म्मणोरिति व्युत्पत्तिः । यदा त्वपादानादौ शप्रत्ययस्तदा क्यो नास्ति । तदा इय् आदेश. । क्रियाया कारकमित्युक्ते क्रियाया कर्तुर्मुख्यत्वात्तस्यैव कारकत्व स्यात् । गौणमुख्ययोरिति न्यायात् । हेतु कारकमित्युक्ते तु द्रव्यस्य मुख्यत्वात्तद्धेतोरेव कट करोतीत्यादौ कारकत्व स्यात् । न तु चैत्रो यातीत्यादौ । कारकशब्द कर्तृमात्रपर्याय । कर्त्रादीत्यत्र कर्तृशब्दस्तु कर्तृविशेषवचन । यथाह पाणिनि ॥ स्वव्यापारे तु कर्तृत्वं सर्वत्रैवास्ति कारके । व्यापारभेदापेक्षायां करणत्वादिसभव ॥ १ ॥ फलार्थी य स्वतन्त्र सन् फलायारभते क्रियाम् । नियोक्ता परतन्त्राणां स कर्ता नाम कारकम् ॥ २ ॥ प्रवृत्तौ च निवृत्तौ च कारकाणा य ईश्वर । अप्रयुक्त प्रयुक्तो वा स कर्ता फलसाधक ॥ ३ ॥— तेन कर्त्रादि कारकसंज्ञमिति विशेषणविशेष्यभाव उपपन्न इति । अन्यथा वृक्षो वृक्षसंज्ञ इतिवदऽनुपपन्न स्यादिति ॥—तच्च द्रव्याणामिति । द्रव्याणां सामर्थ्यं कारकमिति सबन्ध । द्रव्यस्य तु कारकत्वे प्रतिबन्धकमन्त्रादिसन्निधानासन्निधानाभ्या दहनादेर्दाहादिक्रियोत्पत्त्यऽनुत्पत्ती न स्याताम् । तत्स्वरूपस्य सर्वदा विद्यमानत्वात् उत्पत्तिरेव स्यात् । तस्माच्छक्तिरेव कारकमिति श्रेय । चैत्रादेस्तु कारकत्व शक्तिशक्तिमतोरभेदनयेन ॥—स्वपराश्रयेति । अयमर्थ, त्रयी क्रिया सा च चैत्र आस्ते इति स्वाश्रिता । कट करोतीति पराश्रिता । अन्योन्यमाश्लिष्यत इत्युभयाश्रिता । शक्तिरिह द्रव्यस्य धर्म तस्य चतुष्टयी गति । कश्चित्सहभूर्यावद्द्रव्यभावी च यथा स्फटिकस्य नैर्मल्य सुवर्णस्य पीतत्वम् १ । कश्चित्सहभूरऽयावद्द्रव्यभावी । यथाऽपक्वघटे श्यामिका २ । कश्चिदऽसहभूर्यावद्द्रव्यभावी । यथा तस्यैव घटस्य पाकजा रूपादय । यथा लाक्षारक्तस्य कम्बलस्य राग ३ । कश्चिदऽसहभूरऽयावद्द्रव्यभावी । यथा मेषयो सयोग । यथा पटे हरिद्राराग ४ ॥—क्रियाकाल इति । क्रियाया शक्ति प्रति ज्ञापक काल । तत्र क्रियाकाले समवहितसकलोपकरणे शक्तिरभिव्यज्यते प्रकटीक्रियते अवगता भवति ॥—अभिव्यज्यत इति । कर्मणि कर्तृकर्मणि वा । तथाहि— क्रियया कर्त्र्या शक्ति प्रकाश्यते प्रकटीक्रियते । अभिव्यनक्ति प्रकटीकरोति क्रियाकर्त्री शक्ति सैव विवक्ष्यते । नाहमभिव्यनज्मि स्वयमेवाभिव्यज्यते शक्ति ॥—अन्वर्थसंज्ञासमाश्रयणाच्चेति । चकार एवार्थे । हेत्वादेरित्यत्र आदिशब्दात्सबन्धस्य सहार्थस्य च अकारकत्व तेन विद्ययोषित इत्यादौ 'कारकं कृता' इति न समास । बहूनामिदं वस्त्रमित्यादौ 'बह्वल्पार्थ'–इति शस् नाऽभूत् ॥— **स्वतन्त्रः**—॥ अत्र कारकत्वादेव स्वातन्त्र्ये लब्धे पुन स्वतन्त्रश्रुतिर्नियमार्था । तेन स्वातन्त्र्यमेव यस्य तस्य कर्तृसज्ञा । न तु पारतन्त्र्यसहितस्वातन्त्र्ययुक्तस्य ॥—अपरायत्ततयेति । प्राधान्य च

वपरायत्ततया प्राधान्येन विवक्ष्यते स कारकविशेषः कर्तृसंज्ञो भवति । देवदत्तः पचति । जिनदत्तेन कृतम् ।ᐧस्थाली पचति । चौरस्यᐧरुजति रोगः ।ᐧप्रेषितः करोति । अस्य च कर्तुरधिश्रयणादयः पचिक्रियायामवान्तरव्यापारा भवन्ति । एतान् कुर्वन् देवदत्तः पचतीत्युच्यते ।ᐧप्रयोजकोऽपि कर्तैव । पचन्तं देवदत्तं प्रयुङ्क्ते देवदत्तेन पाचयति चैत्रः। अत्र स्व शब्द आत्मवचनः ।*तन्त्रशब्दः प्रधानार्थः। स्वं तन्त्रमस्य स्वतन्त्र आत्मप्रधानः। किं पुनः कारकान्तरेभ्यः कर्तुः प्राधान्यम् । यत् करणादीनि प्रयुङ्क्ते न तै प्रयुज्यते। तानि न्यक्करोति न तैर्न्यक्क्रियते। तानि निवर्तयति न तैर्निवर्त्यते । ᐧतानि प्रतिनिधत्ते न तैः प्रतिनिधीयते। तेभ्यः स प्रथममात्मलाभं लभते न तानि तस्मात् । स तैर्विनाऽपि दृश्यते न तानि तेनेति । कर्तृप्रदेशाः 'इङितः कर्तरि' (३।३।२२) इत्यादयः ॥२॥ᐧकर्तुर्व्याप्यं कर्म । २।२।३॥ कर्त्रा क्रियया यद्विशेषणाप्तुमिष्यते तद्व्याप्यं तत्कारकं कर्मसंज्ञं भवति। प्रसिद्धस्यानुवादेनाप्रसिद्धस्य विधानं लक्षणार्थः। तेन यत् कर्म यत्कर्त्रा क्रियते तद्व्याप्यसंज्ञं भवतीत्यपि सूत्रार्थः। तच्चत्रेधा। निर्वर्त्यम् १ विकार्यम् २ प्राप्यं ३ च। तत्र यदसज्जायते जन्मना वा प्रकाश्यते तन्निर्वर्त्यम् । कटं करोति। पुत्रं प्रसूते। प्रकृत्युच्छेदेन गुणान्तराधानेन वा यद्विकृतिमापाद्यते तद्ᐧविकार्यम् । काष्ठं दहति । काण्डं लुनाति । यत्र तु क्रियाकृतो विशेषो नास्ति तत्प्राप्यम् । आदित्यं पश्यति। ग्रामं गच्छति। अस्य तु त्रिविधस्यापि यथाक्रममवान्तरव्यापाराःᐧनिर्वर्तते,ᐧविकुरुते,ᐧआभासमुपगच्छतीत्यादयः। त्रिविधमप्येतत्पुनस्त्रिविधम् । इष्टम् १ अनिष्टम् २ अनुभयं ३ च । यदवाप्तुं क्रियारभ्यते तदिष्टम् कटादि ।

---

कगा हेतुभूतयाऽपरायत्ततया । यद्वा, सामानाधिकरण्य प्राधान्येन किरूपेण अपरायत्ततया ॥—प्रेषित॰ करोतीति । प्रयोज्यावस्थायामपि स्वातन्त्र्यस्याऽहाने कर्तृत्वम् । यदुक्त 'य क्रिया कर्म-कर्तृस्था कुरुते मुख्यभावत । अप्रयुक्त' प्रयुक्तो वा स कर्त्ता नाम कारकम् ॥ १ ॥—प्रयोजकोऽपि कर्त्तैवेति । स्वतन्त्रत्वादिति शेष ॥—तन्त्रशब्द' प्रधानार्थ इति । न विततवतन्तुवचनो विवता हि तन्तवस्तन्त्र'। यस्याऽगुणभावेन धातुना व्यापार उच्यते सर्वोऽसौ स्वतन्त्र इति रूढिशब्दोऽयम् ॥ स्वशब्द आत्मवचन इत्याद्यवयवार्थकथन तु पदघटनामात्रार्थमिति । तेन यत्रेत्र करणादीन्यप्रधानानि सन्ति देवदत्त स्थाल्या काष्ठैरोदन पचतीत्यादो तत्रैव कर्तृसंज्ञेत्येव न किंतु तदभावेपि तेन आस्ते शेते इत्यादावपि ॥—स्थाली पचतीति । अधिकरणरूपाया स्थाल्या स्वातन्त्र्यस्य विवक्षितत्वात्कर्तृत्वम् ॥—रुजतीति । अत्र रोगलक्षणस्य भावस्य कर्तृत्वात् 'रुजार्थस्याज्वरिसंतापे'—इति कर्मणो विकल्पितत्वात् चोरात्पष्ठी ॥—तानि प्रतिनिधत्त इति । प्रतिबिम्बी-करोति । कर्त्ता हि कर्मादीनि कर्तृत्वेन यथा ओदन पच्यते स्वयमेव । असिश्छिनत्ति । ब्राह्मणो ददाति । कुसूल पचति । स्थाली पचति इत्यादि । न तु कर्मादिभि कर्त्ता कर्मादित्वेन प्रतिबिम्ब्यते ॥—कर्तुर्व्या—॥ कर्तुरित्यत्र प्रथमव्याख्याने व्याप्येत्यस्य कृत्प्रत्ययान्तस्य योगे 'कृत्यस्य वा' इति कर्त्तरि पष्ठी । ननु यदा द्वैतीयीक व्याख्यान कर्तु' कर्म व्याप्यमिति क्रियते । तदा कर्मणा योगे कर्तृशब्दात् केन सूत्रेण पष्ठी प्रावर्त्तिष्ट । उच्यते । कृच्छेपा उणादय इति कृत्वा कर्मशब्द औणादिकप्रत्ययान्तोऽपि कृदन्त । ततस्तद्योगे 'कर्त्तरि' इति पष्ठी ॥—विकार्यमिति । विकार्यते स्वभावोच्छेदेनाऽन्यथात्व लभ्यते इति ॥—निर्वर्त्तते इति । 'निर्वृत्त्यादिषु यत्पूर्वमनुभूय स्वतन्त्रताम् ॥ कर्त्रन्तराणा व्यापारे कर्म सम्पद्यते तत' ॥—विकुरुते इति । अन्यथा विकृतिमनुपगच्छतो वज्रस्येव विकार्यत्वायोग स्यात् ॥—आभासमुपगच्छतीति । तथा आभासमाऽगत्यस्य परमनिकृष्टपरमाण्वादेरिवाभास्यत्वविरह॰ स्यादिति व्याप्यस्याभासगमनमवान्तरव्यापार

यद्द्विष्टं प्राप्यते तदनिष्टम् । अहिं लङ्घयति । विषं भक्षयति । कण्टकान् मृद्नाति । चौरान् पश्यति । यत्र नेच्छा न च द्वेषस्तदनुभयम् । ग्रामं गच्छन् वृक्षमूलान्युपसर्पति । वृक्षच्छायां लङ्घयति । पुनस्तत्कर्म द्विविधम् प्रधानेतरप्रभेदात् । तच्च द्विकर्मकेषु धातुषु दुहिभिक्षिरुधिप्रच्छिचिञ्ब्रूशास्त्वर्थेषु याचिजयतिप्रभृतिषु च भवति । दुह्यर्थः,*गां दोग्धि पयः ।*गां स्रावयति पयः । गां क्षारयति पयः । भिक्ष्यर्थ,*पौरवं गां भिक्षते । पौरवं गां याचते । चैत्रं शतं मृगयते । चैत्रं शतं प्रार्थयते । एवं*गामवरुणद्धि व्रजम् । छात्रं पन्थानं*पृच्छति । छात्रं वाक्यं चोदयाति ।*वृक्षमवचिनोति फलानि । शिष्यं धर्मं ब्रूते । शिष्यं धर्मम्*अनुशास्ति । क्रुद्धं*याचते शमावस्थाम् । अविनीतं याचते विनयम् । याचिरिहानुनयार्थः । तेन भिक्षार्थाद्भेदः । गर्गान् शतं जयति । गर्गान् शतं दण्डयति । ग्रामं शाखां कर्षति । काशान् कटं करोति । अमृतमम्बुनिधिं मथ्नाति । अजां ग्रामं नयति । ग्रामं भारं*हरति । उपसरजमश्वं मुष्णाति । ग्रामं भारं वहति । शतानीकं शतं गृह्णाति । तण्डुलानोदनं पचति । अत्र यदर्थं क्रियारभ्यते तत्पयःप्रभृति प्रधानं कर्म । तत्सिद्धये तु यदन्यक्रियया व्याप्यते गवादि तदप्रधानम् । यदा तु पयोऽर्था प्रवृत्तिरविवक्षिता तदा प्रधानस्यासंनिधानाद्गवादेरेव प्राधान्यम् । यथाश्चर्यो गवां दोह इति । तत्र दुहादीनामप्रधाने कर्मणि कर्मजः प्रत्ययो भवति, गौर्दुह्यते दुग्धा दोह्या वा पयो मैत्रेण । याच्यते पौरवः कम्बलम् । अवरुध्यते गां व्रजः । पृच्छ्यते धर्ममाचार्यः । भिक्ष्यते गां चैत्रः । अवचीयते वृक्षः फलानि । उच्यते शिष्यो धर्मम् । शिष्यते शिष्यो धर्मम् । जीयते शतं चैत्रः । गर्गाः शतं दण्ड्यन्ताम् । देवासुरैरमृतमम्बुनिधिर्ममन्थे इत्यादि । नीवहिहरतिप्रभृतीनां तु प्रधाने कर्मणि । नीयते नीता नेतव्या वा ग्राममजा । उह्यते भारो ग्रामम् । ह्रियते कुम्भो ग्रामम् ।

---

इति ॥—विषं भक्षयतीति । यदा ज्ञातं सत् भक्ष्यते तदैवाऽनिष्टम् । यदा तु राजभीतेन व्याध्यतिक्रान्तेन वा भक्ष्यते तदा इष्टमेव ॥—गां दोग्धि पय इति । अन्तर्भूतण्यर्थत्वेनामीषां द्विकर्मकत्वम् । अन्तर्भूतण्यर्थाः सकर्मका सर्वे । तेनाऽयमर्थो गौः कर्त्री पयः कर्म मुञ्चति । तां गा मोचयतीति ॥—गां स्रावयति पय इति । गतिबोधेत्यत्र बहुवचनादन्येषामपि अणिकर्तुः कर्मत्वम् । तेन गवादीनामपि कर्मत्व युक्तम् । नात्र नियम प्रवर्त्तते । एतेऽपि ईदृशा अपि द्विकर्म्मका उच्यन्ते इति । यद्वा बहुलमेतन्निदर्शनमिति णिजन्तता सर्वत्र ॥—पौरवं गां भिक्षते । अस्ति राजा पुरुर्नाम । तदपत्य 'पुरुमगध'-इत्याणि पौरवोऽय च याच्यमानो हृष्टो म्लानो वा भवतीति विकार्यम् कर्म्म । भिक्षते कोऽर्थो याचनापूर्वकं गां दापयति वियोजयतीति वेत्यर्थः ॥—गामऽवरुणद्धीति । व्रज सेवमाना सेवयतीत्यर्थ ॥—पृच्छति । कथापयति ॥—चोदयतीति । वादयतीत्यर्थ ॥—वृक्षमवचिनोतीति । वृक्ष फलानि वियुङ्क्ते त वियोजयतीत्यर्थः ॥—ब्रूते कथयन्त कथापयति ॥—अनुशास्ति । ज्ञापयति ॥—याचते । कारयते ॥—अनुनयार्थ इति । तेन भिक्ष्यर्थमध्ये याचिद्वाराऽनुनयार्थाना न ग्रहः । भिक्षिर्याच्ञायामेव । याचिस्तूभयार्थ इति ॥—जयति । मोचयति ॥—कर्षति । कर्षयति ॥—करोति । योजयति ॥—मथ्नाति । वियोजयति ॥—नयति । प्रापयति ॥—हरति । वियोजयति । प्रापयति वा ॥—मुष्णाति । त्याजयति । उपसर पुरुषविशेषो देशो वा । तत्र जातः । कोऽर्थः परस्वामिक सन्तमात्मस्वामिक करोति ॥—वहति । प्रापयति ॥—गृह्णाति । त्याजयति ॥—तण्डुलानोदनं पचति । तण्डुलान् विक्लेदयन् विकुर्वन् ओदन करोतीत्यर्थो धातूनामनेकार्थत्वादिति ॥—दुहादीनामिति । 'दुहादेर्गौणक कर्म नीवहादे प्रधानकम् ॥ णिगन्ते कर्तृकर्मैवमऽन्यद्वा वक्ति कर्मज '॥ 'येनापविद्धसलिलस्फुटनागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्थे ॥ व्यावर्त्तनैरहिपतेरयमाहिताङ्कः ख व्यालिखन्निव विभाति स मन्दराद्रि '॥ १॥—नेतव्या वा ग्राममजेति । अजादे प्राधान्याभेतुश्च पूर्वं तत्रैव क्रियाप्रवर्त्तना-

कृष्यते ग्रामं शाखेति । गत्यर्थानामकर्मणां च णिगन्तानां प्रधान एव कर्मणि । गमयति मैत्रं ग्रामम् । गम्यते गमितो गम्यो वा मैत्रो ग्रामम् चैत्रेण । आसयति मासं मैत्रम् । आस्यते मासं मैत्रश्चैत्रेण । अन्यस्त्वप्रधानेऽपीच्छति । गम्यते मैत्रं ग्रामश्चैत्रेण । आस्यते मासो मैत्रं चैत्रेण । बोधाहारार्थशब्दकर्मकाणां तु णिगन्तानामुभयत्र । बोधयति शिष्यं धर्मम् । बोध्यते शिष्यं धर्म इति वा । भोजयत्यतिथिमोदनम् । भोज्यतेऽतिथिमोदन इति वा । पाठयति शिष्यं ग्रन्थम् । पाठ्यते शिष्यो ग्रन्थम् । पाठ्यते शिष्यं ग्रन्थ इति वा । सर्वत्र चोक्ते कर्मणि द्वितीया न भवतीति वक्ष्यते । कर्तुरिति किम् । माषेष्वश्वं बध्नाति । अश्वेन कर्मणा भक्षणक्रियया स्पर्शनक्रियया वा माषाणां व्याप्यानां कर्मणां कर्मसंज्ञा माभूत् । वीति किम् । पयसा ओदनं भुङ्क्ते । अत्र करणस्य माभूत् । कर्मव्याप्यप्रदेशाः 'कर्मणोऽण्' (६ । ३ । ७२) व्याप्याच्चेवात्' (५ । ४ । ७१) इत्यादयः ॥ ३ ॥ वाऽकर्मणामणिक्कर्ता णौ । २ । २ । ४ ॥ अविवक्षितकर्माणोऽकर्माण उत्तरत्र नित्यग्रहणात् । तेषामणिगवस्थायां यः कर्ता स णौ णिगि सति कर्मसंज्ञो वा भवति । पचति चैत्रः पाचयति चैत्रं चैत्रेण वा । लिखति मैत्रः । लेखयति मैत्रं मैत्रेण वा । गत्यर्थादीनां तु परत्वान्नित्य एव विधिः । गच्छति चैत्रः गमयति चैत्रम् । इत्यादि । किं करोतीति व्यापारमात्रविवक्षायां चाविवक्षितकर्माणो भवन्ति ॥ ४ ॥ गतिबोधाहारार्थशब्दकर्मनित्याकर्मणामनीखाद्यदिह्वाशब्दायक्रन्दाम् । २ । २ । ५ ॥ गतिर्देशान्तरप्राप्तिः । बोधो ज्ञानमात्रम् तद्विशेषश्च । शब्दः कर्म क्रिया व्याप्यं च येषां ते शब्दकर्माणः । नित्याकर्मणः सर्वथाऽविद्यमानव्याप्याः । गत्यर्थबोधार्थाहारार्थानां शब्दकर्मणां नित्याकर्मणां च धातूनां नीखाद्यदिह्वयतिशब्दायतिक्रन्दवर्जितानाम-

---

दन्तरङ्गत्वाच्च तत्रैव प्रधाने कर्मज इति । केचिदाहु-न अमी नयत्यादयो द्विकर्मकाः अन्यकर्मकत्वात्तथाहि-अजा नयति ग्राममजा गृहीत्वा ग्राम यातीति ह्यऽन्नार्थे । नयतिस्तु प्राप्तिमात्रवाची । गम्यमानक्रियापेक्षयापि कर्मत्व दृश्यते यथा प्रविश पिण्डी द्वारमिति । भक्षणक्रियापेक्षया पिधानक्रियापेक्षया चेति । नैवम् । एव सति अजा नीयते ग्राममित्यत्र कर्म्मण्युत्पद्यमानेनात्मनेपदेनाऽजाकर्मणोऽभिधानं न प्राप्नोति । यतो गृह्णातेरजा कर्म न नयतेरिति । तस्मादन्यकर्मत्वमजाया नेष्टव्यमिति ॥—अकर्मणामिति । नित्याकर्मकाणामऽविवक्षितकर्मकाणा चेत्यर्थ ॥—प्रधान एव कर्मणीति । कर्तृकर्मणि कर्मज. प्रत्ययो भवतीति स्कन्ध । प्राधान्यं च तस्य 'गतिबोधाहारार्थ'-इति कर्मसंज्ञाया विधीयमानत्वेन कृत्रिमत्वात् कर्तु प्रथमप्रवृत्तिविषयत्वाद्वा ॥—प्रधान एवेति । अन्यस्त्वऽप्रधानेपीच्छति तन्मतक्षेपणाय अत्रैवकार ॥—आसयति मासं मैत्रमिति । आस्ते मास मैत्रस्तमासीनं पर प्रयुङ्क्ते मासस्य 'कालाध्वभाव'-इति कर्मसंज्ञा । कालाध्वभावदेशैश्च सर्वेऽपि धातव. सकर्मका इत्यन्यकर्मापेक्षया अकर्मका इह ग्राह्या' ॥—बोधयति शिष्यं धर्ममित्यत्र वाक्यस्य धर्मप्रतिपादनपरत्वे धर्मस्य प्राधान्य शिष्यादेर्गुणभाव.। शिष्यादिसंस्कारपराया तु प्रवृत्तौ शिष्यादे' प्राधान्य धर्मस्य गुणभाव इत्युभयत्र कर्मज. प्रत्यय इति ॥—पाठयति शिष्यं ग्रन्थमिति । अर्थस्य शब्देन प्रतिपाद्यत्वाच्छब्दस्य प्राधान्य शब्दस्यार्थपरत्वादर्थस्यैव प्राधान्यमिति समर्थयन्ते गरीयांसो विद्वांस' ॥—पयसा ओदनमिति । अत्र पय इति न व्याप्यमोदनापेक्षमाऽन्याङ्गत्वात् । यथाऽनन्याङ्ग तदेव व्याप्यामिति ॥—वाऽकर्म्म—॥—अविवक्षितेति । नन्वेव तर्हि गत्यर्थादीनामप्यविवक्षितकर्मत्वेन विकल्प. प्राप्नोतीत्याह—गत्यर्थादीनामिति ॥—गतिबोधा—॥ न विद्यते कर्म येषां तेऽकर्माणो नित्यमकर्माण इति विस्पष्टपटुवत् समासस्ततो द्वन्द्वात्षष्ठीबहुवचनम् । आहारस्य सुप्रसिद्धत्वात् गतिबोधयोः स्वरूपमाह—गतिर्देशान्तरप्राप्तिरिति ॥—बुध्यते शिष्यो धर्मम् । अत्र हि बुध्यादयश्चक्षुरादीन्द्रियसाधनज्ञानविशेषस्याप्रतिपादनात्सामान्यबोध एव वर्तन्ते

क्ष्यते यवो बलीवर्दान्मैत्रेणेति वा ।*वनस्पतीनां प्रसवप्ररोहवृध्यादिमत्त्वेन चेतनत्वात्तद्विशेषस्य सस्यस्य प्राणवियोगस्तद्भक्षणात् स्वाम्युपघातो वाऽत्र हिंसेति भक्षेर्हिंसार्थता । हिंसायामिति किम् । भक्षयति पिण्डीं शिशुः तं प्रयुङ्क्ते भक्षयति पिण्डीं शिशुना । भक्षयति राजद्रव्यं नियुक्तेन ।*भक्षयति पुत्रान् गार्ग्या ।*भक्षयतिरत्राक्रोशे । आहारार्थत्वात्प्राप्ते नियमार्थं वचनम् ॥ ६ ॥*वहेः प्रवेयः । २ । २ । ७ । प्रवीयते प्राजतिक्रियया व्याप्यते यः प्रवेयः । वहेरणिकर्ता प्रवेयो णौ कर्मसंज्ञो भवति । वहन्ति बलीवर्दा भारम् । तान् प्रयुङ्क्ते नियोक्ता, वाहयति भारं बलीवर्दान् ।*वाहयिता बलीवर्दानां भारम् । वाह्यन्ते भारं बलीवर्दाः । प्रवेय इति किम् । वाहयति भारं मैत्रेण । नात्र मैत्रो बलीवर्दादिवत् प्रवेयः ।*प्राप्त्यर्थस्य प्रापणार्थस्य च वहेर्गत्यर्थत्वात् अकर्मकस्य च नित्याकर्मकत्वात् पूर्वेण सिद्धे नियमार्थमविवक्षितकर्मकस्य तु पक्षे विध्यर्थं चेदम् ॥ ७ ॥*हृक्रोर्नवा । २ । २ । ८ ॥ हरतेः करोतेश्चाणिकर्ता णौ कर्मसंज्ञो वा भवति ।*प्राप्ते चाप्राप्ते चायं विकल्पः । प्राप्ते, विहरति देशमाचार्यः । विहारयति देशमाचार्यमाचार्येण वा । एवमाहारयत्योदनं बालकं बालकेन वा । विकुर्वते सैन्धवाः, विकारयति सैन्धवान् सैन्धवैरिति वा । विकुरुते स्वरं क्रोष्टा, विकारयति स्वरं क्रोष्टारम् क्रोष्टुना वा । अत्र गत्यर्थाहारार्थनित्याकर्मकशब्दकर्मकत्वेन यथासंख्यं प्राप्तिः । अप्राप्ते, हरति द्रव्यं मैत्रः । हारयति द्रव्यं मैत्रेण मैत्रं वा । करोति कटं चैत्रः । कारयति कटं चैत्रं चैत्रेण वा । अत्र हरतिश्चौर्यार्थो न प्रापणार्थ इत्यप्राप्तिः । प्रापणार्थत्वे तु प्राप्ते विभाषा ।*कारयिता कटस्य देवदत्तं देवदत्तेन वा ।

---

हिंसा हि प्राणव्यपरोपणलक्षणा सा च प्राणिन्येव सचेतने सम्भवति कथमचेतने सस्ये । न हि तत्रायुरिन्द्रियबलोच्छ्वासलक्षणा रसमलधातूनां परिणतिहेतवः प्राणा सन्तीति अत आह —वनस्पतीनामिति ॥—वृध्यादिमत्त्वेनेति । वनस्पतयः सचेतना वृध्यादिमत्त्वात् । यो यो वृध्यादिमान् स स सचेतनः । यथा पुरुषः । वृध्यादिमन्तश्चैते तस्मात्सचेतना इति पञ्चावयवमनुमानमिति ॥—भक्षयति पुत्रानिति । ननु पुत्रभक्षणस्य हिंसात्मकत्वात् भक्षयति पुत्रान् गार्ग्येति कथं कर्मत्वाभाव इत्याह—भक्षयतिरत्रेति । न ह्यत्र गार्गी स्वयं पुत्रान् भक्षयति । न च तामऽन्यस्तत्र प्रयुङ्क्तेऽपि त्वेवमाक्रोशति भक्षय पुत्रानिति भक्षिर्न हिंसाविषयः ॥—वहेः प्र—॥ सूत्रतात्पर्यमाचष्टे—प्राप्त्यर्थस्येति । तत्र वहतिः प्राप्त्यर्थो यथा वहन्ति बलीवर्दा देशान्तरं प्राप्नुवन्तीति । अत्र अनेकार्थत्वात् प्राप्त्यर्थः । यद्वाऽणिगन्तस्यानटि प्रापणमिति रूपे प्राप्त्यर्थत्वम् । प्रापणार्थो यथा ग्रामं भारं वहति बलीवर्दः । ग्रामं प्रापयतीति । अत्रापि प्रापणोपसर्जने प्राप्तिरस्त्येव तेन गत्यर्थत्वम् । अकर्मको यथा वहति नदी । स्यन्दत इत्यर्थः । अनेकार्थत्वात् स्यन्द्यर्थः ॥—वाहयिता भारं बलीवर्दानामिति । अत्र बलीवर्दशब्दाद् 'वैकत्र द्वयोः' इति प्राप्तषष्ठीविकल्पाद्द्वितीया । तद्विमुक्तपक्षे भारस्येत्यत्र 'कर्म्मणि कृतः' इत्यनेन षष्ठी द्वितीयप्रयोगे त्वेतद्विपर्ययः ॥ 'वैकत्र द्वयोः' इति षष्ठीप्रवृत्त्युदाहरणं तु वाहयिता भारस्य बलीवर्दानामिति गम्यमपि ज्ञेयम् । अत्र तु निष्प्रयोजनत्वान्न दर्शितम् ॥—हृक्रो—॥ हृसाहचर्यात् कृधातोरपि भ्वादेरेव ग्रहः तेन कृत् विक्षेपे कृंग् हिंसायामित्यनयोर्व्यवच्छेदः ॥—प्राप्ते चेति । यदा हरतिर्गतौ वर्त्ततेऽभ्यवहारे वा करोतिश्च वल्गनादावकर्म्मकः शब्दकर्म्मकश्च तदा पूर्वेण प्राप्ते ॥ यदा तु हरति स्तेयादौ वर्त्तते करोतिश्च सकर्मको भवति तदाऽप्राप्ते विशेषानुपादानादुभयत्र विकल्पोऽयमिति ॥—कारयिता कटस्य देवदत्तं देवदत्तेन वेति । प्रथमप्रयोगे देवदत्तशब्दात् द्वितीयप्रयोगे तु कटशब्दाद् 'वैकत्र द्वयोः' इत्यनेन प्राप्तषष्ठीविकल्पाद्द्वितीया । तद्विमुक्तकर्मणि 'कर्मणि कृतः' इत्यनेन षष्ठी । यद्यत्र 'वैकत्र द्वयोः' इत्यनेन षष्ठीप्रवृत्तिः स्यान्न विकल्पः तदा द्वितीये कर्म्मणि 'कर्मणि कृतः' इत्यनेन नित्यं षष्ठी स्यात् । कर्तृप्रधानदेवदत्तशब्दात्तु 'द्विहेतोरस्यणकस्य वा' इत्यनेन प्राप्तकर्तृषष्ठीविकल्पात्तृतीया ॥ 'वैकत्र द्वयोः' इत्यस्य 'द्विहेतोरस्य-

णिगवस्थायां यः कर्ता स णौ सति कर्मसंज्ञो भवति । गत्यर्थ । गच्छति मैत्रो ग्रामम् । गमयति मैत्रं ग्रामम् । याति मैत्रो ग्रामम् । यापयति मैत्रं ग्रामम् । देशान्तरप्राप्तेरन्यत्र न भवति । स्त्रियं गमयति मैत्रेण चैत्रः । भजनार्थोऽत्र गमिः । सामान्यबोधार्थः, बुध्यते शिष्यो धर्मम् । बोधयति गुरुः शिष्यं धर्मम् । जानाति शिष्यो धर्मम् । ज्ञापयति गुरुः शिष्यं धर्मम् । एवमुपलम्भयति अवगमयतीत्यादि । विशेषबोधार्थः । पश्यति रूपतर्कः कार्षापणम् । दर्शयति रूपतर्कं कार्षापणं वणिक् । एवं घ्रापयति मैत्रमुत्पलम् । स्पर्शयति मैत्रं वस्त्रम् । श्रावयति शिष्यं धर्मम् । स्मारयति शिष्यं धर्मम् । अध्यापयति शिष्यं शास्त्रम् । अन्ये तु बोधविशेषार्थस्य दृशेरेवेच्छन्ति नान्येषाम् । तन्मते, जिघ्रत्युत्पलं चैत्रः घ्रापयत्युत्पलं चैत्रेण मैत्रः । एवं स्पर्शयति चैत्रेण वस्त्रम् श्रावयति धर्मं शिष्येणेत्यादौ प्रयोज्यकर्तरि तृतीयैव भवति । आहारार्थः । भुङ्क्ते वटुरोदनम् । भोजयति वटुमोदनम् । अश्नाति वटुर्भक्तम् । आशयति वटुं भक्तम् । शब्दक्रिय । जल्पति मैत्रो द्रव्यम् जल्पयति मैत्रं द्रव्यम् । एवमालापयति मित्रं मैत्रम् । संभाषयति मैत्रं भार्याम् । शब्दव्याप्य । शृणोति शब्दं मैत्रः । श्रावयति शब्दं मैत्रम् । अधीते वटुर्वेदम् । अध्यापयति वटुं वेदम् । एवं जल्पयति मित्रं वाक्यम् । विज्ञापयति गुरुं वाक्यम् । उपलम्भयति शिष्यं विद्याम् । नित्याकर्मकः । आस्ते मैत्रः । आसयति मैत्रं चैत्र । शेते मैत्रः । शाययति मैत्रं चैत्रः । नित्यग्रहणं पूर्वत्राविवक्षितकर्मकपरिग्रहार्थम् । अन्यथा विभागो न ज्ञायेत । कालाध्वभावदेशैश्च सर्वेऽपि धातवः सकर्मका एवेत्यन्यकर्मापेक्षया नित्याकर्मका वेदितव्याः । गत्यर्थादीनामिति किम् । पचत्योदनं चेत्रः । पाचयत्योदनं चैत्रेण मैत्रः । अणिक्कर्तेत्येव । गमयति चैत्रो मैत्रम् । तमपरः प्रयुङ्क्ते. गमयति चैत्रेण मैत्रं जिनदत्तः । नयत्यादिवर्जनं किम् । नयतेः प्रापणोपसर्जनप्राप्त्यर्थत्वेन गत्यर्थत्वात् खाद्यद्योराहारार्थत्वात् ह्वाशब्दायक्रन्दां च शब्दकर्मकत्वात् कर्मत्वे प्राप्ते प्रतिषेधार्थम् । नयति भारं चैत्रः । नाययति भारं चैत्रेण । खादयत्यपूपं मैत्रेण । आदयति ओदनं मैत्रेण । ह्वाययति चैत्रं मैत्रेण । शब्दाययति चैत्रं मैत्रेण । क्रन्दयति मित्रं मैत्रेण । कर्मसंज्ञाप्रतिषेधात् स्वव्यापाराश्रयं कर्तृत्वमेव । प्रेषणाऽध्येषणादिना प्रयोजकव्यापारेण णिगन्तवाच्येनाऽणिक्कर्तुर्व्याप्यत्वात्कर्मसंज्ञा सिद्धैव नियमार्थं तु वचनम् । प्रयोजकव्यापारेण व्याप्यमानस्य गत्यर्थादिसंबन्धिन एव प्रयोज्यस्य कर्तुः कर्मसंज्ञा भवति तेनान्यधातुसंबन्धिनः कर्तृत्वमेव भवति ॥ ५ ॥ भक्षेर्हिंसायाम् । २ । २ । ६ ॥ भक्षेः स्वार्थिकण्यन्तस्य हिंसार्थस्याणिक्कर्ता णौ कर्मसंज्ञो भवति । भक्षयन्ति सस्यं बलीवर्दाः । तान् प्रयुङ्क्ते, भक्षयति सस्यं बलीवर्दान् मैत्रः । उक्ते च कर्मणि भक्ष्यन्ते यवं बलीवर्दाः, भ-

---

इत्यर्थ ॥—दर्शयति रूपतर्कमिति । रूप तर्कयतीति 'कर्मणोऽण्' इत्यणि रूपतर्क ॥ कर्षेण आप्यत इति 'भुजिपत्यादिभ्य' इति कर्मण्यनटि 'पूर्वपदस्थ'–इति णत्वे प्रज्ञादित्वात् स्वार्थेऽणि कार्षापणः । अत्र दृश्यादीना चक्षुरादिसाधनजनितज्ञानविशेषवृत्तीनां विशेषबोधार्थतेत्यर्थ. ॥—अन्ये त्विति । ते हि गत्यादिसूत्रे दृशिमुपादाय बोधार्थत्वेनैव सिद्धे दृशिग्रहणाद्दृशेरेव विशेषबोधार्थस्य परिग्रहो नान्येषामित्याचक्षते ॥—खादयत्यपूपमिति । अत्र 'चल्याहारार्थेङ्'–इति परस्मैपदम् ॥—आदयत्योदनमिति । अत्र फलवत्त्वाभावात् 'परिमुह'–इति नात्मनेपदम् । मतान्तरेण वा प्रयोगोऽयम् । ते हि 'परिमुह'–इत्यत्र अदधातुमपठन्त आत्मनेपदं नेच्छन्ति ॥—भक्षेर्हिंसा—॥—भक्ष्यन्ते यत्र बलीवर्दा इति । यवानदता यवाना विनाश्यत्वेन हिंसा । ननु

कारयिता कटं देवदत्तस्य देवदत्तेन वा ॥ ८ ॥ +हृश्यभिवदोरात्मने । २ । २ । ९ ॥ दृशेरभिपूर्वस्य वदतेश्चात्मनेपदविषयेऽणिकर्ता णौ कर्मसंज्ञो वा भवति । पश्यन्ति भृत्या राजानम् । तान् राजैवानुकूलाचरणेन प्रयुङ्क्ते+दर्शयते राजा भृत्यान् भृत्यैर्वा । अभिवदति गुरुं शिष्यः, अभिवादयते गुरुः शिष्यं शिष्येण वा । अथवा अभिवदति गुरुं शिष्यः । तं मैत्रः प्रयुङ्क्ते,*अभिवादयते गुरुं शिष्यं शिष्येण वा मैत्रः । एवं दर्शयमानो राजा भृत्यान् भृत्यैर्वा । अभिवादयमानो गुरुः शिष्यं शिष्येण वा । अथवा अभिवादयमानो गुरुं शिष्यं शिष्येण वा मैत्रः । आत्मन इति किम् । पश्यति रूपतर्कः कार्षापणम् । दर्शयति रूपतर्कं कार्षापणम् । अभिवदति गुरुं शिष्यः । अभिवादयति गुरुं शिष्येण । दृशेर्बोधार्थत्वेन नित्यं कर्मत्वे प्राप्ते अभिवदेस्तु नित्यमप्राप्ते विकल्पः । यदा तु अभिवादिर्न प्रणामार्थः किंतु शब्दक्रियस्तदा अभिवादयते गुरुं शिष्यं मैत्र इति नित्यं प्राप्ते विभाषेति । णिजन्तस्यापि वदेर्णिगीच्छन्त्येके ।∗अभिवादयति गुरुर्देवदत्तम् तस्मिन्नाशिषं प्रयुङ्क्त इत्यर्थः । अभिवादयते गुरुं देवदत्तो गुरुणेति वा । आत्मन्याशिषं प्रयोजयतीत्यर्थः । णिगन्तस्यापीति कश्चित् । अभिवदति गुरुः स्वयमाशिषम् । तं शिष्यः प्रयुङ्क्ते अभिवादयति गुरुमाशिषं शिष्यः तं मैत्रः प्रयुङ्क्ते अभिवादयते गुरुमाशिषं शिष्यं शिष्येण वा मैत्रः । नामधातोरभिवादयतेरपीच्छन्त्यन्यः ॥ ९ ॥*नाथः । २ । २ । १० ॥ अणिकर्ता णाविति निवृत्तं पृथग्योगात् । आत्मनेपदविषयस्य नाथतेर्व्याप्यं कर्म वा भवति ।+आत्मनेपदविषयत्वं चास्याशिष्येवेति तत्रैवायं विधिः । सर्पिषो नाथते सर्पिर्नाथते । सर्पिर्मे भूयादित्याशास्त इत्यर्थः । सर्पिषो नाथमानः सर्पिर्नाथमानः । सर्पिषो नाथिष्यमाणः सर्पिर्नाथिष्यमाणः । सर्पिषो नाथ्यते सर्पिर्नाथ्यते । आत्मन इत्येव । पुत्रमुपनाथति पाठाय । उपयाचते इत्यर्थः ॥ १० ॥+स्मृत्यर्थदयेशः । २ । २ । ११ ॥ स्मरणार्थानां दयतेरीशश्च व्याप्यं कर्म वा भवति । मातुः स्मरति । मातरं स्मरति । मातुः स्मर्यते । माता स्मर्यते । मातुः स्मर्तव्यम् । माता स्मर्तव्या । मातुः स्मृतम् । माता स्मृता । मातुः सुस्मरम् । माता सुस्मरा । मातुः स्मृतः पुत्रः । माता स्मृता पुत्रेण । एवं मातुरध्येति । मातरमध्येति । मातुर्ध्यायति । मातरं ध्यायति । मातुरुत्कण्ठते । मातरमुत्कण्ठते । इत्यादि । सर्पिषो दयते । सर्पिर्दयते । +लोकानामीष्टे । लोकानीष्टे । ननु कर्माविवक्षायां पक्षे माषाणामश्नीयादित्यादिवत् शेषषष्ठी सिद्धैव तत् किमनेन । सत्यम् । किंतु 'षष्ठ्ययत्नाच्छेषे' (३ । १ । ७६) इति अयत्नजे शेषे षष्ठ्याः समासो वक्ष्यते ततो मातुः स्मृतमित्यादौ समासो माभूत् इत्यनेन प्रकारेण यत्नाच्छेषो विधीयते नियमार्थं च । तेनैषां धातूनां कर्मैव शेष-

णकस्य वा' इत्यस्य च प्रवृत्त्युदाहरणं कारयिता कटस्य देवदत्तस्य कटं देवदत्तस्य वेति गम्यमपि ज्ञेयम् । अत्र तु निष्प्रयोजनत्वान्न दर्शितम् ॥—हृश्यभि—॥—दर्शयते राजेति। अत्र 'अणिकर्म'—इत्यात्मनेपदम् ॥—अभिवादयते गुरुं शिष्यं शिष्येण वा मैत्र इति । फलवत्त्वविवक्षायामात्मनेपदम् ॥—अभिवादयति गुरुर्देवदत्तमित्यत्र 'युजादेर्नवा' विकल्पेन णिचि णिजभावपक्षे आत्मनेपदं चरितार्थं वाक्यावस्थाया परस्मैपदमत्र ॥—काश्चिदिति दुर्गसिंहमतम् ॥—अन्य इति । स्वमतिस्तथा च सआह-सुप्धातुर्नामधातुरित्यर्थ ॥—नाथः ॥—कर्म वा भवतीति। कर्तुर्व्याप्यमित्यनेन नित्य प्राप्ते पक्षे निषेध साध्य. ॥—आत्मनेपदविषयत्वं चेति । कर्त्रपेक्षया इदमुक्तम् भावकर्मणोस्तु सर्वधातूनामप्यात्मनेपदमस्त्येव । सर्पिषो नाथते इत्यादिषु सर्वेषु कर्माभावपक्षे 'शेषे' इत्यनेन षष्ठी ॥—स्मृत्यर्थ—॥ सामान्येन चिन्तनार्थे उक्तोऽपि स्मृधातुरनुभूतस्यार्थस्य विशिष्टे चिन्तने वर्त्तमानो गृह्यते । एवंविधाश्च अध्येत्यादयोऽपि गृह्यन्ते । तेन मनसा परिकल्पितचिन्तनार्थानां समीक्षादीनां व्युदासः ॥—लोकानामीष्टे

त्वेन विवक्ष्यते न कारकान्तरं तेन मात्रा स्मृतम् मनसा स्मृतमित्यादौ कर्तृकरणयोः शेषविवक्षाभावात् षष्ठी न भवति। व्याप्यामित्येव। कथासु स्मरति। गुणैः स्मराति ॥ ११ ॥ कृगः प्रतियत्ने। २। २। १२ ॥ पुनर्यत्नः प्रतियत्नः। सतो गुणाधानायापायपरिहाराय वा समीहा। तस्मिन् वर्तमानस्य करोतेर्व्याप्यं वा कर्म भवति। एधोदकस्योपस्कुरुते। एधोदकमुपस्कुरुते। शतपत्रस्योपस्कुरुते शतपत्रमुपस्कुरुते। प्रतियत्न इति किम्। कटं करोति। व्याप्यमित्येव। एधोदकस्योपस्कुरुते बुध्या। करणस्य माभूत् ॥ १२ ॥ रुजार्थस्याज्वरिसंतापेर्भावे कर्तरि। २। २। १३ ॥ रुजा पीडा। तदर्थस्य धातोर्ज्वरिसतापिवर्जितस्य व्याप्यं वा कर्मसंज्ञं भवति भावे कर्तरि—भावश्चेद्रुजार्थस्य कर्ता भवति। चौरस्य रुजति चौरं रुजति रोगः। अपथ्याशिनां रुज्यते रोगेण। अपथ्याशिनो रुज्यन्ते रोगेण। चौरस्य रुग्णम् चौरो रुग्ण इत्यादि। चौरस्यामयति चौरमामयति रोगः। चौरस्य व्यथयति चौरं व्यथयति रोगः। चौरस्य पीडयति चौरं पीडयति रोगः। रुजार्थस्येति किम्। एति जीवन्तमानन्दः। ज्वरिसंतापिवर्जनं किम्। आघ्नूनं ज्वरयति। अत्याशिनं संतापयति। कर्तरीति किम्। चैत्रं रुजत्यत्यशने वातः। भाव इति किम्। मैत्रं रुजति श्लेष्मा। अत्र श्लेष्मा द्रव्यं न भावः। रोगो व्याधिरामयः शिरोऽर्तिरित्यादयो भावरूपाः कर्तार इति ॥ १३ ॥ जासनाटक्राथपिषो हिंसायाम्। २। २। १४॥ एषां हिंसाया वर्तमानानां व्याप्यं वा कर्म भवति। जसुपिसजसुवहेण् हिंसायाम् जसण् ताडने इति चुरादी गृह्येते। न जसूच् मोक्षणे इति देवादिकस्तस्याहिंसार्थत्वात्। चौरस्योज्जासयति चौरमुज्जासयति। चौरस्योज्जास्यते चौर उज्जास्यते चैत्रेण। तथा नटण् अवस्यन्दने इति अयमपि चुरादिर्न तु णट नृत्ताविति भ्वादिः। चौरस्योन्नाटयति। चौरमुन्नाटयति। एवं क्राथिर्घटादिः। चौरस्योत्क्राथयति चौरमुत्क्राथयति। चौरस्य पिनष्टि। चौरं पिनष्टि। जासनाटक्राथानामाकारोपान्त्यनिर्देशो यत्राकारश्रु-

---

देति। व्यापारेषु नियुङ्क्ते स्वायत्तीकरोतीत्यर्थ ॥—कृगः प्र—॥ प्रतिशब्द पुनरर्थे अव्ययम्। 'अव्यय प्रवृद्धादिभि' स ॥—सतो गुणाधानायेति। ननु यत्नद्वये सति पुनर्यत्न इत्युपयुज्यते। तत् कथमत्र प्रतियत्न। उच्यते। प्रथम तावदर्थस्यात्मलाभाय यत्नो भवति। लब्धात्मनो यो यत्नोऽधिकान् गुणानुत्पादयितुं परिपूर्णगुणस्य वा तादवस्थ्य रक्षितु स प्रतियत्न ॥—कटं करोतीति। अभूत. सन् निर्वर्त्य. कटोऽत्र। यत्र तु वर्णिकया रक्त कट करोति। तत्रापि विकार्यमेव कर्म न प्रतियत्न। उपपूर्वस्यैव करोते प्रतियत्नविषयत्वात् 'गन्धन'—इत्यात्मनेपद चोपपूर्वस्यैव। अत एव मूलोदाहरणेष्वपि उपपूर्व एव दर्शित. ॥—एधोदकस्येति। एधाश्च उदकानि च 'अप्राणिपश्वादे' इत्येकत्वम्।—रुजार्थस्या—॥ रुजोत् भङ्गे इत्यस्माद्भिदाद्यङि रुजा ॥—भावश्चेदिति। साध्यरूपस्य भावस्य कर्तृत्वानुपपत्तेः सामान्यशब्दोऽपि भावशब्द सिद्धरूपे भावे वर्तत इति तात्पर्यार्थ.। 'एति जीवन्तमानन्दो नर वर्षशतादपि ॥ कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे' ॥ १ विष्णुपुराणे ॥—चैत्रं रुजत्यत्यशने वात इति। अत्र योऽत्यशनरूपो भावो न स कर्ता यस्तु वातरूप कर्ता स द्रव्य न भाव। अत्र सूत्रे व्यथितर्योगेत्यादिसूत्रेण अणिकर्तु. कर्मत्वम् ॥—जासनाट—॥—नटण् अवस्यन्दने इति। अवस्यन्दनं हिंसाभेद ॥—न तु णट नृत्ताविति। अत्राप्यहिंसार्थत्वादित्येव हेतु. ॥—आकारोपान्त्यनिर्देश इति। ननु जासनाटक्राथेत्याकार. किमर्थः यतो जसनटक्रथेति धातवः पठ्यन्ते तेषा निर्देशे तथैव निर्देष्टव्यम्। अथ ण्यन्तनिर्देश तर्हि जासिनाटिक्राथीति भवितव्यमित्याह—यत्राकारश्रुतिस्तत्रेति ॥—एवं क्राथिर्घटादिरिति। एवममुना प्रकारेणाऽपरमपि निर्णीयते। कि तत् क्राथिर्घटादिर्गृह्यते ? न तु क्रथशर्दिणूहिंसायामिति चौरादिक इति वैयाकरणाना मतम् ॥ धातुपरायणकारैस्तु उपलक्ष-

तिस्तत्र यथा स्यादित्येवमर्थः । तेनेह न भवति । दस्युमुदजीजसद् । चौरमनीनटत् । दस्युमुदचिक्रथत् । अत एव च क्राथेः कर्मसंज्ञाप्रतिषेधपक्षे ह्रस्वत्वाभावः । कर्मणि तु ह्रस्वत्वमेव । हिंसायामिति किम् । चौरं बन्धनाज्जासयति मोचयतीत्यर्थः । नटं नाटयति नर्तयतीत्यर्थः ।*अभावकर्तृकार्थं वचनम् ॥ १४ ॥*निप्रेभ्यो घ्नः । २ । २ । १५ ॥ निप्राभ्यां परस्य हिंसायां वर्तमानस्य हन्तेर्व्याप्यं वा कर्म भवति । बहुवचनं समस्तव्यस्तविपर्यस्त*संग्रहार्थम् । चौरस्य निप्रहन्ति । चौरं निप्रहन्ति । चौरस्य चौरं वा निहन्ति । चौरस्य चौरं वा *प्रहन्ति । चौरस्य चौरं वा प्रणिहन्ति । चौराणां निप्रहण्यते । चौरा निप्रहण्यन्ते राज्ञा । निप्रेभ्य इति किम् । चौरं हन्ति । चौरमाहन्ति । हिंसायामित्येव । रागादीन् निहन्ति ॥ १५ ॥*विनिमेयद्यूतपणं पणव्यवहोः । २ । २ । १६ ॥ विनिमयः क्रयविक्रयोऽर्थः । द्यूतपणो द्यूतजेयम् । पणतेर्व्यवपूर्वस्य च हरतेर्व्याप्यौ विनिमेयद्यूतपणौ वा कर्मसंज्ञौ भवतः । शतस्य पणायति ।*शतं पणायति । सहस्रस्य सहस्रं वा पणायति । क्रयविक्रये द्यूतपणत्वे वा तद्विनियुङ्क्त इत्यर्थः । एवं दशानां व्यवहरति । दश व्यवहरति । पञ्चानां पञ्च वा व्यवहरति । विनिमेयद्यूतपणमिति किम् । साधून् पणायति, स्तौतीत्यर्थः । शलाकां व्यवहरति, विगणयन् गोपायति इत्यर्थः । वचनभेदो यथासंख्यनिवृत्त्यर्थः ॥ १६ ॥ उपसर्गाद्दिवः । २ । २ । १७ ॥ उपसर्गात्परस्य दिवो व्याप्यौ विनिमेयद्यूतपणौ वा कर्मसंज्ञौ भवतः । शतस्य प्रदीव्यति । शतं प्रदीव्यति । शतस्य प्रदीव्यते । शतं प्रदीव्यते । शतस्य प्रद्यूतम् । शतं प्रद्यूतम् । शतस्य प्रदेवितव्यम् । शतं प्रदेवितव्यम् । शतस्य सुप्रदेवम् । शतं सुप्रदेवम् । विनिमेयद्यूतपणमित्येव । शलाकां प्रतिदीव्यति, विगणयन्नपहरतीत्यर्थः । उपसर्गादिति किम् । शतस्य दीव्यति ॥ १७ ॥*न । २ । २ । १८ ॥ विनिमेयद्यूतपणौ दिवो व्याप्यौ कर्मसंज्ञौ न भवतः ॥ उपसर्गपूर्वस्य विकल्पविधानादनुपसर्गस्यायं निषेधः ॥ शतस्य दीव्यति । सहस्रस्य दीव्यति ॥ निषिद्धे च कर्मणि षष्ठ्येव भवति । शतस्य दीव्यते, शतस्य द्यूतम् , शतस्य देवितव्यम् ,*शतस्य सुदेवम् इत्यादौ भावे आत्मनेपदक्तकृत्यखलः सिद्धाः । शतस्य द्यूतो मैत्र इत्यत्र च कर्तरि क्तः ॥ विनिमेयद्यूतपणमित्येव । जिनं दीव्यति स्तौतीत्यर्थः ॥ भूमिं दीव्यति संधिना विजिगीषते इत्यर्थः । संधिपणोऽत्र

---

णत्वात् यौजादिकोऽपि । ननु यथा घटादेर्ह्रस्व पक्षे निषिध्यते । तथा दस्युमुदजीजसदित्यादौ 'उपान्त्यस्य'-इत्यस्यापि किं न निषेध । सत्यम् । यस्मिन् प्राप्त एवेति न्यायात् 'घटादे.'-इत्यस्यैव निषेधः । ननु हिंसाया रुजारूपत्वात् 'रुजार्थस्य'-इत्यनेनैव कर्मविकल्पो भविष्यति किमनेनेति । अथ जासनाटक्राथेत्याकारश्रवणार्थमिदं सूत्रं विधीयते । तदा णिग्ग्रहणमनर्थकं स्यात्तस्मात्पूर्वेणैव सिद्धमित्याह—अभावकर्तृकार्थमिति ॥—निप्रेभ्यो—॥ निना सहित प्रो निप्र प्रेण सहितो नि. प्रनि निप्रश्च निश्च प्रश्च प्रनिश्च । यदा तु प्रानिभ्या पूर्वमुपसर्गान्तर प्रयुज्यते तदा न भवति । बहुवचनेन ज्ञापितत्वात् । अन्यथा 'वाभ्यवाभ्याम्' इतिवद्द्विवचनेनापि समस्तादिग्रहणमात्र भवेत् ॥—संग्रहार्थमिति । यद्येतदर्थं तर्हि न प्रदेय यत्रापि व्यस्तविपर्यस्तौ निप्रौ भविष्यतः तत्रापि ने प्राद्वा परो हन्नस्तीति । उच्यते । तर्हि अन्योपसर्गपूर्वस्य हन्तेर्वा कर्मसंज्ञानिवृत्त्यर्थम् । तेन चौर विप्रहन्ति विनिहन्ति वेत्यादौ पूर्वेण नित्य कर्म्मसंज्ञा ॥—प्रहन्तीति । अत्र ग्नामिति बहुवचनात् हन इत्यनेन णत्वाभाव । रागादीन्निहन्तीत्यत्र रागादीनामचेतनतया प्राणव्यपरोपणलक्षणाया हिंसाया अभावान्न भवतीत्यर्थ ॥—विनिमेय—॥—शतं पणायतीति । प्रकृतिग्रहण स्वार्थिकप्रत्ययान्तानां ग्रहणमिति सूत्रे पणेत्युक्तेऽपि पणायतेरिह ग्रहः । आत्मनेपद तु प्रति अय न्यायोऽनित्य -। इद च कुतो लभ्यते । 'कर्मणिङ्' इत्यत्र णिङिति ङकारोपादानात् ॥—गोपायतीत्यर्थ इति । अनेकार्थत्वाद्धातूनाम् ॥—न ॥—संधिना विजिगीषत इति । समर्थेन सह साधि कृत्वाऽन्येषां भूमि विजिगीषत इत्यर्थ ॥ तथा च नीति. 'समर्थेन सम राज्ञा साधि

न द्यूतपणः ॥ द्यूतं दीव्यति, अक्षान् दीव्यति,*अत्र क्रिया तत्साधनं च व्याप्यं न तु पणः ॥ १८ ॥ करणं च ॥ २ ॥ २ । १९ ॥ दीव्यतेः करणं कर्मसंज्ञं चकारात् करणसंज्ञं च भवति । कर्मकरणसंज्ञे युगपद्व्रजतीत्यर्थः । अक्षान् दीव्यति । अक्षाणां देवनम् । अक्षा दीव्यन्ते । अक्षा देवितव्याः । अक्षाः सुदेवाः । अक्षद्यूः । अक्षा द्यूताश्चैत्रेण । एषु कर्मत्वे द्वितीयाषष्ठ्यात्मनेपदतव्यखलण्क्तप्रत्ययास्तन्निमित्ताः सिद्धाः । अक्षैर्दीव्यति । अक्षैर्देवनम् । अक्षैर्दीव्यते । अक्षैर्देवितव्यम् । अक्षैः सुदेवं मैत्रेण । अक्षैर्द्यूतं चैत्रेण । अक्षा देवनाः । एषु करणत्वे तृतीयानटौ, भावे आत्मनेपदादयश्च सिद्धाः । आत्मनेपदादिभिश्चोक्तयोः कर्मकरणयोः द्वितीयाषष्ठीतृतीया यथायोगं न भवन्ति । करणं वेत्येव सिद्धे चकारः संज्ञाद्वयसमावेशार्थः । तेनाक्षैर्देवयते मैत्रश्चैत्रेणेत्यत्र करणत्वात्तृतीया भवति । कर्मत्वाच्च गत्यादिसूत्रेण निसाकर्मकलक्षणमणिकर्तुः कर्मत्वम्, देवयतेश्चाणिगि प्राणीत्यादिना अकर्मकलक्षणं परस्मैपदं न भवति ॥ अथाक्षान् दीव्यतीत्यत्र सत्यपि संज्ञाद्वयसमावेशे परत्वात् करणत्वनिमित्तया तृतीययैव भवितव्यम् । नैवम् । स्पर्धे हि परः समानविषययोश्च स्पर्धः । न च द्वितीयातृतीययोः प्रतिनियतकर्मकरणशक्त्यभिधायिन्योः समानविषयत्वमस्तीति द्वितीयाऽपि भवत्येव । प्रतिकार्यं संज्ञा भिद्यन्ते इति वा दर्शनेऽनवकाशत्वात् संज्ञाद्वयस्य विभक्त्योः पर्यायेण प्रवृत्तिरविरुद्धा । दिव इत्येव । दात्रेण लुनाति । करणमिति किम् । गृहे दीव्यति ॥ १९ ॥ अधेः शीङ्स्थास आधारः ॥ २ । २ । २० ॥ अधेः संबद्धानां शीङ् स्था आस् इत्येतेषां य आधारस्तत्कारकं कर्मसंज्ञं भवति । ग्राममधिशेते । ग्रामस्याधिशयनम् । ग्रामोऽधिशय्यते । ग्रामोऽधिशयितः । ग्राममधितिष्ठति । ग्राममध्यास्ते । अधेरिति किम् । शयने शेते । गृहे तिष्ठति । कटे आस्ते । आधार इति किम् । ग्रामोऽधिशायितो मैत्रेण । पौरुषेणाधितिष्ठति । कर्तृकरणे न भवतः । अकर्मका अपि हि धातवः सोपसर्गाः सकर्मका भवन्तीति सिद्धं सकर्मकत्वम् । आधारबाधनार्थं तु वचनम् ॥ २० ॥ उपान्वध्याङ्वसः । २ । २ । २१ ॥ उप अनु अधि आङ्भिर्विशिष्टस्य वसतेर्य आधारः स कर्मसंज्ञो भवति । ग्राममुपवसति । ग्राममुपोषितः । ग्रामस्योपवसनम् । ग्राम उपोष्यते । पर्वतमनुवसति । पुरमधिवसति । आवसथमावसति । +अन्वादिसाहचर्यादुपस्य स्थानार्थकस्यैव ग्रहणं

---

त्वा विचक्षण ॥ स्वल्पोऽपि धनसंयुक्तान् राजन्यानऽवमानयेत् ' ॥ १ ॥—अत्र क्रियेत्यादि । क्रिया द्यूतरूपा तत्साधनं च अक्षा इत्यर्थः ॥—शतस्य सुदेवमिति । अत्र सु इति निपातान्तर नोपसर्ग । अत एव सुस्थित दुःस्थित इत्यादौ ' स्थासेनि '–इत्यनेन षत्वं न भवति ॥—कर—॥ चकारस्यान्यत् समुच्चेतव्यं नास्तीति करणमेव प्रतीयते । करणस्य कर्मसंज्ञायामप्राप्ताया विधीयमानाया निर्वर्त्यादिको धर्मो न चिन्त्या असंभवात् ॥—युगपद्व्रजतीति । फलं भवतु मा वा संज्ञाद्वयं तु सर्वप्रयोगेषु वेदितव्यम् । न च संज्ञाद्वयं युगपन्निरवकाशमिति वाच्यम् । अक्षै देवयते इत्यत्र चारितार्थ्यात् । अत अक्षान् देवयते इत्यपि प्रयोगो भवति ॥—करणं वेत्येवेति । न च विकल्पेऽपि युगपत् संज्ञाद्वयं भविष्यतीति वाच्यं विकल्पस्य पाक्षिकप्रवृत्तिनिवृत्तिफलत्वात् ॥—प्रतिकार्यमिति । एकस्यापि कर्मणः करणस्य वा कार्यं २ प्रति संज्ञाऽभिधायकानि सूत्राणि भिद्यन्त इत्यर्थः ॥—इति वा दर्शन इति । शाकटादीनां पाणिनेश्च तेषां परमुभयप्राप्तौ इति सूत्राभाव । विष्णुवार्त्तिक एव सूत्रसद्भाव ॥—उपान्वध्या—॥ उपादिभिर्द्वंद्वं कृत्वा ततस्ते पूर्वे यस्मात् स चासौ वस्चेति बहुव्रीहिगर्भो विशेषणसमासः । मयूरव्यंसकादित्वात्पूर्वस्य लोपश्च । एभ्यः परो वसिति वा समास । शब्दशक्तिप्रामाण्यात् अन्वादिपूर्वो वसतिः स्थानार्थमाचष्टे । तत्साहचर्यादुपपूर्वस्यापि स्थानार्थस्य परिग्रहो न तु भोजननिवृत्तिवचनस्येत्यत आह—

नाशननिवृत्त्यर्थस्य, तेन ग्रामे उपवसति भोजननिवृत्तिं करोतीत्यत्र न भवति । अदाद्यनदाद्योरनदादेरेव ग्रहणमिति वस्तेर्न भवति ॥ २१ ॥ +वाभिनिविशः ॥ २ । २ । २२ ॥ अभिनिनोपसर्गसमुदायेन विशिष्टस्य विशेराधारः कर्मसंज्ञो वा भवति । ग्राममभिनिविशते । पर्वतमभिनिविशते । ग्रामोऽभिनिविश्यते । ग्रामोऽभिनिविष्टः । ‹व्यवस्थितविभाषेयं तेन क्वचित् कर्मसंज्ञैव क्वचिदाधारसंज्ञैव भवति । कल्याणेऽभिनिविशते । या या संज्ञा यस्मिन्यस्मिन् संज्ञिन्यभिनिविशते । एतेषां शब्दानामेतेष्वभिनिविष्टानाम् । अर्थेऽभिनिविष्टः ॥ २२ ॥ ‹कालाध्वभावदेशं वाऽकर्म चाकर्मणाम् ॥ २ । २ । २३ ॥ कालो मुहूर्तादिः । अध्वा गन्तव्यं क्षेत्रं क्रोशादि । +भावः क्रिया गोदोहादिः । देशो जनपदग्रामनदी. पर्वतादिः । अकर्मकाणां धातूनां प्रयोगे कालादिराधारः कर्मसंज्ञो वा भवति अकर्म च, यत्रापि पक्षे कर्मसंज्ञा तत्राकर्मसंज्ञापि वा भवतीत्यर्थः । कालः, मासमास्ते । मास आस्यते । संवत्सरं स्वपिति । संवत्सरः सुप्यते । दिवसं शेते । दिवसः शय्यते । अध्वा, क्रोशं स्वपिति । क्रोशः सुप्यते । योजनमास्ते । योजनमास्यते । भाव, गोदोहमास्ते । गोदोह आस्यते । ओदनपाकं शेते । ओदनपाकः शय्यते । देश, कुरून् आस्ते । कुरव आस्यन्ते । ग्रामं वसति । ग्राम उष्यते । अविवक्षितकर्माणः सकर्मका अप्यकर्मकाः । ‹मासं पचति । मासः पच्यते । क्रोशमधीते । क्रोशोऽधीयते । ओदनपाकं पठति । ओदनपाकः पठ्यते । कुरून् पठति । कुरवः पठ्यन्ते । पक्षे रात्रौ सुप्यते । ‹रात्रौ नृत्तं च द्रक्ष्यसि । क्रोशे सुप्यते । गोदोहे आस्ते । ओदनपाके स्वपिति । पञ्चालेषु वसति । ग्रामे वासः । ग्रामे वासी । तथा रात्रावधीतम् । दिवसे भुक्तम् । कालाध्वभावदेशमिति किम् । प्रासादे आस्ते । शय्यायां शेते । अकर्म चेति किम् । मासमास्यते । क्रोशं सुप्यते । गोदोहमासितः । ‹इदं गोदोहमासितम् । गोदोहमास्यते । कुरून् सुप्यते । एषु तत्साप्यानाप्यादिति गत्यर्थाकर्मकपिबभुजेः अद्यर्थाच्चाधारे इति भावे कर्तर्याधारे च यथायथमात्मनेपदक्तौ सिद्धौ । अकर्मणामिति किम् । रात्रावुद्देशोऽधीतः । अहन्यध्ययनमधीतम् । ‹कथं ‹पचत्योदनं मासम्, भक्षयति धानाः क्रोशम्, पिबति पयो गोदोहम्, भजति सुखं

---

अन्वादिसाहचर्यादिति । स्थानार्थद्योतकत्वादुपशब्दोऽपि स्थानार्थ इत्युक्तं—स्थानार्थस्येति ॥—वाभिनि—॥ अभि. पूर्वो यस्मान्नेः सोऽभिपूर्वश्चाऽसौ निश्च अभिनि तत परो विद् तस्य ‘ मयूरव्यंसक ’–इति पूर्वपरयोर्लोप । अभेर्निस्तेन युक्तो विद् इति वा । न तु द्वन्द्व. । अभिश्च निश्चेत्येवरूपे द्वन्द्वे हि अभिनिशब्दयो प्रत्येकमभिसवन्ध स्यात् यथा ‘ उपान्वध्याङ्वस ’ इत्यत्र ॥—व्यवस्थितविभाषेयमिति । नात्र वाशब्दो विकल्पार्थो येन समकक्षतया द्वितीयासप्तम्यौ किं तर्हि प्रयोगव्यवस्थयेति ॥—कालाध्व—॥ मास आस्यते इत्यत्र व्याप्तिविवक्षायामपि गौणाधिकारात् ‘ कालाध्वनो ’–इत्यनेनापि द्वितीया न भवति ॥—अध्वा गन्तव्यमिति । गमनार्हं तेनाऽध्वशब्दाभिधेयस्याध्वन' कर्मसंज्ञा न भवति । न ह्यसावध्वविशेष' क्रोशयोजनादिवत् गमनमर्हति । यद्वा अर्थप्रधानोऽत्र निर्देश तेन कालाध्वभावदेशानां साक्षात्प्रयोगे न भवति । अपि तु तदर्थप्रतिपादकशब्दप्रयोगे ॥—भावः क्रियेति । क्रिया घञादिवाच्या सिद्धतापन्ना न तु साध्यमानेत्यर्थ ॥—पर्वतादिरिति । आदिशब्दात् खेटकर्वटमडम्बादि गृह्यते ॥—गोदोहमास्ते । अत्र सामीप्यक आधार । यदा तु गोदोहविशिष्ट कालो विवक्ष्यते तदा नैमित्तिकोऽपि । एवमोदनपाक इत्यत्रापि ॥—मास पचतीति ॥ अकर्मणामित्यत्र नित्याकर्मणामऽविवक्षितकर्मणां च सामान्येन ग्रहणमित्याविवक्षितकर्मकानुदाहरति । ‘ उलूखलैराभरणै पिशाचीवदभाषत । एतत्तु ते दिवा नृत्तं रात्रौ नृत्तं च द्रक्ष्यसि ’ ॥ १ ॥—इदं गोदोहमासितमिति । अत्र बाहुलकात् षष्ठीप्राप्ति प्रति न कर्मता । तेन ‘ कर्मणि कृत. ’ इत्यनेन न षष्ठी । इद सक्तूना पीतमितिवत् अत्राधारे क्त प्रत्यय. ॥—कथमिति । पचादीनां सकर्मकत्वात् न प्राप्नोतीत्याशङ्कार्थ ॥—पचत्योदनं मासमित्यादि । एषा धातूनां स्वभावेन द्विकर्मकत्वम् । अथवा सर्वेऽप्यमी धातव. प्राप्त्युपसर्जने स्वार्थे वर्त्तन्ते ।

कुरून् । द्विकर्मकत्वात् कर्तुर्व्याप्यं कर्मैत्येव भविष्यति । अन्ये तु सकर्मकाणामकर्मकाणां च प्रयोगे कालाध्वभावानामत्यन्तसंयोगे सति नित्यं कर्मत्वमिच्छन्ति । मासमास्ते । दिवसं पचत्योदनम् । क्रोशं स्वपिति । क्रोशं पठति वेदम् । गोदोहमास्ते । गोदोहं पचत्योदनम् ॥*अनेन कर्मसंज्ञायां कर्मणि त्याद्यादयोऽपि । आस्यते मासः। सुप्यते क्रोशः । आसितो मासः । शयितः क्रोश इत्यादि ।*कालाध्वनोर्व्याप्ताविति च गुणद्रव्ययोगे एवेच्छन्ति न तु क्रियायोगे । अत्यन्तसंयोगादन्यत्र तु रात्रौ शेते, अध्वनि स्थित इत्यादावाधारत्वमेव ॥ २३ ॥*साधकतमं करणम् ॥ २ । २ । २४ ॥ क्रियासिद्धौ यत्*प्रकृष्टोपकारकत्वेनाव्यवधानेन विवक्षितं तत्*साधकतमं कारकं करणसंज्ञं भवति । काष्ठैः स्थाल्यां पचति । दात्रेण लुनाति । दानेन भोगानाप्नोति ।*अस्य पाकादिक्रियासु ज्वलनादयोऽवान्तरव्यापाराः।*विवक्षया च प्रकृष्टोपकारकत्वात् साधकतमत्वम् ।*तमग्रहणमपादानादिसंज्ञाविधौ*तरतमयोगो नास्तीति ज्ञापनार्थम् । तेन कुसूलात् पचति, गङ्गायां घोषः प्रतिवसतीति व्यवहितोपचारितयोरपि अपादानत्वमधिकरणत्वं च भवति । अस्य च कारकान्तरापेक्षया प्रकर्षो न*स्वकक्षायाम् । तेनैकस्यां क्रियायामनेकमपि करणं भवति । नावा नदीस्रोतसा व्रजति । रथेन पथा दीपिकया याति । सूपेन सर्पिषा लवणेन पाणिनौदनं भुङ्क्ते । करणप्रदेशाः करणं चेत्यादयः ॥ २४ ॥*कर्माभिप्रेयः संप्रदानम् ॥ २ । २ । २५ ॥ कर्मणा व्याप्येन क्रियया वा करणभूतेन यमभिप्रेयते*श्रद्धानुग्रहादिकाम्यया यमभिसंबध्नाति स कर्माभिप्रेयः कारकं संप्रदानसंज्ञं भवति । देवाय बलिं ददा-

---

ततो मासादिप्राप्नोत्यादिरर्थो भवति द्विकर्मकता च ॥—अन्ये त्विति । विश्रान्तविद्याधरादय. । ननूत्तरेण 'कालाध्वनोर्व्याप्तौ' इत्यनेन सामान्येन सकर्मणामकर्मणा च प्रयोगे द्वितीया भविष्यति किमनेन कर्मसंज्ञाविधानसूत्रेणेत्याह ॥—अनेन कर्मसंज्ञायामित्यादि । कालाध्वापेक्षयेदमुक्त भावाऽपेक्षया तु द्वितीयार्थमपि । यद्यत्यन्तसंयोगे , 'कालाध्वभाव' इति प्रवर्तते तर्हि 'कालाध्वनोर्व्याप्तौ' इति क प्रवर्त्स्यतीत्याह—कालेति । 'कालाध्वनो'-इति गुणद्रव्ययोगे क्रियायोगे तु 'कालाध्वभाव' इति प्रवर्तेत इत्यनयोस्तन्मते विभागः ॥—साधकतमं—॥ सिध्यतेर्णिगि 'सिध्यतेरज्ञाने' इत्यात्वे णके तमपि च सिद्धम् ॥—प्रकृष्टोपकारकत्वेनेति । प्रकर्षेण प्रकृष्ट तेनोपकारकम् । यद्वा प्रकृष्यते स्म प्रकृष्टस्ततः प्रकृष्ट च तदुपकारक चेति कर्मधारय । प्रकृष्टोपकारकत्वस्य को हेतुरव्यवधानम् । यद्वा प्रकृष्टोपकारकत्वमपि किंस्वरूपमव्यवधानमिति । अन्येषु मिलितेष्वपि लवनादिक्रिया दानादि विना न शक्यत इति कर्ता अव्यवहित दानादि करणमपेक्षत इति तस्य प्रकृष्टत्वम् । यत्प्रकृष्टोपकारकत्वेन स्थाल्यादिकमपि कर्त्राऽव्यवहितमपेक्ष्यते तदपि करणमेव । ननु प्रकृष्टोपकारकत्व कर्तुरप्यस्ति तस्यापि करणत्व प्राप्नोति । नैवम् । तस्य स्वातन्त्र्य लक्षणमस्ति ॥—साधकतमामिति । ननु सामग्रीत' क्रियासिद्धिस्तत्र कथं किंचित् साधकतम किंचित्तद्विपरीतम् अन्वयव्यतिरेकाभ्या हि तत्र सर्वेषा सामान्य साधारण्यमेवाऽवगम्यते । तस्याः क्रियासिद्धौ साधकतमस्य संभवो नास्तीति सभव कल्पनया दर्शयति—विवक्षयेति । परमार्थवृत्त्या साधकतमत्वस्य सभवो नास्ति । यद्व्यापारानन्तर्येण तु क्रियासिद्धिर्विवक्ष्यते तस्य कल्पनया साधकतमस्येय सज्ञा ॥—अस्येति । ज्वलनरूप उत्पातनिपातरूप' पुण्यरूपश्च यथाक्रम प्रयोगनयेऽप्यवान्तरव्यापार ॥ गौणमुख्ययोरिति न्यायात् साधकतमस्यैव भविष्यति कि तमग्रहणेनेत्याह—तमग्रहणमिति ॥—अपादानादीति । अन्यैरपादानं प्रथममुक्तमिति तन्मतापेक्षयेत्युक्तम् । यद्वा स्वमतापेक्षयापि 'कादिर्व्यञ्जनम्' इतिवत् ॥—तरतमयोग इति । साहचर्यात्तरतमगत प्रकर्षो लक्ष्यते ॥—स्वकक्षायामिति । स्वकक्षा स्ववर्ग इति यावत् । ननु यदि स्ववर्गेऽपि प्रकर्षोऽपेक्ष्यते तदाऽन्येषा करणानां कि स्यात् । उच्यते । तदा करणान्तराणा संबन्धे षष्ठी स्यात् ॥—कर्म—॥ ईङ्च् 'य एञातः' से गुणे 'उपसर्गस्य'-इत्यलोपे अभिप्रेयः । कर्मणाऽभिप्रेय 'कारक कृता' स । वृत्तौ तु यमभिप्रेयत इत्यर्थकथनमेव । सम्प्रदीयते यस्मै बाहुलकादनट् ॥—श्रद्धानुग्रहादिकाम्य-

ति । द्विजाय गामुत्सृजति । याचकायार्थं प्रयच्छति । शिष्याय धर्ममुपदिशति । राज्ञे कार्यमावेदयति । अस्यावान्तरव्यापारा अनिराकरणम् प्रेरणम् अनुमतिश्च । तान् कुर्वंस्त्यागादौ कारकत्वं लभते । क्रियाभिप्रेयः खल्वपि । पत्ये शेते ।*श्राद्धाय निगृह्णते । युद्धाय सन्नह्यते । देवेभ्यो नमति ।*प्रणम्य शितिकण्ठाय ।*निवेद्यतां महाराजाय सुग्रीवाय ।*अभिग्रहणादिह न भवति । व्रतः पृष्ठं ददाति ।*रजकस्य वस्त्रं ददाति । राज्ञो दण्डं ददाति । इह च भवति, वाताय चक्षुर्ददाति ।*छात्राय चपेटां प्रयच्छति । संप्रदानप्रदेशाः 'दामः संप्रदाने धर्म्ये आत्मने च ' इत्यादयः ॥ २५ ॥ स्पृहेर्व्याप्यं वा ॥ २ । २ । २६ ॥ स्पृहयतेर्धातोर्व्याप्यं वा संप्रदानसंज्ञं भवति । पुष्पेभ्यः पुष्पाणि वा स्पृहयति । व्याप्यमिति किम् ? पुष्पेभ्यः स्पृहयति वने । आधारस्य मा भूत् । संप्रदानसंज्ञापक्षे धातोरकर्मकत्वम् । तेन पुष्पेभ्यः स्पृह्यते मैत्रेण । पुष्पेभ्यः स्पृहयितव्यम् । पुष्पेभ्यः सुस्पृहम् । पुष्पेभ्यः स्पृहितो मैत्रः । एषु भावे आत्मनेपदतव्यखलः कर्तरि च क्तः सिद्धाः ॥ २६ ॥*क्रुद्द्रुहेर्ष्यासूयार्थैर्यं प्रति कोपः ॥ २ । २ । २७ ॥ अमर्षः क्रोधः । अपचिकीर्षा द्रोहः । ईर्ष्या परसंपत्तौ चेतसो व्यारोषः । गुणेषु दोषाविष्करणमसूया । एतदर्थैर्धातुभिर्योगे यं प्रति कोपस्तत्कारकं संप्रदानसंज्ञं भवति । मैत्राय क्रुध्यति । मैत्राय रुष्यति । मैत्राय द्रुह्यति । मैत्रायापचिकीर्षति । मैत्रायापकरोति । मैत्रायेर्ष्यति । मैत्रायेक्ष्यति । मैत्राय सूक्ष्यति । चैत्रायासूयति । यं प्रति इति किम् । मनसा क्रुध्यति । मनसा*द्रुह्यति । मनसेर्ष्यति । मनसाऽसूयति । करणस्य मा भूत् । प्रतिग्रहणं किम् । यस्मिन्नित्युच्यमाने*कर्तुरपि स्यात् । मैत्रेण क्रुध्यते । कोप इति किम् ।*शिष्यस्य कुप्यति विनयार्थम् ।*धनिनो द्रुह्यति धनार्थी ।*भार्यामीर्ष्यति मैनामन्योऽद्राक्षीदिति । चैत्रमसूयति लिप्सया । संप्रदानसंज्ञया कर्मसंज्ञाया बाधितत्वात् भावे आत्मनेपदादयः कर्तरि च क्तः सिद्धः । मैत्रायेर्ष्यते । मैत्रायासूय्यते । मैत्रायेर्ष्यितव्यम् । मैत्रायासूयितव्यम् । मैत्राय दुरीक्ष्यम् । मैत्रायासूयितव्यम् । मैत्राय ईर्ष्यितः चैत्रः । मैत्रायासूयितः । कथं चौरस्य द्विषन्, योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति ।*द्विषेरप्रीत्यर्थत्वान्न भवि-

---

येति । तथेतिप्रत्यय श्रद्धा । अनुग्रह उपकार । आदिपदात् कीर्त्यपायाभावादिग्रहः ॥—श्राद्धाय निगृह्णते । स्वय श्राद्ध कर्तु यजमानेनाकारित द्विजान्तर निन्दतीत्यर्थ ॥—प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ॥ चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभि' ' ॥ १ ॥ अग्रेतन रामायणगद्यम् ॥—अभिग्रहणादिति । अभिरभिमतार्थ. प्र आरम्भार्थ । केवलस्य हि ईयतेर्गमनं वाच्यं नाभिसंबन्ध' । ततोऽभिग्रहण विशिष्टसंबन्धप्रतिपत्त्यर्थ, विशिष्टश्च सबन्ध कर्तु श्रद्धानुग्रहापायापगमकामनाजनित स चात्र नास्तीति । प्रेय इति सूत्रे क्रियमाणे कर्मणा क्रियया य संबध्यमानो भवति स सम्प्रदानसज्ञ इत्युक्ते व्रत. पृष्ठ ददातीत्यत्रापि स्यात् ॥—निवेद्यतामिति । विदिण् चेतनाख्याने ॥—रजकस्य वस्त्रं ददातीति । परिपूर्णं मूल्यमलभमानस्य रजकस्य पराङ्मुखत्वम् ॥—छात्राय चपेटां प्रयच्छतीति । चपेटाया आहत' सन् छात्रो अभिमुखो भवतीति विनयपरो भवति । 'अनुमत्यनिराकर्तृप्रेरक त्यागकारणम् । व्याप्येनाप्त ददातेस्तु सम्प्रदान प्रकीर्तितम् ॥ १ ॥ सम्प्रदानं तदेव स्यात्पूजानुग्रहकाम्यया । दीयमानेन सयोगात् स्वामित्वं लभते यदि ' ॥ २ ॥—क्रुद्द्रुहेर्ष्या—॥ शब्दशक्तिस्वाभाव्यात् क्रुधिद्रुही अकर्मकावेव । संबन्धषष्ठ्यां प्राप्तायां सम्प्रदानम् ॥—मनसा क्रुध्यतीति । नात्र मनस उपरि कोप किंतु तेन कृत्वा अन्यस्य पुरुषादे' ॥—कर्तुरपीति । न केवल विषयसप्तम्यां य प्रति कोपस्तस्य सम्प्रदानत्वम् । आधारमात्रत्वेन कर्तुरपि स्यादित्यर्थ ॥—शिष्यस्य कुप्यतीति । शिष्यसबन्धिनोऽविनयस्योपरि कोपो न तु शिष्यस्य ॥—धनिनो द्रुह्यतीति । अत्र धनस्योपरि द्रोहो न तु प्राणानाम् ॥—भार्यामीर्ष्यतीति । अन्येन अवलोक्यमाना न सहते । वृत्तौ मैनामिति तात्पर्यार्थोऽकथि ॥—द्विषेरप्रीत्यर्थत्वादिति । अप्रीतिमात्रमेव विवक्षित न तु क्रुधादय इत्यर्थ । अत्रेदं विचार्यते—कोपाद्द्रोहादयो भिन्नस्वभावा व्याख्याता',

ष्यति ॥ २७ ॥*नोपसर्गात् क्रुद्द्रुहा ॥ ॥ २ । २ । २८ ॥ उपसर्गात् पराभ्यां क्रुधिद्रुहिभ्यां योगे यं प्रति कोपस्तत्कारकं संप्रदानसंज्ञं न भवति । मैत्रमभिक्रुध्यति । मैत्रमभिद्रुह्यति । क्रुधिद्रुही सोपसर्गौ सकर्मकाविति द्वितीया । उपसर्गादिति किम् । मैत्राय क्रुध्यति । मैत्राय द्रुह्यति ॥ २८ ॥*अपायेऽवधिरपादानम् ॥ २ । २ । २९ ॥ सावधिक गमनमपायः । तत्र यदवधिभूतमपायेनानधिष्ठितं तत्कारकमपादानसंज्ञं भवति ।*ग्रामादागच्छति । पर्वतादवरोहति ।*सार्थाद्धीनः । वृक्षात् पर्णं पतति । धावतोऽश्वात् पतितः । पततो देवदत्ताद्धावत्यश्वः । मेषान्मेषोऽपसर्पति । तदेतत् त्रिविधम् । निर्दिष्टविषयम्, *उपात्तविषयम्, अपेक्षितक्रियं च । यत्र धातुनाऽपायलक्षणो विषयो निर्दिष्टस्तन्निर्दिष्टविषयम् । यथा ग्रामादागच्छति । यत्र तु धातुर्धात्वन्तरार्थाङ्गं स्वार्थमाह तदुपात्तविषयम् । यथा बलाहकाद्विद्योतते विद्युत् । अत्र हि *निःसरणाङ्गे विद्योतने विद्युतिर्वर्तते । यथा वा कुसूलात्पचति । अत्राप्यादानाङ्गे पाके पचिर्वर्तते इति । यत्र तु क्रियावाचि पदं न श्रूयते केवलं क्रिया प्रतीयते तदपेक्षितक्रियम् । यथा सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतराः ।*अपायश्च कायसंसर्गपूर्वको बुद्धिसंसर्गपूर्वको वा विभाग उच्यते तेन बुद्ध्या समीहितैकत्वान् पञ्चालान् कुरुभिर्यदा बुद्ध्या विभजते वक्ता तदापायः प्रतीयत इति अत्रापादानत्वं भवति । एवम् अधर्मात् जुगुप्सते । अधर्माद्विरमति । धर्मात् प्रमाद्यति । अत्र यः प्रेक्षापूर्वकारी भवति स दुःखहेतुमधर्मं बुद्ध्या प्राप्य नानेन कृत्यमस्तीति ततो निवर्तते । नास्तिकस्तु बुद्ध्या धर्मं प्राप्य नैनं करिष्यामीति ततो निवर्तते इति निवृत्त्यङ्गेषु जुगुप्साविरामप्रमादेष्वेते धातवो वर्तन्त इति बुद्धिसंसर्गपूर्वकोऽपायः ।*तथा चौरेभ्यो बिभेति । चौरेभ्य उद्विजते । चौरेभ्यस्त्रायते । चौरेभ्यो रक्षति । अत्र बुद्धिमान् वधबन्धप-

तत्कथं तदर्थाना यं प्रति कोप इति सामान्येनैतद्विशेषणमुपपद्यते । तेषां हि यं प्रति द्रोहो यं प्रतीर्ष्या यं प्रत्यसूयेत्येव घटते । नैष दोषः । क्रोधस्तावत् कोप एव द्रोहादयस्तु द्विप्रकाराः केचित् कोपहेतुकाः केचिद्वस्त्वन्तरहेतुकाः । तत्रेह पूर्वेषां ग्रहणं यथा स्यादुत्तरेषां माभूदित्येवमर्थं यं प्रति कोप इति सामान्येन विशेषणमुपात्तम् । अन्यथाऽव्यभिचारादिदमनुपादेयं स्यात् ॥—नोपसर्गात्क्रुद्द्रुहा ॥ मैनमभिक्रुध्यतीत्यत्र अभिव्याप्य कोपवान् अपचिकीर्षावान् अभिव्याप्त्युपसर्जने वृत्ति कोपादौ ॥—अपायेऽवधि—॥ इण्क् । अपायनं 'युवर्णे'—इत्यलि, अयिवयिधातुना भावाकर्त्रोर्वेति वा । अवधीयते मर्यादीक्रियते बुध्या 'उपसर्गाद् कि' ॥—गमनमिति । अपायहेतुत्वात् गमनमप्यपायः ॥ उपलक्षणं चेदं तेन परमार्थतो विभागोऽपाय इति सिद्धम् ॥—ग्रामादागच्छतीति । ग्रामादेरौदासीन्यमेवाऽवान्तरव्यापारः ॥—सार्थाद्धीनः । कर्मकर्तरि कर्मणि वाऽत्र क्तप्रत्ययः ॥—उपात्तविषयमिति । उप समीपे धातुना धात्वन्तरस्यात्तं स्वीकृतो विषयोऽर्थो यत्र तत् ॥—धात्वन्तरार्थाङ्गमिति । धात्वन्तरार्थोऽङ्गं विशेषणं यस्य धात्वन्तरार्थस्य वाऽङ्गम् ॥—निःसरणाङ्गे इति । निस्सरणं चापायरूपमिति भावः । यदा तु बलाहकात्कुसूलाद्वा धयेति च निःसृत्यादायशब्दवन्तौ प्रयोगौ क्रियेते तदा विद्युतिपचिधातू केवले स्वार्थे विद्योतने विक्लेदने च वर्तेते । निःसरति आददाति क्रियापेक्षया तु बलाहककुसूलयोर्निर्दिष्टविषयमपादानत्वम् ॥—सांकाश्यकेभ्य इति । सकाशेन निर्वृत्तं 'सुपन्थ्यादेर्ञ्यः' । तत्र भवाः 'प्रस्थपुर'— इत्यकञ् । अत्र निर्द्धार्यन्त इति क्रिया प्रतीयते ॥—अपायश्चेति । ननु कायसंसर्गपूर्वको विभागो मुख्यो बुद्धिपरिकल्पितस्तु गौणस्ततश्च गौणमुख्ययोर्मुख्यस्यैव परिग्रहात्सांकाश्यकेभ्य इत्यादौ कारकशेषत्वात्षष्ठी प्राप्नोति । नैवम् । साधकतमं करणमित्यत्र तमग्रहणेन गौणग्रहणस्यापि ज्ञापितत्वादुभयरूपस्यापि अपायस्य परिग्रह इति । अत्र माहेश्वरव्याकरणश्लोकः—'बुद्ध्येत्यादि ॥—तथा चौरेभ्यो बिभेतीति । अत्र बुद्धिकृतापायस्य विद्यमानत्वात् भीत्राणार्थानां धातूनां भयहेतुकमपादानमिति यदन्यैरुक्तं

रिक्लेशकारिणश्चौरान् बुद्ध्या प्राप्य*तेभ्यो निवर्तते । चौरेभ्यस्त्रायते इत्यत्रापि कश्चित्सुहृद्यदीमं चौराः पश्येयुर्नूनमस्य धनमपहरेयुरिति बुद्ध्या तं चौरैः संयोज्य तेभ्यो निवर्तयतीत्यपाय एव ।*अध्ययनात् पराजयते,*भोजनात् पराजयते । अत्रापि अध्ययनं भोजनं वासहमानस्ततो निवर्तते इत्यपाय एव ।*यवेभ्यो गां रक्षति । यवेभ्यो गां निषेधयति । कूपादन्धं वारयति । इहापि गवादेर्यवादिसंपर्कं बुद्ध्या समीक्ष्यान्यतरस्य विनाशं पश्यन् गवादीन् यवादिभ्यो निवर्तयतीत्यपाय एव । उपाध्यायादन्तर्धत्ते । उपाध्यायान्निलीयते । मा मामुपाध्यायोऽद्राक्षीदिति तिरोभवति इत्यत्राप्यपायः ।*शृङ्गाच्छरो जायते । गोमयाद्वृश्चिको जायते । गोलोमाविलोमभ्यो दूर्वा जायते । बीजादङ्कुरो जायते । अत्र शृङ्गादिभ्यः शरादयो निष्क्रामन्तीति*स्फुट एवापायः ।*यदि निष्क्रामन्ति किं नात्यन्ताय निष्क्रामन्ति ।*संततत्वादन्यान्यप्रादुर्भावाद्वा । हिमवतो*गङ्गा प्रभवति । महाहिमवतो रोहिता प्रभवति । अत्राप्यापः संक्रामन्तीत्यपायोऽस्ति । यद्यपक्रामन्ति किं नात्यन्तमपक्रामन्ति, संततत्वादन्यान्यप्रादुर्भावाद्वा । वलभ्याः शत्रुञ्जयः*षड् योजनानि षट्सु वा योजनेषु भवति । अत्र वलभ्या निःसृत्य*गतानि योजनानि,*गतेषु वा तेषु भवतीत्यर्थः । कार्तिक्या *आग्रहायणी मासे । ततः प्रभृति मासे गते भवतीत्यर्थः । उभयत्रापायः प्रतीयते । चैत्रान्मैत्रः पटुः, अयमस्मादधिकः, अयमस्मादूनः, माथुराः पाटलिपुत्रकेभ्य आढ्यतराः । अत्र मैत्रादयः पुंस्त्वादिना संसृष्टाः पटुत्वादिधर्मेण ततो विभक्ताः प्रतीयन्ते इति सर्वत्राप्यपायविवक्षा । विवक्षान्तरे त्वपादानत्वाभावे यथायोगं विभक्तयो भवन्ति । वलाहकं विद्योतते ।*वलाहकं विद्योतते । अधर्मं जुगुप्सते । अधर्मेण जुगुप्सते । मौर्ख्येण प्रमाद्यति । चौरैर्भयम् । चौरैर्बिभेति । चौरेषु बिभेति ।

---

तदत्र न वक्तव्यम् । भयमाकुलीभावः, त्राणमनर्थप्रतीघात इति ॥—तेभ्यो निवर्तत इति । निवृत्त्यङ्गे भये बिभेत्यादयो वर्तन्त इत्युपात्तविषयमेतदपादानम् ॥—अध्ययनात्पराजयते । भोजनात्पराजयते इति । अत्र पराजिरसहने वर्तते । दुःखमध्ययनं दुर्वचं गुरवश्च दुरुपचारा भोजनमपि व्याधितस्यातृप्तस्य भुक्तवतो वा विरसत्वादिना दुःखमिति ततो निवर्तत इति पराजेरसोढेऽर्थे इति न वक्तव्यम् । तत्रासोढग्रहणात्पराजयतिरसहनार्थो गृह्यते न तु शत्रून्पराजयत इतिवदभिभववृत्तिः ॥—यवेभ्यो गां रक्षतीति । अत्र वारणार्थानामीप्सितमिति न वक्तव्यम् ॥—स्फुट एवेति । कायरूसर्गपूर्वक इत्यर्थः ॥—शृङ्गाच्छरो जायत इति । उक्तं च गोपुराणे 'गोलोमात् जायते दूर्वा गोमयात् वृश्चिकः स्मृतः । गोदोहात् गोरसं प्राहुर्गोशृङ्गादुच्यते शरः' ॥ १ ॥—यदि निष्क्रामन्तीति । अयमर्थो यः किल यतोऽपक्रामति तत् पुनस्तत्र न दृश्यत इति प्रसिद्धम् । इह तु तत्र तस्यापि दर्शनमित्याह—अत्यन्तायेति । अत्यन्तमित्यर्थे अव्ययं क्रियाविशेषणत्वादम् ॥—संततत्वादिति । निष्क्रमणस्येति गम्यते । अयमर्थः एकेऽवयवा निष्क्रान्ता अन्ये निष्क्रामन्तः सन्तीति । यथा बिलाद्दीर्घभोगो भोगी निष्क्रामन्नपि संततत्वात्तत्रोपलभ्यते तथा शरादयोऽपीत्यर्थः ॥—अन्यान्यप्रादुर्भावाद्वेति । अन्यावयवयोगात्समुदायोऽप्यन्यस्ततोऽन्यश्चासावन्यश्चेति कार्यम् । समाहारे तु 'त्यदादि' इत्यनेनैकशेषः स्यात् ॥—गङ्गा प्रभवतीति । तत्र प्रथममुपलभ्यत इत्यर्थः । अत्रापि भुवः कर्तुः प्रभवोऽपादानमित्यपि न वक्तव्यम् ॥—अत्यन्तमिति । अन्तमतिक्रान्तम् ॥—षड्योजनानीति । अत्र षड्योजनरूपस्याध्वनः शत्रुञ्जय इत्यनेनाऽध्वनोऽन्तेन सह गते गम्ये इति सूत्रेण सामानाधिकरण्यं तस्माच्च शत्रुंजय इत्यस्मात् या प्रथमा विभक्तिः सा योजनानीत्यत्रापीति ॥—गतानीति । चैत्रेण कर्त्रा षट् योजनानि गतानि अतिक्रान्तानीति योजनानां कर्मत्वम् । उपचारात् योजनस्थनरगतापेक्षया योजनान्यपि गतशब्देनोच्यन्त इति तेषां कर्तृत्वं वा ॥—गतेष्विति । अतिक्रान्तेष्वित्यर्थः ॥—आग्रहायणी इति । अग्र हायनस्य 'पूर्वपदस्थात्'—इति

शृङ्गे शरो जायते इति ॥ २९ ॥ *क्रियाश्रयस्याधारोऽधिकरणम् ॥ २ । २ ।
चौराणां बिभेति । भोजनेन पराजयते । शत्रून् पराजयते । यवेषु गां वारयति । अत्रापि प्रसिद्धानुवादेनाप्रसिद्धस्य विधानमिति यत् क्रियाश्रयस्याधिकरणं त-
३० ॥ क्रियाश्रयस्य कर्तुः कर्मणो वा य आधारस्तत् कारकमधिकरणसंज्ञं भवति । चैत्रसमवायिन्यामासिक्रियायां तदाश्रयं चैत्रं धारयन् कटादिर्हेतुतां प्रतिपद्यते । तण्डुलसमवायिन्यां
दाधारसंज्ञं भवतीत्यपि सूत्रार्थः । कटे आस्ते, स्थाल्यां पचति । तत् षोढा । वैषयिकम्, औपश्लेषिकम्, अभिव्यापकम्, सामी-
च*विचटनक्रियायां तदाश्रयास्तण्डुलान् धारयन्ती स्थाली*हेतुत्वं प्रतिपद्यते इत्युभयत्र कारकत्वम् । दिवि देवाः । नभसि तारकाः । भुवि मनुष्याः । पाताले पन्नगाः ॥
प्यकम्, नैमित्तिकम्, औपचारिकं च । तत्र अनन्यत्र भावो विषयः तस्मै प्रभवति वैषयिकम् । गृहे तिष्ठति ॥ यस्याधेयेन समस्तावयवसंयोगस्तदभिव्यापकम् ।
एकदेशमात्रसंयोग उपश्लेषस्तत्र भवमौपश्लेषिकम् । कटे आस्ते । पर्यङ्के शेते । शाखायां लम्बते । तिलेषु तैलम् । दध्नि सर्पिः ।*गवि गोत्वम् । तन्तुषु
तद्व्याधेयेनाभिव्याप्यते, आधेयं वाभिव्याप्नोतीति । कृद् 'बहुलम्' (५ । १ । २) इति कर्मण्यपि णकः । बन्धुष्वास्ते । गुरौ वसति । निमित्तमेव *नैमित्तिकम् ।*युद्धे संनह्यते ।
पटः ॥ यदाधेयसंनिधिमात्रेण क्रियाहेतुस्तत्सामीप्यकम् । गङ्गायां घोषः । कूपेषु गर्गकुलम् । उपचारे भवमौपचारिकम् ।*अङ्गुल्यग्रे करिशतमास्ते । स मे मुष्टिमध्ये तिष्ठति । यो यस्य
शरदि पुष्यन्ति सप्तच्छदाः । आतपे क्राम्यति । छायायामाश्वसिति । अधिकरणाधारप्रदेशाः 'सप्तम्यधिकरणे' (२ । २ । ९५) 'अध्यर्थाच्चाधारे' (५ ।
द्वेष्यः स तस्याक्ष्णोः*प्रतिवसति । यो यस्य प्रियः स तस्य हृदये वसति ।

---

आध्रीयत इत्याश्रय 'भूश्रद'-
णत्वम् । अग्रहायणेन मृगशिरसा चन्द्रयुक्तेन युक्ता पौर्णमासी 'चन्द्रयुक्ते'-इत्यण् ॥—बलाहकामिति । तं प्राप्य अन्तर्भूतण्यर्थो वा ॥—क्रियाश्रयस्या—॥ आध्रीयत इत्याश्रय 'भूश्रद'-
इत्यलि क्रियाया आश्रय क्रियाश्रय । क्रियासपादक इत्यर्थः । आध्रियेते अवतिष्ठेते क्रियाश्रयौ कर्तृकर्मणी अस्मिन्निति 'न्यायावाय'-इत्यादिना घञि आधार ॥—विचटनक्रियायामिति ।
विचटनमवयवानामुच्छूनता ॥—हेतुत्वं प्रतिपद्यत इति । यदुक्त-'कर्तृकर्मव्यवहितामऽसाक्षाद्धारयत् क्रियाम् ॥ उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरण स्मृतम्' ॥ १ ॥ विषयाय प्रभवति ।
'तसो गोगादे शक्त' इतीकणि—वैषयिकम् ॥—औपश्लेषिकमिति । अध्यात्मादिभ्य इकण् ॥—गवि गोत्वमिति । अनवयवस्यापि गोत्वादेर्व्यक्त्याश्रयवयवान् व्याप्यावतिष्ठमानस्य व्यक्त्यादिरभि-
व्यापक एवाधार ॥—सामीप्यकमिति । भेषजादिट्यणन्तात् स्वार्थे क । नन्वाश्रय आधारो भवति, आश्रयश्च सयोगसमवायाभ्या भवति । न चावस्थितिक्रियाश्रयेण घोषादिना गङ्गादे सयोगसम-
वायो स्त । नैष दोषो यदायत्ता हि यस्य स्थिति स विनापि संयोगसमवायौ तस्याश्रयो भवति । यथा राजपुरुष इत्यन न राज्ञा सह सयोगसमवायो स्त । अथ च तदधीनस्थितित्वाद्राजाश्रय
पुरुष इति लोके व्यपदिश्यते ॥—नैमित्तिकमिति । अत्र 'विनयादिभ्य' इतीकण् ॥—युद्धे संनह्यते इति । सनहनादयोऽन्यनापि केन चिन्निमित्तेन सभवन्तीति न युद्धादिर्वैषयिक. ॥—
औपचारिकमिति । अत्र 'अध्यात्मादिभ्य इकण्' । अन्यत्रावस्थितस्यान्यत्राऽध्यारोप उपचार ॥—अङ्गुल्यग्रे करिशतमिति । अत्र हि करिशतादीनामन्यत्रावस्थितानां केनापि प्रयोजनादिना-
ङ्गुल्यग्रादावध्यारोप्यमाणानामङ्गुल्यग्रादिरौपश्लेषिकाद् भिन्न औपचारिक आधार उच्यते । यदा त्वङ्गुल्यग्रादिशब्देनोपचारादाधेयाधिष्ठितो देश एवोच्यते तदा औपश्लेषिक एवाधार । अत एवाहु.—
'आधारस्त्रिविधो ज्ञेयः कटाकाशतिला दिषु ॥ औपश्लेषिको वैषयिकोऽभिव्यापक एव च' ॥ १ ॥—अक्ष्णोः प्रतिवसतीति । यथाऽक्षिस्थ तृणादि दु.खकारि तथा द्वेष्योऽपीत्यर्थ

१ । १२ ) इत्यादयः ॥ ३० ॥ नाम्नः प्रथमैकद्विबहौ ॥ २ । २ । ३१ ॥ एकत्वद्वित्वबहुत्वविशिष्टेऽर्थे वर्तमानान्नाम्नः परा यथासख्यं सिऔजस्लक्षणा प्रथमा विभक्तिर्भवति । कर्मादिशक्तिषु द्वितीयादिविभक्तीनां विधास्यमानत्वादिह विशेषानभिधानाच्च परिशिष्टेऽर्थमात्रे प्रथमेति विज्ञायते ।*तत्र द्वितीयादिविनिर्मुक्तः स्वार्थ-द्रव्यलिङ्गसङ्ख्याशक्तिलक्षणोऽसमग्रः समग्रो वा पञ्चको नामार्थोऽर्थमात्रम् । तेषु शब्दस्यार्थे प्रवृत्तिनिमित्तं स्वरूप*जातिगुणक्रियाद्रव्य*संबन्धादिरूपं त्वतलादिप्रत्ययाभिधेयं स्वार्थः । स च भावो विशेषणं गुण इति चाख्यायते । डित्थः । डवित्थः । गौः । अश्वः ।*शुक्लः । कृष्णः । कारकः । पाचकः । दण्डी । विषाणी । राजपुरुषः । औपगवः । गर्गाः । पञ्चालाः ॥ यत् पुनरिदंतदित्यादिना वस्तूपलक्षणेन सर्वनाम्ना व्यपदिश्यते*स्वार्थस्य व्यवच्छेद्यं लिङ्गसंख्याशक्त्याद्याश्रयः सत्वभूतं तद्द्रव्यं विशेष्यमिति चाख्यायते ।*इयं जातिः ।*अयं गुणः ।*इदं कर्मेति ॥ यदर्थे सदसद्वा शब्दत एवावसीयते तत् ङ्यावादिसंस्कारहेतुः स्त्री पुमान् नपुंसकमिति लिङ्गम् । स्त्री । पुमान् । नपुंसकम् । पट्वी । खट्वा । युवतिः ॥ यस्यामेकवचनद्विवचनबहुवचनानि भवन्ति सा*भेदप्रतिपत्तिहेतुरेकत्वादिका संख्या । एकः । द्वौ । बहवः । वृक्षः । वृक्षौ । वृक्षाः । ' निमित्तमेक इत्यत्र विभक्त्या नाभिधीयते ॥ तद्वतस्तु यदेकत्वं विभक्तिस्तत्र वर्तते ' ॥ १ ॥ यस्यां*त्यादिभिरनाभिहितायां द्वितीयाद्या व्यतिरेक-

---

॥—नाम्नः प्रथ—॥—तत्रेति । एवं स्थिते सतीत्यर्थ ॥—तेष्विति । पञ्चकस्य नामार्थस्य क्रमेण लक्षणमाह—जातिरिति । नित्यत्वैकत्वे सत्यनेकत्र समवेता जाति. । अत्र जातिलक्षणे नित्यपदाभावे पटेन व्यभिचार । एकत्वाभावे विशेषेषु व्यभिचार. । अनेकत्राभावे परमाणौ विशेषेण व्यभिचार ॥—संबन्धादीति । आदिशब्दान्नित्यद्रव्यवृत्तयोऽन्त्या विशेषा अतीन्द्रियदृष्टिगम्या योगिसंवेदनीया । तेऽपि स्वार्थ ॥—स्वार्थ इति । स्वस्यैवार्थ स्वार्थो विशेषणमसाधारणोऽर्थ प्रवृत्तिनिमित्तमिति ॥—गौरिति । जातिरनुवृत्तप्रत्ययहेतु । अत्र तद्विशिष्टस्य द्रव्यस्य प्रतीतेर्जाति स्वार्थः ॥—शुक्ल इति । गुण. शुक्लत्वादि । शुक्ल' पट इत्यादौ तद्विशिष्टस्य द्रव्यस्य प्रतीतेर्गुण स्वार्थ. ॥—गर्गा इति । गर्गस्यापत्यानि ' गर्गादेर्यञ् ' ' यञञो '–इत्यनेन लोप. ॥—पञ्चाला इति । पञ्चालानां राष्ट्रस्य राजानः पञ्चालस्य राज्ञोऽपत्यानि वा राष्ट्रक्षत्रियादञ् ॥—स्वार्थस्य व्यवच्छेद्यमिति । अत्र कर्त्तरि षष्ठी स्वार्थेन व्यवच्छिद्यते ॥—शक्त्याद्याश्रय इति । आदिशब्दात् स्वरूपादिस्वार्थ-परिग्रह' ॥—इयं जातिरिति । जातिर्द्रव्यमेकत्व नित्यत्व व्यापकत्व च स्वार्थ ॥—अयं गुण इति । तेन कर्म्मादिभ्यो व्यवच्छिद्यते । रूपस्पर्शगन्धादयो द्रव्य गुणत्वं स्वार्थ. ॥—इदं कर्म्मेति । तेन गुणादिभ्यो व्यवच्छिद्यते । कर्मत्व प्रवृत्तिनिमित्तम् ॥—यदर्थे सदसद्वेति । शब्दधर्मो लिङ्गमिति मतापेक्षया ॥—भेदप्रतिपत्तिहेतुरिति । भेदो विशेषज्ञानोत्पत्तिरूप. । तया हि पदार्थानां भेद प्रतीयते । भेद' परिगणन सख्येतिलक्षणत्वात्तस्याः । ननु नामार्थव्यतिरेकेणान्येषामेकत्वादीना विशेषणभूतानामभावादेक इत्यादौ प्रथमाया अभाव. प्राप्नोतीत्याह-निमित्तमिति । निमित्तमेकत्वसख्यालक्षणम् ॥ तद्वतस्त्वेकत्वसंख्यावतो यदेकत्वं तत्र विभक्तिप्रवृत्ति. । यथा वृक्ष इत्यत्र वृक्षत्ववतो द्रव्यस्यैकत्वं प्रतिपाद्यते तथाऽत्रापि एकेन सामान्यमेकत्वं विना त्वेकत्वसंख्यावत एकत्व प्रतिपाद्यते । यथा सामान्य दण्डमानय दण्डिनो दण्डमानयेति ॥—त्यादिभिरिति । तिशब्देन तिवादय आख्यातप्रत्यया आदिशब्देन च कृत्तद्धितसमासा उच्यन्ते ॥—व्यतिरेकेति । व्यतिरिच्यत

विभक्तयः षष्ठी च भवति सा स्वपराश्रयाश्रितक्रियोत्पत्तिहेतुः कारकरूपा *तत्पूर्वकसंबन्धरूपा च शक्तिः, सा चाभिहितार्थमात्रम् । क्रियते कटः । कृतः कटः । पचति चैत्रः । स्नानीयं चूर्णम् । दानीयो ब्राह्मणः । गोघ्नोऽतिथिः । प्रस्रवणो गिरिः । भयानको व्याघ्रः । स्थानीयं नगरम् । गोदोहनी पारी । गोमान् मैत्रः । चित्रगुश्चैत्रः ॥ अर्थमात्रं चो*पचरितमपि । यथा साहचर्यात्, कुन्ताः प्रविशन्ति । *छत्रिणो गच्छन्ति । स्थानात्, मञ्चाः क्रोशन्ति । गिरिर्दह्यते । तादर्थ्यात्, इन्द्रः स्थूणा । प्रदीपो मल्लिका । वृत्तात्, यमोऽयं राजा । कुबेरोऽयं राजा । मानात्, प्रस्थो व्रीहिः । खारी मुद्गाः । धरणात्, तुला चन्दनम् । सामीप्यात्, गङ्गातटं गङ्गा । योगात्, रक्तः कम्बलः । साधनात्, अन्नं प्राणाः । आयुर्घृतम् । आधिपत्यात्, ग्रामाधिपतिर्ग्रामः ॥ अलिङ्गमपि । त्वम् । अहम् । पञ्च । कति । अलिङ्गसंख्यमपि । उच्चैः । नीचैः । स्वः । प्रातः ॥ *शक्तिप्रधानमपि । यतः । यत्र । यथा । यदा ॥ *द्योत्यमपि । प्रपचति । प्रतिष्ठते । प्रतीक्षते । प्रतिपालयति ॥ *स्वरूपमात्रमपि । अध्यागच्छति । पर्यागच्छति । प्रलम्बते । निषिञ्चति ॥ तदयं वस्तुसंक्षेपस्त्याद्यन्तपदसामानाधिकरण्ये प्रथमेति ॥ यत्रापि त्याद्यन्तं पदं न श्रूयते, वृक्षः प्लक्ष इति तत्रापि गम्यते । यदाह—' यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयुज्यते ' इति ॥ *नाम्न इति किम् । [1]निरर्थकाद्वर्णाद्धातुवाक्याभ्यां च माभूत् । एकद्विबहाविति च संकरानिवृत्त्यर्थम् ॥

---

इति व्यतिरेकस्तस्मिन् व्यतिरेके नामार्थव्यतिरेके आधारे द्वितीयाया विभक्तयो व्यतिरेकविभक्तय विशेषविभक्तय इत्यर्थ ॥—तत्पूर्वकसंबन्धरूपा चेति । ते क्रियाकारके पूर्वे यस्य स चासौ संबन्धश्च स एव रूपं यस्याः शक्तेः सा तथा ॥ स्नानीयं चूर्णमित्यादिषु सर्वेषु बाहुलकात् करणादिष्वनीयादय ॥—उपचरितमपीति । अध्यारोपितमित्यर्थ । सह चरणस्थानतादर्थ्यवृत्तमानधरणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वऽतद्भावेऽपि तद्वदुपचार ॥—छत्रिणो गच्छन्ति । छत्रिसहचरिता पुरुषा यान्तीत्यर्थ ॥—शक्तिप्रधानमपीति । यत इत्यादिभ्योऽपादानादिशक्तीनां प्रतीयमानत्व न शक्तिमतोऽतोऽर्थमानं शक्तिप्रधानम् ॥—द्योत्यमपीति । प्रादुपसर्गाणां क्रियार्थद्योतकत्वात् अन्यथोपसर्गत्वाभावात्तदर्थमान द्योत्यमेवेति ॥—स्वरूपमात्रमपीति । सोपसर्गोऽनुपसर्गो धात्वर्थस्याख्यादिभिर्विशिष्याप्रतीते । आगच्छतीत्यादिक्रियापदार्थ एव तदर्थ इत्यर्थ ॥—नाम्न इति किमिति । ननु वर्णस्य निरर्थकत्वाद्धातुवाक्यार्थयोश्चासत्त्वरूपत्वात् सङ्ख्याया सत्त्वधर्मरूपत्वेन प्रवृत्त्यभावादसत्त्ववाचिनो नाम्न एव प्रथमा भविष्यति कि नाम्न इत्यनेन । उच्यते । यथा धातोरसत्त्ववाचित्वेऽपि साधनाश्रयामेकत्वादिसङ्ख्यामाश्रित्य तिबादीनामेकवचनादीनि प्रवर्त्तन्ते तथा स्यादीनामपि प्रवर्त्तेरन् । एव वाक्यादप्यवयवगता वर्णाद्य निरर्थकादपि स्वरूपगता सङ्ख्यामाश्रित्य प्रथमा स्यादित्याह—निरर्थकाद्वर्णाद् धातुवाक्याभ्यां चेति । उपलक्षणत्वात्पदादपि ॥ नत्वर्थमाने प्रथमेत्युक्तत्वात् मानग्रहणस्य चाधिकार्थव्यवच्छेदकत्वाद्वीरपुरुष इत्यादौ सामानाधिकरण्येनार्थमानाद्विशेषणविशेष्यभावस्याधिकस्य प्रतीते. प्रथमा न प्राप्नोति । समा-

---

१ अयमर्थो राज्ञ. पुरुष इत्यत्र योऽयं राजपुरुषयो. सबन्ध. नाम कारणान्तरनैरपेक्ष्येणाऽकस्मादुपजायतेऽपि त्वऽन्तर्भूतक्रियाकारकसबन्धनिबन्धनो यतः पुरुषो योगक्षेमकामो राजानमुपसर्पति । राजापि तमभिलषितधनदानादिना बिभर्ति । क्रियान्तर वा प्रकल्पनीयं ततो राज्ञोऽसौ सबन्धीभूत इति राज्ञ पुरुष इति । उपगोरपत्यमित्यत्रापि जनिक्रियाजनित' संबन्ध. उपगुरपत्य जनयति । तदपि ततो जायते इत्युपगोरपत्यमिति । पशो पाद इत्यत्रापि अवशिष्यतिक्रियालम्भित. सबन्धो यत. पशु पादेऽवशिष्टोऽत. पशो पाद इति । एव वृक्षस्य शाखेत्यादावप्यवयवक्रियाजनितत्व सबन्धस्येति ।

ननु चाऽव्ययेभ्य एकत्वाद्यभावादनेन प्रथमा न प्राप्नोति । सत्यम् । लुग्विधानात्तु विभक्तीनां विधिर्विज्ञायते तदन्तर्गतत्वाच्च प्रथमाया अपि । तस्य च फलम् अथो स्वस्ते गृहम्, अथो स्वस्तव गृहमित्यादि ' सपूर्वात्प्रथमान्ताद्वा ' ( २ । १ । ३२ । इति विभाषया ते मे आदेशौ । पदसंज्ञा च ' अव्ययस्य ' ( ३ । २ । ७ ) इत्यत्र वक्ष्यते एकद्विबह्वित्यादिविभक्तिविधानादिति ॥ ३१ ॥*आमन्त्र्ये ॥ २ । २ । ३२ ॥*प्रसिद्धतत्संबन्धस्य किमप्याख्यातुमभिमुखीकरणमामन्त्रणम्,*तद्विषय आमन्त्र्यः। तस्मिन्नर्थे वर्तमानान्नाम्न एकद्विबहौ यथासंख्यं प्रथमा विभक्तिर्भवति। हे देवदत्त । हे देवदत्तौ । हे देवदत्ताः । हे पचन्। हे पचमान । आमन्त्र्य इति किम् । राजा भव । अत्र राजा नामन्त्र्यः किं तु स एव विधीयत इति पूर्वेणैव प्रथमा । षष्ठीप्राप्तौ वचनम् ॥ ३२ ॥

*गौणात्समयानिकषाहाधिगन्तरान्तरेणातियेनतेनैर्द्वितीया ॥ २ । २ । ३३ ॥ आख्यातपदेनासमानाधिकरणं गौणम् ।*गौणान्नाम्नः समयादिभिर्निपातैर्युक्तादेकद्विबहौ यथासंख्यम् अमौशस्रूपा द्वितीया विभक्तिर्भवति। षष्ठ्यपवादः ।*समया पर्वतं नदी। निकषा पर्वतं वनम् ।*हा देवदत्तं वर्धते व्याधिः। धिग् जाल्मम् ।*अन्तरा निषधं नीलं च विदेहाः ।*अन्तरेण गन्धमादनं माल्यवन्तं चोत्तराः कुरवः। अन्तरेण धर्मं सुखं न भवति ।*अति वृद्धं कुरून् महद्बलम्। कुर्वतिक्रमेण वृद्धमित्यर्थः ।*येन पश्चिमां गतः। तेन पश्चिमां नीतः ।*अन्तरान्तरेणशब्दौ साहचर्यान्निपातौ गृह्येते। तथान्तराशब्दो मध्यमाधेयप्रधानमाचष्टे, अन्तरेण शब्दस्तच्च

सविधानमपि प्रथमोत्पत्तेर्लिङ्ग न भवति । वीरपुरुषमानयेति द्वितीयाद्यन्तानामपि समाससंभवादिति प्रथमा न विधेया । नैष दोष । आधिक्यस्य वाक्यार्थत्वाद्वीरनाम्नोऽनपेक्षितशब्दान्तरार्थसंसर्गोपाहितविशेषणभावात् स्वार्थमात्रनिष्ठात् प्रथमा विधीयते । एवं पुरुषशब्दादपि ॥—आमन्त्र्ये ॥—प्रसिद्धतत्संबन्धस्येति । तेन पाण्डित्यदेवदत्तत्वादिना प्रवृत्तिनिमित्तेन सबन्ध । यद्वा तेन आमन्त्र्यवाचिना देवदत्तादिशब्देन सबन्धो वाच्यवाचकभावलक्षण । प्रसिद्धस्तत्संबन्धो यस्य देवदत्तादेस्तस्य कर्मतापन्नस्य येन शब्देन आत्मा निरवधान सावधान क्रियते तदामन्त्रणमिति स्पष्टार्थ. ॥—तद्विषय आमन्त्र्य इति । आमन्त्र्यपद हि क्रियाया विशेषणं भवति हे देवदत्त व्रजाम्यहमित्यत्राभिमुखीकृतदेवदत्तविशिष्टा व्रज्या प्रतीयते । यदाह हरि –' आमन्त्रितपदं यच्च तत् क्रियाया विशेषकम् ॥ व्रजामि देवदत्तेति निघातोऽत्र प्रतीयते ' ॥ १ ॥ ततश्च देवदत्तादे. क्रियाविशेषणात् कर्मादितिरिक्तामन्त्रणसंबन्धे शेषरूपे वर्त्तमानाद्गौणात् प्रथमापवादः षष्ठी प्राप्नोति तद्बाधनार्थमिदमुच्यते । सबन्धश्चामन्त्र्यामन्त्रणभावो विषयविषयिभावो वा ॥—गौणात्स—॥—गौणादिति । ' तत आगते ' प्रज्ञादीनि वा । अत्र सूत्रे येनतेनौ मुक्त्वाऽन्ये वाचकाः ॥—समया पर्वतं नदी । निकटे निकटा वा । निकषति दूरभाव ' समिण्निकषिभ्यामाः ' जहाति सौख्य विच् धयति निन्दाभाव ' ह्रागादय. ' इति निकषाहाधिक्शब्दाना व्युत्पत्ति. ॥—हा देवदत्तमिति । हा कष्ट देवदत्तस्य यतो वर्द्धते व्याधि ॥—अन्तरा निषधमिति । अन्त राति ' डित् ' इत्या ॥—अन्तरेण गन्धमादनमिति । अन्तरे मध्ये नयति ' क्वचित् ' इति डे ' तत्पुरुषे कृति ' इत्यलुपि ' पूर्वपदस्थ '–इति णत्वे च । यद्वा अन्तरेति इणुविंशावेणीति णप्रत्यय. ॥—अतिवृद्धमिति । कुरूणामतिक्रमेण पाण्डवानां महद्बृहद्बलं वर्त्तत इत्यर्थः ॥—येन पश्चिमामिति । अत्र येनतेनौ लक्ष्यलक्षणभाव द्योतयत पश्चिमां प्रति लक्ष्यीकृत्य गत इत्यर्थ । अयं गत. कां प्रति पश्चिमां पश्चिमया लक्षणेन देवदत्तस्याप्रसिद्ध गमनं लक्ष्यते ॥—अन्तरान्तरेणेति । अथान्तराशब्द. स्त्रियामावन्तोऽप्यस्ति अव्यय च । अन्तरेणेत्यपि अन्तरशब्दात् तृतीयायां भवति अव्यय च । तत्र विशेषानुपादानात् सामान्येनोभयस्यापि ग्रहणं कुतो न भवतीत्याह—साहचर्यादिति । समयादिभिर्निपातै.

विनार्थं च । तेनेह न भवति । राजधान्या अन्तरायां पुरि वसति । किं ते केशवार्जुनयोरन्तरेण गतेनेति । हा तात, धिग् जाल्म, हा सुभ्रु इत्यादावामन्त्र्यतया विवक्षा न हादियुक्तत्वेनेति न भवति । हा कृतं चैत्रस्य, धिक् कृतं मैत्रस्येत्यत्र च हाधिक्शब्दाभ्यां कृतशब्दे न्यग्भूतत्वात् न चैत्रादेः साक्षाद्योगः किं तर्हि तद्विशिष्टेन कृत-शब्देन । बहुवचनादन्येनापि युक्ताद्भवति । न देवदत्तं प्रति भाति किंचित् । बुभुक्षितं न प्रति भाति किंचित् । वृणीष्व भद्रे प्रति भाति यस्त्वाम् । योक्षपादमृषि न्यायः प्रसभाद्ददता वरम् । धातुसंबद्धोऽत्र प्रतिस्तेन 'भागिनि च प्रतिपर्यनुभिः' (२ । २ । ३७) इति न सिध्यति । गौणादिति किम् । अन्तरा गार्हपत्यमाहवनीयं च वेदिः । अत्र प्रधानाद्वेदिशब्दान्न भवति ॥ ३३ ॥ द्वित्वेऽधोऽध्युपरिभिः ॥ २ । २ । ३४ ॥ अधस्अधिउपरिभिर्युक्ताद्गौणान्नाम्न एषामेव द्वित्वे सति द्वितीया भवति । षष्ठ्यपवादः । बहुवचनमेकद्विबहाविति यथासंख्यनिवृत्त्यर्थम् । अधोऽधो ग्रामं ग्रामाः । अध्यधि ग्रामं क्षेत्राणि । उपर्युपरि ग्रामं ग्रामाः । द्वित्व इति किम् । अधः प्रासादस्य । हर्म्यस्योपरि प्रासादः । *असामीप्याच्च द्वित्वं न भवति ॥ ३४ ॥ सर्वोभयाभिपरिणा तसा ॥ २ । २ । ३५ ॥ सर्वादिभिस्तसन्तैर्युक्ताद्गौणा-न्नाम्नो द्वितीया भवति । षष्ठ्यपवादः । सर्वतो ग्रामं वनानि । उभयतो ग्रामं वनानि । अभितो ग्रामं क्षेत्राणि । परितो ग्रामं क्षेत्राणि ॥ ३५ ॥ लक्षणवीप्स्येत्थं-भूतेष्वभिना ॥ २ । २ । ३६ ॥ लक्ष्यते दृश्यते येन तल्लक्षणं चिह्नम् । अवयवशः समुदायस्य क्रियादिना साकल्येन प्राप्तीच्छा वीप्सा तत्कर्म वीप्स्यम् । केन चित् विवक्षितेन विशेषेण भाव इत्थंभावस्तद्विषय*इत्थंभूतः । एष्वर्थेषु वर्तमानादभिना युक्ताद्गौणान्नाम्नो द्वितीया भवति । वृक्षमभि विद्योतते विद्युत् । अत्र वृक्षो लक्षणम् विद्योतमाना विद्युल्लक्ष्यम् । अनयोश्च लक्ष्यलक्षणभावः संबन्धोऽभिना द्योत्यते ॥ वृक्षंवृक्षमभि सेकः । एकैकस्य वृक्षस्य सेक इत्यर्थः । साधुर्देवदत्तो मातरमभि । मातृ-विषये साधुत्वप्रकारं प्राप्त इत्यर्थः । लक्षणादिष्विति किम् । यदत्र ममाभि स्यात्तद्दीयताम् । अत्राभिना भागसंबन्धो द्योत्यते । योऽत्र मम भागः स्यादित्यर्थः । अत्रापि बहुवचनं यथासंख्याभावार्थम् । एवमुत्तरत्र ॥ ३६ ॥ भागिनि च प्रतिपर्यनुभिः ॥ २ । २ । ३७ ॥ स्वीक्रियमाणोऽंशो भागः तत्स्वामी भागी तत्र लक्षणादिषु

---

सहैकवाक्योपात्तत्वादेतावपि निपाताविल्यर्थ ॥—अन्येनापीति । द्विधा व्याख्येयम् । समयादिव्यतिरिक्तेन यावच्छब्दादिना नाम्ना नामव्यतिरिक्तेन धात्वादिनापि योगे गौणान्नाम्नो द्वितीया भवतीति । अक्ष तृतीयनेत्र पादे यस्य स तथा ॥—द्वित्वेधो—॥ 'सामीप्येऽधोध्युपरि' इति द्वित्वम् ॥—असामीप्याच्चेति । अत्र औत्तराधर्यमात्र विवक्षित न सामीप्यमिति द्वित्वाभाव ॥—सर्वोभ—॥ सर्वादिविशेषणत्वात् 'विशेषणमन्त' इति न्यायात्तदन्तप्रतिपत्तिरित्याह—सर्वादिभिस्तसन्तैरिति ॥—लक्षण—॥—समुदायस्येति । वनादेरित्यर्थ. ॥—साकल्येनेति । सहार्थे तृतीया ॥—इत्थंभूत इति । अनेन साधुत्वादिना प्रकारेण (प्रकार. सामान्यस्य भेदको धर्मो विशेष इत्यर्थ ) इत्थं भवन क्लीबे क्त । इत्थभूतमत्रास्ति 'अभ्रादिभ्य.' । यद्वा इत्थं देवदत्तो भवत्यस्मिन्मा-त्रादौ 'अद्यर्थाद्'-इति क्त इत्थंभूतो मात्रादि । 'अव्यय प्र'-इति स ॥—वृक्षंवृक्षमभिसेक इति । अत्र वृक्षस्य वृक्षस्य सेक इति सेकेन वृक्षाणां वीप्स्यमानानां सेक प्रति यस्तेषां साध्य-साधनभावलक्षण. सबन्ध सोऽभिना द्योत्यते । वीप्सा तु द्विर्वचनद्योत्यैवेति । अन्ये त्वन्यथा वर्णयन्ति-वीप्सावीप्स्यमानयो सबन्धो द्विर्वचनेनैव द्योत्यते न त्वभिना इति संबन्धमद्योतयतापि तेन योगे वचनात् द्वितीयेति ॥—भागिनि च—॥ आभवतीति आङ्पूर्वको भूधातुर्भोगागमे वर्तते इति हि धातुपारायणविद ॥—स्वीक्रियमाण इति । मस्त्वस्वीक्रियमाणेऽप्यंशे भागशब्द प्रयुज्यते

चार्थेषु वर्तमानात्प्रतिपर्यनुभिर्युक्तात् गौणान्नाम्नो द्वितीया भवति। भागिनि, यदत्र मां प्रति मां परि मामनु स्यात् । योऽत्र मम भाग आभवति स दीयतामित्यर्थः
॥ लक्षणे, वृक्षं प्रति वृक्षं परि वृक्षमनु विद्योतते विद्युत् ॥ वीप्स्ये, वृक्षंवृक्षं प्रति वृक्षंवृक्षं परि वृक्षंवृक्षमनु सेचनम् ॥ इत्थंभूते, साधुर्देवदत्तो मातरं प्रति मातरं परि
मातरमनु ॥ एतेष्विति किम् । अनु वनस्याशनिर्गता । समीप इत्यर्थः ॥ ३७ ॥*हेतुसहार्थेऽनुना ॥ २ । २ । ३८ ॥*हेतुर्जनकः सहार्थस्तुल्ययोगो विद्यमानता च,
तद्विषयोऽपि सहार्थ उपचारात्। तयोर्वर्तमानादनुना युक्ताद्गौणान्नाम्नो द्वितीया भवति। जिनजन्मोत्सवमन्वागच्छन् सुराः।*देवेन्द्रोपपाताध्ययनमन्वागच्छद्देवेन्द्रः। तेन
हेतुनेत्यर्थः।पर्वतमन्ववसिता सेना। नदीमन्ववसिता पुरी। पर्वतनदीभ्यां सह संबद्धेत्यर्थः। अन्ये तु तृतीयार्थमात्र इच्छन्ति। पर्वतमन्ववसिता सेना। पर्वतेन कर्त्रा करणेन
वा कृतान्तेत्यर्थः। तृतीयापवादो योगः ॥ ३८ ॥ उत्कृष्टेऽनूपेन ॥ २ । २ । ३९ ॥ उत्कृष्टेऽर्थे वर्तमानात् अनूपाभ्यां युक्ताद्गौणान्नाम्नो द्वितीया भवति । अनु
सिद्धसेनं कवयः । अनु मल्लवादिनं तार्किकाः । उपोमास्वातिं संग्रहीतारः । उप जिनभद्रक्षमाश्रमणं व्याख्यातारः । तस्मादन्ये हीना इत्यर्थः ॥ ३९ ॥*कर्मणि
॥ २ । २ । ४० ॥ गौणान्नाम्नः कर्मणि कारके द्वितीया भवति । कटं करोति । ओदनं पचति । आदित्यं पश्यति । अहिं लङ्घयति । ग्रामं गच्छन् वृक्षमू-
लान्युपसर्पति। अजां नयति ग्रामम्। गां दोग्धि पयः। अथेह कस्मान्न भवति। क्रियते कटः कृतः कटः शतेन क्रीतः शत्यः पटः आरूढो वानरो यं स आरूढवानरो वृक्ष
इति। त्यादिकृत्तद्धितसमासैरभिहितत्वाल्लोकशास्त्रयोश्चाभिहितेऽर्थे*शब्दप्रयोगायोगात्। यद्येवं कटं करोति भीष्ममुदारं दर्शनीयमिति भीष्मादिविशेषणविशिष्टस्य कटस्य
करोतिक्रियया व्याप्यत्वात् कर्मत्वम्, तच्च कटशब्दादेवोत्पन्नया द्वितीययाभिहितमिति भीष्मादिभ्यो द्वितीया न प्राप्नोति यथा कृतः कटो भीष्म उदारो दर्शनीय
इति करोतेः क्तप्रत्ययेनेति। नैवम् । भीष्मत्वादियुक्तस्य कटस्य संबन्धि कर्मत्वं प्रतिपाद्यम्। न च जातिशब्दाः सम्भविनोऽपि गुणान् प्रतिपादयितुं समर्था इति
तत्प्रतिपादनाय यथा भीष्मादिशब्दप्रयोगो भवति तथा द्वितीयापि तेभ्यो भविष्यति । न हि सामान्यवाचिनः कटशब्दादुत्पद्यमाना द्वितीया भीष्मादीनामनियताधारा-
णां गुणानां कर्मत्वमभिधातुं शक्नोति । यदि वा कटोऽपि कर्म भीष्मादयोऽपि यथैव ह्ययं कटं करोत्येवं तद्गतान् भीष्मादीनपि । तत्र यद्यत् करोतिना व्याप्तुमिष्टं

---

नगरस्य भागः प्रियङ्गोर्भाग इति स स्वीक्रियमाणभागसादृश्यादिति ॥—हेतुस—॥ हेतुर्द्विविधो जनको ज्ञापकश्च । तत्र ज्ञापकस्य लक्षणत्वात् 'भागिनि च—' इति सूत्रेण द्वितीया सिद्धेति
जनक एवेह गृह्यते इत्याह—हेतुर्जनक इति ॥—तुल्ययोग इति । ननु तुल्ययोगाद्यर्थे सहादय एव शब्दा वर्त्तन्ते न पर्वतादिशब्दा इति कथं ततो द्वितीयेत्याह—तद्विषयोऽपीति । देवेन्द्र-
मुपपातयति कर्मणोऽणि—देवेन्द्रोपपातम् ॥—अवसितेति । अवसिनोति स्म कर्मकर्त्तरि वाऽवसीयते स्म 'गत्यर्थ' इति क्त । तुल्ययोगोऽभिन्नैः सह विद्यमानता तु भिन्नैरित्यनयोर्भेदः ।
विद्यमानतायामनु कर्माणि ससारीत्युदाहरणं ज्ञातव्यम् ॥—उत्कृ—॥ स्वयमेव उत्कृष्यते स्म कर्मकर्त्तरि क्तः । उत्कृष्टशब्दो हीनापेक्षस्तेन हीनोत्कृष्टसम्बन्धेऽनुना द्योत्ये द्वितीयाऽनेन विधीयते। उमा
कीर्त्तिः सुष्ठु अततीति 'पादाचात्यजिभ्याम्' इति इ. णित् । यद्वा उमा कीर्त्तिः स्वातिरिवोज्ज्वला यस्य। यद्वा उमा माता स्वातिः पिता तयोर्जातत्वात्पुत्रोऽप्युमास्वातिः ॥—कर्मणि॥—शब्दप्र-
योगायोगादिति । अर्थप्रत्यायनाय हि लोके शब्दः प्रयुज्यते । स चार्थो यदा शब्दान्तरेण प्रतिपादितः स्यात्तदा प्रयोजनाभावाच्छब्दान्तरप्रयोगो न कर्त्तव्यः ॥—अनियताधाराणामिति । न हि

तत्सर्वं द्रव्यं गुणश्च कर्मेति सर्वेषां पृथक्कर्मत्वे प्रत्येकं द्वितीया पश्चात्त्वेकवाक्यतया विशेषणविशेष्यभाव इति। यदि वा द्रव्यस्य क्रियासु साक्षादुपयोगादस्तु कटस्यैव कर्मत्वम्, भीष्मादीनां तु*न केवला प्रकृतिः प्रयोक्तव्येति नियमात् अविभक्तिकानामप्रयोगार्हत्वादेकविभक्तिमन्तरेण च सामानाधिकरण्यविशेषणत्वायोगाद्यथेश्वरसुहृदां स्वयं निर्धनत्वेऽपि*तदेकयोगक्षेमत्वात्तद्धनेनैव फलभाक्त्वं भवत्येवमकर्मणामपि कटकर्मत्वेनैव द्वितीया भविष्यति। कृत' कटो भीष्म उदारो दर्शनीय इत्यादौ तु क-रोतेरुत्पद्यमानः क्तो यस्य यस्य तया क्रियया संबन्धस्तस्य तस्य साकल्येन कर्मत्वमभिदधातीति क्वचिदपि द्वितीया न भवति। कथं तर्हि कृतं पश्य आहृतमाहर कर्त्री क्रियते दात्रेण लुनाति दानीयाय ददाति भीमाद्बिभेति प्रासादे प्रसीदति शयने शेते इत्यादिषु क्तादिभिरभिहितेषु कर्मादिषु द्वितीयादयो भवन्ति। उच्यते ।*कर्मादि-सामान्यं कृद्भिरभिहितम्*तत्राप्यभिहितः सोऽर्थोऽन्तर्भूतो नामार्थः संपन्न इति कर्मादिशक्तियुक्तं द्रव्यमेतदन्तैः शब्दैरभिधीयते यथेदं कर्म इदं करणमिति।*तत्र यासौ*स्व-रूपकालभिन्नायां क्रियायां*सव्यापारतया कर्मादिरूपता तदभिधानाय*यथायथं द्वितीयादयो भवन्ति। यत्र पुनरेकद्रव्याधारा प्रधानाप्रधानक्रियाविषयानेका शक्तिर्भवति तत्र प्रधानक्रियाविषयायां शक्तौ प्रत्ययैरभिहितायामप्रधानक्रियाविषया शक्तिः*प्रधानशक्त्यनुरोधादभिहितवत्प्रकाशमाना विभक्त्युत्पत्तौ निमित्तं न भवति। यथौदनः पक्त्वा भुज्यते देवदत्तेनेति भावाभिधायिना क्त्वाप्रत्ययेनौदनाधिकरणाप्रधानपचिक्रियाविषया कर्मशक्तिरनभिहितापि प्रधानभुजिक्रियाविषयात्मनेपदेनाभिहितेति तद्वत्प्र-काशमाना द्वितीयोत्पत्तौ निमित्तं न भवति।*यथा च ग्रामो गन्तुमिष्यते देवदत्तेनेति ग्रामस्य प्रधानेषिक्रियाविषयां कर्मशक्तिमात्मनेपदेनाभिदधताऽप्रधानगमिक्रियाविषयापि कर्मशक्तिरुपभुक्तेति तदभिधानाय द्वितीयाचतुर्थ्यौ न भवत इति।*इह च गौणत्वं*क्रियापेक्षं तेनाजां नयति ग्राममित्यादौ ग्रामाद्यपेक्षयाजादेः प्रधानत्वेऽपि गौणत्वं*न विहन्यत इति। इह तु कृतपूर्वी कटं भुक्तपूर्वी ओदनम् व्याकरणं सूत्रयतीत्यादौ यः कृतादिभिः कटादेरभिसंबन्धः स प्रत्ययेऽर्थान्तराभिधायिन्युत्पन्ने कृतादीनामुपसर्जनत्वात् निवर्तते,

---

भीष्मत्वादीना कट एवाधार कि त्वन्येऽपि ॥—न केवला प्रकृतिरिति । नापद प्रयुञ्जीतेति न्यायात् ॥—तदेकयोगक्षेमत्वादिति । अलब्धलाभो योग । लब्धार्थपरिरक्षण क्षेम । तस्य देव-दत्तादेर्यावेको योगक्षेमौ तयोर्भाव ॥—कर्मादिसामान्यमिति । करणादिक्रियामात्रयोग्यमित्यर्थ ॥—तत्रापीति । सामान्यकर्माभिधानेऽपि ॥—अन्तर्भूत इति । तत्राभिहितोऽपि कश्चिन्नान्तर्भवति । यथा राज्ञ पुरुष इत्यत्र वाक्ये षष्ठ्या सम्बन्धोऽभिधीयते । न तु क्वचिदन्तर्भावमुपयातीति द्वयोरुपादानम् ॥—तत्रेति । कर्मादिशक्तियुक्ते द्रव्ये इत्यर्थ ॥—स्वरूपकालभिन्नायामिति । कृताहृते-त्यादिक्रियापेक्षया स्वरूपेण कालेन च पश्याहरेत्यादिका क्रिया भिन्ना ॥—सव्यापारतयेति । कारकत्वेनेत्यर्थ ॥—यथायथमिति । या यस्य स्वा इत्यर्थ ॥—प्रधानाप्रधानक्रियेति । एकस्मिन् वाक्ये युगपदनेकप्रधानक्रियाणामसम्भवात्प्रधानाप्रधानक्रियाविषयैवानेका शक्तिरिति तत्क्रियापेक्षया शक्तेरपि गुणप्रधानभावो भवतीत्यत आह—प्रधानशक्त्यनुरोधादित्यादि । अत्रैवोदाहरणान्तर दर्श-यति —यथा च ग्रामो गन्तुमिष्यत इति । ननु गौणाच्चास्य कर्मणि द्वितीयेत्युक्तम्, अजा नयति ग्राममित्यादौ तु ग्रामाद्यपेक्षया अजादे प्रधानत्वान्न ततो द्वितीया प्राप्नोतीत्याह—इह चेति ॥—क्रियापेक्षमिति । आख्यातपदेनाऽसमानाधिकरण गौणमिति गौणत्वस्य द्वयोरपि कर्मणोर्भावात् क्रियापेक्ष गौणत्वमाश्रितम् ॥—न विहन्यत इति । तेन गौणत्वादजाशब्दादपि द्वि-

॥

क्रियया तु सह संवन्धोऽस्तीति व्याप्यत्वाद्द्वितीया भवति ॥४०॥ क्रियाविशेषणात् ॥ २।२।४१ ॥ क्रियाया यद्विशेषणं तद्वाचिनो गौणान्नाम्नो द्वितीया भवति। मृदु पचति। स्तोकं पचति। मन्दं गच्छति। सुखं शेते। दुःखं जीवति। सयुक्तिकं भाषते। अथो पचति शोभनं ते भार्या। अत्र 'सपूर्वात् प्रथमान्ताद्वा' (२।१।३२) इति विकल्पो न भवति। द्वितीयार्थं च वचनं न कर्मसंज्ञार्थम्, तेन कृद्योगे कर्मनिमित्ता षष्ठी न भवति। ओदनस्य शोभनं पक्ता। सुखं स्थाता। कष्टं स्थाता। चिरमासिता। तथा मन्दं गन्ता ग्रामायेत्यादौ चतुर्थी न भवति ॥ ४१ ॥ कालाध्वनोर्व्याप्तौ ॥ २।२।४२ ॥ स्वेन संवन्धिना द्रव्यगुणक्रियारूपेण कार्त्स्न्येन संवन्धो व्याप्तिः। अत्यन्तसंयोग इति यावत्। तस्यां द्योत्यायां कालेऽध्वनि च वर्तमानाद्गौणान्नाम्नो द्वितीया भवति। मासं गुडधानाः। मासं कल्याणी। मासमधीते। क्रोशं पर्वतः। क्रोशं कुटिला नदी। क्रोशमधीते। कालाध्वनोरिति किम्। स्थाल्यां पचति। व्याप्ताविति किम्। मासस्य मासे वा द्व्यहं गुडधानाः। मासस्य मासे वा एकरात्रं कल्याणी।

---

तीया सिद्धा ॥—क्रियावि—॥ प्रत्यासत्तेः क्रियाविशेषणं यत् समानाधिकरणं तस्मादेव द्वितीया। नन्विदं सूत्रं प्रथमाधिकारे क्रियतां प्रथमयापि सर्वाण्यपि रूपाणि सेत्स्यन्ति। उच्यते। पुनर्द्वितीयान्त्वमथो पचति शोभनं ते भार्येत्यादौ विकल्पः प्राप्नोति। ननु रूपाद्युपाधिवत्क्रिया द्रव्यस्यैवोपाधिर्न चोपाधेरुपाध्यन्तरसंभवः, निर्गुणा गुणा क्रिया चेति वचनात् तत्कथं क्रियाया विशेषणसंभवः। सत्यमेतत्। किंतु सजातीयस्य द्रव्योपाधेरपेक्षयोत्कर्षो दृश्यते। यथा शुक्लः शुक्लतरः शुक्लतम इति रूपरसादीनां कला इति प्रविभागप्रचयापचयाभ्यामुत्कर्षापकर्षवृत्तित्वं भवति, तत्रूपाध्यन्तरयोगात्तदाहुस्तद्विदः—'भवेद्द्विगुणमाधुर्यमनन्तगुणकालकम्॥ द्रव्यं चतुर्गुणोद्भूतगन्धमाम्रफलादिकम्' ॥ १ ॥ यथा च रूपादीनां तथा क्रियाणामपि परस्परापेक्षया विशेषसंभवात् शोभनं पचतीत्येवं विशेषणयोगः स्यात्। कथमन्यथा पापच्यते, पचतितरामित्यादौ तासामेकरूपत्वाद्यङादिप्रत्ययविधिः स्यात्। ननु चासत्वभूता क्रिया तदुपाधिस्तु सुतरामसत्वभूतस्तत्कथं सत्वाभिधायिना नाम्ना प्रतिपाद्यते इति। उच्यते। धातुप्रकृतिवाच्याऽसत्वभूतैव क्रिया यथा क्रियाशब्देन नामरूपेण सत्त्वरूपापन्ना प्रतिपाद्यते तथोपाधिरपि सत्त्वरूपापन्नः शोभनादिशब्देन इत्यदोषः[1] ॥—मन्दं गन्तेति। मन्दशब्दस्य हि कर्मत्वे 'गतेर्नवानाप्ते' इत्यनेन ततश्चतुर्थी स्यात्। यदा गन्तेत्यत्र तृच् तदा मतान्तरेण ग्रामशब्दाच्चतुर्थी। स्वमते तु 'कर्मणि कृतः' इत्यनेन परत्वात्षष्ठ्येव भवति। यदा तु तृन् तदा 'तृन्नुदन्त'—इति षष्ठीनिषेधात् स्वमतेऽपि चतुर्थी ॥—कालाध्वनो—॥—स्वेन संवन्धिनेत्यत्र 'द्विहेतो'—इत्यनेन विकल्पेन षष्ठीविधानात्कर्त्तरि तृतीया ॥—कार्त्स्न्येनेति सहार्थे तृतीया ॥—संवन्ध इति। अत्र कालाध्वनोः कर्म्मतापन्नयोरिति गम्यम् ॥—मासस्य मासे वा द्व्यहं गुडधाना इति। अत्र द्व्यहशब्दादनेन द्वितीया मासशब्दात्तु व्याप्तेरभावान्न। एवमुत्तरेष्वपि ॥—

---

१ कथं पुनरसत्त्वभूतोऽर्थः सत्त्वरूपेण प्रकाश्यते इति चेत् स्ववाचकप्रकाशबलादिति ब्रूमः स्वशक्तिरियं वाचकानां यदऽसत्त्वं सत्त्वरूपतया प्रकाशयन्ति। पदार्थस्य वा स्वरूपमिदमीदृशं यद्विशिष्टेन वाचकेनाभिधीयमानोऽसत्त्वरूपः सत्त्वरूपतया प्रकाशते। तदुक्तं—व्यपदेशे पदार्थानामन्या सत्तौपचारिकी ॥ सर्वावस्थासु सर्वेषामात्मरूपनिदर्शिनी ॥ १ ॥ स्फटिकादि यथा द्रव्यं भिन्नरूपैरुपाश्रयैः ॥ स्वशक्तियोगात्संबद्धं ताद्रूप्येणैव गम्यते ॥ २ ॥ इति।

मासस्य मासे वा द्विरधीते। क्रोशस्य क्रोशे वा एकदेशे पर्वतः। *क्रोशस्य क्रोशे वा एकदेशे कुटिला नदी। क्रोशस्य क्रोशे वा एकदेशेऽधीते। पष्ठ्याः सप्तम्या वा अयमपवादः। तेन मासमधीते, क्रोशमधीते इत्यकर्मकत्व इदमुदाहरणम्। कर्मत्वे 'कर्मणि' (२।२।३) इत्येव द्वितीया सिद्धा॥ भावादपीच्छन्त्यन्ये। गोदोहं वक्रः। गोदोहं बुद्बुदा. ॥ ४२ ॥*सिद्धौ तृतीया ॥ २।२।४३ ॥*सिद्धौ*क्रियाफलनिष्पत्तौ द्योत्यायां कालाध्ववाचिनो गौणान्नाम्नः टाभ्याम्भिस्लक्षणा यथासंख्यमेकद्विबहौ तृतीया विभक्तिर्भवति व्याप्तौ गम्यायाम्। मासेन मासाभ्यां मासैर्वावश्यकमधीतम्। क्रोशेन क्रोशाभ्यां क्रोशैर्वा प्राभृतमधीतम्। सिद्धाविति किम्। मासमधीत आचारो नानेन गृहीतः। अत्र व्याप्तिमात्रं गम्यते न सिद्धिः॥ भावादपीच्छन्त्यन्ये। गोदोहेन कृतः कटः॥ द्वितीयापवादो योगः॥ ४३ ॥*हेतुकर्तृकरणेत्थंभूतलक्षणे ॥ २।२।४४ ॥*फलसाधनयोग्यः पदार्थो हेतुः। *इमं*कंचित्प्रकारं भूत*आपन्न इत्थंभूतः। स लक्ष्यते येन स इत्थंभूतलक्षणः। हेत्वादिष्वर्थेषु वर्तमानाद्गौणान्नाम्नस्तृतीया भवति। हेतौ, धनेन कुलम्। अन्नेन वसति। विद्यया यशः। कन्यया शोकः। तीक्ष्णेन परशुना छिनत्ति। कर्तरि, चैत्रेण कृतम्। मैत्रेण भुज्यते।

---

क्रोशस्य क्रोशे वा एकदेश इति। अत्रैकदेशशब्दाद्व्याप्तेः संभवेऽपि अध्वनोऽभावादनेन द्वितीया न॥—अकर्मकत्व इदमिति। अयमर्थो यदा शास्त्रादिकर्मणा इङ् धातुः सकर्मको विवक्ष्यते। तदा 'कालाध्वभावदेशं वा'—इत्यस्य प्राप्तावप्यकर्मसंज्ञापक्ष आश्रीयते। कर्मत्वपक्षे हि कर्मणीत्येव सिद्धे। तत्राऽकर्मणामिति भणनात्। यदा त्वविवक्षितकर्मत्वेनाकर्मको धातुर्विवक्ष्यते तदा 'कालाध्वभावदेशं वा'—इत्यस्य प्राप्तिरेव नास्ति॥—सिद्धौ तृ—॥—सिद्धाविति। यद्यपि त्रिप्रकारा व्याप्तिः प्रस्तुता तथापि सामर्थ्यात् क्रियाव्याप्तेरेव सिद्धाविति विशेषणम्। यस्य ह्यारम्भस्तस्य सिद्धिर्द्रव्यगुणयोश्च सिद्धरूपयोः शब्देनाप्रतिपादनान्न तावारभ्येते, नापि निष्पद्येते इति न ताभ्यां व्याप्तेः सिद्ध्या संबन्धः। ननु यदि क्रिया सिद्धिं व्यभिचरेत्तदा युज्येत एतद्विशेषणं क्रियाव्याप्तेः। न च काचित्क्रियाऽपरिसमाप्तास्ति। सत्यमेतत्। किंतु काचित्फलं संपाद्य समाप्यते। काचिदन्यथा। तत्र विशेषणोपादानसामर्थ्यादधिगतफला या समाप्यते तद्व्याप्तौ द्वितीयाबाधिका तृतीयेत्याह—क्रियाफलेत्यादि॥—मासेनावश्यकमिति। अत्र आवश्यकं नामाध्ययनविशेषः॥—अधीतमिति। सिद्धं गृहीतं शिक्षितमिति यदर्थमध्ययनं तत्फलनिष्पत्तिर्गम्यते॥—द्वितीयापवाद इति। कालाध्वनोर्व्याप्तेर्विद्यमानत्वात्पूर्वेण द्वितीयायाः प्राप्तायाः तद्बाधनार्थो योगः। तेन यदुच्यते केश्चिन्मासेनाऽनुवाकोऽधीतः क्रोशेनाऽनुवाकोऽधीत इति करण एव तृतीया इतीदं नारम्भणीयमिति तदऽसम्यगिति॥—हेतुक—॥—[1]फलसाधनयोग्य इति। फलं कार्यं तस्य साधनं निष्पादनं करणमिति यावत्तत्र योग्यं सामान्यतो दृष्टसामर्थ्यं। योग्यग्रहणमन्तरेण फलसाधनं इत्युच्यमाने यः फलं साधयति क्रियाविष्टस्तत्र प्रतिपत्तिः स्यात्। योग्यग्रहणेन तु योग्यतामात्रप्रतिपत्तावऽकुर्वन्नपि तत्फलं हेतुरिति। योग्योऽत्र निर्व्यापारो गृह्यते सव्यापारत्वे तु कर्तृत्वमेव। धनादीनि कुलादिकमकुर्वन्त्यपि योग्यतामात्रेण तृतीयामुत्पादयन्ति। अन्नेन वसतीत्यादावपि क्रियायामन्नादेर्योग्यतामात्रविवक्षैवेति हेतावेव तृतीया॥—इममिति प्रत्यक्षम्॥—कंचिदिति। विवक्षितम्॥—प्रकारमिति। थम्प्रत्ययार्थः॥—आपन्न इति। भूतार्थः। भूङ प्राप्त्यर्थस्य प्रयोगात्॥—स लक्ष्यते येनेति। लक्ष्यते करणेऽनट्। इत्थंभूतस्य लक्षणमिति कर्मषष्ठ्या समासः। वृत्तौ स लक्ष्यते

---

1 कर्तृप्रयोजकस्यापि शास्त्रकृता हेतुत्वेन व्यवहारादुभयगतत्वेऽपि लौकिक एव हेतुरिह गृह्यते। कर्तुः प्रयोजके हि कर्तृत्वात्कर्तृद्वारेणैव तृतीयासिद्धेरित्याह—फलसाधनयोग्य इति।

करणे, दात्रेण लुनाति । मनसा मेरुं गच्छति । समेन धावति । समेन पथा ग्रामं धावतीत्यर्थः । एवं विषमेण धावति । आकाशेन याति । आधारविवक्षायां तु सप्तम्यपि । समे धावति । विषमे धावति । आकाशे याति ।*इत्थंभूतलक्षणे, अपि भवान् कमण्डलुना छात्रमद्राक्षीत् । चूलया परिव्राजकमद्राक्षीत् । छात्रत्वादिकं प्रकारमापन्नस्य मनुष्यस्य कमण्डल्वादि लक्षणम् । इत्थंभूतग्रहणं किम् । वृक्षं प्रति विद्योतनम् ।*अपि भवान् कमण्डलुपाणिं छात्रमद्राक्षीदित्यत्र तु लक्ष्यप्रधानो निर्देशो न लक्षणप्रधान इति न भवति । 'सहार्थे' ( २ । २ । ४५ ) इत्येव तृतीया सिध्यति लक्ष्यलक्षणभावे तु षष्ठी मा भूदितीत्थंभूतलक्षणग्रहणम् ॥ तथा धान्येनार्थः, धान्येनार्थी, मासेन पूर्वः, मासेनावरः, असिना कलहः, वाचा निपुणः, गुडेन मिश्रः, आचारेण श्लक्ष्णः, माषेणोनः, माषेण न्यूनः, मासेन विकलः, पुंसानुजः, शङ्कुलया खण्डः, गिरिणा काण इत्यादौ हेतौ कृतभवत्यादिगम्यमानाक्रियापेक्षया कर्तरि करणे वा तृतीयेति ॥ ४४ ॥*सहार्थे ॥ २ । २ । ४५ ॥ सहार्थस्तुल्ययोगो*विद्यमानता च तस्मिन् शब्दादर्थाद्वा गम्यमाने गौणान्नाम्नस्तृतीया भवति । पुत्रेण सहागतः । पुत्रेण सह स्थूलः । पुत्रेण सह गोमान् । शिष्येण सह ब्राह्मणः । तिलैः सह माषान् वपति ।

---

येनेति त्वर्थकथनमात्रम् ॥—इत्थंभूतग्रहणं किमिति । ननु इत्थभूतग्रहण किमर्थं यतो लक्षणे इत्युक्तेऽपि अपि भवान् कमण्डलुना छात्रमद्राक्षीदित्याद्युदाहरणानि भविष्यन्ति । अथेत्थ भणिष्यन्ति भवन्त' वृक्ष प्रति विद्योतनमित्यत्रापि तृतीया स्यात् । तन्न । यतो 'भागिनि'—इति सूत्रेण प्रतिना योगे द्वितीया भविष्यति । एवं सति प्रतेरयोगेऽपि द्योतकत्वात् वृक्षं विद्योतन स्यात् न तु वृक्षेणेति । सत्यम् । इत्थभूतग्रहणमेव ज्ञापयति यत्र साक्षात् प्रतिना योगो भवति तत्र 'भागिनि च प्रतिपर्यनुभि' इति सूत्रेण द्वितीया भवति । अत्र तु वृक्षस्य विद्योतनमित्येव भवति ॥—अपि भवान् कमण्डलुपाणिमिति । 'विशेषणसर्वादि'—इति सूत्रेण विशेषणद्वारेण पाणे पूर्वनिपाते प्राप्ते 'न सप्तमीन्द्वादिभ्यश्च' इति निषेधात् कमण्डलो. प्राग्निपात । ननु वाक्यावस्थायां कमण्डलुशब्दात् किमिति न तृतीया । उच्यते । वाक्ये आख्यातपदेन सामानाधिकरण्यमिति प्रधानत्वेन गौणत्वाभावात् । तर्हि समासे सति कथ न । उच्यते । तदा लक्ष्यप्रधानत्वान्न । ननु समासे सति विभक्त्यन्तवर्जनान्नामत्वाभावे नाम्नो विहितायास्तृतीयाया कथमत्र प्राप्तिः । नैवम् । 'नामन्त्र्ये' इति प्रतिषेधसूत्रकरणात् । तद्धि हे राजन्नित्यादिषु नलोपाभावार्थम् । तन्न युक्तम् । प्राप्तिपूर्वको हि प्रतिषेध' । अत्र तु 'नाम्नो नोऽनह्न' इत्यनेन हे राजन्नित्यादिषु विभक्तिद्वारा नामत्वाभावे नलोपप्राप्तिरेव नास्ति । तस्मान्नामन्त्र्य इति प्रतिषेधसूत्रकरणान्नामकार्यं प्रतिपन्नम् । तत समासमध्येऽपि प्राप्ति' । तर्हि धर्मश्रित इत्यादावपि समासे द्वितीयादिप्रसङ्ग स्यात् । तन्न । कर्म्मादिशक्ते सवन्धस्य च समासेनैवाभिहितत्वात् । तर्हि नामार्थमात्रे प्रथमा भवतु । तदपि न । आख्यातपदसामानाधिकरण्ये प्रथमा । तर्हि नीलोत्पलमित्यादिषु नीलेन सहाख्यातपदसामानाधिकरण्ये कथ प्रथमा । उच्यते । तत्रापि सामानाधिकरण्य नास्ति । अन्यथा सापेक्षत्वे समासोऽपि न स्यादिति । तर्हि कमण्डलुपाणिशब्दात् उपसर्जनीभूतलक्षणात् तृतीया प्राप्नोति । न । लक्षणस्य प्राधान्ये तृतीया न लक्ष्यस्य इति न भवतीति शाकटायन' ॥—सहार्थे ॥ तुल्यः साधारणोऽप्रधानस्य प्रधानेन क्रियादिना य संबन्ध स—तुल्ययोगः ॥—विद्यमानता चेति । ननु च विद्यमानतायामपि तुल्ययोगोऽस्त्येव सत्तया सहोभयो संबन्धात् । तथाहि—'सहैव दशभि' पुत्रैर्भार

---

१ आदिशब्दात्स्थौल्यादिगुण गवादिद्रव्य ब्राह्मण्यादिजातिग्रह. ।

सहैव दशभिः पुत्रैर्भारं वहति गर्दभी । अर्थग्रहणात्, पुत्रेण साकम् । पुत्रेण समम् । पुत्रेण सार्धं, पुत्रेणामा, पुत्रेण युगपद् । अर्थाद्गम्यमाने, पुत्रेणागतः, वृद्धो यूना, ‸न्यक्षेण करोति । एवं कात्स्न्र्येन, साकल्येन, अनवयवेनेत्यादावपि सहार्थोऽस्ति । सुखेनास्ते, दुःखेन जीवति, कष्टेन क्रामति, अनायासेन करोति इत्यादावास्यादिक्रि-याभिः सह सुखादेः सहार्थोऽस्ति । क्रियाविशेषणत्वविवक्षायां तु द्वितीयैव । सुखमास्ते, दुःखं जीवति, कष्टं क्रामति, अनायासं करोति इत्यादि ॥ गौणादित्येव । सहोभौ चरतो धर्मम् । चैत्रमैत्राभ्यां सह कृतमिति तु कर्तर्येव तृतीया ॥ ४५ ॥ यद्भेदैस्तद्वदाख्या ॥ २ । २ । ४६ ॥ यस्य भेदिनः प्रकारवतोऽर्थस्य भेदैः प्रकारै-र्विशेषैस्तद्वतस्तत्प्रकारवदर्थयुक्तस्याख्या निर्देशो भवति तद्वाचिनो गौणान्नाम्नस्तृतीया भवति । ‸अक्ष्णा काणः । पादेन खञ्जः । हस्तेन कुणिः । ‸शिरसा खल्वाटः । ‸प्रकृत्या दर्शनीयः । प्रायेण वैयाकरणः । गोत्रेण काश्यपः । जात्या ब्राह्मणः । जात्या सुशीलः । स्वभावेनोदारः । निसर्गेण प्राज्ञः । वर्णेन गौरः । स्पर्शेन शीतः । वचनेन मृदुः । रसेन स्वादुः । मुखेन सुरूपः । उरसा विशालः । बाहुभ्यां दृढः । सर्वत्र पुरुषस्तद्वान् संबध्यते । यद्ग्रहणं प्रकृतिनिर्देशार्थम् तत इत्याक्षेपात् । ‸भेदग्रहणं किम् । यष्टीः प्रवेशय । कुन्तान् प्रवेशय । तद्वद्ग्रहणं किम् । ‸अक्षि काणं पश्य । आख्याग्रहणं प्रसिद्धिपरिग्रहार्थम् । तेनाक्ष्णा दीर्घ इति न भवति । कृतभवत्यादिक्रिया-ध्याहारेण कर्तृकरणयोस्तृतीया सिद्धैव संबन्धषष्ठीनिवृत्त्यर्थं तु वचनम् ॥ ४६ ॥ कृताद्यैः ॥ २ । २ । ४७ ॥ कृत इत्येवंप्रकारैर्निषेधार्थैर्युक्ताद्गौणान्नाम्नस्तृतीया भव-

---

वहति गर्दभी ’ इति सहैव दशभि पुत्रै सतीति शक्य प्रतिपत्तुम् । तत्र विद्यमानता चेति तुल्ययोगात् किं पृथग्निर्दिश्यते । उच्यते । विवक्षितयोगाभावात् । सहैव दशभिरित्यत्र वहनमात्र विवक्षित तद्गर्दभ्या एव न तत्पुत्राणा यथा पुत्रेण सहागत इत्यागमनमुभयोरपीति तुल्ययोगाद्विद्यमानता भिन्ना ॥—न्यक्षेण । सामस्त्येनेत्यर्थ ॥—यद्भेदै—॥ अवयवावयविलक्षणसबन्धे षष्ठी-प्राप्तो वचनम् । यस्य भेदिनश्चक्षुरादेर्भेदै काणत्वादिभिस्तद्वतश्चक्षुरादिमत पुरुषादेस्तत्प्रकारवदर्थयुक्तस्य । कोऽर्थं स प्रकारवान् अक्ष्यादिरर्थस्तेन युक्तस्य चैत्रादेराख्या निर्देशो भवति तद्वाचिनोऽक्ष्या-दिवाचिनस्तृतीया भवतीत्यर्थ ॥—अक्ष्णा काण' । अक्षि काण चाकाण च भवतीति काणत्वभेदेन तद्वांश्चैत्रादिर्निर्दिश्यते ॥—शिरसा खल्वाटः । खलन्त्यपगच्छन्ति केशा अस्मादिति कपाटेत्या-दिशब्दात्साधु ॥—प्रकृत्या दर्शनीयः । प्रकृति स्वभावस्तद्भेदो दर्शनीयत्वम् । स्वभावो हि दर्शनीयत्वमदर्शनीयत्व च भवति तद्भेदेन दर्शनीय इति प्रकृतिमानाख्यायते । प्रैतीति ‘तन्व्याधि’–इति णे–प्राय । तद्भेदो वैयाकरणत्व तार्किकत्व चेति तद्भेदेन वैयाकरण इति तद्वान्निर्दिश्यते । ननु च प्रकृत्या दर्शनीय प्रायेण वैयाकरण इति युक्त प्रयोग ॥ दर्शनीयत्व हि प्राकृत वैकृत चास्ति वैयाकरणत्वं च प्रायिकमन्यच्च तत्रेतरव्युदासार्थं प्रकृत्या प्रायेणेति चार्थवत् । काण इत्यादिप्रयोगे त्वक्ष्णेत्यादिरव्यभिचारेण प्रतीतेरयुक्त प्रयोगोऽर्थस्य गतत्वात् । उच्यते । लोकोऽत्र पर्यनु-योक्तव्यो योऽर्थवतोऽनर्थकतामनपेक्ष्य प्रतीतेऽपि शब्दान् प्रयुङ्क्ते यद्वा सूक्ष्मेक्षिकया प्रयोगेऽपि उपचरितार्थनिवृत्तिरक्ष्णेत्यादिप्रयोगे प्रयोजन सत्यमय काणो न तूपचारेणेति ॥—गोत्रेण काश्यपः । काश्यपो माठर इति च गोत्रभेदस्तेन गोत्रमानाख्यायते काश्यप इति ॥—भेदग्रहण किमिति । यदि भेदग्रहण न क्रियते तदा येन तद्वदाख्येत्युच्यमाने यष्टी प्रवेशयेत्यत्रैव स्यात् । अत्र हि यष्ट्यादिना तद्वानुपचारेणाख्यायते । अक्ष्णा काण इत्यादौ च न स्यात् । न ह्यनाक्ष्यादिशब्देन तद्वान्निर्दिश्यते ॥—अक्षि काण पश्येति । काणशब्देन हि अक्षिभेदेनाक्ष्याख्यायते न तद्वान् चैत्रादि ॥—षष्ठीनिवृत्त्यर्थं तु वचनमिति । तथापि न विधेयमेतत् सूत्र, माभूत् कर्त्रादौ तृतीया, इत्थभूतलक्षणत्वादक्ष्यादेर्भविष्यति, यदाह–

ति। कृतं तेन। भवतु तेन। अलमतिप्रसङ्गेन। किं गतेन। कृत। कृतम्। भवतु। अलम्। किम्। एवंप्रकाराः कृतादयः ॥ ४७ ॥*काले भान्नवाधारे ॥ २ ॥ २। ४८ ॥ काले वर्तमानान्नक्षत्रवाचिनो गौणान्नाम्न आधारे तृतीया वा भवति। ·पुष्येण पायसमश्नीयात्। पुष्ये पायसमश्नीयात्। मघाभिः पललौदनम्। मघासु पललौदनम्। काल इति किम्। पुष्येऽर्कः। मघासु ग्रहः। *अध्वनि माभूत्। चित्रासु जाता*चित्रा माणविका तस्यां चित्रायामास्ते। अत्र माणविकायां माभूत्। भादिति किम्। तिलपुष्पेषु यत्क्षीरं, तिलच्छेदेषु यद्दधि। अत्र तिलपुष्पतिलच्छेदशब्दौ *स्वावाच्छिन्ने काले वर्तते इति प्राप्नोति। आधार इति किम्। अद्य पुष्यं विद्धि। स्थाल्या पच्यते इत्यादिवत् आधारस्य करणविवक्षायां तृतीया सिध्यति संबन्धविवक्षायां तु षष्ठी माभूदिति वचनम् ॥ ४८ ॥*प्रसितोत्सुकाववद्धैः ॥ २। २। ४९। ।एतैर्युक्तादाधारे वर्तमानाद्गौणान्नाम्नस्तृतीया वा भवति। केशैः प्रसितः। केशेषु प्रसितः। प्रकर्षेण सितो बद्धः प्रसितः। नित्यप्रसक्त इत्यर्थः। गृहेणोत्सुकः। गृहे उत्सुकः। केशैरववद्धः। केशेष्ववबद्धः। आधार इत्येव। मनसा प्रसितः। मनसोत्सुकः। मनसावबद्धः। करणतृतीयाया विकल्पो माभूत्। *अववद्धोत्सुकशब्दसाहचर्यात्तदर्थ एव प्रसितशब्दोऽत्र गृह्यते। पूर्ववत् षष्ठीबाधनार्थं वचनम्। बहुवचनमेकद्विबहावििति यथासंख्यनिवृत्त्यर्थम् ॥४९ ॥*व्याप्ये द्विद्रोणादिभ्यो वीप्सायाम् ॥ २। २। ५० ॥ व्याप्ये वर्तमानेभ्यो द्विद्रोणादिभ्यो गौणनामभ्यो वीप्सायां तृतीया वा भवति। *द्विद्रोणेन धान्यं क्रीणाति। द्विद्रोणं द्विद्रोणं क्रीणाति।

---

'इत्थभूतस्य काणस्य लक्षणं ह्यक्षि बुध्यते ॥ ततस्तृतीया तेनैव तत्र सूत्रेण सिध्यति ॥ १ ॥ अत्रोच्यते। अक्ष्यादेरित्थभूतस्य काणादिलक्ष्यस्य भेदाभावाल्लक्षणत्वानुपपत्तिः। यदाह। उद्योतकर.—'लक्ष्यलक्षणभावो हि भेदे सत्युपपद्यते ॥ यथा छात्रकमण्डल्वोश्छत्रोपाध्याययोर्यथा ॥ १ ॥ लक्षणादातपत्रादेस्तत्र लक्ष्य तु भिद्यते ॥ इह त्वेवमसभाव्यमभेदादक्षिकाणयो ॥ २ ॥ यत्तत्काण तदेवाक्षि लक्ष्यते तत्र तेन किम् ॥ तत्काण. पुरुष इत्येतत्कथ तूपचारतः ॥ ३ ॥—काले भा—॥ स्वार्थिकप्रत्यया नातिवर्त्तन्ते प्रकृतिलिङ्गवचनानीति कालेऽपि नक्षत्रशब्दो नक्षत्रलिङ्गसंख्य एव ॥—पुष्येण पायसमश्नीयात्। पुष्येण चन्द्रयुक्तेनेत्यादिप्रक्रियायां पुष्यशब्द. काले वर्त्तते। पयसि सस्कृतं भक्ष्य 'सस्कृते भक्ष्ये' अण्। पयसा सस्कृतामिति तु कृते तृतीयाधिकारनिवेशितेन 'सस्कृते' इति सूत्रेण इकणेव भवति ॥—अध्वनि माभूदिति। अत्र विशिष्टतारकावछिन्ने क्षेत्रे पुष्यमघाशब्दौ वर्त्तेते न काले इति ॥—चित्रा माणविका इति। यद्यपि चित्राशब्दो माणविकायां वर्त्तमान कालमप्युपाधित्वेनोपादत्ते। यतश्चित्रासु जाता या सा चित्रा इति विशेषणत्वेन प्रतीयमानत्वात् कालेऽपि वृत्ति सभाव्यते। तथापि तत्र कालस्य गौणत्वात् गौणमुख्ययोश्च मुख्ये कार्यसप्रत्ययान्न भवति ॥—स्वावाच्छिन्ने काले इति। स्वेनात्मना अवच्छिद्यते यस्तिलच्छेदतिलपुष्पविशिष्ट काल। कोऽर्थो यत्र काले तिला पुष्प्यति तिलानां छेदश्च भवतीत्यर्थ। 'तिलपुष्पेषु यत्क्षीर तिलच्छेदेषु यद्दधि। तिलवापेषु यत्तोय तेन वृद्धो न जीवति' ॥ १ ॥ इति सुश्रुतमतम्। सारोद्धारमते पूर्वार्द्धं तदेव उत्तरार्द्धं तु 'माघमासे च यद्भुक्त तेन वृद्धो विनश्यति'। कोऽर्थ.। पुनर्नवो भवति ॥—प्रसितो—॥ प्रसितशब्दोऽयं गुणवचनोऽप्यस्ति प्रकृष्ट सित. शुक्ल इति। क्रियावचनोऽप्यस्ति य' स्यते सिनोतेर्वा भवतीति। तत्रोत्सुकाववद्धशब्दसाहचर्यात्तदर्थ. सिनोतिरेव क्तान्तो गृह्यत इत्याह-प्रकर्षेणेत्यादि। ननु प्रसितशब्दस्य शुक्लगुणवचनस्य क्रियार्थस्य च सभवादुभयार्थस्यापि ग्रहणप्रसङ्ग इत्याह—अववद्धोत्सुकसाहचर्यादिति ॥—व्याप्ये द्वि—॥—द्विद्रोणेन धान्यं क्रीणाति। द्वौ द्रोणौ मानमस्य धान्यस्य 'मानम्' इतीकण्। तस्य 'अनाम्न्य'–इति लुप्। यद्वा द्वौ द्रोणौ मेयावस्य धान्यस्य। कोऽर्थ। अनेन धान्येन द्वौ द्रोणौ

तृतीया वीप्सायां विहितेति तृतीयान्तस्य पदस्य द्विर्वचनं न भवति । द्वितीया तु कर्मणि विहिता न वीप्सायामतस्तदन्तस्य द्विर्वचनं भवति ।*एवं पञ्चकेन पशून् क्रीणाति । पञ्चकं२क्रीणाति । सहस्रेणाश्वान् क्रीणाति । सहस्रं सहस्रं क्रीणाति ।*द्विद्रोणादयः प्रयोगगम्याः ॥ ५० ॥*समो ज्ञोऽस्मृतौ वा ॥ २ । २ । ५१ ॥ अस्मृतौ वर्तमानस्य संपूर्वस्य जानातेर्व्याप्यं तत्र वर्तमानाद्गौणान्नाम्नस्तृतीया वा भवति । मात्रा संजानीते । मातरं संजानीते। सम इति किम् । मातरं जानाति । ज्ञ इति किम् । मातरं संवेत्ति । अस्मृताविति किम् । मातरं संजानाति । मातुः संजानाति । स्मरतीत्यर्थः । व्याप्य इत्येव । मातरं स्वरेण संजानीते । करणे विकल्पो न भवति । मातुः संज्ञातेति कृति परत्वात् षष्ठी । नवाधिकारे वाग्रहणमुत्तरत्र तन्निवृत्त्यर्थम् ॥ ५१ ॥*दामः संप्रदानेऽधर्म्ये आत्मने च ॥ २ । २ । ५२ ॥ संपूर्वस्य दामः संप्रदानेऽधर्म्यरूपे वर्तमानान्नाम्नस्तृतीया भवति तत्संनियोगे च दाम आत्मनेपदं भवति । दास्या संप्रयच्छते । वृषल्या संप्रयच्छते । कामुकः सन् द्रव्यं दास्यै ददातीत्यर्थः । दाम इति किम् । दास्यै संददाति । संप्रदान इति किम् । द्रव्यं वृषल्या संप्रयच्छते । कर्मणि माभूत् । अधर्म्य इति किम् । पत्न्यै संप्रयच्छति । सम इत्येव । दास्यै प्रयच्छति ।*इह संपूर्वस्य दामः प्रशब्दव्यवधानमन्तरेण प्रयोगाभावात् तद्व्यवधानेऽपि भवति ॥ ५२ ॥ चतुर्थी ॥ २ ॥ २ । ५३ ॥ संप्रदाने वर्तमानाद्गौणान्नाम्नो ङेभ्यांभ्यस्लक्षणैकद्विबहौ यथासंख्यं चतुर्थी विभक्तिर्भवति । द्विजाय गां ददाति । शिष्याभ्यां धर्ममुपदिशति । मुनिभ्यो भिक्षां ददाति । पत्न्ये शेते । राज्ञे विज्ञपयति । राज्ञे दण्ड ददाति । संप्रदान इत्येव । अजां नयति ग्रामम् ॥ ५३ ॥*तादर्थ्ये ॥ २ । २ । ५४ ॥ किञ्चिद्वस्तु संपादयितुं यत्प्रवृत्तं तत्तदर्थम् तस्य भावे तादर्थ्ये संबन्धविशेषे द्योत्ये गौणान्नाम्नः षष्ठ्यपवादश्चतुर्थी भवति ।*यूपाय दारु । कुण्डलाय हिरण्यम् । रन्धनाय स्थाली । अवहननायोलूखलम् ॥५४॥

मीयेते । तदा इकण् नागच्छति मेयवाचित्वात् द्रोणस्य । यद्वा द्वयोर्द्रोणयो समाहारो द्विद्रोणम् । पात्रादित्वात् स्त्रीत्वाभाव । अत्र द्रोणो व्रीहिराढको व्रीहिरितिवत् द्रोणशब्दो मेयवृत्ति' । तेन धान्यस्य समानाधिकरणो द्विद्रोणशब्द' ॥—एवं पञ्चकेन पशून् क्रीणातीति। पञ्चेति सख्या मानमस्य 'सख्याया सघसूत्र'-इति यथा विहित 'सख्याडते'-इति क । पञ्चक पञ्चक संव पशून् क्रीणातीत्यर्थ । पञ्चकपञ्चकमित्यत्र पशुसामानाधिकरण्येऽपि पञ्चकशब्दाद्ब्राह्मणा सघ इतिवत् एकवचनम् ॥—द्विद्रोणादय इति । आदिशब्दस्य प्रकारार्थत्वात् येभ्यो वीप्सायां प्रयोगे तृतीया दृश्यते ते द्विद्रोणादय , न तु गर्गादिवत् सन्निविष्टा इति ॥—समो ज्ञो—॥—संजानीते इति । सप्रतेरस्मृतावित्यात्मनेपदम् ॥—दामः सप्र—॥ नन्वनेन ब्राह्मणेन दानं प्रवृत्तमित्यादिवत् सप्रदानस्य करणत्वविवक्षायां दास्या सप्रयच्छत इत्यादौ तृतीयोत्पत्ते. किमर्थमिदमारभ्यते । यद्वा सहार्थे इय तृतीया । तथाहि-दास्यै स्वय धन ददाति साप्यात्मान तस्मै ददातीति । दानपूर्वके संभोगे दाम् वर्त्तते । दत्त्वा दास्या सह सभुङ्क्त इति। एवं चान क्रियाव्यतिहारोपपत्तेस्तद्द्वारेणैव आत्मनेपदम् । अत्रोच्यते। एव हि धात्वन्तरेऽपि विनापि समुपसर्गेणाऽधर्म्यत्वाऽभावेऽपि स्यात् । द्रव्य वृषल्या सप्रयच्छत इत्यत्रापि सप्रदानविवक्षायां चतुर्थी स्यात् । अत इह चतुर्थीप्रत्युदाहरणेषु च तृतीया माभूदित्येवमर्थमिद वक्तव्यम् । विवक्षयापि न सिध्यति । विवक्षानियमो हि विना वचनेन दुरधिगम इति इदमारभ्यत इति । ननु सम इति परदिग्योगलक्षणा पञ्चमी ततश्च पञ्चम्या निर्दिष्टे परस्य तच्चानन्तरस्येति प्रशब्दस्य व्यवधाने न प्राप्नोतीत्याह—इह सम्पूर्वस्येति । यद्वा सम इति पूर्वत्र पञ्चम्यन्तमपीह लक्ष्यवशाद् षष्ठ्यन्तं विज्ञायते । तत्र व्यवधानेऽपि समा द्योत्यमानार्थत्वाद्दाम संबन्धोपपत्तेर्भवत्येव विधि. ॥—तादर्थ्ये ॥—यूपाय दारु । अत्र

रुचिक्लृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु ॥ २ । २ । ५५ ॥ रुच्यर्थैः क्लृप्यर्थैर्धारिणा च धातुना योगे यथाक्रमं प्रेये विकारे उत्तमर्णे च वर्तमानाद्गौणान्नाम्नश्चतुर्थी भवति । वचनसाम्यं यथासंख्यार्थम् । बहुवचनं तु एकद्विबहावित्ति यथासंख्याभावार्थम् । रुच्यर्थैः प्रेये प्रीयमाणे, जिनदत्ताय रोचते धर्मः । गुरुदत्ताय स्वदते दधि । तस्याभिलाषमुत्पादयतीत्यर्थः । प्रेय इति किम् । चैत्राय रोचते मोदको माधुर्येण । माधुर्यशब्दान्न भवति । प्रेयसंबन्धादभिलाषकरणार्थस्य रुचेर्ग्रहणम् । तेनेह न भवति । सर्वेषामेतद्रोचते कथं वा तवेति । प्रतिभातीत्यर्थः । कथं रोचते मम घृतं सह मुद्गैः शालयो दधिशरं कुकुराश्च । घृतमेव ममापि रोचते घृतशीतं च सशर्करं पयः ।*संबन्धमात्रविवक्षायां षष्ठ्येव भविष्यति । क्लृप्यर्थैर्विकारे,*मूत्राय कल्पते यवागूः । उच्चाराय संपद्यते यवान्नम् । श्लेष्मणे जायते दधि ।-तद्विकाररूपमापद्यत इत्यर्थः । विकार इति किम् । चैत्रस्य कल्पन्ते धनानि । संपद्यन्ते शालयः । गौणादित्येव । मूत्रमिदं संपद्यते यवागूः । उच्चारोऽयं संपद्यते यवान्नम् ॥ शृङ्गाच्छरो जायते । गोमयाद्वृश्चिकः प्रभवति ।*मूत्रं संपद्यते यवाग्वाः । यवाग्वा इति च पञ्चमी अपायविवक्षायाम् । धारिणोत्तमर्णे,*चैत्राय शतं धारयति । उत्तमर्ण इति किम् । शतशब्दान्न भवति ।*उत्तमर्णो धनिकः ॥ ५५ ॥ प्रत्याङः श्रुवार्थिनि ॥२।२। ५६ ॥ प्रत्याङ्भ्यां परेण शृणोतिना युक्तादार्थिन्यभिलापुके वर्तमानाद्गौणान्नाम्नश्चतुर्थी भवति । द्विजाय गां प्रतिशृणोति । द्विजाय गामाशृणोति ।*याचितोऽयाचितो वा प्रतिजानीते इत्यर्थः । प्रत्याङ इति किम् । चैत्रस्य शृणोति । अर्थिनीति किम् । द्विजाय गां प्रतिशृणोतीत्यत्र गवि माभूत् ॥ ५६ ॥ प्रत्यनोर्गृणाख्यातरि ॥ २ । २ । ५७ ॥ प्रत्यनुभ्यां परेण गृणातिना योगे आख्यातरि वर्तमानाद्गौणान्नाम्नश्चतुर्थी भवति । आचार्याय प्रतिगृणाति । आचार्यायानुगृणाति । आचार्योक्तमनुवदति, प्रशंसन्तं वा प्रोत्साहयतीत्यर्थः । प्रत्यनोरिति किम् । आचार्यं गृणाति । आख्या-

---

यूपादिहेतुभूतस्य दार्वादेर्हेतुतृतीया न अगौणत्वात् ॥—रुचिक्लृप्यर्थ—॥—संबन्धमात्रेति । अत्र सत्यपि प्रेयत्वे प्रेयता न विवक्षिता अपि तु तत्क्रियासबन्धमात्रमिति न चतुर्थी ॥—मूत्राय कल्पते यवागूः । यवागूः कर्त्री सपद्यते । किं सपद्यते, मूत्रं, मूत्ररूपमित्यर्थ । ननु मूत्रयवागूशब्दयोर्द्वयोरपि सपद्यते इति क्रियया सह संबन्धाद् गौणत्वाभावात् कथं मूत्रशब्दाच्चतुर्थी । उच्यते । एतत्सूत्रसामर्थ्यादेवात्र गौणमुख्यभावेन क्रियासंबन्धात् मूत्रस्य गौणत्वम् । तथाहि-प्रथम यवाग्वा सह क्रियाया सबन्ध पश्चान्मूत्रस्येति । गौणादिति व्यावृत्त्युदाहरणे तु मूत्रादेर्विशेष्यार्थं मूत्रादिकं प्रथमं क्रियया संबन्धनीयम् । यद्वा मूत्रायेति कोऽर्थः, मूत्ररूपविकारसबन्धित्वेन यवागू सपद्यते इत्यर्थः ॥—तद्विकाररूपमिति । अत्र तस्य यवाग्वादेर्विकारस्तस्य रूपं कर्मतापन्नमापद्यते प्राप्नोति । मूत्रं कर्तृ । अकर्मकोपि पदिस्तदा तद्विकाररूपं मूत्रं कर्तृ आपद्यते सपद्यते इत्यर्थ । अत्र प्रथमाया प्राप्तौ चतुर्थी ॥—चैत्रस्य कल्पन्ते इत्यत्र चैत्रो धनादीना स्वामी न विकार इति न भवति ॥—मूत्रं संपद्यते यवाग्वा इति । यवाग्वा अपगच्छदिदं मूत्रं संपद्यत इत्यपायः ॥—चैत्राय शतं धारयतीति । धृङ् अवस्थाने ध्रियते तिष्ठति स्वरूपान्न प्रच्यवते शतं कर्तृ । तत् ध्रियमाण प्रयुङ्क्ते इति णिग् । अपरपठितधृराद्यौ वा ॥—उत्तमर्णो धनिक इति । यो हि धन प्रयुङ्क्ते स लोके उत्तमत्वेन प्रसिद्धो यस्तु गृह्णाति सोऽधमत्वेन । उत्तमाधमाभ्यां सबद्धमृणमपि तथैव व्यपदेष्टव्यमित्युत्तममृण यस्येति कार्यम् ॥—प्रत्याङः—॥—अर्थिनीति । अर्थयते इत्यर्थी अभिलापुक. । अर्थणि उपयाचने इति पाठात् ॥—याचितोऽयाचितो वेति । अधमत्वायाचमाने महत्त्वादऽयाचमानेऽपि केनाप्याकारादिना स्वाभिलापं समर्पयति द्विजादो ओमिति तस्य प्रतिजानीते प्रतिपद्यते अभ्युगच्छतीत्यर्थ ॥—प्रत्यनो—॥—आचार्यं गृणातीति । आचष्टे इत्यर्थः ।

तरीति किम् । आचार्याय मनसा प्रतिगृणातीत्यत्र मनसि माभूत् ॥ ५७ ॥*यद्वीक्ष्ये राधीक्षी ॥ २ । २ । ५८ ॥ वीक्ष्यं*विमतिपूर्वकं निरूपणीयम् ।*विप्रश्नविषय इति यावत् । तद्विषया*क्रियापि वीक्ष्यम् । यत्सबन्धिनि वीक्ष्ये राध्यतिरीक्षतिश्च वर्तते तस्मिन्वर्तमानाद्गौणान्नाम्नः सामर्थ्याद्राधीक्षिभ्यामेव युक्ताच्चतुर्थी भवति । मैत्राय राध्यति । मैत्रायेक्षते ।*तस्य दैवं पर्यालोचयतीत्यर्थः । स्त्रीभ्य ईक्षते । स्त्रीणामभिप्रायः कीदृश इति विमतिपूर्वकं निरूपयतीत्यर्थः । ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयम् । परस्त्रीणामभिप्राये यत्संदेहादीक्षितव्यम् निरूपयितव्यं किमेवं करोमि नवेति तद्रक्षसां कुलधर्मो न दोषः ।*दैवे एवेक्ष्ये इच्छन्त्येके । राधीक्ष्यर्थधातुयोगेऽपि इच्छन्त्येके । मैत्राय राधयति साधयति पश्यति जानीत इति चोदाहरन्ति । यद्ग्रहणं किम् । मैत्रस्य शुभाशुभमीक्षते । शुभाशुभान्माभूत् । मैत्रात्तु*राधीक्षिभ्यां योगाभावादेव न भवति । वीक्ष्यग्रहणं किम् । मैत्रमीक्षते । राधीक्ष्यर्थविषयात् विप्रष्टृव्यादिच्छन्त्यन्ये । लाभाय राध्यति । लाभाय राधयति । लाभाय साधयति । लाभायेक्षते । लाभाय पश्यति ॥ ५८ ॥*उत्पातेन ज्ञाप्ये ॥ २ । २ । ५९ ॥ उत्पात आकस्मिकं निमित्तम् । तेन ज्ञाप्ये ज्ञाप्यमानेऽर्थे वर्तमानाद्गौणान्नाम्नश्चतुर्थी भवति ॥ वाताय कपिला विद्युदातपायातिलोहिनी ॥ पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥ १ ॥ वातादयः स्वकारणेभ्य एवोत्पद्यन्ते । विद्युता तु ज्ञाप्यन्त इति तादर्थ्यं नास्ति । उत्पातेनेति किम् । राज्ञ इदं छत्रमायातं विद्धि राजानम् ।*षष्ठ्यपवादो योगः ॥ ५९ ॥*श्लाघह्नुस्थाशपा प्रयोज्ये ॥ २ । २ । ६० ॥ ज्ञाप्य इत्यनुवर्तते । श्लाघादिभिर्धातुभिर्युक्ताद् ज्ञाप्ये प्रयोज्येऽर्थे वर्तमानाद्गौणान्नाम्नश्चतुर्थी भवति । मैत्राय श्लाघते । मैत्राय ह्नुते ।*मैत्राय तिष्ठते ।*मैत्राय शपते । श्लाघाह्नवस्थानशपथान् कुर्वाण आत्मानं परं वा ज्ञाप्यं जानन्तं मैत्रं प्रयोजयतीत्यर्थः । प्रयोज्य इति किम् । मैत्रायात्मानं श्लाघते । मैत्राय शतं ह्नुते । आत्मादौ माभूत् ।

अत्राचार्यमाचक्षाणामिति प्रतिपत्तव्यम् । अन्यथा व्यङ्गविकलत्व स्यात् ॥—यद्वीक्ष्ये—॥ विविधा विशेषानुपलम्भादेकस्मिन् वस्तुनि सादृश्यादिनिमित्ताढनेकपक्षालम्बनानवधारणात्मिका मतिर्विमतिः । सदेहज्ञानमिति यावत् ॥ तत्पूर्वक निरूपणीयम् । अदृष्टमिष्टानिष्टफल पुण्यपापरूपमऽप्रत्यक्ष पराभिप्रायादिक वा तस्यैव निरूपणार्हत्वात् । पुन' स्पष्टयति—विप्रश्नविषय इति । विचारविषयो दैवादिर्लाभालाभादिर्वा ॥—क्रियापीति । पर्यालोचनादिका ॥—तस्य दैवमिति । शुभाशुभमित्यर्थ । 'ईक्षितव्य परस्त्रीभ्य स्वधर्मो रक्षसामयम् ॥ सक्रुध्यसि मृषा कि त्व दिदृक्षु मा मृगेक्षणे ॥ १ ॥—दैवे एवेक्ष्ये इति । न त्वभिप्रायादावित्यर्थ ॥—एके इति । शाकटायना ॥—एके इति । चान्द्रा । राधिरपरपठितश्शुरादिर्णिगन्तो वा । साधिर्णिगन्त एव ॥—राधीक्षिभ्यां योगाभावादिति । एव तर्हि मैत्राय राध्यतीत्यादावपि सबन्धाभावान्न स्यात् । न । तत्र मैत्रेणैव सह राधीक्ष्यो सबन्धो विवक्षितोऽन्यस्याश्रुतत्वात् ॥—अन्य इति । रत्नमतिबौद्धः ॥—उत्पातेन—॥ उत्क्रम्य प्रसिद्ध निमित्त पततीति बाहुलकात्सोपसर्गादपि 'वा ज्वलादि'–इति ण' । निमित्त द्विधा जनक ज्ञापक च । यत्र तादर्थ्य तत्र जनक एव हेतु । यथा रन्धनाय स्थाली । अत्र तु तादर्थ्याभावात् ज्ञापक एव हेतु' ॥—षष्ठ्यपवाद इति । ज्ञाप्यज्ञापकसबन्धविवक्षायामित्यर्थ ॥—श्लाघह्नु—॥ युजण् सपर्चने, प्रयोज्यत इति 'य एचात' इति ये प्रयोक्तुं शक्य इति वा 'शक्तार्हे'–इति घ्यणि 'निप्राद् युज शक्ये' इति गत्वाभावे प्रयोज्य ॥ द्वितीयाप्राप्तौ वचनम् ॥—मैत्राय तिष्ठते । अत्र 'ज्ञीप्सास्थेये' आत्मनेपदम् । स्थानेनात्मान ज्ञापयतीत्यर्थ ॥—मैत्राय शपते । 'शप उपलम्भने' आत्मनेपदम् । वाचा मात्रादिशरीरस्पर्शनेन नाह जाने न मया कृतमिति मैत्र ज्ञापयतीत्यर्थ

-के चित्त्वप्रयोज्यो यो ज्ञाप्यो य आख्यायते तत्रैवेच्छन्ति ॥ ६० ॥*तुमोऽर्थे भाववचनात् ॥ २ ॥ ३ ॥ ६१ ॥ क्रियायां क्रियार्थायामुपपदे तुम् वक्ष्यते तस्यार्थे
ये भाववाचिनो घञादयः प्रत्यया विधास्यन्ते तदन्ताद्गौणान्नाम्नः स्वार्थे चतुर्थी भवति ।*पाकाय व्रजति । पक्तये व्रजति । पचनाय व्रजति । इज्यायै व्रजति ।
पक्तुं यष्टुं वा व्रजतीत्यर्थः । तादर्थ्यस्य प्रत्ययेनैवोक्तत्वाच्चतुर्थी न प्राप्नोतीति शेषषष्ठी हेतुहेतुमद्भावविवक्षायां वा हेतुतृतीया स्यादिति चतुर्थ्यर्थं वचनम् । तुमोऽर्थे इति
किम् । पाकस्य । त्यागस्य । पाकेन वर्तते । त्यागेन वर्तते । अध्ययनेन वसति । नात्र क्रियायां क्रियार्थायामुपपदे प्रत्ययो विहितः किं तर्हि भावमात्रे पश्चात्तु क्रिय-
याभिसंबन्ध इति हेतौ तृतीयैव भवति । भाववचनादिति किम् । पक्ष्यतीति गां दास्यतीति च पाचकस्य व्रज्या । गोदायस्य परिसर्या । तुम इति व्यस्तनिर्देश उत्त-
रार्थः ॥ ६१ ॥*गम्यस्याप्ये ॥ २ । २ । ६२ ॥ यस्यार्थो गम्यते न च शब्दः प्रयुज्यते स गम्यः, तस्य तुमो यदाप्यं व्याप्यं तत्र वर्तमानाद्गौणान्नाम्नश्चतुर्थी भवति ।
द्वितीयापवादः ।*एधेभ्यो व्रजति । फलेभ्यो व्रजति । एधान् फलानि वाहर्तुं व्रजतीत्यर्थः । गम्यस्येति किम् । एधानाहर्तुं व्रजति । आप्य इति किम् । एधेभ्यो व्रजति शकटेन ।
करणान्माभूत् । तुम इत्येव । प्रविश पिण्डीं द्वारम् । अत्र भक्षयेति पिधेहीति च गम्यम् ॥ ६२ ॥*गतेर्नवाऽनाप्ते ॥ २ । २ । ६३ ॥ गतिः पादविहरणं तस्या गतेराप्येऽनाप्तेऽसंप्राप्ते
वर्तमानाद्गौणान्नाम्नश्चतुर्थी वा भवति । ग्रामं गच्छति । ग्रामाय गच्छति । नगरं व्रजति । नगराय व्रजति । विप्रनष्टः पन्थानं गच्छति, पथे गच्छति । उत्पथेन पन्थानं
पथे वा गच्छति । गतेरिति किम् । आदित्यं पश्यति । मेरुं शृणोति ।*स्त्रियं गच्छति । मनसा मेरुं गच्छतीत्यत्र ज्ञानार्थो गमिः । आप्य इत्येव । ग्रामादागच्छति । अनाप्त
इति किम् ।*पन्थानं गच्छति । कृद्योगे तु परत्वात्षष्ठ्येव भवति । ग्रामस्य गन्ता ।*द्वितीयैवेत्यन्ये । ग्रामं गन्ता ।*चतुर्थी चेत्यन्ये ।*ग्रामं गन्ता ग्रामाय गन्तेति ॥ ६३ ॥

---

॥—केचित्त्विति । भोजशाकटायना । यस्तु मैत्रादिर्जानन् ज्ञाप्यते तत्र न भवतीति । तथा च अन्येषां ग्रन्थे द्विकर्मकोऽयं ज्ञापिस्तत्र केचिद्यस्मै आख्यायते तत् ज्ञाप्यं सम्प्रदानत्वेन प्रतिपन्ना । केचिद्य
आख्यायते तामिति । तन्मते मैत्रमात्मने श्लाघते इत्युदाहरणम् ॥—तुमोऽर्थे—॥ भवनं भावः भावाकर्त्रोर्घञ् । वक्तीति ब्रवीतीति वा रम्यादिभ्य कर्त्तर्यनट् । भावस्य वचनो भाववचनस्तस्मात् ॥—पाका-
येति । पक्तुं पक्ष्यते इति वा वाक्ये 'भाववचना.' इति घञादय ॥—गम्यस्या—॥ शब्दोऽर्थवानप्यप्रयुज्यमानः प्रयुज्यमानश्च भवति । अप्रयुज्यमानश्चार्थप्रकरणशब्दान्तरसन्निधाने प्रतीयमानार्थः स च
गम्य इत्युच्यते ॥—एधेभ्यो व्रजति । ननु एधार्थं व्रजतीति तादर्थ्य एव चतुर्थी भविष्यति किमनेन । उच्यते । व्रज्याया एधाहरणार्थतायां विश्रामोऽस्ति न त्वेधार्थतायामिति न सिध्यति ॥—गतेर्नवा—॥
गतिशब्दस्य ज्ञानाद्यर्थत्वेऽप्यनाप्त इति वचनात्पादविहरणरूपैव गतिर्गृह्यते ज्ञानादिव्याप्यस्याऽनाप्तत्वाऽसंभवादित्याह—गतिः पादविहरणमिति ॥—स्त्रियं गच्छतीति । भजनार्थोऽत्र गमिर्न गत्यर्थ
इति न चतुर्थी ॥—पन्थानं गच्छतीति । अनाप्तेऽसंप्राप्ते कर्मणि चतुर्थी, पन्थास्तु संप्राप्त इति चतुर्थ्यभावः ॥—द्वितीयैवेत्यन्य इति । सारसंग्रहकारादय । ते हि गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ
विति सूत्रेण कर्मणि द्वितीयायां प्राप्तायां तदपवादो वैकल्पिकी चतुर्थ्यारभ्यते इति पक्षे द्वितीया सिद्धैवेति द्वितीयाग्रहणात् । ग्रामं गन्तेत्यत्र कृत कर्मणि अपवादभूतामपि षष्ठीं बाधित्वा द्वितीयैव
भवति चतुर्थी तु षष्ठ्या परत्वाद्बाध्यत एवेति मन्यन्ते ॥—चतुर्थी चेत्यन्य इति । उत्पल इत्यर्थः । स ह्येवं मन्यते द्वितीयाविषय इव वैकल्पिकी चतुर्थ्यारभ्यते । द्वितीयायाश्चात्रापवादात्कुतोऽपि
विषय उपनत इति तद्विषये पक्षे चतुर्थी प्रवर्तत एव ॥—ग्रामं गन्ता ग्रामाय गन्तेति । एतेषु चायमस्मदभिमतः षष्ठीपक्षः श्रीशेषभट्टारकस्यापि संमत. । कथं हि शब्दानां साधुत्वं युक्ति-

॥मन्यस्यानावादिभ्योऽतिकुत्सने ॥ २ । २ । ६४ ॥ अतीव कुत्स्यतेऽनेनेत्यतिकुत्सनम् । तस्मिन्मन्यतेराप्ये वर्तमानान्नावादिगणवर्जितात् गौणान्नाम्नश्चतुर्थी वा भवति । न त्वा तृणाय मन्ये । न त्वा तृणं मन्ये । न त्वा बुसाय मन्ये । न त्वा बुसं मन्ये । न त्वा लोष्ठाय मन्ये । न त्वा लोष्ठं मन्ये । न त्वा शुने मन्ये । न त्वा श्वानं मन्ये । तृणायापि न मन्ये तृणादेरपि निकृष्टं मन्य इति कुत्स्यते । मन्यस्येति किम् । न त्वा तृणं चिन्तयामि । श्यनिर्देशः किम् । न त्वा तृणं मन्वे । अनावादिभ्य इति किम् । *न त्वा नावं मन्ये । न त्वा अन्नं मन्ये । *न त्वा शुकं मन्ये । न त्वा शृगालं मन्ये । न त्वा काकं मन्ये । *नावन्नयोरपि 'परप्रणेयतानायासोच्छेद्यतादिभिरतिकुत्सनत्वं भवति । कुत्सन इति किम् । *न त्वा रत्नं मन्ये । *न ते मुखं चन्द्रं मन्ये । *न ते मुखं पद्मं मन्ये । रत्नादिभ्योऽपि त्वदादीन् अधिकान् मन्य इति प्रशंसा । *कुत्स्यते अनेनेति करणाश्रयणं किम् । न त्वा तृणाय मन्य इति युष्मदो न भवति । अतिग्रहणं किम् । त्वां तृणं मन्ये । सुवर्णं तृणं मन्ये । अत्र नञ्प्रयोगाभावे साम्यमात्रं प्रतीयते न त्वतिकुत्सा । कुत्सामात्रेऽपीच्छन्त्येके । तृणाय त्वां मन्ये । तृणाय मन्यमानः सर्वान् । हरिमपि अमंसत तृणायेति । न त्वा तृणस्य मन्तेति कृद्योगे *परत्वात् षष्ठी । *चतुर्थ्यपीति कश्चित् । न तव बुसाय मन्ता । न तव बुसस्य मन्ता । न चैत्रस्य शुने मन्ता । न चैत्रस्य शुनो मन्तेति । उक्तकर्मणि तु *न त्वं बुसो मन्यसे मया न चैत्रः श्वा मन्यते मया नाहं बुसो मन्ये वृषलेनेत्यतिकुत्सनात् प्रथमेति ॥ बहुवचनमाकृतिगणार्थम् ॥६४॥

हितसुखाभ्याम् । २ । २ ॥ ६४ ॥ हितसुखाभ्यां युक्ताद्गौणान्नाम्नश्चतुर्थी वा भवति । आतुराय आतुरस्य वा हितम् । आमयाविने आमयाविनो वा हितम् ।

---

बलेन शक्य व्यवस्थापयितु यत्र तुल्यपदार्थे उष्ण च तदुदक च उष्णोदकमिति साधु. । उष्ण च तत्पानीयं च उष्णपानीयमिति कालदष्टोऽपशब्द । तापसश्चाय कुमारश्च तापसकुमार इति साधु । तापसी चेय कुमारी च तापसकुमारीति अचिकित्स्योऽपशब्द' । पानीयोष्ण कुमारतापसी चेति साधुरेव ॥—मन्यस्या ॥—न त्वा बुसाय मन्ये । बुसच् उसर्गे बुस्यति त्यजति उपादेयभावमिति 'नाम्युपान्त्य'–इति के बुसम् ॥—न त्वा नाव मन्ये ॥ नावादयो लक्ष्यदर्शनेनानुसर्त्तव्या. । अथ नावन्नयोरत्यन्तोपकारकत्वात् कथमतिकुत्सनत्व गम्यत इत्याह–नावन्नयोरपीति । परेण स्वेच्छया अभिमत स्थान प्रकर्षेण नीयते परप्रणेय. पराधीनप्रवृत्तिरित्यर्थ तस्य भाव परप्रणेयता ॥—अनायासोच्छेद्यतादिभिरिति । आदिशब्दादचेतनत्वाविनश्वरत्वादिग्रह ॥—न त्वा शुकमिति । शुक पाठितो भणति त्व तदपि न ॥—न त्वा रत्नमिति । यतो रत्न पाषाण ॥—न ते मुखं चन्द्रमिति । चन्द्रे कलङ्क त्वन्मुख निष्कलङ्कम् ॥—न ते मुखं पद्ममिति । पद्मस्य रात्रो सकोच । त्वदास्यस्य न कदापि । युष्मदोऽपि मन्यव्याप्यत्वात्पक्षे चतुर्थी प्राप्नोतीत्याह—कुत्स्यतेऽनेनेति । 'हरिमप्यमसत तृणाय कुरुपतिमजागणन्न वा ॥ मानतुलितभुवनत्रितया सरित सुताद-विभयुर्न भूभृत' ॥ १ ॥—परत्वात्षष्ठीति । 'कर्म्मणि कृत'' इत्यनेन तृणशब्दात् नित्य षष्ठी । युष्मच्छब्दात्तु 'वैकत्र द्वयो.' इति षष्ठीविकल्पाद्द्वितीया । यदा तु युष्मदग्रत 'कर्मणि कृत' इत्यनेन नित्य षष्ठी तदा तृणशब्दाद् 'वैकत्र द्वयो' इत्यनेन विकल्पेन षष्ठी । तद्विकल्पपक्षे चतुर्थ्यपि । न तव तृणाय मन्ता तृणस्य मन्ता तृण मन्तेति वा ॥—चतुर्थ्यपीति कश्चिदिति । अजितयशोवादी दुर्गसिहश्च । 'कर्मणि कृत' इत्यनेन षष्ठीप्राप्तौ, 'वैकत्र द्वयो' इत्यस्य तु पक्षे सिद्धैवेति ॥—न त्वं बुसो मन्यसे इति । अत्र विशेषणविशेष्यभावेन उभयमपि कर्म उक्तम् ।

॥

चैत्राय चैत्रस्य वा सुखम् ॥ ६५ ॥ *तद्भद्रायुष्यक्षेमार्थार्थेनाशिषि ॥ २ ॥ २ ॥ ६६ ॥ तदिति हितसुखयोः परामर्शः । अर्थशब्दः प्रत्येकमभिसंबध्यते । हितार्थैर्युक्ताद्गौणान्नाम्न आशिषि गम्यमानायां चतुर्थी वा भवति । हितार्थे, हितं जीवेभ्यो भूयात् । हितं जीवानां भूयात् । पथ्यं मैत्राय भूयात् । पथ्यं मैत्रस्य भूयात् । सुखार्थे, सुखं प्रजाभ्यो भूयात् । सुखं प्रजानां भूयात् । शं प्रजाभ्यो भूयात् । शं प्रजानां भूयात् । शर्म भवतात् भव्येभ्यः । शर्म भवतात् भव्यानाम् । भद्रार्थे, भद्रमस्तु जिनशासनाय । भद्रमस्तु जिनशासनस्य । मद्रमस्तु जिनशासनाय । मद्रमस्तु जिनशासनस्य । कल्याणमस्तु जिनशासनाय । कल्याणमस्तु जिनशासनस्य । आयुष्यार्थे, *आयुष्यमस्तु चैत्राय । आयुष्यमस्तु चैत्रस्य । दीर्घमायुरस्तु मैत्राय । दीर्घमायुरस्तु मैत्रस्य । चिरंजीवितमस्तु मैत्राय । चिरंजीवितमस्तु मैत्रस्य । क्षेमार्थे, क्षेमं भूयात् संघाय । क्षेमं भूयात् संघस्य । कुशलं भूयात् संघाय । कुशलं भूयात् संघस्य । *निरामयं भूयात् साधुभ्यः । निरामयं भूयात् साधूनाम् । अर्थार्थे, अर्थो भूयान्मैत्राय । अर्थो भूयान्मैत्रस्य । प्रयोजनं भूयान्मैत्राय । प्रयोजनं भूयान्मैत्रस्य । कार्यं भूयान्मैत्राय । कार्यं भूयान्मैत्रस्य । आशिषीति किम् । *आयुष्यं प्राणिनां घृतम् । तत्त्वाख्याने न भवति । हितसुखशब्दाभ्यां पूर्वेण विकल्पः सिद्ध एव । तदर्थार्थं तु *तद्ग्रहणम् ॥ ६६ ॥ *परिक्रयणे ॥ २ । २ । ६७ ॥ परिक्रीयते नियतकालं स्वीक्रियते येन तत् परिक्रयणं *वेतनादि । तस्मिन् वर्तमानाद्गौणान्नाम्नश्चतुर्थी वा भवति । शताय परिक्रीतः । शतेन परिक्रीतः । संभोगाय परिक्रीतः कर्तास्मि तव नाप्रियम् । संभोगेन वा । शतादिना नियतकालं स्वीकृत इत्यर्थः । परीति किम् । शतेन क्रीणाति । क्रयस्यात्र करणं न परिक्रयस्य । *करणाश्रयणं किम् । *शताय परिक्रीतो मासम् । मासान्माभूत् ॥ ६७ ॥ *शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाभिः ॥ २ । २ । ६८ ॥ शक्तार्थैर्वषडा-

---

यथा कट' क्रियन्ते वीरणानि ॥—तद्भद्रा—॥ भद्रक्षेमार्थयोरन्यत्रैकार्थत्वेऽपि क्षेममापदोऽभावो भद्र सपदुत्कर्ष इत्यर्थभेदाद्द्वितयोपादानम् ॥—आयुष्यमस्तु चैत्रायेति । आयुः प्रयोजनमस्य घृतादेरायुष्यं घृतादि । ततश्च दीर्घमायुरस्तु मैत्रायेत्यादौ चतुर्थी न प्राप्नोति । यत आयुःशब्देन जीवितमेवाभिधीयते न तु जीवितकारणं घृतादिकम् उच्यते कार्ये कारणोपचारात् । यथा इन्द्रः स्थूणा । यदा त्वायुरेव भेषजादिस्वार्थे ष्यणि आयुष्यशब्दो निष्पाद्यते तदा निर्विवाद सिद्धमेव । आमयस्याभावो—निरामयम् । 'विभक्तिसमीप'–इति समास ॥—आयुष्यं प्राणिनामिति । अत्र आयुषि साधु 'तत्र साधौ' य ॥—तद्ग्रहणमिति । तर्हि प्रागप्यर्थग्रहणमस्तु । सत्यम् । तदर्थानामाशिषि नियमार्थमिदम् ॥—परिक्र—॥ स्वीकारो ह्यात्मसात्करण परिक्रय उच्यते । परिशब्दोऽत्र प्रत्यासत्ति द्योतयति । यथा परिसहस्रा गाव इति सहस्रप्रत्यासन्ना. संभाव्य परिसहस्रा गाव उच्यन्ते । एवमत्रापि क्रयप्रत्यासन्नोऽल्पकालो वेतनादिना स्वीकार परिक्रय उच्यते । तत्र यत्करण परिक्रयक्रियायां साधकतमं वेतनादि तत्करणव्युत्पत्त्या परिक्रयणमुच्यते ॥—वेतनादीति । आदिपदाद्भाटकादिपरिग्रह ॥—करणाश्रयणं किमिति । करणाश्रयणं विना परिक्रीयतेऽस्मिन्निति अनया व्युत्पत्त्या मासादपि स्याच्चतुर्थी ॥—शताय परिक्रीतो मासमिति । क्रीत इति रूपं कर्मणि कर्त्तरि वा । तथाहि–परिक्रीयते स्म परिक्रीत. क. कर्मतापन्नश्चैत्रः क मासम् । क्रोऽर्थ मासे । यद्वा परिक्रीणीते स्म कर्त्तरि क्त कर्मणोऽविवक्षितत्वात् । अथात्र मासामिति कर्म विद्यते तत्कथं कर्त्तरि क्त । उच्यते । मासमित्यत्र 'कालाध्वभाव'–इत्यनेनाधारस्य युगपत् कर्म्मसंज्ञाऽकर्म्मसंज्ञा च । तत्र कर्मसंज्ञायां कर्म्मणि द्वितीया, अकर्मसंज्ञायां तु कर्त्तरि क्त ॥—शक्तार्थ—॥—पृथग्योगाद्वेति निवृत्तमिति । तत्र कश्चित् सामस्त्येन पृथग्योगः कश्चिदेकदेशेन सभवति । अत्र ताव-

दिभिश्च शब्दैर्युक्ताद्गौणान्नाम्नश्चतुर्थी भवति । *पृथग्योगाद्वेति निवृत्तम् । शक्नोति मैत्रश्चैत्राय । प्रभवति मैत्रश्चैत्राय । अलं मल्लो मल्लाय । समर्थो मल्लो मल्लाय । प्रभुर्मल्लो मल्लाय । वषट्, वषडग्नये । वषडिन्द्राय । नमस्, नमोऽर्हद्भ्यः । नमः सिद्धेभ्यः । स्वस्ति, स्वस्ति प्रजाभ्यः । स्वस्ति संघाय । स्वाहा, इन्द्राय स्वाहा । अग्नये स्वाहा । स्वधा, पितृभ्यः स्वधा । स्वस्तिशब्दः क्षेमार्थः । तद्योगे आशिष्यपि *परत्वान्नित्यमेव । स्वस्ति संघाय भूयात् । स्वस्ति प्रजाभ्यो भूयात् । तृतीयया योगाभिधानादिह न भवति । नमो जिनायतनेभ्यः । नात्र जिनानां *नमसा योगः । नमस्यति जिनानित्यत्रापि नमस्यधातुना योगो न नमसा । यद्येवं कथं स्वयंभुवे नमस्कृत्येति । नानेनात्र चतुर्थी किंतु नमस्कृतिलक्षणया क्रिययाभिप्रेयमाणत्वात् संप्रदानत्वे 'चतुर्थी' ( २ । २ । ५३ ) इत्यनेनैव । स्वयंभुवं नमस्कृत्येत्यत्र तु क्रियाभिप्रेयत्वाविवक्षायां द्वितीयैव ॥ ६८ ॥ पञ्चम्यपादाने ॥ २ । २ । ६९ ॥ अपादाने कारके गौणान्नाम्नो यथासंख्यमेकद्विबहौ ङसिभ्यांभ्यस्लक्षणा पञ्चमी विभक्तिर्भवति । ग्रामादागच्छति । पर्वतादवरोहति । गोदाभ्यामागच्छति । यवेभ्यो गां वारयति । कुसूलात्पचति । बलाहकाद्विद्योतते विद्युत् । चौराद्बिभेति ॥ ६९ ॥ *आङावधौ ॥ २ । २ । ७० ॥ अवधिर्मर्यादा । अभिविधिरपि तद्विशेष एवेति तस्यापि ग्रहणम् । अवधौ वर्तमानात् आङा युक्ताद्गौणान्नाम्नः पञ्चमी भवति । आ पाटलिपुत्राद्वृष्टो मेघः । *पाटलिपुत्रमवधीकृत्य तद्व्याप्याव्याप्य वा वृष्ट इत्यर्थः । आ कुमारेभ्यो यशो गतं गौतमस्य ॥ ७० ॥ *पर्यपाभ्यां वर्ज्ये ॥ २ । २ । ७१ ॥ वर्ज्ये वर्जनीयेऽर्थे वर्तमानात्पर्यपाभ्यां युक्तात् गौणान्नाम्नः पञ्चमी भवति । परि पाटलिपुत्राद्वृष्टो मेघः । परि परि पाटलिपुत्राद्वृष्टो देवः । अप पाटलिपुत्राद्वृष्टो देवः । पाटलिपुत्रं

---

देकदेशेन । तथाहि-हितसुखाभ्यामित्यनेन स्वस्तिशब्दस्यैकयोगाकरणात् । एकयोगे च कृतेऽनाशंसाया हितसुखस्वस्तिभिरित्यनेन आशसायां तु तद्भद्रेत्यनेन तादिति पूर्ववस्तुपरामर्शेन क्षेमद्वारेण वा विकल्पः सिद्ध एव तदकरणाद्वेति निवृत्तमित्यर्थः । ननु कथमनेकदेशेन पृथग्योगो न सामस्त्येन । उच्यते । तद्भद्रेत्यत्र व्यभिचारात् । तथाहि-तद्भद्रेत्यत्रार्थपरो निर्देश । अय तु शब्दपर एवेति । 'परिक्रयणे'-इत्यनेन तु एकयोगत्वं न व्याख्येयमर्थस्याऽसंगते । तत्र हि परिक्रयणे वर्त्तमानान्नाम्न इत्युक्तम् । अनेन त्वेकयोगे वषडादिवत् परिक्रयणशब्दस्वरूपपरिग्रहः स्यादिति ॥—परत्वान्नित्यमेवेति । ननु स्पर्द्धे परः समानविषययोश्च स्पर्ध इति समानविषयत्व 'तद्भद्र'-इत्यस्य दर्शयति । तथाहि-स्वस्ति जाल्मायेत्यत्र जाल्मत्वेनाशीरभावात्तत्वाख्यानमिदमिति स्वस्तिचतुर्थ्या अवकाशः । क्षेमं भूयात्संघायेत्यत्र तु क्षेमचतुर्थ्या अवकाशः । स्वस्ति प्रजाभ्य इत्यत्रोभयप्राप्तौ परत्वादाशिष्यपि नित्यं स्वस्तिचतुर्थी भवतीत्यर्थः ॥—नमसेति । यद्यऽस्तु नमसा योग तथापि नमःशब्दस्यार्थवतो ग्रहणादनर्थकयोगे न भवति । अत्र हि नमस्यधातुरर्थवान्न तु तदेकदेशो नमःशब्द इति । अथवा पदान्तरसबन्धानपेक्षणादन्तरङ्गया द्वितीयया कारकविभक्त्या उपपदविभक्तिस्तदपेक्षणाद्बहिरङ्गा चतुर्थी बाध्यते । उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायात् । ननु कारकविभक्तिरपि क्रियापदापेक्षिणीति कथमन्तरङ्गा । नैष दोषः । कारकस्य क्रियामात्रसम्बन्धाव्यभिचारात् स्वरूपान्तर्गतेव सापेक्षा ॥—यद्येवमिति । कारकविभक्त्या द्वितीयया बाध्यमाना कथमत्र चतुर्थीति प्रश्नार्थः । 'स्वयंभुवे नमस्कृत्य ब्रह्मणेऽमिततेजसे ॥ मुनिप्रणीतान् विविधान् मन्त्रान् व्याख्यामि शाश्वतान् ॥ १ ॥—आङाव—॥ प्रवृत्तस्य यत्र निरोध स मर्यादा । मर्यादाभूतमेव यदा क्रियया व्याप्यते तदाऽभिविधिः ॥—पाटलिपुत्रमवधीकृत्येति । एतावानर्थ आङा द्योत्यते ॥—पर्यपा—॥ वर्ज्यवर्जकसंबन्ध पर्यपाभ्यां द्योत्यत इति 'वाक्यस्य परिवर्जने' इत्यनेन परिपरीत्यत्र वा द्वित्वम् ॥—अपशब्दो मैत्रस्य । अपगत शब्दात् । तत्पुरुषस्य पूर्वपदप्रधानत्वात् पूर्वपदेन

वर्जयित्वेत्यर्थः । वर्ज्य इति किम् । ^अपशब्दो मैत्रस्य ॥ ७१ ॥ *यतः प्रतिनिधिप्रतिदाने प्रतिना ॥ २ । २ । ७२ ॥ *प्रतिनिधीयत इति प्रतिनिधिर्मुख्यस्य सदृशोऽर्थः । ^प्रतिदानं गृहीतस्य प्रत्यर्पणम् विशोधनमिति यावत् । प्रतिना योगे यतः प्रतिनिधिर्यतश्च प्रतिदानम् तद्वाचिनो गौणान्नाम्नः पञ्चमी भवति । ^प्रद्युम्नो वासुदेवात् प्रति । अभयकुमारः ^श्रेणिकतः प्रति । सदृश इत्यर्थः । ^तिलेभ्यः प्रति माषानस्मै प्रयच्छति । तिलान् गृहीत्वा माषान् ददातीत्यर्थः । एवं सर्पिषोऽस्मै तैलं ^प्रति सिञ्चति । सर्पिषोऽस्मै तैलं प्रति सिक्त्वा व्रजति । यत इति किम् । तिलेभ्यः प्रति माषान् प्रयच्छति इत्यत्र माषशब्दान्मा भूत् । प्रतिनिधिप्रतिदान इति किम् । वृक्षं प्रति विद्योतते विद्युत् ॥ ७२ ॥ ^आख्यातर्युपयोगे ॥ २ । २ । ७३ ॥ आख्याता प्रतिपादयिता तत्र वर्तमानाद्गौणान्नाम्नः पञ्चमी भवति उपयोगे *नियमपूर्वकविद्याग्रहणविषये । उपाध्यायादधीते । आचार्यादागमयति । श्रावकात् शृणोति । ^प्रत्येकबुद्धादधिगच्छति । आख्यातरीति किम् । उपाध्यायात् शास्त्रमागमयति । अत्र शास्त्रान्माभूत् । उपपयोग इति किम् । नटस्य शृणोति । उपयोगविवक्षायां त्वत्रापि भवति । नटाद्वारतं शृणोति । अपादानत्वेनैव सिद्धे उपयोग एव यथा स्यादित्येवमर्थं वचनम् ॥ ७३ ॥ *गम्ययपः कर्माधारे ॥ २ । २ । ७४ ॥ गम्यस्याप्रयुज्यमानस्य यपो यबन्तस्य यत्कर्माधारश्च तत्र वर्तमानाद्गौणान्नाम्नः पञ्चमी भवति । द्वितीयासप्तम्योरपवादः । प्रासादात्प्रेक्षते । आसनात्प्रेक्षते । प्रासादमारुह्यासने चोपविश्य प्रेक्षते इत्यर्थः । गम्यग्रहणं किम् । प्रासादमारुह्य शेते । आसने उपविश्य भुङ्क्ते । न ह्यत्र यबन्तस्याप्रयोगे तदर्थः प्रतीयते । यब्ग्रहणं किम् । प्रविश पिण्डीम् । प्रविश तर्पणम् । वृक्षे शाखा । ग्रामे चैत्रः । अत्र हि भक्षयकुरुआस्तेवसतीनां गम्यता न तु यपः। ननु यथा कुसूलादादाय पचति कुसूलात्पचतीत्यत्रादानाङ्गे पाके पचेर्वर्तनादुपात्तविषयमेतदपादानमिति पञ्चमी भवति *एवमि-

---

अप इत्यनेन सह मैत्रशब्दस्य योगोऽस्तीति न वर्ज्य इति व्यावृत्तेर्वैङ्गविकलता । अत्र मैत्रशब्दान्माभूत् ॥—यतः प्रति—॥ यस्मात् ‘ किमद्यादि ’-इत्यऽपादाने तस् ‘ आ द्वेर ’ । यदा यस्य यत, तदा आद्यादिभ्य ‘ पृषोदर ’-इति दलोप । प्रतिनिधिप्रतिदानशब्दात् प्रथमा औ ङीयते ॥—प्रतिनिधीयत इति । प्रतति सन् मुख्यस्थाने निधीयते, आरोप्यते, सदृश क्रियते इति तात्पर्यार्थः ॥—प्रतिदानमिति । तुल्यजातीयेनाऽतुल्यजातीयेन वा विशोधनमिति शेप ॥—प्रद्युम्नो वासुदेवात् प्रति । द्युभिर्मीयते ‘ द्युसुनिभ्यो माडो डित् न ’ । प्रकृष्ट द्युम्न पराक्रमो यस्य प्रद्युम्न' । सदृश' क्रियते केन सह वासुदेवेनेति । ‘ तुल्यार्थै. ’-इति तृतीयापष्ठयोः प्राप्ति' । श्रेणी' कायति प्रसन्नचक्षुपेति ‘ श्रेणिकः ’ । तस्मात् ‘ प्रतिना पञ्चम्या ’ इति तसु ॥—तिलेभ्यः प्रतीति । प्रयच्छति प्रददाति, कान् माषान्, कथभूतान् प्रति प्रतिदानभूतान्, केषां तिलानामिति प्रतिशब्दात् द्वितीयैकवचनम् ॥—प्रति सिञ्चति । नात्र सिच प्रतिना योगोऽपि तु सर्पिष इति ‘ स्थासेनि ’-इत्यनेनोपसर्गत्वाभावाश्च षत्वम् ॥—आख्यातर्यु—॥—नियमपूर्वकेति । नियमो विद्याग्रहणार्थं गुरुशुश्रूषादिक शिष्यवृत्तमाख्यायते न तूपयोगमात्रं यत उपयोगमात्र नटादपि भवत्यतस्तस्मादपि स्यात्पञ्चमी ॥—श्रावकादिति । श्रावयतीति णकः ॥—प्रत्येकेति । प्रत्येकमिन्द्रध्वजादिक निमित्तमाश्रित्य बुद्धः प्रत्येकबुद्ध ॥—गम्ययपः—॥—एवमिहापीति । अयमर्थ' । प्रासादान्नि सृत्यापक्रम्य चक्षू रश्मिद्वारा प्रेक्षते । प्रासादान्निस्सरता चक्षुषा कृत्वा देवदत्त' प्रेक्षते वा ॥—तत्ततोऽपक्रामतीति । अयमर्थ –तत प्रासादादेस्तत् चक्षुरादि अपैति निस्सर-

ततो
हापि अपक्रमणाङ्गे दर्शने *दृशेर्वर्तनाद्भविष्यति। तथाहि—*तस्ततोऽपक्रामति *अनपक्रामद्धि न विषयं गृह्णीयात्। सत्यम्। किं तु आरुह्य उपविश्येति यबन्तार्थोऽपि गम्यते। ततो
यथा यवन्ते प्रयुज्यमाने कर्माधिकरणयोर्द्वितीयासप्तम्यौ भवतस्तद्वदप्रयुज्यमानेऽपि तदर्थप्रतीतेस्ते प्रसज्येयातामिति सूत्रमारभ्यते ॥ ७४ ॥ *प्रभृत्यन्यार्थदिक्शब्दबहि-
रारादितरैः ॥ २ । ३ । ७५ ॥ प्रभृत्यर्थैरन्यार्थैर्दिक्शब्दैर्बहिस् आरात् इतर इत्येतैश्च शब्दैर्युक्तात्प्रातिपदिकान्‍ पञ्चमी भवति । प्रभृत्यर्थः, ततः प्रभृति । कार्तिक्याः
प्रभृति, आरभ्य ग्रीष्मात् । ग्रीष्मादारभ्य । अन्यार्थः, अन्यो मैत्रात् । भिन्नश्चैत्रात् । *अर्थान्तरं घटात् । व्यतिरिक्तः पटात् । विलक्षणोऽश्वात् । *पृथगजात् । *हिरुक्
गार्ग्यात् । दिक्शब्द, ग्रामात्पूर्वस्यां दिशि वसति । ग्रामादुत्तरस्यां दिशि वसति । दिशि दृष्टाः शब्दा दिक्शब्दा इति देशकालादिवृत्तिनापि भवति । पूर्व उज्ज-
यिन्या गोनर्दः । उत्तरो विन्ध्यात्पारियात्रः । पूर्वो ग्रीष्माद्वसन्तः । पश्चिमो रामाद्युधिष्ठिरः । एतदर्थमेव च शब्दशब्दोपादानम् । गम्यमानेनापि च दिक्शब्देन भवति।
क्रोशाल्लक्ष्यं विध्यति । परेणेति गम्यते । ' कर्मेणिङ् ' ( ३ । ४ । २ ) परो भवतीति गम्यते । प्राग्ग्रामात् । प्रत्यग्ग्रामात् । उदग्ग्रामात् । प्राचीनं ग्रामादाम्राः । दक्षिणाहि
ग्रामात् । उत्तराहि ग्रामात् । दक्षिणा ग्रामात् । उत्तरा ग्रामात् । *न्यग् मैत्रस्यावास्थित इत्युपसर्जनत्वान्न दिक्शब्दता । बहिस्, बहिर्ग्रामात् । बहिष्पुरात् । आरादित्यव्ययं
दूरसमीपयोर्वाचकम् । तेन तद्योगे वक्ष्यमाणस्य ' आरादर्थैः ' ( २ । ३ । ७८ ) इति विकल्पस्यापवादोऽयम् । आराद्ग्रामात्क्षेत्रम् । आरान्मैत्रात्पीठम् । इतरशब्दो

---

।—दृशेर्वर्त्तनादिति । दृशेरिति कोऽर्थ दृशिसमा-
तीति तस्यापायेऽवधिभूतत्वादपादाने पञ्चमी सिद्धैव ॥—अनपक्रामद्धीति । एतन्नैयायिकमताभिप्रायेणोक्त, ते हि प्राप्यकारीणीन्द्रियाणि मन्यन्ते ॥—दृशेर्वर्त्तनादिति । दृशेरिति कोऽर्थ दृशिसमा-
नार्थस्य ईक्षेरित्यर्थ. ।—प्रभृत्य—॥ दिश' शब्दा दिशि दृष्टा. शब्दा वा तदा ' मयूरव्यसक '-इति दृष्टलोप । दिशि ये वाचकत्वेन दृष्टास्ते इह दिक्शब्दा इति विज्ञायन्ते । न तु दिशि वर्त्त-
माना एव तेन दिशो वाचकत्वेन दृष्टस्य शब्दस्य देशे काले आदिशब्दात् भावे द्रव्ये च वृत्तावपि तद्योगे पञ्चमी ॥—ग्रीष्मादारभ्येति । आरभ्येति क्त्वान्तमपरवान्तमव्यय वा ॥—अर्थान्तरमि-
ति । अर्थमन्तरयति । अथवा एतस्मादर्थादिति वा ॥—पृथगिति । पृथि सूत्रधातु ' रुधिपृथि '-इति विदक् ॥—हिरुक् इति । ह्रियते इति ' द्रागादय ' ॥—पारियात्र इति । पारियातुरयं
' तस्येदम् ' अण् । अथवा परियाता देवता अस्य ' देवता ' अण् । यद्वा परिगता यात्रा यस्यासौ परियात्र' । परियात्र एव पारियात्र पर्वत । पर्वतसमीपदेशोऽपि । प्रागेव ' अदिक्स्त्रियाम् '
इति स्वार्थे ईन । नपुंसकत्व तु सामान्यभावेन । तथा च वर्त्तते कि तत् वर्तृ प्राचीन कि तत् आम्रा इति । यथा प्राक् शब्द केवलोऽपि दिग्वाची तथा स्वार्थिकेनप्रत्ययान्तोऽपि । ततस्त-
दन्तयोगेऽपि पञ्चमीति ॥ अञ्चत्यन्तयोगे यथा प्राग्ग्रामादित्यादौ पञ्चमी तथाऽत्रापीति कश्चिन्मुह्येत् त प्रत्याह—न्यग्मैत्रस्येति । न्यक् उपसर्जन यथा भवति एवमवस्थित इत्यर्थ

---

१ इह तावदेकेषा दर्शनम् अधिष्ठानदेशाज्ज्वालन्ताय निर्गच्छद्बहिरिन्द्रिय विषय परिच्छिनत्ति यथा जलौकसा पूर्वदेशाऽपरित्यागेनाऽपरदेशप्राप्ति तथेन्द्रियाणामपि अधिष्ठानाऽपरित्यागेन विषयप्राप्तिरिति
नाऽनिन्द्रियमधिष्ठानमिति। ततोऽपक्रान्त्या च स्पष्टोऽवधिभाव' प्रासादादे । येषा तु क्षणिकानीन्द्रियाणि प्राप्यकारीणि वेति दर्शन तेषामपीन्द्रियक्षण एकस्मिन् विषये गच्छति अन्य इन्द्रियक्षणोऽधिष्ठान-
देशे प्रादुर्भवति इत्यन्योन्यप्रादुर्भावान्न निरिन्द्रियाधिष्ठानदोष इति ततोऽपक्रमेण द्योतितमवधित्वम् । येषा पुनरप्राप्यकारीणीन्द्रियाणि तेषामपि प्रेक्षणक्रियायास्ततोऽभावात् प्रासादादेरनुपहतोऽवधिभाव ।

द्वयोरुपलक्षितयोरन्यतरवचनस्तेनान्यार्थोऽभिधीयते । इतरश्चैत्रात् । तस्य द्वितीयो मैत्रादिरित्यर्थः ॥ अथ जिनदत्तादन्योऽयं मैत्रस्य, जिनदत्तादितरोऽयं चैत्रस्य, 'छात्राणां पूर्वमामन्त्रयस्व, *कायस्य पूर्वमित्यादौ मैत्रचैत्रच्छात्रकायशब्देभ्यः कथं न भवति । उच्यते । प्रत्यासत्तेर्यस्यैवान्यत्वादिधर्मनिमित्तोऽन्यशब्दादिना योगस्तत एव जिनदत्तादेः पञ्चमी भवति न मैत्रादेरिति ॥ ७५ ॥ ऋणाद्धेतोः ॥ २ । २ । ७६ ॥ फलसाधनयोग्यः पदार्थो हेतुः । हेतुभूतं यदृणं तद्वाचिनो गौणान्नाम्नः पञ्चमी भवति । तृतीयापवादः । शताद्बद्धः । सहस्राद्बद्धः । हेतोरिति किम् । शतेन बद्धः । शतेन वन्धितः । शतेन चैत्रेण बन्धितः । कर्तरि प्रयोज्ये प्रयोजके च कर्तृलक्षणा तृतीया भवति । हेतुर्हि फलसाधनयोग्यः पदार्थः कर्त्रादिभ्योऽन्य उच्यते इति कथं कर्तुर्हेतुत्वम् ॥ ७६ ॥ 'गुणादस्त्रियां नवा ॥ ३ । २ । ७७ ॥ अस्त्रियां वर्तमानाद्धेतुभूतगुणवाचिनो गौणान्नाम्नः पञ्चमी वा भवति । जाड्याद्बद्धः । जाड्येन बद्धः । पारिख्यात्यान्मुक्तः । पारिख्यात्येन मुक्तः । मोहाद्बद्धः । मोहेन बद्धः । ज्ञानान्मुक्तः । ज्ञानेन मुक्तः । गुणादिति किम् । धनेन कुलम् । हेतोरित्येव । जाड्यस्यैतद्रूपम् । अस्त्रियामिति किम् । बुद्ध्या मुक्तः । प्रज्ञया मुक्तः । विद्यया यशः । *अस्त्यत्राग्निर्धूमात् नास्तीह घटोऽनुपलब्धेः सर्वमनेकान्तात्मकम् 'सत्वान्यथानुपपत्तेरित्यादौ नाग्न्यादेर्धूमादिर्हेतुः । कस्य तर्हि तज्ज्ञानस्य । कथं तर्हि पञ्चमी 'गम्ययपः कर्माधारे, ( २ । २ । ७४ ) इति भविष्यति । धूमादिकमुपलभ्याग्न्यादिः प्रतिपत्तव्य इति ह्यत्रार्थः । ज्ञानहेतुत्वविवक्षायां हेतुत्वलक्षणा तृतीया भवति । धूमेनाग्निः । अनुपलब्ध्या घटाभावः । सत्त्वान्यथानुपपत्त्या सर्वमनेकान्तात्मकं प्रतिपत्तव्यमिति ॥ ७७ ॥ *आराद‌र्थैः ॥ २ । २ । ७८ ॥ आराद्दूरान्तिकयोः । तन्त्रेणोभयग्रहणम् । दूरार्थैरन्तिकार्थैश्च शब्दैर्युक्ताद्गौणान्नाम्नः पञ्चमी वा भवति । दूरं ग्रामात् । दूरं ग्रामस्य । विप्रकृष्टं ग्रामात् । विप्रकृष्टं ग्रामस्य । अन्तिकं ग्रामात् । अन्तिकं ग्रामस्य । अभ्याशं ग्रामात् । अभ्याशं ग्रामस्य । संनिकृष्टं ग्रामात् । संनिकृष्टं ग्रामस्य । आराच्छब्दयोगे तु प्रभृत्यादिसूत्रेण नित्यमेव पञ्चमी । अथ दूरं हितं ग्रामात्, दूरं हितं ग्रामस्य भूयादित्यादौ हितादियोगे पञ्चम्यभावपक्षे 'हितसुखाभ्याम् ( २ । २ । ६४ ) इति चतुर्थी कस्मान्न भवति । उच्यते । हितसुखादियोगे सा चतुर्थी । इह तु 'दूरान्तिकादिनैव योगो न तद्विशेषणेन 'हितादिनेति न भवति । यदा तु 'हितादिना 'विशेष्यतया योगस्तदा चतुर्थी भवत्येव । अन्ये त्वसत्त्ववचनैरेवाराद‌र्थैरिच्छन्ति ॥ ७८ ॥ 'स्तोकाल्पकृच्छ्रकतिपयादसत्वे करणे ॥ २ । २ । ७९ ॥

॥—अन्यार्थोऽभिधीयते इति । अयमर्थः अन्य इति प्रकृतिविलक्षणोऽर्थ उच्यते इतर इति च दृश्यमानप्रतियोगीत्यर्थ ॥—छात्राणामिति । छात्राणामवयविनां योऽवयवश्छात्रस्तस्मात्पूर्वं छात्रमामन्त्रयस्वेति पूर्वत्व छात्रान्तरापेक्ष न च्छात्राणामिति समुदायापेक्षम् । समुदायस्य हि एकदेश. स. न तस्य समुदायापेक्षया पूर्वत्वम् । तत्र पूर्वत्वेन योगश्छात्रान्तरस्य समुदायस्य त्वेकदेशत्वेनेति ॥—कायस्य पूर्वमिति । कायस्यावयविनो यद्भागान्तरं किं विशिष्ट पूर्वं कस्याः सकाशान्नाभेः । कायस्य सबन्धि यदवयवान्तर पूर्वं तस्य नाभिरूपेणाऽवयवान्तरेण सह 'सबन्ध' कायस्य त्वऽवयवत्वेन ॥—गुणाद्—॥ जडस्य भाव दृढादित्वात् ट्यण् । परिख्यातस्य भावः 'पतिराजान्त '-इति ट्यण् ॥—अस्त्यत्राग्निर्धूमादित्युदाहरणत्रय यथाक्रम शैवबौद्धजैनमतेन ॥—सत्त्वान्यथेति '। सत्त्वमुत्पादव्ययध्रौव्ययुक्तत्वम् । तस्य सत्त्वस्याऽन्यथाऽनेकान्तात्मकत्वमन्तरेणाऽनुपपत्तेरघटनात् ॥—आराद‌र्थैः ॥—दूरान्तिकादिनैव योग इति । कथ वर्तते किं तत् कर्तृ दूर कस्य ग्रामस्य किं भूत दूर हितमिति दूरशब्देनैव ग्रामस्य सबन्धो विवक्षितो न तु हितशब्देन ॥—असत्ववचनैरिति । धर्म्ममात्रवृत्तिभि '। कारकशेषत्वात् षष्ठीप्राप्तौ वचनम् ॥—स्तोकाल्प—॥ यत स्तोकत्वादेर्नि-

यतो द्रव्ये शब्दप्रवृत्तिः स पर्यायो गुणोऽसत्त्वम् । *तेनैव वा रूपेणाभिधीयमानं द्रव्यादि । तस्मिन् करणे वर्तमानेभ्यः स्तोकादिभ्यः पञ्चमी वा भवति । स्तोकान्मुक्तः । स्तोकेन मुक्तः । अल्पान्मुक्तः । अल्पेन मुक्तः । कृच्छ्रान्मुक्तः । कृच्छ्रेण मुक्तः । कतिपयान्मुक्तः । कतिपयेन मुक्तः । असत्वे इति किम् । स्तोकेन विषेण हतः । अल्पेन मधुना मत्तः । कृच्छ्रेण भोजनेन निर्विण्णः । विषादि द्रव्यसामानाधिकरण्याद् अत्र सत्ववृत्तिता । करण इति किम् । क्रियाविशेषणे मा भूत् । स्तोकं चलति । इह च स्तोकादीनामसत्त्ववाचित्वात् *द्वित्वबहुत्वासंभवे एकवचनमेव ॥ *स्तोकस्य चाभिनिर्वृत्तेरनिर्वृत्तेश्च तस्य वा ॥ प्रसिद्धिं करणत्वस्य स्तोकादीनां प्रचक्षते ॥ १ ॥ ७९ ॥ *अज्ञाने ज्ञः षष्ठी ॥ २ । २ । ८० ॥ अज्ञानेऽर्थे वर्तमानस्य जानातेः संबन्धिनि करणे वर्तमानाद्गौणान्नाम्न एकद्विबहौ यथासंख्यं ङस्ओसाम्लक्षणा षष्ठी विभक्तिर्भवति । *वेति निवृत्तम् । *सर्पिषो जानीते । सर्पिषा करणभूतेन प्रवर्तत इत्यर्थः । प्रवृत्तिरत्र जानातेरर्थः । एवं सर्पिषोर्जानीते । *सर्पिषां जानीते । अथ वा सर्पिषि रक्तो विरक्तो वा चित्तभ्रान्त्या सर्वमेवोदकादि सर्पीरूपेण प्रतिपद्यत इति मिथ्याज्ञानवचनोऽत्र जानातिः । मिथ्याज्ञानं चाज्ञानमेव भवति । अज्ञान इति किम् । स्वरेण पुत्रं जानाति । करण इत्येव । तैलं सर्पिषो जानाति । तैलं सर्पीरूपेण प्रतिपद्यत इत्यर्थः । अत्र तैलात्कर्मणो मा भूत् । सर्पिषस्तु करणत्वाद्भवत्येव । तृतीयापवादो योगः ॥ ८० ॥ *शेषे ॥ २ । २ । ८१ ॥ कर्मादिभ्योऽन्यः *क्रियाकारकपूर्वकः *कर्माद्यविवक्षालक्षणोऽश्रूयमाणक्रियः *श्रूयमाणक्रियो वास्येदंभावरूपः स्वस्वामिभावादिः संबन्धविशेषः शेषः । तत्र गौणान्नाम्नः षष्ठी भवति । राज्ञः पुरुषः । उपगोरपत्यम् । पशोः पादः । वृक्षस्य शाखा । क्षीरस्य विका-

मित्तात् द्रव्ये विशेष्ये स्तोकादिशब्दप्रवृत्ति स गुणोऽसत्वं शब्दस्य प्रवृत्तिनिमित्तमित्यर्थः ॥—तेनैव वेति । असत्त्वरूपेण । अयमर्थस्तिरोहितधनादि विशेष्य स्तोकादिरूपेणैव सामान्यात्मनाऽभिधीयमान धनादिरूपव्यावृत्त स्तोकादिरूपापन्न द्रव्य गुण क्रिया वा यदा प्रतीयते तदा द्रव्याद्यसत्वमिति ॥—असत्ववाचित्वादिति । द्रव्यस्यैव विशेषसख्यायोगित्वादिति शेष ॥—द्वित्वबहुत्वासंभवे इति । एकत्वनिबन्धनैकवचनस्यापि असभवे औत्सर्गिकमेकवचनम् । स्तोकाल्पादिशब्दाना स्तोकत्वाद्यर्थाभिधायकत्वेनासत्त्ववाचित्वात् क्रिया प्रति साधकतमत्वाभावात् करणत्वाभावे कथमनेन पञ्चमीत्याशङ्कायाममीषां पूर्वाचार्यप्रसिद्ध्या करणत्वमाह । यद्वा स्तोकेन राहुणा मुक्तः शशीत्यादौ मोचनामोचनलक्षण क्रियाद्वय विद्यते । यतः स्तोकेन मुक्त इति । कोऽर्थः किंचिन्मुक्तः किंचिद्मुक्त इत्यर्थः । ततश्च कस्या क्रियाया अपेक्षया अत्र करणसंज्ञेत्याह—स्तोकस्येत्यादि । स्तोकस्याऽभिनिर्वृत्ति निष्पत्ति स्तोकस्य चाऽनिर्वृत्तिमनिष्पत्तिमाश्रित्य स्तोकादीनां करणत्वप्रसिद्धिमाचक्षते पूर्वाचार्या ॥—अज्ञाने—॥—वेति निवृत्तमिति । भिन्नविभक्तिविधानादिति शेष ॥—सर्पिषो जानीते । अत्र 'ज्ञ'-इत्यात्मनेपदम् । अत्र करणस्य सबन्धिरूपविवक्षया सर्पिष इद ज्ञान नान्यस्येति षष्ठी सिध्यतीति किमर्थोऽय योग इत्याह—तृतीयापवादो योग इति । अयमर्थ सिध्यति षष्ठी किं तु करणविवक्षाया तृतीया माभूदित्यय योगः ॥—सर्पिषामिति आजगव्यमाहिषाणा घृतानामित्यर्थ ॥—शेषे ॥ सरस्वतीकण्ठाभरणे कर्म्मादिकारकाणि इन्द्रचान्द्राभ्यां करणप्राधान्य श्रुतपालेन कलापके चाऽपादानस्य प्राधान्य शकटाभिप्रायेण स्वमते च कर्तुः प्राधान्यम् ॥—क्रियाकारकपूर्वक इति । क्रिया च कारक च क्रियाकारके ते पूर्वे यस्य स तथा यथा राजपुरुष । राजा कर्त्ता पुरुष बिभर्त्ति अतो राजपुरुष इत्युच्यते ॥—कर्म्माद्यविवक्षालक्षण इति । कर्मादिभ्योऽन्य इति तु विशेषेभ्योऽन्यत्व विवक्षितु न तु सामान्यादनाश्रितविशेषात् कारकादपि । अश्रूयमाणक्रियो यथा राज्ञ पुरुष इत्यादि । श्रूयमाणक्रियो यथा—न मापाणामश्नीयादित्यादि । अस्येदंभावरूप इति । अस्येदंशब्दस्य यो भाव प्रवृत्तिनिमित्तं स भावो रूपं यस्य स. सबन्धविशेष इति । अत्र कारकसबन्धाद् भिद्यमान सबन्ध. सबन्धविशेष उच्यते । यावता संबन्ध इत्युक्तेऽपि

रः। गवां समूहः। कुम्भस्य समीपम्। पृथिव्याः स्वामीति। न माषाणामश्नीयात्। सुभाषितस्य शिक्षते। न ते सुखस्य जानते। न तस्य सायमश्नीयात्। अन्नस्य नो देहि। अक्षाणां दीव्यति। व्रतः पृष्ठं ददाति। नटस्य शृणोति। वृक्षस्य पर्णं पतति। महतां विभाषते ॥ कथं पुनः कर्मादीनां सतामप्यविवक्षा। यथा अनुदरा कन्या अलोमिका एडकेति। गौणादित्येव। राज्ञः पुरुषः। अत्र संबन्धस्य द्विष्ठत्वेऽपि प्रधानात्पुरुषान्न भवति। प्राधान्यं चास्याख्यातपदसामानाधिकरण्यम्। तेन ततः प्रथमैव भवति। यदा तु पुरुषो राजानं प्रति गुणत्वं प्रतिपद्यते। तदा पुरुषस्य राजेति भवत्येव। कथं राज्ञः पुरुषस्य कम्बल इति। राजापेक्षया पुरुषस्य प्राधान्येऽपि कम्बलापेक्षया गौणत्वात् भवति। *प्रथमापवादो योगः ॥ ८१ ॥ रिरिष्टात्स्तादस्तादसतसाता ॥ २। २। ८२ ॥ रिरिष्टात्स्तात्अस्तात्अस्अतस्आत्-प्रत्यन्तैर्युक्ताद्गौणान्नाम्नः षष्ठी विभक्तिर्भवति। रि, उपरि ग्रामस्य। रिष्टात्, उपरिष्टात् ग्रामस्य। स्तात्, *परस्ताद्ग्रामस्य। अवरस्ताद्ग्रामस्य। अस्तात्, पुरस्तात् ग्रामस्य। अवस्ताद्ग्रामस्य। अधस्तात् ग्रामस्य। अस्, पुरो ग्रामस्य। अवो ग्रामस्य। अधो ग्रामस्य। अतस्, दक्षिणतो ग्रामस्य। उत्तरतो ग्रामस्य। परतो ग्रामस्य। अवरतो ग्रामस्य। आत्, अधराद्ग्रामस्य। दक्षिणात् ग्रामस्य। उत्तरात् ग्रामस्य।। पश्चात् ग्रामस्य। *दक्षिणपश्चात् ग्रामस्य। *पञ्चम्यपवादो योगः ॥ ८२ ॥ *कर्मणि कृतः ॥ २। २। ८३ ॥ कृतः कृदन्तस्य संबन्धिनि कर्मणि गौणान्नाम्नः षष्ठी भवति। *द्वितीयापवादः। अपां स्रष्टा। पुरां भेत्ता। वर्षशतस्य पूरकः। *पुत्रपौत्राणां दर्शकः। यवानां लावकः। ओदनस्य भोजकः। विश्वस्य ज्ञाता। तीर्थस्य कर्ता। उदकस्य *पिवः। ग्रामस्य गमनम्। गवां दोहः। कर्मणीति किम्। शस्त्रेण भेत्ता। क्रियाविशेषणस्यापि कर्मत्वाभावान्न भवति। साधु पक्ता। स्तोकं पक्ता। *कृत इति किम्। कटं करोति। *कृतपूर्वी कटम्। भुक्तपूर्वी ओदनम्। त्यादितद्धितयोः

---

सिध्येत् विशेषज्ञापनायोक्तम्। राज्ञः पुरुष इत्यादिषु यथाक्रम संबन्धः कथ्यते स्वस्वामिभावसबन्धः, जन्यजनकसं०, अवयवावयविस०, आधाराधेयस०, प्रकृतिविकारभाव सबन्धः, समूहसमूहिभावसं०, समीपसमीपिभावसं०, पाल्यपालकभावस०, आश्याशनभावस०, शिक्षणीयशिक्षणभावस०, ज्ञानज्ञेयभावस०, आश्याशनभावसं०, भक्ष्यभक्षणभावसं०, देवनद्यूतभावसं०, दानदानिविषयस०, श्रवणश्रवणावधिभावसं०, पतनपतनावधिभावसं०, विभाष्यविभाषणभावसबन्धः. इत्यादि. ॥—प्रथमापवाद इति। एकद्विबहाविति सख्यामात्रमुपादाय नाम्न प्रधानादप्रधानाच्च सामान्येन प्रथमा विधीयते तत्राऽय षष्ठीविधिर्गौणादिति विशेषमुपादाय प्रवर्त्तमानस्तदपवादो भवति ॥—रिरिष्टा—॥—परस्तादिति। पर परा वा प्रकृति.। 'परावरात् स्तात्' 'सर्वादयोऽस्यादौ' इति पुभावः ॥—दक्षिणपश्चादिति। दक्षिणा च साऽपरा च दक्षिणापरा तस्यां वसति। रिप्रभृतय प्रत्यया. स्वार्थिका दिक्शब्देभ्यो विधीयन्तेऽतस्तदन्ता अपि दिक्शब्दा एव इति 'शेषे' इत्यस्यापवाद 'प्रभृत्यन्यार्थ'-इति पञ्चमी विधीयते। अत एव दक्षिणा ग्रामाद्रमणीयं दक्षिणाहि ग्रामाद्रमणीयमिति 'आही दूरे' इति प्रत्ययद्वययोगे षष्ठी न लभ्यते इत्याह—पञ्चम्यपवाद इति ॥—कर्म्मणि कृतः ॥—द्वितीयापवाद इति। 'कर्म्मणि' इत्यनेन प्राप्तायाः ॥—पुत्रपौत्राणामिति। पुत्रस्यापत्यमनन्तरं 'पुनर्भूपुत्र'-इत्यञ्। पुत्रस्य पौत्रा' पुत्रसहिता पौत्रा वा इति विधेयम्। द्वन्द्वे तु 'गवाश्वादिः' इति समाहृतिः स्यात्। पिवतीति पिबः। 'घ्राध्मा'-इति श. ॥—कृत इति किमिति। अयमर्थ ननु कर्म कारक तच्च क्रियामन्तरेण न संभवति। यत क्रियायाः कारकं कारकं भवति। क्रिया च प्रत्ययसहितं धातुमाक्षिपति। धातोश्च द्वये एव प्रत्यया विधीयन्ते त्यादय. कृतश्च। तत्र 'त पचति' इत्यादिज्ञापकात् त्यादिप्रयोगे द्वितीयाविधानात्

कर्मणि माभूत् ।*कथम् अर्थस्य त्यागी, सुखस्य भोगी, विषयाणां जयी, वीराणां प्रसविनीति । अत्र ताच्छीलिकयोर्घिनणिनोः कर्मेति भवति ॥ ८३ ॥*द्विषो वातृशः ॥ २ । २ । ८४ ॥ अतृश्प्रत्ययान्तस्य द्विषः कर्मणि गौणान्नाम्नः षष्ठी वा भवति । चौरस्य द्विषन् । चौरं द्विषन् । तृन्नादिसूत्रेण प्रतिषेधे प्राप्ते *विकल्पोऽयम् ॥ ८४ ॥*वैकत्र द्वयोः ॥ २ । २ । ८५ ॥ द्विकर्मकेषु धातुषु*द्वयोः कर्मणोरेकत्रैकतरस्मिन् वा षष्ठी भवति ।*अन्यत्र पूर्वेण नित्यमेव ।*अजाया नेता स्रुघ्नम् । अजाया नेता स्रुघ्नस्य । अथवा, अजां नेता स्रुघ्नस्य । अजाया नेता स्रुघ्नस्य । पयसो दोहको गाम् । पयसो दोहको गोः । यदि वा, गोर्दोहकः पयः । गोर्दोहकः पयसः । अन्ये तु नीवह्यादीनां द्विकर्मकाणां गौणे कर्मणि, दुहादीनां तु प्रधाने विकल्पमिच्छन्ति । उभयत्रापि नित्यमेवेत्यन्ये ॥ ८५ ॥*कर्तरि ॥ २ । २ । ८६ ॥ कृदन्तस्य कर्तरि गौणान्नाम्नः षष्ठी भवति । तृतीयापवादः । भवत आसिका । भवतः शायिका । भवतः स्वापः । भवत *आसना । भवतोऽग्रगामिका । कर्तरीति किम् । गृहे शायिका । कृत इत्येव । त्वया शय्यते ॥ ८६ ॥*द्विहेतोरस्त्र्यणकस्य वा ॥ २ । । ८७ ॥ स्त्र्यधिकारविहिताभ्यामकारणकाभ्यामन्यस्य द्वयोः कर्तृकर्मषष्ठ्योः प्राप्तिहेतोः कृतः कर्तरि षष्ठी वा भवति ।*नित्यं प्राप्ते विभाषेयम् । विचित्रा सूत्रस्य कृतिराचार्यस्याचार्येण वा । साधु*खल्विदं शब्दानामनुशासनमाचार्यस्याचार्येण वा । साध्वी संग्रहण्याः कृतिः क्षमाश्रमणस्य क्षमाश्रमणेन वा । आश्चर्यो गवां दोहोऽगोपालकस्य*अगोपालकेन वा । साधु खलु पयसः पानं मैत्रस्य मैत्रेण वा । साध्वी

---

कृत्प्रयोग एव षष्ठी भविष्यति किं कृद्ग्रहणेनेति । नैवम् । कृद्ग्रहणमन्तरेण तद्धितप्रयोगेऽपि यत्कर्म्म तत्रापि षष्ठी स्यात्तन्निषेधार्थं कृद्ग्रहणम् ॥—कृतपूर्वी कटमिति । वर्त्तते क कर्ता कृतपूर्वी पूर्व कृतवानित्यर्थः । क कृतपूर्वी कटम् । तत्र यथा चित्रगुरित्यादौ बहुव्रीहिणा स्वामिसामान्येऽभिहिते विशेषाभिधानाय चैत्रादि प्रयुज्यते तथाऽत्रापि सामान्यकर्म्मण्यभिहिते विशिष्टकर्म्माभिधानाय कटादे केनाऽनभिहितस्य द्वितीयान्तस्य प्रयोग । सामान्येन व्यवहारासभवाद्विशेषेणाऽवश्य निर्वाह कार्य ॥—कथमिति । त्यागोऽस्यास्ति इति इनि तद्धितप्रत्ययेऽर्थस्येत्यादि कर्मणि षष्ठी न प्राप्नोतीत्याशङ्कार्थ । 'युजभुज'–इति घिनण् । 'जीणृदक्षि'–इति 'प्रात्सूजोरिन्' इति यथाक्रम त्यागीत्यादिषु प्रत्यया ॥—द्विषो वातृशः ॥—विकल्पोयमिति । अन्ये तु सबन्धविवक्षायामेवेय षष्ठीति प्रतियन्त सूत्र नारभन्ते । एव 'वा क्लीबे' इत्यपि ॥—वैकत्र—॥—द्वयोः कर्मणोरिति । ननु कृत इत्यस्यैव षष्ठ्यन्तस्य द्वयोरिति कस्मान्न विशेषण, तत्रापि हि द्वयो कृदन्तयोरेक यत्कर्म तत्र षष्ठी वा भवतीत्यय सूत्रार्थो घटते, तथा च अपा स्रष्टा भेत्ता च मेत्र इत्यादावेव विकल्प स्यादिति । नैवम् । एव सति कर्म्मणि कृतो द्वयोश्च वेत्यकमेव योग कुर्यात् । एव च सति एकस्य कृत कर्म्मणि नित्य षष्ठी भवति द्वयोस्तु कृदन्तयोर्वा भवतीति सूत्रार्थे समस्तार्थस्य सिद्धत्वात् । तस्मात्पृथग्योगात्कर्मण एव विशेषण न कृत इत्यस्य ॥—अन्यत्रेति । यत 'कर्म्मणि कृत.' इत्यनेन द्वयोरपि कर्म्मणो. षष्ठी प्राप्ता पक्षेऽनेन निषिध्यते ॥—अजाया नेता स्रुघ्नमिति । एकत्रेति सामान्येन निर्देशात् प्रधानाप्रधानकर्म्मणोरविशेषेण ग्रहणमित्युभयत्रैवोदाहरति । ननु कर्म्मणीत्यधिकृतत्वादेकशब्दस्य च द्वितीयसव्यपेक्षत्वात् एकत्रेत्युक्तेऽपि द्वयो. कर्मणोरेकतरस्मिन्निति गम्यत एव किं द्वयोरित्यनेन । नैवम् । एव सति 'प्रधानाप्रधानसंनिधौ प्रधाने कार्यसप्रत्यय' इति न्यायात् प्रधान एव कर्मणि स्यात् । यद्वा गौणादित्यधिकारात् कर्म्मापेक्षयापि गुणकर्मण्येव स्यादिति द्वयोरपि प्रधानाप्रधानकर्म्मणो पर्यायेण षष्ठीविकल्पार्थं द्वयोरित्युपादानमित्यदोष' ॥—कर्त्तरि ॥ आसितुं पर्याय 'पर्याय'–इति णक. आसिका । आसनम् आसना 'णिवेत्ति'–इत्यन ॥—द्विहेतो—॥—नित्य प्राप्ते इति । 'कर्त्तरि' इत्यनेन ॥—खल्विदमिति । खल संचये च खलतीति 'भृमृतॄ'–इति बहुवचनादु । संगृह्यन्ते स्तोकशब्दैर्बहवोऽर्था अस्यामिति । 'ऋदृसृ'–इत्यणिः ॥—अगोपालकेनेति । पालयतीति णक । गवा पालक

खल्वनेकान्तजयपताकायाः कृतिराचार्यहरिभद्रस्याचार्यहरिभद्रेण वा । गम्यमानेऽपि कर्मणि भवति । अन्तर्द्धौ येनादर्शनमिच्छति यस्यादर्शनमिच्छतीति वा । अत्रात्मन
इति कर्म गम्यते । द्विहेतोरित्येकवचननिर्देशः किम् । आश्चर्यमोदनस्य नाम पाकोऽतिथीनां च प्रादुर्भाव इति । भिन्नकृतोः कर्तृकर्मषष्ठीहेतुत्वमत्रेति न भवति । अव्यय-
णकस्येति किम् । चिकीर्षा मैत्रस्य काव्यानाम् । भेदिका चैत्रस्य मैत्रस्य काष्ठानाम् । भावे णकः । कर्तरीत्येव । साधु खल्विदं शब्दानामनुशासनमाचार्यस्याचार्येण वेत्यत्र
शब्दशब्दात्कर्मणि विकल्पो न भवति । अन्ये तु घञल्प्रत्यययोर्द्विहेत्वोः कर्मण्येव षष्ठीमिच्छन्ति न कर्तरि । आश्चर्यो गवां दोहोऽगोपालकेन । आश्चर्यं इन्द्रियाणां जयो
यूना ॥ ८७ ॥ कृत्यस्य वा ॥ २ । २ । ८८ ॥ कृत्यस्य कर्तरि गौणान्नाम्नः षष्ठी वा भवति । भवतः कार्यः कटः । भवता कार्यः कटः । कर्तव्यः, करणीयः, देयः,
कृत्यो वा कटः । कर्तरीत्येव । गेयो माणवको गाथानाम् । प्रवचनीयो गुरुर्द्वादशाङ्गस्य ॥ ८८ ॥ नोभयोर्हेतोः ॥ २ । २ । ८९ ॥ उभयोः कर्तृकर्मणोः षष्ठीहेतोः
कृत्यस्य संबन्धिनोरुभयोरेव षष्ठी न भवति । नेतव्या ग्राममजा मैत्रेण । कृष्टव्या ग्रामं शाखा चैत्रेण । जेतव्यः शतं मैत्रश्चैत्रेण । उभयोर्हेतोरिति किम् । एकैकहेतोर्माभूत् ।
उपस्थानीयः पुत्रः पितुः । उपस्थानीयः पिता पुत्रस्य ॥ ८९ ॥ तृन्नुदन्ताव्ययक्वस्वानातृश्शतृङिणकच्खलर्थस्य ॥ २ । २ । ९० ॥ तृन उदन्तस्य अव्यय-
स्य क्वसोरानस्य अतृशः शतुर्ङः णकचः खलर्थस्य च कृतः संबन्धिनोः कर्मकर्त्रोः षष्ठी न भवति । तृन्, वदिता जनापवादान् । उदन्त, कन्यामलंकरिष्णुः ।
रिपून् जिष्णुः । शरान् क्षिप्नुः । ओदनं बुभुक्षुः । देवान्वन्दारुः । धारुर्वत्सो मातरम् । श्रद्धालुस्तत्त्वम् । अव्यय, कटं कृत्वा । पयः पायंपायं व्रजति । ओदनं भोक्तुं

---

'अकेन क्रीडाजीवे' समास ॥—अन्तर्द्धौ येनादर्शनमिच्छतीति । पञ्चमीविधायक पाणिनिसूत्रमिदम् । अस्य चायमर्थ अन्तर्द्धौ अन्तर्द्धिविपये आत्मनः कर्म्मतापन्नस्य येनोपाध्यायादिना कर्तृभूतेन यददर्शन तदिच्छतीत्यर्थ ॥—भिन्नकृतोरिति । ननु पाक इत्यत्रापि भावाकर्त्रोर्घञ् प्रादुर्भाव इत्यत्रापि स एव तत्कथं भिन्नकृतोरित्युच्यते । सत्यम् । धातुभेदात्तस्यापि भेद इत्यदोप ॥—भेदिका चैत्रस्य मैत्रस्य काष्ठानामिति । भेदयितुं पर्याय इत्येव कार्य, भावे तु 'णिवेत्ति'–इत्यनेनाऽनप्रत्यय एव स्यात् । नन्वत्र प्रयोज्यप्रयोजककर्त्रो. प्रधाने प्रयोजके पष्ठी प्राप्नोति गौणसु-ख्ययोरिति न्यायात् । सत्यम् । यथा एकवाक्यस्थयो. कर्त्रोस्तृतीया स्यात्तथा तद्बाधिका पष्ठ्यपि ॥—अन्ये तु घञलेति । ललितस्वभाव इत्यर्थ । काशिकाकारस्तु स्त्र्यधिकारविहितयोरणकयो प्रतिपेधादन्यस्मिन्नपि स्त्रीप्रत्यय एव षष्ठीमिच्छति । अपरे तु णकाकारयोर्भावाभिधायकयो. कृतो प्रतिपेधाशसनादन्यस्मिन् भावाभिधायक एव षष्ठीमिच्छन्ति ॥—कृत्यस्य वा ।—गेयो माणवको गाथानामिति । अत्र व्यावृत्तेर्गाथानामित्यत्र कर्मणि साफल्य माणवकात्तु अगौणत्वात् प्राप्तिरेव नास्ति ॥—नोभयोः—॥ ननु द्विकर्म्मकेपु धातुपु तावदय प्रतिपेध, तत्रैवोभयप्राप्तिसंभवात् । तत्र प्रधानकर्मण. कृत्येनैवाभिहितत्वात् पष्ठ्यविपयत्वात् प्रधानाप्रधानसंनिधौ प्रधान एव संप्रत्यय इति न्यायात् तव्यादिवत् अप्रधानादप्यप्रसङ्गात् कर्त्तर्येव प्रतिपेधो न्याय्य इत्युभयग्रहणमतिरिच्यते । नैवम् । द्वितीयाबाधिका हि कृत्प्रयोगे पष्ठी विधीयते । द्वितीया चाप्रधानात् यथा भवति तथाऽत्र पष्ठ्यपि भविष्यति ॥—उपस्थानीयः पुत्रः पितुः । उपतिष्ठते 'प्रवचनीयादय' इति कर्त्तर्य-नीय । अत्र पितु' शब्दात् 'कर्म्मणि कृत.' इति कर्म्मणि पष्ठी । द्वितीये तु उपस्थीयते इति कर्मणि तव्यानीयौ 'कृत्यस्य वा' इति कर्त्तरि पुत्रात्पष्ठी ॥—तृन्नुदन्ता—॥ 'कर्म्मणि कृत' 'कर्त्तरि' इति च प्राप्तायाः पष्ठ्या अपवादः ॥—पायंपायं । 'ख्णम्चाभीक्ष्ण्ये' 'भृश'–इति द्वित्वं च ॥—भोक्तुं व्रजतीति । अत्र हेतुहेतुमद्भावे तृतीया 'तुमोर्थे'–इत्यनेन चतुर्थी वा ।

कतं चक्राणः । वचनमनूचानः । शान, मलयं पवमानः ।
व्रजाति । क्वसु, ओदनं पेचिवान् । तत्त्वं विद्वान् । आनेति उत्सृष्टानुबन्धनिर्देशात् कानशानानशां ग्रहणम् । कटं चक्राणः । वचनमनूचानः । शान, मलयं पवमानः । अतृश्, अधीयंस्त-
कतीह कवचमुद्वहमानाः । कतीह शत्रून् निघ्नानाः । कतीह वपुर्भूषयमाणाः । आनश्, ओदनं पचमान । चैत्रेण पच्यमानः । कटं करिष्यमाणः । अतृश्, अधीयंस्त-
त्त्वार्थम् । धारयन्नाचाराङ्गम् । शतृ, कटं कुर्वन् । कटं करिष्यन् । डि,*परीषहान् सासहिः । कटं चक्रिः । दधिश्चित्तम् । णकच्, एधानाँहारको व्रजाति । कटं कारको
व्रजाति । चिन्निर्देशात् णकस्य न भवति । वर्षशतस्य पूरकः । पुत्रपौत्रस्य दर्शकः । खलर्थः, ईषत्करः कटो भवता । सुज्ञानं तत्त्वं भवता ॥ ९० ॥*क्तयोरसदाधारे
॥ २ । २ । ९१ ॥ सतो वर्तमानादाधाराच्चान्यस्मिन्नर्थे विहितौ यौ क्तौ क्तक्तवतू तत्संबन्धिनोः कर्मकर्त्रोः षष्ठी न भवति । कटः कृतो मैत्रेण । कटं कृतवान् । गतो
ग्रामं चैत्रः । ग्रामं गतवान् । असदाधार इति किम् । राज्ञां ज्ञातः । राज्ञां बुद्धः । राज्ञां मतः । राज्ञामिष्टः । राज्ञां पूजितः । कान्तो हरिश्चन्द्र इव प्रजानाम् । 'ज्ञाने-
च्छा' (५—२—९२) इत्यादिसूत्रेण सत्यत्र क्तः ।*कथं शीलितो मैत्रेण, रक्षितश्चैत्रेण ।*भूतेऽयं क्तः । वर्तमानताप्रतीतिस्तु प्रकरणादिनेति । अन्ये तु ज्ञानेच्छार्चा-
र्थेताच्छील्यादिभ्योऽतीते क्तं नेच्छन्ति । तन्मतेऽपशब्दावेतौ । आधारे, इदमोदनस्य भुक्तम् । इदं सक्तूनां पीतम् । इदमहेः*सृप्तम् । इदमेषामासितम् । 'अद्यर्थाच्चाधारे'
(५-१-१२) इति क्तः ॥९१॥ वा क्लीबे ॥२।२।९२॥ क्लीबे यो विहितः क्तस्तस्य कर्तरि षष्ठी वा न भवति । छात्रस्य हसितम् । छात्रेण हसितम् । मयूरस्य नृत्तम् ।
मयूरेण नृत्तम् । कोकिलस्य व्याहृतम् । कोकिलेन व्याहृतम् । इहाहेः सृप्तम् । इहाहिना सृप्तम् । क्लीब इति किम् । चैत्रेण कृतम् । क्तक्तवतू इति भावे क्तः । पूर्वेण प्रति-
षेधे प्राप्ते विकल्पोऽयम् ॥ ९२ ॥*अकमेरुकस्य ॥ २ । २ । ९३ ॥ कमेरन्यस्योकप्रत्ययान्तस्य कर्मणि षष्ठी न भवति । आगामुकं*वाराणसीं रक्ष आहुः । भोगानभि-
लापुकः । अकमेरिति किम् । दास्याः कामुकः ॥ ९३ ॥*एष्यदृणेनः ॥ २ । २ । ९४ ॥ एष्यत्यर्थे ऋणे च विहितस्येनः कर्मणि षष्ठी न भवति । इन इति इन्णिनो-

परिषहन्ते 'स्थादिभ्य क' 'असोडसिवूसहस्सटाम्' पत्वम् परीषहाः । 'वन्युपसर्गस्य'–इति दीर्घ ॥ आहरिष्यतीति 'क्रियायाम्'–इति णकचि आहार-
सवन्धविवक्षाया षष्ठी वा ॥ परिषहन्ते 'स्थादिभ्य क' 'असोडसिवूसहस्सटाम्' पत्वम् परीषहाः । ... तत्र सति प्रत्ययविधिरेव नास्ति कथ प्रतिपेध सतोऽन्यस्मिन्नर्थ

सवन्धविवक्षाया षष्ठी वा ॥ परिषहन्ते 'स्थादिभ्य क' 'असोडसिवूसहस्सटाम्' पत्वम् परीषहाः । 'वन्युपसर्गस्य'–इति दीर्घ ॥ आहरिष्यतीति 'क्रियायाम्'–इति णकचि आहार- सतोऽन्यस्मिन्नर्थ
क' ॥—क्तयोर—॥ ननु सन् धात्वर्थस्तत्र धातुरेव वर्त्तते कृत्प्रत्ययस्तु 'कर्त्तरि' इत्यादिना कारके भावे च विधीयते । तत्र सति प्रत्ययविधिरेव नास्ति कथ प्रतिपेध भविष्यन्निति वा ज्ञातु
इति । नैप दोप । सदर्थसहचारी प्रत्ययार्थोऽपि सन्नित्युच्यते । यद्वा धात्वर्थोऽपि सन्निति प्रत्ययत एव विज्ञायते । न हि धातुत क्रियालक्षणो धात्वर्थो भूतो भवन् 'ज्ञानेच्छा'–इति
शक्य । धातुर्हि क्रियामात्रमाह न त्वसु विशेपम् । स तु प्रत्ययादेव प्रतीयत इति कर्त्रादिकारकवृत्तिरपि प्रत्यय सतीति विज्ञायते ॥—कथमिति । शीलितो मैत्रेणेत्यादावपि भूते क्त । यथा
क्त वर्त्तमानताप्रतीतिरप्यस्ति तत्कथनिपेध इत्याशङ्कार्थ' ॥—भूतेऽयं क्त इति । यद्यय भूते क्त कथ वर्त्तमानताप्रतीति । उच्यते। वर्त्तमानमध्ये भूतो भविष्यंश्च कालोऽस्त्यतो सदाधारादन्यत्र चातु शब्द
कट करोतीत्यत्र कटस्य येऽवयवा निष्पन्नास्तदपेक्षयाऽतीतत्व ये च निष्पद्यमानास्तदपेक्षया वर्त्तमानत्व ये च निष्पत्स्यन्ते तदपेक्षया भविष्यत्त्वम् ॥—अहेः सृप्तमिति । ॥—वाराणसीमिति ।
भवति, यदा कर्त्तरि क्तस्तदा इममहि सृप्तो देश यदा कर्म्मणि तदा अयमऽहिना सृप्तो देश । भावे तु 'वा क्लीवे' इति वा पष्ठयामहे सृप्तमहिना सृप्तमिति ॥—अकमे—॥ सन्त्यस्या 'तृ-
वरणा च आसिश्च वरणासी नद्यौ ते विद्येते अस्याम् 'अहरादिभ्योऽञ्' । पृपोदरादित्वात् ह्रस्वदीर्घव्यत्ययेऽञन्तत्वात् ङयाम् । यद्वा वराण इति वीरणस्याख्या वराणास्तृणविशेषा

ग्रहणम् । ग्रामं गमी । औणादिक इन् । ग्राममागामी । औणादिको णिन् ।*शतं दायी । सहस्रं दायी । कारी मेऽसि कटम् । हारी मेऽसि भारम् । एण्वाधमर्ण्ये णिन् । एष्यदृणेति किम् । अवश्यंकारी कटस्य । साधुदायी वित्तस्य ॥ ९४ ॥ *सप्तम्यधिकरणे ॥ २ । २ । ९५ ॥ गौणान्नाम्न एकद्विबहावधिकरणे कारके ङिओस्-सुप्लक्षणा यथासंख्यं सप्तमी विभक्तिर्भवति । दिवि देवाः । पर्यङ्के आस्ते । तिलेषु तैलम् । गुरौ वसति । युद्धे संनह्यते । अङ्गुल्यग्रे करिशतम् ॥ ९५ ॥ *नवा सुजर्थैः काले ॥ २ । २ । ९६ ॥ सुचोऽर्थो वारलक्षणो येषां प्रत्ययानां तदन्तैर्युक्तात्कालेऽधिकरणे वर्तमानाद्गौणान्नाम्नः सप्तमी वा भवति । द्विरह्नि भुङ्क्ते । पक्षे शेषे षष्ठी । द्विरह्नो भुङ्क्ते । मासे पञ्चकृत्वो भुङ्क्ते । मासस्य पञ्चकृत्वो भुङ्क्ते । बहुधाह्नि भुङ्क्ते । बहुधाह्नो भुङ्क्ते । सुजर्थैरिति किम् । अह्नि भुङ्क्ते । रात्रौ शेते । *बहुव्रीह्याश्रयणं किम् । सुजर्थप्रत्ययस्याप्रयोगे गम्यमाने तदर्थे माभूत् । काल इति किम् । *द्विः कांस्यपात्र्यां भुङ्क्ते । अधिकरणे इत्येव । [1]द्विरह्ना भुङ्क्ते । आधारस्याधारत्वाविवक्षायां पक्षे शैषिकी षष्ठी सिद्धैव । [1]नियमार्थं तु वचनम् । तेन प्रत्युदाहरणेषु शेषे षष्ठी न भवत्येव ॥ ९६ ॥ कुशलायुक्तेनासेवायाम् ॥ २ । २ । ९७ ॥ कुशलो निपुणः । आयुक्तो व्यापृतः । आभ्यां युक्तादाधारे वर्तमानाद्गौणान्नाम्नः सप्तमी वा भवति आसेवायां तात्पर्ये गम्यमाने । कुशलो विद्याग्रहणे । *आयुक्तस्तपश्चरणे । पक्षे अधिकरणाविवक्षायां शेषषष्ठी । कुशलो विद्याग्रहणस्य । आयुक्तस्तपश्चरणस्य । आसेवायामिति किम् । कुशलश्चित्रकर्मणि न च करोति । आयुक्तो गौः शकटे । आकृष्य युक्त इत्यर्थः । अधिकरणे इत्येव नित्यं सप्तमी । पक्षे आधारस्याविवक्षायां विकल्पे सिद्धेऽनासेवायामाधाराविवक्षानिवृत्त्यर्थं वचनम् ॥ ९७ ॥ *स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः ॥ २ । २ । ९८ ॥ एभिर्युक्ताद्गौणान्नाम्नः सप्तमी वा भवति । पक्षे शेषषष्ठी । गोषु स्वामी । गवां स्वामी । गोष्वीश्वरः । गवामीश्वरः । गोष्वधिपतिः । गवामधिपतिः । गोषु दायादः । गवां दायादः । गोषु साक्षी । गवां साक्षी । गोषु प्रतिभूः । गवां प्रतिभूः । गोषु प्रसूतः । गवां प्रसूतः । स्वामीश्वराधिपतीति पर्यायोपादानात् पर्यायान्तरयोगे न भवति । ग्रामस्य राजा । ग्रामस्य पतिः । षष्ठ्येव

---

णादे. सत्' 'लिनृमिन्यनि'-इति स्त्रीत्वे वराणसाया अदूरभवा 'निवासादूर'-इत्यण् ॥—एष्यदृ—॥—शतं दायी । शत धारयन् ददाति । 'णिन् चावश्यक'-इति णिन् । करोपीति हरसीति पूर्ववण्णिन् ॥—सप्तम्यधि—॥ अत्र सत्यर्थे वैषयिके वा सप्तमी ॥—नवा सु—॥ अधिकरणे नित्यं सप्तमी सिद्धैव पक्षे षष्ठीविधानार्थं तु सूत्रम् ॥—बहुव्रीह्याश्रयणं किमिति । अन्यथा षष्ठीतत्पुरुषाश्रयेण सुजर्थे काले इति कृते यदाऽर्थादिना द्विर्भुङ्क्ते इति द्विस्त्रिर्वेति प्रतीयते तदापि स्यात्तदा माभूदित्येवमर्थं तदाश्रयणमित्यर्थं ॥—द्विः कांस्यपात्र्यामिति । कसायेद कसीय 'परिणामिनि तदर्थे' इतीय । तत कसीयस्य विकारः 'कसीयाञ्ञ्यः'—इति ञ्यो यलुक् च ॥—द्विरह्ना भुङ्क्ते इति । अहरधिकरणमपि अन्नाऽशने करणविवक्षामनुभवतीति तृतीयैव भवति ॥—नियमार्थं तु वचनमिति । सुजर्थैरेव योगे काले सप्तमी वा भवति । सुजर्थैर्योगे काल एव वा सप्तमी भवतीत्युभयथापि नियमात् प्रत्युदाहरणेषु आधारसप्तम्येव न षष्ठीति ॥—कुशलायुक्ते—॥—आयुक्त इति । युजृपी आयुङ्क्ते स्म, युजिच् आयुज्यते स्म । कर्त्तरि क्त. ॥—स्वामीश्वरा—॥—अधिपतीति । अधिरूढ पति 'प्रात्यव'-इति स । अधिकश्चाऽसौ पतिश्च वा ।

भवति । [1]सप्तम्यर्थं वचनम् ॥ ९८ ॥ [2]व्याप्ये क्तेनः ॥ २ । २ । ९९ ॥ इष्टादिभ्यः क्तान्तेभ्य इष्टमनेनेत्याद्यर्थे तद्धित इन् वक्ष्यते । क्तप्रत्ययान्ताद्य इन् तदन्तस्य व्याप्ये वर्तमानाद्गौणान्नाम्नः सप्तमी भवति । [3]वेति निवृत्तम् । अधीतं व्याकरणमनेनेति वाक्यावस्थायामभिधायाधीतीति वृत्त्योक्तेनानभिहिते । कर्मणि [4]प्रत्ययार्थकर्तृकेण च धात्वर्थेन व्याप्यमाने कृतपूर्वी कटमित्यादाविव द्वितीयायां प्राप्तायां तदपवादोऽयम् । अधीतं व्याकरणमनेनाधीती व्याकरणे । आम्नातं द्वादशाङ्गमनेनाम्नाती द्वादशाङ्गे । परिगणितं ज्योतिरनेन परिगणिती ज्योतिषि । इष्टो यज्ञोऽनेनेष्टी यज्ञे । क्तेन इति किम् । कृतपूर्वी कटम् । भुक्तपूर्वी ओदनम् । इन् ग्रहणं किम् । उपश्लिष्टो गुरून् मैत्रः । व्याप्य इति किम् । मासमधीती व्याकरणे । अत्र मासात् माभूत् । मासस्य हि न कर्मत्वम् । द्वितीया तु 'कालाध्वनोर्व्याप्तौ' (२–२–४२) इत्यनेन ॥९९॥ [5]तद्युक्ते हेतौ ॥ २ । २ । १०० ॥ [6]हेतुर्निमित्तं कारणम् । तेन व्याप्येन युक्ते संयुक्ते हेतौ वर्तमानाद्गौणान्नाम्नः सप्तमी भवति । हेतुतृतीयापवादः । चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ॥ केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥१॥ तद्युक्त इति किम् । वेतनेन धान्यं लुनाति । नात्र वेतनं धान्येन संयुक्तम् । धनेन वसति । हेताविति किम् । [7]देवस्य पादौ स्पृशति ॥१००॥ [8]अप्रत्यादावसाधुना ॥२।२।१०१॥ असाधुशब्देन युक्ताद्गौणान्नाम्नोऽप्रत्यादौ प्रत्यादिप्रयोगाभावे सप्तमी

---

प्रसूते स्म 'गत्यर्थ'–इति क्त ॥—सप्तम्यर्थं वचनमिति । अयमर्थ स्वाम्यादीना गवादिसम्बन्धित्व तन्निवृत्तौ हि तेषा स्वाम्यादिभावाभावस्तन्नास्त्येव षष्ठी, सप्तमी तु क्रियाप्रतीत्यभावान्नास्तीति पक्षे सप्तमीप्रापणार्थं वचनमिति ॥—व्याप्ये क्तेनः ॥—वेति निवृत्तमिति । व्याप्योपादानात् तेन एधिकारभेद । पृथग्योगादिति वा ॥—प्रत्ययार्थेत्यादि । प्रत्ययस्यार्थ प्रत्ययार्थ । प्रत्ययार्थ कर्ता यस्य धात्वर्थस्य अध्ययनलक्षणस्य स तथा । तेन व्याप्यमाने व्याकरण इति ॥—तद्युक्ते—॥ तेन व्याप्येन युज्यते स्म । तथान नानादेशजविनेयानुग्रहार्थं युक्त हेतुर्निमित्त कारणमिति बहुतरपर्यायकथनम् । हेतुशब्दोपादानाच्चिह विशिष्टमेव निमित्तमभिप्रेतं न निमित्तमात्रमऽन्यथा तद्युक्ते निमित्ते इति कृते दानेण धान्यं लुनातीति निमित्तमात्रवाचिनो दानादपि स्यात्सप्तमी । न चोपपदविभक्तेः कारकविभक्तिर्बलीयसीति न भविष्यतीति वाच्यम् । यतो यथा कर्तृकरणयोस्तृतीया विहितेति तृतीयाया कारकविभक्तित्व तथाऽत्र सप्तम्या अपि व्याप्येन युक्त इति कारकश्रुत्या कारकविभक्तित्वम् । सा ह्युपपदविभक्तिर्यत्र कारकगन्धोऽपि नास्ति यथा शक्तार्थवषडादिभिर्योगे चतुर्थीति । तस्माद्धेतुशब्दाभिधेय विशिष्टमेव निमित्त यदर्थ क्रियारम्भस्तदेवात्र निमित्तमभिप्रेत न निमित्तमात्र तेन दानान्न सप्तमी । न हि दानार्था लवनक्रियेति ॥—द्वीपिनमिति । द्विधा गता आपो यत्र 'ऋक्पू'–'अन्तरनवर्णे'–इतीपादेशे द्वीपमस्यास्ति इन् । अय नन्त पुल्लिङ्ग । यदा तु द्वीपमाचष्टे णिजि 'विपिन'–इति निपात्यते तदाकारान्तोऽभिधानद्वीपिनाविति प्रतिपदपाठात्पुक्लीव । कुञ्जो दन्तावस्य स्तो 'मध्वादिभ्यो र' । पुष्प लातीति डेऽज्ञाताद्यर्थविवक्षाया के च [1]पुष्पलक. ॥—देवस्य पादाविति । अस्त्यत्र पादलक्षणेन कर्मणा देवस्य योगो हेतुत्व तु नास्तीति ॥—अप्रत्यादा—॥ प्रत्यादिशब्दस्य व्यवस्थावाचित्वात् प्रति परि अनु अभि इत्येत एवाप्रत्यादावित्यनेन ग्राह्या । ननु [2]साधुशब्देन सदाचार उच्यते । आचरण च क्रियाविषयमिति मातृशब्देन तत्स्था परिचर्यादिक्रिया उच्यते इति मातृपरिचरणादिक्रियाणां सम्यगाचरिता मातरि साधुरित्यु-

---

१ पुष्पलक' क्षुद्रग्रामाधिपति स हतो मारित. । अथवा पुष्पलक' सीमादिकार्थं निक्षिप्त पाषाण स केनचित्सीमास्वामिना हतो भिन्न'

२ यदि तु साधुशब्दो भक्तिप्रधाने संकल्पविशेषे वर्तते । तद्विपरीत्ये चाऽसाधुशब्द तदा मातुरेव विषमभावसंभवात् सिद्धेव सप्तमी । नेदं सूत्रं उपयुज्यते ।

भवति ।असाधुर्मैत्रो मातरि । अप्रत्यादाविति किम् ।असाधुर्मैत्रो मातरं प्रति । मातरं परि । मातरमनु । मातरमभि ॥१०१॥*साधुना॥२। २। १०२ ॥ साधुशब्देन युक्ताद्गौणान्नाम्नोऽप्रत्यादौ सप्तमी भवति । साधुर्मैत्रो राजनि । साधुर्मातरि । अप्रत्यादावित्येव । साधुर्मैत्रो राजानं प्रति । राजानं परि । राजानमनु । राजानमभि । *उत्तरत्रार्चायां विधानात् अनर्चायां तु व्यावृत्तेस्तत्त्वाख्याने विधिरयम् । कथं तर्हि साधुर्भृत्यो राज्ञ इति । भृत्यापेक्षाऽत्र पष्ठी न साध्वपेक्षा।साध्वपेक्षायां तु सप्तम्येव भवति ॥१०२॥ *निपुणेन चार्चायाम्॥२।२।१०३॥ निपुणशब्देन साधुशब्देन च युक्ताद्गौणान्नाम्नोऽप्रत्यादौ सप्तमी भवति [1]अर्चायां गम्यमानायाम् । पष्ठ्यपवादः। *मातरि निपुणः । पितरि साधुः । अर्चायामिति किम् । निपुणो मैत्रो मातुः । साधुर्मैत्रः पितुः । मातैवैनं निपुण मन्यते पितैव साधुमित्यनर्चायां न भवति । अप्रत्यादावित्येव । निपुणो मैत्रो मातरं प्रति । मातरं परि । मातरमनु । मातरमभि ॥ १०३ ॥ *स्वेशेऽधिना॥२।२। १०४ ॥ स्वे [1]ईशितव्ये ईशे च स्वामिनि वर्तमानादधिना युक्ताद्गौणान्नाम्नः सप्तमी भवति । अधिः स्वस्वामिसंबन्धं द्योतयति । तत्र स्वस्वामिवाचिनोर्यद्गौणत्वेन विवक्ष्यते ततो भवति । स्वे, 'अधि मगधेषु श्रेणिकः । अध्यवन्तिषु प्रद्योतः । ईशे, अधि श्रेणिके मगधाः । अधि प्रद्योतेऽवन्तयः । [1]पष्ठीवाधनार्थो योगः ॥ १०४ ॥ [1]उपेनाधिकिनि ॥२। २। १०५ ॥ उपेन युक्ताद्-

च्यते । तद्वैपरीत्येनासाधुर्मातरीति । ततश्चाऽसाधुर्मैत्रो मातरीति मातृविषयस्य साधुत्वस्य निषेधात् प्रथम मात्रा साधोर्योगादन्तरङ्गत्वादुत्तरेणैव सिद्धा सप्तमी किमनेनेति । नैवम् । पदान्तरसवन्धादेकपदवर्त्तित्वेन नञ्संबन्धस्यान्तरङ्गत्वादसमर्थनञ्समासस्य च नियतविषयत्वादर्थान्तराभिधायिना नञ्समासेनैव मातु. सवन्धो युक्तोऽब्राह्मणमानयेत्यादिवदिति 'साधुना' इत्युत्तरेण न सिध्यतीति वचनम् । नन्वऽभियोगे 'लक्षणवीप्स्य'–इत्यनेन प्रत्यादियोगे तु 'भागिनि'–इत्यनेन च द्वितीयाया विशेषविधानात् सप्तमी न भविष्यति किमप्रत्यादावित्यनेन । सत्यम् । असाधुशब्दाभावेऽपि द्वितीया चरितार्था इति प्रत्यादिप्रयोगे सप्तमी स्यात् ॥—साधुना ॥—उत्तरत्रेति । पूर्वे त्वर्चाग्रहणमुत्तरत्र निपुणविशेषणार्थमेव प्रतियन्त सर्वत्र साधुशब्दयोगे सप्तमी प्रतियन्ति । यदुत्पल-एव चार्चाग्रहणं निपुणविशेषणार्थं सपद्यते इति ॥—निपुणेन—॥—अर्चायामिति । अर्चिण् अर्चने 'भीपिभूपि'–इत्यञ् बहुवचनात् ॥—मातरि निपुणः । अत्र मातरि सुष्ठु वर्त्तत इति मैत्रादेः प्रशसा गम्यत इति ॥—स्वेशे ॥—ईशितव्य इति । यथेष्टं विनियोज्ये । अधेरुपरिभावस्वस्वामिसंबन्धयोर्द्योतकत्वेऽपि स्वेशे इति वचनादत्र स्वस्वामिसंबन्धद्योती गृह्यते । सवन्धस्योभयनिष्ठत्वे युगपदुभयत्र सप्तमी स्यादित्याह—यद्गौणत्वेनेति ॥—अधि मगधेष्वित्यादिषु 'विभक्तिसमीप'–इति नाव्ययीभावो विभक्त्यर्थत्वाभावात् । यतो विभक्तिर्विभक्त्यर्थः कारकम् । अत्र च षष्ठ्यपवाद सप्तमी इति न विभक्त्यर्थत्वम् । यदि च समास. स्यात्तदा वाक्यं [1]निवर्त्तेत नित्यसमासत्वात् अधिस्त्रि इत्यादिवत् । यदा तु सप्तम्यर्थ एवाधिशब्दस्तदात्राप्यऽव्ययीभाव एव अध्यवन्ति प्रद्योत इति । नन्वत्र क्रमेण परस्परमाधाराधेयभावविवक्षायां पर्यायेण सप्तम्यधिकरण एव सप्तमी भविष्यति किमनेनेति । सत्यम् । सवन्धविवक्षया पष्ठ्यपि स्यादित्याह—पष्ठीवाधनार्थो योग इति

१ वाक्यनिवृत्तौ च सत्यां वचनमिदमनर्थक स्यात् न च 'सप्तम्या वा' इत्यमऽभावपक्षे सप्तमीश्रवणं फलमिति वाच्य वर्त्तिपदसप्तमीलोपात् समाससप्तम्या हि स विकल्पः । किं च पष्ठीवाधनार्थोऽय योग इत्युक्तत्वात् । न चाव्ययीभावे षष्ठीभावाऽभावयोर्विशेषोऽस्ति । न चात्राधिर्विभक्त्यर्थेऽस्ति क्व तर्हि स्वस्वामिभावे तस्य च विषयभाव सप्तमी द्योतयति एतद्विषयमस्य स्वत्व स्वामित्व चेति । अधिस्त्रि इत्यादौ त्वाधारः सप्तम्यर्थ एवाऽधेरर्थः ।

धिकिनि वर्तमानाद्गौणान्नाम्नः सप्तमी भवति । उपेत्यधिकाधिकिसंबन्धं द्योतयति । उप खार्यां द्रोणः । द्रोणोऽधिकः खार्या इत्यर्थः । उप निष्के कार्षापणः । कार्षापणोऽधिको *निष्कस्येत्यर्थः । उपेनेति किम् । खार्या उपरि द्रोणः । अधिकिनीति किम् । अधिके मा भूत् । तेनोप द्रोणे खारीति न भवति ॥ १०५ ॥ ¹यद्भावो भावलक्षणम् ॥ २ । २ । १०६ ॥ भावः क्रिया । प्रसिद्धं लक्षणमप्रसिद्धं लक्ष्यम् । यस्य संबन्धिना भावेन क्रियया भावोऽपरक्रिया लक्ष्यते तस्मिन् वर्तमानाद्गौणान्नाम्नः सप्तमी भवति । गोषु दुह्यमानासु गतः । दुग्धास्वागतः । अत्र कालतः प्रसिद्धेन गवां दोहेन भावेनान्यस्य गमनमप्रसिद्धं लक्ष्यते । एवं देवार्चनायां क्रियमाणायां गतः । कृतायामागतः । गम्यमानेनापि भावेन भावलक्षणे भवति । आम्रेषु ¹कलायमात्रेषु गतः । पक्वेषु आगतः । अत्र जातेष्विति गम्यते । गम्यमानमपि हि विभक्तेर्निमित्तं भवति । यथा, वृक्षे शाखा । ग्रामे चैत्रः । अत्र भवति वसति चेत्याधारनिमित्तं गम्यते । यत्र क्रियार्हाणां कारकत्वं तद्विपर्ययो वा, यथा, ऋद्धेषु भुञ्जानेषु दरिद्रा आसते । ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते । यत्र क्रियानर्हाणामकारकत्वं तद्विपर्ययो वा, यथा, दरिद्रेष्वासीनेषु ऋद्धा भुञ्जते । दरिद्रेषु भुञ्जानेषु ऋद्धा आसते । तत्रापि भावो भावस्य लक्षणं भवतीत्यनेनैव सप्तमी । ¹यद्ग्रहणं प्रकृत्यर्थम् । भाव इति किम् । यो जटाभिस्तस्य भोजनम् । भावलक्षणमिति किम् । यस्य भोजनं स मैत्रः । ¹तृतीयापवादो योगः ॥ १०६ ॥ *गते गम्येऽध्वनोऽन्तेनैकार्थ्यं वा ॥ २ । २ । १०७ ॥ कुतश्चिदवधेर्विवक्षितस्याध्वनोऽवसानमन्तः । यद्भावो भावलक्षणं तस्याध्वनोऽध्ववाचिशब्दस्याध्वन एवान्तेनान्तवाचिना सहैकार्थ्यं सामानाधिकरण्यं वा भवति । *तद्विभक्तिस्तस्माद्भवतीत्यर्थः । गते गम्ये, गतशब्देऽप्रयुज्यमाने इत्यर्थः । गवीधुमतः सांकाश्यं चत्वारि योजनानि । चतुर्षु योजनेषु गतेषु भवतीत्यर्थः । एवं लोकमध्यात् लोकान्तमुपर्यधश्च सप्त रज्जूनामनन्ति । पक्षे पूर्वेण सप्तमी । गवीधुमतः सांकाश्यं चतुर्षु योजनेषु । गतेष्विति गम्यते । गत इति किम् । दग्धेषु लुप्तेष्विति वा प्रतीतौ माभूत् । गम्य इति किम् । गतशब्दप्रयोगे मा भूत् । गवीधुमतः सांकाश्यं चतुर्षु योजनेषु गतेषु भवति । अत्रैकार्थ्यं न भवति । सप्तमी तु पूर्वेण नित्यं भवति । अध्वन इति किम् । कार्तिक्या आग्रहायणी मासे ।

॥—उपेना—॥ अत्रापि यदधिक तदधिकिन्यारूढमित्याधारविवक्षायां सप्तमी सिद्धैव पर पूर्ववद्विभक्त्यन्तरबाधनार्थम् ॥—अधिको निष्कस्येति । साधुर्भृत्यो राज्ञ इतिवन्निष्कशब्दस्याधिकशब्देन सह सवन्धाभावात् 'अधिकेन भूयसस्ते' इत्यनेन निष्कशब्दान्न पञ्चमी ॥—यद्भावो—॥—कलायमात्रेष्विति । कलायो मालवकप्रसिद्धोऽधमधान्यविशेषो मानमेषा स्यात् 'मात्रट्' इत्यनेन मात्रट् ॥—यत्रेति । अयमर्थो यत्र ऋद्धाना दरिद्राणां च भुजिक्रियामासनक्रियां च प्रति यथासख्य कारकत्व कोऽर्थ तां प्रति कर्तृत्वं तद्विपर्ययोऽकारकत्व वा तत्रापि भावो भावस्य लक्षणमित्यनेनैव सप्तमी सिद्धेति यदन्यै. क्रियार्हाणा कारकत्व तद्विपर्ययो वा यत्र क्रियानर्हाणामकारकत्व तद्विपर्ययो वेति सप्तमीविधायक सूत्रद्वय कृतं तन्नारम्भणीयम् । यस्य भावो भावस्य लक्षण ततो भाववत सप्तमीष्यते यद्ग्रहणमन्तरेण चैतन्न लभ्यते इत्याह—यद्ग्रहणं प्रकृत्यर्थमिति । यो जटाभिरुपलक्षितस्तस्य भोजनमित्यत्र न भावो भावस्य लक्षणमपि तु द्रव्यम् ॥—तृतीयापवाद इति । इत्थभूतलक्षणेऽर्थे ॥—गते गम्ये—॥ कुतश्चिदवधेर्गवीधुमत इत्यादिलक्षणात् विवक्षितस्येयत्तापरिच्छेदायोपात्तस्याध्वनोऽवसान साकाश्याद्यन्त ॥—यद्भाव इति । यस्याध्वनश्चतुर्योजनरूपस्य भावेन गमनरूपेणाऽपरो भावः साकाश्यभवनरूपो लक्ष्यते तस्येत्यर्थ. ॥—ऐकार्थ्यमिति । एकोऽर्थो द्रव्यमनेकभेदाऽधिष्ठान यस्य स एकार्थस्तस्य भाव ऐकार्थ्यम् ॥—तद्विभक्तिरिति । अन्यथैकविभक्तिमन्तरेण

अत्राप्यैकार्थ्याभावे पूर्वेण नित्यं सप्तमी। अन्तेनेति किम्। *अद्य नक्षत्रपुष्यं गव्युतेषु भोजनम्। भोजनं हि भोक्तृधर्मो नाध्वनोऽन्त इति पूर्ववत्सप्तम्येव॥ *नन्वन्तेन सहाध्वनोऽभेदोपचारात् सिद्धमेवैकार्थ्यं किमनेन। सत्यम्। कालेऽप्येवं मा भूदिति वचनम्॥ १०७ ॥ *षष्ठी चानादरे॥ २। ३। ३८॥ यद्भावो भावलक्षणं तस्मिन् भाववति वर्तमानाद्गौणान्नाम्नोऽनादरे गम्यमाने षष्ठी वा भवति। *पक्षे पूर्वेण सप्तमी। रुदतो लोकस्य प्राव्राजीत्। रुदति लोके प्राव्राजीत्। क्रोशतो बन्धुवर्गस्य प्राव्राजीत्। क्रोशति बन्धुवर्गे प्राव्राजीत्। रुदन्तं क्रोशन्तं वाऽनादृत्य प्राव्राजीदित्यर्थः ॥ १०८ ॥ *सप्तमी चाविभागे निर्धारणे॥ २। ३। १०९॥ जातिगुणक्रियादिभिः समुदायादेकदेशस्य बुद्ध्या पृथक्करणं निर्धारणम्। तस्मिन् गम्यमाने गौणान्नाम्नः षष्ठी सप्तमी च भवति 'अविभागे' निर्धार्यमाणस्यैकदेशस्य समुदायेन सह कथंचिदैक्ये 'शब्दाद्गम्यमाने। *क्षत्रियः पुरुषाणां पुरुषेषु वा शूरतमः। शालयः शूकधान्यानां शूकधान्येषु वा पथ्यतमाः। कृष्णा गवां गोषु वा संपन्नक्षीरतमा। धावन्तो गच्छतां गच्छत्सु वा शीघ्रतमाः। युधिष्ठिरः श्रेष्ठतमः कुरूणां कुरुषु वा। अविभाग इति किम्। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। पञ्चालाः कुरुभ्यः संपन्नतराः। मैत्रश्चैत्रात्पटुः। अयमस्मादधिकः। अत्र हि शब्दात् भेद एव प्रतीयते न तु कथंचिदैक्यमिति न भवति। *पञ्चमीबाधनार्थं वचनम्। अन्ये तु पञ्चमी-

---

सामानाधिकरण्य न घटेत। गवामीः श्रीः तां दधाति 'पृकाक्रपि'-इति किदु.। सोऽन्नाऽस्ति मतुः। अव्युत्पन्नो वा गवीधुमच्छब्द. ॥—अद्य नक्षत्रपुष्यं गव्यूतेष्विति। गव्यूतिरत्रास्ति विषयतयाऽवयवितया वा 'अभ्रादिभ्यः' अः॥ गव्यूत क्रोश एकः ॥—नन्वन्तेनेति। चतुर्षु योजनेषु यत्साकाश्यं तच्चत्वारि योजनानि ॥—षष्ठी वा—॥—पक्षे पूर्वेण सप्तमीति। वाशब्दमन्तरेणानादरे षष्ठ्याऽपवादतया सप्तमी बाध्येत। ननु 'यद्भाव' ' इति भावलक्षणे सामान्ये सप्तमी तत्रानादर इति विशेषे षष्ठी सप्तम्यामनादरप्रतीतिरर्थप्रकरणादेरित्यर्थभेदान्न बाध्यबाधकभावोऽस्तीति कि पक्षे सप्तम्यर्थेन वाशब्देनेति। उच्यते। यथाऽनादरादन्यत्र साम्यतः सप्तम्यस्ति। एवं 'शेषे' इत्यनेन षष्ठ्यपि तत्रोभयत्रापि प्रव्रजन् रुदतापि लोकेन निवर्त्यमानस्तद्रोदनमनादृत्य प्राव्राजीदित्यनादर. प्रकरणादेः प्रतीयत इति सामान्येऽर्थे षष्ठी सप्तमीं बाधेतेति पक्षे तदर्थं वावचनम् ॥—सप्तमी—॥ क्षतात्त्रायते 'स्थापा'-इति क. पृषोदरादित्वादऽलोपे क्षत्र तस्यापत्य 'क्षत्रादिय.'—क्षत्रियः पुरुषाणामित्यादिषु क्षत्रियत्वशालित्वजात्या कृष्णत्वगुणेन धावनक्रियया आदिशब्दात् युधिष्ठिरप्रभृतिसंज्ञया च निर्द्धारणम्। ननु निर्धार्यमाणस्यावयवस्य समुदायाभ्यन्तरत्वात् ततश्च समुदायस्याऽधिकरणविवक्षायां वृक्षे शाखेतिवत् सप्तम्याः सिद्धत्वात् संबन्धविवक्षायां त्वऽवयवस्य वृक्षस्य शाखेतिवत् षष्ठ्या अपि सिद्धत्वात्किमनेनेति। नैवम्। विभागे प्रतिषेधार्थत्वादस्य सर्वत्रैव निर्द्धारणस्य विभागरूपत्वेनाऽविभागपूर्वकत्वात् अविभागग्रहणस्य निरर्थकत्वादविभागग्रहणसामर्थ्यादवधारणमाश्रीयते। अविभागो यत्र शब्दत एव प्रतीयते तत्र निर्द्धारणे सप्तमीषष्ठ्याविति। यथा क्षत्रियः पुरुषाणां पुरुषेष्वित्यत्र निर्द्धार्यमाणस्य क्षत्रियस्य पुरुषत्वेनाऽविभागप्रतीतिः। तेन माथुरा. पाटलिपुत्रकेभ्य आढ्यतरा इत्यत्र न भवति। न ह्यत्र केन चित्प्रकारेण माथुराणां पाटलिपुत्रकेष्वविभाग शब्दतः प्रतीयते। न हि पाटलिपुत्रका माथुरा नाप्याढ्यतरा इति वाक्याद्भेद एव प्रतीयते इत्याह—शब्दाद्गम्यमाने इति। गवां कृष्णेत्यादौ विभज्यमाना गौर्गोत्वेन समुदायादविभक्ता कार्ष्ण्येन तु विभक्ता तस्माद्विभज्यमानस्यैकदेशस्य विभागाश्रयस्य च समुदायस्य यत्र विभागाविभागौ स एवानयोर्विषयः। यत्र तु तयोर्विभाग एव न कथंचिदैक्यं तत्र पञ्चम्येव भवति। अत एवाह—पञ्चमीबाधनार्थमिति। अयमर्थः निर्द्धारणस्य विभागरूपत्वात् यस्य हि यतो विभागस्तस्य तदपेक्षयाऽवधिरूपत्वात् अपादानत्वात् 'पञ्चम्यपादाने' इति पञ्चम्यां प्राप्तायां यत्रावि-

मपीच्छन्ति । गोभ्यः कृष्णा संपन्नक्षीरतमा ॥ १०९ ॥ *क्रियामध्येऽध्वकाले पञ्चमी च॥ २ । २ । ११० ॥ क्रिययोर्मध्ये योऽध्वा कालश्च तस्मिन् वर्तमानाद्गौणान्नाम्नः पञ्चमी चकारात् सप्तमी च भवति । *इहस्थोयमिष्वासः क्रोशाल्लक्ष्यं विध्यति । इह धानुष्कावस्थानमिषुमोक्षो वैका क्रिया लक्ष्यव्यधश्च द्वितीया तन्मध्ये क्रोशोऽध्वा । *अद्य भुक्त्वा मुनिर्द्व्यहात् भोक्ता । अत्र द्वयोर्भुक्तिक्रिययोर्मध्ये द्व्यहः कालः ॥ ननु च क्रोशे स्थितं लक्ष्यं विध्यति, द्व्यहे पूर्णे भुङ्क्ते इत्यधिकरण एव सप्तमी; क्रोशान्निःसृत्य स्थितं लक्ष्यं विध्यति, द्व्यहमतिक्रम्यातु भुङ्क्ते इत्यपादाने 'गम्ययपः कर्माधारे' (२-२-७४) इति पञ्चमी सिद्धैव । सत्यम् । यदा त्वस्यैव क्रियाकारकसंबन्धस्य [1]फलभूता शेषसंबन्धलक्षणोत्तरावस्था विवक्ष्यते, यथा, द्विरह्नो भुङ्क्ते, योजनस्य शृणोतीति तदापि क्रियामध्ये [1]षष्ठी मा भूदिति वचनम् ॥ ११० ॥ *अधिकेन भूयसस्ते ॥ २ । २ । १११ ॥ अधिरूढ इत्यर्थेऽधिकशब्दो निपात्यते । अधिरूढ इति कर्तरि कर्मणि च क्तो भवति । तत्र यदा कर्तरि तदाऽधिक इत्येननाल्पीयानुच्यते । यदा तु कर्मणि तदा भूयान् । तत्र [1]सामर्थ्यादल्पीयोवाचिनाऽधिकशब्देन युक्तात् भूयसो भूयोवाचिनो गौणान्नाम्नस्ते

---

भागोऽपि तत्र तदपवादो योग इत्यर्थ । मध्येव सर्वथा समुदायभावानापन्ने निर्धारणमेव न युज्यते । समुदायाद्धि एकदेशस्य पृथक्करण निर्धारणमित्युक्तत्वात् । सत्यमेतत् । बुध्या हि केन चिद्धर्मेण कल्पितेन माथुरा पाटलिपुत्रकाश्च समुदायभावमापद्यन्ते इति सिध्यति निर्धारणमित्यदोष ॥—क्रियामध्ये—॥—इहस्थोऽयमिति । नन्विष्वास इति धनुरुच्यते । यथाऽङ्गराजो महेष्वास इति । महान् इष्वासो यस्येति व्युत्पत्तेः । धनुश्च व्यधने करण कर्त्ता तु मैत्रादिस्तत्कथमुक्तमिष्वासो विध्यतीति । उच्यते । इष्वास इति क्रियाशब्दोयमिति । य कश्चिदिषूनस्यति क्षिपति स मैत्रादिरप्युच्यते । यद्वा रूढिशब्दत्वेऽपि करणस्य स्वातन्त्र्यविवक्षायामिष्वासो विध्यतीति उपपद्यत एव । यथा स्थालीकरणस्य कर्तृविवक्षाया स्थाली पचतीत्युच्यते ॥—अद्य भुक्त्वेति । नन्विहस्थोऽयमिष्वास इत्यादि क्रियाभेदात् युक्तमिदमुदाहरणम् । इद त्वयुक्तमद्य भुक्त्वा मुनिर्द्व्यहाद्भोक्तेति भुजिक्रियाया एकत्वात् । सत्यम् । भुजिक्रियाया एकस्या अपि कालभेदाद्भेदस्य सिद्धत्वादाधारोऽपि तस्या भिद्यते ॥—अधिकरण एव सप्तमीति । क्रियामध्यव्यवस्थितस्याध्वनोऽधिकरणत्वात् सप्तमी सिद्धा क्रोशैकदेशस्याधिकरणत्वात् क्रोशेऽप्याधिकरणत्वस्य वक्तु शक्यत्वात् । एव कालादपि द्व्यहे पूर्णे इत्यत्र पूर्णद्व्यहस्य यदुपश्लिष्टमहस्तत्र भोक्तेत्यर्थावसायादौपश्लेषिकी सप्तमी सिद्धा । पञ्चमी त्वध्वनोऽपादानत्वात् क्रोशान्निर्गच्छद्भि शरैर्लक्ष्य विध्यतीत्यर्थावगमात् । कालात्तु 'गम्ययप '-इति द्व्यहमतिक्रम्य भोक्तेत्यर्थप्रतीते किमर्थोऽयं योग इत्याक्षेपार्थ । यथा च शरनिर्गमनस्य धनुरपादान तथा क्रोशोऽपि तस्मादपि हि ते निर्गच्छन्ति । यद्वा क्रोशस्थ धनुरपि क्रोशेनाभिधीयते उपचारात् मञ्चा क्रोशन्तीतिवत् ॥—अस्यैवेति । अपादानस्याधारस्य वेत्यर्थ ॥—फलभूतेति । क्रियाकारकसंबन्धो हि कट करोतीत्यादावप्यस्ति तद्व्यवच्छित्त्यै शेषसबन्धलक्षणा फलभूता कार्यभूतोत्तरावस्था इत्युक्तम् ॥—षष्ठी माभूदिति वचनमिति । अयमर्थो यदा भोजनश्रवणादौ कालाध्वनो क्रियाकारकजन्य शेषसबन्धित्वमेव केवल विवक्ष्यते नत्वपादानाधिकरणत्वे तदा ताभ्यां षष्ठ्येव स्यादिति सूत्रारम्भ. । किच यदा द्व्यहक्रोशशब्दौ द्व्यहक्रोशविषयावेव न तदेकदेशविषयौ तदा नापायो नाप्याधारतेति षष्ठी प्राप्नोति क्रोश वाहयित्वा विध्यति । द्व्यह वाहयित्वा भोक्तेति वा प्रतीते द्वितीया प्राप्नोति तद्बाधनार्थोऽय योग आरभ्यते । वृत्तौ तु षष्ठी माभूदिति षष्ठीग्रहणमुपलक्षणार्थम् । तेन द्वितीयाऽपि माभूदित्यर्थ सिद्धो भवति ॥—अधिकेन—॥ भूयस इत्युपादानात् अधिकशब्देनाल्पीयानेवोच्यते इत्याह—सामर्थ्यादिति । अत्राधिकाधिकिसबन्धस्य विद्यमानत्वात् सारीशब्दात् 'शेषे' इत्यनेन षष्ठी प्राप्नोति तथाऽधिकशब्दस्य कर्तृसाधनाध्यारूढार्थत्वात् कर्म्मणीति

सप्तमीपञ्चम्यौ भवतः । अधिको द्रोणः खार्याम् । अधिको द्रोणः खार्याः ॥ १११ ॥ *तृतीयाल्पीयसः ॥ २ । २ । ११२ ॥ अधिकशब्देन*सामर्थ्याद्भूयोवाचिना युक्तादल्पीयोवाचकाद्द्रौणान्नाम्नस्तृतीया भवति । अधिका खारी द्रोणेन ॥ ११२ ॥ पृथङ्नाना पञ्चमी च ॥ २ । २ । ११३ ॥ पृथङ्नानाशब्दाभ्यां युक्ताद्गौणान्नाम्नः पञ्चमी तृतीया च भवति । पृथग्मैत्रात् । पृथग्मैत्रेण । नाना चैत्रात् । नाना चैत्रेण । यदा पृथङ्नानाशब्दावन्यार्थौ तदा प्रभृत्यादिसूत्रेण पञ्चमी सिद्धैव । तृतीयैवानेन विधीयते । यदा त्वसहायार्थौ तदा पञ्चमीविधानार्थमपीदम् । अन्ये तु द्वितीयामपीच्छन्ति ॥२ । २ । ११३॥ *ऋते द्वितीया च ॥ २ । २ । ११४ ॥ ऋते इत्येतदव्ययं वर्जनार्थम् । तेन युक्ताद्गौणान्नाम्नो द्वितीया पञ्चमी च भवति । चित्रं यथाश्रयमृते । *न ह्यङ्गं विक्रियते रोगमृते । ऋते धर्मात् कुतः सुखम् । द्वितीयां नेच्छन्त्येके ॥ ११४ ॥ *विना ते तृतीया च ॥ २ । २ । ११५ ॥ विनाशब्देन युक्ताद्गौणान्नाम्नस्ते द्वितीयापञ्चम्यौ तृतीया च भवति । विना वातम् । विना वर्षम् । *न विना शब्दभावनाम् । याञ्चां विना विद्धि । विना वातात् । विना वातेन । द्वितीयां नेच्छन्त्यन्ये ॥११५॥ *तुल्यार्थैस्तृतीयाषष्ठ्यौ ॥ २ । २ । ११६ ॥ तुल्यार्थैर्युक्ताद्गौणान्नाम्नस्तृतीयाषष्ठ्यौ भवतः॥ मात्रा तुल्यः। मातुस्तुल्यः। पित्रा समानः । पितुः समानः । गुरुणा समः। गुरोः समः। चैत्रेण सदृशः। चैत्रस्य सदृशः । अर्थग्रहणं पर्यायार्थम्। उपमा नास्ति कृष्णस्य, तुला नास्ति सनत्कुमारस्येत्यादौ उपमादयो न तुल्यार्था इति न भवति। *गौणाधिकाराच्च गौरिव *गवयः, यथा गौस्तथा गवय इत्यादौ न भवति। *तृतीयामविकल्प्य षष्ठीविधानं सप्तमीबाधनार्थम्। तेन *गवां तुल्यः स्वामी, गोभिस्तुल्यः स्वामीत्यत्र स्वामीश्वरेत्यादिना सप्तमी न भवति॥११६॥ *द्वितीयाषष्ठ्यावेनेनानञ्चेः ॥ २ । २ । ११७ ॥ एनप्रत्ययान्तेन युक्ताद्गौणान्नाम्नो द्वितीयाषष्ठ्यौ विभक्ती भवतो न चेत्सोऽञ्चेः परो विहितो भवति । *पूर्वेण ग्रामम् । पूर्वेण ग्रामस्य । अपरेण ग्रामम् । अपरेण ग्रामस्य । दक्षिणेन विजयार्धम् । दक्षिणेन विजयार्धस्य । उत्तरेण हिमवन्तम् । उत्तरेण हिमवतः । अनञ्चेरिति किम् । प्राग्ग्रामात् । प्रत्यग्ग्रामात् । उदग्ग्रामात् ॥ ११७ ॥ *हेत्वर्थैस्तृतीयाद्याः ॥ २ । २ । ११८ ॥ हेतुर्निमित्तं कारणमिति पर्यायाः । एतदर्थैः शब्दैर्युक्तात्

---

द्वितीया च । अतस्तयोर्व्याधिके सप्तमीपञ्चम्यावनेन विधीयेते ॥—तृतीया—॥—सामर्थ्यादिति । अल्पीयस इत्युपादानात् । कर्मसाधनो भूयोऽर्थोऽधिकशब्द. प्रतिपत्तव्य इति । कर्त्तरि तृतीया सिद्धैव षष्ठीबाधनार्थं तु वचनम् ॥—ऋते द्वि—॥—न ह्यङ्गं विक्रियत इति । विषयादिभिः कर्तृभिरित्यर्थः । विक्रियत इति कर्मण्ययं प्रयोग । कर्म्मकर्त्तरि तु 'भूपार्थ'—इति किरादित्वात् वधप्रतिषेध स्यात् ॥—विना ते—॥ विनेति तृतीयायान्तमव्ययम् । आद्य करणविन्यास. प्राणस्योर्ध्व समीरणम् ॥ स्थानानामभिघातश्च न विना शब्दभावनाम् ॥—तुल्यार्थैः—॥—न तुल्यार्थ इति । तुल्यादयो हि धर्म्मिवाचका । तुलोपमादयस्तु तुल्यत्वादिधर्मवचना इति न तुल्यार्था ॥—गौणाधिकाराच्चेति । प्रधानाद्गोशब्दान्न भवतीत्यर्थ । तुल्यार्थतापि नास्तीति चकारेण परिहारान्तर समुच्चीयत इति शेष । नन्वनन्तरात् पूर्वसूत्रात् तृतीयानुवर्त्तते ततस्तुल्यार्थैर्वेति तद्विकल्पे कृते 'शेषे' इत्यनेन पक्षे शेषलक्षणा षष्ठी सिद्धैव किमर्थ तद्विधानमित्याह—तृतीयेत्यादि ॥—गवां तुल्यः स्वामीति । गवां तुल्य इत्यर्थः । यद्यऽसत्स्वामी गवां तुल्य इत्यर्थो विवक्ष्यते तदा गोशब्दस्य स्वामिशब्देनायोगात्सप्तमीप्राप्तिरेव नास्तीति ॥—गवय इति । कीदृग्गवय इत्येवं पृष्टो नागरिकैर्यदा वदत्यारण्यको वार्त्ता यथा गौर्गवयस्तथा ॥—द्वितीया—॥—पूर्वेणेति । पूर्वस्यामदूरवर्त्तिन्यां दिशि 'अदूरे एनः' ॥—हेत्वर्थैः—॥—प्रत्यासत्तेरिति । हेत्वर्थैस्तु व्यधिकरणाद्धेतु-

प्रत्यासत्तेस्तैरेव समानाधिकरणात् गौणान्नाम्नस्तृतीयाद्यास्तृतीयाचतुर्थीपञ्चमीषष्ठीसप्तम्यो भवन्ति । धनेन हेतुना वसति । धनाय हेतवे वसति । धनाद्धेतोर्वसति । धनस्य हेतोर्वसति । धने हेतौ वसति । एवं धनेन निमित्तेन । धनेन कारणेन । धनेनापदेशेन । धनेन प्रयोजनेनेत्यादयोऽपि । तत्सामानाधिकरण्याच्च हेत्वर्थेभ्योऽपि त एव भवन्ति । प्रत्यासत्तेस्तैरेव समानाधिकरणादिति किम् । अन्नस्य हेतुः अन्ये तु हेत्वर्थशब्दयोगे नेच्छन्ति । हेतुशब्दप्रयोगे तु षष्ठीमेवेच्छन्ति । 'असत्त्वाद्यर्थमिदम् ॥ ११८ ॥ 'सर्वादेः सर्वाः ॥ २ । २ । ११९ ॥ हेत्वर्थैर्युक्तात् प्रत्यासत्तेस्तत्समानाधिकरणात् सर्वादेर्गौणान्नाम्नः सर्वा विभक्तयो भवन्ति । को हेतुर्वसति चैत्रः । कं हेतुं वसति । केन हेतुना । कस्मै हेतवे । कस्माद्धेतोः । कस्य हेतोः । कस्मिन् हेतौ । एवं यो हेतुः । यं हेतुम् । येन हेतुना । यस्मै हेतवे । यस्माद्धेतोः । यस्य हेतोः । यस्मिन् हेतौ । स हेतुः । तं हेतुम् । तेन हेतुना । तस्मै हेतवे । तस्माद्धेतोः । तस्य हेतोः । तस्मिन् हेतौ । सर्वो हेतुः सर्वं हेतुम् । भवान् हेतुः । भवन्तं हेतुम् । भवता हेतुना । उभौ हेतू । उभाभ्यां हेतुभ्याम् इत्यादि । एवं किं कारणं किं निमित्तं किं प्रयोजनमित्यादि । तत्समानाधिकरणादित्येव । कस्य हेतुः । प्रथमां नेच्छन्त्येके । द्वितीयामपरे ॥ ११९ ॥ 'असत्त्वारादर्थाट्टाङसिङ्यम् ॥ २ । २ । १२० ॥ सत्त्वं द्रव्यं ततोऽन्यदसत्त्वम् । आराद्दूरान्तिकयोः । तन्त्रेणोभयोर्ग्रहणम् । असत्त्ववाचिनो दूरार्थादन्तिकार्थाच्च टा ङसि ङि अम् इत्येते प्रत्यया भवन्ति । 'गौणादिति निवृत्तम् । 'दूरेण ग्रामस्य ग्रामाद्वा । दूराद्ग्रामस्य ग्रामाद्वा । दूरे ग्रामस्य ग्रामाद्वा । दूरं ग्रामस्य ग्रामाद्वा वसति । एवं विप्रकृष्टेन, विप्रकृष्टात्, विप्रकृष्टे, विप्रकृष्टं ग्रामस्य ग्रामाद्वा तिष्ठति । अन्तिकार्थे, अन्तिकेन, अन्तिकात्, अन्तिके, अन्तिकं ग्रामस्य ग्रामाद्वा वसति । एवमभ्याशेन, अभ्याशात्, अभ्याशे, अभ्याशं ग्रामस्य ग्रामाद्वा । केचिदारादर्थैः पञ्चम्यन्तैर्युक्तात्पञ्चमीं नेच्छन्ति । तेन दूराद्ग्रामस्य, अन्तिकाद्ग्रामस्येत्येव भवति । न तत्सर्वसंमतम् । पञ्चम्या अपि दर्शनात् । दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ॥ दूराच्च भाव्यं दस्युभ्यो दूराच्च कुपिताद्गुरोः ॥ १ ॥ इति । असत्त्वेति किम् । दूरः पन्थाः । अन्तिकः पन्थाः । दूराय पथे देहि । 'अन्तिकाय पथे देहि । दूरस्य पथः । अन्तिकस्य पथः स्वम् । 'कथं चिरं चिरेण चिराय चिरात् चिरस्येति ।

सम्बन्धे षष्ठ्येवास्ति । न तत्र तृतीयाद्या इति सामर्थ्याद्धेत्वर्थैः समानाधिकरणाद्धेतोरेव तृतीयाद्या भवन्तीति । ननूत्तरसूत्रेण सर्वा विभक्तय इति सर्वविभक्त्यन्तर्गतत्वात् तृतीयाद्या अपि सिद्धा किमर्थमिदमित्याह—असत्त्वाद्यर्थमिति । हेतौ तृतीयाया 'ऋणाद्धेतो' 'गुणादस्त्रियां नवा' इति पञ्चम्या प्राप्तायामयं विधिरारभ्यत इति ॥—सर्वादेः—॥ प्रिया सर्वे यस्येति बहुव्रीहौ हेत्वर्थयोगेऽपि न सर्वा विभक्तय, अन्यपदार्थप्रधानत्वेन सर्वादेर्गौणत्वात् । गौणे मुख्ये च मुख्ये कार्यसम्प्रत्यय. । कर्मधारये परमसर्व हेतु वसतीत्यादि तु भवति । ग्रहणवता नाम्नेति तु नोपतिष्ठतेऽत्र ॥—असत्त्वा—॥ असत्त्वे आरादर्थे., न विद्यते सत्त्व यस्य स चाऽसौ आरादर्थश्च वा ॥—गौणादिति निवृत्तमिति । विभक्तिसम्बद्धत्वात्तन्निवृत्तावित्यर्थ । अत्र हि टादीनि वचनान्युपात्तानि । न तृतीयाद्या विभक्तय. ॥—दूरेण ग्रामस्य ग्रामाद्वा इत्यादि । इदतदितिसर्वनामप्रत्यवमर्शयोग्यार्थाभिधायकत्वेऽप्येतेषां धर्ममात्रेण प्रयोगादसत्त्वरूपार्थाभिधायकत्वं न विरुध्यते । तथाऽत्र ग्रामशब्दात् 'आरादर्थैः' इति वा पञ्चम्या पक्षे 'शेष' इति षष्ठी ॥—अन्तिकाय पथे इति । अत्रोपपदविभक्तेः कारकविभक्तिरिति पञ्चमीं बाधित्वा चतुर्थी ॥—न तत्सर्वसंमतमिति । यत. काशिकाकारोऽप्याह पञ्चम्या अपि दर्शनात् लोकाचारग्रन्थे ॥—कथमिति । आरादर्थत्वाभावात् कथमेभ्यो द्वितीयाद्या इत्याशङ्कार्थ ॥—

विभक्तिप्रतिरूपका निपाता एते । यथा, परस्परम् परस्परेण परस्परस्येत्यादयः ॥ १२० ॥ *जात्याख्यायां नवैकोऽसंख्यो बहुवत् ॥ २ । २ । १२१ ॥ जातेरेकत्वादेकवचन एव प्राप्ते पक्षे बहुवचनार्थं बहुवद्भाव उच्यते । जातेराख्याभिधानं जात्याख्या, तस्यामेकोऽर्थो जातिलक्षणोऽसंख्यः संख्यावाचिविशेषणरहितो बहुवद्वा भवति । संपन्नो यवः । संपन्ना यवाः । संपन्नो व्रीहिः । संपन्ना व्रीहयः । जात्यर्थस्य बहुवद्भावात् तद्विशेषणानामपि बहुवद्भावः । तथा चोभयवाचिभ्यो बहुवचनम् । जातिग्रहणं किम् । *चैत्रः । मैत्रः । आख्याग्रहणं किम् । काश्यपप्रतिकृतिः काश्यपः । *भवत्ययं जातिशब्दो न त्वनेन जातिराख्यायते किं तर्हि प्रतिकृतिः । एक इति किम् । संपन्नौ व्रीहियवौ । *मगधेषु स्तनौ पीनौ कलिङ्गेष्वक्षिणी शुभे इत्यादावपि सव्येतरत्वलक्षणावान्तरजातिद्वयोपाधियोगादेकत्वं नास्तीति बहुवद्भावो न भवति । जातिमात्रविवक्षायां तु भवत्येव । मगधेषु स्तनाः पीनाः । स्तनः पीन । कलिङ्गेष्वक्षीणि शुभानि । अक्षि शुभमिति । असंख्य इति किम् । एको व्रीहिः संपन्नः सुभिक्षं करोति । अत्र विशेषणभूतसंख्याप्रयोगोऽस्तीति एके व्रीहयः संपन्नाः सुभिक्षं कुर्वन्ति इति न भवति ॥ १२१ ॥ अविशेषणे द्वौ चास्मदः ॥ २ । २ । १२२ ॥ अस्मदो द्वावेकश्चार्थो वा बहुवद्भवति 'अविशेषणे' *न चेत्तस्य विशेषणं प्रयुज्यते । *आवां ब्रूवः । वयं ब्रूमः । अहं ब्रवीमि । वयं ब्रूमः । अविशेषण इति किम् । आवां गार्ग्यौ ब्रूवः । अहं पण्डितो ब्रवीमि । अहं चैत्रो ब्रवीमि । कथं *नाट्ये च दक्षा वयम्, त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः, सा बाला वयमप्रगल्भमनसः इत्यादि । दक्षत्वादीनां *विधेयत्वेनाविशेषणत्वात् भविष्यति । यदनूद्यमानमवच्छेदकं तद्विशेषणम् इति *एकानेकस्वभावस्यात्मनोऽनेकस्वभावविवक्षायां बहुवचनं सिद्धमेव

---

जात्याख्यायां—॥ वैषयिकेऽधिकरणे सप्तमी निमित्तसप्तमी वा ॥—जात्यर्थस्येति । न जातिशब्दस्य तथा सति सपन्ना यवा इति यवशब्दादेव जातिशब्दाद्बहुवचनं स्यात् न सपन्नशब्दात्तद्विशेषणभूतादिति । । जात्यर्थस्य बहुवद्भावे सपन्नादिविशेषणान्यपि सामानाधिकरण्याद्यवादिशब्दोपात्ते जात्यर्थे वर्तन्त इति तेभ्योऽपि बहुत्वाश्रयं बहुवचनमुपपन्नमिति ॥—चैत्रः । मैत्र इति । नेह जातिरभिधेया यदृच्छाशब्दत्वादनयो । जातिर्हि सामान्यमुच्यते यच्छबलशाबलेयधवलधावलेयाद्यनेकव्यक्तिभेदेषु गौर्गौरित्याद्यनुवृत्तप्रत्ययकारणमिति । यदि च बालकुमारादिभेदेऽनुवर्तमानमभिन्नं रूपं जातिं कश्चिच्छब्दार्थोऽस्ति इति जातिग्रहणमनर्थकं स्यात् तस्मात्सादृश्यसामान्यमिह जातिर्न स्वरूपसामान्यमिति ॥—भवत्ययं जातिशब्द इति । गोत्रं च चरणैः सहेति लक्षणेन परमाख्याग्रहणात्प्राधान्येन जातावभिधेयाया भवति । इह तु तद्विशिष्टा प्रतिकृतिराख्यायते इति ॥—'मगधेषु स्तनौ पीनौ कलिङ्गेष्वक्षिणी शुभे । बाहू प्रलम्बावङ्गेषु वङ्गेषु चरणौ दृढौ' ॥ १ ॥—अविशे—॥ न विशेषणमविशेषणम् । यदा विशेषणस्याभाव । अस्मद इत्यत्र अनुकरणत्वादस्मच्छब्दकार्याप्रवृत्ति । अविशेषण इत्यत्र प्रतिषेधप्रधान प्रसज्यो नञ् । यद्यत्र पर्युदासः स्याद्विशेषणादन्यस्मिन्निति तदा विशेषणेन विधिनापि प्रतिषेधो विशेषणादन्यस्मिंस्तु प्रयुज्यमाने विधि । कोऽर्थ, सत्यप्यस्मदर्थस्य विशेषणे ततोऽन्यास्मिन् प्रयुज्यमाने स्यादित्यर्थ । ततश्चाऽह मैत्रो ब्रवीमीत्यत्रापि मिवन्तस्य विशेष्यस्य भावात् मैत्र इति विशेषणे सत्यपि स्यादित्याह—न चेत्तस्येति ॥—आवां ब्रूव इति । अत्र द्वयोर्मध्ये एको ब्रूते ततश्च कथमावां ब्रूव इति । उच्यते । द्वयोरप्यभेदोपचारात् ॥—विधेयत्वेनेति । अज्ञातज्ञापनीयत्वेनेत्यर्थ. ॥—एकानेकस्वभावस्येति । अयमर्थ. 'एकोऽप्यात्मा यथैकत्वेनानुभूयते तथा द्रष्टा श्रोता मन्तेत्यादिनानात्वेनापि । न ह्येकान्तेनैकत्वेनानेकत्वेन वेतराविनिर्मुक्तेन प्रतिपत्तिरस्ति । तत्र यथैकत्वेन द्वित्वेन च तस्मिन्विवक्षिते एकवचन द्विवचनं च तथा बहुत्वविवक्षायां बहुवचन सिद्धम् ॥ नटाना नृत्तम् । 'नटान्नृत्ते ञ्य.'—नाट्यम् ॥—फल्गु—॥—प्रोष्ठपदे इति । प्रवृद्ध ओष्ठो यस्य

सविशेषणप्रतिषेधार्थं तु वचनम्॥१२२॥ *फल्गुनीप्रोष्ठपदस्य भे॥२।२।१२३॥ फल्गुनीशब्दस्य प्रोष्ठपदाशब्दस्य च भे नक्षत्रे वर्तमानस्य द्वावर्थौ बहुवद्वा भवतः। कदा पूर्वे फल्गुन्यौ। कदा पूर्वाः फल्गुन्यः। कदा पूर्वे*प्रोष्ठपदे। कदा पूर्वाः प्रोष्ठपदाः। उदिते पूर्वे फल्गुन्यौ। उदिताः पूर्वाः फल्गुन्यः। उदिते पूर्वे प्रोष्ठपदे। उदिताः पूर्वाः प्रोष्ठपदाः। भ इति किम्। फल्गुनीषु जाते फल्गुन्यौ माणविके। द्वावित्येव। तेनैकस्मिन् ज्योतिषि न भवति। दृश्यते फल्गुनी। एकवचनान्तः प्रयोग एव नास्तीत्यन्ये। फल्गुनीप्रोष्ठपदस्येति शब्दपरो निर्देशः किम्। तत्पर्यायस्य मा भूत्। अथ पूर्वे भद्रपदे॥ १२३ ॥ *गुरावेकश्च॥ २। २। १२४॥ गुरौ गौरवार्हेऽर्थे वर्तमानस्य शब्दस्य द्वावेकश्चार्थौ बहुवद्वा भवति। त्वं गुरुः। यूयं गुरवः। युवां गुरू। यूयं गुरवः। स *कारुणिक उपाध्यायः। ते कारुणिका उपाध्यायाः। तौ कारुणिकावुपाध्यायौ। ते कारुणिका उपाध्यायाः। एष मे पिता। एते मे पितरः। अयं तपस्वी। इमे तपस्विनः। गुरुशिष्यौ। गुरुशिष्याः। *इहभवन्नाह। *इहभवन्तस्त्वाहुः। आपः, दाराः, गृहाः, वर्षाः, *पञ्चालाः जनपदः, *गोदौ, *खलतिकं वनानि, *हरीतक्यः फलानि, पञ्चालमथुरे, *चञ्चाभिरूपो मनुष्य इति *सर्वलिङ्गसंख्ये

---

प्रोष्ठो गोस्तस्येव पादो यस्या गवोर्वा 'सुशात'-इति निपात्यते ॥—गुरा—॥—कारुणिक इति। करुणा प्रयोजनमस्य करुणया वा चरति। अथ भवान् इहभवान् 'भवत्वायु'-इत्याधिकारात् 'नप् च' इति नप् 'फकुन'-इति पश्चान्निपात्यते। इमेभवन्त इहभवन्तः। पञ्चालानां देशोऽपि पञ्चाला उपचारात्। गोदौ ह्रदौ तत्समीपग्रामोऽपि गोदौ ॥—खलतिकं वनानीति। खलतीति 'कुशिक'-इत्यादिना निपात्यत इत्याम्नाय.। यद्वा खलान् तिक्नोति 'मूलविभुजादय' क। खलतिकाख्यपर्वतसमीपवर्तिवनानामपि खलतिक इत्याख्या। हरति रोगानिति 'रुहि'-इति ईतके हरीतकी। पञ्चालाश्च मथुरा च पञ्चालमथुरे। चीयते उपचीयते तृणैरिति चञ्चा। 'चमेर्ॊचउञो'। अभिमत रूप यस्य अभिमत रूप्यते वा अभिरूपो मनुष्यश्चञ्चेव आकिञ्चित्करत्वात् ॥—अनुपततीति। आनुयाति अनुव्रजतीत्यर्थ ॥—अनुसर्त्तव्येति। लिङ्गानि च संख्याश्च तास्ताश्च ता लिङ्गसख्याश्च तासामुपादान तस्य व्यवस्था सानुसर्त्तव्या। नन्वाप इत्येकस्यामपि जलकणिकाया बहुवचनान्तोऽप्शब्द, प्रयुज्यते दारशब्दश्चैकस्यामपि योषिति पुलिङ्गो बहुवचनान्त.। एव गृहशब्दोऽप्येकस्मिन्नपि गृहे। एव वर्षा इत्येकस्मिन्नपि ऋतौ। एव पञ्चाला इति बहुवचनान्तेनैकोऽर्थ उच्यते जनपदस्तत्र बहुत्वाभावाद्बहुवचनाऽयोगः। यशसो बहुत्वसख्यायोगी स्यात्तदेकवचनानुपपत्तिर्जनपद इति एकत्वाऽभावात्। न ह्येकोऽर्थ एको भवति अनेकश्च विरोधात्। कथचित्तथाभावे तूभयमप्युभयसंख्यायोगि स्यान्न चेतदिष्यत इति। एवं गोदौ ग्राम इति द्वित्वैकत्वनियमाऽयोग। खलतिक वनानीत्येकवचनान्तेन बह्वभिधानमनुपपन्नम्। तथा हरीतक्य फलानीति स्त्रीनपुसकयोर्लिङ्गयोरयोग'। तथा पञ्चालमथुरे इत्यनुत्तरपदस्य देशवृत्तेर्बहुविषयस्य बहुवचनाप्रतिषेधानुपपत्ति। एव चञ्चाभिरूप इत्यादावपि चञ्चादिलिङ्गता स्यादित्यन यत्न कर्त्तव्य'। येन सर्वं समञ्जसं स्यादित्याशङ्कायामाह—सर्वलिङ्गसंख्ये वस्तुनीत्यादि। सर्वाणि त्रीण्यपि लिङ्गानि सर्वाश्च एकत्वद्वित्वबहुत्वलक्षणा सख्या एकस्मिन्नेव वस्तुनि सन्ति। तथाहि वस्त्वर्थो मात्रेति शब्दा. सर्वत्र वस्तुतत्त्वे घटवस्तु घटार्थो घटमात्रेति प्रवर्त्तन्ते इति लिङ्गानि दृश्यन्ते। गुणगुणिद्रव्यपर्यायावयवावयविरूपे वस्तुनि घट इत्यभेदविवक्षायामेकत्वसख्या। गुणगुणिनौ द्रव्यपर्यायो अवयवावयविनौ घटौ नैकैकमात्र इति द्वित्वसंख्या। गुणपर्यायावयवानां बहुत्वात्तद्भेदविवक्षायां गुणाश्च गुणी च गुणगुणिनो घटा इति बहुत्वसख्या। न चेतदेकस्मिन् वस्तुनि स्याद्वादानुपातिनि विरुद्ध स्यात्। यत आजन्ममरणमविच्छेद प्रतीयते तत्र भेदमात्र वस्तु। बालोऽयं न युवा युवाऽय न बाल सुप्तोऽय न उत्थित उत्थितोऽय न सुप्त इति कथञ्चिदिति वाद स्याद्वाद.। तथाहि। स एवाय मैत्र इत्याजन्ममरणमविच्छेद प्रतीयते तत्र भेदमात्र वस्तु।

वस्तुनि स्याद्वादमनुपतति *मुख्योपचरितार्थानुपातिनि च शब्दात्मनि *रूढितस्तत्तल्लिङ्गसंख्योपादानव्यवस्थानुसर्तव्या ॥ १२४ ॥ ॥ इत्याचार्यश्रीहेमचन्द्र-
विरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ द्वितीयस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ २ ॥ मूलार्कः श्रूयते शास्त्रे सर्वकल्याणकारणम् ॥
अधुना मूलराजस्तु चित्रं लोकेषु गीयते ॥ १ ॥ ॥ अर्हम् ॥ . ॥

## तृतीयः पादः

*नमस्पुरसो गतेः कखपफि रः सः ॥ २ । ३ । १ । गतिसंज्ञकयोर्नमस्पुरस् इत्येतयोः संबन्धिनो रेफस्य कखपफेषु परेषु सकारादेशो भवति । नम-
स्कृत्य । नमस्करोति । नमस्कर्ता । नमस्कर्तुम् । नमस्कर्तव्यम् । पुरस्कृत्य । पुरस्करोति । पुरस्कर्ता । पुरस्कर्तुम् । पुरस्कर्तव्यम् । पुरस्खादः । पुरस्खादनम् ।
पुरस्पातः । पुरस्पतनम् । पुरस्फक्कः । पुरस्फक्कनम् । गतेरिति किम् ? *नमः कृत्वा । नमः करोति । नमः शब्दमुच्चारयतीत्यर्थः । नमःशब्दस्य कृग्योगे विकल्पेन गति-
संज्ञाविधानाद्वा । तिस्रः *पुरः करोति ॥ १ ॥ तिरसो वा ॥ २ । ३ । २ ॥ गतिसंज्ञकस्य तिरःशब्दस्य संबन्धिनो रेफस्य कखपफेषु परेषु सकारादेशो वा भ-
वति । तिरस्कृत्य । तिरःकृत्य । तिरस्करोति । तिरः करोति । तिरस्कर्ता । तिरःकर्ता । तिरस्कर्तुम् । तिरःकर्तुम् । गतेरित्येव । तिरः कृत्वा काष्ठं गतः । अन्तर्धावपि

---

विच्छेदश्च प्रतीयते तन्नाभेदमात्रम् । न च तयोर्भेद एव । मैत्रो बालो मैत्रो युवेत्येकत्वेन प्रतिभासनात् । गौरश्वश्चेतिवद्भेदप्रतिभासाभावात् । एकान्तेन भेदेऽन्यतरविलोपः । तथा च भेदाभेदप्रतिभासा-
योग' ॥ न चाऽन्यतरस्य मिथ्यात्वमितराविशेषात् । तस्मादऽन्तरालावस्थं वस्तु तदेतत्स्याद्वादानुपातीति नात्रानेकरूपता विरुध्यते । तदेव क्रमाक्रमभाव्यनेकभेदात्मके वस्तुनि सर्वमुपपद्यते । तत्रापि
इति नैकस्या व्यक्तौ प्रवर्त्तते । अपि तु बहुव्यक्तिविषय एव । एव दारादयोऽपि पुलिङ्गा. । यथा द्वौ त्रय इति भेदविषया एव नैकैकविषया एव । एकद्रव्यविषयत्वेऽपि गुणपर्यायावयवभेदोपादानाद्वस्तु-
सामर्थ्याद्बहुत्वोपपत्ति । एव पञ्चाला इति वस्तुशक्तिस्वाभाव्यादवयवद्वारेण प्रवर्त्तते । जनपद इति समुदायद्वारेण । एवं गोदौ ग्राम इत्यादावप्येकानेकसंख्योपपत्ति । हरीतक्य फलानीति लिङ्गभेदश्च
सर्वलिङ्गत्वाद्वस्तुनः । पञ्चालमथुरे इति पञ्चालादीना बहुत्वविषयाणां समासे उत्तरपदादन्यत्र समुदायाभिधान न त्ववयवाभिधानमिति बहुत्वाभाव । नियतविषयाश्च शब्दशक्तयो भवन्ति । यथा
राज्ञः पुरुष इति वाक्ये राजशब्दो विशेषणादियोगिनमर्थमाचष्टे । वृत्तौ तु तद्विलक्षण राजपुरुष इति । चञ्चाभिरूपो मनुष्य इति सादृश्यान्मनुष्यवृत्तेश्च तद्रूप यन्न विशेषणयोगि । पञ्चालादि-
शब्दाना च क्षत्रियाद्यर्थवृत्तीनामपि सोऽयमित्यभिसंबन्धादुपचाराज्जनपदाद्यर्थेऽपि वृत्तिरित्युक्त मुख्योपचरितार्थानुपातिनीत्यादि । अत्र च रूढिः प्रमाणम् । यतो वृद्धव्यवहाराच्छब्दार्थव्युत्पत्तिरित्यु-
च्यते—रूढित इति । रूढि शिष्टव्यवहारे प्रसिद्धि. ॥—तत्तल्लिङ्गसंख्योपादानव्यवस्थेति । सा सा येदानी प्रदर्शितेति ॥ द्वितीयस्याध्यायस्य द्वितीय. पादः ॥ ॥—नमस्पुरसो—॥—नमस्कृत्येति ।
अनमो नम करणं पूर्वं 'साक्षादादि '–इति गतिसज्ञाया 'गतिकन्य '–इति स ॥—नमः कृत्वेति । अत्र नमःशब्दान्तरं न त्वव्ययमिति अमः 'अनतो लुप् ' ॥—पुर इति । पृंक् पि-

सर्पिष्काम्यति । धनुष्काम्यति । नामिन इति किम् । अयस्कल्पम् । तयोरिति किम् । मुनि. करोति । भिन्द्यु पापानि । रोः काम्य इत्येव । गी काम्यति । धू-काम्यति ॥ ८ ॥ निर्दुर्बहिराविष्प्रादुश्चतुराम् ॥ २ । ३ । ९ ॥ निरादीनां संबन्धिनो रेफस्य कखपफेषु परेषु षो भवति । बहुवचननिर्देशो निस्दुसोर्निर्दुरोश्च परिग्रहार्थ. । निष्कृतम् । निष्पीतम् । दुष्कृतम् । दुष्पीतम् । बहिस्, बहिष्कृतम् । बहिष्पीतम् । आविस्, आविष्कृतम् । आविष्पीतम् । प्रादुस्, [1]प्रादुष्कृतम् । चतुर्, *चतुष्कण्टकम् । चतुष्पात्रम् । कथं निष्कुल, दुष्पुरुष, नैष्कुल्यम्, दौष्कुल्यम् । एकदेशविकृतस्यानन्यत्वात् ॥ ९ ॥ *सुचो वा ॥ २ । ३ । १० ॥ *सुजन्तानां संबन्धिनो रेफस्य कखपफेषु परेषु षकारो वा भवति । द्विष्करोति । त्रिष्करोति । त्रिष्खनति । चतुष्पचति । चतुष्फलति । पक्षे जिह्वामूलीयोपध्मानीयौ विसर्जनीयश्च भवति। द्विᳵकरोति। द्विः करोति। त्रिᳵखनति। त्रिः खनति। चतुᳶपचति। चतु पचति। चतुᳶफलति। चतुः फलति। सुजन्तस्य चतुर परत्वादनेन विकल्पो न तु पूर्वेण नित्यो विधि । कखपफीत्येव । द्विश्चरति । त्रिस्तरति ॥ १० ॥ *वेसुसोऽपेक्षायाम्॥२।३।११॥ इसुसुस्प्रत्ययान्तस्य यो रेफस्तस्य कखपफेषु परेषु षो वा भवति अपेक्षायां स्थानिनिमित्तपदे चेत् परस्परापेक्षे भवत । सर्पिष्करोति । सर्पिष्खादयति । सर्पिष्पिबति । सर्पिष्फेनायते । धनुष्करोति । धनुष्खण्डयति । धनुष्पतति । धनुष्फलति । परमसर्पिष्करोति । परमसर्पिष्पिबति । परमधनुष्करोति । परमधनुष्पठति । पक्षे सर्पि करोति । परमसर्पि करोतीत्यादि । इसुस इति किम् । पयᳵकरोति । पयᳶपिबति । इसुसोः प्रत्यययोर्ग्रहणादिह न भवति । मुनिः करोति । नदीभि क्रियते । मुहु पठति । भिन्द्युः पापानि । मुहुरित्यव्युत्पन्नमव्ययम् । इसा साहचर्यादुस औणादिकस्य ग्रहणम् । तेनेह न भवति । चक्षुः कुलानि । त्वाग्रुस्यपीच्छसन्यः । अपेक्षायामिति किम् । तिष्ठतु सर्पि पिब त्वमुदकम् । एकार्थीभावे च न भवति । परमसर्पिःकुण्डम् ॥ ११ ॥ [2]नैकार्थेऽक्रिये ॥ २ । ३ । १२ ॥ न विद्यते क्रिया प्रवृत्तिनिमित्तं यस्य तस्मिन्नेकार्थे समानाधिकरणे पदे यत्कखपफं तस्मिन् परे इसुसुस्प्रत्ययान्तस्य संबन्धिनो रेफस्य षो न भवति । 'वेसुसोऽपेक्षायाम्' (२–३–११) इत्यस्यायं प्रतिषेधो नान्यस्य । तद्विषय एवारम्भात् ।

इत्यनेनाण् स्यात् ॥—निर्दुर्बहि—॥—प्रादुष्कृतमिति । अत्र अन्ये तु निबन्धकारा प्रादुष्पीतमित्यप्यधीयते तच्च न युक्त तथाह्युद्योतकर –प्रादुष्पीतामित्यसदेतदुदाहरण विरोधात् । प्रादु शब्दस्य कृभ्वस्तिविषय एवोपलम्भादिति ॥—चतुष्कण्टकमिति । अत्र बहुव्रीहिस्समाहारो वा । समाहारेपि पात्रादित्वात् स्त्रीत्वप्रतिषेधात् ङीर्न भवति ॥—कथमिति । अयमाशय निर्दुरो षत्वमुच्यमानमन्यत्वात्कथमत्र, तथा ह्यत्र परत्वात्पकारात्पूर्वं 'दूरादामन्त्र्यस्य'–इति प्लुत ष्यणि वृद्धिश्चेति ॥—सुचो वा । सुच इति न रेफस्य विशेषण तेन चतुष्पचतीत्यत्रापि विकल्प । न ह्यत्र सुच स्थाने रेफ 'रात्स' इति सुचो लोपादत. सुजिति प्रकृतेर्विशेषण तत्र च तदन्तविज्ञानमित्याह—सुजन्तानामिति । एव हि विज्ञायमाने सुचो लोपेऽपि स्थानिवद्भावेन सुजन्त एवायं चतु शब्द इति । नचैव त्रिष्करोतीति त्रिशब्दस्यापि सुजन्तसबन्धित्वात्कस्मान्न भवतीति वाच्यम् । अनन्तरे कृतार्थत्वादिति ॥—वेसु—॥—प्रत्यययोर्ग्रहणादिति । इह प्रत्ययाप्रत्यययो लक्षणप्रतिपदोक्तयो अर्थवद्ग्रहणे नानर्थकस्येत्यनेन च इसुसो प्रत्यययोर्ग्रहणादिह न भवतीत्यर्थ॰ ॥—नैकार्थेऽक्रिये । एकार्थे इत्यत्र एकशब्द समानार्थ । यथा चैत्रमैत्रयोरेकमातेति । एका समानेत्यर्थ ॥ अर्थशब्दस्तु

*सर्पिᳵकालकम्। यजुᳵपीतकम्। एकार्थे इति किम्। सर्पिष्कुम्भे। सर्पिᳲ कुम्भे। धनुष्पुरुषस्य। धनुᳲपुरुषस्य। आक्रिय इति किम्। सर्पिष्क्रियते। सर्पिः क्रियते। धनुष्प्रासम्। धनुः प्रासम्॥ १२॥ *समासेऽसमस्तस्य॥ २। ३। १३॥ पूर्वेणासमस्तस्येसुस्प्रत्ययान्तस्य संबन्धिनो रेफस्य कखपफे परे षो भवति ‘समासे’ तौ चेन्निमित्तनिमित्तिनावेकत्र समासे भवतः। सर्पिष्कुम्भः। असर्पिः सर्पिः कृत्वा सर्पिष्कृत्य। सर्पिष्खण्डम्। सर्पिष्पानम्। सर्पिष्फलम्। धनुष्कृत्य। धनुष्खण्डम्। धनुष्पृष्ठम्। धनुष्फलम्। समास इति किम्। तिष्ठतु सर्पिः पिब त्वमुदकम्। असमस्तस्येति किम्। परमसर्पिःकुण्डम्। इन्द्रधनुःखण्डम्। पूर्वेणापि न भवति समासे सत्यपेक्षाया अभावात्। *इदमेवासमस्तस्येति वचनं ज्ञापकम् इसुसोः ‘प्रत्ययः प्रकृत्यादेः’ (७–४–११५) इत्ययं नियमो न भवति। तेन परमसर्पिष्करोति, परमसर्पिः करोतीत्यत्र ‘वेसुसोऽपेक्षायाम्’ (२–३–११) इत्यनेनाधिकस्यापि विकल्पो भवति। बहुसर्पिष्कुण्डम्, बहुसर्पिष्पात्रमित्यत्र तु बहुप्रत्ययादेरपि असमस्तत्वादनेन नित्यं भवति॥ १३॥ *भ्रातुष्पुत्रकस्कादयः॥ २। ३। १४॥ भ्रातुष्पुत्रादयः कस्कादयश्च कखपफेषु परेषु रेफस्य स्थाने यथासंख्यं कृतषत्वसत्वाः साधवो भवन्ति। भ्रातुष्पुत्रः। ‘ऋतां विद्यायोनिसंबन्धे’ (३–२–१७) इति षष्ठ्या अलुप्। परमसर्पिष्कुण्डिका। परमधनुष्कपालम्। परमबर्हिष्पूलम्। परमयजुष्पात्रम्। अत्र सर्पिष्कुण्डिकाधनुष्कपालबर्हिष्पूलयजुष्पात्राणां पूर्वेण षत्वे सिद्धेऽपि समस्तार्थमिह पाठः। अन्ये त्वेषां समस्तानां षत्वं न मन्यन्ते। तन्मते तु परमसर्पिःकुण्डिकेत्यादिषु षत्वं न भवति। कस्कः। वीप्सायां द्विर्वचनम्। कुतः कुत आगतः *कौतस्कुतः। शुनस्कर्णः। ‘षष्ठ्याः क्षेपे’ (३–२–३०) इत्यलुप्। सद्यस्कालः। बहुव्रीहिरसमासो वा। सद्यः क्रयणं सद्यस्क्रीः। तत्र भवः साद्यस्क्रः। भ्रातुष्पुत्र। सर्पिष्कुण्डिका। बर्हिष्पूल। यजुष्पात्र। इति भ्रातुष्पुत्रादयः।

---

इदंतदित्यादिसर्वनाम्ना व्यपदिश्यमानेऽनेकस्य युगपत्प्रयुज्यमानस्य भिन्नप्रवृत्तिनिमित्तकस्य शब्दस्याधिकरणे द्रव्ये वर्तते॥—सर्पिᳵकालकमित्यादि। कालकं पीतकमिति गुणवचनमक्रियावाचि समानाधिकरणमत प्रतिषेध॥—पीतकमिति पीतशब्द यावादित्वात्स्वार्थे क। यद्वा पीतेन रक्तमिति ‘नीलपीतादकम्’ इति क॥—समासे—॥—सर्पिष्पानमिति। ‘पानस्य भावकरणे’ णत्वे प्राप्ते ‘पात्पदे’ इति निषेध॥—इदमेवेति। ननु परमसर्पिष्करोति परमधनुष्करोतीति परमसर्पि परमधनु शब्दयोरिसुसन्तत्वाभावान्मा भूत्षकार परमुत्तरपदार्थप्रधानत्वात्समासस्य सर्पिर्धनु शब्दयोरिसुसन्तत्वात्तदाश्रय षो भविष्यति किं तदर्थेन ज्ञापकेन। न चेव सति परमसर्पि कुण्डमित्यत्रापि प्राप्नोति। सर्पि शब्दस्य कुण्डेनासमासात् किं तु परमसर्पि शब्द। उच्यते। यद्यपि परमसर्पि करोतीत्युत्तरपदार्थप्रधाने समासे प्रधानस्यापेक्षाया योगात्षत्व सिध्यति। तथापि परम सर्पिर्यस्य सर्पिष समीप सर्पिषो निष्क्रान्तमिति परमसर्पिष्करोति उपसर्पिष्करोति नि सर्पिष्करोतीत्यत्र न सिध्यति। सर्पि शब्दस्य करोतिक्रियायाश्च व्यपेक्षाया अभावादिति तदर्थमिद ज्ञापकमिति भाव॥—भ्रातुष्पुत्र—॥—साद्यस्क्रः॥ सद्यस्क्रीशब्दादेव प्रत्यये साद्यस्क्रस्य सिद्धत्वात्पृथगुपादान प्रत्ययान्तरनिवृत्त्यर्थं तेन सद्यस्क्रियो भाव सद्य क्रीता इत्यत्र न सत्वम्॥—कौतस्कुतः। गणपाठादण्। अन्यथा ‘क्वेहामात्र’–इति त्यच् स्यात्। किंच तसन्तस्य प्रथमातत्वेन तत इति पञ्चम्यन्ताद्विधीयमानो न प्राप्नोति। केचित्त्वपञ्चम्यन्तादपि अणमिच्छन्ति। ततस्तन्मतेन तत आगतने इत्यनेन वाऽण्। ननु द्वित्वे कुत एकपदत्वाभावात्कथं ‘तत आगते’ इत्यऽण्।

कस्कः । कौतस्कुतः । शुनस्कर्णः । सद्यस्कालः । सद्यस्क्रीः । साद्यस्क्रः । भास्करः । *अहस्करः । अयस्काण्ड । तमस्काण्ड । अयस्कान्त । अयस्कुण्ड । मेदस्पिण्ड । अयस्पिण्ड । इति कस्कादयः । बहुवचनमाकृतिगणार्थम् । तेन यथादर्शनमन्येऽपि भवन्ति । सर्वत्र नामिनः परस्य रेफस्य षत्वमन्यत्र सत्वं दृष्टव्यम् ॥ १४ ॥

*नाम्यन्तस्थाकवर्गात्पदान्तः कृतस्य सः शिड्नान्तरेऽपि ॥ २ । ३ । १५ ॥ नामिनोऽन्तस्थायाः कवर्गाच्च परस्य पदान्तः पदमध्ये कृतस्य विहितस्य कृतसंबन्धिनो वा सः सकारस्य षो भवति शिटा नकारेण चान्तरेऽपि व्यवधानेऽपि । नामिनः, आशिषा । अग्निषु । नदीषु । वायुषु । वधूषु । पितृषु । एषा । गोषु । नौषु । सिषेवे । शिष्यते । चिचीषति । सुष्वाप । लुलूषति । जेष्यति । अनैषीत् । अच्योष्ट । अकौषीत् । सर्पिष्मान्, यजुष्मान्, दोष्मान् इत्यादौ 'न स्तं मत्वर्थे' (१-१-२३) इति पदप्रतिषेधात्पदमध्यत्वम् । अन्तस्थायाः, गीर्षु । धूर्षु । चिकीर्षति । पुपूर्षति । हल्षु । कवर्गात्, वाक्षु । त्वक्षु । विपक्षति । शिक्षति । अपाङ्क्षु । कुङ्क्षु । शिड्नान्तरेऽपि । सर्पिष्षु । हविष्षु । अत्र सकारेण व्यवधानम् । सर्पिःषु । धनुःषु । सर्पींषि । यजूंषि । वह्वाशीषि कुलानि । नकारस्यावश्यम् अनुस्वारभवनात् शिड्ग्रहणेनैव सिद्धे नकारोपादानं नकारस्थानेनैवानुस्वारेण यथा स्यादित्येवमर्थम् । तेन मकारानुस्वारेण न भवति । पुंसु । शिटा नकारेण चान्तरे इति प्रत्येकं वाक्यपरिसमाप्तेरुभयव्यवधाने न भवति । णिसुकि चुम्बने । निंस्से । नाम्यन्तस्थाकवर्गादिति किम् । असौ । दास्यति । पदान्तरिति किम् । पदादौ पदान्ते च माभूत् । दधिसेक् । दधिसेचौ । ईषदपरिसमाप्तः सेक् बहुसेक् । बहुसेचौ । अत्रान्तर्वर्तिन्या विभक्त्या सेक्शब्दस्य पदत्वात् सकारस्य पदादित्वम् । अन्ते, अग्निस्तत्र । कृतस्येति किम् । विसम् । मुसलम् । सिसाधयिषति । अथ विसंविसं, मुसलंमुसलमित्यादौ द्वित्वे कृते सकारस्य षत्वं कस्मान्न भवति । उच्यते । नात्र कृत सकारः किं तु तत्संपृक्तः । समुदायो द्विरुच्चार्यते । तिसृभिरिसत्र तु विधानबलान्न भवति । अधिकारश्चायमा षत्वविधेः ॥ १५ ॥

*समासेऽग्नेः स्तुतः ॥ २ । ३ । १६ ॥ अग्निशब्दात्परस्य स्तुत्शब्दसंबन्धिनः सकारस्य समासे षो भवति । अनुष्टुत् । अग्निष्टुतौ । अग्निष्टुतः ॥ १६ ॥

*ज्योतिरायुर्भ्यां च स्तोमस्य ॥ २ । ३ । १७ ॥ ज्योतिरायुःशब्दाभ्यामग्नेश्च परस्य स्तोमशब्दसंबन्धिनः सकारस्य समासे षो भवति । ज्योतिःष्टोमः । आयुःष्टोमः । अग्निष्टोमः । समास इत्येव । ज्योतिः स्तोमं द-

---

सत्यम् । भूतपूर्वकन्यायाद्विष्यति ॥—अहस्करः । अह किरति लिट्याचिति कार्य कृगस्तु 'अत ककमि'-इति सिद्धमेव ॥—अयस्कान्तेति । कने इत्यस्य रूप कामयतेस्तु 'अत ककमि'- इति सिद्धमेव कामयतेर्वासमस्तार्थमिह पाठ । तेन परमायस्कान्त इत्यपि भवति ॥—कस्क इति । यद्येव क क कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकर इत्यादि कथ, यतस्तत्रापि कस्क इति स्यात् । सत्यम् । परमताभिप्रायेण । ते हि भ्रातुष्पुत्र इति सूत्र सन्धिविधौ विदधति । ततो विरामे विवक्षिते सति 'न सन्धि' इत्यस्य प्रवृत्तेर्न सत्वम् ॥—नाम्यन्तस्था—॥—अनुस्वारभवनादिति । नित्यत्वादन्तरङ्गत्वाच्चेत्यर्थं ॥—विसमिति । अव्युत्पन्नो ग्राह्य । न तु 'पटिवीभ्या दिसडिसौ' इति । यद्वा बिसच् प्रेरणे बिस्यति 'नाम्युपान्त्य'-इति के बिसम् । यदा तु दिसाडिसौ तदा विधानसामर्थ्यान्न भवति ॥—समासे—॥ असप इति वचनात् सकारस्य पदमध्यत्व नास्तीति वचनम् ॥—जोतिरायुः—॥—ज्योतिः स्तोम दर्शयतीति । ज्योति प्रदीपादि कर्तृ समूह

शयेति॥१७॥ *मातृपितुः स्वसुः॥२। ३।१८॥ मातृपितृभ्यां परस्य स्वसृशब्दसंबन्धिनः सकारस्य समासे षो भवति। मातृष्वसा। पितृष्वसा। समास इत्येव। मातुः स्वसा। पितुःस्वसा ॥१८॥ *अलुपि वा॥२।३।१९॥ मातृपितृभ्यां परस्य स्वसृशब्दसंबन्धिनः सकारस्यालुपि समासे षो वा भवति। *मातुःष्वसा। मातुःस्वसा। पितुःष्वसा। पितुःस्वसा। 'स्वसृपत्योर्वा' (३-२-३८) इति षष्ठ्या अलुप्। समास इत्येव। मातुः स्वसा। पितुः स्वसा ॥१९॥ निनद्याः स्नातेः कौशले॥२।३।२०॥ निनदीशब्दाभ्यां परस्य स्नातेः संबन्धिनः सकारस्य समासे षो भवति कौशले नैपुण्ये गम्यमाने। निष्णः कटकरणे। निष्णातः कटकरणे। नदीष्णः प्रतरणे। *नदीष्णातः प्रतरणे। कुशल इत्यर्थः। नद्याः स्नातस्य नेच्छन्त्येके। कौशल इति किम्। निस्नातः। नदीस्नः। यः स्रोतसा ह्रियते ॥ २० ॥ *प्रतेः स्नातस्य सूत्रे ॥२।३।२१॥ प्रतेः परस्य स्नातसंबन्धिनः सकारस्य समासे षो भवति सूत्रेऽभिधेये। विशेषानुपादानाच्चोर्णादिसूत्रं व्याकरणादिसूत्रं च गृह्यते। प्रतिष्णातं सूत्रम्। ऊर्णादिसूत्रं क्षालनेन शुद्धम्। व्याकरणादिसूत्रं त्वतिव्याप्त्यादिदोषाभावेन शुद्धमित्यर्थः। सूत्र इति किम्। प्रतिस्नातमन्यत्। प्रत्ययान्तोपादानं प्रत्ययान्तरनिवृत्त्यर्थम्। प्रतिस्नात् सूत्रम्। प्रतिस्नायकं सूत्रम् ॥ २१ ॥ *स्नानस्य नाम्नि ॥ २ । ३ । २२ ॥ प्रतेः परस्य स्नानसंबन्धिनः सकारस्य समासे षो भवति सूत्रविषये नाम्नि। समुदायश्चेत्सूत्रविषयं नाम भवतीत्यर्थः। प्रतिष्णानं सूत्रमित्यर्थः। नाम्नीति किम्। प्रतिस्नानमन्यत् ॥ २२ ॥ *वेः स्त्रः ॥ २ । ३। २३ ॥ वेः परस्य स्तृणातेः सकारस्य समासे षो भवति नाम्नि समुदायश्चेत्संज्ञाविषयो भवति। विष्टरो वृक्षः। *विष्टरमासनम्। *विष्टारपङ्क्तिश्छन्दः। विष्टारबृहती छन्दः। नाम्नीत्येव। विस्तरो वचसाम्। विस्तारः पटस्य॥२३॥ अभिनिष्टानः॥२।३।२४॥ अभिनिस् इत्येतस्मात्परः ष्टानशब्दः समासे कृतषत्वो निपात्यते नाम्नि समुदायश्चेत्संज्ञाविषयो भवति। अभिनिष्टानो वर्णः। विसर्गस्यैषा संज्ञा। वर्णमात्रस्येत्यन्ये। नाम्नीत्येव। अभिनिःस्तन्यते अभिनिस्तानो मृदङ्गः॥२४॥ गवियुधेः स्थिरस्य ॥२॥३।२५॥ गवि युधि

---

दर्शयतीत्यर्थ ॥—मातृपितुः—॥—अकृतत्वात्पदादित्वाच्चाप्राप्तविधानम्। मातृपितुरित्यत्र सूत्रत्वात् 'आ द्वन्द्वे' इति न प्रवर्तते। वदिरन्नमतिस्तु आकारस्यानिर्देश ऋकारान्तस्वरूपपरिग्रहार्थं। ऋकारान्तस्वरूप षष्ठीतत्पुरुष एव न तु द्वन्द्व इति मन्यते ॥—अलुपि वा ॥ पूर्वेण प्राप्ते विभाषेयमारभ्यते ॥—मातुःष्वसेति। 'शपसे शपस वा' इति पाक्षिके रस्य सत्वे चातूरूप्यम् ॥—निनद्याः—॥—नदीष्णातः प्रतरणे इत्यादिष्ववयवार्थो व्युत्पत्त्यर्थमेवाश्रीयते। कृतषत्वेन त्वनेन क्रियासु तात्पर्येणानुष्ठातोच्यते 'नद्या स्नातस्य' इत्यत्र ॥—एके इति चन्द्रप्रभृतय। ते हि नद्याः स्नातस्य ने स्नातस्य वेच्छन्ति ॥—प्रतेः स्ना—॥—प्रत्ययान्तरनिवृत्त्यर्थमिति। अन्यथा पूर्वसूत्रात्स्नातिरनुवर्त्स्यत एव किं तदुपादानेन इत्यर्थं ॥—स्नानस्य नाम्नि ॥—प्रतिष्णानमिति। प्रतिस्नातीति नन्द्यादिभ्यो रम्यादिभ्यो वाऽन। अथवा प्रतिस्नाति तेनेति करणेऽनट् ॥—वेः स्त्रः ॥—विष्टरमासनमिति। अत्र विष्टरोऽतरौ नपुंसकत्वम् ॥—विष्टारपङ्क्तिरिति। विस्तीर्यते 'छन्दोनाम्नि'-इति घञ् विस्तरस्य पङ्क्तिर्विस्तरस्य बृहतीति तु वाक्ये न घञ् संज्ञाया अभावात्समुदायेन हि संज्ञा गम्यते। संज्ञाविषयत्वं च सामस्त्येन एकदेशेन च भवतीति क्रमेणोदाहरति विष्टर इत्यादि। विस्तीर्यत इति 'युवर्ण'-इत्यलि विष्टरः। विष्टार इति हि छन्दोनाम्नोऽवयवः विष्टारपङ्क्तिः ॥—अभिनि—॥ अत्रोपलक्षणत्वान्निरोऽपि ग्रहः। 'व्यत्यये लुग्वा' रलुक् ॥—गवियुधेः—॥

तेजस्तराम्। तेजस्तमाम्। नाम्न इति किम्। भिन्न्युस्तराम्। विहितविशेषणं किम्। 'सर्पिस्तत्र। सर्पिषस्तरणम् तमनं वा सर्पिस्तरः सर्पिस्तमः। तीति किम्। सर्पिस्माद्भवति ॥ ३४ ॥ निसस्तपेऽनासेवायाम् ॥ २।३।३५ ॥ निसः संबन्धिनः सकारस्य तकारादौ तपतौ परे पो भवति अनासेवायामर्थे। पुनःपुनःकरणमासेवा। निष्टपति सुवर्णम्। सकृदग्निं स्पर्शयतीत्यर्थः। अनासेवायामिति किम्। निस्तपति सुवर्णं सुवर्णकारः। पुनः पुनस्तपतीत्यर्थः। 'निष्टप्तं रक्षो निष्टप्ता अरातयः' इत्यत्र तु सदप्यासेवनं न विवक्ष्यते। तीत्येव। निरतपत्। शब्निर्देशो भौवादिकपरिग्रहार्थः यङ्लुब्निवृत्त्यर्थश्च। निस्तातप्ति। निस्तातपीति। ''तिवा शवानुबन्धेन निर्दिष्टं यद्गणेन च ॥ एकस्वरनिमित्तं च पञ्चैतानि न यङ्लुपि'' ॥ १ ॥ ३५ ॥ घस्वसः ॥ २।३।३६ ॥ नाम्यन्तस्थाकवर्गात्परस्य घसेर्वसेश्च धातोः संबन्धिनः सकारस्य पो भवति। जक्षतुः। जक्षुः। जक्षिवान्। ऊषतुः। ऊषुः। उषितः। उषितवान्। घसिरिह प्रकृत्यन्तरम्। आदेशस्य कृतत्वेनैव सिद्धत्वात्। अकृतसकारार्थं वचनम्। शिड्नान्तरेऽपि वहंषि। वहुषु वसन्तीति नगराणि। नाम्यन्तस्थाकवर्गादित्येव। जघास। वसति ॥ ३६ ॥ 'णिस्तोरेवास्वदस्विदसहः षणि ॥ २।३।३७ ॥ स्वदस्विदसहवर्जितानां ण्यन्तानां स्तौतेरेव च संबन्धिनः सकारस्य नाम्यन्तस्थाकवर्गात्परस्य षणि षत्वभूते सनि परे पो भवति नान्येषाम्। सिषेवयिषति। सुष्वापयिषति। सिषेधयिषति। तुष्टूषति। स्वदादिपर्युदासः किम्। सिस्वादयिषति। सिस्वेदयिषति। सिसाहयिषति। स्तौतिसाहचर्यात् स्वदादिपर्युदासेन मद्दशग्रहणाच्च ण्यन्तानामपि षोपदेशानामेव ग्रहणम्। तथा च कृतत्वात् सकारस्य 'नाम्यन्तस्थाकवर्गा'—(२-३-१५) आदिसूत्रेणैव सिद्धे नियमार्थं वचनम्। णिस्तोरेव षणि षत्वं नान्यस्य। तेनेह न भवति। सुसूषति। सिसिक्षति। सिसेविषति। एवकारः षण्येव णिस्तोरिति विपरीतनियमनिवृत्त्यर्थः। तेनेहापि भवति। अमीषिवत्। तुष्टाव। षणीति किम्। सिषेव। सुष्वाप। षत्वं किम्। सुसुप्सति। तिष्ठासति। नकारः किम्। व्यतिसुषुपिषे। कथं 'प्रतीषिषति, अधीषिषति। षणि निमित्ते धातोः षत्वनियम उक्तः। इह तु सन एव द्विरुक्तस्य षत्वं न धातोरिति न प्रतिषेधः। 'सोषुपिषते, सेषिविषते इत्यादौ तु यङि द्वित्वं पश्चात् सन्निति न

॥—सर्पिस्तत्रेति। ननु सर्पिस्तत्रेत्यादौ 'वेसुसोऽपेक्षायाम्' इत्यस्य कखपफीति व्यावृत्त्यैव षत्वव्यावृत्ते सिद्धत्वात् किमनेन। नैवम्। अपेक्षायां प्राप्तिरनेन तु अनपेक्षायामपि शङ्क्यते। यथा पश्चात् सर्पिस्तत्र यजुर्वर्त्तत इति ॥—निसस्तपे—॥—निरतपदिति। अत्र पूर्वं कृतमपि षत्वं परस्मिन्नडागमे 'णषमसदित्यनेनासिद्धम्'॥—निस्तातपीति। अत्र भृशं निष्टपतीति वाक्यं कार्यम्। आभीक्ष्ण्ये त्वनासेवायामिति व्यावृत्त्यैव निरस्तत्वात्। अन्यत्वादप्राप्ते वचनम् ॥—घस्वसः॥ अत्र वसो भौवादिकस्य ग्रहः। वसिक् आच्छादने इत्यस्य तु यद्ग्रहणेन नामिन सस्यासंभवात्। अदाद्यनदाद्योरिति न्यायाद्वा ॥—वहंषीति। वसन्तीति क्विपि यजादित्वात् उप वहन' उषो वास्तव्या येषु तानि। अत्र नागमरूपे स्यादिविधौ प्रथमं कृतमपि षत्वं निवर्तत इति प्राग् नागमस्तस्मिंश्च नामिनो व्यवधानेऽपि शिड्नान्तरेऽपीति षत्वम् ॥—णिस्तो—॥—प्रतीषिषतीति। अत्र इणूक् गताविति लिख्यते तस्य च ज्ञानार्थत्वात् 'सनीङश्च' इति न गम्यादेशः। इक् स्मरणे इङ्क् अध्ययने इत्यनयोस्तु अज्ञान इति विशेषणं नाऽसंभवात्। अतोऽनयोर्गम्यादेशः प्राप्नोतीत्येतौ न लिख्येते। इणूक्गतावित्यस्याप्यज्ञानार्थत्वविवक्षायामादेशप्राप्तिः। इ टु इत्यस्य तु ज्ञानार्थत्वविवक्षायामविवक्षायामपि नादेशः। 'इणिकोर्गा' इत्यत्र इणिकारचाऽनुकृष्टत्वात् 'सनीङश्च'—इति चकारेण ॥—सोषुपिषत इति। अत्र यङोऽकारस्य स्थानित्वेन न गुणः। तथा 'नाम्यन्तस्था'—इत्यस्यैवाय

॥ ५१ ॥

प्रतिषेधः । येषां तु दर्शने द्वित्वेऽपि पुनः सनि द्विरुक्तिः तन्मते सुसोषुपिपत इत्यत्र षणि सुशब्दात् परस्य सस्य षत्वं न भवत्येव ॥३७॥ *सञ्जेर्वा ॥ २ । ३ । ३८॥ *इकारान्तनिर्देशात्सञ्ज इह ण्यन्तो गृह्यते । सञ्जयतेर्नाम्यन्तस्थाकवर्गात्परस्य षणि परे सस्य षो वा भवति। सिसञ्जयिषति । सिषञ्जयिषति। नित्यं षत्वमित्येके ॥३८॥ *उपसर्गात्सुग्सुवसोस्तुस्तुभोऽट्यप्यद्वित्वे ॥ २ । ३ । ३९॥ अद्वित्वे द्विर्वचनाभावे सति सुनोतिसुवतिस्यतिस्तौतिस्तोभतीनां सकारस्योपसर्गस्थान्नाम्यन्तस्थाक-वर्गात्परस्य षो भवति अट्यपि अडागमेऽपि सति । अड्व्यवधानेऽपीत्यर्थः । सुग्, अभिषुणोति । परिषुणोति । शिड्नान्तरेऽपीत्यधिकारात्, निःषुणोति । दुःषुणोति । अभिषुण्वन्तं प्रयुङ्क्ते, अभिषावयति । अत्रोपसर्गसंबन्धे सति णिः । 'ण्यन्तानां धातूनामुपसर्गसंबन्धे न भवति । अभिसावयति । परिसावयति ।*अट्यपि, अभ्यषुणोत् । पर्यषुणोत् । गित्निर्देशात् *सौतिसवत्योर्माभूत् । अभिसौति । अभिसवति । सुव, अभिषुवति । परिषुवति । अट्यपि । अभ्यषुवत् । पर्यषुवत् । शनिर्देशात् *सूतिसूयत्योर्न भवति । अभिसूते । अभिसूयते । सो, अभिष्यति । परिष्यति । अट्यपि । अभ्यष्यत् । पर्यष्यत् । स्तु, अभिष्टौति । परिष्टौति । *सुष्टुतम् । सुष्टवम् । दुःष्टवम् । *अट्यपि । अभ्यष्टौत् *प्रत्यष्टौत् । स्तुभ्, अभिष्टोभते । परिष्टोभते । उपसर्गादिति किम् । दधि सुनोति । मधु सुनोति । पूजायां सोः पूजातिक्रमयोश्चातेरुपसर्गत्वाभावादिह न भवति । सुस्तुतम् । अतिस्तुतम् । येन धातुना युक्ताः प्रादयस्तमेव प्रत्युपसर्गसंज्ञा इति ध्यात्वन्तरयोगे न भवति । निर्गताः सावका अस्मादसौ निःसावको देशः । अभिसावकीयतीत्यत्र सावकीयतेरभिना योगो न सुनोतेरिति न भवति । शिड्नान्तरेऽपीत्यधिकारात् अटा व्यवधाने न प्राप्नोतीत्यट्यपीति ग्रहणम् । अपिशब्दोऽभावार्थः । अन्यथाट्येव स्यात् । अद्वित्वे इति किम् । अभिसुसूषति । अभ्यसुसूषत् । परिसुसूषति । पर्यसुसूषत् । अभिसिषासति । अभ्यसिषासत् । अत्र पूर्वसकारस्य षत्वं न भवति । मूलधातोस्तु यथाप्राप्तं षत्वं भवत्येव । केचित्तूपसर्गपूर्वाणां सुनोत्यादीनां पञ्चानामपि सन्न-न्तस्तौतिवर्जितानां द्वित्वे सति मूलप्रकृतेरपि षत्वं नेच्छन्ति । अभ्यसुसवत् । अभिसुसाव । अभिसोसूयते । सो, अभ्यसीसयत् । अभिसेसीयते । अभिसिसासति । स्तु, अभितोस्तूयते । अभितुस्ताव । अभ्यतुस्तवत् । स्तुभ् , अभितुस्तुभे । अभितोस्तुभ्यते । अभ्यतुस्तुभत् । इत्यादि । पदादौ प्रतिषेधे प्राप्ते वचनम् ॥ ३९ ॥ *स्थासेनिसेधसिचसञ्जां द्वित्वेऽपि ॥ २ । ३ । ४० ॥ उपसर्गस्थान्नाम्यन्तस्थाकवर्गात्परेषां स्थादीनां सकारस्य षो भवति द्वित्वेऽपि अट्यपि द्विवचनेनाटा द्वाभ्यां च व्यवधानेऽपीत्यर्थः । स्था, अधिष्ठास्यति । प्रतिष्ठास्यति । अधितष्ठौ । प्रतितष्ठौ । अध्यष्ठात् । अध्यष्ठास्यत् । सेनि, सेनया अभियाति अभिषेणयति ।

---

नियम । एतद्विषय एवारम्भात् ॥—सञ्जेर्वा ॥—इकारान्तनिर्देशादिति । अत एवेह इकार उच्चारणार्थो न क्वचिदपि विहित. ॥—उपसर्गा—॥ अत्र—प्रत्यष्टौत् न पर्यष्टौत् परिपूर्वस्य 'स्तुस्वञ '-इति विकल्पभणनात् ॥—ण्यन्तानामिति । धात्वन्तरत्वादिति शेष. ॥—अट्यपीति । विशेषविहितत्वेन पूर्वं कृतमपि षत्व परस्मिन्नडागमेऽसिद्ध स्यादिति ॥—सौतिसवत्योरिति । षुक् प्रसवे सुं प्रसवैश्वर्ययो. इत्यनयोः ॥—सूतिसूयत्योरिति । षूङौक् षूङौच् इत्यनयोः ॥—सुष्टुतमिति । सातिशयं स्तूयते स्म वाक्यम् । पूजायां तु सोरुपसर्गत्वाभावात् ॥—स्थासेनि—॥ अथ

अभिषिषेणयिषति । अभ्यषेणयत् । अभ्यषिषेणयिषत् । सेध, प्रतिषेधति । प्रतिषिषेधिषति । प्रत्यषेधत् । प्रत्यषिषेधिषत् । सिच्, अभिषिञ्चति । सुषिक्तं नाम
किं तवात्र । अभिषिषिक्षति । अभ्यषिञ्चत् । अभ्यषिषिक्षत् । सञ्ज, अभिषजति । अभिषषञ्ज । अभिषिषङ्क्षति । अभ्यषजत् । अभ्यषिषङ्क्षत् । ण्यन्तानामपि
भवति । प्रतितिष्ठन्तं प्रयुङ्क्ते प्रतिष्ठापयति । एवं प्रतिषेधयति । उपसर्गादित्येव । अधिस्थास्यति । गतार्थत्वान्नात्राधिरुपसर्गः । वृक्षं वृक्षं परि सिञ्चति । अत्र वीप्स्य-
संबद्धस्य परेर्धातुना संबन्धाभावात् नोपसर्गत्वम् । निर्गताः सेचका अस्मान्निःसेचको देशः । अत्र येन धातुना युक्ताः प्रादयस्तमेव प्रत्युपसर्गसंज्ञा इति न भवति ।
सेधेति कृतगुणस्य निर्देशः सिध्यतिनिवृत्त्यर्थः । अभिसिध्यति । अकारस्तूच्चारणार्थो न तु शब्निर्देशः । तेन यङ्लुप्यपि भवति । प्रतिषेषिधीति । सेनेः अपोपदे-
शार्थं स्थासञ्जोरवर्णान्तव्यवधानेऽपि विध्यर्थं सिच्सञ्जसेधां पाणि नियमबाधनार्थं सर्वेषामड्व्यवधाने पदादौ च षत्वार्थं वचनम् ॥४०॥ अङ्प्रतिस्तब्धनिस्त-
ब्धे स्तम्भः ॥ २ । ३ । ४१ ॥ उपसर्गस्थान्नाम्यन्तस्थाकवर्गात्परस्य स्तम्भसकारस्य द्वित्वेऽपि अड्यपि षो भवति न चेदसौ स्तम्भिर्ङे प्रतिस्तब्धे निस्तब्धे च
विषये भवति । विष्टभ्नाति । प्रतिष्टभ्नाति । वितष्टम्भ । प्रतितष्टम्भ । प्रतितष्टभ्यते । अभितिष्टम्भिषति । व्यष्टभ्नात् । प्रत्यष्टभ्नात् । अङ्प्रतिस्तब्ध-
निस्तब्ध इति किम् । व्यतस्तम्भत् । प्रत्यतस्तम्भत् । प्रतिस्तब्धः । निस्तब्धः ॥ ४१ ॥ अवाच्चाश्रयोर्जाविदूरे ॥२ । ३ । ४२ ॥ अवादुपसर्गात्परस्य स्तम्भः
सकारस्याश्रयादिष्वर्थेषु गम्यमानेषु द्वित्वेऽपि अड्यपि षो भवति अङे ङविषयश्चेत् स्तम्भिर्न भवति । आश्रय आलम्बनम् । दुर्गमवष्टभ्नाति । दुर्गमवष्टभ्या-
स्ते । अवतष्टम्भ दुर्गम् । दुर्गमवाष्टभ्नात् । ऊर्ज ऊर्जित्वम् । अहो वृषलस्यावष्टम्भः । अवष्टब्धो रिपुः शूरेण । अविदूरमनतिविप्रकृष्टम् आसन्नमदूरासन्नं च गृह्यते ।
अवष्टब्धा शरत् । अवष्टब्धे सेने । अवादिति किम् । प्रस्तब्धः । चकारोऽङ इत्यस्यानुवृत्त्यर्थः अनुक्तसमुच्चयार्थश्च । तेनोपष्टम्भ उपष्टम्भक उपष्टब्ध
इत्यादावुपादपि भवति । उपावादित्यकृत्वा चकारेण सूचनम् अनित्यार्थं तेनोपस्तब्ध इत्यपि भवति । आश्रयादिष्विति किम् । अवस्तब्धो वृषलः शीतेन ।
अङ इत्येव । अवातस्तम्भत् ॥ ४२ ॥ व्यवात्स्वनोऽशने ॥ २ । ३ । ४३ ॥ वेरवाच्चोपसर्गात्परस्य स्वनो धातोः सकारस्याशने भोजनेऽर्थे द्वित्वेऽपि अड्यपि षो
भवति । पूर्वसूत्रे चानुकृष्टत्वादिहाङ इति नानुवर्तते । विष्वणति । अवष्वणति । भुङ्क्ते इत्यर्थः । सशब्दं भुङ्क्ते इत्यर्थं इत्यन्ये । भुञ्जानः कंचिच्छब्दं करोती-

सुस्थितो दुस्थित इत्यादौ कथं षत्वाभाव । उच्यते । उपसर्गप्रतिरूपका निपाता एते इत्युपसर्गत्वाभावात् षत्वाभाव ॥—ण्यन्तानामपीति । णिग प्रागेवोपसर्गसंबन्धात् ॥—अपोपदेशार्थमिति ।
अपोपदेशत्वं च सह इनेन वर्तेत इति व्युत्पत्तौ । सर्वेऽपि साधितस्यापि वा व्युत्पत्तिपक्षे ॥—स्थासञ्जोरिति । उपसर्गस्थस्य नामिनोऽवर्णान्तेन द्विर्वचनेनेत्यर्थ ॥—नियमबाधनार्थमिति । सेनेस्तु
'णिस्तोरेवा'–इति सिद्ध तिष्ठतेस्तु सन् षत्वरूपो नास्तीति ॥—अङ्प्रति—॥ ष्टभुर् इत्यस्य लाक्षणिकत्वान्न ग्रहणमिति नैयासिका प्राहु । पारायणकारेस्तु अस्यापि षत्वं कृतम् । एवमुत्तर-
सूत्रेऽपि ज्ञेयम् ॥—अवाच्चा—॥ समुदायाऽनुवृत्तावपि व्यभिचारादङ इत्यस्यैव ग्रह इत्याह—अङे इति ॥—दुर्गमिति । दु खेन गम्यतेऽस्मिन्निति । 'सुगदुर्गमाधारे' इति सिद्धि । कर्मव्यु-
त्पत्तौ तु खलु स्यात् । दुर्गं नगरादि बहुल वृत्तेति क्लीबत्वम् । दु:खेन गम्यतेऽन तत्र वाच्यलिङ्ग । पारायणकारेस्तु भौवादिकस्यास्य अवष्टम्भते दण्डमिति न तु नैयासिका. ॥—अनित्यार्थमिति ।

त्यर्थ इत्यपरे। विषष्वाण। अवषष्वाण। विषंष्वण्यते। अवषंष्वण्यते। विषिष्वणिषति। अवषिष्वणिषति। व्यष्वणत्। अवाष्वणत्। व्यषिष्वणत्। अवाषिष्वणत्। व्यवादिति किम्। अतिस्वनति। अत्यसिस्वनत्। अशन इति किम्। विस्वनति। अवस्वनति मृदङ्गः। विविधं शब्दं करोतीत्यर्थः ॥ ४३ ॥ *सदोऽप्रतेः परोक्षायां त्वादेः ॥ २ । ३ । ४४ ॥ प्रतिवर्जितोपसर्गस्थात् नाम्यन्तस्थाकवर्गात्परस्य सदो धातोः सकारस्य द्वित्वेऽप्यद्व्यपि षो भवति परोक्षायां तु द्वित्वे सति आदेः पूर्वस्यैव भवति। निषीदति। विषीदति। निषाषद्यते। विषाषद्यते। निषिषत्सति। विषिषत्सति। न्यषीदत्। व्यषीदत्। न्यषीषदत्। व्यषीषदत्। परोक्षायां त्वादेरेव। निषसाद। विषसाद। अप्रतेरिति किम्। प्रतिसीदति। प्रत्यसीषदत्। प्रतिसिषत्सति। अत्र प्रतेः परस्याद्यसकारस्य षत्वं न भवति। प्रकृतिसकारस्य तु नामिनः परस्य 'नाम्यन्तस्था'–(२–३–१५) दिसूत्रेण भवत्येव। अस्यापि नेच्छन्त्येके। प्रत्यसीसदत्। प्रतिसिसत्सति। तुर्विशेषणार्थः। परोक्षायामेव विशेषोऽन्यत्र तूभयत्रापि भवति ॥ ४४ ॥ [1]स्वञ्जश्च ॥ २ । ३ । ४५ ॥ उपसर्गस्थान्नाम्यन्तस्थाकवर्गात्परस्य स्वञ्जेः सकारस्य द्वित्वेऽप्यद्व्यपि षो भवति परोक्षायां तु द्वित्वे सत्यादेरेव। अभिष्वजते। परिष्वजते। प्रतिष्वजते। अभिषिष्वङ्क्षते। परिषिष्वङ्क्षते। प्रतिषिष्वङ्क्षते। अभिषाष्वज्यते। अभ्यष्वजत। प्रत्यष्वजत। अभ्यषष्वञ्जत्। परोक्षायां त्वादेरेव। अभिषस्वजे। [2]अभिषस्वञ्जे। परिषस्वजे। परिषस्वञ्जे। प्रतिषस्वजे। प्रतिषस्वञ्जे। [3]योगविभागादप्रतेरिति नानुवर्तते। चकारः परोक्षायां त्वादेरित्यस्यानुकर्षणार्थः। ततश्चोत्तरत्रानुवृत्तिः ॥ ४५ ॥ *परिनिवेः सेवः ॥ २ । ३ । ४६ ॥ परिनिव्युपसर्गस्थान्नाम्यन्तस्थाकवर्गात्परस्य सेवतेर्धातोः सकारस्य द्वित्वेऽपि षो भवति। परिषेवते। परिषिषेविषते। परिषेषेव्यते। परिषिषेवे। पर्यषेव्यत। निषेवते। निषिषेविषते। निषिषेवे। न्यषेवत। विषेवते। विषिषेविषते। विषिषेवे। व्यषेवत। परिनिवेरिति किम्। अनुसेवते। प्रतिसिषेवे। प्रतिसेषेव्यते। प्रत्यसिषेवत्। अत्रोपसर्गाश्रितं षत्वं न भवति। धातोस्तु द्वित्वाश्रितं भवत्येव। उभयत्र नेच्छन्त्येके। प्रतिसिसेवे। प्रतिसेसेव्यते। प्रत्यसिसेवत् ॥ ४६ ॥ सयसितस्य ॥ २ । ३ । ४७ ॥ परिनिविभ्य परयोः सयसितयोः सकारस्य षो भवति। परिषयः। निषयः। विषयः। परिषितः। निषितः। विषितः। सय इति सिनोतेरलन्तस्याजन्तस्य घान्तस्य वा सित इति क्तान्तस्य रूपम्। *स्यतेर्वा नियमार्थं परिनिविपरस्यैव क्तान्तस्य स्यतेर्यथा स्यात् इति। तेनोपसर्गान्तरपूर्वस्य 'उपसर्गात्सुग्'–(२–३–३९) इत्यादि-

यद्येव तर्हि वोपादित्येवविधमत. सूत्रात्पृथगेव कथ न कृतम्। सत्यम्। विचित्रा सूत्रकृतिः ॥—अवस्तब्धो वृषलः शीतेनेति। संकुचित इत्यर्थ ॥—सदो—॥ षद्लृ विशरणेत्यस्य षद्लृ विसादने इत्यस्य च ग्रहणम्। उपसर्गादित्यनुवर्त्तते। व्यवादित्यनुवृत्तौ तु तयोरेव विधानात्प्रतिवर्जनानर्थक्य स्यात् ॥—स्वञ्जश्च ॥—अभिषिष्वङ्क्षत इति। नन्वत्र 'णिस्तोरेव'–इति नियमात् मूलधातुसकारस्य षत्वं न प्राप्नोति। उच्यते ॥ स्पर्द्धे पर इति न्यायादिदमेव प्रवर्त्तते ॥—अभिषस्वञ्ज इति। अत्र 'स्वञ्जेर्नवा' इति परोक्षाया वा कित्वम्। पक्षे किद्वद्भावाभावान्नलोपाभाव ॥—योगविभागादित्यादि। ननु योगविभागात्परोक्षायां त्वादेरिति नानुवर्त्तत इति कथ न विज्ञायते। सत्यम्। व्याख्यानतो विशेषप्रतिपत्तिरिति ॥—परिनिवेः—॥ सेव इति सामान्योक्तेऽपि षेवृङिति गृह्यते। न तु सेवृङिति। कृतस्येत्यनुवृत्तिरिति पारायणमतम्। न्यासकारास्तु षेवृङ्सेवृङौ सपोपदेशौ अग्रहीषु ॥—सयसित—॥—स्यतेर्वा नियमार्थमिति। उद्योतकरस्त्वाह—सिनोतेरेव

। अन्ये तु समसूत्योर्धात्वोरेवेच्छन्ति ।
च न भवति । निःसमति । दुःसमति । सुसमति । विसमति । निःसूतम् । दुःसूतम् । सुसूतम् । विसूतम् ॥ २ । ३ । ५७ ॥ निर्दुःसुविपूर्वस्य वकाररहितस्य स्वपेर्धा-
तन्मते निःषमति, दुःषमति, निःषूतं, दुःषूतमित्यादावेव भवति ॥ ५६ ॥ *अवः स्वपः ॥ २ । ३ । ५७ ॥ निर्दुःसुविपूर्वस्य वकाररहितस्य स्वपेर्धा-
तोः सकारस्य षो भवति । निःषुषुपतुः । दुःषुषुपतुः । सुषुषुपतुः । विषुषुपतुः । *निष्षुप्तः । दुःषुप्तः । सुषुप्तः । विषुप्तः । अव इति किम् । निःस्वप्नः । दुःस्वप्नः ।
सुस्वप्नः । विस्वप्नः । विसुष्वाप ॥ ५७ ॥ *प्रादुरुपसर्गाद्यस्वरेऽस्तेः ॥ २ । ३ । ५८ ॥ प्रादुःशब्दादुपसर्गस्थाच्च नाम्यन्तस्थाकवर्गात्परस्यास्तेः सकारस्य यका-
रादौ स्वरादौ च प्रत्यये परे षो भवति । प्रादुःष्यात् । निष्यात् । विष्यात् । अभिष्यात् । प्रादुःषन्ति । निषन्ति । विषन्ति । अभिषन्ति । शिड्नान्तरेऽपि
निःष्यात् । निःषन्ति । प्रादुरुपसर्गादिति किम् । दधि स्यात् । मधूनि सन्ति । यदत्र मां प्रति स्यात्तद्दीयताम् । सर्पिषोऽपि स्यात् । यस्वर इति किम् । प्रादुः
स्तः । निस्तः । अनुस्तः । अनुस्म । अस्तेरिति किम् । *विसृतम् । अनुसृतम् । अनुसृतेः किपि अनुसृतस्तस्यापत्यं *शुभ्रादित्वादेयण् ऊलोपः । आनुसेयः ।
प्रादुःशब्दस्य तु कृभ्वस्तिष्वेव प्रयोगात् प्रत्युदाहरणं नास्ति ॥ ५८ ॥ *न स्सः ॥ २ । ३ । ५९ ॥ *कृतद्विर्भावसकारसंबन्धिनः सकारस्य षो न भवति । सुपि-
स्स्यते । सुतुस्स्यते । अत्र सुपूर्वस्य पिसेस्तुसेश्च सकारस्य क्ये 'अदीर्घात्'-(१-३-३२) इत्यादिना द्विर्भावः । ननु *दधिस्यते मधुस्यति समविस्फुरन् अग्निसात्क-
रोति इत्यादिषु प्रतिषेधाभावात् षत्वं प्राप्नोति । उच्यते । स्सस्सडागमयोः स्सात्प्रत्ययस्य च द्विःसकारपाठस्य षत्वप्रतिषेधार्थत्वेनाभिधास्यमानत्वात्षत्वं न भवति ॥
५९ ॥ *सिचो यङि ॥ २ । ३ । ६० ॥ सिच्यतेर्धातोः सकारस्य यङि प्रत्यये परतः षो न भवति । सेसिच्यते । अभिसेसिच्यते । परत्वादुपसर्गलक्षणमपि *षत्वं
बाधते । एवमुत्तरत्रापि । यङीति किम् । अभिषिषिक्षति । ङकारः किम् । अभिषिच्यते ॥ ६० ॥ गतौ सेधः ॥ २ । ३ । ६१ ॥ गतौ वर्तमानस्य सेधतेर्धातोः
सकारस्य षो न भवति । अभिसेधति । अनुसेधति गाः । अभिगच्छति । अनुगच्छतीत्यर्थः । अभिसेधयति । अनुसेधयति । गमयतीत्यर्थः । अभिसिसेधिषति । अनुसिसे-
धिषति । अभिजिगमिषति, अनुजिगमिषतीत्यर्थः । गताविति किम् । प्रतिषेधति । निषेधति । पापान्निवारयतीत्यर्थः ॥ ६१ ॥ *सुगः स्यसनि ॥ २ । ३ । ६२ ॥ सुनोतेः

रुपसर्गेण योगाद्भविष्यति ॥—अवः स्वप ॥—निःषुप्त इत्यादौ 'ज्ञानेच्छा'-इति क्त ॥—प्रादुरु—॥—शुभ्रादित्वादिति । न्यासे तु 'चतुष्पात्' इति एयञ् । वृत्तौ तु सारसङ्ग्रहाद्यभिप्रायेण
'सुभ्र्वादिभ्य' इत्युक्तम् ॥—विसृतमित्यादि । विसरतीति क्विपि तोन्ते क्विन्ता धातुत्वं न त्यजन्तीति न्यायाद्विसृदित्येवरूपाद्धातुमात्रादमूरूपे स्वरादौ प्रत्ययेऽस्तेरिति किमिति व्यावृत्तेर्न
व्यङ्गवैकल्यम् । यदा तु क्तस्तदापि अस्तौ सति स्वरस्य प्रत्ययेति चिन्तेति न व्यङ्गविकलता ॥—न स्सः ॥ सुपिस्स्यत इत्यादिप्रयोगस्थो द्विरुक्तः सकारः स्स इत्यनुक्रियते इत्याह—कृतेत्यादि ॥—
दधिस्यते । अत्रास्य लौल्ये स्स ॥—सिचो—॥—षत्वमिति । 'स्थासेनि'-इत्यनेन ॥—गतौ से—॥—ननु कुसरध्वसरकेसरादिषु प्रत्ययसकारस्य षत्वप्रतिषेधो वक्तव्य । नैवम् ।
उणादयोऽव्युत्पन्नानि नामानीत्यबुधबोधनार्थं व्युत्पाद्यमानान्यप्युणादयो व्युत्पत्तिकार्यं न लभन्ते । इत्थं तर्हि वृक्ष इत्यत्रापि षत्वं न प्राप्नोति । उच्यते । तर्हि बाहुलकात् षत्वाभाव ॥—सुगः स्य—॥

संबन्धिनः सकारस्य स्ये सनि च प्रत्यये परे षो न भवति । अभिसोष्यति । परिसोष्यति *अभ्यसोष्यत् । पर्यसोष्यत् । सनि सुसूषतेः क्विपि 'सुसूः । सुसूषतीति सु नोदाह्रियते । णिस्तोरेव षणि इति नियमेनैव व्यावर्तितत्वात् । अभिसुसूषतीत्यपि नोदाह्रियते । अद्वित्वे इति व्यावृत्त्यैव निवर्तितत्वात् । स्यसनीति किम् । सुषाव । अभिषुणोति ॥ ६२ ॥ 'रषृवर्णान्नो ण एकपदेऽनन्त्यस्यालचटतवर्गशसान्तरे ॥ २ । ३ । ६३ ॥ रेफषकारऋवर्णेभ्यः परस्यानन्त्यस्य नकारस्य रषृवर्णैरेवैकपदे वर्तमानस्य णो भवति न चेन्निमित्तनिमित्तिनोरन्तरे लकारचवर्गटवर्गतवर्गशकारसकारा भवन्ति । शेषवर्णव्यवधानेऽपीत्यर्थः । तीर्णम् । चतुर्णाम् । पुष्णाति । नृणाम् । नॄणाम् । व्यवधानेऽपि भवति । करणम् । वृक्षाणाम् । करिणाम् । ऋषीणाम् । गुरुणा । गुरूणाम् । करेण । बृंहणम् । अर्केण । मूर्खेण । स्वर्गेण । अर्घेण । दर्पेण । रेफेण । दर्भेण । धर्मेण । आर्येण । सर्वेण । अर्हेण । रषृवर्णादिति किम् । तेन । एकपद इति किम् । अग्निर्नयति । 'नृभिर्नृभिः । नेतृभिर्नेतृभिः । पद इत्येतावतैवैकपदे लब्धे एकग्रहणं नियमार्थम् एकमेव यन्नित्यं तत्र यथा स्यात् यदेकं चानेकं च तत्र माभूत् । चर्मनासिकः । मेषनासिकः । अनन्त्यस्येति किम् । वृक्षान् । लादिवर्जनं किम् । 'विरलेन । अर्चनम् । मूर्छनम् । अर्जनम् । किरीटेन । कर्मठेन । मृडेन । दृढेन । कर्णेन । कीर्तनम् । तीर्थेन । नर्देन । क्रोधेन । रशना । रसना । अधिकारश्चायमा णत्वविधेः ॥६३॥ पूर्वपदस्थान्नाम्न्यगः ॥२।३।६४॥ पूर्वपदस्थाद्रषृवर्णादगकारान्तात्परस्य 'सामर्थ्यादुत्तरपदस्थस्य नकारस्य णकार आदेशो भवति नाम्नि संज्ञायां विषये । द्रुणसः । खुरणसः । खरणाः । खुरणाः । शूर्पणखा । चन्द्रणखा । वार्ध्रीणसः । हरिवाहणः । नरवाहणः । 'पुष्पणन्दी, श्रीणन्दी स्त्री । नाम्नीति किम् । मेषनासिकः । चर्मनासिकः । अग इति किम् । ऋगयनम् । एकस्मिन्नेव पदे इति पूर्वसूत्रे विज्ञानादुत्तरपदस्थस्य समासे न प्राप्नोति इति वचनम् । खरपस्यापत्यं खारपायणः, मातृभोगाय हितो मातृभोगीणः । गर्गभगोऽस्या अस्तीति गर्गभगिणीत्यादौ तु उत्तरपदसंबन्धी नकारो न भवतीति एकपदत्वात् पूर्वेणैव

---

—सुसूरिति । वर्णविधौ स्थानित्वाभावात् पणीत्यभाव ॥—अभ्यसोष्यदित्यत्राप्यव्यपीति वचनात् 'उपसर्गात्सुग्'-इति प्राप्त निषिध्यते ॥—रषृवर्णा-—॥ ननु ऋवर्णग्रहण किमर्थं यत ऋवर्णादपि तन्मध्यव्यवस्थितरेफाश्रय णत्व भविष्यति । अत एव पाणिनिनापि रषाभ्यामित्येवोक्तम् । उच्यते । न हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते तद्भिन्नत्वाद्वर्णबुद्धेरनुत्पादनात्तथाहि—मास न विक्रेयमिति सत्यपि निषेधे गावो विक्रीयन्ते । तत्र मांसबुद्धेरभावात् ॥—शेषवर्णव्यवधानेऽपीति । प्रसज्यप्रतिषेधादितरैर्व्यवधानेऽपि भवति ॥—पुष्णातीति । अत्र 'तवर्गस्य'-इत्यनेनैव णत्वे सिद्धे पकारग्रहण कपणमित्यादौ व्यवहितार्थं तदर्थं च सत् परत्वात् 'तवर्गस्य'-इति बाधित्वा णत्व प्रवर्त्तयति ॥—नृभिर्नृभिरिति । द्विष्प्रयोगो द्विर्वचनमित्याश्रयणाद्भिन्नपदत्वमित्यर्थं ॥—विरलेनेति । विपूर्वाद्रमे. 'मुरल'—इति निपातनात् डित्यले ॥ ऋषीणामित्यादौ दीर्घरूपे स्यादिविधौ कर्त्तव्ये पूर्वकृतमपि णत्वमसिद्ध भवति ॥—पूर्वपदस्था—॥—सामर्थ्यादिति । अयमर्थ रूढेन पूर्वपदमाक्षिप्यते । तदन्तरेण तस्यासभवात्तच्च-नकारस्य विशेषणम् ॥—पुष्पणन्दीति । पुष्पच् पुष्पन्तीत्यचि पुष्पाणि २ नन्दयति अण् । ङी । पुष्पणन्दी । आचार्य. । वत्सऋषभकार्ष्पटैर्निश्चिक्ये । दिगम्बरेण तु योपान्त्य । स च न शिष्टसमत ॥—वार्ध्रीणसः ॥ वर्ध्रस्येयं तस्येदमण् ङी । 'तद्धितस्वरे' इति पुवन्निषेध.॥ —ऋगयनमिति । शिक्षादिषु ऋगयनपाठादेव णत्वनिषेधे सिद्धे किमग इत्यनेन । सत्यम् । अबाधकान्यपि ज्ञापकानि भवन्ति ॥—उत्तरपदसंबन्धी नकारो न भवतीति । प्रत्यय. प्रकृत्यादेरिति न्यायात् ॥—पूर्वेणैव णत्वमिति । ननु पूर्वेणापि कथ यत' खरपशब्दस्यान्तर्वर्त्तिनी विभक्तिमाश्रित्य पदत्वमस्ति । तत्-

णत्वं भवति । यदा तु गर्गाणां भगिनीति विग्रहस्तदैकपदत्वाभावात् गर्गभगिनीत्येव भवति । कथं देवदारुवनम् कुबेरवनम् *मनोहरवनम् *प्रभंकरव-
नमित्यादिसंज्ञायां णत्वं न भवति । उच्यते । * 'कोटरमिश्रकसिध्रकपुरगसारिकस्य वणे' ( ३-२-९६ ) इति णत्वनिपातनस्य नियमार्थत्वेन व्या-
ख्यास्यमानत्वात् । संज्ञायां कोटरादिभ्य एव वनशब्दस्य णत्वं भवति नान्येभ्य इति ॥ ६४ ॥ नसस्य । २ । ३ । ६५ ॥ पूर्वपदस्थाद्रघुवर्णात्परस्य नसशब्दसं-
बन्धिनो नकारस्य णो भवति । प्रगता प्रवृद्धा वा नासिका यस्य स प्रणसः । एवं निर्णसः । प्रणसं मुखं, निर्णसं मुखम् ॥ ६५ ॥ *निष्प्राग्रेऽन्तःखदिर-
कार्श्याम्रशरेक्षुप्लक्षपीयुक्षाभ्यो वनस्य ॥ २ । ३ । ६६ ॥ निरादिभ्यः परस्य वनशब्दनकारस्य णकार आदेशो भवति । बहुवचनं व्याप्त्यर्थम् । तेन संज्ञाया-
मसंज्ञायां च भवति । अन्यथा हि 'कोटरमिश्रकसिध्रक'—(३-२-७६) इत्यादिवक्ष्यमाणनियमबलेन संज्ञायां न स्यात् । निर्वणम् । प्रवणम् । अग्रेवणम् । 'पारेमध्येऽग्रेऽन्तः
षष्ठ्या वा' (३-७-३०) इति अव्ययीभावः । तत्संनियोगे च पूर्वपदस्यैत्वम् । अन्तर्वणम् । खदिरवणम् । *कार्श्यवणम् । वचनसामर्थ्याच्छकारव्यवधानेऽपि भवति ।
आम्रवणम् । शरवणम् । इक्षुवणम् । प्लक्षवणम् ।*पीयुक्षावणम् । पीयुक्षाशब्दोऽव्युत्पन्न आवन्तः ॥६६॥*द्वित्रिस्वरौषधिवृक्षेभ्यो नवाऽनिरिकादिभ्यः ॥२।३।६७॥
द्विस्वरेभ्यस्त्रिस्वरेभ्यश्च इरिकादिवर्जितेभ्य ओषधिवाचिभ्यो वृक्षवाचिभ्यश्च परस्य वनशब्दसंबंधिनो नकारस्य णो वा भवति । ओषधिः, दूर्वावणम् । दूर्वावनम् । मूर्वा-
वणम् । मूर्वावनम् । व्रीहिवणम् । व्रीहिवनम् । माषवणम् । माषवनम् । नीवारवणम् । नीवारवनम् । *कोद्रववणम् । कोद्रववनम् । प्रियंगुवणम् । प्रियंगुवनम् । वृक्ष,
शिग्रुवणम् । शिग्रुवनम् । दारुवणम् । दारुवनम् । करीरवणम् । करीरवनम् । शिरीषवणम् । शिरीषवनम् । बदरीवणम् । बदरीवनम् ॥ *ओषध्यः फलपाकान्ता *लता

---

इशत्वाद्रेफस्य चैकपदत्वाभावादिति । अत्रोच्यते। यत्र द्वावपि निमित्तनिमित्तिनावेकपदत्व व्यभिचरतस्तत्र णत्वाभाव इह तु रेफस्य व्यभिचारेपि नकारस्यैकपदस्थत्वाव्यभिचार । यद्वा सित्येवेति
निगमेनायनणूप्रत्यये खरपशब्दस्य पदत्वस्य निरस्तत्वात् पूर्वेणैव भवत्येव ॥—मनोहरा । वृक्षविशेषा ॥—प्रभंकरेति । प्रभां करोति 'सख्याहर्दिवा'—इति टे । 'नवा खित्कृदन्ते'-इति पृथग्यो-
गाद्ध्रस्वत्वे मोन्त ॥—कोटरमिश्रकेत्यादि । कुटत् । 'न्याञ्छिचटि'-इत्यरे बाहुलकाद्गुणे मिश्रण् णके सिध्यते सेधतेर्वा 'नज्याजि'-इति रे गावादित्वात्स्वार्थिके के कुसितादौ वा । पुर गच्छतीति
'नाम्नो गमः'-इति । शृणाते 'कृशृकुटि'—इति णिदिप्रत्यये शारि स्वार्थिके के शारि कामतीति वा ॥—निष्प्राग्रे—॥ निष्प्राग्रेन्तरो नौपधिवचना नापि वृक्षवचनास्तेभ्य सञ्ज्ञाया कोटरादिनियमे-
न व्यावर्त्तितत्वादप्राप्त णत्व विधीयते । असञ्ज्ञायामप्येकपदत्वाभावादप्राप्तमेव । इक्षुशरशब्दावौषधिवचनौ शेषा वृक्षवचनास्तेषां सञ्ज्ञाया कोटरादिनियमेन णत्वस्य व्यावर्त्तितत्वादुत्तरेणाप्राप्ते विध्यर्थ-
मसञ्ज्ञाया तूत्तरेण विकल्पे प्राप्ते नित्यार्थम् ॥—कार्श्यवणमिति । कार्श्यशब्दो वृक्षविशेषवाची अव्युत्पन्नोऽथवा कृश्यते 'नाम्युपान्त्य'-इति के व्यणि धर्म्मधर्म्मिणोरभेदोपचारात् कार्श्यगुणयुक्तो वृक्षोऽपि
कार्श्यं ॥—पीयुक्षेति । पीयुक्षाशब्दो द्राक्षापर्याय । द्राक्षाविशेषो वा । पीङ्च् क्विपि पी पिय याति 'पीमृग'-इति किदु पीयु क्षायति 'आतो डो'—इति डे ॥—द्वित्रिस्व-
रौ—॥—कोद्रववणमिति । केनाम्भसा उद्यन्ते 'कैरव'-इति साधु. केनोद्रुवन्त्युच्छन्वायन्तेऽचि वा ॥—ओषध्यः फलपाकान्ता इति । उप्यतेऽनेनेति 'व्यञ्जनाद्घञ्' इति घञि ओष । ओषो
धीयतेऽस्यामिति ओषधि । 'व्याप्यादाधारे' इति कौ 'इतोऽक्त्यर्थात्' इति ङ्यामोषध्य 'उपेरधि' इति वा । फलस्य पाकेनान्तो विनाश शोषो यासा ता फलपाकान्ता ॥—लताः प्रत नव-

गुल्माश्च वीरुधः ॥ "फली वनस्पतिर्ज्ञेयो *वृक्षाः पुष्पफलोपगाः ॥ १ ॥ इति यद्यपि भेदोऽस्ति तथाप्यतिबहुत्वार्थं बहुवचनं तत्राऽऽवृक्षग्रहणे वनस्पतीनामपि ग्रहणं भवति । अत एव च यथासंख्यमपि न भवति । तथा संज्ञायामसंज्ञायां च भवति । द्वित्रिस्वरेति किम् । देवदारुवनम् । भद्रदारुवनम् । ओप-धिवृक्षेभ्य इति किम् । *विदारीवनम् । पितृवनम् । शिरीषाणामदूरभवो ग्रामोऽपि शिरीषास्तेषां वनं शिरीषवनम् । अनिरिकादिभ्य इति किम् । इरिकावनम् । मिरिकावनम् । तिमिरवनम् । चीरिकावनम् । कमरिवनम् । रवीरवनम् । हरिवनम् । इरिकादिराकृतिगणः । इरिकादिविशेषवर्जनात् विशेषाणामेवेह विधिः । तेनेह न भवति । द्रुमवनम् । वृक्षवनम् ॥ ६७ ॥ "गिरिनद्यादीनाम् ॥२।३।६८॥ गिरिनदीत्यादीनां नकारस्य वा णो भवति । गिरिणदी । गिरिनदी । गिरिणखः । गिरिनखः । गिरिणद्धः । गिरिनद्धः । गिरिणितम्बः । गिरिनितम्बः । वक्रणदी । वक्रनदी । वक्रणितम्बा । वक्रनितम्बा । चक्रणितम्बा । चक्रनितम्बा । माषोणः । माषोनः । तूर्यमाणः । तूर्यमानः । आर्गयणः । आर्गयनः । ऋगयनं वेत्त्यधीते वेत्यण् । ऋगयनस्य व्याख्यानं तत्र भवो वा शिक्षादित्वादण् । बहुवचनाद्यथाद-र्शनमन्येऽपि भवन्ति ॥ ६८ ॥ पानस्य भावकरणे ॥२।३।६९॥ पूर्वपदस्थेभ्यो रषृवर्णेभ्यः परस्य भावे करणे च यः पानशब्दस्तत्संबन्धिनो नकारस्य णो वा भवति । क्षीरपाणं क्षीरपानं वर्तते । कषायपाणं कषायपानं वर्तते । "सौवीरपाणं सौवीरपानं वर्तते । करणे, क्षीरपाणं क्षीरपानं भाजनम् । कषायपाणः कषायपानः कंसः । भा-वकरण इति किम् । पीयतेऽस्मिन्निति पानः । क्षीरपानो घोषः ॥ ६९ ॥ "देशे ॥ २ । ३ । ७० ॥ पूर्वपदस्थाद्रषृवर्णात्परस्य पानशब्दनकारस्य णो नित्यं भवति । देशे समुदायेन चेद्देशो गम्यते । योगविभागान्नवेति निवृत्तम् । पीयत इति पानम् । क्षीरं पानं येषां क्षीरपाणा "उशीनराः" । सुरापाणाः प्राच्याः । "सौवीरपाणा

---

त्यो मालत्यादय लता वल्ली कर्कोट्यादिका ॥—गुल्मा ह्रस्वस्कन्धास्तरवो बहुकाण्डपत्रा. केतक्यादय । एतल्लतागुल्मरूप द्वयं वीरुध । उत्पलस्वेव व्याचष्ट । लता गुल्मास्तेभ्यो विलक्षणा वीरुध । पुष्प विना फलमेव यस्य स प्लक्षादि फली । पुष्प च फलं चोपगच्छन्ति पुष्पफलोपगा ॥ 'नाम्नो गम'-इति डे वृक्षाः पुष्पफलोपगा इति । न चोभयमेव उपगच्छन्ति त एव वृक्षा. कि तर्हि येऽप्यन्यतरत्पुष्प फलं वा उपगच्छन्ति तेऽपि वृक्षा एव । तत्र वेतसादयः पुष्पमेव प्लक्षादय. फलमेव आम्रादयस्तूभयमप्युपगच्छन्ति । तत्र वृक्षो वनस्पतित्वमवकेशित्व च न व्यभिचरति । वनस्पतिरवकेशी तु वृक्षत्व व्यभिचरत । यत फली वनस्पतिर्ज्ञेय फलवन्ध्यस्त्ववकेशीति । अत एव च वनस्पत्यादिग्रहणमकृत्वा वृक्षग्रहण कृत तदन्तर्गतत्वाद्वनस्पत्यादेरिति ॥—विदारी लताविशेष ॥—गिरिन—॥—तूर्यमाण इति । तूर्यं मानमस्येति वाक्ये निमित्तनिमित्तिनोरेकपदस्थत्वाभावादप्राप्ते विकल्प. । तूर्यतेस्त्वानशि श्ये मागमे च 'रपृवर्ण'-इति नित्य प्राप्ते ॥—शिक्षादित्वादिति । अन्यथा बहुस्वरत्वात्प्रायो बहुस्वरादिकण् स्यात् ॥—पानस्य—॥—सौवीरपाणमिति । सौवीरेषु प्रायो भवं बाहुलकादकञ् बाधित्वा भवेऽण् । सुवीराणामिदं 'तस्येदम्' इति वा सौवीरं का-ञ्जिकम् ॥—देशे—॥—योगविभागादिति । अन्यथा 'पानस्य भावकरणदेशे' इति क्रियेत । तथाऽत्र कर्मसाधनपानशब्दो गृह्यते भावकरणप्रधानस्य तु पूर्वेण विकल्प एव ॥—उशीनरा इति । उश्यत इति 'स्यादिभ्यः क' । वष्टीति क्विपि वा उशृति गौरादिङ्यामुशी नगरी तस्या नराः । यद्वा वष्टेः 'पदिपठि'-इति इप्रत्यये बाहुलकात् कित्त्वे उशृति उशयस्तेषां नर । बहुलवचनादीर्घत्वे उशीनरः । तस्यापत्यानि 'राष्ट्रक्षत्रियात्'-इति विहितस्य 'बहुष्वस्त्रियाम्' इति द्रेरणो लुप् ॥—सौवीरेति ॥ अजतेर्नैज्यजीति किति रे 'अघञ्क्य'- इति

वाहीकाः । कषायपाणा *गान्धारयः । *तात्स्थ्यान्मनुष्याभिधानेऽपि देशो गम्यते । देशे इति किम् । *दाक्षीणां पानं दाक्षिपानम् । क्षीरपाना गो-
पालकाः ॥ ७० ॥ *ग्रामाग्रान्नियः ॥ २ । ३ । ७१ ॥ ग्रामाग्राभ्यां परस्य नियो नकारस्य णो भवति । ग्रामणीः । अग्रणीः । ग्रामाग्रादिति
किम् । खरनीः । मेषनी ॥ ७१ ॥ *वाह्याद्वाहनस्य ॥ २ । ३ । ७२ ॥ वोढव्यं वाह्यम् । तद्वाचिनो रेफादिमत पूर्वपदात्परस्य वाहनशब्दसंबन्धिनो नकारस्य
णो भवति । उह्यतेऽनेनेति वहनम् । प्रज्ञादित्वात्स्वार्थिकोऽण् । अतो वा निपातनादुपान्त्यदीर्घत्वम् । इक्षुवाहणम् । शरवाहणम् । वाह्यादिति किम् । सुरवाहनम् ।
संवन्धमात्रमत्र विवक्षितम् । नरवाहनः । नात्र वाह्यात्परं वाहनम् किं तर्हि वाहनात् ॥ ७२ ॥ *अतोऽह्नस्य ॥ २ । ३ । ७३ ॥ रेफादिमतोऽकारान्तात्पूर्वपदात्पर-
स्याह्नशब्दसंवन्धिनो नकारस्य णो भवति । पूर्वाह्णः । अपराह्णः । अत इति किम् । निरह्नः । दुरह्नः । अह्न इत्यकारान्तनिर्देशादिह न भवति । *दीर्घाह्नी शरत्
७३ ॥ चतुस्त्रेर्हायनस्य वयसि ॥ २ । ३ । ७४ ॥ चतुर् त्रि इत्येताभ्यां पूर्वपदाभ्यां परस्य हायनशब्दसंवन्धिनो नकारस्य वयसि गम्यमाने णो भवति । चतु-
र्हायणो वत्सः । चतुर्हायणी वडवा । त्रिहायणो वत्सः । त्रिहायणी वडवा । वयसीति किम् । चतुर्हायना, त्रिहायना शाला । ङीरपि वयस्येव भवति । चतुस्त्रेरिति
किम् । सहस्रहायनः पुरुषः । लक्षहायनः पक्षी ॥ ७४ ॥ वोत्तरपदान्तनस्यादेरयुवपक्वाह्नः ॥ २ । ३ । ७५ ॥ पूर्वपदस्थाद्रषृवर्णात्परस्योत्तरपदान्तभूतस्य
तथा नागमस्य स्यादेश्च नकारस्य णो वा भवति न चेत्स नकारो युवन्पक्वाहन्शब्दसंवन्धी भवति । उत्तरपदान्त, व्रीहिवापिणौ । व्रीहिवापिनौ । माषवापिणौ ।
माषवापिनौ । व्रीहिवापिणी व्रीहिवापिनी कुले । माषवापिणी माषवापिनी कुले । व्रीहिवापिण । व्रीहिवापिन । माषवापिण । माषवापिन । व्रीहिवापीणि ।

---

वीभावे च वीर वीरयतेर्वाऽचि वीर । शोभना वीरा यस्मात्तत्सुवीर तस्येद तत आगत वा ॥—गान्धारय । गन्धारस्यापत्य वृद्धमत इञ् गान्धारि । राष्ट्रक्षत्रियसरूप । ततो
गान्धारीणा राजान गान्धारे राज्ञोऽपत्यानि वा 'गान्धारिसाल्वेयाभ्याम्ञ्' 'यञञोऽश्या'-इति वहुष्वस्त्रिया लुप् । ननु क्षीरपाणादय शब्दा मनुष्येषु वर्त्तन्ते । तत्सामानाधिकरण्यादुशीनरादयोऽपि
तत्रैव तत्कथमिह देशो गम्यत इत्याह—तात्स्थ्यादिति । अयमर्थ । उशीनरादयो हि शब्दा सज्ञात्वेन पूर्व देशेष्वेव प्रवृत्ता पश्चात्तु तत्स्थानसवन्धान्मनुष्येषु तेन मनुष्याभिधानेऽपि
देशाभिधान गम्यते ॥—दाक्षीणां पानमिति । अत्र कर्त्तरि षष्ठी ॥—ग्रामाग्रा—॥ ननु 'गतिकारक'-इति न्यायाद्विभक्त्युत्पत्ते प्रागेव समासे निमित्तनिमित्तिनोरेकपदस्थत्वात्
'रपृवर्ण'-इत्यनेनैव णत्व सिद्धमेव किमनेनेति । सत्यम् । नियमार्थं यदि नियो णत्व स्यात्तदा ग्रामाग्रादेव तेन खरनीमेषनीत्यादौ पूर्वेणापि न भवति ॥—वाह्याद्वा—॥—वोढव्यं
वाह्यमिति । वहेरर्हेऽर्थे ध्यणि वाह्य वहनार्हमिक्ष्वादि तेन यदापि वाहने वहनार्थमिक्ष्वादि वाह्य नारोपितं भवति तदर्थं तु केवलमुपकल्पित भूतलस्थ तदापि भवत्येव ॥—संबन्धेति । स्वस्वा-
मिभावलक्षणेऽत्र षष्ठी न तु वहनक्रियापूर्वके कर्मकरणसवन्धे । यदा तु सुरा अपि वाह्यत्वेन विवक्ष्यन्ते तदा णत्व भवत्येव । यदा तु नरवाहनशब्द कुबेरवाचकस्तदा पूर्वपदस्थेति प्राप्तस्य णत्वस्य
'क्षुभ्नादीनाम्' इत्यनेन निषेध । यदा तु यौगिको न सज्ञाशब्दस्तदा 'पूर्वपदस्थ'-इति न णत्व यथाऽत्र व्यावृत्त्युदाहरणे ॥—अतोऽह्नस्य ॥—दीर्घाह्नी शरदिति । दीर्घाह्नी दीर्घाहा दीर्घाहा
रूपत्रितयम् ॥—वोत्तर—॥ प्राप्ताप्राप्तविभाषेयम् । तथाहि लिखितेषु येषु प्रयोगेषु 'गतिकारक'-इति न्यायात्स्याद्युत्पत्ते प्रागेव समास इत्येकपदत्वात्प्राप्ते व्याघ्रीवत्पामा येषा तानि व्याघ्रीपामाणि

व्रीहिवापीनि कुलानि । व्रीहिवापिणा । व्रीहिवापिना । न, व्रीहिवापाणि व्रीहिवापानि कुलानि । माषवापाणि माषवापानि कुलानि । इवु व्याप्तावित्यस्मान्नटि प्रेण्वनं प्रेन्वनं, हिवु प्रीणने पिवु सेचने इसनयोः शतरि प्रहिण्वन् प्रहिन्वन् । प्रपिण्वन् प्रपिन्वन् । हिवोरेव ह्रस्तन्यां प्राहिण्वन् । प्राहिन्वन् । बहुलवचनादनान्नापि समासः । समासे हि पूर्वोत्तरपदव्यवहारः । पुरुषश्च वारि चेति पुरुषवारिणी इत्यत्र तु परमपि विकल्पं बाधित्वान्तरङ्गत्वादेकपदाश्रितं 'रघृवर्णात्'—(२-३-६४) इत्यादिना नित्यमेव णत्वम् । स्यादि, व्रीहिवापेण । व्रीहिवापेन । माषवापेण । माषवापेन । व्रीहिवापाणाम् । व्रीहिवापानाम् । माषवापाणाम् । माषवापानाम् । व्रीहिवापान्, माषवापानित्यत्र तु अनन्त्यस्येत्यधिकारान्न भवति । उत्तरपदेति किम् । गर्गाणां भगः गर्गभगः । सोऽस्या अस्तीति समासादिन् । गर्गभगिणी । *अत्रोत्तरपदस्यान्तो नकारो न भवतीति विकल्पो न भवति । एकपदस्थत्वात्तु मातृभोगीण इत्यादिवत् नित्यमेव णत्वं भवति । अन्तादिग्रहणं किम् । गर्गाणां भगिनी गर्गभगिनी । एवं दाक्षिभगिनी । अत्र न नकारोऽन्तः किंतु ङीप्रत्ययः । यद्येवं माषवापिणी, माषवापिनीत्यत्र नकारस्योत्तरपदान्तत्वाभावात् विकल्पो न भवति । उच्यते । 'गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् प्रत्ययोत्पत्तेः' इति न्यायात्प्रागेव स्त्रीप्रत्ययादन्तरङ्गत्वादश्वक्रीतीत्यादावकारान्तेनेव क्रीतशब्देन नकारान्तेन वापिन्शब्देनोपपदसमासः पश्चात् स्त्रीप्रत्ययः । विभक्त्यन्तत्वाभावेऽपि च रूढत्वादुत्तरपदत्वम् । ततश्चोत्तरपदस्यान्तो नकार इति णत्वविकल्पो भवति । अयुवपक्वाह्न इति किम् । आर्ययूना । क्षत्रिययूना । प्रपक्वानि । परिपक्वानि । प्रपक्वेन । परिपक्वेन । प्रपक्वानाम् । परिपक्वानाम् । दीर्घाही शरत् । दीर्घाह्ना निदाघेन । त्र्यह्नि । चतुरह्नि । 'संख्यासायवेरह्नस्याहन् ङौ वा'—(७-४-५०) इति अह्नस्याहनादेशः । अलचटतवर्गशसान्तर इत्येव । गर्दभवाहिनौ । गर्दभवाहिनः ॥ ७५ ॥ *कवर्गैकस्वरवति ॥ २ । ३ । ७६ ॥ पूर्वपदस्थाद्रघृवर्णात्परस्य कवर्गवति एकस्वरवति चार्थादुत्तरपदान्तस्य तथा नागमस्य स्यादेश्च नकारस्य णो भवति* न चेत्स नकारः पक्वशब्दसंबन्धी भवति । *स्वर्गकामिणौ । *मोक्षकामिणौ । स्वर्गगामिणौ । वृषगामिणौ । स्वर्गगामिणी । वृषगामिणी । स्वर्गकामाणि । मोक्षकामाणि कुलानि । उरःकेण । उरःकेण । गुरुमुखेण । ऋषिमुखेण । क्षीरमेघाणाम् । पुष्पमेघाणाम् । एकस्वर, ब्रह्महणौ । वृत्रहणौ । क्षीरपाणि । यूषपाणि । क्षीरपेण । यूषपेण । उरःपेण । उरःपेण । क्षीरपाणाम् । यूषपाणाम् । पुरोगान् परममृगानित्यत्र तु अनन्त्यस्येत्यधिकारान्न भवति । अपक्वस्येत्येव । क्षीरपक्वानि । यूषपक्वानि । क्षीरपक्वेन । यूषपक्वेन । क्षीरपक्वानाम् । यूषपक्वानाम् । अलचटतवर्गशसान्तर इत्येव । माषत्यागिनः । द्रव्यत्यागेन । माषजानि । माषजेन ।

---

व्याघ्रीपामानि वेत्यादिषु त्वदर्शितेष्वप्राप्ते । पाणिनिस्तु अप्राप्ते विभाषा मन्यते । मन्मतेऽपि वापोऽस्त्यनयो वापिनौ व्रीहीणा वापिनाविति यदा क्रियते तदा प्राप्ते, व्यक्तिविवक्षायां 'अजाते' शीले' साध्वर्थविवक्षायां 'साधौ' भृशाभीक्ष्ण्यार्थविवक्षाया 'भृशाभीक्ष्ण्ये' णिन् ॥—अत्रोत्तरपदस्यान्तो नकारो न भवतीति । किं तु प्रत्यय प्रकृत्यादेरिति न्यायेन गर्गभगइत्येवसमुदायस्य ॥—गर्दभं वहत इत्येवशीलौ गर्दभवद्वहत इति वा कर्त्तुर्णिन् ॥—कवर्गैक—॥—न चेदिति । सत्यपि त्रितयानुवर्त्तने प्रतिषेधस्य प्राप्तिपूर्वकत्वात्कवर्गवत्त्वात् पक्वशब्दस्यैव प्रतिषेध इति ॥—स्वर्गकामिणाविति । सुखेन पुण्यकर्म्मभिरर्ज्यत इति घञि न्यङ्क्वादित्वाद्गे त कामयेते इत्येवशीलौ ॥—मोक्षकामिणाविति । मुच्यन्ते प्राणिन कर्म्ममलकलङ्केनात्रेति 'मावावद्यमि'—इति से ॥—

नित्यार्थ वचनम् ॥ ७६ ॥ अदुरुपसर्गान्तरो णहिनुमीनानेः ॥२। ३। ७७॥ दुर्वर्जोपसर्गस्थादन्तःशब्दस्थाच्च रपृवर्णात्परस्य णकारादिहिनुमीनाआनि इत्येतेषां नो नकारस्य णो भवति। णेति णोपदेशा धातवो गृह्यन्ते। उपसर्गाण्णत्वविधानात्। प्रणमति। परिणमति। प्रणयति। परिणयति। प्रणामकः। परिणामकः। प्रणायकः। परिणायकः। अन्तर्, अन्तर्णयति। अन्तर्णायकः। हिनु, प्रहिणोति। प्रहिणुतः। मीना, प्रमीणाति। प्रमीणीतः। हिनुमीनाग्रहणे विकृतस्यापि भवति। 'एकदेशविकृतस्यानन्यत्वात्। आनि, प्रयाणि। प्रवपाणि। मापयाणि। आनीत्यर्थवत एव ग्रहणादनर्थकस्य न भवति। प्रवृद्धा वपा येषां तानि प्रवपानि मांसानि। अदुरिति किम्। दुर्णयः। दुर्णीतम्। उपसर्गान्तरिति किम्। प्रातर्नयति। पुनर्नयति। येन धातुना युक्ताः प्रादयस्तमेव प्रत्युपसर्गसंज्ञा भवन्तीतीह न भवति। प्रगता नायका यस्मात्प्रनायको देश इति। णहिनुमीनानेरिति किम्। प्रनृत्यति। अणोपदेशत्वाण्णत्वं न भवति। अलचटतवर्गशसान्तर इत्येव। प्रतिनपानि। प्रददानि। परिनदनमित्यत्र तु क्षुभ्नादित्वान्न भवति॥ ७७॥ नशः शः ॥२। ३। ७८॥ अदुरुपसर्गान्तःशब्दस्थाद्रपृवर्णात्परस्य नशेः शकारान्तस्य संनिधनो नकारस्य णो भवति। प्रणश्यति। परिणश्यति। प्रणाशः। परिणाशः। अन्तर्णश्यति। श इति किम्। प्रनष्टः। परिनष्टः प्रनङ्क्ष्यति। परिनङ्क्ष्यति। नशेरणोपदेशात्पूर्वेणासिद्धे विध्यर्थमिदम् ॥ ७८॥ नेर्ङ्मादापतपदनदगदवपीवहीशम्चिग्यातिवातिद्रातिप्सातिस्यतिहन्तिदेग्धौ॥ २। ३। ७९॥ अदुरुपसर्गान्तःशब्दस्थाद्रपृवर्णात्परस्योपसर्गस्य नेर्नकारस्य माङादिषु धातुषु परेषु णो भवति। ङकारोपलक्षितो मा इमा। तेन माङ्मेङोर्ग्रहणम्। 'न मातिमी-

---

मापेषु जातानि 'सप्तम्या उ । न तु मापाजातानि जातित्वात् ॥—नित्यार्थमिति । अयमर्थ । गतिकारकेति न्यायेन निमित्तनिमित्तिनोरेकपदस्थत्वात् 'रपृवर्णात्'—इति नित्य प्राप्त 'वोत्तर'—इति विकल्पित पुनरनेन नित्य विधीयते इत्यर्थ ॥—अदुरुप—॥ हिनुमीनानिग्रहणात्समासस्यासभवात्पूर्वपदस्थादित्यस्य निवृत्तावविशेषेणोपसर्गाण्णत्वविधि ॥—हिनुमीनाग्रहणे इति । अथ प्रहिणोति प्रमीणीत इत्यत्र गुणे ईकारे च कृते हिनुमीनेत्येतद्रूपविरहात्स्यानीवेत्यस्य अप्यसद्विधो स्वरस्य स्थानिवद्भावप्रतिषेधात्कथ णत्वमित्याह—विकृतस्यापीति ॥—प्रवपानि मांसानीति । उप्यत इति वपा । भिदाद्यङ् ॥—आनीत्यर्थवत इति । येन धातुना युक्तेति न्यायो धातोर्ज्ञातव्यो न नाम्न इति नाम्न उपसर्गत्व भवत्येव । प्रवपानीतिसमुदायस्यार्थवत्त्वादानीत्यस्य पृथगर्थाभावादनर्थकत्वम् । उपसर्गत्वाभावाद्वा । अत एव प्रवृद्धा इति विग्रहो वृत्तौ दर्शित । न ह्यनानिना सहोपसर्गयोग । यद्येव प्रयाणीत्यनापि न प्राप्नोति । न ह्यत्रापि आनि प्रति उपसर्गयोग किं तु धातु प्रति । नैवम् । योगस्यार्थद्वारकत्वात्तत्र प्रयोगविषयस्यैव धातोराश्रयणात्तस्य च न कचिदसगृष्टस्य भावात्समुदायस्थस्यैवाश्रितत्वादित्यानिशब्दान्त समुदाय प्रति य उपसर्गस्तस्मात्परस्य समुदायस्य आनिस्तस्य णत्वमिति सूत्रार्थसप्रत्ययाददोष । एव णकारेऽपि द्रष्टव्यम् । अन्यथा णकारमान प्रत्युपसर्गत्वाभावाण्णत्वासिद्धि स्यादिति ॥—नशः शः ॥—प्रनष्ट इति । अत्र 'नशो धुटि' इति नागमस्य 'नो व्यञ्जनस्य'—इति लुक् ॥—प्रनङ्क्ष्यतीत्यादि । अत्र परेऽसदित्यन्तरङ्गत्वात् पूर्वं कृतमपि णत्व षत्वादावसत्वात्षत्वे कृतेऽप्येकदेशविकृतस्यानन्यत्वात्प्राप्तमपि श इति वचनात्सा-क्षाच्छकारान्तत्वाभावान्निवर्त्यते ॥—नशेरणोपदेश इति । अस्माक मतेऽयमणोपदेश इत्यर्थ । कलापके तु णोपदेश ॥—नेर्ङ्मादा—॥—न मातीत्यादि । ननु मिनोतिमीनात्योर्माङ्रूपाभावाद्ग्रहणाशङ्कापि कुतः । उच्यते । 'मिग्मीगोऽखलचलि' इत्यनेनात्वविधानात् ॥—नानुबन्धार्थं इति । यया रीत्या धातुपाठे माङित्यपाठि तया रीत्या यदि सूत्रेऽपि क्रियेत तदाऽनुबन्धार्थ. स्यात् । अत्र

नातिमिनोतीनाम् । प्रणिमिमीते । परिणिमिमीते । प्रणिमयते । परिणिमयते । ङकारनिर्देशश्च *नानुबन्धार्थः किंतु मात्यादिनिवृत्त्यर्थः । तेन यङ्लुप्यप्युदाहरिष्यते । दा इति संज्ञापरिग्रहात् ददातिदयतियच्छतिद्यतिदधातिधयतीनां ग्रहणम् । प्रणिददाति । परिणिददाति । प्रणिदयते । परिणिदयते । प्रणियच्छति । परिणियच्छति । प्रणिद्यति । परिणिद्यति । प्रणिदधाति । परिणिदधाति । प्रणिधयति । परिणिधयति । पत, प्रणिपतति । परिणिपतति । पद, प्रणिपद्यते । परिणिपद्यते । नद, प्रणिनदति । परिणिनदति । गद, प्रणिगदति । परिणिगदति । वपी, प्रणिवपति । परिणिवपति । वही, प्रणिवहति । परिणिवहति । शम्, प्रणिशाम्यति । परिणिशाम्यति । चिञ्, प्रणिचिनोति । परिणिचिनोति । याति, प्रणियाति । परिणियाति । वाति, प्रणिवाति । परिणिवाति । द्राति, प्रणिद्राति । परिणिद्राति। प्साति, प्रणिप्साति। परिणिप्साति । स्यति, प्रणिस्यति । परिणिस्यति। हन्ति। प्रणिहन्ति। परिणिहन्ति । देग्धि, प्रणिदेग्धि। परिणिदेग्धि। तृचि, प्रणिमाता, प्रणिदातेत्यादि । अन्तरः खल्वपि । अन्तर्णिमिमीते । अन्तर्णिदेग्धि । अडागमस्य धात्ववयवत्वेन व्यवधायकत्वाभावात् प्रण्यमिमीतेत्यादावपि भवति । प्रण्यास्यतीत्यादौ तु *आङा व्यवधानेऽपि प्रतिषेधाभावाद्भवति । अदुरित्येव । दुर्निमाता । उपसर्गान्तर इत्येव । प्रातर्निमिमीते । वप्यादीनामनुबन्धेन तिवा च निर्देशो यङ्लुप्निवृत्त्यर्थः । तेन प्रनिवावपीति इत्यादौ न भवति । पूर्वेषु तु भवति । प्रणिमामाति प्रणिमामेतीत्यादि । ङ्मादिष्विति किम् । प्रनिमाति । प्रनिमीनाति । प्रनिमिनोति । प्रनिदायन्ते व्रीहयः । प्रनिदायन्ते पात्राणि ॥ ७९ ॥ *अकखाद्यषान्ते पाठे वा ॥ २ । ३ । ८० ॥ पाठे धातूपदेशे ककारखकारादिः षकारान्तश्च यो धातुस्ताभ्यामन्यस्मिन् धातौ परेऽदुरुपसर्गान्तःशब्दस्थात् रषृवर्णात्परस्य नेर्नकारस्य णो वा भवति । प्रणिपचति । प्रनिपचति । परिणिपचति । परिनिपचति । प्रणिभिनत्ति । प्रनिभिनत्ति । परिणिभिनत्ति । परिनिभिनत्ति । प्रणिपापच्यते । प्रनिपापच्यते । प्रणिपापचीति । प्रनिपापचीति । प्रणिपिपक्षति । प्रनिपिपक्षति । प्रण्यपीपचत् । प्रन्यपीपचत् । प्रणिष्टभ्नाति । प्रनिष्टभ्नाति । स्तम्भेः सौत्रेषु पाठात्पाठविषयत्वम् । पूर्वसूत्रारम्भसामर्थ्यात्पूर्वसूत्रविभक्तोऽस्य विषयः । तेन प्रणिमयते प्रणिदयते इत्यादौ पूर्वेण नित्यमेव णत्वम् । अकखादीति किम् । प्रनिकरोति । प्रनिकिरति । प्रनिखनति । प्रनिखादति । अषान्त इति किम् । प्रनिद्वेष्टि । प्रनिपिनष्टि । पाठ इति किम् । इह च प्रतिषेधो यथा स्यात् । प्रनिचकार । प्रनिचखाद । प्रनिपेक्ष्यति । इह च माभूत् । प्रनिवेष्टा । प्रणिवेष्टा । प्रणिदेष्टा । प्रनिदेष्टा । यङ्लुपि नेच्छन्त्येके । प्रनिपापचीति । प्रनिसासत्ति । इत्यादि ॥ ८० ॥ *द्वित्वेऽप्यन्तेऽप्यनितेः परेस्तु वा ॥ २ । ३ । ८१ ॥ अदुरुपसर्गान्तःशब्दस्थाद्रषृवर्णा-

तु विशेषण ङकारेण उपलक्षितो मा इति । ननु 'सप्तम्या निर्दिष्टे पूर्वस्य' तचानन्तरस्य न व्यवहितस्येति न्यायात्प्रण्यास्यतीत्यादौ आङा व्यवधाने न प्राप्नोतीत्याह—आङा व्यवधानेऽपीति । अयमर्थः । 'पदेन्तरे' इति णत्वनिषेधकसूत्रे आङो वर्जनादाङा व्यवधानेऽपि भवति ॥—अकखा—॥ अत्राकखादिषान्त इति सिद्धे नञ्द्वय सुखार्थं, नञ्द्वये हि सति कखादेः षान्तस्य च वर्जनं प्रतीयते । एकस्मिंस्तु कखादेः किंविशिष्टस्य षान्तस्येति प्रतीतिः स्यात् । असम्भवान्न भविष्यतीति न च वाच्यम् । कषशिषेत्यादावेवंविधस्यापि दर्शनात् ॥—सौत्रेषु पाठादिति । ननु स्तम्भेर्धातुष्वपाठात् कथं पाठविषयत्वम् । उच्यते । सौत्राणां सूत्रमेव धातूपदेशः ॥—प्रनिवेष्टेति । विशत्प्रवेशने इत्यस्य रूपम् ॥—द्वित्वेऽप्यन्ते—॥—प्राणिणिपतीत्यादौ द्वयोरप्यनेनैव णत्वं द्वित्व इति

त्परस्यानितेर्नकारस्य द्वित्वे चाद्वित्वे चान्ते चानन्ते च वर्तमानस्य णो भवति परिपूर्वकस्य तु वा भवति। द्वित्वे, *प्राणिणिपति। प्राणिणत्। अद्वित्वे, प्राणिति। पराणिति। अन्ते, हे प्राण्। हे पराण्। परेस्तु वा, द्वित्वे, पर्यणिणिपति। पर्यनिनिपति। पर्याणिणत्। पर्यानिनत्। अद्वित्वे, पर्यणिति। पर्यनिति। अन्ते, हे पर्यण्। हे पर्यन्। परिपूर्वकस्य द्वित्वे अन्ते च नित्यं णत्वमिच्छन्त्येके । अन्ये तु अन्तेऽनन्ते च नेच्छन्त्येव। ये तु द्वित्वे कृतेऽपि पुनर्द्वित्वमिच्छन्ति तन्मतेऽपि द्वित्वे इति वचनतात् द्वयोरेवाद्ययोर्णत्वं भवति न तृतीयस्य। प्राणिणिपयतेर्ङे प्राणिणिनिपत्। अनन्त्यस्येत्यधिकारात् अन्ते न प्राप्नोतीति अन्तवचनम्। अनितीति तिवा निर्देशो देवादिकनिवृत्त्यर्थः न यङ्लुप्निवृत्त्यर्थः। यङोऽसंभवात्॥८१॥ *हनः॥२।३।८२॥ अदुरुपसर्गान्तःशब्दस्थाद्रपृवर्णात्परस्य हन्तेर्नकारस्य णो भवति। प्रहण्यते। पराहण्यते। निर्हण्यते। अन्तर्हण्यते। प्रहणनम्। पराहणनम्। निर्हणनम्। परिहणनम्। अन्तर्हणनम्। प्रघ्नन्ति प्राघानीत्यादौ '*हनो घि' (२-३-९४) इति प्रतिषेधान्न भवति। अदुरित्येव। दुर्हनः ॥८२॥ *वमि वा ॥२।३।८३॥ अदुरुपसर्गान्तःशब्दस्थाद्रपृवर्णात्परस्य हन्तेर्नकारस्य वकारे मकारे च परे णो वा भवति। प्रहण्वः। प्रहन्वः। प्रहण्मः। प्रहन्मः। प्रहण्मि। प्रहन्मि। प्राहण्वहे। प्राहन्वहे। प्राहण्महे। प्राहन्महे। अन्तर्हण्वः। अन्तर्हन्वः। अन्तर्हण्मः। अन्तर्हन्मः ॥ ८३ ॥ *निंसनिक्षनिन्दः कृति वा ॥ २। ३। ८४ ॥ अदुरुपसर्गान्तःशब्दस्थाद्रपृवर्णात्परस्य निसादीनां धातूनां नकारस्य कृत्प्रत्यये परे णो वा भवति। प्रणिसनम्। प्रनिसनम्। प्रणिक्षणम्। प्रनिक्षणम्। प्रणिन्दनम्। प्रनिन्दनम्। कृतीति किम्। प्रणिस्ते। परिणिस्ते। प्रणिक्षति। परिणिक्षति। प्रणिन्दति। परिणिन्दति। णोपदेशत्वात् *नित्यं भवति ॥ ८४ ॥ *स्वरात् ॥ २। ३। ८५ ॥ अदुरुपसर्गान्तःशब्दस्थाद्रपृवर्णात्परस्य कृद्विषयस्य नकारस्य स्वरादुत्तरस्य णो भवति। प्रहाणः। प्रहाणवान्। प्रहीणः। प्रहीणवान्। परिहीणः। परिहीणवान्। प्रगूणः। प्रगूणवान्। प्रयाणम्। परियाणम्। प्रवपणम्।

---

वचनात्। प्राणिणिपति इत्यत्र परे द्वित्वे कर्त्तव्ये णषशास्त्रमसद्भवत्यमिति न्यायाद्द्वित्वे कृते णत्वम् ॥—हे प्राण्। अन्ते 'नामन्त्र्ये' इति नलोपनिषेधात् नान्तत्वं संभवतीत्यामन्त्र्ये दर्शितम्। ननु द्वित्वेऽपि कृतेऽन्तेऽपीति वचनादन्तेऽपिशब्दादनन्तेऽपि भविष्यति किं द्वित्वेऽपीत्यनेन। नैवम्। द्वित्वेऽपीत्यस्याभावे प्राणिणिपतीत्यत्र प्रथमनकारेऽन्तेपीत्यस्य चरितार्थत्वात् द्वितीयनकारस्य णत्व न स्यात्। टवर्गेण व्यवधानात्। अन्तेऽपीत्यत्रापिशब्दाभावे द्वित्वेऽप्यन्त एव स्यादिति न तु प्राणिणिपतीत्याद्यनन्तेऽपि। ननु द्वित्वे सति अन्तस्थो नकारः क संभवति। उच्यते। प्राणिते सनि प्राणिणिषन्तं प्रयुङ्क्ते णिगि अल्लोपे क्विपि प्राणिणिषमाचष्टे णिजि पुनः 'त्र्यन्त्यस्वरादेः' इत्यनेन इसिति लोपे क्विपि हे प्राणिण् इत्यादौ। आमन्त्र्यत्वाच्च नलोपाभावः ॥—हनः ॥—प्रघ्नन्तीत्यादौ घ्न् इत्युच्यमानेऽप्येकदेशविकृतस्यानन्यत्वाण्णत्वं प्राप्नोतीत्याह—हनो घीति ॥—वमि वा ॥ पूर्वेण नित्य प्राप्ते विकल्पार्थम् ॥—प्राहण्वहे इत्यत्र 'आङो यमहन' इत्यात्मनेपदम् ॥—निंसनिक्ष—॥—नित्यं भवतीति। 'अदुरुपसर्ग'—इत्यनेनेति शेषः। णोपदेशत्वात् 'अदुरुपसर्ग'—इत्यनेन। गतिकारकङस्युक्तानामिति न्यायादविभक्त्यन्तैः कृदन्तैः सह प्रादीनां समासे सति निमित्तनिमित्तिनोरेकपदस्थत्वात् 'रपृवर्ण'—इत्यनेन वा नित्यं णत्वे प्राप्ते विकल्पार्थमिदम् ॥—स्वरात् ॥ गतिकारकेति न्यायात् 'रपृवर्ण'—इति सिद्धमेव किन्तु प्रयायिणौ परियायिणावित्यत्र 'वोत्तर'—इति वा णत्वं स्यात्तन्निवृत्त्यर्थमिदमारभ्यते ॥—कृद्विषयस्येति। कृतीति विषयसप्तमीयं न निमित्तसप्तमी। तस्यां हि स्वरात्परस्य धातोर्नस्य कृति निमित्ते णत्वमिति सूत्रार्थः स्यात्। न चेतदसंभ-

परिवपणम् । प्रयायमाणम् । परियायमाणम् । प्रयायिणौ । परियायिणौ । अप्रयाणिः । अपरियाणि । प्रयाणीयम् । परियाणीयम् । प्रवहणीयम् । परिवहणीयम् । यथासंभवं क्त क्तवतु अन आन इन् अनि अनीय इत्येते प्रत्ययाः प्रयोजयन्ति। स्वरादिति किम् । प्रभुग्नः। प्रभुग्नवान् । अदुरित्येव । दुर्यानः पन्थाः। कृतीत्येव। प्रवापेन। अलचटतवर्गशसान्तर इत्येव । प्रक्लृप्यमानम् । परिक्लृप्यमानम् । प्रेण्वनम् । प्रेन्वनम् । प्रदानम् । प्रधानम् ॥ ८५ ॥ 'नाम्यादेरेव ने ॥ २ । ३ । ८६ ॥ अदुरुपसर्गान्तःशब्दस्थाद्रषृवर्णात्परस्य नागमे सति नाम्यादेरेव धातोः परस्य स्वरादुत्तरस्य कृद्विषयस्य नकारस्य णो भवति । प्रेङ्खणम् । प्रेङ्गणम् । प्रेङ्खमाणः । प्रेङ्गमाणः । अत्र शानः । प्रेङ्खिणौ । प्रेङ्गिणौ । अप्रेङ्खणिः । अप्रेङ्गणिः । प्रेङ्खणीयम् । प्रेङ्गणीयम् । नाम्यादेरिति किम् । प्रमङ्गनम् । प्रकम्पनम् । एवकार इष्टावधारणार्थं । न एव सति नाम्यादेरिति हि नियमे इह णो न स्यात् । प्रेहणम् । प्रोहणम् । पूर्वेण सिद्धे नियमार्थं वचनम् । नग्रहणं नागमादेशोपलक्षणार्थम् । नकारस्य व्यवधाने हि प्राप्तिरेव नास्ति । प्रेन्वनम्। व्यञ्जनान्तादेवायं नियमः। ण्यन्तात्तु 'णेर्वा' (२–३–८९) इति *परत्वात् विकल्प एव । प्रमङ्गणा । प्रमङ्गना ॥ ८६ ॥ 'व्यञ्जनादेर्नाम्युपान्त्याद्वा ॥ २ । ३ ।८७॥ अदुरुपसर्गान्तःशब्दस्थात् रषृवर्णात्परो यो व्यञ्जनादिर्नाम्युपान्त्यो धातुस्ततः परस्य कृद्विषयस्य स्वरादुत्तरनकारस्य णो वा भवति । प्रमेहणम् । प्रमेहनम् । प्रकोपणम् । प्रकोपनम् । प्रगुप्यमाणम् । प्रगुप्यमानम् । प्रकोपिणौ । प्रकोपिनौ । अप्रकोपणिः । अप्रकोपनिः। प्रकोपणीयम् । प्रकोपनीयम् । व्यञ्जनादेरिति किम् । प्रेहणम् । प्रोहणम् । नाम्युपान्त्यादिति किम् । प्रवपणम् । प्रवहणम् । स्वरादित्येव । प्रभुग्न । परिभुग्नः । अदुरित्येव । दुर्मोहनः । दुर्गूहनः । अलचटतवर्गशसान्तर इत्येव । प्रभेदनम् । प्रभोजनम् । 'स्वरात्' ( २–३–८५ ) इत्यनेन नित्यं प्राप्ते विभाषेयम् ॥ ८७ ॥ *णेर्वा ॥ २ । ३ । ८८ ॥ अदुरुपसर्गान्तःशब्दस्थाद्रषृवर्णात्परस्य ण्यन्ताद्धातोर्विहितस्य स्वरादुत्तरस्य कृद्विषयस्य नकारस्य णो वा भवति । प्रमङ्गणा । प्रमङ्गना । प्रयापणम् । प्रयापनम् । प्रयापिणौ । प्रयापिनौ । अप्रयापणिः। अप्रयापनिः। प्रयापणीयम् । प्रयापनीयम् । विहितविशेषणं किम्। प्रयाप्यमाणः, प्रयाप्यमान इति क्येन व्यवधानेऽपि यथा स्यात् । अलचटतवर्गशसान्तर इत्येव । प्रदापनम् । प्रतियापनम् । अनाम्यादिभ्यो नागमे सति ' नाम्यादेरेव ने ' (२–३–८६) इति नियमेना-

---

वान्न हि ख्यादीनां कृति निमित्तभूते स्वरात्परो धातुनकारोऽस्ति येन प्राप्तौ प्रतिषेधोऽर्थवान् स्यादिति स्वरादिति कृन्नकारस्य विशेषणम् न 'अदुरुपसर्गान्तर'–इत्यस्य धातोर्वा 'देशेन्तरोऽयनहन' इति प्रतिषेधादनेन हि प्राप्तस्य स प्रतिषेधः । न चाऽन्त शब्दो धातुर्वा स्वरान्तो येन प्रतिषेधोऽर्थवान् स्यादिति । किञ्चोपसर्गविशेषणे प्रभुग्न इत्यत्रापि स्यात् । कृद्विशेषणमपि न । तस्मिन्नपि कृते कृतो य स्वर तत परस्य नकारस्येति स्थिते प्रयाणीयमित्यादौ प्राप्ति । प्रहीण इत्यादौ न स्यादिति ॥—**प्रक्लृप्यमानमिति** । वर्णैकदेशस्य वर्णग्रहणेन ग्रहणात्समुदायव्यापारे चावयवस्य लकारस्याप्युच्चारणमित्यऽलचटेति प्रवर्त्तत एव । यत ऌकारस्य मध्येऽर्द्धमात्रो लकारोऽग्रे पश्चाच्च तुरीय स्वरभागोऽस्ति ॥—**नाम्यादेरे**—॥ प्रेङ्खणमित्यादौ 'कवर्गैक'–इति नागमस्य न णत्वं प्राप्तमिति बहुवचनेन बाधितत्वात् ॥—**परत्वाद्विकल्प** इति । प्रेङ्खणमित्यादौ 'नाम्यादे'–इत्यस्यावकाशः प्रयापणेत्यादौ 'णेर्वा' इत्यस्य, प्रेङ्खणा प्रेङ्खना इत्यादौ तूभयप्राप्तौ परत्वाद्विकल्प एव । अत एव प्रमङ्गणमित्यादौ नियमाप्रवृत्ति ॥—**व्यञ्जनादे**—॥—**दुर्म्मोहन** इति । दुर्मुह्यतेऽनेनास्मिन् वा 'करणाधारे' अनट् दुर्मुह्यतीति नन्द्यादिभ्यो वा ॥—**दुर्गूहन** इत्यत्र 'गोहः स्वरे' ऊत् ॥—**णेर्वा**

इत्यनेन नित्यं प्राप्ते उभयत्र विभाषेयम् ॥ ८८ ॥ *निर्विण्णः ॥ २ । ३ । ८९ ॥ निरूपूर्वाद्विदेः *सत्तालाभविचारा-
प्राप्ते, *शेषेभ्यस्तु ' स्वरात् ' ( २-३-८५ ) इत्यनेन नित्यं प्राप्ते उभयत्र विभाषेयम् ॥ ८८ ॥ *निर्विण्णः प्राव्राजीत् । कश्चित्तु वेत्तेरपीच्छति निर्विण्णवानिति च ॥ ८९ ॥ *न ख्यापूग्भूभाकमगमप्यायवेपो णेश्च
र्थात्परस्य क्तनकारस्य णत्वं निपात्यते । *निर्विण्णः प्राव्राजीत् । कश्चित्तु वेत्तेरपीच्छति निर्विण्णवानिति च ॥ ८९ ॥ *न ख्यापूग्भूभाकमगमप्यायवेपो णेश्च
॥ २ । ३ । ९० ॥ अदुरुपसर्गान्तःशब्दस्थाद्रपृवर्णात्परे ये ख्यादयो ण्यन्ताश्च धातवस्तेभ्यः परस्य कृद्विषयस्य नकारस्य णो न भवति । प्रख्यानम् । प्रख्यायमानम् ।
प्रख्यायिनौ । अप्रख्यानिः । प्रख्यानीयम् । पूग्, प्रपवनम् । प्रपूयमानम् । प्रपाविनौ । अप्रपवनि । प्रपवनीयम् । भू, प्रभवनम् । प्रभूयमानम् । प्रभाविनौ ।
अप्रभवनिः । प्रभवनीयम् । भा, प्रभानम् । प्रभायमानम् । प्रभायिनौ । अप्रभानिः । प्रभायनीयम् । कम्, प्रकमनम् । प्रकम्यमानम् । प्रकामिनौ । अप्रकमनिः । प्रक-
मनीयम् । गम्, प्रगमनम् । प्रगम्यमानम् । प्रगामिनौ । अप्रगमनिः । प्रगमनीयम् । प्याय्, प्रप्यानः । प्रप्यानवान् । प्रप्यायनम् । प्रप्यायमानम् । प्रप्यायिनौ । अप्र-
प्यायनिः । प्रप्यायनीयम् । वेप्, प्रवेपनम् । प्रवेपमानम् । प्रवेपिनौ । अप्रवेपनिः । प्रवेपनीयम् । ण्यन्तेभ्योऽपि । प्रख्यापनम् । प्रपावनम् । प्रभावना । प्रभापनम् ।
प्रभापना । प्रकामना । प्रगमना । प्रप्यायना । प्रवेपनम् । अण्यन्तेभ्यो *नित्यं *वेपो विकल्पेन *ण्यन्तेभ्यश्च विकल्पेन प्राप्ते प्रतिषेधः । पूगो गकारः पवतेर्निवृत्त्यर्थः
तेन प्रपवणम् प्रपूयमाणम् इत्यादि । ख्यातेर्णत्वमिति कश्चित् । प्रख्याणम् । प्रख्यायमाणम् ॥ ९० ॥ *देशेऽन्तरोऽयनहनः ॥ २ । ३ । ९१ ॥ अन्तःशब्दात्पर-
स्यायनशब्दस्य हन्तेश्च संबन्धिनो नकारस्य देशेऽभिधेये णो न भवति । अन्तरय्यतेऽस्मिन्निति अन्तरयनो देशः । एवमन्तर्हननो देशः । देश इति किम् । अन्तरयणं
वर्तते । अन्तर्हणनम् । अन्तर्हण्यते । *अन्तर्घणो देशे इति तु निपातनात् । अन्तर इति किम् । प्रायणो देशः । प्रहणनो देशः । अयनहन इति किम् । अन्तर्णमनो
देशः ॥ ९१ ॥ *षात्पदे ॥ २ । ३ । ९२ ॥ पदे परतो यः षकारस्तस्मान्निमित्तात्परस्य नकारस्य णो न भवति । *सर्पिष्पानम् । यजुष्पानम् । दुष्पानम् । अत्र
'पानस्य भावकरणे' ( २-३-७० ) इति, निष्पानमिति 'स्वरात्' ( २-३-८५ ) इति, निष्पायनमिति 'णेर्वा' ( २-३-८८ ) इति प्राप्ते प्रतिषेधः । पादिति
किम् । निर्णयः । निर्यायणम् । पद इति किम् । पुष्णाति । *सर्पिष्केण ॥ ९२ ॥ *पदेऽन्तरेऽनाङ्यतद्धिते ॥ २ ३ । ९३ ॥ आङन्तं तद्धितान्तं च वर्जयित्वाऽ-

॥—शेषेभ्यस्त्विति । नागमरहितेभ्य' ॥—निर्विण्ण. ॥—सत्तेत्यादि । एते गयोऽपि धातूनामनेकार्थत्वाद्वेरागमे वर्तन्ते ॥—निर्विण्ण इति । विदक् ज्ञाने इत्यस्य सेट्त्वान् ॥
गतिकारकेति न्यायात् 'रपृवर्ण'–इति सिद्धमेव किमनेन । सत्यम् । अलचटेतिन्यायात्प्राप्तो क्तनकारस्य णत्व निपात्यते । धातुनकारस्य तु 'तवर्गस्य'–इति 'रपृवर्ण'–इत्यनेन वा
सिद्धमेव ॥—न ख्यापूग्—॥ ख्या इति निरनुबन्धोपादान ख्यादेशस्य ख्याग्रकथने इत्यस्य च परिग्रहार्थम् ॥—नित्यमिति 'स्वरात्' इत्यनेन ॥—वेपो विकल्पेनेति । 'व्यञ्जनादेर्नाम्युपा'–
इत्यनेन ॥—ण्यन्तेभ्यश्चेति । 'णेर्वा' इत्यनेन ॥—देशेऽन्तरो—॥ स्वरादिति हन इति च यथासंख्य प्राप्ते प्रतिषेध ॥—अन्तर्घण इति । 'हनोऽन्तर्घनान्त'–इत्यलन्तो निपात्यते । वाहीकेषु
देशविषयस्येय संज्ञा ॥—प्रायणो देश इति । इ तु इंण्क् वा । प्रेयतेऽस्मिन्निति अनटि 'स्वरात्' इति णत्वे । अयतो तु 'उपसर्गस्यायो' इति लत्व स्यात् ॥—षात्पदे ॥—सर्पिष्पानमि-
ति । नन्वा षकाराश्रित माभूण्णत्व सर्पिस्थरेफाश्रित कथ न हि । उच्यते । यन्नोत्पद्यमानस्य णत्वस्य निमित्तद्वय भवति तत्र प्रत्यासत्त्याऽनन्तरमेव गृह्यत इति ॥—सर्पिष्केणेति । सर्पि

न्यस्मिन्पदे निमित्तनिमित्तिनोरन्तरे व्यवधायके नकारस्य णो न भवति । प्रावनद्धम् । पर्यवनीतम् । माषकुम्भवापेन । व्रीहिकुम्भवापेन । *चतुरङ्गयोगेन । भर्तृबाहुयुग्मेन । रोषभीमसुखेन । अत्र यदा माषकुम्भस्य वाप इति माषाः कुम्भो वापोऽस्येति वा समासस्तदा 'वोत्तरपदान्तनस्यादेः'–(२–३–७६) इति विकल्पे प्राप्ते प्रतिषेधः । यदा माषस्य कुम्भवाप इति तदा *'कवर्गैकस्वरवति' (२–३–७७) इति नित्ये प्राप्ते । एवं शेषेष्वपि यथासंभवं वाच्यम् । अन्ये तु माषाणां कुम्भवाप इति व्यवधायकस्योत्तरपदावयवत्वे प्रतिषेधं नेच्छन्ति । तन्मते माषकुम्भवापेणेत्यादौ नित्यमेव णत्वम् । अपरे तु माषकुम्भस्य वाप इति व्यवधायकस्य पूर्वपदावयवत्वे प्रतिषेधं नेच्छन्ति । तन्मते माषकुम्भवापेण माषकुम्भवापेनेत्यादौ विकल्प एव भवति । अनाङीति किम् । प्राणद्धम् । पर्याणद्धम् । प्रण्यास्यति । प्रण्यापचति । अतद्धित इति किम् । आर्द्रगोमयेण । शुष्कगोमयेण । परमापूपमयेण । *यूषयावकेण ॥ ९३ ॥ हनो घि ॥ २ । ३ । ९४ ॥ हन्तेर्नकारस्य घकारे निमित्तनिमित्तिनोरन्तरे सति णो न भवति । वृत्रघ्ने । वृत्रघ्ना । वृत्रघ्नः । ब्रह्मघ्नः । शत्रुघ्न । संज्ञायाम् 'पूर्वपदस्थान्नाम्न्यगः' (२–३–६५) इति, असंज्ञायां तु 'कवर्गैकस्वरवति' (२–३–७७) इति, प्रघ्नन्ति, प्राघ्नन्, प्राघानि, प्रघानिष्यते इत्यादिषु तु 'हनः' (२–३–८३) इति प्राप्ते प्रतिषेधः । हन इति किम् । अर्घेण । परिघेण । घीति किम् । वृत्रहणौ । प्रहणनम् ॥ ९४ ॥ *नृतेर्यङि ॥ २ । ३ । ९५ ॥ नृतेर्धातोर्नकारस्य यङ्विषये णो न भवति । नरीनृत्यते । नरिनर्ति । नर्नर्ति । नरीनृतीति । अत्र 'रषृवर्णात्'–(२–३–६४) इत्यादिना प्राप्तिः । यङीति किम् । हरिरिव नृत्यतीति *हरिणर्ती नाम कश्चित् । 'पूर्वपदस्थान्नाम्न्यगः' (२–३–६५) इति णत्वम् ॥ ९५ ॥ *क्षुभ्नादीनाम् ॥ २ । ३ । ९६ ॥ क्षुभ्ना इत्येवमादीनां नकारस्य णो न भवति । क्षुभ्नाति । क्षुभ्नीतः । क्षुभ्नन्ति । क्षुभ्नन् । क्षुभ्नानः । तृप्नोति । तृप्नुतः । तृप्नुवन्ति । तृप्नुवन् । तृप्नुवानः । आचार्यस्य भार्या आचार्यानी । आचार्यस्य भोग आचार्यभोगस्तस्मै हित आचार्यभोगीनः । एषु 'रषृवर्णात्'–(२–३–६४) इत्यादिना प्राप्ते, रुवनाम । नृनमनः । परिनृत्तम् । गुरनृत्तम् । परिनर्तनम् । ग्रामनटः । शरनदः । शरनदी । गिरिनगरम् । परिनिवेशः । श्रीनिवासः ।

---

कायतीति सर्पिस् अम् का धातु. अग्रे इति स्थिते क इत्यस्याविभक्त्यन्तत्वात्पदत्वाभाव इति नानेन णत्वप्रतिषेध ॥ ननूत्तरपदमपि पदमुच्यते यथा 'वेदूतोनव्यय'–इत्यत्र पदे इत्युक्तेऽपि उत्तरपदे इति वृत्तिकृता व्याख्यातम्, तद्वदिहापि पदे इत्युक्तेऽपि उत्तरपदमपि लप्स्यते तत्कथ सर्पिष्केणेत्यत्र व्यावृत्ति । सत्यम् । नानिष्टार्था शास्त्रप्रवृत्तिरिति न्यायादेवविध व्याख्यान न सर्वत्रापि युक्त किं त्वभिप्रेतसिद्ध्यर्थं क्वचिदेव । यद्वा कुत्सिताद्यर्थे कप् तदा निर्विवादमेव ॥—पदेऽन्तरे—॥—चतुरङ्गयोगेन । अत्र 'कवर्गैक'–इति प्राप्त निषिध्यते ॥ माषकुम्भस्य वाप माषस्य कुम्भवाप इत्यास्मिश्च वाक्ये 'वृत्यन्तोऽसषे' इति पदसंज्ञानिषेधेऽपि भूतपूर्वकपदत्वमाश्रीयते ॥—कवर्गैकस्वरवति इति । कवर्गांशेन विशेषविहितत्वान्न तु 'वोत्तर'–इति विकल्प. ॥—यूषयावकेणेति । यवानां विकार 'विकारे' अण् वृद्धि । याव एव 'यावादिभ्य क' । यूषेण मासमुद्गादिरसेन मिश्र यावक अलक्तक. यूषयावकस्तेन ॥—नृतेर्यङि ॥—हरिणर्तीत्यत्र कर्तुर्णिन् ॥—क्षुभ्नादीनाम् ॥ क्षुभ्नेति लुप्तश्तिवनिर्देशेन धातुग्रहणं न तु यङ्लुप्निवृत्त्यर्थम् । अनुबन्धनिर्देशे हि क्षोभणमित्यत्रापि स्यात् । एव तृप्नु इत्यत्रापि । यद्येव तर्हि क्षुभ्नीत इत्यादौ णत्वशास्त्रस्य परेऽसत्त्वादीकारादौ कृते क्षुभ्नेति रूपाभावान्न प्राप्नोति । उच्यते । स्वरादेशस्य स्थानिवद्भावादेकदेशविकृतस्यानन्यत्वाद्वा भविष्यतीत्यदोष । बहुवचनेन चास्याकृतिगणता द्योत्यते । तेनान्योऽप्यविहि-

शवराग्निः । दर्भानूपः । हरिनन्दी । हरिनन्दनः । गिरिगहनम् । एषु ' पूर्वपदस्थात्—' ( २-३-६५ ) इत्यादिना प्राप्ते, परिनदनम् अत्र ' अदुरुपसर्गान्तरः '-
( २-३-७८ ) इत्यादिना प्राप्ते, सुमख्येन अत्र ' कवर्गैकस्वरवति ' ( २-३-७७ ) इति प्राप्ते प्रतिषेधः ॥ क्षुभ्ना, तृप्नु, आचार्यानी, आचार्यभोगीन, सर्वनामन्, बहुवच-
नृनमन, *नृनमेत्येके, नृत्त, नर्तन, नट, नद , नड इत्येके, नदी, नगर, निवेश, निवास, अग्नि, अनूप, नन्दिन्, नन्दन, गहन, नदन, ख्याग् इति क्षुभ्नादिः । णीग्, नयति । णम्, नमति ।
नमाकृतिगणार्थम् ॥ ९६ ॥ 'पाठे धात्वादेर्णो नः ॥ २ । ३ । ९७ ॥ पाठविषये धात्वादेर्णकारस्य नकार आदेशो भवति । भणति । सर्वे च नादयो णोपदेशा नृति, नन्दि, नर्दि, नशि,
णह, नशति । *पाठ इति किम् । णकारीयति । धात्विति किम् । णकारः । आदेरिति किम् । भणति । सर्वे च नादयो णोपदेशा नृति, नन्दि, नर्दि, नशि,
नाटि, नक्कि, नाधृ, नाथृ, नृवर्जम् । नाटीति नटण् अवस्यन्दने इत्यस्य वर्जनम् । भौवादिकस्य तु णट नृत्तावित्यस्य प्रणटति, प्रणाटयति । *णोपदेशश्चैषां ' णहि-
नुमीनानेः ' इत्यस्य विषयव्यवस्थार्थः ॥ ९७ ॥ 'षः सोऽष्ट्यैष्ठिवष्वष्कः ॥ २ । ३ । ९८ ॥ पाठे धात्वादेः षकारस्य सकार आदेशो भवति न चेत् षकारः
ष्ट्यैष्ठिवष्वष्कसंबन्धी भवति । षहि, सहते । षिच्, सिञ्चति । पाठ इत्येव । षण्ढीयति । धात्वित्येव । षण्ढः । आदेरित्येव । लषति । ष्ट्यादिवर्जनं किम् । ष्ट्यायते ।
ष्ठीवति । ष्ठीव्यति । ष्वष्कते ॥ स्वरदन्त्यपरसकारादयः स्मिस्विदिस्वदिस्वञ्जिस्वपयश्च षोपदेशाः सृपि, सृजि, स्त्या, स्तृ, स्तृ, सृ, सेकृवर्जम् । षोपदेशश्चैषा षत्ववि-
षयव्यवस्थार्थः॥९८॥ *ऋर लृलं कृपोऽकृपीटादिषु॥२।३।९९॥ कृपेर्धातोर्ऋकारस्य लृकारो रेफस्य च लकार आदेशो भवति । स चेत् कृपिः कृपीटादिविषयो न
भवति । क्लृप्तः । क्लृप्तवान् । क्लृप्यते । चिक्लृप्सति । *अचीक्लृपत । कल्पते । कल्पयति । कल्पिता । कल्प्ता । कल्पकः । कल्पः । चलीक्लृप्यते । चलीकल्प्ति । अकृपीटादि-
ष्विति किम् । कृपीटम् । कृपणः । कृपाणः । कृपः । कर्पूरः । कर्परः । कर्पटः । कर्पटिः । इत्यादि । बहुवचनमाकृतिगणार्थम् ॥९९॥ 'उपसर्गस्यायौ ॥ २।३।१०० ॥

---

तल्लक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु ग्राह्यः । तेन धनदवाचकनरवाहनशब्दस्य न णत्वम् ॥—नृनमेत्येक इति । अविभक्तिको निर्देशः । अकारान्तत्वस्य ज्ञातव्यः ॥—पाठे धा—॥ नन्त्वादिग्रहण
किमर्थं तमन्तरेणापि णोपदेशबलात्तत्वं न भविष्यति । अन्यथा भनित्येव पठ्येत । नैवम् । णोपदेशस्य ' अदुरुपसर्ग '-इति णत्वे फलमस्ति । तथा सुपरार्गपूर्वस्य प्रभणति अन्यत्र तु भनतीति
स्यादित्यादिग्रहणं कर्तव्यमेव ॥—पाठ इति किमिति । पाठ ग्रहणेन धातूपदेशस्य ग्रहणाण्णकारीयतेरनुपदेशात्त्वाभाव । अथैते नादय एव पठ्यन्ता तथा च सति नेदमारब्धव्य भवतीत्याह—
णोपदेशश्चेति । एवमुत्तरत्र षोपदेशेऽपि ॥—षः सोऽष्ट्यै—॥ न च वाच्यमनाप्यादेरित्यधिकाराभावेऽपि पाठबलादेव लषतीत्यादौ सत्व न भविष्यति । अन्यथा लष् इति कुर्यात् । यत
पकरणस्यान्यदपि फलमस्ति यथा कृतत्वात्परोक्षायां षत्वे चिलेपुरित्यादि सिध्यति । न । आदिग्रहणाभावे प्रस्तुते लसतीति स्यात् ॥—ऋर लृलं—॥ अथ वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते
इत्यस्यापि पक्षस्याश्रितत्वात् लकारलृकारयो रेफलकारग्रहणेनेव ग्रहणात् किं द्वयोरुपादानेन कृपे रो ल इत्येव क्रियताम् । नेवम् । क्वचिद्वर्णैकदेशाना वर्णग्रहणेनाग्रहणमिति ज्ञापनार्थम् ।
' दूरादामन्त्र्यस्य '-इत्यत्र ऋद्वर्जितस्य स्वरस्य प्लुतत्व वदन् स्वरद्वारेणैव सिद्धे पुनरपि यत लृकारग्रहण करोति तदेव बोधयति ऋत्प्रतिषेधे लृतोऽपि प्रतिषेधप्रसङ्ग इति ऋकारापदिष्ट
कार्यम् लृकारस्यापीति ॥—अचीक्लृपत । अत्र ' ऋवर्णस्य ' ' ऋतोऽत् ' । अत एव च चलीक्लृप्यत इत्यादौ ' ऋमता री ' ' रिरौ च लुपि ' इति सिद्धम् ॥—उपसर्गस्यायौ ॥—

उपसर्गसंबन्धिनो रेफस्य अयि गतावित्यस्मिन्धातौ परे लकारादेशो भवति । प्लायते । पलायते । पल्ययते । प्लत्ययते । अत्रानेकवर्णव्यवधानान्नेच्छन्त्येके । प्रातिपूर्वस्य प्रयोग एव नास्तीत्यन्ये । निलयम् । *दुलयनम् । कथं निरयते । दुरयते । रुत्वस्यासिद्धत्वात् निसो दुसश्च न भवति । उपसर्गस्येति किम् । परस्यायनं परायनम् । अयाविति किम् । इंण्क् गतौ । अल् । प्रायः । परायः । अयीति इकारनिर्देशोऽयि गतावित्यस्य परिग्रहार्थ ॥१००॥

*ग्रो यङि ॥ २ । ३ । १०१ ॥ यङि प्रत्यये परे गिरते रेफस्य लकारादेशो भवति । गर्हितं निगिरति *निजेगिलयते । गृणातेस्तु *यङेव नास्ति । केचित्तु *तस्यापीच्छन्ति लत्वं तु नेच्छन्ति । यङीति किम् । निगीर्यते ॥ १०१ ॥

*नवा स्वरे ॥ २ । ३ । १०२ ॥ गिरते रेफस्य स्वरादौ प्रत्यये विहितस्य लकारो वा भवति । गिरति । गिलति । निगरणम् । निगलनम् । निगारकः। निगालकः । स्वर इति किम् । निगीर्णः । निगीर्णवान् । विहितविशेषणं किम् । इह च यथा स्यात् । निगार्यते, *निगाल्यते । इह च माभूत् । गिरौ । गिरः ॥ १०२ ॥

*परेर्घाङ्कयोगे ॥ २ । ३ । १०३ ॥ परिसंबन्धिनो रेफस्य घ अङ्क योग इत्येतेषु शब्देषु परेषु लो वा भवति । पलिघः । परिघः । पल्यङ्कः । पर्यङ्कः । पलियोगः । परियोग ॥ १०३ ॥

*ऋफिडादीनां डश्च लः ॥ २ । ३ । १०४ ॥ ऋफिड इत्यादीनामृरो लृलौ डकारस्य च लो भवति वा । लृफिडः । लृफिलः । ऋफिलः । ऋफिडः । लृतकः । *ऋतकः । कपलिका । *कपरिका । तलपलीकम् । *तर्परीकम् । कपिलकम् । *कपिरकम् । लोमानि । *रोमाणि । अङ्गुलिः । *अङ्गुरिः । पुलुपः । पुरुपः । तलुनः । तरुणः । सलिलम् । सरिरम् । अलम् । *अरम् । मूलम् । *मूरम् । कलीलः । *करीरः । कल्म । कर्म । मुकुलम् । मुकुरम् । पांसुलः । पांसुरः । लेखा । *रेखा । *लिक्षा । रिक्षा । लोहितम् । रोहितम् । इत्यादि । अर्थभेदेऽपि, इला भूमिः । इरा अमृतम् । तलपलो गजेष्वेकदेशः । तर्परः पशूनां कण्ठघण्टः । कलभी बालहस्ती । करभ उष्ट्रः । शलभः पतङ्गः । शरभोऽष्टापदः । कालो वर्णः । कारो रक्षानिर्वेशः । वाल. केशः । वारः क्रियाभ्यावृत्तिः । लघुरपचितपरिणामः । रघुः राजा । गलः प्राण्यङ्गम् । *गरो विषम् । एवं मुद्गल मुद्गर, मण्डल *मण्डर,

---

दुलयनमिति । दुलय्यते । निन्दार्थवृत्तित्वात् खलभावेऽनटि सिद्धम् ॥—ग्रो यङि ॥—निजेगिल्यत इति । अत्र भ्वादेरित्यस्य परे लत्वेऽसत्त्वम् ॥—यङेव नास्तीति । 'न गृणाशुभरुच' इति निषेधात् ॥—तस्यापीच्छन्तीति । तन्मते निजेगीर्यत इति भवति ॥—नवा स्वरे ॥—निगाल्यत इति । अत्र निपूर्वात् गृतो णौ वृद्धौ लकारो णिलोपश्चेत्युभयप्राप्तौ नित्यत्वात्पूर्वं णिलोप । न च प्रत्ययलोपे प्रत्ययलक्षणमिति न्यायेन लत्वस्यापि प्राप्तौ तस्यापि नित्यत्व, वर्णाश्रये प्रत्ययलक्षणस्य प्रतिपेधात् ॥—परेर्घाङ्कयोगे ॥—पल्यङ्क इति । अङ्क्यत्यच् । अङ्क परिगतोऽङ्केन वा परिगतः । एव परियोग ॥—ऋफिडादीनां—॥ अर्त्तेर्बाहुलकात् फिडक्प्रत्यये ऋफिडः । अर्त्तेरेव के कुत्सादौ च के ऋतकः ऋत सत्य कायति 'आतो डो'-इति डे वा । क सुख पर यस्या 'शेषाद्वा' इति कचि आपि इत्वे कपरिका । तृपौच् ' सृणीकेतीका '-इति—तर्परीकं गन्धद्रव्यविशेष । कपिरशब्दात्के—कपिरकं कम्पयतीति वा ' कीचक '-इति निपात ॥—रोमाणीति । रवन्तीति मन् ॥—अङ्गुरि इति । अगु गतौ ' मस्यासि '-इति उरौ । नञ्पूर्वाद्राते. ' गमिजनि '-इति बहुलवचनाद्रुत्यपि अरम् ॥—मूरमिति । मूङ् बन्धने ' ऋज्याजि '-इति किति रे ॥ - करीर इति । ' कृशॄपॄ '-इति ईरे करी र ॥—पांसुर इति । 'गम्भादिभ्यो र.' ॥ लिखे समानार्थाद्रिख भिदाद्यङि—रेखा ॥—लिक्षेति । रिषे । 'ऋजिऋपि'-इति किति से ॥—गर इति । गिरति प्राणान् लिहादाचि ॥—मण्डर इति ।

*कन्दरादयोऽपि द्रष्टव्याः। *ऐकार्थ्येऽपि दृश्यते। गलं गरं च। वाडिशम्। वालिशम्। डश्च लः। ऋफिलः। ऋफिडः। 'वलभी। वडभी। चूडा। चूला। इला। *इडा। व्यालः। 'व्याडः। पुरोलाश। *पुरोडाशः। पोलशः। षोडश.। (वालिशम्। वाडिशम्)। पुलिनम्। *पुडिनम्। पीला। *पीडा। यथादर्शनमन्येऽपि ऋफिडादौ द्रष्टव्या'। संयुक्तस्य आदेश्च न दृश्यते। *पाण्डुः। कण्डू'। *डामरः। डीनः। डुण्डुभः। *डिण्डिमः ॥ १०४ ॥ 'जपादीनां पो व. ॥ २। ३। १०५ ॥ जपादिशब्दसंबन्धिनः पकारस्य वकारादेशो वा भवति। जवा। जपा। पारावतः। *पारापतः। 'त्रिविष्टवम्। त्रिविष्टपम्। पारावार। *पारापार.। कवाटः। 'कपाटः। विष्टवम्। 'विष्टपम्। 'कवलः। कपलः। अवाची। अपाची। जपादय. प्रयोगतोऽनुसर्तव्याः ॥ १०५ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ द्वितीयाध्यायस्य तृतीयः पादः समाप्तः ॥ २। ३ ॥ मूलराजासिधारायां निमग्ना ये महीभुजः ॥ उन्मज्जन्तो विलोक्यन्ते स्वर्गगङ्गाजलेषु ते ॥ १ ॥ ॥ ॥ ॥ ॥

## ॥ चतुर्थः पादः ॥

'स्त्रियां नृतोऽस्वस्रादेर्ङीः ॥ २। ४। १ ॥ स्त्रियां वर्तमानान्नकारान्तादृकारान्ताच्च स्वस्रादिवर्जितान्नाम्नो ङीः प्रत्ययो भवति। राज्ञी। *अतिराज्ञी।

मण्ठे 'जठर'-इति अरे ॥—कन्दर इति। कदुङ् वैक्लव्ये 'ऋच्छिचटि'-इत्यरे ॥—ऐकार्थ्य इति। एकोऽभिन्नोऽर्थो ययोस्तयोर्भावे ॥—वलभीति। वडे सौत्रात् 'कृगृभृशलि'-इत्यभे गौरादिङया च वडभी ॥—चूडेति। चुदणूणिजन्ताश्चिदाद्यडि निपात ॥—इडेति। ईड्यते स्तूयते आत्माऽस्या 'म्लेच्छीड'-इति ॥—व्याड इति। व्येग् 'ऋसृतृव्यालिह्यवि'-इत्यडे ॥—पुरोडाश इति। पुरो दाश्यते घञि 'पृषोदरादय'। वडे सौत्रात् 'कुलिकनि'-इति किशे वाडिशम् ॥—पुलिनमिति। पुल महत्त्वे 'वृजिमहि'-इति किदिने पुलिनम्। निर्देशस्य समानत्वात्कचिल्लकारस्य डकारोऽपि पुडिनम् ॥—पीडेति। 'भीपिभूपि'-इत्यादिना बहुवचनादड् ॥—पाण्डुरिति 'पनेदीर्घश्च'-इति डुप्रत्यय ॥—कण्डूरिति। 'कपेर्ण्डश्चौ च प' इति ॥—डामर इति। 'दमेर्णिद्वा दश्च ड' ॥—डीन इति। डीङ्च् 'सूयत्याद्योदित' इति नकारे 'डीयश्व्येदित' इति इट्निषेधे डीन ॥—डुण्डुभ इति। डुण्डुशब्देन भातीति डुण्डुभ। डिण्डिशब्दमततीति 'क्वचित्' इति डे डिण्डिमः। अथवा 'डिमे कित्' ॥—जपादीनां पो व. ॥ जप्यतिजप्पत सो? 'व्यधजपमद्य' इत्यण् ॥—पारापत इति। पराद्विप्रकृष्टादापततीति क्विपि परापत् तस्यापत्यम् ॥—त्रिविष्टपमिति। विष्लृकी 'विष्टपोलप'-इति। तृतीय विष्टप प्राच्यास्त्रिपिष्टपमिति पठन्ति ॥—पारापार इति। पारयतीति पार। न पारोऽपारोऽपार पारोऽस्य पारापार। राजदन्तादित्वात्पारस्य प्राग्निपात ॥—कपाट इति। कपुङ्चलने 'कपाटविराट'-इति निपात ॥—विष्टपमिति। विष्ट पातीति 'क्वचित्' इति डे ॥—कवल इति। के तालुनि पलति ॥ ॥ इति द्वितीयस्याध्यायस्य तृतीय पाद ॥ ॥—स्त्रियां नृतो—॥—स्त्रियां वर्त्तमानादिति। स्त्रीत्वयुक्तेऽर्थे वर्त्तमानात्स्वार्थे ङयावादय इति मत सम्मत निर्वहति। यथाह वार्त्तिक 'सिध्यन्तु स्त्रिया प्रातिपदिकविशेषणात्स्वार्थे ङयाबादय' ॥—अतिराज्ञीति। पूजितो राजा स्त्री चेदतिराज्ञी। 'पूजास्वते'-इति समासान्तप्रतिषेध। राजानमतिक्रान्तेत्यपि कृते समासान्तविधेरनित्यत्वामिति

तरुणी । दण्डिनी । छत्रिणी । कर्त्री । हर्त्री । स्त्रियामिति किम् । पञ्च सप्त दश नद्यः । नान्तायाः संख्याया युष्मदस्मदोरिवालिङ्गत्वात् । अत एव नकारलोपेऽपि 'आत्' (२-४-१८) इत्यावपि न भवति। अस्वस्रादेरिति किम् । स्वसा । अतिस्वसा । परमस्वसा । दुहिता । ननान्दा । याता । माता । तिस्रः । चतस्रः । तिसृचतस्रादेशस्य विभक्त्यनन्तरनिमित्तत्वात् संनिपातलक्षणत्वेन तद्विघातकत्वाभावादेव ङीनिवृत्तौ सिद्धायां स्वस्रादिषु तयोः पाठः संनिपातलक्षणन्यायस्यानित्यत्वज्ञापनार्थं । तेनातिदध्न्या कन्ययेत्यादौ विभक्तिनिमित्तेऽनादेशे सति ङी सिद्धो भवति। एवं यासेत्यादिषु अकारादेशे आवपि॥१॥ "अधातूदृदितः ॥२।४।२॥ धातुवर्जितो य उदित् ऋदिच्च प्रत्ययोऽप्रत्ययो वा तदन्तान्नाम्नः स्त्रियां वर्तमानात् ङीः प्रत्ययो भवति । उदित्, भवती । गोमती । यवमती । श्रेयसी । विदुषी । ऋदित्, पचन्ती । दीव्यन्ती । महती । एषु प्रत्यय उदादित् तदन्तं नाम । अतिभवती । अतिमहती । अत्र नामाव्युत्पत्तिपक्षे उदादित् तदन्तं समासनाम । भवती महतीति तु व्यपदेशिवद्भावेन तदन्तम् । निर्गोमती अतिपुंसीत्यत्र "प्रत्ययस्योदित्त्वात् गोमदादिशब्दोऽपि उदित्तेन तदन्तं समासनाम । अधात्विति किम् । सुकन् । सुकंसौ । सुहिन् । सुहिंसौ स्त्रियौ ॥ २ ॥ "अञ्चः ॥ २ । ४ । ३ ॥ अञ्चन्तान्नाम्नः स्त्रियां ङीर्भवति । प्राची । प्रतीची । अपाची । उदीची ॥ ३ ॥

णस्वराघोषाद्वनो रश्च ॥ २ । ४ । ४ ॥ वन इति वन्क्वनिप्ङ्वनिपामविशेषेण ग्रहणम् । णकारान्तात्स्वरान्तादघोषान्ताच्च यो विहितो वन्प्रत्ययस्तदन्तान्नाम्नः स्त्रियां ङीर्भवति । वनोऽन्तस्य च तत्संनियोगे रो भवति । ण, ओणृ, अवावरी । स्वर, धा, धीवरी । अतिधीवरी । पा, पीवरी । कृ, सहकृत्वरी । सुत्वरी । अघोष, दृश्, मेरुदृश्वरी । णस्वराघोषादिति किम् । युध्, सहयुध्वा । यज्वा स्त्री । विहितविशेषणं किम् । शृणातीति शर्वरी । स्वराद्विहिताद्गुणे कृते घोषवतो यथा स्यात् । वन इति किम् । श्वयतेः 'श्वन्मातरिश्वन्'—इत्यादिनाऽनि प्रत्यये अन्तलोपे च सति शुनी । "अतिशुनी । मघोर्नलोपेऽवादेशे च "मघोनी । नान्तत्वादेव

---

काशिका ॥—अधातू—॥ अधात्विति पर्युदासाश्रयणात्तस्य च विधिप्रधानत्वात्प्रतिषेधस्यानुमितत्वेन गौणत्वात् गोमन्तमिच्छतीति स्त्री गोमत्यतीति विधिनिषेधप्राप्तौ अधातुत्वाश्रितो विधिरेव न तु धातुत्वाश्रित प्रतिषेध ॥—गोमदादिशब्दोऽप्युदिदिति । अवयवधर्म्मेण समुदायोऽपि व्यपदिश्यते । अत्रावयव उदित् । तद्धर्म्मेण समुदायोऽपीत्यर्थ ॥—सुकन्नित्यादि । 'न्सहतो.'—इत्यत्र महत्साहचर्यात्क्विबन्तस्य कसो न ग्रहणमित्यर्थस्य ज्ञापितत्वादत्र न दीर्घ ॥—प्रत्ययस्योदित्त्वादिति । अजादेरित्यत्रावृत्तिव्याख्यानेन तदन्तस्य ग्रहणे सिद्धे यदिद व्याख्यान तद्युक्त्यन्तरस्यापि दर्शनार्थम् । यत एकस्यापि साध्यस्य सिध्यर्थ बह्व्योऽपि युक्तय उपन्यस्यन्ते ॥—अञ्चः ॥ अञ्च इति कृतनलोपाभावस्य धातुरूपस्याञ्चेर्निर्देश । तेनार्चाविवक्षणे नलोपाभावे तदविवक्षणे लोपेऽपि ङी सिद्ध । अच इति निर्देशे तु 'अच् प्राग्दीर्घश्च'—इतिवत् कृतनलोपस्यैव स्यात् । इत्थ च प्राञ्चीप्रत्यञ्चीत्यादौ ङीर्नागच्छेत् ॥—णस्वराघो—॥ वनते क्विबन्तस्य 'अहन्पञ्चमस्य'—इति दीर्घत्वे वान्निति रूपाभावाद्विजन्तस्य च प्रयोगादर्शनात्प्रत्ययस्यैव ग्रहणमित्याह—वन इति ॥—वन्क्वनिपित्यादि ॥ ननु निरनुबन्धग्रहणे न सानुबन्धकस्येति क्वनिप्ङ्वनिपोर्ग्रहण न प्राप्नोति । उच्यते । निरनुबन्धग्रहणे क्वचित्सानुबन्धस्य ग्रहणमिति न्यायान्न दोष ॥—वनोन्तस्येति । ननु प्रत्ययस्येति सर्वस्यापि प्राप्नोति तत्कथमुक्तमन्तस्येति । सत्यम् । वात् नृ वन् इति कृते भविष्यति ॥—अतिशुनीति । पूजित श्वाऽतिश्वा स्त्री चेदतिशुनी । यद्वा अतिक्रान्त श्वा ययेति बहुव्रीहि । श्वानमतिक्रान्तेति कृते 'गोष्ठाते. शुन' इति समासान्त स्यात् ॥—मघोनीति ।

डाप् इसकृत्वा डित्विधानमुत्तरत्राप एवानुवृत्त्यर्थम् ॥ १५ ॥ अजादेः ॥ २ । ४ । १६ ॥ अजादिभ्य आवृत्त्याजादीनामेव स्त्रियां वर्तमानेभ्य आप् प्रत्ययो भवति । बाधकबाधनार्थमनकारार्थं च वचनम् ॥ अजा । एडका । अश्वा । चटका । मूषिका । कोकिला । एभ्यो जातिलक्षणस्य ङीप्रत्ययस्यापवाद आप् । 'बाला 'होडा । पाका । वत्सा । मन्दा । विलाता । कन्या । मध्या । मुग्धा । विलातेसन्ये न पठन्ति । तेन विलातीत्यपि । एभ्यो वयोलक्षणस्य । ज्येष्ठा । कनिष्ठा । मध्यमा । एभ्यो धवयोगलक्षणस्य च । पूर्वापहाणा । अपरापहाणा । निपातनाण्णत्वम् । संप्रहाणा । परमहाणेत्यप्यन्ये । एषु टिल्लक्षणस्य । त्रीणि फलानि समाहृतानि त्रिफला । अत्र द्विगुलक्षणस्य । क्रुञ्चा । उष्णिहा । देवविशा । एषु व्यञ्जनान्तत्वात् 'आत्' (२-४-१८) इत्येनेनाप्राप्तेरजादिपाठः । कश्चिदेतेभ्यो विकल्पेनेच्छति । तन्मते क्रुङ् देवविद् उष्णिक् । अन्ये तु क्रुञ्चानालभेत उष्णिहककुभौ देवविशश्च मनुष्य इति प्रयोगदर्शनात् अकारान्ता एनेत इति मन्यन्ते । अजादेरित्यावृत्त्या षष्ठीसंबन्धः किम् । अजादिरावन्त्यिन्यामेव स्त्रियामभिधेयायां यथा स्यात् तेनेह न भवति । पञ्चानामजानां समाहारः पञ्चाजी । दशाजी । अत्र समाहार समासार्थः स्त्री । नासावजशब्दसंबन्धिनी । अत एव च ज्ञापकात्स्त्रीप्रकरणे तदन्तादपि भवति । तेन महाश्चासावजश्चेति सामान्येन विग्रहे स्त्रीविवक्षाया महाजा परमाजेति सिद्धम् । एवमतिभवती अतिमहती अतिधीवरी अतिपीवरी परमशूद्रेत्यादि ॥ १६॥ ऋचि पाद: पात्पदे ॥२।४।१७॥ पादिति कृतपाद्भाव पादशब्दो गृह्यते । तस्यावन्तस्य ऋच्यभिधेयायां पात्पदेति निपात्यते । त्रिपात् चतुष्पात् ऋक् । त्रिपदा गायत्री । चतुष्पदा पङ्क्तिः । ऋचीति किम् । द्विपाद् । द्विपदी । चतुष्पाद् । चतुष्पदी ॥ १७ ॥ आत् ॥ २ । ४ । १८ ॥ अकारान्तान्नाम्नः स्त्रियां वर्तमानादाप् प्रत्ययो भवति । खट्वा । सर्वा । या । सा । खट्वादीनामकारान्तत्वम् अतिखट्वः प्रियखट्व पञ्चभि खट्वाभि क्रीत पञ्चखट्व इत्यादिप्रयोगदर्शनात् 'उपदेशाच्च

---

वचनात् वान्तस्यापि त्रैरूप्य तेन सुधीवे सुधीवानौ सुधीवयौ ॥—अजादेः ॥—एडकेत्यत्र ईंडिक् 'कीचक'—इति । वालेति । बल प्राणने । बलतीति वा ज्वलादिणः ॥ होडा इत्यत्र हुरत् निमज्जने ण्यन्तादचि उणाद्यप्रत्ययो वा ॥—मन्देति । मदुङ् अचि । उणाद्यप्रत्ययो वा । मन्दाविलाते इति मध्यमवयसौ स्त्रियौ ॥—मध्येति । 'शिक्यास्याढ्यमध्य'—इति निपातनात् मध्या । विपूर्वाल्लाते क्के विलातेति न्यास ॥—पूर्वापहाणेति । पूर्वश्चासौ अपहानश्च पूर्वापहान' । स्त्री चेत्पूर्वापहाणा । एव अपरापहाणा इति । यद्वा पूर्वमपहीयतेऽस्यामिति 'करण'—इत्यनट् । यद्वा अपहीयतेऽस्यामनया वा 'करणाधारे' अनट् । अपहानशब्दोऽपि टिद्द्वारेण ङीप्रत्ययाभावार्थमजादौ द्रष्टव्य । तेन पूर्वा च साऽपहाना चेति आवन्तेन वाक्य कार्यम् । क्रियाशब्दत्वाच्च 'पूर्वपद-स्था'—इति णत्वाभाव । राप्रहीयते परेण प्रहीयते भुजिपत्यादिनाऽनट् । स्वराण्णत्वम् ॥—कुञ्चा । उष्णिहा । देवविशेत्यादि । अत्र त्रयोऽपि क्विबन्ता । छान्दसा एते इति पूर्वै इति न मतञ्जकोर्निबन्ध कृत । नामग्रहणे न तदन्तस्येति न्यायादजाद्यन्तादाप प्राप्तिरेव नास्ति किमावृत्तिव्याख्यानेनेत्याह—अत एव चेति ॥—ऋचि पाद.—॥ ननु ऋचि पादो वा इति क्रियताम् । ऋचि अभिधेयाया वाप् भवतीति सूत्रार्थ । न । विकल्पपक्षे ऋच्यभिधेयायामपि 'वा पाद' इति डी स्यात् । 'वा पाद' इति प्राप्तेऽयमारभ्यते ॥—आत् । ननु यासेत्यादीना य स इत्या-दावकारान्तप्रयोगदर्शनादकारान्तत्वनिर्णयादस्तु तत आप् खट्वादीना तु नित्य स्त्रिया वर्त्तमानत्वादकारान्तप्रयोगादर्शनात्तदनिश्चयात्कथ तेभ्य आबित्याशङ्क्याह—खट्वादीनामिति ॥—उपदेशाच्चेति ।

निश्चीयते। 'आदिति किम्। 'सोमपाः स्त्री। दृषद्। समिद्। आदित्यधिकृतमुत्तरत्र यथासंभवं योजनीयम् ॥ १८॥ 'गौरादिभ्यो मुख्यान्ङीः ॥ २।४।१९॥ गौरादेर्गणान्मुख्यात् स्त्रियां ङीः प्रत्ययो भवति। मुख्यादित्यधिकारोऽयम्। गौरी। शबली। 'गौर शबल कल्माष सारङ्ग पिशङ्ग हरिण पाण्डुर अमर 'सुन्दर विकल 'विष्कल पुष्कल 'निष्कल गौरादीनां गुणवचनत्वेनाजातिवाचित्वादप्राप्ते पाठः। यस्तु विकलेति कालविशेषवाची आवन्तः स विगता कलेति भविष्यति। दास 'चेट 'विट भिक्षुक बन्धक पुत्र गायत्र आनन्द टेट कटेट नट एषामजातिवचनत्वादप्राप्ते पाठः। काव्य 'शैव्य मत्स्य मनुष्य 'मुकय हय गवय ऋश्य द्रुण ओकण एषां जातिवाचित्वेऽप्यष्टानां यान्तत्वाद्द्रुणौकणयोर्नित्यस्त्रीविषयत्वादप्राप्ते पाठ। भौरिकि भौलिकि 'भौलिङ्गि औद्राह-माति 'आलम्बि कालम्बि 'सौधर्म आयस्थूण आरद भौरिकिभौलिक्योः कौड्यादित्वात् शेषाणां त्वणिञन्तानां गुरूपान्त्यत्वात् ष्ये प्राप्ते पाठः। कथं भौरिक्या। भौ-

---

यद्यकारान्तो न स्यात्ततो नावन्त इति तस्याप्द्वारेण ह्रस्वोऽपि न स्यादित्यर्थ ॥—आदिति किमिति। अवर्णादिति क्रियतामित्यर्थ ॥—सोमपाः स्त्रीति। सोम पिबतीति विच् आदिति वचनाद्त्राप् न भवति। ननु चात्राप्भावाभावयोराकारश्रुतेस्तथैव विद्यमानत्वात्कि तद्भावेन विनश्यतीति। उच्यते। आपि सति 'दीर्घङ्याब्'–इति सेर्लोप स्यात्। तथा सोमप कन्या पश्येत्यत्र 'लुगातोऽनाप' इति शसि लुग् न स्यात् ॥—गौरादिभ्यो—॥—गौरेति। गूयते उपादेयतया 'सुरक्षुर'–इति निपात। यद्वा गुरेत् गुरति मनोऽस्मिन् घञि गोर एव गौर इति क्षीरस्वामी। शाम्यति एकत्वमिति 'शमेर्ब च वा' इत्यनेनाऽलप्रत्यय। मकारस्य ब। कलयति कलेर्माषक्। सरति वर्णभावम्। 'सृवृनृभ्यो णित्' अङ्ग। पिशत् अवयवे पिशतीति। 'विडिविलि-कुरिस्फिडिपिशिभ्य किदङ्ग.'। हरतीति 'हृवृहिदक्षिभ्य इण'। पण्डते मनोऽत्रेति 'जठर' इति साधु। सुष्ठु नन्दयत्यच् 'पृषोदर'–इति सुन्दरः। अथवा सुन्दि सौत्र सौन्दर्ये वर्त्तते। वि-पूर्वात्कलेवर इत्यप्रत्यये। यत्र विकला सामग्री तत्र विगता कला लेशो यस्या अन्यत्र विकल्पे च ॥—विष्कल इति। गणपाठसामर्थ्यात्षकार। यद्वा वर्चस्कादीति षकार'। पुष्कलार्थे पुषे कलक् ॥—निष्कलेत्यत्र निस्पूर्वात्कलेरप्रत्यये 'निर्दुर्'–इति षत्वम्। चेटतीति लिहाद्यचि चेटः। विट शब्दे इत्यतो 'नाम्युपान्त्य'–इति के विटः। टेकृते अ इत्यकारे बाहुलकत्वात्तस्य टत्वे टेटः। अटपटइट एटतीति 'नाम्युपान्त्य'–इति के इट। कटशब्देन षष्ठीसमास। नट नृत्तौ। नटतीत्यच्। एते त्रयोऽपि नर्तका। कवे शिवेरपत्य कुर्वादित्वादीति ञ्ये—काव्य शैव्य। ततो ङ्यां 'व्यञ्जनात्तद्धितस्य' इति यलोपे कावी शैवी ॥—मुकय इति वेसर ॥—द्रुणेति। कच्छपी ॥—ओकणेति। उचच् समवाये चिक्कणादिनिपातनादऽणे कत्वे च ओकण। उद्यामोकणी। श्रीकरणादिव्यापारानन्तर गुह्यादौ पर्यन्तबन्धनस्य क्रियाख्या ॥—भौरिकीत्यत्र भवते 'भूसूकुशि'–इति किति रिप्रत्यये स्वार्थिके के च–भूरिक कफिडादित्वाल्लत्वे भुलिक तयोरपत्यम् 'अत इञ्' ॥—भौलिङ्गीति। भलि परिभाषणादौ 'भलेरिटुतौ वात'–इञ्कि अकारस्योकारे भुलिङ्ग। अथवा भुवि लिङ्ग कीर्तिरस्येति वा पृषोदरादित्वात् भुवो ह्रस्वत्वे भुलिङ्ग। तस्यापत्य भौलिङ्गि। 'साल्वाश'–इति इञ्। आलचीत्यत्र अली भूषण० शतृ अलन्त कलन्त चिनोति 'क्वचित्'। अलच्चस्यापत्य कलचस्यापत्यम्। 'अत इञ्' ॥—सौधर्मेति। सुधर्मस्यापत्यम्। ऋष्यण्। तदा ङी सिद्ध एव। अथवा शोभनो धर्मो यस्या 'द्विपदाद्धर्मादन्' इत्यन्। 'ताभ्या वाप् डित्' डापि सुधर्मा। सुधर्माया अपत्य 'ङयाप्त्यूङ' इति एयण्बाधकोऽदोर्नदीत्यण्। यद्वा सुधर्मणोऽपत्य 'ङसोपत्ये' अण् ॥—आयस्थूणेति। अगस्थूणस्यापत्य शिवादेरण्। यद्वा 'ऋषिवृष्ण्यन्धक'–इति कुरुद्वारोऽण्। आयस्थूण स्पि ॥—आरदेति। अरदस्यापत्य 'ऋषिवृष्ण्यन्धक'–इति।

लिक्या। कौड्यादिपाठात्ष्योऽपि। आपच्चिको राष्ट्ररूपः क्षत्रियस्तस्यापत्यं स्त्री आपच्चिकीत्यत्र शकादित्वाद् ञ्यलोपेऽपि जातिवाचित्वात् ङीर्भवति। एवं 'दोटी। वरट 'नाट मूलाट पाट सूपाट 'पेट पट पटल पुट कुट फाण्टश 'धातक केतक तर्कर शर्कर वदर कुवल 'लवण बिल्व आमलक मालत वेतस अतस आढक कदर कदल गुडूच 'वाकुच नाच माच कुम्भ कुसुम्भ 'यूप मेष सूप मूष 'करीर सल्लक 'वल्लक 'मल्लक मालक मेथ 'पिप्पल हरीतक 'कोशातक *शम तम सुषव शृङ्ग भृङ्ग बर्बर पाण्ड लोहाण्ड 'शष्कण्ड पिण्ड मण्डर *मण्डल यूप सूप सूर्प 'सूर्म मठ 'पिठर 'कुर्द गूर्द सूर्द खार 'काकण 'द्रोण *अरी-हण ओकण वृस आसन्द 'अलन्द कन्दल सलन्द देह देहल शष्कुल शव सूच मञ्जर अलज 'गण्डज 'वैजयन्त 'शालूक उपरतस 'सच्छेद एषां नित्य-स्त्रीविषयत्वादप्राप्ते पाठः । क्रोष्टु सरस् अनयोरनकारान्तत्वादप्राप्ते पाठः । अनड्वाडी अनडुही । अत एव पाठादनडुह्शब्दस्य ङ्यामुकारस्य पक्षे वाशब्दादेशः सौ नित्यं नागमाभावश्च । 'प्रत्यवरोहिणी पृथिवी आग्रहायणी । सप्रत्ययपाठः पुंवद्भावनिषेधार्थः । अनड्वाहीभार्यः । अनडुहीवृन्दारकेत्यादि । तद्धितलोपेऽपि लुगभावार्थश्च । पञ्चानड्वाहिः दशानडुहिः । आश्मरथ्यः । गोत्रयञन्तात् डायन् माभूत् ङ्येव यथा स्यादित्यस्य पाठः ।

कुरुद्वारोऽण् ॥—आपच्चिकीति । आपद चिन्वन्ति परेषा क्वचिड्ड । आपचा पुरुषास्तेऽस्य सन्ति 'अतोऽनेक'-इति इक । आ समन्तात्पिचयति शत्रून् 'कुशिक'-इति वा साधु । अपचि-कस्यापत्य 'दुनादि'-इति ञ्य । शकादित्वाल्लुप् ॥—दोटीति । दोटस्यापत्य 'पुरमगध'-इत्यण् 'द्रेरञणोऽप्राच्य'-इति लुप् ॥—नाटी । ओषधि । मूलाटी ओषधि ॥—पाटेति गणितम् ॥—सूपाटेति । छेदपाटी ॥—पेटी । समूह ॥—फाण्टशी । ओषधि ॥—धातकी । वृक्षविशेष ॥—तर्करी । ओषधि । शर्करी वृ० वि० । लवणी ओ० । कदरीकदल्यौ वृक्षौ । गुडूची ओ० । वाकुची कूर्चेति साधु । वावचो । नाचीमाच्यौ ओषध्यौ । कुम्भी आधार शाकविशेषश्च ॥ कुसुम्भी ओ० । यूपी ओ० यवागूविशेषो वा । मेषी ओ० । सूपी शाकवि० । मूषी करीरी दन्तमूलम् । वल्लकी वीणा । मल्लकी विचिकिल । मालकी ओषधि । ग्रामान्तराटवी च । मेथी वाली शकटन्यासे । मुरलोरलेति पिप्पलः । कोपातक इति केचित् । कोष कोश चातति णके । शमी शिवा वृक्षश्च । सुषवी शाकभेद कृष्णजीरक कारवेल्ल कपिकच्छूश्च । सुसवीति पाठ इति केचित् । शोभन सत्रोऽस्या । शृङ्गी विष कारवेल्लश्च । भृङ्गी ओ० । बर्बरी ओ० । कुञ्चितकेशा च । पाण्डी ओ० । लोहाण्डेति लोहमिवाण्ड यस्या लोहाण्डी नाम शकुनि ओषधिश्च । शष्कण्डी ओ० । मण्डरी ओ० । मण्डली ओ० । समुदायश्च । यूपी सूपी सूर्पी ओषध्य । सूर्मी लोहमयी प्रतिमा । पिठरी स्थाली । कुर्दी विमानविशेष । गूर्दी क्रीडा । सूर्दी ओ० । काकणेति । काकान् नयतीति क्वचिड्ड । पृषोदरेति णत्वम् । द्रोणी जलक्षेपणी कुण्डिका । अरीहणी ओ० । ओकणी ओ० क्षुद्रजन्तुश्च । वृसी ताल्व्योपान्त्योऽपि । आङ्सम्पूर्वाद्दहातेरुपसर्गेति डे आसन्द । अलन्दी सन्निपातहन्त्री ओषधि । कन्दली प्ररोह । सलन्दी देही ओषध्यो । मञ्जे सौत्रात् मञ्जरी । अलजी ओ० । गण्डाज्जायते इति पृषोदरेति गण्डजी ओ० । विजयन्तस्येव वैजयन्ती । शालूकी ओ० । उपरि तस्यतीति गणपाठादेरत्वम् उपरतसी ओ० । सच्छेदी ओ० । प्रत्यवरोहतीत्येवशीला क्रियाशब्द प्रत्यवरोहिणी । ननु तथापि पृथिवीशब्दस्याग्रहायणीशब्दस्य च स्वत स्त्रीत्वात् 'परत स्त्री'-इति पुंवद्भावो न भविष्यति किमर्थमनयोस्तथा पाठे । उच्यते । न हि सप्रत्ययपाठस्य पुंवद्भाव एव प्रयोजन किन्तु तद्धितलोपे लुगभावोऽपि । तत्र कश्चिदेक यथासम्भवमूहनीयम् ॥—अनड्वा-

॥

एहि 'पर्येहि। अनयोरिदन्तत्वाद्विकल्पे प्राप्ते नित्यार्थः पाठः। बहुवचनमाकृतिगणार्थम्। तेन नद मह भष प्लव 'चर 'गर तर गाह देव सूद अराल उद्वड चण्ड उमाभङ्ग हरीकणी वटर अधिकारी एषण 'करणे इति केचित्। इष्यते अन्विष्यतेऽनया दोष इति 'इषोऽनिच्छायाम्' (५-३-११२) इत्यनेन सति एषणी वैद्यशलाका। करणादन्यत्रैषणा। अन्वेषणा। आवेत्र। तदन्ये न मन्यन्ते। मुख्यादिति किम्। बहुनदा भूमिः॥१॥ 'अणञेयेकण्नञ्स्नञ्टिताम्'॥२।४।२०॥ अणादिप्रत्ययानां योऽकारस्तदन्तान्नाम्नः प्रत्यासत्तेस्तेषामेवाणादीनां वाच्यायां स्त्रियां वर्तमानात् ङीर्भवति। अण् उपगोरपत्यमौपगवी। तपोऽस्या अस्तीति तापसी। कुम्भकारी। काण्डलावी याति॥ अञ्, उत्सस्यापत्यमौत्सी। विदस्यापत्यं पौत्री वैदी। छत्रचुरातपःशीलेति छत्रादित्वादञि छात्री चौरी तापसी। एयण् सुपर्ण्या अपत्यं सौपर्णेयी। वैनतेयी। एयच्, शिलायास्तुल्या शिलेयी। एयञ् शैलेयी। 'शिलाया एयच्च' (७-१-११३)। निरनुबन्धनिर्देशः सामान्यग्रहणार्थः। इकण्, अक्षैर्दीव्यति आक्षिकी। प्रस्थेन क्रीता प्रास्थिकी। नञ् स्त्रिया अपत्यमियं वा स्त्रैणी। स्नञ्, पुंसोऽपत्यमियं वा पौंस्नी। टित् जानु ऊर्ध्वं प्रमाणमस्या जानुदघ्नी। जानुद्वयसी। जानुमात्री। पञ्च अवयवा यस्याः पञ्चतयी। एवं द्वयी। त्रयी। शक्तिरायुधमस्याः शाक्तीकी। एवं याष्टीकी। ह्योभवा ह्यस्तनी। एवमद्यतनी। श्वस्तनी। चिरंतनी। परुत्तनी। भूतपूर्वा भिक्षुः भिक्षुचरी। सक्तुधानी। गायनी। कुरुचरी। प्रत्ययसाहचर्यादागमटितो न भवति। पठिता विद्या। शुनिंधयी स्तनंधयीत्यादौ तु धातोष्टित्करणस्यानन्यार्थत्वादटितोऽपि भवति। अणादीनां षष्ठीनिर्देशेनाकारस्य विशेषणं पाणिनिना प्रोक्तं पाणिनीयम्। 'तदधीते'—इत्यण्। तस्य 'प्रोक्तात्' (६-२-१२९) इति लोपे, पाणिनीया कन्येति ङी यथा माभूत्। प्रत्यासत्त्या तैरेवाणादिभिः स्त्रिया विशेषणं किम्। गौतमेन प्रोक्ता नीतिर्गौतमीति। ताम् अधीते इत्यण्। तस्य प्रोक्तादिति लोपे 'ङ्यादेः'—(२-४-९४) इत्यादिना ङीलोपे ङीर्यथा न स्यात्। गौतमा कन्या। अस्त्यत्राणोऽकारो न तु तदभिधेया नीतिलक्षणा स्त्री प्रत्ययार्हा। यदभिधेया तु कन्यालक्षणा स्त्री प्रत्ययार्हा न तस्याकारोऽस्ति इति। तथा बहुकुम्भकारा नगरी। बहुकुरुचरीत्यादि ॥ २० ॥

---

ह्रीभार्ये इति। अनड्वाहीशब्दो व्यक्तौ प्रवर्तते। जातिवाचित्वे तु 'स्वाङ्गाद्ङी'—इत्यनेन पुंवन्निषेध सिद्ध। आङ्पूर्वस्य ईहि चेष्टायामित्यस्य एहते इति वाक्ये 'मन्यादिभ्य कि' इति कौ एहिः। एव पर्येहते पर्येहिः। चरी गूढपुरुषी। गरी भक्षिका। तरी तरित्री स्त्री। गाही अवगाहिका। सूदी सूपकारिणी। अराल इति पक्षिविशेषार्थोऽत्र द्रष्टव्य। वक्रार्थस्तु शोणादौ द्रष्टव्य। उद्वड इति। वड आग्रहणे सौत्रो धातु। उदक वडति इति उदवड पानीयहारिणीवाचक क्रिमिजातिविशेषो वा। चण्ड इति गोरीवाचकश्चण्डशब्दोऽत्र द्रष्टव्य। कोपनावाचकस्तु शोणादौ द्रष्टव्य। उमाया भङ्ग इव भङ्गो यस्या। हरी ओषधिस्तस्या इव कणा यस्या। हरय. सुवर्णवर्णा कणा यस्या वा। वटरः क्षुद्रजन्तु। अधिकार कारयति या स्त्री ॥—करणे इति। करणकारके इत्यर्थ ॥ इषच् गतौ ॥—अणञेयेकण्—॥ काण्डान् लविष्यामीति काण्डलावी 'कर्मण्योऽण्' ॥—पाणिनीयमिति। पणन पण 'पणेर्माने' अल्. सोऽस्यास्तीति पणी तस्यापत्य वृद्ध 'डसोपत्ये' अण्। पाणिनस्यापत्यं युवा 'अत इञ्'। पाणिनिना प्रोक्त 'तेन प्रोक्ते' इति विषये 'यूनि लुप्' इति इञो लुप्। अन्यथा 'वृद्धेञ.'—इति स्यात्। यतो 'वृद्धाद्यूनि' इत्यत्र यूनोऽपि वृद्धसज्ञा कार्यदर्शनादित्युक्तम्। ततोऽत्रापि इञन्तस्यावृद्धेऽपि वर्त्तन ज्ञेय ततो 'दोरीयः' ॥—बहुकुम्भकारा नगरीति। अत्र बहव. कुम्भकारा यस्यामिति कार्यम्।

वयस्यनन्त्ये ॥ २ । ४ । २१ ॥ प्राणिनां कालकृता शरीरावस्था बाल्ययौवनादि वयः । तस्मिन्ननन्त्येऽचरमे वर्तमानादकारान्तान्नाम्नः स्त्रियां ङीर्भवति । 'कुमारी । किशोरी । वर्करी । कलभी । तरुणी । तलुनी । वधूटी । चिरण्टी । धवयोगाभावविशिष्टं वयः कुमारीशब्दस्य प्रवृत्तिनिमित्तम् न तु धवयोगाभावमात्रम् । वृद्धकुमारीति तु उपमानात् । अनन्त्य इति किम् । वृद्धा । स्थविरा । आदित्येव । शिशुः । कथं 'द्विवर्षा त्रिवर्षा उत्तानशयगा लोहितपादिकेति । नैता वयःश्रुतयोऽर्थात्तु वयो गम्यते । बालावत्सेत्यादयस्त्वजादौ ॥ २१ ॥ 'द्विगोः समाहारात् ॥ २ । ४ । २२ ॥ समाहारद्विगुसंज्ञकान्नाम्नोऽकारान्तात् स्त्रियां ङीर्भवति । पञ्चपूली । पञ्चाजी । दशराजी । द्विवडवी । कथं त्रिफला । अजादिपाठात् ॥ २२ ॥ 'परिमाणात्तद्धितलुक्यबिस्ताचितकम्बल्यात् ॥ २ । ४ । २३ ॥ परितः "सर्वतो मानं परिमाणम् । "तच्च रूढिवशात्प्रस्थादि । यदाहुः—ऊर्ध्वमानं किलोन्मानं परिमाण तु सर्वतः । आयामस्तु प्रमाण स्यात् संख्या बाह्या तु सर्वतः । परिबिस्तादिभ्यो यदन्यत्परिमाणं 'तदन्ताद्द्विगोरकारान्तात्तद्धितलुकि स्त्रियां ङीर्भवति । द्वाभ्यां कुडवाभ्यां क्रीता द्विकुडवी । त्रिकुडवी । द्व्याढकी । त्र्याढकी । परिमाणादिति किम् । पञ्चभिरश्वैः क्रीता पञ्चाश्वा । दशाश्वा । "द्विशता । त्रिशता । तद्धितलुकीति किम् । 'द्विपण्या । अबिस्ताचितकम्बल्यादिति किम् । द्वाभ्यां बिस्ताभ्यां क्रीता द्विबिस्ता । त्रिबिस्ता । द्विपरमबिस्ता । द्व्याचिता । त्र्याचिता । द्विकम्बल्या । त्रिकम्बल्या ॥ २३ ॥ "काण्डात्प्रमाणादक्षेत्रे ॥ २ । ४ । २४॥ प्रमाणवाचिकाण्डशब्दान्तादक्षेत्रविषयाद्द्विगोस्तद्धितलुकि सति स्त्रियां ङीर्भवति। आयामः प्रमाणम्। द्वे काण्डे प्रमाणमस्याः द्विकाण्डी । त्रिकाण्डी रज्जुः। प्रमाणादिति

---

यदा तु बाहुल्य कुम्भकार्यो यस्यामिति क्रियते । तदा 'स्त्रियाःपुंवदिति' इति कचि बहुकुम्भकारीकेति भवति ॥—वयस्य—॥—कुमारीति । एतेषां कुमारादयश्चत्वार प्रथमवयोवचना । किन्तु तदन्तादपि विधिरिष्टः । परमश्चासौ कुमारश्च स्त्री चेत्परमकुमारी ॥—तरुणीति । तरुणादयस्तु तावन्त एव कौमारादुत्तरस्य नवयौवनस्य वाचका इति ॥—द्विवर्षा इति । द्वे वर्षे भूता 'प्राणिनि भूते' इति ॥—उत्तानशयेति । उत्ताना शेते 'ऊर्ध्वादिभ्य.' अ. ॥—द्विगोः समा—॥ समाहरणमेकीकरण समाहार ॥—समाहारद्विगुसंज्ञेति । समाहारविशेषितेन द्विगुना नाम विशिष्यते । अन्यथा समाहारं विना पञ्च राजय प्रिया अस्य पञ्चराजप्रिय इत्यादावपि ङी स्यात् । ननु द्वन्द्वसमाहारस्य द्वन्द्वैकत्वेति नपुंसकत्वविधानेन स्त्रीत्वाभावात् समाहारादित्युक्तेऽपि द्विगो समाहारादिति लभ्यते किं द्विगुग्रहणेन । अशोत्तरार्थमित्यपि न वाच्यम् । तद्धितलुकीति करणात् । नैवम् । समाहारादित्युक्ते समाहारान्तान्नाम्न इत्यापद्येत । ततश्च वाक्त्वचमतिक्रान्ता अतिवाक्त्वचीति स्यात् । इष्ट च अतिवाक्त्वचेति ॥—परिमाणा—॥—सर्वत आरोहपरिणाहाभ्यां मीयते परिच्छिद्यतेऽनेनेति परिमाणम् । परिच्छित्तिक्रियाकरणमात्र परिमाण नेह ग्राह्य मानादित्यकरणादित्याह—तच्चेति ॥—तदन्तादिति ॥ अर्थे कार्यासंभवादिति। परिमाणवाची यः शब्दस्तदन्तादित्यर्थः । आढौकते मानाय अपि पृषोदरेत्यादिना साधु । अथवा 'कीचक'-इति साधु ॥—द्विशतेत्यादि । 'शताद्य' इत्यस्य विधानसामर्थ्यान्न लुप् तस्य च विकल्पेन प्रवृत्ते पक्षे 'संख्याडते'-इति क । 'अनाम्न्यद्विः प्लुप्' ॥—द्विपण्येति । 'पणपाद'-इति ये तस्य च विधानसामर्थ्यादलुपि । ननु बिस्तादय उन्मानवचनास्तथाहि बिस्तशब्देन पष्टि पलशतान्युच्यन्ते । आचितशब्देन तोलकम् । कम्बल्यशब्देनाप्यूर्णापलशतम् । ततोऽपरिमाणत्वात् ङीप्रसङ्गाभावात् किं निषेधेन । नैवम् । अनेकार्थानि हि मानानि भवन्ति । तत्र देशविशेषे परिमाणार्थान्यपि तानि सन्ति । तदर्थं युज्यते एव निषेध । द्वित्रिबहोर्निष्कबिस्तादिति इकणूलोपो द्विबिस्ताशब्दे ॥—काण्डात्प्र—॥ क्षिपन्ति

॥

किम् । द्वाभ्यां काण्डाभ्यां क्रीता द्विकाण्डा । त्रिकाण्डा शाटी । अप्रमाणादपीच्छन्त्यन्ये । तन्मते द्विकाण्डी त्रिकाण्डी शाटीत्येव भवति । अक्षेत्र इति किम् । द्वे काण्डे प्रमाणमस्याः द्विकाण्डा त्रिकाण्डा *क्षेत्रभक्तिः । अक्षेत्र इति द्विगोर्विशेषणं किम् । काण्डस्य क्षेत्रविषयत्वेऽपि यथा स्यात् । द्वाभ्यां काण्डाभ्यां *क्षेत्रसंज्ञिताभ्यां क्रीता द्विकाण्डी वडवा । नात्र द्विगुः क्षेत्रविषयः किं तर्हि काण्डशब्द इति ॥ २४ ॥ *पुरुषाद्वा ॥ २ । ४ । २५ ॥ प्रमाणवाचिपुरुषशब्दान्ताद्द्विगोस्तद्धितलुकि स्त्रियां ङीर्वा भवति । द्वौ पुरुषौ प्रमाणमस्या· *द्विपुरुषी । द्विपुरुषा । त्रिपुरुषी । त्रिपुरुषा परिखा । प्रमाणादित्येव । द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा त्रिपुरुषा वडवा । तद्धितलुक्येव । पञ्चपुरुषा रज्जुः । प्रमाणभूता पञ्च पुरुषाः समाहृताः पञ्चपुरुषी । 'द्विगोः समाहारात्' (२–४–२२) इति नित्यमेव ॥२५॥ *रेवतरोहिणाद्भे ॥ २ । ४ । २६ ॥ भं नक्षत्रम् । रेवतरोहिणाभ्यां नक्षत्रशब्दाभ्यां स्त्रियां ङीर्भवति । रेवती । रोहिणी । यद्यपि 'चित्रारेवतीरोहिण्याः स्त्रियाम्' (६–३–१०७) इति जातार्थीयस्याणो लुकि ङीप्रत्ययस्यापि लुग् भवति तदापि नक्षत्रशब्दात्पुनरनेन ङीर्भवति । *रेवत्यां जाता रेवती रोहिण्यां जाता रोहिणीति । भ इति किम् । रेवता । रोहिणा । *कथं रेवतीरमणो बलः, रेवती शुष्करेवती । रेवच्छब्दो मत्वर्थीयान्तोऽस्ति । तत उदिल्लक्षणो ङीः । कथं *रोहिणी कटुरोहिणी । रोहिणशब्दः *प्रकृत्यन्तरमस्ति ततो जातिलक्षणो ङीर्भविष्यति ॥ २६ ॥ *नीलात्प्राण्यौषध्योः ॥ २ । ४ । २७ ॥ नीलशब्दात्प्राणिनि औषधौ च स्त्रियां ङीर्भवति । नीली वडवा । नीली गौः । *नीली औषधिः । प्राण्यौषध्योरिति किम् । नीला शाटी ॥ २७ ॥ क्ताच्च नाम्नि वा ॥ २ । ४ । २८ ॥ नीलशब्दात्क्तान्ताच्च शब्दरूपात्स्त्रियां ङीर्वा भवति नाम्नि संज्ञायाम् । नीली । नीला । *प्रवृद्धा चासौ विलूना चेति प्रवृद्धविलूनी प्रवृद्धविलूना ॥२८॥ *केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजात् ॥२।४।२९॥ एभ्यः स्त्रियां ङीर्भ-

निवसन्त्युप्तानि बीजानि वृद्धिं वा गच्छन्त्यस्मिन्निति 'हुयामा'–इति त्रे क्षेत्रम् । पोडशहस्तप्रमाण काण्डम् ॥—क्षेत्रभक्तिरिति । भक्तिग्रहण तद्धितार्थस्य स्त्रीत्वार्थम् ॥—क्षेत्रसज्ञिताभ्यामिति । यकाभ्यां काण्डाभ्या क्षेत्र परिच्छिन्न ते ते काण्डे अपि क्षेत्रसज्ञिते ॥—पुरुषाद्वा ॥—द्विपुरुषीति । मात्रटो 'हस्तिपुरुषाद्वा' इत्यणो वा 'द्विगो सशये च' इति लुप् ॥—रेवतरो—॥—रेवत्यां जाता रेवतीति । अत्र कन्या वाच्या । ततो गौणोऽपि रेवतीशब्दो नक्षत्रे वर्तते । ननु गोरादिभ्य इत्यतो मुख्याधिकारे मुख्यादेव प्राप्नोति तत्कथमत्र गौणात् । सत्यम् । मुख्याधिकारेऽपि कापि शाब्द्या वृत्त्या काप्यार्थ्या वृत्त्या प्राधान्य ग्राह्यम् । अत्र तावदार्थ्या वृत्त्या प्राधान्यम् । कथ, नक्षत्रलक्षणोऽर्थो यदि वाच्यो न भवेत् तदा कथ तद्विशिष्ट कालो वाच्य स्यादमुना प्रकारेणेति ॥—कथं रेवतीति । रीङ्च् । रीयते विच् गुण । रेमैंथोऽस्यास्ति मत् 'नाम्नि' वत्वम् ॥—रोहिणीति । स्त्रीपर्यायत्व.दत्र रोहिणशब्दस्यानक्षत्रार्थाद्ङीर्न प्राप्नोतीत्याशङ्का ॥—प्रकृत्यन्तरमिति । अर्थभेदात्प्रकृतिभेद इत्यर्थ ॥—नी—॥—नीलीत्यत्र जातिशब्दादपि जातौ नित्यस्त्रीत्वाजातेरित्यप्राप्तेऽनेनैव ङी । ये तु नील पट इत्यर्थान्तरेऽप्यर्थस्यापि दर्शनादनित्य स्त्रीत्वमभ्युपगच्छन्ति । तेषा गुणशब्दस्यैवेदमुदाहरणम् जातिशब्दात्तु 'जाते'–इति ङी सिद्ध एव ॥—क्ताच्च—॥—प्रवृद्धा चासौ विलूना चेतीति । अर्थकथनमिदं प्रवृद्धश्चासो विलूनश्च स्त्री चेटिति तु कार्यम् । अन्यथा गौणत्वाभावात् 'गोश्चान्त'–इत्यत्राप्रवृत्तावदन्तत्वाभावात् ङीर्न स्यात् । ओषधिविशेष अखण्ड सज्ञाशब्द व्युत्पत्तिमात्रमिदम् ॥—केवलमाम—॥—केवलीति । केव्यते सेव्यते केवलिभिरिति

वति नाम्नि । *केवली नाम ज्योतिः । *मामकी । *भागधेयी । 'पापी । 'अपरी । 'समानी । । 'आर्यकृती । *सुमङ्गली । 'भेषजी । नाम्नीति किम् । केवला ।
*मामकशब्दादजन्तत्वेनैव ङीः सिद्धो नाम्नि नियम्यते । तेन मामिका बुद्धिरिति असंज्ञायामनल्लक्षणोऽपि ङीर्न भवति ॥ २९ ॥ 'भाजगोणनागस्थलकुण्ड-
कालकुशकामुककटकवरात् पक्वावपनस्थूलाकृत्रिमामत्रकृष्णायसीरिरंसुश्रोणिकेशपाशे ॥ २ । ४ । ३० ॥ भाजादिभ्यो दशभ्यो यथासंख्यं पक्वादि-
ष्वर्थेषु स्त्रियां ङीर्भवति नाम्नि । 'भाज्यत इति *भाजी पक्वा चेत् । भाजान्या । गोणी आवपनं चेत् । गोणान्या । नागी स्थूला चेत् नागान्या । जातौ तु नाग्येव ।
तस्या स्थौल्याभावात् । स्थली अकृत्रिमा चेत् स्थलान्या । *कुण्डी अमत्रं चेत् । 'कुण्डान्या । काली कृष्णा चेत् कालान्या । कुशी आयसी चेत् *कुशान्या । कामुकी रिरं-
सुश्चेत्कामुकान्या । कटी श्रोणी चेत्कटान्या । कवरी 'केशपाशश्चेत् कवरान्या । जानपदशब्दादपि वृत्ताविच्छत्यन्य । जानपदी वृत्तिः । वृत्तेरन्यत्र जानपदा मदिरा ॥ ३० ॥
'नवा शोणादेः ॥ २ । ४ । ३१ ॥ शोणादेर्गणात् स्त्रियां ङीर्वा भवति । 'शोणी । शोणा । 'चण्डी चण्डा । शोण चण्ड अराल 'कमल कृपण विकट विशाल विशंकट भरुज
'ध्वज कल्याण उदार पुराण बहु वहुः बह्वी । एवंनामा काचित् । गुणवचनात्सूत्तरेणैव भविष्यति । वृत्रहन् 'वृत्रघ्नी । वृत्रहा । चन्द्रभागान्नाम्नि । 'चन्द्रभागी ।

'गृढि कन्दि कुण्डि '-इत्यल ॥—मामकशब्दादिति । ननु कथ मामकग्रहण नियमार्थं शोभनो मामकोऽस्या सुमामकेत्यत्र तदन्तविधेरिष्टत्वाद्विध्यर्थताप्युपपद्यत एव । विधिनियमसंभवे हि विधेरेव ज्यायस्त्वात् । सत्यामपि वा नियमार्थतायां विपरीतनियम कस्मान्न भवति । मामकशब्दस्यैव नाम्नीति । अत्रोच्यते । इह प्रकरणे तदन्तविधेरिष्टत्वेऽपि मुख्याधिकारादमुख्यमामकशब्दान्तान ङी । केवलेरेव चैते सज्ञाप्रतीतिर्न त्वमुख्यतदन्ते । अत एव केवला एव केवलादय उदाहृता न कृतसमासा इत्युपपद्यत एव नियमार्थता । विपरीतनियमोऽपि न भवति । तदा हि केवलादी-नामपि सज्ञाया ङीर्निवर्तित स्यात् । वचनारम्भसामर्थ्यात् सज्ञापि वाध्येति तेषा वैषम्य स्यात् । यथोक्तनियमे तु न किञ्चिन्नोपपद्यत इति ॥—अपरीति । विपर्त्तीति अचि परस्तस्य नञ्समासेऽप-री ॥—भेषजीति । भेषृग् भये घञि भेष जयति 'क्वचित्' इति डे ॥—मामकी । मातुली ॥—भागधेयी । बलि ॥—पापी । अपरी । ओषध्यो ॥—समानी । छन्द ॥—आर्यकृती । क्रियाविशेष । सुमङ्गली । छन्द ओषधिर्वा ॥—भेषजी । ओषधि ॥—भाजगोण—॥—भाजीति । भजण् विश्राणने इत्यस्य भाज्यते विश्राणगते दीयते 'णिवेत्त्यास '-इत्यने प्राप्ते बाहुलकात् 'शरि '-इति अ । अथवा 'स्थादिभ्य क ' इति क ॥—कुण्डीति । इह कुण्डशब्दस्य ङीविधान निरपष्टार्थमेव । जातिवचनात् 'जाते '-इत्यनेनेव सिद्धत्वात् ॥—कुण्डान्येति । कुडुङ् दाहे 'कट '-इ यप्रत्यये 'आत्' इत्यापि क्रियाशब्दोऽयम् ॥ कालयति मन इति अचि ॥—कुशान्येति । काष्ठमयी तदाकृतिर्वर्गा वा ॥—केशपाश इति । 'क्लिशे के च ' इति शे केश । पाश् रक्षणे 'पादावमि -इति शे पाश । केशपाश केशवेष । केशाना वेष । केशरचनाविशेष इत्यर्थ ॥—नागेति । न अग 'नखादय ' ॥—नवा शो—॥—शोणीति । शोणृ वर्णे । अस्याऽचि शोण उज्वलो वर्ण निर्दोषरक्तवर्ण इत्यर्थ ॥—चण्डीति । कोपनागमनेनैव विकल्प गौर्या तु गौरादिपाठाश्रित्य ङी । अरालशब्दो वक्रार्थोऽत्र द्रष्टव्य । पक्षिविशेषे तु गौरादौ । लक्ष्म्या कमलो कमला । भरो रुजेजति भरुजः नृपविशेष । भरूजेति तु पाठान्तरम् । तदा भृजेरु भर्जने । णिगन्त इति । अत एव पाठात् कृत्प्रत्यये दीर्घ ऊकारागमे भरूज । लेहन्ता किल तन्दुला ॥ ध्वजी ध्वजा कल्पपालभार्या दशवक्त्रा च ॥—वृत्रघ्नीति । केवलस्य हन्शब्दस्याप्रयोगात्तदन्तमुदाहरति ॥—चन्द्रभागीति । चन्द्रभागयो पर्वतयोरुद्भवा नद्यपि चन्द्र-

॥

चन्द्रभागा नाम नदी । नद्या अन्यत्र चन्द्रभागा नाम देवता । अनद्यामिति केचित् । चन्द्रभागी चन्द्रभागा काचित् । अनद्यामित्येके । चन्द्रभागा नाम नदी । *अण्णन्तान्नद्यामित्येके । चान्द्रभागी चान्द्रभागा नाम नदी । अण्णन्तान्नित्यं प्राप्ते विकल्पः । अनद्यां तु नित्यं ङीः । चान्द्रभागी छाया । अन्ये तु अण्णन्तादेवार्थभेदेन विकल्पमिच्छन्ति । नद्यामाप् प्रत्ययोऽन्यत्र ङीप्रत्ययः। चान्द्रभागा नदी । चान्द्रभागी वनराजिः ॥३१॥ *इतोऽक्त्यर्थात्॥२।४।३२॥ इकारान्तान्नाम्नः स्त्रियां ङीर्वा भवति न चेत्तत् क्त्यर्थप्रत्ययान्तं स्यात् । भूमी भूमिः । अङ्गुली । अङ्गुलिः । धूली । धूलिः । आली आलिः । धमनी धमनिः । दर्वी दर्विः । श्रोणी श्रोणिः । राजी राजिः । आवली आवलिः । यष्टी यष्टिः । शारी शारिः । *सरणी सरणिः । अशनी अशनिः । *अरणी अरणिः । शकृत्करी शकृत्करिः । आत्मंभरी आत्मंभरिः । कपी कपिः । अही अहिः । तारी तारिः । मुनी मुनिः । *अञ्चती अञ्चतिः । *अङ्कती अङ्कतिः । *अंहती अंहतिः । शकटी शकटिः । *शस्त्री शस्त्रिः । रजनी रजनिः । धरणी धरणिः । रात्री रात्रिः । अक्त्यर्थादिति किम् । कृतिः । हृतिः । अजननिः । अकरणिः । ज्यानिः । ग्लानिः । हानिः । *कथं साती *सातिः । तिगन्ताद्भविष्यति । *अन्ये तु अञ्चतिअङ्कतिअंहतिशकटिशस्त्रिशारितारिअहिकपिमुनिरात्रियष्टिभ्यः कटिश्रोणिप्रभृतिप्राण्यङ्गवाचिभ्यः क्तिवर्जितकृदन्तेभ्यश्चेकारान्तेभ्य इच्छन्ति नान्येभ्यः । तन्मते शोभनो गन्धो यस्याः सा सुगन्धिः सुरभिगन्धिः निर्गता कौशाम्ब्या निष्कौशाम्बिः अणिः *शाणिः इत्यादिषु न भवति । *क्तिमात्रवर्जनाचाकरणिअजननिज्यानिग्लानिप्रभृतिषु न प्रतिषेधः ॥ ३२ ॥ *पद्धतेः ॥ २ । ४ । ३३ ॥ पद्धतिशब्दात् स्त्रियां ङीर्वा भवति । पद्धती । पद्धतिः । क्त्यर्थ आरम्भः ॥ ३३ ॥ *शक्तेः शस्त्रे ॥ २ । ४ । ३४ ॥ शक्तिशब्दाच्छस्त्रे स्त्रियां ङीर्वा भवति । शक्ती शक्तिः । शस्त्र इति किम् । शक्तिः सामर्थ्यम् ॥३४॥ *स्वरादुतो गुणादखरोः ॥ २ । ४ । ३५ ॥ स्वरात्परो य उकारः सामर्थ्यादेकवर्णव्यवहितस्तदन्ताद्गुणवचनात् खरुवर्जितान्नाम्नः स्त्रियां ङीर्वा भवति । गुणादिति सामान्योक्तावपि केवलगुणवृत्तेः स्त्रीत्वायोगात् ततो द्रव्यवृत्तेः प्रत्ययः । पट्वी पटुः । मृद्वी मृदुः । वह्वी वहुः । साध्वी साधुः । तन्वी तनुः । लघ्वी लघुः ।

---

भागी ॥—अणन्तान्नद्यामित्येके । चान्द्रभागीति । चन्द्रभागाभ्या गिरिभ्या प्रभवति अण् ॥—इतोऽक्त्यर्थात् ॥—आवलीति । आङ्पूर्वाद्वले' 'पदिपठि'–इति इकारे ॥—सरणीति । स्रियते गम्यतेऽनया 'ऋहृसृ'–इत्यादिनाऽणि' ॥—अरणीति । अग्निनिर्मथनकाष्ठम् । जनपदे भवा जाता वा उत्सादेरञ् । अञ्चतेर्भार्याऽभेदोपचारेण अञ्चतीति अग्निभार्या अप्राप्तमपि धवयोगात् स्त्रीत्वम् ॥ अङ्कतिः वायु ब्रह्माग्निस्तेषा भार्याऽभेदोपचारेण—अङ्कती ॥—अंहतीति । दानेपि 'तिरयोहतिशाणी' इति स्त्रीत्वम् ॥—शस्त्रीति । शसू हिंसाया 'राशदि'–इति बहुवचनात्रौ ॥—सातिरिति । वन षण भक्तौ । सन्यादित्याशास्यमाना 'तिकृतौ'–इति तिकि 'न तिकि दीर्घश्च' इति आत्वम् ॥—शाणिरिति । श्यते 'कावावी'–इति बहुवचनाण्णौ ॥—क्तिमात्रेति न तु क्त्यर्थवर्जनादित्यर्थ ॥—कथमिति । अत्रापि क्तिप्रत्ययोऽस्तीत्याशङ्कार्थ. ॥—अन्ये त्विति । पाणिने पूर्वे । ननु कृच्छेषा उणादय इति न्यायात् कृदन्तेभ्यश्चेत्यनेनैवाञ्चतिप्रभृतीनामुणादीनां ङीर्भविष्यति कि तेषां पृथगुपादानेन । सत्यम् । तन्मते उणादीनामञ्चतिप्रभृतिश्रोण्यन्तानामेव भवति । तेनाणीत्यादिषु ङीर्न भवति ॥—पद्धतेः ॥ पादाभ्या हन्यते 'श्रादिभ्य.' क्ति. । 'हिमहति'–पदादेशः । अथवा हनन हतिः पादस्य हति ॥—शक्तेः शस्त्रे ॥ शक्तिशब्दस्य क्त्यन्तत्वादक्त्यर्थादिति प्रतिषेधे प्राप्ते शस्त्रवाचिनो विकल्प आरभ्यत इति ॥—स्वरादुतो—॥ अर्थे कार्या-

बिम्बी बिम्बुः। स्वरादिति किम्। पाण्डुर्भूमिः। उत इति किम्। श्वेता पटी। गुणादिति किम्। आखुः स्त्री। चिचीपु स्त्री। अखरोरिति किम्। *खरुरियम्। 'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते॥ आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः'॥ इति गुणमिह परिभाषन्ते। सत्त्वं द्रव्यम् तत्रैव निविशते तदेवाश्रयति यः स गुण इति संबन्धः। द्रव्यादपैत्यपगच्छति। यथाम्रान्नीलता पीततायामुपजातायाम्। पृथग्जातिषु भिन्नजातीयेषु दृश्यते। एतेन सर्वेण जातिर्गुणो न भवतीत्युक्तं भवति। आधेय उत्पाद्यो यथा कुसुमयोगाद्गन्धो वस्त्रे। यथा वाग्निसंयोगाद्घटे रक्तता। अक्रियाजो नित्यस्तद्यथाकाशादिषु महत्त्वादिः। तदेवं गुणस्योत्पाद्यत्वानुत्पाद्यत्वप्रकारद्वयप्रदर्शनेनोत्पाद्यत्वैकप्रकारस्य कर्मणो व्यवच्छेदः। असत्त्वप्रकृतिः द्रव्यस्वभावरहितः। अनेन द्रव्यस्य व्यवच्छेदः॥३५॥ 'श्येतैतहरितभरतरोहिताद्वर्णात्तो नश्च॥२।४।३६॥ एभ्यो वर्णवाचिभ्यः स्त्रियां ङीर्वा भवति तत्संनियोगे तकारस्य नकारश्च भवति। *श्येनी श्येता। *एनी एता। 'हरिणी हरिता। भरणी भरता। *रोहिणी रोहिता। लत्वे लोहिनी लोहिता। वर्णादिति किम्। श्येता। एता। चकारो नकारस्य ङीसंनियोगशिष्टार्थः॥३६॥ *क्नः पलितासितात्॥२।४।३७॥ त इति चेति चानुवर्तते। पलितासिताभ्यां स्त्रियां *ङीर्वा भवति तत्संनियोगे तकारस्य क्नादेशश्च। पलिक्नी पलिता। *असिक्नी असिता॥३७॥ असहनञ्विद्यमानपूर्वपदात्स्वाङ्गादक्रोडादिभ्यः॥२।४।३८॥ सहनञ्विद्यमानवर्जितपूर्वपदं यत्स्वाङ्गं तदन्तात्क्रोडादिगणवर्जितात् नाम्नोऽकारान्तात् स्त्रियां ङीर्वा भवति। पीनस्तनी पीनस्तना। अतिक्रान्ता केशानतिकेशी अतिकेशा माला। निष्क्रान्ता केशेभ्यो निष्केशी निष्केशा यूका। स्रडी स्रडा वृश्चिका। अडो नाम वृश्चिकावयवः। असहनञ्विद्यमानपूर्वपदादिति किम्। सहकेशा। अकेशा। विद्यमानकेशा। स्वाङ्गादिति किम्। बहुयवा। अक्रोडादिभ्य इति किम्। कल्याणी क्रोडा अस्याः कल्याणक्रोडा। क्रोडशब्दः स्त्रीक्लीबलिङ्गः। कल्याणखुरा। *पीनगुदा। एकशफा। दीर्घबाला। *भव्यभाला। सुगला। सुभगा। कल्याणी उखा स्फिक् यस्याः सा कल्याणोखा। 'कल्याणगोखा।

---

सम्भवाद्युत इत्यादिविशेषणायोगाच्च उपचारात् गुणवचन' शब्दो गुण इत्युच्यते ॥—स्त्रीत्वायोगादिति। उकारान्तस्य पुंस्त्वविधानादित्यर्थ ॥—खरुरियमिति। क्रूरा मूर्खा दर्पिष्टा श्वेता वा स्त्री 'राद स्यादश्वहरयोर्दर्पदन्तसितेषु च'। यद्यपि महत्त्वरूपस्याकाशगुणस्यापेतीतिविशेषण न घटते। तथाप्याम्रादिस्थितनीलादिगुणस्य घटमान सर्वस्यापि विशेषण भवति यथा कस्य चित् गोश्चन्द्रक इति विशेषण चिह्न कृत चन्द्रकोऽय गोरिति पश्चाद्गोसमूहोऽपि चन्द्रकोऽयमित्युच्यते तथाऽत्रापि भविष्यति ॥—श्येतैत—॥ वाऽधिकार प्रधानत्वात्प्रत्ययविधिनेव सबध्यते ॥—श्येनीति। शुभ्रा ॥—एनी कर्बुरा शुभ्रा वा ॥—हरिणी। नीला ॥—भरणी। पाटला धूसरा घृतवर्णा वा ॥—रोहिणी। रक्ता इत्यर्थ' ॥—क्नः पलिता—॥ ङीप्रत्ययसंबन्धे पञ्चमी तस्यैव च विकल्प इत्याह—ङीर्वेति ॥—असिक्नीति। असितशब्देनाधर्मानृतन्यायेन सितप्रतिपक्षो वर्ण उच्यते तदैव ङीप्रत्यय क्नादेशश्च। यदा तु सिता बद्धा न सिताऽसितेति तदा न स वर्ण इति तत्र द्वयमपि न भवति। पलितशब्दोऽपि केशरोगविषये वर्णे। पलितमस्या अस्ति अभ्रादः। या गोर्लब्ध्यापि गर्भं दधाति सा असिक्नी अन्त पुरदूती च ॥—असहन—॥ सहनञ्विद्यमानशब्दानां पूर्वपदरूपाणा वर्जनात् मध्यपदेन स्वाङ्गस्य व्यवधानेऽपि ङीप्रतिषेधो यथा विद्यमान कल्याण मुख यस्या सा विद्यमानकल्याणमुखेति ॥—पीनगुदेति। 'नाम्युपान्त्य'-इति के गुदं क्षीणामपाङ्ग अपकृष्टमङ्गम्। कल्याणं गुदमस्या इति न्यासः ॥—भव्यभालेति। भलिभल्लिपरिभा०। घञि भाल' ललाट. ॥—कल्याणगोखेति। उखाशब्दसान्निध्यात्स्त्रीत्व ज्ञायते। गोरिव खं इन्द्रिय यस्या. सा गोखा।

वहुवचनमाकृतिगणार्थम् । तेन किशलयकरा मृणालभुजेत्यादि । आदित्येव । परमशिखा । ' 'अविकारोऽ *द्रवं *मूर्तं प्राणिस्थं स्वाङ्गमुच्यते । *च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ' इति च स्वाङ्गम् । अविकार इति किम् । वहुशोफा । अद्रवमिति किम् । वहुकफा । मूर्तमिति किम् । वहुज्ञाना । प्राणिस्थमिति किम् । दीर्घमुखा शाला । च्युतं च प्राणिनस्तादिति किमर्थम् । अप्राणिस्थादपि पूर्वोक्ताद्यथा स्यात् । वहुकेशी वहुकेशा रथ्या । तन्निभं च प्रतिमादिष्विति किमर्थम् । प्राणिस्थसदृशादपि पूर्वोक्ताद्यथा स्यात् । पृथुमुखी पृथुमुखा प्रतिमा । कथं कल्याणं पाणिपादमस्याः कल्याणपाणिपादेत्यत्र न भवति । स्वाङ्गसमुदायो हि न स्वाङ्गम् । वहुस्वरत्वेन वक्ष्यमाणनियमवलाद्वा न भवतीति । द्विपादी त्रिपादीत्यत्र तु ' द्विगो समाहारात् ' ( २–४–२२ ) इति विशेषविधानान्नित्यमेव ङीर्भवति । अस्वाङ्गपूर्वपदादेवेच्छन्त्यन्ये । पाणी एव पादौ यस्याः सा पाणिपादा । मुखमेव नासिका यस्याः सा मुखनासिका ॥ ३८ ॥

*नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात् ॥ २ । ४ । ३९॥ असहनञ्विद्यमानपूर्वपदेभ्य एभ्यः स्वाङ्गेभ्यः स्त्रियां ङीर्वा भवति । पूर्वेण सिद्धे नियमार्थमिदम् । तेन नासिकोदराभ्यामेव वहुस्वराभ्याम् । ओष्ठादिभ्य एव च संयोगोपान्त्येभ्यो भवति नान्येभ्यः । तुङ्गनासिकी तुङ्गनासिका । कृशोदरी । कृशोदरा । विम्बोष्ठी विम्बोष्ठा । दीर्घजङ्घी दीर्घजङ्घा । 'समदन्ती समदन्ता । चारुकर्णी चारुकर्णा । तीक्ष्णशृङ्गी तीक्ष्णशृङ्गा । मृद्वङ्गी मृद्वङ्गा । सुगात्री सुगात्रा । स्निग्धकण्ठी स्निग्धकण्ठा । असहनञ्विद्यमानपूर्वपदादित्येव । *सहनासिका । अनासिका । विद्यमाननासिका । सोदरा । अनुदरा । विद्यमानोदरा । इत्यादि । नियमः किम् । पृथुजघना सुललाटा दृढहृदयेत्यादौ वहुस्वरान्न भवति । *कल्याणगुल्फा सुपार्श्वा इत्यादौ संयोगोपान्त्यान्न भवति । अङ्गगात्रकण्ठेभ्यो ङीप्रत्ययं नेच्छन्त्यन्ये । केचित्तु दीर्घजिह्वशब्दादपीच्छन्ति । दीर्घजिह्वी दीर्घजिह्वा कन्येति ॥ ३९ ॥

'नखमुखादनाम्नि ॥ २ । ४ । ४० ॥ असहनञ्विद्यमानपूर्वपदाभ्यां स्वाङ्गाभ्यां नखमुखशब्दाभ्यां स्त्रियां ङीर्वा भवति अनाम्नि असंज्ञायामेव । शूर्पनखी शूर्पनखा । अतिनखी अतिनखा । चन्द्रमुखी । चन्द्रमुखा । अतिमुखी अतिमुखा । अनाम्नीति किम् । शूर्पणखा । व्याघ्रणखा । वज्रणखा । गौरमुखा । श्लक्ष्णमुखा । कालमुखा । *संज्ञाशब्दा एते ॥ ४० ॥

'पुच्छात् ॥ २ । ४ । ४१ ॥ असहनञ्विद्यमानपूर्वपदात्स्वाङ्गात्पुच्छात् स्त्रियां ङीर्वा भवति । दीर्घपुच्छी दीर्घपुच्छा । अतिपुच्छी अतिपुच्छा । असहनञ्विद्यमानपूर्वपदादित्येव । सपुच्छा । अपुच्छा ।

---

कल्याणा गोखा यस्या इति । अवयवविशेषो जघनरूप ॥—अविकार इति । विकारो वातादिजन्मशोफादिः ॥—अद्रवमिति । द्रवणं द्रवो न द्रवोऽस्येत्यद्रवम् । द्रवतीति द्रवं न द्रवमद्रवं वा ॥—मूर्त्तमिति । रूपादियोगो मूर्त्तिः । असर्वगतद्रव्यपरिमाणं वा । तद्योगान्मूर्त्तं पुद्गलद्रव्यम् ॥—च्युतञ्च प्राणिन इति । अपरं लक्षणद्वयमुच्यते । तदविकारादिलक्षणयुक्तं प्राणिन च्युतमपि स्वाङ्गं भवति ॥—नासिको—॥—सहनासिकेति । सहस्य सो विकल्पेन भवतीत्यत्र न ॥—तुङ्गनासिकीति । तुजु वलने चेत्यस्य घञि उङ्गादित्वाद्गे तुङ्गा ॥—समदन्तीति । समशब्दोऽजन्त ॥—कल्याणगुल्फेति । गल अदने ' कलिगलेरस्योच ' इति फे गुल्फः । कल्याणौ गुल्फावस्याः ॥—नखमु—॥—संज्ञाशब्दा एते इति । न तु यौगिका इत्यर्थ ॥—पुच्छात् ॥ नासिकादिनिय-

विद्यमानपुच्छा ॥ ४१ ॥ *कबरमणिविषशरादेः ॥ २ । ४ । ४२ ॥ कबरादिपूर्वात्पुच्छात् स्त्रियां नित्यं ङीर्भवति । पुनर्विधानं नित्यार्थम् । कबरं कर्बुरं कुटिलं वा पुच्छमस्याः कबरपुच्छी । मणिः पुच्छेऽस्या मणिपुच्छी । विषं पुच्छेऽस्या विषपुच्छी । शरं पुच्छेऽस्या शरपुच्छी ॥ ४२ ॥ *पक्षाच्चोपमादेः ॥ २ । ४ । ४३ ॥ उपमानपूर्वात्पक्षशब्दात्पुच्छाच्च स्त्रियां ङीर्भवति । "उलूकस्येव पक्षावस्या उलूकपक्षी शाला । उलूकस्येव पुच्छमस्या उलूकपुच्छी सेना ॥ ४३ ॥ *क्रीतात्करणादेः ॥ २ । ४ । ४४ ॥ करणमादिरवयवो यस्य तस्मात् क्रीतान्तान्नाम्नोऽकारान्तात् स्त्रियां ङीर्भवति । अश्वेन क्रीयते स्म अश्वक्रीती । धनक्रीती । वस्त्रक्रीती । विभक्त्युत्पत्तेः पूर्वमेव कृदन्तेन समासः । मनसाक्रीती । अलुप् । करणग्रहणं किम् । सुक्रीता । दुष्क्रीता । आदिग्रहणं किम् । अश्वेन क्रीता । न ह्यत्र करणं क्रीतान्तस्य नाम्न आदिरवयवो भवति ऐकपद्याभावात् । कथं 'सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी' इति । धनं च सा क्रीता चेति कर्मधारयोऽयम् । करणविवक्षायामपप्रयोग एव ।*केचित्तु धनेन क्रीतेत्यत्राबन्तेनापि समासमिच्छन्ति बहुलाधिकारात् । तदाकारान्तत्वाभावाद् ङीर्न भवति ॥४४॥ 'क्तादल्पे॥२।४।४५॥ क्तप्रत्ययान्तान्नाम्नः करणादेरल्पेऽर्थे स्त्रियां ङीर्भवति । 'अभ्रविलिप्ती द्यौः । सूपविलिप्ती स्थाली । अल्पाभ्रा अल्पसूपेत्यर्थः । अल्प इति किम् । चन्दनानुलिप्ता स्त्री । अनल्पेन चन्दनेन लिप्तेत्यर्थः ॥ ४५ ॥ *स्वाङ्गादेरकृतमितजातप्रतिपन्नाद्बहुव्रीहेः ॥ २ । ४ । ४६ ॥ स्वाङ्गादेः कृतादिवर्जितात् *क्तान्ताद्बहुव्रीहेः स्त्रियां ङीर्भवति । शङ्खौ भिन्नावस्याः शंखभिन्नी । ऊरुभिन्नी । केशविलूनी । गलककृत्ती । कृतादिवर्जनं किम् । दन्तकृता । दन्तमिता । दन्तजाता । दन्तप्रतिपन्ना । बहुव्रीहेरिति किम् । *हस्ताभ्यां पतिता हस्तपतिता । पादपतिता ॥ ४६ ॥ 'अनाच्छादजात्यादेर्नवा ॥ २ । ४ । ४७ ॥ आच्छादवर्जिता या जातिस्तदादेः कृतादिवर्जितक्तान्ताद्बहुव्रीहेः स्त्रियां ङीर्वा भवति । शाङ्गरं जग्धोऽनया 'शाङ्गरजग्धी । शाङ्गरजग्धा । पलाण्डुभक्षिती पलाण्डुभक्षिता । अनाच्छादग्रहणं किम् ।

---

मान्निवृत्तौ वचनम् । यद्येव नासिकादिसूत्र एव कुतो न पठ्यते किमर्थं पृथगुद्दिश्यत इति । उच्यते । पुच्छादित्यस्यैवोत्तरत्रानुवृत्त्यर्थम् ॥—कबरम—॥ 'न सप्तमीन्द्वादिभ्यश्च' इत्यनेन मणिपुच्छीत्यादिषु मण्यादिशब्दानां पूर्वनिपात ॥—पक्षाच्चो—॥ उपमीयतेऽनयेति बाहुलकात् 'उपसर्गादात' इत्यङ् । प्रसिद्धसाधर्म्यादप्रसिद्धविपये येन ज्ञानमुपजन्यते इति । कबरमणिविषशरादे पक्षाच्चोपमादेस्तु इत्येकयोगाकरणात् स्वाङ्गादेरिति निवृत्तम् ॥—उलूकस्येव पक्षावस्या इति । अत्र उलूकशब्द उलूकपक्षे उलूकपुछे च वर्त्तते । यथोष्ट्रमुखे उष्ट्रशब्द अतश्चोलूकशब्द उपमान भवतीत्युलूक इव पक्षावस्या इत्यादिविग्रह । उलूकस्येव पक्षावित्यादि त्वर्थकथनम् ॥—क्रीतात्कर—॥—केचित्त्विति । तन्मतेऽपि प्रत्ययोत्पत्ते प्रागिति समासो बहुलाधिकाराल्लभ्यते । मन्मतेऽपि बहुलाधिकाराश्रयणे तथैव ॥—क्तादल्पे ॥—अभ्रविलिप्तीति । पूर्ववदस्याद्यन्तेन समास ॥—सूपविलिप्तीति ॥ अल्पार्थस्य गम्यमानत्वादल्पशब्दस्याप्रयोग ॥—स्वाङ्गादेः—॥ पूर्ववत्पारिभाषिक स्वाङ्गम् ॥—क्तान्ताद्बहुव्रीहेरिति । कृतादिवर्जितो य' क्त' क्तान्त इति 'विशेषणमन्त' इति न्यायात् स अन्ते यस्य बहुव्रीहे । 'जातिकाल'–इति शङ्गादे प्राग्निपात ॥—हस्ताभ्यां पतित इति कार्यमन्यथा अदन्तत्वाभावेनैव ङीप्राप्तिर्नास्ति ॥—अनाच्छाद—॥ आच्छादशब्द करणसाधनकप्रत्ययान्तस्तस्य च नञ्विशिष्टस्य जात्या कर्मधारय । तत आदिशब्देनावयवार्थेन बहुव्रीहि कार्य ॥—शाङ्गरजग्धीति । शाङ्गरशब्दस्तालव्यादिरव्युत्पन्न ॥—मासयातेत्यादिपु माससंवसरशब्दयो कालवचनत्वाद्बहुसुखदु खाना च गुणवचनत्वान्नजस्त्वभाववचनत्वादजात्यादेरिति व्यावृत्त्या

वस्त्रच्छन्ना । वसनच्छन्ना । जात्यादेरिति किम् । *मासयाता । संवत्सरयाता । बहुयाता । अयाता । सुयाता । सुखयाता । दुःखयाता । पूर्वेणापि न भवति । अस्वाङ्गादित्वात् । अक्तताद्यन्तादित्येव । कुण्डकृता । कुण्डमिता । पलाण्डुजाता । *वृक्षप्रतिपन्ना । क्तादित्येव ।*शाङ्गराप्रिया ॥ ४७ ॥ *पत्युर्नः ॥ २ । ४ । ४८ ॥ *पत्यन्ताद्बहुव्रीहेः स्त्रियां ङीर्वा भवति तत्संनियोगेऽन्तस्य नकारादेशश्च । दृढः पतिरस्या दृढपत्नी । दृढपतिः । स्थिरपत्नी । स्थिरपतिः । स्थूलपत्नी स्थूलपतिः । वृद्धपत्नी वृद्धपतिः । मुख्यादित्येव । *बहुस्थूलपतिः पुरी । अत्र हि पत्यन्तो बहुव्रीहिर्मुख्यो न भवति । यस्तु मुख्यः स *पत्यन्तो न भवति । यदापि स्थूलश्चासौ पतिश्चेति कर्मधारये सति बहवः स्थूलपतयो यस्यामिति बहुव्रीहिस्तदापि स्थूलपत्यन्तो बहुव्रीहिर्न पत्यन्त इति न भवति ॥ ४८ ॥ *सादेः ॥ २ । ४ । ४९॥ सपूर्वात्पतिशब्दात् स्त्रियां ङीर्वा भवति अस्य च नकारोऽन्तादेशः । पूर्वेणैव सिद्धे पुनर्वचनं बहुव्रीहिनिवृत्त्यर्थम् । ग्रामस्य पतिः ग्रामपत्नी ग्रामपतिः । आशापत्नी आशापतिः । अधिष्ठात्री पतिः अधिपत्नी अधिपतिः । ईषदूना पत्नी बहुपतिः बहुपत्नी । सादेरिति किम् । पतिरियम् । ग्रामस्य पतिः इयम् । मुख्यादित्येव । अतिक्रान्ता पतिमतिपतिः । गौणादपीच्छन्त्यन्ये । अतिपत्नी अतिपतिः । यदा तु पत्नीशब्दस्य षष्ठ्यन्तेन समासस्तदा राजपत्नी शूद्रपत्नीत्याद्येव भवति ॥ ४९ ॥ *सपत्न्यादौ ॥ २ । ४ । ५० ॥ सपत्न्यादौ यः पतिशब्दस्तस्मात् स्त्रियां ङीर्भवति नकारश्चान्तादेशः । पुनर्विधानं नित्यार्थम् । समानः पतिरस्याः समानस्य पतिरिति वा सपत्नी । एवमेकपत्नी । वीरपत्नी । पिण्डपत्नी । भ्रातृपत्नी । पुत्रपत्नी । षडेते सपत्न्यादयः । समुदायनिपातनं समानस्य *सभावार्थम् पुंवद्भावप्रतिषेधार्थं च । सपत्नीभार्यः । सपत्न्या अयं सापत्नः ॥ ५० ॥ *ऊढायाम् ॥ २ । ४ । ५१ ॥ पत्युः *केवलादूढायां परिणीतायां स्त्रियां ङीर्भवति नकारश्चान्तादेशः । पत्नी । यजमानस्य पत्नी । वृषलस्य पत्नी । ऊढायामिति किम् । पतिरियं *संगृहीता *अभार्या चेत्यर्थः॥ ५१ ॥ *पाणिगृहीतीति ॥ २ । ४ । ५१ ॥ इति शब्दः प्रकारार्थः । पाणिगृहीतीप्रकाराः शब्दा ऊढायां स्त्रियां ङ्यन्ता निपात्यन्ते । पाणिर्गृहीतोऽस्याः पाणौ वा गृहीता पाणिगृहीती । एवं करगृहीती । पाण्यात्ती ।

---

निषिध्यते ॥—वृक्षप्रतिपन्नेति । वृक्षात्प्रतिपन्नमनया ॥—शाङ्गराप्रियेति । शाङ्गर प्रियमस्याः ॥—पत्युर्नः ॥ पत्युरिति पञ्चम्यन्तमधिकृतस्य बहुव्रीहेर्विशेषण तेन च तदन्तविधिरित्याह—पत्यन्तादिति ॥—बहुस्थूलपतिः पुरीति । स्थूला. पतयो यासां तास्थूलपतय इति कृते पत्युर्न इति नविकल्पनात् बहवः स्थूलपतयो यस्याम् ॥—मुख्यो न भवतीति । द्वितीयेन बहुव्रीहिणा बाधितत्वात् ॥—पत्यन्तो न भवतीति । कि तर्हि स्थूलपत्यन्त. ॥—सादेः ॥ सह विद्यमानवचनो न तु तुल्ययोगवचन सपत्न्यादाविति निर्देशात् । तुल्ययोगे हि पूर्वेण शब्देन सह पतिशब्दस्य नकारो भवतीति सूत्रार्थे सपत्नीति निर्देशो न स्यात् । ननु सादे पत्युर्न इत्येकयोगो विधीयतां सादित्वेन बहुव्रीहावपि अन्यस्मिन्वा भविष्यति । नैवम् । मुख्यादित्यधिकारात् सादावेव स्यात् न तु बहुव्रीहौ । पृथग्योगे तु पूर्वसूत्रे मुख्यादिति बहुव्रीहिसमासस्यैव विशेषण न पत्यु ॥—सपत्न्यादौ ॥—सभावार्थमिति । धर्म्मादिषु पतीशब्दस्यापाठादित्यर्थ ॥—पुंवद्भावप्रतिषेधार्थं चेति । 'परतः स्त्री'-इति 'जातिश्च णि'-इति च प्राप्तस्य ॥—ऊढायाम् ॥ याऽग्निसाक्षिपूर्वकेण पाणिग्रहणेन परिणीता सेह गृह्यते । तदन्तविधिश्च नामग्रहणे नाश्रीयत इत्याह—केवलादिति ॥—संगृहीतेत्यत्र अनग्निसाक्षिक कामार्दितमदारकर्मत्वे परिगृहीतेत्यर्थः ॥—अभार्या चेत्यत्र भार्याया अन्या अप्रधानभूता भगिन्यादिरुच्यते ॥—पाणिगृहीती इति प्रकारो येषा ते

कराची । ऊढायामिति किम् । यस्या यथाकथंचित्पाणिर्गृह्यते सा पाणिगृहीता । बहुव्रीहावेवेच्छन्त्यन्ये ॥ ५२ ॥ *पतिवत्न्यन्तर्वत्न्यौ भार्यागर्भिण्योः ॥ २।४।५३ ॥ भार्याऽविधवा स्त्री । तस्यामभिधेयायां पतिमच्छब्दान्ङीरस्य च पतिवत्नादेशस्तथा गर्भिण्यां स्त्रियामभिधेयायामन्तर्वच्छब्दान्ङीरस्य चान्तर्वत्नादेशो निपात्यते । निपातनादेव च *अधिकरणप्रधानादप्यन्तःशब्दान्मत्वर्थीयो मतुर्भवति । भार्येति किम् । पतिमती पृथ्वी । गर्भिणीति किम् । अन्तरस्यां शालायामस्ति ॥ ५३ ॥ *जातेरयान्तनित्यस्त्रीशूद्रात् ॥ २।४।५४ ॥ *जातिवाचिनोऽकारान्तान्नाम्नः स्त्रियां ङीर्भवति न चेत्तद्यान्तं नित्यस्त्रीजातिवाचि शूद्रशब्दो वा भवति । तत्र जातिः काचित्संस्थानव्यङ्ग्या । यथा गोत्वादिः । *सकृदुपदेशव्यङ्ग्यत्वे सत्यत्रिलिङ्गान्या । यथा ब्राह्मणत्वादिः । अत्रिलिङ्गत्वं देवदत्तादेरप्यस्तीति सकृदुपदेशव्यङ्ग्यत्वे सतीत्युक्तम् । गोत्रचरणलक्षणा च तृतीया । यदाहुः—'आकृतिग्रहणा जाति' लिङ्गानां च न सर्वभाक् ॥ 'सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह' ॥ इति ॥ कुक्कुटी । सूकरी । तटी । 'पात्री । तथा 'ब्राह्मणी । वृषली । तथा नाडायनी । चारायणी । कठी । 'बह्वृची । जातेरिति किम् । मुण्डा । शुक्ला । कृता । देवदत्ता । अयान्तेति किम् । इभ्या । क्षत्रिया । वैश्या । आर्या । गवयी । हयी । मुकयी । मनुषी । मत्सी । ऋश्यी । इति गौरादिपाठात् । अन्तग्रहणं साक्षात्प्रतिपत्त्यर्थम् । तेन वतण्डस्यापत्यं पौत्रादि स्त्रीति यञ् । तस्य लोपे स्थानिवद्भावेऽपि वतण्डीत्यत्र यान्तलक्षणः प्रतिषेधो न भवति । नित्यस्त्रीजातिवर्जनं किम् । मक्षिका । यूका । खट्वा । कथं तर्हि द्रोणी *कुटी । अत्र हि शब्दयोर्नित्यस्त्रीत्वाभावेऽपि द्रोणीकुटीजातेर्नित्यस्त्रीत्वात्प्रतिषेधः प्राप्नोति । नैवम् । गौरादिपाठाद्भविष्यति । शूद्रवर्जनं किम् । शूद्रा । 'कथं महाशूद्री 'आभीरजातिः । नात्र शूद्रशब्दो जातिवाची किं तर्हि महाशूद्रशब्दः । यत्र तु शूद्र एव जातिवाची तत्र भवत्येव ङीनिषेधः । महती चासौ शूद्रा च महाशूद्रेति । जातिलक्षणस्य चायं प्रतिषेधः । तेन धवयोगे भवत्येव । शूद्रस्य भार्या शूद्री । आदित्येव । आखुः । तित्तिरिः ।

---

तथा जस सूत्रत्वाल् लुप् ॥—पतिवत्न्यन्त—॥—अधिकरणप्रधानादपीति । 'तदस्यास्त्यस्मिन्'–इत्यन तदिति प्रथमान्तात् विहितत्वेनाऽप्राप्त इत्यर्थ ॥—जातेरया—॥ जाति सामान्यमभिन्नबुद्धिध्वनिप्रसवनिबन्धनमर्थस्तत्र च कार्यासम्भवात्तद्वाचिनो ग्रहणमित्याह—जातिवाचिन इति ॥—सकृदुपदेशव्यङ्ग्यत्वे इति । उभयोरपि सम्बध्यते आकृतिग्रहणेत्यत्र (अनु)गृह्यतेऽनेनेति आकृतिरवयवरचना ग्रहण यस्या ॥—लिङ्गानां चेति । लिङ्गानां सर्वं सर्वत्व भजति लिङ्गसमुदाय वा सर्वं भजते वा ॥—सकृदाख्यातेत्यत्र सकृदाख्याता सती नियमेन ग्राह्या ॥—पात्रीति । अव्युत्पन्नोऽय 'हुयामा'–इति त्रप्रत्ययान्तो वा । त्रडन्तस्य तु टित्द्वारा ङी सिद्ध एव ॥—ब्राह्मणीति । अयमप्यव्युत्पन्न विकणेति निपातो वा । ब्रह्म अणति कर्म्मणोऽणि पृषोदरादिनिपातेऽपत्याणि वाणन्तत्वात् ङी सिद्ध एव ॥—बह्वृचीति । 'नाप्प्रियादौ' इत्यनेन न पुवन्निषेध । तत्र पूरणयवन्तस्य ग्रहणात् । यद्यपि कठादयोऽपि ब्राह्मणविशेषास्तथापि कठादीनामत्रिलिङ्गत्व न यथा कठेन प्रोक्तं वेत्त्यधीते वा कठ ब्राह्मणकुलमिति तुर्य जातिलक्षणं विधेयमेव ॥—कुटीति । मतान्तरेण कुटीशब्दस्य नित्यस्त्रीत्व स्वमते 'गृहे कुट' इति लक्षणेन पुंस्त्रीत्वमिति मतान्तरेणेद दर्शितम् ॥—कथं महाशूद्रीति । केवलात् शूद्रात् ङ्यां महती चासौ शूद्री चेति महाशूद्रीति परस्याभिप्राय' । महांश्चासौ शूद्रश्चेति व्युत्पत्तिमात्रमिदम् । यथा 'पलिक्नीत्यत्र । वृत्तिनिमित्तं

कोपधिः । मुख्यादित्येव । बहुशूकरा भूमिः । बहुब्राह्मणा शाला । *कथं सुपर्णी सुपर्णशब्दस्यापि जातिवाचित्वात् । तस्य च मुख्यत्वात् ॥ ५४ ॥ *पाककर्णपर्णवालान्तात् ॥ २ । ४ । ५५ ॥ जातिवाचिनो नाम्नः स्त्रियां ङीर्भवति । ओदनस्येव पाकोऽस्या ओदनपाकी । क्षणं क्षणेन वा पाकोऽस्याः क्षणपाकी । *आखुकर्णी । शङ्कुकर्णी । मुद्गपर्णी । सालपर्णी । गौरिव वाला अस्या गोवाली । अश्ववाली । संज्ञा एता ओषधीजातीनाम् । जातेरित्येव । बहुपाका यवागूः । आसां जातीनां नित्यस्त्रीरूपत्वात् वचनम् । एवमुत्तरसूत्रत्रयेऽपि ॥ ५५ ॥ *असत्काण्डप्रान्तशतैकाञ्चः पुष्पात् ॥ २ । ४ । ५६ ॥ सदादिरहितशब्दपूर्वो यः पुष्पशब्दस्तदन्ताज्जातिवाचिनो नाम्नः स्त्रियां ङीर्भवति । *शङ्खपुष्पी । सुवर्णपुष्पी । हिरण्यपुष्पी । सदादिप्रतिषेध किम् । *सत्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा । शतपुष्पा । एकपुष्पा । *प्राक्पुष्पा । प्रत्यक्पुष्पा ॥ ५६ ॥ असंभस्त्राजिनैकशणपिण्डात्फलात् ॥ २ । ४ । ५७ ॥ समादिवर्जितशब्दपूर्वो यः फलशब्दस्तदन्ताज्जातिवाचिनो नाम्नः स्त्रियां ङीर्भवति । *दासीफली । पूगफली । दाडिमफली । समादिप्रतिषेधः किम् । *संफला । भस्त्राफला । अजिनफला । एकफला । एकान्नेच्छन्त्यन्ये । *शणफला । *पिण्डफला । औषधिजातिविशेषाणां संज्ञा एताः ॥ ५७ ॥ *अनञो मूलात् ॥ २ । ४ । ५८ ॥ नञ्वर्जितशब्दपूर्वो यो मूलशब्दस्तदन्ताज्जातिवाचिनो नाम्नः स्त्रियां ङीर्भवति । *दर्भमूली । शीर्षमूली । अनञ इति किम् । *अमूला ॥५८॥ *धवाद्योगादपालकान्तात् ॥ २ । ४ । ५९ ॥ धवो भर्ता तद्वाचिनोऽकारान्ताद्योगात् *संबन्धात्स्त्रियां वर्तमानात्पालकान्तशब्दवर्जितान्नाम्नो ङीर्भवति । प्रष्ठस्य भार्या प्रष्ठी । एवं प्रवरी । गणकी । महामात्री । कुमार्यां भवो भर्ता कौमारः । तस्य भार्या *कौमारी । प्रष्ठादयः शब्दा धववाचिनोऽपि *योगात्सोऽयमित्यभेदोपचारेण भार्यायां वर्तन्ते । यदा तु ' तस्येदम् ' इति *व्यतिरेकाविवक्षा तदा तद्धितो भवति । प्राष्ठी । प्रावरी । धवादिति किम् । परिसृष्टा । प्रजाता । प्रसूता । सर्वत्र विनिर्लुठितगर्भेत्यर्थ. । *अस्त्यत्र योगस्तेन विना प्रसवाभा-

---

जाति. जातिद्वारेण ङी. ॥—आभीरजातिरिति । वैश्यभेद एव । आभीरो गवाद्युपजीवी ॥—कथं सुपर्णीति । पर्णशब्दस्यैव जातित्व तस्य च कृते समासे अमुख्यत्वमित्यभिप्रायः ॥—पाककर्ण—॥—आखुकर्णीति । आखो कर्ण इव कर्णपत्र यस्या. । शङ्कुरिव कर्णोऽस्या । मुद्गस्येव पर्णान्यस्या । सल गतौ सल्यत इति घञि साल' दन्त्यादि' सालस्येव पर्णान्यस्या ॥—असत्काण्ड—॥—शङ्खपुष्पीति । शङ्खादिवर्ण' शङ्खादिशब्दस्तेन शङ्खादि पुष्प यस्या. ॥—सत्पुष्पेत्याद्यत्र सन्ति काण्डे प्रान्ते शतमेकं च पुष्प पुष्पाणि वा यस्या इति विग्रह ॥—प्राक्पुष्पेति । अञ्चतिर्लुप्तधाप्रत्ययान्त । प्राक् प्रत्यक् पुष्प यस्याः ॥—असंभस्त्रा—॥—दासीफलीति । दासीव पूग दाडिम च फल यस्या इति ॥—संफलेति । सगत भस्त्रेव अजिनमेव एक च फलमस्या ॥—शणफलेति । शणस्येव फलान्यस्या. ॥—पिण्डफलेति । पिण्डाकाराणि फलान्यस्या ॥ पिण्डफला कटुतुम्बी । यन्निघण्टु कटुकाऽलाबुती तुम्बी लञ्चा पिण्डफला तथा ॥—अनञो—॥—दर्भमूलीत्यत्र दर्भस्येव शीर्षे च मूलं यस्या. ॥—अमूलेत्यत्र न विद्यन्ते मूलानि यस्या ॥—धवाद्योगा—॥—संबन्धादिति । सबन्धश्च सबन्धिनमपेक्षते स च प्रत्यासन्नत्वाद्धवस्यैव विज्ञायते तेन धवेन स्त्रिया सबन्धादित्यर्थ ॥—कौमारीति । कुमारी एव प्रतीयते ॥—योगात्सोऽयमिति । अत्र सोऽयमित्यभिसबन्धेन वृत्तिर्वेदितव्या । न ह्ययसेवाभिसबन्धस्तस्येदमिति किं तु सोऽयमित्यपि । अभेदाच्च भेदस्य निवृत्तत्वात् तद्धितानुपपत्ति ॥—व्यतिरेकाविवक्षेति । प्रष्ठस्येयमिति भेदविवक्षेत्यर्थ. ॥—अस्त्यत्र योग इति । परिसर्गप्रसवौ सबन्धानिमित्तौ न च तौ

वात् न तु धववाचि नाम । योगादिति किम् । देवदत्तो धवो, देवदत्ता भार्या स्वत एव न तद्योगात् । अपालकान्तादिति किम् । *गोपालकस्य भार्या गोपालिका । एवं पशुपालिका । अविपालिका । आदित्येव । सहिष्णोर्भार्या सहिष्णुः । कथं ज्येष्ठस्य भार्या ज्येष्ठा, एवं कनिष्ठा मध्यमा । अजादिपाठात् ॥ ५९ ॥

*पूतक्रतु*वृषाकप्यग्नि*कुसितकुसिदादै च ॥ २ । ४ । ६० ॥ एभ्यो धवनामभ्यस्तद्योगे स्त्रियां वर्तमानेभ्यो ङीर्भवति । तत्संनियोगे ऐकारश्चान्तादेशः । पूतक्रतोर्भार्या पूतक्रतायी । एवं वृषाकपायी । अग्नायी । कुसितायी । कुसिदायी । योगादित्येव । पूताः क्रतवो यया सा पूतक्रतुः । एवं वृषाकपिर्नाम काचित् ॥ ६० ॥ *मनोरौ च वा ॥ २ । ४ । ६१ ॥ मनोर्धवनाम्नस्तद्योगात् स्त्रिया वर्तमानान्ङीर्वा भवति तत्संनियोगे औकार ऐकारश्चान्तादेशो भवति । मनोर्भार्या मनावी । मनायी । मनुः ॥ ६१ ॥ *वरुणेन्द्ररुद्रभवशर्वमृडादान् चान्तः ॥ २ । ४ । ६२ ॥ एभ्यो धवनामभ्यस्तद्योगात् स्त्रिया वर्तमानेभ्यो ङीर्भवति तत्संनियोगे च *आनन्त आगमो भवति । वरुणस्य भार्या वरुणानी । एवमिन्द्राणी । रुद्राणी । भवानी । शर्वाणी । मृडानी । कश्चित्त्वाहिताग्नेर्भार्या आहिताग्न्यानी । एवं प्रजापत्यानी वणिजानीत्यादावपीच्छति । इन्द्रमाचष्टे इन्द्र् तद्भार्या इन्द्राणी एवं मातुलानीत्यपरः ॥ ६२ ॥ मातुलाचार्योपाध्यायाद्वा ॥ २ । ४ । ६३ ॥ एभ्यो धवनामभ्यस्तद्योगात् स्त्रिया वर्तमानेभ्यो ङीर्भवति तत्सन्नियोगे चानन्तो वा भवति । मातुलस्य भार्या मातुलानी । मातुली । एवमाचार्यानी । क्षुभ्नादित्वाण्णत्वाभावः । आचार्यी । आचार्यीति नेच्छन्त्यन्ये । उपाध्यायानी उपाध्यायी । अन्ये तु मातुला आचार्या उपाध्यायेत्यपीच्छन्ति । तदर्थं ङीरिति विकल्पनीयः ॥ ६३ ॥ *सूर्याद्देवतायां वा ॥ २ । ४ । ६४ ॥ सूर्यशब्दाद्धवनाम्नस्तद्योगाद्देवतायां स्त्रियां वर्तमानाद् ङीर्वा भवति तत्संनियोगे आन् चान्तः । सूर्यस्य भार्या सूर्याणी । पक्षे आवेव सूर्या । देवतायामिति किम् । सूर्यस्यादित्यस्य मनुष्यस्य वा भार्या मानुषी सूरी । *सूर्याणीति नेच्छन्त्यन्ये ॥ ६४ ॥ *यवयवनारण्यहिमाद्दोषलिप्युरुमहत्त्वे ॥ २ । ४ । ६५ ॥ *धवाद्योगादिति च निवृत्तम् । यवादिभ्यः शब्देभ्यो यथासंख्यं दोषादौ गम्यमाने स्त्रियां

---

पुमांसमाचक्षाते पृच्छाए अस्त्यनेति ॥ अन्ये त्वाहु परिसर्गो दोहद उच्यते तेन परिसृष्टा सपरिसर्गा जातदोहदेत्यर्थः । प्रजन प्रथम गर्भग्रहण प्रसवस्तु गर्भग्रहणं विनिर्लुण्ठनम् एतेश्च योषित एव संबन्धो न पुरा. । पुरुषसंयोगनिमित्ता एते न तद्वाचिन इत्यर्थ ॥—गोपालकस्येति । पालयतीति पालक. । गवां पालक इति । 'अकेन क्रीडाजीवे' इति कर्मषष्ठीसमास' ॥—पूतक्रतु—॥ ननु कुसिदादै चेति पञ्चमीनिर्देशादेकार प्रत्यय एव विज्ञायते । ततश्च ङी ऐकारश्च प्रत्ययो भवत इति सूत्रार्थ कथं न लभ्यते कथमुक्तमेकारश्चान्तादेश इति । नेष दोष । 'एण्येऽग्नायी' इति निर्देशात् । न ह्येकारस्य प्रत्ययत्वे अग्नायीति भवति । वृषो धर्म्म' कपिर्वराहस्ताद्रूप्यात् पृषोदरादित्वाद्दीर्घ वृषाकपिः । वृष दानवमाकम्पितवान् वा । 'अभिकुण्ठ' इति इ' ॥—कुसितकुसिदौ ऋषी ॥—मनोरौ—॥ प्रत्ययसंनियोगार्थं चकारोऽनुवर्तते । वा शब्दः प्रथमं विधेयतया प्रधानेन ङीप्रत्ययेन संबध्यते न त्वौकारेण तत्सनियोगविधानेनाप्रधानत्वादिति ॥—वरुणेन्द्र—॥—आनन्त आगमो भवतीति । आनिति दीर्घोच्चारणं मतसंग्रहार्थम् । अन्तग्रहणाभावे तु आनपि भिन्नप्रत्यय स्यात् । कि चान्तग्रहणाभावे 'अनेकवर्णः सर्वस्य' इति सर्वस्यादेश' स्यात् ॥—सूर्याद्दे—॥—सूर्यस्यादित्यस्येति । भगवतोऽपि हि सूर्यस्य परप्रवादेन मानुषीया भार्या सूरी यथा कुन्ती ॥—सूर्याणीति नेच्छन्त्यन्ये इति । पूर्वे । सूर्याणी तु शकट एव ॥—यवयवना—॥

ङीर्भवति तत्संनियोगे आन् चान्तः। दोष, 'दुष्टो यवो यवानी। यवानां दोषकारि सहचरितं 'द्रव्यान्तरम्। अप्रसवधर्माणो यवा एवेत्यन्ये। लिपौ यवनानामियं लिपिर्यवनानी। उक्तार्थत्वात् 'तस्येदम्' (६-३-१५९) इति 'अण् न भवति। उरुत्वे उर्वरण्यम् अरण्यानी। महत्त्वे महद्धिमं हिमानी। लिपीति किम्। यावनी वृत्तिः। यवनस्य भार्या यवनी। यवारण्यहिमानां तु दोषाद्यभावे स्त्रीत्वमेव नास्तीति न प्रत्युदाह्रियते। संज्ञायां तु भवत्येव। यवा यवना अरण्या हिमा नाम काचित्॥६५॥ आर्यक्षत्रियाद्वा॥२।४।६६॥ आभ्यां स्त्रियां ङीर्वा भवति तत्संनियोगे आन्चान्तः। आर्याणी। आर्या। क्षत्रियाणी। क्षत्रिया। अधवयोगेऽयं विधिः। धवयोगे तु विशेषविधानात्पूर्वेण नित्यं ङीरेव। आर्यस्य भार्या आर्यी। एवं क्षत्रियी। धवयोग एवायं विधिरिति कश्चित्। तन्मते आर्यस्य भार्या आर्याणी। आर्या। एवं क्षत्रियाणी क्षत्रिया। धवयोगादन्यत्र आर्या क्षत्रियेत्येव भवति ॥ ६६ ॥ 'यञो डायन् च वा ॥ २ । ४ । ६७ ॥ यञ्प्रत्ययान्तात्स्त्रियां ङीर्भवति तत्संनियोगे 'डायन् चान्तो वा भवति। गार्गी। गार्ग्यायणी। वात्सी। वात्स्यायनी ॥ ६७ ॥ 'लोहितादिशकलान्तात् ॥ २ । ४ । ६८ ॥ लोहितादिभ्यः शकलान्तेभ्यो यञन्तेभ्यः स्त्रियां ङीर्भवति तत्संनियोगे डायन् चान्तः। लौहित्यायनी। सांशित्यायनी। कात्यायनी। शाकल्यायनी॥६८॥ *षावटाद्वा ॥२।४।६९॥ षकारान्तान्नाम्नोऽवटशब्दाच्च यञन्तात् स्त्रियां वा ङीर्भवति तत्संनियोगे डायन् चान्त'। पौतिमाष्यायणी। पौतिमाष्या। शार्कराक्ष्यायणी। शार्कराक्ष्या। गौकक्ष्यायणी। गौकक्ष्या। आवट्यायनी। आवट्या ॥ ६९ ॥ कौरव्यमाण्डूकासुरेः ॥ २ । ४ । ७० ॥ एभ्यः स्त्रियां ङीर्भवति तत्संनियोगे डायन् चान्तः। कौरव्यायणी। माण्डूकायनी। आसुरायणी ॥ ७० ॥ 'इञ इतः ॥ २ । ४ । ७१ ॥ इञ्प्रत्ययान्तान्नाम्न 'इकारान्तात् स्त्रियां ङीर्भवति। सुतंगमेन निर्वृत्तेति इञि सौतंगमी। एवं मौनिचित्ती। इत इति किम्। इञादेशात् ष्यान्माभूत्। वराहस्यापत्यं वाराह्या। एवं वालाक्या। कारीषगन्ध्या। कौमुदगन्ध्या ॥ ७१ ॥ 'नुर्जातेः ॥ २ । ४ । ७२ ॥ नुर्मनु-

---

योतेरचि यवो नन्द्यादित्वादने च यवन ॥—धवाद्योगादिति च निवृत्तमिति। दोषाद्यर्थविशेषोपादानादिति शेषः ॥—दुष्टो यव इत्यत्र अवयवार्थ एवंविधोऽसन्नेव व्युत्पत्तये परिकल्प्यते। यवजातेर्हि जात्यन्तर यवानीत्यर्थ ॥—द्रव्यान्तरमिति। शालक इत्यर्थ.। उरुमहत्त्वयोरेकार्थत्वेऽपि पृथगुपादानं यथासंख्यार्थम् ॥—अण् न भवतीति। तद्विषये ङीविधानादित्यर्थः ॥—यञो डा—॥ डायन् चेत्यत्र डित्करणमासुरायणीत्यत्र प्रयोजनार्थम् ॥—डायन् चान्तो वा भवतीति। साक्षान्निर्दिष्टस्य डायन एव वाशब्देन सबन्धो नाऽनुमितेन ङीप्रत्ययेन प्रत्यासत्ते। पावटाद्वेति सूत्रकरणाद्वा ॥—लोहिता—॥ अत्र यदि यज इति नाधिक्रियते तदा लोहिता इत्यत्र 'इयैतैत'–इति ङीविकल्पपक्षे शकलस्य भार्या शकलीत्यत्र चानेन ङी डायन् च स्यात् लौहित्यायनीत्यादौ च यञन्तान्न स्यादत आह–यञन्तेभ्य इति। कायते' 'पृषिरञ्जि'–इति कित्यते आकारलोपे च कत. ॥—षावटाद्वा ॥ अत्र ङीडायनोरुभयोरनुवर्त्तनात्प्राधान्यात् ङीप्रत्ययेनैव वाशब्दस्य सबन्धो नाऽन्वाचीयमानेन डायनेत्याह—स्त्रियां वा ङीर्भवति ॥—कौरव्य—॥—कौरव्यायणीति। यदा कुरोर्ब्राह्मणस्यापत्य तदा 'कुर्वादेर्ञ्यः'। यदा तु कुरो राज्ञोऽपत्य तदा 'दुनादि'–इत्यनेन। अथ चानयोर्विशेषः दुनादीत्यस्य द्रिसंज्ञत्वाद्बहुषु लुप् भवति। मण्डूकस्यापत्यं 'पीलासाल्वा'–इत्यण्। असुरस्य ऋषेरपत्यं स्त्री बाह्वादीञ् ॥—इञ इतः ॥—इकारान्तादिति। तद्धितप्रकरणसाहचर्यात्प्रश्नाख्याने वेञिति इञ् न गृह्यते। पूर्वसूत्रे आसुरिग्रहणात् डायन् नानुवर्त्ततेऽन्यथा इञन्तद्वारेण सिद्धम्। अपत्येञन्तस्य मनुष्यजातिवचनत्वादुत्तरेणैव सिद्धेऽजात्यर्थोऽयमारम्भ ॥—नुर्जातेः

ण्यस्य या जातिस्तद्वाचिन इकारान्तान्नाम्नः स्त्रियां ङीर्भवति । अवन्तेः कुन्तेश्चापत्यमिति ञ्य । तस्य लोपे *अवन्ती । कुन्ती । दाक्षी । प्लाक्षी । 'तैकायनी । 'ग्लु-
चुकायनी । इत इत्येव । विशोऽपत्यमित्यञ् *तस्य च लोपे विट् । *एवं दरद् । अवन्तीयतेः क्विप् । *तस्य लोपे 'अवन्ती स्त्री । नुरिति किम् । तित्तिरिः । जाते-
रिति किम् । निष्कौशाम्बिः कन्या ॥ ७२ ॥ 'उतोऽप्राणिनश्चायुरज्ज्वादिभ्य ऊङ् ॥ २ । ४ । ७३ ॥ उकारान्तान्नृजातिवाचिनोऽप्राणिजातिवाचिनश्च नाम्नः
स्त्रियामूङ् प्रत्ययो भवति युशब्दान्तं रज्ज्वादींश्च वर्जयित्वा । *कुरूः । *इक्ष्वाकूः । *ब्रह्मबन्धूः । धीवबन्धूः । अप्राणिनश्च, अलाबूः । कर्कन्धूः । ब्रह्मा बन्धुरस्या
इत्यत्रोङः पूर्वं 'शेषाद्वा' (७-३-१७५) इति कच् प्रत्ययः परोऽपि न भवति । 'तत्र बहुलाधिकारात् । उत इति किम् । विट् । वधूः । ऊङि हि सति वधूमतिक्रा-
न्ताऽतिवधूरित्यत्र ह्रस्वः स्यात् यथा अतिब्रह्मबन्धुरित्यत्र । अप्राणिनश्चेति किम् । आखुः । कृकवाकुः । जातेरित्येव । पटुः । चिकीर्षुः । काकुः स्वरभेदः । शङ्कुः सं-
ख्याविशेषः । अयुरज्ज्वादिभ्य इति किम् । अध्वर्युः स्त्री । चरणत्वाज्जातिः । रज्जुः । हनुः । बहुवचनमाकृतिगणार्थम् । कथं तर्हि भीरु गतं निवर्तत इति । भीरुशब्दस्य हि
जातिवाचित्वाज्जातिलक्षणस्योङोऽभावे संबोधने ओत्वं प्राप्नोति । नैवम् । ताच्छीलिकानां संज्ञाप्रकारत्वात् मनुष्यजातिवचनत्वम् । तथा चोङि सति ह्रस्वत्वं सिद्धम् । अन्ये
त्वसूर्यपश्यरूपा त्वं किमभीरुरराजसे इति प्रयोगदर्शनाज्जातिवचनत्वमनिच्छन्त ऊङं न मन्यते ॥ ७३ ॥ 'बाह्वन्तकद्रुकमण्डलोर्नाम्नि ॥ २ । ४ । ७४ ॥ बाहुशब्दान्तान्नाम्नः
कद्रुकमण्डलुभ्यां च नाम्नि विषये स्त्रियामूङ् प्रत्ययो भवति । मद्रबाहूः । भद्रबाहूः । कद्रूः । 'कमण्डलूः । संज्ञा एताः । नाम्नीति किम् । वृत्तौ बाहू अस्या वृत्तबाहुः ॥ ७४ ॥

॥—अवन्ती । कुन्ती 'दुनादि '–इति ञ्य ॥ 'कुन्त्यवन्ते ' इति लुप् ॥—तैकायनी । 'तिकादेरायनिञ् ' । ग्लुचुकायनी । 'अदोरायनि –॥—तस्य च लोपे इति । 'राष्ट्रक्ष-
त्रियात् '–इति विहितस्य 'द्रेरञण '–इत्यनेनेत्यर्थ ॥—एवं दरदिति । 'पुरमगध '–इति विहितस्याण एव चास्य गोत्र च चरणे सहेति जातित्वम् । यद्वा मनुष्यपर्यायत्वात् स्वयमेव
जातित्वम् ॥—अवन्तीः स्त्रीति । अवन्तेरपत्य बहवो माणवका, 'दुनादि '–ञ्य । 'बहुषु ' इति लुप् । अवन्तीनिच्छति या स्त्री क्यन् । अवन्तेरपत्य या स्त्रीति तु कृते दुनादिञ्यस्य 'कुन्त्यवन्ते '–
इत्यनेन लुपि त्वत्र प्रागेव ङी स्यात् ॥—उतोऽप्रा—॥ ऊङिति दीर्घनिर्देश उत्तरार्थ । तेन 'नारी सखी '–इत्यत्र श्वश्रूरिति दीर्घान्तो निपात सिद्ध ॥—कुरूरिति । तस्यापत्य दुनादीति-
विहितस्य ञ्यस्य 'कुरोर्वा ' इति लुपि गोत्रं च चरणे सहेति जातित्वादूङ् ॥—इक्ष्वाकूरिति । 'राष्ट्रक्षत्रियात् '–इति अजन्तस्य द्रेरञणो लुप् ॥—ब्रह्मबन्धूरिति । अत्र च लिङ्गाना च न
सर्वभागिति जातित्वम् ॥—तत्र बहुलाधिकारादिति । समासान्तप्रकरणे इत्यर्थ । यद्वा ऊश्चासावूङ्चेति द्विर्विधानादन्य प्रत्ययो न भवतीति कैयटमतम् ॥—बाह्वन्त—॥ अन्तग्रहण तदन्त-
विध्यर्थम् । अक्रियमाणे हि तस्मिन् य स्त्रीसज्ञाया बाहुशब्दस्तस्मात्केवलादूङ् विधीयते । यथैव हि देवदत्तशब्द स्त्रीपुसयो सज्ञा एव बाहुशब्दोऽपि ॥ अप्राणिनश्चेति अनेन भुजाभिधायकाद्बाहु-
शब्दादूङ् सिद्धो न तु सज्ञाशब्दात् । अन्तग्रहणात्तु तदन्ताबाहुशब्दात्क्रियते । न तु केवलात् ॥—मद्रबाहूरित्यत्र मद्रौ भद्रौ बाहू यस्या इत्यवयवार्थकल्पना यथाकथचित्समुदायस्य सपादनार्थ
क्रियते ॥—कमण्डलूरित्यत्र कमण्डलुशब्दस्य चाप्राणिजातित्वादप्राणिनश्चेत्यूङि प्राप्ते नियम क्रियते । रज्ज्वादिपाठेन च ऊङ्प्रतिषेधे प्राप्ते विधि क्रियत इति । नन्वस्याप्राणिजातिवचनत्वाच्चतुष्पाञ्च
एयञित्यत्र कामण्डलेय इति कथमुदाहारीति । चतुष्पाज्जातिवाचित्वात्प्राणिजातित्वमव्यभिचरितमेव । सत्यम् । अप्राणिजातिवचनोऽय शब्दान्तरमेव । आनन्त्यात् शब्दानामिति

*उपमानसहितसंहितसहशफवामलक्ष्मणाद्यूरोः ॥२।४।७५॥ *उपमानादिपूर्वपदादूरुशब्दात् स्त्रियामूङ् प्रत्ययो भवति। करभ इव ऊरू यस्याः सा करभोरूः। एवं *नागनासोरूः। *कदलीस्तम्भोरूः। सहितोरूः। संहितोरूः। सहोरूः। शफोरूः। वामोरूः। लक्ष्मणोरूः। उपमानाद्यादेरिति किम्। वृत्तोरुः। पीनोरुः। *कथं स्वामिन ऊरू स्वाम्यूरू। हस्तिन इव स्वाम्यूरू यस्याः सा हस्तिस्वाम्यूरूः वडवा। एवं करभमात्रूरूः। नात्रोरुशब्द उपमानादिपूर्वोऽपि तु स्वाम्यूरुमात्रूरुशब्दौ ॥ ७५ ॥ *नारी सखी पङ्गू श्वश्रू ॥ २ । ४ । ७६ ॥ एते शब्दाः स्त्रियां ङ्यन्ताश्च ऊङन्ताश्च निपात्यन्ते। नृनरयोङ्यां नारादेशः। नारी। सखिशब्दात्सखशब्दाच्च बहुव्रीहेर्ङीः। सखी। सह खेन वर्तते या सापि सखी। निपातनसामर्थ्यात् धवयोगेऽपि भवति। सख्युः स्त्री सखी। पङ्गुशब्दात् अजातावूङ्। पङ्गूः। श्वशुरशब्दाच्च जातिलक्षणे धवयोगलक्षणे च ङीप्रत्यये प्राप्ते ऊङ् उकाराकारयोर्लोपश्च। श्वश्रूः ॥ ७६ ॥ *यूनस्तिः ॥ २ । ४ । ७७ ॥ युवन्शब्दात् स्त्रियां तिः प्रत्ययो भवति। नकारान्तत्वात् ङीप्रत्यये प्राप्ते तदपवादो योगः। युवतिः। यूनीत्यपि कश्चित्। न तच्छिष्टसंमतम्। कथं युवती। यौतेरौणादिककिदतिप्रत्ययान्तात् 'इतोऽक्त्यर्थात्' (२–४–३२) इति ङीर्भविष्यति। मुख्यादित्येव। अतियूनी। निर्यूनी॥७७॥*अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्त्यस्य ष्यः॥२।४।७८॥ अनार्षे वृद्धे विहितौ यावणिञौ प्रत्ययौ तदन्तस्य सतो बहुस्वरस्य गुरूपान्त्यस्य नाम्नोऽन्त्यस्य* स्त्रियां ष्य इत्यादेशो भवति। गुरुग्रहणादनेकव्यञ्जनव्यवधानेऽपि भवति। गुरुग्रहणं हि दीर्घपरिग्रहणार्थम् संयोगपरिग्रहार्थं च। अन्यथा दीर्घोपान्त्यस्येत्युच्येत। करीषस्येव गन्धोऽस्य करीषगन्धिः तस्यापत्यं पौत्रादि स्त्री इञण्। तस्य ष्यादेशः। कारीषगन्ध्या कौमुदगन्ध्या। देवदत्तस्यापत्यं पौत्रादि स्त्री इतीञ्। तस्य ष्यादेशः। *दैवदत्त्या। एवं वाराह्या। वालाक्या। अनार्ष इति किम्। वासिष्ठी। वैश्वामित्री। वृद्ध इति किम्। वराहस्य प्रथमापत्यं स्त्री वाराही। अहिच्छत्रे जाता आहिच्छत्री। एवं कान्यकुब्जी। अणिञ इति किम्। ऋतभागस्या-

॥—उपमान—॥ कुत्सितौ अपलक्षणौ ऊरू यस्याः शत्रुपर्यायावेतौ। सहशब्द सक्लिष्टार्थोऽव्युत्पन्नो दन्त्यादिरिति न्यासकृत्। लक्ष्मणादूरोरिति कृते सहिता ऊरु हेसहित ऊरुर्वर्त्तते इत्यादावपि स्यात्। आदिशब्द पूर्वावयववचनस्तेन च समासलाभादूरोरुत्तरपदत्व गम्यते अत आह—उपमानादिपूर्व्वपदादिति ॥—नागनासोरूरिति। नगे भवा अणि नागा.। नास्यत इति 'क्वेटः'–इत्यस्याप्रत्यये नासा ॥—कदलीस्तम्भोरूरिति। कदलशब्दाद्गौरादित्वात् ङ्याम् ॥—कथमिति। यद्यत्रादिग्रहणमकृत्वाऽन्तग्रहण क्रियेत। तदा ऊर्वन्तादिति विज्ञायमाने अत्राप्यूङ् प्रसज्येत। अस्ति ह्यत्रोपमानात्परोऽयमूर्व्वन्त. स्वाम्यूरुशब्द' हस्तिस्वाम्यूरूरिति ॥—वडवेत्यादि। यथा हस्तिन सबन्धित्वेन स्वाम्यूरू आयातस्तथा वडवाया अपि। एतावता उच्चैस्त्वं वडवाया निवेदितम् ॥—नारी सखी—॥ पङ्गुशब्दादजातावूङिति। यद्यप्यय गुणवचनस्तथापि नात्रैकवर्णव्यवहितस्वरात्पर उकार इति 'स्वरादुत'–इत्यमनुष्यजातित्वादप्राणिजातित्वाभावाच्च 'उतोऽप्राणिन–इति वाऽप्राप्तेऽनेनोङ्। श्वश्रूरित्यत्र द्वावपि तालव्यौ। अय च यदा श्वशुरशब्द संज्ञाशब्दस्तदा आपि श्वशुरा इत्येव भवति न तु श्वश्रूरिति ॥—यूनस्तिः ॥ युवतिरित्यत्र ङीरिति जातिग्रहणे सकृद्बाधित इति न्यायात्पश्चात् 'इतोऽक्त्यर्थात्' इत्यपि न ॥—अनार्षे—॥—अन्त्यस्य ष्य इति। अणन्तमिजन्त च बहुस्वरं नाम निर्दिष्टमिति निर्दिश्यमानानामिति न्यायेन सकलस्याप्यादेशे प्राप्ते अन्त्यग्रहणमुत्तरार्थम् च तेन 'भोजसूतयो.'–इत्यत्रानेकवर्ण. सर्व्वस्येति न्यायान्न सर्व्वथोर्भोजसूतशब्दयो' ष्यादेश ॥—दैवदत्त्येति। शब्दशक्तिस्वाभाव्यात्ष्यादेश आवन्तसहित एव स्त्रीलिङ्गमभिव्यनक्ति। एवं कारीपगन्ध्येत्यपि ॥—कान्यकुब्जीत्यत्र

पत्यमिति बिदादित्वादञ् । *आर्तभागी । एवमार्ष्टिषेणी । बहुस्वरे इति किम् । दाक्षी । प्लाक्षी । गुरूपान्त्यस्येति किम् । *औपगवी । कापटवी ॥ अणिञन्तस्य सतो बहुस्वरादिविशेषणं किम् । द्वारस्यापत्यं पौत्रादि स्त्री इतीञि दौवार्या । तथा उडुलोम्नोऽपत्यमितीञि औडुलोम्या । सारलोम्या । अत्रेञः पूर्वमबहुस्वरत्वेऽगुरूपान्त्यत्वे च सत्यपीञि सति बहुस्वरत्वाद्गुरूपान्त्यत्वाच्च यथा स्यात् । स्त्रियामित्येव । कारीषगन्धः वाराहिः पुमान् । मुख्यस्येत्येव । बहवः कारीषगन्धा यस्यां सा बहुकारीषगन्धा । निर्वाराहिः । कथं सौधर्मी आयस्तूणी भौलिङ्गी आलम्बी आलची कालची औद्राहमानी । गौरादिपाठात् । षित्करणं 'ष्या पुत्रपत्यो'–( २-४-८३ ) इत्यत्र विशेषणार्थम् ॥ ७८ ॥ *कुलाख्यानाम् ॥ २ । ४ । ७९ ॥ पुणिकभुणिकमुखरप्रभृतयः कुलाख्याः *कुलमाख्यायते आभिरिति कृत्वा । तासामनार्षे वृद्धेऽणिञन्तानामन्तस्य स्त्रियां ष्यो भवति । अबहुस्वरागुरूपान्त्यार्थं वचनम् । पुणिकस्यापत्यं पौत्रादि स्त्री *पौणिक्या । भौणिक्या । मौखर्या । गौप्या । वृद्ध इत्येव । पौणिकी । भौणिकी । अत्र प्रथमापत्ये इञ् । अनार्ष इत्येव । गौतमी । *गौरादित्वात्तु भौरिकी भौलिकी ॥ ७९ ॥ *क्रौडयादीनाम् ॥ २ । ४ । ८० ॥

---

कन्या कुब्जा यनेति 'ङ्यापो बहुलम्'–इति ह्रस्व । यद्वा कन्याशब्द केचित्परत स्त्रीलिङ्ग मन्यन्ते ॥—आर्तभागीति । ननु च ऋषिवचन एवायमृतभागस्तनानार्षत्वमापि नास्तीति व्यङ्गविकलत्वम् । सत्यम् । शास्त्रेऽस्मिन् प्रदेशान्तरेऽपि ऋषिश्रुत्या विहित, 'ऋषिवृष्ण्यन्धक'–इति प्रत्यय आर्ष इति रूढ. । अयं तु 'बिदादिभ्य' इत्येव विहितत्वादनार्ष इति प्रत्युदाह्रियते । ऋत प्राप्तो भग' पुण्यं येन । अथवा ऋतेन सत्येन भज्यते वा ॥—औपगवीति । उपगता गावोऽस्यानेन वेत्युपगु । बहुकारीषगन्धा निर्वाराहिरित्यत्राणिञन्तस्य स्त्रीवृत्तित्वेऽपि मुख्याधिकारात्तस्यान्यपदार्थे गुणीभूतत्वेन मुख्यत्वाभाव इति । नन्वेते ङ्याबादय स्त्रीप्रत्यया स्त्रीत्वस्य द्योतका न तु वाचकाः । तत्र यथा विश्वादय' शब्दा स्त्रीप्रत्ययमन्तरेण स्वमहिम्नैव स्त्रीत्व प्रतिपादयन्ति तथा खट्वादयोऽपि प्रतिपादयिष्यन्ति किमेभ्य स्त्रीप्रत्ययविधानेन । उच्यते । विचित्रशक्तयो हि भावा भवन्ति । तेऽन्य यथा घनतरतिमिरनिकरानिरुद्धपदार्थसार्थेऽपि निशीथे गगनतलप्रसृमराशुरचिराशुरितरनिरपेक्षयैवात्मान प्रकाशयति । नचेव स्तम्भादय । तेऽपि चास्मदादीना प्रदीपादिप्रकाशकसव्यपेक्षा आत्मान प्रकाशयन्त्येव । सन्निधाना तु प्रदीपादिनिरपेक्षा एव ; यथा वा सूर्योपलश्चण्डचण्डांशुकरनिकरसम्पर्कसमासादितमाहात्म्य स्वय शीतोऽपि सान्तरमधस्थित दाह्य दहति न तु प्रत्यासन्नं प्रत्युत तत्र शैत्यमुपदर्शयति । तथा शब्दा अपि शक्तिवैचित्र्यात्कचित्पदत्वेन पदान्तरसापेक्षेण पदान्तरानपेक्षेण च स्त्रीत्व प्रतिपादयन्ति । तत्र पदान्तरसापेक्षेण यथेय गोरित्यादि । अत्र गवाद्यर्थस्योभयलिङ्गत्वादियमिति पदान्तरापेक्षेण गवादिपदेन स्त्रीत्व प्रतिपाद्यते । तस्य स्त्रीत्वाप्रतिपादने इयमिति न स्यात् । पदान्तरानपेक्षेण नाममात्रेणादेशप्रत्ययाभ्या च । तत्र नाममात्रेण यथा स्वसा दुहितेत्यादय । अत्र नाममात्रमेव स्त्रीत्वप्रतिपत्तौ समर्थमिति स्त्रीप्रत्ययाभाव । आदेशेन सप्रत्ययेनाप्रत्ययेन च । सप्रत्ययेन क्रोष्ट्री कारीषगन्ध्येति । अप्रत्ययेन तिस्रः चतस्र इति । प्रत्ययेनैकेनानेकेन च । तत्रैकेन राज्ञी खट्वेति । अनेकेन सान्तरेण निरन्तरेण सान्तरानिरन्तरेण च । सान्तरेण कालितरा हरिणितरेति । निरन्तरेण आर्याणी भवानी । सान्तरनिरन्तरेण आर्याणितरा । भवानितरेति । तदेवमनेकप्रकारायां लिङ्गप्रतिपत्तौ नैक प्रकार शक्यो नियन्तुम् । शब्दशक्तिस्वाभाव्यात् ॥—कुलाख्यानां—॥ कुलमाचक्षते व्यपदिशन्ति यत कुलाख्या । यद्वा कुलमाख्यायते आभिरिति स्थादिभ्य क । बाहुलकात्स्त्रीत्व स्वप्रभवस्यापत्यसतानस्य व्यपदेशिका पुणिकभुणिकमुखरप्रभृतय ॥—पौणिक्येत्यत्र पुणति मणति अच् पृषोद० । पुणो भुणोऽस्यास्तीति 'अतोनेक'–इति इक ॥—गौरादित्वात्तु भौरिकी भौलिकीति । अयमर्थ. प्रथममनेन प्राप्तस्य बाधनार्थं गौरादौ पाठ' ततस्तत्र पाठात् ङीरेव केवली माभूदिति क्रौडयादौ पाठ ॥—क्रौडयादीनाम् ॥ क्रोडस्यापत्यमित्यत्र करोतेर्वीहडकहोडेत्यडे अकारस्य निपातनादोकारे ॥—

अबहुस्वरागुरूपान्त्यार्थोऽनन्तरापत्यार्थश्चारम्भः। क्रौडि इत्येवमादीनामणिञन्तानामन्तस्य स्त्रियां ष्यादेशो भवति । क्रोडस्यापत्यं क्रौडिः स्त्री क्रौड्या । लाड्या । क्रौडि लाडि *व्याडि आपक्षिति आपिशिलि सौधातकि भौरिकि *भौलिकि *शाल्मलि *शालास्थलि *कापिष्ठलि रौढि दैवदत्ति याज्ञदत्ति इत्यादय *इञन्ताः । चौपयत *चैकयत चैटयत *वैल्वयत सैकयत । एतेऽणन्ताः । *ष्यस्यादेशत्वात् क्रौडेयः चौपयतेय इत्यादिषु आपत्यस्य यस्य लोपः सिद्धः । अन्ये त्वत्र ष्यस्य मत्ययत्वामिच्छन्तो यलोपं नेच्छन्ति । क्रौड्येयः । चौपयत्येयः । बहुवचनमाकृतिगणार्थम् ॥ ८० ॥ भोजसूतयोः क्षत्रियायुवत्योः ॥ २ । ४ । ८१ ॥ भोजसूतशब्दयोरन्तस्य क्षत्रियायुवत्योरभिधेययोः स्त्रियां प्यादेशो भवति । भोज्या भोजवंशजा क्षत्रिया । सूत्या प्राप्तयौवना मानुषीत्यर्थः । अन्ये *सूतसंबन्धिनी युवतिः सूत्या न सर्वेत्याहुः । क्षत्रियायुवत्योरिति किम् । भोजा । सूता ॥ ८१ ॥ *दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धेर्वा ॥ २ । ४ । ८२ ॥ एषामिञन्तानां स्त्रियामन्तस्य ष्यादेशो वा भवति । इञन्तमात्रनिर्देशात् पौत्रादौ प्राप्ते प्रथमापत्ये त्वप्राप्ते विभाषा । *दैवयज्ञ्या । दैवयज्ञी । *शौचिवृक्ष्या । शौचिवृक्षी । *सात्यमुग्र्या । सात्यमुग्री । *काण्ठेविद्ध्या । काण्ठेविद्धी ॥ ८२ ॥ *ष्या*पुत्रपत्योः केवलयोरीच् तत्पुरुषे ॥ २ । ४ । ८३ ॥ मुख्य आबन्तः ष्यः पुत्रपतिशब्दयोः परयोस्तत्पुरुषे समासे ईच् भवति । चकारो ' वेदूतः ' (२–४–९८) इत्यादौ विशेषणार्थः । कारीषगन्ध्यायाः पुत्रः कारीषगन्धीपुत्रः । एवं कारीषगन्धीपतिः । कौमुदगन्धीपुत्रः । कौमुदग-

---

व्यादीत्यत्र विविधमडतीति व्यड ॥—भौलिकीत्यत्र विभर्त्तेर्भुरिकेत्यादिना भुरिक क्रफिडादिलत्वे भुलिक. । क्रोडयादिपठितयोर्भुरिकभुलिकयोर्भौरिक्या भौलिक्या । गौरादिपाठात् भौरिकी भौलिकी च ॥—शाल्मलीत्यत्र शाडच्चुविकुटीति मलक् । शाल्मयोऽस्य सन्ति वा 'अभ्रादिभ्य.' शाल्मलस्यापत्यमिञ् ॥—शालास्थलीत्यत्र शालाया स्थलमिव स्थलमस्य । एव कपिष्ठलः ॥—इञन्ता इत्यत्र क्रोडादिभ्यस्तस्याऽपत्यमित्यर्थे 'अत '–इति इञि कृते सुधातृशब्दात्तु ' व्यासवरुट '–इति इञि अन्तस्याकि कृते क्रोडि इत्यादयो भवन्ति । चुप मन्दायां णिगन्तात् शतृप्रत्ययः ॥—चैकयतेत्यत्र चीकशीकण् चिट मैष्ये ककुड् यथासंभव णिज् णिग् वा पश्चात् शतृ ततोऽपत्यार्थेऽण् ॥—वैल्वयत इत्यत्र विल्वमाचष्टे , ' णिज्बहुलम् '–इति णिचि शत्रादौ च ॥—ष्यस्यादेशत्वादित्यत्र क्रौण्डयादीनामिति षष्ठीनिर्देशादन्तस्येत्यधिकाराच्च ष्य इत्यादेशोयम् । तेन यत् सिद्ध तत् दर्शयति ॥—भोजसूत—॥ जातेरिति ङीप्रत्ययनापवादोऽनेन ष्यादेशः। मूलोदाहरणे सूतस्तरुण उच्यते ॥—सूतसंबन्धिनी युवतिरिति । क्षत्रियाद्ब्राह्मण्या जात सूत प्राजनकर्मणि प्राजितृत्वे सूतशब्द' तस्य कर्मण सबन्धिनी तत्कर्त्री सूत्येति । कोऽर्थ । रथप्राजित्री ॥—दैवयज्ञि—॥—दैवयज्ञ्येति । देव एव यज्ञ. पूजनीयो यस्य स तथा । शौचिवृक्ष्येत्यत्र स्वमते शुचिर्वृक्षोऽस्येति । उद्योतकरस्तु शुचे ' नाम्युपान्त्य '–इति के शुचो वृक्षोऽस्येत्याह ॥—सात्यमुग्र्येति । सत्यमुग्र यस्य असौ सत्यमुग्र. । अत एव निर्देशात् मोऽन्त । मान्तमव्यय वा । सत्य मुञ्चति क्विपि सत्यमुच रातीति वा डे ॥—काण्ठेविद्ध्येति । यदा कण्ठे विध्यते स्म तदा ' तत्पुरुषे कृति ' इति अलुप् । यदा तु कण्ठे विद्धमनेन तदा ' अमूर्द्धमस्तकात् '–इत्यलुप् ॥—ष्या पुत्र—॥ ष्याशब्दाद्दीर्घङयाप्० सूत्रत्वाद्वा सेर्लुप् ॥—पुत्रपत्योरित्यत्र सौत्रनिर्देशात् ' लघ्वक्षर '–इति पतिशब्दस्य न पूर्वनिपात । अत्र केवलग्रहणमन्तरेण ष्यान्तस्येति विधीयमाने पुत्रपत्योस्तदादावतिप्रसङ्ग स्यात् । अयमभिप्रायः पुत्रपत्योरित्योपश्लेषिकेऽधिकरणे सप्तमी । उपश्लेपश्च यथा ताभ्या केवलाभ्या ष्यान्तस्यास्त्येवमुत्तरपदादिभूताभ्यामपीति । अथ ष्यान्तस्य पुत्रपत्योश्चाधिकरणतया तत्पुरुषस्य निर्दिश्यमानत्वात्प्रत्यासत्तेर्यत्रैव तत्पुरुषस्य ष्यान्तोऽवयवस्तत्रैव यौ पुत्रपती अवयवौ न तत्पुरुषान्तरस्य तयो.

न्धीपतिः । परमकारीषगन्धीपुत्रः । परमकारीषगन्धीपतिः । ष्येति किम् । गौकक्ष्यापुत्रः । इभ्यापुत्रः । क्षत्रियापुत्रः । पुत्रपत्योरिति किम् । कारीषगन्ध्याकुलम् । केवलयोरिति किम् । कारीषगन्ध्यापुत्रकुलम् । कारीषगन्धीपुत्रस्य कुलमिति विग्रहे तु कारीषगन्धीपुत्रकुलमित्यपि भवति । तत्पुरुष इति किम् । कारीषगन्ध्यापतिरयं ग्रामः । मुख्य इत्येव । अतिक्रान्ता कारीषगन्ध्यामतिकारीषगन्ध्या तस्याः पुत्रोऽतिकारीषगन्ध्यापुत्रः ॥ ८३ ॥ बन्धौ बहुव्रीहौ ॥ २ । ४ । ८४ ॥ मुख्य आवन्तः ष्यो बन्धुशब्दे केवले परतो बहुव्रीहौ समासे ईञ् भवति । कारीषगन्ध्या बन्धुरस्य कारीषगन्धीबन्धुः। कौमुदगन्धीबन्धुः। परमकारीषगन्धीबन्धुः। परमकौमुदगन्धीबन्धुः। बन्धाविति किम् । कारीषगन्ध्यापतिर्ग्रामः । केवल इत्येव । कारीषगन्ध्याबन्धुकुलं । कारीषगन्धीबन्धुकुल इत्यत्र कारीषगन्धीबन्धुः कुलमस्येति विग्रहः । बहुव्रीहाविति किम् । कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः । मुख्य इत्येव । अतिकारीषगन्ध्या बन्धुरस्य अतिकारीषगन्ध्याबन्धुः ॥ ८४ ॥ मातमातृमातृके वा ॥ २ । ४ । ८५ ॥ मुख्य आवन्तः ष्यो मातादिषु केवलेषु परेषु बहुव्रीहौ समासे ईञ् वा भवति । कारीषगन्ध्या माता यस्य स कारीषगन्धीमातः। कारीषगन्ध्यामात । परमकारीषगन्धीमातः । परमकारीषगन्ध्यामातः । कारीषगन्ध्या माता यस्य स कारीषगन्धीमाता, कारीषगन्ध्यामाता । कारीषगन्धीमातृक कारीषगन्ध्यामातृक । मातेति निर्देशान्मातृशब्दस्य पुत्रप्रशंसामन्त्र्यमन्तरेणापि पक्षे मातादेशः । अन्यथा मातृशब्देनैव गतत्वान्मातशब्दोपादानमनर्थकं स्यात् । मातृमातृकशब्दयोश्च भेदेनोपादानाद्दन्तलक्षणः कच् प्रत्ययोऽपि विकल्प्यते ॥ ८५ ॥ अस्य ङ्यां लुक् ॥ २ । ४ । ८६ ॥ ङीप्रत्यये परे पूर्वस्याकारस्य लुग् भवति । कुरुचरी । मद्रचरी । अस्येति किम् । दण्डिनी । कर्त्री ॥ ८६ ॥ मत्स्यस्य यः ॥ २ । ४ । ८७ ॥ मत्स्यशब्दसंबन्धिनो यकारस्य ङ्यां लुग् भवति । मत्सी । कथं मत्स्यो नाम कश्चित् तस्यापत्यं स्त्रीति इञ् ङी मात्सी । ङीनिमित्तादेशस्यापि ङीग्रहणेन ग्रहणात् ॥ ८७ ॥ व्यञ्जनात्तद्धितस्य ॥ २ । ४ । ८८ ॥ व्यञ्जनात्परस्य ताद्धितस्य यकारस्य ङ्यां लुग् भवति । मनोरपत्यं स्त्री मनुषी । गर्गस्यापत्यं पौत्रादि स्त्री गार्गी । सोमो देवता अस्याः सौमी दिक् । उचितस्य भाव

---

ष्यस्य ईञ् भवति । तदा तु पुत्रपती अन्यस्यावयवौ अन्यस्य तु ष्यान्त इति ईञ् न भविष्यति । एव तर्हि तत्पुरुषेण सन्निधापितस्योत्तरपदस्य पुत्रपतिशब्दाभ्या विशेषणात् विशेषणेन तदन्तविज्ञानात्पुत्रपतिशब्दान्तयोरुत्तरपदयोरतिप्रसङ्ग स्यादतो विधिविधानविधिभाजा सनिधाने तदन्तविधिर्भवति । तत्र विधिरीञ्भावो विधान पुत्रपती विधिभाक् च ष्यान्त इति तदन्तग्रहणनिराकरणार्थ केवलग्रहणम् ॥—अस्य ङ्याम्—॥ ईञधिकारे समानदीर्घत्वेनैव प्रयोगजात सेत्स्यति कि लुक ग्रहणेन । सत्यम् । यदा पञ्चभि कुमारीभि क्रीत इति इकणो लुपि उभयो स्थाने इति न्यायादीचोऽपि ङीव्यपदेशे ङीनिवृत्तौ व्यञ्जनान्तता ईञ्व्यपदेशे तु ईकारान्तता (तदा) माभूदिति लुक्ग्रहणम् ॥—मत्स्यस्य य. ॥—मत्सीति । ननु ङ्यामिति सप्तम्या निर्दिष्टे पूर्वस्य तच्चानन्तरस्येति न्यायान्मत्सीत्यत्र 'स्वरस्य परे प्राग्विधौ' इत्यकारलुच स्थानिवद्भावात् ङ्या निमित्ते यकारासभवात्कथ लुगिति । नैवम् । वचनादेकेन वर्णेन व्यवधानमाश्रीयते । ननु भवत्वेव पर मत्स्यस्येय 'तस्येदम्' इत्यणि मत्स्याकारलोपे अणन्तत्वात् ङ्यामस्य ङ्यामित्यणोऽकारलोपे द्वयोरकारयो स्थानिवद्भावात् मात्सीत्यत्र यलुक् न प्राप्नोति । नेवम् । 'न सन्धि'-इति स्थानिवद्भावप्रतिषेधात् । प्रथमपक्षे तु 'न सन्धि'-इत्यस्य चिन्तापि न कृता । उत्तरान्तरेणैव सिद्धत्वात् ॥—व्यञ्जना—॥—तद्धितस्येत्यत्र तद्धितसबन्धिनो यकारस्येति वैयधिकरण्ये षष्ठी । यकारस्य किंविशिष्टस्य

'औचिती । चातुरी । वृकात्टेण्यणि वार्केणी । समिध आधाने टेन्यणि 'सामिधेनी । व्यञ्जनादिति किम् । कारिकाया अपत्यं कारिकेयी । हारिकेयी । तद्धितस्येति किम् । वैश्यस्य भार्या* वैश्यी । ङ्यामित्येव । आवव्या ॥८८॥ 'सूर्यागस्त्ययोरीये च ॥२।४।८९॥ अनयोर्यकारस्य ङीप्रत्यये ईयप्रत्यये च लुग् भवति । सूर्यस्य भार्या मानुषी सूरी । सूर्यस्येयमित्यणि सौरी प्रभा । अगस्त्यस्येयमागस्ती । सौर्यस्यायं सौरीयः । एवमागस्तीयः । ईये चेति किम् । सूर्यो देवतास्य सौर्यः । अगस्त्यस्यायमागस्त्यः ॥ ८९ ॥ 'तिष्यपुष्ययोर्भाणि ॥ २ । ४ । ९० ॥ भस्य नक्षत्रस्य संबन्ध्यण् भाण् यो भात् इत्युल्लेखेन विधीयते । तिष्यपुष्ययोर्यकारस्य भाणि परतो लुग्भवति । तिष्येण चन्द्रयुक्तेन युक्ता तैषी रात्रिः । तैषमहः ॥ पौषी रात्रिः । पौषमहः । तिष्येण गुरूदयवता युक्तः संवत्सरः तैषः संवत्सरः । एवं पौषः । तिष्ये भवः तैषः शिशुः । एवं पौषः । तिष्यपुष्ययोरिति किम् । सिध्येन चन्द्रयुक्तेन युक्तं सैध्यमहः । भाणीति किम् । तिष्यो देवतास्य तैष्यश्चरुः । पुष्यस्य माणवकस्येदं पौष्यम् । अन्ये तु तिष्यपुष्ययोर्नक्षत्रे वर्तमानयोः सामान्येऽणि नित्यं सिध्यशब्दस्य तु विकल्पेन यलोपमिच्छन्ति तन्मते तिष्यो देवतास्य तैष्य इत्यत्रापि प्राप्नोति । तथा सिध्येन युक्तं सैधमहः सैध्यमहः, सैधी रात्रिः सैध्यी रात्रिरित्यपि ॥९०॥ 'आपत्यस्य क्यच्व्योः ॥ २ । ४ । ९१ ॥ व्यञ्जनात्परस्यापत्यस्य यकारस्य क्ये च्वौ च परतो लुग्भवति । गार्ग्यमिच्छति *गार्गीयति । एवं वात्सीयति । गार्ग्य इवाचरति *गार्गायते । वात्सायते । अगार्ग्यो गार्ग्यो भूतः गार्गीभूतः । एवं वात्सीभूतः । आपत्यस्येति किम् । संकाशेन निर्वृत्तं सांकाश्यं तदिच्छति सांकाश्यीयति । सांकाश्यायते । 'सांकाश्यीभूतः । व्यञ्जनादित्येव । कारिकेयीयति । कारिकेयायते । कारिकेयीभूतः ॥ ९१ ॥ *तद्धितयस्वरेऽनाति ॥ २ । ४ । ९२ ॥ व्यञ्जनात्परस्यापत्ययकारस्य यकारादावाकारादिवर्जिते स्वरादौ च तद्धिते लुग् भवति । गार्ग्ये साधुः गार्ग्यः । गर्गाणां समूहो *गार्गकम् ।

---

तद्धितस्य । तद्धितरूपस्येति तु सामानाधिकरण्ये सामिधेनीत्यादौ न स्यात् ॥—औचितीति । उचच् समवाये उच्यति समवैति प्रकृतौ स्वभावे 'कृशिपिशि'–इति किदितः । वृका शस्त्रजीविनस्तेषां सहति ॥—सामिधेनीति । समिधामाधानी ॥—वैश्यीति । विशति अध्ययनार्थं यज्ञशालायामिति 'शिक्यास्याढ्य'–इति साधु । येषां मते विशोऽपत्यमिति 'विशो जातौ' इति सूत्रेण व्यण्प्रत्यये वैश्यशब्दः साध्यते तन्मते यलोपः प्राप्नोत्येव । पतन पत ततोऽन्यत् अपतः तत्र साधु अपत्यम् । एवं विदन्त्यनयेति विद्या तामधीते स्त्री अणन्तत्वात् ङ्यां कृद्यकारत्वाल्लोपाभावे वैद्यी । अस्यैव सुप्रसिद्धत्वात्पूर्वं वुद्धावुपारोहात् तत्प्रदर्शनं न्याय्यं न तु वैद्यस्य स्त्री वैद्यीति न्यासकारः ॥—सूर्या—॥ सौरीयागस्तीयशब्दयोः प्रथमं देवतार्थेऽण् । इदमर्थे पश्चादीयः ॥—तिष्यपुष्य—॥—तैषः शिशुः । अत्र भवार्थे 'भर्तुऽसध्या'–इति अण् । जातार्थे तु 'बहुलानुराधा'–इति लुप् स्यात् ॥—अन्ये त्विति । य आचार्यैरलमतिर्नक्षत्र इति तिष्यपुष्ययोर्विशेषणं तन्मते इत्यादिना तेषामनिष्टमुद्भावयति । अपत्ये भव आपत्यस्तस्य स्थानसबन्धे षष्ठी ॥—आपत्यस्य—॥—गार्गीयतीति । येन नाव्यवधानमिति न्यायादीकाराऽकारादिना व्यवहितस्यापि यस्य लुक् । गार्गायते इति । यदा गार्ग्य इवाचरति कर्तुं क्विपि सल्लुपि ते प्रत्यये 'क्यः शिति' इति क्य आनीयते तदाऽनेन यलोपो न भवति । च्विसाहचर्यात् । यतश्च्विर्नाम्न एव परतो विहितो गृह्यतेऽय तु नामधातोरिति ॥—सांकाश्यीभूत इति । असाङ्काश्यः साङ्काश्यो देशो भूतः ॥—तद्धितय—॥—गार्गकमिति । गर्गस्यापत्यानि यञ् तस्य च 'न प्राग्जितीये' इत्यनेन निषेधात्

एवं वात्सकम् । गार्ग्यस्यायं *गार्गीयः । एवं वात्सीयः । आपत्यस्येत्येव । संकाशेन निर्वृत्तं सांकाश्यम् तत्र भवः साकाश्यकः । एवं *काम्पील्यकः । तद्धितेति किम् । गार्ग्येण । वात्स्येन । यस्वर इति किम् । *गार्ग्यरूप्यः । अनातीति किम् । गार्ग्यायणः । व्यञ्जनादित्येव । कारिकेयिः । हारिकेयिः ॥ ९२ ॥

*बिल्वकीयादेरीयस्य ॥ २ । ४ । ९३ ॥ *नडादिषु बिल्वादयः पठ्यन्ते तेषां कीयप्रत्ययान्तानामिह निर्देशः । बिल्वकीयादीनां दशानां शब्दानामवयवस्येयस्य तद्धितयस्वरे परे लुग् भवति । अनाति इति नानुवर्तते । आतोऽसंभवात् । बिल्वाः सन्त्यस्यामिति बिल्वकीया नाम नदी । तस्यां भवा बैल्वकाः । एवं वैणुकाः । वैत्रकाः । वैतसकाः । त्रैकाः । ताक्षकाः । ऐक्षुकाः । काष्ठकाः । कापोतकाः । *क्रौञ्चकाः । बिल्वकीयादेरिति किम् । नाडकीयः । प्लाक्षकीयः । तद्धितयस्वर इत्येव । बिल्वकीयाः । बिल्वकीयरूप्यम् ॥ ९३ ॥ *न राजन्यमनुष्ययोरके ॥ २ । ४ । ९४ ॥ राजन्यमनुष्यशब्दयोर्यकारस्याकप्रत्यये परतो लुग् न भवति । राजन्यानां समूहो *राजन्यकम् । एवं मानुष्यकम् ॥ 'तद्धितयस्वरेऽनाति' (२-४-९२) इति यलोपे प्राप्ते प्रतिषेधोऽयम् ॥ ९४ ॥ ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणीसूच्योः ॥ २ । ४ । ९५ ॥ ङ्यादेः प्रत्ययस्य गौणस्याक्विबन्तस्य तद्धितलुकि सति लुग् भवति गोणीसूचीसंबन्धिनस्तु न भवति । सप्त कुमार्यो देवतास्य

---

'यञञोऽश्यापर्णान्त'-इति न लुप् । ततो गार्गीणां समूहो गार्गकं गोत्रोक्षाकञ् ॥—गार्गीय इति । गार्ग्यस्यायं शिष्यश्छात्रः । अन्यथा 'गोत्रादङ्कवत्'-इत्यकञ् स्यात् ॥—काम्पील्येति । कम्पन कम्पः कम्पोऽस्यास्तीति कम्पी कम्पिनमिलति 'मूलविभुजादयः' क । समानदीर्घत्वम् ॥—गार्ग्यरूप्य इत्यत्र भूतपूर्वो गार्ग्यस्येति विगृह्य 'पद्भ्यां रूप्यप्चरट्'-इति रूप्यपि । अथवा गार्ग्यादागत 'नृहेतुभ्य' इति रूप्यः ॥—बिल्वकीया—ननु बिल्वकीयादयो भिन्ना केचिन्नडादेः कीये सति अपरे कुत्सिताद्यर्थकप्रत्ययान्तादीये सति तत्केषामिह ग्रहणमित्याशङ्क्य आदिशब्दस्य व्यवस्थावाचित्वादित्याह—नडादिष्वित्यादि । बिल्व वेणवो वेत्राणि वेतसास्त्रिगरतक्षाण इक्षव काष्ठानि कपोताः कुञ्चा सन्त्यस्यामिति विग्रहे नडादेः कीयः । आदित्याप् । ततो भवार्थेऽण् ॥ काष्ठकीया इत्यत्र तु काष्ठकीयशब्दः कच्छादौ द्रष्टव्य । तत कच्छादिपाठात्कोपान्त्याच्चाण् । अन्यथा 'दोरीय' स्यात् ॥—क्रौञ्चका इति । कुञ्चाशब्दस्य कीये नडादिपाठात् ह्रस्व । कुञ्चकीयायां भवा । नन्वत्र ईयग्रहणं किमर्थं बिल्वकीयादेरित्येव क्रियतामेवमपि कृते बैल्वका इत्यादीन्यणि 'अवर्णेवर्णस्य' इति ईयाकारलोपे ततो बिल्वकीयादेरित्यनेनाधिकारायातस्य यकारमात्रस्य लोपे पुन 'अवर्णेवर्णस्य' इति ईकारलोपे सेत्स्यन्ति । न च वाच्यं बिल्वकीयादेरित्यनेन यकारलोपे कर्तव्ये 'स्वरस्य'-इति परिभाषयाऽकारलोपस्य स्थानित्वम् । 'न संधि'-इति यविधौ स्थानित्वनिषेधेऽपि ईकारलोपे स्थानित्वमस्त्येवेति ईयग्रहणम् । ननु तर्हि बिल्वकीयादेर्यस्य इति क्रियताम् । एवं कृते यकाराधिकारे पुनर्यग्रहणं करोति तदेव ज्ञापयत्यत्र सस्वरस्यैव यस्य लुग् सस्वरलोपे न स्वरव्यञ्जनसमुदायत्वात् 'स्वरस्य'-इति स्थानित्वाभावे सर्वं भविष्यति । सत्यम् । एवं कृते गुणाभ्याशङ्का स्यादनेन यकारलोपे ईकारस्य लुग् न भवतीति । यदीकारलोपोऽपि सम्मतः स्यात्तदा ईयस्येति कुर्यादिति ॥—न राजन्य—॥—राजन्यकमिति । राज्ञोऽपत्यमिति 'जातौ राज्ञः' इति ये 'अनोऽट्ये ये' इति निषेधात् अनो लुगभावे राजन्यानां समूहः 'गोत्रोक्ष'-इति अकञ् ॥—ङ्यादेर्गौण—॥ लुगिति लुप एव उपलक्षणं तेनाऽगोमती गोमती भूता गोमतीभूतेत्यत्र च्वेरभावेऽपि लुबभावात् च्विनिवृत्तेरभावः ॥—पुनर्गौरादिलक्षणो ङीरिति । एवं विदारी मूलम् आमलकी फलमित्यादि । तथा विशाखाभिश्चन्द्रयुक्ताभिर्युक्तः कालः 'चन्द्रयुक्तात्'-इत्यणो लुपि ङ्यादिनिवृत्तौ पुनरपि विशाखा काल इति । द्वे स्त्रियौ देवते अस्य अण् । 'द्विगोरन'-लुक् ॥—

सप्तकुमारः। पञ्चभिर्धीवरीभिः क्रीतः पञ्चधीवा। पञ्चेन्द्राण्यो देवतास्य पञ्चेन्द्रः। एवं पञ्चाग्निः। एषु ङीनिवृत्तौ तत्संनियोगशिष्टयोरागमादेशयोरपि निवृत्तिः। द्विस्त्रः। पञ्चभिर्युवतिभिः क्रीतः पञ्चयुवा। एवं पञ्चखट्वः। *पञ्चसखः। द्विपङ्गुः। त्रिकरभोरुः। कुवल्या विकारः फलं कुवलम्। एवं बदरम्। आमलकम्। ङ्यादेरिति किम्। पञ्चभिः प्रेयोभिः क्रीतः पञ्चप्रेयान्। गौणस्येति किम्। अवन्तेरपत्यं स्त्री अवन्ती। एवं कुन्ती, कुरूः। अत्र हि *तद्धितलुकि कृते जातौ ङ्यूङौ इत्यगौणत्वम्। अक्किप इति किम्। कुमारीमिच्छति क्यन् कुमारीयतीति क्किप् तस्य लोपे कुमारी। तत पञ्च कुमार्यो देवता अस्य पञ्चकुमारी। एवं पञ्चेन्द्राणी। पञ्चयुवती। ताद्धितलुकीति किम्। औपगवीत्वम्। कथं हरीतक्याः फलं विकारो वा हरीतकी। एवं कोशातकीत्यादि। अत्र लुबन्तस्य स्त्रीत्वात् *पुनर्गौरादिलक्षणो ङीः। अगोणीसूच्योरिति किम्। पञ्चभिर्गोणीभिः क्रीतः पञ्चगोणिः दशगोणिः। पञ्चसूचिः। दशसूचिः॥ ९५॥ **गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ ॥ २। ४। ९६॥** गौणस्याक्किपो गोशब्दस्य ङ्याद्यन्तस्य च नाम्नोऽन्ते वर्तमानस्य ह्रस्वो भवति न चेदसावंशिसमासान्त ईयस्वन्तबहुव्रीह्यन्तो वा भवति। चित्रा गावोऽस्य चित्रगुः। शबलगुः। पञ्चभिर्गोभिः क्रीतः पञ्चगुः। शतगुः। कौशाम्ब्या निर्गतो निष्कौशाम्बिः। एवं निर्वाराणसिः। निःश्रेयसिः। खट्वामतिक्रान्तोऽतिखट्वः। प्रिया खट्वा यस्य स प्रियखट्वः। अतिब्रह्मबन्धुः। अतिवामोरुः। गौणस्येत्येव। सुगौः। किंगौः। राजकुमारी। परमब्रह्मबन्धूः। नक्षत्रमाला। अक्किप इत्येव। गामिच्छति क्यन् गव्यतीति क्किप्। गौः। ततः प्रिया गौः अस्य प्रियगौः। कुमारीमिच्छति क्यन् क्किप् ततः प्रियश्चासौ कुमारी च प्रियकुमारी चैत्रः। गोश्चेति किम्। अतितन्त्रीः अतिलक्ष्मीः। अतिश्रीः। अतिभ्रूः। अन्त इति किम्। गोकुलम्। कुमारीप्रियः। कन्यापुरम्। अत्र गोशब्दो ङ्याद्यन्तं च समासार्थे न्यग्भूतत्वाद्गौणम्। सुगोप्रियः राजकुमारीप्रियः एवं पञ्चशालाप्रिय इत्यादौ तु यद्यपि गोशब्दान्तं ङ्याद्यन्तं च नामान्यपदार्थे गुणीभूतम् तथापि न तदपेक्षयाऽन्त्यत्वम्। यदपेक्षया चान्त्यत्वं न तदपेक्षया गौणत्वमिति न भवति॥ ननु च ङ्यादीनां प्रत्ययत्वात् 'प्रत्ययः प्रकृत्यादेः' (७-४-११५) इति यस्मात्स विहितस्तदादेर्ग्रहणम् इतीह न प्राप्नोति अतिराजकुमारिः अतिरत्नमाल इति। सत्यम्। गौणो ङ्यादिरिति मुख्ये स्त्रीप्रत्ययेऽयं न्यायो नोपतिष्ठते। राजकुमारी रत्नमालाशब्दयोश्च स्त्रीप्रत्ययान्तयोर्मुख्यत्वमेव। तेन ङ्यादिप्रत्ययान्तमात्रं विधानानपेक्षमिह गृह्यते। इह कस्मान्न भवति। बहुकुमारीकः बहुब्रह्मबन्धूक इति। परत्वात्प्रथम-

पञ्चसख इति। यदा सखिशब्दात् ङ्यां पञ्चभि सखीभि क्रीत इति वाक्ये कृते इकणो लोपेऽनेन ङीनिवृत्तौ तदा 'राजसखे' इति समासान्त। यदा तु सखशब्दात् 'नारी सखी' इति ङीः तदा ङीनिवृत्तौ सिद्धमेव। कुवलवदराभ्यां गौरादिङयन्ताभ्यां हेमाद्यञ् 'प्राण्योपधी'–इत्यण् यथासख्येन। आमलकात् 'दोरप्राणिन' इति मयट् 'फले लुप्' ॥—तद्धितलुकि कृते इत्यत्र पञ्चभिर्धीवरीभि. क्रीता इतीकणि लुकि 'ङयादे'–इति ङयभावे पुनङर्यां प्रिया पञ्च धीवर्यो यस्येत्यपि कृते ङयादेरिति ङयभाव प्रियपञ्चधीवा ॥—गोश्चान्ते—॥ अंशिसमासवर्जनात् समासस्यान्त एव ह्रस्व। नन्वर्द्धपिप्पलीति अनशिसमासेयोबहुव्रीहाविति व्यावृत्तौ किमिति दर्शित। यतो ह्रस्वत्वेऽपि कृतेऽपि परलिङ्गो द्वंद्वोऽशीति वचनात् पिप्पलीलिङ्गे 'इतोऽक्त्यर्थात्' इति ङयां रूप तथैव। सत्यम् इतोक्त्यर्थादिति वैकल्पिको ङी ततोऽर्द्धपिप्पालि अर्धपिप्पलीति रूपद्वय स्यादिष्यते चार्द्धपिप्पलीत्येव। ननु तर्हि तुर्यभिक्षेति किमर्थ

मेव कचि कृतेऽन्त्यत्वाभावात्। अनंशिसमासेयोबहुव्रीहाविति किम्। अर्धं पिप्पल्याः "अर्धपिप्पली। एवं "तुर्यभिक्षा। बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी पुरुषः। एवं प्रियश्रेयसी ॥ ९६ ॥ "क्लीबे ॥ २ । ४ । ९७ ॥ क्लीबे नपुंसके वर्तमानस्य स्वरान्तस्य नाम्नो ह्रस्वो भवति। कीलालपं ग्रामणि नतभु अतिहि अतिरि अतिद्यु अतिनु कुलम्। 'अधिस्त्रि। उपवधु। *काण्डे कुड्ये "युगवरत्राय युगवरत्रेन्द्र इत्यादावेत्वदीर्घत्वादेर्निमित्तान्तरापेक्षत्वेन बहिरङ्गस्यासिद्धत्वात् ह्रस्वत्वं न भवति। काण्डीभूतं शुक्लीभूतमित्यादावव्ययानामलिङ्गत्वाच्च ॥ ९७ ॥ वेदूतोऽनव्ययय्वृदीच्ङीयुवः पदे ॥ २ । ४ । ९८ ॥ ईकारोकारयोरुत्तरपदे परतो ह्रस्वो वा भवति न चेत्तावव्ययौ य्वृत् ईजूरूपौ ङीरूपौ इयुवस्थानौ च भवतः। लक्ष्मिपुत्रः। लक्ष्मीपुत्रः। ग्रामणिपुत्रः। ग्रामणीपुत्रः। ब्रह्मबन्धुपुत्रः। ब्रह्मबन्धूपुत्रः। खलपुपुत्रः। खलपूपुत्रः। ईदूत इति किम्। खट्वापादः। गोकुलम्। अव्ययादिवर्जनं किम्। अव्यय, काण्डीभूतम्। 'वृपलीभूतम्। ऊरीकृत्य। ऊररीकृत्य। य्वृत् "इन्द्रहूपुत्रः।"शकहूपुत्रः। ईङ्, कारीषगन्धीपुत्रः। कौमुदगन्धीपतिः। ङी, गार्गीपुत्रः। वात्सीपुत्रः। इयुव्, श्रीकुलम्। भ्रूकुलम्। यवक्रीकुलम्। कटप्रूकुलम्। उत्तरपद इति किम्। अग्नी पश्य। पटू पश्य ॥ ९८ ॥ 'ङ्यापो बहुलं नाम्नि ॥ २ । ४ । ९९ ॥ ङ्यन्तस्य 'आबन्तस्य च नाम्न उत्तरपदे परतो नाम्नि संज्ञायां विषये ह्रस्वो भवति बहुलम्। भरणिगुप्तः। "रोहिणिमित्रः। महिन्नातः। माहिदत्तः। महिगुप्तः। शिलवहम्। शिलप्रस्थम्। कचिद्विकल्पः। रेवतिमित्रः रेवतीमित्रः। पृथिविदत्तः पृथिवीदत्तः। पृथिविगुप्तः। पृथिवीगुप्तः। गङ्गमहः। गङ्गामहः। गङ्गदेवी गङ्गादेवी। शिशिपस्थलम् शिंशिपास्थलम्। कचिन्न भवति। फल्गुनीमित्रः। 'नान्दीमुखम्। नान्दीतुर्यः। नान्दीकरः।

दर्शितम्। यतोऽनापि परलिङ्गो द्वन्द्वोंशीति वचनात् भिक्षेत्युत्तरपदस्य स्त्रीत्वे ह्रस्वत्वे कृतेऽपि पुनरापि सति तुर्यभिक्षा इत्येव भवति। सत्यम्। तुर्यभिक्षेति सिद्ध्यत्येव पर तुर्यभिक्षामतिक्रान्तो य सोऽतितुर्यभिक्ष इति ह्रस्वत्व स्यात्। यतस्तुर्यभिक्षेति उत्तरपदलिङ्गत्वे पुनरापि तुर्यभिक्षेत्यावन्त। 'प्रसङ्ग प्रकृत्यादे' इति न्यायात्। वर्जने च सति भिक्षेत्यावन्तस्तत पूर्वपदार्थप्रधान-त्वादशिसमासस्य 'गोणो ङ्यादि' इति न्यायोपढौकनात् 'गोश्चान्ते–' इति ह्रस्वत्वाभावादतितुर्यभिक्षा इति भवति। एतदेव साधु ॥—क्लीबे ॥—अधिस्त्रीति। आधारार्थप्रधानत्वात्प्रथमा। सामान्यविशेषभावेन सप्तमी वा। विश्रान्तन्यासकारेस्तु यत्र तत्रापि सप्तमीष्टा ॥—काण्डे कुड्ये इति। नन्वऽन पद वाक्यमऽव्यय चेति वचनाऽदलिङ्गत्वे ह्रस्वत्वप्राप्तिरेव नास्ति तत्कथमुक्तमऽ-सिद्धत्वादिति। सत्यम्। पदस्यालिङ्गत्वेऽपि काण्डकुड्ययोरवयवयोर्लिङ्ग तयदा समुदाये काण्डेकुड्ये इत्येवरूपे उपचर्यते। तदा प्राप्ति। यद्वा काण्डेकुड्ये इत्यत्र योऽस्य स्थाने परेण इकारेण सह एकार स कचित् नपुसकाकारसम्बन्धी कचित्पदसम्बन्धी कथ्यते। उभयो स्थाने निष्पन्नत्वात् ॥—युगेति। युज्यते इति 'वर्षादय क्लीबे' अल्। गुणाभावो गत्व च निपात्यते ॥—वेदू-तोऽन—॥—इन्द्रहूपुत्र इति। इन्द्र ह्वयति 'असरूपोपवाद'–इत्यणपवादे क्विपि 'यजादिवचे'–इति य्वृति 'दीर्घमवोऽन्त्यम्'। इन्द्रहू पुत्र ॥—शकहूपुत्र इति। शकस्यापत्यानि 'पुरुमगध'–इत्यण् 'शकादिभ्यो लुप्'। शकान् ह्वयति। शेष पूर्ववत् ॥—वृपलीभूतमिति। अभूपल वृपल भूत मतान्तरेणेद वाक्यम्। अन्यथा अनिलिङ्गत्वान्न प्राप्नोति। आनिलिङ्गान्या इति च जातिलक्षणे लिखितत्वादस्यानिलिङ्गत्वम् ॥—ङ्यापो—॥ ङीसाहचर्यादाप प्रत्ययस्य ग्रहण न तु क्विपन्तस्याप्नोतेरित्याह—आबन्तस्य चेति। नन्दे 'पदिपठि'–इति इ। बाहुलकाद्दीर्घे नान्दी तस्या मुखम् ॥—विष्टापुरमिति। विश तायते क्विपि। 'य्वो. प्वय्व्यञ्जने लुप्'। पृषोदरादित्वात् उत्वाभावे विष्टा विष्ट. पु 'ऋक्पू'–अत् समासान्त ॥—रोहिणीति। 'रेवत-

नान्दीघोषः । महीफलम् । महीकरः । महीविशालः । *लोमकागृहम् । लोमकाखण्डः । लेपिकागृहम् । लेपिकाखण्डः । गङ्गाद्वारम् । ङ्याप इति किम् । श्रीपुरम् । विष्ठापुरम् । उत्तरपद इत्येव । *भरिण्याः । रोहिण्याः । नाम्नीति किम् । नदीस्रोतः । खट्वापादः ॥ ९९ ॥ *त्वे ॥ २ । ४ । १०० ॥ ङ्यावन्तस्य त्वे प्रत्यये बहुलं ह्रस्वो भवति । रोहिण्या भावः रोहिणित्वम् रोहिणीत्वम् । अजत्वम् अजात्वं वा ॥ १०० ॥ 'भ्रुवोऽच्च कुंसकुट्योः ॥ २ । ४ । १०१ ॥ भ्रूशब्दस्य कुंसकुट्योरुत्तरपदयोः परयोर्ह्रस्वोऽकारश्च भवति । भ्रुकुंसः । भ्रकुंसः । भ्रुकुटिः । भ्रकुटि' । भ्रूकुंसभ्रूकुटिशब्दावपीच्छन्त्यन्ये ॥ १०१ ॥ *मालेषीकेष्टकस्यान्तेऽपि भारितूलचिते ॥ २ । ४ । १०२ ॥ मालाइषीकाइष्टकाशब्दानां केवलानामन्ते वर्तमानानां च भारिन्तूलचितशब्देषूत्तरपदेषु परेषु ह्रस्वो भवति यथासंख्यम् । मालां बिभर्तीत्येवंशीलः मालभारी उत्पलमालभारी । मालभारिणी उत्पलमालभारिणी । इषीकतूलम् मुञ्जेषीकतूलम् । इष्टकचितम् पक्वेष्टकचितम् । 'इदमेवान्तग्रहणं ज्ञापकम् ग्रहणवता नाम्ना न तदन्तविधिरिति । तेन दिग्धपादोपहतः सौत्रनाडिरित्यादौ पदादेशायनणप्रत्ययादयो न भवन्ति ॥ १०२ ॥ 'गोण्या मेये ॥ २ । ४ । १०३ ॥ गोणीशब्दस्य मानवाचिन उपचारान्मेये वर्तमानस्य ह्रस्वो भवति । गोण्या मितो गोणिः । मेय इति किम् गोणी ॥ १०३ ॥ *ङ्यादीदूतः के ॥ २ । ४ । १०४ ॥ ङीप्रत्ययस्याकारेकारोकाराणां च के प्रत्यये ह्रस्वो भवति । कुमारिका । पद्विका । सोमपकः । कीलालपकः । सोमपिका । कीलालपिका । लक्ष्मिका । तन्त्रिका । वधुका । यवागुका । ब्रह्मबन्धुका । *ङीग्रहणं पुंवद्भावबाधनार्थम् । काकः पाक इत्यादौ तु *प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति न्यायान्न भवति ॥ १०४ ॥ *न कचि ॥ २ । ४ । १०५ ॥ ङ्यादीदूतः कचि प्रत्यये परे ह्रस्वो न भवति । बहुकुमारीकः । बहुकीलालपाकः । बहुलक्ष्मीकः ।

---

रोहिणाद्वे' ङी गवि वाच्यायां तु 'जातेरयान्त'–इति वा ङी । लोमभिः कायतीति लोमका ॥—भरिण्या इति । यद्यनेन ह्रस्व स्यात्तदा भरिण्या भरिणेरिति रूप स्यात् । इदानीं तु भरिण्या इत्येकमेवेष्टम् ॥—त्वे ॥ अथ ङयापो बहुल त्वे नाम्नि इत्येकयोग एव कथ न क्रियते । तत्रैव विज्ञास्यते त्वप्रत्यये नाम्नि च ह्रस्वो भवतीति । नैवम् । तत्र ह्युत्तरपद इत्यस्ति ततश्च त्वप्रत्यये नाम्नि चोत्तरपदे ह्रस्वो भवतीति विज्ञानाद्रोहिणित्वफलमऽजत्वफलमित्यऽत्र स्यात् । इह न स्याद्रोहिणित्वमजत्वमिति पृथगुच्यते ॥—भ्रुवोच्च—॥ भ्रुवौ कुंसयति 'कर्मणोऽण्' इति भ्रुव' कुटि' कौटिल्य वा । भ्रूकुंसभ्रूकुटिशब्दावपि नारायणकण्ठी मन्यते ॥—मालेषी—॥ मालादिभि प्रकृतस्य नाम्नो विशेषणात्तदन्तलाभात्केवलस्य व्यपदेशिवद्भावाद् ह्रस्वसिद्धौ किमर्थमऽन्तग्रहणमित्या-शङ्कायामाह—इदमेवेति ॥—गोण्या—॥ विनैव तद्धितेन गोणीशब्दो गोणीप्रमितेऽर्थे व्रीह्यादावुपचाराद्वर्त्तते यथा प्रस्थप्रमिते प्रस्थ इति । तस्य चाय ह्रस्व इति सूत्रारम्भ इत्यर्थ । सत्यामपि वा तद्धितलुचि अगोणीसूच्योरिति प्रतिषेधे 'गोश्चान्ते'–इति च समासे ह्रस्वस्य विज्ञानादिह नास्तीति तदर्थमिदमारभ्यते ॥—ङ्यादीदू—॥ सोमापिकेत्यादौ ह्रस्वस्य दारदिकेत्यादौ च पिति पुव-द्भावस्य सावकाशत्वात्पट्विकेत्यादौ चोभयप्राप्तौ परत्वात्पुवद्भावे पट्विकेत्यादि न सिध्यतीत्याह—ङीग्रहणमित्यादि । ङीग्रहणमनवकाशत्वात्पुवद्भाव बाधत इत्यर्थ ॥—प्रत्ययाप्रत्यययोरिति ॥ न्यायान्न भवतीति । ककतेरचि पृषोदरादित्वात्वं काक पचन पाको घञि 'क्तेऽनिट'–इति कत्वम् । अथ कायते पिवतेश्च 'भीण्शल्विलि'–इति यदा कस्तदा ह्रस्व कस्मान्न भवति । उच्यते । उणादीनामव्युत्पन्नत्वात् । व्युत्पत्तिपक्षे तु बहुलवचनान्न भवति ॥—न कचि ॥ बहुलक्ष्मीक इत्यत्र एकत्वे 'पुमनडुत्नौ'–बहुत्वे तु 'शेषाद्वा' कच् । पूर्वसूत्रे क इति निरनुबन्धे कचि प्राप्तिरेव

बहुमल्लबन्धूकः । खार्या क्रीतं खारीकम् । एवं काकणीकम् । 'खारीकाकणीभ्यः कच्' (६-४-१४९) इति कच् । न कचीति प्रतिषेधः पूर्वसूत्रे 'निरनुबन्धग्रहणे न सानुबन्धस्य' इति न्यायस्याभावज्ञापनार्थः । तेन निषादकर्ष्वा जातो *नैषादकर्षुकः, एवं शावरजम्बुक इत्यादावि कणि ह्रस्वः सिद्धः ॥ १०५ ॥ नवाप ॥ २।४।१०६॥ आपः कचि परे ह्रस्वो वा भवति । पूर्वेण प्रतिषेधे प्राप्ते पक्षे ह्रस्वार्थमिदम् । प्रियखट्वकः। प्रियखट्वाकः। बहुमालकः। बहुमालाकः॥१०६॥ *इचापुंसोऽनित्क्याप्परे ॥ २ । ४ । १०७ ॥ *आबेव परो यस्मान्न विभक्तिः स आप्परः । अपुंलिङ्गार्थाच्छब्दाद्विहितस्याप स्थाने इकारो ह्रस्वश्च वा भवत' । अनितोऽनकारानुबन्धस्य प्रत्ययस्यावयवभूते कि ककारे आप्परे परतः । अल्पा खट्वा खट्विका । खट्वका । खट्वाका । परमखट्विका । परमखट्वका । परमखट्वाका । प्रिया खट्वा यस्याः सा प्रियखट्विका । प्रियखट्वका । प्रियखट्वाका । चकारो ह्रस्वानुकर्षणार्थः । तेनोभयविकल्पे त्रैरूप्यं सिद्धम् । अपुंस इति किम् । 'सर्विका' । न विद्यते खट्वा अस्या इति 'गोश्चान्ते'-(२-४-९६) इत्यादिना ह्रस्वत्वे स्त्रीपुंससाधारणात्पुनरपि अखट्वा सैवाल्पा अखट्विका । तथा खट्वामतिक्रान्ता अतिखट्वा सैवाल्पा अतिखट्विका । अत्रापुंस्काद्विहित आप् न भवतीति त्रैरूप्यं न भवति । 'ङ्यादीदूतः के' (२-४-१०४) इत्यनेन तु ह्रस्वे कृते 'अस्य'-(२-४-१११) इत्यादिनेत्त्वमेव भवति । कश्चित्त्वपुंस्काद्विहित आबस्तीति भवत्येव रूपत्रयम् । न विद्यते खट्वा यस्याः सा अखट्विका अखट्वका अखट्वाका । अनिदिति किम् । अनुकम्पिता दुर्गा देवीति कपि दुर्गका । 'ङ्यादीदूतः के' (२-४-१०४) इत्यनेन ह्रस्व एव भवति । कीति किम् । खट्वाता । मालाता । आप्पर इति किम् । प्रियखट्वाकः पुरुषः । आबेव परो यस्मादिति बहुव्रीहिः किम् । प्रियखट्वाकमतिक्रान्तातिप्रियखट्वाका । अत्र हि प्रथमं द्वितीया परा पश्चादाबिति । आप इत्येव । *मातृका ॥ १०७ ॥ *स्वज्ञाजभस्त्राधातुत्ययकात् ॥ २ । ४ । १०८ ॥ स्वज्ञाजभस्त्रेभ्यः अधातोरत्यप्रत्ययस्य च यावयवौ यकारककारौ ताभ्यां च परस्याप: स्थानेऽनित्प्रत्ययावयवे ककारे आप्परे परत इकारो वा भवति । कुत्सिता 'स्वा ज्ञातिः स्विका स्वका । अस्विका अस्वका । निःस्विका निःस्वका । बहुस्विका बहुस्वका ।

---

नास्तीत्याह—न कचीति प्रतिषेध इति । नैषादकर्षुकः शवरज० ॥—इचापुंसो—॥ न् इत् अनुबन्धो यस्य प्रत्ययस्याऽसो नित् न नित् अनित् तस्य सम्बन्धी क् अनित्क् तस्मिन् । प्रिया खट्वा यस्या 'शेषाद्वा' विकल्पेन कचि प्रियखट्विकेत्यादिरूपत्रय भवति । आपीति कृते उपश्लेषसप्तम्येव आउपश्लिष्टे ककारे इत्वमित्यर्थस्य सिद्धे परग्रहण नियमार्थमित्याह—आबेव पर इति ॥—सर्विकेति । सर्वा नाम काचित् तत स्वार्थे 'यावादिभ्य. क'। ङ्यादीदूतः के ह्रस्वत्वेऽप्याप्तत्तदिकार । सर्वादेः सर्वशब्दस्य तु त्यादिसर्वादेरित्यनेनाऽन्त्यस्वरात् प्रागकि सर्विकेति । अत्राप स्थानित्वमपि न स्यात् ॥—मातृकेति । ननु यथा इहाप् नास्ति तथा मिमीते इति धान्यमातुरपि मातृशब्देनाभिधानात् अपुस इत्यपि न स्यात् । ततो व्यक्तिविकलत्वान्नेद प्रत्युदाहरण युज्यते । प्रत्युदाहरण हि तदङ्गाभावे कार्याभाव प्रदर्शयत्तदङ्गसामर्थ्यप्रदर्शनार्थमुपादीयते । तत्राङ्गद्वयवैकल्येऽस्याङ्गस्य वैकल्यादिह कार्याभाव इति निर्णयाभावादेकस्याप्यभाव इति । नैष दोष । जननीवचनस्यान्यस्यैवाव्युत्पन्नस्य मातृशब्दस्य ग्रहणात् । यद्वा प्रत्युदाहरणदिग्मात्रमिद तेन स्वसृकेत्यादि प्रत्युदाहरण द्रष्टव्यम् ॥—स्वज्ञाज—॥ धातुश्च त्यश्च धातुत्यौ न धातुत्यौ अधातुत्यौ यश्च कश्च यकम् अधातुत्ययोर्यकमधातुत्ययकम् । स्वश्च ज्ञश्च अजश्च भस्त्राश्च अधातुत्ययक च स्वज्ञाजभस्त्राधातुत्ययक तस्मात् । अत्र सूत्रेऽपुस इति नानुवर्त्ततेऽसम्भवात् । आरम्भसामर्थ्याच्च ॥—स्वा ज्ञातिः

ज्ञातिधनाख्यायामसर्वादित्वादकाभावे कप्रत्ययान्तः स्वशब्दः । ज्ञिका । ज्ञका । अज्ञिका । अज्ञका । निर्ज्ञिका । निर्ज्ञका । वहुज्ञिका । वहुज्ञका । अजिका अजका । अनजिका अनजका । निरजिका निरजका । वहजिका वहजका । भस्त्रग्रहणं स्त्रीपुंससाधारणार्थस्तेर्ग्रहणार्थम् । अविद्यमाना भस्त्रा यस्याः सा अभस्त्रा सैवाल्पा अभस्त्रिका अभस्त्रका । एवं निर्भस्त्रिका निर्भस्त्रका । वहुभस्त्रिका वहुभस्त्रका । अतिभस्त्रिका अतिभस्त्रका । अत्र हि गौणस्य ह्रस्वत्वे कृते समासात्स्त्रीपुंससाधारणादाविति पूर्वेण न सिध्यति । यदा त्वपुंस्कादाप् विधीयते तदा पूर्वेण त्रैरूप्यमेव । भस्त्रिका भस्त्रका भस्त्राका । न भस्त्रा अभस्त्रा साल्पा चेत् अभास्त्रिका अभस्त्रका अभस्त्राका । एवं परमभस्त्रिका परमभस्त्रका परमभस्त्राका । यकार, इभ्यिका इभ्यका । क्षत्रियिका क्षत्रियका । आर्यिका आर्यका । ककार, चटकिका चटकका । मूषकिका मूषकका । एलकिका एलकका । धातुत्यवर्जनं किम् । सुनयिका । सुशयिका । अशोकिका । सुपाकिका । दाक्षिणात्यिका । पाश्चात्यिका । इहत्यिका । अमात्यिका । आप इत्येव । कुत्सिता [1]स्वा आत्मा आत्मीया वा सर्वादित्वादकि स्विका । सांकाश्ये भवा योपान्त्यलक्षणेऽकञि सांकाश्यिका । एवं काम्पील्यिका । हार्दिकं भजति हार्दिकिका। अत्र 'गोत्रक्षत्रियभ्योऽकञ् प्रायः' (६-३-२०६) इत्यकञ् । एवं [1]श्वाफल्किका । सर्वत्रोत्तरेण नित्यमिकारः । कथं वहुपत्त्रिका । नात्र त्यः प्रत्ययः । प्रत्ययाप्रत्यययोश्च प्रत्ययस्यैव ग्रहणम् । अथ शुष्किकेत्यत्र कथं न विकल्पः । क्कादेशस्य कस्यासिद्धत्वात् ॥ १०८ ॥ [1]द्व्येषसूतपुत्रवृन्दारकस्य ॥ २ । ४ । १०९ ॥ आप इति निवृत्तम् पृथग्योगात् । एषामन्तस्यानित्मसयात्रयवे ककारे आप्परे परत इकारादेशो वा भवति । द्विके द्वके । एषिका एषका । केवलयोरेवानयोर्विकल्पेनेकारः। यदा तु न द्वे न एषा न द्वके न एषका इत्यादि विग्रहे कृते विभक्तेर्लुपि सत्यां पुनः समासाद्विभक्तौ तामाश्रित्य त्यदाद्यत्वं तत आप् स च स्थानिवद्भावेन विग्रहकालभाविन्या विभक्तेः परो न तु कात् तदा अनेषका अद्वके इत्यत्रे-

---

स्विका इति । यद्यपि स्वशब्द स्वो ज्ञातावात्मनि क्लीवे त्रिष्वात्मीये धनेऽस्त्रियामिति पठ्यते तथापि कुत्सिताद्यर्थविषये ज्ञातावपि स्त्रीत्वमत एव पाठात् । भवति ह्युपाधिभेदात् ह्रस्वे कृते लिङ्गयोगस्तदन्यलिङ्गत्व च यथा पचतिरूपमित्यलिङ्गस्यापि नपुसकलिङ्गत्वम् । कुटीरमिति स्त्रीलिङ्गस्यापि नपुसकलिङ्गत्वम् । विचित्रा हि शब्दशक्तय । यद्वा ज्ञातिरत्र स्त्रीरूपा विवक्षिता तेन योनिमन्नामत्वात् स्वशब्दस्य स्त्रीत्वम् । न विद्यते स्वा यस्या इति कृते कपि अस्विका अस्वकेति रूपे । कपि निमित्तभूते विकल्पपक्षे 'अस्यायत्तत्'-इति न विकल्पसामर्थ्यात् । कचि तु 'नवाप' इति ह्रस्वे कृते अस्यायत्तद्भवत्येव । न च सूत्रविकल्प' प्रवर्त्तते । सूत्रं विनापि अस्विका अस्वकेति सिध्यतीति । अस्विकेति रूपमेकरूपेणैव गतार्थमिति । दाक्षिणात्यिकेति । दक्षिणस्या भवा 'दक्षिणापश्चात्'-इति त्यण् । अत्र 'सर्वादयोऽस्यादौ' इति पुंवद्भावो न भवति । दक्षिणापश्चादित्यत्र आकारनिर्देशात् । यद्वा कौण्डिन्यागस्त्ययोरिति ज्ञापकात् ॥—स्वा आत्मा आत्मीया वेति । स्त्रीसबन्ध्यऽत्रात्मा विवक्षितस्तस्य च योनिमता स्त्रीशरीरेणाभेदोपचारात् योनिमन्नामत्वात् स्वा इत्यत्र स्त्रीत्वम् । बाहुलकाद्वा स्त्रीत्वम् ॥—श्वाफल्किकेति । श्वान फालयति श्वफल्क अन्धकविशेष. ॥—द्व्येषसूत—॥ यदा तु न द्वे न एषेति एषाद्विशब्दौ नञ्पूर्वावित्वविकल्प न प्रयोजयत. तत्रापि कृते नञ्समासेऽनञ्समासे वाऽगिति द्वयी गति. । उभयोरपि च पक्षयोर्विभक्ते. पर आबिति । यतोऽन्तरङ्गानपि विधीन् बहिरङ्गापि लुप् बाधत इति समासार्थाया विभक्तेस्त्यदाद्यत्वात्पूर्वं लुपा भाव्यं प्रत्ययलक्षणं च नास्तीति समुदायाद्या विभक्तिस्तामाश्रित्य त्यदाद्यत्वे सत्यापा

कारो न भवति । अश्विकेत्यादौ तु न विभक्तेः पर आप् किं तु कादेव ।*सूतिका सूतका ।*पुत्रिका पुत्रका ।*वृन्दारिका । वृन्दारका। द्विशब्दसाहचर्यादेषेति सर्वादेः कृतविकारस्यैतदो निर्देशः । तेनैषकादिप्रत्ययान्तस्याविकृतस्यैतच्छब्दस्य च न भवति । इच्छतीति एषिका । एता एव एतिकाः ॥ १०९ ॥ *वौ वर्त्तिका ॥ २ । ४ । ११० ॥ वौ शकुनावभिधेये वर्तिकेतीत्वं वा निपात्यते । वर्तत इति णके वर्तिका वर्तका शकुनिः । वाविति किम् । *वार्तिका भागुरिर्लोकायतस्य व्याख्यात्री-त्यर्थः ॥ ११० ॥ *अस्यायत्तत्क्षिपकादीनाम् ॥ २ । ४ । १११ ॥ यत्तत्क्षिपकादिवर्जितस्य नाम्नो योऽकारस्तस्यानित्प्रत्ययावयवे ककार आप्परे परत इकारो भवति । वेति निवृत्तं *पृथग्योगात् । जटिलिका । बधिरिका । 'मुण्डिका । कारिका । पाचिका । 'मद्रिका । अस्येति किम् । गोका । नौका । अनित्कीत्येव । जीव-का । नन्दका ॥ 'आशिष्यकन्' (५-१-७०) । अनित इति पर्युदासेन 'प्रत्ययग्रहणादिह न भवति । शक्नोतीति शका । तका । आप्पर इत्येव । कारकः । हारकः । आवेव परो यस्मादिति नियमः किम् । *बहुपरिव्राजका मथुरा । बहुमद्रका सेना । 'विभक्त्यन्तादयमाविति प्रतिषेधः । यत्तत्क्षिपकादिवर्जनं किम् । यका । सका । *क्षिपका । *ध्रुवका । ध्रुवका । 'लहका । 'चरका । चटका । इष्टका । 'एडका । 'एरका । 'करका । *अवका । 'अलका । दण्डका । 'पिष्पका । कन्यका । *मेनका । 'द्वारका । रेवका । सेवका । धारका । उपत्यका । अधित्यकेत्यादि । बहुवचनमाकृतिगणार्थम् ॥१११॥ नरिका मामिका ॥ २ । ४ । ११२॥ नरकशब्दस्य मामकशब्दस्य चाप्रत्ययावयवे ककारे आप्परे परतोऽकारस्येत्वं निपात्यते । नरान् कायतीति नरिका । 'आतो डोऽह्वावामः' (५-१-७६) इति डः । ममेयं मामिका । अत्रि ममकादेशः । 'केवलमामक'—(२-४-२९) इत्यादिना संज्ञाया ङीप्रत्ययस्य नियमादाप् । ककारस्याप्रत्ययसंबन्धित्वात्पूर्वेणाप्राप्ते वचनम् ॥ ११२ ॥

भाष्यम् स च विग्रहकालभाविन्या विभक्त्या व्यवधीयते । तर्हि द्विके इति मूलप्रयोगेऽपि कुत्सिते द्वे इति तद्धितवृत्तौ 'त्यादिसर्वादे'–इत्यकि ओकारस्य लोपे तद्धितान्तात् ओकारे तदाश्रये त्यदाद्यत्वे आपि च तद्धितवृत्तिनिमित्तस्य ओकारस्य स्थानिवद्भावात् न प्राप्नोति । नैवम् । उभयोरपि ओकारयो एकपदभक्तत्वेन व्यवधान न भवति । अद्वके इत्यत्र तु समासभक्तस्य ओकारस्य प्रथमेन द्विशब्दभक्तेन औकारेण व्यवधान भवत्येव ॥—सूतिकेति । सुपूर्वाद्धयते क्त सूते सोति वा क्तः । तत आबन्तात्कुत्सितादौ कप् ॥—पुत्रिकेति । पुत्रशब्दात्कुत्सितादौ कपि आबादौ च कृते पुत्रा इति वा तत्पुनाणुत्रहतीति क ॥—वृन्दारिकेति । प्रशस्त वृन्दमस्या अस्तीति वृन्दादारक । ततो 'जातेरयान्त'–इति बाधायै 'अजादे' इत्याप् ॥—वौ वर्त्तिका ॥—वर्त्ति-का भागुरिरिति । वर्त्तयतीति णके 'अस्यायत्तत्'–इति इकार । भागुरिराचार्य । बाहुलकात्स्त्रीलिङ्गः । लोके आयत लोकायत नास्तिकशास्त्रम् ॥—अस्यायत्त—॥—पृथग्योगादिति । अयमर्थो यद्यत्रापि विकल्प स्यात्तदा स्विका स्वका इत्यादौ 'उणादीदूत'–इति ह्रस्वत्वेऽनेन वैकल्पिकस्य ह्रस्वस्य सिद्धत्वात् 'स्वज्ञाजभस्त्र'–इत्यादीना पृथगुपादानमनर्थकं स्यादित्यर्थः ॥—मुण्डिकेति । मुण्डयतीति 'णकतृचो' इति णक ॥—मद्रिकेति । मायनीति रप्रत्ययस्ततो 'वृजिमद्रादेशात्क.' इति कप्रत्यय ॥—प्रत्ययग्रहणादिति । अथ वा प्रत्ययपरिग्रहे च नरिकामामिकेति ज्ञापको ॥—बहुपरिव्राजकेति । ननु यान ककारादावेव श्रूयते नान्यादिति कथ प्रतिषेध इत्याह—विभक्त्यन्तेत्यादि ॥—एडकेत्यादिषु ईडिक् ईरिक् आभ्या 'कीचक'–इति निपातनाद्गुणे एडका एरका । क्षिपका आयुधविशेषः । ध्रुवका ध्रुवकेति । आवपनविशेषो । लहका सविलासा स्त्री । चरका ऋषि । एडका अजाविशेष । एरका तृणम् । करका घनोपल निलिङ्ग । अवका शेवाल ।

॥

*तारका वर्णकाष्टका ज्योतिस्तान्तवपितृदेवत्ये ॥ २ । ४ । ११३ ॥ तारकादयः शब्दा यथासंख्यं ज्योतिरादिष्वर्थेषु इकारादेशरहिता निपात्यन्ते । तरतेर्णके तारका ज्योतिः तच्च नक्षत्रं कनीनिका च । नक्षत्रमेवेत्यन्ये । अन्यत्र तारिका । ^वर्णयतीति णके वर्णका तान्तवः प्रावरणविशेषः । अन्यत्र वर्णिका भागुरी लोकायतस्य । अश्नोतेरौणादिके तकके अष्टकापितृदेवत्यं कर्म । अन्यत्राष्टौ द्रोणाः परिमाणमस्या इति के अष्टिका खारी । पितृदेवतार्थं कर्मेति 'देवतान्तात्तदर्थे' ( ७-१-२२ ) इति ये पितृदेवत्यमिति सिद्धम् ॥ ११२ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ द्वितीयस्याध्यायस्य चतुर्थः पादः ॥२।४॥ श्रीमूलराजक्षितिपस्य बाहुर्बिभर्त्ति पूर्वाचलशृङ्गशोभाम् ॥ संकोचयन्वैरिमुखाम्बुजानि यस्मिन्नयं स्फूर्जति चन्द्रहासः॥ १ ॥

---

अलका दण्डका नगर्यौ । पिप्पका अश्वत्थस्य फलम् । मेनका गौरीमाता अप्सराश्च । द्वारका नगरी ॥—तारका व—॥ णिजन्ताद्वर्णयत इति कर्म्मणि सञ्ज्ञायां णके वर्णका ॥—वर्णयतीति तु चौरादिकप्रतिपत्त्यर्थं तिवा निर्देशो ननु णकारम्भकः । अथवा वर्णयत्याधारविशेषगतमाधेयगुण वादयतीति ॥ ॥ इत्याचार्य० द्वितीयस्याध्यायस्य चतुर्थः पाद सपूर्ण ॥ ॥ ॥ ॥

॥ समाप्तोऽयं

द्वितीयोऽध्यायः ॥

# ॥ तृतीयोऽध्यायः ॥

## ॥ अर्हँ ॥

***धातोः पूजार्थस्वतिगतार्थाधिपर्यतिक्रमार्थातिवर्जः प्रादिरुपसर्गः प्राक्च ॥ ३ । १ । १ ॥** धातोः संबन्धी तदर्थद्योती चाद्यन्तर्गतः प्रादिशब्द्गण उपसर्गसंज्ञो भवति तस्माच्च धातोः प्राक् प्रयुज्यते *न परो न व्यवहितः पूजार्थौ स्वती गतार्थावधिपरी अतिक्रमार्थमतिं च वर्जयित्वा । प्रणयति । परिणयति । अभिषिञ्चति । निपिञ्चति । प्रलम्भः । उपलम्भः । एषूपसर्गसंज्ञायां णत्वषत्वनागमाः सिद्धाः । धातोरिति किम् । वृक्षंवृक्षमभिसिञ्चति । प्रगता नायका यस्मात्स प्रनायको देशः इत्यत्र तु सत्यपि धातुसंबन्धे येनैव धातुना धातुसंबद्धाः प्रादयस्तं प्रत्येवोपसर्गसंज्ञा इति गमिसंबन्धेऽपि नयतिं प्रत्यनुपसर्गत्वात् णत्वं न भवति। एवं प्रर्छको देश इत्यत्रारादेशो न भवति । पूजार्थस्वत्यादिवर्जनं किम् । पूजार्थौ स्वती, सुसिक्तम् भवता। सुस्तुतं भवता। अतिसिक्तं भवता। अतिस्तुतं भवता । *धात्वर्थः प्रशस्यते। अत्रोपसर्गसंज्ञाया अभावात् षत्वं न भवति। पूजाग्रहणं किम्। सुषिक्तं नाम किं तवात्र। धात्वर्थोऽत्र कुत्स्यते। गतार्थावधिपरी, अध्यागच्छसागत्यधि । पर्यागच्छति आगच्छति परि । उपरिभावः सर्वतोभावश्चान्यतः प्रकरणादेः प्रतीयन इति गतार्थत्वम् । अत्र प्राक्त्वनियमाभावः । अध्यागमनं प्रयोजनमस्याध्यागमनिकः । पर्यागमनिकः । अत्र ' प्रयोजनम् ' ( ६-४-११७ ) इतीकणि अधिपरिशब्दयोरादेरकारस्य वृद्धिर्न भवति । उपसर्गत्वाभावेन गतिसंज्ञाया अभावे समासाभावेन पृथक्पदत्वात् । पर्यानीतम् । अत्रानुपसर्गत्वाण्णो न भवति । गतार्थग्रहणं किम् । अध्यागच्छति, पर्यागच्छति । अत्रोपरिभावस्य सर्वतोभावस्य च प्रकरणादेरप्रतीतस्य द्योतने उपसर्गसंज्ञास्त्येवेति प्राक्त्वनियमः । अतिक्रमार्थोऽतिः। यदर्थं क्रिया तस्मिन् निष्पन्ने क्रियाप्रवृत्तिरातिक्रमः। अतिसिक्तं भवता । अतिस्तुतम् भवता। अतिक्रमेण सेकः स्तुतिश्च कृतेसर्थः। अत्र षत्वं न भवति। अति स्तुत्वा । अत्र *समासाभावाद्यबादेशो न भवति । अतिक्रमग्रहणं किम्।

---

॥—**धातोः पूजार्थ**—॥ अनेकार्थत्वाद्धातूना कुत्रापि श्रूयमाणार्थनाधयाऽर्थान्तर द्योतयति कुत्रापि श्रूयमाणमेवेत्युक्त—**तदर्थद्योतीति** । प्राक्शब्दस्याऽव्यवहिते वर्त्तनादाह—**न पर** इति ॥—**धात्वर्थः प्रशस्यते** इति । शोभनत्वोद्भावनेन सिचिस्तौत्योरर्थस्य कर्तु पूजा प्रतीयत इत्यर्थ ॥—**गतार्थावऽधिपरी** इति । गतो ज्ञातोऽर्थोऽभिधेय ययोस्तौ गतार्थौ योऽर्थोऽनयोर्द्योत्यस्तस्य प्रकरणादिवशादऽवगमे निष्प्रयोजनावेतावुच्येते इति गतार्थत्वम् । यद्येव प्रकरणादिनोक्तत्वात्तदर्थस्य तयो प्रयोगाऽयोग । उच्यते । प्रकरणादिवशादऽवगतार्थानामऽपि स्फुटतरार्थाऽवगत्यर्थ प्रयोगो लोके भवति । यथाऽपूपौ द्वौ ब्राह्मणो द्वावानयेत्यपूपावित्यादौ द्विवचनादवगतेऽपि द्वित्वे द्विशब्दस्य प्रयोग इति ॥—**समासाभावादिति**। गतिसज्ञाया अभावात् 'गतिकन्य'–इत्यनेन । ' अतिरतिक्रमे च ' इत्यपि बाहुल-

*अतिशय्य । आदिग्रहणं किम् । पुनर्नमति । साधु सिञ्चति ॥ '*धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते । तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते' ॥ १ ॥ बाधते यथा, *प्रतिष्ठते । प्रस्मरति । प्रवसति । प्रलीयते । प्रतीक्षते । प्रतिपालयति । तमनुवर्तते यथा, अधीते । अध्येति । *आचामति । आचष्टे । अनुरुध्यते । प्रलोकयति । तमेव विशिनष्टि यथा, प्रपचति । प्रकरोति । प्राणिति । प्राश्नाति । निरीक्षते । निष्पतति । अनर्थको यथा, प्रलम्बते । प्रार्थयते । विजयते । विजानाति । निमीलति । निखञ्जति । निरजति । एषां चा पञ्चभ्यः प्रायेण प्रयोगो भवति । आहरति, व्याहरति, अभिव्याहरति, समभिव्याहरति, प्रसमभिव्याहरतीति । अथ किं धातुः पूर्वं क्रियाविशेषकेणोपसर्गेण युज्यते उत साधनाभिधायिना प्रत्ययेनेति । साधनेनेति केचित् । साधनं हि क्रियां निवर्तयति तामुपसर्गो विशिनष्टि। अभिनिर्वृत्तस्य चोपसर्गेण विशेषः शक्यो वक्तुं नानभिनिर्वृत्तस्य । तदयुक्तम् । यो हि धातूपसर्गयो*रभिसंबन्धस्त*मभ्यन्तरीकृत्य धातुः साधनेन प्रयुज्यते । *यस्माद्विशिष्टैव क्रिया साधनेन साध्यते न तु साधनाल्लब्धस्वरूपान्यतो विशेषं लभते । तस्मात्पूर्वमुपसर्गेणेति युक्तम् । तथा च समस्करोत्संचस्कारेत्यत्रान्तरङ्गत्वात् स्सटि कृते प्रत्ययनिमित्ते अडागमद्विर्वचने भवतः अतश्चैवम् । पूर्वं हि धातोः साधनेन संबन्धे आस्यते गुरुणेत्यकर्मकः उपास्यते गुरुरिति सकर्मको धातुः केन स्यात् । न चैतद्वाच्यम् प्रत्ययसंबन्धमन्तरेण क्रियाविशेषस्यानभिव्यक्तेर्न धातोः पूर्वमुपसर्गेण संबन्धो युज्यते । यतः बीजकालेषु संबद्धा यथा लाक्षारसादयः वर्णादिपरिणामेन फलानामुपकुर्वते बुद्धिस्थादभिसंबन्धात्तथा धातूपसर्गयोरवभ्यन्तरीकृतो भेदः पदकाले प्रकाश्यते । *यद्येवमुपेत्याधीत्येत्यादा*वन्तरङ्गत्वादेत्वदीर्घत्वयोः कृतयोर्ह्रस्वाभावात्तोऽन्तो न प्राप्नोति । सत्यम् । असिद्धं बहिरङ्गमन्तरङ्गे इति भविष्यति । प्रेजुः प्रोषुः इत्यत्र तु यज्वपोर्य्वृति द्वित्वे च सति अन्तरङ्गत्वात्समानदीर्घत्वे पश्चादेदोतौ । यदा पूर्वमेदोतौ ततोऽयवादेशे *'व्यञ्जनस्यानादेर्लुक्' (४-१-४४) इति लुकि पुनरेदोतौ । ननु कर्तुं प्रकर्षेणेच्छति प्रचिकीर्षति इत्यादौ धात्वन्तरसंबद्धस्योपसर्गस्य तदर्थप्रतिपादकप्रत्ययादेव प्राक्प्रयोगः प्राप्नोति । नैवम् । *तस्याधातुत्वात् । समुदायस्यैव धातुत्वात् । एवं मनःशब्दात् सुभवतौ दुर्भवतौ अ-

कात ॥–वृक्षवृक्षमऽभिसिञ्चतीति । वीप्स्यार्थेनाऽभिना योगात् 'लक्षणवीप्स्य'–इति द्वितीया ॥—धात्वर्थं बाधत इति । प्रादेरव्ययत्वादनेकार्थता दर्शयति । धातुपाठे योऽर्थस्तदपेक्षया धात्वर्थं बाधत इत्युक्तम् अन्यथाऽनेकार्थत्वाद्धातूनामयमर्थो न स्यात् ॥—अतिशय्येति । जित्वा इत्यर्थः ॥—प्रतिष्ठते इत्यादि । अत्र तिष्ठत्यादयश्चत्वारो गतिनिवृत्त्यादिलक्षण प्रसिद्धमर्थं परित्यज्य तत्प्रतिपक्षभूते प्रस्थानविस्मरणप्रवासप्रलयलक्षणे वर्त्तन्ते तदुत्तरौ त्वर्थान्तरमात्रे पालने इति ॥—आचामतीति । इद मतान्तरेणोक्त स्वमते तु बाधा धात्वर्थस्य२ ॥–अभ्यन्तरीकृत्येति । बुद्धिस्थीकृत्येत्यर्थ ॥—यस्माद्विशिष्टैव क्रियेति । क्रियाया क्षणिकत्वात् । सामान्यक्रियाया उत्पत्त्यनन्तरमेव विनाशादुपसर्गयोगे न स्याद्विशिष्टत्वमित्यर्थ ॥—अन्तरङ्गत्वादेत्वदीर्घत्वयोरिति । सप्तकारणत्वादेत्वदीर्घत्वयोरन्तरङ्गत्व तागमस्य तु सपस्यमानकारणत्वाद्बहिरङ्गत्वम् । कृते च यवादेशे एकपदत्वात्तागमस्यैवान्तरङ्गत्वम् ॥—व्यञ्जनस्यानादेर्लुगितीति । उभयो स्थाने निष्पन्नत्वात् यकारवकारयोर्धातुव्यपदेशात् पुनरपि 'व्यञ्जनस्यानादेर्लुक्' भवति ॥—तस्याधातुत्वादिति । सनादे प्रत्ययस्य क्रियार्थत्वेऽपि न धातुत्व भ्वादिसाहचर्यात् भ्वादयोऽप्रत्यया एव धातवोऽन्येऽपि तथा । अमनो मन सुभवति दुर्भवति अभिभवतीति वाक्य कर्त्तव्य 'च्व्यर्थे भृशादे स्तो' क्यङ् सलोपश्च सुशब्दस्य भवतिना सबन्ध इति । यदा तु असुमना सुमना इति मनसा सबन्धस्तदा सुशब्दस्य प्राक्त्व सिद्धमेव । ननु सुकटक-

भिभवतौ क्यङ्प्रत्यये सुमनायते दुर्मनायते अभिमनायते हस्तिनातिक्रामति अतिहस्तयति सेनया अभियाति अभिषेणयतीत्यादावपि द्रष्टव्यम् । धातोरिति प्राक्चेति चाधिकारो गतिसञ्ज्ञां यावत् । प्र परा अप सम् अनु अव निस् दुस् निर् दुर् वि आङ् नि अधि प्रति परि उप अति अपि सु उत् अभि इति प्रादिः ॥ ३ । १ । १ ॥ *ऊर्यादिनुकरणच्विडाचश्च गतिः ॥ ३ । १ । २ ॥ ऊर्यादय *अनुकरणानि *च्व्यन्ता डाजन्ताश्च शब्दा उपसर्गाश्च धातोः संबन्धिनो गतिसंज्ञा भवन्ति । तस्माच्च धातोः प्रागेव प्रयुज्यन्ते । ऊर्यादिः, ऊरीकृत्य । उररीकृत्य । ऊरीकृतम् । उररीकृतम् । अनुकरण, *खाट्कृत्य । फूत्कृत्य । कथं *खाडिति कृत्वा निरष्ठीवदिति । इति शब्देन व्यवधानान्न भवति । च्व्यन्तः, शुक्लीकृत्य । घटीकृत्य । डाजन्त, पटपटाकृत्य । सपत्राकृत्य । उपसर्गः, प्रकृत्य । पराकृत्य । प्रकृतम् । पराकृतम् । ऊरी, उररी अङ्गीकरणे *विस्तारे च । *उररी अङ्गीकारे । एते त्रयो भूशार्थप्रशंसयोरपि । *पाम्पो निर्ध्वंसमाधुर्यकरुणाविलापेषु । *ताली, आताली वर्णोत्तमार्थयोः । *धूशी कान्तिकाङ्क्षयो । पाम्प्यादयो विस्तारेऽपि । *शकला । *संशकला । *ध्वंशकला । *भ्रंशकला । *आलम्बी । *केवाशी । शैवाली *पार्दाली । *मस्मसा । *मसमसा । एते हिंसायाम् । आद्याश्चत्वारः परिभवेऽपि । ततः परे च चत्वारश्चाविष्कारेऽपि । अन्त्यौ च द्वौ *चूर्णसंवरणयो-

---

राणि वीरणानि दुष्कटकराणि वीरणानीत्यत्र गतिसञ्ज्ञकस्य सुशब्दस्य धातो प्राक् प्रयोग' प्राप्नोति । नैतम् । 'दुःस्थीपत कुच्छ्राकृच्छ्रार्थात् खल्' इत्यत्रै कर्त्रीप्याद्भूकृग ' इत्यत्र च खित्करणात् । तस्य ह्येतत् प्रयोजन खिति मोऽन्तो यथा स्यात् । यदि च सुशब्दस्य प्राग् धातो प्रयोग स्यात्तदा खित्करणमनर्थक स्यादिति । सुशब्दादिना कदादेर्व्यवधानात् । सुशब्दात्त्वव्ययत्वान्न भवति ॥—ऊर्याद्य— ॥ सोऽयमित्यभेदोपचारेण कुतश्चित् सादृश्यात् येनानुक्रियते तदनुकरणमित्याह—अनुकरणानीति । च्विडाचो प्रत्ययत्वात्प्रकृतेराक्षेपात्प्रत्ययमानस्य धातुसम्बन्धासम्भवात् तदन्तप्रतिपत्तिरित्याह—च्व्यन्ता इति । डाजिति चित्करणात्सिता कृत्वेत्यादौ पितृशब्दात् 'ऋदुशनस्'—इत्यनेन डा इति तदन्तस्यागतित्वात्ततो यथादेशाभाव ॥—खाडिति कृत्वेति । कृत्वेत्यस्य इतिना सम्बन्ध । इतश्च खाड्इत्यनेन अतो धातो खाटश्च परस्पर न सम्बन्ध ॥—खाट्कृत्येत्यत्र खाडिति मूर्धन्यान्तोऽनुकरणशब्दोऽव्युत्पन्न । एव पूत्कृतशब्दोऽप्यव्युत्पन्न ॥—विस्तारे चेति । अत्र एकत्रावस्थितस्य स्वावयवैरनियतदिग्देशव्याप्तिर्विस्तार ॥—उररीत्यत्र 'महत्युच—इत्युपरत्ये उरु तं रीयते ॥—माधुर्यकरुणेत्यत्र रसनेन्द्रियग्राह्यो मन प्रीतिजनको गुणविशेषो माधुर्यम् । इष्टवियोगजनित शब्द रोदन करुणविलाप । पाम्पीत्यत्र न पिबते 'अतोरिस्तु—' इति भे पामस्ततपूर्वात्पीयते क्विपि निपातनात्पूर्वपदान्तलोपे पाधातोर्लोपेन तु आकारस्य ईकारे वा पाम्पी ॥—तालीत्यत्र केवलादाङ्पूर्वाच्च तालयते 'तृस्ततन्त्री—' इति बहुवचनादीकारे ताली आताली च । धूशीत्यत्र धूनोते क्विपि धूस्तत्र शेते इति किर्वपि धूशी ॥ कान्तिस्तेजस उत्कर्षत । काङ्क्षा अभिलाष ॥—शकलेत्यत्र शशि प्लुतिगतावित्यचि शश । खलतेरचि खल शशा खला अस्या पृषोदरादिदर्शनादत एव निपातनादकस्य शस्य लोपे खस्य च कत्वे आपि शकला ॥—सशकलेति । हत्वा हत्वा शशा सचायन्तेऽशामिति हिंसोच्यते । सगता शकला सशकला ॥ ध्वस्ता शकला भृश शकला पृषोदरादित्वात् पूर्वपदयोर्ध्वभावे भ्रभावे च ध्वशकला भ्रंशकला । आङ्पूर्वालम्बे 'तस्ततन्त्री'—इति बहुवचनादीकारे आलम्बी ॥ केवृङ् सेचने अचि केव तत्पूर्वात् शोंच् तक्षणे इत्यतो बाहुलकात् कितीकारे पृषोदरादित्वात् पूर्वपदान्तस्याकारे—केवाशी । शेते 'शीङाप' इति व तदालीयते इति क्विपि शेवाली ॥ पारगतीति क्विपि पा पार ददाति विचि पार्दा । त लीयते इति पार्दाली ॥ मस्मसेत्यत्र मसैच् परिणामे क्विपि अचि च मसो मसा इति षष्ठीतत्पुरुषे मस्मसा । पूर्वस्याप्यात्वे मसमसा ॥—चूर्णसंवर-

रपि । पार्दाली शब्दार्थेऽपि । मसमसा मसमसानुकरणेऽपि । के चित्तु मसमसेत्यत्र ऋकारौ निपात्य मृसमृसेति पठन्ति । केचिदालम्बीस्थाने आलोष्ठीति पठन्ति । गुलुगुधा क्रीडापीडयोः । गुलुगुधेत्यन्ये मन्यन्ते । सजूः सहार्थे । फलूफली विक्ली आक्ली । एते विकारे । आद्यौ *क्रियासंपत्तिकर्मसिद्ध्यकण्टकेष्वपि । अन्त्यौ तु *विचार*विभागयोरपि । *श्रौषट् वषट् वौषट् स्वाहा स्वधा *देवतासंप्रदानदानमात्रयोः । वषट् पूजायामपि । *स्वधा तृप्तिप्रीतिप्रत्यभिवादनेष्वपि । श्रत् *श्रद्धाने शीघ्रे च । प्रादुस् आविस् प्राकाश्ये । पशु *केवाली हिंसायाम् । वेताली विस्तारे । केचित्तु धूली वर्पाली पाम्पाली विचाली शब्दानप्यधीयते । इत्यूर्यादयः । एषां च्विडाच्साहचर्यात् कृभ्वस्तिभिरेव *योगे गतिसंज्ञा । *श्रतश्च दधातिकरोतिभ्याम् । प्रादुराविःशब्दौ कृग्योगे विकल्पार्थं साक्षादादावपि पठ्येते ॥ गतिप्रदेशा गतिः (१-१-३६) इत्यादयः ॥ २ ॥ *कारिका स्थित्यादौ ॥ ३ । १ । ३ ॥ कारिकाशब्दः स्थित्यादावर्थे धातोः संबन्धी गतिसंज्ञो भवति । तस्माच्च धातोः प्रागेव प्रयुज्यते । स्थितिर्मर्यादा वृत्तिर्वा । आदिशब्दाद्यत्नधात्वर्थनिर्देशौ गृह्येते । कारिकाकृत्य । स्थिति यत्नं क्रियां वा कृत्वेत्यर्थः । स्थित्यादाविति किम् । कारिकां कृत्वा, कर्त्री कृत्वा इत्यर्थः ॥ ३ ॥ भूषादरक्षेपेऽलंसदसत् ॥ ३ । १ । ४ ॥ अलं सत् असत् इत्येते शब्दा यथासंख्यं भूषादरक्षेपेष्वर्थेषु वर्तमानाद्धातोः संबन्धिनो गतिसंज्ञा भवन्ति तस्माच्च धातोः प्रागेव प्रयुज्यन्ते । भूषा मण्डनम् । अलंकृत्य । अलंकृतम् । प्रीत्या संभ्रम आदरः । सत्कृत्य । सत्कृतम् । क्षेपोऽनादरः । असत्कृत्य । असत्कृतम् । भूषादिष्विति किम् । अलं कृत्वा माकारीत्यर्थः । सत् कृत्वा । विद्यमानं कृत्वेत्यर्थः । असत्कृत्वा अविद्यमानं कृत्वेत्यर्थः ॥४॥ *अग्रहानुपदेशेऽन्तरदः ॥ ३ । १ । ५ ॥ अन्तर् अदस् इत्येतौ शब्दौ यथासंख्यमग्रहेऽनुपदेशे चार्थे गम्यमाने धातोः संबन्धिनौ गतिसंज्ञौ भवतः । तस्माच्च धातोः प्रागेव प्रयुज्येते । अग्रहोऽस्वीकारः । अन्तर्हत्य, *मध्ये हिंसित्वा शत्रून् गत इत्यर्थः । स्वयं परामर्शोऽनुपदेशो विशेषानाख्यानं वा । अदःकृत्यैतत्क-

---

णयोरपीति । अनाश्रयविन सूक्ष्मावयविभागश्चूर्णम् । सर्वत्र अपिशब्दो हिंसासम्बन्धद्योतनार्थः । गुद पुरीषोत्सर्गे ततो क्विपि कुटादित्वात् गुणाभावे गुद लुनातीति क्विपि त गुध्नातीति मूलविभुजादित्वात्के निपातनादूकारस्य ह्रस्वत्वे आपि गुलुगुधा । फल निष्पत्तावित्यतो बाहुलकादूकारे ईकारे च फलू फली । निपूर्वाद्दाङ्पूर्वाच्च क्रीणाते क्विपि कपिलकादित्वाल्लत्वे विक्ली आक्ली ॥ क्रियासपत्तिकर्मसिद्ध्यकण्टकेष्वपीत्यत्र क्रियासम्पादने पाठादिक्रियाया फलप्राप्ति, कण्टकरहितो देशादि ॥—विभागयोरपीत्यत्र विभागो विभक्तप्रत्ययनिमित्त गुणविशेष ॥—श्रौषडित्यत्र श्रूयते वाति उच्यते च बाहुलकात्क्विबन्ता साधव ॥—देवतासप्रदानेत्यत्र देवतासप्रदान देवताभ्य सम्प्रदीयमान हविर्द्रव्य दानमात्र दानसामान्य स्वधा पितृभ्य इति श्रुते । कथ स्वधा देवतासप्रदाने वर्त्तते । उच्यते । पितृणामपि देवतारूपत्वाददोष ॥—स्वधा तृप्तिप्रीतित्यत्र तृप्ति अन्नोच्छेद । प्रीतिरानन्द । प्रत्यभिवादन प्रतिनमस्क्रिया ॥—श्रद्धाने इत्यत्र धर्मकर्मविषयोऽभिलाष श्रद्धानम् । केवालीत्यत्र केवृङ् सेवने इत्यचि केवमालीयते क्विपि केवाली ॥ योगे गतिसञ्ज्ञेति । च्विडाचो कृभ्वस्तिभिरेव योगे भावात् तदेकवाक्यतया चैषा निर्देशात्तद्योग एव गतित्वमित्यर्थ ॥—श्रतश्च दधातिकरोतिभ्यामिति । 'मृगयेच्छा'-इत्यत्र श्रद्धेतिनिर्देशात् तथैव प्रयोगदर्शनाच्छ्रत्शब्दस्याद्‌ङ्गतादिति शेष ॥—कारिका— ॥—कारिकाकृत्येति । करण कारिका भावे णक । कारिका करण पूर्वम् इति वाक्येऽपि अनेन गतिसञ्ज्ञाया 'अव्ययस्य' इति षष्ठ्या लुप् । एव सर्वत्र । श्लोकवाचिनस्तु कारिकाशब्दस्य सत्यपि धातुसम्बन्धसम्भवे प्रयोगादर्शनात् ग्रहणाभाव इति ॥—अग्रहानु— ॥—मध्ये

रिष्यतीति *चिन्तयति। अग्रहानुपदेशे इति किम्। अन्तर्हत्वा मूषिकां श्येनो गतः। परिगृह्य गत इत्यर्थः। अदः कृत्वा गत इति परस्य कथयति। अदस्शब्द-स्त्यदादौ। अव्ययमिति केचित् ॥ ५ ॥ *कणेमनस्तृप्तौ ॥ ३ । १ । ६ ॥ कणे मनस् इत्येते अव्यये तृप्तौ गम्यमानायां धातोः संबन्धिनी गतिसंज्ञे भवतः। तस्माच्च धातोः प्रागेव प्रयुज्येते। तृप्तिः श्रद्धोच्छेदः। कणेहत्य पयः पिबति। मनोहत्य पयः पिबति। तावत् पिबति यावत्तृप्त इत्यर्थः। तृप्ताविति किम्। तन्दुलावयवे कणे हत्वा गतः। मनो हत्वा गतः। चेतो हत्वेत्यर्थः ॥ ६ ॥ *पुरोऽस्तमव्ययम् ॥ ३ । १ । ७ ॥ पुरस् अस्तम् इत्येते अव्यये धातोः संबन्धिनी गतिसंज्ञे भवतः। तस्माच्च धातोः प्रागेव प्रयुज्येते। पूर्वपर्यायः पुरःशब्दः। अनुपलब्ध्यर्थोऽस्तंशब्दः। पुरस्कृत्य गतः। पुरस्कृतम्। अस्तंगत्य पुनरुदेति सविता। अस्तंगतानि दुःखानि। अव्ययमिति किम्। *पुरः कृत्वा। नगरीरित्यर्थः। अस्तं कृत्वा काण्डं गतः। क्षिप्तमित्यर्थः। सकारोऽप्यत्र न भवति ॥ ७ ॥ *गत्यर्थवदोऽच्छः ॥ ३ । १ । ८ ॥ *अच्छेत्यव्ययमभिशब्दार्थे दृढार्थे च वर्तते। तत् गत्यर्थानां वदश्च धातोः संबधि गतिसंज्ञं भवति तेभ्यश्च धातुभ्यः प्रागेव प्रयुज्यते। अच्छगत्य। अच्छव्रज्य। अच्छोद्य। गत्यर्थवद इति किम्। अच्छ कृत्वा गतः। अव्ययमित्येव। उदकमच्छं गत्वा ॥ ८ ॥ तिरोऽन्तर्धौ ॥ ३ । १ । ९ ॥ तिरः शब्दोऽन्तर्धौ व्यवधाने वर्तमानो धातो' संबन्धी गतिसंज्ञो भवति तस्माच्च धातो' प्रागेव प्रयुज्यते। तिरोभूय। तिरोधाय। अन्तर्धाविति किम्। तिरो भत्वा स्थितः। तिर्यग्भूत्वेत्यर्थः ॥ ९ ॥ कृञो नवा ॥ ३ । १ । १० ॥ तिरस् इत्यव्ययमन्तर्धौ वर्तमानं कृञो धातोः संबन्धि गतिसंज्ञं वा भवति तस्माच्च धातोः प्रागेव प्रयुज्यते। तिरस्कृत्य। तिरःकृत्य। तिरस्करोति। तिरः करोति। पक्षे, तिरः कृत्वा। अन्तर्धावित्येव। तिरः कृत्वा काष्ठं गतः। तिर्यगित्यर्थः ॥ १० ॥ *मध्येपदेनिवचनेमनस्युरस्यनत्याध्याने ॥ ३ । १ । ११ ॥ एतानि *सप्तम्येकवचनान्तप्रतिरूपकाण्यव्ययानि अनत्या-

---

हिंसित्वेति। अन्त शब्दो मध्येऽधिकरणभूते वर्त्तते परिग्रहे च तत्र परिग्रहे प्रतिषेधादितरत्र गतिसञ्ज्ञा विज्ञायते इति दर्शयति। विशेषानाख्याने **चिन्तयतीत्यस्य** स्थाने कथयतीति प्रयोगो ज्ञेय ॥ **कणेमनः**— ॥ कणतेरचि सप्तम्या कणे इति सप्तमीप्रतिरूपकमव्ययमश्रद्धाया वर्त्तते ॥—**अव्यये** इति। अव्यय सन् तृप्ति वक्ति। अत एव वृत्तौ अव्ययमिति सभवाद्विशपण सूत्रेऽव्ययमित्यस्याकरणात्। कणेमनसइत्येते अव्यये इति स्वरूपनिरूपणमात्रमेवेति। तृप्ताविति व्यावृत्तेर्न व्यङ्गवैकल्यम् ॥—**पुरोस्त**— ॥—**पुर** कृत्वेत्यत्र पुर्शब्द शसि सकारान्तोऽस्त्येवेति न व्यङ्गवैकल्यम् ॥ नन्वत्र गतिसञ्ज्ञायामपि गतिसमासे सति स्यादिनिवृत्तिभावात्पुरासिति असन्तस्य सञ्ज्ञिरूपस्यासभवात्सञ्ज्ञाया निवृत्तेस्तन्निमित्तस्य समासादिकार्यस्यापि निवृत्ते किमव्ययविशेषणेनेति। नैवम्। स्यादिनिवृत्ताप्येकदेशविकृतस्यानन्यत्वात्स एवाय सञ्ज्ञीति सञ्ज्ञा न निवर्त्तते। यस्मिन्वा तद्रूप न निवर्त्तते तत्प्रत्युदाहरणम् यथा पुर करोतीति नानार्थकमव्ययविशेषणमुत्तरार्थम् ॥—**गत्यर्थवदो**— ॥ अत्र समासान्तविधेरनित्यत्वादत एव निर्देशाद्वा 'चवर्गदषह'–इति समासान्तो न भवति। अवतेरचि पृषोदरादित्वाद्वकारस्य छत्वे 'स्वरेभ्य' इति द्वित्वे **अच्छ** इति अभ्यादावर्थेऽव्यय निर्मलादावनव्ययम् ॥—**मध्येपदे** ॥— ॥—**अनत्याधाने** इति। अत्र 'विभक्तिसमीप'—इत्यत्यनेनार्थाभावेऽव्ययीभाव। तस्मिन्नपि 'सप्तम्या वा' इति विकल्पादमूभावाभाव। तत्पुरुषो वा ॥—**सप्तम्येकवचनान्तप्रतिरूपके**त्यत्र प्रतिगत सादृश्येन प्रतिपन्न रूप शब्दस्य तत्त्व श्रुतिर्यैस्तानि प्रतिरूपकाणि सप्तम्या एकवचन तदन्ताना प्रतिरूपकाणि सप्तम्येकवचनान्तानि प्रतिरूपकाण्येषामिति वा विग्रह ॥—**उपश्लेष** इत्यत्र सन्निपत्ययोग सर्वप्रकार

धानेऽर्थे वर्तमानानि कृगो धातोः संबन्धीनि गतिसंज्ञानि भवन्ति वा तस्माच्च धातोः प्रागेव प्रयुज्यन्ते । अत्याधानम् *उपश्लेष आश्चर्यं च । ततोऽन्यदनत्याधानम् । मध्येकृत्य । मध्ये कृत्वा । पदेकृत्य । पदे कृत्वा । *निवचनेकृत्य । निवचने कृत्वा । निवचने वचनाभावः । वाचं नियम्येत्यर्थः । मनसिकृत्य मनसि कृत्वा । उरसि कृत्य । उरसि कृत्वा । उभयत्र निश्चित्येत्यर्थः । अनत्याधान इति किम् । मध्ये कृत्वा धान्यराशिं स्थिता हस्तिनः । पदे कृत्वा शिरः शेते । मनसि कृत्वा सुखं गतः । उरसि कृत्वा पाणिं शेते । अव्ययमित्येव । *मध्ये कृत्वा वाचं तिष्ठतीत्यादि ॥ ११ ॥ ***उपाजेऽन्वाजे ॥ ३ । १ । १२ ॥** एते अव्यये सप्तम्येकवचनान्तप्रतिरूपके स्वभावाद्दुर्बलस्य *भग्नस्य वा बलाधाने वर्तमाने कृगो धातोः संबन्धिनी गतिसंज्ञे वा भवतः । तस्माच्च धातोः प्रागेव प्रयुज्येते । उपाजेकृत्य । उपाजे कृत्वा । अन्वाजेकृत्य । अन्वाजे कृत्वा । दुर्बलस्य भग्नस्य वा बलाधानं कृत्वेत्यर्थः ॥ १२ ॥ ***स्वाम्येऽधिः । ३ । १ । १३ ॥** अधीत्येतदव्ययं स्वामित्वे गम्यमाने कृगो धातोः संबन्धि गतिसंज्ञं वा भवति । तस्माच्च धातोः प्रागेव प्रयुज्यते । चैत्रं ग्रामेऽधिकृत्याधि कृत्वा वा गतः । स्वामिनं कृत्वेत्यर्थः । स्वाम्य इति किम् । चिन्तया ग्राममधिकृत्य । उद्दिश्येत्यर्थः । सार्थकत्वे उपसर्गसंज्ञकत्वात् नित्यं प्राप्ते पक्षे प्रतिषेधार्थं वचनम् । अनर्थकत्वे तु विधानार्थम् । *प्रादिरुपसर्ग इति वर्तते । तेनोपसर्गसंज्ञापि विकल्प्यते इति कृत्वाधोति *प्राक्त्वेऽप्यनियमः ॥ १३ ॥ ***साक्षादादिश्च्व्यर्थे ॥** ३ । १ । १४ ॥ साक्षादादयः शब्दाश्च्व्यर्थे वर्तमानाः कृगो धातोः संबन्धिनो गतिसंज्ञा वा भवन्ति । तस्माच्च धातोः प्रागेव प्रयुज्यन्ते । साक्षात्कृत्य । साक्षात् कृत्वा । असाक्षाद्भूतं साक्षाद्भूतं कृत्वेत्यर्थः । एवं मिथ्याकृत्य मिथ्या कृत्वा । च्व्यर्थ इति किम् । यदा साक्षाद्भूतमेव किंचित् करोति तदा साक्षात्कृत्वेत्येव भवति । *च्व्यन्तानां तु 'ऊरी'—(३-१-२) आदिसूत्रेण नित्यमेव गतिसंज्ञा । लवणीकृत्य । उष्णीकृत्य ॥ *साक्षात् *मिथ्या *चिन्ता *भद्रा रोचना लोचना *अमा *आस्था *श्रद्धा *प्राजर्या प्राजुरा प्राजरुहा *बीजर्या

---

साधारणमुच्यते न तु संयोगमात्रं मध्येइत्यादीनां अव्ययत्वात्पृषोदरादिनिपातनादेकारान्तत्वमिकारान्तत्वं न ॥—**निवचन** इत्यत्र तु भूगो वचनेर्वा 'करणाधारे' इति आदि वचनस्याभाव इति निशब्देनाऽभावोऽभिधीयते पृषोदरादित्वादेकारे न निवचने इति ॥—**मध्ये कृत्वा वाचं तिष्ठतीति** । मध्ये इति औपचारिकोऽयमाधार इति वाचोऽनत्याधानमस्ति । वचनं हि शब्दप्रकाशनफलं न केनापि सह समवेति ॥—**उपाजे**— ॥ उपअनुइत्येतत्पूर्वादजतेर्घञि पृषोदरादित्वादेकारे उपाजे अन्वाजे ॥—**भग्नस्य वा बलाधानमि**त्यत्र शकटस्य धुरोऽक्षस्य वा भग्नस्य यत्काष्ठमुपधीयते तदुपाजे अन्वाजे इति नोच्यते ॥—**स्वाम्येऽधि** ॥—**प्रादिरुपसर्ग इति वर्त्तते** इति । प्रोक्ते सूत्रे मण्डूकप्लुतिन्यायेन प्रादिरुपसर्ग इति वर्त्तते न ऊर्यादिसूत्रेषु तेन ऊर्यादीनां न उपसर्गसंज्ञा । ततश्च ऊरी स्यादित्यादौ 'प्रादुरुपसर्गा'— इति न पत्वम् ॥—**प्राक्त्वेऽप्यनियम** इति । न केवलं समासे एवेत्यर्थः । स्वामिपूर्वं करोतिर्विनियोगे वर्त्तते तत्कथं **स्वामित्वे गम्यमान** इत्युच्यते । सत्यम् । विनियोगोऽपि चेत् स्वामित्वविषयो भवति ॥—**साक्षादादि**—॥—**च्व्यन्तानां** त्विति । अर्थग्रहणात् च्व्यन्तानां विकल्पो न भवति । साक्षादिति सादृश्यप्रत्यक्षयोः ॥—**मिथ्येति** अलीके ॥—**चिन्तेति** मानसे व्यापारे ॥—**भद्रादयस्य** प्रशंसायाम् ॥—**अमेति** सहार्थे ॥—**आस्थेति** । आदरप्रतिज्ञयोः ॥—**श्रद्धादयः** पदं शोभार्थे ॥—**प्राजर्येति** रहःसमवायसंयोगसामर्थ्येषु ॥—**बीजर्या बीजरुहेति** बीज-

वीजरुहा *संसर्पा। अर्थे *अग्नौ वशे *विकपने प्रकपने *विसहने प्रसहने। अर्थेप्रभृतयः सप्तम्येकवचनान्तप्रतिरूपकाः स्वभावात्*निपाताद्वा। *लवणम् *उष्णम् *शीतम् *उदकम् *आर्द्रम्। लवणादीनामेतत्सूत्रविहितगतिसंज्ञासंनियोग एव *मान्तत्वं निपात्यते। प्रादुस् आविस् नमस् इति साक्षादादिः ॥ १४ ॥ **नित्यं हस्तेपाणावुद्वाहे** ॥ ३ । १ । १५ ॥ हस्तेपाणावित्येतौ सप्तम्येकवचनान्तप्रतिरूपकावव्ययौ। सप्तम्यन्तावनव्ययावित्येके। तावुद्वाहे दारकर्मण्यर्थे गम्यमाने कृगो धातोः संबन्धिनौ गतिसंज्ञौ नित्यं भवतः तस्माच्च धातोः प्राक् प्रयुज्येते। हस्तेकृत्य। पाणौकृत्य। भार्यां कृत्वेत्यर्थः। उद्वाह इति किम्। हस्ते कृत्वा कार्षापणं गतः। नित्यग्रहणाद्वानिवृत्तिः ॥ १५ ॥ ***प्राध्वं बन्धे** ॥ ३ । १ । १६ ॥ प्राध्वमित्येतन्मकारान्तमव्ययमानुकूल्ये वर्तते। तच्चानुकूल्यं यदा *बन्धहेतुकं भवति तदा *बन्ध इत्युच्यते। अनेकार्थत्वाद्वा निपातानां मुख्य एवास्य बन्धोऽर्थः। तत्र वर्तमानः प्राध्वंशब्दः कृगो धातोः संबन्धी गतिसंज्ञो भवति। तस्माच्च धातोः प्रागेव प्रयुज्यते। प्राध्वंकृत्य। बन्धनेनानुकूल्यं कृत्वेत्यर्थः। बन्ध इति किम्। प्राध्वं कृत्वा शकटं गतः ॥ १६ ॥ ***जीविकोपनिषदौपम्ये** ॥ ३ । १ । १७ ॥ जीविकोपनिषच्छब्दौ औपम्ये गम्यमाने कृगो धातोः संबन्धिनौ गतिसंज्ञौ भवतः तस्माच्च धातोः प्रागेव प्रयुज्येते। जीविकाकृत्य। उपनिषत्कृत्य। जीविकामिवोपनिषदमिव कृत्वेत्यर्थः। औपम्य इति किम्। जीविकां कृत्वा, उपनिषदं कृत्वा गतः ॥ १७ ॥ ***नाम नाम्नैकार्थ्ये समासो बहुलम्**

---

प्रसवनेपि ॥—**संसर्पेति** प्रयोजनसवरणयो ॥—**अग्नाविति** तैक्ष्ण्ये ॥—**वशे** इति अस्वातन्त्र्ये ॥—**विकपने प्रकपने** इति। उभौ वैरूप्ये। विकपने हिंसायां प्रकपने इत्यन्ये ॥—**विसहने प्रसहने** इति उत्साहे सामर्थ्ये च ॥—**निपाताद्वेति**। आकारान्तानां ध्वनानां निपातनादाकारान्तत्वं न तु आबन्तत्वम् ॥—**लवणमिति** रुच्यर्थे ॥—**उष्णमिति** अभिभवे ॥—**शीतमिति** अनादरे ॥—**उदकमिति** क्लेदे द्रवे च ॥—**आर्द्रमिति** सोदकाभिनवयो ॥—**मान्तत्वं निपात्यत** इति। तेन लवणीकृत्येत्यादौ पूर्वसूत्रविहितगतिसंज्ञासंनियोगे न भवति। तथा लवणा कृत्वा यवागू भुङ्क्ते। शीत कृत शीता कृता शीता कृता इत्यादावभिधेयवल्लिङ्गे गतिसंज्ञाया अभावान्मान्ताभाव. ॥—**प्राध्वं बन्धे** ॥—**बन्धहेतुकमिति**। बन्धजनितमित्यर्थ.। दुष्टाश्वादिर्हि बन्धनेनानुकूल्ये व्यवस्थाप्यते ॥—**बन्ध इत्युच्यते** इति कार्ये कारणोपचारात्। कारण बन्ध कार्यमानुकूल्य बन्ध एवानुकूल्ये वर्तते ॥—**जीविकोपनिषदौपम्ये** ॥ जीवन जीविका 'भाव'—इति णक। तत आपीत्वे च जीविका। अथवा जीव्यतेऽनयेति 'नाम्नि पुंसि च' इति णके जीविका जीवनोपाय। औपम्य इत्यत्र उपमीयतेऽनयेति 'उपसर्गादात'—इति अडि भिदादित्वाद्वा उपमा। तस्या भाव औपम्यम् उपमानोपमेयभावलक्षणसबन्ध। समासकृत्तद्धितेषु सबन्धाभिधानमिति सबन्धे भावप्रत्ययोत्पादात् ॥—**नाम नाम्नैकार्थ्ये समासो बहुलम्** ॥ ननु चात्र सहग्रहण कर्त्तव्य सहभूतयो समाससंज्ञार्थम्। न च नाम्नेति तृतीयया सहयोगाक्षेपात् 'वृद्धो यूना'—इतिवत् एकैकस्य न भविष्यतीति वक्तव्यम्। यथा पुत्रेण सहागत इति द्वयोरपि तातपुत्रयोरागमनेन सबन्ध एवमेकैकस्य समाससंज्ञा स्यात्। सहग्रहणात्त्वेका समाससंज्ञा सहभूतयोर्भवति। दोषाभावात् (एकैकस्य समाससंज्ञेतिशेष) भवत्विति चेत्। यद्यपि समुदायरूपवाक्यवर्जनात् पर्युदासात् समाससमुदायस्य नामत्वे दोषाभाव', तथापि ऋक्पाद इत्यादौ समासान्ते दोष। सत्यम्। यथा प्रत्यवयव वाक्यपरिसमाप्तिर्दृष्टा यथा यज्ञदत्तदेवदत्तविष्णुमित्रा भोज्यन्तामिति। न चोच्यते प्रत्येकमिति प्रत्येक च भुजिक्रिया समाप्यते। एवमत्रापि (स) प्रत्येक समाससंज्ञा सत्यपि नोच्यते। यद्वा समास इति महतीय संज्ञा अन्वर्था विज्ञायते समस्यन्ते सक्षिप्यन्ते पदान्यस्मिन्निति। समुदायविषयाया तु संज्ञाया पूर्वोत्तरपदयोरेकत्वेन न्यसन भवति। तस्मात्समास

एवमनाज्ञाताध्यायकः । अयुताध्यायकः । अद्भुताध्यायकः । भृशाध्यायकः । घोराध्यायकः । परमाध्यायकः स्वध्यायकः अत्यध्यायकः इत्यादिषु क्रियाविशेषणस्य क्रियावता समासः ॥ तथा सर्वश्चर्मणा कृतः सर्वचर्मीणो रथः । अद्य श्वो वा विजायते अद्यश्वीना गौः । दशभिरेकादश गृह्णाति दशैकादशिकः । ऊर्ध्वं *मुहूर्ताद्भवम्*ऊर्ध्वमौहूर्तिकम् । एवमौर्ध्वदेहिकम् । और्ध्वदमिकम् । कृतः पूर्वं कटोऽनेन कृतपूर्वी कटम् । भुक्तपूर्वी ओदनम् । गतपूर्वी ग्राममित्यादिषु तद्धितार्थे समासः ॥ तथा कन्येइव, दंपतीइव, *वाससीइव, रोदसीइवेत्यादिष्विवेनालुप् समासः । ऐकपद्यं च समासफलम् ॥ तथा भूतः पूर्वं भूतपूर्वः । *एवं दृष्टपूर्वः, श्रुतपूर्वः । सर्वेषु चैषु विशेषसंज्ञाऽप्राप्तौ अनेनैव समासः । बहुलमिति शिष्टप्रयोगानुसरणार्थम् । नामेति किम् । *चरन्ति गावो धनमस्य । नाम्नेति किम् । चैत्रः पचति । बहुलवचनादेव क्वचिदनामापि समस्यते । भास्करोऽत्रेति भास्करं नभः । नभसा सामानाधिकरण्यं समासफलम् । क्वचिदनाम्नापि । अनुव्यचलत् । अनुप्रावर्षत् । यद् व्यकरोत् । यत् परियन्ति । अत्र *नित्यसंध्यादिः समासफलम् । समासस्य च नामत्वेऽपि संख्यायास्त्यादिभिरेवोक्तत्वात्स्यादयो न भवन्ति । *पदत्वार्थमुत्पन्नस्य वा प्रथमैकवचनस्य *त्याद्यन्तार्थप्राधान्यात् नपुंसकत्वे लोपो भवति । समासप्रदेशा 'वौष्ठौतौ समासे' (१-२-१७) इत्यादयः ॥ १८ ॥ ***सुज्वार्थे संख्या संख्येये संख्यया बहुव्रीहिः ॥ ३ । १ । १९ ॥** सुचोऽर्थो वारः । वार्थो *विकल्पः संशयो वा । सुज्वार्थे वर्तमानं संख्यावाचि नाम संख्येये वर्तमानेन संख्यावाचिना नाम्ना सहैकार्थ्ये समाससंज्ञं बहुव्रीहिसंज्ञं च भवति । द्विर्दश द्विदशाः । त्रिर्दश त्रिदशाः । द्विर्विंशतिः द्विविंशाः । एवं त्रिविंशा वृक्षाः । सुजर्थस्य समासेनैवाभिहितत्वात् सुचोऽप्रयोगः । द्वौ वा त्रयो वा द्वित्राः । त्रिचतुराः । पञ्चषाः । सप्ताष्टाः । सुज्वार्थ इति किम् । द्वावेव न त्रयः । संख्येति किम् । गावो वा दश वा । संख्ययेति किम् । दश वा गावो वा । संख्येये इति किम् । द्विर्विंशतिर्गवाम् । बहुव्रीहिप्रदेशा 'वा बहुव्रीहेः' (२-४-५) इत्यादयः ॥ १९ ॥

---

त्व भवत्येव ॥—**ऊर्ध्वमौहूर्त्तिकमिति** । ऊर्ध्वं मुहूर्त्ताद्यो भव काल तत्र भव 'अध्यात्मादिभ्य इकण्' 'सप्तमी चोर्ध्वमौहूर्तिक इति निर्देशादुत्तरपदवृद्धि ॥—**वाससीइवेति** । अत्रोत्तरपदप्राधान्यात्से 'अव्ययस्य' इति लुप् ॥—**एव दृष्टपूर्व्व** इति । पूर्वं दृष्टा इत्यपि कृते निपातनात् ह्रस्वत्वम् । तेन न मे श्रुता नापि च दृष्टपूर्वेति सिद्धम् । सामान्येन समास कृत्वा पश्चात्स्त्रीत्वे वा ॥—**चरन्ति गावो धनमस्येति** । अत्र समासे चरन्तिगुरिति स्यात् ॥—**नित्यसंध्यादिरिति** । ऐकपद्यात् 'ह्रस्वोऽपदे वा' इति ह्रस्वविकल्पाप्रवृत्तेर्नित्य यत्वादि भवतीत्यर्थ । अन्ये त्वाहु एको द्वावित्यादिवदुक्तेष्वप्येकत्वादिषु नामार्थत्वात् केवलायाश्च प्रकृतेः प्रयोगाभावाद्वाच्यमत्र प्रथमैकवचनेन तस च 'दीर्घङ्याब्'—इत्यनेन लुप् 'अनतो लुप्' इति तन्मतग्रहणायाह—**पदत्वार्थमिति** ॥—**त्याद्यन्तार्थप्राधान्यादिति** । त्याद्यन्तस्य साध्यार्थप्रधानत्वादसत्त्ववाचित्वम् असत्त्वे च सामान्य सामान्य च नपुसक तन 'अनतो लुप्' ॥—**सुज्वार्थे**—॥—**विकल्प. संशयो वेति** । ननु विकल्पसंशययो को भेद । उच्यते । निर्णये सति विकल्प । यथा देवदत्तो भोज्यता चैत्रो वा । यद्वा विकल्पे क्रियाप्रवृत्ति संशये तु न । विकल्पे क्रियाप्रवृत्तिर्यथा द्वित्रेभ्यो देहि भोजनम् । ततश्च द्वाभ्या त्रिभ्यो वा देहीति विकल्पो, गम्यते । अस्मिन् सति क्रियाप्रवृत्ति । संशये क्रियाप्रवृत्त्यभावो यथा पुरुषेभ्यो देहीत्युक्ते त्रिभ्यो दापित चतुर्भ्यो वेति संशेते । न जाने त्रयश्चत्वारो वा आगता इति च संशय अनिर्णयरूप. प्रतिभास. । ननु द्विदशा इत्यादौ वार्थे द्विना इत्यादौ तु सन्निकृष्टसंख्याभिधायिनि सुजर्थे समास. कस्मान्न क्रियते । उच्यते । यदि नेष्यते तदाऽनभिधानात् ॥—**आसन्नादूरा**—॥—पूरणमभि-

*आसन्नादूराधिकाध्यर्धार्धादिपूरणं द्वितीयाद्यन्यार्थे ॥ ३ । १ । २० ॥ आसन्न अदूर अधिक अध्यर्ध इत्येतानि अर्धशब्दपूर्वपदं च *पूरणप्रत्ययान्तं नाम संख्यावाचिना नाम्नैकार्थ्ये समस्यते *द्वितीयाद्यन्तस्यान्यस्य पदस्यार्थे संख्येयरूपेऽभिधेये स च समासो बहुव्रीहिसंज्ञो भवति । आसन्ना दश दशत्वं येषां येभ्यो वा ते *आसन्नदशाः नवैकादश वा । *एवमासन्नविंशाः एकोनविंशतिः एकविंशतिर्वा । आसन्नत्रिंशाः एकोनत्रिंशदेकत्रिंशद्वा । एवम्*अदूरदशाः, अदूरविंशाः, अदूरत्रिंशाः । *अधिका दश *येभ्यो येषु वा तेऽधिकदशाः एकादशादयः । अधिकत्वं च दशानाम्*एकाद्यपेक्षम् । अवयवेन विग्रहः समुदायः समासार्थः । एवम्*अधिकविंशाः एकविंशसादयः । अधिकत्रिंशाः एकत्रिंशदादयः । अध्यर्धा विंशतिर्येषां तेऽध्यर्धविंशाः त्रिंशदित्यर्थः । एवमध्यर्धत्रिंशाः, अध्यर्धचत्वारिंशाः । अर्धपञ्चमा विंशतयो येषां ते*अर्धपञ्चमविंशाः । नवतिरित्यर्थः । एवमर्धचतुर्थविंशाः । सप्ततिरित्यर्थः । अर्धतृतीयविंशाः पञ्चाशदित्यर्थः । आसन्नादिग्रहणं किम् । संनिकृष्टा दश येषां ते *संनिकृष्टदशानः । पूरणस्यार्धपूर्वत्वविशेषणं किम् । पञ्चमी विंशतिर्येषां ते पञ्चमीविंशतयः । ऊनपञ्चमा विंशतयो येषां ते ऊनपञ्चमविंशतयः ।

---

धेयत्वेन विधते यस्य प्रत्ययस्य यस्मिन्वा अत्रादित्वादकारे पूरणार्थविहित प्रत्यय उच्यते । तश च केवलस्यासंभवात्तदन्त शब्दस्तस्य चार्धादीति विशेषणमित्याह—**पूरणप्रत्ययान्तमिति** । अर्द्ध आदिर्यस्य स नासो पूरणश्च । द्वितीया आदिर्यासां विभक्तीनां ता **द्वितीयादयः** द्वितीयादयश्च तत् अन्यच्च तस्य अर्थः ॥—**आसन्नदशा** इति । आ दशभ्य सङ्ख्येत्यस्य प्रायिकत्वादत्र दशन्शब्द सङ्ख्याने वर्त्तते । पर सङ्ख्येयेन सह अभेदे बहुवचनम् । यदि सङ्ख्येयवृत्तिना दशन्शब्देनासन्ना दश येषामित्येव वाक्य क्रियते न दशत्वमिति तदा सङ्ख्यावाचिनेति वृत्त्यशेन निषेधान्न स्यादनेन समास नवैकादश वेति पर्यायश्च विघटेत । यत इत्थं कृते एकोनविंशत्येकविंशतिसङ्ख्याप्रतीति । यथा दशशब्दो दशत्वे सङ्ख्याने वृत्तस्तथा विंशत्यादयोऽपीत्याह—**एवमासन्नविंशा** इति । आसन्नदशा इत्यादिषु त्वा इत्यनेन पूर्वनिपात सिद्ध एव । **अदूरदशा** इत्यादिषु तु ' विशेषणसर्वादि '—इति सङ्ख्याया पूर्वनिपातो न भवति । ' प्रमाणीसङ्ख्याड्ड ' इति सङ्ख्याया समासान्तविधानात् ॥—**अधिका दश येभ्यो येषु वेति** । एकाद्यवयवापेक्षया यद्दशानामधिकत्व तत् एकादशादिसमुदायापेक्षयापि ज्ञेय तेन अधिकयोगे ' अधिकेन भूयसस्ते ' इति सप्तमीपञ्चम्यो सिद्धये यच्छब्देन बहूनामेकादशादीनामभिधानात् पञ्चमीसप्तम्योर्बहुवचनमित्याह—**येभ्यो येषु वेति** । एकादशादिषु दशानामधिकत्व किमपेक्ष मित्याह—**एकाद्यपेक्षमिति** । ननु तर्हि कथमधिका दश यस्येत्येकवचनेन वाक्य न कृतम् । उच्यते । बहुवचनमवयवावयविनोरभेदविवक्षया । एकादशादयोऽवयवा । तत उपचारादवयवस्यैकस्यावयविना बहुवचन पश्चादवयवे च (न) विग्रह क्रियतेऽधिकशब्देन एकादय आक्षिप्यन्ते इत्येकोऽवयव दश इति द्वितीयोऽवयवस्तयोर्विग्रह । येषामिति समासार्थ । स तु समुदाय एकादशादि. । कोऽर्थ, येभ्यो येषु वा एकादशादिसमुदायेषु एकाद्यपेक्षयाऽधिका दश इत्यर्थ ॥—**अधिकविंशा** इति । अव्युत्पन्नोऽयमधिकशब्दस्तेन ' तद्धिताकक '—इति न पुवन्निषेध । अन्यथा कोपान्त्यद्वारा तन्निषेध स्यात् । एवमधिकत्रिंशा इत्यपि ॥—**अर्द्धपञ्चमविंशा** इति । यद्यप्यध्यर्द्धस्यार्द्धादिपूरणस्य च ' कसमासेऽध्यर्द्ध ' ' अर्द्धपूर्वपद पूरण ' इत्याभ्या सङ्ख्यासज्ञाऽस्ति तथापि पूर्वेण सुज्वार्थे सङ्ख्याया समासस्याविधीयमानत्वान्न सिध्यतीत्युपादानम् । प्रत्यय प्रकृत्यादेरिति न्यायेन पूरणप्रत्यये मटि पञ्चमीत्यस्य पूरणप्रत्ययान्तता नार्द्धपञ्चमेत्यस्य तेन ' तद्धिताकक ' इति न पुवन्निषेध । अर्धपञ्चमी विंशतिर्यासु ' पूरणीभ्यस्तत्प्राधान्येऽप् ' अर्द्ध पञ्चम्या चतस्रो विंशतय पूर्णाः पञ्चमी विंशतिरर्द्धमित्यर्थ ॥—**संनिकृष्टदशान** इति । अत्र ' प्रमाणीसङ्ख्याड्ड ' इति न भवति । तत्र प्रतिपदोक्तस्य समासस्य ग्रहणात् ॥—**अर्द्धद्वया विंशतयो येषामिति** । अर्द्ध द्वय विंशतियांसु एक दशकलक्षणमर्द्ध द्वितीय तु द्विभागीकृत

पूरणमिति किम्। *अर्धद्वया विंशतयो येषां तेऽर्धद्वयविंशतयः। द्वितीयाद्यन्यार्थ इति किम्। आसन्ना दश, अधिका दशभिः। तथाधिका षष्टिर्वर्षाण्यस्येति वाक्येऽधिकषष्टिशब्दयोरनेन द्विपदो बहुव्रीहिर्न भवति। यदि स्यात्समासान्तो डः प्रसज्येत। न चासाविष्यते। उत्तरेण तु त्रिपदो बहुव्रीहिर्भवत्येव। *अधिकषष्टिवर्षः। अधिका षष्टिर्येषां वर्षाणामित्यत्र त्वन्यार्थत्वेऽपि अनभिधानान्न भवति। 'एकार्थं चानेकं च' (३।१।२२) इत्यनेनैव सिद्धे प्रतिपदविधानं डप्रत्ययविधावेतत्संप्रत्ययार्थम्। एवमुत्तरसूत्रमपि ॥ २० ॥ **अव्ययम् ॥३।१।२१॥** अव्ययं नाम संख्यावाचिना नाम्नैकार्थ्ये समस्यते द्वितीयाद्यन्यार्थे संख्येयेऽभिधेये स च समासो बहुव्रीहिसंज्ञो भवति। उप समीपे दश येषां ते उपदशाः नवैकादश वा। एवमुपविंशाः। उपत्रिंशाः। उपचत्वारिंशाः। योगविभाग उत्तरार्थः ॥२१॥ ***एकार्थं चानेकं च ॥ ३ । १ । २२ ॥** *एकः समानोऽर्थोऽधिकरणं यस्य तदेकार्थम् समानाधिकरणम् एकमनेकं चैकार्थं नामाव्ययं च नाम्ना द्वितीयाद्यन्तस्यान्यस्य पदस्यार्थे समस्यते स च समासो बहुव्रीहिसंज्ञो भवति। आरूढो *वानरो यं स आरूढवानरो वृक्षः। ऊढः रथः येन स ऊढरथोऽनड्वान्। उपहृतो बलिरस्यै सा *उपहृतबलिर्यक्षी। भीताः शत्रवो यस्मात् स भीतशत्रुर्नृपः। चित्रा गावो यस्य स *चित्रगुश्चैत्रः। के सब्रह्मचारिणोऽस्य किंसब्रह्मचारी। अर्धं तृतीयमेषामर्धतृतीयाः। वीराः पुरुषाः सन्त्यस्मिन् वीरपुरुषको ग्रामः। अनेकं च, आरूढा बहवो *वानरा यं स आरूढबहुवानरो वृक्षः। ऊढा बहवो रथा अनेन ऊढबहुरथोऽनड्वान्।

---

कि भवति पश्च ॥—**अधिकषष्टिवर्ष** इत्यत्र अधिका षष्टिर्वर्षाण्यस्य इति विग्रहे 'दिगधिक सज्ञा'—इति कर्मधारयतत्पुरुष इति 'पुवत्कर्मधारये' इत्यादिना बाधकबाधनार्थं पुवद्भावो भवति । यदा तु 'आसन्नादूरा–' इत्यमुना द्विपदो बहुव्रीहि स्यात्तदा 'तद्धिताक'—इत्यादिना पुवन्निषेध स्यात् । ननु यथा बहुव्रीहिणा विभक्त्यर्थस्याभिधानात् षष्ठ्यादयो न भवन्त्येव लिङ्गसख्ययोरभिधानात्तयोर्द्योतकत्वात्डयादयो न प्राप्नुवन्ति । स्वार्थिकत्वात् डयादीना समासेन अभिहितेऽपि स्त्रीत्वादौ तद्द्योतनाय भवन्ति । स्त्रिया यद्वर्त्तते नाम तस्मात् डयादयो भवन्तीति हि तत्रार्थ.। तथा चित्रगुरिति समासेन नामार्थमात्रस्य कर्म्मादिशक्तिरहितस्यैकत्वादय उक्तास्तत कर्म्मादिगतैकत्वप्रतिपादनाय वचनानि भवन्ति । चित्रगु पश्य चित्रगुणा कृतमिति । प्रथमा तर्हि न प्राप्नोति समासेन सख्याया अभिधानात् । नैवम् । सापि न केवला प्रकृति प्रयोक्तव्या न च केवल प्रत्यय इति समयाद्भविष्यति । अथवा यदा चित्रगुरेकत्वविशिष्टो नामार्थः प्रतिपिपादयिषितस्तदा विभक्त्या विनासो न शक्यते प्रत्याययितुमिति प्रथमैकवचन विधेयमेव द्वित्वबहुत्वयोर्द्विवचनबहुवचनविधि ॥—**एकार्थं च** ॥—अत्र बहुव्रीहेरेव ग्रहणमत आह—**एकः समानेत्यादि** ॥—**उपहृतबलिर्यक्षीति** । अत्रोपहृतिक्रियाकर्म्मणा सबध्यमानाया यक्ष्या. सम्प्रदानत्वमुपहरणस्य दानरूपत्वात् ॥—**समानोऽर्थोऽधिकरणमिति** । यथा आरूढो वानरो यमित्यत्र आरूढोऽपि स वानरोऽपि स ॥—**चित्रगुश्चैत्र** इति । ननु चित्रा गावो यस्येत्यत्र हि देवदत्तार्थो विशेषण चित्रगव्यो विशेष्य वृत्तो च चित्रगव्यो विशेषण देवदत्तार्थो विशेष्य तदेतत्कथमुच्यते विचित्रा हि शब्दशक्तय इति । नन्वन्यस्य पदस्यार्थाभिधाने चित्रगुश्चैत्र इत्यादावनुप्रयोगानुपपत्ति चैत्रपदस्य हि यावानर्थस्तावान् बहुव्रीहिणा वक्तव्यो द्वितीयाद्यन्यार्थे तस्य विधानात्ततो गतार्थत्वादनुप्रयोगो न प्राप्नोति । यथा चार्थे द्वन्द्वविधानाद्द्वन्द्वे चकारस्याप्रयोग । नैष दोष' । चित्रगुशब्देन तद्वन्मात्रसामान्यमुच्यते न तु विशेष इति तत्रावश्य विशेषणार्थिना विशेषार्थिना विशेषोऽनुप्रयोक्तव्य । चित्रगु कश्चैत्र इति । ननु भवतु चित्रा गावोऽस्येत्येव सामान्येन समासे कृतेऽन्यपदार्थसामान्यस्य बहुव्रीहिणाऽभिधानाद्विशेषस्यानुप्रयोग । यदा तु चित्रा गावोऽस्य देवदत्तस्येति विशिष्टेऽन्यपदार्थे बहुव्रीहि क्रियते तदाऽनुप्रयोगासिद्धि । नैवम् । यतो नेदमुभय युगपद्भवति वाक्य समासश्च । लौकिके प्रयोगे

शोभनाः सूक्ष्मजटाः केशा अस्य सुसूक्ष्मजटकेशः। शोभन नतमजिनंवासोऽस्य सुनताजिनवासाः। संजातानि *अन्तेषु शितीनि रन्ध्राण्यस्मिन् समन्तशितिरन्ध्रः। पञ्च गावो धनमस्य पञ्चगवधनः। पञ्च नावः प्रिया अस्य *पञ्चनावप्रियः। मत्ता बहवो मातङ्गा यत्र तन्मत्तबहुमातङ्गं वनम्। पञ्च पूला धनमस्य पञ्चपूलधनः। पञ्च कुमार्यः प्रिया अस्य पञ्चकुमारीप्रियः। नाम नाम्ना इति विवक्षितसंख्यत्वादनेकस्य समासो न स्यादिस्यनेकग्रहणम्। अव्ययं खल्वपि। उच्चैर्मुखमस्य उच्चैर्मुखः। एवं नीचैर्मुखः। अन्तरङ्गान्यस्यान्तरङ्गः। एवं वहिरङ्गः। कर्तुं कामोऽस्य कर्तुकामः। हर्तुं मनोऽस्य हर्तुमनाः। व्यधिकरणत्वादव्ययस्य न प्राप्नोतीत्यव्ययानुकर्षणार्थश्चकारः। सामानाधिकरण्ये तु 'एकार्थम्–' (३–१–२२) इत्यनेनापि सिध्यति। अस्ति क्षीरमस्या अस्तिक्षीरा गौः, अस्तिधना राजधानीत्यादि। क्रियावचनत्वे लस्त्यादीना 'नाम नाम्ना'–(३--१--१८) इत्यादिनैव बहुलवचनात् सिद्धम्। एकार्थग्रहणं किम्। पञ्चभिर्भुक्तमस्य। द्वितीयाद्यन्यार्थ इत्येव। वृष्टे मेघे गतः। *यथा मे माता तथा मे पिता। *सुस्नातं भोः। इह कस्मान्न भवति, वृष्टे मेघे गतं पश्य। वहिरङ्गात्र द्वितीयान्ततेति। *शब्दे कार्यासंभवादर्थे लब्धे यदर्थग्रहणं तदन्यपदार्थस्य या लिङ्गसंख्याविभक्तयस्ता यथा स्युरित्येवमर्थम्। वहुलाधिकारात् राजन्वती भूरनेन, प्राग्ग्रामोऽस्मात्, पञ्च भुक्तवन्तोऽस्य, इत्यादिषु न भवति ॥ २२ ॥ *उष्ट्रमुखादयः ॥ ३ । १ । २३ ॥ उष्ट्रमुखादयो बहुलं बहुव्रीहिसमासा निपात्यन्ते। उष्ट्रमुखमिव मुखमस्य उष्ट्रमुख। वृष-

---

वृत्तिवाक्ययोर्युगपत्प्रयोगाभावादेकेनैवार्थस्य प्रत्यायितत्वादितराप्रयोगात्। तत्र यदा तु वाक्य न तदा समास सामान्येन तदा वृत्ति शब्दशक्तिस्वभावादन्यपदार्थसामान्यमभिधातु शक्नोति न तु विशेषमिति। वा विकल्पेन नर वने रमत्ते 'क्वचित्' इति डे वनरस्तस्यायमिति वा **वानर**, **अन्तेषु शितीनीति**। अर्थकथनमिद विग्रहस्तु अन्तशितीनीति। अवान्तर समास कार्यः ॥—**सूक्ष्मजटाः केशा** इत्यत्र सूक्ष्मा जटा येषा केशानामिति ततस्त्रिपदो बहुव्रीहि । शोभन नत तत सुनतमजिन वासोऽस्येति च बहुव्रीहि । वृत्तौ तूभयसमासप्रदर्शनाय सामान्येन वाक्यमुक्तम्। अन्यथैकार्थत्व न स्यात् ॥— **पञ्चनावप्रिय** इत्यत्राटि समासान्तात् डीर्न बाधन्ते स्वार्थिका क्वचिदित्यत अकारान्तान्नाम्नो डीविधानात् समासमध्ये डीर्न भवतीति न्यासकार । तर्हि कथ पूर्वगवीप्रिय इत्यादि । कश्चित्तु मध्येऽपि डीप्रत्ययमिच्छति ॥—**यथा मे माता तथा मे पितेति** । मे मातेत्याद्यर्थकथनमात्र यावता मे माता मन्मातेति तु विग्रह । ततो यथेति मन्मात्रेति तथेति च त्रयाणा पदाना मत्पित्रा सह समास । यतो य एव मातृसदृश स एव मत्पितेत्येकार्थत्वमस्ति ॥—**सुस्नात भोरिति** । अन्यपदार्थोऽस्ति इति समास प्राप्नोति । अत्रोच्यते । प्रत्यासत्ते समस्यमानयोरेव पदयोरन्यपदार्थे समासोऽत्र तु समुदायस्य तस्य वाक्यस्य तात्पर्यार्थो नावयवभूतयो पदयोर्वाच्योऽन्योऽर्थ इति न भवत्येव समास । समासे हि यथामन्मातृतथामत्पितृक स्यात् । द्वितीयाद्यन्यार्थ इति प्रथमा व्यवच्छेद्या तथा वाक्यार्थश्च । तेन वाक्यार्थे न भवति यथा मे माता तथा मे पिता सुलात ,भोरिति । एतदेव भाव्यते । अस्योदाहरणस्यायमर्थ । यथा कश्चित्केन चित्पृष्ट कीदृश कुलशीलादिना तव पितेति । स आह— यथा मे मातेति । अथवा स्नाहीति कश्चिदुक्त स आह यथा मे मातेति । यथा शुद्धा मे माता तथा पितापीत्यभिजनशुद्धिरपि स्नान किं बाह्येन स्नानेन तत सुस्नात भो इति । ननु द्वितीयाद्यन्यार्थ इत्यत्र किमर्थग्रहणम् । अन्यपद हि शब्द, शब्दस्य च कार्यं न सभवतीत्यर्थो लप्स्यत इत्याह— **शब्दे कार्ये**त्यादि । सत्यमेतत् । लप्स्यत एवार्थः **किंतु तद्** सद्रव्यस्य सलिङ्गस्य ससख्यस्य कृत्स्नस्य अभिधान यथा स्यादित्येवमर्थ कृतमस्त्यारोपाभावे इति लिङ्गानुशासननिरपेक्षम् ॥—**उष्ट्रमुखादय.** ॥ उपमानमुपमेयेन समस्यमान न एकार्थता भेजे स एव चन्द्रस्तदेव मुख न भवत्यतो भिन्नसूत्रम् ॥—

स्कन्ध इव स्कन्धोऽस्य वृषस्कन्धः । हरिणाक्षिणी इवाक्षिणी यस्याः सा हरिणाक्षी । हंसगमनमिव गमनं यस्याः सा हंसगमना । इभकुम्भाविव स्तनौ यस्याः सेभकुम्भस्तनी । एवं नागनासोरूः । चन्द्रमुखी । कमलवदना । बिम्बोष्ठी । चक्रनितम्बा । पितुरिव स्थानमस्य पितृस्थानः । पितरीव स्थानीयमस्मिन् पितृस्थानीयः । इत्यादि । अत्रोपमानमुपमेयेन *सामान्यवाचिना च सह समस्यते । उपमेयसरूपस्य चोपमानपदस्य यथासंभवं लोपः । कण्ठे स्थिता इत्यलुप्समासः । ततः कण्ठेस्थिताः काला यस्य स कण्ठेकालः । एवमुरसिस्थितानि लोमान्यस्योरसिलोमा । एवमुदरेमणिः, *वहेगडुः इत्यादिषु सप्तमीपूर्वपदं समानाधिकरणं समस्यते उत्तरपदस्य च लोपः । व्यधिकरणो वा कण्ठेकालादिषु बहुव्रीहिः । केशसंघातश्चूडा अस्य केशचूडः सुवर्णविकारोऽलंकारोऽस्य सुवर्णालंकारः इत्यादिषु संघातविकारापेक्षया षष्ठ्या समस्तं समानाधिकरणं समस्यते उत्तरपदलोपश्च । केशसंघातचूड , सुवर्णविकारालंकारः इत्यप्यन्यः । तथा प्रपतितानि पर्णान्यस्य प्रपर्णः, प्रपतितपर्णः । प्रपलाशः, प्रपतितपलाशः । उद्रश्मिः, उद्गतरश्मिरित्यादिषु प्रादिपूर्वं धातुजं पदं समस्यते तस्य च विकल्पेन लोपः । तथा अविद्यमान पुत्रोऽस्य अपुत्र , अविद्यमानपुत्रः इत्यादिषु नञ्पूर्वमस्त्यर्थं पदं समस्यते तस्य च वा लोपः । बहुवचनमाकृतिगणार्थम् ॥ २३ ॥ *सहस्तेन ॥ ३ । १ । २४ ॥ सह इत्येतन्नाम तुल्ययोगे विद्यमानार्थे च वर्तमानं तेनेति तृतीयान्तेन नाम्नाऽन्यपदार्थे समस्यते स च समासो बहुव्रीहिसंज्ञो भवति । तुल्ययोगे, सह पुत्रेण सपुत्र आगतः । सच्छात्र आगतः । आगमनमुभयोस्तुल्यम् । विद्यमानार्थे, सह कर्मणा वर्तते सकर्मकः । एवं सलोमकः । सपक्षकः । सधनः । समदः । सदर्पः । सविद्यः । विद्यमानतात्र सहार्थो *न तुल्ययोगः । सह इति किम् । साकं सार्धं सत्रा अमा पुत्रेण । बहुलाधिकारात् विद्यमानार्थे *कचिन्न भवति । सहैव दशभिः पुत्रैर्भारं *वहति गर्दभी । सहैव धनेन भिक्षां भ्रमति । प्रथमान्तान्यपदार्थार्थ आरम्भः । एवमुत्तरत्रापि ॥ २४ ॥ *दिशो रूढ्यान्तराले ॥ ३ । १ । २५ ॥ रूढ्या दिशः सबन्धि

सामान्यवाचिना चेति । साधारणधर्मवाचिनावस्थानादिना रूपेणेत्यर्थ । आदिपनादगुरुस्थानमिव स्थानमस्येत्यादि ॥—वहेगडुरिति । गडुशब्दस्योकारान्तत्वात्पुस्त्वम । न्यासकारस्तु क्लीबत्वमाह । तथा एषु गम्यमानार्थत्वाद्द्वितीयमुखादिशब्दाप्रयोग । मन्दमतिन्युत्पादनायेदमुच्यते । न हि वाक्योपमर्देन समासो विधीयते नित्यत्वाच्छब्दाना पुरुषप्रयत्ननिर्वर्त्या हि शब्दा । न हि येन प्रयत्नेनोष्ट्रमुखशब्दो निर्वर्त्यते तेनैवोष्ट्रमुखमिवेत्यादिकोऽपि भिन्नाधिकरणप्रयत्नत्वाद्भिन्नावेवैताविति । अत एवोच्यतेऽनादिशब्दप्रवाह इति । अनुवादकं च स्मृतिशास्त्र न विधायकमतिप्रसङ्गाच्च । अन्यथा दध्ना उपसिक्त ओदनो दध्योदन गुडेन मिश्रा धाना गुडधाना इत्यादौ समासेऽदृश्यमानानामुपसिक्त इत्यादीना लोपार्थ यत्न कर्त्तव्य स्यात्तस्माद्वृत्तिविषये दधिशब्द उपसिक्तार्थवृत्तिर्गुडशब्दो मिश्रार्थवृत्तिरिति वाक्येनोपदर्श्यते ॥—सहस्तेन । तेनेति तृतीयान्तप्रतिरूपकान्निपातात् तृतीया ॥—न तुल्ययोग इति । ननु तुल्ययोगविद्यमानार्थयो को भेद । उच्यते । क्रियागुणद्रव्यैरुभयो सदृश सबन्धस्तुल्ययोग । विद्यमानार्थता तु न तथा । तथाहि–सकर्म्मकादात्मनेपदमित्युक्ते यथा धातोरात्मनेपद भवति न तथा कर्म्मणोऽपि । तथा सलोमको भोज्यतामिति यथा देवदत्तो भोज्यते न तथा लोमान्यपि । तथा सपक्षक खगो हत इत्यत्र यथा पक्षी हतो न तथा पक्षा अपीति भाव ॥—कचिन्न भवतीति तुल्ययोगे तु भवत्येव ॥—वहति गर्दभीति । अत्र तत्पुत्राणामस्तित्वमेव विवक्षित न तु वहनक्रियेति विद्यमानार्थता ॥—दिशो रूढ्यान्त—॥ दिशि वर्त्तमाना नित्यस्त्रीलिङ्गा एवेति 'परत स्त्री पुवत '—न प्राप्नोतीति सर्वादयोऽस्यादावित्युक्तम् । ये पुनर्दिशि दृष्टा शब्दास्तेषा स्त्रीत्वे परत स्त्रीति भवति

नाम रूढ्यैव दिशः संबन्धिना नाम्नाऽन्तरालेऽन्यपदार्थेऽभिधेये समस्यते स च समासो बहुव्रीहिसंज्ञो भवति । दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा दिक् । एवं पूर्वोत्तरा । उत्तरपश्चिमा । दक्षिणपश्चिमा । *'सर्वादयोऽस्यादौ' ( ३--२--६१ ) इति पूर्वपदस्य पुंवद्भावः । कथं पश्चिमदक्षिणा, पश्चिमोत्तरा । कर्मधारयोऽयम् । बहुव्रीहौ हि सर्वनाम्नः पूर्वनिपातः स्यात् । रूढिग्रहणं यौगिकनिवृत्त्यर्थम् । तेनैन्द्याश्च कौबेर्याश्च दिशोर्यदन्तरालमिति वाक्यमेव ॥ २५ ॥

*तत्रादाय मिथस्तेन प्रहृत्येति सरूपेण युद्धेऽव्ययीभावः ॥ ३ । २ । २६ ॥ तत्रेति सप्तम्यन्तं नाम *मिथ आदायेति क्रियाव्यतिहारे तेनेति तृतीयान्तं मिथः * प्रहृत्येति क्रियाव्यतिहारे सरूपेण समानरूपेण नाम्ना युद्धविषयेऽन्यपदार्थे समस्यते स च समासोऽ*व्ययीभावसंज्ञो भवति । केशेषु च २ मिथो गृहीत्वा कृतं युद्धं *केशाकेशि । एवं कचाकचि । बाहूबाहवि । दण्डैर्दण्डैश्च मिथः प्रहृत्य कृतं युद्धं दण्डादण्डि । एवं यष्टायष्टि । मुष्टामुष्टि । अस्यसि । तत्रेति तेनेति किम् । केशांश्च केशांश्च गृहीत्वा कृतं युद्धम् । मुखं च मुखं च प्रहृत्य कृतं युद्धम् । आदायेति प्रहृत्येति किम् । केशेषु च केशेषु च स्थित्वा कृतं युद्धं गृहकोकिलाभ्याम् । दण्डैश्च दण्डैश्चागत्य कृतं युद्धमेताभ्याम् । मिथ इति क्रियाव्यतिहारः किम् । *केशेषु च केशेषु च गृहीत्वा युद्धमनेन । सरूपेणेति किम् । *हस्ते च पादे च गृहीत्वा कृतं युद्धम् । युद्ध इति किम् । हस्ते च हस्ते च गृहीत्वा कृतं सख्यम् । युद्ध इति विषयनिर्देशात् युद्धोपाधिकायामन्यस्यामपि क्रियाया भवति । बाहूबा

---

न्यलिङ्गत्वात् । समासत्वेनेन भवति रूढिग्रहणात् । अन्तरालस्यान्यपदार्थत्वेऽपि प्रथमान्तत्वात् 'एकार्थं च'—इत्यनेन न प्राप्नोतीति वचनं कर्मधारयाय च । कथमिति चेत् । उच्यते । 'इयादौ' इत्यत्र हि शेषे सामान्यमिति बहुव्रीहिर्न त्वन्यस्मिन्निति व्याख्यानात् । अथ अन्यपदार्थत्वादिदमपि न कर्त्तव्यं स्यात् द्वितीयाद्यन्यार्थे इति द्वितीयादिग्रहणमकृत्वाऽन्यपदार्थे इति कृते साध्यमिति । अनिष्टविपर्यासस्तु बहुलग्रहणाद्भविष्यति । तस्मादि, यत्न कर्मधारयेऽपि । एवं 'सुज्वार्थे'—इत्यादिसूत्रनयमपि ॥—तत्रादायेति । काकाक्षिगोलकन्यायेन मिथ प्रत्येकमभिसबन्ध्यते । अत एव सूत्रे मध्ये पठितं ॥—प्रहृत्येति । इति शब्दो वाक्यस्वरूपपरामर्शार्थः । स च प्रत्येकं सबध्यते । तत्रादाय मिथ इति मिथस्तेन प्रहृत्येति ॥—अव्ययीभावसंज्ञ इति । ननु संज्ञा संज्ञान्तरबाधिका नेति न्यायात् बहुव्रीहिसंज्ञाऽप्यस्तु । नियम । त्रिगुर्व्वेति नकारकरणात् द्वितीया संज्ञा न । ननु युद्धक्रियायामेनाय समास स चान्यपदार्थ इति 'एकार्थं च'—इति बहुव्रीहिर्णैव सिध्यतीति किं संज्ञान्तरेण इजन्तश्च परमदण्डादण्डीति पदान्तरेण समास युक्तावे तिष्ठद्ग्वादिषु पठनीय, तस्य च अन्यत्वस्य किमनेन । न च अन्यपदार्थस्य प्रथमान्तत्वात्कथं तेन समास इति वाच्यं केशाना च केशाना चान्योन्यस्य ग्रहणं यस्मिन् युद्ध इति विग्रहात् । द्वितीयादिग्रहणं वा बहुव्रीहिविधानसूत्रे न विधास्याम । उच्यते । एकशेषबाधनार्थम् । तथाहि—केशेषु च २ गृहीत्वा युद्ध दण्डैश्च २ प्रहृत्य युद्ध ग्रहणप्रहरणे च सहविवक्षितत्वात्सरूपत्वादेकशेषप्राप्तौ वचनसामर्थ्यात्समुदायान्यथानुपपत्त्या समुदायापेक्षयाऽनयाऽव्ययीभावसंज्ञयाऽनवकाशया बाध्यते । पूर्वेण तु बहुव्रीहावेकशेषो न शक्येत बाधितुमन्यत्र सावकाशत्वात्तस्य । रक्षा इति दृश्यते ॥—केशाकेशीति । नन्वन्यचिकीर्षितायां क्रियायामन्येन करणं क्रियाव्यतिहारः । ततश्च यदेकेन केशग्रहणमकारि तत अपरो न विधत्ते परचिकीर्षितमिति क्रियाव्यतिहारो नास्तीति कथं समास । उच्यते । एवमत्रापि केशेषु च स्थित्वेत्यत्र केशेषु च स्थित्वेतीजेषु इत्यर्थे ॥—केशेषु च २ गृहीत्वा युद्धमनेनेति । एक सकेश अन्यश्च मुण्डोऽतो न मिथोभाव ॥—हस्ते च पादे च गृहीत्वेति । यदा तु हस्तश्च पादश्चेति कृत्वा 'प्राणितूर्याङ्गाणाम्' इत्यनेन हस्तपादं च २ मिथो गृहीत्वा कृतं युद्धमिति क्रियते तदा हस्तपादाहस्तपादीति भवति ॥—व्यासजेतामिति

हवि *व्यासजेतामिति । अव्ययीभावप्रदेशाः 'अमव्ययीभावस्यातोऽपञ्चम्याः' (३-२-२) इत्यादयः ॥ २६ ॥ ***नदीभिर्नाम्नि ॥ ३ । १ । २७ ॥** नदीवाचिभिर्नामभिर्नाम समस्यते नाम्नि संज्ञायामन्यपदार्थे स च समासोऽव्ययीभावसंज्ञो भवति । उन्मत्ता गङ्गा यत्र स उन्मत्तगङ्गं देशः । एवं लोहितगङ्गम् । तूष्णीगङ्गम् । *शनैर्गङ्गम् । इमानि देशनामानि । नदीभिरिति बहुवचननिर्देशात् तद्विशेषाणां *स्वरूपस्य च ग्रहणम् । नाम्नीति किम् । शीघ्रगङ्गो देशः । अन्यपदार्थ इत्येव । कृष्णा चासौ वेण्णा च कृष्णवेण्णा । एवं शुष्कतापो ॥ २७ ॥ ***संख्या समाहारे ॥ ३ । १ । २८ ॥** अन्यपदार्थ इति *निवृत्तम् । संख्यावाचि नाम नदीवाचिभिर्नामभिः सह समस्यते समाहारे गम्यमाने स च समासोऽव्ययीभावसंज्ञो भवति । द्वयोर्यमुनयोः समाहारो द्वियमुनम् । एवं त्रियमुनम् । पञ्चनदम् । सप्तगोदावरम् । अत्राव्ययीभावत्वे समासान्तोऽम्भावश्च सिद्धो भवति । समाहार इति किम् । एका नदी एकनदी । द्वीरावतीको देशः । *द्विगुबाधनार्थं वचनम् । अन्ये तु पूर्वपदप्राधान्येऽव्ययीभावः । *गोदावरीणां सप्तत्वं सप्तगोदावरम् । समाहारे तु द्विगुरेवेत्याहुः । सप्तानां गोदावरीणां समाहारः *सप्तगोदावरि । *द्विगोदावरि इत्यादि ॥ २८ ॥ ***वंश्येन पूर्वार्थे ॥ ३ । १ । २९ ॥** विद्यया जन्मना वा प्राणिनामेकलक्षणसंतानो वंशः, तत्र भवो वंश्यः । *स इहाद्यः कारणपुरुषो गृह्यते । तद्वाचिना नाम्ना संख्यावाचि नाम समस्यते पूर्वस्य पदस्यार्थेऽभिधेयेऽव्ययीभावश्च समासो भवति । एको मुनिर्वंश्यो व्याकरणस्य *एकमुनि व्याकरणस्य । एवं द्विमुनि व्याकरणस्य । त्रिमुनि व्याकरणस्य । यदा तु विद्यया तद्वतामभेदविवक्षा तदैकमुनि व्याकरणं द्विमुनि व्याकरणमित्यादि सामानाधिकरण्यं भवति । * सप्त काशयो वंश्या राज्यस्य सप्तकाशि राज्यस्य । एवं त्रिकोशलं राज्यस्य । *एकविंशतिभारद्वाजं कोशलस्य । पूर्वार्थ इति किम् । द्वौ मुनी वंश्यावस्य द्विमुनि, द्विमुनिकं व्याकरणम् । द्विमुनिरागतः । अन्यपदार्थे बहुव्रीहिरेव । अन्ये तु पूर्वार्थ इति विशेषं नेच्छन्ति । तन्मते एकश्चासौ

---

बाहोश्च २ मियो गृहीत्वा व्यासङ्गं कृत. । क्रियाव्यतिहारे आत्मनेपदं ह्यस्तनी आताम् व्यासङ्गं कृतवन्तावित्यर्थ. । 'रोषावेशादाभिमुख्येन कौचित्पाणिग्राहं रहसो वेपमानौ ॥ हित्वा हतीर्मल्लवन्मुष्टिघातैर्घ्नन्तौ बाहाबाहवि व्यासजेताम्' ॥ १ ॥ माघे ॥—**नदीभिर्नाम्नि** ॥—**शनैर्गङ्गमिति** । शनैर्योगात् गङ्गापि शनै. सा विद्यते यत्र ॥—**स्वरूपस्य च ग्रहणमिति** । उत्तरसूत्रे पञ्चनदमित्यत्र । स्वरूपग्रहणाच्च पर्यायाणां श्रोतस्विनीनिम्नगासिन्धुप्रभृतीनां न ग्रह ॥—**सख्या समा—** ॥—**निवृत्तमिति** । समाहार इति भणनात् । उभयपदप्रधान. समासोऽनेन विधीयते ॥—**समाहार इति किमिति** । समाहृतिं विना द्वीरावतीको देश इत्यादौ द्विगोरिव बहुव्रीहेरपि बाधक स्यात् ॥—**द्विगुबाधनार्थमिति** । ननु तर्हि तस्य क्वावकाश. । सत्यम् । नदीनाम्नोऽन्यत्र ॥—**गोदावरीणां सप्तत्वमिति** । आ दशभ्य सख्या सख्येये वर्त्तते इत्यस्य प्रायिकत्वाद्वृत्तिविषये द्व्यादय सख्यानेऽपि वर्त्तन्ते ॥—**सप्तगोदावरीति** । अन्यस्तु सर्वो नपुसकत्वे 'क्लीबे' इति ह्रस्व । एव—**द्विगोदावरि** ॥—**वंश्येन पू—** ॥—**स इहाद्य इति** । ननु वंशे भवा इति व्युत्पत्त्या सर्वेऽपि पाठका. कारकाश्च कथं न लभ्यन्ते आद्य एव कथं गृह्यते । उच्यते । गौणमुख्ययोरिति न्यायात् ॥—**एकमुनि व्याकरणस्येति** । एको मुनिर्वंश्य एतावानेव विग्रह. । व्याकरणस्येत्येतत्तु भिन्नपदमतोऽन्यपदार्थाभावान्न बहुव्रीहि । पूर्वपदार्थप्राधान्याच्च यथाक्रममेकवचनद्विवचनबहुवचनानि तेषां च 'अनतो लुप' । अभेदविवक्षायामनेनैव समास पर व्याकरणात्प्रथमा भवति अयं विशेष ॥—**सप्त काशय इति** । काशे राज्ञोऽपत्यानि 'दुनादि'—इति ञ्य । 'बहुष्वस्त्रिया' लुप् ॥—**एकविंश-**

मुनिश्रेष्ठेति कर्मधारयप्रसङ्गे, द्वौ मुनी समाहृताविति द्विगुप्रसङ्गे, एको मुनिर्वंश्योऽस्येति बहुव्रीहिप्रसङ्गे चाव्ययीभाव एव समासो भवति ॥ २९ ॥ ***पारेमध्येऽग्रेऽन्तः षष्ठ्या वा ॥ ३ । १ । ३० ॥** पारेप्रभृतीनि नामानि षष्ठ्यन्तेन नाम्ना सह पूर्वपदार्थे वा समस्यन्तेऽव्ययीभावश्च समासो भवति । तत्संनियोगे चाद्यानां त्रयाणामेकारान्तता निपात्यते । *पारं गङ्गायाः *पारेगङ्गम् । पारेसमुद्रम् । मध्यं गङ्गायाः मध्येगङ्गम् । मध्येसमुद्रम् । अग्रं वनस्य अग्रेवणम् । अग्रेसेनम् । अन्तर्गिरेः अन्तर्गिरम् अन्तर्गिरि । *वावचनात्पक्षे षष्ठीसमासोऽपि भवति । गङ्गायाः पारम् गङ्गापारम् । गङ्गामध्यम् । वनाग्रम् । *गिर्यन्तः । षष्ठ्येति किम् । पारं शोभनम् ॥ ३० ॥ ***यावदियत्त्वे ॥ ३ । १ । ३१ ॥** इयत्त्वमवधारणम् । तस्मिन् गम्यमाने यावदिति नाम नाम्ना समस्यते पूर्वपदार्थेऽव्ययीभावश्च समासो भवति । *यावन्त्यमत्राणि *यावदमत्रम् यावानोदनो यावदोदनम् यावानवकाशो यावदवकाशम् अतिथीन् भोजय । यावन्त्यमत्राणीति निर्ज्ञातपरिमाणेनामत्रादिना तावन्त इति अतिथिपरिमाणमिहावधार्यते । इयत्त्व इति किम् । *यावद्दत्तं तावद्भुक्तम् । कियद्भुक्तमिति नावधारयति । यावदित्यव्ययमनव्ययं चेह गृह्यते । अव्ययमेवेत्यन्ये ॥ ३१ ॥ ***पर्यपाङ्बहिरच् पञ्चम्या ॥ ३ । १ । ३२ ॥** पर्यादीनि नामानि पञ्चम्यन्तेन नाम्ना सहैकार्थ्ये पूर्वपदा-

---

**तिभारद्वाजमिति** । भरद्वाजस्येमे इत्येव कार्यं 'तस्येदम्' इत्यण् । अपत्ये तु विदादित्रो 'यञित्र' इति बहुषु लोप स्यात् । यद्यप्यत्रैकाविंशतिशब्दस्य विशेषलक्षणेनैकत्व तथापि पूर्वपदार्थस्यैकविंशतिशब्दवाच्यस्य बहुत्वाद्भारद्वाजा इति बहुत्वमेव शब्दशक्तिस्वाभाव्यात् ॥—**आगत** इति । अत्र ग्रन्थ इति गम्यते । अन्यथा वश्य इति विशेषण न घटते ॥—**पारेमध्ये**—॥ समासे निपातयिष्यमाणेकारान्तानामिदमनुकरणम् ॥—**पारं गङ्गाया** इति विग्रह । दिग्मात्रमेतत गङ्गाया पारमित्यपि कृते पारेगङ्गमिति भवत्येव 'प्रथमोक्तम्'—इत्यतः ॥—**पारेगङ्गमिति** । ननु एकारान्ततानिपातन किमर्थं बहुलाच्चगादलुप्यपि सिध्यति । नैवम् । सिद्ध्यति यदा पार गङ्गाया इति सप्तमी यदा तु पारे गङ्गाया कृतमित्यादौ सप्तम्यर्थाभावात्सप्तम्या अभावान्न सिध्यति ॥—**वावचनादि**ति । ननु 'नित्य प्रतिनाल्पे' इति नित्यग्रहणलब्धया विभाषयैव सर्वत्र पार गङ्गाया इत्यादौ वाक्यस्य सिद्धत्वात्तत्पक्षे च गङ्गापारमिति षष्ठीसमासस्यापि सिद्धेर्वावचनमतिरिच्यते । न च षष्ठीसमासे प्राप्तेऽव्ययीभावस्यारम्भात्तस्यापि बाधा स्यादिति वाच्यम् । यतो विभाषाधिकाराद्विकल्पेनास्य बाधनात्षष्ठीसमाससिद्धेस्तस्यापि विकल्पेन विधानाद्वाक्यस्य सिद्धि । उच्यते । विकल्पस्यावचने पूर्वकायवदशिसमासविमुक्ते पक्षे यथा षष्ठीसमासो न भवति किंतु वाक्यमेव । एवमत्रापि न स्यात । किं पुन कारणमाशसमासेन मुक्ते षष्ठीसमासो न भवति । उच्यते । समासतद्धितानां वृत्तिविकल्पेन वृत्तिविषये नित्येनापवादप्रवृत्ति । इह पुन वावचनेनैकेन यत्तोर्विभाषा अपरेण वृत्तिविषयेऽपवादविकल्प । अय वस्त्वर्थ इह वाक्येनाभिधाने प्राप्ते वृत्तिरारभ्यमाणा वाक्यस्य बाधिका प्राप्नोति इति विकल्पेन पक्षे तस्याभ्यनुज्ञान क्रियते । तत्रापवादेऽपि विकल्पेन विधीयमाने विकल्पो वाक्यस्यैवाभ्यनुज्ञान करोतीत्युत्सर्गस्य नित्यमेव बाधेन भाव्यम् । तत्र वाग्रहणेनोत्सर्गोऽपि पक्षेऽभ्यनुज्ञायत इति वैरूप्य सिध्यतीति । इदमेव वावचन 'वोदश्वित' इति च ज्ञापकमुत्सर्गो भवतीति । वा इति प्रत्येक सबध्यते तेन यत्र षष्ठीसमास प्राप्नोति तत्रानुज्ञायते ॥—**गिर्यन्त** इत्यत्र तु 'लक्षार्थे'—इत्यादिना निषिद्धोऽपि वावचनाद्विधीयते ॥—**यावदियत्त्वे** ॥ इयता परिच्छिन्नसख्यानामियतो वा परिच्छिन्नपरिमाणस्य भाव इयत्त्व तस्मिन् ॥—**यावन्ती**ति । अन्यये तु यावदमत्राणीति कार्यम् ॥—**यावदमत्रमि**ति । पूर्वार्थप्रधानत्वादव्ययत्वे सिः । अनव्ययत्वे तु जस् समासात् ॥—**यावद्दत्तमि**ति । असमस्तमिदम् । अत एव तावदित्युपादीयते । समासे हि गुणीभूतत्वात्तावदित्यस्योपादानाभाव स्याद्यथा यावदमत्रमित्यत्र ॥—**पर्यपाङ्**-

र्थेऽभिधेये समस्यन्ते स च समासोऽव्ययीभावसंज्ञो भवति। परि त्रिगर्तेभ्यः परित्रिगर्तम्। अपत्रिगर्तेभ्यः अपत्रिगर्तम्। आ ग्रामात् आग्रामम्। बहिर्ग्रामात् बहिर्ग्रामम्। प्राग् ग्रामात् प्राग्ग्रामम्। प्रत्यग्ग्रामात् प्रत्यग्ग्रामम्। अपाग्ग्रामात् अपाग्ग्रामम्। उदग् ग्रामात् उदग्ग्रामम् वृष्टो मेघः। पर्यादिसाहचर्यादञ्चतिर्धनलुबन्तोऽव्ययं गृह्यते। तेनेह न भवति। *प्राङ् ग्रामात् चैत्रः। *प्रतिपदविहितायाश्च *पञ्चम्या ग्रहणादिहाव्ययीभावो न भवति। अपगतः शाखायाः *अपशाखः। *पञ्चम्येति किम्। परि वृक्षं विद्योतते विद्युत्। यदत्र मां परि स्यात्॥ ३२॥ *लक्षणेनाभिप्रत्याभिमुख्ये॥ ३। १। ३३॥ लक्षणं चिह्नम्। तद्वाचिना नाम्ना आभिमुख्ये वर्तमानावभिप्रतीत्यैकार्थ्ये सति पूर्वपदार्थेऽभिधेये समस्येतेऽव्ययीभावश्च समासो भवति। अभि अग्निम् *अभ्यग्नि। *प्रत्यग्निं प्रत्यग्नि शलभाः पतन्ति। अग्निं *लक्षीकृत्याभिमुखं पतन्तीत्यर्थः। लक्षणेनेति किम्। *स्रुघ्नं प्रति गतः। प्रतिनिवृत्य *पुनः स्रुघ्नमेवाभिमुखं गत इत्यर्थः। आभिप्रतीति किम्। *येनाग्निस्तेन गतः। आभिमुख्य इति किम्। वृक्षमभि विद्योतते विद्युत्। पूर्वपदार्थ इत्येव। अभिमुखोऽङ्को यासां ता अभ्यङ्का गावः॥ ३३॥ *दैर्घ्येऽनुः॥

---

—॥—**पञ्चम्या ग्रहणादि**ति। ननु पञ्चमीग्रहणं किमर्थं तदन्तरेणापि विशिष्टपञ्चमीप्रतिपत्तेस्तथाहि—अपपरिशब्दौ परस्परसाहचर्याद्वर्जनार्थौ ग्रहीष्येते। तद्योगे च पञ्चम्येव विहिता। आङ्शब्दोऽपि ङित्त्वेनोपात्तः। वाक्यस्मरणयोस्तु ङित्त्वाभावादीषदादिषु चतुर्ष्वर्थेषु वर्तमानो ग्राह्यः। तत्रापीषदर्थे 'आङ्गतौ' इति परत्वात्तत्पुरुषविधानात्पारिशेष्यान्मर्यादाभिविध्यर्थवृत्तेर्ग्रहणम्। बहिर्गतो ग्रामादित्यादावपादानपञ्चम्यन्तादसामर्थ्यान्न भविष्यति। प्राग्ग्राम इत्यादौ च पूर्वपदार्थप्राधान्य एव सति सम्भवेऽव्ययीभावस्य विधानात्समासाभाव इति पञ्चम्यन्तेनैव समासस्य सिद्धत्वात्किं तदुपादानेनेति अत आह—**पञ्चम्येति किमि**ति। 'लक्षणेत्थम्भूते' इत्यधिकृत्य 'भागिनि च' इत्यनेन परियोगे द्वितीया। तया सह माभूदित्यर्थः। अथात्र वर्जनार्थपरिग्रहणाच्च न भविष्यतीति चेत्तर्हि न्यायानुवादकमेव पञ्चमीग्रहणं भवति। परित्रिगर्तमिति पञ्चम्यर्थप्रधानात् प्रथमा। क्रियाविशेषणत्वविवक्षायां तु द्वितीया यथा आमेखलं सञ्चरतामित्यत्र एवं सर्वत्र॥—**प्राङ् ग्रामाच्चैत्र** इति। यदा गमनार्थस्याञ्चतेः किपि कर्मणि षष्ठी तदा प्राङ् ग्रामस्येत्यपि प्रयोगो भवति। कोऽर्थः। गच्छन्ग्राममित्यर्थः॥—**प्रतिपदविहितायाश्चे**ति। लक्षणप्रतिपदोक्तयोरिति न्यायात्॥—**अपशाख** इति। न च वाच्यं शाखाया अपेन सह सम्बन्धाभावादेव न भविष्यति समासः। यतो गतार्थस्यापेनाभिधानादस्त्येवापेन शाखायाः सम्बन्ध इति। न च परत्वात् 'प्रादयः'—इति तत्पुरुषेणास्य बाधा इति वाच्यं, तत्रान्यग्रहणात्॥—**लक्षणेना**—अभिप्रपन्नो मुखमभिमुखस्तस्य भावः कर्म वा 'पतिराजान्त'—इति ष्यञ् आभिमुख्यम्॥—**प्रत्यग्निमि**ति। वैचित्र्यार्थं सर्वत्र वाक्यम्॥—**अभ्यग्नी**ति। अत्राग्निना शलभपातो लक्ष्यते इत्यग्निर्लक्षणं भवति। तस्य चाभिप्रतिभ्यामाभिमुख्यं प्रतिपाद्यते। अग्नौ हि शलभाः समुखा एव पतन्ति। ननु **लक्षीकृत्ये**त्ययुक्तं लक्षणीकृत्येति भणनीयं न लक्षीकृत्येति कोऽर्थः। अग्निं लक्ष्यत्वेन लक्ष्यीकृत्येत्यर्थः। कोऽर्थो दर्शनक्रियापेक्षयाऽग्निर्लक्ष्यं पतनक्रियापेक्षया लक्षणं यतः पूर्वं पश्यन्ति ततः पतन्ति। अव्ययीभावात्क्रियाविशेषणत्वादुत्पन्नस्यामो लुप्॥—**स्रुघ्नं प्रति गत** इति। प्रतिगतस्य मध्ये प्रतिशब्दोऽर्थवानस्ति इति तेनापि सह सम्बन्धोऽस्तीति समासः स्यात्॥—**पुनः स्रुघ्नमि**ति। अत्र प्रतिगतोऽयं देवदत्तः कोऽर्थः अभिमुखं गत इत्यर्थः। किं कृत्वा पुनरपि निवृत्य इति। अत्र स्रुघ्नादन्यन्नगरान्तरं गन्तुकामः पथि व्यामोहात्तमेव प्रत्यागत इति नास्ति गमनं प्रति स्रुघ्नस्य लक्षणता। यदुद्दिश्य हि गमनं क्रियते तल्लक्षणं भवति। अत्र तु व्यामोहादेवैत्य गतः। गतक्रियापेक्षया च स्रुघ्नस्य कर्मत्वम्॥—**येनाग्निस्तेन गत** इति। येनतेनौ प्रत्यर्थौ। अग्निरित्युभयत्रापि सम्बन्धनीयं येनाग्निर्गतस्तेनाग्निर्गत इत्युदाहरणद्वयं द्रष्टव्यम्। गतो देवदत्तः किमत्र लक्षणं येनाग्निः अग्निर्लक्षणमित्यर्थः। एवं तेनाग्निरिति भिन्नं च यथा एकमेवेदमुदाहरणमित्यर्थः। गत इति लक्ष्यं तेनेति लक्ष्यस्य द्योतकमग्निर्लक्षणं येनेति लक्षणस्य द्योतकमिति लक्ष्यलक्षणभावः॥—**दैर्घ्येऽनु**॥—**वृक्षमनु**

३ । १ । ३४ ॥ अनु इत्येतन्नाम दैर्घ्ये आयामविषये यल्लक्षणं तद्वाचिना नाम्नैकार्थ्ये सति पूर्वपदार्थेऽभिधेये समस्यते स च समासोऽव्ययीभावसंज्ञः। अनु गङ्गां दीर्घा अनुगङ्गं वाराणसी। गङ्गाया लक्षणभूताया आयामेन वाराणस्या आयामो लक्ष्यते। एवमनुयमुनं मथुरा । दैर्घ्ये इति किम् । *वृक्षमनु विद्योतते विद्युत् । लक्षणेनेत्येव। लक्ष्येण वाराणस्यादिना माभूत् ॥ ३४ ॥ *समीपे ॥ ३ । १ । ३५ ॥ अनु इत्येतन्नाम समीपेऽर्थे वर्तमानमर्थात् समीपिवाचिना सहैकार्थ्ये सति पूर्वपदार्थेऽभिधेये समस्यते स च समासोऽव्ययीभावसंज्ञः । अनु वनस्य *अनुवनमशनिर्गता। अनुरूपं पिशुनाः । अनोरव्ययत्वात् 'विभक्तिसमीप'— (३।१।३९) इत्यादिनैव समासे सिद्धे विकल्पार्थम्। तेन वाक्यमपि भवति। पृथग्वचनं लक्षणेनेत्यस्य *निवृत्त्यर्थम् ॥ ३५ ॥ *तिष्ठद्गिवत्यादयः ॥३।१।३६॥ तिष्ठद्गुप्रभृतयः समासशब्दा अव्ययीभावसंज्ञा भवन्ति यथायोगमन्यपदार्थे पूर्वपदार्थे चाभिधेये । तिष्ठन्ति गावो यस्मिन् काले गर्भग्रहणाय दोहाय वाहाय वा- स काल *आयतीगवम्। अत्र पूर्व- तसेभ्यो निवासाय जलपानार्थं वा स कालस्तिष्ठद्गु। वहन्ति गावो यस्मिन् काले स कालो वहद्गु। आयन्ति गावो यस्मिन् स काल *आयतीगवम्। अत्र पूर्व- पदस्य पुंवद्भावाभावः समासान्तश्च निपातनात् । एतेऽन्यपदार्थे काले । तथा खले यवा यस्मिन् स कालः खलेयवम् । खलेबुसम् । निपातनात्सप्तम्या अलुप् । लूनयवम्, लूयमानयवम्। पूनयवम्, पूयमानयवम्। संहृतयवम्, संह्रियमाणयवम् । संहृतबुसम्, संह्रियमाणबुसम् । एते प्रथमैकवचनान्ता एवान्यपदार्थे काले । नाभेरधः देशेऽपीत्यन्ये। तेन खलेयवं पश्य, खलेयवेन कृतम्, खलेयवे कृतम् इत्यादयः प्रयोगा *असाधवः। द्वितीयादिविभक्त्यन्ता अपि एते साधव इत्यन्ये । समंभूमि । अधोनाभम्। निपातनादत् समासान्तः। पूर्वपदार्थप्रधानोऽयम्। तथा समत्वं भूमेः समभूमि। एवं समपदाति। पक्षे पूर्वपदस्य मान्तत्वमपि निपात्यते। समंभूमि । समंपदाति । एतौ देशकालभावेष्वन्यपदार्थेष्वित्यन्ये । उत्तरपदार्थप्राधान्ये तु समा भूमिः समभूमिः समपदातिरिति कर्मधारय एव । तथा शोभनत्वं स- मस्य शोभनत्वं समायाः शोभना *समा यत्र सुषमम्। एवं विषमम्। निष्षमं दुष्षमम् अपरसमम्। उत्तरपदार्थप्राधान्ये तु तत्पुरुष एव। शोभना समा सुषमा । शोभने समे सुषमे। समशब्देनाव्ययीभाव इत्यन्ये। तथा समाया आयतीत्वम् आयती समा यत्र आयती समेति वा *आयतीसमम्। एवं पापसमम्। पुण्यसमम्। समशब्देन *तृतीयासमास इत्यन्ये। आयत्या समम्। आयतीसमम्। एवं *पापसमम् पुण्यसमम्। तथा प्रकृष्टत्वं चाह्न· *प्राह्णम्। निपातनादह्नादेशः । एवं प्र-

विद्योतत इति । अत्र वृक्षो विद्योतनस्य लक्षणत्वेन विवक्ष्यते न दैर्घ्यस्येति ॥—**समीपे** ॥ समीपशब्दोऽव्युत्पन्न वर्णानुपूर्वीनिर्ज्ञानार्थं च सगता आपो यत्रेति ॥—**अनुवनमशनिर्गतेति**। समासा- चात्र गमनक्रियाकर्मभूतसामीप्याभिधायकात् अमोऽम्भाव । सप्तमी वा ॥—**निवृत्त्यर्थमिति**। पूर्वं तु अत्रापि लक्षणेनेत्यनुवर्त्तयन्ति । यदुत्पल । अनुशब्द समीपसमीपिनोर्लक्ष्यलक्षणसम्बन्धद्योतकस्तथा हि वनसामीप्यगताया अशनेर्वन लक्षणम् ॥—**तिष्ठद्ग्विति** ॥—**आयतीगवमिति**। इणक् आयन्ति शतरि 'क्विणोरय्'—इति यत्वे ङ्या आयत्यो गावो यस्मिन्निति कार्यम्। वृत्तौ त्वर्थकथनमात्रमेव पूर्वत्र तिष्ठद्ग्वित्यत्रापि ॥—**असाधव** इति। द्वितीयाद्यन्ता इति शेष. ॥—**समा** शब्द सवत्सरवाची ॥— **आयतीसममिति**। अत्र यदा शत्रन्तात् ङीस्तदा गणपाठात् पुंवद्भावाभाव । यदा त्वाय- तिशब्दः नित्यस्त्री ङ्यन्तस्तदा पुंवत्प्राप्तिर्नास्ति ॥—**तृतीयासमास इत्यन्ये** इति। तृतीयातत्पुरुष इत्यर्थः ॥ पीयते पुरुषस्य माहात्म्यमनेन पाति रक्षति शुभस्थाने प्रवर्त्तमान पुरुषमिति वा **पापम्**

रथम् प्रमृगम् प्रदक्षिणम् । कालभावलक्षणेऽन्यपदार्थेऽपीत्यन्ये । प्रक्रान्तमहरस्मिन् प्राह्णम् । प्रगता रथा अस्मिन् प्ररथम् । प्रनष्टा मृगा अस्मिन् प्रमृगम् । प्रकृता दक्षिणा अस्मिन् प्रदक्षिणम् । अन्यत्र प्रगता मृगा अस्मात् प्रमृगो देशः । देशेऽप्यन्ये । उत्तरपदार्थप्राधान्ये तु तत्पुरुष एव । प्राह्णः प्ररथः प्रमृगः प्रदक्षिणा । तथैकत्वमन्तस्य एकोऽन्त इति वा एकान्तम् । देशेऽन्यपदार्थेऽपीत्यन्ये । *एवं प्रान्तं समपक्षम् समानतीर्थम् समानतीरम् । *तथा संप्रत्यसंप्रत्यप्रदक्षिणानि यथासंख्यं वर्तमानावर्तमानवामेषु । तथा युद्धे इजन्तं च । केशाकेशि दण्डादण्डि द्विदण्डि द्विमुसलि । 'तिष्ठद्गु'—इत्यत्रेतिशब्दः स्वरूपपरिग्रहार्थः । तेनेह समासान्तरं न भवति । परमं तिष्ठद्गु तिष्ठद्गु प्रियमस्येति वाक्यमेव भवति । अत एव प्रदक्षिणसंप्रतिभ्यां सह नञ्समासेन सिद्धावप्रदक्षिणासंप्रत्योः पाठः । इजन्तस्य च तिष्ठद्ग्वादिपाठः 'इच् युद्धे' ( ७–३–७४ ) इत्यनेनेजन्तस्य समासान्तरप्रतिषेधार्थं, द्विदण्ड्यादेरव्ययीभावार्थश्च । अन्ये तु परपदेनैव समासं प्रतिषेधन्ति तन्मते परमतिष्ठद्गु *आतिष्ठद्गु जपन् सन्ध्यामित्यादयोऽपि साधवः । तिष्ठद्ग्वादिराकृतिगणः । तेन *प्रमन्यम् अपमन्यम् *यत्प्रभृति तत्प्रभृति इतःप्रभृति इत्यादि सिद्धम् ॥ ३६ ॥ *नित्यं प्रतिनाल्पे ॥ ३ । १ । ३७ ॥ अल्पेऽर्थे वर्तमानेन प्रतिना नाम्ना नाम नित्यं समस्यतेऽव्ययीभावश्च समासो भवति । शाकस्याल्पत्वं *शाकप्रति । सूपस्य मात्रा सूपप्रति । अल्प इति किम् । वृक्षं प्रति विद्योतते विद्युत् । नित्यग्रहणं वाक्यनिवृत्त्यर्थम् । तेनान्यत्र समासो वाक्यं च भवति ॥ ३७ ॥ ***संख्याक्षशलाकं परिणा द्यूतेऽन्यथावृत्तौ ॥ ३ । १ । ३८ ॥** संख्यावाचि नामाक्षशलाके च द्यूतविषयेऽन्यथावर्तने वर्तमानेन परिणा नाम्ना सहैकार्थ्ये नित्यं समस्यन्तेऽव्ययीभावश्च समासो भवति । वर्तने चैषां कर्तृत्वात्तृतीयान्तत्वम् । अक्षशलाकयोस्त्वेकवचनान्तयोरेवेष्यते । पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति । तत्र यदा सर्वे उत्ताना अवाञ्चो वा पतन्ति तदा पातयितुर्जयः । अन्यथापाते पराजयः । एकेनाक्षेण शलाकया वा न तथावृत्तम् यथा पूर्वं जये एकपरि । द्विपरि । त्रिपरि । परमेण चतुष्परि । पञ्चसु त्वेकरूपेषु जय एव भवति । अक्षेणेदं न तथा वृत्तम् यथा पूर्वं जये अक्षपरि । शलाकापरि । संख्यादीति किम् । पाशकेन न तथा वृत्तम् । परिणेति किम् । अक्षेण परिवृत्तम् । द्यूत इति किम् । रथस्याक्षेण न तथा वृत्तम् । अन्यथावृत्ताविति किम् । पञ्चपरीति

---

॥—**प्राह्णमिति** । 'नपुंसकाद्वा' इति विकल्पेनाति प्रासऽन्हादेश ॥—**एव प्रान्तमिति** । प्रगतत्वमन्तस्य प्रगतोऽन्त प्रगतोऽन्तोऽस्मिन्निति वा । समत्व समानत्व वा पक्षस्य तीर्थस्य तीरस्य चेति विग्रहत्रय दर्शनीयम् । एव प्रान्तमिति स्वमत परमत चेहापि द्रष्टव्यमित्येवशब्दार्थ ॥—**तथा संप्रतीत्यादि** । सभूतिरिदानीं न सभूतिरिदानीं न प्रकृष्टत्व दक्षिणत्वस्य न प्रगत दक्षिणेनेत्यादिवाक्यानि । तथा द्वौ दण्डौ अस्मिन्प्रहरणे द्वे मुसले प्रहरणमस्य द्विदण्ड्यादि. । इन् ॥—**प्रसव्यमित्यादि** । प्रगतत्व सव्यस्य सव्याद्वेति वाक्यम् । यस्मात्प्रभृति इति वाक्य **यत्प्रभृत्यादिषु** । इतिकरणाच्च कृतापसव्यादिषु समासो न भवति । यत्र च दृश्यते तत्र चिन्तनीयम् ॥—**आतिष्ठद्गु** इति । तिष्ठद्गु आ इति स ॥—**नित्य प्रति—**॥—**शाकप्रतीति** । पूर्वार्थे इत्यधिकारेऽप्यसभवादस्योत्तरपदार्थ प्रधान एवाय समास । अथवाव्ययाना दोषामन्यमहर्दिवामन्या गात्रिरिति वद्वृत्तिविषये सत्वप्रधानत्वदर्शनान्मात्रावाति प्रतिशब्दस्य वृत्तेरविरोधादल्प सूप इति विग्रह ॥—**सख्याक्षशला—**॥ ननु 'नाम नामैकार्थ्ये' इत्यत सूत्रात् ऐकार्थ्ये सतीत्यनुवर्तते । तत ऐकार्थ्ये सति समास ऐकार्थ्य च ऐकपद्य तच्च समासे सति भवति । तत इतरेतराश्रयदोषे समास कथम् । उच्यते । यत्र यत्र येन सूत्रेण समास

माभूत्। के चित् *समविषमद्यूते सममित्युक्ते यदा विषमं भवति तदा अक्षपरि शलाकापरीति प्रयुज्यत इत्याहु । *अन्ये पूर्वं पदमाहूतं तच्च पतितमिष्टं सिद्धं पुनस्तदाहूतं यदा न पतति तदायं प्रयोगोऽक्षपरि शलाकापरीत्याहुः ॥ ३८ ॥ ***विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिपश्चात्क्रमख्यातियुगपत्सदृक्संपत्साकल्यान्तेऽव्ययम्** ॥ ३ । १ । ३९ ॥ विभक्त्यादिष्वर्थेषु *वर्तमानमव्ययं नाम नाम्ना सहैकार्थ्ये सति पूर्वपदार्थेऽभिधेये नित्यं *समस्यते स च समासोऽव्ययीभावसंज्ञो भवति। विभक्तिर्विभक्त्यर्थः कारकम्। *अधिस्त्रि निधेहि। स्त्रीषु निधेहीत्यर्थः। एवमधिकुमारि। समीपे, उपकुम्भं, कुम्भस्य समीप इत्यर्थ । एवमुपाग्नि। उपशरदम्। ऋद्धेराधिक्यं समृद्धिः। सुमद्रम्। मद्राणा समृद्धिरित्यर्थः। एवं सुमगधम्। सुभिक्षम्। विगता ऋद्धिः व्यृद्धिः *ऋद्ध्यभावः। दुर्यवनं *यवनानामृद्ध्यभाव इत्यर्थ। एवं दुर्भिक्षम्। अर्थाभावो *धर्मिणोऽसत्त्वम्। निर्मक्षिकम्। मक्षिकाणामभाव इत्यर्थः। एवं निर्मशकम्। अपमक्षिकम्। उन्मशकम्। निवातम्। अत्ययोऽतीतत्वम् सत एवातिक्रान्तत्वम्। अतिवर्षं वर्षाणामतीतत्वमित्यर्थः। एवमतिशीतम् । निशितम् । निहिमम्। अतृणम्। नितृणम्। असंप्रतीति वर्तमानकाले *उपभोगादेः प्रतिषेधः। अतिकम्बलं कम्बलस्योपभोगं प्रति नायं काल इत्यर्थ । *एवमतितैसृकम् । अत्याम्रम्। पश्चादर्थे, *अनुरथं

---

कर्तुमिष्यते तत्र तत्र तस्मादेव ऐकार्थ्य प्रथम ज्ञातव्यम् । तत समास । अन्यथा हि सर्वाण्यपि सूत्राणि निरर्थकता भजेरन् इति हि न्यासविद । पञ्चादिभिर्द्यूताभावात्पञ्चपरीत्यादि न भवति । उत्कर्षतस्तु चतुष्परीत्येव नित्यसमासोऽयमिति परिप्रयोगो वाक्यं नाऽस्त्यपि । किंतु न तथा वृत्तमिति पर्याय ॥—**समविषमद्यूते** इति । एकिकाद्विकारूपे ॥--**अन्ये पूर्वमिति** तस्मिन्नेव द्यूते ॥—**विभक्तिसमीप**—॥—**अव्यय नाम** इति । अत्र नाम नाम्नेति समुदाय सज्ञी समास इति सज्ञा । समास सज्ञी अव्ययीभाव इति सज्ञा एतावती पदयोजना ॥—**समस्यत** इति । अन्वर्थरूपत्व समाससज्ञाया प्रदर्श्याव्ययीभावसज्ञो भवतीत्युपसहरतीति ॥—**अधिस्त्री**ति । अत्राधिशब्दस्य कस्तानेकार्थवृत्तेराधाररूपविभक्त्यर्थवृत्तित्व प्रकाशयितुमुक्ताधारस्यापि सप्तम्यन्तेन स्त्रीशब्देन समास ॥—**ऋद्ध्यभाव** इति । ऋद्धेरुत्तरपदार्थधर्मस्याभावो न तूत्तरपदार्थस्यैव धर्मिण इत्यर्थाभावाद्भिद्यते । तत्र हि धर्मिण एवाभाव । यवनाना ऋद्ध्यभाव इत्यत्र 'गष्ठक्षत्रियात् –इत्यत्रो 'बहुष्वस्त्रियाम्' इति लोपे ॥—**धर्म्मिणोऽसत्त्वमि**ति । धर्म्मिणोऽनुत्पत्तिरेव न तु सतोऽभाव इत्यर्थाभावोऽत्ययाद्विशिष्यते । अत्ययो हि सतोऽतिक्रान्तकालसबन्धिनी सत्तैवोच्यते ॥—**उपभोगादे प्रतिषेध** इति । न तु वस्तुन इति तदऽभावाद्भिद्यते न साप्रतिकवस्त्वभाव इत्यर्थाभावाद्भिद्यते । ननु च वर्षाणामत्ययो नाम वर्षाणामभाव एव प्रध्वसाभावो हि स । तत्रार्थाभाव इत्येव सिद्धे किमर्थमत्ययग्रहणम् । उच्यते । अर्थाभाव इति धर्म्मिणोऽभवनमात्रमुच्यते । तथाहि निर्मक्षिक निर्मशक वर्त्तते इति तत्र मक्षिकादयो भूत्वा माभूवन्नभूत्वा वा सर्वथा ते तत्र न सन्तीत्येतावन्मात्रमेव प्रतीयते न तु प्राक् पश्चाद्वेति विशेष । अतोऽत्ययो नार्थाभाव इति । असप्रतीति अत्र न सप्रत्यसप्रतीति बाहुलकादसमर्थसमासोऽय यथा असूर्यपश्या । सप्रतीति हि इदानीमित्यर्थ ॥—**तैसृकमि**ति । त्रयो मुख्या आसा 'सोऽस्य मुख्य ' इति क । पृषोदरादित्वात्तिसादेश' । तिसृकासु भवोऽण् ॥—**अनुरथं याती**ति । ननु यथा नित्यसमासत्वात् पश्चाद्रूपेणार्थान्तरेणान्वित्यव्यय समस्यते तथा पश्चाच्छब्दोऽपि अव्ययत्वादप्यर्थान्तरेण समस्यता नित्यसमासत्वान् प्रयोगमसवाप्य वाक्य नाप्नोति । उच्यते सर्वपश्चादादयः' इति वचनात्पश्चाच्छब्दस्य अव्ययीभावसमास प्रत्यन्ययत्व नाहीकार्यम् । अव्ययत्वे हि अव्ययीभाव

याति । रथस्य पश्चादित्यर्थः । एवम् *अनुपादातम् । क्रम आनुपूर्व्यम् । अनुज्येष्ठं प्रविशन्तु । ज्येष्ठानुक्रमेणेत्यर्थः । एवमनुवृद्धं साधूनर्चय । ख्यातिः शब्दप्रथा । इतिभद्रबाहु । तद्भद्रबाहु । अहोभद्रबाहु । भद्रबाहुशब्दो *लोके प्रकाशत इत्यर्थः । युगपदेककालार्थे । सचक्रं धेहि । चक्रेण सहैककालं चक्राणि वा *युगपद्धेहीत्यर्थ । एवं सधुरं प्राजः । सदृगर्थे, सव्रतम् । व्रतस्य सदृशमित्यर्थः । एवं सशीलम् । *सकिखि । सदेवदत्तम् । अव्ययीभावे सहस्य सभावः । *सपत् सिद्धिः । *सब्रह्म साधूनां संपन्नं ब्रह्मेत्यर्थः । सवृत्तं मुनीनाम् । सक्षत्रमिक्ष्वाकूणाम् । साकल्यमशेषता । सतृणमभ्यवहरति । न किंचित् त्यजतीत्यर्थः । एवं सतुषम् । अन्तः समाप्तिः । सपिण्डैषणमधीते *पिण्डैषणापर्यन्तमधीत इत्यर्थः । एवं *सषड्जीवनिकायमधीते । अत्र समाप्तिरसकलेऽप्यध्ययने प्रतीयत इति साकल्ये *अनन्तर्भावः । पूर्वपदार्थ इत्येव । समृद्धा मद्राः सुमद्राः । अव्ययमिति किम् । समीपं कुम्भस्य ॥ ३९ ॥ *योग्यतावीप्सार्थानतिवृत्तिसादृश्ये ॥ ३ । १ । ४० ॥ एष्वर्थेष्वव्ययं नाम नाम्नैकार्थ्ये पूर्वपदार्थे समस्यतेऽव्ययीभावश्च समासः । योग्यतायाम्, अनुरूप चेष्टते । रूपस्य योग्यां चेष्टां कुरुते । वीप्सायाम्, *प्रत्यर्थं शब्दा अभिनिविशन्ते । अर्थमर्थं प्रतीत्यर्थः । एवं प्रतिपर्यायम् । वीप्सायां द्वितीयाया विधानात् वाक्यमपि भवति । अर्थमर्थं प्रतीति । अर्थानतिवृत्तिः *पदार्थानतिक्रमः । यथाशक्ति पठ । शक्तेरनतिक्रमेणेत्यर्थः । एवं यथाबलम् । नात्र *विन्यासविशेष इति क्रमाद्भेदः । सादृश्ये, सशीलमनयोः । शीलस्य सादृश्यमित्यर्थः । एवं सव्रतमनयोः । सकिखि । किखया सादृश्यमित्यर्थः । सदृगित्यनेनैव सिद्धे *सादृश्यग्रहणं मुख्यसादृश्यपरिग्रहार्थम् ॥ ४० ॥ *यथाऽथा ॥ ३ । १ । ४१ ॥ थाप्रत्ययरहितं यथेत्येतदव्युत्पन्नमव्ययं नाम नाम्ना सहैकार्थ्ये नित्यं समस्यते पूर्वपदार्थेऽभिधेये स च समासोऽव्ययीभावः । यथारूपं चेष्टते । रूपानुरूपमित्यर्थ । *यथावृ-

---

स्यात् तत्र चान्य इत्यधिकारात्समासान्तरप्राप्तावन्यत्वाभावात्तत्पुरुषो न स्यात् ॥—अनुपादातमिति । अत्र पदातीना समूह पादाभ्यामतत्यचि वा पादात पादात ॥—लोके प्रकाशते इत्यर्थ इति । अत्रेति तत्अहोअव्ययानि शब्द प्रद्योतयन्ति । अव्ययानामन्यत्रासत्ववृत्तित्वेऽपि वृत्तिविषये निष्कौशाम्बिगतिखट्व. प्रकटो विकट इत्यादिवत्सत्त्ववृत्तिदर्शनात् ॥—युगपद्धेहीति । शब्दशक्तिस्वाभाव्याचान्यपदार्थप्रधानोऽयम् ॥—सकिखीति । लोमशिका जीवविशेष. किखि । यस्य लोके लुकटीति प्रसिद्धि । यमगोत्रविशेषश्च ॥—संपत्सिद्धिरिति । सिद्धिरात्मभावनिष्पत्ति समृद्धिस्त्वन्यभावनिष्पत्तिरिति सिद्धि समृद्धेरन्या ॥ ब्रह्मण सपत्—सब्रह्म ॥—पिण्डो भक्तमिति पिण्डो भक्तमिष्यतेऽन्विष्यते कल्प्याकल्प्यविभागेन विचार्यतेऽस्मिन्निति 'इषेनिच्छायाम्' इति व्युत्पत्ते ॥—सषड्जीवनिकायमधीत इत्यत्र जीवाना निकाया षट् जीवनिकाया यत्र पठितव्ये । अथवा षण्णा जीवाना निकायस्तत षड्जीवनिकायेनान्त षड्जीवनिकाय ग्रन्थमन्त कृत्वा न तु सकलमित्यर्थ ॥—अनन्तर्भाव इति । अत्र श्रुतस्कन्धादिरन्यपदार्थ । स्वभावात्तत्प्रधानोऽय समास ॥—योग्यतावीप्सा—॥—प्रत्यर्थमिति 'वाऽभिनिविश' इति विकल्पेन कर्मण आधारसज्ञा । समासेन वीप्साया द्योतितत्वात्तन्निमित्ता द्विरुक्तिर्न प्रवर्त्तते । वाक्ये तु लक्षणादेरनेकस्यार्थस्य द्योत्यस्य सम्भवाद्विभक्तिमन्तरेण वीप्सा द्योतयितु न शक्येति ॥—पदार्थानतिक्रम इति । पदमुत्तरपद शक्त्यादिरूप तस्यार्थ सामर्थ्य तस्यानतिवृत्ति ॥—विन्यासविशेष इति । मूर्त्तस्यानेकस्य पदार्थस्य नियतदेशाद्यपेक्ष व्यवस्थापन विन्यास स एव विशेष ॥ यदि सदृगित्येव कुर्यात्तदा सकिखि देवदत्त इति सामानाधिकरण्यमेव स्यादित्याह—सादृश्यग्रहणमित्यादि । तेन देवदत्तस्य सकिखीति वैयधिकरण्यमपि सिद्धम् । सदृक्शब्दो हि धर्मिवाची सादृश्यशब्दस्तु धर्मवाची ॥—यथाऽथा ॥—यथावृद्धमिति । अत्र क्रमोऽपि प्रतीयते तत्कथमुक्त

द्रुमभ्यर्चय । *ये ये वृद्धास्तानित्यर्थः । यथासूत्रमनुतिष्ठति । सूत्रानतिवृत्त्येत्यर्थः । अथा इति किम् । यथा चैत्रः तथा मैत्रः । *पूर्वेणैव सिद्धे *सादृश्ये प्रतिषेधार्थं वचनम् ॥ ४१ ॥ ***गतिक्वन्यस्तत्पुरुषः** ॥ ३ । १ । ४२ ॥ *कु इत्यव्ययं पापाल्पयोर्वर्तते । गतिसंज्ञकाः कुश्च नाम नाम्ना सह नित्यं समस्यन्ते स च समासोऽन्यो बहुव्रीह्यादिलक्षणरहितस्तत्पुरुषसंज्ञो भवति । ऊरीकृत्य । खाट्कृत्य । शुक्लीकृत्य । पटापटाकृत्य । प्रकृत्य । कारिकाकृत्य । कु, कुत्सितो ब्राह्मणः *कुब्राह्मणः । एवं कुपुरुषः । ईषदुष्णं कोष्णं कवोष्णं कदुष्णम् । एवं कामधुरम् । अव्ययमित्येव । कुर्विशाला । पृथिवीत्यर्थः । अन्य इति किम् । कुत्सिताः पुरुषा यस्य स कुपुरुषकः । अत्र बहुव्रीहित्वात् कच् भवति । तत्पुरुषप्रदेशाः 'गोस्तत्पुरुषात्' ( ७-३-१०५ ) इत्यादयः ॥ ४२ ॥ ***दुर्निन्दाकृच्छ्रे** ॥ ३ । १ । ४३ ॥ दुरित्यव्ययं नाम निन्दायां कृच्छ्रे चार्थे वर्तमानं नाम्ना नित्यं समस्यते स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति । निन्दितः पुरुषः दुष्पुरुषः । कृच्छ्रेण कृतं दुष्कृतम् । अन्य इत्येव । निन्दिताः पुरुषा यस्य स दुष्पुरुषः । अत्रापि बहुव्रीहित्वात्कच् ॥ ४३ ॥ ***सु पूजायाम्** ॥ ३ । १ । ४४ ॥ सु इत्यव्ययं पूजायां वर्तमानं नाम्ना नित्यं समस्यते स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति । शोभनो राजा सुराजा । अन्य इत्येव । मद्राणां समृद्धिः सुमद्रम् । अत्राव्ययीभावत्वादम् ॥ ४४ ॥

**अतिरतिक्रमे च** ॥ ३ । १ । ४५ ॥ अतीत्यव्ययमतिक्रमे पूजायां च वर्तमानं नाम्ना नित्यं समस्यते स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति । अतिस्तुतं भवता । अतिसिक्तं भवता । अतिक्रमेण स्तुतिसेकौ कृतावित्यर्थः । अतिस्तुत्य । अतिसिच्य । पूजायाम् । शोभनो राजा अतिराजा । बहुलाधिकारादतिक्रमे क्वचिन्न भवति । अति श्रुत्वा । अति सिक्त्वा ॥ ४५ ॥ **आङल्पे** ॥ ३ । १ । ४६ ॥ आङित्यव्ययमल्पेऽर्थे वर्तमानं नाम्ना नित्यं समस्यते स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति । ईषत्कडारः आकडारः । एवमापिङ्गलः । आबद्धमायुक्तमित्यादौ तु क्रियायोगे गतिलक्षण एव समासः ॥ ४६ ॥ ***प्रात्यवपरिनिरादयो गतक्रान्त-क्रुष्टग्लानक्रान्ताद्यर्थाः प्रथमाद्यन्तैः** ॥ ३ । १ । ४७ ॥ प्रादयः शब्दा *गताद्यर्थेषु वर्तमानाः प्रथमान्तेन, अत्यादयः क्रान्ताद्यर्थेषु द्वितीयान्तेन, अवादयः क्रुष्टाद्यर्थेषु तृतीयान्तेन, पर्यादयो ग्लानाद्यर्थेषु चतुर्थ्यन्तेन, निरादयः क्रान्ताद्यर्थेषु पञ्चम्यन्तेन, नाम्ना सह समस्यन्ते स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति । प्रादयः,

---

ये ये वृद्धा इत्यादि । उच्यते । प्रतीयता क्रमो वीप्सापि प्रतीयते । न व्यक्तोऽनेकार्थो न भवति ॥—**पूर्वेणैव सिद्ध** इति । पूर्वसूत्रोपात्तेष्वेवार्थेषु अस्यापि प्रवृत्ते ॥—**सादृश्ये प्रतिषेधार्थ-**मिति । ननु यथा चैत्र इत्यादौ चैत्रसदृशो मैत्र इत्यर्थ । ततश्च थाप्रत्ययान्त सादृश्ये न प्रवर्ततेऽपि तु सदृशि तत किमुक्त सादृश्ये प्रतिषेधार्थम् । उच्यते । सादृश्योपाधिकत्वात् सदृगपि सादृश्यश-ब्देनोच्यतेऽतो वचनम् । सदृशि तु 'विभक्तिसमीप'-इति प्राप्ते निषेध । अव्युत्पन्नस्य सादृश्य विना योग्यतादिष्वर्थेषु 'योग्यता'-इति सिद्ध समास पर व्युत्पन्नस्य सदृगर्थे 'विभक्ति'-इत्यादिना समास प्राप्तस्तन्निषेधार्थं वचनम् ॥—**गतिक्वन्य**—॥—**कु इत्यव्ययमिति** । गतिसाहचर्यादव्ययमित्यधिकाराद्वा सभवव्यभिचारेति न्यायात् कु इत्यस्य विशेषण न तु गतिसज्ञाना तेषामव्यभिचारात् ॥—**कुब्राह्मण** इति । नित्यसमासत्वात् कुत्सितो ब्राह्मण इत्यस्वपदविग्रह ॥—**सु पूजायाम्** । पूजाया अन्यत्रातिशयार्थेऽनुक्तापि व्यावृत्तिर्द्रष्टव्या ॥—**प्रात्यवपरि**—॥—**गताद्यर्थेषु वर्त्तमाना** इति । अनेन प्रादीना गम्यादिक्रियाविशिष्टसाधनेषु प्रवृत्तिर्वृत्तिविषये विज्ञायते । तत्राप्यस्मिन्नर्थे वृत्तिरिति विशेषनिर्णयो लक्ष्यानुसारेण भवति । तत्रापि प्रयोगपर्यालोचनया विशिष्टार्थवृत्तित्व प्रादीना वाक्येराचष्टे ॥—

*प्रगत आचार्यः प्राचार्यः। एवं *प्रान्तेवासी। प्रवृद्धो गुरुः प्रगुरुः। प्रकृष्टो वीरः प्रवीरः। संगतोऽर्थः समर्थः। विरुद्धः पक्षो विपक्षः। प्रत्यर्थी पक्षः प्रतिपक्षः। प्रतिबद्धं वचः प्रतिवचः। उपश्लिष्टः पतिरुपपतिः। उपपन्नोऽनुकूलः प्रतिकूलो वा नायकः, उपनायकः। अनुनायकः। प्रतिनायकः। अत्यादयः, आतिक्रान्तः खट्वाम् अतिखट्वः। उद्गतो वेलाम् उद्वेलः। प्रतिगतोऽक्षं प्रत्यक्षः। अनुगतः प्रतिगतो वा लोमानि *अनुलोमः प्रतिलोमः। अभिप्रपन्नो मुखमभिमुखः। अवादयः, अवक्रुष्टः कोकिलया अवकोकिलः। परिणद्धो वीरुद्भिः परिवीरुत्। संनद्धो वर्मणा संवर्मा। अनुगतमर्थेनान्वर्थं नाम। संगतमक्षेण समक्षम् वस्तु। वियुक्तमर्थेन व्यर्थं वचः। संगतमर्थेन समर्थं पदम्। पर्यादयः, परिग्लानोऽध्ययनाय पर्यध्ययनः। उद्युक्तः संग्रामाय उत्संग्रामः। शक्तः कुमार्यै अलंकुमारिः। शक्तः पुरुषेभ्यः अलंपुरुषीणः। अलंशब्दस्य चतुर्थ्यन्तेन वाक्यमपीच्छन्त्यन्ये। अलं जीविकायै अलंजीविकः। अलं कुमार्यै अलंकुमारिः। निरादयः, निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः। अपगतः शाखायाः अपशाखः। अन्तर्गतोऽङ्गुल्या *अन्तरङ्गुलो नखः। उत्क्रान्ता कुलादुत्कुला कुलटा। एवमुद्वेलः समुद्रः। उच्छास्त्रं वचः। उत्सूत्रो न्यायः। उच्छृङ्खलः कलभः। अपगतमर्थादपार्थं वचः। एवमपक्रमं कार्यम्। बहुलाधिकारात् षष्ठ्यन्तेनापि। अन्तर्गतो गार्ग्यस्य अन्तर्गार्ग्यः। एवमन्तरङ्गुलो नखः। सप्तम्यन्तेनापि। प्रतिष्ठितमुरसि *प्रत्युरसम्। गताद्यर्था इति किम्। वृक्षं प्रति विद्योतते विद्युत्। साधुर्देवदत्तो मातरं प्रति। अन्य इत्येव। प्राचार्यको देशः। बहुवचनमाकृतिगणार्थम्॥ ४७॥

*अव्ययं प्रवृद्धादिभिः॥ ३। १। ४८॥ अव्ययं नाम प्रवृद्धादिभिर्नामभिर्नित्यं समस्यते स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति। *पुनःप्रवृद्धं बर्हिः। पुनरुत्स्यूतं वासः। पुनर्निष्क्रान्तो रथः। पुनरुक्तं वचः। पुनर्नवं वयः। पुनःशृतं पयः। स्वर्यातः। *अन्तर्भूतः। प्रातःसवनम्। उच्चैर्घोषः। नीचैर्गतम्। *अधस्पदम्। *अनद्धापुरुषः। असशक्तः पुरुषः। प्रायश्चित्तम्। सद्यस्क्रीः। प्राग्वृत्तम्। पुराकल्पः। *श्वःश्रेयसम्। *श्वोवसीयसम्। इति। बहुवचनमाकृतिगणार्थम्॥ ४८॥

*ङस्युक्तं कृता॥ ३। १। ४९॥ कृत्प्रत्ययविधायके सूत्रे ङसिना पञ्चम्यन्तेन नाम्नोक्तं ङस्युक्तम्। तत् *कृदन्तेन नाम्ना नित्यं समस्यते स च समासोऽ-

---

—प्रगत आचार्य इत्यत्र वाक्ये प्रादेर्द्योतकत्वं गम्यमानप्राक्शप्रगतार्थस्य वाचकत्वं प्रार्थत्वाद्गतस्य प्राचार्यो देश इति न भवति॥—प्रान्तेवासीति। अन्ते वसतीत्येव व्रती 'व्रताभीक्ष्ण्ये' णिन् 'शयवासिवासेषु'—इत्यलुप्॥—अनुलोम इति 'प्रत्यन्वव'—इति अत् समासान्त। 'नोपदस्य'—इत्यन्त्यस्वरादिलोप॥—अन्तरङ्गुल इति। 'सख्यान्ययादङ्गुले' इति ट॥—प्रत्युरसमिति। 'प्रत्युरस' इत्यत् समासान्त॥—अव्ययं प्र—॥—पुनःप्रवृद्धमिति। कालवाचकात्पुन शब्दात् 'कालाध्वभाव'—इति विकल्पेन द्वितीया सप्तमी वा सर्वत्र। पुन प्रवर्द्धते स्मेति कार्यं न तु भूय प्रवृद्धमिति तस्याप्यव्ययत्वादनेनैव नित्यसमासत्वात्समुदायस्यैवाय पर्यायो भवति। एवमुत्तरेष्वपि। श्राति श्रायति वा पय स्वयमेव तद् श्रायद्वा चैत्रेण प्रयुज्यते स्म तत पुन श्रप्यते स्म॥—अन्तर्भूत इत्यत्र अन्त शब्देन मध्यस्थोऽप्युच्यते तत्र प्रथमा॥—अधस्पदमिति। अधस्थाने पदमित्येव कार्यं न त्वधस्तादिति तस्याप्यव्ययत्वात्। अनिर्णयोऽनद्धा तेन पुरुष न विद्यते द्वा सशयोऽस्येति व्युत्पत्त्याद्वा धर्मी उच्यते। न अद्धा अनद्धा सशयित पुरुष ससशय पुरुषो वा—अनद्धापुरुषः॥ भ्रातुष्पुत्रकस्कादित्वात्सत्वे—सद्यस्क्रीः॥ 'निसश्च श्रेयम' इति श्व श्रेयसम्॥—श्वोवसीयसमिति। वसुशब्दान्मतौ ईयसि 'विन्मतो' इति मत्लोपे शोभन वसीय 'श्वसो वसीयस'। अत्॥—ङस्युक्तं—॥—कृदन्तेनेति। प्रत्यासत्त्या तत्सूत्रविहितनेन॥—आप प्राप्तावि-

न्यस्तत्पुरुषसंज्ञो भवति । कुम्भं करोति कुम्भकारः । शरलावः । अग्निचित् । सोमसुत् । अन्यथाकारं भुङ्क्ते । अतिथिवेदं भोजयति । इह च गतिकारकङस्युक्तानां विभक्त्यन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समास इष्यते । तेन मस् स्थ इत्यादौ, चर्मन् टा क्रीत, अभ्र टा विलिप्त इत्यादौ, कच्छ अम् प इत्यादौ च समासे च सति अकारान्तत्वात् ङोः सिद्धः । मष्ठां । चर्मक्रीती । अभ्रविलिप्ती । कच्छपी इत्यादि । यदि पुनर्विभक्त्यन्तैः कृदन्तैः समासः स्यात् तदान्तरङ्गत्वाद्विभक्तेः प्रागेव *आपः प्राप्तावकारान्तत्वाभावात् ङीर्न स्यात् । तथा मापान् वापिन् व्रीहीन् वापिन् इत्यादौ समासे नकारस्यानन्तत्वाणत्वं सिद्धम् । माषवापिणी । व्रीहिवापिणी । विभक्त्यन्तेन तु समासेऽन्तरङ्गत्वाद्विभक्तेः प्रागेव ङीमाप्तौ नकारस्यान्त्यत्वाणत्वं न स्यात् । पूर्वपदस्य च विभक्त्यन्तत्वनियमात् चर्मक्रीतीत्यादिषु पदकार्यं नकारलोपादि सिद्धं भवति । ङस्युक्तमिति किम् । कारकस्य व्रज्या । कारकस्य गतिः । अलं कृत्वा । खलु कृत्वा । कृतेति किम् । धर्मो वो रक्षतु ॥ ४९ ॥

*तृतीयोक्तं वा ॥ ३ । १ । ५० ॥ 'दंशेस्तृतीयया' ( ५–४–६३ ) इत्यारभ्य यत्तृतीयोक्तं नाम तत् कृता नाम्ना वा समस्यते स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति । मूलकेनोपदंशं, मूलकोपदंशं भुङ्क्ते । दण्डेनोपघातं, दण्डोपघातं गाः कलयति । पार्श्वयोः पार्श्वाभ्यां वोपपीडं, पार्श्वोपपीडं शेते । *वाशब्दो नित्यसमासनिवृत्त्यर्थः । तेनोत्तरेषु वाक्यमपि भवति ॥ ५० ॥ *नञ् ॥ ३ । १ । ५१ ॥ नञित्येतन्नाम नाम्ना समस्यते स च समासोऽन्यस्तत्पुरुषसंज्ञो भवति । न गौः *अगौः । अनुच्चैः । असः । *निवर्त्यमानतद्भावश्चोत्तरपदार्थः पर्युदासे नञ्समासार्थः । स चायं चतुर्धा । तत्सदृशः, तद्विरुद्धः, तदन्यः, तदभाव इति । अब्राह्मणः, अशुक्ल इति तत्सदृशः क्षत्रियादिः पीतादिश्च प्रतीयते । अधर्मः, असित इति तद्विरोधी पाप्मा कृष्णश्च प्रतीयते । अनग्निः अवायुरित्यग्निवायुभ्यामन्यः प्रतीयते । *अवचनम् *अवीक्षणमिति वचनवीक्षणाभावः *प्रतीयते । नन्वस्योत्तरपदार्थप्राधान्येन तल्लिङ्गसंख्यत्वे सति कथं *'भवन्त्यनेके जलधेरिवोर्मयः' इत्यादौ *अनेके इति बहुवचनम् । असाधव एवेदृशाः शब्दाः । *प्रसज्यप्रतिषेधे तु नञ् पदान्तरेण संबध्यत इति उत्तरपदं वाक्यवत् स्वार्थ एव वर्तते । तत्रासामर्थ्येऽपि यथाभिधानं बाहुलकात् समासः । सूर्यमपि न पश्यन्ति असूर्यंपश्या राजदाराः । पुनर्न गीयन्ते अपुनर्गेयाः श्लोकाः । श्राद्धं न भुङ्क्ते *अश्राद्धभोजो अलवण-

ति । आप् किल स्त्रीत्वमात्रनिमित्त । स्यादिस्तु कश्चित् सख्यानिमित्त कश्चित् कर्मादिनिमित्त ॥—कारकस्येति । 'क्रियाया क्रियार्था'—इति सप्तम्युक्तत्वाणकच् अभाणि ङस्युक्त यदि न भण्यते तदा व्रज्याकारकगतिकारकौ इति स्याताम् ॥—तृतीयोक्तम्—॥—वाशब्द इति । इह पृथग्योगादेव नित्यत्वस्य निवृत्तिर्वाशब्दस्तु नित्यसमासाधिकारनिवृत्यर्थ इति ॥—नञ् ॥ ननु न इत्येव निरनुबन्ध पठयता किं सानुबन्धेन नञित्युपादानेन । सत्यम् । चादिषु नकारोपदेश स्मारयितु नकारो निर्दिश्यते प्रतिषेधशङ्काव्युदासार्थं च । नेत्युक्ते हि समासस्य प्रतिषेध संभाव्यते ॥—अगौरिति । नञा विशेषित आरोपितगवादिस्वरूपो गवयादिरित्यर्थ ॥—निवर्त्यमानतद्भाव इति । घटादे पटादिभावो य कुतश्चिद्व्यामोहादाशङ्कित स निवर्त्यमानस्तिरस्क्रियमाणो यत्रोत्तरपदार्थे स निवर्त्यमानतद्भाव । निवर्त्यमानो यस्तस्य उत्तरपदस्य भाव उत्तरपदप्रवृत्तिनिमित्तगोत्वब्राह्मणत्वादि तद्वानिहार्थ उत्तरपदस्यैवार्थ । नञ्समासस्यापि निवृत्तिविशिष्टोत्तरपदार्थप्राधान्यमित्यर्थ ॥—स चायमिति । उत्तरपदार्थ इत्यर्थ ॥ अवचनमित्यादिषु कश्चिद्वचनमवचन च एकमेव जानाति पश्चादवचन न भवति कोऽर्थ । यद्वचन वर्त्तते तद्वचन न भवति । एतेन किमुक्त भवति अवचनस्य वचनाभाव प्रतीयते इत्यर्थ । एवमवीक्षणमित्यत्रापि ज्ञेयम् ॥—प्रतीयते इति । सर्वत्र शब्दशक्तिस्वाभाव्यादिति योज्यम् ॥—अश्राद्धभोजीत्यादिषु 'व्रताभीक्ष्ण्ये' इति णिन् ॥ कणो वेष्टेते आभ्यामिति नाम्नि पुंसि च णक ॥

भोजी भिक्षुः। तथा कर्णवेष्टकाभ्यां न शोभते *अकार्णवेष्टकिकं मुखम्। 'शोभमाने' (६-४-१०२) इतीकण्। वत्सेभ्यो न हितोऽवत्सीयो गोधुक्। 'तस्मै हितः' (७-१-३९) इतीयः। वधं नार्हत्यवध्यो ब्राह्मणः। 'दण्डादेर्यः' (६-४-१७८) इति यः। संतापाय न शक्त असांतापिकः सदुपदेशः। 'तस्मै योगादेः शक्ते' (६-४-९४) इतीकण्। अन्य इत्येव। न विद्यन्ते मक्षिका यत्र सोऽमक्षिकाकः। मक्षिकाणामभावोऽमक्षिकमिति ॥ ५१ ॥ ***पूर्वापराधरोत्तरमभिन्नेनांशिना** ॥ ३ । १ । ५२ ॥ अंश एकदेशस्तद्वानंशी। पूर्वादयः शब्दाः सामर्थ्यादंशवाचिनोऽशिना समस्यन्ते अभिन्नेन 'न चेत्सोऽशी भिन्नः प्रतीयते' तत्पुरुषश्च समासो भवति। *पूर्वः कायस्य पूर्वकायः। एवम् अपरकायः। अधरकायः। उत्तरकायः। पूर्वादिग्रहणं किम्। दक्षिणं कायस्य। अभिन्नेनेति किम्। *पूर्वं छात्राणामामन्त्रयस्व। *प्रसज्यप्रतिषेधः किम्। पूर्वं पाणिपादस्य। अत्र हि समाहारस्यैकत्वेऽपि पाणिः पाद इति भेदप्रतीतेर्न भवति। पूर्वग्राम इत्यादौ तु न ग्रामशब्दात्प्रासादादिभेदप्रतीतिः। *अंशिनेति किम्। पूर्वो नाभेः कायस्य ॥ ५२ ॥ ***सायाह्नादयः** ॥ ३ । १ । ५३ ॥ सायाह्नादयः शब्दा अंशिना तत्पुरुषेण साधवो भवन्ति। *सायमह्नः सायाह्नः। मध्यमह्नः मध्याह्नः। मध्यं दिनस्य मध्यंदिनम्। मध्यं रात्रेः मध्यरात्रः। *उपारताः पश्चिमरात्रगोचरात् इत्यादयः। बहुवचनमाकृतिगणार्थम्। पूर्वे पञ्चालाः, उत्तरे पञ्चालाः इतिवत्समुदायवाचिनामंशेऽपि प्रवृत्तिदर्शनात् सामानाधिकरण्ये सति कर्मधारयेणैव सिद्धम्।

---

—**अकार्णवेष्टकिकमित्यादिषु** नञः शुभिक्रियैव सनन्धानाकारस्य वृद्धि । एव सर्वोदाहरणेषु ज्ञातव्यम् ॥ नन्विद सूत्र विनाप्यब्राह्मण इत्यादयो विशेषणमित्यनेन कर्मधारयेऽपि सेत्स्यन्ति यतो नञ् विशेषणं ब्राह्मणो विशेष्यमिति । उच्यते । पूर्वापरभावनियमार्थं वचनम् । यत्र द्वौ गुणशब्दौ भवत तत्रानियमेन पूर्वनिपात । यथा अखञ्ज । नञ् निषेधमात्रे वर्तते खञ्जशब्दोऽपि गुणमात्रे इत्यनियमेन प्राप्नोतीति वचनम् । प्रसङ्ग कृत्वा प्रतिषेध **प्रसज्यप्रतिषेध** 'अव्यय प्रवृद्धादिभि' स । 'हता गुणैरस्य भयेन वा मुनेस्तिरोहिताश्चित्प्रहरन्ति देवता ॥ कथ त्वमी सततमस्य सायका **भवन्त्यनेके जलधेरिवोर्मयः** ॥ १ ॥ किराते ॥—**अनेके** इति । अत्र न एक इति कृत्वा विशेष्यलिङ्गसख्या चाश्रित्य अनेक इत्यपि समर्थ्यते उत्पलेन । कश्चिदेकशब्दस्यान्यार्थस्य एकशेषादेक इति साधयित्वा पश्चान्नञ्समास मन्यते ॥—**पूर्वापराध—**॥—**पूर्व्व कायस्येति**। पूर्वो भाग कस्मान्नाभ्यादे कस्य कायस्येति सनन्धादिकपञ्चमी कायशब्दान्न भवति ॥—**पूर्व छात्राणामिति**। बहुवचनात् भेदप्रतीति । छात्राणा सबन्धिन कस्मादपि छात्रात्पूर्व्वमित्यर्थ ॥—**प्रसज्यप्रतिषेध किमिति**। यद्यत्राभिन्नेन भवतीति पर्युदास स्यात्तदा समाहारस्यैकत्वादत्रापि समास स्यात्। भिन्नेन न भवतीति प्रसज्यप्रतिषेधे तु विज्ञायमाने समाहारद्वन्द्वस्य भेदपूर्वकत्वात भेदनिमित्त प्रतिषेधोऽपीति समासाभाव ॥—**अशिनेति किमिति** । ननु नाभेर्य पूर्वो भागो व्यवस्थित स कायस्य शोभनो रिक्तो वेत्यार्थोऽत्र विवक्षितस्तत्र पूर्वस्य कायापेक्षत्वेनासमर्थत्वादेव नाभ्या सह समासो न प्राप्त किमशिवर्जनेन । सत्यम् । यद्यपि कायापेक्षत्व पूर्वस्य तथापि प्रधानसापेक्षत्वेऽपि वृत्तिर्भवतीति असत्यशिनेत्यस्मिन्नवधिभूतया नाभ्या समास सभाव्येत अमुना कायेनाशिना सह समासो यथाभिधानमस्ति तत प्रवर्त्तते पूर्वकायो नाभेरिति ॥—**सायाह्नादय** ॥ स्यतेर्घञि औणादिको वा सायशब्द । मान्तमव्यय वा ॥—**सायमह्न** इति । ननु सायम्शब्देनाऽहरन्त उच्यते इत्युक्तार्थत्वात्सायमह्न इति विग्रहेऽह्न्शब्दस्य प्रयोगो न प्राप्नोति । सत्यम् । दिनान्ते यानि कार्याणि क्रियन्ते तान्यप्युपचारात्सायम्शब्देनोच्यन्ते । तत सदेह किं कार्याण्यभिधीयन्ते उत दिनान्त इत्यहन्शब्द प्रयुज्यते । सूत्रसामर्थ्यात् वा तस्मात्त्वदिनान्त एव लभ्यते ॥—**उपारताः पश्चिमरात्रगोचराद्**पारयन्त पतितु जवेन गाम् ॥

पूर्वश्चासौ कायश्च पूर्वकायः सायं च तदहश्च सायाह्न इति । तत्पुरुषविधानं त्विह पूर्वत्र चाह्नः सायं कायस्य पूर्वमिति *षष्ठीसमासबाधनार्थम् ॥५३॥ *समेंऽशेऽर्धं नवा ॥ ३ । १ । ५४ ॥ अर्धमित्येतत्समेंऽशे वर्तमानमंशिना अभिन्नेन वा समस्यते तत्पुरुषश्च समासो भवति । *अर्धं पिप्पल्याः अर्धपिप्पली । पक्षे पिप्पल्यर्धम् । एवमर्धकोशातकी । कोशातक्यर्धम् । अर्धपणः । पणार्धम् । अर्धवेदिः । वेद्यर्धम् । अर्धचापम् । चापार्धम् । अर्धस्वरः । स्वरार्धम् । अर्धग्रामः । ग्रामार्धम् । अर्धापूपः । अपूपार्धम् । समेंऽश इति किम् । ग्रामार्धः । नगरार्धः । अर्धं च सा पिप्पली चेति कर्मधारयेणैव सिद्धे भेदविवक्षायां पक्षे *षष्ठीसमासबाधनार्थमसमाशे चार्द्धश्चासौ ग्रामश्चेति कर्मधारयनिषेधार्थं वचनम् । अंशिनेत्येव । पिप्पल्या अर्धं चैत्रस्य । अत्र चैत्रेण समासो न भवति । अभिन्नेनेत्येव । *अर्धं पिप्पलीनाम् । कथमर्धपिप्पल्यः, अर्धं पिप्पल्या इत्यभिन्नेन समासे सत्येकशेषात् । अर्धराशिरित्यत्र राशेरभेदप्रतिभासाद्भविष्यति । अत्र समेंऽशे वर्तमानोऽर्धशब्द आविष्टलिङ्गी नपुंसकः । असमांऽशे तु पुंलिङ्गः । अन्ये तसमासे वाच्यलिङ्गमेनमाहुः । असमांश एव च षष्ठीसमासं, समांशे तु नित्यसंशितत्पुरुषमिच्छन्ति ॥ ५४ ॥ *जरत्यादिभिः ॥ ३ । १ । ५५ ॥ असमांशार्थ आरम्भः । अर्धशब्दो जरत्यादिभिरंशिभिरभिन्नैः सह वा समस्यते तत्पुरुषश्च समासो भवति । अर्धो जरत्या अर्धजरती तज्ञ्यम् *अर्धजरतीयम् । *अर्धवैशसम् । अर्धोक्तम् । अर्धविलोकितम् । पक्षे जरत्यर्ध इत्याद्यपि भवति । बहुवचनमाकृतिगणार्थम् । इदमपि षष्ठीसमासबाधनार्थम् ॥५५॥ *द्वित्रिचतुष्पूरणाग्रादयः ॥ ३ । १ । ५६ ॥ द्वित्रिचतुर् इत्येते पूरणप्रत्ययान्ता अग्र इत्यादयश्च शब्दा अंशवाचिनोंऽशिनाऽभिन्नेन वा समस्यन्ते तत्पुरुषश्च समासो भवति । द्वितीयं भिक्षाया द्वितीयभिक्षा । एवं तृतीयभिक्षा । चतुर्थभिक्षा । तुर्यभिक्षा । तुरीयभिक्षा । अग्रं हस्तस्य अग्रहस्तः । एवं तलपादः । ऊर्ध्वकाय इत्यादि । पक्षे भिक्षाद्वितीयम्, भिक्षातृतीयम् । भिक्षाचतुर्थम्, भिक्षातुर्यम्, भिक्षातुरीयम्, हस्ताग्रम्, पादतलम्, कायोर्ध्वमित्यादि । नित्याधिकाराभावादेव पक्षे वाक्यस्य सिद्धत्वाद्वानुवृत्ति पक्षे षष्ठीसमासार्थम् । तेन पूरणेन निषिद्धोऽपि षष्ठीसमासो भवति । द्व्यादिग्रहणं किम् । *पञ्चमं भिक्षायाः । पूरणेति किम् । द्वौ भिक्षा-

---

तमुत्सुकाश्चकुरवेक्षणोन्मुख गवा गणा प्रस्तुतपीवरोधस ॥ १ ॥ किराते ॥—षष्ठीसमासबाधनार्थमिति । ननु सायमोऽव्ययत्वात् 'तृप्त'—इत्यादिना षष्ठीसमासस्य निषेधेन प्राप्तिरेव नास्ति किमुच्यते षष्ठीसमासबाधनार्थमिति । उच्यते । यदाऽकारान्त सायशब्दोऽनव्यय नपुंसकलिङ्गस्तदा प्राप्नोति ॥—समेंऽशे—॥—अर्द्धं पिप्पल्या इत्यत्रार्द्धशब्दस्य तुल्यभागेऽर्द्धमिति क्लीबत्वम् । अर्द्धपिप्पलीति समुदायस्य तु परलिङ्गो द्वन्द्वोऽशीति वचनात् स्त्रीत्वम् । एवमुत्तरत्र । अतुल्यभागे तु ग्रामार्द्ध इत्यादावर्द्धसुदर्शनेति पुंस्त्वम् ॥—षष्ठीसमासबाधनार्थमिति । अयमर्थ सूत्राभावे भेदाभेदविवक्षाया प्रयोगद्वय सिद्ध्यति । सूत्रकृतो तु भेदविवक्षायामेव पक्षे षष्ठीसमास बाधित्वा प्रयोगद्वय सिद्धम् । अन्यथा भेदे षष्ठीसमास एव स्यात् ॥—अर्द्धं पिप्पलीनामिति । पिप्पल्याख्यस्यांशिनोऽनेकद्रव्यस्वभावत्वादभिन्नत्वाभावात्समासाभाव । षष्ठीसमासस्तु भवत्येव पिप्पल्यर्द्धमिति । प्रकरणादिना बहुत्वस्याप्यन्तर्गतबहुवचनान्तस्यापि प्रवृत्तिरविरुद्धा ॥—जरत्यादि—॥—अर्द्धजरतीयमित्यत्र 'काकतालीयादय' ॥—अर्द्धवैशसमिति । शस् हिंसायाम् । विशसन 'कुत्सपदादय' विशसेव प्रज्ञाद्यण् । अर्द्धो वैशसस्यार्द्धमरणमित्यर्थ ॥—द्वित्रिचतु—॥—द्विश्च त्रिश्च चत्वाश्च द्वित्रिचतुरस्तच्च तत्पूरण सूत्रत्वात्पूरणशब्दस्य विशेषणस्यापि न पूर्वनिपात ॥—पञ्चम भिक्षाया इति । षष्ठीसमासोऽपि वाग्रहेणेन यस्येयायमशिसमासस्तस्यैव प्राप्नोतीत्यत्र न भवति ॥—द्वितीयं भिक्षाणामिति । अत्र बहुत्वाद्भिक्षा भिन्ना

याः । अंशिनेत्येव । भिक्षाया द्वितीयं भिक्षुकस्य । भिक्षुकेण समासो न भवति । अभिन्नेनेत्येव । *द्वितीयं भिक्षाणाम् । अग्रादिराकृतिगणः ॥ ९६ ॥ ***कालो**
**द्विगौ च मेयैः** ॥ ३ । १ । ५७ ॥ *अंशांशिनिवृत्तौ तत्संबद्धं वेति निवृत्तम् । कालवाचि नामैकवचनान्तं द्विगौ च विषये वर्तमानं मेयवाचिना नाम्ना समस्यते
तत्पुरुषश्च समासो भवति । मासो जातस्य मासजातः । मासजातौ । मासजाताः । मासजाता स्त्री । एवं संवत्सरजातः । मासमृतः । संवत्सरमृतः । द्विगौ, एको मासो जातस्य
एकमासजातः । *द्वे अहनी सुप्तस्य । द्व्यहसुप्तः । त्र्यहाध्यापितः । कथं द्व्यहजातः त्र्यहजातः । समाहारद्विगोर्जातेन काल इत्यंशेन समासेन भविष्यति । इह च यद्यपि
विग्रहे जातादि कालस्य विशेषणम् तथापि *शब्दशक्तिस्वाभाव्यात् समासो जातादिप्रधानस्तेन समासे लिङ्गं संख्या च तदीयतदीयमेव भवति । काल इति किम् ।
द्रोणो धान्यस्य । काल इति चैकवचनं द्विगोः *अन्यत्र प्रयोजकम् । तेन मासौ मासा वा जातस्येत्यत्र न भवति । द्विगौ तु द्वौ त्रयो वा मासा जातस्य द्विमासजातः
त्रिमासजात इत्यपि भवति । द्विगुग्रहणं त्रिपदसमासार्थम् । अन्यथा नाम नाम्नेत्यनुवृत्तेर्द्वयोरेव स्यात् । चकारो द्विगुरहितकालपरिग्रहार्थः । मेयैरिति किम् । *मा-
सश्चैत्रस्य । जातादेरेव हि मेयत्वम् जन्मादेः प्रभृति जातादिसंबन्धित्वेनैवादित्यगतेः परिच्छेदात्, न द्रव्यमात्रस्य । क्तान्तेनैव च मेयेन प्रायेणायं समास इष्यते ।
तेन मासो गच्छतः, वर्षमधीयानस्य, मासो गन्तुं वर्तते इत्यादौ न भवति । अयमपि षष्ठीसमासापवादो योगः ॥ ९७ ॥ ***स्वयंसामी क्तेन** ॥ ३ । १ । ५८ ॥
स्वयं सामि इत्येते अव्यये क्तान्तेन नाम्ना सह समस्येते तत्पुरुषश्च समासो भवति । स्वयंधौतौ पादौ । स्वयंविलीनमाज्यम् । *आत्मनेत्यर्थः । *सामिकृतम्,
सामिभुक्तम् । अर्धमित्यर्थः । समासे सत्यैकपद्यादेकविभक्तिस्तद्धिताद्युत्पत्तिश्च भवति । स्वायंधौतिः । सामिकृतिः । सामिकृतायनिः । इत्यादि । क्तेनेति किम् । स्वयं
कृत्वा । सामि भुक्त्वा ॥ ९८ ॥ **द्वितीया खट्वा क्षेपे** ॥ ३ । १ । ५९ ॥ खट्वा इत्येतन्नाम द्वितीयान्तं क्षेपे गम्यमाने क्तान्तेन नाम्ना सह समस्यते
तत्पुरुषश्च समासो भवति । *क्षेपः समासार्थो न वाक्येन गम्यते इति *नित्य एवायं समासः । खट्वारूढः खट्वाप्लुतो जाल्मः । उत्पथप्रस्थित एवमुच्यते ।
खट्वा पल्यङ्क आचार्यासनं वा । अधीत्य गुरुभिरनुज्ञातेन हि खट्वारोढव्या । यत्त्वन्यथा खट्वारोहणं तदुत्पथप्रस्थानम् । उपलक्षणं चेह खट्वारोहणमुत्पथप्रस्था-

---

॥—**कालो द्वि—**॥—**अशांशिनिवृत्ताविति** । कालमेयैरित्यभिनवार्थग्रहणात् । जातोत्तरपदानि मासजात इत्यादीनि बहुव्रीहावपि सिध्यन्ति । पर मासो मृतस्य मासमृत इत्यत्रान्यपदार्थासंभवात् द्विगौ
च द्व्यहसुप्त इत्यादावपि वचनम् ॥—**शब्दशक्तिस्वाभाव्यादि**ति । अन्यथा मासो जाताया इति स्त्रीत्वविवक्षाया मासजाता इत्यत्र ह्रस्वत्व स्यात् । पूर्वपदप्राधान्याच्च पश्चादाप् न स्यात् ॥—**द्वे**
**अहनी सुप्तस्ये**ति । द्वे इति चाऽहनी इति च नामद्वय सुप्तस्येति नाम्ना समस्यते । ततस्त्रिपदे समासे जाते सुप्त इत्युत्तरपदे परे ' सख्या समाहारे च '–इति द्विगुसज्ञाया द्विगुविषये द्वेरुत्तरपदनिमित्ते
द्विगो भाविनि त्रयाणा तत्पुरुष ॥—**अन्यत्र प्रयोजकामि**ति । अन्यत्र चरितार्थमित्यर्थ । द्विगौ तु द्विवचनाद्यन्तमपि समस्यते इति भाव ॥—**मासश्चैत्रस्ये**ति । अत्र न मासश्चैत्रस्य परिच्छेदकत्वेन
सम्बन्धी कि तूत्सवास्पदत्वेनान्येन वा प्रकारेणेति ॥—**स्वयंसामी—**॥—**धौत** इत्यत्र कर्मकर्त्तरि वा क्त । यत करणशक्ते कर्तृशक्तेर्वा वाचक स्वयशब्द ॥—**आत्मनेत्यर्थ** इति । अत्र करणे
कर्त्तरि वा तृतीया ॥—**सामिकृतमि**त्यत्र ' विशेषण विशेष्येण '–इत्यनेन कर्म्मधारयेणैव सिद्ध्यति पर यदृच्छया पूर्वापरभाव. स्यात्तद्बाधनार्थमिहोपादीयते ॥—**द्वितीया खट्वा—**॥—**क्षेप समासार्थ**

नस्य । तेन सर्वोऽपि विमार्गप्रस्थितः खट्वारूढ इत्युच्यते । क्षेप इति किम् । खट्वामारूढ उपाध्यायोऽध्यापयति ॥ ५९ ॥ *कालः ॥ ३ । १ । ६० ॥ कालवाचि नाम द्वितीयान्तं नाम्ना सह समस्यते तत्पुरुषश्च समासो भवति । रात्रिमतिसृताः रात्र्यतिसृताः । एवं रात्र्यारूढाः । रात्रिसंक्रान्ताः । अहरतिसृताः षड्मुहूर्ताश्चराचराः । ते हि दक्षिणायने रात्रिं गच्छन्ति उत्तरायणे त्वहरिति । मासं प्रमितो मासप्रमितः प्रतिपच्चन्द्रमाः । मासं प्रमातुमारब्ध इत्यर्थः । *अव्याप्त्यर्थ आरम्भः ॥ ६० ॥ **व्याप्तौ ॥ ३ । १ । ६१ ॥** व्याप्तिर्गुणक्रियाद्रव्यैरत्यन्तसंयोगः । व्याप्तौ या द्वितीया तदन्तं कालवाचि नाम व्यापकवाचिनाम्ना सह समस्यते तत्पुरुषश्च समासो भवति । *क्तेनेति निवृत्तम् । मुहूर्तं सुखं मुहूर्तसुखम् । मुहूर्तरमणीयः । *सर्वरात्रकल्याणी । सर्वरात्रशोभना । मुहूर्ताध्ययनम् । मुहूर्तगुरुः । व्याप्ताविति किम् । *मासं पूरको व्रजति । काल इत्येव । क्रोशं कुटिला नदी ॥ ६१ ॥ *श्रितादिभिः ॥ ३ । १ । ६२ ॥ द्वितीयान्तं नाम श्रितादिभिर्नामभिः सवस्यते तत्पुरुषश्च समासो भवति । *धर्मं श्रितः धर्मश्रितः । श्रीश्रितः । *संसारातीतः । नरकपतितः । *निर्वाणगतः । श्रित अतीत पतित गत अत्यस्त प्राप्त आपन्न गमिन् गामिन् आगामिन् इति श्रितादयः । बहुवचनमाकृतिगणार्थम् । तेन ओदनबुभुक्षुः, हिताशंसुः, तत्त्वबुभुत्सुः, सुखेच्छुः इत्यादि सिद्धम् ॥ ६२ ॥ *प्राप्तापन्नौ तयाच्च ॥ ३ । १ । ६३ ॥ प्राप्तापन्नौ सामर्थ्यात् प्रथमान्तौ तया द्वितीयान्तेन नाम्ना सह समस्येते तत्पुरुषश्च समासो भवति तत्संनियोगे चानयोरन्तस्याकारो भवति । प्राप्ता जीविकां प्राप्तजीविका । आपन्ना जीविकाम् आपन्नजीविका । प्राप्तगवी, आपन्नगवी स्त्री । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । प्राप्तगवः । आपन्नगवः पुरुषः । प्राप्तं जीविकां प्राप्तजीविकम् । आपन्नजीविकं कुलम् । अद्वचनं *स्त्रीलिङ्गार्थम् । प्राप्तापन्नयोः प्रथमोक्तत्वात् पूर्वनिपातार्थं वचनम् । श्रितादित्वाच्चानयोर्द्वितीयाया अपि प्रथमोक्तत्वेन प्राग्निपातः । जीविकाप्राप्तः, जीविकापन्न इत्यपि भवति ॥ ६३ ॥ *ईषद्गुणवचनैः ॥ ३ । १ । ६४ ॥ ईषदित्येतदव्ययं गुणवचनैर्नामभिः सह समस्यते तत्पुरुषश्च समासो भवति । ये गुणे वर्तित्वा योगे गुणिनि वर्तन्ते गुणमुक्तवन्तो

---

इति । तत्रैव तस्य प्रसिद्धे ॥—नित्य एवेति । यत्तु खट्वामारूढ इति वाक्य तत्पूर्वोत्तरपदविभागमात्रदर्शनार्थम् ॥—काल ॥ कालयति भूतानि अच् ॥—अव्याप्त्यर्थ इति ॥—क्तेनेति निवृत्तमिति । पृथग्योगादिति शेष ॥—सर्वरात्रकल्याणीति । यद्यपि सर्वशब्दो न कालवृत्तिस्तथाप्युत्तरपदार्थप्रधानत्वेन समासस्य सर्वरात्र इति समुदायोऽपि काल ॥—मास पूरक इति । पूरयिष्यतीति 'क्रियाया क्रिया'–इति णकचि णके तु कर्मणि कृतः' इति षष्ठी स्यात् णकाचि तु 'तन्नुदन्त'–इति निषेधान् ॥—श्रितादिभिः ॥—धर्मं श्रित इति । प्राप्त्यर्थत्वात् 'गत्यर्थाकर्मक'–इति क्त प्राप्त इत्यर्थ । यद्यपि बहुव्रीहिणेत्र धर्म्मश्रित इत्यादीनि सिध्यन्ति तथापि यत्तत्पुरुष शास्ति तत् ज्ञापयति यत्र समासेऽर्थे विग्रहभेदात्तत्पुरुषबहुव्रीही प्राप्नुतस्तत्र तत्पुरुष एव । तेन राजसख इत्यादौ न बहुव्रीहि । किञ्च बहुव्रीहौ कच् स्यात् ॥—ससारातीत इत्यत्र अत्येति स्म उलङ्घते स्म 'गतिक्रन्य'–इति समास । अतिक्रमार्थातिवर्जं इत्यनेन नोपसर्ग इति न वाच्यम् । यदर्थं क्रिया तस्मिन्निष्पन्ने क्रियाप्रवृत्तिरतिक्रम । यथाऽतिसिक्त पुष्पफलादौ निष्पन्नेऽपि पुन सेकक्रियाप्रवृत्ते ॥—निर्वाणगत इति । क्तो निर्वाति सुखीभवत्यत्रेत्यनाटि वा ॥ प्राप्ता जीविका ययेत्यादि बहुव्रीहिणापि सिध्यति, प्राप्तगवीत्यादो तु समासान्तो न स्यादिति वचनम् ॥—स्त्रीलिङ्गार्थमिति । स्त्र्येकार्थोत्तरपदाभावात् 'परत स्त्री'–इति पुंभावो न प्राप्नोतीत्यत्करणम् ॥—ईषद्गुण—॥ गुण वचन्तीति

गुणवचनाः । ईषदल्पं पिङ्गलः *ईषत्पिङ्गलः । एवमीषत्कडारः । ईषद्विकटः । ईषदुन्नतः । ईषद्रक्तः । गुणवचनैरिति किम् । ईषत्कारकः । ईषद्गार्ग्यः । गुणैः क्रियया वा हीनो गार्ग्य एवमुच्यते । समासे तद्धितकाम्य*समासान्तराणि च वसाद्यादेशाभावादयश्च प्रयोजनम् । ईषत्पिङ्गलस्येदमैषत्पिङ्गलम् । ऐषत्पिङ्गलकाम्यत् । *कोपेनेषद्रक्तः कोपेषद्रक्तः । ईषत्पिङ्गल युष्माकमथो पुत्र इति ॥ ६४ ॥ *तृतीया तत्कृतैः ॥ ३ । १ । ६५ ॥ तृतीयान्तं नाम तत्कृतैस्तृतीयान्तार्थकृतैर्गुणवचनैर्नामभिः सह समस्यते तत्पुरुषश्च समासो भवति । शङ्कुलया कृतः खण्डः शङ्कुलाखण्डश्चैत्रः । एवं गिरिकाणः । मदपटुः । क्षारशुक्लः । कुसुमसुरभिः । कृतार्थो वृत्तावन्तर्भूत इति कृतशब्दो न प्रयुज्यते । तत्कृतैरिति किम् । अक्ष्णा काणः । पादेन खञ्जः । शङ्कुलया हेतुना खण्डः । काणत्वादि ह्यत्र काण्डादिना कृतम् । नाक्ष्यादिना । अक्ष्यादिना परं संबन्धमात्रम् । यदा तु तत्कृतत्वविवक्षायां कर्तरि करणे वा तृतीया तदा भवत्येव समासः । अक्षिकाण इत्यादि । गुणवचनैरित्येव । गोभिर्वपावान् । दध्ना पटुः । पाटवमित्यर्थः । न ह्येतौ पूर्वं गुणमुक्त्वा सांप्रतं द्रव्ये वर्तेते इति गुणवचनौ न भवतः । *अत एव शुद्धगुणवाचिनापि समासो न भवति । घृतेन पाटवम्, विद्यया धाष्टर्यम् । अत्रापि समासो भवतीति कश्चित् । अन्ये तु गुणवचनैर्गुणमात्रवृत्तिभिरपि समासमिच्छन्ति । शङ्कुलाखण्डश्चैत्रस्य, गिरिकाणश्चैत्रस्येति ॥६५॥ *चतस्त्रार्द्धम् ॥ ३ । १ । ६६ ॥ अर्धशब्दस्तृतीयान्तस्तत्कृतार्थेन चतसृशब्देन सह समस्यते तत्पुरुषश्च समासो भवति । अर्धेन कृताश्चतस्रोऽर्धचतस्रो मात्राः । एवमर्धचतस्रः खार्यः । चतस्रेति किम् । अर्धेन कृताश्चत्वारो द्रोणाः ॥६६॥ *ऊनार्थपूर्वाद्यैः ॥ ३ । १ । ६७ ॥ तृतीयान्तं नाम ऊनार्थैः पूर्वादिभिश्च नामभिः समस्यते तत्पुरुषश्च समासो भवति । माषेणोनम् माषोनम् । एवं कार्षापणोनम् । माषविकलम् । कार्षापणविकलम् । पूर्वाद्यः, मासेन पूर्वः मासपूर्वः । संवत्सरपूर्वः । एवं मासावरः । संवत्सरावरः । पूर्व, अवर, सदृश, सम, कलह, निपुण, मिश्र, श्लक्ष्ण, इति पूर्वादयः । आकृतिगणोऽयम् । तेन धान्येनार्थो धान्यार्थः हिरण्यार्थः आत्मनापञ्चमः आत्मनाषष्ठः 'एतावलुप्समासौ' माषेणाधिकं माषाधिकम् कार्षापणम् एवं द्रोणाधिका खारी भ्रात्रा तुल्यः भ्रातृतुल्या । *एकेन द्रव्यवत्त्वम् एकद्रव्यवत्त्वम् इत्यादि सिद्धम् । पूर्वादियोगे यथायोगं *हेत्वादौ तृतीया ॥ ६७ ॥ *कारकं कृता ॥ ३ । १ । ६८ ॥ कारकवाचि नाम तृतीयान्तं सामर्थ्यात्कर्तृकरणरूपं कृदन्तेन नाम्ना सह समस्यते तत्पुरुषश्च समासो भवति । कर्तृ, *आत्मना कृतम् आत्मकृतम् । परकृतम् । कृत्सगतिकारकस्यापि । चैत्रेण नखनिर्भिन्नः

---

रम्यावनटि गुणवचना ॥—ईषत्पिङ्गल इति । पिङ्गत्वमस्यास्ति सिध्मादित्वाल्ल । न च वाच्यमीषत्पैङ्गल्ययोगात् पुरुषोऽपीषत् स चासौ पिङ्गलश्चेति कर्मधारयेण सिद्ध्यति । यतस्तत्र पूर्वनिपातकामचार । ईषत्शब्दात् क्रियाविशेषणत्वादम् । उन्नतरक्तशब्दावौणादिकौ पुतपितेति साधू ततो गुणवचनौ । क्ते तु क्रियावचनौ स्याताम् ॥—समासान्तराणीति । अन्यथा 'नाम नाम्ना'—इत्यनुवर्त्तमाने कोपेन ईषद्रक्त इति त्रिपदो न स्यात् । कोपेषद्रक्त इत्यत्र 'ऊनार्थ'—इति समास । ईषद्रक्त इति न गुणवचन । तेनोत्तरेण न समास ॥—तृतीया—॥ प्रत्यय प्रकृत्यविनाभावीति तृतीयान्त नामेह गृह्यते ॥—अत एवेति । गुणवचनत्वाभावादेवेत्यर्थ ॥—ऊनार्थ— ॥ पूर्वादियोगे इत्यत्र पूर्वादिना हि पूर्वादिभावे मासादिर्हेतुरिति अत्र हेतौ तृतीया ॥—हेत्वादाविति । आदिशब्दात्तुल्यार्थैरित्यादि ॥—एकेन द्रव्यवत्त्वमिति । एक च तद्द्रव्य चेति कर्म्मधारये एकद्रव्यमस्यास्तीति कृते 'एकादे' कर्म्मधारयात्' इतीकण् स्यादित्येव समास ॥—कारकं— ॥—आत्मना कृतमिति । अर्थ-

चैत्रनखनिर्भिन्नः । एव सुजनसुलभः । दुर्जनसुलभः । अरिदुर्जयः । करणे, परशुना छिन्न परशुच्छिन्नः । एवं नखनिर्भिन्नः । पादप्रहारः । पादाभ्यां ह्रियते पादहारकः । तलाहतिः । शस्त्रप्रहृतिः । बहुलाधिकारात् स्तुतिनिन्दार्थतायां प्रायेण कृत्यैः समासः । कर्तृ, *काकपेया नदी एवं नाम पूर्णेत्यर्थः । श्वलेह्यः कूपः एवंनामासन्नोदक इत्यर्थः । कुक्कुटसंपात्या ग्रामाः । एवं नामासन्ना इत्यर्थः । करण, कण्टकसंचेय ओदनः । एवं नाम विशद इत्यर्थः । बाष्पच्छेद्यानि तृणानि । एवं नाम मृदूनीत्यर्थः । अन्यत्रापि बुशोपेन्ध्यम्, तृणोपेन्ध्यम् । तेजस *अल्पता ख्याप्यते । *घनघात्यः । कृच्छ्रसाध्यत्वमुच्यते । कारकमिति किम् । विद्ययोषितः । अन्नेनोषितः । तेन हेतुनेत्यर्थः । पुत्रेण गतः, छात्रेणागतः । *तेन सहेत्यर्थः । कृतेति किम् । गोभिर्वपावान् । धान्येन धनवान् । बहुलाधिकारादेव क्तवतुना क्त्वया तव्यानीयाभ्यां च न भवति । दात्रेण लूनवान् । परशुना छिन्नवान् । दात्रेण कृत्वा । परशुना छित्त्वा । काकैः पातव्यः । श्वभिर्लेढव्यः ॥ ६८ ॥ ***नविंशत्यादिनैकोऽच्चान्तः ॥ ३ । १ । ६९ ॥** एकशब्दस्तृतीयान्तो नविंशत्यादिनाम्ना सह समस्यते तत्पुरुषश्च समासो भवति एकशब्दस्य चादन्तो भवति । एकेन नविंशतिः एकान्नविंशतिः । पक्षे एकाद्नविंशतिः । एवमेकान्नत्रिंशत् एकाद्नत्रिंशत् । एकान्नचत्वारिंशत् एकाद्नचत्वारिंशत् । नविंशत्यादिनेति निर्देशात् *'नञत्' ( ३-२-१२५ ) न भवति ॥ ६९ ॥ ***चतुर्थी प्रकृत्या ॥ ३ । १ । ७० ॥** *प्रकृतिः *परिणामि कारणम् । चतुर्थ्यन्तमर्थाद्विकृतिवाचि नाम प्रकृतिवाचिना नाम्ना सह समस्यते तत्पुरुषश्च समासो भवति । यूपाय दारु यूपदारु । कुण्डलहिरण्यम् । प्रकृत्येति किम् । *रन्धनाय स्थाली । अवहननायोलूखलम् । मूत्राय संपद्यते यवागूरित्यादौ तु विकारस्याप्रधानस्य संपद्यते इत्यादिक्रियासापेक्षत्वात् न भवति ॥ ७० ॥ ***हितादिभिः ॥ ३ । १ । ७१ ॥** चतुर्थ्यन्तं नाम हितादिभिः समस्यते तत्पुरुषश्च समासो भवति । *गोभ्यो हितं गोहितम् । एवं गोसुखम् । गोरक्षितः । हित, सुख, रक्षित, बलि, इति हितादयः ॥ आकृतिगणश्चायम् । तेन अश्वघासः श्वश्रूसुरा श्वश्रूसुरम् हस्तिविधानम् धर्मनियमः धर्मजिज्ञासा नाट्यशाला *आत्मनेपदम् *परस्मैपदम् इत्यादि सिद्धम् ॥ कृत्यप्रत्ययान्तं

---

कथनमात्रमिदम् । आत्मना क्रियते स्मेति कार्यं गतिकारकेति न्यायात् ॥—**काकपेया नदी**त्यादिषु निन्दा सुगमैवेति न दर्शिता ॥—**अल्पता ख्याप्यते** इति । नात्र निन्दा स्तुतिर्वा किंतु स्वरूपकथनम् ॥—**घनघात्य** इति । घात्यस काठिन्य प्रतिपाद्यते ॥—**तेन सहेत्यर्थ** इति । एव शिक्षया परिव्राजक इतीत्थंभूतलक्षणेऽप्यनुक्तमपि ज्ञेयम् । अनीयप्रयोगे श्वभिर्लेहनीय इत्याद्यपि द्रष्टव्यम् ॥—**नविंशत्यादिनै—**॥—**नञत् न भवती**ति । 'नञव्ययात्सख्याया ड' इत्यपि न भवति । विधानसामर्थ्यात् । 'लुगस्य'–इत्यादिना अलोपो न भवति अन्यथा त् इति कुर्यात् इति ॥—**चतुर्थी**—॥ प्रक्रियते परिणामरूपतयेति वा प्रकरोति कार्यमिति वा बाहुलकात् क्ति । प्रक्रियादिति वा 'तिक्कृतौ नाम्नि'—**प्रकृतिः** ॥—**परिणामि** इत्यत्र तेन रूपेण यूपादिलक्षणेन भवन तद्भाव परिणाम' सोऽस्यास्तीति ॥—**रन्धनाय स्थाली**ति । यथा यूपाद्यात्मना दार्वादि प्रतिष्ठमान यूपादे प्रकृतित्वेन विज्ञायते नैव रन्धनादे' स्थाल्यादीनि ॥—**मूत्राय संपद्यते** इति यद्यप्यार्थ्या विधेयतया मूत्रस्य प्राधान्य तथापि शाब्द्या प्रथम यवाग्वा सह क्रियासबन्ध । यथा राज्ञ पुरुष इति आर्थ्या राज्ञः प्राधान्येऽपि शाब्द्या पुरुषस्यैव इति अप्राधान्यम् । ततश्च अप्रधानसापेक्षे समासो न भवति प्रधानसापेक्षे तु भवत्येव ॥—**हितादि**—॥—**गोभ्यो हितमि**ति । 'हितसुखाभ्याम्' इत्यनेन चतुर्थी । आशीर्विवक्षायां तु 'तद्भद्रायुष्य' इति आशसाया हितयोगे या चतुर्थी तदन्तस्य समासो न

चेह पठ्यते । देवदेयम् । ब्राह्मणदेयम् । वरमदेया कन्या । इह न भवति ब्राह्मणाय दातव्यम् ॥ ७१ ॥ ***तदर्थार्थेन** ॥ ३ । १ । ७२ ॥ *तस्याश्चतुर्थ्या अर्थो यस्य स तदर्थः । चतुर्थ्यन्तं नाम तदर्थेनार्थशब्देन नाम्ना सह समस्यते तत्पुरुषश्च समासो भवति । पित्रे इदं पित्रर्थं पयः । महदर्थं धनम् । उदकार्थो घटः । आतुरार्था यवागूः । 'ङेर्थो वाच्यवत्' इति वाच्यलिङ्गता । नित्यसमासश्चायम् । चतुर्थ्यैव तदर्थस्योक्तत्वात् अर्थशब्दाप्रयोगे वाक्यासंभवात् । *समासस्तु वचनाद्भवति । तदर्थेत्यर्थविशेषणं किम् । पित्रेऽर्थः । मात्रेऽर्थः । तदर्थं धनमित्यर्थः ॥ ७२ ॥ **पञ्चमी भयाद्यैः** ॥ ३ । १ । ७३ ॥ पञ्चम्यन्तं नाम भयाद्यैर्नामभिः सह समस्यते तत्पुरुषश्च समासो भवति । वृकाद्भयम् वृकभयम् । एवं वृकभीतः । भयभीता । भय भीत भीति भी भीरु भीलुक निर्गत जुगुप्सु अपेत अपोढ मुक्त पतित अपत्रस्त इति भयादयः । आकृतिगणश्चायम् । तेन द्वीपान्तरानीतः स्थानभ्रष्टः तात्परः तपरः इत्यादि सिद्धम् । बहुलाधिकारादिह न भवति । ग्रामादागतः भोजनादपत्रस्तः ॥ ७३ ॥ **क्तेनासत्त्वे** ॥ ३ । १ । ७४ ॥ असत्त्वे वर्तमाना या पञ्चमी तदन्तं नाम क्तप्रत्ययान्तेन नाम्ना सह समस्यते तत्पुरुषश्च समासो भवति । स्तोकान्मुक्तः । अल्पान्मुक्तः । कृच्छ्रान्मुक्तः । कतिपयान्मुक्तः । दूरादागतः । विप्रकृष्टादागतः । अन्तिकादागतः । अभ्याशादागतः । कृच्छ्राल्लब्धम् । 'असत्त्वे ङसेः' ( ३-२-१० ) इत्यलुप् । क्तेनेति किम् । स्तोकान्मोक्षः । असत्त्वे इति किम् । स्तोकात् बद्धितः । स्तोकाद्द्रव्यादित्यर्थः । एवमल्पात् मद्बद्धम् । समासे तद्धिताद्युत्पत्तिः फलम् । स्तौकान्मुक्तिः इत्यादि ॥ ७४ ॥ **परःशतादिः** ॥ ३ । १ । ७५ ॥ परःशतादिः पञ्चमीतत्पुरुषः साधुर्भवति । शतात्परे परःशताः । सहस्रात्परे परःसहस्राः । लक्षाल्लक्षाया वा परे परोलक्षाः । परशब्दस्य पूर्वनिपातः सकारागमश्च निपातनात् । परशब्देन समानार्थः परस्शब्दः सकारान्तोऽप्यस्तीत्यन्ये ॥ ७५ ॥ ***षष्ठ्ययत्नाच्छेषे** ॥ ३ । १ । ७६ ॥ शेषे या षष्ठी तदन्तं नाम नाम्ना सह समस्यते तत्पुरुषश्च समासो भवति । *अयत्नात्, न चेत् स शेषो 'नाथः' ( २-२-१० ) इत्यादेर्यत्नाद्भवति । राज्ञः पुरुषः राजपुरुषः । यतिकम्बलः । राज्ञो गोक्षीरं राजगोक्षीरम् । राजगवीक्षीरम् ॥ ऋद्धस्य राज्ञः पुरुषः, जिनभद्रगणेः क्षमाश्रमणस्य भाष्यमित्यादौ सापेक्षत्वान्न भवति । कथं देवदत्तस्य गुरुकुलम्, जिनदत्तस्य दासभार्येति । सापेक्षत्वेऽपि *गमकत्वाद्भवति । अयत्नादिति किम् । सर्पिषो नाथितम् । मातुः स्मृतम् । सर्पिषो दयितम् । मातुरीशितम् । एधोदकस्योपस्कृतम् । चौरस्य रुग्णम् । चौरस्योज्जासितम् । शतस्य द्यूतम् । शतस्य द्यूतश्चैत्रः । कटकरणस्यायुक्तः । शेष इति किम् । सर्पिषो ज्ञानम् । रुदतः प्रव्रजितः । *मनुष्याणां क्षत्रियः शूरतमः । गवां कृष्णा संपन्नक्षीरतमा । अध्वगानां

---

भवति समासादाशिषोऽनवगमादिति ॥—**आत्मनेपदमिति** । पचत इत्येवमादीनामात्मा स्वभावस्तदर्थं पद ते आतेइत्यादि आत्मनेपदम् । तिवाद्यवयवापेक्षया प्रकृतिप्रत्ययसमुदाय पचतीत्यादिलक्षण परोऽर्थस्तदर्थं तिवादिक पद **परस्मैपदम्** ॥—**तदर्था—** ॥—**तस्याश्चतुर्थ्या अर्थो** यस्येत्युष्ट्रमुखादित्वाद्व्यधिकरणो बहुव्रीहिस्ततस्तदर्थश्चासावर्थश्चेति कर्मधारय । यद्वा तस्या अर्थस्तदर्थस्तस्मिन् अर्थस्तेन तदर्थार्थेन ॥—**समासस्त्विवति** । पित्रर्थ इत्यादिसमासे अर्थशब्दप्रयोग इत्यर्थ ॥—**षष्ठ्यय—** ॥—**अयत्नान्न चेदिति** । तुल्यार्थयोगे यत्नजाया अपि षष्ठ्या समासो भवति । तुल्यार्थाना याजकादिदृष्टे ॥—**गमकत्वादिति** । अवश्यसापेक्षत्वादित्यर्थ ॥—**मनुष्याणामित्यादिषु** त्रिषु योगेष्वपादानपञ्चमीप्रसक्तौ 'सप्तमी चाविभागे' इति षष्ठी ॥—**असामर्थ्यादिति** । तत्त्व भूयादिति सापेक्षत्वात् ॥—

रथगामी शीघ्रतमः। कथं सर्पिर्ज्ञानम् मातृस्मरणमित्यादि। कृद्योगेऽत्र षष्ठीत्युत्तरेण भविष्यति। संबन्धे त्वनेनैव। गोस्वामी पृथिवीश्वरः विद्यादायाद इत्यादिषु त्वयत्नजा शेष एव षष्ठी। 'स्वामीश्वरा'-(२-२-९८) दिसूत्रस्य नित्यं षष्ठीप्राप्तौ पक्षे सप्तमीविधानार्थत्वात्। संघस्य भद्रं भूयात्, शासनस्य भद्रं भूयादित्यादौ त्वाशिषि षष्ठ्याः समासो न भवति *असामर्थ्यात् *अनभिधानाद्वा। नहि संघभद्रं भूयादित्युक्ते संघस्य भद्रं भूयादित्यर्थः प्रतीयते अपि तु संघभद्रं नाम संघसव-न्धितया प्रसिद्धं किंचिद्भद्रं कस्य चिद्भूयादिति॥ ७६॥ *कृति॥ ३।१।७७॥ 'कर्मणि कृतः' (२-२-८३) 'कर्तरि' (२-२-८६) इति च या कृति कृत्प्रत्ययनिमित्ता षष्ठी विहिता तदन्तं नाम नाम्ना समस्यते तत्पुरुषश्च समासो भवति। सिद्धसेनकृतिः। गणधरोक्तिः। इध्मव्रश्चनः। पलाशशातनः। धर्मानुस्मरणम्। तत्त्वानुचिन्तनम्। सर्पिर्ज्ञानम्। एधोदकोपस्करणम्। *चौरोज्जासनम्॥ ७७॥ *याजकादिभिः॥ ३।१।७८॥ षष्ठ्यन्तं नाम याजक इ-त्येवमादिभिर्नामभिः सह समस्यते तत्पुरुषश्च समासो भवति। ब्राह्मणानां याजकः ब्राह्मणयाजकः। एवं गुरुपूजकः। *याजक पूजक परिचारक परिवेषक स्नापक अध्यापक आच्छादक उन्मादक उद्वर्तक होतृ *भर्तृ। आकृतिगणोऽयम्। तेन तुल्यार्था अपि। गुरुसदृशः। गुरुसमः। दास्याःसदृशः। वृषल्याःसमः। 'षष्ठ्याः क्षेपे' (३-२-३०) इत्यलुप्। तथा अन्यत्कारकम्। विश्वगोप्ता। तीर्थकर्ता। तत्प्रयोजको हेतुश्च। जनिकर्तुः प्रकृतिः। इत्यादि सिद्धं भवति। '*कर्मजा तृचा च' (३-१-८३) इति प्रतिषेधापवादो योगः। तुल्यार्थैः *विध्यर्थश्च॥ ७८॥ *पत्तिरथौ गणकेन॥ ३।१।७९॥ पत्तिरथशब्दौ षष्ठ्यन्तौ गण-केन नाम्ना समस्येते तत्पुरुषश्च समासो भवति। पत्तीनां गणकः पत्तिगणकः। एवं रथगणकः। पत्तिरथाविति किम्। कार्षापणाना गणकः। गणकेनेति किम्। रथस्य दर्शकः। कथं ज्योतिर्गणकः। 'अकेन क्रीडाजीवे' (३-१-८१) इति भविष्यति। 'कर्मजा तृचा च' (३-१-८३) इत्यस्यापवादोऽयम्॥ ७९॥ *सर्वपश्चादादयः॥ ३।१।८०॥ सर्वपश्चादित्यादयः षष्ठीतत्पुरुषाः साधवो भवन्ति। सर्वेषां पश्चात् सर्वपश्चात्पदं वर्तते। सर्वचिरं जीवति। तदुपरिष्टात् रुक्मं निदधाति इत्यादि। अव्ययेन *प्रतिषेधं वक्ष्यति तस्यापवादोऽयम्। बहुवचनं शिष्टप्रयोगानुसरणार्थम्॥ ८०॥ *अकेन क्रीडाजीवे॥ ३।१।८१॥ षष्ठ्यन्तं नामाकप्रत्ययान्तेन नाम्ना समस्यते क्रीडायामाजीवे च गम्यमाने तत्पुरुषश्च समासो भवति। *उद्दालकपुष्पभञ्जिका। वारणपुष्पप्र-आजीवो जीविका।

---

अनभिधानेति। अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्तीति न्यायात् विवक्षितार्थाप्रतिपादनात्॥—कृति॥—चौरोज्जासनमिति। 'कर्म्मणि कृत.' 'कर्त्तरि' वास्या विधानात् यत्नजाया अपि षष्ठ्या समास॥—याजका—॥—याजकेति। याजक ऋत्विक्॥—भर्त्रेति। भर्तृशब्दस्य पतिवाचकस्यैवात्र पाठ॥ कृतीत्यनेनैव सिद्धे किमर्थोऽय योग इत्याह—कर्म्मजा तृचा चेतीति॥—विध्यर्थश्चेति। तुल्यार्थैरिति या षष्ठी सा शेषिका न भवतीति अप्राप्तौ॥—सर्व्वप—॥—सर्वेषां पश्चादिति। यदा सबन्धे षष्ठी तदा निषेधे प्राप्ते समास। यदा तु रिरिष्ठेति तदा अप्राप्ते समास॥—प्रतिषेधं वक्ष्यतीति। यदा सबन्धे षष्ठी तदा इत्यर्थ। तत्र सबन्धषष्ठीग्रहणात्। उपलक्षणमिद तेन यदा रिरिष्ठेति षष्ठी तदाऽप्राप्ते समास॥—अकेन—॥ 'कर्मजा तृचा च इत्यस्यापवाद-स्ततश्च भनक्तीति भञ्जिका उद्दालकपुष्पाणां भञ्जिकेति कृते 'कृति' इति प्राप्नोति तत उत्तरेण निषेधस्तदाऽस्य सूत्रस्य फलम्॥ यदा तु उद्दालकपुष्पाणि भज्यन्ते यस्यां क्रीडायामिति विग्रहस्तदा निषेधाभावे 'कृति' इत्यनेनैव सिद्धत्वादस्य न किंचित्फलम्। ननु भनक्तीति भञ्जिकेति कर्त्तरि कथ साधयन्ति यत उद्दालकपुष्पभञ्जिकेति क्रीडानाम ततस्तस्या क्रीडाया भङ्क्ते कर्तृत्व न सग-

चायिका । *शालभञ्जिका । कस्याश्चित् क्रीडायाः संज्ञा । आजीवे, दन्तलेखकः । नखलेखकः । अवस्करसूदकः । रमणीयकारकः । दन्तलेखनादिरस्याजीवो गम्यते । क्रीडाजीवौ वाक्येन न गम्येते इति नित्यसमासा एते । क्रीडाजीव इति किम् । ओदनस्य भोजकः । पयसः पायकः । 'कर्मजा तृचा च' (३-१-८३) इति प्रतिषेधे प्राप्ते वचनम् ॥ ८१ ॥ *न कर्तरि ॥ ३ । १ । ८२ ॥ कर्तरि विहिता या षष्ठी तदन्तं नामाकप्रत्ययान्तेन नाम्ना न समस्यते । भवतः शायिका । भवत आशिका । *भवतोऽग्रगामिका । कर्तरीति किम् । इक्षुभक्षिकां मे धारयसि । पयापायिकां मे धारयसि ॥ ८२ ॥ *कर्मजा तृचा च ॥ ३ । १ । ८३ ॥ कर्तरीत्यनुवर्तते *तच्चाकस्य विशेषणम् । कर्मणि विहिता षष्ठी कर्मजा । तदन्तं नाम कर्तरि विहितो योऽकप्रत्ययस्तदन्तेन तृजन्तेन च नाम्ना सह न समस्यते । ओदनस्य भोजकः । सक्तूनां पायकः । अपां स्रष्टा । पुरां भेत्ता । कर्मजेति किम् । संबन्धषष्ठ्याः प्रतिषेधो माभूत् । गुणो *गुणिविशेषकः । गुणिनः संबन्धी विशेषक इत्यर्थः । कर्तरीत्येव । इक्षुभक्षिकां मे धारयसि । पयःपायिकां मे धारयसि । कथं भूभर्ता वज्रभर्तेति । भर्तृशब्दो यः पतिपर्यायस्तेन संबन्धषष्ठ्या याजकादिपाठात् कर्मषष्ठ्या वाऽयं समासः । *क्रियाशब्दस्य तु तत्राग्रहणादनेन प्रतिषेधः । भुवो भर्ता । वज्रस्य भर्ता ॥ ८३ ॥ *तृतीयायाम् ॥ ३ । १ । ८४ ॥ कर्तरि या तृतीया तस्यां सत्यां कर्मजा षष्ठी न समस्यते । आश्चर्यो गवां दोहोऽगोपालकेन । साध्विदं शब्दानामनुशासनमाचार्येण । तृतीयायामिति किम् । साध्विदं शब्दानुशासनमाचार्यस्य । साध्वी कटचिकीर्षा चैत्रस्य । कर्तरि षष्ठ्यामपि न समास इति कश्चित् । विचित्रा सूत्रस्य कृतिराचार्यस्य । कर्तरीत्येव । साध्विदं शब्दानुशासनमाचार्यस्य नः पुण्येन । कर्मजेत्येव । *मैत्रस्य संबन्धी कृतो मैत्रकृतश्चैत्रेण । कथं गोदोहो गोपालकेन । संबन्धषष्ठ्या भविष्यति ॥८४॥ *तृप्तार्थपूरणाव्ययातृशूशत्रानशा ॥ ३ । १ । ८५ ॥ तृप्तार्थैः पूरणप्रत्ययान्तैरव्ययैरतृशन्तैः शत्रन्तैरानशन्तैश्च नामभिः षष्ठ्यन्तं नाम न समस्यते । तृप्तार्थाः, फलानां तृप्तः । फलानां सुहितः । सक्तूनां पूर्णः । ओदनस्याशितः। पयसो घ्राणः । पूरण, तीर्थकराणां षोडशः । चक्रधराणां पञ्चमः शान्तिः । चक्रधराणां द्वितीयः सगरः । वासुदेवानां तृतीयः स्वयंभूः । अव्यय, राज्ञः साक्षात् । *ग्रामस्य पुरस्तात् । चैत्रस्य कृत्वा । मैत्रस्य प्रकृत्य । अव्ययीभावस्याप्यन्वर्थाश्रयणात्क्वचिदव्ययत्वम् । तेन चैत्रस्योपकुम्भमित्यत्र समासो न भवतीति केचित् । अतृश्, रामस्य द्विषन् । रावणस्य द्विषन् । शतृ, चैत्रस्य पचन् । *अध्वगानां धावन्तः शीघ्रतमाः । चैत्रस्य

च्छते अपि तु क्रीडाकारिणाम् । उच्यते । अस्या क्रीडाया भञ्जनक्रियाकरणादुपचारात् सापि कर्त्री भण्यते । शालशब्दोऽपि तालव्यादि वृक्षवाचकोऽस्ति ॥—न कर्त्तरि ॥—अग्रगामिकेति । कृत्सगतिकारकस्येति न्यायादग्रगामिकेति अस्यापि कृदन्तत्वम् ॥—कर्म्मजा—॥—तच्चाकस्येति । तृचोऽव्यभिचारात् । 'अकस्यापि' ग्रह तृच्सन्निहितस्य ॥—गुणीत्यत्र शिखादित्वादिन् ॥—क्रियाशब्दस्य त्विति ॥ बिभर्त्तीति भरणक्रियामात्रमुपादाय वर्त्तमानस्येत्यर्थ ॥ पतिपर्यायभर्तृशब्द औणादिकोऽव्युत्पन्नोऽप्यस्ति ॥—तृतीयायाम् ॥—मैत्रस्य सबन्धी कृत इत्यत्र ओदनोऽन्यो वाऽर्थप्रकरणादिना निर्ज्ञात ॥—तृप्तार्थः— ॥ तृप्तोऽर्थोऽभिधेयो येषाम् । पूरणेत्यत्र अभेदोपचारात्पूरणप्रत्यया गृह्यन्ते। सति तृप्तसुहितयो 'ज्ञानेच्छा'—इति पूर्णे कर्मणि क्त । आशिते शील्यादित्वात्क्त । घ्राणे 'गत्यर्थ' इति क्त ॥—ग्रामस्य पुरस्तादिति । अव्युत्पन्नमव्यय व्युत्पत्तौ तु 'रिरिष्ट'—इति षष्ठ्या विधानात् समासो न प्राप्नोत्येव ॥—अध्वगानामिति । अत्रापि सबन्धे षष्ठी न नि

पक्ष्यन्। आनश्, चैत्रस्य पचमानः। चैत्रस्य पक्ष्यमाणः। *सर्वत्र संबन्धे षष्ठी। एतैरिति किम्। ब्राह्मणस्य कर्तव्यं ब्राह्मणकर्तव्यम्। इध्मव्रश्चनः। पलाशशातनः। राज्ञः *पाटलिपुत्रकस्य धनम्। शुकस्य *माराविदस्य शब्दः, सर्पिषः पीयमानस्य गन्धः, सूत्रस्याधीयमानस्यार्थ इत्यादौ सामानाधिकरण्ये धनादिपदापेक्षा षष्ठीत्य-सामर्थ्यात्समासो न भवति। विशेषणसमासस्तु निरपेक्षत्वेन सामर्थ्याद्भवत्येव। पाटलिपुत्रकश्चासौ राजा च तस्य पाटलिपुत्रकराजस्येत्यादि। षष्ठीसमासे तु *अनियमेन पूर्वनिपातः स्यात् ॥ ८५ ॥ *ज्ञानेच्छार्चार्थाधारक्तेन ॥ ३ । १ । ८६ ॥ ज्ञानार्थादिच्छार्थादर्चार्थाच्च वर्तमानो यः क्तो यश्च 'अद्यर्थाच्चाधारे' (५-१-१२) इत्याधारे विहितस्तदन्तेन नाम्ना षष्ठ्यन्त नाम न समस्यते। राज्ञां ज्ञातः। राज्ञां बुद्धः। राज्ञामिष्टः। राज्ञां मतः। राज्ञामर्चितः। राज्ञां पूजितः। इदमेतेषां यातम्। इदमेषां यातम्। इदमेषामासितम्। इदमेषां भुक्तम्। इदमेषां पीतम्। कथं राजपूजितः, राजमहितः, राजसंमतः, कलहंसराममहितः कृतवान् इति बहुलाधि-कारात् *इष्टेन भूतकालक्तेन *तृतीयासमासा एवेति केचित्। अन्ये तु *कृद्योगजाया एव षष्ठ्या इह समासप्रतिषेध इति संबन्धे षष्ठीसमासा एत इत्याहुः ॥८६॥ *अस्वस्थगुणैः ॥ ३ । १ । ८७ ॥ ये गुणाः *स्वात्मन्येवावतिष्ठन्ते न द्रव्ये ते स्वस्थाः। तत्प्रतिषेधेनास्वस्थगुणवाचिभिर्नामभिः सह षष्ठ्यन्तं नाम न सम-स्यते। पटस्य शुक्लः। काकस्य कृष्णः। गुडस्य मधुरः। चन्दनस्य *सुरभिः। घृतस्य तीव्रः। कुङ्कुमस्य मृदुः। अत्र *अर्थात्प्रकरणाद्वापेक्ष्यस्य वर्णादेर्निर्ज्ञाने य इमे शुक्लादयस्ते पटादेरिति सामर्थ्योपपत्तेः समासः प्राप्नोतीति प्रतिपद्यते। तथा पटस्य शौक्ल्यम् काकस्य कार्ष्ण्यम् गुडस्य माधुर्यम्। एषु पूर्वेषु च शुक्लादेर्गुणस्य शुक्लः पट इत्यादौ द्रव्येऽपि वृत्तिप्रदर्शनात् *अस्वास्थ्यमस्त्येव। गुणशब्देन चेह लोकप्रसिद्धा रूपरसगन्धस्पर्शगुणा अभिप्रेतास्ततः *तद्विशेषैरेवायं प्रतिषेधः। तेन

---

चैत्रस्य कर्मत्वभूतो द्विषन् ॥ ———सर्वत्र सवन्धे षष्ठीति । कर्म्मजषष्ठ्यपि न समस्यते । चैत्रस्य कर्मत्वभूतो द्विषन् ॥ —पाटलिपुत्रकस्येति । चतुर्षु उदा-
ह्रियते ॥ —माराविदस्येति । मारमावेत्ति मारावित् तस्यापत्य 'ङसोऽपत्ये' अण् ॥—सर्वत्र सवन्धे षष्ठीति । कर्म्मजषष्ठ्यपि न समस्यते । चैत्रस्य कर्मत्वभूतो द्विषन् ॥

हरणे तस्य सतोऽप्यविवक्षा ॥ —अनियमेन पूर्वनिपातः स्यादिति 'षष्ठ्ययत्न' इत्यत्र विशेषणविशेष्ययोर्द्वयोरपि प्रथमोक्तत्वात् विशेषणसमासे तु प्रधानानुयायिनो व्यवहारा इति न प्राग्निपात ॥ —पाटलिपुत्रकस्येति । चतुर्षु उदा-
हरणेषु यथासख्य धन गृह गन्ध अर्थश्च ज्ञेयानि ॥ —ज्ञानेच्छा— ॥ ज्ञानेच्छार्चार्थाश्च आधारश्च तेषा क्त इति शकटन्यास । सर्वत्र कर्त्तरि षष्ठी । सत्याधारे च क्तविधानात् 'क्तयोरसदाधारे'
इति षष्ठ्या न निषेध ॥ —इष्टेनेति । 'तेन प्रोक्ते'—इत्यतस्तृतीयाधिकारे यदुपज्ञात इत्यर्थे यथाविहित प्रत्यय विधत्ते तत् ज्ञापयति न वर्त्तमाने काले विहितोऽय क्तप्रत्यय किंतु भूते काले । तथा
राजपूजित इत्यादावपि ॥ —तृतीयासमासा इति । अत्र भूते क्तविधानात् 'क्तयोरसदाधारे' इति षष्ठीनिषेधात् तृतीयासमासा इत्यर्थ ॥ —कृद्योगजाया इति । कर्तृकर्म्मविहिताया इत्यर्थ ॥—
अस्वस्थगु— ॥ —स्वात्मन्येवावतिष्ठन्त इति । ननु द्रव्याश्रयी गुण इति गुणलक्षण तत कथमिदमिति । सत्यम् । अभिधाव्यापारापेक्षया स्वस्थत्व गुणाना यत शौक्ल्यादिशब्दैर्धर्म्ममात्रमेवाभिधी-
यते ॥ —सुरभिरिति । सुष्ठु रमते 'पदिपठि'—इति प्रत्यय । आगमस्यानित्यत्वात् 'रभोऽपरोक्षा' इति न ॥ —अर्थात्प्रकरणाद्वेति । ननु शुक्लादिर्वर्णादेर्विशेषणम् । पटस्य शुक्लो वर्ण इति ततश्च
पटादेर्वर्णादिना सम्बन्धो न तु शुक्लादिविशेषणेनेति षष्ठ्यन्तस्य समासप्राप्तिरेव नास्तीत्याशङ्का ॥ —अस्वास्थ्यमस्त्येवेति । गुणग्रहणेन ये गुणा द्रव्यस्य विशेषण भवन्ति शुक्ल पट इत्यादौ ये च भूतपू-
र्वगत्या स्वणायन्ता शौक्ल्यादयस्तेऽपि गृह्यन्ते । यत शुक्लशौक्ल्यमिति । एव मधुरमाधुर्यादीनामपि । ननु पटस्य शुक्ल इत्यादिष्वेव निषेध प्राप्त यतो यथा शुक्लः पट इत्यादौ द्रव्येऽपि वृत्तिस्तथा न
शौक्ल्यशब्दस्य द्रव्ये वृत्तिर्यत शौक्ल्यशब्देन गुणमात्रमेवाभिधीयते न द्रव्यम् । उच्यते । यद्यपि शौक्ल्यशब्दो द्रव्ये न वर्त्तते तथापि शौक्ल्यशब्दो गुणवचन । ततो यद्यप्यय द्रव्य वक्तु न शक्नोति

यत्नस्य गौरवं यत्नगौरवम्, प्रक्रियालाघवम्, बुद्धिकौशलम्, मतिवैगुण्यम्, करणपाटवम्, पुरुषसामर्थ्यम्, अङ्गसौष्ठवम्, हस्तचापलम्, वचनमार्दवम्, उत्तरपदार्थप्राधान्यम्, क्रियासातत्यम्, वर्तमानसामीप्यम्, सत्सामीप्यम्, अधिकरणैतावत्त्वम्, प्रयोगान्यत्वम्, गतताच्छील्यम्, पटहशब्दः, नदीघोषः, वचनप्रामाण्यम्, शब्दाधिक्यम्, *वाङ्माधुर्यम्, गोविंशतिः, गोत्रिंशत्, गोशतम्, गोसहस्रम्, समाहारैकत्वमित्यादिषु प्रतिषेधो न भवति। अस्वस्थगुणैरिति किम्। घटवर्णः। कन्यारूपम्। कपित्थरसः। चन्दनगन्धः। स्तनस्पर्शः। *बहुलाधिकारात्कण्टकस्य तैक्ष्ण्यम्, वृषलस्य धाष्टर्यमित्यादिषु समासो न भवति। कुसुमसौरभ्यम्, चन्दनसौरभमित्यादिषु भवतीति ॥ ८७ ॥ ***सप्तमी शौण्डाद्यैः ॥ ३। १। ८८ ॥** सप्तम्यन्तं नाम शौण्डाद्यैर्नामभिः सह समस्यते तत्पुरुषश्च समासो भवति। पाने प्रसक्तः शौण्डः पानशौण्डः। पानशौण्डो मद्यपः। अक्षेषु प्रसक्तः शौण्ड इव अक्षशौण्डः। शौण्डशब्द *इह गौणो व्यसनिनि वर्तते। वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादप्रयोगः। अक्षधूर्तः। अक्षकितवः। शौण्ड धूर्त कितव *व्याल सव्य *आयस *व्यान *सवीण अन्तर अधीन पटु पण्डित कुशल चपल निपुण सिद्ध शुष्क पक्व बन्ध। बहुवचनमाकृतिगणार्थम्। तेन शिरःशेखरः हस्तकटकः *आपातरमणीयः अवसानविरसः पृथिवीविदितः पृथिवीप्रणतः अन्तेगुरुः मध्येगुरुः 'ऋणेऽधमः' अधमर्णः 'ऋणे उत्तमः' उत्तमर्णः राजदन्तादित्वात्परनिपात इत्यादि सिद्धं भवति ॥ ८८ ॥ ***सिंहाद्यैः पूजायाम् ॥ ३। १। ८९ ॥** सप्तम्यन्तं नाम सिंहाद्यैर्नामभिः सह समस्यते पूजायां गम्यमानायाम् तत्पुरुषश्च समासो भवति। समरे सिंह इव समरसिंहः। एवं रणव्याघ्रः। भूमिवासवः। कलियुधिष्ठिरः। उपमयात्र पूजावगम्यते। बहुवचनमाकृतिगणार्थम् ॥ ८९ ॥ ***काकाद्यैः क्षेपे ॥ ३। १। ९० ॥** सप्तम्यन्तं नाम काकाद्यैर्नामभिः सह समस्यते क्षेपे गम्यमाने तत्पुरुषश्च समासो भवति। तीर्थे काक इव तीर्थकाकः। एवं तीर्थध्वाङ्क्षः। तीर्थवायसः। तीर्थवकः। तीर्थश्वा। *तीर्थसारमेयः। तीर्थकुक्कुटः।

---

तथापि आत्मीयशुक्ललक्षणेन शब्देन यदि वादयति तर्हि भवत्येव। आत्मीयत्वं चानयोर्गुणमात्रवृत्तित्वात्। यथा कश्चित्पुमान् भार्यया पार्श्वात् पित्रोर्भक्तिं कारयति ततो यद्यात्मना न करोति तथापि भक्तिं कुर्वन्नभिधीयते एवमत्रापि भविष्यति ॥—**तद्विशेषैरेवायमिति**। तद्विशेषाश्च शुक्लादयो मधुरादय सुरभ्यसुरभी शीतादयश्च गुणा गृह्यन्ते। तेषामेव द्रव्यविशेषणत्वसम्भवात्। तेन रूपादीना न ग्रह। न हि ते द्रव्यस्य विशेषण भवन्ति पटो रूप गुडो रस चन्दन गन्ध स्तनस्पर्श इति। रूपादिविशेषा ये शुक्लादयस्त एव गृह्यन्ते तेन गौरवादय सख्यादयो वैशेषिकप्रसिद्धाश्च न गृह्यन्ते ॥—**वाङ्माधुर्यमिति**। रसनेन्द्रियग्राह्य एव रसो लोके मधुरशब्दस्य रूढोऽत्र तूपचारादिति न गुडस्य माधुर्यमितिवन्निषेध। यतो गौणमुख्यन्यायेन मुख्यो लौकिको गुण समासाभाव प्रयोजयतीति ॥—**बहुलाधिकारादिति**। ननु कण्टकस्य तैक्ष्ण्यमित्यादौ तैक्ष्ण्य स्पर्शनेन चक्षुषापि च गृह्यते ततो द्वीन्द्रियग्राह्याणा न गुणत्व कि त्वेकेन्द्रियग्राह्याणामेवेति वैशेषिकमतम्। तत समास' प्राप्त। कुसुमसौरभ्यमित्यादौ च पटस्य शौक्ल्यमिति च समासाभावप्रसङ्गस्तदेतदुभय कथमित्याशङ्का ॥—**सप्तमी**—॥—**व्यालेति**। व्याङ्पूर्वादडतेरचि लत्वे च ॥—**आयसेति**। आयस्यतीत्यचि अलस इत्यर्थ ॥—**व्यानेति**। अनितेर्घञि आनस्ततो विवृद्ध आनो वलमस्य आसक्त इत्यर्थ ॥—**सवीणेति**। सह वीण इव दक्षिण इत्यर्थ ॥—**इह गौण** इति। परमार्थतो मद्यप शौण्ड इत्युच्यते व्यसनी तु गौणवृत्त्या। आपतन भावे घञि आपाते आरम्भे रमणीय—**आपातरमणीयः** ॥—**काका**—॥—**तीर्थसारमेय** इति। सारो मेयोऽस्य यद्वा सरमा शुनी तस्या अपत्य 'चतुष्पाद्भ्य एयञ्'। कुर्कुर इत्य-

बहुवचनमाकृतिगणार्थम् ॥ ९० ॥ *पात्रसमिते-
तीर्थशृगालः । *अनवस्थित एवमुच्यते । उपमया चात्र क्षेपो गम्यते । क्षेप इति किम् । तीर्थे काकस्तिष्ठति । बहुवचनमाकृतिगणार्थम् ॥ ९० ॥ *पात्रसमिते-
त्यादयः ॥ ३ । १ । ९१ ॥ पात्रेसमितादयः सप्तमीतत्पुरुषा निपात्यन्ते क्षेपे गम्यमाने । पात्र एव समिताः पात्रेसमिताः । एवं पात्रेबहुलाः । गेहेशूरः । गेहे-
दाही । *गेहेक्ष्वेडी । गेहेनर्दी । गेहेनर्ती । *गेहमेव विजितमनेन गेहेविजिती । 'इष्टादेः' (७-१-१६८) इतीनि 'व्याप्ये क्तेनः' (२-२-९९) इति सप्तमी ।
एवं *गेहेविचिती । गेहेव्यालः । गेहेपटुः । गेहेपण्डितः । गेहेप्रगल्भः । गोष्ठेशूरः । गोष्ठेक्ष्वेडी । गोष्ठेनर्दी । गोष्ठेविजिती । गोष्ठेव्यालः । गोष्ठेपटुः । गोष्ठेपण्डितः ।
गोष्ठेप्रगल्भः । एषु *अवधारणेन क्षेपो गम्यते । उदुम्बरे मशक इव उदुम्बरमशकः । एवमुदुम्बरकृमिः । कूपकच्छपः । कूपमण्डूकः । अवटकच्छपः । अवटमण्डूकः ।
*उदपानमण्डूकः । अल्पदृश्वैवमुच्यते । नगरकाकः । नगरवायसः । नगरश्वा । एतैः सदृशो धृष्ट उच्यते । उदुम्बरमशकादिषूपमया क्षेपो गम्यते । गेहेमेही । पिण्डी-
शूरः । य आवश्यकार्थमपि बहिर्न निर्गच्छति *भोजन एव च संरभते स एवमुच्यते । अत्रावधारणेन निरुत्साहता तया च क्षेपो गम्यते । पितरिशूरः । मातरि-
पुरुषः । यः सदाचारं भिनत्ति स एवमुच्यते । अत्र प्रतिषिद्धासेवनेन क्षेपो गम्यते । *गर्भेधीरः । गर्भेशूरः । गर्भेसुहितः । गर्भेतृप्तः । गर्भेदृप्तः । योऽलीकाभिमा-
नित्वादनुचितचेष्टः स एवमुच्यते । तत एव च क्षेपो गम्यते । कर्णेटिरिटिरिः । कर्णेचुरुचुरः । कर्णेटिरिटिरा । कर्णेचुरुचुरा । *चापलेनानुचितचेष्टोच्यते । टिरि-
टिरीति गत्यनुकरणम् चुरुचुरेति वाक्यानुकरणम् । तत् करोति णिजन्तादप्रत्ययो निपातनसामर्थ्याच्चाणो न भवति ॥ इतिशब्दः समासान्तरनिवृत्त्यर्थः । तेन पर-
माः पात्रेसमिताः, पात्रेसमितानां पुत्रः इत्यादिषु समासो न भवति । *निपातनात् *सप्तम्या अलुप् । बहुवचनम् *आकृतिगणार्थम् । तेन व्रणकृमिः गृहसर्पः गृह-

---

र्थः ॥—अनवस्थित इति । यथा काकादिस्तीर्थफलमजानन् अचिरस्थायी भवत्येव यो देवदत्तादि कार्याण्यारभ्य तेष्वनिर्वाहक स तीर्थाधारेण काकादिनोपमीयमान क्षिप्यत इत्यस्ति क्षेपस्य गम्यमा-
नतेत्याह अनवस्थितेत्यादि ॥—पात्रेस—॥—गेहेक्ष्वेडीति । त्रिक्ष्विदाङ् इति धातौ क्ष्विद· स्थाने क्ष्विड केचित् पठन्ति । गेहे एव क्ष्वेडते 'ग्रहादिभ्यो णिन्' । एवमग्रेतनद्वये ॥—गेहमेव वि-
जितमनेनेति । 'व्याप्ये क्तेन.' इत्यनेन क्तप्रत्ययान्तात् यस्ताद्धित इन् तदन्तस्य व्याप्ये वर्त्तमानात्सप्तमी विहितेति प्रथमान्तेन विग्रह । यद्वा अर्थकथनमिद गेहेविजितीत्येव क्रियते ॥—गेहेविचिती
ति । गेहमेव विचितं गवेषितमनेन । यथादृष्ट विचिन्वता तेन गवेषयतेत्यर्थ ॥—अवधारणेनेति । पात्रेसमिता इत्यत्र पात्रशब्देन पात्रसहचारिभोजन लक्ष्यते ततो भोजन एव समिता मिलिता· सन्ति
न कार्यान्तरे इत्यवधारणात् क्षेपो गम्यते ॥—उदपानमण्डूक इति । उदक पीयतेऽस्मिन् 'नाम्न्युत्तर'–इति उदादेश ॥—भोजन एवेति । पिण्डीशब्द ख्यापयितव्योपलक्षणमित्युक्तं भोजन एवेति॥—
गर्भेधीर इति । गर्भ एव स्थैर्यादियुक्तो गर्भान्नि सृत्य तु चापलादिदोषयुक्त इत्यर्थ ॥—चापलेनान्विति । कर्णे किमपि जल्पित्वा जीवति नास्य विक्रमाद्गुण इति क्षेपो गम्यते ॥—आकृति-
गणार्थमिति । अत्र आकृति सादृश्य तत्प्रधानो गण आकृतिगण । अथवा आकृतिशब्देन जातिरुच्यते सा यथा सकला व्यक्तीर्व्याप्नोति तद्वत् य प्रचुरशब्दविषय व्याप्नोति स जातिसादृश्यादाकृतिगण ॥—
सप्तम्या अलुबिति । ननु पात्रेसमितेत्यादिकृत्प्रत्ययान्तेषु 'तत्पुरुषे कृति' इति शेषेषु 'अद्व्यञ्जनात्'—इत्यलुप् प्राप्तस्तत् किं निपाताश्रयेण । सत्यम् । ताभ्यां बहुल सञ्ज्ञाया चालुबुक्तेत्याह–निपातनादिति ॥

कलविङ्कः आखनिकबकः इत्यादयो गृह्यन्ते ॥ ९१ ॥ *क्तेन ॥ ३ । १ । ९२ ॥ सप्तम्यन्तं नाम क्तान्तेन नाम्ना सह समस्यते क्षेपे गम्यमाने तत्पुरुषश्च समासो भवति । भस्मनिहुतम् । प्रवाहेमूत्रितम् । उदकेविशीर्णम् । निष्फलं कृतमेवमुच्यते । अवतप्तेनकुलस्थितम् । कार्येष्वनवस्थितत्वमुच्यते । सर्वत्रोपमानेन क्षेपो गम्यते । *नित्यसमासाश्चैते पात्रेसमितादयश्च ॥ ९२ ॥ *तत्राहोरात्रांशम् ॥ ३ । १ । ९३ ॥ *पृथग्योगात्क्षेप इति निवृत्तम् । *तत्रेत्येतत्सप्तम्यन्तं नामाहरवयवा रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन नाम्ना सह समस्यन्ते तत्पुरुषश्च समासो भवति । तत्रकृतम् । तत्रभुक्तम् । पूर्वाह्णे कृतं पूर्वाह्णकृतम् । एवमपराह्णकृतम् । पूर्वरात्रकृतम् । अपररात्रकृतम् । तद्धिताद्युत्पत्तिः समासफलम् । तात्रकृतिः । तत्राहोरात्रांशमिति किम् । घटे कृतम् । कथमन्यजन्मकृतं कर्मेति । 'कारकं कृता' (३--१--६६) इति तृतीयासमासोऽयम् । अहोरात्रग्रहणं किम् । शुक्लपक्षे कृतम् । पक्षो मासांशः । अंशग्रहणं किम् । अहनि भुक्तम् । एतत्तु ते दिवा वृत्तं रात्रौ वृत्तं तु द्रक्ष्यसि । कथ रात्रिवृत्तम् संध्यागर्जितमिति । बहुलाधिकारात् । क्तेनेत्येव । तत्र भोक्ता । पूर्वाह्णे भोक्ता ॥ ९३ ॥ *नाम्नि ॥ ३ । १ । ९४ ॥ सप्तम्यन्तं नाम नाम्ना समस्यते नाम्नि संज्ञाविषये समुदायश्चेत्संज्ञा भवति स च समासस्तत्पुरुषसंज्ञो भवति । *अरण्येतिलकाः । अरण्येमाषकाः । *वनेकशेरुकाः । *वनेबल्वजाः । *कूपेपिशाचिकाः । वनेहरिद्रकाः । पूर्वाह्णेस्फोटकाः । अपराह्णेस्फोटकाः । तथा स्तूपेशाणः । मुकुटेकार्षापणः । हलेद्विपदिका । *सप्तम्या अलुप् । नित्यसमासोऽयम् । नहि वाक्येन संज्ञा गम्यते ॥ ९४ ॥ *कृद्येनावश्यके ॥ ३ । १ । ९५ ॥ सप्तम्यन्तं नाम 'य एच्चातः' (५--१--२८) इति कृद्यप्रत्ययान्तेन नाम्ना समस्यते आवश्यकेऽवश्यंभावे गम्यमाने तत्पुरुषश्च समासो भवति । *मासेऽवश्यं देयम् *मासदेयम् । एवं संवत्सरदेयम् । पूर्वाह्णेगेयम् । प्रातरध्येयम् । ग्रामदेयम् । नगरदेयम् । कृदिति किम् । मासे पित्र्यम् । य इति किम् । मासे स्तुत्यः । मासे पाच्यम् । *मासे दातव्या भिक्षा । संवत्सरकर्तव्यमिति तु बहुलाधिकारात् । आवश्यक इति किम् । मासे देया भिक्षा ॥ ९५ ॥ *विशेषणं विशेष्येणैकार्थं कर्मधारयश्च ॥ ३ । १ । ९६ ॥ विशिष्यतेऽनेकप्रकारं

---

—क्तेन—॥—नित्यसमासाश्चैते इति । वाक्यस्य क्रियाकारकसंबन्धमात्रप्रत्यायकतया क्षेपप्रतिपादने सामर्थ्याभावात् समासस्यैव तत्र सामर्थ्यात् ॥—तत्राहोरा—॥—पृथग्योगादिति । तत्राहोरात्राश च क्तेनेति चकारादन्यत् नाम ॥—तत्रेति सप्तम्यन्तमिति । सप्तमीसाधर्म्यात्त्रप् प्रत्ययोऽप्यत्र सप्तमीसाधर्म्यं पुनस्त्रपोऽधिकरणार्थता यथैव ह्यधिकरणार्थप्रत्यायनाय सप्तमी प्रयुज्यते तथा त्रपीति ॥—नाम्नि ॥—अरण्येतिलका इति । तिलप्रकारा माषप्रकारा 'कोण्वादे' इति क । कशेरुकबल्वज वृक्षविशेषौ तृणे च ॥—पिशाचिका भद्राग्निका ॥—सप्तम्या अलुविति । अरण्येतिलका इत्यादिषु 'अद्व्यञ्जनात्'—इत्यनेन स्तूपेशाण इत्यादिषु तु 'प्राक्कारस्य' इत्यनेन ॥—कृद्येना—॥—मासेवश्यमिति । 'यद्भावो भावलक्षणम्' इति सप्तमी मासे गते देयमिति हि मासादिभावो लक्ष्यते इति । अथवा मासाद्येकदेशे मासादिशब्द इत्याधार एव सप्तमी । अन्यथा उपचार विना समग्रेऽपि मासे देयमिति यदि विवक्ष्यते तदा 'कालाध्वनोर्व्याप्तौ' इति द्वितीया स्यात् ॥—मासदेयमिति । मासस्य पूरके त्रिंशत्तमे दिने देयमित्यर्थ । अयमपि नित्यसमासो यतो न समासे अवश्यशब्दस्याप्रयोग इति न्यास । 'तत्पुरुषे कृति' इत्यलुप्प्राप्तौ बाहुलकात्सप्तम्या लोप । निरनुबन्धन्यायात क्यप्घ्यणोर्ग्रहणाभावे मासे स्तुत्येत्यादौ न समास ॥—मासे दातव्या भिक्षेति । अर्थवद्ग्रहण इति न्यायात् कृत्तव्यप्रत्ययैकदेशस्य यकारस्य न ग्रहणम् ॥—विशेषणं—

वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यतेऽनेनेति विशेषणं व्यवच्छेद्यं विशेष्यम् । भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे *वृत्तिरैकार्थ्यं सामानाधिकरण्यमिति यावत् ।
तद्वदेकार्थम् । विशेषणवाचि नामैकार्थे विशेष्यवाचिना नाम्ना सह समस्यते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । नीलं च तदुत्पलं च नीलोत्पलम् ।
कृष्णाश्च ते तिलाश्च कृष्णतिलाः । पुमांश्चासौ गौश्च पुंगवः । मोपिका चासौ गौश्च मोपिकगवी । विशेषणविशेष्ययोः संबन्धिशब्दत्वादेकतरोपादानेनैव द्वये लब्धे
द्वयोरुपादानं परस्परमुभयोर्व्यवच्छेद्यव्यवच्छेदकत्वे समासो यथा स्यादित्येवमर्थम् । तेनेह न भवति । *तक्षकः सर्पः । *लोहितस्तक्षक इति । न ह्यसर्पोऽन्यवर्णो वा
तक्षकोऽस्ति । कथं तर्हि आम्रवृक्षः शिंशपावृक्षोऽस्तपर्वत इत्यादौ समासो न ह्यवृक्ष आम्रः *शिंशपा वा भवति । नात्राम्रादयः शब्दा वृक्षविशेषाणामेव वाचकाः किं
तर्हि फलादेरपि तत्सहचरितमाधुर्यस्थैर्यादेर्गुणविशेषस्य च । *एवं च तक्षकाहिः शेषाहिरित्यादयोऽपि भवन्ति । यदि वा आम्राणां फलाना संबन्धी वृक्षः आम्रवृक्षः ।
एवं शिंशपावृक्षः । अस्तस्य पर्वतोऽस्तपर्वतः । एवमुदयपर्वत इत्यादयः षष्ठीसमासा द्रष्टव्याः । यद्येवमुभयोर्विशेषणत्वे उभयोश्च विशेष्यत्वे सति विशेष्यस्यापि विशे-
षणत्वमित्युत्पलशब्दस्यापि नीलादिना समासप्रसङ्गः, तथा च 'प्रथमोक्तं प्राक्' (३-१-१४८) इति वचनादुत्पलनीलमित्यपि स्यात् । नैवम् । अविशेषेऽपि विशेषणवि-
शेष्यभावस्य 'प्रधानानुयाय्यप्रधानम्' इति न्यायात् अप्रधानस्यैव प्रधानेन समासः । *प्राधान्यं च द्रव्यशब्दानां द्रव्यस्यैव साक्षात्क्रियाभिसंबन्धात् । *यद्यपि
चोत्पलादिशब्दा जातिशब्दास्तथापि उत्पत्तेः प्रभृत्याविनाशाद्द्रव्येण जातेरभिसंबन्धाद्द्रव्यशब्दा उच्यन्ते । गुणक्रिययोस्तु तथा द्रव्येण संबन्धाभावान्न तन्निमित्ताः
शब्दा द्रव्यशब्दा इति नीलोत्पलमित्याद्येव भवति न तूत्पलनीलादीति । *यस्तु गुणादिशब्दानामेव समासस्तत्रोभयोरपि *पदयोरप्रधानत्वात्कामचारेण पूर्वापर-
निपातः । खञ्जश्चासौ कुण्टश्च खञ्जकुण्टः । एवं कुण्टखञ्जः । शुक्लकृष्णः । कृष्णशुक्लः । एवं रोहितपाण्डुः २ । हरितबभ्रुः २ । पूर्वा चासावुत्तरा च *पूर्वोत्तरा ।

---

॥—वृत्तिरैकार्थ्यमिति । एक साधारणोऽर्थो द्रव्यलक्षणस्तदतदात्मको यस्य तदेकार्थ तस्य भाव ॥—तक्षक सर्प्प इति । सर्प्प इति विशेष्य तक्षक इति विशेषणम् । व्यतिक्रमेण तु तक्षको वि-
शेष्यमेव । न ह्यस्य सर्प्पो विशेषण घटतेऽसंभवात् ॥—लोहितस्तक्षक इति । तक्षको विशेष्यमेव लोहित इति विशेषण न भवति तस्य रक्तत्वाव्यभिचारात् ॥—शिंशपा वा भवतीति । न च वा-
च्येऽपि तर्हि वृक्षादिप्रयोगो न स्यादिति वाच्यम् । द्वौ द्विरदाविति वद्गतार्थस्यापि लोके प्रयोगदर्शनात् । यद्वा पूर्व वृक्षप्रयोगात्सामान्यावगतेर्विशेषावगमाय शिंशपेति प्रयुज्यते ॥—एव च तक्षकाहिरिति ।
यतस्तक्षकशेषशब्दावहिगुणादावपि वर्त्तेते । तक्षक सर्प्प इत्यादौ तु तद्गुणविवक्षायामपि बाहुलकान्न भवति । विशेषणविशेष्यद्वयोपादान हि बाहुलकप्रपञ्चार्थम् ॥—प्राधान्यं च द्रव्यशब्दानामिति ।
नीलादि अन्याश्रितत्वादप्रधानमुत्पल तु तस्याश्रयत्वात् प्रधानम् । उत्पल हि द्रव्यरूपत्वात् क्रियासिद्धये साक्षादुपयुज्यमान प्राधान्येन विवक्ष्यते । नीलस्तु गुणत्वात् द्रव्यव्यवधानेन क्रियायामुपयोगादुत्पलस्य
विशेषण सपद्यते इति । ननु प्राधान्य च द्रव्यशब्दानामित्युक्तमुत्पलादयस्तु जातिशब्दास्तत्कथमित्याह—यद्यपीति ॥—यस्तु गुणादीति । आदिशब्दात् द्रव्यक्रिययोर्ग्रह । क्रिया पाचक इत्यादिका
दर्शितेव । द्रव्य यथा दण्डी चासौ धन्वी चात्रापि पूर्वनिपाते कामचार ॥—पदयोरप्रधानत्वादिति । द्रव्यव्यवधानेन क्रियायामुपयोगात् ॥—पूर्वोत्तरेति । रविपरिवर्त्तनसयोगेन दिश उच्यन्ते ।

एवमुत्तरपूर्वा । दक्षिणपूर्वा । *पूर्वदक्षिणा विदिक् । पाचकपाठकः । पाठकपाचकः पुरुषः । *कृष्णसारङ्गः, कृष्णशवलः, कृष्णकल्माष इत्यादौ तु गुणशब्दत्वेऽपि सारङ्गादिशब्दानां समुदायवाचित्वात्प्राधान्यम् कृष्णादिशब्दाना त्ववयववाचित्वेनाप्राधान्यम् इति कृष्णादीनामेव पूर्वनिपातः । एकार्थमिति किम् । वृद्धस्योक्षा वृद्धोक्षा । कर्मधारये तु समासान्तः स्यात् । बहुलाधिकारात्क्वचित्समासो न भवति । रामो जामदग्न्यः । *अर्जुनः कार्तवीर्यः । दोर्घश्चारायणः । क्वचिन्नित्यः । *कृष्णसर्पः । लोहितशालिः । गौरखरः । लोहिताहिः । नरसिंहः । पुरुषमृगः । करिमकरः । बकटिट्टिभः । नकुलसर्पः । पक्षिमार्जारः । कुक्कुटसर्पः । जातिविशेषवाचित्वान्नित्यसमासा एते । न हि वाक्येन जातिर्गम्यते । *जातिशब्दानां चावयवद्वारेण समुदायेऽपि वृत्तेः समानाधिकरण्यम् । *भूयोऽवयवाभिधायिनश्च प्राधान्याद्विशेष्यत्वमितरस्य तु विशेषणत्वम् । *चकारस्तत्पुरुषकर्मधारयसंज्ञा*समावेशार्थः । कर्मधारयप्रदेशाः 'कडारादयः कर्मधारये' (२--१--१५८) इत्यादयः ॥९६॥

*पूर्वकालैकसर्वजरत्पुराणनवकेवलम् ॥ २ । १ । ९७ ॥ पूर्वकाल इत्यर्थनिर्देशः । पूर्वः कालो यस्यार्थस्य स पूर्वकालः । तद्वाचि नामैकादीनि चैकार्थानि परेण नाम्ना सह समस्यन्ते तत्पुरुषः कर्मधारयश्च समासो भवति । पूर्वकालः संबन्धिशब्दत्वादपरकालेन । पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः । एवं लिप्तवासितः । *कृष्टमतीकृता भूमिः । छिन्नप्ररूढो वृक्षः । एकशब्दः संख्यान्यसहायाद्वितीयेषु वर्तते । एका शाटी एकशाटी । शाटशब्देन त्वनभिधानान्न भवति । एकः शाटः । एकर्षयः, एकचौरः, एकधनुर्धरः । सर्वशब्दो द्रव्यावयवप्रकारगुणाना कात्स्न्ये वर्तते । सर्वशैलाः । सर्वरात्रः । सर्वान्नम् । सर्वशुक्लः । जरत्, जरद्गवः । जरद्राजः । जरद्वलिनः । पुराण, पुराणवैयाकरणः । नव, नवोदकम् । नवोक्तिः । केवल, केवलमसहायं ज्ञानं केवलज्ञानम् । केवलजरत् । केवलपुराणम् । एकार्थमित्येव । स्नात्वानुलिप्तः । स्नात्वेत्यसत्त्ववाचिनो नानुलिप्तपदेनैकार्थ्यम् । पूर्वेणैव सिद्धे पुनर्वचनं स्पर्द्धे परमिति पूर्वनिपातस्य विषयप्रदर्शनार्थम् पूर्वापरकालवाचि-

---

अतोऽत्रापि गुण. प्रवृत्तिनिमित्तम् ॥—पूर्वदक्षिणा विदिगिति । विदिगित्युपलक्षण तत्सबन्धिन्यन्यत्रापि देशादौ भवति ॥—सारङ्गो वर्णसमूह. ॥—अर्जुन कार्त्तवीर्य इति । कृत वीर्यं येन तस्यापत्यमिति 'ऋषिवृष्णि '–इत्यण् ॥—कृष्णसर्प इत्यादिषु चतुर्षु उदाहरणेषु गुणवचनत्वात् कस्य पूर्वनिपात इत्याह—भूयोवयवाभिधायिन इत्यादि ॥—जातिशब्दानामिति । यथैव कथ कृष्णसर्पशब्दयो. सामानाधिकरण्य द्वयोरेव तयोर्जातिविशेषवाचकत्वादित्याशङ्का ॥—चकारस्तत्पुरुषेति । अत्र अनुवर्त्तते या तत्पुरुषसज्ञा तया अस्या कर्म्मधारयसज्ञाया समावेशो यथा स्यादित्येवमर्थश्चकार. ॥—समावेशार्थ इति । यदि च चकारस्तत्पुरुष इत्यस्यानुकर्षणार्थ इत्युच्येत तदा चानुकृष्ट नोत्तरत्र इति विज्ञायेत ॥—पूर्वकालैक–॥ पूर्वकालेत्यस्य कृतद्वद्वैरेकादिभिर्द्वद्व. । यदि पुनरेकादिभिरकृतद्वद्वे पूर्वकालेत्यस्य द्वद्व क्रियेत तदैकशब्दस्य स्वरायदन्तत्वात्पूर्वनिपात स्यात्तथा च सर्वेषामेकरूपताया स्वरूपग्रहणे पूर्वकालेत्यर्थनिर्देश इति यद्वक्ष्यते तदुपपन्न न स्यात् ॥—मतीकृतेति । मतमस्या अस्तीति मतिनी क्षेत्रभूमि । अमतिनी मतिनी कृतेति च्वौ पुवद्भावे दीर्घत्वे च मतीकृता । अथवा मत लोष्टमर्द्दनकाष्ठ तदस्या अस्ति अभ्रादित्वादप्रत्यय । ततोऽमता मता कृतेति । अद्रव्यशब्दत्वादिति शेष । एतच्चोपलक्षणमकादीनामपि । यदा क्रियाशब्देन वा सामानाधिकरण्य तदा पूर्वेण समासे खञ्जकुण्टादिवत्पूर्वनिपातस्यानियम स्यादुभयोरपि पूर्वोत्तरपदयोर्विशेषणत्वादिति । केवल च न चेति कृते अकेवलमेव भवति । यतोऽय योगो ' विशेषण विशेष्येण '—इति प्राप्तौ तत्समासश्च सर्वत्र 'विशेषणम्'–इति सूत्रस्य बाधक. । अतो नञा सह सर्वोपि कर्मधारयो न भवति ॥—दिगधि–॥—

नोरद्रव्यशब्दत्वादनियमे प्राप्ते पूर्वकालवाचिन एव पूर्वनिपातनार्थं च ॥ ९७ ॥ *दिगधिकं संज्ञातद्धितोत्तरपदे ॥ ३ । १ । ९८ ॥ *दिग्वाचि अधिक-मित्येतच्च नामैकार्थं परेण नाम्ना सह समस्यते *संज्ञायां तद्धिते च प्रत्यये विषयभूते उत्तरपदे च परतः स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । दक्षिणाः कोशलाः दक्षिणकोशलाः । उत्तरकोशलाः । दक्षिणपञ्चालाः । उत्तरपञ्चालाः । एवंनामानो जनपदाः । पूर्वेषुकामशमी । अपरेषुकामशमी । पूर्वकृष्णमृत्तिकाः । अपरकृष्णमृत्तिकाः । एवंनामानो ग्रामाः । संज्ञायां नित्यसमासः । नहि वाक्येन संज्ञा गम्यते । पूर्वोत्तरविभागप्रदर्शनार्थं तु *विग्रहवाक्यम् । तद्धिते, दक्षिणस्यां शालायां भवः दाक्षिणशालः । एवमौत्तरशालः । पौर्वशालः । आपरशालः । अधिकं खल्वपि । अधिकया षष्ट्या क्रीतः अधिका षष्टिः भूतो भावी वा अधिकषाष्टिकः । एवमधिकसाप्ततिकः । अयमपि नित्यः समासः । *न हि तद्धिते वाक्यमस्ति । उत्तरपदे, दक्षिणो गौर्धनमस्य दक्षिणगवधनः । एवमुत्तरगवधनः । *पूर्वगवीप्रियः । अपरगवीप्रियः । अधिकगवप्रियः अधिकगवीप्रियः । एषु तत्पुरुषलक्षणः समासान्तः । उत्तरपदेऽपि नित्यसमासः । त्रयाणामेकार्थीभाव एवोत्तरपदसंभवात् । तत्र च द्वयोर्व्यपेक्षाभावात् । संज्ञादिग्रहणं किम् । उत्तरा वृक्षाः । 'विशेषणं विशेष्येण'—( ३–१–९६ ) इत्येव सिद्धे नियमार्थं वचनम् । दिगधिकं संज्ञातद्धितोत्तरपद एव समस्यते नान्यत्रेति । दक्षिणा गावोऽस्य सन्ति दक्षिणगुरित्यादौ सन्तीत्येतदनपेक्ष्यान्तरङ्गत्वेन बहुव्रीहिभावादुक्तार्थत्वेन मत्वर्थीयतद्धितविषयभाव एव नास्तीत्यनेन समासो न भवति ॥ ९८ ॥ *संख्या समाहारे च द्विगुश्चानाम्न्ययम् ॥ ३ । १ । ९९ ॥ अनेकस्य कथंचिदेकत्वं समाहारः । संख्यावाचि नाम परेण नाम्ना सह समस्यते संज्ञातद्धितयोर्विषयभूतयोरुत्तरपदे परे समाहारे चाभिधेये स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । अयमेव चानाम्नि असंज्ञायां द्विगुसंज्ञश्च भवति । संज्ञायाम्, *पञ्चाम्राः । दशाम्राः । पञ्चर्षयः । सप्तर्षयः । दशार्हाः । पञ्चवटाः । दशवटाः । *फलित एकः पञ्चाम्रः । पुष्पितौ द्वौ पञ्चाम्रौ । उदितास्त्रयः सप्तर्षयः । तद्धिते, द्वयोर्मात्रोरपत्यं द्वैमातुरः । पाञ्चनापितिः । पञ्चसु कपालेषु संस्कृत ओदनः पञ्चकपाल ओदनः । पञ्चभ्यो जनेभ्यो हितः पञ्चजनीनः । अध्यर्धेन कंसेन क्रीतः *अध्यर्धकंसः । एवमध्यर्धशूर्पः । अर्धतृतीयैः शूर्पैः क्रीतः अर्धतृतीयशूर्पः । एवमर्धपञ्चमशूर्पः । उत्तरपदे, पञ्च गावो धनमस्य पञ्चगवधनः । पञ्च नावः प्रिया यस्य स *पञ्चनावप्रियः । द्वे अहनी जातस्य *व्यहजातः । अध्यर्धा गौर्धनमस्य अध्यर्धगवधनः । अर्धतृतीया

---

दिग्वाचीति । एतदपि न न दिश्येव वर्तमानमपि तु तद्द्वारेण जनपदादौ न तदनन्तर इति अर्थप्रधानो निर्देश ॥—संज्ञायां तद्धिते चेति । एकापि सत्सम्भुतत्वा विषयभेदात् यथालक्ष्यं भिद्यते ॥—इति ॥—विग्रहवाक्यमिति । गिभिरा गृह्यतेऽनेनाऽस्मिन्वा बाहुलकात् 'पुरामि म' । विग्रह च तत वाक्य च विग्रहवाक्यम् । यद्वा विग्रहण 'गुरण'—इत्यल् विग्रहस्तस्य वाक्यम् ॥—न हि तद्धिते वाक्यमस्तीति । तद्धिता हि नाम उत्पद्यन्ते न तु समासारम्भकात् वाक्यात् ॥—पूर्वगवीप्रिय इति । मतान्तरेणेदमुदाहरण स्वमते तु अणाद्यन्तानामो ङीरुक्तोऽत्र तु पूर्वगवीप्रियइत्येवरूपस्य नामत्वे पूर्वगवीत्यस्य नामत्वाभावे ङीर्न स्यात् ॥—संख्या स—॥—पञ्चाम्रा इति । सन्निवेशादिविशेषविशिष्टाना पञ्चानामाम्राणामिय संज्ञा ॥—फलित एकः पञ्चाम्र इति । समुदायेषु हि वृत्ता शब्दा अवयवेष्वपि वर्तन्ते इति बहुसंख्याकामाप्यभिधायकोऽपि पञ्चाम्रादिशब्द एकस्मिन्नप्याम्रादौ प्रयुज्यत इति ॥—अध्यर्धकंस इति । अत्र 'कंसार्धात्' इतीकट् क्रीतेऽर्थे 'अनाम्न्यद्विः प्लुप' ॥—पञ्चनावप्रिय इति । मतान्तरेऽपि बाहुलकाद्बाधन्ते स्वार्थिका कश्चिदित्यतो वा ङीः । स्वमते तु अणन्तानामो विहितेति न प्राप्नोत्येव ॥—व्यहजातः । त्रिमासजात इत्या-

नावो धनमस्य अर्धतृतीयानावधनः । समाहारे, *पञ्चानां पूलानां समाहारः पञ्चपूली । पञ्चानां राज्ञां समाहारः पञ्चराजी । एवं पञ्चकुमारि । दशकुमारि । अध्यर्धानां पूलानां समाहारः अध्यर्धपूली । *अर्धपञ्चमपूली । समाहारे चेति किम् । अष्टौ प्रवचनमातरः । 'विशेषणं विशेष्येण'—इत्यादिनापि न भवति । नियमार्थत्वादस्य । एकस्य समाहारायोगादपूपेन समासे कथमेकापूपी । एकस्याप्यनेकपर्यायोपनिपातिनोऽनेकत्वसंभवे समाहारोपपत्तेः । द्विगुश्चेति चकारः कर्मधारयतत्पुरुषसंज्ञा*समावेशार्थः । अनाम्नीति किम् । पञ्चर्षीणामिदं पाञ्चर्षम् । एवं दाशार्हम् । अत्र द्विगुत्वेऽनपत्यप्रत्ययस्य लुप् स्यात् । *अयंग्रहणमुत्तरत्र द्विगुश्चेत्यस्यानुवृत्त्यर्थम् । द्विगुप्रदेशाः 'द्विगोः समाहारात्' (२-४-२२) इत्यादयः ॥ ९९ ॥ *निन्द्यं कुत्सनैरपापाद्यैः ॥ ३ । १ । १०० ॥ निन्द्यवाचि नामैकार्थं पापादिवर्जितैः कुत्सनैर्निन्दाहेतुभिः सह समस्यते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । वैयाकरणश्चासौ खसूची च वैयाकरणखसूची । यः शब्दं पृष्टः सन्निष्प्रतिभत्वात् खं सूचयति स एवमुच्यते । वैयाकरणखसूचिरित्यन्ये । याज्ञिककितवः । अयाज्ययाजनात्तृष्णापरः । मीमांसकदुर्दुरूढः । दुर्दुरूढो नास्तिकः । क्षत्रियभीरुः । भिक्षुविटः । मुनिखेटः । ब्राह्मणचेलः । ब्राह्मणब्रुवः । राक्षसहतकः । ब्राह्मणजाल्मः । तापसापशदः । *काण्डीरकाण्डपृष्ठः । ग्राम्यधृष्टः । मुनिधूर्तः । कविचौरः । *आरक्षितस्करः । पाषण्डिचाण्डालः । निन्द्यमिनि किम् । वैयाकरणश्चौरः । प्रत्यासत्तेर्निन्द्यशब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते । न चात्र चौर्येण वैयाकरणत्वं कुत्स्यते किं तर्हि तदाश्रयो द्रव्यम् । वैयाकरणत्वं तदुपलक्षणमात्रम् । तेनात्र विशेषणसमासो भवति । चौरवैयाकरणः । कुत्सनैरिति किम् । *कुत्सितो ब्राह्मणः । बहुलाधिकाराद्विशेषणसमासोऽप्यत्र न भवति । भवतीत्यन्ये । कुत्सितब्राह्मणः । अपापाद्यैरिति किम् । पापवैयाकरणः । अणकवैयाकरणः । प्रवृत्तिनिमित्तमेव कुत्स्यते । एवं पापकुलालः । अणकनापितः । हतविधिः । दग्धदैवम् । दुष्टामात्याः । क्षुद्रतापस इत्यादि । विशेष्यस्य पूर्वनिपातार्थ

---

यर्थमुत्तरग्रहण कर्त्तव्यमेव अन्यथा द्विगुविषयाभावात् 'कालो द्विगौ च मेयै' इति समासाऽप्रवृत्ति स्यादतो न वाच्य तद्धितविषयेऽप्येषु समासो भविष्यतीति ॥—**पञ्चानां पूलानां समाहार** इति । समाहार समूह इति सामूहिकप्रत्यय प्राप्नोति । न । समासेनैव तस्योक्तत्वात् । ननु समाहारसमूहयोरेकार्थत्वात्तद्धित इत्येव समासो भविता कि समाहारग्रहणेन । अथ तद्धितोत्पत्ति प्राप्नोतीति चेत् उत्पन्नता द्विगुत्वात् 'द्विगोरनपत्ये'—इति लुप् भविष्यति इति न काचिद् हानिरिति । सत्यम् । 'परिमाणात्तद्धित' इति नियमात् पञ्चपूलीत्यादौ 'द्विगो समाहरात्' इति ङीर्न स्यात् । तथा पञ्चकुमारि इत्यादौ 'ङ्यादेर्गौणस्य'—इति ङ्यादेर्लोप स्यात् । पञ्चगवमिति 'वाञ्चलेरलुक' इत्यधिकृते 'गोस्तत्पुरुषात्' इत्यट् न स्यात् ॥—**अर्द्धपञ्चमपूली**ति । सज्ञातद्धितोत्तरपदेषु नित्यसमास । समाहारे तु विकल्पस्तत्र वाक्यमपि हि भवति । पञ्चाना पूलाना समाहार इति ॥—**समावेशार्थ** इति । तेन गोस्तत्पुरुषात्पञ्चसर्वविश्वादित्यादि सिद्धम् ॥—**अयंग्रहणमि**ति । ग्रथयमिति सूत्राशो न स्यात्ततो यथा कर्म्मधारयश्चेत्यनुवर्त्तते तथा द्विगुश्चेत्यप्युत्तरत्रानुवर्त्तेतेति वक्ष्यमाणा अपि समासा द्विगुसज्ञा स्यु । तत परमा नौ परमनौरिति 'नाव' इति समासान्त स्यात् । समाहारे दिक्शब्दो न सभवति । समाहारो हि मूर्त्ताना युगपत्कालाना सभवति इति समाहारोदाहरण दिग्शब्देन न दर्शितम् । पञ्च च ते गावश्चेत्यपि कृते समासान्तविषयेऽपि कृते समासान्तविषये समासो भवत्येव । तत पञ्चगवा इत्यादयोऽपि ॥—**निन्द्यं**—॥—**काण्डीरकाण्डपृष्ट** इति । शस्त्राजीव काण्डस्पृष्ट ॥—**आरक्षी**त्यत्र 'ग्रहादिभ्यो णिन्' ॥—**कुत्सितो ब्राह्मण** इति । नहि ब्राह्मण कुत्सनवचन । अपि तु कुत्स्य एवेति व्यावृत्तिबलान्न समास । ब्राह्मणश्चासौ कुत्सितश्चेत्यपि कृते कुत्सितशब्दस्य पापाद्यन्नीकारादनेनापि न समास । पापवैयाकरणाणकवैयाकरणयो. पूर्वनिपाते कामचार शेषेषु जातिश-

वचनम्। बहुवचनं प्रयोगानुसरणार्थम् ॥ १०० ॥ *उपमानं सामान्यैः ॥ ३ । १ । १०१ ॥ उपमीयतेनेनेत्युपमानम् । उपमानोपमेययोः साधारणो धर्मः सामान्यम्। उपमानवाचि नामैकार्थं सामान्यवाचिभिर्नामभिः सह समस्यते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति। शस्त्रीव शस्त्री । शस्त्री चासौ श्यामा च शस्त्रीश्यामा। शस्त्रीव श्यामेत्यर्थः। एवं न्यग्रोधपरिमण्डला। शरकाण्डगौरी। शुकहरिणी। कुमुदश्येनी। तडित्पिशङ्गी। तित्तिरिकल्माषी। कुम्भकपाललोहिनी। मृगीव मृगी सा चासौ चपला च मृगचपला। एवं हंसगद्गदा। काकवन्ध्या। अत्र शस्त्र्यादयः शब्दाः श्यामादयश्च श्यामादिकं गुणमुपादाय यदोपमेये वर्तन्ते तदैकार्थ्या भवन्ति। एवं च पुंवद्भावोऽपि सिद्धो भवति। उपमानमिति किम्। देवदत्ता श्यामा। सामान्यैरिति किम्। अग्निर्माणवकः। गौर्वाहीकः। *फालास्तन्दुलाः। पर्वता वलाहकाः। ' विशेषणं विशेष्येण '—( ३-१-९६ ) इत्येव समासे उपमानोपमेययोः साधारणधर्मप्रतीत्यन्यथानुपपत्त्यैव पूर्वनिपाते च सिद्धे उपमानं सामान्यैरेवेति *नियमार्थं वचनम्। तेनाग्निर्माणवक इत्यादौ विशेषणसमासोऽपि न भवति ॥ १०१ ॥ *उपमेयं व्याघ्राद्यैः साम्यानुक्तौ ॥ ३ । १ । १०२ ॥ उपमेयवाचि नामैकार्थं सामर्थ्यादुपमानवाचिभिर्व्याघ्राद्यैर्नामभिः सह समस्यते साम्यानुक्तौ न चेदुपमानोपमेययोः साधारणधर्मवाची *शब्दः प्रयुज्यते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति। व्याघ्र इव व्याघ्रः पुरुषः स चासौ व्याघ्रश्च पुरुषव्याघ्रः। एवं पुरुषसिंहः। पुरुषवृषभः। वृषभसिंहः। राज्ञी चासौ व्याघ्री च राजव्याघ्री। शुनी चासौ सिंही च श्वसिंही। अत्रापि कर्मधारयात् पुंवद्भावः। साम्यानुक्ताविति किम्। *पुरुषव्याघ्रः शूर इति मा भूत्। *इदमेव च प्रतिषेधवचनं ज्ञापकम् प्रधानस्य सापेक्षत्वेऽपि समासो भवति। तेन राजपुरुषो दर्शनीय इत्यादि सिद्धम्। व्याघ्र सिंह ऋषभ वृषभ महिष चन्दन वृक वराह हस्तिन् कुञ्जर रुरु पृषत पुण्डरीक * पलाविका कुञ्चा। बहुवचनमाकृतिगणार्थम्। तेन वाग्वज्रः मुखपद्मं पाणिपल्लवं करकिसलयं वदनेन्दुः पार्थिवचन्द्रः वानरश्वा कुचकुम्भस्तनकलशादयोऽपि भवन्ति। उपमानं सामान्यैरेवेत्यवधारणेन विशेषणसमासे प्रतिषिद्धे समासविधानार्थं वचनम् ॥ १०२ ॥ *पूर्वापरप्रथमचरमजघन्यसमानमध्यममध्यमवीरम् ॥ ३ । १ । १०३ ॥ पूर्वादीनि नामान्येकार्थानि परेण नाम्ना सह समस्यन्ते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति। पूर्वश्चासौ पुरुषश्च *पूर्वपुरुषः । एवमपरपुरुषः। प्रथमपुरुषः। चरमपुरुषः। जघन्यपुरुषः। समानपुरुषः। मध्यपुरुषः। मध्यमपुरुषः।

---

वेदेषु पूर्वनिपात एव विशेषणस्य ॥—उपमान—॥ समानस्य भाव वर्ण्णदृढादित्वात् ष्यण् ॥—फालास्तन्दुला इति । फाला इव दीर्घत्वाद्विशदत्वात् सरलत्वाद्वा उपमेयमेतन्न पुन साधारणधर्मवाचि। न्यग्रोधश्चासौ परिमण्डला च अनया रीत्या वाक्य कार्यम्। कुमुद न तत् श्येनी च कुमुदश्येनी ॥—नियमार्थमिति। शस्त्रीश्यामेत्यादौ गुणमुपादाय प्रवर्त्तमानेन शस्त्र्यादिना श्यामादेर्विशेषणाच्छ्यामशस्त्रीत्युक्तेऽपि साधारणधर्मप्रतीत्यभावादुपमानस्य समासे पूर्वनिपाते च सिद्ध विधिरारभ्यमाणो विध्यसम्भवान्नियमार्थो भवति ॥—उपमेय—॥—शब्दः प्रयुज्यत इति। यदा प्रकरणादिवशान्नियतसाधारणगुणप्रतिपत्तौ व्याघ्रादिशब्द शौर्यादौ पुरुषार्थे एव वर्त्तते तदा साम्यानुक्तौ सामानाधिकरण्ये सति समासो भवति। यदा तु गुणान्तरव्यवच्छेदाय विशिष्टसाधारणगुणप्रतिपत्तये शूरादिशब्दप्रयोगस्तदा साम्यानुक्तिग्रहणात्समासाभाव ॥—पुरुषव्याघ्र शूर इति। नन्वत्र व्याघ्र शूर इति व्याघ्रपदस्य शूरपदापेक्षयापि समासो न भविष्यति किं प्रतिषेधेनेत्याह ॥—इदमेव चेति—॥—पलाविकेति। पलतेरचि तस्याविका पलाविका पक्षिणी ॥—पूर्वापर—॥—पूर्वपुरुष इत्यादि। दिग्वाचकत्वेऽपि सूत्रोपादानसामर्थ्यात् समास। न तु दिगधिकमित्यनेन निषेध ॥

वीरपुरुषः । 'विशेषणं विशेष्येण'-( ३-१-९६ ) इत्यादिनैव सिद्धे स्पर्धे परमिति पूर्वनिपातस्य विषयप्रदर्शनार्थमद्रव्यवाचिनोरनियमेन पूर्वापरभावप्रसक्तौ पूर्वनिपातनियमार्थं वचनम् । तेन पूर्वजरन् वीरपूर्वः *पूर्वपटुः । कथमेकवीर इत्यादौ वीरादेः परस्य स्पर्धे पूर्वनिपातो न भवति । *बहुलाधिकारात् ॥ १०३ ॥

***श्रेण्यादि कृताद्यैश्च्व्यर्थे ॥ ३ । १ । १०४ ॥** श्रेण्यादि नामैकार्थं कृताद्यैर्नामभिः सह समस्यते *च्व्यर्थे गम्यमाने स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । अश्रेणयः श्रेणयः कृताः श्रेणिकृताः पुरुषाः । अनूका ऊकाः कृता ऊककृताः । राशिस्थानीकृता इत्यर्थः । एवं पूगकृताः । श्रेणिमताः । श्रेणिमिताः । श्रेणिभूताः । च्व्यर्थे इति किम् । श्रेणयः कृताः । किंचित् निगृहीता अनुगृहीता वेत्यर्थः । च्व्यन्तानां च्व्यर्थस्य च्विनैवोक्तत्वान्नानेन समासः । च्व्यर्थे हि समासेनाभिधेयेऽयं समासो भवति । गत्यादिसूत्रेण तु नित्यसमासो भवत्येव । श्रेणीकृताः । ऊकीकृताः । श्रेणि *ऊक पूग कुन्दुम कन्दुम राशि *निचय विशिष्ट निर्धन कृपण इन्द्र देव मुण्ड भूत श्रमण वदान्य अध्यायक अध्यापक *ब्राह्मण क्षत्रिय पटु पण्डित कुशल चपल निपुण इति श्रेण्यादिः । कृत मत मित भूत उप्त उक्त समाज्ञात समाख्यात समाम्नात संभावित अवधारित अवकल्पित निराकृत उपकृत अपाकृत कलित उदाहृत उदीरित उदित दृष्ट विश्रुत विहित निरूपित आसीन आस्थित अवबद्ध । इति कृतादयः ॥ बहुवचनमाकृतिगणार्थम् । यत्र सामर्थ्यं नास्ति तत्रेतिशब्दाध्याहारो द्रष्टव्यः । अनिर्धना निर्धना इत्युपकृता अचपलाश्चपला इत्यपाकृता अभूता भूता इति निराकृताः । *श्रेणिकृता इत्यादौ क्रियाकारकसंबन्धमात्रं न विशेषणविशेष्यभाव इति वचनम् ॥ १०४ ॥

***क्तं नञादिभिन्नैः ॥ ३ । १ । १०५ ॥** *नञादयो नञ्प्रकाराः *तैरेव भिन्नैर्नामभिः सह क्तान्तं नामैकार्थं सामर्थ्यादनञ् समस्यते स च समासस्तत्पुरुषसंज्ञः कर्म-

---

—**पूर्वपटुरिति** । पूर्वशब्दो दिग्योगेन कालयोगेन वा द्रव्य विशिनष्टि । पटुशब्दश्च पटुत्वेन । तत्र विशेषणसमासे द्वयोरपि गुणवचनविशेषणत्वात् खञ्जकुण्टादिवदनियमेन पूर्वनिपात स्यात्— —**बहुलाधिकारादिति** । अत्र सुधाकरस्त्वाह यद्यप्येकवीर इति शिष्टप्रयुक्तस्तथापि शिष्टप्रयोगात्साक्षात् स्मृतिरेव बलीयसीत्यसाधुरेवायमिति ॥—**श्रेण्यादि**— ॥ एकशिल्पपण्यजीविना सघ श्रेणि । च्व्यर्थ प्रागतत्तत्त्वलक्षण स चेत् सस्य भवति न च्विप्रत्यय ॥—**च्व्यर्थे गम्यमाने** इति । यद्यप्युत्तरपदार्थप्रधानोऽय समासस्तथाप्युपसर्जनतया च्व्यर्थोऽपि प्रतीयते । उपसर्जनमपि ह्यर्थो भवति ॥—**ऊकेति** । अवते 'विचिपुषि'—इति कित् क । कुके **कुन्दुम** । कन्दु स्वेदनिका मिमीते ह्वे **कन्दुम** कान्दविक ॥—**निचय** समूह गन्धद्रव्य च ॥ ब्रह्म अणतीति कर्म्मणोणि पृषोदरादित्वादकारलोपे दीर्घत्वे च ॥—**यत्र सामर्थ्यमिति** । अथ चपलापाकृता इत्यादौ चपलादीना च्व्यर्थवृत्तीनामपाकृतादिभि सामर्थ्याभावात् कथ समास इत्याशङ्का ॥—**श्रेणिकृता इत्यादाविति** । नन्वत्रापि विशेष्यभावोऽस्ति यत कृता के कर्म्मतापन्ना श्रेणय तत्र यतो न हि श्रेणय एवविध विशेषण किंतु अश्रेणय श्रेणय इति पश्चात् श्रेणय इत्युक्ते अश्रेणय इत्यपेक्षते इति श्रेणय इति न भवत्येव किंतु करणक्रियापेक्षया कारकमेवेति क्रियाकारकसबन्ध एव । यतो यथा नीलोत्पलमिति नील एव विशेषणशब्दोऽस्ति तथात्र श्रेणय एवविधो न यतो अश्रेणय इत्यपेक्षते इति ॥—**क्तं नञा**—॥ न हि नञादय पठयन्ते इत्यादिशब्द प्रकारवाचीत्याह—**नञादयो नञ्प्रकारा** इति । विसमाप्तिवचनोऽत्र नञ् । तेन विसमाप्तिद्योतिनो नञ्प्रकारा । विसमाप्तिश्च ईषन्निष्पत्तिरीषदपरिसमाप्तिर्वा गतादिभिन्नैरित्यत्र विनाप्येवकारेण तदर्थावगतिरस्ति सावधारणाधिक्ये भिन्नशब्दस्य वर्त्तमानत्वात् । यथा देवदत्तो यज्ञदत्तात्स्वाध्यायेन भिन्न इति । अत्र स्वाध्यायेनैव भिन्नो विशिष्टोऽधिक इति सर्वमन्यद्गाढयत्वादि तुल्यमिति प्रतीयते ॥—**तैरेवेति** । न प्रकृत्या

धारयसंज्ञश्च भवति। कृतं च तदकृतं च कृताकृतम्। एवं भुक्ताभुक्तम्। अशितानशितम्। इटः क्तावयवत्वाद्विकारस्य त्वेकदेशविकृतानन्यत्वान्न भेदकत्वम्। तेन क्लिष्टाक्लिशितं पूतापवितं शाताशितं छाताच्छितम्। आदिग्रहणात्कृतापकृतम्। भुक्तविभुक्तम्। पीतावपीतम्। क्तमिति किम्। कर्तव्यमकर्तव्य च। *नञादिभिन्नैरिति किम्। कृत प्रकृतम्। *कृताकृतादिषु हि ईषदसमाप्तिद्योतकस्य नञः प्रयोगात् तदादयोऽपीषदसमाप्तिद्योतिन एवापादयो गृह्यन्ते। नञादिभिरेव भिन्नैरित्यवधारणं किम्। कृतं चाविहितं चेति प्रकृतिभेदे कृतं चाकर्तव्यं चेति प्रत्ययभेदे गतश्च प्राप्तोऽगतश्चाज्ञात इत्यर्थभेदे सिद्धं चाभुक्तं चेति प्रकृत्यर्थयोर्भेदे च माभूत्। *अवयवधर्मेण समुदायव्यपदेशात् कृताकृतादिष्वैकार्थ्यम्। 'विशेषणं विशेष्येण'-(३-१-९६) इत्येव समासः सिद्धः किंतु क्रियाशब्दत्वादनियमेन पूर्वापरनिपाते प्राप्ते पूर्वनिपातनियमार्थं वचनम्। तेनाकृतकृतम् अनशिताशितमित्यादि न भवति ॥ १०५ ॥ *सेड्नानिटा ॥ ३। १। १०६ ॥ सेट् क्तान्तं नाम नञादिभिन्नेनानिटा नाम्ना न समस्यते। पूर्वस्यापवादः। क्लिशितमक्लिष्टम्। पवितमपूतम्। इड्ग्रहणमर्थभेदाहेतोर्विकारस्य *उपलक्षणम्। तेन शिताशितम् छिताच्छितमित्यादि न भवति। *कथं विन्नावित्तं त्राणात्रातम्। 'क्तादेशोऽपि' (२-१-६१) इति परे समासे नत्वस्यासत्त्वाद्भविष्यति। सेडिति किम्। कृताकृतम्। शाताशातम्। छाताच्छातम्। अनिटेति किम्। अशितानशितेन जीवति। शिताशितम्। छिताच्छितम् ॥ १०६ ॥ *सन्महत्परमोत्तमोत्कृष्टं पूजायाम् ॥ ३। १। १०७ ॥ सदादीनि नामान्येकार्थानि पूजायां गम्यमानायां सामर्थ्यात्पूज्यमानवचनैर्नामभिः सह समस्यन्ते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति। संश्चासौ पुरुषश्च सत्पुरुषः। एवं महापुरुषः। *परमपुरुषः। *उत्तमपुरुषः। उत्कृष्टपुरुषः। पूजायामिति किम्। सन् घटः विद्यमान इत्यर्थः। उत्कृष्टो गौः कर्दमादुद्धृत इत्यर्थः। कथं महाजनः महोदधिः विपुलं ह्यत्र गम्यते न पूजा। बहुलाधिकाराद्भविष्यति। पूजायामेवेति नियमार्थं वचनम् पूर्वनिपातव्यवस्थार्थं च। तेन सच्छुक्ल इत्यादौ खञ्जकुण्टादिवदनियमेन पूर्वनिपातो न भवति। परमजरन् महावीरः परममहान् इत्यादौ च स्पर्धे परमिति यथापरं पूर्वनिपातश्च सिद्धो भवति ॥ १०७ ॥ *वृन्दारकनागकुञ्जरैः ॥ ३। १। १०८ ॥ पूजायां गम्यमानायामेभिर्नामभिः सामर्थ्यात्पूज्यमानवचनं नामैकार्थं समस्यते स च

---

प्रत्ययेन शब्दान्तरेणार्थेन चेत्यर्थ। कर्त्तव्यमकर्त्तव्यम् अकर्त्तव्य कर्त्तव्य चेति। उभयत्रापि विशेषणसमासो भवत्येव ॥—नञादिभिन्नैरिति किमिति। अन्यथा भिन्नैरित्येवोच्येत ॥—कृताकृतादिष्विति। ननु नञादेरपठितत्वान्नञोऽव्ययत्वात्तदादिग्रहणे प्रशब्दस्याव्ययस्य कुतो न ग्रहण येनापादय एव दर्श्यन्ते इत्याशङ्का ॥—अवयवधर्मेणेति। अयमर्थ एकमनेकावयव भवतीत्येकस्यावयवस्य कृतत्वादनयवायविनो कथ चिदभेदात्तदेक कृतमुच्यते अनयवान्तरस त्वकृतत्वादकृतमित्येकस्य कृतत्वाकृतत्वयो सम्भवादैकार्थ्यात् कृताकृतव्यपदेशो युज्यत इत्यर्थ ॥—सेड्ना—॥—उपलक्षणमिति। तेन सविकारमविकारेण न समस्यते इत्यपि सिद्धम् ॥—कथं विन्नावित्तमिति। नन्वत्र विकारो शब्दसादृश्यासादृश्यकृतो नान्यकार्यापेक्षो इत्यनापि निषेध प्राप्नोतीत्याशङ्का ॥—सन्मह—॥—परमपुरुष इति। अत्र परम चासौ न चेति कृते अपरममेव भवति यतोऽय योगो 'विशेषण विशेष्येण'— इति सूत्रस्य बाधक अतो नञा सह सर्वोऽपि कर्म्मधारयो न ॥—उत्तमपुरुष इति। उत्ताम्यतीति अचि उत्तम। उद्गतार्थवृत्तेरुच्छब्दाद्वा तमप्। स्वयप्रकर्षवृत्तित्वात्तामभाव ॥—वृन्दारक—॥—वृन्दारकादीनामिति। ननु वृन्दारकादयो जातिशब्दा न ते सदादिवत् पूजावचना

समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । वृन्दारक इव वृन्दारकः । गौश्चासौ वृन्दारकश्च गोवृन्दारकः । एवमश्ववृन्दारकः । गोनागः । अश्वनागः । गोकुञ्जरः । अश्वकुञ्जरः । *वृन्दारकादीनां जातिशब्दत्वेऽपि *उपमानात्पूजावगतिः । पूजायामित्येव । शोभना सीमा स्फटा यस्य स *सुसीमो नागः । *नात्र नागशब्दः पूजां गमयति किंतु जातिमात्रम् । *देवदत्तो नाग इव मूर्ख इत्यत्र तूपमानेनापि निन्दैव गम्यते । व्याघ्रादेराकृतिगणत्वात् 'उपमेयं व्याघ्राद्यैः साम्यानुक्तौ' (२-१-१०२) इत्येव सिद्धे पूजायामेवेति नियमार्थं साम्योक्तावपि विधानार्थं वचनम् । तेन गोनागो बलवानित्यादि सिद्धम् ॥ १०८ ॥ ***कतरकतमौ जातिप्रश्ने ॥ २ । १ । १०९ ॥** कतरकतमावित्येतावेकार्थौ जातिप्रश्ने गम्यमाने सामर्थ्याज्जातिवाचिना नाम्ना सह समस्येते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । कतरश्चासौ कठश्च कतरकठः । कतरकालापः । कतमकठः । कतमकालापः । कतरगार्ग्यः । *कतमगार्ग्यः । जातिप्रश्न इति किम् । गुणक्रियाद्रव्यप्रश्ने न भवति । कतरः शुक्लः । कतमः शुक्लः । कतरो गन्ता । कतमो गन्ता । कतरः *कुण्डली । कतमः कुण्डली । 'विशेषण विशेष्येण'–(२–१–९६) इत्येव सिद्धे जातिप्रश्न एवेति नियमार्थं वचनम् ॥ १०९ ॥ ***किं क्षेपे ॥ २ । १ । ११० ॥** क्षेपो निन्दा । तस्मिन् गम्यमाने किमित्येतन्नामैकार्थमर्थात्क्षिप्यमाणवाचिनाम्ना सह समस्यते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । को राजा किंराजा यो न रक्षति । एवं किंगौर्यो न वहति । किंसखा योऽभिद्रुह्यति । स किंवैयाकरणो यः शब्दं न ब्रूते । सर्वत्र तत्कार्याकरणात् क्षेपो गम्यते । तथा कुत्सितो नरोऽश्वमुखत्वात् किंनरः । एवं किंपुरुषः । कुत्सितः शुकः किंचिन्नीलत्वात्किंशुकः पलाशः । एवं *किंजल्कः । *किंकिरातमित्यादि । 'न किमः क्षेपे' (७–३–७०) इति समासान्तप्रतिषेधः । क्षेपे इति किम् । को राजा मथुरायाम् । 'विशेषणं विशेष्येण'–(२–१–९६) इत्येव सिद्धे क्षेपे एवेति नियमार्थं वचनम् ॥ ११० ॥ ***पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यायकधूर्तप्रशंसारूढैर्जातिः ॥ २ । १ । १११ ॥** जातिवाचि नामैकार्थं पोटादिभिर्नामभिः प्रशंसारूढैश्च सह समस्यते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । इभ्या च सा पोटा च इभ्यपोटा । आर्यपोटा । पुरुषवेषधारिणी स्त्री पोटा गर्भ एव दास्यं प्राप्ता वा उभयव्यञ्जना

---

कथं तै समासे पूजा गम्यते इत्याह—**उपमानादि**ति । अयमर्थः वृन्दारकादिगता केचित्पूजानिमित्ता गुणाः स्वप्रवृत्तिनिमित्तैकार्थसमवायितया वृन्दारकादिशब्दैरुच्यन्ते तद्गतगुणोक्त्यैव चोपमेयतापि । यथा सङ्ग्रामे विचरत्येष पुरुषः पुरुषो यथा । एवं वृन्दारकादिगुणप्रतिपादनपरे प्रयोगे उपमानगतया पूजा गम्यत इत्यर्थः ॥—**सुसीमो नाग** इति । अत्र सुसीमः सञ्ज्ञाशब्दस्तस्य नागेनाभिधेयं परिच्छिद्यते न तु पूजा प्रतिपाद्यत इत्याह—**नात्रे**त्यादि । इदं तु पूर्वैर्दर्शितत्वाद्दर्शितं परमार्थतस्तु नेदं प्रत्युदाहरणम् । यदुपाध्यायः सुसीमो नाग इति त्वनागस्य सुसीमत्वाभावात्सुसीमस्य नागविशेषसञ्ज्ञात्वाद्विशेष्यत्वाभावान्न प्रत्युदाहरणमिति । अत एव द्वितीयं प्रत्युदाह्रियते **देवदत्तो नाग इव मूर्ख** इति । हस्तीव मूर्ख इत्यर्थः । अत्रोपमानेनापि निन्दैव गम्यते न पूजा । कुञ्जरशब्दस्य व्याघ्रादिपाठे प्रयोजनं चिन्त्यम् ॥—**कतरक**—॥—**कतमगार्ग्य** इति । कठ इत्यादि चरणं गार्ग्य इत्यादि गोत्रं ततो गोत्रं च चरणैः सहेति जातिः ॥—**कुण्डली**ति । ज्योत्स्नादित्वात्प्राप्तौ 'शिखादिभ्य इन्' ॥—**किं क्षे**—॥—**जल्कश्चूर्णः** ॥—**किरातं** काञ्चनारवृक्षस्य पुष्पमित्यर्थः ॥—**पोटायु**—॥—**वृन्दारकयुवति**रिति । अत्र 'वृन्दारकनागकुञ्जरैः'—इति बाधित्वा परत्वादयमेव विधि

वा भुजिष्यदासी वा । इभ्या चासौ युवतिश्च इभ्ययुवतिः । नागयुवतिः । *वृन्दारकयुवतिः । अग्निश्चासौ स्तोकं च *अग्निस्तोकम् । विषस्तोकम् । दधि च तत् कतिपयं च दधिकतिपयम् । तक्रकतिपयम् । गौश्चासौ गृष्टिश्चेति गोगृष्टिः । अजगृष्टिः । गृष्टिः सकृत्प्रसूता । गौश्चासौ धेनुश्च गोधेनुः । अजधेनुः । धेनुर्नवप्रसूता । गोवशा । अजवशा । वशा वन्ध्या । गोवेहत् । अजवेहत् । *वेहद्गर्भघातिनी । गोबष्कयणी । अजबष्कयणी । बष्कयेण वृद्धवत्सेन या दुह्यते सा *बष्कयिणी । कठप्रवक्ता । कालापप्रवक्ता । प्रवक्ता उपाध्यायः । कठश्रोत्रियः । कालापश्रोत्रियः । श्रोत्रियश्छन्दोऽध्यायी । कठाध्यायकः । कालापाध्यायकः । अध्यायकोऽध्येता । मृगधूर्तः । गार्ग्यधूर्तः ॥ 'निन्द्यं कुत्सनैः'--( ३--१--१०० ) इत्यत्र शब्दप्रवृत्तिनिमित्तकुत्सायां समास उक्त इह तु *तदाश्रयकुत्सायां समासो यथा स्यादिति धूर्तग्रहणम् । *प्रशंसायां रूढा मतल्लिकादय *आविष्टलिङ्गास्तैः समासः । गौश्चासौ *मतल्लिका च गोमतल्लिका । एवमश्वमतल्लिका । *गोमचर्चिका । *गोप्रकाण्डम् । पुरुषोद्घः । *गोकुमारी । अश्वकुमारी । *गोतल्लजकः । कुमारतल्लजकः । तातपादाः । आर्यमिश्राः । केशपाशः । केशहस्तः । अंसाभित्तिः । वक्षस्थलम् । कपोलपाली । उरःकपाटः । स्तनतटम् । *रूढग्रहणादिह न भवति । गौः रमणीया । गौः शोभना । जातिरिति किम् । देवदत्ता पोटा । कालाक्षी वशा । चैत्रः प्रवक्ता । मैत्रो मतल्लिका । विशेष्यस्य जातेः पूर्वनिपातार्थं वचनम् ॥ १११ ॥ *चतुष्पाद्गर्भिण्या ॥ ३ । १ । ११२ ॥ चत्वारः पादा यस्याः सा चतुष्पाद्गवादिजातिः । तद्वाचिनामैकार्थं गर्भिण्या गर्भिणीति नाम्ना सह समस्यते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । गौश्चासौ गर्भिणी च गोगर्भिणी । एवमजगर्भिणी । अश्वगर्भिणी । महिषगर्भिणी । चतुष्पादिति किम् । *ब्राह्मणी गर्भिणी । जातिरित्येव । कालाक्षी गर्भिणी । स्वस्तिमती गर्भिणी । *संज्ञाश-

---

—अग्निस्तोकमिति । स्तोचन भावे घञि न्यङ्क्वादित्वात्कत्वे स्तोक । सोऽस्यास्तीत्यत्राभ्राद्यप्रत्यये स्तोकम् । भिन्नलिङ्गयोरपि सामाधिकरण्य वर विरोध इतिवत् ॥ सामान्यविशेषभावेनाय प्रयोगः । तेनाग्निस्तोक इत्यपि ॥—वेहदिति । विहन्ति गर्भमिति 'सश्वत्'--इति निपात ॥—बष्कयिणीति । वरुकतेरधिपृषोदरादित्वात् 'निष्कतुरुष्क'—इति वा बष्का ता यातीति ये बष्कय' प्रौढवत्सः । सोऽस्या अस्ति ॥—तदाश्रयकुत्सयामिति । न चात्र कठप्रोक्तग्रन्थाध्येतृत्व वेदितृत्व वा कठशब्दप्रवृत्तिनिमित्त तेन कुत्स्यते किं तर्हि प्रवृत्तिनिमित्तावच्छिन्नमभिधेयम् ॥—प्रशसायामिति । असति तु रूढग्रहणे जातिगुणशब्दा अपि पर स्तोतुमुपादीयमाना प्रशसाया वर्त्तन्ते इति तेऽपि गृह्येरन् ॥—आविष्टलिङ्गा इति । उपलक्षणत्वादाविष्टवचनाश्च तेन तातश्च ते पादाश्चेति सिद्धम् । आविष्ट आगृहीतमपरित्यक्त स्व लिङ्ग ये. । लिङ्गान्तरसबन्धेऽपि न विशेष्यलिङ्गमुपाददते ॥—मतल्लिकेति । मया लक्ष्म्या तल्लतीति 'कुशिक'—इति निपात ॥—मचर्चिकेति । मा लक्ष्मी चर्चयतीति णके 'ङ्यापो वा'—इति ह्रस्वत्वे ॥— प्रकाण्डमिति । प्रकृष्टतया कण्यते 'कण्याणि'—इति णिति डे । गोमतल्लिकादयो नित्यसमासा परमर्थप्रदर्शनार्थमलौकिक वाक्य क्रियते । न हि वाक्येन पूजा गम्यते ॥—कुमारीत्यत्र वयोऽभावात् गौरादित्वात्ङीप्रत्यय । तल्ले आख्यातसरसि जात सप्तम्या डे तल्लज' । तस्य तुल्ये कप्रत्यये तल्लजक । यदा द्विरूपो जकारस्तदा लज्जते कर्त्तरि णक । स लज्जको यस्य असौ तल्लजक ॥—रूढग्रहणादिति । रूढग्रहणस्योक्तरूपमतल्लिकादिपरिग्रहार्थत्वाद्रमणीयशोभनशब्दयोश्च रमणीयत्वादिगुणमुपादाय प्रशसाया वर्त्तमानत्वादाभ्या जातिर्न समस्यत इति ॥—चतुष्पाद्—॥—ब्राह्मणी गर्भिणीति । समासे हि सति ब्राह्मणीशब्दस्य पुवद्भाव स्यात् ॥—संज्ञाशब्दाविमाविति । एतो चतुष्पादमाहतुर्न तु जातिम् ॥—

द्वाविमौ । जातेर्विशेष्यस्य पूर्वनिपातार्थं वचनम् ॥ ११२ ॥ ***युवा खलतिपलितजरद्वलिनैः ॥ ३ । १ । ११३ ॥** युवन्नित्येतन्नामैकार्थं खलत्यादिभिर्नामभिः सह समस्यते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । युवा चासौ खलतिश्च युवखलतिः । एवं युवपलितः । *युवजरन् । युववलिनः । वलयोऽस्य सन्ति वलिनः । अङ्गादित्वान्नः । नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति युवतिश्चासौ खलतिश्च युवखलतिः । एवं युवपलिता । युवजरती । युववलिना । युवशब्दस्य *विशेष्यत्वात्परनिपाते प्राप्ते द्वयोर्वा गुणवचनत्वात्खञ्जकुण्टादिवदनियमे पूर्वनिपातार्थं वचनम् ॥ ११३ ॥ ***कृत्यतुल्याख्यमजात्या ॥ ३ । १ । ११४ ॥** कृत्यप्रत्ययान्तं तुल्याख्यं च तुल्यपर्यायं नामैकार्थमजात्याजातिवाचिनाम्ना सह समस्यते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । भोज्यं च तदुष्णं च भोज्योष्णम् । एवं *भोज्यलवणम् । पानीयशीतम् । पानीयोष्णम् । हरणीयपूर्णो घटः । पेयाम्लम् । भृत्यभरणीयः । एकोऽत्र कृत्योऽर्हार्थेऽपरश्च शक्यार्थे । स्तुत्यपटुः पुरुषः । तुल्याख्य, तुल्यश्वेतः । तुल्यसन् । तुल्यमहान् । सदृशश्वेतः । सदृशमहान् । अजात्येति किम् । *भोज्य ओदनः । तुल्यो वैश्यः । सदृशी कन्या वोढव्या । कथं शीतपानीयम् । *पानीयशब्दोऽयमौणादिको जलवाची तस्यायं विशेषणसमासः । जात्या समासस्याजातेः पूर्वत्वस्य च प्रतिषेधार्थं वचनम् ॥ ११४ ॥ ***कुमारः श्रमणादिना ॥ ३ । १ । ११५ ॥** कुमार इत्येतन्नामैकार्थं श्रमणादिना नाम्ना सह समस्यते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति । कुमारी चासौ *श्रमणा च कुमारश्रमणा । एवं कुमारप्रव्रजिता । कुमारश्चासावध्यायकश्च कुमाराध्यायकः । कुमारी चासावध्यायिका च कुमाराध्यायिका । एवं कुमाराभिरूपकः । कुमाराभिरूपिका । *श्रमणा प्रव्रजिता *कुलटा गर्भिणी तापसी वन्धकी दासी । एते सप्त स्त्रीलिङ्गा एव । अध्यायक *अभिरूपक पटु मृदु पण्डित कुशल चपल निपुण । येऽत्र स्त्रीलिङ्गास्तैः सह स्त्रीलिङ्ग एव कुमारशब्दः समस्यते शेषैस्तूभयलिङ्गः । *नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति हि न्यायः *श्रमणादीनां स्त्रीलिङ्गानां पाठात् । पुंलिङ्गैः पूर्वनिपाते कामचारः । कुमारश्रमणः । तापसकुमारः । *कुमारशब्दस्य पूर्वनिपातनियमार्थं वच-

---

युवा ख— ॥—युवजरन्निति । अत्र जरत्युत्साहादियुवधर्मोपलम्भात् यूनि वालस्यादिजरद्धर्मोपलम्भात् तद्रूपारोपात्सामानाधिकरण्यम् ॥—**विशेष्यत्वादिति** । विशेष्यो युवा शब्दोऽनया रीत्या युवत्वमप्रेऽपि प्रसिद्धम् । ततो युवशब्देन पुरुष एवाभिधीयते । ततस्तस्य खलतीत्यादि विशेषण तत परनिपाते प्राप्ते । अथवा द्वयोरपि गुणवचनत्व तदा युवत्वमप्रसिद्ध ततो युवशब्देन युवत्वविशिष्टो नरोऽभिधीयते ततो गुणवचनत्वात् कामचारेण पूर्वनिपाते प्राप्ते । अथवा द्वयोरपि पूर्वनिपातनार्थं वचनम् ॥—**कृत्यतुल्या—** ॥ आख्यायन्ते आभिरित्याख्या नामधेयानि । तुल्यस्याख्यास्तुल्याख्या । अथवा तुल्यमाचक्षते तुल्याख्या 'दश्चाड' इति ड । आख्याग्रहणाये पदान्तरनिरपेक्षास्तुल्यमर्थमाचक्षते इह ते गृह्यन्ते समानसदृशतुल्यप्रभृतयो न तु ये पदान्तरसान्निध्येन यथाग्निर्माणवक इति । अत्रापि तुल्यता प्रतीयते । परार्थे प्रयुज्यमाना शब्दा सादृश्य गमयन्तीति । न त्वत्र तुल्यता पदार्थ इति ॥—**भोज्यं च तदुष्णं चेति** । भोजनार्हं भोक्तु वा शक्यमित्यर्थे घ्यणि ॥—**लवणमिति** । नन्द्यादिनो गणपाठात् णत्व च ॥—**भोज्य ओदन** इति । ओदनत्वलक्षणाया जातेरोदनशब्दो वाचक । पीयते तदिति 'गयहृदय' इति **पानीयम्** ॥—**कुमार** —॥—**श्रमणे**ति । श्रम समस्तनयतीति डे 'पूर्वपदस्थात्'—इति सञ्ज्ञाया णत्वे श्राम्यतीति नन्द्यादित्वादने वा श्रमणा ॥—**कुलटे**त्यत्र कुलात् कुल चाटतीति कुलटा पृषोदरादि । अभिरूपयत्यात्मानमिति णके **अभिरूपक'** ॥ ननु कुमारशब्दस्य पुलिङ्गस्य निर्देशात् कथ स्त्रीलिङ्गस्य समास इत्याह—**नामग्रहणे** इत्यादि । हिशब्दोऽत्र यस्मादर्थे । यद्येव नामग्रहणपरिभाषयैव स्त्रीलिङ्गेऽपि समासस्य सिद्धत्वात् किमर्थ स्त्रीलिङ्गाना श्रमणादीना पाठ इत्याह—**श्रमणादीनामि**त्यादि ॥—

नम् । इह केचित् 'पूर्वकालैकसर्वजरत्पुराणनवकेवलपूर्वापरप्रथमचरमजघन्यसमानमध्यममध्यमवीरपूजार्थसन्महत्परमोत्तमोत्कृष्टा' इति वृन्दारकनागकुञ्जरैरिति युवा खलतिपलितजरद्वलिनैरिति कृत्यतुल्याख्यमजात्येति कुमारः श्रमणादिनेति पञ्चसूत्रीं विरचय्य तस्यामेव प्रथमान्तानां समावेशे परसूत्रनिर्दिष्टमेव प्रथमान्तं पूर्वं निपतति तृतीयान्तानां समावेशे परसूत्रनिर्दिष्टमेव तृतीयान्तं परं निपतति एकसूत्रोक्तानां तु प्रथमान्तानां तृतीयान्तानां च समावेशे पूर्वापरनिपाते कामचार इतीच्छन्ति । प्रथमान्तसमावेशे, तुल्ययुवा, सदृशयुवा । कुमारपरमः, कुमारपरमा । कुमारसन्, कुमारसती । एवं महज्जघन्यप्रथमचरममध्यममध्यमादयोऽपि । कुमारयुवा, कुमारतुल्यः कुमारतुल्या । तृतीयान्तसमावेशे, वृन्दारकपलितः वृन्दारकवलिनः नागजरन् वृन्दारकश्रमणा खलतिश्रमणा वृन्दारकप्रव्रजिता खलतिप्रव्रजिता जरत्कुलटा जरत्तापसी इत्यादि । श्रमणादीनां पुंलिङ्गत्वे त्वनियमः । तेन वृन्दारकश्रमणः श्रमणवृन्दारकः । नागतापसः तापसनागः । कुञ्जरदासः दासकुञ्जरः । तथा श्रमणखलतिः खलतिश्रमणः । पलिततापसः तापसपलितः इत्यादि । अध्यायकादयस्तु लिङ्गान्तरेऽपि परनिपातना एव । वृन्दारकाध्यायकः । वृन्दारिकाध्यायिका । खलत्यध्यायकः । खलत्यध्यायिका । पलिताभिरूपकः । पलिताभिरूपिका । एकसूत्रोक्तानां प्रथमान्तानां समावेशे, प्रथमवीरः वीरप्रथमः । चरमजघन्यः जघन्यचरमः इत्यादि । तुल्यभोज्यः भोज्यतुल्य इत्यादि । एकसूत्रे तृतीयान्तानां समावेशे, खलतिपलितः पलितखलतिः । जरद्वलिनः वलिनजरन् इत्यादि ॥११५॥

*मयूरव्यंसकेत्यादयः ॥ ३ । १ । ११६ ॥ मयूरव्यंसकादयस्तत्पुरुषसमासा निपात्यन्ते । विगतावंसावस्य व्यंसस्तत्तुल्यो व्यंसकः । *व्यंसयति वा छलयति व्यंसकः । व्यंसकश्चासौ मयूरश्च *मयूरव्यंसकः । एवं छात्रव्यंसकः । मुण्डश्चासौ कम्बोजश्च *कम्बोजमुण्डः । एवं यवनमुण्डः । व्यंसका चासौ मयूरी च मयूरव्यंसका । कर्मधारयलक्षणः पुंवद्भावः । एतेषु विशेष्यस्य पूर्वनिपातनम् । 'एहीडादयोऽन्यपदार्थे' *एहि इडे ऋि इति जल्पो यस्मिन् कर्मणि काले वा तत् एहीडं वर्तते । एहि यवैरिति जल्पो यत्र कर्मणि काले वा तदेहियवं वर्तते । एतौ निपातनान्नपुंसकौ । एहि वाणिजेति जल्पो यस्यां क्रियाया सैहिवाणिजा । एवं प्रेहिवा-

कुमारशब्दस्येति ॥—'विशेषणम्'—इति समासे हि श्रमणादीना पूर्वनिपात. स्यात् क्रियाशब्दत्वाच्चैषा न कुमारशब्दस्य पूर्वनिपात इत्यर्थ ॥—मयूरव्य—॥—तत्पुरुषसमासा इति । कर्मधारयसमासा इत्यपि प्रष्टव्यम् ॥—निपात्यन्त इति । अत्र यादृशाः पठितास्तादृशा एवाभ्यनुज्ञायन्ते ,साधुत्वेन । तेन लक्षणानन्वितदृष्टकार्याणामपि साधुत्व प्रति विचिकित्सा न कार्येत्यर्थः । अशणसमा० ॥—व्यसयतीति मतान्तरेण दन्त्य ॥—मयूरव्यंसक इति । प्रथमव्युत्पत्तौ तथाभूता मयूरप्रकृतिरुच्यते । यदा तु व्यसयति छलयति चुरादेर्ण्यन्क क्रियते तदा यो लुब्धकानां मयूरो गृहीतशेक्षो भवति अन्यानन्यान् मयूरान् छलयति स उच्यते । तद्रूपेण लोकरयापि व्यसक' । व्यसको विशेषण मयूरो विशेष्यमिति विशेषणसमासे प्राप्ते मयूरव्यसक इत्यय समास इति दर्शयति ॥—कम्बोजमुण्ड इति । कम्बश्चासौ जश्च बाहुलकात् विभक्तेरलुप् । मुण्डन मुण्ड' । सोऽस्यास्तीति अभ्राद्य' । कम्बोजयवनशब्दाभ्यामपत्ये 'राष्ट्रक्षत्रियात्'—इत्यञ 'शकादिभ्यो द्रे' इति लोप । एव च गोन च चर्णैः सहेति जातिरयमनयोरित्यत्रापि गुणशब्दस्य पूर्वनिपाते प्राप्ते जातिशब्दस्य पूर्वनिपातार्थोऽयमारम्भः ॥—एहि इडे ऋि इत्यत्र 'म्लेच्छीडेर्हस्वश्च वा' इति अप्रत्यये वा ह्रस्वत्वे इडा इला ही-

णिजा । अपेहिवाणिजा । *एहि स्वागता । अपेहिस्वागता । एहिद्वितीया । अपेहिद्वितीया । *एहिप्रघसा । अपेहिप्रघसा । एहिविघसा । अपेहिविघसा । एहिप्रकसा । अपेहिप्रकसा । मोह्ह कटमिति जल्पो यस्यां सा मोह्हकटा क्रिया । एवं मोह्हकर्दमा । *मोह्हकपर्दा । उद्धम चूडे उद्धम चूडामिति वा जल्पो यस्यां सोद्धमचूडा क्रिया । आहर चेलमिति यस्यां सा आहरचेला क्रिया । एवमाहरवसना । आहरवितता । कृन्धि विचक्षणेति कृन्धि विचक्षणमिति वा यस्यां सा कृन्धिविचक्षणा क्रिया । भिन्धि लवणमिति यस्यां सा भिन्धिलवणा । एवं पचलवणा । उद्धरोत्सृजेति जल्पो यस्यां सोद्धरोत्सृजा । एवमुद्धरावसृजा । उद्धमविधमा । उद्वपनिवपा । उत्पतनिपता । उत्पचनिपचा । कृन्धि विक्षिणीहीति कृन्धि विक्षणु इति वा यस्यां सा *कृन्धिविक्षणा । *उन्मृजावमृजेति यस्यां सोन्मृजावमृजा । अत एव निपातनादिहैव च मृजेर्हौ शो भवति । 'आख्यातमाख्यातेन सातत्ये' अश्नीत पिबतेति सातत्येनोच्यते यस्यां साश्नीतपिबता । अश्नीतपचता । एवं *खादतमोदता । पचतभृज्जता । लुनीतपुनीता । खादाचामा । आहरानिवपा । आवपनिष्किरा । पचप्रकूला । इह द्वितीयेति यस्यां क्रियायां सेहद्वितीया । एवमिहपञ्चमी । अद्यद्वितीया । अद्यपञ्चमी । एहिरे याहिरे इति यस्यां क्रियायां *सैहिरेयाहिरा । एवमोहिरेगच्छरा । अहो अहं पुरुष इति यस्यां क्रियाया *साहोपुरुषिका । अहं पूर्व इति यस्यां *साहंपूर्विका । *एवमहंप्रथमिका । अहमहमिति यस्यां साहमहमिका । विकृतं प्रकृतं च यस्यां सा विचप्रका । निश्चितं च प्रचितं च यस्यां सा *निश्चप्रचा । या इच्छा यस्यां सा यदृच्छा । एषु सर्वेषु क्रियैवान्यपदार्थः । 'ह्यन्तं स्वकर्मणा बहुलमाभीक्ष्ण्ये कर्तरि समासाभिधेये' । जहि *जोडमित्यभीक्ष्णं य आह स उच्यते जहिजोडः । एवमुज्जहिजोडः । *जहिस्तम्बः । उज्जहिस्तम्बः । कुरुकटः । बहुलवचनान्न च भवति । पचौदनमित्यभीक्ष्णमाह । स्नात्वा कालीभूतः *स्नात्वाका-

---

त्यर्थ । यथा महती इला महेलेति । तदामन्त्रणमिडे इति । अनुकार्यानुकरणयोर्भेदे विभक्तिरपि शब्दरूपेति 'अनतो लुप्' अथवा न दीयते विभक्ति ॥—**एहिस्वागते**त्यऽत्र स्वाङ्पूर्वात् गमेर्भावे क्त । तत एहि स्वागतमिति यस्यामिति बहुव्रीहि ॥—**एहिप्रघसे**त्यादिषु प्रात्तीत्यादिवाक्ये घस्लादेशे सबोधने वाक्यानि भवन्ति ॥—**कपर्द** इति पर्दतेरचि कुत्सित पर्द पृषोदरादित्वात् कुशब्दस्य कभावे ॥—**कृन्धिविक्षणे**त्यत्र कृन्धीत्यत्र 'धुटो धुटि'—इति तलोपे समासे सति निपातनात् इउइत्यवयवयोरकार । तत स्त्रीलिङ्गत्वादाप् ॥—**उन्मृजावमृजे**ति । आख्यातयो क्रियासातत्ये समासस्य वक्ष्यमाणत्वादसातत्यार्थोऽयमारम्भ ॥ बहुव्रीहौ कच्प्रत्ययप्रसङ्ग स्यात् ॥ 'आख्यातमाख्यातेन सातत्ये' इति सूत्र शाकटायनस्य । ह्यन्त स्वकर्मणेत्यादि पाणिनीय सूत्रमेतत् । 'गतप्रत्यागतादय' । पाणिनेरिदमपि सूत्रम् । 'शाकपार्थिवादय' । शाकटायनसूत्रम् ॥—**मोदते**ति आत्मनेपदस्यानित्यत्वात् परस्मैपदम् । मुदण्ससर्गे विकल्पणिजन्ताद्वा । इहपञ्चमीत्यत्र निपातनात् ह्रस्वत्वाभाव ॥—**एहिरेयाहिरा** इत्यत्र निपातनादिकारस्याकार । एवमन्यत्रापि ॥—**आहोपुरुषिका** इत्यत्र निपातनाच्चौरादित्वाद्वाकञ् । अहोपुरुष आत्मसभावितत्वात्तस्य भाव क्रिया आहोपुरुषिकोच्यते ॥—**अहंपूर्विके**त्यत्र अहशब्दो विभक्त्यन्तप्रतिरूपको निपात । अह पूर्वमह पूर्वमह पूर्व प्रवर्त्त इत्यर्थ । निपातनादकञ्यपि वृद्ध्यभाव ॥—**एवमहंप्रथमिकादयो**ऽपि ॥—**निश्चप्रचे**त्यत्र एषु सर्वेषु यल्लक्षणेनानुपपन्न तत्सर्वं निपातनात्कर्त्तव्यम् ॥—**जोडमि**ति । जुडण् प्रेरणे इत्यतोऽचि जोडो दास । स्तन्भे 'स्तम्बतुम्बादय' इति वे निपातनात् भलोपे—**स्तम्बः** ॥—**स्नात्वाकालक** इत्यत्र का-

*भुक्त्वासुहितः। प्रोष्य विप्रयुक्तो भूत्वा पापीयान्निःस्नेहो भवति स *प्रोष्यपापीयान्। उत्पत्याकाशे भूत्वा या पाकला पाण्डुर्भवति
लकः। एवं *पीत्वास्थिरकः। निपत्य भूमौ निपतिता रोहिणी या रक्ता भवति सा निपत्यरोहिणी। निषद्य निषण्णा सती श्यामा जाता निषद्यश्यामा। *निषण्णा श्यामा
*सोत्पत्यपाकला। निपत्य भूमौ निपतिता रोहिणी या रक्ता भवति सा निपत्यरोहिणी। आचितं चोपचितं च आचोपचम्। आचितं च
जाता *निषण्णश्यामा। उदक् चावाक् च उच्चावचम्। उच्चैश्च नीचैश्च उच्चितं च निचितं चेति वा उच्चनीचम्। निष्कुषितं च निस्त्वचं च *निश्च-
अवचितं च आचोवचम्। आचितं च पराचितं च अर्वाक् च परस्ताच्चेति वा आचपराचम्। निश्चितं च प्रचितं च निश्चप्रचम्। गतं च तत्प्रत्यागतं च *गतप्रत्याग-
त्वचम्। न भवति किंचन न क्वचिदुपयुज्यत इति *अकिंचनम्। नास्य कुतोऽपि भयमस्तीत्यकुतोभयम्। 'गतप्रत्यागतादयः' क्रयिका च क्रयक्रयिका समुदायः। एवं पुटापु-
तम्। एवं *यातानुयातम्। महान्क्रयोऽल्पः क्रायिका क्रयावयवयोगात् क्रयः क्रयिकावयवयोगात् क्रयिका क्रयश्चासौ क्रयिका च क्रयक्रयिका समुदायः। एवं पुटापु-
टिका। *फलाफलिका। मानोन्मानिका। *एषु व्यवस्थितपूर्वोत्तरपदसमासः। 'शाकपार्थिवादयः' शाकप्रियः शाकभोजी शाकप्रधानो वा पार्थिवः पृथोरपत्यं
शाकपार्थिवः। पृथिव्या ईश्वरः पार्थिवः इति वा तेन शाकपार्थिवः। *कुतपवस्त्रसौश्रुतः। सुश्रुतोऽपत्यं सौश्रुतः। कुतपसौश्रुतः। अजापण्यस्तौल्वलिः *अजा-
तौल्वलिः। यष्टिप्रहरणो यो मौद्गल्यः यष्टिमौद्गल्यः। एवं परशुरामः। घृतप्रधाना रोटिः घृतरोटिः। एवमोदनपाणिनिः। *आणिमाण्डव्यः। बलाकाकौशिकः।
*विदर्भीकौण्डिन्यः। सहस्रबाहुरर्जुनः सहस्रार्जुनः। त्र्यवयवा विद्या त्रिविद्या। एकाधिका दश एकादश। एवं द्वादश। षोडश। एकविंशतिः। द्वाविंशतिः।
एकशतम्। द्विशतम्। दध्युपसिक्त ओदनो दध्योदनः। एवं घृतौदनः। गुडमिश्रा धाना गुडधानाः। एवं तिलपृथुकाः। अश्वयुक्तो रथः अश्वरथः। एवं गजरथः।
घृतपूर्णो घटः घृतघटः। अत्र शाकपार्थिवादिषु प्रियादेरुत्तरपदस्य लोपः। तृतीयो भागः त्रिभागः तृतीयभागः त्र्यंशः तृतीयांशः षड्भागः षष्ठभागः।
षडंशः षष्ठांशः त्रिदिवं तृतीयदिवम् त्रिविष्टपं तृतीयविष्टपमित्यादिषु पूरणप्रत्ययस्य वा लुग् भवति। तथा सर्वेषां श्वेततरः सर्वश्वेतः। एवं सर्वमहान्। अत्र

---

लात् कप् प्रत्यय ॥—पीत्वास्थिरक इत्यत्र तु निपातनात् क ॥—भुक्त्वासुहित इत्यत्र यो यत्किंचिदशित्वा तृप्तो भवति स एवमुच्यते ॥—उत्पत्यपाकला लताविशेष। एव सर्वत्राप्यभ्यू-
ह्यम् ॥—प्रोष्यपापीयानिति। प्रवसते क्त्वि यपादेशे ग्वृति 'घस्वस' इति पत्वे। निपद्यश्यामान्तेषु स्नात्वाकालकादिष्वैकार्थ्याभावात् 'अव्यय प्रवृद्धादिभि' इति नियमात् क्त्वाप्रत्ययस्याव्ययस्य स
मासाप्राप्तावनेनाय समासो निपात्यते ॥—निपण्णश्यामेति। 'विशेषणम्'—इति समासे पूर्वनिपातेऽनियम स्यात् ॥—निश्चत्वचमित्यत्र त्वचशब्दोऽकारान्तोऽप्यस्ति ॥—अकिंचनमिति। नञ
स्याद्यन्तेन समास आरभ्यमाण समुदायस्यानामत्वात् स्याद्यन्तरत्वाभावान्नञ्समासाप्रवृत्तावनेन समास ॥—गतप्रत्यागतमित्यत्र एकदेशस्य प्रत्यागतत्वात्। एव पूर्व यात पश्चादनुयातमिति—
यातानुयातम् ॥—फलाफलिकेत्यत्र एषु सर्वेष्वत एव निपातनात् पूर्वपदस्य दीर्घत्वम्। अत्रावयवधर्मेण समुदायव्यपदेशात् सामानाधिकरण्यात् विशेषणसमाससिद्धावत्र पाठस्य फलमाह—एष्वि-
त्यादि। शाकप्रिय इत्यत्र ॥ कुत्सित तपतीत्यचि कुते सौत्रात् 'भुजिभृति'—इत्यपे वा कुतप मृगाजिन। गोरोममय केचित् कम्बल कुतप विदुस्तद्वस्त्र यस्य ॥—अजातौल्वलिरित्यत्र तुलण्
उन्माने णिजन्तात् 'तुल्वलादय' इति किति वलप्रत्यये णिज्लोपे निपातनाद्गुणाभावे तुल्वलस्तस्यापत्यम् 'अत इञ्' ॥—आणिमाण्डव्य इत्यत्र आणिशब्द अटिपर्यायादिषु वर्त्तते ॥—विदर्भी-

गुणेन तरवन्तेन निर्धारणषष्ठीसमासस्तरब्लोपश्च । एवमविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः । यच्चेह लक्षणेनानुपपन्नं तत् *सर्वं निपातनात्सिद्धम् । इतिशब्दः स्वरूपावधारणार्थः । तेन परमो मयूरव्यंसक इति समासान्तरं न भवति । उत्तरपदेन भवत्येवेत्यन्ये । मयूरव्यंसकप्रिय इत्यादि । बहुवचनमाकृतिगणार्थम् । तेन विस्पष्टं पटुः विस्पष्टपटुः । पुना राजा पुनाराजः । एवं पुनर्गवः । पादाभ्यां ह्रियत इति पादहारकः । गले चोप्यत इति गलचोपकः । सायंदोहः । प्रातर्दोहः । पुनर्दोहः । सायमाशः । प्रातराश इत्यादयो द्रष्टव्याः ॥ ११६ ॥ *चार्थे द्वंद्वः सहोक्तौ ॥ २ । १ । ११७ ॥ नाम नाम्ना सह सहोक्तिविषये चार्थे वर्तमानं समस्यते स च समासो द्वंद्वसंज्ञो भवति । प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ । एवं धवाश्वकर्णौ । वाक्च त्वक्च वाक्त्वचम् । छत्रोपानहम् । नाम नाम्नेत्यनुवर्तमानेपि ' लध्वक्षरा '–( ३–१–१६० ) दिसूत्रे *एकग्रहणाद्बहूनामपि द्वंद्वो भवति । धवश्च खदिरश्च पलाशश्च धवखदिरपलाशाः । एवं होतृपोतृनेष्टोद्गातारः । द्वयोर्द्वयोर्द्वन्द्वे हि *होतापोतानेष्टोद्गातारः *इत्येव स्यात् । पीठच्छत्रोपानहम् । चार्थ इति किम् । वीप्सासहोक्तौ माभूत् । *ग्रामो ग्रामो रमणीयः । *सहोक्ताविति किम् । *प्लक्षश्च न्यग्रोधश्च वीक्ष्यताम् । वाक् च त्वक् च गृह्यताम् । खञ्जश्चासौ कुण्टश्च खञ्जकुण्टः । *इह समुच्चयान्वाचयेतरेतरयोगसमाहारभेदाच्चत्वारश्चार्थाः । *तत्रैकमर्थं प्रति द्व्यादीनां क्रियाकारकद्रव्यगुणानां तुल्यवलानाम् *अविरोधिनामनियतक्रमयौगपद्यानाम् *आत्मरूपभेदेन चीयमानता समुच्चयः । यथा चैत्रः पचति

---

**कौण्डिन्य** इत्यत्र विदर्भशब्दात् गौरादित्वात् ङीप्रत्यय. । कुण्डिनीशब्दे ग्रहादित्वात् फिनि ङयामपत्ये गर्गादियञि ' कौण्डिन्यागस्त्ययो. '—इति निर्देशात् पुकद्रावाभावे सिद्धम् ॥—**सर्वं निपातनात्सिद्धमिति** । निपात्यन्ते गम्यन्तेऽनुरूपाण्यविहितान्यपि लक्षणान्यस्मिन्निति निपातन सूत्रे लक्ष्यस्य स्वरूपेणोपादानमिति ॥—**चार्थे द्वंद्वः**—॥—**एकग्रहणादिति** । तद्ध्यनेकस्य पूर्वनिपातप्रसक्ताविकस्य पूर्वनिपातनियमार्थं द्वयोश्च द्वन्द्वेऽनेकस्य पूर्वनिपातप्रसङ्गाभावादेकग्रहणमनर्थकं स्यात् । यद्वा नाम नाम्नेति व्यक्ति. पदार्थो नाश्रीयते । अपि तु जाति. । अनुवृत्तस्य हि रूपस्य यथा लक्ष्याऽनुग्रहो भवति तथाऽर्थकल्पना क्रियते इति बहूनामप्यय समास ॥—**इत्येव स्यादिति** । पूर्वपदस्योत्तरपदे प्रत्येकम् ' आ द्वन्द्वे ' इत्याकार स्यादित्यर्थ ॥—**उद्गातार** इत्यत्र मतान्तरेण आरादेश. ॥—**ग्रामो ग्राम** इति । अत्र च वीप्साया सहोक्तिसभवेऽपि चार्थाभावात् द्वन्द्वाभाव ॥—**सहोक्ताविति किमिति** । यत्र समासे द्वयोर्धर्मयोर्धर्मिणोर्वा भिन्नयो. प्राधान्य विवक्षते सा सहोक्तिः । कर्मधारये तु धर्मिण आश्रयस्यैव प्राधान्यात्तस्य चैकत्वमत खञ्जकुण्टादौ न सहोक्ति ॥—**प्लक्षश्च न्यग्रोधश्च वीक्ष्यतामिति** । पूर्वत्रेत्थ सबन्ध । इतरेतरयोगे तिष्ठत कस्क प्लक्षश्च न्यग्रोधश्च समाहारे तु प्लक्षश्च न्यग्रोधश्चेति समुदायस्तिष्ठति । इह तु प्रत्येक क्रियया सबन्ध इति सहोक्त्यभाव इत्यर्थ. ॥—**इह समुच्चयेति** । अत्र चार्थस्यानुवादेन द्वन्द्वो विधीयते । अप्रसिद्धस्वरूपस्य चानुवदन नोपपद्यते अतस्तत्स्वरूप प्रदर्शयति । चार्थाना लक्षणपूर्वमुदाहरणान्याह—**तत्रैकमर्थं प्रतीत्यादि** । अर्थ क्रियाकारकद्रव्यरूप ॥—**द्व्यादीनां क्रियाकारकद्रव्यगुणानामिति** । तत्रैकस्मिन् कारकेऽनेकक्रियाणामेकस्या क्रियायामनेककारकाणामेकस्मिन् द्रव्येऽनेककारकाणामेकस्मिन् कारकेऽनेकद्रव्याणामेकस्मिन् धर्मिण्यनेकधर्माणा ढौकन समुच्चय इति । यथा चैत्र पचति च पठति चेत्यादिषु यथाक्रमं दर्शयति । एकमर्थं प्रति द्व्यादीनामात्मरूपभेदेन चीयमानता समुच्चय इत्येव लक्षणमन्यस्तस्यैव प्रपञ्च. ॥ तथा **अविरोधिनामिति** । यथा शीतोष्णादि विरुद्ध तथा न विरुद्धा भवन्ति । यथा बाल्ययौवनादीना नियत क्रम । यथा च शब्दरूपरसगन्धस्पर्शाना नियत यौगपद्यम् । तथा येषा नियते क्रमयौगपद्ये न भवतस्तेषामित्यर्थ ॥—**आत्मरूपभेदेनेति** । तत्प्रवृत्तिनिमित्तेनेति । अन्वाचयोऽप्येवविध

पठति च। चैत्रो मैत्रश्च पठति। राज्ञो गौश्चाश्वश्च। राज्ञो ब्राह्मणस्य च गौः। शुक्लश्चायं कृष्णश्च। नीलं च तदुत्पलं चेति। चशब्दमन्तरेणापि चायं संभवति। यथाहरहर्नयमानो गामश्वं पुरुषं पशुं वैवस्वतो न तृप्यति सुराया इव दुर्मदी। गुणप्रधानभावमात्रविशिष्टः समुच्चय एवान्वाचयः। यथा बटो भिक्षामट गां चानय। स हि भिक्षां तावदटति यदि च गां पश्यति तामप्यानयति। *द्रव्याणामेव परस्परसव्यपेक्षाणामुद्भूतावयवभेदः समूह इतरेतरयोगः। यथा चैत्रश्च मैत्रश्च घटं कुर्वाते। चैत्रमैत्रौ घटं कुर्वाते। चैत्रश्च मैत्रश्च दत्तश्च पटं कुर्वन्ति। चैत्रमैत्रदत्ताः पटं कुर्वन्ति। अत्रावयवानामुद्भूतत्वात्तत्संख्यानिबन्धनं द्विवचनं बहुवचनं च भवति। स एव तिरोहितावयवभेदः संहतिप्रधानः समाहारः। *धवश्च खदिरश्च पलाशश्च तिष्ठति। धवखदिरपलाशं तिष्ठति। अत्र तु समूहस्य प्राधान्यात् तस्य चैकत्वादेकवचनमेव भवति। *एषु चाद्ययोः सहोक्त्यभावात्समासो न भवति। उत्तरयोस्तु चार्थयोः सहोक्तेर्विद्यमानत्वात्समासो भवति। का पुनरियं सहोक्तिः। *यद्वर्तिपदैः प्रत्येकं पदार्थानां युगपदभिधानं सहोक्तिः। *प्लक्षन्यग्रोधावित्यत्र हि *प्लक्षोऽपि द्व्यर्थः न्यग्रोधोऽपि द्व्यर्थः। प्लक्षश्च न्यग्रोधश्चेति वाक्येऽपि चकारेणाद्धमेवार्थः कथ्यते। उत्तरपदेन

---

एव। इयता तु भिद्यते यत्समुच्चये समुचीयमाना क्रियाकारकादिविशेषा सर्वे तुल्यकक्षा। अन्वाचये तु एकस्य गुणभावोऽन्यस्य प्रधानभाव। तद्यथा 'दधा स्वराच्छ्नो न्लुक्च' इति। अत्र हि विधीय-
मान श्च नलोपोऽपेक्षते यत्र श्नस्तत्र नलोपो यथा भजॉप् आमर्दने भनक्ति। श्नस्तु नलोप नापेक्षते तदभावेऽपि प्रवृत्तेर्यथा युनक्तीति॥—द्रव्याणामेव परस्परेत्यत्र इतरेतरयोग परस्परापेक्षाणा क्रिया
प्रति द्रव्याणा ढौकनम्। समाहारोऽपि तथैव। एतावास्तु भेद उद्भूतावयवभेदा हि सहतिरितरेतरयोग। अत एव द्व्यात्मकत्वे तस्यावयवार्थगते द्वित्वे द्विवचन चैत्रमैत्राविति। बह्वात्मकत्वे तु बहुत्वे
बहुवचन चैत्रमैत्रदत्ता इति। न्यग्भूतावयवभेदा तु सहति समाहारोऽतस्तस्या एकत्वादेकवचनमेव न त्ववयवगतसमाश्रयणेन द्विवचनबहुवचने। अवयवानामत्यन्तमनुमीयमानस्वरूपत्वात्। न हि यथेतरेतर-
योगे उद्भूतस्वरूपोपदर्शनपूर्वक समुदायमवयवार्था उपकुर्वन्ति तद्वत्समाहारे॥—धवश्च खदिरश्च पलाशश्च तिष्ठतीत्यत्र 'तरुतृणधान्यमृग'—इति समाहारो भवति। एतावता चादीना द्योतकाना
व्युदास॥—एषु चाद्ययो' सहोक्त्यभावादिति। ननु समुच्चयान्वाचययो सामर्थ्याभावादेव समासो न भविष्यति किं सहोक्तिग्रहणेन। तथा हि परस्परानपेक्षाणामनियतक्रमयौगपद्याना क्रियाकार-
कादीना समुच्चयो दृश्यते। यथा गामश्वमित्यत्र नयनक्रियाया गवादीनाम्। अन्वाचयेऽपि गौणस्य प्रधान प्रत्यपेक्षा न प्रधानस्य गौण प्रतीत्यत्र सामर्थ्याभाव। नैष दोष। यत कारकाणि क्रिययोप-
श्लिष्यन्ते न परस्परेण क्रिया चौपश्लेषिका समुच्चयान्वाचययोरपि सभवति तत्कथ समुच्चयेऽन्वाचये चासमर्थानि नामानि स्यु। परास्परापेक्षा त्वविद्यमानापि न सामर्थ्यस्य विघातिका। सा हि न श्रौती
किंतु वाक्यप्रकरणादिसमधिगम्या। तत्कथ श्रौतस्य सामर्थ्यस्य सभवे विपरीतस्य सामर्थ्यस्यासभवः समासाप्रवृत्तौ निमित्तमिति सहोक्तिग्रहणमिति॥—यद्वर्तिपदैरित्यादि। अयमर्थ युगपत् द्वद्ववाच्य
समुदायरूप यदोच्यते तदा द्वद्वो भवति। गामश्वमित्यादौ तु परस्पर निरपेक्षा स्वतन्त्रा गवादयो भिन्नैरेव शब्दै पृथक् प्रत्याय्यन्त इति युगपद्वाचित्वाभावात् द्वद्वाभाव इति॥ यद्येव पट्वीमृद्व्यौ इत्यत्र
एकैकेन शब्देनार्थद्वयस्याभिधानात्सामानाधिकरण्यात्पुवद्भावप्रसङ्ग। अत्रोच्यते। अथेह दर्शनीयाया माता दर्शनीयाशब्दस्य वृत्तावेकार्थीभावान्मात्रर्थवृत्तित्वात् सामानाधिकरण्यसद्भावात् पुवद्भाव कस्मान्न
भवति। अथ वृत्तौ यत्सामानाधिकरण्य तस्य व्यभिचाराभावात् वाक्यविषय सामानाधिकरण्यमाश्रीयते इति चेत्तदा पट्वीमृद्व्यावित्यत्रापि न दोष। यतो लौकिक यद्वाक्य प्रयोगार्ह तत्र सामानाधिकार-
ण्यमाश्रीयते न त्वलौकिके प्रक्रियावाक्ये पट्वी च मृद्वी चेति॥—प्लक्षोऽपि द्व्यर्थ इति। नन्वत्र प्लक्षन्यग्रोधाविति शब्दक्रमात् क्रमवदर्थावगमन्न सभवति एकैकेनानेकस्याभिधानम्। न। तर्हि द्विवचन-

समुदायेन वा यद्वर्तिपदार्थानां युगपदभिधानं सा सहोक्तिरित्यन्ये । वर्तिपदार्थानामेव सह क्रियादिसंबन्धस्य यत् *वाक्येनाभिधानं सा सहोक्तिरित्यपरे । *एकविंशतिः द्वाविंशतिरित्यादिसंख्याद्वंद्वः समुदायसंख्यैकत्वानुरोधेन विंशत्यादिवत्संख्येयमाचष्टे इतीतरेतरयोगेऽप्येकवचनान्तो भवति । समाहारेऽपि चाशताद्द्वन्द्व इति लक्षणात्स्त्रीलिङ्गो भवति । संख्याद्वंद्वादन्यत्र एको देवदत्ताय दीयतां विंशतिश्चैत्रायेति *एकविंशती अनयोर्देहि । एवं त्रिंशच्चत्वारिंशतौ । षष्टिसप्तत्यशीतय इत्यादौ द्विवचनबहुवचनान्तता ॥ द्वन्द्वप्रदेशाः 'द्वंद्वे वा' (१–४–११) इत्यादयः ॥ ११७ ॥ *समानामर्थेनैकः *शेषः ॥ ३ । १ । ११८ ॥

---

बहुवचनानुपपत्ति । प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधा इति । यत प्लक्षशब्द सार्थको निवृत्तोऽन्यो न्यग्रोधशब्द उपस्थित । तत्र न्यग्रोधार्थप्रतिपत्तिकाले यदि प्लक्षार्थस्यावगतिर्न स्यात्तदा न्यग्रोधशब्ददेकार्थत्वादेकवचन स्यात्तस्मात् द्विवचनबहुवचनान्यथानुपपत्त्या प्लक्षन्यग्रोधावित्यादावेकैकोऽनेकार्थाभिधायीत्यभ्युपगन्तव्यम् । ततश्च एकैकेन युगपदनेकसार्थस्याभिधानात् प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थ इत्याह —**प्लक्षन्यग्रोधावित्यत्रे**त्यादि । नन्वेव तर्हि कथ प्लक्षश्च न्यग्रोधश्चेत्येकवचनान्तयोर्वाक्य वृत्तौ प्रदर्शित द्विवचनान्तयोर्हि न्याय्यम् । सत्यम् । लौकिकमेतत् वाक्यम् न प्रक्रियावाक्यम् । यदा तु परस्परशक्त्यनुप्रवेशेन द्वद्वो भविष्यतीत्यभिधित्सयातिवाहिकशरीरस्थानीय वाक्य क्रियते तदा खल्वलौकिक समीपगतपदान्तरवस्तुखचित द्विवचनान्तयोर्वाक्य क्रियते । यद्भाष्य सति प्रदर्शयितव्ये वरमेव वाक्य धवौ च खदिरौ चेति । अलौकिकत्वाच वृत्तौ न प्रदर्शितम् । न चैव प्लक्षन्यग्रोधयोर्द्विकद्वयसकल्पनेनानेकार्थत्वाद्बहुवचन प्राप्नोतीति वाच्यम् । यतो नात्र चत्वारोऽर्था । कि तर्हि द्वावेवार्थौ यकाभ्यामेवात्रैक शब्दो द्व्यर्थस्ताभ्यामपरोऽपि । न हि द्वाभ्या लक्षाभ्यामविभक्तौ भ्रातरौ चतुर्लक्षौ भवतः । समुदायरूपो हि द्वद्वार्थ प्रत्यवयवमवयविवत्प्रतिसक्रान्त इति । यथा वनविटपिविलोकने वन विलोकितमित्येकैकस्तथारूपप्रतिभासभाग्भवति । तदुक्त 'अनुस्यूते च भेदाभ्यामेका प्रख्योपजायते । यद्वा सहविवक्षाया तामाहुर्द्वद्वशेषयो ॥ १ ॥ इति । ननु लौकिकात् प्रयोगात् शब्दानामर्थावधारण तत्र यथा घटशब्द पटार्थ न प्रत्याययति तथा प्लक्षन्यग्रोधशब्दौ परस्परार्थस्य प्रत्यायकौ न युक्तौ । न । प्लक्षस्य शब्दस्य न्यग्रोधार्थत्वात् न्यग्रोधस्य च प्लक्षार्थत्वात् स्वार्थस्यैवाभिधानान्नैतयोरर्थान्तराभिधायित्वमुच्यते । वृत्तिविषये एकैकस द्वावर्थाविति स्वार्थावेव तौ ॥ ननु परस्परसन्निधानेन यद्द्वयो. सामर्थ्यमाहित तदन्यतरविगमेऽपि न हीयते वन्हिनिवृत्तावपि वह्निसपादितपाकजरूपादिवदिति प्लक्षेणोक्तत्वान्न्यग्रोधस्याप्रयोग प्राप्नोति । नैवम् । न्यग्रोधार्थस्य प्लक्षेणाऽनुक्तत्वान्न्यग्रोधशब्दप्रयोग. । उक्त ह्येतत् द्वद्वावयवानामेवानेकार्थाभिधायित्व न केवलाना यथा वह्निसन्निधावेव ताम्र द्रवरूप भवति न तु तद्विनिवृत्ताविति । एवमिहापि सहभूतावेवान्योन्यस्यार्थमाहतुर्न तु पृथग्भूतौ भारोद्वाहकवत् सहभूताना परस्परशक्त्याविर्भावादिति । ततश्च प्लक्षस्य न्यग्रोधस्य चानेकार्थत्वे यद्यपि बहुत्व प्राप्त तथापि द्वद्वावयवत्वेन बाह्यमतो गौण न तु मुख्यमिति न बहुवचनम् ॥—**वाक्येनाभिधानं सा सहोक्तिरि**ति । नन्वस्तु यथाकथचित् सहोक्ति समाहारे तु न सभवति तस्यैकत्वात्सहोक्तेश्च भेदनिबन्धनत्वादिति । उच्यते । समाहारो हि सघात । स च सहन्यमानाना धर्म्म । सहन्यमानाश्च सहोच्यमाना एव न पृथगुच्यमाना इति तत्रापि सहोक्तिसभव इत्यदोषः ॥—**एकविंशतिरित्या**दि । सख्याद्वद्वो यद्यवयवप्रधानस्तदैकाविंशतिरिति द्विवचन प्राप्नोति द्वाविशतिरिति बहुवचनम् । अथ समुदायप्रधानस्तदा नपुसकत्व स्यादित्याऽशङ्क्या ॥—**एकविंशती** इति । अत्रापि समाहारो यदा क्रियते तदा एकत्व स्त्रीत्व च । यथा एकविंशतिमनयोर्देहि ॥—**समाना**— ॥ समानामिति निर्धारणषष्ठ्यन्त समुदायिसमुदायसबन्धषष्ठ्यन्त वा न तु स्थानषष्ठ्यन्तम् । तत्र हि समाना स्थाने एकः शिष्यत इत्येक आदेशो भवतीति । अविशेषेऽपि यस्तदभिधाने समर्थ स एव तेषामन्यतम स्यात् । ततश्च बिसे बिसानीति कृतसकारस्य षत्व स्यादिति । निर्धारणषष्ठ्या तु समानामित्येकसख्याक

अर्थेन समाना समानार्थानां शब्दानां सहोक्तौ गम्यमानायाम् *एकः शिष्यते अर्थादन्ये निवर्तन्ते। तत्र विशेषानुपादानात्पर्यायेण शेषो भवति। बहुवचनमतन्त्रम्। तेन द्वयोरप्येकः शिष्यते। वक्रश्च कुटिलश्च वक्रौ कुटिलौ वा। वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ कुटिलदण्डाविति वा। एवं लोहिताक्षौ रक्ताक्षाविति वा। सितश्च शुक्लश्च श्वेतश्च सिताः शुक्लाः श्वेता वा। अर्थेन समानामिति किम्। *प्लक्षन्यग्रोधौ। धवखदिरपलाशाः। सहोक्तावित्येव। वक्रश्च कुटिलश्च। *द्वंद्वापवादो योगः ॥ ११८ ॥ *स्यादावसंख्येयः ॥ ३। १। ११९ ॥ *सरूपार्थं वचनम्। सर्वस्मिन् स्यादौ विभक्तौ समानां तुल्यरूपाणां सहोक्तौ गम्यमानायामेकः शिष्यते असंख्येयः संख्येयवाचि शब्दरूपं वर्जयित्वा। अक्षश्च शाकटाक्षः अक्षश्च देवनाक्षः अक्षश्च विभीतकाक्षः अक्षाः। एवं *पादाः। माषाः। श्येनी च श्येनी च

---

शिषे कर्म्मणि घञि कर्त्तर्यचि वा शेष ॥—एक शिष्यत इति। ननु समानार्थो विशेष्यते। समुदायिसमुदायसबन्धषष्ठ्या च समानार्थारब्धे समुदाये समानार्थ एवावयवो विशिष्यत इत्यदोष। शब्दनियेशाद्द्रव्य २ प्रति शब्दप्रयोगादेकेन शब्देनानेकस्य द्रव्यस्याभिधान नोपपद्यत इत्यनेकस्यार्थस्य प्रतिपाद- नेऽनेकशब्दाना वाचकाना प्रयोग प्राप्नोतीति द्रव्यपदार्थदर्शने एकशेषारम्भ। जाति शब्देनाभिधीयते। सा चैका ततो बहूना प्रयोगाप्राप्तो नार्थ एकशेषेण। न। प्रत्यर्थ अथ शेष इत्येकवचनादेक एव शेष इष्यते किमेकग्रहणेन। उच्यते। शेषस्य विधीयमानत्वेन प्राधान्यात् प्रधाने च सख्या- या अविवक्षणात् द्वयोस्त्रयाणा वा शेषप्रसक्तेस्तत्रापि शेषप्रक्रियागौरवापत्त्या एकस्यैव शेषस्य विधीयमानत्वेन प्राधान्यात् प्रधाने च सख्याया अपि सप्रत्यर्थमेकग्रहण सुखार्थ वा। ननु समग्रमेवेद सूत्र नारम्भणीय समानार्थैः शब्दैरनेकस्यार्थस्याभिधित्साया व्यक्तावपि पदार्थे एकस्यैव तत्प्रत्यायने शक्तत्वादन्ये निवर्त्तन्ते उक्तार्थानामप्रयोग इति। आरब्धेऽप्येकशेषे निवर्त्तमानार्थप्रत्यायने स्वाभाविकी शक्तिर्यात्र ज्ञानुसृता तावत्कथमसो निवर्त्तमानानामर्थमभिदधीतेति। सत्यम्। एव सति अर्थानुवादत्वाददोष ॥—प्लक्षन्यग्रोधाविति। अर्थेन समानामिति वचनाल्लौकिक्या समानार्थताया समाश्रयणादिहैक- शेषो न भवति। लौकिकी तु समानार्थता द्वद्वादन्यत्र विज्ञायते। द्वद्वपदाना तु परस्परार्थसक्रमात्समानार्थत्वे विज्ञायमानेऽर्थेन समानामित्यनर्थक स्यादनुक्तावप्यनेकशेषस्य सिद्धत्वादिति ॥—द्वंद्वापवादो योग इति। इहैकशेषे षट् पक्षाः सभवन्ति। तत्र प्रत्येकमेव विभक्तौ परतो विभक्तिपरित्यागेन नामैकशेषि स्यात् १। अथवा सविभक्तिकाना वृक्षस् वृक्षस् इति स्थिते एकस्य वृक्षस् इत्यस्य शेष अन्ये निवर्त्तन्ते २। अथवा वृक्षश्च ३ इति द्वद्वे कृते सत्येकस्य वृक्ष इत्यस्य शेष. अपरे निवर्त्तन्ते ३ ॥ अथवा विभक्तिमनुत्पाद्यैव नाममात्रेण वृक्षवृक्षेत्येवविधानामेव शेषः कार्य। ततो विभक्ति ४। अथवा सहोक्तो वृक्षश्च वृक्षश्चेति द्वद्वे प्राप्ते एकशेष ५। अथवा नामसमुदायस्यैवार्थवत्त्वान्नामसज्ञाया द्विवचनानुत्पत्तौ एकशेष ६। इति षट् पक्षा। तत्राद्य पक्षत्रय सावद्यमिति तत्परिहारेणेतरत्पक्षत्रय- मिहाश्रीयते। यथा हि तत्र प्रथमे पक्षे नामैकशेषेऽनेकविभक्तिश्रवण स्यादिति प्रथमपक्षे दोषः। द्वितीये विभक्त्यन्तस्य लोपे कृते विभक्तश्रात्धनन्यायेन शिष्यमाणस्य निवर्त्तमानपदसख्यासबन्धेऽपि विभक्त्यन्तत्वाद्द्विवचनबहुवचनानुपपत्तिः स्यात्। ततश्च वृक्ष इति नित्यमेव स्यादिति द्वितीयपक्षे दोष। तृतीये तु समासान्तदोष। तथा हि ऋक्‌ ऋक्‌ इति द्वद्वे तत एकशेषे 'चवर्गदषह'–इति समा- सान्त स्यात्। इति प्रथमपक्षत्रय दुष्टम्। इतरत्र तु पक्षत्रये न कश्चिद्दोष। तथा हि वृक्ष २ इति स्थिताना नाम्ना विभक्तिमनुत्पाद्यैवैकशेषप्रवृत्तिरिति प्रथमपक्षो निर्दोष। तथा तुल्यकाल नामानि यदा भारोयन्तृन्यायेन परस्परशक्त्यनुप्रवेशादभिधेयमाहुस्तदा द्वद्वैकशेषौ इष्टाविति द्विवचन बहुवचन चोपपन्नमिति द्वितीयेऽपि न दोष। तृतीयपक्षेऽपि न कश्चिद्दोष। नामसमुदायस्यैवार्थवत्त्वान्नामत्वाद्वि- भक्त्युत्पत्तेरिति सोऽपीहाश्रीयते इति पक्षत्रयेऽपि द्वद्व प्राप्तोऽनेनापोद्यते इत्याह द्वद्वापवादो योग इति ॥—स्यादावस–॥—सरूपार्थमिति। अन्यथा अर्थसाम्यस्य स्यादावप्यभिमतत्वात्पूर्वेणापि

श्येन्यौ। एवं हरिण्यौ। रौहिण्यौ। वृक्षश्च वृक्षश्च वृक्षौ। वृक्षश्च वृक्षश्च वृक्षश्च वृक्षाः। स्यादाविति किम्। माता च जननी माता च धान्यस्य। मातृमातारौ। याता च देवरजाया याता च गन्ता यातृयातारौ। अत्र ह्येकत्र मातरौ यातरावित्यन्यत्र मातारौ यातारौ इति *औकारे रूपं भिद्यते। अन्ये तु यस्मिन्स्यादौ ये शब्दास्तुल्यरूपा भवन्ति तस्मिन् स्यादौ तेषां स्याद्यन्तरे विरूपाणामप्येकशेषो भवति। तेन मातृभ्यां मातृभिः मातृभ्यः मात्रोः मातॄणां मातृषु इत्याद्यपि भवतीत्याहुः। अपरे त्वत्रापि बहुवचने ताभिस्तैरित्याद्यनुप्रयोगवैषम्यान्न भवितव्यमेकशेषेण द्विवचनेन तु ताभ्यां तयोरित्यनुप्रयोगसाम्याद्भवितव्यमेवेत्याहुः। असंख्येय इति किम्। *एकश्च एकश्च। द्वौ च द्वौ च। चत्वारश्च चत्वारश्च। द्वन्द्वोऽपि न भवत्यनभिधानात्। संख्येय इति कर्मनिर्देशात्संख्यानवाचिनो भवत्येव। *विंशतिश्च विंशतिश्च विंशती। नवतिश्च नवतिश्च नवतिश्च नवतयः। *द्वन्द्वापवादोऽयं विधिः। तेनाकृतद्वन्द्वानामेवैकशेषे वाक् च वाक् च *वाचावित्यादि सिद्धम्। अन्यथा द्वन्द्वे कृते परत्वात्समासान्ते कृते वैरूप्यादेकशेषो न भवति ॥११९॥ *त्यदादिः ॥३।१।१२०॥ सदादि*नान्येन च सहोक्तौ त्यदादिरेवैकः शिष्यते। *स च चैत्रश्च तौ। यश्च मैत्रश्च यौ। अयं च चैत्रश्च इमौ। कश्च मैत्रश्च कौ। स्पर्धे परमिति त्यदादीनां मिथः सहोक्तौ यद्यत्पाठे परं तत्तदेवैकं शिष्यते। स च यश्च यौ। यश्च एष च एतौ। एष च अयं च एतौ। स च त्वं च युवाम्। त्वं च भवांश्च भवन्तौ। भवांश्च अहं च आवाम्। अहं च कश्च कौ। अहं च स च त्वं च वयम्। बहुलाधिकारात् क्वचित् *पूर्वमपि।

---

सिद्ध्यति ॥—पादा इति। पादोऽङ्घ्रिश्लोकचतुर्थांशरश्मिप्रत्यन्तगिरिषु ॥—माषो माने धान्यभेदे मूर्खत्वगदोषभिद्यपि ॥—औकारे रूपं भिद्यत इति। अयमर्थः। 'तृस्वसृ'-इति सूत्रे तृग्रहणेनैव नप्त्रादिग्रहणे सिद्धे यन्नप्त्रादीनां पृथगुपादानं तदेव ज्ञापयति अत्र सूत्रे औणादिकानामेषामेव ग्रहणमिति जननीदेवरजायावाचिनोर्मातृयातृशब्दयोरौणादिकयोरौकारे आर् न प्राप्नोति। द्वितीययोस्तु तृजन्तयोस्तृज्द्वारा प्राप्नोतीति रूपभेदः ॥—वाचावित्यादीति। अत्र समाहारद्वन्द्वविषयेऽप्येकशेषे वाग्शब्दात् द्विवचनमेव भवति। कुतः 'क्लीबमन्येनैकं च वा' इत्यत्र समाहारेतरेतरविवक्षया विकल्पेनैकत्वे सिद्धेऽप्येकग्रहणात्। तेन विशेषाभावे सर्वत्र एकशेषे द्विवचनाद्येव भवति ॥ असंख्येय इति कर्मोपादानफलमाह—विंशतिश्चेत्यादि। असंख्येय इति कर्मप्रधानस्य निषेधो विंशत्यादयस्तु न संख्येयप्रधाना विंशतिर्गाव इति संख्येयसमानाधिकरणा अपि भवन्ति। संख्येयं संख्यानरूपमेवासाद्य तन्निष्ठा एव सन्तो भवन्ति न संख्येयरूपनिष्ठाः। अत एव विंशतिर्गवामित्यसामानाधिकरण्यवत् सामानाधिकरण्येऽपि गुणलिङ्गसंख्या एव नैकादिवत् संख्येयलिङ्गसंख्या इत्यसंख्येयवाचित्वादेकशेषः ॥ रूपसाम्येऽप्यनेकशब्दस्य सहोक्तौ द्वन्द्वः प्राप्नोतीत्ययमपि तदपवाद एवेत्याह—द्वन्द्वापवादोऽयं विधिरिति ॥—एकश्च एकश्चेति। 'त्यदादि' इत्यनेनापि न भवत्येकशेषः। व्यावृत्तिबलात्। ननु अन्यस्य संख्यावाचिनो व्यावृत्तिश्चरितार्था भविष्यति। नैवम्। व्यावृत्तेर्व्यक्त्या व्याप्त्या वा प्रवृत्तेः ॥—त्यदादिः ॥—अन्येन चेति। सहोक्ताविति वर्त्तनात् सहार्थस्य च द्वितीयमन्तरेणाभावात् द्वितीयो लभ्यते। स च विशेषानुपादानात् त्यदादिरन्यश्च गृह्यते इत्याह—त्यदादिनान्येन चेत्यादि। अन्यत्व च प्रत्यासत्तेस्त्यदाद्यपेक्षमेव ॥—स च चैत्रश्चेति। ननु च त्यदादेः सामान्यशब्दत्वाच्चैत्रोऽपि स चेति निर्देष्टुं शक्यो न च तावित्युक्ते स च चैत्रश्चेति प्रत्ययः किंतु स च स चेति तत्र च स्यादौ सरूपत्वात्पूर्वेणैव सिध्यतीति व्यर्थोऽस्योपन्यासः। न व्यर्थः। स च चैत्रश्चेत्येवंविवक्षायां द्वन्द्वः प्राप्नोतीति। तथा हि-तच्छब्दो यदा चैत्रव्यतिरिक्तार्थपरामर्शीति प्रकरणादिनाऽवगतः तदा गोबलीवर्दवत्तचैत्राविति स्याद्वाक्यवत्तच्छब्दस्य वृत्तावप्यपेक्षा प्रतीयते इति द्वन्द्वनिवृत्तिप्रदर्शनार्थोऽस्योपन्यास इत्यदोषः ॥—पूर्वमपीति। न केवलं तावत् स्पर्द्धे यत्परं तच्छिष्यत इति क्वचिच्च पूर्वमपीत्यर्थः।

स च यश्च तौ। अयं च एष च इमौ। त्वं च भवांश्च युवाम्। *त्यदादेः कृतैकशेषस्य स्त्रीपुंनपुंसकलिङ्गानां युगपत्प्रयोगात् पर्यायप्राप्तौ शिष्यमाणलिङ्गप्राप्तौ वा स्त्रीपुंनपुंसकानां सहवचने स्यात्परमिति यथापरमेव लिङ्गं भवति। सा च चैत्रश्च तौ। स च देवदत्ता च तौ। अत्र स्त्रीपुंसलिङ्गयोः पर पुंलिङ्गमेव भवति। सा च कुण्डे च तानि। अत्र स्त्रीनपुंसकयोः पर नपुंसकमेव भवति। स च कुण्डं च ते। तच्च चैत्रश्च ते। अत्र पुंनपुंसकयोः परं नपुंसकमेव भवति। *कथं स च कुक्कुटः सा च मयूरी ते कुक्कुटमयूर्यौ। *उच्यते। परलिङ्गो द्वन्द्वोऽ*शीति समासार्थस्य लिङ्गातिदेशात् तद्विशेषणस्य त्यदादेरपि तल्लिङ्गतैव न्याय्येति ॥१२०॥ *भ्रातृपुत्राः स्वसृदुहितृभिः ॥३।१।१२१॥ *बहुवचनं पर्यायार्थम्। स्वस्रर्थेन सहोक्तौ भ्रात्रर्थः शब्दो दुहित्रर्थेन सहोक्तौ पुत्रार्थ एकः शिष्यते। भ्राता च स्वसा च *भ्रातरौ। *सोदर्यश्च स्वसा च सोदर्यौ। भ्राता च भगिनी च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ। सुतश्च दुहिता च सुतौ। पुत्रश्च सुता च पुत्रौ ॥१२१॥ *पिता मात्रा वा ॥३।१।१२२॥ मातृशब्देन सहोक्तौ पितृशब्द एकः शिष्यते वा। पिता च माता च पितरौ। पक्षे मातापितरौ। मातुरर्च्यत्वात्पूर्वनिपातः ॥ १२२ ॥ *श्वशुरः श्वश्र्वा वा ॥ ३।१।१२३ ॥ श्वश्रूशब्देन सहोक्तौ श्वशुरशब्द एको वा शिष्यते। श्वशुरश्च श्वश्रूश्च श्वशुरौ। श्वश्रूश्वशुरौ। *द्विवचनं जातौ धवयोगे च वर्तमानयोः श्वश्र्वोः परिग्रहार्थम्। *तेन जातौ तन्मात्रभेदे 'पुरुषः स्त्रिया' (३-१-१२६) इति नित्यविधिर्न भवति ॥१२३॥ *वृद्धो यूना तन्मात्रभेदे ॥ ३।१।१२४॥

---

शिष्यमाणस्य लिङ्गानुशासने लिङ्गस्य चिन्तायां कृतायामपि विस्मरणशीलं प्रति स्मारयितुमाह—त्यदादेः कृतैकशेषस्येत्यादि ॥—कथमिति । यदि लिङ्गानां सहविवक्षायां परमेव लिङ्गं भवति कथं ते कुक्कुटमयूर्यौ इति स्त्रीलिङ्गतेत्याशङ्कार्थं ॥—उच्यत इत्यादिना परिहारमाह-अयमर्थो द्वन्द्वस्य परलिङ्गत्वात् त्यदादेश्चात्र द्वन्द्वशेषत्वात् द्वन्द्वलिङ्गतैव द्रष्टव्या । द्वन्द्वाभावे तु सहोक्तौ तौ कुक्कुटो मयूरीति चार्थे गम्ये तौ कुक्कुटो मयूरी चेत्येकचयोगे तौ कुक्कुटश्च मयूरी चेति चकारद्वययोगे च भवति । स्त्रीपुंनपुंसकानामिति वचनात् ॥—अर्धीति । तच्चार्धं पिप्पल्या इति अर्धकथनम् । तत् पिप्पल्यर्धं सा च अर्धपिप्पलीत्यपि कृते 'समानामर्थे'—इति सूत्रेणाशिसमासवाचिन शेषे तस्य च परलिङ्गत्वात् तद्विशेषणानामपि तल्लिङ्गतैव । षष्ठीतत्पुरुषवाचितत्पदशेषे तु उत्तरपदप्राधान्यान्नपुंसकत्वं तत' तद्विशेषणानामपि तथैव भवति । परं ते इति क्लीबे स्त्रिया च न विशिष्यते दिगम्बरसमाधिवत् । ततश्च स्वाद्यो अर्धपिप्पल्यौ स्वादुनी पिप्पल्यर्धे इति युक्ते उदाहरणे। पिप्पल्यर्धस्य अर्धपिप्पल्याश्च शेषत्वाभावे तद्विशेषणानामेकशेषे तु नपुंसकलिङ्गतैव स्त्रीनपुंसकानां सहेति भणनात् ॥- भ्रातृपुत्राः—॥—बहुवचनमिति । ननु भ्रातृपुत्रयो स्वसृदुहित्रोश्च द्व्यर्थत्वात् द्विवचनेन भाव्यं किमर्थं बहुवचनमित्याशङ्का । बहुवचनाभावे हि 'पिता मात्रा' इतिवदुच्चारितरूपस्य परिग्रहः स्यान्न तदर्थशब्दान्तराणाम् । बहुवचने तु द्वयोर्बहुत्वायोगात् भ्रातरश्च पुत्राश्चेति तदर्थप्रतिपत्तौ तदर्थशब्दा निर्दिश्यन्त इति ॥—भ्रातरावित्यत्र स्त्रीपुंनपुंसकानां सहवचने स्यात्परमिति पुंलिङ्गमेव भवति । भ्रातरौ शोभनाविति । एवं च भ्राता च २ भ्रातरौ भ्राता च स्वसा च भ्रातरावित्युभयप्रतिपत्तावपि प्रकरणादिना विशेषावगतिः ॥—सोदर्येत्यत्र समानोदरे जातो निपातनात् समानस्य सभावो यश्च प्रत्ययः ॥—पिता मात्रा—॥ पितृशब्दसाहचर्यात्सम्बन्धिशब्दत्वाज्जनयित्र्या एव मातुः परिग्रहो न धान्यमात्रादेरिति ॥—श्वशुरः—॥—द्विवचनमिति । अत एव पूर्वेण योगविभागः पितृश्वशुरौ मातृश्वश्र्वा चेत्येकयोगे हि द्विवचनं श्वश्रूशब्दद्वयपरिग्रहार्थमिति विज्ञातुं न शक्यमिति ॥—तेन जाताविति । धवयोगे तु तन्मात्रभेदो न भवति । धवयोगादिलक्षणस्यार्थस्यापि भिन्नत्वात् इति जातावित्युक्तम् ॥—वृद्धो यूना—॥—लोकेऽपूज्यया वृद्ध उच्यते । शास्त्रे तु व्यवहितमपत्यं पौत्रप्रभृति । ततश्च कनि

वृद्धः पौत्रादिर्युवा जीवद्वंश्यादिः। वृद्धस्य यूना सहोक्तौ वृद्धवाच्येकः शिष्यते *तन्मात्र एव चेद्भेदो विशेषो भवति न चेत्प्रकृतिभेदोऽर्थभेदो वान्यो भवतीत्यर्थः। गार्ग्यश्च गार्ग्यायणश्च *गार्ग्यौ। वात्स्यश्च वात्स्यायनश्च वात्स्यौ। दाक्षिश्च दाक्षायणश्च दाक्षी। औपगवश्च औपगविश्च औपगवौ। वृद्ध इति किम्। गर्गश्च गार्ग्यायणश्च गर्गगार्ग्यायणौ। यूनेति किम्। गार्ग्यश्च गर्गश्च *गार्ग्यगर्गौ। तन्मात्रभेद इति किम्। गार्ग्यवात्स्यायनौ। अत्र प्रकृतिरन्या। *भागवित्तिभागवित्तिकौ। अत्र कुत्सा सौवीरदेशत्वं चान्योऽर्थः ॥१२४॥ *स्त्री पुंवच्च ॥३।१।१२५॥ वृद्धस्त्रीवाची शब्दो युववाचिना सहोक्तावेकः शिष्यते पुंवत् पुंलिङ्गा चेयं भवति। *स्त्र्यर्थः पुमर्थो भवतीत्यर्थः। तन्मात्रभेदे। गार्गी च गार्ग्यायणश्च गार्ग्यौ। वात्सी च वात्स्यायनश्च वात्स्यौ। दाक्षी च दाक्षायणश्च दाक्षी। गार्गी च गार्ग्यायणौ च गर्गाः। अत्र पुंवद्भावात् ङीनिवृत्तौ यञो लुप् गर्गानिति 'शसोऽता सश्च नः पुंसि' (१-४-४९) इति नत्वं च। इमौ गार्ग्यावित्यनुप्रयोगस्यापि पुंस्त्वम् ॥१२५॥ *पुरुषः स्त्रिया ॥३।१।१२६॥ पुरुषशब्दोऽयं प्राणिनि पुंसि रूढः। *स्त्रीवाचिना शब्देन सहोक्तौ पुरुषवाची शब्द एकः शिष्यते तन्मात्रभेदे स्त्रीपुरुषमात्रभेदश्चेद्भवति। ब्राह्मणश्च ब्राह्मणी च *ब्राह्मणौ। कुक्कुटश्च कुक्कुटी च कुक्कुटौ। मयूरश्च मयूरी च मयूरौ। *कारकश्च कारिका च कारकौ। गोमांश्च गोमती च गोमन्तौ। पटुश्च पट्वी च पटू। गौश्चायं गौश्चेयम्

---

प्राकृत्रिमयोरिति परिभाषया पौत्रप्रभृत्यपत्याभिधायिन एव वृद्धशब्दस्य ग्रहणं न वयोवृद्धस्य। एवं युवशब्दस्यापि। ननु 'पौत्रादि वृद्धम्' इति सूत्रे वृद्धमिति नपुसकमत्र तु पुलिङ्गस्तत् कथ सोऽय भवति। उच्यते। सर्व्ववस्तुन' सर्व्वलिङ्गयोगित्वस्योक्तत्वात् स्ववाच्ये प्रसवे वृद्धशब्देन लिङ्गद्वयोपादानाददोष ॥—तन्मात्र एव चेत् भेद इति। अत्र अनयापि रीत्या मात्रशब्दस्याऽवधारण याति तावेव तन्मात्रम्। तच्चासौ भेदश्चेति। वृत्तौ तु तौ वृद्धयुवानावेव मात्र स्वभावो यस्येति कर्त्तव्यमन्यथा पुस्त्व न स्यात्। वृद्धयुवमात्र एवेत्यर्थ ॥—गार्ग्यावित्यत्र गार्ग्यश्च गार्ग्यश्च गार्ग्याविति सिद्ध्यति। गार्ग्यश्च गार्ग्यायणश्चेति विवक्षाया तु द्वन्द्व स्यादिति शेषारम्भ ॥—गार्ग्यगर्गाविति। अत्र लघ्वक्षराद्यभावात्पूर्व्वनिपातानियम। यदा तु गर्गस्यार्च्यत्वविवक्षा तदा तस्य पूर्वनिपात ॥—भागवित्तीत्यत्र भगेन वित्तस्तस्यापत्यमत इञि भागवित्ति। तस्य सौवीरवृद्धस्यापत्य युवा गर्हित इति 'भागवित्तितार्णबिन्दव'—इति इकण् ततो द्वन्द्व ॥—स्त्री पुवच्च। नन्वत्र पुवद्ग्रहण किमर्थ स्त्रीत्येवोच्यता ततश्च स्त्रीवाचिनो युववाचिना पुसा एकशेषे स्त्रीपुनपुसकानामित्येव पुस्त्व भविष्यति। न च वाच्य युववाचिनो यदा स्त्रीत्व तदा किं भविष्यतीति। अस्त्री युवेति भणनात् स्त्रीवाचिनो युवत्वसज्ञाया अभावात्। नापि युववाचिनो नपुसकत्व वाच्यम्। आपत्यतद्धितस्य स्त्रीपुस्त्वस्यैवोक्तत्वात् तत. पुस्त्वस्य सिद्धत्वात् पुवत्ग्रहणमतिरिच्यते। न। स्त्रीपुन्नपुसकानामित्यस्य प्रायस्त्यदादिविषय एव प्रवर्त्तनात्तेन प्रायिकत्वात् नियमार्थ वचनम्। किंच अरुणाचार्येण अपत्यप्रत्ययान्तानामाश्रयलिङ्गत्वमुक्त ततश्च गार्गी च गार्ग्यायण चेत्यापि कृते तन्मतेऽपि पुस्त्व यथा स्यात् ॥—स्त्र्यर्थः पुमर्थो भवतीति। स्त्रीलक्षणोऽर्थो यस्य शब्दस्य स पुमर्थ। यद्वा शब्दस्येति वृत्तावध्याहर्त्तव्य तस्य सबन्धी स्त्रीलक्षणोऽर्थ पुमर्थ। अर्थग्रहणाच्च विशेषणानामपि पुस्त्व सिद्ध, शब्दस्यैव पुस्त्वे विशेषणाना न स्यात्। गार्ग्यावित्यत्र पुवद्भाविनानुप्रयोगे विशेष। शोभनौ गार्ग्यौ ॥—पुरुप स्त्रिया ॥ अत्र वृद्धो यूनेति नानुवर्त्तते अघटनात्। तदनुवृत्तौ हि वृद्ध पुरुषो यूना युवसज्ञया स्त्रियेति स्यात्। न चैतदस्ति। अस्त्रीति वचनात् स्त्रिया युवसज्ञाया अभावात् इति सामान्येनाह—स्त्रीवाचिनेत्यादि ॥—ब्राह्मणाविति। ब्राह्मणश्च ब्राह्मणी च ब्राह्मणावित्यादौ जातिसामान्यविवक्षायामऽविवक्षितविशेषत्वात् 'समानामर्थेन'—इत्येकशेष सिध्यति। भेदविवक्षाया तु द्वन्द्व प्राप्नोतीति वचनम् ॥—कारकश्च कारिका चेत्यत्र यद्यपि 'अस्यायत्तत्'—इति प्रति रित्व भवति तथापि प्रकृतिरेकैव न त्वन्या ॥—

*इमौ गावौ । पुरुष इति किम् । *तीरं नदनदीपतेः। *घटघटीशरावोदञ्चनानि । तन्मात्रभेदे इत्येव । हंसश्च वरटा च हंसवरटे । अश्ववडवौ । पुरुषयोषितौ । द्रुणीकच्छपौ । ऋश्यश्च रोहिच्च ऋश्यरोहितौ । क्षेमधृतयश्च क्षत्रियास्तनुकेश्यश्च तत्स्त्रियः क्षेमधृतितनुकेश्यः । अङ्गारकाश्च शकुनयः कालिकाश्च तत्स्त्रियः कालिकाङ्गारकाः । एषु प्रकृतिभेदः । गणकगणक्यौ । इन्द्रेन्द्राण्यौ । भवभवान्यौ । एषु धवयोगलक्षणोऽर्थभेदः । कुक्कुटमयूर्यौ । अजावर्करौ । अश्वाकिशोरौ । कलभहस्तिन्यौ । गोवत्सौ । एषु प्रकृत्यर्थयोर्भेदः । कथं ब्राह्मणवत्सा च ब्राह्मणीवत्सश्च ब्राह्मणवत्साब्राह्मणीवत्सौ । न ह्यत्र स्त्रीपुरुषमात्रभेदादन्यो भेदोऽस्ति । सत्यम् । तदित्यनेन प्रधानस्त्रीपुरुषौ परामृश्येते तेन प्रधानस्त्रीपुरुषमात्रकृत एव भेदे भवति । अत्र तु विशेषणीभूताप्रधानस्त्रीपुरुषकृतोऽपि *भेदोऽस्तीति न भवति । अन्ये तु तन्मात्रभेदादधिके प्रकृतिभेदे एवैकशेषं नेच्छन्ति अर्थभेदे त्विच्छन्त्येव । इन्द्रश्च इन्द्राणी च इन्द्रौ । तथा वरुणाविन्द्रौ भवौ शर्वौ रुद्रौ मृडाविति । एवं पूर्वसूत्रेऽपि । भागवित्तिश्च भागवित्तिकश्च भागवित्तौ ॥ १२६ ॥ ***ग्राम्याशिशुद्विशफसंघे स्त्री प्रायः ॥३।१।१२७॥** ग्राम्या अशिशवो ये द्विशफा द्विखुरा अर्थात्पशवः । तेषां संघे स्त्रीपुरुषाणां सहोक्तौ प्रायः स्त्रीवाच्येकः शिष्यते स्त्रीपुरुषमात्रभेदश्चेद्भवति । पूर्वेण पुरुषशेषे प्राप्ते स्त्रीशेषार्थं वचनम् । गावश्च स्त्रियः गावश्च पुरुषाः इमा गावः । अजाश्चेमे अजाश्चेमा इमा अजाः । एवं मेष्य इमाः । महिष्य इमाः । ग्राम्येति किम् । आरण्यानां मा भूत् । रुरवश्चेमे रुरवश्चेमा इमे रुरवः । पृषताश्च पृषत्यश्च पृषता इमे । अशिशुग्रहणं किम् । वत्साश्चेमा वत्साश्चेमे इमे वत्साः । वर्कर्यश्च वर्कराश्च वर्कराः । द्विशफेति किम् । अश्वाश्चेमे अश्वाश्चेमाः *इमेऽश्वाः । गर्दभाश्च गर्दभ्यश्च गर्दभाः । मनुष्यश्चेमा मनुष्याश्चेमे इमे मनुष्याः । पक्षिण्यश्च पक्षिणश्च पक्षिणः । संघग्रहणं किम् । गौश्चायं गौश्चेयम् *इमौ गावौ । एवमेतावजौ । प्राय इति

---

—इमौ गावाविति । 'स्यादावसंख्येय' इत्यनेन त्वेकशेषे कदाचिदिमाविति स्यात् । कदाचिदिमे इति अथ स्त्रीपुनपुंसकाना सहवचन इति परं भविष्यति । सत्यम् । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणावित्यादिसिद्ध्यर्थमवश्यकर्त्तव्येनाऽनेनैव परत्वादिहाप्येकशेष इत्यदोष ॥—तीरं नदनदीपतेरिति । नन्वत्र 'नदीदेश -इति सूत्रेणैकार्थता कथं न भवति । तथा च 'क्लीबे' इति ह्रस्वत्वे नदनदिपतेरिति स्यात् । उच्यते । तत्र नदीत्युक्ते नदीविशेषो गृह्यते । अयं तु सामान्यवाचीति ॥—घटघटीशरावोदञ्चनानीति । चतुर्णामपि सहोक्तौ द्वयोरपि सहोक्तिरस्तीति घटघट्योरेकशेषे घटशरावोदञ्चनानीति प्राप्तम् । एवं पूर्वसूत्रेष्वपि बहूनामपि सहोक्तौ यथाप्राप्तयो पदयोरेकशेषो भवत्येव ॥—भेदोऽस्तीति न भवतीति । तथाहि ब्राह्मणवत्सशब्दो भिद्यते कथमित्युच्यते एकत्र ब्राह्मणस्य वत्सा ब्राह्मणवत्सेति पुमर्थो विशेषणम् । अन्यत्र तु ब्राह्मण्या वत्सो ब्राह्मणीवत्स इति स्त्र्यर्थ इत्यर्थोऽप्यन्य इति तन्मात्रभेदाभावादेकशेषाभाव । यदुपाध्याय स्त्रीपुंसयो सहोक्तावेकशेष सा च प्रधानयोरेव भवतीति यत्र प्रधानस्त्रीपुंसकृतो विशेषस्तत्रैकशेष । इह त्वप्रधानस्त्रीपुंसकृतोऽपि विशेष इत्येकशेषाभाव । ब्राह्मणवत्सश्च ब्राह्मणीवत्सा चेत्यपि कृतेऽवान्तरस्त्रीलिङ्गभेदादेकशेष । ब्राह्मणवत्सा चेति तु कृते भवत्येव ॥—ग्राम्याशिशु--॥—महिष्य इमा इति । ननु गावोऽजाश्च शिशवो भवन्ति तत्कथमत्राशिशव इत्युच्यमान स्त्रीशेष । नैष दोष । यद्यपि गावोऽजाश्च शिशवो भवन्ति तत्राशिशुत्वकृतोऽय विधिर्न तु शिशुत्वनिबन्धन प्रतिषेध ॥—इमेऽश्वा इत्यादि । एष्वश्वादीना खुरसबन्धेऽपि वृत्तैकखुरत्वात् मनुष्यादीना खुररहितत्वात् द्विखुरत्वाभावात् सर्वत्र पुरुषशेष एव ॥—इमौ गावाविति । ननु समुदायस्य सघरूपत्वात्तस्य च द्वयोरपि सभवात् कथ सघ इति वचनात् द्वयोरपि न भवति । सत्यम् । द्वितीयेन विना सहोक्तेरभावात्सहोक्तिग्रहणादेव द्वयो सघे सिद्धे सघग्रहण सघप्रकर्षार्थम् ॥—

किम् । उष्ट्र्यश्च उष्ट्राश्च *उष्ट्राः । छाग्यश्च छागाश्च *छागाः । व्यावृत्तौ सर्वत्र पूर्वेण पुरुषशेष एव भवति । तन्मात्रभेद इत्येव । *गोवलीवर्दम् । *अजाविकम् ॥ १२७ ॥ *क्लीबमन्येनैकं च वा ॥ ३ । १ । १२८ ॥ क्लीबं नपुंसकं नाम *अन्येनाक्लीबेन सहोक्तावेकं शिष्यते तन्मात्रभेदे क्लीबाक्लीबमात्र एव चेद्भेदो भवति । *तच्च शिष्यमाणमेकमेकार्थं वा भवति । अर्थस्यैकत्वे तद्विशेषणानामपि तथाभावः । शुक्लं च वस्त्रम् शुक्लश्च कम्बलः तदिदं शुक्लम् ते इमे शुक्ले वा । शुक्लं च वस्त्रं शुक्लश्च कम्बलः शुक्ला च शाटी तदिदं शुक्लं तानीमानि *शुक्लानि वा । क्लीबग्रहणं किम् । *स्त्रीपुंसयोरपि शेषः स्यात् । अन्येनेति किम् । शुक्लं च शुक्लं च शुक्ले । शुक्लं च शुक्लं च शुक्लं च इमानि शुक्लानि । 'स्यादावसंख्येयः' ( ३-१-११९ ) इत्येकशेषः । अनेन त्वेकशेषे विकल्पेनैकार्थत्वं प्रसज्ज्येत । तन्मात्रभेद इत्येव । *महद्धिमं हिमानी । हिमं च हिमानी च हिमहिमान्यौ । महदरण्यमरण्यानी । अरण्यं च अरण्यानी च अरण्यारण्यान्यौ । अक्षाश्च देवनादयः अक्षाणि चेन्द्रियाणि अक्षाक्षाणि । पद्मश्च नागः पद्मा च लक्ष्मीः पद्मं च जलजं पद्मपद्मापद्मानि । *एषु प्रवृत्तिनिमित्तलक्षणार्थभेदोऽप्यस्तीति नैकशेषः ॥ १२८ ॥

*पुष्यार्थाद्भे पुनर्वसुः ॥ ३ । १ । १२९॥ *एकशेषो निवृत्तः । एकस्मिन्नुवर्तते । पुष्यार्थाद्भे *नक्षत्रे वर्तमानात्परो भ एव वर्तमानः पुनर्वसुशब्दः सहोक्तौ गम्यमानायां सामर्थ्यात् द्व्यर्थः सन्नेक एकार्थो भवति। उदितौ पुष्यपुनर्वसू। अर्थग्रहणं पर्यायार्थम्। तिष्यपुनर्वसू। सिध्यपुनर्वसू। *समाहारे तु पुष्यपुनर्वसु। पुष्यार्थादिति किम्। आर्द्रापुनर्वसवः। पुनर्वसुरिति किम्। पुष्यमघाः। भ इति किम्। *पुष्यपुनर्वसवो माणवकाः। सहोक्तावित्येव। पुष्यः पुनर्वसू येषां ते *पुष्यपुनर्वसवो

---

उष्ट्रा इति । केचिदत्रोष्ट्रा न ग्राम्या इत्याहु । तथापि छागा इत्येतदर्थं प्राय इति वक्तव्यम् ॥—अजाविकमित्यत्र अविकशब्द उणादौ व्युत्पन्नः ॥—गोवलीवर्दमित्यत्र 'पशुव्यञ्जनानाम्' इति । अजाविकमित्यत्र तु 'गवाश्वादि' इति चैकत्वम् ॥—क्लीबम—॥ननु समाहारेतरेतरविवक्षायामेकत्वविकल्पो भविष्यति किमेकग्रहणेन। सत्यम्। इदमेकग्रहण ज्ञापयति यत् अन्यत्रैकशेषे समाहारविवक्षायामपि एकत्व न भवति । क्लीबापेक्षया अन्यत्वमित्याह—अन्येनाक्लीबेनेति। प्रक्रान्तेनैवैकशेषेणैकप्रयोगस्य सिद्धत्वादेक प्रयुज्यमान क्लीब विज्ञायते । तस्यैकत्व चार्थद्वारकमेव वाग्रहण चैकत्वेनैव सबध्यते न त्वेकशेषेणेत्याह—तच्चेत्यादि ॥—शुक्लानीत्यत्र च क्लीनाक्लीवार्थयोर्भेदात् 'समानाम्'—इत्येकशेषाभाव ॥—स्त्रीपुंसयोरपीति । क्लीबग्रहणमन्तरेण यथा क्लीबस्याक्लीबेन सहोक्तावेकशेषस्तथा स्त्रीपुसयोरपि स्त्रीपुसाभ्या सह वचने स्यादित्यर्थ ॥—महदित्यादि । ननु च एतेषु प्रकृतेरेकत्वात् स्त्रीत्वादिलिङ्गविशिष्टस्यैकस्यैवार्थस्याभिधानात् को भेद इत्याशङ्क्याह—एष्वित्यादि ॥—पुष्यार्थ—॥—एकशेषो निवृत्त इति । भिन्नसूत्रकरणात् इत्यर्थ । अन्यथा क्लीबमन्येनैक च वा पुष्यार्थाद्भे पुनर्वसुश्च नित्यमित्येकमेव योग कुर्यात् ॥—भे नक्षत्रे वर्त्तमानादिति । एकस्याप्यावृत्त्या उभयस्यापि विशेषणत्वम् ॥—समाहारे त्विति । समाहारे त्वेकत्वानेकत्वयोर्नास्ति विशेष इति ॥—पुष्यपुनर्वसवो माणवका इति । पुष्येण चन्द्रयुक्तेन युक्त काल 'चन्द्रयुक्तात् काले' इत्यण् एव पुनर्व्वसुशब्दादपि । ततो 'लुप्त्वप्रयुक्ते' इति लुप् । एव कालवृत्तिभ्या पुष्ये जात पुनर्व्वस्वोर्जाताविति 'भर्तुसध्यादे' इत्यण् 'बहुलानुराधा'—इति तस्य लोप । तत पुष्यश्च पुनर्व्वसू चेति द्वद्व ॥—पुष्यपुनर्व्वसवो मुग्धा इति । मुग्धा इति मुह्यन्ति जना एष्विति 'अद्यर्थाच्चाधारे' इति क्ते साध्य । ततो येषा पुष्यपुनर्व्वस्वादीना मुग्धाना कोऽर्थः मोहोत्पादकाना मध्ये पुष्य पुनर्व्वसू ज्ञायते लोकैस्ते पुष्यपुनर्व्वसव मुग्धा इति । कर्त्तरि क्ते तु विपर्यासप्रतिपत्तार पुरुषा उच्यन्ते । तत पुनर्व्वस्वर्थस्यैकत्वेऽपि अन्यपदार्थतया पुरुषबहुत्वे सति बहुवचनमुपपद्यत एव । अत्रावयवेन विग्रह

मुग्धाः ॥ १२९ ॥ ***विरोधिनामद्रव्याणां नवा द्वन्द्वः स्वैः ॥ ३ । १ । १३० ॥** द्रव्यं गुणाद्याश्रयः । विरोधिवाचिनां शब्दानां द्रव्यमप्रतिपादयतां द्वंद्वो वा एक एकार्थो भवति स चेत् द्वंद्वः स्वैः *सजातीयैरेवारभ्यते । सुखदुःखम् । सुखदुःखे । शीतोष्णम् । शीतोष्णे । जननमरणम् । जननमरणे । लाभालाभम् । लाभालाभौ । संयोगविभागम् । संयोगविभागौ । विरोधिनामिति किम् । *रूपरसगन्धस्पर्शाः । कामक्रोधौ । अद्रव्याणामिति किम् । *सुखदुःखाविमौ ग्रामौ । शीतोष्णे उदके । स्वैरिति किम् । *बुद्धिसुखदुःखानि । *समाहारे चार्थे एकत्वस्येतरेतरयोगे चानेकत्वस्य सिद्धत्वाद्विकल्पे सिद्धे सर्वमिद विकल्पानुक्रमणं नियमार्थम् विरोधिनामेवाद्रव्याणामेव स्वैरेवेनि । तथा च प्रत्युदाहरणे इतरेतरयोग एव भवति ॥ १३० ॥ ***अश्ववडवपूर्वापराधरोत्तराः ॥ ३ । १ । १३१ ॥** अश्ववडवेति पूर्वापरेति अधरोत्तरेति त्रयो द्वंद्वा एकार्था वा भवन्ति स्वैः । अश्वश्च वडवा चाश्ववडवम् । अश्ववडवौ । अश्ववडवेति निर्देशादेवेतरेतरयोगे ह्रस्वत्वं निपात्यते । पूर्वापरम् । पूर्वापरे । अधरोत्तरम् । अधरोत्तरे । पशुविकल्पेनैव सिद्धेऽश्ववडवग्रहणं तत्पर्यायनिवृत्त्यर्थम् । हयवडवे । स्वैरित्येव । *अजाश्ववडवाः । *न्यायादेव विकल्पे सिद्धे पूर्वापरादिग्रहणं पदान्तरनिवृत्त्यर्थम् तेन पूर्वपश्चिमौ दक्षिणापरौ अधरमध्यमौ उत्तरदक्षिणावित्यत्र विकल्पो न भवति ॥ १३० ॥ ***पशुव्यञ्जनानाम् ॥ ३ । १ । १३२ ॥** पशूनां *व्यञ्जनानां च *स्वैर्द्वन्द्व एक एकार्थो वा भवति । गौश्च महिषश्च गोमहिषम् गोमहिषौ । अश्वबलीवर्दम् अश्वबलीवर्दौ । *वृष्णिस्तभम् वृष्णिस्तभौ । महाजोरभ्रम् महाजोरभ्रौ । व्यञ्जन, दधिघृतम् दधिघृते । शाकसूपम् शाकसूपौ । अश्वमहिषमित्यत्र तु परत्वात् 'नित्यवैरस्य' (३-१-१४१) इति नित्यमेकत्वविधिः ॥ स्वैरिसेव । गोनरौ । दधिवारिणी । दध्युष्ट्रौ ॥ १३२ ॥ ***तरुतृणधान्यमृगपक्षिणां बहुत्वे ॥ ३ । १ । १३३ ॥** एतेषां बहुत्वे वर्तमानानां प्रत्येकं स्वैर्द्वन्द्व एकार्थो वा भवति । तरु, *प्लक्षाश्च न्यग्रोधाश्च प्लक्षन्यग्रोधम् प्लक्षन्यग्रोधाः । एवं धवाश्वक-

---

समुदाय' समासार्थ । तत पुष्य इत्येकोऽन्यव पुनर्वसू इति द्वितीय । येपामिति समुदाय समासार्थ ॥—**विरोधिनामद्रव्याणामिति** । अत्र गुणादीनामाश्रयो द्रव्य गृह्यते न तु वैयाकरणप्रसिद्धमिद तदित्यादिलक्षणम् । तस्मिस्तु गृह्यमाणे सुखदु खादीनामपि द्रव्यत्वप्रसङ्ग ॥ छायातपमिति न भवति तयोर्द्रव्यत्वात् ॥—**सजातीयैरेवेति** । असमानजातीयमविरोधि यथवयनान्तरमस्य न भवतीत्यर्थ । एतावता विरोधिपदारब्धत्वेन द्वंद्वस्य सजातीयारब्धत्वमुक्तम् ॥—**रूपरसगन्धस्पर्शा** इत्यत्र रूपादीनामेकस्मिन्नपि नारङ्गादिपदार्थे सहावस्थानाद्विरोधाभावान्नाय विधिरिति ॥—**सुखदु खाविमौ** इत्यत्र सुखदु खौ शीतोष्णौ उपचाराद्द्रव्ये वर्तेते ॥—**बुद्धिसुखदु खानीति** । अत्र सुखदु खे विरोधिनी बुद्धिस्त्वविरोधिनीति अविरोध्यवयवोऽप्यसौ द्वंद्व इति वचनानैकत्वद्भाव ॥—**समाहारे चे**त्यादि । अनेकश्च नियमो वाक्यभेदेन समर्थ्यते । सर्वत्रापि च प्रत्युदाहरण व्यवच्छेद्यम् ॥—**अश्ववडव**—॥—**अजाश्ववडवा** इति । अत्रेतरेतर एव अन्यथा अश्ववडवेत्यस्य पशुद्वारो विकल्प सिद्ध एवातो व्यावृत्त्यर्थ ग्रहणम् ॥—**न्यायादेवेति** । समाहारेतरेतरलक्षणात् ॥—**पशुव्यञ्ज**—॥ अत्रावयवावयविसम्बन्धे षष्ठी । तेन पश्ववयवो व्यञ्जनावयवश्च द्वंद्व इत्यर्थ । अत्र पशवो ग्राम्या गवादयो ग्राम्या न त्वारण्या कुरङ्गादय । उत्तरत्र मृगग्रहणात् ॥—**व्यञ्जनमिति** । व्यञ्जन येनान्न रुचिमापाद्यते तद्दधिघृतशाकसूपादि ॥—**स्वैरिति** । अत्रापि पशुत्वेन व्यञ्जनत्वेन च स्वत्वम् ॥—**वृष्णिस्तभमित्यत्र** स्तभे सौत्रादचि स्तभोऽज ॥ पशुव्यञ्जनानामिति बहुवचनात् बहूना पशुद्वंद्वे सेनाङ्गाना यदेकत्व नित्य तदनेन बाध्यते । तेन हस्त्यश्व हस्त्यश्वा भवतीति न्यास. ॥—**तरुतृण**—॥

र्णम् धवाश्वकर्णाः । तृण, कुशकाशम् कुशकाशाः । मुञ्जवल्वजम् मुञ्जवल्वजाः । धान्य, तिलमाषं तिलमाषाः । व्रीहियवम् व्रीहियवाः । मृग, रुरुपृषतम् रुरुपृषताः । ऋश्यैणम् ऋश्यैणाः । पक्षिन् , *हंसचक्रवाकम् हंसचक्रवाकाः । तित्तिरिकपिञ्जलम् तित्तिरिकपिञ्जलाः । एकस्यापि पदस्य बहुत्वे भवति । प्लक्षश्च न्यग्रोधाश्च प्लक्षन्यग्रोधम् प्लक्षन्यग्रोधाः, प्लक्षौ च न्यग्रोधाश्च प्लक्षन्यग्रोधम् प्लक्षन्यग्रोधा इत्यादि । बहुत्व इति किम् । प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ । *प्लक्षौ च न्यग्रोधौ च, प्लक्षश्च न्यग्रोधौ चेति वा प्लक्षन्यग्रोधाः । स्वैरित्येव । प्लक्षयवाः । गोपृषताः । आरण्याः पशवो मृगा इति मृगाणामपि पशुत्वात् पशुविकल्पेनैव सिद्धे मृगाणामिहोपादानम् *अमृगैरबहुत्वे चैकत्वाभावार्थम् ॥ १३३ ॥ *सेनाङ्गक्षुद्रजन्तूनाम् ॥ ३ । १ । १३४ ॥ सेनाङ्गानां क्षुद्रजन्तूनां च बहुत्वे वर्तमानानां स्वैर्द्वन्द्व एक एकार्थो नित्यं भवति । *पृथग्योगाद्वेति निवृत्तम् । सेनाङ्गम्, अश्वाश्च रथाश्चाश्वरथम् । रथिकाश्वारोहम् । हस्त्यश्वम् । *केचित्तु सेनाङ्गानां पशूनां पशुलक्षणं विकल्पमिच्छन्ति । हस्त्यश्वम् हस्त्यश्वाः । *क्षुद्रजन्तवोऽल्पकायाः प्राणिन *आनकुलमिह स्मर्यन्ते । *यूकालिक्षम् । यूकामत्कुणम् । दंशमशकम् । शतपदश्चोत्पादकाश्च शतशूत्पादकम् । कीटपिपीलिकम् । बहुत्व इत्येव । सादिनिषादिनौ । अश्वरथौ । यूकालिक्षे । स्वैरित्येव । हस्तिमशकाः ॥ १३४ ॥

---

तरुरिति सामान्येनोक्तेऽपि तरुविशेषा गृह्यन्ते । तेन तरवश्च वृक्षाश्चेति धवाश्च वृक्षाश्चेति वा कृते इतरेतरयोग एव ॥—**प्लक्षाश्चे**त्यादि । ननु वृत्तौ वर्त्तिपदार्थानामभेदैकत्वसख्याया एव भावात् कथमत्र बहुत्वम् । नैवम् । यत्र सख्या भेदप्रतिपत्तौ निबन्धनमस्ति तत्र वर्त्तिपदान्यपि तमेव सख्याभेदमुपाददते । बहुत्वपरिग्रहे चात्र एकवद्भावो निबन्धन तत्रैव तस्य भावादित्यदोष ॥—**हंसचक्रवाक**मित्यत्र चक्रवाकमित्यत्र चक्र इति वाक आख्या यस्य । अथवा वचन वाकश्चक्रस्येव वाको येषा ते चक्रवाका ॥—**प्लक्षौ च न्यग्रोधौ चे**ति । तरुतृणादीना द्वद्वावयवानामेव बहुत्व इति विशेषणात् द्वद्वस्य बहुत्वेऽपि न समाहार ॥—**अमृगैरबहुत्वे चे**ति । यदा ग्राम्यपशूनामरण्यपशुभि सहोक्तिर्भवति तदा मामूदित्यर्थ ॥—**सेनाङ्गक्षुद्र**— ॥ अत्रापि सेनाङ्गत्वादिना स्वत्वम् । एषु सर्वेषु बहुवचनमेकार्थविधे क्वचिदन्यत्वख्यापनार्थमित्युपाध्यायसप्रदाय ॥—**पृथग्योगादि**ति । अन्यथार्थस्य समानत्वात् पूर्वेणैकयोग स्यादित्यर्थ । अत्र यथाश्वरथमिति भवति तथा हस्त्यश्वारोहमिति न स्वकीयत्वाभावात् । न च वाच्य सेनाङ्गत्वेन स्वत्वमिति । यतो सेनाङ्गेष्वपि आरोह्याणामारोह्येणारोहकाणामारोहकेण च स्वत्वमिष्यते । अत्र च न तथेति । एव प्राणितूर्याङ्गाणामित्यत्रापि तूर्याङ्गेषु वाद्याना वाद्येन वादकाना वादकेन च स्वत्व दृश्यम् ॥—**केचित्त्वि**त्यत्र जयादित्य । इद तु ‘ पशुव्यञ्जनानाम् ’ इति सूत्रे बहुवचनात्सगृहीतम् ॥—**क्षुद्रजन्तव** इत्यत्र क्षुद्रशब्दोऽनेकार्थ । क्वचिदङ्गहीने शीलहीने । शीलहीनेऽत्र वर्त्तते यथा ‘ क्षुद्राभ्य एरण्वा ’ इति । अत्र हि शीलहीना अङ्गहीनाश्च स्त्रियो विज्ञायन्ते । क्वचित्कृपणे वर्त्तते यथा क्षुद्रो देवदत्त । क्वचिदल्पपरिमाणे । यथा क्षुद्रास्तन्दुला इति । तत्रेह प्रतिषेधविषये आरम्भोपयोगात् क्षुद्रा प्राणिन एव प्रतिपाद्यन्ते इति जन्तुग्रहणमतिरिच्यते । तस्मात्तदुपादानसामर्थ्यादल्पपरिमाणा प्राणिविशेषा क्षुद्रजन्तुशब्देनोच्यन्ते इत्याह—**क्षुद्रजन्तव** इति । क्षुद्रजन्तुरनस्थि स्यादथवा क्षुद्र एव य ॥ शत वा प्रसृतियेषा केचिदा नकुलादपि ॥१॥ क्षुद्रजन्तुरकाङ्कालो येषा स्व नास्ति शोणितम् ॥ नाञ्जलिर्यत्सहस्रेण केचिदा नकुलादिति ॥२॥ द्वे अप्येकार्थे ॥ **आनकुलमिह स्मर्यन्ते** इत्यत्र नकुलादारभ्य ये हीनकाया वा नकुलादयस्ततोऽप्यपचितपरिमाणाश्च यावत् कुन्थव इति क्षुद्रजन्तव शिष्टै स्मर्यन्ते ॥—**यूकालिक्ष**मित्यत्र ‘ ऋजिकृपि ’—इति

*फलस्य जातौ ॥ ३।१।१३५ ॥ फलवाचिनां शब्दानां बहुत्वे वर्तमानानां च जातौ विवक्षायां स्वैर्द्वन्द्व एक एकार्थो भवति। बदराणि चामलकानि च *बदरामलकम् । कुवलामलकम् । फलस्येति किम् । ब्राह्मणक्षत्रियाः। जाताविति किम् । *व्यक्तिपरचोदनायां मा भूत् । एतानि बदरामलकानि तिष्ठन्ति। बहुत्वे इत्येव । बदरामलके, बदरामलकम् । स्वैरित्येव । बदरशृगालाः॥ १३५ ॥ *अप्राणिपश्वादेः ॥ ३ । १ । १३६ ॥ बहुत्व इति निवृत्तम्। *पूर्वयोगारम्भात्। प्राणिभ्यः पश्वादिसूत्रोक्तेभ्यश्च येऽन्ये *द्रव्यभूताः पदार्थास्तेषां जातौ वर्तमानानां शब्दानां स्वैर्द्वन्द्व एक एकार्थो भवति। आरा च शस्त्री च *आराशस्त्रि। *धाना च शष्कुली च धानाशष्कुलि। युगवरत्रम्। कुण्डबदरम्। तरुशैलम्। जातावित्येव। विन्ध्यहिमालयौ। *नन्दकपाञ्चजन्यौ। जातिविवक्षायामयं विधिः। व्यक्तिविवक्षायां तु यथाप्राप्तम्। आराशस्त्रि आराशस्त्र्याविमे। प्राणिपश्वादिजातिवर्जनं किम्। *ब्राह्मणक्षत्रियविट्शूद्राः। ब्राह्मणक्षत्रियविट्शूद्रम्। गोमहिषौ। गोमहिषम्। *दधिघृते। दधिघृतम्। प्लक्षन्यग्रोधौ २ *कुशकाशौ२ व्रीहियवौ २ रुरुपृषतौ २ हंसचक्रवाकौ२ *अश्वरथौ२ । *अप्राणीति प्राणिनो द्रव्यस्य पर्युदासेनाप्राणिनो द्रव्यस्य ग्रहणादिह न भवति । *रूपरसगन्धस्पर्शाः । उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि । स्वैरित्येव । *बदरशृगालौ ॥ १३६ ॥ *प्राणितूर्याङ्गाणाम् ॥

---

क्तिसप्रत्यये कपिडादित्वाद्रस्य लत्वम् ॥—फलस्य—॥—बदरामलकमिति । बदर्या विकारः फलं हैमायनम् । आमलक्या विकारः फलं 'दोरप्राणिनः' मयट् । द्वयोरपि 'फले लुप्' ॥—व्यक्तिपरेति । व्यक्तिः परं प्रधानं यस्याः सा तथा चोदना उक्तिस्तत्र ॥—अप्राणि—॥—पूर्वयोगारम्भादिति । फलस्याप्राणित्वेन अनेनैव सिद्धत्वात् । न च पूर्वयोगमन्तरेणात्र जाताविति न स्यादिति वाच्यम् । अनेन जातिग्रहणं करिष्याम इति ॥ द्रव्यभूता इत्यत्राप्राणीति पर्युदासेन तत्तुल्यस्य द्रव्यस्य प्रतिपत्तिस्तेषां न जाताविति विशेषणमित्याह–द्रव्यभूता इत्यादि ॥—आराशस्त्रीति । अत्र आराशब्दो भिदादिः शस्त्रीविशेषवाचकः । तेन गोबलीवर्दन्यायेन सामान्यविशेषयोरत्र द्वन्द्वो द्रष्टव्यः । यत्राप्राणीति यत्नात् प्राप्तिस्ते पश्वादिसूत्रोक्ता व्यञ्जनादयो ग्राह्याः न तु पशवस्तत्र 'अप्राणि'–इत्यनेनैव निषेधसिद्धेः ॥—धाना च शष्कुली चेत्यत्र शष्कुलीशब्दो गौरादौ व्युत्पादितः । अन्ये त्विमं पृषोदरादित्वान्मूर्धन्यादि पठन्ति ॥—नन्दकपाञ्चजन्याविल्यत्र नन्दतात् 'आशिष्यकन्' । पञ्च च ते जनाश्च पञ्चजनाः । 'सङ्ख्या समाहारे च'–इति समासे कृते पञ्च जना यस्येति वा बहुव्रीहौ 'गम्भीरपञ्चजन'–इति ञ्यः । सञ्ज्ञाशब्दत्वेनैतावनादिनिधनयोर्वर्णनयोः शङ्खखड्गयोर्वर्तेते ॥—ब्राह्मणक्षत्रियविट्शूद्रा इति । अत्र प्राणिवर्जनात् ब्राह्मणादीनां च प्राणित्वादयं नित्यो विधिर्न भवति ॥—दधिघृते इत्यादिप्रयोगेषु च पश्वादिवर्जनात् दधिघृतादीनां च पश्वादिसूत्रोक्तत्वादनेन निर्धारकाभावः । ततश्च यथाप्राप्तमेव भवति ॥—कुशकाशाविति वा बहुत्व इति व्याप्तिर्व्यक्तिविवक्षाया चरितार्था इति जातावेकार्थता प्रसज्येत ॥—अश्वरथाविति । नन्वत्र यथा पश्वादि-सूत्रोक्तवर्जने दधिघृते दधिघृतमित्यादिषु यथाप्राप्तस्य विधानं दर्शितमेवं 'फलस्य जातौ' इत्यस्यापि व्यवच्छिन्नत्वात् कथमत्र यथाप्राप्तं न दर्शितम् । उच्यते । पश्वादिमध्ये पूर्वसूत्रं न गण्यते अस्यैव सूत्रस्य प्रपञ्चात् । ततः पूर्वसूत्रव्यावृत्त्येव समाहारनिषेधात् जातौ एकत्वद्वित्वयोरितरेतरो भवति न समाहारः । अतो न दर्शितं प्रत्युदाहरणम् ॥—अप्राणीति । अत्र जातिप्रदेशेषु द्रव्यजातेर्गुणजाते क्रियाजातेश्चाविशेषेण ग्रहणदृष्टान्तादित्रापि तद्वदेवेति यः शङ्कते तं प्रत्याह अप्राणीति ॥—रूपरसगन्धस्पर्शा इत्यत्र वैकल्पिकोऽपि समाहारो न 'विरोधिनाम्'–इति नियमस्य व्याख्यानतः ॥—बदरशृगालाविति । अत्र बदरप्रमाणी शृगालः प्राणीति ॥—प्राणितूर्य—॥ प्राण्यते एभिरिति 'व्यञ्जनाद्घञ्' प्राणास्ततो मत्वर्थीयः । प्राणी च तूर्यं चेति समाहारे इतरेतरयोगे वा द्वन्द्वः ।

३ । १ । १३७ ॥ प्राण्यङ्गानां तूर्याङ्गाणां च स्वैर्द्वन्द्व एक एकार्थो भवति । प्राण्यङ्ग, दन्ताश्च ओष्ठौ चेदं दन्तोष्ठम् । इदं शिरोग्रीवम् । इदं पाणिपादम् । इदं कर्णनासिकम् । तूर्याङ्ग, *शङ्खशाङ्खिकादिसमुदायस्तूर्यम् अङ्गान्यवयवाः । इदं शंखपटहम् । इदं भेरीमृदङ्गम् । शांखिकमौरजिकम् । मार्दङ्गिकपाणविकम् । वीणावादकपरिवादकम् । स्वैरित्येव । पाणिगृध्रौ । पीठपटहौ । पाणिपणवौ । प्राण्यङ्गानां तूर्याङ्गेषु शंखपटहादीनामप्राणिजातित्वात् पूर्वेण सिद्धे व्यक्तिविवक्षायां विधानार्थम् जातिविवक्षायां प्राण्यङ्गाप्राण्यङ्गादिसंभेद एकत्व*निराकरणार्थं च वचनम् । एतज्ज्ञापनार्थमेव च बहुवचनम् ॥ १३७ ॥ *चरणस्य स्थेणोऽद्यतन्यामनुवादे ॥ ३ । १ । १३८ ॥ शाखाध्ययननिमित्तकव्यपदेशभाजो द्विजन्मानश्चरणाः कठादयः । *प्रमाणान्तरप्रतिपन्नस्यार्थस्य शब्देन संकीर्तनमनुवादः । यज्ञकर्मणि *शंसितानुशंसनमित्येके । *अनुकरणमित्यपरे । अद्यतन्यां परभूतायां यौ स्थेणौ तयोः *अनुकथने कर्तृत्वेन संबन्धिनो ये चरणास्तद्वाचिनां शब्दानां स्वैर्द्वन्द्वोऽनुवादविषय एक एकार्थो भवति । प्रत्यष्ठात् *कठकालापम् । उदगात् *कठकौथुम् । प्रत्यष्ठात् *मौदपैप्पलादम् । एषामुदयप्रतिष्ठे कश्चिदनुवदति । चरणस्येति किम् । उदगु*स्तार्किकवैयाकरणाः । स्थेण इति किम् । अगमन्कठकालापाः । अद्यतन्यामिति किम् । अतिष्ठन्कठकालापाः । अनुवाद इति किम् । उदगुः कठकालापाः । अप्रसिद्धं कथयति । अन्ये तु स्थेणोद्यतनीप्रयोगादनु पश्चाद्वादश्चरणद्वन्द्वस्येत्यनुवादस्तत्रेच्छन्ति । तन्मते इह न भवति । कठकालापाः प्रत्यष्ठुः कठकौथुमा उदगुः ॥ १३८ ॥ *अक्लीबेऽध्वर्युक्रतोः ॥ ३ । १ । १३९ ॥ अध्वर्यवो यजुर्वेदविदः । तेषां वेदोऽप्यध्वर्युः । तत्र विहिताः क्रतवोऽश्वमेधादयोऽध्वर्युक्रतवः । ससोमको यागः क्रतु' । अध्वर्युक्रतुवाचिनां शब्दानां स्वैर्द्वन्द्व एक एकार्थो भवति अक्लीबे क्लीबे चेदध्वर्युक्रतुवाची शब्दो न भवति । अर्कश्चाश्वमे-

---

ततस्तस्याङ्गशब्देन तत्पुरुष । तत्र समाहारद्वन्द्वे समाहारस्याङ्गायोगात्समाहारिण एवाङ्गसबन्धो विज्ञायते । इतरेतरयोगे तु द्वन्द्वस्यावयवप्रधानत्वात्स्पष्ट एवावयवस्याङ्गसबन्ध ॥—शङ्खशाङ्खिकादिसमुदायेति । शङ्खादीनि वाद्यानि शाङ्खिकादयो वादका । 'भीवृधि'–इति रेफे डया च भेरी । यदा मृदङ्गश्च शङ्खपटह चेति क्रियते तदा समाहारो न भवति । तूर्याङ्गसमुदायत्वात् ॥—निराकरणार्थमिति । पाणिपणवावित्यत्र 'अप्राणिपश्वादे' इति प्राप्तस्य पाणिपणवयोरप्राणित्वेन स्वत्वात् ॥—चरणस्य—॥—प्रमाणान्तरप्रतिपन्नेति । शब्दात्प्रमाणादन्यत्प्रत्यक्षादि प्रमाणान्तर तेन प्रतिपन्नम् ॥—शंसितानुशंसनमिति । शसन शस त करोति णिच् । तत क्त । अन्यथा 'वेटोऽपत' इतीटो निषेध । शसितस्य कथितस्यानुशसनम् ॥—अनुकरणमिति । पूर्वकृतस्य पश्चात्सादृश्येन वा करण क्रिया ॥—अनुकथने कर्तृत्वेनेति । गौणमुख्ययोरिति न्यायात् मुख्यवृत्त्या कर्ता लभ्यते । तेन यदा भावे प्रयोगस्तदा प्रत्यष्ठायि कठकालापाभ्यामिति भवति न तु समाहार ॥—कठकालापमिति । कठेन कलापिना प्रोक्त वेद विदन्त्यधीयते वा 'तेन प्रोक्ते' 'तद्वेत्त्यधीते' इत्यण् । तस्य प्रोक्तार्थस्य 'कठादिभ्य' इति चाणो लुप् । कालाप इत्यत्र तु 'कलापिकुथुमि'—इति इनो लुपि वृद्धौ कालाप ॥—कठकौथुममिति । कुथे 'उद्वटिकुल्यलि'–इति कित्युमे कुथुम वमी ततो मत्वर्थीये इनि 'तेन प्रोक्ते' इत्यायणविधि ॥—मौदपैप्पलादमिति । मुदस्य मोदस्य वा पिप्पलादस्य चापत्यम् 'ऋषिवृष्ण्यण्' मौदेन पैप्पलादेन च प्रोक्तमिति वाक्ये ईयस्य बाधको 'मौदादिभ्य' इत्यण् 'तद्वेत्त्यधीते' इत्यण् तस्य 'प्रोक्तात्' इति लुप् ॥—तार्किकेति । तर्केण चरति तर्क' प्रयोजनमस्येति वा 'चरति' 'प्रयोजनम्'—इति वा इकणि । यद्वा तर्क वेत्त्यधीते वा 'न्यायादेरिकण्' । पर तदा न्यायादिष्वपठितोऽपि दृश्य ॥—अक्लीबे-॥

धश्वार्काश्वमेधम् । *साह्नातिरात्रम् । पौण्डरीकातिरात्रम् । अर्कादयः पुंलिङ्गाः । अक्लीबग्रहणं किम् । *गवामयनादित्यानामयने । *प्रसज्यप्रतिषेधः किम् । राजसूयं च वाजपेयं च राजसूयवाजपेये । इमौ क्रतू पुंलिङ्गावपि स्त इति पर्युदासाश्रयणेऽत्रापि स्यात् । अध्वर्युग्रहणं किम् । इषुवज्रौ । उद्भिद्भिलभिदौ । इष्वादयः सामवेदे विहिताः । *क्रतुग्रहणं किम् । *दर्शपौर्णमासौ ॥ १३९ ॥ *निकटपाठस्य ॥ ३ । १ । १४० ॥ निकटः पाठो येषामध्येतॄणां ते निकटपाठाः, तद्वाचिनां द्वन्द्व एकार्थो भवति स्वैः । पदमधीते पदकः । एवं क्रमकः । पदकश्च क्रमकश्च पदकक्रमकम् । पदानन्तरं क्रमस्य पाठात् *पाठयोर्निकटत्वम् । एवं क्रममधीते क्रमकः । वृत्तिमधीते *वार्तिकः । क्रमकश्च वार्तिकश्च क्रमकवार्तिकम् । चर्चां पारयतीति चर्चापारः । स च खण्डिकश्च चर्चापारखण्डिकम् । निकटेति किम् । *याज्ञिकवैयाकरणौ । पाठेति किम् । *पितापुत्रौ ॥ १४० ॥ *नित्यवैरस्य ॥ ३ । १ । १४१ ॥ *नित्यमनिमित्तं जातिनिबद्धं वैरं येषां तद्वाचिनां शब्दानां स्वैर्द्वन्द्व एकार्थो भवति । अहिनकुलम् । मार्जारमूषिकम् । ब्राह्मणश्रमणम् । श्वावराहम् । 'शुनः' (३-२-९०) इति दीर्घत्वम् । श्वचण्डालम् । *पशुविकल्पः पक्षिविक-

---

**–साह्नातिरात्रमिति** । सह अह्ना वर्त्तते पृषोदरादित्वात् अह्नादेशे 'नाह्नि' इति नित्य सादेश । यद्वा अह्ना समूह 'अश्वादिभ्योऽञ्' अनीनाद्यह्नोऽनोऽस्य लुप् । सहाह्नेन भवति ते साह्नश्चातिरात्रश्च ॥ पुण्डरीको देवताऽस्य 'देवता' इत्यण् ॥**–गवामयनादित्यानामयने** इति । आमीनातीति अच् । अमण् 'कुशुवालि'-इत्ययो वा । आमय करोति 'णिज्बहुलम्'-। आमय्यन्ते सरोगीक्रियन्तेऽनेनानटि । ततो गवामामयन गवामयनम् । अयनशब्दे वा उत्तरपदे बाहुलकात् षष्ठ्या अलुप् । तथा अदितेरपत्यानि आदित्या देवा न आमयन शेष पूर्ववत् ॥**–प्रसज्यप्रतिषेध किमिति** । क्लीबे चेदध्वर्युक्रतुवाची न भवतीति य प्रसज्यप्रतिषेधो वृत्तो दर्शित स किमर्थ । प्रसज्यो हि नञ् क्रियया सबध्यते । इतरस्तु नाम्ना ॥ राज्ञा सोतव्यो राजा वाऽत्र सूयते इति 'सचाय्यकुण्डपाय्य'–इति निपात । वज्गत इति वाज । कर्मणि घञ् । क्ते सेट्त्वाद्कत्वाभाव । पातव्य पेयो वाजो यस्य ॥**–क्रतुग्रहणं किमिति** । अत्र क्रतुशब्दस्य ससोमके यागे रूढत्वाद्दर्शपौर्णमासयोश्चानाम्नातसोमपानत्वायजुर्वेदोपदिष्टत्वेऽपि क्रतुशब्देनानभिधानान्नैकवद्भाव इत्यर्थ । यत्र त्वसोमपानेऽपि क्रतुशब्द श्रूयते दर्शपौर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विज इति स प्रशसार्थ औपचारिक इत्यदोष ॥**–दर्शपौर्णमासाविति** । दृश्यतेऽनेन त्यजनाद् घञि दर्शोऽमावास्या उपचाराद्दर्शभवो यागोऽपि दर्श । पूर्णो माश्चन्द्रोऽस्या पूर्णमासोऽण् ङी । पौर्णमास्या याग 'भर्तुसध्यादेरण्' ॥**–निकट–**॥ इह पाठशब्दो भावे कर्मणि वा । भावपक्षे पाठशब्देन पाठक्रियोच्यते तेन पाठक्रियया निकटव्यपदेशानामित्यर्थो जायते । निकटत्व च कालरूप प्रसिद्धमेव । यथा सूत्राध्ययनसमाप्तिसमनन्तरमेव धातव पठ्यन्ते । तथैव पदान्यधीत्य क्रमोऽधीयते इत्यर्थो भवति । यदा कर्मणि पठ्यते इति पाठो ग्रन्थो द्रव्यात्मा उच्यते । स च ग्रन्थ एकोऽपि पदक्रमसहिताभेदकल्पनया भिन्नस्ततश्च पठ्यमानैकग्रन्थनिमित्त कालरूपतो नैकट्य सभवति । तेन–**पाठयोरिति** पाठक्रिययो । पठ्यमानग्रन्थयोर्वेत्यर्थ । वृत्तिमधीते न्यायादित्वादिकणि–**वार्त्तिकः** ॥ यज्ञमधीते 'याज्ञिकौक्थिक'–इति निपात –**याज्ञिकः** ॥ अत्र पाठक्रिये पठितव्यौ च ग्रन्थौ अत्यन्त सनिकृष्टौ इति तन्निमित्तौ शब्दावपीति ॥**–पितापुत्राविति** । अत्र निकटा जननक्रिया न तु पाठ इति ॥**–नित्यवै–** ॥ 'गवाश्वादि' इत्यत्र नित्यवैराभावपक्षे श्वचण्डालमित्युक्त तच्च परमते ज्ञातव्यम् । केचिदश्वयुधुर्नानयोर्नित्य वैर किंतु कृतक वैरम् । तथाहि–चण्डाल श्वान हन्ति प्रथम तत श्वा पृष्ठतो धावति इति कृतक वैरम् ॥–**नित्यमनिमित्तमिति** । जातेरन्यदर्थादि निमित्त न विद्यत इत्यर्थ ॥**–पशुविकल्प** इति । पशुद्वन्द्वविकल्पो महाजोरभ्रमित्यादौ सावकाशोऽय तु नित्यविधिर्ब्राह्मणश्रमणमित्यादौ अश्वमहिष काकोलूक

त्वश्च परत्वादनेन बाध्यते । अश्वमहिषम् । काकोलूकम् । नित्यवैरस्येति किम् । *कौरवपाण्डवाः । कौरवपाण्डवम् । देवासुराः । देवासुरम् । नैषां निर्निमित्तं वैरमपि तु राज्यापहारादिकृतम् । अन्ये तु *वैर एवाभिधेये समाहारमिच्छन्ति । *श्वावराहम् मार्जारमूषिकम् वैरमिति । वैरिषु तु यथाप्राप्तम् । दक्षिणाद्ग्रामगमनं प्रशस्तं श्वशृगालयोर्विद्यते लोक *औत्पत्तिको विरोधो यथा मार्जारमूषिकयोः ॥ १४१ ॥ *नदीदेशपुरां विलिङ्गानाम् ॥ ३ । १ । १४२ ॥ विविधं लिङ्गं येषां तेषां नदीदेशपुराभिधायिनां शब्दानां स्वैर्द्वन्द्व एक एकार्थो भवति । उध्यश्च इरावती च *उध्येरावति । गङ्गा च शोणश्च गङ्गाशोणम् । *विपाट् च स्त्री चक्रभिच्च नपुंसकम् विपाट्चक्रभिदम् । देश, कुरवश्च कुरुक्षेत्रं च *कुरुकुरुक्षेत्रम् । *कुरुकुरुजाङ्गलम् । वरेन्द्रीमगधम् । पुरम्, मथुरापाटलिपुत्रम् । *काञ्चीकन्यकुब्जम् । *पुरां देशत्वात्तद्ग्रहणेनैव सिद्धे पूर्ग्रहणं ग्रामनिषेधार्थम् । जाम्ववश्च शालूकिनी च *जाम्ववशालूकिन्यौ ग्रामौ । स्वैरित्येव । *शौर्यं च नगरं केतवता च ग्रामः शौर्यकेतवते । पूर्ग्रामसंभेदेऽपीच्छत्यन्यः । शौर्यकेतवतम् । पूर्देशसंभेदेऽपीत्यपरे । *श्रावस्तीमध्यदेशम् । मगधश्रावस्ति । नदीदेशपुरामिति किम् । कुक्कुटमयूर्यौ । देशग्रहणेन चेह जनपदानां ग्रहणम् पृथग्नदीपूर्ग्रहणात् । तेनेह न भवति । गौरी च कैलासश्च *गौरीकैलासौ पर्वतौ । कैलासश्च गन्धमादनं च कैलासगन्धमादने पर्वतौ । विलिङ्गानामिति किम् । गङ्गायमुने । मद्रकेकयाः । मथुरातक्षशिले ॥ १४२ ॥ *पात्र्यशूद्रस्य ॥ ३ । १ । १४३ ॥ यैर्भुक्ते *पात्रं *संस्कारेण *शुध्यति ते पात्रमर्हन्तीति पात्र्याः । पात्र्यशूद्रवाचिनां द्वंद्व एक एकार्थो भवति स्वैः । *तक्षायस्कारम् । रजकतन्तुवायम् । कुलालवरुटम् । *किष्कि-

---

मित्यत्र तूभयप्राप्तौ परत्वादयमेव विधिरित्यर्थ ॥—कौरवपाण्डवा इति । कुरुशब्दादिदमर्थे उत्सादयञ् । पाण्डुशब्दादपत्ये शिवादण् ॥—वैर एवेति । तचोपचारात् श्वावराहाङ्कित वैरमपि श्वावराहम् ॥—श्वावराहं वैरमिति । श्वा वराहश्चेत्युपचाराद्वैरे वर्त्तते ॥—औत्पत्तिक इत्यत्र उत्पत्तो भव अध्यात्मादित्वादिकणि । जन्मप्रभव इत्यर्थ ॥—नदीदे—॥—उध्येरावतीति । उज्झत्युदक 'कुप्यभिद्य –इति । ह्रदस्यापि नदीत्व स्तोकविशेषात् यद्वा नदनद्योरभेदोपचारोऽत्र । यतो नदीविशेषो नद । इरा विद्यतेऽस्यामिति 'नद्या मतु ॥—विपाट् च स्त्रीति । विशिष्ट पाशितवती क्विपि पृषोदरादित्वाद्विपाडिति न्यास । तेन यत्र विप्राडिति दृश्यते तत्र साधु ॥—कुरुकुरुक्षेत्रमिति । कुरोरपत्यानि 'दुनादि '–इति ञ्यस्य 'बहुष्वस्त्रियाम्' इति लुपि कुरवस्ततश्च कुरूणा क्षेत्रम् ॥—एव कुरुजाङ्गलमिति ॥—काञ्चीकन्यकुब्जमिति । कन्या कुब्जा यत्र बाहुलकात् ह्रस्वत्वम् ॥—पुरां देशत्वादिति । पुरामप्युपभोगस्थानत्वस्य देशलक्षणस्य विद्यमानत्वात्किमर्थं पूर्ग्रहणम् । उपलक्षण चेद नदीग्रहणमपि ग्रामनिषेधार्थमेव ॥—जाम्ववशालूकिन्याविति । जम्बूनामदूरभवो 'निवासादूरभवे —इत्यण् । शालूकान्युत्पलादिमूलान्यत्र सन्ति ॥—शौर्यं चेति । शूराणा निवास । 'सुपथ्यादेर्ञ्य ' । श्राक् पाके इति श्रान्तीति श्रास्तेषा वस्तिरिव सङ्कीर्णत्वात् श्रावस्ती । 'इतोऽक्त्यर्थात्' ङी नगरी ॥—गौरीकैलासाविति । गौरी नाम पर्वत । क जल इला भूमिस्तयोरास्ते अच् । के जले लासो लसनमस्येति वा केलास स्फटिकस्तस्यायम् ॥—पात्र्यशू-॥-भुक्ते पात्रमिति । पात्र कांस्यादि ॥—संस्कारेण भस्मोद्वर्त्तनादिना 'शुध्यति भस्मना कांस्य ताम्रमम्लेन शुध्यति ' इत्यादिमन्वादिशास्त्रोक्तेन लोकप्रसिद्धेनैव ॥—शुद्ध्यति विशिष्टलोकानामुपभोग्य भवति ॥—तक्षायस्कारमिति । पात्र्यशूद्रा द्विप्रकारा आर्यावर्त्तान्तर्गतास्तद्बाह्याश्च । अत्रापि आर्यावर्त्तजाना तै स्वत्वम् तद्बाह्याना बाह्यैरिति द्रष्टव्यम् । उभयेऽपि क्रमेण तक्षायस्कारमित्यादिना दर्श्यन्ते । किं किं दधातीति वर्चस्कादित्वात्—किष्किन्ध । किष्किन्धादयश्चत्वार आर्यावर्त्ताद्बाह्या

न्यगान्धिकम् । शकयवनम् । पात्र्येति किम् । *जनंगमबुकसाः । शूद्रग्रहणं किम् । ब्राह्मणक्षत्रियविशः ॥ १४३ ॥ *गवाश्वादिः ॥ ३ । १ । १४४ ॥ गवाश्वा-दिर्द्वन्द्व एक एकार्थो भवति । गौश्चाश्वश्च गवाश्वम् । गवाविकम् । गवैडकम् । अजाविकम् । अजैडकम् । *कुब्जवामनम् । कुब्जकैरातम् । कुब्जकैरातकम् । पुत्रपौत्र-म् । *नित्यवैराभावपक्षे श्वचण्डालम् । स्त्रीकुमारम् । दासीमाणवकम् । *शाटीपच्छिकम् । *उष्ट्रखरम् । *उष्ट्रशशम् । *मूत्रशकृत् । मूत्रपुरीषम् । यकृन्मेदः । मां-सशोणितम् । *दर्भशरम् । दर्भपूतीकम् । *अर्जुनपुरुषम् । तृणोलुपम् । *कुडीकुडम् । दासीदासम् । भागवतीभागवतम् । त्रिष्वेतेषु 'पुरुषः स्त्रिया' (३-१-१२६) इत्येकशेषो न भवति निपातनात् । गवाश्वादिषु यथोच्चारितरूपग्रहणादन्यत्र नायं विधिः । गोऽश्वौ । गोऽश्वम् । गोअश्वौ । गोअश्वम् । गोऽविकौ । गोऽविकम् । गवेलकौ । *गवेलकम् । पशुविभाषैव भवति ॥ १४४ ॥ *न दधिपयआदिः ॥ ३ । १ । १४५ ॥ दधिपयःप्रभृतिद्वन्द्व एक एकार्थो न भवति । दधि च *पयश्च दधिपयसी । सर्पिर्मधुनी । *मधुसर्पिषी । हरिवामनौ । *ब्रह्मप्रजापती । शिववैश्रवणौ । *स्कन्दविशाखौ । *परिजाकौशिकौ । प्रवर्ग्योपसदौ । आद्यवसा-ने । सूर्याचन्द्रमसौ । मित्रावरुणौ । अग्नीषोमौ । सोमारुद्रौ । नारदपर्वतौ । *खण्डामर्कौ । *नरनारायणौ । रामलक्ष्मणौ । *भीमार्जुनौ । कम्बलाश्वतरौ । *माता-

---

म्लेच्छभेदा ॥—जनगमबुकसा इति । न छितेभ्यसैवर्णिका स्वं पात्रे प्रयच्छन्ति । तैर्भुक्ते पात्रस्य संस्कारेणाशुद्धेरिति ॥—गवा—॥ गवाश्वादिष्वजैडक यावत् 'पशुन्यञ्जनानाम्' इति विकल्पे नित्यार्थ पाठ । सर्वेषु च 'स्वरे वानक्षे' इत्यवादेश ॥—कुब्जवामनमित्यादिषु चतुर्षु न्यायसिद्धे समाहारेतरेतरयोगे नित्यार्थ । श्वचण्डालमिति नित्यवैरे 'नित्यवैरस्य' इत्येव सिद्धमित्याह —नित्यवैराभावपक्षे इति । ये चाण्डालपाटके श्वानो वसन्ति तेऽत्र विवक्षिता । न च तेषा चण्डालै सह वैरमस्ति । यद्वा चण्डाला श्वान घ्नन्ति अतोऽसौ धावति इति नित्यवैराभाव । पच्यते 'तुदिमदि'—इति छकि गौरादित्वाड्डया स्त्रार्थिके के च पच्छिका छाजिकेति प्रसिद्धि ॥—शाटीपच्छिकमिति । उपाध्यायस्त्वाह सततमनिमित्तवैरिणा कथमिव द्वद्वो वैर नाभिदध्यात् । न विवक्षितामति चेत् वस्तुस्थितस्य कीदृश्यविवक्षा । तस्यामहिनकुलावित्यादयोऽप्रयोगा एव स्यु । उत्पलोद्योतकरादयो व्याचक्षते श्वचण्डालमित्यस्य पाठ शुना चण्डालाना च नित्यवैरित्वाभावात् । न हि यथा श्वपचा श्वानश्च नित्यवैरिणस्तथा श्वानश्च चण्डालाश्च । अत्र जातित्वात् 'अप्राणि'—इति सिद्धावपि व्यक्तिपरनोदनायामपि यथा स्यादित्यस्य पाठ ॥—उष्ट्रखरमिति । पशुत्वाद्विकल्पे प्राप्ते ॥—उष्ट्रशशमित्यत्र त्वितरेतरयोगे प्राप्ते । पशुविकल्पश्च नास्ति शशस्याग्राम्यत्वात् ॥—मूत्रशकृदिति । धर्मार्थादित्वात् शकृन्मूत्रमपि । मूत्रशकृदित्यादौ व्यक्तिपरनोदनायाम् 'अप्राणि'—इति न सिध्यतीत्युपादानम् ॥—दर्भशरमिति । दर्भादीना तृणजातित्वादप्राणीति नित्यविधे पश्वादित्वात्तृणविकल्पे बाधके प्राप्तेऽयं विधि ॥—अर्जुनपुरुषमिति । पुरुषशब्दोऽत्र तृणविशेषवाची । पैरुष इत्यपि दृश्यते तच्चिन्त्यम् ॥—गवेलकमिति । 'स्वरे वानक्षे' —कुडी । कुडत् बाल्ये च । 'नाम्युपान्त्य' इति के 'वयस्यनन्त्ये' इति ङ्यां कुडी बाला । कुडो बाल । कुटीकुटमिति उद्योतकरेण टौ निरीक्षणीय ॥—प्रजापतिः ॥—स्कन्दविशाखाविति । इत्यवादेशेऽपि लत्वस्य विकृतत्वात्त्वसहति ॥—न दधि—॥—मधुसर्पिषीति । धर्मार्थादित्वात्पर्यायेण पूर्वनिपात । ब्रह्मणो व्यतिरिक्तश्चतुर्दशभेदभिन्न अत्र स्कन्दस्य मित्रमपि स्कन्द । यद्वा स्कन्दशब्देन विनायक उच्यते ॥—परिजाकौशिकाविति । परिजा नदी कौशिकश्च पर्वत । कुशोऽस्यास्ति कुशिकस्यापत्य विदाद्यञि । अत्र नदीदेशोति स्वैरिति व्यावृत्त्या नित्यसमाहारो निवार्यते । न्यायेन वैकल्पिकस्तु प्राप्त एव स चानेन निषिध्यते । खण्डश्च मर्कश्च—खण्डामर्कौ देवताविशेषौ । 'वेदसह'—इत्यात्वम् ॥ तौ हि पूर्वं दैत्यौ सन्तो

पितरौ । पितापुत्रौ । *श्रद्धामेधे । शुक्लकृष्णे । इध्मावर्हिषी । पूर्वस्य दीर्घत्वं निपातनात् । ऋक्सामे । वाङ्मनसे । अत्र 'ऋक्सामर्ग्यजुष'-(७-३-९७) इत्यादिनाकारान्तत्वम् । *याज्यानुवाक्ये । *दीक्षातपसी । *श्रद्धातपसो । *श्रुततपसो । मेधातपसी । अध्ययनतपसी । उलूखलमुशले । अत्रान्येषु त्रिषु व्यञ्जनविकल्पे शुक्लकृष्णे इत्यत्र 'विरोधिनामद्रव्याणाम्' ( ३-१-१३० ) इति विकल्पे इध्मावर्हिषी, उलूखलमुशले इत्यत्र 'अप्राणिपश्वादेः' ( ३-१-१३६ ) इति नित्यमेकत्वे शेषेषु च 'चार्थे द्वन्द्वः सहोक्तौ' ( ३-१-११७ ) इत्युभयस्मिन् प्राप्ते प्रतिषेधोऽयम् । चण्डालमृतपादयश्चात्र द्रष्टव्याः ॥ १४५ ॥ *संख्याने ॥ ३ । १ । १४६ ॥ *इयत्तापरिच्छेदः संख्यानम् । *वर्तिपदार्थानां संख्याने गम्यमाने द्वन्द्व एकार्थो न भवति । *दश गोमहिषाः । एतावन्ति दधिघृतानि । बहवः प्लक्षन्यग्रोधाः । दश हस्त्यश्वाः । शतं यूकालिक्षाः । तावन्ति वदरामलकानि । *बहवः पाणिपादाः । कति मार्दङ्गिकपाणविकाः । उदगुर्दशेमे कठकालापाः । द्वौ वर्कोश्वमेधौ । द्वादश पदकक्रमकाः । द्वौ गङ्गाशोणौ । पञ्च तक्षायस्काराः । इयन्तो गवाश्वाः ॥ १४६ ॥ *वान्तिके ॥ ३ । १ । १४७ ॥ वर्तिपदार्थानां संख्यानस्यान्तिके *समीपे गम्यमाने द्वन्द्व एकार्थो वा भवति । उपगता दश यस्य येषां वा *उपदशं गोमहिषम् । उपदशा गोमहिषाः । उपदशाय गोमहिषाय । उपदशेभ्यो गोमहिषेभ्यः । द्वन्द्वार्थस्यैकत्वात्तदनुप्रयोगस्यापि बहुव्रीहेरेकवचनान्तत्वम् । यदा तु दशानां समीपमुपदशमित्यव्ययीभावस्तदोपदशं गोमहिषायेति भवति

---

राक्षसौ अशास्वन्तो । ततस्तद्वधार्थं याग आरब्ध । षण्डामर्काभ्यां यजेत अनया आहुत्या असुरो देवमध्यस्थितो यज्ञहुतस्य ग्रहणाय आगतो ततो देवो जातामिति ॥—नरनारायणाविति । नरशब्दान्नडादायनणि नारायण । नृणातेर्बाहुलकात्कर्मणि घञि नारा आपः ता अयन यस्येति वा नारायण. । यन्मनु 'आपो नारा इति प्रोक्ता आपो वै नरसूनव' ॥ ता यदस्यायन पूर्वं तेन नारायण. स्मृत' ॥ अर्च्यत्वान्नारायणस्य पूर्वनिपाते प्राप्ते राजदन्तादित्वान्नरस्य पूर्वनिपात ॥—भीमार्जुनाविति । 'धर्मार्थादिषु द्वन्द्वे' इति भीमस्य पूर्वनिपात ॥—मातापितराविति । मातुरर्च्यत्वात्पूर्वनिपातः । यदाह—'सहस्र तु पितुर्माता गौरवेणातिरिच्यते । तत्कि पितृगिरा रामो विधत्ते रेणुकावधम्' ॥१॥ तत्र विचार्यम् । यदुक्त 'यत्कृत परशुरामेण पितुर्वचनगौरवात् ॥ तदन्येस्तु न कर्त्तव्य न देवचरित चरेत्' ॥ १ ॥—श्रद्धामेधे इति । यद्यपि इमावद्रव्यशब्दो तथाप्युपचाराद्द्रव्ये वर्त्तेते तदा व्यक्तिविवक्षाया 'चार्थे द्वन्द्व. सहोक्तो' इत्यनेन प्राप्ते ॥—याज्यानुवाक्ये इति । 'याज्या दानचि' इज्यते इति याज्या २ च अनुवाक्या चेति वाक्य कार्यम् ॥—श्रुततपसी इति । धर्मार्थादित्वात्तप श्रुते इत्यपि ॥—दीक्षातपसी इति । अर्चितत्वाद्दीक्षाया पूर्वनिपात । एव—श्रद्धातपसी इत्यापि ॥—संख्याने ॥—इयत्तापरिच्छेद इति । इयता भाव इयत्ता तस्या परिच्छेदो दश द्वादश चेति सख्यापदैरवधारणम् ॥—वर्त्तिपदार्थानामिति । वर्त्तन वर्त्त समासार्थ सोऽस्ति येषा पूर्वपदोत्तरपदार्थाना ते वर्त्तिनस्तदभिधायकानि पदानि वर्त्तिपदानि पूर्वपदोत्तरपदस्वभावानि तेषामर्था अभिधेयरूपास्तेषामिति ॥—दश गोमहिषा इति । अत्र गोमहिषलक्षणस्य वर्त्तिपदार्थस्य दशेत्यनेन दशसख्याया परिच्छेद क्रियते ॥—बहवः पाणिपादा इति । ननु दशेत्यादिना बह्वर्थेन गोमहिषमित्याद्येकार्थस्य सामानाधिकरण्याभावात् दशेत्यादिसख्याशब्दप्रयोगादेव एकवद्भावस्यायोगादेकवद्भावो न भविष्यतीति किमर्थमस्यारम्भ इति । उच्यते । अस्यानारम्भे विहितैकवद्भावप्रयोगे दशादिसख्यापदप्रयोगायोगात्तत्प्रयोगे विहितैकवद्भावस्यानिवर्त्तनादस्यारम्भ इत्यदोष ॥—वान्तिके ॥—अन्तिके समीप इति । अन्तिकशब्दस्य समीपार्थत्वात्समीपस्य समीपिसापेक्षत्वात् सख्यानमेव विज्ञायत इति ॥—उपदशं गोमहिषमिति । यद्यप्युपदश गोमहिषमित्येकवद्भावे समाहारस्य द्वन्द्वाभिधेयस्यैकत्वात् साक्षात्तत्सख्यान

॥ १४७ ॥ **प्रथमोक्तं प्राक्** ॥ ३ । १ । १४८ ॥ अत्र समासप्रकरणे प्रथमया प्रथमान्तेन पदेन यदुक्तं निर्दिष्टं तत्प्राक् पूर्वं निपतति । आसन्नदशाः । सप्तगङ्गम् । ऊरीकृत्य । कष्टश्रितः । शङ्कुलाखण्डः । यूपदारु । वृकभयम् । राजपुरुषः । अक्षशौण्डः । नीलोत्पलम् । पञ्चाम्राः । वाक्यवत्समासेऽप्यनियमः स्यादिति वचनम् ॥ १४८ ॥ *राजदन्तादिषु ॥ ३ । १ । १४९ ॥ राजदन्त इत्यादिषु समासेष्वप्राप्तपूर्वनिपातं प्राक् निपतति । *दन्तानां राजा राजदन्तः। 'षष्ठी'-( ३-१-७६ ) इति प्रथमोक्तत्वेन दन्तशब्दस्य पूर्वनिपाते प्राप्ते राजशब्दस्यानेन पूर्वनिपातः । पूर्वं वासितं पश्चाल्लिप्तं लिप्तवासितम् । अत्र 'पूर्वकाल'-( ३-१-९७ ) इति प्रथमोक्तत्वेन वासितस्य पूर्वनिपाते प्राप्ते लिप्तस्य पूर्वनिपातः । एवं सिक्तसंमृष्टं, *भृष्टलुञ्चितं, *नग्नमुषितम्, अवक्लिन्नपक्वम्, *अर्पितोतम्, *उप्तगाढम् । ऋणेऽधमोऽधमर्णः । अत्र 'सप्तमी'-( ३-१-८८ ) इति प्रथमोक्तत्वेन पूर्वनिपातेऽधमस्य पूर्वनिपातः । एवमुत्तमर्णः । उलूखलं च मुशलं च उलूखलमुशले । अत्र मुशलशब्दस्याल्पस्वरत्वात् पूर्वनिपाते प्राप्ते उलूखलशब्दस्यानेन पूर्वनिपातः । एवं *तन्दुलकिण्वम् । *चित्ररथबाह्लीकौ । स्नातकराजानौ । *उशीरबीजशिञ्जास्थम् । *आरट्टायनिचान्धनि । अधरोष्ठम् । *वैकारिमतगाजवाजम् । *गौपालिधानपूलासम् । कुरण्डस्थलपूलासम् । दारजारौ । *दारशब्द एकवचनान्तोऽप्यस्ति अत्र नियमे । दारार्थम् । अत्र तु स्वराद्यदन्तत्वादर्थशब्दस्य पूर्वनिपाते प्राप्ते दारशब्दस्य पूर्वनिपातः । *एवं विष्वक्सेनार्जुनौ । शूद्रार्यौ । विषये-

---

नास्ति तथापि तदवयवद्वारेण भवतीति ॥—**राजद**—॥—**दन्तानां राजेति** । तेन राजा च दन्ताश्चेति द्वन्द्वे राजदन्ता दन्तराजान इत्यव्यवस्थैव ॥—**भृष्टलुञ्चितमिति** । ऋतृषमृष इति सूत्रे क्त्वापि क्त्विविकल्प केचिदिच्छन्ति तन्मतेनेदम् । यद्वा ण्यन्तस्य लुञ्चा करोति णिच् । तत क्त ॥—**नग्नमुषितमिति** । न वस्ते इति 'दिननग्न'—इति साधु । यद्वा न नियन्ते स्म श्रियश्छन्दासि वा यस्य स नग्न । अथवा ओलजैड् स्थाने ओलजैड् केचित्पठन्ति तन्मतेन क्तप्रत्यये नग्न ॥—**अर्पितोतमिति** । ऊयैड् इत्यस्य ऊतम् । वेग् इत्यस्य उत वा ॥—**उप्तगाढमिति**। उप्यते स्मास्मिन्निति क्तप्रत्यय ॥—**तन्दुलकिण्वमिति** । क्विणि सौत्र' 'निघृपीध्यृषि —इति क्विति वप्रत्यये क्विण्व सुराबीजम् ॥—**चित्ररथा** देवविशेष । चित्रश्चासौ रथश्च वा ॥ वेद समाप्य 'स्नातादिद्रसमाप्तौ' इति कार्यम् ॥—**उशीरबीजशिञ्जास्थमिति** । उशीर बीजमस्मिन् उशीरवद्बीजमस्मिन्निति वा । उशीरबीजो नाम पर्वत । शिञ्जाया तिष्ठतीति शिञ्जास्थ पर्वतस्ततो द्वन्द्व ॥—**आरट्टायनिचान्धनीति**। आरटतीति 'प्रकाफ'—इति 'लटिखटि'—इति बहुवचनाद्वा निपातस्तस्यापत्यम् 'अवृद्धाद्दोर्नवा' इत्यायनिञ् । 'चमन्तीति' क्विप् दीर्घ । चामा धनमस्य स चान्धन । यद्वा चम्यते 'शकितकि'–इति ये चम्य धनमस्य पृषोदरादि । यद्वा चमतीति 'विदनगगन' चाधन तस्यापत्यमत इञ् ततो द्वन्द्वः॥—**वैकारिमतगाजवाजमिति** । कर एव कार विविध कारो यस्य विकारयतीति वा विकार तस्यापत्यमिञ् । वैकारिमत । गज मदने च । गजतीत्यच् गजस्तस्याय गाज गाजयतीति वा अच् गाज । वजव्रजण् गाज वाजयतीत्यण् गाजवाज पुरुषविशेषस्ततो द्वन्द्व ॥—**गौपालिधानपूलासमिति** । गोपालस्यापत्यमिति गोपालि । स धीयतेऽस्मिन् गौपालिधानम् । पूलान् स्यति पूलास ॥—**कुरण्डस्थलपूलासमिति** । कुरत् 'पिचण्डैरण्ड' इति कुरण्ड । कुरण्डाना स्थल कुरण्डस्थलम्। यद्वा कुत्सिता रण्डा यत्र बहुव्रीहि । तत्र देशे तिष्ठतीति कुरण्डस्थल । द्वौ नरो तच पूलासश्च वा ॥ ननु दारशब्दस्य बहुर्थत्वेन द्विवचनानुपपत्तिरित्याह—**दारशब्द** इत्यादि । यथा धर्मप्रजासपत्ने दारे नान्य दार कुर्वीत ॥—**एव विष्वक्सेनार्जुनाविति** । यथा दारार्थशब्दस्य पूर्वनिपात प्राप्त एवमिहापि विष्वक्सेनस्य वासुदेवरूपतया अर्जुनादर्च्यत्वेऽपि तदर्च्यत्वेऽपि तदविवक्षाया पूर्वनिपातार्थं पाठ ।

न्द्रियाणि । गवाश्वम् । अवन्त्यश्मकाः । *चित्रास्वाती *माणविके । केशश्मश्रु । अत्रेदुदन्तत्वेन स्वातिश्मश्रुशब्दयोः पूर्वनिपाते प्राप्ते चित्राकेशयोः पूर्वनिपातः । एवं भार्यापती । पुत्रपतो । स्वस्रुपतो । *जंपता । दंपती । गणपाठाज्जायाशब्दस्य जंभावो दंभावश्च वा निपात्यते । पुत्रपशू । *शिरोजानु । *शिरोविजु । नरनारायणौ । अर्च्यत्वान्नारायणस्य पूर्वनिपाते प्राप्ते नरस्य पूर्वनिपातः । एवं सोमरुद्रौ । कुबेरकेशवौ । काकमयूरौ । उमामहेश्वरौ । पाण्डुधृतराष्ट्रौ । ज्येष्ठभ्रातृत्वेन धृतराष्ट्रस्य पूर्वनिपाते प्राप्ते पाण्डोः पूर्वनिपातः । एवं विष्णुवासवौ । बहुवचनमाकृतिगणार्थम् । तेन क्वचिद्विकल्पः । पुरुषोत्तमः । उत्तमपुरुषः । मध्यगृहम् । गृहमध्यम् । *अधरबिम्बम् । बिम्बाधरः । *ओष्ठबिम्बम् । बिम्बोष्ठः । इत्यादि ॥ १४९ ॥ ***विशेषणसर्वादिसंख्यं बहुव्रीहौ ॥ ३ । १ ॥ १५० ॥** विशेषणवाचि सर्वादि संख्यावाचि च नाम बहुव्रीहौ पूर्वं निपतति । विशेषणम् । चित्रगुः । शबलगुः । *कण्ठेकालः । उरसिलोमा । उदरेमणिः । सर्वादि । सर्वं शुक्रमस्य *सर्वशुक्रः । सर्वकृष्णः । सर्वसारः । सर्वगुरुः । सर्वलघुः । *विश्वदेवः । *विश्वामित्रः । उभयचेतनः । संख्या । द्वौ कृष्णौ गुणावस्य *द्विकृष्णः । द्विशुक्लः । * चतुर्ह्रस्वः । *पञ्चदीर्घः । *षडुन्नतः । *सप्तरक्तः । उन्नतरक्तशब्दौ न क्तान्तावपि तु गुणशब्दौ । तेन स्पर्धे क्तलक्षणः पूर्वनिपातो न भवति । *शब्दस्पर्धे परत्वात्सर्वादिसंख्ययोः संख्याया एव *पूर्वनिपातः । त्र्यन्यः । द्वियुष्मत्कः । द्व्यस्मत्कः । *उभयोस्तु सर्वादित्वे स्पर्धे परस्य पूर्वनिपातः । *द्व्यन्यः । बहुव्री-

---

वासुदेवादन्यो वा विष्वक्सेन' ॥ अश्मानोऽत्र सन्ति 'कोऽश्मादे' । अवन्तयश्चाश्मकाश्च ॥—**चित्रास्वाती** इति । अत्र चित्रास्वातिशब्दात् 'चन्द्रयुक्तात्काले'-इत्यणो 'लुप्त्वप्रयुक्ते' इति लुपि तततत्र जातेति 'भर्तुसध्यादेरण्' इत्यणि 'चित्रारेवती'-इति 'बहुलानुराधा'-इति च लुपि चित्रा च स्वातिश्च ॥—**माणविके** इत्यनुप्रयोगेण नाय नक्षत्रद्वन्द्व इति दर्शयति । तत्र हि 'भर्तुतुल्यस्वरम्' इत्येव सिद्धम् ॥—**जंपती** इति न चाल्पस्वरत्वादेव जम्दमो' पूर्वनिपातो भविष्यतीति वाच्यम् । पत्युरर्चितत्वात्पूर्वनिपातः स्यादित्यदोष ॥—**शिरोजानु** इति । भाष्यकारेण जानुशिरसी इत्यपि । कैय्यटेन न विचारित इत्युपेक्षित ॥—**शिरोबिजु** इति । विजायते 'केवयु'—इत्यादिना डित्युप्रत्यये विजु कृकाटिकाप्रदेश ॥—**अधरबिम्बमिति** । अधरो बिम्बमिव 'उपमेय व्याघ्राद्ये' समास ॥—**ओष्ठबिम्बमिति** । ओष्ठो बिम्बमिव ॥—**विशेषण**—॥-**कण्ठेकाल** इति । कण्ठे स्थिता कण्ठेस्थिता अलुग् स । तत कण्ठेस्थिता काला यस्य । अथवा कण्ठे काला अस्येति वैयधिकरण्येऽपि समासः । आधेय प्रत्याधारो विशेषणत्व भजत इति वैयाकरणा ॥—**सर्वशुक्र** इति । अत्र शुक्रशब्देन सर्वार्थस्य विशेष्यमाणत्वाद्विशेषणत्वाभावेऽपि सर्वादित्वात्सर्वशब्दस्य पूर्वनिपात ॥—**विश्वदेव** इति । विश्वे देवा यस्येति विश्वदेव । द्रव्यशब्देन विशेष्येणैव भवितव्यमिति नियमाभावात् सत्यपि द्रव्यशब्दत्वे देवा इति विश्वेषा विशेषणमिति सर्वादित्वाद्विश्वशब्दस्य पूर्वप्रयोग । एव-**विश्वामित्र** इत्यत्रापि ॥—**द्विकृष्ण** इति । अत्र द्व्यायर्थस्य विशेष्यत्वेन विवक्षितत्वात्सख्यात्वादेव द्व्यादिशब्दस्य पूर्वप्रयोग ॥—**चतुर्ह्रस्व** इति । 'ह्रस्वानि चत्वारि तु लिङ्गपृष्ठ ग्रीवा च जङ्घे च हितप्रदानि' ॥—**पञ्चदीर्घ** इति । 'हनु लोचनबाहुनासिकास्तनयोरन्तरमत्र पञ्चमम्' ॥—**षडुन्नत** इति 'वक्षोष्ठकक्षानखनासिकास्य कृकाटिका चेति षडुन्नतानि' ॥—**सप्तरक्त** इति । 'नेत्रान्तपादकरतात्वधरौष्ठजिह्वा रक्ता नखा सप्त सुखप्रदानि' ॥—**उन्नतरक्तेति** । उत्पूर्वनमतेरञ्जेश्च 'पुतपित्त'-इति निपात. ॥—**शब्दस्पर्धे परत्वादिति** । अस्याय तात्पर्यार्थ अल्पस्वरत्वात्सख्याशब्दस्य पूर्वप्रयोगे प्राप्ते लक्षणातिक्रमेण 'विशेषणसर्वादिसख्यम्'-इति निर्देश शब्दपरस्पर्धार्थ तेन तत्र सख्येति सर्वादीति चोभयो. प्रसङ्गे द्वयोरन्यत्र सावकाशत्वात् परत्वात् सख्येति पूर्वप्रयोगो भवति ॥—**पूर्वनिपात** इति । सामान्येऽपि सर्वादित्वे पाठापेक्षया य पर सर्वादिस्तेन भाव्यम् ॥—**उभयोस्त्विति** । सख्याशब्दस्य सर्वादित्वेऽसर्वादित्वे च पूर्वनिपात एव सूत्रे परत्रोपादानात ॥—**द्व्यन्य** इति ।

हाविति किम् । उपसर्वम् । ' प्रथमोक्तम् '-( ३-१-१४८ ) इत्यनियमे प्राप्ते नियमार्थं वचनम् । *सर्वादिसंख्ययोर्विशेषणत्वेऽपि पृथग्वचनं शब्दपरस्पर्धार्थम् ॥ १५० ॥ क्ताः ॥ ३ । १ । १५१ ॥ क्तप्रत्ययान्तं सर्वं बहुव्रीहौ पूर्वं निपतति । कृत: कटोऽनेन कृतकटः । भिक्षितभिक्षः । क्तान्तस्य विशेषणत्वात्पूर्वेण सिध्यति विशेष्यार्थं तु वचनम् । कटे कृतमनेन कृतकटः । स्पर्धे परत्वार्थं च । कृतभव्यकटः । कृतविश्वः । केचित्तु सर्वादिभ्यः क्तान्तस्य पूर्वं निपातं नेच्छन्ति । कृतचत्वारः । बहुवचनं व्याप्त्यर्थम् । तेन क्तमिय इसत्र परेणापि स्पर्धे क्तान्तस्यैव पूर्वनिपातः ॥ १५१ ॥ *जातिकालसुखादेर्नवा ॥ ३ । १ । १५२ ॥ जातिवाचिभ्यः कालवाचिभ्यः सुखादिभ्यश्च शब्दरूपेभ्यो बहुव्रीहौ समासे क्तान्तं वा पूर्वं निपतति । जाति, *शाङ्गरजग्धी । जग्धशाङ्गरा । *पलाण्डुभक्षिती । भक्षितपलाण्डुः । पाणिगृहीती । गृहीतपाणिः । कटकृतः । कृतकटः । व्यक्तिविवक्षायां तु ' क्ताः ' ( ३-१-१५१ ) इत्यनेन कृतकट इत्याद्येव भवति । *अन्ये तु आकृतिव्यङ्ग्यजातिवाचिन एव क्तान्तपूर्वनिपातमिच्छन्ति । तेनेह न भवति । *आहूतब्राह्मणः । सेवितक्षत्रियः । तर्पितदाक्षिः । प्रीणितकठः । काल, मासयाता । यातमासा । संवत्सरयाता । यातसंवत्सरा । मासगतः । गतमासः । सुखादयो दश क्यन्विधौ निर्दिष्टाः । सुखयाता । यातसुखा । हीनदुःखा । दुःखहीना । तृप्तोत्पन्ना । उत्पन्नतृप्ता । सुख दुःख तृप्र कृच्छ्र अस्र अलीक करुण कृपण सोढ प्रतीप इति सुखादिः ॥ १५२ ॥ *आहिताग्न्यादिषु ॥ ३ । १ । १५३ ॥ आहिताग्न्यादिषु बहुव्रीहिसमासेषु क्तान्तं वा पूर्वं निपतति । आहितोऽग्निर्येन स आहिताग्निः । अग्न्याहितः । जातपुत्रः । पुत्रजातः । जातदन्तः । दन्तजातः । जातश्मश्रुः । श्मश्रुजातः । पीततैलः । तैलपीतः । पीतघृतः । घृतपीतः । पीतमद्यः । मद्यपीतः । पीतविषः । विषपीतः । ऊढभार्यः । भार्योढः । गतार्थः । अर्थगतः । छिन्नशीर्षः । शीर्षच्छिन्नः । बहुवचनमाकृतिगणार्थम् । तेन पीतदधिः दधिपीत इत्यादयोऽपि भवन्ति ॥ १५३ ॥ *प्रहरणात् ॥ ३ । १ । १५४ ॥ प्रहरणवाचिनः शब्दात् क्तान्तं बहुव्रीहौ वा पूर्वं निपतति । उद्यतोऽसिरनेन उद्यतासिः । अस्युद्यतः । कलितप्रहरणः । प्रहरणकलितः । उत्खातखड्गः । खड्गो-

सर्वादिगणपाठापेक्षयापि यातीत्युपात्तमन्यथा सख्यापेक्षयापि याति । यदि वा क्ष्मन्य इति सख्यास्पर्द्धेन सिद्धावपि गणपाठस्पर्धोऽप्यस्तीति ज्ञापनार्थमुदाहरणदिक्त्वेनोदाहृतम् । गणपाठस्पर्धस्य तूदाहरण सख्याविमुक्त दक्षिणपूर्वा दिगित्यादि द्रष्टव्यम् ॥—सर्वादिसख्ययोरिति । ननु सर्वादिसख्याभ्यामारब्धेऽपि बहुव्रीहावन्यपदार्थस्यैव प्राधान्यात्तस्य च विशेष्यत्वादेतयोर्विशेषणत्वाद्विशेषणग्रहणेनैव भविष्यति किमर्थ पृथगुपादानमित्याशङ्का ॥—जातिका—॥—शाङ्गरजग्धीति । शाङ्गरस्य वृक्षस्य विकार फल ' दोरप्राणिन ' इति मयट् । ' फले लुक् ' । शाङ्गर जग्धमनया । ' अनाच्छाद '-इति डी ॥—पलाण्डुभक्षिती इति । पलाण्डु भक्षितमनया ॥—अन्ये त्वाकृतीति । आकृति सस्थान तया व्यङ्ग्या या जातिर्गोत्वादिस्तद्वाचिन इत्यर्थ ॥—आहूतब्राह्मण इति । ब्राह्मणादिजातिरुपदेशादिगम्या न तु सस्थानव्यङ्ग्या ॥—आहिता—॥ नन्वग्निशब्दस्य जातिवाचित्वात् । ' जातिकाल '-इत्यनेनैव सिद्धयति किमत्र पाठ । सत्यम् । व्यक्तिविवक्षायामपि यथा स्यादित्येवमर्थम् ॥—प्रहरणात् ॥ नन्वस्यादीना जातिशब्दत्वात् ' जातिकाल '-इत्यनेनैव क्तान्तस पूर्वनिपात सिद्ध किमनेन । सत्यम् । व्यक्तिविवक्षायामपि यथा स्यादित्यर्थम् ॥ जातिकालेत्यनेन पृथग्योग उत्तरार्थस्तेनोत्तरत्र चशब्देन

त्वातः । आकृष्टधन्वा । धनुराकृष्टः । उद्यतमुशलः । मुशलोद्यतः ॥ १५४ ॥ ***न सप्तमीन्द्वादिभ्यश्च ॥ ३ । १ । १५५ ॥** नवुपादानाद्वेति न संबध्यते । इन्द्वादेः प्रहरणवाचिनश्च शब्दात्पूर्वं सप्तम्यन्तं न निपतति बहुव्रीहौ । इन्दुर्मौलौ यस्य इन्दुमौलिः । चन्द्रमौलिः । शशिशेखरः । पद्मनाभः । *ऊर्णनाभः । पद्म-हस्तः । शंखपाणिः । दर्भपवित्रपाणिः । पद्मपाणिः । इत्यादि । प्रहरणात्, असिः पाणावस्य असिपाणिः । दण्डपाणिः । चक्रपाणिः । शूलपाणिः । शार्ङ्गपाणिः । धनुष्पाणिः । धनुर्हस्तः । पाशहस्तः । वज्रहस्तः । वज्रपाणिः । बहुलाधिकारात् पाणिवज्रः हस्तवज्र इत्यत्र पूर्वनिपातोऽपि । बहुवचनं प्रयोगानुसारणार्थम् । एवमुत्तरत्रापि ॥ १५५ ॥ **गड्वादिभ्यः ॥ ३ । १ । १५६ ॥** वेत्यनुवर्तते । गड्वादिभ्यः शब्देभ्यो बहुव्रीहौ सप्तम्यन्तं वा पूर्वं निपतति । गण्डुकण्ठः । कण्ठे-गडुः । एवं शिरसिगडुः । गडुशिराः । शिरस्यरुः । अरुःशिराः । मध्येगुरुः । गुरुमध्यः । अन्तेगुरुः । गुर्वन्तः । व्यवस्थितविभाषया वहेगडुरित्येव भवति ॥१५६॥ ***प्रियः ॥ ३ । १ । १५७ ॥** प्रियशब्दो बहुव्रीहौ समासे पूर्वं वा निपतति । *प्रियगडुः । गडुप्रियः । प्रियविश्वः । विश्वप्रियः । *प्रियचत्वाः । चतुष्प्रियः ॥ १५७ ॥ ***कडाराः कर्मधारये ॥ ३ । १ । १५८ ॥** कडारादयः शब्दाः कर्मधारये समासे वा पूर्वं निपतन्ति । कडारजैमिनिः । *जैमिनिकडारः । *गडुलगालवः । गालवगडुलः । काणद्रोणः । द्रोणकाणः । खञ्जमौञ्जायनः । मौञ्जायनखञ्जः । कुण्टवात्स्यः । वात्स्यकुण्टः । खेलदाक्षिः । दाक्षिखेलः । खोडक-होडः । कहोडखोडः । खलतिखारपायणः । खारपायणखलतिः । गौरगौतमः । गौतमगौरः । पिङ्गलमाण्डव्यः । माण्डव्यपिङ्गलः । वृद्धमनुः । मनुवृद्धः । भिक्षुक-दाक्षिः । दाक्षिभिक्षुकः । वठरच्छान्दसः । छान्दसवठरः । तनुतृणविन्दुः । तृणविन्दुतनुः । कूटप्लाक्षिः । प्लाक्षिकूटः । कडारादीनां गुणवचनत्वात् द्रव्यशब्दान्नित्यं पूर्वनिपाते प्राप्ते पक्षे परनिपातार्थं वचनम् । यदा तु द्वावपि गुणशब्दौ तत्र निर्ज्ञातानिर्ज्ञाताभ्यां विशेषणविशेष्यत्वे पर्यायेण पूर्वनिपात इत्युक्तमेव । गडुलकाणः । काणगडुलः । खञ्जकुण्टः । कुण्टखञ्जः । खोडखलतिः । खलतिखोडः । गौरवृद्धः । वृद्धगौरः । पिङ्गलभिक्षुकः । भिक्षुकपिङ्गलः । वठरतनुः । तनुवठरः । बहुवच-नमाकृतिगणार्थम् । तेन नटबधिरादयोऽपि द्रष्टव्याः ॥ १५८ ॥ ***धर्मार्थादिषु द्वन्द्वे ॥ १ । ३ । १५९ ॥** धर्मार्थादौ द्वन्द्वे समासे प्राप्तपूर्वनिपातं वा पूर्वं नि-पतति । धर्मार्थौ । अर्थधर्मौ । कामार्थौ । अर्थकामौ । शब्दार्थौ । अर्थशब्दौ । आद्यन्तौ । अन्तादी । अग्नेन्द्रौ । इन्द्राग्नी । चन्द्रार्कौ । अर्कचन्द्रौ । अश्वत्थकपित्थौ । कपित्थाश्वत्थौ । इत्यादिषु स्वराद्यदन्तत्वान्नित्यं पूर्वनिपाते प्राप्ते । *सर्पिर्मधुनी । मधुसर्पिषी । गुणवृद्धी । वृद्धिगुणौ । दीर्घलघू । लघुदीर्घौ । चन्द्रराहू । राहुचन्द्रौ ।

प्रहरणादित्याकृष्यते ॥—**न सप्तमी**—॥—**ऊर्णनाभ** इति । 'ङयापो बहुलम्'–इति ह्रस्व । सर्वेषु उष्ट्रमुखादित्वात्समास ॥—**प्रियः** ॥—**प्रियगुड** इति । अत्र प्रियशब्दस्य गुडादेर्वा विशेषणत्वेन नित्यमेकस्य पूर्वनिपातप्राप्तावुभयत्र प्रियशब्दस्य पाक्षिको निपात ॥—**प्रियचत्वा** इति । अत्र चतु शब्दस्य सख्यात्वान्नित्य पूर्वनिपात प्राप्तः ॥—**कडारा**—॥—**जैमिनिकडार** इति । जेमन्तीति 'विभुजेमामिन' जेमिन । यद्वा जेमे 'विपिनाजिनादय' इतीने जेमिनस्तस्यापत्यम् ऋषित्वेऽपि बाह्वादेराकृतिगणत्वादिञि जैमिनि ॥—**गडुलगालव** इति । गडुरस्यास्ति सिध्मादित्वात् लः । गडोरपत्यम् । ऋण्णण् । ऋफिडादित्वाल. ॥—**धर्मार्थादि**—॥—**सर्पिर्मधुनी** इति । 'न दधि'—इति न समाहार ॥—**तपःश्रुते** इति । दधिपयआदित्वान्नित्यमत्रैकार्थत्वाभाव । अत्रार्च्यत्वात्त-

इत्यादिष्विदुदन्तत्वान्नित्यं पूर्वनिपाते प्राप्ते । *तपःश्रुते । श्रुततपसी । द्रोणभीष्मौ । भीष्मद्रोणौ । इत्यादिष्वर्च्यत्वान्नित्यं पूर्वनिपाते प्राप्ते । *शकृन्मूत्रम् । मूत्रशकृ-
त् । कुशकाशम् । काशकुशम् । करभरासभौ । रासभकरभौ । इत्यादिषु लघ्वक्षरत्वात्पूर्वनिपाते प्राप्ते । समीरणाग्नी । अग्निसमीरणौ । आदित्यचन्द्रौ । चन्द्रादि-
त्यौ । पाणिनीय*रौढीयाः । रौढीयपाणिनीयाः । *जित्याविपूयविनीयाः । विपूयविनीयजित्याः । इत्यादिष्वल्पस्वरत्वान्नित्यं पूर्वनिपाते प्राप्ते । ब्राह्मणक्षत्रियवि-
ट्शूद्राः । शूद्रविट्क्षत्रियविप्राः । भीमसेनार्जुनौ । अर्जुनभीमसेनौ । देवापिशंतनू । शंतनुदेवापी । इति वर्णभ्रातृलक्षणेऽनुपूर्व्ये निपाते प्राप्ते विकल्पार्थं वचनम् । बहु-
वचनमाकृतिगणार्थम् । तेन वसन्तग्रीष्मौ । ग्रीष्मवसन्तौ । शुक्रशुची । शुचिशुक्रौ इत्यादयोऽपि द्रष्टव्याः ॥ १५९ ॥ *लघ्वक्षरासखीदुत्स्वराद्यदल्पस्वरा-
र्च्यमेकम् ॥ ३ । १ । १६० ॥ पृथग्योगाद्वेति निवृत्तम् । लघ्वक्षरं सखिवर्जितेकारोकारान्तं स्वराद्यकारान्तमल्पस्वरमर्च्यत्राचि च शब्दरूपं द्वंद्वे समासे पूर्वं
निपतति यत्र चानेकसम्भवस्तत्रैकमेव । लघ्वक्षर, *शरसीर्यम् । तिलमाषम् । शैलौ मलयदर्दुरौ । असखीदुत्, अग्नीषोमौ । अग्निधूमम् । पतिसुतौ । वायुतोयम् ।
स्वादुतिक्तौ । सखिवर्जनं किम् । सुतसखायौ । सखिसुतौ । *'ग्रहणवता नाम्ना न तदन्तविधिः' इति तदन्तस्य प्रतिषेधो न भवति । बहुसखिवहुधनौ । स्पर्धे पर-
मेव । व्रीहियवौ । असखीदुदित्यैकपद्यादिदुतोः स्पर्धे कामचारः । पतिवसू । वसुपती । स्वराद्यत् । *अस्त्रशस्त्रम् । इन्द्रचन्द्रौ । उष्ट्रमेषम् । अश्वरथम् । ऋश्यरोहि-
तौ । स्पर्धे परमेव । उष्ट्रखरम् । उष्ट्रशशम् । इन्द्रवायू । इन्द्राविष्णू । अर्केन्दू । अल्पस्वर, प्लक्षन्यग्रोधौ । स्पर्धे परमेव । धवखदिरौ । वागग्नी । वाग्वायू । वागर्थौ ।
धवाश्वकर्णौ । अर्च्य । *श्रद्धामेधे । स्पर्धे परम् । *दीक्षातपसी । श्रद्धातपसी । मेधातपसी । *मातापितरौ । वधूवरौ । रुद्राग्नी । रुद्रेन्द्रौ । वासुदेवार्जुनौ । लघ्वादि-
ग्रहणं किम् । कुक्कुटमयूरौ । मयूरकुक्कुटौ । *अध्येतृवेदितारौ । वेदित्रध्येतारौ । अश्ववृक्षौ । वृक्षाश्वौ । एकमिति किम् । युगपदनेकस्य पूर्वनिपाते प्राप्ते *एकस्यैव य-
थाप्राप्तं पूर्वं निपातः *शेषाणां तु कामचार इति प्रदर्शनार्थम् । *शंखदुन्दुभिवीणाः । वीणादुन्दुभिशंखाः । शंखवीणादुन्दुभयः । अश्वरथेन्द्राः । इन्द्राश्वरथाः ।

पोभीष्मयोर्नित्य पूर्वनिपात प्राप्त इति न्यासः ॥—शकृन्मूत्रमिति । अत्रैकवद्भावो 'गवाश्वादि' इत्यनेन ॥—रौढीया इति । रूढस्यापत्य रौढिस्तस्य छात्रा 'दोरीय ।'[2] तेन नटवधीति नटस्यापि
जातित्वम् अत्रिलिङ्गा च यान्विता आजन्मेति अनेन कुमारादय इव नट कुलमिति ॥—विपूयविनीयजित्या इति । यादृश एव गणे दृष्टस्तादृश एव प्रयोग न तु त्रिनीयविपूयजित्यादय जित्याशब्दस्यैव पूर्वपर-
भाव ॥—लघ्वक्षरा—॥ अत्र अक्षरशब्देन स्वरोऽभिधीयते ॥—शरसीर्यमिति पाठ । शरशीर्षमिति तु पाठे 'प्राणितूर्य'—इति स्वैरभावात्समाहाराप्राप्ति ॥—ग्रहणवतेति । सत्यपि 'विशेषणम-
न्त' इति न्याय इति शेष ॥—अस्त्रशस्त्रमिति । अत्र अस्त्रशब्देन सामान्या धनुरुच्यते शस्त्रशब्देन सामान्यमायुध तत 'समानामर्थेन'—इति नैकशेष । अप्राणिजातित्वादेकवद्भाव ॥—श्रद्धामेधे
इति । अर्थग्राहिणी श्रद्धा शब्दग्राहिणी मेधा । श्रद्धामूलत्वादभिप्रेतार्थसिद्धेरर्च्यत्वम् ॥—दीक्षातपसी इत्यादिषु तपसो लघ्वक्षरत्वेऽपि दीक्षाश्रद्धामेधाना बहूपकारकत्वान्मूलभूतत्वाच्चार्चितत्वात् परत्वा-
त्पूर्वनिपात ॥—मातापितराविति । अनुभूतगर्भादिक्लेशत्वात्पितृतो मातार्च्या हेता । एव स्त्रीप्रधानत्वाद्विवाहस्य वराद्वधूरिति ॥ एव रुद्रादावर्च्यत्वमूह्यम् ॥—अध्येतृवेदिताराविति । अत्र स्वरादि-
त्वमस्ति न त्वदन्तत्वमित्यनियम ॥—एकस्यैव यथाप्राप्तमिति । दुन्दुभिश इकारादिदन्तात्परत्वादल्पस्वरत्वात् शङ्खवीणाशब्दयोर्युगपत्पूर्वनिपातप्राप्तावेकग्रहणादेकस्यैव क्रमेण पूर्वनिपात ॥—शेषाणां

इन्द्ररथाश्वाः । दुन्दुभिशंखवीणा इति रथेन्द्राश्वा इति च न भवति । कथं धनपतिरामकेशवाः *मृदङ्गशंखपणवाः । रामशंखशब्दयोरुत्तराभ्यां समासे सति पूर्वेण समासः । द्वन्द्व इत्येव । विस्पष्टं पटुः विस्पष्टपटुः ॥ १६० ॥ ***मासवर्णभ्रात्रनुपूर्वम्** ॥ ३ । १ । १६१ ॥ मासवाचि वर्णवाचि भ्रातृवाचि च शब्दरूपं द्वन्द्वे समासे *अनुपूर्वं यद्यत्पूर्वं तत्पूर्वं निपतति। अनुग्रहणादेकमिति निवृत्तम् । मास, *फाल्गुनचैत्रौ। वैशाखज्येष्ठौ। वर्ण,*ब्राह्मणक्षत्रियौ।*क्षत्रियवैश्यौ । *वैश्यशूद्रौ । ब्राह्मणक्षत्रियविशः । *ब्राह्मणक्षत्रियविट्शूद्राः । भ्रातृ, *बलदेववासुदेवौ । *युधिष्ठिरभीमार्जुना ॥१६१॥ ***भर्तुतुल्यस्वरम्** ॥ ३ । १ । १६२ ॥ भं नक्षत्रम् । तद्वाचि ऋतुवाचि च तुल्यसंख्यस्वरं द्वंद्वे समासेऽनुपूर्वं निपतति। भ, कृत्तिकारोहिण्यः । अश्विनीभरणीकृत्तिकाः। *मृगशिरःपुनर्वसु । ऋतुः, *हेमन्तशिशिरौ । शिशिरवसन्तौ । हेमन्तशिशिरवसन्ताः । तुल्यस्वरमिति किम् । आर्द्रामृगशिरसी । पुष्यपुनर्वसू । तिष्यपुनर्वसू । ग्रीष्मवसन्तौ ॥ १६२ ॥ ***संख्या**

---

त्विति । शङ्खवीणाशब्दयोरिव युगपत् पूर्वनिपातप्राप्तौ एकस्यैव पूर्वनिपात । दुन्दुभिरथादीना तु कामचार इत्यर्थ । एकस्यैवेत्युक्तेऽपि दुन्दुभिरथादीना न पूर्वनिपात । शब्दस्पर्द्धपरत्वात् । तथाहि- दुन्दुभिशब्दोऽसखीदुत् शखवीणाशब्दौ तु अल्पस्वराविति । एवमश्वरथेन्द्रा इत्यत्रापि रथशब्दो लघ्वक्षर । अश्वेन्द्रशब्दौ तु स्वराद्यदन्तौ परौ इति तयो पूर्वमेव पूर्वनिपातो न तु रथस्य ॥—**शङ्खदुन्दुभिवीणा** इति । 'प्राणितूर्याङ्गाणाम्' इति बहुवचन क्वचिदेकत्वविधेरनित्यार्थम् । तेनात्रैकत्वाभाव । माङ्गल्यवाचकत्वेन शङ्खशब्दस्य विवक्षतत्वात्स्वैरित्यभावाद्वा । यत तूर्याङ्गस्य तूर्याङ्गेण स्वत्व भवतीति । एव **मृदङ्गशङ्खपणवा** इति । अथवा शङ्खदुन्दुभिवीणा मृदङ्गशङ्खपणवा इति शङ्खादीना तूर्याङ्गत्वादेकवद्भाव कुतो न भवतीति । उच्यते । अत्र शङ्खादिशब्देन शङ्खादिसमुदायस्याभिधानात्तस्य चाऽतूर्याङ्गत्वादजातित्वाच्च नैकवद्भाव । उत्पलस्त्वाह तूर्याङ्गता शङ्खादिवादकाना न तु शङ्खादीनामिति तूर्याङ्गत्वादेकवद्भावो य प्राप्नोति स नाशङ्कनीय । अत एव 'प्राणितूर्याङ्गाणाम्' इत्यत्र पूर्वैर्मार्दङ्गिकपाणविक वीणावादकपरिवादकमित्येवोदाहियते । न तु भेरीमृदङ्गमित्यादि । तदा तु प्राणिरूप तूर्याङ्ग प्राणितूर्याङ्गमिति विग्रह. ॥—**मासव**—॥ मासश्च वर्णश्च भ्राता चेति समाहारद्वंद्व ॥—**अनुपूर्वमिति** । पदार्थानतिवृत्तौ 'योग्यतावीप्सा'-इति अव्ययीभाव ॥—**फाल्गुनचैत्राविति** । फल्गुनशब्दाद्गौरादित्वात् ङया फल्गुनीभिश्चन्द्रयुक्ताभिर्युक्ता पौर्णमासी 'चन्द्रयुक्तात्'—इत्यण् । अप्रयुक्तकालद्वारेण लुप् प्राप्नोति । चैत्रीकार्त्तिकीफाल्गुनीति निर्देशात् लुप् न भवति। तत फाल्गुनी पौर्णमासी अस्येति विग्रहे 'सास्य पौर्णमासी' इत्यण् । चित्राभिश्चन्द्रयुक्ताभिर्युक्ता पौर्णमासी चैत्री चन्द्रयुक्तादण् । तदनु चैत्री पौर्णमासी अस्य 'सास्य पौर्णमासी' इत्यण् । 'अवर्णेवर्णस्य' इति ङीलुप् । विशाखाभिर्युक्ता पौर्णमासी । अण् । चैत्रीकार्त्तिकीत्युपलक्षणात् लुनत्रापि न भवति ॥—**ब्राह्मणक्षत्रियाविति** । अत्रानियम प्राप्त ॥—**क्षत्रियवैश्याविति**यत्र त्वल्पस्वरत्वाद्वैश्यशब्दस्य पूर्वनिपात प्राप्त ॥—**वैश्यशूद्रा**वित्यत्राप्यनियम ॥—**ब्राह्मणक्षत्रियविट्शूद्रा** इत्यत्र त्वल्पस्वरत्वाद्विश पूर्वनिपाते प्राप्तेऽनेन ब्राह्मणादीनामनुपूर्वं पूर्वनिपात । अत्र आनुपूर्व्यं च जन्मकृत यदाह 'मुखतो ब्राह्मणा जाता बाहुभ्या क्षत्रिया स्मृता ॥ ऊरुभ्या तु विश प्रोक्ता पद्भ्या शूद्रो अजायत ॥ न चात्रार्च्यत्वात्पूर्वनिपात सिध्यतीति वाच्यम् । निन्दितस्यापि ब्राह्मणादे सम्भवादिति ॥—**बलदेववासुदेवाविति** । भ्रातृद्वंद्वेऽनियमे सति इष्टपूर्वनिपाते वा प्राप्ते ॥—**युधिष्ठिरभीमार्जुना** इति । अत्रापि जन्मकृतमेवानुपूर्व्यम् ॥—**भर्तुतु**—॥ अत्रापि नक्षत्राणामृतूना चानुपूर्व्यं लोकप्रसिद्धैव वेदितव्यम् ॥— **मृगशिर:पुनर्वसु** इति । अत्रोदन्तत्वात्पुनर्वसुशब्दस्य पूर्वनिपात. प्राप्त ॥—**हेमन्तशिशिराविति** । लघ्वक्षरत्वाद्धि शिशिरशब्दस्य प्राप्त ॥— **संख्या स**—॥ द्वित्राश्च चत्वारश्च चतुर्द्वित्रा । द्वित्रेति समुदाय इति न सख्याकार्यम् । एव चतुष्पञ्चपा ।

समासे ॥ ३ । १ । १६३ ॥ सर्वा संख्या प्रथमोक्तेत्यनियमे आनुपूर्व्याः संख्यायाः पूर्वनिपातार्थं वचनम् । समासमात्रे संख्यावाचिनामनुपूर्वं पूर्वं निपतति । बहुव्रीहौ, द्वौ वा त्रयो वा द्वित्राः । एवं त्रिचतुराः । पञ्चषाः । द्विर्दश *द्विदशाः । *एवं त्रिदशाः । द्विगौ, द्वे शते समाहृते द्विशती । त्रिशती । द्वन्द्वे, एकश्च दश चैकादश । एवं द्वादश । त्रयोदश । सप्ततिशतम् । अशीतिशतम् । नवतिशतम् ॥१६३॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ तृतीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥ ॥ असंख्या अपि चिरं दुःसहा वैरिभूभृताम् ॥ चण्डाश्चामुण्डराजस्य प्रतापशिखिनः कणाः ॥ १ ॥

# द्वितीयः पादः

*परस्परान्योन्येतरेतरस्याम् स्यादेर्वाऽपुंसि ॥ ३ । २ । १ ॥ परस्परादीनामपुंसि स्त्रियां नपुंसके च प्रयुज्यमानानां संबन्धिनः स्यादेः स्थाने आमादेशो वा भवति । *इमे सख्यौ परस्परां भोजयतः । परस्परं भोजयतः । *आभिः सखीभिः परस्परां भोज्यते । परस्परेण भोज्यते । इमाः सख्यः परस्परां प्रयच्छन्ति । परस्परस्मै प्रयच्छन्ति । इमाः परस्परां परस्परस्माद्वा बिभ्यति । इमाः परस्परां परस्परस्य वा स्मरन्ति । इमाः परस्परां परस्परस्मिन्वा स्निह्यन्ति । इमे कुले परस्परां भोजयतः । परस्परं भोजयत इत्यादि । इमे सख्यौ कुले वा अन्योन्यामन्योन्यं वा भोजयतः । सखीभिः कुलैर्वा अन्योन्यामन्योन्येन वा भोज्यते । इमे सख्यौ कुले वा इतरेतरामितरेतरं वा भोजयतः । सखीभिः कुलैर्वा इतरेतरामितरेतरेण वा भोज्यते । अपुंसीति किम् । इमे नराः परस्परं भोजयन्ति । नरैः परस्परेण भोज्यते ।

द्वौ च एकत्रिंशतिश्चेति कृते नियम । यदा तु एकश्च विंशतिश्च एकविंशती अप्रसिद्धा संख्या तदाऽनया सह समासे पूर्वापरभावे यथाप्राप्तम् लघ्वक्षरादिसूत्रेण ॥—द्विदशा इति । ननु द्विदशा इत्यादौ 'सुज्वार्थे'—इत्यनेन सुजर्थसमास । तत 'प्रथमोक्तं प्राक्' इत्यनेनापि सिध्यति किमेषामुपादानम् । सत्यम् । यदा दशन्शब्द सुजर्थं समस्यते तदाप्यनेनानुपूर्व्या संख्याया पूर्वनिपातो भवतीति फलम् । कोऽर्थ यदा द्विर्दशेति वाक्य तदा 'प्रथमोक्तम्'—इत्यनेनैव सिद्धम् । यदा तु दशकृत्वो द्वौ तदा फलम् ॥—एव त्रिदशा इत्यत्रापि दशकृत्वस्त्रय इति वाक्ये फलम् ॥ ॥ इत्याचार्यश्रीहेमचन्द्र० तृतीयस्याध्यायस्य प्रथम पाद समाप्त ॥ अर्हं ॥—परस्परान्योन्येतरेतरेति । समाहारद्वन्द्वात्षष्ठी । न चान्योन्यशब्दस्य स्वराद्यदन्तत्वादल्पस्वरत्वाच्च परस्परशब्दात्पूर्वं प्रयोग आशङ्कनीय । पूर्वं तस्येतरेतरशब्देन द्वन्द्वे परस्परशब्दस्यैवाल्पस्वरत्वादिति ॥—इमे सख्यौ परस्परां भोजयत इति । भुङ्क्ते परस्पर कर्त्ता त भुञ्जान सख्यौ प्रयुञ्जाते 'गतिबोध' इत्याणिकर्तु परस्परस्य कर्मत्वम् । विधानसामर्थ्यादसाम् न भवति । अन्यथा सामित्येव कुर्यात् ॥—आभि सखीभि परस्परां भोज्यत इति । अत्र करणे सहार्थे वा यदा तृतीया तदैको णिग्, कथ भुङ्क्ते जनस्त भुञ्जान सख्य प्रयुञ्जते णिग् । केन सह केन कृत्वा वा परस्परेणेति । यदा तु कर्त्तरि तृतीया तदा णिग्द्वय कथ भुङ्क्ते जन त भुञ्जान परस्पर प्रयुङ्क्ते णिग् त परस्पर भोजयन्त सख्य प्रयुञ्जते द्वितीयो णिग् तत

ज्यते। नरैः परस्परस्मै दीयते ॥ *अपरोऽर्थः परस्परादीनामपुंसि प्रयुज्यमानानां संबन्धिनः स्यादेरमादेशो वा भवति। आभिः सखीभिः कुलैर्वा परस्परं परस्परेण वा भोज्यते। स्त्रीभिः कुलैर्वा परस्परं परस्परस्मै वा दीयते ॥ अपरोऽर्थः परस्परादीनां पुंसि प्रयुज्यमानानां संबन्धिनः स्यादेरम्वा भवति। एभिर्नरैः परस्परं परस्परेण वा भोज्यते। एभिर्नरैः परस्परं परस्परस्मै वा दीयते। एवं च स्त्रीनपुंसकयोरमामौ द्वावादेशौ वा भवत इति त्रैरूप्यम्। *इमे परस्परादयः शब्दाः स्वभावादेकत्वपुंस्त्ववृत्तयः कर्मव्यतीहारविषयाः। *अस्मादेव च निर्देशात् परान्येतरशब्दानां सर्वनाम्नां द्विर्वचनादि निपात्यते ॥ १ ॥ ***अमव्ययीभावस्यातोऽपञ्चम्याः ॥ ३ । १ । २ ॥** अव्ययीभावसमासस्याकारान्तस्य संबन्धिनः स्यादेरमित्ययमादेशो भवति 'अपञ्चम्याः' पञ्चमीं च वर्जयित्वा। उपकुम्भं तिष्ठति। उपकुम्भं पश्य। उपकुम्भं देहि। उपकुम्भं स्वामी। अव्ययीभावस्येति किम्। कष्टश्रितः। तत्संबन्धिनः स्यादेरिति किम्। प्रियोपकुम्भस्तिष्ठति। प्रियोपकुम्भाय देहि। अत इति किम्। अधिस्त्रि। उपवधु। उपकर्तृ। अपञ्चम्या इति किम्। उपकुम्भात् ॥ २ ॥ **वा तृतीयायाः ॥ ३ । १ । ३ ॥** अकारान्तस्याव्ययीभावस्य संबन्धिन्यास्तृतीयायाः स्थाने वा अम् भवति। किं त उपकुम्भम्। किं त उपकुम्भेन। तत्संबन्धिन्यास्तृतीयाया इति किम्। किं नः प्रियोपकुम्भेन ॥ ३ ॥ **सप्तम्या वा ॥ ३ । १ । ४ ॥** अकारान्तस्याव्ययीभावस्य संबन्धिन्याः सप्तम्या अमादेशो भवति वा। उपकुम्भं निधेहि। उपकुम्भे निधेहि। तत्संबन्धिन्याः सप्तम्या इति किम्। प्रियोपकुम्भे निधेहि। योगविभाग उत्तरार्थः ॥ ४ ॥ ***ऋद्धनदीवंश्यस्य ॥ ३ । १ । ५ ॥** ऋद्धं समृद्धम्। यस्य समृद्धिः सुशब्दादिना द्योत्यते तदन्तस्य नद्यन्तस्य वंश्यान्तस्य चाकारान्तस्याव्ययीभावस्य सम्बन्धिन्याः सप्तम्याः स्थानेऽमादेशो भवति। ऋद्ध, मगधानां समृद्धिः सुमगधं वसति। सुमद्रं वसति। नदी, उन्मत्ता गङ्गा यस्मिन्नुन्मत्तगङ्गं देशे वसति। एवं लोहितगङ्गम्। शनैर्गङ्गम्। तूष्णींगङ्गं वसति। द्वे यमुने द्वियमुनं वसति।

---

कर्त्तरि तृतीयेति। इत्थमनुक्तस्यापि जनस्य कर्तृत्वं बोध्यमन्यथा 'गतिबोध'-इत्यादिना परस्परस्य कर्म्मत्वमेव स्यात्। अथवा प्रथमैकवचनस्यायमामभाव। तदभावपक्षे परस्परो भोज्यत इत्यादि द्रष्टव्यम्। एवमन्यत्रापि आमभावपक्षे यथायोगमितरत्सर्वादिकार्यं द्रष्टव्यम् ॥—**अपरोऽर्थ** इति। निर्देशस्य समानत्वात् प्राप्तमन्यदर्थद्वयं दर्शयति। ननु कथमिमे सख्यो परस्परा भोजयत आभि सखीभि परस्परेण भोज्यते इति द्वयोर्बहुषु चैकवचनं कथं च स्त्रियामाप्न भवति कथं चैतेषा समुदायाना सर्व्वाद्यपठिताना सर्व्वादिकार्यं सर्व्वादित्वे वा कथं न नपुंसकस्य 'पञ्चतोऽन्यादे'—इति दादेश इत्याह—**इमे परस्परादय** इत्यादि। कर्मव्यतिहार क्रियाव्यतिहार एकस्यान्यतरभोजनादिरूप स विषयो येषामिति विग्रह। पर अन्य इतर इति सर्वादिपाठात् सर्व्वादिकार्याविरोध। यद्येवं कथं द्विर्वचनादि कार्यमित्याह—**अस्मादेवे**त्यादि। नपुंसके द्वितीयैकवचनस्य अन्योन्याम् अन्योन्यमित्यादेशद्वयसद्भावे आदेशाभावे तु अन्योन्यमिति भवति ॥—**अमव्ययीभा**—॥ नन्वत्राद्ग्रहणं किमर्थं यत 'अनतो लुप्' इति सूत्रेण यत्राकारान्तत्वं तत्र लुबभावात् अनेनाम् भविष्यतीति। सत्यम्। अत्राद्ग्रहणं विना 'अनत'—इत्यत्र पर्युदासो न स्यात्ततश्च अत स्वरस्य वर्जनमित्यन्यस्मादपि स्वरान्तात् लुप् स्यात्ततो यत्र व्यञ्जनान्तत्वं स्यात्तत्राप्यमव्ययीभावस्यापञ्चम्या इति कृतेऽमादेश स्यादिति अत्ग्रहणमिति ॥ मविधानेनैव सिद्धेऽम्विधानं सम्बोधने हे उपकुम्भ इत्यादौ 'अदेत स्यमो'—इति अम्लोपार्थम् उपजरसमिति जरसादेशार्थं च ॥—**ऋद्धनदी**—॥—**भारद्वाजमि**ति। भरन्त वाजयति भरद्वाज। 'तस्येदम्' इत्यणि। विदाद्यञि तु 'यञञ.'-इति लुप् स्यात्। भारद्वाजादिषु त्रिषु पूर्व्वपदार्थप्राधान्याद्बहु-

एवं सप्तगोदावरम्। वंश्य, एकविंशतिर्भारद्वाजा वंश्याः एकविंशति*भारद्वाजं वसति। एवं त्रिपञ्चाशद्गौतमम्। त्रिकोशलम्। प्रतिपदोक्तस्यैव ग्रहणादिह न भवति। उपगङ्गे। उपयमुने। पूर्वेण तु विकल्पो भवत्येव। नित्यार्थं वचनम् ॥ ५ ॥ **अनतो लुप् ॥ ३ । १ । ६ ॥** अकारान्तं वर्जयित्वान्यस्याव्ययीभावस्य संबन्धिनः स्यादेर्लुब् भवति। स्त्रीषु अधिस्त्रि। उपवधु। उपकर्तृ। अनत इति किम्। उपकुम्भात् उपकुम्भाभ्याम् उपकुम्भेभ्यः। उपकुम्भेन। उपकुम्भे। तत्संबन्धिविज्ञानादिह न भवति। प्रियोपवधुः। अत्युपवधुः ॥ ६ ॥ **अव्ययस्य ॥ ३ । १ । ७ ॥** अव्ययसंबन्धिनः स्यादेर्लुप् भवति। स्वः, प्रातः, उच्चैः, परमोच्चैः। कृत्वा। भोजभोजम् व्रजति। ततः, तत्र, कथं, ब्राह्मणवत्, पचतितराम्, द्विधास्ति। तत्संबन्धिविज्ञानादिह न भवति। अतिस्वरः। अत्युच्चैसः। अत एव लुब्विधानादव्ययेभ्यः स्यादयोऽनुमीयन्ते। ततश्चाथो स्वस्ते गृहम् अथोच्चैर्मम (मे) गृहमित्यादौ 'सपूर्वात्प्रथमान्ताद्वा' (२-१-३२) इति विकल्पेन ते मे आदेशौ पदसंज्ञा च सिद्धा भवति ॥ ७ ॥ ***ऐकार्थ्ये ॥ ३ । २ । ८ ॥** ऐकार्थ्यम् *ऐकपद्यं तन्निमित्तस्य स्यादेर्लुप् भवति। चित्रा गावो यस्य चित्रगुः। राजपुरुषः। पुत्रमिच्छति पुत्रीयति। पुत्रकाम्यति। कुम्भं करोति कुम्भकारः। उपगोरपत्यमौपगवः। एषु चित्र अस् गो अस्, राजन् अस् पुरुष स्, पुत्र अम् य, पुत्र अम् काम्य, कुम्भ अस् कार, उपगु अस् अ इति स्थिते ऐकार्थ्ये सति तन्निमित्तस्य स्यादेर्लुप्। *अत एव च लुप्विधानात् 'नाम नाम्ना'—(३-१-१८) इत्युक्तावपि विभक्त्यन्तानामेव समासो विज्ञायते। ऐकार्थ्ये इति *निमित्तसप्तमीविज्ञानादैकार्थ्योत्तरकालस्य न भवति। चित्रगुः। ऐकार्थ्य इति किम्। चित्रा गावो यस्येत्यादिवाक्ये न भवति ॥ ८ ॥ ***न नाम्येकस्वरात् खित्युत्तरपदेऽमः ॥ ३ । २ ॥ ९ ॥** समासारम्भकमन्त्यं पदमुत्तरपदम्। *नाम्यन्तादेकस्वरात्पूर्वपदात्परस्यामः *खित्प्रत्ययान्ते उत्तरपदे परे लुप् न भवति। स्त्री स्त्रियं वात्मानं मन्यते स्त्रींमन्यः स्त्रियंमन्यः। श्रियंमन्यः। भ्रुवंमन्यः। नरंमन्यः। रायंमन्यः।

---

वचन सुप् तस्याऽम् ॥—**ऐकार्थ्ये** ॥ ऐकार्थ्यमैकपद्यमित्युक्त ततश्चैकार्थ्यमित्युक्ते ऐकपद्य कथ लभ्यते। यत ऐकार्थ्यमित्युक्ते एकार्थता एव प्राप्नोति पर्याय। उच्यते। ऐकार्थ्यहेतुत्वादैकपद्यमपि ऐकार्थ्यम्। अथवा ऐकार्थ्यमस्यास्तीति ऐकार्थ्यमैकपद्यमभिधीयते। यत्र परित्यक्तस्वार्थान्युपसर्जनीभूतस्वार्थानि वा निरथकानि अर्थान्तरसक्रमाद्व्यर्थानि भवन्ति तदैकार्थ्य तच्च ऐकपद्यमेव। अर्थान्तराभिधायित्वात् घटपटादिवत्पदान्तरमेवेति। न ह्यसावर्थ पूर्वपदेनोत्तरपदेन वाऽभिधीयते। प्रक्रियार्थ तु पृथक् पदानि दर्श्यन्ते। अत एव तदर्थस्य निवृत्तत्वाद्विभक्तेरपि स्वयमेव निवृत्तेर्लुप्शास्त्रमऽनुवादकमभिधीयते ॥—**ऐकपद्यमिति**। नन्वैकार्थ्य निमित्त कारण कथमभिधीयते यत कार्यमिति वक्तव्यम्। उच्यते। कार्ये कारणोपचारादिति प्रज्ञाकरगुप्त। कार्यमपि कारणमऽभिधीयते। यथा देवदत्तो गच्छति भोजनार्थम्। अत्र भोजन कार्यमपि कारणमस्ति यथा एवमत्रापि कार्य कारणमभिधीयते ऐकपद्ययोग्यत्वात् ऐकार्थ्यमत्रास्तीति 'अभ्रादिभ्य' इति वा ॥—**अत एव चेति**। ननु नाम्न समासविधानाद्विभक्तिरहितस्य च नामत्वात्समासे विभक्त्यभावादेव विभक्तिनिवृत्ते सिद्धत्वात्पुत्रीयत्यौपगव इत्यादिसिद्ध्यर्थं प्रत्यय इत्येव कार्यम्। नेष दोष। अत एव लुब्विधानात्समासेऽपि विभक्ते सभवं इति ॥—**निमित्तसप्तमीविज्ञानादिति**। ऐकार्थ्यस्य च पूर्वकालभाविन्येव विभक्तिर्निमित्त तस्यामैकार्थ्यस्य भावादुत्तरकालभाविन्यास्तु विभक्तेरैकार्थ्यमेव निमित्त सत्यैकपद्ये तस्या सभवादिति ॥—**न नाम्ये**-॥-**नाम्यन्तादिति** व्याख्याने नाम्यवयवयोगात्समुदायोऽपि नामी। स तु अवयवोऽन्तर्मध्ये च सभवतीति। तत सभवे व्यभिचारे च विशेषणमर्थवत् इति न्यायात् 'विशेषणमन्त' इत्यन्तत्वम् ॥—**खित्प्रत्ययान्त** इति।

गांमन्यः। नावंमन्यः। अथ श्रियमात्मानं मन्यते श्रियंमन्यं कुलमित्यत्र नपुंसकलक्षणोऽमो लोपः कस्मान्न भवति। उच्यते। श्रीशब्दस्यात्मसमानाधिकरणस्य नपुंसके वृत्त्यभावादाविष्टलिङ्गत्वाच्च न भवति। अन्ये त्वाहुः। यथा मघ्वादयः शब्दा धवयोगात् स्त्रियां वर्तमानाः स्वलिङ्गं विहाय स्त्रीलिङ्गमुपाददते तथा श्रीशब्दः कुले वर्तमानः स्वलिङ्गपरित्यागेन वर्तते ततो नपुंसकलक्षणं ह्रस्वत्वममो लुप् च भवति। श्रिमन्यं कुलमिति। *नचायं नपुंसकलक्षणस्य लोपस्यापवादः किंतु *ऐकार्थ्यलक्षणस्योत्तरपदग्रहणात्। नामिग्रहणं किम्। ज्ञंमन्यः। क्ष्मंमन्यः। वाग्मन्यः। एकस्वरादिति किम्। हरणिंमन्या। बुधंमन्या। खितीति किम्। स्त्रीमानी 'मन्याण्णिन्' (५-१-११६)॥ ९॥ ***असत्त्वे ङसेः॥ ३।२।१०॥** असत्त्वे विहितो यो ङसिः तस्योत्तरपदे लुप् न भवति। *स्तोकान्मुक्तः॥ अल्पान्मुक्तः। कृच्छ्रान्मुक्तः। कतिपयान्मुक्तः। *अन्तिकादागतः। अभ्याशादागतः। सविधादागतः। दूरादागतः। विदूरादागतः। विप्रकृष्टादागतः॥ 'क्तेनासत्त्वे' (३-१-७४) इति समासः। असत्त्वे इति किम्। स्तोकभयम्। स्तोकापेतः। उत्तरपद इत्येव। निष्क्रान्तः स्तोकान्निस्तोकः॥ १०॥ ***ब्राह्मणाच्छंसी॥ ३।२।११॥** ब्राह्मणाच्छंसीत्यत्र ङसेर्लुबभावो निपात्यते। *ब्राह्मणाद्ग्रन्थादादाय शंसति ब्राह्मणाच्छंसी। ब्राह्मणाच्छंसिनौ। ब्राह्मणाच्छंसिनः। रूढिवशादृत्विग्विशेष उच्यते। *उपात्तविषयमेव तदपादानं यथा कुसूलात्पचति। निपातनस्येष्टविषयत्वादृत्विग्विशेषादन्यत्र लुप् भवति। ब्राह्मणशंसिनी स्त्री॥ ११॥ ***ओजोऽञ्जःसहोम्भस्तमस्तपसष्टः॥ ३।१।१२॥** एभ्यः परस्य टस्तृतीयैकवचनस्योत्तरपदे परे लुब् न भवति। *ओजसाकृतम्। अञ्जसाकृतम्। सहसाकृतम्। अम्भसाकृतम्। तमसाकृतम्। तपसाकृतम्। तपसाप्राप्तम्। कथं *'सततनैशतमोवृतमन्यत इति। उत्तरपदस्य संबन्धिशब्दत्वाद्यत्र पूर्वपदीभूतस्तमःशब्दस्तत्रायं निषेधः। यत्र तु पदान्तरेण समस्तस्तत्र न प्रतिषेधः॥ ट इति किम्। ओजसो भावः ओजोभावः। तमसो नेच्छन्त्येके। तपसोऽन्ये॥ १२॥

---

नन्वत्र 'सप्तम्या आदि' इति खिदादावुत्तरपदे इति प्राप्नोति। न। खिदादेरुत्तरपदस्यासभवादिति। ननु स्त्रियमन्यइत्यत्राऽलुपि सत्या 'कर्म्मणि कृत' इति सूत्रेण षष्ठी कथ न भवति यतोऽग्रे कृत्प्रत्ययोऽस्ति। उच्यते। अत एवामोऽलुब्विधानात्षष्ठी न भवति। अन्यथा ह्यमोऽलुप् कथ विधीयत इति॥—**न चायमिति**। नन्वनेन निषेध प्राप्नोति तत्कथममोऽलुनित्युक्तमन्यैरित्याशङ्का॥—**ऐकार्थ्यलक्षणस्येति**। अयमपवाद उत्तरपदे एव प्राप्तस्य बाधक इत्यर्थ॥—**असत्वे**—॥—**स्तोकान्मुक्त** इत्यादौ 'स्तोकाल्पकृच्छ्र' इति पञ्चमी॥—**अन्तिकादागत** इत्यादौ तु 'असत्वारादर्थ'–इति पञ्चमी भवति इत्यादि स्वयमूह्यम्॥—**ब्राह्मणा**—॥—**ब्राह्मणाद्ग्रन्थात्** इति। ब्राह्मणप्रोक्तो ग्रन्थो ब्राह्मण तेन प्रोक्तेऽण्। 'अणि' इति निषेधेऽपि 'ब्रह्मण' इत्यनेन ब्राह्मस्त्वमितिवदत्रान्त्यस्वरादिलोपो न भवति। 'वेदेनब्राह्मणमत्रैव' इति निर्देशात्। अत एव निर्देशाद्वा। ब्राह्मण श्रुताविति नपुसकत्वम्। ब्राह्मणाद्ग्रन्थादादाय शसतीत्येव ब्रह्म इति वाक्ये 'व्रताभीक्ष्ण्ये' इति णिन् प्रत्यय॥—**उपात्तविषयेति**। अत्र हि आदानाङ्गे शसने शसिर्वर्त्तते इत्यादानक्रियापेक्षमपादानमित्यादि॥—**ओजोञ्ज**—॥—**ओजसाकृतमिति**। ओजसा क्रियते स्म। एषु सर्वेषु कर्त्तरि षष्ठी न भवति 'क्तयोरसदाधारे' इति निषेधात्। तृतीया तु कर्त्तरि करणे वा। सर्व्वत्र 'कारक कृता' इति समास॥ 'तपनमण्टलदीपितमेकत सततनैशतमोवृतमन्यत॥ हसितभिन्नतमिस्रचय पुर शिवमिवानुगत गजचर्मणा'॥ १॥—**सततनैशतमोवृतमिति**। निशाया भव 'निशाप्रदोषात्' इतीकणो विकल्पाद्भवेऽण्। नैश च तत् तमश्च सतत च

*पुंजनुषोऽनुजान्धे ॥ ३।२।१३ ॥ पुम्स्शब्दाज्जनुःशब्दाच्च परस्य टावचनस्य यथासंख्यमनुजशब्देऽन्धशब्दे चोत्तरपदे लुब् न भवति। पुंसा करणेनानुजः पुंसानुजः। जनुषा जन्मनान्धः जनुषान्धः। अविकृताक्षो जात्यन्ध उच्यते। अन्ये तु जतुशब्दात्तकारश्रुतेरिच्छन्ति। ट इत्येव। पुमांसमनुजाता पुमनुजा ॥ १३ ॥ *आत्मनः पूरणे ॥ ३।२।१४ ॥ आत्मनः परस्य टावचनस्य *पूरणप्रत्ययान्ते उत्तरपदे परे लुप् न भवति। *आत्मनाद्वितीयः। आत्मनातृतीयः। आत्मनाचतुर्थः। आत्मनापञ्चमः। आत्मनाषष्ठः। आत्मनैकादशः। पूर्वादित्वात्समासः। कथं 'जनार्दनस्त्वात्मचतुर्थ एवेति। आत्मा चतुर्थोऽस्येति *बहुव्रीहिः ॥१४॥ *मनसश्चाज्ञायिनि ॥ ३।२।१५ ॥ मनःशब्दादात्मशब्दाच्च परस्य टावचनस्याज्ञायिन्युत्तरपदे परे लुप् न भवति। मनसाज्ञातुं शीलमस्य मनसाज्ञायी। एवमात्मनाज्ञायी। आत्मनो नेच्छन्त्येके ॥ १५ ॥ *नाम्नि ॥ ३।२।१६ ॥ मनसः परस्य टावचनस्योत्तरपदे परे नाम्नि संज्ञायां विषये लुप् न भवति। मनसादेवी। मनसागुप्ता। मनसादत्ता। मनसासंगता। एवंनामा काचित्। नाम्नीति किम्। मनोदत्ता कन्या ॥ १६ ॥ *परात्मभ्यां ङेः ॥ ३।२ ॥१७॥ परात्मशब्दाभ्यां परस्य ङेश्चतुर्थ्येकवचनस्योत्तरपदे परे नाम्नि विषये लुप् न भवति। परस्मैपदम्। परस्मैभाषा। आत्मनेपदम्। आत्मनेभाषा। 'तादर्थ्ये' (२-२-५४) चतुर्थी। हितादित्वात् समासः। नाम्नीत्येव। परहितम्। आत्महितम्। कथं परहितो नाम कश्चित्। नेयमनादिसंज्ञा ॥१७॥ अद्व्यञ्जनात्सप्तम्या बहुलम् ॥ ३।२।१८ ॥ अकारान्ताद्व्यञ्जनान्ताच्च परस्याः सप्तम्या बहुलं लुप् न भवति नाम्नि विषये। अदन्तः, अरण्येतिलका। अरण्येमाषकाः। वनेकशेरुकाः। वनेबल्वजाः। *ननेकिंशुलकाः। वनेहरिद्रकाः। कूपेपिशाचिकाः। पूर्वाह्णेस्फोटकाः। मध्याह्नेस्फोटकाः। व्यञ्जन, युधिष्ठिरः। बहुलवचनात्कचिद्विकल्पः। त्वचिसारः। त्वक्सार'। कचिन्नवति। जलकुक्कुटः। ग्रामसूकरः। *अद्व्यञ्जनादिति किम्। भूमिपाशः। नदीकुक्कुटिका। नाम्नीत्येव। तीर्थकाकः। नगरवायसः। अक्षशौण्ड.। सप्तम्या इति किम्। गौरखरः। कथं गविष्ठिरः। बिदादिपाठात् 'गवियुधेः स्थिरस्य' (२-३-२५) इति निर्देशाद्वा भविष्यति।

---

तत्रेशतमश्च तेन वृतमिति ॥—पुंजनुषो—॥ अन्धेश्चुरादिणिजन्तादच्यन्ध अन्धन वान्धस्तदऽस्ति अभ्रादित्वात्। उभयो करणे तृतीया 'कारक कृता' इति समास ॥—आत्मन'—॥ अत्र पूरणार्थाभिधायक प्रत्यय पूरणशब्देनोच्यत इत्याह—पूरणप्रत्ययान्ते इति ॥—आत्मनाद्वितीय इति। अथात्र केन तृतीया न ह्यत्र करणादिस्तृतीयाऽर्थोऽस्ति। करणादे कारकत्वाक्रियामन्तरेण च तस्याऽसम्भवात्। न चात्र काचित् क्रियास्ति। उच्यते। 'यद्भेदै'—इत्यत्र तृतीया। समासस्तु पूर्वादित्वात्। गम्यक्रियापेक्षया करणे वा तृतीयाऽस्तु तदा बाहुलकात्समास ॥—बहुव्रीहिरिति। ननु वर्तिपदार्थव्यतिरिक्तेनान्यपदार्थेन भाव्य चित्रगवादिवत् अत्र तु तस्यैवान्यपदार्थत्वात् कथ बहुव्रीहि। उच्यते। एकस्यैव वस्तुनो बुद्धिपरिकल्पितभेदस्य वर्तिपदार्थत्वमन्यपदार्थत्व च न विरुध्यते। यथा शोभनशरीर. शिलापुत्रक इति ॥—मनसश्चा—॥ नन्विद सूत्रमलुब्विधायक न कर्तव्य यतो लुकि कृतेऽपि सर्वाणि रूपाणि भविष्यन्ति। उच्यते। यदि लुप् विधीयते तदा पदान्तत्वान्नलोपो रुत्व विसर्गादिक च कार्य स्यादिति सूत्रम् ॥—नाम्नि॥ मनसा दीव्यादित्याशास्यमाना लिहादित्वात् 'तिक्कृतौ नाम्नि' इत्यच्। गोरादित्वात् ङया 'कारक कृता'इति स ॥—अद्व्यञ्जनादितिकि भूमिपाश इत्यादि दर्शितम्। ततश्च भूमौ पाश. भूमिपाश इत्यत्र स्वयमेव न भविष्यति अलुप् यत. सज्ञाशब्दोऽपि न भवति। उच्यते। क्वचित्साध्यमाना क्वचिदसाध्यमाना च भवति सज्ञा ततश्चाऽत्र साध्यमाना-

नन्वन्तरङ्गत्वादवादेशे कृते व्यञ्जनान्तत्वादेव सिद्धं किं विदादिपाठाश्रयणेन। नैवम्। अन्तरङ्गानपि हि विधीन् बहिरङ्गाऽपि लुप् बाधते इत्युक्तम्। अन्यथा नदीकुक्कुटिकादिष्वप्यन्तरङ्गत्वाद्यत्वे सत्यलुप् प्रसज्ज्येतेति ॥ १८ ॥ *प्राक्कारस्य व्यञ्जने ॥ ३ । २ । १९ ॥ राजलभ्यो रक्षानिर्वेशः *कारः । प्राचा देशे यः कारस्तस्य नाम्नि संज्ञायां गम्यमानायामव्यञ्जनात्परस्याः सप्तम्या व्यञ्जनादावुत्तरपदे परे लुप् न भवति। मुकुटे मुकुटे कार्षापणो दातव्यः *मुकुटेकार्षापणः। एवं स्तूपेशाणः। हलेद्विपदिका। हलेत्रिपदिका। व्यञ्जन, दृषदिमाषकः। समिधिमाषकः। वृत्तौ वीप्साया दानस्य चान्तर्भाव'। प्रागिति किम्। यूथे यूथे देयः पशु यूथपशुः। एवं यूथद्रुपः। उदीचां देशे कारोऽयम् न प्राचाम्। कार इति किम्। अभ्यर्हितेऽभ्यर्हिते देयः पशुः अभ्यर्हितपशुः। प्राचां देशे कारादन्यस्य देयस्य नामैतत्। व्यञ्जन इति किम्। अविकटेऽविकटे उरणो दातव्यः अविकटोरणः। अविकटोऽविसमूह। अव्यञ्जनादित्येव। नद्यां नद्यां दोहो दातव्यः नद्योदोहः। पूर्वेणैव सिद्धे नियमार्थोऽयं योगः। त्रिविधश्चात्र नियमः। प्राचामेव, कारस्यैव नाम्नि, व्यञ्जनादावेवेति। तथा च प्रत्युदाहृतम् ॥ १९ ॥ तत्पुरुषे कृति ॥ ३ । २ । २० ॥ अव्यञ्जनात्परस्याः सप्तम्याः कृदन्ते उत्तरपदे परे तत्पुरुषे समासे लुप् न भवति। नाम्नीति निवृत्तम्। स्तम्बे रमते स्तम्बेरमः। एवं कर्णेजपः। पात्रेसमितः। प्रवाहेमूत्रितम्। उदकेविशीर्णम्। अवतप्तेनकुलस्थितम्। व्यञ्जन, भस्मनिहुतम्। भस्मनिमीढम्। बहुलाधिकारात्कचिदन्यतोऽपि। गोषुचर। क्वचिन्निषेधो न भवति। मद्रचरः। ग्रामकारकः। क्वचिद्विकल्पः। खचरः। खेचर। वनेचरः। वनचरः। पङ्केरुहम्। पङ्करुहम्। सरसिरुहम्। सरोरुहम्। दिविषत्। द्युसत्। क्वचिदन्यदेव। हृदयं स्पृशति हृदिस्पृक्। द्वितीयार्थेऽत्र सप्तमी। एवं दिविस्पृक्। तत्पुरुष इति किम्। धन्वनि कारका यस्य स धन्वकारकः। एवं कल्याणाभिनिवेशः। धर्मरुचिः। कृतीति किम्। अक्षशौण्डः। अक्षाकितवः। अदृव्यञ्जनादित्येव। कुरुषु चरति कुरुचरः। एवं रात्रिचरः। नदीचरः। कथं परमे कारके उत्तमे कारके इति विग्रहे परमकारके उत्तमकारके तिष्ठतीत्यत्र सप्तम्या लुप् भवति। उच्यते। अन्तरङ्गत्वात्प्रथमान्तयोरेव परमोत्तमशब्दयोः कारकशब्देन समास इति ताभ्यां सप्तम्येव नास्ति। यद्वा कृतीति कृन्निमित्ताया एव सप्तम्या लुप्प्रतिषेधः। इह तु तिष्ठत्यादिक्रियापेक्षेति लुप् भवत्येव ॥ २० ॥ *मध्यान्ताद्गुरौ ॥ ३ । २ । २१ ॥ मध्यान्तशब्दाभ्यां परस्याः सप्तम्या गुरुशब्दे उत्तरपदे परे लुप् न भवति। मध्येगुरुः। अन्तेगुरुः। मध्यगुरुः अन्तगुरुरित्यप्यन्ये ॥ २१ ॥ *अमूर्धमस्तकात्स्वाङ्गादकामे ॥ ३ । २ । २२ ॥ मूर्धमस्तकशब्दवर्जितात्स्वाङ्गवाचिनोऽव्यञ्जनान्ताच्छब्दात्परस्याः सप्तम्याः

---

स्ति इति अदृव्यजनादिति व्यावृत्ति ॥--वनेकिंशुलका इति दर्शित ततश्च कि इयतीति अध्वर्वादित्वाड्डिदुप्रत्यये किंशु । लातीति टे किंशुल स एव किंशुलक ॥—प्राक्कार—॥ कुर्वन्त्यनेनेति कर । 'पुन्नाम्नि घ' अ इति वा । तत प्रज्ञाद्यण्—कारः ॥—मुकुटेकार्षापणादिषु सर्वेषु 'नाम्नि' इति स । स्तूपो राशि । शाण कर्षचतुर्भाग ॥ हले हले द्वौ द्वौ पादौ ददाति । 'सख्यादे पादादिभ्य' इत्यकल्। नद्यतेऽनया 'नीदाव्'-इति त्रट् ॥—मध्यान्ता—॥ अत्र समासविशेषस्यानुपादानात् यथा तत्पुरुषे लुक् न भवति तथा बहुव्रीहावपि ॥—अमूर्द्ध—॥ शब्दप्रधा-

कामशब्दादन्यस्मिन्नुत्तरपदे परे लुब् न भवति । कण्ठे कालोऽस्य कण्ठेकाल । उदरेमणिः । *वहेगडुः । पुतेवलिः । उरसिलोमा । शिरसिशिख ।[६] अमूर्धमस्तका-
दिति किम् । मूर्धशिखः । मस्तकशिखः । स्वाङ्गादिति किम् । अक्षशौण्डः । मुखपुरुषा शाला । अकाम इति किम् । मुखकामः । अव्यञ्जनादित्येव । अङ्गुलिव्रणः ।
जङ्घावलिः । बहुलाधिकारात्करकमलम् गलरागः गलव्रण. इत्यादि सिद्धम् ॥ २२ ॥ *बन्धे घञि नवा ॥ ३ । २ । २३ ॥ बन्धशब्दे घञन्ते उत्तरपदे
परे अव्यञ्जनान्तात्परस्याः सप्तम्या वा लुब् न भवति । स्वाङ्गादस्वाङ्गाच्चायं विकल्पः । हस्ते बन्धो हस्ते बन्धोऽस्येति वा हस्तेबन्धः । हस्तबन्धः । चक्रेबन्धः । चक्र-
बन्धः । बन्ध इति किम् । पुटपाकः । मनोरागः । घञोति किम् । अजन्ते माभूत् । बध्नातीति बन्धः । *चक्रबन्धः । हस्तबन्धः । चारकबन्धः । अद्व्यञ्जनादि-
त्येव । गुप्तिबन्धः । काराबन्धः ॥ २३ ॥ *कालात्तनतरतमकाले ॥ ३ । २ । २४ ॥ अद्व्यञ्जनान्तात्कालवाचिनः शब्दात्परस्याः सप्तम्यास्तनतरतमप-
त्ययेषु कालशब्दे चोत्तरपदे परे वा लुप् न भवति । तन, पूर्वाह्णेतनः । पूर्वाह्णतनः । अपराह्णेतनः । अपराह्णतनः । तर, *पूर्वाह्णेतराम् । पूर्वाह्णतरे ।
अपराह्णेतराम् । अपराह्णतरे । तम, *पूर्वाह्णेतमाम् । पूर्वाह्णतमे । अपराह्णेतमाम् । अपराह्णतमे । काल, *पूर्वाह्णेकाले पूर्वाह्णकाले । अपराह्णेकाले ।
अपराह्णकाले । कालादिति किम् । शुक्लतरे । शुक्लतमे । अद्व्यञ्जनादित्येव । *रात्रितरायाम् । निशातमायाम् । रात्रिकाले । 'उत्तरपदाधिकारे प्रत्ययग्रहणे प्रस-
यमात्रस्य ग्रहणम् न तदन्तस्य 'नवा खित्कृदन्ते'—( ३–२–११७ ) इसत्रान्तग्रहणात् । तेनात्र तनतरतमप्रत्ययानां स्वरूपेणैव ग्रहणं भवति ॥ २४ ॥
शयवासिवासेष्वकालात् ॥ ३ । २ । २५ ॥ अकालवाचिनोऽद्व्यञ्जनान्ताच्छब्दात्परस्याः सप्तम्याः शयादिषूत्तरपदेषु लुप् न भवति वा । बिलेशयः ।

---

नो निर्देशो नार्थप्रधान इति समानामर्थे'-इति नैकशेष ॥—वहेगडुरिति । 'गड्वादिभ्य' इत्यनेन विकल्पितोऽपि बाहुलकात् नित्य पूर्वनिपात ॥—बन्धे घञि—॥—चक्रबन्ध । हस्तबन्ध
इत्यादिष्वनेन सूत्रेण न भवति तर्हि मा भवतु 'तत्पुरुषे कृति' इति अनेनालुप् कथ न भवति । उच्यते । 'अद्व्यजनात्' इत्यत सूत्राद्बहुलमित्यनुवर्त्तते ततश्च तत्पुरुषे कृतीति बहुलमलुप् भवति
ततश्चात्रालुप् न भवति । तर्हि अमूर्धमस्तकादितानेन सूत्रेणालुप् कथ न भवति । उच्यते । इद सूत्र न प्रवर्त्तते यत्र तत्पुरुषे कृतीति न प्राप्नोति निषेधस्तत्रेद प्रवर्त्तते । अत्र तु तत्पुरुषस्ततश्च
तेन बहुल भवति । अतोऽलुप् न भवति ॥—कालात्तन—॥—पूर्वाह्णेतरां पूर्वाह्णतरे इति । द्वयोर्मध्ये प्रकृष्टे विभज्ये वा पूर्वाह्णे 'द्वयोर्विभज्ये च तरप्' यत्र सप्तम्या अलुप् तत्र प्रथमा
सप्तम्यर्थस्य सप्तम्यैवोक्तत्वात् । यत्र तु सप्तम्या लुप् तत्र सप्तम्यर्थप्रतिपादनार्थं सप्तमी पुनर्दीयते ॥—पूर्वाह्णेतमामिति । अत्र क प्रकर्षोऽत्र पूर्वाह्णस्य विवक्षावशादिति केचित् । तथाहि यत्सुप्रभाते
कृत यत्र प्रहरान्तरितौ तयो सुप्रभाते कृतमतिशयेन पूर्वाह्णे कृतमिति लोके व्यवह्रियते । न तु परमार्थतो नामार्थस्यात्र कश्चित्प्रकर्षयोग । अन्ये आहु—नामार्थोऽधिकरणशक्तौ उपसर्जनभावान्न प्रकृष्यते ।
शक्तिरप्याधेयापेक्षत्वात् रात प्रकर्षमर्हतीत्याधेयापेक्षयात्र नामार्थावच्छिन्नाया शक्ते प्रकर्षो वर्णनीय ॥—पूर्वाह्णेकाल इति । सप्तम्यन्तयोर्विशेषणसमास । यद्यपि पूर्वाह्णे काल न व्यभिचरति तथापि
बाहुलकात् समासो यथा पृथिवीद्रव्यमिति । अथवा पूर्वाह्णे य कालस्तस्मिन्निति वैयधिकरण्ये वा समास । अत्र सूत्रे कालग्रहणसामर्थ्याद्वा । एवमपराह्णेकाल इत्यादि ॥—रात्रितरायामित्यादि ।
अत्र रात्रेर्यद्यपि स्वत प्रकर्षो नास्ति तथाऽपि गोतर इत्यादौ यथा जाते स्वत प्रकर्षासम्भवे तत्सहचरदोहवाहाद्यपेक्षया प्रकर्षस्तथात्रापि रात्रिसहचरान्धकारघोरत्वाद्यपेक्षयेति । अत्र सूत्रे यदा तनोतीति

विलशयः । खेशयः । खशय । वनेवासी । वनवासी । अन्तेवासी । अन्तवासी । ग्रामेवासः । ग्रामवासः । बहुलाधिकारान्मनसिशयः कुशेशयमिति नित्यं लुव-भावः । हृच्छयः चित्तशयः इत्यत्र तु नित्यं लुप् । अकालादिति किम् । पूर्वाह्णशयः । अपराह्णशयः । अद्व्यञ्जनादित्येव । भूमिशयः । गुहाशयः ॥ २५ ॥ *वर्षक्षरवराप्सरःशरोरोमनसो जे ॥ ३ । २ । २६ ॥ वर्ष क्षर वर अप् सरस् शर उरस् मनस् इत्येतेभ्यः परस्याः सप्तम्या जे उत्तरपदे वालुप् भव-ति । वर्षेजः । वर्षजः । क्षरेजः । *क्षरजः । वरेजः । वरजः । अप्सुजम् । अब्जम् । सरसिजम् । सरोजम् । शरेजः । शरजः । उरसिजः । उरोजः । मनसिजः । मनोजः ॥ ॥ २६ ॥ द्युप्रावृड्वर्षाशरत्कालात् ॥ ३ । २ । २७ ॥ योगविभागाद्वेति निवृत्तम् । दिव्प्रभृतिभ्यः परस्याः सप्तम्या जे उत्तरपदे परे लुप् न भवति । दिविजः । प्रावृषिजः । वर्षासुजः । शरदिजः । कालेजः ॥ २७ ॥ अपो ययोनिमतिचरे ॥ ३ । २ । २८ ॥ अप्शब्दात्परस्याः सप्तम्या यप्रत्यये यो-निमतिचरेषु चोत्तरपदेषु लुब् न भवति । अप्सु भवः अप्सव्यः । दिगादित्वाद्यः । अप्सुयोनिः । अप्सुमतिः । अप्सुचरः ॥२८॥ *नेन्सिद्धस्थे ॥ ३ । १ । २९ ॥ *इन्प्रत्ययान्ते सिद्ध स्थ इत्येतयोश्चोत्तरपदयोः सप्तम्या अलुप् न भवति । भवत्येवेत्यर्थः । इन्, स्थण्डिले वर्तते स्थण्डिलवर्ती । एवं स्थण्डिलशायी । सांकाश्यसिद्धः । काम्पील्यसिद्धः । समस्थः । विषमस्थः । 'शयवासी'–( ३–२–२५ ) त्यादियोगद्वयविकल्पो 'द्युप्रावृट्'–( ३–२–२७ ) आदियोगद्वयविधिर-नेन प्रतिषेधश्च 'तत्पुरुषे कृति' ( ३--२--२० ) इत्यस्यैव प्रपञ्चः । *ते वै विधयः सुसंगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्चेति ॥ २९ ॥ *षष्ठ्याः क्षेपे ॥ ३ । २ । ३० ॥ क्षेपे गम्यमाने उत्तरपदे परे षष्ठ्या लुप् न भवति । चौरस्यकुलम् । दासस्यभार्या । वृषल्याःपतिः । क्षेप इति किम् । ब्राह्मणकुलम् । कथं चौरकुलं दासभार्या वृषलीपतिः । तत्त्वाख्यानमेतन्न क्षेपः ॥ ३० ॥ पुत्रे वा ॥ ३ । २ । ३१ ॥ पुत्रशब्दे उत्तरपदे क्षेपे गम्यमाने षष्ठ्या लुप् वा न भवति । दा-स्याःपुत्रः । दासीपुत्रः । वृषल्याःपुत्रः । वृषलीपुत्रः । क्षेपे इत्येव । ब्राह्मणपुत्रः । दासीपुत्र इति तु तत्त्वाख्याने । पूर्वेण नित्यं निषेधे प्राप्ते विकल्पः ॥ ३१ ॥ *पश्यद्वाग्दिशो हरयुक्तिदण्डे ॥ ३ । २ । ३२ ॥ पश्यद्वाग्दिक्शब्देभ्यः परस्याः षष्ठ्या यथासंख्यं हरयुक्तिदण्डेषूत्तरपदेषु लुब् न भवति । *पश्यतोहरः ।

---

ताम्यतीति तरतीति क्रियते तदा अलुप् न भवति प्रत्ययाप्रत्यययोरिति न्यायात् । तेन पूर्वाह्णतन पूर्वाह्णतम पूर्वाह्णतर इत्याद्येव भवति ॥—वर्षे—॥ क्षरतीत्यचि क्षरे मेघे जात क्षरज. । क्षरशब्देन जल मेघश्च उच्यते ॥—नेन्सिद्ध—॥—इन्प्रत्ययान्ते इति । इहोत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविध्यभावे ज्ञापितेऽपि सामर्थ्यात्तदन्तविधि । इन्प्रत्ययो हि द्विविध कृत्तद्धितश्च । तत्र कृद्धातो-र्विधीयते तद्धितोऽपि प्रथमान्तादस्यास्त्युपाधिकस्तस्मात्सप्तम्यन्तात्तयोर्विधानाऽसम्भवात्तदन्ते उत्तरपदे सप्तम्या अलुप् प्रतिषिध्यत इति ॥—ते वै विधय इति । वैशब्दो हेत्वर्थे ततो वैइत्यस्य यत इत्यर्थ. । परानुग्राहक हि शास्त्र तत्र केचित्तीक्ष्णधियस्तान् प्रति सक्षेपेण प्रणयनम् । केचिन्मन्दधियस्तान् प्रति प्रपञ्च आरभ्यते ॥—षष्ठ्या क्षे—॥ अत्र पूर्वपदात् क्षेपे अलुप् इष्यते तेन भूपस्य जाल्मो भूप-जाल्म इत्यत्र लुबेव भवति । एतत्तु व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायात् न्याय्यम् ॥—पश्यद्वाग—॥—पश्यतोहर इत्यत्र यदा पश्यता हर इति क्रियते तदा अलुप् भवति वा नवा । उच्यते । शब्दशक्तिस्वाभाव्यात्समासस्याप्यगमकत्वे समासाभावात् लुगपि न प्राप्नोति । यदा तु अर्थात्प्रकरणाद्वा चक्षुर्यो ज्ञायते तदा भवत्येवाऽलुप् ॥—अदसो—॥ अकञ्प्रत्ययविषये उत्तरपदे इत्युक्त

अनादरे षष्ठीयम् । जनं पश्यन्तमनादृत्य हर्तेत्यर्थः । वाचोयुक्तिः । दिशोदण्डः । संबन्धषष्ठ्यौ ॥ ३२ ॥ *अदसोऽकञायनणोः ॥ ३ । २ । ३३ ॥ *अदसः परस्या षष्ठ्या अकञ्प्रत्ययविषये उत्तरपदे आयनण्प्रत्यये च परे लुप् न भवति । अमुष्य पुत्रस्य भावः *आमुष्यपुत्रिका । एवमामुष्यकुलिका । चौरादित्वादकञ् ॥ अमुष्यापत्यमामुष्यायणः । नडादित्वादायनण् । अदसोऽनन्तरमायनणो विधानान्न तत्रोत्तरपदसंभवः ॥ ३३ ॥ *देवानांप्रियः ॥ ३ । २ । ३४ ॥ देवानामिप्रय इति षष्ठ्या लुबभावो निपात्यते । *देवानांप्रियः ॥ ३४ ॥ *शेपपुच्छलाङ्गूलेषु नाम्नि शुनः ॥ ३ । २ । ३५ ॥ श्वन्शब्दात् परस्याः षष्ठ्याः शेपादिपूत्तरपदेषु नाम्नि संज्ञायां विषये लुप् न भवति । शुनः शेपमिव शेपमस्य शुनःशेपः । एवं शुनःपुच्छः । शुनोलाङ्गूलः । शेपःशब्दः सकारान्तोऽप्यस्ति इह त्वकारान्तस्य ग्रहणम् । नाम्नीति किम् । श्वशेपम् । श्वपुच्छम् । श्वलाङ्गूलम् । अन्ये तु सिंहस्यशेपं सिंहस्यपुच्छ सिहस्यलाङ्गूलमित्यत्रापि इच्छन्ति तन्मतसंग्रहार्थं बहुवचनम् *अनाम्न्यपि विध्यर्थम् ॥ ३५ ॥ *वाचस्पतिवास्तोष्पतिदिवस्पतिदिवोदासम् ॥ ३ । २ । ३६ ॥ वाचस्पत्यादयः शब्दाः षष्ठीलुबभावे निपात्यन्ते नाम्नि विषये । वाचस्पतिः । वास्तोष्पतिः । दिवस्पतिः । दिवोदासः । नाम्नीत्येव । वाक्पतिः । वास्तुपतिः । द्युपतिः । द्युदासः ॥ ३६ ॥ ऋकारान्तानां शब्दानां विद्याकृते योनिकृते च संबन्धे निमित्ते सति वर्तमानानां संबन्धिन्याः षष्ठ्या वि-
*ऋतां विद्यायोनिसंबन्धे ॥ ३ । २ । ३७ ॥

---

ततश्चाकञ्प्रत्ययविषय इति विशेषणमुत्तरपद इति विशेष्य ततश्चाकञ्प्रत्ययविषय इति भिन्नविशेषण कथ क्रियते । अकञ्प्रत्ययान्त यदुत्तरपद तस्मिन् विषये कथ न भण्यते । उच्यते । प्रत्ययस्येव ग्रहण भवति । प्रत्ययग्रहण च 'नवा खित्'—इत्यत्रान्तग्रहात् । तर्हि 'नेन्सिद्धस्थे' इति सूत्रे इन कथ प्रत्ययमात्रस्यैव ग्रहण न भवति । उच्यते । असभवात् । तर्ह्यत्रापि असभवात् ग्रहीष्यते अकञ्प्रत्ययान्ते उत्तरपद इति । नेव ग्रहण भवति असभवात् । किं त्वत्र प्रत्ययस्य सभवात्प्रत्ययस्यैव ग्रहण भवति । यतो विषयव्याख्याने षष्ठ्यन्तपूर्वपदस्य पुत्रशब्दे उत्तरपदे अकञ्प्रत्यय सभवत्येव । न च वाच्यमनन्तरे एव किमिति न भवति । यतोऽदस परो नास्त्यकञ् । अमुष्यपुत्र इति चौरादिपाठात् । अथ चोरिका इत्यत्राकञन्तमुत्तरपद सभवति तत कथमकञन्ते उत्तरपदे इति न भाणित यथा अमुष्यचोरिकेति । उच्यते । अकञन्तस्य निषेधोऽपि भवति षष्ठ्या लुबभावस्य यथा अदश्चोरिका । प्रत्ययग्रहणे सभवे सति प्रत्ययमात्रस्यैव ग्रहण भवतीत्याह—अदस इत्यादि ॥—आमुष्यपुत्रिकेति । ननु अमुष्यपुत्राऽमुष्यकुलशब्दयो षष्ठीसमासयोरकृतषष्ठीलोपयोश्चौरादित्वादमुष्येति च षष्ठ्यन्तस्य नडादिपाठसामर्थ्यादेवाकञायनणो षष्ठ्या लुबभावस्य सिद्धत्वात् किमर्थमिदमारभ्यते । एव चामुष्यपुत्रसापत्यमामुष्यपुत्रि आमुष्यपुनायणि अमुष्यकुलस्यापत्यममुष्यकुलीन अमुष्य पुत्रस्य भावोऽमुष्य कुलस्य भाव इति च वाक्यममुष्यपुत्राऽमुष्यकुल इति च केवलयोरपि प्रयोग उपपद्यते । गणपाठश्च पूर्वसूत्रेभ्य इति स एव प्रमाणी क्रियतामिति । सत्यम् । एतदर्थानुवादार्थमेवेदमित्यदोष । एतच्च गमनिकामात्रमेव उत्तर तु अन्याचिन्तनीयम् ॥ तदेतद् अस्मिन् सूत्रे कृतेऽकञ्आयनण्विषय एव अलुप्प्रवर्त्तते । सूत्र विना तु सर्वत्रापि आद पुत्रीत्यादिषु अलुप् प्रसज्येत । इदानीं तु न भवति ॥—देवानां—॥ कथ देवप्रिय इति । एकत्वद्वित्वयोर्नहुर्नाहो वा भविष्यति ॥—देवानांप्रियऋजुर्मूर्खो वा ॥—शेपपुच्छ—॥—अनाम्न्यपि विध्यर्थमिति । प्रकृतेरन्यतोऽपि च इति शेषो ज्ञेय ॥ शेपशब्दस्य लिङ्गानुशासने पुलिङ्गत्वमुक्त पान्तत्वात् । अत्र तु नपुसकत्व चिन्त्यम् ॥—वाचस्पति—॥ अत्र षत्व सत्व च निपातनात् ॥—ऋतां विद्या—॥ अत्र योनिशब्दस्येदन्तत्वात्पूर्वनिपाते प्राप्तेऽत एव निर्देशाद्धर्मार्थादित्वाद्वा परनिपात ॥—पूर्वपदविशेषण किमिति । भर्तृशिष्य इत्युक्त

द्यायोनिसंबन्धे एव निमित्ते सति वर्तमाने उत्तरपदे लुप् न भवति। होतुःपुत्रः। होतुरन्तेवासी। पितुःपुत्रः। पितुरन्तेवासी। ऋतामिति किम्। आचार्यपुत्रः। मातुलान्तेवासी। बहुवचनं विद्यासंबन्धनिमित्ते योनिसंबन्धनिमित्ते इति यथासंख्यप्रतिपत्त्यर्थमुदासार्थम्। ऋद्य इति निर्देशे प्राप्ते षष्ठीनिर्देश उत्तरार्थः। विद्यायोनिसंबन्ध इति किम्। भर्तृगृहम्। *पूर्वपदविशेषणं किम्। भर्तृशिष्यः। भर्तृपुत्रः। उत्तरपदविशेषण किम्। होतृधनम्। पितृगृहम् ॥ ३७ ॥ *स्वसृपत्योर्वा ॥ ३ । २ । ३८ ॥ विद्यायोनिसंबन्धे निमित्ते सति प्रवर्तमानानामृकारान्तानां शब्दानां संबन्धिन्याः षष्ठ्याः स्वसृपत्योरुत्तरपदयोर्योनिसंबन्धनिमित्तयोः परयोर्लुब् वा न भवति। होतुःस्वसा। होतृस्वसा। पितुःष्वसा। पितुःस्वसा। पितृष्वसा। मातुःस्वसा। मातुःष्वसा। मातृष्वसा। दुहितुःपतिः। दुहितृपतिः। स्वसुःपतिः। स्वसृपतिः। ननान्दुःपतिः। ननान्दृपतिः। विद्यायोनिसंबन्ध इति पूर्वपदविशेषणं किम्। भर्तृस्वसा। उत्तरपदविशेषणं किम्। होतृपतिः। पूर्वेण नित्यं प्रतिषेधे प्राप्ते विकल्पोऽयम् ॥३८॥ *आ द्वन्द्वे ॥ ३ । २ । ३९ ॥ विद्यायोनिसंबन्धनिमित्ते सति प्रवर्तमानानामृतां यो द्वन्द्वस्तस्मिन्सत्युत्तरपदे परे पूर्वपदस्याकारोऽन्तादेशो भवति। होता च पोता च होतापोतारौ। नेष्टोद्गातारौ। प्रशास्ताप्रतिहर्तारौ। मातादुहितरौ। मातापितरौ। ननान्दायातरौ। अथेह प्रथमयोः कस्मान्न भवति होतृपोतृनेष्टोद्गातार इति। अन्त्यस्यैवोत्तरपदत्वात्। कथं तर्हि होतापोतानेष्टोद्गातार इति। द्वयोर्द्वयोर्द्वन्द्वे भविष्यति। यदा च होता च पोता च नेष्टोद्गातारौ चेति विग्रहस्तदा होतृपोतानेष्टोद्गातार इति। ऋतामित्येव। गुरुशिष्यौ। ऋतां द्वन्द्व इति किम्। पितृपितामहौ। विद्यायोनिसंबन्ध इत्येव। कर्तृकारयितारौ। *विद्यायोनिसंबन्धश्चेह प्रत्यासत्तेः समस्यमानानामृदन्तानामेव परस्परं द्रष्टव्यो न येन केन चित्। तेनेह न भवति। चैत्रस्य स्वसृदुहितरौ। नात्र स्वसृदुहित्रोः परस्परं संबन्धः। न हि स्वसा चैत्रस्य स्वसा भवन्ती दुहितरमपेक्षते दुहिता स्वसारमिति। यद्येवं कथं चैत्रस्य पितृभ्रातराविति अस्ति ह्यत्र परस्परसंबन्धः। उच्यते। यद्यपि चैत्रस्य भ्राता भ्राता भवन् पितरमपेक्षते चैत्रपितृजनितस्यैव चैत्रभ्रातृत्वात्। तथापि पिता पिता भवन्न भ्रातरमपेक्षते। यद्येवं कथं मातापितरौ होतापोतारौ। न ह्यत्र परस्परापेक्षस्तथाभावोऽपि तु पुत्रयजमानापेक्षः। नैवम्। अत्रापि मात्रादीनां परस्परसंबन्धात्। ते हि स्वकर्मणि प्रजने यागे च सहिता एव प्रवर्तन्ते तत्कर्मनिमित्तश्चायं तेषां व्यपदेश इत्यदोषः। केचित्तु स्वसादुहितरावित्यत्रापीच्छन्ति ॥ ३९ ॥ *पुत्रे ॥ ३ । २ । ४० ॥ पुत्रशब्दे उत्तरपदे द्वन्द्वे समासे विद्यायोनिसंबन्धे निमित्ते सति प्रवर्तमानानामृकारान्तानामाकारोऽन्तादेशो भवति। मातापुत्रौ। पितापुत्रौ। होतापुत्रौ ॥ ४० ॥ *वेदसहश्रुतावायुदेवतानाम् ॥ ३ । २ । ४१ ॥ वेदे सहश्रुतानां वायुवर्जितदेवतानां द्वन्द्वे पूर्वपदस्योत्तरपदे परे आकारान्तादेशो भवति। इन्द्रासोमौ। इन्द्रावरुणौ। इन्द्राबृहस्पती। *शुनासीरौ। अग्नामरुतौ। अग्नेन्द्रौ। अग्ना-

---

ततश्चात्र नायकवाचको द्रष्टव्य। यदा तु भर्तृवाचकस्तदा भर्तुः शिष्य इत्येव भवति ॥- स्वसृपत्यो—॥ धर्मार्थादित्वात् स्वसृशब्दस्य पूर्वनिपात ॥—आ द्वंद्वे—॥—विद्यायोनिसंबन्धश्चेहेति। इहेति भणनात् स्वसृपत्योर्वेत्यत्र न प्रत्यासत्ति। तेन ननान्दु पतिरित्यादि सिद्धम् ॥—पुत्रे—॥ उत्तरपदस्य ऋदन्तत्वाभावात्पूर्वेणाप्राप्ते वचनम् ॥ दुहिता पुत्राविति भग्न ततश्चानेन कारणेन भग्न यदुत 'भ्रातृपुत्रा स्वसृदुहितृभि.' इत्येकशेष प्राप्नोति ततश्च पुत्रावित्येव स्यात् ॥—वेदस—॥—शुनासीराविति। वायुरवी इत्यर्थ ॥—सूर्याचन्द्रमसाविति। रविचन्द्रावित्यर्थ ॥—स्कन्दो महासे-

विष्णू । सोमारुद्रौ । *सूर्याचन्द्रमसौ । मित्रावरुणौ । वेदेति किम् । शिववैश्रवणौ । *स्कन्दविशाखौ । ब्रह्मप्रजापती । सहेति किम् । विष्णुशक्रौ । श्रुतेति किम् ।
*चन्द्रसूर्यौ । दिवाकरनिशाकरौ । वायुनर्जनं किम् । अग्निवायू । वाय्वग्नी । देवतानामिति किम् । शूपचपालौ । उलूखलमुशले ॥ ४१ ॥ ई: षोमवरुणेऽग्नेः ॥
३ । २ । ४२ ॥ वेदसहश्रुतावायुदेवतानां द्वन्द्वे षोमवरुणयोरुत्तरपदयोरग्निशब्दस्य ईकारान्तादेशो भवति । षोमेति निर्देशादीकारसंनियोगे पत्वं च निपात्यते ।
अग्नीषोमौ । अग्नीवरुणौ । षोमवरुणेति किम् । अग्नेन्द्रौ । देवताद्वंद्व इत्येव । अग्निसोमौ माणवकौ । ईकारसंनियोगे विधानादिह षत्वमपि न भवति ॥ ४२ ॥
*इर्वृद्धिमत्यविष्णौ ॥ ३ । २ । ४३ ॥ विष्णुवर्जिते वृद्धिमत्युत्तरपदे परे देवताद्वंद्वेऽग्नेरिकारोऽन्तादेशो भवति । ईकाराकारयोरपवादः । अग्नीवरुणौ देवते
अस्या आग्निवारुणीमनड्वाहीमालभेत । अग्नीषोमौ देवताऽस्य आग्निसौमं कर्म । एवमाग्निमारुतम् । वृद्धिमतीति किम् । अग्नीवरुणौ । अग्नीमरुतौ । आग्नेन्द्रं कर्म ।
' आता नेन्द्रवरुणस्य ' ( ७-४-२९ ) इति वृद्धिनिषेधः । अविष्णाविति किम् । अग्नाविष्णू देवतास्य अग्नावैष्णवं चरुं निर्वपेत् ॥ ४३ ॥ *दिवो द्यावा ॥
३ । २ । ४४ ॥ देवताद्वंद्वे दिव्शब्दस्योत्तरपदे परे द्यावा इत्ययमादेशो भवति । द्यौश्च भूमिश्च द्यावाभूमी । *द्यावाक्षमे । द्यावानक्ते । नक्तशब्दोऽकारान्तोऽप्यस्त्य-
नव्ययम् ॥ ४४ ॥ दिवस्दिवः पृथिव्यां वा ॥ ३ । २ । ४५ ॥ दिव्शब्दस्य पृथिव्यामुत्तरपदे परे देवताद्वन्द्वे दिवस् इति दिव इत्येतावादेशौ वा भवतः ।
दिवस्पृथिव्यौ । दिवःपृथिव्यौ । द्यावापृथिव्यौ । दिवः इति विसर्गान्तस्य निर्देशात् दिवस् इति सकारस्य रुत्वं न भवति ॥ ४५ ॥ *उषासोषसः ॥ ३ । २
। ४६ ॥ देवताद्वंद्वे उत्तरपदे परे उषस्शब्दस्योषासा इत्ययमादेशो भवति । उषश्च सूर्यश्च उषासासूर्यम् । उषासानक्तम् । उषासानक्ते । केचित्तु सूर्यशब्दस्यापी-
च्छन्ति । सूर्यश्च सोमश्च उषासासोमौ ॥ ४६ ॥ *मातरपितरं वा ॥ ३ । २ । ४७ ॥ मातृपितृशब्दयोः पूर्वोत्तरपदयोर्द्वन्द्वे मातरपितरेति ऋकारस्य अर
इति निपात्यते वा । माता च पिता च मातरपितरौ । मातरपितराभ्याम् । मातरपितरयोः । पक्षे, मातापितरौ । मातापितृभ्याम् । मातापित्रोः। एकशेषे तु पितरौ ।
शब्दरूपापेक्षो नपुंसकैकवचननिर्देश उत्तरपदस्य *अरभावाभिव्यक्त्यर्थः । उत्तरपदस्यारं नेच्छन्त्यन्ये ॥ ४७ ॥ *वर्चस्कादिष्ववस्करादयः ॥ ३ । १ । ४८॥
कुत्सितं वर्चो वर्चस्कम् तदादिष्वर्थेष्ववस्करादयः शब्दाः कृतशषसाद्युत्तरपदाः साधवो भवन्ति । वर्चस्केऽवस्करः । अवकीर्यतेऽवस्करः अन्नमलम् । तत्संबन्धात्तद्दे-
शोऽप्यवस्करः । अवकरोऽन्यः । अपस्करो रथाङ्गे । अपकरोऽन्यः । *कुत्सिता तुम्बुरुः कुस्तुम्बुरुरौषधिजातौ । तत्फलान्यपि कुस्तुम्बुरूणि । अन्यत्र कुतुम्बुरुरस्ति-

न । विशाखस्तु तस्यैव मूर्त्यन्तरविशेष ॥—चन्द्रसूर्याविति । एतौ हि नेदे शब्दान्तरेण विधेते चन्द्रसूर्यइत्यादिशब्देस्तु न श्रुतौ ॥—इर्वृद्धि—॥ अत्र बहिरङ्गापि लुप् अन्तरङ्गानपि विधीन् बाधत
इति न्यायात्तद्धितोत्पत्तिभाविन्या लुपा बहिरङ्गयाऽन्तरङ्गा अपि दीर्घत्वादिविधयो बाध्यन्ते । न चात्र वाच्य वाक्यविभक्तेरपि तर्हि लुबभावस्तदभावे हि तद्धितोत्पत्तिर्न स्यात् नाम्नो विधीयमानत्वेन वा-
क्यात्तद्धितस्यानुपपत्तेरिति ॥—दिवो द्या—॥—द्यावाक्षमे इति । पृषोदरादित्वादकारलोपे क्षमेति रूपम् ॥—उषासोषसः ॥ उष शब्द प्रभातवाचको नपुसक । सध्यावाचकस्तु स्त्रीक्लीव ॥—
मातर—॥—अरभावाभिव्य इति । अन्यथा मातरपितराविति कृते ' अर्डो च ' इत्यरादेशोऽपि सभाव्येत ॥—वर्चस्का—॥ ' सुवर्ण '—इत्यादि अवस्कर. ॥—कुत्सिता तुम्बुरुरित्यत्र बाहुल-

न्दुकवृक्षः । अवरस्परा अपरस्परा वा क्रियासातत्ये । अवरस्पराः सार्था गच्छन्ति । सततं गच्छन्तीत्यर्थः । अन्यत्रावरपराः सार्था गच्छन्ति । अवरे च अपरे च
सकृदेव गच्छन्तीत्यर्थः ।* आस्पदं प्रतिष्ठायाम् । प्रतिष्ठा स्थानमात्मयापनापदम् । अन्यत्र आ ईषत् पदमा पदाद्वा आपदम् ॥ आश्चर्यमद्भुते ॥ आश्चर्यं नोला द्यौः ।
अन्यत्र आचर्यं कर्म शोभनम् ॥ प्रतिष्कश सहाये ॥ पुरोयायिनि दूते वा । ग्राममध्ये प्रवक्ष्यामि भव मे त्वं प्रतिष्कशः । अन्यत्र कशां प्रतिगतः प्रतिकशोऽश्वः ॥
प्रस्कण्वहरिश्चन्द्रावृषी ॥ प्रगतं कण्वं पापमस्मादिति प्रस्कण्वः । हरिश्चन्द्र इवाह्लादको यस्य हरिश्चन्द्रः । ऋषेरन्यत्र प्रकण्वो देशः । हरिचन्द्रो माणवकः ॥ मस्क-
रो वेणुदण्डयोः ॥ मा क्रियते प्रतिषिध्यतेऽनेनेति *मस्करः । मकरशब्दस्य वाऽव्युत्पन्नस्य मस्कर इति रूपम् । अन्यत्र मकरो ग्राहः ॥ मस्करी परिव्राजके ॥
माकरणशीलो मस्करी । स ह्याह मा कृषत कर्माणि शान्तिर्वः श्रेयसीति । मकरिन्शब्दस्य वा मस्करीति रूपम् । अन्यत्र मकरीति, समुद्रः ॥ कास्तीराजस्तुन्दे नग-
रे ॥ ईषत्तीरमजस्येव तुन्दमस्येति व्युत्पत्तिमात्रम् । *कास्तीरमजस्तुन्दं च नगरम् । अन्यत्र कातीरम् । अजतुन्दम् ॥ *कारस्करो वृक्षे ॥ कारं करोति किल कारस्करो
वृक्षः । कारकरोऽन्यः ॥ वनस्पतिः पुष्पं विना फलवति वृक्षे ॥ सर्वो हरितकायो वनस्पतिरित्यन्ये । वनपतिरन्यः ॥ पारस्करो देशे ॥ पारं करोति पारस्करो
देशः । पारकरोऽन्यः ॥ करस्करो गिरिवृक्षयोः । करं करोतीति करस्करो नाम गिरिः । करस्करो वृक्षः । करकरोऽन्यः ॥ रथस्पा नद्याम् ॥ रथं पाति पिबति
वा रथस्पा नाम नदी । रथपाऽन्या ॥ किष्कुरुः प्रहरणे ॥ कस्य कुरुः किष्कुरुः नाम प्रहरणम् । किमो मकारस्य षकारादेशः ॥ किष्कुः प्रमाणे ॥ क्रिमपीपत्प-
रिमिया कुर्भूमिरस्य किष्कुः वितस्तिर्हस्तो वा ॥ किं करोतीति वा किष्कुः । करोतेर्डुप्रत्ययः किमो मकारस्य च षकारः । कार्यं करोतीति वा किष्कुः । डुप्रत्ययः
कार्यशब्दस्य च किष्भावः ॥ *किष्किन्ध इति गुहापर्वतयोः ॥ किमप्यन्तर्दधाति *किष्किन्धा नाम गुहा । किमो द्विर्वचनं पूर्वस्य च मकारस्य षकारः । किं किं
दधाति किष्किन्धः पर्वत. ॥ आस्कथं नगरे ॥ आहृताः कथा अस्मिन्नित्यास्कथं नाम नगरम् ॥ तस्करश्चौरे ॥ तत् करोति तस्करश्चौरः ॥ बृहस्पतिर्देवतायाम् ।
बृहतां पतिः बृहन् पतिरिति वा बृहस्पतिः । उभयत्र तकारस्य सकारः । अन्यत्र तत्करः बृहत्पतिः ॥ प्रायश्चित्तप्रायश्चित्ती अतीचारशोधने ॥ प्रकर्षेणैसागच्छत्य-
स्मादाचारधर्म इति प्रायो मुनिलोकः । चिन्त्यते स्मर्यते इति *चित्तम् चित्तिश्च व्रतम् । प्रायैश्चित्तं चिन्तितं किल्बिषविशुद्धये प्रायश्चित्तमतिचारशोधनम् आलोचन-
प्रतिक्रमणादि । एवं प्रायश्चित्तिः । पक्षे विसर्जनीयपूर्वः शकार इत्यन्ये । प्रायःश्चित्तम् । प्रायःश्चित्तिः । अन्ये तु प्रायणं प्रायः तस्य चित्तं प्रायश्चित्तं प्रायश्चित्तिरि-
त्यपि मन्यन्ते ॥ शष्कुली कृतान्ने ॥ शष्कुलशब्दाद्गौरादित्वात् ङीः । कृतान्नादन्यत्र शकुली मत्स्यविशेषः ॥ गोष्पदं गोसेविते प्रमाणे च ॥ यत्र गावः पद्यन्ते स

---

कात् सीतम् ॥—आस्पदमिति । आपद्यते प्राप्यते सद्भिः वर्षादित्वादल् ॥—मस्कर इति । ' पुन्नाम्नि घ ' बाहुलकाच्च समासो ' नाम नाम्ना '—इत्यनेन ' पृषोद –इति माडो हल ॥ कु ईषत्
तीर—कास्तीरम् ' अल्पे ' कादेश ॥—कारस्करोऽय टप्रत्ययेऽचि वा । किष्किन्धाशब्दोऽप्रत्यये । ' शीरीभूदूमूघृपाधाग् '–इत्यादिना औणादिके क्ते वा चित्तम् । अपरत्र ' श्वादिभ्य ' इति क्तौ ॥
अन्ये तु प्रायण प्राय इति कोऽर्थ परलोकगमन भोजनत्यागो वा प्राय । तस्य चित्त प्रायचित्तम् । गवा पद गोष्पदं तस्य पूरण ' वृष्टिमाने '–इति णम् ॥—गोष्पदमात्रमिति । गोष्पद मानमस्य

गोभिः सेवितो ग्रामसमीपादिर्देश उच्यते ॥ प्रमाणे *गोष्पदपूरं वृष्टो देवः । *गोष्पदमात्रं क्षेत्रम् । अत्र गोः पदमन्यस्येयत्ता परिच्छेत्तुमुपादीयमानं प्रमाणं भवति । अन्यत्र गोपदम् ॥ अगोष्पदं सेवारहिते ॥ न विद्यते गोः पदं येषु तान्यगोष्पदान्यरण्यानि । अगोष्पदेष्वरण्येषु विश्वासमुपजग्मिवान् ॥ ननु गोष्पदप्रतिषेधादगोष्पदमिति सिध्यति । सत्यम् । किं तु यत्र गवां प्रसङ्गो न ताभिः सेवितस्तत्रैव स्यात् । यथा यत्र शुक्लगुणप्रसङ्गः स एवाशुक्ल इति भवति नात्मा काशादि । यत्र तु गवामत्यन्तासंभवस्तत्र न स्यात् तत्रापि यथा स्यादित्येवमर्थं निपातनम् । न विद्यते गोः पदं यत्रेति त्रिपदबहुव्रीहिविवक्षाया *रूपान्तरनिवृत्त्यर्थम् । बहुवचनमाकृतिगणार्थम् । *तेनाचोवचपरोवरादयोऽपि द्रष्टव्याः ॥ ४८ ॥ *परतः स्त्री पुंवत् स्त्र्येकार्थेऽनूङ् ॥ ३ । १ । ४९ ॥ परतो विशेष्यवशाद्यः शब्दः स्त्रीलिङ्गः स स्त्रिया वर्तमाने एकार्थे तुल्याधिकरणे उत्तरपदे परे पुंवद्भवति 'अनूङ्' न चेदूङन्तो भवति । दर्शनीया भार्या यस्य स दर्शनीयभार्यः । एवं पटुभार्यः । कल्याणभार्यः । शोभनभार्यः । प्रसूतभार्यः । प्रजातभार्यः । एनी भार्या यस्य स एतभार्यः । एवं श्येतभार्यः । युवतिर्जायास्य युवजानिः । कल्याणी चासौ पञ्चमी च कल्याणपञ्चमी । पट्वी च मृद्वी च पट्वीमृद्व्यौ । ते भार्ये अस्य पट्वीमृदुभार्यः । अत्र द्वंद्वपदानां परस्परार्थसंक्रमात् द्व्यर्थस्य मृदुशब्दस्य द्व्यर्थेन भार्याशब्देन सामानाधिकरण्यमिति पुंवद्भावः । पूर्वस्य तु व्यवधानान्न भवति । परत इति किम् । द्रुणीभार्यः । वरटाभार्यः । वडवाभार्यः । *अत्र पुंवद्भावे अर्थतः प्रत्यासन्नाः कूर्महंसाश्वशब्दाः प्राप्नुयुः । द्रोणीभार्यः । कुटीभार्यः । पात्रीभार्यः । अत्र पुंवद्भावे *शब्दतः प्रत्यासन्ना द्रोणकुटपात्रशब्दाः प्राप्नुयुः । स्त्रीति किम् । ग्रामणि कुलं दृष्टिरस्य ग्रामणिदृष्टिः । खलपुदृष्टिः । स्त्र्येकार्थे इति किम् । कल्याण्याः वस्त्रम् कल्याणीवस्त्रम् । स्त्रीग्रहणं किम् । कल्याणी प्रधानमेषां कल्याणीप्रधानाः । गृहिणोनेत्राः । एकार्थ इति किम् । कल्याण्याः माता कल्याणीमाता । दर्शनीयामाता । *अनूङिति किम् । ब्रह्मबन्धूभार्यः । करभोरूभार्यः । अनूङिति प्रसज्यप्रतिषेधात् इडाविडोऽपत्यं स्त्री अञ् तस्य लुप् । इडविड् । सा चासौ भार्या च ऐडविडभार्येत्यादिषु *उत्तरेण पुंवद्भावः । पर्युदासे हि ऊङ्प्रदेशप्रत्ययान्तस्यैव पुंवद्भावः

स्यात् 'द्विगो सशशे च' इत्यऽधिकारे 'मानाद्' इति मानाद् ॥—रूपान्तरनिवृत्त्यर्थमिति । अगोपदमिति रूपस्येत्यर्थः । गृह्णातीति वा 'जातादिदुनी'—इति ग्राह ॥—मस्करीति । णिन्यारादेशे उभयत्रापि ह्रस्व' ॥—आचोवचपरोवरादयोऽपीति । आश्नातीति अवाश्नातीति आङ् च अवाङ् च 'चनर्गदगह' —अत् आचोवचमिति निपात्यम् । परश्चाऽवरश्च परा… च अवराङ् च इति वा परोवरम् ॥—परतः स्त्री—॥—स्त्रियामेकार्थे स्त्री च तत् एकार्थं चेति वा स्त्र्येकार्थं तस्मिन् ॥—अत्र पुंवद्भावे अर्थत इति । द्रुणी इत्यादीना प्रयाणामापि स्त्रीलिङ्गाना पुंलिङ्गे प्रयोगादर्शनात् किंरूप पुंवद्भाव स्यादित्याशङ्का ॥ ननु द्रुणशब्दस्य वृश्चिकवाचकस्य पुंस्त्वमपि दृश्यते तत्कथं नित्यस्त्रीत्वम् । सत्यम् । न तत् वैयाकरणसम्मतम् अपि तु अभिधानकाराणामेव ॥—शब्दतः प्रत्यासन्ना इति । न त्वर्थत इत्यर्थः । ननु कुटपात्रशब्दावन्यलिङ्गावपि स्तस्तत्कथमानिष्टलिङ्गत्वम् । सत्यम् । कुटशब्दो गेहे पात्रशब्दस्तु भाजने वर्तमान स्त्रीलिङ्ग एव केचिदुक्तस्तदभिप्रायाश्रयणेनेदमुच्यते ॥—अनूङिति किमिति । नन्वनूङिति निषेधोऽत्र सूत्रे किमुच्यते 'नाप्प्रियादौ' इत्यादौ प्रक्रमायाते प्रतिषेधाधिकारे एव तु युक्त । सत्यम् । यद्यनेन न कुर्यात् किंतु निषेधाधिकारे ऊङिति सूत्रान्तर विदध्यात् तेन यथा नाप्प्रियादीना निषेधाना 'पुनत् कर्मधारये' इति प्रतिप्रसव उक्तस्तथाऽस्यापि स बाधक स्यात् स मा भूदित्येतदर्थम् ॥—उत्तरेण पुंवद्भाव इति । 'पुनत्कर्मधारये'

स्यादिति ॥ ४९ ॥ ***क्यङ्मानिपित्तद्धिते ॥ ३ । २ ॥ ५० ॥** क्यङि प्रत्यये मानिनि शब्दे चोत्तरपदे पिति तद्धिते च प्रत्यये परे परतः स्त्रीलिङ्गशब्दोऽनूङ् पुंवद्भवति । क्यङ्, श्येनीवाचरति श्येतायते । मानिन्, दर्शनीयां मन्यते दर्शनीयमानी अयमस्याः । दर्शनीयमानिनीयमस्याः । मानिन्ग्रहणमस्त्युत्तरपदार्थम् असमानाधिकरणार्थं च । दर्शनीयामात्मानं मन्यते दर्शनीयमानिनीति तु सामानाधिकरण्ये पूर्वेणैव भवति । पित्तद्धित । थ्यप्, अजायै हितम् *अजथ्यं यूथम् । पित्तिथट् । बह्वीनां पूरणी बहुतिथी । पूचरट् । भूतपूर्वा पट्वी पटुचरी । पित्तस् । बह्वीभ्यो बहुतः। त्रप्, बह्वीषु बहुत्र । पूशस् । बह्वीभ्यो देहि बहुशो देहि । अल्पाभ्यो देहि अल्पशो देहि । पाशप् । निन्द्या दर्शनीया दर्शनीयपाशा । तमप् । इयमासामतिशयेन पक्वा पक्वतमा । तरप्, इयमनयोरतिशयेन पक्वा पक्वतरा । रूपप् । प्रशस्ता दर्शनीया दर्शनीयरूपा । कल्पप् । ईषदसमाप्ता दर्शनीया दर्शनीयकल्पा । देश्यप्, एवं दर्शनीयदेश्या । कप् । ह्रस्वा दर्शनीया *दर्शनीयका । कुत्सिता दरद् *दारदिका । कथं पट्विका मृद्विका । 'ङ्यादीदूतः के' (२–४–१०३) इत्यत्र ङीग्रहणं पुंवद्भावबाधनार्थमित्युक्तम् तेनात्र ह्रस्वो भवति । पिद्ग्रहणं किम् । पट्वीरूप्यम् । पट्वीमयम् । तन्वी तन्वीं खनति तन्वीशः खनति । 'संख्यैकार्थाद्वीप्सायां शस्' (७–२–१५७) इति शस् । तद्धित इति किम् । पट्वीषु । बह्वीषु । कुमारीवाचरति क्विप् । कुमारयति । कुमारीयतेः क्विप् । कुमारी ब्राह्मणः । पञ्चभिर्गार्गीभिः गार्ग्यायणीभिर्वा क्रीतः पञ्चगर्गः । दशगर्गः । अत्रेकणः 'अनाम्न्यद्विः प्लुप्' (६–४–१४७) इति प्लुप् । पित्त्वात्पुंस्त्वम् । ततो 'यञञोश्या' (६–१–१२६) इत्यादिना यञञोः लुप् भवति । गतगतेत्यत्रापि प्लुप्चादावेकस्य स्यादेरित्यनुवर्तमाने 'आबाधे' (७–४–८५) इति द्विर्वचने आदेः स्यादेर्लुपः पित्त्वात्पुंस्त्वम् ॥ ५० ॥ ***जातिश्च णितद्धितयस्वरे ॥ ३ । २ । ५१ ॥** अन्या परतः स्त्री जातिश्च णिप्रत्यये यकारादौ स्वरादौ च तद्धिते विषयभूते उत्पत्स्यमाने तद्विवक्षायामेव पुंवद्भवति अनूङ् । णि, पट्वीमाचष्टे *पटयति । लघयति । एवमेतयति । श्येतयति । तद्धितय, एन्यां साधुः एत्यः । एवं श्येत्यः । एन्याः भावः *ऐत्यम् । एवं श्यैत्यम् । लौहित्यम् । तद्धितस्वर, भवत्या इदं भावत्कम् । भवदीयम् । इयमासामतिशयेन पट्वी पटिष्ठा । पटीयसी । जाति, तद्धितय । दरदोऽपत्यं स्त्री अण्, लुप् । दरत् । तस्यां साधुः दारद्यः । एवम् *औशिज्यः । पुंवद्भावादणो लुप् निवर्तते । तद्धितस्वरे, गार्ग्यायण्याः कुत्सितमपत्यं *गार्ग्यः गार्गिकः । हस्तिनीनां समूहो हास्तिकम् । जातिग्रहणं जातिलक्षणप्रतिषेध-

---

इत्यनेनेत्यर्थो न त्वनेन । 'स्वाङ्गाद् ङीर्जातिश्च'–इति निषेधात् ॥—**क्यङ्मानि**—॥—**अजथ्यमिति** । अत्र 'स्वाङ्गाद् ङीर्जातिश्च'–इति निषेधेऽपि पित्करणात् पुंवद्भाव ॥—**दर्शनीयका** । अत्राऽसंदेहार्थमिकारो न कृत.। तथाहि किमत्र पुंवद्भावे सति 'अस्यायत्तत्क्षिपकादीनाम्' इत्यनेन इकार यद्वाऽकृतेपि पुंवद्भावे 'स्वज्ञाजभस्त्रा'–इत्यनेनाप एव स्थाने इति पुंवद्भावाभावयोर्न विशेषप्रतीतिः स्यात् ॥—**दारदिकेति** । दरदा राज्ञी 'पुरुमगध'—इत्यण् । यदा त्वपत्यार्थेऽण् तदा 'स्वाङ्गाद् ङी'—इति गोत्र चरणे सहेति जातित्वे पुंवद्भावप्रतिषेध स्यात् । अथेदृशे वाक्ये कृतेऽण् न प्राप्नोति यतो राज्यऽभिधेये उक्त । अत्र तु स्त्रीत्वविशिष्टोऽस्तीति न प्राप्नोति । उच्यते । नामग्रहणे लिङ्गविशिष्टस्याऽपीति ॥—**जातिश्च णि**—॥—**पटयतीति** । णिजि पुंवद्भावे 'नामिनोऽकलिहले' इति वृद्धौ अन्त्यस्वरादिलोपे । यद्यत्र वृद्धिमकृत्वैव उकारस्यैव लोप विदध्यात् ततोऽपीपटदित्यादौ समानलोपित्वादित्व न स्यात् ॥—**ऐत्यमिति** । 'वर्णदृढादिभ्य' ष्यण् ॥—**औशिज्य** इति ।

निवृत्त्यर्थम् । सति तस्मिन् चकारोऽन्यार्थः । जातिः परतः स्त्री अन्या च परतः स्त्री पुंवद्भवतीत्यर्थः । अकृते हि चकारे जातेरेव पुंवद्भावः स्यात् । तद्धितेति किम् । हस्तिनीमिच्छति हस्तिनीयति । हस्तिन्य. । एनीयति । एन्यः । कथं यौवतम् । भिक्षादौ युवतीति स्त्रीलिङ्गपाठात् । कौण्डिन्य इति तु 'कौण्डिन्यागस्त्ययोः'—(६–१–१२७) इति निर्देशेन *पुंवद्भावस्यानित्यत्वात् । *अत एव च *मानाय्य इत्यत्रापि न भवति । *सापत्न इत्यपि 'सपत्न्यादौ' (२–४–५०) इति सूत्रे सपत्नीति समुदायनिपातनात् । अत एव सपत्नीभार्य इत्यत्रापि न भवति । *सपत्नस्यायं सापत्न इति वा भविष्यति । तद्धितयस्वर इति विषयसप्तम्याश्रयणं किम् । पट्व्याः भावः *पाटवम् । अत्र प्रत्ययोत्पत्तेः पूर्वमेव पुंवद्भावे लघ्वादित्वात् 'ऋवर्णाल्लघ्वादेः' (७–१–६९) इत्यण् भवति । परसप्तमीसमाश्रयणे तु पट्वीशब्दस्य लघ्वादित्वाभावात्तत्तोऽण् न स्यादिति । यस्वर इति किम् । पट्व्या आगतम् पट्वीरूप्यम् पट्वीमयम् ॥ ५१ ॥ *एयेऽग्नायी ॥ ३ । २ । ५२ ॥ तद्धिते एयप्रत्यये परे अग्नाय्येव परतः स्त्री पुंवद्भवति । अग्नाय्या अपत्यम् *आग्नेयः । अग्नायी देवताऽस्य आग्नेयः स्थालीपाकः । पूर्वेण सिद्धे *नियमार्थं वचनम् । तेन *श्यैनेयः *रौहिणेयः । अत्र पूर्वेणापि पुंवद्भावो न भवति ॥ ५२ ॥ *नाप्प्रियादौ ॥ ३ । २ । ५३ ॥ *पूरण्यप्प्रत्ययान्ते स्त्र्येकार्थे उत्तरपदे प्रियादौ च परे परतः स्त्री पुंवन्न भवति । अप्, कल्याणी पञ्चमी आसां कल्याणीपञ्चमा रात्रयः । एवं कल्याणीदशमाः । पूरण्यवन्तस्य ग्रहणात् इह पुंवद्भावो भवत्येव । बह्व्य ऋचो यस्य स बह्वृचश्चरणः । प्रियादि, कल्याणी प्रिया अस्य कल्याणीप्रियः । एवं भव्याप्रियः । भव्यामनोज्ञः । प्रियाकल्याणीकः । प्रियासुभगः । कल्याणीदुर्भगः । कल्याणीस्वः । *प्रियाक्षान्तः । दर्शनीयाकान्तः । प्रियावामनः । दर्शनीयासमः । प्रियासाचिवः । प्रियाचपलः । प्रियाबालः । कल्याणीतनयः ।

---

वशकृ॰ नष्टि न्याय नशे क्तित् इञ् 'वशेरयङि' गृत् उशिजोऽपत्य 'पुरुपमगध'—इत्यण् 'द्वेरञ'—लोप । उशिजि साधु ॥—गार्ग्य इत्यादि । 'वृद्धास्नि॥ क्षेपे णेकणो' तत पुवत्त्वे 'तद्धितयस्वरेऽना'—इति यलोप ॥—पुवद्भावस्यानित्यत्वादिति । गर्गादित्वाद् यञि पुवद्भावे तु 'नोऽपदस्य'—इत्यन्त्यस्वरादिलोपे कोण्ड्य इति स्यात् ॥—अत एव चेति । अनित्यत्वादेवेत्यर्थ । मनोर्भार्या 'मनोरो च वा' डी ऐश्च । मनाय्या अपत्य 'गर्गादेर्यञ्' **मानाय्य** । सपत्न्या अपत्य 'शिवादेरण्' **सापत्न** । ननु मनागीशब्दस्य गर्गादिपाठात्स्वयमेव न भविष्यति । यथा यौवतमित्यत्र भिक्षादिपाठात्स्त्रीलिङ्गस्य युवतिशब्दस्य पुवद्भावो न भवति एवमत्रापि । उच्यते । गर्गादिगणेऽणेकणो प्रस्तावस्य पाठ इति तत्राऽप्युक्त ततश्च पुवद्भाव प्राप्नोति स मा भूदिति कौण्डिन्यनिर्देशात्पुवद्भावो न भवतीत्युक्तम् ॥—**सपत्नस्यायमिति** । सपत्नशब्दश्च सपत्न्यास्तुल्य. 'अ सपत्न्या' ण औणादिको वा ॥—**पाटवमिति** । अत्र एयण्विषये पुवद्भावस्ततोऽण् ॥—**एयेऽग्ना**—॥—**आग्नेय** इति । 'कल्यग्नेरेयण्' ॥—**श्यैनेयेति** । 'द्विस्वरादनद्या' ॥—**रौहिणेयेति** । 'ङयाप्त्यूङ' इति एयण् ॥—**नियमार्थमिति** । विपरीतनियमस्तु न भवति प्रतिषेधाधिकारेऽग्न्याग्यनेये इत्यकरणात् । अग्नेय वा आग्नेय इत्यनिपातनात् । विपरीतनियमे हि अग्नाय्ये हित 'तस्मै हिते' इतीये 'जातिश्च'—इत्यनेनापि पुवत् न स्यात् । ततश्चाग्नायीय इति स्यात् । स्थिते त्वऽग्नीय इत्येव भवति ॥—**नाप्प्रिया**—॥—**पूरण्यप्प्रत्ययान्त** इति । प्रियादे स्वरान्तस्यावन्तस्य उत्तरपदस्व तत्साहचर्यादप्प्रत्ययोऽपि स्वरान्तादेन विहितो गृह्यते स च पूरणीप्रत्ययान्तादेन सम्भवति । यद्वा अविति 'पूरणीभूयस्तत्प्राधान्येऽप' इति सूत्रश्रुतो गृह्यते नत्त्वऽधिकारानुमित । श्रुतानुमितयो श्रोतस्यैव ग्रहणात् ॥—**प्रियाक्षान्त** इति । क्षमते 'पुतापित्त'—इति निपात्यते । क्षान्तिरस्या अस्ति । अग्नादि-

कल्याणीदुहितृकः । कल्याणीभक्तिः । गिरितनया भक्तिरस्य *गिरितनयाभक्तिः । कथं दृढभक्तिः स्थिरभक्तिः शोभनभक्तिः परिपूर्णभक्तिरित्यादि । दृढं भक्तिरस्येत्येवम् *अस्त्रीपूर्वपदस्य विवक्षितत्वात् । अप्रियादाविति किम् । कल्याणी पञ्चमी अस्मिन् कल्याणपञ्चमीकः पक्षः । कल्याणी प्रमाणी येषां ते कल्याणीप्रमाणाः । प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा स्वा क्षान्ता कान्ता वामना समा सचिवा चपला बाला तनया दुहितृ भक्ति इति प्रियादिः । वामेत्यप्यन्ये । प्रियवामः ॥ ५३ ॥ *तद्धिताककोपान्त्यपूरण्याख्याः ॥ ३ । २ । ५४ ॥ *तद्धितप्रत्ययस्याकप्रत्ययस्य च यः कः स उपान्त्यो यासां तास्तद्धिताककोपान्त्याः पूरणीप्रत्ययान्ता आख्याः संज्ञास्तद्रूपाश्च परतः स्त्रियः पुंवन्न भवन्ति । तद्धित, मद्रिकाभार्यः । वृजिकाभार्यः । लाक्षिकीभार्यः । लाक्षिकीवृहतिकः । लाक्षिकीदेश्या । रौचनिकीचरी । मद्रिकायते । वृजिकामानिनी । अकः, कारिकाभार्यः । हारिकाभार्यः । विलेपिकाया धर्म्यं *वैलेपिकम् । आनुलेपिकम् । *कारिकाकल्पा । पाचिकारूपा । कारिकायते । पाचिकामानिनी । पूरणी, द्वितीयाभार्यः । पञ्चमीभार्यः । द्वितीयाकल्पा । पञ्चमीदेश्या । पञ्चमीयते । षष्ठीमानिनी । आख्या, दत्ताभार्यः । गुप्ताभार्यः । दत्तारूपा । गुप्तापाशा । गुप्तामानिनी । कस्य तद्धिताकविशेषणं किम् । पाकभार्यः । मूकभार्यः । जल्पाकभार्यः । कामुककल्पा । जागरूकरूपा । लुण्टाकायते । कुट्टाकायते । कुट्टाकमानिनी ॥ ५४ ॥ *तद्धितः स्वरवृद्धिहेतुररक्तविकारे ॥ ३ । २ । ५५ ॥ स्वरस्थानाया वृद्धेर्यो हेतुस्तद्धितो रक्ताद्विकाराच्चान्यत्रार्थे विहितस्तदन्तः परतः स्त्रीलिङ्गः पुंवन्न भवति । माथुरीभार्यः । *वैदिशीभार्यः । वैदर्भीभार्यः । *सौतंगमीभार्यः । *कार्तवीर्यीभार्यः । माथुरीदेश्या । नादेयीचरी । सौतंगमीयते । वैदर्भीमानिनी । स्रौग्घ्नीमानिनी । तद्धित इति किम् । कुम्भकारी भार्या अस्य स कुम्भकारभार्यः । एवं का-

---

भ्योऽप्रत्ययो वा । क्ते तु 'क्ता' इति बहुत्वनिर्देशात्प्रिय इति विकल्प बाधित्वा नित्यमेव प्राक् स्यात् । एव कान्तोऽपि ॥—गिरितनयाभक्तिरित्यत्र कर्मणि क्तिः । भज्यते सेव्यतेऽसौ । गिरितनया भक्ति सेव्या यस्य ॥—अस्त्रीपूर्वपदस्येति । ननु चात्र भक्तौ स्त्रिया विशेष्याया गुणवचनानामाश्रयतो लिङ्गवचनानीति दृढादिभि स्त्रीलिङ्गैर्भाव्यम् । सत्यम् । दृढादिशब्दोऽत्राऽदार्ढ्यादिनिवृत्तिपर प्रयुज्यते । तत्र चादार्ढ्यादिनिवृत्तिपराया नोदनाया लिङ्गविशेषोपादानस्यानुपकारित्वादृक्तेः स्त्रीत्वविवक्षामन्तरेणापि दार्ढ्यादिमात्रविवक्षयाप्यदार्ढ्यादिनिवृत्ते सिद्धत्वात् स्त्रीत्वमत्र न विवक्षितमित्यौत्सर्गिक नपुसकत्वमेव भवति । कल्याणी भक्तिरित्यादौ तूत्तरपदसामानाधिकरण्याभिव्यक्त्यर्थ पूर्वपदे स्त्रीत्वमुच्यते । विवक्षाद्वयसभवे हि यथाकाम प्रयोगो भवतीति समाधानार्थ ॥—तद्धिता—॥ तद्धितश्चाकश्च तद्धिताकौ तद्धिताकयो क स उपान्त्यो येषा परत स्त्रीरूपाणा शब्दानामिति कृत्यम् । वृत्त्यभिप्रायेण तु यासामिति कृते ह्रस्वत्व न स्यात् । अत्र ङयन्तेभ्यो रूपप्कल्पपौ नोदाहियेते तयो परत्वात् 'ङय' इत्यनेन ह्रस्वत्व भवति । एवमुत्तरयोरपि सूत्रयोर्द्रष्टव्यम् ॥—वैलेपिकमित्यत्र कुब्रादेरण् । एवमग्रतनेऽपि ॥—कारिकाकल्प इति । बाधन्ते स्वार्थिका क्वचिदित्याप् न । ननु दत्तागुप्ताशब्दौ सज्ञाशब्दत्वात् स्वत स्त्रीलिङ्गौ तत्कथमनेन निषेध । सत्यम् । एतौ सज्ञायामपि वर्त्तमानौ दानगोपनक्रियासबन्धात्सर्वेष्वप्यर्थेषु स्त्रीपुन्नपुसकेषु वर्तेते इत्यत्र स्त्रीविवक्षणात् परत स्त्रीलिङ्गता ॥—

—तद्धितः स्वर—॥—वैदिशीभार्य इति । विदिशाया भवा जाता वा ॥—सौतङ्गमीभार्य इति । सुतगमस्यापत्य स्त्री ऋष्यण् । ततो ङीप्रत्यय सुतगमादेरिञ् नानीयते 'देशे नाम्नि' इति भणनात् । यतोऽसौ सौतगमीति कस्याश्चित् सज्ञा सा भार्याऽस्येति ॥—कार्त्तवीर्यीभार्य इति । कृत वीर्यमनेन तस्यापत्य स्त्री ऋष्यण् ॥—अर्धप्रस्थेति । 'अर्ब्रातपरिमाणस्य'—इत्यत्राऽकारस्य

ण्डलावभार्यः। वृद्धिहेतुरिति किम् । अर्धप्रस्थे भवा अर्धप्रस्था अर्धप्रस्था भार्या यस्य सः *अर्धप्रस्थभार्यः । शोभनतरभार्यः । मध्यमभार्यः। *अन्ये तु वृद्धिमात्रहे-
तोर्ङणतस्तद्धितस्य पुंवत्प्रतिषेधमिच्छन्ति । तन्मते वैयाकरणीभार्यः । अरक्तविकारे इति किम् । कषायेण रक्ता काषायी सा वृहतिकास्य काषायवृहतिकः । एवं
माञ्जिष्ठवृहतिकः । लोहस्य विकारो लौही सा *ईषास्य लौहेषः । एवं खादिरेषः ॥ ५५ ॥ *स्वाङ्गान्ङीर्जातिश्चामानिनि ॥ ३ । २ । ५६ ॥ स्वाङ्गाद्यो
विहितो ङीस्तदन्तो जातिवाची च यः शब्दः परतः स्त्री स पुंवन्न भवति अमानिनि मानिन्शब्दश्चेत्परो न भवति । दीर्घकेशीभार्यः। चन्द्रमुखीभार्यः । कलकण्ठी-
देश्या । तनुगात्रीचरी । चन्द्रमुखीयते । जाति, कठीभार्यः । बह्वृचीभार्यः । कठीदेश्या । बह्वृचीचरी । शूद्राभार्यः । क्षत्रियाभार्यः । शूद्रापाशा । क्षत्रियादेश्या
॥ *आकृतिग्रहणा जातिः *अत्रिलिङ्गा च यान्विता। आजन्मनाशमर्थाना सामान्यमपरे विदुः॥१॥ अत्र प्रथमजातिलक्षणानुसारेण कुमारीभार्यः किशोरीभार्य इति
भवति । द्वितीयजातिलक्षणानुसारेण कुमारभार्यः किशोरभार्य इति भवति । न हि कुमारत्वादि उत्पत्तेः प्रभृत्याविनाशमनुवर्तते । स्वाङ्गादिति किम् । पटुभार्यः ।
ङीरिति किम् । सकेशभार्यः । अमानिनीति किम्। दीर्घकेशमानिनी । कठमानिनी । असमासनिर्देशः सुखार्थः ॥ ५६ ॥ *पुंवत्कर्मधारये ॥ ३ । २ । ५७ ॥
परतः स्त्र्यनूङ् कर्मधारये समासे स्त्र्येकार्थे उत्तरपदे परे पुंवद्भवति । प्रतिषेधनिवृत्त्यर्थ आरम्भः ॥ नाप्प्रियादौ ( ३-२-५३ ) इत्युक्तं तत्रापि भवति । कल्याणी
चासौ प्रिया च कल्याणप्रिया । एवं कल्याणमनोज्ञा । 'ताद्धिताककोपान्त्यपूरण्याख्याः' ( ३—२—५४ ) इत्युक्तं तत्रापि भवति । मद्रिका चासौ भार्या च
मद्रकभार्या । *लाक्षिकवृहतिका । पाचकवृन्दारिका । कारकवृन्दारिका । पञ्चमवृन्दारिका । षष्ठवृन्दारिका । दत्तवृन्दारिका । गुप्तवृन्दारिका । 'तद्धितः स्वरवृद्धि-
हेतुररक्तविकारे' ( ३-२-५५ ) इत्युक्तं तत्रापि भवति । माथुरी चासौ वृन्दारिका च माथुरवृन्दारिका । स्रौघ्नवृन्दारिका । स्वाङ्गान्ङीर्जातिश्चामानिनि
( ३-२-५९ ) इत्युक्तं तत्रापि भवति । चन्द्रमुखी चासौ वृन्दारिका च चन्द्रमुखवृन्दारिका । दीर्घकेशवृन्दारिका । कठवृन्दारिका । बह्वृचवृन्दारिका । वतण्ड-
स्यापत्यं वातण्ड्यः । स्त्री चेत् वतण्डी । सा चासौ वृन्दारिका च वातण्ड्यवृन्दारिका । गर्गस्यापत्यं गार्ग्यः स्त्री चेत् गार्गी। सा चासौ वृन्दारिका च गार्ग्यवृन्दा-

---

वृद्धिविधौ वर्जनात् आयस्य च वावचनादत्र वृद्ध्यऽभाव ॥—अन्ये त्विति । तेन वैयाकरणीभार्य इत्यत्र स्वरस्थानवृद्ध्यभावेऽपि पुंवन्निषेध । न ह्यत्रैकार स्वरस्थानी । ईषतीति 'नाम्युपान्त्य'—इति
के ईषा ॥—स्वाङ्गान्ङी—॥—शूद्रेति । शीयते गर्जयति पद् कर्माणीति शूद्र 'शदेरूच' पूर्वत्र जातिलक्षणे उक्तेऽपि अत्रैवविधा जातिर्ग्राह्येति वैचित्र्यार्थमाह—आकृतिग्रहणेति । ततश्च आ-
कृतिग्रहणा जातिरिति प्रथमा जाति । अनया च कुमारीभार्य किशोरीभार्य इति सिद्धम् ॥—अत्रिलिङ्गा च यान्विता आजन्मनाशमर्थानामिति द्वितीया । केचित्तु आजन्मनाशमर्थानाम-
न्विता इति आकृतिग्रहणा जातिरित्यस्य विशेषण कुर्वन्ति तन्मताभिप्रायेण कुमारभार्य किशोरभार्य इत्येव भवति । न हि कुमारत्वादि उत्पत्ते प्रभृति आविनाशमऽनुवर्त्तते ॥—पुंवत्कर्म—॥ पुंवत्-
ग्रहण किमर्थ यतो न कर्म्मधारये इति क्रियते तत कर्म्मधारये पुनन्न भवति अपि तु भवत्येव पाश्चात्यसूत्रात् नञिति वर्त्तते । उच्यते । उत्तरार्थं कृतम् ॥—लाक्षिकवृहतिका इति । अरक्त-
विकार इत्यनयापि व्यावृत्त्या सिद्धमिद तत्कथमऽत्र दर्शितम् । उच्यते । यदि 'तद्धित स्वरवृद्धि'-इति निषेध क्रियते तदानीं सिध्यति व्यावृत्त्या। यदा तु तद्धिताककोपान्त्येति निषेध प्राप्नोति तदाऽने-

रिका। कपोतपाक एव कापोतपाक्यः स्त्री चेत् *कापोतपाका सा चासौ वृन्दारिका च कापोतपाक्यवृन्दारिका। कुञ्जस्यापत्यं कौञ्जायन्यः स्त्री चेत् कौञ्जायनी। सा चासौ वृन्दारिका च कौञ्जायन्यवृन्दारिका। अङ्गस्यापत्यानि अङ्गाः स्त्रियश्चेदाङ्ग्यः। ताश्च ता वृन्दारिकाश्च अङ्गवृन्दारिकाः। एवं गर्गवृन्दारिकाः। इडविड् पृथ् दरद् उशिज् एते जनपदशब्दा क्षत्रियवाचिनः एभ्योऽपत्यप्रत्ययस्य स्त्रियां लुपि इडविट् चासौ वृन्दारिका चेत्यादिविग्रहे ऐडविडवृन्दारिका पार्थवृन्दारिका दारदवृन्दारिका औशिजवृन्दारिका इति भवति। परतः स्त्रोत्येव। खट्वावृन्दारिका। अनूङित्येव। ब्रह्मबन्धूवृन्दारिका ॥५७॥ *रिति ॥३।२।५८॥

परतः स्त्र्यनूङ् रिनि प्रत्यये जातीये देशीये च पुंवद्भवति। पट्वी प्रकारोऽस्याः पटुजातीया। ईषदपरिसमाप्ता पट्वी पटुदेशीया। मद्रकजातीया। मद्रकदेशीया। पाचकजातीया। पाचकदेशीया। पञ्चमजातीया। षष्ठदेशीया। दत्तजातीया। गुप्तदेशीया। माथुरजातीया। स्रौघ्नदेशीया। दार्घकेशजातीया। चन्द्रमुखदेशीया। कठजातीया। बह्वृचदेशीया। वातण्ड्यजातीया। गार्ग्यदेशीया। कापोतपाक्यजातीया। कौञ्जायन्यदेशीया। अङ्गजातीया। गर्गदेशीया। ऐडविडजातीया। पार्थदेशीया। दारदजातीया। औशिजदेशीया। परतः स्त्रीत्येव। कुटीजातीया। द्रुणीदेशीया। अनूङित्येव। करभोरूजातीया। मद्रबाहूदेशीया ॥५८॥ *त्वते गुणः ॥ ३ । २ । ५९ ॥

परतः स्त्र्यनूङ् गुणवचनः शब्दस्त्वत इत्येतयोः प्रत्यययोः परयोः पुमान् भवति। पट्व्याः भावः पटुत्वम्। पटुता। एन्याः भावः एतत्वम् एतता। श्येन्याः भावः श्येतत्वम् श्येतता। त्वत इति किम्। पट्वीरूप्यम्। पट्वीमयम्। गुण इति किम्। *कठीत्वम्। कठीता। दत्तात्वम्। दत्ताता। कर्त्रीत्वम्। कर्त्रीता। *केचित्तु जातिसंज्ञावर्जितस्य विशेषणमात्रस्य पुंवद्भावमिच्छन्ति। पाचिकायाः भावः पाचकत्वं पाचकता। मद्रिकायाः भावः मद्रकत्वम्। मद्रकता। आनुकूलिक्याः भाव आनुकूलिकत्वम्। आनुकूलिकता। आक्षिक्याः आक्षिकत्वम् आक्षिकता। द्वितीयायाः द्वितीयत्वम् द्वितीयता। पञ्चम्याः पञ्चमत्वम् पञ्चमता। माथुर्याः माथुरत्वम् माथु-

---

नापि पुंवत्त्वं स्यादिति दर्शितम्। सर्वत्र जातिलक्षणङीबाधको वृन्दारिकाशब्दे अजादित्वादाप्। 'दृव्येपसूतपुत्रवृन्दारकस्य' इति विकल्पेन इत्वं भवति ॥—कापोतपाका इति। कपोतं पचति अण्। अत्राण्लक्षणं जातिनिमित्तं वा ङीप्रत्ययं बाधित्वा 'अजादे' इत्याप् ॥—रिति ॥ ननु रानुबन्धा ये प्रत्यया ते पानुबन्धा क्रियन्ता ततश्च 'क्यङ्मानि'—इति पुंवद्भावसिद्धौ रितीति सूत्रं न कार्यम्। सत्यम्। यदि पानुबन्धा क्रियन्ते तदा माथुरी प्रकारोऽस्या इति कृते 'तद्धित स्वर'—इति निषेधः प्राप्नोति तद्बाधनार्थं विधीयते। अप्राप्तप्रापणार्थोऽयमारम्भः। ननु मद्रकजातीया इत्यादिषु 'तद्धिताक्कोपान्त्य'—इत्यादिभिः कथं पुंवन्निषेधो न भवति। उच्यते। सर्वबाधनार्थं चैतत् वचनमन्यथा क्यङ्मानिरिति पित्तद्धिते इत्येकमेव योगं कुर्यात् ॥—त्वते—॥ अनुकूलं वर्त्तते 'त प्रत्यनोर्लोम'-इति ठक्। अत्र यथा 'भावे त्वतल्' इति विहितस्तल् गृह्यते तथा 'देवात्तल्' इत्यपि। तेन देव एव देवतेतिवत् नामग्रहणे इति न्यायाद्देवीशब्दादपि तलि देवतेति सिद्धम्। ऐश्वर्यरूपगुणाभिधायकत्वाद्देवीशब्दोऽपि गुणवचनः। जातिवाचित्वे तु देव्येव देवीता देव्या भावो देवीत्वं देवीतेति भवति। गुण इति गुणद्वारेण गुणिनि वर्त्तमानो गुणवचनो गृह्यते। गुणमात्रवृत्तेरस्त्रीलिङ्गत्वात्पुंभावाऽप्राप्तिरिति ॥—कठीत्वमिति। ननु कठीत्वमिति गुण इति व्यावृत्तौ कथं दर्शितं यतोऽत्र गुण इत्यसत्यपि जाते पुंभावप्रतिषेधादेव न भविष्यति। नैवम्। सर्वापवादत्वादस्य। किंच कर्त्रीत्वं कर्त्रीता इत्यादिक्रियाशब्दार्थं गुणग्रहणं कर्त्तव्यमेव तस्मिंश्च सति जातावपि प्रत्युदाह्रियते ॥—केचिदिति। तन्मतसंग्रहार्थं गुणो विशेषणमित्यपि व्याख्येयम्

रेता। सौगन्ध्याः सौगन्ध्यतरम् सौगन्ध्यता। चन्द्रमुख्याः चन्द्रमुखतरम् चन्द्रमुखता। सुकेश्याः सुकेशत्व सुकेशता॥ सैन्याः श्रियामनुपभोगनिरर्थकत्वमिथ्यापवादैर्मिमृजनं
वननिम्नगानाम्॥ सस्नुः पयः पपुरनेनिजुरम्बराणि जक्षुर्बिसन्धृतविकाशिबिसमसूनाः॥ १॥ तदवितथमवादीर्यन्मम त्वं प्रियेति प्रियजनपरिभुक्त यद्दुकूलं दधानः
॥ तदधिरमति मा गाः कामिनां मण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेन॥ १॥ तथा, रसवत्या धूमवत्त्वम् भुवस्तृणवत्त्वम् शालाया दाण्डत्वमित्यादौ॥ ५९॥
रुत्वौ क्वचित्॥ ३। २। ६०॥ परतः स्त्री अनूङ् रुत्वौ पुंवद्भवति क्वचिल्लक्ष्यानुरोधेन। अमहती महती भूता महद्भूता कन्या। एव बृहत्कृता। क्वचिद्ग्रहणादगोमती
गोमतीभूता गोमतीभूतेत्यादौ न स्यादेव। पट्वीभूता पटूभूता मृद्वीकृता मृदूकृतेत्यादौ विकल्पः। महतीभूतेत्यपि केचित्॥ ६०॥ *सर्वादयोऽस्यादौ॥ ३।
२। ६१॥ सर्वादिर्गणः परतः स्त्री पुंवत् भवति 'अस्यादौ' स्यादिश्चेत्ततः परो न भवति। सर्वासां स्त्रियः सर्वस्त्रियः। भवत्याः पुत्रः भवत्पुत्रः। एकस्याः क्षो-
रमेकक्षीरम्। एकस्या आगतमेकरूप्यम्। एकमयम्। *तया प्रकृत्या तथा। एवं *यथा। तस्यां वेलायां तदा। एवं यदा, कदा। सर्वदा। अन्यदा। तर्हि। यर्हि।
कर्हि। सर्वामिच्छति सर्वकाम्यति। भवत्काम्यति। एककाम्यति। *परत्वात्प्रतिषेधविषयेऽपि भवति। सर्वा प्रियाऽस्य सर्वप्रियः। एवं सर्वमनोज्ञः। सर्विका
भार्याऽस्य सर्वकभार्यः। एवं विश्वकभार्यः। सर्वादय इति किम्। *कन्यापुरम्। कुमारीनिवासः। *अस्यादाविति किम्। *सर्वस्यै। दक्षिणपूर्वस्यै। उत्तरपूर्व-
स्यै। बहुवचनं व्याप्त्यर्थम् तेन भूतपूर्वसर्वादेरपि भवति। दक्षिणोत्तरपूर्वाणाम् इत्यादि॥ ६१॥ *मृगक्षीरादिषु वा॥ ३। २। ६२॥ मृगक्षीरादिस-
मासशब्देषु परतः स्त्रीलिङ्गमनेकार्थेऽस्त्र्यर्थे चोत्तरपदे पुंवद्वा भवति। मृग्याः क्षीरं मृगक्षीरम् मृगीक्षीरम्। एवं मृगपदम्, मृगीपदम्। मृगशावः, मृगीशावः। कुक्कु-
टाण्डम् कुक्कुट्यण्डम्। मयूराण्डम्। मयूर्यण्डम्। काकाण्डं, काक्यण्डम्। काकशावः, काकीशावः। *पुंस्त्रीलिङ्गपूर्वपदभेदेन समासविवक्षायां सूत्रानारम्भे मृगक्षीरादयो

॥—सर्वादयो—॥—तया प्रकृत्येति। सीतान्यकल्पार्थमिदं वाक्यं तेन प्रकारेणेति वक्तव्ये। अथ चाऽत्र पुंवद्भावः किमर्थं समजनि। उच्यते। अत्र पुंवद्भावे सति स्त्रियामाप न भवति। एवं यथा तदेत्यादि॥
—परत्वादिति। कल्याणीप्रियेत्यादौ 'नाप्प्रियादौ' इत्यादिप्रतिषेध सावकाश। भवत्पुत्र इत्यादौ त्वयं विधिः सर्वा प्रियाऽस्य सर्वप्रिय इत्यादौ तूभयप्राप्तौ द्वयोरन्यत्र सावकाशत्वे परत्वादनेन पुमान् इत्यर्थः॥
—कन्यापुरमिति। कन्याशब्दो व्याकरणे कन्य इति पुमानपि प्रसिद्ध इति 'परतः स्त्री'—इति॥—अस्यादाविति किमिति। न च स्याद्युत्पत्तेः प्रागेवात्र पुंभावः कथं न भवतीति वाच्यम्। अस्यादाविति
वचनात्। यतः परं स्यादि प्रयुज्यते तस्य पुंभावो न भवति। अन्यथाऽस्यादावित्यस्यानर्थक्यं स्यात्। अथोत्तरपदे परे इत्यनुवर्त्तनात् सर्वस्यै दक्षिणपूर्वस्यै इत्यादौ निमित्तभूतस्योत्तरपदस्याभावात्
पुंभावो न भविष्यति किमऽस्यादावित्यनेन। सत्यम्। अत एव सर्वस्यै इत्यादौ निमित्तभूतस्योत्तरपदस्याभावात् पुंभावनिवृत्त्यर्थादऽस्यादाविति वचनादऽत्रोत्तरपदं इति नास्तीति ज्ञायते। तेन यथेत्यादा-
वपि पुमान् सिद्ध। न च अस्या पुन इत्याक्रोशे षष्ठ्या अलुप्युत्तरपदे पुंभावनिषेधार्थमऽस्यादाविति वाच्यम्। अत्र विभक्त्या व्यवधानादुत्तरपदे सर्वाद्यऽभावात्। एतदर्थत्वे च ङस प्रतिषेध एव कर्त्तव्यः
स्यान्नास्यादाविति॥—दक्षिणोत्तरपूर्वाणामिति। 'न सर्वादि' इति सर्वादित्वाभाव॥—सर्वस्यै। दक्षिणपूर्वस्यै इत्युक्त ततश्चात्र पुंवद्भावः स्वयमेव न भविष्यति। सर्वादेर्ङस्पूर्वेति डस्विधा-
नात्। अन्यथा आबन्तत्वाभावात् स न स्यात्। उच्यते। यदा सर्वाशब्दादऽम्रे भ्यस् तदापि पुंवत् माभूत् इत्यऽस्यादिग्रहणम्॥—मृगक्षी—॥—पुंस्त्रीलिङ्गेति। ननु मृगस्य पदं मृगपदं मृग्या

न सिध्यन्ति । *मृगक्षीरादयः प्रयोगतोऽनुसर्तव्याः ॥ ६२ ॥ ***ऋदुदित्तरतमरूपकल्पब्रुवचेलड्गोत्रमतहते वा ह्रस्वश्च ॥ ३ । २ । ६३ ॥** ऋदिदुदिच्च परतः स्त्रीलिङ्गशब्दस्तरादिषु प्रत्ययेषु ब्रुवादिषु च स्त्र्येकार्थेपूत्तरपदेषु ह्रस्वाऽन्तः पुंवच्च वा भवति । तर, पचन्तितरा । पचत्तरा । पचन्तीतरा । श्रेयसितरा । श्रेयस्तरा । श्रेयसीतरा । विदुषितरा । विद्वत्तरा । विदुषीतरा । तम, पचन्तितमा । पचत्तमा । पचन्तीतमा । श्रेयसितमा । श्रेयस्तमा । श्रेयसीतमा । विदुषितमा । विद्वत्तमा । विदुषीतमा । रूप, पचन्तिरूपा । पचद्रूपा । पचन्तीरूपा । श्रेयसिरूपा । श्रेयोरूपा । श्रेयसीरूपा । विदुषिरूपा । विद्वद्रूपा । विदुषीरूपा । कल्प, पचन्तिकल्पा । पचत्कल्पा । पचन्तीकल्पा । विदुषिकल्पा । विद्वत्कल्पा । विदुषीकल्पा । ब्रुव, पचन्ती चासौ ब्रुवा च पचन्तिब्रुवा । पचद्ब्रुवा । पचन्तीब्रुवा । श्रेयसिब्रुवा । श्रेयोब्रुवा । श्रेयसीब्रुवा । विदुषिब्रुवा । विद्वद्ब्रुवा । विदुषीब्रुवा । चेलट्, टिद्वचनं ङ्यर्थम् । पचन्ती चासौ *चेली च पचन्तिचेली । पचच्चेली । पचन्तीचेली । श्रेयसिचेली । श्रेयश्चेली । श्रेयसीचेली । विदुषिचेली । विद्वच्चेली । विदुषीचेली । गोत्र, पचन्ती चासौ *गोत्रा च पचन्तिगोत्रा । पचद्गोत्रा । पचन्तीगोत्रा । श्रेयसिगोत्रा । श्रेयोगोत्रा । श्रेयसीगोत्रा । विदुषिगोत्रा । विद्वद्गोत्रा । विदुषीगोत्रा । मत, पचन्ती चासौ *मता च पचन्तिमता । पचन्मता । पचन्तीमता । श्रेयसिमता । श्रेयोमता । श्रेयसीमता । विदुषिमता । विद्वन्मता । विदुषीमता । हत, पचन्ती चासौ हता च *पचन्तिहता । पचद्धता । पचन्तीहता । श्रेयसिहता । श्रेयोहता । श्रेयसीहता । विदुषिहता । विद्वद्धता । विदुषीहता । एवं सुदतितरेत्यादि । ब्रुवादयः कुत्साशब्दाः 'निन्द्यं कुत्सनैः' ( ३-१-१०० ) इति च समासः । ऋदुदिदिति किम् । *कुमारितरा । किशोरितरा । किशोरितमा । एकार्थ इत्येव । पचन्त्या हता पचन्तीहता । विदुष्या हता विदुषीहता । तरादिष्विति किम् । पचत्पाशा । विद्वद्वृन्दारिका ॥ ६३ ॥ ***ङ्यः ॥ ३ । २ । ६४ ॥** ङ्यन्तस्य परतः स्त्रीलिङ्गस्य तरादिषु प्रत्ययेषु ब्रुवादिषु चोत्तरपदेषु एकार्थेषु ह्रस्वोऽन्तादेशो भवति । गौरितरा । गौरितमा । नर्तकिरूपा । कुमारिकल्पा । ब्राह्मणिब्रुवा । गार्गिचेली । ब्राह्मणिगोत्रा । गार्गिमता । गौरिहता । *परत्वाद्यथाप्राप्तं पुंवद्भावं बाधते । ङ्य इति किम् । मद्रिकातरा । कारिकातमा । दत्तारूपा । सेनानीरूपा । ग्रामणीकल्पा । परतः स्त्रिया इत्येव । वदरीतरा । *आमलकीतरा । एकार्थ इत्येव । ब्राह्मण्या हता ब्राह्मणीहता । 'नवैकस्वराणाम्' ( ३—२—६६ ) इत्युत्तरत्र वचनादनेकस्वरस्यैवायं विधिः ॥ ६४ ॥

---

पद मृगीपदमिति कृते सेत्स्यति किमर्थमिदमित्याशङ्का ॥—**मृगक्षीरादय** इति । आदिशब्दात् मयूराण्डमित्यादि । एतच्च मृग्या क्षीरमिति कृते द्रष्टव्यम् ॥—**ऋदुदि—** ॥ अत्र श्रेयस्शब्दात् कल्पप् नोदाहियते अतमबादेरिति वचनात् ॥—**पचन्तिहतेति** । हतशब्दस्य पापादित्वेऽपि सूत्रत्वाद्बाहुलकाद्वा समास ॥—**चेलेति** । चिलत् वसने चिलति गुणान् इति लिहायच् ॥—**गोत्रेति** । अह पचामीत्येवरूपा गा वाच त्रायत इति गोत्रा । 'आतो ड'–इति ड ॥—**मतेति** । मन्यतेः सत्यर्थे 'ज्ञानेच्छा'–इत्यादिना क्त ॥–**कुमारितरेत्यादिषु** 'ङ्य' इत्यनेन सूत्रेण हस्व. ॥—**ङ्यः** ॥—**परत्वादिति** । दर्शनीयतरा विद्वद्वृन्दारिकेत्यादौ पुमाव सावकाश । नर्त्तकिरूपेत्यादौ तु कोपान्त्यत्वात्पुमावप्रतिषेधादय विधि गौरितरेत्यादौ तूभयप्राप्तौ 'स्पर्द्धे पर.' इति परत्वादयमेव विधिरित्यर्थ ॥ मालि मल्लि धारणे । आमलिषीष्ट पुष्पफलानीति 'तिक्कृतौ नाम्नि' इति अक । अथवा अमण् आमयति श्लेष्मप्रधानमिति **आमलकी** । 'कीचक'—इति अकान्तो निपात्यते 'जातेरयान्त इति' ङी ।

॥ ३।२।६५॥ भोगवद्गौरिमतोर्नाम्नि संज्ञायां वर्तमानयोर्ङीप्रत्ययस्य तरादिषु प्रत्ययेषु ब्रुवादिषु चोत्तरपदेष्वेकार्थेषु ह्रस्वो भवति । *भोगव-
*भोगवद्गौरिमतोर्नाम्नि ॥ ३।२।६५॥ भोगवद्गौरिमतोर्नाम्नि संज्ञायां वर्तमानयोर्ङीप्रत्ययस्य तरादिषु प्रत्ययेषु ब्रुवादिषु चोत्तरपदेष्वेकार्थेषु ह्रस्वो भवति । *भोगव-
तितरा । भोगवतितमा । गौरिमतितमा । भोगवतिरूपा । गौरिमतिकल्पा । भोगवतिब्रुवा । गौरिमतिचेली । भोगवतिगोत्रा । गौरिमतिमता । भोगवतिहता । नाम्नीति किम् ।
भोगवतितरा । भोगवत्तरा । भोगवतीतरा । एवं गौरिमतितरेत्यादि । उदित्त्वात्पूर्वेण त्रैरूप्यम् ॥६५॥ *नवैकस्वराणाम् ॥ ३ । २ । ६६ ॥ बहुवचनात्परतः
स्त्रीति निवृत्तम् । सामान्येन तु विधानम् । स्त्र्येकार्थे इत्यनुवर्तते । एकस्वरस्य ङ्यन्तस्य तरादिषु प्रत्ययेषु ब्रुवादिषु चोत्तरपदेषु स्त्र्येकार्थेषु ह्रस्वोऽन्तादेशो भवति ।
स्त्रितरा । स्त्रीतरा । ज्ञस्य भार्या ज्ञी । ज्ञितमा । ज्ञीतमा । अस्यापत्यं स्त्री ई । इरूपा । ईरूपा । कस्य भार्या की । किकल्पा । कीकल्पा । ज्ञिब्रुवा । ज्ञीब्रुवा । इचेली ।
ईचेली । किगोत्रा । कीगोत्रा । स्त्रिमता । स्त्रीमता । स्त्रिहता । स्त्रीहता । एकस्वराणामिति किम् । *कुटीतरा । द्रुणीतमा । आमलकीतरा । बदरीतरा । कुवलीरूपा ।
ङ्य इत्येव । श्रीतरा । ह्रीतमा । धीरूपा । एकार्थ इत्येव । स्त्रिया हता स्त्रीहता । नित्यदितामनेकस्वराणामपीच्छन्त्येके । तन्मते, आमलकितरा बदरितमा कुवलिरूपा
लक्ष्मिकल्पा तन्त्रितरेत्याद्यपि भवति ॥ ६६ ॥ ऊङः ॥ ३ । २ । ६७ ॥ ऊङन्तस्य तरादिषु प्रत्ययेषु ब्रुवादिषु चोत्तरपदेषु स्त्र्यैकार्थेषु वा ह्रस्वो भवति ।
ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा । वामोरुतमा । वामोरूतमा । मद्रबाहुरूपा । मद्रबाहूरूपा । कमण्डलुकल्पा । कमण्डलूकल्पा । कद्रुब्रुवा । कद्रूब्रुवा । पङ्गुचेली । पङ्गूचे-
ली । श्वश्रुगोत्रा । श्वश्रूगोत्रा । कुरुमता । कुरूमता । भीरुहता । भीरूहता । एकार्थ इत्येव । भीर्वा हता भीरूहता ॥ ६७ ॥ महतः करघासविशिष्टे डाः ॥
३ । २ । ६८ ॥ करादिषूत्तरपदेषु महतो डा इत्ययमन्तादेशो वा भवति । वैयधिकरण्ये इयं विभाषा सामानाधिकरण्ये तु परत्वादुत्तरेण नित्य एव विधिः । महतां
करः महाकरः । महत्करः । कर एव कार इति महाकारः । महत्कारः । महाघासः । महद्घासः । महाविशिष्टः । महद्विशिष्टः । महत इति किम् । राजकरः । करा-
दिष्विति किम् । महतः पुत्रः महत्पुत्रः । डकारोऽन्त्यस्वरादिलोपार्थः । स च उत्तरार्थः ॥ ६८ ॥ स्त्रियाम् ॥ ३ । २ । ६९ ॥ स्त्रियां वर्तमानस्य महतः क-
रादिषूत्तरपदेषु नित्यं डा अन्तादेशो भवति । महत्याः करः महाकरः । एवं महाघासः । महाविशिष्टः । 'नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति पूर्वेणैव सिद्धे नित्या-
र्थमिदम् ॥ ६९ ॥ *जातीयैकार्थेऽच्वेः ॥ ३ । २ । ७० ॥ महतोऽच्व्यन्तस्य जातीयप्रत्यये एकार्थे चोत्तरपदे डान्तादेशो भवति । महान् प्रकारोऽस्य
महाजातीयः । महाजातीया । एकार्थे, महांश्चासौ वीरश्च महावीरः । एवं महामनिः । महान् भागोऽस्य महाभागः । एव महायशाः । महती चासौ देवी च महादे-

---

यन्मते नित्यङी तन्मते गौरादित्वात् ङी । स्वमते तु त्रिलिङ्ग ॥—भोगव—॥—भोगवतीति । भोगा सर्पकञ्चुका सन्त्यस्या भोगावती नाम नदी 'अनजिरादि'—इति दीर्घत्व ततोऽत एव निर्दे
शात्पूर्वस्य ह्रस्वत्वम् । गौरिमतीत्यत्र तु 'ङयापो बहुलम्'—इति मतौ ह्रस्व । गौरीति गौरस्यापत्य यञ् 'तुर्जाते' इति ङी गौरादित्वाद्वा ॥—नवैक—॥ ज्ञीतमा कीकल्पा इत्यादौ ह्रस्वविकल्पपक्षे
पुवन्न भवति । धवयोगे ङया पश्चात्सञ्ज्ञाविवक्षाया 'तद्धिताऽकक'—इति निषेधात् कौण्डिन्यागस्त्ययोरिति ज्ञापकेन पुभावाऽनित्यत्वाद्वा । ईरूपा इत्यत्र तु गोत्र च चरणे सहेति जातित्वे 'स्वाङ्गान्ङी' इति
निषेधात् रूपसाम्याद्वा न पुवत् । ईचेलीत्यत्रापि 'पुंवत्कर्म्मधारये' इत्यनेन प्राप्त पुभावोऽनित्यत्वान्न भवति ॥—कुटीतरेति । परत सीत्वाभावात् 'ङय' इत्यपि नित्य ह्रस्वो न भवति ॥—जातीये-

वी। एवं महाराज्ञी। महती कीर्तिरस्य महाकीर्तिः। महास्तुतिः। महांश्चासौ करश्च, महान् करोऽस्येति *महाकरः। एवं महाघासः। महाविशिष्टः। महान्तमात्मानं मन्यते महामानी। एवं महंमन्यः। खशि डाह्रस्वत्वे मोऽन्तः। *एकार्थ इति किम्। प्रकृष्टो महान् महत्तरः। महत्याः पुत्रो महतीपुत्रः। महत्याः पतिः महतीपतिः। अच्वेरिति किम्। अमहान् *महान् संपन्नो महद्भूतश्चन्द्रमाः। अमहती महती संपन्ना महद्भूता कन्या ॥ ७० ॥ **न पुंवन्निषेधे ॥ ३ । २ ॥ ७१ ॥** महतः पुंवन्निषेधविषये उत्तरपदे डा न भवति। महती प्रिया अस्य महतीप्रियः। महतीमनोज्ञः ॥ ७१ ॥ ***इच्यस्वरे दीर्घ आच्च ॥ ३ । २ । ७२ ॥** इच्प्रत्ययान्तेऽस्वरादावुत्तरपदे परे पूर्वपदस्य दीर्घ आकारश्चान्तादेशो भवति। बाहुषु च बाहुषु च मिथो गृहीत्वा व्यासक्तं बाहूबाहवि व्यासजेताम्। बाहाबाहवि। एवं केशाकेशि। मुष्टिभिश्च मुष्टिभिश्च प्रहृत्य कृतं युद्धं मुष्टीमुष्टि। मुष्टामुष्टि। एवं यष्टायष्टि। यष्टीयष्टि। दण्डादण्डि। दीर्घत्वात्त्वयोरकारान्तादन्यत्र विशेषः। दीर्घ-*साहचर्यादात्वमपि स्वरान्तानामेव भवति। तेनेह न भवति। दोर्दोषि। धनुर्धनुषि। अस्वर इति किम्। अस्यसि। इष्विषवि ॥ ७२ ॥ ***हविष्यष्टनः कपाले ॥ ३ । २ । ७३ ॥** हविष्यभिधेयेऽष्टन्शब्दस्य कपाले उत्तरपदे दीर्घोऽन्तादेशो भवति। अष्टसु कपालेषु संस्कृतम् *अष्टाकपालं हविः। हविषीति किम्। अष्टानां कपालानां समाहारः अष्टकपालम्। पात्रादित्वात्स्त्रीत्वाभावः। कपाल इति किम्। अष्टपात्रं हविः ॥ ७३ ॥ ***गवि युक्ते ॥ ३ । २ । ७४ ॥** अष्टन्शब्दस्य गव्युत्तरपदे युक्तेऽभिधेये दीर्घोऽन्तादेशो भवति। अष्टागवं शकटम्। अष्टौ गावो युक्ता अस्मिन्निति त्रिपदे बहुव्रीहौ कृते उत्तरपदे परे द्वयोर्द्विगुः 'गोस्तत्पुरु-

---

॥—**महाकर** इति। करादिष्वपि सामानाधिकरण्य (सामानाधिकरण्ये परत्वादिति पाठान्तरम्) फलत्वान्नित्यमस्य प्रवृत्ति दर्शयितुमाह—**एकार्थ इति किमिति**। नन्वेकार्थ इति किमर्थं जातीये चेति कृतेऽपि चकारेण उत्तरपदाकर्षणात् तेन च समासाक्षेपात् लक्षणप्रतिपदोक्तपरिभाषया च 'सन्महत्परम'—इति प्रतिपदोक्तस्यैव समासस्य ग्रहणाल्लाक्षणिके षष्ठीतत्पुरुषे न भविष्यति। नैवम्। षष्ठीतत्पुरुषवत् महान् भागोऽस्येत्यादौ बहुव्रीहावपि न स्यात् ॥—**महान् संपन्न** इति। सपन्न इत्यर्थकथनम्। अमहान् महान् भूत इति तु दृश्यमऽन्यथा च्वेरऽभाव ॥—**इच्यऽस्व—**॥—**साहचर्यादिति**। 'स्वरस्य ह्रस्वदीर्घप्लुता' इति न्यायादित्यर्थ ॥—**हविष्य—**॥ प्रायोगिकस्य बहुसख्यार्थाभिधायकस्याऽष्टन्इत्यऽनुकरणम्। तत प्रायोगिकस्यैकसख्यस्य शब्दस्याभिधायकमिति षष्ठ्येकवचनम्। अनुक्रियमाणस्य स्वरूपविनाशप्रसङ्गात् 'अनोऽस्य' इत्यकारलोपो न भवति ॥—**अष्टाकपालमिति**। अत्राष्टनो व्यञ्जनान्तत्वाव्यभिचाराद्दीर्घे परविधौ नलोपस्या (क्वचिदऽसत्त्वेपीति पाठ स च प्रकटार्थ) भावेऽपि दीर्घस्य स्वरधर्म्मत्वादकारस्योपान्त्यस्यापि स्वरापेक्षयान्त्यत्वाद्वा दीर्घोऽनेन ॥—**गवि यु—**॥ अष्टौ गावो युक्ता अस्मिन् शकटे अष्टागव शकटमिति उक्त ततश्च अन्यपदार्थे शकटे अभिधेये किमिति समास क्रियते यतोऽष्टौ गावो युक्ता इति कथ न क्रियते यत इति कृतेऽपि युक्तोऽर्थो गम्यते। यतोऽष्टौ गावो युक्ता कोऽर्थोऽष्टौ गाव सबद्धा इत्यर्थ इति युक्तोऽर्थोऽत्रापि गम्यते तत्कथमऽन्यपदार्थे क्रियते। उच्यते। प्रत्यासत्तिन्यायात् यदा तैर्गोभिर्युक्त वाच्य शकट भवति तदाऽनेनाकार इष्यते। यतस्तैर्गोभिर्युक्त शकटमेवासन्नमस्तीति प्रत्यासत्ति। तर्हि कथ गवीति किम् अष्टतुरगो रथ इत्यत्र अङ्गविकलत्व व्यावृत्तेर्यतो युक्तोऽप्यर्थो नास्ति। उच्यते। अष्टौ तुरगा अस्य रथस्येत्यत्र विद्यते षष्ठी सा च योज्ययोजकसबन्धेऽस्ति। ततश्च योज्यास्तुरगा सबद्धा कर्त्तव्या केन योजकेन देवदत्तलक्षणेन पर सहसामर्थ्याद्रथेनैवेति युक्तोऽर्थोऽस्तीति न द्व्यङ्गविकलत्व व्यावृत्ते। उपचारो ह्यनेकधाऽत आह-

पात्' (७-३-१०५) इत्यद् समासान्तः। तत्र दीर्घत्वेन युक्तार्थसंप्रत्ययादुक्तार्थत्वाद्युक्तशब्दस्य निवृत्तिः। अथवा समाहारद्विगुः। तत्र *साहचर्यादुपचाराददृ-गवेन युक्तं शकटमष्टागवमुच्यते। गवीति किम्? *अष्टतुरगो रथः। युक्त इति किम्? *अष्टगवम् ब्राह्मणधनम्। अष्टगुश्चैत्रः॥ ७४॥ *नाम्नि ॥ ३। २। ७५॥ अष्टन्शब्दस्योत्तरपदे परे नाम्नि संज्ञायां दीर्घोऽन्तादेशो भवति। अष्टौ पदान्यत्र अष्टापदः कैलाशः। *अष्टापदं सुवर्णम्। अष्टावक्रो मुनिः। अष्टाविटपो नाम कश्चित्। नाम्नीति किम्? अष्टदण्डः। अष्टगुणमैश्वर्यम्॥ ७५॥ *कोटरमिश्रकसिध्रकपुरगसारिकस्य वणे ॥ ३। २। ७६॥ कोटरादीनां कृतणत्वे वनशब्दे उत्तरपदे दीर्घोऽन्तादेशो भवति 'नाम्नि' संज्ञायां विषये। कोटरावणम्। मिश्रकावणम्। सिध्रकावणम्। *पुरगावणम्। *सारिकावणम्। 'पूर्वपदस्थान्नाम्न्यगः' (२-३-६५) इति णत्वे सिद्धे कृतणत्वस्य वनशब्दस्य निर्देशो नियमार्थः। तेन *पूर्वपदस्थादिति सूत्रेण वनशब्दस्य णत्वमाकारसंनियोगे एव भवति। ततश्च *कुबेरवनम् शतधारवनम् इत्यादौ संज्ञायामपि णत्वं न भवति॥ ७६॥ *अञ्जनादीनां गिरौ ॥ ३। २। ७७॥ अञ्जनादीनां गिरावुत्तरपदे दीर्घोऽन्तादेशो भवति नाम्नि। *अञ्जनागिरिः। *भाञ्जनागिरिः। किंशुकागिरिः। किंशुलकागिरिः। *साल्वागिरिः। लोहितागिरिः। कुक्कुटा-गिरिः। *खड्डूनागिरिः। *नलागिरिः। *पिङ्गलागिरिः। अञ्जनादीनामिति किम्? कृष्णगिरिः। श्वेतगिरिः। नाम्नीत्येव। अञ्जनस्य गिरिः अञ्जनगिरिः। अञ्जन भाञ्जन किंशुक किंशुलक साल्व लोहित कुक्कुट खड्डून (खड्न) नल पिङ्गल इत्यञ्जनादिः। बहुवचनमाकृतिगणार्थम्॥ ७७॥ *अनजिरादिबहुस्वर-शरादीनां मतौ ॥ ३। २। ७८॥ अजिरादिवर्जितबहुस्वराणां शरादीनां च मतौ प्रत्यये दीर्घोऽन्तादेशो भवति नाम्नि। बहुस्वर, *उदुम्बरावती। मशकावती। वीरणावती। *पुष्करावती। अमरावती। शरादि, शरावती। वंशावती। *शुचीमती। कुशावती। धूमावती। अहीवती। कपीवती। मुनीवती।

---

साहचर्यादिति। अष्टतुरगो रथ इति। अष्टाना तुरगाणा समाहार पात्रादित्वात् अष्टतुरगमनाऽस्ति अभ्रादित्वाद। इद यदि न क्रियते तदा द्यङ्गविकलता स्यात्॥—अष्टगवमिति। अष्टाना गवा समाहारे 'गोस्तत्पुरुषात्' अट् समासान्तः॥—नाम्नि॥—अष्टापदमिति। अष्टसु लोहेषु पद प्रतिष्ठा यस्य तत्॥—कोटरमि—॥—पूर्वपदस्थादिति। अथ समासे कृते दीर्घ च नामत्वाद्वनशब्दस्य पूर्वपद स्थादित्येव णत्व भविष्यति किमर्थ कृतणत्वस्य वनशब्दस्य निर्देश इत्याशङ्का॥—पुरगावणमिति। पुर गच्छतीति 'नाम्नो गम'—इति ड॥—सारिकावणमिति। सारोऽस्त्येषाम् 'अतोऽनेक'—इति इक॥—कुबेरवनमिति। कुत्सित कुष्ठित्वात् बेर शरीरमऽस्य॥—अञ्जनादीना—॥—अञ्जनागिरिरिति। अञ्जनवृक्षस्य उपचाराद्गिरिरञ्जनागिरि॥—भाञ्जनागिरिरिति। भज्यतेऽनेन भञ्जन तत्र कुशल कुशलेऽणि भाञ्जनो राजा॥—साल्वागिरिरिति। संल्यन्ते व्यवहारिभिरिति 'सल्यलेर्णिणद्वा' इति ये साल्वा जनपद॥—खड्डूनागिरिरिति। अश्नुते भावान् 'अशौडितश्च' खड्डूनामेभि? खड्डूना वृक्षा॥—नलागिरिरिति। णल गन्धेऽच्॥—पिङ्गलागिरिरिति। 'आतोडोऽह्वावाम' इति डः॥—अनजिरा—॥—उदुम्बरावतीति। उदुम्बरा सन्त्यस्यामित्यादिश्यातुर-थिको नद्या मतु 'नाम्नि' इति मस्य व॥—पुष्करावतीति। पुष्करशब्दात् मत्वर्थवर्जे मतु. मत्वर्थे तु 'पुष्करादेर्देशे' इतीन् स्यात्॥—शुचीमतीत्यत्र शुचिरस्त्यस्या नोर्म्यादित्वाद्वत्वाभाव॥—

मणीवती । *वार्दावान्नाम गिरिः । *वेटावान्नाम गिरिः । शर वंश शुचि कुश धूम अहि कपि मुनि मणि वार्द वेट इति शरादिः । बहुवचनमाकृतिगणार्थम् । तेन ऋषीवती मृगावती पद्मावती वातावती भोगावतीत्यादि सिद्धम् । बहुस्वरशरादीनामिति किम् । व्रीहिमती । इक्षुमती । द्रुमती । मधुमती । बहुस्वरस्यानजिरादिविशेषणं किम् । अजिरवती । खदिरवती । खजुरवती । स्थविरवती । पुलिनवती । *मलयवती । *हंसकारण्डववती । *चक्रवाकवती । अलंकारवती । शशाङ्कवती । हिरण्यवती । अजिरादिराकृतिगणः । नाम्नीत्येव । वलयवती कन्या । शरवती तूणा ॥ ७८ ॥ **ऋषौ विश्वस्य मित्रे ॥ ३ । २ । ७९ ॥** विश्वशब्दस्य मित्रे उत्तरपदे ऋषावभिधेये नाम्नि विषये दीर्घोऽन्तादेशो भवति । विश्वामित्रो नामर्षिः । ऋषाविति किम् । विश्वमित्रो माणवकः । नाम्नीत्येव । विश्वं मित्रमस्य विश्वमित्रो मुनिः ॥ ७९ ॥ **नरे ॥ ३ । २ । ८० ॥** विश्वशब्दस्य नरशब्दे उत्तरपदे नाम्नि विषये दीर्घोऽन्तादेशो भवति । विश्वे नरा अस्य विश्वानरो नाम कश्चित् । नर इति किम् । विश्वसेनः । नाम्नीत्येव । विश्वनरो राजा ॥ ८० ॥ **वसुराटोः ॥ ३ । २ । ८१ ॥** पृथग्योगान्नाम्नीति निवृत्तम् । विश्वशब्दस्य वसौ राटि चोत्तरपदे दीर्घोऽन्तादेशो भवति । विश्वं वस्वस्य विश्वावसुः । विश्वस्मिन् राजते इति विश्वाराट् । राडिति विकृतनिर्देशादिह न भवति । विश्वराजौ । विश्वराजः ॥ ८१ ॥ ***वलच्यपित्रादेः ॥ ३ । २ । ८२ ॥** वलच्प्रत्यये परे पित्रादिवर्जितानां स्वरान्तानां शब्दानां दीर्घोऽन्तादेशो भवति । आसुतिः सुरा साऽस्यास्तीत्यासुतीवलः । एवम् ऋषीवलः । दन्तावलः । उत्सङ्गावलः । पुत्रावलः । अपित्रादेरिति किम् । पितृवलः । मातृवलः । भ्रातृवलः । उत्साहवलः । *चकारः किम् । *उत्तरपदे माभूत् । कायवलम् । नागवलम् ॥ ८२ ॥ **चितेः कचि ॥ ३ । २ । ८३ ॥** चितिशब्दस्य कचि प्रत्यये परे दीर्घोऽन्तादेशो भवति । एका चितिरस्मिन् एकाचितीकः । द्विचितीकः । त्रिचितीकः ॥ ८३ ॥ ***स्वामिचिह्नस्याविष्टाष्टपञ्चभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य कर्णे ॥ ३ । २ । ८४ ॥** स्वामी चिह्न्यते येन तत्स्वामिचिह्नम् । तद्वाचिनो विष्टादिवर्जितस्य कर्णशब्दे उत्तरपदे परे दीर्घोऽन्तादेशो भवति । दात्रमिव दात्रम् । दात्रं चिह्नं कर्णे यस्य स दात्रमिव वा कर्णौ यस्य स दात्राकर्णः पशुः । एवं शङ्कूकर्णः । *द्विगुणाकर्णः । *व्यङ्गुलाकर्णः । स्वामिचिह्नस्येति किम् ।

---

वार्दावानिति । वार ददतीति 'आतो ड'—इति ट वार्दा मेघास्ते सन्त्यत्र 'मध्वादे' इति मतु ॥—**वेटावानिति** । वेटन्ति पक्षिभिरऽचि वेटा वृक्षास्ते सन्त्यऽत्र ॥—**मलयवतीति** । मलयस्य पर्वतस्य अदूरभवा 'नद्या मतु' ॥—**हसकारण्डववती**ति । हसश्च कारण्डवश्च हसकारण्डवावऽस्या स्त मतु । यदा हसकारण्डवतीति दृश्यते तदा करण्ड प्रज्ञाद्यण् । हसस्य कारण्ड हसकारण्ट ॥—**चक्रवाकवतीति** । चक्रस्येव वाको वाग्यस्य चक्रशब्देनोच्यते वा घञ् ॥—**वलच्य**—॥ आसवनमासुति 'समिणासुग' क्ति प्रत्यय । कृष्यादिभ्यो वलच् ॥—**चकार** किमिति । प्रत्ययाऽप्रत्ययोगिति न्यायस्तु कादाचित्क इत्याह—**उत्तरेति** ॥—**स्वामिचि**—॥ चिह्न करोति णिज् तत स्वामी चिह्नयते येन 'वर्षादय क्लीव' इत्यल् ॥—**तद्वाचिन** इति । कर्णस्य यथा स्वरूपेण ग्रहण नैव स्वामिचिह्नस्य । एतच्च विष्टादीना चिह्नवाचिना दीर्घप्रतिषेधात् ज्ञायते । स्वरूपग्रहणे हि विष्टादीना प्रतिषेधो व्यर्थ स्यात् ॥—**द्विगुणाकर्ण** इति । द्विगुण चिह्न कर्णे यस्य ॥—**व्यङ्गुलाकर्ण** इति । द्वे अङ्गुले मानमस्य द्वे अङ्गुली मानमस्येति वा वाक्ये तद्धितप्रत्यये विषयभूते 'सङ्ख्याव्ययादङ्गुले' इति ड । पश्चान्मात्रट् । 'द्विगो सशये च' इति लुप्

*शोभनकर्णः। स्वामिग्रहणं किम्। लम्बकर्णः। अविद्धकर्णः शिशुः। चिह्नग्रहणं किम्। वाहनस्य कर्णः *वाहनकर्णः। विष्टादिवर्जनं किम्। विष्टकर्णः। अष्टकर्णः। पञ्चकर्णः। भिन्नकर्णः। छिन्नकर्णः। छिद्रकर्णः। स्रुवकर्णः। स्वस्तिककर्ण। कर्ण इति किम्। *चक्रसक्थः ॥ ८४ ॥ *गतिकारकस्य नहिवृतिवृषिव्यधिरुचिसहितनौ क्वौ ॥ ३ । २ । ८५ ॥ गतिसंज्ञस्य कारकवाचिनश्च नह्यादिषु क्विबन्तेषूत्तरपदेषु परेषु दीर्घोऽन्तादेशो भवति। उपनह्यति उपनह्यते वा उपानत्। परीणत्। वृत्, नीवृत्। उपावृत्। वृष्, प्रावृट्। परीवृट्। व्यध्, श्वावित्। मर्मावित्। रुच्, नीरुक्। अतीरुक्। अभीरुक्। सह्, *तुरासट्। *ऋतीषट्। भीरुष्ठानादित्वात् षत्वम्। जलासट्। तन्, परीतत्। 'गमां क्वौ' (४-२-५८) इति नलोपः। गतिकारकस्येति किम्। *पटुरुक्। तिग्मरुक्। तीव्ररुक्। श्वेतरुक्। कमलरुक्। केचित्तु रुजाविच्छन्ति न रुचौ। तेन रुजरुच्योर्मतभेदेन विकल्पः सिद्धः। रुज्, निरुक्। नीरुक्। रुच्, अतिरुक्। अतीरुक्। क्वाविति किम्। उपनद्धम्। विततम्। इह क्विग्रहणादन्यत्र धातुग्रहणे तदादिविधिर्लभ्यते। तेनायस्कृतम् अयस्कार इत्यादौ सकारः सिद्धो भवति। अन्यथा ह्ययस्कृदित्यत्रैव स्यात् ॥ ८५ ॥ *घञ्युपसर्गस्य बहुलम् ॥ ३ । २ । ८६ ॥ घञन्ते उत्तरपदे परे उपसर्गस्य बहुलं दीर्घोऽन्तादेशो भवति। नीक्लेदः। नीभेदः। नीमार्गः। नीवारः। प्रावारः। नीशारः। क्वचिन्न भवति। निपादः। विषदनं विषादः। प्रतपनं प्रतापः। प्रभावः। प्रभारः। प्रहारः। क्वचिद्विकल्पः। प्रतीवेशः। प्रतिवेशः। प्रतीपादः २। प्रतीबोधः २। परीणाम २। प्रतीहारः २। प्रतीकारः २। अतीसारः २। वीसर्पः २। क्वचिद्विषयभेदेन। प्रासादो गृहम्। प्रसादोऽन्यः। प्राकारो वप्रः। प्रकारोऽन्यः। अपामार्ग औषधिः। अपमार्गोऽन्यः। नीहारो हिमम्। निहारोऽन्यः। परीरोधो मृगावरोधः। परिरोधोऽन्यः। परीहारो *देशानु-

---

द्व्यङ्गुल कर्णयोर्यस्य यद्वा द्वयोरङ्गुल्यो समाहार 'सङ्ख्याव्ययादङ्गुलेर्ड' द्व्यङ्गुल कर्णं यस्य ॥—**शोभनकर्ण** इति। शोभनत्वमनेकविधमिति तच्चिह्नमपि न भवति। लम्बकर्णत्व त्वेकविधमिति चिह्न भवति पर न स्वामिन इति परस्पर सादृश्य नास्ति ॥—**वाहनकर्ण** इति। उह्यते तेन करणेऽनट् 'वाह्याद्वाहनस्य' इति निर्देशाद्दीर्घ। यद्वा वहनमेव प्रज्ञाद्यणि। यद्वा वाह्यते तदिति णिगन्तात् भुजिपत्यादित्वादनटि वाहनम् ॥—**विष्टकर्ण** इत्यादि विष्ट प्रविष्ट व्याप्त वा चिर कर्णे यस्य विशेर्विषेरशौटेश्च कर्मणि क्ते विष्टाष्टशब्दौ। सङ्ख्यावचनो वाऽष्टशब्द। एव पञ्चशब्दोऽपि। भिदेश्छिदेश्च क्ते 'रदादमूर्च्छ'—इति दतयोर्नत्वे छिन्नभिन्नौ छिदे 'ऋज्यजि'—इति रे छिद्रम् ॥ स्रवत्यस्मादिति 'निघृषि'—इति किति वप्रत्यये स्रुव। स्वस्तिशब्दोऽव्यय स्वस्ति कायति स्वस्तिक। विष्ट कर्णं यस्य। अष्ट कर्णे यस्य। सङ्ख्यापक्षे तु अष्टौ कर्णेऽस्य। अष्टपञ्चशब्दो चाऽत्र अष्टगुणे पञ्चगुणे च चिह्नविशेषे वर्त्तेते। भिन्नो कर्णो यस्य। भेदच्छेदौ हि स्वामिविशेषज्ञापनाय कर्णयो क्रियेते। एव छिद्रमपि। स्रुवाकार चिह्न स्रुवेणोच्यते। स्वस्तिक साक्षादेव चिह्न तत्कर्णे यस्य ॥—**चक्रसक्थ** इति। चक्र सक्थनि अस्य 'सक्थ्यक्ष्ण स्वाङ्गे ट' ॥—**गतिकारक**—॥ प्रवर्षन्ति मेघा अस्या अनद्बाधक 'क्रुत्सम्पदा'—इति क्विप् ॥—**तुरासडिति**। तुरेर्जुहोत्यादिपाठात् तुतोर्त्ति 'नाम्युपान्त्य'—इति क। तुर सहति तुरासट्। तुरासाडिति तु छान्दस ॥—**ऋतीषडिति**। अरणमृति पीडा ता सहते ॥—**पटुरुगित्यादि**। प्रत्यासत्त्या रुच्यादिक्रियापेक्ष कारकत्व गृह्यते तेन पट्वी तिग्मा तीव्रा श्वेता कमलेव रुग् यस्येत्येव वर्त्ततइत्यादिक्रियापेक्षे कारकत्वे न भवति ॥—**घञ्युपस**—॥—**देशानुग्रहो** हिण्ट। उत्तरपदाऽधिकारे प्रत्ययग्रहणे प्रत्ययमात्रस्यैव ग्रहणमिति ज्ञापितेऽपि धातोर्विधीयमानस्य घञ उपसर्गपरत्वासम्भवेन सामर्थ्यात् घञन्तस्योत्तरपदस्य

ग्रहः । परिहारोऽन्यः । *वीतंसः पक्षिबन्धनम् । वितंसोऽन्यः । उपसर्गस्येति किम् । चन्दनसारः । खदिरसारः । मार्गमतिक्रान्तः अतिमार्गः । घञीति किम् । अवसायः । अवहारः । णमत्ययोऽयम् । *बहुलवचनादनुपसर्गस्यापि अघञ्यपि च भवति । दक्षिणापथः । उत्तरापथः । क्वचिद्विकल्पः । अन्धतमः । अन्धातमः । अन्धतमसम् । * अन्धातमसम् । क्वचिद्विषयभेदेन । अधीदन्तः । अधीकर्णः । अधीकण्ठः । अधीपादः । एते आधिक्ये । अन्यत्र अधिदन्त इत्यादि भवति । क्वचिदनुत्तरपदेऽपि विकल्पः । पूरुषः । पुरुषः । नारकः । नरकः । सादनम् । सदनम् । अतिशायनम् । अतिशयनम् । *काशशब्दे च यञन्ते विकल्पः । नीकाशः । निकाशः । प्रतीकाशः । प्रतिकाशः । *अजन्ते तूत्तरो विधिः ॥ ८६ ॥ **नामिनः काशे ॥ ३ । २ । ८७ ॥** नाम्यन्तस्योपसर्गस्य 'अच्' ( ५–१–४९ ) इत्यजन्ते काशशब्दे उत्तरपदे परे दीर्घोऽन्तादेशो भवति । निकाशते नीकाशः । विकाशते इति वीकाशः । अनूकाशः । प्रतीकाशः । बहुलाधिकारान्निकाश इत्यपि । नामिन इति किम् । प्रकाशते इति प्रकाशः ॥ ८७ ॥ ***दस्ति । ३ । २ । ८८ ॥** दा इत्येतस्य यस्तकारादिरादेशस्तस्मिन्परे नाम्यन्तस्योपसर्गस्य दीर्घोऽन्तादेशो भवति । नीत्तम् । वीत्तम् । परीत्तम् । परीत्तवान् । परीत्रिमम् । प्रणीत्रिमम् । द इति किम् । वितीर्णम् । तीति किम् । सुदत्तम् । नामिन इत्येव । प्रत्तम् । अवत्तम् ॥ ८८ ॥ ***अपील्वादेर्वहे ॥ ३ । २ । ८९ ॥** पील्वादिवर्जितस्य नाम्यन्तस्य वहे उत्तरपदे परे दीर्घोऽन्तादेशो भवति । वहतीति वहम् । 'अच्' (५–१–४९ ) इत्यच् । ऋषीणां वहम् ऋषीवहम् । मुनीवहम् । कपीवहम् । एवंनामानि नगराणि । घान्ते तु वहशब्दे ऋषीवहः । मुनीवहः । कपीवहः । अपील्वादेरिति किम् । पीलुवहम् । दारुवहम् । चारुवहम् । नामिन इत्येव । पिण्डवहम् । काष्ठवहम् ॥ ८९ ॥ **शुनः । ३ । २ । ९० ॥** श्वन् इत्येतस्योत्तरपदे परे दीर्घोऽन्तादेशो भवति । शुनो दन्तः श्वादन्तः । एवं श्वादंष्ट्रा । श्वाकर्णः । श्वाकर्दः । श्वाकूर्दः। श्वावराहम् । बहुलाधिकारात्क्वचिद्विकल्पः । श्वापुच्छम् । श्वपुच्छम् । क्वचिद्विषयान्तरे । शुनः पदमिव पदमस्य *श्वापदम् व्याघ्रादिः । शुनः पदं श्वपदम् । क्वचिन्न भवति । श्वकल्पः । श्वमुखः ॥ ९० ॥ ***एकादश षोडश षोडन् षोढा षढा ॥ ३ । २ । ९१ ॥** एकादयः शब्दा दशादिषु *उत्तरपदादिषु कृतदीर्घत्वादयो निपात्यन्ते । *एकोत्तरा दश, एक च दश च वा एकादश । अत्रैकस्य दशशब्दे उत्तरपदे दीर्घः। षडुत्तरा दश षट् च दश च वा षोडश । अत्र षषोऽन्तस्योत्वम् । उत्तरपददकारस्य च डकारः । षड् दन्ता अस्य षोडन् । अत्र दन्तशब्दस्य दत्रादेशे कृते दस्य डत्वं षषोऽन्तस्योत्वम् । एवं षोडन्तौ । षोडन्तः । स्त्रियां तु षोडती । अन्ये तु दत्रादेशे कृते षो-

---

ग्रहण न्याय्यम् ॥– **वीतंस** इति । भूषतसु० नोन्ते वितस्यते घञ् ॥–**अन्धातमसामिति** । अमत्यन्येनाकृष्यमाण 'स्कन्धमिम्था ध' अन्ध करोति णिज् । अन्धण् दृष्ट्युपसहारे अस्माद्वाऽच् । अन्ध च तत्तमश्च समत्वान्धात्तमसोऽत् समासान्त ॥–**काशशब्दे चेति** ॥–**बहुलवचनादेवेति** । यदि घञि विकल्प तर्हि उत्तरो नित्यविधि क्व स्यादित्याह–**अजन्ते त्विति** ॥–**दस्ति** ॥ निदीयते स्म दासज्ञाना चतुर्णामन्यतमात् क्ते कृते ददित्यस्यापवाद 'स्वरादुपसर्गात्' इति दा इत्यस्य त्त् इत्यादेश । दागस्तु निदातुमारब्धम् ' आरम्भे' क्त । ' निविस्वन्ववात् ' विकल्पेन त्त् ॥–**अपील्वा**–॥ अत्र वहशब्दो ऽजन्तो घान्तश्च गृह्यते लिङ्गाच्च विशेषो वाच्य.॥–**शुनः**॥–**श्वापदमित्यत्र** बाहुलकान्नपुसकत्वमऽन्यथा देहिनामत्वात्पुस्त्व स्यात् ॥–**एकादश**–॥–**उत्तरपदादिष्विति** । आदिपदाद्व्राप्रभृतिप्रत्ययाना ग्रह ॥–**एकोत्तरा दशेति**।

डन्निति शब्दान्तरं *नकारान्तं राजन्शब्दवन्निपातयन्ति । ततश्च षोडानमिच्छतीति क्यनि नकारलोपे ईत्वे च षोडीयतीति सिध्यतीति मन्यन्ते । षड्भिः प्रकारैः षोढा, पड्ढा । अत्र धाप्रत्यये षषोऽन्तस्य वोत्वं धकारस्य तु नित्यं ढत्वम् । यत्तु षड्धेति रूपं न तत् धाप्रत्यये किं तु षट् दधाति धयति वेति 'आतो डोऽह्वावा-मः' (५-१-७६) इति डे कृते स्त्रियामपि च भवति । निपातनस्य चेष्टविषयत्वादत्रोत्वढत्वे न भवतः ॥ ९१ ॥ *द्वित्र्यष्टानां द्वात्रयोऽष्टाः प्राक् शताद-नशीतिबहुव्रीहौ ॥ ३ । २ । ९२ ॥ द्वि त्रि अष्टन् इत्येतेषां यथासंख्यं द्वा त्रयस् अष्टा इत्येते आदेशा प्राक् शतात् *संख्यायामुत्तरपदे भवन्ति 'अनशी-तिबहुव्रीहौ' अशीतिबहुव्रीहिसमासविषयं चोत्तरपदं वर्जयित्वा । द्वाभ्यामधिका दश द्वौ च दश चेति वा द्वादश । एवं द्वा*विंशतिः । द्वात्रिंशत् । त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् । अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् । द्वित्र्यष्टानामिति किम् । पञ्चदश । प्राक्शतादिति किम् । द्विशतम् । त्रिशतम् । अष्टशतम् । द्विसहस्रम् । त्रिसहस्रम् । अष्टसहस्रम् । अनशीतिबहुव्रीहाविति किम् । द्व्यशीतिः । त्र्यशीतिः । द्वौ वा त्रयो वा द्वित्राः । त्रिचतुराः । अष्टनवाः । द्विर्दश द्विदशाः । एवं त्रिदशाः । प्राक्शतादित्यवधेः संख्यापरिग्रहादिह न भवति । द्वैमातुरः । त्रैमातुरः । आष्टमातुरः । द्विमुनि व्याकरणस्य । त्रिमुनि व्याकरणस्य ॥ ९२ ॥ चत्वारिंशदादौ वा ॥ ३ । २ । ९३ ॥ द्वित्र्यष्टानां प्राक्शताच्चत्वारिंशदादौ संख्यायामुत्तरपदे यथासंख्यं द्वा त्रयस् अष्टा इत्येते आदेशा वा भवन्ति अन-शीतिबहुव्रीहौ । द्वाभ्यामधिका द्वौ च चत्वारिंशच्चेति वा द्वाचत्वारिंशत् । द्विचत्वारिंशत् । त्रयश्चत्वारिंशत् । त्रिचत्वारिंशत् । अष्टाचत्वारिंशत् । अष्टचत्वारिंशत् । द्वापञ्चाशत् । द्विपञ्चाशत् । त्रयःपञ्चाशत् । त्रिपञ्चाशत् । अष्टापञ्चाशत् । अष्टपञ्चाशत् । द्वाषष्टिः । द्विषष्टिः । त्रयःषष्टिः । त्रिषष्टिः । अष्टाषष्टिः । अष्टषष्टिः । द्वासप्ततिः । द्विसप्ततिः । त्रयःसप्ततिः । त्रिसप्ततिः । अष्टासप्ततिः । अष्टसप्ततिः । द्वानवतिः । द्विनवतिः । त्रयोनवतिः । त्रिनवतिः । अष्टानवतिः । अष्टनवतिः । अन-शीतिबहुव्रीहावित्येव । द्व्यशीतिः । त्र्यशीतिः । अष्टाशीतिः । द्विश्चत्वारिंशत् । द्विचत्वारिंशाः । एवं त्रिचत्वारिंशाः । अष्टौ चत्वारिंशतोऽस्मिन् अष्टचत्वारिंशत् । पूर्वेण नित्यं प्राप्ते विकल्पार्थमिदम् ॥ ९३ ॥ *हृदयस्य हृल्लासलेखाण्ये ॥ ३ । २ । ९४ ॥ हृदयशब्दस्य लासलेखयोरुत्तरपदयोरणि ये च प्रत्यये परे हृदित्ययमादेशो भवति । लास, हृदयस्य लासो हृल्लासः । लेख, हृदयं लिखतीति हृल्लेखः । अणूसंनिधानाल्लेखशब्दोऽणन्तो गृह्यते । तेन घञन्ते न भवति । हृद-यस्य लेखः हृदयलेखः । अण्, हृदयस्येदं हार्दम् । *सौहार्दम् । दौहार्दम् । य, हृदयस्य प्रियः हृद्यः । हृदयस्य बन्धनो मन्त्रः हृद्यः । हृदये भवं हृदयाय हितम् हृद्यम् । अणीत्येव सिद्धे लेखग्रहणं ज्ञापकम् 'उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं न भवति । 'खित्यनव्यय'-(३-२-१११) इत्यादौ तु असंभवात्तद-

अत्रोत्तरशब्दोऽधिकवचन ॥—नकारान्तमिति । स्वमते तु तकारान्तो निपात. ॥—द्वित्र्यष्टानां—॥—सख्यायामुत्तरपदे इति । पूर्वपदस्य साक्षादेव निर्देशात् प्राक् शतादित्यवधेरन-शीतिपर्युदासादशीते सख्याया प्रतिषेधात् सख्यारूपस्यैवोत्तरपदस्य ग्रहणम् ॥—विंशतिरिति । द्वौ दशतौ मानमस्या 'विंशत्यादय' । द्वेर्दशदर्थे विंभाव शतिश्च प्रत्यय ॥-हृदयस्य-॥-सौहार्दमिति । सुष्ठु हृदय यस्य दुष्ट हृदयं यस्य स सुहृदय दुर्हृदय । 'तस्येदम्' इत्यण् । हृद्भगसिन्धोरुभयपदवृद्धि । सुहृदयस्य भाव इति वाक्ये 'युवादेरण्' वा । निर्दिश्यमानत्वात् हृदयशब्दस्यैवादेश । प्रथमवाक्य

न्तग्रहणम् । हृदयशब्दसमानार्थेन हृच्छब्देनैव सिद्धे हृदादेशविधानं लासादिषु हृदयशब्दप्रयोगनिवृत्त्यर्थम् । अन्यत्र तूभयं प्रयुज्यते । *सौहार्दम् । सौहृदय्यम् । हृच्छोकः । हृदयशोकः । हृद्रोगः । हृदयरोगः । हृच्छङ्कुः । हृदयशङ्कुः । हृच्छूलम् । हृदयशूलम् । हृच्छल्यम् । हृदयशल्यम् । हृद्दाहः । हृदयदाहः । हृद्दुःखम् । हृदयदुःखम् । हृत्कमलम् । हृदयकमलम् । हृत्पुण्डरीकम् । हृदयपुण्डरीकम् । इत्यादि ॥ ९४ ॥ **पदः पादस्याज्यातिगोपहते ॥ ३ । २ । ९५ ॥** पादशब्दस्याज्यादिषूत्तरपदेषु पद इत्ययमादेशो भवति । पादाभ्यामजति अतति चेति औणादिके इणि पदाजिः । पदातिः । अत एव निर्देशात् अजेर्वी न भवति । पादाभ्यां गच्छति पद्गः । 'नाम्नो गमः'-(५ १ १३१) इत्यादिना डः । पादाभ्यामुपहतः । पदोपहतः । पादशब्दसमानार्थः पद्शब्दोऽस्ति आज्यादिषु तु पादशब्दप्रयोगनिवृत्त्यर्थं वचनम् । कथं दिग्धश्चासौ पादश्च दिग्धपादः तेनोपहतः दिग्धपादोपहतः। उत्तरपदसंनिधापितेन पूर्वपदेन पादशब्दो विशेष्यते । न चात्र पादशब्दः पूर्वपदमपि तु दिग्धपादः । तेनात्र न भवति ॥ ९५ ॥ ***हिमहतिकाषिये पद् ॥ ३ । २ ॥ ९६ ॥** हिमादिपूत्तरपदेषु *पादसंबन्धिनि ये च प्रत्यये पादशब्दस्य पदित्ययमादेशो भवति । पादयोर्हिमं पद्धिमम् । पादाभ्यां हतिः पद्धतिः । पादौ कषतीत्येवंशीलः, पुनः पुनः पादौ कषति, पादाभ्यां साधु कषतीति वा पत्काषी । परमश्चासौ पत्काषी च परमपत्काषी । यदा च परमौ च तौ पादौ च परमपादौ तत्कषणशीलादिर्विवक्ष्यते तदा पादशब्दस्य पूर्वपदत्वाभावात् परमपादकाषीत्येव भवति । पादौ विध्यन्ति पद्याः शर्कराः । पादयोर्भवाः पद्याः पांसवः । पादाभ्यां हितं पद्यं घृतम् । कथं पादार्थमुदकं पाद्यम् । 'पाद्यार्घ्ये' (७-१-२३) इति *निपातनात् । पादशब्दसंबन्धिनि य इति किम् । द्विगु*समाससंबन्धिनि माभूत् । द्वाभ्यां पादाभ्यां क्रीतं द्विपाद्यम् । त्रिपाद्यम् । अध्यर्धपाद्यम् । '*पणपामाषाद्यः' (६-४-१४८) इति यः । यद्वा *आज्यादिषु करणभावः प्राण्यङ्गस्यैवेति पूर्वत्र पादशब्दः प्राण्यङ्गवचनः स एव चेहानुवर्तत इति परिमाणार्थस्य न भवति । अन्ये तु गोपहतयोरपीच्छन्ति । पादाभ्यां गच्छतीति पद्गः । पादाभ्यामुपहतः पदुपहतः । कथं हस्तिपादस्यापत्यं हास्तिपद इत्यत्र *अपत्याणि पद्भावः । 'कौपिञ्जलहास्तिपदादण्' (६-३-१७०) इति निर्देशाद्भविष्यति । पादाभ्या चरति पदिक इति तु 'पदिकः' (६-४-१३) इति निपातनात् ॥ ९६ ॥

---

द्वये 'हृद्यपद्य'-इति य । भवार्थे दिगादित्वात् य । हितार्थे तु 'प्राण्यङ्ग'-इति य ॥—**सौहार्द्यमिति** । 'पतिराजान्त'-इति व्यण् ॥—**हिमहतिकाषिये पद्** ॥—**पादसवन्धिनि ये चेति** । प्रत्यासत्त्या आवृत्त्या वा पादस्य यो य प्रत्ययस्तस्मिन् न तु समाससवन्धिनीत्यर्थ । 'विध्यत्यनन्येन' 'दिगादिदहाशाद्य' 'प्राण्यङ्गरथखल'-इत्यादिना पद्या शर्करा इत्यादिषु त्रिषु उदाहरणेषु यथाक्रम ज्ञातव्यानि ॥—**निपातनादिति** । अयमर्थ यथा 'पाद्यार्घ्ये' इति सूत्रनिपातनात् प्रत्ययोऽनुक्तोऽप्यानीयते तथा पद्भावाभावोऽपि निपात्यत इति ॥—**समाससंबन्धिनीति** । अयमर्थ न हि पादशब्दात् केवलादेव यप्रत्ययो विधीयते किंतु पादान्ताद्द्विगो । ततश्च 'प्रत्यय प्रकृत्यादे' इति यस्मात्प्रत्ययो विधीयते तदादेरेव ग्राहको न तदवयवस्येति नाऽय पादसवन्धी य' किंतु द्विगोरिति न भवति ॥—**पणपादमाषाद्य इति** । अत्र सूत्रे पणमाषसाहचर्यात्पादशब्द परिमाणार्थ एव गृह्यते न प्राण्यङ्गवचन इति ॥—**आज्यादिष्विति** । यत आज्यादय क्रियावचना' । आजिशब्दो हि युद्धक्रियावचन उपहतशब्दश्च हननक्रियावचन. तत्र च करणभाव प्राण्यङ्गस्यैव न परिमाणार्थस्य पादशब्दस्य चतुर्भागार्थस्य ॥—**अपत्याणीति** । अत एव निर्देशाद् 'अत इञ्' इतीञ वाधित्वा 'इसोऽ-

*ऋचः श्शसि ॥ ३ । २ । ९७ ॥ ऋचः संबन्धिनः पादस्य शकारादौ शस्प्रत्यये पदित्ययमादेशो भवति । पादं पादं गायत्र्याः शंसति पच्छो गायत्रीं
शसति । *वाक्यगम्यस्य गायत्र्याः पादसंबन्धस्य वृत्तौ निवृत्तत्वात् स्वाभाविकं *शासनक्रियापेक्षं कर्मत्वं भवति । ऋच इति किम् । पादं पादं कार्षापणस्य ददा-
ति पादशः कार्षापणं ददाति । एवं पादशः श्लोकं व्याचष्टे । शसो द्विःशकारपाठात् विभक्तिशसि न भवति । ऋचः पादान् पश्य ॥९७॥ शब्दनिष्कघोषमिश्रे
वा ॥ ३ । २ । ९८ ॥ शब्दादिषूत्तरपदेषु पादस्य पदित्ययमादेशो वा भवति । पादयोः शब्दः पच्छब्दः । पादशब्दः । एवं पन्निष्कः। पादनिष्कः। पद्घोषः।
पादघोषः । पादाभ्यां मिश्रः पन्मिश्रः । पादमिश्रः ॥ ९८ ॥ नस् नासिकायास्तःक्षुद्रे ॥ ३ । २ । ९९ ॥ नासिकाशब्दस्य तस्प्रत्यये क्षुद्रशब्दे चो-
त्तरपदे परे नसित्ययमादेशो भवति। नासिकाया नासिकायां वा नस्तः। नासिकायां नासिकाया वा क्षुद्रः नःक्षुद्रः ॥९९॥ येऽवर्णे ॥ ३ । २ ।१००॥ नासिका-
शब्दस्य यप्रत्यये वर्णादन्यस्मिन्नभिधेये नसित्ययमादेशो भवति । नासिकायै हितं तत्र भवं वा नस्यम् । य इति किम् । नासिक्यं नगरम् । चातुरर्थिकोऽय ञ्यः ।
निरनुबन्धग्रहणे च न सानुबन्धस्य ग्रहणं भवति । अवर्णे इति किम् । नासिक्यो वर्णः ॥ १०० ॥ *शिरसः शीर्षन् ॥ ३ । २ । १०१ ॥ शिरस्शब्दस्य
शीर्षन्नित्ययमादेशो भवति ये प्रत्यये परे । शिरसि भवः शीर्षण्यः स्वरः । एवं शीर्षण्यो व्रणः । शिरसे हितं शीर्षण्यं तैलम् । य इत्येव । शिरस्तः । सशिरस्कः ।
निरनुबन्धग्रहणे च न सानुबन्धस्य ग्रहणं तेनेहापि न भवति । शिर इच्छति शिरस्यति । तथा हस्तिनः शिर इव शिरो यस्य (स) हस्तिशिराः । तस्यापत्यं स्त्री
वाताादित्वादिञि ' शीर्षः स्वरे तद्धिते ' ( ३-२-१०३ ) इति शिरसः शीर्षादेशे ' अनार्षे वृद्धे '—( २-४-७७ ) इत्यादिना चेञः ष्यादेशे हास्तिशीर्ष्या । एवं
पैलुशीर्ष्या । अत्र ष्यशीर्षादेशयोः *स्थानिवद्भावात् शीर्षन्नादेशः स्यात् । शिरस इति चादेशेन संबध्यते न प्रत्ययेन । तेन हास्तिशीर्षिरित्यादौ समाससंबन्धिन्य-
पि तद्धिते उत्तरसूत्रेण शीर्षादेशो भवति ॥ १०१ ॥ केशे वा ॥ ३ । २ । १०२ ॥ शिरसः केशविषये यप्रत्यये परे शीर्षन्नादेशो वा भवति । शिरसि
भवाः शीर्षण्याः केशाः । शिरस्याः केशाः । केचित्तु इल्वला मृगशीर्षस्य शिरस्यास्तारकाः स्मृताः इति प्रयोगदर्शनात् केशादन्यत्रापि विकल्पमिच्छन्ति, शाखा-
दियप्रत्यये च शीर्षन्निति नेच्छन्त्येव । शिरसस्तुल्यः शिरस्यः । शाखादित्वाद्यः ॥ १०२ ॥ *शीर्षः स्वरे तद्धिते ॥ ३ । २ । १०३ ॥ शिरस्शब्दस्य
स्वरादौ तद्धिते परे शीर्ष इत्ययमादेशो भवति । हस्तिशिरसोऽपत्यं हास्तिशीर्षिः । एवं स्थौलशीर्षिः । पैलुशीर्षिः । मृगशिरसा चन्द्रयुक्तेन युक्ता मार्गशीर्षी पौर्ण-

मसी ' इत्यण् प्रत्ययो भवति ॥—ऋचः श्शसि ॥ ऋचः पादो नामियत्तावच्छिन्नोऽक्षरपिण्ड इति नान प्राण्यङ्गार्थस्य पादशब्दस्य सभम इति सामान्येन न ग्रहणम् ॥—वाक्यगम्यस्येति । ननु चेह
पाद गायत्र्या शसतीति गायत्र्या पादशब्देन सम्बन्धाद्वाक्यवद्वृत्तावपि षष्ठ्या भाव्यमिति कथं गायत्रीमित्यत्र द्वितीयेत्याशङ्का ॥—शासनक्रियापेक्षमिति । वाक्ये हि पाद पाद गायत्र्या शसतीति गा-
यत्र्याः पादशब्देन सम्बन्धो य स पच्छ इति वृत्तौ निवर्तते । केवल पच्छ इति शासनक्रियाविशेषणत्वेनैवावतिष्ठते अतस्तत्र षष्ठी न भवति । तदभावेऽपि कथं द्वितीयेत्याह—शासनेत्यादि ॥—शिरस शी—॥—
स्थानिवद्भावादिति । इञ् प्रत्ययस्तदादेशोऽपि प्रत्यय इत्येवरूप स्थानित्व दृश्य न त्विञः स्वरूपेण तस्यैववर्णरूपत्वात् । शीर्षादेशस्य तु स्वरूपेण वर्णसमुदायस्य वर्णनिमित्ताभावात् ॥—शीर्षः स्वरे—॥

मासी। स्थूलशिरस इदं स्थौलशीर्षम्। शिरसि कृतं शैर्षम्। शिरसा तरति शीर्षिकः। स्वर इति किम्। शिरस्कल्पः। तद्धित इति किम्। शिरसा। स्थूलशिरसमाचष्टे स्थूलशिरयति। कथमिल्वला मृगशीर्षस्येति। शीर्षशब्दः प्रकृत्यन्तरमस्ति। *शीर्षच्छेद्यं परिच्छिद्येति। अनेनैव च सिद्धे उक्तविषये शिरसः प्रयोगनिवृत्त्यर्थं वचनम्॥ १०३॥ *उदकस्योदः पेषंधिवासवाहने॥ ३। २। १०४॥ उदकशब्दस्य पेषमादिपूत्तरपदेषु उद इत्ययमादेशो भवति। उदकेन पिनष्टि उदपेषं पिनष्टि तगरम्। उदकं धीयतेऽस्मिन्निति उदधिः घटः। वास, उदकस्य वासः उदवासः। एवम् *उदवाहनः। अनामार्थं वचनम्। नाम्न्युत्तरेणैव सिद्धम्॥ १०४॥ *वैकव्यञ्जने पूर्ये॥ ३। २। १०५॥ उदकशब्दस्य पूरयितव्यवाचिन्येकव्यञ्जनेऽसंयुक्तव्यञ्जनादावुत्तरपदे उदादेशो वा भवति। उदकुम्भः। उदककुम्भः। उदघटः। उदकघटः। उदपात्रम्। उदकपात्रम्। व्यञ्जन इति किम्। उदकामत्रम्॥ एकेति किम्। उदकस्थालम्। पूर्य इति किम्। उदकपर्वतः। उदकदेशः॥ १०५॥ *मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहे वा॥ ३। २। १०६॥ मन्थादिपूत्तरपदेषूदकशब्दस्योदादेशो वा भवति। उदमन्थः। उदकमन्थः। *उदौदनः। उदकौदनः। उदसक्तुः। उदकसक्तुः। उदबिन्दुः। उदकबिन्दुः। उदवज्रः। उदकवज्रः। उदभारः। उदकभारः। उदहारः। उदकहारः। उदवीवधः। *उदकवीवधः। उदगाहः। उदकगाहः। अपूर्यार्थो यत्नः॥ १०६॥ *नाम्न्युत्तरपदस्य च॥ ३। २। १०७॥ उदकशब्दस्य पूर्वपदस्योत्तरपदस्य च नाम्नि संज्ञाया विषये उद इत्ययमादेशो भवति। उदमेघो नाम यस्यौदमेघिः पुत्रः। उदवाहो नाम यस्यौदवाहिः पुत्रः। उदपानम् निपानम्। उदधिः समुद्रः। उत्तरपदस्य, लवणोदः। कालोदः। क्षीरोदः। एवंनामानः समुद्राः। लोहितोदा। क्षीरोदा नाम नदी। अच्छोदम्। सितोदम्। अरुणोदम्। लोहितोदम्। एवंनामानि सरांसि॥ १०७॥ *ते लुग्वा॥ ३। २। १०८॥ नामविषये ये पूर्वोत्तरपदे ते लुग्वा भवतः। देवदतः। देवः। दत्तः। सत्यभामा। सत्या। भामा। *शब्द*साम्येऽपि प्रकरणादेरर्थविशेषनिश्चयः॥ १०८॥ *द्व्यन्तरनवर्णोपसर्गादप ईप्॥ ३। २। १०९॥ द्वि अन्तर् इत्येताभ्यामनवर्णान्तेभ्यश्चोपसर्गेभ्यः परस्याप् इत्येतस्योत्तरपदस्य ईप् इत्ययमादेशो भवति। द्विधा गता आपोऽस्मिन्निति *द्वीपम्।

---

—शीर्षच्छेद्यमिति। शीर्षच्छेदमर्हति 'शीर्षच्छेदाद्यो वा' यप्रत्यय॥—उदक—॥—उदवाहन इति। उदक वाहनमस्येति कार्यम्॥—वैकव्यञ्ज—॥ उदकादिना द्रव्येण पूरयितव्य घटादि पूर्य तत्रोत्तरपदे इति वैयधिकरण्येन सबध्यते। पूर्ये यदुत्तरपद वर्त्तते तस्मिन्निति॥—मन्थौदन—॥—उदमन्थ इति। उदकेन मथ्यते कर्म्मणि घञ्‌ 'कारक कृता' इति समास॥—उदौदन इति। उदकेनोपसिक्त ओदन। 'मयूरव्यसक'–इति समास। उपसिक्तक्रियायाश्च वृत्तावन्तर्भावादुदकौदनयो सामर्थ्यम्॥—उदकवीवध इति। वीवधशब्दोऽव्युत्पन्न पथि पर्याहारे च वर्त्तते। 'हनो वा वध्च' इत्यऽलि वधादेशे बहुव्रीहौ बाहुलकाद्दीर्घत्वे वा वीवध॥—नाम्न्युत्त—॥ उत्तरपदाधिकारात्पूर्वपदस्यैव स्यादित्युत्तरपदस्येत्युच्यते। चकाराभावे च पूर्वपदस्य न स्यादिति चकार॥—ते लुग्वा। ननु पूर्वपदस्योत्तरपदस्य वा लोपे य समुदायमनुवर्त्तते देवादिशब्द स देवदत्तार्थेन च त्रिदशार्थेन च समान इति कथ निश्चयो भवति अय देवदत्तार्थ एव न तु त्रिदशार्थ इत्याह—शब्देत्यादि। शब्दाना भिन्नार्थाना—साम्येऽपि तुल्यरूपत्वेऽपि॥—द्व्यन्तरनव—॥—द्वीपमिति। यथा द्वीपमित्यत्राऽस्वपदविग्रह एवमन्तर्गता निवृत्ता प्रत्यावृत्ता.

एवमन्तरीपम् । नीपम् । प्रतीपम् । समीपम् । अन्वीपम् । वीपम् । उपसर्गादिति किम् । शोभना आपः स्वापः । पूजिता आपः अत्यापः । स्वती पूजायां नोपसर्गौ । अत एव समासान्तो न भवति । अनवर्णेति किम् । प्रापम् । परापम् । संश्लिष्टा आगता आपोऽस्मिन् समापो देवयजनम् ॥ १०९ ॥ **अनोर्देश उप् ॥ ३ । २ । ११० ॥** अनोः परस्यापो देशेऽभिधेये उप् इत्ययमादेशो भवति । अनुगता आपोऽस्मिन्ननूपो देशः । देश इति किम् । अन्वीपं वनम् । कथं कूपः सूपः यूपः । पृषोदरादित्वात् ॥ ११० ॥ ***खित्यनव्ययारुषो मोऽन्तो ह्रस्वश्च ॥ ३ । २ । १११ ॥** अनव्ययस्य *अर्थात्स्वरान्तस्यारुषश्च खित्प्रत्ययान्ते उत्तरपदे मोऽन्तो भवति यथासंभवं ह्रस्वश्चान्तादेशो भवति । ज्ञमात्मानं मन्यते ज्ञंमन्यः । पण्डितंमन्यः । क्ष्मंमन्यः । खट्वंमन्या । महंमन्यः । रात्रिंमन्यमहः । द्रुणिमन्यः । ग्रामणिंमन्यः । वधुंमन्यः । खलपुंमन्यः । क्षेमंकरः । मेघंकरः । आढ्यंभविष्णुः । आढ्यंभावुकः । सुभगंकरणम् । आशितंभवो वर्तते । मितंगमः । विहंगमः । पतङ्गः । परत्वात्पुंवद्भावो ह्रस्वत्वेन बाध्यते । कालिंमन्या । हरिणिंमन्या । अरुस् *अरुंतुदः । खितीति किम् । पण्डितमानी । शुभमानी । अनव्ययेति किम् । दोषामन्यमहः । दिवामन्या रात्रिः । अव्ययप्रतिषेधात् खिति तदन्तग्रहणम् । *न ह्यव्ययात्परः खित्संभवति । अरुःशब्दोपादानादनव्ययस्य व्यञ्जनान्तस्य मो न भवति । *गीर्मन्यः । 'स्वरस्य ह्रस्वदीर्घप्लुताः' इति ह्रस्वः स्वरस्यैव । कृद्ग्रहणे सति गतिकारकस्यापि ग्रहणात् कूलमुद्रुजः कूलमुद्वह इत्यत्रापि भवति ॥ १११ ॥ ***सत्यागदास्तोः कारे ॥ ३ । २ । ११२ ॥** सत्यादिभ्यः कारशब्दे उत्तरपदे परे मोऽन्तो भवति । सत्यं करोति सत्यस्य कार इति वा सत्यंकारः । एवमगदंकारः । अस्तुंकारः । *अस्त्विति निपातः क्रियाप्रतिरूपकोऽभ्युपगमे वर्तते ॥ ११२ ॥ ***लोकंपृणमध्यंदिनानभ्याशमित्यम् ॥ ३ । २ । ११३ ॥** एते शब्दाः कृतपूर्वपदमान्ता निपात्यन्ते । लोकं पृणति लोकस्य वा पृणः लोकंपृणः । मध्यं दिनस्य मध्यं च तत् दिनं चेति वा मध्यंदिनम् । अश्नोतेर्घञ्यभ्याश इति रूपम् । अनभ्याश दूरमित्यं गन्तव्यमस्यानभ्याशमित्यः । दूरतः परिहर्तव्यः । अनभ्याशेनेत्योऽनभ्याशमित्य इति वा दूरेण प्राप्यो न त्वन्तिकेनेत्यर्थः । अन्ये तु प्रीणातेर्णिगन्तस्याचि ह्रस्वत्वं निपात्य लोकंप्रिणः लोकप्रीणक इत्यर्थं इत्युदाहरन्ति । कश्चित्त्वकृतह्रस्वत्वमेव मन्यते लोकंप्रीणः ॥ ११३ ॥ ***भ्राष्ट्राग्नेरिन्धे ॥ ३ । २ । ११४ ॥** भ्राष्ट्राग्निभ्यामिन्धशब्दे उत्तरपदे परे मोऽन्तो भवति । भ्राष्ट्रस्येन्धः *भ्राष्ट्रमिन्धः । एवमग्निमिन्धः ॥ ११४ ॥

---

सगता अनुगता आपोऽस्मिन्निति अस्वपदो बहुव्रीहि 'एकार्थ चानेक' इति । सर्व्वेषु 'ऋक्पू:पथ्यपोऽत्' समासान्त ॥—खित्यनव्यया—॥ ग्रामण्य खलप्वमात्मान मन्यते ॥—अर्थादिति । अरुर्ग्रहणादनव्ययाना स्वरान्तत्व लभ्यते इति ॥—अरुंतुद इति । 'बहुविध्वरुर्'—इति खश् । अत्र मोन्ते सति 'सयोगस्यादौ'—इति सलोप ॥—न ह्यव्ययादिति । ननु यथाऽव्ययात्खिन्न सभवत्येवमऽनव्ययादपि न सभवति । न । धातोरऽनव्ययात्स्यात् । तथा च ज्ञमन्य इत्यादौ ज्ञमन्य इति स्यादित्यव्ययप्रतिषेध समाश्रीयते ॥—गीर्मन्य इति । नन्वऽत्र मोन्तेऽपि 'पदस्य' इति लोपे गीर्मन्य इति भविष्यति कि मोन्तप्रतिषेधेन । उच्यते । रात्सस्यैव इति नियमाल्लोपो न स्यादिति प्रतिषेध ॥—सत्यागदा—॥—अस्त्वितीति । यदीद तुवन्त तदा 'नाम नाम्ना'—इति समासो न प्राप्नोति तदऽभावे कथमुत्तरपदमित्याशङ्का ॥—लोकपृण—॥ लोक पृणतीति वाक्ये 'मूलविभुजादय' इति क । यदा लोकस्य पृण तदा 'नाम्युपान्त्य'—इति क ॥—भ्राष्ट्राग्ने—॥—भ्राष्ट्र-

***अगिलाद्गिलगिलगिलयोः ॥ ३ । २ । ११५ ॥** गिलान्तशब्दवर्जितात् पूर्वपदात्परे गिले गिलगिले चोत्तरपदे परे मोऽन्तो भवति । तिमिं गिलतीति *तिमिङ्गिलः । एवं मत्स्यंगिलः । बालंगिलो राक्षसः । अपत्यंगिला शिशुमारी । तिमीनां गिलगिलः तिमिगिलगिलः । *गिलगिलशब्दे गिलशब्दो नोत्तरपदमिति गिलगिलोपादानम् । गिलशब्दस्य स्वरान्तस्य पर्युदासेन स्वरान्ताद्विधिस्तेन व्यञ्जनान्तान्न भवति । धूर्गिलः । अगिलादिति किम् । तिमिगिलं गिलति तिमिंगिलगिलः । *गिलं गिलति गिलगिल इत्यत्र गिलगिलेति निर्देशादेव मोऽन्तो न संभवति । अगिलादिति तु निषेधो *गिलान्तस्यापि निवृत्त्यर्थः ॥ ११५ ॥

***भद्रोष्णात्करणे ॥ ३ । २ । ११६ ॥** भद्रशब्दादुष्णशब्दाच्च करणशब्दे उत्तरपदे मोऽन्तो भवति । भद्रस्य करणं *भद्रंकरणम् । एवमुष्णंकरणम् ॥ ११६ ॥

***नवाखित्कृदन्ते रात्रेः ॥ ३ । २ । ११७ ॥** रात्रिशब्दस्य खिद्वर्जितकृदन्ते उत्तरपदे मोऽन्तो वा भवति । रात्रौ चरति रात्रिंचरः । रात्रिचरः । रात्रिंचरी । रात्रिचरी । रात्रावटः रात्रिमटः रात्र्यटः । रात्रिमटति रात्रिमाटः । रात्र्याटः । रात्रेः करणम् रात्रिंकरणम् रात्रिकरणम् । खिद्वर्जनं किम् । रात्रिंमन्यमहः । 'खित्यनव्यय'-(३-२-१११) इत्यादिना नित्यमेव भवति । कृदन्त इति किम् । *रात्रिसुखम् । अन्तग्रहणं किम् । रात्रिरिवाचरति क्विप् लुक् तृच् । रात्रयिता । इदमेवान्तग्रहणं ज्ञापकम् 'इहोत्तरपदाधिकारे प्रत्ययग्रहणे प्रत्ययस्यैव ग्रहण न तदन्तस्य । तेन 'कालात्तनतरतम'—( ३-२-२४ ) इत्यादौ प्रत्ययमात्रस्यैव ग्रहणं सिद्धम् । 'न नाम्येकस्वरात् खिति'-( ३-२-९ ) इत्यादौ त्वसंभवात्तदन्तग्रहणम् । केचित्तीर्थंकरः तीर्थकर इत्यत्रापि विकल्पमिच्छन्ति । तदर्थं नवाऽखित्कृदन्ते इति रात्रेरिति च योगो विभजनीयः ॥ ११७ ॥ ***धेनोर्भव्यायाम् ॥ ३ । २ ॥ ११८ ॥** धेनुशब्दाद्भव्याशब्दे उत्तरपदे मोऽन्तो वा भवति । धेनुश्चासौ भव्या च *धेनुंभव्या । धेनुभव्या । केचित्तु नित्यमिच्छन्ति ॥ ११८ ॥ **अषष्ठीतृतीयादन्याद्दोऽर्थे ॥ ३ । २ । ११९ ॥** अषष्ठ्यन्तादतृतीयान्ताच्चान्यशब्दादर्थशब्द उत्तरपदे दोऽन्तो वा भवति । अन्यश्चासौ अर्थश्च, अन्योऽर्थोऽस्येति वा अन्यदर्थः । अन्यार्थः । अन्यस्मै इदम् अन्यदर्थम् । अन्यार्थम् । अन्यस्मिन्नर्थः अन्यदर्थः । अन्यार्थः ।

---

मिन्ध इति । इन्धन प्रयुङ्क्ते णिग् भावे अल् । इन्ध्यतेऽनेनेति वा 'पुन्नाम्नि'-इति घ । इन्धयतीत्यचि वा । घञि तु 'दशनावोद'-इति नलोप स्यात् ॥—अगिला—॥—तिमिगिल इति । बाहुलकात् 'नाम्युपान्त्य'—इति क । 'मूलविभुजादय' इति वा ॥—गिलगिलशब्दे इति । गिलगिल इत्येवरूपस्याखण्डस्य विद्यमानत्वात् । नन्वऽगिलादित्यस्य गिलगिल इति प्रत्युदाहरण युक्तम् । अत्र गिल पूर्वपदमस्तीति । तिमिगिलगिल इत्यत्र तु न गिल पूर्वपद किंतु गिलान्त शब्द इत्याह—गिलं गिलतीत्यादि । गिलगिलेति निर्देशादेव गिलगिले मोन्तो नास्तीति न तदर्थमगिलादित्यऽतस्तदन्तस्यैव प्रतिषेधार्थम् । अन्यथानर्थक्य स्यादिति ॥—गिलान्तस्यापीति । अपिशब्द उक्तसमुच्चये न केवल गिलान्तस्याऽपिशब्दात् केवलादपि मोन्तो न भवतीति । अपिशब्दोऽवधारणेऽन्यथा वर्जनानर्थक्यमिति तु न्यास । यद्वागिलस्येति विशेषणत्वात् तदन्तस्य निषेध । अन्यथोत्तरपदसन्निधापितपूर्वपदस्य केवलस्यैव निषेध स्यात् । यथा दिग्धपादोपहत । गिलस्य गिल गिल गिलति गिलगिल इत्यत्र तु आद्यन्तवदुपचारात् ॥—भद्रोष्णा—॥—भद्रकरणमिति । कृति करण क्रियतेऽनेनेति वा ततो भद्रोष्णयो कर्म्मषष्ठ्यन्तयो 'कृति' इति समास ॥—नवा खित्—॥—रात्रिसुखमिति । अत्र सुखशब्दोऽव्युत्पन्नो न कृदन्त इति मोन्तो न भवति ॥—धेनोर्भव्या—॥—धेनुभव्या इति । धेनोर्विशेषणत्वेन विवक्षितत्वात् विशेष्यत्वेऽपि वा धेनोर्भव्यायामिति भव्या-

अपष्ठीतृतीयादिति किम् । अन्यस्यार्थः अन्यार्थः । अन्येनार्थः अन्यार्थः ॥ ११९ ॥ ***आशीराशास्थितास्थोत्सुकोतिरागे ॥ ३ । २ । १२० ॥** वेति निवृत्तम् पृथग्योगात् । अपष्ठीतृतीयान्तादन्यशब्दादाशिस् आशा आस्थित आस्था उत्सुक ऊति राग इत्येतेषूत्तरपदेषु दोऽन्तो भवति। अन्या आशीः अन्यदाशीः । अन्या आशा अन्यदाशा । अन्यमास्थितः अन्यदास्थितः । अन्या आस्था अन्यदास्था । अन्यस्मिन् उत्सुकः अन्यदुत्सुकः । अन्या ऊतिः अन्यदूतिः । अन्यत्र रागः अन्यद्रागः । अपष्ठीतृतीयादित्येव । अन्यस्याशीः अन्याशीः । अन्येनास्थितः अन्यास्थितः ॥ १२० ॥ ***ईयकारके ॥ ३ । २ । १२१ ॥** पृथग्योगादपष्ठीतृतीयादिति निवृत्तम् । अन्यशब्दादीये प्रत्यये कारकशब्दे चोत्तरपदे दोऽन्तो भवति । अन्यस्यायमन्यदीयः । गहादित्वादीयः । अन्यस्मै हितमन्यदीयम् । अन्यस्यान्येन वा कारकः अन्यत्कारकः । अन्यः कारकः अन्यत्कारकः । अन्यत्कारिका ॥ १२१ ॥ ***सर्वादिविष्वग्देवाड्डद्रिः क्व्यञ्चौ ॥ ३ । २ । १२२ ॥** सर्वादेर्विष्वग्देवशब्दाभ्यां च परः क्विवन्तेऽञ्चतावुत्तरपदे परे डद्रिरन्तो भवति । सर्वमञ्चति सर्वद्र्यङ् । सर्वद्र्यञ्चौ । सर्वद्र्यञ्चः । सर्वद्रीचः । सर्वद्रीचा । सर्वद्रीची । एवं तद्र्यङ् । तद्र्यञ्चौ । तद्र्यञ्चः । तद्रीचः । तद्रीचा । तद्रीची । अदद्र्यङ् । अदद्र्यञ्चौ । अदद्र्यञ्चः । अदद्रीचः । अदद्रीचा । अदद्रीची । कद्र्यङ् । कद्र्यञ्चौ । कद्र्यञ्चः । कद्रीचः । कद्रीचा । यद्र्यङ् । यद्र्यञ्चौ । यद्र्यञ्चः । विपू अवतीति विपूः विष्वमञ्चति विष्वद्र्यङ् । विष्वगित्यव्ययं वा । विष्वगञ्चति विष्वद्र्यङ् । विष्वद्र्यञ्चौ । विष्वद्र्यञ्चः। विष्वद्रीचः । विष्वद्रीचा । विष्वद्रीची। देवानञ्चतीति देवद्र्यङ् । देवद्र्यञ्चौ । देवद्र्यञ्चः। देवद्रीचः। देवद्रीचा। देवद्रीची । सर्वादिविष्वग्देवादिति किम् । अश्वमञ्चति अश्वाची । विष्वमञ्चति विषूची । अञ्चाविति किम् । विश्वयुक् । विष्वग्युक् । देवयुक् । क्वीति किम् । विष्वगञ्चनम् । 'धातुग्रहणे तदादेः समुदायस्य ग्रहणं प्राप्नोति' इति क्वीत्युक्तम् । डकारोऽन्त्यस्वरादिलोपार्थः ॥ १२२ ॥ **सहसमः सध्रिसमि ॥ ३ । २ । १२३ ॥** सहसम् इत्येतयोः स्थानेऽञ्चतौ क्विवन्ते उत्तरपदे परे यथासंख्यं सध्रि समि इत्येतावादेशौ भवतः । सहाञ्चति सध्र्यङ् । सध्र्यञ्चौ । सध्र्यञ्चः । सध्रीचः । सध्रीची । सध्रीचीनः । समञ्चति सम्यङ् । सम्यञ्चौ । सम्यञ्चः । समीचः । समीची । समीचीनः । सहसम इति किम् । प्राङ् । । प्राञ्चौ । अञ्चावित्येव । सहयुक् । संयुक् । क्वीत्येव । सहाञ्चनम् । समञ्चनम् ॥ १२३ ॥ ***तिरसस्तिर्यति ॥ ३ । २ । १२४ ॥** तिरस्शब्दस्याति अकारादावञ्चतौ क्विवन्ते उत्तरपदे परे *तिरि इत्ययमादेशो भवति । तिरस्तिरको वा अञ्चति तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । तिर्यग्भ्याम् । तिर्यग्भिः । तिर्यग्भ्यः । तिर्यक्षु । अतीति किम् । तिरश्चः । तिरश्चा । तिरश्ची ।

---

यामिति भव्याशब्दस्य निमित्तत्वेनोपादानात् धेनो पूर्वनिपात ॥—आशीरा—॥ आश्यतीति 'उपसर्गादातो'—आश्यत्यऽनया वा 'उपसर्गादात' ॥—ईयका—॥ अन्यस्य अन्येन वा कारकेति 'याजकादिभि', 'कारक कृता' च समास ॥—सर्वादिविष्वग्—॥ सर्वेषु 'डस्युक्तम्'—इत्युपपदसमासस्य नित्यत्वेन नित्यमेकपदत्वे 'ह्रस्वोऽपदे वा' इति न ह्रस्वो डद्रेरिकारस्येति । नामग्रहणे इति न्यायस्यानित्यत्वाद्विषूचीशब्दान्न डद्रि । तस्मिन् सति हि विषूचद्र्याडिति अनिष्ट रूप स्यात् । यदा सर्वामञ्चतीति देवीमञ्चतीति क्रियते तदा डद्रिर्भवत्येव । यतोऽत्रामु न्याय मन्यन्ते ॥—तिरसस्तिर्यति ॥ शब्दरूपापेक्षया च नपुसकत्वे 'अनतो लुप्' से सूत्रत्वाद्वा ॥—तिरि इतीति । असदेहार्थमविभक्तिको निर्देश

तिरश्चीनः ॥ १२४ ॥ *नञत् ॥ ३ । २ । १२५ ॥ नञ्शब्द उत्तरपदे परेऽकारो भवति । अचौरः पन्थाः । अमक्षिको देशः । अमशकं वर्तते । अमक्षिकं वर्तते । अहिंसा । अस्तेयम् । *ञकारः किम् । पामनपुत्रः । उत्तरपद इति किम् । न भुङ्क्ते ॥ १२५ ॥ *त्यादौ क्षेपे ॥ ३ । २ । १२६ ॥ साद्यन्ते पदे परतः क्षेपे गम्यमाने नञ् अकारो भवति । अपचसि त्वं जाल्म । अकरोषि त्वं जाल्म । त्यादाविति किम् । *न पाचको जाल्मः । क्षेप इति किम् । न पचति चैत्रः । अ मा नो ना प्रतिषेध इत्यकारेण प्रतिषेधार्थीयेनैव सिद्धौ क्षेपे नञः श्रवणनिवारणार्थम् *अनुत्तरपदार्थं वचनम् ॥ १२६ ॥ नगोऽप्राणिनि वा ॥ ३।२।१२७॥ अप्राणिन्यभिधेये नग इति निपात्यते वा । न गच्छतीति नगः पर्वतः । अगः पर्वतः । नगा वृक्षाः । अगा वृक्षाः । अप्राणिनीति किम् । अगो वृषलः शीतेन । पूर्वेण नित्यमादेशे प्राप्ते विकल्पोऽयम् ॥ १२७ ॥ *नखादयः ॥ ३ । २ । १२८ ॥ नखादयः शब्दा अकृताकाराद्यादेशा निपात्यन्ते । नास्य खमस्तीति *नखः । न भ्राजते इति नभ्राट् क्विबन्तः । न पातीति नपात् शत्रन्तः । त्रिलिङ्गोऽयम् । निपातनात्तु नाभावः। न वेत्तीति नवेदाः । औणादिकोऽस् । सत्सु साधुः सत्यः। 'साधौ' यः । न सत्यः *असत्यः । नासत्यौ । नासत्याः । न मुखतीति नमुचिः । औणादिकः किः । नास्य कुलमस्तीति नकुलः । कथं न न भ्राजते किंतु भ्राजत एवेति नभ्राट् । पृषोदरादित्वादेकस्य नञो लोपे भविष्यति। एवं न न पाति नपात् । न न वेत्ति नवेदाः। न न मुञ्चति नमुचिः। न न कुलमस्त्यस्य नकुलः। न न खमस्त्यस्य नखः। न पुमान् न स्त्रीति नपुंसकम्। अत एव निपातनात् स्त्रीपुंसयोः पुंसकादेशः। न क्षीयते न क्षरति वा नक्षत्रम् । औणादिके त्रटि क्षभावे निपात्यते । न क्रामति न क्रीणाति वा नक्रः। डप्रत्ययो निपातनात् । नास्मिन्नकं दुःखमस्ति नाकः। न विद्यन्ते शाः श्रियः छन्दांसि वास्य नशः। न अगः नागः। न विद्यते भागोऽस्य नभागः। *नारमञ्चति नाराचः। न आप्यत इति नापितः। *न मोयतेऽसाविति नमेरुः। नाभिनन्दति वधूमिति ननान्दा। नान्तरेण भवति । *नान्तरीयकम्। न न चिकेत्ति नाचिकेतः। अत एव निपातनात् कित् ज्ञापनार्थो जुहोत्यादौ द्रष्टव्यः । अस्माच्च नञ्द्वयोपपदान्नाम्नि शत्रू प्रत्ययो भवति । बहुवचनमाकृतिगणार्थम् तेन *नास्तिकः, *नभः,

---

॥-नञत् ॥-ञकार किमिति । ननु चादिषु निरनुबन्ध एव नञ् पठयता स एव चेहाऽनुक्रियतामिति । सत्यम् । निरनुबन्धपाठे पामनपुत्र इत्यादौ 'नोङ्गादे' इति विहितस्य नप्रत्ययस्याऽत्र ग्रहण स्यात् । यत प्रत्ययाऽप्रत्यययो प्रत्ययस्यैव ग्रहणमिति हि न्याय । तत सानुबन्धपाठो युक्त एव । न चानुक्रियमाणेऽप्यनुबन्धे स्त्रैणपुत्र इत्यत्र कथ न भवतीति वाच्य प्रत्ययस्यैव ग्रहणमिति हि न्याय । प्रत्यय-ञित्त्वस्य वृद्धौ चरितार्थत्वान्निपातञित्त्वस्यानर्थक्यात्तस्यैव ग्रहणमिति ॥- त्यादौ क्षेपे ॥—न पाचक इति । असमासोऽय नञ्समासस्य पाक्षिकत्वात् पाचक इति नोत्तरपदमिति पूर्वेणापि न भवति ॥- अनुत्तरपदार्थमिति । त्याद्यन्तेन समासाऽभावत समासे च सति पूर्वोत्तरपदव्यवहारात् ॥—नखादय ॥—नख इत्यत्र बहुव्रीहौ 'नञऽत्' प्राप्तोऽनेन निषिध्यते । उष्ट्रमुखादित्वात्समास । खन्यत इति 'क्वचित्' इति ड ॥—असत्य इति । न नखादौ किंतु नासत्य इत्ययम् । अरीणा समूह आर 'षष्ठ्या समूहे' अण् ॥—नारमञ्चति । 'कर्म्मणोऽण्' । निपातनादञ्चेर्नलोप । आप्लृण् लम्भने नञ आपे ॥—न मीयते 'शिग्रुमेरुनमेर्वादय' मिगस्तु 'चीनीपीमिसिभ्यो रु' 'यतिननदिभ्यो दीर्घश्च' ॥—नान्तरीयकमिति । नान्तरेणेत्यर्थकथन सप्तम्यन्तात्तु गहादित्वादीय । तत स्वार्थिक ॥—नास्तिक इति । नास्ति पुण्य पाप चेति मतिरस्येति 'नास्तिकास्तिक'-इति निपातनादेव सिद्धम् । यदा तु न आस्तिको नास्तिक इति क्रियते तदा गणपाठफलम् ॥—नभ इति । न बभस्तीति क्विप् न भातीति वा 'मिथिरञ्च्युषि'-इति

*नारङ्गमित्यादयो द्रष्टव्याः ॥ १२८ ॥ **अन् स्वरे** ॥ ३ । २ । १२९ ॥ नञः स्वरादावुत्तरपदे परेऽन् इत्ययमादेशो भवति । न विद्यते अन्तोऽस्येति
अनन्तो जिनः । एवमनादिः । अजानाबभावोऽनजम् । न अश्वोऽनश्वः । अन् इति स्वरूपनिर्देशात् नलोपो द्वित्वं च न भवति ॥ १२९ ॥
***कोः कत्तत्पुरुषे** ॥ ३ । २ । १३० ॥ तत्पुरुषे समासे स्वरादावुत्तरपदे कुशब्दस्य कदित्ययमादेशो भवति । कुत्सितः अश्वः कदश्वः ।
कदुष्ट्रः । कदन्नम् । कदशनम् । तत्पुरुष इति किम् । कुत्सिता उष्ट्रा अस्मिन् कूष्ट्रो देशः । स्वर इत्येव । कुब्राह्मणः ॥ १३० ॥ **रथवदे** ॥ ३ । २
। १३१ ॥ रथवदयोरुत्तरपदयोः कुशब्दस्य कदादेशो भवति । कुत्सितो रथः कद्रथः । कुत्सितो रथोऽस्य कद्रथः । कुत्सितो वदोऽस्य कद्वदः । तत्पुरुष एवेच्छ-
न्त्येके । अन्यत्र कुरथो राजा कुवदो मूर्खः ॥ १३१ ॥ ***तृणे जातौ** ॥ ३ । २ । १३२ ॥ कुशब्दस्य तृणे उत्तरपदे जातावभिधेयायां कदा-
देशो भवति । कुत्सितं तृणमस्याः कत्तृणा नाम *रौहिषाख्या तृणजातिः । जाताविति किम् । कुत्सितानि तृणानि कुतृणानि ॥ १३२ ॥ ***कत्रिः** ॥ ३ । २ ।
॥ १३३ ॥ कुशब्दस्य किंशब्दस्य वा त्रिशब्दे उत्तरपदे कदादेशो निपात्यते । कुत्सितास्त्रयः के वा त्रयः कत्रयः । कुत्सितास्त्रयोऽस्य के वा त्रयोऽस्य कत्रिः ।
किमो नेच्छन्त्यन्ये । किंत्रयः ॥ १३३ ॥ ***काक्षपथोः** ॥ ३ । २ । १३४ ॥ अक्ष पथिन् इत्येतयोरुत्तरपदयोः कोः का इत्ययमादेशो भवति । अक्षशब्द-
स्याकारान्तस्य कृतसमासान्तस्य चाविशेषेण ग्रहणम् । कुत्सितोऽक्षः पाशकादिः काक्षः । कुत्सितमक्षमिन्द्रियं काक्षम् । कुत्सितोऽक्षो यस्य काक्षो रथः । कुत्सित-
मक्षि अक्षं वाऽस्य काक्षः । कुत्सितः पन्थाः *कापथम् । कुत्सितः पन्था अस्मिन् कापथो देशः । साकोऽपि भवति । कवु 'कुत्सितः' अक्षः काक्षः । *एवं
कापथः । पथिशब्दनिर्देशात्तत्पर्यायेऽव्युत्पन्ने पथशब्दे न भवति । *कुत्सितः पथः कुपथः । कुपथं वनम् । अनीषदर्थार्थं वचनम् ॥ १३४ ॥ **पुरुषे वा** ॥ ३ ।
२ । १३५ ॥ कुशब्दस्य पुरुषशब्दे उत्तरपदे कादेशो भवति वा । कुत्सितः पुरुषः कापुरुषः । कुपुरुषः । कुत्सिताः पुरुषा अस्मिन् कापुरुषो ग्रामः । कुपुरुषो
ग्रामः । अनीषदर्थे विकल्पोऽयम् । ईषदर्थे तु परत्वादुत्तरेण नित्यमेव । तत्रापि विकल्प एवेति कश्चित् । ईषत्पुरुषः कापुरुषः कुपुरुषः ॥ १३५ ॥ ***अल्पे** ॥
३ । २ । १३६ ॥ ईषदर्थे वर्तमानस्य कुशब्दस्योत्तरपदे परे कादेशो भवति । ईषन्मधुरं कामधुरं कालवणम् । *स्वरादावपि परत्वादीषदर्थे कादेश एव भवति ।

---

प्रतिपदोक्तोऽय-
पट्टुपन्नात् किदऽस् ॥—नारङ्गमिति । न न रङ्गति शोभाम् अत् न अरङ्गमिति वा । रूढिशब्दा एते यथाकथञ्चित् व्युत्पाद्या नाऽनाऽयथार्थाभिनिवेश कार्य ॥—कोः कत्तत्पुरुषे—॥ प्रतिपदोक्तोय
तत्पुरुषो गृह्यते तेन कु पृथिवीमऽतीत कतीत इत्यत्र कदादेशो न भवति । अथेत्थं भणिष्यन्ति श्रितादित्यात्समासे सति प्रतिपदोक्तत्वमऽस्तीति । तदपि न वाच्यम् । यतो द्वितीयान्त श्रितादिभि सह समस्यते
ततश्च द्वितीयान्त सामान्य नाम न प्रतिपदोक्तमिति कदादेशो न भवति ॥—**तृणे जातौ** ॥ कत्तृणशब्दो जातिवाची अन्वयार्थस्तु वृत्तावऽसन्न दर्श्यते कुत्सित तृणमस्या इत्येवरूप ॥— **रौहिष** इति ।
रोहति अरण्ये 'रुहेर्वृद्धिश्च' इति इषप्रत्यय ॥—**कत्रि** ॥ नाप्तियोग सिद्धे कनीति करण क्रिमोऽपि परिग्रहार्थम् ॥—**काक्ष**—॥—**कापथमिति** । पथ सङ्ख्येति नपुसकत्व, बहुव्रीहौ त्वाश्रयलिङ्गता ॥—
**एवं कापथ** इति । अत्र पुस्त्वमित्यमर. । गौडश्च यदाह 'व्यध्वो विपथकापथो' लभते तु नपुंसकत्वमेव भवति ॥—**कुत्सित. पथः कुपथ** इति भवति न तु कुपथम् ॥—**अल्प** ॥—**स्वरादावपीति** ।

ईषदम्लम्। काम्लम्। एवं काच्छम् ॥ १३६ ॥ **काकवौ वोष्णे** ॥ ॥ ३ । २ । १३७ ॥ कुशब्दस्योष्णशब्दे उत्तरपदे का कव इत्येतावादेशौ वा भवतः। ईषत्कुत्सितं वा उष्णम् कोष्णम् कवोष्णम्। ईषत् कुत्सितं वा उष्णमत्र कोष्णः कवोष्णो देशः। पक्षे यथाप्राप्तम् इति तत्पुरुषे कदुष्णम्। बहुव्रीहौ तु कदादेशो न भवति। कूष्णो देशः। अन्यस्त्वत्रावपीच्छति। काग्निः कवाग्निः कदग्निः ॥ १३७ ॥ ***कृत्येऽवश्यमो लुक्** ॥ ३ । २ । १३८ ॥ अवश्यम्शब्दस्य कृत्यप्रत्ययान्ते उत्तरपदे लुक् अन्तादेशो भवति। अवश्यकार्यम्। अवश्यस्तुत्यम्। अवश्यदेयम्। अवश्यकर्तव्यम्। अवश्यकरणीयम्। कृत्य इति किम्। अवश्यंलावकः ॥१३८॥ **समस्ततहिते वा** ॥ ३ । २ । १३९ ॥ समम्शब्दस्य तते हिते चोत्तरपदे लुगन्तादेशो वा भवति। मततम्। सततम्। सहितम्। संहितम् ॥ १३९ ॥ **तुमश्च मनःकामे** ॥ ३ । २ । १४० ॥ तुम्प्रत्ययान्तस्य समम्शब्दस्य च प्रत्येक मनसि कामे चोत्तरपदे लुगन्तादेशो भवति। भोक्तुं मनोऽस्य भोक्तुमनाः। गन्तुं कामोऽस्य गन्तुकामः। सम्यग्मनोऽस्य समनाः। एवं सकामः। सहशब्देनापि सिद्धौ समः श्रुतिनिवृत्त्यर्थं वचनम् ॥ १४० ॥ ***मांसस्यानड्घञि पचि नवा** ॥ ३ । २ । १४१ ॥ मांसशब्दस्यानडन्ते घञन्ते च पचावुत्तरपदे लुगन्तादेशो वा भवति। मांसस्य पचनं *मांसपचनम्। मांसपचनम्। मांस्पचनी। मांसपचनी। मांसस्य पाकः। मांस्पाकः। मांसपाकः। अनड्घञीति किम्। मांसपक्तिः। पचाविति किम्। मांसदाहः। मांसदहनी ॥१४१॥ ***दिक्शब्दात्तीरस्य तारः** ॥ ३ । २ । १४२ ॥ दिक्शब्दात्परस्य तीरशब्दस्योत्तरपदस्य तार इत्ययमादेशो वा भवति। दक्षिणस्या दिशः दक्षिणस्य वा देशस्य तीरं दक्षिणतारं दक्षिणतीरम्। एवमुत्तरतारमुत्तरतीरम्। *पश्चिमतारं पश्चिमतीरम्। पूर्वतारं पूर्वतीरम्। दिक्शब्दादिति किम्। गङ्गातीरम् ॥ १४२ ॥ **सहस्य सोऽन्यार्थे** ॥ ३ । २ । १४३ ॥ अन्यार्थे अन्यपदार्थे बहुव्रीहौ समासे उत्तरपदे परे सहशब्दस्य स इत्ययमादेशो भवति वा। सह पुत्रेण सपुत्र आगतः सहपुत्र आगतः। एवं सशिष्यः सहशिष्य आगतः। सह लोम्ना वर्तते सलोमकः सहलोमकः। विद्यमानलोमक इत्यर्थः। अन्यार्थ इति किम्। सहयुध्वा। सहकृत्वा। सहकारी। सहजः। कथं सहकृत्वा प्रियोऽस्य सहकृत्वप्रियः प्रियः सहकृत्वास्य प्रियसहकृत्वेति। बहुव्रीहौ यदुत्तरपदं तस्मात्पूर्वः सहशब्दो न भवतीति सादेशो न भवति ॥ १४३ ॥ ***नाम्नि** ॥ ३ । २ । १४४ ॥ योगारम्भाद्वेति निवृत्तम्। अन्यार्थे समासे उत्तरपदे सहशब्दस्य सादेशो भवति नाम्नि संज्ञायां विषये ॥ सहाश्वत्थेन वर्तते साश्वत्थम्। सपलाशम्। सशिंशपम्। एवंनामानि वनानि। सह रसेन सरसा दूर्वा। अन्यार्थ इत्येव। *सह

---

न 'को कत्तत्पुरुषे' इति कदादेश इत्यर्थ ॥—कृत्ये—॥ 'अव्यय प्रवृद्धादिभिः' 'मयूरव्यंस'—इत्यादिना वा सर्वत्रात्र समास ॥—मांसस्य—॥—मांस्पचनमिति। अत्राऽसिद्ध बहिरङ्गमन्तरङ्ग इति न्यायादलोपस्यासिद्धत्वात् सो रुर्न भवति। न तु 'स्वरस्य परे'—इति स्थानित्व, 'न सधि'—इत्यनेनासद्विधौ स्थानित्वनिषेधात् ॥—दिक्शब्दा—॥—पश्चिमतारमिति। स्त्रिया तु सर्वादित्वाभावात् पुम्भावाप्रवृत्तौ पश्चिमातार पश्चिमातीरमिति भवति ॥—नाम्नि ॥—सह चरतीति सहचर। अच। 'अव्यय प्रवृद्धादिभि' इति समास ॥—स—

सह जायते सहजन्या अप्सराः ॥ १४४ ॥ *अदृश्याधिके ॥ ३।२।१४५॥
चरतीति सहचरः कुरण्टकः । सह दीव्यतीति सहदेवः कुरुः । *सहदेवा ओषधिः । सह जायते सहजन्या अप्सराः ॥ १४४ ॥ *अदृश्याधिके ॥ ३।२।१४५॥ सराक्षसीका
अदृश्यं परोक्षम् अधिकमधिरूढम् । तद्वाचिनोरुत्तरपदयोरन्यर्थे समासे सहशब्दस्य सादेशो भवति । अदृश्ये, साग्निः कपोतः । सपिशाचा वात्या । सराक्षसीका
विगुत् । समुशलो *व्रीहिकंसः । अधिके, सद्रोणा खारी । समापः कार्षापणः । सकाकणीको माषः । 'सहस्य सोऽन्यार्थे' ( ३-२-१४३ ) इत्यनेनैव सिद्धे नि-
सार्थं वचनम् ॥ १४५ ॥ *अकालेऽव्ययीभावे ॥ ३ । २ । १४६ ॥ सहशब्दस्याकालवाचिन्युत्तरपदेऽव्ययीभावसमासे सादेशो भवति । ब्रह्मणः संपत्
सब्रह्म साधूनाम् । एवं सवृत्तं सुविहितानाम् । सक्षत्रं यदूनाम् । सपत्त्रावव्ययीभावः । युगपच्चक्रेण चक्राणि वा धेहि सचक्रं धेहि । एवं सधुरं प्राजः । यौगपद्येऽव्य-
यीभावः । तृणैः सह सतृणमभ्यवहरति । एवं *समूलघातं हन्ति । साकल्येऽव्ययीभावः । *षड्जीवनिकामन्तमवसानं कृत्वाधीते सषड्जीवनिकमधीते श्रावकः ।
एवं सलोकबिन्दुसारमधीते पूर्वधरः । अन्त इत्यव्ययीभावः । अकाल इति किम् । सहपूर्वाह्णं शेते । सहापराह्णं भुङ्क्ते । अयमपि साकल्येऽव्ययीभावः । अव्ययीभाव
इति किम् । सहयुध्वा ॥ १४६ ॥ ग्रन्थान्ते ॥ ३ । २ । १४७ ॥ ग्रन्थस्यान्तो ग्रन्थान्तः । तद्वाचिन्युत्तरपदेऽव्ययीभावे समासे सहशब्दस्य सादेशो भव-
ति । कलामन्तं कृत्वा सकलं ज्यौतिषमधीते । एवं सकाष्ठम् । समुहूर्त्तम् । कलादिशब्दाः कालविशेषवाचिनोऽपि तत्सहचारिषु ग्रन्थेषु वर्तन्त इति ग्रन्थान्तवाचि-
त्वमुत्तरपदस्य । अन्त इत्यव्ययीभावः। कालार्थ आरम्भः॥ १४७ ॥ नाशिष्यगोवत्सहले ॥ ३ । २ । ४८ ॥ आशिषि गम्यमानायां गवादिवर्जित उत्तरपदे
परे सहशब्दस सादेशो न भवति । स्वस्ति राज्ञे सहराष्ट्राय । स्वस्ति गुरवे सहशिष्याय । भद्र सहसंघायाचार्याय । आशिषोति किम् । सपुत्रः सहपुत्र आगतः ।
अगोवत्सहल इति किम् । स्वस्ति भवते सगवे । सहगवे । सवत्साय । सहवत्साय । सहलाय । सहहलाय ॥ १४८॥ समानस्य धर्मादिषु ॥ ३। २ । १४९ ॥
समानशब्दस्य धर्मादिपूत्तरपदेषु सादेशो भवति । समानो धर्मोऽस्य सधर्मा । समानो वा धर्मः सधर्मः । समाना जातिरस्य सजातीय । समानं नामास्य सनामा ।
समानं नाम सनाम । धर्म जातीय नामन् गोत्र रूप स्थान वर्ण वयस् वचन ज्योतिस् जनपद रात्रि नाभि बन्धु पक्ष गन्ध पिण्ड देश कर लोहित कुक्षि वेणि इति
धर्मादयः । बहुवचनमाकृतिगणार्थम् । अन्ये तु धर्मादिषु वचनान्तेषु नवसु विकल्पमिच्छन्ति । सधर्मा, समानधर्मा । सजातीयः । समानजातीयः। सनामा, समा-
ननामा । सगोत्रः । समानगोत्रः । सरूपः । समानरूपः । सस्थानः । समानस्थानः । सवर्णः । समानवर्णः । सवयाः । समानवयाः । सवचनः । समानवचनः ।
अपरे तु नामादिषु बन्धुपर्यन्तेषु द्वादशस्वेव समानस्य सभावं नित्यमिच्छन्ति अन्येषु तु नेच्छन्त्येव। सधर्मसपक्षादिशब्दास्तु सहशब्देन समानपर्यायेण कृतसादेशेन

'भव्यगेयजन्य'—इत्यादिना कर्त्तरि घ्यण् । 'न जनवध' इति वृद्ध्यभाव ॥—अदृश्याधि—॥—व्रीहिकस
हदेवा ओषधिरिति । लिहाद्यच् ॥—सह जायते सहजन्या अप्सरा इति । मुसलस्य आवृतत्वाददृश्यता ॥—अकाले—॥—समूलघातमित्यत्र मूलाना साकल्य समूल
इति । कस इति खार्यादिवत् मानविशेषस्य नाम तत्परिमाणपरिच्छिन्नव्रीहिमध्यगतस्य । अथवा जीव्यतेऽनयाऽनटि स्वार्थे के षण्णा प्राणिना जीवनिका षड्जीवनिका ।
हनन 'हनश्च समूलात्' णम ॥—षड्जीवनिकामिति । षट् सख्या जीवा तान्नियत कायति ड

साधयन्ति, समानशब्दप्रयोगे तु समानधर्मा समानपक्षः समानजातीय इत्याद्येव मन्यन्ते। कथं समानोदरे जातः सोदर्यः समाने तीर्थे वसति सतीर्थ्य इति। 'सोदर्यसमानोदर्यौ' (६-३-१११) इति 'सतीर्थ्यः' (६-४-७८) इति च निपातनाद्भविष्यतः ॥ १४९ ॥ **सब्रह्मचारी ॥ ३ । २ । १५० ॥** सब्रह्मचारीति निपात्यते। समानो ब्रह्मचारी समाने ब्रह्मण्यागमे गुरुकुले वा व्रतं चरतीति सब्रह्मचारी। निपातनादेव व्रतशब्दस्यापि लोपः ॥ १५० ॥ **दृक्दृशदृक्षे ॥** दृक्दृशदृक्ष इत्येतेषूत्तरपदेषु समानस्य सादेशो भवति। समान इव दृश्यते सदृक्। सदृशः। सदृक्षः। दृशदृक्षसाहचर्यात् दृक्सक्प्रत्ययसहचरितक्विन्तस्यैव दृशो ग्रहणात् इह न भवति। समाना दृक् समानदृक् ॥ १५१ ॥ **अन्यत्यदादेरा ॥ ३ । २ ॥ १५२ ॥** अन्यशब्दस्य त्यदादेश्च दृक्दृशदृक्षेषूत्तरपदेषु आकारोऽन्तादेशो भवति। अन्य इव दृश्यते अन्यादृक्। अन्यादृशः। अन्यादृक्षः। एवं त्यादृक्। त्यादृशः। त्यादृक्षः। तादृक्। तादृशः। तादृक्षः। यादृक्। यादृशः। यादृक्षः। अमूदृक्। अमूदृशः। अमूदृक्षः। भवादृक्। भवादृशः। भवादृक्षः। त्वादृक्। त्वादृशः। त्वादृक्षः। मादृक्। मादृशः। मादृक्षः। एकादृक्। एकादृशः। एकादृक्षः। द्वादृक्। द्वादृशः। द्वादृक्षः। युष्मादृक्। युष्मादृशः। युष्मादृक्षः। अस्मादृक्। अस्मादृशः। अस्मादृक्षः। कथं यत्परिमाणमस्य यावान्। एवं तावान्। एतावान्। 'यत्तदेतदो डावादिः' (७-१-१४९) इति डावतौ भविष्यति ॥ १५२ ॥ **इदं किमीत्की ॥ ३ । २ । १५३ ॥** इदंशब्दः किंशब्दश्च दृक्दृशदृक्षेषूत्तरपदेषु परेषु यथासंख्यमीकाररूपः कीकाररूपश्च भवति। अयमिव दृश्यते ईदृक्। ईदृशः। ईदृक्षः। क इव दृश्यते कीदृक्। कीदृशः। कीदृक्षः। कथं इदं किं वा परिमाणमस्य इयान् कियान्। 'इदंकिमोऽतुरिय् किय् चास्य' (७-१-१४८) इति भविष्यति ॥ १५३ ॥ ***अनञः क्त्वो यप् ॥ ३ । २ । १५४ ॥** नञ्वर्जितादव्ययात्पूर्वपदाद्यत्परमुत्तरपदं तदवयवस्य क्त्वाप्रत्ययस्य यबादेशो भवति। प्रकृत्य। प्रहृत्य। *उच्चैःकृत्य। *नानाकृत्य। अनञ इति किम्। अकृत्वा। अहृत्वा। *परमकृत्वा। अनञ इति नञ्सदृशमव्ययं गृह्यत इति इह नञोऽनव्ययाच्च न भवति। उत्तरपदस्येत्येव। अलं कृत्वा। खलु कृत्वा ॥ १५४ ॥ ***पृषोदरादयः ॥ ३ । २ । १५५ ॥** पृषोदर इत्येवंप्रकाराः शब्दा विहितलोपागमवर्णविकाराः शिष्टैः प्रयुज्यमानाः साधवो भवन्ति। पृषदुदरमुदरे वास्य पृषोदरः। पृषत उदरं पृषोदरम्। पृषत उद्वानं *पृषोद्वानम्। एवं *पृषोद्धारम्। अत्र तकारलोपो निपात्यते। जीवनस्य जलस्य मूतः पुटबन्धः जीमूतः। अत्र वनस्य लोपः। वारिणो वाहको बलाहकः। अत्र पूर्वपदस्य वः उत्तरपदादेश्च ल आदेशः। आध्यायन्ति तमिति *आढ्यः। अत्र ध्यस्य ढ्यादेशः। कृच्छ्रेण दास्यते नास्यते दभ्यते च खलि, दुष्टो दासो नासो दम्भ इति वा दूडासः। दूणासः। दूडभः। दुष्टं ध्यायति दूढ्यः। एषु पूर्वपदस्य दुसो दूभावः उत्तरपदादेश्च डत्वण-

॥—अनञ क्त्वो—॥—उच्चैःकृत्येत्यत्र 'कृगोऽव्यय'—इति क्त्वा ॥—नानाकृत्येत्यत्र तु 'स्वाङ्गतश्च्व्यर्थे' इत्यनेन ॥—परमकृत्वेति। परम च तत् कृत्वा चेति कार्यम्। 'सन्महत्' इति समास। परम करण पूर्वं वा। परमस्य करणमित्यत्र तु समासो न स्यात्। 'तृप्तार्थपूरण' इत्यादावव्ययद्वारेण निषिद्धत्वात्षष्ठीसमासस्य ॥—पृषोदरा—॥—पृषोद्वानमिति। पै ओवै शोषणे। उद्वायत इति उद्वान पृषत उद्वान पृषोद्वानम् ॥—पृषोद्धारमिति। धृग् णिगि अच्। उद्पूर्वस्य धृगो णिगि अचि। यदा उद्धरमिति तदा धृगोऽणिगन्तस्य ॥—आढ्य इत्यत्र 'स्थादिभ्य क'

त्वढत्वानि दम्भेर्नलोपश्च । मह्यां रौति मयूरः । रौतेरच्यन्तलोपो महीशब्दस्य मयूभावः । मह्यां शेते महिषः । डः । अत्र पूर्वपदस्य ह्रस्वत्वं शस्य च षत्वम् । पिशितमश्नाति पिशाचः । अत्र पिशितस्य पिशादेशः अश्नातेः शस्य चादेशः । शवानां शयनं श्मशानम् । पूर्वपदस्य श्मादेशः उत्तरपदस्य च शानादेशः । ब्रुवन्तोऽस्यां सीदन्ति विषीदन्ति वृसी । अत्र डट् प्रत्ययः । पूर्वपदस्य वृभावः । ऊर्ध्वं खं बिलं वास्य उदूखलम् । उलूखलं वा । अत्र पूर्वपदस्योदूभाव उलूभावश्च उत्तरपदस्य खलादेशः । दिवि द्यौर्वौक एषां दिवौकसः । अत्राकारागमः । अश्व इव तिष्ठति अश्वत्थः । कपिरिव तिष्ठति कपयोऽस्मिंस्तिष्ठन्ति इति वा कपित्थः । दध्नि तिष्ठति दधित्थः । मह्या तिष्ठति महित्थः । एषु तिष्ठतेः सकारस्य तकारः । मुहुः स्वनं लाति मुहुर्मुहुर्लसतीति वा मुसलम् । अत्र मुहुःशब्दस्य मुभावः । स्वनशब्दस्य सभावः । पक्षान्तरे लसयोर्विपर्ययश्च । ऊर्ध्वौ कर्णावस्येत्युलूकः । अत्रोर्ध्वशब्दस्योलादेशः कर्णशब्दस्योकादेशश्च । मेहनस्य खं तस्य माला मेखला । अत्र मेहनखे हनस्य मालाशब्दे च माशब्दस्य लोपः । कौ जीर्यति कुञ्जरः । अत्र कुशब्दस्य मोऽन्तः । आशुरस्य विषमस्ति *आशीविष । अत्राशुशब्दस्याशीभावः । बलं वर्धयति बलीवर्दः । अत्र बलस्यैकारोऽन्तादेशो वर्धधकारस्य च दकार । मनस ईष्टे मनीषी । अत्र मनसोऽन्त्यस्वरादिलोपः ईशे शस्य च षः । बिलं दारयतीति बिडालः । अत्र बिलशब्दस्य ललोपः । उत्तरपदस्य डालादेशः । मृदमालीयते । डः, मृणालः । अत्र मृदो दकारस्य णकारः । असृगालीयते । डः, सृगालः । अत्रादेर्लोपः । असृग्गलति वा सृगालः । अत्रासृज आद्यन्तलोपः । पुरो दाश्यते पुरोडाशः । अत्रोत्तरपदादेर्डत्वम् । अश्वस्याम्बा वडवा । अत्राश्वस्याशो लोपः इ् चान्तः । अम्बाशब्दे च मो लोपः । शकस्यान्धुः शकन्धुः । अत्र पूर्वपदान्तस्योत्तरपदादेर्वा लोपः । एवं कर्कन्धुः । अटतीत्यच् अटा । कुलानामटा कुलटा । अव् अवाक् अटन्त्यस्मिन्निति बाहुलकात् 'पुंनाम्नि' (५-३-१३०) इति घः । अवटः । हिनस्तीति सिंहः । अत्र सकारहकारयोर्विपर्ययः । कृतकेन शलति *कृकलाशः । अत्र तकारस्य लोपः । शकारलकारयोस्तु विपर्ययः । भ्रमन् रौति डः भ्रमरः । अत्र तलोपः । एवंप्रकाराः शिष्टैः प्रयुक्ताः पृषोदरादयः । मयूरमहिषादीनामुणादौ व्युत्पादितानामपीह व्युत्पादनमनेकधा शब्दव्युत्पत्तिज्ञापनार्थम् । बहुवचनमाकृतिगणार्थम् । तेन मुहूर्तमारग्वधोऽश्वत्थामनिर्लयनीत्पादयोऽपि द्रष्टव्याः ॥ वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोः *तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ १५५ ॥ ***वावाप्योस्तनिक्रीधाग्नहोर्वपी ॥ ३ । २ । १५६ ॥** अवशब्दस्योपसर्गस्य तनिक्रीणात्योः परयोरपिशब्दस्य च धाग्नहोः परयोर्यथासंख्यं व पि इत्येतावादेशौ वा भवतः । वतंसः । अवतंसः । वक्रयः । अवक्रयः । पिहितम् । अपिहितम् । पिधानम् । अपिधानम् । पिदधाति । अपिदधाति । पिनद्धम् । अपिनद्धम् । धातुनियमं नेच्छ-

॥-आशीविष इति । यदापि आश्यतीत्यचि ततो गौरादित्वाद्ङी । आश्या दष्ट्राया विषमस्तीति । अथवा आशिषि दष्ट्राया विषमस्येति तदाऽप्यनेन निपातनम् ॥-**तदर्थाऽतिशयेनेति** । स प्रसिद्धोऽर्थस्तदर्थ शब्दलक्षणस्तस्यातिशयो माधुर्यादिस्तेन योग यथा मयूर इति । अत्र हि रौतेरवर्णार्थस्यातिशयेन योग ॥-**कृकलाश** इति 'वा क्लादि'-इति ण । कृत लासयतीति ये व्युत्पादयन्ति तन्मते दन्त्यसकार । महुरियर्त्ति स्म 'गत्यर्थ' इति क्त प्रत्यय । आरात् वक्ष्यते 'स्थादिभ्य क'। तस्य ग । अश्व इव तिष्ठतीति मन् निलीयतेऽस्या अनट् ॥-**वावाप्यो**-॥ अथ पृषोदरादित्वादेवाऽवाप्यो पाक्षिके अकारलोपे वतस इत्यादि

न्त्येके । *पृषोदरादिप्रपञ्च एषः तेन शिष्टप्रयोगोऽनुसरणीयः ॥ १५६ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ तृतीयस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ ॥ श्रीमद्वल्लभराजस्य प्रतापः कोऽपि दुःसहः ॥ प्रसरन् वैरिभूपेषु दीर्घनिद्रामकल्पयत् ॥ १ ॥

# तृतीयः पादः

*वृद्धिरारैदौत् ॥ ३ । ३ । १ ॥ आकार आर् ऐकार औकारश्च प्रत्येकं वृद्धिसंज्ञा भवन्ति । मार्ष्टि । पाक्यम् । दाक्षिः । कारयति । कार्यम् । आर्षम् । नाययति । नायकः । ऐन्द्रम् । लावयति । लावकः । औपगवः । वृद्धिप्रदेशा 'मृजोऽस्य वृद्धिः' (४-३-४२) इत्येवमादयः ॥ १ ॥ *गुणोऽरेदोत् ॥ ३ । ३ । २ ॥ अर् एत् ओत् इत्येते प्रत्येकं गुणसंज्ञा भवन्ति । करोति । कर्तव्यम् । चेता । चेयम् । स्तोता । स्तोतव्यम् । गुणप्रदेशाः 'नामिनो गुणोऽक्ङिति' (४-३-१) इत्येवमादयः ॥ २ ॥ *क्रियार्थो धातुः ॥ ३ । ३ । ३ ॥ कृतिः क्रिया प्रवृत्तिर्व्यापार इति यावत्। *पूर्वापरीभूता *साध्यमानरूपा सार्थोऽ-

सिध्यत्येव किमर्थोऽयं योग इत्याह—पृषोदरादीति । शिष्टा उक्तरूपास्तैर्यं प्रयुज्यते तदनुसरणादन्यदपि सर्वं सिद्धम् ॥ इत्याचार्यश्रीहेम०लघुन्यासे तृतीयस्याध्यायस्य द्वितीय पाद ॥—वृद्धिरारैदौत् । वृद्धिशब्दस्य सञ्ज्ञात्वान् अनुवादविधित्वेन च परनिपात प्राप्नोति । औरदौदित्यनूद्य एते वृद्धिसञ्ज्ञा भवन्तीति ह्यभिधीयते । सत्यम् । मङ्गलार्थं निपात । नन्वाकारादयो द्वेधा तद्भाविता अतद्भाविताश्च तद्भाविता वृद्धिसञ्ज्ञया निष्पादिता । यथा आश्वलायन, कार्त्तवीर्य, ऐतिकायन, औपगव, इत्यादिषु । अतद्भाविता यथा राजा, प्राच्छैर्यति, गैपात्र, नौघोष इत्यादिषु । तत्र पूर्वेषामितरेतराश्रयदोषप्रसङ्गादितरेषु चरितार्थतया वृद्धिसञ्ज्ञया न भाव्यमिति न वाच्यम् । सामान्येन भाविन्या सञ्ज्ञाया आश्रयणात् नास्तीतरेतराश्रयप्रसङ्गो यथाऽस्य सूत्रस्य पट वयेति । न चाकारादय सञ्ज्ञा वृद्धिशब्द सञ्ज्ञीति विपर्ययोऽत्र युज्यते लाघवार्थत्वात् सञ्ज्ञाकरणस्य । न च समुदितानामारैदौता सञ्ज्ञेयमिति वाच्यम् । 'वृद्धिर्यस्य स्वरेष्वादि' इति दर्शनात् । न च समुदाय आदिस्वरो भवति ॥—गुणोऽरे—॥ गुणशब्दस्य पूर्वनिपातो मङ्गलस्यैवातिशयप्रतिपादनार्थं ॥—क्रियार्थो—॥ पूर्वावयवयोगात्पूर्वाऽपरावयवयोगादऽपरा पूर्वा चासावऽपरा च पूर्वापरा अपूर्वापरा पूर्वापरा भूता—पूर्वापरीभूता । तत्र पूर्वापरयोर्द्वयोरपि प्रथमोक्तत्वेन 'पूर्वापरप्रथम' इति शब्दपरस्पर्धनाऽपरशब्दस्य पूर्वनिपाते प्राप्ते राजदन्तादित्वात् पूर्वस्य पूर्वनिपात । तत्र पूर्वोऽवयवोऽधिश्रयणादिरऽपर उदकसेकादिस्तौ द्वावपि भागौ पाकक्रियाया स्त । सा ह्यधिश्रयणोदकसेचनादिरूपा ॥—साध्यमानरूपेति । साध्यमान साधनायत्त रूप स्वरूप यस्या सा क्रिया । यथा पचति कश्चैत्र कम् ओदन कै काष्ठै क्व स्थाल्या कुत कुशूलात् कस्मै मैत्रायेति भावना । ननु पचतीत्यादिष्वस्तु क्रियात्व भवतीत्यादिषु तु सत्ताया नित्यत्वेन साध्यमानत्वाऽभावात् तदभावे च पूर्वापरविभागाभावात् तदभावे च क्रियार्थत्वाभावे न प्राप्नोति

भिधेयं यस्य स शब्दो धातुसंज्ञो भवति । एधते । अत्ति । दीव्यति । सुनोति । तुदति । रुणद्धि । तनोति । क्रीणाति । सहति । *आयादिप्रत्ययान्तानामपि क्रि-यार्थत्वात् धातुत्वम् । गोपायति । कामयते । ऋतीयते । जुगुप्सते । कण्डूयति । पापच्यते । चोरयति । कारयति । चिकीर्षति । पुत्रकाम्यति । पुत्रीयति । अश्वति । श्येनायते । हस्तयते । मुण्डयति । एवं जुस्तम्भूचुलुम्पादीनामपि । जवनः । स्तभ्नाति । चुलुम्पाचकार । प्रेङ्खोलयति । *शिष्टप्रयोगानुसारित्वात् *अस्य लक्षण-स्याणपयसादिनिवृत्तिः । *शिष्टज्ञापनाय चेदं लक्षणम् एतदविसंवादेन च शिष्टा ज्ञायन्ते इति । *अन्वयव्यतिरेकाभ्यां च धातोः क्रियार्थत्वावगमः । *तथाहि पचतीत्यादौ धातुप्रत्ययसमुदाये *संसृष्टक्रियाकालकारकाद्यनेकार्थाभिधायिनि प्रयुज्यमाने धातोरेव क्रियार्थत्वमवगम्यतेऽन्वयव्यतिरेकाभ्यां नेतरेषाम् । पचतीति

---

धातुसंज्ञा । सत्यम् । आश्रयभेदेन सत्तापि पूर्वापरीभूता साध्यमानरूपा । यथा सैव देवदत्तसत्ता कचिद्गमनयुक्ता कचिद्भोजनयुक्ता कचित्पठनयुक्ता । एवमन्यथा योजना कार्या ॥—आयादिप्रत्यया-न्तेति । ननु क्रियार्थं धाता शिश्ये इत्यादिषु भावे तदर्थप्रत्ययस्यापि धातुत्वप्रसङ्गः । भावप्रत्यया हि क्रियार्थ एव उत्पद्यते ततश्चात्सध्यक्षग्स्यैत्यात्प्रसङ्गः । अत्र हि धातोर्विहितमभिमितिक चेति । अत्र प्रत्ययप्रतिषेधार्थं क्रियाविशेषक प्रथमग्रहणं कर्त्तव्यं व्याख्येयं न प्रथमं य क्रियामाहेति । प्राथम्यं चाऽन्याभिधानापेक्षं ग्राह्यं तेन किं सिद्धं अन्येनाऽनभिहिता क्रिया य आह स धातुः । अग-मऽर्थोऽन्येभ्य. क्रियाभिधायिभ्यो य. प्रथममाहेति । शिश्ये इत्यत्र तु शीङ्त्यनेनाभिहिता क्रिया प्रत्यय आहेति न तस्य धातुसंज्ञाप्रवृत्तिः । शब्दार्थापेक्षया प्राथम्यं घटते तत्र शब्दतश्चेत्पुत्रीयतीत्यादावपि न प्राप्नोति । नात्र प्रथममुपादीयमान पुत्रशब्दः क्रियामाह । अर्थतश्चेत्पुत्रीयतीत्यादौ प्रथमा आद्या क्रिया अप्रथमेनापि केनाभिधीयते न तु द्वितीयेति सिध्यति धातुसंज्ञा । ननु प्रथमग्रहणे सति निर्की-र्षतीत्यत्रापि न प्राप्नोति धातुसंज्ञा यतोऽत्रापि सन् प्रत्ययो न प्रथमं क्रियामाह अपि तु कृञ्त्यनेनाभिहिताम् । नैवम् । करोत्यर्थोपसर्जनामिच्छामन्येन अनभिहिता सन्प्रत्यय आहेति स्यादेव धातुसंज्ञेति । अनोच्यते । यथाऽत्र प्रथमग्रहणे कृते शिश्ये इत्यत्र धातुसंज्ञा न भवति तथा स्वार्थिकानामायादीनामपि न प्राप्नोति गोपायति कामयत इत्यादिषु अत्रापि अभिहिताया एव क्रियाया आयादिभिरभिहित-त्वात् । तस्मादेव व्याख्येयं क्रियामेव प्राधान्येन योऽभिधत्ते स क्रियाभिधायी धातुसंज्ञः । गोपायतीत्यादावपि तदस्तीति सिद्धा धातुसंज्ञा । शिश्ये इत्यादौ तु भूतानद्यतनपरोक्षत्वादेरभिधानान्न धातुसंज्ञा । एतेन क्रियैवाभिधेया यस्य स धातुः । एवं न कृत्वा कर्तुमित्यादिषु साध्ये भावे कृत्प्रत्ययान्तस्यापि न धातुसंज्ञा । किंच अत्राऽन्यदपि उत्तरमस्ति । अव्ययसंज्ञया धातुसंज्ञाया बाधितत्वात् । 'इक्कित्स्तिव् स्वरूपार्थे' इति प्रत्ययान्तस्य सिद्धसाध्ययोरभेदोपचारेण सिद्धरूपत्वात् । कर्त्तव्यं भूयते इत्यादौ तु भावे त्याद्यन्तस्य क्रियार्थत्वेऽपि न धातुत्वं साहचर्यात् । यतोऽन्येषामलिङ्गसंख्यानामपदसंज्ञकानां धातुसं-ज्ञाप्रत्ययादि । अत्र तु लिङ्गसंख्यापदसंज्ञाना नियमानत्वात् ॥—शिष्टप्रयोगानुसारित्वादिति । लक्षणात् पार्थक्येन शिष्यन्ते प्रतिपाद्यन्ते इति शिष्टा धातवस्तेषां प्रयोगः पाठस्तदनुसारित्वात् तत्सव्य-पेक्षत्वात् ॥—अस्य लक्षणस्य क्रियार्था धातुरित्यस्येत्यर्थः । यथैव पाठ एवाऽस्तु किमनेन लक्षणेनेति चेत् । नैवम् । पाठपठितानामऽपि क्रियार्थानामेव धातुत्वज्ञापनार्थत्वादित्याह—शिष्टज्ञापना-येति । अगमर्थो लक्षणात् पृथक् पठिता अपि त एव शिष्टा धातवो ये क्रियार्थाः । तेन वावाप्रभृतीनां सर्वनामविकल्पार्थानां पाठात्रिसयादित्वेऽपि लक्षणत्रिसयादित्वादाणपयसादीनां तु क्रियार्थत्वेऽपि पाठविसयादित्वाद्धातुत्वाभाव ॥—अन्वयव्यतिरेकाभ्यामिति । अथ कथं प्रकृतिप्रत्ययसमुदायेऽपि प्रकृतेरेव धातुत्वमित्याह—तथाहि—पचतीति । अत्र पचि पाके वर्त्तते पाकशब्देन च सिद्धो भाव उच्यते साध्याभिधायिनश्च धातुत्वमतः कथमिह धातुत्वम् । अन्यथा वक्तुमशक्यत्वात्पाकशब्देनापि साध्यो भाव उच्यते साध्यावस्थामनुभूयैव हि सिद्धभावोऽपि भातीति ॥—संसृष्टक्रियेति ।

प्रयोगे द्वयं श्रूयते पच् इति प्रकृतिः अतिरिति च प्रत्ययः। अर्थोऽपि कश्चिद्गम्यते। विक्लित्तिः कर्तृत्वमेकत्वम्। पठतीत्युक्ते कश्चित् *शब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी। पच् शब्दो हीयते पठ् शब्द उपजायते अतिशब्दोऽन्वयी। अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी। विक्लित्तिर्हीयते पठिरुपजायते कर्तृत्वमेकत्वं चान्वयी। तेन मन्यामहे यः शब्दो हीयते तस्यासावर्थो योऽर्थो हीयते यश्च शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते यश्च शब्दोऽन्वयी तस्यासावर्थो योऽन्वयीति॥ ननु च कृतिः करोत्यर्थः क्रिया तत्र युक्तं पचादीनां किं करोति पचति किं करोति पठतीति करोतीत्यर्थगर्भितत्वात् क्रियात्वम् अस्तिविद्यतेभवतीनां तु न युक्तम्, नहि भवति किं करोति अस्ति भवति विद्यते चेति। तदयुक्तम्। न करोत्यर्थः क्रियाशब्दस्य प्रवृत्तिनिमित्तमपि तर्हि *कारकव्यापारविशेषः। *व्यापारश्च व्यापारान्तराद्भिद्यते इत्यस्त्याद्यर्थोऽपि क्रियैव। करोत्यर्थस्तु क्रियाशब्दस्य व्युत्पत्तिनिमित्तमेव। एवं सति क्रियासामान्यवचनाः कृभ्वस्तयः क्रियाविशेषवचनास्तु पचादय इति सिद्धम्॥ तथा, *भावे घञित्युक्त्वा कारः पाक इत्यादयोऽप्युदाह्रियन्ते। क्रियोपपदाद्धातोस्तुमित्युक्त्वा योद्धुं धनुर्भवति द्रष्टुं चक्षुर्जातमित्याद्यप्युदाहरणं युक्तम्। यदाहुः 'यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रथमपुरुषे प्रयुज्यते' इति। क्रिया च द्वेधा सिद्धसाध्यत्वभेदात्। *तत्र सिद्धस्वभावोपसंहृतक्रमा *परितः परिच्छिन्ना *सत्वभावमापन्ना घञादिभिरभिधीयते। यदाह—'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति। तुमादिभिस्तु सत्वभावमनापन्नेति विशेषः। साध्यमानावस्था पूर्वापरीभूतावयवा *भूतभविष्यद्वर्तमानसदसदाद्यनेकावयवरूपाख्यातपदैरुच्यते। यदाह—पूर्वापरीभूतं भावमाख्यातेनाचष्टे। यथा च पचतीत्यत्र पूर्वापरीभावस्तद्वदेव जायते अस्ति *विपरिणमते वर्धते अपक्षीयते विनश्यति भवति श्वेतते संयुज्यते समवैतीत्यादावपि। साध्यत्वाभि-

---

क्रिया च कालश्च कारकं च क्रियाकालकारकाणि तानि आदयो येषाम्। आदिशब्दादेकत्वादि। संसृष्टाश्च ते क्रियाकालकारकादयश्च ते च ते अनेकार्थाश्च। न एकोऽनेक। अनेके च ते अर्थाश्च तान् अभिदधातीति॥—**शब्दो हीयते** इति। जहाति शब्द देवदत्त स एव विवक्षते नाह जहामि किंतु स्वयमेव हीयते॥—**व्यापारविशेष** इति। पचतीत्यादिषु हि तदस्ति इति धातुत्व, यत पचतीत्युक्ते न पठति न गच्छति न किंचिदन्यद्व्यापारान्तर विधत्ते किंतु पाकरूपविशेष एव गम्यत इति। ननु तथापि अस्त्यादीना न प्राप्नोति क्रियात्व सत्ताया व्यापारविशेषाभावात्। यत सर्वोऽपि धात्वर्थोऽस्त्यादिभिर्व्याप्त इत्यतो युक्तिमाह—**व्यापारश्चे**त्यादि। अयमर्थोऽस्त्येवैतत् तथापि पाकादेर्विशेषात् सत्ताया अपि विशेषो ज्ञायते स्वरूपेण। न हि स एव पाक सैव सत्तेति। यथाऽनेकघटाच्छादक एक पटस्तेष्वनुस्यूतोऽपि तेभ्यो भिद्यते। न हि स एव पट स एव घट इति। एव प्रकृतेऽपि तथा॥—**भावे घञी**ति। यथा क्रियाशब्दस्य न करोत्यर्थ प्रवृत्तिनिमित्त किंतु कारकव्यापारविशेषस्तथा भावशब्दे च न भवत्यर्थ प्रवृत्तिनिमित्त अपि तु कारकव्यापार एवेत्यर्थ। यदाह हरि—'आख्यातशब्दे भागाभ्या साध्यसाधनवर्त्तिता॥ प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रम'॥१॥ 'साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना॥ सत्वभागस्तु यस्तस्या स घञादिनिबन्धन'॥२॥—**तत्र सिद्धस्वभावे**ति। निर्द्धारणसप्तम्यन्तात् त्रप्। सिद्धसाध्यभेदयोर्मध्ये इत्यर्थ॥—**परित परिच्छिन्ने**ति। निष्पन्नत्वात् सर्वात्मना ज्ञातेत्यर्थ। परिनिष्ठितरूपा वेत्यर्थ॥—**सत्वभावमापन्ने**ति। अयमर्थ पाक इत्यादौ प्रकृतिभाग साध्यरूपमर्थमाह प्रत्ययभागस्तु सत्वरूपताम्॥—**भूतभविष्यदि**त्यादि। सर्वेषा द्वन्द्वपूर्वो बहुव्रीहि पृथगर्थत्वात्। भूतभविष्यद्वर्त्तमानाश्च ते सदसन्तश्चेति कर्म्मधारयपूर्वो वा। आदिशब्दात् प्रत्यक्षपरोक्षता॥—**विपरिणमते** इति। विपरिणमति देवदत्त

धानेन क्रमरूपाश्रयणात् क्रियाव्यपदेशः सिद्धः । तदुक्तम्—' यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात् तत् क्रियेति प्रतीयते ॥ ३ ॥ ***न प्रादिरप्रत्ययः ॥ ३ । ३ । ४ ॥** प्रादिश्चाद्यन्तर्गणः स धातुर्धातोरवयवो न भवति तं व्युदस्य ततः पर एव धातुसंज्ञो वेदितव्यः 'अप्रत्ययः' 'न चेत्तः परः प्रत्ययो भवति । अभ्यमनायत । अभिमिमनायिषते । अभिमनाय्य गतः । प्रासादीयत् । प्रासिसादीयिषति । *प्रासादीय्य गतः । प्रादिरिति किम् । अमहापुत्रीयत् । अप्रत्यय इति किम् । औत्सुकायत । *उत्सुसुकायिषते । उत्सुकायित्वा । अभिमनायादिः प्रत्ययान्तः समादिसमुदायः क्रियार्थ इति तस्मिन्धातुसंज्ञे प्राप्ते प्रादिस्ततः प्रतिषेधेन वहिष्क्रियते । ततश्च तत उत्तर एव धातुरिति तस्याद् द्विर्वचनं च भवति । प्रादेश्चोत्तरेण समास इति क्त्वाया यबादेशः । असंग्रामयत शूर इति । नायं सम् प्रादिः किंतु धात्ववयवः, यथा विच्छाद्यवयवो विः, संग्रामणि युद्धे इत्यखण्डस्य चुरादौ पाठात् ॥ ४ ॥ **अवौ दाधौ दा ॥ ३ । ३ । ५ ॥** दाधा इत्येवंरूपौ धातू अवानुबन्धौ दासंज्ञौ भवतः । दारूपाश्चत्वारः । धारूपौ द्वौ । दाम्, प्रणिदाता । देङ्, प्रणिदयते । डुदांग्क्, प्रणिददाति । दोंच्, प्रणिद्यति । ट्धे, प्रणिधयति । डु धांग्क्, प्रणिदधाति । दाधारूपोपलक्षितस्य दासंज्ञावचनात् दोंदेट्धें इत्येतेषां शिति दाधारूपाभावेऽपि दासंज्ञा सिद्धा । दोङो दारूपस्य वहिरङ्गत्वान्न भवति । ततश्च उपादास्तेत्यत्र 'इश्च स्थादः' ( ४–३–४१ ) इतीत्वं न भवति । अवाविति किम् । दाव्, दातं बर्हिः । दैव्, अवदातं मुखम् । अविति वकारो न पकारः । दातिर्दायतिश्च पकारानुबन्धौ । तेन प्रणिदापयति प्रणिधापयतीत्यत्र दासंज्ञाया सत्यां नेर्णत्वं सिद्धम् । दाप्रदेशाः 'ह्यौ दः' ( ४–१–३१ ) इत्यादयः ॥ ५ ॥ ***वर्तमाना तिव् तस् अन्ति सिव् थस् थ मिव् वस् मस् ते आते अन्ते से आथे ध्वे ए वहे महे ॥ ३ । ३ । ६ ॥** इमानि वचनानि वर्तमानासंज्ञानि भवन्ति । वित्करणं 'शिदवित्' ( ४–३–२० ) इत्यत्र विशेषणार्थम् । एवमन्यत्रापि वित्करणस्य प्रयोजनं द्रष्टव्यम् । वर्तमानाप्रदेशाः 'स्मे च वर्तमाना' (५–२–१६) इत्येवमादयः ॥ ६ ॥ **सप्तमी यात् याताम् युस् यास् यातम् यात याम् याव याम ईत ईयाताम् ईरन् ईथास् ईयाथाम् ईध्वम् ईय ईवहि ईमहि ॥ ३ । ३ । ७ ॥** इमानि वचनानि सप्तमीसंज्ञानि भवन्ति । सप्तमीप्रदेशाः 'इच्छार्थे कर्मणः सप्तमी' (५।४।८९)

---

पदार्थं स एव विवक्षते नाह विपरिणमामि स्वयमेव विपरिणमते । ' एकधातौ '—इत्यात्मनेपदम् । क्रियादित्वाच्च क्याभाव । एवमपक्षीयते इत्यत्रापि ॥—**यावत्सिद्धमसिद्ध** वेति । सिद्ध सत्तादि । असिद्ध तु कटादि । नन्वेव तर्हि सत्ताया साध्यमानता कया रीत्या । उच्यते । यथा एकस्मिन् स्थाने पाषाणखण्ड कस्तूरिका चास्ति तत कस्तूरिकामाहात्म्यात्पाषाणखण्डमपि सुगन्धि भवत्येवमत्रापि कस्मिंश्चिदेकस्मिन् पिण्डे पाकक्रिया सत्ता च विद्यते पाकक्रिया च पूर्वापरीभूता ततस्तस्या माहात्म्यात् सत्तापि पूर्वापरीभूता भवति इति साध्यमानत्वम् किंबहुनाख्यातपदेन उच्यमान सिद्धभावोऽपि साध्यरूपता भजति तन्माहात्म्यात् ॥—**न प्रादि**—॥—**प्रासादीय्य गत** इति । यद्यत्र धातुत्व स्यात्तदा 'गतिकन्य'—इति समासो न स्यात् नाम नाम्नेत्यनुवर्त्तनात् । धातुत्वे च नामत्व न स्यात् ॥—**उत्सुसुकायिषते** इति । 'नाम्नो द्वितीयात्'—इति सु इति द्विरुक्त । 'धुटस्तृतीय' इति कृतदस्थानतकारस्य परेऽसत्त्वात् 'न बदनम्'—इति द्वित्वाभाव । अन्वित्यधिकाराद्वा पश्चात् 'अघोषे'—इति त । ततः सुइत्यस्यैव द्वित्वम् ॥—**वर्त्तमाना**—॥ सज्ञिना बहुत्वेपि सज्ञागतैकत्वाश्रयणात् वर्त्तमानेति सज्ञाया एकवचनम् । वचनभेदेऽपि सज्ञासज्ञिनिर्देशो भवत्यऽनवर्णा नामीतिवत् ॥–

इत्येवमादयः॥७॥ **पञ्चमी तुव् ताम् अन्तु हि तम् त आनिव् आवव् आमव् ताम् आताम् अन्ताम् स्व आथाम् ध्वम् ऐव् आवहैव् आमहैव् ॥ ३ । ३ । ८ ॥** इमानि वचनानि पञ्चमीसंज्ञानि भवन्ति । पञ्चमीप्रदेशाः 'स्मे पञ्चमी' ( ५ । ४ । ३१ ) इत्येवमादयः ॥ ८ ॥ **ह्यस्तनी दिव् ताम् अन् सिव् तम् त अम्व् व म त आताम् अन्त थास् आथाम् ध्वम् इ वहि महि ॥ ३ । ३ । ९ ॥** इमानि वचनानि ह्यस्तनीसंज्ञानि भवन्ति । ह्यस्तनीप्रदेशाः 'अनद्यतने ह्यस्तनी (५-२-७)' इत्येवमादयः ॥ ९ ॥ **एताः शितः ॥ ३ । ३ । १० ॥** एता वर्तमानासप्तमीपञ्चमीह्यस्तन्यः शितः शानुबन्धा वेदितव्याः । शित्वाच्च शित्कार्यम् । भवति । भवेत् । भवतु । अभवत् ॥ १० ॥ **अद्यतनी दि ताम् अन् सि तम् त अम् व म त आताम् अन्त थास् आथाम् ध्वम् इ वहि महि ।३।३।११॥** इमानि वचनान्यद्यतनीसंज्ञानि भवन्ति । अद्यतनीप्रदेशाः 'अद्यतनी' (५-२-४) इत्यादयः ॥ ११ ॥ **परोक्षा णव् अतुस् उस् थव् अथुस् अ णव् व म ए आते इरे से आथे ध्वे ए वहे महे ॥ ३ । ३ । १२ ॥** इमानि वचनानि परोक्षासंज्ञानि भवन्ति । परोक्षाप्रदेशाः 'श्रुसदवस्भ्यः परोक्षा वा' (५ । २ । १ ) इत्येवमादयः ॥ १२ ॥ **आशीः क्यात् क्यास्ताम् क्यासुस् क्यास् क्यास्तम् क्यास्त क्यासम् क्यास्व क्यास्म सीष्ट सीयास्ताम् सीरन् सीष्ठास् सीयास्थाम् सीध्वम् सीय सीवहि सीमहि ॥ ३ । ३ । १३ ॥** इमानि वचनानि आशीःसंज्ञानि भवन्ति । कित्करणं 'नामिनो गुणोऽक्ङिति' (४।३।१) इत्यादिषु विशेषणार्थम् । आशीःप्रदेशा 'आशिष्याशीःपञ्चम्यौ' (५ । ४ । ३८ ) इत्यादयः ॥ १३ ॥ **श्वस्तनी ता तारौ तारस् तासि तास्थस् तास्थ तास्मि तास्वस् तास्मस् ता तारौ तारस् तासे तासाथे ताध्वे ताहे तास्वहे तास्महे । ३ । ३ । १४ ॥** इमानि वचनानि श्वस्तनीसंज्ञानि भवन्ति । श्वस्तनीप्रदेशाः 'अनद्यतने श्वस्तनी' (५ । ३ । ५ ) इत्येवमादयः ॥ १४ ॥ **भविष्यन्ती स्यति स्यतस् स्यन्ति स्यसि स्यथस् स्यथ स्यामि स्यावस् स्यामस् स्यते स्येते स्यन्ते स्यसे स्येथे स्यध्वे स्ये स्यावहे स्यामहे ॥ ३ । ३ । १५ ॥** इमानि वचनानि भविष्यन्तीसंज्ञानि भवन्ति । भविष्यन्तीप्रदेशाः 'भविष्यन्ती' (५ । ३ । ४ ) इत्यादय· ॥ १५ ॥ **क्रियातिपत्तिः स्यत् स्यताम् स्यन् स्यस् स्यतम् स्यत स्यम् स्याव स्याम स्यत स्येताम् स्यन्त स्यथास् स्येथाम् स्यध्वम् स्ये स्यावहि स्यामहि ॥ ३ । ३ । १६ ॥** इमानि वचनानि क्रियातिपत्तिसंज्ञानि भवन्ति । क्रियातिपत्तिप्रदेशाः 'सप्तम्यर्थे क्रियातिपत्तौ क्रियातिपत्तिः' ( ५ । ४ । ९ ) इत्येवमादयः॥ १६ ॥ ***त्रीणि त्रीण्यन्ययुष्मदस्मदि ॥ ३ । ३ । १७॥**

---

-त्रीणि—॥—सर्वासामिति । बहुवचन विभक्तित्रयेऽपि चारितार्थमिति कथ सर्वासामिति लभ्यते । सत्यम् । यद्येतदिष्ट स्यात्तदा विभक्तित्रयानन्तरमिद सूत्र कुर्यान्न सर्वविभक्त्यन्ते ॥—अन्यत्वमि

*सर्वासां विभक्तीनां त्रीणि त्रीणि वचनानि अन्यस्मिन्नर्थे युष्मदर्थे अस्मदर्थे चाभिधेये यथाक्रमं परिभाष्यन्ते। *अन्यत्वं युष्मदस्मदपेक्षं संनिधानात्। युष्मच्छब्दोपसृष्टार्थौ *युष्मदर्थः। *तेन भवच्छब्देनोच्यमानो न युष्मदर्थः। स पचति। तौ पचतः। ते पचन्ति। पचति। पचतः। पचन्ति। स पचते। तौ पचेते। ते पचन्ते। पचते। पचेते। पचन्ते। भवान् पचति। भवन्तौ पचतः। भवन्तः पचन्ति। इत्यादि। युष्मदि, *त्वं पचसि। युवां पचथः। यूयं पचथ। पचसि। पचथः। पचथ। त्वं पचसे। युवां पचेथे। यूय पचध्वे। पचसे। पचेथे। पचध्वे। अस्मदि, अहं पचामि। आवां पचावः। वयं पचामः। पचामि। पचावः। पचामः। अहं पचे। आवां पचावहे। वयं पचामहे। पचे। पचावहे। पचामहे। एवं सर्वासु। द्वययोगे त्रययोगे च शब्दस्पर्धात् पराश्रयमेव वचनमतिदिश्यते। स च त्वं च पचथः। स चाहं च पचावः। स च त्वं चाहं च पचामः। *कथमत्वं त्व संपद्यते, अनहमहं संपद्यते, *त्वद्भवति मद्भवति। *युष्मदस्मदोर्गौणत्वात्। त्वमादेशौ तु *शब्दमात्राश्रयत्वाद्भवत एव। *एहि मन्ये रथेन यास्यसि नहि यास्यसि यातस्ते पितेति प्रहासे यथाप्राप्तमेव प्रतिपत्तिर्नात्र प्रसिद्धार्थविपर्यासे किंचिन्निबन्धनमस्ति। रथेन

ति। युष्मदस्मदी चाऽत्र सूत्रे सन्निहितेऽतस्तदपेक्षयेवाऽन्यस्मिन्निति विज्ञायते। नन्वस्तु युष्मदस्मदपेक्षमन्यत्व युष्मदस्मदोस्त्वत्र स्वरूपग्रहणमुतार्थग्रहण, स्वरूपेण चेत् किमसि विस्मरसि स्मरसाय-
कान् नास्मि रमे कि प्रतारयसेवमिति युष्मदस्मदपेक्षमन्यत्व युष्मदस्मदर्थप्रयोगे द्वितीयत्रितीयत्रिके न स्यातामित्याह—**युष्मदर्थ** इत्यादि। नन्वऽर्थग्रहणे भवान् मन्यते इत्यत्रापि प्राप्नोति। मैव, भव-
च्छब्दस्य युष्मदर्थत्वाऽभावाद्द्वितीयत्रिकाऽप्रसङ्ग। भवच्छब्दो हि अन्यार्थो न युष्मदर्थ युष्मच्छब्दप्रवृत्त प्रति योग्यो हि युष्मदर्थो न च भवच्छब्दनाभिधीयमानो युष्मच्छब्दप्रवृत्ति प्रति योग्य। न हि
कदाचिदेव प्रयुज्यते त्व भवान् पचसीति। एकेनेव तस्मिन्नुक्ते तत्रेतरस्य विषयाभावादित्याह—**तेने**त्यादि। भवच्छब्देनाभिधीयमाने युष्मदर्थाभिधायकस्यापि शब्दस्य न प्रतिषेध। युष्मत्सबन्धेऽस्ति-
धातोर्वर्त्तमानासिवि प्रत्यये योऽसौ प्रयोगस्तत्सदृशत्वात् कि बहुनाऽस्येष्टत्वात् भवति ॥—**त्व पचसी**ति। त्वमिति सामान्ये उक्ते न ज्ञायते कि गच्छसि पठसीति विशेषार्थं पचसीति प्रयुज्यते।
युष्मच्छब्दस्तु केनचिद्भ्रान्त्या पचसीति पदे भवदर्थेऽपि ज्ञाते तन्निरासाय त्वमिति प्रयोक्तु युक्त। यथा शङ्खस्य धवलत्वे सत्यपि भ्रान्त्या केनचित्पीतत्वे ज्ञाते पाण्डुर इति विशेषणमुपपन्नम् ॥—**कथ-**
**म**ऽत्व **त्वमि**ति। अयमर्थ प्रकृतिविकृत्योरऽभेदविवक्षाया च्वि प्रत्ययस्तत्र कि प्रकृत्याश्रयणे प्रथमत्रिकेण भवितव्यमुत विकृत्याश्रयणे द्वितीयत्रिकेणेति। उच्यते। प्रकृतेरेव सपत्तौ कर्तृत्वात् प्रथमेनैव
भाव्यमित्याह—**त्वद्भवति मद्भवती**ति। सपद्यते इत्यर्थकथनमिदमऽन्यथा कृभ्वस्तियोगाभावात् च्विर्न स्यात् ॥—**युष्मदऽस्मदोर्गौणत्वादि**ति। अयमथ अत्र पूर्वं अत्वशब्देन सह सबन्धोऽतो
युष्मच्छब्दस्य गौणत्वम्। यदा तु त्वमित्यनेन प्रथम सबन्धो विवक्ष्यते तदा भवत्येव। यद्वा युष्मदस्मदोरर्थस्य निषिध्यमानस्य कर्तृत्वे गौणत्वम् यदा त्वऽनिषिद्धस्य कर्तृत्व तदा भवत्येव ॥—**शब्दमा**
**त्राश्रयत्वादि**ति। अर्थाश्रयो हि शब्दाना गौणमुख्यव्यवहारो न स्वरूपेण। यदाह—गौणमुख्यार्थाश्रयत्वात्तथाशब्दोऽपि व्यपदिश्यते। न च त्वमादेशविधावऽर्थचिन्ता कृतेति ॥—**एहि मन्ये रथेने**ति।
मध्यमोत्तमयो प्राप्तयोरुत्तममध्यमविधानार्थं 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच' इति• परसूत्रमऽत्र प्रहास परिहास प्रहासे गम्यमाने मन्योपपदे धातौ मध्यम पुरुषो भवति मन्यतेश्चोत्तम
स च एकवद्भवतीति सूत्रार्थ। एहि मन्ये ओदन भोक्ष्यसे न हि भोक्ष्यसे भुक्त सोऽतिथिभि ॥ एहि मन्ये रथेन यास्यसि न हि यास्यसि यातस्ते पिता। मध्यमोत्तमयो प्राप्तयोरुत्तममध्यमौ विधी-
येते। प्रहास इति किम्। एहि मन्यस ओदन भोक्ष्ये इति सुष्ठु च मन्यसे साधु च मन्यसे। न्यास प्रहासे गम्यमान इति। यत्र भूतार्थाऽभावात् वञ्चनेव पर तत्र वक्तुरऽभिप्रायाविष्करणेन प्रहासो गम्यते ॥ मन्यो-
पपदे इति मन्यतिरुपपदमुपोच्चारित पद यस्य स तथोक्त। मध्यमस्य धातोर्विधानात् धातुरन्यपदार्थो विज्ञायते इत्याह—धाता॥विति स च ऐकवचाति। यत्र द्वौ मन्तारौ बहवो वा तत्राऽयमेकवद्भावो

यास्यसीति भावगमनाभिधानात्प्रहासो गम्यते । नहि यास्यसीति बहिर्गमनं प्रतिषिध्यते। अनेकस्मिन्नपि प्रश्नमितरि च प्रत्येकमेव परिहास इति अभिधानवशादन्यत्र इत्येकवचनमेव । लौकिकश्च प्रयोगोऽनुसर्तव्य इति न प्रकारान्तरकल्पना न्याय्या ॥ १७ ॥ **एकद्विबहुषु** ॥ ३ । ३ । १८ ॥ अन्यादिषु यानि त्रीणि त्रीणि वचनानि उक्तानि तानि एकद्विबहुष्वर्थेषु परिभाष्यन्ते । एकस्मिन्नर्थे एकवचनम् । द्वयोरर्थयोर्द्विवचनम् । बहुष्वर्थेषु बहुवचनम् । स पचति । तौ पचतः । ते पचन्ति । इत्यादि । वचनभेदात्तान्यादिभिरेकादीनां यथासंख्यम् ॥ १८ ॥ ***नवाद्यानि शतृक्वसू च परस्मैपदम्*** ॥ ३ । ३ । १९ ॥ सर्वासां विभक्तीनामाद्यानि *नव नव वचनानि शतृक्वसू च प्रत्ययौ परस्मैपदसंज्ञानि भवन्ति । तिप् तस् अन्ति सिप् थस् थ मिप् वस् मस् । एवं सर्वासु । परस्मैपदसंज्ञाप्रदेशाः 'शेषात्परस्मै' इत्यादयः ॥ १९ ॥ **पराणि कानानशौ चात्मनेपदम्** ॥ ३ । ३ । २० ॥ सर्वासां विभक्तीनां पराणि नव नव वचनानि कानानशौ च प्रत्ययावात्मनेपदसंज्ञानि भवन्ति । ते आते अन्ते से आथे ध्वे ए वहे महे । एवं सर्वासु । आत्मनेपदप्रदेशाः 'मिजाशिषारात्मने' (४-३-३५) इत्यादयः ॥ ***तत्साप्यानाप्यात्कर्मभावे कृत्यक्तखलर्थाश्च*** ॥ ३ । । २१ ॥ तदात्मनेपदं कृत्यक्तखलर्थाश्च प्रत्ययाः साप्यात्सकर्मकाद्धातोः कर्मणि अनाप्यादकर्मकादविवक्षितकर्मकाच्च भावे भवन्ति । क्रियते कटश्चैत्रेण । क्रियमाणः । करिष्यमाणः । चक्राणः । भावे, भूयते भवता । भूयमानं भवता । सकर्मका अपि अविवक्षितकर्माणः कर्त्रेकनिष्ठव्यापारा अकर्मका भवन्ति । *तेनैषां भावेऽपि प्रयोगः । क्रियते भवता । मृदु पच्यते भवता । पञ्च वारान् भुज्यते भवता । कृत्य, कार्यः कर्तव्यः करणीयः देयः कृत्यः कटो भवता । भवता शयनीयम् । भवता शयितव्यम् । भवता शेयम् । भवता कार्यम् । कर्तव्यम् । करणीयम् । देयं भवता । कृत्यं भवता । क्त, कृतः कटो भवता । शयितं भवता । कृतं भवता । सकर्मकादपि क्वचित् क्तमिच्छन्त्येके । *ग्रामं गतं भवता । ओदनं भुक्तं भवता । खलर्थ, सुकरः कटो भवता । सुशयं भवता । सुकरं भवता । सुकटंकराणि वीरणानि । ईषदाढ्यंभवं भवता । सुग्लानं तत्र मुनिना । सुग्लानं कृपणेन । 'कालाध्वभावदेशं वा'-(२ । २ । २३) इत्यादिना कालाध्वभावदेशाना कर्मसंज्ञाया अकर्मकत्वस्य च विधानात् तद्योगे कर्मणि भावे चात्मनेपदादीनि भवन्ति । मास आस्यते । क्रोशो गुडधानाभिर्भूयते । गोदोहः सुप्यते । नदी सुप्यते । मास आसितव्यः । मास आसितः । मासो दुरासः । भावे. माससास्यते । क्रोशम शीयते । ओदनपाकं स्वीय-

---

विधीयते अन्यत्र तु बहुत्वकथनात् एकवचन नियम् । मन्त इति [illegible] । तेन [illegible] न भवति ॥ [illegible] तस्यार्थयोरन्यतरत्वसा-स्तेन न 'त्यादि' इत्येकशेष । तत्रार्थस्यैव स्वीकृतत्वात् ॥—नवाद्यानि—॥– नव नव वचनानीति । [illegible] । एवं पराणि [illegible] नवनवन्तराया [illegible] परस्मैपदानीति कथ न स्यात् । [illegible] ॥—तत्साप्यानाप्या—॥—तेनैषां भावेऽपीति । भावे क्रिया न स्वाश्रिता न पराश्रिता किंतु [illegible] ॥—ग्रामं गत भवतेति । भवता [illegible] गत [illegible] । [illegible] । '[illegible]' इति [illegible] ।

ते । कुरून् सुप्यते । *मासमासितव्यम् । मासमासितम् । मासं स्वासम् । *भावे च युष्मदस्मत्संवन्धनिमित्तयोः कर्तृकर्मणोरभावात् प्रथममेव त्रय भवति । साध्यरूपत्वाच्च संख्यायोगो नास्तीति *औत्सर्गिकमेकवचनमेव भवति । पाकः पाकौ पाकाः पाको वर्तते पाकं करोतीत्यादौ चानव्ययकृदभिहितो भावो द्रव्यवत्प्रकाशत इति संख्यया लिङ्गेन कारकैश्च युज्यते । *त्यादिनेवाव्ययेनाभिहितस्त्वसत्त्वरूपत्वान्न युज्यते । उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्ते इति तु *बहुवचनं कृदभिहितेन अभेदोपचाराद्भवतीति ॥ २१ ॥ *इङितः कर्तरि ॥ ३ । ३ । २२ ॥ इकारेतो ङकारेतश्च धातोः कर्तर्यात्मनेपदं भवति । इदित्, एधि, एधते । स्पर्धि, स्पर्धते । एधमानः । स्पर्धमानः । ङित्, शीङ्, शेते । शयानः । ह्नुङ्, ह्नुते । ह्नुवानः । महीङ्, महीयते । महीयमानः । कामयते । कामयमानः । श्येनायते । श्येनायमानः । पापच्यते । पापच्यमानः । उत्पुच्छयते । उत्पुच्छयमानः । एभ्य एव कर्तरीति *नियमार्थं वचनम् ॥ २२ ॥ *क्रियाव्यतिहारेऽगतिहिंसाशब्दार्थहसो ह्वहश्चानन्योन्यार्थे ॥ ३ । ३ । २३ ॥ इतरेण चिकीर्षिताया क्रियायामितरेण हरणं करणं क्रियाव्यतिहारः । *तस्मिन् अर्थे वर्तमानाद्गतिहिंसाशब्दार्थहसवर्जिताद्धातोर्ह्ववहिभ्या च कर्तर्यात्मनेपदं भवति न चेदन्योन्यार्था अन्योन्येतरेतरपरस्परशब्दाः प्रयुज्यन्ते । व्यतिलुनते । व्यतिपुनते । व्यतिहरन्ते भारम् । सम्प्रहरन्ते राजानः । *संविवहन्ते वर्गाः । ह्वहोर्गतिहिंसार्थत्वात्प्रतिषेधे प्राप्ते प्रतिप्रसवार्थमुपादानम् । व्यतिहार इति किम् । लुनन्ति । पुनन्ति ।

---

यथा ग्रामस्य गतामिति ॥—मासमासितव्यमिति । द्वितीयाप्रदानकाले कर्म्मसज्ञा षष्ठीप्रदानकाले तु न साद्वादात् ॥—भावे च युष्मदस्मत्संबन्धेति । युष्मदस्मदोर्थ सवन्धस्तस्य निमित्तयो कारणभूतयोरित्यर्थ । यद्यपि नाऽकर्तृको भाव इति तथाऽपि यत्र सामानाधिकरण्येनात्मनेपदाभिधेय कर्त्ता कर्म्म वा भवति स सबन्धो ग्राह्यो भावे तु न तादृश धात्वर्थ एव तत्र विधानात् । यथा त्व पाठयसे इत्यत्र कर्म्मरूपो युष्मदर्थ आत्मनेपदेन प्रतिपाद्यते । त्व पठसीति कर्तृरूप । एवमह पाठ्ये अह पाठयामीत्यत्रापि । ततश्च कर्म्मकर्त्रों प्रतिपादित्वात् आत्मनेपदेन कर्म्मकर्तृकाये न भवत । न तथा त्वया भूयते इत्यत्र भावप्रत्ययेन कश्चिदर्थ प्रतिपाद्यते । अतश्च युष्मदस्मदोऽतिरिक्तार्थप्रतिपादकत्वात् प्रथममेव त्रयम् ॥—औत्सर्गिकमिति । एकवचन च सख्याविशेषाणामऽभावेऽभेदैकत्व तन्निबन्धन न तु सख्यानिबन्धन द्वित्वप्रतियोगि ॥—त्यादिनेवाऽव्ययेनेति । यथा त्याद्यभिहितो भावोऽसत्वरूपता भजति तथाऽव्ययेनापीत्यर्थ । अव्ययेनेति चोपलक्षण तेन भावे कृत्यप्रत्ययान्तेनापि तथैव ॥ —बहुवचनमिति । आस्यन्ते शय्यन्ते इत्यस्य च अव्ययेनेव त्याद्यभिहितभावेनेत्यर्थ ॥—अभेदोपचारादिति । आस्यन्ते इत्येवरूपस्य साध्यभावस्योष्ट्रासिकारूपेण सिद्धताख्येन सहेत्यर्थ । कया युक्त्या आस्यन्ते इति कोऽर्थ आसनानि वर्त्तन्ते किंविशिष्टानि उष्ट्रासिका उष्ट्रासिकारूपाणि । एव द्वितीयेऽपि ॥—इङितः—॥ भावकर्म्मणो पूर्वसूत्रोपादानान्न्यायादेव कर्तृग्रहणे सिद्धे तद्ग्रहणमुत्तरार्थ तेनोत्तरसूत्रेण कर्त्तर्येव विधान । ततो व्यतिगम्यन्ते ग्रामा इत्यादिषु पूर्वेणात्मनेपद सिद्धमऽन्यथा अगतीत्यशेन निषेध स्यादिति तत्र स्वयमेव कथयिष्यति ॥—नियमार्थमिति । सतीत्यादिसूत्रे परस्मैपदात्मनेपदविशेषरहिताना सामान्येन वर्त्तमानादिविभक्तीना विधानादात्मनेपदे सिद्धे नियम । प्रत्ययनियमश्चायम् । एभ्य आत्मनेपदमेव न प्रत्ययान्तरमिति । विपरीतनियमो न 'इङितो व्यञ्जन' इत्यादिकरणात् । कर्त्तर्येवात्मनेपदमेभ्य इत्यपि वैपरीत्य न तत्साध्येत्यस्य व्यक्त्या प्रवृत्ते ॥—क्रियाव्य—॥ अनेकार्थत्वात् हरणमित्यस्य करण पर्याय ॥—तस्मिन्नर्थे इति । यदा अन्येन कर्त्तव्या क्रियाऽन्य करोति तत्कर्त्तव्या चेतरस्तदा क्रियाणा व्यतिहारे विनिमये इत्यर्थः ॥—संविवहन्ते इति । अनेकार्थत्वात् गत्यर्थोऽत्र वहि ॥—अत्र लुनातीति । अयमर्थ, व्यतिहृत धान्य लुनन्ति लवनेनोप-

क्रियेति किम् । द्रव्यव्यतिहारे माभूत् । चैत्रस्य धान्यं व्यतिलुनन्ति । *अत्र *लुनातिरुपसंग्रहात्मके लवने वर्तते । चैत्रेण यत् गृहीतं धान्यं पुरस्ताल्लवनेनोपसंगृह्णन्तीत्यर्थः । अगतिहिंसाशब्दार्थहस इति किम् । व्यतिगच्छन्ति । व्यतिसर्पन्ति । व्यतिहिंसन्ति । व्यतिघ्नन्ति । व्यतिजल्पन्ति । व्यतिपठन्ति । व्यतिहसन्ति । अनन्योन्यार्थे इति किम् । अन्योन्यस्य व्यतिलुनन्ति । इतरेतरस्य व्यतिलुनन्ति । परस्परस्य व्यतिलुनन्ति । *क्रियाव्यतिहारो व्यतिनैव द्योतित इत्यन्योन्यादिभिः *तत्कर्माभिसंबध्यते अन्योन्यस्य केदारमिति । कर्तरीत्येव । तेन भावकर्मणोः पूर्वेणैव स्यादनेन माभूत् । यदि ह्यनेन स्यात्तदा व्यतिगम्यन्ते ग्रामाः व्यतिहन्यन्ते दस्यव इत्यत्रागतिहिंसाशब्दार्थहस इति प्रतिषेधः स्यात् इति ॥ २३ ॥ *निविशः ॥ ३ । ३ । २४ ॥ निपूर्वाद्विशः कर्तर्यात्मनेपदं भवति । निविशते । न्यविशतेत्यटो धात्ववयवत्वान्न व्यवधायकत्वम् । मधुनि विशन्ति भ्रमरा इत्यादि तु निविशोरभवन्यादनर्थकत्वाच्च न भवति ॥ २४ ॥ *उपसर्गादस्योहो वा ॥ ३ । ३ । २५ ॥ उपसर्गात्पराभ्यामस्यत्यूहिभ्यां कर्तर्यात्मनेपदं वा भवति । विपर्यस्यति । विपर्यस्यते । समूहति । समूहते । *संततं तिमिरमिन्दुरुदासे । *यशः समूहन्निव दिग्विकीर्णम् । अस्येति श्यनिर्देशोऽस्यसतिनिवृत्त्यर्थः । उपसर्गादिति किम् । अस्यति । ऊहते । अस्यतेरप्राप्ते ऊहतेश्च नित्यं प्राप्ते उभयत्र विभाषेयम् । अन्ये त्वकर्मकाभ्यामेवेच्छन्ति । प्रत्युदाहरन्ति च निरस्यति शत्रून् । समूहते पदार्थान् ॥ २५ ॥ *उत्स्वराद्युजेरयज्ञतत्पात्रे ॥ ३ । ३ । २६ ॥ उदः स्वरान्ताच्चोपसर्गात्पराद्युनक्तेः कर्तर्यात्मनेपदं भवति 'अयज्ञतत्पात्रे' न चेद्यज्ञे यत्तत्पात्रं तद्विषयो युज्यर्थो भवति । उद्युङ्क्ते । उपयुङ्क्ते । नियुङ्क्ते । उत्स्वरादिति किम् । संयुनक्ति । निर्युनक्ति । अयज्ञतत्पात्र इति किम् । द्वंद्वं यज्ञपात्राणि प्रयुनक्ति । यत्र तु यज्ञ एव न तु तत्पात्रम्, तत्पात्रमेव वा न यज्ञस्तत्र भवत्येव । यज्ञे मन्त्रं रन्धनपात्राणि वा प्रयुङ्क्ते । यज्ञपात्राणि रन्धने प्रयुङ्क्ते । *युजिंच् समाधावित्यस्येदित्त्वादात्मनेपदविधानमनर्थकम् ॥ २६ ॥ *परिव्यवात् क्रियः ॥ ३ । ३ । २७ ॥ परि वि अव इत्येतेभ्य उपसर्गेभ्यः पराक्रीणातेः कर्तर्यात्मनेपदं भवति । परिक्रीणीते । विक्रीणीते । अवक्रीणीते । सर्वत्रेगितः *फलवतोऽन्यत्र विधिः । उपसर्गादित्येव । उपरि क्री

---

सगृह्णन्तीति द्रव्यमऽत्र व्यतिह्रियते न लवनक्रिया । न ह्यऽत्र व्यतिना लुनातिर्युक्तोऽपि त्वऽप्रयुक्तोऽपि गृह्णातिस्तस्य धान्य कर्म्म न क्रियेत्याह—**लुनातिरुपसंग्रहात्मके** इति । उपसग्रहस्य लवनपूर्वकलाभस्यात्मा यस्मात् लवनात् कोऽर्थ लवनपूर्वक लाभमित्यर्थ ॥—**क्रियाव्यतिहार** इति । लौकिके शब्दव्यवहारे लाघवाऽनादरादऽन्योन्यादिशब्दा उपसर्गाश्च क्रियाव्यतिहारद्योतनाय प्रयुज्यन्ते इति न पौनरुक्त्यम् । अथ पौनरुक्त्य माभूत् अत्र तु क्रियाव्यतिहारस्य व्यतिनैव द्योतितत्वात् क्व अन्योन्यादिशब्दा सबन्ध्यन्त इत्याह—**क्रियाव्यतिहार** इत्यादि ॥—**तत्कर्माभिसंबध्यते** इति । अत्र क्रियाव्यतिहारो द्रव्यव्यतिहारश्च वर्त्तते तत क्रियाव्यतिहारे प्राप्तम् ॥—**निविश** ॥ ने परो विश् ने सबन्धी विशित्यनन्तरानन्तरिसबन्धो वा विधेय ॥—**उपसर्गा**—॥ लेखया विमलविद्रुमभासा—**संतत तिमिरमिन्दुरुदासे** ॥ दष्टया कनकभङ्गपिशङ्ग्या मण्डल भुव इवादिवराह ॥ १ ॥ व्रीडानते राजजनोपनीत सशल्य कृच्छ्रेण नृपे प्रपन्न ॥ वितानभूत वितत पृथिव्या **यश समूहन्निव दिग्विकीर्णम्** ॥ २ ॥—**उत्स्वरा**—॥ युजेरीदित्त्वात् फलवति सिद्धेऽफलवदर्थमिदम् ॥—**युजिच् समाधाविति** । न च वाच्य नियमो व्याख्यास्यतेऽयज्ञतत्पात्रविषय एवास्यात्मनेपदमिति यज्ञपात्रविषयेऽस्य प्रयोगाभावात् । कथचित्प्रयोगेऽपि वा नियमाद्विधि श्रेयानिति भाष्यकार ॥—**परिव्यवा**—॥—**अन्यत्र विधिरिति** । अत एव व्यावृत्त्युदाहरणेषु सर्वत्र परस्मैपदम्

णाति । गवि क्रीणाति । वनं बहुवि क्रीणाति । अपचाव क्रीणीवः । क्री इत्यनुकरणमनुकार्येणार्थेनार्थवदिति नामत्वे सति ततः स्यादयः । 'प्रकृतिवदनुकरणम्' इति
न्यायाच्च धातुकार्यमियादेशः। अत एव च ज्ञापकात् '*प्रकृतिवदनुकरणे कार्यं भवति' तेन मुनो इत्याह, द्विष्पचतीत्याहेत्यादौ *प्रकृतिभावषत्वविकल्पादि सिद्धं भवति
॥२७॥ ***परावेर्जेः** ॥ ३ । ३ । २८ ॥ परा वि इत्येताभ्यामुपसर्गाभ्यां पराज्जयतेः कर्तर्यात्मनेपदं भवति । पराजयते । विजयते । उपसर्गादित्येव । सेना
परा जयति । बहुवि जयति वनम् ॥ २८ ॥ ***समः क्ष्णोः** ॥ ३ । ३ । २९ ॥ समः परात्क्ष्णौतेः कर्तर्यात्मनेपदं भवति । संक्ष्णुते शस्त्रम् । सम इति किम्
। क्ष्णौति । उपसर्गादित्येव । आयसं क्ष्णौति ॥ २९ ॥ ***अपस्किरः** ॥ ३ । ३ । ३० ॥ अपपूर्वात् किरतेः ससट्कात् कर्तर्यात्मनेपदं भवति । अपस्किरते
*वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्ष्यार्थी । अपस्किरते श्वा आश्रयार्थी । 'अपाच्चतुष्पात्पक्षिशुनि हृष्टान्नाश्रयार्थे' ( ४ । ४ । ९६ ) इति स्सट् । सस्सट्कनि-
र्देशादिह न भवति । अपकिरति वृषभः । अपेति किम् । उपस्किरति ॥ ३० ॥ ***उदश्चरः साप्यात्** ॥ ३ । ३ । ३१ ॥ उत्पूर्वाच्चरतेः साप्यात्सकर्मकात्
कर्तर्यात्मनेपदं भवति । गुरुवचनमुच्चरते । मार्गमुच्चरते *व्युत्क्रम्य गच्छतीत्यर्थः । ग्रासमुच्चरते । सक्तूनुच्चरते । भक्षयतीत्यर्थः । उद इति किम् । चारं चरति । सा
प्यादिति किम् । धूम उच्चरति । शब्द उच्चरति । ऊर्ध्वं गच्छतीत्यर्थः ॥ ३१ ॥ ***समस्तृतीयया** ॥ ३ । ३ । ३२ ॥ समः पराच्चरतेः *तृतीयान्तेन योगे सति
कर्तर्यात्मनेपदं भवति । अश्वेन संचरते । रथेन संचरते । तृतीययेति किम् । *उभौ लोकौ संचरति इमं चामुं च देवल किं त्वं करिष्यसि रथ्यया संचरति चैत्रोऽ-
रण्ये इत्यत्र तु तृतीयान्तेन योगाभावान्न भवति ॥ ३२ ॥ **क्रीडोऽकूजने** ॥ ३ । ३ । ३३ ॥ कूजनमव्यक्तः शब्दस्ततोऽन्यस्मिन्नर्थे वर्तमानात्सपूर्वात्क्रीडेः कर्त-

---

॥—**प्रकृतिवदिति** । तत्करणाच्च सर्वथा धातुत्वाभावान्न त्यादयः ॥—**प्रकृतिभावषत्वेत्यादि** । ईदूदेद्द्विवचनम् इति प्रकृतिभावः 'सुचो वा'—इत्यनेन तु षत्वविकल्पः । द्विरिति पचतीति च पृथक् केनापि
प्रयुक्तं तद्द्वयमनुक्रियते । तत्र यथाऽनुकार्ये द्विष्पचतीत्यत्र षत्वं तथाऽनुकरणेऽपि । एवं प्रथमेऽपि यथानुकार्येऽसधिस्तथानुकरणेऽपि ॥—**परावेर्जे** । जिरिति धात्वनुकरणेऽपि न धातुकार्यमियादेशः ।
बाहुलकात् ॥—**समः क्ष्णो** ॥ ननु समो गमृच्छीत्यत्रैव क्ष्णुग्रहणं क्रियतां किं पृथगारम्भेण । नैवम् । तत्र कर्मण्यसतीत्यनुवर्तनात् । इह तु संक्ष्णुते शस्त्रमिति सकर्मणोऽपि भवति ॥—**अपस्किर** ॥
—**वृषभो हृष्ट** इति । हृषच् तुष्टाविति विस्मयार्थो विवक्ष्यते ततो 'हृषे केश'—इति इड्विकल्प अनेकार्थत्वात् हृष् अलीके इत्येषोऽपि हृषे ततस्तस्य क्ते रूपम् । तुष हृषच् तुष्टावित्यप्यूदित मन्यते
नन्दी । हृष्टिरस्यास्तीति 'अभ्रादिभ्य' इत्यप्रत्ययो वा । अन्यथा इट् स्यात् ॥—**उदश्चर**—॥—**व्युत्क्रम्य गच्छतीति** । ननु चेवमपि व्युत्क्रमणस्य क्रियान्तरस्य धात्वन्तरार्थत्वात्तत्कर्मणा चरि
सकर्मक इत्युदाहरणाऽयोग । उच्यते । चरिरत्राऽत्र व्युत्क्रमणोपसर्जनाया विशिष्टाया गतो वर्तते । यथा जीव प्राणधारणे इति जीवतिरेव विशिष्टे धारणे इति । तद्व्युत्क्रमण चरानन्तर्भूतमिति चरेरेवार्थ
इति सकर्मक इत्यदोष । प्रत्युदाहरणे तु गतिमात्रे वर्तते न व्युत्क्रमणाद्ये धातूनामनेकार्थत्वादिति ॥—**समस्तृती**— ॥ धातोस्तृतीयया योगाऽभावादित्याह—**तृतीयान्तेनेति** ॥—**उभौ लोकौ संच**
**रसीति** । यद्यप्यत्र विद्यया तपसा चेत्यर्थादिह तृतीयान्त गम्यते तथापि तृतीययेति सहयोगे तृतीया साक्षाद्योगप्रतिपत्त्यर्थं न गम्यमाने इति प्रत्युदाह्रियतेऽन्यथा करणमन्तरेण क्रियासिद्धेरभावादव्याप्तिरेव
न घटत इति भाव । न हि काचित्क्रिया करणमन्तरेण भवतीति । सह धनेन देवदत्त सचरतीत्यत्र तु विद्यमानार्थताया चरतेस्तृतीयान्तेन योगाभाव एव । तत्र हि तृतीयान्त कर्त्रैव युक्त न सच-

हरन्ते । पितुरागतं मातुरागतं गुणविषयं क्रियाविषयं वा सादृश्यमविकलं शीलयन्तीत्यर्थः । एवं पितुरनुहरते । पितरमनुहरते । मातुरनुहरते । मातरमनुहरते । गतग्रहणं किम् । पितुर्हरति । मातुर्हरति । ताच्छील्य इति किम् । नटो राममनुहरति । नटो हि कचिदेव कालं राममनुकरोतीत्यसातत्ये न भवति । यद्वा गमनं गतं तस्य पित्रादेः शीलमस्य तच्छीलस्तस्य भावस्ताच्छील्यम् । गतेन गमनेन ताच्छील्यं गतताच्छील्यम् । तस्मिन्नर्थे वर्तमानाद्धरतेः कर्तर्यात्मनेपदं भवति । पैतृकमश्वा अनुहरन्ते । पितुरागतं गमनमविच्छेदेन शीलयन्तीत्यर्थः । एवं पितुरनुहरते । पितरमनुहरते । गतताच्छील्य इति किम् । धर्मान्तरेण पितरमनुहरन्ति । अथवा गते गमने ताच्छील्ये च वर्तमानाद्धरतेरात्मनेपदं भवति । पैतृकमश्वा अनुहरन्ते *तद्वद्गच्छन्ति *तद्वच्छीलन्ति वेत्यर्थः ॥ ३८ ॥ ***पूजाचार्यकभृत्युत्क्षेपज्ञानविगणनव्यये नियः ॥ ३ । ३ । ३९ ॥** *पूजाचार्यकभृतिषु यथासंख्यं कर्मकर्तृधात्वर्थविशेषणेषु गम्यमानेषु उत्क्षेपादिषु च धात्वर्थेषु वर्तमानान्नयतेः कर्तर्यात्मनेपदं भवति । पूजा सन्मानः । नयते विद्वान् स्याद्वादे । प्रमाणव्यापारवित् स्याद्वादे जीवादीन् पदार्थान् युक्तिभिः स्थिरीकृत्य शिष्यबुद्धिं प्रापयतीत्यर्थः । ते युक्तिभिः स्थिरीकृताः पूजिता भवन्ति । आचार्यस्य भावः कर्म वाचार्यकम् । माणवकमुपनयते । स्वयमाचार्यो भवन्माणवकमध्ययनायात्मसमीपं प्रापयतीत्यर्थः । भृतिर्वेतनम् । कर्मकरानुपनयते । वेतनेनात्मसमीपं प्रापयतीत्यर्थः । उत्क्षेप ऊर्ध्वं नयनम् । शिशुमुदानयते । उत्क्षिपतीत्यर्थः । ज्ञान प्रमेयनिश्चयः । नयते तत्वार्थे । तत्र प्रमेयं निश्चिनोतीत्यर्थः । विगणनमृणादेः शोधनम् । मद्राः कार विनयन्ते । राजग्राह्यं भागं दानेन शोधयन्तीत्यर्थः । व्ययो धर्मादिषु विनियोग । शतं विनयते । सहस्रं विनयते । धर्माद्यर्थं तीर्थादिषु विनियुङ्क्ते इत्यर्थः । एतेष्विति किम् । अजा नयति ग्रामम् । गिरवाद फलवदर्थ आरम्भः ॥ ३९ ॥ ***कर्तृस्थामूर्ताप्यात् ॥ ३ । ३ । ४० ॥** कर्तृस्थममूर्तमाप्यं कर्म यस्य तस्मान्नयतेः कर्तर्यात्मनेपदं भवति । श्रमं विनयते । क्रोध विनयते । शमयतीत्यर्थः । कर्तृस्थेति किम् । चैत्रो मैत्रस्य मन्युं विनयति । अमूर्तेति किम् । गडुं विनयति । घट्टं विनयति । आप्येति किम् । बुद्ध्या विनयति । श्रमं विनयत इत्यादौ श्रमापगमादेः फलस्य कर्तृसमवायित्वात् सिद्धे आत्मनेपदे *नियमार्थं वचनम् । *व्यवच्छेद्यं च प्रत्युदाहरणम् । शमयतिक्रियावचनादेव च नयतेरात्मनेपदं दृश्यते न प्रापणार्थात् । यथा—'शिवमौपयिकं गरीयसी फलनिष्पत्तिमदूषितायतिम् ॥ विगणय्य नयन्ति पौरुषं विहितक्रोधरया जिगीषवः' ॥ १ ॥ यथा च कोपं शमं नयति । मन्युं नाश नयति । प्रज्ञा प्रवृद्धिं नयति । बुद्धिं क्षयं नयति ॥ ४० ॥ **शदेः शिति ॥ ३ । ३ । ४१ ॥** शदेः शिद्विषयात्कर्तर्यात्मनेपदं भवति । शीयते । शितीति किम् । शत्स्यति



---

अनुपूर्वकहरतेर्दर्शनात् । एव पितुरऽनुहरते इति प्रकाराऽनुकारसादृश्यानामेकार्थ्येऽपि शब्दशक्तिस्वाभाव्यात् सादृश्ये कर्म नास्तीति सम्बन्धेऽत्र षष्ठी ॥—तद्वद्गच्छन्तीति । पितुरागत यथा भवति एव गच्छन्तीत्यर्थे पैतृकशब्दात् क्रियाविशेषणादम् । तद्वदित्यत्र परार्थं प्रयुज्यमान शब्दो वति विनापि वत्यर्थं गमयति ॥—तद्वच्छीलन्तीति । तद्वच्चारित्रिणो भवन्ति शील समाधौ शीलण् इत्यस्य वा णिचोऽनित्यत्वात् । नात्र ताच्छील्य पूर्वोक्तमुत्पत्ते प्रभृतीत्यादि ॥-पूजाचार्यक-॥ पूजादयोऽत्र नयतेर्विशेषणतयोपादीयमाना केचित्साक्षाद्विशेषणभावमनुभवन्ति । केचित्तु पारपर्येणेति विभज्याह-पूजेत्यादिना । आचार्यकग्रहणात् आचार्यकर्म कुर्वन्नेवात्मनेपदविधौ कर्ता । अत एवाचार्य इति नोपात्तम्॥-कर्तृस्थामू-॥-नियमार्थमिति । तेनात्र सूत्रे फलवत्तैव विवक्ष्यते॥-व्यवच्छेद्यमिति । तेन प्रत्युदाहरणेषु फलवत्त्वाविवक्षायामऽपि नात्मनेपदम्

॥ ४१ ॥ **म्रियतेरद्यतन्याशिषि च ॥ ३ । ३ ४२ ॥** म्रियतेरद्यतन्याशीर्विषयाच्छिद्विषयाच्च कर्तर्यात्मनेपदं भवति । अमृत । मृषीष्ट । म्रियते । म्रियेत । म्रियताम् । अम्रियत । अद्यतन्याशिषि चेति किम् । ममार । मर्तासि । मरिष्यति । अमरिष्यत् । तिव्निर्देशाद्यङ्लुपि न भवति । मर्मर्ति ॥ ४२ ॥ **क्यङ्षो नवा ३ । ३ । ४३ ॥** डाज्लोहितादिभ्यः क्यङ् षित् वक्ष्यते । तदन्ताद्धातोः कर्तर्यात्मनेपदं भवति वा । पटपटायाति । पटपटायते । लोहितायति । लोहितायते । निद्रायति । निद्रायते ॥ ४३ ॥ **द्युद्भ्योऽद्यतन्याम् ॥ ३ । ३ । ४४ ॥** बहुवचनं गणार्थम् । द्युतादिभ्योऽद्यतनोविषये कर्तर्यात्मनेपदं वा भवति । व्यद्युतत् । व्यद्योतिष्ट । अरुचत् । अरोचिष्ट । अद्यतन्यामिति किम् । द्योतते । द्युति १ रुचि २ घुटि ३ रुटि ४ लुटि ५ लुठि ६ श्विताङ् ७ ञिमिदाङ् ८ ञि क्ष्विदाङ् ९ ञिष्विदाङ् १० शुभि ११ क्षुभि १२ णाभि १३ तुभि १४ स्रम्भूङ् १५ भ्रंसूङ् १६ स्रंसूङ् १७ ध्वंसूङ् १८ वृतूङ् १९ स्यन्दौङ् २० वृधूङ् २१ शृधूङ् २२ कृपौङ् २३ इति द्युतादिः । प्राप्तविभाषेयम् ॥ ४४ ॥ ***वृद्भ्यः स्यसनोः ॥ ३ । ३ । ४५ ॥** बहुवचनं पूर्ववत् । वृतादयो द्युताद्यन्तर्गणाः पञ्च । तेभ्यः स्यकारादिप्रत्यये विषये सन्प्रत्यये विषये च कर्तर्यात्मनेपदं भवति वा । वृतूङ् १ वर्त्स्यति । वर्तिष्यते । अवर्त्स्यत् । अवर्तिष्यत । वर्त्स्यन् । वर्तिष्यमाणः । विवृत्सति । विवर्तिषते । एवं स्यन्दौङ् २ स्यन्त्स्यति । स्यन्दिष्यते । सिस्यन्त्सति । सिस्यन्दिषते । वृधूङ् ३ वर्त्स्यति । वर्धिष्यते । विवृत्सति । विवर्धिषते । शृधूङ् ४ शर्त्स्यति । शर्धिष्यते । शिशृत्सति । शिशर्धिषते । कृपौङ् ५ कल्प्स्यति । कल्पिष्यते । *चिक्लृप्सति । चिकल्पिषते । स्यसनोरिति किम् । वर्तते । वर्धते । इयमपि प्राप्तविभाषा ॥ ४५ ॥ **कृपः श्वस्तन्याम् ॥ ३ । ३ । ४६ ॥** कृपेः श्वस्तन्यां विषये कर्तर्यात्मनेपदं वा स्यात् । कल्प्तासि । कल्पितासे ॥ ४६ ॥ ***क्रमोऽनुपसर्गात् ३ । ३ । ४७ ॥** *अविद्यमानोपसर्गात् क्रमेः कर्तर्यात्मनेपदं वा भवति । क्रमते । क्रामति । अनुपसर्गादिति किम् । संक्रामति । वृत्त्यादेरन्यत्रायमारम्भ इत्यप्राप्तविभाषा ॥ ४७ ॥ ***वृत्तिसर्गतायने ॥ ३ । ३ । ४८ ॥** *वेति निवृत्तम् । वृत्त्यादिष्वर्थेषु वर्तमानात्क्रमेः कर्तर्यात्मनेपदं भवति । वृत्तिरप्रतिबन्धः आत्मयापनं वा । शास्त्रेऽस्य क्रमते बुद्धिः । तत्र न हन्यते आत्मानं यापयति वेत्यर्थः । सर्ग उत्साहः तात्पर्यं वा । सर्गेणातिसर्गस्य लक्षणादनुज्ञा वा । सूत्राय क्रमते तदर्थमुत्सहते तत्परो वानुज्ञातो वा । तायनं स्फीतता संतानः पालनं वा । क्रमन्तेऽस्मिन् योगाः स्फीता भवन्ति* संतन्यन्ते पाल्यन्ते वेत्यर्थः । वृत्त्यादिष्विति किम् । क्रामति ॥ ४८ ॥ ***परोपात् ॥ ३ । ३ । ४९ ॥** परोपाभ्यामेव परात् क्रमेर्वृत्त्यादिष्वर्थेषु कर्तर्यात्मनेपदं भवति । पराक्रमते । उपक्रमते । परोपादेवेति किम्

---

॥—वृद्भ्यः स्य—॥—चिक्लृप्सतीति । [illegible] लृवर्णस्यापीति लृतोऽपि 'ऋतोऽत्' ॥—क्रमोऽनु—॥—अविद्यमानोपसर्गादिति । बहुव्रीहिरयम् । यदि पुनर्न [illegible] इति तत्पुरुषो विधीयते तदोपसर्गादन्योऽनुपसर्गस्तस्मात्परो य क्रमिस्तत इति प्रतिपत्तौ केवलात्र स्यात् । प्रसज्याश्रयणे त्वऽसमर्थसमास कष्टः स्यात ॥—वृत्तिसर्ग—॥ [illegible] [illegible] कर्मशास्त्रे वा ॥—वेति निवृत्तम् । [illegible] अर्थविशेषोपादानाद्वा ॥—संतन्यन्ते इति । सतानेन प्रवर्तन्ते कर्मकर्तरि कर्मणि वा तत्र [illegible] । [illegible] अस्मिन्नित्य [illegible] । पाल्यन्ते इति कर्मणि । न तु कर्मकर्तरि 'भूषार्थ'—इति क्यनिषेधात् । अस्मिन् विषये आचार्येण योगा रक्ष्यन्ते इत्यर्थः ॥—परोपात्—

अनुक्रामति। वृत्त्यादिष्वित्येव। *पराक्रामति। *उपक्रामति। अन्ये तु परोपाभ्यां पगत् क्रमतेर्वृत्त्याद्यर्थाभावेऽपीच्छन्ति। तेन पराक्रमते, उपक्रमते इत्यात्मनेपदमेव।
वृत्त्यादिषु त्वन्योपसर्गपूर्वादपि पूर्वेण मन्यन्ते। निष्क्रमते। प्रतिक्रमते। न प्रतिहन्यते इत्यर्थः ॥ ४९ ॥ *वेः स्वार्थे ॥ ३। ३। ५० ॥ स्वार्थः पादविक्षेपः।
तस्मिन्वर्तमानाद्वेः परात्क्रमेः कर्तर्यात्मनेपदं भवति। साधु विक्रमते गजः। स्वार्थे इति किम्। *अश्वेन विक्रामति। त्रिक्रामत्यजिनसधिः स्फुटतीत्यर्थः। *विक्रामति
राजा। उत्सहते इत्यर्थः ॥ ५० ॥ प्रोपादारम्भे ॥ ३। ३। ५१॥ आरम्भ आदिकर्म। अङ्गीकरणं चेत्यन्ये। तस्मिन्वर्तमानात्प्रोपाभ्यां परात्क्रमेः कर्तर्यात्मनेपदं
भवति। प्रक्रमते, उपक्रमते भोक्तुम्। प्रारभते अङ्गीकरोति चेत्यर्थः। आरम्भ इति किम्। पूर्वेद्युः प्रक्रामति गच्छतीत्यर्थः। अपरेद्युरुपक्रामति समीपमागच्छतीत्यर्थः।
परोपादित्यनेनापि न भवति वृत्त्यादेरर्थस्याविवक्षितत्वात्। अन्ये तु स्वार्थविषय एवारम्भे मन्यन्ते। तेनोपक्रमते प्रक्रमते पादाभ्या गन्तुमारभत इत्यर्थ इत्यत्रैव
भवति। स्वार्थविषयारम्भादन्यत्र तु प्रक्रामति उपक्रामति भोक्तुमित्यत्र न भवति ॥५१॥ आङो ज्योतिरुद्गमे ॥ ३। ३। ५२ ॥ आङः परात्क्रमेर्ज्योतिषा च-
न्द्रादीनामुद्गमे ऊर्ध्वगमने प्रधाने उपसर्जने वा वर्तमानात्कर्तर्यात्मनेपदं भवति। आक्रमते चन्द्रः। आक्रमते सूर्यः। उदयते इत्यर्थः। दिवमाक्रममाणेन केतुना।
अत्र दिवमिति कर्मणा योगादुद्गमनोपसर्जनव्याप्तिवचनः क्रमिः। ज्योतिरुद्गम इति किम्। आक्रामति माणवकः कुतुपमवष्टभ्नातीत्यर्थः। ज्योतिरिति किम्। धूम
आक्रामति उद्गच्छतीत्यर्थः। आक्रामति धूमो हर्म्यतलम्। उद्गच्छन् व्याप्नोतीत्यर्थः। उद्गम इति किम्। नभः समाक्रामति नष्टवर्त्मना स्थितैकचक्रेण रथेन भास्करः।
अत्र व्याप्तिमात्रं विवक्षितम् न तूद्गमोपसर्जनव्याप्तिः। अन्ये तूद्गमोपसर्जना व्याप्तिं पश्यन्तोऽसाधुमेनं मन्यन्ते ॥५२॥ *दागोऽस्वास्यप्रसारविकासे ॥ ३।३।५३॥
आङ्पूर्वाद्ददातेः कर्तर्यात्मनेपदं भवति न चेत्स्वास्यप्रसारणं विकासश्चार्थो भवति। विद्यामादत्ते। धनमादत्ते। अस्वास्यप्रसारविकास इति किम्। उष्ट्रो मुखं
व्याददाति प्रसारयतीत्यर्थः। कूलं व्याददाति। विपादिका व्याददाति विकसतीत्यर्थः। स्वग्रहणं किम्। व्याददते पिपीलिकाः पतङ्गस्य मुखम्। आङ इत्येव
ददाति। फलवतोऽन्यत्रायं विधिः ॥ ५३ ॥ नुप्रच्छः ॥ ३।३।५४॥ आङ्पूर्वान्नौतेः प्रच्छेश्च कर्तर्यात्मनेपदं भवति। आनुते शृगालः। उत्कण्ठितः शब्दं करोति।
उत्कण्ठापूर्वके संशब्दे नौतेरयं विधिर्न सर्वत्र। आपृच्छते गुरून्। आपृच्छस्व प्रियसखम्। वियुज्यमानस्य प्रश्नेऽयं विधिः। आङ इत्येव। नौति। प्रणौति। पृच्छति।
परिपृच्छति ॥ ५४ ॥ गमेः क्षान्तौ ॥ ३। ३ ५५॥ क्षान्तिः कालहरणम्। तत्र वर्तमानाद्गमयतेराङ्पूर्वकात् कर्तर्यात्मनेपदं भवति। आगमयते गुरून् कंचित् कालं

॥—पराक्रामतीति। कोऽर्थः, परावृत्त्या क्रामति शौर्यं वा कुरुते ॥—उपक्रामति समीपे गच्छतीत्यर्थ ॥—वे स्वार्थे ॥—अश्वेन विक्रामतीति। अत्र तु
नन्वत्रापि पादविक्षेप एव क्रमिर्वर्त्तते स च कर्तृकृत करणकृतो वा भवतु। सत्यम्। गौणमुख्ययोरिति न्यायात् सर्वकारकप्रधानभूतकर्तृकृत एव गृह्यते। अत्र तु
करणकृत पादविक्षेप इति न भवति ॥——विक्रामति राजेति। परोपादेवेति नियमात् 'वृत्तिसर्ग'—इत्यादिनापि न ॥——दागोऽस्वास्यप्र——॥ प्रसारण प्रयोजकव्या-

प्रतीक्षते । आगमयस्व तावत्कंचित्कालं सहस्वेत्यर्थः । क्षान्ताविति किम् । आगमयति विद्याम् । गृह्णातीत्यर्थः । क्षान्तौ स्वभावात्कर्मण्यन्त एव वर्तते ॥ ५५ ॥ ह्वः **स्पर्धे** ॥ ३ । ३ । ५६ ॥ आङ्पूर्वाद्ध्वयतेः कर्तर्यात्मनेपदं भवति स्पर्धे गम्यमाने । स्पर्धः संघर्षः पराभिभवेच्छा स धात्वर्थस्य विशेषणम् । धात्वर्थश्च ह्वयतेराङ्पूर्वस्य शब्द एव स्वभावात् । मल्लो मल्लमाह्वयते । स्पर्धमान आकारयतीत्यर्थः । स्पर्ध इति किम् । गामाह्वयति॥ ५६ ॥ **संनिवेः** । ३ । ३ । ५७ ॥ संनिविभ्यः पराद्ध्वयतेः कर्तर्यात्मनेपदं भवति । संह्वयते । निह्वयते । विह्वयते ॥ ५७ ॥ **उपात्** ॥ ३ । ३ । ५८ ॥ उपपूर्वाद् ह्वयतेः कर्तर्यात्मनेपदं भवति । उपह्वयते । योगविभाग उत्तरार्थः ॥ ५८ ॥ ***यमः स्वीकारे** ॥ ३ । ३ । ५९ ॥ उपपूर्वाद्यमः स्वीकारेऽर्थे वर्तमानात् कर्तर्यात्मनेपदं भवति । कन्यामुपयच्छते । वेश्यामुपयच्छते । उपायंस्त महास्त्राणि । चिह्ननिर्देशः किम् । शाटकानुपयच्छति । नात्रास्वं स्वं क्रियते । स्वत्वेन तु निर्ज्ञातस्य ग्रहणमिति न भवति । *उद्वाह एवेच्छन्त्यन्ये ॥५९॥ ***देवार्चामैत्रीसंगमपथिकर्तृकमन्त्रकरणे स्थः** ॥ ३ । ३ । ६० ॥ एष्वर्थेषु वर्तमानात् उपपूर्वात्तिष्ठतेः कर्तर्यात्मनेपदं भवति । देवार्चायाम्, जिनेन्द्रमुपतिष्ठते । 'बहूनामप्यचित्तानामेको भवति चित्तवान् । पश्य वानरसंघेऽस्मिन् यदर्कमुपतिष्ठते' ॥ १ ॥ यदा तु नेयं देवपूजाऽपि तु चापलमिति विवक्षितं तदा न भवति । 'मैव मंस्थाः सचित्तोऽयमेषोऽपि हि यथा वयम् । एतदप्यस्य कापेयं यदर्कमुपतिष्ठति' ॥ १ ॥ *मित्रतया मित्रं वा कर्तुमाचरणं मैत्री उपस्थानस्य हेतुः फलं वा । महामात्रानुपतिष्ठते । रथिकानुपतिष्ठते । मैत्र्या हेतुना फलेन वाराधयतीत्यर्थः । संगम उपश्लेषः । यमुना गङ्गामुपतिष्ठते । पन्थाः कर्ता यस्यार्थस्य स पथिकर्तृकः । अयं पन्थाः स्रुघ्नमुपतिष्ठते । मन्त्रः करणं यस्यार्थस्य स मन्त्रकरणः । ऐन्द्र्या गार्हपत्यमुपतिष्ठते । सावित्र्या सूर्यमुपतिष्ठते । आराधयतीत्यर्थः । मन्त्रादन्यत्र भर्तारमुपतिष्ठति यौवनेन । करणग्रहणं किम् । गायत्रीमुपतिष्ठति । अत्र मैत्री धात्वर्थविशेषणेनोपसर्जनं धात्वर्थः शेषास्तु प्रधानम् ॥ ६० ॥ **वा लिप्सायाम्** ॥ ३ । ३ । ६१ ॥ उपपूर्वात्तिष्ठतेर्लिप्सायां गम्यमानाया कर्तर्यात्मनेपदं भवति । भिक्षुको दातृकुलमुपतिष्ठति उपतिष्ठते वा भिक्षां लभेयेति ॥ ६१ ॥ **उदोऽनूर्ध्वेहे** ॥ ३ । ३ । ६२ ॥ अनूर्ध्वा य ईहश्चेष्टा तत्र वर्तमानादुदः परात् तिष्ठतेः कर्तर्यात्मनेपदं भवति । मुक्तावुत्तिष्ठते । मुक्त्यर्थं चेष्टत इत्यर्थः । अनूर्ध्वेति किम् । आसनादुत्तिष्ठति । ईहेति किम् । अस्माद्ग्रामाच्छतमुत्तिष्ठति । सेनोत्तिष्ठति । उत्पद्यत इत्यर्थः ॥ ६२ ॥ **संविप्रावात्** ॥ ३ । ३ । ६३ ॥ एभ्यः परात्तिष्ठतेः कर्तर्यात्मनेपदं भवति । संतिष्ठते । वितिष्ठते । प्रतिष्ठते । अवतिष्ठते ॥ ६३ ॥ ***ज्ञीप्सास्थेये** ॥ ३ । ३ । ६४ ॥ परपरितो-

---

पा॰ विकासश्च कर्तृव्यापार इत्यऽनयोर्भेद । विपूर्वात्कस गताविस्यतो घञि वृद्धौ विकास ॥—यमः स्वी—॥—**उद्वाह एवेच्छन्तीति** । तन्मते वेश्यामुपयच्छते इत्यादि न भवति ॥—**देवार्चा-मैत्री**—॥—**मित्रतया मित्रं वा कर्तुमिति** । 'अजर्यं सगतम्' इतिवत्सपूर्वस्य गमेर्मैत्र्यामपि दर्शनात् । मैत्रीसगमयोरर्थाऽभेद इति य शङ्कते त प्रत्युपश्लेषरूपात् सगमात् मित्रतयेत्यादिना मैत्र्या भेद दर्शयति। विनापि हि सश्लेषेण मैत्रीत्यर्थ । मित्रस्य भावो मैत्री सा उपस्थानस्य धात्वर्थस्य हेतुर्निर्वर्त्तिका । यदा हि रथिकानुपतिष्ठत इत्यत्रोपस्थाता मित्र सत् उपतिष्ठते तदा मैत्री हेतु । यदा तु प्रागमित्र सन् मैत्र्यर्थं प्रवर्त्तते तदा मैत्री फल ततश्च कारणस्य फलस्य च क्रिया प्रति विषयत्वोपपत्तेरुपस्थानस्य विशेषणत्वेन मैत्री गोणो धात्वर्थो भवति ॥—**ज्ञीप्सास्थेये** ॥ स्थेय इत्यत्र बाहुलकात्

पार्थमात्मरूपादिप्रकाशनं शीप्सा । तिष्ठन्त्यस्मिन्निति स्थेयः । *रूढिवशाद्विवादपदे निर्णेता प्रमाणभूतः पुरुष उच्यते । शीप्साया स्थेयविषयायां च क्रियायां वर्तमानात्तिष्ठतेः कर्तर्यात्मनेपदं भवति । तिष्ठते कन्या छात्रेभ्यः । तिष्ठते वृषली ग्राम्येभ्यः । स्वाभिप्रायप्रकाशनेनात्मानं रोचयतीत्यर्थः । त्वयि तिष्ठते । मयि तिष्ठते । संशय्य कर्णादिषु तिष्ठते यः । कर्णादिस्थेयोपदिष्टं निर्णयतीत्यर्थः ॥ ६४ ॥ ***प्रतिज्ञायाम्*** ॥ ३ । ३ । ६५ ॥ प्रतिज्ञा अभ्युपगमः । तत्र वर्तमानात्तिष्ठतेः कर्तर्यात्मनेपदं भवति । नित्यं शब्दमातिष्ठते । *तदतदात्मकं तत्त्वमातिष्ठते । स्वभावाच्चायमाङ्पूर्व एव प्रतिज्ञायां वर्तते । योगविभाग उत्तरार्थः ॥ ६५ ॥ ***समो गिरः*** ॥ ॥ ३ । ३ । ६६ ॥ सम्पूर्वाद्गिरतेः प्रतिज्ञायां वर्तमानात्कर्तर्यात्मनेपदं भवति । स्याद्वादं संगिरते प्रतिजानीत इत्यर्थः । प्रतिज्ञायामित्येव । संगिरति ग्रासम् । गिर इति निर्देशाद्गृणातेर्न भवति ॥ ६६ ॥ **अवात्** ॥ ३ । ३ । ६७ ॥ पृथग्योगात्प्रतिज्ञायामिति निवृत्तम् । अवपूर्वाद्गिरतेः कर्तर्यात्मनेपदं भवति । अवगिरते । अवादन्यत्र गिरति । गिर इत्येव । अवगृणाति । अवपूर्वस्य गृणातेः प्रयोगो नास्तीत्यन्ये ॥ ६७ ॥ **निह्नवे ज्ञः** ॥ ३ । ३ । ६८ ॥ निह्नवोऽपलापस्तस्मिन्वर्तमानाज्जानातेः कर्तर्यात्मनेपदं भवति । शतमपजानीते अपह्नुते इत्यर्थः । अपेन चास्यायमर्थोऽभिव्यज्यते । निह्नव इति किम् । तत्त्वं जानाति ॥ ६८ ॥ ***संप्रतेरस्मृतौ*** ॥ ३ । ३ । ६९ ॥ संप्रतिभ्यां पराज्जानातेरस्मृतौ वर्तमानात्कर्तर्यात्मनेपदं भवति । शतं संजानीते अवेक्षते इत्यर्थः । शतं प्रतिजानीते *शतेन संजानीते । अभ्युपगच्छतीत्यर्थः । अस्मृताविति किम् । मातुः संजानाति, मातरं संजानाति । स्मरतीत्यर्थः ॥ ६९ ॥ ***अननोः सनः*** ॥ ३ । ३ । ७० ॥ सन्नन्ताज्जानातेः कर्तर्यात्मनेपदं भवति स चेदनोरुपसर्गात्परो न भवति । धर्मं जिज्ञासते । अननोरिति किम् । धर्ममनुजिज्ञासति । कथमौषधस्यानुजिज्ञासते । *अकर्मकात् 'प्राग्वत्' ( ३ । ३ । ७४ ) इत्यनेन भविष्यति ॥ ७० ॥ **श्रुवोऽनाङ्प्रतेः** ॥ ३ । ३ । ७१ ॥ सन्नन्ताच्छृणोतेः कर्तर्यात्मनेपदं भवति स चेदाङ्प्रतिभ्यामुपसर्गाभ्यां परो न भवति । शुश्रूषते गुरून् । संशुश्रूषते शब्दान् । अनाङ्प्रतेरिति किम् । आशुश्रूषति । प्रतिशुश्रूषति । चैत्रं प्रति शुश्रूषत इति प्रतिना संबन्धाभावात् प्रतिषेधो न भवति ॥ ७१ ॥ **स्मृदृशः** ॥ ३ । ३ । ७२ ॥ स्मृदृशिभ्यां सन्नन्ताभ्यां कर्तर्यात्मनेपदं भवति । सुस्मूर्षते पूर्ववृत्तम् । दिदृक्षते देवम् ॥ ७२ ॥ ***शको जिज्ञासायाम्*** ॥ ३ । ३ । ७३ ॥ शकिः स्वभावादन्य*धात्वर्थानुसंहितः प्रवर्तते शक्नोति भोक्तुमन्यद्वेति । ततो ज्ञानानुसंहितार्थात्सन्नन्तात्कर्तर्यात्मनेपदं

---

अधिकरणेऽपि 'यएचात' इति य । व्युत्पत्तिसमये आधारस्य निर्णेतत्व न विवक्षितमिति वाक्ये परस्मैपदमेव । अधिकरणस्य प्रत्ययार्थत्वेऽपि नास्याधिकरणमात्रे वृत्ति कि तर्हि कचिदेवेत्याह—**रूढिवशादित्यादि** ॥—**प्रतिज्ञायाम्** ॥—**तदऽतदात्मकमिति** । एकशेषोऽनित्य । शब्दप्रधानो वा निर्देश शब्दार्थयोरभेदेन चार्थो वाच्य । स चासावसश्च तदस स आत्मा यस्येति कर्मधारयपूर्वो वा बहुव्रीहि ॥—**समो गि**—॥ ननु सम विना प्रतिज्ञाया गिरतेर्वृत्तिर्न दृश्यते तत कि समग्रहणेन । सत्यम् । केवलोऽप्यन्योपसर्गपूर्वोऽपि च प्रतिज्ञाया वर्त्तते उत्तरत्र पृथग्योगात् प्रतिज्ञायामिति निवृत्तमिति भणिते । यदि ह्यऽन्योपसर्गपूर्वो न वर्त्तते तर्हि पृथग्योगादिति भणिते कि फलम् ॥—**सप्रतेर**—॥—**शतेन सजानीते** इति । 'समो ज्ञोऽस्मृतो वा' इति वा तृतीया । तद्विकल्पे च पक्षे द्वितीया ॥—**अननो** ॥—**अकर्मकादित्यादि** । सकर्मकादनेन आत्मनेपद विधीयते न त्वऽकर्मकादिति प्रतिषेधाऽभाव । कथ पुनर्ज्ञायते अनेन सकर्मकाद्विधिरिति । उच्यते । अकर्मकात् ज्ञ इत्यनेन प्रागिष्टत्वात् सन्नन्तात् 'प्राग्व'—इत्यनेनात्मनेपदे सिद्धे सकर्मकादेवाऽय विधिरिति ज्ञायते ॥—**शको जि**—॥—**धात्वर्थानुसंहित** इति । शक्तिरन्यस्य धातोरर्थेन युक्त इत्यर्थ । यथा शक्नोति भोक्तुमित्यत्र

भवति। *विद्याः शिक्षते। ज्ञातुं शक्नुयामितीच्छतीत्यर्थः। जिज्ञासायामिति किम्। शक्तुमिच्छति शिक्षति। शिक्षि विद्योपादाने इत्यनेनैव सिद्धे* आमनुप्रयोगार्थं वचनम्। तेन शिक्षांचक्रे इति भवति न तु शिक्षांचकारेति। केचित्तु शकेः सन्नन्तस्यात्मनेपदमनिच्छन्तः शिक्षतेरेव जिज्ञासायामात्मनेपदमन्यत्र च परस्मैपदमिच्छन्ति ॥७३॥ *प्राग्वत्॥ ३।३।७४॥ सनः 'प्राक्' पूर्वो यो धातुस्तस्मादिव सन्नन्तात्कर्तर्यात्मनेपदं भवति। यत्पूर्वस्य धातोरनुबन्धेनोपपदेनार्थविशेषेण वात्मनेपदं दृष्टं तत्सन्नन्तादतिदिश्यते। अनुबन्धेन, शीङ् शेते, शिशयिषते। एधि एधते, एदिधिषते। लोलूयते, लोलूयिषते। श्येनायते, शिश्येनायिषते। उपपदेन, निविशते. निविविक्षते। अश्वेन संचरते, अश्वेन संचिचारिषते। अर्थविशेषेण, शास्त्रेऽस्य क्रमते बुद्धिः, चिक्रंसते उभयेन। आक्रमते चन्द्रः आचिक्रंसते। यत्पुनः समसयधातुनिमित्तं तन्नातिदिश्यते। शिशित्सति। मुमूर्षति। अत्र हि न शदिम्रियती एव निमित्ते किं तर्हि शिदाशीरद्यतन्योऽपि। *अनुबन्धादिनिमित्तमपि यद्विशेषविधानबाधया प्राग्दृष्टम् तन्नातिदिश्यते। यथानुकरोति अनुचिकीर्षति। पराकरोति पराचिकीर्षति। तिजादीनां त्वर्थविशेषेषु केवलानामप्रयोगात् *सन्नन्तसमुदायार्थमेव *अनुबन्धविधानम्। तेन तितिक्षते, जुगुप्सते, मीमांसते इत्यादौ प्रागदृष्टमपि आत्मनेपदमनुबन्धसामर्थ्यात् भवति। यथा कुस्मिचित्रङ्महीङ्हृणीङामनुबन्धो णिच्क्यङ्यगन्तसमुदायार्थः। विकुस्मयते। चित्रीयते। महीयते। हृणीयते। '*अवयवे वा कृतं लिङ्गं समुदायस्य विशेषकं भवति यं समुदायं सोऽवयवो न व्यभिचरति'। यथा गोः सक्थनि कर्णे वा कृतं लिङ्गं 'चिह्नम्' गोरेव विशेषकं भवति न गोमण्डलस्य। सन्नन्तं च समुदायं तिजादयोऽर्थविशेषेषु न व्यभिचरन्ति णिगन्तं पुनर्व्यभिचरन्ति। ननु सन्नन्तमपि व्यभिचरन्ति तेजयति, गोपायति, मानयतीति। नैवम्। अर्थविशेषेषु न व्यभिचार इत्युक्तत्वात्। 'गुप्तिजो गर्हाक्षान्त्यो' (३।४।६) शानदानमान्बधान्निशानार्जवविचारवैरूप्ये'-(३।४।९) इति हि वक्ष्यते इति ॥७४॥ **आमः कृगः॥ ३।३।७५॥** आमः परादनुप्रयुज्यमानात्करोतेराम एव प्राग्यो धातुस्तस्मादिव कर्तर्यात्मनेपदं भवति। भवति न भवति चेति विधिप्रतिषेधावतिदिश्येते। यथोशीरवन्मद्रेषु यवाः सन्ति न सन्तीति। ईहांचक्रे, ईक्षांचक्रे इत्यफलवत्यपि भवति। बिभयांचकार, जागरांचकारेति फलवत्यपि न भवति। यत्र तु पूर्वस्मादुभयं तत्र फलवत्यफलवति चोभयं भवति। बिभरांचक्रे, बिभरांचकार। पाचयांचक्रे, पाचयांचकार। कृग इति किम्। करोतेरेव यथा स्यादिह माभूत्। ईक्षामास। ईक्षांबभूव ॥७५॥

---

भुज्यर्थेन युक्त इत्यर्थ ॥—विद्या. शिक्षत इति। आत्मनेपदेनैव जिज्ञासाया अवगमात् जिज्ञासितुमिति न प्रयुज्यते ॥—आमनुप्रयोगार्थमिति। यद्यद. सूत्र न व्यधास्यत तदा शकेर्धातो सन्नन्तस्य 'आम कृग' इति आम परात् कृग आत्मनेपद नाऽभविष्यत् तत शिक्षाचक्रे इति न स्यात्। शिक्षेस्त्वामोऽसभव एव एकस्वरत्वात् ॥—प्राग्वत् ॥—अनुबन्धादिनिमित्तमपीति। आदिपदात् 'गन्धनावक्षेप'—इत्यादिना कृगो धातोर्गन्धनाद्यर्थनिमित्त 'परानो कृग' इत्यादिविशेषविधानबाधित सत् प्राग् न दृष्ट तदपि नाऽतिदिश्यते ॥—सन्नन्तसमुदायार्थमेवेति। अर्थविशेषेषु इदमेव फलमन्यत्र त्वनाद्यपीति एवकारार्थ ॥—अनुबन्धविधानमिति। न च वाच्य क्षान्त्याद्यर्थाभावे अनुबन्धादात्मनेपद भविष्यतीति। एषामर्थान्तरेऽपि त्यादयो नाभिधीयन्ते इति भणनात्। 'इङितो व्यञ्जनाद्य'—इत्यादौ चरितार्थमिति चेत्। न। तदा 'भूषाक्रोध'—इत्यादौ स्वरूपेण ग्रहण कुर्यात् किं व्याप्तिपरेणाऽनुबन्धेन ॥—अवयवे वा कृतमिति। भवत्वऽनप्रत्ययेऽनुबन्धस्य

*गन्धनावक्षेपसेवासाहसप्रतियत्नप्रकथनोपयोगे ॥३।३।७६॥ गन्धनादिष्वर्थेषु वर्तमानात्करोतेः कर्तर्यात्मनेपदं भवति। गन्धनं द्रोहाभिप्रायेण परदोषोद्घाटनम्। *प्रोत्साहनादिकमन्ये। उत्कुरुते। उदाकुरुते माम्। अध्याकुरुते जिघांसुरपकर्त्रे कथयतीत्यर्थः। अवक्षेपणमवक्षेपः कुत्सनं भर्त्सनं वा। दुर्वृत्तानवकुरुते। कुत्सयतीत्यर्थः। श्येनो वर्तिकामपकुरुते *भर्त्सयतीत्यर्थः। सेवाऽनुवृत्तिः। महामात्रानुपकुरुते सेवते इत्यर्थः। साहसमविमृश्य प्रवृत्तिः। परदारान् प्रकुरुते विनिपातमविभाव्य तान् अभिगच्छतीत्यर्थः। प्रतियत्नः सतो गुणान्तराधानम्। एधोदकस्योपस्कुरुते। तत्र गुणान्तरमादधातीत्यर्थः। प्रकथनं कथनप्रारम्भः, प्रकर्षेण कथनं वा। जनवादान् प्रकुरुते, कथयितुमारभते प्रकर्षेण कथयति वेत्यर्थः। उपयोगो धर्मादौ विनियोगः। शतं प्रकुरुते। धर्मादौ विनियुङ्क्ते इत्यर्थः। एष्विति किम्। कटं करोति। अफलवत्कर्त्रर्थ आरम्भः ॥ ७६ ॥ **अधेः प्रसहने** ॥ ३। ३। ७७॥ अधेः परात्करोतेः प्रसहने वर्तमानात्कर्तर्यात्मनेपदं भवति। प्रसहनं पराभिभवः परेणापराजयो वा। त हाधिचक्रे। तं प्रसेहे। तमभिभूतवान् तेन वा न पराजित इत्यर्थः। अथवा सहनं क्षमा तितिक्षोपेक्षेति यावत्। प्रकर्षेण सहनं प्रसहनम्। तच्च द्विधा शक्तस्याशक्तस्य च। भवादृशाश्चेदधिकुर्वते परान् 'समर्था अपि यद्युपेक्षन्ते तदा' निराश्रया हन्त हता मनस्विता। अधिचक्रे न यं हरिः। सोढुमशक्तस्सन् तेन न्यत्क्रियते। प्रसहन इति किम्। तमधिकरोति। अधेरिति किम्। शत्रून् प्रकरोति ॥७७॥ ***दीप्तिज्ञानयत्नविमत्युपसंभाषोपमन्त्रणे वदः** ॥ ३। ३। ७८ ॥ दीप्त्यादिष्वर्थेषु गम्यमानेषु वदतेः कर्तर्यात्मनेपदं भवति। दीप्तिर्भासनम्। सा च कर्तृविशेषणम् वावदनक्रियासहचारिणी धात्वर्थो वा केवलैव वा धात्वर्थः। वदते विद्वान् स्याद्वादे। सम्यग्ज्ञानादनाकुलकथनाच्च विकासितमुखत्वाद्दीप्यमानो वदतीति। वावदन् दीप्यते इति वा। दीप्यत एवेत्यर्थः। ज्ञानमवबोधः। तच्च वदिक्रियाया हेतुर्वा विषयि वा फलं वा केवलमेव वा धात्वर्थः। वदते धीमांस्तत्त्वार्थे। ज्ञात्वा वदतीति वा जानाति वदितुमिति वा वदन् जानातीति वा जानात्येव वेत्यर्थः। यत्न उत्साहः। स च धात्वर्थस्य विषयो धात्वर्थ एव वा। श्रुते वदते। तपसि वदते। तद्विषयमुत्साहं वाचाविष्करोति तत्रोत्सहते इति वेत्यर्थः। नाना मतिर्विमतिः। सा च धात्वर्थस्य हेतुः धात्वर्थ एव वा। धर्मे विवदन्ते विमतिपूर्वकं विचित्रं भाषन्त इति वा विविधं मन्यन्त इति वेत्यर्थः। उपसंभाषोपसान्त्वनमुपालम्भो वा। धात्वर्थ एवायम्। कर्मकरानुपवदते उपसान्त्वयति उपलभते वेत्यर्थः। उपमन्त्रणं रहसि *उपच्छन्दनम्। तदपि धात्वर्थ एव। कुलभार्यामुपवदते। परदारानुपवदते। रहस्युपलोभयतीत्यर्थः। दीप्त्यादिष्विति किम्। यत्किंचिद्वदति ॥ ७८ ॥ **व्यक्तवाचां सहोक्तौ** ॥ ३। ३। ७९ ॥ व्यक्ता व्यक्ताक्षरा वाग्येषां ते व्यक्तवाचः रूढ्या मनुष्यादय एवोच्यन्ते। तेषां सहोक्तौ संभूयोच्चारणे वर्तमानाद्वदेः कर्तर्यात्मनेपदं भवति। संप्रवदन्ते ग्राम्याः। संप्रवदन्ते पिशाचाः। संभूय भाषन्ते इत्यर्थः। व्यक्तवाचामिति किम्। संप्रवदन्ति कुक्कुटाः। संप्रवदन्ति शुकाः। शुकसारिकादीनामपि व्यक्तवाक्त्वात् महोक्ताविच्छन्त्य-

---

चरितार्थत्वं तथाऽप्यात्मनेपदं भवतीत्यभ्युपगम्याह ॥—गन्धनावक्षे ॥—प्रोत्साहनादिकमिति । आदेरऽव्यावाधाऽनुज्ञोदय । तथा च पठन्ति तथ्येनातथ्येन वा गुणेन प्रोत्साहनं गन्धनम् ॥— —भर्त्सयतीति । राजृग् टुभ्राजि दीप्तावित्यत्र भ्राजिग्रहणेनात्मनेपदाऽनित्यत्वज्ञापनात्परस्मैपदमऽत्र ॥—दीप्तिज्ञान—॥—उपच्छन्दनमिति । छन्दसोपचरति णिच् । उपच्छन्द्यते अनटि ॥—

न्ये । संप्रवदन्ते शुकाः। संप्रवदन्ते सारिकाः। सहोक्ताविति किम्। चैत्रेणोक्ते मैत्रो वदति ॥ ७९ ॥ *विवादे वा ॥ ३ । ३ । ८० ॥ विरुद्धार्थौ वादो विवादः। व्यक्तवाचां सहोक्तौ विवादरूपायां वर्तमानाद्वदेः कर्तर्यात्मनेपदं वा भवति। विप्रवदन्ते विप्रवदन्ति वा मौहूर्ताः। परस्परप्रतिषेधेन युगपद्विरुद्धं वदन्तीत्यर्थः। विवाद इति किम्। संप्रवदन्ते वैयाकरणाः। *सह वदन्तीत्यर्थः। व्यक्तवाचामित्येव। *संप्रवदन्ति शकुनयः। नानारुतं कुर्वन्ति जातेशक्तिभेदात्। सहोक्तावित्येव। मौहूर्तो मौहूर्तेन सह क्रमेण विप्रवदति। विरुद्धाभिधानमात्रमिह विवक्षितम् न तु विमतिपूर्वकम्। तेन विमतिलक्षणमप्यात्मनेपदं न भवति ॥ ८० ॥ *अनोः कर्मण्यसति ॥ ३ । ३ । ८१ ॥ *व्यक्तवाचामित्येवानुवर्तते। व्यक्तवाचां संबन्धिन्यर्थे वर्तमानादनुपूर्वाद्वदेः कर्मण्यसति कर्तर्यात्मनेपदं भवति। अनुः सादृश्ये पश्चादर्थे वा। अनुवदते चैत्रो मैत्रस्य। यथा मैत्रो वदति तथा चैत्रो वदतीत्यर्थः। अनुवदते आचार्यस्य शिष्यः। आचार्येण पूर्वमुक्ते पश्चाद्वदतीत्यर्थः। कर्मण्यसतीति किम्। उक्तमनुवदति। व्यक्तवाचामित्येव। अनुवदति वीणा। *कथं वाचिकषडिकौ न संवदेते इति। *मिथो विरुध्येते इत्यर्थः। *विमतिविवक्षायां भविष्यति। अकर्मकादित्यनुक्त्वा कर्मण्यसतीति निर्देश उत्तरत्र शब्दे स्वेऽङ्गे च कर्मणीति लाघवेन प्रतिपत्त्यर्थः ॥ ८१ ॥ *ज्ञः ॥ ३ । ३ । ८२ ॥ जानातेः कर्मण्यसति कर्तर्यात्मनेपदं भवति। सर्पिषो जानीते। मधुनो जानीते। कथमत्र जानातिरकर्मकः। उच्यते। नात्र सर्पिरादि ज्ञेयत्वेन विवक्षितम् किं तर्हि प्रवृत्तौ करणत्वेन। सर्पिषा मधुना वा करणेन भोक्तुं प्रवर्तत इत्यर्थः। अत एव 'अज्ञाने ज्ञः षष्ठी' ( २ । २ । ८० ) इति षष्ठी। मिथ्याज्ञानार्थो वा जानातिः। सर्पिषि रक्तः *प्रतिहतो वोदकादिषु सर्पिष्टया ज्ञानवान् भवतीत्यर्थः। मिथ्याज्ञानं चाज्ञानमित्यज्ञानार्थत्वे पूर्ववदेव षष्ठी। अथ वा सर्पिःसंबन्धि ज्ञानं

---

—विवादे वा ॥—सह वदन्तीत्यर्थ इति। सहशब्देनापि सहोक्तावुक्ताया व्यक्तवाचामित्यनेनापि नाऽत्रात्मनेपदम् ॥—संप्रवदन्ति शकुनय इति। व्यक्तवाक्त्वे सति विवादाविवक्षेति न ह्यङ्गविकलता। विवादाभावेऽपि परस्पर स्वरभेदात् विवादोऽप्यस्ति वा ॥—अनोः कर्म—॥—व्यक्तवाचामित्येवेति। पूर्वसूत्रे व्यक्तवाक्सहोक्तावित्येवमऽकरणात्। एकस्यैव अनुवर्त्तनार्थमेव हि भिन्नविभक्तिकनिर्देश ॥—कथं वाचिकषडिकावित्यादि। वागाशिस् वागाशीर्दत्त इति वा प्रकृति। अनुकम्पितो वागाशीर्वागाशीर्दत्तो वा 'अजातेर्नृनाम्न' इतीके 'षड्वर्जैकस्वर'—इत्यादिना आशीरादिलोप। एवमनुकम्पित षडङ्गुलि षडङ्गुलिदत्तो वा 'अजाते'—इतीके 'द्वितीयात्स्वरादूर्ध्वम्'—इति ङ्गुलिलोपे वाचिकषडिकाविति। ननु षडिक इत्यत्र पदसंज्ञाया सित्येवेति नियमेन निवर्त्तितत्वात्पदान्तत्वाभावात् डत्व न प्राप्नोति। न च वाच्य 'स्वरस्य'—इति परिभाषया स्थानिनाकारेणासित्प्रत्ययस्य व्यवधान 'न सधि'—इत्यस्यावस्थानात्। सत्यम्। 'षड्वर्ज'—इत्यत्र षड्वर्जन ज्ञापयति नाऽत्र स्थानित्वप्रतिपत्ति। ननु 'प्रत्यय प्रकृत्यादे' इति न्यायात् सित्येवेत्यस्याऽवकाशो न हि। सत्यम्। षड्वर्जन ज्ञापयति अवयवस्यापि नियमो भवति। वाचिक इत्यत्र 'चज कगम्' इति न भवति ॥—मिथो विरुध्येते इति। यथा वाचिक इति निष्पद्यते तथा षडिक इति न सिध्यति। तथाहि 'द्वितीयात्स्वरादूर्ध्वम्'—इति कृते न वाचिक इति न सिध्यति एकस्वरादूर्ध्वं लोपे कृते षडिक इति न इति महाभाष्यविचार ॥—विमतिविवक्षायामिति। शब्दपक्षे शब्दशब्दवतोरऽभेदोपचारेण ॥—ज्ञ ॥—प्रतिहतो वेति। प्रतिपूर्वको हनिर्द्वेषे वर्त्तते अकर्मकश्च तत कर्त्तरि क्त.। प्रति-

करोतीति विवक्षायां ज्ञानार्थोऽपि जानातिरकर्मकः *तदा तु सवन्धे षष्ठी । कर्मण्यसतीत्येव । तैलं सर्पिषो जानाति । तैलं सर्पिष्या जानातीत्यर्थः । स्वरेण पुत्र जानाति । केचित्तु ज्ञानोपसर्जनाया प्रवृत्ताववाकर्मकाज्जानातेरात्मनेपदमाहुः । अत एव ते *'संभविष्याव *एकस्याममभिजानामि मातरि' अभिजानासि मैत्र कश्मीरेषु वत्स्याम इत्यादौ प्रवृत्यर्थाभावादात्मनेपदाभावं मन्यन्ते । ह्रास्ये रात्राविति प्राज्ञः इत्यत्रापि ज्ञात्वा प्रवर्तिष्ये इति व्याचक्षते । जाने *कोपपराङ्मुखी त्यत्र तु 'ज्ञोऽनुपसर्गात्' ( ३ । ३ । ९६ ) इत्यनेनात्मनेपदमिच्छन्तीति ॥ ८२ ॥ ***उपात्स्थः ॥ ३ । ३ । ८३ ॥** उपपूर्वात्तिष्ठतेः कर्मण्यसति कर्तर्यात्मनेपदं भवति । भोजनकाल उपतिष्ठते । योगे योग उपतिष्ठते । ज्ञानमस्य ज्ञेयेषूपतिष्ठते । *संनिधीयते इत्यर्थः । कर्मण्यसतीत्येव । राजानमुपतिष्ठति ॥ ८३ ॥

***समो गमृच्छिप्रच्छिश्रुवित्स्वरत्यर्तिदृशः ॥ ३ । ३ । ८४ ॥** समः परेभ्यो गमादिभ्यः कर्मण्यसति कर्तर्यात्मनेपदं भवति । संगच्छते । समृच्छते । *समृच्छिष्यते । संपृच्छते । संशृणुते । नित्यपरस्मैपदिभि साहचर्यात् ज्ञानार्थस्यैव विदेर्ग्रहणम् । संवित्ते । संस्वरते । अर्तीति *सामान्यनिर्देशात् भ्वादिरदादिश्च गृह्यते । समृच्छते । समियृते । संपश्यते । स्वरत्यर्त्योरिस्तिवृनिर्देशो *यङ्लुप्निवृत्त्यर्थः । कर्मण्यसतीत्येव । संगच्छति सुहृदम् ॥ ८४ ॥ ***वेः कृगः शब्दे चानाशे ॥ ३ । ३ । ८५ ॥** विपूर्वात्करोतेरनाशेऽर्थे वर्तमानात्कर्मण्यसति शब्दे च कर्मणि कर्तर्यात्मनेपदं भवति । कर्मण्यसति, *विकुर्वते सैन्धवाः साधु दान्ताः शोभनं वल्गन्तीत्यर्थः । ओदनस्य पूर्णाश्छात्रा विकुर्वते । निष्फलं चेष्टन्त इत्यर्थः । शब्दे कर्मणि, क्रोष्टा विकुरुते स्वरान् नानोत्पादयतीत्यर्थः । शब्दे चेति किम् । विकरोति मृदम् । अनाश इति किम् । विकरोत्यध्याय विकरोति शब्दं विनाशयतीत्यर्थः ॥ ८५ ॥ ***आङो यमहनः स्वेऽङ्गे च ॥ ३।३।८६॥** आङः पराभ्यां यमिहनिभ्या कर्मण्यसति कर्तुः स्वेऽङ्गे च कर्मणि कर्तर्यात्मनेपदं भवति । आयच्छते । आहते । स्वेऽङ्गे, आयच्छते पादम् । आहते शिरः । स्वेऽङ्गे

---

हतिरस्यास्ति अभ्राथे वा । कर्मकर्त्तरि वा ॥—**तदा तु संबन्धे** इति । न माषाणामश्नीयादितिवदित्यर्थ ॥—**संभविष्याव** इति । 'अयदि स्मृत्यर्थे'—इत्यनेन भविष्यन्ती स्यावस् ॥—**अभिजानासि मातरीति** । तन्मते इत्युल्लेखेनेतिविवक्षायामऽकर्म्मकत्वमऽन्यथा ध्यानविकलता स्यात् । स्वमते तु वाक्यार्थस्य कर्मत्वविवक्षाया सकर्म्मत्वान्नात्मनेपदम् । ते हीत्थं व्याख्यान्ति—अभिजानासि स्मरसि केनोल्लेखेन सभविष्याव इति वाक्यस्याप्यऽकर्म्मकत्वम् । स्वमते त्वऽभिजानासि किं तत् सभविष्याव इति वाक्यकर्मत्वान्नात्मनेपदम् इतिशब्दोऽध्याहर्त्तव्य. ॥—**कोपपराङ्मुखीति** । तन्मतेऽत्राह जाने केनोल्लेखेन कोपपराङ्मुखीति । अनेन व्याख्यानेन 'ज्ञ' इत्यनेनाप्यात्मनेपदम् वाक्यार्थकर्म्मणि तु 'ज्ञोऽनुपसर्गात्' इत्यनेन ॥—**उपात्स्थ** ॥—**संनिधीयत** इति । कर्म्मकर्त्तरि धीङ्च् अनादरे इत्यस वा रूपमिदम् ॥—**समो गमृ**—॥—**समृच्छिष्यते** इति । समृच्छे इत्यस्य ऋच्छेरर्तेश्च रूपसाम्यात् ऋच्छेरभिव्यक्त्यर्थं समृच्छिष्यते इति द्वितीयमुदाहरणम् ॥—**सामान्यनिर्देशादिति** । यद्यपि सामान्यनिर्देशात् ऋश् गतावित्यस्यापि क्र्यादिकस्य ग्रहण स्यात् तथापि साम्यात् ह्रस्व एव गृह्यते परस्पर ह्रस्वत्वेन नियमितत्वात् ॥—**यङ्लुप्निवृत्त्यर्थ** इति । तेन स्वरते ससरिस्वर्त्ति ससर्स्वर्त्ति ससरीस्वर्त्ति अर्त्तेस्तु रिरीआगमे 'पूर्वस्य'—इति इयादेशे समरियर्त्ति समरियरीति र् आगमे समरर्त्ति इति । अन्येषा यङ्लुप्यपि सजगते सपरीपृष्टे सशोश्रुते सवेवित्ते सदरीदृष्टे इत्यात्मनेपदमेव । ऋच्छेस्त्वसम्भवो यङ ॥—**वे कृग**—॥—**विकुर्वते सैन्धवा** इति । ननु विकारहेतो सति विक्रियन्ते इत्यादौ कथं क्य 'णिश्रुश्र्यात्मने'—इत्यधिकारे 'भूषार्थ'—इति निषेधात् । सत्यम् । अत्र कर्म्मणि क्य कर्त्ता तु विकार एव ॥—**आङो यम**—॥

चेति किम्। आयच्छति रज्जुम्। आहन्ति वृषलम्। स्व इति किम्। आयच्छति पादौ चैत्रस्य। आहन्ति शिरो मैत्रस्य। अङ्ग इति किम्। स्वामायच्छति रज्जुम्। स्वं पुत्रमाहन्ति। स्वाङ्ग इति समस्तनिर्देशे *पारिभाषिकस्वाङ्गप्रतिपत्तिः स्यादित्यसमस्ताभिधानम्॥ ८६॥ *व्युदस्तपः॥ ३। ३। ८७॥ व्युद्भ्यां परात्तपेः कर्मण्यसति स्वेऽङ्गे च कर्मणि कर्तर्यात्मनेपदं भवति। वितपते उत्तपते रविः। दीप्यत इत्यर्थः। स्वेऽङ्गे, वितपते उत्तपते पाणिम्। तापयतीत्यर्थः। व्युद इति किम्। निष्टपति। स्वेऽङ्गे चेत्येव। वितपति पृथिवीं सविता। संतापयतीत्यर्थः। उत्तपति सुवर्णं सुवर्णकारः। द्रवीकरोतीत्यर्थः। स्व इत्येव। उत्तपति पृष्ठं चैत्रस्य। अङ्ग इत्येव। स्वं सुवर्णमुत्तपति। इह दीप्यते ज्वलति भासते रोचते इत्येष्वर्थेषु तपिमकर्मकं स्मरन्ति। यथा वहति भारमिति प्रापणे वहिं सकर्मकं स्पन्दने त्वकर्मकम्। वहति नदी स्पन्दते इत्यर्थः॥ ८७॥ *अणिकर्मणिकर्तृकाण्णिगोऽस्मृतौ॥ ३। ३। ८८॥ 'प्रयोक्तृव्यापारे णिग्' (३। ४। २०) इति वक्ष्यते। अणिगवस्थायां यत्कर्म तदेव णिगवस्थायां कर्ता यस्य सोऽणिकर्मणिकर्तृकः। तस्माण्णिगन्ताद्धातोरस्मृतौ वर्तमानात्कर्तर्यात्मनेपदं भवति। आरोहन्ति हस्तिनं हस्तिपकाः। *आरोहयते हस्ती हस्तिपकान्। *आस्कन्दयते इत्यर्थः। पश्यन्ति राजानं भृत्याः। दर्शयते राजा भृत्यान् भृत्यैरिति वा। पिबन्ति मधु पायकाः। *पाययते मधु पायकान्। अणिगिति किम्। आरोहन्ति हस्तिनं हस्तिपकाः। आरोहयति हस्तिपकान् महामात्रः। *आरोहयन्ति महामात्रेण हस्तिपकाः। प्रथमणिगन्तकर्मणि द्वितीयणिगन्तकर्तर्यपि माभूत्। गित्करणं किम्। गणयति गणं गोपालकः। गणयते गणः गोपालकम् इति णिजन्त-कर्मणिकर्तृकादपि णिगन्तात्प्रतिषेधो माभूत्। कर्मेति किम्। करणादेः कर्तृत्वे माभूत्। पश्यन्ति भृत्याः प्रदीपेन। दर्शयति प्रदीपो भृत्यान्। णिगिति किम्। यस्याणिगन्तस्यैव कर्म कर्ता भवति ततो णिगन्तान्माभूत्। लुनाति केदारं चैत्रः। *लूयते केदारः स्वयमेव। तं प्रयुङ्क्ते लावयति केदारं चैत्रः। कर्तृग्रहणं किम्। आरोहन्ति हस्तिनं हस्तिपकाः। तानेनमारोहयति महामात्रः। *णिग इति किम्। *आरोहन्ति हस्तिनं हस्तिपकाः तानारोहयते हस्तीत्यणिगवस्थायां

---

—पारिभाषिकस्वाङ्गेति। ततश्चायच्छति पादौ चैत्रस्येत्यादावप्यात्मनेपदप्रसङ्ग॥—व्युदस्तप। दीप्यते सामान्येन दीप्तो भवति। ज्वलति ज्वालावान् भवति। भासते उद्भूतरूपो भवति। रोचते किरणवान् भवति॥——अणिकर्म——॥——आरोहयते हस्तीति। अत्राऽनुकूलाचरण पादार्पणशिरोऽधूननादि॥—आस्कन्दयत इति। हस्तिन उपर्यागच्छन्ति तानुपर्यागमयतीत्यर्थ। अत्राप्येतेनात्मनेपदम्॥—पाययते मधु पायकानिति। 'चल्याहारार्थ'—इति परस्मैपदे प्राप्ते 'परिमुह'—इत्यनेन फलवत्यात्मनेपदमित्यत्र त्वऽफलवत्यप्यनेन॥—आरोहयन्ति महामात्रेण हस्तिपका इति। आरोहयति हस्तिपकान् महामात्रस्तमारोहयन्त हस्तिपका प्रयुञ्जते इति वाक्यम्। हस्तिपकानारोहयन्त महामात्र हस्त्येव प्रयुङ्क्ते इति तु वाक्ये द्वितीयणिगि अणिकर्मणो हस्तिन कर्तृत्वेऽपि नात्मनेपदम्। प्रत्यासत्तेर्न्यायात् यदि अनन्तरे णिगि कर्मण कर्तृत्वमत्र तु द्वितीये णिगि॥—लूयते केदार इति। ननु लूयते केदार इत्यादाविव आरोहयते हस्ती हस्तिपकान् इत्यादावपि यदेव पूर्वं कर्म्म तदेव कर्त्तेति 'एकधातौ'—इत्यनेन कर्मकर्त्तर्येवात्मनेपद भविष्यति किमनेन। सत्यम्। अकर्मकक्रियत्वाऽभावात्। अत्र कर्म्मण प्रयोजकव्यापारात् कर्तृत्वम्। एकधाताविल्यत्र तु सौकर्यादित्यऽनयोर्भेद॥—णिग इति किमिति। तदा णिगि णिग्विषये कर्त्ता यस्येति व्याख्येयम्॥—आरोहन्ति हस्तिनमिति। अत्रारोहयते

माभूत्। प्रत्यासत्तेश्च यस्यैव धातोरणिगवस्था तस्यैव धातोर्णिगवस्था गृह्यते न धात्वन्तरस्य। तेनेह न भवति। *आरुह्यमाणो हस्ती सेचयति पृष्ठं मूत्रेण। हस्तिपकैरारुह्यमाणो हस्ती स्थलमारोहयति मनुष्यान् इत्यत्र तु *सदृशधातुप्रयोगेऽपि पूर्वो हस्तिपककर्तृको रुहिः परश्च मनुष्यकर्तृक इति साधनभेदात् क्रियाभेदे धातुभेदः। अस्मृताविति किम्। स्मरति वनगुल्मं कोकिलः। स्मारयत्येनं वनगुल्मः। *कथं हन्त्यात्मान *घातयत्यात्मेति। अत्र ह्यात्मनोऽणिकर्मणो णिकर्तृत्व-मस्तीति। नैवम्। द्वावात्मानौ शरीरात्मान्तरात्मा च। तत्र भेदेनैव लोके नित्यमय प्रयोगः। हन्त्यात्मानमिति शरीरात्मनोऽन्तरात्मनो वा कर्मत्वम्। घातयत्या-त्मानमित्यपि तस्यैव कर्मत्वं न कर्तृत्वम् इति। ननु यदि अणिकर्मणो णिकर्तृतायां णिगन्तादात्मनेपदमिष्यते तर्हि शुष्यन्त्यातपे व्रीहयः शोषयते व्रीहीनातप इत्यादावधिकरणादेः कर्तृतायामात्मनेपदं न प्राप्नोति। न। *फलवत्कर्तरि भविष्यति। यद्येवमारोहयते हस्ती हस्तिपकानित्यादावपि तथैवास्तु। सत्यम्। किंतु फलवतः कर्मस्थक्रियाच्चान्यत्राय विधिः। तथा हि—लावयते केदारः भूषयते कन्या कारयते कटः गणयते गणः आरोहयते हस्ती स्वयमेवेत्यादौ कर्मस्थक्रियत्वात् 'एकधातौ कर्मक्रिययैकाकर्मक्रिये' (३।४।४६) इति *अनेनैवात्मनेपदं भवति। नन्वारोहयते हस्ती स्वयमेवेत्यस्यास्कन्दयते इति किलार्थः *तत्कथं कर्म-स्थक्रियता रुहेः। उच्यते। यदा न्यग्भावनार्थोऽयं तदा कर्मस्थक्रियत्वम्। तथाहि—आरोहन्ति हस्तिनं हस्तिपका इति *न्यग्भवनोपमर्जने न्यग्भावने रुहिर्वर्तते।

हस्तीत्यर्थे विवक्षते आत्मनेपद प्राप्त तत् णिग इति व्यावृत्त्या निषिध्यते ॥—आरुह्यमाणो हस्तीत्यादि। सिञ्चति मूत्र कर्तृ पृष्ठ कर्मतापन्न तत् सिञ्चत् हस्ती प्रयुङ्क्ते ॥—सदृशधातुप्रयोगेऽपी-ति। यथा ग्लानाय मुद्रा प्रत्यह दीयमाना सादृश्यात्त एव मुद्रा दीयन्ते इति व्यवह्रियते तथा भिन्नोऽपि रुहि सादृश्यादेकीक्रियते ॥—कथं हन्ति आत्मानमिति। य एव आत्मा अणिकर्म स एव णिकर्त्तेत्यात्मनेपद प्राप्नोतीति पराशय ॥—घातयत्यात्मेति। हन्त्यन्तरात्मान बाह्य वा चौरसत्क राजा तमेक घ्नन्तमऽपरो बाह्य आन्तरो वा प्रयुङ्क्ते इति स्थिति ॥—फलवत्कर्त्तरीति कृषीवलादे प्रशसादिकमातपस्य फलम् ॥—अनेनैवात्मनेपद भवतीति। न त्वनेनाऽप्राप्ते कर्म्मण कर्तृत्वाभावात् तथा कर्म्मस्थक्रियेऽप्राप्ति दर्शयति। कथा युक्त्या लुनाति केदार चैत्र। स एव विवक्षते नाह लुनामि लूयते केदार स्वयमेव। त स्वयमेव लूयमान चैत्र प्रयुङ्क्ते लावयति केदार चैत्र स एव विवक्षते नाह लावयामि अपि तु लावयते केदार स्वयमेवेत्यनया प्रक्रिययाऽनेन न प्राप्नोति अणिक्कर्म्मणोऽणिग्येव कर्तृताया सद्भावात्। एव भूषयते कन्या इत्यादिष्वपि। एतद्वृत्त्यभिप्रायेण कृतम्। यदा तु लुनाति केदार चैत्र त लुनन्त मैत्र प्रयुङ्क्ते लावयति केदार चैत्रेण मैत्र स एव विवक्षते नाह लावयामि चैत्रेण लावयते केदार स्वयमेवेति प्रक्रिया क्रियते तदाऽनेनापि प्राप्नोति अणिक्कर्म्मणो णिकर्तृताया सद्भावात् पर तदापि परत्वादेकधातावित्यनेनैव भवति। एवमन्येष्वपि। अत्र निर्वर्त्तना भूयोऽपि निर्वर्त्तना ततो निर्वर्त्तनम्। नन्वारोहयते हस्ती स्वयमेवेत्यस्या पश्चिम्यामवस्थाया प्रयोजकव्यापारेऽविवक्षिते निमित्ताभाव इति न्यायात् णिगोऽप्यभाव प्राप्नोति। नैवम्। 'णिश्रुश्या-त्मनेपद'–इति सूत्रे ण्यन्तानामेव त्रिक्ययोर्निषेधात् ॥—तत्कथमिति। गत्यर्थाना कर्तृनिष्ठव्यापारत्वेन कर्मस्थक्रियत्वासभव इति पाराशय यतो गम्यते ग्राम स्वयमेवेति न भवति कर्तृसमवेतत्वात् गमन-क्रियया। आस्कन्दनाक्रया हि हस्तिपककर्तृसमवेता न हस्तिकर्म्मयुक्तेति कथ कर्म्मस्थक्रियता रुहेरिति पराशय ॥—न्यग्भवनोपसर्जने इति। अण्यन्तस न्यग्भवन गौणत्वान्न विवक्ष्यते ण्यन्तस्य तु

स द्वितीयस्यामवस्थायाम् आरुह्यते हस्ती स्वयमेवेत्यस्यां कर्मकर्तृविषयो न्यग्भवनमात्रवृत्तिर्भवति । अथ चतुर्थ्याम् *अन्तर्भूततृतीयायाम् आरुह्यमाणं प्रयुञ्जत इति हस्तिपकव्यापारप्रधानायां णिगन्तः सन्नारोहयन्ति हस्तिनं हस्तिपकाः इत्यस्यां शुद्धारोहतिवन्न्यग्भवनोपसर्जने न्यग्भावने वर्तते । पुनर्यदा अस्यैव प्रयोजकव्यापाराविवक्षा तदा आरोहयते हस्ती स्वयमेवेत्यस्यां पञ्चम्यामवस्थायाम् आरुह्यते हस्ती स्वयमेवेतिवन्न्यग्भवनलक्षणस्य विशेषस्य हस्तिसमवेतत्वेनोपलम्भाल्लावयते केदार इत्यादाविव कर्मस्थक्रियत्वमस्त्येवेति न किंचिदनुपपन्नम् । तदुक्तं—' न्यग्भावना न्यग्भवनं रुहौ शुद्धे प्रतीयते । न्यग्भावना न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते । अवस्थां पञ्चमीमाहुर्ण्यन्ते *तां *कर्मकर्तरि । *निवृत्तप्रेषणाद्धातोः *प्राकृतेऽर्थे *णिगुच्यते ' इति ॥ ८८ ॥ ***प्रलम्भे गृधिवञ्च्योः ॥ ३ । ३ । ८९ ॥**

गृधिवञ्चिभ्यां णिगन्ताभ्यां प्रलम्भे वञ्चने वर्तमानाभ्यां कर्तर्यात्मनेपदं भवति । बटुं गर्धयते । *बटुं वञ्चयते । विप्रतारयतीत्यर्थः । प्रलम्भ इति किम् । *श्वानं गर्धयति । प्रलोभयतीत्यर्थः ॥ *अहिं वञ्चयति । गमयतीत्यर्थः । णिग आत्मनेपदविधानं सर्वत्राफलवदर्थम् ॥ ८९ ॥ ***लीङ्लिनोऽर्चाभिभवे चाच्चाकर्तर्यपि ॥ ३ । ३ । ९० ॥** लीयतिलिनातिभ्यां णिगन्ताभ्यामर्चाभिभवयोः प्रलम्भे चार्थे वर्तमानाभ्यां कर्तर्यात्मनेपदं भवति अनयोश्चान्तस्याकर्तर्यप्याकारो भवति । जटाभिरालापयते । परैरात्मानं पूजयतीत्यर्थः । श्येनो वर्तिकामपलापयते । अभिभवतीत्यर्थः । कस्त्वामुल्लापयते वञ्चयते इत्यर्थः । एष्विति किम् । बालकमुल्लापयति उत्क्षिपतीत्यर्थः । कथं तर्ह्युल्लापयसि मामित्युल्लापयेत्यत्र 'लीङ्लिनोर्वा' ( ४-२-९ ) इति भविष्यति । अकर्तर्यपीति किम् । जटाभिरालाप्यते जटिलेन । ङिच्छ्रानिर्देशो यौजादिकनिवृत्त्यर्थः ॥ ९० ॥ **स्मिङः प्रयोक्तुः स्वार्थे ॥ ३ । ३ । ९१ ॥** प्रयोक्तुः सकाशाद्यः स्वार्थः स्मयस्तत्र वर्तमानाण्णिगन्तात्स्मयतेः कर्तर्यात्मनेपदं भवति अस्य चान्तस्याकारोऽकर्तर्यपि भवति । जटिलो विस्मापयते । प्रयोक्तुः स्वार्थे इति किम् । करणात्स्वार्थे माभूत् । रूपेण विस्माययति । अकर्तर्यपीत्येव । विस्मापनम् । ङिन्निर्देशो यङ्लुपि न भवति । सेष्माययति ॥ ९१ ॥ **बिभेतेर्भीष् च ॥ ३ । ३ । ९२ ॥** प्रयोक्तुः सकाशात्स्वार्थे वर्तमानाण्ण्यन्ताद्बिभेतेः कर्तर्यात्मनेपदं भवति अस्य च भीषादेशः । पक्षेऽन्तस्याकारश्चाकर्तर्यपि भवति । मुण्डो भीषयते । मुण्डो भापयते । प्रयोक्तुः स्वार्थे इत्येव । कुञ्चिकया भाययति । अकर्तर्यपीत्येव । भीषा । भापनम् । तिव्निर्देशो यङ्लुपि न भवति । मुण्डो बेभाययति ॥ ९२ ॥ ***मिथ्याकृगोऽभ्यासे ॥ ३ । ३ । ९३ ॥**

---

गौणमपि पार्थक्येन विवक्ष्यत इति पञ्चैवावस्था न षट् ॥—अन्तर्भूततृतीयायामिति । अन्तर्भूतन्यग्भवनरूपतृतीयावस्थायामित्यर्थः ॥—तामिति । यत्तदोर्नित्याभिसम्बन्धात् यसा किमित्याह ॥—कर्मकर्त्तरि विवक्षिते ॥—निवृत्तप्रेषणा निवृत्तप्रयोजकव्यापारा द्धातोः प्राकृतेऽर्थे न्यग्भवनरूपे णिजुच्यते णिजिति मतान्तरेण । स्वमते तु णिगेव ॥—प्रलम्भे—॥—बटुं वञ्चयते इति । वचिणो णिजि सिद्ध णिगन्तस्य तु विध्यर्थं चौरादिकाभिव णिचि णिगन्तादात्मनेपदमित्येके । णिगन्त एव चाऽयं प्रतारणे वर्त्तते स्वभावात् ॥ - श्वानं गर्द्धयतीति ॥ अत्र फलवत्त्वेऽपि नात्मनेपदम् । 'अणिगि प्राणि— इति निषेधात् ॥ —अहिं वञ्चयतीति । अकर्म्मकत्वादणिगि प्राणीति निषेधः । सकर्म्मकत्वे तु फलवत्यात्मनेपदं भवत्येव ॥—लीङ्लि--॥ अर्चा मुख्य एव धात्वर्थः । अत एव उदाहरणे पर्यायो णिगन्त कथितः यथा पूजयति अर्चयतीत्यर्थः । अभिभवप्रलम्भौ तु णिगन्त एव धातौ वर्त्तेते अतोऽणिगन्तौ पर्यायावुक्तौ । यदि तु मुख्यौ स्यातां धातोस्तदानीं तौ प्रयोजकव्यापारेण व्याख्येयाताम् ॥—मिथ्याकृ—॥

मिथ्याशब्दयुक्तो यः कृग् तस्माण्णिगन्तादभ्यासेऽर्थे वर्तमानात् कर्तर्यात्मनेपदं भवति । अभ्यासः पुनः पुनः क्रियाभ्यावृत्तिः । *पदं मिथ्या कारयते । स्वरादिदोंपदुष्टमसकृदुच्चारयति पाठयतीत्यर्थः । आत्मनेपदेनैव क्रियाभ्यावृत्तेर्द्योतितत्वात् आभीक्ष्ण्ये द्विर्वचनं न भवतीति *केचित् । मिथ्येति किम् । पदं साधु कारयति। कृग इति किम् । पदं मिथ्या वाचयति । अभ्यास इति किम् । सकृत्पदं मिथ्या कारयति ॥९३॥ ***परिमुहायमायसपाट्‌धेवदवसदमादरुचनृतः फलवति । ३। ३ ।९४ ॥** फलवतीति भूम्न्यतिशायने वा मतुः । तेन यत्क्रियायाः प्रधानं फलमोदनादि यदर्थमियमारभ्यते तद्वति कर्तरि विवक्षिते परिपूर्वान्मुहेराङ्‌पूर्वाभ्यां यमियसिभ्यां पिबतिट्‌धेवदवसतिदमादरुचनृतिभ्यश्च णिगन्तेभ्यः कर्तर्यात्मनेपदं भवति । परिमोहयते चैत्रम् । *आयामयते सर्पम् । आयासयते मैत्रम् । पाययते बटुम् । धापयते शिशुम् । वादयते शिशुम् । वासयते पान्थम् । दमयतेऽश्वम् । आदयते चैत्रेण । अदेर्नेच्छन्त्यन्ये । आदयति चैत्रेण । रोचयते मैत्रम् । नर्तयते नटम् । पिबत्यत्तिट्‌धेधातूनामाहारार्थत्वादौदासीन्यनिवृत्त्यर्थतायामकर्मकत्वाच्च नृतेश्चलनार्थत्वाच्च शेषाणां स्वरूपतो विवक्षातो वाऽकर्मकत्वात् *उत्तराभ्यां परस्मैपदे प्राप्ते वचनम् । पा इति ट्‌धेसाहचर्यात्पिबतेर्ग्रहणम् न पातेः, वदसाहचर्याच्च वस इति वसतेर्न वस्तेरिति पाति चैत्रो नोदास्ते, पालयति चैत्रम् , वस्ते मैत्रो न नग्नः, वासयति मैत्रम् इत्येव भवति ॥ ९४ ॥ ***ईगितः ॥ ३ । ३ । ९५ ॥** ईकारेतो गकारेतश्च धातोः फलवति कर्तर्यात्मनेपदं भवति । यजी, यजते । डु पचींष् पचते । लक्षीण् लक्षयते । डु कृंग्, कुरुते । डुडुभृंग्क् , बिभृते । कण्डूग् कण्डूयते । णिगन्त, *गमयते । ईगित इति किम् । गच्छति । चोरयति । फलवतीत्येव । यजन्ति याजकाः । पचन्ति पाचकाः। कुर्वन्ति कर्मकराः । गमयत्यश्वं दमकः । नात्र स्वर्गौदनादि प्रधानं फलं कर्त्रा संबध्यते। यच्च दक्षिणावेतनादि संबध्यते न तत् क्रियायाः फलं प्रधानम् इति । *तच्चैतत्स्वार्थलक्षण फलं सदसद्वा विवक्षानिबन्धनमेव ग्राह्यम् । तथैव लोके व्यवहारात् । तथाहि--क्वचिदसदपि सद्विवक्ष्यते । यथा शोपयते व्रोहीनातपः । *शब्दः प्राक् स्वार्थमभिधत्ते ततो द्रव्यम् । परकर्मण्यपि प्रवृत्ताः कदाचिदाहुर्यजामहे इमे पचामहे । यत्नादस्मदीयमेवैतदिति क्वचि-

---

मिथ्यायुक्त कृग् मयूरादित्वात् युक्तशब्दलोप । यद्वा मिथ्याशब्दात्सहार्थे तृतीयैकवचने 'लुगात—' इत्यालोप 'अव्ययस्य' इति टालोपो वा ॥ तदा तु युक्तार्थस्तृतीययेव कथ्यते ॥—पद मिथ्या कारयते इति । मिथ्येति पदसमानाधिकरण विशेषण मिथ्याभूत पद करोति उच्चरति कश्चित्तमन्यः प्रयुङ्क्ते णिग् 'अव्ययस्य' इत्यमो लुप् न भवति ॥—केचिदिति । स्वमते तु द्विर्वचन भवत्येव शब्दशक्तिस्वाभाव्यात् । केवलेनात्मनेपदेनाभ्यासो वक्तु न शक्यते यथा भोज २ व्रजतीत्यादावाभीक्ष्ण्ये आगतोऽपि णम् द्विर्वचनमाकाङ्क्षति इति पद मिथ्या कारयत इति प्रयोगो ज्ञेय । वृत्तो त्वेकदेशेनोदाहारि ॥—केचिदिति । न्यासकारादय । तदपरे न मृष्यन्ति यत एवमभ्युपगम्यमानेऽभ्यासे द्योतकस्यात्मनेपदस्याभावे पद साधु कारयतीत्यादिप्रत्युदाहरणेषु कस्मान्न भवति । न चाभ्यासो नास्तीति वाच्य अङ्गवैकल्यप्रसङ्गात्तस्मादेकदेशेनेत्यायुक्त स एव पक्षो न्याय्य ॥—परिमुहा—॥—आयामयते सर्पमिति । काश्चियम परिवेषण इति पठति तन्मताभिप्रायेण न ह्रस्व । स्वमते तु भवत्येव ॥—उत्तराभ्यां परस्मैपद इति । पिबत्यत्तिट्‌धेधातूनामाहारार्थत्वान्नृतेश्चलनार्थत्वात् 'चल्याहारार्थ'—इत्यनेन नृतर्वजितानामऽमीषामकर्मकत्वे तु 'अणिगि प्राणि'—इत्यनेनेत्यर्थ । स्वरूपतो वस अन्येषामऽविवक्षातश्चाऽकर्मकत्वे अनेनैव प्राप्ते ॥—ईगितः—॥—गमयते इति । गति पादविहरण चलन तु स्थितस्यैव पदार्थस्येति 'चल्याहारार्थ'—इति न परस्मैपदमत्र ॥—
—स्वार्थलक्षणमिति । अर्थ्यत इत्यर्थोऽर्थनीय. स्वस्यार्थ स्वर्गादि स लक्षण यस्य ॥—शब्द प्राक् स्वार्थमिति । यथा गोशब्द. स्वार्थ सामान्य गोत्व प्राक् ततो गोलक्षण द्रव्यम् । पूर्वाचा-

तसदप्यसद्विवक्ष्यते। *यथा, इमे ब्रूमः। अवचनप्रतिषेधपरत्वेन प्रवृत्तेर्विवक्षितत्वात्। एवम् *अगमकत्वादिति ब्रूमो न ब्रूमोऽपशब्दः स्यादिति। तदाहुः—क्रियाप्रवृत्तावाख्याता कैश्चित् *स्वार्थपरार्थता। असती वा सती वापि विवक्षितनिबन्धना' इति। केचित्तु णिग्वर्जितादीगितो धातोर्णिगर्थे एव प्रेरणाध्येषणविशेषे *प्रतिविधाननाम्नि वर्तमानादात्मनेपदमिच्छन्ति। पचते। पाचयतीत्यर्थः। केशश्मश्रु वपते। वापयतीत्यर्थः। वेदो वैधर्म्यं विधत्ते। विधापयतीत्यर्थः। इत्यादि। यदाहुः—'क्रीणीष्व वपते धत्ते मिनुते चिनुतेऽपि च॥ आप्तप्रयोगा दृश्यन्ते येषु ण्यर्थोऽभिधीयते' इति। एतच्च श्रोत्रियमतमित्युपेक्ष्यते॥ ९५॥

*ज्ञोऽनुपसर्गात्॥ ३। ३। ९६॥ अविद्यमानोपसर्गाज्जानातेः फलवति कर्तर्यात्मनेपदं भवति। गां जानीते। अश्वं जानीते। अनुपसर्गादिति किम्। स्वर्गं प्रजानाति। फलवतीत्येव। परस्य गां जानाति। अकर्मकात् *पूर्वेण सिद्धे सकर्मकार्थं वचनम्॥ ९६॥ **वदोऽपात्॥ ३। ३। ९७॥** अपपूर्वाद्वदतेः फलवति कर्तर्यात्मनेपदं भवति। एकान्तमपवदते। अपादिति किम्। वदति। फलवतीत्येव। अपवदति परं स्वभावतः॥ ९७॥ ***समुदाङो यमेरग्रन्थे॥ ३। ३॥ ९८॥** समुदाङ्भ्यः पराद्यमेरग्रन्थविषये प्रयोगे फलवति कर्तर्यात्मनेपदं भवति। संयच्छते व्रीहीन्। उद्यच्छते भारम्। आयच्छते वस्त्रम्। समुदाङ इति किम्। नियच्छति वाचम्। अग्रन्थ इति किम्। वैद्यश्चिकित्सामुद्यच्छति। *चिकित्साग्रन्थे उद्यमं करोतीत्यर्थः। फलवतीत्येव। संयच्छति उद्यच्छति आयच्छति परस्य वस्त्रम्। आङ्पूर्वादकर्मकात् स्वाङ्गकर्मकाच्च 'आङो यमहनः' (३-३-८६) इति सिद्धेऽन्यकर्मकार्थं वचनम्॥ ९८॥ **पदान्तरगम्ये वा॥ ३। ३। ९९॥** अनन्तरसूत्रपञ्चकेन यदात्मनेपदमुक्तं तत्पदान्तराद्गम्ये फलवति कर्तरि वा भवति। स्वं शत्रुं परिमोहयते परिमोहयति वा। स्वं यज्ञं यजते यजति वा। स्वं कटं कुरुते करोति वा। स्वमश्वं गमयते गमयति वा। स्वं शिरः कण्डूयते कण्डूयति वा। स्वां गां जानीते जानाति वा। स्वं शत्रुमपवदते अपवदति वा। स्वान् व्रीहीन् संयच्छते संयच्छति वा॥ ९९॥ **शेषात्परस्मै॥ ३। ३। १००॥** पूर्वप्रकरणेनात्मनेपदानियमः कृतः। परस्मैपदं तु अनियतमिति नियमार्थमिदम्। उपयुक्तादन्यः शेषः। येभ्यो धातुभ्यो येन विशेषेणात्मनेपदमुक्तं ततोऽन्यस्मादेव धातोः कर्तरि परस्मैपदं भवति। अनुबन्धोपसर्गार्थोपपदप्रसयभेदाच्चानेकधा शेषः। अनुबन्धशेषात्, भवति। अत्ति। बोभवीति। दीव्यति। गोपायति। पणायति। पुत्रीयति। पुत्रकाम्यति। अश्वति। मन्तूयति। उपसर्गशेषात्, प्रविशति। अधितिष्ठति। आगच्छति। विपश्यति। अर्थशेषात्, करोति। नयति। वदति। उपपदशेषात्, गृहे संचरति। साधुभ्यः संप्रयच्छति।

---

र्यसंस्कृतेन द्वयति यथाऽत्र शब्दस्य फलवत्त्वमसदपि विवक्षितम्॥—**अगमकत्वादिति**। यथा ऋद्धस्य राज्ञः पुरुष इत्यत्र समासो न भवतीति अगमकत्वात् ब्रूम विवक्षितार्थाप्रतिपादकत्वात् न ब्रूमोऽपशब्द स्यात् लक्षणादिदोषदुष्ट इति न ब्रूम॥—**स्वार्थपरार्थतेति**। फलवत्ताफलवत्तेत्यर्थ। स्वस्मै इयं परस्मै इय क्रियाप्रवृत्ति कर्मधारयात् स्वार्थपरार्थतो भावे तल्। मतान्तरेण पुंवद्भाव। स्वमते तु 'त्वते गुण' इति गुणवचनस्य भवति॥—**प्रतिविधाननाम्नीति**। पूर्वेषा प्रयोजकव्यापारस्य प्रतिविधान इति सज्ञा। ततो विधानमर्थात्प्रयोज्यव्यापार प्रतिगत प्रतिविधान तन्नाम यस्य णिगर्थस्य तस्मिन्॥—**ज्ञोऽनुप—**॥—**पूर्वेणेति**। ज्ञ इत्यनेनेत्यर्थ॥—**समुदाङो—**॥—**चिकित्साग्रन्थ** इति। चिकित्साहेतुत्वात् ग्रन्थोऽपि चिकित्सा चिकित्स्यतेऽस्या इति वा

कर्तरि परस्मैपदं भवति । साधुः पदं कारयति । प्रसयशेपात्, शत्स्यति । मुमूर्षति ॥ १०० ॥ **परानोः कृगः ॥ ३ । ३ । १०१ ॥** परानुभ्यां परात्करोतेः कर्तरि परस्मैपदं भवति । गन्धनादावर्थे ञिच्चात्फलवति च प्राप्तस्यात्मनेपदस्यापवादोऽयम् ॥ १०१ ॥ पराकरोति । अनुकरोति । गङ्गामनु कुरुते तप इति नात्र करोतिरनुना संबध्यते । प्रतिक्षिपति । अभिक्षिपति । अतिक्षिपति बटुम् । प्रति क्षिपते ***प्रत्यभ्यतेः क्षिपः ॥ ३ । ३ १०२ ॥** प्रत्यभ्यतिभ्यः परात् क्षिपेः कर्तरि परस्मैपदं भवति । प्रतिक्षिपति । अभिक्षिपति । अतिक्षिपति बटुम् । प्रति क्षिपते भिक्षामिति नायं क्षिपिः प्रतिना संबध्यते । *ईदित्त्वात्फलवति प्राप्तस्यात्मनेपदस्यापवादोऽयम् । एवमुत्तरसूत्रद्वयमपि ॥ १०२ ॥ **प्राद्वहः ॥ ३ । ३ । १०३ ॥** प्रपूर्वाद्वहतेः कर्तरि परस्मैपदं भवति । प्रवहति ॥ १०३ ॥ **परेर्मृषश्च ॥ ३ । ३ १०४ ॥** परिपूर्वान्मृषेर्वहेश्च कर्तरि परस्मैपदं भवति । परिमृष्यति । परिवहति । मैत्रं परि मृष्यते धनं परि वहते इत्यत्र न परिर्मृषिवहिभ्यां संबध्यते । वहेर्नेच्छन्त्यन्ये ॥ १०४ ॥ **व्याङ्परे रमः ॥ ३ । ३ । १०५ ॥** व्याङ्परिभ्यः पराद्रमेः कर्तरि परस्मैपदं भवति । विरमति । आरमति । परिरमति । इदित्त्वादात्मनेपदस्यापवादः ॥ १०५ ॥ ***वोपात् ॥ ३ । ३ । १०६ ॥** उपपूर्वाद्रमेः कर्तरि परस्मैपदं भवति वा । भार्यामुपरमति उपरमते वा । उपसंप्राप्तिपूर्विकायां रतौ वर्तमानोऽन्तर्भूतणिगर्थो वा रमिः सकर्मकः । उपरमति *उपरमते वा संतापः । उपरमति उपरमते वाबद्यात् । उपाद्रमेः सकर्मकात्परस्मैपदमेवेत्येके । आत्मनेपदमेवेत्यन्ये ॥ १०६ ॥ ***अणिगि प्राणिकर्तृकानाप्याण्णिगः ॥ ३ । ३ । १०७ ॥** अणिगवस्थायां यः प्राणिकर्तृकोऽकर्मकश्च धातुस्तस्माण्णिगन्तात्कर्तरि परस्मैपदं भवति । आस्ते चैत्र आसयति चैत्रम् । शेते मैत्रः शाययति मैत्रम् । णिजवस्थायां प्राणिकर्तृकानाप्यात् णिगन्तान्यथा स्यात् । *आरोहयते । अणिगिति गकारः किम् । णिजवस्थायां प्राणिकर्तृकानाप्यात् णिगन्तान्यथा स्यात् । अणिगीति किम् । स्वयमेवारोहयमाणं हस्तिनं प्रयुङ्क्ते *आरोहयते । अणिगिति गकारः किम् । 'प्राण्यौषधिवृक्षेभ्यः' (६-२-३१) इति पृथग्निर्देशादिह लोके प्रतीता एव प्राणिनो गृह्यन्ते । शुष्यन्ति व्रीहयः । शोषयते व्रीहीनातपः । आस्ते । शेते । गकारः किम् । अणिगवस्थायां चेतयमानं प्रयुङ्क्ते चेतयतीति । प्राणिकर्तृकेति किम् । शुष्यन्ति व्रीहयः । शोषयते व्रीहीनातपः । णिग इति किम् । आस्ते । शेते । अनाप्यादिति हि कटं कुर्वाणं प्रयुङ्क्ते कटं कारयते ।

'शसिप्रत्ययात्' । तदा बाहुलकात् सीत्वं सा चाऽसौ ग्रन्थश्च ॥—प्रत्यभ्यते.—॥—ईदित्त्वादिति । इह क्षिपिस्तौदादिक इदित् गृह्यते न तु दैवादिक परस्मैपदी तस्यानुबन्धशेषेण 'शेपात्' इत्यनेनैव सिद्धत्वात् । न च वाच्यमस्यापि नियमार्थं कस्मान्न भवति विधिनियमसम्भवे विधेरेव ज्यायस्त्वम् ॥—वोपात् ॥–उपरमते वा सताप इति । निवृत्त्यर्थ पुनरुपपूर्वोऽप्यकर्मक इति दर्शयति ॥—अणिगि प्रा—॥—आरोहयत इति । आरोहयते हस्तिना हस्तिपक इति सकलप्रयोग । अत्र चावस्थापञ्चक पूर्ववत् विधाय षष्ठयामऽवस्थाया स्वयमेवारोहयमाण हस्तिन प्रयुङ्क्ते इत्यस्या परस्मैपद प्राप्त तदणिगीति व्यावृत्त्या निषिध्यते । ननु द्वितीयस्यामवस्थायामारुह्यते हस्ती स्वयमेवेत्यस्यामणिगन्ताया धातु' प्राणिकर्तृकोऽनाप्यश्चास्ति तत्कथ न भवति परस्मैपदम् । सत्यम् । तदपेक्षया चतुर्थ्यामुत्पन्नमेवारोहयन्ति हस्तिन हस्तिपका इति । प्रस्तुते त्वारोहयते हस्ती स्वयमेवेत्यस्या पञ्चम्या अवस्थाया आनन्तर स्वयमेवारोहयमाण हस्तिन प्रयुङ्क्ते इत्यस्या षष्ठयामवस्थाया णिगि प्राप्तमनने निषिध्यते तदा हि णिगवस्थायामनाप्यो धातुर्नाणिगवस्थायाम् । पञ्चम्यामवस्थायामय धातुर्नित्याकर्म्मकोऽतो नित्याकर्म्मकद्वारेण णिगन्तस्य धातो षष्ठयामऽवस्थाया 'वाकर्मणाम्'—इत्यनेन हस्तिन'

प्राणिकर्तृकानाप्याण्णिजन्तान्माभूत्। चेतयते। 'इङ्गितः'(३-३-९५)इत्यात्मनेपदस्यापवादोऽयम् ॥१०७॥ *चल्याहारार्थेङ्बुधयुधप्रद्रुस्नुनशजनः॥३।३।१०८॥ *चलिरर्थः कम्पनम्। तदर्थेभ्य आहारार्थेभ्य इङादिभ्यश्च णिगन्तेभ्यः कर्तरि परस्मैपदं भवति। चल्यर्थः, चलयति *कम्पयति चोपयति शाखाम्। आहारार्थ, निगारयति भोजयति आशयति चैत्रमन्नम्। पय उपयोजयते चैत्रेणेति युजेरनाहारार्थत्वात् न भवति। इङ्, सूत्रमध्यापयति शिष्यम्। बुध्, बोधयति पद्मं रविः। बोधयति धर्मं शिष्यम्। युध्, योधयति काष्ठानि। प्रु, प्रावयति राज्यं प्रापयतीत्यर्थः। द्रु, द्रावयत्ययः। विलाययतीत्यर्थः। स्रु, स्रावयति तैलम्। स्यन्दयतीत्यर्थः। नश्, नाशयति पापम्। जन्, जनयति पुण्यम्। *प्रुस्रुद्रूणामचलनार्थार्थं शेषाणां सकर्मकार्थमप्राणिकर्तृकार्थं च वचनम् ॥ १ ८ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ तृतीयस्याध्यायस्य तृतीयः पादः समाप्तः ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ श्रीदुर्लभेशद्युमणेः पादास्तुष्टुविरे न कैः ॥ लुलद्भिर्मौदिनोपालैर्वालिखिल्यैरिवाग्रतः ॥ १ ॥

# चतुर्थः पादः

*गुपौधूपविच्छिपणिपनेरायः ॥ ३ । ४ । १ ॥ गुपादिभ्यो धातुभ्यः पर आयप्रत्ययो भवति स चानिर्दिष्टार्थत्वात् स्वार्थे । गोपायति । धूपा-

---

कर्मत्व प्राप्तमऽणिकर्त्तैत्यशेन निषिध्यते ॥—चल्याहारा—॥—चलिरर्थ इति । चलिलक्षणोऽर्थं क कम्पनमनयापि युक्त्या यातीति षष्ठया न व्याख्येयम् ॥—कम्पयतीति । कथ शिर कम्पयते युवेत्यत्रात्मनेपदम् । सत्यम् । णिगद्वयमत्र । कथ कम्पमान शिर आत्मा प्रयुङ्क्ते त युवा प्रयुङ्क्ते ततो नात्र कम्पन कि तर्हि कम्पना चलिरर्थ कम्पनमिति चोक्तम् । ननु बुधिर्भ्वादिषु द्वि पठयते एको गित् अपरश्च परस्मैपदी । दैवादिकोऽप्यात्मनेपदी तत् कस्य ग्रहणम् । उच्यते । नात्र निरनुबन्धग्रहणपरिभाषोपतिष्ठतेऽनेन बुधेर्ण्यन्तस्य परस्मैपदविधानसामर्थ्यात् । यदि हि भौवादिकस्य बुधे परस्मैपादिन एव निरनुबन्धत्वाद्ग्रहण स्यान्नाऽन्यस्य ततश्च बोधयति बोधयते इति नित्यमेव धातुभेदेन रूपद्वयमविचल स्यात्तदनेन बुधग्रहणेन कि कृत स्यात् । अर्थस्वरूपयोरभेदात् इह बुधिग्रहण बोधयत इति प्रयोगो माभूदेवमर्थ कृत तस्माद्बुधग्रहणसामर्थ्यादविशेषेणेह बुध अवगमने बुधृग् बोधने बुधिच् ज्ञाने इति बुधीना ग्रहण तेन बोधयतीति नित्यमेव भवति ॥—प्रद्रुस्रूणामिति । प्राप्तिविलयादिभ्यो हि चलनस्यान्यत्वात् तथाहि चलन कायव्यापारविशेष प्राप्ते कारण स्यन्दनविलयावपि प्राप्तिविशेषौ ॥ इत्याचार्य०—श्रीदुर्लभेशद्युमणेः पादास्तष्टुविरे न कै । लुलद्भिर्मौदिनोपालैर्वालिखिल्यैरिवाग्रत ॥ १ ॥ वालिग्वि खिल्यन्ते 'शिक्यास्य' इति निपात्यते । ईश्वरविवाहे होमादिक्रिया कुर्वतो ब्रह्मण रक्षाबन्धाद्गौरीरूपदर्शनक्षुभितस्य वीर्यमपतत् तच्च व्रीडया तेनोत्पुसितुमारब्ध तस्माच्चाऽमोघत्वेनाब्रह्मण्यमब्रह्मण्यमिति ब्रुवाणा अष्टाशीतिसहस्रसख्या ऋषय उदतिष्ठन् । ते च चतुर्मुखचरणाक्रान्तत्वेनाङ्गुष्ठप्रमाणा अभवन्नित्यागम ॥--गुपौधूप—॥ आयस्यादन्तत्वे अजुगो-

यति । *विच्छायति । पणायति । व्यवहरति स्तौति चेत्यर्थः । न चोपलेभे वणिजां पणायाः । पनायति । व्यवहारार्थात् *पणेर्नेच्छन्त्यन्ये । शतस्य पणते । अनुबन्धस्याशवि आयप्रत्ययाभावपक्षे चरितार्थत्वादायप्रत्ययान्ताभ्यां पणिपनिभ्यामात्मनेपदं न भवति । गुपावित्यौकारो *गुपि गोपने इत्यस्य निवृत्त्यर्थः *यङ्लुप्निवृत्त्यर्थश्च ॥ १ ॥ *कमेर्णिङ् ॥ ३ । ४ । २ ॥ कमेर्धातोः स्वार्थे णिङ् प्रत्ययो भवति । कामयते । *णकारो वृद्ध्यर्थः । *ङकार आत्मनेपदार्थः ॥२॥ *ऋतेर्ङीयः ॥ ३ । ४ । ३ ॥ ऋत घृणागतिस्पर्धेषु इत्यस्माद्धातोः स्वार्थे ङीयः प्रत्ययो भवति । ऋतीयते । ङकार *आत्मनेपदाद्यर्थः ॥ ३ ॥ अशवि ते वा ॥ ३ । ४ । ४ ॥ गुपादिभ्योऽशवि विषये ते आयादयो वा भवन्ति । गोपायिता । गोप्ता । धूपायिता । धूपिता । विच्छायिता । विच्छिता । पणायिता । पणिता । पनायिता । पनिता । कामयिता । कमिता । ऋतीयिता । अर्तिता ॥ ४ ॥ *गुप्तिजो गर्हाक्षान्तौ सन् ॥ ३ । ४ । ५ ॥ गुप्तिज् इत्येताभ्यां यथासंख्य गर्हायां क्षान्तौ च वर्तमानाभ्यां स्वार्थे सन् प्रत्ययो भवति । जुगुप्सते । गर्हते इत्यर्थः । तितिक्षते । सहते इत्यर्थः । गर्हाक्षान्ताविति किम् । गोपनम् । गोपयति । तेजनम् । तेजयति । अनयोरर्थान्तरेऽपि *त्यादयो नाभिधीयन्त इत्यत्यादिना प्रत्युदाहृतम् । एवमुत्तरसूत्रद्वयेऽपि प्रायेण ज्ञेयम् । *अकारः सन्ग्रहणेषु सामान्य-

---

पायदित्यादि सिद्धमऽन्यथाऽदन्तत्वाभावे 'उपान्त्यस्य'—इति ह्रस्वत्वे अजुगोपयदित्यनिष्टं स्यात् ॥—**विच्छायतीति** । ननु विच्छेस्तौदादिकत्वेन शविषयत्वात् शव्विषयाऽभावाद्विकल्प प्राप्नोति । नैवम् । शवोपवादत्वात् शप्रत्ययस्यापि शव्शब्देनाभिधानादऽदोष एव चाशवीत्यनेनाशितीत्यर्थ सिद्धो भवति । अशितीत्येव वा पठनीय धातुपारायणकृता तु मेने विच्छायति विच्छतीति । शतरि 'अवर्णादश्न'—इति वा अन्तादेश विच्छतीविच्छन्ती स्त्री कुले वा । द्रमिलास्तु शे नित्यमाय तुदादिपाठबलाच्चायव्यवायेऽपि पक्षेऽन्ताभावमिच्छन्ति विच्छायन्ती विच्छायती । यथा जुगुप्सते इति सना व्यवधानेऽपि आत्मनेपदम् ॥—**पणेर्नेच्छन्त्यन्ये** इति । जयादित्यप्रभृतय । पनि स्तुत्यर्थस्तत्साहचर्यात्पणेरपि स्तुत्यर्थमादाय इति व्याख्यानयन्ति ॥—**गुपि गोपन इत्यस्य निवृत्त्यर्थ इति** । गुपण् भासार्थं गुपच् व्याकुलत्वे इत्यनयोस्तु धूपसाहचर्यान्निरास । ननु धूपश्चुरादिरप्यस्ति । सत्यम् । अणिजन्तविच्छसाहचर्यात् भौवादिकस्यैव धूपस्य ग्रहणम् । ननु विच्छिरपि भासार्थश्चुरादिस्तत्कथ तेन साहचर्यम् । सत्यम् । तस्याऽणिजन्ताभ्या पणिपनिभ्या साहचर्यान्निरास ॥—**यङ्लुप्निवृत्त्यर्थश्चेति** । ननु यङ्प्रत्ययस्य प्राप्तिरेव नास्ति आयप्रत्ययेऽनेकस्वरत्वात् तत्कथ यङ्लुप्निवृत्त्यर्थश्चेत्युक्तम् । सत्यम् । अशर्वाविषये विकल्पितस्यायस्य प्रथम यडि प्रकृतिग्रहणेति न्यायात्प्राप्ति ॥—**कमेर्णिङ्** ॥—**णकारो वृद्ध्यर्थ** इति । यद्येवम् 'अमोऽकम्यऽमिचम' इत्यत्र कमे प्रतिषेधो व्यर्थस्तेन ण्यस्य ह्रस्वत्व निषिध्यते ह्रस्वत्वस्य च णित्करणसामर्थ्यात् यासौ वृद्धि प्रवर्त्तते तयेव बाध सपन्न इति किमर्थ प्रतिषेध इति शेष । सत्यम् । णिङऽभावपक्षे यदा णिगुत्पद्यते तदा ह्रस्वत्व मा प्रापत् वृद्धिरेव श्रूयतामित्येवमर्थ प्रतिषेध । 'णेरनिटि' इति च सामान्यग्रहणार्थौ णकारोऽर्थवान् इति प्रतिषेधाभावे ह्रस्व स्यादिति ॥—**ङकार आत्मनेपदार्थ** इति । धात्वनुबन्धस्य अशवि चारितार्थत्वात्तदन्तस्य न प्राप्नोति ॥—**ऋतेर्ङीयः** ॥—आर्त्तितीयदित्यत्र फलमदन्ततया ङीयस्य अन्यथा आर्त्तितियदिति स्यात् ॥—**आत्मनेपदाद्यर्थ** इति । आदिपदात् गुणाभाव ॥—**गुप्तिजो**—॥—**त्यादय** इति । त्यादिसमानार्थत्वाच्छत्रानशावपि । केचिच्छत्रानशाविच्छन्ति तेन गोपमान तेजमान केतन्त प्रयुङ्क्ते इत्यपि भवति । प्रायेणेति भणनात् गोपते तेजते केतति बधते इत्याद्यपि । अत एव रसवाचकतिक्तशब्दसाधनाय तेजते इति वाक्य कृत क्षीरस्वामिना । 'पुतापित्त'—इति साधु ॥—**अकार सन्ग्रहणेष्विति** । अन्यथेच्छासन एव ग्रहण स्यात्

ग्रहणार्थः । नकारः सन्यङश्चेत्यत्र विशेषणार्थः ॥ ५ ॥ *कितः संशयप्रतीकारे ॥ ३ । ४ । ६ ॥ कितो धातोः संशये प्रतीकारे च वर्तमानात् स्वार्थे सन् प्रत्ययो भवति । विचिकित्सति । संशेते इत्यर्थः । व्याधिं चिकित्सति । प्रतिकरोतीत्यर्थः । *निग्रहविनाशौ प्रतीकारस्यैव भेदौ तेनात्रापि भवति । क्षेत्रे चिकित्स्यः पारदारिकः । निग्राह्य इत्यर्थः । चिकित्स्यानि क्षेत्रे तृणानि विनाशयितव्यानि इत्यर्थः । संशयप्रतीकार इति किम् । केतनम् । केतयति ॥ ६ ॥ *शान्दान्मान्वधान्निशानार्जवविचारवैरूप्ये दीर्घश्चेतः ॥ ३ । ४ । ७ ॥ शान्दान्मान्वध् इत्येतेभ्यो यथासंख्यं निशाने आर्जवे विचारे वैरूप्ये च वर्तमानेभ्यः स्वार्थे सन् प्रत्ययो भवति दीर्घश्चैषा द्विर्वचने सति पूर्वस्येकारस्य । शीशांसते । शीशासति । दादासति । दीदांसते । मीमांसते । बीभत्सते । अर्थनिर्देशः किम् । अर्थान्तरे माभूत् । निशानम् अवदानम् । *अच् । अवमानयति । बाधयति ॥ ७ ॥ *धातोः कण्ड्वादेर्यक् ॥ ३ । ४ । ८ ॥ द्विविधाः कण्ड्वादयः धातवो नामानि च । कण्ड्वादिभ्यो धातुभ्यः स्वार्थे यक्प्रत्ययो भवति । कण्डूयति । कण्डूयते । महीयते । मन्तूयति । धातोरिति किम् । कण्डूः । कण्ड्वौ । *कण्ड्वः । *यकः कित्त्वाद्धातोरेवायं विधिः । धातुग्रहणम् *उत्तरार्थमिह सुखार्थं च ॥ कण्डूग्, गकारः फलवति 'ईगितः' ( ३ । ३ । ९५ ) इत्यात्मनेपदार्थः । महीङ् हृणीङ् वेङ् लाङ् 'ङकार आत्मनेपदार्थः । मन्तु वल्गु असु वेट् लाट् । वेट्लाट् इत्यन्ये । लिट् लोट् उरस् उपस् इरस् तिरस् इयस् इमस् अस् पयस् संभूयस् दुवस् दुरज् भिषज् भिष्णुक् रेखा लेखा एला वेला केला खेला खल इत्यन्ये । गोधा मेधा मगध इरध इषुध कुषुम्भ सुख दुःख अगद गद्गद गद्गदङित्येके । तरण वरण उरण तुरण पुरण भुरण वुरण भरण तपुस तम्पस अरर सपर समर इति कण्ड्वादिः ॥ ८ ॥ *व्यञ्जनादेरेकस्वराद्भृशाभीक्ष्ण्ये यङ्वा ॥ ३ । ४ । ९ ॥ गुणक्रियाणामधिश्रयणादीनां *क्रियान्तराव्यवहितानां *साकल्येन संपत्तिः *फलातिरेको वा भृशत्वम् । *प्रधानक्रियाया विच्छेदादेः क्रियान्तराव्यवधानेनावृत्तिराभीक्ष्ण्यम् । तद्विशिष्टेऽर्थे वर्तमानाद्धातोर्व्यञ्जनादेरेकस्वराद्यङ्प्रत्ययो वा भवति । भृशं पुनःपुनर्वा पचति पापच्यते । जाज्वल्यते । अथा-

---

॥—कित संशय-॥ अनवधारणात्मकः प्रत्ययः संशयः । प्रतीकारो तु खहेतोर्निराकरणम् ॥-निग्रहविनाशाविति । अन्यैर्निग्रहविनाशयोरपि सत्रमिहित तत्नमते कथमित्याशङ्का ॥-शान्—॥ निन्दितरूपो विरूपः तस्य भावो वैरूप्यम् । नन्वत्र इद्ग्रहणं किमर्थं दीर्घ इति सामान्योक्तावपि सति इत एव संभवः । सत्यम् । अत्रेदिति ग्रहणाऽभावे सति प्रथममेवाऽऽकारस्य दीर्घ स्यात् । शान्दानो साहचर्यात् मानिभ्वर्धादिर्गृह्यते न तु चुरादि । निश्यतीत्यचि निशानम् । अवद्यतीत्यचि अवदानम् । शोंच् तक्षणे दोंच् च्छेदने अनयोरऽनडन्तयोरिदं रूपद्वयमिति कश्चिदाशङ्केत तद्व्युदासार्थमाह—अजिति ॥—धातो कण्ड्वा—॥—कण्डु इति । यदा कण्डुमिच्छन्ति क्यनि क्विपि तल्लोपे जसि 'संयोगात्' इत्युवादेशे कण्ड्वः इति भवति ॥—यकः कित्त्वेति । कित फल 'नामिनो गुण' इत्येवमादीनि तानि च धातोरेव गौणमुख्ययोरिति न्यायात् मुख्यो धातुरेव । नामापि धातोः सकाशाद्भवति । उक्तं च—नाम च धातुजमाह ॥—उत्तरार्थमिति । यदा तु 'दीर्घश्चियङ्' –इत्यादि कित्वफलं तदा धातुग्रहणमत्रापि सार्थम् ॥—व्यञ्जनादे- ॥—क्रियान्तराऽव्यवहितानामिति । विरोधिभिर्ग्रामगमनादिभि अविरोधिभिस्तूच्छ्वासादिभिर्भवत्येव ॥—साकल्येन संपत्तिरिति । सामस्त्येन ढौकनमित्यर्थ ॥—फलातिरेको वेति । फलसमाप्तावपि क्रियानुपरति ॥—प्रधानक्रियाया इति । पचौ विक्लेद प्रधानक्रिया । ता कश्चित्समाप्य क्रियान्तरमऽनारभ्य पुनस्ता-

भीक्ष्ण्ययङन्तस्याभीक्ष्ण्ये द्वित्वं कस्मान्न भवति । उक्तार्थत्वात् । यदा तु भृशार्थयङन्तादाभीक्ष्ण्यविवक्षा *तदा भवत्येव । पापच्यते पापच्यते इति । तथा भृशार्थयङ-तादाभीक्ष्ण्ये आभीक्ष्ण्ययङन्ताद्वा भृशार्थे विवक्षिते *यदा पञ्चमो केवला तदा सा केवला तदर्थद्योतनेऽसमर्थेति तदर्थद्योतने द्विर्वचनमपेक्षते। पापच्यस्व पापच्यस्वेति धातोरित्येव । तेन सोपसर्गान्न भवति । भृशं प्राति । व्यञ्जनादेरिति किम् । भृशमीक्षते । एकस्वरादिति किम् । भृशं चकास्ति । केचिज्जागर्तेरिच्छन्ति । जाजा-ग्रीयते । सर्वस्माद्धातोरायादिप्रत्ययरहितात्केचिदिच्छन्ति । अवाव्यते । दादरिद्र्यते । भृशाभीक्ष्ण्ये इति किम् । पचति । वेति किम् । लुनीहि लुनीहीत्येवाय लुना-तीत्यादि यथा स्यात् ॥ ९ ॥ *अट्यर्तिसूत्रिमूत्रिसूच्यशूर्णोः ॥ ३ । ४ । १० ॥ एभ्यो भृशाभीक्ष्ण्ये वर्तमानेभ्यो यङ् प्रत्ययो भवति । भृशं पुनःपु-नर्वाटति अटाट्यते । एवमियर्ति ऋच्छति वा अरार्यते । सूत्रण् सोसूत्र्यते । मूत्रण् मोमूत्र्यते । सूचण् सोसूच्यते । अश्नुते अश्नाति वा अशाश्यते । ऊर्णुनू-र्णोर्णूयते । अट्यर्त्यशामव्यञ्जनादित्वात् सूत्रिमूत्रिसूचीनामनेकस्वरत्वात् ऊर्णोतेरव्यञ्जनाद्यनेकस्वरत्वात्पूर्वेणाप्राप्ते वचनम् ॥ १० ॥ *गत्यर्थात्कुटिले ॥ ३ । ४ ॥ ११ ॥ व्यञ्जनादेरेकस्वराद्गत्यर्थात्कुटिल एवार्थे वर्तमानात् धातोर्यङ्भवति न भृशाभीक्ष्ण्ये । कुटिलं क्रामति चंक्रम्यते । दन्द्रम्यते । कुटिल इति किम् । भृशमभीक्ष्णं वा क्रामति । धात्वर्थविशेषणं किम् । साधने कुटिले माभूत् । कुटिलं पन्थानं गच्छति । *तक्रकौण्डिन्यन्यायेन भृशाभीक्ष्ण्ययोर्निषेधार्थं वचनम् । भृशाभीक्ष्ण्ये कुटिलयुक्ते एव यङ् न केवल इत्यन्ये । एवमुत्तरत्रापि । *कथं जंगमः । रूढिशब्दोऽयम् *लक्षणया स्थावरप्रतिपक्षमात्रे वर्तते ॥ ११ ॥ *गॄलुपसदचरजपजभदशदहो गर्ह्ये ॥ ३ । ४ । १२ ॥ गर्ह्य एवार्थे वर्तमानेभ्यो गॄप्रभृतिभ्यो धातुभ्यो यङ्प्रत्ययो भवति न भृशादिषु । गर्हितं निगि-

---

मेव क्रियामारभते तस्या पुन पुनर्भाव आभीक्ष्ण्य तदा भवत्येवेति । यदा त्वाभीक्ष्ण्ययङन्ताद्भृशार्थविवक्षा तदा न द्वित्व शब्दशक्तिस्वाभाव्यात्तस्यार्थस्य यङैव प्रतिपादितत्वात् । किंच भृशत्व गुणक्रियाणा साकल्येन सपत्ति आभीक्ष्ण्य प्रधानक्रियाया आवृत्ति । अत प्रधानक्रियाया गुणक्रिया न्यग्भूतेति ॥—यदा पञ्चमीति । तर्हि एतस्या विवक्षाया पञ्चम्यपि न प्राप्नोति । न । शब्दशक्तिस्वाभाव्यात् । ‘ भृशाभीक्ष्ण्ये हिस्वौ ’—इति पञ्चमी भवत्येव । लुनीहिलुनीहीत्येवायमिति । न च हिस्वविधानसामर्थ्यादेव तौ भविष्यत इति वाच्यम् । स्वराद्यनेकस्वरेभ्य तयोश्चरितार्थत्वात् । तथा यदा भृश पचति पचनविशिष्टो भृशार्थो धात्वर्थस्तदा वाक्यार्थमपि वाग्रहणम् । तर्हि वाक्यार्थमिति कथ नोक्तम् । सत्यम् । यदा पचतिना पाक भृशशब्देन तु भृशार्थस्तदा वाक्य सिद्धमिति वाक्यार्थमिति नोक्त पाक्षिकप्राप्तेरप्रधानत्वात् । ननु ‘ व्यञ्जनादेरेकस्वरात् ’—इति किमर्थ यत उत्तरसूत्रेऽट्यर्तिग्रहणात् व्यञ्जनादित्व सूत्रिमूत्रिग्रहणात् एकस्वरत्व चाऽत्र लप्स्यते । तस्मादुत्तरसूत्रकरणादिह व्यञ्जनादेरेकस्वरादेव भविष्यति । नैवम् । गत्यर्थाना भृशाभीक्ष्ण्येऽर्थे यदि यङ् स्यात्तदाऽट्यर्त्योरेव स्यात् । तथा च दनीध्वस्यते इति न स्यात् । व्यञ्जनादीनामकस्वराणामदन्तानामेव स्यात् । तथा च पापच्यते इति न स्यादिति नियमाशङ्का स्यात्तन्निवृत्त्यर्थम् ॥—अट्यर्ति—॥ यङोऽदन्तत्वे अटाट्यते अरार्यते इत्यादिषु फलम् ॥—गत्यर्थात्—॥—तक्रकौण्डिन्येति । अयमर्थ सामान्यलक्षणस्य विधेर्विशेषलक्षणो विधिर्बाधको भवति तक्र देयमस्मै तक्रदेय कौण्डिन्य ‘ मयूर ’—इति देयलोप ॥—कथ जङ्गम इति । अत्र कुटिलार्थाऽभावे कथ यङित्याशङ्कार्थ ॥—लक्षणयेति । यन्मुख्य प्रवृत्तिनिमित्त शब्दस्य तत्प्रत्यासत्त्या तदुपलक्षित धर्मान्तरमुपादाय प्रवृत्तिर्लक्षणा तया ॥ गच्छतीति । ‘ गमेर्ज च वा ’ इत्यऽप्रत्यये वा जमादेशे च ॥—गॄलुप—॥

रति निजेगिल्यते। एवं *लोलुप्यते। सासद्यते। *चञ्चूर्यते। जञ्जप्यते। जञ्जभ्यते। दन्दश्यते। दंदह्यते। दंशेः कृतनलोपस्य निर्देशो यङ्लुप्यपि नलोपार्थः। *तेन दंदशीति। गर्ह्येति किम्। साधु जपति। धात्वर्थविशेषणं किम्। साधने गर्ह्ये माभूत्। जपति वृषलः। नियमः किम्। भृशं पुनःपुनर्वा निगिरति कुटिलं चरतीत्यत्र न भवति ॥ १२ ॥ *न गृणाशुभरुचः ॥ ३ । ४ । १३ ॥ गृणातिशुभिरुचिभ्यो *भृशाभीक्ष्ण्यार्थे यङ् न भवति। गर्हितं गृणाति। भृशं शोभते। भृशं रोचते ॥ १३ ॥ बहुलं लुप् ॥ ३ । ४ । १४ ॥ यङो लुप् बहुलं भवति। बोभूयते। बोभवीति। बोभोति। रोरूयते। रोरवीति। रोरोति। लालप्यते। लालपीति। लालप्ति। चक्रम्यते। चंक्रमीति। चंक्रन्ति। जंजप्यते। जंजपीति। जंजप्ति। बहुलग्रहणं प्रयोगानुसरणार्थम्। तेन क्वचिन्न भवति। लोलूया। पोपूया ॥ १४ ॥ *अचि ॥ ३ । ४ । १५ ॥ अचि प्रत्यये परे यङो लुप् भवति। *लोलुवः। पोपुवः। मनीस्रंसः। दनोध्वसः। चेचयः। नेन्यः। नित्यार्थं वचनम् ॥ १५ ॥ *नोतः ॥ ३ । ४ । १६ ॥ उकारान्ताद्विहितस्य यङोऽचि परे लुप् न भवति। *योयूयः। रोरूयः ॥ १६ ॥ *चुरादिभ्यो णिच् ॥ ३ । ४ । १७ ॥ णितश्चुरादयः। तेभ्यो धातुभ्यः स्वार्थे णिच् प्रत्ययो भवति। चोरयति। नाटयति। पदयते। णकारो वृद्ध्यर्थः। णिग्रहणेषु सामान्यग्रहणार्थश्च। *चकारः सामान्यग्रहणाविघातार्थः। चुरण् पृण् घृण् श्वल्कवल्कण् नक्कधक्कण् चक्कचुक्कण् टकुण् अर्कण् पिवण् पचुण् म्लेच्छण् ऊर्जण् तुजपिजुण् क्षजुण् पूजण् गजमार्जण् तिजण् वजव्रजण् रुजण् नटण् चटचुटचुटुलुटुण् कुट्टण् पुट्टचुट्टषुट्टण् पुटमुटण् अट्टस्मिट्टण् लुण्टण् स्निटण् घट्टण् खट्टण् षट्टस्फिटण् स्फुटण् कोटण् वटुण् रुटण् शठश्वठश्वठुण् शुठण् शुठुण् गुठुण् लडण् स्फुडुण् ओलडुण् पोडण् तडण् खड खडुण् कडुण् कुडण् गुडुण् वुडुण् मडुण् भडुण् पिडण् ईडण् चडुण् जुडचूर्णवर्णण् चूणतूणण् श्रणण् पूणण् चितुण् पुस्तवुस्तण् मुरतण् कृतण् स्वतंपथुण् श्रथण् पृथण् प्रथण् छदण् चुदण् मिदुण् दुर्दण् गुर्दण् छर्दण् बुधण् वर्धण् गर्धण् बन्धबधण् मानण् छपुण् क्षपुण् ष्टूपण् डिपण् ह्लपण् डपुडिपुण् शूर्पण् शुल्बण् डबुडिबुण् सम्बण् कुबुण् लुबु तुबुण् पूर्वण् यमण् व्ययण यत्रुण् कुद्रुण् श्वभ्रण् तिलण् जलण् क्षलण् पुलण् बिलण् तलण् तुलण् दुलण् बुलण् मूलण् कलकिलपिलण् पलण् उलण् चलण् मान्त्रण् धूशण् श्लिषण् लूषण् रुषण् प्युषण् पसुण् जसुण् पुसण् त्रुस् पिमजसवर्हण् ष्णिहण् म्रक्षण् भक्षण् पक्षण् लक्षाण् इतोऽर्थविशेषे आलक्षिणः। *ज्ञाण् मारणादिनियोजनेषु। च्युण् महने। भूण्

—लोलुप्यते इति। लुप्सती युपरुपलुपचित्यस्य वा ॥—चंचूर्यते इति। 'अडे हिहन'—इत्यत्र पूर्वादित्यधिकारात् द्वित्वे सति 'ति चोपान्त्यात'—इति उत् ॥—तेन दंदशीतीति। अन्तरङ्गानपीति न्यायात्प्रथममेव यङो लुपि ङित्त्वाभावात् नलोपो न स्यात् ॥—न गृणा—॥—भृशाभीक्ष्ण्यादावित्ति। आदिपदात् गृणातेर्गर्ह्येऽर्थे ॥—अचि ॥—लोलुव इति। अन्तरङ्गानपीति न्यायात् अत इति अन्तरङ्गमपि अलुक् बाधित्वा स्वरान्तस्यैव यङो लुप्। ननु यङो लुपि 'नामिन' इति कथ न गुण। 'न वृद्धिश्चाविति'—इति निषेधात् ॥—नोत. ॥—योयूय इति। अत्र पृथक्योगात् बहुलमित्यनेनापि न। अन्यथाचिनोत इत्येकमेव कुर्यात् ॥—चुरादिभ्यो-॥-चकार इति। चकारे तु सति निरनुबन्धस्य णेरभावात् सामान्येन ग्रहण भवति ॥—ज्ञाण्—। मारणादीना निर्दिष्टार्थानामिह

अवकल्कने । वुक्कण् भाषणे । रक लक रग लगण् आस्वादने । लिगुण् चित्रीकरणे । चर्चण् अध्ययने । अंचण् विशेषणे । मुचण् प्रमोचने । अर्जण् प्रतियत्ने । भजण् विश्राणने । चट स्फुटण् भेदे । घटण् संघाते । *हन्त्यर्थाश्च । कणण् निमीलने । यतण् निकारोपस्कारयोः निरश्च प्रतिदाने । शब्दण् उपसर्गाद्भाषाविष्कारयोः । ष्वदण् आश्रवणे । आङः क्रन्दण् सातत्ये । स्वदण् आस्वादने । आस्वदः सकर्मकात् । मुदण् संसर्गे । शृधण् प्रहसने । कुपण् अवकल्कने । जभुण् नाशने । अमण् रोगे । चरण् असंशये । पूरण् आप्यायने । दलण् विदारणे । दिवण् अर्दने । पश पषण् बन्धने । पुषण् धारणे । घुषृण् विशब्दने आङः क्रन्दे । भूष तसुण् अल-कारे । जसण् ताडने । वसण् वारणे । वसुण् स्नेहच्छेदावहरणेषु । ध्रसण् उत्क्षेपे । ग्रसण् ग्रहणे । लसण् शिल्पयोगे । अर्हण् पूजायाम् । मोक्षण् असने । लोकृ तर्कृ रघु लघु लोचृ विच्छ अजु तुजु पिजु लजु लुजु भजु पट पुट लुट घट घटु वृत पुथ नद वृध गुप धूप कुप चीव दशु कुशु त्रसु पिसु कुसु दसु बर्ह बृहु बल्ह अहु बहु महुण् भासार्थाः । युणि जुगुप्सायाम् । गृणि विज्ञाने । वञ्चिण् प्रलम्भने । कुटिण् प्रतापने । मदिण् तृप्तियोगे । विदिण् चेतनाख्याननिवासेषु । मनिण् स्तम्भे । बलि-भलिण् आभण्डने । दिविण् परिकूजने । तूपिण् शक्तिबन्धे । कुत्सिण् अवक्षेपे । लक्षिण् आलोचने । हिष्कि किष्किण् निष्कण् तर्जिण् कूटिण् त्रुटिण् शठिण् कूणिण् तूणिण् भ्रूणिण् चितिण् वस्तिगन्धिण् डपि डिपि डम्पि डिम्पि डम्भि डिम्भिण् स्यमिण् शमिण् कुस्मिण् गूरिण् तन्त्रिण् मन्त्रिण् ललिण् स्पशिण् दंशिण् दंसिण् भर्त्सिण् यक्षिण् ॥ इतोऽदन्ताः ॥–अङ्कण् ब्लेष्कण् सुखदुःखण् अङ्गण् अघण् रचण् सूचण् भाजण् सभाजण् लजलजुण् कूटण् पटवटण् खेटण् खोटण् पुटण् वटुण् रुटण् शठश्वठण् दण्डण् व्रणण् वर्णण् पर्णण् कर्णण् तूणण् गणण् कुणगुणकेतण् पतण् वातण् कथण् श्रथण् छेदण् गदण् अन्धण् स्तनण् ध्वनण् स्तेनण् ऊनण् कृपण् रूपण् क्षपलाभण् भामण् गोमण् सामण् श्रामण् स्तोमण् व्ययण् सूत्रण् मूत्रण् पारतीरण् कत्र गोत्रण् चित्रण् छिद्रण् मिश्रण् वरण् स्वरण् शारण् कुमारण् कलण् शालण् वेलकालण् पल्यूलण् अंशण् पषण् गवेषण् मृषण् रसण् वासण् निवासण् चहण् महण् रहण् रहुण् स्पृहण् रूक्षण् मृगणि अर्थणि पदणि संग्रामणि शूरवीरणि सत्रणि स्थूलणि गर्वणि गृहणि कुहणि इति चुरादयः ॥ आदन्तत्वं च *सुखादीनां णिच्संनियोगे एव द्रष्टव्यम् । तेन णिजभावे जगणतुः जगणिथेत्यत्र *अनेकस्वरत्वाभावादाम् न भवति । अनित्यो हि णिच् चुरादीनाम् 'घुषेरविशब्दे' ( ४-४-६९ ) इत्यत्र ज्ञापयिष्यते । बहुवचनमाकृतिगणार्थम् तेन *संवाहयतीति सिद्धम् ॥ १७ ॥

**युजादेर्नवा ॥ ३ । ४ । १८ ॥** चुराद्यन्तर्गणो युजादिः, युजादिभ्यो धातुभ्यः स्वार्थे णिच् प्रत्ययो भवति वा । योजयति । योजति । साहयति । सहति । सहति कलभेभ्यः परिभवम् । युजण् लोण् मीण् प्रीण् धूगण् तृगण् जूण् चीक् शीकण् मार्गण् पृचण् रिचण् वचण् आर्चिण् तृजैण् मृजौण् कठुण् श्रन्थ ग्रन्थण् क्रथ आर्दिण्

---

दर्शनमर्थान्तरेऽमीषां तु चुरादिपाठो नेष्यते इति ज्ञापनार्थम्॥–हन्त्यर्थाश्चेति। सर्वे हन्त्यर्था धातवोऽत्र पठितव्या। तेन णिज्शत्रादिकं च कार्यं भवति॥–सुखादीनामिति। अङ्कादीनामिति वक्तव्येऽङ्कब्लेष्कयो फलाभावात् सुखादीनामित्युक्तम्। पूर्वाचार्यानुरोधेन त्वऽदन्तमध्ये पठति॥–अनेकस्वरत्वाभावादिति। द्वित्वे सत्यनेकस्वरत्वेऽपि सन्निपातन्यायान्न भवति। सन्निपातनिमित्तं ह्यनेकस्वरत्वम्॥–संवाहयतीति–। अङ्गानि मृद्नातीत्यर्थ

श्रथण् वदिण् छदण् आङः सदण् गतौ। छृदण् शुन्दिण्, तनूण् उपसर्गाद्दैर्घ्ये, मानण् पूजायाम्, तपण् तृपिण् आप्लृण् दभिण् ईरण् मृपिण् 'शिषण्, विपूर्वोऽतिशये' जुषण् धृषण् हिसुण् गर्हण् पहण् हति युजादिः ।. १८ ॥ **भूङः प्राप्तौ णिङ् ॥ ३ । ४ । १९ ॥** भुवो धातोः प्राप्त्यर्थे वर्तमानात् णिङ् प्रत्ययो वा भवति । भावयते । भवते । प्राप्नोतीत्यर्थः । भवतीत्येवान्यत्र । णिङिति ङकार आत्मनेपदार्थः। भूङ इति ङकारनिर्देशो णिङभावेऽप्यात्मनेपदार्थः। प्राप्त्यभावेऽपि क्वचिदात्मनेपदमिष्यते। यथा 'याचितारश्च नः सन्तु दातारश्च भवामहै ॥ आक्रोष्टारश्च नः सन्तु क्षन्तारश्च भवामहे' इति ॥ प्राप्त्यर्थेऽपि परस्मैपदमित्यन्ये। सर्वं भवति प्राप्नोतीत्यर्थः । अवकल्कने तु भावयतीत्येव। भूण् अवकल्कने इति चुरादौ पाठात् ॥ १९ ॥ ***प्रयोक्तृव्यापारे णिग् ॥ ३ । ४ । २० ॥** कर्तारं यः प्रयुङ्क्ते स प्रयोक्ता तद्व्यापारेऽभिधेये धातोर्णिग् प्रत्ययो वा भवति । व्यापारश्च प्रेषणाध्येषणनिमित्तभावाख्यानाभिनयज्ञानप्राप्तिभेदैरनेकधा भवति । तत्र तिरस्कारपूर्वको व्यापारः प्रेषणम् । सत्कारपूर्वकस्त्वध्येषणम् । कुर्वन्तं प्रयुङ्क्ते कारयति । पचन्तं प्रयुङ्क्ते पाचयति । अत्र प्रेषणेनाध्येषणेन वा यथासम्भवं प्रयोक्तृत्वम् । वसन्तं प्रयुङ्क्ते वासयति भिक्षा । कारीषाग्निरध्यापयति । अत्र निमित्तभावेन । राजानमागच्छन्तं प्रयुङ्क्ते राजानमागमयति *मृगान् रमयति रात्रिं विवासयति कथकः । अत्राख्यानेन । आख्यानेन हि *बुद्ध्यारूढा राजादयः प्रयुक्ताः प्रतीयन्ते । कंसं घ्नन्तं प्रयुङ्क्ते *कंसं घातयति । बलिं बन्धयति नटः । अत्राभिनयेन । पुष्येण युञ्जन्तं प्रयुङ्क्ते पुष्येण योजयति चन्द्रम् । मघाभिर्योजयति गणकः । अत्र कालज्ञानेन । उज्जयिन्याः प्रदोषे प्रस्थितो माहिष्मत्यां सूर्यमुद्गच्छन्तं प्रयुङ्क्ते *माहिष्मत्यां सूर्यमुद्गमयति । *रैवतकात् प्रस्थितः शत्रुञ्जये सूर्यं पातयति। अत्र प्राप्त्या । *ननु च कर्तापि करणादीनां प्रयोजक इति तद्व्यापारेऽपि णिग् प्राप्नोति । नैवम् । *प्रयोक्तृग्रहणसामर्थ्यात् । तथा क्रियां कुर्वन्नेव कर्ताभिधीयते । *तेन तूष्णीमासीने प्रयोज्ये मा पृच्छतु भवान् अनुयुङ्क्तां मा भवानित्यत्र

---

॥——**प्रयोक्तृव्या**——॥——**मृगान् रमयतीति** । रममाणान् मृगान् कथयन् तेषां प्रयोजको भवति । कथनेन यदारण्यस्थो रममाणान् मृगान्प्रतिपाद्यमाचष्टे एतस्मिन्नवकाश एव मृगा रमन्ते इति तदास्य प्रतिपाद्यदर्शनार्था प्रवृत्तिर्भवति तस्यां च णिग् वक्तव्य ॥—**बुद्ध्यारूढा** इति । बुद्धिषु श्रोतृणां चित्तेषु आरूढा सत्तामापन्ना प्रयुक्ता प्रवर्तिता प्रतीयन्ते । राजादीनां हि उभयत्र भावो बहिरन्तश्च । तत्राख्यात्रा बहिर्भावस्य कर्तुमशक्यत्वेऽपि अन्तर्भावस्य सुशकत्वाद्बहि प्रयोगाभावेऽप्यन्त प्रयोगात्प्रयोक्तृत्वमिति ॥—**कंस घातयतीति** । अथ नट कौशलात्तथा सरसमभिनयति यथा कंसवधाय बलिबन्धनाय चाऽयमेव नारायण प्रयुङ्क्ते इति परेषां प्रतिपत्तिर्भवतीति ॥—**माहिष्मत्यामिति** । महिषा अत्र सन्ति 'नडकुमुद'—इति डिति मतौ अन्त्यलोपे 'धुटस्तृतीय' इति डत्व प्राप्तमऽसिद्ध बहिरङ्गमित्यनेन व्युदस्यते । न च 'स्वरस्य'—इति स्थानित्वेऽकारेण व्यवधानमिति वाच्य 'न सन्धि'—इत्यस्य असद्विधावऽवस्थानात् । महिष्मति भवा भवेऽण् ॥—**रैवतकादिति**। राया द्रव्येण वन्यन्ते स्म क्ते रेवृड् रेवत इति 'पुतपित्त'—निपातो वा रैवता वृक्ष स्ते सन्त्यत्र 'अरीहणादेरकण्' ॥—**ननु च कर्त्तापि करणादीनामिति** । अयमर्थ कट करोतीत्यादौ मुख्यकर्तृव्यापारेऽपि णिग् प्राप्नोति अत्रापि प्रयोक्तृव्यापारस्य विद्यमानत्वात् । तथाहि कट करोतीति कोऽर्थ जायमान जनयतीत्यर्थ । इत्याशङ्कायामाह—**प्रयोक्तृग्रहणसामर्थ्यादिति** । कर्तारं य प्रयुङ्क्ते स हि प्रयोक्ता । यदि च व्यापारमात्रे णिग् स्यात्तदा व्यापारे णिगित्येवोच्येत ॥—**तेन तूष्णीमासीने** इति । प्रयोज्ये

वाधिकार आ वहुलवचनात् पक्षे वाक्यार्थः ॥ २० ॥ ***तुमर्हादिच्छायां सन्नतत्सनः ॥ ३ । ४ । २१ ॥**
णिग् न भवति । *पञ्चम्या बाधितत्वाद्वा । वाधिकार आ वहुलवचनात् पक्षे वाक्यार्थः ॥ २० ॥ कर्तुमिच्छति चिकीर्षति । गन्तु-
यो धातुरिषेः कर्म इषिणैव च समानकर्तृकः स तुमर्हः तस्मादिच्छायामर्थे सन् प्रत्ययो वा भवति न चेत्स इच्छासन्नन्तो भवति । भोक्तुं व्रजति ।
मिच्छति जिगमिषति । तुमर्हादिति किम् । अकर्मणोऽसमानकर्तृकाच्च माभूत् । गमनेनेच्छति । *भोजनमिच्छति देवदत्तस्य । इच्छायामिति किम् । कथं नदी-
अतत्सन इति किम् । *चिकीर्षितुमिच्छति । तद्ग्रहणं किम् । जुगुप्सिषते । सनोऽकारः किम् । अर्थान् प्रतीषिषति । नकारः सन्ग्रहणेषु विशेषणार्थः ।
कूलं पिपतिषति । श्वा मुमूर्षति । पतितुमिच्छति मर्तुमिच्छति इति वाक्यवदुपमानाद्भविष्यति ॥ २१ ॥ ***द्वितीयायाः काम्यः ॥ ३ । ४ । २२ ॥**
द्वितीयान्तान्नाम्न इच्छायामर्थे काम्यप्रत्ययो वा भवति । पुत्रमिच्छति पुत्रकाम्यति । इदंकाम्यति । स्वःकाम्यति । काम्येनैव कर्मण उक्तत्वाद्भावकर्त्रोरेव प्रयोगः ।
पुत्रकाम्यतेऽनेन । पुत्रकाम्यत्यसौ । द्वितीयाया इति किम् । इष्टः पुत्रः । इष्यते पुत्रः । इह कस्मान्न भवति भ्रातुः पुत्रमिच्छति आत्मनः पुत्रमिच्छति महान्तं पुत्र-
मिच्छति पुत्रमिच्छति स्थूलं दर्शनीयं वा । सापेक्षत्वात् । नह्यन्यमपेक्षमाणोऽन्येन सहैकार्थीभावमनुभवितुं शक्नोति । भ्रातुष्पुत्रकाम्यतीत्यत्र पुत्रस्यात्मीयता गम्य-
तेऽन्यस्याश्रुतेः इच्छायाश्चात्मविषयत्वात् ॥ २२ ॥ ***अमाव्ययात् क्यन् च ॥ ३ । ४ । २३ ॥** अमकारान्तादनव्ययाच्च द्वितीयान्तान्नाम्न इच्छायामर्थे
क्यन् प्रत्ययो वा भवति काम्यश्च । पुत्रमिच्छति पुत्रीयति । एवं नाव्यति । वाच्यति । चकारः काम्यार्थोऽन्यथा मान्ताव्यययोः सावकाशः स क्यना बाध्येत ।
अमाव्ययादिति किम् । इदमिच्छति । स्वरिच्छति । गोशब्दसंध्यक्षरवर्जस्वरनान्तेभ्य एव क्यनमिच्छन्त्यन्ये । गव्यति । पुत्रीयति । राजीयति । अन्यत्र न भवति ।
यमिच्छति । नकारः क्यनीत्यत्र विशेषणार्थः । ककारः क्यग्रहणे सामान्यग्रहणार्थः ॥ २३ ॥ **आधाराच्चोपमानादाचारे ॥ ३ । ४ । २४ ॥** अमाव्ययादु-
पमानभूताद्द्वितीयान्तादाधाराच्चाचारार्थे क्यन् प्रत्ययो भवति वा । पुत्रमिवाचरति पुत्रीयति छात्रम् । वस्त्रीयति कम्बलम् । पुत्रीयति स्थूलं दर्शनीयं वा । आधारात्
प्रासाद इवाचरति प्रासादीयति कुट्याम् । पर्यङ्कीयति मञ्चके । उपमानादिति किम् । छात्रादेर्माभूत् । आधाराच्चेति किम् । परशुना दात्रेणेवाचरति । अमाव्यया-
दिति किम् । इदमिवाचरति । स्वरिवाचरति । उपमानस्य नित्यमुपमेयापेक्षत्वात्सापेक्षत्वेऽप्यसामर्थ्यं न भवति ॥ २४ ॥ ***कर्तुः क्विप् गल्भक्लीबहोडात्तु**

प्रच्छये तूष्णीमासीने प्रयोजक प्रच्छिक्रियाया कारयिताह मा पृच्छतु भवानिति ॥—**पञ्चम्या बाधिताद्वेति** । अथवा सव्यापारेऽपि प्रयोज्ये परत्वात् 'प्रैषानुज्ञावसरे' इति विहितया पञ्चम्या
णिग् बाध्यते । प्रैषरूपे प्रयोक्तृव्यापारे णिग् पञ्चमी प्रैषविशिष्टे,कर्त्तरि वाच्ये भवति, इति समानविषयत्व ततो णिग् बाध्यते । तर्हि मूलोदाहरणेष्वपि पञ्चमी प्राप्नोति । न । प्रेषणमात्रे णिगुक्त
पञ्चमी तु प्रेषणविशिष्टे कर्त्रादौ । यदा तु प्रेषणमात्र विनक्ष्यते तदा णिग् तद्विशिष्टे तु कर्त्रादौ पञ्चमी । कारयत्वित्यादौ प्रेषणस्यापि प्रेषणविवक्षा ॥—**तुमर्हादि**—॥—**भोजनमिच्छतीति** ।
अत्र 'शकधृष'—इति न तुम् तुल्यकर्तृकत्वाभावात् ॥—**चिकीर्षितुमिच्छतीति** । चिकीर्षेण 'शकधृष—'इति तुम् ॥—**द्वितीयाया**—॥ सस्वरस्य काम्यस्य फलमऽजघटकाम्यत् काम्याचकारे-
त्यादौ ॥—**परस्येत्यपेक्षितत्वादिति** । न हि कोप्यात्मनोऽघादीच्छति ॥—**अमाव्यया**—॥ कीयाचकारेत्यादौ क्यन सस्वरत्वे आम् सिद्ध ॥—**कर्तुः क्विप्**—॥—

डित् ॥ ३ । ४ । २५ ॥ कर्तुरुपमानान्नाम्न आचारेऽर्थे क्विप् प्रत्ययो वा भवति गल्भक्लीबहोडेभ्यः पुनः स एव ङित् ॥ अश्व इवाचरति अश्वाति। एवं गर्दभति। दधयति। *गवा। *नावा। अः प्रत्ययः। राजेवाचरति *राजनति। मधुलिडिवाचरति मधुलेहति। गोधुगिवाचरति गोदोहति। गल्भक्लीबहोडात्तु ङित्। गल्भते। अवगल्भते। क्लीबते। विक्लीबते। होडते। विहोडते। *गल्भांचक्रे। अवगल्भांचक्रे। ङित्त्वादात्मनेपदं भवति। *एके तु कर्तुः संबन्धिन उपमानात् *द्वितीयान्तात् क्विप्क्यङाविच्छन्ति। अश्वमिवात्मानमाचरति गर्दभः अश्वाति। श्येनमिवात्मानमाचरति काकः श्येनायते। तन्मतसंग्रहार्थं कर्तुरिति षष्ठी व्याख्येया। द्वितीयाया इति चानुवर्तनीयम्। क्विबिति *पूर्वप्रसिद्ध्यनुवादः ॥ २५ ॥ *क्यङ् ॥ ३ । ४ । २६ ॥ कर्तुरुपमानादाचारेऽर्थे क्यङ् प्रत्ययो वा भवति। श्येन इवाचरति श्येनायते। हंसायते। अश्वायते। गर्दभायते। गल्भायते। क्लीबायते। होडायते। क्विप्क्यङोस्तुल्यविषयत्वादसत्युत्सर्गापवादत्वे पर्यायेण प्रयोगः। ककारः सामान्यग्रहणार्थः। ङकार आत्मनेपदार्थः ॥ २६ ॥ *सो वा लुक् च ॥ ३ । ४ । २७ ॥ स इति आवृत्त्या पञ्चम्यन्तं षष्ठ्यन्तं चाभिसंबध्यते। सकारान्तात्कर्तुरुपमानादाचारेऽर्थे क्यङ् प्रत्ययो वा भवति अन्त्यसकारस्य च लुग्वा भवति। पय इवाचरति पयायते। पयस्यते। सरायते। सरस्यते। अन्ये त्वप्सरस एव सलोपो नान्यस्य *अप्सरायते अन्यत्र पयस्यते इत्याद्येवेत्याहुः। क्यङ् सिद्धो लुगर्थं वचनम्। चकारो लुचः *क्यङ्सनियोगार्थः ॥ २७ ॥ *ओजोऽप्सरसः ॥ ३ । ४ । २८ ॥ ओजःशब्दो वृत्तिविषये स्वभावात्तद्वति वर्तते। ओजःशब्दादप्सरस्शब्दाच्च कर्तुरुपमानभूतादाचारेऽर्थे क्यङ् प्रत्ययो वा भवति सलोपश्च। ओजस्वीवाचरति ओजायते। अप्सरायते। अन्ये त्वोजःशब्दे सलोपविकल्पमिच्छन्ति। ओजायते। ओजस्यते ॥ २८ ॥ *च्व्यर्थे

---

गवेति। गौरिवाचरति क्विपि लुपि गवन 'शसिप्रत्ययाद'। एव नावित्यत्र ॥—राजनतीति। अस्य क्विपो व्यञ्जनादिफल नेष्यते तेन नाम सिदिति पदसञ्ज्ञाया अभावे नलोपाभावः सिद्ध ॥—गल्भांचक्रे इति। गल्भि धाष्ट्र्ये इत्यादिभिर्मूलोदाहरणानि सिध्यन्ति पर गल्भाचक्रे इत्यादिष्वाम् न स्यात् ॥—एके त्विति। ते हि मन्यन्ते द्वितीयाया इत्यनुवृत्तावपि कर्तुरिति विशेषण संबन्धषष्ठ्यामुपपद्यते तेनाऽयमर्थ कर्तुर्यत्कर्मोपमानभूत तत क्विप्क्यङाविति ॥—द्वितीयान्तादिति। कर्म्मण इत्यर्थ। ननु कर्त्ता कारक कर्म च तयोश्चाय शलाकाकल्पयोरऽनभिसवन्धो न हि कर्तु कर्म भवति अपि तु क्रियाया कर्त्ता कर्म च सपद्यते तत्र साध्यसाधनभावलक्षणसवन्धोऽस्ति न तु परस्परम्। सत्यम्। न कर्तुरित्यनेन कर्मकारकशक्तिर्विशिष्यते अपि तूपमानादितीहानुवर्त्तते तेन कर्मणो योऽसावुपमानमश्वादिरस्ति स कर्तुरित्यनेन विशिष्यते कर्तुर्यदुपमान कर्म्म तस्मात् क्विबिति। नन्विदमऽप्यऽचारु कर्तु किल कर्म्म कथमुपमानमस्तु अत्यन्तवैलक्षण्यात्। सत्यम्। एव कर्तु कर्म उपमान भवति यदि स एव कर्त्ता आचरणक्रियाया कर्म्म भवति। यथा अश्वमिवात्मानमाचरति गर्दभ। अत्राचरणक्रियाया गर्दभ कर्त्ता स एवात्मभेदेन कर्म्म। एकस्यैवात्मभेदादऽनेककारकशक्त्याविशो दृश्यते। यथोच्यते हन्त्यात्मानमात्मनेति। श्येन इवाचरति काको मत्स्यमित्यत्र न भवति। मत्स्यमित्यनेन धात्वर्थकर्मणाऽसवन्धात् ॥—पूर्वप्रसिद्ध्यनुवाद इति। तेनास्मिन् स्वमते कित्पित्कार्य न भवति। परमते तु कित. फलमाचारक्विपि 'अहन्पञ्चम'—इति दीर्घे इदामति कीमतीत्यादौ ॥—क्यङ्—॥ क इवाचरति इति कृते कायाचक्रे इत्यत्र सस्वरस्य क्यङ. फलम् ॥—सो वा लुक् ॥—क्यङ्सन्नियोगार्थ इति। समुच्चये तु स्वतन्त्रौ लुक्क्यङौ स्याताम् ॥—अप्सरायते इति। अप्सरस्यते इत्यपि ॥—ओजोऽप्सरस ॥ पूर्वेण सिद्धे नित्यसलोपार्थ वचनम् ॥—च्व्यर्थे भृशादे—॥

भृशादेः स्तोः ॥ ३ । ४ । २९ ॥ भृशादिभ्यः कर्तृभ्यः च्व्यर्थे क्यङ् प्रत्ययो वा भवति सकारतकारयोर्यथासंभवं लुक्। *च्व्यर्थे इत्यनेन *लक्षणया भवत्यर्थविशिष्टं प्रागतत्तत्त्वमुच्यते। *करोतिस्तु *कर्तुरित्यनेन व्युदस्तः। भवत्यर्थे च विधानात् क्यङन्तस्य क्रियार्थत्वम् भवत्यर्थशब्दाप्रयोगश्च। अभृशो भृशो भवति भृशायते। उन्मनायते। वेहायते। अनोजस्वी ओजस्वी (ओजः) भवति ओजायते। अत्र तद्वद्वृत्तेरेव च्व्यर्थ इति धर्ममात्रवृत्तेर्न भवति। अनोज ओजो भवति। कर्तुरित्येव। अभृशं भृशं करोति। च्व्यर्थ इति किम्। भृशो भवति। *प्रागतत्तत्त्वमात्रे च्वेर्विधानात्क्यङा च्विर्न बाध्यते। भृशीभवति। भृश उत्सुक शीघ्र चपल पण्डित अण्डर कण्डर फेन शुचि नील हरित मन्द मद्र भद्र संश्चत् तृपत् रेफत् रेहत् वेहत् वर्चस् उन्मनस् सुमनस् दुर्मनस् अभिमनस् ॥ २९ ॥ *डाच्लोहितादिभ्यः षित् ॥ ३ । ४ । ३० ॥ डाच्प्रत्ययान्तेभ्यो लोहितादिभ्यश्च कर्तृभ्यश्च्व्यर्थे क्यङ् प्रत्ययः षिद्भवति। डाच् अपटत् पटद्भवति पटपटायति। पटपटायते। एवं दमदमायति। दमदमायते। *डाजन्तात्क्यङ्ष्विधानात्कृभ्वस्तिभिरिव क्यङ्षापि योगे *डाज् भवति। अलोहितो लोहितो भवति लोहितायति। लोहितायते। कर्तुरित्येव। अपटपटा पटपटा करोति। अलोहितं लोहितं करोति। च्व्यर्थ इत्येव। लोहितो भवति। लोहित जिह्म श्याम धूम चर्मन् हर्ष गर्व सुख दुःख मूर्च्छा निद्रा कृपा करुणा। *बहुवचनमाकृतिगणार्थम्। लोहितादिषु लोहितशब्दादेवेच्छन्त्यन्ये। षकारः 'क्यङ्षो नवा' (३-३-४३) इति विशेषणार्थः। धूमादीनां स्वतन्त्रार्थवृत्तीनां प्रकृतिविकारभावाप्रतीतेश्च्व्यर्थो नास्तीति तद्वद्वृत्तिभ्यः प्रत्ययो भवति। अधूमवान् धूमवान् भवति धूमायति। धूमायते ॥ ३० ॥ *कष्टकक्षकृच्छ्रसत्रगहनाय पापे क्रमणे ॥ ३ । ४ । ३१ ॥ कष्टादिभ्यो निर्देशादेव चतुर्थ्यन्तेभ्यः पापे वर्तमानेभ्यः क्रमणेऽर्थे क्यङ् प्रत्ययो भवति। कष्टाय कर्मणे क्रामति *कष्टायते। एवं कक्षायते। कृच्छ्रायते। सत्रायते। गहनायते। कष्टादिभ्य इति किम्। कुटिलाय कर्मणे क्रामति। चतुर्थीनिर्देशः किम्। रिपुः कष्टं क्रामति। पाप इति किम्। *कष्टाय तपसे क्रामति। *क्रमणमत्र न पादविक्षेपः किंतु प्रवृत्तिमात्रम्। द्वितीयान्तेभ्यः पापचिकीर्षायामित्यन्ये। कष्टं चिकी-

---

—च्व्यर्थ इत्यनेनेति। ननु भृशादश्च्व्यर्थे क्यङ्विधानात् च्व्यर्थस्य चाऽक्रियारूपत्वात् कथं क्यङन्तात्तिवादिरित्याह—लक्षणयेति। उपचारेणेत्यर्थः। मुख्यवृत्त्या हि च्व्यर्थ इत्यनेन प्रागऽतत्तत्त्वं केवलमेवाभिधीयते न भवत्यर्थविशिष्टम्। लक्षणया तु तद्विशिष्टमपि। यद्येवं च्व्यर्थ इत्यनेन प्रागतत्तत्त्वं लक्ष्यते तर्हि करोत्यर्थविशिष्टेऽपि प्रागतत्तत्त्वे प्राप्नोतीत्याशङ्क्याह—करोतिस्त्वित्यादि। अयमर्थः करोत्यर्थविशिष्टे प्रागऽतत्तत्त्वे भृशादीनां कर्तृत्वं न सम्भवत्यपि तु कर्मत्वमेवेत्याह—कर्तुरित्यनेन व्युदस्त इति। ननु च्व्यर्थे च्वेः क्यङश्च विधानात् क्यङा च्विबाधा प्राप्नोतीत्याशङ्क्याह—प्रागऽतत्तत्त्वमात्र इति। अयमर्थः भवत्यर्थविशिष्टे च्व्यर्थे क्यङ् विहितः च्विस्तु तद्योगमात्रेऽत एव च्वियोगे करोतिभवत्योः प्रयोगो भवत्यऽनुक्तार्थत्वात् क्रियार्थत्वाभावाद्धातुत्वं च न भवति ॥—डाज्लोहिता—॥ --डाजन्तात् क्यङ्ष्विधानादिति। ननु भवत्यर्थविशिष्टे च्व्यर्थे क्यङ्ष् विहितः ततश्च क्यङ्षा भवत्यर्थस्योक्तत्वात् तदभावे निमित्ताभावे इति न्यायात् डाचोऽपि निवृत्तिः प्राप्नोतीत्याशङ्क्याह—डाजन्तात्क्यङ्ष्विधानात् ॥—डाच् भवतीति। विधानसामर्थ्यात् कृभ्वस्त्यभावे न निवर्त्तते इत्यर्थः। अन्यथा क्यङ्षा भवत्यर्थस्योक्तत्वाद् भवतियोगाऽभावात् डाच् न स्यात् ॥—बहुवचनमिति। तेनामृत यस्य विषायतीति सिद्धम्। यद्वा विषस्यायां लाभ स इवाचरतीति क्विप् ॥—कष्टकक्ष—॥—कष्टायते इति। कष्टाय पापभूताय पुरुषाय प्रवर्त्तते इत्यादावपि ॥—कष्टाय तपसे क्रामतीति

षति कष्टायते इत्यादि ॥३१॥ *रोमन्थाद्याप्यादुच्चर्वणे ॥३।४।३२॥ रोमन्थाकर्मणः पर उच्चर्वणेऽर्थे क्यङ् प्रत्ययो वा भवति। अभ्यवहृतं द्रव्यं रोमन्थः। उद्गीर्य चर्वणमुच्चर्वणम्।रोमन्थम् *उच्चर्वयति रोमन्थायते गौः।उद्गीर्य चर्वयतीत्यर्थः।उच्चर्वण इति किम्। कीटो रोमन्थं वर्तयति। उद्गीर्य बहिस्त्यक्तं पृष्ठान्तेन निर्गतं वा द्रव्यं गुटिकां करोतीत्यर्थः ॥३२॥ फेनोष्मबाष्पधूमादुद्वमने ॥३।४।३३॥ फेनादिभ्यः कर्मभ्य उद्वमनेऽर्थे क्यङ् प्रत्ययो वा भवति। फेनमुद्वमति फेनायते। एवमूष्मायते। बाष्पायते। धूमायते ॥ ३३ ॥ सुखादेरनुभवे ॥ ३ । ४ । ३४ ॥ साक्षात्कारोऽनुभवस्तस्मिन्नर्थे सुखादिभ्यः कर्मभ्यः क्यङ् प्रत्ययो वा भवति । सुखमनुभवति सुखायते । दुःखायते । अनुभव इति किम्। सुखं वेदयते प्रसाधको देवदत्तस्य। सुखादिविकारेणानुमानतो निश्चिनोतीत्यर्थः। सुख दुःख तृप्र कृच्छ्र आस्र अलीक करण कृपण सोढ प्रतीप ॥ ३४ ॥ *शब्दादेः कृतौ वा ॥ ३ । ४ । ३५ ॥ शब्दादिभ्यः कर्मभ्यः करोत्यर्थे क्यङ् प्रत्ययो वा भवति। णिजपवादः। शब्दं करोति शब्दायते । वैरायते । कलहायते । वाशब्दो *व्यवस्थितविभाषार्थः। तेन यथादर्शनं णिजपि भवति। शब्दयति। वैरयति। वाधिकारस्तु वाक्यार्थः। शब्द वैर कलह ओघ वेग युद्ध अभ्र कण्व मम मेघ अट अव्या अटाव्या सीका सोटा कोटा पोटा प्लुष्टा सुदिन दुर्दिन नीहार ॥ ३५ ॥ *तपसः क्यन् ॥ ३ । ४ । ३६ ॥ तपःशब्दात्कर्मणः करोत्यर्थे क्यन् प्रत्ययो वा भवति । तपः करोति तपस्यति । अत्र यदा व्रतपर्यायः तपःशब्दस्तदा क्यन्कर्मणो वृत्तावन्तर्भूतत्वादकर्मकत्वम् । यदा तु संतापक्रियावचनस्तदा क्यन्कर्मणो वृत्तावन्तर्भावेऽपि स्वकर्मणा सकर्मक एव । शत्रूणां तपः करोति तपस्यति शत्रूनिति । यथा व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयति ॥ ३६ ॥ *नमोवरिवश्चित्रङोऽर्चासेवाश्चर्ये ॥ ३ । ४ । ३७ ॥ नमस् वरिवस् चित्रङ् शब्देभ्यः कर्मभ्यो यथासंख्यं पूजासेवाश्चर्येष्वर्थेषु करोत्यर्थे क्यन् प्रत्ययो वा भवति । *देवेभ्यो नमस्करोति नमस्यति देवान् । *गुरूणां वरिवः करोति वरिवस्यति गुरून् । चित्रं करोति *चित्रीयते । ङकार आत्मनेपदार्थः । अर्चादिष्विति किम् । *नमः करोति, वरिवः करोति । नमोवरिवःशब्दमुच्चारयतीत्यर्थः । चित्रं करोति । नानात्वमालेख्यं वा करोतीत्यर्थः । ननु च नमस्यति देवानित्यत्र नमःशब्दसंयोगनिबन्धना चतुर्थी कस्मान्न भवति । उच्यते । नामधातूनामविवक्षितप्रकृतिप्रत्ययभेदानां धातुलादनर्थकोऽत्र नमःशब्द । *उपपदविभक्तेर्वा कारकविभक्तिर्बलीयसी । एवं च नमस्करोति देवानिति वाक्येऽपि द्वितीया सिद्धा । यद्येवं नमस्करोति देवेभ्य इति न

---

। पापमनार्जवाचार स इह नास्तीति न भवति । अथ यद्येह पाप नास्ति तथा क्रमणमपि पादविक्षेपो नास्तीति व्यर्थत्वैकल्यमित्याशङ्क्याह—क्रमणमऽत्रेति ॥—रोमन्था—॥—उच्चर्वयतीति । बहुलमेतन्निदर्शनमिति चुरादित्वम् ॥-शब्दादे -॥—व्यवस्थितविभाषेति । व्यवस्थित प्रयोगारूढ विधिप्रतिषेधादिकार्यं विशेषेण भाषते इति व्यवस्थितविभाषा तदर्थ इत्यर्थ ॥-तपस —॥ अतपत्तस्यदित्यत्राऽन्यस्येति तृतीयावयवस्य द्वित्वेऽदन्तक्यन फलम् ॥—नमोवरिव—॥—चित्रीयते इति ।कस्य चित्रीयते न धी इत्यकर्मकः चित्रमाश्चर्यं करोति जनस्येति विवक्षाया चित्रीयते जन व्याकरण सूत्रयतीतिवद्भवति ॥—देवेभ्यो नमस्करोतीति । व्युत्पत्त्युपायभूतमऽवयवार्थप्रदर्शक वाक्य समुदायस्तु क्यनन्तोऽविद्यमानावयवार्थ एवाऽर्चालक्षणेऽर्थे वर्त्तते । एव गुरूणां वरिवः करोतीत्यादावपि द्रष्टव्यम् ॥ वृणीते 'स्वरेभ्य' इप्रत्यये वरि सेवकस्तत्र वसतीति विचि वरिव ॥—नम. करोतीति ।अत्र नम शब्दरूपापेक्षया नपुसकत्वे 'अनतो लुप्' । अर्थप्रधानो ह्यऽन्ययमऽत्र तु शब्दप्रधान ॥—उपपदविभक्तेर्वेति ।

भवितव्यम् । नैवम् । करोतेः*नमःशब्दसंबन्धेन देवपदेनासंबन्धात् । कस्मै इति साकाङ्क्षायां देवेभ्य इति संबन्धाच्चतुर्थी संप्रदाने वा इत्यदोषः ॥ २७ ॥ *अङ्गान्निरसने णिङ् ॥ ३ । ४ । ३८ ॥ अङ्गवाचिनः शब्दात्*कर्मणो निरसनेऽर्थे णिङ् प्रत्ययो वा भवति । हस्तौ निरस्यति हस्तयते । पादयते । ग्रीवयते । निरसने इति किम् । हस्त करोति,*हस्तयति । कर्मण इति किम् । हस्तेन निरस्यति । ङकार आत्मनेपदार्थः ॥ ३८ ॥ पुच्छादुत्परिव्यसने ॥ ३ । ४ । ३९ ॥ पुच्छशब्दात्कर्मण उदसने पर्यसने व्यसने असने चार्थे णिङ् प्रत्ययो वा भवति । पुच्छम् उदस्यति उत्पुच्छयते । पर्यस्यति परिपुच्छयते । व्यस्यति विपुच्छयते । अस्यति पुच्छयते ॥ ३९ ॥ भाण्डात्समाचितौ ॥ ३ । ४ । ४० ॥ भाण्डशब्दात्कर्मणः समाचयनेऽर्थे णिङ् प्रत्ययो वा भवति । समाचयनं च समा परिणा च द्योत्यते । भाण्डानि समाचिनोति संभाण्डयते । परिभाण्डयते ॥ ४० ॥ चीवरात्परिधार्जने ॥ ३ । ४ । ४१ ॥ चीवरशब्दात्कर्मणः परिधानेऽर्जने चार्थे णिङ् प्रत्ययो वा भवति । चीवरं परिधत्ते परिचीवरयते । समाच्छादनमपि परिधानम् । चीवरं समाच्छादयति संचीवरयते । चीवरमर्जयति चीवरयते । संमार्जनेऽप्यन्ये । चीवरं संमार्जयति सचीवरयते ॥ ४१ ॥ *णिज् बहुलं नाम्नः कृगादिषु ॥ ३ । ४ । ४२ ॥ कृगादीनां धातूनामर्थे नाम्नो णिच् प्रत्ययो भवति बहुलम् । बहुलग्रहणं प्रयोगानुसरणार्थम् । तेन यस्मान्नाम्नो यद्विभक्त्यन्ताद्यस्मिन् धात्वर्थे दृश्यते तस्माच्चद्विभक्त्यन्तात्तद्धात्वर्थे एव भवतीति नियमो लभ्यते । मुण्डं करोति मुण्डयति छात्रम् । एवं मिश्रयत्योदनम् । श्लक्ष्णयति वस्त्रम् । लवणयति सूपम् । एभ्यश्चव्यर्थे एवेति कश्चित् । अमुण्डं मुण्डं करोति मुण्डयतीत्यादि । लघुं करोति लघयति । एवं छिद्रयति । कर्णयति । दण्डयति । अन्धयति । अङ्कयति । व्याकरणस्य सूत्रं करोति *व्याकरणं सूत्रयति । द्वारस्यो-द्घाटनं करोति द्वारमुद्घाटयति । ननु व्याकरणशब्दात् वाक्ये षष्ठी दृश्यते उत्पन्ने च प्रत्यये कथं द्वितीया । उच्यते । योऽसौ सूत्रव्याकरणयोः संबन्धः स उत्पन्ने प्रत्यये निवर्तते सूत्रयतिक्रियासंबन्धाच्च द्वितीयैव । एवं द्वारमुद्घाटयति । *पाप्मिन उल्लाघयति । *त्रिलोकीं तिलकयतीत्याद्यपि द्रष्टव्यम् । अथ तपः करोति तपस्य-तीत्यादिवत् कर्मणो वृत्तावन्तर्भूतत्वान्मुण्डिरकर्मकः प्राप्नोति । नैवम् । सामान्यकर्मान्तर्भूतं विशेषकर्मणा तु सकर्मक एव, मुण्डयति कं छात्रमिति । यद्येवं पुत्रीयति-रपि विशेषकर्मणा सकर्मकः प्राप्नोति पुत्रीयति क छात्रमिति । सत्यम् । आचारक्यना तु बुद्धेरपहृतत्वात् इच्छाक्यन्तस्य विद्यमानमपि विशेषकर्म न प्रयुज्यते ।

समुदायिन एव समुदाय इति विवक्षाया समुदायिनौ च द्वौ नमस् प्रकृति क्यङ् च प्रत्यय इति नम शब्दो भिन्नोऽस्तीति प्राप्तिरऽस्तीत्याह—नमःशब्दसंबन्धेनेति । करोतेरसवन्धात् केन सह देवपदेन क्रिभूतेन नम शब्देन सह सवन्धो यस्य तेनानया युक्त्या कारकविभक्ते प्राप्तिर्नास्ति ॥—अङ्गान्निर—॥—कर्मण इति । ' रोमन्थाद्व्याप्यात् '—इत्यतो व्याप्यादित्यनुवर्त्तते तत्पर्यायतया च प्रसिद्ध सत् कर्मण इत्येव लिखितम् ॥—हस्तयतीति ॥ णिजपवादस्य णिङोऽभावादत्र णिजेव ॥—णिज्बहुलं—॥—व्याकरणं सूत्र—यतीत्यादौ सापेक्षत्वेऽपि गणपाठाण्णिजिष्यते ॥—पाप्मिन उल्लाघयतीति । पाप्मा पापमस्त्येषा शिखादित्वादिन् पाप्मिनामुल्लाघ करोति ॥—त्रिलोकीमिति । त्रिभुवनीति तु न तस्य पात्रादौ

तथाहि—पुत्रीयति छात्रमित्युक्ते पुत्रमिवाचरति छात्रमिति प्रतीतिर्भवति न तु पुत्रमिच्छतीति । *तदुक्तम्—सदपीच्छाक्यनः कर्म तदाचारक्यना हृतम् । कौटिल्येनैव गत्यर्थाभ्यासो वृत्तौ न गम्यते ॥१॥ मुण्डं बलीवर्दं करोतीति *उभयधर्मविधाने मुण्डं शुक्लं करोतीत्यनुवादे वानभिधानान्न भवति । पटुमाचष्टे करोति वा *पटयति । एवं स्थूलं स्थवयति । दूरं दवयति । युवानं यवयति । क्षिप्रं क्षेपयति । क्षुद्रं क्षोदयति । प्रियं प्रापयति । स्थिरं स्थापयति । स्फिरं स्फापयति । पुच्छं पुच्छयति । वृक्षमाचष्टे रोपयति वा वृक्षयति । कृतं गृह्णाति कृतयति । एवं वर्णयति । *त्वचयति । *त्वचशब्दोऽकारान्तस्त्वक्पर्यायः । रूपं दर्शयति रूपयति । रूपं निध्यायति निरूपयति । लोमान्यनुमार्ष्टि अनुलोमयति । तूस्तानि विहन्ति उद्धन्ति वा वितूस्तयति । उत्तूस्तयति केशान्, विजटीकरोतीत्यर्थः । वस्त्रं वस्त्रेण वा समाच्छादयति संवस्त्रयति । वस्त्रं परिदधाति परिवस्त्रयति । तृणान्युत्प्लुत्य शातयति उत्तृणयति । हस्तिनातिक्रामति अतिहस्तयति । एवमत्यश्वयति । वर्मणा संनह्यति संवर्मयति । वीणया उपगायति उपवीणयति । सेनया अभियाति अभिषेणयति । चूर्णैरवध्वंसयति अवकिरति वा अवचूर्णयति । *तूलैरनुकुष्णाति अवकुष्णाति अनुगृह्णाति वा अनुतूलयति अवतूलयति । वास्या छिनत्ति वासयति । एवं परशुना परशयति । असिना असयति । वास्या परिच्छिनत्ति परिवासयति । वाससा उन्मोचयति उद्वासयति । श्लोकैरुपस्तौति उपश्लोकयति । हस्तेनापक्षिपति अपहस्तयति । अश्वेन संयुनक्ति समश्वयति । गन्धेनार्चयति गन्धयति । एवं पुष्पयति । बलेन सहते बलयति । शीलेनाचरति शीलयति । एवं सामयति, सान्त्वयति । छन्दसोपचरति उपमन्त्रयते वा उपच्छन्दयति । पाशेन संयच्छति संपाशयति । पाशं पाशाद्वा विमोचयति विपाशयति । शूरो भवति शूरयति । वीर उत्सहते वीरयति । कूलमुल्लङ्घयति उत्कूलयति । कूलं प्रतीपं गच्छति प्रतिकूलयति । कूलमनुगच्छति अनुकूलयति । लोष्टानवमर्दयति अवलोष्टयति । पुत्रं सूते पुत्रयति । इत्यादि । आख्यानं नलोपाख्यानं कंसवधं सीताहरणं रामप्रव्रजनं राजागमनं मृगरमणम् आरात्रिविवासमाचष्टे इत्यादिषु *इन्द्रियाणां जयं क्षीरस्य पानं देवाना यागं धान्यस्य क्रयं धनस्य त्यागम् ओदनस्य पाकं करोतीत्यादिषु च बहुलवचनान्न भवति ।

---

दर्शनात् ॥—तदुक्तं सदपीच्छाक्यन इति । यथा जगम्यते इत्यादौ यद्यपि भृशं गच्छति तथापि कुटिलं गच्छति इत्येव प्रतीयते न भृशार्थस्तथात्रापि इच्छाक्यनं कर्म विद्यमानमपि आचारक्यना हृतं सद् वृत्तौ आख्यातवृत्तौ न प्रतीयते ॥—उभयधर्म्मविधाने इति । कश्चिन्मृन्मयं बलीवर्दं करोति तत्र च मुण्डत्वं बलीवर्दत्वं च धर्म्मद्वयं विधत्ते तत्र न भवति । मुण्डं प्रसिद्धमऽनूद्याऽप्रसिद्धं शुक्लं करोतीत्यनुवादे च न भवत्यऽनभिधानात् ॥—पटयतीति । अत्र वार्तिककारो वृद्धिमनिच्छन्नपपटदिति मन्यते । स्वमते तु वृद्धावऽसमानस्यौकारस्य लोपे सन्वद्भावादपीपटदिति भवति ॥—त्वचयतीति । नन्वत्र 'नैकस्वरस्य' इत्यन्त्यस्वरादिलोपनिषेधे वृद्धया त्वाचयतीति प्राप्नोति तत्कथमित्याह—त्वचशब्द इत्यादि । अत्र व्यञ्जनान्तं त्वक्शब्दं परित्यज्य स्वरान्तपाठेन ज्ञाप्यते क्वचिन्नाम्नोऽप्यऽतो 'ञ्णिति' इति वृद्धिर्भवति । यथा त्वापयति मापयतीति । ततश्चात्र व्यञ्जनान्तस्य वृद्धौ त्वाचयतीत्यनिष्टं रूपमापद्येत ॥—तूलैरनुकुष्णातीति । तूलैः कृत्वा अनुकूलम् अवाक् च यथा भवति एवमन्तरऽवयवान् बहिर्निष्कासति । नि सारयतीत्यर्थः । अनुकुष्णात्यवकुष्णात्यनयोरुभयो साधारणोऽर्थोऽनुगृह्णातीति । यतोऽत्रान्वर्थेऽव ॥—इन्द्रियाणां जयमिति । इन्द्रियजयं करोतीत्येवमपि कृते न भवति बाहुलकादेव । यथा विपाशयतीति । पाशिक्रिया हि विमोचनसयमाद्यनेकविशेषणविशिष्टा सती प्रत्ययवाच्या ततश्चोपसर्गप्रयोगाऽभावे एकतरेणापि विशेषणेन वैशिष्ट्यं न

अथ हस्तौ निरस्यति हस्तयते पादयते इत्यादिवदुत्पुच्छयते इत्यादावप्युपसर्गस्याप्रयोगः प्राप्नोति । नैवम् । यत्रानेकविशेषणविशिष्टा क्रिया प्रत्ययार्थस्तत्र क्रियाविशेषाभिव्यक्तये युक्त उपसर्गप्रयोगः । यथा विपाशयति संपाशयतीति । यत्र त्वेकविशेषणविशिष्टा क्रिया प्रत्ययार्थस्तत्र संदेहाभावादुपसर्गो न प्रयुज्यते । यथा श्येन इवाचरति श्येनायते । बाष्पमुद्वमति बाष्पायते । हस्तौ निरस्यति हस्तयते । पुत्रमिवाचरति पुत्रीयति । यद्येवमतिहस्तयति उपवीणयति इत्यादावेकैकविशेषणविशिष्टत्वादुपसर्गप्रयोगो न प्राप्नोति । नैवम् । अत्र णिच्प्रत्ययस्य करोत्याचष्टेऽतिक्रामति इत्याद्यनेकार्थत्वात् संदेहे तदभिव्यक्त्यर्थमुपसर्गप्रयोगः । यत्र पुनरनेकोपसर्गविशिष्टा क्रिया प्रत्ययार्थस्तत्र शब्दशक्तिस्वाभाव्यादेक एवोपसर्गार्थः प्रत्ययार्थेऽन्तर्भवति द्वितीयस्तूपसर्गेणैव प्रत्याय्यते । यथा भाण्डं समाचिनोति *संभाण्डयते वस्त्रं वस्त्रेण वा समाच्छादयति संवस्त्रयतीति ॥ ४२ ॥ ***व्रताद्भुजितन्निवृत्त्योः ॥ ३ । ४ । ४३ ॥** व्रतं शास्त्रविहितो नियमः । व्रतशब्दाद्भोजने तन्निवृत्तौ च वर्तमानात्कृगादिष्वर्थेषु णिच् प्रत्ययो भवति बहुलम् । पय एव मया भोक्तव्यमिति व्रतं करोति गृह्णाति वा पयो व्रतयति । सावद्यान्नं मया न भोक्तव्यमिति व्रतं करोति गृह्णाति वा सावद्यान्नं व्रतयति । *अर्थनियमार्थ आरम्भः ॥ ४३ ॥ ***सत्यार्थवेदस्याः ॥ ३ । ४ । ४४ ॥** सत्यार्थवेद इत्येतेषां णिच्संनियोगे आकारोऽन्तादेशो भवति । सत्यमाचष्टे करोति वा सत्यापयति । एवमर्थापयति । वेदापयति । 'त्र्यन्त्यस्वरादेः' ( ७–४–४३ ) इत्याकारस्य लुग्न भवति विधानसामर्थ्यात् ॥ ४४ ॥ ***श्वेताश्वाश्वतरगालोडिताह्वरकस्याश्वतरेतकलुक् ॥ ३ । ४ । ४५ ॥** श्वेताश्व अश्वतर गालोडित आह्वरक इत्येतेषां णिच्संनियोगे यथासंख्यमश्वतरेतक इत्येतेषां लुग्भवति । श्वेताश्वमाचष्टे करोति वा श्वेताश्वेनातिक्रामतीति वा श्वेतयति । एवमश्वयति । गालोडितमाचष्टे करोति वा गालोडयति । एवमाह्वरयति । लुगर्थं वचनं णिच् तु सर्वत्र पूर्वेण सिद्ध एव ॥ ४५ ॥ ***धातोरनेकस्वरादाम् परोक्षायाः कृभ्वस्ति चानु तदन्तम् ॥ ३ । ४ । ४६ ॥** अनेकस्वराद्धातोः परस्याः परोक्षायाः स्थाने आमादेशो भवति आमन्ताच्च परे कृभ्वस्तयो धातवः परोक्षान्ता अनु पश्चादनन्तरं प्रयुज्यन्ते । चकासाचकार । चकासांबभूव । चकासामास । चुलुम्पांचकार । चुलुम्पांबभूव । चुलुम्पामास । *लोलूयांचक्रे । लोलूयांबभूव । लोलूयामास । अस्तेर्भूर्न भवति वि-

---

प्रतीयते ॥—**सभांडयते** इति । शब्दशक्तिस्वाभाव्यात् प्रत्ययेनाऽऽर्थ प्रतिपाद्यते न समर्थ इत्याभाण्डयते इत्यादि न भवति ॥—**व्रताद्भुजि** –॥—**अर्थनियमार्थ आरम्भ** इति । यदि बहुलग्रहणस्य प्रयोगानुसरणार्थत्वात् अर्थनियमो भविष्यतीत्युच्यते तदा तत्प्रपञ्चार्थोऽयमित्यदोषः । उक्तं हि 'ते वै विधयः सुसगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च' ॥—**सत्यार्थ**—॥ णिज्संनियोगविधानादाकारेण णिच् न बाध्यते ॥—**त्र्यन्त्यस्वरादे**रिति । येन नाप्राप्त इति न्यायेनान्तलोपस्य बाधकत्वेन आकारविधानात् अकारस्यैव प्रथमं 'त्र्यन्त्यस्वरादे' इत्यन्त्यलोपो न भवति ॥—**श्वेताश्वाश्वतर**—॥ श्वेतयतीत्यादिषु णेन सस्वराणामश्वादीनां लुक् न तु त्र्यन्त्यस्वरादेरित्यकारलोपे सति विशेषविधानात् अश्वादिलोपात्पश्चादपि त्र्यन्त्यस्वरादेरित्यन्त्यस्वरादेर्न लुक् सकृत बाधित इति न्यायात् । श्वेतयतीत्यादिषु अन्त्यस्वरादेर्लोपेऽपि न किंचिद्विनश्यति । गालोडयतीत्यत्र तु अनेन इतलोपे 'त्र्यन्त्यस्वरादे' इत्योडलोपे सति गालयतीति स्यात् लोडृङ् उन्मादे लोडनं क्तेनं क्त गोलोडितम् । अथवा गुप्तं लोडितं क्षीरस्वामिना पृषोदरादि ॥ नन्वतिहस्तयतीतिवत् श्वेतयतीत्यत्राप्यतिशब्दप्रयोगः प्राप्नोति । न । अत्र शब्दशक्तिस्वाभाव्यादतिशब्दमन्तरेणापि तदर्थप्रतीति ॥—**धातोरनेक**–

धानवलात् । अनेकस्वरादिति किम् । *पपाच । कश्चित्तु प्रत्ययान्तादेकस्वरादपीच्छति । गौरिवाचचार गवांचकार । गवांबभूव । गवामास । एवं स्वाचकारेत्यादि । अनुग्रहणं विपर्यासव्यवहितनिवृत्त्यर्थम् । तेन चकारचकासाम् ईहांदेवदत्तश्चक्रे इत्यादि न भवति । *उपसर्गस्य तु क्रियाविशेषकत्वात् व्यवधायकत्वं नास्ति । तेन 'उक्षां प्रचक्रुर्नगरस्य मार्गान्' इत्यादि भवत्येव ॥ ४६ ॥ **दयायास्कासः ॥ ३ । ४ । ४७ ॥** दय् अय् आस् कास् इत्येतेभ्यो धातुभ्यः परस्याः परोक्षायाः स्थाने आमादेशो भवति आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनु प्रयुज्यन्ते । दयाचक्रे । दयांबभूव । दयामास । पलायाचक्रे । पलायांबभूव । पलायामास । आसांचक्रे । आसांबभूव । आसामास । कासांचक्रे । कासांबभूव । कासामास ॥ ४७ ॥ ***गुरुनाम्यादेरनृच्छूर्णोः ॥ ३ । ३ । ४८ ॥** गुरुर्नामी आदिर्यस्य तस्माद्धातोर्ऋच्छूर्णुवर्जितात्परस्याः परोक्षायाः स्थाने आमादेशो भवति आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनु प्रयुज्यन्ते । ईहांचक्रे । ईहांबभूव । ईहामास । उञ्छाचकार । व्युच्छाचकार । उब्जांचकार । गुरुग्रहणं किम् । इयेष । नामिग्रहणं किम् । आनर्च । आदिग्रहणं किम् । निनाय । ईङस्तु *व्यपदेशिवद्भावाद्भवति । अयाचक्रे । अयांबभूव । अयामास । ईषतुः ईषुः इत्यत्र सनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न भवति । अनृच्छूर्णोरिति किम् । आनर्च्छ । प्रोर्णुनाव । अत एव ऋच्छप्रतिषेधात्संयोगे परे पूर्वो गुरुरिति विज्ञायते ॥ ४८ ॥ **जागुषसमिन्धेर्नवा ॥ ३ । ४ । ४९ ॥** जागृ उष सम्पूर्व इन्ध इत्येतेभ्यो धातुभ्यः परस्याः परोक्षायाः स्थाने आमादेशो वा भवति आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनु प्रयुज्यन्ते । जागराचकार । जागरांबभूव । जागरामास । जजागार । ओषांचकार । उवोष । समिन्धाचक्रे । समीधे । सम्ग्रहणं किम् । इन्धांचक्रे । प्रेन्धांचक्रे । सोपसर्गादिन्धेराम् न भवत्येवेति कश्चित् । अन्ये तु परोक्षायामिन्धेरामन्तस्यैव प्रयोग इत्याहुः । समोऽन्यत्रापि इन्धेराम्विकल्प इत्यन्यः । इन्धांचक्रे ईधे इति ॥ ४९ ॥ ***भीह्रीभृहोस्तिव्वत् ॥ ३ । ४ । ५० ॥** भीह्रीभृहु इत्येतेभ्यो धातुभ्यः परस्याः परोक्षायाः स्थाने आमादेशो वा भवति स च तिव्वत् आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनु प्रयुज्यन्ते । बिभयांचकार । बिभयांबभूव । बिभयामास । बिभाय । जिह्रयाचकार । जिह्राय । बिभरांचकार । बभार । जुहवाचकार । जुहाव । *जुहवांचक्रे । जुहुवे ।

---

—॥—धातुग्रहणाभावे उपसर्गपूर्वाददेरपि स्यात् ॥—**लोलूयांचक्रे** इति । 'आम कृग' इति नियमादाम परात् कृग एवात्मनेपद न +वस्तिभ्याम् ॥—**पपाचेति** । द्विर्वचने कृते त्वनेकस्वरत्वेऽपि संनिपातेति न्यायान्न भवति । विहितविशेषणाद्वा । यद्यनेकस्वराद्विहितो भवति ॥—**उपसर्गस्य** त्विति । ननु कर्त्रादयोऽपि क्रियाया विशेषक भवतीति तस्याप्यव्यवधायकत्व प्राप्नोति । नैवम् । क्रियाया एव विशेषकमित्यवधारणस्य विवक्षितत्वात् । कर्त्रादि च यथा क्रियाया विशेषक तथा द्रव्यस्यापीति । तथा त पातया प्रथममासेति कथचित्समर्थ्यते । प्रथममित्यस्य क्रियाविशेषणत्वात् । प्रश्रयशायो नहुष चकारेति त्वतिदुष्टम् ॥—**गुरुनाम्यादे**—॥ गुरुग्रहण नामिनो विशेषण न धातो । धातुविशेषणे हि इयेष इत्यत्रापि स्यात् ॥—**व्यपदेशिवद्भावादि**ति । धातुपारायणकृता तु व्यपदेशिवद्भावो नेष्टस्तन्मते ईये इत्येव भवति ॥—**भीह्रीभृहो**—॥—**जुहवांचक्रे** इति । अत्र 'क्य शिति' इति क्यो न भवति । शितीति सामान्योक्तेऽपि क्यस्य भावे कर्मणि च विधाना-

तिव्वद्भावाद्द्वित्वमित्वं चेति ॥ ५० ॥ ***वेत्तेः कित् ॥ ३ । ४ । ५१ ॥** विदक् ज्ञाने इत्यतो धातोः परस्याः परोक्षायाः स्थाने आमादेशो वा भवति स च
कित् आमन्ताच्च कृभ्वस्तयोऽनु प्रयुज्यन्ते । विदाचकार । विदांबभूव । विदामास । कित्त्वाद्गुणो न भवति । पक्षे, विवेद । वेत्तेरविदिति कृते इन्द्वयसंयोगात्परोक्षा
किद्वदित्यामः स्थानिवद्भावेन कित्वे सिद्धेऽपि कित्त्वविधानमामः परोक्षावद्भावनिवृत्तिज्ञापनार्थम् । तेन परोक्षावद्भावेन हि *कित्त्वद्विर्वचनादिकं न भवति । तिव्-
निर्देश *आदादिकपरिग्रहार्थः ॥ ५१ ॥ ***पञ्चम्याः कृग् ॥ ३ । ४ । ५२ ॥** वेत्तेः परस्याः पञ्चम्याः स्थाने किदामादेशो वा भवति आमन्ताच्च परः प-
ञ्चम्यन्तः कृगनु प्रयुज्यते । विदांकरोतु, *वेत्तु । विदांकुरु, विद्धि । विदांकरवाणि, वेदानि । कृग्ग्रहणं भ्वस्तिव्युदासार्थम् ॥ ५२ ॥ ***सिजद्यतन्याम् ॥ ३ ।**
**४ । ५३ ॥** धातोरद्यतन्या परभूतायां सिच् प्रत्ययो भवति । *वेति निवृत्तम् । अनैषीत् । अपाक्षीत् । अकृषाताम् कटौ चैत्रेण । इकारचकारौ *विशेषणार्थौ ॥ ५३ ॥
***स्पृशमृशकृषतृपदृपो वा ॥ ३ । ४ । ५४ ॥** स्पृशादिभ्यो धातुभ्योऽद्यतन्यां सिज्वा भवति । अस्प्राक्षीत् । अस्पार्क्षीत् । अस्पृक्षत् । अम्राक्षीत् । अमार्क्षीत् । अमृक्षत् ।
अक्राक्षीत् । अकार्क्षीत् । अकृक्षत् । अत्राप्सीत् । अतार्प्सीत् । अतृपत् । अद्राप्सीत् । अदार्प्सीत् । अदृपत् । तृपदृपोः पुष्यादित्वादङ् शेषाणां तु *सकि प्राप्ते वचनम् ॥ ५४ ॥
***हशिटो नाम्युपान्त्याददृशोऽनिटः सक् ॥ ३ । ४ । ५५ ॥** हशिडन्तान्नाम्युपान्त्याद्दृशिवर्जितात् अनिटो धातोरद्यतन्यां परतः सक् प्रत्ययो भवति ।
*सिचोऽपवादः । दुह्, अधुक्षत् । विश्, अविक्षत् । लिह्लिशोः, अलिक्षत् । द्विष्, अद्विक्षत् । हशिट इति किम् । अभैत्सीत् । नाम्युपान्त्यादिति किम् । अधाक्षी-
त् । *अदृश इति किम् । अद्राक्षीत् । अनिट इति किम् । अकोषीत् । विकल्पितेटोऽपि पक्षेऽनिट्त्वाद्भवति । न्यघुक्षत् । अन्यत्र न भवति । न्यगूहीत् ॥ ५५ ॥

---

न्छित्प्रत्ययोऽपि भावकर्मविहितो गृह्यते । अत्र तु तिव्वदित्युक्तम् । तिव् च भावे कर्मणि न भवति । ग्रन्थकृता च तिव्वद्भावाच्छित्वे द्वित्वमित्वं चेत्येवोक्तम् ॥—वेत्ते कित् ॥—कित्त्वद्विर्वच-
नादिक न भवतीति । तेन जुहवाञ्चक्रे कित्वाऽभावाद्गुण । विदाचकार अपरोक्षात्वात् द्विर्वचनाऽभाव । आदिशब्दाद्दयाचक्रे इत्यादौ एत्वाभाव सिद्ध ॥—आदादिकपरिग्रहार्थ इति ।
अन्यथा विद इति सामान्योक्तौ चतुर्णामऽदायनदायोरित्यतोऽदादिवर्जिताना त्रयाणा वा ग्रह स्यात् । यङ्लुग्निवृत्त्यर्थश्च तिव्निर्देश । तेन यङ्लुपि वेवेदाचकारेति सिद्धम् । 'धातोरनेकस्वरात्-
इत्यामि नाऽनेन विकल्प ॥—पञ्चम्या -॥ भ्वस्तिसवत्र एव कृगऽनूद्यते । तेन कृगट् इत्यस्य न ग्रह ॥—सिजद्यतन्याम् - ॥ 'चज कगम्' इति कृते कित्वाशङ्का स्यात् ॥—वेति निवृत्तमिति ॥
आमूनिवृत्तो तत्सवद्वत्वात् ॥—विशेषणार्थाविति । अन्यथा 'हन सिज्' इत्यादौ सिरिति कृते वर्त्तमानासिप्रत्यये स इति च कृते सकारादिमात्रे प्रसङ्ग स्यात् ॥—स्पृशमृश—॥ दृप साह-
चर्यात् तृपोच् इत्यस्य ग्रहणम् । कृपस्तु स्पृशमृशाभ्या न साहचर्यमनिष्ठे ॥—सकि प्राप्ते वचनमिति । ननु यथाऽयमऽङि सकि च प्राप्ते विधीयमानस्तयो पक्षे बाधको भवत्येव त्रिचोपि बाधक
प्राप्नोत्यऽस्मिन्नपि प्राप्तेऽस्य विधीयमानत्वादिति । नेवम् । पूर्वे अपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति न्यायात् ॥—हशिटो—॥—सिचोऽपवाद इति । तस्मिन्प्राप्तेऽस्य विधानात् ॥—
—अदृश इति किम् । ननु परत्वात्पूर्वमकारागमे नाम्युपान्त्यत्वाभावात् सको न प्राप्तिस्तत्कि वर्जनेन । नैवम् । 'नशो धुटि' इत्यतो धुटीत्यधिकारात् स्वरादिप्रत्यये 'अ सृजि'—इत्यकारागमो
नास्ति । ततो नाम्युपान्त्यत्वात्सकि व्यत्यदक्षन्त इत्यनिष्ट स्यात् । सिचस्तु व्यञ्जनान्तत्वेनाऽनकारान्तत्वात् 'अनतोऽन्तो'—लुपि व्यत्यदक्षत इति । अमादौ च अदक्ष व्यत्यदक्षातामित्यादि स्यात्

श्लिषः ॥ ३ । ४ । ५६ ॥ श्लिषो धातोरनिटोऽद्यतन्यां सक् प्रत्ययो भवति। आश्लिक्षत्कन्यां देवदत्तः। पुष्यादित्वादङ्प्रिमासे वचनम्। 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इत्यङ एव बाधो न ञिचः। आश्लेषि कन्या देवदत्तेन। अनिट इत्येव। श्लिषू दाह इत्यस्मात्सेटो माभूत्। अश्लेषीत्। अधाक्षीदित्यर्थः ॥ ५६ ॥ *नासत्त्वाश्लेषे ॥ ३।४।५७॥ श्लिषो धातोरप्राण्याश्लेषे वर्तमानात्सक् प्रत्ययो न भवति। उपाश्लिषज्जतु च काष्ठं च। समाश्लिषद्गुरुकुलम्। *पृथग्योगात्पूर्वेणापि प्राप्तः प्रतिषिध्यते। व्यत्यश्लिक्षन्त काष्ठानि। असत्वाश्लेष इति किम्। *व्यत्यश्लिक्षन्त मिथुनानि ॥ ५७ ॥ *णिश्रिद्रुस्रुकमः कर्तरि ङः ॥ ३ । ४ । ५८ ॥ ण्यन्तात् श्र्यादिभ्यश्च कर्तरि अद्यतन्यां ङः प्रत्ययो भवति। णि, अचीकरत्। अचूचुरत्। *औजढत्। अचीकमत। कर्मकर्तापि कर्तैव। *अचीकरत कटः स्वयमेव। श्रि, अशिश्रियत्। द्रुं, अदुद्रुवत्। स्रुं गतौ। असुस्रुवत्। कम् अचकमत। कर्तरीति किम्। *अकारयिषातां कटौ देवदत्तेन। कमिग्रहणम् 'अशवि ते वा' (३-४-४) इति यदा णिङ् नास्ति तदार्थवत्। ङकारो ङित्कार्यार्थः ॥ ५८ ॥ **धेट्श्वेर्वा** ॥ ३ । ४ ॥ ५९ ॥ धेट्श्विभ्यां कर्तर्यद्यतन्यां ङः प्रत्ययो वा भवति। अदधत्। अधात्। अधासीत्। अशिश्वियत्। अश्वयीत्। अश्वत्। कर्तरीत्येव। अधिषाताम् गावौ वत्सेन ॥ ५९॥ *शास्त्यसूवक्तिख्यातेरङ् ॥ ३ । ४ । ६० ॥ एभ्यो धातुभ्यः कर्तर्यद्यतन्यामङ् प्रत्ययो भवति। शासूक्, अशिषत्। व्यसांशिषत। अन्वशिषत स्वयमेव। असूच्, आस्थत। अपास्थत। वचंक् ब्रूग्क् वा। अवोचत्। अवोचत। ख्यांक् चक्षिक् वा। आख्यत्। आख्यत। कर्तरीत्येव। अशासिषाताम् शिष्यौ गुरुणा। तिव्निर्देशो यङ्लुबन्तनिवृत्त्यर्थः। अशाशासीत्। अवावाचीत्। अचाख्यासीत्। अस् इत्यूकारः किम्। असक् भुवि, असी गत्यादौ। आभ्यां माभूत्। अभूत्।

सिचि तु अद्राक्ष व्यत्यदक्षातामिति भवति ॥—नाऽसत्वा—॥ नन्वनन्तरस्य विधि प्रतिषेधो वेति न्यायादनन्तरस्य सकोऽङ्बाधकत्वात्परस्मैपदविषयस्यैव प्रतिषेधः प्राप्नोति। न तु क्रियान्यतिहारे कर्त्र्यात्मनेपदे प्रवर्त्तमानस्य 'हशिट' इत्यस्येत्याशङ्क्याह—पृथग्योगादिति। यदि ह्यनन्तरविहितस्यैव प्रतिषेध स्यात्तदा श्लिषोऽसत्त्वाश्लेषे इत्येकमेव योग कुर्यात् ॥—व्यत्यश्लिक्षन्त मिथुनानीति। अत्र प्राच पूर्वस्मात्परो विधि प्राग्विधिरित्यऽकारस्य स्थानित्वात् 'अनतोऽन्तोऽदात्मने' इत्यनेनादादेशो न भवति ॥—णिश्रिद्रु—॥—अचीकरदिति। ननु 'स्वरस्य परे' इति ह्रस्वत्वस्य स्थानित्वे लघोरऽभावात् सन्वद्भावो न प्राप्नोति। न। एतत्सूत्रसामर्थ्याद्भवति। यत ओणेर्ऋदनुबन्धकरणव्याख्यानात् पूर्वं ह्रस्वत्वे कृते स्थानिवद्भावो न, प्राग्विधावित्यस्य प्राचि पूर्वस्मिन् काले विधि प्राग्विधिरिति व्याख्यानाद्वा ॥—औजढदिति। अत्र परे द्वित्वे 'हो धुट्पदान्ते' इत्यस्याऽसत्त्वे तदाश्रितत्वात् 'अधश्चतुर्थात्तथोर्धः' इत्यस्याप्यऽसत्त्वे णौ यत् कृतमितिन्यायादऽकारस्य स्थानित्वे 'नाम्नो द्वितीयात्' इत्यनेन हृतेति द्विर्वचन तत्र यदा परे द्वित्वे 'हो धुट्पदान्ते' इत्यस्य शास्त्रस्यासिद्धिराश्रीयते तदा पुनरपि 'हो धुट्पदान्ते' इत्यादि प्रक्रिया क्रियते ततो 'ढस्तड्ढे' इति ढलोपे पूर्वजकाराऽकारस्य दीर्घत्वे 'ह्रस्व' इत्यनेन ह्रस्व ॥—अकारयिपातामिति। क्रियेते कटौ देवदत्तेन तौ देवदत्तेन क्रियमाणौ यज्ञदत्तेन प्रयुज्येते स्म। यद्वा करोति कटौ देवदत्त स एव विवक्षते नाह करोमि अपि तु क्रियेते कटौ स्वयमेव। तौ क्रियमाणौ कटौ यज्ञदत्तेन प्रायुक्षाताम् ॥—शास्त्यसू—॥ वक्तिख्यातीत्युक्ते चक्षिब्रूगोरपि ग्रहणम्। यत 'इकिस्तिव्' इति इकि विषये वचः

आसीत् । अस्यतः पुष्यादित्वादङि सिद्धे वचनम् *आत्मनेपदार्थम् । शास्तेरात्मनेपदे नेच्छन्त्येके । तन्मते व्यत्यशासिष्ट ॥ ६० ॥ *सर्त्यर्तेर्वा ॥ ३ । ४ । ६१ ॥ सृ ऋ आभ्यां धातुभ्यां कर्तर्यद्यतन्यामङ् प्रत्ययो वा भवति । सृ *अदादिभ्वादिर्वा । असरत् । असार्षीत् । सर्तेः कर्तरि *आत्मनेपदे न दृश्यते इति नोदाह्रियते । ऋ, आरत् । आर्षीत् । समारत । *समार्ष्ट । आत्मनेपदे न भवति परस्मैपदे नित्यमित्येके । परस्मैपदे नित्यमात्मनेपदेऽर्तेर्वा *सर्तेर्नेत्यन्ये । उभयत्र नित्यमित्यपरे । तिव्निर्देशो यङ्लुबन्तनिवृत्त्यर्थः । असरिसारीत् । *आरारीत् ॥ ६१ ॥ ह्वालिप्सिचः ॥ ३ । ४ । ६२ ॥ एभ्यः कर्तर्यद्यतन्यामङ् प्रत्ययो भवति । आह्वत् । अलिपत् । असिचत् ॥ ६२ ॥ *वात्मने ॥ ३ । ४ । ६३ ॥ ह्वादिभ्यः कर्तर्यद्यतन्यामात्मनेपदे वाङ् भवति । *आह्वत । आह्वास्त । अलिपत । अलिप्त । असिचत । असिक्त ॥ ६३ ॥ *लृदिद्द्युतादिपुष्यादेः परस्मै ॥ ३ । ४ । ६४ ॥ लृदितो धातोर्द्युतादिभ्यः पुष्यत्यादिभ्यश्च कर्तर्यद्यतन्यां परस्मैपदे अङ् प्रत्ययो भवति । लृदित्, अगमत् । असृपत् । अशकत् । द्युतादि, अद्युतत् । अरुचत् ।। द्युतादयो 'द्युद्भ्योऽद्यतन्याम्' ( ३-३-४४ ) इत्यत्र परिगणिताः । पुष्यादिः । अपुषत् । औचत् । *अश्लिषत् जतु च काष्ठं च । पुष्यादयो दिवाद्यन्तर्गताः 'दिवादेः श्यः' ( ३-४-७२ ) इत्यत्र परिगणिष्यन्ते । श्यनिर्देशः किम् । पोषतिपुष्णात्यादिभ्यो माभूत् । अपोषीत् । अभूषीत् । अपोषीत् । अकोपीत् । परस्मैपद इति किम् । समगंस्त । व्यद्योतिष्ट । व्यत्यपुक्षत ॥ ६४ ॥ ऋदिच्छ्विस्तम्भूम्रुचूम्लुचूग्रुचूग्लुचूग्लुञ्चूजॄभ्यो वा ॥ ३ । ४ । ६५ ॥ ऋदितो धातोः श्विप्रभृतिभ्यश्च कर्तर्यद्यतन्यां परस्मैपदे वाङ् प्रत्ययो भवति । अरुधत् । अरौत्सीत् । अभिदत् । अभैत्सीत् । अश्वत् । अश्वयीत् । अशिश्वियत् । अस्तभत् । अस्तम्भीत् । अम्रुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् । अग्रुचत् । अग्रोचीत् । ग्रुचो नेच्छन्त्यन्ये । अग्लुचत् । अग्लोचीत् । अग्लुचत् । अग्लुञ्चीत् । ग्लुचूग्लुञ्च्वोरेकतरोपादानेऽपि रूपत्रयं सिध्यति अर्थभेदाच्च द्वयो-

ख्यादेशे पश्चात्सिच् उत्पन्न. ॥—आत्मनेपदार्थमिति । तर्हि आत्मनेपदपरस्मैपदयोरनेनैव सिध्यति किं पुष्यादिपाठेन । सत्यम् । अस्य पुष्यादिपाठो द्विषत्र सुपत्र भवतीति ज्ञापनार्थं । तेनास्मादऽङोऽव्यभिचार । अन्येषां तु क्वचिद्व्यभिचारोऽपि तेन भगवन्मा कोपीरित्यादि बालरामायणोक्त सिद्धम् ॥—सर्त्यर्त्तेः— ॥—अदादिभ्वादिर्वेति । निर्देशादेन शवऽभावे तिव्निर्देशस्य समानत्वादुभयोर्ग्रहणमित्यर्थ ॥—आत्मनेपदे न दृश्यत इति । 'क्रियाव्यतिहार'—इत्यत्र गत्यर्थवर्जनात् । सर्वे गत्यर्था ज्ञानार्था इति ज्ञानार्थस्यापि नेष्यते ॥—समार्ष्ट इति । अत्र नित्यत्वात् सिज्लोपात्प्रागेव 'स्वरादेस्तासु' इति वृद्धिरिति न्यास । 'एत्यस्तेर्वृद्धि' इति ज्ञापकज्ञापिता विधयो ह्यनित्या इति न्यायाद्वा प्रागेव वृद्धि ॥—सर्त्तेर्नेत्यन्य इति । ते हि सर्त्तेरात्मनेपदमिच्छन्ति नाऽङम् ॥—आरारीत् । भृशं पुनः पुनर्वा इयर्ति ऋच्छति वा 'अत्यर्त्ति'—इति यङ् तस्य लुप् ततो द्विर्वचनम् । 'ऋतोऽत्' 'रिरौ च लुपि' इति रागमस्ततोऽद्यतनीदि । सिच् । 'स. सिजस्तेर्दिस्यो', ईत् । इट् 'इट ईति' सिज्लोपस्तत 'सिचि परस्मै' इति धातोर्वृद्धिरार् । तत 'स्वरादेस्तासु' इति पूर्वस्याऽकारस्य आकार. ॥—वात्मने—॥—आह्वतेति । स्पर्द्धापूर्वके आकारणे 'ह्वः स्पर्द्धे' इत्यनेनात्मनेपदम् । सामान्याकारणे 'इंगित' इत्यनेनात्मनेपदम् ॥—लृदिद्द्युतादि—॥ आगन्तुनाऽकारेण द्युतेति कृत्वा तृतीयत्वाप्रसङ्गात् द्युतादीति निर्देश. ॥—अश्लिषत् जतु च काष्ठं चेति । जतु च कर्तृ काष्ठं च कर्तृ अश्लिषत् कर्म किमपि न विवक्षित 'श्लिष.' इति सक् प्राप्तो 'नाऽसत्त्वाश्लेषे' इति निषेध. । ननु द्युतादयः पुष्यादयश्च लृदित. कृत्वा लृदित परस्मै इत्येतावदेव सूत्र

रुपादानम् । अन्ये लङ्विधानसामर्थ्यात् ग्लुञ्चेर्नलोपं नेच्छन्ति । तेनाग्लुञ्चत् । जृश्जृम्भ्वा । अजरत् । अजारीत् । परस्मैपद इत्येव । अरुद्ध । अभित्त ॥ ६५ ॥

*चिण् ते पदस्तलुक् च ॥ ३ । ४ । ६६ ॥ पदिँच् गतावित्यस्माद्धातोः कर्तर्यद्यतन्यास्ते परे चिण् प्रत्ययो भवति निमित्तभूतस्य तकारस्य लुक् च । उदपादि भिक्षा । समपादि विद्या । त इति किम् । उदपत्साताम् । पदेरात्मनेपदित्वात्त इति आत्मनेपदप्रथमत्रिकैकवचनं तकारो गृह्यते *न परस्मैपदमध्यमत्रिकबहुवचनम् । एवमुत्तरत्र । णकारो 'ञ्णिति' ( ४–३–५० ) इति विशेषणार्थः । चकारो 'न कर्मणा ञिच्' ( ३–४–८८ ) इत्यत्र विशेषणार्थः ॥ ६६ ॥

*दीपजनबुधिपूरितायिप्यायो वा ॥३।४।६७॥ एभ्यः कर्तर्यद्यतन्यास्ते परे ञिच् प्रत्ययो वा भवति निमित्तभूततलुक् च । अदीपि । अदीपिष्ट । *अजनि । अजनिष्ट । अबोधि । अबुद्ध । अपूरि । अपूरिष्ट । अतायि । अतायिष्ट । अप्यायि । अप्यायिष्ट । त इत्येव । अदीपिषाताम् । कर्तरीत्येव । अदीपि भवता । उत्तरेण नित्यमेव । बुधीति इकारो दैवादिकस्यात्मनेपदिनः परिग्रहार्थः । तेन बुधृग् अबोधिष्टेत्यत्र न भवति ॥ ६७ ॥ **भावकर्मणोः ॥ ३ । ४ । ६८ ॥** सर्वस्माद्धातोः भावकर्मविहितेऽद्यतन्यास्ते ञिच् प्रत्ययो भवति तलुक् च । आसि भवता । अशायि भवता । अकारि कटः । अपाच्योदनश्चैत्रेण ॥ ६८ ॥

*स्वरग्रहदृशहन्भ्यः स्यसिजाशीःश्वस्तन्यां ञिट् वा ॥ ३ । ४ । ६९ ॥ स्वरान्ताद्धातोः ग्रहादिभ्यश्च विहितासु भावकर्मविषयासु स्यसिजाशीःश्वस्तनीषु ञिट् प्रत्ययो वा भवति । स्वर, दायिष्यते । दास्यते । अदायिष्यत । अदास्यत । अदायिषाताम् । अदिषाताम् । दायिषीष्ट । दासीष्ट । दायिता । दाता । शमिष्यते । शामिष्यते । शमयिष्यते । अशमिष्यत । अशामिष्यत । अशमयिष्यत । अशमिषाताम् । अशामिषाताम् । अशमयिषाताम् । शमिषीष्ट । शामिषीष्ट । शमयिषीष्ट । शमिता । शामिता । शमयिता । एवं चायिष्यते । चेष्यते । शायिष्यते । शयिष्यते । स्ताविष्यते । स्तोष्यते । लाविष्यते । लविष्यते । कारिष्यते । करिष्यते । तारिष्यते । तरिष्यते तरीष्यते । ग्रह, ग्राहिष्यते । ग्रहीष्यते । अग्राहिषाताम् । अग्रहीषाताम् । ग्राहिषीष्ट । ग्रहीषीष्ट । ग्राहिता । ग्रहीता । दृश्, दर्शिष्यते । द्रक्ष्यते । अदर्शिषाताम् । अदृक्षाताम् । दर्शिषीष्ट । दृक्षीष्ट । दर्शिता । द्रष्टा । हन्, घानिष्यते । हनिष्यते । अघानिषाताम् । *अवधिषाताम् । *अहसाताम् । घानिषीष्ट । वधिषीष्ट । घानिता । हन्ता । एभ्य इति किम् । पठिष्यते । स्यादिष्विति किम् । चीयते । भावकर्मणोरित्येव । दास्यति । चेष्यति । प्रकृतिप्रत्यययोर्वचनवैषम्यान्न यथासंख्यम् ॥ ६९ ॥ *क्यः शिति ॥ ३ । ४ । ७० ॥ सर्वस्माद्धातोर्भावकर्मविहिते शिति क्यः प्रत्ययो भवति । शय्यते भवता । शय्येत भवता । शय्यतां भवता । अशय्यत भवता । भिद्यते कुसूलेन । कर्मणि, क्रियते कटः । क्रियेत कटः । क्रियतां कटः । अक्रियत कटः । अक्रियेतां कटौ । अक्रियन्त कटाः । क्रिया । शितीति

---

विधेयम् । नैवम् । द्युतादय पुष्यादयश्च बहव आदित उदितश्च ततस्तेषाम् लृदितामुच्चारयितुमशक्यत्वाददोष ॥—ञिच् ते पद—॥—न परस्मैपदमध्यमत्रिकबहुवचनमिति । ननु प्रकृतिग्रहणे यङ्लुबन्तस्यापीति यङ्लुकि इति परस्मैपदित्वे च परस्मैपदस्यापि सभव । न । श्रुतानुमितयो श्रौतसबन्धो बलीयान्, यङ्लोपोऽपि च न दृश्यते । अत एव सिद्धमऽन्ववादि ॥ —दीपजन—॥—अजनीति । 'न जनवध' इति वृद्ध्यऽभाव ॥—स्वरग्रह—॥ —अवधिषातामिति । 'अद्यतन्या वा' इति वधस्तत इटि 'अत' इत्यलोप ॥—अहसातामिति । 'हन सिच्' इति कित्त्वे 'यमिरमि' इति नलोप ॥—क्यः शिति—

भवति । चोरयति । किम् । अभावि । *बभूवे । भविषीष्ट । भविता । भविष्यते । अभविष्यत भवता । एवमकारि कटो भवता । भावकर्मणोरित्येव । आस्ते । पचति ॥ ७० ॥ शकारवकारौ शिद्वित्कार्यार्थौ ।

*कर्तर्यनद्भ्यः शव् ॥ ३ । ४ । ७१ ॥ धातोरदादिवर्जितात् कर्तरि विहिते शिति शव् प्रत्ययो भवति । अद्प्सांक् भक्षणे । भाक् यांक् वांक् ष्णांक्

पचन् । पचमानः । धारयः । पारयः । *जनमेजयः । कर्तरीति किम् । पच्यते । अनद्भ्य इति किम् । अत्ति । अदती । श्रांक् द्रांक् पांक् लांक् रांक् दांवक् ख्यांक् माक् मांक् इंक् इंणक् वीक् लुक् पुंङ् तुंक् युक् णुक् क्ष्णुक् स्नुक् टुक्षुरकुंक् रुदूक् जिष्वपंक् अनश्वसक् जक्षक् दरिद्राक्

जागृक् चकासृक् शासूक् वचंक् मृजौक् सस्तुक् विदक् हनंक् वशक् असक् पसक् यङ्लुपूक् इंङ्क् शीङ्क् न्हुंङ्क् षूङौक् पृचैङ् पृजुङ् पिजुकि वृजैकि णिजुकि शिजुकि ईडिक् ईरिक् ईशिक् वसिक् आङः शासूकि आसिक् कसुकि णिसुकि चक्षिक् ऊर्णुगक् ष्टुंगक् ब्रूंगक् द्विषींक् दुहींक् दिहीक् लिहीक् हुंक् ओहांक्

जिभीक् हींक् पृंक् ऋक् ओहांङ्क् मांङ्क् डुदागक् डुधांगक् दुडुभृंगक् णिजृंकी विजृंकी विष्लृकी । इति कितोऽदादयः । शितीत्येव । पपाच ॥७१॥ **दिवादेः श्यः ॥**

३ । ४ । ७२ ॥ दिवादेर्गणात्कर्तृविहिते शिति श्यः प्रत्ययो भवति । शकारः शित्कार्यार्थः । दीव्यति । दीव्यन् । श्यादय शवोऽपवादाः । दिवूच् जूपच् शोच् दोंच् छोंच् षोंच् व्रीडच् नृतैच् कुथच् पुथच् गुधच् राधच् व्यधंच् क्षिपंच् पुष्पच् तिमतीमष्टिमष्टीमच् षिवूच् स्रिवूच् ( श्रिवूच् ) ष्ठिवूच् क्षिवूच् इषच् ष्णसूच् क्नसूच्

त्रसैच् वुसच् षहपुहच् पुषंच् उचच् लुटच् ञिदांच् क्लिदौच् जिमिदाच् जिक्ष्विदाच् क्षुधंच् शुन्धच् क्रुधंच् षिधूंच् ऋधूच् गृधूच् रधौच् तृपौच् दृपौच् कुपच् गुपच् युपरुपलुपच् डिपच् ष्टूपच् लुभच् क्षुभंच् णभतुभच् नशौच् कुशच् भृशूभ्रंशूच् वृशच् कृशच् शुषंच् दुषंच् श्लिषच् प्लुषूच् जितृषच् तुषं हृषंच् रुषच् पुसवुसच् बिसच्

कुसच् असूच् यसूच् जसूच् तसूदसूच् वसूच् वुसच् मुसच् मसैच् शमूदमूच् तमूच् श्रमूच् भ्रमूच् क्षमौच् मदैच् क्लमूच् मुहौच् द्रुहौच् स्नुहौच् ष्णिहौच् वृत् पुष्या-दिः । षूङौच् दूङ्च् दीङ्च् धीङ्च् मींङ्च् रींङ्च् लींङ्च् व्रींङ्च् डीङ्च् । वृत् स्वादिः । पीङ्च् ईङ्च् प्रीङ्च् युजिच् सृजिच् वृतङ्च् पदिच् विदिच् खिदिच् युधिच्

अनोरुधिच् बुधि मनिच् अनिच् जनैचि दीपैचि तपिंच् पूरैचि घूरैचि जूरैचि धूरैचि गूरैचि शूरैचि तूरैचि ३। घूरादयः । चूरैचि क्लिशिच् लिशिंच् काशिच् वाशिच् शकींच् शुचृगै रञ्जीच् शपींच् मृषींच् णहींच् ॥ इति चितो दिवादयः ॥ ७२ ॥ **भ्राशभ्लाशभ्रमक्रमक्लमत्रसित्रुटिलषियसिसंयसेर्वा ॥ ३।४।७३॥**

एभ्यः कर्तरि विहिते शिति श्यः प्रत्ययो भवति वा । प्राप्ताप्राप्तविभाषेयम् । भ्राश्यते । भ्राशते । भ्लाश्यते । भ्लाशते । भ्राम्यति । भ्रमति । भौवादिकस्य भ्रम्यति । क्राम्यति । क्रामति । क्लाम्यति । क्लामति । त्रस्यति । त्रसति । त्रुट्यति । त्रुटति । लष्यति । लषति । यस्यति । यसति । संयस्यति । संयसति । यसिग्रहणेनैव सिद्धे

संयसिग्रहणमुपसर्गान्तरपूर्वकस्य यसेर्निवृत्त्यर्थम् । तेन आयस्यति प्रयस्यति इति नित्यं श्यः ॥ ७३ ॥ ***कुषिरञ्जेर्व्याप्ये वा परस्मै च ॥ ३ ।४।७४ ॥**

॥-बभूवे इति । 'धातोरिवर्णोवर्ण'-इति उवादेशे 'भुवो व'-इत्युकार ॥-कर्त्तर्यनद्भ्यः-॥ एकस्मादनुबन्धनानुपपत्तेः सर्वेषामदादीनामभिधानात् बहुवचनम् इति बहुवचनम् । न नियते अद्वेषामिति बहुव्रीहिरत्र नाशिर्द्धनीयो 'हन शशि' इत्यकरणात् । निरपेक्षाति सामान्येनापवादाबाधितत्वात् ॥-जनमेजय इति । एजन्तमेजमात्र प्रयुक्ते णिग् जनमेजयतीति 'एजे' इति खश् ॥-कुषिरञ्जे-॥

कुषिरञ्जिभ्यां व्याप्ये कर्तरि शिद्विषये परस्मैपदं वा भवति तत्संनियोगे श्यश्च । क्यात्मनेपदापवादौ । *कुष्णाति पादं देवदत्तः । कुष्यति पादः स्वयमेव । कुष्यते पादः स्वयमेव । कुष्यन् पादः स्वयमेव । कुष्यमाणः पादः स्वयमेव । रजति वस्त्रं रजकः । रज्यति वस्त्रं स्वयमेव । रज्यते वस्त्रं स्वयमेव । रज्यद्वस्त्रं स्वयमेव । रज्यमानं वस्त्रं स्वयमेव । व्याप्ये कर्तरीति किम् । कुष्णाति पादं रोगः । रज्यति वस्त्रं शिल्पी । शिर्तात्येव । अकोषि । चुकुषे । *कोषिष्यमाणः । अरञ्जि । ररञ्जे । रङ्क्ष्यमाणं स्वयमेव । परस्मैपदसंनियोगविज्ञानादिह न भवति । *कतीह कुष्णानाः पादाः । कतीह *रजमानानि वस्त्राणि । 'वयःशक्तिशीले' (५-२-२४) इति शानः । *क्यात्परस्मैपदविकल्पविधानेनैव सिद्धे श्यविधानं कुष्यन्ती रज्यन्तीत्यत्र 'श्यशवः' (२-१-११९) इत्यनेन नित्यमन्तादेशार्थम् ॥ ७४ ॥ **स्वादेः श्नुः ॥ ३ । ४ । ७५ ॥** स्वादेर्गणात्कर्तरि विहिते शिति श्नुः प्रत्ययो भवति । शकारः शित्कार्यार्थः । सुनोति । सुनुते । सुन्वन् । सुन्वानः । सिनोति । सिनुते । सिन्वन् । सिन्वानः । पुंग्ट् पिंग्ट् शिंग्ट् डु मिंग्ट् चिंग्ट् धूग्ट् स्तृंग्ट् कृंग्ट् वृग्ट् हिंट् श्रुंट् टदुंट् पृंट् स्पृंट् शक्लृंट् तिकतिगषघट् राधंसाधंट् ऋधूट् आप्लृंट् तृपट् दम्भूट् कृवुट् चिवुट् ञिधृषाट् । ष्टिघिट् अशौटि ॥ इति टितः स्वादयः ॥ ७५ ॥ **वाक्षः ॥ ३ । ४ । ७६ ॥** अक्षौ इत्येतस्मात्कर्तरि विहिते शिति श्नुः प्रत्ययो भवति वा । अक्ष्णोति । अक्षति ॥ ७६ ॥ **तक्षः स्वार्थे वा ॥ ३ । ४ । ॥ ७७ ॥** स्वार्थस्तनूकरणं तस्मिन्वर्तमानात्तक्षौ इत्येतस्मात् कर्तरि विहिते शिति श्नुः प्रत्ययो वा भवति । तक्ष्णोति तक्षति काष्ठम् । शाने तक्ष्णुवानः । तक्षमाणः । स्वार्थे इति किम् । संतक्षति वाग्भिः शिष्यं निर्भर्त्सयतीत्यर्थः ॥ ७७ ॥ ***स्तम्भूस्तुम्भूस्कम्भूस्कुम्भूस्कोः श्ना च ॥ ३ । ४ । ७८ ॥** स्तम्भ्वादिभ्यः सौत्रेभ्यो धातुभ्यः स्कुगश्च कर्तरि विहिते शिति श्नाः श्नुश्च प्रत्ययो भवति । शकारः शित्कार्यार्थः । स्तभ्नाति । स्तभ्नोति । स्तभ्नानः । स्तम्नुवानः । स्तुभ्नाति । स्तुभ्नोति । स्कभ्नाति । स्कभ्नोति । स्कुभ्नाति । स्कुभ्नोति । स्कुनाति । स्कुनीते । स्कुनोति । स्कुनुते । स्तम्भ्वादीनामूदित्करणं क्त्वाक्तयोरिड्विकल्पनिषप्रतिषेधौ यथा स्याताम् । स्तब्ध्वा । स्तम्भित्वा । स्तब्धः । स्तब्धवान् ॥ ७८ ॥ **क्र्यादेः ॥ ३ । ४ । ७९ ॥** क्र्यादेर्गणात्कर्तरि विहिते शिति श्नाः प्रत्ययो भवति । क्रीणाति । प्रीणाति । डुक्रींग्श् पिंग्श् प्रीग्श् श्रींगश् मीगश् युंग्श् स्कुंग्श् क्नूग्श् द्रुग्श् ग्रहींश् पूगश् धूग्श् लूग्श् स्तृंग्श् कृग्श् वृग्श् ज्यांश् रीश् लींश् क्लीश् व्लीश् कृम्टृश् पृश् वृश् भृश् दृश् जृश् नृश्

—कुष्णाति पादं देवदत्त इति । बहिर्निष्क्रान्तरवयव करोति देशान्तर प्रापयति वा ॥—कोषिष्यमाण इति । कोषिष्यति पाद देवदत्त । स एव विवक्षते नाऽह कोषिष्यामि स्वयमेव कोषिष्यते आनश् ॥ —अरञ्जीति । आराङ्क्षीत् वस्त्र शिल्पी नाऽहमराङ्क्ष स्वयमेवाऽरञ्जि ॥—कतीह कुष्णाना इति । कुष्यन्ते स्वयमेवेत्येवशीला तत शाने 'क्र्यादे' श्ना 'श्नश्चात' इति आलोप । एकधातावित्यत्र तथैत्याश्रयणात् आत्मनेपदविषये शिति क्यस्य प्रवर्त्तनादऽत्र क्यो न । शानप्रत्ययो हि न परस्मैपदी नाप्यात्मनेपदी । एव रज्यन्ते इत्येवशीलानि **रजमानानि** ॥—क्यात्परस्मैपदविकल्पेति । कुषिरञ्जेर्व्याप्ये क्याद्वा परस्मै इति क्रियतामित्याशय ॥—स्तन्भूस्तुन्भू—॥—स्तुभ्नान इति । अनिर्दिष्टानुबन्धाना सौत्राणा धातूना परस्मैपदित्वात् अत्र 'वय शक्तिशील' इति शान ॥—स्तम्भित्वेति । 'क्त्वा' इति क्द्विदऽभाव ॥

गृश् ऋश् ज्ञांश् क्षिप्रश् व्रीश् भ्रीश् हेठश् मृडश् श्रन्थश् मन्थश् ग्रन्थश् कुथश् मृदश् गुधश् क्षुभश् णभतुभश् खव्श् क्लिशौश् अशश् इषश् विषश् प्रुष् प्लुषश् मु-
पश् पुषश् कुषश् ध्रसूश् वृङ्श् ॥ इति शितः क्र्यादयः ॥ ७९ ॥ **व्यञ्जनाच्छ्नाहेरानः ॥ ३ । ४ । ८० ॥** व्यञ्जनान्ताद्धातोः परस्य श्नायुक्तस्य हेः स्थाने
आन आदेशो भवति । पुषाण । मुषाण । उत्तभान । विष्कभाण । व्यञ्जनादिति किम् । लुनीहि । श्नाहेरिति किम् । अश्नाति । उत्तभ्नुहि । विस्कभ्नुहि ॥८०॥
**तुदादेः शः ॥ ३ । ४ । ८१ ॥** तुदादेर्गणात्कर्तरि विहिते शिति शः प्रत्ययो भवति । शकारः शित्कार्यार्थः । तुदति । तुदते । तुदन् । तुदमानः । तुदीत्
भ्रस्जीत् क्षिपीत् दिशींत् कृषीत् 'मुच्लृती षिचींत् विद्लृंती लुप्लृती लिपीत् कृतैत् खिदंत् पिशत्'। रिंपिंत् धिंत् क्षिंत् पूत् मृंत् कृत् गृत् लिखत् जर्चझर्चत् त्वचत्
ऋचत् ओव्रश्चौत् ऋच्छत् विच्छत् उच्छैत् मिच्छत् उच्छत् प्रच्छंत् उब्जत् सृजंत् रुजोंत् भुजोंत् टु मस्जोंत् जर्जझर्झत् उज्झत् जुडत् पृडमृडत् कडत् पृणत् तृणत् मृणत्
द्रुणत् पुणत् मुणत् कुणत् घुणघूर्णत् चृतैत् णुदंत् पद्लृंत् विधत् जुनशुनत् छुपंत् रिफत् तृफतृम्फत् ऋफऋम्फत् दृफदृम्फत् गुफगुम्फत् उभउम्भत् शुभशुम्भत् दृभैत्
लुभत् कुरत् क्षुरत् खुरत् घुरत् पुरत् मुरत् सुरत् स्फरस्फलत् किलत् इलत् हिलत् शिलसिलत् तिलत् चलत् चिलत् विलत् णिलत् मिलत् स्पृशंत् रुशरिशंत् विशंत्
मृशत् लिशं कृपंत् इषत् मिषत् वृहौत् तृहौ तृन्हौ स्तृहौ स्तन्हौत् कुटत् गुत् धुंत् णूत् धूत् कुचत् व्यचत् गुञ्जत् घुटत् चुट छुट त्रुटत् तुटत् मुटत् स्फुटत् पुटलुठत् कृडत्
कुडत् गुडत् जुडत् तुडत् लुडथुडस्थुडत् वुडत् व्रुड भ्रुडत् द्रुडहुडत्रुडत् चुणत् डिपत् छुरत् स्फुरत् स्फुलत् कुंङ् कूङत् गुरैति पृङत् दृङत् धृङत् ओविजैति ओलजैङ्
ओलस्जैति ष्वञ्जित् जुषैति ॥ इति तितस्तुदादयः ॥ ८१ ॥ **रुधां स्वराच्छ्नो नलुक् च ॥ ३ । ४ । ८२ ॥** रुधादेर्गणस्य स्वरात्परः कर्तरि विहिते
शिति श्नः प्रत्ययो भवति तत्संनियोगे च प्रकृतिनकारस्य लुगन्वाचीयते । प्रत्ययनकारस्य तु विधानसामर्थ्यान्न भवति । शकारः 'श्नास्त्योर्लुक्' (४-२-९०)
इत्यत्र विशेषणार्थः । रुणद्धि । रुन्धे । भिनत्ति । भिन्ते । भनक्ति । हिनस्ति । हिंसन् । रुधूंपी रिचूंपी विचूंपी युजूंपी भिदूंपी छिदूंपी क्षुदूंपी ऊछूंदूंपी ऊतृदूंपी
पृचैप् वृचैप् तञ्चू तञ्जूप् भञ्जोंप् भुजंप् अञ्जौप् ओविजैप् कृतैप् उन्दैप् शिष्लृंप् पिष्लृंप् हिंसुतृहप् खिदिंप् विदिंप् ञि इन्धैपि ॥ इति पितो रुधादयः ॥ ८२ ॥
***कृग्तनादेरुः ॥ ३।४।८३ ॥** कृगस्तनादेश्च गणात्कर्तरि विहिते शिति उः प्रत्ययो भवति । करोति । कुरुते । कुर्वन् । कुर्वाणः । तनोति । तनुते । तन्वन् ।
तन्वानः। तनूयी षणूयी क्षणूयी क्षिणूयी ऋणूयी तृणूयी घृणूयी । वनूयि मनूयि । इति यितस्तनादयः ॥८३॥ ***सृजः श्राद्धे ञिक्यात्मने तथा ॥३।४।८४॥**
सृजो धातोः श्रद्धावति कर्तरि ञिक्यात्मनेपदानि भवन्ति तथा यथा विहितानि । असर्जि माला धार्मिकः । सृज्यते मालां धार्मिकः । स्रक्ष्यते मालां धार्मिकः ।
श्राद्ध इति किम् । व्यत्यसृष्ट माले मिथुनम् । सृजति, स्रक्ष्यति माला मालिकः । तथेति वचनादद्यतन्यामात्मनेपदे ते ञिच् तलुक् च शिति च क्य इति सिद्धम् ॥

—कृग्तनादे—॥ तनादावऽपठितस्य भ्वादिपाठोऽस्य करतीत्यत्र शवर्थ । येषां मते तनादौ पाठस्तन्मते 'तन्भ्यो वा तथासि'—इति रूपद्वय प्राप्येत शव् च न सिध्येत् । स्वमते तु अकृत
अकृथा इति नित्यमेव 'धुट्ह्रस्वात्'-इति लुक् । अन्ये कृगतनादौ पठितस्ततत्साहचर्यात् कृग् गृणाते न तु कृग्द ॥—सृजः श्राद्धे—॥ अत्र ञिक्यो तथा विधीयेते । आत्मनेपदं तु मुख्यमेव विधीयते ॥

॥ ८४ ॥ *तपेस्तपःकर्मकात् ॥ ३ । ४ । ८५ ॥ तपेर्धातोरर्थान्तरवृत्तित्वेन तपःकर्मकात् कर्तरि ञिक्यात्मनेपदानि भवन्ति तथा। तप्यते तपः साधुः। तेपे तपांसि साधुः। तपिरत्र करोत्यर्थः। ञिच् तु 'तपः कर्त्रनुतापे च' ( ३-४-९१ ) इति प्रतिषेधान्न भवति। अन्वतप्त तपः साधुः। तपेरिति किम्। कुरुते तपांसि साधुः। तप इति किम्। उत्तपति सुवर्णं सुवर्णकारः। कर्मेति किम्। तपांसि साधुं तपन्ति। दुःखयन्तीत्यर्थः ॥ ८५ ॥ *एकधातौ कर्मक्रिययैका-कर्मक्रिये ॥ ३ । ४ । ८६ ॥ एकस्मिन्धातौ कर्मस्थक्रियया *पूर्वदृष्टया एका अभिन्ना संभवत्कर्मिका क्रिया यस्य तस्मिन्कर्तरि कर्मकर्तृरूपे धातोर्ञिक्यात्मनेपदानि तथा भवन्ति। *अकारि कटः स्वयमेव। क्रियते कटः स्वयमेव। क्रियमाणः कटः स्वयमेव। चक्रे कटः स्वयमेव। *अभेदि कुशूलः स्वयमेव। भिद्यते कुशूलः स्वयमेव। बिभिदे कशूलः स्वयमेव। अत्र करोति कटम् भिनत्ति कशूलमित्यादौ यैव कटादिकर्मणां निर्वृत्तिद्विधाभवनादिका क्रिया सैव सौकर्यादविवक्षिते कर्तृव्यापारे स्वातन्त्र्यविवक्षायां तस्मिन्नेव धातावकर्मिका च। एवं चाकर्मत्वाद्भावेऽप्यात्मनेपदं भवति। क्रियते कटेन। भिद्यते। कशूलेन। एकधाताविति किम्। पचत्योदनं चैत्रः। *सिध्यत्योदनः स्वयमेव। कर्मक्रिययेति किम्। साध्वसिश्छिनत्ति, साधु स्थाली पचति इति करणाधिकरणक्रिययैकक्रिये माभूत्। एकक्रिययेति किम्। स्रवत्युदकं कुण्डिका। स्रवत्युदकं कुण्डिकायाः। अत्र विसृजति *निष्क्रामतीति क्रियाभेदात्। गलन्त्युदकं वलीकानि। गलत्युदकं वलीकेभ्य इति। अत्रापि मुञ्चतीति पततीति क्रियाभेदात् नैकक्रियत्वम्। अकर्मक्रिय इति किम्। भिद्यमानः कशूलः पात्राणि भिनत्ति। अन्योन्यमाश्लिष्यतः। हन्त्यात्मानमात्मा। एकस्य कर्मत्वं कर्तृत्वं च कथमिति चेत्। उच्यते—सर्वमपि हि कर्म स्वव्यापारे *स्वातन्त्र्यमनुभूय कर्तृव्यापारेण न्यक्कृतं सत् कर्मतामनुभवति। कर्तृव्यापाराविवक्षायां तु स्वव्यापारे स्वातन्त्र्यात् कर्तृत्वमस्याव्याहतमेव। यदाहुः—' निर्वृत्त्यादिषु तत्पूर्वमनुभूय स्वतन्त्रताम् ॥ *कर्त्रन्तराणां व्यापारे कर्म संपद्यते ततः ॥ १ ॥

---

–तपेस्तप–॥–अर्थान्तरवृत्तित्वेनेति करोत्यर्थेनेत्यर्थ ॥–एकधातौ–॥–पूर्वदृष्टयेति। पूर्वस्मिन् काले दृष्टा तया सहार्थे तृतीया॥–अकारि कटः स्वयमेवेति। अकार्षीत्कट देवदत्त। स एव विवक्षते नाऽहमकार्षम् अकारि कट स्वयमेव। स्वयशब्दस्तृतीयार्थे करणे कारके वर्तते ॥–अभेदि कुशूलः स्वयमेवेति। अभैत्सीत् अभिदद्वा कुशूल देवदत्त द्विधा भवन्त द्वेधा अबीभवत्। स एव विवक्षते नाऽहमभिदम् अभैत्स वा किंतु स्वयमेवाऽभेदि ॥–सिध्यत्योदन स्वयमेवेति। नन्वत्र यथा धातुभेदस्तथा धातुभेदे क्रियाभेदोऽपि। नैवम्। एकाऽभिन्ना क्रियेत्येकधाताविति स्थिते द्रष्टव्यमिति न द्व्यङ्गवैकल्यम् ॥–निष्क्रामतीति क्रियाभेदादिति। विसर्गे विसर्जनमात्र निष्क्रमण तु विसर्गानन्तर गमनमिति विसर्जननिष्क्रमणयोर्भेद। अत्र विसृजति उदक कुण्डिका सा एव विवक्षते नाह विसृजामि किंतु स्वयमेव निष्क्रामतीति विवक्षाया न भवति। यदा तु स्वयमेव विसृज्यते इति विवक्ष्यते तदा क्यादयो भवन्ति वा नवा। उच्यते। शब्दशक्तिस्वाभाव्यात्स्वयमेव विसृज्यत इत्यर्थो न प्रतीयते किंतु निष्क्रामतीत्येव ॥–भिद्यमानः कुशूलः पात्राणि भिनत्तीति। नन्वऽत्र द्व्यङ्गविकलत्व व्यावृत्तेर्यत प्रथमो देवदत्तकर्तृको द्वितीयस्तु कुशूलकर्तृक इति साधनभेदाक्रियाभेदे धातुभेद। न। स्याद्वादादऽत्र धातुभेदो नाश्रीयते अन्यथा सूत्रमिद निरर्थक स्यात्। यतोऽकारि कट स्वयमेवेत्यत्रापि इत्थ धातुभेदसद्भावात्। तथाहि–प्रथम देवदत्तकर्तृक कृग् पश्चात् कटकर्तृक ॥—स्वातन्त्र्यमऽनुभूयेति। यत कट करोतीत्यादिषु स्वव्यापारे जननादिलक्षणे कटादि कर्म स्वातन्त्र्यमऽनुभवति स्वातन्त्र्याच्च कर्तृत्वम् ॥—कर्त्रन्तराणां व्यापारे इति। स्वव्यापारे स्वातन्त्र्यात् कटादिकर्मण कर्तृरूपादऽन्यो वरुटादि कर्त्ता कर्त्रन्तर तस्य

*निवृत्तप्रेषणं चैतत्स्वक्रियावयवे स्थितम् ॥ निवर्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते' ॥ २ ॥ इति ॥८६॥ ***पचिदुहेः ॥ ३ । ४ । ८७ ॥** पचिदुहिभ्यामेकधातौ कर्मस्थक्रियया पूर्वदृष्टयाऽकर्मिकया सकर्मिकया वा एकक्रिये कर्तरि कर्मकर्तृरूपे ञिक्यात्मनेपदानि भवन्ति अपवादविषयं मुक्त्वा । अपाच्योदनः स्वयमेव । पच्यते ओदनः स्वयमेव । पक्ष्यते ओदनः स्वयमेव । अदोहि गौः स्वयमेव । दुग्धे गौः स्वयमेव । अदुग्ध गौः स्वयमेव । *उदुम्बरं फलं पचति वायुः । उदुम्बरः फलं पच्यते स्वयमेव । अपक्तोदुम्बरः फलं स्वयमेव । गा दोग्धि पयो गोपालकः । दुग्धे गौः पयः स्वयमेव । अदुग्ध गौः पयः स्वयमेव । अधुक्षत गौः पयः स्वयमेव । दुहिपच्योः कर्मणि ञिचः प्रतिषेधं वक्ष्यति । तथा *अविशेषेण दुहेर्ञिचो विकल्पं क्यस्य च प्रतिषेधं वक्ष्यति । अकर्मकस्येह पूर्वेणैव सिद्धे सकर्मकार्थं वचनम् ॥ ८७ ॥ **न कर्मणा ञिच् ॥ ३ । ४ । ८८ ॥** पचिदुहेः कर्मणा योगेऽनन्तरोक्ते कर्तरि ञिच् न भवति । अपक्तोदुम्बरः फलं स्वयमेव । अदुग्ध गौः पयः स्वयमेव । कर्मणेति किम् । अपाच्योदनः स्वयमेव । अदोहि गौः स्वयमेव । अनन्तरोक्ते कर्तरीत्येव । अपाचि उदुम्बरः फलं वायुना । अदोहि गौः पयो गोपालकेन ॥ ८८ ॥ **रुधः ॥ ३ । ४ । ८९ ॥** रुधो धातोरनन्तरोक्ते कर्तरि ञिच् न भवति । अरुद्ध गौः स्वयमेव । अनन्तरोक्ते कर्तरीत्येव । अरोधि गौर्गोपालकेन ॥ ८९ ॥ **स्वरदुहो वा ॥ ३ । ४ । ९० ॥** स्वरान्ताद्धातोर्दुहेश्चानन्तरोक्ते कर्तरि ञिच् वा न भवति । अकृत अकारि कटः स्वयमेव । अलविष्ट अलावि केदारः स्वयमेव । अदुग्ध अदोहि गौः स्वयमेव । स्वरदुह इति किम् । अभेदि कुशूलः स्वयमेव । अनन्तरोक्ते कर्तरीत्येव । अकारि कटश्चैत्रेण । अदोहि गौर्वल्लवेन ॥ ९० ॥ ***तपः कर्त्रनुतापे च ॥ ३ । ४ । ९१ ॥** तपेर्धातोः कर्मकर्तरि कर्तरि अनुतापे चार्थे ञिच् न भवति । *अनुतापग्रहणाद्भावे कर्मणि च । अन्ववातप्त कितवः स्वयमेव । कर्तरि । अतप्त तपांसि साधुः । *अन्वतप्त चैत्रेण । अन्ववातप्त पापः पापेन कर्मणा । कर्त्रनुतापे चेति किम् । अतापि पृथिवी राज्ञा ॥ ९१ ॥ * **णिस्नुश्र्यात्मनेपदाकर्मकात् ॥ ३ । ४ । ९२ ॥** ण्यन्ताद्धातोः स्नुश्रिभ्यां चात्मनेपदविधावकर्मकेभ्यश्च कर्मकर्तरि ञिच् न भवति । येभ्यः कर्मण्यसति आत्मनेपदं विधीयते ते आत्मनेपदाकर्मकाः । णि, पचति ओदनं चैत्रः तं मैत्रः प्रायुङ्क्त अपीपचत् ओदनं चैत्रेण मैत्रः । पुनरोदनस्य सुकरत्वेन कर्तृत्वे अपीपचतौदनः स्वयमेव । यदि वा स्वयमेव पच्यमानः ओदनः स्वं प्रायुङ्क्त *अपीपचतौदनः स्वयमेव । उभयत्र स्वयमेवापाचीत्येवार्थः । अचू-

---

॥-निवृत्तप्रेषणमिति । निवृत्तकर्तव्यापारमित्यर्थ ॥-पचिदुहे ॥-अकर्मिकयेति । अकर्म्मकत्वे पूर्वेण सिद्धमऽप्यनूद्यते सूत्रारम्भात् । अनेन तु कर्म्मणि विधीयते तर्ह्यत्र कर्म्मणीत्युच्यताम् । न । एव कृते पचिदुह्योस्तक्रकौण्डिन्यन्यायेन सत्येव कर्म्मणि स्यात् कर्मण्यऽसति पूर्वेणाऽपि न स्यात् ॥-उदुम्बरं फलं पचति वायुरिति । अयमन्तर्भूतण्यर्थो द्विकर्मक । उदुम्बरात् फल पाचयति वायुरित्यर्थ ॥-अविशेषेणेति । कर्मणि सत्यऽसति वेत्यर्थ । अविशेषेणेत्युक्तेऽपि कर्मणि 'न कर्मणा ञिच्' इति नित्य प्रतिषेध अकर्मणि तु विकल्प ॥-तपःकर्त्रे-॥ नन्वऽनेन सामान्येन सानुतापेऽननुतापे च कर्त्तरि कर्म्मकर्त्तरि च भविष्यति किमऽनुतापग्रहणेनेत्याशङ्क्याह—अनुतापग्रहणादिति ॥—अन्वतप्त चैत्रेणेति । पश्चात्तपन कृतमित्यर्थ. । अप्रेतने तु पश्चात्ताप कारित इत्यर्थ ॥—णिस्नुश्र्यात्मने-॥

चुरत् गां चैत्रः । अचूचुरत गौः स्वयमेव । पुच्छमुत्क्षिपति उत्पुच्छयते गौः । अन्तर्भूतण्यर्थत्वात्सकर्मकत्वे उदपुपुच्छत गां देवदत्तः । उदपुपुच्छत गौः स्वयमेव । यद्वा उत्पुच्छामकार्षीदिति णिचि उदपुपुच्छद्गां देवदत्तः । उदपुपुच्छत गौः स्वयमेव । स्नु, मास्नावयेत् गां देवदत्तः । *मास्नोष्ट गौः स्वयमेव । श्रि, उदशिश्रियत् दण्डं दण्डी । उदशिश्रियत दण्डः स्वयमेव । *आत्मनेपदाकर्मक, व्यकार्षीत् सैन्धवं चैत्रः । वल्गयति स्थैत्यर्थः । व्यकृत सैन्धवः स्वयमेव । विकरोतिर्वल्गनेऽन्तर्भूतण्यर्थः कर्मस्थक्रियः । व्यकार्षीत् कटं चैत्रः । व्यकृत कटः स्वयमेव । अवधीत् गां गोपः । आहत गौः स्वयमेव । व्यतासीत् पृथिवीं रविः । व्यतप्त पृथवी स्वयमेव । ञिच्निषेधात् ञिट् भवत्येव । पाचिता, पाचिषीष्ट ओदनः स्वयमेव । मास्नाविष्ट मस्नाविषीष्ट गौः स्वयमेव । उच्छ्रायिता उच्छ्रायिषीष्ट दण्डः स्वयमेव । आघानिष्ट आघानिषीष्ट गौः स्वयमेव । पृथग्योगात् उत्तरेण ञिटः प्रतिषेधो न भवति ॥ ९२ ॥ *भूषार्थसनूकिरादिभ्यश्च ञिक्यौ ॥ ३ । ४ । ९३ ॥

भूषार्थेभ्यः सन्नन्तेभ्यः किरादिभ्यश्चकाराण्णिस्नुश्र्यात्मनेपदाकर्मकेभ्यश्च धातुभ्यः कर्मकर्तरि ञिक्यौ न भवत । ञिरुत्सृष्टानुबन्धो ञिच्ञिटोर्ग्रहणार्थः । भूषार्थ, अलमकार्षीत् कन्यां चैत्रः । अलमकृत कन्या स्वयमेव । एवमलंकरिष्यते अलंकुरुते कन्या स्वयमेव । पर्यस्कार्षीत्कन्यां चैत्रः पर्यस्कृत परिष्करिष्यते परिष्कुरुते कन्या स्वयमेव । अबूभुषत् कन्यां छात्रः । अबूभुषत भूषयिष्यते भूषयते कन्या स्वयमेव । अममण्डत् कन्यां छात्रः अममण्डन्त मण्डयिष्यते मण्डयते कन्या स्वयमेव । भूषिमण्डयोर्ण्यन्तत्वेनैव निषेधे सिद्धे *ञिट्प्रतिषेधार्थं भूषार्थेपूदाहरणम् । सन्नन्त, अचिकीर्षीत् कटं चैत्रः । अचिकीर्षिष्ट चिकीर्षिष्यते चिकीर्षते कटः स्वयमेव । अविभित्सीत् कुशूलं चैत्रः । अविभित्सिष्ट विभित्सिष्यते विभित्सते कुशूलः स्वयमेव । किरादि, अकारीत्पांसुं करी । अकीर्ष्ट कीर्षीष्ट किरते पांसुः स्वयमेव । एवमवाकीर्ष्ट अवकीर्षीष्ट अवकिरते पांसुः स्वयमेव । अगारीत् ग्रासं चैत्रः । अगीर्ष्ट गीर्षीष्ट गिरते ग्रासः स्वयमेव । एवं न्यगीर्ष्ट निगीर्षीष्ट निगिरते ग्रासः स्वयमेव । दोग्धि गां पयो गोपः । दुग्धे गौः स्वयमेव । दुग्धे गौः पयः स्वयमेव । कथमदोहि गौः स्वयमेव । दुहेर्ञ्जिविकल्प उक्तः । अवोचत्कथां चैत्रः । अवोचत ब्रूते कथा स्वयमेव । अश्रन्थीत् मालां मालिकः । अश्रन्थिष्ट श्रथ्नीते श्रन्थते माला स्वयमेव । अग्रन्थीत् ग्रन्थं विद्वान् । अग्रन्थिष्ट ग्रथ्नीते ग्रन्थते ग्रन्थः स्वयमेव । श्रन्थिग्रन्थो *क्रियादौ युजादौ वा । अनंसीत् दण्डं दण्डी । अनंस्त नमते दण्डः स्वयमेव । परिणमति मृदं कुलालः । परिणमते मृत् स्वयमेव । कृ गॄ दुह ब्रू श्रन्थ् ग्रन्थ् नम् इति किरादयः । बहुवचनं शिष्टप्रयोगानुसरणार्थम् । णिस्नुश्र्यात्मनेपदाकर्मकाणां ञिच्प्रतिषेधः पूर्वसूत्रे उदाहृतः ञिट्त्वेषां पृथग्योगाद्भवत्येवेति चोक्तम् । क्यनिषेध उदाह्रियते । ण्यन्त, कारयते कटः स्वयमेव । चोरयते गौः स्वयमेव । उत्पुच्छयते गौः स्वयमेव । स्नु । प्रस्नुते गौः स्वयमेव । श्रि,

–अपीपचतोदनः स्वयमेवेति । अत्र प्रयोजकव्यापारविवक्षायां णिग् न निवर्त्तते । ण्यन्तानां ञिच्प्रतिषेधात् । स्वयं पच्यमानं ओदनं स्वं प्रायुंक्तेति ततोऽपीपचदोदनः स्वमात्मानमित्यर्थः । स ओदनं विवक्षते नाहमात्मानमपीपचम् । नात्मानं लिप्यन्तमऽरीरधं किं तर्हि स्वयमोदनोऽपीपचत असीसधत इत्यर्थः ॥–प्रास्नोष्ट गौरिति । अत्र पूर्वमेव नित्यत्वादन्तरङ्गत्वाच्च गुणः ॥–आत्मनेपदाकर्मकेति । येषामऽकर्मकाणामात्मनेपदं व्यधायि तेषामित्यर्थः ॥–भूषार्थसन्–॥–ञिट्प्रतिषेधार्थमिति । अन्यथा पृथग्योगात् ण्यन्तद्वारात् ञिट्प्रतिषेधो न स्यात् किंतु पूर्वेण ञिच एव ॥–क्रियादौ युजादौ चेति । धातुपारायणे तु भ्वादि सत्कावपि ॥

उच्छ्रयते दण्डः स्वयमेव । आत्मनेपदाकर्मकः, विकुर्वते सैन्धवाः स्वयमेव । आहते गौः स्वयमेव । अन्ये तु णिस्नुश्र्यात्मनेपदाकर्मकेभ्यो ञिटोऽपि प्रतिषेधमिच्छन्ति । तन्मते पाचयिता पाचयिष्यते ओदनः, प्रस्नोता प्रस्नोष्यते गौ, उच्छ्रयिता उच्छ्रयिष्यते दण्डः, आहन्ता आहनिष्यते गौः स्वयमेवेत्येव भवति । *स्नुनमोः *अन्तर्भूतण्यर्थत्वेन सकर्मकत्वाद्दुहादेः कर्मकर्तृत्वम् । यत्र तु ण्यर्थो नास्ति तत्र कर्तैव । यथा प्रस्नौति गौर्दोग्धुः कौशलेन । नमति पल्लवो वातेन ॥ ननु कर्मस्थया क्रियया एकाकर्मक्रिये कर्तरि ञिक्यात्मनेपदानि भवन्ति *अत्र तु ण्यन्ताना प्रयोजकव्यापारः *सन्नन्ताना चेच्छाकर्तृस्थैव क्रियेति ञिक्ययोः प्राप्तिरेव नास्ति किं प्रतिषेधेन । उच्यते—प्रयोजकव्यापारस्येच्छायाश्च तदर्थत्वात् करणादिक्रियारूपस्य प्रकृत्यर्थस्य प्राधान्यम् तस्य च कर्मस्थत्वात् णिसन्नन्तानामपि कर्मस्थक्रियत्वम् । तथा *ब्रूगे कथेत्यत्र वचनं *शब्दप्रकाशनफलत्वात् उपाध्यायेनोक्तः करोतीतिवत् *प्रेरणार्थत्वात् वा कर्मस्थक्रियारूपम् । भूषाक्रियाणां च भूषाफलं शोभाख्यं कर्मणि दृश्यत इति कर्मस्थक्रियत्वम् । एवमन्यत्रापि भावनीयम् ॥ ९३ ॥ **करणक्रियया क्वचित्** ॥ ३ । ४ । ९४ ॥ एकधातौ पूर्वदृष्टया करणस्थया क्रियया एकाकर्मक्रिये कर्तरि ञिक्यात्मनेपदानि क्वचिद्भवन्ति । *परिवारयन्ति कण्टकैः पुरुषा वृक्षम् । परिवारयन्ते कण्टका वृक्षं स्वयमेव । क्वचिन्न भवति । साध्वसिश्छिनत्ति ॥ ९४ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ तृतीयोऽध्यायः ॥ ३ ॥ ॥ **प्रतापतपनः कोपि मौलराजेर्नवोऽभवत् ॥ रिपुस्त्रीमुखपद्मानां न सेहे यः किल श्रियम् ॥ १ ॥**

—स्नुनमोरिति । ननु स्नुनमावकर्मकौ तत्कथमऽनयो कर्मस्थक्रियत्वमित्याह—अन्तर्भूतण्यर्थत्वेनेति ॥—अत्र तु ण्यन्तानामिति । यथा कुर्वन्त प्रयुङ्क्ते इति अत्र हि प्रयोजकक्रिया देवदत्तादौ स्थिता यतो देवदत्त कटादि कुर्वन् चैत्रेण प्रयुक्त स च कर्तैव ॥—सन्नन्ताना चेति । इच्छाया प्राणिधर्मत्वात् । यश्च इच्छति स कर्तैव ॥—ब्रूते कथेत्यत्रेति । ननु वचनक्रिया देवदत्ते कर्तरि स्थिता न तु कथाकर्मणि तत्कथ कर्मस्थक्रियत्वमित्याह—शब्दप्रकाशनफलत्वादिति । अस्या ये शब्दास्त प्रकाशमाना वचनेन प्रकाश्यन्ते इति वचन कर्मस्थक्रियारूपम् ॥—प्रेरणार्थत्वाद्वेति । अयमर्थ प्रेरणार्थो वा अत्र ब्रूग् । ततश्च ब्रूत इति कोऽर्थ । शिष्येण बुध्यमाना बोधयतीत्यर्थ ॥—करणक्रियया—॥—एकाकर्मक्रियेति । एतदधिकारायातत्वात् योजित कचिद्ग्रहणात्तु सकर्मकत्वेऽपि भवति ॥—परिवारयन्ति । क्वचि दित्युक्त्याऽपि न भवति ॥ इत्याचार्य० तृतीयाध्यायः समाप्तः ॥ ३ ॥

# ॥ चतुर्थोऽध्यायः ॥

ˋद्विर्धातुः परोक्षाङे प्राक्तु स्वरे स्वरविधेः॥४।१।१॥परोक्षायां ङे च प्रत्यये परे धातुर्द्विर्भवति। धातोरवस्थितस्य द्वितीयमुच्चारणं क्रियते इत्यर्थः । स्वरादौ तु द्विर्वचननिमित्ते प्रत्यये स्वरस्य कार्यात् प्रागेव द्वित्वं भवति। ˋपपाच। पपाठ। इयाज। आर। अचकमत। धातुरिति किम्। प्राशिश्रियत्। 'वेत्तेः कित्' (३-४-५१) इति वचनादामि परोक्षाकार्यं न भवति। दयांचक्रे। विदांचकार। परोक्षाङ इति किम्। अदात्। प्रागिति किम्। निनाय। निनयिथ। निन्यतुः। चक्रतुः। पपौ। पपतुः। जग्मतुः। अदधत्। एवमादिषु वृद्ध्यादेः स्वरविधेः पूर्वमेव द्वित्वं सिद्धं भवति। स्वर इति किम्। दिदीर्वान्। शिशीर्वान्। जेघ्रीयते। देध्मीयते। जेगीयते। स्वरविधेरिति किम्। श्वि, ˋशुशाव। ˋतितवनीयिपतीत्यत्र तु स्वरविधेर्द्विर्वचननिमित्तमसयाजन्यत्वान्न ततः प्राग् द्वित्वम्। जग्ले मम्ले इति आनिमित्तकमात्वम्। अधिजगे इति विषये आदेशः। प्राक्तु स्वरे स्वरविधेरिति आद्विर्वचनमधिकारः। अन्यथा हि *आटिटत् इत्यादि न सिध्यति॥ १॥ *आद्योंऽश एकस्वरः ॥४।१।२॥ *अनेकस्वरस्य धातोराद्य एकस्वरोऽवयवः परोक्षाङे प्रत्यये द्विर्भवति। जजागार। अचकाणत्। पूर्वेण सर्वस्य द्वित्वे प्राप्ते वचनम्॥ २॥ ˋसन्यङश्च ॥ ४।१।३॥ सन्नन्तस्य यङन्तस्य च धातोराद्य एकस्वरोऽवयवो द्विर्भवति। तितिक्षते। चिकीर्षति। पापच्यते। लोलूयते। ˋषष्ठीनिर्देश उत्तरार्थः। चकारः पूर्वोक्तनिमित्तसमुच्चयार्थ उत्तरार्थ एव। तेनोत्तरत्र परोक्षाङे सन्नन्तयङन्तानां च यथासंभवं द्वित्वं सिद्धम्॥ ३॥ *स्वरादेर्द्वितीयः॥४।१।४॥ स्वरादेर्धातोर्द्विर्वचनभाजो द्वितीयांश एकस्वरो द्विर्भवति न त्वाद्यः। अटिटिषति। अशिशिषति। अटाट्यते। अशाश्यते। प्राक्तु स्वरे स्वरविधेरित्येव। आटिटत्। आशिशत्। *प्रोर्णुनाव।

॥ द्विर्धातुः—॥—पपाचेति। अत्र पुनरपि द्विर्वचन न भवति। द्विरिति वचनात् ॥—निनायेति। 'स्वरस्य परे'-इत्यनेनापि सिद्धम्। नैवम्। कालापेक्षाया स्थानित्वाऽभावः ॥—शुशावेति। अत्र हि स्वरव्यञ्जनकार्यं 'वा परोक्षायङि' इति य्वृत् 'दीर्घमवोऽन्त्यम्' ॥—तितवनीयिपतीति। तुंक् वृत्तीत्यतोऽनडन्तात् क्यनि सनि 'अन्यस्य'-इति द्वित्वम् ॥—स्वरविधेरिति। गुणरूपस्येत्यर्थ ॥—आटिटदित्यादि न सिध्यतीति। प्रागेव णेर्लोपे सति ॥—आद्योंश—॥—अनेकस्वरस्येति। एकस्वरस्यैकस्वरेऽशे द्विरुक्ते न किञ्चिदऽस्य फलम्। यद्वा एकस्वर इति सम्बन्धिशब्द सामर्थ्यादऽनेकस्वर धातुमाक्षिपति। एतत्सूत्र विना अचकाणदित्ययं विनश्यति। तथा अजूघुणादित्यापि न तु जजागार इति ॥—सन्यङश्च ॥—षष्ठीनिर्देश इति। नन्वऽत्र सनि यङि च निमित्तभूते एकस्वरस्य द्वित्वम् तत कथ सप्तमी नादायीत्याह—उत्तरार्थ इति। तेनोत्तरेण प्रतीपिपतीत्यादि सिद्धम्। दर्शितोदाहरणाऽपेक्षया चेदमुक्त यावता यङ्लुपि बोभवतीत्यादिष्विहापि फलमस्ति। किञ्च चकार उत्तरार्थ एवेत्यत्रैवकारेण षष्ठीतिनिर्देशस्य इहार्थत्वमपि ज्ञायते ॥—स्वरादे—॥—प्रोर्णुनावेति। अत्र द्वित्वरूपे परे कार्ये णत्वशास्त्रस्याऽसत्त्वात् द्वित्वे

प्रोर्णुनविषति । *अरिरिषति । अरिरिषतीत्यत्र तु *इटः कार्यित्वं न निमित्तत्वम् । ततो द्वित्वनिमित्तस्य स्वरादिप्रत्ययस्याभावात् प्राक् *स्वरविधिरेव ॥ ४ ॥ 'न बदनं संयोगादिः ॥ ४ । १ । ५ ॥ स्वरादेर्धातोर्द्वितीयस्यावयवस्यैकस्वरस्य वकारदकारनकाराः संयोगस्यादयो न द्विर्भवन्ति । उब्जिजिषति । अट्टिटिषते । अड्डिडिषति । उन्दिदिषति । इन्दिद्रीयिषति । औब्जिजत् । आट्टिटत् । आड्डिडत् । औन्दिदत् । बदनमिति किम् । ईचिक्षिषते । संयोगादिरिति किम् । प्राणिणिषति ॥ ५ ॥ 'अयि रः ॥ ४ । १ । ६ ॥ स्वरादेर्धातोर्द्वितीयस्यावयवस्यैकस्वरस्य रेफः संयोगादिर्द्विर्न भवति 'अयि' रेफात्पर *आनन्तर्येण यकारश्चेन्न भवति । अर्चिचिषति । प्रोर्णुनविषति । प्रोर्णोनूयते । प्रोर्णुनाव । प्रोर्णुनवत् । आर्चिचत् । अयीति किम् । अरार्यते । अर्यमाख्यातवान् । 'आर्यत् । संयोगादिरित्येव । अरिरिषति ॥ ६ ॥ *नाम्नो द्वितीयाद्यथेष्टम् ॥ ४ । १ । ७ ॥ स्वरादेर्नाम्नो द्विर्वचनभाजो द्वितीयादारभ्यैकस्वरोऽवयवो* यथेष्टं द्विरुच्यते । अशिश्वीयिषति । अश्वीयियिषति । अश्वीयिषिषति ॥७॥ 'अन्यस्य ॥४।१।८॥ स्वरादेरन्यस्य व्यञ्जनादेर्नाम्नो धातोर्द्विर्वचनभाजो एकस्वरोऽवयवो यथेष्टं प्रथमो द्वितीयस्तृतीयादिर्वाऽन्यतमो द्विरुच्यते । पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति । पुत्रीयिषिषति । पुत्रीयन्तं प्रायुक्त अपुपुत्रीयत् । अपुतित्रीयत् । *अपुत्रीयियत् ॥ ८ ॥ कण्ड्वादेस्तृतीयः ॥ ४ । १ । ९ ॥ कण्ड्वादेर्धातोर्द्विवचनभाज एकस्वरस्तृतीय एवावयवो द्विर्भवति । कण्डूयियिषति । आसूयियत् ॥ ९ ॥ *पुनरेकेषाम् ॥ ४ । १ । १० ॥ एकेषामाचार्याणां मते द्वित्वे कृते पुनर्द्वित्वं भवति । *सुसोपुपिषते । *प्राणिणिनिषत् । बुबोभूयिषते । एकेषामिति किम् । सोषुपिषते । प्राणिणिषत् । बोभूयिषते ॥ १० ॥ यिः सन्वेर्ष्यः ॥ ४ ॥ १ । ११ ॥ ईर्ष्यतेर्द्विर्वचनभाजो यिः सन् वा द्विर्भवति । ईर्ष्यियिषति । ईर्ष्यिषिषति ॥ ११ ॥ हवः शिति ॥ ४ । १ । १२ ॥ जुहोत्यादयः शिति द्विर्भवन्ति । जुहोति । जुहुत् । प्राक्तु स्वरे स्वरविधेरित्येव । जुहवानि ॥ १२ ॥ *चराचरचलाचलपतापतवदावदघनाघनपाटूपटं वा ॥ ४ । १ । १३ ॥ एते शब्दा अचि कृतद्विर्वचना वा निपात्यन्ते । चरिचलिपतिवदिहन्तीनामजन्तानां द्वित्वं हन्तेर्हस्य घत्वं पूर्वस्य

---

कृते णत्वम् ॥—अरिरिषतीति । ऋक् ऋ प्रापणे ऋश् वा । अर्तुमऽरितुमरीतु वा इच्छतीति सनि आद्याभ्याम् 'ऋस्मिपूङ्'—इति ऋशस्तु 'इवृध'—इत्यनेनेट् । अरिरीषतीत्येतत्तु ऋश एव । अन्यथा 'वृतो नवा'—इति दीर्घो न स्यात् ॥—इटः कार्यित्वमिति । स्वरादित्वाद्धातोर्द्वितीयांशस्य इट्रूपस्य द्वित्वे चिकीर्षिते इट कार्यित्वमेवेत्यर्थ ॥—स्वरविधिरेवेति । गुणरूप इत्यर्थ ॥—न वदनं—॥ सयोगादिरित्यस्य द किर्भावे इति पुस्त्वम् ॥—अयि रः ॥—आनन्तर्येणेति । सप्तम्या निर्दिष्टे पूर्वस्य तत्रानन्तरस्यैवेति ॥—आर्यदिति । अत्र स्वरादेशोऽन्त्यस्वरलोपरूपो द्वित्वे कार्ये स्थानी निमित्तापेक्षयापि प्राग्विधिरिष्यते ॥—नाम्नो द्वि—॥ 'गम्ययप'—इति पञ्चमी ॥—यथेष्टमिति । यो य इष्टो 'योग्यतावीप्सा'—इत्यनेनाव्ययीभाव ॥—अन्यस्य ॥ द्वितीयादित्यधिकारो नेष्ट इति प्रथमो द्वितीय इत्याद्युक्तम् ॥—अपुत्रीयियदिति । अनात इत्यनेन विषयेऽप्यकारलोपात्परनिमित्तत्वाभावे 'स्वरस्य परे'—इति स्थानित्वाभावात् यि इत्यस्य द्वित्वम् । न तु य इत्यस्य । एवमासूयियदित्यादिष्वपि ॥—पुनरे—॥—सुसोपुपिषते इति । भृशार्थे यङ् 'स्वपेर्यङ्डे च'—इति स्वृद् द्वित्व सोपुपितुमिच्छति सन् । अत इत्यनेन विषयेऽस्य लोपात् 'स्वरस्य परे'—इति स्थानित्वाऽभावे यो लुक् सिद्ध ॥—प्राणिणिनिपदिति । 'द्वित्वेऽप्यन्ते'—इत्यत्र द्वित्वे इति वचनात् द्वयोरेव णत्व न तृतीयस्यापि ॥—चराचर—॥—

च दीर्घः । चरतीति चराचरः । चलाचलः । पतापतः। वदावदः। *घनाघनः। पाटयतेरजन्तस्य द्वित्वम् ह्रस्वत्वं पूर्वस्य च ऊदन्तो निपात्यते । पाटयतीति पाटूपटः । पक्षे, चरः । चलः । पतः । वदः । हनः । पाटः । केचित्तु पटूपट इति निपातयन्ति ॥ १३ ॥ *चिक्लिदचक्नसम् ॥ ४ । १ । १४ ॥ चिक्लिदचक्नसशब्दौ निपात्येते । क्लिद्यतेः के क्नस्यतेरचि उभयत्र घञर्थे वा के द्वित्वं निपात्यते । चिक्लिदः। चक्नसः । *चक्रुः 'ययुः बभ्रुः इत्यौणादिका. ॥ १४ ॥ 'दाश्वत् साह्वत् मीढ्वत् ॥ ४ । १ १५ ॥ एते शब्दाः क्वसुप्रत्ययान्ता निपात्यन्ते । दाशृग् दाने इत्यस्य क्वसावद्वित्वमनिट्त्वं च निपात्यते । दाश्वान । दाश्वांसौ । दाशुषी । षहि मर्षणे इत्यस्य परस्मैपदमद्वित्वमुपान्त्यदीर्घत्वमनिट्त्वं च निपात्यते । साह्वान् । मिह सेचने इत्यस्याद्वित्वमनिट्त्वमुपान्त्यदीर्घत्वं ढत्वं च निपात्यते । मीढ्वान् ॥ १५ ॥ ज्ञप्यापो ज्ञीपीप् न च द्विः सि सनि ॥ ४ । १ । १६ ॥ ज्ञपेरापेश्च सकारादौ सनि परे यथासंख्यं ज्ञीपीप् इत्येतावादेशौ भवतो न चानयोरेकस्वरोंऽशो द्विर्भवति । 'आदेशे कृते द्वित्वं प्राप्नोतीति निषिध्यते । आदेशसंनियोगे च निषेधात् अन्यत्र द्वित्वं भवत्येव ।*ज्ञीप्सति । ईप्सति । सीति । किम् । जिज्ञपयिषति । 'इवृध '–( ४–४–४७ ) इत्यादिना विकल्पेट् । सनीति किम् । आप्स्यति ॥ १६ ॥ *ऋध ईर्त् ॥ ४ । १ । १७ ॥ ऋधः सकारादौ सनि परे ईर्त् इत्यादेशो भवति न चास्य द्विः। ईर्त्सति । सीत्येव । अर्दिधिषति ॥ १७ ॥ दम्भो धिप् धीप् ॥ ४ । १ । १८ ॥ दम्भेः सकारादौ सनि परे धिप् धीप् इत्येतावादेशौ भवतो न चास्य द्विः । धिप्सति । धीप्सति । सीत्येव । दिदम्भिषति ॥ १८ ॥ *अव्याप्यस्य मुचेर्मोग्वा ॥ ४ । १ । १९ ॥ मुचेरकर्मकस्य सकारादौ सनि परे मोक् इत्ययमादेशो वा भवति न चास्य द्विः । मोक्षति मुमुक्षति चैत्रः । मोक्षते मुमुक्षते वा वत्सः स्वयमेव । अव्याप्यस्येति किम् । मुमुक्षति वत्सं चैत्रः ॥ १९ ॥ *मिमीमादामित्स्वरस्य ॥ ४ । १ ।२०॥ मिमीमा इत्येतेषां दासंज्ञकानां च स्वरस्य सकारादौ सनि परे इदादेशो भवति न चैषां द्विः । डुमिगट्, मित्सति मित्सते शतम् । 'मीति मींङ्च्मींग्शोर्ग्रहणम् । मित्सते । प्रमित्सति । प्रमित्सते शत्रून् । मेति मांमाङ्क्मेङां ग्रहणम् । मित्सति । प्रमित्सते भूमिम् । अपमित्सते यवान् । मातेर्नेच्छ-

घनाघन इति । प्रथमस्य निपातनात् वध द्वितीयस्य तु 'अङे हिहन '–इति सिद्धमेव ॥—चिक्लिद—॥ क्लिदौच् क्लिद्यतीति 'नाम्युपान्त्य'–इति क क्नस्यतीत्यच् क्लेदन क्नसन वा स्थादित्वात्के । चक्रुः वैकुण्ठः कर्मठश्च । ययुः अश्व याायावर स्वर्गमार्गश्च । बभ्रुः ऋपि नकुल राजा वर्णश्च । 'हनिय'–इति त्रयोऽपि साधव ॥—दाश्वत्साह्वत्—॥ षहण् मर्षणे इत्यस्य न निपातनमिष्टिवशात् ॥—ज्ञप्यापो—॥—आदेशे कृते इति । परत्वात्प्रथममेवेत्यर्थ ॥—ज्ञीप्सतीति । ज्ञांञ् । जानन्त प्रयुङ्क्ते णिग् । 'अर्त्तिरी '–इति पोन्त । 'मारणतोषण '–इति ह्रस्वत्वम् । ज्ञपयितुमिच्छन्ति 'तुमर्हात् '–इति सन् ॥—ईप्सतीति । आप्लृण् लम्भने इत्यस्य णिजभावेऽपि नित्यमिटि सादिस्सन् नाऽस्ति ॥—ऋध ईर्त् ॥—ईर्त्सतीति । 'इवृध '–इति वेट् ॥—अव्याप्यस्य—॥ न विद्यते व्याप्य यस्य । यदा नाम नाम्नेत्याश्रयणादविद्यमान व्याप्यं यस्य तदा मयूरव्यंसकादित्वात् मध्यपदलोपः ॥—मोक्षते वत्स इति । वाक्यकाले मुमुक्षति वत्सं चैत्र स एव विवक्षते नाऽहं मुमुक्षामि 'भूपार्थे'–इति क्याऽभावः ॥—मिमीमादा—॥ 'मिग्मीगोऽखलचालि' इत्यात्वे माद्वारेणैव सिध्यति किं मिग्रहणेनेति । सत्यम् । 'नामिनोऽनिट्' इति सन कित्वादात्व न प्राप्नोति ॥—मीति मींङ्च्मींग्शोरिति । मीण् गताविति यौजादिकस्यापि ग्रहः । यतः मींङ्च्मींग्शावेव गतौ वर्त्तमानौ युजादी तेन निरनुबन्धग्रहणे इति यद्यऽयं न्याय स्यात्तदा मांक् माने इत्यऽस्य

न्त्येके । मिमासति । दासंज्ञ, दाम्, प्रदित्सति दानम् । देङ् दित्सते पुत्रम् । डुदांग्क् दित्सति दित्सते वस्त्रम् । दोंच् दित्सति दण्डम् । दृधें धित्सति स्तनम् । डुधांग्क् धित्सति धित्सते श्रुतम् । बहुवचनं व्याप्त्यर्थम् । तेन ' निरनुबन्धग्रहणे न सानुबन्धस्य ' इत्यादि नाश्रीयते । स्वरस्येति किम् । सर्वस्य माभूत् ॥ २० ॥ *रभलभशकपतपदामिः ॥ ४ । १ । २१ ॥ एषां स्वरस्य सकारादौ सनि परे इकार आदेशो भवति न चैषां द्विः। रभ् आरिप्सते । लभ् लिप्सते । शक् *शिक्षति । पत् पित्सति । पद् पित्सते । सीत्येव । पिपतिषति । *बहुवचनं शकीच्शकृंटोरुभयोरपि परिग्रहार्थम् ॥ २१ ॥ राधेर्वधे ॥ ४ । १ । २२ ॥ राधेर्हिंसायां वर्तमानस्य सकारादौ सनि परे स्वरस्येकारादेशो भवति न चास्य द्विः । प्रतिरित्सति । अपरित्सति । वध इति किम् । आरिरात्सति गुरून् ॥ २२ ॥ अवित्परोक्षासेट्थवोरेः ॥ ४ । १ । २३ ॥ राधेर्हिंसायां वर्तमानस्य अविति परोक्षायां थवि च सेटि स्वरस्यैकारो भवति न चास्य द्विर्भवति । रेधतुः । रेधुः । रेधिथ । अपरेधतुः । अपरेधुः । अपरेधिथ । प्रतिरेधतुः । प्रतिरेधुः । प्रतिरेधिथ । परिरेधतुः । परिरेधुः । परिरेधिथ । अपरेधिव । अपरेधिम । अविदिति किम् । अपरराध । परोक्षासेट्थवोरिति किम् । अपराध्यते । वध इत्येव । आरराधतुः । आरराधिथ ॥ २३ ॥ *अनादेशादेरेकव्यञ्जनमध्येऽतः ॥ ४ । १ । २४ ॥ अवित्परोक्षासेट्थवोः परयोर्योऽनादेशादिर्धातुस्तत्संबन्धिनः स्वरस्यातोऽकाररूपस्यासहायव्यञ्जनयोर्मध्ये वर्तमानस्य स्थाने एकारादेशो भवति न च धातुर्द्विर्भवति । पेचतुः पेचुः । पेचिवान् । पेचुषी । पेचिम । पेचिथ । रेणतुः । रेणिथ । अविदित्येव । *अहं पपच । परोक्षायामित्येव । पच्यते । सेट्थवीत्येव । पपक्थ । अनादेशादेरिति किम् । बभणतुः । बभणिथ । चकणतुः । चकणिथ । एकव्यञ्जनमध्ये इति किम् । ततक्षतुः । ततक्षिथ । अत इति किम् । दिदिवतुः । दिदेविथ । अवित्परोक्षासेट्थव्भ्यामादेशादित्वस्य विशेषणं किम् । इहापि यथा स्यात् । णम् नेमतुः । नेमुः । नेमिथ । सेहे । सेहाते । सेहिरे । युजादौ पहण् । सेहिथ । अत्र हि अनिमित्ते नत्वसत्वे न तु परोक्षाथव्निमित्ते इति ॥ २४ ॥ *तॄत्रपफलभजाम् ॥ ४ । १ । २५ ॥ एषामवित्परोक्षासेट्थवोः स्वरस्यात एत्वं भवति न चैते द्विर्भवन्ति । *तेरतुः । तेरिथ । त्रेपे । त्रेपाते । त्रेपिरे । फेलतुः । फेलिथ । भेजतुः । भेजिथ । अविदित्येव । अहं ततर । सेटीत्येव । बभक्थ । अत इत्येव । तितीर्वान् । *तरतेरतो गुणरूपत्वात् त्रपेरनेकव्यञ्जनमध्यत्वात् फलभजोरादेशादित्वात् न प्राप्नोतीति वचनम् । *बहुवचनं तु फलञिफला इत्युभयोरपि ग्रहणार्थम् ॥ २५ ॥ *जॄभ्रमवमत्रसफणस्यमस्वन-

मतान्तरेण ककारानुस्वारयोरनित्यत्वात् निरनुबन्धग्रहणे सति माङ्क् इत्येतस्य ग्रहण न स्यात् । आदिशब्दात् एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य लक्षणप्रतिपदोक्तयोरित्यादयोऽपि नाश्रीयन्ते । तेन उमिगृद्सेङोरपि ग्रहणम् ॥—रभलभ—॥—शिक्षतीति । शकीच् शिक्षते इत्यपि ॥—बहुवचनमिति । अन्यथा निरनुबन्धत्वाद्धेतादिकस्यैव स्यात् ॥—अनादेशा—॥ एके च असहाये च ते व्यञ्जने च तयोर्मध्य तस्मिन् ॥—अहं पपचेति । अन्तगणवो वा णित्त्वादकारसंभवे व्याघ्रैकत्याऽभाव इत्यन्तणवि दर्शितम् । समस्थानित्यनेकव्यञ्जनस्य लाक्षणिकत्वान्न भवति ॥—तॄत्रप—॥ —तेरतुरिति । प्राक् तु स्वरे इति भणनात् पूर्वं द्वित्वे ' स्कृच्छ्रतोकि '—इति गुणेऽस्य एत्वे न च द्विरिति वचनात् कृतमपि द्वित्वं निवर्त्तते । एवं जॄधातोरपि ज्ञेयम् ॥ गुणरूपत्वात् ' न शस '—इति निषेध स्यादित्याह—तरतेरित्यादि ॥—बहुवचनमिति । अन्यथा निरनुबन्धग्रहण इत्यनेन ञिफला इत्यस्य न स्यात् ॥—जॄभ्रमवम—॥ राजसहचरितभ्राजेरेव ग्रहणमिति पारायणे

राजभ्राजभ्रासभ्लासो वा ॥ ४ । १ । २६ ॥ एषामवित्परोक्षासेट्थवोः स्वरस्यात एत्वं वा भवति न चैते द्विर्भवन्ति । जेरतुः । जजरतुः । जेरिथ । जजरिथ । भ्रेमतुः। बभ्रमतुः । भ्रेमिथ । बभ्रमिथ । वेमतुः । ववमतुः । वेमिथ । ववमिथ । 'उद्वेमुस्तत्र रुधिरं रथिनोऽन्योन्यवीक्षिताः' ॥ वमेनेच्छन्त्यन्ये । त्रेसतुः । तत्रसतुः । त्रेसिथ । तत्रसिथ । फेणतुः । पफणतुः । फेणिथ । पफणिथ । स्येमतुः । सस्यमतुः । स्येमिथ । सस्यमिथ । स्वेनतु. । सस्वनतुः । स्वेनिथ । सस्वनिथ । रेजतुः । रराजतुः । रेजिथ । रराजिथ । भ्रेजे । बभ्राजे । भ्रेसे । बभ्रासे । भ्लेसे । बभ्लासे । अविदित्येव । अहं जजर ॥ २६ ॥ श्रन्थग्रन्थो न्लुक् च ॥ ४ । १ । २७ ॥ अनयोः स्वरस्यावित्परोक्षासेट्थवोरेकारादेशो वा भवति तत्संनियोगे च नकारस्य लुक् न चैतौ द्विर्भवतः । श्रेथतुः । शश्रन्थतुः । श्रेथिथ । शश्रन्थिथ । ग्रेथतुः । जग्रन्थतुः। ग्रेथिथ । जग्रन्थिथ । अविदित्येव । शश्रन्थ । जग्रन्थ ॥ २७ ॥ दम्भः ॥ ४ । १ । २८ ॥ दम्भेरवित्परोक्षायां स्वरस्य एकारादेशो भवति तत्संनियोगे नकारस्य लुक् न चायं द्विर्भवति । देभतु । देभुः । अविदित्येव । ददम्भ ॥ २८ ॥ थे वा ॥ ४ । १ । २९ ॥ दम्भेः स्वरस्य थे परे एकारादेशो वा भवति तत्संनियोगे च नकारस्य लुक् न चायं द्विर्भवति । देभिथ । ददम्भिथ । अन्ये तु श्रन्थिग्रन्थिदम्भीनां नलोपे सति नित्यमेत्वमिच्छन्ति नलोपं त्वविति परोक्षायां नित्यमेव । तेन श्रेथतुः ग्रेथतुः देभतुः, नलोपाभावे तु शश्रन्थिथ जग्रन्थिथ ददम्भिथेत्येव भवति । अन्यस्त्ववित्परोक्षासेट्थवोर्नित्यमेत्वमिच्छति नलोपं त्वविति परोक्षायामेव । तेन श्रेथतुः ग्रेथतुः देभतुः नलोपाभावेऽपि श्रेन्थिथ ग्रेन्थिथ देम्भिथेत्येवेच्छति ॥ २९ ॥ न शसददवादिगुणिनः ॥ ४ । १ । ३० ॥ शसिदद्योर्वकारादीनां गुणिनां च धातूनां स्वरस्यैत्वं न भवति । विशशसतुः । विशशसिथ । ददद‍े । दददाते । दददिरे । ववले । ववलाते । ववलिरे । ववणतुः । ववणिथ । विशशरतुः । विशशरिथ । विभयिथ । लुलविथ ॥ ३० ॥ ह्रौ दः ॥ ४ । १ । ३१ ॥ दासंज्ञकस्य धातोर्हौ परेऽन्तस्यैकारादेशो भवति न चायं द्विः देहि । धेहि । न च द्विरिति वचनात्कृतमपि द्वित्वं निवर्तते । तेन यङ्लुप्यपि देहीति भवति । हाविति व्यक्तिनिर्देशादिह न भवति । दत्तात् । धत्तात् ॥ ३१ ॥ देर्दिगिः परोक्षायाम्॥ ४ । १ । ३२ ॥ देङः परोक्षायां दिगिरित्ययमादेशो भवति न चायं द्विः । दिग्ये । दिग्याते । दिग्यिरे । अवदिग्ये । अवदिग्याते । अवदिग्यिरे ॥ ३२ ॥ *ङे पिबः पीप्य् ॥ ४ । १ । ३३ ॥ ण्यन्तस्य पिबतेर्ङे परे पीप्य् इत्ययमादेशो भवति नचायं द्विः । अपीप्यत् । अपीप्यताम् । अपीप्यन् । पिबतिनिर्देशात्पातेर्न भवति । अपीपलत् । लुप्तातिव्निर्देशाद्यङ्लुप्यपि न भवति । अपापयत् । ङ इति किम् । पाययति ॥ ३३ ॥ *अङे हिहनो हो घः पूर्वात् ॥ ४ । १ । ३४ ॥ हिहन् इत्येतयोर्धातोर्ङवर्जिते प्रत्यये परे द्वित्वे सति पूर्वस्मात् परस्य हस्य घो भवति । प्रजिघाय । प्रजिघीषति । प्रजेघीयते ।

निर्णीतम् ॥—श्रन्थग्रन्थो—श्रथुङ् ग्रथुङ् इत्यनयोर्लाक्षणिकत्वान्न भवति । प्रकृतिप्रत्यययोर्वचनभेदान्न यथासङ्ख्यम् ॥—थे वा ॥ वर्त्तमानाथप्रत्यये स्वादे श्नुना व्यवधानात्प्राप्त्यभाव इति परोक्षाया एव थप्रत्ययग्रहणम् ॥—ह्रौ दः ॥—यङ्लुप्यपीति । प्रत्यासत्तेर्न्यायात् यस्मिन्नेव प्रत्यये द्वित्वमेत्वं च प्राप्तं तस्मिन्नेव प्रत्यये न च द्विरिति प्रवर्त्तते । अत्र तु यङ्निमित्तकं द्वित्वं कथं निवर्त्यते । उच्यते । व्यक्त्या प्रवृत्ते ॥—ङे पिबः—॥—लुप्तातिव्निर्देशादिति । यत' सूत्रे पिबत्येकदेश पिबऽनुचके ॥—अङे हिहनो—॥—जंघन्यते इति । कुटिलं हन्ति 'गत्यर्थात्'—इति यङ् ।

भ्रजेवेति । हन् , जिघांसति । *जंघन्यते । जङ्घनीति । अङ इति किम् । प्राजीहयत् । अङे द्विर्वचननिमित्तप्रत्ययेऽनन्तरस्य विज्ञानादिहं न भवति । हननीयितुमिच्छति जिहननीयिषति । ङपर्युदासात्तु णिव्यवधाने भवति । 'प्रजिघाययिषति । पूर्वादिति वचनान्न च द्विरिति निवृत्तम् ॥ ३४ ॥ *जेर्गिः सन्परोक्षयोः ॥ ४ । १ । ३५ ॥ जयतेः सन्परोक्षयोर्द्वित्वे सति 'पूर्वस्मात्परस्य गिरादेशो भवति । जिगीषति । विजिगीषते । जिगाय । विजिग्ये । सन्परोक्षयोरिति किम् । जेजीयते । जिनातेर्जिरूपस्य लाक्षणिकत्वाज्जिज्यतुः ॥ ३५ ॥ 'चेः किर्वा ॥ ४ । १ । ३६ ॥ चिनोतेः सन्परोक्षयोर्द्वित्वे सति पूर्वस्मात्परस्य किरादेशो वा भवति । चिकीषति । चिचीषति । चिकाय । चिचाय । चिक्ये । चिच्ये । सन्परोक्षयोरित्येव । चेचीयते ॥ ३६ ॥ *पूर्वस्यास्वे स्वरे य्वोरियुव् ॥ ४ । १ । ३७ ॥ धातोर्द्वित्वे सति यः पूर्वस्तस्य संबन्धिनो योरिकारस्योकारस्य चास्वे स्वरे परे आसन्नौ इय् उव् इत्येतावादेशौ भवत' । इयेष । उवोष । इयर्ति । इयृयात् । अर्तेर्यङ्लुपि द्वित्वे पूर्वस्याकारे 'रिरौ च लुपि' (४-१-५६) इत्यनेन रिरीइत्यागमे तदिवर्णस्य चेय्भावे सति अरियर्ति । अरियरीति । एके त्वत्रेयं नेच्छन्ति । अर्यर्ति अर्यरीतीति । तन्मतसंग्रहार्थं पूर्वस्येति *योः समानाधिकरणं विशेषणं तेन इकारोकारमात्रस्यैव पूर्वस्येयुवौ भवतः । अस्व इति किम् । ईषतुः। ऊषतु' । स्वर इति किम् । पिपक्षति । पुपूषति । इयाज । उवाप ॥ ३७ ॥ ऋतोऽत् ॥ ४ । १ । ३८ ॥ धातोर्द्वित्वे सति पूर्वस्य ऋतोऽद्भवति । चकार । ववृधे ॥ ३८ ॥ ह्रस्वः ॥ ४ । १ । ३९ ॥ धातोर्द्वित्वे सति पूर्वस्य स्वरान्तस्य ह्रस्वो भवति । पपौ । निनाय । लुलाव । कृ, चकार । सिसेके । लुलोके । तुत्रौके ॥ ३९ ॥ गहोर्जः ॥ ४ । १ । ४० ॥ धातोर्द्वित्वे सति पूर्वयोर्गकारहकारयोर्जकारो भवति । जगाम । जहास । जहौ । जिहीर्षति । जुहोति । जहाति ॥ ४० ॥ द्युतेरिः ॥ ४ । १ । ४१ ॥ द्युतेर्द्वित्वे सति पूर्वस्योत इर्भवति । दिद्युते । अदिद्युतत् । देद्युत्यते । 'विदिद्युतिषते । विदिद्योतिषते ॥ ४१ ॥ *द्वितीयतुर्ययोः पूर्वौ ॥ ४ । १ । ४२ ॥ धातोर्द्वित्वे सति पूर्वस्य द्वितीयतुर्ययोः स्थाने यथासंख्यं पूर्वावाद्यतृतीयावासन्नौ भवतः । चखान । चिच्छेद । टिठकारयिषति । तस्थौ । पफाल । जुघोष । जझाम । डुढौके । दधौ ।

यदि हिंसार्थस्तदा 'हनो घ्नीर्वधे' इति स्यात् ॥—प्रजिघाययिषतीति । प्रहिण्वन्त प्रयुङ्क्ते णिग् वृद्धि । प्रहाययितुमिच्छति सन् ॥—जेर्गिः सन्—॥—पूर्वस्मादिति । यदि पूर्वादित्यधिकारो न स्यात्तदा द्वित्वसहितस्यापि धातोरादेश स्यात् । यद्वा पूर्वस्या भक्ते स्यात् । न च वाच्य कृतेऽपि 'गहोर्जे' इति स्याद्विधानसामर्थ्यान्न भवतीत्याशङ्का स्यात् एवमुत्तरत्रापि ॥—चेः किर्वा ॥—चिकीषतीति । 'स्वरहन्'-इति दीर्घत्वे द्वित्वे किरूपादेशे पुन 'स्वरहन्'-इति दीर्घत्व यावत्सभव इति न्यायात् ॥—पूर्वस्यास्वे—॥—इयेषेति । अस्वे स्वरे इति भणनात् गुणे कृते इयादेश । नन्वियादेशेऽपि विधेये 'स्वरस्य परे' इत्यनेन गुणस्य स्थानिवद्भावादियुवौ न प्राप्नुत । सत्यम् । परे इति सप्तमी सप्तम्या च निर्दिष्टे पूर्वस्यानन्तरस्यैव । अत्र तु पकारेण व्यवधानमिति न स्थानित्वम् । अस्वे इति नञा निर्दिष्टमनित्यमिति वा । यद्वाऽस्वे स्वर इति व्याप्ते । ननु तथापि न प्राप्नोति असिद्ध बहिरङ्गमिति न्यायेन गुणस्यासिद्धत्वात् । न । न स्वरानन्तर्ये इति न्यायादय न्यायो न प्रतिष्ठते ॥—योः समानाधिकरणमिति । यो किंविशिष्टस्य पूर्वस्य न तु पूर्वसबन्धिन । यदि इकार ईकार उकारा स्वातन्त्र्येण पूर्वे भवेयुरत्र तु रिरीत्यादेरधिकस्य सबन्धिन ॥—द्युतेरिः ॥—विदिद्युतिषते इत्यत्र 'वौ व्यञ्जनादे.'-इति सनो वा कित्वम् ॥—द्वितीय—॥—पफालेति । अत्र सामीप्यात्पूर्वो नकार स्यात्

बभार । द्वितीयतुर्ययोरिति किम् । पपाच ॥ ४२ ॥ *तिर्वा ष्ठिवः ॥ ४ । १ । ४ ३ ॥ ष्ठिवेर्द्वित्वे सति पूर्वस्य द्वितीयस्य तिरादेशो वा भवति । तिष्ठेव । टिष्ठेव । तेष्ठीव्यते । तरिकारोत्रोच्चारणार्थः । तेन 'इवृध'-( ४-४-४७ ) इत्यादिना वेटि तुष्ठ्यूषति टुष्ठ्यूषति । पूर्वस्येत्यादेशविधानमेव ज्ञापयति ष्ठिवेः षकारः *ठकारपरः ष्ठाष्ट्यैप्रभृतीनां तु तवर्गपरः । तेन तस्थौ तष्ठ्यौ इत्यादि भवति । केचित्तु 'स्वरेभ्यः' ( १-३-३० ) इति द्विरुक्तस्य छकारस्य द्वित्वे सति पूर्वस्य त्यादेशमिच्छन्ति । तन्मते उच्छैत् उतिच्छिषति । ऋच्छत् 'ऋतिच्छिषतीति ॥ ४३ ॥ *व्यञ्जनस्यानादेर्लुक् ॥ ४ । १ । ४४ ॥ धातोर्द्वित्वे सति पूर्वस्य व्यञ्जनस्यानादेर्लुग् भवति । जग्ले । मम्ले । पपाच । आटतुः । ऋच्छत् ऋचिच्छिषति । उच्छैत् उचिच्छिषति । अटाट्यते । व्यञ्जनस्येति किम् । स्वरस्य मा भूत् । अनादेरिति किम् । आदेर्माभूत् । पपाच ॥ ४४ ॥ अघोषे शिटः ॥ ४ । १ । ४५ ॥ धातोर्द्वित्वे सति पूर्वस्य शिटस्तत्संबन्धिन्येवाघोषे परे लुग् भवति । अनादिलुगपवादोऽयम् । चुश्चोत । टिष्ठेव । चस्कन्द । अघोषे इति किम् । सस्नौ । शिट इति किम् । पप्सौ ॥ ४५ ॥ कङश्चञ् ॥ ४ । १ । ४६ ॥ धातोर्द्वित्वे सति पूर्वयोः ककारङकारयोर्यथासंख्यं चकारञकारौ भवतः । चकार । चखान । जुङुवे । जिङ्कारीयिषति ॥ ४६ ॥ न कवतेर्यङः ॥ ४ । १ । ४७ ॥ यङन्तस्य कवतेर्द्वित्वे सति पूर्वस्य कस्य चो न भवति । कोकूयते खरः । शवर्निर्देशः कौतिकुवत्योर्निवृत्त्यर्थः । चोकूयते । कवतिरव्यक्ते शब्दे । कुवतिरार्तस्वरे । कौतिः शब्दमात्रे । एषां पाठे शब्दमात्रार्थत्वेऽपि गत्यर्थत्वाविशेषे धावतिगच्छत्यादीनामिवार्थभेदः । यङ्लुपि च निषेधो न भवति । चोकवीति । अन्ये तु यङ्लुप्यपि प्रतिषेधयन्ति । कोकवीति । यङ इति किम् । चुकुवे ॥ ४७ ॥ *आगुणावन्यादेः ॥ ४ । १ । ४८ ॥ धातोर्यङन्तस्य द्वित्वे सति पूर्वस्यान्यादेर्नीगुरीरिरन्तवर्जितस्याकारो गुणश्चासन्नौ भवतः । पापच्यते । अटाट्यते । चेचीयते । लोलूयते । हांक् जेहीयते । पापचीति । बेभिदीति । लोलवीति । नैतावाकारगुणौ यङ्निमित्ताविति यङ्लुप्यपि भवतः । अन्यादेरिति किम् । वनीवच्यते । यंयम्यते । नरीनृत्यते । नरिनर्ति । नर्नर्ति । ननु चात्र *अपवादत्वान्न्यादय एव बाधका भविष्यन्ति किं न्यादिवर्जनेन । सत्यम् । द्वित्वे सति पूर्वस्य विकारेषु बाधको न बाधक इति ज्ञापनार्थम् । तेन अचीकरदित्यत्र 'लघोर्दीर्घोऽस्वरादेः' ( ४-१-६४ ) इति

---

॥—तिर्वा ष्ठिवः । ष्ठिवो भ्वादेर्दिवादेश्च ग्रह ॥—ठकारपर इति । यद्यत्र षकार टकारपर स्यात् तदाऽनेन तविधान न कुर्यात् यत 'अघोषे शिट' इति षलोपे निमित्ताभावेति न्यायेन ठस्य थे 'द्वितीयतुर्ययो'-इति थकारस्य च ते तकार सिद्ध एव । पक्षे टकारविधानार्थं तु टिर्वा ष्ठिव इति सूत्र कुर्यादित्यर्थ ॥—तष्ठ्याविति । अत्र 'अघोषे शिट' इति षलुपि निमित्ताभाव इति टस्य तकार. ॥—व्यञ्जनस्या—॥—ऋतिच्छिषतीति । अनेनाधस्तनच्छस्य लुकि निमित्ताभाव इति ऊर्ध्वस्थचस्य ततो 'द्वितीयतुर्ययो'-इत्यनेन छस्य च ॥—अघोषे शिटः ॥—तत्संबन्धिन्येवेति । अत्र तत्सबन्धिव्याख्याऽभावे सिद्धे सत्यारम्भ इति न्यायात् नियमार्थमेतादित्याशङ्का स्यात् । अघोष एव शिट, ततश्चनीकस्यते इत्यादिष्वेव स्यात् न तु लालस्यते इत्यादिषु परत्राऽघोषाभावात् । चकस्यते इत्यत्र तु अनुस्वारस्य शिट्त्वेऽपि एवकारान्न लुक् । अत्र ह्यानन्तर्येण सबन्धमात्र न तत्सबन्ध्येव स्वागमस्य पूर्वभक्तत्वात् ॥—न कवते—॥—प्रतिषेधयन्तीति । प्रतिषेध व्याचक्षते 'णिज्बहुलम्'-॥—आगुणाव—॥ न भविष्यन्ति न्यादयो यस्य असावऽन्यादि तस्य ॥—अपवादत्वान्न्यादय एवेति । न्यादीनां तु सबन्धिनोऽन्तस्य विधानसामर्थ्यान्न प्राप्ति । अत

*सन्वत्कार्यं न बाध्यते ॥ ४८ ॥ न हाको लुपि ॥ ४ । १ । ४९ ॥ ओहांक् त्यागे इत्यस्य द्वित्वे सति पूर्वस्य यङो लुप्याकारो न भवति । जहाति । जहेति । लुपीति किम् । जेहीयते ॥ ४९ ॥ *वञ्चस्रन्सध्वन्सभ्रंशकसपतपदस्कन्दोऽन्तो नीः ॥ ४ । १ । ५० ॥ एषां यङन्तानां द्वित्वे सति पूर्वस्य नीरन्तोऽवयवो भवति । वनीवच्यते । वनीवञ्चीति । सनीस्रस्यते । सनीस्रंसीति । दनीध्वस्यते । दनीध्वंसीति । बनीभ्रश्यते । बनीभ्रंशीति । चनीकस्यते । चनीकसीति । पनीपत्यते । पनीपतीति । पनीपद्यते । पनीपदीति । चनीस्कद्यते । चनीस्कन्दीति । दीर्घविधानाद्ध्रस्वो न भवति ॥ ६० ॥ *मुरतोऽनुनासिकस्य ॥ ४ । १ । ५१ ॥ अकारात्परो योऽनुनासिकस्तदन्तस्य धातोर्यङन्तस्य द्वित्वे सति पूर्वस्य मुरन्तो भवति । बम्भण्यते । बम्भणीति । तन्तन्यते । तन्तनीति । जङ्गम्यते । जङ्गमीति । यलवानामनुनासिकत्वे तन्तय्ँयते । तन्तय्ँः । चंचल्ँयते । चञ्चल्ँः । मंमव्ँयते । अननुनासिकत्वे, तातय्यते । तातयः । चाचल्यते । चाचलः । मामव्यते । मामवः । अत इति किम् । तेतिम्यते । जोघुण्यते । *बाभाम्यते । अनुनासिकस्येति किम् । पापच्यते ॥ ५१ ॥ *जपजभदहदशभञ्जपशः ॥ ४ । १ । ५२ ॥ एषा यङन्तानां द्वित्वे सति पूर्वस्य मुरन्तो भवति । जंजप्यते । जंजपीति । जंजभ्यते । जंजभीति । दंदह्यते । दंदहीति । दंदश्यते । दंदशीति । बम्भज्यते । बम्भजीति । पशिति सौत्रो धातुः । पंपश्यते । पंपशीति । दशिति *लुप्तनकारनिर्देशात् यङो लुप्यपि दंशेर्नलोपो भवति । अन्यस्तु नलोपं नेच्छति । तेन दंदंशीति ॥ ५२ ॥ चरफलाम् ॥ ४ । १ । ५३ ॥ चरफलञिफला इत्येषां यङन्तानां द्वित्वे सति पूर्वस्य मुरन्तो भवति । चंचूर्यते । चञ्चुरीति । पम्फुल्यते । पम्फुलीति । बहुवचनं ञिफलाविशरणे इत्यस्यापि परिग्रहार्थम् ॥ ५३ ॥ *ति चोपान्त्यातोऽनोदुः ॥ ४ । १ । ५४ ॥ *यङन्तानां चरफलां तकारादौ च प्रत्यये उपान्त्यस्यात उरादेशो भवति 'स चानोत्' तस्य गुणो न भवति । *चंचूर्यते । चंचुरीति । पंफुल्यते । पंफुलीति । *चूर्त्तिः । ब्रह्मचूर्णिः । प्रफुल्तिः । *प्रफुल्लः । प्रफुल्लवान् । अत इति किम् । चारयतेः फालयतेश्च क्विप् । तत आचारे क्विप् । ततो यङ् *चंचार्यते । पंफाल्यते । अत्रैकदेशविकृतस्यानन्यत्वात्प्राप्नोति । अनोदिति किम् । चंचूर्ति । पंफु-

पूर्वस्यैव प्राप्नुत आगुणौ ॥—सन्वत्कार्यमिति । सन्वत्कार्यबाधे त्वऽचाकरदित्यनिष्ट स्यात् ॥—वञ्चस्रंस—॥ द्युतादिध्वंस्साहचर्यात् स्रसूङ् इत्यस्यैव द्युतादिस्रसो ग्रह स्रसूङ् प्रमादे इत्यस्य तु सास्रस्यत इति भवति । भ्रशिरपि भ्रशूङिति भ्वादिरेव गृह्यते भ्वादिध्वसूसाहचर्यात् । भृशुच् भ्रशूच् इत्यस्य तु बाभ्रश्यत इत्येव ॥—मुरतो—॥—बाभाम्यते इति । भामि क्रोधे इत्यस्य रूपम् । ये त्वनुनासिकान्तस्य धातोर्द्वित्वे सति पूर्वस्याऽत इति विशेषण मन्यन्ते तन्मते बभाम्यत इति तन्मतसग्रहायाऽत इति षष्ठी व्याख्येया ॥—जपजभ—॥ पस इति दन्त्यान्त न्यासकारादयो मेनिरे । भोजस्तु ताल्व्यान्तम् ॥—जंजभीति । आगमशासनमनित्यमिति 'जभ स्वरे' इति नागमाऽभाव ॥—लुप्तनकारेति । 'गृलुप'–इत्यत्रापि ज्ञापित पर द्विर्बद्ध सुबद्ध भवतीत्यत्रापि ज्ञापितम् ॥—ति चोपान्त्या—॥—यङन्तानामिति । द्वित्वे सति ज्ञातव्य न पूर्वस्य उपान्त्याऽकारस्य ग्रहणात् ॥—चञ्चूर्यते इति । द्वित्वे सतीत्यधिकारान्न पूर्वमुत्वम् । चूर्त्तिरित्यत्र तु द्वित्वाऽसभवात् द्वित्वाभावेऽपीति दृश्यम् ॥—चूर्त्तिरिति । चरण 'समज'–इति समावेशार्थत्वात् 'श्र्वादिभ्य' क्ति ॥—प्रफुल्ल इति । ञिफलेत्यस्य यदा फलति सेति वाक्ये क्तस्तदा 'आदित.' इति नित्यमिडऽभाव । फलितुमारब्ध इति आरम्भे क्ते तु 'नवा भावारम्भे' इति वेट् । फल निष्पत्तावित्यस्य तु नित्यमिट् ॥—चञ्चार्यत इति । चरन्त प्रयुङ्क्ते णिग् वृद्धि चारयतीति क्विप्

लित। अत्र गुणो न भवति ॥ ५४ ॥ *ऋमतां रीः ॥ ४ । १ । ५५ ॥ ऋकारवतां धातूनां यङन्तानां द्वित्वे सति पूर्वस्य रीरन्तो भवति । नृतैच् नरीनृत्यते। दृशृं दरीदृश्यते। वृतूङ् वरीवृत्यते। वृधूङ् वरीवृध्यते । कृपौङ् 'चलीक्लृप्यते। धृज् 'दरीधृज्यते । प्रच्छंत् परीपृच्छयते । ओ व्रश्चौत् वरीवृश्च्यते । ग्रहीश् जरीगृह्यते । प्रच्छिव्रश्चिग्रहीणामृकारे कृते ऋमत्त्वम्। ऋमतामिति किम्। 'चेक्रीयते। जेह्रीयते। कृग्हृगो रीभावे कृते द्वित्वमिति ऋमत्त्वं नास्ति। बहुवचननिर्देशो लाक्षणिकपरिग्रहार्थं ॥ ५५ ॥ 'रिरौ च लुपि ॥ ४ । १ । ५६ ॥ ऋमतां धातूनां यङो लुपि द्वित्वे सति पूर्वस्य रिरौ री चान्तो भवति। कृ, चरिकर्ति । चर्कर्ति । चरीकर्ति। हृ, जरिहर्ति । जर्हर्ति। जरीहर्ति । नरिनृतीति। नरिनर्ति। नर्नृतीति। नर्नर्ति। नरीनृतीति। नरीनर्ति । वरिवृश्चीति। वरिवृष्टि । वर्वृश्चीति। वर्वृष्टि। वरीवृश्चीति । 'वरीवृष्टि । चलिक्लृपीति । चलिकल्प्ति । चल्क्लृपीति । चल्कल्प्ति। चलीक्लृपीति । चलीकल्प्ति । लुपीति किम् । नरीनृत्यते । ऋमतामित्येव । कृ, चाकरीति । चाकर्ति । चाकीर्तः । चाकिरति । गृ, 'जागलिति । तृ तातर्ति ॥ ५६ ॥ निजां शित्येत् ॥ ४ । १ । ५७ ॥ निजिविजिविषां त्रयाणां शिति द्वित्वे सति पूर्वस्यैकारादेशो भवति। नेनेक्ति। नेनिक्ते। नेनिज्यात् । नेनेक्तु । अनेनेक् । वेवेक्ति। वेविक्ते । वेवेष्टि। वेविष्टे। शितीति किम्। निनेज। निनिक्षति। अनीनिजत्। निजामिति बहुवचनेन निजिविजिविषस्त्रय एवादादिपर्यन्तपठिता गृह्यन्ते ॥ ५७ ॥ 'पृभृमाहाङामिः ॥ ४ । १ । ५८ ॥ पृऋभृ मा हाङ् इत्येतेषां शिति द्वित्वे सति पूर्वस्येकारो भवति। पिपर्ति। पिपूयात्। इयर्ति। इयृयात्। बिभर्ति। बिभृयात्। मिमीते। अमिमीत। जिहीते। अजिहीत। केचित्तु पृ पालनपूरणयोरिति जुहोत्यादौ दीर्घत्वं पठन्ति। तन्मतसंग्रहार्थं पृश्च ऋश्चेति विग्रहः। अत एव च बहुवचनम् ॥ पिपर्ति। पिपूर्तः। पिपूर्याव्। हाङिति ङकारः किम्। ओहांक्, जहाति। शितीत्येव। पपार। आर। बभार। ममे। जहे। शितीति द्वित्वस्य विशेषणं किम्। पर्पर्ति। परीपर्ति। अत्र यङन्तस्य द्वित्वं न शितीति न भवति ॥ ५८ ॥ सन्यस्य ॥ ४ । १ । ५९ ॥ धातोर्द्वित्वे पूर्वस्याकारस्य सनि परे इकारो भवति। पिपक्षति। पिपासति। प्रतीपिपति। जिह्वायकीपिपति। सनीति किम्। पपाच। अस्येति किम्। लुलूपति। पापचिषते ॥ ५९ ॥ 'ओर्जान्तस्थापवर्गेऽवर्णे ॥ ४ । १ । ६० ॥ धातोर्द्वित्वे सति पूर्वस्योकारान्तस्यावर्णान्ते जान्तस्थापवर्गे परतः सनि परे इकारोऽन्तादेशो भवति। जुं सौत्रो धातुः। जिजावयिषति। यियविषति। यियावयिषति। रिरावयिषति। लिलावयिषति। पिपविषते। पिपावयिषति। बिभावयिषति। मिमावयिषति। ओरिति किम्। पापचिषते। जान्तस्थापवर्ग इति किम् । अवतुताव-

---

'णेरनिटि'। चारिवाचरति 'कर्तुं क्विप्'-गर्हितं चारति। एव पफाल्यते इति ॥—ऋमताम्—॥—चलीक्लृप्यते। द्वित्वात्प्रागेव निरपेक्षत्वेन 'ऋर लृलम्'-इत्यस्य प्रवृत्तौ ततो द्वित्वे ऋकारोपदिष्टमिति न्यायेन लृकारस्याप्यत् ॥—दरीधृज्यते इति। इकारोपान्त्योऽयमिति केचित्तन्मते भृश भ्रिजति देभ्रिज्यते इति ॥—चेक्रीयते इति। 'ऋतो री.' ततो द्वित्वम् ॥—रिरौ च—॥ —वरीवृश्चीति। 'सयोगस्यादो'-इति शलोपे 'यजसृज'-इति चस्य ष। परे गुणे विधेये शलोपश्चाऽसन् इति गुणाऽभाव ॥—जागल्तीति अयुवृद्धेनदित्युक्तेर्यङ्लुप्यपि 'ग्रो यङि' इति लत्वम् ॥—पृभृमाहा—॥ शिति द्वित्वे इति भणनात् पृङ्त् इत्यस्य व्युदास. ॥—ओर्जान्तस्था—॥—यियविषतीति। युंग्श् योतुमिच्छति युक्मिश्रणे यवितुमिच्छति सन् 'इवृध'-इति

यिषति । *जुहावयिषति । *शुशावयिषति । अवर्ण इति किम् । बुभूषति । जुज्यावयिषति । सनीत्येव । लुलाव । ननु ण्यन्तानां वृद्‌व्यवादेशयोः कृतयोर्द्वित्वे सति पूर्वस्योकारान्तता न संभवति, तत्र 'सन्यस्य' (४-१-५९) इत्यनेनैव सिद्धे किं गुरुणा सूत्रेण, एतावत्तु विधेयम् 'ओः पयेऽवर्णे' इति । पिपाविपाति, यियवि-पतीत्यत्र पूर्वस्योकारान्तस्येत्व यथा स्यात् । सत्यं, णौ यत्कृतं कार्यं तत्सर्वं स्थानिवद्भवतीति न्यायज्ञापनार्थं वचनम् । तेन पुस्फारयिषति चुक्षावयिषति शुशावयि-षतीत्याद्यपि सिद्धम् । एतच्च ज्ञापकं जान्तस्थापवर्गेवत् 'अन्यत्राप्यवर्ण एव द्रष्टव्यम् । *तेनाचिकीर्तदित्यत्रेकारवतो द्विर्वचनं सिद्धम् ॥ ६० ॥ 'श्रुस्रुद्रुप्रुप्लुच्योर्वा॥ ४।१।६१॥ एषां सनि परे द्वित्वे सति पूर्वस्योकारान्तस्यान्तस्थायामवर्णान्तायां परत इकारोऽन्तादेशो वा भवति । शिश्रावयिषति । शुश्रावयिषति । सिस्रावयिषति । सुस्रावयिषति । दिद्रावयिषति । दुद्रावयिषति । पिप्रावयिषति । पुप्रावयिषति । पिप्लावयिषति । पुप्लावयिषति । चिच्यावयिषति । चुच्यावयिषति । वचनादेकेनावर्ण-नान्तस्थाया व्यवधानमाश्रीयते । अवर्ण इत्येव । शुश्रूषते । सुस्रूषति । ओरित्येव । *सोस्रविषति ॥६१॥ स्वपो णावुः ॥४।१।६२॥ सनीति निवृत्तम् । स्वपेर्णौ सति द्वित्वे कृते पूर्वस्योकारोऽन्तादेशो भवति । सुष्वापयिषति । स्वपेर्णौ णके क्यनि णौ ङे च असुष्वापकीयत् । स्वापेः क्विबन्तात्कर्तु क्विपि यङ् । सोष्वाप्यते । अन्ये तु णौ सति द्वित्वनिमित्तानन्तर्ये एवेच्छन्ति । स्वापकीयतेः सनि सिष्वापकीयिषति । णाविति किम् । णकान्तात्क्यनि सनि च *सिष्वापकीयिषति । स्वपो णाविति किम् । स्वापं चिकीर्षति सिष्वापयिषति । अत्र न स्वपेर्णिर्घञा व्यवधानात् । स्वपो णौ सति द्वित्व इति किम् । *सोषोपयिषति । अत्र यङ्लुबन्तात् द्वित्वे सति णिर्न तु णौ सति द्वित्वमिति ॥६२॥ 'असमानलोपे सन्वल्लघुनि ङे ॥४।१।६३॥ न विद्यते समानस्य लोपो यस्मिन् ङपरे णौ द्वित्वे सति पूर्वस्य लघुनि धात्वक्षरे परे सनीव कार्यं भवति । सन्यस्येत्वमुक्तमिहापि तथा । अचीकरत् । अजीहरत् । 'ओजान्तस्थापवर्गेऽवर्णे' (४-१-६३) इत्युक्तमिहापि तथा । अजीजवत् । अयीयवत् । अरीरवत् । अलीलवत् । अपीपवत् । अबीभवत् । अमीमवत् । श्रुस्रुद्रुप्रुप्लुच्योर्वा' (४-१-९१) इत्युक्तमिहापि तथा । अशिश्रवत् । अशुश्रवत् । आदिद्रवत् । अदुद्रवत् । अपिप्रवत् ।

---

इद् ॥—जुहावयिपतीति । ह्वयन्त प्र० णिग् 'णौ ङसनि'–इति णिविषयेऽपि य्वृत् । ह्वाययितुमिच्छति । हुक् इत्यस्य तु हावयितुमिच्छति सन् ॥—शुशावयिषतीति । श्वयन्त प्रयुङ्क्ते णिग् 'श्वेर्वा' इति णिविपये य्वृत् । श्वाययितुमिच्छति ॥—अन्यत्रापीति । ओजोन्तस्थापवर्गेऽपीत्यर्थ ॥—तेनाचिकीर्त्तदिति । ननु कीर्त्यादेशस्यानिमित्ते एव विधानात् निमित्तत्वाऽभावे कथ णौ यत् कृत कार्यमिति न्यायेन स्थानित्वप्राप्तिरिति । सत्यम् । यद्विना यत्र भवति तत्तस्य निमित्तमिति कृत्वा णिज् निमित्त कीर्त्ते । यतश्चुरादीना णिच् अवश्यमेव भवति । ततो णिच्सनियोगे अत कारणात् शोधितम् ॥—श्रुस्रुद्रु—॥—सोस्रविषतीति । कुटिलार्थे यङ्लुबन्तस्य सनि स्रवते प्रयोग । यदि श्रृणोते स्यात्तदा सनि प्रत्यये परे 'श्रुवोऽनाङ्प्रते' इत्यात्मनेपद स्यात् ॥—स्वपो णा—॥ अनन्तराऽनन्तरिभावसंबन्धे षष्ठी आनन्तर्यषष्ठ्या फलमसुष्वापकीयत् । सनीति निवृत्त कार्यान्तरविधानात् । नन्वऽस्वापपकीयदित्यादौ 'स्वपो णावु' इत्युकार कथ न । उच्यते । स्वपे सबन्धी अकारो नास्ति कि तु णकसबन्धी अकार इति ॥—सिष्वापकीयिषतीति । स्वपन्त प्रयुङ्क्ते णिग् । स्वापयतीति णक । स्वापकमिच्छति क्यन् । स्वापकीयितुमिच्छति सन् । ततो 'णिस्तोरेव'–इति षत्वम् ॥—सोषोपयिपतीति । भृशार्थे यङ् लुप् 'स्वपेर्यङ्ङे च' इति यङ्लुप्यपि य्वृत् । ततो द्वित्वम् । सोषुपत प्रयुङ्क्ते णिग् सोपो-

अपुप्रवत् । आपिप्लवत् । अपुप्लवत् । अचिच्यवत् । अचुच्यवत् । अन्यस्य न भवति । अनूनवत् अजूहवत् । लघुनीति किम् । अततक्षत् । अबभाणत् । आचिक्रमत्, अचिक्कणत् इत्यादौ अनेकव्यञ्जनव्यवधानेऽपि स्थादीनामित्त्वबाधकस्यास्य शासनात् सन्वद्भावो भवति न तु स्वरव्यञ्जनव्यवायेऽपि । तेन अजजागरत् । णावित्येव । अचकमत । असमानलोप इति किम् । अचकथत् । दृषदमाख्यत् अददृपत् । पटुं लघुं कपि हरिं वाख्यत् अपीपटत् अलीलघत् अचीकपत् अजीहरत् इत्यादौ तु वृद्धौ कृतायां सन्ध्यक्षरलोप इति असमानलोपत्वात्सन्वद्भावः । णाविति जात्याश्रयणात् वादितवन्तं *प्रयोजितवान् 'अवीवदद्वीणां परिवादकेन अपीपठन्माणवकमुपाध्यायेन । अत्र णेः समानस्य लोपेऽपि भवति ॥ ६३ ॥ *लघोर्दीर्घोऽस्वरादेः ॥ ४ । १ । ६४ ॥ अस्वरादेर्धातोर्ङपरेऽसमानलोपे णौ द्वित्वे सति पूर्वस्य लघोर्लघुनि धात्वक्षरे परे दीर्घो भवति । 'अचीचरत् । अलीलवत् । अतूतनत् अबूभुजत् । लघोरिति किम् । आचिक्षणत् । अस्वरादेरिति किम् । और्णुनवत् । उरुरिवाचरतीति क्विल्लोपे णौ औरिरवत् । लघुनीत्येव । अततक्षत् । णावित्येव । अचकमत । ङ इत्येव । रिरमयिषति । असमानलोपे इत्येव । अचकथत् । अददृपत् । णिजाल्याश्रयणात् *अवीवदद्वीणां परिवादकेन ॥ ६४ ॥ `स्मृदृत्वरप्रथम्रदस्तृस्पशेः ॥ ४ । १ । ६५ ॥ एषां धातूनाममानलोपे ङपरे णौ द्वित्वे सति पूर्वस्याकारोऽन्तादेशो भवति । सन्वद्भावापवादः । स्मृ, असस्मरत् । दृ, अददरत् । अत्र परत्वाद्दीर्घोऽपि न भवति । त्वर, अतत्वरत् । प्रथ, अपप्रथत् । म्रद, अमम्रदत् । स्तृ, अतस्तरत् । स्पश् अपस्पशत् ॥ ६५ ॥ वा वेष्टचेष्टः ॥ ४ । १ ६६ ॥ वेष्टचेष्टोर्धात्वोरसमानलोपे ङपरे णौ द्वित्वे सति पूर्वस्य अकारोऽन्तादेशो वा भवति । अववेष्टत् । अविवेष्टत् । अचचेष्टत् । अचिचेष्टत् ॥६६॥ ई च गणः ॥४।१।६७॥ गणेर्ङपरे णौ द्वित्वे पूर्वस्येकारोऽकारश्चान्तादेशो भवति । अजीगणत् । अजगणत् । गणेरदन्तत्वेन समानलोपित्वात्सन्वद्भावो दीर्घत्वं च न प्राप्नोतीतीत्वविधिः । ' भूरिदाक्षिण्यसंपन्नं यत्त्वं सान्त्वमचीकथ ' इति प्रयोगदर्शनादन्येषामपि यथादर्शनमीत्वमिच्छन्त्येके ॥६७॥ अस्यादेराः परोक्षायाम्॥४।१।६८॥ धातोर्द्वित्वे सति पूर्वस्यादेरकारस्याकारो भवति । आटतुः आटुः आटिथ । आदतुः आदुः आदिथ । अस्येति

---

पयितुमिच्छति सन् ' णिस्तोरेव '-इति पत्वम् ' ॥—असमान—॥—प्रयोजितवानिति । प्रयुक्तवानित्यर्थ । यौजादिकस्य प्रयोगात् ॥—अवीवदत् वीणामिति । वदति वीणा ता परिवादक प्रयुक्तवान् तमन्य प्रयुक्तवान् णिग्द्वयम् । यद्यप्यत्र णौ णेर्लोपोऽभूत्तथापि न समानलोप । यतो णाविति जात्या एकवचन ततश्च य कश्चित् णिग् स सर्वोऽपि निमित्ततयोपात्त । अत स लुप्तोऽपि निमित्तम् । एवमऽपीपठदित्यत्रापीति ॥—लघोर्दीर्घो—॥—अचीचरदिति । ननु ' स्वरस्य '-इति परिभाषया पूर्वस्मिन्द्वित्वे विधेये स्वरादेशस्य ह्रस्वस्य स्थानित्वेन लघुनीत्यभावादित्व न प्राप्नोति । उच्यते । ' स्वरस्य '-इति पूर्वस्मिन् ( कालाऽपेक्षया देशापेक्षया वा ) स्थानित्वमऽत्र तु कालापेक्षया इत्वस्य परत्व यत प्रथममुपान्त्यह्रस्वस्तत इत्वमिति । देशापेक्षया तु परिभाषाया अनित्यता । तथाहि-पूर्वदेशे इत्व परदेशे ह्रस्व इति परिभाषाप्रसक्ति ॥—स्मृदृत्वर—॥—सन्वद्भावापवाद इति । बहुप्रयोगापेक्षयेदमुक्त यावता दीर्घस्यापि ॥—अपस्पशदिति । स्पशि सौत्र । स्पशिण् इति णिगन्तो वा । केचित्तु पषीस्थाने स्पशीति पठन्ति तस्य वा ॥—ई च गणः ॥ ननु ई वा गण इति क्रियतामदन्तत्वेन समानलोपित्वादेव पक्षेऽजगणदिति भविष्यति । सत्यम् । चुरादिभ्यो णिच् अनित्यो णिच्सन्नियोगे एवैषामऽदन्तत्व तदऽभावे तदऽभावादऽजगणदिति न सिध्येत् । किं त्वऽजीगणदित्येव ॥—अस्यादेरा—॥ 'लुगस्यादेत्यपदे' इत्यस्याऽपवाद ॥—

किम् । ईयतुः ईयुः आदेरिति किम् । पपाच । परोक्षायामिति *उत्तरार्थम् ॥६८॥ 'अनाता नश्चान्त ऋदाद्यशौसंयोगस्य॥४।१।६९॥ ऋकारादेरश्नोतेः संयोगान्तस्य च धातोः परोक्षायां द्वित्वे पूर्वस्यादेरकारस्यानात आकारस्थानेऽनिष्पन्नस्याकारो भवति कृताकारात्त्वसमान्तोऽन्तश्च । ऋदादि, आनृधतुः आनृजे । आनृजाते । आनृजिरे । अशौ, आनशे । आनशाते । आनशिरे । संयोग, आनर्च । आनर्चतुः आनञ्जतुः । आनङ्ग । आनङ्गतुः *आनर्च्छ । आनर्च्छतुः ऋदादेरिति किम् । 'आर । आरतुः अशावित्यौकारः किम् । अश्नातेर्माभूत् । आश । आशतुः संयोगस्येति किम् । आट । आटतुः अनात इति किम् । आञ्छ आयामे । आञ्छ । आञ्छतुः कश्चिदत्रापीच्छति । आनाञ्छ । आनाञ्छतुः आनाञ्छुः॥६९॥ भूस्वपोरदुतौ॥४।१।७०॥ भूस्वप् इत्येतयोः परोक्षायां द्वित्वे सति पूर्वस्य यथासंख्यमिकारोकारौ भवतः बभूव । बभूवतुः बभूवे चैत्रेण । अनुबभूवे कम्बलः साधुना । सुष्वाप । सुष्वपिथ । परोक्षायामित्येव । बुभूषति । बोभवांचकार । केचित्तु कर्तर्येव भुवोऽकारमिच्छन्ति न भावकर्मणोः तेन बुभूवे चैत्रेण, अनुबुभूवे कम्बलः साधुनेत्येव भवति॥७०॥ *ज्याव्येव्यधिव्यचिव्यथेरिः॥४।१।७१॥ एषा परोक्षायां द्वित्वे सति पूर्वस्येकारो भवति । ज्या, जिज्यौ । जिज्यिथ । व्येंग्, संविव्याय । संविव्ययिथ । व्यध्, विव्याध । विव्यधिथ । व्यच्, विव्याच । *विव्यचिथ । व्यथ्, विव्यथे । विव्यथाते । विव्यथिरे । परोक्षायामित्येव । वाव्यथ्यते ॥७१॥ *यजादिवश्वचः सस्वरान्तस्था य्वृत्॥४।१।७२॥ यजादीनां वश्वचोश्च परोक्षायां द्वित्वे सति पूर्वस्य सस्वरान्तस्था य्वृत् इकारउकारऋकाररूपा भवति । इयाज । इयजिथ । वेंग्, उवाय । उवयिथ । टुवपीं, उवाप । उवपिथ । वहीं, उवाह । उवहिथ । वद, उवाद । उवदिथ । वसं, उवास । उवसिथ । व्येगः पूर्वेणेकारविधानबलात् *ह्वेगृश्वयत्योस्तु पूर्वस्यान्तस्थाया अभावात् न भवति । वश्, उवाश । उवशिथ । वचिति वश्साहचर्यात् वचंक् ब्रूगादेशो वा आदादिको गृह्यते न यौजादिकः उवाच । उवचिथ । परोक्षायामित्येव । यायज्यते । वावच्यते ॥ ७२॥ *न वयो य् ॥ ४ । १ । ७३ ॥ पूर्वस्येति निवृत्तमसंभवात् । वेगादेशस्य वयेर्यकारः परोक्षायां य्वृन्न भवति । *ऊयतुः ऊयुः ॥ ७३ ॥ *वेरयः ॥४।१।७४ ॥ वेगोऽयकारान्तस्य पूर्वस्य परस्य च परो-

---

उत्तरार्थमिति । इह तु परोक्षाया अन्यस्मिन् यङादौ प्रत्यये द्वित्वे सति आदावकारस्याऽसम्भवात् ॥—अनातो न—॥ न विद्यते आत् स्थानितयाऽस्य ॥—आनर्च्छेति । प्रथम द्वित्वम् तत 'स्कृच्छ्र '–इति गुण ॥—आरेति । ऋक् ऋ प्रापणे वा णव् द्वित्वम् 'ऋतोऽत्' 'अस्यादे '–इति आकारस्ततो 'नामिनोऽकलि'–इति वृद्धि । आद्यन्तवदेकस्मिन्नित्यपि न यतो यथाऽन्यव्यपदेशे ऋदादित्वम् एवमादिव्यपदेशे ऋदन्तत्वमपि तत ऋत् आदिरेव यस्येत्यवधारणेनाऽस्य निरास ॥—ज्याव्येव्यधि—॥—संविव्यायेति । 'यजादिवश्वच '–इति य्वृद्बाधनार्थमिकारस्यापि इ ॥—विव्यचिथेति । 'कुटादेर्ङिद्वत्'–इत्यनेनेटो ङित्वेऽपि 'व्यचोऽनसि' इति न य्वृत् । समारान्तागम इति न्यायात् कुटादिगणनिर्दिष्टस्य ङित्वस्याऽनित्यत्वात् ॥—यजादिवश्—॥ —उवयिथेति । 'सृजिदृशि'–इति वेटि 'य्वो प्वऽय्'–इति यलुपि उवथ । वहेस्तु उवोढ इति भवति ॥—ह्वेगृश्वयत्योस्त्विति । 'द्वित्वे ह्' 'वा परोक्षायङि' इत्यनेन च य्वृत्विधानात् विकल्पपक्षेऽपि 'व्यञ्जनस्य'–इति लुक्प्रवृत्ते ॥—न वयो य् ॥—ऊयतुरिति । वेग् 'वेर्वय्' 'यजादिवचे किति' वकारस्य य्वृत् । द्वित्वे 'व्यञ्जनस्य' इति यलोपे 'समानानाम्'–इति दीर्घ । अत्र 'यजादिवचे '–इत्यनेन यकारस्य वकाराकारेण सह य्वृत्प्राप्नोति ॥—वेरयः ॥—ववाविति । 'वेर्वय्' इत्यस्य विकल्पप्रवृत्तेर्वयऽभाव । अत्र 'यजादिवश्'–इति प्रथमस्य न

क्षायां य्वृन्न भवति । *ववौ । वविथ । अय इति किम् । *उवाय । उवयिथ ॥ ७४ ॥ *अविति वा ॥ ४ । १ । ७५ ॥ वेगोऽयकारान्तस्याविति परोक्षायां परतो य्वृद्वा न भवति । *ववतुः । ववुः । ऊवतुः । ऊवुः । द्वित्वे कृते परत्वाद्धातोरुवादेशे सति पश्चात् पूर्वस्य समानस्य दीर्घः । अय इति किम् । ऊयतुः । ऊयुः ॥ ७५ ॥ ज्यश्च यपि ॥ ४ । १ । ७६ ॥ ज्या इत्येतस्य वेगश्च यपि परे य्वृन्न भवति । प्रज्याय । उपज्याय । प्रवाय । उपवाय ॥ ७६ ॥ व्यः ॥४।१। ७७ ॥ व्येगो यपि परे य्वृन्न भवति । प्रव्याय । उपव्याय । योगविभाग उत्तरार्थः ॥ ७७ ॥ संपरेर्वा ॥ ४ । १ । ७८ ॥ संपरिभ्यां परस्य व्येगो यपि परे य्वृद्वा न भवति । संव्याय । संवीय । परिव्याय । परिवीय । निरपेक्षत्वेनान्तरङ्गत्वात् प्रागेव य्वृतो दीर्घत्वम् न तु तोऽन्तः । समो नेच्छन्त्येके । तेन नित्यं संव्याय ॥ ७८ ॥ *यजादिवचेः किति ॥४।१। ७९॥ *नेति निवृत्तम् । यजादीनां धातूनां वचेश्च सस्वरान्तस्था किति प्रत्यये परे य्वृत् भवति । यजी, ईजतुः। ईजुः। इज्यते । इज्यात् । इष्टः । इष्टवान् । ईजिवान् । इष्ट्वा । *इष्टिः। वेग्, ऊयतुः। ऊयुः। 'अविति वा' (४–१–७५) इति वचनात् ववतुः। ववुः। ऊवतुः। ऊवुः। ऊयते । ऊयात् । उतः। उतवान् । व्येंग्, संविव्यतुः । संविव्युः । संवीयते । संवीयात् । संवीतः । संवीतवान् । हेग्, हूयते । हूयात् । हूतः । हूतवान् । वपी, ऊपतुः। ऊपुः। उप्यते । उप्यात् । उप्तः । उप्तवान् । वही, ऊहतुः। ऊहुः। उह्यते । उह्यात् । ऊढः । ऊढवान् । श्वि, शूयते । शूयात् । शूनः । शूनवान् । वद, ऊदतुः । ऊदुः । उद्यते । उदितः। उदितवान् । वसं, ऊषतुः । ऊषुः । उष्यात् । उषित । उषितवान् । वचिति वचंक् ब्रूगादेशो वा । ऊचतुः । ऊचुः । उच्यते । उच्यात् । उक्तः । उक्तवान् । *यौजादिकस्य तु न भवति । वच्यते। कितीति किम् । इयाज । यक्षीष्ट । वावच्यते । वक्ता ॥ ७९ ॥*स्वपेर्यङ्ङे च ॥ ४ । १ । ८० ॥ स्वपेर्यङि ङे किति च प्रत्यये सस्वरान्तस्था य्वृत् भवति । सोषुप्यते । सोषुपीति । यङ्लुपि नेच्छन्त्यन्ये । सास्वप्ति । णिमन्तरेण ङस्यासंभवात् स्वापितिर्ग्यन्तो लभ्यते । *असूषुपत् । ङे य्वृत् गुणो ह्रस्वत्वं द्वित्वं पूर्वस्य दीर्घत्वमित्यत्र क्रमः । किति, सुषुपतुः । सुप्यते । सुप्यात् । सुषुप्सति । एष्विति किम् । स्वपिति । घञन्तादपि केचिदिच्छन्ति । स्वापमकरोत् *असुषुपत् ॥ ८० ॥ *ज्याव्यधः क्ङिति ॥ ४ । १ । ८१ ॥ जिनातेर्विध्यतेश्च सस्वरान्तस्था किति ङिति च प्रत्यये परे य्वृत् भवति । जिज्यतुः । जीयते । जीयात् ।

---

प्राप्नोति ॥—उवायेति । अत्र वयादेशे किदऽभावात् 'यजादिवचे'–इत्यस्याप्रवृत्तौ द्वित्वे 'यजादिवश्'–इति पूर्ववकारस्य य्वृत् ॥—अविति वा ॥—ववतुरिति । द्वित्वात्प्रागेव 'यजादिवचे.'–इत्यनेन प्राप्तमनेन विकल्प्यते । द्वित्वे तु कृते पूर्वस्य 'यजादिवश्'–इति प्राप्त 'वेरय.' इत्यनेन निषिध्यते ॥—ऊवतुरिति । अत्र पूर्वम् य्वृत्ततो द्वित्व य्वृत्सकृदिति न्यायात्पश्चाद्वकारस्य न य्वृत् ॥—यजादिवचेः—॥—नेति निवृत्तमिति । प्राप्तेरभावात् ॥—इष्टिरिति । 'आस्यटि'–इति क्यप्समावेशार्थम् श्वादिकत्वात् क्ति ॥—उत इति । क्विपि तु उत् उतौ उत इति । परमते तु ऊ उवौ उव । ते 'दीर्घमवोऽन्त्यम्' इत्यत्र अव इति न कुर्वते ॥—यौजादिकस्य तु न भवतीति । नित्याणिजन्तैर्यजादिभि. साहचर्यादित्यर्थ. ॥—स्वपेर्यङ्ङे च ॥—असूषुपदिति । न च वाच्य प्राक् तु स्वरे इति न्यायात् द्वित्वमेव भविष्यति न णिगाश्रितो गुण. । यतो यदि तेनैव द्वित्वनिमित्तेन प्रत्ययेन जन्यते स्वरविधिस्तदैव न स्यादऽत्र तु द्वित्वनिमित्तप्रत्ययाऽजन्य इति ॥—असुषुपदिति । स्वमते तु असस्वापदिति ॥—ज्याव्यधः—॥ प्रत्यय इति विशेष्य क्ङितीति विशेषणम् अतो धातुनिमित्तयोर्यथासंख्यं न भवति

विध्यते । विध्यात् । विद्धः । ङिति, विध्यति । वेविध्यते । वेवेद्धि । जीनः । ङिति, *जिनाति । जेजीयते । जेजेति । विविधतुः ।
क्ङिति इति किम् । ज्याता । व्यद्धा ॥ ८१ ॥ *व्यचोऽनसि ॥ ४ । १ । ८२ ॥ व्यचेः सस्वरान्तस्थाऽस्वर्जिते क्ङिति प्रत्यये य्वृद्भवति । *विचिता । विचितुम् । वेविच्यते । विचति । अनसीति किम् । *उरुव्यचाः ॥ ८२ ॥ वशोरयङि ॥ ४ । १ । ८३ ॥ वशेः सस्वरान्तस्था अयङि क्ङिति प्रत्यये य्वृद्भवति । उश्य-ते । ऊशतुः । उशितम् । उष्टः । उशन्ति । अयङीति किम् । वावश्यते । क्ङितीत्येव । वष्टि ॥ ८३ ॥ *ग्रहव्रश्चभ्रस्जप्रच्छः ॥ ४ । १ । ८४ ॥ ग्रहादीनां सस्वरा-न्तस्था क्ङिति प्रत्यये परे य्वृद्भवति । जगृहतुः । जगृहुः । गृह्यते । गृहीतः । जिघृक्षति । गृह्णाति । जरीगृह्यते । जरीगृहीति । वृश्च्यते । वृक्णः । वृश्चति । वरीवृश्च्यते । भृज्ज्यते । भृष्टः । भृज्जति । बरीभृज्ज्यते । *पृच्छ्यते । पिपृच्छिषति । पृष्टः । पृच्छति । परीपृच्छ्यते । पृच्छा । क्ङितीत्येव । ग्रहीता । वव्रश्चतुः । बभ्रज्जतुः । पप्रच्छतुः । प्रश्नः । व्यचिवशिव्रश्चिभ्रस्जिप्रच्छीनां पश्चाना यङ्लुबन्तानां नेच्छन्त्यन्ये । तस्, वाव्यक्तः । नाम्नि तिक् । वाव्यक्तिः । वावष्टः । वावष्टिः । वाव्रष्टः । वाव्रष्टिः । वाभ्रष्टः । वाभ्रष्टिः । पाप्रष्टः । पाप्रष्टिः । अन्ये तु 'प्रकृतिग्रहणे यङ्लुबन्तस्यापि ग्रहणम्' इति यङ्लुप्यपि मन्यन्ते । तेन वेविक्तः वेविक्तिः, 'वरिवृष्टः वरिवृष्टि', वरिभृष्टः वरिभृष्टिः, परिपृष्टः परिपृष्टिः । अपरे तु विचातिवृश्चतिभृज्जतिपृच्छतीनां नित्यं य्वृत् ज्यादीनां त्वनिसमिति मन्यन्ते तेनेदं सिद्धम् 'तस्याख्यस्तीनापि विव्यधुः शरैः' इति । अन्ये तु विविधुरित्येवाहुः ॥ ८४ ॥ व्येस्यमोर्यङि ॥ ४ । १ । ८५ ॥ व्यस्यमोः सस्वरान्तस्था यङि य्वृद्भवति । वेवीयते । वेवयीति । सेसिम्यते । सेसिमी-ति । यङ्लुपि नेच्छन्त्यन्ये । वाव्याति । संस्यन्ति । यङीति किम् । व्ययति ॥ ८५ ॥ चायः की ॥ ४ । १ । ८६ ॥ चायृगित्येतस्य यङि की इत्ययमादेशो भव-ति । चेकीयते । दीर्घनिर्देशो यङ्लुबर्थः । चेकीतः ॥ ८६ ॥ द्वित्वे ह्वः ॥ ४ । १ । ८७ ॥ ह्वयतेर्द्वित्वविषये सस्वरान्तस्था य्वृद्भवति । जुहाव । जुहुवतुः । जोहूयते । जोहवीति । जुहूपति । अनेनैव सिद्धे उत्तरसूत्रकरणं णेरन्यस्मिन् द्वित्वनिमित्तप्रत्ययव्यवधायके य्वृन्माभूदित्येवमर्थम् । तेनेह न भवति । हायकमिच्छति ह्वायकीयति । जिह्वायकीयिपति ॥ ८७ ॥ *णौ ङसनि ॥ ४ । १ । ८८ ॥ ह्वयतेः सस्वरान्तस्था ङपरे सन्परे च णौ विषये य्वृद्भवति । अजूहवत् । जुहावयिषति । णा-विति विषयसप्तमीति किम् । णिविषय एवान्तरङ्गमपि*यकारागमं बाधित्वा य्वृद्यथा स्यात् । ङसनीति किम् । ह्वाययति ॥ ८८ ॥ *श्वेर्वा ॥ ४ । १ । ८९ ॥ श्वयतेः सस्वरान्तस्था ङपरे सन्परे च णौ विषये य्वृद्वा भवति । अशूशवत् । अशिश्वयत् । शुशावयिषति । शिश्वाययिषति । विषयविज्ञानादन्तरङ्गमपि वृद्ध्यादिकं

॥—जिनातीति । य्वृत् 'दीर्घमवोन्त्यं' 'प्वादेर्ह्रस्व' ॥—व्यचोनसि ॥—विचितेति । कुटादित्वात् ङित्वे य्वृत् ॥—उरुव्यचा इति । उरु विचति असित्यऽस कुटादित्वात् ङित्वम् ॥—ग्रहव्रश्च—
॥—पृच्छ्यते इति । च्छस्य सानुनासिकत्वं नाद्दतमिति 'अनुनासिके च'—इति शो न भवति ॥—वरिवृष्ट इति । वशस्तु भाष्यकृताप्यनुदाहृतत्वान्न दर्शितम् । प्रयोगस्तु वोष्टि वोष्ट इति टिप्पनककृत ॥—
चायः की ॥दीर्घनिर्देशात् यङ्लुप्यप्यादेश इत्यर्थः। अन्यथा दि यदि साक्षात् यङ्यादेश. स्यात्तदा 'दीर्घश्च्वि'—इति दीर्घ सिद्ध' । एवं 'प्याय पी' इत्यऽनापि ॥—णौ ङसनि॥—यकारागमं बाधित्वेति ।
उपलक्षणत्वाण्णौ यत्कृत कार्यमिति च य्वृत् यथा स्यादिति । कृते तु य्वृति यो न भवति । 'अर्त्तिरी'—इति प्वागमबाधकत्वेन आदन्तेभ्यो यस्य प्रवृत्ते ॥—श्वेर्वा ॥—विषयविज्ञानादित्यादि ।

य्वृता वाध्यते । कृते च तस्मिन्वृद्धिः । तत आवादेश उपान्त्यह्रस्वत्वम् । ततो णिकृतस्य स्थानित्वात् शोर्द्वित्वम् ततः पूर्वदीर्घ इति क्रमः ॥ णावित्येव । अशिश्वियत् । शिश्वयिषति ॥ ८९ ॥ *वा परोक्षायङि ॥ ४ । १ । ९० ॥ श्वयतेः सस्वरान्तस्था परोक्षायां यङि च परे वा य्वृत् भवति । शुशाव । शिश्वाय । अहं शुशव । शिश्वय । *शुशुवतुः । शिश्वियतुः । शुशविथ । शिश्वयिथ । शोशूयते । शोशवीति । शेश्वीयते । शेश्वयीति । अवित्परोक्षायां कित्त्वाद्यजादित्वेन प्राप्ते विति परोक्षायां यङि चाप्राप्ते विभाषा ॥ ९० ॥ *प्यायः पी ॥ ४ । १ । ९१ ॥ प्यायतेः परोक्षायां यङि च पीरादेशो भवति । आपिप्ये । आपिप्याते । आपिप्यिरे । पेपीयते । प्रपेपीयते । दीर्घनिर्देशो यङ्लुबर्थः । आपेपेति । *आपेपीतः ॥ ९१ ॥ क्तयोरनुपसर्गस्य ॥ ४ । १ । ९२ ॥ अनुपसर्गस्य प्यायः क्तयोः क्तक्तवत्वोः प्रत्यययोः परयोः पीत्ययमादेशो भवति । पीनं मुखम् । पीनवन्मुखम् । क्तयोरिति किम् । प्यायते । अनुपसर्गस्येति किम् । प्रप्यानो मेघः ॥ ९२ ॥ *आङोऽन्धूधसोः ॥ ४ । १ । ९३ ॥ आङ उपसर्गात्परस्य प्यायतेरन्धावूधसि चार्थे क्तयोः परतः पीरादेशो भवति । आपीनोऽन्धुः । आपीनमूधः । अन्धुर्व्रणम् *ऊधसो वा पर्यायः । आङ इति किम् । प्रप्यानोऽन्धुः । परिप्यानमूधः । अन्धूधसोरिति किम् । आप्यानश्चन्द्रः । *आङ एवेति नियमात् प्राप्यानमूध इत्यत्राङन्तादुपसर्गान्न भवति । अनुपसर्गस्य तु पूर्वेण भवत्येव । पीनोऽन्धुः । पीनवानन्धुः । पीनमूधः । पीनवदूधः । अन्ये तु प्यायतेः केवलस्याङ्पूर्वस्याङन्तोपसर्गपूर्वस्यैव च प्रयोगमिच्छन्ति नान्यपूर्वस्य । तन्मते प्रप्यानपरिप्यानादयोऽप्रयोगाः । क्तयोरित्येव । *आप्याय्यः ॥ ९३॥ *स्फायः स्फी वा ॥४।१।९४॥ स्फायतेः क्तयोः परतः स्फी इत्ययमादेशो वा भवति । स्फीतः । स्फीतवान् । संस्फीतः । संस्फीतवान् । स्फातः । स्फातवान् । क्तयोरिति किम् । *स्फातिः । विकल्पं नेच्छन्त्यन्ये ॥ ९४ ॥ *प्रसमः स्त्यः स्ती॥४।१। ९५॥ प्रसम् इत्येवंसमुदायपूर्वस्य स्त्यायतेः क्तयोः परतः स्ती इत्ययमादेशो भवति । प्रसंस्तीतः । प्रसंस्तीतवान् । प्रसम इति किम् । संप्रस्त्यानः । संप्रस्त्यानवान् । स्त्यानः । संस्त्यानः । प्रसमो नेच्छन्त्यन्ये ॥ ९५ ॥ प्रात्तश्च मो वा ॥ ४ । १ । ९६ ॥ प्रात्केवलात्परस्य स्त्यायतेः क्तयोः परयोः स्ती इत्ययमादेशो भवति क्तयोस्तकारस्य च वा मका-

---

ननु विधानसामर्थ्यादेव वृध्यादिकं बाधित्वा य्वृद्भविष्यति किम् विषयव्याख्यानेन । नैवम् । वृद्धौ कृतायामऽपि यस्यापि य्वृत्प्राप्नोति अतो विधानं चरितार्थम् ॥—वा परोक्षा—॥—शुशुवतुरिति । 'दीर्घमव.'–इति दीर्घे द्विर्वचनम् ॥—प्यायः पी ॥—आपेपीत इति । भोजेनैतत् कान्त साधितमिति तिवन्तोदाहरणमग्रेतनवर्त्तमानानिश्चयार्थम् ॥—आङोन्धूधसोः ॥—ऊधसो वा पर्याय इति । ननु तर्हि आङोन्धाविति सिद्धे ऊधस्ग्रहणं किमर्थम् । सत्यम् । ऊधोग्रहण बोधयति आपीन इति प्रयोगो व्रणे विशेषणतया ऊधसि च पर्यायेण । यद्वा ऊधोग्रहणमेव ज्ञापयति । अन्धुशब्द' कैश्चिदेव ऊधसि कीर्त्यते अन्यथाऽन्धुनापि साध्यसिद्धिः ॥—आङ एवेतीति । अत्राप्यनुपसर्गस्येत्यनुवर्त्तनीयं ततश्च आङ्पूर्वस्य प्याय. पी । कथं भूतस्याङोऽनुपसर्गस्य किमुक्त भवति केवलस्येत्यर्थ इत्यवधारणान्नियन्त्रणान्न तु सिद्धे सत्यारम्भोनियमार्थ इति । यद्वा सर्व वाक्य सावधारणमिति न्यायादेवकारः ॥—आप्याय्य इति । 'कालाध्व'–इत्यनेन मासादेः कर्मत्वेऽन्तभूतण्यर्थत्वेन वा सकर्मकत्वे कर्मणि घ्यण् भावे तु क्लीबत्वं स्यात् ॥—स्फायः स्फी वा ॥—स्फातिरिति । तत्कथं स्फीतिः । उच्यते । स्फायते स्म क्त. स्फीत इवाचरति 'कर्तु क्विप्' । स्फीततीति 'स्वरेभ्य इः' ॥—प्रसमः—॥ व्यावृत्तौ केवलात् प्रोपसर्गान्न दर्शितम् उत्तरेण विधानात् ॥—नेच्छन्त्यन्ये इति । ते ह्येतत्सूत्रं न कुर्वन्ति

रो भवति। प्रस्तीमः। प्रस्तीमवान्। प्रस्तीतः। प्रस्तीतवान् ॥९६॥ *श्यः शीर्द्रवमूर्तिस्पर्शे नश्चास्पर्शे ॥४।१।९७॥ द्रवस्य मूर्तिः काठिन्यं तस्मिन् स्पर्शे च वर्तमानस्य
श्यायतेः क्तयोः परतः शी इत्ययमादेशो भवति तत्संनियोगे च क्तयोस्तकारस्यास्पर्शे विषये नकारादेशो भवति। शीनं घृतम्। शीनवद् घृतम्। शीनं मेदः। शीन-
वन्मेदः। द्रवावस्थाया काठिन्यं गतमित्यर्थः। स्पर्शे, *शीतं वर्तते। शीतो वायुः। गुणमात्रे तद्वति वार्थे स्पर्शविषयो भवति। द्रवमूर्तिस्पर्श इति किम्। संश्यानो
वृश्चिकः। शीतेन संकुचित इत्यर्थः। 'व्यञ्जनान्तस्थातोऽख्याध्यः' (४-२-७१) इति नत्वम् ॥९७॥ प्रतेः ॥४।१।९८॥ प्रतिपरस्य श्यायतेः क्तयोः
परतः शी इत्ययमादेशो भवति तत्संनियोगे च क्तयोस्तकारस्य नकारः। प्रतिशीनः। प्रतिशीनवान्। प्रतिपूर्वोऽयं रोगे वर्तत इति पूर्वेणाप्राप्तौ वचनम् ॥९८॥ *वाभ्य-
वाभ्याम् ॥४।१।९९॥ अभि अव इत्येताभ्यां परस्य श्यायतेः क्तयोः परतः शी इत्ययमादेशो वा भवति तत्संनियोगे च क्तयोस्तस्यास्पर्शे नो भवति। अभि-
शीनः। अभिशीनवान्। अभिश्यानः। अभिश्यानवान्। अवशीनः। अवशीनवान्। अवश्यानः। अवश्यानवान्। द्रवमूर्तिस्पर्शयोरप्यनेन परत्वाद्विकल्पो भवति।
अभिशीनं घृतम्। अभिश्यानं घृतम्। अवशीनं हिमम्। अवश्यानं हिमम्। अभिशीतो वायुः। अवशीतो वायुः। स्पर्शत्वान्न नत्वम्। अभिश्यानो वायुः। अवश्यानो
वायुः। 'व्यञ्जनान्तस्थातोऽख्याध्यः' (४-२-७१) इति स्पर्शेऽपि नत्वम्। अभ्यवाभ्यामिति किम्। संश्यानः। संश्यानवान्। केचित्तु समा व्यवधानेऽपीच्छ-
न्ति। अभिसंशीनः। अभिसंशीनवान्। अभिसंश्यानः। अभिसंश्यानवान्। अवसंशीनः। अवसंशीनवान्। अवसंश्यानः। अवसंश्यानवान्। तदाभ्यवाभ्यामिति
तृतीया व्याख्येया। समस्ताभ्यामपीत्यन्ये। अभ्यवशीनः। अभ्यवश्यानः। विपर्यासे प्रयोगो नास्ति। वा शब्दस्य च व्यवस्थितविभाषार्थत्वादन्योपसर्गान्ताभ्यां
न भवति। समभिश्यानः। समभिश्यानवान्। समवश्यानः। समवश्यानवान् ॥९९॥ *श्रः शृतं हविःक्षीरे ॥४।१।१००॥ श्रातेः श्रायतेश्च क्तप्रत्यये
हविषि क्षीरे चाभिधेये शृभावो निपात्यते। शृतं हविः। शृतं क्षीरम् स्वयमेव। श्रातिश्रायती हि अकर्मककर्मकर्तृविषयस्य पचेरर्थे वर्तेते। त-
योश्चैतन्निपातनम्। हविःक्षीर इति किम्। श्राणा यवागूः ॥१००॥ *श्रपेः प्रयोक्त्रैक्ये ॥४।१।१०१॥ श्रायतेः श्रातेर्वा ण्यन्तस्य-
कस्मिन् प्रयोक्तरि क्ते परतो हविषि क्षीरे चाभिधेये शृभावो निपात्यते। श्राति श्रायति वा हविः स्वयमेव तच्चैत्रेण प्रायुज्यत शृतं हविश्चैत्रेण
। शृतं क्षीरं चैत्रेण। यदा तु द्वितीये प्रयोक्तरि णिगुत्पद्यते तदा न भवति। *श्रपितं हविश्चैत्रेण मैत्रेणेति। हविःक्षीर इत्येव। श्रपिता यवागूः। अन्ये तु

॥—श्यः शी—॥ द्रवमूर्त्तिश्च स्पर्शश्चेति कृते विरोधिनामिति व्यावृत्ते सूत्रत्वात्समाहार कर्मधारयो वा ॥—शीत वर्त्तते इति। कर्त्तरि क्त। अत्र शीतस्पर्शो मुख्यभावेन। शीतो वायुरित्यत्र तु गौणभावेन
वर्त्तते ॥—वाभ्य—॥ अस्पर्शे नो भवतीति पूर्वसूत्रे अस्पर्श इति नोक्त रोगेऽसभवात् ॥—श्रः शृत—॥ ननु कथ शृतं क्षीर स्वयमेवेत्युक्तम् शृत क्षीर देवदत्तेनेति कथ न भवतीत्याशङ्क्याह—श्रातिश्रा-
यती इति ॥—श्रपेः प्रयो—॥ शृत हविश्चैत्रेणेति णिगि पान्ते घटादेर्ह्रस्वे श्रप्यते स्मेति वाक्ये कर्म्मणि क्ते निपातनादिडभाव ॥—श्रपित हविरित्यादि। पूर्ववत्प्रथमो णिग्। ततस्त चैत्र श्रपयन्त मैत्र

*श्रपिं चुरादौ पठन्ति तस्यैव श्रपेर्निपातनम् । प्रयोजकण्यन्तस्य त्वेकस्यापि प्रयोगं नेच्छन्ति । तन्मते कर्मकर्तृ हविः श्रातुं चैत्रः प्रयुक्तवान् इति प्रयोजकव्यापारे
णिगि श्रपितं हविश्चैत्रेणेत्येव भवति । अपरे तु सकर्मकावपि श्रातिश्रायती इच्छन्ति । तन्मते, *तयोरप्यण्यन्तयोर्निपातनं भवति । श्रृतं हविश्चैत्रेण । ण्यन्तयोस्तु
न भवत्येव । श्रपितं हविश्चैत्रेण मैत्रेणेति ॥ १०१ ॥ *य्वृत्सकृत् ॥ ४ । १ । १०२ ॥ य्वृदिति अन्तस्थास्थानानामिकारोकारऋकाराणां शास्त्रेऽस्मिन् व्यवहारः ।
धातोर्य्वृत्सकृदेकवारमेव भवति । यावत्संभवस्तावद्विधिरिति न्यायात् पुनःप्राप्तं प्रतिषिध्यते । *संवीयते । विध्यते । विच्यते । वेवीयते । वेविध्यते । वेविच्यते॥१०२॥
*दीर्घमवोऽन्त्यम् ॥ ४ । १ । १०३ ॥ वेग्वर्जितस्य धातोर्य्वृदन्त्यं दीर्घं भवति । जीनः । जीनवान् । जिनाति । संवीतः । हूतः । शूनः । अव इति किम् ।
*उतः । उतवान् । अन्त्यमिति किम् ।*स्युतः । उप्तः ॥ १०३ ॥ *स्वरहनगमोः सनि धुटि ॥ ४ । १ । १०४ ॥ स्वरान्तस्य धातोर्हन्तेर्गमेश्च धुडादौ सनि परे
स्वरस्य दीर्घो भवति । स्वर, चिचीषति । तुतूषति । चिकीर्षति । हन् , जिघांसति । गमु, जिगांस्यते । *संजिगांसते । अधिजिगांस्यते माता । अधिजिगांसते सूत्रम् ।
गम्विति इणिकादेशस्य गमेर्ग्रहणाद्गच्छतेर्न भवति । संजिगंसते वत्सो माना । इङादेशस्यैव गमोरिच्छन्त्येके । तन्मते इण् जिगंस्यते । संजिगंसते । इक् , अधिजिगं-
स्यते मातेत्येव भवति । सनीति किम् । स्तुतः। धुटीति किम् । *यियविषति ॥ १०४ ॥ तनो वा ॥ ४ । १ । १०५ ॥ तनोतेर्धुडादौ सनि परे स्वरस्य दीर्घो वा
भवति । तितांसति । तितंसति । धुटीत्येव । वितितनिषति । यङ्लुपि, । *तंतनिषति ॥ १०५ ॥ क्रमः क्त्वि वा ॥ ४ । १ । १०६ ॥ क्रमः स्वरस्य धुडादौ
क्त्वाप्रत्यये वा दीर्घो भवति । क्रान्त्वा । क्रन्त्वा । धुटि इत्येव । क्रमित्वा । ' ऊदितो वा ' (४–४–४२) इति वेट् । प्रक्रम्येत्यत्र त्वन्तरङ्गमपि दीर्घत्वं बाधित्वा प्रा-
गेव यप् । एतच्च ' यपि चादो जग्ध् ' (४–४–१६) इत्यत्र ज्ञापयिष्यते ॥ १०६ ॥ *अहन्पञ्चमस्य क्विक्ङिति ॥ ४ । १ । १०७ ॥ हन्वर्जितस्य पञ्चमान्तस्य
धातोः स्वरस्य क्वौ धुडादौ च क्ङिति प्रत्यये दीर्घो भवति । *प्रशान् । प्रतान् । प्रदान् । प्रशामौ । प्रतामौ । प्रदामौ । क्ङिति, शान्तः । शान्तवान् । शान्त्वा ।
शान्तिः । एवं तान्तः । दान्तः । ङिति, शंशान्तः । तन्तान्तः । दंदान्तः । पञ्चमस्येति किम् । ओदनपक् । पक्त्वा । अहन्निति किम् । *वृत्रहणि । भ्रूणहनि ।

---

प्रायुक्त । पाचितमित्यर्थ ॥—श्रपि चुरादाविति । अदन्तम् । तस्य च फल हवि क्षीरादऽन्यत्र दृश्यम् ॥—तयोरपीति । न केवलमऽकर्म्मकयो सकर्म्मकयोरपि तयो श्र श्रृतमिति निपातन भवति इत्य-
पेरर्थ ॥—य्वृत्सकृ—॥—संवीयते इति । अत्र यकारस्य 'यजादिवचे'–इति य्वृति पुनर्वकारस्य प्राप्तमनेन निषिध्यते ॥—दीर्घम—॥—उत इति । क्विपि उत् उतौ उत इति भाष्यम् ॥—
सुप्त इति । 'ज्ञानेच्छार्चार्थे'–इति क्त ॥—स्वरहनगमोः—॥—संजिगांसते इति । समेतुमिच्छति सन् । 'सनीङश्च'–इति गमु । गम्लृ गतावित्यनेन सह इणादेशस्य गमेऽरभेदोपचाराद्गम्लृ-
कार्यमात्मनेपद प्राग्वदित्यनेन । अन्यथा सन प्राग् आत्मनेपदाऽदर्शनान्न स्यात् । उपचारे तु ' समो गमृच्छि '–इति प्राक् दृष्टम् ॥—यियविषतीति । प्रथम गुण बाधित्वा दीर्घे सकृद्वृते इति
प्रवर्त्तते ॥—तनो वा ॥—तंतनिषतीति । 'इवृध'–इतीटि विकल्पात्तितासति तितसतीत्यपि ॥—अहन्पञ्च—॥—प्रशानिति । नादेशस्य परे असत्त्वान्नलोपाभाव । हन्वर्जनात् उपदेशावस्थाया
पञ्चमो गृह्यते । तेन सुगणित्यत्र दीर्घो न ॥—वृत्रहणीति । संज्ञायां 'पूर्वपदस्था'–इति असंज्ञाया तु 'कवर्गैक'–इति णत्वम् ॥—काश्चित्तु आचारक्काविति । स्वमते तु तस्मिन् धातुत्वाऽभावान्न

किक्ङिति इति किम् । गन्ता । रन्ता । धुटीत्येव । यम्यते । यंयम्यते । *कश्चित्त्वाचारक्कावपि दीर्घत्वमिच्छति । कमिवाचरति कामति । एवं शम्, शामति । किम्, कीमति । इदम्, इदामति ॥ १०७ ॥ ¹अनुनासिके च च्छ्वः शूट् ॥ ४ । १ । १०८ ॥ अनुनासिकादौ कौ धुडादौ प्रत्यये च धातोश्छकारवकारयोर्यथासंख्यं श् ऊट् इत्येतावादेशौ भवतः । प्रश्नः । विश्नः । छस्य ²द्विःपाठात् ³द्वयोरपि शकारः । क्वि, शब्दप्राट् । शब्दप्राशौ । गोविट् । गोविशौ । धुट् पृष्टः पृष्टवान् । प्रष्टा । प्रष्टुम् । स्योमा । स्योनः सिवेर्मनि प्रत्यये औणादिके च ने लघूपान्त्यगुणात्पूर्वमूट् क्रियते नित्यत्वात् । तत्र कृतेऽल्पाश्रितत्वेनान्तरङ्गत्वाद्यत्वं न तु गुणः । ⁴अक्षद्यूः । हिरण्यद्यूः । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति स्वरानन्तर्ये नेष्यते तेन यत्वं भवति । द्यूतः । द्यूतवान् । दुद्यूषति । वकारस्य ⁵विकल्पेनानुनासिकत्वाद्वन्क्वनिपोः सुस्योवा, सुस्यूवा, पक्षे, सुसेवा, सुसित्वेत्यपि सिद्धम् । धातोरित्येव । दिवेरौणादिकडिव्प्रत्ययान्तस्य द्युभ्याम्, द्युभिः। यदा तु दिवेः क्विप् तदा धातुत्वात् द्यूभ्यां द्यूभिरिति । यङ्लुपि तु देद्योति देद्योपि, सेष्योति सेष्योपि, देद्यूतः। सेष्यूतः। अन्ये तु देदेति, देदेपि, सेसेति, सेषेषीत्येवेच्छन्ति। तन्मतपरिग्रहार्थं ⁶क्ङितीत्यनुवर्तनीयम् । ⁷यजादिसूत्रे च च्छग्रहणं विधेयम् । टकार 'ऊटा' (१–२–१३) इत्यत्र विशेषणार्थः॥१०८॥ **मव्यविश्रिविज्वरित्वरेरुपान्त्येन ॥ ४ । १ । १०९ ॥** शकारस्य स्थानी छ इह न संभवतीत्यूडेवानुवर्तते । मव्यादीनामनुनासिकादौ कौ धुडादौ च प्रत्यये वकारस्योपान्त्येन सहोड् भवति । मव्, मोमा । मूः मुवौ । मुवः । मूतिः। यङ्लुपि, मामोति । मामूतः । अव्, ओम्, औणादिको म् । ओमा । ऊः । उवौ । उवः । ऊतिः । श्रिव्, श्रोमा । श्रूः । श्रुवौ । श्रुवः । श्रूतः । श्रूतवान् । श्रूतिः । शेश्रोति । शेश्रूतः । ज्वर्, जूर्मा । जूः जूरौ । जूरः। जूर्तिः। जाजूर्ति । जाजूर्तः। त्वर्, तूर्मा । तूः । तूरौ । तूरः। तूर्णः। तूर्णवान्। तूर्तिः। तातूर्ति । तातूर्तः। ज्वरत्वरोरुपान्त्यो वकारात्परः। श्रिव्यविमवां तु पूर्वः॥१०९॥ **राल्लुक् ॥४।१।११०॥** रेफात्परयोर्धातोश्छकारवकारयोरनुनासिकादौ कौ धुडादौ च प्रत्यये लुग्भवति शूटोऽपवादः। मुर्छा, हुर्छा, मोर्मा । होर्मा । मूः। मुरौ । मुरः। हूः । हुरौ । हुरः। मूर्तः। मूर्तवान् । हूर्णः । हूर्णवान् । हूर्तिः। ⁸मोमोर्ति । जोहोर्ति । तुर्वैं, धुर्वैं । तोर्मा । ⁹धोर्मा । तूः । तुरौ । तुरः । धूः। धुरौ । धुरः। तूर्णः। तूर्णवान् । तूर्तिः। ¹⁰धूर्णः। धूर्णवान् । धूर्तिः । *धूर्त इति त्वौणादिकः ।

दीर्घं ॥—अनुनासिके च—॥—द्विःपाठादिति । द्वित्वापन्नस्य छस्येत्यर्थ ॥—द्वयोरपीति । अपिशब्दात्केवलस्य । तेन वाञ्छु इच्छायामित्यस्य वान् वाशौ वाश इति सिद्धम् । न च वाच्य सूत्रे द्विच्छकारपाठात् केवलस्य न प्राप्नोतीति छ् च च्छ् चेति कृते 'पदस्य' इत्येकलोपे निमित्ताभाव इत्यनेन चस्य छत्वे 'अघोषे प्रथम'–इति पूर्वछस्य चत्वे च च्छ् इति साधितत्वात् । यद्वा पूर्वं द्वि च्छकार द्वितीयस्तु लघु तत च्छ् च छ् चेति कृते 'पदस्य' इति लघुछकारस्य लुक् तदा निमित्ताभाव इत्यादि न क्रियते ॥—अक्षद्यूरिति । साऽनुबन्धत्वादूटि कृते 'उः पदान्तेऽनूत्' इति न भवति ॥—विकल्पेनाऽनुनासिकत्वादिति । म्लेच्छेर्यङ्लुपि वासि 'अनुनासिके च' इति छस्य शत्वे मेम्लेश्म । निरनुनासिकत्वे तु मेम्लेच्छ्व इति ॥—क्ङितीत्यनुवर्त्तनीयमिति । तर्हि प्रष्टेत्येतत् छस्य शत्वाऽभावे 'यजसृज'–इति षत्वाऽभावे न सेत्स्यतीत्याह –यजादीत्यादि ॥—राल्लुक् ॥—मोमोर्ति । अत्र गुणे कर्त्तव्ये 'भ्वादेर्नामिन.'–इति शास्त्रमसादिति गुण । एव धोर्मेत्यत्रापि ॥—धूर्ण इति । ममन णकारस्तत्कथ धूर्त इत्याह—धूर्त इतीति ।

अनुनासिकादाविसेव। मूर्छा। तूर्विता ॥ ११० ॥ *क्तेऽनिटश्चजोः कगौ घिति ॥४।१।१११॥ क्तेऽनिटो धातोश्चकारजकारयोः स्थाने घिति प्रत्यये यथासंख्यं कगौ भवत'। पाकः। सेकः। पाक्यम्। सेक्यम्। त्यागः। रागः। भोग्यम्। योग्यम्। संपर्की। संसर्गी। क्तेऽनिट इति किम्। संकोचः। कूजः। खर्ज्यः। गर्ज्यः। परिव्राज्यम्।उदाजः। समाजः। नन्वजेः क्तेऽनिट्त्वात् गत्वं प्राप्नोति। नैवम्। क्तेऽनिट इति विद्यमानस्य विशेषणम्। अजेस्तु वीभावेन "असत्त्वाद्गत्वं न भवति। क्त इति किम्। अर्चः। अर्च्यम्। याच्यम्। रोच्यम्। अर्चादयो हि अर्कः याश्चा रुक्ममिति प्रयोगेष्वनिटोऽपि क्ते सेट इति कत्वं न भवति। घितीति किम्। पचनम्। त्यजनम् ॥ १११ ॥ 'न्यङ्क्वूद्गमेघादयः ॥ ४ । १ । ११२ ॥ न्यङ्क्वादयः कृतकत्वा उद्गादयः कृतगत्वा मेघादयः कृतघत्वा निपात्यन्ते। न्यञ्चेरुप्रत्यये न्यङ्कुः। तञ्चिवञ्चिशुचीनां रकि तक्रम्। वक्रम्। शुक्रः। शुचिरुच्योर्वञि शोकः रोकः। क्ते सेट्त्वान्न प्राप्नोति। घञोऽन्यत्र शोच्यम्। रोच्यम्। श्वपाकः। मांसपाकः। पिण्डपाक.। कपोतपाकः। उलूकपाकः। पचेः 'कर्मणोऽण्' (५-१-७२) इत्यणि सति अणभावे श्वपच इत्यादि। नीचेपाकः। दूरेपाकः। फलेपाकः। क्षणेपाकः। पचेर्नीचे पच्यते नीचे पच्यते स्वयमेवेति कर्मकर्तर्यचि दीर्घत्वं च निपातनात्। 'तत्पुरुषे कृति' (३-२-२०) इति बहुलाधिकारात् सप्तम्या अलुप्। उकारान्ता अपि गणे पठ्यन्ते। नीचेपाकुः। फलेपाकुः। दूरेपाकुः। क्षणेपाकुः। अत एव निपातनादुकारः। नीचेपाका। दूरेपाका। फलेपाका। क्षणेपाका इत्याबन्ता अपि। अनुब्रवीतीत्यच्। अनुवाकः। सोमं प्रवक्तीसण्। सोमप्रवाकः। उचेः न्युच्यति समवैतीति लिहाद्यचि न्योको वृक्षः शकुन्तो वा। उब्जेर्घञि, उद्गः। समुद्गः। न्युद्गः। अभ्युद्गः। क्ते सेट्त्वाद्गत्वमुपान्त्यस्य च दत्वं निपात्यते। सृजेः कर्तर्यचि। सर्गः। अवसर्ग.। उपसर्गः। पञ्जेरचि 'व्यतिषङ्गः। अनुषङ्गः। मस्जेरुः। 'मद्गुः। भ्रस्जेः कुः सलोपश्च। भृगुः। युजे 'कर्मणोऽण्' (५-१-७२) इत्यणि गोयोगः। मिहेरचि संज्ञायां हस्य घत्वम्। मेघः। अन्यत्र मेह.। वहेरनुपसर्गस्य वस्यौकारश्च। वहतीसोघः प्रवाहः। अनुपसर्गस्येत्येव। प्रवहः। विवहः। परिवहः। संवहः। उद्वहः। अभिवहः। निवहः। संज्ञायामित्येव। वहः। दहेर्न्यवाभ्यां घञि निदाघ' ऋतुविशेषः। अवदाघः केवलपानीयपक्वोऽपूपः। संज्ञायामित्येव। निदाहः। अवदाहः। अर्हतेर्घञि अर्घो मूल्यम् पूजाद्रव्यं च। संज्ञायामित्येव। अर्हः। एवमविहितलक्षणानि कत्वगत्वघत्वानि द्रष्टव्यानि॥११२॥ *न वञ्चेर्गतौ ॥ ४ । १ । ११३ ॥ वञ्चेर्गतौ वर्तमानस्य कत्वं न भवति। वञ्चेर्घञ्। वञ्चं वञ्चति गन्तव्यं गच्छतीत्यर्थः। 'पश्यैते 'व्याधवार्कैण्यसंकुल वित्तवत्तमाः॥ रात्रावपि महारण्ये वञ्चं वञ्चन्ति वाणिजाः' ॥ १ ॥ गताविति किम्। वङ्कं काष्ठं कुटिलमित्यर्थः ॥११३ ॥ 'यजेर्यज्ञाङ्गे ॥ ४।१। ११४॥ यज्ञाङ्गे वर्तमा-

---

॥—क्तेऽनिटः—॥—असत्त्वादिति। अविद्यमानत्वात्। यदि क्तकालेऽविकृतत्वात् धातोर्विद्यमानस्याऽनिट्त्व भवति तदेत्यर्थ ॥—न्यङ्क्वूद्ग—॥—अनुवाक इति। पाठविशेष। गणपाठाद्दीर्घत्वम् ॥—व्यतिषङ्ग इति। व्यतिषजतीति क्रियाव्यतिहारे व्यतिषजते इति वाऽच्। 'स्थासेनि'-इति षत्वम् ॥—मद्गुरिति। अत्र जस्य गत्वे कृते निमित्ताऽभाव इति दन्त्यसकारभावे दन्त्यसकारस्थाने 'तृतीयस्तृतीय'-इति दन्त्यसस्य तृतीयो दकार ॥—न वञ्चेर्ग—॥—व्याधवार्कैण्यसंकुले इति। वृक एव 'वृकाटटेण्यण'। व्याधश्च वार्कैण्यश्च समासे कृते 'वान्येन'-इति विभापया न लुप् वार्कैण्यबहुत्वात् ॥—यजेर्यज्ञा—

नस्य यजेर्जस्य गत्वं न भवति । *पञ्च प्रयाजाः । त्रयोऽनुयाजाः । एकादशोपयाजाः । *उपांशुयाजाः । पत्नीसंयाजाः । ऋतुयाजाः । घञ् याज इत्यप्यन्ये। यज्ञाङ्ग इति
किम् । प्रयागः । अनुयागः । यागः ॥ ११४ ॥ 'घ्यण्यावश्यके ॥ ४ । १ । ११५ ॥ आवश्यकोपाधिके घ्यणि प्रत्यये परतो धातोश्चजोः कगौ न भवतः । "अ-
वश्यपाच्यम् । अवश्यरेच्यम् । अवश्यरञ्ज्यम् । अवश्यभञ्ज्यम् । आवश्यके इति किम् । पाक्यम् । रेक्यम् । रङ्ग्यम् । भङ्ग्यम् ॥ ११५ ॥ निप्राद्युजः शक्ये ॥
४ । १ । ११६ ॥ निप्राभ्यां परस्य युजः शक्येऽर्थे गम्यमाने घ्यणि परे गो न भवति । नियोक्तुं शक्यः नियोज्यः । प्रयोज्यः । शक्य इति किम् । नियोग्यः । प्रयो-
ग्य ॥ ११६ ॥ "भुजो भक्ष्ये ॥ ४ । १ । ११७ ॥ भुजो भक्ष्येऽर्थे घ्यणि परे गो न भवति । भोज्यमन्नम् । भोज्या यवागूः । भोज्यं पयः । भक्ष्य इति किम् ।
भोग्य. कम्बलः प्रावरणीय इत्यर्थः । भोग्या अपूपाः पालनीया इत्यर्थः । भक्ष्यमभ्यवहार्यमात्रम् *न खरविशदमेव । यथा 'अब्भक्ष्यो वायुभक्ष्य इति ॥ ११७ ॥
*त्यजयजप्रवचः ॥ ४ । १ । ११८ ॥ एषां घ्यणि कगौ न भवतः । त्याज्यम् । याज्यम् । अत एव प्रतिषेधाद्यजेर्घ्यणपि । प्रवचिग्रहणं शब्दसंज्ञार्थम् प्रवाच्यो
नाम पाठविशेषः । तदुपलक्षितो ग्रन्थोऽप्युच्यते । उपसर्गनियमार्थं वा । प्रपूर्वस्यैव वचेरशब्दसंज्ञायां प्रतिषेधो भवति नान्योपसर्गपूर्वस्य । 'अधिवाच्यं नाम *दश-
रात्रस्य यज्ञस्य यद्दशममहः । यस्मिन्याज्ञिका अधिब्रुवते 'तस्मिन्नेवाभिधानम् । अधिवाच्यमन्यत्र ॥ ११८ ॥ वचोऽशब्दनाम्नि ॥ ४ । १ । ११९ ॥ अशब्द-
संज्ञायां गम्यमानायां वचेर्घ्यणि को न भवति । वाच्यमाह । अवाच्यमाह । अशब्दनाम्नीति किम् । वाक्यं, विशिष्ट. पदसमुदायः ॥ ११९ ॥ *भुजन्युब्जं पाणि-
रोगे ॥ ४ । १ । १२० ॥ भुजेर्निपूर्वस्योब्जेश्च घञन्तस्य पाणौ रोगे चार्थे यथासंख्यं भुजन्युब्जौ निपात्येते । भुज्यतेऽनेनेति भुजः पाणिः । न्युब्जिताः
शेरतेऽस्मिन् इति न्युब्जो नाम रोगविशेषः । व्यजनाद् घञिति गत्वाभावो भुजेर्गुणाभावश्च निपात्यते । पाणिरोग इति किम् । भोगः । *न्युद्गः ॥ १२० ॥
वीरुन्न्यग्रोधौ ॥ ४ । १ । १२१ ॥ विपूर्वस्य रुहेः क्विपि न्यक्पूर्वस्य चाचि वीरुध्न्यग्रोधशब्दौ धकारान्तौ निपात्येते । विरोहतीति वीरुत् । न्यग्रोहतीति
न्यग्रोधः । अवरोध इत्यप्यन्ये ॥ १२१ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ चतुर्थस्याध्यायस्य प्रथमः पादः ॥ ॥
॥ ॥ ॥ ॥
कुर्वन् कुन्तलशैथिल्यं मध्यदेशं निपीडयन् ॥ अङ्गेषु विलसन् भूमेर्भर्ता मूलराजपार्थिवः ॥ १ ॥

---

॥—पञ्च प्रयाजा इति ॥ प्रेज्यन्ते एभि. 'व्यञ्जनाद् घञ्' । प्रयजनानि भावे घञि वा । एव सर्वत्र भावेन बहुवचनेन च वाक्यानि ॥—उपांशुयाजा इति । उपांशु एकान्ते
यजनानि 'सप्तमी शौण्डाद्यै' 'नाम्नि' वा समास' ॥—घ्यण्यावश्य—॥—अवश्यपाच्यमित्यादिषु 'मयूरव्यंसक'-इति स । 'णिन्चावश्यक'-इति घ्यण् ॥—भुजो भ—॥—न खर
विशदमेवेति । कठोरप्रत्यक्षमित्यर्थं । अखरविशदमपि भक्ष्य दृष्टमिति दृष्टान्तमाह—अब्भक्ष्येति ॥ आपो द्रव रूप न कठिन प्रत्यक्ष त्वऽस्ति वायुस्तु कठिनो न प्रत्यक्षस्तस्यानु-
मानेन गम्यत्वात् तेन भोज्य पय इत्यादि सिद्धम् ॥—त्यज्यजप्र—॥—अधिवाच्यं नामेति । नानिष्टार्थेति न्यायादधिवाक्यप्रयोगाय नियमो नाऽन्यत्र तेनाधिवाच्यमित्यनोच्चारेण प्रतिषेध
॥—दशरात्रस्येति । दशाना रात्रीणा समाहारो दशरात्र दशरात्रनिष्पाद्यो यज्ञोऽपि दशरात्र उपचारात् । दशरात्रमऽस्यास्तीति अभ्रादित्वाद्वा अ ॥—तस्मिन्नेवाऽभिधानमिति । तत्रैव प्रपूर्वस्यैवत्यु-
पसर्गनियमस्योपेटिरित्यर्थ ॥—भुजन्यु—॥—न्युद्ग इत्यत्र न्यङ्क्वादित्वाद्गत्व दत्व च ॥—वीरुन्न्यग्रो—॥—वीरुदित्यत्र निपाताद्दीर्घ ॥ ॥ इत्याचार्य श्री० चतुर्थस्याध्यायस्य प्रथम पाद सपूर्ण ॥

# ॥ अथ द्वितीयः पादः ॥

ˈआत्संध्यक्षरस्य॥ ४ । २ । १ ॥ धातोः सन्ध्यक्षरान्तस्याकारो भवति ˈनिर्निमित्तः । व्येंग्, संव्याता । देंङ् दाता । म्लैं म्लाता । अनैमित्तिकत्वादात्वस्य प्रागेव कृतत्वादाकारान्तलक्षणः प्रत्ययो भवति । सुग्लः । सुम्लः । सुग्लानम् । सुम्लानम् । धातोरित्येव । गोभ्याम् । नौभ्याम् । संध्यक्षरस्येति किम् । कर्ता । इह लाक्षणिकत्वान्न भवति । चेता । स्तोता ॥ १ ॥ ˈन शिति ॥ ४ । २ । २ ॥ धातोः संध्यक्षरान्तस्य शिति प्रत्यये विषयभूते आकारो न भवति । ˈग्लायति । म्लायति । संव्ययति ॥ २ ॥ व्यस्थव्णवि ॥ ४ । २ । ३ ॥ व्ययतेस्थवि णवि च विषयभूते आकारो न भवति । संविव्ययिथ । संविव्याय । अहं सविव्यय । थव्णवीति किम् । संव्याता । संव्यातुम् । केचित्तु परोक्षामात्रे आत्वप्रतिषेधमिच्छन्तो व्येगो य्वृद्धिं विकल्पयन्ति । त्वक्त्रैः संविव्ययुर्देहान् इति सिद्धम् । तदपरे पाठभ्रम एवायमिति मन्यन्ते । त्वक्त्रैः संविव्युरङ्गानि इति तु सम्यक्पाठः । एवं ' संविव्ययुर्वसनचारु चमूसमुत्थं पृथ्वीरज करभकण्ठकडारमाशाः ' इत्यत्रापि संविव्युरम्बरविकासि चमूसमुत्थमिति सत्पाठः ॥ ३ ॥ स्फुरस्फुलोर्घञि ॥ ४ । २ । ४ ॥ स्फुर्स्फुलोर्घञि संध्यक्षरस्याकारो भवति । विस्फारः । विस्फाल । विष्फारः । विष्फालः । ' वे ': (२-३-५५) इति वा पत्वम् । घञीति किम् । विस्फोरकः ॥ ४ ॥ वापगुरो णमि ॥ ४ । २ । ५ ॥ अपपूर्वस्य गुरैति इत्यस्य धातोः संध्यक्षरस्य स्थाने णमि प्रत्यये परे आकारादेशो वा भवति । ˈअपगारमपगारम् । अपगोरमपगोरम् । आभीक्ष्ण्ये ख्णम् द्वित्वं च । अस्यपगारं युध्यन्ते । अस्यपगोरं युध्यन्ते । ' द्वितीयया ' ( ५-४-७८) इति णम् ॥ ५ ॥ दीङः सनि वा ॥ ४ । २ । ६ ॥ दीङः सनि परे आत्वं वा भवति । दिदासते । दिदीषते । उपदिदासते । उपदिदीषते ॥ ६ ॥ यबक्ङिति ॥ ४ । २ । ७ ॥ दीङो यपि अक्ङिति च प्रत्यये विषयभूते आकारोऽन्तादेशो भवति । उपदाय । उपदाता । अवदाय । उपदातुम् । उपदातव्यम् । उपादास्त । विषयसप्तमीनिर्देशात्पूर्वमेवात्वे सति ˈईषदुपादानः उपादायो वर्तते इत्यत्र आकारान्तलक्षणोऽनः

---

॥—आत्सध्यक्ष—॥—निर्निमित्त इति । उत्तरेण सह पृथग्योगात् ॥—न शिति ॥—ग्लायतीति । गुण इति सान्वयसञ्ज्ञासमाश्रयणादऽत्र गुणाऽभाव । यत सतो विशेपाधान गुण । अत्र त्वैकारस्य एकारे कर्त्तव्ये न तथा । समासान्तागमेति न्यायाद्वा न गुण । गुण इति हि सञ्ज्ञा ॥—वापगु—॥—अपगारमपगारमिति । अभीक्ष्णमपगृय अपगुरण पूर्व वा । ननु ख्णम्प्रत्ययेनैव आभीक्ष्ण्यस्योक्तत्वात् द्वित्व न प्राप्नोति । न । शब्दशक्तिस्वाभाव्यात् केवलख्णम् आभीक्ष्ण्य न द्योतयतीति द्वित्वमपेक्षते ॥—यबक्ङिति ॥—ईषदुपादान इति । ईषदऽनायासेनोपादीयते ' शासयुधि '-इत्यन ॥—उपदायो वर्त्तत इति । यदा उपदानमिति भावविवक्षा तदा ' युवर्ण '-इत्यऽल्विपये आत्वे भावाऽकर्त्रोर्घञ् । यदा तु उपदीयते इति कर्तृविवक्षा तदाऽपि णकविपये आत्वे ' तनूव्यधी '-इति ण. । एतदपि विषयव्याख्याफलम् । ननु ण बाधित्वा उपसर्गाद्विशेषेण ' उपसर्गादात '-इति डो भविष्यतीति वाच्य यतस्तस्मिन् कर्त्तव्ये बाहुलकादात्व नेष्यते

*घञ् च भवति । यवक्ङितीति किम् । दीनः । उपदीयते । उपदेदीयते । सानुबन्धनिर्देशाद्यङ्लुपि न भवति । उपदेदेति ॥७॥ *मिग्मीगोऽखलचलि॥४।२।८॥ मिनोतिमीनात्योर्यपि खलचलवर्जितेऽक्ङिति च प्रत्यये विषये विषयभूत आकारान्तादेशो भवति । निमाय । निमाता । निमातुम् । निमातव्यम् । न्यमासीत् । मीग्, प्रमाय । प्रमाता । प्रमातुम् । प्रमातव्यम् । प्रामासीत् । अखलचलीति किम् । ईषन्निमयः । दुष्प्रमयः । अचि, मय । आमयः । अलि, निमयः । प्रमयः । सानुबन्धनिर्देशो यङ्लुप्निवृत्त्यर्थः । निमेमेति । प्रमेमेति । यवक्ङितीत्येव । निमितः । प्रमीतः । निमेमीयते । प्रमेमीयते । मिग्मीग इति किम् । मीङ्च् हिंसायामिति *दैवादिकस्य माभूत् । मेता । मेतुम् । अस्याप्यात्वमिच्छन्त्यन्ये । माता । मातुम्॥८॥ लीङ्लिनोर्वा॥४।२।९॥ लीयतेर्लिनातेश्च यपि खलचलवर्जितेऽक्ङिति प्रत्यये च विषयभूते आकारोऽन्तादेशो वा भवति । विलाय । विलीय । विलाता । विलेता । विलास्यते । विलेष्यते । विलास्यति । विलेष्यति । व्यलासीत् । व्यलैषीत् । अखलचलीत्येव । ईषद्विलयः । विलयः । विलयो वर्तते । यवक्ङितीत्येव । लीनः । विलीनः । लीयते । लेलीयते । लिनाति । ङिल्लुप्तिवोर्निर्देशाद्यङ्लुपि न भवति । लेलेति । ली द्रवीकरण इति यौजादिकस्य च न भवति । विलयति ॥९॥ णौ क्रीजीङः॥४।२।१०॥ क्रीग् जि इङ् इत्येतेषां णौ परे आकारोऽन्तादेशो भवति । क्रापयति । जापयति । अध्यापयति ॥१०॥ *सिध्यतेरज्ञाने ॥४।२।११॥ षिधूच् संराद्धाविसस्याज्ञाने वर्तमानस्य णौ परत *स्वरस्याकारो भवति । मन्त्रं साधयति । तपः साधयति । अन्नं साधयति । स्वान्येवैनं *कर्माणि *साधर्मिकेभ्यो दातुम् । अज्ञान इति किम् । तपस्तपस्विनं सेधयति । सिध्यति जानीते तपस्वी ज्ञानविशेषमासादयति त तपः प्रयुङ्क्ते इत्यर्थः । अन्नं सेधयति । तपः सेधयति । साधिनैव सिद्धे सेधयन्ति । अस्य 'अनुभवविशेषमुत्पादयन्तीत्यर्थः । सिध्यतेरिति किम् । षिधू गत्यामिति भौवादिकस्य मा भूत् । सिध्यतेरज्ञाने सेधयतीति प्रयोगनिवृत्त्यर्थं वचनम् ॥ ११ ॥ *चिस्फुरोर्नवा ॥ ४ । २ । १२ ॥ चिनोतेः स्फुरतेश्च णौ परे स्वरस्यात्वं वा भवति । चापयति । चाययति । स्फारयति । स्फोरयति ॥ १२ ॥ *वियः प्रजने ॥ ४ । २ । १३ ॥ प्रजनो जन्मन उपक्रमो गर्भग्रहणम् । तस्मिन् वर्तमानस्य वी इत्येतस्य णौ परे आ-

---

इति महाभाष्येऽभापिष्ट ॥—घञ्च भवतीति । ननु घञ कथमाकारान्तलक्षणत्वमादन्तेभ्योऽप्यन्यत्रापि सामान्येन तस्य विधानात् । उच्यते । घञोप्याकारान्तलक्षणत्व सामान्यमऽस्ति । यत आकाराऽभावे ईदन्तत्वादऽल् स्यात् ॥—मिग्मीगो—॥—निमायेति । तृच्विपये आत्वे 'तन्व्यधी'–इति णे निमाय इति विसर्गान्तमपि । तर्हि निमातेति कथम् । उच्यते । असरूपत्वात्तृचपि ॥— दैवादिकस्येति । उपलक्षणत्वान्मीण्गतावित्यस्यापि ॥—लीङ्लिनोर्वा ॥ णे विलाय इत्यपि सिद्धम् ॥—लीन इति । 'ऋल्वादे '–इति क्रैयादिकस्य दैवादिकस्य 'सूयत्याद्यो'–इति नत्वम् ॥— सिध्यतेर—॥—स्वरस्याकार इति । सध्यक्षरप्रस्तावात् स्वरस्येति लभ्यतेऽन्यथा 'षष्ठ्या अन्त्यस्य '–इति न्यायात् धकारस्यैव स्यात् ॥—साधर्मिकेभ्य इति । समानो धर्म सधर्म्म स प्रयोजनमेषां 'प्रयोजनम्' इतीकण् । समानो धर्मोऽस्येति बहुव्रीहौ तु 'द्विपदाद्धर्मादऽन्' स्यात् ॥—कर्माणि सेधयन्तीति । सिध्यति अनुभवविशेषमासादयति तमेन तपस्विन कर्माणि प्रयुञ्जते ॥— अनुभवविशेषमिति । अनुभव साक्षात्कार' स च ज्ञानमेव ॥—चिस्फुरो—॥ स्फरस्फलत् स्फुरणे इत्यनेनैव सिद्धे स्फुरेरात्ववचन ण्यन्तात्सनि पुस्फारयिषतीत्येवमऽर्थम् ॥—वियः प्र—॥ प्रजनन

त्वमन्तादेशो वा भवति । *पुरो वातो गा *प्रवापयति । प्रवाययति । गर्भं ग्राहयतीत्यर्थः । वातेः प्रजने वृत्तिर्नास्तीत्यारम्भः ॥ १३ ॥ रुहः पः ॥ ४ । २ । १४ ॥ रुहेर्णौ परतः पकारोऽन्तादेशो वा भवति । रोपयति व्रीहीन् । रोहयति व्रीहीन् । रोहत्यर्थे रुप्यातिर्न दृश्यते इति योगारम्भः ॥ १४ ॥ लियो नोऽन्तः स्नेहद्रवे ॥ ४ । २ । १५ ॥ ली इति 'लीङ्लीङोः सामान्येन ग्रहणम् । लियः स्नेहद्रवेऽर्थे गम्यमाने णौ परे नोऽन्तोऽवयवो वा भवति । घृतं विलीनयति । घृतं विलाययति । णौ वृद्धावायादेशः । लिय ई ली इति ईकारप्रश्लेषात् ईकारान्तस्यैव भवति । कृतात्वस्य तु वक्ष्यमाणौ लकारपकारौ भवतः । घृतं विलालयति, विलापयति । स्नेहद्रव इति किम् । अयो विलाययति । पूर्वान्तकरणात् व्यलीलिनादित्यत्रोपान्त्यह्रस्वो भवति । एवमुत्तरेष्वपि ॥ १५ ॥ लोलः ॥ ४ । २ । १६ ॥ लातेर्लीं इत्यस्य च कृतात्वस्य स्नेहद्रवेऽर्थे णौ परे लोऽन्तो वा भवति । घृतं विलालयति । घृतं विलापयति । घृतं व्यलीललत् । स्नेहद्रव इत्येव । जटाभिरालापयते । श्येनो वर्तिकामुल्लापयते । 'लीङ्लिनोऽर्चाभिभवे चाचाकर्तर्यपि' ( ३-३-९० ) इत्यनेनात्रात्मनेपदं च ॥ १६ ॥ पातेः ॥ ४ । २ । १७ ॥ पृथग्योगाद्वेति निवृत्तम् । पांक् रक्षणे इत्येतस्य णौ परे लोऽऽन्तो भवति । पालयति । अपीपलत् । पलण् रक्षणे इति चौरादिकेनैव सिद्धे पातेर्लोऽन्तः स्यादिति वचनम् । तिव्निर्देशो धात्वन्तरनिवृत्त्यर्थः । पा पाने, पै शोषणे वा, पाययति । यङ्लुप्निवृत्त्यर्थश्च । पापाययति ॥ १७ ॥ धूग्प्रीगोर्नः ॥ ४ । २ । १८ ॥ धूग्प्रीग्इत्येतयोर्णौ परे नोऽन्तो भवति धूगट् धूगश् धूग्ण् वा धूनयति । अदूधुनत् । प्रीश् प्रीग्ण् वा, प्रीणयति । अपिप्रिणत् । यौजादिकयोर्नेच्छन्त्येके । धावयति । प्राययति । अनुबन्धनिर्देशो यङ्लुब्निवृत्त्यर्थं । दोधावयति । पेप्राययति । धुवतिप्रीयतिनिवृत्त्यर्थश्च । धावयति । प्राययति ॥ १८ ॥ वो विधूनने जः ॥ ४ । २ । १९ ॥ वा इत्येतस्य विधूननेऽर्थे णौ परे जोऽन्तो भवति । पक्षकेण *उपवाजयति । पुष्पाणि प्रवाजयति । अवीवजत् । विधूनन इति किम् । ओवै, केशानावापयति । शोषयतीत्यर्थः । वजिनैव सिद्धे वाते रूपान्तरनिवृत्त्यर्थं वचनम् ॥ *पाशाछासावेव्याह्वो यः ॥ ४ । २ । २० ॥ एषां णौ परे योऽन्तो भवति । पां पाने, पैं शोषणे वा, पाययति । पातेस्तु लकार उक्तः । शोंच्, शाययति । छोंच् अवच्छाययति । सो सै वा, अवसाययति । वेग्, वाययति । वे इत्यनात्वेन निर्देशो वांक् गतिगन्धनयोः, ओवै शोषणे इत्यनयोर्निवृत्त्यर्थः । वापयति । व्येग्, व्याययति । ह्वेग्, ह्वाययति । अपीपयत् अशीशयत् इत्यादि । एषां कृतात्वानां ग्रहणादिह प्रकरणे लाक्षणिकस्यापि ग्रहणं भवति । तेन क्षापयतीत्यादि सिद्धम् । पोरपवादो योगः ॥ २० ॥ *अर्तिरीब्लीह्रीक्नूयिक्ष्माय्यातां पुः ॥ ४ । २ । २१ ॥ एषामाकारान्तानां च

---

धन् । 'न जनवध' इति वृद्धिनिषेध ॥—पुर इति । पूर्वस्या दिश आगत । 'पूर्वावरावरेभ्योऽस्'-॥—प्रवापयतीति । प्रवियती प्रयुङ्क्ते ॥—लियो नोन्तः—॥ लिय ई लीस्तस्य उभयो स्थाने इति न्यायात्समानानामिति दीर्घेऽपि इयादेश ॥—लीग्लीङोरिति । उपलक्षणत्वाल्लीण् इत्यस्यापि ॥—पातेः—॥—पापाययतीति । भृश पाति यङ्लुप् द्वित्व पापत प्रयुङ्क्ते ॥—वो विधूनने—॥—उपवाजयतीति । वाक् इत्यऽस्य न तु पै ओवै इत्यस्य विधूनने वृत्त्यऽभावात् । न च वाच्य विधूनन इति व्यावृत्तेर्वैयर्थ्यैकल्य सूत्रे व इति सामान्यभणिते ॥—पाशाच्छासा—॥—अपीपयदिति । पै शोषणे इत्यस्येदं पिवतेस्तु 'डे पिब'-इत्यनेन पीप्यादेशेऽपीप्यदिति भवति ॥—अर्तिरी—॥—अरारयतीति । आरत प्रयुङ्क्ते ॥—अरियारयतीति । यङ्लुप्

धातूनां णौ परे पुरन्तो भवति। अर्तीति ऋंह गतौ ऋंह प्रापणे चेत्यनयोर्ग्रहणं सामान्यनिर्देशात् । अर्पयति । तिव्निर्देशो यङ्लुप्निवृत्त्यर्थः । *अरारयति । 'अरि-
गारयति । रीति रीयतिरिणात्योर्ग्रहणम् । रेपयति । व्लीं व्लेपयति । ह्री, ह्रेपयति । क्नूयि, क्नोपयति । क्ष्मायि क्ष्मापयति । आदन्त, दापयति। धापयति । जापयति।
क्ष्मापयति । अध्यापयति । *अदीदपत् । बहुवचनं व्याप्त्यर्थम् । तेन नाम्नोऽपि, सत्यापयति । अर्थापयति । वेदापयति । प्रिय, प्रापयति । स्थिर, स्थापयति। स्फिर,
स्फापयति। पोरुकारः 'पुस्पौ' (४-३-३) इत्यत्र विशेषणार्थः ॥ २१ ॥ स्फायः स्फाव् ॥ ४ । २ । २२ ॥ स्फायतिर्णौ परे स्फाव् इत्ययमादेशो भवति । स्फा-
वयति । अभेदनिर्देशोऽन्ताधिकारनिवृत्त्यर्थः ॥ २२ ॥ शदेरगतौ शात् ॥ ४ । २ । २३ ॥ शीयते रगत्यर्थे णौ परे शात् इत्ययमादेशो भवति । पुष्पाणि शात-
यति । अगताविति किम् । गोपालको गाः शादयति । गमयतीत्यर्थः ॥ २३ ॥ *घटादेर्ह्रस्वो दीर्घस्तु वा ञिणम्परे ॥ ४ । २ । २४ ॥ घटादीनां धातूनां णौ
परे ह्रस्वो भवति ञिणम्परे तु णौ दीर्घो वा भवति । घटयति । अघाटि अघटि । घाटंघाटं, घटंघटम् । व्यथयति । अव्याथि । अव्यथि । व्याथंव्याथम् । व्यथंव्य-
थम् । हिडयति । अहीडि । अहिडि । हीडंहीडम् , हिडंहिडम् । अक्षाजि । अक्षजि । क्षाजंक्षाजं, क्षजंक्षजम् । अदाक्षि । अदक्षि । दाक्षंदाक्षम् । दक्षंदक्षम् । शमि-
दक्ष्यादीना घटादिपाठबलादनुपान्त्यस्यापि वा दीर्घ । वा ञिणम्पर इत्येव ह्रस्वविकल्पेन सिद्धे दीर्घग्रहणं हेडेरिकारस्य दीर्घत्वार्थम् । ह्रस्वविकल्पे हि पक्षे ए-
कारश्रुतिः स्यात् । णिग्यङ्व्यवहितेऽपि णौ ञिणम्परे दीर्घत्वार्थं च । णिग्व्यवाये, शमयन्तं प्रयुङ्क्ते, णिग् तदन्तात् ञौ णमि, अशामि । अशमि । शामशामम् ।
शमशमम् । यङ्व्यवाये, शंशमयतेर्ञौ णमि च अशंशामि । अशंशमि । शंशामंशंशामम् । शंशमंशंशमम् । अत्र योऽसौ णौ णिर्लुप्यते यश्च यङोऽकारस्तस्य स्थानि-
वद्भावेन घटादीना व्यवहितत्वात् आनन्तर्यं नास्तीति ञिणम्परे णौ न स्यादित्याशंक्यः । दीर्घग्रहणे तु दीर्घविधिं प्रति स्थानिवद्भावप्रतिषेधादानन्तर्यमेवेति सिध्य-
ति । घटिष् चेष्टायाम् । क्षजुङ् गतिदानयोः । व्यथिष् भयचलनयोः । प्रथिष् प्रख्याने । म्रदिष् मर्दने । स्खदिष् स्खदने । कदुङ् क्रदुङ् क्लदुङ् वैक्लव्ये । क्रपिष् कृ-
पायाम् । ञित्वरिष् संभ्रमे । प्रसिष् विस्तारे । दक्षि हिंसागत्योः । श्रा पाके । स्मृ आध्याने । दॄ भये । ष्टकस्तक प्रतीघाते । चक तृप्तौ च । अक कुटिलायां गतौ ।
कखे हसने । अग् अकगत् । रगे शङ्कायाम् । लगे सङ्गे । ह्रगे ह्लगे षगे सगे ष्टगे स्थगे संवरणे । वटभट परिभाषणे । णट नृत्तौ । गड सेचने । हेड वेष्टने । लड
जिह्वोन्मथने । फणकणरण गतौ । चण हिंसादानयोश्च । शणश्रण दाने । स्नथ क्नथ क्रथ क्लथ हिंसार्थाः । छद ऊर्जने । मदै हर्षग्लपनयोः । ष्टनस्तनध्वन शब्दे । स्नन
अवतंसने । चन हिंसायाम् । ज्वर रोगे । चल कम्पने । ह्वल ह्मल चलने । ज्वल दीप्तौ चेति घटादयः॥ फणिमेके घटादिमनिच्छन्तो गतावपि फाणयतीत्याहुः॥२४॥

'ररो च लुपि' इति रि रीर्वा ततोऽरियत । मतेनाऽर्थत वा प्रयुङ्क्ते ॥—अदीदपदिति । 'भिमीमादामित्स्वरस्य' इत्यऽनेन मूलधातोरित्कार्यमऽद्विस्व च भवति । तेनाऽत्र 'असमानलोपे'-इत्यनेन
पूर्वस्य इल्लक्षण सन्वत्कार्यं न भवति ॥—घटादेर्ह्रस्वो ॥—हेडेरिकारस्य दीर्घत्वार्थमिति । न च वाच्य क्षजेरपि दीर्घत्वार्थं यतस्तस्याऽनेन ह्रस्वविकल्पसामर्थ्यादेव अनुपान्त्यस्यापि
'ञ्णिति' इति दीर्घ स्यात् ॥—शंशामंशंशाममिति । कश्चिद्व्याहरिष्यति नात्र शम. संबन्धी णि. किन्तु सशशाम. । न । तत्र्यंयन्विव्याख्यानाऽभावात् । यथा 'रिया उिता वा'

*कगेवनूजनैजूष्क्नस्रञ्जः ॥ ४ । २ । २५ ॥ एषां णौ परे ह्रस्वो भवति ञिणम्परे तु णौ वा दीर्घो भवति । कगे, कगयति । अकागि । अकगि । कागंकागम् । कगंकगम् । वन् उपवनयति । उपावानि । उपावनि । अवानि । अवनि । उपवानमुपवानम् । उपवनमुपवनम् । वानंवानम् । वनवनम् । जनै, जनयति । अजानि । अजनि । जानंजानम् । जनंजनम् । जॄष् जरयति । अजारि । अजरि । जारंजारम् । जरंजरम् । क्नस्, क्नसयति । अक्नासि । अक्नसि । क्नासंक्नासम् । क्नसंक्नसम् । रञ्जि, रजयति मृगान्व्याधः । अराजि । अरजि । राजंराजम् । रजंरजम् । 'णौ मृगरमणे' (४–२–५१) इति नलोपः । नलोपे वचनस्य चरितार्थत्वात् "नलोपाभावे, अरञ्जि, रञ्जंरञ्जम् इत्यत्र वा दीर्घो न भवति । केचित्तु ष्णसूच् निरसने इत्यस्यापीच्छन्ति । स्नसयति । कगे सौत्रो धातुः । एकारश्चेदित्कार्यार्थः । *अकगीत् । वनू इत्यूकारानिर्देशात् वन भक्तौ इत्यस्य न भवति । वानयति । अवानि । वानंवानम् । इह घटादयः पठितार्था एव गृह्यन्ते । अर्थान्तरे तूद्घाटयति श्रापयति स्मारयति दारयति नाटयति लाडयति फाणयति छादयति प्रमादयति ध्वानयति स्वानयति चालयतीत्यादि । कगादीनां तु "अर्थविशेषो नोपादीयते ॥ २५ ॥ अमोऽकम्यमिचमः ॥ ४ । २ । २६ ॥ कम्यमिचमिवर्जितस्यामन्तस्य धातोर्णौ परे ह्रस्वो भवति ञिणम्परे तु णौ वा दीर्घो भवति । रमयति । अरामि । अरमि । रामंरामम् । रमंरमम् । दमयति । अदामि । अदमि । दामंदामम् । दमंदमम् । कथं संक्रामयति । संक्रामन्तं करोतीति शत्रन्ताण्णिजि भविष्यति । अकम्यमिचम इति किम् । कामयते । अकामि । कामंकामम् । आमयति । आममामम् । आचामयति । आचामि । आचाममाचामम् ॥ २६ ॥ पर्यपात्स्खदः ॥ ४ । २ । २७ ॥ पर्यपाभ्यामेव परस्य स्खदेर्णौ परे ह्रस्वो भवति ञिणम्परे तु वा दीर्घ । परिस्खदयति । पर्यस्खादि । पर्यस्खदि । परिस्खादंपरिस्खादम् । परिस्खदंपरिस्खदम् । अपस्खदयति । अपास्खादि । अपास्खदि । अपस्खादमपस्खादम् । अपस्खदमपस्खदम् । अवादप्यन्ये । अवस्खदयति । स्खदेर्घटादिपाठेन सिद्धे नियमार्थं वचनम् । "अन्योपसर्गपूर्वस्य माभूत् । प्रस्खादयति । अन्ये तु निषेधाधिकारे ' अपपरिस्खदः ' इति पठित्वा पर्यपपूर्वस्य स्खदेर्निषेधमिच्छन्ति । तन्मते परिस्खादयति । पर्यस्खादि । परिस्खादंपरिस्खादम् । एवमपस्खादयतीत्यादि । पर्यपाभ्यामन्यत्र प्रस्खदयति । प्रास्खादि । प्रास्खदि । इत्यादि भवति ॥ २७ ॥ शमोऽदर्शने ॥ ४ । २ । २८ ॥ अदर्शनेऽर्थे वर्तमानस्य शमेर्णौ परे ह्रस्वो भवति ञिणम्परे तु वा दीर्घः । शमयति रोगम् । निशमयति श्लोकान् । अशामि । अशमि । शामंशामम् । शमंशमम् । अदर्शन इति किम् । निशामयति रूपम् । दर्शन एव केचिदिच्छन्ति । तेषामुदाहरणप्रत्युदाहरणयोर्विपर्ययः ॥ २८ ॥ यमोऽपरिवेषणे णिचि

॥—कगेवनू—॥—अकगीदिति । 'व्यञ्जनादेर्वोपान्त्यस्यात ' इत्यनेन वृद्धि प्राप्ता 'न श्विजागृ'–इति एदित्वान्न भवति । एके कगे धातु सर्वधात्वर्थेषु मेनिरे । यथा कगति याति भुङ्क्ते सरतीत्यादि । अन्ये कगे इति नोच्यते इत्यर्थे जगु । यथा वगति न ववतीत्यर्थ ॥—नलोपाभावे इति । मृगरमणाऽभावे नलोपाऽप्रवृत्तेरित्यर्थ ॥—अर्थविशेषो नोपादीयते इति । पूर्वेण पृथग्योगादित्यर्थ ॥—पर्यपात्स्खदः ॥—अन्योपसर्गपूर्वस्येति । अत्र विपरीतनियमो न भवति । ' एकोपसर्गस्य '–इत्यत्र व्याख्या एकोपसर्गग्रहणेन परिच्छद इत्यत्र ह्रस्वविधानसामर्थ्यात् ॥—यमोऽपरिवेषणे ॥—

जिणम्परे तु णौ वा दीर्घः । यमयति । अयामि । अयमि । यामंयाम-
च ॥ ४ । २ । २९ ॥ अपरिवेषणे वर्तमानस्य यमेर्णिच्यणिचि च णौ परे वा ह्रस्वो भवति जिणम्परे तु णौ वा दीर्घः । यमयति । अयामि । अयमि । यामंयाम-
म् । यमंयमम् । अपरिवेषण इति किम् । ¹यामयति अतिथीन् । यामयति चन्द्रमसम् । यमः परिवेषण इत्यन्ये । तन्मते उदाहरणप्रत्युदाहरणयोर्व्यत्यासः । ²णाविति
सिद्धे अस्य णिचि चेति वचनात् अन्येषां णिचि न भवति । स्यमिण् वितर्के, स्यामयते । अस्यामि । स्यामंस्यामम् । शमिण् आलोचने । निशामयते । न्यशामि ।
निशामंनिशामम् ॥ २९ ॥ **मारणतोषणनिशाने ज्ञश्च** ॥ ४ । २ । ३० ॥ एष्वर्थेषु वर्तमानस्य जानातेर्णिचि अणिचि च णौ ह्रस्वो भवति जिणम्परे तु वा
दीर्घः ॥ चकारो णिचि चेत्यस्यानुकर्षणार्थः । मारणे, ³संज्ञपयति पशून् । तोषणे, ज्ञपयति गुरून् । विज्ञपयति राजानम् । निशाने, ज्ञपयति शरान्, प्रज्ञपयति शस्त्र-
म् । अज्ञापि । अज्ञपि । ज्ञापंज्ञापं, ज्ञपंज्ञपम् । निशानं तेजन तीक्ष्णीकरणम् । अन्ये तु निशामन इच्छन्ति । निशामनम् आलोचन प्रणिधानमाहु. । इह पूर्वत्र च सूत्रे
णिचि अणिचि च णौ रूपसाम्येऽप्यर्थभेदः । *एकत्र स्वार्थोऽन्यत्र प्रयोक्तृव्यापार. ॥ ३० ॥ ⁵चहणः शाठ्ये ॥ ४ । २ । ३१ ॥ चहेश्चौरादिकस्य शाठ्येऽर्थे
वर्तमानस्य णिचि णौ परे ह्रस्वो भवति जिणम्परे तु वा दीर्घः । चहयति । चाहिष्यते । चहिष्यते । चाहंचाहम् । २ । णित्करणाद्भौवादिकस्य न भवति । चाहयति ।
अचाहि । चाहंचाहम् । शाठ्य इति किम् । अचाहि । चहंचहम् । चहयतीत्येतददन्तत्वात्सिद्धम् । दीर्घार्थं वचनम् ॥ ३१ ॥ ¹ज्वलह्वलह्मलग्लास्नावनूवमनमोऽ
नुपसर्गस्य वा ॥ ४ । २ । ३२ ॥ एषामनुपसर्गाणां णौ परे ह्रस्वो वा भवति । ज्वलयति । ज्वालयति । ह्वलयति । ह्वालयति । ह्मलयति । ह्मालयति । ग्लपयति ।
ग्लापयति । स्नपयति । स्नापयति । वनयति । वानयति । वमयति । वामयति । नमयति । नामयति । अज्वालि । अज्वलि । ज्वालंज्वालम् । ज्वलंज्वलम् । इत्यादिषु
¹दीर्घविकल्पः सिद्ध एव । अनुपसर्गस्येति किम् । प्रज्वलयति । प्रह्वलयति । प्रह्मलयति । प्रग्लापयति । प्रस्नापयति । प्रवनयति । प्रवमयति । प्रणमयति । ग्लास्नो
रप्राप्ते शेषाणां तु प्राप्ते विभाषा ॥ ३२ ॥ **छदेरिस्मन्त्रट्क्वौ** ॥ ४ । २ । ३३ ॥ छदेरिस्मन्त्रट्क्विप्परे णौ ह्रस्वो भवति । इसि, छदिः । मनि,
छद्म । त्रटि, छत्रम् । छत्री । क्विपि, उपच्छत् । धामच्छत् । त्रडिति किम् । त्रे माभूत् । छात्रः ॥ ३३ ॥ **एकोपसर्गस्य च घे** ॥ ४ । २ । ३४ ॥ एकोपसर्गस्यानु-

---

परिवेषणे इति । परिवेषणमिह भोजनविषयि परिवेषण सूर्यादिवेष्टन च गृह्यते ॥—यामयत्यतिथीनिति । परिवेषणक्रियया तान् व्याप्नोतीत्यर्थ ॥—णाविति सिद्धे इति । अधिकारानुमिते
ह्रस्वार्थ ॥—मारणतोषण—॥—चकारो णिचि चेत्यस्येति । धात्वाकर्षणे पूर्वेण सिद्धे' फलाऽभावात् प्रकृतेरपि स्थित प्रत्ययमाकर्षति । स्वरूपाख्यानमिद यावताऽधिकारायातमेव चकारेणानुमा-
यते । अन्यथा चानुकृष्ट नोत्तरत्रेति स्यात् ॥—संज्ञपयतीति । आदेशादागम इति न्यायात् ह्रस्वात्प्रागेव प्वागम ॥—एकत्र स्वार्थ इति । स्वार्थे प्रथममेव मारणे वर्त्तते । अन्यत्र
मरणे ततो मारणे इत्यर्थ ॥—चहणः शाठ्ये । नन्वदन्तस्य चहण भौवादिकस्य च चहे सर्वाण्यपि सेत्स्यन्ति किमऽनेन । सत्यम् । सूत्र विना चाहिष्यते इति न सिध्यति ।
तथाहि—भौवादिकस्य स्वरान्तत्वाभावात् 'स्वरग्रह'-इति जिट् नायाति । चौरादिकस्य तु जिटि सत्यपि अदन्तत्वाद्वृद्ध्यऽभावे न सिध्यति । अथ णिगि सति भौवादिकस्य साध्यते ।
तर्हि प्रयोक्तृव्यापार आयातस्तस्मिन् सति अर्थभेद. स्यात् अत सूत्र कार्यम् ॥—ज्वलह्वल—॥—दीर्घविकल्पः सिद्ध एवेति । अनेन वाह्रस्वविधानात्तेन जिणम्परे इति नाऽनूद्यते

पसर्गस्य च छदेर्घपरे णौ ह्रस्वो भवति । प्रच्छाद्यतेऽनेनेति प्रच्छदः । परिच्छदः । उपच्छदः । छाद्यतेऽनेनेति छदः । सप्त छदा अस्य सप्तच्छदः । उरसश्छदः उरश्छदः । एवं दन्तच्छदः । एकोपसर्गस्य चेति किम् । समुपच्छादः । समुपाभिच्छादः । घ इति किम् । प्रच्छादनम् । तनुच्छादनम् ॥ ३४ ॥ 'उपान्त्यस्यासमानलोपिशास्वृदितो ङे ॥ ४ । २ । ३५ ॥ समानलोपिशासृकृदनुबन्धवर्जितस्य धातोरुपान्त्यस्य ङपरे णौ ह्रस्वो भवति । अपीपचत् । अदीदपत् । अचीकरत् । अलीलवत् । अत्र 'नित्यमपि द्विर्वचनं बाधित्वा प्रागेव ह्रस्वो भवति ओणेर्ऋदित्करणज्ञापकात् । तद्धि मा भवानोणिणत् इत्यत्र ऋदित्त्वादुपान्त्यह्रस्वत्वप्रतिषेधो यथा स्यादित्येवमर्थं क्रियते । यदि चात्र नित्यत्वात्पूर्वमेव द्वितीयद्वित्वं स्यात्तदानुपान्त्यत्वादेव ह्रस्वत्वस्याप्राप्तिरिति किं तन्निवृत्त्यर्थेन ऋदित्करणेन । एवं मा भवानटिटत् मा भवानशिशत् इत्यादि सिद्धं भवति । ङपरे णौ इति च न धातुर्विशिष्यते किं तर्हि तदुपान्त्य इति णेः पूर्वस्याधातुत्वेऽपि ह्रस्वो भवति । तेन 'गोनावमाख्यत् अजूगुनत् । केचिदौतः *स्थानिवद्भावेनोपान्त्यत्वाभावाद्ध्रस्वं नेच्छन्ति । तेनाजुगोनत् । णावित्येव । ङे उपान्त्यस्यैतावत्युच्यमाने अलीलवदित्यादावन्तरङ्गत्वापि वृद्ध्यावादेशावदीदपदित्यादौ प्वागमं च बाधित्वा वचनसामर्थ्यात् 'ण्युपान्त्यस्य स्वरस्य ह्रस्वः प्रसज्ज्येत । अपीपचदित्यादौ ण्युपान्त्यस्वराभावान्न स्यात् । णिग्रहणानुवृत्तौ तु ङपरे णावुपान्त्यस्य ह्रस्व इति सर्वत्र ह्रस्वः सिद्धो भवति । ङ इति किम् । कारयति । पाचयति । उपान्त्यस्येति किम् । 'अचकाङ्क्षत् । येन नाव्यवधानमिति न्यायेनैव सिद्धे 'उपान्त्यग्रहणम् 'उत्तरार्थम् । असमानलोपिशास्वृदित इति किम् । राजानमतिक्रान्तवानत्यरराजत् । लोमान्यनुमृष्टवान् अन्वलुलोमत् । स्वामिनमाख्यत् अससवामत् । तादृशमाख्यत् अततादत् । मातरमाख्यत् अममातत् । यत्रान्त्यस्वरादिलोपस्तत्र 'स्थानिवद्भावेन न सिध्यतीति वचनम् । यत्र तु स्वरस्यैव लोपस्तत्र स्वरादेशत्वात् स्थानिवद्भावेनैव सिध्यति । मालामाख्यत् अममालत् । मातरमाख्यत् अममातत् । अशशारत् । *अशुशूरत् । ननु यत्रापि स्वरव्यञ्जनलोपस्तत्रापि अवयवावयविनोरभेदनयेन स्वरादेश एवेति स्थानिवद्भावेनैव सिध्यति किमसमानलोपिवचनेन । सत्यम् । स्थानिवद्भावस्य

---

॥—उपान्त्यस्या—॥—नित्यमपीति । कृताकृतेति न्यायान्नित्यत्वं यथा माभवानटिटदित्यादौ ह्रस्वत्वे कृतेऽकृते च द्वित्वं प्राप्नोतीति नित्यं ह्रस्वस्तु द्वित्वे कृते न प्राप्नोतीत्यनित्य । न केवल प्राक्तु स्वर इत्यपेरर्थ ॥—गोनावमाख्यदिति । गौर्नौर्यद्वा गोसहिता नौ गोनौ । 'मयूरव्यंसक'—इति मध्यपदलोपी समास ॥—स्थानिवद्भावेनेति । स्वमते तु 'स्वरस्य परे'—इति परिभाषाया अनित्यत्वमाश्रितमिति सूत्रपर्यन्ते वक्ष्यति ॥—वचनसामर्थ्यादिति । अन्यथा यदि वृद्ध्यावादेशौ स्याताम् । तदा उपान्त्यत्वाभावेन ह्रस्वत्वाभावात् वचनवैयर्थ्यं प्राप्नोति ॥—ण्युपान्त्यस्येति णेरुपान्त्यस्तस्य तथाहि—णिङ इति स्थिते ऊकार उपान्त्य ॥—अचकाङ्क्षदिति । वचनादेकेन वर्णेन व्यवधानं न त्वनेकेन ॥—उपान्त्यग्रहणमिति । येन नाव्यवधानमिति न्यायादेकेन वर्णेन व्यवहितोऽपि स्वरो ह्रस्वस्य स्थानी भविष्यति किमुपान्त्यग्रहणेनेत्याह—उत्तरार्थमिति । 'ऋद्वर्णस्य'—इत्यत्रेत्यर्थ । अन्यथा तत्रान्त्यस्यापि ऋकारस्य ऋत् स्यात् । न केवलमुत्तरार्थमिहार्थं च । अन्यथालीलवदित्यत्र वचनसामर्थ्यादकृताया वृद्धौ ह्रस्व स्यात् । न चान्तरङ्गत्वाद्वृद्धि । निरवकाशत्वादस्य । वृद्धौ सावकाशत्वमिति न वाच्य यतो मुख्याऽभावे येन नाव्यवधानमाश्रीयेतेति ॥—स्थानिवद्भावेन न सिध्यतीति । अयमर्थ 'स्वरस्य परे'—इति स्वरादेश स्थानी अत्र तु स्वरव्यञ्जनादेश ॥—अशशारत् । शारण् दौ अस्माददन्तात् णिच् ॥—अशुशूरत् । शूरणि वि० अस्माददन्तात् 'णिज्

सिद्धम्। अत्रेकारोकारयोः 'नामिनोऽकलिहलेः' (४-३-५१)

*अनित्यत्वख्यापनार्थं वचनम्। तेन वास्या परिच्छिन्नवान् पर्यवीवसत्, स्वादु कृतवान् असिस्वददित्यादि सिद्धम्। अत्रेकारोकारयोः 'नामिनोऽकलिहलेः' (४-३-५१) इति वृद्धौ कृतायामन्त्यस्वरादिलोपादसमानलोपित्वम्। ननु च परत्वात् *प्रथमं लोपेनैव भवितव्यम्। नैवम्। कलिहलिवर्जनात् परमपि लोपं वृद्धिर्बाधते। अत एव तत्र कलिहलिवर्जनमर्थवत्। शास्, अशशासत्। आशासोऽपीच्छत्यन्यः। आशशासत्। ऋदिति, ओणृ, मा भवानोणिणत्। ओखृ, मा भवानोखिखत्। एजृ, मा भवानेजिजत्। याचृ, अययाचत्। सेकृ, *असिसेकत्। लोकृ, अलुलोकत्। ढौकृ, अडुढौकत्। शासेरृदित्करणं यङ्लुप्निवृत्त्यर्थम्। अशाशसत्। अन्ये त्वशाशासत् इत्यपीच्छन्ति। वदति स्म वीणा तां प्रायुङ्क्त परिवादकः तमप्यन्यः प्रायुङ्क्त अवीवदद्वीणां परिवादकेनेति तु णिजात्याश्रयणात् सिद्धम् ॥ ३५ ॥

*भ्राजभासभाषदीपपीडजीवमीलकणरणवणभणश्रणह्वेहेठलुटलुपलपां नवा ॥४।२।३६॥ एषां ङपरे णौ उपान्त्यस्य ह्रस्वो वा भवति। भ्राज्, अबिभ्रजत्। अबभ्राजत्। भास्, अबीभसत्। अबभासत्। भाष्, अबीभषत्। अबभाषत्। दीप्, अदीदिपत्। अदिदीपत्। पीड्, अपीपिडत्। अपिपीडत्। जीव्, अजीजिवत्। अजिजीवत्। मील, अमीमिलत्। अमिमीलत्। कण्, अचीकणत्। अचकाणत्। रण्, अरीरणत्। अरराणत्। वण्, अवीवणत्। अववाणत्। भण्, अबीभणत्। अबभाणत्। श्रण्, अशिश्रणत्। अशश्राणत्। ह्वेञ्, अजूहवत्। अजुहावत्। हेठ, अजीहिठत्। अजिहेठत्। लुट्, अलूलुटत्। अलुलोटत्। लुप्, अलूलुपत्। अलुलोपत्। लप्, अलीलपत्। अललापत्। बहुवचनं शिष्टप्रयोगानुसारेण *अन्येषामपि परिग्रहार्थम् ॥३६॥ ऋद्वर्णस्य ॥४।२।३७॥ धातोरुपान्त्यस्य ऋवर्णस्य ङपरे णौ वा ऋकारो भवति। अवीवृतत्। अववर्तत्। अवीवृधत्। अववर्धत्। अमीमृजत्। अममार्जत्। अदीदृशत्। अददर्शत्। अचीकृतत्। अचिकीर्तत्। वचनसामर्थ्यादॄकीर्त्यादेशो बाध्येत। उपान्त्यस्येत्येव। अचीकरत् ॥ ३७ ॥ जिघ्रतेरिः ॥ ४ । २ । ३८ ॥ जिघ्रतेरुपान्त्यस्य ङपरे णाविकारो वा भवति। अजिघ्रिपत्। अजिघ्रपत्। तिव्निर्देशो यङ्लुप्निवृत्त्यर्थः। अजाघ्रपत् ॥ ३८ ॥ तिष्ठतेः ॥ ४ । २ । ३९ ॥ तिष्ठतेरुपान्त्यस्य ङपरे णाविकारो भवति। अतिष्ठिपत्। अतिष्ठिपताम्। अतिष्ठिपन्। तिव्निर्देशो यङ्लुप्निवृत्त्यर्थः। अतास्थपत्। योगविभागो नित्यार्थः ॥ ३९ ॥ ऊदुदुपो णौ ॥

---

—अनित्यत्वख्यापनार्थं वचनमिति। कलिहलिवर्जनादेव सन्वदादिकार्येऽस्याऽनित्यत्वं सिद्धं तर्हि 'अस्यर-बहुलम्'–णिच् ततोऽद्यतनी। अन्यथा आत्मनेपदित्वादङच विना परस्मैपदं न स्यात् ॥—असिसेकदिति। येषां मते षोपदेशस्तन्मते असिषेकदिति ॥—भ्राजभास—॥ राजादित्वाद्यो भेदपक्षे फलम् ॥—प्रथमं लोपेनैवेति। ततश्च समानलोपित्वात् ह्रस्वत्वं न प्राप्नोतीति भावः ॥—अशिश्रणदिति। शण श्रण दाने इत्यस्य दानेऽर्थे ह्रस्वत्वं घटादित्वात्सिद्धं पाकरूपेऽर्थान्तरे त्वऽनेन विकल्पः। श्रगण् दाने इत्यस्य तु 'यमोऽपरिवेषणे णिचि च' इत्यनेन णिचि यम एवेति नियमादऽप्राप्ते विकल्प्यते ॥—अन्येषामपीति। तेन अबिभ्रसत् अबभ्रासदित्यादि सिद्धम् ॥—ऋद्वर्णस्य ॥ ननु किमर्थं वर्णग्रहणम्। ऋदत इत्येतावदास्ताम्। न। यद्येव क्रियते तदाऽचीकृतदित्यस्य प्रयोगो न निष्पद्यते। अथ पाठकालेऽपि कृतण् इति पठ्यते। न। तदा ऋदत इत्येतस्याऽन्त्य ऋकारे चरितार्थत्वात् अत्र कीर्त्यादेश एव स्यात्। अथ कीर्त्तण् इत्यऽपठनादेवाऽस्यापि ह्रस्वाधिकारेणैव सिद्धे ऋत्कर-णमचीकृतदित्यत्र गुणनिषेधार्थं, ह्रस्वकरणसामर्थ्याद्गुणो न भविष्यतीति न वाच्यं गुणकरणे ह्रस्वस्य चरितार्थत्वात् ॥—ऊदुपो णौ ॥—तत्प्रत्ययविज्ञानादिति। तस्य दुषेर्धातोः सम्बन्धी प्रत्ययस्तत्प्र ... ऋत्नविष्यति। तदा यदाऽनित्यो हि णिचुरादीनामिति न्यायेन णिजऽभावस्तदा कृतण् इति पाठे कततीति न स्यात् किन्तु कर्त्तीरयनिष्टं स्यादिति वर्णग्रहणम्।

४ । २ । ४० ॥ दुषेरुपान्त्यस्य णौ परे ऊकारादेशो भवति । दुष्यन्तं प्रयुङ्क्ते दूषयति । प्रदूष्य गतः । णाविति किम् । दोषो वर्तते । धातोः स्वरूपग्रहणे 'तत्प्रत्ययविज्ञानादिह न भवति । दोषणं दुट् क्विप् । दुषमाचष्टे दुषयति । पुनर्णिग्रहणं "ङनिवृत्त्यर्थम् । ङे ह्रस्वो "न भवतीत्यन्ये । "अदुदूषत् ॥ ४० ॥ "चित्ते वा ॥ ४ । २ । ४१ ॥ चित्तविषयस्य चित्तकर्तृकस्य दुषेरुपान्त्यस्य णौ परे ऊद्वा भवति । चित्तं दुष्यति तदन्यः प्रयुङ्क्ते चित्तं दूषयति । चित्तं दोषयति । मनो दूषयति । मनो दोषयति । चित्तग्रहणेन प्रज्ञाया अपि ग्रहणात् प्रज्ञां दूषयति । प्रज्ञां दोषयति ॥ ४१ ॥ **गोहः स्वरे** ॥ ४ । २ । ४२ ॥ कृतगुणस्य गुहेः स्वरादौ प्रत्यये परे उपान्त्यस्योद्भवति । निगूहति । निगूहयति । निगूहकः । साधुनिगूही । निगूहंनिगूहम् । निजुगूह । गोह इति किम् । निजुगुहतुः । निजुगुहुः । स्वर इति किम् । निगोढा । निगोढुम् ॥ ४२ ॥ "**भुवो वः परोक्षाद्यतन्योः** ॥ ४ । २ । ४३ ॥ "भुवो वकारान्तस्य परोक्षाद्यतन्योः परतः उपान्त्यस्योद्भवति । बभूव । बभूवतुः । बभूवुः । बभूविथ । बभूवुषः । बभूवुषा । अभूवन् । अभूवम् । वृद्धिगुणोवादेशेषु कृतेषु भुवो वकारान्तत्वम् । व इति किम् । बभूवान् । अभूत् । "अत्र भस्य माभूत् । परोक्षाद्यतन्योरिति किम् । भविष्यति ॥ ४३ ॥ **गमहनजनखनघसः स्वरेऽनङि क्ङिति लुक्** ॥ ४ । २ । ४४ ॥ एषामुपान्त्यस्याङ्वर्जिते स्वरादौ क्ङिति प्रत्यये परे लुग् भवति । क्किति, गम्, जग्मतुः । जग्मुः । हन्, जघ्नतुः जघ्नुः । जन्, जज्ञे । जज्ञाते । जज्ञिरे । खन्, चख्नतुः । चख्नुः । घस्. जक्षतुः । जक्षुः । जक्षिवान् । ङिति, घ्नन्ति । कतीह निघ्नानाः । कथं जज्ञतुः जज्ञुः इति "छान्दसावेतौ । स्वर इति किम् । गम्यते । हन्यते । अनङीति किम् । अगमत् । अवसत् । क्ङितीति किम् । गमनम् । हननम् ॥ ४४ ॥ **नो व्यञ्जनस्यानुदितः** ॥ ४ । २ । ४५ ॥ व्यञ्जनान्तस्यानुदितो धातोरुपान्त्यस्य नकारस्य क्ङिति प्रत्यये परे लुग्भवति । स्रस्तः । स्रस्तवान् । स्रस्यते । सनीस्रस्यते । ध्वस्तः । ध्वस्तवान् । ध्वस्यते । दनीध्वस्यते । अस्तभत् । अग्लुचत् । परिष्वजते । परिष्वजेते । व्यञ्जनस्येति किम् । नीयते । नेनीयते । अनुदित इति किम् । टु नदु नन्द्यते । नानन्द्यते । क्ङितीत्येव । स्रंसिता । ध्वंसिता । उपान्त्यस्येत्येव । नह्यते । नानह्यते ॥ ४५ ॥ **अञ्चेरनर्चायाम्** ॥ ४ । २ । ४६ ॥ अञ्चेरनर्चायामेव वर्तमानस्योपान्त्यनकारस्य लुग् भवति । उदक्तमुदकं कूपात् ।

---

त्यय । दुषयतीत्यत्र तु न दुषिधातो. सबन्धी प्रत्यय कि तर्हि 'णिज् बहुल नाम्न कृगादिषु' णिज् नाम्न परतो विहितत्वान्नामसबन्धी । यद्वा तत्प्रत्ययस्येत्थव्याख्यानात्तस्माद्धातोरनन्तर प्रत्यय ॥—ङनिवृत्त्यर्थमिति । तेन सामान्येन णौ भवतीति न तु ङपर एवेत्यर्थ ॥—न भवतीत्यन्ये इति । तन्मतसग्रहार्थमूकारप्रश्लेषो विधेय ॥—अदुदूषदिति । दुष्यन्त प्रायुक्त णिग् गुण ऊहुपो णौ ऊकारः ॥—चित्ते वा ॥—प्रज्ञाया अपीति । चित्तसहचरितत्वात् प्रज्ञाऽपि चित्तमित्यर्थ ॥—भुवो वः—॥—भुवो वकारान्तस्येति । अत्र पूर्वसूत्रात्स्वरमऽनुवर्त्य ततश्च परोक्षाद्यतन्यो स्वरे परे इति व्याख्याने स्वयमेव वकारान्तत्व लप्स्यते कि वग्रहणेन । उच्यते । यदि स्वरोऽनुवर्त्यते तदा उत्तरसूत्रेऽनुवर्त्तमानो दुर्निवार स्यात्तथा च स्नस्त इत्यादौ 'नो व्यञ्जनस्य'–इति नलोपो न स्यात् । अत एव 'गमहन'–इति सूत्रे स्वरग्रहणम् । किञ्च वग्रहणाऽभावे बभूवेत्यादौ नित्यत्वादऽपवादत्वाच्च वृद्ध्यादिबाधया ऊकारोपान्त्यस्य भस्य ऊत्वप्रसङ्ग स्यादिति वग्रहणम् ॥—अत्र भस्येति । उपान्त्यस्येत्यधिकारादित्यर्थ ॥—गमहन—॥—कथं जज्ञतुरिति । धातोरात्मनेपदित्वात् कथ परस्मैपदमित्याशय. ॥—छान्दसाविति । जुहोत्यादौ जन जनने परस्मैपदिन छान्दस

अनर्चायामिति किम् । अञ्चिता गुरवः । पूर्वेण सिद्धे नियमार्थो योगः ॥ ४६ ॥ *लङ्गिकम्प्योरुपतापाङ्गविकृत्योः ॥ ४ । २ । ४७ ॥ लङ्गिकम्प्योरुपान्त्यनकारस्य यथासंख्यमुपतापेऽङ्गविकारे चार्थे क्ङिति प्रत्यये लुग्भवति । विलगितः । विकपितः । उपतापाङ्गविकृत्योरिति किम् । 'विलङ्गितः । 'विकम्पितः । लङ्गिकम्प्योरुदित्त्वात् पूर्वेणाप्राप्ते वचनम् । द्विवचनं क्ङितीत्यनेन यथासंख्यनिवृत्त्यर्थम् ॥ ४७ ॥ भञ्जेर्जौ वा ॥ ४ । २ । ४८ ॥ भञ्जेरुपान्त्यनकारस्य ञौ परे लुग्वा भवति । अभाजि । अभञ्जि ॥ ४८ ॥ दंशसञ्जः शवि ॥ ४ । २ । ४९ ॥ अनयोरुपान्त्यनकारस्य शवि परे लुग्भवति । दशति । सजति । तुदादावपठित्वानयोर्भ्वादौ पाठः शवर्थः । तेन 'श्यशवः' (२-१-११५) इति नित्यमन्तादेश· सिद्धो भवति । दशन्ती । सजन्ती ॥ ४९ ॥ अकट्घिनोश्च रञ्जेः ॥ ४ । २ । ५० ॥ रञ्जेरकटि घिनणि शवि च प्रत्यये उपान्त्यनकारस्य लुग् भवति । रजकः । रागी । रजति । रजः रजनिः रजनम् रजतमित्यौणादिकाकित्प्रत्ययान्ताः ॥ ५० ॥ णौ मृगरमणे ॥ ४ । २ । ५१ ॥ रञ्जेरुपान्त्यनकारस्य णौ परे मृगाणा रमणे क्रीडायामर्थे लुग्भवति । रजयति मृगान्व्याधः । मृगरमण इति किम् । 'रञ्जयति रजको वस्त्रम् । रञ्जयति सभां नट ॥ ५१ ॥ घञि भावकरणे ॥ ४ । २ । ५२ ॥ रञ्जेरुपान्त्यनकारस्य भावकरणार्थे घञि परे लुग् भवति । रञ्जनं रजत्यनेनेति वा राग । घञि इति किम् । रञ्जनम् । भावकरणे इति किम् । रजन्त्यस्मिन्निति रङ्गः ॥ ५२ ॥ स्यदो जवे ॥ ४ । २ । ५३ ॥ स्यद इति स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते जवे वेगेऽभिधेये । गोस्यद । अश्वस्यद । जव इति किम् । घृतस्यन्दः । तैलस्यन्दः ॥ ५३ ॥ दशनावोदैधौद्मप्रश्रथहिमश्रथम् ॥ ४ । २ । ५४ ॥ एते शब्दाः कृतनलोपादयो निपात्यन्ते । दन्शेरनटि अवपूर्वस्य उन्दः इन्धेश्च घञि उन्देर्मनि नलोपः प्रहिमपूर्वस्य श्रन्थेर्घञि वृद्ध्यभावश्च निपात्यते । दशनम् । "अवोदः । एध । ओद्म । प्रश्रथः । हिमश्रथः ॥ ५४ ॥ यमिरमिनमिगमिहनिमनिवनतितनादेर्धुटि क्ङिति ॥ ४ । २ । ५५ ॥ यमिरमिनमिगमिहनिमनीनां वनतेस्तनादीनां च धुडादौ क्ङिति प्रत्यये परऽन्तस्य लुग्भवति । यत. । यतवान । यत्वा । यति । रतः । रतवान् । रत्वा । रतिः । नतः । नतवान् । नत्वा । नतिः । गतः । गतवान् । गत्वा । गति । हतः । हतवान् । हत्वा । हतिः । आहत । आहथाः । मनीति मन्यतेर्ग्रहणम् मनोतेस्तनादित्वेन सिद्धत्वात् । मत । मतवान् । मत्वा । मतिः । वातिः । क्वितः । तिकि तु प्रतिषेधं वक्ष्यति । तनादि, तनूयी, ततः । ततवान् । तत्वा । ततिः । सनोतेरात्वं वक्ष्यति । क्षणूग् , क्षतः । क्षतवान् । क्षत्वा । क्षतिः । ऋणूयी , ऋत । ऋतवान् । तृणूयी , तृत । तृतवान् । घृणूयी , घृतः । घृतवान् । वनूयि , वतः

पठन्ति तस्याऽय प्रयोग दृश्यते ॥—लङ्गिकम्प्यो—॥—विलगित इति । विलग्यते स्म । रोगादिनोपतापित ॥—विलङ्गित इति । विलङ्गति स्म केनाचिदङ्गेन रीन इत्यर्थ. ॥—विकम्पित इति । विकम्पते स्म मनसि कम्पित । चित्ते भीत इत्यर्थ इति नाऽङ्गविकृति ॥—णौ मृगर—॥ मृगरमणादन्यत्रापि कश्चिदिच्छति । यथा राजर्षिकल्पो रजयति मनुष्यान् ॥ -रञ्जयति रजको वस्त्रमिति । रजति वस्त्र रजक स एव विवक्षते नाऽहं रजामि रज्यते वस्त्र स्वयमेव तद्रज्यमान प्रयुङ्क्ते । यद्वा रजति वर्णान्तरमापद्यते वस्त्र कर्तृ तद्रजत् रजक प्रयुङ्क्ते णिग् ॥—दशनावो—॥—अवोद इति । अत्र गुणे कृते 'उपसर्गस्यानिणे -इत्यऽकारलोप ॥—यमिरमि—॥—हतिरिति । 'सातिहेति'-इति बाधनार्थ ध्यादिभ्य क्ति. ॥—वतिरिति । कान्यत्र न

वतवान् । मनूयि , मतः । मतवान् । एषामिति किम् । शान्तः । दान्तः । तिवगणनिर्देशाद्यङ्लुपि न भवति । वंवान्तः । तंतान्तः । अन्यत्र भवति । यंयतः । रंरतः । नंनतः । जंगतः । जंघतः । मंमतः । धुटीति किम् । यम्यते । यंयम्यते । क्ङितीति किम् । यन्ता । रन्ता ॥ ५५ ॥ यपि ॥ ४ । २ । ५६ ॥ एषां धातूनामन्तस्य यपि परे लुग्भवति । 'वामः' (४–२–५७) इति वचनान्नान्तानामेवायं विधिः । हन् , प्रहत्य । मन् , प्रमत्य । वनति, प्रवत्य । तनादि, प्रतत्य । प्रसत्य । प्रक्षत्य । यपीति किम् । हन्यते । वन्यते । तन्यते ॥ ५६ ॥ वामः ॥ ४ । २ । ५७ ॥ एषां मकारान्तानां यपि प्रत्ययेऽन्तस्य वा लुग्भवति । प्रयत्य । प्रयम्य । विरत्य । विरम्य । प्रणत्य । प्रणम्य । आगत्य । आगम्य । एषामित्येव । उपशम्य ॥ ५७ ॥ गमां क्वौ ॥ ४ । २ । ५८ ॥ एषां गमादीनां यथादर्शनं क्वौ क्ङिति प्रत्ययेऽन्तस्य लुग्भवति । बहुवचनं प्रयोगानुसरणार्थम् । जनं गच्छति जनंगत् । कलिङ्गगत् । यम्, संयत् । वियत् । तन्, परीतत् । उपातत् । सन् , सुसत् । मन् , सुमत् । वन्, सुवत् । क्षण्, सुक्षत् । विक्षत् । अग्रेगूरित्यौणादिको डुः ॥५८॥ न तिकि दीर्घश्च ॥ ४ । २ । ५९ ॥ एषां तिकि प्रत्यये लुग् दीर्घश्च न भवति । यन्तिः । रन्तिः । नन्तिः । गन्तिः । हन्तिः । मन्तिः । वन्तिः । तन्तिः । क्षणिति लाक्षणिकोऽयं णकारः । तेन क्षन्तिरिति भवति । अन्यस्त्वौपदेशिकोऽयमिति मन्यते तन्मते क्षण्टिः । अन्तलोपे प्रतिषिद्धे 'अहन्पञ्चम'–(४–१–१०७) इत्यादिना दीर्घत्वं प्राप्तं तदपि प्रतिषिध्यते । एषामित्येव । शान्तिर्भगवान् । तिकीति किम् । यतिः । रतिः । ततिः ॥ ५९ ॥

आः खनिसनिजनः ॥ ४ । २ । ६० ॥ खनादीनां धुडादौ क्ङिति प्रत्यये परेऽन्तस्याकारादेशो भवति । खातः । खातवान् । खात्वा । खातिः । सन्, पणूयी दाने वनषण भक्तौ वा । सातः । सातवान् । *सात्वा । सातिः । जन् , जातः । जातवान् । जात्वा । जातिः । क्ङितीत्येव । चखन्ति । संसन्ति । जंजन्ति ॥६०॥ सनि ॥ ४ । २ । ६१ ॥ खनादीनां धुडादौ सनि परतोऽन्तस्यात्वं भवति । सिषासति । खनिजनोरिटा भवितव्यमिति धुडादिः सन्न भवति । धुटीत्येव । सिसनिषति । 'इवृध'—( ४–४–४९ ) इत्यादिना वेट् । क्ङितीत्यसंभवादिह न संबध्यते ॥ ६१ ॥ ये नवा ॥ ४ । २ । ६२ ॥ खनादीनां ये क्ङिति प्रत्ययेऽन्तस्याकारो वा भवति । खायते । खन्यते । चाखायते । चंखन्यते । प्रखाय । प्रखन्य । सायते । सन्यते । सासायते । संसन्यते । प्रसाय । प्रसन्य । प्रसत्य । जायते ।

---

दर्शितौ इट्प्राप्ते । क्वौ तु नियमान्नेट ॥—जघत इति । कुटिल एत । यङ्लुप् द्वित्व गुरन्त । 'अटे हिहन.'–इति घ । गत्यर्थत्वाद् घ्नीर्न भवति ॥ केचित्तु यङ्लुपि घ्नी नेच्छन्ति । तन्मते वधार्थोऽपि ॥—गमां क्वौ ॥—गमादीनामिति । गमादयोऽन्येऽपि बहुल ज्ञेया न तु 'यमिरमि'–इति सूत्रोक्ता एव गमादिगणस्य तेभ्य पृथग्भूतत्वात् । अत एव सूत्रे यमामित्येव नोक्त रमिनमिहनीनामुदाहरणानि च न दर्शितानि ॥—न तिकि—॥—तेन क्षन्तिरितीति । नान्तप्रकृतेर्णत्वबाधनाय ञामिति बहुवचनात्प्रथममेव नकारः । ञामिति बहुवचनाण्णत्व कृतमपि वर्गान्ते कर्त्तव्ये निवर्त्तते वा । अत्र सूत्रे यमादयो गमादयश्च गृह्यन्ते । न त्वनन्तरसूत्रोक्ता द्वयोरपि प्राप्ते सभवात् ॥—आः खनि—॥—खात इति । खायते स्म खन्यते स्मेति वा 'क्त'–इति वा क्ते 'वेटोऽपत' इडभाव. ॥—सात्वेति । पणूयी दान इत्यस्यैवाय प्रयोग' । पण भक्तावित्यस्य सनित्वेव ॥—चंखन्तीत्यादि । तसि तु चङ्खात. ससात जजात. । सनि—सिसनिषतीति । सनोते सनतेर्वा 'णिस्तोरेव'–इति नियमान्न षत्वम् ॥—ये नवा ॥ प्रसायेत्युभयो प्रसन्येति भक्त्यर्थस्य प्रसत्येति तु दानार्थस्य तनादित्वेन नलोपात्

जन्यते । जाजायते । जंजन्यते । प्रजाय । प्रजन्य । श्ये तु ‘ जा ज्ञाजनोऽत्यादौ ’ ( ४-२-१४ ) इति नित्यं जादेशः । जायते । य इत्यकारान्तनिर्देशादिह न भवति । खन्याद् । सन्यात् । अन्यथा यीति क्रियेत । केचिदत्रापीच्छन्ति । खायात् । सायात् । क्ङितीत्येव । सान्यम् । जन्यम् ॥ ६२ ॥ तनः क्ये ॥ ४ । २ । ६३ ॥ तनोतेरन्तस्य क्ये परे आकारो वा भवति । तायते । तन्यते । क्य इति किम् । तन्तन्यते ॥ ६३ ॥ तौ सनस्तिकि ॥ ४ । २ । ६४ ॥ सनिसेतस्य तिकि प्रत्यये परे तौ लुगाकारौ वा भवतः । षणू, सतिः । सातिः । सन्तिः । षण् भक्तौ । सतिः । सातिः । सान्तिः ॥ ‘ अहन्पञ्चम—’ ( ४-१-१०७ ) इत्यादिना दीर्घः ॥ ६४ ॥ *वन्याङ्पञ्चमस्य ॥ ४ । २ । ६५ ॥ धातोः पञ्चमस्य वनि प्रत्यये परे आकारो भवति । आङिति *आकारान्तरप्रश्लेषादननुनासिकोऽनुनासिकश्चायमादेशः । अन्यथा ‘लि लौ’ ( १-३-६६ ) इति ज्ञापकादननुनासिक एव स्यात् । जन् विजावा । खन् विखावा । क्रम् दधिक्रावा । गम् अग्रेगावा । घुण् घ्वावा । घूर्ण घूरावा । ओणृ अवावा । इवु व्यावा च । वनि, ‘य्वोः प्वय्व्यञ्जने लुक्’ ( ४-४-१२२ ) इति वलोपे नकारस्यात्वे यावा । पुनराग्रहणं ताविति नवेति च निवृत्त्यर्थम् । ङित्करणं घ्वावेत्यादौ गुणनिषेधार्थम् ॥ ६५ ॥ अपाच्चायश्चिः क्तौ ॥ ४ । २ । ६६ ॥ अपपूर्वस्य चायतेः क्तिप्रत्यये चिरादेशो भवति । अपचितिः ॥ ६६ ॥ ह्लादो ह्लद् क्तयोश्च ॥ ४ । २ । ६७ ॥ ह्लादतेः क्तक्तवत्वोः क्तौ च परतो ह्लद् आदेशो भवति । ह्लन्नः । ह्लन्नवान् । प्रह्लन्नवान् । ह्लत्तिः । प्रह्लत्तिः । क्तयोश्चेति किम् । ह्लादित्वा ॥ ६७ ॥ *ऋल्वादेरेषां तो नोऽप्रः ॥ ४ । २ । ६८ ॥ पृवर्जितादृकारान्ताद्धातोर्ल्वादिभ्यश्च परेषामेषां क्तिक्तक्तवतूनां तकारस्य नकार आदेशो भवति । तॄ, तीर्णिः । तीर्णः । तीर्णवान् ॥ कॄ, कीर्णिः । कीर्णः । कीर्णवान् । गॄ गीर्णिः । गीर्णः । गीर्णवान् । ल्वादि, लूनिः । लून. । लूनवान् । धूनिः । धूनः । धूनवान् । लीनि । लीन । लीनवान् । अप्र इति किम् । पूर्तिः । पूर्णिरित्यपि कश्चित् । पूर्त. । पूर्तवान् । ल्वादिषु ये ॠकारान्ता स्तॄदॄप्रभृतयस्तेषामॄग्रहणेनैव सिद्धे तत्र पाठः प्वादिकार्यार्थः । क्र्यादन्तर्गणो ल्वादिः ॥ ६८ ॥ *रदादमूर्च्छमदः क्तयोर्दस्य च ॥ ४ । २ । ६९ ॥ मूर्च्छिमदिवर्जिताद्रेफदकारान्ताद्धातोः परस्य क्तयोः क्तक्तवत्वोस्तकारस्य तत्संनियोगे धातुदकारस्य च नकारो भवति । पूरै, पूर्णः । पूर्णवान् । गुरै, गूर्ण. । गूर्णवान् । भिद्, भिन्नः । भिन्नवान् । छिद्, छिन्नः । छिन्नवान् । रदादिति किम् । चितः । चितवान् । अमूर्च्छमद इति किम् । मूर्तः । मूर्तवान् । मत्तः । मत्तवान् । कृतस्यापत्यं कार्तिरित्यत्र ‘ ‘असिद्धं बहिरङ्गमन्तरङ्गे ’ इति न भवति । क्तयोरिति किम् । पूर्तिः । भित्तिः । कथं चूर्णिः । चुरेरौणादिको णिः । रदस्येति किम् । चरितम् । उदितम् । इटा व्यवधाने न स्यात् । कृत कृतवानित्यत्र तु वर्णैकदेशानां *वर्णग्रहणेनाग्रहणान्न भवति । रेफात्परेण स्वरभागेण व्यवधानाद्वा । ऋकारस्य हि मध्येऽर्धमात्रा रेफः अग्रे पश्चाच्च तुरीयः स्वरभागः

॥—वन्याङ्—॥—आकारान्तरप्रश्लेषादिति । आश्चाऽसावाङ् च यद्वा आश्च आश्च तयोरनुबन्धी ङ् इति ॥—ऋल्वादे—॥—पूर्णिरित्यपीति । ते ह्युत्तरसूत्रेऽप्र इति कुर्वन्ति । तत्र च सूत्रे क्तयोरेव नत्वनिषेधः । क्तौ तु ‘ऋल्वादेः’—इति भवत्येव । ननु ऋकारान्तानामिरादेशे रेफान्तत्वादुत्तरेण भविष्यति किं ॠग्रहणेन । सत्यम् । उत्तरेण क्तयोर्भवति । अनेन तु क्तिक्तक्तवतुषु । अथ क्त्यर्थम् ऋता क्ताविल्युच्येत । तर्हि ऋता क्तावेव स्यात् क्तयोस्तूत्तरेणापि न स्यात् ॥—रदादमूर्छ—॥—असिद्धं बहिरङ्गमिति । आर्रूपमित्यर्थ ॥—वर्णग्रहणेनाऽग्रहणादिति । ऋकारलक्षणो वर्ण तस्य

प्रतिज्ञायते । भिन्नवद्भ्यामित्यत्र *प्रत्ययदकारस्य परेऽसत्त्वात् सूत्रे चाश्रुतत्वान्न भवति । कथं चीर्णः चीर्णवानिति । चॄ इति धात्वन्तरं चरतिसमानार्थम् क्तक्तवतुविषयमामनन्ति ॥ ६९ ॥ सूयत्याद्योदितः ॥ ४ । २ । ७० ॥ सूयत्यादिभ्यो नवभ्यो धातुभ्य ओकार इद्येषां तेभ्यश्च परस्य क्तयोस्तकारस्य नकारादेशो भवति । षूङौच्, सूनः । सूनवान् । दूङ्च्, दूनः । दूनवान् । दीङ्च्, दीनः। दीनवान् । धीङ्च्, धीनः । धीनवान् । मीङ्च्, मीनः । मीनवान् । रीङ्च्, रीणः । रीणवान् । लींङ्च्, लीनः । लीनवान् । डीङ्च्, डीनः । डीनवान् । व्रीङ्च्, व्रीणः व्रीणवान् । इति सूयत्यादयः । ओदित्, ओ लजैङ् ओलस्जैति वा लग्नः । लग्नवान् । ओविजैति, उद्विग्नः । उद्विग्नवान् । ओप्यायैङ् पीनः। पीनवान् । ट्वो श्वि, शूनः । शूनवान् । ओ व्रश्चौव्, वृक्णः । वृक्णवान् । एभ्य इति किम् । पीतः । पीतवान् । सूयतीति श्यनिर्देशः सूतिसुवत्योर्निवृत्त्यर्थः ॥ ७० ॥ व्यञ्जनान्तस्थातोऽख्याध्यः ॥ ४ । २ । ७१ ॥ ख्याध्यावर्जितस्य धातोर्यद्व्यञ्जनं तस्मात्परा याऽन्तस्था तस्याः परो य आकारस्तस्मात्परस्य क्तयोस्तकारस्य नो भवति । स्त्यानः । स्त्यानवान् । निद्राणः । निद्राणवान् । ग्लानः । ग्लानवान् । व्यञ्जनेति किम् । यातः । यातवान् । अन्तस्थेति किम् । स्नातः । स्नातवान् । आत इति किम् । च्युतः । च्युतवान् । द्रुतः । द्रुतवान् । प्लुतः । प्लुतवान् । धातुना व्यञ्जनस्य विशेषणादिह न भवति । निर्यातः निर्यातवान् । द्विर्भावेऽप्यन्तस्थैत्यभेदाश्रयणाद्बहिरङ्गत्वेनासिद्धेश्च न भवति । अख्याध्य इति किम् । ख्यातः । ख्यातवान् । ध्यातः । ध्यातवान् । *आतः परस्येति किम् । दरिद्रितः दरिद्रितवान् ॥ ७१ ॥ पूदिव्यञ्चेर्नाशाद्यूतानपादाने ॥ ४ । २ । ७२ ॥ पू दिव् अञ्च् इत्येतेभ्यो यथासंख्यं नाशेऽद्यूते*अनपादाने चार्थे परस्य क्तयोस्तकारस्य नकारादेशो भवति । पूना यवाः विनष्टा इत्यर्थः । आद्यूनः । परिद्यूनः । समक्नौ शकुनेः पक्षौ । संगतावित्यर्थः । नाशाद्यूतानपादान इति किम् । पूतं धान्यम् । द्यूतं वर्तते । उदक्तमुदकं कूपात् । कथं व्यक्तम् । अञ्जेर्भविष्यति ॥ ७२ ॥ सेर्ग्रासे कर्मकर्तरि ॥ ४ । २ । ७३ ॥सिनोतेः सिनातेर्वा परस्य क्तयोस्तकारस्य ग्रासे कर्मणि कर्तृत्वेन विवक्षिते नकारो भवति । सितो ग्रासः स्वयमेव । ग्रास इति किम् । सितं कर्म स्वयमेव । कर्मकर्तरीति किम् । सितो ग्रासो मैत्रेण । सितो गलो ग्रासेन ॥ ७३ ॥ क्षेः क्षी चाध्यार्थे ॥ ४ । २ । ७४ ॥ ध्यणर्थौ भावकर्मणी ततोऽन्यस्मिन्नर्थे विहितयोः क्तयोस्तकारस्य क्षि इत्येतस्मात्परस्य नकारो भवति तत्संनियोगे चास्य क्षी इत्ययमादेशो भवति । कर्तरि, क्षीणः क्षीणवान् मैत्रः । अधिकरणे, 'इदमेषां क्षीणम्' । अध्यार्थ इति किम् । 'क्षितमस्य' भावे क्तः । क्षिपृश् हिंसायामित्यस्य सानुबन्धत्वान्न ग्रहणम् । अन्यस्तु तस्यापि

---

एकदेशो रेफो वर्णग्रहणेन न गृह्यते । कस्मादऽसन्निधानात् । यतो दकार स्वतन्त्र एव वर्णोऽत्राऽस्त्यऽतो रेफोऽपि स्वतन्त्र एव ग्राह्यः ॥—प्रतिज्ञायते इति । पूर्वाचार्यैर्निश्चीयते न तु लेखितु शक्यते ॥—प्रत्ययदकारस्येति । 'धुटस्तृतीय.' इति विहितस्य ॥—सूत्रे चाश्रुतत्वादिति । रदाविति धातुदकारस्यैव भणनादित्यर्थ ॥—क्तक्तवतुविषयमिति । तेन चर्यते स्मेति धात्वन्तरेण वाक्यम् ॥—व्यञ्जनान्तस्थातोऽख्याध्य इति । ख्याश्च ध्याश्चेति कृते यदा क्लीबे ह्रस्वस्तदा ङसोऽत. सूत्रत्वाल्लुप् ॥—बहिरङ्गत्वेनेति । उपसर्गाद्द्विपदाश्रयत्वाद्बहिरङ्गं यकारस्य द्वित्वम् ॥—आतः परस्येति किमिति । ननु आत इति किमित्यऽनयापि व्यावृत्त्या सिद्ध किमऽनया । सत्यम् । तत्राकारात् विहित एव नास्ति । अत्र त्वाकाराद्विहित परमिटा व्यवहित. ॥—पूदिव्यञ्चे—॥—अनपादाने

ग्रहणामिच्छति ॥७४॥ *वाक्रोशदैन्ये ॥ ४ । २ । ७५ ॥ आक्रोशे दैन्ये च गम्यमाने क्षेः परस्याध्यार्थे क्तयोस्तकारस्य वा नकारादेशो भवति तत्संनियोगे च क्षी इत्ययमादेशो भवति। आक्रोशे, क्षीणायुः क्षितायुर्वा जाल्मः। दैन्ये, क्षीणकः क्षितकः तपस्वी। अध्यार्थ इत्येव ।'*क्षितं जाल्मस्य' क्षितं तपस्विनः। कश्चित्तु भावेऽपि विकल्पमिच्छति । क्षीणमनेन । क्षितमनेन । क्षेर्भावकर्मणो'र्भापायां क्त एव नास्तीति कश्चित् ॥ ७५ ॥ *ऋह्रीघ्राघ्रात्रोन्दनुद'विन्तेर्वा ॥ ४ । २ । ७६ ॥ एभ्य' परस्य क्तयोस्तकारस्य नकारो वा भवति । ऋ, ऋणम् । ऋतम् । ह्री, ह्रीणः ह्रीणवान् । ह्रीतः । ह्रीतवान् । घ्रा, घ्राणः घ्राणवान् । घ्रातः घ्रातवान् । ध्रा, ध्राणः । ध्राणवान् । ध्रातः ध्रातवान् । त्रा, त्राणः । त्राणवान् । त्रातः । त्रातवान् । उन्द, समुन्नः । समुन्नवान् । समुत्तः । समुत्तवान् । नुद, नुन्नः । नुन्नवान् । नुत्तः नुत्तवान् । विदिप् विचारणे, विन्नः । विन्नवान् । वित्त. । वित्तवान् । विदः श्नानिर्देशाद्वियतेर्विन्दतेश्च नित्यं नकारः । विन्न' । विन्नवान् । प्रथमाभ्यामप्राप्ते प्रादिभ्यस्तु प्राप्ते विकल्पः । तेन दकारान्तानां दस्यापि पूर्वेण नत्वं भवति । तकारनत्वाभावपक्षे च संनियोगशिष्टत्वाद्दस्यापि नकारो न भवति । व्यवस्थितविभाषेयम् । तेन ऋण-मित्युत्तमर्णाधमर्णयोरेव । अन्यत्र ऋतं सत्यम् । त्रायतेस्तु संज्ञायां न भवति । त्रातः । *देवत्रात'। अन्यत्र तु नत्वम् । त्राणः । *उभयमित्येके ॥७६॥ दुगोरू च ॥४।२।७६॥ दुगु इत्येताभ्यां परस्य क्तयोस्तकारस्य नकारादेशो भवति तत्संनियोगे च अनयोरूकारश्चान्तादेशो भवति। दूनः दूनवान् । गूनः गूनवान् ॥७६॥ क्षैशुषिपचो मकवम् ॥४।२।७७। क्षैशुषिपचिभ्यः परस्य क्तयोस्तकारस्य यथासंख्यं म क व इत्येते आदेशा भवन्ति । क्षामः। क्षामवान् । शुष्कः । शुष्कवान् । पक्वः। पक्वान्॥ ७७ ॥ निर्वाणमवाते ॥ ४ ॥ २ ॥ ७९ ॥ निर्वाणमिति निर्पूर्वाद्वाधातोः परस्य क्ततकारस्य नकारो निपात्यते 'अवाते कर्तरि । वातश्चेन्निर्वा-तिक्रियाया' कर्ता न भवति । निर्वाणो मुनिः । निर्वाणो दीप. । अवाते इति किम् । निर्वातो वातः । निर्वातं वातेन । भावेऽपि वात एव कर्ता । निर्वाणः प्रदीपो वातेनेत्यत्र तु प्रदीपः कर्ता । वातस्तु हेतुः करणं वेति प्रतिषेधो न भवति । केचित्तु निर्वाण वातेनेतीच्छन्ति । तेषां वाते 'कर्तरि प्रत्यये सति प्रतिषेध इति द्रष्टव्यम् ॥ ७९ ॥ 'अनुपसर्गाः क्षीबोल्लाघकृशपरिकृशफुल्लोत्फुल्लसंफुल्लाः ॥ ४ । २ । ८० ॥ अनु-पसर्गाः क्तप्रत्ययान्ता एते शब्दा निपात्यन्ते । क्षीवृङ् मदे । उत्पूर्वो लाघृङ् सामर्थ्ये । कृशच् तनुत्वे केवलः परिपूर्वश्च । एभ्यः परस्य क्ततकारस्य लोप इडभावश्च निपात्यते । क्षीवः उल्लाघः । कृशः परिकृशः । ञिफला विशरणे इत्यस्मात्केवलादुत्संपूर्वाच्च परस्य क्तस्य लादेशो भावारम्भविवक्षायामिडभावश्च निपात्यते ।

चार्थे इति । कोर्थे । अद्विवाच्या क्रिया यद्यप्यपादानसाधनिका न भवतीत्यर्थ ॥—वाक्रोशदैन्ये ॥ आक्रोशश्च दैन्य चेति कृते विरोधिनामेव अद्रव्याणामेवेति समाहाराऽप्राप्तो सूत्रत्वात् समा-हार । विशेषणसमासो वा ॥—क्षित जाल्मस्येति । 'वा क्लीबे' इति षष्ठी ॥—भापायामिति । लक्षणशास्त्रे न भवति । किंतु च्छन्दस्येवेत्यर्थ ॥—ऋह्रीघ्राध्रा—॥—विन्ते इति । तेप्रत्य-यान्तमाख्यातपदमनुक्रियते। 'इकिस्तिव्'—इति श्तिव्प्रत्ययान्तस्य तु विनत्तीति रूप स्यात् ॥—देवत्रात इति। त्रासीष्ट देवता एन त्रासीरन्निति वा 'तिक्कृतौ नाम्नि' इति क्त ॥—उभयमित्येके इति । असंज्ञाया नत्व नाऽभावश्च संज्ञाया तु नत्वाभाव एवेत्यर्थ ॥—निर्वाणमवाते ॥—अवाते कर्त्तरीति । अकर्मकत्वात्कर्त्ता लभ्यते ॥—कर्त्तरि प्रत्यये सतीति । अत्र तु भावे क्त ॥—अनुपसर्गाः—॥—भावारम्भविवक्षायामिति । अयमर्थ । यदा भावारम्भाविवक्षा तदा 'आदित' इति नित्यमिडभाव. । यदा तु भावारम्भविवक्षा तदा 'नवा भावारम्भे' इति विकल्पेनेट्

फुल्लः, उत्फुल्लः, संफुल्लः । केचित्तु क्षीववान् उल्लाघवान् कृशवान् परिकृशवान् फुल्लवान् उत्फुल्लवान् संफुल्लवान् इति क्तवतावपि रूपमिच्छन्ति तदर्थं क्तक्तवत्वोस्तशब्दावधि निपातनं द्रष्टव्यम् । एतदर्थमेव बहुवचनम् । अनुपसर्गा इति किम् । प्रक्षीवितः । प्रोल्लाघितः । प्रकृशितः । संपरिकृशितः । प्रफुल्लतः । निपातनस्येष्टविषयत्वात् फल निष्पत्तौ फलितः फलितवान् । क्षीबादयः शब्दाः केनाचापि च सिध्यन्ति क्षीवित इत्यादिरूपनिवृत्त्यर्थं तु वचनम् । कथं प्रक्षीवः । प्रगतः क्षीवः इति प्रादिसमासाद्भविष्यति ॥ ८० ॥ भित्तं शकलम् ॥ ४ । २ । ८१ ॥ भिदेः परस्य क्तस्य नत्वाभावो निपात्यते शकलम् शकलपर्यायश्चेद्भित्तशब्दो भवति । भित्तम् शकलमित्यर्थः । शकलमिति किम् । भिन्नम् । शकलमिति पर्यायनिर्देशः किम् । भिदिक्रियाविवक्षायां शकले विषये भिन्नमित्येव यथा स्यात् । भिन्नं शकलम् । भिन्नं भित्तम् ॥ ८१ ॥ वित्तं धनप्रतीतम् ॥ ४ । २ । ८२ ॥ विन्दते परस्य नत्वाभावो निपात्यते धनप्रतीतम् धनपर्यायः प्रतीतपर्यायश्चेद्वित्तशब्दो भवति । विद्यते लभ्यते इति वित्तम् धनम् । विद्यते उपलभ्यतेऽसाविति वित्तः प्रतीतः । धनप्रतीतमिति किम् । विन्नः । वेत्तेर्विदितम् । विन्तेर्विन्नं वित्तं च । विद्यतेर्विन्नम् । वित्तं धने प्रतीते च विन्दतेर्विन्नमन्यत्र ॥ ८२ ॥ *हुधुटो हेर्धिः ॥ ४ । २ । ८३ ॥ जुहोतेर्धुडन्ताच्च धातोः परस्य हेर्धिरादेशो भवति । जुहुधि । धुट् छिन्धि । भिन्धि । अद्धि । विद्धि । हुधुट इति किम् । क्रीणीहि । हुधुड्भ्यां परत्वेन हेर्विशेषणादिह न भवति । *रुदिहि । स्वपिहि । हेरिति किम् । जुहोतु । अत्तु । जुहुतात्त्वम् भित्तात्त्वमित्यत्र निसत्वात्मकृत्यनपेक्षणेनान्तरङ्गत्वाच्च तातङ् । तस्य च न पुनर्धिभावो हेरिति शब्दाश्रयणात् । केचित्तु ' हिंसेर्हेरत् ' हिंस, ' भुजिभञ्जिभ्यां तु वा ' भुग्ध भुड्ग्धि, भग्ध भड्ग्धि इतीच्छन्ति । नैतद्वैयाकरणरूपसंमतम् । हिन्धि इत्याद्येव तु भवति ॥ ८३ ॥ *शासस्हनः शाध्येधिजहि ॥ ४ । २ । ८४ ॥ *शास् अस् हन इत्येतेषां हिप्रत्ययान्तानां शाध्येधि जहि इत्येते आदेशा यथासंख्यं भवन्ति । शाधि । एधि । जहि । शास्हनो यङ्लुप्यपि शाधि जहि । हनेस्तु यङ्लुपि नेच्छन्त्यन्ये । जङ्घहि ॥ ८४ ॥ अतः प्रत्ययाल्लुक् ॥ ४ । २ । ८५ ॥ धातोः परो योऽकारान्तः

---

स्यात् निपातसामर्थ्याच्च नित्य निषिध्यते ॥—फल निष्पत्ताविति । उपलक्षणत्वात् फल गतावित्यस्यापि ॥—भित्तं शकलम् ॥—भिन्न शकलमिति । वर्त्तते । कि तत् शकल किंविशिष्ट भिन्न द्विधाकृतमिति विशेषणशब्दोऽत्र भिन्नशब्दः । यदि पुन पर्यायशब्द स्यात्तदा शकलस्याप्रयोग स्यात् । पर्यायाणा हि प्रयोगो यौगपद्येन नेष्यते इति वचनात् ॥—भिन्न भित्तमिति । भित्त शकलमित्यर्थः ॥—हुधुटो हे—॥—हुधुड्भ्यां परत्वेनेति । एतत्तु न कृत हुधुड्भ्या विहितस्य हे ॥—रुदिहीति । आगमा यद्गुणीभूता इति न्यायादिट्सहितस्य हेरादेश प्राप्त स न भवति हेरिति व्यक्त्याश्रयणात् । केवलस्य तु हुधुड्भ्या परत्वेनेति भणनात् न भवति ॥—हिन्धीति । अत्र ' सो धि वा ' इति वा सलुक् । तद्विकल्पे च ' तृतीयस्तृतीय '–इति सस्य तु द तस्य च ' धुटो धुटि '–इति वा लुप् तेन हिन्द्धीत्यपि ॥—शासस्हनः—॥ शास्हन्साहचर्यात् असिति आदादिकस्य ग्रहणम् ॥—यङ्लुप्यपीति । अस्तेस्तु स्वरादित्वात् यङ् नास्ति । अथ णकादि विषये भूआदेशे यङ्लुप्सम्भवस्तदाप्यस्तीति व्यक्तिनिर्देशान्न भवति । यद्वा यदा हिप्रदानविवक्षा तदा बाहुलकान्न यङ्लुप् ॥—जंघहीति । गत्यर्थेऽत्र यङ् हिंसार्थे तु ' हनो घ्नी '–इति स्यात् । ये तु तिवा शवेति न्यायस्य सूत्रगणनिर्दिष्टेऽपि प्रवृत्तिमभ्युपगच्छन्ति ' यमिरमि '–इति लुगभाव क्ङिति ' अहन्पञ्चम '–इति हन्तेर्दीर्घत्व चेच्छन्ति । तेषा हि जघाहि तन्मते केवलस्यैव हनेर्व-

प्रत्ययस्तस्मात्परस्य हेर्लुग्भवति । दीव्य । पच । पठ । तुद । चोरय । अत इति किम् । राध्नुहि । प्राप्नुहि । प्रत्ययादिति किम् । पायि वयि गतौ पापहि । वावहि ॥ ८५ ॥ *असंयोगादोः ॥ ४ । २ । ८६ ॥ असंयोगात्परो य उकारस्तदन्तात्प्रत्ययात्परस्य हेर्लुग् भवति । सुनु । चिनु । कुरु । असंयोगादिति किम् । अर्णुहि । अक्ष्णुहि । असंयोगादित्यो*र्विशेषणादिहापि न भवति । आप्नुहि । राध्नुहि । ओरिति किम् । क्रीणीहि । प्रत्ययादित्येव । युहि । रुहि ॥ ८६ ॥ वम्यविति वा ॥ ४ । २ । ८७ ॥ प्रत्ययादिति ओरिति च पञ्चम्यन्तमपि व्यधिकरणषष्ठ्यन्ततया विपरिणम्यते । असंयोगात्परो य उकारस्तस्य प्रत्ययसंबन्धिनो लुग् वा भवति वकारादौ मकारादौ चाविति प्रत्यये । सुन्वः । सुनुवः । सुन्मः । सुनुमः । सुन्वहे । सुनुवहे । सुन्महे । सुनुमहे । तन्वः । तनुव । तन्म. । तनुमः । तन्वहे । तनुवहे । तन्महे । तनुमहे । वमीति किम् । सुनुत. । तनुतः । अवितीति किम् । सुनोमि । तनोमि । ओरित्येव । क्रीणीवः । क्रीणीमः । प्रत्ययस्येत्येव । युवः । युमः । असंयोगादित्येव । तक्ष्णुवः । तक्ष्णुमः । अर्णुवः । अर्णुमः । असंयोगादित्योर्विशेषणादिहापि न भवति । आप्नुवः । आप्नुमः ॥ ८७ ॥ *कृगो यि च ॥ ४ । २ । ८८ ॥ कृगः परस्योकारस्य यकारादौ वमि चाविति प्रत्यये लुग्भवति । कुर्यात् । कुर्याताम् । कुर्युः । कुर्वः । कुर्मः । कुर्वहे । कुर्महे । यि चेति किम् । कुरुतः । अवितीत्येव । करोमि । कुर्मीत्यपि कश्चित्तदसंगतम् । कृंग्ट् हिंसायामित्यस्मात्तु नकारव्यवधानात्*उः परो न संभवतीति न भवति । कृणुयात् । कृणुव । कृणुमः ॥ ८८ ॥ *अतः शित्युत् ॥ ४ । २ । ८९ ॥ शित्यविति प्रत्यये य उकारः तन्निमित्तो यः कृगोऽकारस्तस्योकारो भवति । कुरुत. । कुर्वन्ति । कुरु । कुरुताम् । कुर्यात् । अकुरुताम् । कुर्वन् । कुर्वाणः । उविधानबलाद्*गुणो न भवति । ओकार एवान्यथा विधीयेत । उकारनिमित्तत्वेनाकारविज्ञानात् कुर्यादित्यादावुकारलोपेऽपि भवति अडागमस्य च न भवति । अकुरुत । शितीत्युकारस्य विशेषणं किम् । कुरुत इत्यादौ शिति *व्यवहितेऽपि यथा स्यात् । अवितीत्येव । करोति ॥ ८९ ॥ *श्नास्त्योर्लुक् ॥ ४ । २ । ९० ॥ श्नस्य प्रत्ययस्यास्तेश्च धातोः संबन्धिनोऽकारस्य शित्यविति प्रत्यये लुग्भवति । रुन्धः । रुन्धन्ति । रुन्ध्यात् । रुन्धन् । रुन्धान । स्तः । सन्ति । स्थ । स्थ । स्वः । स्मः । स्यात् । स्तात् । स्ताम् । सन् । अवितीत्येव । रुणद्धि । अस्ति । अत इत्येव । *अन्त्यस्य मा भूत् । आस्ताम् । आसन् । तिव्निर्देशः किम् । अस्यतेर्माभूत् । अस्यतः ॥ ९० ॥ वा द्विषातोऽनः पुस् ॥ ४ । २ । ९१ ॥ द्विष आकारान्ताच्च धातोः परस्य शितोऽवितोऽनः स्थाने वा पुसादेशो भवति । अद्विषुः । अद्विषन् । अयुः । अयान् । अरुः । अरान् । अलुः । अलान् । अदधुरित्यत्र परत्वान्नित्यमेव । पकारः

जैन न यङ्लुबन्तस्य ॥—असयो—॥—र्विशेषणादिति । यदि वा सयोगाद्य उकारान्त प्रत्यय इति विशेषण स्यात्तदाऽत्रापि भवेत् ॥—कृगो यि च ॥ अव्यभिचारात् प्रत्यय इति नाधिचक्रे ॥—उः परो न सभवतीति । नचैतद्वाच्य येन नाव्यवधान यत कुर्यादित्यादावव्यवहितोऽस्ति ॥—अत शि—॥—तन्निमित्त इति । एव सति कुरु इत्यादो विभक्तिलोपेऽपि भवति ॥—गुणो न भवतीति । उकारे निमित्ते 'लघोरुपान्त्यस्य' इति प्राप्त ॥—व्यवहितेऽपीति । अन्यथा कुर्यादित्यादावेव स्यात् । न च 'स्वरस्य'–इति स्थानित्वे व्यवधायकत्व वाच्यमस्या अनित्यत्वात् ॥—श्नास्त्यो—॥—अन्त्यस्य माभूदिति । अत इत्यधिकाराभावे षष्ठ्यान्त्यस्येति अस्ते सस्य लुप् स्यात् । श्नस्य तु प्रत्ययस्येति परिभाषया सर्वस्यापि स्यात्

'पुस्पौ' (४-३-३ ) इत्यत्र विशेषणार्थः ॥ ९१ ॥ *सिज्विदोऽभुवः ॥४।२।९२॥ *सिचः प्रत्ययाद्विदश्च धातोः परस्यान स्थाने पुसादेशो भवति 'अभुवः' न चेद्भुवः परः सिज्भवति । अकार्षुः । अहार्षु. । अगुः । अदुः । अधुः । अपुः । अस्थुः । विद् अविदु । अविदन्नित्यपि*कश्चित् । अभुव इति किम् । 'अभूवन् ॥९२॥ द्व्युक्तजक्षपञ्चतः । ४ । २ । ९३ ॥ द्वे उक्ते यस्य स द्व्युक्तः । पञ्चानां वर्ग. पञ्चत् । जक्षाणां पञ्चत् जक्षपञ्चत् । द्व्युक्ताद्धातोर्जक्षपञ्चतश्च परस्य शितोऽवितोऽनः स्थाने पुसादेशो भवति । अजुहवुः । अबिभयुः । अददुः । अनेनिजुः । भुवो यङ्लुपि अबोभवुः । जक्षादि, अजक्षुः । अदरिद्रुः । अजागरुः । अचकासुः । अशासुः ॥ ९३ ॥ *अन्तो नो लुक् ॥ ४ । २ । ९४ ॥ द्व्युक्तजक्षपञ्चतः परस्य शितोऽवितोऽन्त संबन्धिनो नकारस्य लुग्भवति । जुह्वति । जुह्वतु । जुह्वत् । जुह्वतौ । जुह्वतः । जुह्वतम् । ददति । ददतु । ददत् । 'ददती स्त्री कुले वा । जक्षति । जक्षतु । जक्षत् । दरिद्रति । दरिद्रतु । दरिद्रत् । दरिद्रती स्त्री कुले वा । जाग्रति । जाग्रतु । जाग्रत् । चकासति । चकासतु । चकासत् । शासति । शासतु । शासत् ॥ ९४ ॥ शौ वा ॥ ४ । २ । ९५ ॥ द्व्युक्तजक्षपञ्चतः परस्यान्तो नकारस्य शिप्रत्यये वा लुग् भवति । ददति । ददन्ति । जक्षति । जक्षन्ति । दरिद्रति । दरिद्रन्ति । जाग्रति । जाग्रन्ति । चकासति । चकासन्ति । शासति । शासन्ति कुलानि । शाविति किम् । ददती । दधती कुले ॥ ९५ ॥ श्नश्चातः ॥ ४ । २ । ९६ ॥ द्व्युक्तजक्षपञ्चतः श्नाप्रत्ययस्य च संबन्धिनः शित्यविति प्रत्यये परे आकारस्य लुग्भवति । मिमते । मिमताम् । अमिमत । संजिहते । संजिहताम् । समजिहत । यायति । यायतु । दरिद्रति । दरिद्रतु । श्ना, क्रीणन्ति । क्रीणन्तु । अक्रीणन् । लुनते । लुनताम् । अलुनत । पुनते । पुनताम् । अपुनत । श्नश्चेति किम् । यान्ति । वान्ति । आत इति किम् । बिभ्रति । जक्षति । अवितीत्येव । अजहाम् । अक्रीणाम् ॥ ९६ ॥ एषामीर्व्यञ्जनेऽदः ॥ ४ । २ । ९७ ॥ एषां द्व्युक्तजक्षपञ्चत्श्नाप्रत्ययानामाकारस्य शित्यविति व्यञ्जनादौ परत ईकारो भवति दासंज्ञं वर्जयित्वा । मिमीते । मिमीताम् । अमिमीत । दाव्दैवोर्यङ्लुपि दादीतः । दादीथः । लुनीतः । लुनीहि । लुनीयात् । व्यञ्जने इति किम् । मिमते । लुनन्ति । अद इति किम् । दत्तः । धत्तः । दद्वः । दद्मः । दध्वः । दध्मः । दद्यात् । दध्यात् । अवितीत्येव । जहाति । लुनाति । शितीत्येव । संजिहासते ॥ ९७ ॥ इर्दरिद्रः ॥ ४ । २ । ९८ ॥ दरिद्रातेर्व्यञ्जनादौ शित्यविति प्रत्यये परे आकारस्येकारो भवति । दरिद्रितः । दरिद्रिवः । दरिद्रिमः । दरिद्रियात् । व्यञ्जन इत्येव । दरिद्रति । शितीत्येव । दिदरिद्रासति । अवितीत्येव । दरिद्राति ॥९८॥ भियो नवा ॥ ४ । २ । ९९ ॥ बिभेतेर्व्यञ्जनादौ शित्यविति प्रत्यये परेऽन्तस्येकारो वा भवति । बिभितः । बिभीतः । बिभिथः । बिभीथः । बिभियात् । बिभीयात् । यङ्लुपि, बेभितः । बेभीतः । व्यञ्जन इत्येव । बिभ्यति । बिभ्यतु । शितीत्येव । बिभीषति । बेभीयते । अवितीत्येव । बिभेति । बिभेषि ॥ ९९ ॥ *हाकः

॥—सिज्विदोऽभुवः॥—सिचः प्रत्ययादिति । भूवर्जनेन सिच् प्रत्ययो लभ्यते । अन्यथा पिचीत् इत्यस्य ग्रहणं स्यात् । अन. स्थाने इत्यधिकारेऽपि सिजित्युक्तेरद्यतन्या अन् लभ्यते । विदस्तु शिदेव अद्यतन्या तु सिज्द्वारा अवेदिषुरिति ॥—कश्चिदिति । तन्मते पूर्वसूत्रे विद्ग्रहणं ज्ञेयम् ॥—अभूवन्निति । यदा यङ्लुबन्तस्तदापि प्रकृतिग्रहणे इति न्यायात्पुस् न भवति । नाप्युत्तरेण शितोऽभावात्ततोऽबोभूवन्निति भवति ॥—अन्तो नो लुक् ॥—ददती स्त्री कुले वेति । 'अवर्णादश्न.'—इत्यन्तादेशे नलुक् । जुह्वती इति तु नात्र ज्ञेय नकाराभावात् । ददती इत्यादौ तु भूतपूर्वकत्वेन स्थानित्वेन वाऽवर्णान्तत्वे सभव ॥—हाकः

धातोः प्रत्ययेनाभिसंबन्धो नाकारेणेति प्रत्ययाकारस्यापि दीर्घो भवति । अस्येति किम् । चिनुवः । चिनुमः । रुवः । रुमः । *आकारस्य दीर्घत्वेन विशेषणमाकारो दीर्घ एव यथा स्यात् न*प्लुतः*तल्लक्षणयोगेऽपीत्येवमर्थम् ॥ ११३ ॥ *अनतोऽन्तोऽदात्मने ॥ ४ । २ । ११४ ॥ अनकारात्परस्यात्मनेपदसंबन्धिनोऽन्त्रूपस्यावयवस्यात् इत्ययमादेशो भवति । चिन्वते । चिन्वताम् । अचिन्वत । लुनते । लुनताम् । अलुनत । आत्मनेपदस्येति किम् । चिन्वन्ति । लुनन्ति । अनत इति किम् । *पचन्ते । पच्यन्ते ॥ ११४ ॥ 'शीङो रत् ॥ ४ । २ । ११५ ॥ शीङः परस्यात्मनेपदसंबन्धिनोऽन्तो रत् इत्ययमादेशो भवति । शेरते । शेरताम् । अशेरत ॥ ११५ ॥ *वेत्तेर्नवा ॥ ४ । २ । ११६ ॥ वेत्तेः परस्यात्मनेपदसंबन्धिनोऽन्तो रत् इत्ययमादेशो वा भवति । संविद्रते । संविद्रताम् । समविद्रत । पक्षे, संविदते । संविदताम् । समविदत । आत्मन इत्येव । विदन्ति । वेत्तेरिति किम् । रौधादिकस्य मा भूत् । विन्दते ॥ ११६ ॥ *तिवां णवः परस्मै ॥ ४ । २ । ११७ ॥ वेत्तेः परेषां परस्मैपदसंबन्धिनां तिवादीनां नवानां प्रत्ययानां स्थाने परस्मैपदसंबन्धिन एव *णवादयो नवादेशा यथासंख्यं वा भवन्ति । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । वेत्ति । वित्तः । विदन्ति । वेत्सि । वित्थः । वित्थ । वेद्मि । विद्वः । विद्मः ॥ ११७ ॥ ब्रूगः पञ्चानां पञ्चाहश्च ॥ ४ । २ । ११८ ॥ ब्रूगः परेषां तिवादीनां पञ्चानां स्थाने यथासंख्यं पञ्च णवादय आदेशा वा भवन्ति तत्संनियोगे ब्रूग आह इत्यादेशश्च भवति । आह । आहतुः । आहुः । आत्थ । 'नहाहोर्धतौ' ( २-१-८०६ ) हकारस्य तकारः । आहथुः । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रवीषि । ब्रूथः । पञ्चानामिति किम् । ब्रूथ ॥ ११८ ॥ *आशिषि तुह्योस्तातङ् ॥ ४ । २ । ११९ ॥ आशिषि विहितयोस्तुह्योः स्थाने तातङ् आदेशो वा भवति । जीवताद्भवान् । जीवतु भवान् । जीवतात् त्वम् । जीव त्वम् । आशिषीति किम् । जीवतु । जीव । ङित्करणं *गुणनिषेधार्थम् ॥ ११९ ॥ *आतो णव औः ॥ ४ । २ । १२० ॥ *वेति निवृत्तम् । आकारात्परस्य णवः स्थाने

---

सति आकारान्तत्व तत्र लाक्षणिकत्वात् आकारस्य न ईत्वम् । तेनात्र न ईकार. ॥—आकारस्य दीर्घत्वेनेति । वृत्तावाकारो दीर्घो भवतीति किमर्थमुक्त यत आकारो दीर्घ एवेत्याशङ्का ॥—न प्लुत इति । स्वमते 'सम्मत्यसूया'–इत्यत सूत्रात् अन्त्य इत्यधिकारे 'प्रश्ने च'–इति प्लुतो न प्राप्नोति । पर केचिदनन्त्यस्यापि इच्छन्ति । तन्मतेऽपि माभूदित्यर्थ ॥—तल्लक्षणयोगेऽपीति । तस्य प्लुतस्य यल्लक्षण तद्योगेऽपीत्यर्थ ॥—अनतो—॥—पचन्ते । पच्यन्ते इति । प्राच परो विधिरिति व्याख्यानेन अकारस्य स्थानित्व भूतपूर्वकन्यायाद्वा ॥—शीङो—॥ यङ्लुपि व्यति शेश्यते ॥—वेत्तेः—॥ वेत्तेस्तिव्निर्देशो यङ्लुपि निवृत्त्यर्थश्च तेन व्यतिवेविदते ॥—तिवां—॥—णवादय इति । अमीषा तदादेशेति न्यायात्परोक्षाकार्य न भवति ॥—आशिषि—॥—गुणनिषेधार्थमिति । इद चोपलक्षण तेन ङित्करणेन तदादेशेति न्यायात्स्थानिनस्तुवो विरव बाध्यते । तेन युतात् रुतादित्यादौ विध्यञ्जनप्रत्ययाभावात् 'उत ओर्विति'–इति नौकार । न तु शित्त्वमपि बाध्यते । यतस्तस्यैव शितो ङित्व ततो ङित्वेन वित्त्वमेव हन्यते न तु शित्व ततश्च स्तात् इत्यादौ विच्छति प्रत्यये 'श्नास्त्योर्लुक्' इति लुक् सिद्ध ॥—आतो—॥—वेति निवृत्तमिति ॥ वेति शितीति सबद्ध णव्ग्रहणात्तन्निवृत्तौ निवृत्तम् । अत्र ओकारेणैव सिद्धे औकारकरण ददरिद्रावित्याद्यर्थम् । अन्यथा 'अशित्यस्सन्'–इत्यालोपे इद न सिध्येत् । नन्वत्रामादेशेन भाव्यम्,

औरित्ययमादेशो भवति । पपौ, तस्थौ सः । सुप्तोऽहं *किल ययौ, पपौ । आत इति किम् । स जगाम । सुप्तोऽहं किल विललाप ॥ १२० ॥ *आतामातेआथामाथेआदिः ॥ ४ । २ । १२१ ॥ अकारात्परेषामातामातेआथामाथे इत्येतेषाम् *आत इर्भवति । पचेताम् । पचेते । पचेथाम् । पचेथे । आदिति किम् । मिमाताम् । मिमाते । मिमाथाम् । मिमाथे ॥ १२१ ॥ *यः सप्तम्याः ॥ ४ । २ । १२२ ॥ अकारात्परस्य सप्तम्या संबन्धिनो *याशब्दस्येकारादेशो भवति । पचेत् । पचेताम् पचेः । पचेतम् । पचेत । पचेव । पचेम । आदिसेव । अद्यात् ॥ १२२ ॥ याम्युसोरियमियुसौ ॥ ४ । २ । १२३ ॥ अकारात्परयोर्याम्युस् इत्येतयोर्यथासंख्यमियमियुसावादेशौ भवतः । पचेयम् । पचेयुः ॥ १२३ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ चतुर्थस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ ॥ श्रीभीमपृतनोत्खातरजोभिर्वैरिभूभुजाम् ॥ अहो चित्रमवर्धन्त ललाटे जलबिन्दवः ॥ १ ॥ ॥

# ॥ अथ तृतीयः पादः ॥

*नामिनो गुणोऽक्ङिति ॥ ४ । ३ । १ ॥ नाम्यन्तस्य धातोः कित्ङित्वर्जिते प्रत्यये परे आसन्नो गुणो भवति । चेता । नेता । स्तोता । लविता । *कर्ता । तरिता । जयति । नयति । जुहोति । भवति । बिभर्ति । तरति । करोति । एता एतीत्याद्यन्तवद्भावात् । नामिन इति किम् । उम्भिता । याति । ग्लायति म्लायतीति ऐकारोपदेशबलान्न गुणः । नीभ्याम् लूभ्यामिति *गौणत्वात् । अक्ङितीति किम् । चितः । चितवान् । अशिश्रियत् । अदुद्रुवत् । लिल्ये । लुलुवे । इतः । युतः ॥ १ ॥ उश्नोः ॥ ४ । ३ । २ ॥ धातोः परयोरुश्नु इत्येतयोः प्रत्यययोरक्ङिति प्रत्यये गुणो भवति । तनोति । करोति । समर्णोति । तर्णोति । घर्णोति । धातोस्तु पूर्वेणोत्तरेण च गुणः । श्नु, सुनोति । सिनोति । अक्ङितीत्येव । कुरुतः । सुनुतः ॥ २ ॥ *पुस्पौ ॥ ४ । ३ । ३ ॥ नाम्यन्तस्य धातोः पुसि पौ च परे गुणो

---

तत्कथमेतदर्थम् । सत्यम् । अत एव औकारकरणादामादेशस्यानित्यत्वम् ॥—किल ययाविति । 'कृतास्मरणा'–इति परोक्षा ॥—आतामा—॥—आत इति । अर्थवशाद्विभक्तिपरिणाम ॥—यः सप्तम्याः ॥—याशब्दस्येति । नन्वाकारस्याधिकृतत्वात् येन नाव्यवधानमिति न्यायाद्व्यवधानेऽपि आत एव, यद्वा प्रत्ययस्येति परिभाषया समस्ताया अप्यादेश प्राप्तः । न । समस्ताया अप्यादेशोऽभिप्रेतो यदि स्यात्तदा यादिसप्तम्या इति क्रियेत । स्थिते तु निर्दिश्यमानानामिति न्यायात् याशब्दस्यादेश ॥ ॥ इत्याचार्य० चतुर्थस्याध्यायस्य द्वितीय. पाद. ॥ ॥—नामिनो गु—॥—कर्त्तेति । निर्दिश्यमानत्वात् ऋकारस्यैवादेशो न त्वनेकवर्ण. सर्वस्य ॥—ऐकारोपदेशबलादिति । यद्वा गुण इति सान्वयसंज्ञेयम् । तेनात्र हानिरेव न गुण उत्कर्षरूप इति । तथा नौरिवाचरति नावति । नाव इवाचरण नावा इत्यादौ न गुणः ॥—गौणत्वादिति । नामार्थसंवलितधात्वर्थाभिधायित्वेन ॥—पुस्पौ ॥ नन्वत्र पुग्रहण किमर्थ 'अर्त्तिरीब्ली'–इत्यत्र पोरागम

भवति । अविभयुः । अजुहवुः । अबिभरुः । ऐयरुः । अजागरुः । पु, अर्पयति । रेपयति । व्लेपयति । ह्रेपयति । क्नोपयति । नाम्यन्तस्येत्येव । अनेनिजुः । क्ष्मापयति । दापयति ॥ ३ ॥ *लघोरुपान्त्यस्य ॥ ४ । ३ । ४ ॥ धातोरुपान्त्यस्य नामिनो लघोरक्ङिति प्रत्यये परे गुणो भवति । भेत्ता । गोप्ता । वर्तिता । भेदनम् । गोपनम् । वर्तनम् । वेत्ति । दोग्धि । नर्नर्ति । लघोरिति किम् । ईहते । ऊहते । उपान्त्यस्येति किम् । भिनत्ति । रुणद्धि । तृणत्ति । छृणत्ति । अक्ङितीत्येव । भिन्नः । भिन्नवान् । वेभिद्यते । मरीमृज्यते ॥ ४ ॥ मिदः श्ये ॥ ४ । ३ । ५ ॥ मिदेरुपान्त्यस्य श्ये परे गुणो भवति । मेद्यति । मेद्यतः । मेद्यन्ति ॥५॥ *जागुः किति ॥ ४ । ३ । ६ ॥ जागर्तेः किति प्रत्यये परे गुणो भवति । जागरितः । जागरितवान् । जागर्यते । जागर्यात् । क्वौ, जागः । जजागरतुः । जजागरुः । कितीति किम् । जागृतः । जाग्रति । जाग्रत् । जागृयात् । जागृविः । इह कस्मान्न भवति जजागृवानिति । जागर्तेः क्वसुरनभिधानाद्भाषायां नास्तीत्येके । गुणमेवेच्छन्त्येके । जजागर्वान् । अपरे तु क्वसुकानयोर्गुणप्रतिषेधमेवाहुः । *जजागृवान् । व्यतिजजाग्राणः । क्ङिति प्रतिषेधे प्राप्ते वचनम् । अक्ङिति तु पूर्वेणैव गुणः । जागरिता ॥ ६ ॥ ऋवर्णदृशोऽङि ॥ ४ । ३ । ७ ॥ ऋवर्णान्तानां धातूनां दृशश्चाङि प्रत्यये परे गुणो भवति । मा भवानरत् । असरत् । असरताम् । अजरत् । अजरताम् । अदर्शत् । अदर्शताम् ॥ ७ ॥ *स्कृच्छृतोऽकि परोक्षायाम् ॥ ४ । ३ । ८ ॥ स्कृ ऋच्छ इत्येतयोर्ऋकारान्तानां च धातूनां नामिनः परोक्षायां परतो गुणो भवति अकि ककारोपलक्षितायां क्वसुकानरूपायां न भवति । स्कृ, संचस्करतुः । संचस्करुः । ऋच्छ्, आनर्च्छ । आनर्च्छतुः । आनर्च्छुः । ऋत्, कृ, विचकरतुः । विचकरुः । तॄ, तेरतुः । तेरुः । शॄ, विशशरतुः । विशशरुः । दॄ, विददरतुः । विददरुः । पॄ, निपपरतुः । निपपरुः । स्कृ इति कृगः ससट उपादानादिह न भवति । चक्रतुः । चक्रुः । उत्तरेणैव सिद्धे स्कृग्रहणमुत्तरत्रौपदेशिकसंयोगपरिग्रहार्थम् । विचकार निजगारेत्यादौ परत्वाद्वृद्धिरेव । अकीति किम् । संचस्कृवान् । संचस्क्राणः । आनृच्छ्वान् । विचिकीर्वान् । वितितीर्वान् । वितितिराणः । विशिशीर्वान् । विशशिराणः । निपुपूर्वान् । निपपुराणः । काने पूर्वं द्वित्वम् पश्चादिरादिः

त्वमपनीय प्रत्ययत्वे कृते 'नामिनो गुण' इत्यनेनैव गुण सेत्स्यति । आगमत्वे तु पोर्धातुग्रहणेन ग्रहणात् अर्पयतीत्यत्रैव गुण सिद्ध्यति रेपयतीत्यादौ तु गुरूपान्त्यत्वान्न सिद्ध्यति । प्रत्ययत्वे तु पो सर्वत्र सिध्यति । सत्यम् । पो प्रत्ययत्वे कृतेऽरीरिपत् अदीदपदित्यादावुपान्त्यत्वाभावात् 'उपान्त्यस्यासमानलोपि'-इत्यनेन ह्रस्वत्व न स्यादिति ॥—लघोरिति । ननु 'नामिनो गुण'—इत्यनेनान्त्यविधानसामर्थ्यादनेनोपान्त्यस्यैव भविष्यति किमुपान्त्यग्रहणेन । न च वाच्य पूर्वेणाक्ङिति गुणोऽनेन तु क्ङित्यपि गुणो भवत्वेतदर्थम् । 'जागु किति' 'ऋवर्णदृश'—इति सूत्रद्वयकरणात् । न । लघोरिति सति जागर्त्तेः क्ङित्येव गुण इति विपरीतनियमाशङ्का स्यात्, अनामिनो वा गुण स्यात् इति सदेहनिरासार्थमुपान्त्यग्रहणम् ॥—जागुः किति ॥—जजागृवानितीति । एके सर्वथापीद न मन्यन्तेऽत परमतेन दर्शितम् ॥—स्कृच्छृतो—॥—परिग्रहार्थमिति । तेन सस्क्रियते सचेस्क्रीयते सस्क्रियात् इत्यादो 'क्यङाशीर्ये' इति गुणो न भवति । 'सयोगादृत' इति इट् न विकल्पेन ॥—वितितिराण इति । व्यतिहारे कर्मण्यात्मनेपदम् ॥—विशशिराण इति । विशशरे 'ऋ. शॄदृप्र' इत्यनेन नवा ऋत्वे ।व।श्रे इति वा वाक्ये 'तत्र क्वसु'—

स्वरविधित्वात् ॥ ८ ॥ *संयोगाद्दर्तेः ॥ ४ । ३ । ९ ॥ संयोगात्परो य ऋकारस्तदन्तस्य धातोरर्तेश्च परोक्षायां परतो गुणो भवति अकि । सस्मरतुः । सस्मरुः। सस्वरतुः। सस्वरुः। दद्वरतुः। दद्वरुः। दध्वरतुः। दध्वरुः। ह्वृ, जह्वरतुः। जह्वरुः। अर्तिः *आरतुः। आरुः। संयोगादिति किम् । चक्रतुः। चक्रुः । ऋदर्तेरिति किम् । चिक्षियतुः । चिक्षियुः । गुणप्रतिषेधविषये पुनःप्रसवार्थं वचनम् । वृद्धिस्तु भवत्येव । सस्मार । सस्वार । ऋतः संयोगेन विशेषणादर्तिग्रहणम् । तिव्निर्देश *उत्तरार्थः ॥ ९ ॥ *क्ययङाशीर्ये ॥ ४ । ३ । १० ॥ संयोगात्परो य ऋकारस्तदन्तस्य धातोरर्तेश्च क्ये यङि आशीःसंबन्धिनि ये च प्रत्यये गुणो भवति । स्मर्यते । स्वर्यते । अर्यते । सास्मर्यते । सास्वर्यते । अरार्यते । स्मर्यात् । स्वर्यात् । अर्यात् । औपदेशिकसंयोगग्रहणादिह न भवति । *संस्क्रियते । संचेस्क्रीयते । संस्क्रियात् । ऋत इत्येव । आस्तीर्यते । आतेस्तीर्यते । आस्तीर्यात् । आशीर्य इति किम् । स्मृषीष्ट । समृषीष्ट । अर्तेरिति तिव्निर्देशाद्यङ्लुपि न भवति । *आरियात् । अर्रियात् ॥ १० ॥ *न वृद्धिश्चाविति क्ङिल्लोपे ॥ ४ । ३ । ११ ॥ अविति प्रत्यये यः कितो ङितश्च लोपस्तस्मिन्सति गुणो वृद्धिश्च न भवति । लोपोऽदर्शनमात्रमिह गृह्यते । यङ्लोपे *देध्यः । वेव्यः । नेन्यः । लोलुवः । पोपुवः । *मरीमृजः । क्ङिदिति किम् । रागी । रागः । अत्र नलोपे प्रतिषेधो मा भूत् । केचित्तु दधीवाचरतीति क्विप् लोपे अप्रत्यये णिगि च दध्या दध्ययतीत्यत्रापि गुणवृद्ध्योः प्रतिषेधमिच्छन्ति । तन्मतसंग्रहार्थं क्ङिल्लोपे सति अविति प्रत्यये परे गुणवृद्धी न भवत इति व्याख्येयम् । विति तु, दधयति । रोरवीति । *बोभवीति । केचित्तु* दीधीवेव्योरिवर्णे यकारे चान्तस्य लुकमन्यत्र तु गुणवृद्धिनिषेधमारभन्ते ।

---

इति कानप्रत्यय । एव निपपुराण इत्यत्रापि निपप्रे निपपरे वेति वाक्यम् ॥—संयोगाद्द—॥—आरतुरिति । 'इवर्णादे.'–इति रत्वेनापि सिध्यति परमन्तरङ्गत्वात् 'अवर्णस्येवर्णादिना'–इति द्वित्वाकारस्याग्रेतनऋकारेण सह रत्वबाधकोऽरादेशो माभूदित्यर्त्तिग्रहणमुत्तरार्थं च ॥ अथ अरादेशेऽपि 'अस्यादेरा'–इत्यात्वे सेत्स्यति । तदपि न । यतो द्विर्वचने पूर्वाकारस्य 'अस्यादे'–इत्यात्वमऽभाणि आरिवानित्यत्र त्वन्तरङ्गत्वानाश्रयणात् रत्वमेव ॥—उत्तरार्थ इति । इह यङ्लुबन्तस्यार्त्तेरनेकस्वरत्वात्परोक्षायामामि सति 'वेत्ते कित्' इति सूत्रादामि परोक्षाकार्याऽभावान्न यङ्लुब्निवृत्त्यर्थमिति वाच्यम् । तत्रामभावादामि च सिद्ध एव गुणो यथा अरराञ्चकार अरियराञ्चकारेति ॥—क्ययङा—॥—संस्क्रियत इति । कस्यादिरिति व्याख्यानेऽनुस्वारस्य व्यञ्जनत्वात् 'धुटो धुटि'–इत्येकस्य सस्य वा लुक् ॥—आरियादिति । यङ्लुपि द्वित्वे 'रिरौ च'–इति रागमे क्याति 'रि शक्याशीर्ये' इति धातो रि । 'रो रे लुक्'–इति र्लोपे प्रागुदीर्घ इति प्रथमप्रयोगे । द्वितीये तु 'रिरौ च'–इति रि रीर्वा तस्य 'इवर्णादे –इति यत्वे 'रि शक्य—' इति रि । इयादेशस्तु 'पूर्वस्यास्वे स्वरे'—इत्यत्र य्वो पूर्वस्येति सामानाधिकरण्यव्याख्यानादिकारोकारमात्रस्यैव । अत्र तु अरि इति समुदायः पूर्व इति न । व्यधिकरणव्याख्याने तु अरिग्रियादिति भवत्येव ॥—न वृद्धिश्चा —॥ नामिन इति वर्त्तते ॥—अदर्शनमात्रमिति। न तु लुक्लुपावित्यर्थ । तद्ग्रहणे हि दध्येत्यादौ गुणप्रतिषेधो न स्यात् । अत्र हि क्विपो लुक् लुप् वा न किंतु अप्रयोगीत् ॥—देध्य इति । दासज्ञाना दीङ्त्यस्य च यङि देदीयते इति वाक्ये अचि अचीति सस्वरस्यैव यङो लुप् । अन्यथा 'स्वरस्य'–इति अस्य स्थानित्वे गुणप्राप्तिर्न स्यात् ॥—मरीमृज इति । 'ऋत स्वरे वा' इति वृद्धेरनेन निषेधे गुणप्राप्ति. । साप्यनेन निषिध्यते । दध्येति । स्वमते दधयनं तन्मते तु दध्यनमिति वाक्ये 'शसिप्रत्ययादः' । दध्ययतीत्यत्र तु स्वमते परमतेऽपि दधयन्त प्रयुङ्क्ते इति वाक्यमिति व्याख्येयमिति । मूलव्याख्याऽविति प्रत्यये निमित्ते क्ङिल्लोप इत्युक्तमऽत्र तु क्ङिल्लोपे सति अविति प्रत्यये परे इति भेद ॥—बोभवीतीति । ईत्परावयवो भवतीति विभ्रमः ॥—दीधीवेव्योरिति । दीधीङ् दीप्तिदेवनयो. वेवीङ् वेतिना तुल्ये इत्यऽदा-

गुम्फित्वा । ऋम्फ, ऋफित्वा । ऋम्फित्वा । न्युपान्त्य इत्येव । कुथ्, *कोथित्वा । पुथ्, पोथित्वा । रिफ, रेफित्वा । क्त्वेत्येव । ग्रथितः । ग्रथितवान् । सेडिति किम् । वञ्चू , वक्त्वा । मृषू , मृष्ट्वा । ऊदित्त्वात्क्त्वायां वेटौ । विहितविशेषणाद्दफित्वेत्यत्र नलोपेऽपि कित्त्वाद्गुणो न भवति । क्त्वेत्यनेन कित्त्वप्रतिषेधे प्राप्ते विकल्पार्थं वचनम् ॥ २४ ॥ *वौ व्यञ्जनादेः सन्चाय्वः ॥ ४ । ३ । २५ ॥ वौ उकारे इकारे चोपान्त्ये सति व्यञ्जनादेर्धातोः परः क्त्वा सन् च सेटौ वा किद्वद्भवत 'अय्वः' यकारान्ताद्वकारान्ताच्च न भवतः। द्युतित्वा । द्योतित्वा । दिद्युतिषते । दिद्योतिषते । मुदित्वा । मोदित्वा । मुमुदिषते । मुमोदिषते । लिखित्वा । लेखित्वा । लिलिखिषति । लिलेखिषति । श्वितित्वा । श्वेतित्वा । शिश्वितिषते । शिश्वेतिषते । वाविति किम् । वर्तित्वा । विवर्तिषते । व्यञ्जनादेरिति किम् । ओषित्वा । ओषिषिषति । सेडित्येव । भुक्त्वा । बुभुक्षते । अय्व इति किम् । देवित्वा । दिदेविषति ॥ २५ ॥ *उति शवर्हाद्भ्यः क्तौ भावारम्भे ॥ ४ । ३ । २६ ॥ उकारे उपान्त्ये सति शवर्हेभ्योऽदादिभ्यश्च धातुभ्यो भावे आरम्भे चादिकर्मणि विहितौ क्तौ क्तक्तवतू सेटौ वा किद्वद्भवतः । *कुचितमनेन । कोचितमनेन । प्रकुचितः । प्रकोचितः । प्रकुचितवान् । प्रकोचितवान् । द्युतितमनेन । द्योतितमनेन । प्रद्युतितः । प्रद्योतितः । मुदितमनेन मोदितमनेन । प्रमुदितः । प्रमोदितः । अद्भ्यः, रुदितमनेन । रोदितमनेन । प्ररुदितः । प्ररोदितः । प्ररुदितवान् । प्ररोदितवान् । उतीति किम् । श्वितितमनेन । प्रश्वितितः । शवर्हाद्भ्य इति किम् । गुधितमनेन । प्रगुधितः । भावारम्भ इति किम् । रुचिता कन्या । क्ताविति किम् । प्रद्योतिषीष्ट । सेटावित्येव । रूढमनेन । प्ररूढ । प्ररूढवान् ॥ २६ ॥ *न डीङ्शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदः ॥ ४ । ३ । २७॥ भावारम्भ इति* न स्मर्यते । एभ्यः परौ सेटौ क्तक्तवतू न किद्वद्भवतः । डयते, डयितः । डयितवान् । शीङ्, शयितः । शयितवान् । पूङ्, *पवित । पवितवान् । धृषू, *प्रधर्षित । *प्रधर्षितवान् । क्ष्विद् प्रक्ष्वेदितः । प्रक्ष्वेदितवान् । स्विद् , प्रस्वेदितः। प्रस्वेदितवान् । मिद् , प्रमेदितः । प्रमेदितवान् । डीङ्शीङ्पूङामनुबन्धनिर्देशो यङ्लुप्निवृत्त्यर्थः। डेडियितः। डेडियितवान्। शेशियतः । शेशियितवान् । *पोपुवितः । पोपुवितवान् । सेटावित्येव । डीयतेर्डीनः* डीनवान् । *पूतः । पूतवान् । *धृष्टः । *क्ष्विण्णः । क्ष्विण्णवान् । *स्विन्नः । स्विन्नवान् ।

---

कितमाश्रित्य नलोपोऽत सन्निपातन्यायादुत्तरसूत्रकार्ये आत्मनिमित्तविहत्यै नोपतिष्ठते । तेन गुणो नोज्झे ॥—कोथित्वेति । व्यावृत्तिबलादुत्तरेणापि विकल्पो न किंतु क्त्वेत्यनेन नित्य निषेध । ॥—वौ व्यञ्जनादे —॥ विश्च य् च विय् वियिवाचरति क्विप् लुक् वेयन पूर्वं क्त्वाया वेयित्वेति । अय्व इति व्यावृत्तो यान्तत्वे प्रयोग कार्य ॥—उति शवर्हा—॥ भावारम्भे इति सूत्रत्वात्समाहार । यद्वा कर्म्मधारय ॥—कुचितमनेनेति । कुच्यते स्म भावे क्त ॥—न डीङ्शीङ्—॥—न स्मर्यते इति । तेन भावारम्भादन्यत्रापि सामान्येन विधि ॥—पवित इति । 'उवर्णात्' इति नित्य निषेधे प्राप्ते 'पूङ्क्लिशि'-इति वेट् ॥—प्रधर्षित इति । 'आदित' इति नित्य निषेधे प्राप्ते धर्षितुमारब्ध प्रधृष्यते स्मेति वा वाक्ये क्ते नवा भावारम्भ इतीट् । ॥—प्रधर्षितवानिति । धर्षितुमारब्धवान् आरम्भे क्तवत् । 'नवा भावारम्भे' इट् । एवमग्रेतनेष्वपि ॥—पोपुवित इति । पोपूयते स्म कर्म्मणि क्त । अनेकस्वरत्वादिट् । 'उवर्णात्' इति न प्रतिषेध । 'पूङ्क्लिशि'-इति विकल्पोऽपि न तिवा शवेति न्यायात् ॥—डीन इत्यत्र 'डीयश्वी'-इति नेट् ॥—पूत इत्यत्र 'पूङ्क्लिशि'-इति वेट् । ॥—धृष्ट इत्यत्र 'धृषशस'-इति नेट् । ॥—क्ष्विण्ण । स्विन्न

भिन्नः । भिन्नवान् ॥ २७ ॥ **मृषः क्षान्तौ ॥ ४ । ३ । २८ ॥** क्षान्तौ वर्तमानान्मृषः परौ सेटौ क्तक्तवतू किद्वन्न भवतः । मर्षितः । मर्षितवान् । क्षान्ताविति किम् । अपमृषितं वाक्यमाह । सासूयमित्यर्थः । सेटाविस्येव । मृषू सहने च । मृष्टः । मृष्टवान् ॥ २८ ॥ **क्त्वा ॥ ४ । ३ । २९ ॥** धातोः परः क्त्वा सेट् किद्वन्न भवति । देवित्वा । सेवित्वा । वर्तित्वा । भ्रंशित्वा । ध्वंसित्वा । ग्रथित्वा । कथं कुटत् कुटित्वा । 'कुटादेर्ङिद्वदञ्णित्' (४-३-१७) इति ङिद्भावात् । सेडित्येव । कृत्वा । इष्ट्वा । शान्त्वा ॥ २९ ॥ **स्कन्दस्यन्दः ॥ ४ । ३ । ३० ॥** स्कन्दिस्यन्दिभ्यां परः क्त्वा किद्वन्न भवति । स्कन्त्वा । स्यन्त्वा । प्रस्कन्द्य । प्रस्यन्द्य । केचित् प्रस्कद्य प्रस्यद्येति यपः कित्त्वमिच्छन्ति । तन्मतसंग्रहार्थं क्त्त्वेति द्वितकारो निर्देशः । तकारादिः क्त्वेत्यर्थः । अनिडर्थं वचनम् । सेटि तु पूर्वसूत्रेण स्यन्दित्वेत्येव भवति ॥३०॥ **क्षुधक्लिशकुषगुधमृडमृदवदवसः ॥ ४ । ३ । ३१ ॥** *नेति निवृत्तम् । एभ्यः परः क्त्वा सेट् किद्वद्भवति । क्षुधित्वा । क्लिशित्वा । कुषित्वा । गुधित्वा । मृडित्वा । मृदित्वा । उदित्वा । उषित्वा । क्षुधेर्नेच्छन्त्यन्ये । 'क्त्वा' (४-३-२९) इति प्रतिषेधे 'वौ व्यञ्जनादेः सन्चाय्वः' इति विकल्पे च प्राप्ते वचनम् ॥३१॥ ***रुदविदमुषग्रहस्वपप्रच्छः सन् च ॥ ४ । ४ । ३२ ॥** सेडिति *निवृत्तम् । एभ्यः परः सन् क्त्वा च किद्वद्भवतः । रुदित्वा । रुरुदिषति । विदित्वा । विविदिषति । मुषित्वा । मुमुषिषति । गृहीत्वा । जिघृक्षति । सुप्त्वा । सुषुप्सति । पृष्ट्वा । पिपृच्छिषति । रुदविदमुषो 'वौ व्यञ्जनादेः सन् चाऽय्वः' (४-३-२५) इति विकल्पे ग्रहेस्तु 'क्त्वा' (४-३-२९) इति प्रतिषेधे प्राप्ते वचनम् । स्वपिप्रच्छ्योः सन्नर्थमेव । क्त्वा हि किदेव ॥ ३२ ॥ **नामिनोऽनिट् ॥ ४ । ३ । ३३ ॥** नाम्यन्ताद्धातोरनिट् सन् किद्वद्भवति । चिचीषति । तुष्टूषति । लुलूषति । चिकीर्षति । तितीर्षति । नामिन इति किम् । पिपासति । तिष्ठासति । अनिडिति किम् । शिशयिषते । सनीत्येव । चेता । नेता ॥ ॥ ३३ ॥ **उपान्त्ये ॥ ४ । ३ । ३४ ॥** नामिन्युपान्त्ये सति धातोरनिट् सन् किद्वद्भवति । बिभित्सते । बुभुत्सते । विवृत्सति । धिप्साति । अनिडित्येव । विवर्धिषते । नामिन इत्येव । यियक्षति । विवत्सति । सनित्येव । भेत्ता ॥ ३४ ॥ ***सिजाशिषावात्मने॥४॥३॥३५॥** नामिन्युपान्त्ये सति धातोः परे आत्मनेपदविषये अनिटौ सिजाशिषौ किद्वद्भवतः । अभित्त । अबुद्ध । असृष्ट । भित्सीष्ट । भुत्सीष्ट । सृक्षीष्ट । सिजाशिषाविति किम् । भेत्स्यते । भोत्स्यते । आत्मने इति किम् । अस्राक्षीत् । अद्राक्षीत् । नामिन इत्येव । अयष्ट । यक्षीष्ट । उपान्त्य इत्येव । *अचेष्ट । चेषीष्ट । अनिडित्येव । अवर्धिष्ट वर्धिषीष्ट ॥३५॥ ***ऋवर्णात् ॥४॥३॥३६॥** ऋवर्णान्ताद्धातोः परे आनिटावात्मनेपदविषये सिजाशिषौ किद्वद्भवतः । अकृत । अहृत । कृषीष्ट । हृषीष्ट । *अतीर्ष्ट ।

---

भिन्न' इत्यादिषु 'आदित' इति नेट् । ॥—क्षुधक्लिश—॥—नेति निवृत्तमिति । मृडादीनामुपादानात् । तेभ्यो हि 'क्त्वा' इत्यनेन प्रतिषेध. सिद्ध इति तदुपादानमनर्थकं स्यात् । न वाच्य क्षुधादीनामप्युपादानादिति । यतस्तेषां 'वौ व्यञ्जनादे.–इति विकल्पे प्राप्तेऽनेन प्रतिषेधे चरितार्थमुपादानम् ॥—रुदविद—॥ विदेति विदक् ज्ञाने इत्यस्य ग्रहणं नान्येषां तेषां हि निषेधाभावात् किद्वदेव क्त्वा । न वाच्य 'वौ व्यञ्जनादेः–इति विकल्पः । तत्र सेटीति विशेषणात् ॥—निवृत्तमिति । स्वपप्रच्छोरिटोऽसम्भवात् ॥—सिजाशिषा—॥—अचेष्ट इति । सिचो लुक. परत्वेऽपि नित्यत्वात्प्रागेव गुण एतच्च 'धुड्ह्रस्व'–इत्यत्र कथयिष्यति ॥—ऋवर्णात् ॥—अतीर्ष्ट इति । अस्मात्कर्मकर्त्तरि 'एकधातो'–इत्यात्मनेपदतप्रत्यये 'स्वरदुहो

अपूर्ष्ट । तीर्पीष्ट । पूर्पीष्ट । अनिटाविसेव । अवरिष्ट । वरिषीष्ट । अतरिष्ट । तरिषीष्ट ॥ ३६ ॥ गमो वा ॥ ४ । ३ । ३७ ॥ गमेः परे आत्मनेपदविषये सिजाशिषौ किद्वद्वा भवतः । समगत, समगंस्त चैत्रः । अगसाताम्, अगंसाताम् ग्रामौ चैत्रेण । संगसीष्ट संगंसीष्ट चैत्रः । गसीष्ट, गंसीष्ट चैत्रेण ॥ ३७ ॥ हनः सिच् ॥ ४ । ३ । ३८ ॥ हन्तेः पर आत्मनेपदविषयः सिच् किद्भवति । आहत । आहसाताम् । आहसत ॥ ३८ ॥ यमः सूचने ॥ ४ । ३ । ३९ ॥ सूचनं परदोषाविष्करणम् तत्र वर्तमानाद्यमेः पर आत्मनेपदविषयः सिच् किद्वद्भवति । उदायत । उदायसाताम् । उदायसत । 'आङो यमहनः स्वेऽङ्गे च' ( ३-३-८६ ) इत्यात्मनेपदम् । सूचन इति किम् । आयंस्त कूपाद्रज्जुम् । उद्धृतवानित्यर्थः । सकर्मकात् 'समुदाङो यमेरग्रन्थे' ( ३-३-२८ ) इत्यात्मनेपदम् ॥ ३९ ॥ वा स्वीकृतौ ॥ ४ । ३ । ४० ॥ स्वीकृतौ वर्तमानाद्यमेः पर आत्मनेपदविषयः सिच् किद्वद्वा भवति । उपायत उपायंस्त महास्त्राणि । उपायत उपायंस्त कन्याम् । मोपयध्वं भयं सीता नोपायस्त दशाननः । 'यमः स्वीकारे' ( ३-३-५९ ) इत्यात्मनेपदम् । स्वीकृताविति किम् । आयंस्त पाणिम् । सिजित्येव । उपयंसीष्ट कन्याम् । उद्वाह एवेच्छन्त्यन्ये ॥ ४० ॥ *इश्च स्थादः ॥ ४ ३ । ४१ ॥ तिष्ठतेर्दासंज्ञाच्च धातोः पर आत्मनेपदविषयः सिच् *किद्वद्भवति तत्संनियोगे च स्थादोरन्तस्येकारादेशो भवति । उपास्थित । उपास्थिषाताम् । उपास्थिषत । दाम्, व्यत्यदित । व्यत्यदिषाताम् वस्त्रे । देङ्, अदित पुत्रम् । डु दांग्क्, अदित धनम् । दोच्, व्यत्यदित दण्डौ । ट्धे, व्यत्यधित स्तनौ । डु धाग्क्, अधित भारम् । स्थाद इति किम् । दांवकदैवोर्व्यत्यदास्त व्यत्यदासाताम् । व्यत्यदासत । आत्मनेपद इत्येव । अधासीत् ॥ ४१ ॥ *मृजोऽस्य वृद्धिः ॥ ४ । ३ । ४२ ॥ मृजेर्गुणे सत्यकारस्य वृद्धिर्भवति । मार्ष्टि । मार्ष्टा । मार्ष्टुम् । मार्ष्टव्यम् । मार्जिता । मार्जकः । समार्जनम् । संमार्गः । अत इति किम् । मृज्यते । मरीमृज्यते । मृष्टः । मृष्टवान् । कथं म्रष्टा म्रष्टुम्, द्रामिला जानन्ति ये *मृजेरपि *रत्वमिच्छन्ति ॥४२॥ *ऋतः स्वरे वा ॥ ४ । ३ । ४३ ॥ मृजेर्ऋकारस्य स्वरादौ प्रत्यये परे वा वृद्धिर्भवति । परिमार्जन्ति । परिमृजन्ति । परिमार्जन्तु । परिमृजन्तु । पर्यमार्जन् । पर्यमृजन् । परिममार्जतुः । परिममृजतुः । परिमार्जन् । परिमृजन् । ऋत इति किम् । *ममार्ज । मार्जयति । *स्वर इति किम् । मृष्टः । मृष्ठः । मृज्वः । मृज्मः ॥ ४३ ॥ *सिचि परस्मै समानस्याङिति ॥ ४ । ३ । ४४ ॥ समानान्तस्य धातोः परस्मैपदविषये सिच्यङिति परे आसन्ना वृद्धिर्भवति ।

---

वा' इति विकल्पेन सिच् स्यात् । एवमऽपूर्ष्टेस्यत्रापि ॥—इश्च स्थादः ॥—किद्वद्भवतीति । नन्विकारविधानादेव गुणो न भविष्यति किं सिचः किद्वद्विधानेन । सत्यम् । विधानस्य ह्रस्वद्वारा 'धुड्ह्रस्व'-इति सिच्लोपे चरितार्थत्वात् गुण स्यात् ॥—मृजो—॥—मृजेरपीति । न केवल मृजादीनामित्यर्थ ॥—रत्वमिच्छन्तीति । सस्वर रत्वमकारागमे रत्व वा ॥—ऋत स्वरे वा ॥—ममार्जेति । गुणे कृते 'मृजोऽस्य वृद्धि'-इत्यनेन नित्य वृद्धिः । न त्वऽनेन विकल्प । ननु गुणात्प्रागेव परत्वाद् वृद्धि कथ न । सत्यम् । विकल्पबलात् । 'ऋतः स्वरे वा' इत्यस्य विकल्पपक्षे इदमुदाहरणमन्यथा हि परत्वात् वृद्धि स्यात् किं व्याकृत्या । किं बहुना गुणे कृते वृद्धिविकल्पो माभूदित्येवमर्थमृत इति व्याकृतिस्तेन ममर्ज मर्जयतीति न भवति ॥—स्वर इति किमिति । धातोः कार्यं विधीयमान धात्वधिकारविहित एव प्रत्यये विज्ञायते इति कंसपरिमृज इत्यत्र क्विबन्तस्य धातुत्वेऽपि नामाधिकारविहिते स्यादिप्रत्यये वृद्ध्यभाव. ॥—सिचि परस्मै—॥

अचैषीत् । अनैषीत् । अयावीत् । अलावीत् । अकार्षीत् । अतारीत् । अचेचायीत् । अनेनायीत् । परस्मै इति किम् । *अच्योष्ट । अप्लोष्ट । समानस्येति किम् । गोरिवाचारीत् अगवीत् । अचिकीर्षीदित्यत्र परत्वात् 'अतः' (४-३-८२) इति *अकारस्य लुक् । अङिति इति किम् । णू, न्यनुवीत् । धू, न्यधुवीत् । ऊर्णुः, मौर्णोनुवीत् । गु, न्यगुषीत् । ध्रु, न्यध्रुषीत् । येषां तु *गु दीर्घान्तो ध्रुस्तु सेट् तेषां न्यगुवीत् न्यध्रुवीत् इत्यपि भवति ॥ ४४ ॥ *व्यञ्जनानामनिटि ॥ ४ । ३ । ४५ ॥ व्यञ्जनान्तस्य धातोः परस्मैपदविषयेऽनिटि सिचि परे वृद्धिर्भवति । अपाक्षीत् । अभैत्सीत् । अरौत्सीत् । अताप्सीत् । बहुवचनं जात्यर्थम् । तेनानेकव्यञ्जनव्यवधानेऽपि भवति । रञ्ज्, अराङ्क्षीत् । सञ्ज्, असाङ्क्षीत् । भञ्ज्, अभाङ्क्षीत् । तक्षौ, *अताक्षीत् । त्वक्षौ, अत्वाक्षीत् । औदित्त्वाद्वेटौ । समानस्येत्येव । *उदवोढाम् । अनिटीति किम् । अतक्षीत् । अत्वक्षीत् । अदेवीत् । अकोषीत् । अनर्तीत् ॥ ४५ ॥ *वोर्णुगः सेटि ॥ ४ । ३ । ४६ ॥ ऊर्णोतेः सेटि सिचि परस्मैपदविषये परे वृद्धिर्वा भवति । प्रौर्णावीत् । पक्षे प्रौर्णुवीत् । प्रौर्णवीत् । परस्मै इत्येव । प्रौर्णविष्ट । सानुबन्धोपादानं यङ्लुप्निवृत्त्यर्थम् । प्रौर्णोनावीत् । अङित्त्वपक्षे पूर्वेण नित्यं वृद्धिः । ङित्त्वे तु प्रौर्णोनुवीत् । 'वोर्णोः' (४-३-१९) इत्यत्र हि अनुबन्धाभावाद्यङ्लुबन्तस्यापि ग्रहणम् । एवं च *प्रकृतेस्त्रैरूप्यं यङ्लुबन्तस्य च द्वैरूप्यं सिद्धं भवति । सेटीत्युत्तरार्थम् ॥४६॥ व्यञ्जनादेर्वोपान्त्यस्यातः ॥ ४ । ३ । ४७ ॥ व्यञ्जनादेर्धातोरुपान्त्यस्यातः सेटि सिचि परस्मैपदविषये परे वृद्धिर्वा भवति । अकाणीत् । अकणीत् । अकाणीत् । अकणीत् । अश्वासीत् । अश्वसीत् । गौरिवाचारीत् अगावीत् । अगवीत् । व्यञ्जनादेरिति किम् । मा भवानटीत् । मा भवानशीत् । उपान्त्यस्येति किम् । अरक्षीत् । अपिपठिषीत् । अतर्धीत् । अत इति किम् । अदेवीत् । सेटीत्येव । अधाक्षीत् ॥ ४७ ॥ वदव्रजलः ॥ ४ । ३ । ४८ ॥ वदव्रजोर्लकारान्तानां रेफान्तानां च धातूनामुपान्त्यस्याकारस्य परस्मैपदविषये सिचि परे वृद्धिर्भवति । अवादीत् । अव्राजीत् । अज्वालीत् । अचालीत् । अक्षारीत् । त्सर्, अत्सारीत् । उपान्त्यस्येत्येव । अम्ब्लीत् । अवभ्रीत् । अत इत्येव । न्यमीलीत् । न्यखोरीत् । पूर्वस्यापवादोऽयम् ॥ ४८ ॥ *न श्विजागृशसक्षणह्म्येदितः ॥ ४ । ३ । ४९ ॥ श्विजागृशसक्षणां हकारमकारयकारान्तानामेदितां च धातूनां परस्मैपदविषये सेटि सिचि परे वृद्धिर्न भवति । श्वि, अश्वयीत् । जागृ, अजागरीत् । शस्, अशसीत् । शसः स्थाने श्वसं पठन्त्यन्ये । अश्वसीत् । क्षण्, अक्षणीत् । हान्त, अग्रहीत् । मान्त, अरमीत् । अस्यमीत् । यान्त, अव्ययीत् । अहयीत् । एदित्, अकगीत् । अरगीत् । अकखीत् । *श्व्यादीनां यङ्लुबन्तानामपि प्रतिषेधः । अशेश्वयीत् । अजजागरीत् । केचिज्जागर्तेरपि यङमिच्छन्ति । अशाशमीत् । अचाक्षणीत् । *अचाचहीत् । *अजर्गहीत् । *असंस्यमीत् । अवाव्ययीत् । एदितां तु यङ्लुपि न प्रतिषेधः । अजाहासीत् ।

---

—अच्योष्टेति । नित्यत्वादन्तरङ्गत्वाच्च गुण ॥—अकारस्य लुगिति। अत एव मूलोदाहरणेषु अकारस्य वृद्धिर्न दर्शिता ॥ —गु दीर्घान्त इति । ऊदन्ताश्च तन्मते सेट एव । एतच्च 'एकस्वरादनुस्वारेत' इत्यत्र सूत्रान्ते सग्रहश्लोके वक्ष्यते ॥—व्यञ्जनाना—॥—अताक्षीदिति । तक्षौ अद्यतनीदि सिच् ईत्, 'सयोगस्यादो'-इति कलोपे पढो कसि' इति षस्य कत्वे सिच षत्वेऽटि च रूपम् ॥—उदवोढामिति । पूर्ववृद्धौ एकदेशोति न्यायाद्धहेरोत्वम् । ततो भूतपूर्वगत्या ढस्य परेऽसत्त्वाद्वा व्यञ्जनान्तत्वे पुनरप्योकारस्य वृद्धिं प्राप्नोति ॥—वोर्णुगः—॥—प्रकृतेस्त्रैरूप्यमिति। शुद्धधातो रूपत्रयमित्यर्थः ॥—न श्विजागृ—॥—अचाचहीदिति । अजर्गहीदिति । भजर्गहीदिति भत्र तत्र ग्गृति गुणे उपान्त्याऽकाराऽसभवात् ॥—असंस्यमीदिति । परमताभिप्रायेणेदं स्वमते

दित्वम् । व्यञ्जनादावित्येव । तृणहानि । अतृणहम् । वितीत्येव । तृण्ढः । दीर्घनिर्देश उत्तरार्थः ॥ ६२ ॥ *ब्रूतः परादिः ॥ ४ । ३ । ६३ ॥ ब्रुव ऊत् ब्रूव ब्रूतेरूकारात्परो व्यञ्जनादौ विति प्रत्यये परे ईड्भवति स च परादिः परावयवः । *ब्रवीति । ब्रवीषि । ब्रवीमि । अब्रवीत् । ऊत इति किम् । आत्थ । व्यञ्जनादावित्येव । ब्रवाणि । अब्रवम् । वितीत्येव । ब्रूतः ॥ ६३ ॥ यङ्तुरुस्तोर्बहुलम् ॥ ४ । ३ । ६४ ॥ यङ्लुबन्तात् तु रु स्तु इत्येतेभ्यश्च धातुभ्यः परो व्यञ्जनादौ विति प्रत्यये परे ईड्भवति 'बहुलम्' शिष्टप्रयोगानुसारेण स च परादिः । क्वचिद्विकल्पः । बोभवीति । बोभोति । नर्नृतीति । नर्नर्ति । लालपीति । लालप्ति । क्वचिन्न भवति । वर्वर्ति । चर्कर्मि । अन्ये तु वावदीति लालपीति रोरवीतीति नित्यं, बोभोति बोभवीति सोषोति सोषवीति चर्कर्ति चर्करीति इति विकल्पः, नर्नर्ति वर्वर्त्ति वर्वर्ष्टि इत्यत्र न भवतीत्याहुः । तुंक्, तवीति । तौति । उत्तवीति । उत्तौति । रुक्, रवीति । रौति । उपरवीति । उपरौति । ष्टुंग्क्, स्तवीति । स्तौति । उपस्तवीति । उपस्तौति । तुरुस्तुभ्य ईतं छान्दसमाहुरेके । व्यञ्जनादावित्येव । बोभवानि । अबोभवम् । लालपानि । तवानि । रवाणि । स्तवानि । वितीत्येव । बोभूतः । लालप्तः । तुतः । रुतः । स्तुतः । अद्वेरित्यनुवृत्ते तुतोथ तुष्टोथेत्यत्र न भवति । यङिति सामान्याभिधानेऽपि यङ्लुबन्तस्य ग्रहणम् । यङन्तस्यात्मनेपदित्वाद्वितो व्यञ्जनादेरसंभवात् ॥ ६४ ॥*सः सिजस्तेर्दिस्योः ॥ ४ । ३ । ६५ ॥ सिच्प्रत्ययान्ताद्धातोरस्तेश्च सः सकारान्तात्परः परादिरीत् भवति दिस्योः परयो. । अकार्षीत् । अकार्षीः । अलावीत् । अलावीः । *आसीत् । *आसीः । स इति किम् । अदात् । अभूत् । दिस्योरिति किम् । अस्ति । असि ॥ ६५ ॥ *पिबैतिदाभूस्थः सिचो लुप्परस्मै न चेट् ॥ ४ । ३ । ६६ ॥ एभ्यः परस्य सिचः परस्मैपदे परे लुब्भवति "न चेट्" लुप्संनियोगे चैतेभ्य इट् न भवति । पिब, अपात् । एतीति *इणिकोर्ग्रहणम् । अगात् । अध्यगात् । दासंज्ञ, अदात् । अधात् । भू इति भवतेरस्त्यादेशस्य च ग्रहणम् । अभूत् । स्था. अस्थात् । सिज्लोपः परत्वादीतं बाधते ।

---

दिस्तावत् ह्यस्तन्या एव तत्साहचर्यात्सिरपि ह्यस्तन्या एव न तु वर्तमानाया ॥—ब्रूत—॥—ब्रवीतीति । अत्र वचादेशो न ईत परावयवत्वे शित्वात् । ननु तर्हि ब्रूत शिदिति क्रियता किं गुरुणा सूत्रेण । नैवम् । एव कृते ब्रवीतीत्यत्र गुणो न स्यात् । तर्हिश्चिदिति क्रियताम् । न । एवमपि कृते जगमीति जाज्ञेति इत्यादौ 'गमिषद्यमश्छ' 'जा ज्ञाजनोऽत्यादौ' इत्याभ्या छ. जादेशश्च स्यात् अत्यादे सद्भावात्परादित्वे तु परभक्तत्वेन त्यादेरानन्तर्यान्न भवति ॥—सः सिजस्ते—॥—आसीदिति । ह्यस्तनीदिव् सिव् विधानसामर्थ्याच्च 'व्यञ्जनादे'–इति ईतुदेर्न लुप् ॥—आसीरिति आदेशादागम इति न्यायेन सकारलोपात्प्रागेव ईकारागमप्राप्ति. । 'अस्ते सि हस्त्वेति' इति तु सूत्रमविःप्रत्यये व्यतिसे इत्यादौ चरितार्थं तेनात्र दिव्साहचर्यात् सिव् ह्यस्तन्या एवेति ॥—पिबैति—॥—न चेडिति । नन्विटा सहितस्य सिचो लोपे पेचुप इत्यादौ उपादेशवत् सिध्यति किमिट्वर्जनेन । न वाच्यमिद. प्रागेव लोपविधेर्बलीयस्त्वात् सिच्लोपो भविष्यति आदेशादागम इति न्यायात् । सत्यम् । यावत्सभव इति न्यायात् पश्चादपीट् स्यात् । न च पेचुप इत्यादावपि तथा स्यादिति वाच्य । यतस्तत्रोपादेशे कृते व्यञ्जनादित्वाभाव । अथ 'घसेकस्वर'–इत्यत्र क्सोरित्युक्त न व्यञ्जनादेरिति चेत् । न । 'स्कसृभृस्तु'–इत्यनेन सिद्धे तस्य नियमार्थत्वात् । अथ स्थानित्वे व्यञ्जनादित्व, न, वर्णविधित्वात् । व्यञ्जन हि वर्ण इति । यङ्लुप्यपि अपापात् अदादात् । अबोभोत् । अतास्थात् । सर्वेषु इट्प्रतिषेध. ॥—इणिकोर्ग्रहणमिति । इङस्तु आत्मनेपदित्वान्निरास । इटु इत्यस्य त्वऽयतीति रूपम्

पिबेति किम् । पातिपायत्योः अपासीत् वनं वा वत्सम् वा । दासंज्ञ इति किम् । अदासीत् केदारम् भोजनं वा । परस्मै इति किम् । अपासत पयांसि चैत्रेण । ण्यन्त-भविष्ट । उपास्थिपत । लुक्प्रकृत्या लुग्विधानं स्थानिवद्भावाभावार्थम् । तेनाधोभोदित्यत्र न वृद्धिः ॥ ६६ ॥ *द्धेघ्राशाछासो वा ॥ ४ । ३ । ६७ ॥ एभ्यः परस्य सिचः परस्मैपदे वा लुप् भवति लुप्संनियोगे चैतेभ्य इट् न भवति । ट्धें, अधात् । अधासीत् । घ्रां, अघ्रात् । अघ्रासीत् । शों, अशात् । अशासीत् । छों, अच्छात् । अच्छासीत् । सों सै वा, असात् । असासीत् । परस्मै इत्येव । अधिषातां स्तनौ वत्सेन । ट्धेः पूर्वेण नित्यं प्राप्ते शेषेभ्योऽप्राप्ते विकल्पः ॥ ६७ ॥ *तन्भ्यो वा तथासि न्णोश्च ॥ ४ । ३ । ६८ ॥ तनादेर्गणात्परस्य सिचस्ते थासि च प्रत्यये परे लुब्वा भवति तत्संनियोगे च नकारस्य णकारस्य च लुब् भवति न चेट् । अतत । अतनिष्ट । अतथाः । अतनिष्ठाः । असत । असनिष्ट । असथाः । असनिष्ठाः । अक्षत । अक्षणिष्ट । अक्षथाः । अक्षणिष्ठाः । आर्त । आर्णिष्ट । आर्थाः । आर्णिष्ठाः । *अतृत । अतर्णिष्ट । अतृथाः । अतर्णिष्ठाः । अघृत । अघर्णिष्ट । अघृथाः । अघर्णिष्ठाः । अवत । अवनिष्ट । अवथाः । अवनिष्ठाः । अमत । अमनिष्ट । अमथाः । अमनिष्ठाः । इह परस्मै इति निवृत्तम् थास्ग्रहणात् । थास्साहचर्याच्चप्रत्ययोऽप्यात्मनेपदसंबन्ध्येव गृह्यते । तेनेह न भवति । अतनिष्ट यूयम् ॥ ६८ ॥ सनस्तत्रा वा ॥ ४ । ३ । ६९ ॥ सनोतेस्तत्र लुपि सत्यामन्तस्य वा आकारो भवति । असात । असत । असाथाः । असथाः । तत्रेति किम् । असनिष्ट । असनिष्ठाः । केचिदात्वं न मन्यन्ते । नित्यमेवान्ये ॥ ६९ ॥ * धुड्ह्रस्वाल्लुगनिटस्तथोः ॥ ४ । ३ । ७० ॥ धुडन्ताद्ध्रस्वान्ताच्च धातोः परस्यानिटः सिचस्तकारादौ थकारादौ च प्रत्यये लुग् भवति । अभैत्ताम् । अभैत्तम् । अभैत्त । अभित्त । अभित्थाः । वस्, अवात्ताम् । अवात्तम् । अवात्त । ह्रस्व, *अकृत । अकृथाः । समस्थित । समास्थिथाः । आहत । आहथाः । धुड्ह्रस्वादिति किम् । अमंस्त । अमंस्थाः । अच्योष्ट । अच्योष्ठाः । लुकः परत्वेऽपि नित्यत्वात्प्रागेव गुणः । तथोरिति किम् । अभित्साताम् । अभित्सत । अकृषाताम् । अकृषत । अनिट इति किम् । न्यद्योतिष्ट । न्यद्योतिष्ठाः । ह्रस्वान्ताद्धातोरिति किम् । प्रास्नाविष्ट गौः स्वयमेव । *अलाविष्टाम् । अलविष्ट । ओरिटश्च परस्य लोपो माभूत् । लुग्विकारे लुग्ग्रहणं सिज्लुक्यपि स्थानित्वेन तत्कार्यप्रतिपत्त्यर्थम् । तेनावात्तामित्यादिषु सिचि विधीयमाना वृद्धिस्तदभावेऽपि सिद्धा भवति । तथासीत्यनुवर्त्तमाने तथग्रहणं व्याप्तिप्रतिपत्त्यर्थम् तेन साहचर्यं नास्ति । तथोरिति द्विवचनं यथासंख्यपरिहारार्थम् ॥ ७० ॥ इट ईति ॥ ४ । ३ । ७१ ॥ इटः परस्य सिच ईति परे लुग् भवति । अलावीत् । सिचो लुक्यपि स्थानिवद्भावाद्वृद्धिः । अग्रहीत् । इट इति किम् । अकार्षीत् । अरौत्सीत् । ईति किम् । अलाविष्टम् । अभाणिषम् ॥ ७१ ॥ *सो धि वा ॥ ४ । ३ । ७२ ॥ धातोर्धकारादौ प्रत्यये परे सकारस्य लुग् वा भवति । च-

॥-द्धेघ्राशाछासो चेति । छाशो सोर्मध्येपाठाभावान्न साहचर्यं तेन न दैवादिकस्यैव ॥—तन्भ्यो वा—॥—न्णो श्चेति । केचित् क्षणूगादीन् णोपदेशान्मन्यन्ते । तन्मतसंग्रहार्थं णकारकरण स्वमते तु लाक्षणिकत्वात् णकारस्य नग्रहणेनापि सिद्धम् ॥-अतृतेति । 'न वृद्धिश्चाविति' इति अद्यतन्या किव्वम् । 'लुप्यय्वृल्लेनत्' इत्यत्र नञ्निर्दिष्टस्यानित्यत्वाद्वा सिच. स्थानित्वे तस्यैव कित्त्व सिजाशिषाविति ॥-धुड्ह्रस्वा—॥-अकृतेति । यदि तनादौ पाठ स्यात्तदा वा लुक्स्यात् ॥—अलाविष्टामिति । नन्वनिट इत्यशेन प्रत्यङ्गविकलता । नैवम् । अलावि इति ह्रस्वान्तरूपाश्रयणेन तत परस्यानिट सिचो विद्यमानत्वात् ॥—सो धि वा ॥

काधि । चकाद्धि । आशाध्वम् । आशाद्ध्वम् । *अलविड्ढ्वम् । अलविढ्वम् । सिच्यनुवर्तमाने सग्रहणं सामान्यसकारपरिग्रहार्थम् । तेन प्रकृतिसकारस्यापि लुग् भवति ॥ विकल्पं नेच्छन्त्येके । अन्ये तु सिच एव नित्यं लोपमिच्छन्ति ॥ ७२ ॥ अस्तेः सि हस्त्वेति ॥ ४ । ३ । ७३ ॥ अस्तेः सकारस्य सकारादौ प्रत्यये परे लुग् भवति एकारे तु प्रत्यये सकारस्य हकारः । असि । व्यतिसे । अकारसकारयोर्लोपे प्रत्ययमात्रं पदम् । हस्त्वेति, व्यतिहे । भावयामाहे । कारयामाहे चैत्रेण । परोक्षाया एकारे नेच्छन्त्यन्ये । भावयामासे । कारयामासे ॥ ७३ ॥ दुहदिहलिहगुहो दन्त्यात्मने वा सकः ॥ ४ । ३ । ७४ ॥ एभ्यः परस्य सक्प्रत्ययस्य दन्त्यादावात्मनेपदे परे लुग् वा भवति । दुह, अदुग्ध । अधुक्षत । अदुग्धाः । अधुक्षथाः । अधुग्ध्वम् । अधुक्षध्वम् । अदुह्वहि । अधुक्षावहि । दिह, अदिग्ध । अधिक्षत । अदिग्धाः । अधिक्षथा । अधिग्ध्वम् । अधिक्षध्वम् । अदिह्वहि । अधिक्षावहि । लिह, अलीढ । अलिक्षत । अलीढाः । आलिक्षथाः । अलीढ्वम् । अलिक्षध्वम् । अलिह्वहि । अलिक्षावहि । गुह्, न्यगूढ । न्यघुक्षत । न्यगूढाः । न्यघुक्षथाः । न्यघूड्ढ्वम् । न्यघुक्षध्वम् । न्यगुह्वहि । न्यघुक्षावहि । आत्मन इति किम् । अधुक्षत् । अधिक्षत् । दन्त्येति किम् । अधुक्षामहि । अधिक्षामहि ॥ ७४ ॥ *स्वरेऽतः ॥ ४ । ३ । ७५ ॥ सकोऽकारस्य स्वरादौ प्रत्यये परे लुग् भवति । *अधुक्षाताम् । अधुक्षाथाम् । अधुक्षि । अधिक्षाताम् । अधिक्षाथाम् । अधिक्षि । स्वर इति किम् । अधुक्षत । अधिक्षत । अधुक्षन्तेत्यकारलोपेऽपि *स्थानिवद्भावादन्तोऽदादेशो न भवति ॥ ७५ ॥ *दरिद्रोऽद्यतन्यां वा ॥ ४ । ३ । ७६ ॥ दरिद्रातेरद्यतन्या *विषयेऽन्तस्य वा लुग् भवति । अदरिद्रीत् । अदरिद्रासीत् । अदरिद्रि । अदरिद्रायि ॥ ७६ ॥ *अशित्यस्सन्णकच्णकानटि ॥ ४ । ३ । ७७ ॥ सकारादिसन्णकच्णकानड्वर्जितेऽशिति प्रत्यये विषयभूते दरिद्रातेरन्तस्य लुग् भवति । *दरिद्रयति । दरिद्रिता । दरिद्रितुम् । दरिद्रणीयम् । साधुदरिद्री । णिन् । दरिद्र्यते । दरिद्र्यात् । *दरिद्राचक्रुवान् । विषयसप्तमीविज्ञानात्पूर्वमेवाकारलोपे *दरिद्रातीति दरिद्रः । अजेव भवति नत्वाकारान्तलक्षणो णः। तथा दुर्दरिद्रमित्याकारान्तलक्षणोऽनो न भवति । दरिद्राणम् । दरिद्र इति च धात्वे 'आत' इति ऐर्न भवति । अशितीति किम् । दरिद्राति । दरिद्रामि । अदरिद्राम् । सन्नादिवर्जनं किम् । सनि, दिदरिद्रासति । क्रियाया क्रियार्थायां णकचि दरिद्रायको व्रजति । 'पर्यायार्हर्ण' (५ । ३ । २०) इत्यादिना णके दरिद्रायको वर्तते । 'णकतृचौ' (५ । १ । ४८ ॥) इति च णके दरिद्रायकः । अनटि, दरिद्राणम् । सनः सादिविशेषणं किम् ।

॥—अलविड्ढ्वमिति । लुधातुस्ततो ध्वम् । सिच् इडागमे च सिच परवे च 'तवर्गस्य'-इति धस्य ढत्वे 'तृतीयस्तृतीय'-इति पस्य डत्वे च सिद्धम् ॥—स्वरेऽतः ॥—अधुक्षातामिति । सकोऽकारलोपात् 'आतामाते' इति इत्वम् 'अवर्णस्य'-इत्येतत्र च न भवति ॥—स्थानिवद्भावादिति । प्राच पूर्वास्माद्विधिरित्याश्रीयते इति 'स्वरस्य पर'—इति स्थानिवद्भाव ॥—दरिद्रोऽद्यतन्यां वा ॥—अद्यतनीविषयेति । विषयव्याख्यानादादेशादागम इति न्यायात् प्रथम 'यमिरमिनम्यान'-इति इट् सोन्तश्च न । भावकर्मणोस्तु ञिट्ञिचि 'आत ऐः कृञ्चौ' इति ऐकारो न ॥—अशित्यस्सन्—॥—दरिद्रयतीति । दरिद्रत प्रयुङ्क्ते णिगि विषयविज्ञानात् पोऽन्तो न ॥—दरिद्रातीति दरिद्रः इति । विशेषविहितापि लुक् लोपात्स्वरादेशा इति न्यायात् 'आत ऐ कृञ्चौ' इत्यैकारेण णप्रत्यमे बाध्येत ॥—दरिद्रांचक्रुवानिति । आमादेशस्यानित्यत्वे ददरिद्वानित्यपि । पक्षया तु ददरिद्रुष इति भवति ।

*दिदरिद्रिषति । अक इत्येव वक्तव्ये णकचूणकयोरुपादानं किम् । आशिष्यकानि मा भूत् । दरिद्रक । केचिद्दरिद्रातेरनिटि कसावालोपं नेच्छन्ति । तन्मते इट् आम् चाभिधानान्न भवतः । दिदरिद्रावान ॥७७॥ *व्यञ्जनादेः सश्च दः ॥४।३।७८॥ धातोर्व्यञ्जनान्तात्परस्य देर्लुक् यथासंभवं धातुसकारस्य च दकारो भवति । अचकाद्वान् । अन्वशात् । अजागः । अविभः । शकेः, अशाशक् । वस्केः *अवावक् । व्यञ्जनादिति किम् । अयात् । धातोरित्येव । अभैत्सीत् । ईत. परादित्वात्सेतोऽपि प्राप्नोति ॥७८॥ * सेः स्द्धां च रुर्वा ॥४।३।७९॥ धातोर्व्यञ्जनान्तात्परस्य सेर्लुक् सकारदकारधकाराणां च यथासंभवं वा रुर्भवति । अचकास्त्वम् । अचकात्त्वम् । अन्वशास्त्वम् । अन्वशात्त्वम् । सकारस्य रुत्वे सिद्धे पक्षे रुत्वबाधनार्थं वचनम् । ततश्च पक्षे 'धुटस्तृतीय.' (२-१-७६) इति सकारस्य दकारो भवति । अभिनस्त्वम् । अभिनत्त्वम् । अच्छिनस्त्वम् । आच्छिनत्त्वम् । अरुणस्त्वम् । अरुणत्त्वम् । अजघास्त्वम् । अजघत्त्वम् । अविभस्त्वम् । अजागस्त्वम् । रोरुदित्करणं किम् ।* उत्वादिकार्यं यथा स्यात् । अभिनोऽत्र । अरुणोऽत्र । दिप्रत्यासत्तेः सिरपि ह्यस्तन्या एव । तेनेह न भवति । भिनत्सि ॥७९॥ *योऽशिति ॥४ । ३ । ८० ॥ व्यञ्जनान्ताद्धातोः परस्य यकारस्याशिति प्रत्यये परे लुग्भवति । *जंगमिता । वेभिदिता । वेभिदांचक्रे । वेभिदिषीष्ट । क्ये, वेभिद्यते । सोसूचिता । सोसूत्रिता । मोमूत्रिता । शाशयिता । कुषुभिता । मगधकः । सूच्यादीनां णिज्लोपे शयादेशेऽस्य लोपे च व्यञ्जनान्तता । अन्ये तु लाक्षणिकव्यञ्जनान्तेभ्यो यलोपं नेच्छन्ति । तेन सोसूच्यिता । शाशय्यिता । कुषुभ्यिता । तन्मतसंग्रहार्थं व्यञ्जनान्ताद्धातोर्विहितस्येति विहितविशेषणं कार्यम् । धातोरित्येव । ईर्ष्यिता । मव्यिता । पुत्रकाम्यिता । व्यञ्जनादित्येव । लोलूयिता । कण्डूयिता । अशितीति किम् । वेभिद्यते । चेच्छिद्यते ॥ ८० ॥ *क्यो वा ॥ ४ । ३ । ८१ ॥ धातोर्व्यञ्जनात्परस्य क्यस्याशिति प्रत्यये परे वा लुग्भवति । सामान्यनिर्देशात् क्यन्क्यङोर्ग्रहणम् । क्यङ्षस्तु व्यञ्जनान्तात्प्राप्तिरेव नास्ति । समिधमिच्छति समिधिष्यति । समिध्यिष्यति । समिध्यात् । समिध्यात् । दृषदिवाचरति दृषदिष्यते । दृषद्यिष्यते । दृषदिषीष्ट । दृषद्यिषीष्ट । व्यञ्जनादित्येव । पटीयिता । पटायिता । अशितीत्येव । समिध्यति । दृषद्यते । पठ्यते । केचित्तु यकोऽपि लुग्विकल्पमिच्छन्ति । भिषजिता । भिषज्यिता । तन्मतसंग्रहार्थं ककारेणोपलक्षितो य् क्य् इति व्याख्येयम् । अन्यस्त्वाह शिष्य इवाचरिता शिषिता शिष्यितेति । यद्यस्ति प्रयोगस्तदा कृत्क्यपोऽपि ग्रहणम् । क्य इति व्यञ्जनात्षष्ठी अतो लुकि कृते लुगर्थो । अन्यथा हि अतो लुगपवादः *क्यलुग्विज्ञायेत ।

---

॥—दिदरिद्रिषतीति । नन्वत्र 'इडेत्पुसि च'–इत्यनेन आलुकि दिदरिद्रिषतीत्येव भविष्यति किं सन सादिविशेषणेन । सत्यम् । सादि विना 'इडेत्'–इति असनूणकचिति विशेषानिषेधो बध्नीयात् ॥—व्यञ्जनादे—॥—अब्रवीदित्यादौ ईत परत्वेऽपि सन्निपातन्यायाद्देर्न लुक् । अजागरित्यादिषु तु नानिष्टार्थेति न्यायात् सन्निपातन्यायो न प्रवृत्त ॥—अवावगिति । 'संयोगस्यादौ'–इति सलुकोऽसत्त्वेऽपि देरनन्तरस्य विज्ञानात्पाश्चात्यसस्य दो न भवति । अत्र व्यञ्जनादिति भणनाद्दिर्ह्यस्तन्या एव सभवति ॥--सेः स्द्धां—॥—उत्वादिकार्यमिति । आदिशब्दात् 'रोर्य.' इत्यादि ॥—योऽशिति ॥—जंगमितेति । यद्यत्र सस्वरस्य यस्य लुक् स्यात्तदा जगमित इत्यादौ 'गमहन'–इत्युपान्त्यलोप स्यात् । स्थिते त्वस्य स्थानित्वाद्व्यवधायकत्वम् । ॥—क्यो वा ॥—क्यलुक् विज्ञायेतेति । फल च स्थानिवद्भावेऽस्य अदपदि अपापचि इत्यादौ न वृद्धि । सस्वरयकारलोपे तु स्थानित्व न स्यात् समुदायलोपात् । नापि 'न वृद्धिश्च'–

एवं पूर्वत्रापि ॥ ८१ ॥ *अतः ॥ ४ । ३ । ८२ ॥ अकारान्ताद्धातोर्विहितेऽशिति प्रत्यये तस्यैव धातोर्लुगन्तादेशो भवति । कथयति । कुषुभ्यति । मगध्यति । *चैकीर्षितः । प्रचिकीर्ष्य । समिध्यिष्यति । दृषद्यिष्यते । अत इति विहितविशेषणादिह न भवति । गतः । गतवान् । ततः । ततवान् । अत इति किम् । याता । वाता । अशितीत्येव । चिकीर्षेत । लोलूयेत । चिकीर्ष्यते चिकीर्ष्यादित्यादौ लोपविधेर्बलीयस्त्वात् 'दीर्घश्च्वि'–( ४-३-१०८ ) इत्यादिना दीर्घो न भवति । *विषयविज्ञानाद्वा प्रागेव लोपः ॥ ८२ ॥ णेरनिटि ॥४।३।८३॥ अनिट्यशिति प्रत्यये णेर्लुग् भवति । अततक्षत् । अररक्षत् । आटिटत् । आशिशत् । कारणा । हारणा । कारकः । हारकः । कार्यते । हार्यते । प्रकार्य । इय्युव्गुणवृद्धिदीर्घेतागमानां बाधकोऽयम् । अनिटीति विषयसप्तम्यपि तेन चेतन इत्यत्र प्रागेव णेर्लोपे 'इङितो व्यञ्जनाद्यन्तात्'(५-२-४४) इति अन सिद्धः । अनिटीति किम् । कारयिता । हारयिता । अशितीत्येव । कारयति । हारयति ॥८३॥ *सेट्क्तयोः ॥ ४ । ३ । ८४ ॥ सेट्क्तयोः क्तयोः परतो णेर्लुग् भवति । कारितः । कारितवान् । हारितः । हारितवान् । गणितः । संज्ञपितः पशुः । सेडिति किमर्थम् । इटि कृते लोपो यथा स्यात् । शाकितः । शाकितवान् । अन्यथेह इट् न स्यात् ॥ ८४ ॥ आमन्ताल्वाय्येत्नावय् ॥ ४ । ३ । ८५ ॥ आम् अन्त आलु आय्य इत्नु इत्येतेषु परेषु णेरयादेशो भवति । लुकोऽपवादः । कारयांचकार । गणयांचकार । गण्डयन्तः । मण्डयन्तः । स्पृहयालुः । गृहयालु । स्पृहयाय्य । महयाय्यः । स्तनयित्नुः । गदयित्नुः । अन्तार्येत्नव औणादिकाः ॥८५॥ *लघोर्यपि ॥४।३।८६॥ लघोः परस्य णेर्यपि परेऽयादेशो भवति । प्रशमय्य । प्रबेभिदय्य । लघोरिति किम् । प्रतिपाद्य गतः । वचनसामर्थ्यादेकेन वर्णेन व्यवधानमाश्रीयते न तु भूतपूर्वन्यायः *अत इत्यकरणात् ॥८६॥ वाप्नोः ॥४।३।८७॥ आप्नोतेः परस्य णेर्यपि परेऽयादेशो वा भवति । प्रापय्य गतः । प्राप्य गतः । श्नुनिर्देशादिङादेशस्य न भवति । अध्याप्य गत । आप्लृंण् लम्भने इत्यस्यापीच्छन्त्यन्ये ॥८७॥ *मेङो वा मित् ॥४ । ३ । ८८॥ मेङो यपि परे मिदादेशो वा भवति । अपमित्य । अपमाय ॥८८॥ *क्षेः क्षी ॥४।३।८९॥ क्षेर्यपि परे क्षी आदेशो भवति । प्रक्षीय । उपक्षीय । *निरनुबन्धनिर्देशात्

इति वृद्धिनिषेधः तत्र नामिन इत्यधिकारात् । तथा अवध्वसते विच् । अवध्वसमिच्छति क्यन् । तत क्तप्रत्यये अवध्वसित इत्यस्य अकारस्य स्थानित्वात् 'नो व्यञ्जन'–इति नस्य न लुक् । सस्वरस्य तु क्यनो लोपे स्वरव्यञ्जनविधित्वात् 'स्वरस्य परे'–इति स्थानित्वाभावान्नस्य लुक् स्यादेव । तथा 'अत' इत्यकारलोपे स्थानिवद्भावे समिधिष्यतीत्यादिष्वपि गुणाद्यभाव सिद्ध । सस्वरक्यलोपे तु न सिध्येत् ॥—अत ॥—चैकीर्षित इति । क्ते चिकीर्षित प्रज्ञाद्यणि चैकीर्षित ॥—विषयविज्ञानाद्वेति । लोपात्स्वरादेश इत्याशङ्क्याह ॥—णेरनिटि ॥—अन सिद्ध इति । अन्यथाऽनेकस्वरत्वात् 'निन्दहिंस'–इति णक एव स्यात् ॥—सेट्क्तयो ॥—इट् न स्यादिति । एकस्वरत्वात् 'एकस्वरादनुस्वार'–इति इण्निषेधात् । न च वाच्यमेकस्वराद्विहिताभावादेवेहेट्निषेधो न भविष्यति किमर्थमिदमुक्तमिति । यतो विषय एव णिलोपापेक्षयेद द्रष्टव्यम् ॥—लघोर्यपि ॥—प्रबेभिदय्येति । प्रबेभिद्यमान प्र० यङन्ताण्णिग् न यङ्लुबन्तात् । 'अत' इत्यलोपे 'योऽशिति' यलुप् अस्य स्थानित्वाद्गुणाभाव । प्रबेभिदन पूर्वम् । यङ्लुबन्ताद्धि णिगि गुण स्यात् । 'न वृद्धिश्च'–इति न यङ पूर्वं लोपाद्भूतपूर्वन्याय इति । ननु वचनादेकवर्णव्यवधान तदाश्रीयते यदा व्यवहितो न सम्भवति । अत्र तु चुराद्यदन्तेषु प्रबेभिदय्येत्यत्र यङोऽकारलोपे च भूतपूर्वगत्याऽव्यवहितोऽपि सम्भवतीत्याह —अत इत्यकरणादिति ॥—मेङो—॥ अत्र मिदादेशेऽपि 'ह्रस्वस्य त' तान्त सिध्यति लाघवार्थं तु मिदादेश ॥—क्षेः क्षी ॥—निरनुबन्धनिर्देशादिति । अत्र पूर्वाचार्यप्रसिद्धानुबन्धग्रहात् क्षित् निवासे इत्यस्याऽपि प्रा

क्षिपश् हिंसायामित्येतस्य न भवति । प्रक्षित्य । अस्यापि ग्रहणमिसन्ये ॥ ८९ । क्षय्यजय्यौ शक्तौ ॥ ४ । ३ । ९० ॥ क्षि जि इत्येतयोः शक्तौ गम्यमानायां यप्रत्ययेऽयन्तादेशो निपात्यते । शक्यः क्षेतुं क्षय्यो व्याधिः । शक्यं क्षेतुं क्षय्यं वटुना । शक्यः जेतुम् जय्यः शत्रुः । शक्यं जेतुं जय्यं राज्ञा । शक्ताविति किम् । अर्हे क्षेयम् , जेयम् ॥ ९० ॥ क्रय्यः क्रयार्थे ॥ ४ । ३ । ९१ ॥ क्रीणातेर्यप्रत्ययेऽयन्तादेशो निपात्यते 'क्रयार्थ' क्रयाय चेत्प्रसारितोऽभिधेयो भवति । क्रय्यो गौः । क्रय्यः कम्बलः । क्रयार्थ इति किम् । क्रेयं नो धान्यम् न चास्ति प्रसारितम् ॥ ९१ ॥ *स्सस्तस्सि ॥ ४ । ३ । ९२ ॥ अशितीत्यनुवर्तते । धातोः सकारान्तस्याशिति सकारादौ प्रत्यये विषयभूते तकारोऽन्तादेशो भवति । वस् वत्स्यति । अवत्स्यत् । अवात्सीत् । वत्सीष्ट चैत्रेण । व्यतिवत्सीष्ट । विवत्सति । अद् जिघत्सति । घस् , घत्स्यति । व्यतिघत्सीष्ट । स इति किम् । यक्षीष्ट । यक्ष्यति । सीति किम् । वसिषीष्ट । वसिष्यते । आशितीत्येव । आस्से । वस्से । विषयसप्तमीविज्ञानात् 'अवात्ताम् अवात्तेत्यत्र प्रागेव सस्य तकार' ॥ ९२ ॥ दीय् दीङः क्ङिति स्वरे ॥ ४ । ३ । ९३ ॥ दीङः क्ङित्यशिति स्वरे परे दीयादेशो भवति । उपदिदीये । उपदिदीयाते । उपदिदीयिरे । उपदिदीयिध्वे । उपदिदीयिढ्वे । उपदिदीयानः । दीङो ङित्करणं यङ्लुप्निवृत्त्यर्थम् । उपदेदीतः । क्ङितीति किम् । उपदानम् । स्वर इति किम् । उपदेदीयते । परोक्षायामिति सिद्धे क्ङिति स्वरे इत्युत्तरार्थम् ॥ ९३ । 'इडेत्पुसि चातो लुक् ॥ ४ । ३ । ९४ ॥ क्ङित्यशिति स्वरे इटि एकारे पुसि च परे आकारान्तस्य धातोरन्तस्य लुग् भवति । पपतु । पपुः । ङित्, अदधत् । आह्वत् । संस्था । 'प्रपा । इट् , पपिथ, तस्थिथ । यङ्लुपि, दादितुम् । दादितव्यम् । एत् , व्यतिरे । व्यतिले । पुस् , उदगुः । अदुः । अयुः। अरुः । अलुः। क्ङितीत्येव । दानम् । ददौ । अशितीत्येव । यान्ति । वान्ति । व्यत्यरे । व्यत्यले । स्वर इत्येव । ग्लायते । अक्ङिदर्थं शिदर्थं चेडादिग्रहणम् ॥ ९४ ॥ संयोगादेर्वाशिष्येः ॥ ४ । ३ । ९५ ॥ धातोः संयोगादेराकारान्तस्य क्ङित्याशिषि परेऽन्तस्यैकारादेशो वा भवति । ग्लेयात् । ग्लायात् । म्लेयात् । म्लायात् । अपच्छायादित्यत्र तु छकारस्य द्वित्वे सति संयोगादित्वस्य लाक्षणिकत्वान्न भवति । संयोगादेरिति किम् । यायात् । धातोरित्येव । निर्यायात् । क्ङितीत्येव । ग्लासीष्ट । आशिषीति किम् । ग्लानः । म्लानः ॥ ९५ ॥ 'गापास्थासादामाहाकः ॥ ४ । ३ । ९६ ॥ एषामन्तस्य क्ङित्याशिष्येकारो भवति । गै, गेयात् । गास्थोर्मध्ये पाठाद् भौवादिकयोः पै पा इत्येतयोः पाशब्देन ग्रहणम् । पेयात् । पै इत्यस्य 'नेच्छन्त्यन्ये । आदादिकस्य पायात् । स्था, स्थेयात् । सो सैं वा, अवसेयात् । सै क्षये इत्यस्य नेच्छन्त्यन्ये । दासंज्ञ, देयात् । धेयात् । मांक् मेयात् । हांक् हेयात् । हाकः ककारो यङ्लुप्निवृत्त्यर्थः । जहायात् । शेषाणां यङ्लुप्यपि भवति । जागेयात् । पापेयात् । तास्थेयात् । अवसासेयात् । दादेयात् । दाधेयात् । मामेयात् । एषामिति किम् । यायात् । क्ङितीत्येव । गासीष्ट । पासीष्ट ॥ ९६ ॥

---

॥—सस्तः सि ॥—अवात्तामिति । न च सिचो लुपः स्थानित्वाद्भविष्यति इति वाच्यम् । यत सकारे त उक्त सस्य वर्णविधित्वात् ॥—इडेत्पुसि—॥—प्रपेति । प्रपीयत इति 'उपसर्गादात' इत्यङ् । यदा तु प्रपिबन्त्यस्यामिति वाक्ये स्थादिभ्य कस्तदा किद्द्वारमेव ॥—गापास्था—॥ गाङ्मेङ्माङः यङ्लुबन्ताना ग्रह । अन्यथामीपामात्मनेपदित्वात् किदाशीर्न सभवति ॥—नेच्छन्त्यन्ये इति ।

'ईर्व्यञ्जनेऽयपि ॥४।३।९७॥ गादीनामन्तस्य यपूर्वर्जिते क्ङिन्त्यशिति व्यञ्जनादौ प्रत्यये परे ईर्भवति। गैं गाङ् वा, गीयते । जेगीयते । गीतः। गीतवान् । गीत्वा । गाङो नेच्छन्त्यन्ये । पा, पीयते । पेपीयते । पीतः । पीतवान् । पीत्वा । स्था, स्थीयते । तेष्ठीयते । सो, सीयते । सेषीयते । सै, सीयते । सेसीयते । अपोपदेशत्वान्न षत्वम् । दासंज्ञ, दीयते । देदीयते । धीयते । देधीयते । धीतः । धीतवान् । धीत्वा स्तनम् । मा इति मामाङ्मेङां त्रयाणां ग्रहणम् । मीयते । मेमीयते । मातर्नेच्छन्त्यन्ये । मायते । मामायते । एवं पूर्वसूत्रेऽपि । मायात् । हांक्, हीयते । जेहीयते । हीनः । हीनवान् । 'हाङो न भवति । हायते । जाहायते । व्यञ्जन इति किम् । तस्थतुः । तस्थुः । अशितीत्येव । माहि । क्ङितीत्येव । गाता । दाता । अयपीति किम् । प्रगाय । प्रपाय । प्रस्थाय । प्रदाय । प्रधाय । प्रमाय । प्रहाय । कथमापीय, पीङो भविष्यति । स्वरादावन्तलोपविधानाद्व्यञ्जनादौ लब्धे व्यञ्जनग्रहणं साक्षाद्व्यञ्जनप्रतिपत्त्यर्थम् । तेन क्विब्लुकि स्थानिवद्भावेनापि न भवति 'शंस्थाः पुमान् ॥ ९७ ॥ घ्राध्मोर्यङि ॥ ४ । ३ । ९८ ॥ घ्राध्मोर्यङि परे ईकारोऽन्तादेशो भवति । जेघ्रीयते । देध्मीयते । यङीति किम् । घ्रायते । ध्मायते । यङ्लुपि, जाघ्रीतः । दाध्मीत । अन्ये तु यङ्लुप्यपीच्छन्ति । जेघ्रीत । देध्मीतः ॥ ९८ ॥ *हनो घ्नीर्वधे ॥ ४ । ३ । ९९ ॥ हन्तेर्वधे हिंसायां वर्तमानस्य यङि घ्नी इत्यादेशो भवति । जेघ्नीयते । द्विषो जेघ्नीयिषीष्ट वः । वध इति किम् । गतौ, जंघन्यते । केचिदिमं विकल्पेनाहुः । त्वं तु राजन् चटकमपि न जंघन्यसे । दीर्घनिर्देशात् *यङ्लुप्यपि । जेघ्नीत. । नेच्छन्त्यन्ये जंघन्त इति भवति ॥ ९९ ॥ *ञ्णिति घात् ॥ ४ । ३ । १०० ॥ ञ्णिति प्रत्यये परे हन्तेर्घात् इत्ययमादेशो भवति । घातः । घातयति । घातकः । साधुघाती । घातंघातम् । ञ्णितीति किम् । हतः ॥ १०० ॥ *ञिणवि घन् ॥ ४ । ३ । १०१ ॥ ञौ णवि च प्रत्यये परे हन्तेर्घन् इत्ययमादेशो भवति । अघानि । जघान । अहं जघन । अहं जघान ॥ १०१ ॥ नशेर्नेश् वाङि ॥ ४ । ३ । १०२ ॥ नशेरङि परे नेश् इत्ययमादेशो वा भवति । अनेशत् । अनशत् । अनेशताम् । अनशताम् । अनेशन् । अनशन् । अनेशम् । अनशम् । अङीति किम् । नश्यति ॥ १०२ ॥ *श्वयत्यसूवचपतः श्वास्थवोचपप्तम् ॥ ४ । ३ । १०३ ॥ श्वयति असू वच् पत् इत्येतेषामङि परे श्व अस्थ वोच पप्त इत्येते आदेशा भवन्ति । अश्वत् । अश्वताम् । अश्वन् । अश्वः । असू, आस्थत् । आस्थताम् । आस्थन् । अपास्थत । अपास्थेताम् । अपास्थन्त । वच् ब्रूग् वा, अवोचत् । अवोचताम् । अवोचन् । अवोचत । पत्, अपप्तत् । अपप्तताम् । अपप्तन् । श्वयतेस्तिव्निर्देशो 'यङ्लुप्निवृत्त्यर्थ. । अशेश्वियत् । अशोशुवत् ॥ १०३ ॥ शीङ एः शिति ॥ ४ । ३ । १०४ ॥ शीङः शिति परे एकारोऽन्तादेशो भवति । शेते । शयाते । शेरते । शेताम् । शयीत । अशेत । शयानः । अतिशयान । शितीति किम् । शिश्ये । संशीतिः । ङिन्निर्देशाद्यङ्लुपि

लाक्षणिकत्वादिति शेष ॥—ईर्व्यञ्जने—॥—हाङो न भवतीति 'हाक' इति भणनात् ॥—शंस्था इति । शं सुखं तत्र तिष्ठति 'शमो नाम्न्य' इति अप्रत्ययापवादे 'स्थापास्ना'—इति के प्राप्तेऽसरूपत्वात् क्विप् । शंस्थाशब्दादन्यत्र लुप्तव्यञ्जनेऽपीच्छन्त्येके । तथा च जयकुमार पा पाने इत्यस्य क्विपि पीरित्याह ॥—हनो—॥—यङ्लुप्यपीति । यदि पूर्वसूत्रवत् यङ्येव स्यात्तदा घ्निरित्येव कुर्यादीर्घसिद्धावित्यर्थ ॥—ञिणवि—॥ 'अडे हिहन'—इति सिद्धो णव्ग्रहण घात्बाधनार्थम् ॥—श्वयत्यसू—॥—यङ्लुप्निवृत्त्यर्थ इति । अन्येषां तु यङ्

न भवति । शेशीतः । शेश्यति ॥ १०४ ॥ क्ङिति यि शय् ॥ ४ । २ १०५ ॥ शीङः क्ङिति यकारादौ प्रत्यये शयादेशो भवति । शय्यते । शाशय्यते । संशय्य । शय्या । यीति किम् । शिश्यानः । क्ङितीति किम् । शेयम् । यङ्लुपि न भवति । संशेशीय ॥ १०५ ॥ उपसर्गादूहो ह्रस्वः ॥ ४ । ३ । १०६ ॥ उपसर्गात्परस्योहतेरूकारस्य क्ङिति यकारादौ प्रत्यये परे ह्रस्वो भवति । समुह्यते । समुह्याद् । समुह्य । पर्युह्यते । पर्युह्यात् । पर्युह्य । अभ्युह्यते । अभ्युह्यात् । अभ्युह्य । उपसर्गादिति किम् । ऊह्यते । यीत्येव । समूहितम् । क्ङितीत्येव । अभ्यूह्योऽयमर्थः । ऊ ऊह इति ऊकार प्रश्लेषात् आ ऊह्यते ओह्यते समौह्यतेत्यत्र न भवति ॥ १०६ ॥ आशिषीणः ॥ ४ । ३ । १०७ ॥ उपसर्गात्परस्येण ईकारस्य क्ङिति यकारादावाशिषि परतो ह्रस्वो भवति । उदियात् । समियात् । अन्वियात् । उत्तरेण दीर्घत्वेऽनेन ह्रस्वः । आशिषीति किम् । उदीयते । उपसर्गादित्येव । ईयात् । ई इण इति ईकारप्रश्लेषात् आ ईयात् एयात् समेयादित्यत्र न भवति । ननु प्रतीयादित्यत्र समानलक्षणे दीर्घे सति कथं न ह्रस्वः । न । दीर्घे सति उपसर्गात्परस्य इणोऽभावात् । केचित् अत्रापीच्छन्ति । प्रतियात् । इकोऽपि समानदीर्घत्वे इच्छन्त्येके । अधियात् ॥ १०७ ॥ दीर्घश्च्वियङ्यक्क्येषु च ॥ ४।३।१०८ ॥ च्वौ यङि यकि क्येषु यकारादावाशिषि च परतोऽन्त्यस्वरस्य दीर्घो भवति । च्वि, शुचीकरोति । शुचीभवति । शुचीस्यात् । पटूकरोति । पटूभवति । पटूस्यात् । यङ् चेचीयते । तोष्टूयते । यक् मन्तूयति । वल्गूयति । बहुवचनात् क्यशब्देन क्यन्क्यङ्क्यङ्ष्क्यानामविशेषेण ग्रहणम् । अन्यथैकानुबन्धस्यैव क्यस्य ग्रहणं स्यात् । क्यन्, निधीयति । दधीयति । क्यङ्, श्येनायते । भृशायते । क्यङ्ष्, लोहितायते । लोहितायति । क्य, चीयते । श्रूयते । आशिषि यि, चीयात् । स्तूयात् । ईयात् । आशिषि यीत्येव । चेषीष्ट । च्विक्यानां ग्रहणादधातोरप्ययं विधिः ॥१०८॥ ऋतो री ।८।३।१०९॥ धातोरधातोर्वा ऋदन्तस्य श्रुतत्वादृतः स्थाने रीरित्ययमादेशो भवति च्वियङ्यक्क्येषु । पित्रीकरोति । पित्रीभवति । पित्रीस्यात् । चेक्रीयते । जेह्रीयते । पित्रीयाति । मात्रीयति । पित्रीयते । मात्रीयते । ऋत इति किम् । चेकीर्यते । निजेगिल्यते ॥१०९॥ रिः शक्याशीर्ये ॥८।३।११०॥ ऋकारान्तस्य धातोर्ऋतः स्थाने शे क्ये आशीर्ये च परे रिरादेशो भवति । श व्याम्रियते । आद्रियते । क्रिया । क्रियते । ह्रियते । क्रियात् । ह्रियात् । ह्रस्वविधानात्पूर्वेण दीर्घत्वं न भवति । आशीर्य इति किम् । कृषीष्ट । हृषीष्ट ॥ ११० ॥ ईश्च्वाववर्णस्यानव्ययस्य ॥ ४ । ३ । १११ ॥ अव्ययवर्जितस्यावर्णान्तस्य च्वौ प्रत्यये ईकारोऽन्तादेशो भवति । शुक्लीकरोति । शुक्लीभवति । शुक्लीस्यात् । मालीकरोति । मालीभवति । मालीस्यात् । अनव्ययस्येति किम् । दिवाभूता रात्रिः । दोषाभूतमहः । दीर्घत्वापवादो योगः ॥१११॥ क्यनि ॥४।३।११२॥ क्यनि परेऽवर्णान्तस्येकारोऽन्तादेशो भवति । दीर्घत्वापवादः । पुत्रीयति । मालीयति । योगविभाग उत्तरार्थः ॥ ११२ ॥ क्षुत्तृड्गर्धेऽशनायोदन्यधनायम् ॥ ४

लुपि मूलप्रयोगा एव ॥—उपसर्गादूह—॥—प्रश्लेषादिति । ऊकारात्षष्ठ्या सूत्रत्वाल्लुप् ऊहश्च षष्ठी एव प्रश्लेषः । एवमुत्तरसूत्रेऽपि इण इत्यत्र ॥—आशिषीण' ॥—इणोभावादिति । धात्वभावादित्यर्थ ॥—अत्रापीच्छन्ति । ते तूभयो स्थाने इति धातुव्यपदेशमेकदेशेऽपि समुदाय इति प्रत्युपसर्गं च कुर्वते ॥—दीर्घश्च्वि—॥ च्व्यन्तत्वात्से 'अव्ययस्य' इति लुप् ॥—रिः शक्य—॥—दीर्घत्वं न भवतीति । अन्यथा पूर्वेणापि साध्येत ॥—क्यनि ॥ अव्ययात् क्यनोऽभावादनव्ययस्येति न विवृतम् ॥—

॥ ३ । ११३ ॥ क्षुदादिष्वर्थेषु यथासंख्यमशनायादयः क्यन्नन्ता निपात्यन्ते । क्षुधि गम्यमानायामशनशब्दस्यात्वम्, तृषि गम्यमानायामुदकशब्दस्योदन्नित्ययमादेशो, गर्धे गम्यमाने धनशब्दस्यात्वम् क्यनि परे निपात्यते । अशनायति । उदन्यति । धनायति । क्षुत्तृड्गर्ध इति किम् । अशनीयति, उदकीयति, धनीयति दानाय ॥ ११३ ॥ * वृषाश्वान्मैथुने स्सोऽन्तः । ४ । ३ ॥ ११४ ॥ वृषशब्दादश्वशब्दाच्च मैथुने वर्तमानात् क्यनि परे स्सकारो भवति स चान्तोऽवयवः । वृषस्यति गौः । अश्वस्यति वडवा । वृषाश्वशब्दावत्र मैथुने वर्तेते । मनुष्यादावपि हि प्रयुज्येते । मैथुनेच्छापर्यायौ वृषस्याश्वस्येति । "सा क्षीरकण्ठकं वत्सं वृषस्यन्ती न लज्जिता' ॥ शुनी गौश्च स्वमश्वस्यति । लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवागमत् । मैथुन इति किम् । वृषीयति, अश्वीयति ब्राह्मणी । स्स इति द्विसकारनिर्देशः षत्वनिषेधार्थः । तेनोत्तरत्र दधिस्यति मधुस्यतीत्यत्र *षत्वं न भवति ॥ ११४ ॥ * अस् च लौल्ये ॥ ४ । ३ । ११५ ॥ भोक्तुमभिलाषातिरेको लौल्यम् । तत्र गम्यमाने क्यनि परे नाम्नः स्सोऽस् चान्तो भवति । * दधि भक्षितुमिच्छति ' दधिस्यति । दध्यस्यति । मधुस्यति । मध्वस्यति । एवं क्षीरस्यति । लवणस्यति । अस्विधानमनकारान्तार्थम् । अकारान्तेषु हि ' लुगस्यादेत्यपदे ' ( २-१-११२ ) इति लुकि सति विशेषो नास्ति । अन्यस्तु लुकमनृष्यमाणः क्षीरास्यति लवणास्यति इत्युदाहरति । तच्च न बहुसमतम् । लौल्य इति किम् । क्षीरीयति दानाय ॥ ११५ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ चतुर्थस्याध्यायस्य तृतीयः पादः ॥ ॥ कर्णं च सिन्धुराजं च निर्जित्य युधि दुर्जयम् ॥ श्रीभीमेनाधुना चक्रे महाभारतमन्यथा ॥ १ ॥ ॥

---

वृषाश्वान् । मैथुनेच्छाया वर्त्तमानौ क्व दृष्टावित्याह ॥—सा क्षीरकण्ठकं वत्समित्यादि । अन्तशब्दाभावे सर्पिष्प्यतीत्यत्रोत्तरेण सागमे तस्य च प्रत्ययत्वात् ' नाम सित् '–इत्यनेन सर्पिस्शब्दस्य पदत्वे सो रुत्व स्यात्तस्य ' शपसे शषस वा ' इति वा रस्य सत्वे सर्पिःस्यति सर्पिस्स्यतीति रूपद्वय स्यात् अन्तसद्भावे त्ववयवत्वेनाविभक्त्यन्तात्सकारस्योत्पादे पदमध्यत्वात्प्रकृतिसस्य ' नाम्यन्त '–इति षत्वे ' सस्य शषौ ' इति प्रत्ययसस्य षत्वे सर्पिष्ष्यतीति स्यात् ॥—षत्वं न भवतीति । दधिस्यतीत्यादिप्रयोगदृष्टे प्रसिद्धस्येन ' नाम्यन्तस्था '–इति षत्वस्य निषेधस्तेन सर्पिष्प्यतीत्यादावागमसकारस्य ' सस्य शषौ ' इत्यनेन षत्व सिद्धम् ॥—अस्च—॥—दधि भक्षितुमिच्छतीति । केचिल्लक्षीस्थाने भक्षीति पठन्ति तन्मतेनेट्, चुरादीना णिचोऽनित्यत्वाद्वा ॥—दधिस्यतीति । द्विसकारपाठात् ' नाम्यन्तस्था '–इति न षत्वम् । पय इच्छति क्यनियमेन पदसज्ञाकार्याणा व्यावर्त्तितत्वात् । पयसस्यति चर्मणस्यति । स्से तु सति पयस्स्यति चर्म्मस्यति ॥ ॥ इत्याचार्यश्रीहेमचन्द्र० श्रीसिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ न्यासस्य चतुर्थाध्यायस्य तृतीयः पादः समाप्तः ॥

# ॥ अथ चतुर्थः पादः ॥

* अस्तिब्रुवोर्भूवचावशिति ॥ ४ । ४ । १ ॥ अस्तिब्रुवोर्यथासंख्यं भू वच् इत्येतावादेशौ भवतः अशिति प्रत्यये विषयभूते । अभूत् । बभूव । भविता । भूयात् । अभविष्यत् । भविष्यति । बोभूयते । बुभूषति । भवितव्यम् । भवितुम् । ब्रू, अवोचत् । उच्यते । उवाच । ऊचे । वक्ता । उच्यात् । वक्षीष्ट । अवक्ष्यत् । अवक्ष्यत । वक्ष्यति । वक्ष्यते । वावच्यते । विवक्षति । विवक्ष्यते । वक्तव्यम् । वक्तुम् । ब्रूंग्कोऽनुस्वारेत्त्वाद्वच इडभावः । कथं लावण्य उत्पाद्य इवास यत्नः । असतेरयं प्रयोगः । ईक्षामासेसादौ णवन्तानुप्रयोगप्रतिरूपकनिपातस्य वा । अशितीति किम् । अस्ति । स्यात् । अस्तु । आसीत् । सन् । ब्रवीति । ब्रूते । ब्रूयात् । ब्रवीतु । अब्रवीत् । ब्रुवन् । ब्रुवाणः । विषयसप्तमीनिर्देशः किम् । भव्यम् । वाच्यम् । प्रागेवादेशे यघ्यणौ सिद्धौ । चकासामासेत्यादौ तु अनुप्रयोगे कृभ्वस्तीनां पृथग्*निर्देशात् न भवति । अस्तीति निर्देशादस्यतेरसतेश्च न भवति । धात्वन्तरेणैव सिद्धेऽस्तिब्रुवोरशिति प्रयोगनिवृत्त्यर्थं वचनम् ब्रूगादेशस्य फलवत्यात्मनेपदार्थं च ॥ १ ॥

* अघञ्क्यबलच्यजेर्वी ॥ ४ । ४ । २ ॥ घञ्क्यब्अलूअच्वर्जितेऽशिति प्रत्यये * विषयभूतेऽजेर्वी इत्यादेशो भवति । अनुस्वारेदिडभावार्थः । विवाय । वीयात् । प्रवेता । प्रवेयम् । प्रवयणीयम् । प्रवायकः । प्रवीय । प्रवीतः । प्रवीतिः । अघञ्क्यबलचीति किम् । समाजः । उदाजः । समज्या । समजः पशूनाम् । उदजः पशूनाम् । अजतीत्यजः । अजा ॥ २ ॥ त्रने वा ॥ ४ । ४ । ३ ॥ तृ अन इत्येतयोः प्रत्यययोर्विषयभूतयोरजेर्वी इत्यादेशो भवति वा । प्रवेता । प्राजिता । प्रवयणो दण्डः । प्राजनो दण्ड । अन्ये त्वने प्रत्यये यकाररहिते व्यञ्जनादौ चाविशेषेण विकल्पमिच्छन्ति । प्रवेता । प्राजिता । प्रवेष्यति । प्राजिष्यति । प्रविवीषति । प्राजिजिषति । प्रवेतव्यम् । प्राजितव्यम् । प्रवेतुम् । प्राजितुम् ॥ ३ ॥ चक्षो वाचि क्शांग् ख्यांग् ॥ ४ । ४ । ४ ॥ चक्षिको वाचि वर्तमानस्याशिति प्रत्यये विषयभूते क्शांग् ख्यांग् इत्यादेशौ भवतः । अनुस्वारेदिडभावार्थः । आक्शाता । आख्शाता । 'शिटयाद्यस्य द्वितीयो वा' (२-३-५९) इति ककारस्य खकारः । आख्याता । आक्शास्यति । आख्शास्यति । आख्यास्यति । आक्शास्यते । आख्शास्यते । आख्यास्यते । आक्शेयात् । आक्शायात् । आख्शेयात् । आख्शायात् । आख्येयात् । आख्यायात् । एवमाचाक्शायते । आचाख्यायते । आक्शातव्यम् । आख्यातव्यम् । विषयसप्तमीविज्ञानात् आक्शेयम् । आख्येयम् । वाचीति किम् । बोधे, विचक्षणः । चक्षुः । वर्जने, संचक्ष्यते । अवसंचक्ष्याः परिसंचक्ष्या दुर्जनाः । संचक्ष्य गतः । हिंसायाम्, नृचक्षी राक्षसः । अशितीत्येव । आचष्टे । गकारः फल-

॥ अर्ह ॥—अस्तिब्रुवो—॥—निर्देशान्न भवतीति । अन्यथा कृभ्वोरेव द्वयोरुपादानं कुर्यात् ॥—अघञ्—॥—विषयभूते इति । विषयविज्ञानाद्वाडि वेवीयते प्रवेयमित्यत्र च

ग्धादेशे सिद्धे यप्ग्रहणमन्तरङ्गानपि विधीन् यबादेशो बाधते इति ज्ञापनार्थम् । तेन प्रशम्य प्रपृच्छ्य प्रदीव्य प्रखन्य प्रस्थाय प्रपाय प्रदाय प्रधाय प्रपठ्येत्यादौ दीर्घत्वं शत्वमूत्वमात्वमित्वमीत्वं हित्वमिद्त्वं यपा बाध्यते ॥ १६ ॥ *घस्लृ सनद्यतनीघञचलि ॥ ४ । ४ । १७ ॥ एषु प्रत्ययेष्वदेर्घस्लृ इत्ययमादेशो भवति । सन्, जिघत्सति । अद्यतनी, अघसत् । घञ्, घासः । अच्, प्रात्तीति प्रघसः । अल्, प्रादनं प्रघसः । घस्लृ अदने इत्यनेनैव सिद्धेऽदेः सन्नादिषु रूपान्तरनिवृत्त्यर्थं वचनम् । लृदङर्थः ॥ १७ ॥ परोक्षायां नवा ॥ ४ । ४ । १८ ॥ परोक्षायां परतोऽदेर्घस्लादेशो वा भवति । जघास । जक्षतुः । जक्षुः । आद । आदतुः । आदुः । घस्यादिभ्यामेव सिद्धे विकल्पवचनं घसेरसर्वविषयत्वज्ञापनार्थम् । तेन घस्ता घस्मर इत्यादावेव घसेः प्रयोगो भवति ॥ १८ ॥ *वेर्वय् ॥ ४ । ४ । १९ ॥ वेगो धातोः परोक्षायां वयित्ययमादेशो वा भवति । उवाय । ऊयतुः । *ऊयुः । *ववौ । ववतुः *ववुः ॥ १९ ॥ *ॠः शॄदॄपॄः ॥ ४ । ४ । २० ॥ शॄदॄपॄ इत्येतेषां धातूनां परोक्षायां परत ऋकारोऽन्तादेशो वा भवति । विशशार । विशश्रतुः । विदद्रतुः । निपप्रतुः । क्वसौ, विशशृवान् । विदद्रवान् । निपपृवान् । पक्षे विशशार । विशशरतुः । विददरतुः । निपपरतुः । विशिशीर्वान् । विदिदीर्वान् । निपुपूर्वान् ॥ २० ॥ *हनो वध आशिष्यञौ ॥ ४ । ४ । २१ ॥ परोक्षानिवृत्तौ वेति निवृत्तम् । *आशीर्विषये हन्तेर्वध इत्यकारान्तादेशो भवति 'अञौ' ञिविषये तु न भवति । वध्यात् । वध्यास्ताम् । वध्यासुः । आवधिषीष्ट । आवधिषीयास्ताम् । आवधिषीरन् । स्थानिवद्भावेनानुस्वारेत्त्वेऽपि अनेकस्वरत्वादिट्प्रतिषेधो न भवति । अञाविति किम् । घानिषीष्ट ॥ २१ ॥ *अद्यतन्यां वा त्वात्मने ॥ ४ । ४ । २२ ॥ अद्यतन्यां विषये हनो वध इत्ययमादेशो भवति आत्मनेपदे त्वस्या वा भवति । *अवधीत् । अवधिष्टाम् । अवधिषुः । अलोपस्य स्थानिवद्भावेन 'व्यञ्जनादेर्वोपान्त्यस्यातः' ( ४-३-४७ ) इति वृद्धिर्न भवति । 'वा त्वात्मने' आवधिष्ट । आवधिषाताम् । आवधिषत । अवधि । आहत । आहसाताम् । आहसत । अघानि । अद्यतन्यामिति किम् । आजघ्ने ॥२२॥ इणिकोर्गाः ॥४।४।२३॥ अद्यतन्यां विषये इण इकश्च धातोर्गा इत्ययमादेशो भवति । अगात् । अगाताम् । अगुः । अगायि भवता । अध्यगात् । अध्यगाताम् । अध्यगुः अध्यगायि भवता ॥ २३ ॥ *णावज्ञाने गमुः

॥—घस्लृ स—॥—प्रघस इति । अजन्तस्य अदे प्रपूर्वस्यैव घसादेश वदन्ति वृद्धास्तेन माघमध्ये अदद इति प्रयोग सिद्ध । अदन्तीत्यदा । अच् । अदान् भक्षकान् द्यति 'आतो ड'-इति डे अददो विष्णु ॥—वेर्वय्—॥—ऊयुरिति । 'न वयो य्' इत्यनेन यस्य न य्वृत् ॥—ववाविति । 'वेरय' इति न ॥—ववुरिति । 'अविति वा' इति न य्वृत्विकल्पात् । ॥—ॠः शॄ—॥—विशशारेति । ऋकारे कृतेऽपि णवीदशमेव रूप भवतीति निर्णयार्थं णवि दर्शितम् ॥—हनो व—॥—आशीर्विषये इति । अत्र विषयविज्ञानात्पूर्वमेवादेशे वध्यादित्यादौ 'अत' इत्यकारलोप सिद्ध । अन्यथा तत्रापि विहितव्याख्यानात्स न स्यात् । आवधिषीष्टेत्यादौ चेट् सिद्ध. । अन्यथा 'एकस्वरादनुस्वारेत' इत्यत्र विहितव्याख्यानात् तेन निषेध स्यात् । ॥—अद्यतन्यां—॥—अवधीदिति । विषयविज्ञानात्प्रत्ययव्यवधानेऽपि भवति । यथाऽडागम । किंच विषयव्याख्या विनाऽवधीदित्यत्र 'एकस्वरादनुस्वारेत' इत्यनेन विहितव्याख्यानादिट्न स्यात् ॥—इणिको—॥ अत्र विषयव्याख्या विनाऽगादित्यादिषु सिचो लुपि स्यात् न त्वऽगायीत्यत्र ञिचा व्यवधानात् ॥—णावज्ञाने—॥ अत्र विषयविज्ञानेऽजीगमसिद्धमऽन्यथा णौ परे

॥ ४ । ४ । २४ । इणिकोरज्ञाने वर्तमानयोर्णौ विषये गमु इत्ययमादेशो भवति । उकारः ' स्वरहन्गमोः सनि धुटि ' ( ४-१-१०४ ) इत्यत्र विशेषणार्थः । गमयति । गमयतः । गमयन्ति ग्रामम् । अधिगमयति । अधिगमयतः । अधिगमयन्ति प्रियम् । अज्ञान इति किम् । अर्थान् प्रत्याययति । अज्ञान इतीणो विशेषणं नेकोऽसंभवात् । धात्वन्तरेणैव सिद्धे णाविको ज्ञानादन्यत्रेणश्च रूपान्तरनिवृत्यर्थं वचनम् । कथमर्थान् गमयन्ति शब्दाः । गमिनैव सिद्धम् ॥ २४ ॥ सनीङश्च ॥४।४।२५॥ इङ इणिकोश्चाज्ञाने वर्तमानयोः सनि परे गमुरादेशो भवति । अज्ञान इति इण एव विशेषणम् नेकिङोरसंभवात् । इङ्, अधिजिगांसते विद्याम् । इण् , अधिजिगमिषति ग्रामम् । इक्, मातुरधिजिगमिषति । अज्ञान इत्येव । अर्थान् प्रतीषिषति ॥ २५ ॥ गाः परोक्षायाम् ॥ ४ । ४ । २६ ॥ इङः परोक्षायां विषये गादेशो भवति । अधिजगे । अधिजगाते । अधिजगिरे । अधिजगिषे । विषयनिर्देशः किम् । आदेशे सति द्विर्वचनं यथा स्यात् । तेन प्राक्तु स्वरे स्वरविधेरिति नोपतिष्ठते ॥ २६ ॥ *णौ सन्ङे वा ॥ ४ । ४ । २७ ॥ सन्परे ङपरे च णौ परत इङो गादेशो वा भवति । *अधिजिगापयिषति । अध्यापिपयिषति । अध्यजीगपत् । अध्यापिपत् । णाविति किम् । अधिजिगांसते । सन्ङ इति किम् । अध्यापयति ॥ २७ ॥ *वाद्यतनीक्रियातिपत्त्योर्गीङ् ॥ ४ । ४ । २८ ॥ अद्यतनीक्रियातिपत्त्योः परत इङो गीङादेशो वा भवति । *अध्यगीष्ट । अध्यगीषाताम् । अध्यगीषत । अध्यैष्ट । अध्यैषाताम् । अध्यैषत । क्रियातिपत्तिः । अध्यगीष्यत । अध्यगीष्येताम् । अध्यगीष्यन्त । अध्यैष्यत । अध्यैष्येताम् । अध्यैष्यन्त । ङकारो *गुणनिषेधार्थः ॥ २८ ॥ *अड्धातोरादिर्ह्यस्तन्यां चामाङा ॥ ४ । ४ । २९ ॥ ह्यस्तन्यामद्यतनीक्रियातिपत्त्योश्च विषये धातोः *आदिरवयवोऽड् भवति ' अमाङा ' माङा योगे तु न भवति । अकरोत् । अकार्षीत् । अकरिष्यत् । विषयविज्ञानात् प्रत्ययव्यवधानेऽपि भवति । परविज्ञाने हि *अहन्नित्यादावेव स्यात् । अमाङेति किम् । मा भवान् कार्षीत् । मास्म करोत् । अस्मद्विना मा भृशमुन्मनी भूः ॥ धातोरादिरिति किम् । प्राकरोत् ॥ २९ ॥ *एत्यस्तेर्वृद्धिः ॥ ४ । ४ । ३० ॥ इणिकोरस्तेश्चादेः स्वरस्य ह्यस्तन्यां विषये वृद्धिर्भवति अमाङा । *आदेरिति विभक्तिविपरिणामात् । आयन् । अध्यायन् । आस्ताम् । आसन् । अमाङेत्येव । मा स्म भवन्तो यन् । मा स्म भवन्तः सन् । यत्वे लुकि च स्वरादित्वाभावादुत्तरेण वृद्धिर्न प्राप्नोतीति वचनम् । विषयत्वविज्ञानात्परत्वाद्वा प्रागेव वृद्धौ कृतो यत्वाल्लुकोः प्राप्तिरिति चेत् । सत्यम् । इदमेव वचनं ज्ञापकं कृतेऽन्यस्मिन् धातुप्रत्ययकार्ये पश्चाद्वृद्धिस्तद्बाध्योऽड् च भवति । तेन ऐयरुः अध्यैयतेत्यादावियादेशे सति वृद्धिः सिद्धा । अचीकरदित्यादौ च दीर्घत्वम् ।

गमादेशे णो यत्कृत कार्यमिति न्यायाद् इ इति द्विर्वचनं स्यात् ॥—णौ सन्—॥—अधिजिगपयिषतीति । अधीयान प्रयुङ्क्ते णिगि अन्तरङ्गयोरप्यात्वप्वागमयोरऽस्याऽपवादत्वात् अप्रवृत्तौ अध्याययितुमिच्छतीति सनि पाक्षिके गादेशे तदन्यत्रात्वे उभयत्र प्वागमे द्वित्वादौ च सिद्धम् । यद्वा आप्स्थाने गादेशे यावत्सभव इति न्यायात्पुन. पोन्त. ॥—वाद्यतनीक्रि—
॥—अध्यगीष्टेति । अन्तरङ्गत्वात् प्रागेव सिचो गीङ् ॥—गुणनिषेधार्थ इति । न वाच्य विधानसामर्थ्यात् न भविष्यतीति । तदा ह्यऽध्यगायीत्यत्र वृद्धिरपि न स्यात् ॥—अड् धातो—
॥—आदिरवयव इति । अटो धात्वऽवयवत्वे प्रण्यमिमीतेत्यादौ णत्वम् ॥—अहन्नित्यादाविति । आदिशब्दादभोत्स्यत इत्यादौ ॥—एत्यस्ते—॥—आदेरितीति (अथ पूर्वसूत्रे आदिशब्दः प्रथ-

पूर्वमटि तु स्वरादित्वात्तन्न स्यात् । *यत्वाल्लुगपवादश्चायम् । तेनेकः पक्षे यत्वाभावेऽय्यैयन्नित्यत्रेयि सत्युत्तरेणैव वृद्धिर्भवति ॥ ३० ॥ *स्वरादेस्तासु ॥ ॥ ४ । ४ । ३१ ॥ स्वरादेर्धातोरादेः स्वरस्य तास्वद्यतनीक्रियातिपत्तिह्यस्तनीषु विषये आसन्ना वृद्धिर्भवति अमाङा । आटीत् । आशीत् । आटिष्यत् । आशिष्यत् । आटत् । आश्नात् आर्छीत् । आर्छिष्यत् । आर्छत् । ऐषीत् । ऐषिष्यत् । ऐच्छत् । ऐक्षिष्ट । ऐक्षिष्यत । ऐक्षत । ऐधिष्ट । ऐधिष्यत । ऐधत । औब्जीत् । औब्जिष्यत् । औब्जत् । औहिष्ट । औहिष्यत । औहत । ओणृ, औणिणत् । औणिष्यत् । औणत् । इन्द्रमैच्छत् ऐन्द्रीयत् । उस्रामैच्छत् । औस्रीयत् । एणमैच्छत् । ऐणीयत् । ऐश्वर्यमैच्छत् ऐश्वर्यीयत् । ओंकारमैच्छत् औकारीयत् । आ ऊढा ओढा तामैच्छत् औढीयत् । औषधमैच्छत् औषधीयत् । अमाङेत्येव । मा भवानटीत् । मा स्म भवानटत् ॥ ३१ ॥ *स्ताद्यशितोऽत्रोणादेरिट् ॥ ४ । ४ । ३२ ॥ धातोः परस्य सकारादेस्तकारादेश्चाशितः प्रत्ययस्यादिरिड् भवति ' अत्रोणादेः ' त्रस्य उणादेश्च न भवति । अटिटिषति । अलविष्ट । लविषीष्ट । लविष्यति । अलविष्यत् । । लविता । लवितव्यम् । लवितुम् । स्तादीति किम् । त्रस्नुः ।*स्योमा । भूयात् । दीप' । ईश्वरः । विद्वान् । अशित इति किम् । आस्से । आस्ते । अत्रोणादेरिति किम् । शस्त्रम् । योत्रम् । पत्रम् । पोत्रम् । उणादि, वत्सः । अंसः दन्त. । हस्तः ॥ ३२ ॥ *तेर्ग्रहादिभ्यः ॥ ४ । ४ । ३३ ॥ ग्रहादिभ्य एव परस्य स्ताद्यशितस्तेरादिरिट् भवति । तेरिति सामान्येन क्तेस्तिको वा ग्रहणम् । निगृहीतिः । अपस्निहितिः । निकुचितिः । निपठितिः । उदितिः । भणितिः । रणितिः । मथितिः। लिखितिः । कम्पिति· । अन्दोलितिः । बहुवचनमाकृतिगणार्थम् । तेर्ग्रहादिभ्य एवेति नियमादन्यत्र न भवति । शान्तिः । वान्तिः । दीप्तिः । ज्ञप्तिः । स्रस्तिः । ध्वस्तिः । तिकः खल्वपि, *तन्तिः । *सान्तिः । कण्डूतिः । णौ, पाक्तिः याष्टि' । प्रज्ञप्ति· । तेरेव ग्रहादिभ्य इति विपरीतनियमो न भवति । उत्तरत्र ग्रहेः परोक्षायामिटो दीर्घनिषेधात् ॥ ३३ ॥ *गृह्णोऽपरोक्षाया दीर्घ' ॥ ४ । ४ । ३४ ॥ गृह्णातेर्यो विहित इट् तस्य दीर्घो भवति ' अपरोक्षायाम् ' न चेत् स इट् परोक्षाया भवति । ग्रहीता । ग्रहीतुम् । ग्रहीषीष्ट । ग्रहीष्यति । अग्रहीष्यत् । अग्रहीत् । दीर्घस्य स्थानिवद्भावादिट ईतीति सिचो लुग्भवति । न चायं वर्णविधिः । इट इति रूपाश्रयत्वात् । अग्रहीध्वम् । अग्रहीढ्वम् । विहितविशेषणं किम् । यङन्ताद्विहितस्य माभूत् । *जरीगृहिता । जरीगृहितुम् । जरीगृहितव्यम् । लुप्तातिव्निर्देशाद्यङ्लुपि न भवति । जरीगर्हिता । जरीगर्हितुम् । जरीगर्हितव्यम् । अपरोक्षायामिति

---

मान्तस्तत्कथमऽत्र पठ्यन्त इत्याह)-अर्थवशादिति शेष ॥—यत्वाऽल्लुगऽपवादश्चायमिति । अयमर्थ । इणो 'द्विगोरप्विति व्यो' इति नित्य यत्वे प्राप्ते वचन तत्साहचर्यादिकोऽपि ' इको वा ' इति वा यत्वे कर्त्तव्ये बाधकमिद यत्वाऽभावपक्षे तु इयि सत्युत्तरणैव वृद्धि· ॥—स्वरादे—॥ अत्र विषयव्याख्यानाद्व्यवधानेऽपि वृद्धिरऽन्यथा ऋणूयी इत्यस्य आर्त्तत्यत्रेव अदेश्चाऽटि आददित्यत्रैव च स्यान्नाऽन्यत्र ॥—स्ताद्यशितो—॥—स्योमेति । असिद्ध बहिरङ्गमिति स्वरानन्तर्ये नेष्यते तेन यत्व सिद्धम् । अन्यथा ऊटोऽसत्त्वात् गुण स्यात् ॥—तेर्ग्रहा—॥—तन्तिरिति । ' न तिकि दीर्घश्च ' इति निषेधाल्लुगदीर्घोऽभाव· ॥—सन्तिरिति । षणूयी इत्यस्य रूप 'तो सनस्तिकि' इति लुगाकारो वा भवत । दीर्घस्तु ' न तिकि'-इति निषेधान्न । षन भक्तावित्यस्य तु सान्तिरिति स्यात् । न वाच्य तस्यापि ' न तिकि'-इति निषेधस्तत्र तनादेरुपादानात् ॥—गृह्णोप—॥—जरीगृहितेति 'योऽशिति इति गृह्णाते' पर इट् अस्त्येव। अतो विहितव्याख्यानम्

किम् । जगृहिव । जगृहिम । इट इत्येव । ग्राहिषीष्ट । अग्राहिषाताम् । ग्राहिता । त्रितो माभूत् ॥ ३४ ॥ वृतो नवानाशीःसिच्परस्मै च ॥ ४ । ४ । ३५ ॥ वृग्वृङ्भ्यामृकारान्तेभ्यश्च परस्य इटो वा दीर्घो भवति परोक्षायामाशिषि परस्मैपदविषये सिचि च न भवति । वृग्, प्रावरीता । प्रावरिता । प्राविवरीषति । प्राविवरिषति । वृङ्, वरीता । वरिता । विवरीषते । विवरिषते । ऋदन्त, तरीता । तरिता । तितरीषति । तितरिषति । जरीता । जरिता । जिजरीषति । जिजरिषति । वृत इति किम् । करिष्यति । *तकारो वर्णनिर्देशार्थः । अन्यथा समरीता समरितेति ऋणातेरेव विज्ञायेत । परोक्षादिवर्जनं किम् । विवरिथ । तेरिथ । प्रावरिषीष्ट । आस्तारिषीष्ट । प्रावारिष्टाम् । प्रावारिषुः । आस्तारिष्टाम् । आस्तारिषुः । सिच परस्मैपदविशेषणादात्मनेपदे दीर्घो भवत्येव । अवरीष्ट । अवरिष्ट । प्रावरीष्ट । प्रावरिष्ट । आस्तरीष्ट । आस्तरिष्ट ॥ ३५ ॥ इट् सिजाशिषोरात्मने ॥ ४ । ४ । ३६ ॥ वृतः परयोरात्मनेपदविषययोः सिजाशिषोरादिरिट् वा भवति । प्रावृत । प्रावरीष्ट । प्रावरिष्ट । अवृत । अवरीष्ट । अवरिष्ट । आस्तीर्ष्ट । आस्तरीष्ट । आस्तरिष्ट । आस्तीर्षाताम् । आस्तरिषाताम् । आस्तरीषाताम् । आस्तीर्षत । आस्तरिषत । आस्तरीषत । प्रावृषीष्ट । प्रावरिषीष्ट । वृषीष्ट । वरिषीष्ट । आस्तीर्षीष्ट । आस्तरिषीष्ट । आत्मने इति किम् । प्रावारीत् । अतारीत् । आस्तारीत् । एषु नित्यमेवेड् भवति । आशिषि तु परस्मैपदे यकारादित्वात् प्राप्तिरेव नास्ति । प्राप्ते विभाषा ॥ ३६ ॥ संयोगादृतः ॥ ४ । ४ । ३७ ॥ धातोः संयोगात्परो य ऋकारस्तदन्ताद्धातोः परयोरात्मनेपदविषययोः सिजाशिषोरादिरिड्वा भवति । अस्मृषाताम् । अस्मरिषाताम् । अध्वृषाताम् । अध्वरिषाताम् । स्मृषीष्ट । स्मरिषीष्ट । ध्वृषीष्ट । ध्वरिषीष्ट । संयोगादिति किम् । अकृत । कृषीष्ट । धातोरिति विशेषणादिह न भवति । मा निष्कृत । निष्कृषीष्ट । 'स्कृच्छ्रृतोऽकि परोक्षायाम्'( ४-३-८ ) इत्यत्र स्कृगो ग्रहणात्ससट्संयोगो न गृह्यते । तेनेह न भवति । समस्कृत । संस्कृषीष्ट । आत्मन इत्येव । अस्मार्षीत् । अध्वार्षीत् ॥ ३७ ॥ धूगौदितः ॥ ४ । ४ । ३८ ॥ धूग औदिद्भ्यश्च धातुभ्यः परस्य स्तादेशित आदिरिड्वा भवति । पृथग्योगात् सिजाशिषोरात्मने इति निवृत्तम् । धूग्, धोता । धविता । औदित् । रधौच्, रद्धा । रधिता । तृपौच्, तर्प्ता । त्रप्ता । तर्पिता । दृपौच्, द्रप्ता । दर्प्ता । दर्पिता । नशौच्; नंष्टा । नशिता । मुहौच्, मोग्धा । मोढा । मोहिता । द्रुहौच्, द्रोग्धा । द्रोढा । द्रोहिता । स्नुहौच्, स्नोग्धा । स्नोढा । स्नोहिता । स्निहौच्, स्नेग्धा । स्नेढा । स्नेहिता । गुपौ, गोप्ता । गोपिता । *जुगुप्सति । जुगोपिषति । गुहौ, । निगोढा । निगूहिता । गाहौ, विगाढा । विगाहिता । औस्वृ, स्वर्ता । स्वरिता । सिस्वृर्षति । सिस्वरिषति । पूङौ अदादौ

---

॥—वृतो न—॥—सिच्परस्मै चेति । सिच परस्मैपदमिति षष्ठीसमास यस्मिन् परस्मैपदे सिच् विधीयते तत् सिच परस्मैपदम् । विशेषणसमासो वा सिच्च तत्परस्मैपदं चेति । परस्मैपदनिमित्तत्वेनोपचारात्सिजपि परस्मैपदेनोच्यते ॥—तकारो वर्णनिर्देशार्थ इति । तकारोऽभावे ऋ इति निर्दिश्यमाने वृ इत्यनेन धातुना साहचर्यात् ऋश् गताविल्यस्यैव ग्रहणम् स्यात न ऋकारान्तधातुमात्रपरिग्रहस्ततश्च समरीता समरितेत्यत्रैव स्यात् । तकारे तु सति ऋदित्यस्य धातोरऽभावात्तकारस्य च वर्णनिर्देशेषु प्रसिद्धत्वात् ऋकारवर्णविज्ञानात्तदन्तधातुमात्रप्रतिपत्तिर्भवतीति तकारोपादानम् ॥—धूगौद—॥—जुगुप्सतीति । गोपायितुमिच्छति सन् । 'उपान्त्ये' इति किच्चम् । जुगोपिषतीत्यत्र तु 'वो व्यञ्जनादे'-इति वा किच्चम्

दिवादौ च । सोता । सविता । स्ताद्यशित इत्येव । ररन्धिव । ररन्धिम किल । अन्यस्त्वत्रापि विकल्पमिच्छति । रेध्व । ररन्धिव । रेध्म । ररन्धिम । स्वरतेस्तु स्ये परत्वात् 'हनृतः स्यस्य' (४-४-४९) इति नित्यमिट् । स्वरिष्यति । धूग् औस्टृ पूङ् इति त्रयाणाम् 'ॠवर्णश्र्यूर्णुगः कितः' (४-४-५८) इति 'उवर्णात्' (४-४-५९) इति च परत्वात् किति नित्यमिट्प्रतिषेधः । धूत्वा । स्वृत्वा । सूत्वा । औदित इत्यनुबन्धनिर्देशात् यङ्लुपि नित्यमिट् । सरीस्वरिता । जोगूहिता । धूगिति गिन्निर्देशात्तौदादिकस्य निसमिट् । धुविता । अत्रोणादेरित्येव । धूसरः । अशौ, अक्षरम् । एके तु चायिस्फायिप्यायीनामपि विकल्पमिच्छन्ति । निचाता । निचायिता । निचिचासति । निचिचायिषति । आस्फाता । आस्फायिता । आपिस्फासते । आपिस्फायिषते । आप्याता । आप्यायिता । आपिप्यासते । आपिप्यायिषते । अपरः पठति । नातिक्रंस्यति । नातिक्रमिष्यति । अन्यस्त्वद्यतन्यामास्कन्दिषमास्कन्त्समितीच्छति । बहुलम् *एकेषां विकल्पः । पक्ता । पचिता । आस्कन्तव्यम् । आस्कन्दितव्यम् । पट्टा । पटिता । तदेवं व्यवस्थितविभाषाविज्ञानादागमशासनमनित्यमिति न्यायाच्च विचित्रमतयो वैयाकरणाः ॥ ३८ ॥ निष्कुषः ॥ ४ । ४ । ३९ ॥ निर्निस्संबद्धात्कुषः परस्य स्ताद्यशित आदिरिड्वा भवति । निष्कोष्टा । निष्कोषिता । निष्कोष्टुम् । निष्कोषितुम् । निष्कोष्टव्यम् । निष्कोषितव्यम् । 'निष्पूर्वनियमात्केवलादन्यपूर्वाच्च नित्य एवेट् । कोषिता । प्रकोषिता । निर्निस्संबद्धात्कुष इति किम् । निर्गताः कोषितारोऽस्मान्निष्कोषितृको देश इति नित्यमिट् । योगविभाग उत्तरार्थः ॥ ३९ ॥ क्तयोः ॥ ४ । ४ । ४० ॥ निष्कुषः परयोः क्तयोरादिरिड्नित्यं भवति । पृथग्योगाद्वेति निवृत्तम् । निष्कुषितः । निष्कुषितवान् ॥ ४० ॥ जॄव्रश्च्योः क्त्वः ॥ ४ । ४ । ४१ ॥ जॄव्रश्चिभ्यां परस्य क्त्वाप्रत्ययस्यादिरिड् भवति । जरित्वा । जरीत्वा । व्रश्चित्वा । 'क्त्वा' (४-३-२९) इत्यनेनाकित्त्वान्न य्वृत् । जॄ इति क्रैयादिकस्य ग्रहणम् । दैवादिकस्य तु सानुबन्धस्य जीर्त्वा । अस्यैवेच्छन्त्यन्ये । जॄ इत्यस्य 'ॠवर्णश्र्यूर्णुगः कितः' (४-४-५८) प्रतिषेधे व्रश्चेरौदित्त्वाद्विकल्पे प्राप्ते वचनम् ॥ ४१ ॥ ऊदितो वा ॥ ४ । ४ । ४२ ॥ ऊदितो धातोः परस्य क्त्वाप्रत्ययस्यादिरिड् वा भवति । दान्त्वा । दमित्वा । शान्त्वा । शमित्वा । तान्त्वा । तमित्वा । द्यूत्वा । देवित्वा । स्यूत्वा । सेवित्वा । यमूंसिध्यत्योरप्राप्तेऽन्येषां प्राप्ते विभाषा ॥ ४२ ॥ क्षुधवसस्तेषाम् ॥ ४ । ४ । ४३ ॥ क्षुधवसिभ्यां परेषां क्तक्तवतुक्त्वामादिरिड् भवति । क्षुधितः । क्षुधितवान् । क्षुधित्वा । । उषितः । उषितवान् । उषित्वा । *यङ्लुपि *वावसितः । वावसितवान् । वावसित्वा । यङ्लुपि नेच्छन्त्यन्ये । वावस्तः । वावस्तवान् । वावस्त्वा । वसिति वसतेर्ग्रहणम् । वस्तेस्त्विडस्त्येव ॥ ४३ ॥ *लुभ्यञ्चेर्विमोहार्चे ॥ ४ । ४ । ४४ ॥ विमोहो 'विमोहनमाकुलीकरणम् अर्चा पूजा । लुभ्यञ्चिभ्यां यथासंख्यं विमोहेऽर्चायां चार्थे वर्तमानाभ्यां परेषां क्तक्तवतुक्त्वामादिरिड् भवति । विलुभितः सीमन्तः । विलुभिताः केशाः । विलुभितानि पदानि । विलुभितवान् । लुभित्वा । लोभित्वा केशान् गतः । अञ्चिता गुरवः । उच्चैरञ्चितलाङ्गूलः । अञ्चि-

॥—नातिक्रंस्यतीति । स्वमते 'क्रम' इति नित्यमिट् ॥—एकेषां विकल्प इति । सर्व्वेषां धातूनामित्यर्थः ॥—निष्कुषः ॥—निष्पूर्वनियमादिति । निष्पूर्वो गसात्तस्य नियम ॥—क्षुधवस —॥—यङ्लुपीति । मतप्रदर्शनार्थमऽदर्शि ॥—वावसित इत्यादौ गणनिर्देशात् 'यजादिवचे'—इति न य्वृत् ॥—लुभ्यञ्चे —॥—विमोहनमिति । णिगन्तादऽलि

तवान् गुरून् । शिरोऽञ्चित्वेव संवहन् । विमोहार्चे इति किम् । लुब्धो जाल्मः । लुब्धवान् । लुब्ध्वा । लुभित्वा । लोभित्वा । उदक्तमुदकं कूपात् । अक्त्वा । अञ्चित्वा । लुभेः क्त्वि 'सहलुभ' –( ४–४–४६ ) इत्यादिनाञ्चेश्च 'ऊदितः' ( ४–४–४२ ) इति विकल्पे उभयोश्च ''वेटोऽपतः ( ४–४–६३ ) इति नित्यं प्रतिषेधे प्राप्ते वचनम् ॥ ४४ ॥ *पूङ्क्लिशिभ्यो नवा ॥ ४ । ४ । ४५ ॥ पूङः क्लिशिभ्यां च परेषां क्तक्तवतुक्त्वामादिरिड् वा भवति । पूतः । पूतवान् । पूत्वा । पवितः । पवितवान् । पवित्वा । क्लिष्टः । क्लिष्टवान् । क्लिष्ट्वा । क्लिशितः । क्लिशितवान् । क्लिशित्वा । पूङिति ङकारः पूगो निवृत्त्यर्थः । तस्य हि 'न डीङ्-शीङ् –' ( ४–३–२७ ) इत्यादिना कित्त्वप्रतिषेधाभावात् 'पुवित इत्यनिष्टं रूपमासज्जेत । बहुवचनं क्लिश्यतिक्लिश्नात्योर्ग्रहणार्थम् । पूङः 'उवर्णात्' ( ४–४–५९ ) इति नित्यं निषेधे प्राप्ते क्लिश्यतेर्नित्यमिटि प्राप्ते क्लिश्नातेश्चौदित्त्वात् क्त्वायां विकल्पे सिद्धेऽपि क्तयोर्नित्यं निषेधे प्राप्ते विकल्पार्थं वचनम् ॥ ४५ ॥ *सहलुभेच्छ-रुषरिषस्तादेः ॥ ४ । ४ । ४६ ॥ एभ्यः परस्य तकारादे स्त्याद्यशित आदिरिड्वा भवति । सह, सोढा । सोढुम् । सोढव्यम् । सहिता । सहितुम् । सहितव्यम् । लुभ इत्यविशेषेण ग्रहणम् । लोब्धा । लोब्धुम् । लोब्धव्यम् । लोभिता । लोभितुम् । लोभितव्यम् । इच्छ, एष्टा । एष्टुम् । एष्टव्यम् । एषिता । एषितुम् । एषितव्यम् । इच्छेति निर्दे-शादिषत् इच्छायामित्यस्य ग्रहणम् । इषच् गतौ, इषश् आभीक्ष्ण्ये इत्यनयोस्तु नित्यमेवेट् । प्रेषिता । प्रेषितुम् । प्रेषितव्यम् । केचिदिषशोऽपि विकल्पमाहुः । रुष्, रोष्टा । रोष्टुम् । रोष्टव्यम् । रोषिता । रोषितुम् । रोषितव्यम् । रेष्टा । रेष्टुम् । रेष्टव्यम् । रेषिता । रेषितुम् । रेषितव्यम् । तादेरिति किम् । सहिष्यते । लोभिष्यति । रुषिष्य-ति । कश्चित्तु पठति सूत्रम् अशिभृगूस्तुशुचिवस्तिभ्यस्तकारादौ वेट् । अष्टा । अशिता । भर्ता । भरिता । स्तोता । स्तविता । शोक्ता । शोचिता । वस्ता । वसिता । तथा रुनुसुदुभ्योऽपि *अपरोक्षायामेवेट् । रोता । *रविता । नोता । नविता । सोता । सविता । दोता । दविता । अपरोक्षायामिति किम् । रुरुविम । नुनुविम । सुसुविम । दुदुविम । तथा विपेर्मूलफलकर्मण्यपरोक्षायामिड्वा । वेष्टा, वेपिता मूलानि वा फलानि वा । अन्यत्र संवेष्टा । अपरोक्षायामिति किम् । संविविपिमेति ॥ ४६ ॥ *इवृधभ्रस्जदम्भश्रियूर्णुभरज्ञपिसनितनिपतिवृद्दरिद्रः सनः ॥ ४ । ४ । ४७ ॥ इवन्तेभ्य ऋधभ्रस्जदम्भश्रियु–ऊर्णुभरतिज्ञपिसनितनिपतिवृभ्य ऋकारान्तेभ्यो दरिद्रातेश्च परस्य सन आदिरिड्वा भवति । इवन्त, दुद्यूषति । दिदेविषति । सिस्यूषति । सिसेविषति । ऋध्, *ईर्त्सति । अर्दिधिषति । भ्रस्ज, बिभ्रक्षति । बिभर्क्षति । बिभर्जिषति । बिभ्रज्जिषति । दम्भ, धिप्सति । धीप्सति । *दिदम्भिषति । श्रि, शिश्रीषति । शिश्रयिषति । यु, युयूषति । यियविषति । ऊर्णु, प्रोर्णुनूषति । प्रोर्णुनुविषति । प्रोर्णुनविषति । भर, बुभूर्षति । बिभरिषति । शब्निर्देशो यङ्लुपो बिभर्तेश्च निवृत्त्यर्थः । बुभूर्षति । बिभर्तेरपीच्छन्त्येके । इडभावपक्षे

॥—पूङ्—॥—पुवित इत्यनिष्टमिति । स्थिते तु तस्य 'उवर्णात्' इतीडऽभावे पूत इत्येव ॥—सहलुभे—॥—अपरोक्षायामेवेडिति । अयमर्थ अमीषा यस्मिन् प्रत्यये इट् विहित स तस्मिन्वा भवति । परोक्षाया तु 'स्कृऽसृभृवृ'–इति नित्यमेव ॥—रवितेति । रुकुरुङोरऽविशेषेण ग्रह ॥—सवितेति । अत्र सु प्रसवै–इत्यऽपोपदेश एव गृह्यते । अन्यथा व्यावृत्तिदर्शिते सुसुविमेति प्रयोगे कृतत्वात्षत्वम् स्यात् ॥—इवृ—॥—इवन्तेति । उदनुबन्धाऽकरणादिवु व्याप्तौ न गृह्यते ॥—ईर्त्सतीति । ऋधूच ऋधूटित्यऽस्य वा अर्द्धितुमिच्छतीति वाक्यम् ॥—दिदम्भिषतीति । अत्र सनि सादित्वाऽभावान्न धीपादेश

*गुणमपि । विभर्षति । विभरिषति । तन्मतसंग्रहार्थं *कृतगुणस्य भृगो निर्देशः । तेन *इडभावपक्षेऽपि गुणो भवति । ज्ञप् , ज्ञीप्सति । जिज्ञपयिषति । ज्ञपीति कृतह्रस्वस्योपादानात् ज्ञापेर्जिज्ञापयिषतीत्येव भवति। सनीति सनते सनोतेश्च ग्रहणम् । सिषासति। सिसनिषति। तन् , तितंसति । तितासति । तितनिषति। पत् पित्सति। पिपतिषति । वृ इति वृग्वृङोर्ग्रहणम् । प्रावुवूर्षति । प्राविवरिषति । प्राविवरीषति । वुवूर्षते । विवरिषते । विवरीषते । ऋदन्त, तितीर्षति । तितरिषति । तितरीषति । आतिस्तीर्षति। आतिस्तरिषति। आतिस्तरीषति। चिकीर्षतीत्यत्र तु लाक्षणिकत्वान्न भवति। दरिद्रा, दिदरिद्रासति। दिदरिद्रिषति। सन इति किम्। देविता। योः 'ग्रहगुहश्च सनः'-(४-४-६०) इति भ्रस्जभृगोस्तु सामान्येन प्रतिषेधेऽन्येषां च नित्यमिटि प्राप्ते विकल्पोऽयम् ॥ ४७ ॥ **ऋस्मिपूङञ्जशौकृगृदृधृप्रच्छः** ॥ ४ । ४ । ४८ ॥ पृथग्योगाद्वेति निवृत्तम् । एभ्य परस्य सन आदिरिड्भवति । ऋ, अरिरिषति । स्मि, सिस्मयिषते । पूङ् , पिपविषते । अनुबन्धनिर्देशात्पूग पुपूषति । पुपूषते । अञ्ज, अञ्जिजिषति । अशौ, अशिशिषते । अश्नातेस्त्विडस्त्येव । कृ, चिकरिषति । चिकरीषति । गृ, जिगरिषति । जिगरीषति । 'वृतो नवा-(४-४-३५) इत्यादिना पक्षे दीर्घत्वम् । अन्ये तु व्यवस्थितविभाषयास्येटो दीर्घत्वं नेच्छन्ति । दृङ् , आदिदरिषते । धृङ् , आदिधरिषते । प्रच्छ, पिपृच्छिषति । प्रच्छसहचारिताः कृगृदृधृ इत्येते तौदादिका । तेन कृणातेश्चिकीर्षति । चिकरिषति । चिकरीषति । गृणातेः, जिगीर्षति । जिगरिषति । जिगरीषति । धरतेर्दिधीर्षतीत्येव भवति । ऋस्मिपूङ्दृधृप्रच्छामप्राप्ते शेषाणां विकल्पे प्राप्ते वचनम् ॥ ४८ ॥ **हनृतः स्यस्य** ॥ ४ । ४ ४९ ॥ हन्तेऋकारान्ताच्च धातोः परस्य स्यस्यादिरिड् भवति । हनिष्यति । अहनिष्यत् । हनिष्यन् । आहनिष्यते । आहनिष्यमाणः । करिष्यति । अकरिष्यत् । करिष्यन् । करिष्यमाणः । स्वरिष्यति । अस्वरिष्यत् । स्वरिष्यन् । स्वरते परत्वाद्विकल्पं बाधित्वा नित्यमिट् । तकारनिर्देशादर्तेरेव ग्रहणं न भवति ॥४९॥ **कृतचृतनृतछृदतृदोऽसिचः सादेर्वा** ॥ ४ । ४ । ५० ॥ एभ्यः परस्य सिज्वर्जितस्य सकारादेः स्ताद्यशित प्रत्ययस्यादिरिड्वा भवति । कृतैत् छेदने, कृतैप् वेष्टने वा, कर्त्स्यति । अकर्त्स्यत् । चिकृत्सति । कर्तिष्यति । अकर्तिष्यत् । चिकर्तिषति । चृत् , चर्त्स्यति । अचर्त्स्यत् । चिचृत्सति । चर्तिष्यति । अचर्तिष्यत् । चिचर्तिषति । नृत् , नर्त्स्यति । अनर्त्स्यत् । निनृत्सति । नर्तिष्यति । अनर्तिष्यत् । निनर्तिषति । छृद् , छर्त्स्यति । अच्छर्त्स्यत् । चिच्छृत्सति । छर्दिष्यति । अच्छर्दिष्यत् । चिच्छर्दिषति । तृद् , तर्त्स्यति । अतर्त्स्यत् । तितृत्सति । तर्दिष्यति । अतर्दिष्यत् । तितर्दिषति । सादेरिति किम् । कर्तिता । चर्तिता । नर्तिता । छर्दिता । तर्दिता । असिच इति किम् । अकर्तीत् । अचर्तीत् । अनर्तीत् । अच्छर्दीत् । अतर्दीत् । प्राप्ते विभाषा ॥ ५० ॥ **गमोऽनात्मने** ॥ ४ । ४ । ५१ ॥ गमः परस्य सकारादेस्ताद्यशित आदिरिड् भवति आत्मनेपदं चेन्न भवति । गम इति आदेशस्यानादेशस्य च ग्रहणमविशेषात् । गमॢ, गमिष्यति । अगमिष्यत् । जिगमिषति । जिगमिषितुम् । संजिगमिषिता । संजिगमिषितुम् । संजिगमिषि-

॥—गुणमपीति । स्वमते तु 'नामिनोऽनिट्' इति सन कित्त्वम् ॥—कृतगुणस्येति । प्रथम शब्निर्देशो व्याख्यात । तन्मतसंग्रहार्थम् तु कृतगुणस्येत्यर्थ ॥—इडऽभावपक्षेऽपि गुण इति । सूत्रे कृतगुणनिर्देशात्किरवेऽपि गुण इत्यर्थ ॥—गमोऽनात्मने ॥—आत्मनेपद चेन्न भवतीति । आत्मनेपदविषयस्याविषयस्य च आत्मनेपदाभावे भवतीति

तव्यम् । इण् , जिगमिषति ग्रामम् । जिगमिषुः । इक्, अधिजिगमिषति मातुः । अधिजिगमिषुः । इङ् , अधिजिगमिषिता शास्त्रस्य । अधिजिगमिषुः । अधिजिगमिषितव्यम् । इङो नेच्छन्त्येके । तन्मते, अधिजिगांसिता अधिजिगांसुः अधिजिगांसितव्यमित्येव भवति । अनात्मने इति किम् । *गंस्यते ग्रामः । संगंस्यते वत्सो मात्रा । गंस्यमानः । संगंस्यमानः । अगंस्यत । समगंस्यत । संगंसीष्ट । संजिगंसते । संजिगंसमानः । संजिगंसिष्यते । *संजिगंसिष्यमाणः । अधिजिगांसते । अधिजिगांसमानः । अधिजिगांस्यते । अधिजिगांसिष्यते । अधिजिगांसिष्यमाणः । इणिकोर्जिगांस्यते । संजिगांसते । अधिजिगांस्यते माता । *कथं जिगमिषितेवाचरति जिगमिषित्रीयते इति । *आत्मनेपदस्य क्यङाश्रितत्वेन बहिरङ्गत्वात् । केचित्तु आत्मनेपदविषयस्य गमेरात्मनेपदाभावे सति इटो विकल्पमिच्छन्ति । गम्लृ, संजिगंसिता । संजिगमिषिता । संजिगंसितव्यम् । संजिगमिषितव्यम् । इङ् , अधिजिगांसिता । अधिजिगमिषिता । अधिजिगांसितव्यम् । अधिजिगमिषितव्यम् । अनात्मनेपदनिमित्तात्तु गमेर्नित्यमिटमिच्छन्ति । गमिष्यति । जिगमिषतीति । जिगमिषितुम् अधिजिगमिषितुम् अधिजिगमिषितव्यमित्यत्रापि गमेरनात्मनेपदविषयत्वान्नित्यमिड् भवति । तन्मतसंग्रहार्थमावृत्त्या सूत्रद्वयं व्याख्येयम् । गमोऽनात्मने गमोऽनात्मन इति । तत्र पूर्वस्यायमर्थः । गमेः सकारस्यादिरिड् वा भवति आत्मनेपदं चेन्न भवति । वेत्यनुवर्तनीयम् । द्वितीयसूत्रे तु अनात्मने इति प्रकृतिविशेषणं, व्याख्येयम् । ततश्च गमेरात्मनेपदविषयात्सकारस्यादिर्नित्यमिड् भवति । इहानात्मने इति प्रकृतिविशेषणात्पूर्वसूत्रे आत्मनेपदविषयादिति सामर्थ्याल्लभ्यते । एवं च तन्मतसंग्रहः सिद्धो भवति । एके तु परस्मैपदविषयस्यैव गमेरिटमिच्छन्ति नात्मनेपदविषयस्य । तन्मतसंग्रहार्थं तु नात्मने इत्यसमस्तं व्याख्येयम् । आत्मन इति च *प्रकृतिविशेषणम् । एवं च गमेरात्मनेपदविषयात् सकारस्यादिरिड्न भवति इति *अयमर्थो भवति । तेन संजिगंसिता संजिगंसितव्यम् अधिजिगांसिता व्याकरणस्य अधिजिगांसितव्यम् ॥ ५२ ॥ *स्नोः ॥ ४ । ४ । ५३ ॥ स्नोः परस्य स्ताद्यशित आदिरिड् भवति आत्मनेपदं चेन्न भवति । प्रस्नविष्यति । प्रस्नविता । प्रस्नवितास्मि । प्रस्नवितुम् । प्रस्नवितव्यम् । प्रसुस्नूषतीत्यत्र 'ग्रहगुहश्च सनः' (४-४-६०) इत्यनेनेट्प्रतिषेधः । अनात्मने इत्येव । प्रस्नोष्यते । स्नोष्यमाणः । प्रास्नोष्यत । प्रस्नोषीष्ट । *प्रास्नोष्ट । प्रस्नोता । प्रस्नोतासे । प्रस्नोताहे । प्रस्नवितेवाचरति प्रस्नवित्रीयत इत्यत्र त्वात्मनेपदस्य बहिरङ्गत्वात् तदाश्रयः प्रतिषेधो न भवति । स्नौतेरिट् सिद्ध एव । प्रतिषेधाभावादात्मनेपद इडनिवृत्त्यर्थं तु वचनम् । एवमुत्तरयोगोऽपीति ॥ ५३ ॥ *क्रमः ॥ ४ । ४ । ५४ ॥ *क्रमः परस्य स्ताद्यशित आदिरिड् भवति *आत्मनेपदं चेन्न भवति क्रमिष्यति । *निरक्रमीत् ।

---

॥—गंस्यते ग्राम इत्यारभ्य —संजिगंसिष्यमाण इति यावत् गम्लृ इत्येतस्य रूपाणि । तत्र निरुपसर्गस्य भावे कर्म्मणि च आत्मनेपद सम्पूर्वस्य तु 'समो गम्वृच्छि'-इत्यनेन कर्त्तरि ॥—कथमिति । जिगमिषित्रीयते इत्यत्र आत्मनेपदे इडऽभाव प्राप्नोतीत्याशङ्क्याह—आत्मनेपदस्येति । केचित्तु आत्मनेपदविषयस्येति सामान्योक्तावऽपि कर्त्तर्येवात्मनेपदविषयता ज्ञेया भावकर्म्मणोस्तु सर्वेऽपि धातव आत्मनेपदविषया एव इति व्यवच्छेद्य किमपि न स्यात् । आत्मनेपद चेन्न भवतीति द्वितीयव्याख्यानादिहात्मनेपदविषयादात्मनेपदाऽभावो लभ्यते ॥—प्रकृतिविशेषण व्याख्येयमिति । पुनर्गमूग्रहणादऽन्यथा पूर्वसूत्राद्गम इत्यधिकारेणैव सिद्धम् ॥—अयमर्थो भवतीति प्रथममतविपरीत ॥—स्नोः । पृथग्योगात् सादेरिति नानुवर्त्तते । अन्यथा स्नुगमोरिति कुर्यात् ॥—प्रास्नोष्टेति । कर्मकर्त्तरि प्रयोग ॥—क्रमः ॥—आत्मने पदं चेन्न भवतीति । तद्विषयादऽविषयाद्वा ॥—निरक्रमीदिति । 'व्यञ्जनादे'-इति न वृद्धि । 'न श्विजागृ'-इति निषेधात्

प्रमितुम् । प्रक्रमितव्यम् । अनात्मन इत्येव । प्रक्रंस्यते । प्रक्रंस्यमानः । उपक्रंस्यते । उपक्रंस्यमानः ।
क्रमितासि । चिक्रमिषति । चिक्रमिषिता । चिक्रमिषितुम् । प्रक्रमितुम् । प्रक्रमितव्यम् । अनात्मन इत्येव । प्रक्रंस्यते । प्रक्रंस्यमानः । उपक्रंस्यते । उपक्रंस्यमानः ।
क्रमितासि । चिक्रमिषति । चिक्रमिषिता । चिक्रमिषितुम् । प्रक्रमितुम् । प्रक्रमितव्यम् । प्राक्रंस्त । उपाक्रस्त । प्राक्रंस्यत । उपाक्रंस्यत । प्रचिक्रंसते । उपचिक्रंसते । प्रचिक्रंसिष्यते ।
*प्रक्रान्ता । उपक्रान्ता । प्रक्रान्तासे । उपक्रान्तासे । प्रक्रंसीष्ट । उपक्रंसीष्ट । प्राक्रंस्त । उपाक्रस्त । प्राक्रंस्यत । उपाक्रंस्यत । प्रचिक्रंसते । उपचिक्रंसते । प्रचिक्रंसिष्यते ।
उपचिक्रंसिष्यते । क्रमितेवाचरति क्रमित्रीयते इति पूर्ववदिड् भवति । कथं चिक्रंसया कृत्रिमपत्रिपङ्क्तेरित्यत्रेडभावः । [1]गतानुगतिक एष पाठः । जिघृक्षया कृत्रिम-
पत्रिपङ्क्तेरिति तु अविगानः पाठः ॥ ५४ ॥ [2]तुः ॥ ४ । ४ । ५५ ॥ अनात्मनेपदाविषयात् क्रमः परस्य तुस्तृचस्तृनश्च स्ताद्यशित आदिरिड् भवति । अनात्मन
इति प्रकृतिविशेषणमत्रान्यथा [3]व्यवच्छेद्याभावात् । [4]क्रमिता । निष्क्रमिता । आत्मनेपदविषयश्च क्रमिः कर्मव्यतिहारवृत्त्यादिषु प्रोपव्याङ्पूर्वश्च [5]आरम्भादिषु
भवति । अनात्मन इत्येव । व्यतिक्रान्ता । पराक्रान्ता । प्रक्रान्ता । उपक्रान्ता । विक्रान्ता । आक्रान्ता ॥ ५५ ॥ [6]न वृद्भ्यः ॥ ४ । ४ । ५६ ॥ वृतूङ् स्यन्दोङ् वृधूङ्
शृधूङ् कृपौङ् वृत् । एते पञ्च वृतादयः । वृत्करणं द्युतादिवृतादिपरिसमाप्त्यर्थम् । एभ्यः परस्य स्ताद्यशित आदिरिड् न भवति । ' अनात्मनाम् ' अनात्मनेपदानि-
मित्तं चेद्वृतादयो न भवन्ति । [7]अनात्मनेपदनिमित्तं च वृतादयः [8]स्यसनि [9]श्वस्तन्यां च कृपिर्विकल्पेन भवन्ति । वृत् , वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । विवृत्सि-
ता । विवृत्सितुम् । विवृत्सितव्यम् । विवृत्सा । स्यन्द, स्यन्त्स्यति । अस्यन्त्स्यत् । सिस्यन्त्सति । सिस्यन्त्सिता । सिस्यन्त्सितुम् । सिस्यन्त्सितव्यम् । वृधेर्वर्तिवद्रूपा-
णि । शृध् , शर्त्स्यति । अशर्त्स्यत् । शिशृत्सति । शिशृत्सितुम् । शिशृत्सिता । शिशृत्सितव्यम् । कृप् , कल्प्स्यति । अकल्प्स्यत् । चिकॢप्सति । चिकॢप्सिता । चिकॢ-
प्सितुम् । चिकॢप्सितव्यम् । कल्प्ता । कल्प्तारौ । कल्प्तारः । कल्प्तासि । कल्प्तास्थः । कल्प्तास्थ । कल्प्तास्मि । कल्प्तास्वः । कल्प्तास्मः । स्यन्दिकृपोरौदिल्लक्षणो विकल्पः
परत्वादनेन बाध्यते । अनात्मने इत्येव । वर्तिता । कल्पितव्यम् । [10]स्यादावप्येषा पाक्षिकत्वात् [11]अनात्मनेपदनिमित्तत्वस्य यत्र तन्न रित तत्रेड् भवत्येव । वर्तिष्यते ।
अवर्तिष्यत । विवर्तिषते । विवर्तिषितुम् । विवर्तिषितव्यम् । वर्धिष्यते । । अवर्धिष्यत । विवर्धिषते । विवर्धिषितुम् । विवर्धिषितव्यम् । शर्धिष्यते । अशर्धि-
ष्यत । शिशर्धिषते । शिशर्धिषितुम् । शिशर्धिषितव्यम् । स्यन्दिकृपोरौदित्त्वाद्विकल्पः । स्यन्त्स्यते । स्यन्दिष्यते । अस्यन्त्स्यत । अस्यन्दिष्यत । सिस्यन्त्सते ।
सिस्यन्दिषते । सिस्यन्त्सितुम् । सिस्यन्दिषितुम् । कल्प्स्यते । कल्पिष्यते । अकल्प्स्यत । अकल्पिष्यत । चिकॢप्सते । चिकल्पिषते । चिकॢप्सितुम् । चिकल्पिषि-
तुम् । कल्प्ता । कल्पिता । कल्प्तासे । कल्पितासे । कल्प्ताहे । कल्पिताहे । विवृत्सितेवाचरति विवृत्सित्रीयते इत्यादौ तु पूर्ववत् प्रतिपत्तिः । एके तु वृद्भ्यः स्यसनोः
कृपः श्वस्तन्यां चात्मनेपदाभावे इट्प्रतिषेधमिच्छन्ति । तन्मते, विवृत्सिता विवृत्सितुम् विवृत्सितव्यमित्यादौ [12]अनात्मनेपदनिमित्तत्वाभावपक्षेऽपि इट् न भवति

॥—प्रक्रन्तेत्यादिषु ' प्रोपादारम्भे ' इत्यात्मनेपदम् ॥—गतानुगतिक इति । गतस्यानुगत गतानुगत तदत्रास्ति । ' अतोऽनेकस्वरात् ' इक ॥—तुः ॥—व्यवच्छेद्याभावादिति । ॥—आरम्भादिष्विति । आदिश ङिपूर्वस्य स्वार्थे आङ्पूर्वस्य तु ॥—क्रमितेति । ' क्रमोनुपसर्गात् ' इति विकल्पेनात्मनेपदविषयत्वात् क्रन्तेत्यपि ॥—स्यसनि श्वस्तन्यां चेति । ' वृद्भ्य. स्यसनो ' प्रत्ययविशेषणे इत्यर्थ ॥—आत्मनेपदनिमित्तं चेति । नन्वऽमीषामात्मनेपदिनामनात्मनेपदनिमित्तत्व कथमित्याशङ्क्याह—स्यसनि श्वस्तन्यां चेति । ' वृद्भ्य. स्यसनो ' ज्योतिरुद्गमे ॥—न वृद्भ्य. ॥—आत्मनेपदनिमित्तं चेति । नन्वऽमीषामात्मनेपदिनामनात्मनेपदनिमित्तत्व कथमित्याशङ्क्याह ॥—अनात्मनेपदनिमित्तत्वाभावपक्षेपीति । अत्र हि प्रकृतिरात्मनेपदविषया ' कृप स्वस्तन्याम् ' इति सूत्राभ्यामित्यर्थ. ॥—स्यादावपीति । स्यसनि श्वस्तन्या चेत्यर्थ

॥ ५६ ॥ *एकस्वरादनुस्वारेतः ॥ ४ । ४ । ५७ ॥ एकस्वरादनुस्वारेतो धातोर्विहितस्य स्तादशित आदिरिड् न भवति । पां पान । पाता । पातुम् । 'चक्षो वाचि क्शांग् ख्यांग्' ( ४-४-४ ) आक्शाता । आख्याता । जि, जेता । जेतुम् । णींग्, नेता । नेतुम् । अजेर्वी, प्रवेता । प्रवेतुम् । इङ्को गी, अध्यगीष्ट । श्रुं श्रोता । श्रोतुम् । स्मृं, स्मर्ता । स्मर्तुम् । शक्लृंट् शकींच् वा, शक्ता । शक्तुम् । शक्यतेरिटमिच्छन्त्येके । शकिता । वचंक् ब्रूगादेशो वा, वक्ता । वक्तुम् । विचृंपी, विवेक्ता । विवेक्तुम् । रिचृंपी, रेक्ता । रेक्तुम् । डुपचींष्, पक्ता । पक्तुम् । षिचींत्, सेक्ता । सेक्तुम् । मुचॢंती, मोक्ता । मोक्तुम् । प्रच्छंत्, प्रष्टा । प्रष्टुम् । भ्रस्जींत्, भ्रष्टा । भर्ष्टा । भ्रष्टुम् । भर्ष्टुम् । टु मस्जोंत्, मङ्क्ता । मङ्क्तुम् । भुजोंत् भुजंप् वा, भोक्ता । भोक्तुम् । युजिंच् युजृंपी वा, योक्ता । योक्तुम् । यजी, यष्टा । यष्टुम् । ष्वञ्जित्, परिष्वङ्क्ता परिष्वङ्क्तुम् । रञ्जीं रञ्जीच् वा, रङ्क्ता । रङ्क्तुम् । रुजोंत्, रोक्ता । रोक्तुम् । णिजृंकी, नेक्ता । नेक्तुम् । निर्णेक्ता । निर्णेक्तुम् । विजृंकी, विवेक्ता । विवेक्तुम् । सञ्जं, सङ्क्ता । सङ्क्तुम् । भर्जी, भक्ता । भक्तुम् । सृजिंच् सृजंत् वा, स्रष्टा । स्रष्टुम् । त्यजं, त्यक्ता । त्यक्तुम् । स्कन्दृं, स्कन्ता । स्कन्तुम् । विदिच् विदॢंती विदिप् वा, वेत्ता । वेत्तुम् । विन्दतेरिटमिच्छन्त्येके । वेदिता धनस्य । णुदंत्, नोत्ता । नोत्तुम् । ष्विदांच्, स्वेत्ता । स्वेत्तुम् । शदॢं शत्ता । शत्तुम् । पदॢं पदॢंत् वा, सत्ता । सत्तुम् । भिदृंपी, भेत्ता । भेत्तुम् । छिदृंपी, छेत्ता । छेत्तुम् । तुदींत्, तोत्ता । तोत्तुम् । अदंक्, अत्ता । अत्तुम् । जिघत्सति । पदिंच्, पत्ता पत्तुम् । हदि, हत्ता । हत्तुम् । खिदिच्, खिदित्, खिदिप् वा, खेत्ता खेत्तम् । खिन्दतेरिटमिच्छन्त्येके । खेदिता । खेदितुम् । खिदितम् । क्षुदृंपी, क्षोत्ता । क्षोत्तुम् । राधंच् राधंट् वा, राद्धा । राद्धुम् । साधंट्, साद्धा । साद्धुम् । शुधंच्, शोद्धा । शोद्धुम् । युधिच्, योद्धा । योद्धुम् । व्यधंच्, व्यद्धा । व्यद्धुम् । बन्धंश् । संबन्द्धा । संबन्द्धुम । बुधिच्, बोद्धा । बोद्धुम् । रुधृंपी, रोद्धा । रोद्धुम् । क्रुधंच्, क्रोद्धा । क्रोद्धुम् । क्षुधंच्, क्षोद्धा । क्षोद्धुम । सिधूंच्, सेद्धा । सेद्धुम् । हनंक्, हन्ता । हन्तुम । मनिच्, मन्ता । मन्तुम् । आप्लृंट्, आप्ता । आप्तुम् । तपं तपिच् वा, तप्ता । तप्तुम् । शपीं शपींच् वा, शप्ता । शप्तुम् । क्षिपंच्, क्षेप्ता । क्षेप्तुम् । छुपंत्, छोप्ता । छोप्तुम् । लुपॢंती, लोप्ता । लोप्तुम । सृपॢं, स्रप्ता । सर्प्ता । स्रप्तुम । सर्प्तुम् । लिपींत्, लेप्ता । लेप्तुम् । टु वपीं, वप्ता । वप्तुम् । ञिष्वपंक्, स्वप्ता । स्वप्तुम । यभं, यब्धा । यब्धुम् । रभि, आरब्धा । आरब्धुम् । डु लभिंष्, लब्धा । लब्धुम् । यमूं, यन्ता । यन्तुम । रमि, रन्ता । रन्तुम् । णमं, नन्ता । नन्तुम् । गम्लृं, गन्ता । गन्तुम् । क्रुशं, क्रोष्टा । क्रोष्टुम् । लिशिच् लिशित् वा, लेष्टा । लेष्टुम् । रुशत्, रोष्टा । रोष्टुम् । रिशंत्, रेष्टा । रेष्टुम् । दिशीत्, देष्टा । देष्टुम् । दंश, दंष्टा । दंष्टुम् । स्पृशंत्, स्प्रष्टा । स्पर्ष्टा । स्प्रष्टुम् । स्पर्ष्टुम । मृशंत्, म्रष्टा । मर्ष्टा । म्रष्टुम् । मर्ष्टुम् । विशंत्, वेष्टा । वेष्टुम् । दृशृं, द्रष्टा । द्रष्टुम् । शिष्लृंप्, शेष्टा । शेष्टुम् । शुषंच्, शोष्टा । शोष्टुम् । त्विषीं, त्वेष्टा । त्वेष्टुम् । पिष्लृंप्, पेष्टा । पेष्टुम । विष्लृंकी, वेष्टा । वेष्टुम् । कृषं कृषींत् वा, क्रष्टा । कर्ष्टा । क्रष्टुम् । कर्ष्टुम् । तुषंच्, तोष्टा । तोष्टुम् । दुषंच्, दोष्टा । दोष्टुम् । पुषंच्, पोष्टा । पोष्टुम् । श्लिषंच्, श्लेष्टा । श्लेष्टुम् । द्विषींक्, द्वेष्टा । द्वेष्टुम् । घसॢं, घस्ता ।

लुहं रिहं इति हिसार्थौ सौत्रौ । लोढा । लोढुम् । रेढा । रेढुम् । एतावनिटौ नेच्छन्त्येके । दिहीक्, देग्धा ।
घस्तुम् । वसं, वस्ता । वस्तुम् । रुहं, रोढा । रोढुम् । लुहं रिहं इति हिसार्थौ सौत्रौ । लोढा । लोढुम् । वही, वोढा । वोढुम् । णहीच् , नद्धा । नद्धुम् । दहं, दग्धा । दग्धुम् । एकस्व-
देग्धुम् । दुहीक् , दोग्धा । दोग्धुम् । लिहींक् , लेढा । लेढुम् । मिहं, मेढा । मेढुम् । वही, वोढा । वोढुम् । णहीच् , नद्धा । नद्धुम् । दहं, दग्धा । दग्धुम् । एकस्व-
देग्धुम् । दुहीक् , दोग्धा । दोग्धुम् । लिहींक् , लेढा । लेढुम् । मिहं, मेढा । मेढुम् । विरिवाचारीत् अवायीत् । अगावीत् । अगवीत् । श्वि, श्वयिता । श्रिग्, श्रयिता । डीङ् डीङ्च् वा,
रादिति किम् । अवधीत् । शाशकिता । विहितविशेषणं किम् । विरिवाचारीत् अवायीत् । अगावीत् । अगवीत् । श्वि, श्वयिता । श्रिग्, श्रयिता । डीङ् डीङ्च् वा,
रादिति किम् । अवधीत् । शाशकिता । विहितविशेषणं किम् । विरिवाचारीत् । क्षुक्, क्षविता । क्ष्णुक्, क्ष्णविता । णुक्, नविता । स्नुक्, प्रस्नविता । वृङ्ट्, प्रावरिता । प्रावरीता । वृग्श्,
डयिता । शीङ्, शयिता । युक्, यविता । रुक्, रविता । क्षुक्, क्षविता । क्ष्णुक्, क्ष्णविता । णुक्, नविता । स्नुक्, प्रस्नविता । वृङ्ट्, प्रावरिता । प्रावरीता । वृग्श्,
डयिता । शीङ्, शयिता । युक्, यविता । रुक्, रविता । लूग्श् , लविता । तॄ, तरिता । तरीता । स्तॄग्श्, आस्तरिता । आस्तरीता । ओ विजैति, उद्विजिता । उद्विजितुम् ।
वरिता । वरीता । भू , भविता । णू, नुविता । लूग्श् , लविता । तॄ, तरिता । तरीता । स्तॄग्श्, आस्तरिता । आस्तरीता । ओ विजैति, उद्विजिता । उद्विजितुम् ।
वरिता । वरीता । भू , भविता । णू, नुविता । अस्मादपीटं नेच्छन्त्येके । क्ष्वेत्ता । वुधृग् वुध्, वा, वोधिता । आभ्यामपीटं नेच्छ-
विदक् ज्ञाने । वेदिता शास्त्रस्य । ञिष्विदाङ्, स्वेदिता । ञिक्ष्विदाङ् क्ष्वेदिता । अस्मादपीटं नेच्छन्त्येके । क्ष्वेत्ता । वुधृग् वुध्, वा, वोधिता । आभ्यामपीटं नेच्छ-
विदक् ज्ञाने । वेदिता शास्त्रस्य । ञिष्विदाङ्, स्वेदिता । ञिक्ष्विदाङ् क्ष्वेदिता । कथं मतम् । क्त्वि वेट्कत्वात् ' वेटोऽपतः ' ( ४-४-६३ ) इति भविष्यति । लुपच् , लोपिता । कथं
न्त्येके । चोद्धा । पिधू पिधौ वा, सेधिता । मनूयि, मनिता । कथं मतम् । क्त्वि वेट्कत्वात् ' वेटोऽपतः ' ( ४-४-६३ ) इति भविष्यति । लुपच् , लोपिता । कथं
न्त्येके । चोद्धा । पिधू पिधौ वा, सेधिता । मनूयि, मनिता । पुप पुपश् वा, पोपिता । श्लिपू , श्लेपिता । 'केचिद्विपिपुपिश्लिपिमात्रादिडभाव-
तर्प्ता । दर्प्ता । औदित्त्वाद्विकल्पेनेट् । शिप, शेपिता । विपू विपश् वा, वेपिता । पुप पुपश् वा, पोपिता । श्लिपू , श्लेपिता । 'केचिद्विपिपुपिश्लिपिमात्रादिडभाव-
तर्प्ता । दर्प्ता । औदित्त्वाद्विकल्पेनेट् । शिप, शेपिता । अत्र संग्रहश्लोकाः ॥ ' श्विश्रिडीशी*युरुक्षुक्ष्णुणुस्नुभ्यश्च वृगो वृङः ॥ ऊद्दन्तायुजादिभ्य-
मिच्छन्ति । श्लिष्टमित्यत्र तु ऊदित्त्वात् क्तयोर्नित्यमिट्प्रतिषेधः ॥ अत्र संग्रहश्लोकाः ॥ ' श्विश्रिडीशी*युरुक्षुक्ष्णुणुस्नुभ्यश्च वृगो वृङः ॥ ऊद्दन्तायुजादिभ्य-
मिच्छन्ति । श्लिष्टमित्यत्र तु ऊदित्त्वात् क्तयोर्नित्यमिट्प्रतिषेधः ॥ द्विविधोऽपि शकिश्चैव वचिर्विचिरिची पचिः ॥ २ ॥ सिश्वातिर्मुचिरितोऽपि पृच्छतिभ्र-
*स्वरान्ता धातवोऽपरे ॥ १ ॥ पाठ एकस्वराः स्युर्येऽनुस्वारेत इमे मताः ॥ द्विविधोऽपि शकिश्चैव वचिर्विचिरिची पचिः ॥ २ ॥ सिश्वातिर्मुचिरितोऽपि पृच्छतिभ्र-
*स्वरान्ता धातवोऽपरे ॥ १ ॥ पाठ एकस्वराः स्युर्येऽनुस्वारेत इमे मताः ॥ स्कन्दिविद्यत्विद्लृविन्तयो नुदिः स्विद्यति शदिसदी भिदिच्छिदी ॥
स्जिमस्जिभुजयो युजिर्यजि. ॥ ष्वञ्जिरञ्जिरुजयो णिजिविजृसञ्जिभञ्जिभजयः सृजित्यजी ॥३॥ स्कन्दिविद्यत्विद्लृविन्तयो नुदिः स्विद्यति शदिसदी भिदिच्छिदी ॥
स्जिमस्जिभुजयो युजिर्यजि. ॥ ष्वञ्जिरञ्जिरुजयो णिजिविजृसञ्जिभञ्जिभजयः सृजित्यजी ॥ आपिना तपिशापिक्षिपिछुपो लुम्पतिः
तुद्यदी पदिहदी खिदिक्षुदी राधिसाधिशुधयो युधिव्यधी ॥ ४ ॥ बन्धवुध्यरुधयः क्रुधिक्षुधी सिध्यतिस्तदनु हन्तिमन्यती ॥ आपिना तपिशापिक्षिपिछुपो लुम्पतिः
तुद्यदी पदिहदी खिदिक्षुदी राधिसाधिशुधयो युधिव्यधी ॥ ४ ॥ स्पृशिमृशातिविशतिदृशिशिप्लृशुपयस्त्विपिपिपिविप्लृक्षिपितुपि-
सृपिलिपी वपिस्वपी ॥ ५ ॥ यभिरभिलभियभिरामिनमिगमयः क्रुशिलिशिरुशिरिशिदिशतिदशतयः ॥ स्पृशिमृशातिविशतिदृशिशिप्लृशुपयस्त्विपिपिपिविप्लृक्षिपितुपि-
सृपिलिपी वपिस्वपी ॥ ५ ॥ यभिरभिलभियभिरामिनमिगमयः क्रुशिलिशिरुशिरिशिदिशतिदशतयः ॥ देग्धिदोग्धिलिहयो मिहिवहती नह्यतिर्दहिरिति स्फुटमनिटः ॥ ५७ ॥ ऋवर्णश्र्यूर्णुगः
पुषय' ६ ॥ श्लिष्यतिर्द्विपिरतो घसिवसती रोहतिर्लुहिरिही आनिगादितौ ॥ देग्धिदोग्धिलिहयो मिहिवहती नह्यतिर्दहिरिति स्फुटमनिटः ॥ ५७ ॥ ऋवर्णश्र्यूर्णुगः
पुषय' ६ ॥ श्लिष्यतिर्द्विपिरतो घसिवसती रोहतिर्लुहिरिही आनिगादितौ ॥ वृतः वृतवान् । वृत्वा । स्तृतः । स्तृतवान् । स्तृत्वा ।
कितः ॥ ४ । ४ । ५८ ॥ ऋवर्णान्ताद्धातोः श्रयतेरूर्णुगश्चैकस्वराद्विहितस्य कितः प्रत्ययस्यादिरिट् न भवति । वृतः वृतवान् । वृत्वा । स्तृतः । स्तृतवान् । स्तृत्वा ।
कितः ॥ ४ । ४ । ५८ ॥ ऋवर्णान्ताद्धातोः श्रयतेरूर्णुगश्चैकस्वराद्विहितस्य कितः प्रत्ययस्यादिरिट् न भवति । उत्तरेणैव सिद्धे ऊर्णुग्रहणमनेकस्वरार्थम् । ऊर्णुत । ऊर्णुतवान् ।
तॄ, तीर्णः । तीर्णवान् । तीर्त्वा । पॄ, पूर्तः पूर्तवान् । पूर्त्वा । श्रि, श्रितः श्रितवान् । श्रित्वा । उत्तरेणैव सिद्धे ऊर्णुग्रहणमनेकस्वरार्थम् । ऊर्णुत । ऊर्णुतवान् ।
तॄ, तीर्णः । तीर्णवान् । तीर्त्वा । पॄ, पूर्तः पूर्तवान् । पूर्त्वा । श्रि, श्रितः श्रितवान् । श्रित्वा । कित इति किम् । वरिता । तरिता । श्रयिता
ऊर्णुत्वा । गित्त्वाद्यङ्लुपि न भवति । ऊर्णोनवित्वा । एकस्वरादित्येव । जागरितः । जागरितवान् । जागरित्वा । कित इति किम् । वरिता । तरिता । श्रयिता
ऊर्णुत्वा । गित्त्वाद्यङ्लुपि न भवति । ऊर्णोनवित्वा । एकस्वरादित्येव । जागरितः । जागरितवान् । जागरित्वा । उवर्णात् ॥ ४ । ४ । ५९ ॥ उवर्णान्तादेकस्वराद्धातोर्विहितस्य
ऊर्णुविता । ऊर्णविता । विहितविशेषणात्तीर्णः पूर्त इत्यत्र कृतेऽपीरुरादेशे निषेधो भवति ॥ ५८ ॥ उवर्णात् ॥ ४ । ४ । ५९ ॥ उवर्णान्तादेकस्वराद्धातोर्विहितस्य
ऊर्णुविता । ऊर्णविता । विहितविशेषणात्तीर्णः पूर्त इत्यत्र कृतेऽपीरुरादेशे निषेधो भवति ॥

॥—एकस्वरा—॥—केचिद्विपिपुपिश्लिपिमात्रादिति । विप्लृकी विपश् पुपच् पुपश् श्लिपच् श्लिप्पू इत्येतेभ्य ॥—युरुक्ष्विति । शीक्षुसाहचर्यात् यु र इत्येतयोरादा-
दिकयोर्ग्रहणम्, न, रुह् रोपणे च युगश् बन्धने इत्येतयो. ॥—स्वरान्ता धातव इति । स्वरान्ता. किंविशिष्टा. ये पाठे, एकस्वरास्तेऽनुस्वारेत इत्यर्थ

कित आदिरिट् न भवति । युतः । युतवान् । युत्वा । लूनः । लूनवान् । लूत्वा । कित इत्येव । यविता । लविता ॥ ५९ ॥ ग्रहगुहश्च सनः ॥ ४ । ४ । ६० ॥ ग्रहिगुहिभ्यामुवर्णान्ताच्च धातोर्विहितस्य सन आदिरिट् न भवति । ग्रह, जिघृक्षति । गुहौ, जुघुक्षति । रुरूषति । तुतूषति । लुलूषति । पुपूषति । यौतेस्तु 'इवृध'— ( ४-४-४७ ) इत्यादिना विकल्पः । यियविषति । युयूषति । गुहेरिटमपीच्छत्यन्यः । जुगूहिषन् मत्तगजोऽभ्यधावत् ॥ ६० ॥ स्वार्थे ॥ ४ । ४ । ६१ ॥ स्वार्थे विहितस्य सन आदिरिट् न भवति । जुगुप्सते । तितिक्षते । चिकित्सति । शीशांसते । दीदांसते । मीमांसते । बीभत्सते । स्वार्थे इति किम् । पिपठिषति ॥ ६१ ॥ डीयश्व्यैदितः क्तयोः ॥ ४ । ४ । ६२ ॥ डीयतेः श्वयतेरैदिद्भ्यश्च धातुभ्यः परयोः क्तयोरादिरिट् न भवति । डीनः । डीनवान् । उड्डीनः । उड्डीनवान् । शूनः । शूनवान् । ऐदितः, ओ लजै, लग्नः । लग्नवान् । विजै, उद्विग्नः । उद्विग्नवान् । यतै, यत्तः । यत्तवान् । त्रसै, त्रस्तः । त्रस्तवान् । दीपै, दीप्तः । दीप्तवान् । डीयेति श्यनिर्देशात् डयतेरिडेव । डयितः । डयितवान् । क्तयोरिति किम् । डयिता । श्वयिता । लज्जिता । उद्विजिता । कृतैनृतैचृतै इत्येतेषां वेट्त्वेन क्तयोरिट्प्रतिषेधे सिद्धे ऐदित्त्वं यङ्लुबर्थम् । तेन चरीकृत्तः । चरीकृत्तवान् । नरीनृत्तः । नरीनृत्तवान् । चरीचृत्तः । चरीचृत्तवान् इत्यत्रानेकस्वरत्वेऽपीट्प्रतिषेधः ॥ ६२ ॥ वेटोऽपतः ॥ ४ । ४ । ६३ ॥ पतिवर्जिताद्यत्रकचिद्विकल्पितेटो धातोरेकस्वरात्परयोः क्तयोरादिरिट् न भवति । रधौ, रद्धः । रद्धवान् । अञ्जौ, अक्तः । अक्तवान् । गुहौ, गूढः । गूढवान् । शमू, शान्तः । शान्तवान् । असू, अस्तः । अस्तवान् । केचिदस्यतेर्भावे क्ते नित्यमिटमिच्छन्ति । असितमनेन । सह, सोढः । सोढवान् । अपत इति किम् । पतितः । पतितवान् । सनि वेट्त्वात्प्राप्ते प्रतिषेधः । एकस्वरादित्येव । दरिद्रितः । दरिद्रितवान् । कथं प्रोर्णुतः प्रोर्णुतवान् । 'ऋवर्णश्रूर्णुग. कितः' (४-४-५८) इत्यनेन भविष्यति ॥ ६३ ॥ *संनिवेरर्दः ॥ ४ । ४ । ६४ ॥ संनिविपूर्वादर्दतेः परयोः क्तयोरादिरिट् न भवति । समर्णः । समर्णवान् । न्यर्णः । न्यर्णवान् । व्यर्णः । व्यर्णवान् । संनिवेरिति किम् । अर्दितः । प्रार्दितः । कश्चित्केवलादपीच्छति । अर्णः । अर्णवान् ॥ ६४ ॥ अविदूरेऽभेः ॥ ४ । ४ । ६५ ॥ विदूरमतिविप्रकृष्टम् । ततोऽन्यदविदूरम् । अभिपूर्वादर्दः परयोः क्तयोरविदूरेऽर्थे आदिरिट् न भवति । अभ्यर्णम् । अविदूरमित्यर्थः । अभ्यर्णा सरित् । अभ्यर्णे शेते । अविदूर इति किम् । अभ्यर्दितो वृषलः शीतेन । बाधित इत्यर्थः ॥ ६५ ॥ *वर्तेर्वृत्तं ग्रन्थे ॥ ४ । ४ । ६६ ॥ वृतेर्ण्यन्तात्क्ते वृत्तमिति ग्रन्थविषये निपात्यते । गुणाभावेट्प्रतिषेधौ *णिलुक् च निपातनात् । *वृत्तो गुणश्छात्रेण । वृत्तं पारायणं चैत्रेण । वृतेरन्तर्भूतण्यर्थस्यैतत् सिध्यति । वर्तेस्तु ग्रन्थविषये वर्तितमिति प्रयोगनिवृत्त्यर्थं वचनम् । ग्रन्थ इति किम् । वर्तितं कुङ्कुमम् । अन्ये तु ग्रन्थेऽपि वर्तितमिति प्रयोगमाद्रियन्त ॥ ६६ ॥ *धृषशसः प्रगल्भे ॥ ४ । ४ । ६७ ॥ प्रगल्भो जितसभः । अविनीत इत्यन्ये । धृषिशसिभ्यां परयोः क्तयोरादिः प्रगल्भ एवार्थे इट् न भवति । धृष्टः । विशस्तः । प्रगल्भ इत्यर्थः । प्रगल्भ इति किम् । धर्षितः । विशसितः । धृषेः

---

॥—वेटोऽपतः ॥—कथं वञ्चितः वचिण् प्रलम्भने इत्यस्य भविष्यति ॥—संनिवेर—॥—समर्ण इति । 'रदादमूर्छे'–इति न 'रपूवर्णे'–इति ण. । 'तवर्गस्य श्चवर्ग'–इति क्तनस्य णत्वम् ॥—अविदूरेऽभेः॥ 'क्तवताऽर्थप्रतीतेरऽभावान्न दर्शितम् ॥—वर्तेर्वृत्तम्—॥—णिलुक्केति । 'सेट्क्तयो.' इति नियमात् 'णेरनिटि' इति न प्राप्नोतीत्याह ॥—वृत्तो गुण इति । उपचाराद्गुणप्रकरण गुण. ॥—धृषशसः—

'आदितः' (४-४-७२) इति शसेरप्यूदित्त्वात् 'वेटोऽपतः (४-४-६३) इति प्रतिषेधे सिद्धे नियमार्थं वचनम्। अथ भावारम्भयोर्नित्यार्थं *धृषेरुपादानं कस्मान्न भवति। नैवम्। धृषेर्भावारम्भे स्वभावात् प्रगल्भार्थानभिधानात् ॥ ६७ ॥ कषः कृच्छ्रगहने ॥ ४। ४। ६८ ॥ कृच्छ्रं दुःखम् तत्कारणं च, गहनं दुरवगाहम्। तयोरर्थयोः कषेः परयोः क्तक्तवत्वोरादिरिड्न भवति। कष्टं वर्तते। कष्टोऽग्निः। कष्टानि वनानि। कृच्छ्रगहन इति किम्। कषितं स्वर्णम् ॥ ६८ ॥ *घुषेरविशब्दे ॥ ४।४।६९॥ विशब्दनं विशब्दः नाना शब्दनं प्रतिज्ञानं च ततोऽन्यत्रार्थे वर्तमानात् घुषेः परयोः क्तयोरादिरिट् न भवति। घुष्टा रज्जुः संवद्धावयवेत्यर्थः। घुष्टवान्। अविशब्दन इति किम्। अवघुषितं वाक्यमाह। नानाःशब्दितं प्रतिज्ञातं वा वाक्यं ब्रूत इत्यर्थः। *अत एव विशब्दनप्रतिषेधात् ज्ञाप्यते घुषेर्विशब्दनार्थस्य *अनित्य-श्वरादेर्णिजिति। तेनायमपि प्रयोग उपपन्नो भवति। 'महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवाः' स्वाभिप्रायं नाना शब्दैराविष्कृतवन्त इत्यर्थः ॥ ६९ ॥ *बलिस्थूले दृढः ॥४।४।७०॥ बलिनि स्थूले चार्थे दृहेर्दृंहेर्वा क्तान्तस्य दृढ इति निपात्यते। इडभावः क्तस्य ढत्वं धातुहनयोर्लोपश्च निपातनात्। दृढो बली स्थूलो वा। *परिदृढस्य गतः। पारिदृढी कन्या। बलिस्थूल इति किम्। दृहितम्। दृंहितम् ॥ ७० ॥ *क्षुब्धविरिब्धस्वान्तध्वान्तलग्नम्लिष्टफाण्टबाढपरिवृढं मन्थस्वरमनस्तम-सक्तास्पष्टानायासभृशप्रभौ ॥४।४।७१॥ क्षुब्धादयः क्तान्ता मन्थादिष्वर्थेषु यथासंख्यमनिटो निपात्यन्ते। क्षुभेर्मन्थेऽर्थे क्तान्तस्येडभावो निपात्यते। मथ्यत इति मन्थः। कर्मणि घञ्। क्तोऽपि क्षुभेः कर्मण्येव। तत्सामानाधिकरण्यात्। क्षुब्धः समुद्रः मथित इति मथ्यमानः संक्षोभं गत इति वार्थः। *क्षुब्धा गिरिनदी। मन्थनं वा मन्थः। तस्मिन्नभिधेये क्षुब्धं वल्लवेन। विलोडनं कृतमित्यर्थः। अथवा द्रवद्रव्यसंपृक्ताः सक्तवो रूढ्या मन्थशब्देनोच्यन्ते। तद्द्रव्याभिधाने क्षुब्धशब्दो *मन्थपर्यायो भवति। यदा तु क्षोभं प्रवृत्तिनिमित्तीकृत्य मन्थे वर्तते तदा क्षुब्धो मन्थ इति सामानाधिकरण्यम्। संचलितो मन्थ इत्यर्थः। मन्थेऽभिधेय इति किम्। *क्षुभितं समुद्रेण।

॥—धृषेरुपादानमिति । नन्वादिता धातूना 'नवा भावारम्भे' इत्यनेन वा इट्निषेधेऽत्र धृषेरुपादान नित्यमिडभावार्थमिति विधिपरतया किमिति न व्याख्यातमित्याशङ्का ॥—घुषेरवि—॥—अत एव विशब्दनेति। ननु घुषृ शब्दे इत्यस्यैव विशब्दने चुरादित्वाण्णिचि सत्यऽनेकस्वरत्वात्प्रतिषेधो न स्यात् किम् वर्जनेनेत्याह—अनित्येति ॥—बलिस्थूले— ॥—परिदृढस्य गत इति। परिदृढमाचष्टे णिज् 'पृथुमृदु'-इति ऋतो र । परिद्रढन पूर्वम् क्त्वा 'लघोर्यपि' इत्यय् । नन्वऽत्र हलोपनिपातन किमर्थम् यावता 'भ्वादेर्दादेर्घ' इति घस्य बाधके 'हो धुट्'-इति ढत्वे निपात्यमाने सर्वम् सिध्यति । न । ढस्य परेऽसत्त्वाद्वर्णद्वयेन व्यवधाने 'लघोर्यपि' इति न स्यात् । वचनाद्धि एकेन वर्णेन व्यवधानमा-श्रीयते । किञ्च ढस्याऽसत्त्वे सयोगे पूर्वो गुरुरिति न्यायात् गुरूपान्त्यत्वे पारिदृढीत्यत्र परिदृढस्यापत्यम् अत इञि 'अनार्षे'-इति ष्यादेश स्यात् न तु 'नुर्जातेः' इति ङी. ॥—क्षुब्धविरिब्ध— ॥—गत इति वाऽर्थ इति । अन्तर्भूतण्यर्थत्वात् गमित इत्यर्थ ॥—क्षुब्धा गिरिनदीति । मथिता मथ्यमाना सती क्षोभ गमिता वेत्यर्थ ॥—मन्थपर्यायो भवतीति । तृतीयव्याख्याने मन्थस्य कोऽर्थ. । सक्तो. क्षुब्ध इति पर्याय । तुरीये तु मन्थस्य सक्तोर्विशेषण क्षुब्ध इति ॥—क्षुभितं समुद्रेणेति । अत्र मन्थन वा मन्थ इति द्वितीयमपि व्याख्यान न घटते । यतस्तत्र

क्षुभितं मन्थेन । क्षुभितः समुद्रो मन्थेन । अन्यस्तु दध्यादिकं येन मथ्यते स मन्थो मन्थानक इत्याह । 'अमृतं नाम यत्सन्तो मन्त्रजिह्वेषु जुह्वति । शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्णने इति । विपूर्वात्सौत्राद्रिभेर्विरिब्ध इति भवति स्वरो ध्वनिश्चेत् । रेभेर्वा इत्वस्यापि निपातनात् । विरिभितं विरेभितमन्यत् । स्वनेः स्वान्तमिति मनश्चेत् । मनःपर्यायः स्वान्तशब्दः । विषयेष्वनाकुलं मनः स्वान्तमित्यन्ये । अन्यत्र स्वनितो मृदङ्गः । स्वनितं मनसा घट्टितं स्पृष्टमिति यावत् । ध्वनेः *ध्वान्तमिति तमश्चेत् । तमःपर्यायो ध्वान्तशब्दः । अनालोकं गम्भीरं तमो ध्वान्तमित्यन्ये । अन्यत्र ध्वनितं तमसा । ध्वनितो मृदङ्गः । लगेर्लग्नमिति सक्तं चेत् । लगितमन्यत् । म्लेच्छेर्म्लिष्टमिति अस्पष्टं चेत् । इत्वमपि निपातनात् ।*म्लेच्छितमन्यत् । फणेः फाण्टमिति अनायाससाध्यं चेत् । यदश्रापतमपिष्टमुदकसंपर्कमात्राद्विभक्तरसमौषधं कषायादि तदेवमुच्यते । अग्निना तप्तं यदीषदुष्णं तत्फाण्टमित्यन्ये । अन्ये त्वविधमानायासः पुरुषोऽन्यो वा सामान्येन फाण्टशब्देनाभिधीयते । फाण्ट*श्चित्रास्त्रपाणय इत्याहुः । वाहेर्वाढमिति भृशं चेत् । क्रियाविशेषणमेवैतत् स्वभावात् ।*बाढविक्रमा इति तु *विस्पष्टपटुवत्समासः । वाहितमन्यत् । परिपूर्वस्य वृहेर्वृंहेर्वा परिवृढ इति प्रभुश्चेत् ।*हकारनलोपे ढत्वे च निपातनात् । परिवृढः प्रभुः । परिव्रढय्य गतः । पारिवृढी कन्या । अन्यत्र परिवृहितं परिवृंहितम् । केचित्तु लग्नविरिब्धम्लिष्टफाण्टवाढानि धात्वर्थस्य सक्ताद्यर्थविषयभावमात्रे भवन्तीत्याहुः । तेषां लग्नं सक्तेनेत्याद्यपि भवति । यथा *लोम्नि हृष्टमिति ॥ ७१ ॥ *आदितः ॥ ४ । ४ । ७२ ॥ आकारानुबन्धाद्धातोः परयोः क्तयोरादिरिड् न भवति । ञिमिदा, मिन्नः । मिन्नवान् । ञिक्ष्विदा, क्ष्विण्णः । क्ष्विण्णवान् । ञिष्विदा, स्विन्नः । स्विन्नवान् । श्विता, श्वित्तः । श्वित्तवान् । आदितां धातूनां भावारम्भे वेट्त्वादन्यत्र 'वेटोऽपतः' ( ४–४–६३ ) इति अनेनैव नित्यमिट्प्रतिषेधे सिद्धे *योगविभागो यदुपाधेर्विभाषा *तदुपाधेः प्रतिषेध इति न्यायज्ञापनार्थम् । तेन विदक् ज्ञाने *विदितः । विदितवान् । हृषितः । हृषितवान् । तुष्ट इत्यर्थः । इत्यादि सिद्धम् ॥ ७२ ॥ **नवा भावारम्भे** ॥ ४ । ४ । ७३ ॥ आरम्भ आदिक्रिया । आदितो धातोर्भावे आरम्भे च विहितयोः क्तयोरादिरिड् वा न भवति । मिन्नमनेन । मेदितमनेन । प्रभिन्नः । प्रमेदितः । प्रभिन्नवान् । प्रमेदि-

---

मन्थन विलोडनम् । प्रस्तुते तु सचलनमात्रम् ॥—क्षुभित मन्थेनेति । अत्र मन्थशब्देन मन्थानक उच्यते ॥—ध्वान्तमिति । ध्वनन्त्यत्राऽपश्यन्त. प्राहरिका इति 'अद्यर्थाच्चाधारे' इति क्त । ध्वन्यतेस्म हेयतयेति कर्मणि वा क्तः ॥—म्लेच्छितमिति । म्लेच्छत्यव्यक्त भवति स्म व्याप्ये वा क्त । कूटोच्चारितमित्यर्थ ॥—चित्रास्त्रपाणय इति । चित्रास्त्राणि पाणिषु येषा 'न सप्तमीन्द्वादिभ्यश्च'–इति पाणिशब्दस्य न प्राग् निपात. ॥—बाढविक्रमा इति । यद्य. : क्रियाविशेषणं तत्कथमऽत्र विक्रमाभिधायी बाढशब्द इत्याशङ्कायामाह—विस्पष्टपटुवदिति । यथा तत्र क्रियाविशेषणेन समासस्तथाऽत्रापि बाढशब्देन क्रियाविशेषणेन स. ॥—हकारनलोपेति । अत्रापि हलोपनिपाताऽभावे पारिवृढीत्यर्थ ॥—लोम्नि हृष्टमिति । यथा लोमविषये हृष्ट निपात्यते प्रयोगश्च लोमभि हृष्टमिति तथाऽत्रापीत्यर्थः ॥—आदितः ॥—योगविभाग इति ॥ आदितो नवा भावारम्भे इत्येक एव क्रियता किम् योगविभागेनेति ॥—तदुपाधेरिति । अयमर्थ 'नवा भावारम्भे' इत्यनेन भावारम्भविवक्षायां विभाषा इति यदा कर्म्मणि कर्त्तरि वा विवक्ष्यते तस्तदा 'वेटोऽपत' इत्यनेनापि निषेधो न स्यात् इत्यस्य पृथगारम्भ. ॥—विदित इति । 'गमहनविदॢ'–इत्यनेन विदॢती इत्यस्यैव वेट्त्व न विदक् इत्यस्येत्यतो नित्यमिट् ॥ न वाच्य 'गमहन'–इत्यत्र विदॢ इति सानुबन्धोपादानादेव विदकिरयस्य न भविष्यतीति । यतो नाऽनुबन्धकृतानीति

तवान्। आदित इत्येव। विदितमनेन। प्रविदितः। प्रविदितवान्। भावारम्भ इति किम्। मिन्नः। मिन्नवान्। पूर्वेण नित्यं निषेधे प्राप्ते विकल्पः ॥ ७३ ॥

**शकः कर्मणि ॥ ४ । ४ । ७४ ॥** शकेर्धातोः कर्मणि विहितयोः क्तयोरादिरिड् वा न भवति। शक्तः शकितो वा घटः कर्तुं चैत्रेण। कर्मणि क्तवतुर्नास्तीति नोदाह्रियते। कर्मणीति किम्। शक्तः कटं कर्तुम् चैत्रः॥७४॥ ***णौ दान्तशान्तपूर्णदस्तस्पष्टछन्नज्ञप्तम्॥४।४।७५॥** णौ सति दमादीनां क्तान्तानां दान्तादयो वा निपात्यन्ते। दम्, दान्तः। दमितः। शम्, शान्तः। शमितः। पूरै, पूर्णः। पूरितः। एषु णिलुग् निपात्यते। दास्, दस्तः। दासितः। स्पश्, *स्पष्टः। स्पाशितः। छद, छन्नः। छादितः। एषु ह्रस्वश्च। ज्ञा, ज्ञप्तः। ज्ञापितः। संज्ञपितः। संज्ञप्तः। *अत्र कचिद्ध्रस्वश्च। इडभावः सर्वत्र ॥ ७५ ॥ ***श्वसजपवमरुषत्वरसंघुषास्वनाम ॥४।४।७५॥** एभ्यः परयोः क्तयोरादिरिड् वा न भवति। श्वस्तः। श्वसितः। प्रश्वस्तः। प्रश्वसितः। आश्वस्तः। आश्वसितः। आश्वस्तवान्। आश्वसितवान्। विश्वस्तः विश्वसितः। विश्वस्तवान्। विश्वसितवान्। व्याङ्भ्यामेव केचिद्विकल्पमिच्छन्ति। तन्मते, श्वसितः। श्वसितवान्। विश्वसितः। विश्वसितवान्। उच्छ्वसितः। उच्छ्वसितवान्। प्राङ्विभ्यो नित्यमिड्निषेध इत्यन्ये। प्रश्वस्तः। आश्वस्तः। विश्वस्तः। श्वसेः कर्तर्ययं निषेधो भावेऽधिकरणे च नित्यमेवेट्। श्वसितं निश्वसितमिति केचित्। जप्, जप्तः। जप्तवान्। जपितः। जपितवान्। वम्, वान्तः। वान्तवान्। वमितः। वमितवान्। जपिवम्योर्नित्यमिट्निषेधः जप्तः जप्तवान् वान्तः वान्तवान् इत्यन्ये। रुष्, रुष्टः। रुष्टवान्। रुषितः। रुषितवान्। वेट्त्वाद्रुषेर्नित्यं प्रतिषेधे प्राप्ते वचनम्। त्वर्, तूर्णः। तूर्णवान्। त्वरितः। त्वरितवान्। संघुष्, संघुष्टं संघुषितं वाक्यम्। संघुष्टौ, संघुषितौ दम्यौ। संघुष्टवान् संघुषितवान् वाक्यम्। आस्वन्, आस्वान्तः, आस्वनितश्चैत्रः। संघुषास्वनिभ्यां परत्वात् *अयमेव विकल्प। तेनाविशब्दनेऽपि संघुष्टा रज्जुः। संघुषिता रज्जुः मनस्यपि, आस्वान्तं मनः, आस्वनितं मन इति भवति। अम्, अभ्यान्तः। अभ्यान्तवान्। अभ्यमितः अभ्यमितवान् ॥ ७६ ॥ ***हृषेः केशलोमविस्मयप्रतिघाते ॥ ४ । ४ । ७७ ॥** *केशलोमकर्तृका क्रिया केशलोमशब्देनोच्यते। हृषेः केशादिष्वर्थेषु वर्तमानात्परयोः क्तयोरादिरिड्वा भवति। हृष्टाः केशाः। हृषिताः केशाः। हृष्टं हृषितं केशैः। हृष्टानि हृषितानि लोमानि। हृष्टं हृषितं लोमभिः। हृष्टः हृषितश्चैत्रः। विस्मित इत्यर्थः। हृष्टा हृषिता दन्ताः प्रतिहता इत्यर्थः। केशादिष्विति किम्। हृष्टो मैत्र इत्यलीकार्थस्य हृषितश्चैत्रस्तुष्ट्यर्थस्य ॥ ७७ ॥ **अपचितः ॥ ४ ॥ ४ ॥ ७८ ॥** अपपूर्वस्य चायतेः क्तान्तस्येडभावश्चिरादेशश्च वा निपात्यते। अपचितः। अपचायितः। चिनोतेः पूजार्थो नास्तीति इदं निपातनम् ॥ ७८ ॥ ***सृजिदृशिस्कृस्वरात्त्वतस्तृज्नित्यानिटस्थवः ॥ ४ । ४ । ७९ ॥** सृजिदृशिभ्यां सस्सटः कृगः स्वरान्तादकारवतश्च तृचि नित्यानिटो धातोर्विहितस्य थव आदिरिड् वा न

न्यायादनुबन्धवशाद्वैरूप्य नानास्वरत्व भिन्नवर्णत्व च न भवतीति ॥—णौ दान्तशान्त—॥—स्पष्ट इति। पषी बाधने इत्यऽस्य स्थाने स्पशीति केचित्पठन्ति। स्पशि सौत्रो वा स्पशन्त प्रयुङ्क्ते णिग् स्पशिण् ग्रहणे इति चुरादिर्वा ॥—अत्र कचिदिति। कचिदिति कोऽर्थ ज्ञप्त इत्यत्र मारणाद्यर्थानामऽभावेऽपि ह्रस्व इत्यर्थ। अभावश्च तेषां पाक्षिके ज्ञापित इत्यत्र ह्रस्वाऽभावदर्शनान्निश्चीयते ॥—श्वसजप— ॥—अयमेव विकल्प इति। न तु 'घुषेरविशब्दे' 'क्षुब्धविरब्ध'—इत्याभ्या नित्य प्रतिषेध.॥—हृषेः—॥ केशलोमविषया उद्धुषणादिका क्रिया केशलोमशब्देनोच्यत इत्याह—केशलोमेति ॥—सृजिदृशि—

भवति । सृज्, सस्रष्ठ । ससर्जिथ । दृश्, दद्रष्ठ । ददर्शिथ । स्कृ, संचस्कर्थ । संचस्करिथ । स्वर, ययाथ । ययिथ । विव्येथ । विव्ययिथ । निनेथ । निनयिथ । जुहोथ । जुहविथ । अत्वत्, शशक्थ । शेकिथ । पपक्थ । पेचिथ । इयष्ठ । इयजिथ । जगन्थ । जगमिथ । सृजिदृशिस्कृस्वरात्वत इति किम् । रराधिथ । बिभेदिथ । चकर्थ । तृजिति किम् । किति नित्यानिटो माभूत् । लुलविथ । नित्येति किम् । तृचि विकल्पेटो माभूत् । विदुधविथ । ररन्धिथ । अनिट इति किम् । शिश्रयिथ । थव इति किम् । पेचिव । पेचिम । विहितविशेषणं किम् । *चकर्षिथ । अदादेशस्य घसेर्वेगादेशस्य च वयेः तृच्यभावान्नित्यमेवेड् भवति । जघसिथ । उवयिथ । प्रकृत्यन्तरस्य तु घसे परोक्षायामपि प्रायिक एव प्रयोग । स्क्रादिसूत्रेण प्राप्ते विभाषा । स्वरान्तत्वेनैव सिद्धे स्कृग्रहणम् 'ऋतः' (४-४-८०) इति प्रतिषेधबाधनार्थम् ॥ ७९ ॥ *ऋतः ॥ ४ । ४ । ८० ॥ ऋकारान्ताद्धातोस्तृचि नित्यानिटो विहितस्य थव आदिरिट् न भवति । *पृथग्योगात् वेति निवृत्तम् । जहर्थ । सस्मर्थ । दध्वर्थ । ऋत इति किम् । बिभेदिथ । तृज्नित्यानिट इत्येव । सस्वरिथ । अत्रापीड्निषेधमिच्छन्त्येके । सस्वर्थ । जजागरिथेत्यत्र त्वनेकस्वरत्वाच्चेड्निषेधो न भवति । थव इत्येव । जह्रिव । जह्रिम । पूर्वस्यापवादोऽयम् ॥ ८० ॥ *ऋवृव्येऽद इट् ॥ ४ । ४ । ८१ ॥ अर्तेर्वृगो व्येगोऽदश्च धातोः परस्य थव आदिरिट् भवति । पुनरिड्ग्रहणान्नेति निवृत्तम् । ऋ, आरिथ । वृग्, ववरिथ । व्येग्, संविव्ययिथ । अद्, आदिथ । अर्तेः पूर्वेण वृग उत्तरेण प्रतिषेधे व्येऽदोस्तु 'सृजिदृशि'-(४-४-७९) इत्यादिना विकल्पे प्राप्ते वचनम् ॥ ८१ ॥ स्कृसृवृभृस्तुद्रुश्रुस्रोर्व्यञ्जनादेः परोक्षायाः ॥ ४ । ४ । ८२ ॥ सस्सटः करोतेः सृवृभृस्तुद्रुश्रुस्रुवर्जितेभ्यश्च सर्वधातुभ्यः परस्य व्यञ्जनादे परोक्षाया आदिरिट् भवति । स्कृ, संचस्करिव । संचस्करिम । संचस्करिषे । स्ताद्यन्येभ्यः, ददिव । ददिम । ददिषे । चिच्यिवहे । चिच्यिमहे । निन्यिवहे । निन्यिमहे । जुहुविव । जुहुविम । लुलुविढ्वे । लुलुविध्वे । जह्रिव । जह्रिम । तेरिव । तेरिम । शेकिव । शेकिम । पेचिषे । पेचिध्वे । पेचिवहे । पेचिमहे । स्कृ इति स्सटा निर्देशः किम् । केवलस्य माभूत् । चकृव । चकृम । चकर्थ । चकृषे । स्रादिवर्जनं किम् । सस्रुव । सस्रुम । ससर्थ । ववृव । ववृम । ववृवहे । ववृमहे । बभृव । बभृम । बभर्थ । तुष्टुव । तुष्टुम । तुष्टोथ । दुद्रुव । दुद्रुम । दुद्रोथ । शुश्रुव । शुश्रुम । शुश्रोथ । सुस्रुव । सुस्रुम । सुस्रोथ । स्तुद्रुश्रुस्रूणा 'सृजिदृशि'—(४-४-७९) इत्यादिनापि थवि विकल्पो न भवति । अनेन प्राप्ते हि स विकल्पः । एषां तु प्रतिषिद्धत्वात्प्राप्तिर्नास्ति । वव्रषे इत्यत्र तु 'स्ताद्यशितः'-(४-४-३२) इत्यादिनापि न भवति । 'ऋवर्णश्र्यूर्णुगः कितः' (४-४-५८) इति प्रतिषेधात् ॥ ८२ ॥ *घसेकस्वरातः क्वसोः ॥ ४ । ४ । ८३ ॥ घसेरेकस्वरादादन्ताच्च धातोः परस्य परोक्षायाः क्वसोरादि-

---

॥—चकर्षिथेति । इह गुणे कृते अत्वान् न प्रथमम् ॥—तृच्यऽभावादिति । घसचलि परोक्षाया च विधानात् घसादेशस्य ॥—ऋत. ॥—पृथग्योगादिति । सूत्रारम्भसामर्थ्यादित्यर्थ । अन्यथा स्वरान्तत्वात् पूर्वेणैव सिद्धमिति ॥—ऋवृव्ये—॥ वृ इति सामान्योक्तावपि वृगो ग्रह. । वृङस्त्वात्मनेपदित्वेन थवोऽसम्भव । उत्तरसूत्रे तु परोक्षाया इति भणनाद्द्वयोरपि ॥—घसेकस्वरा—

रिट् भवति । घस् , जक्षिवान् । एकस्वर, आदिवान् । आशिवान् । द्वित्वदीर्घत्वयोः कृतयोरेकस्वरत्वम् । ऊचिवान् । अनूचिवान् । ख्याति दीर्घत्वे चैकस्वरत्वम् । शेकिवान् । पेचिवान् । उपसेदिवान् । इणोऽर्तेश्च द्विर्वचने कृतेऽपि समानदीर्घत्वे *अरादेशे च सत्येकस्वरसद्भावेनेटः प्राप्तिसद्भावात् इट् नित्य एवेति पूर्वमेव भवति । तेन *ईयिवान्, समीयिवान् , *आरिवान् । आत् , पपिवान् । ययिवान् । तस्थिवान् । जग्लिवान् । घसेकस्वरात इति किम् । बिभिद्वान् । चिच्छिद्वान् । बभूवान् । उपशुश्रुवान् । नित्यत्वात् द्वित्वे कृतेऽनेकस्वरत्वम् । *विहितविशेषणं चेह नाश्रीयते । क्सोरिति किम् । बिभिदिव । बिभिदिम । वमयोर्नियमो न भवति । घस्याद्ग्रहणमनेकस्वरार्थम् । इटि हि सत्याकारलोप उपान्त्यलोपश्च भवति । दरिद्रातेस्त्वामा भवितव्यम् । *दरिद्राचकृवान् । पूर्वेणैव सिद्धे *नियमार्थं वचनम् । एभ्य एव क्सोरादिरिट् भवति नान्येभ्य इति ॥ ८३ ॥ *गमहनविद्लृविशदृशो वा ॥ ४ । ४ । ८४ ॥ एभ्यः परस्य क्सोरादिरिट् वा भवति । गम्, जग्मिवान् । जगन्वान् । हन् , जघ्निवान् । जघन्वान् । विद्लृ, विविदिवान् । विविद्वान् । विश् , विविशिवान् । विविश्वान् । दृश्, ददृशिवान् । ददृश्वान् , लृकारो लाभार्थस्य *विदेर्ग्रहणार्थः । तेन ज्ञानार्थस्य विविद्वानित्येव भवति । सत्ताविचारणार्थयोस्त्वात्मनेपदित्वात् क्सुर्नास्त्येव ॥ ८४ ॥ सिचोऽञ्जेः ॥ ४ । ४ । ८५ ॥ अञ्जेः परस्य सिच आदिरिड् भवति । आञ्जीत् । आञ्जिष्टाम् । आञ्जिषुः । सिच इति किम् । अङ्क्ता । अञ्जिता । औदित्त्वाद्विकल्पे प्राप्ते नित्यार्थं वचनम् ॥ ८५ ॥ *धूग्सुस्तोः परस्मै ॥ ४ । ४ । ८६ ॥ एभ्यः परस्य सिच आदिरिड् भवति परस्मैपदे परतः । अधावीत् । अधाविष्टाम् । अधाविषुः । सु इति सुमात्रस्य ग्रहणम् । असावीत् । असाविष्टाम् । असाविषुः । स्तु, अस्तावीत् । अस्ताविष्टाम् । अस्ताविषुः । परस्मा इति किम् । अधोष्ट । अधविष्ट । *असोष्ट । अस्तोष्ट । धूगो विकल्पे

---

॥—अरादेशे च सतीति । इटोनित्यत्वभावनार्थमित्थ प्रक्रिया दर्शिता न त्वेव रूपसिद्धिर्विधीयते । यतोऽवर्णस्येत्यर बाधित्वाऽल्पाश्रितत्वेन इवर्णादेरिति रत्वमेव ॥—इट् नित्य एवेतीति । द्वित्वमपि कृताऽकृतप्रसङ्गित्वेन नित्य कि त्विट् परश्चेति तयो स्पर्द्धे परत्वात्पूर्वमिडेव ॥—ईयिवानिति । एत् इयाय अगात् वेयिवादिते साधु ॥—आरिवानिति । आर क्सु अनेनेट् । द्वित्वे 'ऋतोऽत्' । 'अस्यादेरा '–इत्यात्वम् । एकस्य स्थाने भवन् अल्पाश्रित इत्यवर्णस्येत्यर बाधित्वा 'इवर्णादे '–इति रत्वादेश एव ॥—विहितविशेषणमिति । कुतो हेतो घस्ग्रहणात् । अन्यथा विहितविशेषणत्वे एकस्वरत्वात् घस इट् सिद्ध एव ॥—दरिद्राञ्चकृवानिति । 'वत्तस्याम्' इत्यव्ययत्वे 'अव्ययस्य '–इति सेर्लुपि ' तौ मुम '–इत्यनुस्वार सिद्ध । अन्यथा 'स्नाम् '–इत्यन्त्य एव स्यात् ॥—नियमार्थमिति । विपरीतानियमस्तु न भवति घसादीनामनुस्वारेत्करणात् । तद्धि अनिडर्थं तच्च क्सोरेवेत्यनेनैव नियमेन सिद्धम् ॥—गमहनविद्लृ—॥—विदेर्ग्रहणार्थ इति । अथ विद इत्युक्तेऽपि अदाद्यनदाद्योरिति न्यायात् लाभार्थस्यैव ग्रहण भविष्यति सत्ताविचारार्थयोरनदादित्वेऽप्यात्मनेपदित्वात् क्सोरऽसभवात् । नैवम् । निरनुबन्धपरिभाषया तौदादिकस्य ग्रहणाऽसभवादुभे ह्येते वचने परस्परविरोधिनी नैवाऽत्र प्रवर्त्तेते । तस्माद्येन प्रकारेण निर्विशङ्क लाभार्थस्य ग्रहणमुपपद्यते स प्रकारो वृत्तौ दर्शित इति । अथ विशिना तौदादिकेन साहचर्याल्लाभार्थस्यैव ग्रहण भविष्यति किम्लृकारकरणेन । नैवम् । यथा विशिना साहचर्य तथा हन्तिनापि साहचर्यशङ्का स्यात्ततश्चाऽदादेरेव ग्रह स्यात् ॥—धूग्सुस्तो—॥—असोष्टेति । सुमात्रस्येत्युक्तेपि पुग् इत्यस्याय प्रयोग । सु प्रसवैश्वर्ययोरित्यस्य तु आत्मनेपद न स्यात् कर्त्तरि । भावकर्म्मणोस्तु सभवेऽपि सिच् स्यात् ततश्चाऽसावि

सुस्तुभ्यां च प्रतिषेधे प्राप्ते वचनम् ॥ ८६ ॥ *यमिरमिनम्यातः सोऽन्तश्च ॥ ४ । ४ । ८७ ॥ यमिरमिनमिभ्य आदन्तेभ्यश्च धातुभ्यः परस्य परस्मैपदविषयस्य सिच आदिरिड् भवति एषां च *सोऽन्तो भवति । अयंसीत् । अयंसिष्टाम् । अयंसिषुः । व्यरंसीत् । व्यरंसिष्टाम् । व्यरंसिषुः । अनंसीत् । अनंसिष्टाम् । अनंसिषुः । एभ्यो दिस्यो सिच इड्विधे वृद्धिप्रतिषेधः प्रयोजनम् । आदन्त, अयासीत् । अयासिष्टाम् । अयासिषुः । अग्लासीत् । अग्लासिष्टाम् । अग्लासिषुः । अदरिद्रासीत् । अदरिद्रासिष्टाम् । अदरिद्रासिषुः । *आलोपपक्षे, अदरिद्रीत् । अदरिद्रिष्टाम् । अदरिद्रिषुः । परस्मा इत्येव । आयंस्त । उपायंस्त । अरंस्त । अनंस्त दण्डः स्वयमेव । अयास्त धान्यं चैत्रः ॥ ८७ ॥ *ईशीडः सेध्वेस्वध्वमोः ॥ ४ । ४ । ८८ ॥ आभ्यां परयोर्वर्तमानासेध्वयोः पञ्चमीस्वध्वमोश्चादिरिड् भवति । ईशि, ईशिषे । ईशिध्वे । ईशिष्व । ईशिध्वम् । ईड् , ईडिषे । ईडिध्वे । ईडिष्व । ईडिध्वम् । समुदायद्वयापेक्ष द्विवचनम् । तेन स्वसहचरितस्य ध्वमो ग्रहणात् ह्यस्तनीध्वमि न भवति । ईशीडोः *ऐड्ढ्वम् । परोक्षासेध्वयोरामा भाव्यमिति वर्तमानासेध्वयोर्ग्रहणम् । वचनभेदो यथासंख्यनिवृत्त्यर्थः ॥ ८८ ॥ रुत्पञ्चकाच्छिदयः॥४।४।८९॥ रुदिस्वपि—अनिश्वसिजक्षिलक्षणाद्रुत्पञ्चकात्परस्य व्यञ्जनादेः शित आदिरिड् भवति । रोदिति । रुदितः । स्वपिति । स्वपितः। प्राणिति । प्राणितः । श्वसिति । श्वसितः। जक्षिति । जक्षितः । पञ्चकादिति किम् । जागर्ति । शिदिति किम् । रुद्यात् । व्यञ्जनादेरित्येव । रुदन्ति । अयिति किम् । रुद्यात् । स्वप्यात् ॥ ८९ ॥ दिस्योरीट् ॥ ४ । ४ । ९० ॥ रुत्पञ्चकात्परयोर्दिस्योः शितोरादिरीट् भवति । अरोदीत् । अरोदीः । अस्वपीत् । अस्वपीः । प्राणीत् । प्राणीः । अश्वसीत् । अश्वसीः । अजक्षीत् । अजक्षीः । दिस्योरिति किम् । रोदिति । दिसाहचर्यात्सिर्ह्यस्तन्या एव । तेन रोदिषि ॥९०॥ अदश्चाट् ॥ ४ ।४ । ९१॥ अत्ते रुत्पञ्चकात्परयोर्दिस्योः शितोरादिरट् भवति । आदत् । आदः । अरोदत् । अरोदः । अस्वपत् । अस्वप । प्राणत् । प्राणः । अश्वसत् । अश्वसः । अजक्षत् । अजक्षः । दिस्योरित्येव । अत्ति । अत्सि । रोदिति । रोदिषि ॥ ९१ ॥ *संपरेः कृगः स्सट् ॥ ४ । ४ । ९२ ॥ संपरिभ्यां परस्य कृग आदिः स्सट् भवति । *संस्करोति कन्याम् , भूषयतीत्यर्थः । संस्कृत वचनम् । संस्कारो वासना । तत्र नः संस्कृत समुदितमित्यर्थः । परिष्करोति कन्याम् । परिष्कृतम् । परिष्कार. । तत्र न परिष्कृतम् । भूषासमवाययोरेवेच्छन्त्येके । तन्मतेऽन्यत्र परिकृतम् । पूर्वं धातुरुपसर्गेण संबध्यते पश्चात्साधनेनेति द्विर्वचनादडागमाच्च पूर्वं स्सडेव भवति । संचस्कार । परिचस्कार । समस्करोत् । पर्यस्करोत् । समस्कार्षीत् । पर्यस्कार्षीत् । समचिस्करत् । पर्यचिस्करत् । कथं संकृतिः । गर्गादिपाठात् । संकरः परिकर

---

इति प्रयोग. स्यात् ॥—यमिरमि—॥—सोन्तो भवतीति । अन्तग्रहणात्पर[illegible] अन्यस्पेति न प्रवर्तते । [illegible]न्तग्रहणाभावेऽस्य प्रत्ययत्व स्यात्ततोऽदरिद्रासीदित्यादौ 'स्ताद्यशित '–इत्यनेन सकारस्यादावपीट् स्यात् ॥ दिस्यो. परयो सिचादावि[illegible]विधानस्य [illegible] फलमित्याह—वृद्धिप्रतिषेध इति । ' व्यञ्जनानामनिटि ' इति प्राप्ताया इत्यर्थ ॥—आलोपपक्षे इति । ' दरिद्रोऽद्यतन्या वा ' इत्यनेनाऽद्यतनीविषयेऽप्यत्यर्थ ॥—ईशीड.—॥—ऐड्ढ्वमिति । ईशीडोर्ह्यस्तनीध्वमि ' यजसृज '–इति षत्वे ' तवर्गस्य '–इति ढत्वे ' तृतीयस्तृतीय –इति धस्य ढत्वे ' स्वरादेस्तासु ' इति वृद्धि ॥—सपरे. कृगः—॥—संस्करोतीति । कस्यादिरिति व्याख्यानादऽनुस्वारस्यापि व्यञ्जनत्वे ' धुटो धुटि –इति प्रवर्त्तते इति न्यास

इति किरतेरला भविष्यति । संकार इत्यत्र किरतिरेव । वहुलाधिकारात् घञ् । स्सडिति द्विसकारनिर्देशात् समचिस्करदित्यादौ षो न भवति । परिष्करोतीत्यादौ तु 'असोङसिवूसहस्सटाम्' ( ८-३-४९ ) इत्यादिवचनाद्भवति । टकार 'स्सटि समः' ( ८-३-१२ ) इत्यत्र विशेषणार्थः ॥ ९२ ॥ 'उपाद्भूषासमवायप्रतियत्नविकारवाक्याध्यारे ॥ ४ । ४ । ९३॥ उपात्परस्य कृगो भूषादिष्वर्थेष्वादिः सट् भवति । भूपालंकारः । तत्र, कन्यामुपस्करोति भूषयति इत्यर्थः । समवायः समुदायः । तत्र न उपस्कृतं समुदितमित्यर्थ । पुनर्यत्न प्रतियत्नः , *सतोऽर्थस्य संवन्धाय वृद्धये तादवस्थ्याय वा समीहा प्रतियत्नः । एधोदकस्योपस्कुरुते । काण्डगुणस्योपस्कुरुते । तत्र प्रतियतत इत्यर्थ । प्रकृतेरन्यथाभावो विकारः। तत्र,*उपस्कृतं भुङ्क्ते । उपस्कृतं गच्छाति । विकृतमित्यर्थः। गम्यमानार्थस्य वाक्यैकदेशस्य स्वरूपेणोपादानं वाक्याध्याहार । तत्र, उपस्कृतं जल्पति । उपस्कृतमधीते । सोपस्कराणि सूत्राणि । सवाक्याध्याहाराणीत्यर्थः । एष्विति किम् । उपकरोति ॥ ९३ ॥ *किरो लवने ॥ ४ । ४ । ९४ ॥ उपात्परस्य किरतेः सडादिर्भवति लवने लवनविपयश्चेत्तदर्थो भवति । उपस्कीर्य मद्रका लुनन्ति । उपस्कार मद्रका लुनन्ति । विक्षिप्य लुनन्तीत्यर्थ । 'उपात् किरो लवने' (५-४-७२) इति णम् । लवन इति किम् । उपकिरति पुष्पम् ॥ ९४ ॥ प्रतेश्च वधे ॥ ४ । ४ । ९५ ॥ प्रतेरुपाच्च परस्य किरतेर्वधे हिंसायां विषयेऽभिधेये वा सडादिर्भवति । प्रतिस्कीर्ण ह ते वृषल भूयात् । उपस्कीर्ण ह ते वृषल भूयात् । हिंसानुबन्धी विक्षेपस्ते भूयात् इत्यर्थः । अभिधेये, उरोविदारं प्रतिचस्करे नखैः। हत इत्यर्थ । वध इति किम् । प्रतिकीर्ण वीजं विक्षिप्तमित्यर्थः॥९५॥ 'अपाच्चतुष्पात्पक्षिशुनि हृष्टान्नाश्रयार्थे॥४।४।९६॥ अपात्परस्य किरतेश्चतुष्पदि पक्षिणि शुनि च कर्तरि यथासख्य हृष्टेऽन्नार्थिनि आश्रयार्थिनि सति सडादिर्भवति । अपस्किरते वृषभो हृष्टः । हर्षाद्विलिख्य तटं विक्षिपतीत्यर्थ । अपस्किरते कुक्कुटो भक्ष्यार्थी । विलिख्यावस्कर विक्षिपतीत्यर्थः। अपस्किरते श्वाश्रयार्थी । विलिख्य भस्म विक्षिपतीत्यर्थः। अपादिति किम् । विकिरति वृषभो हृष्टः । एष्विति किम् । अपकिरति वालो धूलिं हृष्टः । हृष्टादिष्विति किम् । अपकिरति हस्ती रजश्चापलेन ॥ ९६ ॥ वौ विष्किरो वा ॥ ४ । ४ । ९७॥ वौ पक्षिण्यभिधेये विष्किर इति वा स्सट् निपात्यते । विकिरतीति विष्किरः पक्षिविशेषः । विकिरोऽपि स एव । अन्ये तु पक्षिणोऽन्यत्र विकिरशब्दस्यापि प्रयोगो नास्तीत्याहुः ॥ ९७ ॥ प्रात्तुम्पतेर्गवि ॥ ४ । ४ । ९८ ॥ प्रात्परस्य तुम्प इत्येतस्य धातोर्गवि कर्तरि स्सडादिर्भवति । प्रस्तुम्पति गौः । *प्रस्तुम्पति वत्सो मात-

॥—उपाद्भूषा—॥—सतोऽर्थस्येति । सतोऽसबद्धस्य सबन्धाय लाभाय लब्धस्य वा वृद्धये आधिक्याय वृद्धस्य वा तादवस्थ्याय सा पूर्वावस्थाऽस्य तदवस्थाऽस्य तदवस्थ वस्तु तस्य भाव । अपायपरिहारेणाऽभिमतावस्थासरक्षणम् ॥—उपस्कृत भुङ्क्ते इति । ससत्क धान्य भुङ्क्ते इत्यर्थ ॥—वाक्याध्याहार इति । गम्यमानार्थानि पदानि सुखार्थमुच्चार्यन्ते । यथा 'ज्ञ' इति सूत्रे कर्मण्यसति गम्यमानमपि स्वरूपेण उपादीयते । यथा वा 'किरो लवने' इति उपादिति स्वरूपेण गृह्यते ॥—किरो लवने ॥ किर इति इरनिर्देशः क्र्यादिकनिवृत्त्यर्थ । न तु इरादेशे सति कार्यार्थस्तेन वाक्येऽपि स्सट् भवति ॥—अपाच्चतु—॥—हृष्ट इति । हृषच् तुष्टौ । हर्षण क्ति । हृष्टिरस्यास्ति अभ्रादित्वाद । क्तान्तात्तु इट् स्यात् । हर्षिमष्पूदित मन्यते नन्दी हृपूरित्यपि तुष्ट्यर्थो वाऽनेकार्थत्वात् ॥—प्रात्तुम्पते—॥—प्रस्तुम्पति वत्स

रम् । मस्तुम्पको वत्सः । गवीति किम् । मतुम्पति वनस्पतिः । अन्ये तु मात्परस्य *तुम्पतिशब्दस्य गवि अभिधेये सडादिर्भवति । मस्तुम्पतिर्गौः । मतुम्पतिरन्यः ।
तुम्पतिधातोस्तु सट् न भवतीति मन्यन्ते । एके तु मात्तुम्पतेः *कपीत्यारम्भन्ते । कपि हिंसायां कम्पर्याये वा कपि समासान्त इति च व्याचक्षते । मस्तुम्पति वत्सो
मातरम् हिनस्तीत्यर्थः । मगतस्तुम्पोऽस्मात्मस्तुम्पको देशः ॥ ९८ ॥ उदितः स्वरान्नोन्तः ॥ ४ । ४ । ९९ ॥ उदितो धातोः स्वरात्परो नोऽन्तोऽवयवो भवति ।
नन्दति । निन्दति । नन्दितः । निन्दितः । कुण्डिता । हुण्डिता । अयं चोपदेशावस्थायामेव भवत्यनैमित्तिकत्वात् । तेन कुण्डा हुण्डेत्यादौ 'क्ङिटो गुरोर्व्यञ्जनात्'
(५-३-१०६) इत्यप्रत्ययः सिद्धो भवति ॥ ९९ ॥ मुचादितृफदृफगुफशुभोम्भः शे ॥ ४ । ४ । १०० ॥ एषां स्वरान्नोऽन्तो भवति शे परे । मुञ्चति ।
मुञ्चते । रिञ्चति । सिञ्चते । विन्दति । विन्दते । लुम्पति । लुम्पते । लिम्पति । लिम्पते । कृन्तति । खिन्दति । पिंशति । तृफ, तृम्फति । दृफ, दृम्फति । गुफ,
गुम्फति । शुभ, शुम्भति । उभ् , उम्भति । तृफादयः सनकारा अनकाराश्च तुदादिषु पठ्यन्ते । तत्र तृम्फादीनां शे नस्य लुक् इति तृफादीनां नविधानम् । विधान-
सामर्थ्यान्नस्य लोपो न भवतीति तृफति तृम्फतीत्यादि द्वैरूप्यं सिद्धम् । एषामिति किम् । तुदति । श इति किम् । मोक्ता । मोक्तुम् । मुचॢंती, पिचींत् , विद्ॢंती,
लुप्ॢंती । लिपींत् । कृतैत् । खिदंत् । पिशत् । वृत् इति मुचादिः ॥ १०० ॥ *जभः स्वरे ॥ ४ । ४ । १०१ ॥ जम्भतेः स्वरादौ प्रत्यये परे नोऽन्तो भवति ।
*जम्भयति । जम्भकः । साधुजम्भी । जम्भंजम्भम् । जम्भो वर्तते । स्वर इति किम् । जभ्यम् । *जंजब्धि ॥ १०१ ॥ *रध इटि तु परोक्षायामेव ॥ ४ । ४ ।
१०२ ॥ रध्यतेः स्वरात्परः स्वरादौ प्रत्यये परेऽन्तो नो भवति इटि तु इडादौ तु प्रत्यये परोक्षायामेव । रन्धयति । रन्धकः । साधुरन्धी । रन्धंरन्धम् । रन्धो वर्तते ।
इटि तु परोक्षायाम् । ररन्धिव । ररन्धिम । रेधिवान् । अत्र नस्य लुक् । परोक्षायामेवेति किम् । रधिता । रधिष्यति । एवकारो *विपरीतनियमनिरासार्थः । तेनेह
नियमो न भवति । ररन्ध । ररन्धतुः । ररन्धुः । स्वर इत्येव । रद्धा ॥ १०२ ॥ रभोऽपरोक्षाशवि ॥ ४ । ४ । १०३ ॥ रभतेः स्वरात्परः परोक्षाशव्वर्जिते
स्वरादौ प्रत्यये परे नोऽन्तो भवति । आरम्भयति । आरम्भकः । साध्वारम्भी । आरम्भमारम्भम् । आरम्भो वर्तते । अपरोक्षाशवीति किम् । आरेभे । आरभते ।
स्वर इत्येव । आरब्धा ॥ १०३ ॥ लभः ॥ ४ । ४ । १०४ ॥ लभतेः स्वरात्परः परोक्षाशव्वर्जिते स्वरादौ प्रत्यये परे नोऽन्तो भवति । लम्भयति । लम्भकः ।
साधुलम्भी । अपरोक्षाशवीत्येव । लेभे । लभते । लभेः परस्मैपदस्याप्यभिधानात् लभन्ती स्त्रीति केचित् । स्वर इत्येव । लब्धा । योगविभाग उत्तरार्थः ॥ १०४ ॥
आङो यि ॥ ४ । ४ । १०५ ॥ आङः परस्य लभतेः स्वरात्परो यि यकारादौ प्रत्यये नोऽन्तो भवति । आलम्भ्या गौः । आलम्भ्या वडवा । आङ इति

इति । वत्सोऽपि गौरेव विशेषस्य सामान्याश्रयत्वात् ॥—तुम्पतिशब्दस्येति ॥ तुम्पतेस्तिबन्तस्यैवाऽनुकरणं मन्यते इत्यर्थः । 'इकिश्तिव्'—इति तिव्प्रत्ययान्तं वा । ततः प्रकृष्टा स्तुम्पतिर्हिंसा यस्याऽसौ
मस्तुम्पतिर्गौः ॥—कपीत्यारम्भन्ते इति । कपे. सौत्रात् कम्पेर्वा कम्पन 'क्रुत्सम्पद'—इति क्विप् । 'रुजिकम्प्योः'—इति नलुक् ॥—जभः स्वरे ॥—जम्भयतीति । जभजभ मैथुने जभुङ् जभैङ्
जृभुङ् गात्रविनामे । जम्भन्तं जम्भमानं वा प्रयुङ्क्ते णिग् ॥—जंजब्धीति । ईति जञ्भीति न तु नागमः । आगमशासनमनित्यमिति न्यायात् ॥—रध इटि तु—॥—विपरीतनियमनिरासार्थ

किम् । लभ्यः । यीति किम् । आलब्धा ॥ १०५ ॥ उपात्स्तुतौ ॥ ४ । ४ । १०६ ॥ उपात्परस्य लभतेः स्वरात्परो यकारादौ प्रत्यये परे स्तुतौ प्रशंसायां गम्यमानायां नोऽन्तो भवति । उपलम्भ्या विद्या भवता । उपलम्भ्यं शीलम् । स्तुताविति किम् । उपलभ्या वार्ता । उपलभ्यमस्माद्वृपलात् किञ्चित् ॥१०६॥ ञिख्णमोर्वा ॥ ४ । ४ । १०७ ॥ ञौ ख्णमि च प्रत्यये परे लभतेः स्वरात्परो नोऽन्तो वा भवति । अलाभि । अलम्भि । लाभंलाभम् । लम्भंलम्भम् ॥ १०७ ॥ 'उपसर्गात् खल्घञोश्च ॥ ४ । ४ । १०८ ॥ उपसर्गात्परस्य लभेः स्वरात्परः खल्घञोर्ञिख्णमोश्च परयोर्नोऽन्तो भवति । खल्, ईषत्प्रलम्भम् । ईषदुपलम्भम् । दुष्प्रलम्भम् । सुप्रलम्भम् । घञ्, प्रलम्भः । उपलम्भः । विलम्भः । ञि, प्रालम्भि । ख्णम्, प्रलम्भंप्रलम्भम् । उपसर्गादिति किम् । ईषल्लभः । लाभो वर्तते । ञिख्णमोर्नियमार्थमुपसर्गादेव खल्घञोरिति नियमार्थं वचनम् ॥ १०८ ॥ *सुदुर्भ्यः ॥ ४ । ४ । १०९ ॥ सुदुरित्येताभ्यां व्यस्ताभ्यां 'समस्ताभ्यां चोपसर्गात्पराभ्यां परस्य लभतेः स्वरात्परः खल्घञोः परयोर्नोऽन्तो भवति । खल्, अतिसुलम्भम् । अतिदुर्लम्भम् । घञ्, अतिसुलम्भः । *अतिसुदुर्लम्भः । उपसर्गादित्येव । सुलभम् । दुर्लभम् । सुदुर्लभम् । सुलाभः । दुर्लभः । सुदुर्लभः । अतिसुलभमतिदुर्लभमित्यत्र पूजातिक्रमयोरनुपसर्गत्वात् । उपसर्गादेव सुदुर्भ्य इति *नियमार्थं वचनम् । बहुवचनं व्यस्तसमस्तपरिग्रहार्थम् दुस्संग्रहार्थं च ॥ १०९ ॥ नशो धुटि ॥ ४ । ४ । ११० ॥ नश्यतेः स्वरात्परो धुडादौ प्रत्यये परे नोऽन्तो भवति । नंष्टा । नंष्टुम् । नङ्क्ष्यति । निनङ्क्षति । धुटीति किम् । नश्यति । नशिता ॥ ११० ॥ मस्जेः सः ॥ ४ । ४ । १११ ॥ मस्जतेः स्वरात्परस्य सकारस्य स्थाने धुडादौ प्रत्यये नोऽन्तो भवति । मङ्क्ता । मङ्क्तुम् । मङ्क्ष्यति । मिमङ्क्षति । ममङ्क्थ । अमाङ्क्षीत् । आदेशकरणं 'नलोपार्थम् । मग्नः । मग्नवान् । मक्त्वा । तसि, माममक्तः । धुटीति किम् । मज्जनम् ॥ १११ ॥ *अः सृजिदृशोऽकिति ॥ ४ । ४ । ११२ ॥ सृजिदृशोः स्वरात्परो धुडादौ प्रत्यये अकारोऽन्तो भवति 'अकिति' किति तु न भवति । स्रष्टा । स्रष्टुम् । स्रष्टव्यम् । अस्राक्षीत् । परत्वादका-

---

इति । नियमस्तु पूर्वसूत्रात्स्वराधिकारे यदत्र इट्ग्रहणं करोति तस्मादेव सिद्ध इति ॥—उपसर्गात्खल्—॥ उपसर्गेनियमस्तु न भवति 'शप उपलम्भने' इति ज्ञापनात् ॥—सुदुर्भ्यः ॥—समस्ताभ्यां चेति । अत्र समस्तग्रहणेन विपर्यस्तावपि गृह्येते । यतः सामर्थ्य हि द्वयोरपि एकस्मिन् प्रयोगे योजनं तच्च क्रमव्युत्क्रमाभ्यां भवति । तेन दु सुलाभ इति व्यावृत्युदाहरणमुपपन्नम् । यत्र तु साक्षात् विपर्यस्तग्रहस्तत्र सुखार्थं गोबलीवर्दन्यायवत् ॥—अतिसुदुर्लम्भ इति । अतिशयेन सुष्ठु दुःखेन लभ्यते । दुःखस्यातिशयोऽतिशयः ॥—नियमार्थमिति । पूर्वेणैव सिद्धेऽस्यारम्भादित्यर्थः । विपरीतनियमस्तु न । 'शप उपलम्भने' इत्यस्यैव ज्ञापकत्वात् ॥—मस्जेः सः ॥—नलोपार्थमिति । न वाच्यं मङ्क्ता इत्यादिषु स्वरात्परे विधीयमाने नागमे संयोगमध्यस्थत्वात्सकारस्य लोपो न प्राप्तः । यतोऽनेको न्सुसयो गोऽपरश्च स्ज् ततश्च द्वितीयसंयोगादौ सस्य लुक् । मग्न इत्यादौ तु सलुकि कृते 'नो व्यञ्जनस्य'–इति उपान्त्यलोपे कर्तव्ये सलुक् असन् भवति इति नलोपार्थमादेशकरणमभाणि । पाणिनौ तु सात्परो नो विहितः संयोगश्च त्रयाणामपीष्ट इति संयोगादौ सलुक् । यद्येवं मङ्क्तेत्यादौ संयोगद्वयविवक्षा एव तर्हि इन्दिद्रीषिरतीत्यत्र दस्य द्वित्वं न प्राप्नोति । तत्रापि संयोगद्वयविवक्षाया दस्यादित्वात् । न । 'न वदनम्'–इत्यत्रावधारणत्वात् एवं व्याख्या कार्या आदिरेव वदन न द्विरुच्यते । अत्र तु नकारापेक्षया दकारोऽन्तेऽपि । यद्वा द्वितीयस्यावयवस्य संयोगपूर्वावयवानन्तरस्य ग्रहणात् ॥—अः सृजि—॥

रागमे सति वृद्धिः । सक्ष्यति । द्रष्टा । द्रष्टुम् । द्रष्टव्यम् । अद्राक्षीत् । द्रक्ष्यति । सरिसृष्टि । सरिसृष्टः । दरिद्रष्टि । दरिद्रष्टः । ङित्यपि नेच्छन्त्येके । धुटीत्येव । सर्जनम् । दर्शनम् । अकितीति किम् । सृष्टः । दृष्टः । सिसृक्षति । दिदृक्षते । *प्रसज्याश्रयणात्प्रतिषेधे 'धुटीति नाश्रीयते । तेन सिज्लुचो धुडादित्वं प्रति वर्णाश्रयत्वेन स्थानिवद्भावाभावेऽपि कित्त्वं प्रति स्थानिवद्भावात् किदाश्रयः प्रतिषेधो भवति । असृष्ट । असृष्टाः । समदृष्ट । समदृष्टाः । धातोः स्वरूपग्रहणे 'तत्प्रत्यये विज्ञानात् चेह न भवति । रज्जुसृड्भ्याम् । देवदृग्भ्याम् ॥११२॥ स्पृशादिसृपो वा ॥४।४।११३॥ स्पृशमृशकृषतृपदृपां सृपश्च स्वरात्परो धुडादौ प्रत्यये परेऽकारोऽन्तो वा भवति अकिति । स्प्रष्टा । स्पर्ष्टा । स्प्रष्टुम् । स्पर्ष्टुम् । स्प्रष्टव्यम् । स्पर्ष्टव्यम् । अस्प्राक्षीत् । अस्पार्क्षीत् । स्प्रक्ष्यति । स्पर्क्ष्यति । एवं म्रष्टा । मर्ष्टा । क्रष्टा । कर्ष्टा । त्रप्ता । तर्प्ता । द्रप्ता । दर्प्ता । स्रप्ता । सर्प्ता । धुटीत्येव । स्पर्शनम् । मर्शनम् । अकितीत्येव । स्पृष्टः । पिस्पृक्षति ॥११३॥ ह्रस्वस्य तः पित्कृति ॥४।४।११४॥ धुटीति निवृत्तमसंभवात् अकितीति च *"सोस्तो ङनिपि' इति सूत्राकरणात् । ह्रस्वान्तस्य धातोः पिति कृत्प्रत्यये परे तोऽन्तो भवति । *जगत् । अग्निचित् । सोमसुत् । पुण्यकृत् । आगत्य । विजित्य । प्रस्तुत्य । प्रहृत्य । ह्रस्वस्येति किम् । ग्रामणीः । आलूय । पिदिति किम् । चितम् । स्तुतम् । कृतीति किम् । अजुहवुः । ग्रामणि कुलं वृत्रह कुलमित्यत्र तु *"असिद्धं बहिरङ्गमन्तरङ्गे' इति न भवति । सुश्रूः उरःशूयेत्यत्रान्तरङ्गत्वाद्विशेषविहितत्वाच्च य्वृदीर्घत्वं च भवति ॥११४॥ अतो म आने ॥४।४।११५॥ धातोर्विहिते आने प्रत्यये परेऽकारस्य मोऽन्तो भवति । पचमानः । पवमानः । कवचमुद्वहमानः । करिष्यमाणः । विद्यमानः । अत इति किम् । शयानः । भुञ्जानः । आन इति किम् । पचन् । पूर्वान्तकरणं 'मव्यस्याः' ( ४-२-११३ ) इत्याकारनिवृत्त्यर्थम् ॥ ११५ ॥ आसीनः ॥ ४ । ४ । ११६ ॥ आस्तेः परस्यानस्यादेरीकारो निपात्यते । आसीनः । उदासीनः । उपासीनः । अध्यासीनः ॥ ११६ ॥ ॠतां क्ङितीर् ॥४।४।११७॥ ॠकारान्तस्य धातोः किति ङिति च प्रत्यये परे निर्देशात् ॠकारस्यैव स्थाने इरित्ययमादेशो भवति । तीर्णम् । दीर्णम् । आस्तीर्णम् । विशीर्णम् । ङिति, किरति । गिरति । बहुवचनं लाक्षणिकस्यापि परिग्रहार्थम् । चिकीर्षति । जिहीर्षति । क्ङितीति किम् । तरति ॥ ११७ ॥ *ओष्ठ्यादुर् ॥ ४ । ४ । ११८ ॥ धातोरोष्ठ्याद्वर्णात्परस्य ॠकारस्य क्ङिति प्रत्यये परे उरादेशो भवति । इरोऽपवादः । पूर्तः । पूः । पुरौ । पुरः । पोपूर्यते । पोपुरति । बुभूर्षति । वुभूर्षति । मुमूर्षति । दन्त्यौष्ठ्योऽप्योष्ठ्यः । तेन वुवूर्षते प्रावुवूर्षति । ओष्ठ्यादिति किम् । तीर्णम् । धातोरिति विशेषणादिह न भवति । समीर्णम् । क्ङितीत्येव ।

---

–प्रसज्याश्रवणादिति। प्रसज्येति क्त्वान्त तत प्रसज्यप्रतिषेध । तर्हि प्रसज्य कथम् । सत्यम् । 'ते लुप्ता' इति लोपेऽङ्गयसबन्धित्वाभावात्सेर्लोपाभावे भविष्यति ॥–धुटीति नाश्रीयते इति । गगमर्थ अकिति धुडादौ प्रत्यये भवतीति नाश्रीयते इति ॥–तत्प्रत्ययेति । तस्माद्धातोर्धुडादौ प्रत्यये कार्यविज्ञानम् । अत्र तु रज्जुसृडिति नाम्न ॥–ह्रस्वस्य तः–॥–सोस्तो ङनिपीति ह्रस्वान्तादऽस्मादेव सुयजोर्ङ्वनिविति अकित्सभव इत्यर्थ । यद्वा क्विप पित्त्वविधानात्, नैयासिका किता कृता पित्त्वविधानमित्युत्तर प्राहु । यदि हि कितीति सबध्येत तदा पित्करण निरर्थक स्यादिति ॥—जगदिति । 'दिद्युत्'–इति क्रियाशब्दोऽत्र सज्ञाशब्दस्तु 'गमेर्डिदद्वे वा' इति साधु. ॥—असिद्ध बहिरङ्गमिति । एकत्र क्लीवे ह्रस्वोऽन्यत्र नलोप. ॥–ॠतां क्ङितीर् ॥—ॠकारस्यैवेति । न त्वनेकवर्ण. सर्वस्येति ॥–ओष्ठ्यादुर्

निपरणम् । निपारकः । प्रावरणम् । प्रावारकः । *केचित्तु उपान्त्यस्यापि ऋत उरमिच्छन्ति । पूर्णः पूर्णोर्वर्त्तल्लुप् तस् 'अहन्पञ्चम' ( ४-१-१०७ ) इत्यादिना दीर्घत्वम् । परिपूर्णः । परिपूर्णः । अविशेषनिर्देशात्तदपि सङ्गृहीतम् ॥ ११८ ॥ *इसासः शासोऽङ्व्यञ्जने ॥ ४ । ४ । ११९ ॥ शास्तेरवयवस्यासः स्थानेऽङि व्यञ्जनादौ च क्ङिति प्रत्यये परे इसित्ययमादेशो भवति । अङि, अशिषत् । अन्वशिषत् । क्ङिति व्यञ्जने, शिष्टः । शिष्टवान् । अनुशिष्टः । शिष्ट्वा । अनुशिष्य । शिष्यः । शिष्यते । शेशिष्यते । शिष्टः । शिष्टः । शिषः । शिषः । शासः शिसित्यकृते आस इस्विधानं यङ्लुपि शाशिष्ट इत्यादिप्रयोगार्थम् । अन्यथा 'शिष्ट इत्यादि स्यात् । अङ्व्यञ्जन इति किम् । शशासतुः । शशासुः । शासति । क्ङितीत्येव । शास्ता । शास्तम् । शास्ति ॥ ११९ ॥ *क्वौ ॥ ४ । ४ । १२० ॥ शासोऽवयवस्यासः स्थाने क्वविसादेशो भवति । आर्यशीः । मित्रशीः ॥ १२० ॥ आङः ॥ ४ । ४ । १२१ ॥ आङः परस्य शासोऽवयवस्यासः स्थाने *क्वावेवसादेशो भवति । आशीः । आशिषौ । आशिषः । पूर्वेण सिद्धे नियमार्थो योगः । तेनेह न भवति । आयुराशास्ते । आशास्वहे । आशास्महे ॥ १२१ ॥ य्वोः प्वय्व्यञ्जने लुक् ॥ ४ । ४ । १२२ ॥ पौ यकाररहितव्यञ्जनादौ च प्रत्यये यकारवकारयोर्लुग् भवति । पुग्रहणमप्रत्ययार्थम् । पौ, क्नोपयति । क्ष्मापयति । अय्व्यञ्जने, क्नूतम् । क्ष्मातम् । ऊतम् । देदिवः । शेश्रिवः । अजेजीव । दिदिवान् । दिदिवांसौ । दिदिवासः । कण्डूमिच्छतीति कण्डूयतेः क्विप् । कण्डूः । कण्डुवौ । कण्डुवः । लोलूः । बोभूः । लूयुः । पूयुः । णिचि तेमृङ्देवृङोः सुतेः, सुदेः । कथं वृक्षवयतीति वृक्षव् । णिलुकः स्थानिवत्त्वात् भविष्यति । यवर्जनं किम् । क्नूयते । सेव्यते । व्यञ्जन इति किम् । क्नूयिता । देविता । प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणात् धात्ववयवे न भवति । व्रश्चकः ॥ १२२ ॥ *कॄतः कीर्त्तिः ॥ ४ । ४ । १२३ ॥ कॄतण् इत्येतस्य कीर्त् इत्ययमादेशो भवति । कीर्तयति । कीर्तयतः । कीर्तयन्ति । कीर्तिः । कृत *ऋदुपदेशोऽचीकृतदित्यत्र *ऋकारश्रवणार्थः । इकारान्तनिर्देशो मङ्गलार्थः ॥ १२३ ॥ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥ इति चतुर्थोऽध्यायः ॥ ४ ॥ दुर्योधनोर्वीपतिजैत्रबाहु*गृहीतचेदीशकरोऽवतीर्णः ॥ अनुग्रहीतुं पुनरिन्दुवंशं श्रीभीमदेवः किल भीम एव ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥-केचित्तूपान्त्येति । ऋकारावयवयोगाद्धातुरपि ऋकार' । 'विशेषणमन्त' इति न्यायात् ऋकारान्तस्य सामान्याधिकरण्ये च षष्ठी स्वमते, तन्मते तु धातोः सम्बन्धिन ऋकारस्य उर् ततो व्यधिकरणे षष्ठीत्युपान्त्यस्य च सिद्धम्॥-इसासः-॥-शिष्ट इत्यादीति । यङ्लुबन्तस्यापि इसादेश स्यादित्यर्थ ॥-क्वौ ॥ पूर्वेणैव सिद्धे क्वाविति पृथक्करण क्वौ व्यञ्जनकार्याऽनित्यत्वज्ञापनार्थम् । तेनाऽव्ययिति सिद्धम् । न च वाच्य णिलुकः स्थानित्व 'न सन्धि'-इत्यस्य अप्रवर्त्तनात् ॥—आङः ॥—क्वावेवेति । आङ एव क्वाविति प्रत्ययनियमस्तु न पूर्वेणैकयोगाऽकरणात् । क्वौ व्यञ्जनकार्यमऽनित्य च । तेन गिरो गिर इत्यत्र व्यञ्जनाश्रित न दीर्घत्वम् राजनतीत्यादौ नलोपाऽभावश्च सिद्ध ॥—कॄतः कीर्त्तिः ॥—ऋदुपदेश इति । अयमर्थ धातुपाठे कीर्त्तणिति पठ्यता किमनेनेत्याह—ऋकारश्रवणार्थ इति । यतः 'ऋवर्णस्य' इत्यत्र वर्णग्रहणसामर्थ्यात्कीर्त्यादेशो बाध्यते । ननु कॄतणित्यत्र ऋकारमपनीय ऋकार एव क्रियताम् । एव च ऋवर्णस्येत्यनापि वर्णग्रहण न कार्य भवेत् । सत्यम् । कृत इति [illegible] कृते तु कृतेत् वा गृह्यते इति सदेह स्यात् ॥ इत्या० चतुर्थोऽध्याय ॥ ॥ गृहीतचेदीशकर इति पाण्डवभीमपक्षे चेदीशो दुःशासनस्तत्करो हि भीमेन कृत्तः । द्वितीयपक्षे तु चेदीशो डाहालीय. कर्णः स गृहीतकरो गृहीतराजदेयभाग. । तस्माद्धि मालवेशे सुवर्णमण्डपिकां भीमदेव आनिनाय ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

# ॥ अथ पञ्चमोऽध्यायः ॥

धातोर्विधीयमानस्त्यादिवर्जितो वक्ष्यमाणः प्रत्ययस्तुममभिव्याप्य कृत्संज्ञो भवति । *घनवात्यः । 'उदके-
-आ तुमोऽत्यादिः कृत् ॥ ५ । १ । १ ॥ 'तिक्कृतौ नाम्नि' ( ५-१-७१ ) इत्येवमादयः ॥ १ ॥ *बहुलम् ॥ ५ । १ । २ ॥
विशीर्णम् । गोदायो व्रजति । अत्यादिरिति किम् । प्रणिस्ते । कृत्प्रदेशा गले चोप्यत इति गलेचोपकः । मुह्यत्यनेनात्मेति मोहनीयं
अधिकारोऽयम् । कृत्प्रत्ययो यथानिर्दिष्टाव् अर्थादेरन्यत्रापि बहुलं भवति । पादाभ्यां ह्रियते पादहारकः । एवं स्पृहणीया विभूतिः । समाव-
कर्म । स्नाति तेनेति स्नानीयं चूर्णम् । एवं यानीयोऽश्वः । दीयते तस्मै इति दानीयोऽतिथिः । संप्रदीयतेऽस्मा इति संप्रदानम् । कर्तरि ॥ ५ । १ । ३ ॥
र्तते तस्मादिति समावर्तनीयो गुरुः । एवमुद्वेजनीयः खलः । तिष्ठन्त्यस्मिन्निति स्थानीयं नगरम् । एवं शयनीयः पल्यङ्कः ॥ २ ॥ घुर केलिम इत्येतौ
कृत्प्रत्ययोऽर्थविशेपनिर्देशमन्तरेण कर्तरि भवति । कारकः । कर्ता । पचः । नन्दनः ॥ ३ ॥ व्याप्ये घुरकेलिमकृष्टपच्यम् ॥ ५ । १ । ४ ॥ एवं
प्रत्ययौ कृष्टपच्यशब्दश्च व्याप्ये कर्तरि भवतीति वेदितव्यम् । घुरो वक्ष्यते । *केलिमोऽत एव वचनात् ज्ञायते । कृष्टपच्ये यश्च । भज्यते स्वयमेव, भङ्गुरं काष्ठम् । एवं
भिदुरः कुशूलः । छिदुरा रज्जुः । भासमिदिविदां कर्तर्येव घुरः कर्मकर्तुरसंभवात् । भासते इत्येवंशीलो भासुरः । एवं मेदुरः । विदुर । केचिच्छिदिभिदोरपि
कर्तरि घुरमिच्छन्ति । दोषान्धकारभिदुरो दृशारिवक्षश्छिदुर इति । पच्यन्ते स्वयमेव पचेलिमा माषाः । एवं भिदेलिमास्तण्डुलाः । कृष्टे पच्यन्ते स्वयमेव कृष्टपच्याः
शालयः ॥ ४ ॥ संगतेऽजर्यम् ॥ ५ । १ । ५ ॥ संगमनं संगतम् । तस्मिन्कर्तर्यभिधेये नञ्पूर्वाज्जीर्यतेर्यप्रत्ययो निपात्यते । न जीर्यतीति अजर्यम् आर्यसंगतम् ।
मृगैरजर्यं जरसोपदिष्टम् । सामान्यविशेषभावेन चोभयोरपि प्रयोगो भवति । तेन संगतमार्येण रामाजर्यं कुरु द्रुतम् । अजर्यं संगतं नोऽस्तु । संगत इति किम् ।
अजरः पटः । अजरिता कम्बलः । कर्तरीत्येव । अजार्यं संगतेन ॥ ५ ॥ रुच्याव्यथ्यवास्तव्यम् ॥ ५ । १ । ६ ॥ एते कर्तरि निपात्यन्ते । रोचतेर्नञ्पूर्वात्
व्यथतेश्च क्यप् प्रत्ययो वसतेस्तु तव्यण् निपात्यते । रोचते इति रुच्यो मोदको मैत्राय । न व्यथते इत्यव्यथ्यो मुनिः । वसतीति वास्तव्यः॥ ६ ॥ भव्यगेयजन्य-

अर्ह ॥-आ तुमोऽत्यादि कृत् ॥-घनवात्य इति । अत्र कृत्सञ्ज्ञाया 'कारक कृता' इति समास ॥-उदकेविशीर्णमिति । अत्र 'क्तेन' इति समास । 'तत्पुरुषे कृति' इत्यलुप् । गोदाय इत्यत्र तु 'ङस्युक्त कृता' इति स ॥-बहुलम् ॥-अर्थादेरिति । आदिपदादुपपदधातू गृह्येते ॥-स्पृहणीया विभूतिरिति । स्पृह्यतेऽस्यै स्पृहणीया विभूति कर्मतापन्ना स्पृह्यत इत्यर्थ । व्याप्यत्र 'स्पृहेर्व्याप्य'-इति वा सम्प्रदानसञ्ज्ञा ॥-व्याप्ये घुर-॥-केलिमोऽत एव वचनादिति । 'विहाविसापचिभिद्यादे केलिम' इति औणादिको नियतधातुविषयोऽय तु सर्वविषय इत्याह ॥-सगतेऽज-॥ केयादिकस्य जशो निपातन न दृष्टमित्याह-जीर्यतीति

रम्याषात्याप्लाव्यं नवा ॥ ५ । १ । ७ ॥ एते कर्तरि वा निपात्यन्ते । भावकर्मणोः प्राप्तयोः पक्षे कर्तरि विधानार्थमिदम् । भूगायतिरमयतिभ्यो यो यः प्रत्ययो यश्च जनेराङ्पूर्वाभ्यां च पतिप्लुभ्यां घ्यण् स कर्तरि वा निपात्यते । भवत्यसाविति भव्यः । पक्षे भव्यमनेन । गायतीति गेयो माणवकः साम्नाम् । गेयानि माणवकेन सामानि । जायतेऽसाविति जन्यः । जन्यमनेन । रमयत्यसौ रम्यः । रम्यते रम्यः । आपतत्यसावापात्यः । आपात्यमनेन । आप्लवतेऽसावाप्लाव्यः । आप्लाव्यमनेन ॥ ७ ॥ प्रवचनीयादयः ॥ ५ । १ । ८ ॥ प्रवचनीयादयः कर्तर्यनीयप्रत्ययान्ता वा निपात्यन्ते । प्रवक्ति प्रब्रूते ना प्रवचनीयो गुरुः शास्त्रस्य । प्रवचनीयं गुरुणा शासनम् । उपतिष्ठत इति उपस्थानीयः शिष्यो गुरोः । उपस्थानीयः शिष्येण गुरुः । एवं रमयतीति रमणीयो देशः । मदयति इति मदनीया योषित् । दीपयतीति दीपनीयं चूर्णम् । मोहयतीति मोहनीयं कर्म । ज्ञानमावृणोतीति ज्ञानावरणीयम् । एवं दर्शनावरणीयम् ॥ ८ ॥ श्लिषशीङ्स्थासवसजनरुहजॄभजेः क्तः ॥ ५ । १ । ९ ॥ एभ्यः क्तप्रत्ययो यो विहित स कर्तरि वा भवति । श्लिष् । आश्लिष्टः कान्तां कामुकः । आश्लिष्टा कान्ता कामुकेन । आश्लिष्टं कामुकेन । शीङ्, अतिशयितो गुरुं शिष्यः । अतिशयितो गुरुः शिष्येण । अतिशयितं शिष्येण । उपस्थितो गुरु शिष्यः । उपस्थितो गुरुः शिष्येण । उपस्थितं शिष्येण । आस्, उपासितो गुरु शिष्यः । उपासितो गुरु शिष्येण । उपासितं शिष्येण । वस्, अनूषितो गुरुं भवान् । अनूषितो गुरुर्भवता । अनूषितं भवता । जन् अनुजातो माणवको माणविकाम् । अनुजाता माणविका माणवकेन । अनुजातं माणवकेन । विजाता वत्सं गौ । विजातो वत्सो गवा । विजातं गवा । रुह, आरूढो वृक्षं भवान् । आरूढो वृक्षो भवता । आरूढं भवता । जॄ, अनुजीर्णो वृषली चैत्रः । अनुप्राप्य जीर्ण इत्यर्थः । अनुजीर्णा वृषली चैत्रेण । अनुजीर्णं चैत्रेण । भज्, विभक्ता भ्रातरो रिक्थम् । विभक्तं भ्रातृभिः रिक्थम् । विभक्तं भ्रातृभिः । अकर्मका अपि हि धातव उपसर्गसंबन्धात्सकर्मका भवन्तीति शीङादिग्रहणम् । अन्यथाऽकर्मकत्वादुत्तरेणैव सिद्धम् । श्लिषभजी केवलावपि सकर्मको ॥९॥ आरम्भे॥५।१।१०॥ आरम्भे आदिकर्मणि *भूतादित्वेन विवक्षिते वर्तमानाद्धातोर्यः क्तो विहितः स कर्तरि वा स्यात् । प्रकृतः कटं भवान् । प्रकृतः कटो भवता । प्रकृतं भवता । प्रभुक्त ओदनं चैत्रः । प्रभुक्त ओदनश्चैत्रेण । प्रभुक्तं चैत्रेण ॥१०॥ *गत्यर्थाकर्मकपिबभुजेः॥५।१।११॥ भूतादौ यः क्तो विहितः स गत्यर्थेभ्योऽकर्मकेभ्यश्च धातुभ्यः पिबभुजिभ्यां च कर्तरि वा भवति । गत्यर्थ, गतो मैत्रो ग्रामम् । गतो मैत्रेण ग्रामः । गतं मैत्रेण । यातास्ते ग्रामम् । यातस्तैर्ग्रामः । यातं तैः । अकर्मक, आसितो भवान् । शयितो भवान् । आसितं भवता । शयितं भवता । सकर्मका अप्यविवक्षितकर्माणोऽकर्मकाः । तेन पठितो भवान् । एवं प्रख्यात । विदितः । अविवक्षितकर्मभ्यो नेच्छन्त्येके । तन्मते कृतो देवदत्तः हृतो देवदत्तः इत्यादि कर्तरि न भवति । कालभावाध्वभिश्च कर्मभिः सकर्मका अप्यकर्मका उक्ताः । तेन त्रैरूप्यं भवति ।

॥-श्लिषशीङ्-॥ अनुपूर्वो जॄ प्राह्युपसर्जने जरणे वर्तते जनिस्तु जननोपसर्जनायां प्राप्ताविति भेद ॥-आरम्भे ॥-भूतादित्वेन विवक्षिते इति । आदिशब्दाद्वर्तमानत्वभविष्यत्त्वयोरपि परिग्रह । यथा ज्ञातुमारभते प्रज्ञात । कपितु प्रारप्स्यते प्रकष्ट ॥-गत्यर्थाक ॥-कालभावाऽध्वभिश्चेति । उपलक्षणत्वाद्देश इत्यपि ज्ञेय तेन सुप्तो भवान् कुरूनित्यादि द्रष्टव्यम् ॥-तेन त्रैरूप्य भवतीति । 'कालाध्व'-इत्यादिना युगपत्सकर्म-

सुप्तो भवान् मासम् । सुप्तो भवता मासः । सुप्तं भवता मासम् । एवमोदनपाकं सुप्तो भवान् इत्यादि । पिब, पयः पीता गावः । इदं गोभिः पीतम् । इह गोभिः पीतम् । भुजि, अन्नं भुक्तास्ते । इदं तैर्भुक्तम् । इह तैर्भुक्तम् ॥ ११ ॥*अद्यर्थाच्चाधारे ॥५।१। १२ ॥ अद्यर्थात् आहारार्थात् धातोर्गत्यर्थाकर्मकपिबभुजेश्च यः क्तः स आधारे वा भवति । इदमेषां जग्धम् । इदं तैर्जग्धम् । इह तैर्जग्धम् । इदमेषामभ्यवहृतम् । इदं तैरभ्यवहृतम् । इदं तेषामशितम् । इदं तैरशितम् । आरम्भे तु कर्तर्यपि भवति । इह ते अन्नं प्राशिताः । इह ते मधु प्रलीढाः । गत्यर्थादिभ्यः खल्वपि । इदं तेषां यातम् । इदमहेः सृप्तम् । इदमेषामासितम् । इदमेषां शयितम् । इदं गवां पीतम् । इदं तेषां भुक्तम् । पक्षे कर्तृकर्मभावेषु पूर्वाण्येवोदाहरणानि ॥ १२ ॥ क्त्वातुमम् भावे ॥ ५ । १ । १३ ॥ *वेति निवृत्तम् । क्त्वा तुम् अम् इत्येते प्रत्यया भावे धात्वर्थमात्रे वेदितव्याः । कृत्वा व्रजति । कर्तुं व्रजति । कारंकारं व्रजति । चौरंकारमाक्रोशति । अतिथिवेदं भोजयति ॥ १३ ॥ भीमादयोऽपादाने ॥ ५ । १ । १४ ॥ भीमादयः शब्दा अपादाने साधवो भवन्ति । बिभ्यत्यस्मादिति भीमः । एवं भीष्मः । भयानकः । वरुः । समुद्रः । स्रुवः । स्रुक् । रक्षः । संकसुकः । खरुतिः । उणादिप्रत्ययान्ता एते 'संप्रदानाच्चान्यत्रोणादयः' (५-१-१५) इति निषेधेनाप्राप्ता निपात्यन्ते ॥ १४ ॥ संप्रदानाच्चान्यत्रोणादयः ॥ ५ । १ । १५॥ संप्रदानादपादानाच्चान्यत्र कारके भावे चोणादयः प्रत्यया भवन्ति । कृत्त्वात्कर्तर्येव प्राप्ताः कर्मादिष्वपि कथ्यन्ते । करोतीति कारुः । वातीति वायुः । कषितोऽसाविति कर्मणि कषि· । तन्यतेऽसाविति तनुः । ऋचन्ति तयेति ऋक् । वृत्तं तत्रेति वर्त्म । चरितं तत्रेति चर्म ॥ १५ ॥ *असरूपोऽपवादे वोत्सर्गः प्राक् क्तेः ॥ ५ । १ । १६ ॥ इतः सूत्रादारभ्य स्त्रियां क्तिरित्यतः प्राक् योऽपवादस्तद्विषयेऽपवादेनासमानरूप *उत्सर्ग *औत्सर्गिक· प्रत्ययो वा भवति । अवश्यलाव्यम् । अवश्यलवितव्यम् । अवश्यलवनीयम् । ज्ञः । ज्ञाता । ज्ञायकः । नन्दन· । नन्दकः । नन्दयिता । असरूप इति किम् । घ्यणि यो न स्यात । कार्यम् । डविषयेऽण् न स्यात् । गोदः । अनुबन्धोऽप्रयोगी इति सारूप्यमेव । प्राक्क्तेरिति किम् । कृतिः । चितिः । रक्षितम् । रक्षणम् । घञादिर्न भवति । चिकीर्षा । जिहीर्षा । क्तिर्न भवति । ईषत्पानः । सुपानः । दुष्पानः । खल् न भवति ।*अपवादत्यादिविषये तु असरूपोऽप्युत्सर्गत्यादिर्न प्रवर्तते इति 'श्रुसद-(५-२-१) इत्यादिसूत्रे *वाग्रहणेन ज्ञापयिष्यते ॥ १६ ॥ ऋवर्णव्यञ्जनाद् घ्यण् ॥५।१।१७॥ ऋवर्णान्ताद्व्यञ्जनान्ताच्च धातोर्घ्यण् प्रत्ययो भवति । कार्यम् । हार्यम् । पाक्यम् । वाक्य-

---

कत्वमकर्मकत्व चोक्त तेनाकर्मकत्वात् कर्त्तरि भावे च सकर्मकात् कर्मणि प्रयोग इति त्रैरूप्यम् ॥—सुप्तो भवान्मासमिति । अत्र यावता कर्मसञ्ज्ञा तावता कर्मणि द्वितीया । यावता त्वऽकर्मसञ्ज्ञा तावता कर्त्तरि क्त ॥—अद्यर्थाच्चा—॥ नन्विद तैर्जग्धमित्यादौ आधाराऽभावात्कर्मणि स्वयमेव क्तो भविष्यति किं विकल्पेनेति । न । तक्रकौण्डिन्यन्यायेनाधार एव एभ्यः क्त· स्यात् । यथा 'गत्यर्थात् कुटिले' इत्यत्र यङ् ॥—पूर्वाण्येवोदाहरणानीति । 'गत्यर्थाऽकर्मक'–इति सूत्रे दर्शितानि ॥—क्त्वातुम—॥—वेति निवृत्तमिति । कारकनिवृत्ते ॥—असरूपोप—॥ अपोद्यते हेव्यते उत्सर्गोऽनेनेति व्यञ्जनाद्घञ् ॥—उत्सर्ग इति । उत्क्रम्याऽपवाद सृज्यते विधीयत इति घञ् । नन्वऽत्र वाग्रहण किमर्थं यतोऽपवादो विशेषविधानादुत्सर्गस्तु पक्षे अस्माद्वचनाद्भविष्यति । सत्यम् । वाग्रहणाऽभावे सर्वोऽप्युत्सर्गोऽपवादे एव प्रवर्त्तेत तत कर्त्तेत्यादौ अपवादविषयाभावात् तृजादिर्न स्यात् । ज्ञातेत्यादौ त्वपवादस्य कस्य दर्शनात्स्यात् ॥—औत्सर्गिक इति । उत्सर्जनमिति यदा भावे घञ् तदा प्रयोजनार्थे इकण् यदा तु कर्मणि घञ् तदा विनयादिभ्य· स्वार्थिक इकण् ॥—अपवादत्यादिविषये त्विति । अत्र सूत्रे कृद्विशेषाऽनभिधानात्त्यादिरपि प्राप्नोति ॥—वाग्रहणेनेति । यद्यनेनाप

म् । णकारो वृद्ध्यर्थः । घकारः 'केनिटः'-( ४-१-१११ ) इत्यत्र विशेषणार्थः ॥ १७ ॥ 'पाणिसमवाभ्यां सृजः ॥ ५ । १ । १८ ॥ पाणिपूर्वात्समवपूर्वाच्च सृजेर्घ्यण् प्रत्ययो भवति ॥ ऋदुपान्त्य क्यपोऽपवादः । पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः । समवसृज्यते इति समवसर्ग्यः । पाणिसमवाभ्यामिति किम् । सृज्यम् । संसृज्यम् । समवेति समुदायपरिग्रहार्थं द्विवचनम् ॥ १८ ॥ उवर्णादावश्यके ॥ ५ । १ । १९ ॥ अवश्यस्य भावोऽवश्यंभाव इति वा अकाले आवश्यकम् । तस्मि-न्द्योत्ये उवर्णान्ताद्धातोर्घ्यण् भवति । लाव्यम् । पाव्यम् । यन्नियोगात् कर्तव्यम् अर्थप्रकरणादिना निश्चितं तत्रायं प्रत्ययः । लाव्गमवश्यम् । पाव्यमवश्यम् । अवश्यलाव्यम् । अवश्यपाव्यम् । अनावश्यंशब्देनापि 'अवश्यंभावो द्योत्यते मयूरव्यंसकादित्वाच्च समासः । अवश्यस्तुत्य इति परत्वात् क्यप् । आवश्यक इति किम् । लव्यम् । पव्यम् ॥ १९ ॥ 'आसुयुवपिरपिलपित्रपिडिपिदभिचम्यानमः ॥ ५ । १ । २० ॥ आङ्पूर्वाभ्यां सुनोतिनमिभ्यां यौत्यादिभ्यश्च धातुभ्यो घ्यण् भवति । गापवादः । आसाव्यम् । याव्यम् । वाप्यम् । राप्यम् । लाप्यम् । अभिलाप्यम् । अपत्राप्यम् । डेप्यम् । 'दभिः सौत्रो बन्धने वर्तते । दाभ्यम् । अवदाभ्यम् । 'आचाम्यम् । आनाम्यम् । नमिरन्तर्भूतण्यर्थः सकर्मकः । अकर्मका अपि हि धातवो ण्यर्थे वर्तमानाः सकर्मका भवन्ति । यथा नेमिं नमन्ति । 'डिपेः कुटादित्वाद्ये गुणो न लभ्यते इति घ्यण् विधीयते । आनमेर्नैकान्त्यके ॥ २० ॥ वाधारेऽमावस्या ॥ ५ । १ । २१ ॥ अमापूर्वाद्व-सतेराधारे घ्यण् प्रत्ययो धातोः पक्षे ह्रस्वश्च निपात्यते । अमाशब्दः सहार्थः । सह वसतोऽस्यां सूर्याचन्द्रमसाविति अमावस्या अमावास्या वा रूढ्या तिथिविशेषः । पक्षे यमकृत्वा ह्रस्वनिपातनम् 'अश्वामावास्याया' ( ६-३-१०३ ) इत्यत्रैकदेशविकृतस्यानन्यत्वादमावास्याशब्देन *अमावस्याशब्दस्यापि ग्रहणार्थम् ॥ २१ ॥ संचाय्यकुण्डपाय्यराजसूयं क्रतौ ॥ ५ । १ । २२ ॥ एते क्रताविभिधेये ण्यणन्ता निपात्यन्ते आधारे कर्मणि वा । निपातनादेत्रायादेशदीर्घत्वे अपि भवतः । संचीयते सोमोऽस्मिन् संचीयते वासाविति संचाय्यः क्रतुः । ससोमको हि यागः संचीयते । कुण्डैः पीयते सोमोऽस्मिन् कुण्डैः पीयते इति वा कुण्डपाय्यः क्रतुः । संचेयोऽन्यः । कुण्डपानोऽन्यः । राजा सूयतेऽस्मिन् राज्ञा वा सोतव्य इति राजसूयः क्रतुः ॥ २२ ॥ प्रणाय्योऽसंमते ॥ ५ । १ । २३ ॥ प्रपूर्वान्नयतेर्घ्यण् आयादेशश्च निपात्यते निष्कामेऽसंगते नाभिधेये । प्रणाय्योऽन्तेवासी । निष्कामेऽनभिलाष इत्यर्थः । प्रणाय्यश्चौरः । सर्वलोकासंमत इत्यर्थः । प्रणेयोऽन्यः ॥

---

वादस्यादिविषयोऽसरूप उत्सर्गस्त्यादि स्यात् तदा कि तत्र वाक्रणेनेत्याह ॥—पाणिसम—॥—ऋदुपान्त्य— इति । पूर्वेण सिद्धे किमर्थमस्यारम्भ इत्याह ॥—उवर्णादा—॥—अर्थप्रकर-णादिनेति । आवश्यमादिशब्दमन्तरेणेत्यर्थः ॥—अवश्यभावो द्योत्यते इति । यथा ...ते इत्यादो आ... नापि ...विहारे ...ति ...ऽपि ...या ...ऽपवादा-भावेऽवश्यशब्दप्रयोग ॥—आसुयु—॥—दभिः सौत्र इति ॥ दम्भेस्तु दम्भ्यमिति ॥—आनाम्यमिति । ...स्य 'मोऽकमि'-इति ...तिषेधे ... ... वा न विशेष इति सोपसर्गस्योदाहरणम् ॥ ननु डिपे 'शकितकि'-इति यप्रत्ययेऽपि डेप्यमिति भविष्यति किमर्थं ग्रहणेनाह—डिपेः कुटादित्वादि ॥—वाधारेऽमा—॥—पक्षे यमकृत्वेति । वाधारेमावस्यो न इति क्रियता घ्यण् तु ...आधारेऽपि भविष्यतीति भाव ॥—अमावस्याशब्दस्यापीति । अन्यथा ...ह्रस्वान्तयोरत्यन्तभेदात् ...न्तस्य ग्रहणं न स्यात्

॥ २३ ॥ धाय्यापाय्यसान्नाय्यनिकाय्यमृङ्मानहविर्निवासे ॥ ५ । १ । २४ ॥ धाय्यादयः शब्दा ऋगादिष्वर्थेषु यथासंख्यं ण्यन्ता निपात्यन्ते । निपातनादेव च सर्वत्रायादेशः । दधातेर्ऋचि, धीयते समिदग्नावनयेति धाय्या ऋक् । रूढिशब्दत्वात्काश्चिदेव ऋच उच्यन्ते । अन्यत्र धेया । मीयते येन तन्मानम् । तत्र माङ आदिपत्वं च । मीयते तेनेति पाय्यं मानम् । मेयमन्यत् । संपूर्वान्नयतेर्हविषि समो दीर्घत्वं च । सान्नाय्यं हविः । अयमपि रूढिशब्दत्वाद्धविर्विशेषेऽवतिष्ठते । संनेयमन्यत् । निपूर्वाच्चिनोतेर्निवासे आदिकत्वं च । निकाय्यो निवासः । निचेयमन्यत् ॥ २४ ॥

'परिचाय्योपचाय्यानाय्यसमूह्यचित्यमग्नौ ॥ ५ । १ । २५ ॥ एतेऽग्नौ निपात्यन्ते । पर्युपपूर्वाच्चिनोतेर्ण्यण् आयादेशश्च । परिचीयत इति परिचाय्योऽग्निः । एवमुपचाय्यः । परिचेयः, उपचेयोन्यः । आङ्पूर्वान्नयतेर्ण्यण् आयादेशश्च । गार्हपत्यादानीयत इत्यानाय्यो दक्षिणाग्निः । स ह्याहवनीयेन सह "एकयोनिरेवोच्यते । आनेयोऽन्यः । केचिदग्निविशेषादन्यत्राप्यनित्यविशेष इच्छन्ति । आनाय्यो गोधुक् । अनित्य इत्यर्थः । संपूर्वाद्वहेर्ण्यण् ऊत्वं च वशब्दस्य । समुह्यत इति समूह्यः । अन्यः संवाह्यः । अन्ये तु संपूर्वादूहेरग्नावेवेति नियमार्थं ण्यणं निपातयन्ति । अग्नेरन्यत्र समूहितव्य इत्येव । वहेस्तु तन्मतेऽग्नावपि संवाह्य इति भवति । चिनोतेः क्यप् । चित्योऽग्निः । चेयोऽन्यः ॥ २५ ॥ याज्या दानर्चि ॥ ५ । १ । २६ ॥ यजेः करणे ण्यण् निपात्यते दानर्च्यभिधेयायाम् । इज्यतेऽनयेति याज्या । 'त्यज्यजप्रवचः' (४-४-११८) इति गत्वाभावः ॥ २६ ॥ तव्यानीयौ ॥ ५ । १ । २७ ॥ धातोः परौ तव्य अनीय इत्येतौ प्रत्ययौ भवतः । शयितव्यम् । शयनीयम् । वस्तव्यम् । वसनीयम् । कर्तव्यम् । करणीयम् भवता । कर्तव्यः करणीयः कटः ॥ २७ ॥ य एचातः ॥ ५ । १ । २ । २८ ॥ ऋवर्णव्यञ्जनान्तात् ण्यणो विहितत्वात्परिशिष्टात्स्वरान्ताद्धातोर्यः प्रत्ययो भवति अन्त्याकारस्य चैकारो भवति । दित्स्यम् । धित्स्यम् । चेयम् । जेयम् । नेयम् । शेयम् । नव्यम् । लव्यम् । भव्यम् । एचातः । देयम् । धेयम् ॥ २८ ॥ 'शकितकिचातियतिशसिसहियजिभजिपवर्गात् ॥ ५ । १ । २९ ॥ शक्यादिभ्यः पवर्गान्तेभ्यश्च धातुभ्यो यः प्रत्ययो भवति । ण्यणोऽपवादः । शक्यम् । तक्यम् । चत्यम् । यत्यम् । शस्यम् । सह्यम् । यज्यम् । भज्यम् । पवर्ग, तप्यम् । लभ्यम् । गम्यम् । यजे *'त्यज्यजप्रवचः' (४-१-११८) इति प्रतिषेधात् भजेश्च बाहुलकाद् ण्यणपि । याज्यम् । भाग्यम् । यजिभजिभ्यां नेच्छन्त्येके । कथमसिना वध्योऽसिवध्य, मुशलवध्यः । 'न जनवधः' (४-३-५४) इति वृद्धिप्रतिषेधे ण्यणा भविष्यति ॥ २९ ॥ 'यममदगदोऽनुपसर्गात् ॥ ५ । १ । ३० ॥ उपसर्गरहितेभ्य एभ्यो यः प्रत्ययो भवति । यम्यम् । मद्यम् । गद्यम् । अनुपसर्गादिति किम् । आयाम्यम् । प्रमाद्यम् । निगाद्यम् । पवर्गान्तत्वात् सिद्धे यमो नियमार्थं वचनम् 'अनुपसर्गादेव यथा स्यात् । बहुलवचनान्माद्यत्यनेनेति मद्यम् करणेऽपि नियम्यमिति च सोपसर्गादिति ॥ ३० ॥ चरेराङस्त्वगुरौ ॥ ५ । १ । ३१ ॥ अनुपसर्गाच्चरेराङ्पूर्वाच्चागुरावर्थे यो भवति । चर्य

---

॥—परिचाय्यो—॥—एकयोनिरेवेति । आहवनीयोऽग्निर्दक्षिणाग्निश्च निर्वाणो गार्हपत्यादेवानीयेते । अतो द्वावप्येकयोनी गार्हपत्याग्निस्त्वरणिनिर्मन्थनादेवोत्पाद्य इति न स आनाय्य ॥—शकितकि—॥—त्यजयजप्रवच इति प्रतिषेधादिति । अन्यथा ध्यण्प्रत्ययस्याऽभावात्प्राप्तिरेव नास्तीति ॥—यममद—॥—अनुपसर्गादेवेति । अनुपसर्गाद्यम एवेति विपरीतनियमस्तु न 'शकितकि'-इत्यत्र पवर्गग्रहणात्

भवता । चर्यो देशः । आचर्यं भवता । आचर्यो देशः । आङस्त्विति किम् । अभिचार्यम् । अगुराविति किम् । आचार्यो गुरुः ॥ ३१ ॥ *वर्योपसर्यावद्यपण्यमुपेयर्तुमतीगर्ह्यविक्रेये ॥ ५ । १ । ३२ ॥ वर्यादयः शब्दा उपेयादिष्वर्थेषु यथासंख्यं यान्ता निपात्यन्ते । वृणातेर्वर्या उपेया चेद्भवति । शतेन वर्या, सहस्रेण वर्या कन्या संभक्तव्या मैत्रीमापादनीयेति यावत् । वृत्यान्या । वृणोतेः क्यप् । स्त्रीलिङ्गनिर्देशादिह न भवति । वार्या ऋत्विजः। अन्यस्तु 'सुग्रीवो नाम वर्योऽसौ भवता चारुविक्रम ' इति प्रयोगदर्शनात्पुंलिङ्गेऽपीच्छति । सामान्यनिर्देशात्तदपि संगृहीतम् । 'शतेन वर्यः । सहस्रेण वर्यः । उपपूर्वात्सर्तेर्उपसर्या ऋतुमती चेत् । उपसर्या गौः । गर्भग्रहणे प्राप्तकालेत्यर्थः । अन्यत्र उपसर्या शरदि मथुरा । नञ्पूर्वाद्वदेर्अवद्यं गर्ह्यं चेत् । अवद्यं पापम् । अवद्या हिंसा । गर्ह्येत्यर्थः। *अनुद्यमन्यत् । कथमवाद्या वदेर्निरुपपदात् घ्यण् । पश्चान्नञ्समासः । पणेर्पण्यं विक्रेयं चेत् । पण्यः कम्बलः । पण्या गौः । विक्रेयेत्यर्थः । अन्यत्र पाण्यः साधुः ॥ ३२ ॥ 'स्वामिवैश्येऽर्यः ॥ ५ । १ । ३३ ॥ अर्तेः स्वामिनि वैश्ये चाभिधेये यो निपात्यते । अर्यः स्वामी । अर्यो वैश्य । स्वामिवैश्य इति किम् । आर्यः ॥ ३२ ॥ वह्यं करणे ॥ ५ । १ । ३४ ॥ वहेः करणे यो निपात्यते । वहन्ति तेनेति वह्यं शकटम् । वाह्यमन्यत् ॥ ३४ ॥ नाम्नो वदः क्यप् च ॥ ५ । १ । ३५ ॥ अनुपसर्गादिति वर्तते । अनुपसर्गान्नाम्नः पराद्वदेः क्यप् यश्च प्रत्ययौ भवतः। ब्रह्मोद्यम् । ब्रह्मवद्यम् । सत्यवद्यम् । सत्योद्यम् । नाम्न इति किम् । वाद्यम् । अनुपसर्गादित्येव । प्रवाद्यम् । अनुवाद्यम् । ककारः कित्कार्यार्थः । पकार उत्तरत्र तागमार्थः ॥ ३५ ॥ *हत्याभूयं भावे ॥ ५ । १ । ३६ ॥ अनुपसर्गान्नाम्नः परौ हत्या भूय इत्येतौ भावे *क्यबन्तौ निपात्येते । हन्तेः स्त्रीभावे क्यप् तकारश्चान्तादेशः । 'ब्रह्मणो वधः ब्रह्महत्या । भ्रूणहत्या । दरिद्रहत्या । श्वहत्या । भवतेर्नपुंसके भावे क्यप् । ब्रह्मभूयं गतः । देवभूयं गतः । ब्रह्मत्वं देवत्वं गत इत्यर्थः । भाव इति किम् । श्वघात्या वृषली । नाम्न इत्येव । 'हतिः । घातः । भव्यम् । हन्तेर्भावे घ्यण् न भवत्यनभिधानात् । 'तथा च बहुलाधिकारः । अनुपसर्गादित्येव । उपहतिः । प्रभव्यम् ॥ ३६ ॥ अग्निचित्या ॥ ५ । १ । ३७ ॥ अग्नेः पराच्चिनोतेः स्त्रीभावे क्यप् निपात्यते । अग्नेश्चयनमग्निचित्या ॥ ३७ ॥ 'खेयमृषोद्ये ॥ ५ । १ । ३८ ॥ अनुपसर्गादिति नाम्न इति च *निवृत्तम् । खेय मृषोद्य इत्येतौ क्यबन्तौ निपात्येते । खनेर्घ्यणोऽपवादः क्यप् अन्त्यस्वरादेरेकारश्च । खन्यत इति खेयम् । 'निखेयम् । उत्खेयम् । मृषापूर्वाद्वदतेः पक्षे ये प्राप्ते नित्यं क्यप् । मृषोद्यते मृषोद्यम् । नात्र भाव एवेति योगविभागः ॥ ३८ ॥ कुप्यभिद्योद्ध्यसिध्यतिष्यपुष्ययुग्याज्यसूर्यं नाम्नि ॥ ५ । १ ।

॥—वर्योप—॥—शतेन वर्य इति । यस्तु वरेण्यपर्याय तस्य वरण् इत्यस्मात् णिजन्तात् सिद्धि ॥—अनुद्यमऽन्यदिति । यत्तु अनूद्यमिति तदऽनुवदन अनूत् । अनूदि साधु 'तत्र साधौ य' ॥—स्वामिवैश्येऽर्य. ॥ निपातनस्येष्टविषयत्वात् सज्ञायामेव निपातनम् ॥—हत्याभूय—॥ हत्या च भूय चेति वाक्य कार्य भूयस्य नपुंसके निपातनज्ञापनार्थम् ॥—क्यबन्ताविति । चानुकृष्टत्वात् यो नाऽनुवर्त्तते ॥— ब्रह्मणो वध इति । सबन्धे षष्ठी अकर्मकस्य विवक्षणात् ॥—हतिरिति । 'सातिहेति '—इति निपातनबाधनार्थं श्वादिभ्य क्ति ॥—तथा च बहुलाधिकार इति । एतदर्थमेव बहुलाधिकारोऽनुवर्त्तते इत्यर्थ ॥—खेयमृषो—॥—निवृत्तमिति । निपातनस्येष्टविषयत्वात् ॥—निखेयमिति । द्योतकत्वात् न्यादिप्रयोगेऽपि भवति

३९ ॥ एते क्यबन्ताः संज्ञायां निपात्यन्ते । गुपेः क्यप् आदिकत्वं च धनेऽर्थे । गोपाय्यते तदिति कुप्यं धनम् । गोपाय्यमन्यत् । भिदेरुज्झेश्च नदेऽभिधेये क्यप् उज्झेर्धत्वं च । भिनत्ति कूलानि इति भिद्यः । उज्झत्युदकम् उद्ध्यः । अन्यत्र भेत्ता उज्झिता । सिधितिषिपुषिभ्यो नक्षत्रेऽभिधेये क्यप् तिषेर्वलोपश्च । सिध्यन्ति त्वेषन्ति पुष्यन्ति अस्मिन्कार्याणीति सिध्यः, तिष्यः, पुष्यः । अन्यत्र सेधनः, त्वेपणः, पोपणः । युजेः क्यप् गत्वं च वाहनेऽभिधेये । युञ्जन्ति तदिति युग्यं वाहनम् गजाश्वादि । योग्यमन्यत् । आङ्पूर्वादञ्जेर्घृतेऽर्थे क्यप् । आजन्त्यनेनेति आज्यं घृतम् । आञ्जनमन्यत् । सर्तेः क्यप् ऋकारस्योर्, सुवतेर्वा क्यप् रान्तश्च देवतायाम् । सराति सुवति वा कर्मसु लोकानिति सूर्यो देवता । बहुलाधिकारान्निपातनसामर्थ्याद्वानुक्तोऽपि निपातनेषु कारकविशेषो गम्यते ॥ ३९ ॥ *द्ववृग्स्तुजुषेतिशासः ॥ ५ । १ । ४० ॥ एभ्यः क्यप् भवति । द्रु, आद्रुत्यः । वृग् भावृत्यः । वृङ्स्तु वार्या ऋत्विजः । स्तु स्तुत्यः । अवश्यस्तुत्य. । जुष्यः । एतीति *इणिकोर्ग्रहणम् । इत्यः । अधीत्यः । अयतेरिङश्च न भवति । उपेयम् । अध्येयम् । इकोऽप्यध्येयमित्येके । ईयतेरप्युपेयमिति भवति । शास्, शिष्यः । आशासेस्तु *आशास्यमन्यत् पुनरुक्तभूतम् इति । कथमनिवार्यो गजैरन्यैः स्वभाव इव देहिनाम् इति, संभक्तेरन्यत्रापि वृद्ध् ॥ ४० ॥ ऋदुपान्त्यादक्लृपिचृदृचः ॥ ५ । १ । ४१ ॥ ऋकारोपान्त्याद्धातोः क्लृपिचृतिऋचिवर्जितात् क्यप् भवति । वृत्यम् । वृध्यम् । गृध्यम् । शृध्यम् । अक्लृपिचृदृच इति किम् । कल्प्यम् । चर्त्यम् । अर्च्यम् ॥ ४१ ॥ *कृवृषिमृजिशंसिगुहिदुहिजपो वा ॥ ५ । १ । ४२ ॥ एभ्य. क्यप् वा भवति । कृत्यम् । कार्यम् । वृष्यम् । वर्ष्यम् । मृज्यम् । मार्ग्यम् । शस्यम् । शंस्यम् । गुह्यम् । गोह्यम् । दुह्यम् । दोह्यम् । जप्यम् । जाप्यम् । जपेरपि *क्यवभावपक्षे घ्यण् विकल्पसामर्थ्यात् ॥ ४२ ॥ *जिविपून्यो हलिमुञ्जकल्के ॥ ५ । १ । ४३ ॥ जयतेर्विपूर्वाभ्यां च पूनीभ्यां यथासंख्यं हलिमुञ्जकल्केषु कर्मसु वाच्येषु क्यप् प्रत्ययो भवति । महद्धलं हलिः । मुञ्जस्तृणविशेषः । कल्कस्त्रिफलादीनाम् । जीयते निपुणेनेति जित्या जित्यो वा हलिः । पूङ् पूग् वा । विपवितव्यो विपूयो मुञ्जः । पूगो नेच्छन्त्येके । विनेतव्यस्तैलादिना *मध्ये इति विनीयः कल्कः । हलिमुञ्जकल्क इति किम् । जेयम् । विपव्यम् । विनेयम् ॥ ४३ ॥ *पदास्वैरिबाह्यापक्ष्ये ग्रहः ॥ ५ । १ । ४४ ॥ विभक्त्यन्तं पदम् । अस्वैरी परतन्त्रः । बाह्या बहिर्भवा । पक्ष्यो वर्ग्यः । एष्वर्थेषु ग्रहः क्यप् भवति । घ्यणोऽपवादः । प्रगृह्यते विशेषेण ज्ञायते *प्रगृह्यं पदम् । यत्स्वरेण न संधीयते अग्नी इति । अवगृह्यते *नानावयवसात्क्रियते अवगृह्यं पदम् । अस्वैरिणि, गृह्याः कामिनः । रागादिपरतन्त्रा इत्यर्थः । बाह्यायां ग्रामगृह्या श्रेणिः । नगरगृह्या सेना । बाह्येत्यर्थः । स्त्रीलिङ्गनिर्देशो लिङ्गान्तरेऽनभिधानख्यापनार्थं । पक्ष्ये, त्वद्गृह्यः । मद्गृह्यः । गुणगृह्या वचने विपश्चितः । तत्पक्षाश्रिता इत्यर्थः । एष्विति किम् । ग्राह्यं वचः ॥ ४४ ॥ *भृगोऽसंज्ञायाम् ॥ ५ । १ । ४५ ॥ भृगो धातोरसंज्ञायां क्यप् भवति ।

---

॥—द्ववृग्—॥—इणिकोर्ग्रहणमिति । इङस्तु परस्मैपद्यादादिकसाहचर्यात् निरास ॥—आशास्यमन्यदिति । आङ क्वावेवेति नियमान्न शिपादेश ॥—कृवृपि—॥—क्यवऽभावपक्षे घ्यणिति । 'शकितकि'–इति यप्रत्यये तु विशेषाऽभाव ॥—जिविपून्यो—॥—तैलादिना मध्ये इति । तैलादिना कर्त्राऽमनो मध्ये विनेतव्य । कोऽर्थ प्रापयितव्य । यद्वा मध्ये वर्त्तमानेन तैलादिना उत्कर्ष विनेतव्य ॥—पदास्वैरि—॥—प्रगृह्यं पदमिति । परस्वरेणाऽसधीयमानस्य पदस्य प्रगृह्यमिति सञ्ज्ञा विहिता ॥—नानावयवसात्क्रियत इति । यथा पचतीत्यत्र पच् शव् तिव् इत्यऽवयवा. ॥—भृगोसं—॥

भ्रियते भृत्यः । पोष्य इत्यर्थः । असंज्ञायामिति किम् । भार्यो नाम क्षत्रियः । भार्या पत्नी । ननु च संज्ञायामपि स्त्रियां भृगो नाम्नि इति क्यबस्ति यथा "कुमारभृ-
त्या । न । तस्य भाव एव विधानात् ॥ ४५ ॥ **समो वा** ॥५। १ ॥ ४६ ॥ संपूर्वाद्भृगः क्यप् वा भवति । संभृत्यः । संभार्यः ॥ ४६ ॥ ते कृत्याः ॥ ५ । १ ।४७॥
ते घ्यण् तव्य अनीय य क्यप् इत्येते प्रत्ययाः कृत्यसंज्ञा भवन्ति । कृत्यप्रदेशाः ' तत्साप्यानाप्यात्कर्मभावे कृत्यक्तखलर्थाश्च ' ( ३-३-२१ ) इत्यादयः ॥ ४७ ॥
"णकतृचौ ॥ ५ । १ । ४८ ॥ धातोः परौ णकतृचौ प्रत्ययौ भवतः । कृत्त्वात्कर्तरि । पाचकः । पक्ता । पाठकः । पठिता । णकारो वृद्ध्यर्थः । चकारः 'अन्त्यस्वरा-
देः ' ( ७-४-४३ ) इत्यत्र "सामान्यग्रहणाविघातार्थः ॥ ४८ ॥ अच् ॥ ५ । १ । ४९ ॥ धातोरच् प्रत्ययो भवति । कृत्त्वात्कर्तरि । करः । हरः । पचः पठः ।
उद्वहः । चकारः ' आचि ' ( ३-४-१९ ) इत्यत्र विशेषणार्थः ॥ ४९ ॥ "लिहादिभ्यः ॥ ५ । १ । ५० ॥ लिहादिभ्यो धातुभ्योऽच् प्रत्ययो भवति । "पृथग्योगो
बाधकबाधनार्थः । लेहः । शेषः । सेवः । देवः । मेधः । मेषः । मेघः । देहः । प्ररोहः । न्यग्रोधः । कोपः । गोपः । सर्पः । नर्तः । दर्शः । एषु नाम्युपान्त्यलक्षणं कं
दशेस्तु वा शं बाधते । अनिमिष इति बहुलाधिकारात्कोऽपि भवति । श्वपचः । पारापतः । "कद्वदः । यद्वदः । अरीन् व्रणयतीत्यरिव्रिणा शक्तिः । जारभरा । कन्यावरः ।
रघूद्वहः । रसावहः । एष्वणं बाधते । बहुवचनम् "आकृतिगणार्थम् । नदी । भषी । प्लवी । गरी । चरी । तरी । दरी । स्तरी । सूदी । देवी । रोवी । चोरी । गोही ।
एतेऽजन्ता "गौरादौ द्रष्टव्या ॥ ५० ॥ ब्रुवः ॥ ५ । १ । ५१ ॥ ब्रुवो धातोरचि ब्रुव इति निपात्यते । ब्राह्मणमात्मानं ब्रूते ब्राह्मणब्रुवः । अण्वचादेशगुणबाध-
नार्थं निपातनम् ॥ ५१ ॥ "नन्द्यादिभ्योऽनः ॥ ५ । १ । ५२ ॥ नन्द्यादिभ्यो धातुभ्यो नामगणे दृष्टेभ्योऽनः प्रत्ययो भवति । नन्द्यादयो नन्दनरमणेत्यादिनाम-
गणशब्देभ्योऽपोद्धृत्य वेदितव्याः । स च "सप्रत्ययपाठो "विशिष्टविषयार्थो रूपनिग्रहार्थश्च । नन्दिवाशिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् ।
नन्दनः । वाशनः । मदनः । दूषणः । साधनः । वर्धनः । शोभनः । रोचनः । सहिरमिदमिरुचिक्तितपितृदिदाहियुपूलूभ्यः संज्ञायामेवाण्यन्तेभ्यः । सहते सहनः ।
एवं रमणः । दमनः । विरोचनः । विकर्तनः । तपनः । प्रतर्दनः । दहनः । यवनः । पवनः । लवणः । निपातनाण्णत्वम् ।
समः क्रन्दिकृषिहृषिभ्यः संज्ञायामेव । संक्रन्दनः । संकर्षणः । संहर्षणः । कर्मणो दमिअर्दिनाशिसूदिभ्यः । सर्वदमनः । जनार्दनः । वित्तविनाशनः ।
मधुसूदनः । असंज्ञायामपि । रिपुदमनः । कुलदमनः । परार्दनः । रोगनाशनः । अरिसूदनः । नर्दिभीषिभूषिदृपिजल्पिभ्यः । नर्दयति नर्दनः । विभीषयते विभीषणः ।

---

कुमारपोषणप्रतिपादकं शास्त्रमप्युपचारात् कुमारभृत्या ॥—णकतृ—॥—सामान्यग्रहणाविघातार्थं इति । अन्यथा निरनुबन्धेति न्यायात् तृच एव ग्रहः स्यात् न तु तृनः ॥—लिहादिभ्यः
॥—पृथग्योग इति । पूर्वेण सिद्धेऽस्यारम्भादित्यर्थः ॥—वा श बाधते इति । यदि हि नित्यं लिहाद्यच् स्यात्तदा दृश शविधानमनर्थकं स्यादिति ॥—कद्वद इति । कुत्सितं वदति 'रथवदे' कदादेशः
॥—आकृतिगणार्थमिति । तेन वशा अमर क्षम रण श्लेष अजगर इत्यादयोऽदर्शिता अपि ज्ञेया. ॥—गौरादौ द्रष्टव्या इति । अन्यैर्नदीइत्यादीना ङ्यर्थं टित्त्वं कृतं तत् स्वमते कथमित्याह ।
नदीत्यादीनां सामान्योऽनेन वाऽच् भवतु । भरतस्तु गौरादौ ॥—नन्द्यादिभ्यो—॥—सप्रत्ययपाठ इति । अथ प्रकृतय एव पठ्यन्ता किं सप्रत्ययपाठेनेत्याह—विशिष्टविषयार्थं इति । तेन ये

भूपयति भूषणः । दृप्यति दर्पणः । जल्पति जल्पनः । बहुवचनमाकृतिगणार्थम् ॥ ५२ ॥ **ग्रहादिभ्यो णिन्** ॥ ५ । १ । ५३ ॥ ग्रहादिभ्यो नामगणदृष्टेभ्यो णिन् प्रत्ययो भवति । ग्राही । स्थायी । उपस्थायी । मन्त्री । संमर्दी । उपावाभ्यां रुधः, उपरोधी । अवरोधी । अपाद्राधः, अपराधी । उदः सहिदहि ( सि ) भासिभ्यः, उत्साही । उद्दाही ( सी ) । उद्भासी । नेः श्रुशीविशवसवपरक्षिभ्य', निश्रृणोति निश्रावी । निशायी । निवेशी । निवासी । निवापी । निरक्षी । नञो व्याहृसंव्याहृसंव्यवहृयाचित्रजवदवसिभ्यः, न व्याहरति अव्याहारी । असंव्याहारी । असंव्यवहारी । अयाची । अव्राजी । अवादी । अवासी । नञ्पूर्वात्स्वरान्तादचित्तवत्कर्तृकात् । अकारी धर्मस्य बालातप । अहारी शीतस्य शिशिर' । चित्तवत्कर्तृकान्न भवति । अकर्ता कटस्य चैत्रः । केचिदनञ्पूर्वादिच्छन्ति । कारी । हारी । व्यभिभ्यां सुवोऽतीते । विभवति स्म विभावी । आभिभावी । विपरिभ्यां भुवो ह्रस्वश्च वा । विभवति विभावी । विभवी । परिभावी । परिभवी । वेः शीङ्षिगोर्देशे ह्रस्वश्च । गुणैश्चित्ते विशेते विसिनोति वा विशयी विषयी च प्रदेशः । निपातनात्षत्वम् । ग्रहादिराकृतिगणः ॥ ५३ ॥ *नाम्युपान्त्यप्रीकॄगॄज्ञः कः ॥ ५ । १ । ५४ ॥ नाम्युपान्त्येभ्यो धातुभ्यः प्रीकॄगॄज्ञा इत्येतेभ्यश्च कः प्रत्ययो भवति । ककारः कित्कार्यार्थः । विक्षिपः । विलिखः । बुध । 'युधः । कृशः । वितुदः । प्रीणातीति प्रियः । किरतीति किरः । उत्किरः । गिलतीति गिलः । 'निगिलः । जानातीति ज्ञः । काष्ठभेद इति परत्वादण् ॥ ५४ ॥ 'गेहे ग्रहः ॥ ५ । १ । ५५ ॥ गेहेऽभिधेये ग्रहेः को भवति । गृहम् । गृहाणि । गृहाः पुंसि 'बहुवचनान्त एव । उपचाराद्दारा गृहाः ॥ ५५ ॥ उपसर्गादातो डोऽश्यः ॥ ५ । १ । ५६ ॥ उपसर्गात्परात् श्यैङ्वर्जितादाकारान्ताद्धातोर्डः प्रत्ययो भवति । आह्वयतीति आह्वः । प्रह्व । संव्यः । परिव्यः । प्रज्यः । अनुज्यः । प्रस्थः । सुग्लः । सुम्लः । सुत्रः । व्यालः । सुरः । केनैव सिद्धे डविधानं य्वृन्निषेधार्थम् । उपसर्गादिति किम् । णे, दायः । धायः । आत इति किम् । आह्वाता । अश्य इति किम् । णे अवश्यायः । प्रतिश्यायः । 'पूर्वेऽपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान्' इति णो बाध्यते नाण् तेन गोसंदाय वडवासंदाय इत्यणेव ॥५६॥ 'व्याघ्राघ्रे प्राणिनसोः ॥५।१।५७॥ व्याघ्र आघ्रा इत्येतौ शब्दौ जिघ्रतेर्यथासंख्यं प्राणिनि नासिकायां चार्थे डप्रत्ययान्तौ निपात्येते । विविधमाजिघ्रति 'व्याघ्रः प्राणी । आजिघ्रति आघ्रा नासिका । शस्यापवादः ॥ ५७ ॥ घ्राध्मापाट्धेदृशः शः ॥ ५ । १ । ५८ ॥ एभ्यः शः प्रत्ययो भवति । घ्रा, जिघ्रतीति जिघ्रः । विजिघ्रः । उज्जिघ्रः । ध्मा, धमः । विधमः । उद्धमः । घ्रादिसाहचर्यात्पा इति पिबतेर्ग्रहणं न पातेः । पिबः । निपिबः । उत्पिबः । पायतेस्तु लाक्षणिकत्वान्न भवति । ट्धे, धयः । विधय । उद्धयः । दृश्, पश्यः । विपश्यः । उत्पश्यः । ट्धेष्टकारो ङ्यर्थः । उद्धयी । विधयी । उपसर्गादेवेच्छन्त्यन्ये । शकारः शित्कार्यार्थ' ॥ ५८ ॥ **साहिसातिवेद्युदेजिधारिपारिचेतेरनुपसर्गात्** ॥ ५ । १ । ५९ ॥ एतेभ्य उपसर्गरहितेभ्यो ण्यन्तेभ्यः शः प्रत्ययो भवति । साहि, साहयतीति साहयः । सातिः सौत्रो धातुः । सातयः ।

---

निरुपसर्गयदुपपदोपसर्गाः पठ्यन्ते ते तथा गृह्यन्ते इत्यर्थ ॥—नाम्युपान्त्य—॥—युध इति । युध्यते । योधवाचकस्तु णिगि योधयतीति अचि ॥—गिलः ॥—निगिल इति । 'नवा स्वरे' इत्यत्र व्यवस्थितविभाषाश्रयणान्नित्य लत्वम् ॥—गेहे ग्र—॥—बहुवचनान्त एवेति । दुर्गस्त्वेकवचनान्तमेवाह ॥—व्याघ्राघ्रे—॥—व्याघ्र इति । अनेकार्थत्वाच्छिङ्घनपूर्वके हिंसने वर्त्तते ।

वेदि वेदयः । उदेजि उदेजयः । धारि धारयः । पारि पारयः । चेति चेतयः । अनुपसर्गादिति किम् । प्रसाहयिता । छत्रधार इति परत्वादणेव ॥ ५९ ॥
*लिम्पविन्दः ॥ ५ । १ । ६० ॥ अनुपसर्गाभ्यां लिम्पविन्दिभ्यां शो भवति । लिम्पतीति लिम्पः । विन्दतीति विन्दः । अनुपसर्गादित्येव । प्रलिपः ॥ ६० ॥
*निगवादेर्नाम्नि ॥ ५ । १ । ६१ ॥ यथासंख्यं निपूर्वात् लिम्पेर्गवादिपूर्वाश्च विन्देर्नाम्नि संज्ञायां शो भवति । निलिम्पन्तीति निलिम्पा नाम देवाः । गा विन्दतीति गोविन्दः । कुविन्दः ।*अरविन्दः । कुरुविन्दः । उरविन्दः । नाम्नीति किम् । निलिप ॥ ६१ ॥ *वा ज्वलादिदुनीभूग्रहास्रोर्णः ॥५।१।६२॥ ज्वलादेर्गणात् दुनीभूग्रहिभ्य आङ्पूर्वाच्च स्रवतेरनुपसर्गाण्णो वा भवति । पहिपर्यन्ता ज्वलादयो वृत्करणात् । ज्वलः । ज्वालः । चलः । चालः । निपातः, उत्क्रोशः इति *बहुलाधिकारात् । दवः । दावः । नयः । नायः । दुनीभ्यां नित्यमेवेत्येके । भवः । भावः । व्यवस्थितविभाषेयम् । तेन ग्राहो मकरादिः । ग्रहः सूर्यादिः । आस्रवः । आस्रावः । अनुपसर्गादित्येव । प्रज्वलः । प्रदवः । प्रणयः । प्रभवः । प्रग्रहः । प्रस्रवः । ज्वल, कुच, पत्लृ, पथे, कथे, मथे, पद्लृ, शद्लृ, बुध्, टुवमू, भ्रमू, क्षर, चल, जल, टल, ट्वल, ष्ठल, हल, णल, वल, पुल, कुल, पल, फल, शल, हुल, क्रुश, कस, रुहं, रमि, पहि ३१ वृत् इति ज्वलादिः ॥
॥ ६२ ॥ अवहृसासंस्रोः ॥ ५ । १ । ६३ ॥ अवपूर्वाभ्यां हृसाभ्यां संपूर्वाच्च स्रवतेर्णः प्रत्ययो भवति । अवहारः । अवसायः। संस्रावः। संस्रव इत्यपि कश्चित् ॥
६३ ॥ तन्व्यधीण्श्वसातः ॥ ५ । १ । ६४ ॥ तन् व्यधि इण् श्वस् इत्येतेभ्य आदन्तेभ्यश्च धातुभ्यो णः प्रत्ययो भवति । तानः । उत्तानः । अवतानः । व्याधः । प्रत्यायः । अत्यायः । अन्तरायः । अतिपूर्वादेवेण इत्येके । श्वासः । आश्वासः । आदन्त, अवश्यायः । प्रतिश्यायः । ग्लायः । म्लायः । कथं ददः दधः । ददिदध्योरचा सिद्धम् ॥ ६४ ॥ नृत्खन्रञ्जः शिल्पिन्यकट् ॥ ५ । १ । ६५ ॥ नृतिखनिरञ्जिभ्यः शिल्पिनि कर्तर्यकट् प्रत्ययो भवति । शिल्पं कर्मकौशलम् तद्वान् शिल्पी । नर्तकः । नर्तकी । खनकः । खनकी । रजकः । रजकी । शिल्पिनीति किम् । नर्तिका । खानकः । रञ्जकः । टकारो ङ्यर्थः ॥ ६५ ॥ *गस्थकः ॥ ५ । १ । ६६ ॥ गायतेः शिल्पिनि कर्तरि थक प्रत्ययो भवति । गाथकः । गाङः प्रत्यये *शिल्पी न गम्यते इति गायतेर्ग्रहणम् ॥ ६६ ॥ *टनण् ॥ ५ । १ । ६७ ॥ गायतेः शिल्पिनि कर्तरि टनण् प्रत्ययो भवति । गायनः । गायनी । टकारो ङ्यर्थः । णकार ऐकारार्थः । योगविभाग उत्तरार्थः । एतौ प्रत्ययावशिल्पिन्यपीत्येके* ॥ ६७ ॥ हः कालव्रीह्योः ॥ ५ । १ । ६८ ॥ जहातेर्जिहीतेर्वा कालव्रीह्योः कर्त्रोष्टनण् प्रत्ययो भवति । जहाति जिहीते वा भावान् हायनः संवत्सरः । जहत्युदकं दूरोत्थानात् जिहते वा द्रुतम् हायना नाम व्रीहयः । कालव्रीह्योरिति किम् । हाता ॥ ६८ ॥ प्रुसृल्वोऽकः साधौ ॥ ५ । १ । ६९ ॥ प्रुसृलू इत्येतेभ्यो

॥—लिम्पविन्दः । लिम्पिसाहचर्यात् विन्देस्तौदादिकस्य ग्रह । न तु विदु अवयवे इत्यस्य ॥—निगवादेर्ना—॥—अरविन्द इति । चक्रावयवविशेष । अब्जे तु क्लीबत्वम् । कश्चित्वऽब्जेऽपि पुंस्त्वमाह । राजा च ॥—वा ज्वलादि—॥—बहुलाधिकारादिति । सोपसर्गादपीत्यर्थ ॥—गस्थकः ॥—शिल्पी न गम्यत इति । शब्दशक्तिस्वाभाव्यात् ॥—टनण् ॥—एके इति । तन्मते गामादाग्रहणे सामान्यग्रहणामिति न्यायात् गायतेर्गाङश्च ग्रह यत्क्षीर विविधमाजिघ्रन् हिनस्तीति

धातुभ्यः साधुत्वविशिष्टेऽर्थे वर्तमानेभ्योऽकः प्रत्ययो भवति। साधु प्रवते इति प्रवकः। एवं सरकः। लवकः। साधाविति किम्। प्रावकः। सारकः। लावकः ॥६९॥ आशिष्यकन् ॥ ५ । १ । ७० ॥ इष्टस्य प्रार्थनमाशीः। तस्यां गम्यमानायां धातोरकन् प्रत्ययो भवति। जीवतादित्याशास्यमानो जीवकः। एवं नन्दकः। भवकः। आशिषीति किम्। जीविका। नन्दिका। भाविका। नकार 'इच्चापुंसोऽनित्क्याप्परे' ( २-४-१०६ ) इत्यत्र व्युदासार्थः। तेन जीवका नन्दका भवका ॥ ७० ॥ *तिक्कृतौ नाम्नि ॥ ५ । १ ।७१॥ आशिषि विषये संज्ञायां गम्यमानाया धातोस्तिक् कृतश्च सर्वे प्रत्यया भवन्ति। शम्यात् शान्तिः। तन्यात् तन्तिः। सन्यात् सन्तिः। रमतामित्येवमाशंसितः रन्तिः। कृत्, वीरो भूयादिति *वीरभूः। मित्रभूः। क्विप्। अग्निरस्य भूयात् *अग्निभूतिः। देवभूतिः। अश्वभूतिः। सोमभूतिः। कुमारोऽस्य दुरितानि नयतामित्याशंसितः कुमारनीतिः। मित्रमेनं वार्द्धिषीष्ट मित्रवृद्धिः। क्तिः। देवा एनं देयासुर्देवदत्तः। यज्ञदत्तः। विष्णुरेनं श्रूयात् इति विष्णुश्रुतः। क्तः। शर्व एनं वृपीष्ट शर्ववर्मा। मन्। गङ्गा एनं मिनात् गङ्गामित्रः। त्रक्। वर्धिषीष्ट वर्धमानः॥७१॥ *कर्मणोऽण्॥५।१।७२॥ निर्वर्त्यविकार्यप्राप्यरूपात्कर्मणः परस्माद्धातोरण् प्रत्ययो भवति। अजाद्यपवादः। निर्वर्त्यात् कुम्भकारः। नगरकारः। विकार्यात् काण्डलावः। शरलावः। प्राप्यात् वेदाध्यायः। चर्चापारः। भारहारः। सूत्रधारः। भारवाहः। द्वारपालः। उष्ट्रप्रणायः। कमण्डलुग्राहः। आदित्य पश्यति हिमवन्तं शृणोति ग्रामं गच्छतीत्यादौ प्राप्यात्कर्मणोऽनभिधानान्न भवति। महान्तं घटं करोतीति *सापेक्षत्वात् *अनभिधानाच्च। तथा च बहुलाधिकारः। निर्वर्त्यविकार्याभ्यामपि क्वचिन्न भवति। सयोगं जनयति, स्रजं विरचयति, वृक्षं छिनत्ति, कन्यां मण्डयति। णकारो वृद्ध्यर्थः ॥ ७२ ॥ *शीलिकामिभक्ष्याचरीक्षिक्षमो णः ॥ ५ । १ । ७३ ॥ कर्मणः परेभ्यः शीलि कामि भक्षि आचरि ईक्षि क्षम इत्येतेभ्यो धातुभ्यो णः प्रत्ययो भवति। धर्मं शीलयति धर्मशीलः। धर्मशीला। धर्मकामः। धर्मकामा। वायुभक्षः। वायुभक्षा। आङ्पूर्वश्चरिः। कल्याणाचारः। कल्याणाचारा। सुखप्रतीक्षः। सुखप्रतीक्षा। बहुक्षमः। बहुक्षमा। *अल्यजन्तैः शीलादिभिर्बहुव्रीहौ सति धर्मशीलादय सिध्यन्ति। अण्बाधनार्थं तु वचनम्। अणि हि स्त्रियां ङी स्यात् तथाच धर्मशीलीत्याद्यनिष्टं रूपं स्यात्। एवंप्रायेषु च बहुव्रीह्याश्रयणे *अम्भोऽतिगमेति स्यात् अम्भोतिगामी चेष्यते। कामीति ण्यन्तस्योपादानादण्यन्तादणेव पयस्कामीति। ण्यन्तस्य तु णे सति पयःकामेति भवति। अत एव च ण्यन्तनिर्देशादण्यन्तनिर्देशे कृकमिकंसेत्यादौ केवलस्यैव कमेर्ग्रहणम्। तेन णे सति सकारादेशो न भवति ॥ ७३॥ गायोऽनुपसर्गाट्टक् ॥ ५ । १ । ७४ ॥ कर्मणः परादनुपसर्गाद्गायतेष्टक् प्रत्ययो भवति। वक्र गायति वक्रगः। वक्रगी। सामगः। सामगी। अनुपसर्गादिति किम्। वक्रसंगाय। खरुसंगायः। वक्रादयो गीतविशेषाः। गायतिनिर्देशो गाङ्निवृत्त्यर्थः ॥ ७४ ॥ *सुराशीधोः पिबः ॥ ५ । १ । ७५ ॥ सुराशीधुभ्यां

॥—तिकृतौ नाम्नि ॥—वीरभूरिति। वीरादे शब्दात् भवत्यादेर्धातोरनेन प्रत्ययविधि.। ततो यद्यपि साक्षात् डस्युक्तता नास्ति तथापि सञ्ज्ञाया प्रत्ययविधानात् सूचितेति 'डस्युक्तम्'-इति स । 'नाम नाम्ना'-इति वा ॥—अग्निभूतिरिति । कृत्वात् कर्त्तर्येव प्राप्तौ बहुलाधिकारात् सबन्धादावपि प्रत्यय ॥—कर्म्मणोऽण् ॥—सापेक्षत्वादिति । अगमकत्वमनपेक्ष्य सापेक्षत्वमानमुत्तरम् ॥—अनभिधानाच्चेति । विवक्षितार्थाप्रतिपादनात् । अणि हि सति महतो घटकारस्य प्रतीति ॥—शीलिकामि—॥—अल्यजन्तैरिति । ण्यन्तेभ्योऽलि अण्यन्तेभ्यस्तु घञि ॥—अम्भोतिगमेति स्यादिति । अतिगम्यते 'सुवर्ण'-इत्यलि बहुव्रीहौ न चैतदिष्यते । स्थिते तु अम्भ कर्म्म अतिगच्छति 'कर्मणोऽण्' ॥—सुराशीधो—

कर्मभ्यां परादनुपसर्गात् पिबतेष्टक् भवति। सुरां पिबति सुरापः । सुरापी। सीधुपः। सीधुपी। सुराशीधोरिति किम् । क्षीरपा बाला। पिब इति किम् । सुरां पाति सुरापा। 'कथं संज्ञायां सुरापा सुरापीति। पातिपिबत्योर्भविष्यति। न च धात्वर्थभेदः। संज्ञासु धात्वर्थस्य व्युत्पत्तिमात्रार्थत्वात् ॥ ७५ ॥ *आतोडोऽह्वावामः ॥५।१।७६॥ कर्मणः परादनुपसर्गात् ह्वावामावर्जितादाकारान्ताद्धातोर्डः प्रत्ययो भवति। गा ददाति गोदः। कम्बलदः। पार्ष्णित्रम्। अङ्गुलित्रम्। ब्रह्मज्यः। अनुपसर्गादित्येव। गोसंदायः। वडवासंदायः। उपसर्गैः *अव्यवधानत्वेत्यण् ॥ ७६ ॥ ... वपुर्वीतवान् वपुर्व्यः। अह्वावाम इति किम्। स्वर्गह्वायः।*तन्तुवायः। 'धान्यमायः। अणेव। कथं मित्रह्वः। 'क्वचित्' (५-१-१७१) इत्यनेन डः। अनुपसर्गादित्येव। गोसंदायः। वडवासंदायः। उपसर्गैः *अव्यवधानत्वेत्यण् ॥ ७६ ॥ समः ख्यः ॥५।१।७७॥ कर्मणः परात्संपूर्वात् ख्या इत्येतस्मात् डो भवति। गां संख्याति संचष्टे वा गोसंख्यः। पशुसंख्यः। उपसर्गार्थं वचनम् ॥ ७७ ॥ दश्चाङः ॥ ५ । १ । ७८ ॥ कर्मणः परादाङ्पूर्वाद्ददातेः ख्या इत्येतस्माच्च डो भवति। दायमादत्ते दायादः। स्त्रियमाचष्टे स्त्र्याख्यः। प्रियाख्यः। इदमुत्तरं चोपसर्गार्थं वचनम् ॥ ७८ ॥ *प्राज्ज्ञश्च ॥ ५ । १ । ७९ ॥ कर्मणः परात्प्रपूर्वाज्जानातेर्दारूपाच्च डो भवति। पथिप्रज्ञः। प्रपाप्रदः। इह पूर्वसूत्रे च 'दारूपं गृह्यते न संज्ञा ज्ञाख्यासाहचर्यात् । पूर्वसूत्रे तु दाग एव ग्रहणम् । तस्यैवाङा योगात् । तेन स्तनौ प्रधयति स्तनप्रधायः ॥ ७९ ॥ आशिषि हनः ॥ ५ । १ । ८० ॥ आशिषि गम्यमानायां कर्मणः पराद्धन्तेर्डो भवति। शत्रुं वध्यात् शत्रुहः। पापहः । दुःखहः। गतावपीति कश्चित्। क्रोशं हन्ति क्रोशहः ॥ ८० ॥ *क्लेशादिभ्योऽपात् ॥ ५ । १ । ८१ क्लेशादिभ्यः कर्मभ्यः परादपपूर्वाद्धन्तेर्डो भवति। अनाशीरर्थ आरम्भः। क्लेशमपहन्ति क्लेशापहः। तमोपहः। दुःखापहः। ज्वरापहः। दर्पापहः। दोषापहः। रोगापहः। वातपित्तकफापहः। विषाग्निदर्पापहः। बहुवचनाद्यथादर्शनमन्येभ्योऽपि भवति। *कथं दार्वाघाटः चार्वाघाटः । 'घटतेरणि संज्ञायां भविष्यति। चारु आहन्तीति चार्वाघातो हन्तेरेव। दार्वाघातोऽपि तर्हि स्यात्। असंज्ञायामिष्यत एव। एवमसंज्ञायां संपूर्वाभ्यां घटिहनिभ्यां वर्णसंघाटः वर्णसंघातः पदसंघाटः पदसंघात इत्यादि सिद्धम् । हन्तेरेव वा पृषोदरादित्वाद्वर्णविकारः ॥ ८१ ॥ कुमारशीर्षाण्णिन् ॥ ५ । १ । ८२ ॥ कुमारशीर्षाभ्यां कर्मभ्यां पराद्धन्तेर्णिन् प्रत्ययो भवति। कुमारं हन्ति कुमारघाती। शीर्षघाती। अत एव निपातनाच्छिरसः शीर्षशब्दोऽकारान्तः प्रकृत्यन्तरं वा। तथा च शीर्षे स्थितं पृष्ठत इति ॥ ८२ ॥ *अचित्ते टक् ॥ ५ । १ । ८३ ॥ कर्मणः पराद्धन्तेरचित्तवति कर्तरि टक् प्रत्ययो भवति। वातं हन्ति वातघ्नम् तैलम्। पित्तघ्नं घृतम्। श्लेष्मघ्नं मधु। रोगघ्नमौषधम् । जायाघ्नाः *तिलकालकाः । पतिघ्नी पाणिरेखा । सर्वकर्मघ्नी

---

॥—कथमिति । अत्र डीविकल्प कथमित्याशङ्का ॥—आतो डो—॥ अनिर्दिष्टार्थास्त्रिष्वपि कालेषु भवन्तीति वपुर्व्यइत्यत्र भूतेऽपि ड ॥—तन्तुवाय इति । वातिवाय्यो रकर्मकत्वान्न ग्रहणम् ॥—धान्यमाय इति । धान्य माति मिमीते मयते वा ॥—अव्यवधानत्वेति । नन्वणपि न प्राप्नोति कर्मण उपसर्गेण व्यवहितत्वादित्याह—इत्यण् इति । एतत् कुतो लभ्यते । 'गायोऽनुपसर्गाट्टक्' सूत्रे उपसर्गवर्जनात् । अन्यथा कर्मण परात् उपसर्गव्यवधाने न प्राप्नोत्येव ॥—प्राज्ज्ञश्च ॥—दारूप गृह्यते इति । तेन दावृदैवोरपि ग्रहस्तेन केदारप्रदो भाजनप्रदश्चेति सिद्धम् ॥—क्लेशादिभ्यो—॥—कथ दार्वाघाट इत्यादि । दारावाडो हन्तेरण् अन्तस्य च ट सज्ञाया चारो तु ड इति परेषा सूत्रद्वयमत्र तत् स्वमते कथमित्याह—घटतेरणीति । दारुः सारस । चारुस्तु जीवभेदस्तमाघटते सग्रभाति ॥—अचित्ते टक् ॥—तिलकालका इति । तिलाना तुल्यास्तिलका अलका इवाल-

*शैलेशी । स्रुघ्नो नगरम् । शतघ्नी आयुधविशेषः। हस्तघ्नो ज्याघातत्रो वर्ध्रपट्टः। बहुलाधिकारात् स्रुघ्नादयः संज्ञायाम् । अचित्त इति किम् । पापघातो यतिः । चौरघातो राजा । आखुघातो विडालः। मत्स्यघातो बकः। सस्यघातो वृषभः ॥ ८३ ॥ **जायापतेश्चिह्नवति** ॥५ । १ । ८४॥ जायापतिभ्यां कर्मभ्यां पराद्धन्तेश्चिह्नवति कर्तरि टक् भवति । चिह्नं शरीरस्थं शुभाशुभसूचकं तिलकालकादि । जायाघ्नो ब्राह्मणः । पतिघ्नी कन्या । अपलक्षणयुगित्यर्थः । चित्तवदर्थ आरम्भः ॥ ८४ ॥ **ब्रह्मादिभ्यः** ॥ ५ । १ । ८५ ॥ ब्रह्मादिभ्यः कर्मभ्यः पराद्धन्तेष्टक् प्रत्ययो भवति । ब्रह्म हन्ति ब्रह्मघ्नः । कृतघ्नः । शत्रुघ्नः । वृत्रघ्नः । भ्रूणघ्नः । बालघ्नः । शशघ्नी पक्षिजातिः । गां हन्ति गोघ्नः पातकी । बहुलाधिकारात्संप्रदानेऽपि । गा हन्ति यस्मै आगताय दातुम् स गोघ्नोऽतिथिः । बहुवचनाद्यथादर्शनमन्येभ्योऽपि भवति । चित्तवदर्थ आरम्भः ॥ ८५ ॥ **हस्तिबाहुकपाटाच्छक्तौ** ॥ ५ । १ । ८६ ॥ एभ्यः कर्मभ्यः पराद्धन्तेः शक्तौ गम्यमानायां टक् भवति । चित्तवदर्थ आरम्भः । हस्तिनं हन्तुं शक्तः हस्तिघ्नो मनुष्यः । बाहुघ्नो मल्लः । कपाटघ्नश्चौरः । शक्ताविति किम् । हस्तिनं हन्ति विषेण हस्तिघातो रसदः ॥ ८६ ॥ **नगरादगजे** ॥ ५ । १ । ८७ ॥ नगरात्कर्मणः पराद्धन्तेर्गजवर्जिते कर्तरि टक् भवति । चित्तवदर्थ आरम्भः । नगरघ्नो व्याघ्रः । अगज इति किम् । नगरघातो हस्ती ॥८७॥ **राजघः**॥ ५ । १ । ८८ ॥ राज्ञः कर्मणः पराद्धन्तेष्टक् प्रत्ययो घादेशश्च निपात्यते । राजानं हन्ति राजघः ॥८८॥ **पाणिघताडघौ शिल्पिनि** ॥ ५ । १ । ८९ ॥ पाणिताडाभ्यां कर्मभ्यां पराद्धन्तेः शिल्पिनि कर्तरि टक् घादेशश्च निपात्यते । पाणिं हन्ति पाणिघः, ताडघः शिल्पी । पाणिना ताडेन च हन्तीति करणादपि केचित् । शिल्पिनीति किम् । पाणिघातः । ताडघातः ॥८९॥ **कुक्ष्यात्मोदराद्भृगः खिः** ॥५।१।९०॥ एभ्यः कर्मभ्यः परात् भृगो धातोः खिः प्रत्ययो भवति । कुक्षिमेव बिभर्ति कुक्षिंभरिः । आत्मंभरिः । उदरंभरिः । उदरात्केचिवदिच्छन्ति । खकारो मागमार्थः ॥ ९० ॥ **अर्होऽच्** ॥ ५ । १ । ९१ ॥ कर्मणः परादर्हतेरच् प्रत्ययो भवति । अणोऽपवादः । पूजामर्हति पूजार्हः साधुः । पूजार्हा प्रतिमा ॥ ९१ ॥ **धनुर्दण्डत्सरुलाङ्गलाङ्कुशर्ष्टियष्टिशक्तितोमरघटाद्ग्रहः** ॥ ५ । १ । ९२ ॥ एभ्यः कर्मभ्यः पराद्ग्रहेरच् प्रत्ययो भवति । धनुर्गृह्णाति धनुर्ग्रहः । दण्डग्रहः । त्सरुग्रहः । लाङ्गलग्रहः । अङ्कुशग्रहः । ऋष्टिग्रहः । यष्टिग्रहः । शक्तिग्रहः । तोमरग्रहः । घटग्रहः । नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति घटीग्रहः । अणपोत्येके । धनुर्ग्राहः दण्डग्राह इत्यादि चोदाहरन्ति ॥ ९२ ॥ **सूत्राद्धारणे** ॥ ५ । १ । ९३ ॥ सूत्रं कर्पासादिमयम् लक्षणसूत्रं वाविशेषेण गृह्यते । सूत्रात्कर्मणः परात् ग्रहेर्ग्रहणपूर्वके धारणेऽर्थे वर्तमानादच् प्रत्ययो भवति । सूत्रं गृह्णाति सूत्रग्रहः प्राज्ञः सूत्रधारो वा । सूत्रमुपादाय धारयतीत्यर्थः । *अन्ये त्ववधारणे एवेच्छन्ति तन्मते सूत्रग्रहः प्राज्ञ एवोच्यते ॥ धारण इति किम् । सूत्रग्राहः । यो हि सूत्रं गृह्णाति न तु धारयति स एवमुच्यते ॥ ९३ ॥ ***आयुधादिभ्यो धृगोऽदण्डादेः** ॥ ५ । १ । ९४ ॥

---

कास्ते च ते अलकाश्च । येषा लोके मित्र इति प्रसिद्धिः ॥—शैलेशीति । शिलानामीश शिलेशस्तस्येय निष्प्रकम्पत्वात् ॥—सूत्राद्धारणे ॥—अन्ये त्ववधारण एवेति । तन्मते य सूत्र धारयत्येव तत्रैवाच् सूत्रधारस्तु प्रयोजने एव गृह्णाति न तु सर्वकालम् ॥—आयुधादि—॥ दण्डादीना वर्जनात्तेभ्योऽण निर्णिन्ये । अन्यथा युधादिद्वारोऽच् प्रत्ययोऽपि स्यादिति सदेह स्यात्

पन्थान इति तद्योगाद्यथा मञ्चाः क्रोशन्तीति ॥ १२१ ॥ कूलादुद्रुजोद्वहः ॥ ५ । १ । १२२ ॥ कूलात्कर्मणः पराभ्यामुद्रुज् उद्वह् इत्येताभ्यां परः खश् भवति । कूलमुद्रुजो गजः । कूलमुद्वहा नदी ॥ १२२ ॥ वहाभ्राल्लिहः ॥ ५ । १ । १२३ ॥ वहाभ्राभ्यां कर्मभ्यां परात्लिहेः खश् भवति । वहं लेढि वहंलिहो गौः । अभ्रंलिहः प्रासादः ॥ १२३ ॥ बहुविध्वरुस्तिलात्तुदः ॥ ५ । १ । १२४ ॥ एभ्यः कर्मभ्यः परात्तुदेः खश् भवति । वहुं तुदति वहुतुदं युगम् । विधुंतुदो राहुः । [*]अरुंतुदः पीडाकरः । तिलंतुदः काकः । वहोः केचिदेवेच्छन्ति ॥ १२४ ॥ ललाटवातशर्धात्तपाजहाकः ॥ ५ । १ । १२५ ॥ ललाटादिभ्यः कर्मभ्यः परेभ्यो यथासंख्यं तप् अज् हाक् इत्येतेभ्यः खश् भवति ललाटं तपति ललाटंतपः सूर्यः । वातमजन्ति वातमजा मृगाः । शर्धंजहा माषाः । खशः शित्त्वादजेर्वी आदेशो न भवति । हाकः ककारो हाङो निवृत्त्यर्थः ॥ १२५ ॥ [*]असूर्योग्राद् दृशः ॥ ५ । १ । १२६ ॥ असूर्योग्राभ्यां कर्मभ्यां परात् दृशेः खश् भवति । सूर्यमपि न पश्यन्ति असूर्यंपश्या राजदाराः । दृशिना संवद्धस्य नञः सूर्येण सहासामर्थ्येऽपि गमकत्वात्समासः । उग्रं पश्यति उग्रंपश्यः ॥ १२६ ॥ *इरंमदः ॥५।१।१२७॥ *कर्मण इति निवृत्तम् । इरापूर्वान्माद्यतेः खश् श्याभावश्च निपात्यते । इरा सुरा तया माद्यति इति इरंमदः ॥१२७॥ नग्नपलितप्रियान्धस्थूलसुभगाढ्यतदन्तात्च्व्यर्थेऽच्वेर्भुवः खिष्णुखुकञ्॥५।१।१२८॥ नग्नादिभ्यः केवलेभ्यस्तदन्तेभ्यश्चाच्व्यन्तेभ्यश्च्व्यर्थे वर्तमानेभ्यः पराद्भवतेः खिष्णुखुकञौ प्रत्ययौ भवतः । अनग्नो नग्नो भवति नग्नंभविष्णुः। नग्नंभावुकः। पलितंभविष्णुः। पलितंभावुकः। प्रियंभविष्णुः। प्रियंभावुकः। स्थूलंभविष्णुः। स्थूलंभावुकः। सुभगंभविष्णुः। सुभगंभावुकः । आढ्यंभविष्णुः। आढ्यंभावुकः। तदन्तेभ्यः। अननग्नोऽनग्नो भवति अनग्नंभविष्णुः। अनग्नंभावुकः । असुनग्नः सुनग्नो भवति सुनग्नंभविष्णुः सुनग्नंभावुकः। इत्यादि। च्व्यर्थ इति किम् । नग्नो भविता । अच्वेरिति किम् । आढ्यीभविता । तृच् । उपपदविधिषु तदन्तविधिरनाश्रित इति तदन्तग्रहणम् ॥१२८॥*कृगः खनट् करणे ॥५।१।१२९॥ नग्नादिभ्योऽच्व्यन्तेभ्यश्च्व्यर्थवृत्तिभ्यः परात्करोतेः करणे खनट् प्रत्ययो भवति। करण इति कर्तरीत्यस्यापवादः । अनग्नो नग्नः क्रियतेऽनेन नग्नंकरणं द्यूतम्। एवं पलितंकरणं तैलम्। प्रियंकरणं शीलम्। अन्धंकरणः शोकः । स्थूलंकरणं दधि। सुभगंकरणं रूपम्। आढ्यंकरणं वित्तम्। तदन्तेभ्योऽपि। अननग्नोऽनग्नः क्रियतेऽनेनानग्नंकरणः पटः। सुनग्नंकरणः। अपलितंकरणो रस इत्यादि । च्व्यर्थ इत्येव। नग्नं करोति द्यूतेन। नात्र प्रकृतिविकारभावो विवक्ष्यते। अच्वेरित्येव। नग्नीकुर्वन्त्यनेन। अत्र खनट्प्रतिषेधसामर्थ्यादनडपि न भवति। नहि नग्नीकरणमित्यत्रानट्खनटो रूपे समासे स्त्रियां वा विशेषोऽस्ति। केचित्तु च्व्यन्तपूर्वादपि खनटमिच्छन्ति। नग्नीकरणं द्यूतम् ॥१२९॥ [*]भावे चाशिताद्भुवः ख ॥५।१।१३०॥ आशितशब्दात्पराद्भवतेर्भावे करणे चाभिधेये खः प्रत्ययो भवति। आशितेन तृप्तेन भूयते भवता आशितंभवो वर्तते भवतः। आशितो भवत्यनेन आशितंभव ओदनः। आशितो भवत्यनयाशितंभवा पञ्चपूली। असरूपत्वादनडपि। आशितस्य भवनम्। न घञ् सरूपत्वात् । आशित इति निर्देशादश्नातेः [*]कर्तरि क्तो

॥—वहुविध्वरु—॥ - अरुंतुद इति । मोन्ते 'सयोगस्य'-इति सलोप ॥—असूर्यो —॥ – गमकत्वादिति । वाक्यार्थप्रतिपादकत्वादित्यर्थ ॥—इरमदः ॥—कर्मण इति निवृत्तमिति । निपातनात् धातोरकर्मकत्वाद्वा ॥—कृग. खनट्—॥—विशेषोऽस्तीति । च्व्यन्तत्वादव्ययत्व 'सित्यनव्यय '-इति मोन्तोऽपि न भवति ॥ – भावे चाशिता—॥—कर्तरि क्त इति । शीट्यादित्वात्

जि, शत्रुंजयः पर्वतः । धनंजयः पार्थः । तॄ, रथंतरं साम । तप् शत्रुंतपो राजा । दमिरन्तर्भूतण्यर्थो ण्यन्तश्च गृह्यते । वलि दाम्यति दमयति वा वलिंदमः कृष्णः । अरिंदमः । सह, शत्रुंसहः । एतौ राजानौ । नाम्नीति किम् । कुटुम्बं बिभर्ति कुटुम्बभारः । केचित्तु रथेन तरति रथंतरं सामेत्यकर्मणोऽपीच्छन्ति ॥ ११२ ॥

धारेर्धर् च ॥ ५ । १ । ११३ ॥ कर्मणः पराद्धारयतेः संज्ञायां खः प्रत्ययो भवति धर् इत्ययमादेशश्च । वसु धारयति वसुंधरा पृथ्वी । युगंधरः । सीमंधरः । तीर्थकरावेतौ । संज्ञायामित्येव । छत्रधारः ॥ ११३ ॥

पुरंदरभगंदरौ ॥ ५ । १ । ११४ ॥ एतौ संज्ञायां खमत्ययान्तौ निपात्येते । पुरो दारयति पुरंदरः शक्रः । भगं दारयति भगंदरो व्याधिः। दारयतेर्ह्रस्वः पुरोऽमन्तता च निपात्यते । *पुरशब्दपूर्वस्य तु पुरदार इति भवति ॥ ११४ ॥

वाचंयमो व्रते ॥ ५ । १ । ११५ ॥ व्रतं *शास्त्रितो नियमः । तस्मिन्गम्यमाने वाचः कर्मणः परात्यमेर्धातोः खो वाचश्चामन्तता निपात्यते । वाचं यच्छति नियमयति वा वाचंयमो व्रती । व्रत इति किम् । वाग्यामोऽन्यः ॥ ११५ ॥

मन्याण्णिन् ॥ ५ । १ । ११६ ॥ कर्मणः परान्मन्यतेर्णिन् प्रत्ययो भवति । पण्डितं मन्यते बन्धुं पण्डितमानी बन्धोः । दर्शनीयां मन्यते भार्यां दर्शनीयमानी भार्यायाः । *ण्यनिर्देश *उत्तरार्थः ॥११६॥

कर्तुः खश् ॥५।१।११७॥ प्रत्ययार्थात्कर्तुः कर्मणः परान्मन्यतेः खश् प्रत्ययो भवति । यदा प्रत्ययार्थः कर्ता आत्मानमेव दर्शनीयत्वादिना धर्मेण विशिष्टं मन्यते तदायं कर्म तत्रायं विधिः । पण्डितमात्मानं मन्यते पण्डितंमन्यः। पट्वीमात्मानं मन्यते पट्विमन्या । विद्वन्मन्यः । विदुषिंमन्या । असरूपत्वाण्णिन्नपि । पण्डितमात्मानं मन्यते पण्डितमानी । पटुमानिनी । विद्वन्मानी । विद्वन्मानिनी । कर्तुरिति किम् । दर्शनीयमानी चैत्रस्य । पूर्वेणात्र णिन्नेव । शकारः शित्कार्यार्थः ॥ ११७ ॥

एजेः ॥ ५ । १ । ११८ ॥ कर्मणः परादेजयतेः खश् भवति । अङ्गान्येजयति अङ्गमेजयः । जनमेजयः । अरिमेजयः ॥ ११८ ॥

*शुनीस्तनमुञ्जकूलास्यपुष्पात् ट्धेः ॥ ५ । १ । ११९ ॥ एभ्यः कर्मभ्यः परात् ट्धेः खश् भवति । शुनीं धयति शुनिंधयः । स्तनंधयः । मुञ्जंधयः । कूलंधयः । आस्यंधयः । पुष्पंधयः । मुञ्जादिभ्यः केचिदेवेच्छन्ति । ट्रकारो ङ्यर्थः । *शुनिंधयी । स्तनंधयी सर्पजातिः ॥११९॥

नाडीघटीखरीमुष्टिनासिकावाताद् ध्मश्च ॥ ५ । १ । १२० ॥ एभ्यः कर्मभ्यः पराद्ध्मतेर्ट्धेश्च खश् भवति । नाडीं धमति धयति वा नाडिंधमः । नाडिंधयः । घटिंधमः । घटिंधयः । खरिंधमः । खरिंधयः । मुष्टिंधमः । मुष्टिंधयः । नासिकंधमः । नासिकंधयः । वातंधमः । वातंधयः । ङ्यन्तनिर्देशस्तदभावे खश्प्रत्ययनिवृत्त्यर्थः । नाडिं धमति धयति वा नाडिध्मः । नाडिधः । घटध्मः । घटधः । खरध्मः । खरधः ॥ १२० ॥

*पाणिकरात् ॥ ५ । १ । १२१ ॥ आभ्यां कर्मभ्यां पराद्ध्मतेः खश् प्रत्ययो भवति । पाणिं धमति पाणिंधमः । करंधमाः । पाणिकरात् ट्धेरपीति कश्चित् । पाणिंधयः । करंधयः । *पाणिंधमाः करंधमाः नाडिंधमाः

---

इति ॥—पुरंदरभ—॥—पुरशब्दपूर्वस्येति । निपातनस्येष्टविषयत्वात् ॥—वाचंयमो—॥—शास्त्रितो नियम इति । शास्त्रं सञ्जातमस्य उपदेशकतया । शास्तुः सकाशात् इतः प्राप्तो वा । यद्वा शास्तारं कर्मतापन्नमितः प्राप्तः ॥—मन्या—॥—उत्तरार्थ इति । मनुतेर्निवृत्त्यर्थश्च ॥—शुनीस्तन—॥—शुनिंधयीति । क्रियावाचकत्वात् जातिद्वारा ङीर्न प्राप्त इति टकरणम् ॥—पाणिकरात्—॥—पाणिंधमा इति । पाणिंधमपुरुषयोगात् यथा ताच्छब्द्यम् ॥ अधिकरणे वा 'बहुलम्' इति खश् इति पारायणम्

जि, शत्रुंजय· पर्वतः । धनंजयः पार्थः । तॄ, रथंतरं साम । तप् शत्रुंतपो राजा । दमिरन्तर्भूतण्यर्थो ण्यन्तश्च गृह्यते । बलि दाम्यति दमयति वा बलिंदमः कृष्णः । अरिंदमः । सह, शत्रुंसहः । एतौ राजानौ । नाम्नीति किम् । कुटुम्बं बिभर्ति कुटुम्बभारः । केचित्तु रथेन तरति रथंतरं सामेत्यकर्मणोऽपीच्छन्ति ॥ ११२ ॥ धारेर्धर् च ॥ ५ । १ । ११३ ॥ कर्मणः पराद्धारयतेः संज्ञायां खः प्रत्ययो भवति धर् इत्ययमादेशश्च । वसु धारयति वसुंधरा पृथ्वी । युगंधरः । सीमंधरः । तीर्थकरावेतौ । संज्ञायामित्येव । छत्रधारः ॥ ११३ ॥ पुरंदरभगंदरौ ॥ ५ । १ । ११४ ॥ एतौ संज्ञायां खमत्ययान्तौ निपात्येते । पुरो दारयति पुरंदरः शक्रः । भगं दारयति भगंदरो व्याधिः। दारयतेर्ह्रस्वः पुरोऽमन्तता च निपात्यते । पुरशब्दपूर्वस्य तु पुरदार इति भवति ॥ ११४ ॥ वाचंयमो व्रते ॥ ५ । १ । ११५ ॥ व्रतं *शास्त्रितो नियमः । तस्मिन्गम्यमाने वाचः कर्मण· पराद्यमेर्धातोः खो वाचश्चामन्तता निपात्यते । वाचं यच्छति नियमयति वा वाचंयमो व्रती । व्रत इति किम् । वाग्यामोऽन्यः ॥ ११५ ॥ मन्याण्णिन् ॥ ५ । १ । ११६ ॥ कर्मणः परान्मन्यतेर्णिन् प्रत्ययो भवति । पण्डितं मन्यते बन्धुं पण्डितमानी बन्धोः । दर्शनीयां मन्यते भार्यां दर्शनीयमानी भार्यायाः । श्यानिर्देश 'उत्तरार्थः ॥११६॥ कर्तुः खश् ॥५।१।११७॥ प्रत्ययार्थात्कर्तुः कर्मणः परान्मन्यतेः खश् प्रत्ययो भवति । यदा प्रत्ययार्थः कर्ता आत्मानमेव दर्शनीयत्वादिना धर्मेण विशिष्टं मन्यते तदायं कर्म तत्रायं विधिः । पण्डितमात्मानं मन्यते पण्डितंमन्यः। पट्वीमात्मानं मन्यते पट्विंमन्या । विद्वन्मन्यः । विदुषिंमन्या । असरूपत्वाण्णिन्नपि । पण्डितमात्मानं मन्यते पण्डितमानी । पटुमानिनी । विद्वन्मानी । विद्वन्मानिनी । कर्तुरिति किम् । दर्शनीयमानी चैत्रस्य । पूर्वेणात्र णिन्नेव । शकार· शित्कार्यार्थः ॥ ११७ ॥ एजेः ॥ ५ । १ । ११८ ॥ कर्मणः परादेजयतेः खश् भवति । अङ्गान्येजयति अङ्गमेजयः । जनमेजयः । अरिमेजयः ॥ ११८ ॥ *शुनीस्तनमुञ्जकूलास्यपुष्पात् ट्धेः ॥ ५ । १ । ११९ ॥ एभ्यः कर्मभ्यः परात् ट्धेः खश् भवति । शुनीं धयति शुनिंधयः । स्तनंधयः । मुञ्जंधयः । कूलंधयः । आस्यंधयः । पुष्पंधयः । मुञ्जादिभ्यः केचिदेवेच्छन्ति । ट्वित्कारो ङ्यर्थः ।*शुनिंधयी । स्तनंधयी सर्पजातिः ॥११९॥ नाडीघटीखरीमुष्टिनासिकावाताद् ध्मश्च ॥ ५ । १ । १२० ॥ एभ्यः कर्मभ्यः पराद्ध्मतेर्धेश्च खश् भवति । नाडीं धमति धयति वा नाडिंधमः । नाडिंधयः । घटिंधमः । घटिंधयः । खरिंधमः । खरिंधयः । मुष्टिंधमः । मुष्टिंधयः । नासिकंधमः । नासिकंधयः । वातंधमः । वातंधयः । ङ्यन्तानिर्देशस्तदभावे खश्प्रत्ययनिवृत्त्यर्थः । नाडिं धमति धयति वा नाडिध्मः । नाडिधः । घटध्मः । घटधः । खरध्मः । खरधः ॥ १२० ॥ *पाणिकरात् ॥ ५ । १ । १२१ ॥ आभ्यां कर्मभ्यां पराद्ध्मतेः खश् प्रत्ययो भवति । पाणि धमति पाणिंधमः । करंधमाः । पाणिकरात् ट्धेरपीति कश्चित् । पाणिंधयः । करंधयः । *पाणिंधमाः करंधमाः नाडिंधमाः

इति ॥—पुरंदरभ —॥—पुरशब्दपूर्वस्येति । निपातनस्येष्टविषयत्वात् ॥—वाचंयमो—॥—शास्त्रितो नियम इति । शास्त्र सजातमस्य उपदेशकृतया । शास्तु सकाशात् इत प्राप्तो वा । यद्वा शास्तार कर्मतापन्नमित प्राप्त ॥—मन्या—॥—उत्तरार्थ इति । मनुतेर्निवृत्त्यर्थश्च ॥—शुनीस्तन—॥—शुनिंधयीति । क्रियावाचकत्वात् जातिद्वारा ङीर्न प्राप्त इति टकरणम् ॥—पाणिकरात्—॥—पाणिंधमा इति । पाणिधमपुरुषयोगात् यथा ताच्छब्द्यम् ॥ अधिकरणे वा 'बहुलम्' इति खश् इति पारायणम्

पन्थान इति तद्योगाद्यथा मञ्चाः क्रोशन्तीति ॥ १२१ ॥ कूलादुद्रुजोद्वहः ॥ ५ । १ । १२२ ॥ कूलात्कर्मणः पराभ्यामुद्रुज् उद्वह् इत्येताभ्यां परः खश् भवति । कूलमुद्रुजो गजः । कूलमुद्वहा नदी ॥ १२२ ॥ वहाभ्राल्लिहः ॥ ५ । १ । १२३ ॥ वहाभ्राभ्यां कर्मभ्यां परात्लिहेः खश् भवति । वहं लेढि वहंलिहो गौः । अभ्रंलिहः प्रासादः ॥ १२३ ॥ बहुविध्वरुस्तिलात्तुदः ॥ ५ । १ । १२४ ॥ एभ्यः कर्मभ्यः परात्तुदेः खश् भवति । बहुं तुदति बहुतुदं युगम् । विधुंतुदो राहुः । *अरुंतुदः पीडाकरः । तिलंतुदः काकः । बहोः केचिदेवेच्छन्ति ॥ १२४ ॥ ललाटवातशर्धात्तपाजहाकः ॥ ५ । १ । १२५ ॥ ललाटादिभ्यः कर्मभ्यः परेभ्यो यथासंख्यं तप् अज् हाक् इत्येतेभ्यः खश् भवति ललाटं तपति ललाटंतपः सूर्यः । वातमजन्ति वातमजा मृगाः । शर्धंजहा माषाः । खशः शित्त्वादजेर्वी आदेशो न भवति । हाकः ककारो हाङो निवृत्त्यर्थः ॥ १२५ ॥ *असूर्योग्राद् दृशः ॥ ५ । १ । १२६ ॥ असूर्योग्राभ्यां कर्मभ्यां परात् दृशेः खश् भवति । सूर्यमपि न पश्यन्ति असूर्यंपश्या राजदाराः । दृशिना संबद्धस्य नञः सूर्येण सहासामर्थ्येऽपि 'गमकत्वात्समासः । उग्रं पश्यति उग्रंपश्यः ॥ १२६ ॥ *इरंमदः ॥५।१।१२७॥ *कर्मण इति निवृत्तम् । इरापूर्वान्माद्यतेः खश् श्याभावश्च निपात्यते । इरा सुरा तया माद्यति इति इरंमदः ॥१२७॥ नग्नपलितप्रियान्धस्थूलसुभगाढ्यतदन्ताच्च्व्यर्थेऽच्वेर्भुवः खिष्णुखुकञ् ॥५।१।१२८॥ नग्नादिभ्यः केवलेभ्यस्तदन्तेभ्यश्चाच्व्यन्तेभ्यश्च्व्यर्थे वर्तमानेभ्यः पराद्भवतेः खिष्णुखुकञौ प्रत्ययौ भवतः । अनग्नो नग्नो भवति नग्नंभविष्णुः नग्नंभावुकः। पलितंभविष्णुः। पलितंभावुकः। प्रियंभविष्णुः। प्रियंभावुकः। स्थूलंभविष्णुः। स्थूलंभावुक। सुभगंभविष्णुः। सुभगंभावुकः। आढ्यंभविष्णुः। आढ्यंभावुकः। तदन्तेभ्यः। अननग्नोऽनग्नो भवति अनग्नंभविष्णुः। अनग्नंभावुकः । असुनग्नः सुनग्नो भवति सुनग्नंभविष्णुः सुनग्नंभावुकः। इत्यादि। च्व्यर्थ इति किम् । नग्नो भविता । अच्वेरिति किम् । आढ्यीभविता । तृच् । उपपदविधिषु तदन्तविधिरनाश्रित इति तदन्तग्रहणम् ॥१२८॥ *कृगः खनट् करणे ॥५।१।१२९॥ नग्नादिभ्योऽच्व्यन्तेभ्यश्च्व्यर्थवृत्तिभ्यः परात्करोतेः करणे खनट् प्रत्ययो भवति। करण इति कर्तरीत्यस्यापवादः । अनग्नो नग्नः क्रियतेऽनेन नग्नंकरणं द्यूतम्। एवं पलितंकरणं तैलम्। प्रियंकरणं शीलम्। अन्धंकरणः शोकः। स्थूलंकरणं दधि। सुभगंकरणं रूपम्। आढ्यंकरणं वित्तम्। तदन्तेभ्योऽपि। अननग्नोऽनग्नः क्रियतेऽनेनानग्नंकरणः पटः। सुनग्नंकरणः। अपलितंकरणो रस इत्यादि । च्व्यर्थ इत्येव। नग्नं करोति द्यूतेन। नात्र प्रकृतिविकारभावो विवक्ष्यते। अच्वेरित्येव। नग्नीकुर्वन्त्यनेन। अत्र खनट्प्रतिषेधसामर्थ्यादनडपि न भवति। नाहि नग्नीकरणमित्यत्रानट्खनटो रूपे समासे स्त्रियां वा विशेषोऽस्ति। केचित्तु च्व्यन्तपूर्वादपि खनटमिच्छन्ति। नग्नीकरणं द्यूतम् ॥१२९॥ *भावे चाशिताद्भुवः खः ॥५।१।१३०॥ आशितशब्दात्पराद्भवतेर्भावे करणे चाभिधेये खः प्रत्ययो भवति। आशितेन तृप्तेन भूयते भवता आशितंभवो वर्तते भवतः। आशितो भवत्यनेन आशितंभव ओदनः। आशितो भवत्यनयाशितंभवा पञ्चपूली। असरूपत्वादनडपि। आशितस्य भवनम्। न घञ् सरूपत्वात् । आशित इति निर्देशादश्नातेः *कर्तरि क्तो

॥—बहुविध्वरु—॥ - अरुंतुद इति । मोन्ते 'सयोगस्य'-इति सलोप ॥—असूर्यो—॥—गमकत्वादिति । वाक्यार्थप्रतिपादकत्वादित्यर्थ ॥—इरंमदः ॥—कर्मण इति निवृत्तमिति । निपातनात् धातोरकर्मकत्वाद्वा ॥—कृगः खनट्—॥—विशेषोऽस्तीति । च्व्यन्तत्वादव्ययत्व 'खित्यनव्यय'-इति मोन्तोऽपि न भवति ॥—भावे चाशिता—॥—कर्त्तरि क्त इति । शीटनादित्वात्

*शैलेशी । सुघ्नो नगरम् । शतघ्नी आयुधविशेषः। हस्तघ्नो ज्याघातत्रो वर्ध्रपट्टः। बहुलाधिकाराव सुघ्नादयः संज्ञायाम् । अचित्त इति किम् । पापघातो यतिः । चौरघातो राजा । आखुघातो विडालः। मत्स्यघातो वकः। सस्यघातो वृषभः ॥ ८३ ॥ जायापतेश्चिह्नवति ॥५ । १ । ८४॥ जायापतिभ्यां कर्मभ्यां पराद्धन्तेश्चिह्नवति कर्तरि टक् भवति । चिह्नं शरीरस्थं शुभाशुभसूचकं तिलकालकादि । जायाघ्नो ब्राह्मणः । पतिघ्नी कन्या । अपलक्षणयुगित्यर्थः । चित्तवदर्थ आरम्भः ॥ ८४ ॥ ब्रह्मादिभ्यः ॥ ५ । १ । ८५ ॥ ब्रह्मादिभ्यः कर्मभ्यः पराद्धन्तेष्टक् प्रत्ययो भवति । ब्रह्म हन्ति ब्रह्मघ्नः । कृतघ्नः । शत्रुघ्नः । वृत्रघ्नः । भ्रूणघ्नः । बालघ्नः । शशघ्नी पक्षिजातिः । गां हन्ति गोघ्नः पातकी । बहुलाधिकारात्संप्रदानेऽपि । गां हन्ति यस्मै आगताय दातुम् स गोघ्नोऽतिथिः । बहुवचनाद्यथादर्शनमन्येभ्योऽपि भवति । चित्तवदर्थ आरम्भः ॥ ८५ ॥ हस्तिबाहुकपाटाच्छक्तौ ॥ ५ । १ । ८६ ॥ एभ्यः कर्मभ्यः पराद्धन्तेः शक्तौ गम्यमानायां टक् भवति । चित्तवदर्थ आरम्भः । हस्तिनं हन्तुं शक्तः हस्तिघ्नो मनुष्यः । बाहुघ्नो मल्लः । कपाटघ्नश्चौरः । शक्ताविति किम् । हस्तिन हन्ति विषेण हस्तिघातो रसदः ॥ ८६ ॥ नगरादगजे ॥ ५ । १ । ८७ ॥ नगरात्कर्मणः पराद्धन्तेर्गजवर्जिते कर्तरि टक् भवति । चित्तवदर्थ आरम्भः । नगरघ्नो व्याघ्रः । अगज इति किम् । नगरघातो हस्ती ॥८७॥ राजघः॥ ५ । १ । ८८ ॥ राज्ञः कर्मणः पराद्धन्तेष्टक् प्रत्ययो घादेशश्च निपात्यते । राजानं हन्ति राजघः ॥८८॥ पाणिघताडघौ शिल्पिनि ॥ ५ । १ । ८९ ॥ पाणिताडाभ्यां कर्मभ्यां पराद्धन्तेः शिल्पिनि कर्तरि टक् घादेशश्च निपात्यते । पाणिं हन्ति पाणिघः, ताडघः शिल्पी । पाणिना ताडेन च हन्तीति करणादपि केचित् । शिल्पिनीति किम् । पाणिघातः । ताडघातः ॥८९॥ कुक्ष्यात्मोदराद्भृगः खिः ॥५।१।९०॥ एभ्यः कर्मभ्यः परात् भृगो धातोः खिः प्रत्ययो भवति । कुक्षिमेव बिभर्ति कुक्षिंभरिः । आत्मंभरिः । उदरंभरिः । उदरात्केचिदच्छान्ति । खकारो मागमार्थः ॥ ९० ॥ अर्होऽच् ॥ ५ । १ । ९१ ॥ कर्मणः परादर्हतेरच् प्रत्ययो भवति । अणोऽपवादः । पूजामर्हति पूजार्हः साधुः । पूजार्हा प्रतिमा ॥ ९१ ॥ धनुर्दण्डत्सरुलाङ्गलाङ्कुशर्ष्टियष्टिशक्तितोमरघटाद्ग्रहः ॥ ५ । १ । ९२ ॥ एभ्यः कर्मभ्यः पराद्ग्रहेरच् प्रत्ययो भवति । धनुर्गृह्णाति धनुर्ग्रहः । दण्डग्रहः । त्सरुग्रह । लाङ्गलग्रहः । अङ्कुशग्रहः । ऋष्टिग्रहः । यष्टिग्रहः । शक्तिग्रहः । तोमरग्रह । घटग्रहः । नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति घटीग्रहः । अग्रग्रोत्येके । धनुर्ग्राहः दण्डग्राह इत्यादि चोदाहरन्ति ॥ ९२ ॥ * सूत्राद्धारणे ॥ ५ । १ । ९३ ॥ सूत्रं कर्पासादिमयम् लक्षणसूत्रं वाविशेषेण गृह्यते । सूत्रात्कर्मणः परात् ग्रहेर्ग्रहणपूर्वके धारणेऽर्थे वर्तमानादच् प्रत्ययो भवति । सूत्रं गृह्णाति सूत्रग्रहः प्राज्ञः सूत्रधारो वा । सूत्रमुपादाय धारयतीत्यर्थः । *अन्ये त्ववधारणं एवेच्छन्ति तन्मते सूत्रग्रहः प्राज्ञ एवोच्यते ॥ धारण इति किम् । सूत्रग्राहः । यो हि सूत्रं गृह्णाति न तु धारयति स एवमुच्यते ॥ ९३ ॥ *आयुधादिभ्यो भृगोऽदण्डादेः ॥ ५ । १ । ९४ ॥

कास्ते च ते अलकाश्च । येषा लोके मित्र इति प्रसिद्धि ॥—शैलेशीति । शिलानामीश. शिलेशस्तस्येय निष्प्रकम्पत्वात् ॥—सूत्राद्धारणे ॥—अन्ये त्ववधारण एवेति । तन्मते य सूत्र धारयत्येव तत्रैवाच् सूत्रधारस्तु प्रयोजने एव गृह्णाति न तु सर्वकालम् ॥—आयुधादि—॥ दण्डादीना वर्जनात्तेभ्योऽण निर्णिन्ये । अन्यथा युधादिद्वारोऽच् प्रत्ययोऽपि स्यादिति संदेह स्यात

अः प्रत्ययो भवति । ऊर्ध्वः शेते ऊर्ध्वशयः । एवमुत्तानशयः । अवमूर्धशयः । बहुवचनं प्रयोगानुसरणार्थम् ॥ १३६ ॥ *आधारात् ॥ ५ । १ । १३७ ॥ आधारवाचिनो नाम्नः परात् शीङः अप्रत्ययो भवति । खे शेते खशयः । *गर्तशयः । गुहाशयः । हृच्छयः । बिलेशयः । मनसिशयः । *कुशेशय इति सप्तम्या अलुप् । गिरिश इति संज्ञायां लोमादित्वाच्छः । *क्रियार्थत्वे तु गिरिशय इति भवितव्यम् ॥ १३७ ॥ *चरेष्टः ॥ ५ । १ । १३८ ॥ आधारवाचिनो नाम्नः पराच्चरेष्टः प्रत्ययो भवति । कुरुषु चरति कुरुचरः । मद्रचरः । वनेचरः । निशाचरः । टकारो ङ्यर्थः । कुरुचरी । मद्रचरी । आधारादित्येव । *कुरूंश्चरति । पञ्चालांश्चरति ॥१३८॥*भिक्षासेनादायात् ॥५।१।१३९॥ अनाधारार्थ आरम्भः। एभ्यः पराच्चरेष्टो भवति । भिक्षां चरति भिक्षाचरः । भिक्षाचरी । सेनां चरति परीक्षते सेनाचरः *तापसव्यञ्जनः । सेनया वा चरति सेनाचरः । आदाय गृहीत्वा चरति आदायचरः । आदानं कृत्वा चरतीत्यर्थः । किमादायेत्यविवक्षैव । एभ्य इति किम् । कुरूंश्चरति ॥ १३९ ॥ पुरोऽग्रतोऽग्रे सर्तेः ॥ ५ । १ । १४० ॥ एभ्यो नामभ्यः परात्सर्तेष्टो भवति । पुरः सरति पुरःसरः । पुरःसरी । अग्रतः सरति अग्रतःसरः। आद्यादित्वात्तस् । अग्रे सरति अग्रेसरः। सप्तम्यलुप् । एकारान्तमव्ययं वा । सूत्रनिपातनाद्वैकारः । तत्राग्रं सरति अग्रेण वा सरति अग्रेसर इत्यपि भवति ॥ ४० ॥ *पूर्वात्कर्तुः ॥ ५ । १ । १४१ ॥ पूर्वशब्दात्कर्तृवाचिनः परात् सरतेष्टो भवति । पूर्वः सरति पूर्वसरः । पूर्वो भूत्वा सरतीत्यर्थः । कस्मात्पूर्व इति *अविवक्षैव । पूर्वसरी । कर्तुरिति किम् । पूर्वं देशं सरति पूर्वसारः ॥ १४१ ॥ स्थापास्नात्रः कः ॥ ५ । १ । १४२ ॥ नाम्नः परेभ्य एभ्यः कः प्रत्ययो भवति । समे तिष्ठति समस्थः। विषमस्थः। कूटस्थः। कपित्थः। दधित्थः। महित्थः। अश्वत्थः। कुलत्थः। द्विपः। पादपः। कच्छपः। अनेकपः। कटाहपः। नदीष्णः। आतपत्रम् । घर्मत्रम् । परत्वाद्यं 'शमो नाम्न्यः' (५-१-१३४) इत्यप्रत्ययं बाधते । शंस्थो नाम कश्चित् । संस्था इत्यसरूपत्वात् क्विप् ॥१४२॥ शोकापनुदतुन्दपरिमृजस्तम्बेरमकर्णेजपं प्रियालसहस्तिसूचके॥५।१।१४३॥ शोकापनुदादयः शब्दा यथासङ्ख्यं प्रियादिष्वर्थेषु कप्रत्ययान्ता निपात्यन्ते । शोकमपनुदति शोकापनुदः प्रियः। पुत्रादिरानन्दकर एवमुच्यते । तुन्दं परिमार्ष्टि तुन्दपरिमृजोऽलसः। स्तम्बे रमते स्तम्बेरमो हस्ती । कर्णे जपति कर्णेजपः सूचकः । एष्विति किम् । शोकापनोदो धर्माचार्यः। तुन्दपरिमार्जं आतुरः। स्तम्बे रन्ता पक्षी। कर्णे जपिता मन्त्री ॥१४३॥*मूलविभुजादयः॥५।१।१४४॥ मूलविभुजादयः शब्दाः कप्रत्ययान्ता नियतार्थधातूपपदा यथाशिष्टप्रयोगं निपात्यन्ते । मूलानि विभुजति मूलविभुजो रथः । उर्व्यां रोहति 'उर्वीरुहो वृक्षः । कौ मोदते कुमुदं कैरवम् । महीं धरति महीध्रः शैल' । उषसि बुध्यते

---

ऊर्ध्वादिविशेषणत्वात् । सत्यम् । सामान्यमिदमित्येकवचनम् । यथा पञ्चादौ घुट् ॥-आधारात् ॥-गर्त्तशय इति । फणगर्तेति पुस्तीत्वे गर्त्ते शेते इति वाक्यम् ॥—कुशेशय इति ॥ कश्चित्पुमान् जलजे तु क्लीवत्व स्यात् ॥-क्रियार्थत्वे इति । कलापके क्रियार्थत्वे तिपि साधित न तच्छिष्टसम्मतम् ॥-चरेष्टः ॥—कुरूश्चरतीति । प्राप्यात्कर्म्मण. क्वचिदण् भवतीति यद्यणानीयते तदा समासोऽपि भवति तथा च कुरुचार पञ्चालचार इत्यपि ॥-भिक्षासे-॥-तापसव्यञ्जन इति । तपोऽस्यास्ति ज्योत्स्नादित्वादण् तापसः । तस्य व्यञ्जनं चिह्न यस्य । यद्वा तपस इद तापसं तत् व्यञ्जनं यस्य । यद्वा तापस इति व्यज्यते प्रकटीक्रियते ज्ञायते तापसव्यञ्जन. । यद्वा तापसे व्यञ्जन व्याजो यस्येति ॥-पूर्वात्कर्तुः ॥-अविवक्षैवेति । तेन सापेक्षत्वात् समासो न प्राप्नोतीति न वाच्यम् ॥-मूलविभुजा-॥-उर्व्वीरुह इति ।

उपर्बुधोऽग्नि । अपो बिभर्ति अब्भ्रं मेघ । सरसि रोहति सरसिरुहं पद्मम् । नखानि मुञ्चन्ति नखमुचानि धनूंषि । काकेभ्यो गूहनीया. काकगुहास्तिलाः । धर्माय प्रददाति धर्मप्रद । एवं कामप्रद । शब्दप्रद । शास्त्रेण प्रजानाति शास्त्रप्रज्ञ । एवमागमप्रज्ञ ॥ १४४ ॥ दुहेर्डुघः ॥ ५ । १ । १४५ ॥ नाम्न पराद्दुहेर्डुघ प्रत्ययो भवति । कामान्दुग्धे पूरयति कामदुघा । धर्माय दुग्धे धर्मदुघा । असरूपत्वात् क्विप् । कामधुक् । डकारोऽन्त्यस्वरादिलोपार्थः ॥१४५॥ भजो विण् ॥५।१।१४६॥ नाम्न पराद्भजेर्विण् प्रत्ययो भवति । अर्धं भजते अर्धभाक् । पादभाक् । दूरभाक् । प्रभाक् । विभाक् । णकारो वृद्ध्यर्थ । इकार उच्चारणार्थः । वकारो विण्क्विपोः सारूप्यार्थस्तेनात्र विषये क्विप् न भवति ॥ १४६ ॥ मन्वन्क्वनिप्विच् क्वचित् ॥ ५ । १ । १४७ ॥ नाम्नः पराद्धातोरेते प्रत्ययाः क्वचिल्लक्ष्यानुसारेण भवन्ति । मन्, इन्द्रं शृणाति इन्द्रशर्मा । सुशर्मा । सुवर्मा । सुदामा । अश्वत्थामा । क्वचिद्ग्रहणात्केवलादपि । शर्म । वर्म । हेम । दामा । पामा । वन्, भूरिदावा । घृतपावा । अग्रेगावा । विजावा । ‘ वन्याङ् पञ्चमस्य ’ ( ४-२-६५ ) इत्यात्वम् । क्वनिप्, प्रातरित्वा प्रातरित्वानौ । सुधीवा । सुपीवा । केवलादपि । कृत्वा । कृत्वानौ । धीवा । पीवा । विच्, कीलालपाः । शुभंयाः । पाप्मरेट् । केवलादपि । रेट् । रोट् । वेट् । जागः । ककारपकारौ कित्पित्कार्यार्थौ ॥ १४७ ॥ [1]क्विप् ॥५।१।१४८॥ नाम्नः पराद्धातोः क्विप् प्रत्ययो भवति क्वचित् । [2]उखेन उखया वा स्रंसते उखास्रत् । वहात् भ्रश्यति वहाभ्रट् । ‘ घञ्युपसर्गस्य बहुलम् ’ ( ३-२-८६ ) इति बहुलग्रहणादुखवहयोर्दीर्घः । पर्णानि ध्वंसते पर्णध्वत् । शकान् ह्वयति शकहूः । परिव्ययति परिवीः । यवलूः । खलपूः । अक्षद्यूः । मित्रभूः । प्रतिभूः । कटचिकी । केवलादपि । पाः । वाः । कीः । गीः । ऊः । लूः । क्रुङ् । पक् । सदिसूद्विषद्रुहदुहयुजविदभिदाछिदजिनीराजिभ्यश्च । दिवि सीदति दिविषत् । सप्तम्या अलुप् । भीरुष्ठाना-दित्वात्पत्वं च । द्युसत् । अन्तरिक्षसत् । सभासत् । प्रसीदति प्रसत् । उपसत् । अण्डं सूते अण्डसूः । शतसूः । प्रसूः । मित्रं द्वेष्टि मित्रद्विट् । प्रद्विट् । द्विषो जेम्नीयिपीष्ट वः । मित्राय द्रुह्यति मित्रध्रुक् । प्रध्रुक् । विध्रुक् । गां दोग्धि गोधुक् । कामधुक् । प्रधुक् । अश्वं युनक्ति युज्यते वा अश्वयुक् । प्रयुक् । युङ् । युञ्जौ । युञ्जः । तत्त्ववित् । वेदवित् । प्रवित् । निर्विविदे विदां वरः । विदेरविशेषेण ग्रहणम् । लाभार्थान्नेच्छन्त्येके । काष्ठं भिनत्ति काष्ठभित् । बलभित् । गोत्रभित् । भिद् । रज्जुं छिनत्ति रज्जुच्छित् । तमश्छिद् । भवच्छित् । प्रच्छित् । छित् । शत्रुं जयति शत्रुजित् । प्रसेनजित् । कर्मजित् । प्रजित् । अभिजित् । सेनां नयति सेनानीः । अग्रणीः । ग्रामणीः । प्रणीः । नीः । नियौ । नियः । विश्वस्मिन् राजते विश्वाराट् । ‘ विश्वस्य वसुराटोः ’ ( ३-२-८१ ) इति दीर्घः । राजराट् । सम्राट् । विराट् । राट् । अञ्चेः, दध्यञ्चति दध्यङ् । देवमञ्चति देवद्र्यङ् । विष्वद्र्यङ् । तिर्यङ् । सध्र्यङ् । सम्यङ् । प्राङ् । प्रत्यङ् । केवलान्न भवति । तथा ऋतौ ऋतुम् ऋतवे ऋतुप्रयोजनो वा यजते ऋत्विग् याजकः । ‘ ऋत्विज् ’-( २-१-६९ ) इत्यादिसूत्रेण गत्वम् । धृष्णोति दधृक् प्रगल्भः । दधृगिति निर्देशात् द्वित्वम् । उत्स्निह्यति 

‘ डस्युक्तम् ’-इति समासार्थमत्र पाठोऽन्यथा ‘ नाम्युपान्त्य ’-इति सिध्यति । एव धर्म्मप्रद इत्यत्रापि । अत्र हि ‘ उपसर्गादातो डोऽश्य ’ इति डे समासो न स्यात् ॥—पा इति । ‘ ईर्व्यञ्जने ’-इत्यत्र

[1]॥—क्विप् [2]॥—उखेन उखया वेति । पुते वर्त्तमान उखशब्द. पुंस्त्री स्थाल्यां नित्यस्त्रीति वैयाकरणा मन्यन्ते

उन्नह्यति वा उष्णिक् छन्दः । उष्णिगिति निर्देशात् दलोपषत्वादि । कथं दिश्यते दिक् सृज्यते स्रक् । क्रुतसंपदादित्वात् क्विप् । ककारः कित्कार्यार्थः । पकारः पित्कार्यार्थः इकार उच्चारणार्थः॥१४८॥स्पृशोऽनुदकात्॥५।१।१४९॥उदकवर्जितान्नाम्नः परात् स्पृशेः क्विप् प्रत्ययो भवति । घृतं स्पृशति घृतस्पृक् एवं मर्मस्पृक् । व्योमस्पृक् । मन्त्रेण स्पृशति मन्त्रस्पृक् । कर्मोपपदादेवेच्छन्त्यन्ये। अनुदकादिति किम् । उदकस्पर्शः । उदकेन स्पर्ष्टा । अनुदक इति पर्युदासाश्रयणादुदकसदृशमनुपसर्गं नाम गृह्यते । तेनेह न भवति । उपस्पृशति॥१४९॥ *अदोऽनन्नात्॥५।१।१५० ॥ अन्नवर्जितान्नाम्नः परादद्देः क्विप् प्रत्ययो भवति । आममत्ति आमात् । सस्यात् । अनन्नादिति किम् । अन्नादः। बहुलाधिकारात्कणादः। पिप्पलादः। क्विप् सिद्धोऽन्नप्रतिषेधार्थं वचनम्॥१५०॥ 'क्रव्यात्क्रव्यादावामपक्वादौ॥५।१।१५१॥ क्रव्यात् क्रव्याद इत्येतौ शब्दौ यथासंख्यं क्विबणन्तौ साधू भवतः यथामात्पक्वाचाभिधेयौ भवतः । क्रव्यमत्ति क्रव्यात् *आममांसभक्षः । क्रव्यादः पक्वमांसभक्षः । क्रव्याद इति नेच्छन्त्यन्ये । आममांसवाच्यपि क्रव्यशब्दः क्रव्याद इति निपातनसामर्थ्यात् वृत्तौ पक्वमांसे वर्तते । अथवा 'कृत्तविकृत्तशब्दस्य पक्वमांसार्थस्य पृषोदरादित्वात् क्रव्यादेशः। सिद्धौ प्रत्ययौ विषयनियमार्थं वचनम् ॥१५१॥ त्यदाद्यन्यसमानादुपमानाद् व्याप्ये दृशष्टक्सकौ च ॥५।१।१५२॥ त्यदादेरन्यशब्दात्समानशब्दाच्चोपमानभूताद् व्याप्ये कर्मणि वर्तमानात्परात् दृशेर्व्याप्य एव टक्सकौ क्विप् च प्रत्यया भवन्ति । त्यदादि, स्य इव दृश्यते त्यादृशः त्यादृशी । त्यादृक्षः। त्यादृक्षा । त्यादृक् । एवं तादृशः तादृशी । तादृक्षः। तादृक्षा । तादृक् । अन्य, अन्यादृशः। अन्यादृशी। अन्यादृक्षः। अन्यादृक्षा । अन्यादृक् । समान, सदृशः। सदृशी । सदृक्षः। सदृक्षा । सदृक् । केचित्सकमपि टितं मन्यन्ते । तन्मते त्यादृक्षीत्याद्येव भवति । एभ्य इति किम् । वृक्ष इव दृश्यते । उपमानादिति किम् । स दृश्यते । व्याप्ये वर्तमानादिति किम् । तेनेव दृश्यते । तस्मिन्निव दृश्यते । अस्मिन्निव दृश्यते । व्याप्य एवेति किम् । तमिव पश्यन्तीत्यत्र कर्तरि न भवति । वचनभेदान्न यथासंख्यम् ॥ १५२ ॥ कर्तुर्णिन् ॥५।१।१५३ ॥ कर्तृवाचिन उपामानभूतान्नाम्नः पराद्धातोर्णिन् प्रत्ययो भवति । कृत्त्वात् कर्तरि । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । ध्वाङ्क्षरावी । खरनादी । सिंहनर्दी । कर्तुरिति किम् । शालीनिव कोद्रवान् भुङ्क्ते । उष्ट्रमिवाश्वमारोहति । उपमानभूतादित्येव । उष्ट्रः क्रोशति । अशीलार्थो जात्यर्थश्च आरम्भः ॥ १५३ ॥ 'अजातेः शीले ॥ ५ । १ । १५४ ॥ अजातिवाचिनो नाम्नः पराद्धातोः शीलेऽर्थे वर्तमानात् णिन् प्रत्ययो भवति । उष्णं भुङ्क्ते इत्येवंशील उष्णभोजी । शीतभोजी । अजातेरिति "प्रसज्यप्रतिषेधादसत्ववाचिनोऽप्युपसर्गाद्भवति । उदासरतीत्येवंशील उदासारी । प्रत्यासारी । प्रस्थायी । प्रतिबोधी । प्रयायी । प्रतियायी । उदाङ्प्रसाङ्भ्यां परं *सर्तिं वर्जयित्वा अन्यस्माद्धातोरुपसर्गपरान्नेच्छन्त्यन्ये । अजातेरिति किम् । ब्राह्मणानामन्त्रयिता । शालीन्

साक्षात् व्यञ्जनग्रहणात् क्विप्लोपे ईत्व न ॥—अदोन—॥ ननु लक्ष्यानुसारेण 'क्विप्' इति क्विप् भविष्यति किमनेन । सत्यम् । तस्यैव प्रपञ्चोऽयमिति ॥—क्रव्यात् ॥—आममांसभक्ष इति । आमं च तत् मांसं चाममांस तत् भक्षयतीति 'शीलिकामि'–इति ण ॥—कृत्तविकृत्तशब्दस्येति । विशेषेण कृत्तं विकृत्त पूर्वं कृत्तं पश्चाद्विकृत्तं कृत्तं च तद्विकृत्त च कृत्तविकृतं तस्य ॥—अजातेः—॥—प्रसज्यप्रतिषेधादिति । पर्युदासाश्रयणे तु जातिवाचिनो द्रव्यरूपनिषेधादजातिवाचिनोऽपि द्रव्यवचनादेव स्यात् ॥—सर्तिं वर्जयित्वेति । उत्प्रतिभ्यामाङ' सर्त्तेरिति परसूत्रमत्रार्थे

॥ १५४ ॥ साधौ ॥ ५ । १ । १५५ ॥ नाम्नः परात्सा-

भोक्ता । प्रभोक्ता उपभोक्ता संभोक्तेति बहुलाधिकारान्न भवति । शील इति किम् । उष्णभोज आतुरः ॥ १५४ ॥ साधौ ॥ ५ । १ । १५५ ॥ नाम्नः परात्सा-
धावर्थे वर्तमानाद्धातोर्णिन् प्रत्ययो भवति ।अशीलार्थ आरम्भः । साधु करोति साधुकारी । साधुदायी । चारुनर्ती । सुष्ठुगामी । बहुलाधिकारात् साधु वादयति
वादको वीणाम् साधु गायतीत्यादौ न भवति ॥ १५५ ॥ [1]ब्रह्मणो वदः ॥ ५ । १ । १५६ ॥ ब्रह्मन्शब्दात्पराद्वदेर्णिन् प्रत्ययो भवति । ब्रह्म ब्रह्माणं वा
वदति ब्रह्मवादी । अयमप्यशीलार्थ आरम्भः जात्यर्थोऽसरूपविधि[2]निवृत्त्यर्थश्च ॥ १५६ ॥ [3]व्रताभीक्ष्ण्ये ॥ ५ । १ । १५७ ॥ व्रतं शास्त्रितो नियमः ।
आभीक्ष्ण्यं पौनःपुन्यम् । तयोर्गम्यमानयोर्नाम्नः पराद्धातोर्णिन् प्रत्ययो भवति । व्रते अश्राद्धं भुङ्क्ते [4]अश्राद्धभोजी । अलवणभोजी । स्थण्डिलस्थायी । स्थण्डिल-
वर्ती । वृक्षमूलवासी । पार्श्वशायी । [5]तदन्यवर्जनमिह व्रतं गम्यते । आभीक्ष्ण्ये, पुनः पुनः क्षीरं पिबन्ति क्षीरपायिण [6]उशीनराः । तक्रपायिणः [7]सौराष्ट्राः । कषाय-
पायिणो [8]गान्धाराः । सौवीरपायिणो बाह्लीकाः । व्रताभीक्ष्ण्य इति किम् । स्थण्डिले शेते स्थण्डिलशय । बहुलाधिकारादाभीक्ष्ण्येऽपीह न भवति । कुल्माषखादा-
श्चोलाः । अशीलार्थ जात्यर्थं च वचनम् ॥ १५७ ॥ करणाद्यजो भूते ॥ ५ । १ । १५८ ॥ करणवाचिनो नाम्नः पराद्भूतेऽर्थे वर्तमानाद्यजेर्णिन् प्रत्ययो भवति ।
अग्निष्टोमेनेष्टवान् अग्निष्टोमयाजी । भवति हि सामान्यविशेषयोर्भेदविवक्षायां सामान्ययजौ विशेषयजिरग्निष्टोमः करणम् । भूत इति किम् । अग्निष्टोमेन यजते ।
करणादिति किम् । गुरूनिष्टवान् ॥ १५८ ॥ निन्द्ये व्याप्यादिन् विक्रियः ॥ ५ । १ । १५९ ॥ व्याप्यान्नाम्नः परात् विपूर्वात् क्रीणातेर्भूतेऽर्थे वर्तमानात्
कुत्सिते कर्तरीन् प्रत्ययो भवति । सोमं विक्रीतवान् सोमविक्रयी, घृतविक्रयी, तैलविक्रयी, ब्राह्मणः । निन्द्य इति किम् । धान्यविक्रायः, घृतविक्रायः, तैलविक्रायः वणिक् ।
व्याप्यादिति किम् । ग्रामे विक्रीतवान् । भावेऽलन्तस्य मत्वर्थीयेनेना सिध्यति कुत्सायामण्बाधनार्थं वचनम् ॥ १५९ ॥ [9]हनो णिन् ॥ ५ । १ । १६० ॥ व्या-
प्यान्नाम्नः पराद्भूतेऽर्थे वर्तमानात् हन्तेर्निन्द्ये कर्तरि णिन् प्रत्ययो भवति । पितृव्यं हतवान् पितृव्यघाती । मातुलघाती । असरूपत्वादणपि । पितृव्यघातः । मातुल-
घातः । केचित्त्वसरूपविधि नेच्छन्ति । निन्द्य इत्येव । शत्रुं हतवान् शत्रुघातः । चौरघातः । व्याप्यादित्येव । दण्डेन हतवान् । घञन्तान्मत्वर्थीयेनेना सिद्धे भूतकु
त्साभ्यामन्यत्र शत्रुघातीत्यादौ [10]मत्वर्थीयनिवृत्त्यर्थं वचनम् । अन्यत्रापीच्छत्यन्यः । [11]एवं पूर्वसूत्रेऽपि ॥ १६० ॥ [12]ब्रह्मभ्रूणवृत्रात् क्विप् ॥ ५ । १ । १६१ ॥

॥-ब्रह्मणो-॥-निवृत्त्यर्थश्चेति । 'कमणोऽण्' इत्यादे ॥-व्रताभी-॥ सूनत्वासमाहार । कर्मधारयो वा ॥—अश्राद्धभोजीति । श्राद्ध पितृदेवत्य कर्म्म तदुद्दिश्य यत्क्रियते पिण्डादिक तदपि श्राद्धम्
॥-तदन्यवर्जनमिति । तस्माश्राद्धस्यान्यत् श्राद्ध तस्य वर्जनम् ॥-उशीनरा इति । उश्यते स्त्र्यादित्वात्क । गौरादित्वात् ङी उशी नगरी तस्या नरा ॥—सौराष्ट्रा इति । सुराष्ट्रशब्द एकवचनान्तोऽपि केषा मते
इति 'बहुविषयेभ्य ' इति नाकञ् कि त्वणेव। यद्वा सुराष्ट्रा नगरी तस्यां भवा ॥-गान्धारा इति । गन्धारदेशस्येमे तस्येदमण् ॥-हनो णि-॥—मत्वर्थीयनिवृत्त्यर्थमिति । हनन घात. घञि पश्चान्मत्वर्थीयो
न ॥—एव पूर्वसूत्रेऽपीति । पूर्वसूत्रेऽनुक्तमपि द्वितीयमिद फल द्रष्टव्यम् । इह तु इदमेव ततोऽसरूपत्वादणनानुज्ञात । घञन्तादित्याद्यारभ्येच्छत्यन्य इति पर्यन्त पूर्वसूत्रेपीत्यन ज्ञेयम् ॥—ब्रह्मभ्रू—

ब्रह्मादिभ्यः कर्मभ्यः पराद्भूतेऽर्थे वर्तमानाद्धन्तेः क्विप् प्रत्ययो भवति । ब्रह्माणं हतवान् ब्रह्महा । भ्रूणहा । वृत्रहा । 'क्विप्' (५-१-१४८) इत्यनेनैव सिद्धे नियमार्थं वचनम् । चतुर्विधश्चात्र नियमः । ब्रह्मादिभ्य एव हन्तेर्भूते क्विप् नान्यस्मात् । पुरुषं हतवान् पुरुषघातः । मधुहा अहिहा गोत्रहा हिमहा तमोपहा असुरहा आखुहा इत्यादिषु वर्तमानभविष्यतोः 'कालमात्रे वा 'क्विप्' (५-१-१४८) इत्यनेनैव क्विप् । तथा ब्रह्मादिभ्यो हन्तेरेव भूते नान्यस्माद्धातोः क्विप् । ब्रह्माधीतवान् ब्रह्माध्याय इत्यणेव न तु क्विप् । ब्रह्मविदादयस्तु भूताविवक्षायाम् । तथा ब्रह्मादिभ्यो हन्तेर्भूते क्विबेव नान्यः प्रत्ययः । ब्रह्माणं हतवान् ब्रह्महा इति क्विबेव भवति नाण्णिनौ । ब्रह्मघ्नादयस्तु *कालसामान्येन 'ब्रह्मादिभ्यः'-(५-३-८५) इति टक्प्रत्यये साधवः । कथं वृत्रस्य हन्तुः कुलिशमिति । केवलादेव हन्तेस्तृच् पश्चाद्वृत्रेण संबन्धः । 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति क्विपाऽणादिरेव बाध्यते न क्तक्तवतू । तथा ब्रह्मादिभ्यो हन्तेर्भूत एव काले क्विप् नान्यस्मिन् । ब्रह्माणं हन्ति हनिष्यति वा ब्रह्मघात इत्यणेव । तदेतत्सर्वं बहुलाधिकाराल्लभ्यते ॥१६१॥ कृगः सुपुण्यपापकर्ममन्त्रपदात् ॥५।१।१६२॥ सुशब्दात्पुण्यादिभ्यश्च कर्मभ्यः परात्करोतेर्भूतेऽर्थे वर्तमानात् क्विप् भवति । सुष्ठु कृतवान् सुकृत् । पुण्यं कृतवान् पुण्यकृत् । पापकृत् । कर्मकृत् । मन्त्रकृत् । पदकृत् । इदमपि नियमार्थं वचनम् । त्रिविधश्चात्र नियमः । एभ्यः कृग एव भूते क्विप् नान्यस्माद्धातोः । मन्त्रमधीतवान् मन्त्राध्याय इत्यणुक्ता एव भवन्ति न क्विप् । मन्त्रवित् पापनुत् इत्यादौ तु भूताविवक्षायां क्विप् । तथा एभ्यः कृगो भूत एव क्विप् । इह न भवति । कर्म करोति करिष्यति वा कर्मकारः मन्त्रकारः । पदकारः । तथा एभ्यः परात्कृगो भूते क्विबेव नान्यः प्रत्ययः । तेन कर्मकृतवान् कर्मकार इति न भवति । एभ्य एव भूते कृगः क्विविति धातुनियमो नेष्यते । तेन शास्त्रकृत् तीर्थकृत् वृत्तिकृत् सूत्रकृत् भाष्यकृदित्यादयः सिद्धाः॥१६२॥ सोमात्सुगः॥५।१।१६३॥ कर्मणः परात् सुनोतेर्भूतेऽर्थे वर्तमानात् क्विप् भवति । सोमं सुतवान् सोमसुत् । अयमपि नियमार्थो योगः । चतुर्विधश्चात्रापि नियमः । सोमादेवेति नियमात् सुरां सुतवान् सुरासाव इत्यण् । सुरासुदिति भूताविवक्षायाम् । सुग एवेति नियमात् सोमं पीतवान् सोमपा इति विच् । भूत एवेति नियमात् सोमं सुनोति सोष्यति वा सोमसाव इत्यण् । क्विबेवेति नियमात् सोमं सुतवान् इत्यण् न भवति ॥ १६३ ॥ अग्नेश्चेः ॥ ५ । १ । १६४ ॥ अग्नेः कर्मणः पराच्चिनोतेर्भूतेऽर्थे वर्तमानात् क्विप् भवति । अग्निं चितवान् अग्निचित् । अत्रापि चतुर्विधो नियमः । अग्नेरेवेति नियमात् कुड्यं चितवान् कुड्यचाय इत्यण् । चेरेवेति नियमादग्निं कृतवानग्निकारः । भूत एवेति नियमादग्निं चिनोति चेष्यति वाग्निचायः । क्विबेवेति नियमादग्निं चितवानित्यण् न भवति ॥ १६४ ॥ कर्मण्यग्न्यर्थे ॥ ५ । १ । १६५ ॥ कर्मणः पराद्भूतेऽर्थे वर्तमानाच्चिनोतेः कर्मणि कारकेऽग्न्यर्थेऽभिधेये क्विप् भवति । श्येन इव चीयते स्म श्येनचित् । एवं कङ्कचित् । रथचक्रचित् । अग्न्यर्थ इष्टकाचय उच्यते । बहुलाधिकाराद्रूढिविषय एवायं द्रष्टव्य । केचित्तु संज्ञाशब्दत्वात्

॥—कालमात्रे वा क्विविति । कया रीत्या मधोर्हन्ता कोऽर्थ । मधुहननयोग्य काल इति वाक्ये क्विपि मधुहेत्यादि ॥—ब्रह्मघात इति । 'ब्रह्मादिभ्य' इति टक्प्रसङ्गेऽपि बहुलमण् । –कृग सुपुण्य—॥—इत्यणुक्ता एवेति । अण् च क्वौ चाणुक्ता क्तवतुर्दर्शित एव क्तप्रत्ययस्तु आरम्भे य क्त स एव गृह्यते । अन्यस्य भावकर्मणोर्विधानात् । 'गत्यर्थ'-इत्यस्य तु सकर्मकत्वादप्राप्ति

 

कालत्रयेऽप्ययं भवतीत्याहुः। श्येन इव चीयते चितश्चेष्यते वा श्येनाचित् ॥१६५॥ *दृशः क्वनिप् ॥५।१।१६६॥ कर्मणः परादृशो भूतेऽर्थे वर्तमानात् क्वनिप् प्रत्ययो
भवति । मेरुं दृष्टवान् मेरुदृश्वा । विश्वदृश्वा । बहुदृश्वा । परलोकदृश्वा । सामान्यसूत्रेण क्वनिपि सिद्धे भूतकाले 'प्रत्ययान्तरबाधनार्थं वचनम् ॥ १६६ ॥ सहराजभ्यां
कृग्युधेः॥५।१।१६७॥ सहशब्दात् राजन्शब्दाच्च कर्मणः परात्करोतेर्युधेश्च भूतेऽर्थे वर्तमानात्क्वनिप् प्रत्ययो भवति । सह कृतवान् सहकृत्वा । सहकृत्वानौ । सह युद्धवान्
सहयुध्वा । सहयुध्वानौ। राजानं कृतवान् राजकृत्वा। राजानं योधितवान् राजयुध्वा। युधिरन्तर्भूतण्यर्थः। सकर्मकः। कर्मण इत्येव। राज्ञा युद्धवान्। प्रत्ययान्तरबाधनार्थोऽ-
यमप्यारम्भः॥१६७॥ *अनोर्जनेर्डः॥५।१।१६८॥ कर्मणः परादनुपूर्वाज्जनेर्भूतेऽर्थे वर्तमानाड्डः प्रत्यो भवति। पुमांसमनुजातः *पुमनुजः। स्त्र्यनुजः। आत्मानुजः। अनुपूर्वो
जनि जननोपसर्जनायां प्राप्तौ वर्तमानः सकर्मकः॥१६८॥*सप्तम्याः॥५।१।१६९॥ सप्तम्यन्तान्नाम्नः परादृ भूतेऽर्थो जनेर्डो भवति। उपसरे जातः उपसरजः। मन्दुरायां
मन्दुरे वा जातः मन्दुरजः। अप्सु जातम् *अप्सुजम्। अब्जम् ॥१६९॥ *अजातेः पञ्चम्याः ॥५।१।१७०॥ पञ्चम्यन्तादजातिवाचिनो नाम्नः पराद्भूतेऽर्थे जनेर्डो भवति।
बुद्धेर्जातो बुद्धिजः संस्कारः। संस्कारजा स्मृतिः। संतोषजं सुखम्। कौशल्याया जातः *कौशल्याजः। *संज्ञाशब्दोऽत्रोपपदम्। अजातेरिति किम्। हस्तिनो जातः।
अश्वाज्जातः॥१७०॥*क्वचित्॥५।१।१७१॥ उक्तादन्यत्रापि क्वचिल्लक्ष्यानुसारेण डो भवति। उक्तान्नाम्नोऽन्यतोऽपि। किं जातेन किजः। केन जातः किजोऽनिर्ज्ञातपितृकः।
अलं जातेनालंजः। द्विर्जातो द्विजः। न जातोऽजः। अधिजातोऽधिजः। उपजः। परिजः। प्रजाताः प्रजाः। अभिजः। अकर्मणोऽपि। अनुजः। जातेरपि, ब्राह्म-
णजः पशुवधः। क्षत्रियजं युद्धम्। स्त्रीजमनृतम्। उक्ताद्धातोरन्यतोऽपि। ब्रह्मणि जीनवान् ब्रह्मज्यः। उक्तान्नाम्नो धातोश्चान्यतोऽपि। वरमाहतवान् वराहः।
उक्तान्नाम्नो धातोः कारकाच्चान्यतोऽपि। परिखाता परिखा। आखाता आखा। उपखाता उपखा। नामधातुकालान्यत्वे, मित्रं ह्वयति मित्रह्वः। अणोऽपवादो डः।
धातुकारकान्यत्वे पटे हन्यते स्म पटहः। धातुकालान्यत्वे, वार्चरति *वार्चो हंसः। नामकारकान्यत्वे पुंसानुजातः पुंसानुजः। नामाभावे उक्तधातुकालान्यत्वे अटति
अतति वा अः। कायति कामयते वा कः। भातीति भं नक्षत्रम्। नामाभावे उक्तधातुकालकारकान्यत्वे च खन्यत इति खम् ॥ १७१ ॥ *सुयजोर्ङ्वनिप् ॥ ५।
१।१७२ ॥ सुनोतेर्यजतेश्च भूतार्थवृत्तेर्ङ्वनिप् भवति। सुतवान् सुत्वा। सुत्वानौ। सुत्वानः। इष्टवान् यज्वा। यज्वानौ। यज्वानः। क्वनिप्वन्भ्यां सिद्धे भूते
नियमार्थं वचनम्। *मन्त्रादिसूत्रस्थक्वचिद्ग्रहणस्यैव प्रपञ्चः। ङकारो गुणनिषेधार्थः। पकारः पित्कार्यार्थः। इकार उच्चारणार्थः ॥ १७२ ॥ जृषोऽतृः ॥५।१।१७३॥

॥—दृशः क ॥—प्रत्ययान्तरबाधनार्थमिति । अणादेरित्यर्थ ॥—अनोर्जने—॥—पुमनुज इति । पुमांसमनुजननेन प्राप्तवानित्यर्थ ॥—जननोपसर्जनायामिति । जननमुपसर्जन
यस्या ॥—सप्तम्याः ॥—अप्सुजमिति । 'वर्षक्षर'—इति वाऽलुक् ॥—अजाते. प—॥—कौशल्याज इति । कोशलस्यापत्य स्त्री 'दुनादि'—इति ञ्य । ननु गोत्र
च चरणै सहेति जातित्वे डो न प्राप्नोति अतोऽत्र कथमित्याह—संज्ञाशब्द इति ॥—क्वचित् ॥—वार्चो हंस इति । 'वार्हपत्यादय' इति निषेधात् 'चटते सद्वितीये'
इति शो न भवति ॥—सुयजो—॥—मन्त्रादिसूत्रस्थक्वचिद्ग्रहणस्यैवेति । ननु तत्रस्थक्वचिद्ग्रहणादेव नियमो भविष्यतत्याशङ्का ॥ इत्याचार्यश्री०सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानु-

जीर्यतेर्भूतार्थवृत्तेरतृप्रत्ययो भवति । जीर्यति स्म जरन् । जरती । असरूपत्वात् जीर्णः जीर्णवान् । ऋकारो दीर्घत्वप्रतिषेधार्थः ॥ १७३ ॥ क्तक्तवतू ॥५।१।१७४॥ धातोर्भूतेऽर्थे वर्तमानात् क्तक्तवतू प्रत्ययौ भवतः । क्रियते स्म कृतः । करोति स्म कृतवान् । प्रकृतः कटं देवदत्तः । प्रकृतवान् कटं देवदत्तः । अत्र समुदायस्याभूतत्वेऽपि कटैकदेशे कटत्वोपचारात्तस्य च निर्वृत्तत्वाद्भूत एव धात्वर्थ इत्यादिकर्मण्यप्यनेनैव क्तक्तवतू सिद्धौ ॥ १७४ ॥ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनवृत्तौ पञ्चमस्याध्यायस्य प्रथमः पादः ॥ १ ॥ ॥ अगणितपञ्चेषुबलः पुरुषोत्तमचित्तविस्मयं जनयन् ॥ रामोल्लासनमूर्तिः श्रीकर्णः कर्ण इव जयति ॥ १ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

# ॥ द्वितीयः पादः ॥

श्रुसदवस्भ्यः परोक्षा वा ॥५।२।१॥ भूत इति अनुवर्तते । शृणोत्यादिभ्यो धातुभ्यो भूतार्थवृत्तिभ्यः परोक्षा विभक्तिर्वा भवति । उपशुश्राव । उपससाद । अनूवास । वावचनात् यथास्वकालमद्यतनी ह्यस्तनी च । उपाश्रौषीत् । उपाशृणोत् । उपासदत् । उपासीदत् । अन्ववात्सीत् । अन्ववसत् । एवं शुश्रुवे अश्रावि अश्रूयतेत्यादि । अन्ये तु श्वादिभ्यो भूतमात्रे क्वसुमेवेच्छन्ति न परोक्षाम् । ह्यस्तनीमपीच्छत्यन्य. । वहुवचनं व्याप्त्यर्थम् । तेन भूतानद्यतनेऽपीयं ह्यस्तन्या न बाध्यते । असरूपत्वादेवाद्यतन्यादिसिद्धौ वावचनं विभक्तिष्वसरूपोत्सर्गविभक्तिसमावेश निषेधार्थम् ॥ १ ॥ तत्र क्वसुकानौ तद्वत् ॥ ५ । २ । २ ॥ तत्र परोक्षामात्रविषये धातोः परौ क्वसुकानौ प्रत्ययौ भवतः तौ च परोक्षावद् व्यपदिश्येते । तत्र क्वसुः परस्मैपदत्वात् कर्तरि । कानस्त्वात्मनेपदत्वाद्भावकर्मणोरपि । शुश्रुवान् । उपशुश्रुवान् । सेदिवान् । उपसेदिवान् । प्रसेदिवान् । आसेदिवान् । निषेदिवान् । ऊषिवान् । अनूषिवान् । अध्यूषिवान् । पेचिवान् । पाचयांचकृवान् । जगिमवान् । पपिवान् । पेचानः । चक्राणः । परोक्षावद्भावात् द्विर्वचनादि । परोक्षावद्भावादेव कित्त्वे सिद्धे कित्करणं संयोगान्तधात्वर्थम् । तेनाजिवान् । बभज्वान् । सस्वजानः। एषु कित्त्वात् नलोपः । ऋदन्तानां गुणप्रतिषेधार्थं च । शिशीर्वान् । तितीर्वान् । पुपूर्वान् । कर्मणि, शशिराणः । ततिराणः । पपुराणः । बहुलाधिकारात् श्रुसदवसि-

---

शासनवृत्ते पञ्चमाध्यायस्य न्यासत प्रथम पाद समाप्त ॥ ॥—श्रुसदवस्भ्यः—॥—यथास्वकालमिति । स्वकालस्याऽनतिक्रमेण । तथा ह्यऽद्यतनेऽद्यतनी अनद्यतने तु ह्यस्तनी ॥—ह्यस्तनीमपीच्छत्यन्य इति । न केवल भूतमात्रे परोक्षां ह्यस्तनीमपीत्यर्थ ॥—विभक्तिष्विति । तेन विभक्तीनामेवान्योन्यमसरूपविधिर्नास्ति प्रत्ययेन तु विभक्तीनामस्त्येव तेनोपश्रुतवानित्यादि सिद्धम् ॥—निषेधार्थमिति । तेन 'अयदि'–इति सूत्रे वर्त्स्यन्तीविषये ह्यस्तनी न ॥—तत्र क्वसु—॥—नलोप इति । अन्यथा 'इन्ध्यसंयोगात्'–इत्यसंयोगान्तादेव कित्वेऽत्र नलोपो न

भ्यः कानो न भवति । केचित्तु एभ्य एव कसुर्नान्येभ्यः कानस्तु * प्रत्यय एव नेष्यते इत्याहुः । अपरे तु सर्वधातुभ्यः कसुमेवेच्छन्ति न कानम् । भूताधिकारेणैवोक्तपरोक्षाविषयत्वे लब्धे तन्ग्रहणं 'परोक्षामात्रप्रतिपत्त्यर्थम् । तेन पेचिवान् *इत्यादि सिद्धम् ॥ २ ॥ *वेयिवदनाश्वदनूचानम् ॥ ५ । २ । ३ ॥ एते शब्दा भूतेऽर्थे क्वसुकानान्ताः कर्तरि वा निपात्यन्ते । इणः क्वसुर्निपात्यते । ईयिवान् । समीयिवान् । उपेयिवान् । तथा नञ्पूर्वादश्नातेः क्वसुरिडभावश्च निपात्यते । अनाश्वान् । तथा वचेर्ब्रूगादेशाद्वानुपूर्वात्कानो निपात्यते । अनूचानः । निपातनस्येष्टविषयत्वात् कर्तुरन्यत्र *अनूक्तमित्याद्येव भवति । ब्रूग एवेच्छन्त्यन्ये । वावचनात्पक्षेऽद्यतन्यादयोऽपि । अगात् । उपागात् । उपैत् । *उपेयाय । नाशीत् । नाश्नात् । नाश । अन्ववोचत् । अन्वब्रवीत् । अन्ववक् । अनूवाच ॥ ३ ॥ अद्यतनी ॥५।२।४॥ भूतेऽर्थे वर्तमानाद्धातोरद्यतनी विभक्तिर्भवति । अकार्षीत् ॥ ४ ॥ *विशेषाविवक्षाव्यामिश्रे ॥ ५ । २ । ५ ॥ 'अनद्यतनादिविशेषस्याविवक्षायां व्यामिश्रणे च सति भूतेऽर्थे वर्तमानाद्धातोरद्यतनी विभक्तिर्भवति । अकार्षीत् । अहार्षीत् । अगमाम घोषान् । अपाम पयः । अजैषीत् गर्तो हूणान् । रामो वनमगमत् । सतोऽप्यत्र विशेषस्याविवक्षा यथाऽनुदरा कन्या अलोमिका एडकेति । व्यामिश्रे, अद्य ह्यो वाभुक्ष्महि । विशेषाविवक्षेति किम् । अगच्छाम घोषान् । अपिबाम पयः । अजयद्गर्तो हूणान् । रामो वनं जगाम । ह्यस्तन्यादिविषयेऽप्यद्यतन्यर्थं वचनम् ॥५॥ *रात्रौ वसोऽन्त्ययामा*स्वप्तर्यद्य ॥५।२।६॥ रात्रौ भूतेऽर्थे वर्तमानाद्वसतेर्धातोर्ह्यस्तन्यपवादोऽद्यतनी विभक्तिर्भवति अन्त्ययामास्वप्तरि सचेदर्थो यस्यां रात्रौ भूतस्तस्या एवान्त्ययामं व्याप्यास्वप्तरि कर्तरि वर्तते । अद्य तेनैवान्त्ययामेनावच्छिन्नेऽद्यतने चेत्प्रयोगो भवति नाद्यतनान्तरे । न्याय्ये प्रत्युत्थाने प्रत्युत्थितं कश्चित्कंचिदाह । क्व भवानुषितः स आह *अमुत्रावात्समिति । रात्र्यन्त्ययामे तु मुहूर्तमपि स्वापे ह्यस्तन्येव अमुत्रावसमिति ॥ ६ ॥ अनद्यतने ह्यस्तनी ॥ ५ । २ । ७ ॥ आ न्याय्यादुत्थानादा न्याय्याच्च संवेशनादहरुभयतः सार्धरात्रं वा अद्यतनः कालः । तस्मिन्नसति भूतेऽर्थे वर्तमानाद्धातोर्ह्यस्तनी विभक्तिर्भवति । अकरोत् । अहरत् । अनद्यतन इति किम् । अकार्षीत् ॥ ७ ॥ *ख्याते दृश्ये ॥ ५ । २ । ८ ॥

स्यात् ॥—प्रत्यय एव नेष्यते इति । तन्मते कानो नास्तीत्यर्थ ॥—परोक्षामात्रप्रतिपत्त्यर्थमिति । अन्यथा 'श्रुसद'–इति विहितपरोक्षाविषय एव स्यात् । तेभ्य एव भूतमाने विधानान्न तु 'परोक्षे' इति विहितपरोक्षाया विषये ॥—इत्यादि सिद्धमिति । भूताधिकारे हि अनुवर्त्तमानेऽपरोक्षे एवातीते स्यात् परोक्षे तु परत्वात् परोक्षा स्यादित्युभयोरप्यर्थ सगृह्यते तेन पपाचेति वक्तव्ये पेचिवानित्यादि सिद्धम् ॥—वेयिवदना—॥ 'तत्र क्वसु'–इत्यनेन परोक्षाविषये क्वसुकानो विहिताविति ह्यस्तन्यादिविषये न स्यातामिति निपातनम् । अत एवानाऽगात् ऐत् इत्याद्यपि वाक्य क्रियते ॥—अनूक्तमित्याद्येवेति । अन कानो न भवति ॥—उपेयायेति । 'नामिनोऽकलिहलेः' इति वृद्धौ 'पूर्वस्यास्वे'–इति पूर्वस्येयादेशे च रूपम् ॥—विशेषाविवक्षा—॥—अनद्यतनादिविशेषस्याऽविवक्षायामिति । आदिपदात्परोक्षपरिग्रह ॥—रात्रौ वसो—॥—अमुत्रावात्समिति । उपाध्यायस्त्वाह–रात्रेश्चतुर्थे यामे यदा वाक्य प्रयुङ्क्ते तदाऽमुत्रावात्समिति । तस्यातिक्रान्तरात्रिप्रहरत्रयमनद्यतनमिति ह्यस्तनीप्रसङ्गे यदा प्रयोक्ता सकलमतिक्रम्य रात्रिप्रहरत्रय जागरितवान् तदाऽद्यतनी । यदा सुप्त्वा प्रयुङ्क्ते तदा ह्यस्तन्येव । यत्सून वसेर्लुङ् रात्रिशेषे जागरणसतताविति तन्मतसग्रहार्थमिद सूत्रमेव व्याख्येयम् ॥—रात्रौ व—॥—स्वप्तर्यद्येति । कोऽर्थ, अन्त्ययामप्रयोगे क्रियमाणे अन्त्ययामेति लुप्तसप्तम्येकवचनान्त पदम् ॥—ख्याते दृ—

ख्याते लोकविज्ञाते दृश्ये *प्रयोक्तुः शक्यदर्शने भूतेऽनद्यतनेऽर्थे वर्तमानाद्धातोर्ह्यस्तनी विभक्तिर्भवति । परोक्षापवादः । अरुणत् सिद्धराजोऽवन्तीन् । अजयत्सिद्धः सौराष्ट्रान् । ख्यात इति किम् । चकार कटं चैत्रः। दृश्य किम् । जघान कंसं किल वासुदेवः । अनद्यतन इत्येव । उदगादद्यादित्यः ॥ ८ ॥ *अयदि स्मृत्यर्थे भविष्यन्ती ॥ ५ । २ । ९ ॥ स्मृत्यर्थे धातावुपपदे सति भूतानद्यतनेऽर्थे वर्तमानाद्धातोर्भविष्यन्ती विभक्तिर्भवति अयदि [1]नचेद्यच्छब्दः प्रयुज्यते । अभिजानासि देवदत्त कश्मीरेषु वत्स्यामः । स्मरसि साधो स्वर्गे स्थास्यामः । एवं बुध्यसे चेतयसे अध्येष्यवगच्छसि चैत्र कलिङ्गेषु गमिष्यामः । अयदीति किम् । अभिजानासि मित्र [2]यत्कलिङ्गेष्ववसाम ॥ ९ ॥ वाकाङ्क्षायाम् ॥ ५ । २ । १० ॥ अयदीति नानुवर्तते । स्मृत्यर्थे धातावुपपदे सति यद्ययदि वा प्रयुज्यमाने प्रयोक्तुः क्रियान्तराकाङ्क्षायां सत्यां भूतानद्यतनेऽर्थे वर्तमानाद्धातोर्भविष्यन्ती वा भवति । स्मरसि मित्र कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे पास्यामः पयांसि च । स्मरसि मित्र कश्मीरेष्ववसाम तत्रौदनमभुञ्ज्महि । स्मरसि मित्र यत् कश्मीरेषु वत्स्यामो यत्तत्रौदनं भोक्ष्यामहे । स्मरसि मित्र यत्कश्मीरेष्ववसाम यत्तत्रौदनमभुञ्ज्महि । अत्र वासो लक्षणं भोजनं पानं च लक्ष्यमिति लक्ष्यलक्षणयोः संबन्धे प्रयोक्तुराकाङ्क्षा भवति ॥ १० ॥ कृतास्मरणातिनिह्नवे परोक्षा ॥ ५ । २।११॥ कृतस्यापि व्यापारस्य चित्तव्याक्षेपादिनास्मरणेऽत्यन्तापह्नवे वा गम्यमाने भूतेऽनद्यतनेऽर्थे वर्तमानाद्धातोः परोक्षा विभक्तिर्भवति । अपरोक्षकालार्थ आरम्भः । सुप्तोऽहं किल विललाप । मत्तोऽहं किल विचचार । चिन्तयन् किलाहं शिरः कम्पयांबभूव । अङ्गुलि स्फोटयामास। अतिनिह्नवे, कश्चित्केनचिदुक्तः कलिङ्गेषु त्वया ब्राह्मणो हतः स तदपह्नुवान आह कः कलिङ्गान् जगाम को ब्राह्मणं ददर्श नाहं कलिङ्गान् जगाम इत्यत्यन्तमपह्नुते । अतिग्रहणादेकदेशापह्नवे ह्यस्तन्येव । न कलिङ्गेषु ब्राह्मणमहमहनम् ॥ ११ ॥ परोक्षे ॥ ५ । २ । १२ ॥ अक्षाणां परः परोक्षः । अत एव निर्देशात्साधुः अव्युत्पन्नो वा असाक्षात्कारार्थ. । भूतानद्यतने परोक्षेऽर्थे वर्तमानाद्धातोः परोक्षा विभक्तिर्भवति । यद्यपि साध्यत्वेनानिष्पन्नत्वात्सर्वोऽपि धात्वर्थः परोक्षस्तथापि प्रत्यक्षसाधनत्वेन तत्र लोकस्य प्रत्यक्षत्वाभिमानोऽस्ति । यत्र स नास्ति स परोक्षः । जघान कंसं वासुदेवः। भरतं विजिग्ये बाहुबली । धर्मं दिदेश तीर्थकरः ॥ १२ ॥ *हशश्वद्युगान्तःप्रच्छ्ये ह्यस्तनी च ॥ ५ । २ । १३ ॥ पञ्चवर्षं युगं तस्यान्तर्मध्यं तत्र पृच्छ्यते यः स युगान्तःप्रच्छ्यः । हे शश्वति च प्रयुज्यमाने युगान्तः-

॥—प्रयोक्तुः शक्यदर्शने इति । प्रयोक्तुश्च स एव दृश्य' यः प्रयोक्तृकालेऽनतिविप्रकर्षेण वृत्त स्यात् । प्रयोक्तुश्चान्यत्र व्यासक्तत्वेन तद्दर्शनाऽभावात् परोक्षत्व तस्यार्थस्य पर स यदि तत्र व्रजति तदा पश्यत्येव तस्मिन्नर्थे ह्यस्तनी । एव च यस्मिन् कालेऽर्थो वृत्तस्तत्कालभावी पुरुष पश्चादपि प्रयोग कुर्वन्न दुष्यति । यतोऽर्थभवनकाले तस्य पुरुषस्य तदर्थदर्शनयोग्यताया. सद्भावात् । तथा जघान कसं किल वासुदेव इत्यत्रापि यदि वधकालभावी प्रयोक्ता प्रयोग कुरुते तदा तत्रापि अहन्निति भवति यतस्तदा तस्यापि दृश्यत्वादिति । तदुक्त 'परोक्षे लोकविज्ञाते प्रयोक्तु' शक्यदर्शने । ह्यस्तने ह्यस्तनी प्रोक्ता चैत्रो नृपमहन्निति' ॥—अयदि—॥—[1]न चेद्यत् शब्द इति । धात्वर्थवाचक क्रियाविशेषणरूपो न प्रयुज्यते । यस्मादर्थे तु भविष्यन्त्येवेति न्यास ॥—[2]यत्कलिङ्गेष्ववसामेति । क्रियाविशेषणमेतत् । यद्वसन न स्मरसीत्यर्थ । यदा तु यस्माद्धेतो कलिङ्गेषु उषितवन्त इति विवक्ष्यते तत्र भविष्यन्त्येव ॥—हशश्वद्यु—॥

पौ०पा० ॥ १५ ॥

भवन्ते । भूतानद्यतने परोक्षेऽर्थे वर्तमानाद्धातोर्ह्यस्तनी परोक्षा च विभक्ती भवतः । *इति हाकरोत् । इति ह चकार । शश्वदकरोत् । शश्वच्चकार । प्रच्छये, किमग-
[illegible] मथुराम् । किं जगन्थ त्वं मथुराम् । हशश्वद्युगान्तःप्रच्छ्य इति किम् । जघान कंसं किल वासुदेवः वेलेव कृते भूतानद्यतनमात्रभाविन्या ह्यस्तन्याः पक्षे सिद्धौ
स्मरणार्थयोगेऽपि ह्यस्तन्येव यथा स्यान्न भविष्यन्तीत्येवमर्थम् । तेन स्मरसि मित्र कश्मीरेष्ववसाम इति हाध्यैमहि अभिजानामि चैत्र शश्वदध्यैमहीत्यादि सिद्धम् ।
युगान्तरप्रच्छ्ययोस्तु हशश्वत्प्रयोग एव न संभवतीति नोदाहियते ॥ १३ ॥ *अविवक्षिते ॥ ५ । २ । १४ ॥ भूतानद्यतने परोक्षे परोक्षत्वेनाविवक्षितेऽर्थे
वर्तमानाद्धातोर्ह्यस्तनी विभक्तिर्भवति । अभवत्सगरो राजा । अहन् कंसं वासुदेवः । एवं च परोक्षानद्यतने विवक्षावशाद्द्यतनीह्यस्तनी-
परोक्षास्तिस्रो विभक्तयः सिद्धाः । तथा च अन्ववैपीत्ततो वाली न्यक्षिपच्चाङ्गदं सुग्रीवे प्रोचे सद्भावमागतः । राक्षसेन्द्रस्ततोऽभैपीत् सैन्यं समस्तं
सोऽभ्युत्पपात् स्वर्गं पुष्पकयानके । तथा अभूवंस्तापसाः केचित्पाण्डुपत्रफलाशिनः । पारिव्राज्यं तदादत्त मरीचिश्च तृपादित इति ॥ १४ ॥ *वाद्यतनी पुरादौ ॥
५ । २ । १५ ॥ परोक्षे इति निवृत्तम् । भूतानद्यतने परोक्षे चापरोक्षे चार्थे वर्तमानाद्धातोः पुरा इत्यादावुपपदेऽद्यतनी विभक्तिर्भवति वा । अपरोक्षे ह्यस्तन्याः
परोक्षे तु परोक्षाया अपवादः । वावचनात्पक्षे यथाप्राप्ति *ते अपि भवतः । अवात्सुरिह पुरा छात्राः । अवसन्निह पुरा छात्राः । ऊषुरिह पुरा छात्राः । तदाभाषिष्ट
राघवः । तदाभाषत राघवः । बभाषे राघवस्तदा । भूतानद्यतनपरोक्षेऽद्यतनी नेच्छन्त्यन्ये । एवमुत्तरसूत्रे पुरादियोगे वर्तमानाम् । हशश्वच्छब्दप्रयोगेऽपि पुरादियोगे
परत्वादिकल्पेनाद्यतनी । इति ह पुराकार्षीत् । अकरोत् । चकार । शश्वत्पुराकार्षीदकरोच्चकार । भूतमात्रविवक्षया *अद्यतन्याः सिद्धौ पुरादियोगे तद्वचनं स्मसर्थ-
हशश्वत्स्मयोगे सामान्यविवक्षया अद्यतनी न भवतीति ज्ञापनार्थम् ॥१५॥ *स्मे च वर्तमाना ॥ ५ । २ । १६ ॥ भूतानद्यतने परोक्षेऽपरोक्षे चार्थे वर्तमानाद्धातोः
स्मशब्दे पुरादौ चोपपदे वर्तमाना विभक्तिर्भवति । इति स्मोपाध्यायः कथयति । पृच्छति स्म पुरोधसम् । वसन्तीह पुरा छात्राः । भाषते राघवस्तदा । अथाह
वर्णी विदितो महेश्वरः । यावद्दिर खे मरुता चरन्ति । आदिग्रहणमिह पूर्वत्र च प्रयोगानुसरणार्थम् । एवं च *पुरादियोगेऽद्यतनीह्यस्तनीपरोक्षावर्तमानाश्चतस्रो
विभक्तयः सिद्धाः । स्मपुरायोगे तु परत्वाद्वर्तमानैव । नटेन स्म पुराधीयते । एवं हशश्वत्स्मयोगेऽपि । इति ह स्मोपाध्यायः कथयति । शश्वदधीयते स्म ।

---

—इति हाकरोदिति । निपातसमुदाय प्रवादपारपर्यं इतिहशब्दो वर्त्तते । यद्वा एतत् ह इति वाक्यालङ्कारे ॥—प्रयोग एव न संभवतीति । निपातानां यथादर्शनं प्रयोगात् ॥—अविवक्षिते
॥—तिस्रोऽपि विभक्तय इति । परोक्षत्वेन वा विवक्षिते 'विशेषाविवक्षा'-इत्यद्यतनी । परोक्षत्वेन त्वऽविवक्षितेऽनेन ह्यस्तनी । उभयसद्भावविवक्षायां तु 'परोक्षे' इत्यनेन परोक्षा ॥—वाद्यतनी—
॥—ते अपि भवत इति । वाकरणादऽन्यथा चशब्दं कुर्यात् ॥—अद्यतन्याः सिद्धाविति । 'अद्यतनी' इत्यनेन ॥—सामान्यविवक्षयेति । भूतानद्यतनविवक्षाया तु पुरादियोगेऽनेन भवत्येव
॥—स्मे न वर्तमाना । स्मशब्दोऽतीतकालद्योतकश्चादि ॥—स्मे—॥—पुरादियोगे इति । ननु पुरादियोग स्मयोगश्च भवति तदा किं पूर्वेणाद्यतनी उतानेन वर्तमाना इत्याह—परत्वादिति

त्रययोगेऽपि एवम् । न ह स्म वै पुराग्निरपरशु वृक्णं दहतीति ॥ १६ ॥ * ननौ पृष्टोक्तौ सद्वत् ॥ ५ । २ । १७ ॥ *अनद्यतन इति निवृत्तम् । पृष्टस्य धात्वर्थस्योक्तिः प्रतिवचनं पृष्टोक्तिः। ननुशब्दे उपपदे पृष्टोक्तौ भूतेऽर्थे वर्तमानाद्धातोः सद्वद् वर्तमान इव वर्त्तमाना विभक्तिर्भवति। सद्वद्वचनादत्र विषये शत्रानशावपि भवतः। किमकार्षीः कटं चैत्र । ननु करोमि भोः। *ननु कुर्वन्तं कुर्वाणं मां पश्य । किमवोचः किंचिच्चैत्र । ननु ब्रवीमि भोः। ननु ब्रुवन्तं ब्रुवाणं मां पश्य। पृष्टोक्ताविति किम् । नन्वकार्षीच्चैत्रः कटम् ॥१७॥ नन्वोर्वा ॥५।२।१८॥ न नु इत्येतयोः शब्दयोरुपपदयोः पृष्टोक्तौ भूतेऽर्थे वर्तमानाद्धातोर्वा वर्तमाना विभक्तिर्भवति सा च सद्वत् । किमकार्षीः कटं चैत्र । न करोमि भोः। न कुर्वन्तं न कुर्वाणं पश्य माम् । नाकार्षम् । कस्तत्रावोचत् । अहं नु ब्रवीमि । ब्रुवन्तं ब्रुवाणं तु मां पश्य । अहं न्ववोचम् ॥ १८ ॥ *सति ॥ ५ । २ । १९ ॥ सन् विद्यमानो वर्तमान इत्यर्थः । स च *प्रारब्धापरिसमाप्तः क्रियाप्रबन्धः । सत्यर्थे वर्तमानाद्धातोर्वर्तमाना विभक्तिर्भवति । भवति। अस्ति । घटं करोति । ओदनं पचति ।*जीवं न मारयति मांसं न भक्षयतीत्यादौ नियमः *प्रारब्धोऽसमाप्तश्च प्रतीयते। इहाधीमहे इह कुमाराः क्रीडन्तीत्यादौ क्रियान्तरव्यवधानेऽपि अध्ययनादिक्रियायाः प्रारम्भापरिसमाप्तिरस्त्येव । चैत्रो भुङ्क्ते इत्यादावपि हि क्रियान्तरव्यवधानमशक्यपरिहारम् । सोऽपि ह्यवश्यं भुञ्जानो हसति जल्पति पानीयं वा पिबतीति । तिष्ठन्ति पर्वताः स्यन्दन्ते नद्य इत्यादौ तु स्फुटैव प्रारम्भापरिसमाप्तिः । कथं तर्हि तस्थुः स्थास्यन्ति गिरय इति भूतभाविनां भरतकल्किप्रभृतीनां राज्ञां याः क्रियाः *तदवच्छेदेन पर्वतादिक्रियाणामतीतत्वानागतत्वोपपत्तेर्न भूतभाविप्रत्ययानुपपत्तिदोषः । *एवं च विद्यमानकर्तृकेभ्योऽस्त्यर्थेभ्यो धातुभ्यः सर्वा विभक्तयो भवन्ति । कूपोऽस्ति । कूपो भविष्यति । कूपो भविता । कूपोऽभूत् । कूप आसीत् । कूपो बभूव ॥१९॥ *शत्रानशावेष्यति तु सस्यौ ॥ ५ ॥ २ । २० ॥ सत्यर्थे वर्तमानाद्धातोः शत्रानशौ प्रत्ययौ भवत एष्यति तु एष्यन्मात्रे भविष्यन्तीविषयेऽर्थे सस्यौ स्यप्रत्ययसहितौ शत्रानशौ भवतः । स्योऽपि प्रत्ययत्वाद्धातोरेव । यान् । यान्तौ । यान्तः । शयानः । शयानौ । शयानाः । निरस्यन् । निरस्यमानः । पचन् । पचमानः । एकानिपयत्वाद्वर्तमानापि । याति । यातः । यान्ति । एवं सर्वत्र । तथा सन् अस्ति अधीयान' अधीते विद्यमानः विद्यते जुह्वत् जुहोति विदन् वेत्ति जानन् जानाति ब्राह्मणः। तथा तरादौ प्रत्यये, पचत्तरः पचत्तमः । पचतितरां पचतितमाम् । पचद्रूपः । पचतिरूपम् । जल्पत्कल्पः । जल्पतिकल्पम् । पश्यद्देश्यः । पश्यतिदेश्यम् । पठद्देशीयः ।

॥—ननौ—॥—अनद्यतन इति निवृत्तमिति । अपेक्षात इति न्यायात् ॥—ननु कुर्वन्त कुर्वाणमिति । करोमि कुर्वे इति वाक्ये शत्रानशौ । कृतकार्यं मा पश्येत्यर्थः ॥—साति ॥—प्रारब्धापरिसमाप्त इति । पूर्वप्रारब्ध साक्षात्साध्यत्वेन प्रस्तुतो न च परिसमाप्त फलस्यानिष्पत्ते । फलार्थं हि उपादीयमानाया क्रियाया फलेऽधिगते तस्या परिसमाप्तिर्भवति । एव च महता कालेन साध्यते या क्रिया तस्या अन्तराले क्रियान्तरैर्विच्छिन्नाया अपि प्रारब्धत्वादसमाप्तत्वाच्च वर्त्तमानत्वमस्त्येव ॥—जीवं न मारयतीति । नन्वत्र निषेधस्याभावरूपत्वात् अभावस्य च प्रारम्भापरिसमाप्ती न घटेते इत्याह—प्रारब्ध इत्यादि । यावत्क्रिया प्रारब्धा न समर्थ्यते तावत्तस्या क्रियान्तरैर्व्यवहितायाश्चाप्यसमाप्ति ॥—तदवच्छेदेनेति । तद्विशिष्टत्वेन तयो क्रिययोर्विभागो भूतो भविष्यन् वा भवतीत्यर्थ ॥—एव चेति । पूर्वोक्तेनैव न्यायेन भूतभविष्यत्क्रिययोरपेक्षयेत्यर्थ ॥—शत्रानशा—॥—स्योऽपि प्रत्ययत्वादिति । शत्रानशौ प्रथम प्रधानत्वात्

पठतिदेशीयम्। एवं पचमानतरः पचमानतमः पचतेतरां पचतेतमामित्यादि । *द्वितीयाद्यन्तपदसामानाधिकरण्यसंबोधनतरादिवर्जिततद्धितप्रत्ययोत्तरपदक्रियालक्षण-क्रियाहेतुषु वर्तमानाया अन्वयायोगात् शत्रानशावेव। पचन्तं पचमानं पश्य। पचता पचमानेन कृतम्। पचते पचमानाय देहि। पचतः पचमानाद्वीतः। पचनः पचमानस्य स्वम्। पचति पचमाने गतः। संबोधने, हे पचन् हे पचमान। तराद्यन्यतद्धिते कुर्वतोऽपत्यं कौर्वत। पाचतः। वैक्षमाणि। कुर्वत्पाशः। पचत्पाशः। कुर्वच्चरः। पचच्चरः। उत्तरपदे, भज्यत इति भक्तिः। *कुर्वन् भक्तिरस्य कुर्वद्भक्तिः कुर्वाणभक्तिः। कुर्वत्प्रियः कुर्वाणप्रियः। ब्रुवन्माठरः। ब्रुवाणमाठरः। क्रियायां लक्षणं ज्ञापकं चिह्नम्। तत्र 'तिष्ठन्तोऽनुशासति गणकाः। शयाना भुञ्जते यवनाः। बहुषु मूत्रयत्सु कश्चैत्र इति पृष्टः कश्चिदाह। यस्तिष्ठन् मूत्रयति । एवं यो गच्छन् भक्षयति। यः शयानो भुङ्क्ते। योऽधीयान आस्ते। तथा यः पठन्पचति स मैत्रः। एवं यः पचन्पठति। योधीयान आस्ते। य आसीनोऽधीते। तथा फलन्ती वर्द्धते द्राक्षा पुष्प्यन्ती वर्द्धतेऽब्जिनी। शयाना वर्धते दूर्वा। आसीनं वर्धते बिसम्। क्रियाया हेतुर्जनकस्तत्र अर्जयन्वसति। अधीयानो वसति। एष्यति तु सस्यौ। यास्यन्। शयिष्यमाणः। पक्ष्यन्। पक्ष्यमाणः। यास्यति। शयिष्यते। पक्ष्यति। पक्ष्यते। तथा भविष्यन्। भविष्यति। अध्येष्यमाणः। अध्येष्यते ब्राह्मण इत्यादि। तथा पक्ष्यत्तरः। पक्ष्यमाणतमः। पक्ष्यतितराम्। पक्ष्यतितमाम् इत्यादि। सर्वेष्वेकविषयत्वाद्भविष्यन्त्यपि। पक्ष्यन् व्रजति पक्ष्यमाणो व्रजतीति क्रियायां क्रियार्थायामे-कविषयत्वाच्च भविष्यन्त्यादयोऽपि। पक्ष्यामीति व्रजति। पाचको व्रजति। पक्तुं व्रजति। पूर्ववदेव च द्वितीयाद्यन्तसामानाधिकरण्यादिषु भविष्यन्त्याः समन्वयाभा-वादभावः। पक्ष्यन्तं पश्य पक्ष्यमाणं पश्य। हे पक्ष्यन् हे पक्ष्यमाण ब्राह्मण। पाक्ष्यतः। पाक्ष्यमाणिः पक्ष्यमाणपाशः। पक्ष्यद्भक्तिः। पक्ष्यमाणप्रियः। अलिपष्य-न्तो ज्ञास्यन्ते पण्डिताः। अध्येष्यमाणा वत्स्यन्तीत्यादि। सदेष्यतोरभावे तु श्वः पक्ता। बहुलाधिकाराद्द्रव्यगुणयोर्लक्षणे हेतुहेतुमद्भावद्योतके त्यादियोगे च न भवति। यः कम्पते सोऽश्वत्थः। यच्चरति तल्लघु। हन्तीति पलायते। वर्षतीति धावति। करिष्यतीति व्रजति। हनिष्यतीति नश्यति। पचत्यतो लभते। विजय-तेऽतः पूज्यते। क्रियाया अपि लक्षणे *चादियोगे न भवति। यः पचति च पठति च स चैत्रः। योऽधीते चास्ते स मैत्रः। शकारः शित्कार्यार्थः। ऋकारो

धातोर्विधीयेते। ततः प्रत्ययत्वादेव स्योऽपि धातोरेवानन्तरं न तु शत्रानशूभ्यां परः ॥—द्वितीयाद्यन्तपदेति। शत्रानशोर्वर्त्तमानायाश्च समानविषयत्वेऽपि नातिप्रसक्तिरपि। द्वितीयाद्यन्तेन पदेन द्रव्याभिधायिना वर्त्तमानान्तेन च क्रियाभिधायिना सता पश्येत्यादिक्रियायाः सामानाधिकरण्याऽसंभवात्संबोधने च सिद्धविषयत्वात्साध्यवाचिनि वर्त्तमानान्ताऽनुपपत्तेस्तरादिवर्जिततद्धितप्रत्ययत्वोत्तर-पदस्य च नामत्वे सति संभवाल्लक्षणहेतुत्वयोरपि सिद्धधर्म्मत्वात्साध्याभिधायिनाऽन्वयायोगः। एतदेव पचन्तमित्यादिना क्रमेण दर्शयति ॥—कुर्वन् भक्तिरस्येति। भज्यत इति कर्म्मणि क्तो भक्ति सेव्य इत्यर्थः। अत्र वाच्ये पुलिङ्गेऽपि शब्दशक्तिस्वाभाव्यात्क्त्यन्तस्य स्त्रीलिङ्गतैव ॥—तिष्ठन्तोऽनुशासति गणका इति। अत्राऽनुशासनक्रियया गणका लक्ष्यन्ते। सा चाऽनुशासनक्रिया उपविष्ट ऊर्द्ध्वं गच्छत्सुभयविषयत्वेन दुर्लक्षा अतः स्थानक्रियया लक्ष्यते। नन्वनुशासतीत्यत्रापि वर्त्तमाना न प्राप्नोति यतोऽनयापि गणका लक्ष्यन्ते। न। क्रियाया कर्म्मतापन्नाया लक्षणमिति वचनात् द्रव्यादेर्गणकस्य लक्षणे वर्त्तमाना भवत्येव ॥—चादियोगे न भवतीति। न केवलं द्रव्यगुणयोर्लक्षणे चादियोगे सति क्रियाया अपि लक्षणे न भवति। यः पचति चेत्यादौ न क्रियायोर्लक्ष्य-

ङ्याद्यर्थः ॥ २० ॥ ^२तौ माङ्याक्रोशेषु ॥ ५ । २ । २१ ॥ माङ्युपपदे आक्रोशे गम्यमाने सति तौ शत्रानशौ प्रत्ययौ भवतः। 'बहुवचनादसत्यपि । मा पचन् वृषलो ज्ञास्यति । मा पचमानोऽसौ मर्तुकामः। मा जीवन्यः परावज्ञादुःखदग्धोऽपि जीवति ॥ तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ १ ॥ शत्रानशोरनुवृत्तावपि तौ ग्रहणमवधारणार्थम् । तेनात्र विषये असरूपविधिनाप्यद्यतनी न भवति । भवतीत्यपि कश्चित् ॥ २१ ॥ ^२वा वेत्तेः क्वसुः ॥ ५ । २ । २२ ॥ सत्यर्थे वर्तमानाद्वेत्तेः क्वसुप्रत्ययो वा भवति । पक्षे यथाप्राप्तम् । विद्वान् । साधुस्तत्त्वं विद्वान् विदन् वेत्ति । विदुषा कृतं, विदता कृतम् । हे विद्वन् । हे विदन् । वैदुषः वैदतः । विद्वद्भक्तिः । विदद्भक्तिः । विद्वानास्ते । विदन्नास्ते । विद्वाल्ँल्लभते । विदल्ँल्लभते । द्वितीयाद्यन्तपदसामानाधिकरण्यादिषु पूर्ववदनन्वयादेव न वर्तमाना । ककारः ^३कित्कार्याद्यर्थः । उकारो ङ्याद्यर्थः ॥ २२ ॥ ^४पूङ्यजः शानः ॥ ५ । २ । २३ ॥ सत्यर्थे वर्तमानाभ्यां पवतियजिभ्यां परः शानः प्रत्ययो भवति । कृत्त्वात् कर्तरि । पवते । पवमानः । ^५मलयं पवमानः। यजति यजते वा यजमानः । आनशा योगे न षष्ठीसमासो न च यजेरफलवति कर्तरि सोऽस्तीति वचनम् । एवमुत्तरत्रापि । शकारः शित्कार्यार्थः ॥ २३ ॥ वयःशक्तिशीले ॥ ५ । २ । २४ ॥ सत्यर्थे वर्तमानाद्धातोर्वयः-शक्तिशीलेषु गम्यमानेषु शानो भवति । वयः प्राणिनां कालकृता बाल्याद्यवस्था । कतीह शिखण्डं वहमानाः । स्त्रियं गच्छमानाः । शक्ति सामर्थ्यं, कतीह हस्तिनं निघ्नानाः । समश्नानाः । शीलं स्वभाव । कतीहात्मानं वर्णयमाना । पराक्षिन्दमानाः । अनभिधानान्न वाऽसरूप शतृः॥२४॥ ^६धारीङोऽकृच्छ्रेऽतृश् ॥५।२।२५॥

---

लक्षणभावो विवक्षित। क्रमेण हि प्रतीयमानयोरर्थयोर्लक्ष्यलक्षणभाव स्याज्जन्यजनकभावो वा। अत्र तु तुल्यकालतैव क्रिययोरऽत एव तद्द्योतकौ चशब्दौ प्रयुज्येते इति। स मैत्र इत्युभयत्र सवध्यते इति द्रव्यलक्षणे न भवति क्रियालक्षणेऽपि न भवति। तथाहि–कुत्रापि एकस्मिन् प्रमातारि पचनपठनयोर्लक्ष्यलक्षणभावो येन गृहीत स एव ब्रवीति य पचति च स पठति च। एव पचनक्रिया लक्षण पठनक्रिया लक्ष्या। चादियोगाऽभावे तु शत्रानशौ भवत एव। यथा पचन् पचमानो वा स पठति ॥—तौ माङ्या—'।—बहुवचनादसत्यपीति। तेन ये केचित्सत्यसति वा आक्रोशास्तेपु शत्रानशो भवत इति व्याख्येयम् ॥—मा पचन् वृषल इत्यादि। मा पाक्षीत् मा पक्त मा जीवीदित्यादि वाक्यमऽर्थकथनम्। यावता आक्रोशविवक्षायामनेन शत्रानशावेव। असरूपविधिनाप्यत्राद्यतनी नेष्टा। केचिदऽसरूपविधिमिच्छन्ति तन्मतेन वा वाक्यम्। यद्वा मा क्रुदयमान मा प्राणान् धारयन्निः यर्थान्तरेग वा वाक्यम् ॥—वा वेत्तेः—॥ 'असरूपोऽपवादेन'–इत्यनेन विकल्पे सिद्धे वाग्रहणमत्र प्रकरणे असरूपविधेर्लक्ष्यानुरोधार्थम्। अत एव 'वय शक्ति'–इत्यत्रानभिधानान्न वाऽसरूप शतृरित्युक्तम् ॥—कित्कार्याद्यर्थ इति। आदिपदात् 'तृनुदन्त'–इत्यादि ॥—पूङ्यजः—॥—मलय पवमान इति। 'तृनुदन्त'–इत्यनेन आनद्वारा कर्मषष्ठीनिषेधे मलयस्य सवन्धी पवमान इति सवन्धषष्ठीसमास। ननु पूङ आत्मनेपदित्वात् यजेरप्युभयपदित्वात् फलवत्कर्त्तरि 'शत्रानशो'–इत्यनेनैव वानश् सिद्ध किमनेनेत्याह—आनशा योगे न षष्ठीसमास'। तृप्तार्थेति निषेधात् ॥—धारीङो—॥ इङ् इत्यात्मनेपदित्वात्फलवत्कर्त्तरि धारेश्च सामान्यसूत्रेण शतृर्न प्राप्नोतीति सूत्र कर्त्तव्यम्। तथापि प्रत्ययान्तर मा विधायि शतृरेव विधीयता सूत्रसामर्थ्यादिङ आत्मनेपदिनोऽपि भविष्यति। नेवम्। इङ आत्मनेपदित्वेऽपि विधानसामर्थ्यात् शतृ स्यात् धारेस्तु फलवत्कर्त्तरि अकृच्छ्र एवार्थे शतृरिति नियमार्थ स्यात्। यद्वा धारीत्युभयपदी ततश्च यद्युभयपदिनामऽकृच्छ्रे शतृ स्यात् तदा धारेरेवेति नियम स्यात् ॥—

अकृच्छ्रः सुखसाध्यः। अकृच्छ्रे सत्यर्थे वर्तमानाद्धारेरिङश्च परोऽतृश् प्रत्ययो भवति। धारयन् 'आचाराङ्गम्। अधीयन् द्रुमपुष्पीयम्। अकृच्छ्र इति किम्। *कृच्छ्रेण धारयति 'यतिधर्मम्। कृच्छ्रेणाधीते पूर्वगतम्। इङ आनशि प्राप्ते धारेरुभयप्राप्तौ वचनम्। वासरूपोऽपि नेष्यत एव ॥ २५ ॥ 'सुग्द्विषार्हः सत्रिशत्रुस्तुत्ये ॥ ५ । २ । २६ ॥ सत्यर्थे वर्तमानात् सुनोतेर्द्विषोऽर्हश्च धातोर्यथासंख्यं सत्रिणि शत्रौ स्तुत्ये च कर्तरि अतृश् प्रत्ययो भवति। सत्री यजमान। सर्वे सुन्वन्तः यज्ञस्वामिन इत्यर्थः। चौरं द्विषन् चौरस्य द्विषन् शत्रुरित्यर्थः। पूजामर्हन् प्रशस्य इत्यर्थ। एष्विति किम्। सुरां सुनोति। भार्यां द्वेष्टि परं पश्यन्तीम्। वधमर्हति चौर ॥ २६ ॥ तृन् शीलधर्मसाधुषु ॥ ५ । २ । २७ ॥ शीले धर्मे साधौ च सत्यर्थे वर्तमानाद्धातोस्तृन् प्रत्ययो भवति। शीले कर्ता कटम्। वदिता जनापवादान्। करणं वदनं चास्य शीलमित्यर्थ। धर्म कुलाद्याचार, तत्र वधूमूढां मुण्डयितारः 'श्राविष्ठायना। श्राद्धे सिद्धमन्नमपहर्तारः आह्वरकाः। मुण्डनादि तेषा कुलधर्म इत्यर्थ। साधौ, गन्ता खेल। कर्ता विकट। साधु गच्छति साधु करोतीत्यर्थ। नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृशब्दा औणादिका पितृमात्रादिवत्। अत एवैषामार्विधौ पृथगुपादानम्। शीलादिष्विति किम्। कर्ता कटस्य। बहुवचनं 'सन्भिक्षाशंसेरु' ( ५-२-३३ ) इत्यादौ यथासंख्यपरिहारार्थम्। नकार. सामान्यग्रहणाविघातार्थः॥२७॥ भ्राज्यलंकृग्निराकृग्भूसहिरुचिवृतिवृधिचरिप्रजनापत्रप इष्णुः॥५।२।२८॥ एभ्यः शीलादौ सत्यर्थे वर्तमानेभ्य इष्णुः प्रत्ययो भवति। भ्राजनशीलो भ्राजनधर्मा साधु भ्राजते वा भ्राजिष्णुः। भ्राजिष्णुना लोहितचन्दनेन। अलंकृग् अलंकरिष्णुः। निराकृग् निराकरिष्णुः। भू भविष्णुः। सर्वेषां भविष्णूनां जन्याना न तु स योग्यः। सह, सहिष्णुः। रुच् रोचिष्णुः। वृत् वर्तिष्णुः। वृध् वर्धिष्णुः। चर, चरिष्णुः। प्रजन् प्रजनिष्णुः। अपत्रप् अपत्रपिष्णु। भ्राजेर्नेच्छन्त्येके ॥२८॥ उदः पचिपतिपदिमदेः ॥५।२।२९॥ उत्पूर्वेभ्यः शीलादौ सत्यर्थे वर्तमानेभ्य इष्णुर्भवति। उत्पचिष्णुः। उत्पतिष्णुः। उत्पदिष्णुः। उन्मदिष्णुः। पदेर्नेच्छन्त्यन्ये ॥ २९ ॥ भूजेः ष्णुक् ॥ ५ । २ । ३० ॥ शीलादौ सत्यर्थे वर्तमानाभ्यां भूजिभ्यां ष्णुक् प्रत्ययो भवति। भूष्णुः। ककार. कित्कार्यार्थः ॥ ३० ॥ *स्थाग्लाम्लापचिपरिमृजिक्षेः स्नुः॥५।२।३१॥ एभ्यः शीलादौ सत्यर्थे वर्तमानेभ्यः स्नुप्रत्ययो भवति। स्थास्नुः। ग्लास्नुः। म्लास्नुः। पक्ष्णुः। परिमार्क्ष्णुः। क्षेष्णुः।

आचाराङ्गमिति। आचारप्रतिपादकमङ्गमाचाराङ्गम्। आचर्यते शोभन कर्मानेन व्यञ्जनाद् घञ्। आचारश्च तदङ्ग चेति वा ॥—द्रुमपुष्पीयमिति। द्रुमपुष्पमधिकृत्य कृतो ग्रन्थ। 'शिशुक्रन्दादिभ्य ईय'। अथवा द्रुमपुष्पस्य तुल्य 'काकतालीयादयः'। अथवा द्रुमपुष्पमत्रास्ति। 'सूक्तसाम्नोरीय' ॥—कृच्छ्रेण धारयतीति। अत्र शत्रानशावपि भवत ॥—यतिधर्म्ममिति। यमन यत तदस्यास्ति इन् यतिनो धर्म्म। यदा तु यतिधातोरौणादिक इप्रत्ययस्तदा यतेर्द्धर्म्म ॥—सुग्द्वि—॥ नन्वेषु शतृप्रत्यये अतृश्प्रत्यये वा रूपसाम्यान्न कश्चिद्विशेष ॥ उच्यते ॥ प्राकृते शत्रानशौ इति सूत्रे विशेषोऽस्ति ॥—तृन् शील—॥—श्राविष्ठायना इति। श्रूयतेऽनेन 'पुन्नाम्नि' इति घ। श्रवोऽस्त्यासा श्रववत्य। अतिशयेन श्रववत्य इति विगृह्य इष्ठप्रत्यये पुभावे 'विन्मतो'–इति लुपि श्रविष्ठा धनिष्ठास्ताभिश्चन्द्रयुक्ताभिर्युक्त काल। 'चन्द्रयुक्त'–इत्यणि लुपि श्रविष्ठास्तासु जाता 'श्रविष्ठापाढा'–इति अ.। श्रविष्ठाया अपत्यानि वृद्धानि 'अश्वादेरायनञ्' ॥—स्थाग्लाम्ला—॥—परिमार्क्ष्णुरिति। 'धूगौदित' इत्यनेन विकल्पेनेटि प्रत्यये परिमार्जिष्णुरित्यपि ॥—क्षेष्णुरिति। क्षिपूश् इत्यस्य न सानुबन्धत्वा त्

म्लादिभ्यः केचिदेवेच्छन्ति ॥ ३१ ॥ त्रसिगृधिधृषिक्षिपः क्नुः ॥ ५ । २ । ३२ ॥ शीलादौ सत्यर्थे वर्तमानेभ्य एभ्यः क्नुः प्रत्ययो भवति । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्णुः ॥ ३२ ॥ *सन्भिक्षाशंसेरुः ॥ ५ । २ । ३३ ॥ शीलादौ सत्यर्थे वर्तमानात् *सन्प्रत्ययान्ताद्धातोर्भिक्षाशंसिभ्यां च पर उः प्रत्ययो भवति । चिकीर्षुः। जिहीर्षुः। भिक्षुः। आशंसिति आङः शसुङ् इच्छायामित्यस्य ग्रहणम् । न तु शंसू स्तुतौ चेत्यस्य। तत्राङ्योगस्यानियतत्वात् । आशंसुः । स्तुत्यर्थस्यापीच्छन्त्यन्यः ॥ ३३ ॥ विन्द्विच्छू ॥ ५ । २ । ३४ ॥ शीलादौ सत्यर्थे वर्तमानाद्वेत्तेरिच्छतेश्च उः प्रत्ययो यथासंख्यं नोपान्त्यछकारान्तादेशौ च निपात्यन्ते । वेदनशीलो विन्दुः । एषणशील इच्छुः । कथमपां विन्दुः । विन्देरव्ययवार्थात् औणादिक उः । अन्ये त्वस्यैव निपातनं क्रियानिमित्तस्तु विन्दुरित्यनागमिक एवेत्याहुः । सर्वविदीनां सर्वेषीणां च निपातनमिदमित्यन्यः ॥३४॥ शॄवन्देरारुः ॥५।२।३५॥ शीलादौ सत्यर्थे वर्तमानाभ्यां शॄवन्दिभ्यामारुः प्रत्ययो भवति । शृणातीत्येवंशील' शरारुः। विशीर्यते विशरारुः । वन्दते वन्दारुः ॥३५॥ दाधेसिशदसदो रुः ॥ ५ । २ । ३६ ॥ शीलादौ सत्यर्थे वर्तमानेभ्यो दारूपट्धे सि शद सद इत्येतेभ्यो रुः प्रत्ययो भवति । ददाति दयते यच्छति द्यति दाति दायति वेत्येवंशीलो दारुः। कथं द्यति तदिति दारु काष्ठम् । औणादिकः कर्मणि रुः । धयति धारुर्वत्सो मातरम् । सिनोति सेरुः । शीयते शद्रुः । सीदति सद्रुः । एभ्य इति किम् । दधातीत्येवंशीलो दधिर्गाः । दृधेग्रहणाद्दारूपमिह गृह्यते न संज्ञा ॥ ३६ ॥ शीङ्श्रद्धानिद्रातन्द्रादयिपतिगृहिस्पृहेरालुः ॥ ५ । २ । ३७ ॥ एभ्यः शीलादौ सत्यर्थे वर्तमानेभ्य आलुः प्रत्ययो भवति । शेते इत्येवंशीलः शयालुः । श्रत्पूर्वो धाग् श्रद्धत्ते श्रद्धालुः । निद्राति निद्रायति वा निद्रालुः । तत् द्राति द्रायति वा तन्द्रालुः । निपातनात्तदो दस्य नः । तन्द्रेति सौत्रो वा । दयते दयालुः । पतिगृहिस्पृहयोऽदन्ताश्चौरादिकाः । पतिगृही सौत्राविकारान्तौ वा । पतयति पतयालुः । गृहयति गृहयालुः । स्पृहयति स्पृहयालुः । मृगयतेरपि कश्चित् । मृगयालुः । लज्जालुः ईर्ष्यालुः शलालुप्रभृतयस्त्वौणादिकाः । कृपालुहृदयालू मत्वर्थीयान्तौ ॥ ३७ ॥ ङौ सासहिवावहिचाचलिपापति ॥ ५ । २ । ३८ ॥ शीलादौ सत्यर्थे वर्तमानानां सहिवहिचलिपतीनां यङन्तानां ङौ सति यथासंख्यमेते निपात्यन्ते । अत एव वचनात् ङिरपि । सासह्यते इत्येवंशीलः सासहिः । वावह्यते वावहिः । चाचल्यते चाचलिः । पनीपत्यते पापतिः । निपातनात् न्यागमाभावः । ङाविति ङकारः ' तृन्नुदन्ताव्ययक्स्वान '—(२-२-९० इत्यत्र विशेषणार्थः ॥ ३८ ॥ सस्रिचक्रिदधिजज्ञिनेमि ॥ ५ । २ । ३९ ॥ एते शीलादौ सत्यर्थे कृतद्विर्वचना ङिप्रत्ययान्ता निपात्यन्ते । सरतीत्येवंशीलः सस्रिः। करोति चक्रिः। दधाति दधिः। जायते जानाति वा जज्ञिः। नमति नेमिः। द्विर्वचनाभाव एत्वं च निपातनात् ॥३९॥ *शॄकमगमहनवृषभूस्थ उकण् ॥ ५ । २ । ४९ ॥ शीलादौ सत्यर्थे वर्तमानेभ्य एभ्य उकण् प्रत्ययो भवति । शृणातीत्येवंशीलः शारुकः । प्रशारुकः शरः । कामुकः । कामुकी रिरंसुः ।

॥—सन्भिक्षा—॥ गर्गादौ जिगीषुशब्दपाठात्सन्निति सन्प्रत्ययान्तस्य ग्रह । न भिक्षादिसाहचर्यात् सनतिसनोत्योर्द्धात्वो प्रत्ययाप्रत्ययमोरिति न्यायाद्वा इत्याह—सन्प्रत्ययान्तादिति ॥—शॄकमगम—

कामुका येच्छां विना कामयते । *कामुका अन्यस्य स्त्रियो भवन्ति । गामुकः । आगामुकः स्वगृहम् । वातुकः । आघातुको व्याधः । वर्षुकः मवर्षुकः पर्जन्यः । भावुकः । प्रभावुकः क्षत्रियः । स्थायुकः प्रमत्तः । उपस्थायुको गुरुम् । गुणानधिष्ठायुकः ॥ ४० ॥ लषपतपदः ॥ ५ । २ । ४१ ॥ शीलादौ सत्यर्थे वर्तमानेभ्य एभ्य उकण् प्रत्ययो भवति । अपलपतीत्येवंशीलमपलापुकं नीचसांगत्यम् । अभिलापुकः । उत्पातुकं ज्योतिः । प्रपातुका गर्भाः । उपपादुका देवाः । योगविभाग उत्तरार्थः ॥ ४१ ॥ *भूषाक्रोधार्थजुसृगृधिज्वलशुचश्चानः ॥ ५ । २ । ४२ ॥ भूषार्थेभ्यः क्रोधार्थेभ्यो जुसृगृधिज्वलशुचिभ्यः लषपतपदिभ्यश्च शीलादौ सत्यर्थे वर्तमानेभ्योऽनः प्रत्ययो भवति । भूषार्थे, भूषयतीत्येवंशीलो भूषणः कुलस्य । मण्डना गगनस्य भाः । प्रसाधनः । क्रोधार्थे, क्रोधनः । कोपनः । रोषणः । जवतिः सौत्रो 'वेगाख्ये संस्कारे वर्तते । तेन चलयर्थद्वारेण न सिध्यतीतीहोपादानम् । जवनः । सृ, सरणः । गृधू, गर्धनः । ज्वल् ज्वलनः । शुच, शोचनः । लप्, अभिलपणः । पत, पतनः । पदेरिदित्त्वादुत्तरेणैव सिद्धे सकर्मकार्थं वचनम् । अर्थस्य पदनः । ग्रन्थस्य पदनः । पदनः क्षेत्राणाम् । उत्तरत्र सकर्मकेभ्योपि विधिरित्येकेषां दर्शनम् । तथा चोकणा बाधितोऽपि असरूपत्वात्पदेरनः प्रत्ययो भविष्यतीति चेत् एवं तर्हि शीलादिप्रत्ययेष्वसरूपत्वेन शीलादिप्रत्ययो न भवतीति ज्ञापनार्थं पदिग्रहणम् । तेन चिकीर्षिता कटम् अलंकर्ता कन्यामिति न भवति । कथं तर्हि गन्ता खेलः आगामुकः भविता भावुकः जागरिता जागरूकः विकत्थनः विकत्थी भासनं भासुरम् वर्धनः वर्धिष्णुः अपलापुकः अपलापी कम्पना कम्प्रा शाखा कमना कामुका युवतिः । क्वचित्समावेशोऽपि भवति । एतदर्थमेव च ' न ण्यादि ' ( ५-२-४५ ) सूत्रे दीपिग्रहणम् । अन्यथा रेणानोऽस्य बाध्येत इति तदनर्थकं स्यात् । अनस्यैव विषये समावेश इत्येके ॥ ४२ ॥ चलशब्दार्थादकर्मकात् ॥ ५ । २ । ४३ ॥ चलनार्थाच्छब्दार्थाच्च धातोः शीलादौ सत्यर्थे वर्तमानादकर्मकादविद्यमानकर्मकादविवक्षितकर्मकाद्वा परोऽनः प्रत्ययो भवति । चलतीत्येवंशीलश्चलनः । कम्पनः । चोपनः । चेष्टनः । शब्दयतीत्येवंशीलः शब्दनः । रनणः । आक्रोशनः । अकर्मकादिति किम् । पठिता विद्याम् ॥ ४३ ॥ इङितो व्यञ्जनाद्यन्तात् ॥ ५ । २ । ४४ ॥ व्यञ्जनमादिरन्तश्च यस्य स व्यञ्जनाद्यन्तः । इदनुबन्धात् ङानुबन्धाच्च व्यञ्जनाद्यन्ताद्धातोः शीलादौ सत्यर्थे वर्तमानादनः प्रत्ययो भवति । इदित् स्पर्धि स्पर्धनः । ङित् वृतूङ् वर्तनः । वृधूङ् वर्धनः । णेरतश्च विषय एव लोपे व्यञ्जनान्तत्वात् इहापि भवति । चितिण् चेतनः । गुपि जुगुप्सनः । मानि मीमांसनः । इङित इति किम् । स्वप्ता । व्यञ्जनाद्यन्तादिति किम् । एधिता । शयिता । अकर्मकादित्येव । वसिता वस्त्रं, सेविता विषयान् । कथमुत्कण्ठावर्धनैरिति । नात्र कर्मषष्ठीसमासो वृधेरकर्मकत्वात् । किंतु तृतीयासमासः । उत्कण्ठया वर्धनैः वर्धमानोत्कण्ठाशीलैरिति

---

॥—कामुका अन्यस्येति । 'अकमेरुकस्य' इत्यत्र कमिवर्जनान्न षष्ठीनिषेध ॥—भूषाक्रोधार्थ—॥—वेगाख्ये इति । स्थितिस्थापकभावनादिभेदात्त्रिधा संस्कार । वेगाख्यस्तु चलनस्य हेतुरेव न तु चलनमित्यर्थ ॥—अपलापुक इति । निरुपसर्गस्य उकणश्चरितार्थत्वमतो न समानविषयता ॥—इङितो—॥—इहापि भवतीति । अन्यथाऽनेकस्वरात् 'निन्दाहिंस'—इति णक स्यात् ॥—जुगुप्सन इति । नन्वनाकारस्य विषयेऽपि लोपे सन्नन्तस्य ङित्त्वाभावादनो न प्राप्नोति । न । अत्र गुपे स्वार्थ एव सन् ततश्च गुपिलक्षणेऽनये कृत लिङ्ग समुदायस्यापि विशेषकमिति न्यायात् गुपिरेव

यावत् । अन्ये त्वकर्मकादेवेति नेच्छन्ति ॥ ४४ ॥ न णिङ्यसूददीपदीक्षः ॥ ५ । २ । ४५ ॥ णिङन्तेभ्यो यान्तेभ्यः सूदादिभ्यश्च धातुभ्यः शीलादौ सत्यर्थेऽनः प्रत्ययो न भवति । भावयिता । हस्तयिता । उत्पुच्छयिता । क्ष्मायिता । क्नूयिता । दायिता । सूदिता । दीपिता । दीक्षिता । मधुसूदनारिसूदनवलसूदनादयो नन्द्यादिषु द्रष्टव्याः ॥४५॥ *द्रमक्रमो यङः ॥५।२।४६॥ *शीलादौ सत्यर्थे वर्तमानाभ्यां यङन्ताभ्यां द्रमिक्रमिभ्यामनः प्रत्ययो भवति । कुटिलं द्रमति क्रामतीत्येवंशीलः दन्द्रमणः । चङ्क्रमणः । सकर्मकार्थं वचनम् । य इति प्रतिषेधनिवृत्त्यर्थं च । 'अतः' ( ४-३-८२ ) इति हि लुक् प्रत्यये *विषयभूतेऽपि भवति ॥४६॥ यजिजपिदंशिवदादूकः ॥ ५ । २ । ४७ । एभ्यो यङन्तेभ्यः शीलादौ सत्यर्थे वर्तमानेभ्य ऊकः प्रत्ययो भवति । भृशं पुनःपुनर्वा यजतीत्येवंशीलो यायजूकः । जंजपूकः । दन्दशूकः । वावदूकः । अन्येभ्योऽपीति केचित् । दंदहूकः । पापयूकः । निजागदूकः । नानशूकः । पंपशूकः ॥ ४७ ॥ *जागुः ॥ ५ । २ । ४८ ॥ शीलादौ सत्यर्थे वर्तमानाज्जागर्तेरूकः प्रत्ययो भवति । *यङ इति निवृत्तम् । जागर्तीत्येवंशीलो जागरूकः ॥ ४८ ॥ शमष्टकाद् घिनण् ॥ ५ । २ । ४९ ॥ शीलादौ सत्यर्थे वर्तमानेभ्यः शमादिभ्योऽष्टाभ्यो धातुभ्यो घिनण् प्रत्ययो भवति । शाम्यतीत्येवंशीलः शमी । दमी । तमी । श्रमी । भ्रमी । क्षमी । प्रमादी । उन्मादी । क्लमी । वन्नन्तान्मत्वर्थीयेन सिध्यति तन्वाधनार्थं तु वचनम् । अष्टकादिति किम् । असिता । णकारो वृद्ध्यर्थः। घकार उत्तरत्र कत्वगत्वार्थः। अभिधानात् घिनण् अकर्मकेभ्यस्तेनेह न भवति । अरण्यं भ्रमिता । सकर्मकेभ्यस्तु यथादर्शनं दर्शयिष्यामः ॥ ४९ ॥ युजभुजभजत्यजरञ्जद्विषदुषद्रुहदुहाभ्याहनः ॥ ५ । २ । ५० ॥ एभ्यः शीलादौ सत्यर्थे वर्तमानेभ्यो घिनण् भवति । युज्यते युनक्ति वा इत्येवंशीलो योगी । भुङ्क्ते भुनक्ति भुजतीति वा भोगी । भागी । कल्याणभागी । त्यागी । प्राणत्यागी । रागी । 'अकट्घिनोश्च रञ्जेः' ( ४-२-६० ) इति नलोपः । द्वेषी । दोषी । द्रोही । दोही । अभ्याघाती । अकर्मकादित्येव । गां दोग्धा । शत्रूनभ्याहन्ता ॥ ५० ॥ आङः क्रीडमुषः ॥ ५ । २ । ५१ ॥ शीलादौ सत्यर्थे वर्तमानाभ्यामाङः पराभ्यामाभ्यां घिनण् भवति । आक्रीडत इत्येवंशील आक्रीडी । आमोषी । शीलादिप्रत्ययान्ताः प्रायेण रूढिप्रकारा यथादर्शनं प्रयुज्यन्त इति उपसर्गान्तराधिक्ये न भवति । एवमुत्तरत्रापि ॥ ५१ ॥

---

द्रष्टव्य । ननु तथापि सन्नन्तत्वात् 'सनूभिक्ष'—इत्यादिना उ प्रत्यय प्राप्नोति । नैवम् । विपर्यव्याख्यानात् । यद्यकारलोपेऽपि उ प्रत्ययस्तदा विपर्यव्याख्याफल न ॥—न णिङ्य— ॥—भावयितेति । अत्रानेकस्वरत्वात् णकविपये णिलोपात् व्यञ्जनान्तत्वात् अन प्राप्त प्रतिषिध्यते । तत इटि सति 'णेरनिटि' इत्युक्ते पुनर्विवर्त्तते । एव हस्तयितेत्यादौ भावना ॥—द्रमक्रमो—॥—सकर्मकार्थमिति । 'इटित' इत्यनेन तु अकर्म्मकाद्विहित ॥—प्रतिषेधनिवृत्त्यर्थमिति । ननु यदि सकर्म्मकार्थमारम्भस्तदा न विधेय । यतोऽविवक्षितकर्मकाभ्यामाभ्याम् 'इटित' इत्यनेन भविष्यतीत्याह ॥—य इतीति । ननु यङोऽकारान्तत्वात् कथ यान्तत्वमित्याह—अत इतीति ॥—विपयभूतेऽपीति । अनेकस्वरत्वाणकस्य ॥ ॥—जागुः ॥—यट इति निवृत्तमिति । अनेकस्वरत्वेनासभवात् ॥—आङः क्रीडमुषः ॥—शीलादिप्रत्ययान्ता इति । ननु पूर्वे आङ्यमाङ्यसाङ्मुपाक्रीडेति पठित्वा घिनणमाहुस्तेषा विशिष्टस्वरूपोपादानान् नोपसर्गान्तराधिक्ये भवति । इह तु आङ पराभ्यामित्युच्यमाने उपात्तोपसर्गात्पूर्वमन्यस्मिन्नुपसर्गे सत्यपि व्यवधानाभावात् तत परत्वस्य सभवादुपसर्गान्तराधिक्येऽपि

*प्राच यमयसः॥५।२।५२॥ शीलादौ सत्यर्थे वर्तमानाभ्यां प्रादाङश्च पराभ्यामाभ्यां घिनण् भवति । प्रयच्छतीत्येवंशीलः प्रयामी । आयामी । प्रयासी । आयासी
॥ ५२ ॥ मथलपः ॥५।२।५३॥ प्रात्पराभ्यामाभ्यां शीलादौ सत्यर्थे वर्तमानाभ्यां घिनण् भवति । प्रमथतीत्येवंशीलः प्रमाथी । प्रलापी ॥ ५३ ॥ वेश्च द्रोः ॥ ५ ।
२ । ५४ । वेः प्राच्च पराच्छीलादौ सत्यर्थे वर्तमानाद् द्रवतेर्घिनण् भवति । विद्रवतीत्येवंशीलो विद्रावी । प्रद्रावी ॥ ५४ ॥ विपरिप्रात्सर्त्तेः ॥ ५ । २ । ५५ ॥
विपरिप्रेभ्यः पराच्छीलादौ सत्यर्थे वर्तमानात्सर्तेर्घिनण् भवति । विसरतीत्येवंशीलो विसारी । परिसारी । प्रसारी ॥ ५५ ॥ समः पृचैपृज्वरेः ॥ ५ । २ । ५६ ॥
शीलादौ सत्यर्थे वर्तमानाभ्यां समः पराभ्यां पृणक्तिज्वरिभ्यां घिनण् भवति । संपृणक्तीत्येवंशीलः संपर्की । पिन्निर्देशादादादिकस्य न ग्रहणम् । संपचिता । संज्वरती-
त्येवंशीलः संज्वारी । केचिद् ण्यन्तादपीच्छन्ति । संज्वरी । त्वरयतेरपि कश्चित् । संत्वरी । अकर्मकादित्येव । संपृणक्ति शाकम् ॥ ५६ ॥ संवेः सृजः ॥ ५ । २ ।
५६ ॥ शीलादौ सत्यर्थे वर्तमानात् संविभ्यां परात्सृजेर्घिनण् भवति । संसृजतीत्येवंशील. संसृज्यते वा संसर्गी । विसर्गी ॥ ५७ ॥ संपरिव्यनुप्राद्वदः ॥ ५ ।
२ । ५८ ॥ शीलादौ सत्यर्थे वर्तमानात्संपरिव्यनुप्रेभ्य· पराद्वदेर्घिनण् भवति । संवदतीत्येवंशीलः संवादी । परिवादी । विवादी । अनुवादी । प्रवादी । परिपूर्वा-
ण्ण्यन्तादपीति केचित् ॥ ५८ ॥ वेर्विचकत्थस्रम्भूकषकसलसहनः ॥ ५ । २ । ५९ ॥ एभ्यो विपूर्वेभ्य शीलादौ सत्यर्थे वर्तमानेभ्यो घिनण् भवति ।
विविनक्ति इत्येवंशीलो विवेकी । विकत्थी । विस्रम्भी । विकाषी । विकासी । विलासी । विघाती ॥ ५९ ॥ व्यपाभेर्लषः ॥ ५ । २ । ६० ॥ व्यपाभिभ्य
पराच्छीलादौ सत्यर्थे वर्तमानाल्लपेर्घिनण् भवति । विलपतीत्येवंशीलो विलापी । अपलापी । अभिलापी ॥ ६० ॥ संप्राद्वसात् ॥ ५ । २ । ६१ ॥ संप्राभ्या
पराच्छीलादौ सत्यर्थे वर्तमानाद्वसतेर्घिनण् भवति । संवसतीत्येवंशील संवासी । प्रवासी । शव्निर्देशाद्वस्तेर्न भवति ॥ ६१ ॥ समत्यपाभिव्यभेश्चरः ॥ ५ ।
२ । ६२ ॥ सम् अति अप अभि व्यभि इत्येतेभ्य पराच्छीलादौ सत्यर्थे वर्तमानाच्चरेर्घिनण् भवति । संचरतीत्येवंशीलः संचारी । अतिचारी । अपचारी । अभि-
चारी । व्यभिचारी ॥ ६२ ॥ समनुव्यवाद्रुधः ॥ ५ । २ । ६३ ॥ सम् अनु वि अव इत्येभ्य पराच्छीलादौ सत्यर्थे वर्तमानात् रुधेर्घिनण् भवति । संरुन्धे
इत्येवंशीलः संरोधी । अनुरोधी । विरोधी । अवरोधी ॥ ६३ ॥ वेर्दहः ॥ ५ । २ । ६४ ॥ विपूर्वाच्छीलादौ सत्यर्थे वर्तमानाद् दहेर्घिनण् भवति । विदहती-
त्येवंशीलो विदाही ॥ ६४ ॥ [1]परेर्देविमुहश्च ॥ ५ । २ । ६५ ॥ देवीति देवृधातोरण्यन्तस्य ण्यन्तस्य च ग्रहणम् । परिपूर्वाभ्यां शीलादौ सत्यर्थे वर्तमानाभ्या-
माभ्यां दहश्च घिनण् भवति । परिदेवयते परिदेवयति वा परिदेवी । ण्यन्तान्नेच्छन्त्यन्ये । परिमोही । परिदाही ॥ ६५ ॥ क्षिपरटः ॥ ५ । २ । ६६ ॥ परिपूर्वा-

भवतीत्याह—शीलादिप्रत्ययान्ता इत्यादि । शीलधर्मसाधुषु अर्थेषु ये प्रत्ययास्तदन्ता इमे प्रायेण रूढिशब्दप्रकारा यथा रूढिशब्दा रूढिविषय एव प्रवर्त्तन्ते तत्र च नियतरूपास्तथा इमेऽपि ये यथा प्रयोगे दृश्यन्ते यद्यदुपसर्गा सोपसर्गा अनुपसर्गा वा ते तथैव प्रयोगानुसारेण प्रयोक्तव्या । तथाहि—कामुक इति अनुपसर्ग एव प्रयुज्यते न सोपसर्ग । एवमागामुक इति आङुपसर्गपूर्व एव न त्वनुपसर्गोऽन्योपसर्गपूर्वो वा इत्येवमन्यदपि द्रष्टव्यमिति नोपसर्गान्तराधिक्ये भवति ॥-प्राच यम-॥ यथासख्य यद्यभिप्रेत स्यात्तदा प्राङ इति क्रियेत ॥--परेर्देवि—॥ —देवृधातोरिति ।

भ्यामभ्यां शीलादौ सत्यर्थे वर्तमानाभ्यां घिनण् प्रत्ययो भवति । परिक्षिप्यति परिक्षिपति वा परिक्षेपी । परिक्षेप्यम्भसाम् । परिराटी ॥ ६६ ॥ **वादेश्च णकः ॥ ५ । २ ॥ ६७ ॥** परिपूर्वाच्छीलादौ सत्यर्थे वर्तमानाद्वादयतेः क्षिपरटिभ्यां च णकः प्रत्ययो भवति । परिवादयतीत्येवंशीलः परिवादकः । वदेरपि केचित् । परिक्षेपकः । परिराटकः । असरूपत्वात् 'णकतृचौ' ( ५-१-४-८ ) इति सिद्धे पुनर्विधानं शीलादिप्रत्ययेष्वशीलादिकृत्प्रत्ययोऽसरूपविधिना न भवतीति ज्ञापनार्थम् । तेनालंकारकः परिक्षिपः परिरट इत्यादिशीलाद्यर्थे न भवति । बाहुलकात् क्वचिद्भवत्यपि । कामक्रोधौ मनुष्याणां खादितारौ वृकाविव । अत्र णकविषये तृच् ॥ ६७ ॥ **"निन्दहिंसक्लिशखादविनाशिव्याभाषासूयानेकस्वरात् ॥ ५ । २ । ६८ ॥** एभ्यः शीलादौ सत्यर्थे वर्तमानेभ्यो णको भवति । निन्दतीत्येवंशीलो निन्दकः । हिंसकः । क्लिश्नाति क्लिश्यते वा क्लेशकः । खादकः । विनाशयति विनाशकः । व्याभाषकः । असूय' कण्ड्वादौ असूयकः । दरिद्रायकः। चकासकः । गणकः । चुलुम्पकः । अनेकस्वरत्वादेव सिद्धेऽसूयग्रहणं कण्ड्वादिनिवृत्त्यर्थम् । तेन कण्डूयिता मन्तूयिता । तृन्नेव । विनाशिग्रहणं तु अन्यस्य ण्यन्तस्य निवृत्त्यर्थम् । कारयिता । अनेकस्वरान्नेच्छन्त्यन्ये । क्लिशेरविशेषेण ग्रहणाद्दैनादिकादिदित्त्वेऽपि अनो न भवति ॥ ६८ ॥ **"उपसर्गाद्देवृदेविक्रुशः ॥ ५ । २ । ६९ ॥** उपसर्गात्परेभ्यः शीलादौ सत्यर्थे वर्तमानेभ्य एभ्यो णको भवति । आदेवत इत्येवंशील आदेवकः । परिदेवकः। देवीति दीव्यतेर्देवतेर्वा ण्यन्तस्य ग्रहणम् । आदेवयतीति आदेवकः । परिदेवकः । आक्रोशक' । परिक्रोशकः । उपसर्गादिति किम् । देवनः । देवयिता । क्रोष्टा । देवतेर्ण्यन्तादेवेति कश्चित् ॥ ६९ ॥ **वृङ्भिक्षिलुण्टिजल्पिकुट्टाट्टाकः ॥ ५ । २ । ७० ।** एभ्य' शीलादौ सत्यर्थे वर्तमानेभ्यष्टाकः प्रत्ययो भवति। वृणीते इत्येवंशीलो वराक । वराकी । भिक्षाकः। भिक्षाकी। लुण्टाकः । लुण्टाकी । जल्पाकः । जल्पाकी । कुट्टाक । कुट्टाकी । टकारो ङ्यर्थः ॥७०॥ **प्रात्सूजोरिन् ॥ ५ । २ । ७१ ॥** प्रात् पराभ्यां सुवतिजुभ्या शीलादौ सत्यर्थे वर्तमानाभ्यामिन् प्रत्ययो भवति । सू इति निरनुबन्धग्रहणात्सुवतेर्ग्रहणम् न सूतिसूयत्योः । प्रसुवतीत्येवंशील प्रसवी । प्रजवी ॥ ७१ ॥ **जीण्दृक्षिविश्रिपरिभूवमाभ्यमाव्यथः ॥ ५ । २ । ७२ ॥** एभ्यः शीलादौ सत्यर्थे वर्तमानेभ्य इन् भवति । जि जयतीत्येवंशीलो जयी । इण् , अत्ययी । उदयी । दृ आदरी । क्षीति ' क्षिक्षितोर्ग्रहणम् । क्षयी । विश्रि, विश्रयी । परिभू , परिभवी । वम् वमी । अभ्यम् अभ्यमी । अव्यथ् न व्यथते इत्यव्यथी ॥ ७२ ॥ **सृघस्यदो मरक् ॥ ५ । २ । ७३ ॥** एभ्यः शीलादौ सत्यर्थे वर्तमानेभ्यो मरक् प्रत्ययो भवति । सरतीत्येवंशील. सृमरः । घस्मरः । अद्मरः ॥ ७३ ॥ **भञ्जिभासिमिदो घुरः ॥ ५ । २ । ७४ ॥** एभ्यः शीलादौ सत्यर्थे वर्तमानेभ्यो घुरः प्रत्ययो भवति ।

---

लाक्षणिकत्वात् दीव्यतेर्ण्यन्तस्य न ग्रहणम् ॥—निन्दहिंस—॥—अन्यस्य ण्यन्तस्येति । कथ तर्हि गणक । अतोऽ व्याख्यान कर्त्तव्य यत् विनाशीति णिगन्तस्योपादान करोति तत् ज्ञापयति अन्यस्यापि णिगन्तस्य वर्जन तेन णिजन्तस्य भवत्येव ॥—उपसर्गाद्देवृ—॥—ण्यन्तस्य ग्रहणमिति । लक्षणप्रतिपदोक्तस्य न्यायस्यानित्यत्वात् । अथवा भिन्नदेवृग्रहणात् । अन्यथा देवग्रहणमेव कुर्यात् ॥—जीण्दृक्षि—॥—क्षिक्षितोरिति । क्षिप्रश् इत्यस्य तु सानुबन्धत्वान्न ग्रह ॥—भञ्जिभासि—॥ 'व्याप्ये घुरकेलिम'—इति

अशीति वर्तते ... गत्वार्थः ॥ ७४ ॥ वेत्तिच्छिद्भिदः कित् ॥ ५ । २ । ७५ ॥
'भज्यते स्वयमेवेत्येवंशीलं भङ्गुरं काष्ठम् । भासते भासुरं वपुः । मेद्यति मेदते वा मेदुरः । घकारो गत्वार्थः ॥ ७४ ॥ वेत्तिच्छिद्भिदः कित् ॥ ५ । २ । ७५ ॥ वेत्तीति

एभ्यः शीलादौ सत्यर्थे वर्तमानेभ्यः किद् घुरः प्रत्ययो भवति । वेत्तीत्येवंशीलो विदुरः । छिद्यते भिद्यते स्वयमेव छिदुरः भिदुरः । कित्त्वाद्गुणो न भवति । वेत्तीति

तिव्निर्देश इतरविदित्रयव्युदासार्थः ॥ ७५ ॥ भियो रुरुकलुकम् ॥ ५ । २ । ७६ ॥ शीलादौ सत्यर्थे वर्तमानाद्भियो रुरुकलुक इति प्रत्ययत्रयं किद्भवति ।

बिभेतीत्येवंशीलो भीरुः । भीरुकः । भीलुकः । ऋफिडादित्वात् लत्वं प्रयोगानुसारणाद्वरीय इति लाघवार्थं लुकवचनम् ॥ ७६ ॥ सृजीण्नशष्ट्वरप् ॥

५ । २ । ७७ ॥ एभ्यः शीलादौ सत्यर्थे वर्तमानेभ्यः कित् ट्वरप् प्रत्ययो भवति । सरतीत्येवंशीलः सृत्वरः । सृत्वरी । जित्वरः । जित्वरी । इण् इत्वरः ।

इत्वरी । क्रूरकर्मणि पथिके नीचे दुर्विधे । नश्वरः । नश्वरी । टकारो ङ्यर्थः । पकारस्तागमार्थः ॥ ७७ ॥ गत्वरः ॥ ५ । २ । ७८ ॥ गमेट्वरप् मकारस्य च

तकारो निपात्यते । गत्वरः । गत्वरी ॥ ७८ ॥ *स्म्यजसहिंसदीपकम्पकमनमो रः ॥ ५ । २ । ७९ ॥ स्म्यादिभ्यः शीलादौ सत्यर्थे वर्तमानेभ्यो रः प्रत्ययो

भवति । स्मयत इत्येवंशीलं स्मेरं मुखम् । अजस्रमिति 'जसूच् मोक्षणे नञ्पूर्वः । न जस्यति अजस्रं श्रवणम् । अजस्रा प्रवृत्तिः । अजस्रः पाकः । अजस्रं पचति ।

अजस्रशब्दोऽयं स्वभावात्सातत्यविशिष्टां क्रियामाह । तेन 'धात्वर्थ एव कर्तरि र प्रत्ययोऽन्यथा क्रियाभिधानानुपपत्तेः । तेनाजस्रो घट इति न भवति । अजस्रमि-

त्यव्ययमपि नित्यार्थं क्रियाविशेषणमस्ति । हिंस् हिंस्रो व्याधः । दीप् दीप्रो दीपः । कम्प् कम्प्रः । कम् कामयते कम्रा युवतिः बहुलाधिकारात् कर्मण्यपि । कम्यते

कम्रः । तत एव कमितेत्यपि । नम्, नमतीति नम्रः । अजासिकामिनमिभ्य कर्मकर्तर्येवेच्छन्त्येके ॥ ७९ ॥ तृषिधृषिस्वपो नजिङ् ॥ ५ । २ । ८० ॥

तृषिधृषिस्वपिभ्य. शीलादौ सत्यर्थे वर्तमानेभ्यो नजिङ् प्रत्ययो भवति । तृष्यतीत्येवंशीलस्तृष्णक् । तृष्णजौ । धृष्णक् । धृष्णजौ । स्वप्नक् ।

स्वप्नजौ । ङकारो गुणप्रतिषेधार्थः । इकार उच्चारणार्थः । धृषो नेच्छन्त्येके ॥ ८० ॥ स्थेशभासपिसकसो वरः ॥ ५ । २ । ८१ ॥ स्थादिभ्यः

शीलादौ सत्यर्थे वर्तमानेभ्यो वरः प्रत्ययो भवति । तिष्ठतीत्येवंशीलः स्थावरः । स्थावरा । ईश्वरः । ईश्वरा । कथमीश्वरी । 'अश्नोरीचादे'

इत्यौणादिके वरटि भवति । भास्वरः । भास्वरा । पेस्वरः । पेस्वरा । विकस्वरः । विकस्वरा । प्रमदेरपीति कश्चित् । प्रमाद्यति प्रमद्वरः ॥ ८१ ॥

'यायावरः ॥ ५ । २ । ८२ ॥ यातेर्धातोः शीलादौ सत्यर्थे वर्तमानाद्यङन्ताद् वर प्रत्ययो निपात्यते । कुटिलं यातीत्येवंशीलो 'यायावरः ॥ ८२ ॥ *दिद्यु-

द्दृदज्जगज्जुहूवाक्प्राड्धीश्रीद्रूस्रूज्वायतस्तूकटप्रूपरिव्राड्भ्राजादयः क्विपः ॥ ५ । २ । ८३ ॥ एते शब्दाः क्विबन्ताः शीलादौ सत्यर्थे निपात्यन्ते । द्योतते

---

घुरप्रत्ययस्य कर्तरि विधानादित्याह—भज्यते स्वयमेवेत्यादि । भासिमिदिविदां तु कर्तर्येव घुरोऽकर्मकत्वेन कर्मकर्तुरसम्भवात् ॥—स्म्यजस—॥—जसूच् मोक्षणे इति । अन्येषामणि-

जन्ताना साहचर्याच्चुरादिणिजन्तो न गृह्यते ॥—धात्वर्थ एव कर्तरीति । अन्यस्य धातोरर्थ इत्यर्थ । यथाऽजस्र. पाक इत्यत्र पचिधातो पाकलक्षणेऽर्थे ॥—यायावर —॥ यायावरो गत्वर

आचार्यो वा । तस्य च्छात्रा यायावरीया इति प्रसिद्धि. ॥—यायावर इति । 'य्वो '-इति यलुप् । 'योऽशिति' इति न व्यञ्जनादित्यधिकारात् ॥—दिद्युद्दृदत्—॥

इत्येवंशीलो दिद्युत् । दिद्युतौ । दृणातीति दद्दृत् । दद्दृतौ । गच्छतीति *जगत् । जुहोतीति जुहूः । एषु द्वित्वम् । दृणातिजुहोत्योर्ह्रस्वत्वदीर्घत्वे च । वक्तीति वाक् । पृच्छतीति प्राट् । प्राशौ । शब्दप्राट् । तत्त्वप्राट् । दधाति ध्यायति वा धीः । श्रयतीति श्रीः । शतं द्रवतीति शतद्रूः स्रवतीति स्रूः । जवतीति जूः । आयतं स्तौतीति आयतस्तूः । कटं प्रवते कटप्रूः । परिव्रजतीति परिव्राट् । परिव्राजौ । एषु दीर्घत्वम् । दधातेराकारस्य ध्यायतेर्याशब्दस्य चेकारः । बहुलाधिकारादशीलादौ अपि । धीः । सुधीः । प्रधीः । आधीः ।भ्राजादि, विभ्राजत इति विभ्राट् । विभ्राजौ । भासत इति भाः । भासौ । भासः । पिपर्त्तीति *पूः । पुरौ । पुरः । धूर्वतीति धूः धुरौ । धुरः । विद्योतते विद्युत् । विद्युतौ । ऊर्जयतीति ऊर्क् । ऊर्जौ । ऊर्जः । ग्रावाणं स्तौति ग्रावस्तुत् । ग्रावस्तुतौ । पचतीति पक् । शक्नोतीति शक् । भिनत्तीति भित् । वेत्तीति वित् । शोकच्छित् । 'भुवः संज्ञायामेव' । भूः पृथिवी । शंभूः शिवः । आत्मभूः कामः । मनोभूः स एव । स्वयंभूर्ब्रह्मा । स्वभूर्विष्णुश्च । मित्रभूर्नाम कश्चित् । प्रतिभूः उत्तमर्णाधमर्णयोरन्तरस्थः । द्रन्भूः व्यसनसहाय । कारभूः पण्यमूल्यादिनिर्णेता । वर्षाभूर्दर्दुर औषधिश्च । पुनर्भूः पुनरूढा औषधिश्च संज्ञायाम् । अन्यत्र, भविता । *शीलादिषु असरूपविधिर्नास्ति । तेन *सामान्यलक्षणः क्विप् न प्राप्नोतीति पुनर्विधीयते । शीलादिप्रत्ययानां पूर्णोऽवधिः । केचित्तु संज्ञाशब्दानां शीलाद्यर्थेषु कामचारस्ते यथाकथंचिद्व्युत्पादनीया इति मन्यन्ते ॥ ८३ ॥ शंसंस्वयंविप्राद्भुवो डुः ॥ ५ । २ । ८४ ॥ एभ्यः पराद्भुवः सत्यर्थे वर्तमानाड्डुः प्रत्ययो भवति । शं सुखं तत्र भवति शंभुः शंकरः । संभुर्जनिता । स्वयंभुः । विभुः व्यापकः । प्रभुः स्वामी । बहुलाधिकारात् शंभुः संज्ञायाम् । अन्ये त्वसंज्ञायामपि । मिताद्र्वादयस्त्वौणादिका ॥ ८४ ॥ पुव इत्रो दैवते ॥ ५ । २ । ८५ ॥ सामान्यनिर्देशात्पवतेः पुनातेश्च दैवते देवतायां कर्तरि सत्यर्थे इत्रः प्रत्ययो भवति । पुनाति पवते वा पवित्रोऽर्हन् स मां पुनातु । करणेऽप्यन्ये ॥ ८५ ॥ *ऋषिनाम्नोः करणे ॥ ५ । २ । ८६ ॥ सत्यर्थे वर्तमानात्पुवः करणे इत्रो भवति ऋषौ संज्ञायां च । पूयतेऽनेनेति पवित्रोऽयमृषिः । नाम्नि, दर्भः पवित्रः । बर्हिः पवित्रम् । यज्ञोपवीतं पवित्रम् ।* ओघोपकरणं पवित्रम् । पवित्रा नदी । दर्भादीनां पवित्रमिति संज्ञा । ऋषौ कर्तर्यपि केचित् ॥ ८६ ॥ लूधूसूखनचरसहार्तेः ॥ ५ । २ । ८७ ॥ एभ्यः सत्यर्थे वर्तमानेभ्यः करणे इत्रो भवति । लुनात्यनेन लवित्रम् । धुवत्यनेन धुवित्रम् । धूनोतेरपि कश्चित् । धवित्रम् । सुवत्यनेन सवित्रम् । निरनुबन्धनिर्देशात् षूङ्सूङोर्न भवति । खनित्रम् । चरित्रम् । सहित्रम् । ऋच्छतीयर्ति वानेनारित्रम् । वहेरपि कश्चित् । वहित्रम् ॥ ८७ ॥ नीदाव्शसू-

---

—जगदिति क्रियाशब्दोऽय तेन जगतौ जगत इति ॥ विष्टपवाचकस्तु गमेर्डिद्द्वे चेति साधुस्तस्य च जगती जगन्तीति द्विवचनबहुवचने सति भवत ॥—वाक् इति । निपातनात् कर्मण्यपि ॥—पूरिति । पिपर्त्तीति पृश् इत्यस्य धात्वन्तरेण वाक्य तच्चार्थकथनमेव । पृणातीत्येवशीला इति तु कार्यम् ॥—शीलादिष्विति । ननु तृन्नादीना पक्षेऽसरूपत्वात् सामान्यक्विप् भविष्यति किमनेनेत्याह—असरूपविधिर्नास्तीति ॥—सामान्यलक्षणः क्विविति । भ्राजादिभ्य इति शेष । दिद्युदादयस्तु निपातनीया एवाऽनेन सूत्रेण तेषां 'क्विप्' इत्यनेन सिद्ध्यऽभावात् ॥—ऋषिनाम्नोः ॥—ओघोपकरणमिति । वहति प्रापयति निरवद्यां सर्वसावद्यविरतीमिति अचि 'न्यङ्क्वद्र'–इति साधु । यद्वा उङ् शब्दे ऊयते शब्द्यते उपादेयतया लोकोत्तरे मघाघेति घ

युयुजस्तुतुदासिसिचमिहपतपानहस्त्रट् ॥ ५ । २ । ८७ । एभ्यः सत्यर्थे वर्तमानेभ्यः करणे त्रट् प्रत्ययो भवति । नयन्त्यनेन नेत्रम् । दाव् दान्त्यनेन दात्रम् ।
शम् शस्त्रम् । यु योत्रम् । युज् योक्त्रम् । स्तु स्तोत्रम् । तुद् तोत्रम् । सि सेत्रम् । सिच् सेक्त्रम् । मिह मेढ्रम् । पत् पत्त्रम् । पा, पात्रम् । पात्री । नह, नद्ध्रः । नद्ध्री ।
टकारो ङ्यर्थः ॥८८॥ हलक्रोडास्ये पुवः ॥५।२।८९॥ आस्यं मुखम् । पुवो धातो सत्यर्थे हलास्ये क्रोडास्ये च करणे त्रट् प्रत्ययो भवति । पुनाति पवते वाऽनेन
पोत्रम् । हलस्य सूकरस्य च मुखमुच्यते ॥ ८९ ॥ दंशेस्त्रः ॥ ५ । २ । ९० ॥ दंशेः सत्यर्थे वर्तमानात्करणे त्र प्रत्ययो भवति । दशत्यनया दंष्ट्रा ।
प्रत्ययान्तरकरणमावर्थम् ॥ ९० ॥ धात्री ॥ ५ । २ । ९१ ॥ ट्धेर्देधातेर्वा कर्मणि त्रट् प्रत्ययो निपात्यते । धयन्ति तामिति धात्री स्तनदायिनी । दधति तां
भैषज्यार्थमिति धात्री आमलकी ॥ ९१ ॥ *ज्ञानेच्छार्चार्थजीच्छील्यादिभ्यः क्तः ॥ ५ । २ । ९२ ॥ ज्ञानार्थेभ्य इच्छार्थेभ्योऽर्चा पूजा तदर्थेभ्यो जीद्भ्यः
शीलादिभ्यश्च धातुभ्यः सत्यर्थे वर्तमानेभ्यः क्तः प्रत्ययो भवति । *पूर्ववच्चास्य कर्तृकर्माद्यर्थनिर्देशः । ज्ञानार्थे, राज्ञां ज्ञातः । राज्ञां बुद्धः । राज्ञां विदितः ।
राज्ञामगवत । इच्छार्थे, राज्ञामिष्टः । राज्ञां मतः । अर्चार्थे, राज्ञामर्चितः । राज्ञां पूजितः । जित् ञिमिदा मिन्नः । क्ष्विण्णः । स्विन्न । धृष्टः । तूर्णः । सुप्त ।
भीतः । इद्ध । तृपित । फुल्ल । शील्यादि, शीलितो रक्षित क्षान्त आक्रुष्टो जुष्ट उद्यत ॥ संयतः शयितस्तुष्टो रुष्टो रुपित आशितः ॥ १ ॥ कान्तोऽभिव्याहृतो
हृष्टस्तृप्त सुप्तः स्थितो भृतः ॥ अमृतो मुदितः पूर्तः शक्तोऽक्तः श्रान्तविस्मितौ ॥ २ ॥ संरब्धारब्धदयिता दिग्धः स्निग्धोऽवतीर्णक ॥ आरूढो मूढ आयस्तः
क्षुधितक्लान्तव्रीडिता ॥ ३ ॥ मत्तश्चैव तथा क्रुद्धः श्लिष्टः सुहित इत्यपि ॥ लिप्तदृप्तौ च विज्ञेयौ सति लग्नादयस्तथा ॥ ४ ॥ बहुलाधिकाराद्यथाभिधानमेभ्यो भूतेऽपि
क्तो भवति । तथा च तद्योगे तृतीयासमासोऽपि सिद्धः 'अर्हद्भ्यस्त्रिभुवनराजपूजितेभ्यः' इति । एवं शीलितो मैत्रेण रक्षितो मैत्रेणाक्रुष्टश्चैत्रेणेत्यादावपि द्रष्टव्यम् ।
वर्तमानक्ते तु षष्ठ्येव, कान्तो हरिश्चन्द्र इव प्रजानामिति । अन्ये तु ज्ञानाद्यर्थेभ्यः तक्रकौण्डिन्यन्यायेन भूत क्तस्य बाधनात् वर्तमानक्तेन
च योगे कर्तरि षष्ठीविधानात् त्वया ज्ञातो मया ज्ञात इत्यादिरपशब्द इति मन्यन्ते ॥ ९२ ॥ उणादयः ॥ ५ । २ । ९३ ॥
बहुलमिति वर्तते । सत्यर्थे वर्तमानाद्धातोरुणादय प्रत्यया बहुलं भवन्ति । करोतीति कारुः । वायुः । पायु । बहुलवचनात्
प्रायः संज्ञाशब्दाः केचित्त्वसंज्ञाशब्दा इति अनुक्ता अपि प्रत्यया भवन्ति । ऋफिडः । ऋफिड्डः । तथा सति विहिता उणादयः क्वचिद्भूतेऽपि
दृश्यन्ते । भासितं तदिति भस्म । कषितोऽसौ कषिः । ततोऽसौ तनिः । वृत्तं तदिति वर्त्म । चरितं तदिति चर्म । अद्भ्यः सरन्ति स्म अप्सरसः । उक्तं च–' संज्ञासु
धातुरूपाणि प्रत्ययाश्च ततः परे ॥ कार्यानुबन्धोपपदं विज्ञातव्यमुणादिषु ॥१॥ तथा–बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम् ॥ *कार्यसशेषविधेश्च तदुक्त

॥—ज्ञानेच्छार्चार्थ— ॥—पूर्ववच्चास्येति । कर्त्तरि कर्म्मणि भावे च यथा यस्य प्रत्ययोऽभिहितस्तस्य तथैव केवल वर्त्तमानकाल एव । ननु 'गत्यर्थ'–इति 'क्तक्तवतू' इत्यनेन च सामान्येन
विधानादमीषामपि सिद्धौ इत्याह—तक्रकौण्डिन्यन्यायेनेति ॥—उणादयः ॥—प्रायसमुच्चयनादपीति । प्रायेण अकृत्स्नबहुत्वेन समुच्चयन राशीकरणम् ॥—कार्यसशेषविधेश्चेति । काक

"नैगम"रूढिभवं हि सुसाधु॥२॥ "नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ॥ यत्"न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥३॥ इति ॥९३॥

॥ ओँ ॥

# ॥ उणादिविवृतिः ॥

श्रीसिद्धहेमचन्द्रव्याकरणनिवेशिनामुणादीनाम् ॥ आचार्यहेमचन्द्रः करोति विवृतिं प्रणम्यार्हम् ॥ १ ॥

**कृवापाजिस्वदिसाध्यशौदृस्नासनिजानिरहीण्भ्य उण् ॥ १ ॥** करोत्यादिभ्यो धातुभ्यः सत्यर्थे वर्तमानेभ्यः संप्रदानापादानाभ्यामन्यत्र कारके भावे च संज्ञायां विषये बहुलमुण् प्रत्ययो भवति। डु कृंग् करणे, कृंगूट् हिसायां वा निरनुबन्धग्रहणे सामान्यग्रहणात् । करोति करति कृणोति वा कारुः कारी नापितादिः इन्द्रश्च। वांक् गतिगन्धनयोः, पै ओ वै शोषणे वा। वाति वायति वा द्रव्याणि वायुः नभस्वान् । पां पाने। पिबन्त्यनेन तैलादि द्रव्यं पायुः अपानमुपस्थश्च। पातिपायत्योस्त्वर्थासंगतेर्न ग्रहणम्। जिं अभिभवे । जयत्यनेन रोगान् श्लेष्माणं वा जायुः औषधं पित्तं वा। ष्वदिं आस्वादने। स्वद्यते इदमनेन वा स्वादुः रुच्यः । स्वदनं वा स्वादुः । साधंट् संसिद्धौ। उत्तमक्षमादिभिः तपोविशेषैर्भावितात्मा साध्नोति साधुः। सम्यग्दर्शनादिभिः परमपदं साधयति वा साधुः संयतः। उभयलोकफलं वा साधयति साधुः धर्मशीलः। अशौटि व्याप्तौ । अश्नुते तेजसा सर्वं केदारं ना इत्याशुः सूर्यो व्रीहिश्च। अशनं वा आशु क्षिप्रम्। अश्नुते इति वा आशुः शीघ्रगामी शीघ्रकारी च। दॄ भये, दॄश् विदारणे वा। दरति दृणाति दीर्यते वा दारु काष्ठम् भव्यं च । ष्णै वेष्टने। स्नायति स्नायुः अस्थिनहनम्। पण भक्तौ, पणूयी दाने वा। सनाति सनोति वा मृगादीनिति सानु पर्वतैकदेशः। जनैचि प्रादुर्भावे। जायतेऽनेनाकुञ्चनादि जानु ऊरुजङ्घासंधिमण्डलम् । जानीत्याकारानिर्देशात् 'न जनवधः' इति प्रतिषिद्धापि वृद्धिर्भवति । रह त्यागे । रहति गृहीत्वा सूर्याचन्द्रमसौ स्वशरीरं वा राहुः सैंहिकेयः। इंण्क् गतौ। एत्यायुः पुरुषः शकटम् औषधम् जीवनम् पुरूरवःपुत्रो वा। जरायुः गर्भवेष्टनम् जलमलम् वा। जटायुः पक्षी। धनायुः देश.।

---

इत्यादिसिद्ध्यर्थं सूत्रान्तरं न प्रारेभे इति सशेषविधित्वम् ॥—नैगमेति। निगम आम्नायस्तत्र भव नेगमम् ॥—रूढिभवं होति। ह यस्मात् बाहुलकात् नैगमरूढिभव सुसाधु भवति शब्दजातम् ॥—नाम च धातुजमाहेति । न केवल पचेत्यादि पद धातुज नामापि धातुजमाह ॥—न पदार्थविशेषसमुत्थमिति । प्रकृत्यादिरिह पदार्थ उच्यते । पदमऽर्थ प्रयोजन यस्येति कृत्वा। स हि पदसिद्ध्यर्थमेवोपादीयते । पदार्थस्य विशेषस्तस्मात्समुत्तिष्ठति 'स्थापास्नात्र क'। प्रकृतिप्रत्ययोपदर्शनेन यन्नोक्तमित्यर्थ ॥ ॥ इत्याचार्य० पञ्चमस्याध्यायस्य द्वितीय पाद सपूर्ण. ॥

रसायुः भ्रमरः । 'संप्रदानाच्चान्यत्रोणादयः' इति यथायोगं प्रत्ययो वेदितव्यः ॥ १ ॥ अः ॥ २ ॥ सर्वस्माद्धातोर्यथाप्रयोगमकारः प्रत्ययो भवति । भवः । तरः । वरः । प्लवः । शयः । शरः । परः । करः । स्तवः । चरः । वदः ॥ २ ॥ म्लेच्छीडेर्ह्रस्वश्च वा ॥ ३ ॥ आभ्यामः प्रत्ययो भवति दीर्घस्य च ह्रस्वो वा भवति । म्लेच्छ अव्यक्तायां वाचि । म्लिच्छः मूकः । म्लेच्छः कुमनुष्यजातिः । ईडिक् स्तुतौ । इडः ईडो देवताविशेषौ मेदिनी च ॥ ३ ॥ नञः क्रमिगमिशमिखन्याकमिभ्यो डित् ॥ ४ ॥ नञः परेभ्य एभ्यो डित् अः प्रत्ययो भवति । क्रमू पादविक्षेपे । न क्रामति नक्रः जलचरो ग्राहः । गम्लृं गतौ । नगः वृक्षः पर्वतश्च । शमूच् उपशमे । नशः यक्षः । खनूग् अवदारणे । नखः करजः। नास्य खमस्तीति वा नख इत्यपि । कमूङ् कान्तौ । नाकः स्वर्गः। नात्र कमस्तीति नाक इत्यपि । नखादित्वात् 'अन् स्वरे' इत्यन् न भवति । डित्करणमन्त्यस्वरादिलोपार्थम् ॥ ४ ॥ तुदादिविषिगुहिभ्यः कित् ॥ ५ ॥ तुदादिभ्यो विपिगुहिभ्यां च कित् अः प्रत्ययो भवति । तुदः । नुदः । क्षिपः । सुरः । बुधः । सुरत् ऐश्वर्यदीप्त्योः । तुदादिर्न धातुगणः किं तर्हि भिन्न इति । तेन बुधादीनामिति लिङ्गपरिणामस्तु ज्ञेयः । शिवः । तुदादीनां यथासंभवं कारकविधिः । विष्लृंकी व्याप्तौ । वेवेष्टि विषम् प्राणहरं द्रव्यम् । गुहौग् संवरणे । गूहति गुहः स्कन्दः । गुहा पर्वतैकदेशः ॥ ५ ॥ विन्देर्नलुक् च ॥ ६ ॥ विन्देः कित् अः प्रत्ययो भवति तत्संनियोगे च नस्य लुक् च ॥ विदु अवयवे । विदः गोत्रकृद्वृक्षजातिश्च ॥ ६ ॥ कृगो द्वे च ॥ ७ ॥ करोतेः कित् अः प्रत्ययो भवति अस्य च धातोर्द्वे रूपे भवतः ॥ डुकृंग् करणे । चक्रं रथाङ्गमायुधं च ॥ ७ ॥ कनिगदिमनेः सरूपे ॥ ८ ॥ किदिति निवृत्तम् । एभ्योऽकारः प्रत्ययो भवति एषां च सरूपे समानरूपे द्वे उक्ती भवतः । कनै दीप्तिकान्तिगतिषु । कनति दीप्यते कनकनः कान्तः । गद व्यक्तायां वाचि । गदति अव्यक्तं वदति, गद्यतेऽव्यक्तं कथ्यते वा गद्गदोऽव्यक्तवाक्, गद्गदमव्यक्तं वचनम् । मनिंच् ज्ञाने । मन्मनः अविस्पष्टवाक् । सरूपग्रहणं 'व्यञ्जनस्यानादेर्लुक्' इत्यादिकार्यनिवृत्त्यर्थम् ॥ ८ ॥ ऋतष्टित् ॥ ९ ॥ ऋकारान्ताद्धातोरकार प्रत्ययो भवति स च बहुलं टित् धातोश्च सरूपे द्वे रूपे भवतः । दृश् विदारणे । दीर्यते भिद्यतेऽनेन श्रोत्रमिति दर्दरः वाद्यविशेषः पर्वतश्च । दर्दरी सस्यलुण्टिः। कृत् विक्षेपे । कर्करः क्षुद्राश्मा । कर्करी गलन्तिका। वृग्श् वरणे । वर्वरः म्लेच्छजातिः । वर्वरी केशविशेषः ॥ भृश् । भर्जने । भर्भरः छन्नवान् । भर्भरी श्रीः ॥ जृष् झृष्च् जरसि । जर्जरः अदृढः । जर्जरी स्त्री । झर्झरः वाद्यविशेषः । झर्झरी झल्लरिका । गृत् निगरणे । गर्गरः राजर्षिः । गर्गरी महाकुम्भः । मृश् हिंसायाम् । मर्मरः शुष्कपत्रप्रकरः । तद्धर्मोऽन्योऽपि क्षोदासहिष्णुर्दानवश्च । मर्मरायां दूर्वायामित्यत्र टित्त्वेऽपि ङीर्न भवति बहुलाधिकारात् ॥ तत एव च ऋकारान्तादपि । घृं सेचने । घर्घरः सदोषाव्यक्तवाक् । घर्घरी किङ्किणिका ॥९॥ किच्च ॥१०॥ ऋकारान्ताद्धातोर्यथादर्शनं किदकारः प्रत्ययो भवति धातोश्च सरूपे द्वे रूपे भवतः । मृश् हिंसायाम् । मूर्यतेऽनेन मुर्मुरः ज्वलदङ्गारचूर्णम् । पृश् पालनपूरणयोः । पूर्यते जलवातेन पुर्पुरः फेनः । तृ प्लवनतरणयोः । तीर्यतेऽनेनास्मिन्वा तिर्तिरः संक्रमः । भृश् भर्जने च । भूर्यते

संचीयते शुर्शुरः संचयः । शॄश् हिंसायाम् । शीर्यते समंतात् शिर्शिरः पुञ्जः ॥१०॥ **पॄपलिभ्यां टित् पिप् च पूर्वस्य** ॥११॥ आभ्यां टिदः प्रत्ययो भवति अनयोश्च सरूपे द्वे रूपे भवतः पूर्वस्य च स्थाने पिप् इत्यादेशो भवति । पॄश् पालनपूरणयोः। पृणाति छायया पिप्परी वृक्षजातिः। पल गतौ । पलत्यातुरं पिप्पली औषधजातिः। टित्करणं ङ्यर्थम् ॥११॥ **क्रमिमथिभ्यां चन्मनौ च** ॥१२॥ आभ्यामः प्रत्ययो भवति सरूपे च द्वे रूपे भवतः पूर्वस्य च स्थाने यथासंख्यं चन् मन् इत्यादेशौ भवतः। क्रमू पादविक्षेपे । क्रामति सुखमनेनास्मिन्वा चङ्क्रमः संक्रमः। मथे विलोडने । मथति चित्तं रागिणां मन्मथः कामः ॥१२॥ **गमेर्जम् च वा** ॥ १३ ॥ गमेरः प्रत्ययो भवति सरूपे द्वे च रूपे भवतः पूर्वस्य च जम् इत्यादेशो वा भवति । गम्लृं गतौ । गच्छति पादविहरणं करोति जङ्गमः चरः॥ गच्छत्यमाध्यस्थ्यं गङ्गमः चपलः ॥१३॥ **अदुपान्त्यऋद्भ्यामश्रान्तः** ॥ १४ ॥ अकारोपान्त्यादृकारान्ताच्च धातोरः प्रत्ययो भवति सरूपे च द्वे रूपे भवतः पूर्वस्य चान्तोऽकारो भवति । पलफलशलगतौ । शलशलः। सल गतौ । सलसलः। हल विलेखने । हलहलः। कलि शब्दसंख्यानयोः। कलकलः। मलि धारणे। मलमलः। घटिष् चेष्टायाम् । घटघटः। वद व्यक्तायां वाचि। वदवदः। पदिच् गतौ । पदपदः। ऋदन्तः। डु कृंग् करणे । करकरः। मृंत् प्राणत्यागे । मरमरः । दृङ्त् आदरे । दरदरः । सृं गतौ । सरसरः । वृग्ट् वरणे । वरवरः । अनुकरणशब्दा एते ॥१४॥ **मषिमसेर्वा** ॥१५॥ आभ्यामः प्रत्ययो भवति सरूपे च द्वे रूपे भवतः पूर्वस्य चान्तोऽकारो वा भवति । मष हिंसायां। मषमषः। मष्मषः। मसैच् परिमाणे । मसमसः। मस्मसः ॥१५॥ **हृसृफलिकषेरा च** ॥१६॥ एभ्योऽः प्रत्ययो भवति सरूपे च द्वे रूपे भवत. पूर्वस्य चाकारोऽन्तो भवति । हृंग् हरणे । हरति नयति शस्त्राण्यस्खलन् लक्ष्यम् हराहरः योग्याचार्यः। सृं गतौ । धावति वायुना नीयमानः समन्तात् सरासरः सारङ्गः। फलनिष्पत्तौ । फलति निष्पादयति नानाविधानि पुष्पफलानि फलाफलमरण्यम् । कष हिंसायाम् । कषति विदारयति कषाकषः कृमिजातिः ॥१६॥ **इदुदुपान्त्याभ्यां किदिदुतौ च** ॥१७॥ इकारोपान्त्यादुकारोपान्त्याच्च कित् अः प्रत्ययो भवति सरूपे च द्वे रूपे भवतः पूर्वस्य च यथासंख्यमिकारोकारौ चान्तौ भवतः। किलत् श्वैत्यक्रीडनयो.। किलिकिलः। हिलत् हावकरणे । हिलिहिलः। शिलत् उञ्छे । शिलिशिलः। छुरत् छेदने । छुरुच्छुर'। मुरत् संवेष्टने । मुरुमुरः। घुरत् भीमार्थशब्दयोः। घुरुघुरः । पुरत् अग्रगमने । पुरुपुरः। पुरत् ऐश्वर्यदीप्त्योः। सुरुसुरः। कुरत् शब्दे । कुरुकुरः। चुरण् स्तेये । चुरुचुर' । हुल हिंसासंवरणयोश्च । हुलुहुलः । गुजत् शब्दे । गुजुगुज' । गुडत् रक्षायाम् । गुडुगुडः। कुटत् कौटिल्ये । कुटुकुटः। पुटत् संश्लेषणे । पुटुपुटः। कुणत् शब्दोपकरणयो'। कुणुकुणः। मुणत् प्रतिज्ञाने । मुणुमुणः। अनुकरणशब्दा एते ॥१७॥ **जजलतितलकाकोलीसरीसृपादयः** ॥१८॥ एते अप्रत्ययान्ता निपात्यन्ते । जल घात्ये । अस्य द्वित्वे पूर्वस्य जभावः। जजलः। यस्य जाजलिः पुत्रः। तिलत् स्नेहने । अस्य द्वित्वे पूर्वस्य च तिभावे धातोरिकारस्याकारे तितलः। कुल बन्धुसंस्त्यानयोः। अस्य द्वित्वे पूर्वस्य च काभावे कालोली क्षीरकाकोलीति च वल्लीजातिः। सृपॢं गतौ । अस्य द्वित्वे गुणाभावे पूर्वस्य च सरीभावे सरीसृपः उरगजातिः। आदिग्रहणाद्यथादर्शनमन्येऽपि ॥१८॥ **बहुलं गुणवृद्धी चादेः** ॥१९॥ धातो. किदः प्रत्ययो भवति सरूपे च द्वे रूपे भवतः पूर्वस्य

चेकारोकारावन्तौ भवतः यथादर्शनं च गुणवृद्धी भवतः। केलिकिलः कैलिकिलश्च हसनशीलः। हिलत् हावकरणे। हेलिहिलः हैलिहिलश्च विलसनशीलः। शेलिशिलः शैलिशिलः। शुभि दीप्तौ। शोभते पुनः पुनरिति शोभुशुभः शौभुशुभः। णुदंत् प्रेरणे। नुदति पुनः पुनरिति नोदुनुदः नौदुनुदः। गुडत् रक्षायाम्। गुडति भ्राम्यति पुनःपुनरिति गोलुगुलः। गौलुगुलः। बुलण् निमज्जने। बोलयति पुनःपुनरिति बोलुबुलः। बौलुबुलः। तत्तद्धात्वर्थास्तच्छीला अनुवादविशेषा वैते ॥१९॥ णेर्लुप् ॥२०॥ धातोरप्रत्ययसन्नियोगे बहुलं णेर्लुप् भवति। वज्रं धारयतीति वज्रधर इन्द्रः। एवं चक्रधरः विष्णुः। भूधरः अद्रिः। जलधरः मेघः। बाहुलकात्प्रत्ययान्तरेऽपि। देवयतीति दिव्, द्यौः व्योम स्वर्गश्च। पुण्यं कारयन्तीति पुण्यकृतो देवाः। एवं पर्णं शोषयतीति पर्णशुट्। ' वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे ॥ ततः पर्णरुहः पश्चात्ततो देवः प्रवर्षति ' ॥१॥ तथा महतः कारयांचक्रुराक्रन्दानिति प्राप्ते महतश्चक्रुराक्रन्दानिति भवति ॥ महीपालवच श्रुत्वा जुघुषुः पुष्यमाणवाः। घोषयांचक्रुरित्यर्थः ॥ २० ॥

भीण्शलिवलिकल्यतिमर्च्यर्चिमृजिकुतुस्तुदाधाराश्राकापानिहानञ्शुभ्यः कः ॥२१॥ एभ्यः कप्रत्ययो भवति। ञिभीक् भये। बिभेति दुन्दुभात्परस्माच्च भेकः मण्डूकः कातरश्च। बिभेति वायोर्भेको मेघः। इंण्क् गतौ। एसाद्वितीय एकः असहायः संख्या प्रधानमसमानमन्यश्च। पलफलशल गतौ। शलन्त्यात्मरक्षणाय तमिति शल्कः शरणम्। शलति सक्तं बहिरिति शल्कं गृहीतरस शकलम्। शल्कः काष्ठत्वक् मलिनं च काष्ठम् मुद्गरः करणं च। वलि संवरणे। वल्कः दशनः वासः त्वक् च। कलि शब्दसंख्यानयोः। कल्कः कषायः दम्भः पिष्टपिण्डश्च। अत सातत्यगमने। अत्कः आत्मा वायुः व्याधित चन्द्रः उत्पातश्च। मर्चः सौत्रो धातुः प्राप्तौ। मर्कः देवदारुः वायुः दानवः मनः पन्नगः विघ्नकारी च। 'चजः कगम्' इति कत्वम्। अर्च पूजायाम्। अर्कः सूर्य. पुष्पजातिः का(ज्ञा)टजातिश्च। मृजौक् शुद्धौ। मार्क वायुः। कुंक् शब्दे। कोकश्चक्रवाकः। तुंक् हिंसावृत्तिपूरणेषु। तोकमपत्यम्। ष्टुंग्क् स्तुतौ। स्तोकमल्पम्। डुदांग्क् दाने। दाक. यजमानः यज्ञश्च। डु धांग्क् धारणे च। धाकः ओदनः अनड्वान् अम्भः स्तम्भश्च। रांक् दाने। राकः दाता अर्थः सूर्यश्च। राका पौर्णमासी कुमारः रजस्वला च। त्रैङ् पालने। त्राकः धर्मः शरणस्थानीयश्च। कै शब्दे। काकः वायसः। पां पाने, पांक् रक्षणे वा। पाकः बालः असुरः पर्वतश्च। ओहांक् त्यागे। निहाकः निःस्नेहः निर्मोकश्च। निहाका गोधा। शुं गतौ। न शवतीति अशोकः ॥ २१ ॥

विचिपुपिमुषिशुष्यविसृवृशुसुभूधूमूनीवीभ्यः कित् ॥२२॥ एभ्यः कित् कः प्रत्ययो भवति। विचृंपी पृथग्भावे। विकः करिपोतः। पुषंच् पुष्टौ। पुष्कः निशाकरः। मुषश् स्तेये। मुष्कः चौरः मांसलो वा। मुष्कौ वृषणौ। शुषंच् शोषणे। शुष्कमपगतरसम्। अव रक्षणादिषु। ऊकः कुन्दुमः। सृं गतौ। सृकः वायुः वाणः सृगालः वकः निरयश्च। सृका आयुधविशेष.। वृग्ट् वरणे वृङ्श् संभक्तौ वा। वृकः मृगजातिः आदिसः धूर्तः जाठरश्चाग्निः। शुं गतौ। शुकः कीरः ऋषिश्च। षुंग्ट् अभिषवे। सुकः निरामयः। भू सत्तायाम्। भूकः कालः छिद्रं च। धूत् विधूनने धूग्ट् कम्पने धूग्श् कम्पने वा। धूकः वायुः व्याधिश्च। धूका पताका। मूङ् बन्धने। मूकः अवाक्। णींग् प्रापणे। नीकः खगः ज्ञाता च। नीका

उदकहारिका ज्ञातिश्च। वींक् प्रजनादिषु। वीकः वायुः व्याधिः नाशः अर्थः मनः वसन्तश्च। वीका पक्षिजातिः नेत्रमलं च ॥ २२ कृगो वा ॥ २३ ॥ कृगः कः प्रत्ययो भवति स च कित् वा भवति। डु कृंग् करणे। कर्कः अग्निः सारङ्गः दर्भः श्वेताश्वश्च। कृकः शिरोग्रीवम् ॥ २३ ॥ घुयुहिपितुशोर्दीर्घश्च ॥ २४ ॥ एभ्यः किदकः प्रत्ययो भवति एषां च दीर्घो भवति। घुङ् शब्दे। घूकः कौशिकः। युक् मिश्रणे। यूका क्षुद्रजन्तुः स्वेदजः। हिंट् गतिवृद्ध्योः। हीकः पक्षी। पिंत् गतौ। पीक उपस्थो जलाश्रयश्च। तुंक् वृत्त्यादिषु। तूकः उपस्थः पर्वतश्च। शुं गतौ। शूकः किंशारुःअभिषवः शोकश्च। शूका हृल्लेखः॥२४॥ ह्रियो रश्च लो वा ॥२५॥ ह्रियः कित् कः प्रत्ययो भवति रेफस्य च लकारो वा भवति। ह्रीकः ह्लीकः लज्जापरः नकुलश्च। ह्रीको लिङ्ग्यपि ॥ २५ ॥ निष्कतुरुष्कोदर्कालर्कशुल्कश्वफल्क-किञ्जल्कोल्कावृक्कच्छेककेकायस्कादयः ॥२६॥ एते कप्रत्ययान्ता निपात्यन्ते। नेः सीदतेर्डिच्च। निष्कः सुवर्णादिः। तूरैचि त्वरायाम्। अस्य ह्रस्व उपश्चान्तः। तुरुष्कः वृक्षः म्लेच्छश्च। उदः परादर्तेः। उदर्कः क्रियाफलम्। अली भूषणादौ। अस्मादर् चान्तः। अलर्कः उन्मन्तो मदालसात्मजश्च। पलफलशल गतौ इत्यस्योपान्त्योत्वं च। शुल्कं रक्षानिर्वेशः। शुनः परात्फालेर्ह्रस्वश्च। श्वफल्कः अन्धकविशेषः। किमः परात् जृपो रस्य लश्च। किञ्जल्कः पुष्परेणुः। ज्वलेरुलादेशश्च उलेः सौत्रस्य वा उल्का औत्पातिकं ज्योतिः अग्निज्वाला च। वृजैकि वर्जने। अगुणत्वं च। वृक्कः मुष्कः। छ्यतिकायशोरेत्वं च। छेकः मनीषी। केका मयूरवाक्। यमेर्मस्य सः। यस्कः। आदिग्रहणात् ढक्कास्पृक्कादयोऽपि ॥ २६ ॥ दृकॄनॄसृशृधृवृभृस्तुकुक्षुलङ्घिचारिचटिकटिकण्टिचणिचषिफलिवमितम्यविदेविबन्धिकनिजनिमशिक्षारि-कूरिवृतिवल्लिमल्लिसल्ल्यलिभ्योऽकः ॥२७॥ एभ्योऽकः प्रत्ययो भवति। दृश् विदारणे। दरकः भीरुः। कॄत् विक्षेपे। करकः जलभाजनम् कमण्डलुश्च। करका वर्षपाषाणः। नॄश् नये। नरकः निरयः। सृं गतौ सरको मद्यविशेषः कंसभाजनविशेषश्च। सरका मधुपानवारः। डुड भृंग्क् पोषणे च। भरकः गोण्यादिः। धृंङ् अवध्वंसने। धरकः सुवर्णोन्मानानियुक्तः। वृग्ट् वरणे। वरकः वधूजातिसहायः वाजसनेयभेदश्च। मृंत् प्राणत्यागे। मरकः जनोपद्रवः ॥ ष्टुंग्क् स्तुतौ। स्तवकः पुष्पगुच्छः। कुंक् शब्दे। कवकमभक्ष्यद्रव्यविशेषः। टुक्षुक् शब्दे। क्षवकः राजसर्षपः। लघुङ् गतौ। लङ्घकः रंगोपजीवी। चर भक्षणे च। चरकः मुनिः। चटण् भेदे। चटकः पक्षी। कटे वर्षावरणयोः। कटकः वलयः। कटु गतौ। कण्टकः तरुरोम। चणशब्दे। चणकः मुनिः धान्यविशेषश्च। चषी भक्षणे। चषकः पानभाजनम्। फलनिष्पत्तौ। फलकः खेटकम्। टु वमू उद्गिरणे। वमकः कर्मकरः। तमूच् काङ्क्षायाम्। तमकः व्याधिः क्रोधश्च। अव रक्षणादौ। अवका शैवलम्। देवृङ् देवने। देवका अप्सराः। देविका नदी। वन्धंश् वन्धने। वन्धकः चारकपालः। कनै दीप्त्यादिषु। कनकं सुवर्णम्। जनैचि प्रादुर्भावे। जनकः सीतापिता। मश रोषे च। मशकः क्षुद्रजन्तुः। क्षर संचलने ण्यन्तः। क्षारकं बालमुकुलम्। कुरत शब्दे। कोरकं प्रौढमुकुलम्। वृतूङ् वर्तने। वर्तका वर्तिका वा शकुनिः। वल्लि संवरणे। वल्लकी वीणा। मल्लि धारणे। मल्लकः शरावः। मल्लिका पुष्पजातिः दीपाधारश्च। सल्लः सौत्रः। सल्लकी वृक्षः। सत्कृत्य लक्ष्यते स्वाद्यते

गजैरिति वा सल्लकी । अली भूषणादिषु । अलकः केशविन्यासः। अलका पुरी ॥ २७ ॥ को रुरुण्टिरण्टिभ्यः ॥ २८ ॥ कुशब्दात् परेभ्य एभ्योऽक प्रत्ययो भवति । रुक् शब्दे । कुरुवकः वृक्षः । रुट्ट स्तेये । कुरुण्टको वर्णगुच्छः । रण्टिः प्राणहारणे सौत्रः । कुरण्टकः स एव ॥ २८ ॥ ध्रुधून्दिरुचितिलिपुलिकुलिक्षिपिक्षुपिक्षुभिलिखिभ्यः कित् ॥ २९ ॥ एभ्यः किदकः प्रत्ययो भवति । ध्रुं स्थैर्ये च । ध्रुवकः स्थिरः । ध्रुवका आवपनविशेषः । धूत् विधूनने । धुवकं धूननम् । धुवकः प्रधानं । स्त्री धुवका आवपनविशेषः । उन्दैप् क्लेदने । उदकं जलम् । रुचि अभिप्रीत्या च । रुचकः आभरणविशेषः । तिलत् स्नेहने । तिलकः विशेषकः वृक्षश्च । पुलत् समुच्छ्राये, पुल महत्त्वे वा । पुलकः रोमाञ्चः । कुल बन्धुसंस्त्यानयो । कुलकं संयुक्तम् । क्षिपींत् प्रेरणे । क्षिपक वायुः । क्षिपका आयुधम् । क्षुपः सौत्रो ह्रस्वीभावे । क्षुपकः गुल्मः । क्षुभच् संचलने । क्षुभकः पाञ्चालकः । लिखत् अक्षरविन्यासे । लिखकः चित्रकरः ॥२९॥ छिदिभिदिपिटेर्वा ॥३०॥ एभ्योऽक प्रत्ययो भवति स च किद्वा । छिदृंपी द्वैधीकरणे । छिदकः खड्गः क्षुरश्च । छेदकः परशुः। भिदृंपी विदारणे । भिदकं जलं पिशुनश्च । भेदकं वज्रम् । पिट शब्दे च । पिटक क्षुद्रस्फोटकः। पेटकं संघातः ॥३०॥ कृषेर्गुणवृद्धी च वा ॥३१॥ कृषेरकः प्रत्ययो भवति गुणवृद्धी चास्य वा भवतः। कृषंत् विलेखने । कर्षकः कृषकः परशुः । कर्षकः कृषकः कुटुम्बी ॥ ३१ ॥ नञः पुंसेः ॥ ३२ ॥ नञः परात्पुंसण् अभिमर्दने इत्यस्मात् किदकः प्रत्ययो भवति । नपुंसकं तृतीयाप्रकृतिः । नखादित्वात् नञत् न भवति ॥३२॥ कीचकपेचकमेनकार्भकधमकवधकलघकजहकैरकैडकाश्मकलमकक्षुल्लकवटकवकाढकादयः ॥ ३३ ॥ कीचकादयः शब्दा अकप्रत्ययान्ता निपात्यन्ते । कचि बन्धने । अस्योपान्त्यस्येत्वं च । कीचकः वंशविशेषः । डु पचींष् पाके । मचि कल्कने । मनिच् ज्ञाने । एषामुपान्त्यस्यैत्वं च । पेचकः करिजघनभागः । मेचकः वर्णः । मेनका अप्सराः । अर्तेर्भश्चान्तः । अर्भकः बालः । ध्मां शब्दाग्निसंयोगयोः । अस्य धमादेशश्च । धमकः कीटः कर्मारश्च । अन्यत्रापि धमादेशो दृश्यते । क्ते, धान्तः । हन्तेर्वधश्च । वधकः हन्ता व्याधिश्च । वधकं पद्मबीजम् । अन्यत्रापि दृश्यते । वृत्रं हन्ति अचि वृत्रवधः शक्रः । वधिता निर्मोचक । वध्यः । वधनम् । लघुङ् गतौ । नलुक् च । लघकः असमीक्ष्यकारी । जहातेर्द्वे रूपे अन्तलुक् च । जहकः निर्मोचकः कालः क्षुद्रश्च । ईरिक् गतिकम्पनयोः। ईडिक् स्तुतौ । अनयोर्गुणश्च । एरका उदकतृणजातिः। एडका अविजातिः । अशौटि व्याप्तौ । अस्य मोऽन्तः। अश्मका जनपदः। रभि क्रीडायाम् । अस्य लमादेशः । लमक ऋषिविशेष । क्षुदृंपी संपेषे ।अस्य क्षुल्लादेशश्च ।क्षुल्लकं दभ्रम्। क्षुधं लातीति क्षुल्लः क्षुल्ल एव क्षुल्लक इति वा। वट वेष्टने। अस्य वोऽन्तश्च । वट्वका तृणपुञ्जः ॥ आङ्पूर्वात् ढौकतेर्डिच्च । आढकम् मानम् । आदिग्रहणादृष्टहृत्तन्त्रात् कला आपिबन्तीति कलापकाः शास्त्राणि । कथण् वाक्यप्रबन्धे । कथयतीति कथकः तोटकाख्यायिकादीनां वर्णयिता । एवमुपकचम्पकफलहकादयोऽपि ॥ ३३ ॥ शलिबलिपतिवृतिनभिपदितटितडिगडिभन्दिवन्दिमन्दिनमिकुदुपूमनिखजिभ्य आकः ॥ ३४ ॥ एभ्य आकः प्रत्ययो भवति । फलफलशल गतौ । शलि चलने च वा । शलाका एषणी पूरणरेखा द्यूतोपकरणं सूची च । वल प्राणनधान्यावरो-

धयो: ।वलाका जलचरी शकुनिः । पतॢ गतौ । पताका वैजयन्ती । वृतुङ् वर्तने । वर्ताका शकुनिजातिः । णभच् हिंसायाम् । नभाकः चक्रवाकजातिः तमः काकश्च । पट गतौ । पटाका वैजयन्ती पक्षिजातिश्च । तट उच्छ्राये । तटाकं सरः । तडण् आघाते । तडाकं तदेव । गड सेचने । गडाकः शाकजातिः । भदुङ् सुखकल्याणयोः । भन्दाकं शासनम् । वदुङ् स्तुत्यभिवादनयोः । वन्दाकः चीवरभिक्षुः । मदुङ् स्तुत्यादिषु । मन्दाका ओषधी । णमं प्रह्वत्वे । नमाका म्लेच्छाति । कुंङ् शब्दे । कवाकः पक्षी । टुदुंट् उपतापे । दवाकः म्लेच्छः । पूङ् पवने पवाका वात्या । मनिच् ज्ञाने । मनाका हस्तिनी । सज मन्थे । सजाकः आकरः मन्थाः दर्वि आकाशं वन्धकी शरीरं पक्षी च ॥ ३४ ॥ शुभिगृहिविदिपुलिगुभ्यः कित् ॥ एभ्यः किदाकः प्रत्ययो भवति । शुभि दीप्तौ । शुभाका पक्षिजाति । गृहणि ग्रहणे । गृहाकः । विदंक् ज्ञाने । विदाका भूतग्रामः । पुल महत्त्वे । पुलाकः अर्धस्विन्ननिभो धान्यविशेषः । गुंङ् शब्दे गुंत् पुरीषोत्सर्गे वा । गुवाकं पूगफलम्॥३५॥ पिषेः पिन्पिण्यौ च ॥३६॥ पिष्लृंप् संचूर्णने इत्यस्मात्किदाकः प्रत्ययो भवति अस्य च पिन् पिण्य इत्यादेशौ भवत । पिनाकमैशं धनुः शूलं वा । पिनाकः दण्डः। पिण्याकस्तिलादिखलः॥३६॥मवाकश्यामाकवार्ताकवृन्ताकज्योन्ताकगूवाकभद्राकादयः॥३७॥एते आकप्रत्ययान्ता निपात्यन्ते । मव्य बन्धने । यलोपः। मवाकः रेणुः । श्यैङ् गतौ मोऽन्तश्च । श्यामाकः जघन्यो व्रीहिः । वृतेर्वृद्धिश्च । वार्ताकी शाकविशेष । तत्फलं वार्ताकम् । स्वरान्नोऽन्तश्च । वृन्ताकी उत्तबृहती । तत्फलं वृन्ताकम् । ज्युङ् गतौ । न्तश्च प्रत्ययादिः । ज्यवतेऽस्मिन् स्विद्यमान इति ज्योन्ताकम् स्वेदसजविशेषः । गुंत् पुरीषोत्सर्गे, गुंङ् शब्दे वा । ऊवादेशश्च । गूवाकं पूगफलम् । भदुङ् सुखकल्याणयोः । अस्य भद्रादेशश्च । भद्राकः अकुटिलः । आदिग्रहणात् स्योनाकचार्वाकपराकादयो भवन्ति ॥ ३७ ॥ क्रीकल्यलिदलिस्फटिदूषिभ्य इकः ॥३८॥ एभ्य इकः प्रत्ययो भवति । डु क्रीगश् द्रव्यविनिमये । क्रयिक क्रेता । कलि शब्दसंख्यानयो । कलिका कोरकः । उत्कलिका ऊर्मि । अली भूषणादौ । अलिकं ललाटम् । दल विशरणे । दलिकं दारु । स्फटस्फुटट् विशरणे । स्फटिकः मणिः । दुषंच् वैकृत्ये । दूषिका नेत्रमल ॥३८॥ आङः पणिपनिपदिपतिभ्यः॥३९॥ आङः परेभ्य एभ्य इकः प्रत्ययो भवति । पणि व्यवहारस्तुत्योः। आपणिकः पत्तनवासी व्यवहारज्ञो वा । पनि स्तुतौ । आपनिकः स्तावकः इन्द्रनीलः इन्द्रकीलो वा । पदिच् गतौ । आपादिकः इन्द्रनीलः इन्द्रकीलो वा । पतॢ गतौ । आपातिक पथि वर्तमानः मयूरः श्येनः कालो वा। आपणिकादयश्चत्वारो वणिजोऽपि ॥ ३९ ॥ नसिवसिकसिभ्यो णित् ॥४०॥ एभ्यो णिदिकः प्रत्ययो भवति । णसि कौटिल्ये । नासिका घ्राणम् । वसं निवासे । वासिका माल्यदामविशेषः छेदनद्रव्यं च । कस गतौ । कासिका वनस्पतिः ॥ ४० ॥ पापुलिकृपिकुशिव्रश्चिभ्यः कित् ॥ ४१ ॥ एभ्यः किदिकः प्रत्ययो भवति । पां पाने । पिकः कोकिलः । पुल महत्वे । पुलिकः मणिः । कृपीत् विलेखने । कृपिकः पामरः तृणजातिश्च । कुशं आह्वानरोदनयो । कुशिकः क्रोष्टुकः उलूकश्च । ओ व्रश्चौत् छेदने । वृश्चिकः सविषः कीटः राशिश्च नक्षत्रपादनवकरूपः ॥ ४१ ॥

प्राङः पणिपानिकाषिभ्यः ॥ ४२ ॥ प्राङ् इत्येतस्मादुपसर्गसमुदायात्परेभ्य एभ्यः किदिकः प्रत्ययो भवति । पणि व्यवहारस्तुत्योः । प्रापणिकः वणिक् । पनि स्तुतौ । प्रापनिकः पथिकः । कष हिंसायाम् । प्राकषिकः वायुः खलः नर्तकः मालाकारश्च । प्रपूर्वात्पणेराङ्पूर्वाच्च कषेरिच्छन्त्यन्ये । प्रपणिकः गन्धविक्रयी । आकषिकः न कर्तव्यः ॥ ४२ ॥ मुषेर्दीर्घश्च ॥ ४३ ॥ मुषेरिकः प्रत्ययो भवति दीर्घश्च स्वरस्य । मूषिक आखुः ॥ ४३ ॥ स्यमेः सीम् च ॥ ४४ ॥ स्यमेरिकः प्रत्ययो भवति अस्य च सीम् इत्यादेशो भवति । स्यमू शब्दे । सीमिकः वृक्षः उदककृमिश्च । सीमिका उपजिह्विका । सीमिकं वल्मीकम् । केचित्सिमिति ह्रस्वोपान्त्यमादेशं प्रत्ययस्य च दीर्घत्वमिच्छन्ति । सिमीकः सूक्ष्मकृमिः ॥ ४४ ॥ कुशिकहृदिकमक्षिकेतिकपिपीलिकादयः ॥ ४५ ॥ एते किदिकप्रत्ययान्ता निपात्यन्ते । कुपेः श च । कुशिकः मुनिः। हृगो दोऽन्तश्च । हृदिकः यादवः । मषेः सोऽन्तश्च । मक्षिका क्षुद्रजातिः। एतेस्तोऽन्तश्च । एतिकः मुनिः । पीलेर्द्वे च । पिपीलिका मध्यक्षामा कीटजातिः । आदिग्रहणात् गब्दिकसुरिकसुलिकादयो भवन्ति ॥ ४५ ॥ स्यमिकषिदूष्यनिमनिमलिवल्यलिपालिकणिभ्य ईकः ॥४६॥ एभ्य ईकः प्रत्ययो भवति । स्यमूशब्दे । स्यमीकः वृक्षः वल्मीकः नृपगोत्रं च । स्यमीकं जलम् । स्यमीका कृमिजातिः। कष हिंसायाम् । कषीका कुद्दालिका । दुषंच् वैकृत्ये ण्यन्तः । दूषीका नेत्रमलः वीरणजातिः वर्तिः लता च । अनक् प्राणने । अनीकं सेनासमूहः संग्रामश्च । मनिच् ज्ञाने । मनीकः सूक्ष्मः । मलि धारणे । मलीकम् अञ्जनम् अरिश्च । वलि संवरणे। वलीकः बलवान् पटलान्तश्च । वलीकं वेश्मदारु । अली भूषणादौ । अलीकम् असत्यम् । अलीका पण्यस्त्री । व्यलीकमपराधः। व्यलीका लज्जा । पलण् रक्षणे च । पालीकं तेजः। कण शब्दे । कणीकः पटवासः। कणीका भिन्नतण्डुलावयवः वनस्पतिबीजं च ॥४६॥ जॄपॄदॄशॄवृमृभ्यो द्वेरश्चादौ ॥४७॥ एभ्य ईकः प्रत्ययो भवति द्वे च रूपे भवत एषां चादौ रो भवति। जॄपृच् जरसि। जर्जरीका शतपत्री। पॄश् पालनपूरणयोः। पर्परीका जलाशयः सूर्यश्च । पर्परीकः अग्निः कुररः भक्ष्यम् कुर्कुरश्च । दॄश् विदारणे। दर्दरीकः दाडिमः इन्द्रः वादित्रविशेषः वादित्रभाण्डं च। शॄश् हिंसायाम्। शर्शरीकः कृमिः विकलेन्द्रियः दुष्टाश्वः लावकश्च । शर्शरीका माङ्गल्याभरणम् । वृग्ट् वरणे । वर्वरीकः संवरणम् उरणः पतत्री केशसंघातश्च । वर्वरीका सरस्वती। मृंत् प्राणत्यागे । मर्मरीकः अग्निः शूरः श्येनश्च॥४७॥ ऋच्यृजिहृषीषिदाशिमृडिशिलिनिलीभ्यः कित् ॥ ४८ ॥ एभ्यः किदीकः प्रत्ययो भवति । ऋचत् स्तुतौ । ऋचीकः । ऋजि गतिस्थानार्जनोपार्जनेषु । ऋजीकं वज्रम् बलं स्थानं च । हृषू अलीके, हृषच् तुष्टौ वा । हृषीकमिन्द्रियम् । इषत् इच्छायाम् , ईष उञ्छे, ईषगतिहिंसादर्शनेषु वा । इषीका ईषीका च तृणशलाका । दृशृं प्रेक्षणे । दृशीकं मनोज्ञम् । दृशीका रजस्वला । मृडत् सुखने। मृडीकं सुखकृत् सुखं च। शिलत् उञ्छे। शिलीकः सस्यविशेषः। लीङ्च् श्लेषणे निपूर्वः। निलीकं वृत्तम् । बाहुलकादीलुक् ॥४८॥ मृदेर्वोऽन्तश्च वा ॥४९॥ मृदेः किदीकः प्रत्ययो भवति वकारश्चान्तो भवति । मृदश् क्षोदे । मृद्वीका मृदीका च द्राक्षा ॥ ४९ ॥ सृणीकास्तीकप्रतीकपूतीकसमीकवाहीकवाह्लीकवल्मीककल्मलीकतिन्तिडीककङ्कणीककिङ्किणीकपुण्डरीकचञ्चरीकफर्फरीकझर्झरीकघर्घरीकादयः ॥

॥५०॥ एते किदीकमत्ययान्ता निपात्यन्ते । सर्तेर्णोऽन्तश्च । सृणीकः वायुः अग्निः अशनिः उन्मत्तश्च । सृणीका लाला । अस्तेस्तोऽन्तश्च । अस्तीकः जरत्कारुसुतः । प्रांक् पूरणे । प्रातेस्तोऽन्तो ह्रस्वश्च । प्राति शरीरमिति प्रतीकः वायुः अवयवः सुखं च । सुप्रतीकः दिग्गजः। पुवस्तोऽन्तश्च । पूतीकं तृणजातिः। समूपूर्वस्य एतेर्लुक् च । संयन्त्यस्मिन्निति समीकं संग्रामः । वहिवह्ल्योर्दीर्घश्च । वाहीकः वाह्लीकः एतौ देशौ । वलेर्मोऽन्तश्च । वल्मीकः नाकुः । कलेर्मलश्चान्तः । कल्मलीकम् ज्वाला । तिमेस्तिङ् चान्तः । तिन्तिडीकः पक्षी वृक्षाम्लश्च । तन्तिडीक इति पूर्वस्यैत्वं नेच्छन्त्येके । चङ्क्ष्ण्यतेः कङ्कण् च । कङ्कणीकं घण्टाजालम् । किमः परात्कणतेः किण् च । किङ्किणीका घण्टिका । पुणेर्डर् चान्तः पुण्डतेर्वा र् । पुण्डरीकं पद्मं छत्रं व्याघ्रश्च । चञ्चेरर् चान्तः । चञ्चरीकः भ्रमरः । पिपर्तेर्गुणो द्वित्वं पकारयोः फत्वं रश्चान्तः पूर्वस्य । फर्फरीकं पल्लवं पादुका मर्दलिका च । झीर्यतेर्द्वित्वं तृतीयाभावः पूर्वस्य रश्चान्तः । झर्झरीकः देहः । झर्झरीका वादित्रभाण्डम् । एवं घरतेर्घर्घरीका घण्टिका । आदिग्रहणादन्येऽपि ॥५०॥ **मिवमिकटिभल्लिकुहेरुकः** ॥ एभ्य उकः प्रत्ययो भवति । डु मिगट् प्रक्षेपणे । मयुकः आतपः । बाहुलकात् 'मिग्मीगो'—इति नात्वम् । टु वमू उद्गिरणे । वमुकः जलदः । कटे वर्षावरणयोः । कटुकः रसविशेषः। भल्लि परिभाषणहिंसादानेषु । भल्लुकः ऋक्षः। कुहणि विस्मापने । कुहकमाश्चर्यम् ॥५१॥ **संविभ्यां कसेः** ॥५२॥ सम्विभ्यां परस्मात्कसेरुकः प्रत्ययो भवति । कस गतौ । संकसुकः सुकुमारः परापवादशीलः श्राद्धाग्निश्च । संकसुकं व्यक्ताव्यक्तं संकीर्णं च । विकसुकः गुणवादी परिश्रान्तश्च ॥ ५२ ॥ **क्रमे कृम् च वा** ॥ ५३ ॥ क्रमेरुकः प्रत्ययो भवति अस्य च कृम् इत्यादेशो वा भवति । क्रमू पादविक्षेपे । कृमुकः वन्धनम् । आदेशविधानबलाच्च न गुणः। क्रमुकः पूगतरुः ॥५३॥ **कमितिमेर्दोऽन्तश्च** ॥५४॥ आभ्यामुकः प्रत्ययो भवति दश्चान्तः। कमूङ् कान्तौ । कन्दुकः क्रीडनम् । तिमच् आर्द्रभावे । तिन्दुकः वृक्षः ॥५४॥ **मण्डेर्मड्ड् च** ॥५५॥ मण्डेरुकः प्रत्ययो भवति मड्ड् च आदेशो भवति । मडु भूषायाम्। मड्डुकः वाद्यविशेषः ॥५५॥ **कण्यणेर्णित्** ॥५६॥ आभ्यां णिदुकः प्रत्ययो भवति । कण अण शब्दे । काणुकः काकः हिंस्रश्च । काणुकम् आणुकं च अक्षिमलम् ॥५६॥ **कञ्चुकांशुकनंशुकपाकुकहिवुकचिवुकजम्बुकचुलुकचूचुकोल्मुकभावुकपृथुकमधुकादयः** ॥ ५७ ॥ एते किदुकप्रत्ययान्ता निपात्यन्ते । कचि वन्धने । अशौटि व्याप्तौ । नशौच् अदर्शने । एषां स्वरान्नोऽन्तश्च । कञ्चुकः कूर्पासः । अंशुकं वस्त्रम् । नंशुको रणरेणुः प्रवासशीलः चन्द्रः प्रावरणं च । पचेः पाक् च । पाकुकः लघुपाची सूपः सूपकारः अध्वर्युश्च । हिनोतिचिनोतिजमतीनां वोऽन्तश्च । हिवुकं लग्नाच्चतुर्थस्थानम् रसातलं च । चिवुकं मुखाधोभागः। जम्बुकः शृगालः। चुलुम्पः सौत्रः अन्त्यस्वरादिलोपश्च । चुलुम्पतीति चुलुकः करकोशः। चतेश्चूच् च । चूचुकः स्तनाग्रभागः। ज्वलेरुल्म् च । उल्मुकम् अलातम्। भातेर्वोऽन्तश्च । भावुकः भगिनीपतिः। प्रथिष् प्रख्याने । पृथुकः शिशुः व्रीह्याद्यभ्यूषश्च । मचि कल्कने धश्चान्तादेशः। मधुकं यष्टीमधु । आदिग्रहणाद्वालुकीवालुकादयो भवन्ति ॥ ५७ ॥ **मृमन्यञ्जिजलिवलितलिमलिमल्लिभालिमण्डिबन्धिभ्य ऊकः** ॥५८॥ एभ्य ऊकः प्रत्ययो भवति । मृङ् प्राणत्यागे। मरूकः मयूरः मृगः निदर्शनेभः तृणं च । मनिच् ज्ञाने। मनूकः कृमिजातिः।

अञ्जौप् व्यक्तिम्रक्षणगतिषु । अञ्जूकः हिंस्रः। जल घात्ये । जलूका जलजन्तुः। बल प्राणनधान्यावरोधयोः। बलूकः उत्पलमूलं मत्स्यश्च । तलण् प्रतिष्ठायाम् । तलूकः त्वक्कृमिः । मालि धारणे । मलूकः सरोजशकुनिः । मल्लि धारणे । मल्लूकः कृमिजातिः । भलिण् आभण्डने । भालूकः ऋक्षः । मडु भूषायाम् । मण्डूकः दुर्दुरः। वन्धश् वन्धने । वन्धूकः वन्धुजीवः ॥५८॥ शल्यणेर्णित्॥५९॥ आभ्यां णिदूकः प्रत्ययो भवति । पलफलशल गतौ । शालूकं जलकन्दः बलवांश्च । अण शब्दे। आणूकम् अक्षिमलम् ॥ ५९ ॥ कणिभल्लेर्दीर्घश्च वा ॥ ६० ॥ आभ्यामूकः प्रत्ययो दीर्घश्चानयोर्वा भवति । कण शब्दे । कणूकः धान्यस्तोकः । काणूकः पक्षी । काणूकम् अक्षिमलः तमो वा । भल्लि परिभाषणहिंसादानेषु । भल्लूकः भाल्लूकश्च ऋक्षः ॥ ६० ॥ शम्बूकशाम्बूकवृधूकमधूकोलूकोरुबूकवरूकादयः ॥ ६१ ॥ एते ऊकप्रत्ययान्ता निपात्यन्ते । शमेर्बोऽन्तो दीर्घश्च वा । शम्बूकः शङ्खः । शाम्बूकः स एव । वृञ् वरणे । अस्य वृधभावश्च । वृधूकः मातृवाहकः । वृधूकं जलम् । मदेर्धश्च । मदयतीति मधूकः वृक्षः । अलेरुच्चोपान्त्यस्य । उलूकः काकारिः । उरु पूर्वाद्वातेः किच्च । उरु वाति उरुबूकः एरण्डः । वृधेर्लोपश्च । वर्धते इति वरूकः तृणजातिः। आदिग्रहणादनूकवावदूकादयो भवन्ति ॥ ६१ ॥ किरोऽङ्को रो लश्च वा ॥ ६२ ॥ किरतेरङ्कः प्रत्ययो भवति रेफस्य च लकारादेशो वा भवति । करङ्कः समुद्रः। कलङ्कः लाञ्छनम् ॥ ६२ ॥ रालापाकाभ्यः कित् ॥ ६३ ॥ एभ्यः किदङ्कः प्रत्ययो भवति । रांक् दाने । रङ्कः अबलीयान् । लांक् दाने । लङ्का पुरी । पांक् रक्षणे । पङ्कः कर्दमः । कैं शब्दे । कङ्कः पक्षी ॥ ६३ ॥ कुलिचिरिभ्यामिङ्कक् ॥ ६४ ॥ आभ्यामिङ्कक् प्रत्ययो भवति । कुल बन्धुसंस्त्यानयोः । कुलिङ्कः चटकः । चिर हिंसायाम् सौत्रः । चिरिङ्कं जलयन्त्रम् ॥ ६४ ॥ कलेरविङ्कः ॥ ६५ ॥ कलेरविङ्कः प्रत्ययो भवति । कलि शब्दसंख्यानयोः । कलविङ्कः गृहचटकः ॥ ६५ ॥ क्रमेरेलकः ॥ ६६ ॥ क्रमू पादविक्षेपे इत्यस्मादेलकः प्रत्ययो भवति । क्रमेलकः करभः ॥६६॥ जीवेरातृको जैव् च ॥ ६७ ॥ जीव प्राणधारणे इत्यस्मादातृकः प्रत्ययो भवति जैव् इत्यादेशश्च । जैवातृकः आयुष्मान् चन्द्रः आम्रः वैद्यः मेघश्च । जैवातृका जीवद्वत्सा स्त्री ॥ ६७ ॥ हृभूलाभ्य आणकः ॥ ६८ ॥ एभ्य आणकः प्रत्ययो भवति । हृंग् हरणे । हराणकः चौरः । भू सत्तायाम् । भवाणकः गृहपतिः । लांक् आदाने । लाणकः हस्ती ॥ ६८ ॥ प्रियः कित् ॥ ६९ ॥ प्रींग्श् तृप्तिकान्त्योरित्यस्मादाणकः प्रत्ययो भवति स च कित् । प्रियाणकः पुत्रः ॥ ६९ ॥ धालूशिङ्घिभ्यः ॥ ७० ॥ योगविभाग उत्तरार्थः । एभ्य आणकः प्रत्ययो भवति । डु धांग्क् धारणे च । धाणकः दीनारद्वादशभागः हविषां ग्रहः छिद्रपिधानं च । लूग्श् छेदने । लवाणकः कालः तृणजातिः दात्रं च । शिघु आघ्राणे । शिङ्घाणकः नासिकामलः ॥ ७० ॥ शीभीराजेश्चानकः ॥ ७१ ॥ शीभीराजिभ्यो धालूशिङ्घिभ्यश्चानकः प्रत्ययो भवति । शीङ्क् स्वप्ने । शयानकः अजगरः शैलश्च । ञिभीं्क् भये । बिभेत्यस्मादिति भयानकः भीमः व्याघ्रः वराहः राहुश्च । राजृग् दीप्तौ । राजानकः क्षत्रियः । डु धांग्क् धारणे च । धानकः हेमादिपरिमाणम् । लूग्श् छेदने । लवानकः देशविशेषः दात्रं च । शिङ्घन्त्यनेनेति शिङ्घानकः

श्लेष्मायुः पुरीषं च ॥ ७१ ॥ अणेर्डित् ॥ ७२ ॥ अणेर्डिदानकः प्रत्ययो भवति । अण शब्दे । आनकः पटहः ॥ ७२ ॥ कनेरीनकः ॥ ७३ ॥ कनै दीप्तिकान्तिगतिषु इत्यस्मादीनकः प्रत्ययो भवति । कनीनकः कनीनिका वाक्षितारका ॥ ७३ ॥ गुङ ईधुकैधुकौ ॥ ७४ ॥ गुङ् शब्दे इत्यस्मादीधुकएधुक इत्येतौ प्रत्ययौ भवतः। गवीधुकं नगरम् धान्यजातिश्च । गवेधुका तृणजातिः ॥ ७४ ॥ वृतेस्तिकः ॥७५॥ वृतुङ् वर्तने इत्यस्मात्तिकः प्रत्ययो भवति । वर्त्तिका चित्रकरोपकरणम् शकुनिः द्रव्यगुटिका च ॥७५॥ कृतिपुतिलतिभिदिभ्यः कित् ॥७६॥ एभ्यः कित्तिकः प्रत्ययो भवति । कृतैत् छेदने । कृत्तिका नक्षत्रम् । पुतिलती सौत्रौ । पुत्तिका मधुमक्षिका । लत्तिका वाद्यविशेषः गौः गोधा च । गोपूर्वाद्गोलत्तिका गृहगोलिका । अवपूर्वादवलत्तिका गोधा । आलत्तिका गानप्रारम्भः। भिदूंपी विदारणे । भित्तिका कुड्यम् मापादिचूर्णम् शरावती च नदी ॥७६॥ इष्यशिमसिभ्यस्तकक् ॥७७॥ एभ्यस्तकक् प्रत्ययो भवति । इषत् इच्छायाम् । इष्टका मृद्विकारः। अशौटि व्याप्तौ । अष्टकाः श्राद्धतिथयस्तिस्रः अष्टम्यः पितृदेवत्यं च । मसैच् परिणामे । मस्तकः शिरः ॥ ७७ ॥ भियो द्वे च ॥७८॥ त्रि भींक् भये इत्यस्मात्तकक् प्रत्ययो भवति द्वे रूपे च भवतः । बिभीतकः अक्षः ॥ ७८ ॥ हृरुहिपिण्डिभ्य ईतकः ॥७९॥ एभ्य ईतकः प्रत्ययो भवति । हृंग् हरणे । हरीतकी पथ्या । रुहं जन्मनि । रोहीतकः वृक्षविशेषः। पिडुङ् संघाते । पिण्डीतकः करहाटः ॥ ७९ ॥ कुषेः कित् ॥ ८० ॥ कुषश् निष्कर्षे इत्यस्मात्किदीतकः प्रत्ययो भवति । कुषीतकः ऋषिः ॥ ८० ॥ बलिबिलिशलिदमिभ्य आहकः ॥ ८१ ॥ एभ्य आहकः प्रत्ययो भवति । बल प्राणनधान्यावरोधयोः । बलाहकः मेघः वातश्च । बिलत् भेदने । बिलाहकः वज्रः । बाहुलकान्न गुणः । शल गतौ । शलाहकः वायुः । दमूच् उपशमे । दमाहकः शिष्यः ॥ ८१ ॥ चण्डिभल्लिभ्यामातकः ॥ ८२ ॥ आभ्यामातकः प्रत्ययो भवति । चडुङ् कोपे । चण्डातकं नर्तक्यादिवासः । भल्लि परिभाषणहिंसादानेषु । भल्लातकः वृक्षः ॥८२॥ श्लेष्मातकाम्रातकामिलातकपिष्टातकादयः ॥ ८३ ॥ एते आतकप्रत्ययान्ता निपात्यन्ते । श्लिषेर्मश्च परादिः। श्लेष्मातकः कफेलुः । अमेर्वृद्धी रश्चान्तः । आम्रातकः वृक्षः । नञः परस्य म्लायतेर्मिल् च । अमिलातकम् वर्णपुष्पम् । पिषेस्तोऽन्तश्च । पिष्टातकं वर्णचूर्णम् । आदिग्रहणात्कोशातक्यादयो भवन्ति ॥ ८३ ॥ शमिमनिभ्यां खः ॥ ८४ ॥ आभ्यां खः प्रत्ययो भवति । शमूच् उपशमे । शङ्खः कम्बु निधिश्च । मनिच् ज्ञाने । मङ्खः मागधः कृपणः चित्रपटश्च । मङ्खा मङ्गलम् ॥ ८४ ॥ श्यतेरिच्च वा ॥ ८५ ॥ शोंच् तक्षणे इत्यस्मात् खः प्रत्यय इश्चास्यान्तादेशो वा भवति । शिखा चूडा ज्वाला च । विशिखा आपणः । विशिखः बाणः । शाखा विटपः । विशाखा नक्षत्रम् । विशाखः स्कन्दः ॥ ८५ ॥ पूमुहोः पुन्मूरौ च ॥ ८६ ॥ पूङ् पवने मुहौच् वैचित्ये इत्येताभ्यां खः प्रत्ययोऽनयोश्च यथासंख्यं पुन् मूर् इत्यादेशौ भवतः । पुङ्खः बाणबुन्धभागः मङ्गलाचारश्च । मूर्खः अज्ञः ॥ ८६ ॥ अशेर्डित् ॥ ८७ ॥ अशौटि व्याप्तावित्यस्मात् डित् खः प्रत्ययो भवति । अश्नुत इति खमाकाशमिन्द्रियं च । नास्य खमस्ति नखः । शोभनानि खानि अस्मिन् सुखम् । दुष्टानि खान्यस्मिन् दुःखम् ॥ ८७ ॥ उषेः किल्लुक् च ॥८८ ॥ उषू दाहे इत्यस्मात् कित् खः प्रत्ययो

लुक् चान्त्यस्य भवति । ओपन्त्यस्यामिति उखा स्थाली ऊर्ध्वक्रिया वा ॥ ८८ ॥ **महेरुचास्य वा** ॥ ८९ ॥ मह पूजायामित्यस्मात् खः प्रत्ययः कित् अन्तलुक् अकारस्य चोकारादेशो वा भवति । मुखमाननम् । मखः यज्ञः अध्वर्युः ईश्वरश्च ॥ ८९ ॥ **न्युङ्खादयः** ॥ ९० ॥ न्युङ्खादयः शब्दाः खप्रत्ययान्ता निपात्यन्ते । नयतेः ख उन्चान्तः । न्युङ्खाः षडोङ्काराः । आदिग्रहणादन्येऽपि ॥९०॥ **मयेधिभ्यामूखेखौ** ॥९१॥ मयि गतौ एधि वृद्धौ इत्याभ्यां यथासंख्यमूखेख इत्येतौ प्रत्ययौ भवतः। मयूखः रश्मिः। एधिखः वराहः॥९१॥**गम्यमिरम्यजिगद्यदिछागाडिखडिगृभृवृस्वृभ्यो गः**॥९२॥एभ्यो गः प्रत्ययो भवति। गम्लृ गतौ। गङ्गा देवनदी। अम गतौ। अङ्गम्। शरीरावयवः। अङ्गः समुद्रः वह्निः राजा च। अङ्गा जनपदः। रमि क्रीडायाम्। रङ्गः नाट्यस्थानम्। अज क्षेपणे च। वेगः त्वरा रेतश्च। गद व्यक्तायां वाचि। गद्गः वाग्विकलः। अदंक् भक्षणे। अद्गः समुद्रः अग्निः पुरोडाशश्च। छोच् छेदने। छागः बस्तः। गड सेचने। गड्गः मृगजातिः। खडण् भेदे। खड्गः मृगविशेषोऽसिश्च। गृत् निगरणे। गर्गः ऋषिः। डुडुभृंगक् पोषणे च। भर्गः रुद्रः सूर्यश्च। वृग्ट् वरणे। वर्ग संघात। औस्वृ शब्दोपतापयोः। स्वर्गः नाकः ॥ ९२ ॥ **पूमुदिभ्यां कित्** ॥ ९३ ॥ आभ्यां किद्गः प्रत्ययो भवति। पूग्श् पवने। पूगः संघः क्रमुकश्च। मुदि हर्षे। मुद्गः धान्यविशेषः ॥ ९३ ॥ **भृवृभ्यां नोऽन्तश्च** ॥ ९४ ॥ आभ्यां किद्गः प्रत्ययो नकारश्चान्तो भवति। डु डु भृंगक् पोषणे च। भृङ्गः पक्षी भ्रमर वर्णविशेषः लवङ्गश्च। वृग्ट् वरणे। वृङ्गः पक्षी उपपतिः ॥ ९४ ॥ **द्रमो णिद्वा** ॥ ९५ ॥ द्रम गतावित्यस्माद्गः प्रत्ययो भवति स च णिद्वा। द्राङ्गं शीघ्रम्। द्राङ्गः पांशुः। द्रङ्गः नगरम्। द्रङ्गा शुल्कशाला ॥ ९५ ॥ **शृङ्गशाङ्गोदयः** ॥ ९६ ॥ शृङ्गादयः शब्दा गप्रत्ययान्ता निपात्यन्ते। शृश् हिंसायामित्यस्य ह्रस्वो नोऽन्तश्च। शृङ्गं विषाणम् शिखरं च। तस्यैव नोऽन्तो वृद्धिश्च। शार्ङ्गः पक्षी। आदिग्रहणाद् हृंग् हरणे हार्गः परितोषः। मृंत् प्राणत्यागे। मार्गः पन्थाः ॥ ९६ ॥ **तडेरागः** ॥ ९७ ॥ तडण् आघाते इत्यस्मादागः प्रत्ययो भवति। तडागम् सर ॥ ९७ ॥ **पतितमितृपृकृशृल्वादेरङ्गः** ॥ ९८ ॥ एभ्योऽङ्ग प्रत्ययो भवति। पत्लृ गतौ। पतङ्ग पक्षी शलभः सूर्यः शालिविशेषश्च। तमूच् काङ्क्षायाम्। तमङ्गः हर्म्यनिर्यूह। तॄ प्लवनतरणयोः। तरङ्ग ऊर्मि। पृश् पालनपूरणयो। परङ्गः खगः वेगश्च। कृत् विक्षेपे। करङ्ग कर्मशीलः। शृश् हिंसायाम्। शरङ्ग पक्षिविशेषः। लूग्श् छेदने। लवङ्गः सुगन्धिवृक्ष। आदिग्रहणादन्येभ्योऽपि ॥ ९८ ॥ **सृवृनृभ्यो णित्** ॥ ९९ ॥ एभ्यो णिदङ्गः प्रत्ययो भवति। सृं गतौ। सारङ्गः हरिणः चातक शबलवर्णश्च। वृग्ट् वरणे। वारङ्गः काण्डखड्गयोः, शल्यं शकुनिश्च। नॄश् नये। नारङ्ग वृक्षजातिः ॥ ९९ ॥ **मनेर्मन्मातौ च** ॥ १०० ॥ मनिंच् ज्ञाने इत्यस्मादङ्ग प्रत्ययो मत्मातौ चास्यादेशौ भवतः। मतङ्गः ऋषिः हस्ती च। मातङ्ग हस्ती अन्त्यजातिश्च ॥ १०० ॥ **विडिविलिकुरिमृदिपिशिभ्यः कित्** ॥ १०१ ॥ एभ्यः किदङ्गः प्रत्ययो भवति। विड आक्रोशे। विडङ्गः वृक्षजातिः गृहावयवश्च। विलत् वरणे, विलत् भेदने वा। विलङ्गः औषधम्। कुरत् शब्दे। कुरङ्गः हरिण। कुरङ्गी भोजकन्या। मृदश् क्षोदे। मृदङ्गः

मुरजः । पिशत् अवयवे । पिशङ्गः वर्णः ॥ १०१ ॥ स्फुलिकलिपल्यादिभ्य इङ्गक् ॥ १०२ ॥ स्फुल्यादिभ्य आदन्तेभ्यश्च इङ्गक् प्रत्ययो भवति । स्फुलत् संचये च । स्फुलिङ्गः स्फुलिङ्गा च अग्निकणः । कलि शब्दसंख्यानयोः । कलिङ्गः राजा । कलिङ्गा जनपदः । पल गतौ । पालिङ्ग ऋषिः शिला च । पातेः पिङ्गः । भातेः भिङ्गः । द्वावपि वर्णविशेषौ । ददातेः दिङ्गः अध्यक्षः । दधातेः धिङ्गः श्रेष्ठी । लातेः लिङ्गं स्त्रीत्वादि हेतुश्च । आलिङ्गः वाद्यविशेषः । श्यतेः शिङ्गः वनस्पतिः किशोरश्च ॥ १०२ ॥ भलेरिदुतौ चातः ॥ १०३ ॥ भलिण् आभण्डने इत्यस्मादिङ्गक् प्रत्ययो भवति अकारस्य चेकारोकारौ भवतः । भिलिङ्गः कर्मारोपकरणम् । भुलिङ्गः ऋषिः पक्षी च । भुलिङ्गाः साल्वावयवाः ॥ १०३ ॥ अदेर्णित् ॥ १०४ ॥ अदंक् भक्षणे इत्यस्मात् णिदिङ्गक् प्रत्ययो भवति । आदिङ्गः वाद्यजातिः ॥ १०४ ॥ उच्चिलिङ्गादयः ॥ १०५ ॥ उच्चिलिङ्गादयः शब्दा इङ्गक्प्रत्ययान्ता निपात्यन्ते । उत्पूर्वाच्चलेरस्येत्वं च । उच्चिलिङ्गः दाडिमी । आदिग्रहणादन्येऽपि ॥ १०५ ॥ माङस्तुलेरुङ्गक् च ॥ १०६ ॥ माङ्पूर्वात्तुलण् उन्माने इत्यस्मात् उङ्गक् इङ्गक् च प्रत्ययौ भवतः । मातुलुङ्गः बीजपूरः । मातुलिङ्गः स एव ॥ १०६ ॥ कमितमिशमिभ्यो डित् ॥ १०७ ॥ एभ्यो डिदुङ्गः प्रत्ययो भवति । कमूङ् कान्तौ । कुङ्गा जनपदः । तमूच् काङ्क्षायाम् । तुङ्गः महावर्ष्मा । शमूच् उपशमे । शुङ्गः मुनिः । शुङ्गा विनता । शुङ्गाः कन्दल्यः ॥ १०७ ॥ सर्तेः सुर् च ॥ १०८ ॥ सृं गतावित्यस्मादुङ्गः प्रत्ययः सुर्चास्यादेशो भवति । सुरुङ्गा गूढमार्गः ॥ १०८ ॥ स्थार्तिजनिभ्यो घः ॥ १०९ ॥ एभ्यो घः प्रत्ययो भवति । ष्ठां गतिनिवृत्तौ । स्थाघः गाधः। ऋं प्रापणे च । अर्घः मूल्यम् मानप्रमाणं पादोदकादि च ॥ जनैचि प्रादुर्भावे । जङ्घा शरीरावयवः ॥ १०९ ॥ मघाघङ्घाघदीर्घादयः ॥ ११० ॥ एते घप्रत्ययान्ता निपात्यन्ते । मङ्घेर्नघलोपश्च । मघा नक्षत्रम् । हन्तेर्हस्य घश्च । घङ्घः घस्मरः । घङ्घा काङ्क्षा । अमेर्लुक् च । अघं पापम् । दृणातेर्दीर् च । दीर्घं आयातः उच्चश्च । आदिशब्दादन्येऽपि ॥ ११० ॥ सर्तेरघः ॥ १११ ॥ सृं गतावित्यस्मादघः प्रत्ययो भवति । सरघा मधुमक्षिका ॥ १११ ॥ कुपूसमिण्भ्यश्चट् दीर्घश्च ॥ ११२ ॥ कुपूभ्यां सम्पूर्वाच्चेणश्च चट् प्रत्ययो दीर्घश्च भवति । टो ङ्यर्थः । कुंङ् शब्दे । कूचः हस्ती । कूची प्रमदा चित्रभाण्डम् उदश्विद्विकारश्च । पूग्श् पवने । पूचः पूची मुनिः । इंण्क् गतौ । समीचः ऋत्विक् । समीचं मिथुनयोगः । समीची पृथ्वी उदीची च । दीर्घवचनाद्गुणो न भवति ॥ ११२ ॥ कूर्चचूर्चादयः ॥ ११३ ॥ कूर्च इत्यादय शब्दाश्चट्प्रत्ययान्ता निपात्यन्ते । कवतेः किरतेः करोतेर्वा ऊरादेशश्चान्तस्य । कूर्चं श्मश्रु आसनं तन्तुवायोपकरणं यतिपवित्रकं च । कूर्चमिव कूर्चकः कूर्चिकेति च भवति । चरतेश्चोरयतेर्वा चूरादेशश्च । चूर्चः बलवान् । आदिशब्दादन्येऽपि ॥ ११३ ॥ कल्यविमदिमणिकुकणिकुटिकृभ्योऽचः ॥ ११४ ॥ एभ्योऽचः प्रत्ययो भवति । कलि शब्दसंख्यानयोः । कलचः गणकः । अव रक्षणादौ । अवचः उच्चैस्तरः । मदैच् हर्षे । मदचः मत्तः । मण शब्दे । मणचः शकुनिः। कुंङ् शब्दे । कवचं वर्म । कण शब्दे । कणचः कुणपः । कुटत् कौटिल्ये । कुटचः वृक्षजातिः । कृत् विक्षेपे । करचः धान्यावपनम् ॥ ११४ ॥ क्रकचादयः ॥ ११५ ॥ क्रकच इत्यादयः शब्दा अच-

प्रत्ययान्ता निपात्यन्ते । क्रमेः कश्च । क्रकचः करपत्रः । आदिशब्दादन्येऽपि ॥ ११५ ॥ **पिशेराचक्** ॥ ११६ ॥ पिशत् अवयवे इत्यस्मादाचक् प्रत्ययो भवति ।
पिशाचः व्यन्तरजातिः ॥११६॥ **मृत्रपिभ्यामिचः** ॥११७॥ आभ्यामिचः प्रत्ययो भवति । मृंत् प्राणत्यागे । मरिचमूषणम् । त्रपौषि लज्जायाम् । त्रपिचा कुथा ॥११७॥
**म्रियतेरीचण्** ॥ ११८ ॥ मृंत् प्राणत्यागे इत्यस्मादीचण् प्रत्ययो भवति । मारीचः रावणमातुलः ॥ ११८ ॥ **लषेरुचः** कश्च ॥ ११९ ॥ लषी कान्तावित्यस्मादुचः
प्रत्ययोऽन्त्यस्य च को भवति । लकुचः वृक्षजातिः ॥ ११९ ॥ **गुडेरूचट्** ॥ १२० ॥ गुडत् रक्षायामित्यस्मादूचट् प्रत्ययो भवति । गुडूची छिन्नरुहा । कुट्यादित्वात्
ङित्त्वम् ॥ १२० ॥ **सिवेर्डित्** ॥ १२१ ॥ षिवूच् ऊतौ इत्यस्मादूचट् प्रत्ययो डित् भवति । सूचः पिशुनः क्लिभिश्च । सूची संधानकरणी ॥ १२१ ॥
**चिमेर्डोचडश्चौ** ॥ १२२ ॥ चिमिभ्यां प्रत्येकं डोचडश्च इति प्रत्ययौ भवतः । वचनभेदान्न यथासंख्यम् । चिगूट् चयने । चोचः वृक्षविशेषः । चञ्चा
तृणमयः पुरुषः । डुमिंगद् प्रक्षेपणे । मोचा कदली । मञ्चः पर्यङ्कः ॥ १२२ ॥ **कुटिकुलिकल्युदिभ्य इञ्चक्** ॥ १२३ ॥ एभ्य इञ्चक् प्रत्ययो भवति ।
कुटेः, कुटिञ्चः क्षुद्रकर्कटः । कुले, कुलिञ्चः राशिः । कले., कलिञ्चः उपशाखावयवः । उद आघाते सौत्र । उदिञ्चः कोणः येन तूर्यं वाद्यते, परपुष्टश्च
॥ १२३ ॥ **तुदिमदिपद्यदिगुगमिकचिभ्यच्छक्** ॥ १२४ ॥ एभ्यच्छक् प्रत्ययो भवति । तुदीत् व्यथने । तुच्छ स्तोकः । मदैच् हर्षे ।
मच्छ. मत्स्य प्रमत्तपुरुषश्च । मच्छा स्त्री । पदिच् गतौ । पच्छः शिला । अदंक् भक्षणे । अच्छः निर्मल । गुंङ् शब्दे । गुच्छः स्तवकः । गम्लं गतौ ।
गच्छ क्षुद्रवृक्षः । कचि बन्धने । कच्छः कूर्मपादः कुक्षिः नद्यवकुटारश्च । कच्छा जनपदः । वाहुलकात् कत्वाभावः ॥ १२४ ॥ **पीपूडो ह्रस्वश्च** ॥ १२५ ॥
आभ्यां छक् प्रत्ययो ह्रस्वश्च भवति । पीङ्च् पाने । पिच्छम् शकुनिपत्रम् । पिच्छः गुणविशेषः । यद्वान् पिच्छिल उच्यते । पूङ् पवने । पुच्छं वालधि ॥ १२५ ॥
**गुलुञ्छपिलिपिञ्छैधिच्छादयः** ॥ १२६ ॥ एते छप्रत्ययान्ता निपात्यन्ते । गुडेर्ल उम् चान्तः। गुलुञ्छः स्तवकः। पीलेरिपिनोन्तो ह्रस्वश्च । पिलिपिञ्छः रक्षो-
विशेषः । एधेरिट् च । एधिच्छः नगः । आदिग्रहणात् पिञ्छादयोऽपि भवन्ति ॥ १२६ ॥ **वियो जक्** ॥ १२७ ॥ वींक् प्रजनकान्त्यसनखादनेषु च इत्यस्मात् जक्
प्रत्ययो भवति । वीजम् उत्पत्तिहेतुः ॥ १२७ ॥ **पुव पुन् च** ॥ १२८ ॥ पूङ् पवने इत्यस्मात् जक् प्रत्ययोऽस्य च पुन् इत्यादेशो भवति । पुञ्जः राशिः ॥१२८॥
**कुवः कुब्कुनौ च** ॥ १२९ ॥ कुंङ् शब्दे इत्यस्माज्जक् प्रत्ययोऽस्य च कुब् कुन् इत्यादेशौ भवतः । कुब्ज वक्रानताङ्गः गुच्छश्च । कुञ्जः हनु पर्वतैकदेशश्च ।
निकुञ्जः गहनम् ॥ १२९ ॥ **कुटेरजः** ॥ १३० ॥ कुटत् कौटिल्य इत्येतस्मादजः प्रत्ययो भवति । कुटजः वृक्षविशेष । कुटादित्वात् ङित्त्वम् । कुटजी ॥ १३० ॥
**भिषेर्भिषभिष्णौ च वा** ॥ १३१ ॥ भिषेरजः प्रत्ययो भिषभिष्ण इत्यादेशौ चास्य वा भवतः । भिषिः सौत्र । भिषजः । आदेशवलान्न गुण । भिष्णज. वैद्य ।
भेषजमौषधम् ॥ १३१ ॥ **मुर्वेर्मुर् च** ॥ १३२ ॥ मुर्वै बन्धने इत्यस्मादजः प्रत्ययोऽस्य च मुरित्यादेशो भवति । मुरजः मृदङ्गः ॥१३२॥ **बलेर्वोन्तश्च वा** ॥१३३॥

वल प्राणनधान्यावरोधयोरित्यस्मात् अजः प्रत्ययो वकारश्चान्तो वा भवति । वल्वजः मुञ्जविशेषः । वलजा सतुसो धान्यपुञ्जः ॥ १३३ ॥ उटजादयः ॥ १३४ ॥ उटजादयः शब्दा अजप्रत्ययान्ता निपात्यन्ते । वटेर्वस्योत्वं च । उटजं मुनिकुटीरः । आदिशब्दात् भूर्जभरुजादयो भवन्ति ॥ १३४ ॥ कुलेरिजक् ॥ १३५ ॥ कुल बन्धुसंस्त्यानयोरित्यस्मात् इजक् प्रत्ययो भवति । कुलिजं मानम् ॥ १३५ ॥ कृगोऽञ्जः॥ १३६ ॥ करोतेरञ्जः प्रत्ययो भवति । करञ्जः वृक्षजातिः ॥ १३६ ॥ झमेर्झः ॥ १३७ ॥ झमू अदन इत्यस्मात् झ प्रत्ययो भवति । झञ्झा ससीकरो मेघवातः ॥ १३७ ॥ लुपेष्टः ॥ १३८ ॥ लुप स्तेय इत्यस्माट्टः प्रत्ययो भवति । लोष्टो मृत्पिण्डः ॥ १३८ ॥ नमितनिजनिवनिसनो लुक् च ॥ १३९ ॥ एभ्यष्टः प्रत्ययो भवति लुक् चान्तस्य भवति । णमं प्रहृत्वे । नटः भरतपुत्रः । तनूयी विस्तारे । तटं कूलम् । जनैचि प्रादुर्भावे । जटा ग्रथितकेशसंघातः । वन पण संभक्तौ । वटः न्यग्रोधः । सटा अग्रथितः केशसंघातः ॥ १३९ ॥ जनिपणिकिजुभ्यो दीर्घश्च ॥ १४० ॥ एभ्यष्टः प्रत्ययो दीर्घश्चैषां गुणापवादो भवति । जनैचि प्रादुर्भावे । पणि व्यवहारस्तुत्योः । जाण्टः । पाण्टः । पक्षिविशेषावेतौ । किजू सौत्रौ । कीटः क्षुद्रजन्तुः । जूटः मौलिः ॥ १४० ॥ घटाघाटाघण्टादयः ॥ १४१ ॥ एते टप्रत्ययान्ता निपात्यन्ते । हन्तेर्घघावनश्च । घटा वृन्दम् । घाटा स्वाङ्गम् । घण्टा वाद्यविशेषः । आदिग्रहणाच्छटादयो भवन्ति ॥१४१॥ दिव्यविश्रुकुकर्विशकिकङ्किकृपिचपिचमिकम्येधिकर्किमर्किकक्खितृकृसृभृवृभ्योऽटः ॥१४२॥ एभ्योऽटः प्रत्ययो भवति । दिवूच् क्रीडादौ । देवटः देवकुलविशेषः शिल्पी च । अव रक्षणादौ । अवटः प्रपातः कूपश्च । श्रुंट् श्रवणे । श्रवटः छत्रम् । कुंङ् शब्दे । कवटः उच्छिष्टम् । कर्व गतौ । कर्वटं क्षुद्रपत्तनम् । शक्लृंट् शक्तौ । शकटम् अनः। ककुङ् गतौ । कङ्कटः सन्नाहः । कङ्कटं सीमा । कृपौङ् सामर्थ्ये । कर्पटं वासः । चप सांत्वने । चपटः रसः । चमू अदने । चमटः वत्सरः । कमूङ् कान्तौ । कमटः वामनः । एधि वृद्धौ । एधटः वल्मीकः । कर्किमर्की सौत्रौ । कर्कटः कपिलः कुलीरश्च । कर्कटी त्रपुसी । मर्कटः कपि क्षुद्रजन्तुश्च । कक्ख हसने । कक्खटः कर्कशः । तॄ तरणप्लवनयोः। तरटः पीनः। डुकृंग् करणे । करटः काकः करिकपोलश्च । सृं गतौ । सरटः कृकलासः । डुडुभृंग्क् पोषणे च । भरटः पुत्रविशेषः भृत्यः कुलालश्च । वृग्ट् वरणे । वरटः क्षुद्रधान्यम् प्रहारश्च ॥ १४२ ॥ कुलिविलिभ्यां कित् ॥ १४३ ॥ आभ्यां किदटः प्रत्ययो भवति । कुल बन्धुसंस्त्यानयोः । कुलटा बन्धकी । विलत् वरणे । विलटा नदी ॥ १४३ ॥ कपटकीकटादयः ॥१४४॥ कपटादयः शब्दा अटप्रत्ययान्ता निपात्यन्ते । कम्पेर्नलोपश्च । कपटं माया । ककेरत ईच । कीकटः कृपणः । आदिशब्दाल्लघटपर्पटादयो भवन्ति ॥ १४४ ॥ आनिशृपृवृललिभ्य आटः ॥ १४५ ॥ एभ्य आटः प्रत्ययो भवति । अनक् प्राणने । अनाटः शिशुः । शॄश् हिंसायाम् । शराटः शकुन्तः । पॄश् पालनपूरणयोः । पराट आयुक्तकः । वृङ्श् संभक्तौ । वराटः सेवकः । ललिण् ईप्सायाम् । ललाटम् अलिकम् ॥ १४५ ॥ सृसृपेः कित् ॥ १४६ ॥ आभ्यां किदाटः प्रत्ययो भवति । सृं गतौ । सृाटः पुरस्सरः । सृप्लृं गतौ । सृपाटः अल्पः कुमुदादिपत्रं च । सृपाटी उपानत् कुप्यम् अल्पपुस्तकश्च ॥ १४६ ॥ किरो लश्च वा ॥ १४७ ॥

किरतेः किदाटः प्रत्ययो लश्चान्तो वा भवति । किलाटो भक्ष्यविशेषः । किराटो वणिक् म्लेच्छश्च ॥ १४७ ॥ कपाटविराटशृङ्गाटप्रपुन्नाटादयः ॥ १४८ ॥ एते आटप्रत्ययान्ता निपात्यन्ते । कम्पेर्नलोपश्च । कपाटः अररिः । जपादीनां पो वेति वत्वे कवाटः । वृङ् इत्वं च । विराट राजा । श्रयते शृङ्ग् च । शृङ्गाट जलजविशेषः विपणिमार्गश्च । प्रपूर्वात् पुणेर्नश्च । प्रपुन्नाटः एडगजः । आदिशब्दात् खल्वाटादयोऽपि भवन्ति ॥ १४८ ॥ चिरेरिटो भ् च ॥ १४९ ॥ चिरेः सौत्रादिटः प्रत्ययो भवति भकारश्चान्तादेशो भवति । चिर्भिटी वालुङ्की ॥ १४९ ॥ टिण्टश्चर् च वा ॥ १५० ॥ चिरेष्टिण्टः प्रत्ययश्चर इति चास्यादेशो वा भवति । चिरिण्टीचरिण्टी च प्रथमवयाः स्त्री ॥ १५० ॥ तृकृकृपिकम्पिकृणिभ्यः कीटः ॥ १५१ ॥ एभ्यः किदीटः प्रत्ययो भवति । तॄ प्लवनतरणयोः । तिरीटं कूलवृक्षः मुकुटं वेष्टनं च । कृत् विक्षेपे । किरीटं मुकुटं हिरण्यं च । कृपौङ् सामर्थ्ये । कृपीटं हिरण्यं जलं च । कपुङ् चलने । कम्पीटं कम्पः कम्प च । कृपीत् विलेखने । कृपीटं जलम् ॥ १५१ ॥ खञ्जेररीटः ॥ १५२ ॥ खजु गतिवैकल्ये इत्यस्मादरीटः प्रत्ययो भवति । खञ्जरीटः खञ्जनः ॥ १५२ ॥ गृजृदृवृभृभ्य उट उडश्च ॥ १५३ ॥ एभ्य उट उडश्च प्रत्ययौ भवतः । भिन्नविभक्तिनिर्देश उटस्योत्तरत्रानुवृत्त्यर्थः । अप्रकृतस्यापि उडस्य विधानमिह लाघवार्थम् । गॄश् शब्दे । गरुटः गरुडश्च गरुत्मान् । जॄष्च् जरसि । जरुटः जरुडश्च वनस्पतिः । दॄग् विदारणे । दरुटः दरुडश्च विडालः । वॄग्श् वरणे । वरुटः वरुडश्च मेषः । भृश् भर्जने च । भरुटः भरुडश्च मेष एव ॥ १५३ ॥ मङ्केर्मकमुकौ च ॥ १५४ ॥ मकुङ् मण्डने इत्यस्मात् उटः प्रत्ययो मक मुक इत्यादेशौ चास्य भवतः । मकुटः मुकुटश्च किरीटः ॥ १५४ ॥ नर्कुटकुक्कुटोत्कुरुटमुरुटपुरुटादयः ॥१५५॥ एते उटप्रत्ययान्ता निपात्यन्ते । नृतेः कश्च । नर्कुटः बन्दी । कुकेः कोऽन्तश्च । कुक्कुट कृकवाकुः । उत्पूर्वात् कृगः कुर् च । उत्कुरुटः कचवरपुञ्जः । मुरिपुर्योर्गुणाभावश्च । मुरुटः यत् वेण्वादिमूलमृजूकर्तुं न शक्यते । पुरुटः जलजन्तुः । आदिशब्दात् स्थपुटादयोऽपि भवन्ति ॥ १५५ ॥ दुरो द्रः कूटश्च दुर् च ॥ १५६ ॥ दुरपूर्वात् द्रणातेः किदूट उटश्च प्रत्ययौ दुर्चास्यादेशो भवति । दुर्दुरूटः दुर्मुखः । दुर्दुरुटः अदेशकालवादी ॥ १५६ ॥ बन्धेः ॥ १५७ ॥ बन्धंश् बन्धने इत्येतस्मात् किदूटः प्रत्ययो भवति । वधूटी प्रथमवयाः स्त्री ॥ १५७ ॥ चपेरेटः ॥ १५८ ॥ चप सांत्वने इत्यस्मादेटः प्रत्ययो भवति । चपेटः चपेटा वा हस्ततलाहतिः ॥ १५८ ॥ ग्रो णित् ॥ १५९ ॥ गॄत् निगरणे इत्यस्मात् णिदेटः प्रत्ययो भवति । गारेटः ऋषिः ॥ १५९ ॥ कृशकृशाखेरोटः ॥१६०॥ एभ्य ओटः प्रत्ययो भवति । डु कृंग् करणे । करोटः भृत्यः शिरः कपालं च ॥ करोटं भाजनविशेषः ॥ शकृंद् शक्तौ । शकोटः बाहुः ॥ शाखृ श्लाखृ व्याप्तौ । शाखोटः वृक्षविशेषः ॥१६०॥ कपोटचक्कोटाक्षोटकर्कोटादयः ॥१६१॥ एते ओटप्रत्ययान्ता निपात्यन्ते । कवृङ् वर्णे पश्च । कपोटः वर्णः कितवश्च । वचेः कश्च । वक्कोटः बकः । अश्नातेः सश्च परादिः । अक्षोटः फलवृक्षः । कृगः कोऽन्तश्च । कर्कोटः नागः । आदिशब्दादन्येऽपि भवन्ति ॥ १६१ ॥ वनिकणिकाश्युषिभ्यष्ठः ॥१६२॥ एभ्यष्ठप्रत्ययो भवति । वन भक्तौ । वण्ठः अनिविष्टः। कण शब्दे । कण्ठः कन्धरा । काशृङ्

दीप्तौ। काष्ठं दारु। काष्ठा दिक् अवस्था च। उषू दाहे। ओष्ठः दन्तच्छदः ॥१६२॥ पीविशिकुणिपृषिभ्यः कित् ॥१६३॥ एभ्यः कित् ठः प्रत्ययो भवति। पीङ् च् पाने। पीठमासनम्। विशंत् प्रवेशने। विष्ठा पुरीषम्। कुणत् शब्दोपकरणयोः। कुण्ठः अतीक्ष्णः। पृषू सेचने। पृष्ठः अङ्कुशः शरीरैकदेशश्च ॥ १६३ ॥ कुषेर्वा ॥ १६४ ॥ कुषश् निष्कर्षे इत्यस्मात् ठः प्रत्ययो भवति स च वा कित्। कुष्ठं व्याधिः गन्धद्रव्यं च ॥ कोष्ठः कुशूलः उदरं च ॥ १६४ ॥ शमेर्लुक् च वा ॥१६५॥ शमूच् उपशमे इत्यस्मात् ठः प्रत्ययो भवति लुक् चान्तस्य वा भवति। शठः धूर्तः। शण्ठः स एव नपुंसकं च ॥१६५॥ पष्ठैधिठादयः॥१६६॥ पष्ठादयः शब्दाष्ठप्रत्ययान्ता निपात्यन्ते। पुषेः कित् ठः पषादेशश्च। पष्ठः प्रस्थः पर्वतश्च। एधतेरिट् च। एधिठं वनम्। एधिठः गिरिसरिद्द्रहः। आदिशब्दादन्येऽपि ॥१६६॥ मृजॄशॄकम्यमिरमिरपिभ्योऽठः ॥ १६७ ॥ एभ्योऽठः प्रत्ययो भवति। मृंत् प्राणत्यागे। मरठः दध्यतिद्रवीभूतम् कृमिजातिः कण्ठः प्राणश्च। जॄष्च् जरसि। जरठः कठोरः। शॄश् हिंसायाम्। शरठः आयुधं पापं क्रीडनशीलश्च। कमूङ् कान्तौ। कमठः भिक्षाभाजनम् कूर्मास्थि कच्छपः मयूरः वामनश्च। अम गतौ। अमठः प्रकर्षगतिः। रमि क्रीडायाम्। रमठः देशः कृमिजातिः क्रीडनशीलः म्लेच्छः देवश्च विलातानाम्। रप व्यक्ते वचने। रपठः विद्वान् मण्डूकश्च ॥ १६७॥ पञ्चमात् डः ॥ १६८ ॥ पञ्चमान्तात् धातोर्डः प्रत्ययो भवति। षण् भक्तौ। पण्डः वन वृषभश्च ॥ बाहुलकात् सत्वाभावः। भण शब्दे। भण्डः प्रहसनकरः बन्दी च। चण शब्दे। चण्डः क्रूरः। पणि व्यवहारस्तुत्योः। पण्डः शण्ठः। गणण् संख्याने। गण्डः पौरुषयुक्तः पुरुषः। मण शब्दे। मण्डः रश्मिः अग्रम् अन्नविकारश्च। वन भक्तौ। वण्डः अल्पशेफः निश्चर्माग्रशिश्नश्च। शमूदमूच् उपशमे। शण्डः उत्सृष्टः पशुः ऋषिश्च। दण्डः वनस्पतिप्रतानः राजशासनं नालं प्रहरणं च। रमिं क्रीडायाम्। रण्डः पुरुषः, रण्डा स्त्री, रण्डमन्तःकरणम्। त्रयमपि स्वसंबन्धिशून्यमेवमुच्यते। तमेस्तनेर्वा तण्ड. ऋषिः। वितण्डा तृतीयकथा। गमेः गण्डः कपोलः। भामि क्रोधे। भाण्डमुपस्करः ॥ १६८ ॥ कणयणिखनिभ्यो णिद्वा ॥ १६९ ॥ एभ्यो डः प्रत्ययो भवति स च णिद्वा। कण अण शब्दे। काण्डः शरः फलसंघातः पर्व च। कण्डं भूषणं पर्व च। आण्डः मुष्कः अण्डः स एव योनिविशेषश्च। खनूग् अवदारणे। खाण्डः कालाश्रयो गुडः। खण्डः इक्षुविकारोऽन्यः। खण्डं शकलम् ॥ १६९ ॥ कुगुहुनीकुणितुणिपुणिमुणिशुन्यादिभ्यः कित् ॥१७०॥ एभ्यः कित् डः प्रत्ययो भवति। कुङ् शब्दे। कुडः घटः हलं च। गुंङ्शब्दे। गुडः गोलः इक्षुविकारश्च। गुडा सन्नाहः। हुंक् दानादनयोः। हुडः मूर्खः मेषश्च। णींग् प्रापणे। नीडं कुलायः। कुणत् शब्दोपकरणयोः। कुण्डं भाजनम् जलाधारविशेषश्च। कुण्डः भर्तरि जीवति जारेण जातः अपद्विन्द्रियश्च। तुणत् कौटिल्ये। तुण्डं मुखम्। पुणत् शुभे। पुण्डः भिन्नवर्णः। मुणत् प्रतिज्ञाने। मुण्डः परिवापितकेशः। शुनत् गतौ। शुण्डा सुरा हस्तिहस्तश्च। आदिग्रहणादन्येभ्योऽपि भवति ॥ १७० ॥ ऋसृतृव्यालिह्वविचमिवमियमिचुरिकुहेरडः ॥१७१॥ एभ्योऽडः प्रत्ययो भवति। ऋंक् गतौ। अरडः तरुः। सृं गतौ सरडः भुजपरिसर्पः तरुश्च। तॄ प्लवनतरणयोः। तरडः वृक्षजातिः। व्येग् संवरणे। व्याडः दुःशीलः हिंस्रः पशुः

चमू अदने । चमडः पशुजातिः । टु वमू
भुजगश्च । लिहींक् आस्वादने । लेहडः श्वा चौर्यग्रासी च । अव रक्षणादौ । अवडः क्षेत्रविशेषः । चुरण् स्तेये । चोरडः चोरः । कुहणि विस्मापने । कुहडः उन्मत्तकः ॥ १७१ ॥
उद्गिरणे । वमडः लूताजातिः । यमू उपरमे । यमडो वनस्पतिः युगलं च । विपूर्वाद्धन्तेरनो लुक्च ॥ विहडः शकुनिः मूढचित्तश्च । कपेर्हः प्रत्ययाकारस्य
विहडकहोडकुरडकेरडक्रोडादयः ॥ १७२ ॥ एतेऽडप्रत्ययान्ता निपात्यन्ते । कुगः कित् प्रत्ययाकारस्य चौकारः । क्रोडः किरिः
चौकारः । कहोडः ऋषिः । कुरेर्गुणाभावश्च । कुरडः मार्जारः । किरतेः केर् च । केरडः त्रैराज्ये राजा । जृष् च् जरसि । जरण्ड अतीतवयस्कः । कृत्
अङ्कश्च । आदिग्रहणाल्लहोडादयो भवन्ति॥१७२॥ जृकृतृशृसृभृवृभ्योऽण्डः॥१७३॥एभ्योऽण्डः प्रत्ययो भवति । शृश् हिंसायाम् । शरण्डः हिंस्रः आयुधं च । सृं गतौ । सरण्डः कृमिजातिः
विक्षेपे । करण्डः समुद्गः कृमिजातिश्च । तॄ प्लवनतरणयोः। तरण्डः प्लवः वायुश्च । भरण्डः भण्डजातिः पक्षी च । वृगट् वरणे । वरण्डः कुड्यम् तृणकाष्ठादिभारश्च ॥ १७३ ॥
इषीका वायुः भूतसंघातः तृणसमवायश्च । टुडु भृंगक् पोषणे च । पोगण्डः विकलाङ्गः युवा च ॥१७४॥ वनेस्त च ॥१७५॥ वन भक्तावित्यस्मादण्डः
पूगो गादिः ॥ १७४ ॥ पूग्श्प्वने इत्यस्मात् गकारादिरण्ड प्रत्ययो भवति । एतेऽण्डप्रत्ययान्ता निपात्यन्ते । पिचेरगुणत्वं च । पिचण्डः
प्रत्ययो भवति तकारश्चान्तादेशः । वतण्डः ऋषिः ॥ १७५ ॥ पिचण्डैरण्डस्वरण्डादयः ॥ १७६ ॥ आदिग्रहणात् कूष्माण्डशयण्डशयाण्डादयो भवन्ति ॥१७६॥
लघुलगुडः । ईरेर्गुणश्च । एरण्डः पञ्चाङ्गुलः। स्वाद भक्षणे । अन्त्यस्वरादेररादेशश्च । स्वरण्डः सर्वर्तुकम् । १७७ ॥ कुशेरुण्डक् ॥ १७८ ॥ कुशच् श्लेषे
लगेरुडः ॥ १७७ ॥ लगे सङ्गे इत्यस्मात् उडः प्रत्ययो भवति । लगुडः यष्टिः । गृजृदृवृभृभ्यस्तु उडो विहित एव ॥ आभ्यां ढः प्रत्ययो भवति । शमूच् उपशमे । शण्ढः नपुंसकम् ।
इत्यस्मात् उण्डक् प्रत्ययो भवति । कुशुण्डः वपुष्मान् ॥ १७८ ॥ शमिपणिभ्यां ढः ॥ १७९ ॥ कुणत् शब्दोपकरणयोरित्यस्मात् कित् ढः प्रत्ययो भवति । कुण्ढः धूर्तः। बाहुलकान्न
पण भक्तौ । पण्ढः स एव । बाहुलकात्सत्वाभाव. ॥१७९॥ कुणेः कित् ॥१८०॥ षहिमर्षणे इत्यस्मात् ढः प्रत्ययः षा चास्यादेशो भवति । अषाढा नक्षत्रम् ॥ १८१ ॥
दीर्घः ॥ १८० ॥ नञः सहेः षा च ॥ १८१ ॥ नञ्पूर्वात् एण्‌ः कुरङ्गः। उर्वै हिंसायाम् । उर्णा मेषादिलोम भ्रुवोरन्तरावर्तश्च ।
इणुर्विशावेणिपृकृवृतृजृदृसृपिपणिभ्यो णः॥१८२॥ एभ्यो णः प्रत्ययो भवति। इंणक् गतौ। एणः कुरङ्गः। पृश् पालनपूरणयोः। पर्ण पत्रं
शोच् तक्षणे । शाणः परिमाणम् शस्त्रतेजनं च । वेणृग् गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेण्णा कृष्णवेण्णा च नाम नदी । तॄ प्लवनतरणयोः ।
शिरश्च । कृत् विक्षेपे । कर्णः श्रवणं कौन्तेयश्च । वृश् वरणे । वर्णः शुक्लादिः ब्राह्मणादिः अकारादिः यशः स्तुतिः प्रकारश्च । पणि
तर्णः वत्सः । जृष्च् जरसि । जर्णः चन्द्रमाः वृक्षः कर्कः क्षयधर्मा शकुनिश्च । दृङ्त् आदरे । दर्णः पर्णम् । सृप्लृं गतौ । सर्पणः सरीसृपजातिः ।
व्यवहारस्तुत्योः । पणनम् व्यवहार ॥ १८२ ॥ घृवीह्वाशुष्युषितृषिकृष्यर्तिभ्यः कित् ॥ १८३ ॥ एभ्यः कित् णः प्रत्ययो भवति । घृं सेचने ।

घृणा कृपा । वींक् प्रजनादिषु । वीणा वल्लकी । ह्वेंग् स्पर्धाशब्दयोः । हूणः म्लेच्छजातिः । शुषंच् शोषणे । शुष्णः निदाघः । उषू । दाहे । उष्णः स्पर्शविशेषः । ञि तृष्च् पिपासायाम् । तृष्णा पिपासा । कृषींत् विलेखने । कृष्णः वर्णः विष्णुः मृगश्च । ॠंक् गतौ । ऋणं वृद्धिधनम् जलं दुर्गभूमिश्च ॥ १८३ ॥ द्रोर्वा ॥ १८४ ॥ द्रुं गतौ इत्यस्मात् णः प्रत्ययः स च किद्वा भवति । द्रुणा ज्या । द्रोणः चतुराढकं पाण्डवाचार्यश्च । द्रोणी नौः । गौरादित्वाद् ङीः ॥ १८४ ॥ स्थाक्षुतोरूच्च ॥ १८५ ॥ एभ्यो णः प्रत्यय ऊकारश्चान्तादेशो भवति । ष्ठा गतिनिवृत्तौ । स्थूणा तन्तुधारिणी गृहधारिणी शरीरधारिणी लोहप्रतिमाव्याधिविशेषौ च । टुक्षुंक् शब्दे । क्षूणमपराधः । तुंक् वृत्त्यादिषु । तूणः इषुधिः ॥ १८५ ॥ भ्रूणतृणगुणकार्ष्णतीक्ष्णश्लक्ष्णाभीक्ष्णादयः ॥ १८६ ॥ एते णप्रत्ययान्ता निपात्यन्ते । भृगो भ्रू च । भ्रूणः निहीनः अर्भकः स्त्रैणगर्भश्च । तरतेर्ह्रस्वश्च । तृणं शष्पादि । गायतेर्गमेर्गृणातेर्वा गुभावश्च । गुणः उपकारः आश्रितः अप्रधानं ज्या च । कृगो वृद्धिः कान्तश्च । कार्ष्णः शिल्पी । तिजेर्दीर्घः सश्च परादिः । तीक्ष्णं निशितम् । श्लिषेः सोऽन्तोचेतः । श्लक्ष्णमकर्कशं सूक्ष्मं च । अभिपूर्वादिषेः किच्च सोन्तः । अभीक्ष्णमजस्रम् । आदिग्रहणादन्येऽपि ॥ १८६ ॥ तॄकॄशॄपॄभॄवृश्रुरुरुहिलक्षिविचक्षिचुक्किचुक्कितङ्ग्यङ्गिमङ्किकङ्किचरिसमीरेरणः ॥ १८७ ॥ एभ्योऽणः प्रत्ययो भवति । तॄ प्लवनतरणयोः । तरणम् । कॄत् विक्षेपे । करणम् । शॄश् हिंसायाम् । शरणं गृहम् । पॄश् पालनपूरणयोः । परणम् । डुडुभृंग्क पोषणे च । भरणम् । वृग्ट् वरणे । वरणः वृक्षः सेतुबन्धश्च । वरणं कन्याप्रतिपादनम् । श्रुट् श्रवणे । श्रवणः कर्णः भिक्षुश्च । रुक् शब्दे रुंङ् रेषणे वा । रवणः करभः अग्निः द्रुमः वायुः भृङ्ग· शकुनिः सूर्यः घण्टा च । रुहं जन्मनि । रोहणः गिरिः । लक्षीण् दर्शनाङ्कनयो । लक्षणं व्याकरणम् शुभाशुभसूचकं रेखातिलकादि अङ्कनं च । चक्षिक् व्यक्तायां वाचि । विचक्षणः विद्वान् । चुक्कण् व्यथने । चुक्कणः व्यायामशील । चुक्क भाषणे । चुक्कण· श्वा वावदूकश्च । तगु गतौ । तङ्गणाः जनपद· । अगु गतौ । अङ्गणम् अजिरम् । मकुङ् मण्डने । मङ्कण ऋषिः । ककुङ् गतौ । कङ्कणः प्रतिसरः । चर भक्षणे च । चरणः पादः । ईरिक् गतिकम्पनयोः सम्पूर्वः । समीरणः वातः ॥ १८७ ॥ कॄगॄपॄकृपिवृषिभ्यः कित् ॥ १८८ ॥ एभ्यः किदणः प्रत्ययो भवति । कॄत् विक्षेपे । किरणः रश्मिः । गॄत् निगरणे । गिरणः मेघः आचार्यः ग्रामश्च । पॄश् पालनपूरणयोः । पुरण समग्रयिता समुद्रः पर्वतविशेषश्च । कृपौङ् सामर्थ्ये । कृपणः कीनाशः । वृषू सेचने । वृषणः मुष्क. ॥ १८८ ॥ धृषिवहेरिचोपान्त्यस्य ॥ १८९ ॥ आभ्यां किदणः प्रत्यय इच्चोपान्त्यस्य भवति । ञि धृषाट् प्रागल्भ्ये । धिषणः बृहस्पतिः । धिषणा बुद्धिः । वहीं प्रापणे । विहणः ऋषिः पाठश्च ॥ १८९ ॥ चिक्कणकुक्कणकृकणकुङ्कणत्रवणोल्वणोरणलवणवङ्क्षणादयः ॥ १९० ॥ एते किदणप्रत्ययान्ता निपात्यन्ते । चिनोतेश्चिक्क् च । चिक्कण· पिच्छिलः । कुकिक्कगोः कोऽन्तश्च । कुक्कणः शकुनिः । कृकणः ऋषिः । कुकेः स्वरान्नोऽन्तश्च । कुङ्कणाः जनपदः । त्रपेर्वश्च । त्रवण· देशः । वलेर्वस्योत् वोऽन्तश्च । उल्वणः स्फारः । अर्तेरुर् च । उरणः मेषः । लीयतेः क्लियतेः स्रवतेर्वा लवादेशश्च । लवणं गुणः द्रव्यं च । वञ्चेः सः परादिर्नलोपाभावश्च ।

वङ्क्षणः ऊरुमूलसंधिः । आदिशब्दाज्ज्योतिरिङ्गणतुरणभुरणादयो भवन्ति ॥ १९० ॥ कृपिविषिवृषिधृषिमृषियुषिद्रुहिग्रहेराणक् ॥ १९१ ॥ एभ्य आणक् प्रत्ययो भवति । कृपौङ् सामर्थ्ये । कृपाणः खड्गः । विषू सेचने । विषाणं शृङ्गम् करिदन्तश्च । वृषू सेचने । वृषाणः । ञिधृषाट् प्रागल्भ्ये । धृषाणः देवः । मृषू सहने च । मृषाणः । युषि सेवने सौत्रः । युषाणः । द्रुहौच् जिघांसायाम् । द्रुहाण. मुखरः । ग्रहीश् उपादाने । गृहाणः । कृपाणादयः स्वप्रकृत्यर्थवाचिनः सर्वेऽपि कर्तरि कारके ज्ञेयाः ॥ १९१ ॥ पषो णित् ॥ १९२ ॥ पषी बाधनस्पर्शनयोरित्यस्मादाणक् प्रत्ययो भवति स च णित् । पाषाणः प्रस्तरः ॥ १९२ ॥ कल्याणपर्याणादयः ॥ १९३ ॥ कल्याणादयः शब्दा आणक्प्रत्ययान्ता निपात्यन्ते । कलेर्योऽन्तश्च । कल्याणं श्वोवसीयसम् । परिपूर्वादिणो लुक् च । पर्याणम् अश्वादीनां पृष्ठच्छदः । आदिग्रहणात् द्रेक्काणवोक्काणकेक्काणादयो भवन्ति ॥ १९३ ॥ द्रुहृवृहिदक्षिभ्य इण ॥ ॥ १९४ ॥ एभ्य इणः प्रत्ययो भवति । द्रुं गतौ । द्रविणं द्रव्यम् । हृंग् हरणे । हरिणः मृगः । वृह वृद्धौ । वर्हिणः मयूरः । दक्षि शैघ्र्ये च । दक्षिणः कुशलः अनुकूलश्च । दक्षिणा दिक् ब्रह्मदेयं च ॥ १९४ ॥ ऋद्रुहेः कित् ॥ १९५ ॥ आभ्यां किदिणः प्रत्ययो भवति । ऋश् गतौ । इरिणम् ऊषरम् कुञ्जः वनदुर्गं च । द्रुहौच् जिघांसायाम् । द्रुहिणः ब्रह्मा क्षुद्रजन्तुश्च ॥१९५॥ ऋकृवृधृदारिभ्य उणः ॥ १९६ ॥ एभ्य उणः प्रत्ययो भवति । ऋक् गतौ । अरुणः सूर्यसारथिः उषा वर्णश्च । कृत् विक्षेपे । करुणा दया । करुणः करुणाविषयः । कारुण्यं दैन्यम् । वृंश् भरणे । वरुणः प्रचेताः । धृंग् धारणे । धरुणः धर्ता आयुक्तो लोकश्च । दॄश् विदारणे । णौ, दारुण उग्र ॥ १९६ ॥ क्षः कित् ॥ १९७ ॥ क्षै क्षये इत्यस्मात् किदुणः प्रत्ययो भवति । क्षुणः व्याधि. क्षामः क्रोध उन्मत्तश्च ॥१९७॥ भिक्षुणी ॥१९८॥ भिक्षेरुणः प्रत्ययो ङीश्च निपात्यते । भिक्षुणी व्रतिनी ॥ १९८ ॥ गादाभ्यामेष्णक् ॥ १९९ ॥ आभ्यामेष्णक् प्रत्ययो भवति । गैं शब्दे । गेष्णः मेषः उद्गाता रङ्गोपजीवी च । गेष्णं साम मुखं च । रात्रिगेष्णः रङ्गोपजीवी । सुगेष्णा किन्नरी । डु दांग्क् दाने । देष्णः बाहु दानशीलश्च । चारुदेष्णः सात्यभामेयः । सुदेष्णा विराटपत्नी ॥१९९॥ दम्यमितमिमावापूधूगृजृहसिवस्यसिवितसिमसीण्भ्यस्तः ॥२००॥ एभ्यस्तः प्रत्ययो भवति । दमूच् उपशमे । दन्तः दशनः हस्तिदंष्ट्रा च । अम गतौ । अन्तः अवसानम् धर्मः समीपं च । तमूच् काङ्क्षायाम् । तन्तः खिन्नः । मांक् माने । मातम् अन्तः प्रविष्टम् । वाक् गतिगन्धनयो । वातः वायुः । पूग्श् पवने । पोतः नौः अग्निः बालश्च । धूग्श् कम्पने । धोतः धूमः शठः वातश्च । गॄत् निगरणे । गर्तः श्वभ्रम् । जॄष्च् जरसि । जर्तः प्रजननं राजा च । हसे हसने । हस्तः करः नक्षत्रं च । वसूच् स्तम्भे । वस्तः छागः । असूच् क्षेपणे । अस्तः गिरिः । तसूच् उपक्षये । वितस्ता नदी । मसैच् परिणामे । मस्त. मूर्धा । इणंक् गतौ । एतः हरिणः वर्णः वायुः पथिकश्च ॥ २०० ॥ शीरीभूदूमूघृपाधागृचित्यर्त्यञ्जिपसिमुसिबुसिबिसिरमिधुर्विपूर्विभ्यः कित् ॥ २०१ ॥ एभ्य कित् तः प्रत्ययो भवति । शीङ्क् स्वप्ने । शीतं स्पर्शविशेषः। रींश् गतिरेषणयोः। रीतं सुवर्णम् । भू सत्तायाम् । भूतः ग्रहः। भूतं पृथिव्यादि । दूङ्च् परितापे । दूतः

वचोहरः । मूङ् बन्धने । मूतः दध्यर्थं क्षीरे तक्रसेकः वस्त्रावेष्टनबन्धनम् आचमनी आलानं पाशः बन्धनमात्रं धान्यादिपुटश्च । घृं सेचने । घृतं सर्पिः । पां पाने । पीतं वर्णविशेषः । डु धांगूक् धारणे च । 'धाग' इति हिः । हितम् उपकारि । चितै संज्ञाने । चित्तं मनः । ऋक् गतौ । ऋतं सत्यम् । अञ्जौप् व्यक्तिम्रक्षणादिषु । अक्तः म्राक्षितः व्यक्तीकृतः परिगितः प्रेतश्च । पुसच् विभागे । पुस्तः लेख्यपत्रसंघातः लेप्यादिकर्म च । मुसच् खण्डने । मुस्ता गन्धद्रव्यम् । बुसच् उत्सर्गे । बुस्तः प्रहसनम् । बिसच् प्रेरणे । बिस्तं सुवर्णमानम् । रमिं क्रीडायाम् । सुरतं मैथुनम् । धुर्वै हिंसायाम् । धूर्तः शठः । पूर्वं पूरणे । पूर्तः पुण्यम् ॥ २०१ ॥ लूम्रो वा ॥ २०२ ॥ आभ्यां तः प्रत्ययः स च किद्वा भवति । लूग्श् छेदने । लूता क्षुद्रजन्तुः । लोतः वाष्पं लवनं वस्तः कीटजातिश्च । मृंत् प्राणत्यागे । मृतः गतप्राणः । मर्तः ऋषिः प्राणी पुरुषश्च ॥ २०२ ॥ सुसितनितुसेर्दीर्घश्च वा ॥ २०३ ॥ एभ्यः कित् तः प्रत्ययो दीर्घश्च वा भवति । षुंग्ट् अभिषवे । सूतः सारथिः । सुतः पुत्रः । षिग्ट् बन्धने । सीता जनकात्मजा सस्यं हलमार्गश्च । सितः वर्णः बन्धश्च । तनूयी विस्तारे । तातः पिता पुत्रेष्टनाम च । ततं विस्तीर्णं वाद्यविशेषश्च । तुस शब्दे । तूस्तानि वस्त्रदशाः । तुस्ताः जटाः प्रदीपनं च ॥ २०३ ॥ पुतपित्तनिमित्तोतशुक्तातिक्तलिप्तसूरतमुहूर्तादयः ॥ २०४ ॥ एते कित्तप्रत्ययान्ता निपात्यन्ते । पूङो ह्रस्वश्च । पुत, स्फिक् । पीङस्तोऽन्तश्च । पित्तं मायुः । निपूर्वात् मिनोतेर्मित् च । निमित्तं हेतुः दिव्यज्ञानं च । उभेर्लुक् च । उत आशङ्काद्यर्थमव्ययम् । शकेः शुचेर्वा शुक्भावश्च । शुक्तं कल्कजातिः । ताडयतेस्तकतेस्तिजेर्वा तिक् च । तिक्तो रसविशेषः । लीयतेः पोऽन्तो ह्रस्वश्च । लिप्तं श्लेषः अंसदेशश्च । सुपूर्वाद्रमेः सोर्दीर्घश्च । सूरतः दमितो हस्ती अन्यो वा दान्तः । हुर्च्छेः मुश्च धात्वादिः ॥ मुहूर्तः कालविशेषः । आदिग्रहणादयुतनियुतादयो भवन्ति ॥ २०४ ॥ कृगो यङः ॥ २०५ ॥ करोतेर्यङन्तात् कित् तः प्रत्ययो भवति । चेक्रीयितः पूर्वाचार्याणां यङ्प्रत्ययसंज्ञा ॥ २०५ ॥ इवर्णादिर्लुपि ॥ २०६ ॥ करोतेर्यङो लुपि इवर्णादिस्तः प्रत्ययो भवति । चर्करितं चर्करीतं यङ्लुबन्तस्याख्ये ॥ २०६ ॥ दृपृभृमृशीयजिखलिवलिपर्विपच्यमिनमितमिदर्शिहर्यि कङ-किभ्योऽतः ॥२०७॥ एभ्योऽतः प्रत्ययो भवति । दृङ्त् आदरे । दरतः आदरः । पृंक् पालनपूरणयोः । परत कालः । टुडुभृंग्क् पोषणे च । भरतः आदिचक्रवर्ती हिमवत्समुद्रमध्यक्षेत्रं च । मृंत् प्राणत्यागे । मरतः मृत्युः अग्निः प्राणी च । शीङ्क् स्वप्ने । शयतः निद्रालुः चन्द्रः स्वप्न अजगरश्च । यजी देवपूजासंगतिकरणदानेषु । यजतः यज्वा अग्निश्च । खल संचये च । खलतः शीर्णकेशशिराः । वलि संवरणे । वलनः कुशूलः । पर्व पूरणे । पर्वतः गिरिः । डु पचींष् पाके । पचत अग्निः आदित्यः पालकः इन्द्रश्च । अम गतौ । अमतः मृत्युः जीवः आतङ्कश्च । णमं प्रह्वत्वे । नमतः नटः देवः ऊर्णास्तरणं ह्रस्वश्च । तमूच् काङ्क्षायाम् । तमतः निर्वेदो आकाङ्क्षी धूमश्च । दृशृं प्रेक्षणे । दर्शतः द्रष्टा अग्निश्च । हर्य क्रान्तौ । हर्यतः वायुः अश्वः कान्तः रश्मिः यज्ञश्च । ककुङ् गतौ । कङ्कतः केशमार्जनम् ॥ २०७ ॥ पृषिरञ्जिसिकिकालावृभ्यः कित् ॥ २०८ ॥ एभ्यः किदतः प्रत्ययो भवति । पृषू सेचने । पृषतः हरिणः । रञ्जीं रागे । रजतं रूप्यम् । सिकिः सौत्रः सिकताः

वालुका । कै शब्दे । कतः गोत्रकृत् । लांक् आदाने । लता वल्ली । वृगट् वरणे । व्रतं शास्त्रविहितो नियमः ॥ २०८ ॥ कृवृकल्यलिचिलिविलीलिलानाथिभ्य
आतक् ॥२०९॥ एभ्य आतक् प्रत्ययो भवति। कृत् विक्षेपे। किरातः शबरः। वृगट् वरणे। व्रातः समूहः उत्सेधजीविसंघश्च । कलि शब्दसंख्यानयोः। कलातः ब्रह्मा।
अली भूषणादौ। अलातम् उल्मुकम्। चिलत् वसने। चिलाता म्लेच्छः। विलत् वरणे। विलातः शवाच्छादनवस्त्रम्। इलत् गत्यादौ। इलातः नगः। लांक् आदाने। लातः
मृत्तिकादानभाजनम्। नाथृङ् उपतापैश्वर्याशीःषु। नाथातः आहारः प्रजापतिश्च॥२०९॥ हृश्यारुहिशोणिपलिभ्य इत ॥२१०॥ एभ्य इतः प्रत्ययो भवति। हृंग् हरणे।
हरितः वर्णः। श्यैङ् गतौ। श्येतः वर्णः मृगः मत्स्यः श्येनश्च। रुहं बीजजन्मनि। रोहितः वर्णः मत्स्यः मृगजातिश्च ॥ लत्वे, लोहितः वर्णः। लोहितम् असृक्। शोणृ
वर्णगत्योः। शोणितं रुधिरम्। पल गतौ। पलितं श्वेतकेशः॥२१०॥ नञ आपेः॥२११॥ नञ्पूर्वादाप्लृंट् व्याप्तावित्यस्मादितः प्रत्ययो भवति। नापितः कारुविशेषः
॥ २११ ॥ क्रुशिपिशिपृषिकुषिकुस्युचिभ्यः कित् ॥ २१२ ॥ एभ्य किदितः प्रत्ययो भवति। क्रुशं आह्वानरोदनयो। क्रुशितं पापम्। पिशत् अवयवे।
पिशितं मांसम्। पृषू सेचने। पृषितं वारिबिन्दुः। कुषश् निष्कर्षे। कुषितं पापम्। कुसच् श्लेषे। कुसितः ऋषिः। कुसितम् ऋणं श्लिष्टं च। उचच् समवाये।
उचितं स्वभावः योग्यं चिरानुयातं श्रेष्ठम् च ॥ २१२ ॥ हृग ईतण् ॥ २१३ ॥ हृंग् हरणे इत्यस्मादीतण् प्रत्ययो भवति। हारीतः पक्षी ऋषिश्च ॥ २१३ ॥
अदो भुवो डुतः॥२१४॥ अद्पूर्वात् भुवो डुतः प्रत्ययो भवति। अद् विस्मितं भवति तेन तस्मिन् वा मनः अद्भुतमाश्चर्यम् ॥२१४॥ कुलिमायिभ्यामूतक् ॥२१५॥
आभ्यामूतक् प्रत्ययो भवति। कुल बन्धुसंस्त्यानयोः। कुलूताः जनपदः। मयि गतौ। मयूता वसतिः ॥ २१५ ॥ जीवेर्मश्च ॥ २१६ ॥ जीव प्राणधारणे
इत्यस्मादूतक् प्रत्ययो भवति मन्तादेशश्च। जीमूतः मेघः गिरिश्च ॥ २१६ ॥ कबेरोतः पश्च ॥ २१७ ॥ कबृङ् वर्णे इत्यस्मादोतः प्रत्ययः पश्चान्तादेशो भवति।
कपोतः पक्षी वर्णश्च ॥२१७॥ आस्फायेर्डित् ॥२१८॥ आङ्पूर्वात् स्फायैङ् वृद्धावित्यस्मात् डिदोतः प्रत्ययो भवति। आस्फोता नाम ओषधिः ॥२१८॥ जॄविशिभ्या-
मन्तः ॥ २१९ ॥ आभ्यामन्तः प्रत्ययो भवति। जॄषूच् जरसि। जरन्तः भूतग्रामः वृद्धः महिषश्च। विशंत् प्रवेशने। वेशन्तः पल्वलम् वल्लभः अप्राप्तापवर्गः
आकाशं च ॥ २१९ ॥ रुहिनन्दिजीविप्राणिभ्यष्षिदाशिषि ॥ २२० ॥ एभ्य आशिषि षिदन्तः प्रत्ययो भवति। रुहं जन्मनि। रोहतात् रोहन्तः वृक्षः।
रोहन्ती औषधिः ॥ टु नदु समृद्धौ। नन्दतात् नन्दन्तः सखा आनन्दश्च। नन्दन्ती सखी। जीव प्राणधारणे। जीवतात् जीवन्तः आयुष्मान्। जीवन्ती शाकः। अनक्
प्राणने। प्राण्यात् प्राणन्तः वायुः रसायनं च। प्राणन्ती स्त्री ॥ २२० ॥ तॄजिभूवदिवहिवसिभास्यदिसाधिमदिगडिगण्डिमण्डिनन्दिरेविभ्यः ॥ २२१ ॥
एभ्यष्षिदन्तः प्रत्ययो भवति। आशिषीत्येके। तॄ प्लवनतरणयोः। तरन्तः आदित्यः भेकश्च। तरन्ती स्त्री। जिं अभिभवे। जयन्तः रथरेणुः ध्वज इन्द्रपुत्रः जम्बूद्वीप-
पश्चिमद्वारम् पश्चिमानुत्तरविमानं च। जयन्ती उदयनपितृष्वसा। भू सत्तायाम्। भवन्तः कालः। भवन्ती। वद व्यक्तायां वाचि। वदन्तः। वदन्ती। वहीं प्रापणे।

वहन्तः रथः अनड्वान् रथरेणुः वायुश्च । वहन्ती । वसं निवासे । वसन्तः ऋतुः । भासि दीप्तौ । भासन्त सूर्यः । भासन्ती । ण्यन्तोऽपि । भासयन्तः सूर्यः । अदंक् भक्षणे । अदन्तः । अदन्ती । साधंद् संसिद्धौ । साधन्तः भिक्षुः । ण्यन्तोऽपि । साधयन्तः भिक्षुः । साधयन्ती । मदैच् हर्षे । णौ, मदयन्तः । मदयन्ती पुष्पगुल्मजातिः । गड सेचने । गडन्त जलदः । ण्यन्तोऽपि । गडयन्तः । गडयन्ती । गडु वदनैकदेशे ण्यन्त । गण्डयन्तः मेघः । मडु भूषायाम् ण्यन्तः । मण्डयन्तः प्रसाधकः अलंकारः आदर्शश्च ॥ टु नदु समृद्धौ ण्यन्तः । नन्दयन्तः सुखकृत् राजा हिरण्यं सुखं च । नन्दयन्ती । रेवृङ् पथि गतौ । रेवन्तः सूर्यपुत्रः । अनुक्तार्था धात्वर्थकर्त्रर्थाः ॥२२१॥ सीमन्तहेमन्तभदन्तदुष्यन्तादयः ॥२२२॥ एतेऽन्तप्रत्ययान्ता निपात्यन्ते । सिनोतेः सीम् च । सीमन्त केशमार्गः ग्रामक्षेत्रान्तश्च । हन्तेर्हिनोतेर्वा हेम् च । हेमन्तः ऋतु । भन्दतेर्नलुक् च । भदन्तः निर्ग्रन्थेषु शाक्येषु च पूज्यः । दुषेर्योऽन्तश्च । दुष्यन्त राजा । आदिग्रहणादन्येऽपि ॥२२२॥ शकेरुन्तः ॥२२३॥ शक्लृंट् शक्तावित्यस्मादुन्तः प्रत्ययो भवति । शकुन्तः पक्षी ॥ २२३ ॥ कषेर्डित् ॥ २२४ ॥ कष हिंसायामित्येतस्मात् डिदुन्तः प्रत्ययो भवति । कुन्तः आयुधम् ॥ २२४ ॥ कमिघुगार्तिभ्यस्थः ॥ २२५ ॥ एभ्यस्थः प्रत्ययो भवति । कमूङ् कान्तौ । कन्था प्रावरणम् नगरं च । घुङ् गतौ । घोथ प्रियो युवा शूकरमुखं घोणा च । गैं शब्दे । गाथा श्लोक आर्या वा । ऋं गतौ । अर्थः जीवाजीवादिपदार्थः प्रयोजनम् अभिधेयं धनं याच्ञा निवृत्तिश्च ॥ २२५ ॥ अवाद् गोऽच्च वा ॥ २२६ ॥ अवपूर्वाद्गायतेस्थ प्रत्ययोऽच्चान्तादेशो वा भवति । अवगथः अवगाथः अक्षसंघातः प्रातःसवनं रथयानं साम पन्थाश्च ॥ २२६ ॥ नीनूरमितृतुदिवचिरिचिसिचिश्विहनिपागोपावोद्गाभ्यः कित् ॥ २२७ ॥ एभ्य कित् थः प्रत्ययो भवति । णींग् प्रापणे । नीथं जलम् । सुनीथो नाम राजा नीतिमान् धर्मशीलः ब्राह्मणश्च । णूत् स्तवने । नूथं तीर्थम् । रमिं क्रीडायाम् । रथः स्यन्दनः । तॄ प्लवनतरणयोः । तीर्थं जलाशयावगाहनमार्गः पुण्यक्षेत्रमाचार्यश्च । तुदींत् व्यथने । तुत्थं चक्षुष्यो धातुविशेषः ॥ वचंक् भाषणे । उक्थं शास्त्रं सामवेदश्च । उक्थानि सामानि । रिचूंपी विरेचने । रिक्थं धनम् । षिचीत् क्षरणे । सिक्थं मदनं पुलाकश्च । ट्वोश्वि गतिवृद्ध्योः । शूथः यज्ञप्रदेश । हनंक् हिंसागत्योः । हथः पन्थाः कालश्च । पां पाने । पीथं बालघृतपानम् अम्भः नवनीतं च । पीथः मकरः रविश्च । गोपूर्वात् गोपीथः तीर्थविशेषः गोनिपानं जलद्रोणी कालविशेषश्च । गै शब्दे । अवगीथम् । यज्ञकर्मणि प्रातः शंसनम् उद्गीथः शुनामूर्ध्वमुखानां विरावः सामगानम् प्रथमोच्चारणं च ॥ २२७ ॥ न्युद्भ्यां शीङः ॥२२८॥ निउद्पूर्वात् शीङ्क् स्वप्ने इत्यस्मात् कित्थः प्रत्ययो भवति । निशीथः अर्धरात्रः रात्रिः प्रदोषश्च । उच्छीथः स्वप्नः टिट्टिभश्च ॥ २२८ ॥ अवभृनिर्ऋसमिण्भ्यः ॥ २२९ ॥ अवपूर्वाद्भिभर्तेः निस्पूर्वादर्त्तेः समपूर्वादेतेश्च कित् थः प्रत्ययो भवति । अवभृथः यज्ञावसानं यज्ञस्नानं च । निर्ऋथ निकायः । निर्ऋथं स्नानम् । समिथः संगमः गोधूमपिष्टं च । समिथं समूहः ॥२२९॥ सर्तेर्णित् ॥२३०॥ सृं गतावित्यस्मात् णित् थः प्रत्ययो भवति । सार्थः समूहः ॥ २३० ॥ पथयूथगूथकुथतिथनिथसूरथादयः ॥२३१॥

एते थप्रत्ययान्ता निपात्यन्ते । पलतेर्लो लुक् च । पथः पन्थाः । यौतेर्युवतेश्च दीर्घश्च । यूथं समूहः । गूथममेध्यं विष्ठा च । किरतेः करोतेर्वा कुश्च । कुथः कुथा वा आस्तरणम् । तनोतेस्तिष्ठतेर्वा तिश्च । तिथः कालः । तिम्यतेस्तिथः प्रावृट्कालः । नयतेर्ह्रस्वश्च । निथः पूर्वक्षत्रियः कालश्च । सुपूर्वाद्रमेः सोर्दीर्घश्च कित् च । सूरथ दान्तः । आदिग्रहणात् निपूर्वाद्रौतेर्दीर्घत्वं च । निरूथः दिक् । निरूथं पुण्यक्रमनियतम् । एवं संगीथप्रगाथादयो भवन्ति ॥ २३१ ॥ भृशीशपिशमिगमिरमिवन्दिवञ्चिजीविप्राणिभ्योऽथः ॥ २३२ ॥ एभ्योऽथः प्रत्ययो भवति । डुड् भृंगक् पोषणे च । भरथः कैकेयीसुतः अग्निः लोकपालश्च । शीङ्क् स्वप्ने । शयथः अजगर. प्रदोपः मत्स्यः वराहश्च । शपीं आक्रोशे । शपथः प्रत्ययकरणम् आक्रोशश्च । शमूच् उपशमे । शमथः समाधिः आश्रमपदं च । गम्लृं गतौ । गमथः पन्थाः पथिकश्च । रमि क्रीडायाम् । रमथः महर्षः । वदुङ् स्तुत्यभिवादनयो. । वन्दथः स्तोता स्तुत्यश्च । वञ्चू गतौ । वंचथः अध्वा कोकिलः काक दम्भश्च । जीव प्राणधारणे। जीवथः अर्थवान् जलम् अन्नं वायुः मयूरः कूर्मः धार्मिकश्च। अनू प्राणने। प्राणथः बलवान् ईश्वरः प्रजापतिश्च ॥२३२॥ उपसर्गाद्वसः ॥ २३३ ॥ उपसर्गात्परस्मात् वसं निवास इत्यस्मादथः प्रत्ययो भवति । आवसथः गृहम् । उपवसथः उपवासः । संवसथः संवास । सुवसथः सुवासः । निवसथः निवासः ॥ २३३ ॥ विदिभिदिरुदिद्रुहिभ्यः कित् ॥ २३४ ॥ एभ्यः किदथः प्रत्ययो भवति । विदंक् ज्ञाने । विदथ' ज्ञानी यज्ञः अध्वर्युः संग्रामश्च ॥ भिदृंपी विदारणे । भिदथः शर' । रुदृक् अश्रुविमोचने । रुदथ बालः असत्त्वः श्वा च । द्रुहौच् जिघांसायाम् । द्रुहथः शत्रुः ॥ २३४ ॥ रोर्वा ॥२३५॥ रुक् शब्दे इत्यस्मादथः प्रत्ययः स च किद्वा भवति । रुवथः शकुनिः शिशुश्च । रवथः आक्रन्दः शब्दकारश्च ॥ २३५ ॥ जॄवृभ्यामूथः ॥ २३६ ॥ आभ्यामूथः प्रत्ययो भवति । जॄष्च् जरसि । जरूथः शरीरम् अग्रमांसम् अग्निः संवत्सरः मार्ग' कल्मष च ॥ वृग्श् वरणे । वरूथः वर्म सेनाङ्गं बलसंघातश्च ॥ २३६ ॥ शाशपिमनिकनिभ्यो दः ॥ २३७ ॥ एभ्यो दः प्रत्ययो भवति । शोंच् तक्षणे । शादः कर्दमः तरुणतृणं मृदुः वन्धः सुवर्णं च । शपीं आक्रोशे । शब्दः श्रोत्रग्राह्योऽर्थः । मनिच् ज्ञाने । मन्दः अलसः बुद्धिहीनश्च । कनै दीप्त्यादिषु । कन्दः मूलम् ॥ २३७ ॥ आपोऽप् च ॥ २३८ ॥ आप्लृंट् व्याप्तावित्यस्माद्दः प्रत्ययो भवति अस्य चाप् इत्ययमादेशश्च । अब्दं वर्षम् ॥ २३८ ॥ गोः कित् ॥ २३९ ॥ गुंत् पुरीषोत्सर्गे इत्यस्मात् कित् द' प्रत्ययो भवति । गुदम् अपानम् ॥ २३९ ॥ वृतुकुसुभ्यो नोऽन्तश्च ॥ २४० ॥ एभ्यः कित् दः प्रत्ययो नकारश्चान्तादेशो भवति । वृग्ट् वरणे । वृन्दं समूहः । तुंक् वृत्त्यादिषु । तुन्दं जठरम् । कुंङ् शब्दे । कुन्दः पुष्पजातिः । षुंग्ट् अभिषवे । सुन्दः दानवः ॥ २४० ॥ कुसेरिदेदौ ॥ २४१ ॥ कुसच् श्लेषे इत्यस्मात् इद ईद इत्येतौ कितौ प्रत्ययौ भवतः । कुसिदम् । ऋणम् । कुसीदं वृद्धिजीविका ॥ २४१ ॥ इङ्ग्यर्बिभ्यामुदः ॥ २४२ ॥ आभ्यामुद प्रत्ययो भवति । इगु गतौ । इङ्गुदः वृक्षजातिः । अर्ब गतौ । अर्बुदः पर्वतः अक्षिव्याधिः संख्याविशेषश्च । निपूर्वात् न्यर्बुदम् संख्याविशेषः ॥ २४२ ॥ ककेर्णिद्वा ॥ २४३ ॥ ककि लौल्ये इत्यस्मादुदः प्रत्ययः स च णिद्वा भवति । काकुदं

तालु । ककुदं स्कन्धः ॥ २४३ ॥ **कुमुदबुद्बुदादयः** ॥ २४४ ॥ एते उदप्रत्ययान्ता निपात्यन्ते । कमेः कुम् च । कुमुदं कैरवम् । बुन्देः कित् बोऽन्तश्च । बुद्बुदः जलस्फोटः । वुद्बुदं नेत्रजो व्याधिः । आदिग्रहणात् दुहींक् क्षरणे प्रत्ययादेरत्वे, दोहद अभिलाषविशेषः । एवमन्येऽपि ॥ २४४ ॥ **ककिमकिभ्यामन्दः** ॥ २४५ ॥ आभ्यामन्दः प्रत्ययो भवति । ककि लौल्ये । मकिः सौत्रः । ककन्दः मकन्दश्च राजानौ । यकाभ्यां निर्वृत्ता काकन्दी माकन्दी च नगरी ॥ २४५ ॥ **कल्यलिपुलिकुरिकुणिभ्यश्च इन्दक्** ॥ २४६ ॥ एभ्य इन्दक् प्रत्ययो भवति । कलि शब्दसंख्यानयोः । कलिन्दः पर्वतः । यतो यमुना प्रभवति । अली भूषणादौ । अलिन्दः प्रघाणः राजानं स्थानं च । पुल महत्त्वे । पुलिन्दः शबरः। कुरत् शब्दे । कुरिन्दः धान्यमलहरणोपकरणम् तेजनोपकरणं च। कुणत् शब्दोपकरणयोः। कुणिन्दः म्लेच्छः शब्द उपकरणं च ॥ मण शब्दे । मणिन्द अश्वबलवः ॥ २४६ ॥ **कुपेर्व च वा** ॥ २४७ ॥ कुपच् क्रोधे इत्यस्मादिन्दक् प्रत्ययो वश्चान्तादेशो वा भवति । कुपिन्दः कुविन्दः तन्तुवायः ॥२४७॥ **पॄपालिभ्यां णित्** ॥२४८॥ आभ्यां णिदिन्दक् प्रत्ययो भवति। पॄश् पालनपूरणयोः। पल गतौ। पारिन्दः। पालिन्द।। द्वावपि वृक्षगाथकौ । पारिन्दो मुख्यः पूज्यश्च । पालिन्दो नृपतिः। रक्षकश्चेत्येके ॥२४८॥ **यमेरुन्दः** ॥२४९॥ यमूं उपरमे इत्यस्मादुन्द प्रत्ययो भवति । यमुन्दः क्षत्रियविशेषः ॥ २४९ ॥ **मुचेरुकुन्दकुकुन्दौ** ॥ २५० ॥ मुच्लृंती मोक्षणे इत्यस्मात् डित् उकुन्दः किदुकुन्दश्च प्रत्ययौ भवतः । मुकुन्दः विष्णुः । मुचुकुन्दः राजा वृक्षविशेषश्च ॥ २५० ॥ ॥ **स्कन्दामिभ्यां धः** ॥ २५१ ॥ आभ्यां धः प्रत्ययो भवति । स्कन्दृं गतिशोषणयो । स्कन्धः बाहुमूर्धा ककुदं विभागश्च । बाहुलकात् दस्य लुक् । अम गतौ । अन्धः चक्षुर्विकलः ॥ २५१ ॥ **नेः स्यनेरधक्** ॥ २५२ ॥ निपूर्वात् षोंच् अन्तकर्मणि इत्यस्मादधक् प्रत्ययो भवति । निषधः पर्वत। निषधा जनपदः ॥ २५२ ॥ **मङ्गेर्नलुक् च** ॥२५३॥ मगु गतावित्यस्मादधक् प्रत्ययो नकारस्य च लुग् भवति। मगधाः जनपदः ॥२५३॥ **आरगेर्वधः** ॥२५४॥ आङ्पूर्वाद्रगे शङ्कायामित्यस्माद्वधः प्रत्ययो भवति । आरग्वधः वृक्षजाति ॥ २५४ ॥ **पराच्छ्रो डित्** ॥ २५५ ॥ परपूर्वात् शॄश् हिंसायामित्यस्मात् डित् वधः प्रत्ययो भवति । परश्वध आयुधजातिः ॥२५५॥ **इषेरुधक्** ॥२५६॥ इषत् इच्छायामित्यस्मादुधक् प्रत्ययो भवति । इषुधः याञ्चा ॥२५६॥ **कोरन्धः** ॥२५७॥ कुंङ् शब्दे इत्यस्मादन्धः प्रत्ययो भवति । कबन्धः छिन्नमूर्धा देह ॥ २५७ ॥ **प्याधापन्यनिस्वदिस्वपिवस्यज्यतिसिविभ्यो नः** ॥ २५८ ॥ एभ्यो न प्रत्ययो भवति । प्यैङ् वृद्धौ । प्यानः समुद्रः चन्द्रश्च । डु धांगक् धारणे च । धाना भृष्टो यवः अङ्कुरश्च । पनि स्तुतौ । पन्नं नीचैः करणम् सन्नं जिह्वा च । अनक् प्राणने । अन्नं भक्तम् आचारश्च । ष्वदि आस्वादने । स्वन्नं रुचितम् ॥ ञिष्वपंक् शये । स्वप्नः मनोविकारः निद्रा च । वसं निवासे । वस्नं वासः मूल्यम् मेद्रम् आगमश्च । अज क्षेपणे च । वेनः प्रजापतिः व्यानी राजा वायुः यज्ञः प्राज्ञः मूर्खश्च । अत सातत्यगमने । अत्नः आतमा वायुः मेघः प्रजापतिश्च । षिवूच् उतौ । स्योनं सुखम् तन्तुवायसूत्रसंतान समुद्रः सूर्यः रश्मिः आस्तरणं च ॥ २५८ ॥ **षसेर्णित्** ॥ २५९ ॥ षसक् स्वप्ने इत्यस्मात् णित् नः प्रत्ययो भवति । सास्ना गोकण्ठावलम्बि चर्म निद्रा च

॥२५९॥ रसेर्वा॥२६०॥ रस शब्दे इत्यस्मान्नः प्रत्ययो णिद्वा भवति । रास्ना धेनुः ओषधिजातिश्च । रस्नं द्रव्यजातिः । रस्ना जिह्वा । रस्न· तुरङ्गः दण्डश्च ॥२६०॥ जीण्शीदीबुध्यविमीभ्यः कित् ॥ २६१ ॥ एभ्यः कित् नः प्रत्ययो भवति । जि अभिभवे । जिनः अर्हन् बुद्धश्च । ईण्क् गतौ । इनः स्वामी संनिपातः ईश्वरः राजा सूर्यश्च । शीङ्क् स्वप्ने । शीनः पीलुः । दीङ्च् क्षये । दीन· कृपणः खिन्नश्च । बुधिंच् ज्ञाने । बुध्नः मूलं पृष्ठान्तः रुद्रश्च । अव रक्षणादौ । ऊनम् अपरिपूर्णम् । मीङ्च् हिंसायाम् । मीनः मत्स्यः राशिश्च ॥ २६१ ॥ सेर्वा ॥ २६२ ॥ षिग्ट् बन्धने इत्यस्मात् नः प्रत्ययः स च किद्वा भवति । सिनः कायः वद्धः बन्धश्च । सेना चमूः ॥२६२॥ सोरू च ॥ २६३ ॥ षुंग्ट् अभिषवे इत्यस्मान्नः प्रत्यय ऊकारश्चान्तादेशो भवति । सूना घातस्थानम् दुहितापुत्र· प्रकृतिः आघाटस्थानं च ॥ २६३ ॥ रमेस्त च ॥ २६४ ॥ रमि क्रीडायामित्यस्मात् नः प्रत्ययस्तश्चान्तादेशो भवति । रत्नं वज्रादि ॥ २६४ ॥ क्रुशेर्वृद्धिश्च ॥ २६५ ॥ क्रुशं आह्वान-रोदनयोरित्यस्मात् नः प्रत्ययोऽस्य च वृद्धिर्भवति । क्रौश्नः श्वापद ॥ २६५ ॥ द्युसुनिभ्यो माङो डित् ॥ २६६ ॥ द्युसुनिपूर्वात् मांङ्क् मानशब्दयोरित्यस्मात् डित् न प्रत्ययो भवति । द्युम्नं द्रविणम् । सुम्नं सुखम् । निम्नं नतम् ॥ २६६ ॥ शीङः सन्वत् ॥ २६७ ॥ शीङ्क् स्वप्ने इत्यस्मात् डित् नः प्रत्ययः स च सन्वद्भवति । शिश्नं शेपः ॥ २६७ ॥ दिननग्नफेनचिह्नब्रध्नधेनस्तेनच्यौक्नादयः ॥ २६८ ॥ एते नप्रत्ययान्ता निपात्यन्ते । दीव्यतेः किद्गुक् च । दिनम् अहः । नञ्पूर्वाद्वसेर्गोऽन्तो धातोर्लुक्च । न वस्ते नग्नः अवसन· । फणेः फलेः स्फायेर्वा फेभावश्च । फेनः बुद्बुदसंघातः । चहेरिचोपान्त्यस्य । चिह्नमभिज्ञानम् । बन्धेब्रध्च । ब्रध्नः रविः प्रजापतिः ब्रह्मा स्वर्गः पृष्ठान्तश्च । धयतेरेत्वं च । धेना सरस्वती माता च । धेनः समुद्रः । ईत्वं चेत्येके । धीना । स्त्यायेस्ते च । स्तेनः चौरः । च्यवतेर्वृद्धिः कोऽन्तश्च । च्यौक्नमक्षस्थानम् अनुजः क्षीणमपुण्यश्च । च्यौक्नी कांस्यादिपात्री । आदिशब्दादन्येऽपि ॥ २६८ ॥ युवसिरसिरुचिजिमस्जिदेविस्य-न्दिचन्दिमन्दिमण्डिमदिदहिवह्यादेरनः ॥ २६९ ॥ एभ्योऽन· प्रत्ययो भवति । युक् मिश्रणे । यवनाः जनपदः । यवनं मिश्रणम् । असूच् क्षेपणे । असनः बीजकः । रसण् आस्वादनस्नेहनयोः । रसना जिह्वा । रुचि अभिप्रीत्या च । रोचना गोपित्तम् । रोचनः चन्द्रः । विपूर्वाद्रोचतेः विरोचनः अग्निः सूर्यः इन्दुः दानवश्च । जि अभिभवे । जयनम् ऊर्णापटः । टु मस्जोंत् शुद्धौ । मज्जनं स्नानं तोयं च । देवृङ् देवने । देवनः अक्षः कितवश्च । स्यन्दौङ् स्रवणे । स्यन्दनः रथः । चदु दीप्त्याह्लादनयोः । चन्दनं गन्धद्रव्यम् । मदुङ् स्तुत्यादौ । मन्दनं स्तोत्रम् । मडु भूषायाम् । मण्डनमलंकारः । मदैच् हर्षे । मदनः वृक्षः कामः मधूच्छिष्टं च । दहं भस्मीकरणे । दहनः अग्निः । वहीं प्रापणे । वहनं नौः । आदिग्रहणात् पचेः पचनः अग्निः । पुनातेः पवनः वायुः । बिभर्तेः भरणं साधनम् । नयतेर्नयनं नेत्रम् । द्युतेः द्योतनः आदित्यः । रचेः रचना वैचित्र्यम् । गृञ्जेः गृञ्जनम् अभक्ष्यद्रव्यविशेषः । प्रस्कन्दनः प्रपतनः इत्यादयो भवन्ति॥२६९॥ अशो रश्चादौ ॥२७०॥ अशौटि व्याप्तावित्यस्मात् अनः प्रत्ययो भवति आदौ रेफश्च । रशना मेखला । रशिमेके प्रकृतिमुपादिशन्ति । सा च राशिरशना।राशिम इत्यत्र प्रयुज्यते इत्याहुः॥२७०॥उन्देर्नलुक् च ॥

२७१॥ उन्दैप् क्लेदने इत्यस्मात् अन प्रत्ययो नलोपश्च भवति । ओदनः भक्तम् ॥२७१॥ हनेर्घतजघौ च ॥२७२॥ हनंक् हिंसागत्योरित्यस्मादन. प्रत्ययो घतजघा-वित्यादेशौ चास्य भवतः। घतनः रङ्गोपजीवी पापकर्मा निर्लज्जश्च। जघनं श्रोणि ॥२७२॥तुदादिवृजिरञ्जिनिधाभ्यः कित्॥२७३॥ एभ्यः किदनः प्रत्ययो भवति। तुदींत् व्यथने। तुदनः। क्षिपींत् प्रेरणे। क्षिपणः। सुरत् ऐश्वर्यदीप्त्योः। सुरणः। बुधिंच् बोधने। बुधनः। षिवूच् उतौ। सिवनः। एषां यथासंभवं कारकमुच्यते। लवुङ् अवस्रंसने। लम्बनः शकुनिः। वृजैकि वर्जने। वृजिनमन्तरिक्षम् निवारणं मुण्डनं च। रञ्जीं रागे। रजनं हरिद्रा। महारजनं कुसुम्भम्। रजनः रङ्ग-विशेषः। डु धांगक् धारणे च। निधनमवसानम् ॥ २७३ ॥ सूधूभूभ्रस्जिभ्यो वा ॥२७४॥ एभ्योऽन प्रत्ययो भवति स च किद्वा। पूत् प्रेरणे। सुवनः अङ्कुरः आदित्यः प्रादुर्भावश्च। सुवनं चन्द्रप्रभा। सवनं यज्ञः पूर्वाह्लापराह्लमध्याह्नकालश्च। त्रिषवणम्। धूत् विधूनने। धुवनः धूमः वायुः अग्निश्च। धुवनम् एधः। भू सत्तायाम्। भुवनं जगत्। भवनं गृहम्। भ्रस्जींत् पाके। भृज्जनम् अन्तरिक्षम् अम्बरीषः पाकश्च। भ्रज्जनः पावकः ॥ २७४ ॥ विदनगगनगहनादयः ॥ २७५ ॥ एते किदनप्रत्ययान्ता निपात्यन्ते। विदु अवयवे नलोपश्च। विदनः गोत्रकृत्। गमेर्ग च। गगनम् आकाशम्। गाहौङ् विलोडने ह्रस्वश्च। गहनं दुर्गमम्। आदि-शब्दात् काञ्चनकाननादयो भवन्ति॥२७५॥ संस्तुस्पृशिमन्थेरानः ॥२७६॥ संपूर्वात् स्तोः स्पृशेश्च सम्पूर्वाभ्यां वा स्तुस्पृशिभ्यां मन्थेश्चानः प्रत्ययो भवति। ष्टुंग्क् स्तुतौ। संस्तवानः सोमः होता महर्षिः वाग्मी च। स्पृशंत् स्पर्शे। स्पर्शानः मनः। संस्पर्शानः मनः अग्निश्च। मन्थश् विलोडने। मन्थानः खजकः॥२७६॥युयुजियु-धिबुधिमृशिदृशीशिभ्यः कित् ॥ २७७ ॥ एभ्यः किदानः प्रत्ययो भवति। युक् मिश्रणे। युवानः तरुणः। युजूंगी योगे। युजानः सारथिः। युधिंच् संप्रहारे। युधानः रिपुः। बुधिच् ज्ञाने। बुधान आचार्यः पण्डितो वा। मृशंत् आमर्शने। मृशानः विमर्शकः। दृशृं प्रेक्षणे। दृशानः लोकपालः। युजादिप्रसिद्धकर्त्रर्था एते। ईशिक् ऐश्वर्ये। ईशानः ईश्वरः॥२७७॥ मुमुचानयुयुधानशिश्विदानजुहुराणजिह्रियाणाः॥२७८॥ एते किदानप्रत्ययान्ता निपात्यन्ते। मुचेर्द्वित्वं च। मुमुचान मेघः। एवं युधिंच् संप्रहारे। युयुधानः साहसिकः राजा च कश्चित्। श्विताङ् वर्णे। अस्य दश्च। शिश्विदानः दुराचारो द्विजः। हुर्च्छा कौटिल्ये अस्यान्तलुक् च। जुहुराणः कठि-नहृदयः कुटिलः अग्निः अध्वर्यु अनड्वांश्च। ह्रींक् लज्जायाम्। जिह्रियाणः नीतिमान्। सर्वे एवैते मुच्यादिप्रसिद्धक्रियाकर्तृवचना इत्येके ॥ अन्ये तु मुमुक्षादिसन्नन्त-प्रकृतीनामेतन्निपातनं, तेन सन्नन्तक्रियाकर्तृवचना इत्याहुः ॥२७८॥ ऋञ्जिरञ्जिमन्दिसह्यर्हिभ्योऽसानः ॥२७९॥ एभ्योऽसानः प्रत्ययो भवति। ऋजुङ् भर्जने। ऋञ्जसानः महेन्द्रः मेघ. श्मशानं च। रञ्जीं रागे। रञ्जसानः मेघः धर्मश्च। मदुङ् स्तुत्यादिषु। मन्दसानः हंसः चन्द्रः सूर्यः जीवः स्वप्नः अग्निश्च। षहि मर्षणे। सहसानः दृढः मयूरः यजमानः क्षमावांश्च। अर्ह पूजायाम्। अर्हसानः चन्द्रः तुरंगमश्च ॥२७९॥ रुहियजेः कित् ॥ २८० ॥ आभ्यां किदसानः प्रत्ययो भवति। रुहं जन्मनि। रुहसानः विटपः। यजी देवपूजादौ। इजसानः धर्मः ॥ २८० ॥ वृधेर्वा ॥ २८१ ॥ वृधेरसानः प्रत्ययः किद्वा भवति।

॥ २८१ ॥ श्याकाठिखलिनल्यविकुण्डिभ्य इनः ॥ २८२ ॥ एभ्य इनः
वृधूङ् वृद्धौ । वृधसानः गर्भः । वर्धसानः गिरिः मृत्युः गर्भः पुरुषश्च ॥ २८१ ॥ श्याकाठिखलिनल्यविकुण्डिभ्य इनः ॥ २८२ ॥ एभ्य इनः
वृधूङ् वृद्धौ । वृधसानः गर्भः । वर्धसानः गिरिः मृत्युः गर्भः पुरुषश्च । कठ कृच्छ्रजीवने । कठिनममृदु । खल संचये च । खलिनम् अश्वमुख-
प्रत्ययो भवति । श्यैङ् गतौ । श्येनः पक्षी अभिचारयज्ञश्च । कठ कृच्छ्रजीवने । कठिनममृदु । खल संचये च । खलिनम् अश्वमुख-
संयमनम् । णल गन्धे । नलिनं पद्मम् । अव रक्षणादौ । अविनं जलं मृगः नाशः अग्निः राजा अध्वर्युः विमानं गुप्तिश्च ॥ कुडुङ् दाहे । कुण्डिनः ऋषिः ।
कुण्डिन नगरम् ॥ २८२ ॥ वृजितुहिपुलिपुटिभ्यः कित् ॥ २८३ ॥ एभ्यः किदिनः प्रत्ययो भवति । वृजैकि वर्जने । वृजिनं पापं कुटिलं च । तुह अर्दने । तुहि-
नम् हिममन्धकारश्च । पुल महत्वे । पुटत् संश्लेषणे । पुलिनं पुटिनं च नदीतीरं वालुकासंघातश्च ॥ २८३ ॥ विपिनाजिनादयः ॥ २८४ ॥ विपिनादयः शब्दाः
किदिनप्रत्ययान्ता निपात्यन्ते । टु वपी बीजसंताने टुवेपृङ् चलने इत्यस्य वा इच्चोपान्त्यस्य । विपिनं गहनम् अब्ज जलदुर्गं च । अज क्षेपणे च । अस्य वीभावाभावश्च
अजिनं चर्म । आदिग्रहणादन्येऽपि ॥ २८४ ॥ महेर्णिद्वा ॥ २८५ ॥ मह पूजायामित्यस्मादिनः प्रत्ययः स च णिद्वा भवति । माहिनं राज्यं बलं च । महिनं राज्यं
शयनं च । माहिनः माहात्म्यवान् ॥ २८५ ॥ खलिहिंसिभ्यामीनः ॥२८६॥ आभ्यामीनः प्रत्ययो भवति । खल संचये च । खलीनं कविकम् । हिंसुप् हिंसायाम् ।
हिंसीनः श्वापदः ॥ २८६ ॥ पठेर्णित् ॥ २८७ ॥ पठ व्यक्तायां वाचीत्यस्मात् णिदीनः प्रत्ययो भवति । पाठीनः मत्स्यः ॥ २८७ ॥ यम्यजिशक्यर्जिशीय-
जितॄभ्य उनः ॥ २८८ ॥ एभ्य उनः प्रत्ययो भवति । यमूं उपरमे । यमुना नदी । अज क्षेपणे च । वयुनं विज्ञानम् अङ्गं च । वयुनः विद्वान् चन्द्रः यज्ञश्च ।
शकृंट् शक्तौ । शकुनः पक्षी । अर्ज अर्जने । अर्जुनः ककुभः वृक्षविशेषः पार्थः श्वेतवर्णः श्वेताश्वः कार्तवीर्यश्च । अर्जुनी गौः । अर्जुनं तृणं श्वेतसुवर्णं च ॥ शीङ्क्
स्वप्ने । शयुनः अजगरः । यजीं देवपूजादौ । यजुना क्रतुद्रव्यम् । तॄ प्लवनतरणयोः । तरुणः समर्थः युवा वायुश्च । ऋफिडादित्वाल्लत्वे, तलुनः ॥ २८८ ॥
लषेः श च ॥ २८९ ॥ लषी कान्तावित्यस्मादुनः प्रत्ययः तालव्यः शकारश्चान्तादेशो भवति । लशुनं कन्दजातिः ॥२८९॥ पिशिमिथिक्षुधिभ्यः कित् ॥२९०॥
एभ्यः किदुनः प्रत्ययो भवति । पिशत् अवयवे । पिशुनः खलः । पिशुनं मैत्रीभेदकं वचनम् । मिथृङ् मेधाहिंसयोः । मिथुनं स्त्रीपुंसद्वन्द्वम् राशिश्च । क्षुधंच्
बुभुक्षायाम् । क्षुधनः कीटकः ॥२९०॥ फलेर्गोऽन्तश्च ॥२९१॥ फल निष्पत्तौ इत्यस्मादुनः प्रत्ययो गश्चान्तो भवति । फल्गुनः अर्जुनः । फल्गुनी नक्षत्रम् ॥२९१॥
वीपातिपटिभ्यस्तनः ॥२९२॥ एभ्यस्तनः प्रत्ययो भवति । वीक् प्रजनादौ । वेतनं भृतिः । पतॢ गतौ । पत्तनम् । पट गतौ । पट्टनम् । द्वावपि नगरविशेषौ ' पट्टनं
शकटैर्गम्यं घोटकैर्नौभिरेव च । नौभिरेव तु यद्गम्यं पत्तनं तत्प्रचक्षते ॥ २९२ ॥ पृपूभ्यां कित् ॥ २९३ ॥ आभ्यां कित् तनः प्रत्ययो भवति । पृङ्त
व्यायामे । पृतना सेना । पूग्श् पवने । पूतना राक्षसी ॥ २९३ ॥ कृत्यशौभ्यां स्नक् ॥ २९४ ॥ आभ्यां स्नक् प्रत्ययो भवति । कृतैत् छेदने । कृत्स्नं सर्वम् ।
अशौटि व्याप्तौ । अक्ष्णं नयनं व्याधिः रज्जुः तेजनम् अखण्डं च ॥ २९४ ॥ अर्तेः शसानः ॥ २९५ ॥ ऋंक् गतावित्यस्मात्तालव्यादिः शसानः प्रत्ययो भवति ।

अर्शसानः पन्थाः इषुः अग्निश्च ॥ २९५॥ भापाचणिचमिविविसृपृतृशीतल्यलिशामिरमिवपिभ्यः पः ॥ २९६ ॥ एभ्यः पः प्रत्ययो भवति ॥ भांक् दीप्तौ । भाप आदित्यः ज्येष्ठश्च भ्राता । पांक् रक्षणे । पापं कल्मषम् । पापः घोरः । चण हिंसादानयोश्च । चणपा नगरी । चणपः वृक्षः । चमू अदने । चम्पा नगरी । विप्लृंकी व्याप्तौ । वेष्पः परमात्मा स्वर्ग आकाशश्च । निपूर्वात् निवेष्पः अपां गर्भः कूपः वृक्षजातिः अन्तरिक्षं च । सृं गतौ । सर्पः अहिः । पृश् पालनपूरणयोः । पर्पः प्लवः शंखः समुद्रः शल्लं च । तॄ प्लवनतरणयोः । तर्पः उडुपः नौश्च । शीङ्क् स्वप्ने । शेपः पुच्छम् । तलण् प्रतिष्ठायाम् । तल्पं शयनीयम् अङ्गं दाराः युद्धं च । अली भूषणादौ । अल्पं स्तोकम् । शमूच् उपशमे । शम्पा विद्युत् काञ्ची च । विपूर्वाद्विशम्पः दानवः । रमि क्रीडायाम् । रम्पा चर्मकारोपकरणम् । डु वपी बीजसंताने । वप्पः पिता ॥ २९६ ॥ युसुकुरुतुच्युस्त्वादेरूच्च ॥ २९७ ॥ एभ्यः पः ऊकारश्चान्तादेशो भवति । युक् मिश्रणे । यूपः यज्ञपशुबन्धनकाष्ठम् । षुंग्ट् अभिषवे । सूपः मुद्गादिभिस्तक्रृतः । कुक् शब्दे । कूपः प्रहिः । रुक् शब्दे । रूपं श्वेतादि लावण्यं स्वभावश्च । तुंक् वृत्त्यादौ । तूप आयतनविशेषः । च्युंङ् गतौ । च्यूपः आदित्यः वायुः संग्रामश्च । ष्टुंग्क् स्तुतौ । स्तूपः बोधिसत्त्वभवनम् उपायतनं च । आदिशब्दादन्येऽपि ॥ २९७ ॥ कृशृसृ-भ्य ऊर् चान्तस्य ॥ २९८ ॥ एभ्यः पः प्रत्ययोऽन्तस्य च ऊर्भवति । कृत् विक्षेपे । कूर्पम् भ्रूमध्यम् । शृश् हिंसायाम् । शूर्पः धान्यादिनिष्पवनभाण्डं संख्या च । सृं गतौ । सूर्पः भुजंगमः मत्स्यजातिश्च ॥ २९८ ॥ शादिबाधिखनिहनेः ष च ॥ २९९ ॥ एभ्यः पः प्रत्ययः षश्चान्तादेशो भवति । शद्लृ शातने । शष्पं वालतृणम् । शष हिंसायामित्यस्य वा रूपम् ॥ बाधृङ् रोटने । बाष्पः अश्रु धूमाभासं च मुखपानीयादौ । खनूग् अवदारणे । खष्पः बलात्कारः दुर्मेधाः कूपश्च । खष्पं खलीनं जनपदविशेषः अङ्गारश्च । हनंक् हिंसागत्योः । हष्पः प्रावरणजातिः ॥ २९९ ॥ पम्पाशिल्पादयः ॥ ३०० ॥ पम्पादयः शब्दाः पप्रत्ययान्ता निपात्यन्ते । पांक् रक्षणे मोऽन्तो ह्रस्वश्च । पम्पा पुष्करिणी । शीलयतेः शलतेः शेतेर्वा शिलादेशश्च । शिल्पं विज्ञानम् । आदिग्रहणादन्येऽपि ॥ ३०० ॥ क्षुचुपिपूभ्यः कित् ॥ ३०१ ॥ एभ्यः कित् पः प्रत्ययो भवति । टुक्षुक् शब्दे । क्षुपः गुच्छः । चुप मन्दायां गतौ । चुप्पं मन्दगमनम् । पूग्श् पवने । पूपः पिष्टमयः ॥ ३०१ ॥ नियो वा ॥ ३०२ ॥ णीग् प्रापणे इत्यस्मात् पः प्रत्ययो भवति स च किद्वा । नीपः वृक्षविशेषः ( कदम्बः ) । नेपः नयः पुरोहितः वृक्षः भृतकश्च । नेपमुदकं यानं च ॥ ३०२ ॥ उभ्यवेर्लुक् च ॥ ३०३ ॥ आभ्यां कित् पः प्रत्ययो लुक् चान्तस्य भवति । उभत् पूरणे । अव रक्षणादौ । उप अप च अव्यये ॥ ३०३ ॥ दलिवलितलिखजिध्वजिकचिभ्योऽपः ॥ ३०४ ॥ एभ्योऽपः प्रत्ययो भवति । दल विशरणे । दलपः प्रहरणम् रणमुखम् विदलं दल-विशेषश्च । दलपं व्रणमुखत्राणम् । वलि संवरणे । वलपः कर्णिका । तलण् प्रतिष्ठायाम् । तलपः हस्तप्रहारः । खज मन्थे । खजपः मन्थः । खजपं दधि घृतम् उदकं च । ध्वज गतौ । ध्वजपः ध्वजः । कचि बन्धने । कचपः शाकपर्णं बन्धश्च ॥ ३०४ ॥ भुजिकुतिकुटिविटिकुणिकुष्युषिभ्यः कित् ॥ ३०५ ॥ एभ्यः किदपः

प्रत्ययो भवति। भुजंप् पालनाभ्यवहारयोः। भुजपः राजा यजमानपालनादग्निश्च । कुतिः सौत्रः। कुतपः छागलोम्नां कम्बलः आस्तरणं श्राद्धकालश्च। कुटत् कौटिल्ये। कुटपः प्रस्थचतुर्भागः नीड च शकुनीनाम् । विद् शब्दे। विटपः शाखा। कुणत् शब्दोपकरणयोः। कुणपः मृतकं कुपितं शब्दार्थसारूप्यं च । कुपश् निष्कर्षे। कुपपः विन्ध्यः संदंशश्च। उपू दाहे। उपपः दाहः सूर्यः वन्हिश्च ॥ ३०५ ॥ **शंसेः श इचातः** ॥ ३०६ ॥ शंसू स्तुतौ चेत्यस्मादपः प्रत्ययस्तालव्यः शकारोऽन्तादेशोऽकारस्य चेकारो भवति। शिंशपाः वृक्षविशेषः ॥ ३०६ ॥ **विष्टपोलपवातपादयः** ॥ ३०७ ॥ विष्टपादयः शब्दा किदपप्रत्ययान्ता निपात्यन्ते। विपेस्तोऽन्तश्च । विष्टपं जगत् सुकृतिनां स्थानं च। वलेरुल् च। उलपं पर्वततृणम् पङ्कजं जलं च। उलपः ऋषिः । वातेस्तोऽन्तश्च । वातपः ऋषिः। आदिग्रहणात् खरपादयो भवन्ति ॥ ३०७ ॥ **कलेरापः** ॥ ३०८ ॥ कलि शब्दसंख्यानयोरित्यस्मादापः प्रत्ययो भवति। कलापः काञ्ची समूहः शिखण्डश्च ॥ ३०८ ॥ **विशेरिपक्** ॥ ३०९ ॥ विशंत् प्रवेशने इत्यस्मादिपक् प्रत्ययो भवति। विशिपः राशिः। विशिपं तृणं वेश्म आसनं पद्मं च ॥ ३०९ ॥ **दलेरीपो दिल् च** ॥ ३१० ॥ दल विशरणे इत्यस्मादीपः प्रत्ययो भवति दिल् चास्यादेशो भवति । दिलीपः राजा ॥ ३१० ॥ **उडेरुपक्** ॥ ३११ ॥ उड् संघाते इत्यस्मात् सौत्रादुपक् प्रत्ययो भवति । उडुपः प्लवः। जपादित्वात् वत्वे । उडुवः ॥ ३११ ॥ **अश ऊपः पश्च** ॥ ३१२ ॥ अशौटि व्याप्तावित्यस्मादूपः प्रत्ययः पश्चान्तादेशो भवति । अपूपः पक्वान्नविशेषः ॥ ३१२ ॥ **सर्तेः षप** ॥ ३१३ ॥ सृं गतावित्यस्मात् षपः प्रत्ययो भवति। सर्षपः रक्षोघ्नं द्रव्यम् शाक च ॥३१३॥ **रीशीभ्यां फः** ॥३१४॥ आभ्यां फः प्रत्ययो भवति। रीङ्च् श्रवणे। रेफः कुत्सितः। शीङ्क् स्वप्ने। शेफः मेढ्रः ॥३१४॥ **कलिगलेरस्योच**॥३१५॥ आभ्यां फः प्रत्ययोऽस्य चोकारो भवति। कलि शब्दसंख्यानयोः, गल अदने। कुलफः गुल्फः जङ्घाङ्घ्रिसंधिः। गुल्फः पदोपरिग्रन्थिः ॥३१५॥ **शफकफशिफाशोफादयः** ॥ ३१६ ॥ शफादयः शब्दाः फप्रत्ययान्ता निपात्यन्ते। श्यतेः कायतेश्च ह्रस्वश्च। शफः खुरः प्रियंवदश्च। कफः श्लेष्मा। श्यतेरित्वमोत्वं च। शिफा वृक्षजटा। शोफः श्वयथुः खुरश्च। आदिशब्दात् रिफानफासुनफादयो भवन्ति ॥३१६॥ **वलिनितनिभ्यां बः** ॥३१७॥ वलि संवरणे निपूर्वाच्च तनूयी विस्तारे इत्यस्माच्च वः प्रत्ययो भवति। वल्वः वृक्षः। नितम्बः श्रोणिः पर्वतैकदेशः नटश्च ॥३१७॥ **शम्यमेर्णिद्वा** ॥३१८॥ आभ्यां वः प्रत्ययः स च णिद्वा भवति। शमूच् उपशमे। शम्बः वज्रः कर्षणविशेषः वेणुदण्डः तोत्रम् अरित्रं च। शम्बशाम्बौ जाम्बवतेयौ। अम्बा माता। आम्बः अपह्नवः ॥३१८॥ **शल्यलेरुचातः**॥३१९॥ आभ्यां वः प्रत्ययोऽकारस्य चोकारो भवति। पलफलशल गतौ। शुल्वं ताम्रम्। अली भूषणादौ। उल्वं रजतम् गर्भवेष्टनम् । शुल्वं बभ्रुः तरक्षुश्च ॥ ३१९ ॥ **तुम्बस्तम्बादयः** ॥ ३२० ॥ तुम्बादयः शब्दा बप्रत्ययान्ता निपात्यन्ते। ताम्यतेरत उत्त्वं च। तुम्बम् अलाबु चक्राङ्गं च। स्तम्भेर्लुक् च। स्तम्बः तृणं विटपः संघातः अङ्कुरसमुदायः स्तबकः पुष्पापीडश्च। आदिग्रहणात् कुशाम्बादयो भवन्ति ॥ ३२० ॥ **कृकाडिकाटिवटेरम्ब** ॥ ३२१ ॥ एभ्योऽम्बः प्रत्ययो भवति।

डु कृंग् करणे । करम्बः दध्योदनः दधिसक्तवः पुष्पं च । कडत् मदे । कडम्बः जातिविशेषः जनपदविशेषश्च । कटे वर्षावरणयोः । कटम्बः पक्वान्नविशेषः वादित्रं च । कडम्बकटम्बौ वृक्षौ च । वट वेष्टने । वटम्बः शैलः तृणपुञ्जश्च ॥३२१॥ **कदेर्णिद्वा** ॥३२२॥ कद वैक्लव्ये इत्यस्मात् सौत्रादम्बः प्रत्ययः स च णिद्वा भवति । कादम्बः हंसः । कदम्बः वृक्षजातिः ॥ ३२२ ॥ **शिलविलादेः कित्** ॥३२३॥ शिलादिभ्यः किदम्बः प्रत्ययो भवति । शिलत् उञ्छे । शिलम्बः ऋषिः तन्तुवायश्च । विलत् वरणे । विलम्बः वेषविशेषः रङ्गावसरश्च । आदिग्रहणादन्येऽपि ॥ ३२३ ॥ **हिण्डिविलेः किम्बो नलुक् च** ॥ ३२४ ॥ आभ्यां किदिम्बः प्रत्ययो नस्य च लुग् भवति । हिडुङ् गतौ च विलत् वरणे । हिडिम्बः विलिम्बश्च राक्षसौ ॥ ३२४ ॥ **डीनीबन्धिशृधिचलिभ्यो डिम्बः** ॥ ३२५ ॥ एभ्यो डिदिम्बः प्रत्ययो भवति । डीङ् विहायसा गतौ । डिम्बः राजोपद्रवः । णींग् प्रापणे । निम्बः वृक्षविशेषः । बन्धंश् बन्धने । बिम्बं प्रतिच्छन्दः देहश्च । बिम्बी वल्लिजातिः । शृधूङ् शब्दकुत्सायाम् । शिम्बः मृगजातिः । शिम्बी निष्पाववल्ली च । चल कम्पने । चिम्बा यवागूजातिः ॥३२५॥ **कुव्युन्दिचुरितुरिपुरिमुरिकुरिभ्यः कुम्बः** ॥३२६॥ एभ्यः किदुम्बः प्रत्ययो भवति । कुटत् कौटल्ये । कुटुम्बं दारादयः । उन्दैप् क्लेदने । उदुम्बः समुद्रः । चुरण् स्तेये । तुरण् त्वरणे सौत्रः । चुरुम्बः तुरुम्बश्च गहनम् । पुरत् अग्रगमने । पुरुम्बः आहारः । मुरत् संवेष्टने । मुरुम्बः मृद्यमानपाषाणचूर्णम् । कुरत् शब्दे । कुरुम्बः अङ्कुरः। निपूर्वात् निकुरुम्बः राशिः ॥ ३२६ ॥ **गृदृरमिहनिजन्यर्तिदलिभ्यो भः** ॥ ३२७ ॥ एभ्यो भः प्रत्ययो भवति । गॄत् निगरणे । गर्भः जठरस्थः प्राणी । दॄश् विदारणे । दर्भः कुशः । रमिं क्रीडायाम् । रम्भा अप्सराः कदली च । हनंक् हिंसागत्योः । हम्भा गोधेनुनादः । जनैचि प्रादुर्भावे । जम्भः दानवः दन्तश्च । जम्भा मुखविदारणम् । ऋक् गतौ । अर्भः शिशुः । दल विदारणे । दल्भः ऋषिः वल्कलं विदारणं च ॥ ३२७ ॥ **इणः कित्** ॥ ३२८ ॥ इण्क् गतावित्यस्मात् किद्भः प्रत्ययो भवति । इभः हस्ती ॥ ३२८ ॥ **कृगृशृशलिकलिकडिगर्दिरासिरमिवडिवल्लेरभः** ॥ ३२९ ॥ एभ्योऽभः प्रत्ययो भवति । कॄत् विक्षेपे । करभः त्रिवर्ष उष्ट्रः । शॄश् हिंसायाम् । शरभः श्वापदविशेषः । गॄत् निगरणे । गरभः उदरस्थो जन्तुः । पलफलशल गतौ । शलभः पतङ्गः । कलि शब्दसंख्यानयोः । कलभः हस्ती यौवनाभिमुखः । कडत् मदे । कडभः हस्तिपोतकः ॥ गर्द शब्दे । गर्दभः खरः । रासृङ् शब्दे । रासभः स एव । रमिं क्रीडायाम् । रमभः महर्षे । वडः सौत्रः । वडभी वेश्माग्रभूमिका । ऋफिडादित्वाल्लत्वे वलभी । वल्लि संवरणे । वल्लभः स्वामी दयितश्च ॥ ३२९ ॥ **सनेर्डित्** ॥ ३३० ॥ षण भक्तावित्यस्मात् डिदभः प्रत्ययो भवति । सभा परिषत् शाला च ॥ ३३० ॥ **ऋषिवृषिलुसिभ्यः कित्** ॥ ३३१ ॥ एभ्यः किदभ प्रत्ययो भवति । ऋषैत् गतौ । वृषू सेचने । ऋषभः वृषभश्च पुङ्गवः भगवांश्चादितीर्थकरः । ऋषभः वायुः । लुसिः सौत्रः । लुसभः हिंस्रः मत्तहस्ती वर्न च ॥ ३३१ ॥ **सिटिटिकिभ्यामिभः सैरटिट्टौ च** ॥ ३३२ ॥ अभ्यामिभः प्रत्ययो दन्त्यादेः सैर. टिट्टश्चादेशौ यथासंख्यं भवतः । षिगृट् वन्धने । सैरिभः महिषः । टिकि गतौ । ठिट्टिभः पक्षी ॥ ३३२ ॥

कुकेः कोऽन्तश्च ॥ ३३४ ॥ कुकि आदाने इत्यस्मादुभः
ककेरुभः ॥ ३३३ ॥ ककि लौल्ये इत्यस्मादुभः प्रत्ययो भवति । ककुभः अर्जुनः ॥ ३३३ ॥ दमो दुण्ड् च ॥ ३३५ ॥ दमूच् उपशमे इत्यस्मात् उभः प्रत्ययोऽस्य च दन्त्यादिष्टवर्गतृतीयान्तो
प्रत्ययः कश्चान्तादेशो भवति । कुकुभः पक्षिविशेषः ॥ ३३४ ॥ दुण्ड् इत्यादेशो भवति । दुण्डुभः निर्विषाहिः ॥ ३३५ ॥ कृकलेरम्भः ॥ ३३६ ॥ आभ्यामम्भः प्रत्ययो भवति । डु कृंग् करणे । करम्भः दधिसक्तवः ।
कलि शब्दसंख्यानयोः । कलम्भः ऋषिः ॥ ३३६ ॥ काकुसिभ्यां कुम्भः ॥ ३३७ ॥ आभ्यां किदुम्भः प्रत्ययो भवति । कै शब्दे । कुम्भः घटः राशिश्च ।
कुसच् श्लेषणे । कुसुम्भं महारजनम् ॥ ३३७ ॥ अर्तीरिस्तुसुहुसृघृक्षिक्षियक्षिभावाव्याधापायावलिपदिनीभ्यो मः ॥ ३३८ ॥ एभ्यो मः
प्रत्ययो भवति । ऋक् गतौ । अर्मः अक्षिरोगः ग्रामः स्थलं च । ईरिक् गतिकम्पनयोः । ईर्मं व्रणः । ष्टुंगृक् स्तुतौ । स्तोमः समूहः यज्ञः स्तोत्रं च ।
षुंगृट् अभिषवे । सोमः चन्द्रः वल्ली च । हुंक् दानादनयोः । होमः आहुतिः । सृं गतौ । सर्मः नदः कालश्च । सर्म स्थानं सुखं च । घृं सेचने ।
घर्मः ग्रीष्म । धृंङ्व् स्थाने । धर्मः उत्तमक्षमादिः न्यायश्च । शॄश् हिंसायाम् । शर्म सुखम् । क्षित् निवासगत्योः । क्षेमं कल्याणम् । यक्षिण् पूजायाम् ।
यक्ष्मः व्याधिः । भांक् दीप्तौ । भामः क्रोधः । भामा स्त्री । वांक् गतिगन्धनयोः । वामः प्रतिकूलः सव्यश्च । व्येग् संवरणे । व्यामः वक्षोभुजायतिः ।
डु धांग्क् धारणे च । धामं निलयः मेघश्च । पां पाने । पामा कच्छूः । यांक् प्रापणे । यामः प्रहरः । वलि संवरणे । वल्मः ग्रन्थिः । पदिंच् गतौ ।
पद्मं कमलम् । णींग् प्रापणे । नेमः अर्धः समीपश्च ॥ ३३८ ॥ ग्रसिहाग्भ्यां ग्राजिहौ च ॥ ३३९ ॥ आभ्यां मः प्रत्ययोऽनयोश्च ग्रा जिह्वा-
वित्यादेशौ यथासंख्यं भवतः । ग्राम समूहादिः । जिह्मः कुटिलः ॥ ३३९ ॥ विलिभिलिसिधीन्धिधूसूशाध्यारुसिविशुषिमुषीषिसुहियुधिद-
सिभ्यः कित् ॥ ३४० ॥ एभ्यः किन्मः प्रत्ययो भवति । विलत् वरणे । विल्मं प्रकाशः । भिलिः सौत्रः । भिल्मं भास्वरम् । षिधू गत्याम् । सिध्मं
त्वग्रोगः । ञि इन्धैपि दीप्तौ । इध्ममिन्धनम् । धूग्श् कम्पने । धूमः अग्निकेतु । षूङौच् प्राणिप्रसवे । सूमः कालः श्वयथुः रश्मिश्च । सूममन्त-
रिक्षम् । श्यैङ् गतौ । श्यामः वर्णः । श्यामं नभः । श्यामा रात्रिः औषधिश्च । ध्यै चिन्तायाम् । ध्यामः अव्यक्तवर्णः । रुङ् शब्दे । रुमा लवण-
भूमिः । षिवूच् उतौ । स्यूमः रश्मिः दीर्घः सूत्रतन्तुश्च । स्यूमम् जलम् । शुषंच् शोषणे । शुष्मं बलं जलं संयोगश्च । मुषश् स्तेये । मुष्मः मूषिकः
ईष उञ्छे । ईष्म वसन्तः वाणः वातश्च । षुहच् शक्तौ । सुह्माः जनपदः । सुह्मः राजा । युधिच् संप्रहारे । युध्मः शरत्कालः शूरः
शत्रुः संग्रामश्च । दसूच् उपक्षये । दस्मः हीनः वन्हिः यज्ञश्च ॥ ३४० ॥ क्षुहिभ्यां वा ३४१ ॥ आभ्यां मः प्रत्ययः स च किद्वा भवति । टु क्षुक्
शब्दे । क्षुमा अतसी । क्षोमं वस्त्रम् । हिट् गतिवृद्ध्योः । हिमं तुषारः । हेमं सुवर्णम् ॥ ३४१ ॥ अवेर्ह्रस्वश्च वा ॥ ३४२ ॥ अव रक्षणादावि-

ससात् क्रित् मः प्रत्यय ऊटो ह्रस्वश्च वा भवति । उमा गौरी अतसी कीर्तिश्च । ऊमसूनमाकारं नगरं च ॥ ३४२ ॥ सेरी च वा ॥ ३४३ ॥
पिण्ड् बन्धने इत्यस्मात् क्रित् मः प्रत्यय ईकारश्चान्तादेशो वा भवति । सीमो ग्रामगोचरभूमिः क्षेत्रमर्यादा इयश्च । सिमः स एव सर्वार्थश्च ॥ ३४३ ॥
भियः षोऽन्तश्च वा ॥ ३४४ ॥ ञिभीङ् भये इत्यस्मात् क्रित् मः प्रत्ययः षकारश्चान्तादेशो भवति वा ॥ बिभेत्यस्मादिति भीष्मः भयानकः । भीमः
स एव ॥ ३४४ ॥ तिजियुजेर्ग् च ॥ ३४५ ॥ आभ्यां क्रित् मः प्रत्ययो गकारश्चान्तादेशो भवति । तिजि क्षमानिशानयोः । तिग्मं तीक्ष्णं दीप्तं तेजश्च ।
युजृंपी योगे । युग्मं युगलम् ॥ ३४५ ॥ रुक्मग्रीष्मकूर्मसूर्मजाल्मगुल्मद्योमपरिस्तोमसूक्ष्मादयः ॥ ३४६ ॥ एते क्रिन्मप्रत्ययान्ता निपात्यन्ते । रोचतेः क च ।
रुक्मं सुवर्णं रूप्यं च । ग्रसेर्ग्रीप् च । ग्रीष्मः ऋतुः । कुरोर्दीर्घश्च । कूर्मः कच्छपः । षूत् प्रेरणे इत्यस्माद्रोऽन्तश्च भवति । सूर्मी लोहप्रतिमा चुल्लिश्च ।
जल घात्ये दीर्घश्च । जाल्मः निकृष्टः । गुपूप् व्याकुलत्वे लश्च । गुल्मः व्याधिः तरुसमूहः वनस्पतिः सेनाङ्गं च । गुल्मम् आयस्थानम् । जिघ्रतेरोत्वं च । घ्रोमः यज्ञाङ्ग-
लक्षणः सोमः । परिपूर्वात् स्तौतेः पत्यमानो गुणश्च । परिस्तोमः यज्ञविशेषः । सूचण् पैशून्ये कत्वं षाऽन्तश्च । सूक्ष्मः निपुणः । सूक्ष्मम् अणु । आदिग्रहणात् क्ष्मादयो
भवन्ति ॥ ३४६ ॥ सृपृप्रथिचरिकडिकर्देरमः ॥ ३४७ ॥ एभ्यो मः प्रत्ययो भवति । सृं गतौ । सरमा देवशुनी । पृश् पालनपूरणयोः । परमः उत्कृष्टः । प्रथिष्
प्रख्याने । प्रथम आद्यः । चर भक्षणे । चरमः पश्चिमः । कडन् मदे । कडमः शालिः । ऋफिडादित्वाल्लत्वे, कलमः स एव ॥ कर्द कुत्सिते शब्दे ।
कर्दमः पङ्कः ॥ ३४७ ॥ अवेर्ध् च वा ॥ ३४८ ॥ अव रक्षणादावित्यस्मादमः प्रत्ययो धश्चान्तादेशो वा भवति । अधमः अवमश्च हीनः ॥ ३४८ ॥
कुट्टिवेष्टिपूरिपिषिसिचिगण्यर्पिवृग्महिभ्य इमः ॥३४९॥ एभ्य इमः प्रत्ययो भवति । कुट्टण् कुत्सने च । कुट्टिमः संस्कृतभूतलम् । वेष्टि वेष्टने । वेष्टिमं पुष्पबन्ध-
विशेषः भक्ष्यविशेषश्च । पूरैचि आप्यायने । पूरिमं मात्राबन्धविशेषः भक्ष्यविशेषश्च । पिष्लृप् संचूर्णने । पेषिमं भक्ष्यविशेषः । षिचींत् क्षरणे । सेचिमं मालाविशेषः ।
गणण् संख्याने । गणिमं गणिनम् । ऋक् गतौ णौ पौ, अर्पिमं वालवत्साया दुग्धम् । वृग्ट् वरणे । वरिमं तुलोन्मेयम् । मह पूजायाम् । महिमं पूजनीयम् ॥ ३४९ ॥
वयिमखचिमादयः ॥ ३५० ॥ वयिमादयः शब्दा इमप्रत्ययान्ता निपात्यन्ते । वेग् तन्तुसंताने वयादेशश्च । वयिमं माल्यं कन्दुकः तन्तुवायदण्डश्च ।
खनूग् अवदारणे चश्च । खचिमं मणिलोहविद्धं घृतविहीनं च दधि । आदिशब्दादन्येऽपि ॥ ३५० ॥ उद्वटिकुल्यालिकुथिकुरिकुटिकुडिकुसिभ्यः कुमः
॥ ३५१ ॥ उत्पूर्वाद्वटेः कुल्यादिभ्यश्च किदुमः प्रत्ययो भवति । वट वेष्टने । उद्वटुमः परिक्षेपः । कुल बन्धुसंस्त्यानयोः । कुलुमः उत्सवः । अली
भूषणादौ । अलुमः प्रसाधनम् नापितः अग्निश्च । कुथच् पूतीभावे । कुथुमः ऋषिः । कुथुम मृगाजिनम् । कुरत् शब्दे । कुरुमः कारुः भाजनं च । कुटत्
कौटिल्ये । कुटुमः प्रेष्यः । कुडत् बाल्ये च । कुडुमा भूमिः । कुसच् श्लेषे । कुसुमं पुष्पम् ॥ ३५१ ॥ कुन्दुमलिन्दुमकुङ्कुमविद्रुमपद्रुमादयः ॥ ३५२ ॥

एते कुमभसयान्ता निपात्यन्ते । कुकि आदाने सरान्तो दश्च । कुन्दुमः निचयः गन्धद्रव्यं च । लीङ्च् श्लेषणे लिन्दभावश्च । लिन्दुमो गन्धद्रव्यम् । कुङः स्वर न्तोन्तश्च । कुङ्कुमं पुष्पम् । विदुलृंती लाभे रोन्तश्च । विद्रुमः प्रवालः । पटेष्टोऽन्तश्च । पट्टुमं नगरम् । आदिग्रहणादन्येऽपि ॥ ३५२ ॥ कुथिगुधेरूमः ॥ ३५३ ॥ आभ्यामूम प्रत्ययो भवति । कुथच् पूतिभावे । कोथूमः चरणकृदृषिः । गुधच् परिवेष्टने । गोधूमः धान्यविशेषः ॥ ३५३ ॥ विहाविशापचिभिद्यादेः केलिमः ॥ ३५४ ॥ विपूर्वाभ्याम् ओ हांक् त्यागे शोंच् तक्षणे इत्येताभ्यां पच्यादिभ्यश्च किदेलिमः प्रत्ययो भवति । विहीयते त्यज्यतेऽशुचि शरीरमस्मिन्निति विहेलिमः स्वर्गः । विश्यति तनूभवति मासि मासि कलाभिर्हीयमान इति विशेलिमः चन्द्रः स्वर्गश्च । डु पचींष् पाके । पचति अभावत्रमिति पचेलिमोऽग्निः आदित्यः अश्वश्च । भिदृंपी विदारणे । भिदेलिमः तस्करः । आदिशब्दात् दृशृं प्रेक्षणे । दर्शलिमम् । अर्दं ऋक् भक्षणे । अदेलिमम् । हनंक् हिंसागत्योः । घ्नेलिमम् । डु याचृग् याच्ञायाम् । याचेलिमम् । पाक् रक्षणे । पेलिमम् । डु कृंग् करणे । क्रेलिमम् । इत्यादयो भवन्ति ॥ ३५४ ॥ दो डिमः ॥ ३५५ ॥ दाम् दाने इत्यस्मात् डिमः प्रत्ययो भवति । दाडिमः दाडिमी वा वृक्षजातिः ॥ ३५५ ॥ डिमेः कित् ॥ ३५६ ॥ डिमेः सौत्रात् कित् डिमः प्रत्ययो भवति । डिण्डिमः वाद्यविशेषः ॥ ३५६ ॥ स्थाछामासासूमन्यनिकनिषसिपलिकलिशलिशकीर्ष्यसहिवन्धिभ्यो यः ॥ ३५७ ॥ एभ्यो यः प्रत्ययो भवति । ष्ठा गतिनिवृत्तौ । स्थायः स्थानम् । स्थाया भूमिः । दोछोच् छेदने । छाया तमः प्रतिरूपम् कान्तिश्च । माक् माने । माया छद्म दिव्यानुभावदर्शनं च । षोच् अन्तकर्मणि । सायं दिनावसानम् । षूत् प्रेरणे । सव्यः वामः दक्षिणश्च । मनिच् ज्ञाने । मन्या धमनिः । अनक् प्राणने । अन्यः परः । कनै दीप्त्यादिषु । कन्या कुमारी । षसक् स्वप्ने । सस्यं क्षेत्रस्थं गोधूमादि । पल गतौ । पल्यः कटकुसूलः । कलि शब्दसंख्यानयोः । कल्यः नीरोगः । पल्कः शल गतौ । शल्यमन्तर्गतं शरादि । शकृंट् शक्तौ । शक्यम् शक्यम् । ईर्ष्यि ईर्ष्यार्थः । ईर्ष्यति ईर्ष्यणं वा ईर्ष्या मात्सर्यम् । षहि मर्षणे । सह्यः पश्चिमदिग्भागपार्श्वशैलः । वन्धश् बन्धने । वन्ध्या अप्रसूतिः ॥ ३५७ ॥ नञो हलिपतेः ॥ ३५८ ॥ नञ्पूर्वाभ्यामाभ्यां यः प्रत्ययो भवति । हल विलेखने । अहल्या गौतमपत्नी । पतॢ गतौ । अपत्यं पुत्रसंतानः ॥ ३५८ ॥ सञ्जेर्धं च ॥ ३५९ ॥ षञ्जं सङ्गे इत्यस्मात् यः प्रत्ययो धकारश्चान्तादेशो भवति । संध्या दिनान्तरान्तः ॥ ३५९ ॥ मृशीपलिवसिवस्यनिभ्यस्तादिः ॥ ३६० ॥ एभ्यस्तकारादिर्यः प्रत्ययो भवति । मृंत् प्राणत्यागे । मर्त्यः मनुष्यः । शीङ्क् स्वप्ने । शेत्यः शकुनिः सवत्सरः अजगरश्च । पलि निरासे सौत्रो दन्त्यान्तः । पस्त्यं गृहम् । वसं निवासे । वस्त्यः गुरुः । अनक् प्राणने । अन्त्यः निरवसितः चण्डालादिश्च ॥ ३६० ॥ ऋशिजनिपुणिकृतिभ्यः कित् ॥ ३६१ ॥ एभ्यः कित् यः प्रत्ययो भवति । ऋश् गतौ स्तुतौ वा स्वरादिस्तालव्यान्तः । ऋश्यः मृगजातिः । जनैचि प्रादुर्भावे । जन्यं संग्रामः जाया पत्नी । 'ये नवा' इत्यात्वम् । पुणत् शुभे । पुण्यं सत्कर्म । कृतैत् छेदने । कृन्तति कृत्या दुर्गा ॥ ३६१ ॥ कुलेरीच्च वा

॥३६२॥ कुल बन्धुसंस्त्यानयोरित्यस्मात् किद्यः प्रत्ययो डकार॰ा तादेशो वा भवति । कुल्यं भितिः। कुल्या नागी॥३६२॥ अगपुलाभ्यां स्तम्भेर्डित् ॥३६३॥ अगपुल इत्येताभ्यां परस्मात् स्तम्भेः सौत्रात् डियः प्रत्ययो भवति । अगस्त्यः पुलस्त्यश्च ऋषी ॥ ३६३ ॥ शिक्यास्याढ्यमध्यविन्ध्यधिष्ण्यार्घ्यहर्म्यतल्यनिल्यादयः ॥ ३६४ ॥ एते यप्रत्ययान्ता निपात्यन्ते । शौच् तक्षणे कृअन्तः । शिक्यं लम्बमानः पिठर्याधारः परिव्राड्भिक्षाभाजनस्थानम् अगारं च ॥ असूच् क्षेपणे दीर्घत्वं च । आस्यं मुखम् । आङ्पूर्वाद् ढौकृतेर्डिच । आढ्यः धनवान् । मन बन्धने ध् च । मध्यं गर्भः । विरत् विधाने स्वरान्नोऽन्तश्च । विन्ध्यः पर्वतः । विधृपाद् प्रागल्भ्ये णोऽन्तो धिप् च । धिष्ण्यं भवनम् आननं च । धिष्ण्या उल्का । नञ्पूर्वाद्धन्तेर्नाग्र्यलोपश्च । अघ्न्यो धर्मः गोपतिश्च । अघ्न्या गौः । हरतेर्मोऽन्तश्च । हर्म्यं सौधम् । अस्तेः मत् च । तल्पम् अमृपा । निपूर्वाद्यमेस्तोऽन्तो धातुलुक् च । निल्यं ध्रुवम् । आदिग्रहणाल्लघट्टादयो भवन्ति ॥३६४॥ कुगुवलिमलिकणितन्याम्यक्षेरयः ॥ ३६५ ॥ एभ्योऽयः प्रत्ययो भवति । कुङ् शब्दे । कवयः ऋषिः पुरोडाशश्च । गुङ् शब्दे । गवयः गवाकृतिः पशुविशेषः । वालि संवरणे । वलयः कटकः । मलि धारणे । मलयः पर्वतः । कण शब्दे । कणयः आयुधविशेष । तनूयी विस्तारे । तनयः पुत्रः । अमण् रागे णिचि च । आमय व्याध । अशौ व्याप्तौ च । अक्षयः विष्णुः ॥ ३६५ ॥ चायेः केकृ च ॥ ३६७ ॥ चायृग् पूजानिशामनयोः इत्यस्मात् अयः प्रत्ययोऽस्य च केक् इत्यादेशो भवति । केकयः क्षत्रियः ॥ ३६६ ॥ लादिभ्यः कित् ॥ ३६७ ॥ लादिभ्यः कितयः प्रत्ययो भवति । लाकृ आदाने । लयः । पा पाने । पयः । ष्णाक् शौचे । स्नयः । डेंङ् पालने । दयः । द्धें पाने । धयः । मेंङ् प्रतिदाने । मयः । कै शब्दे । कयः । खै खदने । खयः । श्रै पाके । श्रयः । क्षैजैषैं क्षये । क्षयः । जयः । षयः । त्रैङ् पालने । त्रयः । ओवै शोषणे । वयः । इत्यादि ॥ ३६७ ॥ कसेरलादिरिचास्य ॥ ३६८ ॥ कस गतावित्यस्मादलादिरयः प्रत्ययोऽकारस्य चेकारो भवति । किसलयं प्रवालम् ॥ ३६८ ॥ वृङः शपौ चान्तौ ॥ ३६९ ॥ वृङ्श् संभक्तावित्यस्मात् किदयः प्रत्ययः शकारपकारौ चान्तौ भवतः । वृशः देशनाम आकाशम् आननं गगनं च । वृषयः आशयः ॥ ३६९ ॥ गयहृदयादय ॥ ३७० ॥ गयहृदय इत्यादयः शब्दाः किदयप्रत्ययान्ता निपात्यन्ते । गमेर्डिच्च । गयः प्राणः । गया तीर्थम् । हरतेर्दोऽन्तश्च । हृदयं मनः स्तनमध्यम् च । आदिशब्दात् गणेयः । गणेयं गणनीयमित्यादि ॥ ३७० ॥ मुचेर्घयतुयौ ॥ ३७१ ॥ मुच्लृती मोक्षणे इत्यस्मात् चितावय उय इति प्रत्ययौ कितौ भवतः । मुकयः, मुकुयश्च अश्वतरादश्वाया जातः । चित्करण स्वरार्थम् ॥ ३७१ ॥ कुलिलुलिकलिकपिभ्यः कायः ॥ ३७२ ॥ एभ्यः कितायः प्रत्ययो भवति । कुल बन्धुसंस्त्यानयोः । कुलायः नीडम् । लुलिः सौत्रः । लुलायः महिषः । कलि शब्दसंख्यानयोः । कलाय त्रिपुट । कप हिंसायाम् । कपाय कल्कादि ॥ ३७२ ॥ श्रुदक्षिस्पृहिगृहिमहेराय्यः ॥ ३७३ ॥ एभ्य आय्यः प्रत्ययो भवति ।

गृहयाय्यः श्रुंद् श्रवणे । श्रवाय्यः यज्ञपशुः श्रवणसमर्थश्च श्रोता । दक्षि हिंसागत्योः । दक्षाय्यः अग्निः गृध्रः वैनतेयः दक्षतमश्च । गृहणि ग्रहणे । गृहयाय्यः
अश्वमेधः ॥ ३७३ ॥ वैनतेयः गृहकर्मकुशलश्च । स्पृहण् ईप्सायाम् । स्पृहयाय्यः स्पृहयालुः भृत च । स्पृहयाय्याणि तृणानि अहानि च । महण् पूजायाम् । महयाय्यः
दीव्यतेर्दीधीप् च । दधिषाय्यदीधीषाय्यौ ॥ २७४ ॥ एतावाय्यप्रत्ययान्तो निपात्येते । दधिपूर्वात् स्यतेः परं च । दधिषाय्यं घृतादाज्यम् मृषावादी च ।
॥ ३७६ ॥ डु कुंग् दीधीषाय्यं तदंन ॥ ३७४ ॥ कौतेरियः ॥ ३७५ ॥ कुङ् शब्दे इत्यस्मात् इयः प्रत्ययो भवति । कवियं खलीनम् ॥ ३७५ ॥ कृगः कित्
भवति । करणे इत्यस्मात् किदियः प्रत्ययो भवति । क्रियो मेषः ॥ ३७६ ॥ मृजेर्णालीयः ॥ ३७७ ॥ मृजौप् शुद्धौ इत्यस्माण्णालीयः प्रत्ययो भवति ।
वीङ् मार्जालीयम् पापशोधनम् । मार्जालीयः अग्निः । मृजोऽस्य वृद्धिरिति वृद्धिः । णकार उत्तरार्थः ॥ ३७७ ॥ वेतेस्तादिः ॥ ३७८ ॥ वीङ्
प्रत्ययो प्रजनादावित्यस्मात्तकारादिर्णिदालीयः प्रत्ययो भवति । वैतालीयं छन्दोजातिः ॥ ३७८ ॥ धाग्राजिगूरमियाज्यर्तेरन्यः ॥ ३७९ ॥ एभ्योऽन्यः प्रत्ययो
रमण्यं भवति । डु धाग्ङ् धारणे च । धान्यं सस्यजातिः । राजृग् दीप्तौ । राजन्यः ज्योतिः अग्निः क्षत्रियश्च । शृश् हिंसायाम् । शरण्यः त्राता । रमिं क्रीडायाम् ।
शब्दा शोभनम् । यजी देवपूजादौ । याजन्यः क्षत्रियः यज्ञश्च । ऋंङ् गतौ । अरण्यं वनम् ॥ ३७९ ॥ हिरण्यपर्जन्यादयः ॥ ३८० ॥ हिरण्यादयः शब्दा
अन्यप्रत्ययान्ता निपात्यन्ते । हरतेरिधातः । हिरण्यं सुवर्णादि द्रव्यम् । परिपूर्नस्य पृषू सेचने इत्यस्योपसर्गान्तलोपो धातोश्च जः समस्तादेशः गर्जतेर्वा गकारस्य
पकारः । पर्जन्यः इन्द्रः मेघः शक्रः पुण्यं कुशलं च कर्म । आदिग्रहणादन्येऽपि ॥ ३८० ॥ वदिराहिभ्यामान्यः ॥ ३८१ ॥ आभ्यामान्यः प्रत्ययो भवति । वद
व्यक्तायां वाचि । वदान्यः दाता गुणवान् वाग्भापी वा । पहि मर्पणे । सहान्यः शैलः ॥ ३८१ ॥ वृङ एण्यः ॥ ३८२ ॥ वृङ्श् संभक्तावित्यस्मादेण्यः प्रत्ययो
भवति । वरेण्यः परं ब्रह्म धाम श्रेष्ठः प्रजापतिः अन्नं च ॥ ३८२ ॥ मदेः स्यः ॥ ३८३ ॥ मदैच् हर्षे इत्यस्मात् स्यः प्रत्ययो भवति । मत्स्यः मीनः धूर्तश्च ॥
३८३ ॥ रुचिभुजिभ्यां किष्यः ॥ ३८४ ॥ रुचिभुजिभ्यां किदिष्यः प्रत्ययो भवति । रुचि अभिप्रीत्यां च । रुचिष्यः वल्लभः सुवर्णं च । भुजंप् पालनाभ्यवहा-
रयोः । भुजिष्यः आचार्यः भोक्ता अन्नं मृदु ओदनः दाराश्च । भुजिष्यं धनम् ॥ ३८४ ॥ वच्यर्थिभ्यामुष्यः ॥ ३८५ ॥ आभ्यामुष्यः प्रत्ययो भवति । वचंक्
भाषणे । वचुष्यः वक्ता । अर्थणि उपयाचने । अर्थुष्यः अर्थी ॥ ३८५ ॥ वचोऽथ्य उत् च ॥ ३८६ ॥ वचंक् भाषणे इत्यस्मादथ्यः प्रत्ययोऽस्य चोत् इत्यादेशो
भवति । उतथ्यः ऋषिः ॥ ३८६ ॥ भीवृधिरुधिवज्यगिरश्विवाश्विपजपिजाक्षिस्फायिवन्दीन्दिपदिजादिमान्दिचन्दिदसिघसिनसिहस्यसिवासिदहि-
सहिभ्यो रः ॥ ३८७ ॥ एभ्यो रः प्रत्ययो भवति । ञि भीङ् भये । भेरः भेदः करभः शरः मण्डूकः दुन्दुभिः कातरश्च । ऋफिडादित्वात् लत्वे भेलः चिकित्साग्र-
न्थकारः शरः मण्डूकः प्रहीणः अप्राज्ञश्च । वृधूङ् वृद्धौ । वर्ध्रः चर्मविकारः चन्द्रः सेवश्च । रुधृंपी आवरणे । रोध्रः वृक्षविशेषः । वज गतौ । वज्रं कुलिशम् रत्नविशे-

पश्च । अग कुटिलायां गतौ । अग्रः प्राग्भागः श्रेष्ठश्च । रमि क्रीडायाम् । रभ्रः कामुकः । टु वमु उद्गिरणे । वम्रः धर्मविशेषः धूमश्च । वम्री उपदेहिका । टु वपी
बीजसंताने । वप्रः केदारः प्राकारः वास्तुभूमिश्च । जप मानसे च । जप्रः जालमः मण्डूकः । उङ्कृङ् शब्दे । शक्रः इन्द्रः । स्फायैङ् वृद्धौ । स्फारम् उल्वणं प्रभूतं
च । टुदुङ् स्तुत्यभिवादनयोः । वन्द्रः बन्दी केतुः कामश्च । वन्द्रं समूहः । इदु परमैश्वर्ये । इन्द्रः शक्रः । पदिच् गतौ । पद्रं ग्रामादिनिवेशः शून्यं च । मदैच् हर्षे ।
मद्रा जनपदः क्षत्रियश्च । मद्रं सुखम् । मदुङ् स्तुत्यभिवादनयोः । मन्द्रं मधुरः स्वरः । मन्द्रं गभीरम् । चदु दीप्त्याह्लादयोः । चन्द्रः शशी सुवर्णं च । दसूच् उपक्षये ।
दस्रः शिशिरम् चन्द्रमाः अश्विनोर्ज्येष्ठश्च । दस्रौ अश्विनौ । घस्लृं अदने । घस्रः दिवसः । णसि कौटिल्ये । नस्रा नासिकापुटः ऋषिश्च । हसे हसने । हस्रं दिनं घा-
तुकः हर्षुलश्च । हस्रं बलाधानं संनिपातश्च । सहस्रं दश शतानि । असूच् क्षेपणे । अस्रम् अश्रु । वाशिच् शब्दे । वास्रः पुरुषः शब्दः संघातः शरभः रासभः पक्षी
च । वास्रा धेनुः । दहं भस्मीकरणे । दह्रः अग्निः शिशुः सूर्यश्च । षहि मर्षणे । सह्रः शैलः ॥३८७॥ ऋज्यजिनभ्विवश्चिरिपिसृपितृपिदृपिचुपिक्षिपिक्षुपिक्षुदि-
मुदिरुदिछिदिभिदिखिदुन्दिदशिदभिशुभ्युम्भिदंशिचिशिवाहिविशिवशिगृधिवीन्धिश्वितिवृतिलीशीसुस्नूभ्यः कित् ॥३८८॥ एभ्यः कित्
रः प्रत्ययो भवति । ऋजि गतिस्थानार्जनोपार्जनेषु । ऋज्रः नायकः इन्द्रः अर्थश्च । अज क्षेपणे च । वीरः विक्रान्तः । तञ्चू वञ्चू गतौ । तक्रम् उदश्वित् । वक्रः कुटिलः
अङ्गारकः विष्णुश्च । उभयत्र न्यङ्क्वादित्वात् कत्वम् । रिपि सौत्रः । रिप्रं कुत्सितम् । सृप्लृ गतौ । सृप्रः चन्द्रः । सृप्रं मधु । सृप्रा नाम नदी । तृपौच् प्रीतौ । तृप्रं
मेघान्तर्घर्मः आज्यं काष्ठं पापं दुःखं वा । दृपौच् हर्षमोहनयोः । दृप्रं बलं दुःखं च । दृप्रा बुद्धिः । चुप मन्दायां गतौ । चुप्रः वायुः । क्षिपीत् प्रेरणे । क्षिप्रं शीघ्रम् । क्षुपि
सादने । सौत्रः । क्षुप्रं तुहिनं कण्टकिगुल्मकश्च । क्षुदृंपी संपेषे । क्षुद्रम् अणु जलगर्तश्च । क्षुद्रा मधुकर्यः । क्षुद्रः हिंस्रः । मुदि हर्षे । मुद्रा चिह्नकरणम् । रुदृक्
अश्रुविमोचने । रुद्रः शम्भुः । छिदृंपी द्वैधीकरणे । छिद्रं विवरम् । भिदृंपी विदारणे । भिद्रम् अदृढम् । भिद्रः शरः । खिदंत् परिघाते । खिद्रम् विघ्नः । खिद्रः विषाणम्
विषादः चन्द्रः दीनश्च । उन्दैप् क्लेदने । उद्रः ऋषिः मत्स्यश्च । समपूर्वात् समुन्दन्ति आर्द्रीभवन्ति वेलाकाले नद्योऽस्मादिति समुद्रः सागरः । भीमादित्वादपादाने ।
दम्भूट् दम्भने । दभ्रः अल्पः चन्द्रः कृशः कुशलः सूर्यश्च । शुभि दीप्तौ । शुभ्रोऽवदातः । उम्भत् पूरणे । उभ्रो मेघः पेलवश्च । दंशं दशने । शभ्रो दन्तः सर्पश्च ।
चिगट् चयने । चिरम् अशीघ्रम् । षिगृट् बन्धने । सिरा रुधिरस्रोतोवाहिनी नाडी । वहीं प्रापणे । उह्रः अनड्वान् । विसच् प्रेरणे । विस्रम् आमगन्धि । वसं निवासे । उस्रः
रश्मिः । बाहुलकात् षत्वं न भवति । उस्रा गौः । शुच शोके । शुक्रः ग्रहः मासः शुक्लश्च । शुक्रं रेतः । लत्वे शुक्लः वर्णः । कत्वं न्यङ्क्वादित्वात् । षिधू गत्याम् ।
सिध्रः साधुः वृक्षः मांसप्रभेदश्च । गृधूच् अभिकाङ्क्षायाम् । गृध्रः श्येनः लुब्धकः कङ्कश्च । ञि इन्धैपि दीप्तौ । विपूर्वात् । वीध्रः अग्निः वायुः नभः निर्मलः
पूर्णचन्द्रमण्डलम् । श्विताङ् वर्णे । श्वित्रं श्वेतकुष्ठम् । वृतूङ् वर्तने । वृत्रः दानवः बलवान् रिपुश्च । वृत्रं पापम् । णींग् प्रापणे । नीरं जलम् । शीङ्क् स्वप्ने । शीरः

अजगरः । षुंगट् अभिषवे । सुरः देवः । सुरा मद्यम् । षूङौच् प्राणिप्रसवे । सूरः आदित्यः रश्मिश्च ॥ ३८८ ॥ इण्धाग्भ्यां वा ॥ ३८९ ॥ आभ्यां रः प्रत्ययो
भवति स च किद्वा । इंण्क् ग ौ । इरा मदनीयपाना ।शेषः मेदिनी च । एरा एडका । डु धांग्क् धारणे च । धीरः सत्ववान् धृतिमांश्च । धारा जलयष्टिः खड्गावयवः
अश्वगतिविशेषश्च ॥ ३८९ ॥ चुम्बिऊम्बितुम्बेर्नलुक् च ॥ ३९० ॥ एभ्यः किद्रः प्रत्ययो भवति नकारस्य चैषां लुग् भवति । चुबु वक्त्रसंयोगे । चुम्रम् वक्त्रम् ।
चुम्रः रश्मिः । ऊबु आच्छादने । कुम्र संकटं भग्नपृष्ठः फल्गु हस्ती चर्म गृहाच्छादनं च । तुबु अर्दने । तुम्रं कुटिलम् ॥ ३९० ॥ भन्देर्वा ॥ ३९१ ॥ भदुङ् सुखकल्या-
णयोरित्यस्माद्रः प्रत्ययो नकारस्य च लुग् वा भवति । भद्रं भन्द्रं च कल्याणम् सुखं च ॥३९१॥ चिजिशुसिमितम्यम्यर्देर्दीर्घश्च ॥३९२॥ एभ्यो रः प्रत्ययो दीर्घश्चैषां
भवति । चिग्ट् चयने । चीरं जीर्णं वस्त्रं वल्कलं च । जिं अभिभवे । जीरः अजाजी अग्निः वायुः अश्वश्च । जीरम् अन्नम् । लत्ते, जीलः चर्मपुटः । शुं गतौ । शूरः
विक्रान्तः । षिग्ट् बन्धने । सीरं हलम् । सीरा हलविलेखिता लेखा । डु मिग्ट् प्रक्षेपणे । मीरः समुद्रः । मीरं जलम् । मीरा मांसपचनी देवसीमा च । तमूच् का-
ङ्क्षायाम् । ताम्रः वर्णः शुल्बं च । अम गतौ । आम्रः वृक्षः । अर्द गतियाचनयोः । आर्द्रं सरसम् ॥ ३९२ ॥ चक्किरमिविकसेरुच्चास्य ॥ ३९३ ॥ चक्किरमिभ्यां
विपूर्वाच्च कसेः प्रत्ययो भवति अकारस्य चैषामुकारो भवति । चकि तृप्तिप्रतिघातयोः । चुक्रः अम्लो रसः बीजपूरकमीजिका असुरः निमन्त्रणं च । रमि क्रीडा-
याम् । रुम्रः सुन्दरः आदित्यसारथिः ब्राह्मणः विनाशश्च । कसे गतौ । विकुस्रः चन्द्रः समुद्रश्च । विकुस्रं पुष्पितम् । बहुलकात् विकसेर्विकल्पः । विकस्रः ॥ ३९३ ॥
शदेरूच्च ॥ ३९४ ॥ शद्लृं शातने इत्यस्माद्रः प्रत्ययेऽकारस्य चोकारो भवति । शूद्रः चतुर्थो वर्णः ॥३९४॥ कृतेः क्रूकृच्छ्रौ च ॥ ३९५ ॥ कृतैत् छेदने इत्यस्माद्रः
प्रत्ययोऽस्य च क्रू कृच्छ्र इत्यादेशौ भवतः । क्रूरम् अमृदु । क्रूरः पापकर्मा । कृच्छ्रम् दुःखम् ॥ ३९५ ॥ खुरक्षुरदूरगौरविप्रकुप्रश्वभ्राभ्रचूत्राभ्रन्ध्ररन्ध्रशि-
लिन्ध्रौड्रपुण्ड्रतीव्रनीव्रशीव्रोग्रतुग्रभुग्रनिद्रातन्द्रासान्द्रगुन्द्रारिङ्गादयः ॥ ३९६ ॥ एते रप्रत्ययान्ता निपात्यन्ते । खुरत् छेदने । क्षुरत् विलेखने,
अनयो रलोपो गुणाभावश्च । खुरः शफः । क्षुरः नापितभाण्डम् । ननु च खुरक्षुरशब्दौ 'नाम्युपान्त्यप्रीकृगृज्ञः कः' इति केन सिध्यतः । सत्यम् ।
तत्र कर्तैवार्थः इह तु संप्रदानाच्चान्यत्रोणादय इत्यर्थभेदः । असतिपि त्वं वाऽनयोर्ज्ञाप्यते । यथा अदेः परोक्षायां वा घस्लादेशवचनात् घसेः ।
एवमन्यत्रापि स्वयमभ्यूह्यम् । दुरपूर्वादिणो लुक् च । दूरं विप्रकृष्टम् । गातेर्वृद्धिः । गौरः अवदातः । विपूर्वात्प्रातेर्लुक् च । विप्रः ब्राह्मणः ।
नावं प्रातीति वा विप्रः । कुपच् व्याकुलत्वे । अदेः कत्वं च । कुप्रं गहनं गृहच्छादनं च । द्रोश्वि गतिवृद्ध्योः अकारः ओऽन्तश्च । श्वभ्रं
बिलम् आकाशं च । आप्लृंट् व्याप्तौ अभादेशश्च । अभ्रं मेघः । धूग्श् कम्पने पोऽन्तश्च । धूप्रः वर्णविशेषः । अट्टङ् गतौ धश्च । अन्ध्रः क्षत्रजातिः । रधेः
बिलम्... स्वरान्नोऽन्तश्च । रन्ध्रं छिद्रम् । ञि इन्धैपि दीप्तौ । अस्य च नाकृगादिशिलश्च दिः । शिलिन्ध्रम् उद्भिद्विशेषः । ओणेः डश्च । ओड्रः क्षत्रजातिः पुणेः स्वरान्नोऽन्तो डश्च ।

पुण्ड्रः क्षत्रजातिः तिलकश्च । पुण्डेर्वा रूपम् । तिजेर्वो दीर्घश्च । तीवतेर्वा । तीव्रः तीक्ष्णः उत्कृष्टश्च । नियो वोऽन्तश्च । नीवतेर्वा । नीव्रं गृहच्छदिरुपान्तः । श्यैङ ईत्वं यलोपो घश्चान्तः । शीघ्रः त्वरितः । उचेरुषेर्वा गः कित् च । उग्रः रुद्रः रौद्रश्च । तुदींत् व्यथने गः किच्च । तुग्रं शृङ्गम् । भुजंप् पालनाभ्यवहारयोः गः किच्च । भुग्रः रश्मिसमूहः । णिदु कुत्सायाम् किन्नलोपश्च । निद्रा स्वापः । तमूच् काङ्क्षायाम् दोऽन्तश्च । तन्द्रा आलस्यम् । षद्ॣं विशरणगत्यवसादनेषु अस्य स्वरान्नोऽन्तो वृद्धिश्च । सान्द्रं घनम् । गुदेः स्वरान्नोऽन्तश्च । गुन्द्रा जलतृणविशेषः । राजेरञ्जेर्वा किच्चेचोपान्त्यस्य । रिज्रः नायकः । आदिग्रहणादन्येऽपि ॥ ३९६ ॥ ऋच्छिचटिवटिकुटिकठिवठिमठ्यडिशीकृशीभृकादिवदिकन्दिमन्दिसुन्दिमन्थिमञ्जिपञ्जिपिञ्जिकमिसमिचमिवमिभ्रम्यमिदेविवाशि-कास्यर्तिजीविबर्बिकुशुदोररः ॥ ३९७ ॥ एभ्योऽरः प्रत्ययो भवति । ऋच्छत् इन्द्रियप्रलयमूर्तिभावयोः । ऋच्छरः त्वरावान् । ऋच्छरा वेश्या कुलटा त्वरा अङ्गुलिश्च । चटण् भेदे । चटरः तस्करः । वट वेष्टने । वटर. मधुकण्डरा । कुटत् कौटिल्ये । कोटरं छिद्रम् । बाहुलकाद्गुणः । कठ कृच्छ्रजीवने । कठरः दरिद्रः । वठ स्थौल्ये । वठरः मूर्खः बृहद्देहश्च । मठ मदनिवासयोश्च । मठरः ऋषिः अज्ञानी गोत्रम् अलसश्च । अड उद्यमे । अडरः वृक्ष । शीकृङ् सेचने । शीकरः जललवसेकः । शीभृङ् कत्थने । शीभरः हस्तिहस्तमुक्तो जललवसेकः। कदिः सौत्रः । कदरः वृक्षविशेषः । वद स्थैर्ये । वदरी फलवृक्षः । कदुङ् वैक्लव्ये । कन्दरः गिरिगर्तः । मदुङ् स्तुत्यादौ । मन्दरः शैलः। सुन्दिः सौत्रः शोभायाम् । सुन्दरः मनोज्ञः। मन्थश् विलोडने। मन्थरः मन्दः खर्वश्च। मञ्जिपञ्जी सौत्रौ । मञ्जरी आम्रादिशाखा। गौरादि-त्वात् ङीः । पञ्जरः शुकाद्यवरोधसद्म । पिजुण् हिंसाबलदाननिकेतनेषु । पिञ्जरः पिशङ्गः । कमूङ् कान्तौ । कमरः मूर्खः कार्मुकं कोमलः चौरः कान्तश्च । षम वैक्लव्ये । समरः संग्रामः । चमू अदने । चमरः आरण्यपशुः । टुवमू उद्गिरणे । वमरः दुर्मेधाः । भ्रमूच् अनवस्थाने । भ्रमरः षट्पदः । अम गतौ । अमरः सुरः । देवृङ् देवने । देवरः पत्यनुजः । वसं निवासे णौ, वासरः दिवसः कामः अग्निः प्रावृट् च । अन्ये वाशिच् शब्दे इत्यस्मादपि तालव्यान्तादिच्छन्ति । वाशरः अग्निः मेघः दिवसश्च । कासृङ् शब्दकुत्सायाम् । कासरः महिषः । ऋंक् गतौ । अररः कपाटः वुषः भ्रमरः गृहं हरणं शलाका च । जीव प्राणधारणे । जीवरः दीर्घायुः । बर्ब गतौ । बर्बरः म्लेच्छजातिः । बर्बरी कुञ्चिताः केशाः । कुंक् शब्दे । कवरः वर्णः । कवरी वेणिः । शुं गतौ । शवरः म्लेच्छजातिः । शव गतावित्यस्यान्ये । टुदुंत् उपतापे । दवरः गुणः ॥ ३९७ ॥ अवेर्धं च वा ॥ ३९८ ॥ अव रक्षणादावित्यस्मादरः प्रत्ययो धकारश्चान्तादेशो वा भवति । अधरः हीनः उपरिभावस्य प्रतियोगी दन्तच्छदश्च । अवरः परप्रतियोगी ॥ ३९८ ॥ मृद्युन्दिपिठिकुरिकुहिभ्यः कित् ॥ ३९९ ॥ एभ्योऽरः प्रत्ययः किद् भवति । मृदश् क्षोदे । मृदरः व्याधिः अतिकायः क्षोदश्च । उन्दैप् क्लेदने । उदरं जठरं व्याधिश्च । पिठ हिंसासंक्लेशयोः । पिठरं भाण्डम् । कुरत् शब्दे । कुररः जलपक्षि-जातिः । कुहणि विस्मापने । कुहरं गम्भीरगर्तः ॥ ३९९ ॥ शाखेरिदैतौ चातः ॥ ४०० ॥ शाखृ व्याप्तावित्यस्मादरः प्रत्यय आकारस्य चेकारैकारौ भवतः ।

शिखरम् अग्रम् । शेखर आपीडः ॥ ४०० ॥ शपेः फ् च ॥ ४०१ ॥ शपीं आक्रोशे इत्यस्मादरः प्रत्ययः फकारश्चान्तादेशो भवति । शफरः क्षुद्रमत्स्यः ॥ ४०१ ॥ दमेर्णिद्वा दश्च डः ॥ ४०२ ॥ दमूच् उपशमे इत्यस्मादरः प्रत्ययः स च णिद् वा दकारस्य च डकारो भवति । डामरः भयानकः । डमरः स एव ॥ ४०२ ॥ जठरऋकरमकरशंकरकर्परकूर्परतोमरपामरप्रामरप्राभ्ररसगरनगरतगरोदरादरशृदरदृदरकुकरकुकुन्दरगोर्वराम्बरमुखरखरडहरकुञ्जराजगरादयः ॥ ४०३ ॥ एते किदरप्रत्ययान्ता निपात्यन्ते । जनेष्ठ च । जठरं कोष्ठः । क्रमेः क च । क्रकरः गौरतित्तिरिः । मङ्केर्नलोपश्च । मकरः ग्राहः । शंपूर्वात् किरतेर्डिच । शङ्करः रुद्रः। कृपेरुपान्त्यस्य उर् च वा । कर्परं कपालम् कूर्परं कुफणी । ताम्यतेरत ओच । तोमरः आयुधम् । पातेर्मोन्तश्च । पामरः ग्रामीणः । प्रपूर्वादमतेः प्रामरः ग्राम्यमन्दजातिः । प्रपूर्वादत्तेर्मोऽन्तश्च । प्राभ्ररः नरपशुः । सहिनश्योर्ग च । सगरः द्वितीयश्चक्रवर्ती । नगरं पुरम् । तङ्गेर्नलोपश्च । तगरः वृक्षविशेषः । ऊर्जः परात् दृणातेर्डित् जलुक् च । ऊर्जा बलेन दृणाति बिभेति ऊर्दरः दुर्बलः । अदु बन्धने नलुक् च । अदरं वक्षः वृक्षः संग्रामः चञ्चुसमूहः मातृवाहश्च । शृश् हिंसायाम् दृश् विदारणे इत्यनयोर्ह्रस्वत्वं दश्चान्तः । शृदरः सर्पः । दृदरं भयं विषं च । डु कृंग् करणे दोऽन्तश्च । कृदरः वृक्षः सर्वकर्मप्रवृत्तो दस्युजनः कुशूलश्च । कुपूर्वात् स्कुदुङ् आप्रवणे सलोपश्च । कुकुन्दरं श्रोणिकूपकः । गोपूर्वात् वृगो डित् रश्चादिः। गोर्वरः करीषः । अमेर्वोऽन्तश्च । अम्बरं वस्त्रम् आकाशं च । मुहेः ख च । मुखरः वाचालः। खनेर्डिच । खरः रासभः । दहेरादेर्डश्च । डहरं हृत्कमलम् । कूज अव्यक्ते शब्दे ह्रस्वः स्वरान्नोऽन्तश्च । कुञ्जरः हस्ती । अजेरगश्चान्तः वीभावाभावश्च । अजगरः शयुः। आदिग्रहणात् कोठराङ्गरशाङ्गरपाण्डरवानरादयो भवन्ति ॥ ४०३ ॥ मुदिगूर्रिभ्यां टिद्गजौ चान्तौ ॥ ४०४ ॥ आभ्यां टिदरः प्रत्ययो गकारजकारौ च यथासंख्यमन्तौ भवतः । मुदि हर्षे । मुद्गरः प्रहरणविशेषः । मुद्गरी स्त्री । गूरैचि गतौ । गूर्जरः सौराष्ट्रादिः । गूर्जरी स्त्री ॥ ४०४ ॥ अग्यङ्गिमदिमन्दिकडिकसिकासिसृजिकञ्जिकलिमलिकचिभ्य आरः ॥४०५॥ एभ्य आरः प्रत्ययो भवति । अग कुटिलाया गतौ । अगारं वेश्म । अगु गतौ । अङ्गारः निर्वातज्वालो निर्वाणश्चोल्मूकावयवः भूमिसुतश्च । मदैच् हर्षे । मदारः पानशौण्डः वराहः हस्ती अलसश्च । मदुङ् स्तुत्यादौ । मन्दारः वृक्षविशेषः। कडत् मदे । कडारः पिङ्गलः विषमदशनश्च । कस गतौ । कसारः हिंस्रः । कासृङ् शब्दकुत्सायाम् । कासारः पल्वलम् । मृजौक् शुद्धौ । मार्जारः विडालः। कञ्जिः सौत्रः । कञ्जारः कुशूलजातिः यूपः व्यञ्जनं च । कलि शब्दसंख्यानयोः । कलारः विषमरूपः । मलि धारणे । मलारः अलसः । मलभिवारा तोदोऽस्येति वा मलारः । कचि बन्धने । कचारः अपनेयः तृणबुसपांसुविकारः ॥ ४०५ ॥ त्रः कादिः ॥ ४०६ ॥ तॄ प्लवनतरणयोरित्यस्मात्ककारादिरारः प्रत्ययो भवति । तर्कारः वृक्षः ॥ ४०६ ॥ कृगो मादिश्च ॥ ४०७ ॥ करोतेर्मकारादिः ककारादिश्चारः प्रत्ययो भवति । कर्मारः लोहकारः । कर्कारः वृक्षः ॥ ४०७ ॥ तुषिकुठिभ्यां कित् ॥ ४०८ ॥ आभ्यां किदारः प्रत्ययो भवति । तुषंच् तुष्टौ । तुषारः हिमम् । कुठिः सौत्रः । कुठारः परशुः ॥ ४०८ ॥ कमेरत उच्च ॥ ४०९ ॥ कमूङ् कान्तावित्यस्मादारः प्रत्ययोऽकारस्य

चोकारो भवति । कुमारः महासेनः अभ्रष्टः बालश्च ॥ ४०९ ॥ कनेः कोविदकर्बुदकाञ्चनाश्च ॥ ४१० ॥ कनै दीप्तावित्यस्मादारः प्रत्ययोऽस्य च कोविद कर्बुद काञ्चन इत्यादेशा भवन्ति । कोविदारः कर्बुदारः काञ्चनारश्च वृक्षविशेषाः ॥ ४१० ॥ द्वारशृङ्गारभृङ्गारकह्लारकान्तारकेदारखारडादयः ॥ ४११ ॥ एते आरप्रत्ययान्ता निपात्यन्ते । उम्भत् पूरणे द्वादेशश्च । द्वारं द्वाः । श्रयतेस्तालव्यादिः शृङ्गश्च । शृङ्गारः रसविशेषः विदग्धता च । भृगो भृङ्ग् च । भृङ्गारः हस्तिमुखाकारगलन्तिका । कलेर्हश्च स्वरात्परः । कह्लारः उत्पलविशेषः । कमेस्तोऽन्तो दीर्घश्च । कान्तारमरण्यम् । कदेः सौत्रस्यात एच्च । केदारः वप्रः । खनेर्डिच्च । खारी चतुर्द्रोणम् । खारडिति टकारो ङ्यर्थः । आदिग्रहणात् शिशुमारादयो भवन्ति ॥ ४११ ॥
मदिमन्दिचन्दिपदिखदिसहिवहिकृसृभ्य इरः ॥ ४१२ ॥ एभ्य इरः प्रत्ययो भवति । मदैच् हर्षे । मदिरा सुरा । मदुङ् स्तुत्यादौ । मन्दिरं वेश्म नगरं च । चदु दीप्त्याह्लादनयोः । चन्दिरः चन्द्रमाः हस्ती च । चन्दिरं चन्द्रिकावत् जलं च । पदिंच् गतौ । पदिरः मार्गः । खद हिंसायाम् । खदिरः वृक्षविशेषः । षहि मर्षणे । सहिरः पर्वतः । वहीं प्रापणे । वहिरः बलीवर्दः । कुंक् शब्दे । कविरः अक्षिकोणः । सृं गतौ । सरिरं जलम् । लत्वे, सलिलम् ॥ ४१२ ॥ शवशशेरिचातः ॥ ४१३ ॥ आभ्यामिरः प्रत्ययोऽकारस्य चेकारो भवति । शव गतौ तालव्यादिः । शिविरम् सैन्यसंनिवेशः । शश प्लुतिगतौ । शिशिरं शीतलम् ऋतुश्च ॥ ४१३ ॥ श्रन्थेः शिथ् च ॥ ४१४ ॥ श्रथुङ् शैथिल्ये इत्यस्मादिरः प्रत्ययोऽस्य च शिथ् इत्यादेशो भवति । शिथिरं श्लथम् । लत्वे, शिथिलम् ॥४१४॥ अशोर्णित् ॥ ४१५ ॥ अश्नातेरश्नोतेर्वा णिदिरः प्रत्ययो भवति । आशिरः विष्णुः आदित्यश्च । प्राशिरः बह्वाशी ॥ ४१५ ॥ शुषीषिबन्धिरुधिरुचिमुचिमुहिमिहितिमिमुदिखिदिच्छिदिभिदिस्थाभ्यः कित् ॥ ४१६ ॥ एभ्यः किदिरः प्रत्ययो भवति । शुषंच् शोषणे । शुषिरं छिद्रम् । इषत इच्छायाम् । इषिरं तृणम् । इषिरः अग्निः आहारः क्षिप्रः सेव्यश्च । बन्धंश् बन्धने । बधिरः श्रुतिविकलः । रुधूंपी आवरणे । रुधिरं द्वितीयो धातुः । रुचि अभिप्रीत्यां च । रुचिरं दयितं दीप्तिमच्च । मुच्लृंती मोक्षणे । मुचिरः धर्मः सूर्यः मेघश्च । मुहौच् वैचित्त्ये । मुहिरः कन्दर्पः सूर्यश्च । मुहिरं तमः । मिहं सेचने । मिहिरः मेघः सूर्यश्च । मिहिरं तोयम् । तिमच् आर्द्रभावे । तिमिरं तमः तोयं रोगश्च कश्चित् । मुदि हर्षे । मुदिरः मेघः सूर्यश्च । खिदंत् परिघाते । खिदिरः त्रासः तस्करश्च । छिदूंपी द्वैधीकरणे । छिदिरः उन्दुरः अग्निश्च । छिदिरं शस्त्रम् । भिदूंपी विदारणे । भिदिरः अशनिः भेदश्च । ष्ठां गतिनिवृत्तौ । स्थिरः अचलः ॥ ४१६ ॥ स्थविरपिठिरस्फिराजिरादयः ॥ ४१७ ॥ एते किदिरप्रत्ययान्ता निपात्यन्ते । तिष्ठतेर्वोऽन्तो ह्रस्वश्च । स्थविरः वृद्धः । पचतेरत इत्वं ठश्च । पिठिरं साधनभाण्डम् । पिठेर्वा रूपम् । स्फायतेर्डिच्च । स्फिरः स्फारः वृद्धिश्च । अजेर्वीभावाभावश्च । आजिरम् अङ्गणम् नगरं देवः वेश्म च । आदिग्रहणादन्येऽपि ॥ ४१७ ॥ कृशॄपॄगृमञ्जिकुटिकटिपटिकण्डिशौण्डिहिंसिभ्य ईरः ॥ ४१८ ॥ एभ्य ईरः प्रत्ययो भवति । कॄत् विक्षेपे । करीरः वनस्पतिविशेषः वंशाद्यङ्कुरश्च । शॄश् हिंसायाम् । शरीरं वपुः ।

पृश् पालनपूरणयोः । परीरं बलं लाङ्गलमुखं च । पूगृश् पवने । पवीरं रङ्गस्थानं फलं पवित्रं बीजावपनं च । मञ्जिः सौत्रः । मञ्जीरं नूपुरः । कुटत् कौटिल्ये । कुटीरम् आलयः कर्कटकः चन्द्राश्रयराशिश्च । कोटीरं मुकुटः । बाहुलकाद्गुणः । कटे वर्षावरणयोः । कटीरं जनपदः जघनं जलं च । पट गतौ । पटीरः कन्दर्पः । पटीरं कार्मुकम् स्फिक् च । कडु मदे । कण्डीरं हरितकम् । शौण्डृ गर्वे । शौण्डीरः गर्वितः सत्त्ववान् तीक्ष्णश्च । हिंसुप् हिंसायाम् । हिंसीर श्वापदः हिंस्रश्च ॥ ४१८ ॥ घसिवशिपुटिकुरिकुलिकाभ्यः कित् ॥ ४१९ ॥ एभ्यः किदीरः प्रत्ययो भवति । घस्लृं अदने । क्षीरं दुग्धं मेघश्च । वशक् कान्तौ । उशीरं वीरणीमूलम् । पुटत् संश्लेपणे । पुटीरः कूर्मः । कुरत् शब्दे । कुरीरं मैथुनं वेश्म च । कुरीरः मालाविशेष कम्बलश्च । कुल बन्धुसंस्त्यानयोः । कुलीरः कर्कटः । कैं शब्दे । कीर शुकः काश्मीरकश्च ॥ ४१९ ॥ कशेर्मोऽन्तश्च ॥ ४२० ॥ कश शब्दे इत्यस्मात्तालव्यान्तादीरः प्रत्ययो मश्चान्तो भवति। कश्मीरा जनपदः ॥४२०॥ वनिवपिभ्यां णित् ॥ ४२१ ॥ आभ्यां णिदीरः प्रत्ययो भवति । वन भक्तौ । वानीरः वेतसः । डु वपी बीजसताने । वापीरः मेघः अमोघः निष्पत्ति क्षेत्रं च ॥ ४२१ ॥ जम्बीराभीरगभीरगम्भीरकुम्भीरभडीरभण्डीरडिण्डीरकिर्मीरादयः ॥ ४२२ ॥ एते ईरप्रत्ययान्ता निपात्यन्ते । जनेर्बोऽन्तश्च । जम्बीरः वृक्षविशेषः आप्नोतेर्भश्च । आभीरः शूद्रजातिः । गमेर्भः स्वरान्नस्तु वा । गभीरः अगाधः अचपलश्च । गम्भीर. स एव । स्कुम्भेः सौत्रात् सलोपश्च । कुम्भीरः जलचरः । भडुङ् परिभाषणे । अस्य नलुक् च वा । भडीरः भण्डीरश्च योद्धृवचने । डीङो डित् द्वित्वं पूर्वस्य नोऽन्तश्च । डिण्डीरः फेनः । किरतेर्मोऽन्तश्च । किर्मीरः कर्बुर । आदिग्रहणात् तूणीरनासीरमन्दीरकरवीरादयो भवन्ति ॥ ४२२ ॥ वाश्यसिवासिमसिमथ्युन्दिमन्दिचतिचङ्क्यङ्किकर्बिचकिबन्धिभ्य उरः ॥ ४२३ ॥ एभ्य उरः प्रत्ययो भवति । वाशिच् शब्दे । वाशुरः शकुनिः गर्दभश्च । वाशुरा रात्रिः । असूच् क्षेपणे । असुरः दानवः । वासण् उपसेवायाम् । वासुरा रात्रिः मसुरा च । मसैच् परिमाणे । मसुरा पण्यस्त्री । मसुरं चर्मासनम् धान्यविशेषश्च । मथे विलोडने। मथुरा नगरी। उन्दैप् क्लेदने। उन्दुरः मुषिकः।मदुङ् स्तुत्यादौ। मन्दुरा वाजिशाला। चतेग् याचने। चतुरः विदग्धः।चङ्किः सौत्रः । चङ्कति चेष्टते चङ्कुरः रथः अनवस्थितश्च ।अकुङ् लक्षणे । अङ्कुरः प्ररोहः तरुप्रतानभेदश्च । घञ्युपसर्गस्य बहुलमिति बहुलवचनात् दीर्घत्वे, अङ्कुरः । कर्ब गतौ । कर्बुरः शबलः । चकि तृप्तिप्रतिघातयोः । चकुरः दशनः । बन्धंश् बन्धने । बन्धुर मनोज्ञः नम्रश्च ॥ ४२३ ॥ मङ्केर्नलुक् वोच्चास्य ॥ ४२४ ॥ मकुङ् मण्डन इत्यस्मादुरः प्रत्ययो नकारस्य लुक् अकारस्य चोकारो वा भवति । मुकुरः आदर्शः मुकुलं च । मकुरः आदर्श कल्कः बालपुष्पं च ॥ ४२४ ॥ विधेः कित् ॥ ४२५ ॥ विधत् विधाने इत्यस्मात् किदुरः प्रत्ययो भवति । विधुरं वैशसम् ॥ ४२५ ॥ श्वशुरकुकुन्दुरदर्दुरनिचुरप्रचुरचिकुरकुकुरकुक्कुरकुर्कुरशर्कुरनूपुरनिष्ठुरविथुरमद्गुरवागुरादयः ॥ ४२६ ॥ एते किदुरप्रत्ययान्ता निपात्यन्ते । आशुपूर्वात् शुपूर्वाद्वा अश्नोतेरश्नातेर्वा आकारलोपश्च । श्वशुरः जम्पत्योः पिता । कुपूर्वात् स्कुदुङ् आप्रवणे इत्यस्मात् सलुक् च । कुकुन्दरौ नितम्बकूपौ । दृणातेर्दोऽन्तश्च । दर्दुरः मण्डूकः मेघश्च ।

निपूर्वात् मपूर्वात् चिनोतेः चरतेर्वा डिच्च । निचुरः तरुविशेषः । लत्वे, निचुलः। मचुरं मायः । चकेरिचास्य । चिकुरं युवतीनामीपन्निमीलितमक्षि । चिकुराः केशाः । कुकेः कोऽन्तो वा । कुकुरः यादवः । कुक्कुरः श्वा । क्किरः कुर् कोऽन्तश्च । कुर्कुरः श्वा । शृश् हिंसायाम् गुणः कोऽन्तश्च । शर्कुरस्तरुणः । णूत् स्तवने पोऽन्तश्च । नूपुरः तुलाकोटिः । निपूर्वात् तिष्ठतेः निष्ठुरः कर्कशः । निष्ठुरं काहलम् । व्यथेर्विथ् च । व्यथतेऽस्माज्जनः इत्यपादानेऽपि । विथुरः राक्षसः । मदिवात्योर्गोऽन्तश्च । मद्गुरः मत्स्याविशेषः । वागुरा मृगानायः । आदिग्रहणान्मन्यतेर्धश्च । मधुरः रसविशेष इत्यादि ॥ ४२६ ॥ **मीमसिपशिखदिखडिखर्जिकर्जिसर्जिकृपिवल्लिमण्डिभ्य ऊरः** ॥४२७॥ एभ्य ऊरः मत्ययो भवति । मीङ्च् हिंसायाम् । मयूरः शिखी । मह्यां रौति मयूर इति पृषोदरादिषु संज्ञाशब्दानामनेकधा व्युत्पत्तिं लक्षयति । मसैच् परिमाणे । मसूरः अवरधान्यजातिः चर्मासनं च । पशिः सौत्र । पश्यते गम्यते इति पशूरः ग्रामः । खट काङ्क्षे । खटूरः मणिविशेषः । खडण् भेदे । खडूरः खुरलीस्थानम् । खर्ज मार्जने च । खर्जूरः वृक्षविशेषः । कर्ज व्यथने । कर्जूरः स एव मलिनश्च । सर्ज अर्जने । सर्जूर अहः । कृपौङ् सामर्थ्ये । कर्पूरः गन्धद्रव्यम् । वल्लि संवरणे । वल्लूरः शुष्कं मांसम् । मडु भूषायाम् । मण्डूरः धातुविशेषः ॥ ४२७ ॥ **महिकणिचण्यणिपल्यलितलिमलिशालिभ्यो णित्** ॥ ४२८ ॥ एभ्यो णिदूरः मत्ययो भवति । मह पूजायाम् । माहूरः शैलः । कण गतौ । काणूरः नागः । चण हिंसादानयोश्च । चाणूरः मल्लो विष्णुहतः । अण शब्दे । आणूरः ग्रामः । पल गतौ । पालूर नाम नगरमान्ध्रराज्ये । अली भूषणादौ । आलूरः विटः । तलण् मतिष्ठायाम् । तालूरः जलावर्तः । मलि धारणे । मालूरः दानवः बिल्वश्च । शल गतौ । शालूरः दुर्दुरः ॥४२८॥ **स्थाविडेः कित्** ॥४२९॥ आभ्यां किदुरः मत्ययो भवति । ष्ठां गतिनिवृत्तौ । स्थूरः बठरः उच्चश्च । स्थूरा जङ्घाप्रदेशः । विड आक्रोशे । विडूरः वालवाये ग्रामः ॥ ४२९ ॥ **सिन्दूरकर्चूरपत्तूरधुत्तूरादयः** ॥ ४३० ॥ एते ऊरप्रत्ययान्ता निपात्यन्ते । स्यन्देः सिन्द् च । सिन्दूरं चीनपिष्टम् । करोतेश्चोऽन्तश्च । कर्चूरः औषधविशेषः । पतेस्तोऽन्तश्च । पत्तूरं गन्धद्रव्यम् । धुवो द्विरुक्तस्तोऽन्तो ह्रस्वश्च । धुत्तूर उन्मत्तकः । दधातेर्धत्तूर इत्यन्ये । आदिग्रहणात् कस्तूरहारहूरादयो भवन्ति ॥ ४३० ॥ **कुगुपतिकाथिकुथिकठिकुठिकुटिगाडिगुडिमुदिमूलिदंशिभ्यः केरः** ॥ ४३१ ॥ एभ्यः किदेरः मत्ययो भवति । कुंङ् शब्दे । कुबेरः धनदः । गुंत् पुरीषोत्सर्गे । गुवेरं युद्धम् । पत्लृ गतौ । पतेरः पक्षी पवनश्च । कथण् वाक्यप्रबन्धे । कथेरः कथकः कुहकः शकुन्तश्च । कुथच् पूतिभावे । कुथेरः शिडाकीसंभारः । कठ कृच्छ्रजीवने । कठेरः दरिद्रः। कुठिः सौत्रः। कुठेरः निःसृतसारः अर्जकश्च । कुटत् कौटिल्ये । कुटेरः शठः। गड सेचने । गडेरः मेघः । प्रस्रवणशीलश्च । गुडत् रक्षायाम् । गुडेरः राजा पण्यं च । वालभक्ष्यम् । मुदि हर्षे। मुदेरः मूर्खः। मूल प्रतिष्ठायाम् । मूलेरः वनस्पतिः। मूलेरं पण्यम् । दंशं दशने । दशेरः सर्पः सारमेयः जनपदश्च ॥ ४३१ ॥ **शतेरादयः** ॥ ४३२ ॥ शतेर इत्यादयः शब्दाः केरप्रत्ययान्ता निपात्यन्ते । शद्लृं शातने तश्च । शतेरः वायुः तुषारश्च । आदिग्रहणात् गुधेरशृङ्गवेरनालिकेरादयो भवन्ति ॥ ४३२ ॥ **काठिचाकिसाहिभ्य ओरः** ॥ ४३३ ॥ एभ्य ओरः मत्ययो भवति । कठ कृच्छ्रजीवने ।

कठोरः अमृदुः चिरंतनश्च । चकि तृप्तौ च । चकोरः पक्षिविशेषः पर्वतविशेषश्च । षहि मर्षणे । सहोरः विष्णुः पर्वतश्च ॥ ४३३ ॥ **कोरचोरमोरकिशोरघोरहोरा-दोरादयः ॥ ४३४ ॥** कोर इत्यादयः शब्दा ओरप्रत्ययान्ता निपात्यन्ते । कायतेश्चरतेम्रियतेश्च डि । कोरः बालपुष्पम् । चोरः तस्करः । मोरः मयूरः । कृशेरि-च्चोपान्त्यस्य । किशोरः तरुणः बालाश्वश्च । हन्तेर्डित् घश्च । घोरं कष्टम् । हृंग् हरणे । होरा निमित्तवादिनां चक्ररेखा । डु दांग्क् दाने, दोंच् छेदने वा दोरः कटि-सूत्रं तन्तुगुणश्च । आदिग्रहणादन्येऽपि ॥ ४३४ ॥ **किशॄवृभ्यः करः ॥ ४३५ ॥** एभ्यः करः प्रत्ययो भवति । किः सौत्रः । केकरः वक्रदृष्टिः । शॄश् हिंसायाम् । शर्करा मत्स्यण्डिकादिः कर्कशः क्षुद्रपाषाणावयवश्च । वृगूट् वरणे । वर्करः छागशिशुः ॥ ४३५ ॥ **सूपुषिभ्यां कित् ॥ ४३६ ॥** आभ्यां कित् करः प्रत्ययो भवति । पूत् प्रेरणे । सूकरः वराहः । पुष् पुष्टौ । पुष्करं पद्मं तूर्यमुखं हस्तिहस्ताग्रम् आकाशं मुरजः तीर्थनाम च ॥ ४३६ ॥ **अनिकाभ्यां तरः ॥ ४३७ ॥** आभ्यां तरः प्रत्ययो भवति । अनक् प्राणने । अन्तरं बहिर्योगोपसंव्यानयोः छिद्रमध्यविरहविशेषेषु च । कैं शब्दे । कातरः भीरुः ॥ ४३७ ॥ **इण्पूभ्यां कित् ॥ ४३८ ॥** आभ्यां कित् तरः प्रत्ययो भवति । इंण्क् गतौ । इतरः निर्दिष्टप्रतियोगी । पूग्श् पवने । पूतरः जलजन्तुः ॥ ४३८ ॥ **मीज्याजिमामद्यशौवसिकिभ्यः सरः ॥ ४३९ ॥** एभ्यः सरः प्रत्ययो भवति । मीङ्च् हिंसायाम् । मेसरः वर्णविशेषः । जिं अभिभवे । जेसरः शूरः । अज क्षेपणे च । वेसरः अश्वतरः । वेसृग् गतावित्यस्य वा जठरेत्यादिनिपातनादरे रूपम् । मांक् माने । मासरः आयामः । मदैच् हर्षे । मत्सरः क्रोधविशेषः । अशौटि व्याप्तौ । अक्षरं वर्णः मोक्षपदम् आकाशं च । अक्षेर्वा अरे रूपम् । वसं निवासे । वत्सरः संवत्सरः परिवत्सरः अनुवत्सरः अनुसंवत्सरः विवत्सरः उद्वत्सरः वर्षाभिधानानि । इडा मानेन वसन्त्यत्र कालावयवा इति इड्संवत्सरः, इडया मानेन वसन्त्यत्रेति इडावत्सरः वर्षविशेषाभिधाने, परिवत्सरादी-न्यपि वर्षविशेषाभिधानानीत्येके । कि इत्यदादौ स्मरन्ति । केसरः सिंहसटः पुष्पावयवः बकुलश्च । बाहुलकात्र षत्वम् ॥ ४३९ ॥ **कृधूतन्यृषिभ्यः कित् ॥ ४४० ॥** एभ्यः कित् सरः प्रत्ययो भवति । डु कृंग् करणे । कृसरः कृसरा वा विलेपिकाविशेषः वर्णविशेषश्च । धूत् विधूनने । धूसरः भिन्नवर्णः वायुः धान्यविशेषश्च । तनूयी विस्तारे । तसरः कौशेयसूत्रम् । ऋषैत् गतौ । ऋक्षरः कण्टकः ऋत्विक् च । ऋक्षरा तोयधारा ॥४४०॥ **कॄगॄशॄदॄवृग्चतिखटिकटिनिषदिभ्यो वरट् ॥ ४४१ ॥** एभ्यष्टिद्वरः प्रत्ययो भवति । कॄत् विक्षेपे । कर्वरः व्याघ्रः विष्किरः अञ्जलिश्च । कर्वरी भूमिः शिवा च । गॄत् निगरणे । गर्वरः अहंकारः महिषश्च । गर्वरी महिषी संध्या च । शॄश् हिंसायाम् । शर्वरः सायाह्नः रुद्रः हिंस्रश्च । शर्वरं तमः अन्नं च । शर्वरी रात्रिः । दॄश् विदारणे । दर्वरं वज्रम् । दर्वरी सेवा । वृग्ट् वरणे । वर्वरः कामः चन्दनं केशविशेषः लुब्धकश्च । वर्वरी नदी भार्या च । चतेग् याचने । चत्वरं चतुष्पथमरण्यं च । चत्वरी रथ्या देवता वेदिश्च । खट काङ्क्षे । खट्वरं रससंकीर्णशा-कपाकः। कटे वर्षावरणयोः। कट्वरः व्यालाश्वः। कट्वरी दधिविकारः। षदॢं विशरणादौ निपूर्वः। निषद्वरः कर्दमः वह्निः कर्मकरः कन्दर्पः इन्द्रश्च । निषद्वरमासनम् ।

निपद्वरी प्रपा रात्रिः प्रमदा इन्द्राणी च ॥ ४४१ ॥ अश्नोतेरीचादेः ॥ ४४२ ॥ अश्नोटि व्याप्ताविव्यस्माद्वरट् प्रत्यय ईकारश्चादेर्भवति। ईश्वरः विभुः। ईश्वरी स्त्री ॥ ४४२ ॥ नीमीकुतुचेर्दीर्घश्च ॥ ४४३ ॥ एभ्यो वरट् प्रत्ययो दीर्घश्चैषां भवति । णींग् प्रापणे । नीवरः पुरुपकारः । मींग्श् हिंसायाम् । मीवरः हिंस्रः समुद्रश्च । कुंङ् शब्दे । कूवरः रथावयवः । तुंक् वृत्त्यादिषु । तूवरः मन्दश्मश्रुः अजननीकश्च । चिंग्ट् चयने । चीवरं मुनिजनवासः निःसारं कन्था च ॥ ४४३ ॥ तीवरधीवरपीवरछित्वरछत्वरगह्वरोपह्वरसंयद्वरोदुम्बरादयः॥४४४॥एते वरट् प्रत्ययान्ता निपात्यन्ते। तिम्यतेस्ती च, तीवतेर्वाऽरे तीवरं जलं व्यञ्जनं च। ध्यायतेर्धी च। धीवरः कैवर्तः। प्यायः प्यैङो वा पी च पीवतेर्वाऽरः। पीवरः मांसलः। छिनत्तेस्तः किच्च। छित्त्वरः शठः जर्जरः पिटकश्च। छादेर्णिलुकि ह्रस्वश्च। छत्वरः निर्भर्त्सकः निकुञ्जश्च । छत्वरं कुड्यहीनं गृहम् शयनमच्छदः छदिश्च । गुहेरचोतः । गह्वरं गहनं महाविलं भयानकं प्रत्यन्तदेशश्च । उपपूर्वात् ह्वो वादेर्लुक् च । उपह्वरं संधिः समापं रहःस्थानं च । समूपूर्वाद्यमेर्देश्च । सयद्वरः रणः संयमी नृपश्च । उन्देः किदुम्चान्तः । उदुम्वरः वृक्षविशेषः। आदिग्रहणात् उम्बरशम्बरादयो भवन्ति ॥४४४॥ कडेरेवराङ्गरौ ॥ ४४५ ॥ कडत् मदे इत्यस्मात् एवर अङ्गर इति प्रत्ययौ भवतः । कडेवरं मृतशरीरम् । लत्वे, कलेवरम् । कडङ्गरः वनस्पतिः ॥ ४४५ ॥ त्रट् ॥ ४४६ ॥ सर्वधातुभ्यस्त्रट् प्रत्ययो भवति । छादयतीति छत्रम् छत्री वा धर्मवारणम् । पातीति पात्रमूर्जितगुणाधारः साध्वादिः । पात्री भाजनम् । स्नायतेः स्नात्रं स्नानम् । राजते इति राष्ट्रं देशः । शिष्यतेऽनेन शास्त्रं ग्रन्थः। असूच् क्षेपणे। अस्त्रं धनुः॥४४६॥ जिभृसृग्रस्जिगमिनमिनश्यसिहनिविषेर्वृद्धिश्च ॥४४७॥ एभ्यस्त्रट् प्रत्ययो वृद्धिश्चैषां भवति । जिं अभिभवे । जैत्रः जयनशीलः । जैत्रं द्यूतम् । टु डु भृंग्क् पोषणे च । भात्र पोषः यश्च भृतिं गृहीत्वा वहति। सृं गतौ । सार्त्रः आलयः । भ्रस्जींत् पाके । भ्राष्ट्रम् अम्बरीषम् । गम्लृं गतौ । गात्रं मनः शरीरं लोकश्च । णमं प्रह्वत्वे । नात्रं शिरः शाखा वैचित्र्यं च । नशौच् अदर्शने । नशोधुटीति नोऽन्तः । नांष्ट्राः यातुधानाः । अश्नोतेरश्नातेर्वा, आष्ट्रम् आकाशः रश्मिश्च । हनंक् हिंसागत्योः । हात्रं रक्षः युद्धं वधश्च । विष्लृंकी व्याप्तौ । वैष्ट्रः विष्णुः वायुश्च । वैष्ट्रं यकृत् त्रिदिव वेश्म च ॥ ४४७ ॥ दिवेर्द्यौ च ॥ ४४८ ॥ दीव्यतेस्त्रट् प्रत्ययो द्यौ चास्यादेशो भवति। द्योत्रं त्रिदिवं ज्योतिः विमानं प्रमाणं प्रतोदश्च ॥ ४४८ ॥ सूमूखन्युषिभ्यः कित् ॥ ४४९ ॥ एभ्यः कित् त्रट् प्रत्ययो भवति । षूत् प्रेरणे । सूत्रं तन्तुः शास्त्रं च । मूङ् बन्धने । मूत्रं प्रस्रावः । खनूग् अवदारणे । खात्रं कूद्दालः तडाकं ग्रामाधानमृत् चौरकृतं च छिद्रम् । उषू दाहे । उष्ट्रः क्रमेलकः ॥ ४४९ ॥ स्त्री ॥ ४५० ॥ स्यतेः सूतेः स्त्यायतेस्तृणातेर्वा त्रट् स्यात् डिच्च । स्त्री योषित् ॥ ४५० ॥ हुयामाश्रुवसिभसिगुवीपचिवचिधूयम्यमिमनितनिसादिछादिक्षिक्षदिलुपिपातिधूभ्यस्त्रः ॥ ४५१ ॥ एभ्यस्त्रः प्रत्ययो भवति । हुंक् दानादनयोः । होत्रं हवनं, होत्रा ऋचः । यांक् प्रापणे । यात्रा प्रस्थानं यापनम् उत्सवश्च । मांक् माने । मात्रा प्रमाणं कालविशेषः स्तोकः गणना च । श्रुंट् श्रवणे । श्रोत्रं कर्णः । वसिक् आच्छादने । वस्त्रं वासः । भसि जुहोत्यादौ स्मरन्ति । भस्त्रा चर्ममयमावपनम् उदरं च । गुंङ् शब्दे । गोत्रः पर्वतः ।

गोत्रा पृथ्वी। गोत्रम् अन्ववायः। वींक् प्रजनादौ। वेत्रं वीरुद्विशेषः। डु पचींष् पाके। पक्त्रं पिठरं गार्हपत्यं च। वचंक् भाषणे। वक्त्रम् आस्यम् छन्दोजातिश्च। गृहङ् स्थाने। घत्रः धर्मः वृक्षः रविश्च। धत्रं नभः गृहसूत्रम् च। धत्रा द्यौः। यमूं उपरमे। यन्त्रं शरीरसंधानम् अरघट्टादि च। अम् गतौ। अन्त्रं पुरीतत्। मनिंच् ज्ञाने। मन्त्रः छन्दः। तनूयी विस्तारे। तन्त्रं प्रसारितास्तन्तवः शास्त्रं समूहः कुटुम्बं च। पदॢं विशरणादौ। सत्रं यज्ञः सदः दानं छद्म यागविशेषश्च। छदण् संवरणे। छादयतीति छात्रः शिक्षकः। क्षित् निवासगत्योः। क्षेत्रं कर्षणभूमिः भार्या शरीरमाकाशं च। क्षद संवरणे सौत्रः। क्षत्रं राजबीजम्। लुपूंल्ती छेदने। लोप्त्रम् अपहृतं द्रव्यम्। पतॢ गतौ। पत्रं पर्णं यानं च। धूगूश् कम्पने। धोत्रं रज्जुः॥ ४५१॥ श्वितेर्वश्च मो वा॥ ४५२॥ श्विताङ् वर्णे इत्यस्मात्त्रः प्रत्ययो वकारस्य च मकारो वा भवति। श्मेत्रं श्वेत्रं च रोगौ॥ ४५२॥ गमेरा च॥ ४५३॥ गम्लृं गतावित्यस्मात्त्रः प्रत्यय आकारश्चान्तादेशो भवति। गात्रं शरीरम्। गात्रा खट्वावयवः॥ ४५३॥ चिमिदिशंसिभ्यः कित्॥ ४५४॥ एभ्यः कित्त्रः प्रत्ययो भवति। चिंग्ट् चयने। चित्रम् आश्चर्यम् आलेख्यं वर्णश्च॥ ञि मिदांच् स्नेहने। मित्रं सुहृत्। आमित्रः शत्रुः। मित्रः सूर्यः। शंसू स्तुतौ च। शस्त्रं स्तोत्रमायुधं च॥ ४५४॥ पुत्रादयः॥ ४५५॥ पुत्र इत्यादयः शब्दास्त्रप्रत्ययान्ता निपात्यन्ते। पुनाति पवते व पितृपूतिमिति पुत्रः सुतः। यदाहुः 'पूतीति नरकस्याख्या दुःखं च नरकं विदुः'। पुन्नाम्नो नरकात् त्रायत इति व्युत्पत्तिस्तु संज्ञाशब्दानामनेकधा व्याख्यानं लक्षयति। आदिग्रहणादन्येऽपि॥ ४५५॥ वृग्नक्षिपचिवच्यमिनमिवमिवपिबधियजिपतिकडिभ्योऽत्रः॥४५६॥ एभ्योऽत्रः प्रत्ययो भवति। वृग्ट् वरणे। वरत्रा चर्मरज्जुः। णक्ष गतौ। नक्षत्रम् अश्विन्यादि। डु पचींष् पाके। पचत्रं रन्धनस्थाली। वचंक् भाषणे। वचत्रं वचनम्। अम गतौ अमत्रं भाजनम्। णमं प्रह्वत्वे। नमत्रं कर्मारोपकरणम्। टु वमू उद्गिरणे। वमत्रं प्रक्षेपः। डु वपी बीजसंताने। वपत्रं क्षेत्रम्। वधि बन्धने। वधत्रम् आयुधः वत्रं विषं शूरश्च। यजी देवपूजादौ। यजत्रः यज्वा। यजत्रमग्निहोत्रम्। पतॢ गतौ। पतत्रं वर्हं वाहनं व्योम च। कडत् मदे। कडत्रं दाराः। लत्वे, कलत्रं दारा जघनं च॥ ४५६॥ सोर्विदः कित्॥ ४५७॥ सुपूर्वाद् विदः कित्त्रः प्रत्ययो भवति। सुष्ठु वेत्ति विन्दति विद्यते वा सुविदत्रं कुटुम्बं धनं मङ्गलं च॥ ४५७॥ कृतेः कृन्त् च॥ ४५८॥ कृतैच् छेदने इत्यस्मादत्रः प्रत्ययो भवति अस्य च कृन्तादेशः। कृन्तत्रः मशकः। कृन्तत्रं छेदनं लाङ्गलाग्रं च॥ ४५८॥ बन्धिवहिकट्यश्यादिभ्य इत्रः॥ ४५९॥ एभ्य इत्रः प्रत्ययो भवति। बन्धंश् बन्धने। बन्धित्रं मन्थः। वहीं प्रापणे। वहित्रं वाहनं वहनं च। कटे वर्षावरणयोः। कटित्रं लेख्यचर्म। अशौटि व्याप्तौ अशश् भोजने वा। अशित्रं रश्मिः हविः अग्निः अन्नपानं च। आदिग्रहणात् लुनातेः, लवित्रम् कर्मद्रव्यम्। पुनातेः, पवित्रं मङ्गल्यम्। भटतेः, भटित्रं शूले पक्वमासम्। कडतेः, कडित्रं कटित्रमेन। अमतेः, अमित्रः रिपुः इत्यादि॥ ४५९॥ भूगृवदिचरिभ्यो णित्॥ ४६०॥ एभ्यो णिदित्रः प्रत्ययो भवति। भू सत्तायाम्। भावित्रं त्रैलोक्यं निधानं भद्रं च। गॄत् निगरणे। गारित्रं नभः अन्नपानम् आश्चर्यं च। वद व्यक्तायां वाचि। वादित्रम् आतोद्यम्। चर ॥

भक्षणे च। चारित्रं वृत्तं स्थित्यभेदश्च ॥ ४६० ॥ तनितॄलापात्राादिभ्य उत्रः ॥ ४६१ ॥ एभ्य उत्रः प्रत्ययो भवति। तनूयी विस्तारे। तनुत्रं कवचम्। तॄ प्लवनतरणयोः। तरुत्रं प्लवः घासहारी च। लांक् आदाने। लोत्रम् अपहृतद्रव्यम्। पां पाने। पोत्रं हलसूकरयोर्मुखम्। त्रैङ् पालने। त्रोत्रमभयक्रिया। आदिग्रहणात् वृणोतेः, वरुत्रम् अभिमेतमित्यादयः॥ ४६१ ॥ शामाश्याशक्यम्व्यमिभ्यो लः ॥ ४६२ ॥ एभ्यो लः प्रत्ययो भवति। शोंच् तक्षणे। शाला सभा। मांक् माने। माला स्रक्। श्यैङ् गतौ। श्यालः पत्नीभ्राता। शकॄंट् शक्तौ। शक्लः मनोज्ञदर्शनः मधुरवाक् शक्तश्च। अवुङ् शब्दे, अम गतौ। अम्लः अम्लश्च रसः॥ ४६२ ॥ शुकशीमूभ्यः कित् ॥ ४६३ ॥ एभ्यः कित् लः प्रत्ययो भवति। शुक गतौ। शुक्लः सितो वर्णः। शीङ्क् स्वप्ने। शीलं स्वभावः व्रतं धर्मः समाधिश्च। मूङ् बन्धने। मूलम् वृक्षपादाद्यवयवः आदिः हेतुश्च ॥४६३॥ भिल्लाच्छभल्लसौविदल्लादयः ॥४६४॥ भिल्लादय शब्दाः किल्लप्रत्ययान्ता निपात्यन्ते। भिदेर्लश्च। भिल्लः अन्त्यजातिः। अच्छपूर्वात् भलेः। अच्छभल्लः ऋक्षः। सुपूर्वाद्विदेरलोऽन्तः सोश्च वृद्धिः। सौविदल्लः कञ्चुकी। आदिग्रहणादल्लपल्लीरल्लादयोऽपि भवन्ति ॥४६४॥ मृदिकन्दिकुण्डिमण्डिमङ्गिपटिपाटिशकिकेवृदेवृकामियमिशलिकलिपलिगुध्वाञ्चिचाञ्चिचपिवहिदिहिकुहितॄस्थापिशितुसिकुस्यनिद्रमेरलः ॥ ४६५ ॥ एभ्योऽलः प्रत्ययो भवति। मृद्श् क्षोदे। मर्दलः मुरजः। कदु रोदनाह्वानयोः। कन्दलः प्ररोहः। कुडुङ् दाहे। कुण्डलं कर्णाभरणम्। मडु भूषायाम्। मण्डलं देशः परिवारश्च। मगु गतौ। मङ्गलं शुभम्। पट गतौ। पटलं छदिः समूहः आवपनं नेत्ररोगश्च। ण्यन्तात्, पाटलः वर्णः। शकॢंट् शक्तौ। शकलं भित्तमसारं च। केवृङ् सेचने। केवलं परिपूर्णं ज्ञानम् असहायं च। देवृङ् देवने। देवलः ऋषिः देवत्रातः क्रीडनश्च। कमूङ् कान्तौ। कमलं पद्मम्। णिङि कामलो नेत्ररोगः। यमूं उपरमे। यमलं युग्मम्। शल गतौ। शललं शेधाङ्गरुहशङ्कुः। कलि शब्दसंख्यानयोः। कललं गर्भप्रथमावस्था। पल गतौ। पललम् भृष्टतिलातसीचूर्णम्। गुंङ् शब्दे। गवलः महिषः। धूग्श् कम्पने। धवलः श्वेतः। अञ्चू गतौ च। अञ्चलः वस्त्रान्तः। चञ्चू गतौ। चञ्चलः अस्थिरः। चप सान्त्वने। चपलः स एव। वहीं मापणे। वहलं सान्द्रम्। दिहींक् लेपे। देहली द्वाराधःपट्टः। कुहणि विस्मापने। कोहलः भरतपुत्रः। वाहुलकाद्गुणः। तॄ प्लवनतरणयोः। तरलः अधीरः हारमध्यमणिश्च, सृं गतौ, सरलः अकुटिलः वृक्षविशेषश्च। पिशत् अवयवे। पेशलः मनोज्ञः। तुस शब्दे। तोसलाः जनपदः। कुसच् श्लेषे। कोसलाः जनपदः। अनक् प्राणने। अनलः अग्निः। द्रम गतौ। द्रमलं जलम्॥४६५॥ नहिलङ्गेर्दीर्घश्च ॥ ४६६ ॥ आभ्यामलः प्रत्ययोऽनयोश्च दीर्घो भवति। णहींच् बन्धने। नाहलः म्लेच्छः। लगु गतौ। लाङ्गलं हलम् ॥४६६॥ ऋजनेर्गोऽन्तश्च ॥ ४६७ ॥ आभ्यामलः प्रत्ययो गकारान्तो भवति। ऋंक् गतौ। अर्गला परिघः। जनैचि प्रादुर्भावे। जङ्गलं निर्जलो देशः ॥ ४६७ ॥ तृपिवापिकुपिकुशिकुटिवृषिसुसिभ्यः कित् ॥ ४६८ ॥ एभ्यः किदलः प्रत्ययो भवति। तृपौच् प्रीतौ। तृपला लता। तृपलं शुष्कपर्णम् शुष्कतृणं च। डु वपीं बीजसंताने। उपलः पाषाणः। कुपच् कोपे। कुपलः प्रवालः। कुशच् श्लेषणे। कुशलः मेधावी। कुशलम् आरोग्यम्। कुटत् कौटिल्ये। कुटलः ऋषिः। वृषू सेचने। वृपलः दासजातिः।

मुसच् खण्डने । मुसलम् अवहननम् ॥ ४६८ ॥ कोर्वा ॥ ४६९ ॥ कुंङ् शब्दे इत्यस्मादलः प्रत्ययः स च कित्वा भवति । कुवलं बदरम् । कुवली क्षुद्रबदरी । कवलः ग्रासः ॥ ४६९ ॥ शमेर्ब च वा ॥ ४७० ॥ शमूच् उपशम इत्यस्मात् अलः प्रत्ययो मकारस्य च बकारो वा भवति । शबलः कल्माषः । शमलं पुरीषम् दुरितं च ॥ ४७० ॥ छो डग्गादिर्वा ॥ ४७१ ॥ छोंच् छेदने इत्यस्मात्किदलः प्रत्ययः स च डगादिर्गादिश्च वा भवति । छगल छागः। छागलः ऋषिः। छलं वचनविघातोऽर्थ-विकल्पोपपत्त्या ॥ ४७१ ॥ मृजिखन्याहनिभ्यो डित् ॥ ४७२ ॥ एभ्यो डिदलः प्रत्ययो भवति । मृजौक् शुद्धौ । मलं वाह्यं रजः अन्तर्दोषश्च । खनूग् अवदारणे । खलः दुर्जनः निष्पीडितरसं पिण्याकादि । खलं सस्यग्रहणभूमिः । हनंक् हिंसागत्योः आङ्पूर्वः । आहलः विषाणं नखरश्च ॥ ४७२ ॥ स्थो वा ॥ ४७३ ॥ तिष्ठतेरलः प्रत्ययः स च डिद्वा भवति । स्थलं प्रदेशविशेषः । स्थालं भाजनम् ॥ ४७३ ॥ मुरलोरलविरलकेरलकपिञ्जलकज्जलेज्जल-कोमलभृमलसिंहलकाहलशूकलपाकलयुगलभगलविदलकुन्तलोत्पलादयः ॥ ४७४ ॥ एतेऽलप्रत्ययान्ता निपात्यन्ते । मुर्व्युर्व्योर्वलोपः किच्च । मुरलाः जनपदः । उरलः उत्कटः । विपूर्वाद्रमेर्डिच्च । विरलः असंहतः । किरः केर् च । केरलाः जनपदः । कम्पेरिञ्जोऽन्तो नलोपश्च । कपिञ्जलः गौरतित्तिरिः । कषीषो-र्जोऽन्तो जश्च । कज्जलं मषी । इज्जलः वृक्षविशेषः । कमेरत ओच्च । कोमलं मृदु । भ्रमेर्भृम च । भृमलः वायुः कृमिजातिश्च । भृमलं चक्रम् । हिंसेराद्यन्तविपर्ययश्च । सिंहलाः जनपदः । कणेर्हो दीर्घश्च । काहल. अव्यक्तवाक् । काहला वाद्यविशेषः । शकेरूच्चास्य । शूकलः अश्वाधमः । पचेः पाक् च । पाकलः हस्तिज्वरः । युजेः कित् ग च । युगलं युग्मम् । भातेर्गोऽन्तो ह्रस्वश्च । भगलः मुनिः । विन्देर्नलोपश्च । विदल वेणुदलम् । कनेरत उत् तोऽन्तश्च । कुन्तलाः जनपदः केशाश्च । उत्पूर्वात् पिबतेर्ह्रस्वश्च । उत्पलं पद्मम् । आदिग्रहणात् सुवर्चलामुद्गलपुद्गलादयो भवन्ति ॥ ४७४ ॥ ऋकृमृवृतनितमिचषिचपिकपिकीलिपलिवलिपञ्चिमङ्गिगण्डिमण्डिचण्डितण्डिपिण्डिनन्दिनदिशकिभ्य आलः ॥ ४७५ ॥ एभ्य आलः प्रत्ययो भवति । ऋंक् गतौ । अरालं वक्रम् । डु कृंग् करणे । करालम् उच्चम् । मृत् प्राणत्यागे । मरालः हंसः महाश्च । वृग्ट् वरण । वरालः वदान्यः । तनूयी विस्तारे । तनालं जलाशयः । तमूच् काङ्क्षायाम् । तमालः वृक्षः व्यालश्च । चषी भक्षणे । चषालं यूपशिरसि द्रव्यम् । चप सान्त्वने । चपाल यज्ञद्रव्यम् । कपिः सौत्रः । कपालं घटाद्यवयवः शिरोऽस्थि च । कील वन्धे । कीलालं मद्यं जलमसृक् च । पल गतौ । पलालम् अकणा व्रीह्यादिः । वल प्राणनधान्यावरोधयोः । वलालः वायुः । पचुङ् व्यक्तीकरणे । पञ्चालः ऋषिः राजा च । पञ्चाला जनपदः । मगु गतौ । मङ्गालः देशः । गडु वदनैकदेशे । गण्डालः मत्तहस्ती । मडु भूषायाम् । मण्डालः ऋषिः राजा च । चडुङ् कोपे । चण्डालः श्वपचः । अकृतज्ञमकार्यज्ञं दीर्घरोषमनार्जवम् ॥ चतुरो विद्धि चडालान् जन्मना चेति पञ्चमम् ॥ १ ॥ तडुङ् आघाते । तण्डालः क्षुपः । पिडुङ् संघाते । पिण्डालः कन्दजातिः । टुनदु समृद्धौ । नन्दालः राजा । णद अव्यक्ते शब्दे । नदालः नादवान् । शकॢंट् शक्तौ । शकाला. जनपदः मूर्खधनी च ॥ ४७५ ॥ कूलिपिलिविशिबिडिमृडि

**कुणिपीप्रीभ्यः कित्** ॥ ४७६ ॥ एभ्यः क्विदालः प्रत्ययो भवति । कुल बन्धुसंस्त्यानयोः । कुलालः कुम्भकारः । पिलत् क्षेपे । पिलालं श्लिष्टम् । विशंत् प्रवेशने । विशालं विस्तीर्णम् । विड आक्रोशे। विडालः मार्जारः। लत्वे, विलाल स एव । मृणत् हिंसायाम् । मृणालं विसम् । कुणत् शब्दोपकरणयोः। कुणालः कृतमालः कटविशेषश्च । कुणालं नगरं कठिन च । पीङ्च् पाने। पियालः वृक्षः, पियालं शाकं वीरुच्च। प्रीङ्च् प्रीतौ । प्रियालः पियालः॥४७६॥ **भजेः कगौ च** ॥४७७॥ भजी सेवायामित्यस्मात् क्विदालः प्रत्ययः कगौ चान्तादेशौ भवतः। भकालं भगालम् उभयं कपालम्॥४७७॥**सर्तेर्गोऽन्तश्च**॥४७८॥सृं गतावित्यस्मात् किदालः प्रत्ययो भवति गश्चान्त.। मृगालः क्रोष्टा॥४७८॥ **पतिकृलूभ्यो णित्** ॥४७९॥ एभ्यो णिदालः प्रत्ययो भवति। पत्लृ गतौ। पातालं रसातलम्। डु कृंग् करणे। कारालं लेपद्रव्यम्। लूग्श् छेदने। लावालः उद्गन्तः ॥ ४७९ ॥ **चात्वालकङ्कालहिन्तालवेतालजम्बालशब्दालममासालादयः** ॥ ४८० ॥ एते आलप्रत्ययान्ता निपात्यन्ते । चतेर्णोन्तो दीर्घश्च । चात्वालः यज्ञगर्तः । कचे स्वरान्नोऽन्तः कश्च । कङ्कालः कलेवरम् । हिंसेस्त च । हिन्तालः वृक्षविशेषः । वियस्तोऽन्तो गुणश्च । वेताल. रजनीचरविशेषः । जनेर्बोऽन्तश्च । जम्बालः कर्दमः शैवलं च । शमेर्ऋपेर्वा शब्दभावश्च । शब्दालः शब्दनशीलः । ममेर्वलोपो मासश्चान्तः । ममासालः मति. स्नेहः पुत्रादिषु स्नेहबन्धनं च । आदिशब्दाच्चक्रवालकरवाललवालादयो भवन्ति ॥ ४८० ॥ **कल्यनिमहिद्रमिजटिभटिकुटिचण्डिशण्डितुण्डिपिण्डिभूकुकिभ्य इलः** ॥ ४८१ ॥ एभ्य इलः प्रत्ययो भवति । कलि शब्दसंख्यानयोः । कलिल गहनं पापम् आत्माशिष्ठितं च शुक्रार्तवम् । अनक् प्राणने । अनिलः वायुः । मह पूजायाम् । महिला स्त्री । द्रम गतौ । द्रमिलाः त्रैराज्यवासिन । जट झट संघाते । जटिलः जटावान् । भट भृतौ । भटिलः श्वा सेवकश्च । कुटत् कौटिल्ये । कुटिलं वक्रम् । चडुङ् कोपे । चण्डिलः श्वा क्रोधनः नापितश्च । शडुङ् रुजायाम् । शाण्डिलः ऋषिः । तुडुङ् तोडने । तुण्डिलः वाग्जाली । पिडुङ् संघाते । पिण्डिलः मेघः हिंस्रः हिमः गणकश्च । भू सत्तायाम् । भविलः मुनि. समर्थः गृहं बहुनेता च । कुकि आदाने । कोकिलः परभृतः ॥ ४८१ ॥ **भण्डेर्नलुक् च वा** ॥ ४८२ ॥ भडुङ् परिभाषणे इत्यस्मात् इलः प्रत्ययो नकारस्य च लुग्वा भवति । भाडिलः ऋषिः पिशाचः शत्रुश्च । भण्डिलः श्वा दूतः ऋषिश्च ॥ ४८२ ॥ **गुपिमिथिध्रुभ्यः कित्** ॥ ४८३ ॥ एभ्यः किदिलः प्रत्ययो भवति । गुपौ रक्षणे । गुपिलं गहनम् । मिथृग् मेधाहिंसयोः । मिथिला नगरी । ध्रुं स्थैर्ये च । ध्रुविलः ऋषिः ॥ ४८३ ॥ **स्थण्डिलकपिलविचकिलादयः** ॥ ४८४ ॥ स्थण्डिलादयः शब्दा इलप्रत्ययान्ता निपात्यन्ते । स्थलेः स्थण्ड् च । स्थण्डिलं व्रतिशयनवेदिका । कवेः प च । कपिलः वर्णः ऋषिश्च । विचेरकोऽन्तश्च । विचकिलः मल्लिकाविशेषः । आदिग्रहणाद्गोभिलनिकुम्भिलादयो भवन्ति ॥ ४८४ ॥ **हृषिवृतिचटिपटिशकिशङ्कितण्डिमङ्ग्युत्कण्ठिभ्य उलः**॥४८५॥ एभ्य उलः प्रत्ययो भवति। हृपच् तुष्टौ हृषू अलीके वा। हर्षुलः हर्षवान् कामी मृगश्च। वृतूङ् वर्तने । वर्तुल. वृत्तः । चटण् भेदे । चटुलः चञ्चलः । पट गतौ । पटुलः वाग्मी । शक्लृंट् शक्तौ । शकुलः मत्स्यः । शकुङ् शङ्कायाम् । शङ्कुला क्रीडनशङ्कुः बन्धन-

भाण्डम् आयुधं च । तडुङ् ताडने । तण्डुलो निस्तुषो व्रीह्यादिः । मगु गतौ । मङ्गुलं न्यायापेतम् । कठुङ् शोके उत्पूर्वः । उत्कण्ठुलः उत्कण्ठावान् ॥ ४८५ ॥ स्थावङ्किबंहिपिन्दिभ्यः किन्नलुक् च ॥ ४८६ ॥ एभ्यः किदुलः प्रत्ययो नकारस्य च लुग् भवति । ष्ठां गतिनिवृत्तौ । स्थुलं पटकुटीविशेषः । वकुङ् कौटिल्ये । वकुलः केसरः ऋषिश्च । वहुङ् वृद्धौ । बहुलं प्रचुरम् । बहुलः प्रामकः कृष्णपक्षश्च । बहुलाः कृत्तिकाः । बहुला गौः । बिदु अवयवे । बिदुलः वेतसः ॥४८६॥ कुमुलतुमुलनिचुलवञ्जुलमञ्जुलपृथुलविशंस्थुलाङ्गुलमुकुलशष्कुलादयः ॥ ४८७ ॥ एते उलप्रत्ययान्ता निपात्यन्ते । कमितम्योरत उच्च । कुमुलं कुसुमम् हिरण्यं च । कुमुलः शिशुः कान्तश्च । तुमुलं व्यामिश्रयुद्धम् संकुलं च । निजेः किच्च । निचुलः वञ्जुलः । वजेः स्वरान्नोऽन्तश्च । वञ्जुलः निचुलः । मञ्जिः सौत्रः । मञ्जुलं मनोज्ञम् । प्रथेः पृथ् च । पृथुलः विस्तीर्णः । निपूर्वात् शंसेस्थोऽन्तश्च । विशंस्थुलः व्यग्रः । अञ्जेर्ग च । अङ्गुलम् अष्टयवप्रमाणम् । मुचेः कित् कश्च । मुकुलः अविकासितपुष्पम् । शकेः स्वरात् षोऽन्तश्च । शष्कुली भक्ष्यविशेषः कर्णावयवश्च । आदिग्रहणाल्कुकुलवल्गुलादयो भवन्ति ॥ ४८७ ॥ पिञ्जिमञ्जिकण्डिगण्डिबलिवधिवञ्चिभ्य ऊलः ॥ ४८८ ॥ एभ्य ऊलः प्रत्ययो भवति । पिजुण् हिंसाबलदाननिकेतनेषु । पिञ्जूलः हस्तिबन्धनपाशः राशिः कुलपतिश्च । मञ्जि: सौत्रः । मञ्जूला मृदुभाषिणी । कडुङ् मदे । कुण्डूलः अशिष्टो जनः । गडु वदनैकदेशे । गण्डूलः कृमिजातिः । बल प्राणनधान्यावरोधयोः । बलूलः ऋषिः मेघः मासश्च । वधि बन्धने । वधूलः हस्ती घातकः रसायनं तन्त्रकारश्च । वञ्चिण् प्रलम्भने । वञ्चूलः हस्ती मत्स्यमारपक्षी च ॥४८८॥ तमेर्बोऽन्तो दीर्घस्तु वा ॥४८९॥ तमूच् काङ्क्षायामित्यस्मादूलः प्रत्ययो बोऽन्तश्च भवति दीर्घस्तु वा । ताम्बूलं तम्बूलम् उभयं पूगपत्रचूर्णसंयोगः ॥ ४८९ ॥ कुलिपुलिकुशिभ्यः कित् ॥४९०॥ एभ्य ऊलः प्रत्ययः स च किद् भवति । कुल बन्धुसंस्त्यानयोः । कुलूलः कृमिजातिः । पुल महत्त्वे । पुलूलः वृक्षविशेषः । कुशच् श्लेषे । कुशूलः कोष्ठः ॥ ४९० ॥ दुकूलकुकूलबब्बूललाङ्गूलशार्दूलादयः ॥ ४९१ ॥ दुकूलादयः शब्दा ऊलप्रत्ययान्ता निपात्यन्ते । दुङ्कोः कोऽन्तश्च । दुकूलं क्षौमं वासः । कुकूलं कारीषोऽग्निः । बधेर्बोऽन्तो बश्च । बब्बूलः वृक्षविशेषः । लङ्गेर्दीर्घश्च । लाङ्गूलं बालधिः । शृणातर्दोऽन्तो वृद्धिश्च । शार्दूलः व्याघ्रः । आदिग्रहणात् मार्जूलकब्भूलादयो भवन्ति ॥ ४९१ ॥ महेरेलः ॥ ४९२ ॥ मह पूजायामित्यस्मादेलः प्रत्ययो भवति । महेला स्त्री ॥ ४९२ ॥ कटिपटिकण्डिगण्डिशकिकपिचहिभ्य ओलः ॥ ४९३ ॥ एभ्य ओलः प्रत्ययो भवति । कटे वर्षावरणयोः । कटोलः कटविशेषः वादित्रविशेषश्च । कटोला ओषधिः । पट गतौ । पटोला वल्लीविशेषः । कडु मदे । कण्डोलः त्रिदलभाजनविशेषः । गडु वदनैकदेशे । गण्डोलः कृमिविशेषः । शक्लृद् शक्तौ । शकोलः शक्तः । कपिः सौत्रः । कपोलः गण्डः । चह कल्कने । चहोलः उपद्रवः ॥ ४९३ ॥ ग्रहाद्भ्यः कित् ॥ ४९४ ॥ ग्रहेराकारान्तेभ्यश्च धातुभ्यः किदोलः प्रत्ययो भवति । ग्रहीश् उपादाने । गृहोलः बालिशः । कायतेः, कोलः बदरी वराहश्च । गायतेः, गोलः वृत्ताकृतिः । गोला गोदावरी बालरमणकाष्ठं च । पातेः, पोला तालाख्यं कपाटबन्धनं परिखा च । लातेः, लोलः चपलः । ददातेर्दयतेर्धेतेर्वा दोला प्रेङ्खणम् ॥ ४९४ ॥

पिञ्छोलकल्लोलकक्कोलमक्कोलादयः ॥ ४९५ ॥ पिञ्छोलादयः शब्दा ओलप्रत्ययान्ता निपात्यन्ते । पीडेः पिञ्छ्च । पिञ्छोलः वादित्रविशेषः । कलेर्लोऽन्तश्च । कल्लोलः ऊर्मिः । कचिमच्योः कादिः । कक्कोली लताविशेषः । मक्कोलः सुधाविशेषः । आदिग्रहणादन्येऽपि ॥ ४९५ ॥ वलिपुषेः कलक् ॥ ४९६ ॥ आभ्यां कित् कलः प्रत्ययो भवति । वलि संवरणे । वल्कलं तरुत्वक् । पुष पुष्टौ । पुष्कलं समग्रं युद्धं शोभनं हिरण्यं धान्यं च । ॥ ४९६ ॥ मिगः खलश्चैच ॥ ४९७ ॥ डु मिंगृ् प्रक्षेपणे इत्यस्मात् खलश्चकारात् कलश्च प्रत्यय एकारश्चान्तादेशो भवति । मेखला गिरिनितम्बः रशना च । मेकलः नर्मदाप्रभवोऽद्रिः । मिग एत्ववचनमात्वबाधनार्थम् ॥ ४९७ ॥ श्रो नोऽन्तो ह्रस्वश्च ॥ ४९८ ॥ शृश् हिंसायामित्यस्मात् खलः प्रत्ययो नकारोऽन्तो ह्रस्वश्च भवति । शृङ्खला लोहरज्जुः । शृङ्खलः शृङ्खलं वा ॥ ४९८ ॥ शमिकमिपलिभ्यो बलः ॥ ४९९ ॥ एभ्यो बलः प्रत्ययो भवति । शमूच् उपशमे । शम्बलं पाथेयम् । कमूङ् कान्तौ । कम्बलः ऊर्णापटः । पल गतौ । पल्वलम् अकृत्रिमोदकस्थानविशेषः ॥ ४९९ ॥ तुल्वलेल्वलादयः ॥ ५०० ॥ तुल्वलादयः शब्दा वलप्रत्ययान्ता निपात्यन्ते । तुलील्योर्णिलुग्गुणाभावश्च । तुल्वलः ऋषिः, यस्य तौल्वलिः पुत्रः । इल्वलः असुरो योऽगस्त्येन जग्धः मत्स्यः यूपश्च । इल्वलाः तिस्रो मृगशिरःशिरस्ताराः । आदिग्रहणात् शाल्वलादयो भवन्ति ॥ ५०० ॥ शीङस्तलक्पालवालण्वलण्वलाः ॥ ५०१ ॥ शीङ्क् स्वप्ने इत्यस्मात्तलक्पालवालण्वलण्वल इत्येते प्रत्यया भवन्ति । शीतलमनुष्णम् । शेपालम् । जपादित्वात् पस्य वत्वे, शेवालम् । शैवालम् शैवलम् शेवलम् पञ्चकमपि जलमलवाचि ॥ ५०१ ॥ रुचिकुटिकुषिकशिशालिद्रुभ्यो मलक् ॥ ५०२ ॥ एभ्यः किन् मलः प्रत्ययो भवति । रुचि अभिप्रीत्यां च । रुक्मलं सुवर्णम् । न्यङ्क्वादित्वात् कत्वम् । कुटव कौटिल्ये । कुट्मलं मुकुलम् । कुषश् निष्कर्षे । कुष्मलं तदेव बिलं च । कश शब्दे तालव्यान्तः । कश्मलं मलिनम् । शाडृङ् श्लाघायाम् । लत्वे, शाल्मलः वृक्षविशेषः । द्रुं गतौ । द्रुमलं जलं वनं च ॥ ५०२ ॥ कुशिकमिभ्यां कुल्कुमौ च ॥ ५०३ ॥ आभ्यामलक् प्रत्ययो भवति अनयोश्च यथासंख्यं कुल कुम इत्यादेशौ च । कुशच् श्लेषणे । कुल्मलं छेदनम् । कमूङ् कान्तौ । कुम्मलं पद्मम् ॥ ५०३ ॥ पतेः सलः ॥ ५०४ ॥ पत्लृ गतावित्यस्मात् सलः प्रत्ययो भवति । पत्सलः प्रहारः गोमान् आहारश्च ॥ ५०४ ॥ लटिखटिखलिनलिकण्यशौसृशृकृगृदृपृशपिश्याशालापादिह्रसीण्भ्यो वः ॥ ५०५ ॥ एभ्यो वः प्रत्ययो भवति । लट बाल्ये । लट्वा क्षुद्रचटका कुसुम्भं च । खट काङ्क्षे । खट्वा शयनयन्त्रम् । खल संचये च । खल्वं निम्नं खलीनं च । खल्वा दृतिः । णल गन्धे । नल्वः भूमानविशेषः । कण शब्दे । कण्वः ऋषिः । कण्वं पापम् । अशौटि व्याप्तौ । अश्वः तुरगः । सृं गतौ । सर्वः शम्भुः । सर्वादिश्च कृत्स्नार्थे । शृश् हिंसायाम् । शर्वः शंभुः । कृत् विक्षेपे । कर्वः आखुः समुद्रः निष्पत्तिक्षेत्रं च । गृत् निगरणे । गर्वः अहंकारः । दृश् विदारणे । दर्वाः जनपदः । दर्वः हिंस्रः । पृश् पालनपूरणयोः । पर्वः रुद्रः काण्डं च । शपीं आक्रोशे । शप्वः आक्रोशः । श्यैङ् गतौ । श्यावः वर्णः । शोंच् तक्षणे । शावः तिर्यग्बालः । लांक् आदाने । लावः पक्षिजातिः । पदिंच् गतौ । पद्वः रथः वायुः भूर्लोकश्च । ह्रस शब्दे । ह्रस्वः लघुः । इंणक् गतौ । एवः

केवलः । एवेत्यवधारणे निपातश्च ॥ ५०५ ॥ शीङापो ह्रस्वश्च वा ॥ ५०६ ॥ आभ्यां वः प्रत्ययो ह्रस्वश्च वा भवति । शीङ्क् स्वप्ने । शिवं क्षेमम् सुखं मोक्षपदं च । शिवा हरीतकी । शेवं धनम् । शेवः अजगरः सुखकृच्च । शेवा प्रचला निद्राविशेषः मेढ्रश्च । आप्लृंट् व्याप्तौ । अप्वा देवायुधम् । आप्वा वायुः ॥ ५०६ ॥ उर्देर्ध च ॥ ५०७ ॥ उर्दि मानक्रीडयोश्चेत्यस्माद्वः प्रत्ययो धकारश्चान्तादेशो भवति । ऊर्ध्वः उद्धर्षो । ऊर्ध्वमुपरि । ऊर्ध्वं परस्तात् ॥ ५०७ ॥ गन्धेरर्चान्तः ॥ ५०८ ॥ गन्धिण् अर्दने इत्यस्माद्वः प्रत्ययोऽर् चान्तो भवति । गन्धर्वः गायकः देवविशेषश्च ॥ ५०८ ॥ लपेर्लिप्च वा ॥५०९॥ लपी कान्तौ इत्यस्माद्वः प्रत्ययोऽस्य च लिप् इत्यादेशो वा भवति । लिप्वः लम्पटः कान्तः दयितश्च । लप्वः अपत्यम् ऋषिस्थानं च ॥ ५०९ ॥ सलेर्णिद्वा ॥ ५१० ॥ सल गतावित्यस्माद्वः प्रत्ययः स च णिद्वा भवति । साल्वाः सल्वाश्च जनपदः क्षत्रियाश्च ॥५१०॥ निघृषीष्यृषिश्रुमुषिकिणिविशिविल्याविपॄभ्यः कित् ॥५११॥ एभ्यः किद्वः प्रत्ययो भवति । घृषू संघर्षे, निपूर्वः । निघृष्वः अनुकूलः सुवर्णनिकषोपलः वायुः क्षुरश्च । इषत् इच्छायाम् । इष्वः अभिलषितः आचार्यश्च । इष्वा अपत्यसंततिः । ऋषैत् गतौ । ऋष्वः रिपुः हिंस्रश्च । रिषेर्व्यञ्जनादेः केचिदिच्छन्ति । रिष्वः । स्रुं गतौ । स्रुवः हवनभाण्डम् । मुषू दाहे । मुष्वा निवृत्तिः जललवश्च । किणः सौत्रः । किण्वं सुराबीजम् । विशंत् प्रवेशने । विश्वं जगत् सर्वादि च । विलत् भेदने । विल्व मालूरः । अव रक्षणादौ । अवेत्यव्ययम् । पॄश् पालनपूरणयोः । पूर्वः दिक्कालनिमित्तः ॥ ५११ ॥ नञो भुवो डित् ॥ ५१२ ॥ नञ्पूर्वाद्भवतेर्डिद्वः प्रत्ययो भवति । अभ्वम् अद्भुतम् ॥ ५१२ ॥ लिहेर्जिह च ॥ ५१३ ॥ लिहींक् आस्वादने इत्यस्मात् वः प्रत्ययोऽस्य च जिह इत्यादेशो भवति । जिह्वा रसना ॥ ५१३ ॥ प्रह्वाह्वायह्वास्वच्छेवाग्रीवामीवाव्वादयः ॥५१४॥ प्रह्वादयः शब्दा वप्रत्ययान्ता निपात्यन्ते । प्रपूर्वस्य ह्वयतेर्वादेर्लोपो यततेर्वा ह्रादेशश्च । प्रह्वः प्रणतः । आङ्पूर्वस्य ह्वयतेराह च । आह्वा कण्ठः । यमेर्यसेर्वा हश्च । यह्वा बुद्धिः । अस्यतेरलोपश्च । स्वः आत्मा आत्मीयं ज्ञातिः धनं च । छ्यतेश्छिदेर्वा छेभावश्च । छेवा उच्छित्तिः । ग्रन्थतेर्गिरतेर्वा ग्रीभावश्च । ग्रीवा । अमेरीचान्तो दीर्घश्च वा । अमीवा बुभुक्षा । आमीवा व्याधिः । मिनोतेर्दीर्घश्च । मीवा मनः उदकं च । तदेतत्त्रयमपि तन्त्रेणावृत्त्या वा निर्दिष्टम् । अवतेर्वलोपाभावश्च । अव्वा माता । आदिशब्दात् प्वादयो भवन्ति ॥ ५१४ ॥ वडिवटिपेलृचणिपणिपल्लिवल्लेरवः ॥ ५१५ ॥ एभ्योऽवः प्रत्ययो भवति । वड आग्रहणे सौत्रः । वडवा अश्वा । वट वेष्टने । वटवा सेना । पेलृ गतौ । पेलव निःसारम् । चण हिंसादानयोश्च । चणवः अवरधान्यविशेषः । पणि व्यवहारस्तुत्योः । पणवः वाद्यजातिः । पल्ल गतौ । पल्लवः किसलयम् । वल्लि संवरणे । वल्लवः गोपः ॥ ५१५ ॥ माणिवसेर्णित् ॥ ५१६ ॥ आभ्यां णिदवः प्रत्ययो भवति । मण शब्दे । माणवः शिष्यः । वसं निवासे । वासवः शक्रः ॥ ५१६ ॥ मलेर्वा ॥ ५१७ ॥ मलि धारणे इत्यस्मादवः प्रत्ययः स च णिद्वा भवति । मालवाः जनपदः । मलवः दानवः ॥ ५१७ ॥ कितिकुडिकुरिसुरिस्थाभ्यः कित् ॥ ५१८ ॥ एभ्यः किदवः प्रत्ययो भवति । कित् निवासे । कितवः द्यूतकारः । कुडत् बाल्ये च । कुडवः मानम् । लत्वे, कुलवः स एव नालीद्वयं च । कुरत् शब्दे । कुरवः पुष्पवृक्ष-

जातिः। मुरत् संवेष्टने। मुरवः मानविशेषः वाद्यजातिश्च। ष्ठां गतिनिवृत्तौ। स्थवः अजानृपः॥ ५१८॥ कैरवभैरवमुतवकारण्डवादीनवादयः॥ ५१९॥ कैरवादयः शब्दा अवप्रत्ययान्ता निपात्यन्ते। कृग्भृगोः कैरभैरावादेशौ। कैरवं कुमुदम्। भैरवः भर्गः भयानकश्च। मिनोतेर्मुत् च। मुनवः मानविशेषः। कृगोऽण्डोऽन्तो वृद्धिश्च। कारण्डवः जलपक्षी। आङ्पूर्वादीङो नोऽन्तश्च। आदीनवः दोषः। आदिग्रहणात् कोद्रवकोटवादयोऽपि भवन्ति॥ ५१९॥ शृणातेरावः॥५२०॥ शॄश् हिंसायामित्यस्मादावः प्रत्ययो भवति। शरावः मल्लकः॥ ५२०॥ प्रथेरिवट् पृथ् च॥ ५२१॥ प्रथिष् प्रख्याने इत्यस्मादिवट् प्रत्ययोऽस्य च पृथ् इत्यादेशो भवति। पृथिवी भूः॥ ५२१॥ पलिसचेरिवः॥ ५२२॥ पलण् रक्षणे षचि सेवने इत्याभ्यामिवः प्रत्ययो भवति। पलिवः गोप्ता। सचिवः सहायः॥५२२॥ स्पृशेः श्वः पार् च॥ ५२३॥ स्पृशंत् संस्पर्शे इत्यस्मात् श्वः प्रत्ययोऽस्य च पारित्यादेशो भवति। पार्श्वं स्वाङ्गम् समीपं च। पार्श्वः भगवांस्तीर्थकरः॥ ५२३॥ कुडितुड्यडेरुवः॥ ५२४॥ एभ्य उवः प्रत्ययो भवति। कुडत् बाल्ये च। कुडुव प्रसृतहस्तमानम्। तुडत् तोडने। तुडुवम् अपनेयद्रव्यम्। अड उद्यमे। अडुवः प्लवः॥ ५२४॥ नीह्विण्ध्यैप्यापादामाभ्यस्त्वः॥ ५२५॥ एभ्यस्त्वः प्रत्ययो भवति। णींग् प्रापणे। नेत्वं द्यावापृथिव्यौ चन्द्रश्च। हुंक् दानादनयोः। होत्वं यजमानः समुद्रश्च। इंण्क् गतौ। एत्वम् गमनपरम्। ध्यैं चिन्तायाम्। ध्यात्वं ब्राह्मणः। प्यैंङ् वृद्धौ। प्यात्वं ब्राह्मणः समुद्रः नेत्रं च॥ पां पाने। पात्वम् पात्रम्। डु दांग्क् दाने। दात्वः आयुक्तः यज्वा यज्ञश्च। मांक् माने। मात्वम् प्रमेयद्रव्यम्॥ ५२५॥ कृजन्येधिपाभ्य इत्वः॥ ५२६॥ एभ्य इत्वः प्रत्ययो भवति। डु कृंग् करणे। करित्वः करणशीलः। जनैचि प्रादुर्भावे। जनित्वः लोकः मातापितरौ द्यावापृथिव्यौ च। जनित्वं कुलम्। एधि वृद्धौ। एधित्वः अग्निः समुद्रः शैलश्च। पां पाने। पेत्वम् तप्तभूमिप्रदेशः अमृतं नेत्रं सुखं मानं च॥ ५२६॥ पादावम्यांसिभ्यः शः॥ ५२७॥ एभ्यः शः प्रत्ययो भवति। पांक् रक्षणे। पाशः बन्धनम्। डु दांग्क् दाने। दाशः कैवर्तः। टु वमू उद्गिरणे। वंशः वेणुः। अम गतौ। अंशः भागः॥ ५२७॥ कृवृभृवनिभ्यः कित्॥ ५२८॥ एभ्यः कित् शः प्रत्ययो भवति। डु कृंग् करणे। कृशः तनुः। वृग्ट् वरणे। वृशं शृङ्गवेरम् मूलकं लशुनं च। टुडु भृंग्क् पोषणे च। भृशम् अत्यर्थम्। वन भक्तौ। वशः आयत्तः॥ ५२८॥ कोर्वा॥ ५२९॥ कुंङ् शब्दे इत्यस्मात् श प्रत्ययः स च किद्वा भवति। कुशः दर्भः। कोशः सारम् कुड्मलं च॥ ५२९॥ क्लिशः के च॥ ५३०॥ क्लिशौश् विबाधने इत्यस्मात् शः प्रत्ययोऽस्य च के इत्यादेशो भवति। केशाः मूर्धजाः॥ ५३०॥ उरेरशक्॥ ५३१॥ उर गताविसस्मात् सौत्रादशक् प्रत्ययो भवति। उरशः ऋषिः॥ ५३१॥ कलेष्टित्॥ ५३२॥ कलि शब्दसंख्यानयोरित्यस्मात् टिदशक् प्रत्ययो भवति। कलशः कुम्भः। कलशी दधिमन्थनभाजनम्॥ ५३२॥ पलेराशः॥ ५३३॥ पल गतावित्यस्मादाशः प्रत्ययो भवति। पलाशः ब्रह्मवृक्षः॥ ५३३॥ कनेरीश्चातः॥ ५३४॥ कनै दीप्त्यादावित्यस्मादाशः प्रत्यय ईकारश्चाकारस्य भवति। कीनाशः कर्षकः वर्णशंकरः कदर्यश्च॥ तथा—लुब्धः कीनाशः स्यात् कीनाशोऽप्युच्यते कृतघ्नश्च॥ योऽश्नाति

वाऽममांसं स च कीनाशो यमश्चैव ॥ ५३४ ॥ कुलिकनिकणिपलिवडिभ्यः किशः ॥ ५३५ ॥ एभ्यः कित् इशः प्रत्ययो भवति । कुल बन्धुसंस्त्यानयोः । कुलिशं वज्रम् । कनै दीप्त्यादौ, कण शब्दे । कनिशं कणिशं च सस्यमञ्जरी । पल गतौ । पलिशं यत्र स्थित्वा मृगा व्यापाद्यन्ते । वड आग्रहणे सौत्रः । बडिशं मत्स्यग्रहणम् ॥ ५३५ ॥ बलेर्णिद्वा ॥ ५३६ ॥ वल प्राणनधान्यावरोधयोरित्यस्मात् किशः प्रत्ययः स च णिद्वा भवति । वालिशः मूर्खः । बलिशः मूर्खः । बलिशं बडिशम् ॥ ५३६ ॥ तिनिशेतिशादयः ॥ ५३७ ॥ तिनिशादयः शब्दाः किशप्रत्ययान्ता निपात्यन्ते । तनेरिश्चातः । तिनिशः वृक्षः । इणस्तोऽन्तश्च । इतिशः गोत्रकृदृपिः । आदिग्रहणादन्येऽपि ॥ ५३७ ॥ मस्ज्यङ्किभ्यामुशः ॥ ५३८ ॥ आभ्यामुशः प्रत्ययो भवति । टु मस्जोंत् शुद्धौ । ' न्यङ्कूद्गमेघादयः ' इति गः । मद्गुशः नकुलः । अकुङ् लक्षणे । अङ्कुशः सृणिः ॥ ५३८ ॥ अर्तीण्भ्यां पिशतशौ ॥ ५३९ ॥ आभ्यां यथासङ्ख्यं पिश तश इत्येतौ प्रत्ययौ भवतः । ऋंक् गतौ । अर्पिशम् आर्द्रमांसम् बालवत्साया दुग्धं च । इंण्क् गतौ । एतशः अश्वः ऋषिः वायुः अग्निः अर्कश्च ॥ ५३९ ॥ वृकृतृमीङ्माभ्यः षः ॥ ५४० ॥ एभ्यः षः प्रत्ययो भवति । वृग्ट् वरणे । वर्षः भर्ता । वर्ष संवत्सरः । वर्षाः ऋतुः । कृष् विक्षेपे । कर्षः उन्मानविशेषः । तॄ प्लवनतरणयोः । तर्षः प्लवः हर्षश्च । मीङ्च् हिंसायाम् । मेषः उरभ्रः । माक् माने । माषः धान्यविशेषः हेमपरिमाणं च ॥ ५४० ॥ योरूच्च वा ॥ ५४१ ॥ युक् मिश्रण इत्यस्मात् षः प्रत्यय ऊकारश्चान्तादेशो वा भवति । यूषः पेयविशेषः । यूषा छाया । योषा स्त्री ॥ ५४१ ॥ स्नुपूसूम्वर्कतॄभ्यः कित ॥ ५४२ ॥ स्न्वादिभ्योऽर्कपूर्वाच्च लुनातेः कित् षः प्रत्ययो भवति । स्नुक् प्रस्रवणे । स्नुषा पुत्रवधूः । पूगश् पवने । पूषः पवनभाण्डम् शूर्पादि । पूत् प्रेरणे । सूषः वलम् । मूङ् बन्धने । मूषा लोहक्षरणभाजनम् । लूगश् छेदने अर्कपूर्वः । अर्कलूषः ऋपिः ॥ ५४२ ॥ श्लिषेः शे च ॥ ५४३ ॥ श्लिषंच् आलिङ्गने इत्यस्मात् षः प्रत्ययोऽस्य च शे इत्यादेशो भवति । शेषः नागराजः ॥ ५४३ ॥ कोरषः ॥ ५४४ ॥ कुंङ् शब्दे इत्यस्मादषः प्रत्ययो भवति । कवषः क्रोधी शब्दकारश्च ॥ ५४४ ॥ युजलेराषः ॥ ५४५ ॥ आभ्यामाषः प्रत्ययो भवति । युक् मिश्रणे । यवाषः दुरालभा । जल घात्ये । जलाषं जलम् ॥ ५४५ ॥ अर्तेरिषः ॥ ५४६ ॥ ऋंक् गतावित्यस्माण्यन्तादिषः प्रत्ययो भवति । अर्पिषम् आर्द्रमांसम् ॥ ५४६ ॥ मह्यविभ्यां टित् ॥ ५४७ ॥ आभ्यां टिदिषः प्रत्ययो भवति । मह पूजायाम् । महिषः सैरिभः राजा च । महिषी राजपत्नी सैरिभी च । अव रक्षणादौ । अविषः समुद्रः राजा पर्वतश्च । अविषी द्यौः भूमिः गङ्गा च ॥ ५४७ ॥ रुहेर्वृद्धिश्च ॥ ५४८ ॥ रुहं जन्मनीत्यस्मात् टिदिषः प्रत्ययो वृद्धिश्चास्य भवति । रौहिषं तृणविशेषः अन्तरिक्षं च । रौहिषः मृगः । रौहिषी वात्या मृगी दूर्वा च ॥ ५४८ ॥ अमिमृभ्यां णित् ॥ ५४९ ॥ आभ्यामिषः प्रत्ययो भवति स च णित् । अम गतौ । आमिषं भक्ष्यम् । मृश् हिंसायाम् । मारिषः हिंस्रः ॥ ५४९ ॥ तवेर्वा ॥ ५५० ॥ तव गतावित्यस्मात्सौत्रात् टिदिषः प्रत्ययो भवति स च णिद्वा भवति । ताविषः तविषश्च स्वर्गः । ताविषं तविषं च बलं तेजश्च । ताविषी तविषी च वात्या देवकन्या च ॥ ५५० ॥ कलेः कि-

ल्व च ॥ ५५१ ॥ कलि शब्दसंख्यानयोरित्यस्मात् टिदिपः प्रत्ययोऽस्य च किल्व इत्यादेशो भवति । किल्विषं पापम् । किल्विषी वेश्या रात्रिः पिशाची च ॥ ५५१ ॥ नञो व्यथेः ॥ ५५२ ॥ नञ्पूर्वात् व्यथिष् भयचलनयोरित्यस्मात् टिदिपः प्रत्ययो भवति । अव्यथिषः क्षेत्रज्ञः सूर्यः अग्निश्च । अव्यथिषी पृथिवी ॥ ५५२ ॥ कृतॄभ्यामीषः ॥ ५५३ ॥ आभ्यामीषः प्रत्ययो भवति । कृत् विक्षेपे ।.करीषः शुष्कगोमयरजः । तॄ प्लवनतरणयोः । तरीषः समर्थः स्तम्भः प्लवश्च ॥ ५५३ ॥ ऋजिशॄपॄभ्यः कित् ॥ ५५४ ॥ एभ्यः किदीषः प्रत्ययो भवति । ऋजि गत्यादौ । ऋजीषः अवस्करः । ऋजीषं धनम् ( उपहतम् )। शॄश् हिंसायाम् । शिरीषः वृक्षः । पॄश् पालनपूरणयोः । पुरीष शकृत् ॥ ५५४ ॥ अमेर्वरादिः ॥ ५५५ ॥ अम गतावित्यस्मात् वरादिरीषः प्रत्ययो भवति । अम्बरीषं भ्राष्ट्रं व्योम च । अम्बरीषः आदिनृपः ॥ ५५५ ॥ उषेर्णोऽन्तश्च ॥ ५५६ ॥ उष् दाहे इत्यस्मादीषः प्रत्ययो णकारश्चान्तो भवति । उष्णीषः मुकुटं शिरोवेष्टनं च ॥ ५५६ ॥ ऋपॄनहिहनिकलिचलिचपिवपिकृपिहयिभ्य उषः ॥ ५५७ ॥ एभ्य उषः प्रत्ययो भवति । ऋश् गतौ । अरुषः व्रणः हयः आदित्यः वर्णः रोषश्च । पॄश् पालनपूरणयोः । परुषः कर्कशः । णहींच् बन्धने । नहुषः पूर्वो राजा । हनंक् हिंसागत्योः । हनुषः क्रोधः राक्षसश्च । कलि शब्दसंख्यानयोः । कलुषम् अप्रसन्नं पापं च । चल कम्पने । चलुषः वायुः । चप सान्त्वने । चपुषः शकुनिः। डु वपीं बीजसंताने । वपुषः वर्णः । कृपौङ् सामर्थ्ये । कल्पुषः क्रियानुगुणः । हय क्रान्तौ च । हयुषा ओषधिः ॥ ५५७ ॥ विदिपॄभ्यां कित् ॥ ५५८ ॥ आभ्यां किदुषः प्रत्ययो भवति । विदक् ज्ञाने । विदुषः विद्वान् । पॄश् पालनपूरणयोः । पुरुषः पुमान् आत्मा च ॥ ५५८ ॥ अपुषधनुषादयः ॥ ५५९ ॥ अपुषादयः शब्दा उषप्रत्ययान्ता निपात्यन्ते । आप्नोतेर्ह्रस्वश्च । अपुषः अग्निः सरोगश्च । दधातेर्धन् च । धनुषः शैलः । आदिग्रहणाल्लुसुषादयो भवन्ति ॥ ५५९ ॥ खलिफलिवृपॄकृजूलम्बिमञ्जिपीविहन्यङ्गिमङ्गिगण्डयर्तिभ्य ऊषः ॥ ५६० ॥ एभ्य ऊषः प्रत्ययो भवति । खल संचये च । खलूषः म्लेच्छजातिः । फल निष्पत्तौ । फलूषः वीरुत् । वृग्ट् वरणे । वरूषः भाजनम् । पॄश् पालनपूरणयोः । परूषः वृक्षविशेषः । कृत् विक्षेपे । करूषाः जनपदः । जॄष् च् जरसि । जरूषः आदित्यः । लबुङ् अवस्रंसने च । लम्बूषः नीरकदम्बः निचुलश्च । मञ्जिः पीयिश्च सौत्रौ । मञ्जूषा काष्ठकोष्ठः । पीयूषं प्रत्यग्रप्रसवक्षीरविकारः अमृतं घृतं च । हनंक् हिंसागत्योः । हनूषः राक्षसः । अगु गतौ । अङ्गूषः शकुनिजातिः हस्ती वाणः वेगश्च । मगु गतौ । मङ्गूषः जलचरशकुनिः । गडु वदनैकदेशे । गण्डूषः द्रवकवलः । ऋक् गतौ । अरूषः रविः ॥ ५६० ॥ कोरदूषाटरूषकारूषशैलूषपिञ्जूषादयः ॥ ५६१ ॥ एते ऊषप्रत्ययान्ता निपात्यन्ते । कुरेरदोऽन्तश्च । कोरदूषः कोद्रवः । अटेराङ्पूर्वस्य चारोऽन्तश्च । आटरूषः वासः । अटनं रूपतीति तु अटरूषः पृषोदरादित्वात् । कृगो वृद्धिश्च । कारूषाः जनपदः । शलेरै चातः । शैलूषः नटः । पिजुण् हिंसादौ । पिञ्जूषः कर्णशष्कुल्याभोगः । आदिशब्दात् प्रत्यूषाभ्यूषादयो भवन्ति ॥ ५६१ ॥ कलेर्मषः ॥ ५६२ ॥ कलि शब्दसंख्यानयोरित्यस्मान्मषः प्रत्ययो भवति । कल्मषं पापम् ॥ ५६२ ॥

कुलेश्च माषक् ॥ ५६३ ॥ कुल बन्धुसंस्त्यानयोरित्यस्मात्कलेश्च किन्माषः प्रत्ययो भवति । कुल्माषः अर्धस्विन्नमाषादि । कल्माषः शबलः ॥ ५६३ ॥ मावावद्यमिकमिहनिमानिकष्यशिपचिमुचियजिवृतृभ्यः सः ॥ ५६४ ॥ एभ्यः सः प्रत्ययो भवति । मांङ् माने । मासः त्रिंशद्रात्रः । वांङ् गतिगन्धनयोः । वासः आटरूपकः । वद व्यक्तायां वाचि । वत्सः तर्णकः ऋषिः प्रियस्य च पुत्रस्याख्यानम् । अम गतौ । अंसः भुजशिखरम् । कमूङ् कान्तौ । कंसः लोहजातिः विष्णोरराति: हिरण्यमानं च । हनंक् हिंसागत्योः । हंसः श्वेतच्छदः । मानि पूजायाम् । मांसं तृतीयो धातु । कष हिंसायाम् । कक्षः तृणम् गहनारण्यं शरीरावयवश्च । अशौटि व्याप्तौ । अक्षाः पासकाः । अक्षाणि इन्द्रियाणि रथचक्राणि च । डु पचींष् पाके । पक्षः अर्धमासः वर्गः शकुन्यवयवः सहायः साध्यं च । मुच्लृंती मोक्षणे । मोक्षः मुक्तिः । यजी देवपूजादौ । यक्षः गुह्यकः । वृग्श् वरणे । वर्सः देशः समुद्रश्च । तॄ प्लवनतरणयोः । तर्सः वीतंसः सूर्यश्च । वर्सतर्सयोर्बाहुलकान्न षत्वम् ॥५६४॥ व्यवाभ्यां तनेरीच्च वेः ॥ ५६५ ॥ वि अव इत्येताभ्या परात्तनोतेः सः प्रत्ययो वेरीकारश्चान्तादेशो भवति । वीतंसः शकुन्यवरोधः । अवतंसः कर्णपूरः ॥५६५॥ प्लुषेः प्लुष् च ॥५६६॥ प्लुषू दाह इत्यस्मात्सः प्रत्ययोऽस्य च प्लुष् इत्यादेशो भवति । प्लुक्षं नक्षत्रं वृक्षश्च ॥ ५६६ ॥ ऋजिरिषिकुषिकृतिव्रश्च्युन्दिशृभ्यः कित् ॥ ५६७ ॥ एभ्य कित् सः प्रत्ययो भवति । ऋजि गत्यादौ । ऋक्षं नक्षत्रम् । ऋक्षः अच्छभल्लः । रिष हिंसायाम् । रिक्षा यूकाण्डम् । लत्वे, लिक्षा सैव । कुष्श् निष्कर्षे । कुक्ष. गर्भः। कुक्षं गर्तः । कृतैत् छेदने । कृत्सः गोत्रकृत् ओदनं वक्त्रं दुःखजातं च । ओ व्रश्चौत् छेदने । वृक्षः पादप. । उन्दैप् क्लेदने । उत्सः समुद्रः आकाशं जलं जलाशयश्च । उत्सं स्रोतः । शॄश् हिंसायाम् । शीर्ष शिरः ॥ ५६७ ॥ गुधिगृधेस्त च ॥ ५६८ ॥ आभ्यां कित् सः प्रत्ययस्तकारश्चान्तादेशो भवति । गुधच् परिवेष्टने । गुत्सः रोषः तृणजातिश्च । गृधूच् अभिकाङ्क्षायाम् । गृत्सः विप्रः श्वा गृध्रः अभिलाषश्च । तकारविधानमादिचतुर्थबाधनार्थम् ॥ ५६८ ॥ तप्यणिपन्यल्यविरधिनभिनम्यमिचमितमिचट्यतिपतेरसः ॥ ५६९ ॥ एभ्योऽसः प्रत्ययो भवति । तपं संतापे । तपसः आदित्यः पशुः घर्मः धर्मश्च । अण शब्दे । अणसः शकुनिः । पनि स्तुतौ । पनसः फलवृक्ष । अली भूषणादौ । अलसः निरुत्साहः । अव रक्षणादौ । अवसः भानुः राजा च । अवसं चापं पाथेयं च । रधौच् हिंसासंराद्ध्योः । 'रध इटि तु परोक्षायामेव'इति नागमे रन्धराः अन्धकजातिः । णभच् हिंसायाम् । नभसः ऋतुः आकाशः समुद्रश्च । णमं प्रह्वत्वे । नमसः वेत्रः प्रणामश्च । अम गतौ । अमसः कालः आहारः संसारः रोगश्च । चमू अदने । चमसः सोमपात्रम् मन्त्रपूतं पिष्टं च । चमसी मुद्गादिभित्तकृता । तमूच् काङ्क्षायाम् । तमसः अन्धकार । तमसा नाम नदी । चटण् भेदे । चटसः चर्मपुटः । अत सातत्यगमने । अतसः वायुः आत्मा वनस्पतिश्च । अतसी ओषधिः । पतॢ गतौ । पतसः पतङ्गः ॥ ५६९ ॥ सृवयिभ्यां णित् ॥ ५७० ॥ आभ्यां णिदसः प्रत्ययो भवति । सृं गतौ । सारसः पक्षिविशेषः । वयि गतौ । वायसः काकः ॥ ५७० ॥ वहियुभ्यां वा ॥ ५७१ ॥ आभ्यामसः प्रत्ययः स च णिद्वा भवति । वहीं प्रापणे । वाहसः अनड्वान् शकटम् अजगरः वहनजीवश्च । वहसः अनड्वान् शकटश्च ।

युक् मिश्रणे । यावसं भक्तम् तृणम् मित्रं च । यवसम् अश्वादिग्रासः अन्नं च ॥ ५७१ ॥ दिवादिरभिलभ्युरिभ्यः कित् ॥ ५७२ ॥ दिवादिभ्यो रभिलभ्युरिभ्यश्च किदसः प्रत्ययो भवति । दीव्यतेः, दिवसः वासरः । व्रीड्यते., लत्वे, व्रीलसः लज्जावान् । नृत्यतेः, नृतसः नर्तकः । क्षिप्यतेः, क्षिपसः योद्धा । सीव्यतेः, सिवसः श्लोकः वस्त्रं च । श्रीव्यतेः, श्रिवसः गतिमान् । इष्यतेः, इषसः इष्वाचार्यः । रभिं राभस्ये । रभसः संरम्भः उद्धर्षः अगम्भीरश्च । डु लभिष् प्राप्तौ । लभसः याचकः प्राप्तिश्च । उरिः सौत्रः । उरसः ऋषिः ॥ ५७२ ॥ फनसतामरसादयः ॥ ५७३ ॥ फनसादयः शब्दा असप्रत्ययान्ता निपात्यन्ते । फण गतौ नश्च । फनसः पनसः । तमेररोऽन्तो वृद्धिश्च । तागरसं पद्मम् । आदिग्रहणात् कीकसवुक्कसादयो भवन्ति ॥ ५७३ ॥ युबलिभ्यामासः ॥ ५७४ ॥ आभ्यामासः प्रत्ययो भवति । युक् मिश्रणे । यवासः दुरालभा । बल प्राणनधान्यावरोधयोः । बलासः श्लेष्मा ॥ ५७४ ॥ किलेः कित् ॥५७५ ॥ किलत् श्वैत्यक्रीडनयोरित्यस्मात् किदासः प्रत्ययो भवति । किलासं सिध्मम् । किलासी पाककर्परम् ॥ ५७५ ॥ तलिकासिभ्यामीसण् ॥ ५७६ ॥ आभ्यामीसण् प्रत्ययो भवति । तलण् प्रतिष्ठायाम् । तालीसं गन्धद्रव्यम् । कस गतौ । कासीसं धातुजमौषधम् ॥ ५७६ ॥ सेर्डित् ॥ ५७७ ॥ पिंगृद् बन्धने इत्यस्मात् डिदीसण् प्रत्ययो भवति । सीसं लोहजातिः ॥ ५७७ ॥ त्रपेरुसः ॥ ५७८ ॥ त्रपौषि लज्जायामित्यस्मादुसः प्रत्ययो भवति । त्रपुसं कर्कटिका । विधानसामर्थ्यात् षत्वाभावः ॥ ५७८ ॥ पटिविभ्यां टिसडिसौ ॥ ५७९ ॥ आभ्यां यथासंख्यं टिसो डित् इसश्च प्रत्ययो भवति । पट गतौ । पट्टिसः आयुधविशेषः । वीक् प्रजनादौ । बिसं मृणालम् ॥ ५७९ ॥ तसः ॥ ५८० ॥ पटिवीभ्यां तसः प्रत्ययो भवति । पट्टसः त्रिशूलम् । वेतसः वानीरः ॥ ५८० ॥ इणः ॥ ५८१ ॥ एतेस्तसः प्रत्ययो भवति । एतसः अध्वर्युः ॥ ५८१ ॥ पीङो नसक् ॥ ५८२ ॥ पींङ् च् पाने इत्यस्मात् किन्नसः प्रत्ययो भवति । पीनसः श्लेष्मा ॥ ५८२ ॥ कृकुरिभ्यां पासः ॥ ५८३ ॥ आभ्यां पासः प्रत्ययो भवति । डु कृंग् करणे । कर्पासः पिचुप्रकृतिः वीरुच्च । कुरत् शब्दे । कूर्पासः कञ्चुकः ॥ ५८३ ॥ कलिकुलिभ्यां मासक् ॥ ५८४ ॥ आभ्यां कित् मासः प्रत्ययो भवति । कलि शब्दसंख्यानयोः । कल्मासं शबलम् । कुल बन्धुसंस्त्यानयोः । कुल्मासः अर्धस्विन्नं माषादि ॥ ५८४ ॥ अलेरम्बुसः ॥ ५८५ ॥ अली भूषणादावित्यस्मादम्बुसः प्रत्ययो भवति । अलम्बुसः यातुधानः । अलम्बुसा नाम ओषधिः ॥ ५८५ ॥ लूगो हः ॥ ५८६ ॥ लुनातेर्हः प्रत्ययो भवति । लोहं सुवर्णादि ॥ ५८६ ॥ कितो गे च ॥ ५८७ ॥ कित् निवासे इत्यस्मात् ह प्रत्ययोऽस्य च गे इत्यादेशो भवति । गेहं गृहम् ॥ ५८७ ॥ हिंसेः सिम् च ॥ ५८८ ॥ हिंसुप् हिंसायामित्यस्माद्धः प्रत्ययोऽस्य च सिमित्यादेशो भवति । सिंहः मृगराजः ॥ ५८८ ॥ कृपृकटिपटिमटिलटिदिलिलिपलिकल्यनिरगिलगेरहः ॥ ५८९ ॥ एभ्योऽहः प्रत्ययो भवति । कृत् विक्षेपे । करहः धान्यावपनम् । पृश् पालनपूरणयोः । परहः शंकरः । कटे वर्षावरणयोः । कटहः पर्जन्यः कर्णवच्च कालायसभाजनम् । पट गतौ । पटहः वाद्यविशेषः । मट सादे सौत्रः । मटहः ह्रस्वः । लट बाल्ये । लटति विलसति लटहः विलासवान् ।

ललिण् ईप्सायाम् । ललह लीलावान् । पल गतौ । पलहः आवापः । कलि शब्दसंख्यानयोः । कलहः युद्धम् । अनक् प्राणने । अनहः नीरोगः । रगे शङ्कायाम् ।
रगहः नटः । लगे सङ्गे । लगहः मन्दः ॥ ५८९ ॥ पुलेः कित् ॥ ५९० ॥ पुल महत्त्वे इत्यस्मात् किदहः प्रत्ययो भवति । पुलहः प्रजापतिः ॥ ५९० ॥
वृकटिशमिभ्य आहः ॥ ५९१ ॥ एभ्य आहः प्रत्ययो भवति । वृगट् वरणे । वराहः सूकरः । कटे वर्षावरणयोः । कटाहः कर्णवत् कालायसभाजनम् । शमूच्
उपशमे । शमाहः आश्रमः ॥ ५९१ ॥ विलेः कित् ॥ ५९२ ॥ विलत् वरणे इत्यस्मात् किदाहः प्रत्ययो भवति । विलाहः रहः ॥ ५९२ ॥ निर इण ऊहग्
॥ ५९३ ॥ निरपूर्वात् इंण्क् गतावित्यस्माच्छिदूहः प्रत्ययो भवति । निर्यूहः सौधादिकाष्ठनिर्गमः ॥ ५९३ ॥ दस्त्यूहः ॥ ५९४ ॥ ददातेस्त्यूहः प्रत्ययो भवति ।
दात्यूहः पक्षिविशेषः ॥ ५९४ ॥ अनेरोकहः ॥ ५९५ ॥ अनक् प्राणने इत्यस्मादोकहः प्रत्ययो भवति । अनोकहः वृक्षः ॥ ५९५ ॥ वलेरक्षः ॥ ५९६ ॥
वलि संवरणे इत्यस्मादक्षः प्रत्ययो भवति । वलक्षः शुक्लः ॥ ५९६ ॥ लाक्षाद्राक्षामिक्षादयः ॥ ५९७ ॥ लाक्षादयः शब्दा अक्षप्रत्ययान्ता निपात्यन्ते । लसेरा
च । लाक्षा जतु । रसेर्द्रा च । द्राक्षा मृद्वीका । आङ्पूर्वान्मृदेरन्त्यस्वरादेर्लुक् प्रत्ययादेरित्वं च । आमिक्षा हविर्विशेषः ॥ आदिग्रहणात् चुप मन्दायां गतावित्यस्य चोक्षः
ग्रामरागः शुद्धं च । एवं पीयूक्षादयोऽपि ॥ ५९७ ॥ सम्निण्निकषिभ्यामाः ॥ ५९८ ॥ सम्पूर्वादिंण्क् गतावित्यस्मात् निपूर्वात् कष हिंसायामित्यस्माच्च आः
प्रत्ययो भवति । समया पर्वतम् । निकषा पर्वतम् । समीपासूयावाचिनावेतौ ॥ ५९८ ॥ दिविपुरिवृषिमृषिभ्यः कित् ॥ ५९९ ॥ एभ्यः किदाः प्रत्ययो
भवति । दिवूच् क्रीडाजयेच्छापणिद्युतिस्तुतिगतिषु । दिवा अहः । पुरत् अग्रगमने । पुरा भूतकालवाची । वृषू सेचने । वृषा पत्नलामित्यर्थः । मृषीच् तितिक्षायाम् ।
मृषा अभूतमित्यर्थः ॥ ५९९ ॥ वेः साक्षाभ्याम् ॥ ६०० ॥ विपूर्वाभ्यां षोच् अन्तकर्मणि, ओहाक् त्यागे इत्येताभ्याम् आः प्रत्ययो भवति । विसाः चन्द्रमाः
बुद्धिश्च । तालव्यान्तोऽयमित्येके । विहाः विहगः स्वर्गश्च ॥ ६०० ॥ वृमिथिदिशिभ्यस्थयष्ट्याश्चान्ताः ॥ ६०१ ॥ एभ्यः किदाः प्रत्ययो भवति यथासंख्यं
थकारयकारष्टकाराश्चान्ता भवन्ति । वृगट् वरणे । वृथा अनर्थकम् । मिथृग् मेधाहिंसयोः । मिथ्या मृषा निष्फलं च । दिशीत् अतिसर्जने । दिष्ट्या प्रीतिवचनम् ॥
६०१ ॥ मुचिस्वदेर्धं च ॥ ६०२ ॥ आभ्या किदाः प्रत्ययो धकारश्चान्तस्य भवति । मुच्लृंती मोक्षणे । मुधा अनिमित्तम् । ष्वदि आस्वादने । स्वधा पितृबलिः ॥ ६०२ ॥
सोर्ब्रूग आह च ॥ ६०३ ॥ सुपूर्वात् ब्रूतेराः प्रत्ययोऽस्य चाहादेशो भवति । स्वाहा देवतातर्पणम् ॥ ६०३ ॥ सनिक्षमिदुषेः ॥ ६०४ ॥ एभ्यो धातुभ्य आः
प्रत्ययो भवति । षणूयी दाने । सना नित्यम् । क्षमौषि सहने । क्षमा भूः क्षान्तिश्च । दुषंच् वैकृत्ये । दोषा रात्रिः ॥ ६०४ ॥ डित् ॥ ६०५ ॥ धातोर्बहुलमाः प्र-
त्ययः स च डिद्भवति । मनिच् ज्ञाने । मा निषेधे । षोच् अन्तकर्मणि । सा अवसानम् । अनन् प्राणने । आ स्मरणादौ । प्रीङ्च् प्रीतौ । प्रा समयने । हनंक्
हिंसागत्योः । हा विषादे । वन भक्तौ । वा विकल्पे । राक् दाने । रा दीप्तिः । भांक् दीप्तौ । भा कान्तिः । सहपूर्वः सभा परिषत् । नाम्नीति सहस्य सः ॥ ६०५ ।

स्वरेभ्य इः ॥ ६०६ ॥ स्वरान्तेभ्यो धातुभ्य इः प्रत्ययो भवति । जि अभिभवे । जयिः राजा । हिंट् गतिवृद्ध्योः । हयिः कामः । रुक् शब्दे । रविः सूर्यः । कुंङ् शब्दे । कविः काव्यकर्ता । ष्टुंग्‌क् स्तुतौ । स्तविः उद्गाता । लूग्‌श् छेदने । लविः दात्रम् । पूग्‌श् पवने । पविः वायुः वज्रं पवित्रं च । भू सत्तायाम् । भविः सत्ता । चन्द्रः विधिश्च । ऋंक् गतौ । अरिः शत्रुः । हृंग् हरणे । हरिः इन्द्रः विष्णुः चन्दनम् मर्कटादिश्च । हरयः शक्राश्वाः । डुडु भृंग्‌क् पोषणे च । भरिः वसुधा । सृं गतौ । सरिः मेघः । पृश् पालनपूरणयोः । परिः भूमिः । तॄ प्लवनतरणयोः । तरिः नौः । दृश् विदारणे । दरिः महाभिदा । मृश् हिंसायाम् ण्यन्तः । मारिः अशिवम् । वृग्‌श् वरणे । वरिः विष्णुः । ण्यन्ताद्वारिः हस्तिबन्धनम् । वारि जलम् ॥ ६०६ ॥ पदिपठिपचिस्थलिहलिकलिवलिवल्लिपल्लिकटिचटिवटिवधिगाध्यर्चि-वन्दिनन्द्यविवशिवाशिकाशिछर्दितन्त्रिमन्त्रिखण्डिमण्डिचण्डियत्यञ्जिमस्यासिवनिध्वनिसनिगामितमिग्रन्थिश्रन्थिजनिमण्यादिभ्यः ॥ ६०७ ॥ एभ्य इः प्रत्ययो भवति । पदिंच् गतौ । पदिः राशिः मोक्षमार्गश्च । पठ व्यक्तायां वाचि । पठिः विद्वान् । डु पचींष् पाके । पचिः अग्निः । ष्ठल स्थाने । स्थलिः दानशाला । हल विलेखने । हलिः हलः । कलि शब्दसंख्यानयोः । कलिः कलहः युगं च । वल प्राणनधान्यावरोधयोः । वलिः देवतोपहारः दानवश्च । वल्लिवल्लि संवरणे । वलिः त्वक्तरङ्गः । वल्लिः हिरण्यशलाका लता च । पल्ल गतौ । पल्लिः मुनीनामाश्रमः व्याधसंस्त्यायश्च । कटे वर्षावरणयोः । कटिः स्वाङ्गम् । चटण् भेदे । चटिः वर्णः । वट वेष्टने । वटिः गुलिका तन्तुः सूना च नाभिः वर्णश्च । वधि बन्धने । वधिः क्रियाशब्दः । गाधृङ् प्रतिष्ठालिप्साग्रन्थेषु । गाधिः विश्वामित्रपिता । अर्च पूजायाम् । अर्चिः अग्निशिखा । वदुङ् स्तुत्यभिवादनयोः । वन्दिः ग्रहणिः । टु नदु समृद्धौ । नन्दिः ईश्वरप्रतीहारः भेरिश्च । अव रक्षणादौ । अविः ऊर्णायुः । वशक् कान्तौ । वशिः वशिता । वाशिच् शब्दे । वाशिः प्रकान्तिः रश्मिः गोमायुः अग्निः शब्दः प्रजनप्राप्ता चतुष्पात् जलदश्च । काशृङ् दीप्तौ । काशयः जनपदः । छर्दण् वमने । छर्दिः वमनम् । तन्त्रिण् कुटुम्बधारणे । तन्त्रिः वीणासूत्रम् । मन्त्रिण् गुप्तभाषणे । मन्त्रिः सचिवः । खडुण् भेदे । खण्डिः प्रद्वारम् । मडु भूषायाम् । मण्डिः मृद्भाजनपिधा-नम् । चडुङ् कोपे । चण्डिः भामिनी । यतैङ् प्रयत्ने । यतिः भिक्षुः । अञ्जौप् व्यक्तिम्रक्षणगतिषु । अञ्जिः सज्जः पेषणी पेजः गतिश्च । समञ्जिः शिश्नः । मसैच् परिणामे । मसिः शस्त्रा । असूच् क्षेपणे । असिः खड्गः । वनूयी याचने । वनिः साधुः याच्ञा शकुनिः अग्निश्च । ध्वन शब्दे । ध्वनिः नादः । षण भक्तौ । सनिः संभक्ता पन्था दानं म्लेच्छः नदीतटं च । गम्लृं गतौ । गमिः आचार्यः । तमूच् काङ्क्षायाम् । तमिः अलसः । ग्रन्थश् संदर्भे, श्रन्थश् मोचनप्रतिहर्षयोः । ग्रन्थिः श्रन्थिश्च पर्व संध्यादि । जनैचि प्रादुर्भावे । जनिः वधूः कुलाङ्गना भगिनी प्रादुर्भावश्च । मण शब्दे । मणिः रत्नम् । आदिग्रहणात् वही प्रापणे । वहिः अश्वः । खादृ भक्षणे । खादिः श्वा । दधि धारणे । दधिः क्षीरविकारः । खल संचये च । खलिः पिण्याकः । शचि व्यक्तायां वाचि । शची इन्द्राणी । 'इतोऽक्त्यर्थात्' इति गौरादित्वाद्वा ङीः इत्यादयोऽपि भवन्ति ॥ ६०७ ॥ किलिपिलिपिशिचिटित्रुटिशुण्ठितुण्डिकुण्डिभण्डिहुण्डिहिण्डिपिण्डिचुल्लिबुधिमिथिरुहिदिविकील्यादिभ्यः ॥ ६०८ ॥ एभ्य इः प्रत्ययो

भवति । किलत् श्वैत्यक्रीडनयो । केलिः क्रीडा । पिलण् क्षेपे । पेलिः क्षुद्रपेला । पिशत् अवयवे । पेशिः मंसखण्डम् । चिट प्रेष्ये । चेटिः दारिका प्रेष्या च । त्रुटत् छेदने ण्यन्तः । त्रोटिः चञ्चुः । शुठु शोषणे । शुण्ठिः विश्वभेषजम् । तुडुड् तोडने । तुण्डिः आस्यम् प्रवृद्धा च नाभिः । कुडुङ् दाहे । कुण्डिः जलभाजनम् । भडुङ् परिभाषणे । भण्डिः शकटम् । हुडुङ् संघाते । हुण्डिः पिण्डित ओदनः । हिडुङ् गतौ च । हिण्डिः रात्रौ रक्षाचारः । पिडुङ् संघाते । पिण्डिः निष्पीडितस्नेहः पिण्डः । चुल्ल हावकरणे । चुल्लिः रन्धनस्थानम् । बुधिंच् ज्ञाने । बोधिः सम्यग् ज्ञानम् । मिथृग् मेधाहिंसयोः । मेथिः खलमध्यस्थूणा । रुहं बीजजन्मनि । रोहिः सस्यं जन्म च । दिवूच् क्रीडादौ । देविः भूमिः । कृतण् संशब्दने णिजन्तः । कीर्तिः यशः । आदिग्रहणादन्येऽपि ॥ ६०८ ॥ नाम्युपान्त्यकॄगॄशॄपॄपूङ्भ्यः कित् ॥ ६०९ ॥ नाम्युपान्त्येभ्यः क्रादिभ्यश्च किदिः प्रत्ययो भवति । लिखत् अक्षरविन्यासे । लिखिः शिल्पम् । शुच् शोके । शुचिः पूतः विद्वान् धर्मः आषाढश्च । रुचि अभिप्रीत्यां च । रुचिः दीप्तिः अभिलाषश्च । भुजंप् पालनाभ्यवहारयोः । भुजिः अग्निः राजा कुटिलं च । कुणत् शब्दोपकरणयोः । कुणिः विकलो हस्तः हस्तविकलश्च । सृजंत् विसर्गे । सृजिः पन्थाः । द्युति दीप्तौ । द्युतिः दीप्तिः । ऋत् घृणागतिस्पर्धेषु । ऋतिः यति । छिदृंपी द्वैधीकरणे । छिदिः छेत्ता पर्शुश्च । मुदि हर्षे । मुदिः बाल । भिदृंपी विदारणे । भिदिः वज्रं सूचकः भेत्ता च । ऊछृदृंपी दीप्तिदेवनयोः । छृदिः रथकारः । लिपींत् उपदेहे । लिपिः अक्षरजातिः । तुर त्वरणे सौत्रः । तुरिः तन्तुवायोपकरणम् । डुलण् उत्क्षेपे । डुलिः कच्छपः । त्विषी दीप्तौ । त्विषिः दीप्तिः त्विषिमान् राजवर्चस्वी च । कृषींत् विलेखने । कृषिः कर्षणम् कर्षणभूमिश्च । ऋषैत् गतौ । ऋषिः मुनिः वेदश्च । कुषश् निष्कर्षे । कुषिः शुषिरम् । शुषंच् शोषणे । शुषिः छिद्रम् शोषणम् च । हृषू अलीके । हृषिः अलीकवादी दीप्तिः तुष्टिश्च । ष्णुहौच् उद्गिरणे । स्नुहिः वृक्षः । कॄत् विक्षेपे । किरिः सूकरः मूषिकः गन्धर्वः गर्तश्च । गॄत् निगरणे । गिरिः नगः कन्दुकश्च । शॄश् हिंसायाम् । शिरिः हिंस्रः खड्ग. शोकः पाषाणश्च । पॄश् पालनपूरणयोः । पुरिः नगरी राजा पूरयिता च । पूङ् पवने । पुविः वातः ॥ ६०९ ॥ विदिवृतेर्वा ॥ ६१० ॥ आभ्यामिः प्रत्ययो भवति स च किद्वा । विदक् ज्ञाने । विदिः शिल्पी । वेदिः इज्यादिस्थानम् । वृतूङ् वर्तने । वृतिः कण्टकशाखावरणम् । निर्वृतिः सुखम् । वर्तिः द्रव्यं दीपाङ्गं च ॥ ६१० ॥ तॄभ्रम्यघ्यापिदम्भिभ्यस्तित्तिरभूमाधापदेभाश्च ॥ ६११ ॥ एभ्यः किदिः प्रत्यय एषां च यथासंख्यं तित्तिरभूम अधापदेभ इत्यादेशा भवन्ति । तॄ प्लवनतरणयोः । तित्तिरिः पक्षिजातिः प्रवक्ता च वेदशाखायाः । भ्रमू चलने । भूमिः वायुः हस्ती जलं च । बाहुलकात् भूमादेशाभावे भ्रमिः भ्रमः । अदंक् भक्षणे । अधि उपरिभावे । अध्यागच्छति । आप्लृंट् व्याप्तौ । अपि समुच्चयादौ । प्लक्षोऽपि । न्यग्रोधोऽपि । दम्भूट् दम्भे । देभिः शरासनम् ॥ ६११ ॥ मनेरुदेतौ चास्य वा ॥ ६१२ ॥ मनिच् ज्ञाने इत्यस्मादिः प्रत्ययोऽकारस्य च उकारैकारौ वा भवतः । मुनिः ज्ञानवान् । मेनिः संकल्पः । मनिः धूमवर्तिः ॥ ६१२ ॥ क्रमितमिस्तम्भेरिच्च नमेस्तु वा ॥ ६१३ ॥ एभ्यः किदिः प्रत्ययोऽकारस्य चेकारो भवति, नमेः पुनरकारस्येकारो

विकल्पेन । क्रमू पादविक्षेपे । क्रिमिः क्षुद्रजन्तुः । तमूच् काङ्क्षायाम् । तिमिः महामत्स्यः । स्तम्भिः सौत्रः । स्तिभिः केतक्यादिसूची हृदयं समुद्रश्च । णमं प्रह्वत्वे । निमिः राजा । नमिः विद्याधराणामाद्यः तीर्थकरश्च ॥ ६१३ ॥ अम्भिकुण्ठिकम्प्यंहिभ्यो नलुक् च ॥ ६१४ ॥ एभ्य इः प्रत्ययो नकारस्य च लुग् भवति । अभुङ् शब्दे । अभि आभिमुख्येऽव्ययम् । अभ्यग्नि शलभाः पतन्ति । कुठु आलस्ये च । कुठिः वृक्षः पापं वृपलः देहः गेहम् कुठारश्च । कपुङ् चलने । कपिः अग्निः वानरश्च । अहुङ् गतौ । अहिः सर्पः वृत्रः वप्रश्च ॥ ६१४ ॥ उभेर्द्वत्रौ च ॥ ६१५ ॥ उभत् पूरणे इत्यस्मादिः प्रत्ययोऽस्य च द्वत्र इन्यादेशौ भवतः । द्वौ । द्वितीयः । द्विमुनि व्याकरणस्य । त्रयः । तृतीयः । त्रिमुनि व्याकरणस्य ॥ ६१५ ॥ नीवीप्रहृभ्यो डित् ॥ ६१६ ॥ एभ्यो डिदिः प्रत्ययो भवति । णीग् प्रापणे । निवसति । वींक् प्रजनादौ । विः तन्तुवायः पक्षी उपसर्गश्च । यथा विभवति । हृंग् हरणे प्रपूर्वः । प्रहिः कूपः उदपानं च ॥ ६१६ ॥ वौ रिचेः स्वरान्नोऽन्तश्च ॥ ११७ ॥ वावुपसर्गे सति रिचूंपी विरेचने इत्यस्मादिः प्रत्ययः स्वरात्परो नोऽन्तश्च भवति । विरिञ्चिः ब्रह्मा ॥ ६१७ ॥ कमिवमिजमिघसिशलिफलितलितडिवजिव्रजिध्वजिराजिपणिवणिवदिसदिहृदिहनिसहिवहितपिवपिभटिकञ्चिसंपातिभ्यो णित् ॥ ६१८ ॥ एभ्यो णिदिः प्रत्ययो भवति । कमूङ् कान्तौ । कामिः वसुकः कामी च । टु वमू उद्गिरणे । वामिः स्त्री । जमू अदने । जामिः भगिनी तृणं जनपदश्चैकः । घस्लृं अदने । घासिः संग्रामः गर्तः अग्निः बहुभुक् च । शल गतौ । शालिः व्रीहिराजः । फल निष्पत्तौ । फालिः दलम् । तलण् प्रतिष्ठायाम् । तालिः वृक्षजातिः । तडण् आघाते । ताडिः स एव । वजव्रजध्वज गतौ । वाजिः अश्वः पुंखावसानं च । व्राजिः पद्धतिः पिटकजालिश्च । ध्वाजिः पताका अश्वश्च । राजृग् दीप्तौ । राजिः पङ्क्तिः लेखा च । पणि व्यवहारस्तुत्योः । पाणिः करः । वण शब्दे । वाणिः वाक् । ज्याम् वाणी । वद व्यक्तायां वाचि । वादिः वाग्मी वीणा च । षद्लृं विशरणगत्यवसादनेषु । सादिः अश्वारोहः सारथिश्च । हृद पुरीषोत्सर्गे । हादिः लूता । हनंक् हिंसागत्योः । घातिः प्रहरणम् । केचित्तु हानिः अर्थनाशः उच्छित्तिश्चेति उदाहरन्ति तत्र बाहुलकात् ञ्णिति घात् इति घात् न भवति । बाहुलकादेव णित्त्वविकल्पे, हनिः आयुधम् । षहि मर्षणे । साहिः शैलः । वही प्रापणे । वाहिः अनड्वान् । तपं संतापे । तापिः दानवः । डु वपी बीजसंताने । वापिः पुष्करिणी । भट भृतौ । भाटिः सुरतमूल्यम् । कचुङ् दीप्तौ । काञ्चिः मेखला पुरी च । णित्करणादनुपान्त्यस्यापि वृद्धिः । पत्लृ गतौ संपूर्वः । संपातिः पक्षिराजः ॥ ६१७ ॥ कृशृकुटिग्रहिखन्यणिकष्यलिपलिचरिवासिगण्डिभ्यो वा ॥ ६१९ ॥ एभ्य इः प्रत्ययः स च णिद्वा भवति । डु कृंग् करणे । कारिः शिल्पी । करिः हस्ती विष्णुश्च । शॄश् हिंसायाम् । शारिः द्यूतोपकरणम् हस्तिपर्याणम् शारिका च । शरिः हिंसा शूलश्च । कुटत् कौटिल्ये । कोटिः अस्त्रिः अग्रभागः अष्टमं वाऽङ्कस्थानं च । कुटिः गृहं शरीराङ्गं च । ग्रहीश् उपादाने । ग्राहिः पतिः । ग्रहिः वेणुः । खनूग् अवदारणे । खानिः खनिश्च निधिः आकरः तडागं च । अण शब्दे । आणिः अणिश्च द्वारकीलिका । कष हिंसायाम् । काषिः कर्षकः । कषिः निकषोपलः काष्ठम् अश्वकर्णः खनित्रं च ।

अली भूषणादौ । आलिः पङ्क्तिः सखी च । अलिः भ्रमरः । पल गतौ । पालिः जलसेतुः कर्णपर्यन्तश्च । पलिः संस्त्यायः । चर भक्षणे च । चारिः पशूनां भक्ष्यम् । चरिः प्राकारशिखरम् विषयः वायुः पशुः केशोर्णा च । वसं निवासे । वासिः तक्षोपकरणम् । वसिः शय्या अग्निः गृहं रात्रिश्च । गडु वदनैकदेशे । गण्डिः गण्डिका । णित्त्वपक्षे तु अनुपान्त्यस्यापि वृद्धौ, गाण्डिः धनुष्पर्व ॥ ६१९ ॥ पादाचात्यजिभ्याम् ॥ ६२० ॥ पादशब्दपूर्वाभ्यां केवलाभ्यां चाऽत्यजिभ्यां णिदिः प्रत्ययो भवति । अत सातत्यगमने, अज क्षेपणे च । पादाभ्यामतत्यजति वा पदातिः पदाजिः । 'पदः पादस्याज्यातिगोपहते' इति पदभावः । उभावपि पत्तिवाचिनौ । आतिः पक्षी । सुपूर्वात् स्वातिः वायव्यनक्षत्रम् । आजिः संग्रामः स्पर्धाऽधिश्च ॥ ६२० ॥ नहेर्भ् च ॥ ६२१ ॥ णहीच् बन्धने इत्यस्माण्णिदिः प्रत्ययो भकारश्चान्तादेशो भवति । नाभिः अन्त्यकुलकरः चक्रमध्यं शरीरावयवश्च ॥ ६२१ ॥ अशो रश्चादिः ॥ ६२२ ॥ अशौटि व्याप्तावित्यस्माण्णिदिः प्रत्ययो रेफश्च धातोरादिर्भवति । राशिः समूहः नक्षत्रपादनवकरूपश्च मेषादिः ॥ ६२२ ॥ कायः किरिच्च वा ॥ ६२३ ॥ कै शब्दे इत्यस्मात्किः प्रत्यय इकारश्चान्तादेशो वा भवति । किकिः पक्षी विद्वांश्च । काकिः स्वरदोषः ॥ ६२३ ॥ वर्द्धेरकिः ॥ ६२४ ॥ वर्धण् छेदनपूरणयोरित्यस्मादकिः प्रत्ययो भवति । वर्धकिः तक्षा ॥ ६२४ ॥ सनेर्डखिः ॥ ६२५ ॥ षणूयी दान इत्यस्मात् डिदखिः प्रत्ययो भवति । सखा मित्रम् । सखायौ । सखायः ॥ ६२५ ॥ कोर्डिखिः ॥ ६२६ ॥ कुंङ् शब्दे इत्यस्मात् डिदिखिः प्रत्ययो भवति । किखिः लोमसिका ॥ ६२६ ॥ मृश्विकण्यणिदध्याविभ्य ईचिः ॥ ६२७ ॥ एभ्य ईचिः प्रत्ययो भवति । मृंत् प्राणत्यागे । मरीचिः मुनिः मयूखश्च । ट्वो श्वि गतिवृद्ध्योः । श्वयीचिः चन्द्रः श्वयथुश्च । कण अण शब्दे । कणीचिः प्राणी लता चक्षुः शकटं शङ्खश्च । अणीचिः वेणुः शाकटिकश्च । दधि धारणे । दधीचिः राजर्षिः । अव रक्षणादौ । अवीचिः नरकविशेषः ॥ ६२७ ॥ वेगो डित् ॥ ६२८ ॥ वेंग् तन्तुसंताने इत्यस्मात् डिदीचिः प्रत्ययो भवति । वीचिः ऊर्मिः ॥ ६२८ ॥ वणेर्णित् ॥ ६२९ ॥ वण शब्दे इत्यस्मात् णिदीचिः प्रत्ययो भवति । वाणीचिः छाया व्याधिश्च ॥ ६२९ ॥ कृपिशकिभ्यामटिः ॥ ६३० ॥ आभ्यामटिः प्रत्ययो भवति । कृपौङ् सामर्थ्ये । कर्पटिः निस्वः । शकॢट् शक्तौ । शकटिः शकटः ॥ ६३० ॥ श्रेढिः ॥ ६३१ ॥ श्रिग् सेवायामित्यस्मात् ढिः प्रत्ययो भवति । श्रेढिः गणितव्यवहारः ॥ ६३१ ॥ चमेरुच्चातः ॥ ६३२ ॥ चमू अदने इत्यस्मात् ढिः प्रत्ययोऽस्योकारश्च । चुण्ढिः क्षुद्रवापी ॥ ६३२ ॥ मुषेरुण् चान्तः ॥ ६३३ ॥ मुषश् स्तेये इत्यस्मात् ढिः प्रत्यय उण् चान्तो भवति । मुषुण्ढिः प्रहरणम् । उणो न गुणो विधानसामर्थ्यात् ॥ ६३३ ॥ कावावीक्रीश्रिश्रुक्षुज्वरित्वरिचूरिपूरिभ्यो णिः ॥ ६३४ ॥ एभ्यो णिः प्रत्ययो भवति । कैं शब्दे । काणिः वैलक्ष्यानतुरार्पणम् । वेग् तन्तुसंताने । वाणिः व्यूतिः । वींक् प्रजनादौ । वेणिः कबरी । डु क्रींग्श् द्रव्यविनिमये । क्रेणिः क्रयविशेषः । श्रिग् सेवायाम् । श्रेणिः पङ्क्तिः वलविशेषश्च । श्रेणयः अष्टादश गणविशेषाः । निपूर्वात् निश्रेणिः संक्रमः । श्रुंट् श्रवणे । श्रोणिः जघनम् । टुक्षुक् शब्दे । क्षोणिः

पृथ्वी । ज्वर रोगे । जूर्णिः ज्वरः वायुः आदित्यः अग्निः शरीरम् ब्रह्मा पुराणश्च । तूरैचि त्वरायाम् । तूर्णिः त्वरा मनः शीघ्रश्च । चूरैचि दाहे । चूर्णिः वृत्तिः । पूरैचि आप्यायने । पूर्णिः पूरः ॥ ६३४ ॥ ऋदृघृस्तृकुवृषिभ्यः कित् ॥ ६३५ ॥ ऋकारान्तेभ्यो घृ इत्यादिभ्यश्च कित् णिः प्रत्ययो भवति । शॄश् हिंसायाम् । शीर्णिः रोगः अवयवश्च । स्तॄश् आच्छादने । स्तीर्णिः संस्तरः । घृं सेचने । घृणिः रश्मिः ज्वाला निदाघश्च । सृं गतौ । सृणिः आदित्यः वज्रम् अनिलः अङ्कुशः अग्निश्च ॥ कुंक् शब्दे । कुणिः विकलो हस्तः हस्तविकलश्च । वृषू सेचने । वृष्णिः वस्तः मेषः यदुत्रिशपश्च । पर्षतेरपीच्छन्त्येके । पृष्णिः रश्मिः ॥ ६३५ ॥ पृषिहृषिभ्यां वृद्धिश्च ॥ ६३६ ॥ आभ्यां णिः प्रत्ययोऽनयोश्च वृद्धिर्भवति । पृषू सेचने । पार्ष्णिः पादपश्चाद्भागः पृष्ठप्रदेशश्च । हृषंच् तुष्टौ । हार्ष्णिः हरणम् ॥ ६३६ ॥ हूर्णिधूर्णिभूर्णिघूर्ण्यादयः ॥ ६३७ ॥ एते णिप्रत्ययान्ता निपात्यन्ते । हृग् हरणे, धृंग् धारणे, भू सत्तायाम्, घृं सेचने, ऊत्वं रश्चान्तो निपात्यते । हूर्णिः कुल्या । धूर्णिः धृतिः । भूर्णिः चे(चे)तनं भूमिः कालश्च । घूर्णिः भ्रमः । आदिग्रहणादन्येऽपि ॥ ६३७ ॥ ऋहृसृधृभृकृतॄग्रहेरणिः । ६३८ ॥ एभ्योऽणिः प्रत्ययो भवति । ऋंक् गतौ । अरणिः अग्निमन्थनकाष्ठम् । हृंग् हरणे । हरणिः कुल्या मृत्युश्च । सृं गतौ । सरणिः ईषद्गतिः पन्थाः आदित्यः शिरा संघातश्च । मृंत् प्राणत्यागे । मरणिः रात्रिः । धृंग् धारणे । धरणिः क्षितिः । डुडु भृंग्क् पोषणे च । भरणिः नक्षत्रम् । डुकृंग् करणे । करणिः सादृश्यम् । तॄ प्लवनतरणयोः । तरणिः संक्रमः आदित्यः यवागूः पतितगोरूपोत्थापनी च यष्टिः । वै दुःखार्थः, दुःखेन तीर्यत इति वैतरणी नदी । ग्रहीश् उपादाने । ग्रहणिः जठराग्निः तदाधारो व्याधिः मेढ्रं मृत्युश्च ॥ ६३८ ॥ कङ्केरिच्चास्य वा ॥ ६३९ ॥ ककुङ् गताविसस्मादणिः प्रत्ययो धातोरस्य चेकारो वा भवति । कङ्कणिः कङ्कणम् । किङ्कणिः घण्टा ॥ ६३९ ॥ ककेर्णित् ॥ ६४० ॥ ककि लौल्य इत्यस्मात् णिदणिः प्रत्ययो भवति । काकणिः मानविशेषः ॥ ६४० ॥ कृषेश्च चादेः ॥ ६४१ ॥ कृषींत् विलेखने इत्यस्मादणिः प्रत्यय आदेश्च चकारो भवति । चर्षणिः चमूः अग्निः बुद्धिः व्यवसायः वेश्या वृषश्च ॥ ६४१ ॥ क्षिपेः कित् ॥ ६४२ ॥ क्षिपींत् प्रेरणे इत्यस्मात् किदणिः प्रत्ययो भवति । क्षिपणिः आयुधम् वडिशबन्धकः चर्मकृता पाषाणसर्जनी च ॥ ६४२ ॥ आङः कृहृशुषेः सनः ॥ ६४३ ॥ आङः परेभ्यो डु कृंग् करणे हृंग् हरणे शुषंच् शोषणे इत्येतेभ्यः सन्नन्तेभ्योऽणिः प्रत्ययो भवति । आचिकीर्षणिः व्यवसायः । आजिहीर्षणिः श्रीः । आशुशुक्षणिः अग्निः वायुश्च ॥ ६४३ ॥ वारिसत्यादेरिणिक् ॥ ६४४ ॥ एभ्यः किदिणिः प्रत्ययो भवति । वृग्ट् वरणे ण्यन्तः । वारिणिः पशुः पशुवृत्तिश्च । सृ गतौ । सृणिः अग्निः वज्रं च । आदिग्रहणादन्येऽपि ॥ ६४४ ॥ अदेस्त्रीणिः ॥ ६४५ ॥ अदंक् भक्षणे इत्यस्मात् त्रीणिः प्रत्ययो भवति । अत्त्रीणिः कृमिजातिः ॥ ६४५ ॥ पुज्ञायाजिषापिपादिवासिवितासिभ्यस्तिः ॥ ६४६ ॥ एभ्यस्तिः प्रत्ययो भवति । पुङ् गतौ । प्रोतिः चीरम् । ज्ञांश् अवबोधने । ज्ञायते त्रैलोक्यस्य त्रातेति ज्ञातिः इक्ष्वाकुवृषभः स्वजनश्च । यजीं देवपूजादौ । यष्टिः दण्डः लता च । षप समवाये । साप्तिः अश्वः । पदिच् गतौ । पत्तिः पदातिः । वसं निवासे । वस्तिः मूत्राधार

चर्मपुटः स्नेहोपकरणं च। तसूच् उपक्षये विपूर्वः। वितस्तिः अधहस्तः॥ ६४६॥ प्रथेर्लुक् च वा॥ ६४७॥ प्रथिप् प्रख्यान इत्यस्मात् तिः प्रत्ययोऽन्तस्य च लुग्वा भवति। वृक्षं प्रति विथोतते। प्रतिष्ठितः। पक्षे, प्रत्तिः प्रथनं भागश्च॥ ६४७॥ कोर्यपादिः॥ ६४८॥ कुंङ् शब्दे इत्यस्मात् यपादिस्तिः प्रत्ययो भवति। कोयष्टिः पक्षिविशेषः॥ ६४८॥ ग्रो गृष् च॥ ६४९॥ गॄत् निगरणे इत्यस्मात् तिः प्रत्ययोऽस्य च गृष् इत्यादेशो भवति। गृष्टिः सकृत् प्रसूता गौः॥ ६४९॥ सोरस्ते शित्॥ ६५०॥ सुपूर्वात् असक् भुवीत्यस्मात् शित् तिः प्रत्ययो भवति। स्वस्ति कल्याणम्। शिद्वाद्भावाल्लगभावः॥ ६५०॥ दृमुषिकृषिरिषिविषिशोशुच्यसिपूर्यीण्प्रभृतिभ्यः कित्॥ ६५१॥ एभ्यः कित् तिः प्रत्ययो भवति। दङृत् आदरे। दृतिः छागादित्वङ्मयो जलाधारः। मुषश् स्तेये। मुष्टिः अङ्गुलिसंनिवेशविशेषः॥ कृषीत् विलेखने। कृष्टिः पण्डितः। रिष् हिंसायाम्। रिष्टिः प्रहरणम्। विष्लृंकी व्याप्तौ। विष्टिः अवेतनकर्मकरः। शोंच् तक्षणे। शितिः कृष्णः कृशश्च। शुच् शोके। शुक्तिः मुक्तादिः। अशौटि व्याप्तौ। अष्टिः छन्दोविशेषः। पूयैङ् दुर्गन्धविशरणयोः। पूतिः दुर्गन्धः दुष्टम् तृणजातिश्च। इंण्क् गतौ। इति हेत्वादौ। डुभृंग्क् पोषणे च प्रपूर्वः। प्रभृतिः आदिः॥ ६५१॥ कुच्योर्नोऽन्तश्च॥ ६५२॥ आभ्यां कित् तिः प्रत्ययो नकारश्चान्तो भवति। कुङ् शब्दे। कुन्तिः राजा। कुन्तयः जनपदः। चिंग्ट् चयने। चिन्तिः राजा॥ ६५२॥ खल्यमिरमिवहिवस्यर्तेरतिः॥ ६५३॥ एभ्योऽतिः प्रत्ययो भवति। खल संचये च। खलतिः खल्वाटः। अम् गतौ। अमतिः चातकः छागः माद्गद् मार्गः व्याधिः गतिश्च। रमिं क्रीडायाम्। रमतिः क्रीडा कामः स्वर्गः स्वभावश्च। वहीं प्रापणे। वहतिः गौः वायुः अमात्यः अपत्यं कुटुम्बं च। वसं निवासे। वसतिः निवासः ग्रामसंनिवेशश्च। ऋक् गतौ। अरातिः वायुः सरणम् असुखं क्रोधः वर्म च॥ ६५३॥ हन्तेरंह् च॥ ६५४॥ हनंक् हिंसागत्योरित्यस्मादतिः प्रत्ययोऽस्य च अंह् इत्यादेशो भवति। अंहतिः व्याधिः पन्थाः कालः रथश्च॥ ६५४॥ वृगो व्रत् च॥ ६५५॥ वृग्ट् वरण इत्यस्मादतिः प्रत्ययोऽस्य च व्रत् इत्यादेशो भवति। व्रततिः वल्ली॥ ६५५॥ अञ्चेः क च वा॥ ६५६॥ अञ्चू गतौ चेत्यस्मादतिः प्रत्ययोऽस्य च क् इत्यन्तादेशो वा भवति। अङ्कतिः वायुः अग्निः प्रजापतिश्च। अञ्चतिः अग्निः॥ ६५६॥ वातेर्णिद्वा॥ ६५७॥ वांक् गतिगन्धनयोरित्यस्मादतिः प्रत्ययः स च णित् वा भवति। वायतिः वातः। वातिः गन्धामिश्रपवनः॥ ६५७॥ योः कित्॥ ६५८॥ युक् मिश्रणे इत्यस्मादतिः प्रत्ययः किद्भवति। युवतिः तरुणी॥ ६५८॥ पातेर्वा॥ ६५९॥ पांक् रक्षणे इत्यस्मादतिः प्रत्ययः स च किद्वा भवति। पतिः भर्ता। पातिः भर्ता रक्षिता प्रभुश्च॥ ६५९॥ अगिविलिपुलिक्षिपेरस्तिक्॥ ६६०॥ एभ्यः किदस्तिः प्रत्ययो भवति। अग कुटिलायां गतौ। अगस्तिः। विलत् वरणे। विलस्तिः। पुल महत्त्वे। पुलस्तिः। क्षिपीत् प्रेरणे। क्षिपस्तिः। एते लौकिका ऋषयः। अगस्तिः वृक्षजातिश्च॥ ६६०॥ गृधेर्गभ् च॥ ६६१॥ गृधूच् अभिकाङ्क्षायामित्यस्मादस्तिक् प्रत्ययो गभ् चास्यादेशो भवति। गभस्तिः रश्मिः॥ ६६१॥ वस्यर्तिभ्यामातिः॥ ६६२॥

आभ्यामातिः प्रत्ययो भवति । वसं निरासे । वसातयः जनपदः । ऋंक् गतौ । अरातिः रिपुः ॥ ६६२ ॥ अभेर्याभाभ्याम् ॥ ६६३ ॥ अभिपूर्वाभ्यामाभ्यामातिः प्रत्ययो भवति । यांक् मापणे । मांक् माने । अभियातिः अभिमातिश्च शत्रुः ॥ ६६३ ॥ यजो य च ॥ ६६४ ॥ यजीं देवपूजादावित्यस्मादातिः प्रत्ययोऽस्य च यकारोऽन्तादेशो भवति । ययातिः राजा ॥ ६६४ ॥ वद्यविच्छादिभूभ्योऽन्तिः ॥ ६६५ ॥ एभ्योऽन्तिः प्रत्ययो भवति । वद व्यक्तायां वाचि । वदन्तिः कथा । अव रक्षणादिषु । अवन्तिः राजा । अवन्तयः जनपदः । छदण् अपवारणे । युजादिर्विकल्पितणिजन्तत्वादण्यन्तः । छदन्तिः गृहच्छादनद्रव्यम् ॥ भू सत्तायाम् । भवन्तिः कालः लोकस्थितिश्च ॥ ६६५ ॥ शकेरुन्तिः ॥ ६६६ शक्लृंट् शक्तावित्यस्मादुन्तिः प्रत्ययो भवति । शकुन्तिः पक्षी ॥ ६६६ ॥ नञो दागो डितिः ॥ ६६७ ॥ नञ्पूर्वात् डुदाग्क् दाने इत्यस्मात् डिदितिः प्रत्ययो भवति । अदितिः देवमाता ॥ ६६७ ॥ देङः ॥ ६६८ ॥ देङ् रक्षणे इत्यस्मात् डिदितिः प्रत्ययो भवति । दितिः असुरमाता ॥ ६६८ ॥ वीसञ्ज्यसिभ्यस्थिक् ॥ ६६९ ॥ एभ्यस्थिक् प्रत्ययो भवति । वींक् प्रजनादिषु । वीथिः मार्गः । पञ्जं सङ्गे । सक्थि ऊरुः शकटाङ्गं च । असूच् क्षेपणे । अस्थि पञ्चमो धातुः ॥ ६६९ ॥ सारेरथिः ॥ ६७० ॥ सृं गतावित्यस्मात् ण्यन्तादथिः प्रत्ययो भवति । सारथिः यन्ता ॥ ६७० ॥ निषञ्जेर्घित् ॥ ६७१ ॥ निपूर्वात् षञ्जं सङ्गे इत्यस्मात् घिदथिः प्रत्ययो भवति । निषङ्गथिः रुद्रः धनुर्धरश्च । घित्करणं गत्वार्थम् ॥ ६७१ ॥ उदृत्तेर्णिद्वा ॥ ६७२ ॥ उत्पूर्वात् ऋंक् गतावित्यस्मात् अथिः प्रत्यय स च णिद्वा भवति । उदारथिः विष्णुः । उदरथिः विप्रः काष्ठं समुद्रः अनड्वांश्च ॥ ६७२ ॥ अतेरिथिः ॥ ६७३ ॥ अत् सातत्यगमने इत्यस्मादिथिः प्रत्ययो भवति । अतिथिः पात्रतमो भिक्षावृत्तिः ॥ ६७३ ॥ तनेर्डित् ॥ ६७४ ॥ तनूयी विस्तारे इत्यस्मात् डिदिथिः प्रत्ययो भवति । तिथिः प्रतिपदादिः ॥ ६७४ ॥ उषेरधिः ॥ ६७५ ॥ उषू दाहे इत्यस्मादधिः प्रत्ययो भवति ॥ ओषधिः उद्भिद्विशेषः ॥ ६७५ ॥ विदो रधिक् ॥ ६७६ ॥ विदक् ज्ञाने इत्यस्मात् किद्रधिः प्रत्ययो भवति । विद्रधिः व्याधिविशेषः ॥ ६७६ ॥ वीयुसुवह्यगिभ्यो निः ॥ ६७७ ॥ एभ्यो निः प्रत्ययो भवति । वींक् प्रजनादौ । वेनिः व्याधिः नदी च । युक् मिश्रणे । योनिः प्रजननमङ्गम् उत्पत्तिस्थानं च । षुंग्ट् अभिषवे । सोनिः सवनम् । वहीं प्रापणे । वह्निः पावकः बलीवर्दश्च । अग कुटिलायां गतौ । अग्निः पावकः ॥ ६७७ ॥ धूशाशीङो ह्रस्वश्च ॥ ६७८ ॥ एभ्यो निः प्रत्ययो ह्रस्वश्चैषां भवति । धूग्श् कम्पने । धुनिः नदी । शोंच् तक्षणे । शनिः सौरिः । शीङ्क् स्वप्ने । शिनिः यादवः वर्णश्च ॥ ६७८ ॥ लूधूप्रच्छिभ्यः कित् ॥ ६७९ ॥ एभ्यः किन्निः प्रत्ययो भवति । लूग्श् छेदने । लूनिः लवनः । धूग्श् कम्पने । धूनिः वायुः । प्रच्छंत् ज्ञीप्सायाम् । पृश्निः वर्णः अल्पतनुः किरणः स्वर्गश्च ॥ ६७९ ॥ सदिवृत्यमिधम्यश्यटिकट्यवेरनिः ॥ ६८० ॥ एभ्योऽनिः प्रत्ययो भवति । षद्लृं विशरणादौ । सदनिः जलम् । वृतूङ् वर्तने । वर्तनिः पन्थाः देशनाम च । अम गतौ । अमनिः अग्निः । धमः सौत्रः । धमनिः मन्या रसवहा च शिरा ॥ अशौटि व्याप्तौ । अशनिः इन्द्रायुधम् । अट गतौ । अटनिः चापकोटिः । कटे वर्षावरणयोः । कटनिः शैलमेखला । अव रक्षणादौ ।

अवनिः भूः ॥ ६८० ॥ रञ्जेः कित् ॥ ६८१ ॥ रञ्जीं रागे इत्यस्मात् किदनिः प्रत्ययो भवति । रजनिः रात्रिः ॥ ६८१ ॥ अर्तेरत्निः ॥ ६८२ ॥ ऋंक् गतावित्यस्मादत्निः प्रत्ययो भवति । अरत्नि बाहुमध्यम् शमः उत्कनिष्ठश्च हस्तः ॥ ६८२ ॥ एधेरिनिः ॥ ६८३ ॥ एधि वृद्धावित्यस्मादिनिः प्रत्ययो भवति । एधिनिः मेदिनी ॥ ६८३ ॥ शकेरुनिः ॥ ६८४ ॥ शक्लृंट् शक्तावित्यस्मादुनिः प्रत्ययो भवति । शकुनिः पक्षी ॥ ६८४ ॥ अदेर्मनिः ॥ ६८५ ॥ अदंक् भक्षणे इत्यस्मान्मनिः प्रत्ययो भवति । अद्मनिः पशूनां भक्षणद्रोणी अग्निः जयः हस्ती अश्वः तालु च ॥ ६८५ ॥ दमेर्दुभिर्दुम् च ॥ ६८६ ॥ दमूच् उपशमे इत्यस्मात् दुभिः प्रत्ययोऽस्य च दुमित्यादेशो भवति । दुन्दुभिः देवतूर्यम् ॥ ६८६ ॥ नीसावृयुशृवालिदालिभ्यो मिः ॥ ६८७ ॥ एभ्यो मिः प्रत्ययो भवति । णींग् प्रापणे । नेमिः चक्रधारा । षोंच् अन्तकर्मणि । सामि अर्धवाच्यव्ययम् । वृग्ट् वरणे । वर्मिः वल्मीककृमिः । युक् मिश्रणे । योमिः शकुनिः । शृश् हिंसायाम् । शर्मिः मृगः । वलि संवरणे । वल्मिः इन्द्रः समुद्रश्च । दल विशरणे । दाल्मि आयुधम् इन्द्रः समुद्रः शक्र विषं च ॥ ६८७ ॥ अशो रश्चादिः ॥ ६८८ ॥ अशौटि व्याप्तावित्यस्मान्मिः प्रत्ययो रेफश्च धातोरादिर्भवति । रश्मिः प्रग्रहः मयूखश्च ॥ ६८८ ॥ स्त्रर्तेरूच्चातः ॥ ६८९ ॥ आभ्यामिः प्रत्ययो गुणे च कृतेऽकारस्योकारो भवति । स्तृं गतौ । स्तूर्मिः स्थूणा । ऋंक् गतौ । ऊर्मिः तरङ्गः ॥ ६८९ ॥ कृभूभ्यां कित् ॥ ६९० ॥ आभ्यां किन्मिः प्रत्ययो भवति । डु कृंग् करणे । कृमिः क्षुद्रजन्तुजातिः । भू सत्तायाम् । भूमिः वसुधा ॥ ६९० ॥ कणेर्डयिः ॥ ६९१ ॥ कण शब्दे इत्यस्मात् डिदयिः प्रत्ययो भवति । कायिः पक्षिविशेषः ॥ ६९१ ॥ तङ्किवङ्क्यङ्किमङ्क्यंहिशद्यादिसद्यशौवपिवशिभ्यो रिः ६९२ ॥ एभ्यो रिः प्रत्ययो भवति । तकु कृच्छ्रजीवने । तङ्क्रिः युवा । वकुङ् कौटिल्ये । वङ्क्रिः शल्यं परशुका रथः अहः कुटिलश्च । अकुङ् लक्षणे । अङ्क्रिः चिह्नम् वंशकठिनिकश्च । मकुङ् मण्डने । मङ्क्रिः मण्डनम् शठः प्रवकश्च । अहुङ् गतौ । अंह्रिः पादः । अङ्घ्रेरप्येके । अघुङ् गत्याक्षेपे । अङ्घ्रि । शद्लृं शातने । शद्रिः वज्रः भस्म हस्ती गिरिः ऋषिः शोभनश्च । अदंक् भक्षणे । अद्रिः पर्वतः । पद्लृं विशरणादौ । सद्रिः हस्ती गिरिः मेघश्च । अशौटि व्याप्तौ । अश्रिः कोटिः । डु वपी वीजसन्ताने । वप्रिः केदारः । वशक् कान्तौ । वश्रिः समूहः ॥ ६९२ ॥ भूसूकुशिचिशिशुभिभ्यः कित् ॥ ६९३ ॥ एभ्यः किद्रिः प्रत्ययो भवति । भू सत्तायाम् । भूरि प्रभूतम् । काञ्चनं च । षूत् प्रेरणे । सूरि आचार्यः पण्डितश्च । कुशच् श्लेषणे । कुश्रिः ऋषिः । विशत् प्रवेशने । विश्रि मृत्युः ऋषिश्च । शुभि दीप्तौ । शुभ्रिः यतिः विप्रः दर्शनीयं शुभं सत्यं च ॥ ६९३ ॥ जॄषो रश्च वः ॥ ६९४ ॥ जॄषूच् जरसीत्यस्मात् किद्रिः प्रत्यय ईरि सति रेफस्य वकारश्च भवति । जीव्रिः । शरीरम् ॥ ६९४ ॥ कुण्ड्रिकुभ्र्यादयः ॥ ६९५ ॥ कुभ्र्यादयः शब्दाः किद्रिप्रत्ययान्ता निपात्यन्ते । कुपः कौतेश्च दश्चान्त । कुब्रिः ऋषिः । कुद्रिः पर्वतः ऋषिः समुद्रश्च । आदिग्रहणात् क्षौतेर्दोऽन्तः । क्षुद्रिः समुद्रः । अर्तेर्गोऽन्तः । ऋग्रि लोकनाथः । शक्रेः शक्रिः बलवानित्यादयोऽपि भवन्ति ॥ ६९५ ॥ राशादिशकिकृभ्यदिभ्यस्त्रिः ॥ ६९६ ॥ एभ्यस्त्रिः प्रत्ययो भवति । रांक् दाने । रात्रिः नि-

दीर्घश्च । किकीति कुर्वन् दीव्यतीति किकिदीविः चापः । शीङो ह्रस्वश्च । शिविः राजा । अटेरत् चान्तः । अटविः अरण्यम् । आदिग्रहणादन्येऽपि ॥ ७०६ ॥ पुषिप्लुषिशुषिकुष्यसिभ्यः सिक् ॥ ७०७ ॥ एभ्यः कित् सिः प्रत्ययो भवति । पुष्लुपू दाहे । प्लुक्षिः अग्निः उदपानश्च । प्लुक्षिः अग्निः जठरं कुशूलश्च । शुषंच् शोषणे । शुक्षिः वायुः निदाघः यवासकः तेजश्च । कुषश् निष्कर्षे । कुक्षिः जठरम् । अशौटि व्याप्तौ । अक्षि नेत्रम् ॥ ७०७ ॥ गोपादेरनेरसिः ॥ ७०८ ॥ गोप इत्यादिभ्यः परादनक् प्राणने इत्यस्मात् असिः प्रत्ययो भवति । गोपानसिः सौधाग्रभागच्छदिः । चित्रानसिः जलचरः । एकानसिः उज्जयनी । वाराणसिः काशी नगरी ॥ ७०८ ॥ वृधृपृवृसाभ्यो नसिः ॥ ७०९ ॥ एभ्यो नसिः प्रत्ययो भवति । वृग्ट् वरणे । वर्णसिः तरुः । धृंग् धारणे । धर्णसिः शैलः लोकपालः जलं माता च । पृश् पालनपूरणयोः । पर्णसिः जलधरः उलूखलं शाकादिश्च । वृश् वरणे । वर्णसिः भूमिः । पोंच् अन्तकर्मणि । सानसिः स्नेहः नखः हिरण्यम् ऋणं सखा सनातनश्च ॥ ७०९ ॥ व्रियो हिक् ॥ ७१० ॥ व्रीश् वरणे इत्यस्मात् कित् हिः प्रत्ययो भवति । व्रीहिः धान्यविशेषः ॥ ७१० ॥ तृस्तृतन्द्रितन्त्र्यविभ्य ईः ॥ ७११ ॥ एभ्य ईः प्रत्ययो भवति । तॄ प्लवनतरणयोः । तरीः नौः अग्निः वायुः प्लवनश्च ॥ स्तृग्श् आच्छादने । स्तरीः तृणं धूमः मेघः नदी शय्या च । तन्द्रिः सादमोहनयोः सौत्रः । तन्द्रीः मोहनिद्रा । तत्रिण् कुटुम्बधारणे । तन्त्रीः शुष्कस्नायुः वादित्रं वीणा आलस्यं च । अव रक्षणादौ । अवीः प्रकाशः आदित्यः भूमिः पशुः राजा स्त्री च ॥ ७११ ॥ नडेर्णित् ॥ ७१२ ॥ नडेः सौत्रादीः प्रत्ययः स च णिद्भवति । नाडी आयतशुषिरं द्रव्यम् अर्धमुहूर्तश्च ॥ ७१२ ॥ वातात् प्रमः कित् ॥ ७१३ ॥ वातपूर्वपदात् प्रेणोपसृष्टात् मांक् माने इत्यस्मात् किदीः प्रत्ययो भवति । वातप्रमीः वातप्रमीः वात्या अश्वः वातमृगः पक्षी शमीवृक्षश्च ॥ ७१३ ॥ यापाभ्यां द्वे च ॥ ७१४ ॥ आभ्यां किदीः प्रत्ययोऽनयोश्च द्वे रूपे भवतः । याक् प्रापणे । ययीः मोक्षमार्गः दिव्यवृष्टिः आदित्यः अश्वश्च । पां पाने । पपीः रश्मिः सूर्यः हस्ती च ॥ ७१४ ॥ लक्षेर्मोऽन्तश्च ॥ ७१५ ॥ लक्षीण् दर्शनाङ्कनयोरित्यस्मादीः प्रत्ययो मकारश्चान्तो भवति । लक्ष्मीः श्रीः ॥ ७१५ ॥ भृमृतॄत्सरितनिधन्यनिमनिमास्जिशीवटिकटिपटिगडिचञ्च्यसिवसित्रपिशृस्थृस्लिहिक्लिदिकन्दीन्दिविन्ध्यनिधबन्ध्यणिलोष्टिकुन्थिभ्य उः ॥ ७१६ ॥ एभ्य उः प्रत्ययो भवति । डुभृंग्क् पोषणे च भृंग् भरणे वा । भरुः समुद्रः वर्णः भर्ता च । मृंत् प्राणत्यागे । मरुः निर्जलो देशः गिरिश्च । तॄ प्लवनतरणयोः । तरुः वृक्षः । त्सर छद्मगतौ । त्सरुः आदर्शखड्गादिग्रहणप्रदेशः वञ्चरुः क्षुरिका च । तनूयी विस्तारे । तनुः देहः सूक्ष्मश्च । धन धान्ये सौत्रः । धनुः अस्त्रं दानमानं च । अनक् प्राणने । अनुः प्राणः । अनु पश्चादाद्यर्थेऽव्ययम् । मनिच् ज्ञाने । मनूयी बोधने वा । मनुः प्रजापतिः । टु मस्जोंत् शुद्धौ । मद्गुः जलवायसः । शीङ्क् स्वप्ने । शयुः अजगरः स्वप्नः आदित्यश्च । वट वेष्टने । बटुः माणवकः । कटे वर्षावरणयोः । कटुः रसविशेषः । पट गतौ । पटुः दक्षः । गड सेचने । गडुः घाटामस्तकयोर्मध्ये मांसपिण्डः स्फोटश्च । चञ्चू गतौ । चञ्चुः पक्षिमुखम् । असूच् क्षेपणे । असवः प्राणाः । वसं निवासे । वसु द्रव्यं तेजो देवता च । वसुः कश्चिद्राजा । त्रपौषि लज्जायाम् । त्रपु लोहविशेषः । शॄश् हिंसायाम् । शरुः क्रोध-

आयुधः हिंस्रश्च । औस्वृ शब्दोपतापयोः । स्वरुः प्रतापः वज्रः वज्रास्फालनं च । ञिणहीच् प्रीतौ । स्नेहुः चन्द्रमाः सन्निपातजो व्याधिविशेषः पित्तं वनस्पतिश्च । क्लिदौच् आर्द्रभावे । क्लेदुः क्षेत्रं चन्द्रः अगम् शरीरभङ्गश्च । क्लेदयतीति क्लेदुः चन्द्रमा इत्यन्ये । कदु रोदनाह्वानयोः । कन्दुः पाकस्थानम् सूत्रोतं च क्रीडनम् । इदु परमैश्वर्ये । इन्दुः चन्द्रः । विदु अवयवे । बिन्दुः विप्रुट् । अन्धण् दृष्ट्युपसंहारे । अन्धुः कूपः व्रणश्च । बन्धंश् बन्धने । बन्धुः स्वजनः । बन्धु द्रव्यं । अण शब्दे । अणुः पुद्गलः सूक्ष्मः शालकादिश्च धान्यविशेषः । लोष्टि संघाते । लोष्टुः मृत्पिण्डः । कुन्थश् संक्लेशे । कुन्थुः सूक्ष्मजन्तुः ॥७१६॥ स्यन्दिसृजिभ्यां सिन्ध्ररज्जौ च ॥ ७१७ ॥ आभ्यामुः प्रत्ययोऽनयोश्च यथासंख्यं सिन्ध् रज्ज इत्यादेशौ भवतः । स्यन्दौङ् स्रवणे । सिन्धुः नदः नदी समुद्रश्च । सृजंत् विसर्गे, सृजिच् विसर्गे वा । रज्जुः दवरकः ॥ ७१७ ॥ पंसेर्दीर्घश्च ॥ ७१८ ॥ पसुण् नाशने इत्यस्मादुः प्रत्ययो दीर्घश्चास्य भवति । पांशुः पार्थिवं रजः ॥ ७१८ ॥ अशेराङ्गोऽन्तश्च ॥ ७१९ ॥ अशौटि व्याप्तावित्यस्मादुः प्रत्ययोऽकाराच्च परो नोऽन्तो भवति । अंशुः रश्मिः सूर्यश्च । प्रांशुः दीर्घः ॥ ७१९ ॥ नमेर्नाक् च ॥ ७२० ॥ णमं प्रह्वत्वे इत्यस्मादुः प्रत्ययोऽस्य च नाक् इत्यादेशो भवति । नाकुः व्यलीकम् वनस्पतिः ऋषिः वल्मीकश्च ॥ ७२० ॥ मनिजनिभ्यां धतौ च ॥ ७२१ ॥ आभ्यामुः प्रत्ययोऽनयोश्च यथासंख्यं धकारतकारौ भवतः । मनिच् ज्ञाने । मधु क्षौद्रम् शीधु च । मधुः असुरः मासश्च चैत्रः । जनैचि प्रादुर्भावे । जतु लाक्षा ॥ ७२१ ॥ अर्जेर्ऋज् च ॥ ७२२ ॥ अर्ज अर्जने इत्यस्मादुः प्रत्ययोऽस्य च ऋज् इत्यादेशो भवति । ऋजु अकुटिलम् ॥ ७२२ ॥ कृतेस्तर्क् च ॥ ७२३ ॥ कृतैत् छेदने कृतैप् वेष्टने इत्यस्माद्वा उः प्रत्ययो भवति अस्य च तर्क् इत्यादेशः । तर्कुः चुन्दः सूत्रवेष्टनशलाका च ॥ ७२३ ॥ नेरश्चेः ॥ ७२४ ॥ निपूर्वादश्चतेरुः प्रत्ययो भवति । न्यङ्कुः मृगः ऋषिश्च ॥ ७२४ ॥ किमः श्रो णित् ॥ ७२५ ॥ किम्पूर्वात् शृश् हिंसायामित्यस्मात् णिदुः प्रत्ययो भवति । किंशारुः शूकः धान्यशिखा उष्ट्रः हिंस्रः इषुश्च ॥ ७२५ ॥ मिवहिचरिचटिभ्यो वा ॥ ७२६ ॥ एभ्य उः प्रत्ययः स च णिद्वा भवति । डु मिग्ट् प्रक्षेपणे । मायुः पित्तं मानं शब्दश्च । गोमायुः शृगालः । मयुः किन्नरः उष्ट्रः प्रक्षेपः आकूतं च । बाहुलकादात्वाभावः । वहीं प्रापणे । वाहुः भुजः । वहु प्रभूतम् । चर भक्षणे च । चारु शोभनम् । चरन्त्यस्माद्देवपितृभूतानि इत्यपादानेऽपि भीमादित्वात्, चरुः देवतोद्देशेन पाकः स्थाली च । चटण् भेदे । चाटु प्रियाचरणम् पटुजनः प्रियवादी स्फुटवादी दर्पग्रम् शिष्यश्च । चटु प्रियाचरणम् ॥ ७२६ ॥ ऋतृशृमृभ्रादिभ्यो रो लश्च ॥ ७२७ ॥ एभ्यो णिदुः प्रत्ययो रेफस्य च लकारो भवति । ऋक् गतौ, ऋन् प्रापणे च वा । आलुः श्लेष्मा श्लेष्मातकः कन्दविशेषश्च । तृ प्लवनतरणयोः । तालु काकुदम् । शृश् हिंसायाम् । शालुः हिंस्रः कषायश्च । मृंत् प्राणत्यागे । मालुः पत्रलता यस्या मालुधानीति प्रसिद्धिः । टु डु भृंगक् पोषणे च । भालुः इन्द्रः । आदिग्रहणादन्येऽपि ॥ ७२७ ॥ कृकस्थूराद्वचः क् च ॥ ७२८ ॥ आभ्यां परात् वचो णिदुः प्रत्ययो भवति ककारश्चान्तादेशः । वचंक् भाषणे, ब्रूग्क् व्यक्तायां वाचि । कृकमव्यक्तं ब्रूते वक्ति वा कृकवाकुः कुक्कुटः कृकलासः स-

ज्वरीटश्च । एरं स्थूरराकुः उर्वैध्वनिः ॥ ७२८ ॥ पृकाहृषिधृषीपिकुहिभिदिविदिमृदिव्यधिगृध्यादिभ्यः कित् ॥ ७२९ ॥ एभ्यः किदुः प्रत्ययो भवति । पृग् पालनपूरणयोः । पुरुः महान् लोकः समुद्रः यजमानः राजा च कश्चित् ॥ कै शब्दे । कुः पृथ्वी । हृषच् तुष्टौ, हृषू अलीके वा । हृषुः तुष्टः अलीकः सूर्याग्निशशिनश्च । ञिधृषाद् प्रागल्भ्ये । धृषु प्रगल्भः संतापः उत्साहः पर्वतश्च । इषत् इच्छायाम् । इषुः शरः । कुहणि विस्मापने । कुहुः नष्टचन्द्रामावास्या । भिदृंपी विदारणे । भिदुः वज्रः नन्दपश्च । विदग् ज्ञाने । विदुः हस्तिमस्तकैकदेशः । मृदग् क्षोदे । मृदुः अकठिनः । व्यधंच् ताडने । विधुः चन्द्रः वायुः अग्निश्च । गृधूच् अभिकाङ्क्षायाम् । गृधुः कामः । आदिग्रहणात् पूरीच आप्यायने, पूरण् आप्यायने वा । पूरितमनेन यशसा सर्वमिति पूरुः राजर्षिः । एवमन्येऽपि ॥ ७२९ ॥ रभिप्रथिभ्यामृच रस्य ॥ ७३० ॥ आभ्यां किदुः प्रत्ययो रेफस्य च ऋकारो भवति । रभिं राभस्ये । ऋभवः देवाः । प्रथिष् प्रख्याने । पृथुः राजा विस्तीर्णश्च ॥ ७३० ॥ स्पशिभ्रस्जेः स्लुक् च ॥ ७३१ ॥ आभ्यां किदुः प्रत्ययः सकारस्य लुक् च भवति । स्पशिः सौत्रः तालव्यान्तः । पशुः तिर्यङ् मन्त्रवध्यश्च जनः । भ्रस्जीत् पाके । भृगुः प्रपातः ब्राह्मणश्च सुतः । कित्त्वात् ग्रहवश्चभ्रस्जप्रच्छ इति यवृत् । न्यङ्क्वमेघादय इति गत्वम् ॥ ७३१ ॥ दुःस्वपवनिभ्यः स्थः ॥ ७३२ ॥ दुस् सु अप वनि इत्येतेभ्यः परात् ष्ठा गतिनिवृत्तावित्यस्मात् किदुः प्रत्ययो भवति । दुःष्ठु अशोभनम् । सुष्ठु सातिशयम् । अपष्ठु वामम् । वनिष्ठुः वपासंनिहितोऽवयवः अश्वः संभक्तः अपानं च ॥ ७३२ ॥ हनियाकृभृपृतॄत्रो द्वे च ॥ ७३३ ॥ एभ्यः किदुः प्रत्ययो द्वे रूपे चैषां भवतः । हनंक् हिंसागत्योः । जघ्नुः इन्द्रः वेगवांश्च । यांक् प्रापणे । ययुः अश्वः यायावरः स्वर्गमार्गश्च । डुकृंग् करणे । चक्रुः कर्मठः वैकुठश्च । डुड्डुभृंगक् पोषणे च, भृंग् भरणे वा । बभ्रुः ऋषिः नकुलः राजा वर्णश्च ॥ पृश् पालनपूरणयोः । पुपुरुः समुद्रः चन्द्रः लोकश्च । तॄ प्लवनतरणयोः । तितिरुः पतङ्गः । त्रैङ् पालने । तत्रुः नौका ॥ ७३३ ॥ कृगॄ ऋत उर् च ॥ ७३४ ॥ आभ्यां किदुः प्रत्यय ऋकारस्य चोर् भवति । कृत् विक्षेपे । कुरुः राजर्षिः । कुरवः जनपदः । गृश् शब्दे । गुरुः आचार्यः लघुप्रतिपक्षः पूज्यश्च जनः ॥ ७३४ ॥ पचेरिच्चातः ॥ ७३५ ॥ डु पचीष् पाके इत्यस्मादुः प्रत्ययोऽकारस्य चेकारो भवति । पिचुः निरस्थीकृतः कर्पासः ॥ ७३५ ॥ अर्तेरूर्च ॥ ७३६ ॥ ऋंक् गतावित्यस्मादुः प्रत्ययोऽस्य च ऊरित्यादेशो भवति । ऊरुः शरीराङ्गम् ॥ ७३६ ॥ महत्युर्च ॥ ७३७ ॥ अर्तेर्महत्यभिधेये उः प्रत्ययोऽस्य चोरित्यादेशो भवति । उरु विस्तीर्णम् ॥ ७३७ उड् च भे ॥ ७३८ ॥ अर्तेर्भे नक्षत्रेऽभिधेये उः प्रत्ययो धातोश्च उडादेशो भवति । उडु नक्षत्रम् ॥ ७३८ ॥ श्लिषेः क च ॥ ७३९ ॥ श्लिषंच् आलिङ्गने इत्यस्मात् किदुः प्रत्ययः ककारश्चान्तादेशो भवति । श्लिकुः मृगास्थि सव्यवसायः राज्यं ज्योतिषं सेवकश्च ॥ ७३९ ॥ राङ्घिलङ्घिलिङ्गेर्नलुक् च ॥ ७४० ॥ एभ्य उः प्रत्ययो नकारस्य च लुग् भवति । रघुलघुङ् गतौ । रघुः राजा । लघु तुच्छं शीघ्रं च । लिगुण् चित्रीकरणे । लिगुः ऋषिः सेवकः मूर्खः भूमिविशेषश्च ॥ ७४० ॥ पीमृगमित्रदेवकुमारलोकधर्मविश्वसुम्नाश्मावेभ्यो युः ॥ ७४१ ॥ पीमृगमित्रदेवकुमारलोकधर्मविश्वसुम्नाश्मन् अव इत्येतेभ्यः परात् यांक् प्रापणे इत्यस्मात् किदुः प्रत्ययो भवति । पीयुः उलूकः आदित्यः सुवर्णं कालश्च ।

मृगयुः व्याधः मृगश्च । मित्रयुः ऋषिः मित्रवत्सलश्च । देवयुः धार्मिकः । कुमारयुः राजपुत्रः । लोकयुः वाक्यकुशलः जनः । धर्मयुः धार्मिकः । विश्वयुः वायुः । सुम्नयुः यजमानः अश्मयुः मूर्खः । अवयुः काव्यम् ॥ ७४१ ॥ पराङ्भ्यां शृखनिभ्यां डित् ॥ ७४२ ॥ पराङ्पूर्वाभ्यां यथासंख्यं शृखनिभ्यां डिदुः प्रत्ययो भवति । शृञ् हिंसायाम् । परान् शृणाति परशुः कुठारः । खनूग् अवदारणे । आखुः मूषिकः ॥ ७४२ ॥ शुभेः स च वा ॥ ७४३ ॥ शुभि दीप्तावित्यस्मात् डिदुः प्रत्ययो भवति अस्य च दन्त्यः सो वा । सुः शुश्च पूजायाम् । सुपुरुषः शुनासीरः ॥ ७४३ ॥ द्युद्रुभ्याम् ॥ ७४४ ॥ आभ्यां डिदुः प्रत्ययो भवति । द्युंक् अभिगमे । द्युः स्वर्गक्रीडा स्वर्गश्च । द्रुं गतौ । द्रुः वृक्षशाखा वृक्षश्च ॥७४४ ॥ हरिपीतमितशतविकुकद्भ्यो द्रुवः ॥ ७४५ ॥ हरिपीतमितशतविकुकद् इत्येतेभ्यः परात् द्रुं गतावित्यस्मात् डिदुः प्रत्ययो भवति । हरिद्रुः वृक्षः ऋषिः पर्वतश्च । पीतद्रुः देवदारुः । मितद्रुः समुद्रः तुरगः मितंगमश्च । शतद्रुर्नाम नदः नदी च । विद्रुः दारुप्रकारः वृक्षश्च । कुद्रुः विकलपादः । कद्रुर्नागमाता वन्हिजातिः गृहगोधा वर्णश्च ॥ ७४५ ॥ केवयुभुरण्य्वध्वर्य्वादयः ॥ ७४६ ॥ केवय्वादयः शब्दा डिदुप्रत्ययान्ता निपात्यन्ते । केवलपूर्वाद्यातेर्ललोपश्च । केवलो याति केवयुः ऋषिः । भूपूर्वाद्यातेर्भुरण् चादौ । भुवं याति भुरण्युः अग्निः । अध्वरं याति, पूर्वपदान्तलोपे, अध्वर्युः ऋत्विक् । आदिग्रहणात् चरन् याति चरण्युः वायुः । अभिपूर्वस्य चाश्नातेरभीशुः रश्मिः ॥ ७४६ ॥ शः सन्वच्च ॥ ७४७ ॥ शोंच् तक्षणे इत्यस्मात् डिदुः प्रत्ययः स च सन्वद् भवति । सनि इवास्मिन् द्वित्वं पूर्वस्य चेत्वं भवतीत्यर्थः । शिशुः बालः ॥ ७४७ ॥ तनेर्डउः ॥ ७४८ ॥ तनूयी विस्तारे इत्यस्मात् डिदउः प्रत्ययो भवति स च सन्वत् । तितउः परिपवनम् ॥७४८॥ कैशीशमिरमिभ्यः कुः ॥ ७४९ ॥ एभ्यः कुः प्रत्ययो भवति । कैं शब्दे । काकुः स्वरविशेषः । शीङ्क् स्वप्ने । शेकुः उद्भिद्विशेषः । शमूच् उपशमे । शङ्कुः कीलकः बाणः शूलम् आयुधं चिन्हं छलकश्च । रमिं क्रीडायाम् । रङ्कुः मृगः ॥ ७४९ ॥ ह्रियः किद्रो लश्च वा ॥ ७५० ॥ ह्रींक् लज्जायामित्यस्मात् कित् कुः प्रत्ययो रेफस्य च लकारो वा भवति । ह्लीकुः ह्रीकुश्च त्रपुजतुनी लज्जावांश्च । ह्रीकुः वनमार्जारः ॥ ७५० ॥ किरः ष च ॥ ७५१ ॥ कॄत् विक्षेपे इत्यस्मात् कित् कुः प्रत्ययः षकारश्चान्तादेशो भवति । किष्कुः छायामानद्रव्यम् ॥ ७५१ ॥ चटिकठिपर्दिभ्य आकुः ॥ ७५२ ॥ एभ्य आकुः प्रत्ययो भवति । चटण् भेदे । चटाकुः ऋषिः । शकुनिश्च । कठ कृच्छ्रजीवने । कठाकुः कुटुम्बपोषकः । पर्दि कुत्सिते शब्दे । पर्दाकुः भेकः वृश्चिकः अजगरश्च ॥ ७५२ ॥ सिविकुटिकुठिकुकुषिकृषिभ्यः कित् ॥ ७५३ ॥ एभ्यः किदाकुः प्रत्ययो भवति । षिवूच् उतौ । सिवाकुः ऋषिः । कुटत् कौटिल्ये । कुटाकुः विटपः । कुठिः सौत्रः । कुठाकुः श्वभ्रम् । कुंङ् शब्दे । कुवाकुः पक्षी । कुषश् निष्कर्षे । कुषाकुः गृपिकः अग्निः परोपतापी च । कृषींत् विलेखने । कृषाकुः कृषीवलः ॥ ७५३ ॥ उपसर्गाच्चेर्डित् ॥ ७५४ ॥ उपसर्गपूर्वात् चिग्ट् चयने इत्यस्मात् डिदाकुः प्रत्ययो भवति । उपचाकुः संचाकुश्च ऋषिः । निचाकुः निपुणः ऋषिश्च ॥ ७५४ ॥ शलेरकुः ॥ ७५५

शल गतावित्यस्मात् अङ्कुः प्रत्ययो भवति । शलङ्कुः ऋषिः ॥ ७५५ ॥ स्रुपृभ्यां दाकुक् ॥ ७५६ ॥ आभ्यां कित् दाकुः प्रत्ययो भवति । स्रुं गतौ । स्रुदाकुः दवाग्निः वायुः आदित्यः व्याघ्रः शकुनिः अस्तः भर्ता गोत्रकृच्च । पृंक् पालनपूरणयोः । पृदाकुः सर्पः गोत्रकृच्च ॥ ७५६ ॥ इषेः स्वाकुक् च ॥ ७५७ ॥ इषत् इच्छायामित्यस्मात् कित् स्वाकुः प्रत्ययो भवति । इक्ष्वाकुः आदिक्षत्रियः ॥ ७५७ ॥ फलिवल्यमेर्गुः ॥ ७५८ ॥ एभ्यो गुः प्रत्ययो भवति । फल निष्पत्तौ । फल्गु असारम् । वलि संवरणे । वल्गु मधुरम् शोभनम् च । वल्गुः पक्षी । अम गतौ । अङ्गुः शरीरावयवः ॥ ७५८ ॥ दमेर्लुक् च ॥ ७५९ ॥ दमूच् उपशमे इत्यस्माद्गुः प्रत्ययोऽन्त्यस्य च लुग् भवति । दगुः ऋषिः ॥ ७५९ ॥ हेर्हिन् च ॥ ७६० हिंट् गतिवृद्ध्योरित्यस्माद्गुः प्रत्ययो हिन् चास्यादेशो भवति । हिङ्गुः रामठः ॥ ७६० ॥ प्रकिपैनीलेरड्गुक् ॥ ७६१ ॥ एभ्यः किदङ्गुः प्रत्ययो भवति । प्रीग्श् तृप्तिकान्त्योः । प्रियङ्गुः फलिनी राळकश्च । कै शब्दे । कङ्गुः अणुः । पैं शोषणे । पङ्गुः खञ्जः । नील वर्णे । नीलङ्गुः कृमिजातिः शृगालश्च ॥ ७६१ ॥ अव्यर्तिगृभ्योऽटुः ॥ ७६२ ॥ एभ्योऽटुः प्रत्ययो भवति । अव रक्षणादौ । अवटुः कृकाटिका । ऋंक् गतौ । अरटुः वृक्षः । गत् निगरणे । गरटुः देशविशेषः पक्षी अजगरश्च ॥ ७६२ ॥ शलेराडुः ॥ ७६३ ॥ शल गतावित्यस्मादाडुः प्रत्ययो भवति । शलाडुः कोमलं फलम् ॥ ७६३ ॥ अञ्ज्यवेरिष्ठुः ॥ ७६४ ॥ आभ्यामिष्ठुः प्रत्ययो भवति । अञ्जौप् व्यक्त्यादौ । अञ्जिष्ठुः भानुः अग्निश्च । अव रक्षणादौ । अविष्ठुः अश्वः होता च ॥ ७६४ ॥ तन्मिमनिकणिभ्यो डुः ॥ ७६५ ॥ एभ्यो डुः प्रत्ययो भवति । तनूयी विस्तारे । तण्डुः प्रथमः । मनिच् ज्ञाने । मण्डुः ऋषिः । कण शब्दे । कण्डुः वेदनाविशेषः ॥७६५॥ पनेर्दीर्घश्च ॥७६६॥ पनि स्तुतावित्यस्मात् डुः प्रत्ययो दीर्घश्च भवति । पाण्डुः वर्णः क्षत्रियश्च ॥७६६॥ पलिमृभ्यामाण्डुकण्डुकौ ॥७६७॥ आभ्यां यथासख्यमाण्डुः कण्डुक् च प्रत्ययौ भवतः । पल गतौ । पलाण्डुः लशुनभेदः । मृंत् प्राणत्यागे । मृकण्डुः ऋषिः ॥७६७॥ अजिस्थावृरीभ्यो णुः ॥७६८॥ एभ्यो णुः प्रत्ययो भवति । अज क्षेपणे च । वेणुः वंशः । ष्ठां गतिनिवृत्तौ । स्थाणुः शिवः ऊर्ध्वं च दारु । वृग्ट् वरणे । वर्णुः नदः जनपदश्च । रींश् गतिरेषणयोः । रेणुः धूलिः ॥ ७६८ ॥ विषेः कित् ॥ ७६९ ॥ विष्लृकी व्याप्तावित्यस्मात् कित् णुः प्रत्ययो भवति । विष्णुः हरिः ॥ ७६९ ॥ क्षिपेरणुक् ॥ ७७० ॥ क्षिपींत् प्रेरणे इत्यस्मात् किदणुः प्रत्ययो भवति । क्षिपणुः समीरणः विद्युच्च ॥ ७७० ॥ अञ्जेरिष्णुः ॥ ७७१ ॥ अञ्जौप् व्यक्त्यादावित्यस्मादिष्णुः प्रत्ययो भवति । अञ्जिष्णुः घृतम् ॥ ७७१ ॥ कृहृभूजीविगम्यादिभ्य एणुः ॥ ७७२ ॥ एभ्य एणुः प्रत्ययो भवति । कृंग्ट् हिंसायाम् डु कृंग् करणे वा । करेणुः हस्ती । हृंग् हरणे । हरेणुः गन्धद्रव्यम् । भू सत्तायाम् । भवेणुः भव्यः । जीव प्राणधारणे । जीवेणुः औषधम् । गम्लृं गतौ । गमेणुः गन्ता । आदिग्रहणात् शमूच् उपशमे, शमेणुः उपशमनम् । यजी देवपूजादौ । यजेणुः यज्ञादिः । डु पचींष् पाके । पचेणुः पाकस्थानम् । पदेणुः वहेणुरित्यादि ॥७७२॥ कृसिकम्यमिगमितनिमनिजन्यसिमस्जिसच्यविभाधागाग्लाम्लाहनिहाय्याहिक्रुशिपुभ्यस्तुन् ॥७७३॥ एभ्यस्तुन् प्रत्ययो भवति । डु कृग् करणे । कर्तुः कर्मकरः । षिंग्ट् बन्धने । सेतुः न-

दीसंक्रवः। कमूङ् कान्तौ । कन्तुः कदर्पः कामी मनः कुसूलश्च । अम गतौ । अन्तुः रक्षिता लक्षणं च। गम्लृं गतौ। गन्तुः पथिकः। आगन्तुः अवास्तव्यो जनः। तनूयी विस्तारे। तन्तुः सूत्रम् । मनिंच् ज्ञाने । मन्तुः वैमनस्यम् प्रियंवदः मानश्च। जनैचि प्रादुर्भावे। जन्तुः प्राणी । असूक् भुवि । अस्तुः अस्तिभावः । वाहुलकात् भूभावाभावः। मसैच् परिणामे। मस्तु दधिमूलवारि। षचि सेचने। सक्तुः यवविकारः। अव रक्षणादौ । ओतुः विडालः। भांक् दीप्तौ। भातुः दीप्तिमान् शरीरावयवः अग्निः विद्वांश्च। डु धांग्क् धारण च। धातुः लोहादिः रसादिः शब्दप्रकृतिश्च। गैं शब्दे। गातुः गायनः उद्गाता च। ग्लैं हर्षक्षये। ग्लातुः सरुजः। म्लैं गात्रविनामे। म्लातुः दीनः। हनंक् हिंसागत्योः। हन्तुः आयुधं हिमश्च। ओ हांक् त्यागे। हातुः मृत्युः मार्गश्च। यांक् प्रापणे। यातुः पाप्मा जनः राक्षसश्च। हिंद् गतिवृद्ध्योः। हेतुः कारणम्। क्रुशं आह्वानरोदनयोः। क्रोष्टा शृगालः। पूग्श् पवने। पोतुः पविता। नित्करणं 'क्रुशस्तुनस्तृच् पुंसि' इत्यत्र विशेषणार्थम् ॥ ७७३ ॥ वसेर्णिद्वा ॥ ७७४ ॥ वसं निवासे इत्यस्मात् तुन् प्रत्ययः स च णिद्वा भवति। वास्तु गृहं गृहभूमिश्च। वस्तु सत् निवेशभूमिश्च ॥ ७७४ ॥ पः पीप्यौ च वा ॥ ७७५ ॥ पां पान इत्यस्मात् तुन् प्रत्ययो भवति अस्य च पीपि इत्यादेशौ वा भवतः। पीतुः आदित्यः चन्द्रः हस्ती कालः चक्षुः बालघृतपानभाजनं च। पितुः प्रजापतिः आहारश्च। पातुः रक्षिता ब्रह्मा च ॥ ७७५ ॥ आपोऽप् च ॥ ७७६ ॥ आप्लृंट् व्याप्तावित्यस्मात्तुन् प्रत्ययोऽस्य चाप् इत्यादेशो भवति। अप्तुः देवताविशेषः कालः याजकः यज्ञयानिश्च ॥७७६॥ अञ्ज्यर्तेः कित् ॥७७७॥ आभ्यां कित्तुन् प्रत्ययो भवति। अञ्जौप् व्यक्त्यादिषु। अक्तुः इन्द्रः विष्णुः रात्रिश्च। ऋंक् गतौ। ऋतुः हेमन्तादिः स्त्रीरजः तत्कालश्च ॥७७७॥ चायः के च ॥७७८॥ चायृग् पूजानिशामनयोः इत्यस्मात्तुन् प्रत्ययोऽस्य च के इत्यादेशो भवति। केतुः ध्वजः ग्रहश्च ॥७७८॥ वहिमहिगुह्येधिभ्योऽतुः ॥ ७७९ ॥ एभ्योऽतुः प्रत्ययो भवति। वही प्रापणे। वहतुः विवाहः अनड्वान् अग्निः कालश्च। मह पूजायाम्। महतुः अग्निः। गुहौग् संवरणे। गूहतुः भूमिः। एधि वृद्धौ। एधतुः लक्ष्मीः पुरुषः अग्निश्च ॥ ७७९ ॥ कृलाभ्यां कित् ॥ ७८० ॥ आभ्यां कितुः प्रत्ययो भवति। डु कृंग् करणे। ऋतुः यज्ञः। लांक् आदाने। लतुः पाशः ॥ ७८० ॥ तनेर्यतुः ॥ ७८१ ॥ तनूयी विस्तारे इत्यस्माद्यतुः प्रत्ययो भवति। तन्यतुः विस्तारः वायुः पर्वतः सूर्यश्च ॥ ७८१ ॥ जीवेरातुः ॥ ७८२ ॥ जीव प्राणधारणे इत्यस्मादातुः प्रत्ययो भवति। जीवातुः जीवनम् औषधम् अन्नम् उदकं द्रव्यं च ॥७८२॥ यमेर्दुक् ॥७८३॥ यमूं उपरमे इत्यस्मात् कित् दुः प्रत्ययो भवति। यदुः क्षत्रियः ॥७८३॥ शीङो धुक् ॥७८४॥ शीङ्क् स्वप्ने इत्यस्मात् कित् धुः प्रत्ययो भवति। शीधु मद्यविशेषः ॥७८४॥ धूगो धुन् च ॥७८५॥ धूग्श् कम्पने इत्यस्मात् धुक् प्रत्ययोऽस्य च धुन् इत्यादेशो भवति। धुन्धुः दानवः ॥७८५॥ दाभाभ्यां नुः ॥ ७८६ ॥ आभ्यां नुः प्रत्ययो भवति। डु दांग्क् दाने। दानुः गन्ता यजमानः वायुः आदित्यः दक्षिणार्थं च धनम्। भांक् दीप्तौ। भानुः सूर्यः रश्मिश्च। चित्रभानुः अग्निः। स्वर्भानुः राहुः। विश्वभानुः आदित्यः ॥ ७८६ ॥ धेः शित् ॥ ७८७ ॥ द्धें पाने इत्यस्मान्नुः प्रत्ययो भवति स च शित्।

शिस्वादात्संध्यक्षरस्येति आकारो न भवति। धेनुः अभिनवप्रसवा गवादिः ॥ ७८७ ॥ सूङः कित् ॥ ७८८ ॥ षूङौक् प्राणिगर्भविमोचन इत्यस्मात् कित् नुः प्रत्ययो भवति। सूनुः पुत्रः ॥ ७८८ ॥ हो जह्न च ॥ ७८९ ॥ ओ हांक् त्यागे इत्यस्मात्किन्नुः प्रत्ययोऽस्य च जह्न इत्यादेशो भवति। जह्नुः गङ्गापिता ॥ ७८९ ॥ वचेः कगौ च ॥ ७९० ॥ वचंक् भाषणे इत्यस्मान्नुः प्रत्ययः ककारगकारौ चान्तादेशौ भवतः। वक्नुः वग्नुश्च वाग्मी ॥ ७९० ॥ कृहनेस्तुक्तुकौ ॥ ७९१ ॥ आभ्यां कितौ तुनु इति प्रत्ययौ भवतः। डु कृंग् करणे। कृतुः कर्मकारः। कृणुः कोशकारः कारुश्च। हनंक् हिंसागत्योः। हतुः हिमः। हनुः वक्त्रैकदेशः। बाहुलकान्नलोपः ॥ ७९१ ॥ गमेः सन्वच्च ॥ ७९२ ॥ गम्लृं गतावित्यस्मात् तुक्नुकौ सन्वत् च भवतः। जिगन्तुः ब्राह्मणःदिवसः मार्गः प्राणः अग्निश्च। जिगत्नुः प्राणः वाणः मनः मीनः वायुश्च ॥ ७९२ ॥ दाभूक्षण्युन्दिनदिवदिपत्यादेरनुङ् ॥ ७९३ ॥ एभ्यो ङिदनुः प्रत्ययो भवति। डु दांग्क् दाने। दनुः दानवमाता। भू सत्तायाम्। भुवनुः मेघः चन्द्रः भावितव्यता हंसश्च। क्षणूयी हिंसायाम्। क्षणनुः यायावरः। उन्दैप् क्लेदने। उदनुः शुक्रः। णद अव्यक्ते शब्दे। नदनुः मेघः सिंहश्च। वद व्यक्तायां वाचि। वदनुः वक्ता। पत्लृ गतौ। पतनुः श्येनः। आदिग्रहणादन्येऽपि। कित्त्वमकृत्वा ङित्करणं वदेर्वृद्‍भावार्थम् ॥ ७९३ ॥ कृशेरानुक् ॥ ७९४ ॥ कृशच् तनुत्वे इत्यस्मात्किदानुः प्रत्ययो भवति। कृशानुः वह्निः ॥ ७९४ ॥ जीवेरदानुक् ॥ ७९५ ॥ जीव प्राणधारणे इत्यस्मात् कित् रदानुः प्रत्ययो भवति। जीरदानुः। कित्करणं गुणप्रतिषेधार्थम्। वलोपे हि नाम्यन्तत्वात् गुणः स्यात् ॥ ७९५ ॥ वचेरक्नुः ॥ ७९६ ॥ वचंक् भाषणे इत्यस्मादक्नुः प्रत्ययो भवति। वचक्नुः वाग्मी आचार्यः ब्राह्मणः ऋषिश्च ॥ ७९६ ॥ हृषिपुषिघुषिगदिमदिनन्दिगाडिमण्डिजनिरतानिभ्यो णेरित्नुः ॥ ७९७ ॥ एभ्यो ण्यन्तेभ्य इत्नुः प्रत्ययो भवति। हृषंच् तुष्टौ हृषू अलीके वा। हर्षयित्नुः आनन्दः स्वजनः रङ्गोपजीवी प्रियंवदश्च। पुषंच् पुष्टौ। पोषयित्नुः भर्ता मेघः कोकिलश्च। घुषृण् विशब्दने। घोषयित्नुः कोकिलः शब्दश्च। गदण् गर्जे। गदयित्नुः पर्जन्यः वावदूकः भ्रमरः कामश्च। मदेच् हर्षे। मदयित्नुः मदिरा सुवर्णम् अलंकारश्च। टु नदु समृद्धौ। नन्दयित्नुः पुत्रः आनन्दः प्रमुदितश्च। गड सेचने। गडयित्नुः बलाहकः। मडु भूषायाम्। मण्डयित्नुः मण्डयिता कामुकश्च। जनैचि प्रादुर्भावे। जनयित्नुः पिता। स्तनण् गर्जे। स्तनयित्नुः मेघः मेघगर्जितं च ॥ ७९७ ॥ कस्यर्तिस्यामिपुक् ॥ ७९८ ॥ आभ्या किदिपुः प्रत्ययो भवति। कस गतौ। कसिपुः असनम्। ऋंक् गतौ। रिपुः शत्रुः ॥ ७९८ ॥ कम्यमिभ्यां वुः ॥ ७९९ ॥ आभ्या वुः प्रत्ययो भवति। कमूङ् कान्तौ। कम्बुः शङ्खः। अम गतौ। अम्बु पानीयम् ॥ ७९९ ॥ अभ्रेरमुः ॥ ८०० ॥ अभ्र गतावित्यस्मादमुः प्रत्ययो भवति। अभ्रमुः देवहस्तिनी ॥ ८०० ॥ यजिशुन्धिदहिदसिजनिमनिभ्यो युः ॥ ८०१ ॥ एभ्यो युः प्रत्ययो भवति। यजी देवपूजादौ। यज्युः अग्निः अध्वर्युः यज्वा शिष्यश्च। शुन्ध् शुद्धौ। शुन्ध्युः अग्निः आदित्यः पवित्रं च। दहं भस्मीकरणे। दह्युः अग्निः। दसूच् उपक्षये। दस्युः चौरः। जनैचि प्रादुर्भावे। जन्युः अपत्यं पिता वायुः प्रादुर्भावः प्रजापतिः

प्राणी च । मनिंच् ज्ञाने । मन्युः कृपा क्रोधः शोकः क्रतुश्च ॥ ८०१ ॥ भुजेः कित् ॥ ८०२ ॥ भुजंप् पालनाभ्यवहारयोः इत्यस्मात् कित् युः प्रत्ययो भवति । भुज्युः अग्निः आदित्यः गरुडः भोगः ऋषिश्च ॥ ८०२ ॥ सर्तेरय्वन्यू ॥ ८०३ ॥ सृं गताविन्त्यस्मात् अयु अन्यु इति प्रत्ययौ भवतः । सरयुः नदी वायुश्च । दीर्घान्तमिममिच्छन्त्येके । सरयूः । श्लिष्टनिर्देशात्तदापि संगृहीतम् । सरण्युः मेघः अश्विनोर्माता समेघो वायुश्च ॥ ८०३ ॥ भूक्षिपिचरेरन्युक् ॥ ८०४ ॥ एभ्यः किदन्युः प्रत्ययो भवति । भू सत्तायाम् । भुवन्युः ईश्वरः अग्निश्च । क्षिपीत् प्रेरणे । क्षिपण्युः वायुः वसन्तः विद्युत् अर्थः कालश्च । चर भक्षणे च । चरण्युः वायुः ॥ ८०४ ॥ मृस्त्युक् ॥ ८०५ ॥ मृंत् प्राणत्यागे इत्यस्मात् कित् त्युः प्रत्ययो भवति । मारयतीति मृत्युः कालः मरणं च ॥ ८०५ ॥ चिनीपीम्याशिभ्यो रुः ॥ ८०६ ॥ एभ्यो रुः प्रत्ययो भवति । चिंग्ट् चयने । चेरुः मुनिः । णींग् प्रापणे । नेरुः जनपदः । पीङ्च् पाने । पेरुः सूर्यः गिरिः फलविङ्कश्च । मींङ्च् हिंसायाम् । मेरुः देवाद्रिः । अशौटि व्याप्तौ । अश्रु नेत्रजलम् ॥ ८०६ ॥ रुपूभ्यां कित् ॥ ८०७ ॥ आभ्यां किद्रुः प्रत्ययो भवति । रुक् शब्दे । रुरुः मृगजातिः । पूग्श् पवने । पूरुः राजा ॥८०७॥ खनो लुक् च ॥८०८॥ खनूग् अवदारणे इत्यस्मात् रुः प्रत्ययो भवत्यन्तस्य च लुग् भवति । खरुः दर्पः क्रूरः मूर्खः दृप्तः गीतविशेषश्च ॥ ८०८ ॥ जनिहनिशद्यर्तेस्त च ॥ ८०९ ॥ एभ्यो रुः प्रत्ययस्तकारश्चान्तादेशो भवति । जनैचि प्रादुर्भावे । जन्तुः शरीरावयवः मेघः घर्मावसानं च । हनंक् हिंसागत्योः॥ हन्तुः हिंस्रः । शद्लृं शातने । शत्रुः रिपुः। बाहुलकात् तादेशविकल्पे शद्रुः पुरुषः । ऋंक् गतौ । अर्त्तुः क्षुद्रजन्तुः ॥ ८०९ ॥ श्मनः शीङो डित् ॥ ८१० ॥ श्मन्पूर्वात् शीङ्क् स्वप्ने इत्यस्मात् डिद्रुः प्रत्ययो भवति । श्मश्रु मुखलोमानि ॥ ८१० ॥ शिग्रुगेरुनमेर्वादयः ॥ ८११ ॥ शिग्र्वादयः शब्दा रुप्रत्ययान्ता निपात्यन्ते । शिंग्ट् निशाने । कित् गोऽन्तश्च । शिग्रुः सौभाञ्जनकः । हरितकविशेषश्च । गिरतेरेत्त्वं । गेरुः धातुः । नमेर्नञ्पूर्वस्य मयतेर्वा एत्वान्तः । नमेरुः देववृक्षः । आदिग्रहणादन्येऽपि ॥८११॥ कटिकुट्यर्तेररुः ॥८१२॥ एभ्योऽरुः प्रत्ययो भवति । कटे वर्षावरणयोः । कटरुः शकटम् । कुटत् कौटिल्ये । कुटरुः पक्षिविशेषः मर्कटः वृक्षः वर्धकिश्च । कुटादित्वान्न गुणः । ऋंक् गतौ । अररुः असुरः आयुधं मण्डलं च ॥ ८१२ ॥ कर्केरारुः ॥ ८१३ ॥ कर्केः सौत्रादारुः प्रत्ययो भवति । कर्कारुः क्षुद्रचिर्भटी ॥ ८१३ ॥ उर्वेरादेरूदेतौ च ॥८१४॥ उर्वै हिंसायामित्यस्मादारुः प्रत्ययो भवति आदेश्चोकारैकारौ भवतः । ऊर्वत्यार्तिमिति ऊर्वारुः कटुचिर्भटी । एर्वारुः चारुचिर्भटी ॥ ८१४ ॥ कृपिक्षुधिपीकुणिभ्यः कित ॥ ८१५ ॥ एभ्यः किदारुः प्रत्ययो भवति । कृपौङ् सामर्थ्ये । कृपारुः दयाशीलः । क्षुधंच् बुभुक्षायाम् । क्षुधारुः क्षुधमसहमानः । लत्वे, कृपालुः क्षुधालुः । पीङ्च् पाने । पियारुः वृक्षः । कुणत् शब्दोपकरणयोः। कुणारुः वनस्पतिः ॥ ८१५ ॥ श्यः शीत च ॥ ८१६ ॥ श्यैङ् गतावित्यस्मादारुः प्रत्ययोऽस्य च शीत इत्यादेशो भवति । शीतारुः शीतासहः । लत्वे, शीतालुः ॥ ८१६ ॥ तुम्बेरुरुः ॥ ८१७ ॥ तुबु अर्दने इत्यस्मादुरुः प्रत्ययो भवति । तुम्बुरुः गन्धर्वः गन्धद्रव्यं च ॥ ८१७ ॥ कन्देः कुन्दू च ॥ ८१८ ॥ कदु रोदना-

हानयोरित्यस्मादुरुः प्रत्ययोऽस्य च कुन्दित्यादेशो भवति । कुन्दुरुः सल्लकीनिर्यासः ॥ ८१८ ॥ चमेरूरुः ॥ ८१९ ॥ चमू अदने इत्यस्मादूरुः प्रत्ययो भवति । चमूरुः चित्रकः ॥ ८१९ ॥ शीङो लुः ॥ ८२० ॥ शीङ्क् स्वप्ने इत्यस्माल्लुः प्रत्ययो भवति । शेलुः श्लेष्मातकः ॥ ८२० ॥ पीङः कित् ॥ ८२१ ॥ पीङ्च् पाने इत्यस्मात् कित् लुः प्रत्ययो भवति । पीलुः हस्ती वृक्षश्च ॥ ८२१ ॥ लस्जीर्ष्यिशलेरालुः ॥ ८२२ ॥ एभ्य आलुः प्रत्ययो भवति । ओ लस्जैति व्रीडे । लज्जालुः लज्जनशीलः । ईर्ष्य ईर्ष्यार्थः । ईर्ष्यालुः ईर्ष्याशीलः । शल गतौ । शलालुः वृक्षावयवः ॥ ८२२ ॥ आपोऽप् च ॥ ८२३ ॥ आप्लृंट् व्याप्तावित्यस्मादालुः प्रत्ययोऽस्य चाप् इत्यादेशो भवति । अपालुः वायुः ॥ ८२३ ॥ गृहलुगुग्गुलुकमण्डलवः ॥ ८२४ ॥ एते आलुप्रत्ययान्ता निपात्यन्ते । गृहतेर्हस्वश्च प्रत्ययादेः । गृहलुः ऋषिः । गुंङ् शब्दे । अस्या दिर्गुग् लोपश्च प्रत्ययादेः । गुग्गुलुः वृक्षविशेषः अश्वश्च । कम्पूर्वादनितेर्डोऽन्तः ह्रस्वश्च प्रत्ययादेः । कमण्डलुः अमत्रम् ॥ ८२४ ॥ प्रः शुः ॥ ८२५ ॥ पॄश् पालनपूरणयोरित्यस्मात् शुः प्रत्ययो भवति । पर्शुः वङ्क्रिसंज्ञं वक्रास्थि ॥ ८२५ ॥ मस्जीष्यशिभ्यः सुक् ॥८२६॥ एभ्यः कित् सुः प्रत्ययो भवति । टु मस्जोत् शुद्धौ । 'मस्जेः सः' इति नोऽन्तः । मङ्क्षुः मुनिः । इषश् आभीक्ष्ण्ये । इक्षुः गुडादिप्रकृतिः । अशौटि व्याप्तौ । अक्षुः समुद्रः चमश्च ॥ ८२६ ॥ तॄपलिमलेरक्षुः ॥ ८२७ ॥ एभ्योऽक्षुः प्रत्ययो भवति । तॄ प्लवनतरणयोः । तरक्षुः श्वापदविशेषः। पल गतौ, मलि धारणे । पलक्षुः मलक्षुश्च वृक्षः ॥ ८२७ ॥ उलेः कित् ॥ ८२८ ॥ उल दाहे इत्यस्मात् सौत्रात् किदक्षुः प्रत्ययो भवति । उलक्षुः तृणजातिः ॥ ८२८ ॥ कृषिचमितनिधन्यन्दिसर्जिखर्जिभर्जिलस्जीर्ष्यिभ्य ऊः ॥ ८२९ ॥ एभ्य ऊः प्रत्ययो भवति । कृषींत् विलेखने । कर्षूः कुल्या अङ्गारः परिखा गर्तश्च । चमू अदने । चमूः सेना । तनूयी विस्तारे । तनूः शरीरम् । धन शब्दे, धन धान्ये सौत्रो वा । धनूः धान्यराशिः ज्या वरारोहा च स्त्री । अदु बन्धने । अन्दूः पादकटकः । सर्ज अर्जने । सर्जूः अर्थः क्षारः वनस्पतिः वणिक् च । खर्ज मार्जने च । खर्जूः कण्डूः विशुच्च । भृजैङ् भर्जने, भ्रस्जीत् पाके वा, भर्जूः यवविकारः । ओ लस्जैति व्रीडे । लज्जूः लज्जालुः । ईर्ष्य ईर्ष्यार्थः । ईर्ष्यूः ईर्ष्यालुः ॥ ८२९ ॥ फलेः फेल् च ॥ ८३० ॥ फल निष्पत्तावित्यस्मादूः प्रत्ययोऽस्य च फेलित्यादेशो भवति । फेलूः होमविशेषः ॥ ८३० ॥ कषेण्डच्छौ च षः ॥ ८३१ ॥ कष हिंसायामित्यस्मादूः प्रत्ययो भवति षकारस्य च ण्ड् च्छश्चादेशो भवति । कण्डूः कच्छूश्च पामा ॥ ८३१ ॥ वहेर्ध् च ॥ ८३२ ॥ वही प्रापणे इत्यस्मादूः प्रत्ययो धश्चान्तादेशो भवति । वधूः पतिमुपपन्ना कन्या जाया च ॥ ८३२ ॥ मृजेर्गुणश्च ॥ ८३३ ॥ मृजौक् शुद्धावित्यस्मादूः प्रत्ययो गुणश्चास्य भवति । मर्जूः शुद्धिः रजकः नद्यास्तीरं शिला च । गुणे सिद्धे गुणवचनमकारस्य वृद्धिबाधनार्थम् ॥ ८३३ ॥ अजेर्जोऽन्तश्च ॥ ८३४ ॥ अज क्षेपणे चेत्यस्मादूः प्रत्ययो जकारश्चान्तो भवति । अज्जूः जननी ॥ ८३४ ॥ कसिपद्यर्त्यादिभ्यो णित् ॥ ८३५ ॥ एभ्यो णिदूः प्रत्ययो भवति। कस गतौ। कासूः शक्तिर्नामायुधम् वाग्विकलः बुद्धिः व्याधिः विकला च वाक्।

पदिँच् गतौ। पादूः पादुका। ऋंक् गतौ। आरूः वृक्षविशेषः कच्छूः गतिः पिङ्गलश्च। आदिग्रहणात् कचतेः काचूः, शलतेः शालूः इत्यादयोऽपि ॥ ८३५ ॥ अणेर्डोऽन्तश्च ॥ ८३६ ॥ अणेर्धातोर्णिदूः मत्ययो भवति डश्चान्तः। अण शब्दे ॥ आण्डूः जलभृङ्गारः ॥ ८३६ ॥ अडो ल् च वा ॥ ८३७ ॥ अड उद्यमे इत्यस्माण्णिदूः प्रत्ययो भवति लश्चान्तादेशो वा। आलूः भृङ्गारः करकश्च। आडूः दर्वी टिट्टिभः वनसर्पातः जलाधारभूमिः पादभेदनं च ॥८३७॥ नञो लम्बेर्नलुक् च ॥ ८३८ ॥ नञ्पूर्वात् लबुङ् अवस्रंसने चेत्यस्मात् णिदूः मत्ययो नकारस्य च लुग् भवति। अलाबूः तुम्बी ॥ ८३८ ॥ कफादीरेर्ले च ॥ ८३९ ॥ कफपूर्वादीरिक् गतिकम्पनयोरित्यस्मादूः मत्ययो लकारश्चान्तादेशो भवति। कफेलूः श्लेष्मातकः यवलाजाः मधुपर्कः छादिषेयं च तृणम् ॥ ८३९ ॥ ऋतो रत् च ॥ ८४० ॥ ऋत् घृणागतिस्पर्धेषु इत्यस्मादूः मत्ययो रत् चास्यादेशो भवति। रतूः नदीविशेषः सत्यवाक् दूतः कृमिविशेषश्च ॥ ८४० ॥ दृभिचपेः स्वरान्नोऽन्तश्च ॥ ८४१ ॥ आभ्यां पर ऊः मत्ययः स्वरात् परो नोऽन्तश्च भवति। दृभैत् ग्रन्थे। दृन्भूः सर्पजातिः वनस्पतिः वज्रः ग्रन्थकारः दर्भणं च बाहुलकात् 'म्नां धुड्वर्गेऽन्त्योऽपदान्ते' इति नकारस्य लुक् न भवति। चप सान्त्वने। चम्पूः कथाविशेषः ॥ ८४१ ॥ धृषेर्दिधिषदिधीषौ च ॥८४२॥ ञिधृषाट् प्रागल्भ्ये इत्यस्मात् ऊः मत्ययो दिधिष् दिधीष् इत्यादेशो चास्य भवत.। दिधिषूः ज्यायस्याः पूर्वपरिणीता पुंश्चली च। दिधीषूः ऊढायाः कनिष्ठाया अनूढा ज्येष्ठा पुनर्भूः आहुतिश्च ॥ ८४२ ॥ भ्रमिगमितनिभ्यो डित् ॥ ८४३ ॥ एभ्यो डिदूः मत्ययो भवति। भ्रमूच् अनवस्थाने। भ्रूः अक्ष्णोरुपरि रोमराजिः। गम्लृं गतौ। अग्रे गच्छत्यग्रेगूः पुरस्सरः। तनूयी विस्तारे। कुत्सितं तन्यते कुतूः चर्ममयमावपनम् ॥८४३॥ नृतिशृधिरुषिकुहिभ्यः कित् ॥८४४॥ एभ्यः किदूः मत्ययो भवति। नृतैच् नर्तने। नृतूः नर्तकः कृमिजातिः प्लवः मतिकृतिश्च। शृधूङ् शब्दकुत्सायाम्। शृधूः शर्धनः कृमिजातिः अपानं बलिश्च दानवः। रुषंच् रोषे। रुषूः भर्त्सकः। कुहणि विस्मापने। कुहूः अमावास्या ॥ ८४४ ॥ तृखडिभ्यां डूः ॥ ८४५ ॥ आभ्यां डूः मत्ययो भवति। तॄ प्लवनतरणयोः। तर्डूः द्रोणी प्लवः परिवेषणभाण्डं च। खडण् भेदे। खड्डूः बालानामुपकरणम् स्त्रीणां पादाङ्गुष्ठाभरणं च ॥ ८४५ ॥ तृदृभ्यां दूः ॥ ८४६ ॥ आभ्यां दूः मत्ययो भवति। तॄ प्लवनतरणयोः। तर्दूः दर्वी। दृश् विदारणे। दर्दूः कुष्ठभेदः ॥ ८४६ ॥ कमिजनिभ्यां बूः ॥ ८४७ ॥ आभ्यां बूः मत्ययो भवति। कमूङ् कान्तौ। कम्बूः भूषणम् आदर्शतरुः कुरुविन्दश्च। जनैचि प्रादुर्भावे। जम्बूः वृक्षविशेषः ॥ ८४७ ॥ शकेरन्धूः ॥ ८४८ ॥ शकृट् शक्तावित्यस्मादन्धूः प्रत्ययो भवति। शकन्धूः वनस्पतिः देवताविशेषश्च ॥ ८४८ ॥ कृगः कादिः ॥ ८४९ ॥ डु कृंग् करणे इत्यस्मात्ककारादिरन्धूः मत्ययो भवति। कर्कन्धूः बदरी व्रणं यवलाजाः मधुपर्कः विष्टम्भश्च ॥ ८४९ ॥ योरागूः ॥८५०॥ युक् मिश्रणे इत्यस्मादागूः मत्ययो भवति। यवागूः द्रवौदनः ॥ ८५० ॥ काच्छीङो डेरूः ॥ ८५१ ॥ कपूर्वात् शीङ्क् स्वप्ने इत्यस्मात् डिदेरूः मत्ययो भवति। कशेरूः कन्दविशेषः वीरुच ॥ ८५१ ॥ दिव ऋः ॥ ८५२ ॥ दिवूच् क्रीडादावित्यस्मादृः मत्ययो भवति। देवा देवरः पितृव्यस्त्री अग्निश्च ॥ ८५२ ॥

सोरसेः ॥८५३॥ सुपूर्वाद्सूच् क्षेपणे इत्यस्मात्तृः प्रत्ययो भवति । स्वसा भगिनी ॥८५३॥ नियो डित् ॥८५४॥ णींग् प्रापणे इत्यस्मात् डित्तृः प्रत्ययो भवति । ना पुरुषः ॥ ८५४ ॥ सव्यात्स्थः ॥ ८५५ ॥ सव्यपूर्वात् ष्ठां गतिनिवृत्तावित्यस्मात् डित्तृः प्रत्ययो भवति । सव्येष्ठा सारथिः ॥ ८५५ ॥ यतिननन्दिभ्यां दीर्घश्च ॥ ८५६ ॥ यतेर्नञ्पूर्वाच्च नन्देश्च ऋः प्रत्ययो भवति दीर्घश्चानयोर्भवति । यतैङ् प्रयत्ने । याता पतिभ्रातृभगिनी देवरभार्या ज्येष्ठभार्या च । टु नदु समृद्धौ । ननान्दा भर्तृभगिनी । नञादित्वान्नञोऽन्न भवति ॥ ८५६ ॥ शासिशंसिनीरुक्षुहृभृधृमन्यादिभ्यस्तृः ॥ ८५७ ॥ एभ्यस्तृः प्रत्ययो भवति । शासूक् अनुशिष्टौ । शास्ता गुरुः राजा च । प्रशास्ता राजा ऋत्विक् च । शंसू स्तुतौ च । शंस्ता स्तोता । णींग् प्रापणे । नेता सारथिः । रुक् शब्दे । रोता मेघः । टुक्षुक् शब्दे । क्षोता मुसलम् । हृंग् हरणे । हर्ता चौरः । डुडु भृंग्क् पोषणे च । भर्ता पतिः । धृंङ्त् अवध्वंसने । धर्ता धर्मः । मनिंच् ज्ञाने । मन्ता विद्वान् प्रजापतिश्च । आदिग्रहणादु-पद्रष्टा ऋत्विक् विशस्ता घातकः इत्यादयोऽपि ॥८५७॥ पातेरिच ॥८५८॥ पांक् रक्षण इत्यस्मात् तृः प्रत्ययो धातोश्चेकारोन्तादेशो भवति । पिता जनकः ॥८५८॥ मानिभ्राजेर्लुक् च ॥ ८५९ ॥ आभ्यां तृः प्रत्ययो लुक् चान्तस्य भवति । मानि पूजायाम् । माता जननी । भ्राजि दीप्तौ । भ्राता सोदर्यः ॥ ८५९ ॥ जाया मिगः ॥ ८६० ॥ जाशब्दपूर्वात् मिंग्ट् प्रक्षेपणे इत्यस्मात् तृः प्रत्ययो भवति । जायां प्रजायां मिन्वन्ति तमिति जामाता दुहितृपतिः ॥ ८६० ॥ आपोऽप् च ॥ ८६१ ॥आप्लृंट् व्याप्तावित्यस्मात् तृः प्रत्ययो भवति अप् चास्यादेशः । अप्ता यज्ञः अग्निश्च ॥ ८६१ ॥ नमेः प च ॥ ८६२ ॥ णमं प्रह्वत्वे इत्यस्मात्तृः प्रत्ययो पश्चास्यान्तादेशो भवति । नप्ता दुहितुः पुत्रस्य वा पुत्रः ॥८६२॥ हुपूग्गोन्नीप्रस्तुप्रतिहृप्रतिप्रस्थाभ्य ऋत्विजि ॥ ८६३ ॥ एभ्य ऋत्विज्यभिधेये तृः प्रत्ययो भवति । हुंक् दानादनयोः । होता । पूगश् पवने । पोता । गैं शब्दे, णींग् प्रापणे उत्पूर्वः । उद्गाता । उन्नेता । ष्टुंग्क् स्तुतौ, प्रपूर्वः । प्रस्तोता । हृंग् हरणे प्रतिपूर्वः । प्रतिहर्ता । ष्ठां गतिनिवृत्तौ प्रतिप्रपूर्वः । प्रतिप्रस्थाता । एते ऋत्विजः ॥ ८६३ ॥ नियः षादिः ॥ ८६४ ॥ णींग् प्रापणे इत्यस्मात् षकारादिस्तृः प्रत्ययो भवति ऋत्विज्यभिधेये । नेष्टा ऋत्विक् ॥ ८६४ ॥ त्वष्टृक्षत्तृदुहित्रादयः ॥ ८६५ ॥ एते तृप्रत्ययान्ता निपात्यन्ते । त्विषेरितोऽच्च । त्वष्टा देववर्धकिः प्रजापतिः आदित्यश्च । क्षद खदने सौत्रः । क्षत्ता नियुक्तः अविनीतः दौवारिकः मुसलः पारशवः रुद्रः सारथिश्च । दुहेरिद् किच्च । दुहिता तनया । आदिग्रहणादन्येऽपि ॥ ८६५ ॥ रातेर्डैः ॥ ८६६ । रांक् दाने इत्यस्मात् डिदैः प्रत्ययो भवति । राः द्रव्यम् । रायौ । रायः ॥ ८६६ ॥ द्युगमिभ्यां डोः ॥ ८६७ ॥ आभ्यां डिदोः प्रत्ययो भवति । द्युंक् अभिगमे । द्यौः स्वर्गः अन्तरिक्षं च । गम्लृ गतौ । गौः पृथिव्यादिः ॥ ८६७ ॥ ग्लानुदिभ्यां डौः ॥ ८६८ ॥ आभ्यां डिदौः प्रत्ययो भवति । ग्लैं हर्षक्षये । ग्लौः चन्द्रमाः व्याधितः शरीरग्लानिश्च । णुदंत् प्रेरणे । नौः जलतरणम् ॥ ८६८ ॥ तोः किक् ॥ ८६९ ॥ तुंक् वृत्त्यादावित्यस्मात् किक् प्रत्ययो भवति । ककार कित्कार्यार्थः । इकार उच्चारणार्थः । तुक् अपत्यम् ॥ ८६९ ॥ द्रागादयः ॥ ८७० ॥ द्राक् इत्यादयः शब्दाः

क्विप्रत्ययान्ता निपात्यन्ते । द्रवतेरा च । द्राक् शीघ्रम् । एवं सरतेः, स्राक् । स एवार्थः ॥ इयर्तेरर्वादेशश्च । अर्वाक् अचिरन्तनम् । आदिग्रहणादन्येऽपि ॥ ८७० ॥ स्रोश्चिक् ॥ ८७१ ॥ स्रुं गतौ इत्यस्मात् चिक् प्रत्ययो भवति । स्रुक् जुहूप्रभृति अग्निहोत्रभाण्डम् ॥ स्रुचौ । स्रुचः । इकार उच्चारणार्थः । ककारः कित्कार्यार्थः ॥ ८७१ ॥ तनेर्डूच् ॥ ८७२ ॥ तनूयी विस्तारे इत्यस्मात् डिद्वच् प्रत्ययो भवति । त्वक् शरीरादिवेष्टनम् ॥ ८७२ ॥ पारेरज् ॥ ८७३ ॥ पारण् कर्मसमाप्तावित्यस्मादज् प्रत्ययो भवति । पारक् शाकविशेषः प्राकारः सुवर्णं रत्नं च । पारजौ । पारजः ॥ ८७३ ॥ ऋधिपृथिभिषिभ्यः कित् ॥ ८७४ ॥ एभ्यः किदज् प्रत्ययो भवति । ऋधौच् वृद्धौ । ऋधक् समीपवाची अव्ययम् । प्रथिप् प्रख्याने । निर्देशादेव ऋत् । पृथक् नानार्थेऽव्ययम् । भिष् सौत्रः । भिषक् वैद्यः । भिषजौ । भिषजः ॥ ८७४ ॥ भृपणिभ्यामिज् भुरवणौ च ॥ ८७५ ॥ भृपणिभ्यामिज् प्रत्ययो यथासंख्यं भुर वण इत्यादेशौ च भवतः । भृंग् भरणे । भुरिक् बाहुः शब्दः भूमिः वायुः एकाक्षराधिकपादं च ऋक्छन्दः । पणि व्यवहारस्तुत्योः । वणिक् वैदेहिकः ॥ ८७५ ॥ वशेः कित् ॥ ८७६ ॥ वशक् कान्तावित्यस्मात् किदिज् प्रत्ययो भवति । उशिक् कान्तः उशीरम् अग्निः गौतमश्च ऋषिः ॥ ८७६ ॥ लङ्घेरद् नलुक् च ॥ ८७७ ॥ लघुङ् गतावित्यस्मात् अद् प्रत्ययो नलोपश्चास्य भवति । लघद् वायुः लघु च शकटम् ॥ ८७७ ॥ सर्तेरड् ॥ ८७८ ॥ सृं गतावित्यस्मादड् प्रत्ययो भवति । सरड् वृक्षविशेषः मेघः उष्ट्रजातिश्च ॥ ८७८ ॥ ईडेरविड् ह्रस्वश्च ॥ ८७९ ॥ ईडिक् स्तुतावित्यस्मादविड् प्रत्ययो ह्रस्वश्चास्य भवति । इडविड् विश्रवाः ॥ ८७९ ॥ क्विपि म्लेच्छश्च वा ॥ ८८० ॥ म्लेच्छेरीडेश्च क्विपि प्रत्यये वा ह्रस्वो भवति । अत एव वचनात् क्विप् च ॥ म्लेच्छ अव्यक्ते शब्दे । म्लेट् म्लिट् उभयं म्लेच्छजातिः । ईट् इट् स्वामी मेदिनी च ॥ ८८० ॥ तृपेः कत् ॥ ८८१ ॥ तृपौच् प्रीतावित्यस्मात् किदत् प्रत्ययो भवति । तृपत् चन्द्रः समुद्रः तृणभूमिश्च ॥ ८८१ ॥ संश्चद्वेहत्साक्षादादयः ॥ ८८२ ॥ एते कत्प्रत्ययान्ता निपात्यन्ते । संपूर्वाच्चिनोतेर्डित् समो मकारस्यानुस्वारपूर्वः शकारश्च । संश्चत् अध्वर्युः कुहकश्च । अनुस्वारं नेच्छन्त्येके । सश्चत् कुहकः । विपूर्वाद्धन्तेर्डिद्वेश्च गुणः । विहन्ति गर्भमिति वेहत् गर्भघातिनी अप्रजाः स्त्री अनड्वांश्च । संपूर्वादीक्षतेः साक्षाभावश्च । साक्षात् समक्षमित्यर्थः । आदिग्रहणाद्रेहद्वियत्पुरीतदादयोऽपि ॥ ८८२ ॥ पटच्छपदादयोऽनुकरणाः ॥ ८८३ ॥ पटदित्यादयोऽनुकरणशब्दाः कत्प्रत्ययान्ता निपात्यन्ते । पट गतौ । पटत् । छुपत् संस्पर्शे, उकारस्याकारश्च । छपत् । पत्लृ गतौ । पतत् । शॄश् हिंसायाम् । शरत् । शल गतौ । शलत् । खट काङ्क्षे । खटत् । दहेः प च । दपत् । डिपेः डिपत् । खनतेरश्च । खरत् । खादतेः खादत् । सर्वे एते कस्यचिद्विशेषस्य श्रुतिप्रत्यासत्त्याऽनुकरणशब्दाः । अनुकरणमपि हि साध्वेव कर्तव्यम् न यत्किंचित् यथानक्षरमिति शिष्टाः स्मरन्ति ॥ ८८३ ॥ द्रुहिवृहिमहिपृषिभ्यः कतृः ॥ ८८४ ॥ एभ्यः किदतृः प्रत्ययो भवति । द्रुहौच् जिघांसायाम् । द्रुहन् ग्रीष्मः । वृह वृद्धौ । वृहन् प्रवृद्धः । बृहती छन्दः । मह पूजायाम् । महान् पूजितः विस्तीर्णश्च । महान्तौ । महान्तः । महती । पृषू सेचने । पृषत् तत्र जलबिन्दुः चित्रवर्णजातिः दध्युपसिक्तमाज्यं च । पृषती मृगी । स्थूलपृषतीमालभेत । ऋकारो ङ्या-

र्थः ॥ ८८४ ॥ गमेर्डिद्द्वे च ॥ ८८५ ॥ गम्लृं गतावित्यस्मात् कतृः प्रत्ययो डिद्भवति द्वे चास्य रूपे भवतः। जगत् स्थावरजङ्गमो लोकः। जगती पृथ्वी ॥८८५॥ भातेर्डवतुः ॥ ८८६ ॥ भांक् दीप्तावित्यस्मात् डिदवतुः प्रत्ययो भवति। भवान्। भवन्तौ। भवन्तः। उकारो दीर्घत्वादिकार्यार्थः ॥ ८८६ ॥ हृसृरुहियुषित- डिभ्य इत् ॥ ८८७ ॥ एभ्य इत् प्रत्ययो भवति। हृंग् हरणे। हरित् हरितो वर्णः ककुब् वायुः मृगजातिः अश्वः सूर्यश्च। सृं गतौ। सरित् नदी। रुहं जन्मनि। रोहित् वीरुत्प्रकारः मत्स्यः सूर्यः अग्निः मृगः वर्णश्च। युषः सौत्रः। योषति गच्छति पुरुषमिति योषित् स्त्री। तडण् आघाते। तडित् विद्युत् ॥ ८८७ ॥ उदकाच्छ्वेर्डित् ॥ ८८८ ॥ उदकपूर्वात् ट्वोंश्वि गतिवृद्ध्योरित्यस्मात् डिदित् प्रत्ययो भवति। उदकेन श्वयति उदश्वित् तक्रम्। 'नाम्न्युत्तरपदस्य च' इति उदकस्य उदभावः ॥८८८॥ म्र उत् ॥८८९॥ मृत् प्राणत्याग इत्यस्मादुत् प्रत्ययो भवति। मरुत् वायुः देवः गिरिशिखरं च ॥ ८८९ ॥ ग्रो मादिर्वा ॥८९०॥ गृत् निगरणे इत्यस्मादुत् प्रत्ययो भवति स च मकारादिर्वा भवति। गरुत्मत् गरुडः आदित्यः मधुमक्षिका तक्षा तृणं सुवर्णं च। गरुत् बर्हः अजगरः मरकतमणिः वेगः तेजसां वर्तिश्च ॥ ८९० ॥ शकेर्ऋत् ॥ ८९१ ॥ शक्लृंट् शक्तावित्यस्मादृत् प्रत्ययो भवति। शकृत् पुरीषम् ॥ ८९१ ॥ यजेः क च ॥ ८९२ ॥ यजी देवपूजादिष्वित्यस्मात् ऋत् प्रत्ययो कश्चान्तादेशो भवति। यकृत् अन्त्रम् ॥ ८९२ ॥ पातेः कृथ् ॥ ८९३ ॥ पांक् रक्षणे इत्यस्मात् ऋथ् प्रत्ययः किद्भवति। पृथो नाम क्षत्रियाः ॥ ८९३ ॥ शॄदॄभसेरद् ॥ ८९४ ॥ एभ्योऽद् प्रत्ययो भवति। शॄश् हिंसायाम्। शरद् ऋतुः। दॄ भये। दरत् जनपदसमानशब्दः क्षत्रियः॥ दरदो जनपदः॥ भस भर्त्सनदीप्त्योः सौत्रः। भसत् जघनम् आस्यम् आमाशयस्थानं च। भपेरपीच्छन्त्येके। भपत् ॥ ८९४ ॥ तनित्यजियजिभ्यो डद् ॥ ८९५ ॥ एभ्यो डिदद् प्रत्ययो भवति। तनूयी विस्तारे। तद्, सः। त्यजं हानौ। त्यद्, स्यः। एतौ निर्देशवाचिनौ। यजीं देवपूजादौ। यद्, यः। अयमुद्देशवाची। ॥ ८९५ ॥ इणस्तद् ॥८९६॥ इणंक् गतावित्यस्मात्तद् प्रत्ययो भवति। एतद्, एषः। समीपवाची शब्दः ॥ ८९६ ॥ प्रः सद् ॥ ८९७ ॥ पृश् पालनपूरणयो- रित्यस्मात् सदित्येवं प्रत्ययो भवति। पर्षत् सभा ॥ ८९७ ॥ द्रो ह्रस्वश्च ॥ ८९८ ॥ दॄश् विदारणे इत्यस्मात्सद् प्रत्ययो भवति ह्रस्वश्चास्य भवति। दृषत्पाषाणः ॥ ८९८ ॥ युष्यसिभ्यां क्मद् ॥ ८९९ ॥ आभ्यां कित् मदित्ययं प्रत्ययो भवति। युषः सौत्रः सेवायाम्। युष्मद्, यूयम्। असूच् क्षेपणे अस्मद्, वयम् ॥ ८९९ ॥ उक्षितक्ष्यक्षीशिराजिधन्विपञ्चिपूषिक्लिदिस्निहिनुमस्जेरन् ॥ ९०० ॥ एभ्योऽन् प्रत्ययो भवति। उक्ष सेचने। उक्षा वृषः। तक्षौ तनूकरणे। तक्षा वर्द्धकिः। अक्षौ व्याप्तौ च। अक्षा दृष्टिनिपातः। ईशिक् ऐश्वर्ये। ईशा परमात्मा। राजृग् दीप्तौ। राजा ईश्वरः। धन्विः सौत्रो गतौ, धवु गतौ वा। धन्वा मरुः धनुश्च। पचुङ् व्यक्तीकरणे। पञ्च संख्या। पूष वृद्धौ। पूषा आदित्यः। क्लिदौच् आर्द्रभावे। क्लेदा मुखप्रसेकः चन्द्रः इन्द्रश्च। ष्णिहौच् प्रीतौ। स्नेहा स्नायुम् सुहृत् वशा च गौः। णुक् स्तुतौ। नव संख्या। टु मस्जोत् शुद्धौ। मज्जा षष्ठो धातुः ॥ ९०० ॥

लूपूयुवृषिदंशिद्युदिविप्रतिदिविभ्यः कित् ॥ ९०१ ॥ एभ्यः किदन् प्रत्ययो भवति । लूञ् छेदने । लुवा दात्रं स्थावरश्च । पूञ् पवने । पुवा वायुः । युक् मिश्रणे । युवा तरुणः । वृषू सेचने । वृषा इन्द्रः वृषभश्च । दंशं दशने । दश संख्या । द्युक् अभिगमे । द्युवा अभिगमनीयः राजा सूर्यश्च । दिवूच् क्रीडादौ । दिवा दिनम् । प्रतिपूर्वात् प्रतिदिवा अहः अपराह्णश्च ॥ ९०१ ॥ श्वन्मातरिश्वन्मूर्धन्प्लीहन्नर्यमन्विश्वप्सन्परिज्वन्महन्नहन्मघवन्नथर्वन्निति ॥ ९०२॥ एतेऽन्प्रत्ययान्ता निपात्यन्ते । श्वयतेर्लुक् च । श्वा कुकुरः । मातरि अन्तरिक्षे श्वयति मातरिश्वा वायुः । अत्र ' तत्पुरुषे कृति ' इति सप्तम्या अलुप् इकारलोपश्च पूर्ववत् । मूर्छेर्धं च । मूर्छन्त्यस्मिन्नाहताः प्राणिन इति मूर्धा शिरः । प्लिहेर्दीर्घश्च । प्लीहा जठरान्तरावयवः । अरिपूर्वादमेर्ण्यन्तात् अरीन् आमयतीति अर्यमा सूर्यः । विश्वपूर्वात् प्सातेः कित् च । विश्वप्सा कालः वायुः अग्निः इन्द्रश्च । परिपूर्वात् ज्वलतेर्डिच्च । परिज्वा सूर्यः चन्द्रः अग्निः वायुश्च । महीयतेरीयलोपश्च । महा महत्त्वम् । अंहेर्नलोपश्च । अंहते अहः दिवसः । मह्‌घेर्नलोपोऽव् चान्तः । मङ्घते इति मघवा इन्द्रः । नञ्पूर्वात् खर्वेः खस्थश्च । न खर्वति, अथर्वा वेदः ऋषिश्च । इतिकरणादन्येऽपि भवन्ति ॥ ९०२ ॥ षप्यशौभ्यां तन् ॥ ९०३ ॥ आभ्यां तन् प्रत्ययो भवति । षप समवाये । अशौटि व्याप्तौ । सप्त अष्ट उभे संख्ये ॥ ९०३ ॥ स्नामदिपद्यर्तिपॄशकिभ्यो वन् ॥ ९०४ ॥ एभ्यो वन् प्रत्ययो भवति । ष्णांक् शौचे । स्नावा शिरा नदी च । मदैच् हर्षे । मद्वा दृप्तः पानं कान्तिः क्रीडा मुनिः शिरश्च । मद्वरी मदिरा । बाहुलकात् ङी वनोरश्च । पदिंच् गतौ । पद्वा पत्तिः वत्सः रथः पादः गतिश्च । ऋंक् गतौ । अर्वा अश्वः अशनिः आसनं मुनिश्च । पॄश् पालनपूरणयोः । पर्व सन्धिः पूरणं पुण्यातिथिश्च । शक्लृट् शक्तौ । शक्वा वर्धकिः समर्थः । शक्वरी नदी विद्युत् छन्दोजातिः युवतिः सुरभिश्च । शाक्वरो वृषः ॥ ९०४ ॥ ग्रहेरा च ॥ ९०५ ॥ ग्रहीश् उपादाने इत्यस्मात् वन् प्रत्ययो भवति आकारश्चान्तादेशः । ग्रावा पाषाणः पर्वतश्च ॥ ९०५ ॥ ऋशीकुशिरुहिजिक्षिहृसृधृदृभ्यः क्वनिप् ॥ ९०६ ॥ एभ्यः क्वनिप् प्रत्ययो भवति । ऋंक् गतौ । ऋत्वा ऋषिः । शीङ्क् स्वप्ने । शीवा अजगरः । क्रुशं आह्वानरोदनयोः । क्रुश्वा सृगालः । रुहं बीजजन्मनि । रुह्वा वृक्षः । जिं अभिभवे । जित्वा धर्मः इन्द्रः योद्धा च । जित्वरी नदी वणिजश्च । वाराणसीं जित्वरीमाहुः । क्षिं क्षये । क्षित्वा वायुः विष्णुः मृत्युश्च । क्षित्वरी रात्रिः । हृंग् हरणे । हृत्वा रुद्रः मत्स्यः वायुश्च । सृं गतौ । सृत्वा कालः अग्निः वायुः सर्पः प्रजापतिः नीचजातिश्च । सृत्वरी वेश्यामाता । धृंङ्त् स्थाने । धृत्वा विष्णुः शैलः समुद्रश्च । धृत्वरी भूमिः । दृंङ्त् आदरे । दृत्वा दृप्तः । पकारस्तागमार्थः ॥ ९०६ ॥ सृजेः स्रज्सृकौ च ॥ ९०७ ॥ सृजंत् विसर्गे इत्यस्मात् क्वनिप् प्रत्ययो भवति स्रज् सृक् इत्यादेशौ चास्य भवतः । स्रज्वा मालाकारः रज्जुश्च । सृक्वणी आस्योपान्तौ ॥ ९०७ ॥ ध्याप्योर्धी पी च ॥ ९०८ ॥ ध्यैं चिन्तायाम् प्यैङ् वृद्धौ इत्याभ्यां क्वनिप् प्रत्ययो यथासंख्यं च धी पी इत्येतावादेशौ भवतः । ध्यायतीति धीवा मनीषी निषादः व्याधिः मत्स्यश्च । प्यायतेः, पीवा पीनः ॥ ९०८ ॥ अतेर्ध च ॥ ९०९ ॥ अत सातत्यगमने इत्यस्मात् क्वनिप् प्रत्ययो धश्चान्तादेशो भवति । अध्वा मार्गः

र्थः ॥ ८८४ ॥ **गमेर्डिद्द्वे च** ॥ ८८५ ॥ गम्लृं गतावित्यस्मात् कतुः प्रत्ययो डिद्भवति द्वे चास्य रूपे भवतः। जगत् स्थावरजङ्गमो लोकः। जगती पृथ्वी ॥८८५॥ **भातेर्डवतुः** ॥ ८८६ ॥ भांक् दीप्तावित्यस्मात् डिदवतुः प्रत्ययो भवति। भवान्। भवन्तौ। भवन्तः। उकारो दीर्घत्वादिकार्यार्थः ॥ ८८६ ॥ **हृसृरुहियुषितिडिभ्य इत्** ॥ ८८७ ॥ एभ्य इत् प्रत्ययो भवति। हृंग् हरणे। हरित् हरितो वर्णः ककुब् वायुः मृगजातिः अश्वः सूर्यश्च। सृं गतौ। सरित् नदी। रुहं जन्मनि। रोहित् वीरुत्प्रकारः मत्स्यः सूर्यः अग्निः मृगः वर्णश्च। युषः सौत्रः। योषति गच्छति पुरुषमिति योषित् स्त्री। तडण् आघाते। तडित् विद्युत् ॥ ८८७ ॥ **उदकाच्छ्वेर्डित्** ॥ ८८८ ॥ उदकपूर्वात् ट्वोश्वि गतिवृद्ध्योरित्यस्मात् डिदिव् प्रत्ययो भवति। उदकेन श्वयति उदश्वित् तक्रम्। 'नाम्न्युत्तरपदस्य च' इति उदकस्य उदभावः ॥८८८॥ **म्र उत्** ॥८८९॥ मृत् प्राणत्याग इत्यस्मादुत् प्रत्ययो भवति। मरुत् वायुः देवः गिरिशिखरं च ॥ ८८९ ॥ **ग्रो मादिर्वा** ॥८९० ॥ गॄत् निगरणे इत्यस्मादुत् प्रत्ययो भवति स च मकारादिर्वा भवति। गर्मुत् गरुडः आदित्यः मधुमक्षिका तक्षा तृणं सुवर्णं च। गरुत् बर्हः अजगरः मरकतमणिः वेगः तेजसां वर्तिश्च ॥ ८९० ॥ **शकेर्ऋत्** ॥ ८९१ ॥ शक्लृंट् शक्तावित्यस्मादृत् प्रत्ययो भवति। शकृत् पुरीषम् ॥ ८९१ ॥ **यजेः क च** ॥ ८९२ ॥ यजीं देवपूजादिष्वित्यस्मात् ऋत् प्रत्ययो कश्चान्तादेशो भवति। यकृत् अन्त्रम् ॥ ८९२ ॥ **पातेः कृथ्** ॥ ८९३ ॥ पांक् रक्षणे इत्यस्मात् ऋथ् प्रत्ययः किद्भवति। पृथो नाम क्षत्रियाः ॥ ८९३ ॥ **शॄदॄभसेरद्** ॥ ८९४ ॥ एभ्योऽद् प्रत्ययो भवति। शॄश् हिंसायाम्। शरद् ऋतुः। दॄ भये। दरत् जनपदसमानशब्दः क्षत्रियः॥ दरदो जनपदः॥ भस भर्त्सनदीप्त्योः सौत्रः। भसत् जघनम् आस्यम् आमाशयस्थानं च। भषेरपीच्छन्त्येके। भषत् ॥ ८९४ ॥ **तनित्यजियजिभ्यो डद्** ॥ ८९५ ॥ एभ्यो डिदद् प्रत्ययो भवति। तनूयी विस्तारे। तद्, सः। त्यजं हानौ। त्यद्, स्यः। एतौ निर्देशवाचिनौ। यजीं देवपूजादौ। यद्, यः। अयमुद्देशवाची। ॥ ८९५ ॥ **इणस्तद्** ॥८९६॥ इणंक् गतावित्यस्मात्तद् प्रत्ययो भवति। एतद्, एषः। समीपवाची शब्दः ॥ ८९६ ॥ **प्रः सद्** ॥ ८९७ ॥ पॄश् पालनपूरणयोरित्यस्मात् सदित्येवं प्रत्ययो भवति। पर्षत् सभा ॥ ८९७ ॥ **द्रो ह्रस्वश्च** ॥ ८९८ ॥ दॄश् विदारणे इत्यस्मात्सद् प्रत्ययो भवति ह्रस्वश्चास्य भवति। दृषत्पाषाणः ॥ ८९८ ॥ **युष्यसिभ्यां क्मद्** ॥ ८९९ ॥ आभ्यां कित् मदित्ययं प्रत्ययो भवति। युषः सौत्रः सेवायाम्। युष्मद्, यूयम्। असूच् क्षेपणे अस्मद्, वयम् ॥ ८९९ ॥ **उक्षितक्ष्यक्षीशिराजिधन्विपश्चिपूपिक्लिदिस्निहिनुमस्जेरन्** ॥ ९०० ॥ एभ्योऽन् प्रत्ययो भवति। उक्ष सेचने। उक्षा वृषः। तक्षौ तनूकरणे। तक्षा वर्द्धकिः। अक्षौ व्याप्तौ च। अक्षा दृष्टिनिपातः। ईशिक् ऐश्वर्ये। ईशा परमात्मा। राजृग् दीप्तौ। राजा ईश्वरः। धन्विः सौत्रो गतौ, धवु गतौ वा। धन्वा मरुः धनुश्च। पचुङ् व्यक्तीकरणे। पञ्च संख्या। पूप वृद्धौ। पूपा आदित्यः। क्लिदौच् आर्द्रभावे। क्लेदा मुखप्रसेकः चन्द्रः इन्द्रश्च। ष्णिहौच् प्रीतौ। स्नेहा स्वाङ्गम् सुहृत् वशा च गौः। णुक् स्तुतौ। नव संख्या। टु मस्जोंत् शुद्धौ। मज्जा षष्ठो धातुः ॥ ९०० ॥

लूपूयुवृषिदंशिद्युदिविप्रतिदिविभ्यः कित् ॥ ९०१ ॥ एभ्यः किदन् प्रत्ययो भवति । लूञ् छेदने । लुवा दात्रं स्थावरश्च । पूञ् पवने । पुवा वायुः । युक् मिश्रणे । युवा तरुणः । वृषू सेचने । वृषा इन्द्रः वृषभश्च । दंशं दशने । दश संख्या । द्युक् अभिगमे । द्युवा अभिगमनीयः राजा सूर्यश्च । दिवूच् क्रीडादौ । दिवा दिनम् । प्रतिपूर्वात् प्रतिदिवा अहः अपराह्णश्च ॥ ९०१ ॥ श्वन्मातरिश्वन्मूर्धन्प्लीहन्नर्यमन्विश्वप्सन्परिज्वन्महन्नहन्मघवन्नथर्वन्निति ॥ ९०२॥ एतेऽन्प्रत्ययान्ता निपात्यन्ते । श्वयतेर्लुक् च । श्वा कुकुरः । मातरि अन्तरिक्षे श्वयति मातरिश्वा वायुः । अत्र 'तत्पुरुषे कृति' इति सप्तम्या अलुप् इकारलोपश्च पूर्ववत् । मूर्छेर्ध च । मूर्छन्त्यस्मिन्नाहताः प्राणिन इति मूर्धा शिरः । प्लिहेर्दीर्घश्च । प्लीहा जठरान्तरावयवः । अरिपूर्वाद्मेर्ण्यन्तात् अरीन् आमयतीति अर्यमा सूर्यः । विश्वपूर्वात् प्सातेः कित् च । विश्वप्सा कालः वायुः अग्निः इन्द्रश्च । परिपूर्वात् ज्वलतेर्डिच्च । परिज्वा सूर्यः चन्द्रः अग्निः वायुश्च । महीयतेरीयलोपश्च । महा महत्त्वम् । अंहेर्नलोपश्च । अंहते अहः दिवसः । मङ्घेर्नलोपोऽव् चान्तः । मङ्घते इति मघवा इन्द्रः । नञ्पूर्वात् खर्वेः खस्थश्च । न खर्वति, अथर्वा वेदः ऋषिश्च । इतिकरणादन्येपि भवन्ति ॥ ९०२ ॥ षप्यशौभ्यां तन् ॥ ९०३ ॥ आभ्यां तन् प्रत्ययो भवति । षप समवाये । अशौटि व्याप्तौ । सप्त अष्ट उभे संख्ये ॥ ९०३ ॥ स्नामदिपद्यर्तिपृशकिभ्यो वन् ॥ ९०४ ॥ एभ्यो वन् प्रत्ययो भवति । ष्णांक् शौचे । स्नावा शिरा नदी च । मदैच् हर्षे । मद्वा दृप्तः पानं कान्तिः क्रीडा मुनिः शिरश्च । मद्वरी मदिरा । वाहुलकात् ङी वनोरश्च । पदिंच् गतौ । पद्वा पत्तिः वत्सः रथः पादः गतिश्च । ऋंक् गतौ । अर्वा अश्वः अशनिः आसनं मुनिश्च । पृश् पालनपूरणयोः । पर्व सन्धिः पूरणं पुण्यतिथिश्च । शक्लृट् शक्तौ । शक्वा वर्धकिः समर्थः । शक्वरी नदी विद्युत् छन्दोजातिः युवतिः सुरभिश्च । शाक्वरो वृषः ॥ ९०४ ॥ ग्रहेरा च ॥ ९०५ ॥ ग्रहीश् उपादाने इत्यस्मात् वन् प्रत्ययो भवति आकारश्चान्तादेशः । ग्रावा पाषाणः पर्वतश्च ॥ ९०५ ॥ ऋशीक्रुशिरुहिजिक्षिहृसृधृदृभ्यः क्वनिप् ॥ ९०६ ॥ एभ्यः क्वनिप् प्रत्ययो भवति । ऋंक् गतौ । ऋत्वा ऋषिः । शीङ्क् स्वप्ने । शीवा अजगरः । क्रुशं आह्वानरोदनयोः । क्रुश्वा सृगालः । रुहं बीजजन्मनि । रुह्वा वृक्षः । जिं अभिभवे । जित्वा धर्मः इन्द्रः योद्धा च । जित्वरी नदी वणिजश्च । वाराणसीं जित्वरीमाहुः । क्षिं क्षये । क्षित्वा वायुः विष्णुः मृत्युश्च । क्षित्वरी रात्रिः । हृंग् हरणे । हृत्वा रुद्रः मत्स्यः वायुश्च । सृं गतौ । सृत्वा काल. अग्निः वायु सर्पः प्रजापतिः नीचजातिश्च । सृत्वरी वेश्यामाता । धृंङ्त् स्थाने । धृत्वा विष्णुः शैलः समुद्रश्च । धृत्वरी भूमिः । दृंङ्त् आदरे । दृत्वा दृप्तः । पकारस्तागमार्थः ॥ ९०६ ॥ सृजेः स्रजसृकौ च ॥९०७॥ सृजंत् विसर्गे इत्यस्मात् क्वनिप् प्रत्ययो भवति स्रज् सृक् इत्यादेशौ चास्य भवतः। स्रज्वा मालाकारः रज्जुश्च। सृक्वणी आस्योपान्तौ ॥ ९०७॥ ध्याप्योर्धी पी च ॥ ९०८ ॥ ध्यैं चिन्तायाम् प्यैङ् वृद्धौ इत्याभ्यां क्वनिप् प्रत्ययो यथासंख्यं च धी पी इत्येतावादेशौ भवतः । ध्यायतीति धीवा मनीषी निषादः व्याधिः मत्स्यश्च । प्यायतेः, पीवा पीनः ॥ ९०८ ॥ अतेर्ध च ॥ ९०९ ॥ अत सातत्यगमने इत्यस्मात् क्वनिप् प्रत्ययो धश्चान्तादेशो भवति । अध्वा मार्गः

॥ ९०९ ॥ प्रात्सदिरीरिणस्तोऽन्तश्च ॥ ९१० प्रपूर्वेभ्यः सद्यादिभ्यः क्वनिप् प्रत्ययस्तोऽन्तश्च भवति । पद्लृं विशरणगत्यवसादनेषु । प्रसत्त्वा मूढः वायुश्च । प्रसत्त्वरी माता प्रातिपात्तिश्च । रीश् गतिरेषणयोः । प्ररीत्वा वायुः । प्ररीत्वरी स्त्रीविशेषः । ईरिक् गतिकम्पनयोः । प्रेत्वा सागरः वायुश्च । प्रेत्वरी नगरी । इणंक् गतौ । प्रेत्वरी नगरीत्याहुः ॥ ९१० ॥ मन् ॥ ९११ ॥ सर्वधातुभ्यो बहुलं मन् प्रत्ययो भवति । डुकृंग् करणे । कर्म व्यापारः । वृग्ट् वरणे । वर्म कवचम् । वृतूङ् वर्तने । वर्त्म पन्था. । चर भक्षणे च । चर्म अजिनम् । भस भर्त्सनदीप्त्योः सौत्रः । भसितं तदिति भस्म भूतिः । जनैचि प्रादुर्भावे । जन्म उत्पत्तिः । शॄश् हिंसायाम् । शर्म सुखम् । वसवोऽस्य दुरितं शीर्यासुरिति वसुशर्मा । एवं हरिशर्मा । मृंत् प्राणत्यागे । मर्म जीवप्रदेशप्रचयस्थानम् । यत्र जायमाना वेदना महती जायते । नॄश् नये । नर्म परिहासकथा । श्लिषंच् आलिङ्गने । श्लेष्मा कफः । ऊष रुजायाम् । ऊष्मा ताप । टु डु भृंगक् पोषणे च । भर्म सुवर्णम् । यांक् प्रापणे । यामा रथः । वांक् गतिगन्धनयोः । वामा करचरणहस्तः । पांक् रक्षणे । पामा कच्छूः । वृषू सेचने । वर्ष्म शरीरम् । पद्लृं विशरणगत्यवसादनेषु । सद्म गृहम् । विशंत् प्रवेशने । वेश्म गृहम् । हिंट् गतिवृद्ध्योः । हेम सुवर्णम् । छदण् अपवारणे । छद्म माया । दीङ्च् क्षये, देङ् पालने वा । दाम रज्जुः माता च । डु धांग्क् धारणे च । धाम स्थानं तेजश्च । ष्ठां गतिनिवृत्तौ । स्थाम बलम् । षुंगट् अभिषवे । सोमा यज्ञः पयो रसः चन्द्रमाश्च । अशौटि व्याप्तौ । अश्मा पाषाणः । लक्षीण् दर्शनाङ्कनयोः । लक्ष्म चिह्नम् । अयि गतौ । अय्म संग्रामः । तक् हसने । तक्मा रतिः आतपः दीपश्च । हुंक् दानादनयोः । होम हव्यद्रव्यम् अग्निहोत्रशाला च । धृंग् धारणे । धर्म पुण्यम् । विपूर्वात् विधर्मा आहितः वायुः व्यभिचारश्च । ध्यैं चिन्तायाम् । ध्याम ध्यानम् ॥ ९११ ॥ कुष्युषिसृपिभ्यः कित् ॥ ९१२ ॥ एभ्यः कित् मन् प्रत्ययो भवति । कुषश् निष्कर्षे । कुष्म शल्यम् । उषू दाहे । उष्मा दाहः । सृप्लृं गतौ । सृप्मा सर्पः शिशुः यतिश्च ॥ ९१२ ॥ बृंहेर्नोऽच्च ॥ ९१३ ॥ बृहु शब्दे इत्यस्मात् मन् प्रत्ययो भवति नकारस्य चाकारः । ब्रह्म परं तेजः अध्ययनं मोक्षः । बृहत्त्वादात्मा । ब्रह्मा भगवान् ॥ ९१३ ॥ व्येग एदोतौ च वा ॥ ९१४ ॥ व्येग् संवरणे इत्यस्मात् मन् प्रत्यय एदोतौ चान्तादेशौ वा भवतः । व्येम वस्त्रम् । व्येमा संसारः कुविन्दभाण्डं च । व्योम नभः । पक्षे, व्याम न्यग्रोधाख्यं प्रमाणम् ॥ ९१४ ॥ स्यतेरी च वा ॥ ९१५ ॥ षोच् अन्तकर्मणि इत्यस्मात् मन् प्रत्यय ईकारश्चान्तादेशो वा भवति । सीमा आघाटः । पक्षे, साम प्रियवचनं वामदेव्यादि च ॥ ९१५ ॥ सात्मन्नात्मन्वेमन्त्रोमन्क्षोमन्ललामन्नामन्पाप्मन्पक्ष्मन्यक्ष्मान्निति ॥ ९१६ ॥ एते मन्प्रत्ययान्ता निपात्यन्ते । स्यतेस्तोऽन्तश्च । सात्म अत्यन्ताभ्यस्तं प्रकृतिभूतम् अन्तकर्म च । अतेः दीर्घश्च । आत्मा जीवः । वेग आत्वाभावश्च । वेम तन्तुवायोपकरणम् । रुहंर्लुक् च । रोम तनूरुहम् । लत्वे, लोम तदेव । क्षमेरोच्च । क्षोम शरीरान्तरवयवः । लातेर्द्वित्वं च । ललाम भूषणादि । नमेरा च । नाम संज्ञा कीर्तिश्च । पातयतेस्तः प् च । पाप्मा पापं रक्षश्च । पक्षेः कः षोऽन्तो नलोपश्च । पक्ष्म अक्ष्यादिलोम । यस्यतेः यक्षिणो वा यक्ष्मा रोगः । इतिकरणात् तोक्मरुक्मादयो भवन्ति ॥ ९१६ ॥ हृजनिभ्यामिमन् ॥ ९१७ ॥

आभ्यामिमन् प्रत्ययो भवति । हृंग् हरणे । हरिमा पापविशेषः मृत्युः वायुश्च । जनैचि प्रादुर्भावे । जनिमा धर्मविशेषः संसारश्च ॥ ९१७ ॥ सृहृभृधृस्तृसृभ्य ईमन् ॥ ९१८ ॥ एभ्य ईमन् प्रत्ययो भवति । सृं गतौ । सरीमा कालः। हृंग् हरणे । हरीमा मातरिश्वा । डुडु भृंग्क् पोषणे च । भरीमा क्षमी राजा कुटुम्बं च। धृंग् धारणे । धरीमा धर्मः । स्तृगृश् आच्छादने । स्तरीमा प्रावारः॥ षूव प्रेरणे। सवीमा गर्भः प्रसूतिश्च॥ ९१८ ॥ गमेरिन् ॥ ९१९॥ गम्लृं गतावित्यस्मादिन् प्रत्ययो भवति । गमिष्यतीति गमी जिगमिषुः॥ ९१९ ॥ आङश्च णित् ९२० ॥ आङ्पूर्वात्केवलाच्च गमेर्णिदिन् प्रत्ययो भवति । आगमिष्यतीति आगामी प्रोषितादिः । गमिष्यतीति गामी प्रस्थितादिः॥ ९२० ॥ सुवः ॥ ९२१ ॥ षूङौच् प्राणिप्रसवे इत्यस्मात् णिदिन् प्रत्ययो भवति । आसावी आसविष्यमाणः जनिष्यमाण इत्यर्थः ॥ ९२१ ॥ भुवो वा ॥९२२॥ भू सत्तायामित्यस्मात् इन् प्रत्ययः स च णिद्वा भवति । भविष्यतीति भावी कर्मविपाकादिः । भवी भविष्यन् ॥ ९२२ ॥ प्रप्रतेर्यावुधिभ्याम् ॥९२३॥ प्रपूर्वात् प्रतिपूर्वाच्च यांक् प्रापणे, बुधिंमनिंच् ज्ञाने इत्यस्मात् च णिदिन् प्रत्ययो भवति । प्रयास्यतीति प्रयायी, प्रतियास्यतीति प्रतियायी। प्रभोत्स्यत इति प्रबोधी प्रतिबोधी बालादिः ॥९२३॥ प्रात् स्थः ॥९२४॥ प्रपूर्वात् ष्ठां गतिनिवृत्तावित्यस्माण्णिदिन् प्रत्ययो भवति । प्रस्थास्यते इति प्रस्थायी गन्तुमनाः ॥ ९२४॥ परमात् कित् ॥ ९२५ ॥परमपूर्वात् तिष्ठतेः किदिन् प्रत्ययो भवति। परमे पदे तिष्ठतीति परमेष्ठी अर्हदादिः । भीरुष्ठानादित्वात् षत्वम्, सप्तम्या अलुप् च ॥ ९२५ ॥ पथिमान्थिभ्याम् ॥ ९२६ ॥ आभ्यां किदिन् प्रत्ययो भवति । पथे गतौ । पन्थाः मार्गः । पन्थानौ । पन्थानः । पथिभिय. । मन्थश् विलोडने । मन्थाः क्षुब्धः वायुः वज्रश्च । मन्थानौ । मन्थानः । मथिभियः ॥ ९२६ ॥ होर्मिन् ॥ ९२७ ॥ हुंक् दानादनयोरित्यस्मात् मिन् प्रत्ययो भवति । होमी ऋत्विक् घृतं च ॥ ९२७ ॥ अर्तेर्भुक्षिनक् ॥ ९२८ ॥ ऋंक् गतावित्यस्मात् भुक्षिनक् प्रत्ययो भवति । ऋभुक्षा इन्द्रः । ऋभुक्षाणौ । ऋभुक्षाणः ॥ ९२८ ॥ अदेस्त्रिन् ॥ ९२९ ॥ अदंक् भक्षणे इत्यस्मात् त्रिन् प्रत्ययो भवति । अत्री ऋषिः ॥ ९२९ ॥ पतेरत्रिन् ॥ ९३० ॥ पत्लृ गतावित्यस्मादत्रिन् प्रत्ययो भवति । पतत्री पक्षी ॥९३०॥ आपः क्विप् ह्रस्वश्च ॥९३१॥ आप्लृंट् व्याप्तावित्यस्मात् क्विप् प्रत्ययो ह्रस्वश्चास्य भवति । आपः अम्भः। स्वभावाद्बहुत्वम् ॥९३१॥ ककुप्त्रिष्टुबनुष्टुभः ॥ ९३२ ॥ एते क्विप्प्रत्ययान्ता निपात्यन्ते । कपूर्वात् स्कुभ्नातेः सलोपश्च । कं वायुं ब्रह्म च स्कुभ्नन्तीति ककुभो दिशः । कुकुप् उष्णिक् छन्दः । त्र्यनुपूर्वात् स्कुभ्नातेः सः षश्च । त्रिष्टुप् छन्दः। अनुष्टुप् छन्दः । बहुवचनान्निजिविजिविषां क्विप् शित् । नेनिक् प्रजापतिः । वेविक् शुचिः । वेविद् चन्द्रमाः ॥ ९३२ ॥ अवेर्मः ॥ ९३३ ॥ अव रक्षणादावित्यस्मान्मः प्रत्ययो भवति । अवतीति ओम् ब्रह्म प्रणवश्च ॥ ९३३ ॥ सोरेतेरम् ॥ ९३४ ॥ सुपूर्वादिणंक् गतावित्यस्मात् अम् प्रत्ययो भवति । स्वयम् आत्मना ॥ ९३४ ॥ नशिनूभ्यां नक्तनूनौ च ॥ ९३५ ॥ नशौच् अदर्शने णूत् स्तवने आभ्याममृ प्रत्ययो नक्त नून इत्यादेशौ चानयोर्भवतः । नक्तं रात्रौ । नूनं वितर्के ॥९३५॥ स्यतेर्णित् ॥९३६॥ षोच् अन्तकर्मणीत्यस्मात् णिदम् प्रत्ययो भवति । सायम् दिवसावसानम् ॥९३६ ॥ गमि-

जमिक्षमिकमिशमिसमिभ्यो डित् ॥९३७॥ एभ्यो डिदम् प्रत्ययो भवति। गम्लृं गतौ। गम्। जमू अदने। जम्। क्षमौषि सहने। क्षम्। एतानि भार्यानामानि। कमूङ् कान्तौ। कम् पानीयम्। शमूच् उपशमे। शम् सुखम्। पम वैक्लव्ये। सम्। संभवति ॥९३७॥ इणो दमक् ॥९३८॥ इणंक् गतावित्यस्मात् कित् दम् प्रत्ययो भवति। इदम् प्रत्यक्षनिर्देशे ॥ ९३८ ॥ कोर्डिम् ॥ ९३९ ॥ कुंङ् शब्दे इत्यस्मात् डिदिम् प्रत्ययो भवति। किम् अनेनाविज्ञातं वस्तु पर्यनुयुज्यते ॥९३९॥ तूपेरीम् णोऽन्तश्च ॥९४०॥ तूप तुष्टावित्यस्मादीम् प्रत्ययो णकारश्चास्यान्तो भवति। तूष्णीं वाङ्नियमे ॥ ९४० ॥ ईङ्कमिशमिसमिभ्यो डित् ॥ ९४१ ॥ एभ्यो डिदीम् प्रत्ययो भवति। ईङ् च् गतौ। ईम्। कमूङ् कान्तौ। कीम्। शमूच् उपशमे। शीम्। पम् वैक्लव्ये। सीम्। अभिनयव्याहरणान्येतानि। ईम् शीम् अव्यक्ते। कीम् संशयप्रश्नादिषु। सीम् अमर्षपादपूरणयोः ॥ ९४१ ॥ क्रमिगमिक्षमेस्तुमाचातः ॥ ९४२ ॥ एभ्यस्तुम् प्रत्ययोऽकारस्य चाकारो भवति। क्रमू पादविक्षेपे। क्रान्तुं गमनम्। गम्लृं गतौ। गान्तुम् पान्थः। क्षमौषि सहने। क्षान्तुम् भूमिः तुमर्थश्च सर्वत्र ॥ ९४२॥ गॄपॄदुर्विधुर्विभ्यः क्विप् ॥ ९४३ ॥ एभ्य क्विप् प्रत्ययो भवति। गॄश् शब्दे। गीः वाक्। पॄश् पालनपूरणयोः। पूः नगरी। दुर्वैं धुर्वैं हिंसायाम्। दूः देहान्तरवयवः। धूः शकटाङ्गम् आदिश्च ॥ ९४३ ॥ वार्द्वारौ ॥ ९४४ ॥ एतौ क्विप्प्रत्ययान्तौ निपात्येते। वृणोतेर्वृद्धिश्च। वाः पानीयम्। कर्मणि दश्च धात्वादिः। वृण्वन्ति तामिति द्वाः द्वारम्। वृं वरणे इत्यस्य च णिगन्तस्य रूपम् ॥ ९४४ ॥ प्रादतेरर् ॥ ९४५ ॥ प्रपूर्वादत सातत्यगमने इत्यस्मादर् प्रत्ययो भवति। प्रातः प्रभातम् ॥ ९४५ ॥ सोरर्तेर्लुक् च ॥ ९४६ ॥ सुपूर्वादृंक् गतावित्यस्मादर् प्रत्ययो धातोश्च लुग् भवति। स्वः स्वर्गः ॥ ९४६ ॥ पूसन्यमिभ्यः पुनसनुतान्ताश्च ॥ ९४७ ॥ पूगृश् पवने, षण् भक्तौ, अम गतावित्येतेभ्योऽर् प्रत्ययो भवति यथासंख्यं च पुन् सनुत् अन्त् इत्यादेशा एषां भवन्ति। पुनः भूयः। सनुतः कालवाची। अन्तः मध्ये ॥ ९४७ ॥ चतेरुर् ॥ ९४८ ॥ चतेग् याचने इत्यस्मादुर् प्रत्ययो भवति। चत्वारः संख्या। चत्वारि। चतस्रः ॥ ९४८ ॥ दिवेर्डिव् ॥ ९४९ ॥ दिवूच् क्रीडादावित्यस्मात् डिदिव् प्रत्ययो भवति। द्यौः स्वर्गः अन्तरिक्षं च। दिवौ। दिवः ॥ ९४९ ॥ विशिविपाशिभ्यां क्विप् ॥ ९५० ॥ आभ्यां क्विप् प्रत्ययो भवति। विशंत् प्रवेशने। विशः प्रजाः। विट् वैश्यः पुरीषं अपत्यं च। पशण् बन्धने, विपूर्वः। विपाशयति स्म वनिष्ठामिति विपाट् नदी ॥ ९५० ॥ सहेः षष् च ॥ ९५१ ॥ षहि मर्षणे इत्यस्मात् क्विप् प्रत्ययः षष् चास्यादेशो भवति। षट् संख्या ॥ ९५१ ॥ अस् ॥ ९५२ ॥ सर्वधातुभ्यो बहुलमस् प्रत्ययो भवति। तपं संतापे। तपः संतापः माघमासः निर्जराफलं चानशनादि। सुष्ठु तपतीति सुतपाः। एवं महातपाः। णमं प्रह्वत्वे। नम पूजायाम्। तमूच् काङ्क्षायाम्। तमः अन्धकारः तृतीयगुणः अज्ञानं च। इणंक् गतौ। अयः काललोहम्। वीक् प्रजनादौ। वयः पक्षी प्राणिनां कालकृता शरीरावस्था च यौवनादिः। वर्चि दीप्तौ। वर्चः लावण्यम् अन्नमलं तेजश्च। सुष्ठु वर्चते इति सुवर्चाः। रक्ष पालने। रक्षः निशाचरः। ञिमिदाच् स्नेहने। मेदः चतुर्थो धातु। रह त्यागे। रहः प्रच्छन्नम्। षहि मर्षणे। सहाः मार्गशीर्षमासः। णभच् हिंसायाम्। नभः आकाशं श्रावणमासश्च। चितै

संज्ञाने । चेतः चित्तम् । प्रचेता वरुणः । मनिंच् ज्ञाने । मनः नोइन्द्रियम् । ब्रूगक् व्यक्तायां वाचि । वचः वचनम् । रुदृक् अश्रुविमोचने । रोदः नभः । रोदसी द्यावापृथिव्यौ । रुधूंपी आवरणे । रोधः तीरम् । अनक् प्राणने । अनः शकटम् अन्नं भोजनं च । सृं गतौ । सरः जलाशयविशेषः । तॄ प्लवनतरणयोः । तरः वेगः बलं च । रहु गतौ । रंहः जवः । तिजि क्षमानिशानयोः । तेजः दीप्तिः । मयि दीप्तौ । मयः सुखम् । मह पूजायाम् । महः तेजः । अर्चिण् पूजायाम् । अर्चः पूजा । षद्लृं विशरणादौ । सदः सभा भवनं च । अञ्जौप् व्यक्त्यादौ । अञ्जः स्नेहः ॥ ९५२ ॥ पाहाक्भ्यां पयह्यौ च ॥ ९५३ ॥ पां पाने ओहांक् त्यागे इत्याभ्यामस् प्रत्ययो भवति यथासंख्यं च पय् ह्य इत्यादेशावनयोर्भवतः । पयः क्षीरं जलं च । ह्यः अनन्तरातीते दिने ॥ ९५३ ॥ छदिवाहिभ्यां छन्दोधौ च ॥ ९५४ ॥ छदण् संवरणे वहीं प्रापण इत्याभ्यामस् प्रत्ययो यथासंख्यं चानयोः छन्द् ऊध् इत्यादेशौ भवतः । छन्दः वेदः इच्छा वाग्बन्धविशेषश्च । ऊधः धेनोः क्षीराधारः ॥ ९५४ ॥ श्वेः शव् च वा ॥ ९५५ ॥ ट्वो श्वि गतिवृद्ध्योरित्यस्मात् अस् प्रत्ययो भवति अस्य च शव् इत्यादेशो वा । शवः रोगाभिभानं मृतदेहश्च । शवसी । शवांसि । श्वयः शोफः बलं च । श्वयसी । श्वयांसि ॥ ९५५ ॥ विश्वाद्विदिभुजिभ्याम् ॥ ९५६ ॥ विश्वपूर्वाभ्यामाभ्यामस् प्रत्ययो भवति । विदक् ज्ञाने । विश्ववेदाः अग्निः । भुजंप् पालनाभ्यवहारयोः । विश्वभोजाः अग्निः लोकपालश्च ॥ ९५६ ॥ चायेर्नो ह्रस्वश्च वा ॥ ९५७ ॥ चायृग् पूजानिशामनयोः इत्यस्मात् अस् प्रत्ययो नकारोऽन्तादेशो ह्रस्वश्चास्य वा भवति । चणः चाणश्चान्नम् । बाहुलकाण्णत्वम् । णत्वं नेच्छन्त्येके ॥ ९५७ ॥ अशेर्यश्चादिः ॥ ९५८ ॥ अशश् भोजने अशौटि व्याप्तावित्यस्माद्वास् प्रत्ययो यकारश्च धात्वादिर्भवति । यशः माहात्म्यम् सत्त्वं श्रीः ज्ञानं प्रतापः कीर्तिश्च । एवं शोभनमश्नाति अश्नुते वा सुयशाः । नागमेवाश्नाति नागयशाः । वृहदेनोऽश्नाति वृहद्यशाः । श्रुत एनोऽश्नाति श्रुतयशाः । एवमन्येऽपि द्रष्टव्याः ॥ ९५८ ॥ उपेर्ज च ॥ ९५९ ॥ उपू दाहे इत्यस्मादस् प्रत्ययो जकारश्चान्तादेशो भवति । ओजः बलं प्रभावः दीप्तिः शुक्रं च ॥ ९५९ ॥ स्कन्देर्ध् च ॥ ९६० ॥ स्कंदृं गतिशोषणयोः इत्यस्मात् अस् प्रत्ययो भवति धकारश्चान्तादेशः । स्कन्धः स्वाङ्गम् ॥ ९६० ॥ अवेर्वा ॥ ९६१ ॥ अव रक्षणादावित्यस्मादस् प्रत्ययो धकारश्चान्तादेशो वा भवति । अधः अवरम् । अवः रक्षा ॥ ९६१ ॥ अमेर्भहौ चान्तौ ॥ ९६२ ॥ अम गतावित्यस्मादस् प्रत्ययो भकारहकारौ चान्तौ भवतः । अम्भः पानीयम् । अंहः पापम् अपराधः दिनश्च ॥ ९६२ ॥ अदेरन्ध च वा ॥ ९६३ ॥ अदंक् भक्षणे इत्यस्मादस् प्रत्ययोऽन्धादेशश्चास्य वा भवति । अद्यते तादिति अन्धः अन्नम् । अद्यते दृशा मनसा च तत् इति अदः, अनेन प्रत्यक्षविप्रकृष्टम् अप्रत्यक्षं च बुद्धिस्थमपदिश्यते ॥ ९६३ ॥ आपोऽपप्ताप्सराब्जाश्च ॥ ९६४ ॥ आप्लृंट् व्याप्तावित्यस्मात् अस् प्रत्ययोऽप् अप्त् अप्सर् अब्ज् इत्यादेशाश्चास्य भवन्ति । अपः सत्कर्म । अप्तः तदेव । अप्सरसः देवगणिकाः । अब्जः जलजम् अजर्यं च रूपम् ॥ १६४ ॥ उच्यश्चेः क च ॥ ९६५ ॥ उचच् समवाये अञ्चू गतौ चेत्याभ्यामस् प्रत्ययोऽनयोश्च कोऽन्तादेशो भवति । ओकः आलयः जलौकसश्च । अङ्कः स्वाङ्गम् रणश्च ॥ ९६५ ॥

अञ्ज्यजियुजिभृजेर्गं च ॥ ९६६ ॥ एभ्योऽस् प्रत्ययो गकारश्चान्तादेशो भवति। अञ्जौप् व्यक्त्यादौ। अङ्गः क्षत्रियनाम गिरिपक्षी व्यक्तिश्च। अज क्षेपणे च। अगः क्षेमम्। युजूंपी योगे। योगः मनः युगं च। भृजैङ् भर्जने। भर्गः रुद्रः हविः तेजश्च ॥ ९६६ ॥ अर्तेरुराशौ च ॥ ९६७ ॥ ऋक् गतावित्यस्मादस् प्रत्ययोऽस्य चोरिति अर्श् इति च तालव्यशकारान्त आदेशो भवति। उरः वक्षः। अर्शांसि गुदादिकीलाः ॥ ९६७ ॥ येन्धिभ्यां यादेधौ च ॥ ९६८ ॥ यांक् प्रापणे, ञि इन्धैपि दीप्तौ इत्याभ्यामस् प्रत्ययो यथासंख्यं च याद् एध इत्यादेशौ भवतः। यादः जलदुष्टसत्त्वम्। एधः इन्धनम् ॥ ९६८ ॥ चक्षः शिद्वा ॥ ९६९ ॥ चक्षिङ्क् व्यक्तायां वाचीत्यस्मात् अस् प्रत्ययो भवति स च शिद्वा। चक्षः ख्याः उभे अपि रक्षोनाम्नी। आचक्षाः वाग्मी। आख्याः प्रख्याश्च बृहस्पतिः। संचक्षाः ऋत्विक्। नृचक्षाः राक्षसः ॥ ९६९ ॥ वस्त्यगिभ्यां णित् ॥ ९७० ॥ वस्त्यागिभ्यां णिदस् प्रत्ययो भवति। वसिक् आच्छादने। वासः वस्त्रम्। अग कुटिलायां गतौ। आगः अपराधः ॥ ९७० ॥ मिथिरञ्ज्युषितॄपृशॄभूवाशिभ्यः कित् ॥ ९७१ ॥ एभ्यः किदस् प्रत्ययो भवति। मिथृग् मेधाहिंसयोः। मिथः परस्परम् रहसि चेत्यर्थः। रञ्जीं रागे। रजः गुणः अशुभम् पांसुश्च। उषू दाहे। उषाः संध्या अरुणः रात्रिश्च। तॄ प्लवनतरणयोः। तिरस्करोति, तिरः कृत्वा काण्डं गतः। तिर इति अन्तर्द्धावनृजुत्वे च। पॄश् पालनपूरणयोः। पुरः पूजायाम्। तथा च पठन्ति नमः पूजायां पुरश्चेति। शॄश् हिंसायाम्। शृणाति तद्वियुक्तमिति शिरः उत्तमाङ्गम्। भू सत्तायाम्। भुवः लोकः अन्तरिक्षम् सूर्यश्च। वशक् कान्तौ। उशा रात्रिः ॥ ९७१ ॥ विधेर्वा ॥ ९७२ ॥ विधत् विधाने इत्यस्मादस् प्रत्ययो भवति स च किद्वा। वेधाः विद्वान् सर्ववित् प्रजापतिश्च। विधाः स एव ॥ ९७२ ॥ नुवो धथादिः ॥ ९७३ ॥ णूत् स्तवने इत्यस्माद्धकारादिस्थकारादिश्च किदस् प्रत्ययो भवति। नूधा नूथाश्च सूतमागधौ। धादौ गुणमिच्छन्त्येके। नोधाः ऋषिः ऋत्विक् ॥ ९७३ ॥ वयःपयःपुरोरेतोभ्यो धागः ॥ ९७४ ॥ एभ्यः परात् डुधांग्क् धारणे चेत्यस्मात् किदस् प्रत्ययो भवति। वयोधाः युवा चन्द्रः प्राणी च। पयोधाः पर्जन्यः। पुरोधाः पुरोहितः उपाध्यायश्च। रेतोधा जनकः ॥ ९७४ ॥ नञ ईहेरेहेधौ च ॥ ९७५ ॥ नञ्पूर्वादीहि चेष्टायामित्यस्मात् अस् प्रत्ययोऽस्य च एह् एध् इत्यादेशौ भवतः। अनेहाः कालः इन्द्रः चन्द्रश्च। अनेधाः अग्निः वायुश्च ॥ ९७५ ॥ विहायस्सुमनस्पुरुदंशस्पुरूरवोऽङ्गिरसः ॥ ९७६ ॥ एतेऽस्प्रत्ययान्ता निपात्यन्ते। विपूर्वाज्जहातेर्जिहीतेर्वा योऽन्तश्च। विजहातीति विहायः आकाशम्। विजिहीत इति विहायाः पक्षी। सुपूर्वान्मानेर्ह्रस्वश्च। सुष्ठु मानयन्ति मान्यन्ते वा सुमनसः पुष्पाणि। पुरुं दशतीति पुरुदंशाः इन्द्रः पुरुपूर्वाद्रौतेर्दीर्घश्च। पुरु रौति पुरूरवाः राजा यमुर्वशी चकमे। अङ्गेरिरोऽन्तश्च। अङ्गतीत्यङ्गिरा ऋषिः ॥ ९७६ ॥ पातेर्जस्थसौ ॥ ९७७ ॥ पांक् रक्षण इत्यस्मात् जस थस इत्येतौ प्रत्ययौ भवतः। पाजः बलम्। पाथ उदकम् अन्नं च ॥ ९७७ ॥ स्रुरीभ्यां तस् ॥ ९७८ ॥ आभ्यां तस् प्रत्ययो भवति। स्रुं गतौ। स्रोतः निर्झरणम्। सुष्ठु स्रवतीति सुस्रोताः। रीश् गतिरेषणयोः। रेतः शुक्रम् ॥ ९७८ ॥ अर्तीणूभ्यां नस् ॥ ९७९ ॥ आभ्यां

ऋंक् गतौ । अरुः व्रणः आदित्यः प्राणः समुद्रश्च । जनैचि प्रादुर्भावे । जनुः अपत्यं पिता माता जन्म प्राणी च । तनूयी विस्तारे । तनुः शरीरम् । धन धान्ये, सौत्रः । धनुः चापम् । मनिंच् ज्ञाने । मनुः प्रजापतिः । ग्रन्थश् संदर्भे । ग्रन्थुः ग्रन्थः । पृश् पालनपूरणयोः । परुः पर्व समुद्रः धर्मश्च । तपं संतापे । तपुः त्रपु शत्रुः भास्करः अग्निः कृच्छ्रादि च । त्रपौषि लज्जायाम् । त्रपुः त्रपु । डु वपी बीजसंताने । वपुः शरीरम् लावण्यं तेजश्च । यजी देवपूजादौ । यजुः अच्छन्दो श्रुतिः यज्ञोत्सवश्च । अर्दंक् भक्षणे प्रपूर्वः । प्रादुः प्राकाश्ये उत्पत्तौ च । प्रादुर्बभूव । प्रादुरासीत् । टुवेपृङ् चलने । वेपुः वेपथुः ॥ ९९७ ॥ इणो णित् ॥९९८॥ इणंक् गताविल्यस्मात् णिदुस् प्रत्ययो भवति । आयुः जीवितम् । जटापूर्वादपि । जटायुः अरुणात्मजः ॥ 'तं नीलजीमूतनिकाशवर्णं सपाण्डुरोरस्कमुदारधैर्यम् ॥ ददर्श लङ्काधिपतिः पृथिव्यां जटायुषं शान्तमिवाग्निदाहम्' ॥ ९९८ ॥ दुषेर्डित् ॥ ९९९ ॥ दुषंच् वैकृत्ये इत्यस्मात् डिदुस् प्रत्ययो भवति । दुः निन्दायाम् । दुष्पुरुषः ॥ ९९९ ॥ मुहिमिथ्यादेः कित् ॥ १००० ॥ आभ्यां किदुस् प्रत्ययो भवति । मुहौच् वैचित्त्ये । मुहुः कालावृत्तिः । मिथृग् मेधाहिंसयोः । मिथुः संगमः । आदिग्रहणादन्येभ्योऽपि भवति ॥ १००० ॥ चक्षेः शिद्वा ॥ १००१ ॥ चक्षिक् व्यक्तायां वाचि इत्यस्मात् कित् उस् प्रत्ययो भवति स च शिद्वा । चक्षुः परिचक्षुः अवचक्षुः अवसंचक्षुः अचक्षुः अवख्युः । बाहुलकात् द्विर्वचने, संचचक्षुः विचख्युः ॥ १००१ ॥ पातेर्डुम्सुः ॥ १००२ ॥ पांक् रक्षणे इत्यस्मात् डिदुम्सुः प्रत्ययो भवति । पुमान् पुरुषः । पुमांसौ । पुमांसः । उकार उदित्कार्यार्थः ॥ १००२ ॥ न्युद्भ्यामञ्चेः ककाकैसष्टावच ॥ १००३ ॥ न्युद्भ्यां पराद‍ञ्चू गतौ चेत्यस्मात् कितः अ आ ऐस् इत्येते प्रत्यया भवन्ति ते च टावत् । टायामिव एषु कार्यं भवतीत्यर्थः । तेन 'अच् प्राग्दीर्घश्च' इति भवति । नीचम् उच्चम् । नीचा उच्चा । नीचैः उच्चैः । प्रसिद्धार्था एते । लाघवार्थं सन्ताधिकारेऽपि अकाराकारप्रत्ययविधानम् ॥ १००३ ॥ शमो नियो डैस् मलुक् च ॥१००४॥ शम्पूर्वात् णींग् प्रापणे इत्यस्मात् डिदैस् प्रत्ययो भवति शमो मकारस्य च लुग् भवति । शनैः मन्दम् ॥ १००४ ॥ यमिदमिभ्यां डोस् ॥ १००५ ॥ आभ्यां डिदोस् प्रत्ययो भवति । यमूं उपरमे । योर्विषयसुखम् । दमूच् उपशमे । दोर्बाहुः ॥ १००५ ॥ अनसो वहेः क्विप् सश्च डः ॥ १००६ ॥ अनस्शब्दपूर्वात् वहीं प्रापणे इत्यस्मात् क्विप् प्रत्ययः सकारस्य च डो भवति । अनो वहति अनड्वान् वृषभः ॥ १००६ ॥ इत्याचार्यश्रीहेमचन्द्रकृतं स्वोपज्ञोणादिगणसूत्र-विवरणं परिसमाप्तम् ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां श्रीसिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ पञ्चमस्याध्यायस्य द्वितीयः पादः ॥ ॥ अकृत्वासननिर्बन्धमभित्त्वा पावनीं गतिम् ॥ सिद्धराजः परपुरप्रवेशवशितां ययौ ॥ १ ॥

## ॥ अथ तृतीयः पादः ॥

*वर्त्स्यति गम्यादिः ॥ ५ । ३ । १ ॥ गम्यादयः शब्दा वर्त्स्यति भविष्यति धात्वर्थे इन्नादिप्रत्ययान्ताः साधवो भवन्ति । अनेन *सामान्यतः सिद्धानां प्रत्ययनां भविष्यद्धात्वर्थता विधीयते । गमिष्यतीति गमी ग्रामम् । इन्नौणादिकः सति प्राप्तो वर्त्स्यति भवति । आगामी । भावी । प्रस्थायी । एभ्य औणादिको णिन् । प्रयायी । प्रतियायी । प्रतिबोधी । प्रतिरोधी । एभ्योऽजातेः शीले आवश्यके वा णिन् सिद्धो भविष्यति नियम्यते । *कथं श्वो ग्रामं गमी । भविष्यत्सामान्ये पदं निष्पाद्य पश्चाच्छ्वः शब्देन योगः कार्यः ॥ १ ॥ वा हेतुसिद्धौ क्तः ॥ ५ । ३ । २ ॥ हेतुः कारणं तस्य सिद्धिः निष्पत्तिः वर्त्स्यत्यर्थे वर्तमानाद्धातोः धात्वर्थे हेतोः सिद्धौ सत्यां क्तः प्रत्ययो वा भवति । किं ब्रवीषि वृष्टो देवः संपन्नास्तर्हि शालयः । संपत्स्यन्त इति वा । प्राप्ता नौस्तीर्णा तर्हि नदी । तरिष्यत इति वा ॥ २ ॥ *कषोऽनिटः ॥ ५ । ३ । ३ ॥ कषेः कृच्छ्रगहनयोरनिट्त्वमुक्तम् । तस्माद्वर्त्स्यति वर्तमानात् क्तो भवति । *कषिष्यतीति कष्टम् । कष्टा दिशस्तमसा । सत्यपि कश्चित् । कषति कष्टम् । अनिट इति किम् । *कषिताः शत्रवः शूरेण ॥ ३ ॥ भविष्यन्ती ॥ ५ । ३ । ४ ॥ वर्त्स्यत्यर्थे वर्तमानाद्धातोः परा भविष्यन्ती विभक्तिर्भवति । गमिष्यति । भोक्ष्यते ॥ ४ ॥ *अनद्यतने श्वस्तनी ॥ ५ । ३ । ५ । न विद्यतेऽद्यतनो यत्र तस्मिन्वर्त्स्यति धात्वर्थे वर्तमानाद्धातोः श्वस्तनी विभक्तिर्भवति । कर्ता श्वः । कर्ता । अनद्यतन इति बहुव्रीहिः किम् । व्यामिश्रे माभूत् । अद्य श्वो वा गमिष्यति । कथं श्वो भविष्यति । मासेन गमिष्यति । *पदार्थे भविष्यन्ती पश्चात् श्वःशब्देन योगः ॥ ५ ॥ *परिदेवने ॥ ५ । ३ । ६ ॥ परिदेवनमनुशोचनम् । तस्मिन्गम्यमाने वर्त्स्यति धात्वर्थे वर्तमानाद्धातोः श्वस्तनी विभक्तिर्भवति । अनद्यतनार्थ आरम्भः । इयं तु कदा गन्ता यैवं पादौ निदधाति । अयं तु कदाध्येता य एवमनभियुक्तः । विशेषविधानात् कदाकर्हिलक्षणा *विभाषा बाध्यते ॥ ६ ॥ *पुरायावतोर्वर्तमाना ॥ ५ । ३ । ७ ॥ पुरायावतोर्निपातयोरुपपदयोर्वर्त्स्यति धात्वर्थे वर्तमानाद्धातोर्वर्तमाना विभक्तिर्भवति । *पुरा भुङ्-

---

वर्त्स्यति ॥—सामान्यतः सिद्धानामिति । ननु गमेरिन्नित्यादीना सत्यधिकारे विहितत्वात् कथ सामान्यत. सिद्धता। सत्यम् । एकदेशेन । गम्यादिगणे हि प्रयायीत्यादौ 'अजातेः शीले' इत्यादिभिर्णिन् । ते चानिर्दिष्टकालत्वात् सामान्यत. सिद्धा । उणादिप्रत्ययानां सत्यर्थे विधानात् अप्राप्तौ वर्त्स्यत्यर्थे विधि. । अन्येपां च सामान्यविधानात् वर्त्स्यत्येवेति नियम इति सिद्धम् ॥—कथमिति । अनद्यतने श्वस्तनी प्राप्नोति न णिन्नित्याशंकार्थं ॥—कषोऽनिटः ॥—कषिष्यतीति । अर्थकथनमिद यावता कष्टगहने वर्त्स्यति क्त एव भवति । असरूपविधिरपि नेष्टः । पूर्वत्र वाग्रहणात् । ॥—कषिताः शत्रव इति । अत्र भविष्यत्तापि नास्तीति व्यङ्गविकलतेति नाशङ्कनीय यतोऽनिट इति विशेषणे सति वर्त्स्यतीति वाच्य स्थितेष्वेतत्समर्थनमिति न्यायात् ॥—अनद्यतने श्वस्तनी ॥—पदार्थे भविष्यन्तीति। पद गमिष्यतिक्रियासार्थो यस्य धात्वर्थस्य तस्मिन् ॥—परिदेवने ॥—विभाषा बाध्यते इति । 'कदाकर्ह्योर्नवा' इत्यर्थः ॥—पुरायावतो—॥—पुरा भुङ्क्ते इति ।

नश्यते। दाशन्तेऽस्मा इति दाशः। तालव्योपान्त्योऽयम्। आह्रियन्तेऽस्मादित्याहारः। असंज्ञायामपि। दायो दत्तः। लाभो लब्धः। कृतः कटो हृतो भार इत्यादौ बहुलाधिकारान्न भवति। अकर्त्रीति पर्युदासेन *कारकाश्रयणात्संबन्धे न भवति। देवदत्तस्य पच्यते। भावाकर्त्रोरिति किम्। पचः। भावो भवत्यर्थः साध्यरूपः *क्रियासामान्यं धात्वर्थः स धातुनैवोच्यते तत्रैव च त्यादयः क्तातुमम्स्तव्यानीयादयश्च भवन्ति। यस्तु भावो धात्वर्थधर्मः सिद्धता नाम लिङ्गसंख्यायोगी स द्रव्यवद्धात्वर्थादन्यः। *तत्रायं घञादिविधिः। तेन तद्योगे लिङ्गवचनभेदः सिद्धो भवति। पाकः पाकौ पाकाः। पचनं पचने पचनानि। पक्तिः पक्ती पक्तय इति ॥ १८ ॥ *इङोऽपादाने तु टिद्वा ॥ ५। ३। १९ ॥ इङो धातोर्भावाकर्त्रोर्घञ् भवति अपादाने तु कारके वा टिद्भवति। अध्ययनमध्यायः। अधीयत इति अध्यायः। उपेत्याधीयतेऽस्मादित्युपाध्यायः। टिद्विधानसामर्थ्यात् स्त्रियां *क्तिर्बाध्यते। उपाध्यायी। उपाध्याया ॥ १९ ॥ *श्रो वायुवर्णनिवृते ॥ ५। ३। २० ॥ शॄ इत्यस्माद्भावाकर्त्रोर्वाय्वादिष्वर्थेषु घञ् भवति। शीर्यते औषधादिभिरिति शारो वायुः। मालिन्येन शीर्यत इति शारो वर्णः। निवृतं निवरणं प्रावरणमित्यर्थः। निशीर्यते शीताद्युपद्रवो येन तत् *नीशारो निवृतम्। गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः। निवृता द्यूतोपकरणमिति कश्चित् नियमेन वृता इत्यन्वर्थात्। शारैरिव क्रीडितम्। एष्विति किम्। शरः ॥ २० ॥ निरभेः पूल्वः ॥ ५। ३। २१ पू इति पूङ्पूञोः सामान्येन ग्रहणम्। निरभिपूर्वाभ्यां यथासंख्यं पूलूभ्यां परो भावाकर्त्रोर्घञ् भवति। निष्पूयते निष्पावः। अभिलावः ॥ २१ ॥ *रोरुपसर्गात् ॥ ५। ३। २२ ॥ उपसर्गपूर्वाद्रौतेर्भावाकर्त्रोर्घञ् भवति। संरवणं संरावः। उपरावः। विरावः। उपसर्गादिति किम्। रवः। *सांराविणमित्यत्र ञिन् बाधकः। कथं रावः। बहुलाधिकारात् भूश्रयदोऽल् ॥ ५। ३। २३ ॥ भूश्रिअद् इत्येतेभ्य उपसर्गपूर्वेभ्यो भावाकर्त्रोरल् प्रत्ययो भवति। प्रभवः। विभवः। संभवः। प्रश्रयः। प्रतिश्रयः। संश्रयः। प्रघसः। विघसः। संघसः। उपसर्गादित्येव। भावः। श्रायः। घासः। भूश्र्योरुपसर्गादेवेति नियमार्थं वचनम्। कथं प्रभावः विभावः अनुभावः। बहुलाधिकाराद। प्रकृष्टो भाव इत्यादिप्रादिसमासो वा। लकारो 'मिग्मीगोऽखलिचलि'—(४-२-८) इत्यत्र विशेषणार्थः ॥ २३ ॥ न्यादो नवा ॥ ५। ३। २४ ॥ निपूर्वाददेरलि घस्लभा-

ह-असंज्ञायामपीति ॥—कारकाश्रयणादिति। भावग्रहणाच्च। यदि हि भावग्रहणमपनीयाऽकर्त्तरीति कृत्वा प्रसज्यनञ् व्याख्यायते तदापि भाववत्संबन्धेऽपि घञ् स्यादिति संबन्धे घञ्निवृत्त्यर्थं भावग्रहणम् ॥—क्रियासामान्यमिति। क्रियाणां साधारणं रूपमित्यर्थः। तथाहि सर्व्वासु क्रियासु सत्त्वमिति भवत्यर्थः साधारण एव ॥ स च धात्वर्थः। अत एव धातुनैवोच्यते स न प्रत्ययै। यः पुनः सिद्धता नाम स धात्वर्थस्य धर्म्म एव न धात्वर्थः। अत एव प्रत्ययैरेवोच्यते स न धातुना। तदुक्तम्—'आख्यातसाध्यैरर्थोऽसावन्तर्भूतोऽभिधीयते। नामशब्दा प्रवर्त्तन्ते सहन्ता इव क्रमम् ॥ १ ॥—तत्राऽयं घञादिविधिरिति ॥ 'क्रियाया सिद्धतावस्था साध्यावस्था च कीर्त्तिता। सिद्धता द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम् ॥—इङोपादाने-॥-क्तिर्बाध्यत इति। टित्वस्य हि स्त्रियां ङी प्रत्ययः फलं ततो यदि स्त्रिया क्तिर्भविष्यति तदा किं टिद्विधानेन ॥—श्रो वायु-॥—नीशार इति। बाहुलकात् परमप्यऽनट घ वा बाधते घञ् प्रत्ययं ॥—रोरुपस-॥-सांराविणमिति। समंतात्राव 'अभिव्याप्तौ' इति ञिन् ततः स्वार्थे 'नित्यं ञजिनोऽण्' नोपदस्य- 'इयन्त्यस्वरादेर्लुक्' न 'अनपत्ये' इति निषेधात्

वोऽकारस्य दीर्घत्वं च वा निपात्यते । न्यादः । नियमः ॥२४॥ **संनिव्युपाद्यमः** ॥ ५ । ३ । २५ ॥ एभ्य उपसर्गेभ्यः पराद्यमेर्भावाकर्त्रोरल् वा भवति । संयमः । संयामः । नियमः । नियामः । वियमः । वियामः । उपयमः । उपयामः ॥ २५ ॥ **नेर्नदगदपठस्वनक्वणः** । ५ । ३ । २६ ॥ नेरुपसर्गात्परेभ्य एभ्यो भावाकर्त्रोरल् प्रत्यया वा भवति । निनदः । निनादः । निगदः । निगादः। निपठः। निपाठः । निस्वनः । निस्वानः । निक्वणः। निक्वाणः ॥ २६ ॥ **वैणे क्वणः** ॥ ५ । ३ । २७ ॥ वीणायां भवो वैणः । वैणेऽर्थे वर्तमानादुपसर्गपूर्वात्क्वणेर्भावाकर्त्रोरल् वा भवति । प्रक्वणो वीणायाः । प्रक्वाणो वीणायाः । एवं निक्वणः निक्वाणः । वैण इति किम् । प्रक्वाणः शृङ्खलस्य । कथ क्वणः क्वाणो वीणायाः । 'नवा क्वण'—( ५–३–४८ ) इत्यादिना सामान्येन विधानात् वैणेऽपि भवति ॥ २७ ॥ ***युवर्णवृदृवशरणगमृद्ग्रहः** ॥ ५ । २ । २८ ॥*उपसर्गाद्वेति च निवृत्तम् । इवर्णान्तेभ्य उवर्णान्तेभ्यो वृदृवशरणगमिभ्य ऋकारान्तेभ्यो ग्रहेश्च धातोर्भावाकर्त्रोरल् भवति । घञोऽपवादः । चयः । निश्चयः । जयः । क्षयः । क्रयः । यवः । रवः । नवः । स्तवः । लवः। पवः । वरः । प्रवरः । दरः । आदरः । वशः । रणः । गमः । अवगमः। कॄ, करः। गॄ, गरः। तॄ, तरः । दॄ, दरः। शॄ, शरः। ग्रहः । कथं वारः समूहः वारोऽवसरः वारः क्रियाभ्यावृत्तिः । बहुलाधिकाराद् घञ् । परिवार इति तु ण्यन्तादचि सिद्धम् ॥ २८ ॥ ***वर्षादयः क्लीबे** ॥ ५ । ३ । २९ ॥ वर्षादयः शब्दा अलन्ताः क्लीबे यथादर्शनं भावाकर्त्रोर्निपात्यन्ते । नपुंसके क्ता*नङ्निवृत्त्यर्थं वचनम् । वर्षं भयं धनं वनम् खलं पदं युगम् । अत्र रथाङ्गकालविशेषयुग्मेष्वल् गत्वगुणाभावौ च निपातनात् । अनपुंसकक्तस्तु असरूपविधिना भवत्येव । वृष्यतेस्म *वृष्टं मेघेन । भीतं बटुना ॥ २९ ॥ **समुदोऽजः पशौ** ॥ ५ । ३ । ३० ॥ समुद्भ्यां परादजतेः पशुविषये धात्वर्थे वर्तमानात् भावाकर्त्रोरल् भवति । समजः पशूनाम् समूह इत्यर्थः । उदजः पशूनां प्रेरणमित्यर्थः । समुद इति किम् । व्याजः पशूनाम् । पशाविति किम् । समाजः साधूनाम् । उदाजः खगानाम् ॥ ४० ॥ **सृग्लहः प्रजनाक्षे** ॥ ५ । ३ । ३१ ॥ सर्तिग्लहिभ्यां यथासंख्यं प्रजनाक्षविषये धात्वर्थे वर्तमानाभ्यां भावाकर्त्रोरल् भवति । गवामुपसरः । पशूनामुपसरः । वीनामुपसरं दृष्ट्वा । प्रजनो गर्भग्रहणम् । तदर्थं स्त्रीषु पुंसां प्रथमं सरणमुपसर उच्यते । अक्षाणां ग्लहः, ग्रहणमित्यर्थः । ग्रहेः सूत्रनिपातल्लत्वम् । ग्लहिः प्रकृत्यन्तरं वा । प्रजनाक्ष इति किम् । उपसारो भृत्यै राज्ञाम् । ग्लहः ग्लाहो वा पादस्य । कथं परिसरविषमेपुलीढमुक्तौ । अधिकरणे पुंनाम्नि घेन सिद्धम् ॥ ३१ ॥ **पणेर्माने** ॥ ५ । ३ । ३२ ॥ पणेर्मानेऽर्थे वर्तमानाद्भावाकर्त्रोरल् भवति । मूलकपणः । शाकपणः । पण्यत इति पणः, मूलकादीनां संव्यवहारार्थं परिमितो मुष्टिरित्यर्थः । माने इति किम् । पाणः । घञोऽपवादो योगः ॥ ३२ ॥ ***संमदप्रमदौ हर्षे** ॥ ५ । ३ । ३३ ॥ संमदप्रमद इत्येतौ भावाकर्त्रोर्हर्षेऽर्थेऽलन्तौ निपात्येते । सम्मदः कोकिलानाम् । प्रमदः कन्यानाम् । हर्ष इति किम् । संमादः । प्रमादः । संप्रान्मद इत्यनुक्त्वा निपातनं रूपनिग्रहार्थम् । तेनोपसर्गान्तरयोगे न भवति । *प्रसंमादः ।

॥—युवर्णवृ—॥—उपसर्गाद्वेति च निवृत्तम् । ' आङो रुप्लोः ' इति सूत्रकरणात् ॥—वर्षाद—॥—अनङ्निवृत्त्यर्थमिति । तत्कि वर्षणमिति न भवति । भवत्येव वृषभो वर्षणादिति भाष्यकारवचनात् ॥—वृष्टं मेघेनेति । अत्र भावे ' तत्साप्या'— इति क्तः ॥—सम्मद—॥—प्रसमाद इति । प्रकृष्टः समद इति कृते प्रसम्मद इत्यपि

संप्रमादः । अभिसंमादः ॥ ३३ ॥ हनोऽन्तर्घनान्तर्घणौ देशे ॥ ५ । ३ । ३४ ॥ अन्तःपूर्वाद्धन्तेरल् प्रत्ययो घनघणौ चादेशौ निपात्येते देशेऽभिधेये भावाकर्त्रोः । अन्तर्हण्यतेऽस्मिन्निन्त्यन्तर्घनः अन्तर्घणो वा वाहीकेषु देशविशेषः । अन्तर्घातोऽन्यः ।एके त्वन्तःसंहतो देशोऽन्तर्घनः । अभ्यन्तरो देश इति केचित् । तस्मिन्नन्तर्घणेऽपश्यत् । घणिः प्रकृत्यन्तरमित्यन्ये ॥ ३४ ॥ प्रघणप्रघाणौ गृहांशे ॥ ५ । ३ । ३५ ॥ प्रपूर्वाद्धन्तेर्गृहांशेऽभिधेयेऽल् प्रत्ययो घणघाणौ चादेशौ निपात्येते । प्रघणः प्रघाणो वा द्वारालिन्दकः । प्रघातोऽन्यः ॥ ३५ ॥ *निघोद्धसंघोद्घनापघनोपघ्नं निमितप्रशस्तगणात्याधानाङ्गासन्नम् ॥ ५ । ३ । ३६ ॥ हन्तेर्निघादयः शब्दा यथासंख्यं निमितादिषु वाच्येषु कृतघत्वादयोऽलन्ता निपात्यन्ते । *समन्ततो मितं तुल्यमविशेषेण वा मितं परिच्छिन्नं निमितम् । तुल्यारोहपरिणाहमित्यर्थः ।*निर्विशेषं निश्चयेन वा हन्यन्ते ज्ञायन्ते निघा वृक्षाः । निघाः शालयः। निघा बृहतिका । निघं वस्त्रम् । निघातोऽन्यः । उत्कर्षेण हन्यते ज्ञायते उद्घः प्रशस्तः । उद्घातोऽन्यः । गणः प्राणिसमूहः । संहति संघः । अन्यत्र संघातः ।*कथं संघातो मनुष्याणाम् । संघातशब्दः समुदायमात्रे । अत्याधीयन्ते छेदनार्थं कुट्टनार्थं च काष्ठादीनि यत्र तदत्याधानम् । उद्धन्यतेऽस्मिन्निति उद्घनः । काष्ठोद्घनः । ताम्रोद्घनः । लोहोद्घनः । घनः स्कन्धः । उद्घातोऽन्यः । अङ्गं शरीरावयवः। अपहन्यतेऽनेनेत्यपघनोऽङ्गम् । * व्रणिभिरपघनैर्घर्घराव्यक्तघोषान् । पाणिः पादश्चापघनो नापरमङ्गमित्यन्ये । अपघातोऽन्यः । उपहन्यते समीप इति ज्ञायते उपघ्नः आसन्नः । गुरूपघ्नः । ग्रामोपघ्नः । उपघातोऽन्यः । * निपातनादेवोपात्तार्थविशेषे वृत्तिरसरूपप्रत्ययबाधनं च विज्ञायते ॥ ३६ ॥ मूर्तिनिचिताभ्रे घनः ॥ ५ । ३ । ३७ ॥ हन्तेर्मूर्त्यादिष्वर्थेषु अल् प्रत्ययो घनादेशश्च निपात्यते । मूर्तिः काठिन्यम् । अभ्रस्य घनः काठिन्यमित्यर्थः । एवं दधिघनः । लोहघनः । निचितं निरन्तरं, तत्र, घनाः केशाः । घनाः व्रीहयः। अभ्रं मेघः, तत्र, घनः । कथं घनं दधि गुणशब्दोऽयम् तद्योगाद्गुणिन्यपि वर्तते ॥ ३७ ॥ *व्ययोद्रोः करणे ॥ ५ । ३ । ३८ ॥ वि अयस् द्रु इत्येतेभ्यः पराद्धन्तेः करणेऽल् प्रत्ययो घनादेशश्च निपात्यते। भावस्य कारकान्तरस्य चानुप्रवेशो माभूदिति करणग्रहणम् । विहन्यतेऽनेन तिमिरं विघनः । विघनेन्दुरामद्युतिः । वयः पक्षिणो हन्यन्तेऽनेनेति वा विघनः । अयोघनः । द्रुः हन्यतेऽनेनेति *द्रुघनः कुठारः । कथं द्रुघणः अरीहणादिपाठाण्णत्वे भविष्यति । *घणतेर्वाजन्तस्य रूपम् । स्त्रियां त्वनडेव परत्वात् । विहननी । अयोहननी । द्रुहननी ॥ ३८ ॥ स्तम्बाद् घ्नश्च ॥ ५ । ३ । ३९ ॥ स्तम्बशब्दात्पराद्धन्तेरल् घ्रघनादेशौ च निपात्येते करणे । स्तम्बो हन्यतेऽनेन स्तम्बघ्नो दण्डः । स्तम्बघनो यष्टिः । स्त्रियां परत्वादनडेव ।

॥—निघोद्घ—॥–समन्ततो मितमिति। निशब्दस्य द्वावर्थौ समन्ततोऽविशेषश्चेति ॥–निर्विशेषं निश्चयेन वेति । समन्ततो मितमविशेषेण वा मितमिति भणितपूर्वार्थापेक्षया आभ्या यथासख्य न । यत स्वतन्त्राविमौ ॥–कथ संघातो मनुष्याणामिति । नन्वत्र प्राणिसमूहत्वात् निपात कथ न। सत्यम् । सघातशब्दं प्रसाध्य पश्चात् मनुष्यशब्देन सबन्ध । अन्ये त्वपघनशब्देन हस्तपादस्यैव ग्रहणमाहुस्तन्निरासायाह–व्रणिभिरपघनैर्घर्घराव्यक्त घोषानिति । ननु निघादिशब्दाना निमिताद्यर्थविशेषे कथ वृत्ति कथमाधारादौ असरूपविधिनाऽनडादयश्च न भवन्तीत्याह–निपातनादेवेति। अन्यथा निमितात्याधानादिषु विशेषार्थप्रतीतिस्तुल्यारोहपरिणाहादिका न स्यात्॥—व्ययोद्रोः–॥—द्रुघन इति । ' हनो घि ' इति व्याप्त्या प्रवृत्ते ' पूर्वपदस्था'–इति न णत्वम् ॥–घणतेर्वेति। घणि. सौत्रः। द्रूणि दारूणि घणति

स्तम्बहननी यष्टिः । केचित्तु कप्रत्यये निपातनं कृत्वा स्त्रियामपि स्तम्बघ्नेति इच्छन्ति । अन्ये तु स्तम्बपूर्वस्यापि हन्तेः 'सातिहेति'—( ५–३–९४ ) इति निपातनात् स्तम्बहेतिरितीच्छन्ति । करण इत्येव । स्तम्बहननं स्तम्बघातः । कथं स्तम्बघ्नीपीका । करणस्यापि कर्तृत्वविवक्षया 'आचित्ते टक्'—( ५–१–८३ ) इत्यनेन टकि सिद्धम् ॥ ३९ ॥ परेर्घः ॥ ५ । ३ । ४० ॥ परिपूर्वाद्धन्तेरल् घादेशश्च करणे निपात्यते । परिहण्यतेऽनेनेति परिघोऽर्गला । लत्वे पलिघः ॥ ४० ॥ ह्वः स्माह्वयाह्वयौ द्यूतनाम्नोः ॥ ५ । ३ । ४१ ॥ करण इति निवृत्तम् । द्यूते नाम्नि चाभिधेये यथासंख्यं समाङ्पूर्वादाङ्पूर्वाच्च ह्वयतेरल् ह्वयादेशश्च निपात्यते । समाह्वयः प्राणिद्यूतम् । आह्वयो नाम ॥ ४१ ॥ *न्यभ्युपवेर्वाश्चोत् ॥ ५ । ३ । ४२ ॥ नि–अभिउपविभ्यः परात् ह्वयतेर्भावाकर्त्रोरल् तत्संनियोगे च वाशब्द उकारो भवति । अभेदनिर्देशः सर्वादेशार्थः । निहवः । अभिहवः । उपहवः । विहवः । न्यभ्युपवेरिति किम् । प्रहायः । ह्व इत्येव । निवायः। ह्वो हव इत्यनिपातनं किम् । यङ्लुपि निपातनं माभूत् । तेन *विजोहव इति सिद्धम् *अन्यथा विहव इति स्यात् । जुहोतिनैव सिद्धे ह्वयते रूपान्तरनिवृत्त्यर्थं वचनम् ॥ ४२ ॥ आङो युद्धे ॥ ५ । ३ । ४३ ॥ आङ्पूर्वाद् ह्वयतेर्युद्धेऽर्थे भावाकर्त्रोरल् भवति वाशब्दश्चोकारः । आहूयन्ते योद्धारोऽस्मिन्नित्याहवो युद्धम् । युद्ध इति किम् । आह्वायः । आह्वानम् ॥ ४३ ॥ आहावो निपानम् ॥ ५ । ३ । ४४ ॥ निपिबन्त्यस्मिन्निपानम् । पशुशकुनीनां पानार्थं कृतो जलाधारः । आङ्पूर्वात् ह्वयतेर्भावाकर्त्रोरल् आहावादेशश्च निपात्यते निपानं चेदभिधेयं भवति । आहूयन्ते पशवः पानायास्मिन्नित्याहावः पशूनाम् । आहावः शकुनीनाम् । निपानमित्यर्थः । निपानमिति किम् । आह्वायः । आह्वानम् ॥ ४४ ॥ भावेऽनुपसर्गात् ॥ ५ । ३ । ४५ ॥ अविद्यमानोपसर्गात् ह्वयतेर्भावेऽल् वाशब्दश्चोकारो भवति । अकर्तरीत्यस्यानुप्रवेशो माभूदिति भावग्रहणम् । ह्वानं हवः । भाव इति किम् । कर्मणि ह्वायः । अनुपसर्गादिति किम् । आह्वायः ॥ ४५ ॥ *हनो वा वध् च ॥ ५ । ३ । ४६ ॥ अनुपसर्गाद्धन्तेर्भावेऽल् वा भवति तत्संनियोगे चास्य वधादेशः । हननं *वधः । घातः । अनुपसर्गादित्येव । संघातः ॥ ४६ ॥ व्यधजपमद्भ्यः ॥ ५ । ३ । ४६ ॥ एभ्योऽनुपसर्गेभ्यो भावाकर्त्रोरल् भवति । बहुवचनाद्भाव इति निवृत्तम् । व्यधः । जपः । मदः । अनुपसर्गादित्येव । आव्याधः । उपजापः । उन्मादः ॥ ४७ ॥ नवा क्वणयमहसस्वनः ॥ ५ । ३ । ४८ ॥ अनुपसर्गेभ्य एभ्यो भावाकर्त्रोरल् वा भवति । क्वणः क्वाणः । यमः यामः । हसः हासः । स्वनः स्वानः । अनुपसर्गादित्येव । प्रक्वाणः । प्रयामः । प्रहासः । विष्वाणः । अप्राप्तविभाषेयम् ॥ ४८ ॥ आङो रुप्लोः ॥ ५ । ३ । ४९ ॥ आङः पराभ्यां रुप्लुभ्यां भावाकर्त्रोरल् वा भवति । आरवः आरावः । आप्लवः आप्लावः । आङ इति किम् । विरावः । विप्लवः । रौतेर्घञि प्लवतेरलि नित्यं प्राप्ते विकल्पः ॥ ४९ ॥ वर्षविघ्नेऽवाद् ग्रहः ॥ ५ । ३ । ५० ॥ अवपूर्वात् ग्रहेर्वर्षविघ्ने वाच्ये भावाकर्त्रोरल् वा भवति । अवग्रहः । अवग्राहः । वृष्टेः प्रतिबन्ध इत्यर्थः ।

लिहाद्यच् ॥–न्यभ्युपवे–॥—विजोहव इति । भृशं विह्वयति । यङ्लुप् 'द्वित्वे ह्वः' इति य्वृत् । विजोहवनम् । अनेनाल् ॥—अन्यथा विहव इति । प्रकृतिग्रहणे इति न्यायात् यङ्लुबन्तस्याप्यनेनाऽलि ह्वो हव इति कृतद्वित्वस्यापि निपाते विहव इति स्यादित्यर्थः ॥—हनो वा–॥-वध इति । यङ्लुबन्तस्यापि वधो घात इत्येव भवति

वर्पविघ्न इति किम् । अवग्रहः पदस्य । अवग्रहोऽर्थस्य ॥ ५० ॥ प्राद्रश्मितुलासूत्रे ॥ ५ । ३ । ५१ ॥ प्रपूर्वाद्ग्रहे रश्मौ तुलासूत्रे चार्थे भावाकर्त्रोरल् वा भवति । प्रगृह्यत इति प्रग्रहः प्रग्राहः अश्वादेः संयमनरज्जुस्तुलासूत्रं चोच्यते । अन्यस्तु प्रग्रहः ॥ ५१ ॥ वृगो वस्त्रे ॥ ५ । ३ । ५२ ॥ प्रपूर्वाद्वृणोतेर्वस्त्रविशेषे वाच्ये भावाकर्त्रोरल् वा भवति । प्रवृण्वन्ति तमिति प्रवरः । प्रावारः । 'घञ्युपसर्गस्य बहुलम्' (३-२-८६) इति दीर्घः । अन्ये तु प्राङ्पूर्वं ए । वृणोतिः स्वभावाद्वस्त्रविशेषे वर्तते । तेन प्रावारः प्रावर इति भवति । वस्त्र इति किम् । प्रवरो यतिः ॥ ५२ ॥ उदः श्रेः ॥ ५ । ३ । ५३ ॥ उत्पूर्वाच्छ्रेर्भावाकर्त्रोरल् वा भवति । उच्छ्रयः । उच्छ्रायः । निसमलि प्राप्ते विकल्पः ॥ ५३ ॥ युपूद्रोर्घञ् ॥ ५ । ३ । ५४ ॥ वेति निवृत्तम् पृथग्योगात् । उत्पूर्वेभ्य एभ्यो भावाकर्त्रोर्घञ् भवति । अलोऽपवादः । उद्यावः । उत्पावः । उद्द्रावः ॥ ५४ ॥ ग्रहः ॥ ५ । ३ । ५५ ॥ उत्पूर्वात् ग्रहेर्भावाकर्त्रोर्घञ् भवति । अलोऽपवादः । उद्ग्राहः । उद इत्येव । ग्रहः । विग्रहः ॥ ५५ ॥ न्यवाच्छापे ॥ ५ । ३ । ५६ ॥ न्यवाभ्यां पराद्ग्रहेः शापे आक्रोशे गम्यमाने भावाकर्त्रोर्घञ् भवति । निग्राहो ह ते वृषल भूयात् । अवग्राहो ह ते जाल्म भूयात् । शाप इति किम् । निग्रहश्चौरस्य । अवग्रहः पदस्य ॥ ५६ ॥ प्राल्लिप्सायाम् ॥ ५ । ३ । ५७ ॥ प्रपूर्वाद्ग्रहेर्लिप्सायां गम्यमानायां भावाकर्त्रोर्घञ् भवति । पात्रप्रग्राहेण चरति पिण्डपातार्थी भिक्षुः । स्रुवस्य प्रग्राहेण चरति दक्षिणार्थी द्विजः । लिप्सायामिति किम् । स्रुवस्य प्रग्रहः ॥ ५७ ॥ समो मुष्टौ ॥ ५ । ३ । ५८ ॥ संपूर्वाद्ग्रहेर्मुष्टिविषये धात्वर्थे भावाकर्त्रोर्घञ् भवति । मुष्टिरङ्गुलिसंनिवेशो न परिमाणम् । तत्र 'माने'— ( ५-३-८१ ) इत्येव सिद्धत्वात् । संग्राहो मल्लस्य । अहो मौष्टिकस्य संग्राहः । मुष्टेर्दार्ढ्यमुच्यते । मुष्टाविति किम् । संग्रहः शिष्यस्य ॥ ५८ ॥ युदुद्रोः ॥ ५ । ३ ५९ ॥ संपूर्वेभ्य एभ्यो भावाकर्त्रोर्घञ् भवति । संयावः । संदावः । संद्रावः । सम इत्येव । विद्रवः उपद्रवः ॥ ५९ ॥ नियश्चानुपसर्गाद्वा ॥ ५ । ३ । ६० ॥ अविद्यमानोपसर्गान्नयतेर्युदुद्रोश्च भावाकर्त्रोर्घञ् वा भवति । नयः । नायः । यवः । यावः । दवः । दावः । द्रवः । द्रावः । अनुपसर्गादिति किम् । प्रणयः ॥ ६० ॥ वोदः ॥ ५ । ३ । ६१ ॥ उत्पूर्वान्नयतेर्भावाकर्त्रोर्वा घञ् भवति । उन्नायः । उन्नयः ॥ ६१ ॥ अवात् ॥ ५ । ३ । ६२ ॥ अवपूर्वान्नयतेर्भावाकर्त्रोर्घञ् भवति । अवनायः ॥ ६२ ॥ परेर्द्यूते ॥ ५ । ३ । ३३ ॥ परिपूर्वान्नयतेर्द्यूतविषये धात्वर्थे वर्तमानाद्भावाकर्त्रोर्घञ् भवति । परिणायेन शारीन् हन्ति । समन्तान्नयनेनेत्यर्थः । द्यूत इति किम् । परिणयः कन्यायाः ॥ ६३ ॥ भुवोऽवज्ञाने वा ॥ ५ । ३ । ६४ ॥ परिपूर्वाद्भवतेरवज्ञानेऽर्थे वर्तमानाद्भावाकर्त्रोर्घञ् वा भवति । अवज्ञानमसत्कारपूर्वकोऽवक्षेपः । परिभावः । परिभवः । अवज्ञान इति किम् । समन्ताद्भवनं परिभवः ॥ ६४ ॥ यज्ञे ग्रहः ॥ ५ । ३ । ६५ ॥ परिपूर्वाद्ग्रहेर्यज्ञविषये प्रयोगे भावाकर्त्रोर्घञ् भवति । पूर्वपरिग्राहः । उत्तरपरिग्राहः । वेदेर्यज्ञाङ्गभूताया ग्रहणविशेष एताभ्यामभिधीयते । यज्ञ इति किम् । परिग्रहः कुटुम्बिनः ॥ ६७ ॥ संस्तोः ॥ ५ । ३ । ६६ ॥ संपूर्वात्स्तौतेर्भावाकर्त्रोर्यज्ञविषये घञ् भवति । संस्तुवन्त्यत्रेति संस्तावश्छन्दोगानाम् । समेत्य स्तुवन्ति छन्दोगा यत्र देशे स देशः संस्ताव उच्यते । यज्ञ इत्येव । संस्तवोऽन्यदृष्टे ॥ ६६ ॥ प्रात्स्रुद्रुस्तोः ॥ ५ । ३ । ६७ ॥

प्रात्परेभ्यः स्रुस्त्वादिभ्यो भावाकर्त्रोर्घञ् भवति । प्रस्रावः । प्रद्रावः । प्रस्तावः । प्रादिति किम् । स्रवः । द्रवः । स्तवः । कथं स्रावः । बहुलाधिकारात् ॥ ६७ ॥ अयज्ञे स्त्रः ॥ ५ । ३ । ६८ ॥ प्रपूर्वात्स्तॄ इत्येतस्मात् धातोर्भावाकर्त्रोर्घञ् भवति 'अयज्ञे' न चेत् यज्ञविषयः प्रयोगो भवति । प्रस्तारः । मणिप्रस्तारः । विमानप्रस्तारः । नयप्रस्तारः । अयज्ञ इति किम् । बर्हिष्प्रस्तरः । 'समासेऽसमस्तस्य '—( २-३-१३ ) इति षत्वम् ॥ ६८ ॥ वेरशब्दे प्रथने ॥ ५ । ३ । ६९ ॥ प्रथनं विस्तीर्णता । वेः परात्स्तृणातेरशब्दविषये प्रथनेऽभिधेये घञ् भवति । विस्तारः पटस्य । प्रथन इति किम् । तृणस्य विस्तरः । छादनमित्यर्थः । अशब्द इति किम् । अहो द्वादशाङ्गस्य विस्तरः ॥ ६९ ॥ *छन्दोनाम्नि ॥ ५ । ३ । ७० ॥ छन्दः पद्यो वर्णविन्यासः । विपूर्वात् स्तृणातेश्छन्दोनाम्नि विषये घञ् भवति । *विष्टारपङ्क्तिः । केचित्तु वेरन्यतोऽपीच्छन्ति । आस्तारपङ्क्तिः । प्रस्तारपङ्क्तिः छन्दोनाम ॥ ७० ॥ क्षुश्रोः ॥ ५ । ३ । ७१ ॥ क्षौतेः शृणोतेश्च विपूर्वाद्भावाकर्त्रोर्घञ् भवति । विक्षावः । विश्रावः । वेरित्येव । क्षवः । श्रवः ॥ ७१ ॥ *न्युदो ग्रः ॥ ५ । ३ । ७२ ॥ न्युद्भ्यां परात् गिरतेर्गृणातेर्वा भावाकर्त्रोर्घञ् भवति । निगारः । उद्गारः । न्युद इति किम् । गरः । *संगरः ॥ ७२ ॥ *किरो धान्ये ॥ ५ । ३ । ७३ ॥ न्युत्पूर्वात्किरतेर्धान्यविषये धात्वर्थे वर्तमानाद्भावाकर्त्रोर्घञ् भवति । निकारो धान्यस्य । उत्कारो धान्यस्य । राशिरित्यर्थः । धान्य इति किम् । फलनिकरः । पुष्पोत्करः ॥ ७३ ॥ नेर्वृः ॥ ५ । ३ । ७४ ॥ निपूर्वाद्वृणोतेर्वृणातेर्वा धान्यविशेषेऽभिधेये भावाकर्त्रोर्घञ् भवति । निव्रियन्त इति नीवारा नाम व्रीहिविशेषाः । 'घञ्युपसर्गस्य बहुलम् '—( ३-२-८६ ) इति दीर्घत्वम् । धान्य इत्येव । निवरा कन्या । स्वभावादलन्तोऽप्ययं स्त्रियां वर्तते । क्तिस्तु बहुलाधिकारान्न भवति ॥ ७४ ॥ इणोऽभ्रेषे ॥ ५ । ३ । ७५ ॥ स्थितेरचलनमभ्रेपः । निपूर्वादिणोऽभ्रेषविषयेऽर्थे वर्तमानाद्भावाकर्त्रोर्घञ् प्रत्ययो भवति । शास्त्रलोकप्रसिद्ध्यादिना नियतमयनं न्यायः। अभ्रेष इति किम् । न्ययं गतश्चौरः ॥ ७५ ॥ परेः क्रमे ॥ ५ । ३ । ७६ ॥ क्रमः परिपाटी । परिपूर्वादिणः क्रमविषयेऽर्थे वर्तमानाद्भावाकर्त्रोर्घञ् भवति । तव पर्यायो भोक्तुम् । मम पर्यायो भोक्तुम् । क्रमेण पदार्थानां क्रियासंबन्धः पर्यायः । क्रम इति किम् । पर्ययः स्वाध्यायस्य, अतिक्रम इत्यर्थः । विपर्ययो मतेः, अन्यथाभवनमित्यर्थः ॥ ७६ ॥ *व्युपाच्छीङः ॥ ५ । ३ । ७७ ॥ व्युपाभ्यां पराच्छीङो भावाकर्त्रोर्घञ् भवति क्रमे क्रमविषयश्चेद्धात्वर्थो भवति । तव राजविशायः । मम राजोपशायः । क्रमप्राप्तं पर्यायसाध्यं शयनमुच्यते । अन्ये तु शयितुं पर्याय उच्यते इत्याहुः । क्रम इति किम् । विशयः । उपशयः ॥ ७७ ॥ *हस्तप्राप्ये चेरस्तेये ॥ ५ । ३ । ७८ ॥ हस्तेनोपायान्तरनिरपेक्षेण प्राप्तुं शक्यं हस्तप्राप्यम् । तद्विषयाच्चिनोतेर्भावाकर्त्रोर्घञ् भवति अस्तेये न चेद्धात्वर्थस्तेये चौर्ये भवति । हस्तप्राप्यशब्देन प्रत्यासत्तिः प्राप्यस्य लक्ष्यते । तेन प्रत्यासत्तिविषये धात्वर्थे विधानम् । पुष्पप्रचायः । फलावचायः। फलोच्चायः । फलोच्चायश्च संहतैः । उदो नेच्छन्त्यन्ये ॥ फलोच्चयः । हस्तप्राप्य इति किम् । पुष्पप्रचयं करोति

॥—छन्दोनाम्नि॥—विष्टारपङ्क्तिरिति । पङ्क्त्यन्त छन्दोनामेति वाक्यावस्थाया घञ् न तेन विस्तरश्चासौ पङ्क्तिश्चेति कर्मधारयः । षष्ठीपञ्चमीतत्पुरुषो वा ॥—न्युदो ग्रः ॥–संगर इति । सगीर्यतेऽभ्युपगम्यते योद्धृभिर्युद्ध सगरणं वा तदा प्रतिज्ञा ॥—किरो धा —॥ निकारस्तिरस्कार इति तु करोतेर्घञ् ॥–व्युपाच्छीङः । स्वमते शयनस्य प्राधान्य तन्मते तु पर्यायस्येति तात्पर्यार्थः ॥–हस्तप्राप्ये—॥—

करोति। हस्तप्राप्यशब्देन प्रमाणमप्युच्यते। *यद्धस्ते संभवति न हस्तादतिरिच्यते इति। ततश्च 'मान'-
तरुशिखरे। अस्तेय इति किम्। स्तेयेन पुष्पप्रचयं करोति। हस्तेन प्रचयं करोति चौर इत्यत्र 'माने'-(५-३-८१) इत्यनेनापि घञ् न भवति॥७८॥
(५-३-८१) इत्यनेनैव सिद्धे नियमार्थं वचनम्। अस्तेय एवेति, तेन पुष्पाणां हस्तेन प्रचयं करोति चौर इत्यत्र 'माने'-(५-३-८१) इत्यनेनापि घञ् न भवति॥७८॥ उपसमाधानमुपर्युपरि राशी-
चितिदेहावासोपसमाधाने कश्चादेः॥५।३।७९॥ चीयत इति चितिर्यज्ञेऽग्निविशेषः तदाश्रयो वा। देहः शरीरम्। आवासो निवासः। उपसमाधानमुपर्युपरि राशी-
करणम्। एष्वर्थेषु चिनोतेर्भावाकर्त्रोर्घञ् तत्संनियोगे चादेः ककारादेशो भवति। चितौ, आकायमग्निं चिन्वीत। देहे, कायः शरीरम्। आवासे, ऋषिनिकायः।
उपसमाधाने, गोमयनिकायः। गोमयपरिकायः। कथं काष्ठनिचयः। बहुत्वमात्रविवक्षया। एष्विति किम्। चयः। चः क इत्येव सिद्धे आदिग्रहणमादेरेव यथा स्यात्।
तेन चेर्यङ्लुप्यपि निकेचाय इत्येव भवति॥७९॥*संघेऽनूर्ध्वे॥५-३-८०॥ न विद्यते कुतश्चिदूर्ध्वमुपरि किंचिदस्मिन् सोऽनूर्ध्वः। तस्मिन्संघे प्राणिसमुदायेऽभिधेये चिनोतेर्भावा-
कर्त्रोर्घञ् तत्संनियोगे चादेः को भवति। वैयाकरणनिकायः। तार्किकनिकायः। संघ इति किम्। सारसमुच्चयः। प्रमाणसमुच्चयः। अनूर्ध्व इति किम्। *सूकरनिचयः
सूकरा ह्युपर्युपरि चीयन्ते॥८०॥ *माने॥५।३।८१॥ माने गम्यमाने धातोर्भावाकर्त्रोर्घञ् भवति। मानमियत्ता। सा च द्वेधा। संख्या परिमाणं च। एको
निघासः। द्वौ निघासौ। एकस्तण्डुलावक्षायः। एकस्तण्डुलनिश्रायः। एकः कारः। द्वौ कारौ। त्रयः काराः। *द्वौ सूर्पनिष्पावौ। समित्संग्राहः। तण्डुलसंग्राहः।
मुष्टिरित्यर्थः। मान इति किम्। निश्चयः। *अल एवायमपवादः। क्त्यादिभिस्तु बाध्यते। एका तिलोच्छ्रितिः। द्वे प्रसृती॥८१॥ *स्थादिभ्यः कः॥५।३।८२॥
स्थादिभ्यो धातुभ्यो भावाकर्त्रोः कः प्रत्ययो भवति। आखूनामुत्थानम् आखूत्थो वर्तते। शलभोत्थो वर्तते। प्रतिष्ठन्त्यस्मिन्निति *प्रस्थः सानुः। संतिष्ठन्तेऽस्या-
मिति *संस्था। व्यवतिष्ठन्तेऽनयेति व्यवस्था। प्रस्नात्यस्मिन्निति प्रस्नः। प्रपिबन्त्यस्यामिति प्रपा। विध्यतेऽनेनेति विधः। आविध्यतेऽनेनेत्याविधः।
विहन्यतेऽनेनास्मिन्वा *विघ्नः। आयुध्यन्तेऽनेनेत्यायुधम्। आढ्यायन्ति तमित्याढ्यः। पृषोदरादित्वात् धस्य ढः। सर्वापवादत्वादनटमपि कप्रत्ययो बाधते।
कथमाव्याधः *घातः विघातः *उपघातः। बहुलाधिकारात्। बहुवचनं प्रयोगानुसरणार्थम्॥८२॥ द्वितोऽथुः॥५।३।८३॥ द्वितो धातोर्भावाकर्त्रोरथुः
प्रत्ययो भवति। वेपथुः। वमथुः। श्वयथुः। स्फूर्जथुः। भ्रासथुः। नन्दथुः। क्षवथुः। दवथुः। असरूपत्वाद्बलावपि। वेपः। क्षवः॥८३॥

यद्धस्ते सम्भवतीति। हस्ते सम्मातीत्यर्थः॥–संघेऽनू–॥–सूकरनिचय इति। पूर्वेणापि न भवति व्यावृत्तिबलात्॥–माने॥–द्वौ सूर्पनिष्पावाविति। पवने पावौ निश्चितौ पावाविति कार्यम्।
निष्पवने इति तु कृते 'निरभे पूल्-' इत्यनेनापि सिद्धम्॥–अल एवायमपवाद इति। मध्ये अपवादा पूर्वान् विधीन् बाधन्ते नोत्तरानिति न्यायात्॥–स्थादिभ्य क॥–प्रस्थ इति।
प्रपूर्वस्तिष्ठतिर्गत्यर्थ इति क्षीर। यदि प्रतिष्ठते मानार्थमिति क्रियते तदा 'उपसर्गादातो डोऽश्व' इति डे प्रस्थो मानमिति भवति॥–संस्थेति। 'उपसर्गादात' इत्यङ बाधित्वा स्त्रिया
खलनावित्यनट् स्यादित्यत्र पाठ.॥–विघ्न इति। स्थादिगणपाठबलात् करणेऽपि क. प्रत्यये. न तु 'व्ययोद्रौ' करणे' इत्यनेनाल्॥–घात इति विघात इतिवत्॥–घात उपघात इति।

*ड्वितस्त्रिमक् तत्कृतम् ॥५।३।८४॥ ड्वितो धातोर्भावाकर्त्रोस्त्रिमक् प्रत्ययो भवति तेन धात्वर्थेन कृतं *निर्वृत्तमित्येतस्मिन्नर्थे। पाकेन निर्वृत्तं पक्त्रिमम्। उप्त्रिमम्। कृत्रिमम्। लब्ध्रिमम्। विहित्रिमम्। याचित्रिमम्। ट्विदसाविति कश्चित्। याचथुः। ककारः कित्कार्यार्थः ॥८४॥ यजिस्वपिरक्षियतिप्रच्छो नः॥५।३।८५॥ एभ्यो भावाकर्त्रोर्नः प्रत्ययो भवति। यज्ञ। स्वप्नः। रक्ष्णः। यत्नः। प्रश्नः ॥८५॥ विच्छो नङ् ॥५।३।८६॥ विच्छेर्भावाकर्त्रोर्नङ् प्रत्ययो भवति। विश्नः। ङकारो गुणप्रतिषेधार्थः॥ ८६ ॥ उपसर्गाद्दः किः ॥५।३।८७॥ उपसर्गपूर्वाद्दासंज्ञकाद्धातोर्भावाकर्त्रोः किः प्रत्ययो भवति। आदिः। प्रदिः। प्रधिः। आधिः। निधिः। उपाधिः। संधिः। समाधिः। कित्करणमाकारलोपार्थम् ॥८७॥ *व्याप्यादाधारे ॥५।३।८८॥ व्याप्यात्कर्मणः परादासंज्ञादाधारेऽधिकरणे कारके किर्भवति। जलं धीयतेऽस्मिन्निति जलधिः। शरधिः। इषुधिः। वालधिः। *शेवधिः। आधारग्रहणमर्थान्तरनिषेधार्थम् ॥८८॥ अन्तर्द्धिः॥५।३।८९॥ अन्तःपूर्वाद्दधातेर्भावाकर्त्रोः किः प्रत्ययो निपात्यते। अन्तर्धिः ॥८९॥ *अभिव्याप्तौ भावेऽनञिन् ॥५।३।९०॥ *क्रियया स्वसंबन्धिनः साकल्येनाभिसंबन्धोऽभिव्याप्तिः। तस्यां गम्यमानायां भावे धातोरनञिन् इत्येतौ प्रत्ययौ भवतः। समन्ताद्रावः संरवणं, सांराविणं सेनायां वर्तते। संकुटनं सांकोटिनमेषाम्। अभिव्याप्ताविति किम्। संरावः। संकोटः। भावग्रहणं कर्मादिप्रतिषेधार्थम्। *असरूपविधिना क्तघञादिनिवृत्त्यर्थमनग्रहणम् ॥९०॥ स्त्रियां क्तिः ॥५।३।९१॥ स्त्रियामिति प्रत्ययार्थविशेषणम्। धातोर्भावाकर्त्रोः स्त्रीलिङ्गे क्तिः प्रत्ययो भवति। घञादेरपवादः। कृतिः। हृतिः। चितिः। नीतिः। नुतिः। भूतिः। स्त्रियामिति किम्। कारः। चयः ॥९१॥ *श्वादिभ्यः ॥५।३।९२॥ शृणोत्यादिभ्यो धातुभ्यः स्त्रीलिङ्गे भावाकर्त्रोः क्तिर्भवति। वक्ष्यमाणैः क्विबादिभिः सह समावेशार्थं वचनम्। श्रु, श्रुतिः। प्रतिश्रुत्। स्तु, स्तुतिः। प्रतिस्तुत्। पद् संपत्तिः। संपद्। सद् *आसत्तिः। संसद्। उपनिषद्। निषद्या। विद् संवित्तिः। संवित्। विद्या। वेदना। लभ् लब्धिः। लभा। अर्द् शिरोऽर्तिः। *अर्दिका। शंस् प्रशस्तिः। प्रशंसा। पच् पक्तिः। पचा। कण्डूय, कण्डूतिः। कण्डूः। कण्डूया। व्यवक्रुश्, व्यवक्रुष्टिः। व्यावक्रोशी। इष् इष्टिः। इच्छा। यज् इष्टिः। इज्या। मन् मतिः। मन्या। आस् आस्या। उपास्तिः। उपासना। शास् अनुशिष्टिः। आशीः। भृग् भृतिः। भृत्या। स्तूयते इज्यते इष्यतेऽनयेति स्तुतिः इष्टिः इष्टिरिति संज्ञाशब्दत्वात्करणेऽपि क्तिरेव नानट्। एवं स्तुतिः। अन्यत्र तु स्पर्धे ' परत्वात् स्त्रीखलना अलो बाधकाः स्त्रियाः खलनौ ' इति न्यायः ॥९२॥ सामिणासुगः ॥५।३।९३॥ संपूर्वादिण

अत्रापि करणाधिकरणत्व द्रष्टव्यम् ॥—ड्वितस्त्रिमक् ॥—निर्वृत्तमित्येतस्मिन्नर्थे इति । अन्तर्भूतण्यर्थत्वात् निर्वर्त्तितमित्यर्थ । कृतमित्येव वार्थ । तदा तु कर्म्मकर्त्तरि क्त ॥—व्याप्यादाधारे ॥—शेवधिरिति । शेते निधाविति 'शीङापो ह्रस्वश्च वा' इति वे शेव स्थाप्य ग न तद्धीयतेऽस्मिन् ॥—अभिव्याप्तौ-॥ क्रियया इति । ' द्विहेतो -'इति कर्त्तरि वा षष्ठी यत्र न ॥—असरूपविधिनेति । अयमर्थो यदि असरूपन्यायेनानट् भविष्यति तदानग्रहण न क्रियते । यथा ल्युनट् तथा असरूपविधिनैव क्तघञावपि प्राप्नुत तौ माभूतामित्यनग्रहणम् ॥—श्वादिभ्यः ॥—आसत्तिरिति । उपसर्गाणामतन्त्रत्वात् श्रुसदादिभ्य. क्तिक्विबादयोऽप्यनुज्ञाताः ॥—अर्दिकेति । यद्यपि णकप्रस्तावे शिरसोऽर्दन शिरोऽर्त्तिरित्यत्र बाहुलकाण्णको निषिद्ध. ' क्रेट-' इति अप्र-

आङ्पूर्वात्सुनोतेश्च भावाकर्त्रोः स्त्रियां क्तिर्भवति । क्यपोऽपवादः । समितिः । आसुतिः । समाङोऽन्यत्र इत्या सुत्येति क्यबेव भवति ॥ ९३ ॥ **सातिहेतियूतिजूतिज्ञप्तिकीर्ति** ॥ ५ । ३ । ९४ ॥ एते शब्दा भावाकर्त्रोः क्तिप्रत्ययान्ता निपात्यन्ते । सिनोतेः सुनोतेः स्यतेर्वा आत्वमित्वाभावश्च निपात्यते । सातिः । हिनोतेर्गुणे हन्तेर्वाऽन्त्यस्वरादेरेत्वे हेतिः । यौतेर्जवतेश्च दीर्घत्वे यूतिः, जूतिः । ज्ञपयतेर्ज्ञप्तिः । कीर्तयतेः कीर्तिः । आभ्यां ण्यन्तलक्षणोऽनो न भवति । कीर्तनेत्यपि कश्चित् ॥ ९४ ॥ *गापापचो भावे ॥ ५ । ३ । ९५ ॥ एभ्यो भावेऽर्थे स्त्रियां क्तिर्भवति । गा इति सामान्येन ग्रहणम् । प्रगीतिः । संगीतिः । पा इति गापाचिसाहचर्यात् *पिबतेर्ग्रहणम् । *प्रपीतिः । संपीतिः । पक्तिः । प्रपक्तिः । भावग्रहणमर्थान्तरनिरासार्थम् । बाधकस्याङोऽपवादः ॥ ९५ ॥ **स्थो वा** ॥ ५ । ३ । ९६ ॥ तिष्ठतेर्भावेऽर्थे स्त्रियां क्तिर्वा भवति । प्रस्थितिः । उपस्थितिः । वावचनादङपि । आस्था । व्यवस्था । संस्था । पूर्ववदङोऽपवादः ॥ ९६ ॥ ***आस्यटिव्रज्यजः क्यप्** ॥ ५ । ३ । ९७ ॥ एभ्यः परो भावेऽर्थे स्त्रियां क्यप् प्रत्ययो भवति । आस् आस्या । अट् अट्या । वृथाट्या खलु सा तस्याः । व्रज् व्रज्या । यज् इज्या । ककारः कित्कार्यार्थः । पित्करणमुत्तरत्र तागमार्थम् ॥ ९७ ॥ **भृगो नाम्नि** ॥ ५ । ३ । ९८ ॥ भृगः परो भावेऽर्थे स्त्रियां नाम्नि संज्ञायां क्यप् प्रत्ययो भवति । भरणं भृत्या । नाम्नीति किम् । भृतिः । भाव इत्येव । भ्रियत इति भार्या वधूः ॥ ९८ ॥ ***समजनिपन्निपदशीङ्सुग्विदिचारिमनीणः** ॥ ५ । ३ । ९९ ॥ योगविभागादत्र एवेति निवृत्तम् । एभ्यः परो नाम्नि भावाकर्त्रोः स्त्रियां क्यप् भवति । समज् समजन्त्यस्यामिति समज्या । निपन्निपदेति संहितानिर्देशात्पतेः पदेश्च ग्रहणम् । निपतन्त्यस्यामिति निपत्या । निपद्या । निपद् निपदनं निषीदन्त्यस्यामिति वा निपद्या । शीङ् शेरतेऽस्यामिति शय्या । सुग् सवनं सुन्वन्त्यस्यामिति वा सुत्या । विद् वेदनं विदन्ति तस्यां तया वा हिताहितमिति *विद्या । चर् चरणं चरन्ति अनयेति वा चर्या । मन् मननं मन्यतेऽनयेति वा मन्या । इण् अयनमेत्यनयेति वा इत्या । नाम्नीत्येव । संवीतिः । निपत्तिः । निपत्तिः ॥ ९९ ॥ **कृगः श च वा** ॥ ५ । ३ । १०० ॥ करोतेर्भावाकर्त्रोः स्त्रियां शः प्रत्ययो वा भवति । चकारात् क्यप् च । क्रिया । कृत्या । पक्षे कृतिः । क्रियेति यदा भावकर्मणोः शस्तदा मध्ये क्यः । यदा त्वपादानादौ शस्तदा क्यो नास्तीति रेरिकारस्येयादेशः ॥ १०० ॥ ***मृगयेच्छायाच्ञातृष्णाकृपाभाश्रद्धान्तर्धा** ॥ ५ । ३ । १०१ ॥ एते शब्दाः स्त्रियां निपात्यन्ते । तत्रेच्छा भाव एव । शेषास्तु भावाकर्त्रोः । अन्ये तु सर्वान्भाव एवानुमन्यन्ते । मृगयतेः शः शव् च क्यापवादो निपात्यते मृगया । इच्छतेः शः क्याभावश्च । इच्छा । याचितृष्योः नङौ । याच्ञा । *तृष्णा । कृपेरङ् रेफस्य च ऋकारः । कृपा । भातेरङ् । भा । श्रत्पूर्वादन्तःपूर्वाच्च

त्ययोऽपि तथापि तत्र भाव एवान त्वपादानादौ अर्थ्यतेऽस्याः 'नाम्नि पुंसि च' इति णक । भावे तु न तनेव बाहुलकादिति भणनात् ॥—गापापचो ॥-पिबतेर्ग्रहणमिति । पायतेस्तु लाक्षणिकत्वान्न ग्रह ॥-प्रपीतिरिति । भावेऽनेन क्तिरेव आधारे तु स्थादिभ्यः क । अपादाने तु 'उपसर्गादात' इत्यङ् ॥—आस्यटिव्रज्यजः क्यप् । अस्य क्यपो न कृत्यसंज्ञा प्रकरणात्तत्र विहितस्यैव भवति॥—समजनि-॥—पूर्ववत्संज्ञाशब्दत्वात् आधारेऽपि क्यप् ॥ विद्येति । संज्ञाशब्दत्वात् आदादिकस्यैव विदेर्ग्रहणं न त्वन्यस्य॥-मृगयेच्छा-॥-तृष्णेति । केचित्तु भिदादित्वात् तृषा । स्वमते तु कुत्सपदादित्वात् तृट् ॥-

दधातेरङ्। श्रद्धा। अन्तर्धा ॥ १०१ ॥ परेः सृचरेर्यः ॥ ५ । ३ । १०२ ॥ परिपूर्वाभ्यां सृचरिभ्यां परः स्त्रियां यः प्रत्ययो भवति भावाकर्त्रोः। भाव इत्यन्ये। परिसर्या। परेरिति किम्। संसृतिः। चूर्तिः ॥ १०२ ॥ वाटाट्यात् ॥ ५ । ३ । १०३ ॥ अटतेर्यङन्तात् स्त्रियां यः प्रत्ययो वा भवति भावाकर्त्रोः। भाव इत्यन्ये। अटाट्या। पक्षे अः प्रत्ययः। अटाटा। अन्ये तु क्तिप्रत्ययबाधनार्थमटतेरयङन्तस्य यप्रत्ययं द्विर्वचनं पूर्वदीर्घत्वं च निपातयन्ति। अटनमटाट्या ॥ १०३ ॥ जागुरश्च ॥ ५ । ३ । १०४ ॥ जागर्तेः स्त्रियामः प्रत्ययो यश्च भवति भावाकर्त्रोः। भाव इत्यन्ये। जागरा। जागर्या ॥ १०४ ॥ शंसिप्रत्ययात् ॥ ५ । ३ । १०५ ॥ शंसेः प्रत्ययान्तेभ्यश्च धातुभ्यो भावाकर्त्रोः स्त्रियामः प्रत्ययो भवति। प्रशंसा। गोपाया। ऋतीया। मीमांसा। कण्डूया। लोलूया। चिकीर्षा। पुत्रकाम्या। पुत्रीया। गत्रा। गल्भा। श्येनाया। पटपटाया। शंसूः क्तेऽनिट् इति वचनम् ॥ १०५ ॥ क्तेटो गुरोर्व्यञ्जनात् ॥ ५ । ३ । १०६ ॥ *क्तस्येट् यस्मात्स क्तेट्। क्तेटो गुरुमतो व्यञ्जनान्ताद्धातोर्भावाकर्त्रोः स्त्रियामः प्रत्ययो भवति। ईहा। ऊहा। ईक्षा। उक्षा। कुण्डा। हुण्डा। शिक्षा। भिक्षा। *व्यतीहा। व्यतीक्षा। क्तेट इति किम्। स्रस्तिः। ध्वस्तिः। आप्तिः। दीप्तिः। अक्तिः। राद्धिः। चाय् अपचितिः। स्फुर्छा, स्फूर्तिः। मुर्छा, मूर्तिः। गुरोरिति किम्। स्फुर् स्फूर्त्तिः। निपठितिः। व्यञ्जनादिति किम्। संशीतिः ॥ १०६ ॥ षितोऽङ् ॥ ५ । ३ । १०७ ॥ षिद्भ्यो धातुभ्यो भावाकर्त्रोः स्त्रियामङ् प्रत्ययो भवति। पचा। क्षमा। क्षान्तिरिति तु क्षाम्यतेः। घटा। त्वरा। प्रथा। व्यथा। जरा। 'ऋवर्णदृशोऽङि' ( ४-३-७ ) इति गुणः। ङकारो ङित्कार्यार्थः ॥ १०७ ॥ *भिदादयः ॥ ५ । ३ । १०८ ॥ भिदादयः शब्दा भावाकर्त्रोः स्त्रियामङ्प्रत्ययान्ता यथादर्शनं निपात्यन्ते। भिदा विदारणम्। छिदा द्वैधीकरणम्। विदा विचारणा। *मृजा शरीरसंस्कारः। क्षिपा प्रेरणम्। दया अनुकम्पा। रुजा रोगः। चुरा चौर्यम्। पृच्छा प्रश्नः। एतेऽर्थविशेषे। अन्यत्र भित्तिः कुड्यम्, छित्तिश्चौर्यादिकरणाद्राजापराधः, विच्छित्तिः प्रकार इत्यादि। तथा ऋकृहृधृतॄभ्यः संज्ञायां वृद्धिश्च। आरा शस्त्री। ऋतिरन्या। कारा गुप्तिः। कृतिरन्या। हारा मानम्। हृतिरन्या। धारा प्रपातः खड्गदेर्वा। धृतिरन्या। तारा ज्योतिः। तीर्णिरन्या। तथा गुहिकुहिवशिवपितुलिक्षपिक्षिभ्यश्च संज्ञायाम्। गुहा पर्वतकन्दरा औषधिश्च। गूढिरन्या। कुहा नाम नदी। कुहनान्या। वशा लोहनद्रव्यम् धातुविशेषश्च। उष्टिरन्या। वपा मेदोविशेषः। उप्तिरन्या। एवं तुला उन्मानम्। क्षपा रात्रिः। क्षिया आचारभ्रंशः। तथा संज्ञायामेव रिखिलिखिशुभिसिधिमिधिगुधिभ्यो गुणश्च। रिखिः लिखेः समानार्थः सौत्रो धातुः। रेखा राजिः। लेखा सैव। शोभा कान्तिः। सेधा सत्वम्। *मेधा बुद्धिः। गोधा प्राणिविशेषः दोस्त्राणं च। भिदादिराकृतिगणः। तेन चूडेत्यादि

क्तेटो गु ॥-क्तस्येट् यस्मादिति। क्तस्य इडेव यस्मादित्यवधारण कार्यं तेन स्फुर्छादिषु धातुषु यद्यपि भावारम्भयोः क्तयादौ विकल्पेन इट् विहितस्तथापि एकस्मिन् पक्षे नागच्छतीति व्यावृत्ति ॥-व्यतीहेति। 'व्यतिहार-' इत्यत्र ईहादिवर्जनात् क्यादीनामपवादोऽपि जो न भवति॥-भिदादयः॥-मृजेति। निपातनसामर्थ्यादेव 'ऋतः स्वरे वा' इति वृद्धिर्न भवति॥-मेधा बुद्धिरिति। केचित्तु मेधग

सिद्धम् । अकृतस्य क्रिया चैव प्राप्तेर्बाधनमेव च । अधिकार्थविवक्षा च त्रयमेतन्निपातनात् ॥ १०८ ॥ *भीषिभूषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यः ॥ ५ । ३ । १०९ ॥ एभ्यो ण्यन्तेभ्यः स्त्रिया भावाकर्त्रोरङ् भवति । ण्यन्तत्वादने प्राप्ते वचनम् । भीषा । भूषा । चिन्ता । पूजा । कथा । कुम्बा । चर्चा । स्पृहा । तोला । दोला । बहुवचनाद्यथादर्शनमन्येभ्योऽपि भवति । पीडा । ऊना ॥ १०९ ॥ उपसर्गादातः ॥ ५ । ३ ।११०॥ उपसर्गेभ्य आकारान्तेभ्यो धातुभ्यः स्त्रिया भावाकर्त्रोरङ् भवति । उपदा । उपधा । आधा । प्रदा । प्रधा । विधा । संधा । प्रमा । श्रद्धादित्वात् क्तौ प्रमितिः । उपसर्गादिति किम् । दत्तिः ॥ ११० ॥ *णिवेत्त्यासश्रन्थघट्टवन्देरनः ॥ ५ । ३ । १११ ॥ ण्यन्तेभ्यो वेत्त्यासश्रन्थघट्टवन्दिभ्यश्च धातुभ्यः स्त्रियां भावाकर्त्रोरनः प्रत्ययो भवति । कारणा । हारणा । कामना । लक्षणा । भावना । वेदना । आसना । उपासना । श्रन्थना । ग्रन्थेरप्यन्ये । ग्रन्थना । घट्टना । वन्दना । वत्तीति तिव्निर्देशो *ज्ञानार्थपरिग्रहार्थः ॥ १११ ॥ इषोऽनिच्छायाम् ॥ ५। ३ । ११२ ॥ इषेरनिच्छायां वर्तमानात् स्त्रियां भावाकर्त्रोरनो भवति । अन्वेषणा । एषणा । पिण्डैषणा । अनिच्छायामिति किम् । इष्टिः । कथं प्राणैषणा वित्तैषणा परलोकैषणा । बहुलाधिकारात् ॥ ११२ ॥ पर्यधेर्वा ॥ ५ । ३ । ११३ ॥ पर्यधिपूर्वादिषेरनिच्छायां वर्तमानाद्भावाकर्त्रोः स्त्रियामनो वा भवति । पर्येषणा । परीष्टिः । अध्येषणा । अधीष्टिः । अधीष्टिरिति नेच्छन्त्यन्ये ॥ ११३ ॥ क्रुत्संपदादिभ्यः क्विप् ॥ ५ । ३ । ११४ ॥ क्रुधादिभ्योऽनुपसर्गपूर्वेभ्यः पदादिभ्यश्च समादिपूर्वेभ्यो धातुभ्यः स्त्रियां भावाकर्त्रोः क्विप् प्रत्ययो भवति । क्रुधेः क्रुत् । युधेः युत् । क्षुधेः क्षुत् । तृषेः तृट् । त्विषेः त्विट् । रुषेः रुट् । रुजेः रुक् । रुचेः रुक् । शुचेः शुक् । मुदेः मुत् । मृदेः मृत् । गॄ गीः । त्रै त्राः । दिशेः दिक् । सृजेः स्रक् । तथा पदेः संपत् । विपत् । आपत् । व्यापत् । प्रतिपत् । पद्लृं । संसत् । परिषत् । उपमत् । उपनिषत् । विदेः निवित् । शासेः प्रशीः । आशीः । श्रु, प्रतिश्रुत् । उपश्रुत् । स्रु, परिस्रुत् । नहेः उपानत् । हृषेः प्राहृट् । मुषेः विमुट् । वृतेः नीवृत् । उपावृत् । यतेः संयत् । इणः सामित् । भृगः उपभृत् । इन्धेः समित् । क्रुधादिः संपदादिश्चाकृतिगणः ॥ ११४ ॥ *भ्यादिभ्यो वा ॥ ५ । ३ । ११५ ॥ बिभेत्यादिभ्यो धातुभ्यः स्त्रियां भावाकर्त्रोः क्विप् वा भवति । भीः । *भीतिः । ह्रीः । ह्रीतिः । लूः । लूनिः । भूः । भूतिः । कण्डूः कण्डूया । कृत् । कृतिः । भित् । भित्तिः । छित् । छित्तिः । तुत् । तुत्तिः । दृक् । दृष्टिः । नशेः नक् । नष्टिः । युजेः युक् । युक्तिः । ज्वरेः जूः । जूर्तिः । त्वरेः तूः । *तूर्तिः । अवतेः ऊः । ऊतिः । स्रिवेः स्रूः । स्रूतिः । मवतेः मूः । मूतिः । नौतेः नुत् । नुतिः । शकेः शक् । शक्तिः ॥ ११५ ॥ *व्यतिहारेऽनीहादिभ्यो ञः ॥ ५ । ३ । ११६ ॥ व्यतिहरणं व्यतिहारः । परस्परस्य कृतप्रतिकृतिः । व्यतिहारविषयेभ्यो धातुभ्य ईहादिवर्जितेभ्यः स्त्रियां ञः प्रत्ययो भवति । बाहुलकाद्भावे क्त्यादीनामपवादः । परस्परमाक्रोशनं व्यावक्रोशी । व्याक्रोशी । व्यावमोषी । व्यावहासी ।

स्थाने मिथुगिति पठन्ति सोनो वा ॥—भीषिभूषि—॥ अप्रत्ययाधिकारेऽप्यस्मिन् कृते साध्यसिद्धिः स्यात्पर अङ्प्रत्ययाधिकारे यत्कृतं तण्णिगलोपस्यानित्यत्वज्ञापनार्थं तेन चिन्तिया पूजिया सुप्रकथियेत्यादि सिद्धम् ॥—णिवेत्त्यास—॥—ज्ञानार्थपरिग्रहार्थं इति । यङ्लुप्निवृत्त्यर्थंश्च । तेनाऽस्मात् श्रद्धादिभ्य क्तो वेवित्ति ॥—भ्यादि—॥ नन्वत्र ये क्विबन्तास्ते क्रुधादिगणे पठिष्यन्ते प्रत्यन्तास्तु श्रद्धादौ किमनेन । सत्यम् ॥ कण्डूयेति तृतीयरूपाथम् ॥—भीतिरित्यादि । एषु सर्वेषु स्त्रिया क्तिः ॥—तूर्तिरिति । षित्वादङ. पक्षे श्रद्धादित्वात् क्तिः ॥—व्यतिहारे—॥—

व्यावलेखी । व्यातिचारी । व्यावचर्ची । *व्यात्युक्षी । अनीहादिभ्य इति किम् । व्यतीहा । व्यतीक्षा । व्यतिपृच्छा । व्यवहृतिः । व्युत्युक्षेत्यप्येके ' नित्यं ञ्निनोऽण् '—( ५-३-५८ ) इति स्वार्थेऽण् वक्ष्यते । तेन केवलस्य प्रयोगो न भवति । ' अआदिभ्यः '—( ५-३-९२ ) इति समावेशाऽभिधानात् व्यवक्रुष्टि-व्याक्रुष्टिरित्यपि भवति । स्त्रियामित्येव । व्यतिपाको वर्तते ॥ ११६ ॥ नञोऽनिः शापे ॥ ५ । ३ । ११७ नञः पराद्धातोः शापे गम्यमाने भावाकर्त्रोः स्त्रियामनिः प्रत्ययो भवति । अजननिस्ते वृषल भूयात् । एवमजीवनिः । अकरणिः । अप्रयाणिः । अगमनिः । नञ इति किम् । मृतिस्ते जाल्म भूयात् । शाप इति किम् । अकृतिस्तस्य पटस्य ॥ ११७ ॥ ग्लाहाज्यः ॥ ५ । ३ । ११८ ॥ एभ्यः स्त्रियां भावाकर्त्रोरनिः प्रत्ययो भवति । ग्लानिः । हानिः । ज्यानिः । म्लानिरि-त्यपि कश्चित् ॥ ११८ ॥ *प्रश्नाख्याने वेञ् ॥ ५ । ३ । ११९ ॥ प्रश्ने आख्याने च गम्यमाने स्त्रियां भावाकर्त्रोर्धातोरिञ् प्रत्ययो वा भवति । वचनाद्यथाप्राप्तं च । कां त्वं कारिमकार्षीः । *कां कारिकाम् कां क्रियां कां कृत्यां *कां कृतिम् । आख्याने सर्वां कारिमकार्षम् सर्वां कारिकाम् सर्वां क्रियाम् सर्वां कृत्याम् सर्वां कृतिम् । कां त्वं गणिमजीगणः । कां गणिकाम् कां गणनाम् । सर्वां गणिमजीगणम् सर्वां गणिकाम् सर्वां गणनाम् । एवं पाचिं पाचिकां पक्तिं पचाम् । पाठिं पाठिकाम् पठितिम् । प्रश्नाख्यान इति किम् । कृतिः । हृतिः ॥ ११९ ॥ *पर्यायार्हर्णोत्पत्तौ च णकः ॥ ५ । ३ । १२० ॥ एष्वर्थेषु प्रश्नाख्यानयोश्च गम्यमानयोः स्त्रियां भावाकर्त्रोर्धातोर्णकः प्रत्ययो भवति । क्त्याद्यपवादः । पर्यायः क्रमः परिपाटिरिति यावत् । भवत आसिका । भवतः शायिका । भवतोऽग्रगा-मिका । आसितुं शयितुमग्रेगन्तुं च भवतः क्रम इत्यर्थः । अर्हणमर्हः योग्यता । अर्हति भवान् *इक्षुभक्षिकाम् । ओदनभोजिकाम् । पयःपायिकाम् । ऋणं यत्परस्मै धार्यते । इक्षुभक्षिकां मे धारयसि । उत्पत्तिर्जन्म । इक्षुभक्षिका मे उदपादि । प्रश्ने कां त्वं कारिकाम् अकार्षीः । कां त्वं गणिकामजीगणः । आख्याने सर्वां कारि-कामकार्षं, सर्वां गणिकामजीगणम् । बहुलाधिकारात्क्वचिन्न भवति । चिकीर्षा, बुभुक्षा मे उदपादि । प्रश्नाख्यानयोगेऽपि पर्यायादिषु परत्वात् *णक एव भवति नेञ् ॥ १२० ॥ *नाम्नि पुंसि च ॥ ५ । ३ । १२१ ॥ धातोः स्त्रियां भावाकर्त्रोर्नाम्नि संज्ञायां णकः प्रत्ययो भवति यथादर्शनं पुंसि च । प्रच्छर्दनं प्रच्छर्द्यतेऽ-नयेति वा प्रच्छर्दिका । एवं प्रवाहिका । विचर्चिका । प्रस्कन्दिका । विपादिका । एता रोगसंज्ञाः । उद्दालकपुष्पाणि भज्यन्ते यस्यां सो*द्दालकपुष्पभञ्जिका । एवं वारणपुष्पप्रचायिका । अभ्योषाः खाद्यन्तेऽस्यामिति अभ्योषखादिका । एवमवोषखादिका । साला भज्यन्ते यस्यां सा सालभञ्जिका । एवंनामानः क्रीडाः । बहुलाधिकारादिह न भवति । शिरसोऽर्दनं शिरोर्तिः । एवं शीर्षार्तिः । शिरोऽभितप्तिः । शीर्षाभितप्तिः । तथा

---

व्यात्युक्षीति । ' स्व पदान्तात् '—इति ऐकारो न । ' नञ्स्वङ्गादे ' इति निषेधात् ॥—प्रश्नाख्या—॥—कां कारिकामिति । ' पर्यायार्हर्ण–इति णक ॥—कां कृतिमिति । श्यादित्वात् क्तिपि का कृतमित्यपि ॥—पर्यायार्हर्णो—॥—इक्षुभक्षिकामिति । अत्र 'कृति' इति समास ॥—णक एव भवतीति । यथा कुत्र भवत आसिकेति । आसितु पर्याय. ॥—नाम्नि पुंसि च ॥—उद्दालकपुष्पभञ्जिकेति । अत्र 'कृति' इति षष्ठीसमास. । उद्दालकपुष्पाणि भज्यन्ते यस्यामिति स्वर्थकथनम् । वाक्यं तु भज्यन्ते यस्यां भञ्जिका उद्दालकपुष्पाणां भञ्जिकेति कार्यम्, न

*चन्दनतक्षा क्रीडा ।*बहुलाधिकारादेव चातिरित्यत्रार्दतेः *अर्दयतेश्च यथाक्रममप्रत्ययमनप्रत्ययं च बाधित्वा क्तिरेव भवति । पुंसि च, अरोचनं न रोचतेस्मिन्निति वा अरोचकः । अनाशकः । *उत्कन्दकः । *उत्कर्णकः ॥१२१॥ भावे ॥ ५ । ३ । १२२ ॥ भावे धात्वर्थनिर्देशे स्त्रियां धातोर्णकः प्रत्ययो भवति । आसिका । शायिका । जीविका । कारिका । बहुलाधिकारात् ईक्षा ऊहा ईहा स्मरणा ॥ १२२ ॥ *क्लीबे क्तः ॥ ५ । ३ । १२३ ॥ क्लीबे नपुंसकलिङ्गे भावेऽर्थे धातोः क्तः प्रत्ययो भवति । *घञाद्यपवादः । स्त्रियां भावाकर्त्रोरिति च निवृत्तम् । हसितं छात्रस्य । नृत्तं मयूरस्य । व्याहृतं कोकिलस्य । गतं मतंगजस्य । क्लीब इति किम् । हसः । हासः ॥ १२३ ॥ अनट् ॥ ५ । ३ । १२४ ॥ क्लीबे भावेऽर्थे धातोरनट् प्रत्ययो भवति । गमनं भोजनं वचनं हसनम् छात्रस्य । टकार उत्तरत्र ङ्यर्थः ॥ १२४ ॥ *यत्कर्मस्पर्शात्कर्त्रङ्गसुखं ततः ॥ ५ । ३ । १२५ ॥ येन कर्मणा संस्पृश्यमानस्य कर्तुरङ्गस्य शरीरस्य सुखमुत्पद्यते ततः कर्मणः पराद्धातोः क्लीबे भावेऽर्थेऽनट् भवति । पूर्वेणैव प्रत्यये सिद्धे *नित्यसमासार्थं वचनम् । *पयःपानं सुखम् । ओदनभोजनं सुखम् । कर्मेति किम् । अपादानादिस्पर्शे मा भूत् । तूलिकाया उत्थानं सुखम् । स्पर्शादिति किम् । अग्निकुण्डस्योपासनं सुखम् । कर्त्रिति किम् । शिष्येण गुरोः स्नापनं सुखम् । स्नापयतेर्नै गुरुः कर्ता किं तर्हि कर्म । अङ्गग्रहणं किम् । पुत्रस्य परिष्वञ्जनं सुखम् । पुत्रस्य स्पर्शान्न शरीरस्य सुखं किं तर्हि मानसी प्रीतिः । अन्यथा परपुत्रपरिष्वङ्गेऽपि स्यात् । सुखमिति किम् । कण्टकानां मर्दनम् । सर्वत्रासमासः प्रत्युदाहार्यः । अथवा तत इति *सप्तम्यन्तात्तसुः । येन कर्मणा स्पृश्यमानस्य कर्तुरङ्गसुखमुत्पद्यते तस्मिन्कर्मण्यभिधेये सामर्थ्यात्कर्तुः पराद्धातोरनट् भवति इत्यपरोऽर्थः । राज्ञा भुज्यन्ते राजभोजनाः शालयः । राजाच्छादनाः प्रावाराः । राजपरिधानानि वासांसि ॥ १२५ ॥ *रम्यादिभ्यः कर्तरि ॥ ५ । ३ । १२६ ॥ रम्यादिभ्यो धातुभ्यः कर्तर्यनट् भवति । रम् *रमणी । कम् कमनी । नन्द नन्दनी । ह्लाद् ह्लादनी । व्रश्च *इध्मव्रश्चनः । शातिः पलाशशातनः । बहुवचनं प्रयोगानुसरणार्थम् ॥ १२६ ॥ कारणम् ॥ ५ । ३ । १२७ ॥ कृगः कर्तर्यनट् वृद्धिश्च निपात्यते । करोतीति कारणम् । कर्तरीति किम् । करणम् ॥ १२७ ॥ *भुजिपत्यादिभ्यः कर्मापादाने ॥ ५ । ३ । १२८ ॥ भुज्यादिभ्यः पत्यादिभ्यश्च धातुभ्यो यथासंख्यं कर्मण्यपादाने चानट् भवति । भुज्यत इति भोजनम् ।

---

तु 'अकेन क्रीडा'-इति समासस्तेन कर्तृावहिताऽक्रान्तेन सह विधानात् । णकस्त्वनेन कर्तृवर्ज प्रवर्त्तते ॥—चन्दनतक्षेति । चन्दनास्तक्ष्यन्ते यस्यां बाहुलकात्पुन्नाम्नि विहितोऽपि स्त्रियामपि व्यञ्जनाद्घञ् । ननु यथा शिरोर्त्तिरित्यत्र बाहुलकाण्णको निषिद्धस्तथा क्तिरपि न प्राप्नोति स्त्रीखलना इति न्यायादित्याह-बहुलाधिकारादिति ॥—अर्दयतेश्चेति । कथमर्दिणित्यस्य ॥—उत्कन्दक इति । उत्स्कन्दनम् उत्स्कद्यतेऽनेनेति वा पृषोदरादित्वात्सलोप ॥—क्लीबे क्तः ॥—घञाद्यपवाद इति । आदिशब्दात् 'द्वितोऽथु' इत्यादय ॥—यत्कर्मस्पर्शा—॥—नित्यसमासार्थमिति । 'ङस्युक्तं कृता' इति अनेन । पूर्वेण हि प्रत्यये ङस्युक्तत्वाऽभावे केन समास स्यात् ॥—पय पानमिति । नित्यसमासत्वात्पयसा पानमिति न कार्यम् । किंतु पयसः पीतिरिति द्वन्द्वान्तरेणार्थं कथ्यते ॥—सप्तम्यन्तात्तसुरिति । तदा पृषोदरादित्वाद्दलोप । 'आ द्वेर' इति तु न तसादौ चेत्यधिकारात् । एके तु तस्यादावपीच्छन्ति ॥—रम्यादिभ्य कर्त्तरि ॥—रमणी इति । कृते णकतृचादयोऽनेन अनटा बाधिता सन्तो बाहुलकादेव भवन्ति । एवमऽन्येपाम् ॥—इध्मव्रश्चन इति । वृश्चतीति । इध्मानां व्रश्चन. 'कृति' इति समासः ॥—भुजिपत्यादिभ्य ॥—

निरदन्ति तदिति निरदनम्। आच्छादि, आच्छादनम्। अवस्रावि, *अवस्रावणम्। अवसिच् अवसेचनम्। अस् असनम्। वस् *वसनम्। आभृग् आभरणम्। अपादाने, पत्, प्रपतत्यस्मादिति प्रपतनः। स्कन्दि, प्रस्कन्दनः। श्च्योति, प्रश्च्योतनः। स्रु, प्रस्रवणः। झृप्, निर्झरणः। धृ, शङ्खोद्धरणः। दाग्, अपादानम्। बहुवचनं प्रयोगानुसरणार्थम्॥ १२८॥ करणाधारे॥ ५। ३। १२९॥ करणाधारयोरर्थयोर्धातोरनट् भवति। घञाद्यपवादः। करणे, एषणी। लेखनी। विचयनी। इध्मव्रश्चनः। पलाशशातनः। अविलवनः। श्मश्रुकर्तनः। आधारे, गोदोहनी। सक्तुधानी। तिलपीडनी। शयनम्। आसनम्। अधिकरणम्। आस्थानम्॥ १२९॥ *पुंनाम्नि घः॥ ५। ३। १३०॥ पुंसो नाम संज्ञा पुन्नाम। तत्र गम्यमाने करणाधारयोर्धातोर्घः प्रत्ययो भवति। करणे, प्रच्छदः। उरच्छदः। दन्तच्छदः। प्लवः। *प्रणवः। करः। प्रत्ययः। शरः। आधारे, एत्य कुर्वन्त्यस्मिन्नित्याकरः। आलवः। आरवः। आपवः। भवः। लयः। विषयः। भरः। प्रहरः। प्रसरः। अवसरः। परिसरः। विसरः। प्रतिसरः। पुंग्रहणं किम्। विचीयतेऽनयेति विचयनी। प्रधीयते विकारोऽस्मिन्निति *प्रधानम्। नाम्नीति किम्। प्रहरणो दण्डः। बहुलाधिकारात्क्वचिन्न भवति। *प्रसाधनः। *दोहनः। घकार 'एकोपसर्गस्य च घे' (४-२-३४) इत्यत्र विशेषणार्थः॥ १३०॥ गोचरसंचरवहव्रजव्यजखलापणनिगमबकभगकषाकषनिकषम्॥ ५। ३। १३१॥ एते शब्दाः करणाधारयोः पुंनाम्नि व्यञ्जनाद् घञि प्राप्ते घप्रत्ययान्ता निपात्यन्ते। गावश्चरन्ति अस्मिन्निति गोचरो देशः। व्युत्पत्तिमात्रं चेदम्। विषयस्य तु संज्ञा। अनेकान्तात्मकं वस्तु गोचरः सर्वसंविदाम्। संचरन्तेऽनेन संचरः। वहन्ति तेन वहः वृषस्कन्धदेशः। व्रजन्त्यस्मिन्निति व्रजः। विपूर्वोऽजिः। व्यजत्यनेन व्यजः। निपातनाद्वीभावाभावः। खलन्त्यस्मिन्निति खलः। एत्य पणायन्ति अस्मिन्निति आपणः। निगच्छन्ति तत्रेति निगमः। वक्तीति बकः। बाहुलकात्कर्तरि। निपचन्त्यनेन निपक इत्यपि कश्चित्। भज्यतेऽनेनास्मिन्निति वा भगः। भगमिति बाहुलकात् क्लीबेऽपि घः। कषत्यस्मिन्निति कषः। एवमाकषः। निकषः॥ १३१॥ *व्यञ्जनाद् घञ्॥ ५। ३। १३२॥ व्यञ्जनान्ताद्धातोः पुंनाम्नि करणाधारे घञ् प्रत्ययो भवति। *घस्यापवादः। विदन्त्यनेन विन्दति विन्दते वा वेदः। चेष्टतेऽनेन चेष्टो बलम्। एत्य पचन्त्यस्मिन्नित्यापाकः। आरामः। लेखः। बन्धः। नेगः। वेगः। रागः। रङ्गः। क्रमः। प्रासादः। अपामार्गः। नीमार्गः॥ १३२॥ *अवात्तृस्तृभ्याम्॥ ५। ३। १३३॥ अवपूर्वाभ्यां तॄस्तृभ्यां करणाधारयोः पुंनाम्नि घञ् भवति। अवतरन्त्यनेनास्मिन्वेति *अवतारः। अवस्तृणन्त्यनेनास्मिन्निति वा अवस्तारः। बहुलाधिकारादसंज्ञायामपि। अवतारो नद्याः। उत्पूर्वादपि, नद्युत्तारः। करणाधार इत्येव। अवतरः। केचित्तु संज्ञायामसंज्ञायां च भावेऽकर्तरि कारके च स्तॄो नित्यं तरतेस्तु विकल्पेन घञमिच्छन्ति। द्विवचनं करणाधार इति यथासंख्यनिवृत्त्यर्थम्

॥—अवस्रावणमिति। अवस्रवत् अध पतत् प्रयुङ्क्ते णिगि अवस्राव्यते॥—वसनमिति। वसिक् वस्यते तदिति॥—पुन्नाम्नि घ॥—प्रणव इति। प्रणुवन्त्यनेन। स्मरस्तु स्मरन्ति कामिनीमनेनेति वाक्ये अनेन घ इति पारायणम्॥—प्रधानमिति। सत्त्वरजस्तमसा साम्यावस्था प्रकृतिः प्रधानम्॥—प्रसाधन इत्यत्र णिगन्तादनट् एव दोहन इत्यत्र॥—व्यञ्जनाद् घञ् घस्यापवाद इति। 'पुन्नाम्नि'—इति प्राप्तस्य॥—अवात्तृस्तृभ्याम्॥—अवतारो नद्या इति। येनकेनापि पथाऽवतीर्यते स एवावतारो न तु कस्यापि संज्ञा

॥ १३३ ॥ *न्यायावायाध्यायोद्यावसंहारावहाराधारदारजारम् ॥ ५ । ३ । १३४ ॥ स्वरान्तार्थ आरम्भः । एते शब्दाः पुंनाम्नि करणाधारयोर्घे प्राग्घञन्ता निपात्यन्ते । निपूर्वस्येणो नीयतेऽनेनेति न्यायः । एत्य वयन्ति वायन्ति वा तस्मिन्नावायः । अधीयतेऽनेनास्मिन्नाध्यायः । उद्युवन्ति तेन तस्मिन्नोद्यावः । संहरन्ति तेन संहारः । अवहरन्ति तेन तस्मिन्वा अवहारः । आध्रियते तत्रेत्याधारः । दीर्यन्ते एभि रिति दाराः । जीर्यतेऽनेनेति जारः । दारयन्तीति दाराः । जरयतीति जार इति कर्तरि *केचिन्निपातयन्ति ॥१३४॥ *उदङ्कोऽतोये ॥ ५ । ३ । १३५ ॥ उत्पूर्वादञ्चतेः पुंनाम्नि करणाधारयोर्घञ् निपात्यते अतोये तोयविषयश्चेद्धात्वर्थो न भवति । जलेचेत्तेन नोदच्यत इत्यर्थः । तैलोदङ्कः । घृतोदङ्कः । अतोय इति किम् । उदकोदञ्चनः । 'व्यञ्जनाद्धञ्'—(५-३-१३२) इति सिद्धे तोये प्रतिषेधार्थं वचनम् । *रूपविशेषाद् *घोऽपि न भवति ॥ १३५ ॥ आनायो जालम् ॥ ५ । ३ । १३६ ॥ आङ्पूर्वान्नयतेः करणे पुंनाम्नि घञ् निपात्यते जालं चेद्वाच्यं भवति । आनयन्ति तेन आनायो मत्स्यानाम् । आनायो मृगाणाम् ॥ १३६ ॥ *खनो डडरेकेकवकघं च ॥ ५ । ३ । १३७ ॥ खनेः पुंनाम्नि करणाधारयोर्ड डर इक इकवक घ घञ् च प्रत्यया भवन्ति । आखन्यत आखन्यते वाऽनेनास्मिन्वा आखः । आखरः । आखनिकः । आखनिकवकः । आखनः । आखानः ॥ १३७ ॥ *इकिश्तिव् स्वरूपार्थे ॥ ५ । ३ । १३८ ॥ धातोः स्वरूपेऽर्थे चाभिधेये इकि श्तिव् इत्येते प्रत्यया भवन्ति । भञ्जिः । क्रुधिः । वेत्तिः । अर्थे, गजेरङ्गानि । भजिः क्रियते । *पचतिर्वर्त्तते ॥ १३८ ॥ *दुःस्वीषतः कृच्छ्राकृच्छ्रार्थात् खल् ॥ ५ । ३ । १३९ ॥ कृच्छ्रं दुःखम् । अकृच्छ्रं सुखम् । कृच्छ्रार्थवृत्तेर्दुरः सामर्थ्यादकृच्छ्रार्थवृत्तिभ्यां स्वीषद्भ्यां पराद्धातोर्भावकर्मणोरर्थयोः खल् प्रत्ययो भवति । कृत्यादीनामपवादः । दुःखेन शय्यत इति दुःशयम् । सुखेन शय्यते इति सुशयम्, ईषच्छयं भवता । दुःखेन क्रियत इति दुष्करः । सुखेन क्रियते इति सुकरः, ईषत्करः कटो भवता । दुष्करं सुकरम् ईषत्करं भवता । दुःस्वीषत इति किम् । कृच्छ्रसाध्यः । सुखसाध्यः । कृच्छ्राकृच्छ्रार्थादिति किम् । ईषल्लभ्यं धनं कृपणात् । अल्पं लभ्यमित्यर्थः । खकारः उत्तरत्र मागमार्थः । लकारः 'खलर्थाश्च' इत्यत्र विशेषणार्थः । इह स्त्रीप्रत्ययस्य प्रकृति असरूपविधेरप्रभावात्सर्वे अलः स्त्रीखलना स्त्रियां खलुनौ परत्वाद्भवतः । तत्र चाचः जयः लवः इत्यादावलोऽवकाशः कृतिः हृतिः इत्यादौ स्त्रीप्रत्ययस्य चितिः स्तुतिरित्यादौ तूभयं प्राप्नोति । अलोऽविशेषेणाभिधानात् । तत्र परत्वात् स्त्रीप्रत्ययो भवति । तथा दुर्भेदः सुभेद इत्यादौ खलोऽवकाशः अलस्तु पूर्व एव दुश्चयं सुचयम् दुर्लवं सुलवमित्यादौ तूभयप्राप्तौ

॥ न्यायावायेति-॥ केचिन्निपातयन्तीति । ननु जार इत्यस्य 'कोरनू ज्ञैन्नः'-इति ह्रस्वात्वे दीर्घार्थं निपातन क्रियता दार इत्यस्य तु किं निपातनेन । सत्यम् । भयविवक्षायां दृधातोर्णिगन्तत्वात् दरयतीति यदा क्रियते तदापि दीर्घो भूयादित्येवमर्थं निपातनम् ॥-उदङ्कोऽतो ॥-घोऽपि न भवतीति । ननु 'पुंनाम्नि घ' इत्यस्यापवादो घञ् तत उदकविषये घञ्निवृत्तो प्रत्ययान्तराभावात् घेनैव भवितव्यमित्याह-रूपाविशेषादात ॥-खनो डडर-॥ अनुकार्यानुकरणयोः कथञ्चिद्भेदाद्धातुस्त्वाऽभावे इकिश्तिवा खन इत्यत्राऽभाव ॥-इकिश्तिव्-। कश्चिदेतान् प्रत्ययान् कर्त्तरि समानयन्ति स्वमते तु कर्तृकर्मभाव इति विशेषाभावात् सामान्येन भवन्ति । 'भवते रिकल्लपि' 'न कवतेर्यङः' इत्यादौ भावेऽपि सूत्रसामर्थ्यात् शव् नतु क्यः ॥—पचतिर्वर्त्तते इति । बाहुलकाद्भावेऽपि शव् क्याऽभावश्च ॥—दुःखीषत.

परत्वात्खल् भवति । तथा इध्मव्रश्चनः पलाशच्छेदन इत्यादौ अनस्याऽवकाशः अलस्तु पूर्वक एव पलाशशातनोऽविज्ञव इत्यादौ तूभयप्राप्तौ *परत्वादनो भवति । एवं कृतिः कृतिरित्यादौ क्तिप्रत्ययस्यावकाशः दुर्भेदः सुभेद इत्यादौ खलः दुर्भेदः सुभेदः इत्यादौ तूभयप्राप्तौ परत्वात्खल् भवति । तथा इध्मव्रश्चनः पलाशच्छेदन इत्यनटोऽवकाशः कृतिरित्यादौ क्तिप्रत्ययस्य सक्तुधानी तिलपीडनीत्यादौ तूभयप्राप्तौ परत्वादनडेव भवति ॥ १३९ ॥ च्व्यर्थे कर्त्राप्याद्भूकृगः ॥ ५ । ३–४० ॥ कृच्छ्राकृच्छ्रार्थेभ्यो दुःस्वीषद्भ्यः पराभ्यां च्व्यर्थे वर्तमानाभ्यां कर्तृकर्मवाचिभ्यां शब्दाभ्यां पराभ्यां यथासंख्यं भूकृग्भ्यां परः खल् प्रत्ययो भवति । *खानुबन्धस्तु मागमार्थः । दुःखेनानाढ्येनाढ्येन भूयते दुराढ्यंभवं भवता । सुखेनानाढ्येनाढ्येन भूयते स्वाढ्यंभवं भवता । ईषदाढ्यंभवं भवता । दुःखेनानाढ्यः आढ्यः क्रियते दुराढ्यंकरो मैत्रो भवता । सुखेनानाढ्य आढ्यः क्रियते स्वाढ्यंकरश्चैत्रो भवता । ईषदाढ्यंकरश्चैत्रो भवता । सुखेनाकटाः कटाः क्रियन्ते सुकटंकराणि वीरणानि । सुकरः कटो वीरणैरित्यत्र तु करणविवक्षा । च्व्यर्थे इति किम् ? *दुराढ्येन भूयते । स्वाढ्येन भूयते । ईषदाढ्येन भूयते । आढ्य एव सन् कंचिद्विशेषमापद्यत इत्यर्थः । एवं दुराढ्यः क्रियते इत्यादि । अभूततद्भावेऽपि वा *प्रकृतेरविवक्षणात् च्व्यर्थो नास्ति ॥ १४० ॥ शासूयुधिदृशिधृषिमृषातोऽनः ॥ ५ । ३ । १४१ ॥ कृच्छ्राकृच्छ्रार्थदुःस्वीषत्पूर्वेभ्यः शास्प्रभृतिभ्य आकारान्तेभ्यश्च धातुभ्यो भावकर्मणोरर्थयोरनः प्रत्ययो भवति । दुःखेन शिष्यते दुःशासनः । सुखेन शिष्यते सुशासनः, ईषच्छासनः । एवं *दुर्योधनः दुर्दर्शनः दुर्धर्षणः दुर्मर्षणः । आदन्त, दुरुत्थानं भवता । सूत्थानम् । ईषदुत्थानम् । दुष्पानं पयो भवता । सुपानम् । ईषत्पानम् । आदन्तवर्जितेभ्यः केचिद्विकल्पमिच्छन्ति तन्मते दुःशासः दुर्योधः दुर्दर्शः दुर्धर्षः दुर्मर्ष इत्याद्यपि भवति । *दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते । कथम् *ईषद्दरिद्रः । *विपर्ययेऽप्याकारस्य लोपेनादन्तत्वाभावात् खलेव । खलोऽपवादो योगः ॥ १४१ ॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ पञ्चमाध्यायस्य तृतीयः पादः ॥ ३ ॥ मात्रयाप्यधिकं किंचिन्न सहन्ते जिगीषवः ॥ इतीव त्वं धरानाथ धारानाथमपाकृथाः ॥ १ ॥

—॥—परत्वादनो भवतीति । 'करणाधारे' इत्यनेन ॥—च्व्यर्थे कर्त्रा—॥—खानुबन्धस्तु मागमार्थ इति । मागमार्थं हि खानुबन्धः ततो यथात्र कर्तृकर्मवाचिभ्यां परेभ्यो दुःस्वीषद्भ्यः पराभ्य इति विपरीतो विशेषणविशेष्यभावः क्रियेत तदा कर्तृकर्मवाचिभ्यां दुरादिभिर्व्यवधानात् मोऽन्तो न स्यात् दुःस्वीषद्भ्यस्तु अव्ययत्वात् मागमाऽप्राप्तिरिति ॥—दुराढ्येन भूयत इति । अनाढ्येन सता दुःखेन भूयते इत्यर्थः ॥—प्रकृतेरविवक्षणादिति । अनाढ्यइत्येवंरूपायाः ॥—शासूयुधि । अनुपसर्गयुध्यादिसाहचर्याच्च आङः शास इति ॥—दुर्योधन इति । दुःखेन युध्यते अन्तर्भूतण्यर्थः सूत्रे शास इति निरनुबन्धता यङ्लुप्यपि दुःशाशासन इति प्रयोगार्था ॥ दुर्दर्शो हि राजेति । 'हृक्रोर्नवा' इति राजानित्यस्य वा कर्मता ॥—ईषद्दरिद्र इति । ननु धातोरकर्मकत्वाद्भावे प्रत्यये कथमत्र पुंस्त्वं दुराढ्यभवामित्यादिवन्नपुंसकत्वप्राप्तिः । सत्यम् । अत्र 'कालाध्व'—इत्यनेन मासादेः कर्मत्वं कर्मणि खल् न तु भावे ततो यत्र मासादौ दरिद्रैर्भूयते स ईषद्दरिद्र उच्यते ॥—विपर्ययेऽपीति । अस्याऽनप्रत्ययस्य विषये इत्यर्थः ॥ इत्याचार्य० पञ्चमस्याध्यायस्य तृतीयः पादः समाप्तः ॥—

# ॥ अथ चतुर्थः पादः ॥

*सत्सामीप्ये सद्वद्वा ॥ ५ । ४ । १ ॥ समीपमेव सामीप्यम् । सतो वर्तमानस्य सामीप्ये भूते भविष्यति चार्थे वर्तमानाद्धातोः सद्वद्वर्तमानवत् प्रत्यया वा भवन्ति । ' सति '-( ५-२-१९ ) इति सूत्रादारभ्यापादपरिसमाप्तेर्विहिताः प्रत्यया भूतभविष्यतोर्वा *अतिदिश्यन्ते । कदा चैत्रागतोऽसि । अयमागच्छामि । आगच्छन्तमेव मां विद्धि । वावचनाद्यथाप्राप्तं च । अयमागमम् । एषोऽस्म्यागतः । कदा मैत्र गमिष्यसि । एष गच्छामि । गच्छन्तमेव मां विद्धि । पक्षे एष गमिष्यामि गन्तास्मि । गमिष्यन्तमेव मां विद्धि । *वत्करणस्य सादृश्यार्थत्वात् येनैव प्रकृत्युपपदो*पाध्यादिना विशेषेण वर्तमाने 'विहितास्तेनैव विशेषेण भूतभविष्यतोरपि भवन्ति । कदा भवान् सोमं पूतवान् पविष्यते वा । एषोऽस्मि पवमानः । कदा भवानिष्टवान् यक्ष्यते वा । एषोऽस्मि यजमानः । कदा भवान् कन्यामलंकृतवान् करिष्यते वा । एषोऽस्म्यलंकरिष्णुरिति । सामीप्य इति किम् । परुदगच्छत् । वर्षेण गमिष्यति ॥ १ ॥ *भूतवच्चाशंस्ये वा ॥ ५ । ४ । २ ॥ अनागतस्य प्रियस्यार्थस्याशंसनं प्राप्तुमिच्छा आशंसा । तद्विषय आशंस्यः । तस्मिन्नर्थे वर्तमानाद्धातोर्भूतवच्चकारात्सद्वच्च प्रत्यया वा भवन्ति । आशंस्यस्य भविष्यत्त्वादयमतिदेशः । वाग्रहणाद्यथाप्राप्तं च । उपाध्यायश्चेदागमत् एते तर्कमध्यगीष्महि । उपाध्यायश्चेदागतः एतैस्तर्कोऽधीतः । उपाध्यायश्चेदागच्छति एते तर्कमधीमहे । पक्षे उपाध्यायश्चेदागमिष्यति एते तर्कमध्येष्यामहे । उपाध्यायश्चेदागन्ता एते तर्कमध्येतास्महे । सामान्यस्यातिदेशे विशेषस्यानतिदेशाव ह्यस्तनीपरोक्षे न भवतः । आशंस्य इति किम् । उपाध्याय आगमिष्यति तर्कमध्येष्यते मैत्रः ॥ २ ॥ *क्षिप्राशंसार्थयोर्भविष्यन्तीसप्तम्यौ ॥ ५ । ४ । ३ ॥ क्षिप्रार्थे आशंसार्थे चोपपदे आशंस्येऽर्थे वर्तमानाद्धातोर्यथासंख्यं भविष्यन्तीसप्तम्यौ विभक्ती भवतः । *भूतवच्चेत्यस्यापवादः । उपाध्यायश्चेदागच्छति आगमत् आगमिष्यति आगन्ता क्षिप्रमाशु त्वरितमरं शीघ्रमेते सिद्धान्तमध्येष्यामहे । *क्षिप्रार्थे नेति वक्तव्ये भविष्यन्तीवचनं *श्वस्तनीविषयेऽपि भविष्यन्ती यथा स्यादित्येवमर्थम् ।

सत्सामीप्ये· ॥-अतिदिश्यन्त इति । अतिक्रम्य निज काल दिश्यन्त इत्यर्थ । ननु सत्सामीप्ये सति वेत्येनावदेव क्रियतां वर्त्तमाने ये प्रत्ययास्ते सत्सामीप्ये वा भवन्तीति सूत्रार्थे साध्यसिद्धिर्भविष्यति किं वत्करणेनेत्याह-वत्करणस्येति ॥—उपाध्यादिनेति । आदिशब्दात् कर्तृविशेषेणापि ॥ पवमान' यजमान इत्यत्र प्रकृतिविशेषः । अलंकरिष्णुरित्यत्र तु उपपदविशेषः शीलाद्युपाधिविशेषश्च ॥—भूतवच्च —॥ आगमदित्यत्र अध्यगीष्महीत्यत्र चाऽनेनैव भूतप्रत्यय' उभयत्राप्याशस्यस्य विद्यमानत्वात् ॥-विशेषस्यानतिदेशादिति । एतच्च व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायात् ॥-क्षिप्राशंसा-॥-भूतवच्चे· त्यस्यापवाद इति । अथ क्षिप्रार्थे आशसार्थे च उपपदे आशस्ये एवार्थे वर्त्तमानाद्धातोर्भविष्यन्तीसप्तम्यौ विधीयेते तत्राशस्यस्य भविष्यत्त्वात् भविष्यन्ती सिद्धैव ' विधिनिमन्त्रणा-' इति सप्तम्यपि प्रार्थनारूपत्वात् किमर्थमिदमुच्यते इत्याह-भूतवच्चेत्यादि ॥-क्षिप्रार्थे न इतीति । ननु क्षिप्रार्थे न इति आशसार्थे सप्तमी इति च पृथक्सूत्रद्वय क्रियता किं क्षिप्रार्थे भविष्यन्तीविधानेन । एवमपि कृते भविष्यन्ती सेत्स्यति । तथाहि-भूतवच्चेत्यनेन सामान्यभणनात् क्षिप्रार्थेऽक्षिप्रार्थे चोपपदे भूतवत्सद्वच्च प्राप्ताना प्रत्ययानां क्षिप्रार्थे नेत्यनेन निषेधे कृते पारिशेष्यात्स्वयमेव भविष्यन्ती भविष्यति किं तद्ग्रहणेनेत्याह-श्वस्तनीविषयेऽपीति ।

उपाध्यायश्चेच्छ्वः शीघ्रमागमिष्यति एते श्वः क्षिप्रमध्येष्यामहे । आशंसार्थे खल्वपि । उपाध्यायश्चेदागच्छति आगमत् आगमिष्यति आगन्ता आशंसेऽवकल्पये संभावये युक्तोऽधीयीय । *द्वयोरुपपदयोः सप्तम्येव भवति *शब्दतः परत्वात् । आशंसे क्षिप्रमधीयीय ॥ ३ ॥ *संभावने सिद्धवत् ॥ ५ ॥ ४ ॥ ४ ॥ हेतोः शक्तिश्रद्धानं संभावनम् । तस्मिन्विषयेऽसिद्धेऽपि वस्तुनि सिद्धवत्प्रत्यया भवन्ति । समये चेत्प्रयत्नोऽभूत् उदभूवन् विभूतयः । इषे चेन्माधवोऽवर्षीत् समपत्सत शालयः ॥ *जातश्चायं मुखेन्दुश्चेत् भृकुटिप्रणयी पुनः । *गतं च वसुदेवस्य कुलं नामावशेषताम् ॥ ४ ॥ *नानद्यतनः प्रबन्धासत्त्योः ॥ ५ ॥ ४ । ५ ॥ प्रबन्धः सातत्यम् आसत्तिः सामीप्यम् । तच्च कालतः । सजातीयेन कालेनाव्यवहितकालतेति यावत् । धात्वर्थस्य प्रबन्धे आसत्तौ च गम्यमानायां धातोरनद्यतनविहितः प्रत्ययो न भवति । भूतानद्यतने ह्यस्तनी भविष्यदनद्यतने च श्वस्तनी विहिता *तयोः प्रतिषेधः । *यावज्जीवं भृशमन्नमदात् । यावज्जीवं भृशमन्नं दत्तवान् । यावज्जीवं भृशमन्नं दास्यति । यावज्जीवं युक्तोऽध्यापिपत् । यावज्जीवं युक्तोऽध्यापयिष्यति । आसत्तौ खल्वपि । येयं पौर्णमास्यतिक्रान्ता एतस्यां जिनमहः प्रावर्तिष्ट, प्रवृत्तः । येयं पौर्णमास्यागामिनी अस्यां जिनमहः प्रवर्तिष्यते । द्वौ प्रतिषेधौ *यथाप्राप्तस्याभ्यनुज्ञानाय । केचित्तु अनद्यतनविशेषविहितानामपि परोक्षादीनां *प्रतिषेधमिच्छन्ति ॥ ५ ॥*एष्यत्यवधौ देशस्यार्वाग्भागे ॥ ५ । ४ । ६ ॥ देशस्य योऽवधिस्तद्वाचिन्युपपदे देशस्यैवार्वाग्भागे य एष्यन्नर्थस्तत्र वर्तमानाद्धातोरनद्यतनविहितः प्रत्ययो न भवति । अप्रबन्धार्थमनासत्त्यर्थं च वचनम् । यद्यप्यनद्यतन इति प्रकृतं तथापीहैष्यतीति वचनात् श्वस्तन्या एव निषेधः । योऽयमध्वा गन्तव्य आ शत्रुंजयात् तस्य यदवरं वलभ्यास्तत्र द्विरोदनं भोक्ष्यामहे । द्विः सक्तूनपास्यामः । योऽयमध्वा गन्तव्य आ पाटलिपुत्रात् तस्य

---

भवति हि भविष्यन्तीग्रहणे यथा प्राप्तस्य भविष्यत्प्रत्ययस्य प्रत्युज्जीवनं भवति । भविष्यत्प्रत्ययश्च भविष्यदद्यतने भविष्यन्ती भविष्यदनद्यतने तु श्वस्तनी प्राप्नुयात् । इदानीं पुनर्भविष्यत्यद्यतनेऽनद्यतने च क्षिप्रार्थे उपपदे भविष्यन्त्येव न तु श्वस्तनी ॥—द्वयोरुपपदयोरिति । क्षिप्राशंसार्थयोर्युगपत्प्रयोगे क्षिप्रार्थोपपदनिबन्धना भविष्यन्ती आशंसार्थनिबन्धना सप्तमी वा भवतीत्याह—शब्दत' परत्वादिति ॥—संभावने—॥-जातश्चायं—गतं चेति । अजनि जायते स्म अगमत् गच्छति स्मेति वाक्य कार्य न तु गमिष्यति जनिष्यत इति तत्राप्यस्य सूत्रस्य प्रवर्त्तनात् ॥—नानद्यतनः—॥ न अद्यतनोऽनद्यतन इति कार्य न तु न विद्यते अद्यतनो यत्रेति । यतो बहुव्रीहेर्व्यापकत्वात् परोक्षाया अपि निषेध स्यात् तत्राप्यद्यतनो नास्तीति कृत्वा । नञ्तत्पुरुषे तु सामान्ये कृते विशेषो नान्तर्भवति सामान्यमध्ये विशेषाऽयोगात् ॥-तयोः प्रतिषेध इति । सामान्यातिदेशे विशेषानतिदेश इति न्यायात्सामान्यानद्यतनस्यैव प्रतिषेधो न विशेषानद्यतनस्य । तेन परोक्षाया न प्रतिषेधः॥—यावज्जीवमिति । यावन्त काल जीव्यते भावे ' यावतो विन्दजीवः ' यावच्छब्दात् 'कालाध्वनोः'-' कालाध्व-' इति वा द्वितीया यावज्जीवंशब्दात्तु प्रथमासिः । यावज्जीवं यावद्वर्त्तते तावद्ददातीत्यर्थ. ॥—यथाप्राप्तस्याभ्यनुज्ञानायेति । द्वौ नञौ प्रकृतार्थं गमयत इति न्यायात् । ननु तर्ह्यद्यतनः प्रबन्धासत्त्योरिति विधिसूत्रं कर्त्तव्यं विधिप्रतिषेधसंभवे हि विधेरेव ज्यायस्त्वात् ॥ एवमपि ते अद्यतनी भविष्यन्ती सेत्स्यत । नैवम् । अद्यभवोऽद्यतनः । अनया व्युत्पत्त्या वर्त्तमानापि स्यात् ॥—प्रतिषेधमिच्छन्तीति । स्वमते तु सामान्यातिदेशे विशेषस्यानतिदेशात् परोक्षादीनां न निषेधः । एव च भूतानद्यतने अद्यतनीक्तप्रत्यययोर्विधिर्भविष्यदनद्यतने च भविष्यन्त्या एव ॥—एष्यत्यव-॥ अत्र सूत्रे देशः प्रदेशमात्र तेनाऽध्वनोऽपि देशता ' कालाध्वभाव —' इत्यत्र तु देशो

यदवरमर्धं तत्रौदनं भोक्ष्यामहे । एष्यतीति किम् । योऽयमध्वातिक्रान्त आ शत्रुंजयात् तस्य यदवरं वलभ्यास्तत्र युक्ता द्विरध्यैमहि, द्विः सक्तूनपिबाम । अवधाविति किम् । योऽयमध्वा निरवधिको गन्तव्यस्तस्य यदवरं वलभ्यास्तत्र द्विरोदनं भोक्तास्महे, द्विः सक्तून् पातास्मः । अर्वाग्भाग इति किम् । योऽयमध्वा गन्तव्य आ शत्रुंजयात् तस्य यत्परं वलभ्यास्तत्र द्विरोदनं भोक्तास्महे, द्विः सक्तून् पातास्मः ॥ ६ ॥ *कालस्यानहोरात्राणाम् ॥ ५ । ४ । ७ ॥ कालस्य योऽवधिस्तद्वाचिनि युपपदे कालस्यैवार्वाग्भागे य एष्यन्नर्थस्तत्र वर्तमानाद्धातोरनद्यतनविहितः प्रत्ययो न भवति 'अनहोरात्राणां' न चेत् सोऽर्वाग्भागोऽहोरात्राणां संबन्धी भवति । योऽयमागामी संवत्सरस्तस्य यदवरम् *आग्रहायण्यास्तत्र जिनपूजां करिष्यामोऽतिथिभ्यो दानं दास्यामहे । एष्यतीत्येव । योऽयं संवत्सरोऽतीतस्तत्र यदवरमाग्रहायण्यास्तत्र युक्ता द्विरध्यैमहि । अवधावित्येव । योऽयमागामी निरवधिकः कालस्तत्र यदवरमाग्रहायण्यास्तत्र युक्ता अध्येतास्महे । अर्वाग्भाग इत्यत्र । परस्मिन् विभाषा वक्ष्यते । *अनहोरात्राणामिति किम् । योऽयं मास आगामी तस्य योऽवरः *पञ्चदशरात्रस्तत्र युक्ता द्विरध्येतास्महे । योऽयं त्रिंशद्रात्र आगामी तस्य *योऽवरोऽर्धमासः तत्र द्विरोदनं भोक्तास्महे । योऽयं त्रिंशद्रात्र आगामी तस्य योऽवरः *पञ्चदशरात्रस्तत्र द्विः सक्तून् पातास्म इति त्रिविधेऽप्यहोरात्रसंबन्धे मा भूत् । योगविभाग उत्तरार्थः । बहुवचनं कालस्येति *सामानाधिकरण्यभ्रमनिरासार्थम् ॥ ७ ॥ *परे वा ॥ ५ । ४ । ८ ॥ कालस्य योऽवधिस्तद्वाचिन्युपपदे कालस्यैव परस्मिन् भागेऽनहोरात्रसंबन्धिनि य एष्यन्नर्थस्तत्र वर्तमानाद्धातोरनद्यतनविहितः प्रत्ययो वा न भवति । आगामिनः संवत्सरस्याग्रहायण्याः परस्तात् द्विः सूत्रमध्येष्यामहे अध्येतास्महे वा । प्रबन्धासत्त्योरित्यत्रापि परत्वात् *अयमेव विकल्पः । आगामिनः संवत्सरस्याग्रहायण्याः परस्तादविच्छिन्नं सूत्रमध्येष्यामहे । अध्येतास्महे वा । कालस्यैवेत्येव । आ शत्रुंजयाद्गन्तव्योऽस्मिन्नध्वनि वलभ्याः परस्तात् द्विरोदनं भोक्तास्महे । प्रबन्धासत्त्योस्तु *नित्यं भविष्यन्ती । आ शत्रुंजयाद्गन्तव्येऽस्मिन्नध्वनि वलभ्याः परस्तादविच्छिन्नं सूत्रमध्येष्यामहे । पर इति किम् । अर्वाग्भागे पूर्वेण नित्यं प्रतिषेधः । एष्यतीत्येव । अतीते संवत्सरे परस्तादाग्रहायण्याः सूत्रं युक्ता अध्यैमहि । अवधावित्येव । योऽयमागामी निरवधिकः कालस्तस्य यत्परमाग्रहायण्यास्तत्र द्विरध्येतास्महे । अनहोरात्राणामित्येव । योऽयं त्रिंशद्रात्र आगामी तस्य यः परः पञ्चदशरात्रस्तत्र युक्ता अध्येतास्महे ॥ ८ ॥ ससप्तम्यर्थे क्रियातिपत्तौ

---

रात्रादि । अत एव तत्र दशे सत्यपि अप्रग्रहणम् ॥—कालस्यान—॥—आग्रहायण्या इति ॥ अत्र हायनस्य 'द्वेत्रचतुर्भ्यो—' इति समासे 'पूर्वपदस्था—' इति णत्वम् । ततः स्वार्थे अण् ङी. ॥—अनहोरात्राणामिति किमिति । यत्राहःशब्दो रात्रिशब्दो वा प्रयुज्यते तत्राहोरात्रत्वम् ॥—पञ्चदशरात्र इति । अत्र कालसंबन्धी तादात्म्येनाऽहोरात्ररूपोऽर्वाग्भाग ॥—योऽवरोऽर्धमास इति । अत्र कालोऽहोरात्ररूपस्तस्य संबन्धी अवयवावयविभावेनाऽर्वाग्भाग ॥—पञ्चदशरात्र इति । अत्र कालोऽर्वाग्भागश्चाहोरात्ररूप. ॥—सामानाधिकरण्यभ्रमनिरासार्थमिति । कालस्य किंभूतस्याऽनहोरात्रस्येत्येव सामानाधिकरण्यं निषिध्यते । कालसामानाधिकरण्ये हि व्याख्याते प्रथमोदाहरणेऽपि सूत्रप्रवृत्तौ प्रसक्तनिषेधः स्यात् । अत्रापि कालस्यानहोरात्ररूपत्वात् । वैयधिकरण्ये तु त्रिप्रकारेऽपि कालसंबन्धे व्यावृत्तिर्भवति ॥—परे वा ॥—अयमेव विकल्प इति । न तु 'नानद्यतन—' इति नित्य निषेधः ॥—नित्यं भविष्यन्तीति । 'नानद्यतनः'—इति प्रसक्तस्य निषेधात्

क्रियातिपत्तिः ॥ ५ । ४ । ९ ॥ सप्तम्या अर्थो निमित्तं हेतुफलकथनादिका सामग्री । कुतश्चिद्वैगुण्यात् क्रियाया अतिपतनमनभिनिर्वृत्तिः क्रियातिपत्तिः । तस्यां सत्यामेष्यत्यर्थे वर्तमानाद्धातोः सप्तम्यर्थे क्रियातिपत्तिर्विभक्तिर्भवति । दक्षिणेन चेदयास्यन्न शकटं पर्याभविष्यत् । यदि कमलकमाह्वास्यन्न शकटं पर्याभविष्यत् । अत्र दक्षिणगमनं कमलकाह्वानं च हेतुरपर्याभवनं फलम् तयोः कुतश्चित्प्रमाणाद्भविष्यन्तीमनभिनिर्वृत्तिमवगम्यैवं प्रयुङ्क्ते । एवमभोक्ष्यत भवान् घृतेन यदि मत्समीपमागमिष्यत् । स यदि गुरूननुपासिष्यत शास्त्रान्तमगमिष्यत् ॥ ९ ॥ *भूते ॥ ५ । ४ । १० ॥ भूतेऽर्थे वर्तमानाद्धातोः क्रियातिपत्तौ सत्याम् सप्तम्यर्थे क्रियातिपत्तिर्विभक्तिर्भवति । 'सप्तम्युताप्योर्बाढे'–(५–४–२१) इत्यारभ्य सप्तम्यर्थेऽनेन विधानम् । ततः प्राक् 'वोतात् प्राक्'–(५–४–११) इति विकल्पो वक्ष्यते । दृष्टो मया भवतः पुत्रोऽन्नार्थी चंक्रम्यमाणः अपरश्चातिथ्यर्थी यदि स तेन *दृष्टोऽभविष्यत् *उताभोक्ष्यत अप्यभोक्ष्यत न तु दृष्टोऽन्येन पथा गत इति न भुक्तवान् ॥ १० ॥ *वोतात् प्राक् ॥ ५ । ४ । ११ ॥ 'सप्तम्युताप्योर्बाढे'(५–४–२१) इत्यत्र यदुतशब्दसंकीर्तनं ततः प्राक् सप्तमीनिमित्ते क्रियातिपत्तौ सत्यां भूतेऽर्थे वर्तमानाद्धातोर्वा क्रियातिपत्तिर्भवति । कथं नाम संयतः सन्ननागाढे तत्रभवान् *आधायकृतम् *असेविष्यत धिग् गर्हामहे । वावचनाद्यथाप्राप्तं च । कथं सेवेत धिग् गर्हामहे । उतात् प्रागिति किम् । कालो *यद्भोक्ष्यत भवान् । भूत इत्येव । एष्यति नित्यमेव ॥ ११ ॥ *क्षेपेऽपिजात्वोर्वर्तमाना ॥ ५ । ४ । १२ ॥ *भूत इति निवृत्तम् । क्षेपो गर्हा तस्मिन्गम्यमानेऽपिजात्वोरुपपदयोर्धातोर्वर्तमाना विभक्तिर्भवति । कालसामान्ये विधानात्कालविशेषे विहिता अपि प्रत्ययाः परत्वादनेन बाध्यन्ते । अपि तत्रभवान् जन्तून् हिनस्ति । जातु तत्रभवान् भूतानि हिनस्ति । अपि संयतः सन्ननागाढे तत्रभवानाधायकृतं सेवते धिग् गर्हामहे । इह सप्तमीनिमित्ताभावाद् क्रियातिपतने क्रियातिपत्तिर्नोदाह्रियते ॥ १२ ॥ कथमि सप्तमी च वा ॥ ५ । ४ । १३ । कथंशब्दे उपपदे क्षेपे गम्यमाने धातोः सर्वेषु कालेषु सप्तमी चकाराद्वर्तमाना च विभक्ती वा भवतः । वावचनाद्यथाप्राप्तं च । कथं नाम तत्रभवान् मांसं भक्षयेत् । मांसं भक्षयति । धिग् गर्हामहे अन्याय्यमेतत् । पक्षे अबभक्षत् । अभक्षयत् । भक्षयांचकार । भक्षयिता । भक्षयिष्यति । अत्र सप्तमीनिमित्तमस्तीति भूते क्रियातिपतने वा क्रियातिपत्तिर्भवति । कथं नाम तत्रभवान् मांसमभक्षयिष्यत् । भक्षयेत् । भक्षयति । अबभक्षत् । अभक्षयत् । भक्षयांचकार । भविष्यति तु क्रियातिपतने नित्यमेव क्रियातिपत्तिः । कथं नाम तत्रभवान्मांसमभक्षयिष्यत् । न तु वर्तमानासप्तमीभविष्यन्तीश्वस्तन्यः । क्षेप इत्येव । कथं नाम तत्रभवान्साधूनपूपुजत् । एवं यथाप्राप्ति वर्तमानादयो भवन्ति ॥ १३ ॥ किंवृत्ते सप्तमीभविष्यन्त्यौ ॥ ५ । ४ । १४ ॥ किंवृत्ते उपपदे क्षेपे गम्यमाने धातोः सप्तमीभविष्यन्त्यौ भवतः । सर्वविभक्त्यपवादः । किं तत्रभवाननृतं ब्रूयात् । किं तत्रभवान् अनृतं

---

॥—भूते ॥—दृष्टोऽभविष्यदिति । अत्राश्रद्धाया गम्यमानत्वात् 'जातुयद्यदा'—इति सप्तमीनिमित्तत्वम् ॥—उताभोक्ष्यतेति । 'सप्तम्युताप्योर्बाढे' इति सप्तम्यर्थः ॥—वोतात्प्रा—॥—आधायकृतमिति । 'अव्ययं प्रवृद्धादिभिः' इति स° ॥—असेविष्यतेति 'कथमि सप्तमी च वा' इति सप्तम्यर्थ ॥—यद्भोक्ष्यतेति । अत्र 'सप्तमी यदि' इति सप्तम्यर्थता ततो भूते क्रियातिपत्तिः ॥—क्षेपेऽपिजा—॥—भूत इति निवृत्तमिति । क्रियातिपत्तिसंबद्धत्वात् भूतस्य

वक्ष्यति । को नाम कतरो नाम कतमो नाम यस्मै तत्रभवाननृतं ब्रूयात्, अनृतं वक्ष्यति । अत्रापि सप्तमीनिमित्तमस्तीति भूते क्रियातिपतने वा क्रियातिपत्तिः । किं तत्रभवाननृतमवक्ष्यत् । पक्षे ब्रूयात् वक्ष्यति च । भविष्यति तु नित्यम् । किं तत्रभवाननृतमवक्ष्यत् । क्षेप इत्येव । किं तत्रभवान्देवानपूपुजदित्यादि ॥ १४ ॥ *अश्रद्धाऽमर्षेऽन्यत्रापि ॥ ५ । ४ । १५ ॥ क्षेप इति निवृत्तम् । अश्रद्धा असंभावना । अमर्षोऽक्षमा । अन्यत्राकिंवृत्तेऽपिशब्दात् किंवृत्ते चोपपदेऽश्रद्धामर्षयोर्गम्यमानयोर्धातोः सप्तमीभविष्यन्त्यौ भवतः । सर्वविभक्त्यपवादः । वचनभेदाद्यथासंख्यं नास्ति । अश्रद्धायाम्, न श्रद्दधे न संभावयामि नावकल्पयामि तत्रभवान्नामादत्तं गृह्णीयात्, ग्रहीष्यति । किंवृत्तेऽपि, न श्रद्दधे न संभावयामि नावकल्पयामि किं तत्रभवान्नामादत्तमाददीत अदत्तमादास्यते । अमर्षे, न मर्षयामि न क्षमे धिग् मिथ्या नैतदस्ति तत्रभवान्नामादत्तं गृह्णीयात्, अदत्तं ग्रहीष्यति । किंवृत्तेऽपि, न मर्षयामि न क्षमे धिग् मिथ्या नैतदस्ति किं तत्रभवानदत्तं गृह्णीयात् अदत्तं ग्रहीष्यति । अत्रापि सप्तमीनिमित्तमस्तीति भूते क्रियातिपतने वा क्रियातिपत्तिर्भवति । न श्रद्दधे न मर्षयामि तत्रभवानदत्तमग्रहीष्यत् । पक्षे गृह्णीयात् ग्रहीष्यति च । भविष्यति तु नित्यम् । न श्रद्दधे न मर्षयामि तत्रभवानदत्तमग्रहीष्यत् । *अन्यत्रापीति किम् । यदार्थात्प्रकरणाद्वाऽश्रद्धामर्षयोर्गम्यमानत्वात् तद्वाचकेनाप्युपपदेन धातोर्न योगस्तदा माभूत् ॥ १५ ॥ *किंकिलास्त्यर्थयोर्भविष्यन्ती ॥ ५ । ४ । १६ ॥ किंकिलेतिसमुदायशब्देऽस्त्यर्थे च शब्दे उपपदेऽश्रद्धामर्षयोर्गम्यमानयोर्धातोर्भविष्यन्ती भवति । *सप्तम्यपवादः । वचनभेदादश्रद्धामर्षे इति यथासंख्यं नास्ति । न श्रद्दधे न मर्षयामि किंकिल नाम तत्रभवान्परदारानुपकरिष्यते । 'गन्धना'—( ३–३–७६ ) दिसूत्रेण सादरो आत्मनेपदम् । अस्त्यर्था अस्तिभवतिविद्यतयः । न श्रद्दधे न मर्षयामि अस्ति नाम भवति नाम विद्यते नाम तत्रभवान्परदारानुपकरिष्यते । अत्र सप्तमीनिमित्तं नास्तीति क्रियातिपतने क्रियातिपत्तिर्न भवति ॥ १६ ॥ *जातुयद्यदायदौ सप्तमी ॥ ५ । ४ । १७ ॥ जातु यद् यदा यदि इत्येतेषूपपदेषु अश्रद्धामर्षयोर्गम्यमानयोर्धातोः सप्तमी भवति । *भविष्यन्त्यपवादः । न श्रद्दधे न क्षमे जातु तत्रभवान्सुरां पिबेत् । यत्तत्रभवान् सुरां पिबेत् । यदा तत्रभवान् सुरां पिबेत् । यदि तत्रभवान् सुरां पिबेत् । अत्र सप्तमीनिमित्तमस्तीति भूते क्रियातिपतने वा क्रियातिपत्तिः । न श्रद्दधे न क्षमे जातु तत्रभवान् सुरामपास्यत् । पक्षे पिबेत् । भविष्यति तु नित्यम् । जातु तत्रभवान्सुरामपास्यत् ॥ १७ ॥ क्षेपे च यच्चयत्रे ॥ ५ । ४ । १८ ॥ यच्चयत्रशब्दयोरुपपदयोः क्षेपेऽश्रद्धामर्षयो-

॥—अश्रद्धामर्षे—॥ अन्यत्रापीति अपिशब्दसमुच्चितेन किंवृत्तेन [illegible] अश्रद्धामर्षाभ्यां सहास्य सूत्रे यथासंख्यं न, 'शक्तार्हे कृत्याश्च' इति सूत्रेऽधिकारे सति शक्यमपीति कार्ये उपपदग्रहणात् । अन्यथा अपिशब्दसमुच्चितेनाधिकृतेनाऽपक्षेण सिद्धत्वादपक्षग्रहणं व्यर्थं स्यात् ॥—अन्यत्रापीति किमिति । पूर्वसूत्रात् किंवृत्तानुवृत्त्यभावात् किंवृत्तेऽकिंवृत्ते च, भविष्यति किमन्यत्रापीत्यनेनेत्याशङ्का ॥—तद्वाचकेनापीति । यथा किंवृत्तेऽकिंवृत्ते च विभक्ती स्तो न तथाऽश्रद्धामर्षयोर्गम्यमानयोः किंतु पदैः प्रयुज्यमानयोः रेव । एतद्वास्तिकेन सूत्रे ज्ञापकस्य नोत्तरग्रहः 'क्षेपे भविष्यन्त्ययदौ' इत्यत्र आश्चर्यं यदि स भुञ्जीत चित्रं यदि सोऽधीयीत अत्राऽश्रद्धाप्यस्तीति कथमिष्यति ॥—किंकिला—॥—सप्तम्यपवाद इति । । अश्रद्धामर्षे इति प्राप्तायाः । किलशब्दः प्रसिद्धिद्योतने वार्त्ताऽलंकारे अमर्षद्योतने कोमलामन्त्रणे । एवं किंकिलशब्दोऽपि ॥—जातुयद्यदा—॥—भविष्यन्त्यपवाद इति ।

श्च गम्यमानयोर्धातोः सप्तमी भवति । अश्रद्धामर्षयोर्भविष्यन्त्याः क्षेपे तु सर्वविभक्तीनामपवादः । धिग् गर्हामहे यच्च तत्रभवानस्मानाक्रोशेत् । यत्र तत्रभवानस्मानाक्रोशेत् । न श्रद्दधे न क्षमे यच्च तत्रभवान् परिवादं कथयेत् । यत्र तत्रभवान् परिवादं कथयेत् । अत्रापि सप्तमीनिमित्तमस्तीति भूते क्रियातिपतने वा क्रियातिपत्तिर्भवति । धिग् गर्हामहे न श्रद्दधे न क्षमे यच्च यत्र वा तत्रभवानस्मानाक्रोक्ष्यत् । पक्षे आक्रोशेत् । भविष्यति तु नित्यम् । धिग् गर्हामहे न श्रद्दधे न क्षमे यच्च यत्र वा तत्रभवान् परिवादमकथयिष्यत् ॥ १८ ॥ *चित्रे ॥ ५ । ४ । १९ ॥ चित्रमाश्चर्यम् । तस्मिन्गम्यमाने यच्चयत्रयोरुपपदयोर्धातोः सप्तमी भवति । *सर्वविभक्त्यपवादः । चित्रमाश्चर्यमद्भुतं विस्मयनीयम् यच्च तत्रभवानकल्प्यं सेवेत । यत्र तत्रभवानकल्प्यं सेवेत । अत्रापि सप्तमीनिमित्तमस्तीति भूते क्रियातिपतने वा क्रियातिपत्तिर्भवति । चित्रं यच्च यत्र वा तत्रभवानकल्प्यमसेविष्यत । पक्षे सेवेत । भविष्यति तु नित्यम् । चित्रं यच्च यत्र वा तत्रभवानकल्प्यमसेविष्यत ॥ १९ ॥

*शेषे भविष्यन्त्ययदौ ॥ ५ । ४ । २० ॥ शेषे यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रे गम्यमाने धातोर्भविष्यन्ती विभक्तिर्भवति अयदौ यदिशब्दश्चेन्न प्रयुज्यते । सर्वविभक्त्यपवादः । चित्रमाश्चर्यमन्धो नाम पर्वतमारोक्ष्यति । बधिरो नाम व्याकरणं श्रोष्यति । मूको नाम धर्मं कथयिष्यति । अत्र सप्तमीनिमित्तं नास्तीति न क्रियातिपत्तिः । शेष इति किम् । यच्चयत्रयोः *पूर्वेण सप्तम्येव । अयदाविति किम् । आश्चर्यं यदि स भुञ्जीत । चित्रं यदि सोऽधीयीत । अत्र *अश्रद्धाप्यस्तीति 'जातुयद्यदायदौ सप्तमी' ( ५-४-१७ ) इत्यनेन सप्तमी ॥ २० ॥ *सप्तम्युताप्योर्बाढे ॥ ५ । ४ । २१ ॥ बाढेऽर्थे वर्तमानयोरुताप्योरुपपदयोर्धातोः सप्तमी भवति । सर्वविभक्त्यपवादः । उत कुर्यात् । अपि कुर्यात् । *बाढं करिष्यतीत्यर्थः । बाढ इति किम् । उत दण्डः पतिष्यति । अपिधास्यति द्वारम् । प्रश्नपिधानं च यथाक्रमं गम्यते । वोतात्प्रागिति निवृत्तम् । इतः प्रभृति सप्तमीनिमित्ते सति भूते भविष्यति च क्रियातिपतने नित्यं क्रियातिपत्तिः । उताकरिष्यत् । अप्यकरिष्यत् ॥ २१ ॥ संभावनेऽलमर्थे तदर्थानुक्तौ ॥ ५ । ४ । २२ ॥ अलमोऽर्थः सामर्थ्यं तद्विषये संभावने श्रद्धाने गम्यमाने तदर्थस्यालमर्थार्थस्य शब्दस्यानुक्तावप्रयोगे धातोः सप्तमी भवति । सर्वविभक्त्यपवादः । शक्यसंभावने, अपि मासमुपवसेत् । अपि पुण्डरीकाध्ययनमह्नाधीयीत । अपि स्कन्दकोद्देशं यामेनाधीयीत । अशक्यसंभावने, अपि शिरसा पर्वतं भिन्द्यात् । अपि खारीपाकं भुञ्जीत । अपि समुद्रं दोर्भ्यां तरेत् । अलमर्थ इति किम् । निदेशस्थायी मे जिनदत्तः प्रायेण गमिष्यति । तदर्थानुक्ताविति किम् । वसति चेत् सुराष्ट्रेषु वन्दिष्यतेऽलमुज्जयन्तं, शक्तश्चैत्रो धर्मं करिष्यति । अत्र सप्तमीनिमित्तमस्तीति भूते भविष्यति च क्रियातिपतने नित्यं क्रियातिपत्तिर्भवति । अपि पर्वतं शिरसाऽभेत्स्यत् । तथा काकिन्या हेतोरपि मातुः स्तनं छिन्द्यात् इत्यत्र 'क्षेपेऽपिजात्वोर्वर्तमाना' ( ५-४-१२ ) इति वर्तमानां बाधित्वा चित्रमाश्चर्यमपि शिरसा पर्वतं भिन्द्यादित्यत्र तु 'शेषे भविष्यन्त्ययदौ ( ५-४-२० ) इति भविष्यन्तीं च

---

' अश्रद्धामर्षे ' इति प्राप्ताया —॥-चित्रे ॥-सर्वविभक्त्यपवाद इति । कालस्याऽनिर्देशात् त्रिष्वपि कालेष्वस्य प्रवर्त्तनात् ॥—शेषे भविष्य-॥—पूर्वेण सप्तम्येवेति । 'चित्रे 'इत्यनेन ॥-अश्रद्धाप्यस्तीति । न केवल यदिशब्दयोगः ॥-सप्तम्युताप्यो-॥-बाढं करिष्यतीति । एवमन्या अपि विभक्तयो द्रष्टव्याः । सन्निहितत्वाच्च भविष्यन्त्येव दर्शिता

बाधित्वा परत्वादनेन सप्तम्येव भवति ॥ २२ ॥ *अयदि श्रद्धाधातौ नवा ॥ ५ । ४ । २३ ॥ *श्रद्धा संभावना तदर्थे धातावुपपदेऽलमर्थविषये संभावने गम्यमाने धातोः सप्तमी वा भवति अयदि *यच्छब्दश्चेन्न प्रयुज्यते । *पूर्वेण नित्यं प्राप्ते विकल्पः । श्रद्दधे संभावयामि अवकल्पयामि भुञ्जीत भवान्। पक्षे यथाप्राप्तम् । भोक्ष्यते भवान् । अभुक्त भवान्। अभुङ्क्त भवान्। अयदीति किम् । संभावयामि यद्भुञ्जीत भवान्। श्रद्धाधाताविति किम् । अपि शिरसा पर्वतं भिन्द्यात् । उभयत्र पूर्वेण नित्यं सप्तमी । अत्रापि सप्तमीनिमित्तमस्तीति भूते भविष्यति च क्रियातिपतने नित्यं क्रियातिपत्तिः । संभावयामि नाभोक्ष्यत भवान् ॥ २३ ॥ सतीच्छार्थात् ॥ ५ । ४ । २४ ॥ सति वर्तमानेऽर्थे वर्तमानादिच्छार्थाद्धातोः सप्तमी वा भवति । पक्षे तु वर्तमानैव । इच्छेत् । इच्छति । उश्यात् । वष्टि । कामयेत । कामयते । वाञ्छेत् । वाञ्छति । 'क्षेपेऽपिजात्वोर्वर्तमाना' ( ५-४-१२ ) इत्यादावपि परत्वादयमेव विकल्पः । अपि संयतः सन्नकल्प्यं सेवितुमिच्छेत् । अपि संयतः सन्नकल्प्यं सेवितुमिच्छति धिग् गर्हामहे । भूतभविष्यतोरभावात् सत्यपि सप्तमीनिमित्ते सत्यपि च क्रियातिपतने क्रियातिपत्तिर्न भवति ॥ २४ ॥ *वर्त्स्यति हेतुफले ॥५।४।२५॥ हेतुः कारणं, फलं कार्यम् । हेतुभूते फलभूते च वर्त्स्यत्यर्थे वर्तमानाद्धातोः सप्तमी वा भवति । यदि गुरूनुपासीत शास्त्रान्तं गच्छेत् । यदि गुरूनुपासिष्यते शास्त्रान्तं गमिष्यति । अत्र गुरूपासनं हेतुः शास्त्रान्तगमनं फलम् । वर्त्स्यतीति किम् । दक्षिणेन चेद्याति न शकटं पर्याभवति । केचित्तु सर्वेषु कालेषु सर्वविभक्त्यपवादं सप्तमीं मन्यन्ते । दक्षिणेन चेद्यायान्न शकटं पर्याभवेत् । दक्षिणेन चेद्यास्यति न शकटं पर्याभविष्यति । दक्षिणेन चेद्याति न शकटं पर्याभवति । दक्षिणेन चेदयासीन्न शकटं पर्याभूत् । अत्रापि सप्तमीनिमित्तमस्तीति भविष्यति क्रियातिपतने क्रियातिपत्तिः । दक्षिणेन चेदयास्यन्न शकटं पर्याभविष्यत् । कथममङ्क्ष्यद्वसुधा तोये च्युतशैलेन्द्रबन्धना ॥ नारायण इव श्रीमान्यदि त्वं नाधरिष्यथा इति ॥ वर्त्स्यत्येवायं प्रयोगः । *केचित्तु भूत इच्छन्ति । *हनिष्यतीति पलायिष्यते वर्षिष्यतीति धाविष्यतीत्यत्र तु हेतुफलभावस्य *इतिशब्देनैव द्योतितत्वात् सप्तमी न भवति ॥२५॥ *कामोक्तावकच्चिति ॥ ५ । ४ । २६ *वेति निवृत्तम् । काम इच्छा तस्योक्तिः प्रवेदनं तस्यां गम्यमानायां धातोः सप्तमी भवति 'अकच्चिति' न चेत् कच्चिच्छब्दः प्रयुज्यते । सर्वविभक्त्यपवादः । कामो मे भुञ्जीत भवान् । इच्छा मे अभिप्रायो मे श्रद्धा मे अभिलाषो मे अधीयीत भवान् । अकच्चितीति किम् । कच्चिज्जीवति मे माता । अत्र सप्तमीनिमित्तमस्तीति भूते भविष्यति च क्रियातिपतने नित्यं क्रियातिपत्तिः । कामो मेऽभोक्ष्यत भवान् ॥ २६ ॥ *इच्छार्थे सप्तमीपञ्चम्यौ ॥ ५ । ४ । २७ ॥ इच्छार्थे धातावुपपदे कामोक्तौ गम्यमानायां धातोः सप्तमीपञ्चम्यौ भवतः । सर्वविभक्त्यपवादौ । इच्छामि भुञ्जीत भवान् । इच्छामि भुङ्क्तां

---

-अयदि श्रद्धा-॥-यच्छब्दश्चेन्न प्रयुज्यते इति । क्रियाविशेषणत्वे चेद् यच्छब्दो न प्रयुज्यते । हेत्वर्थे तु भवत्येव ॥ -पूर्वेण नित्य प्राप्ते इति । 'सभावनेऽलमर्थे'—इत्यनेन ॥—वर्त्स्यति हेतुफले॥-केचित्तु भूते इति । भूते हेतुफले सप्तमीमिच्छन्ति इत्यर्थः॥—हनिष्यतीति पलायिष्यते इति । बहुलाधिकाराद्धेतुहेतुमद्भावे शत्रानशौ न भवत इति ॥-इतिशब्देनैव द्योतितत्वादिति । सप्तम्या हि हेतुफलभाव एव द्योत्यते स च इतिशब्देनैव द्योतित॥-कामोक्ता —॥—वेति निवृत्तमिति । कामप्रवेदने विभक्त्यन्तरप्रयोगादर्शनात् ॥—इच्छार्थे सप्तमी—॥

भवान्। कामये प्रार्थये अभिलषामि वश्मि अधीयीत भवान्। अधीता भवान्। कामोक्तावित्येव। इच्छया इच्छतः कामयमानः कामयमानस्य भुङ्क्ते। नात्र प्रयोक्तुः कामोक्तिः। अत्र सत्यपि सप्तमीनिमित्ते इच्छार्थे उपपदे कामोक्तौ क्रियातिपतनस्य *असामर्थ्येनासंभवात् क्रियातिपत्तिर्न भवति। केचित्तु 'सप्तम्युतार्प्योर्वाढे' (५-४-२१) इत्यत आरभ्य यत्र सप्तम्या एव केवलाया निमित्तमस्ति न विभक्त्यन्तरसहितायास्तत्रैव क्रियातिपतने क्रियातिपत्तिर्भवति इति मन्यन्ते ॥ २७ ॥

*विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थने ॥ ५ । ४ । २८ ॥ विध्यादिविशिष्टेषु कर्तृकर्मभावेषु प्रत्ययार्थेषु धातोः सप्तमीपञ्चम्यौ भवतः। सर्वप्रत्ययापवादौ। विधिरप्राप्ते नियोगः। क्रियायां प्रेरणेति यावत्। अज्ञातज्ञापनमित्येके। कटं कुर्यात्, करोतु भवान्। प्राणिनो न हिंस्यात्, न हिनस्तु भवान्। प्रेरणायामेव यस्या प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम्, इच्छामन्तरेणापि नियोगतः कर्तव्यमिति यावत्। द्विसंध्यमावश्यकं कुर्यात्, करोतु भवान्। सामायिकमधीयीत, अधीतां भवान्। यत्र प्रेरणायामेव प्रत्याख्याने कामचारस्तदामन्त्रणम्। इहासीत, आस्तां भवान्। इह शयीत, शेतां भवान्। यदि रोचते। प्रेरणैव सत्कारपूर्विकाधीष्टम् अध्येषणम्। तत्त्वज्ञानं नः प्रसीदेयुः, प्रसीदन्तु गुरुपादाः। व्रतं रक्षेत रक्षतु भवान्। संप्रश्नः संप्रधारणा। किन्नु खलु भो व्याकरणमधीयीय अध्ययै उत सिद्धान्तमधीयीय अध्ययै। प्रार्थनं याच्ञा। प्रार्थना मे व्याकरणमधीयीय अध्ययै। तर्कमधीयीय अध्ययै ॥ २८ ॥ *प्रैषानुज्ञावसरे कृत्यपञ्चम्यौ ॥ ५ । ४ । २९ ॥ प्रैषादिविशिष्टे कर्त्रादावर्थे धातोः कृत्यप्रत्ययाः पञ्चमी च विभक्तिर्भवति। न्यक्कारपूर्विका प्रेरणा प्रैषः। अनुज्ञा *कामचारानुमतिः। अतिसर्ग इति यावत्। अवसरः प्राप्तकालता। निमित्तभूतकालोपनतिः। भवता खलु कटः कार्यः कर्तव्यः करणीयः कृत्यः। भवान् कटं करोतु। भवान् हि प्रेषितोऽनुज्ञातः। भवतोऽवसरः कटकरणे। यद्यपि कृत्याः सामान्येन भावकर्मणोर्विहितास्तथापि सर्वप्रत्ययापवादभूतया पञ्चम्या बाध्येरन्निति पुनर्विधीयन्ते। अनुज्ञायां केचित्सप्तम्येवेत्याहुः। अतिसृष्टो भवान् ग्रामं गच्छेत् ॥ २९ ॥ *सप्तमी चोर्ध्वमौहूर्तिके ॥ ५ । ४ । ३० ॥ ऊर्ध्वं मुहूर्तादुपरि मुहूर्तस्य भवोऽर्थ *ऊर्ध्वमौहूर्तिकः। तस्मिन्वर्तमानाद्धातोः प्रैषादिषु गम्यमानेषु सप्तमी कृत्याः पञ्चमी च भवन्ति। ऊर्ध्वं मुहूर्तात्कटं कुर्याद्भवान्। कार्यः कर्तव्यः करणीयः कृत्यः कटो भवता। कटं करोतु भवान्। भवान् हि प्रेषितोऽनुज्ञातो भवतोऽवसरः कटकरणे ॥ ३० ॥ *स्मे पञ्चमी ॥ ५ । ४ । ३१ ॥ स्मशब्द उपपदे प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्तिके-

---

—असामर्थ्येनासंभवादिति। कामप्रवदनस्य क्रियातिपतनस्य च परस्पर विरुद्धत्वात्संबन्धाभावेनेत्यर्थ ॥ —विधिनिमन्त्रणा—॥ नन्वत्र निमन्त्रणादीनां किमर्थमुपादान यतो विधिः क्रियाया प्रेरणेति यावदित्युक्तं तत. सा प्रेरणा क्वचिन्निमन्त्रणरूपा क्वचिदामन्त्रणरूपेति यथा प्रयोक्तृव्यापार इत्यत्र व्यापारः प्रेषणाध्येषणादिरूप इति विधिग्रहणेनैव सिद्धम्। उच्यते। यद्यपि वृत्तो व्याख्यानेनापि सिध्यति तथापि सूत्रे एषामुपादानं सुखावसेय भवतीति ॥—तत्त्वज्ञानमित्यादि। तत्त्वज्ञान कर्मतापन्नं नोऽस्मभ्य प्रसादपूर्वकं दद्यु प्रसीदेयु. गुरुपादा। अथवा तत्त्वज्ञानरूपक्रियाविशेषणादम् नोऽस्माक प्रसीदेयु ॥—प्रैषानुज्ञावसरे—॥—कामचारानुमतिरिति। केनचित्पुसा कश्चित्पृष्टो यदुताहं कट करोमि ततस्तेन कटमयं करोतु मा वेति मनसि कृत्वा एवमुच्यते कुरु इति। तत' स्वेच्छाप्रवृत्तस्य कदाचिदवमुच्यतेऽवश्य कुरु ततो नियोग। प्रच्छकस्यैवविधानुज्ञाऽत्र सूत्रे न गृह्यते ॥-सप्तमी चोर्ध्व-॥-ऊर्ध्वमौहूर्त्तिक इति। कालादन्यत्र 'वर्षाकालेभ्य.' इति न सिध्यति इत्यध्यात्मादिभ्य इकण् ॥-स्मे पञ्चमी ॥ स्मशब्दः स्पष्टार्थः

ऽर्थे वर्तमानाद्धातोः पञ्चमी भवति । कृत्यानां सप्तम्याश्चापवादः । ऊर्ध्वं मुहूर्ताद्भवान्कटं करोतु स्म । भवान् हि प्रेषितोऽनुज्ञातो भवतोऽवसरः कटकरणे इति ॥ ३१ ॥ *अधीष्टौ ॥ ५ । ४ । ३२ ॥ ऊर्ध्वमौहूर्तिक इति निवृत्तम् *पृथग्योगात् । स्मे उपपदेऽधीष्टावध्येषणायां गम्यमानायां धातोः पञ्चमी भवति । *सप्तम्यपवादः । अङ्ग स्म विद्वन्नणुव्रतानि रक्ष, शिक्षाः प्रतिपद्यस्व ॥ ३२ ॥ *कालवेलासमये तुम्वावसरे ॥ ५ । ४ । ३३ ॥ कालवेलासमयशब्देषूपपदेष्ववसरे गम्यमाने धातोस्तुम्प्रत्ययो वा भवति । *कालो भोक्तुम् । वेला भोक्तुम् । समयो भोक्तुम् । वावचनाद्यथाप्राप्तं च । *कालो भोक्तव्यस्य । ऊर्ध्वं मुहूर्तात्कालो भोक्तुम्, ऊर्ध्वं मुहूर्ताद्भोक्तुं स्म कालः, अङ्ग स राजन् भोक्तुं काल इत्येतेषु *परत्वात्तुमेव । अवसर इति किम् । कालः पचति भूतानि । कालोऽत्र द्रव्यं न त्ववसरः ॥ ३३ ॥ *सप्तमी यदि ॥ ५ । ४ । ३४ ॥ यदि यच्छब्दप्रयोगे सति कालादिषूपपदेषु धातोः सप्तमी भवति । तुमोऽपवादः । कालो यदधीयीत भवान् । वेला यद्भुञ्जीत भवान् । समयो यच्छयीत भवान् । बहुलाधिकारात्कालो यदध्ययनस्य वेला यद्भोजनस्य समयो यच्छयनस्य *इत्याद्यपि भवति ॥ ३४ ॥ *शक्तार्हे कृत्याश्च ॥ ५ । ४ । ३५ ॥ शक्तेऽर्हे च कर्तरि *गम्यमाने धातोः कृत्याः सप्तमी च भवति । भवता खलु भारो वाह्यः वोढव्यः वहनीयः उह्येत । भवान् भारं वहेत् । भवान् हि शक्तः । अर्हे, भवता खलु कन्या वाह्या वोढव्या वहनीया । *भवान् खलु कन्यां वहेत् । भवता खलु छेदसूत्रं वाह्यम् वोढव्यम् वहनीयम् । भवान् खलु च्छेदसूत्रं वहेत् । भवानेतदर्हतीति । सप्तम्या बाधो मा भूदिति कृत्यग्रहणम् । बहुवचनमिहोत्तरत्र च *यथासंख्यनिवृत्त्यर्थम् ॥ ३५ ॥ *णिन्चावश्यकाधमर्ण्ये ॥ ५ । ४ । ३६ ॥ अवश्यंभाव आवश्यकम् । ऋणेऽधमोऽधमर्णः तस्य भाव आधमर्ण्यम् । आवश्यके आधमर्ण्ये च गम्यमाने कर्तरि वाच्ये धातोर्णिन् कृत्याश्च भवति । अवश्यं करोतीति कारी । हारी । यदा त्ववश्यमोऽपि प्रयोग उभाभ्यामपि द्योतनात् तदा मयूरव्यंसकादित्वात्समासः । अवश्यंकारी । अवश्यंहारी । अवश्यशब्दप्रयोगे तु अवश्यकारी । अकारान्तोऽपि त्वनव्य-

॥-अधीष्टौ ॥-पृथग्योगादिति । स्मेऽधीष्टौ च पञ्चमीत्यकरणात् ॥—सप्तम्यपवाद इति । अधीष्टावर्थे 'विधिनिमन्त्रण '-इति प्राप्ताया । अङ्गशब्द प्रकाशे कोमलामन्त्रणे वा ॥-कालवेला-॥-कालो भोक्तुमिति ॥ 'प्रैषानुज्ञा '-इति प्राप्तेऽयं विकल्प इति भुज्यता भोक्तव्यस्य चेति वाक्ये तुमि षष्ठ्येकवचनस्य 'अव्ययस्य' इति लुप् ॥—कालो भोक्तव्यस्येति । प्रैषादिसूत्रेण तव्य इति भुज्यतामिति वाक्यम् । विकल्पपक्षे प्रैषादीति प्रवर्तत इत्यत्र सूत्रे कालो भोजनस्येति वालितम् ॥—परत्वात्तुमेवेति । ऊर्ध्वं मुहूर्तात् कालो भोक्तुमित्यादिप्रयोगत्रये । ननु तुम् विकल्पेन भवति तत्कथ तुमेवेत्युक्तम् । उच्यते । विकल्पेन तुमेव भवति नाऽनद्यतनादयः । 'सप्तमी चोर्ध्व इति ' स्मे पञ्चमी ' इति ' अधीष्टौ ' इति च यथाक्रमं प्रवर्तत एव ॥—सप्तमी यदि ॥—इत्याद्यपि भवतीति । यच्छब्दप्रयोगेऽनेन सप्तमी विहितेति अनद् न प्राप्नोति । बाहुलकात् तु सोऽपि भवतीत्यर्थ ॥—शक्तार्हे—॥—गम्यमाने इति । न तु वाच्य एवेत्यर्थः ॥—भवान् खलु कन्यां वहेदिति । अत्रार्हे कर्तरि वाच्ये व्यक्तिव्याख्यानादनेन सप्तमी । अन्यथाऽर्हे कर्तरि ' अर्हे तृच् ' इति परत्वात्तृजेव स्यात् भावकर्मणोरस्य चरितार्थत्वात् ॥—यथासंख्यनिवृत्त्यर्थमिति । ननु समुच्चीयमानेन सह यथासंख्यस्य 'राष्ट्रक्षत्रिय '-इत्यनापत्त्यत्र येन निरस्तत्वात् व्यर्थं बहुवचनम् । सत्यम् ॥ ज्ञापकज्ञापिता विधयो ह्यनित्या इति न्यायज्ञापनार्थम् ॥—णिन् चावश्यका—॥ अवश्यं करोतीत्यादीनि वाक्यानि

यमवश्यशब्दोऽस्ति । अवश्यं गेयो गाथको गीतस्य । अवश्यंभव्यश्चैत्रः । आधमर्ण्ये, शतं दायी सहस्रं दायी । कारी मे कटमसि । हारी मे भारमसि । गेयो गाथानाम् । णिना बाधो माभूदिति कृत्यविधानम् । कृत्त्वाच्च कर्तरि णिनो विधानात् कृत्यानामपि *कर्तर्येव विधानम् । भावकर्मणोस्तु सामान्येन विधानात् सिद्धा एव *बाधकाभावात् ॥ ३६ ॥ *अर्हे तृच् ॥ ५ । ४ । ३७ ॥ अर्हे कर्तरि वाच्ये धातोस्तृच् प्रत्ययो भवति । भवान कन्याया वोढा । भवान् खलु च्छेदसूत्रस्य वोढा । *सप्तम्या बाधा माभूदिसर्हे तृज्विधानम् ॥ ३७ ॥ *आशिष्याशीःपञ्चम्यौ ॥ ५ । ४ । ३८ ॥ आशासनमाशीः । आशीर्विशिष्टेऽर्थे वर्तमानाद्धातोराशीःपञ्चम्यौ विभक्ती भवतः । जीयात् । जीयास्ताम् । जीयासुः । जयतात् । जयताम् । जयन्तु । आशिषीति किम् । *चिरं जीवति मैत्रः । कश्चित्तु समर्थनायां पञ्चमीमिच्छति । परैरशक्यस्य वस्तुनोऽध्यवसायः समर्थना । कश्चिदाह समुद्रः शोषयितुमशक्यः । स आह समुद्रमपि शोषयाणि । पर्वतमप्युत्पाटयानि ॥ ३८ ॥ *माङ्यद्यतनी ॥ ५ । ४ । ३९ ॥ माङ्युपपदे धातोरद्यतनी भवति । सर्वविभक्त्यपवादः । माकार्षीदधर्मम् । माहार्षीत् परस्वम् । कथं मा भवतु तस्य पापं मा भविष्यति इति । असाधुरेवायम् । *केचिदाहुरङितो माशब्दस्यायं प्रयोगः ॥ ३९ ॥ *सस्मे ह्यस्तनी च ॥ ५ । ४ । ४० ॥ स्मशब्दसहिते माङ्युपपदे धातोर्ह्यस्तनी चकारादद्यतनी च भवति । *मा स्म करोत् । मा स्म कार्षीत् । मा चैत्र स्म हरः परद्रव्यम् । मा चैत्र स्म हार्षीः परद्रव्यम् ॥ ४० ॥ *धातोः संबन्धे प्रत्ययाः ॥ ५ । ४ । ४१ ॥ धातुशब्देन *धात्वर्थ उच्यते । धात्वर्थानां संबन्धे विशेषणविशेष्यभावे सति अयथाकालमपि प्रत्ययाः साधवो भवन्ति । विश्वदृश्वास्य पुत्रो भविता । कृतः कटः श्वो भविता । *भावि कृत्यमासीत् । विश्वदृश्वेति भूतकालः प्रत्ययो भवितेति भविष्यत्कालेन प्रत्ययेनाभिसंबध्यमानः साधुर्भवति । एवं कृतः कटः श्वो भवितेति । भावि कृत्यमासीदित्यत्र तु *भावीति भविष्यत्कालः प्रत्ययः आसीदिति भूतकालेन प्रत्ययेनाभिसंबध्यमानः साधुर्भवति । विशेषणं गुणत्वाद्विशेष्यकालमनुरुध्यते । तेन *विपर्ययो न भवति । तथा त्याद्यन्तमपि यदाऽपरं त्याद्यन्तं प्रति विशेषणत्वेनोपादीयते तदा तस्यापि समुदायवाक्यार्थापेक्षया

---

सामान्यविशेषभावेन उदाहारिपत अवश्यभावे तु गम्यमाने नित्यमेव णिन् कृत्याश्च । वाक्य त्ववश्य विधायीत्यादि धात्वन्तरेण कार्यम् ॥—कर्त्तर्येव विधानमिति । ये पूर्व 'भव्यगेय'–इत्यादिषु कर्त्तरि विहितास्त एवेह ज्ञायन्ते इत्यर्थ । यद्वा भावकर्म्मणोरपि ये विहितास्तेऽत्र कर्त्तरि भवन्तीत्यर्थ ॥—बाधकाभावादिति । कर्त्तर्येव णिना बाध्यन्ते न भावकर्मणोः ॥—अर्हे तृच् ॥—सप्तम्या बाधा माभूदिति । 'शक्तार्हे'–इति विहिताया । सप्तम्येत्युपलक्षणं कर्तृविहितैः कृत्यैरपि बाधा माभूदिति तृज्विधानम् ॥—आशिष्याशीः—॥—चिरं जीवतीति । चिर इत्यकारान्तो वा 'कालाध्व' इति कर्म्म ॥—माङ्यद्यतनी ॥—केचिदिति । स्वमतेऽप्यङिन्माशब्दप्रयोगोऽस्ति किंतु क्रियायोगेऽङिन्माशब्दस्य प्रयोगो नेष्यते अत केचिदाहुरित्युक्तम् ॥—सस्मे ह्यस्तनी च ॥—मा स्म करोदिति । माशब्देन निपेध उच्यते स्मशब्देन च स एव द्योत्यते ॥—धातो सबन्धे—॥—धात्वर्थ उच्यते इति । शब्दतः सबन्धाऽभावात् ॥—भावि कृत्यमिति । भविष्यतीति 'भुवो वा' इत्यौणादिको णिन्॥—भावीति भविष्यत्काल प्रत्यय इति । नन्वौणादिकानां अनुपात्तकालविशेषाणां त्रिष्वपि कालेषु प्रवृत्ते. कथ भविष्यत्त्वम् । सत्यम् । अस्य गम्यादित्वात् 'वर्त्स्यति गम्यादिः' इत्यनेन भविष्यत्त्वम् ॥—विपर्ययो न भवतीति । भवितेति भविष्यत्कालः प्रत्ययो विश्वदृश्वेति भूतकालेन सबध्यमान. साधुर्भवतीत्यादिरूपः । विश्वदृश्वेत्यादि हि विशेषण भवितेति च

कालान्यत्वं भवत्येव । 'साटोपमुर्वीमनिशं नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी ॥ तान्येकदेशान्निभृतं पयोधेः सोऽम्भांसि मेघान् पिबतो ददर्श' ॥ अत्र प्लावयिष्यन्तीति भविष्यदर्थस्य ददर्शेति भूतानुगमः । बहुवचनात् *अधात्वधिकारविहिता अपि प्रत्ययास्तद्धिता धातुसंबन्धे सति कालभेदे साधवो भवन्ति । गोमानासीत् । गोमान् भविता । अस्तिविवक्षायां हि मतुरुक्तः । स कालान्तरे न स्यात् इति ॥ ४१ ॥ *भृशाभीक्ष्ण्ये हिस्वौ यथाविधि तध्वमौ च तद्युष्मदि ॥ ५ । ४ । ४२ ॥ गुणक्रियाणामधिश्रयणादीनां क्रियान्तरैरव्यवहितानां साकल्यं फलातिरेको वा भृशत्वम् । प्रधानक्रियाया विक्लेदादेः क्रियान्तरैरव्यवहितायाः पौनःपुन्यमाभीक्ष्ण्यम् । तद्विशिष्टे सर्वकालेऽर्थे वर्तमानाद्धातोः सर्वविभक्तिसर्ववचनविषये हिस्वौ पञ्चमीसंबन्धिनौ भवतः यथाविधि धातोः संबन्धे यत एव धातोर्यस्मिन्नेव कारके हिस्वौ विधीयेते तस्यैव धातोस्तत्कारकविशिष्टस्यैव संबन्धेऽनुप्रयोगरूपे सति, तथा तध्वमौ हिस्वसाहचर्यात्पञ्चम्या एव संबन्धिनौ तयोः तध्वमोः संबन्धी बहुत्वविशिष्टो युष्मत् तस्मिंस्तद्युष्मदि अभिधेये भवतः चकाराद्धिस्वौ च यथाविधि धातोः संबन्धे । *लुनीहिलुनीहीत्येवायं लुनाति । अनुप्रयोगात्कालवचनभेदोऽभिव्यज्यते । लुनीहिलुनीहीत्येवेमौ लुनीतः । लुनीहिलुनीहीत्येवेमे लुनन्ति । लुनीहिलुनीहीत्येव त्वं लुनासि । युवां लुनीथः । यूयं लुनीथ । लुनीहिलुनीहीत्येवाहं लुनामि । आवां लुनीवः । वयं लुनीमः । एवं लुनीहिलुनीहीत्येवायमलावीत् । लुनीहिलुनीहीत्येवायमलुनात् । लुनीहिलुनीहीत्येवायं लुलाव । लुनीहिलुनीहीत्येवायं लविष्यति । लुनीहिलुनीहीत्येवायं लविता । लुनीहिलुनीहीत्येवायं लुनीयात् । लुनीहिलुनीहीत्येवायं लुनातु । लुनीहिलुनीहीत्येवायं लूयात् । एवमधीष्वाधीष्वेत्येवायमधीते । इमावधीयाते । इमेऽधीयते । अधीष्वाधीष्वेत्येव त्वमधीषे । युवामधीयाथे । यूयमधीध्वे । अधीष्वाधीष्वेत्येवाहमधीये । आवामधीवहे । वयमधीमहे । तथा अधीष्वाधीष्वेत्येवायमध्यगीष्ट । अधीष्वाधीष्वेत्येवायमध्यैत । अधीष्वाधीष्वेत्येवायमधिजगे । अधीष्वाधीष्वेत्येवायमध्येष्यते । अधीष्वाधीष्वेत्येवायमध्येता । अधीष्वाधीष्वेत्येवायमधीयीत । अधीष्वाधीष्वेत्येवायमधीताम् । अधीष्वाधीष्वेत्येवायमध्येषीष्ट । एवं सर्वविभक्तिवचनान्तरेष्वपि हिस्वावुदाहरणीयौ । एवं भावकर्मणोरपि । शय्यस्वशय्यस्वेत्येव शय्यते अशायि शायिष्यते भवता । लूयस्वलूयस्वेत्येव लूयते अलावि लाविष्यते केदारः ॥ तध्वमौ च तद्युष्मदि । लुनीतलुनीतेत्येव यूयं लुनीथ । लुनीहिलुनीहीत्येव यूयं लुनीथ । अधीध्वमधीध्वमित्येव यूयमधीध्वे । अधीष्वाधीष्वेत्येव यूयमधीध्वे । तथा लुनीतलुनीतेत्येव यूयमलाविष्ट । लुनीहिलुनीहीत्येव यूयमलाविष्ट । अधीध्वमधीध्वमित्येव यूयमध्यैद्वम् । अधीष्वाधीष्वेत्येव यूयमध्यगीढ्वम् । एवं ह्यस्तन्यादिष्वप्युदाहार्यम् । यथाविधीति किम् । लुनीहिलुनीहीत्येवायं लुनाति । छिनत्ति लूयते वेति धातोः संबन्धे माभूत् । अधीष्वाधीष्वेत्येवायमधीते । पठति अधीयते वेति धातोः संबन्धे मा भूत् । लुनीतलुनीतेत्येव यूयं लुनीथ । छिन्थेति धातोः संबन्धे माभूत् । अधीध्वमधीध्वमित्येव यूयमधीध्वे । पठथेति धातोः संबन्धे माभूत् । लुनीहिलुनीहीत्यादौ च

विशेष्यम् ॥—अधात्वधिकारविहिता अपीति । अन्यथा धातुप्रकरणत्वात् धातोरेव परे ये प्रत्ययास्त एव स्युः ॥—भृशाभीक्ष्ण्ये—॥—लुनीहिलुनीहीत्येवायमिति । इतिशब्दः सबन्धोपादा-

भृशाभीक्ष्ण्ये द्विर्वचनम् । ननु च भृशाभीक्ष्ण्ययोर्यङपि विधीयते *न तु तत्र द्विर्वचनम् इह तु द्विर्वचनमित्यत्र को हेतुः । उच्यते । यङ् स्वार्थिकत्वात्प्रकृत्यर्थोपाधी भृशाभीक्ष्ण्ये समर्थोऽवद्योतयितुम् इति तदभिव्यक्तये द्विर्वचनं नापेक्षते । हिस्वादयस्तु कर्तृकर्मभावार्थत्वेनास्वार्थिकत्वादसमर्थाः प्रकृत्यर्थोपाधी भृशाभीक्ष्ण्ये अवद्योतयितुमिति तदवद्योतनाय द्विर्वचनमपेक्षन्ते इति ॥ ४२ ॥ *प्रचये नवा सामान्यार्थस्य ॥ ५ । ४ । ४३ ॥ भृशाभीक्ष्ण्ये *यथाविधीति च नानुवर्तते । प्रचयः समुच्चयः । स्वतः साधनभेदेन वा भिद्यमानस्य एकत्रानेकस्य धात्वर्थस्याध्यावाप इति यावत् । तस्मिन् गम्यमाने सामान्यार्थस्य धातोः संबन्धे सति धातोः परौ हिस्वौ तध्वमौ च तद्युष्मदि वा भवतः। व्रीहीन् वप लुनीहि पुनीहि इत्येव यतते चेष्टते समीहते यत्यते चेष्ट्यते समीह्यते। पक्षे व्रीहीन् वपति लुनाति पुनातीत्येव यतते यत्यते। देवदत्तोऽद्धि गुरुदत्तोऽद्धि जिनदत्तोऽद्धि इत्येव भुञ्जते भुज्यते। पक्षे देवदत्तोऽत्ति गुरुदत्तोऽत्ति जिनदत्तोऽत्ति इत्येव भुञ्जते भुज्यते। ग्राममट वनमट गिरिमटेत्येवाटति घटते अट्यते घट्यते । पक्षे ग्राममटति वनमटति गिरिमटतीत्येवाटति घटते अट्यते घट्यते । सक्तून् पिब धानाः खाद ओदनं भुङ्क्ष्वेत्येवाभ्यवहरति अभ्यवह्रियते । पक्षे सक्तून् पिबति धानाः खादति ओदनं भुङ्क्ते इत्येवाभ्यवहरति अभ्यवह्रियते । सूत्रमधीष्व निर्युक्तिमधीष्व भाष्यमधीष्वेत्येवाधीते पठति अधीयते पठ्यते । पक्षे सूत्रमधीते निर्युक्तिमधीते भाष्यमधीते इत्येवाधीते पठति अधीयते पठ्यते। तध्वमौ च तद्युष्मदि। व्रीहीन् वपत लूनीत पुनीतेत्येव यतध्वे चेष्टध्वे समीहध्वे । व्रीहीन्वप लुनीहि पुनीहि इत्येव यतध्वे चेष्टध्वे समीहध्वे । पक्षे व्रीहीन्वपथ लुनीथ पुनीथेत्येव यतध्वे चेष्टध्वे समीहध्वे । ग्राममटत वनमटत गिरिमटतेत्येवाटथ घटध्वे । ग्राममट वनमट गिरिमटेत्येवाटथ घटध्वे । पक्षे ग्राममटथ वनमटथ गिरिमटथेत्येवाटथ घटध्वे । सूत्रमधीध्वं निर्युक्तिमधीध्वं भाष्यमधीध्वमित्येवाधीध्वे पठथ । सूत्रमधीष्व निर्युक्तिमधीष्व भाष्यमधीष्वेत्येवाधीध्वे पठथ । पक्षे सूत्रमधीध्वे निर्युक्तिमधीध्वे भाष्यमधीध्वे इत्येवाधीध्वे पठथ । *एवं वचनान्तरे त्रिकान्तरे विभक्त्यन्तरेऽप्युदाहार्यम् । सामान्यार्थस्येति किम् । व्रीहीन्वप लुनीहि पुनीहीत्येव वपति लुनाति पुनातीति माभूत् । ग्राममट वनमट गिरिमटेत्येव ग्राममटति वनमटति गिरिमटतीति च माभूत् । कारकभेदेनाटतीत्यस्य सामान्यार्थत्वाभावात् ॥ ४३ ॥ *निषेधेऽलंखल्वोः क्त्वा ॥ ५ । ४ । ४४ ॥ निषेधे वर्तमानयोरलंखलुशब्दयोरुपपदयोर्धातोः क्त्वा प्रत्ययो वा भवति । अलं कृत्वा, खलु कृत्वा । न कर्तव्यमित्यर्थः । पक्षे यथाप्राप्तम् । अलं वत्स रोदनेन । अलं रुदितम् । क्त्वान्तयोग एव खलुशब्दो निषेधवाचीति पक्षे *खलुशब्दो नोदाह्रियते । अन्ये तु खलु कृतेन खलु भोजनेन खलु भोजनमित्यप्युदाहरन्ति । निषेध इति किम् । अलंकारः स्त्रियाः । सिद्धं खलु । अलंखल्वोरिति किम् । माकारि भवता ॥ ४४ ॥

नार्थोऽन्यथाऽसत्त्वभूतार्थवाचिनोराख्यातयोः परस्परेण सबन्धो नावगम्येत ॥—न तु तत्र द्विर्वचनमिति । किं तु भृशाभीक्ष्ण्यनिरपेक्ष 'सन्यङश्च' इत्यनेन ॥—प्रचये नवा ॥—समान एव सामान्यः स्वार्थे ष्यणन्तो वाचस्पतिना पुंलिङ्गो निर्णिन्ये । सामान्योऽर्थो यस्य, यद्वा समानस्य भाव सामान्यमर्थो यस्य ॥—यथाविधीति च नानुवर्तत इति । प्रचय इति भणनात् सामान्यार्थस्येति भणनाच्च ॥—एवं वचनान्तरे त्रिकान्तरे इति। एतच्च हिस्वौ प्रत्येव ज्ञातव्य न तध्वमौ तयोरेव घटनात् ॥—निषेधेऽलंखल्वोः—॥ क्त्वातुमादीनां कृत्सञ्ज्ञाया 'निसनिक्षनिन्दः'—इत्यत्र फलम् ॥—खलुशब्दो

*परावरे॥ ५।४।४५॥ परे अवरे च गम्यमाने धातोः क्त्वा वा भवति। *अतिक्रम्य नदीं पर्वतः। नद्याः परः पर्वत इत्यर्थः। बाल्यमतिक्रम्य यौवनम्। अवरे, अप्राप्य नदीं पर्वतः। नद्या अर्वाक् पर्वत इत्यर्थः। अप्राप्य यौवनं बाल्यम्। नदीपर्वतयोर्बाल्ययौवनयोर्वा *परावरत्वमात्रं प्रतीयते अस्ति प्राप्यत इति वा न द्वितीया क्रियेति। तुल्यकर्तृकक्रियान्तराभावात् 'प्राक्काले' (५-४-४७) इति न सिध्यतीति वचनम्। वाधिकाराद्यथाप्राप्तं च। नद्यतिक्रमेण पर्वतः, नद्यप्राप्त्या पर्वतः॥ ४५॥ *निमील्यादिमेङस्तुल्यकर्तृके॥५।४।४६॥ तुल्यो धात्वर्थान्तरेण कर्ता यस्य स तुल्यकर्तृकस्तस्मिन्नर्थे वर्तमानेभ्यो निमील्यादिभ्यो मेङश्च धातोः सवन्धे सति क्त्वा वा भवति। निमील्यादीनां समानकालार्थो मेङस्तु परकालार्थ आरम्भः। स्वभावात् *मेङ् व्यतिहार एव वर्तते। *अक्षिणी निमील्य हसति। मुखं व्यादाय स्वपिति। पादौ प्रसार्य पतति। दन्तान् प्रकाश्य जल्पति। शिशुरयं मातरं भक्षयित्वोपजातः। मेङ्, अपमाय अपमित्य याचते। अपमातुं प्रतिदातुं याचत इत्यर्थः। पूर्वं ह्यसौ याचते पश्चादपमयत इति। *याचेस्तु पूर्वकालेऽपि क्त्वा न भवति मेङः परकालभाविन्या क्त्वया याचिप्राक्कालस्योक्तत्वात्। पक्षे याचित्वापमयते। अपमातुं याचते। तुल्यकर्तृक इति किम्। चैत्रस्याक्षिनिमीलने मैत्रो हसति। चैत्रस्यापमाने मैत्रो याचते॥ ४६॥ *प्राक्काले॥ ५।४।४७॥ परकालेन धात्वर्थेन तुल्यकर्तृके प्राक्कालेऽर्थे वर्तमानाद्धातोः धातोः संबन्धे क्त्वा वा भवति। *आसित्वा भुङ्क्ते। भुक्त्वा व्रजति। भुक्त्वा पुनर्भुङ्क्ते। स्नात्वा भुक्त्वा पीत्वा व्रजति। पक्षे आस्यते भोक्तुम् इत्यपि भवति। तुल्यकर्तृक इत्येव। भुक्तवति गुरौ शिष्यो व्रजति। प्राक्काल इति किम्। भुज्यते पीयते चानेन। अथ यदनेन भुज्यते ततोऽयं पचति यदनेनाधीयते ततोऽयं शेते इत्यत्र कथं क्त्वा न भवति। उच्यते। यत्र यच्छब्देन सह ततः शब्दः प्रयुज्यते तत्र ततःशब्देनैव प्राक्कालताभिधीयते इत्युक्तार्थत्वात् क्त्वा न भवति। यदनेन भुक्त्वा गम्यते ततोऽयमधीते इत्यत्र तु भोजनगमनयोः क्रमे क्त्वा। गमनाध्ययनयोस्तु ततःशब्देन क्रमस्याभिधानात् गमेर्न भवति। 'प्राक्काले' इत्युत्तरत्र यथासंभवमभिधानतोऽनुवर्तनीयम्॥ ४७॥ *खणम् चाभीक्ष्ण्ये॥ ५।४।४८॥ आभीक्ष्ण्यविशिष्टे परकालेन तुल्यकर्तृके प्राक्कालेऽर्थे वर्तमानाद्धातोर्धातोः संबन्धे खणम् चकारात् क्त्वा च भवति। भोजंभोजं व्रजति। भुक्त्वाभुक्त्वा व्रजति। पायंपायं गच्छति। पीत्वापीत्वा गच्छति। अग्रे भोजंभोजं व्रजति। अग्रे

---

नोदाहियत इति। वाक्यमपि खलु विधायेति धात्वन्तरेण कार्यम्॥—परावरे—॥—अतिक्रम्य नदीं पर्वत इति। अतिक्रमेणेति वाक्य वाक्ये च इत्थंभूतलक्षणे तृतीया॥—परावरत्वमात्रमिति। क्रियाद्वये विद्यमानेऽपि परावरत्वमात्र जिज्ञासितम्॥—निमील्यादिमे—॥—मेङ् व्यतिहार एव वर्त्तत इति। अपरे धातवो व्यतिपूर्वा व्यतिहारे वर्त्तन्तेऽय तु स्वभावात् केवलोऽपीति मान्यैरिव व्यतिहारग्रहणमस्य विशेषक कर्त्तव्यमित्यर्थ॥—अक्षिणी निमील्य हसतीति। निमीलने इति वाक्यम्। अन्तर्भूतण्यर्थ सकर्मक साक्षाण्णिगन्तो वा। अन्यथा तुल्यकर्तृकत्व न सगच्छेत। एवमुत्तरेऽपि॥—याचेस्तु पूर्वकालेऽपीति। नन्वेवमपि याचे प्राक्कालवर्तित्वात् उत्तरेण कस्मात् क्त्वा न भवतीत्याह—याचेस्त्वित्यादि। उत्तरेण हि प्राक्कालद्योतनाय क्त्वाप्रत्यय क्रियते। याचेस्तु पूर्वकालवर्त्तिता मेङः परकालभाविन्या क्त्वया उक्तेति नैरर्थक्यात्तत क्त्वा न भवति॥—प्राक्काले॥ प्राक्पूर्वं कालोऽस्येति प्राक्कालस्तस्मिन्॥—आसित्वा भुङ्क्त इति। आसिक्रियाया वर्त्तमानत्वेऽपि भुजिक्रियाऽपेक्षया प्राक्काल्यम्। अत एव क्त्वो विकल्पपक्षे आस्यते भोक्तुमित्यत्र वर्त्तमाना॥—खणम् चाभीक्ष्ण्ये—॥

भुक्त्वाभुक्त्वा व्रजति । अत्र क्त्वाणमुलोर्हिस्वादिवत्प्रकृत्यर्थोपाधिद्योतने सामर्थ्यं नास्तीत्याभीक्ष्ण्याभिव्यक्तये द्विर्वचनं भवति । इह कस्मात् णमुल् न भवति *यदयं पुनःपुनर्भुक्त्वा व्रजति अधीते एव ततः परम् । आभीक्ष्ण्यस्य स्वशब्देनैवोक्तत्वात् । क्त्वापि तर्हि न प्राप्नोति । माभूदाभीक्ष्ण्ये प्राक्काल्ये भविष्यति । वाधिकारेणैव पक्षे क्त्वाप्रत्ययस्य सिद्धौ चकारेण तस्य विधानं *वर्तमानादिप्रत्ययान्तरनिषेधार्थम् । ननु क्त्वादिभिर्भावे विधीयमानैः कर्तुरनभिहितत्वादोदनं पक्त्वा भुङ्क्ते देवदत्त इत्यादिषु कर्तरि तृतीया प्राप्नोति । नैवम् । भुजिप्रत्ययेनैव कर्तुरभिहितत्वान्न भवति । प्रधानशक्त्यभिधाने हि गुणशक्तिरभिहितवत्प्रकाशते इति । खित्त्वं चौरंकारमाक्रोशति स्वादुंकारं भुङ्क्ते इत्युत्तरार्थम् ॥ ४८ ॥ * पूर्वाग्रेप्रथमे ॥ ५ । ४ । ४९ ॥ पूर्व अग्रे प्रथम इत्येतेषूपपदेषु परकालेन तुल्यकर्तृके प्राक्कालेऽर्थे वर्तमानाद्धातोर्धातोः संबन्धे णमुल् वा भवति । *अनाभीक्ष्ण्यार्थं वचनम् । पूर्वभोजं व्रजति । पूर्वं भुक्त्वा व्रजति । अग्रेभोजं व्रजति । अग्रे भुक्त्वा व्रजति । प्रथमं भोजं व्रजति । प्रथमं भुक्त्वा व्रजति । वर्त्तमानादयोऽपि, *पूर्वं भुज्यते ततो व्रजति । अग्रे भुज्यते ततो व्रजति । प्रथमं भुज्यते ततो व्रजति । *पूर्वादयश्चात्र व्यापारान्तरापेक्षे प्राक्काल्ये व्रज्यापेक्षे तु क्त्वणमावेवेति नोक्तार्थता । तत्रश्चायमर्थोऽन्यभोक्तृभुजिक्रियाभ्यः स्वक्रियान्तरेभ्यो वा पूर्वं भोजनं कृत्वा व्रजतीत्यर्थः । पूर्वप्रथम*साहचर्यादग्रेशब्दः कालवाची ॥ ४९ ॥ *अन्यथैवंकथमित्थमःकृञोऽनर्थकात् ॥५।४।५०॥ एभ्यः परात्तुल्यकर्तृकेऽर्थे वर्तमानात् करोतेरनर्थकात् धातोः संबन्धे णमुल् वा भवति । अन्यथाकारं भुङ्क्ते । एवंकारं भुङ्क्ते । कथंकारम् इत्थंकारं भुङ्क्ते । *पक्षे क्त्वैव । अन्यथा कृत्वा । एवं कृत्वा । कथं कृत्वा इत्थं कृत्वा भुङ्क्ते । *एवमुत्तरत्रापि । आनर्थक्यं करोतेरन्यथादिभ्यः पृथगर्थाभावात् । यावदुक्तं भवति अन्यथा भुङ्क्ते तावदुक्तं भवति अन्यथाकारं भुङ्क्ते इति । अनर्थकादिति किम् । अन्यथा कृत्वा शिरो भुङ्क्ते । अत्रान्यथाशब्दः शिरःप्रकारे करोतेश्च शिरः कर्म तन्न करोतिना विना गम्यत इति ॥ ५० ॥ यथातथादीर्ष्योत्तरे ॥ ५ । ४ । ५१ ॥ यथातथाशब्दाभ्यां परात्तुल्यकर्तृकेऽर्थे वर्तमानादनर्थकात् करोतेर्धातोः संबन्धे सति णमुल् वा भवति ईर्ष्योत्तरे ईर्ष्यश्चेत् पृच्छते उत्तरं ददाति । कथं भवान् भोक्ष्यत इति पृष्टोऽसूयया तं प्रत्याह । यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तवानेन । किं ते मया यथाहं भोक्ष्ये तथाहं भोक्ष्ये इत्यर्थः । ईर्ष्योत्तर इति किम् । यथा कृत्वाहं भोक्ष्ये तथा द्रक्ष्यसि । अनर्थकादित्येव यथा कृत्वाहं शिरो भोक्ष्ये तथा कृत्वाहं शिरो भोक्ष्ये किं तवानेन ॥ ५१ ॥ *शापे व्याप्यात् ॥ ५ । ४ । ५२ ॥ *अनर्थकादिति निवृत्तम् । व्याप्यात्कर्मणः

---

—यदयं पुनःपुनरिति । ननु भृशाभीक्ष्ण्ये वर्त्तमानस्य धातोर्द्विर्वचन भवति इह तु कथम् । सत्यम् । क्रियाविशेषणमपि क्रिया ॥—वर्त्तमानादिप्रत्ययान्तरेति । तेनाग्रे भुङ्क्ते २ व्रजितुमित्यादि न भवति ॥—पूर्वाग्रेप्रथमे ॥ पूर्वश्चाऽग्रेश्च प्रथमश्चेति द्वन्द्वात्सप्तमी । उदाहरणेषु पूर्वाग्रेप्रथमेभ्यः 'कालाध्वनो.–' इति द्वितीया ॥—अनाभीक्ष्ण्यार्थं वचनमिति । एतच्चोपलक्षण पक्षे वर्त्तमानादिप्राप्त्यर्थं च ॥—पूर्वं भुज्यते ततो व्रजतीति । वर्त्तमानाया. प्राक्काल्याभिधानेऽसामर्थ्यात्तत इत्युपादायि ॥—पूर्वादयश्चेति । नन्वनेन प्राक्काले क्त्वा प्राक्कालश्च पूर्वादिभिरेवोक्त इति क्त्वा न प्राप्नोतीत्याशङ्का ॥—साहचर्यादिति । पूर्वप्रथमौ तावदऽस्यादन्तौ कालवाचकौ अयमपि तादृशो गृह्यते ॥—अन्यथैव—॥—पक्षे क्त्वैवेति । 'प्राक्काले' इत्यनेन ॥—एवमुत्तरत्रापि इति । यथाऽत्र वाऽधिकारात्पक्षे क्त्वा तथोत्तरत्रापीत्यर्थ. । प्रथममऽन्यथात्व पश्चाद्भुङ्क्ते इत्यत्रापि प्राक्कालः ॥— शापे व्याप्यादिति ॥—अनर्थकादिति निवृत्तमिति । शापेऽसभवात् व्याप्यादिति भणनाद्वा ॥—

पराचुल्यकर्तृकेऽर्थे वर्तमानात् करोतेर्धातोः संबन्धे ख्णम् वा भवति शापे आक्रोशे गम्यमाने। चौरंकारमाक्रोशति। करोतिरिहोच्चारणे। चौरं कृत्वा चौरशब्दमुच्चार्याक्रोशति। चोरोऽसीत्याक्रोशतीत्यर्थः। एवं दस्युंकारमाक्रोशति। व्याधंकारमाक्रोशति। शाप इति किम्। चौरं कृत्वा हेतुभिः कथयति ॥ ५२ ॥ स्वाद्वर्थाददीर्घात् ॥ ५। ४। ५३ ॥ स्वादोरर्थे वर्तमानाच्छब्दाददीर्घान्ताद्व्याप्यात्परस्मात्तुल्यकर्तृके वर्तमानात् करोतेर्धातोः संबन्धे ख्णम् भवति वा। स्वादुंकारं भुङ्क्ते। संपन्नंकारं भुङ्क्ते। मिष्टंकारं भुङ्क्ते। लवणंकारं भुङ्क्ते। पक्षे स्वादुं कृत्वा मिष्टं कृत्वा लवणं कृत्वा भुङ्क्ते। अदीर्घादिति किम्। स्वाद्वीं कृत्वा स्वादूकृत्य संपन्नां कृत्वा यवागूं भुङ्क्ते। स्वादुंकारं यवागूं भुङ्क्ते, अस्वादुं स्वादुं कृत्वा स्वादुंकारं भुङ्क्ते इत्यत्र तु ङीच्व्योर्विकल्पितत्वात् न दीर्घ इति भवति। संपन्नंकारं यवागूं भुङ्क्ते इति तु सामान्येन पदं निष्पाद्य पश्चाद्यवाग्वा संबन्धे भविष्यति ॥ ५३ ॥ *विद्दृग्भ्यः कार्त्स्न्ये णम् ॥ ५। ४। ५४ ॥ कार्त्स्न्यविशिष्टाद्व्याप्यात्परेभ्यस्तुल्यकर्तृके प्राक्कालेऽर्थे वर्तमानेभ्यो विदिभ्यो दृशेश्च धातोः संबन्धे णम् वा भवति। विद्यतेरकर्मकत्वात्तद्वर्जास्त्रयो विदयो गृह्यन्ते। *अतिथिवेदं भोजयति। यं यमतिथिं जानाति लभते विचारयति वा तं तं सर्वं भोजयतीत्यर्थः। कन्यादर्शं *वरयति। यां यां कन्यां पश्यति तां तां सर्वां वरयति। बहुवचनात्त्रयाणामपि विदीनां ग्रहणम्। अन्यथा निरनुबन्धग्रहणे*न सानुबन्धकस्येत्युपतिष्ठेत। कार्त्स्न्य इति किम्। अतिथिं विदित्वा भोजयति। कन्यां दृष्ट्वा वरयति ॥ ५४ ॥ *यावतो विन्दजीवः ॥ ५। ४। ५५ ॥ कार्त्स्न्यविशिष्टाद्व्याप्यात् यावच्छब्दात्पराभ्यां विन्दजीविभ्यामेककर्तृकेऽर्थे वर्तमानाभ्यां धातोः संबन्धे णम्वा भवति। विन्देति शनिर्देशाल्लाभार्थस्य ग्रहणम्। यावद्वेदं भुङ्क्ते। यावल्लभते तावद्भुङ्क्ते इत्यर्थः। यावज्जीवमधीते। यावज्जीवति तावदधीते इत्यर्थः। *जीवेः पूर्वकालासंभवात् अपूर्वकाल एव विधिः ॥ ५५ ॥ *चर्मोदरात्पूरेः ॥ ५। ४। ५६ ॥ व्याप्याभ्यां चर्मोदरशब्दाभ्यां परादेककर्तृकेऽर्थे वर्तमानात् *पूरयतेर्धातोः संबन्धे णम् वा भवति। *चर्मपूरमास्ते चर्म पूरयित्वा आस्ते इत्यर्थः। उदरपूरं शेते। उदरं पूरयित्वा शेते इत्यर्थः ॥ ५६ ॥ *वृष्टिमाने ऊलुक्चास्य वा ॥ ५। ४। ५७ ॥ व्याप्यात्परात्पूरयतेर्धातोः संबन्धे णम् वा भवति अस्य च पूरयतेरूकारस्य लुग्वा भवति समुदायेन चेद्वृष्टिमानं वृष्टीयत्ता गम्यते। गोष्पदप्रं वृष्टो देवः, गोष्पदपूरम् वृष्टो मेघः। सीताप्रम् सीतापूरं

विद्दृग्भ्यः—॥—अतिथिवेदमिति। अतिथि विदित्वा विरवा वा ॥—वरयतीति। वरण् ईप्सायाम् ॥—न सानुबन्धकस्येति। ततो विद्लृतीत्यस्य न स्यात् ॥—यावतो-॥-जीवे: पूर्वकालासंभवादिति। विशेषणयावत्योगे जीवनादुत्तरकाल दानस्यासंभवात् द्वयोरपि युगपदुपपत्तौ जीवतेरपूर्वकाल एव प्रत्यय'। एतच्चोपलक्षण विदेरप्यपूर्वकाल एव, तथाहि भोजनक्रियायामारब्धायामपरिसमाप्तायां परिवेषणादिना भोजनार्हलाभस्य समानकालत्वात् यद्यपि भोजनादौ भाजनार्हद्रव्यलाभस्य प्राक्कालत्वमपि संभवति तथापि न विवक्षितमिति स्पष्टतया नोक्तम्। अत एव पक्षे क्त्वाप्रत्ययो न दर्शितः। तस्य प्राक्काल एव विधानात् ॥— चर्मोदरात्—॥—पूरयतेर्धातोरिति। प्रेरिति णिगि तदभावे च निर्देशस्य समानत्वेऽप्यणिगन्तस्याऽकर्मकत्वात् चर्मोदराभ्यां कर्मभ्यां संबन्धानुपपत्तेः पूरैचि आप्यायने इत्यस्य णिगन्तस्यैव ग्रहण तस्यैव सकर्मकत्वादित्याह—पूरयतेरित्यादि ॥—चर्मपूरमास्ते इत्यादि। यावत्पूरणं न सपद्य तावदासनं शयन च न करोति इति पूरणस्य प्राक्कालता अतः पर्याय. क्त्वान्तो दर्शितः ॥-वृष्टिमाने-॥—मानशब्द. करणसाधनो भावसाधनो वा ततः कर्मषष्ठीसमास.

वृष्टो मेघः । यावता गोष्पदादिपूरणा भवति तावद् वृष्ट इत्यर्थः । अस्येति ग्रहणादुपपदस्य न भवति । मूषकबिलपूरं वृष्टो मेघः । गोष्पदप्रमिति प्रातेर्धातोः 'आतो डोऽह्वावामः' ( ५-१-७६ ) इति डेन गोष्पदपूरामित्यणा च *क्रियाविशेषणत्वे सिध्यति । *एवं सर्वे णमन्ताः प्रयोगाः । तत्र णम्विधानमव्ययत्वेन तरामाद्यर्थमनुस्वारश्रवणार्थं च । तेन गोष्पदमंतराम् गोष्पदमंतमाम् गोष्पदमंरूपं गोष्पदमंकल्पं देश्यं देशीयम् गोष्पदपूरंतरां तमां रूपं कल्पं देश्यं देशीयम् इत्यादि सिद्धं भवति । अन्यथा हि गोष्पदप्रतरं गोष्पदपूरतरमित्याद्येव स्यात् । ग्रोष्पदप्रेण गोष्पदप्रीभवति गोष्पदपूरेण गोष्पदपूरीभवतीत्यादिप्रयोगास्तु डघआदिप्रत्ययान्ता द्रष्टव्याः ॥ ५७ ॥ चेलार्थात् क्नोपेः ॥ ५ । ४ । ५८ ॥ चेलार्थात् व्याप्यात्परात् क्नोपयतेस्तुल्यकर्तृकेऽर्थे वर्तमानात् वृष्टिमाने गम्यमाने धातोः संबन्धे णम्वा भवति । चेलक्नोपं वृष्टो मेघः । वस्त्रक्नोपम् । वसनक्नोपम् । यावता चेलं क्नूयते आर्द्रीभवति तावद्वृष्ट इत्यर्थः । अर्थग्रहणादत्र स्वरूपपर्यायविशेषाणां त्रयाणामपि ग्रहणम् , तेन पटिकाक्नोपं कम्बलक्नोपमित्यादौ चेलविशेषादपि भवति । अयमप्यप्राक्काले विधिः ॥ ५८ ॥ *गात्रपुरुषात्स्नः ॥ ५ । ४ । ५९ ॥ गात्रपुरुषाभ्यां व्याप्याभ्यां परात् *अन्तर्भूतण्यर्थात्स्नातेस्तुल्यकर्तृकेऽर्थे वर्तमानाद् वृष्टिमाने गम्यमाने धातोः संबन्धे णम् वा भवति । गात्रस्नायं वृष्टो मेघः । पुरुषस्नायं वृष्टो मेघः । यावता गात्रं पुरुषश्च स्नाप्यते तावद्वृष्ट इत्यर्थः । इदं केचिदेवेच्छन्ति ॥ ५९ ॥ *शुष्कचूर्णरूक्षात् पिषस्तस्यैव ॥ ५ । ४ । ६० ॥ शुष्कचूर्णरूक्षेभ्यो व्याप्येभ्यः परात्पिषेर्णम् वा भवति तस्यैव धातोः संबन्धे सति । *शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । एवं चूर्णपेषम् । रूक्षपेषम् । शुष्कपेषं पिष्टः । शुष्कपेषं पेष्टव्यः । शुष्कपेषं पिष्यते । क्तादिभिरुक्तेऽपि व्याप्ये *तदुपपदतास्त्येव । प्रयोगानुप्रयोगक्रिययोरैक्यात्तुल्यकर्तृकत्वम् प्राक्कालत्वं च नास्तीत्यत्र प्रकरणे पक्षे क्त्वा न भवति । घञादय एव तु भवन्ति । शुष्कस्य पेषं पिनष्टि । *सामान्यविशेषभावविवक्षया च धातुसंबन्धः । यदाहुः । *सामान्यपुषेरवयपुषिः *कर्म भवतीति । कश्चित्तु सामान्यविशेषविवक्षयात्रापि क्रियाभेदोऽस्तीति तुल्यकर्तृकत्वम् प्राक्कालत्वं च तेन क्त्वापि निमूलं कषित्वा कषतीत्यादि मन्यते॥ ६० ॥ कृग्ग्रहोऽकृतजीवात् ॥ ५ । ४ । ६१ ॥ अकृत जीव इत्येताभ्यां व्याप्याभ्यां पराभ्यां यथासंख्यं करोतिगृह्णातिभ्यां तस्यैव धातोः संबन्धे सति णम् वा भवति । अकृतकारं करोति, अकृतं करोतीत्यर्थः । जीवग्राहं गृह्णाति, जीवन्तं गृह्णातीत्यर्थः ॥ ६१ ॥ निमूलात्कषः ॥ ५ । ४ ।

॥—क्रियाविशेषणत्व इति । स्थिते तु न क्रियाविशेषणत्व भावसाधनत्वेन सामानाधिकरण्याभावात् ॥ गोष्पद प्रातीत्यादौ कर्तृसाधनत्वात् सामानाधिकरण्ये सति क्रियाविशेषणत्वमुपपद्यते ॥—एवं सर्वे णमन्ता इति । एतत्सूत्रोपात्ता सीताप्रमित्यादयः ॥-गात्रपुरुष—॥—अन्तर्भूतण्यर्थादिति । एतेन उपपदयो कर्मत्वमानीतम् ॥—शुष्कचूर्ण—॥—शुष्कपेषमित्यादिक्रियाविशेषणेभ्यः 'अव्ययस्य' इत्यमो लुप् ॥—तदुपपदताऽस्त्येवेति । शुष्कलक्षणविशेषकर्मोपपदता ॥—सामान्यविशेषभावविवक्षयेति । अन्यथा पर्यायाणा प्रयोगो हि यौगपद्येन नेष्यते इत्यर्थाभेदात्तस्यैव धातोरनुप्रयोगो न स्यात् ॥—सामान्यपुषेरिति । तैः स्वस्नेहनेति सूत्रे एतदुक्तमत्र तु प्रकरणात्कथितामिति पुषेरिति सशोध्य पिषेरिति न कर्तव्यम् । सामान्यपिषेरनुप्रयोगे पिनष्टीत्यत्र ॥-कर्म भवतीति । ननु शुष्कपेषमित्यादि क्रियाविशेषण तत्कथ कर्म्म भवति । सत्यम् । तन्मते क्रियाविशेषणस्यापि कर्मता

६२ ॥ निमूलाद् व्याप्यात्पराल्कपस्तस्यैव धातोः संबन्धे सति णम् वा भवति । निमूलमित्यत्रात्ययेऽव्ययीभावः । निर्गतानि मूलान्यस्येति बहुव्रीहिर्वा । निमूलकाषं कषति । निमूलं कषतीत्यर्थः । पक्षे निमूलस्य काषं कषति ॥ ६२ ॥ हनश्च समूलात् ॥ ५ । ४ । ६३ ॥ समूलशब्दाद्व्याप्यात्पराद्धन्तेः कषेश्च तस्यैव धातोः संबन्धे सति णम्वा भवति । समूलमिति साकल्येऽव्ययीभावो बहुव्रीहिर्वा, समूलघातं हन्ति, समूलं हन्तीत्यर्थः। समूलकाषं कषति, समूलं कषतीत्यर्थः ॥६३॥ *करणेभ्यः ॥५।४।६४॥ करणात्कारकात्पराद्धन्तेस्तस्यैव धातोः संबन्धे सति णम् वा भवति। पाणिघातं कुड्यमाहन्ति । पादघातं शिलां हन्ति । पाणिना पादेन वाहन्तीत्यर्थः । बहुवचनं व्याप्त्यर्थम् । तेन करणपूर्वाद्धिंसार्थादपि हन्तेः *अनेनैव णम्। अस्युपघातमरीन् हन्ति । शरोपघातं मृगान् हन्ति । तथा च सति *नित्यसमासस्तस्यैव धातोरनुप्रयोगश्च सिध्यति ॥ ६४ ॥ स्वस्नेहनार्थात्पुषपिषः ॥ ५ । ४ । ६५ ॥ आत्मा आत्मीयं ज्ञातिर्धनं च स्वम् । स्निह्यते सिच्यते येनोदकादिना तत् स्नेहनम् । स्वार्थात्स्नेहनार्थाच्च करणवाचिनः पराद्यथासंख्यं पुषः पिषश्च तस्यैव धातोः संबन्धे सति णम् वा भवति । स्वपोषं पुष्णाति पुष्यति पोषति वा । एवमात्मपोषं गोपोषं महिषीपोषं पितृपोषं मातृपोषं धनपोषं रैपोषम् । स्वादिभिः पुष्णातीत्याद्यर्थः । स्नेहनार्थात्, उदपेषं पिनष्टि । एवं घृतपेषं तैलपेषं क्षीरपेषम् । उदकादिना पिनष्टीत्यर्थः ॥ ६५ ॥ हस्तार्थाद्ग्रहवर्तिवृतः ॥५।४।६६॥ हस्तार्थात्करणवाचिनः शब्दात्परेभ्यो ग्रहवर्तिवृद्भ्यस्तस्यैव धातोः संबन्धे सति णम् वा भवति । हस्तग्राहं गृह्णाति । एवं करग्राहम् । पाणिग्राहम् । हस्तेन गृह्णातीत्यर्थः । वर्तिवृत इति वर्ततेर्ण्यन्तस्याण्यन्तस्य च ग्रहणम् । हस्तवर्तं वर्तयति । करवर्तम् । पाणिवर्तम् । हस्तेन वर्तयतीत्यर्थः । हस्तवर्तं वर्तते । करवर्तम् । पाणिवर्तम् । हस्तेन वर्तत इत्यर्थः । अण्यन्तान्नेच्छन्त्येके ॥ ६६ ॥ *बन्धेर्नाम्नि ॥ ५ । ४ । ६७ ॥ बन्धेरिति प्रकृतिर्नामविशेषणं च । बन्धेर्बन्ध्यर्थस्य बन्धनस्य यन्नाम संज्ञा तद्विषयात्करणवाचिनः पराद्बन्धेर्धातोस्तस्यैव धातोः संबन्धे सति णम् वा भवति । क्रौञ्चबन्धं बद्धः । मयूरिकाबन्धं बद्धः । मर्कटबन्धं बद्धः । गोबन्धं बद्धः । महिषीबन्धं बद्धः । अट्टालिकाबन्धं बद्धः । चण्डालिकाबन्धं बद्धः । क्रौञ्चादीनि बन्धनामधेयानि । क्रौञ्चाद्याकारो बन्धः क्रौञ्चादिरित्युच्यते । तेन बन्धेन बद्ध इत्यर्थः । केचित्तु उपपदप्रकृतिप्रत्ययसमुदायस्य क्रौञ्चबन्धमित्यादेः संज्ञात्वं मन्यन्ते व्युत्पत्तिं च क्रौञ्चेन क्रौञ्चस्य क्रौञ्चाद्वा बन्धनमित्यादि यथाकथंचित् कुर्वन्ति तन्मतसंग्रहार्थं नाम्नीति *प्रत्ययान्तोपाधित्वेन व्याख्येम् ॥ ६७ ॥ *आधारात् ॥ ५ । ४ । ६८ ॥ आधारवाचिनः पराद्बन्धेस्तस्यैव धातोः संबन्धे णम् वा भवति । चक्रबन्धं बद्धः । चारकबन्धं बद्धः । कूटबन्धं बद्धः । गुप्तिबन्धं बद्धः । चक्रादिषु बद्ध इत्यर्थः । ग्रामेबद्धः हस्तेबद्धः इति बहुलाधिकारान्न भवति ॥ ६८ ॥ *कर्तुर्जीवपुरु-

॥--करणेभ्यः ॥--अनेनैव णमिति । न तु 'हिंसार्थादेकाप्यात्' इत्यनेन ॥--नित्यसमास इति । हिंसार्थादित्यनेन तु प्रत्यये 'तृतीयोक्त वा' इति वा स्यात् ॥--बन्धेर्नाम्नि ॥ बन्धेरिति यदा प्रकृतिस्तदा स्वरूपे यदा तु नामविशेषणं तदाऽर्थे इः प्रत्ययः ॥--प्रत्ययान्तोपाधित्वेनेति । प्रत्ययान्तं चेन्नाम भवतीत्यर्थः ॥--आधारात् ॥--बहुलाधिकारान्न भवतीति । ग्रामबन्धं बद्ध इत्यादि न भवतीत्यर्थः ग्रामे बन्धं बद्ध इति तु घमि भवत्येव । आधारादित्यनेन णमि ङस्युक्तत्वात् समास स्यात् । णम् च बाहुलकान्नेष्यते ॥--कर्तुः--॥--

षान्नश्वहः ॥ ५ । ४ । ६९ ॥ कर्तृवाचिभ्यां जीवपुरुषाभ्यां पराभ्यां यथासंख्यं नशिवहिभ्यां तस्यैव धातोः संबन्धे सति णम् वा भवति । *जीवनाशं नश्यति जीवन्नश्यतीत्यर्थः । पुरुषवाहं वहति *पुरुषः प्रेष्यो भूत्वा वहतीत्यर्थः। कर्तुरिति किम् । *जीवेन नश्यति । *पुरुषं वहति ॥ ६९ ॥ ऊर्ध्वात्पूःशुषः ॥ ५ । ४ । ७० ॥ कर्तृवाचिन ऊर्ध्वशब्दात्परात्पूरः शुषश्च तस्यैव धातोः संबन्धे सति णम् वा भवति । पूरीत्यनिर्देशात्पूर्दैवादिको न चौरादिकः । ऊर्ध्वपूरं पूर्यते ऊर्ध्वः पूर्यत इत्यर्थः । ऊर्ध्वशोषं शुष्यति ऊर्ध्वः शुष्यतीत्यर्थः ॥ ७० ॥ *व्याप्याच्चेवात् ॥ ५ । ४ । ७१ ॥ व्याप्यात्कर्मणश्चकारात्कर्तुश्चेवात् इवार्थादुपमानार्थात्परा-द्धातोस्तस्यैव धातोः संबन्धे सति णम् वा भवति । सुवर्णनिधायं निहितः । सुवर्णमिव निहित इत्यर्थः । एवं रत्ननिधायं घृतनिधायम् । शाककेशं क्लिष्टः । ओदन-पाचं पक्वः । कर्तुः, काकनाशं नष्टः । काक इव नष्ट इत्यर्थः । एवं *जमालिनाशं नष्टः । अभ्रविलायं विलीनः । अभ्रमिव विलीन इत्यर्थः ॥ ७१ ॥ *उपात्किरो लवने ॥ ५ । ४ । ७२ ॥ उपपूर्वात् किरतेर्लवनेऽर्थे वर्तमानस्यान्यस्य धातोः संबन्धे सति णम्वा भवति । लवन इति वचनात् *तस्यैवेति निवृत्तम् । उपस्कारं मद्रका लुनन्ति । *विक्षिपन्तो लुनन्तीत्यर्थः । लवन इति किम् । उपकीर्य गच्छति ॥ ७२ ॥ दंशेस्तृतीयया ॥ ५ । ४ । ७३ ॥ तृतीयान्तेन योगे उपपूर्वात्तुल्यकर्तृकेऽर्थे वर्तमानाद्दंशेरन्यस्य धातोः संबन्धे सति णम्वा भवति । मूलकेनोपदंशं भुङ्क्ते । मूलकोपदंशं भुङ्क्ते । आर्द्रकेणोपदंशं भुङ्क्ते । आर्द्रकोप-दंशं भुङ्क्ते । पक्षे मूलकेनोपदश्य भुङ्क्ते । आर्द्रकेणोपदश्य भुङ्क्ते । मूलकाद्युपदंशेः कर्मापि प्रधानस्य भुजेः करणमिति तृतीयैव भवति । प्रधानक्रियोपयुक्ते हि कारके गुणक्रिया न स्वानुरूपां विभक्तिमुत्पादयितुमलमप्रधानत्वादेव यथेष्यते ग्रामो गन्तुं पक्त्वा भुज्यते ओदन इति । यदा त्ववयवक्रियापेक्षया पूर्वकालविव-क्षायां क्त्वा क्रियते तदा क्रियाभेदात् संबन्धभेदे द्वितीयापि भवति मूलकमुपदश्य भुङ्क्ते इति ॥ ७३ ॥ *हिंसार्थादेकाप्यात् ॥ ५ । ४ । ७४ ॥ हिंसा प्राण्युपघातस्तदर्थाद्धातोः संबध्यमानेन धातुना सहैकाप्यात् एककर्मकात् तृतीयान्तेन योगे तुल्यकर्तृकेऽर्थे वर्तमानात् णम् वा भवति । *दण्डेनोपघातं गाः सादयति । दण्डोपघातं गाः सादयति । खड्गेन प्रहारं खड्गप्रहारं शत्रून् विजयते । दण्डेनाताडं दण्डाताडं गाः कलयति । पक्षे दण्डेनोपहत्येत्यादि । हिंसार्थादिति किम् ।

---

जीवनाशमिति । जीवतीत्यच् । तस्य कर्तुर्नशनम् ॥— पुरुषः प्रेष्यो भूत्वेति । पृणाति प्रेषणमित्यत्र पुरुष क्रियाशब्द प्रेष्यपर्याय । अनेकार्थत्वाद्धातूनाम् ॥—जीवेन नश्यतीति । इदमर्थ-कथन प्रयोगस्तु अस्मिन्नर्थे जीवनाश नश्यतीत्यादि न भवति । जीवेन नाश घजन्त नश्यतीति भवति न तु जीवनाशम् ॥—पुरुषं वहतीति । पुरुषस्य वाहमिति तु भवति न तु पुरुषवाहमिति ॥—व्याप्याच्चेवात् ॥—जमालिनाशमिति । जमतीत्यच् । जम भोजनकारक अलति वारयति इत्येवशील तदा ' अजातेः शीले ' णिन् । अलिरिव वा तस्वपुष्पैकदेशचुम्बनात् । जमश्चासाव लिश्च तस्येव नशनम् ॥—उपात्किरो—॥—तस्यैवेति निवृत्तमिति । इत ऊर्ध्वं तस्यैवान्यस्यैवेति कामचारः पर यत्र तस्येत्र तत्र क्रियाविशेषणमेव ॥—विक्षिपन्त इति । पूर्व विक्षिपन्त. पश्चाल्लुनन्तीत्यर्थं ॥—हिंसार्थादे—॥—दण्डेनोपघातमिति । दण्डशब्दात् हेतौ करणे वा तृतीया । ननु करणोपपदात् हिंसार्थादपि ' करणेभ्यः ' इति प्रवर्तते । तत्र च तस्यैवेत्युक्तमिति तस्यैवेति व्यावृत्ति प्राप्नोति । सत्यम् । ' करणेभ्य. ' इति सूत्रस्य तस्यैवेति व्यावृत्तिर्गत्यर्थस्यापि हन्तेश्चरितार्थो इति करणोपपदादपि

*नाम्ना ग्रहादिशः ॥ ५ । ४ । ८३ ॥ नामशब्देन द्वितीयान्तेन योगे तुल्यकर्तृकेऽर्थे वर्तमानाद्ग्रहेरादिशश्च धातोः संबन्धे णम् वा भवति । नामानि ग्राहम् नामग्राहमाह्वयति । *नाम्नी देवदत्तो ग्राहम् नामग्राहं देवदत्त आह्वयति । नामान्यादेशं नामादेशं ददाति । पक्षे नाम गृहीत्वा दत्ते । नामादिश्य दत्ते ॥ ८३ ॥ कृगोऽव्ययेनानिष्टोक्तौ क्त्वाणमौ ॥ ५ । ४ । ८४ ॥ अव्ययेन योगे करोतेस्तुल्यकर्तृकेऽर्थे वर्तमानादनिष्टायामुक्तौ गम्यमानायां धातोः संबन्धे क्त्वाणमौ भवतः । ब्राह्मण पुत्रस्ते जातः किं तर्हि वृषल नीचैः कृत्वा नीचैःकृत्य कथयसि । किं तर्हि नीचैर्वृषल कारं वृषल नीचैःकारं कथयसि । उच्चैर्नाम प्रियमाख्येयम् । ब्राह्मण कन्या ते गर्भिणी किं तर्हि वृषल उच्चैः कृत्वा उच्चैःकृत्य कथयसि । किं तर्हि उच्चैर्वृषल कारं वृषलोच्चैःकारं कथयसि । नीचैर्नामाप्रियमाख्येयम् । अनिष्टोक्ताविति किम् । उच्चैः कृत्वाचष्टे ब्राह्मण पुत्रस्ते जात इति । नीचैः कृत्वाचष्टे ब्राह्मण कन्या ते गर्भिणी जातेति । अव्ययेनेति किम् । ब्राह्मण पुत्रस्ते जातः किं तर्हि वृषल मन्दं कृत्वा कथयसि । ब्राह्मण कन्या ते गर्भिणी जातेति किं तर्हि वृषल तारं कृत्वा कथयसि । वाधिकारेणैव पक्षे क्त्वायाः सिद्धौ समासार्थं तद्विधानम् । अन्यथा हि णम एव पाक्षिकः समासः स्यात् न तु क्त्वः । क्त्वा चेत्यकृत्वा णम्विधानमुत्तरत्रोभयानुवृत्त्यर्थम् ॥ ८४ ॥ *तिर्यचापवर्गे ॥ ५ । ४ । ८५ ॥ अपवर्गः क्रियासमाप्तिः समाप्तिपूर्वको वा विरामः त्यागो वा । तस्मिन्गम्यमाने तिर्यच् इत्यनेनाव्ययेन योगे करोतेस्तुल्यकर्तृकेऽर्थे वर्तमानात् धातोः संबन्धे क्त्वाणमौ प्रत्ययौ भवतः । तिर्यक्कृत्वा *तिर्यक्कृत्य तिर्यक्कारमास्ते । समाप्य विरम्य वा उत्सृज्य वास्ते इत्यर्थः । अपवर्ग इति किम् । तिर्यक्कृत्वा काष्ठं गतः ॥ ८५ ॥ *स्वाङ्गतश्च्व्यर्थे नानाविनाधार्थेन भुवश्च ॥ ५ । ४ । ८६ ॥ स्वाङ्गमुक्तलक्षणम् । तस्प्रत्ययान्तेन स्वाङ्गेन च्व्यर्थवृत्तिभिर्नानाविनाभ्यां धार्थप्रत्ययान्तैश्च योगे भुवः कृगश्च तुल्यकर्तृकेऽर्थे वर्तमानात् धातोः संबन्धे क्त्वणमौ भवतः । वचनभेदाद्धातुप्रत्यययथासंख्यं नास्ति । मुखतो भूत्वा मुखतोभूय मुखतोभावमास्ते । मुखतः कृत्वा मुखतःकृत्य मुखतःकारमास्ते । पार्श्वतो भूत्वा पार्श्वतोभूय पार्श्वतोभावं शेते । पार्श्वतः कृत्वा पार्श्वतःकृत्य पार्श्वतःकारं शेते । अनाना नाना भूत्वा गतः *नाना भूत्वा नानाभूय नानाभावं गतः । अनाना नाना कृत्वा गतः नाना कृत्वा नानाकृत्य नानाकारं गतः । एवं विना भूत्वा विनाभूय विनाभावम् गतः । विना कृत्वा विनाकृत्य विनाकारं गतः । धार्थो धाप्रमञ्जेधाध्यमञः । द्विधा भूत्वा द्विधाभूय द्विधाभावमास्ते । द्विधा कृत्वा द्विधाकृत्य द्विधाकारं गतः । द्वैधं भूत्वा द्वैधंभूय द्वैधभावमास्ते । द्वैधंकृत्वा द्वैधंकृत्य द्वैधकारं गतः । द्वेधा भूत्वा द्वेधा भूय द्वेधाभावमास्ते । द्वेधा कृत्वा द्वेधाकृत्य द्वेधाकारं गतः । ऐकध्यं भूत्वा ऐकध्यंभूय ऐकध्यंभावमास्ते । ऐकध्यं कृत्वा ऐकध्यंकृत्य ऐकध्यंकारं गतः । धणस्तु प्रकारविचालवदर्थत्वेन*अधार्थत्वात् अव्ययाधिकाराच्च निरासः । अस्यापि ग्रहणमित्यन्ये । अव्ययाधिकारादेव च मुखे तस्यतिः मुखतः कृत्वा गत इत्यत्र न भवति । स्वाङ्गेति किम् । सर्वतो भूत्वास्ते । तसिति

—नाम्ना ग्रहा—॥—नाम्नी देवदत्तो ग्राहमिति । यस्य येनाभिसम्बन्धो दूरस्थस्यापि तेन स इति न्यायाद्देवदत्तपदेन व्यवधानेऽपि भवति ॥—तिर्यचापवर्गे ॥—तिर्यक्कृत्येति । समाहृयादिद्योतकात्तिर्यक्शब्दात्प्रथमा । वाचकाद्द्वितीया । तिर्यक् समाप्ति कृत्वा । द्योतकपक्षे समुदायेनार्थः कथ्यते तिर्यक्कार लक्षणेन ॥—स्वाङ्गतश्च्व्यर्थे—॥—नानाभूत्वेति । च्व्यन्ताना 'गतिकन्य-' इति नित्यं स इत्यत्राच्व्यन्ता एव ॥—अधार्थत्वादिति । धार्थो हि प्रकारो विचालो वाऽयं तु तद्वति ॥—अव्ययाधिकाराच्चेति । अव्ययत्वाभावश्चास्य 'अधणूतस्वा'—इत्यत्र वर्जनात् ॥ मुखतः कृत्वेति ।

कर्मत्वं तुल्यकर्तृकत्वं च नास्ति अनुपपदत्वात्...
इति किम्। इच्छन्करोति। अत्र करोतीच्छत्योर्लक्ष्यलक्षणभावो न तु कर्मक्रियाभावः। तुल्यकर्तृक इति किम्। इच्छामि भुङ्क्ताम्। ५।४।८९॥ ८

शक्तधृषज्ञारभलभसहार्हग्लाघटास्तिसमर्थार्थे च तुम्॥ ५।४।९०॥ शक्याद्यर्थेषु धातुषु समर्थार्थेषु नामसु च चकारादिच्छार्थेषु धातुषूपपदेषु कर्मभूताद्धातोस्तुम् प्रत्ययो भवति। शक्नोति पारयति वा भोक्तुम्। धृष्णोत्यध्यवस्यति वा भोक्तुम्। जानाति वेत्ति वा भोक्तुम्। आरभते प्रक्रमते वा भोक्तुम्। लभते विन्दते वा भोक्तुम्। सहते क्षमते वा भोक्तुम्। अर्हति प्राप्नोति वा भोक्तुम्। ग्लायति म्लायति वा भोक्तुम्। घटते युज्यते वा भोक्तुम्। अस्ति विद्यते वा भोक्तुम्। समर्थोऽलं प्रभवति ईष्टे वा भोक्तुम्। समर्थार्थप्रतीतावपि भवति। द्रष्टुं चक्षुः योद्धुं धनुः। शक्त्या भुज्यते सामर्थ्येन भुज्यते इत्यादौ त्वनभिधानान्न भवति। इच्छार्थेषु, इच्छति भोक्तुम्। भोक्तुं वाञ्छति। भोक्तुं वष्टि। भोक्तुमभिलषति। समर्थार्थत्वादेव सिद्धे शकग्रहणमसमर्थार्थम्। कर्मण इति च सामर्थ्याच्छकादिष्वर्हपर्यन्तेषु इच्छार्थेषु चोपपदेषु सत्सु संबन्धनीयम्। अन्ये तु शकादिषु घटान्तेषु स्वरूपोपपदेष्वेवेच्छन्ति न तदर्थेषु। अनादर्थ्यार्थमक्रियोपपदार्थं चेदं प्रस्तूयत इति॥९०॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ पञ्चमस्याध्यायस्य चतुर्थः पादः॥४॥ पञ्चमोऽध्यायः समाप्तः॥ ५॥ क्षुण्णाः क्षोणिभृतामनेककटका भग्नाथ धारा ततः कुण्ठः सिद्धपतेः कृपाण इति रे मा मंसत क्षत्रियाः॥ आरूढप्रबलप्रतापदहनः संप्राप्तधाराश्चिरात् पीत्वा मालवयोषिदश्रुसलिलं हन्तायमेधिष्यते॥ १॥

से' 'दीर्घङ्याब्-'लुक् भ्वादित्वात् 'अभ्वादेः-'इति न दीर्घः। मुखत करण पूर्व मुखे उपक्षिणो प. स कृत्वा गत इत्यर्थ.॥-तूष्णीमा॥—तूष्णी भूत्वेति। तूष्णींशब्दो मौने तद्वति च तेनायमर्थो मौनेन सह भूत्वा मौनवान् वा भूत्वास्त इति॥—आनुलोम्येऽन्वचा॥—अव्ययेनेति। अन्वचित्यस्य दिक्शब्दत्वाऽभावाद्धाप्रत्ययाऽभावेऽपि स्वरादिपाठादव्ययत्वम्॥—इच्छार्थे कर्मण—॥—उपपदे इति। उप समीपे पदमिति कृत्वा इच्छार्थेऽग्रेऽपि स्थिते भवति॥—भोजको व्रजतीति। अत्र कर्मतापि नास्तीति व्यावृत्तेर्बीजविकलत्वमिति न वाच्यम्। यतो व्रजति कोऽर्थो बुद्ध्या प्राप्नोति। किं तत् कर्मतापन्नं भावि भोजन यतो भोजक इत्यत्र भविष्यदर्थे णक। यद्वा गत्यर्थत्वात् ज्ञानार्थो वा ततो व्रजतीति कोऽर्थोऽध्यवस्यति जानाति इत्येक एवार्थः॥—शकधृषज्ञा—॥ अत्र तुल्यकर्तृक इति यथासंभव योज्यम्॥—शक्नोतीति। समाप्नोतीत्यर्थ इति समर्थार्थद्वारा न सिध्यतीति शकिग्रहणम्॥ इत्याचार्य० पञ्चमाध्यायस्य चतुर्थः पादः समाप्तः॥

# ॥ अथ षष्ठोऽध्यायः ॥

*तद्धितोऽणादिः ॥ ६ । १ । १ ॥ अणादिः प्रत्ययो य इत ऊर्ध्वं वक्ष्यते स तद्धितसंज्ञो विज्ञेयः । औपगवः । कापटवः । तद्धितप्रदेशाः 'ऋतो रस्तद्धिते' (१-२-२६) इत्यादयः ॥ १ ॥ *पौत्रादि वृद्धम् ॥ ६ । १ । २ ॥ परमप्रकृतेः *अपत्यवतो यत्पौत्राद्यपत्यं तद्वृद्धसंज्ञं भवति । गर्गस्यापत्यं पौत्रादि*गार्ग्यः । एवं वात्स्यः । पौत्रादीति किम् । अनन्तरापत्ये*गार्गिः वात्सिरित्येव भवति । पौत्रस्यापत्यत्वात् तदाद्यपत्यमेव विज्ञायते । वृद्धप्रदेशाः 'वृद्धाद्यूनि' (६-१-३०) इत्यादयः ॥ २ ॥ *वंश्यज्यायोभ्रात्रोर्जीवति प्रपौत्राद्यस्त्री युवा ॥ ६ । १ । ३ ॥ वंशे भवो *वंश्यः पित्रादिरात्मनः कारणम् । ज्यायान् भ्राता वयोऽधिक एकपितृक एकमातृको वा । प्रपौत्रः पौत्रापत्यम् परमप्रकृतेश्चतुर्थः । स्त्रीवर्जितं प्रपौत्राद्यपत्यं जीवति वंश्ये ज्यायोभ्रातरि वा युवसंज्ञं भवति । गार्ग्यायणः । वात्स्यायनः । वंश्यज्यायोभ्रात्रोरिति किम् । अन्यस्मिन् जीवति गार्ग्यः । ज्यायोग्रहणं किम् । कनीयसि भ्रातरि गार्ग्यः । जीवतीति किम् । मृते गार्ग्यः । प्रपौत्रादीति किम् । पौत्रो गार्ग्यः । अस्त्रीति किम् । स्त्री गार्गी । वचनभेदः पृथग्निमित्तत्वद्योतनार्थः ॥ ३ ॥ *सपिण्डे वयःस्थानाधिके जीवद्वा ॥ ६ । १ । ४ ॥ ययोरेकः पूर्वः सप्तमः पुरुषस्तावन्योन्यस्य सपिण्डौ । वयो यौवनादि । स्थानं पिता पुत्र इत्यादि । परमप्रकृतेः स्त्रीवर्जितं प्रपौत्राद्यपत्यं वयःस्थानाभ्यां द्वाभ्यामप्यधिके सपिण्डे जीवति जीवदेव युवसंज्ञं वा भवति । *पितृव्ये पितामहस्य भ्रातरि वा वयोऽधिके जीवति जीवत् गार्ग्यस्यापत्यं गार्ग्यः गार्ग्यायणो वा । एवं वात्स्यः वात्स्यायनो वा । सपिण्ड इति किम् । *अन्यत्र गार्ग्यः । वयःस्थानाधिक इति किम् । *द्वाभ्यामन्यतरेण वा न्यूने गार्ग्यः । जीवदिति किम् । मृतो गार्ग्यः । जीवतीत्येव । मृते गार्ग्यः । प्रपौत्रादीत्येव ।

---

॥—तद्धितोऽणादि । तस्मै लौकिकवैदिकशब्दसंदर्भाय ताभ्य प्रकृतिभ्यो वा हित । आर्य मतं जैनेन्द्रस्य । द्वितीयमुत्पलस्य । 'हितादिभि' इति समास ॥—पौत्रादि वृद्धम् ॥— अपत्यवत इति विशेष्यं परमप्रकृतेरिति विशेपणम् अन्यथा परमप्रकृतेर्विशेष्यत्वे अपत्यवत इत्यस्य स्त्रीत्वं स्यात् परमा प्रकृष्टा प्रकृति परमप्रकृतिर्यस्मात्परोऽन्यो न ज्ञायते । यद्यपि पितामहप्रपितामहादिनीत्या वृद्धसंतानस्यानन्त्यं तथापि यन्नाम्ना कुलं व्यपदिश्यते स परमप्रकृतिरित्युच्यते ॥—गार्ग्य इति । बाह्वादीञो बाधको गर्गादियञ् ॥—गार्गिरिति । अत इञो बाधक ऋष्यण् प्राप्नोति तद्बाधनाय बाह्वादित्वादिञ् ॥—वंश्यज्यायोभ्रा ॥—वंश्य इति आदिपुरुषे रूढिवशाद्वर्त्तते ॥—सपिण्डे वयःस्थाना—॥—पितृव्ये इति । न वाच्यं पितृव्ये वाच्ये वश्यद्वारा पूर्वेणैव भविष्यति । पितृव्यस्य वश्यताया अभावात् । पित्रादिरात्मन. कारणमिति ह्युक्तम् ॥—अन्यत्रेति । मातुलादावित्यर्थ. ॥—द्वाभ्यामन्यतरेणेति । लघौ पितृव्यजे द्वाभ्यां न्यूनत्व लघौ पितृव्ये जीवत्यऽन्यतरेण न्यूनत्वमिति

*पौत्रो गार्ग्यः । अस्त्रीत्येव । स्त्री गार्गी ॥ ४ ॥ *युववृद्धं कुत्सार्चे वा ॥ ६ । १ । ५ ॥ युवा च वृद्धं चापत्यं यथासंख्यं कुत्सायामर्चायां च विषये युवसंज्ञं वा भवति । यूनः कुत्सायां पक्षे*युवत्वं निवर्त्यते तत्र वृद्धप्रत्ययेनाभिधानं भवति । गार्ग्यस्यापत्यं युवा कुत्सितो गार्ग्यः गार्ग्यायणो वा जाल्मः । गुर्वायत्तो भूत्वा स्वतन्त्रो यः स एवमुच्यते । कुत्साया अन्यत्र गार्ग्यायण एव । वृद्धस्य चार्चायां पक्षे युवत्वं प्राप्यते । तत्र युवप्रत्ययेनाभिधानं भवति । गर्गस्यापत्यं वृद्धमर्चितं तत्रभवान् गार्ग्यायणः गार्ग्यो वा । अर्चाया अन्यत्र गार्ग्य एव । अस्त्रीत्येव । गर्गस्यापत्यं पौत्रादि स्त्री गार्गी ॥ ५ ॥ *संज्ञा दुर्वा ॥ ६ । १ । ६ ॥ या संज्ञा संव्यवहाराय हठान्नियुज्यते सा दुसंज्ञा वा भवति । देवदत्तीयाः । दैवदत्ताः । सिद्धसेनीयाः । सैद्धसेनाः । दुप्रदेशाः 'दोरीयः' ( ६–३–३१ ) इत्यादयः ॥ ६ ॥ *त्यदादिः ॥ ६ । १ । ७ ॥ सर्वाद्यन्तर्गतास्त्यदादयो दुसंज्ञा भवन्ति । त्यदीयम् । तदीयम् । यदीयम् । इदमीयम् । अदसीयम् । एतदीयम् । एकीयम् । द्वीयम् । युष्मदीयम् । अस्मदीयम् । किमीयम् । त्यादायनिः । यादायनिः ॥ ७ ॥ *वृद्धिर्यस्य स्वरेष्वादिः ॥ ६ । १ । ८ ॥ यस्य शब्दस्य *स्वरेषु मध्ये आदिः स्वरो वृद्धिसंज्ञो भवति स शब्दो दुसंज्ञो भवति । आम्रगुप्तायनिः । शालगुप्तायनिः । आम्बष्ठ्यः । शालीयः । मालीयः । *ऐतिकायनीयः । औपगवीयः । वृद्धिरिति किम् । दत्तस्येम दात्ताः । अत्र स्वरेष्वादिः*अकारोऽस्तीति दुसंज्ञा स्यात् शालीया इत्यादिषु तु न स्यादिति वृद्धिग्रहणम् । यस्येति संज्ञिनिर्देशार्थम् । अनेन हि स इत्याक्षिप्यते । स्वरेष्विति व्यञ्जनानपेक्षया बुद्धिसंनिकृष्टस्वरसंनिवेशापेक्षमादित्वं यथा विज्ञायेतेत्येवमर्थम् । तेन व्यञ्जनादेरपि दुसंज्ञा सिद्धा भवति । आदिरिति किम् । सभासन्नयने भवः साभासंनयनः ॥ ८ ॥ *एदोद्देश एवेयादौ ॥ ६ । १ । ९ ॥ देश एव वर्तमानस्य यस्य शब्दस्य स्वरेष्वादिः स्वर एकार ओकारो वा भवति स *ईयादौ प्रत्यये विधातव्ये दुसंज्ञो भवति । *सैपुरिका । सैपुरिकी । स्कौनगरिका । स्कौनगरिकी । सेपुरं स्कोनगरं च वाहीकग्रामौ । देश इति किम् । *दैववाचकं नन्द्यध्ययनम् । एवकारोऽन्यत्र वृत्तिव्यवच्छेदार्थः । तेन देशेऽन्यत्र च वर्तमानस्य न भवति । क्रोडं नामोदग्ग्रामस्तत्र भवः क्रौडः । देवदत्तं नाम वाहीकग्रामस्तत्र भवो

---

॥—पौत्रो गार्ग्य इति । गर्गस्यापत्यमनन्तरमपि वृद्धत्वोपचारात् गार्ग्यस्तस्यापत्यं युवेति कृते गार्ग्यायण इति प्राप्नोति तत्र भवति ॥—युववृद्धम्—॥—युवत्वं निवर्त्यत इति । 'वश्यज्याय '—इत्यनेन नित्य प्राप्तम् ॥—संज्ञा दुर्वा ॥ सज्ञायतेऽनया स्थादित्वात्क । बाहुलकात् स्त्रीत्वम् । संज्ञान वा । 'उपसर्गादात' इत्यण् ॥—त्यदादिः ॥ भवदन्यैर्नोदाहृत इत्यस्माभिरपि नोदाहृत प्रयोगस्तु भावतायनि ॥—वृद्धिः—॥—स्वरेष्विति । स्वरौ च स्वराश्च एकशेषे । शालाया भवो जातो वा 'दोरीय ' ॥—आम्बष्ठ्य इति । आम्बष्ठाना राष्ट्रस्य राजा । आम्बष्ठस्य राज्ञोऽपत्यं वा । 'दुनादि '—इति ञ्य ॥—ऐतिकायनीय इति । इतिकस्यापत्यं वृद्ध नडादायनण् । तस्य च्छात्र इति कृते 'गोत्राददण्ड '—इत्यकञ् न शिष्यवर्जनात् । ततो दोरीय । एवमौपगवीय ॥—अकारोऽस्तीति । स्वरेषु हि आदौ अकार स चात्रास्ति शालीया इत्यादिषु तु आदिस्वरोऽकारो नास्ति किन्तु द्वितीय आकार इति न स्यात् ॥—एदो—॥—ईयादाविति । 'ईय· स्वसुश्च ' 'जातेरीय सामान्यवति ' इत्यादेरीयस्य न ग्रहस्तेषु दुसंज्ञानिबन्धनकार्याभावात् ॥—सैपुरिकेति । सिन्वन्तीति विच् गुण सया पुर सेपुर तत्र भवा 'व्यादिभ्यो णिकेकणौ ' इत्यधिकारे 'वाहीकेषु ग्रामात् ' ॥—दैववाचकमिति । देवान् वक्ति बाहुलकात् णक । देववाचकेन कृत प्रोक्त वा कृते तेन प्रोक्ते वा अण् ॥ अवश्य नन्दतीति 'णिन्चावश्यक '—इति णिन् । नन्दिनोऽध्ययन नन्दन्ति भव्य-

दैवदत्तः । क्रोडशब्दः स्वाङ्गेऽपि वर्तते । देवदत्तशब्दः पुंस्यपि क्रियाशब्दश्च । ईयादाविति किम् । *आयनिञादौ न भवति ॥ ९ ॥ *प्राग्देशे ॥ ६ । १ । ॥ १० ॥ प्राग्देशे वर्तमानस्य यस्य शब्दस्य स्वरेष्वादिः स्वर एकार ओकारो वा भवति स ईयादौ प्रत्यये विधातव्ये दुसंज्ञो भवति । कः पुनः प्राग्देशः यः शरावत्याः सरितः *पूर्वोत्तरेण वहन्त्याः पूर्वतो दक्षिणतो वा भवति । यस्तु पश्चिमत उत्तरतो वा स उदक् । यदाहुः—प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा । विदुषां शब्दसिद्ध्यै या सा वः पायाच्छरावती ॥ १ ॥ एणीपचने भव एणीपचनीयः । गोनर्दीयः । भोजकटीयः । कोशट्टक्षीयः । *गोमयह्रदीयः । एकचक्रकः । क्रोडं नाम प्राग्ग्रामस्तत्र भवः क्रोडीयः । देवदत्तं नाम प्राग्ग्रामस्तस्य काश्यादिपाठात् णिकेकणौ । दैवदत्तिका । दैवदत्तिकी । पूर्वकं देशग्रहणम् *एवकारेण संबद्धमिति पुनरिह देशग्रहणम् । *देश एवेति नियमनिवृत्त्यर्थं वचनम् ॥ १० ॥ *वाद्यात् ॥ ६ । १ । ११ ॥ वा इति च आद्यादिति च द्वितयमधिकृतं वेदितव्यम् । तत्र वाधिकारादित ऊर्ध्वं वक्ष्यमाणाः प्रत्यया विकल्प्यन्ते । तेन पक्षे यथाप्राप्तं वाक्यं समासश्च भवति । उपगोरपत्यम् । उपग्वपत्यम् इति । *उत्सर्गरूपस्तु तद्धितोऽपवादविषये 'पीलासाल्वामण्डूकाद्वा' (६–१–६८) इत्यादौ वाग्रहणान्न भवति । आद्यादित्यधिकारात्सूत्रे यदादौ निर्दिष्टं तस्मात्प्रत्ययो भवति नान्यस्मात् । तेन 'सास्य'—(६–२–९८) इत्यधिकारे देवतेत्यादौ सेति प्रकृतिरस्येति प्रत्ययार्थो*व्यवस्थितो भवति । इन्द्रो देवतास्य ऐन्द्रम् हविः । ऐन्द्रो मन्त्रः ॥ ११ ॥ *गोत्रोत्तरपदाद्गोत्रादिवाजिह्वाकात्यहरितकात्यात् ॥ ६ । १ । १२ ॥ गोत्रमपत्यम् । जिह्वाकात्यहरितकात्यवर्जिताद्गोत्रप्रत्ययान्तोत्तरपदात् यद्गोत्रप्रत्ययान्तमुत्तरपदं तस्मादिव वक्ष्यमाणः प्रत्ययो भवति । यथेह ईयो भवति चारायणीयाः *पाणिनीयाः जैमिनीयाः रौढीयाः तथा कम्बलचारायणीयाः ओदनपाणिनीयाः कडारजैमि-

---

प्राणिनोऽनया नन्दी चासावध्ययनं च इति वा ॥—आयनिञादाविति । उपचारात् सेपुरस्थ पुरुषोऽपि सेपुरस्तस्यापत्यमवृद्धादायनिञ् । न च वक्तव्यं देशे एव न वर्तते इति मुख्याभिधेयापेक्षया देशे एव वर्तते इत्युक्तमन्यथा सर्वेऽपि शब्दा उपचारेण स्वार्थं त्यजन्त्येव ॥—प्राग्दे—॥ प्राङ् चासौ देशश्च प्राचा देश इति वा ॥—पूर्वोत्तरेणेति । पूर्वावयवयोगात्पूर्वम् उत्तरावयवयोगादन्तरालमुत्तरं पूर्वं च तदुत्तर च ॥ ईशानतो नैर्ऋतं गच्छति ॥—गोमयह्रदीय इति । वाहीकेषु बाधक 'कखोपान्त्य'—इति ईय । नतु प्राचीति क्रियता देशाधिकारे सति किं पुनर्देशग्रहणेनेत्याह—एवकारेण संबद्धमिति । तदनुवृत्तावेवकारोऽप्यनुवर्तेत तन्निवृत्त्यर्थं पुनर्ग्रहणमित्यर्थ । ननु प्राचीति सूत्रकरणसामर्थ्यादेवकाररहित एव देश इत्यनुवर्तिष्यते । यदि ह्येवकारसबद्धं देश इत्यनुवर्त्तिष्यते तदा प्राचीत्येतदपि न कुर्यात्पूर्वेण सामान्येन सिद्धत्वात् । सत्यम् । प्राचीति कृते सूत्रसामर्थ्यात्प्राचि कालेऽपि वर्तमानस्य दुसंज्ञा स्यादित्यप्याशङ्का स्यादिति देशग्रहणम् । पूर्वसूत्रे सामान्ये देशे दुसंज्ञा सामान्यमध्ये विशेषो त्रुटित एव तत किं वचनेनेत्याह—देश एवेति ॥—वाद्यात् । नन्वत्र यथा वक्ष्यमाणतद्धितप्रत्ययाना विकल्पनात् पक्षे वाक्यसमासौ दृश्येते तथा कथमपवादप्रत्ययाना विकल्पने पक्षे नोत्सर्गप्रत्यय इत्याह—उत्सर्गेत्यादि ॥—व्यवस्थितो भवतीति । आद्यादिति विना तु अस्येति प्रकृतिर्देवतार्थे इत्यपि स्यात् ॥—गोत्रो—॥—परमश्चासौ गार्ग्यश्च परमगार्ग्यस्तस्यापत्यं पारमगार्ग्यायण इति न भवति शैषिकेऽर्थे सूत्रस्य प्रवृत्तत्वात् । शैषिक कथं लभ्यते इति चेत् । सत्यम् ॥ ईयादावित्यधिकारे ईयस्यादिरीय आदिरस्येति च समासात् ॥—पाणिनीया इति । पणनं पण । 'पणेर्माने' अल् । पणोऽस्यास्तीति पणी । 'अतोऽनेकस्वरात्' इन् । पणिनोऽपत्यं वृद्धं । 'ङसोपत्ये' अण् पाणिनस्यापत्यं युवा । 'अत इञ्' । पाणिनेरिमे च्छात्रा ईयविषये 'यूनि लुप्' इति इञो लुपि

नीयाः घृतरौढीया इत्यादावपि भवति। यथा चेहाञ् भवति *शाकलाः *काण्वाः दाक्षाः पान्नागाराः तथा त्रैहिशाकलाः पैङ्गलकाण्वाः कापिलदाक्षाः क्षैरपान्नागारा इत्यत्रापि भवति। अजिह्वाकात्यहरितकात्यादिति किम्। यथेहेयो भवति कात्यस्य छात्राः कातीयास्तद्वदिह न भवति। जिह्वाचपलः कात्यो जिह्वाकात्यः। हरितभक्षः कात्यो हरितकात्यः तस्येमे छात्राः जैह्वाकाताः हारितकाताः॥ १२॥ *प्राग् जितादण्॥ ६। १। १३॥ प्राग् जितशब्दसंकीर्तनात् पादत्रयं यावत् येऽर्था अपत्यादयस्तेष्वपवादविषयं परित्यज्याण् प्रत्ययो वा भवति। उपगोरपत्यमौपगवः। मञ्जिष्ठया रक्तं वस्त्रं माञ्जिष्ठम्। भिक्षाणां समूहो *भैक्षम्। अश्मनो विकार आश्मः। सुघ्ने भवः सौघ्नः। णकारो वृद्ध्यर्थः। *अधिकारः परिभाषा विधिर्वाऽयम्। अधिकारपक्षे प्राग्जितादित्युत्तरार्थम्। अन्यथेकणित्यादिवदणित्येव सिद्धम्॥ १३॥ धनादेः पत्युः॥ ६। १। १४॥ धनादेर्गणात्परो यः पतिशब्दस्तदन्ताद्धनपतीत्येवमादेः प्राग्जितीयेऽर्थेऽण् प्रत्ययो वा भवति। धनपतेरपत्यं तत्र भवस्तत आगतो वा धानपतः। आश्वपतः। राष्ट्रपतेरिदं राष्ट्रपतम्। धान्यपतम्। प्राणपतम्। धन अश्व गज शत गण कुल गृह पशु धर्म धन्वन् सभा सेना क्षेत्र आधि राष्ट्र धान्य प्राण इति धनादिः। केचित्तु गृहसेनाशब्दौ न पठन्ति। तन्मते गार्हपत्यं सैनापत्यम् इत्युत्तरेण ञ्य एव। पत्युत्तरपदलक्षणस्य ञ्यस्य राष्ट्रादिषु त्रिषु 'दोरीयः' (६-३-३१) इतीयस्य चापवादोऽयम्॥ १४॥ *अनिदम्यणपवादे च दित्यदित्यादित्ययमपत्युत्तरपदाञ्ञ्यः॥ ६। १। १५॥ दिति-अदिति-आदित्ययमशब्देभ्यः पत्युत्तरपदाच्च प्राग्जितीयेऽर्थे इदमर्थवर्जितेऽपत्यादावर्थे योऽणोऽपवादः प्रत्ययस्तद्विषये च ञ्यः प्रत्ययो भवति। दितेरपत्यं दैत्यः। अदितेरपत्यमादित्यः। दितिरदितिरादित्यो वा देवतास्य दैत्यम् आदित्यम् *आदित्यम्। एवं याम्यम्। पत्युत्तरपद, बृहस्पतेरपत्यं बार्हस्पत्यः। प्राजापत्यः। बृहस्पतिर्देवतास्य बार्हस्पत्यम्। एवं प्राजापत्यम्। अणपवादे च *आदित्यस्यापत्यमादित्यः। यमस्यापत्यं याम्यः। अत्र परत्वात् 'अत इञ्' (६-१-३१) इतीञ् स्यात्। वनस्पतीनां समूहो वानस्पत्यम्। अत्राचित्तलक्षण इकण् स्यात्। *ञ्यो हि प्राग्जितीयमणं बाधित्वा सावकाश इति *अणपवादग्रहणम्। अण्ग्रहणं किम्। वास्तोष्पत्यभार्यः। असत्यण्ग्रहणे * स्वापवा-

दोरीय॥—शाकला इति। शकलस्यापत्य गर्गादेर्यञ्। तस्येमे 'शकलादेर्यञ' इत्यणि 'अवर्णेवर्णस्य—इत्यनेनालोपे 'तद्धितयस्वरे—इति यलुप्। एव काण्वाः॥—प्राग्जि—॥—भैक्षमिति। औत्सर्गिकाणो बाधकस्य 'कवचि'—इतीकणो बाधको भिक्षादेरण्॥—अधिकार इति।" ननु कोऽत्र परिभाषाधिकारयोर्भेद। उच्यते। परिभाषा हि एकदेशस्थैव सकल शास्त्रमभिज्वलन्ती व्यवहितेऽपि अनन्तरोत्तरादौ प्रवर्त्तमाना न प्रतिहतशक्तिर्भवति। अधिकारस्तु नदीस्रोतोरूपतया अनन्तर एव प्रवर्त्तते न व्यवहिते। विधिरपि युज्यते एव यत प्राग्जितात्ये अर्था तेषामिह उद्देश्या सकलस्य निर्देशात्। तेनानेनैव सर्वेष्वर्थेष्वण् विधीयते। अत पक्षत्रयेऽप्यदोष इति॥—अनिद—॥—आदित्यमिति। अदितेरपत्य ञ्य। आदित्यो देवतास्येति ञ्य। 'अवर्णेवर्ण'—'तद्धितयस्वर'—इति यलोप। 'ततोऽस्या' इत्वम्। अथवा अदितिर्देवताऽस्य ञ्य आदित्यो देवतास्येति ञ्य 'अवर्णेवर्णस्य' इत्यऽकारलोप तदा यस्य लुप् न भवत्यनपत्यत्वात्॥—आदित्यस्यापत्यमिति। अदितिर्देवता अस्याऽपत्ये तु वान्ये आपत्यस्य यस्य लोप स्यात्। अत 'अद्व्यद्वाद्योर्नवा'—इत्यायनिञ पक्षे इञ् प्राप्नोति स बाध्यते॥—ञ्यो हीति। ननु च ञ्योऽप्यणपवाद इञादयोऽपि तत्र यदीञादयो ञ्य बाधित्वापि स्यु तदा ञ्यस्य कोऽवकाश इत्यनवकाशत्वात् परानपीञादीनसौ बाधेत किमणपवादग्रहणेनेत्याह—ञ्यो हीत्यादि॥ अयमर्थ 'प्राग्जितात्' इत्यनेन यो विहितोऽण् तस्यान्योऽपवादो नास्ति तत्रैतत्सूत्र सावकाश ततश्चेह आदित्यस्यापत्य वनस्पतीना समूह इत्यादावुभयप्राप्तौ असत्यणपवादग्रहणे इञादिरेव स्यात् न ञ्य॥—अणपवादग्रहणमिति। अणोऽपवादविषये ञ्यो न स्यात्। तत्राणपवाद एव स्यादित्यर्थ॥—स्वापवाद-

द्विपये‌ऽप्यस्य समावेशे सति *'तद्धितः स्वरवृद्धिहेतुः—' (३-२-५५) इत्यादिना पुंवद्भावनिषेधात् वास्तोष्पत्याभार्य इति स्यात् । अनिदमीति किम् । *आदित्यस्येदमादितीयम् । उष्ट्रपतिर्नाम वाहनम् तस्येदमौष्ट्रपतम् । 'वाहनात्'—(६-३-१७६) इत्यञ् । अकारस्य वृद्धिः '*ञिदार्षादणिञोः' (६-१-१४०) इति च प्रयोजनम् ॥ १५ ॥ *बहिषष्टीकण् च ॥ ६ । १ । १६ ॥ बहिस् इत्येतस्मात् प्राग्जितीयेऽर्थे टीकण् प्रत्ययो भवति चकाराद् ञ्यश्च । बहिर्जातो *वाहीकः । बाह्यः । बाह्या । 'प्रायोऽव्ययस्य' (७-४-६५) इति अन्त्यस्वरादिलोपः । टकारो ङ्यर्थः । वाहीकी । णकारो णित्कार्यार्थः॥१६॥ *कल्यग्नेरेयण् ॥ ६ । १ । १७ ॥ कलि अग्नि इत्येताभ्यां प्राग्जितीयेऽर्थेऽनिदम्यणपवादे च एयण् प्रत्ययो भवति । कलिर्देवतास्य कालेयम् । *आग्नेयम् । कलौ भवं कालेयम् । आग्नेयम् । कलिना दृष्टं साम कालेयम् । आग्नेयम् । कलेरिदम् कालेयम् । आग्नेयम् । अणपवादे च, कलेरागतं कालेयम् । आग्नेयम् । अत्र 'नृहेतुभ्यः'—(६-३-१५५) इत्यादिना रूप्यमयटौ स्याताम् । अन्ये तु जितार्थात्परेष्वपि प्राग्वतीयेष्वर्थेष्वेयणमिच्छन्ति । कलये हितं कालेयम् । आग्नेयम् । कलेर्निमित्तं उत्पातः संयोगो वा कालेयः । आग्नेयः ॥ १७ ॥ *पृथिव्या ञाञ् ॥ ६ । १ । १८ ॥ पृथिवीशब्दात्प्राग्जितीयेऽर्थेऽनिदम्यणपवादे च ञाञ् इत्येतौ प्रत्ययौ भवतः । पृथिव्यां भवः पार्थिवः । ञाञोः स्त्रियां विशेषः । *पार्थिवा । पार्थिवी । अणपवादे च पृथिव्या अपत्यं पार्थिवः । पार्थिवा । पार्थिवी । अत्र एयण् स्यात् । ङी*बहुषु लुप्*संघादिष्वणिति प्रयोजनमञ्विधानस्य ॥ १८ ॥ *उत्सादेरञ् ॥ ६ । १ । १९ ॥ उत्स इत्येवमादिभ्यः शब्देभ्यः प्राग्जितीयेऽर्थेऽनिदम्यणपवादे चाञ् प्रत्ययो भवति । उत्सस्येदमौत्सम् । औदपानम् । अणपवादे च, उत्सस्यापत्यम् *औत्सः । औदपानः । तरुण्या अपत्यं *तारुणः । तालुनः । पञ्चालेषु भवः

---

विषयेपीति। स्वस्यापवाद स्वापवाद तस्य तथाहि वास्तोष्पत्यभार्य इत्यत्र वास्तोष्पतिर्देवतास्या इति वाक्ये 'देवता' इत्यणपवादोऽनेन ञ्य प्राप्तस्तदपवादो 'द्यावापृथिवी'—इति य इति तस्यापवादोऽयं स्यादित्यर्थ । ननु ञ्यस्य 'द्यावापृथिवी'—इति यस्य वा को विशेष इत्याह—तद्धितः स्वरवृद्धिरिति ॥—आदित्यस्येदमिति । अदितेरपत्यमिति कर्तव्यम् अन्यथेये आपत्याभावात् 'तद्धितयस्वर—' इति लुप्त स्यात् । न वाच्य 'गोत्राददण्ड'—इतीयवाऽकञोऽकञ् स्यात् । यतस्तत्र स्वापत्यसंतानस्येति विशिष्टं गोत्र ज्ञातम् । एतच्च 'पुनर्भूपुत्र'—इति सूत्रे पुनर्भ्वायपत्यस्याऽगोत्रत्वात् गोत्राधिकारविहिता लुप् सवाषऽण् च न भविष्यतीति भणनात् ज्ञायते ॥—ञिदार्षादणिञोरिति चेति । यमस्यापत्यं वृद्धं याम्य । याम्यस्यापत्यं युवा अत इञ् । 'ञिदार्षादणिञो' इति लोपे याम्य पिता पुत्रश्च ॥—बहिषष्टीकण्च ॥—वाहीक इति । 'जातेऽर्थे' भवे तु 'यज्ञे ञ्य' इत्यधिकारे 'गम्भीरपञ्चजन'— इति ञ्य एव स्यात् न टीकण् । ञ्योऽप्यत्र जात एव । भवे तु सिद्धत्वात् ॥—कल्यग्नेरेयण् ॥—आग्नेयमिति ॥ गौणमुख्ययोरिति अग्निरिवाग्निर्यदा तदा न भवतीति भोजपरिभाषाप्रवृत्ति । एतच्च भाष्यादवयायि । एवं 'वासुदेवार्जुनादक' इत्यादावपि ॥—पृथिव्या—॥—पार्थिवेति । जातित्वेऽप्यजादित्वादाप् । यद्वा प्रत्ययद्वयविधानस्य व्याप्तिपुर सरत्वेन व्याख्यानादावित्यनेनैवाप् न तु जातिद्वारा ङी ॥—बहुषु लुबिति । पृथिव्या अपत्यानि । अनेनाञ् । 'यञञ —' इति लुप् 'ञ्यादे —' इति ङीनिवृत्तिर्न गौरादौ पृथिवीति पाठात् । 'गोश्रान्त'—इति ह्रस्वत्वे जसि पृथिवय ॥—संघादिष्विति । पृथिव्या अपत्यानि अञो लुपि पृथिवीना संघादीति विवक्षाया 'गोत्राददण्ड'—इत्यकञ्विषये 'न प्राग्जितीये'—इति अञो लुबभावे अकञ्बाधके 'संघघोषाङ्क'—इत्यणि पार्थिव ॥—उत्सा—॥—औत्स इति । अत इञ् प्राप्नोति ॥—तारुण इति । 'ङसो-

*पाञ्चालः । अत्र इञ् एयण् अकञ् च माप्नुवन्ति । *कुरोरपत्यं कौरव्य इति*ञ्यविधौ कुरुशब्दोपादानस्यानवकाशत्वात् भवति । कौरव इति त्वपत्यस्यापीदमर्थे*विवक्षायां भविष्यति । उत्तरत्र वष्कयशब्दस्य समासे प्रतिषेधादुत्साद्यन्तस्यापीह प्रत्ययः । तेन गोधेनुभ्य आगतं *गौधेनवमिति सिद्धम् । अन्यथा रूप्यमयटौ स्याताम् । उत्स उदपान विकर विनद महानद महानस महाप्राण महाप्रयाण तरुण तलुन धेनु पङ्क्ति जगती बृहती त्रिष्टुभ् अनुष्टुभ् जनपद भरत उशीनर ग्रीष्म *अच्छन्दसि पीलुकण उदस्थान देशे वृषद् अंशे वृषदंश इत्यन्ये । भल्लकीय रथन्तर मध्यंदिन बृहत् महिमन् मिहदित्यपि केचित् । सत्वत् सच्छब्दो मत्वन्तः । सत्वतोऽपत्यं तत्र भवो वा सात्वतः । अन्ये तु नागममिच्छन्ति । सातवन्तः । कुरु *पञ्चाल इन्द्रावसान उष्णिह् ककुभ् अकारान्तावेतावित्यन्ये । सुवर्ण हंसपथ वर्धमान इति उत्सादिः ॥ १९ ॥ *बष्कयादसमासे ॥ ६ । १ । २० ॥ बष्कयशब्दादसमासे वर्तमानात् प्राग्जितीयेऽर्थेऽनिदम्यणपवादे चाञ् प्रत्ययो भवति । बष्कयस्यापत्यं*बाष्कयः । असमास इति किम् । सुबष्कयस्यापत्यं सौबष्कयिः । इञेव ॥ २० ॥ *देवाद्यञ् च ॥ ६ । १ । २१ ॥ देवशब्दात्प्राग्जितीयेऽर्थेऽनिदम्यणपवादे च यञ् चकारादञ् च प्रत्ययो भवति । देवस्येदं देवादागतं वा दैव्यम् दैवम् । यञन्तादञन्ताच्च ङ्यां *दैवी वाक् । केचित्तु ञ्यप्रत्ययमपीच्छन्ति । तन्मते दैव्या ॥ २१ ॥ *अः स्थाम्नः ॥ ६ । १ । २२ ॥ स्थामन्शब्दात्प्राग्जितीयेऽर्थे अः प्रत्ययो भवति । *अश्वत्थाम्नोऽपत्यमश्वत्थामः ॥ २२ ॥ लोम्नोऽपत्येषु ॥ ६ । १ । २३ ॥ लोमन्शब्दात्प्राग्जितीयेऽपत्यलक्षणेऽर्थे अः प्रत्ययो भवति । उडुलोम्नोऽपत्यानि उडुलोमाः । शरलोमाः । उडुलोमैः । शरलोमैः । अपत्येष्विति बहुवचनात् एकस्मिन्नपत्ये द्वयोश्च बाह्वादित्वादिञेव । औडुलोमिना औडुलोमिभ्याम् ॥ २३ ॥ *द्विगोरनपत्ये यस्वरादेर्लुबद्विः ॥ ६ । १ । २४ ॥ अपत्यार्थादन्यस्मिन् प्राग्जितीयेऽर्थे उत्पन्नस्य द्विगोः परस्य यकारादेः स्वरादेश्च प्रत्ययस्य सकृल्लुप् भवति न तु द्विः । द्वयो रथयोर्द्विरथ्या वायं वोढा *द्विरथः । 'रथात्सादेश्च वोढ्ङ्गे' इत्यर्थे 'यः' (६-३-१७६) इति यः । पञ्चसु कपालेषु पञ्चकपाल्यां वा संस्कृतः पञ्चकपालः । पञ्चेन्द्राण्यः पञ्चेन्द्राणि वा देवतास्य पञ्चेन्द्रः । चतुरोऽनुयोगान् चतुरनुयोगी वाधीते चतुरनुयोगः । एवं त्रिवेदः । एण्वण् । द्विगोरिति किम् । पूर्वशालायां

ऽपत्ये' इत्येतस्य बाधको 'ङ्याप्यूङ' इत्यनेनैयण् स्यात् ॥—पाञ्चाल इति । 'ईतोऽकञ्' इत्यधिकारे भवार्थे 'बहुविषयेभ्य.' इत्यकञ्प्राप्नोति ॥—कुरोरपत्यमिति । ननु यञणपवादेऽण्यम् भवति कथ तर्हि कौरव्य इति इत्याह—कुरोरपत्यमिति ॥—ञ्यविधाविति । राष्ट्रक्षत्रियवाचकस्य 'दुनादि'—इत्यादिना ब्राह्मणवाचकस्य तु 'कुर्वादेर्ञ्य' ॥—विवक्षायां भविष्यतीति । अनेनैवाञ् प्रत्यय इति । अन्यथा किं तत्र समासप्रतिषेधेन ग्रहणवता नाम्ना इत्यनेनैव न्यायेन केवलस्य लब्धत्वात् ॥—गौधेनवमिति । 'जङ्गलधेनु'—इति वोत्तरपदवृद्धि ॥—अच्छन्दसीति । अच्छन्दसीत्यादयो ग्रीष्मादीनामर्थनिर्देशार्था सप्तम्यन्ता ॥—पञ्चाल इति । 'अमद्रस्य दिश' 'मद्रादञ्' इत्येतयो सूत्रयोर्यानि सुपाचालकादीनि दर्शितानि तानि मतान्तरेण । ते हि उत्सादौ ब्राह्मणवाचिनं पञ्चालशब्द पठन्ति । राष्ट्रवचनात्त्वकञेव । स्वमते त्वकञ् च प्राप्नुवन्तीति भणनाद्राष्ट्राकञ्प्राप्तौ उत्सादिपाठ इति अकञ्न स्यादेव—॥—बष्क ॥—बाष्कय इति । बस्कतेगोर्दर 'गयहृदयादय' । बस्कतेऽल्पक्षीरता बष्काऽच् पृषोदरादित्वात् षत्व बष्का याति 'आतो ड—' इति ड 'ङ्यापो बहुल नाम्नि' इति ह्रस्व ॥—देवाद्यञ्—॥—दैवी वागिति । 'यञो डायन्च वा' इति वा डायनि दैव्यायनीत्यपि ॥—अः स्थाम्नः ॥—अश्वत्थाम्न इति । अश्व इव तिष्ठति 'मन्वन्क्वनिप्'—पृषोदरादित्वात्सस्य त । इष्टिवशात्तदन्तविधि । एवमुत्तरत्र ॥—द्विगोर—॥—द्विरथ इति । यदा द्वयो रथयोर्वोढेति वाक्यं तदा तद्धित-

भवः *पौर्वशालः । त्र्यवयवा विद्या त्रिविद्या तामधीते त्रैविद्यः । अनपत्य इति किम् । द्वैमातुरः । पाञ्चनापितिः । यस्वरादेरिति किम् । पञ्चभ्यो गर्गेभ्य आगतं *पञ्चगर्गमयम् । *अद्विरिति किम् । पञ्चसु कपालेपु संस्कृतं पञ्चकपालं तस्येदं पाञ्चकपालम् । एवं त्रैवेदम् । प्राग्जितादित्येव । द्वौ रथौ वहति द्विरथ्यः । 'वहति'—(७-१-२) इत्यादिना यः । द्वाभ्यां नौभ्यां तरति *द्वैनाविकः ॥ २४ ॥ *प्राग्वतः स्त्रीपुंसाद् नञ् स्नञ् ॥ ६ । १ । २५ ॥ प्राग्वतो येऽर्थास्तेष्वनिदम्यणपवादे च स्त्रीशब्दात् पुंस्शब्दाच्च यथासंख्यं नञ् स्नञ् प्रत्ययौ भवतः । स्त्रिया अपत्यं स्त्रैणः । पौंस्नः । स्त्रीणां समूहः स्त्रैणम् । पौंस्नम् । स्त्रीपु भवं स्त्रैणम् । पौंस्नम् । स्त्रीणामियं स्त्रैणी । पौंस्नी । स्त्रीणां निमित्तं संयोग उत्पातो वा स्त्रैणः । पौंस्नः । स्त्रीभ्यो हितं स्त्रैणम् । पौंस्नम् । प्राग्वत इति किम् । स्त्रिया अर्हं कृत्यम्, स्त्रिया तुल्यं वर्तत इति वा, स्त्रीवत् । पुंवत् । ञकारो ञित्कार्यार्थः ॥ २५ ॥ त्वे वा ॥ ६ । १ । २६ ॥ स्त्रीशब्दात्पुंस्शब्दाच्च त्वे त्वप्रत्ययविषये भावे यथासंख्यं नञ् स्नञ् प्रत्ययौ वा भवतः । स्त्रिया भावः स्त्रैणं स्त्रीत्वं स्त्रीता । पौंस्नम् पुंस्त्वम् पुंस्ता । पुनर्वाग्रहणं प्रत्ययविकल्पार्थम् ॥ २६ ॥ *गोः स्वरे यः ॥ ६ । १ । २७ ॥ गोशब्दात् स्वरादितद्धितप्रसङ्गे यः प्रत्ययो भवति । गोरिदं गव्यम् । गोरपत्यं गव्यः । गवि भवं गव्यम् । गौर्देवतास्य गव्यः । गवा चरति गव्यः । स्वर इति किम् । गो गो हेतुभ्य आगतं गोरूप्यम् । गोमयम् ॥ २७ ॥ *ङसोऽपत्ये ॥ ६ । १ । २८ ॥ अणादयोऽनुवर्तन्ते । ङसः *षष्ठ्यन्तान्नाम्नोऽपत्येऽर्थे यथाभिहितमणादयः प्रत्यया भवन्ति । उपगोरपत्यमौपगवः । धानपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः । अपत्य इत्यपत्यमात्रं विवक्षितं न लिङ्ग*संख्यादि । तेन द्वयोर्बहुषु स्त्रीलिङ्गादौ च भवति । औपगवौ । औपगवाः । औपगवी इत्यादि । ङस इति किम् । देवदत्तेऽपत्यम् । अपत्य इति किम् । भानोरयं भानवीयः । श्यामगवीयः । 'तस्येदम्' (६-३-१५९) इत्येवाणादिसिद्धौ अपत्यविवक्षायां *तदपवादबाधनार्थं वचनम् । तेन भानोरपत्यं भानवः । श्यामगवः ।

---

विषये द्विगु । यदा तु द्विरथ्या वेति तदा समाहारविषये द्विगु यथासभवं 'ङ्यादे' इति ङीनिवृत्ति । एवमन्यत्रापि ॥—अद्विरिति किमिति । अयमर्थ नन्न अद्विरिति विनापि द्वितीयप्रत्ययस्य लुब्भविष्यति । लुक्स्य प्रथमप्रत्ययस्य स्थानित्वेन द्विगोर्व्यवधायकत्वात्तत्किमद्विर्ग्रहणेन । नैवम् । 'द्विरजण'—इत्यत्र यौधेयस्य भर्गादिपाठात् प्रत्ययलोप इति न्यायस्यानित्यत्व, भर्गादिपाठो हि यौधेयात् शस्त्रजीविसघत्रिवक्षाया 'यौधयादेरञ् इति स्वार्थाञन्तात् 'गोत्राददण्ड'—इति प्राप्तस्याऽकञो बाधक 'संघघोप'—इत्यण् यथा स्यान्नाकञित्येवमर्थ । यदि च प्रत्ययलोप इति न्याय स्यात्तदा भर्गादिपाठो व्यर्थ स्यात् ॥—पौर्वशाल इति । पूर्वा चासौ शाला च 'पूर्वापरप्रथम'—इति समास तत पूर्वशालाया भव । 'भवे' अण् । यदा तु पूर्वस्यां शालाया भव तदा 'दिक्पूर्वादनाम्न' इति ण । 'दिगो किम्'—इति समासश्च ॥—पाञ्चनापितिरिति । पञ्चाना नापितानामपत्यम् अत इञ् ॥—द्वैनाविक इति । अस्मिन्नेव वाक्ये 'नाव' इत्यट् समासान्त 'तरति' इत्यनेन इकण् च ॥—प्राग्व—॥ 'प्राग्वत' इति 'तस्यार्हे'—इति विहितादित्यर्थ । वत इति प्रत्ययस्यावधित्वेऽपि न प्रत्यय इमौ प्रत्ययौ सभवत इति वच्छब्देन तदर्थो निर्दिश्यते ॥—गोः—॥ गोरपत्यमिति यदा क्रियते तदा च उपाद्य एयम् तस्य बाधक ॥—ङसो—॥—षष्ठ्यन्तादिति । ङस्ग्रहणस्य षष्ठ्युपलक्षणत्वात् षष्ठी लभ्यते ॥—संख्यादीति । आदिशब्दाद्विद्यमानाविद्यमानादि । ब्राह्मणत्वादि वा ॥—श्यामगवीय इति । श्यामा चासौ गौश्च । 'गोस्ततपुरुषात्' बहुव्रीहिर्वा ॥—तदपवादबाधनार्थमिति । तस्य तस्येदमित्यणोऽपवादो यो दोरीय इत्यादिस्तस्य बाधनार्थमन्यथा दुसञ्ज्ञकादपत्यविवक्षायामपि ईय एव

अत्र 'दोरीयः' ( ६-३-३१ ) इतीयो न भवति । कम्बल उपगोः अपत्यं देवदत्तस्येत्यत्र तु *असामर्थ्यान्न भवति ॥ २८ ॥ *आद्यात् ॥ ६ ॥ । १ । २९ ॥ अपत्ये येऽणादयःप्रत्ययास्ते आद्यात्*परमप्रकृतेरेव भवन्ति । *पौत्राद्यपत्यं सर्वपूर्वजानामा परमप्रकृतेः पारंपर्येण संबन्धादपत्यं भवति । *तत्र तैस्तैः संबन्धविवक्षायामनन्तरवृद्धयुवभ्योऽपि प्रत्ययः प्राप्नोतीति *नियमार्थ आरम्भः । उपगोरपत्यमनन्तरं वृद्धं वा औपगवः । तस्याप्यौपगविः । औपगवेरप्यौपगवः । गर्गस्यापत्यं पौत्रादि गार्ग्यः । गार्गेरपि गार्ग्यः । गार्ग्यस्यापि गार्ग्यः । गार्ग्यायणस्यापि गार्ग्यः । *अनन्तरादयोऽपि परमप्रकृतिरूपेणैवापत्ये प्रत्ययमुत्पादयन्ति ॥ २९ ॥ *वृद्धाद्यूनि ॥ ६ । १ । ३० ॥ यून्यपत्ये विवक्षिते यः प्रत्ययः स आद्यात् वृद्धात् परमप्रकृतेर्यो वृद्धप्रत्ययस्तदन्ताद्भवति । 'आद्यात्' ( ६-१-२९ ) इत्यस्यापवादः । वृद्धादिति *यूनि प्रकृतिर्विधीयते । गर्गस्यापत्यं वृद्धं गार्ग्यः । तस्यापत्यं युवा गार्ग्यायणः । दक्षस्यापत्यं पौत्रादि दाक्षिः तस्यापत्यं युवा दाक्षायणः । नडस्यापत्यं वृद्धम् नाडायनः तस्यापत्यं युवा नाडायनिः । यूनीति किम् । गार्ग्यः । नाडायनः । आद्यात् इत्येव । उपगोरपत्यं वृद्धमौपगवः *तस्यापत्यं युवा औपगविः । गार्ग्यायणस्य अपत्यं युवा गार्ग्यायणः । *अत्रायनण् इञ् च न भवति ॥ ३० ॥ *अत इञ् ॥ ६ । १ । ३१ ॥ ङसोऽपत्य इति वर्तते । अकारान्तात् ङसन्तान्नाम्नोऽपत्येऽर्थे इञ् प्रत्ययो भवति । अणोऽपवादः । दक्षस्यापत्यं दाक्षिः । अस्यापत्यम्*इः । अत इति किम् । *शौभंयः । *कैलालपः । केचित्तु शुभंयाकीलालपाशब्दाभ्यामणमपि नेच्छन्ति । 'कथं त्यजस्व कोपं कुलकीर्तिनाशनम् भजस्व धर्मं कुलकीर्तिवर्धनम् ॥ प्रसीद जीवेम सबान्धवा वयं मदीयतां दाशरथाय *मैथिली ' ॥ १ ॥ तस्येदमिति

---

स्यात् ॥—असामर्थ्यान्न भवतीति । अयमर्थ उपगोरित्यस्य कम्बलेन सबन्धित्वात् तत्सबन्धित्वेनापत्य वक्तुमण् प्रत्यय समर्थ ॥—आद्यात्—॥—परमप्रकृतेरेवेति । गर्गादिरूपात गार्गिरित्यादिरूपादित्यर्थ ॥—पौत्राद्यपत्यमिति । नतु यस्यैवाङ्गजत्वेनानन्तर सबन्ध तस्यैव तदपत्यमुच्यते । अतस्तस्मादेवापत्यप्रत्ययो युज्यते नान्यस्मादित्याशङ्का ॥—तत्र तैस्तैरिति । तत्र परमप्रकृतौ तैस्तैर्गार्गिप्रभृतिभिरपत्यै सह सबन्धविवक्षायामित्यर्थ ॥—नियमार्थ आरम्भ इति । अयमर्थ । गर्गस्यापत्यमनन्तरं गार्गिरितीञन्तात् गर्गस्यापत्य वृद्ध गार्ग्य इति यञन्तात् गार्ग्यस्यापत्य युवा गार्ग्यायण इत्यायनणन्ताच्चापत्यप्रत्ययो मा भूत् किंतु या मूलप्रकृतिरूपा गर्गादिलक्षणा तस्या एवाऽपरोपि अपत्यप्रत्यय समुत्पद्यते नाऽन्यापत्यप्रत्ययान्ताया । युवार्थापत्यप्रत्यय प्रति च वृद्धार्थापत्यप्रत्ययान्तैव प्रकृतिराद्या वक्ष्यते । तत स्थितमेतत् अपत्यप्रत्ययोऽनपत्यप्रत्ययान्ताया एव प्रकृतेर्भवतीति । आगच्छति चापरे प्रत्यये अग्रेतनो निवर्तत एव ॥—अनन्तरादयोऽपीति । न केवल गर्ग इत्येवरूपा प्रकृति परमप्रकृतिरूपेण प्रत्ययमुत्पादयति गार्गिगार्ग्यगार्ग्यायणादयोऽपि अनन्तरवृद्धयुवान परमप्रकृतिरूपेणैव प्रत्ययमुत्पादयन्ति । अयमर्थ पुत्रपौत्रादयोऽपि मूलप्रकृतेरेवोत्पन्नै प्रत्ययैरभिधीयन्ते न तत्तद्विभिन्नप्रत्ययान्ताया प्रकृतेरुत्पन्नै ॥—वृद्धाद्यूनि ॥—यूनि प्रकृतिरिति । यूनि प्रत्यये विधातव्ये वृद्धप्रत्ययान्त एवाद्य इत्यर्थ ॥—तस्याप्यपत्यं युवा औपगविरिति । पुनर्वृद्धप्रत्ययान्तलक्षणात् परमप्रकृतेरिञ् नेञन्तादन्यो युवार्थप्रत्यय इत्यर्थ ॥—अत्रायनण् इञ् च न भवतीति । ननु 'वृद्धाद्यूनि' इति वचनात् वृद्धप्रत्ययान्तादेव यूनि प्रत्ययो न तु युवप्रत्ययान्तादित्यत्र प्राप्तिरेव नास्ति । सत्यम् । अत्र औपगव्यादि यत् युवसंज्ञमपत्य तत्पौत्रादि वृद्धमिति सामान्येन भणनात् वृद्धमप्यस्तीति प्राप्ति ॥—अत इञ्—॥—इरिति ॥ नन्वत्र वृष्णित्वादण् प्राप्नोति । न । ता प्रसिद्धा वशयाख्या क्षत्रिया गृह्यन्ते । अयं तु न तथाविध ॥—शौभय इति । शुभ यातीति विच् । शुभयोऽपत्यम् एवं कैलालपः—॥—मैथिलीति । मिथिलाया अय स्वामी । 'तस्येदम्' अणि मैथिलस्यापत्यम् नृप्यणि ङी । मैथिलस्य राज्ञोऽपत्य वा 'राष्ट्रक्षत्रिय'—इत्यञ्

विवक्षायामण् भविष्यति । अपत्यविवक्षायां तु दाशरथिरित्येव भवति । अथ काकवकशुकादेः कस्मान्न भवति । *जात्यैवापत्यार्थस्य पौत्रादेरनन्तरस्य चाभिहितत्वात् । यत्र त्वर्थप्रकरणादेर्विशेषप्रतीतिरस्ति तत्र भवत्येव । यथा कुतश्चरति मायूरिः केन कौपिञ्जलिः कृशः । *एतेन काक्यादिभ्य *एयणादयोऽपि व्याख्याताः । कथं तर्हि*कौञ्चः कौकिलः गौधेरः चाटकैर इति । जातिशब्दा एवैते *यथाकथंचिद्व्युत्पाद्यन्ते । यथा *क्षत्रं क्षत्रियः राजा राजन्यः मनुः मनुष्यो मानुष इति । अनभिधानाच्च शतसर्वगृद्धकारकराजपुरुषमाथुरकुररादिभ्यो न भवति । ञकारो ञित्कार्यार्थः ॥ ३१ ॥ *बाह्वादिभ्यो गोत्रे ॥ ६ । १ । ३२ ॥ स्वापत्यसंतानस्य स्वव्यपदेशकारणमृषिरनृषिर्वा यः प्रथमः पुरुषस्तदपत्यं गोत्रम् । बाह्वादिभ्यो ङसन्तेभ्यो गोत्रेऽपत्येर्थे इञ् प्रत्ययो भवति । अनकारान्तार्थो बाधकबाधनार्थश्चारम्भः । बाहोरपत्यं बाहविः । औपबाकविः । नैवाकविः । औदञ्चिः । इहोदाञ्चिति पैलादिषु चोदञ्चीति सनकारस्य पाठादनर्चायामपि नलोपाभावः । गोत्र इति किम् । योऽग्रत्वे बाहुर्नाम तस्यापत्यं बाहवः । संभवापेक्षं च गोत्रग्रहणम् । तेन पञ्चानामपत्यं पाञ्चिः साप्तिः आष्टिः इत्यादि सिद्धम् । बाहु उपबाकु निवाकु वटाकु चटाकु उपविन्दु चाटाकु वृकला कृकला चूडा वलाका जङ्घा छगला भगला लगहा ध्रुवका धुवका मूषिका सुमित्रा दुर्मित्रा । वृकलादिभ्यो यथासंभवमेयणो मानुषीनामलक्षणस्य चाणोऽपवादोऽयमिञ् । युधिष्ठिर अर्जुन राम संकर्षण कृष्ण गद प्रद्युम्न शाम्ब सत्यक शूर असुर अजीगर्त मध्यंदिन । एषु ऋष्यादिलक्षणस्याणोऽपवादः । सुधावन् स्वधावत् पुष्करसद् अनुरहत् अनडुह् पञ्चन् सप्तन् अष्टन् क्षेमधन्विन् मापशिरोविन् गृङ्खलतोदिन् *खरनादिन् प्राकारमर्दिन् नगरमर्दिन् इन्द्रशर्मन् भद्रशर्मन् अग्निशर्मन् देवशर्मन् उपदश्च उदश्च कुनामन् सुनामन् सुदामन् शिरस् लोमन् एतौ तदन्तौ । हस्तिशिरसोऽपत्यं हास्तिशीर्षिः । औडुलोमिः । शारलोमिः । इति बाह्वादयः । बहुवचनमाकृतिगणार्थम् । तेन सख्युरपत्यं साखिः । संवेशिनः सांवेशिः । उदङ्कस्य औदङ्किः । एवमौद्दालकिः वाल्मीकिः आरुणिः इत्यादि सिद्धम् भवति । शिवादेश्च प्राग्येऽकारान्ता विदादयस्तेभ्य ऋष्यणं बाधित्वा *उक्तार्थादन्यत्रानेनैवेञ् । विदादेर्वृद्धेऽञ् वक्ष्यते । विदस्यापत्यमनन्तरं वैदिः । और्विः । गर्गादेर्यञ् । गार्गिः । वात्सिः । कुञ्जादेर्ञ्यायन्यः । कौञ्जिः । ब्राध्निः । अश्वादेरायनञ् । आश्विः । आर्किः । नडादिभ्य आयनण् । नाडिः । मौञ्जिः । अनकारान्तेभ्यस्त्वणेव औपमन्यवः । जामदग्नः । सौमनसः । *भास्मः । लैगवः । शारद्वतः । इतः प्रभृति गोत्र इत्यधिकारात् गोत्रे संभवति *ततोऽन्यत्र प्रतिषेधः ॥ ३२ ॥

---

॥—जात्यैवेति । यत सर्वोऽपि लोक काक दृष्ट्वा काकोऽसावित्येव व्यवहरति न काकापत्यमिति ॥—एतेनेति । पूर्वोक्तप्रकारेणेत्यर्थ ॥—एयणादयोऽपीति । विशेषप्रतीतौ भवन्ति । अन्यत्र जात्याभिहितत्वान्न भवन्तीत्यर्थ ॥—कौञ्च इति । एषु त्रिषु गोधावर्जमजादित्वादाप् तत्र द्वयो शिवादित्वादण् ॥—यथाकथमिति । न किमप्यपत्यविवक्षाफल तादृशमस्तीति भाव ॥—क्षत्रमिति । क्षणनं क्षत् । क्विप् । 'गमा क्वौ' इति नलोपे तागमे क्षतस्त्रायते । क्षणन क्षीवे क्त· 'यमिरमिनमि'—इत्यन्तलोप· । क्षतात् त्रायते 'स्थापा'—इति के पृषोदरादित्वादऽस्य लोप । क्षदि हिसार्थ सौत्रो वा 'हुयामा'—इति त्र ॥—बाह्वा—॥—खरनादिन्निति । गणपाठात् 'पूर्वपदस्था'—इति न णत्वम् ॥—उक्तार्थादन्यत्रेति । कोऽर्थ वृद्धार्थादन्यत्राकारान्ताना विदादीनाम् 'ऋष्यन्धकवृष्णि'—इत्यनेनाण् स्यात् सोऽनेन बाध्यते ॥—भास्म इति । भस्मनोऽपत्यम् ऋष्यणि 'अणि' इति प्रतिषेधे प्राप्ते 'अवर्म्मणो मनोऽपत्ये' इत्यनेनान्त्यस्वरादिलोप ॥—ततोऽन्यत्रेति । अयमर्थ । यत्र गोत्रमगोत्र

*वर्मणोऽचक्रात् ॥ ६ । १ । ३३ ॥ चक्रशब्दवर्जितात्परो यो वर्मन्शब्दस्तदन्तादपत्येऽर्थे इञ् प्रत्ययो भवति । इन्द्रवर्मणोऽपत्यमैन्द्रवर्मिः । अचक्रादिति किम् । *चाक्रवर्मणः ॥ ३३ ॥ *अजादिभ्यो धेनोः ॥ ६ । १ । ३४ ॥ अजादिभ्यः परो यो धेनुशब्दस्तदन्तादपत्येऽर्थे इञ् प्रत्ययो भवति । *आजधेनविः । वाष्कधेनविः । अजादयः प्रयोगतोऽनुसर्तव्याः ॥ ३४ ॥ ब्राह्मणाद्वा ॥ ६ । १ । ३५ ॥ ब्राह्मणशब्दात्परो यो धेनुशब्दस्तदन्तादपत्येऽर्थे इञ् वा भवति । ब्राह्मणधेनविः । ब्राह्मणधेनवः ॥ ३५ ॥ भूयःसंभूयोम्भोमितौजसः स्लुक् च ॥ ६ । १ । ३६ ॥ भूयस् संभूयस् अम्भस् अमितौजस् इत्येतेभ्योऽपत्येऽर्थे इञ् प्रत्ययो भवति सकारलोपश्चैषाम् । भूयसोऽपत्यं भौयिः । एवं सांभूयिः । आम्भिः । आमितौजिः । भूयसो नेच्छन्त्यन्ये । अकृतसोऽपीच्छन्त्येके । आकृतिः ॥ ३६ ॥ शालङ्क्यौदिषाडिवाड्वलि ॥ ६ । १ । ३७ ॥ शालङ्कि औदि पाडि वाड्वलि इत्येते शब्दा अपत्येऽर्थे इञ्प्रत्ययान्ता निपात्यन्ते । शलङ्कोरपत्यं शालङ्किः । अत्रेञ् प्रत्यय उकारलोपश्च निपात्यते । उदकस्यौदिः । अत्रेञ् कलोपश्च । षण्णां षाडिः । अत्रेञ् अन्त्यस्य च डत्वम् । वाचं वदति वाग्वादस्तस्यापत्यं वाड्वलिः । अत्रेञि वाचोऽन्तस्य डत्वं वलभावश्चोत्तरपदस्य ॥ ३७ ॥ व्यासवरुटसुधातृनिषादबिम्बचण्डालादन्त्यस्य चाक् ॥ ६ । १ । ३८ ॥ व्यासादिभ्योऽपत्येऽर्थे इञ् प्रत्ययो भवति तत्संनियोगे चैषामक् इत्ययमन्तादेशो भवति । व्यासस्यापत्यं वैयासकिः । वरुटस्य वारुटकिः । सुधातुः सौधातकिः । निषादस्य नैषादकिः । वृद्धे तु परत्वाद्बिदादिलक्षणोऽञ् । नैषादः । बिम्बस्य बैम्बकिः । चण्डालस्य चाण्डालकिः । सुधातृव्यासाभ्यामणोऽपवादः । वरुटात् कारुव्यस्यापवादः । शेषेभ्योऽस्त्येव । कर्मारव्याघ्राग्निशर्मभ्योऽपीच्छन्त्येके । कार्मारकिः । वैयाघ्रकिः । आग्निशर्मकिः ॥ ३८ ॥ *पुनर्भूपुत्रदुहितृननान्दुरनन्तरेऽञ् ॥ ६ । १ । ३९ ॥ पुनर्भूपुत्रदुहितृननान्दृ इत्येतेभ्यो ङसन्तेभ्योऽनन्तरेऽपत्येऽर्थे अञ् प्रत्ययो भवति । पुनर्भ्वा अनन्तरमपत्यं पौनर्भवः । पौनर्भवौ । पौनर्भवाः । पौत्रः । दौहित्रः । नानान्द्रः । अनन्तर इति किम् । वृद्धेऽञ् न भवति । अञो ञित्करणमुत्तरार्थम् । इह तु सूत्रेऽञि अणि वा नास्ति विशेषः । नन्वस्त्येव विशेषः । अञि हि 'यञञोऽश्यापर्णे'—( ६–१–१२६ ) इत्यादिनाञो बहुषु लुप् स्यात् यथा बैदः बैदौ बिदा इति । तथा संघादिष्वर्थेषु 'संघघोषाङ्क'—( ६–३–१७१ ) इत्यादिनाञः परोऽण् स्यात् *यथा बैदमिति । अणि तु तदुभयमपि न भवति यथौपगवाः औपगवकमिति । तथा पुत्रशब्दादञ्प्रत्ययान्तात् *ततोऽप्यपत्यविवक्षायाम् 'अत इञ्' ( ६–१–३१ ) इतीञि 'ञिदार्षादणिञोः'—( ६–१–१४० ) इति तस्य लुपि पौत्र इति स्यात् यथा

च सभाति ता ततो गोत्रादन्यत्रेञ्प्रतिषेध । यत्र गोत्र न संभवत्येव तत्रागोत्रेऽपीञ् ॥—वर्म—॥—चाक्रवर्मण इति। चक्र वर्म यस्य चक्रवर्मा । अथवा चक्रमेन वृषीष्ट 'तिक्कृतौ नाम्नि' मन् । 'नोपदस्य'—इत्यनेनान्तलोपे प्राप्ते 'अणि' इति प्रतिषेध । 'अवर्म्मणो मनो'—इत्यनेन भविष्यतीति च न वाच्य तत्र वर्मन्वर्जनात् ॥—अजा—॥—आजधेनविरिति । अजा चासौ धेनुश्चेति कार्म । पोटायुवति'—इति समास । न त्वजा धेनुर्यस्येति तदा 'स्वाङ्गान्डी'—इति पुवनिषेध स्यात् ॥—पुन—॥—यथा वैदमितीति । बिदस्यापत्यानि बिदादेर्वृद्धेऽञ् । बिदाना समादि बहुषु वर्त्तमानस्याञो न लुप् 'न प्राग्जितीये स्वरे' इति प्रतिषेधात् । ततो 'गोत्राददण्ड'—इत्यकञ्बाधक 'सघघोष'—इत्यण् ॥—ततोऽप्यपत्यविवक्षायामिति । आपातमात्रे पूर्वपक्षोऽयम् अन्यथा 'वृद्धाद्यूनि' इति वचनात् अनन्तराद्यूनि प्रत्ययो न स्यात् । न च वृद्ध एव भविष्यतीति वाच्य यत 'आद्यात्' इति मत्रात्पुत्रइत्येवरूपाया परमप्रकृतेरेव स्यात् । किच तदा 'ञिदार्षा-

वैदः पिता *वैदः पुत्रः । अणि तु ' द्विस्वरादणः ' ( ६-१-१०९ ) इत्यायनिञ् स्यात् यथा *कार्त्रायणिरिति । उच्यते । पुनर्भ्वोद्यपत्यस्यागोत्रत्वाद्गोत्राधिकारविहिता लुप् संभाव्य ग् च न भविष्यति । पौत्रशब्दाच्चावृद्धप्रत्ययान्तत्वादञ्याणि च इञ् आयनिञ् च न भविष्यतीति *विशेषाभाव एव । केचित्तु पुनर्भ्वे इति लुपमप्युदाहरन्ति । तेषां पुनर्भूरिति गोत्रं तन्नेहाप्यस्ति विशेषः ॥ ३९ ॥ परस्त्रियाः परशुश्चासावर्ण्ये ॥ ६ । १ । ४० ॥ परस्त्रीशब्दादनन्तरेऽपत्येऽञ् प्रत्ययो भवति तत्संनियोगे परस्त्रीशब्दस्य परशुभावश्चासावर्ण्ये न चेत् पुरुषेण सह समानो वर्णो ब्राह्मणत्वादिस्तस्या भवति । परा पुरुषाद्भिन्नवर्णा स्त्री परस्त्री । तस्या अनन्तरापत्यं पारशवः । असावर्ण्य इति किम् । परस्य स्त्री परस्त्री तस्या अनन्तरापत्यं पारस्त्रैणेयः । कल्याण्यादिपाठादेयण् अन्तस्य चेनादेशः । अनुशतिकादिपाठादुभयपदवृद्धिश्च ॥ ४० ॥ *बिदादेर्वृद्धे ॥ ६ । १ । ४१ ॥ विदादिभ्यो वृद्धेऽपत्येऽर्थे अञ् प्रत्ययो भवति । विदस्यापत्यं वृद्धं वैदः । वैदौ । विदाः । और्वः । और्वौ । उर्वाः । काश्यपः । काश्यपौ । कश्यपाः । भारद्वाजः । भारद्वाजौ । भरद्वाजाः । अथेन्द्रहूः *सप्तमः काश्यपानाम् भारद्वाजानां कतमोऽसीत्यत्र वहुषु लुप् कस्मान्न भवति । नायमञ् किंतु अस्येदम् इति विवक्षायामण् । सर्वेषामपि हि पितरोऽभेदोपचारेण कश्यपाः । यथा बभ्रुः मण्डुः लमक इति । वृद्ध इति किम् । विदस्यापत्यमनन्तरं वैदिः । *विद *उर्व *कश्यप कुशिक * भरद्वाज *उपमन्यु *किलात *कीदर्भ *विश्वानर *ऋष्टिषेण ऋतभाग *हर्यश्व *मियक *पियक *अपस्तम्भ *कुवाचर *कूवाचर *शरद्वत् *शुनक *धेनु । उत्सादिष्वपि धेनुशब्दः पठ्यते । स मत्यग्रप्रसवगव्यादिवाचकः । अयमृषिवचनः । अश्व शङ्ख *गोपवन *शिग्रु विन्दु *ताजम *अश्वावतान *श्यामाक

दणिञो लोपो न स्यात् । तत्र युवप्रत्ययग्रहणात् ॥—वैदः पुत्र इति । विदस्यापत्य वृद्ध विदादिर्वृद्धे अञ् वैदस्यापत्यं युवा अत इञ् ' त्रिदार्पादणिञो ' इति लोप ॥—कार्त्रायणिरितीति । कर्तुरपत्य वृद्ध ' ङसोऽपत्ये ' अण् । कार्त्तस्यापत्य युवा ' द्विस्वरादण ' आयनिञ् अस्य च ब्राह्मणत्वात् ' अब्राह्मणात् '—इति न लुप् ॥—विशेषाभाव एवेति । ननु तर्हि इञ्बाधक पुत्रादञित्येव क्रियता किं गुरुणा सूत्रेण यत शेषेभ्य सामान्योऽण् अस्त्येव । उच्यते । मताभिप्रायेण पुनर्भूपुत्रदुहितृननान्दृग्रहणमिति दर्शितम् । यतस्तन्मते दुहित्रादीना पूर्वदर्शित गोत्रे फलमस्तीति ॥—विदा—॥—सप्तम· काश्यपानामिति । अत्र कश्यपसतानापेक्षया बहुवचन न तु भ्रातृवर्गापेक्षया । अथ गण । विन्दत्यवयवीभवति स्वगोत्रे ' विन्देर्नलुकूच ' इति अ विद· । उर्वति अष्टप्रकारं कर्म उर्वः । कशामर्हति कश्य । अनया व्युत्पत्त्या पुरुष एव लभ्यते न मद्य, न, पुरुषो मद्ययोगात्कशायोग्य अतस्तदेव कशायोग्यम् कश्यं पिबति कश्यपः । कुश्यति सत्कर्मसु ' कुशिक—' इति साधु· । वजण् वर्जणगतौ वा । भरन्त वाजयति भरद्वाजः । उपगतो मन्यु बहुव्रीहिर्वा उपमन्युः ॥ किरतीति 'नाम्युपान्त्य'—इति के किलस्तमतति किरातस्य स्थाने वा किलात । कस्य भार्या की क्या दर्भ इव पवित्र कीदर्भः । विश्वे नरा अस्य विश्वानरः । ऋष्टय सेनायाम् ऋष्टिवत् सेना वा यस्य ऋष्टिषेणः । ऋतेन सत्येन भागो भागधेय यस्य ऋतभाग । हरयो नीलवर्णा अश्वा यस्य हर्यश्वः । प्रिय एव प्रियकः । प्रिय कायति वा । पिबति उष्ण पानीयादिक ' कीचक '—इति पियकः । अपस्तभ्नाति अष्टप्रकार कर्म्म अपस्तम्भः । कुत्सितं वान्ति विच् । कुवा तेषा पार्श्वेन चरति कुवाचरति कुवाचर । बाहुलकाद्दीर्घत्वे कूवाचरः । शरद् उपकारकतयाऽस्यास्ति शरद्वत् । शुनति परमा गति ' कीचक '—इति ' नाम्युपान्त्य—' इति के शुन एव शुनकः । धीयते अस्मात्तत्त्वमिति धेनुः । गोपान्रुप वनति वनुते वा गोपवनः । शेरते गुणा अत्र शिनोति वा शिग्रुः । वेत्तीत्येवशीलो ' विन्द्विच्छू ' विन्दु । ता लक्ष्मी जमति ताजमः । अश्वानवतनोति अश्वावतानः । श्यायते 'मवाक—' इति श्यामाकः ।

*श्यापर्ण *हरित *किन्दास *वस्यस्क *अर्कलुश *वध्योग *विष्णुवृद्ध *वृष्णिवृद्ध *प्रतिबोध *रथीतर *रथंतर गविष्ठिर गविष्ठिल *निषाद *शबर *मठर *सूदाकु *पृदाकु। केचिदेतौ हरितादेः प्राक् पठन्ति। तन्मते 'हरितादेरञः' (६-१-५५) इत्यायनण् न भवति। मठरशब्दं *गोपवनादावपि अञो लुबभावार्थं केचित्पठन्ति। अन्ये तु मठराद्यकारादिमञमिच्छन्ति। माठर्यः। माठर्यौ। बहुष्वञो लुपि संनियोगशिष्टत्वात् यस्यापि निवृत्तिरिति मठराः॥ ४१॥ *गर्गादेर्यञ्॥ ६। १। ४२॥ गर्गादिभ्यो ङसन्तेभ्यो वृद्धेऽपत्येऽर्थे यञ् प्रत्ययो भवति। गर्गस्यापत्यं वृद्धं गार्ग्यः। वात्स्यः। वृद्ध इत्येव। गर्गस्यापत्यमनन्तरं गार्गिः। गोत्र इत्येव। गर्गो नाम कश्चित् तस्यापत्यं वृद्धं गार्गिः। ननु मनोरत्र पाठाल्लोहितादित्वात् स्त्रियां नित्यं डायनि ङ्यां च मानव्यायनीति स्यात् तत्कथं मानवी प्रजेति। उच्यते। अपत्यसामान्यविवक्षायां 'ङसोऽपत्ये' (६-१-२८) इत्यणि भविष्यति। कथमनन्तरो रामो जामदग्न्यः व्यासः पाराशर्यः। पुत्रेऽपि पौत्रादिकार्यकरणात् तथोच्यते। अनन्तरापत्यविवक्षायां जामदग्निः पाराशरिः। कथं पाराशरः। तस्येदमिति विवक्षायां भविष्यति। *गर्ग *वत्स *वाज *अज *संकृति *व्याघ्रपाद् *विदभृत् *पितृवध् *प्राचीनयोग *पुलस्ति *रेभ *अग्निवेश *शंख शट धूम *अवट *नमस *चमस *धनंजय *वृक्ष *विश्वावसु *जरमाण *कुरुकत अनडुह् *लोहित संशित वक्र *बभ्रु *बभ्लु *मण्डु *मङ्क्षु *मङ्खु शस्थु *शङ्कु *लतु *लिगु *गूहलु *जिगीषु *मनु *तन्तु *मनुतन्तु मनायी। अगेयणोः प्राप्तावस्य पाठः। पुंवद्भावस्तु 'कौण्डिन्यागस्त्ययोः'—(६-१-१२७) इति कौण्डिन्यनिर्देशादनित्य इति न भवति। सूनु *स्रुव *कच्छक *ऋक्ष रुक्ष *रूक्ष *तरुक्ष *तलुक्ष *तण्डिन्

---

श्यागन्ते श्या श्यामा वराती गताना पर्णयति आद्रीकरोति देशाया श्यापर्णः। 'हृस्या—' इति हरितः। किमपि दासते किंदासः। 'वसिमस्यति—' 'भीण्शलि—' इति के वस्यस्क। अर्कमपि रुशति तेजसा अर्कलुशः। वध्यमर्दन्ति वध्यास्तान् उद्गाति 'मूलविभुज—' इति के वध्योगः। विष्णुवत् वृष्णिवद्वा वृद्धः विष्णुवृद्धः॥ वृष्णिवृद्ध। प्रतिबोधयति प्रतिबोधः। रथ्या तरति रथीतरः। 'भृवृजि—' इति खे रथंतर'। गिरीदन्ति शुगा अश्नेति निषादः। 'शल्युवटि'—इत्यरे शबरः। मठरः। 'सूवृभ्या दाकुरू' सूदाकुः। पृदाकुः। इति विशदय॥—गोपवनादावपीति। न केवलं हरितादौ॥—गर्ग।—॥ गग। गिरति वदति गिरयमिति 'गम्रमि'—इते 'मातारयमि'—इति च गतो। गर्गः। वत्सः। वाजयत्यच् वाजः। न जात अजः। संस्करणं संकृतिः। गणवाजार सडभात। व्याघ्रस्येव पादौ यस्य व्याघ्रपाद्। विद बिभर्ति पितरं जनाते क्विर् विदभृत् पितृवध्। बहुव्रीहौ प्राचीनयोगः। अगितीलिरयस्तिकि पुलस्तिः। रेभते अच् रेभः। अग्निमपि विशति अग्निवेशः। 'शमिमनि'—इति खे शंखः। 'दिग्गवि'—इत्यवटः। 'तप्याणि'—इति नमसः। चमसः। धनं जयति धनंजयः। वृक्षति वृक्षः। विश्वस्मिन्नासु यस्य विश्वावसुः। जिगृहति ह्रहरान्त मन्यते तन्मते जरमाणः। 'पृषिरञ्जि'—इति कत कुरुणा कतः। चसौ वा। 'हृस्या'—इति रोहित लत्वे लोहितः। 'हनिय'—इति वसुः लत्वे बभ्लुः। मण्डते 'भृमृ'—इति मण्डुः। 'महिज'—इति छत् बाहुलकात्लोपाभावे मङ्क्षुः॥ 'उवनस्र'—इति 'भृमृ' इति मङ्खुः॥ शवाति। केतुनिपात। 'कैशो'—इति शङ्कु। 'कृलाभ्या किर' लतुः॥ 'रङ्गिलङ्घि'—इति लिगुः। 'गृहलुगुगुल'—इति गूहलुः। जेतुमिच्छ जिगीषुः। मन्यते इति मनुः। 'कृशिकमि'—इति तन्तुः। मनुश्चासौ तन्तुश्च मनुतन्तुः। 'निपृषि'—इति किति वे स्रुवः। कच्छते कच्छकः। 'हनिरिपि'—इति ऋक्षः। रूक्षणं रूक्षः। तरून् क्षयति तरुक्षः। लत्वे तलुक्षः। अवश्यं तण्डते तण्डी।

*वतण्ड *कपि *कत शकल कण्व *वामरथ *गोकक्ष *कुण्डिनी *यज्ञवल्क पर्णवल्क *अभयजात *विरोहित *वृषगण *रहोगण *शण्डिल *मुद्गर *मुद्गल
*मुसर *मुसल *पराशर *जतूकर्ण *मन्द्रित *अश्मरथ *शर्कराक्ष *पूतिमाष *स्थूर स्थूरा *अरराका पिङ्ग *पिङ्गल कृष्ण *गोलुन्द *उलूक *तितिम्भ *भिष
*भिषज *भिष्णज भण्डित भडित दल्भ चिकित देवहू इन्द्रहू यज्ञहू एकलू पिप्पल्लु *पत्यलू *वृहलू *पप्फलू बृहदग्नि जमदग्नि सुलाभिन कुटीगु उक्थ कुटल चणक
चुलुक कर्कट अलापिन् सुवर्ण सुलाभिन् इति गर्गादिः ॥ ४२ ॥ मधुबभ्र्वोर्ब्राह्मणकौशिके ॥ ६ । १ । ४३ ॥ मधुशब्दाद्बभ्रुशब्दाच्च यथासंख्यं ब्राह्मणे कौशिके च
वृद्धेऽपत्येऽर्थे यञ् प्रत्ययो भवति । माधव्यो ब्राह्मणः । माधवोऽन्यः । बाभ्रव्यः कौशिकः । बाभ्रवोऽन्यः । बभ्रोर्गर्गादिपाठाद्यञि सिद्धे कौशिके नियमार्थं वचनम् ।
गर्गादिपाठस्तु लोहितादिकार्यार्थः तेन बाभ्रव्यायणीति नित्यं डायन् । केचित्तु अकौशिकेऽपि लोहितादिपाठाद्यञमिच्छन्ति । तन्मतेनेदं यञ्विधानं बभ्रोर्लोहितादेर्बहिष्कर-
णार्थम् । तेन कौशिके यञि सति लोहितादिकार्यं न भवति । तथा च स्त्रियां डायन् वा भवति । बाभ्रवी बाभ्रव्यायणी च कौशिकी ॥ ४३ ॥ *कपिबोधादाङ्गिर-
से ॥ ६ । १ । ४४ ॥ कपिबोधशब्दाभ्यामाङ्गिरसेऽपत्यविशेषे वृद्धे यञ् प्रत्ययो भवति । कपेरपत्यं वृद्धमाङ्गिरसः काप्यः । एवं बौध्यः । अन्यः कापेयः । बौधिः ।
कपिशब्दो गर्गादिषु पठ्यते तस्येहोपादानं नियमार्थम् । आङ्गिरस एव यञ् नान्यत्रेति । लोहितादिकार्यार्थश्च गणपाठः । काप्यायनी । मधुबोधयोस्तु *यञन्तयोरुभयम् ।
माधवी । माधव्यायनी । बौधी । बौध्यायनी ॥ ४४ ॥ *वतण्डात् ॥ ६ । १ । ४५ ॥ वतण्डशब्दादाङ्गिरसेऽपत्यविशेषे यञेव भवति । वतण्डस्यापत्यं वृद्धमाङ्गिर-
सः वातण्ड्यः । आङ्गिरसादन्यत्र गर्गादिशिवादिपाठाद्यञ् अण् च भवतः । वातण्ड्यः । वातण्डः । गर्गादिपाठादेव यञि सिद्धे वचनमाङ्गिरसे शिवाद्यण्बाधनार्थम् ।
*शिवादिपाठोऽप्यस्य वृद्ध एवाण्विधानार्थः । अन्यत्र हि ऋषित्वादेव *अण् सिद्धः ॥ ४५ ॥ स्त्रियां लुप् ॥ ६ । १ । ४६ ॥ वतण्डशब्दादाङ्गिरसेऽपत्यविशेषे वृद्धे

---

'वनेस्त च' वतण्डः । 'अम्भिकुण्ठि'—इति कपि । 'पृषिराजि'—इति कित्यते कतः । प्रसे वासरथः । गोरिव कक्षो भक्ष्य. पार्श्वो वा अस्य गोकक्षः ॥ अवश्यं
कुण्डते कुण्डिनी । यज्ञे वल्कोऽस्य यज्ञवल्कः । प्रसे, अभय । जायते स्म । जात । चसे अभयजात । विशेषेण रोहति 'हस्या' इति विरोहित । वृषान् गणयाति
वृषगण । रहो गणयति रहोगण । 'कल्यनि'—इति शण्डिल । 'मुदिग्रोरिभ्या' मुद्गर लत्वे मुद्गल । मुसं राति मुसर । 'तृपिवपि'—इति मुसल । पराहत्या शृणाति पराशर । जतुवत्
कर्णौ यस्य जतूकर्ण । मन्द्रो गम्भीरः शब्द. सोऽस्याऽस्ति 'तदस्य'—इतीत । मन्द्रं करोति वा तत णिच् मन्द्रित । अश्मवद्रथोऽस्य अश्मरथ । शर्करावत् अक्षिणी यस्य 'सक्थ्यक्ष्ण.—'
शर्कराक्ष । पूतयो माषा यस्य पूतिमाष । 'स्थाविडे' स्थूर । अरा अराकाराणि भक्ष्याणि राति 'भीण्शलि'—इति अरराका । 'स्फालिकासि'—इति पिङ्ग । पिङ्गं लाति पिङ्गल । गां
लुनाति 'कुमुद'—इति गोलुन्द । गोलायाम्रुनत्ति घ्नाति वा । उलि सौत्र. ओलति 'शम्बूक'—इति उलूक । स्तभ्नाति 'जजल'—इति तितिम्भ । भिषि सौत्र के भिष । 'भिषेर्भिषभि-
ष्णौ च वा' भिषज । भिष्णज । पतौ साधुस्तल्लुनाति पत्यलू । वृहं लुनाति वृहलू । फलानि लुनाति पृषोदरादित्वात् पप्फलू ॥—कपि—॥—यञन्तयोरुभयमिति । 'यञो डायन्च
वा' इत्यऽनेन विकल्प इत्यर्थं ॥—वत—॥—शिवादिपाठोऽप्यस्येति । ननु य शिवादौ अण् सोऽपत्यमात्रे विहितो गर्गादौ तु यञ् वृद्धापत्ये तस्माद्विशेषविधानादेव आङ्गिरसेऽन्यत्रापि च यञ्सिद्धौ
किमर्थं सूत्रमित्याशङ्का ॥—अण् सिद्ध इति । अनन्तरे बाह्वादित्वादिञ् प्राप्नोति इति न वाच्यम् शिवादेश्च प्रागिति वचनस्य गर्गादिगणापेक्षया तु बाह्वादिभ्य इति बहुवचनस्याऽतन्त्रत्वात् ॥

स्त्रियां यञो लुब् भवति । वतण्डस्यापत्यं वृद्धं स्त्री आङ्गिरसी वतण्डी । जातिलक्षणो ङीः । अनाङ्गिरसे तु शिवादिपाठात् वातण्डी । लोहितादिपाठाद्वातण्ड्या-
यनी ॥ ४६ ॥ *कुञ्जादेर्ञायन्यः ॥ ६ । १ । ४७ ॥ कुञ्जादिभ्यो ङसन्तेभ्यो वृद्धेऽपत्येऽर्थे ञायन्यः प्रत्ययो भवति । कुञ्जस्यापत्यं वृद्धं कौञ्जायन्यः ।
कौञ्जायन्यौ । ब्राध्नायन्यः । ब्राध्नायन्यौ । वृद्ध इत्येव । कुञ्जस्यापत्यमनन्तरं कौञ्जिः । कुञ्ज ब्रध्न गण भस्मन् लोमन् लौमायन्य । तदन्तादेव केचित् ।
औडुलोमायन्यः । शट । अयं गर्गादिष्वपि । शाक शुण्डा शुभा विपाश् अयं शिवादिष्वपि । स्कन्ध स्कम्भ शङ्ख । अयं गर्गादावश्वादौ विदादौ च ।
इति कुञ्जादिः ॥ ञकारो ञित्कार्यार्थः ॥ ४७ ॥ स्त्रीबहुष्वायनञ् ॥ ६ । १ । ४८ ॥ कुञ्जादिभ्यो ङसन्तेभ्यो बहुत्वविशिष्टे वृद्धे स्त्रियां वा-
बहुत्वेऽपि आयनञ् प्रत्ययो भवति । कुञ्जस्यापत्यं स्त्री कौञ्जायनी । ब्राध्नायनी । कुञ्जस्यापत्यानि कौञ्जायनाः । ब्राध्नायनाः । ञकारो ञित्कार्यार्थः ॥ ४८ ॥
*अश्वादेः ॥ ६ । १ । ४९ ॥ अश्वादिभ्यो वृद्धेऽपत्ये आयनञ् प्रत्ययो भवति । अश्वस्यापत्यं वृद्धमाश्वायनः । शांखायनः । वृद्ध इत्येव । आश्विः । गोत्र
इत्येव । अश्वो नाम कश्चित् तस्यापत्यं वृद्धमाश्विः । *अश्व *शंख *जन *उत्स *ग्रीष्म *अर्जुन *वैल्य अश्मन् *विद *कुट *पुट *स्फुट *रोहिण
*खर्जुल *खर्जूर *खर्जूल *पिञ्जूर *भदि्ल *भटिल *भडिल *भण्डिल *भटक *भडित *भण्डित *प्राद्दत राम *उद*क्षान्ध ग्रीव *रामोद रामोदक्ष *अन्यग्रीव
*काश *काण गोल *आह्न *गोलाह्न अर्क *स्वन *अर्कस्वन *शुन *वन *पत *पद *चक्र *कुल ग्रीवा *श्रविष्ठा *पावितृ *पवित्रा (पावित्र) *पविन्दा *गो-
मिन् श्याम धूम धूम्र वत्स वाग्मिन् विश्वानर विश्वतर वत *सनख *सन *खड *जड *गद जण्ड *अर्ह (अर्थ) *वीक्ष *विशम्प विशाल गिरि चपल

'स्त्रीबहुष्वायनञ्' इत्यनेनायनञ् भवति ॥—कुञ्जा—॥ यदा कुञ्जस्यापत्यं वृद्धं कौञ्जायन्य तस्याप्यपत्यानि युवान अत इञ् 'ञिदार्षात्'—इति तस्य लुपि एकत्वद्वित्वरूपनिमित्ताभावात् ञ्यायन्यनिवृत्तौ बहुत्वसद्भावात् 'स्त्रीबहुष्वायनञ्' इत्यनेनायनञ् भवति। यदा कौञ्जायन्ये सति कौञ्जा- तदा कौञ्जायना इति रूपम् । यदा तु कुञ्जस्यापत्यानि वृद्धानि कौञ्जायनास्तेषामपत्यं युवा इञो 'ञिदार्षात्'—इति लुपि आयनञ्निमित्तबहुत्वाभावात् तन्निवृत्तौ ञायन्यनिमित्तैकत्वभावात् ञायन्ये सति कौञ्जा- यन्य इत्येव रूपम् ॥—अश्वा—॥ गण । 'लटिखटि'—ति अश्वः । 'शमिमी'—इति शङ्खः । अचि जन । 'वृजिगृपि'—इति किति से उत्स । ग्रसते 'रुक्मग्रीष्म'—इति ग्रीष्म । 'यम्यजि'— इत्युने अर्जुन । विलेरपत्य 'दुनादि'—इति वैल्य । 'विन्देर्नलुक्च' इति विद । 'नाम्युपान्त्य'—इति के कुट पुट स्फुट । 'विपिन'—इति रोहिण । खर्जमार्जने च 'कुमुल'—इति खर्जुल । 'मीमसि'— इति खर्जूर । लत्वे खर्जूल । पिञ्जयाति 'मीमसि' इति पिञ्जूर । भन्दते सुखी भवति 'स्थण्डिल'—इति भदि्ल । भटति 'कल्यनि'—इति भटिल ॥ भण्डते 'भण्डेर्नलुक् च वा' भडिल भण्डिल । भटस्य तुल्यो भटक । भण्डति 'पुतपित्त'—इति भडित । 'भण्डन भण्ड' संजातोऽस्य भण्डित । प्राद्दते 'पुतपित'—इति प्राद्दत । उन्देः स्थादित्वात् के उद । क्षैजें क्विप् तान् अन्धयाति क्षान्ध । 'ग्रह्व—' इति ग्रीवः । रामामुनत्ति रामसुदक यस्य वा रामोदः । अक्षो रामाणामुदश रामोदक्ष । अन्यान् गृणाति अन्यग्रीव । अचि काश । घञि काण । ग्रहाद्भ्य किति गोल । करणे के आह्न । कर्मधारये गोलाह्न । सुष्ठु अनिति स्वन । अर्काणां स्तावकाना स्वा अर्कस्वन । के शुन । अचि वन पत पद । 'कृगो द्वे च' चक्र । के कुल । श्रवण श्रव । ततो मतु । नक्षत्रा मध्ये श्रववती श्रविष्ठा । पूङः 'तादृश्‍तृ'—पावितृ । 'ऋषिनाम्नो करणे' पवित्रा । पावे वज्र ददाति पविन्द्रा । 'गो' इति मिन्प्रत्यये गोमिन् । अन्ये सुगमा । सह नखैर्वर्तते सनख । सनत्यचि सन । खडण् णिचोऽनित्यत्वेऽचि खडः । जल घात्ये डलयोरैक्ये अचि जड । अचि गद । अर्हः । वीक्ष । विशाम्यति । 'भापा'—इति विशम्प ।

गिरिचपल चुप *दासक *चुपदासक धान्या *धन्य *धर्म्य *पुंसिजात *शूद्रक सुमनस् दुर्मनस् *आतव *उत्सातव *कितव *किव शिव *खिव
*खिप खदिर आनडुह्य, आनडुह्यायन इति यञन्तादायनणापि सिध्यति प्राग्जितीयस्वरादौ तु 'यूनि लुप्' (६-१-१३७) इति *नित्यलुवर्थमस्योपादा-
नम्। इत्यश्वादिः। अत्र योऽश्वादिर्वृद्धकाण्डेऽन्यत्रापि पठ्यते तस्य सोऽपि भवति। अश्वशब्दाद्विदादिषु पाठादञ्। इहायनञ्। आश्वः। आश्वायनः।
शंखशब्दाद्विदादिष्वञ् गर्गादिषु यञ् कुञ्जादिषु ञ्यः इहायनञ्। शाङ्खः। शाङ्खगः। शाङ्खायन्यः। शांखायनः। जनशब्दान्नडादिष्वायनण् इहायनञ्।
तत्र *यूनि प्रत्यये विधेये विशेषः। जानायनिः जानायनो युवा। उत्सग्रीष्मयोरुत्सादिषु पाठोऽनन्तरार्थोऽनपत्यार्थश्च इह तु वृद्धेऽयमेव यथा स्यादित्ये-
वमर्थः। औत्सायनः। ग्रैष्मायणः। अर्जुनशब्दस्य बाह्वादिषु पाठोऽनन्तरार्थः। वृद्धे त्वयमेव। आर्जुनायनः। वैल्येति विलिशब्दो ञ्यान्तस्ततो यूनि
प्रत्ययः। वैल्यायनो युवा॥ ४९॥ शपभरद्वाजादात्रेये॥ ६। १। ५०॥ शपभरद्वाज इत्येताभ्यामात्रेयापत्ये वृद्धे आयनञ् प्रत्ययो भवति। शापायनः भार-
द्वाजायनः आत्रेयश्चेत्। आत्रेय इति किम्। शापिः। भारद्वाजः। भारद्वाजौ। विदादौ॥ ५०॥ भर्गात्त्रैगर्ते॥ ६। १। ५१॥ भर्गशब्दात्त्रैगर्तेऽपत्ये वृद्धे आयनञ्
प्रत्ययो भवति। भार्गायणस्त्रैगर्तश्चेत्। अन्यो भार्गिः॥ ५१॥ *आत्रेयाद्भारद्वाजे॥ ६। १। ५२॥ आत्रेयशब्दाद्वृद्धप्रत्ययान्ताद्भारद्वाजे यून्यपत्ये आयनञ्
प्रत्ययो भवति। आत्रेयायणो भारद्वाजो युवा। आत्रेयोऽन्यः। 'ञिदार्षात्—' (६-१-१४०) इतीञो लुप्॥ ५२॥ नडादिभ्य आयनण्॥ ६। १। ५३॥
नडादिभ्यो ङसन्तेभ्यो वृद्धेऽपत्ये आयनण् प्रत्ययो भवति। नडस्यापत्यं वृद्धं नाडायनः। चारायणः। वृद्ध इत्येव। नडस्यापत्यमनन्तरं नाडिः। णकारो वृद्ध्यर्थः।
नड चर वक मुञ्ज इतिक इतिश उपक लमक सत्तल (सत्तल) सत्वल व्याज, (वाज) व्यतिकेत्येके। प्राण नर सायक दाश मित्र दाशमित्र द्वीपा द्वीप पिङ्गर पिङ्गल किंकर
किंकल कातर कायल काश्यप काश्य नाव्य अज अमुष्य लिगु चित्र अमित्र कुमार लोह स्तम्ब स्तम्भ अग्र शिंशपा तृण शकट मिकट मिमत सुमत जन ऋच् इन्ध ऋगिन्व
मित जनंधर जलंधर युगंधर हंसक दण्डिन् हस्तिन् पञ्चाल चमसिन् सुकृत्य स्थिरक ब्राह्मण चटक अश्वल खरप वदर शोण दण्डम छाग दुर्ग अलोह आलोह कामुक (काम्मुक)
ब्रह्मदत्त उदुम्बर सण लङ्क केकर (ककर) नाव्य आलाह ऋग तृणगण अश्वर वालिश दण्डप। इति नडादयः। बहुवचनमाकृतिगणार्थम्॥ ५३॥ *यञिञः॥ ६।
१। ५४॥ वृद्ध इति यञिञोर्विशेषणम्। वृद्धे विहितौ यौ यञिञौ तदन्ताद्यून्यपत्ये आयनण् प्रत्ययो भवति। 'वृद्धाद्यूनि' (६-१-३०) इति वचनाद्यूनीति
लभ्यते। गार्ग्यस्यापत्यं युवा गार्ग्यायणः। वात्स्यायनः। दाक्षेरपत्यं युवा दाक्षायणः। प्लाक्षायणः। *औदुम्बरायणः। तैलखलायनः। वृद्धविहितस्येञो ग्रहणादिह

णके दासकः। कर्मधारये चुपदासक। धन लब्धा धन्य। धर्मादनपेतो धर्म्यः। पुंसि जायते स्म पुंसिजात। शद्रं कायात शूद्रकः। आतनोति 'करव'—इत्यातव। कर्मधारये
उत्सातव 'कितिलङि'—इति कितव। किकित ज्ञाने 'प्रद्व'—इति किव। सनग् 'प्रद्व'—इति। 'पम्पा'—इति खिव खिप॥—नित्यलुवर्थमिति। अन्यथा 'वायनणायनिञोः' इति
विकल्पः स्यात्॥—यूनि प्रत्यये विधेये विशेष इति। आयनिञो ञित्वात् 'ञिदार्षादणिञो' इत्यनेन यून्युत्पन्नस्येञो लुब्भवति न त्वायनणः॥—आत्रे—॥—अत्रेरपत्यं वृद्धम् 'इतोऽनिञः'।
अत्रेयस्यापत्यं युवा अनेनायनञ्। द्वितीये वाह्वादीञ्। 'ञिदार्षात्'—लुप्॥—यञि—॥—औदुम्बरायण इति। उदुम्बरस्य राज्ञोऽपत्यं वृद्धं 'साल्वांश'—इतीञ्।

न भवति। उदुम्बराणां राजा औदुम्बरिस्तस्यापत्यमौदुम्बरः औदुम्बरायणिर्वा । 'अवृद्धाद्दोर्नवा' (६-१-११०) इति पक्षे आयनिञ् । गार्ग्या अपत्यं गार्गेयः दाक्षेय इत्यत्र परत्वात् 'ङयाप्त्यूङः' (६-१-७०) इत्येयण् भवति ॥ ५४ ॥ **हरितादेरञः ॥ ६ । १ । ५५ ॥** विदाद्यन्तर्गणो हरितादिः । वृद्धे विहितो योऽञ् तदन्तेभ्यो हरितादिभ्यो यून्यपत्ये आयनण् प्रत्ययो भवति । हरितस्यापत्यं युवा हारितायनः । कैन्दासायनः । हरितादेरिति किम् । वैदस्यापत्यं युवा वैदः । अत्रेञो लुप् । अञ इति किम् । हरितस्यापत्यं वृद्धं हारितः ॥ ५५ ॥ **क्रोष्टृशलङ्कोर्लुक् च ॥ ६ । १ । ५६ ॥** क्रोष्टृ शलङ्कु इत्येताभ्यां वृद्धेऽपत्ये आयनण् प्रत्ययो भवति तयोश्चान्तस्य लुग्भवति । क्रोष्टुरपत्यं वृद्धं क्रौष्टायनः । शालङ्कायनः ॥ ५६ ॥ ***दर्भकृष्णाग्निशर्मरणशरद्वच्छुनकादाग्रायणब्राह्मणवार्षगण्यवासिष्ठभार्गववात्स्ये ॥ ६ । १ । ५७ ॥** दर्भादिभ्य आग्रायणादिषु यथासंख्यं वृद्धेष्वपत्येषु आयनण् प्रत्ययो भवति । दर्भादाग्रायणे, दर्भस्यापत्यमाग्रायणश्चेत् दार्भायणः । दार्भिरन्यः । कृष्णाद्ब्राह्मणे, कार्ष्णायनो ब्राह्मणः । कार्ष्णिरन्यः । अग्निशर्मणो वार्षगण्ये, आग्निशर्मायणो वार्षगण्यः । आग्निशर्मिरन्यः । रणाद्वासिष्ठे, राणायनो वासिष्ठः । राणिरन्यः । शरद्वतो भार्गवे, शारद्वतायनो भार्गवः । शारद्वतोऽन्यः । शुनकाद्वात्स्ये, शौनकायनो वात्स्यः । शौनकोऽन्यः । शरद्वच्छुनकौ विदादी ॥ ५७ ॥ **जीवन्तपर्वताद्वा ॥ ६ । १ । ५८ ॥** जीवन्तपर्वताभ्यां वृद्धेऽपत्ये आयनण् प्रत्ययो वा भवति । जैवन्तायनः । जैवन्तिः । पार्वतायनः । पार्वतिः । वृद्धे इत्येव । जैवन्तिः ॥ ५८ ॥ **द्रोणाद्वा ॥ ६ । १ । ५९ ॥** योगविभागादवृद्ध इति निवृत्तम् । द्रोणशब्दादपत्यमात्रे आयनण् प्रत्ययो वा भवति । द्रौणायनः । द्रौणिः ॥ ५९ ॥ ***शिवादेरण् ॥ ६ । १ । ६० ॥** शिवादिभ्यो ङसन्तेभ्योऽपत्यमात्रेऽण् प्रत्ययो भवति । अत इञादेरपवादः । शिवस्यापत्यं शैवः । प्रौष्ठः । *प्रौष्ठिकः । शिव *प्रोष्ठ *प्रौष्ठिक चण्ट *जम्ब जम्भ ककुभ *कुथार अनभिम्लान *ककुत्स्थ कोहड *कहूय रोध पिलधर वतण्ड तृण कर्ण क्षीरह्रद जलह्रद परिपिक शिलिन्द गोफिल गोहिल कपिलक जटिलक बधिरक मञ्जिरक वृष्णिक खञ्जार खञ्जाल रेख लेख आलेखन वर्तन ऋक्ष वर्तनर्क्ष विकट पिटाक तृक्षाक नभाक ऊर्णनाभ सुपिष्ट पिष्टकर्णक पर्णक मसुरकर्ण मसूरकर्ण खडूरक गडेरक यस्क लह्य दुह्य अयस्थूण भलन्द भलन्दन विरूप विरूपाक्ष भूरि संधि भूमि मुनि कुब्जा कोकिला इला सपत्नी जरत्कारु उत्केया काय्या सुरोहिका पीठीनासा महित्री आर्यश्वेता ऋष्टिषेण गङ्गा पाण्डु विपाश् तक्षन् । इति शिवादिः । अत्राविरूपाक्षादिञोऽपवादः । भूर्यादीनामा आर्यश्वेताया एयणः, ऋष्टिषेणस्य सेनान्तस्य सेनान्तव्येञोः । विदादिपाठाद्वृद्धेऽञेव भवति । तदन्ताच्च यूनि 'अत इञ्' (६-१-३१) तस्य 'ञिदार्षादणिञोः,—(६-१-१४०) इति लुपि आर्ष्टिषेणः पिता आर्ष्टिषेणः पुत्रः । तथा ऋष्टिषेणस्यापत्यं वृद्धं बहवः विदाद्यञ् तस्य 'यञञः'—(६-१-१२६) इत्यादिना लुपि ऋष्टिषेणाः । पाण्डुपाठः शुभ्राद्येयणा गङ्गापाठस्तिकाद्यायनिञा च समावेशार्थः । तेन पाण्डोर्द्वैरूप्यं गङ्गायाश्च त्रैरूप्यं सिद्धम् । पाण्डवः । पाण्डवेयः ।

---

तस्यापत्यं युवा । एव द्वितीयेऽपि ॥—दर्भकृष्णा—॥ दर्भादिभ्य पक्षे बाह्वादीञ् ॥—शिवा—॥ प्रवृद्धावोष्ठो यस्य प्रौष्ठः । 'वोऽशौतौ'—इति वा लुपि । प्रौष्ठावस्य स्त 'अतोऽनेक'—इतीके प्रौष्ठिक । जनैच् 'तुम्बस्तुम्बादयः' जम्ब । कुथमियर्ति कर्म्मणोऽणि कुथारः । कु 'अव्ययस्य कोद्च' इत्याकि कक् कुत्सितं तिष्ठन्ति विपक्षा अस्मिन् स्थादिभ्यः के ककुत्स्थः । कं हूयति क्विपि

गाङ्गः। गाङ्गायनिः। गाङ्गेयः। विपाश्पाठः कुञ्जादिलक्षणेन आयन्येन समावेशार्थः। वैपाशः। वैपाशायन्यः। तक्षन्पाठः कुर्वादिञ्येन समावेशार्थः। ताक्ष्णः। ताक्ष्ण्यः ॥ ६० ॥ *ऋषिवृष्ण्यन्धककुरुभ्यः ॥ ६ । १ । ६१ ॥ ऋषयो लौकिका वसिष्ठादयः अपत्ययोगात्। वृष्णयः अन्धकाः। कुरवश्च प्रसिद्धा *वंशाख्याः क्षत्रियाः। ऋष्यादिवचनेभ्यः शब्देभ्योऽपत्येऽण् प्रत्ययो भवति। इञोऽपवादः। ऋषि, वासिष्ठः। वैश्वामित्रः। गौतमः। वृष्णि, वासुदेवः। आनिरुद्धः। वाज्रः। प्रातिवाहनः। औदारः। अन्धक, *श्वाफल्कः। रान्धसः। चैत्रकः। कुरु, नाकुलः। साहदेवः। दौःशासनः। दौर्योधनः। अत्र्यादिभ्यस्तु परत्वात् *एयण् ञ्येञौ च भवतः। आत्रेयः। जातसेन्यः। जातसेनिः। औग्रसेन्यः। औग्रसेनिः। वैष्वक्सेन्यः। वैष्वक्सेनिः। भैमसेन्यः। भैमसेनिः। कथं दौर्योधनिः। क्रियाशब्दत्वात् दुःखेन युध्यत इति। यौधिष्ठिरिरार्जुनिरित्यत्र तु बाह्वादित्वादिञेव ॥ ६१ ॥ कन्यात्रिवेण्याः कनीनत्रिवणं च ॥ ६ । १ । ६२ ॥ कन्याशब्दात् त्रिवेणीशब्दाच्चापत्येऽण् प्रत्ययो भवति तत्संनियोगे कनीन त्रिवण इत्येतौ च यथासंख्यमादेशौ भवतः। कन्याया अपत्यं कानीनो व्यासः। कानीनः कर्णः। त्रिवेण्या अपत्यं त्रैवणः। एयणोऽपवादः ॥ ६२ ॥ *शुङ्गाभ्यां भारद्वाजे ॥ ६ । १ । ६३ ॥ शुङ्गशब्दात्पुंलिङ्गात् स्त्रीलिङ्गाच्च भारद्वाजेऽपत्येऽण् प्रत्ययो भवति। शुङ्गस्य शुङ्गाया वा अपत्यं शौङ्गो भारद्वाजः। शौङ्गिः शौङ्गेयश्चान्यः। 'नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति सिद्धे परत्वात् 'द्विस्वरादनद्याः' (६-१-७१) इत्येयण् प्राप्नोति तद्बाधनार्थं द्विवचनेन स्त्रीलिङ्गः शुङ्गाशब्द उपादीयते।' ६३ ॥ *विकर्णच्छगलाद्वात्स्यात्रेये ॥ ६ । १ । ६४ ॥ विकर्णछगल इत्येताभ्यां यथासंख्यं वात्स्ये आत्रेये चापत्येण् प्रत्ययो भवति। वैकर्णो वात्स्यः। *वैकर्णिरन्यः। छागल आत्रेयः। छागलिरन्यः ॥ ६४ ॥ णश्च विश्रवसो विश्लुक् च वा ॥ ६ । १ । ६५ ॥ विश्रवसोऽपत्येऽण् प्रत्ययस्तत्संनियोगे णकारश्चान्तादेशो भवति णसंनियोगे विश्शब्दलोपश्चास्य वा। विश्रवसोऽपत्यं वैश्रवणः। विश्लुकि तु रावणः। अण् सिद्ध एवादेशार्थं वचनम्। एवमुत्तरत्र ॥ ६५ ॥ *संख्यासंभद्रान्मातुर्मातुर् च ॥ ६ । १ । ६६ ॥ संख्यावाचिनः सम्भद्र इत्येताभ्यां च परो यो मातृशब्दस्तदन्तादपत्येऽण् प्रत्ययो भवति मातुश्च मातुर् इत्यादेशः। द्वयोर्मात्रोरपत्यं द्वैमातुरः। षाड्मातुरः। शतस्य माता शतमाता तस्यापत्यं शातमातुरो भरतः। संगता माता संमाता तस्या अपत्यं सांमातुरः। भद्राया भद्रस्य वा माता भद्रमाता तस्या अपत्यं भाद्रमातुरः। 'संबन्धिनां संबन्धे' (७-४-१२१) इति वचनात् धान्यमातुर्न भवति। तेन द्वयोर्मात्रोरपत्यं *द्वैमा-

---

प्टति दीर्घे कद्रू याति 'क्वचित्' इत्यनेन ङे कद्रूय ॥—ऋषि—॥—वंशाख्या इति। वंशनिमित्ता आख्या अभिधानं येषां ते ॥—श्वाफल्क इति 'द्वारादेः' इति न भवति व्युत्पत्तेरनाश्रयणात्। श्वानं फाल्यतीति तु वर्णनिर्णयार्थं वाक्यम् ॥—एयण् ञेञ्यौ चेति। 'इतोऽनिञः' 'सेनान्तकारु'—इत्येताभ्याम् ॥—शुङ्गा—॥—शुङ्गश्च शुङ्गा च 'पुरुषः स्त्रिया' इति पुरुष शिष्यते ॥—विक—॥—वैकर्णिरन्य इति ॥ ऋषित्वेऽपि व्यावृत्तिनलादत इञ् बाह्वादित्वाद्वा ॥—संख्या—॥—द्वैमात्र इति। नन्वत्र ञ्णिति तद्धिते 'नामिनोऽकलिहले' इति वृद्धिः कथं न भवति। उच्यते। तक्रकौण्डिन्यन्यायेन ञ्णिति तद्धिते 'वृद्धिः स्वर—' इति आदेरेव वृद्धिः न तु 'नामिनोऽकलिहले.' इत्यन्तस्य। यद्वाख्यातकृत्प्रकरणमेकमेव तत्साचर्यादत्र प्रकरणे यत्सूत्रं तद्विहितप्रत्ययो

शुभ्रादिपाठाद्वैमात्रेयः ॥ ६६ ॥ *अदोर्नदीमानुषीनाम्नः ॥ ६ । १ । ६७ ॥ अदुसंज्ञकान्न-
दीनाम्नो मानुषीनाम्नश्चापत्येण् प्रत्ययो भवति । एयणोऽपवादः । यामुनः प्रणेतः । ऐरावतः उध्यः । वैतस्तः पलाश(ल)शिराः । नार्मदो नीलः । मानुषी, *दैवदत्तः ।
सौदर्शनः । सौतारः । स्वायंप्रभः । चैन्तितः । शैक्षितः । अदोरिति किम् । *चान्द्रभागेयः । वासवदत्तेयः । नदीमानुषीग्रहणं किम् । सुपर्ण्याः *सुपर्णाया वापत्यं
सौपर्णेयः । वैनतेयः । *देव्यावेते इत्येके । पक्षिण्यावित्यन्ये । नामग्रहणं किम् । शौभनेयः । शोभनाशब्दो नद्यां मानुष्यां च वर्तते न तु नामधेयत्वेन ॥ ६७ ॥
*पीलासाल्वामण्डूकाद्वा ॥ ६ । १ । ६८ ॥ पीलासाल्वामण्डूकशब्देभ्योऽपत्येऽण् प्रत्ययो वा भवति । पैलः । पैलेयः । साल्वः । साल्वेयः । माण्डूकः । माण्डूकिः ।
पीलासाल्वाभ्यां द्विस्वरैयणि मण्डूकादिञि प्राप्ते वचनम् । वाग्रहणं मण्डूकस्य *इञर्थम् ॥ ६८ ॥ *दितेश्चैयण् वा ॥ ६ । १ । ६९ ॥ दितिशब्दान्मण्डूकशब्दाच्च
ङसन्तादपत्ये एयण् वा भवति । दैतेयः । दैत्यः । माण्डूकेयः । माण्डूकिः । चकारो मण्डूकार्थः । पीलासाल्वाभ्यां त्वण्विकल्पादेव *एयण् सिद्धः । *मण्डूके त्रैरूप्यं सिद्धमेव ।
वाग्रहणं दितेर्ण्यार्थम् । 'इतोऽनिञः' ( ६-१-७२ ) इत्येव दितेरेयणि सिद्धे 'अनिदम्यणपवादे च'—( ६-१-१९ ) इत्यनेन तस्य बाधायां प्रतिप्र-
सवार्थं वचनम् ॥ ६९ ॥ *ङ्याप्त्यूङः ॥ ६ । १ । ७० ॥ ङ्यन्तादाबन्तात्त्यन्तादूङन्ताच्चापत्ये एयण् प्रत्ययो भवति । सौपर्णेयः । वैनतेयः । *यौवतेयः । *कामण्डलेयः
॥ ७० ॥ *द्विस्वरादनद्याः ॥ ६ । १ । ७१ ॥ द्विस्वरात् ङ्याप्त्यूङन्तादनदीवाचिनोऽपत्ये एयण् प्रत्ययो भवति । *दात्तेयः । गौप्तेयः । अनद्या इति किम् । सीताया अ-
पत्यं सैतः । संध्यायाः सान्ध्यः । वेण्णाया वैण्णः । सिप्रायाः सैप्रः । रेवायाः रैवः । शुद्धायाः शौद्धः । कुलायाः कौलः । मह्या माहः । सीतादयो नद्यः । अदोर्नदीमा-
नुषीनाम्नोऽपवादो योगः ॥ ७१ ॥ इतोऽनिञः ॥ ६ । १ । ७२ ॥ इञन्तवर्जितात् द्विस्वरादिकारान्तादपत्ये एयण् प्रत्ययो भवति । नाभेरपत्यं नाभेयः । अत्रेरात्रेयः ।
अहेराहेयः । दुलेर्दौलेयः । वलेर्वालेयः । निधेर्नैधेयः । इत इति किम् । दाक्षिः । अनिञ इति किम् । दाक्षायणः । द्विस्वरादित्येव । मरीचेरपत्यं मारीचः । कथमजवस्तेरप-
त्यमाजवस्तेयः शकन्धेरपत्यं शाकन्धेयः परिधेः पारिधेयः शकुनेः शाकुनेयः अतिथेरातिथेय इति । शुभ्रादित्वाद्भविष्यति ॥ ७२ ॥ *शुभ्रादिभ्यः ॥ ६ । १ । ७३ ॥

---

गृह्यते । अयं तु भिन्नप्रकरणविहित ॥—अदोर्नदीमानुषी—॥—दैवदत्त इति । अदोरेवेति सावधारणव्याख्यानात् या नित्य दुसंज्ञा सैवात्र गृह्यते न 'सञ्ज्ञा दुवा' इति वैकल्पिकी तेन दैवदत्त इ-
त्यादि सिद्धम् । अन्यथाऽत्र संदेह स्यात् । अत एव व्यावृत्त्युदाहरणे नित्या दुसंज्ञा उदाहृता ॥—चान्द्रभागेय इति । चन्द्रभागौ नाम नगौ । ताभ्यां प्रभवति । अण् शोणादित्वात् वा ङ्यामापि च
चान्द्रभाग्या चान्द्रभागाया वाऽपत्यम् ॥—सुपर्णाया वेति । गरुडमातुर्जातित्वमन्ये न मन्यन्ते इत्याह ॥—देव्याविति । ननु सुपर्णाविनताशब्दयोरेक एव शब्दार्थस्तत्कथं देव्याविति द्विवचनम् । उच्यते । शब्दभेदा-
दर्थभेदो भवतीत्याश्रयणात् ॥—पीला—॥—इञर्थमिति । अन्यथा वाग्रहणं विनापि उत्तरेण चानुकृष्टेभ्य एभ्यस्त्रिभ्योऽप्येयण् । अनेन त्वण् भाति । मण्डूकात्तु कथमपीञ् न स्यादिति ॥—दिते—॥—
एयण् सिद्ध इति । 'द्विस्वरादनद्या' इत्यनेन ॥— मण्डूके त्रैरूप्यमिति । अत्र वाग्रहणं विनापि पूर्वसूत्रे वाग्रहणेन मण्डूकेऽणिञो सिद्धत्वात् अनेन च एयण्विधानात् त्रैरूप्यं सिद्धमित्यर्थः ॥—
ङ्याप्त्यूङः ॥—यौवतेय इति । एयेऽन्नाय्येवेति नियमात् पुंवत्त्वाभावात्तेर्न निवृत्तिः ॥—कामण्डलेय इति । देवीवचनोऽत्र कमण्डलुशब्दः । मानुषीवचनात्तु 'अदोर्नदी'—इत्यण् चतुष्पाद्वचनात्त्वेयञ् स्यात्
'अकद्रूपाण्ड्वो—' इति उवर्णस्य लुक् ॥—द्विस्व—॥—दात्तेय इति । ङ्याप्त्यूङो बाधकस्य 'अदोर्नदी—' इत्यणो बाधकोऽनेनैयण् ॥—शुभ्रा—॥ शोभते । 'ऋष्यजि'—इति । विध्यानि पुराणि, येन

शुभ्रादिभ्योऽपत्ये एयण् प्रत्ययो भवति । यथायोगमिञादीनामपवादः । शौभ्रेयः । वैष्टपुरेयः । शुभ्र विष्टपुर विष्टपर ब्रह्मकृत शतद्वार शताद्वार शालाथल किट (टीक) *शालूक कृकलास प्रवाहण भाण भारत भारम कुदत्त कर्बूर इतर अन्यतर आलीढ सुदत्त सुदक्ष तुद अकशाप वादन शतल शकल (शक) शवल *खर्जूर कुशाम्ब शुक्र विग्र बीज अश्व बीजाश्व अजिर मकष्टु खण्डु मकष्टु मघष्टु सुकण्डु मृकण्डु जिह्माशिन् अजवस्ति शकन्धि परिधि अणीचि कणीचि शकुनि अतिथि अनुदृष्टि शलाकाभ्रू लेखाभ्रू रोहिणी रुक्मिणी किकशा विवशा गन्धपिङ्गला पडोन्मता कुमारिका *कुबेरिका अम्बिका अशोका श्वन् गङ्गा पाण्डु विमातृ विधवा कद्रू *गोधा सुदामन् सुनामन् । इति शुभ्रादयः ॥ मवकान्तानामिञोऽपवाद एयण् मखण्डवादीनां विमात्रन्तानामणः विधवाया एरणः कद्रूगोधयोश्चतुष्पादेयञः । सुदामन्सुनाम्नोरिञा शुभ्रस्य तु ङ्येन समावेशार्थः पाठः । बहुवचनमाकृतिगणार्थम् ॥ ७३ ॥ श्यामलक्षणाद्वासिष्ठे ॥ ६ । १ । ७४ ॥ श्यामलक्षण इत्येताभ्यां वासिष्ठेऽपत्यविशेषे एयण् प्रत्ययो भवति । श्यामेयो वासिष्ठः । श्यामायनोऽन्यः । अश्वादित्वात् वृद्धे आयनञ्, अवृद्धे तु श्यामिः । लाक्षणेयो वासिष्ठः । लाक्षणिरन्यः ॥ ७४ ॥ विकर्णकुषीतकात्काश्यपे ॥ ६ । १ । ७५ ॥ विकर्णकुषीतक इत्येताभ्यां काश्यपेऽपत्यविशेषे एयण् प्रत्ययो भवति । वैकर्णेयः काश्यपः । वैकर्णिरन्यः । कौषीतकेयः काश्यपः । कौषीतकिरन्यः ॥ ७५ ॥ *भुवो भुव् च ॥ ६ । १ । ७६ ॥ भूशब्दादपत्ये एयण् प्रत्ययो भवति भुव् चास्यादेशः । *भौवेयः ॥ ७६ ॥ *कल्याण्यादेरिन् चान्तस्य ॥ ६ । १ । ७७ ॥ कल्याण्यादिभ्योऽपत्ये एयण् प्रत्ययो भवति इन् इत्ययं चान्तस्यादेशः । कल्याण्या अपत्यं काल्याणिनेयः । सौभागिनेयः । कल्याणी सुभगा दुर्भगा बन्धकी जरती वलीवर्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्री अनुदृष्टि अनुसृष्टि । इति कल्याण्यादिः । परस्त्र्यन्तानां 'ङ्याप्त्यूङः' ( ६–१–७० ) इति अनुदृष्टेः 'शुभ्रादिभ्यः' (६–१–७३) इति एयण् सिद्ध एव इनादेशमात्रं विधीयते । अनुसृष्टेरुभयम् ॥ ७७ ॥ कुलटाया वा ॥६ । १ । ७८॥ कुलान्यटति कुलटा । कुलटाशब्दादपत्ये एयण् प्रत्ययो भवति तत्संनियोगे इन् च वान्तादेशः । आवन्तत्वादेयण् सिद्ध आदेशार्थं वचनम् । अत एवादेशस्यैव विकल्पो न त्वेयणः । कौलटिनेयः । कौलटेयः । या तु कुलान्यटन्ती शीलं भिनत्ति ततः परत्वात् क्षुद्रालक्षण एरणेव । कौलटेरः ॥ ७८ ॥ *चटकाण्णैरः स्त्रियां तु लुप् ॥ ६ । १ । ७९ ॥ चटकशब्दात् ङसन्तादपत्यमात्रे णैरः प्रत्ययो भवति स्त्रियां त्वपत्ये विहितस्य णैरस्य लुप् । चटकस्यापत्यं चाटकैरः । लिङ्गविशिष्टस्य ग्रहणात् चटकाया अपि चाटकैरः । स्त्रियां तु लुप्, चटकस्य चटकाया वा अपत्यं स्त्री *चटका ।

---

शिष्ट पर येन । पञ्चधा क्रियते स्म । शत द्वाराणि यस्या, शतमाद्वरति । शालायां तिष्ठति । पृषोदरादित्वात् । कीर्यते 'नाम्युपान्त्य'—इति क । कल्पणोर्णित् शालूकः । कृकेण लसति । प्रवाहयति नन्द्यादित्वादनः । भण्यते वपादेयतया । भरतस्यायम् । भामी रमते । कादीयते स्म । कल्पते स्म कल्पते 'मीसरि—' इति । दण्डूल्या किर् । द्वयोर्मध्ये प्रकृष्टोऽन्यतर । आलिह्यते स्म । गरेण दीयते स्म । शोभना दक्षा यस्य । तुदति 'नाम्युपान्त्य'—इति क । अकं शपति । वादयति नन्द्यादित्वात् । शतं लाति । 'मीमसि'—इति खर्जूरः ॥ को शाम्यति 'शम्यगोर्णिका' । विगता नासिका यस्य । वियो जङ् । बीजमासो अश्व । 'स्थविर'—इति अजिर । मया लक्ष्म्या वक्र मया राज्यति कषति घर्षति 'केवडु'—इति 'दृषाषो बहुलम्' । जिह्मभाती लोचशील । अजस्येव वास्तिरस्य । शकान् अन्ययाति । परिधीयते । 'मृदि'—इति शकेरानि । अतिरिथि । अनुदृश्यात् । शलाकावत् लेखावत् भ्रूर्यस्य । 'विपिन'—इति रोहिणी । रुक्ममस्या अस्ति । विवष्टि विगतो वशो यस्या वा । कुबेरस्य तुल्या कुबेरिका । अम्बते अम्बायास्तुल्या वा । न विद्यते शोको यस्या. । विगता माता विगतो धवो यस्या. । गुध्यते गोधा । शोभनं दाम नाम यस्या ॥—भुवो—॥—भौवेय इति । यथा शुद्धकस्याऽपत्यसामान्यतया भुवोऽपि ॥—कल्या—॥ शुभ्रादित्वात् आनुदृष्टेय । कल्याण्यादिपाठात् आनुदृष्टिनेय. ॥—चट—॥—चटकेति । जातिङीषापकोऽजादेराप् । क्षिपकादित्वादित्वाभावे प्रत्ययलु-

*चटकेति जातिशब्दोऽस्त्येव स्त्रियामपत्ये प्रत्ययाश्रवणार्थं लुब्वचनम् । अस्त्रियामित्येव सिद्धे प्रत्ययान्तरबाधनार्थं णेरविधानम् ॥ ७९ ॥ *क्षुद्राभ्य एरण् वा ॥ ६ । १ । ८० ॥ क्षुद्रा अङ्गहीना अनियतपुंस्का वा स्त्रियः । बहुवचनं क्षुद्रार्थपरिग्रहार्थम् । क्षुद्रावाचिभ्यः शब्देभ्यो ङसन्तेभ्यः स्त्रीलिङ्गेभ्योऽपत्ये एरण् प्रत्ययो वा भवति । *अणेयणोरपवादः । काणाया अपत्यं काणेरः । काणेयः । दास्या दासेरः । दासेयः । नट्या नाटेरः । नाटेयः । कर्दनायाः कार्दनेरः । कार्दनेयः ॥ ८० ॥ गोधाया दुष्टे णारश्च ॥ ६ । १ । ८१ ॥ गोधाशब्दात् ङसन्तात् दुष्टेऽपत्ये णारश्चकारादेरण् च प्रत्ययो भवति । गोधाया अपत्यं दुष्टं गौधारः । गौधेरः । योऽहिना गोधायां जन्यते । गौधेयोऽन्यः । शुभ्रादित्वादेयण् ॥ ८१ ॥ जण्टपण्टात् ॥ ६ । १ । ८२ ॥ जण्टपण्ट इत्येताभ्यामपत्ये णारः प्रत्ययो भवति । जाण्टारः । पाण्टारः । केचित्तु पक्षस्यापत्यं पाक्षार इत्यपीच्छन्ति ॥ ८२ ॥ *चतुष्पाद्भ्य एयञ् ॥ ६ । १ । ८३ ॥ चतुष्पाद्वाचिभ्यो ङसन्तेभ्योऽपत्ये एयञ् प्रत्ययो भवति । अणादीनामपवादः । कमण्डल्वा अपत्यं कामण्डलेयः । शितिवाहा शैतिवाहेयः । मद्रबाहा माद्रबाहेयः । जम्ब्वा जाम्बेयः । *शबलायाः शाबलेयः । बहुलाया बाहुलेयः । सुरभेः सौरभेयः ॥ ८३ ॥ गृष्ट्यादेः ॥ ६ । १ । ८४ ॥ गृष्ट्यादिभ्योऽपत्ये एयञ् प्रत्ययो भवति । अणादीनामपवादः । गृष्टेरपत्यं गार्ष्टेयः । हृष्टेः हार्ष्टेयः । गृष्टिशब्दो यद्यचतुष्पाद्वचनस्ततः पूर्वेणैव सिद्धे अचतुष्पादर्थमुपादानम् । गृष्टि हृष्टि हलि वालि विश्रि कुद्रि अजवस्ति मित्रयु । इति गृष्ट्यादिः । जकारस्य ञित्कार्यार्थत्वान्मैत्रेयः पिता *मैत्रेयः पुत्रः ॥ ८४ ॥ *वाडवेयो वृषे ॥ ६ । १ । ८५ ॥ वाडवेय इति वडवाशब्दात् वृषे एयञ् एयण् वा प्रत्ययो निपात्यते । वृषो यो गर्भे वीजं निषिञ्चति । वडवाया वृषः वाडवेयः । अपत्येऽणेव भवति । वाडवः । निपातनमेयणेयञोरुभयोरपि वृषे व्यवस्थापनार्थम् । अन्यथा *अन्यतरोऽपत्ये प्रसज्ज्येत ॥ ८५ ॥ *रेवत्यादेरिकण् ॥ ६ । १ । ८६ ॥ रेवतीत्येवमादिभ्योऽपत्ये इकण् प्रत्ययो भवति । एयणादीनामपवादः । *रैवतिकः । आश्वपालिकः । रेवती अश्वपाली मणिपाली द्वारपाली वृकवञ्चिन् वृकग्राह कर्णग्राह दण्डग्राह कुक्कुटाक्ष । इति रेवत्यादिः । द्वारपाल्यन्तानामेयणोऽपवादः । यदा मानुषीनाम तदाणोऽपि । वृकवञ्चिनोऽणः शेषाणामिञः ॥ ८६ ॥ *वृद्धस्त्रियाः क्षेपे णश्च ॥ ६ । १ । ८७ ॥ वृद्धप्रत्ययान्तात् स्त्रीवाचिनः शब्दादपत्ये णः प्रत्ययो भवति चकारादिकण् च क्षेपे गम्यमाने । पितुरसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य क्षेपः । गार्ग्या अपत्यं युवा *गार्गः गार्गिको वा जाल्मः । ग्लुचुकायन्या *ग्लौचुकायनो

---

पि ' ङ्यादे- '—इति आप्निवृत्तौ पुनरजादित्वादाप् ॥—चटकेति जातिशब्द इति । ननु स्त्रियां लुपा भाव्य ततो जातिशब्देनैव सिद्धे किं स्त्रीलिङ्ग चटकशब्दात्प्रत्ययविधानेनेत्याशङ्का ॥—क्षुद्रा—॥ अणेयणोरपवाद इति । ' अदोर्नदीमानुषी '—इत्यण ' द्विस्वरादनद्याः ' ' ङ्याप्त्यूङ ' इत्येताभ्यामेयण । कर्दना वशोपरि नर्त्तकी ॥—चतुः—॥—चत्वार पादा यासा तासामिति कर्तव्य न तु येषा यत स्त्रीलिङ्गानामेवेष्यते न पुलिङ्गानामिति ॥—शबलाया इति । गौरादौ गुणवाचकपरिग्रहात् सज्ञाशब्दात् ङी ॥—गृष्ट्या—॥—मैत्रेय इति । ' सारवैक्ष्वाक '—इत्यादिनाऽयुलोप । तत इञ् । तस्य ' ञिदार्षा '—इति लोप ॥—वाड—॥—अन्यतरोऽपत्ये इति । ' दितश्चैयण्वा ' इत्यधिकारे यदि क्रियेत तदैयण् चतुष्पाद्भ्य इत्यधिकारे त्वेयञ् स्यादित्यर्थ ॥—रेव—॥—रैवतिक इति रेवते चन्द्रमस ' पुतापित्त '—इति रेवत्या चन्द्रयुक्तया चन्द्रयुक्तात्कालेऽण् लुप् । ' ङ्यादे '—ङीनिवृत्तौ पुनर्ङी । रेवत्यां जाता । ' भर्तुसन्ध्यादेरण् ' ' चित्रारेवती '—इति लुपि ङीनिवृत्ति । पुनर्ङी । रेवत्या अपत्यमनेनेकणि ' जातिश्च णि '—इति पुम्भावे ' अवर्णेवर्णस्य ' ॥—वृद्ध—॥—गार्ग इति । ' जातिश्च णितद्धित '—इति पुम्भावेऽलोपे ' तद्धितयस्वरे '—इति यलुप् ॥—ग्लौचुकायन

ग्लौचुकायनिको वा जाल्मः। म्लुचुकायन्याः म्लौचुकायनः म्लौचुकायनिको वा जाल्मः। 'वृद्धाद्यूनि' (६-१-३०) इति यूनीमौ प्रत्ययौ। वृद्धग्रहणं किम्। *कारिकेयो जाल्मः। स्त्रिया इति किम्। औपगविर्जाल्मः। क्षेप इति किम्। *गार्गेयो माणवकः। मातुः संविज्ञानार्थम् *इदमुच्यते ॥ ८७ ॥ भ्रातुर्व्यः ॥ ६। १। ८८ ॥ भ्रातृशब्दादपत्ये व्यः प्रत्ययो भवति। भ्रातुरपत्यं भ्रातृव्यः। शत्रुरपि भ्रातृव्य उच्यते स उपचारात्। एकद्रव्याभिलापश्चोपचारनिमित्तम् ॥ ८८ ॥ ईयः स्वसुश्च ॥ ६। १। ८९ ॥ भ्रातृशब्दात् स्वसृशब्दाच्चापत्ये ईयः प्रत्ययो भवति। भ्रात्रीयः। स्वस्रीयः ॥ ८९ ॥ *मातृपित्रादेर्डेयणीयणौ ॥ ६। १। ॥ ९० ॥ मातृपितृशब्दावादी अवयवौ यस्य स्वसुः स्वस्रन्तस्य तस्मात् मातृष्वसृशब्दात् पितृष्वसृशब्दाच्चापत्ये डेयण् ईयण् इत्येतौ प्रत्ययौ भवतः। वचनभेदान्न यथासंख्यम्। *मातृष्वसेयः। मातृष्वस्रीयः। पैतृष्वसेयः। पैतृष्वस्रीयः। डित्वात् डेयणि अन्त्यस्वरादिलोपः। मातृपित्रादेः स्वस्रन्तस्य ग्रहणादिह न भवति। परममातृष्वसुरपत्यम्। परमपितृष्वसुरपत्यम्। मातृपितृशब्दयोर्ऋकारान्तयोर्निर्देशात् इह न भवति। मातुःस्वस्रः। पैतुःस्वस्रः। मातुःष्वस्रः। पैतुःष्वस्रः। अत्र 'अलुपि वा' (२-३-१९) इति विकल्पेन षत्वम् ॥ ९० ॥ श्वशुराद्यः ॥ ६। १। ९१ ॥ श्वशुरशब्दादपत्ये यः प्रत्ययो भवति। श्वशुरस्यापत्यं श्वशुर्यः। 'संबन्धिनां संबन्धे' (७-४-१२१) इतीह न भवति। श्वशुरो नाम कश्चित् तस्यापत्यं श्वाशुरिः ॥ ९१ ॥ *जातौ राज्ञः ॥ ६। १। ९२ ॥ राजन्शब्दादपत्ये जातौ गम्यमानायां यः प्रत्ययो भवति। राज्ञोऽपत्यं राजन्यः क्षत्रियजातिश्चेत्। जाताविति किम्। *राजनोऽन्यः ॥ ९२ ॥ *क्षत्रादियः ॥ ६। १। ९३ ॥ क्षत्रशब्दादपत्ये इयः प्रत्ययो भवति जातौ गम्यमानायाम्। क्षत्रस्यापत्यं क्षत्रियः जातिश्चेत्। *क्षात्रिरन्यः ॥ ९३ ॥ *मनोर्याणौ षश्चान्तः ॥ ६। १। ९४ ॥ मनुशब्दादपत्ये य अण् इत्येतौ प्रत्ययौ भवतस्तत्संनियोगे च *मनुशब्दस्य षकारोऽन्तो भवति *जातौ गम्यमानायाम्। मनोरपत्यानि मनुष्याः मानुषाः। मानुषी। जातावित्येव। मानवः। मानवाः। मानवीः प्रजाः पश्य। अत्र हि मनोरपत्यमित्येतावानेवार्थो विवक्षितो न जातिस्तेन *षोऽन्तो न भवति। वृद्धापत्यविवक्षायां तु लोहितादिपाठाद्यञेव। मानव्यः।

---

इति। वृद्धेऽपत्येऽदोरायनि· 'तुर्जाते·' ङी। ततोऽनेन णे 'जातिश्च णि'—इति पुवत्त्वे ङीनिवृत्तौ 'अवर्णेवर्णस्य' इति इलोप। अत्र ण—इकणप्रत्ययोर्णित्त्व ग्लौचुकायन इत्यादौ वृद्धेश्चरितार्थं, न वाच्यं ग्लौचुकायनीभार्य इत्यत्र 'तद्धित· स्वरवृद्धि'—इति पुंवन्निषेधादपि। यतोऽत्र वृद्धप्रत्ययान्तादिति भणनात् यूनीमौ प्रत्ययौ स्त्रियाश्च युवत्वाभावादिमौ प्रत्ययौ न भवत इति ग्लौचुकायनीभार्य इति प्रयोगोऽपि न भवति ॥—कारिकेय इति। कारिकाया अपत्यं 'ङ्याप्त्यूङ' एयण्। 'तद्धिताककोपान्त्य'—इति पुवत्त्वाभाव· ॥—गार्गेयो माणवक इति। नन्विह क्षेपोऽस्त्येवान्यथा माणव इत्यत्र णत्व न स्यात्। सत्यम्। व्याख्यानात् पितुरसविज्ञाने यत्र मात्रा व्यपदेश· स इह क्षेपो गृह्यते। यस्त्वन्यथा स नहि ॥—इदमुच्यत इति। पिता प्रख्यात एव परं पत्नीबाहुल्ये कस्या अयमित्याह ॥—मातृ—॥—माता च पिता च मातृपितरौ। तावादी यस्य शब्दप्रधानत्वात् निर्देशस्य 'आ द्वंद्वे' इति न भवति योनिसम्बन्धाभावात् ॥—मातृष्वसेय इति। 'स्वसृपत्योर्वा' इति वाऽलुपि ॥—जातौ—॥ यद्यपि जातिशब्दा अव्युत्पन्ना राजन्यादयस्तथाप्यपत्यार्थस्य व्युत्पत्तिनिमित्तत्वाश्रयणेन यप्रत्ययस्य आपत्यत्वात् 'तद्धितयस्वर'—इति प्राप्तौ राजन्यकमित्यत्र 'न राजन्यमनुष्ययो' इति निषेधो युज्यते ॥—राजनोऽन्य इति। राज्ञः स्वामिनोऽपत्यं वारणो वा ॥—क्षत्रा—॥—क्षात्रिरन्य इति। यदि जातिरपत्यस्य न गम्यते किंतु क्षत्रस्यापत्यमित्येतावदेव तत इयाभावे 'अत इञ्' इति इञ् ॥—मनो—॥—मनुशब्दस्येति। अत्र प्रत्ययसंबन्धे उपयुक्ताया· पञ्चम्या षविधौ षष्ठीरूपतया विपरिणाम ॥—जातौ गम्यमानायामिति। अपत्याधिकारादपत्ये प्रत्य-

शकन्धु शाकभू पथिकारिन् मतिमत् पितृमत् पितृमन्तु वाच् हन्तृ हृदि शलाका कालाका एरका पदका खदाका केशिनी मति कवि हन्ति पिण्डी ऐन्द्रजाली धातुजि वैराजकि दामोष्णीषि गाणकारि कैशोरि कापिञ्जलादि गर्गर हनू मञ्जूष अविमारक अजमारक चफदक कुट कुटल मुर दभ्र सूर्पणाय श्यावनाय श्यावरथ श्यामथ श्यावमथ श्यापत्र श्यापुत्र सत्यंकार वडभीकार कर्णकार पथिकार बृहतीकार वान्तवृक्ष आर्द्रवृक्ष मूढ शाक इन रथकार नापित तक्षन् शुभ्र इति कुर्वादिः। अत्र हन्त्रन्तानां सामान्याणो हृदिकस्य तु वृष्ण्यणोऽपवादो ञ्यः। शलाकादीनां केशिन्यन्तानामेयणः। मातुपीनामपत्येऽणोऽपि। केशिनीशब्दस्य स्त्रीलिङ्गपाठादेव पुंवद्भावो न भवति। *कैशिन्यः। पुंलिङ्गनिवृत्त्यर्थस्तु स पाठो न भवति। 'गाथिविदथिकेशिपणिगणिनः' (७-४-६४) इत्यपत्येऽण्यन्त्यस्वरादेः *लुक्प्रतिषेधात्। केशिन्शब्दाद्धि ञ्यविधानेऽण् न संभवत्येव। मतिकविहन्तिपिण्डीनामेयणः। ऐन्द्रजाल्यादीनां कापिञ्जलाद्यन्तानामायनणः। गर्गरादीनामिञः। तक्षन्शब्दस्य शिवाद्यणा समावेशार्थः पाठः, शुभ्रस्यैयणा ॥ १०० ॥ सम्राजः क्षत्रिये ॥ ६ । १ । १०१ ॥ सम्राज् इत्येतस्मात् क्षत्रियेऽपत्ये ञ्यः प्रत्ययो भवति। सम्राजोऽपत्यं साम्राज्यः क्षत्रियश्चेत्। अन्यत्राणेव साम्राजः। अन्ये साम्राजिरित्याहुः। तत्र संम्राट् बाह्वादिषु द्रष्टव्यः ॥ १०१ ॥ *सेनान्तकारुलक्ष्मणादिञ् च ॥ ६ । १ । १०२ ॥ सेनशब्दान्तेभ्यः कारवः कारिणस्तन्तुवायादयस्तद्वाचिभ्यो लक्ष्मणशब्दाच्चापत्ये इञ् प्रत्ययो भवति ञ्यश्च। सेनान्त, *हारिषेणिः। हारिषेण्यः। वारिषेणिः। वारिषेण्यः। कारु, तान्तुवायिः। तान्तुवाय्यः। तौन्नवायिः। तौन्नवाय्यः। वार्धकिः। वार्धक्यः। कौम्भकारिः। कौम्भकार्यः। रथकारनापिततक्षभ्यो ञ्य एव नेञ् कुर्वादिपाठात्। कुर्वादौ *जातिवाचिन एव पाठात् रथकारादिञपीत्येके। लक्ष्मण, लाक्ष्मणिः। लाक्ष्मण्यः। ऋष्यन्धकवृष्णिकुरुभ्योऽण् ङ्याप्त्यूङन्तेभ्यस्त्वेयण् परत्वादाभ्यां बाध्यते। जातसेनिः। जातसेन्यः। वैष्वक्सेनिः। वैष्वक्सेन्यः। औग्रसेनिः। औग्रसेन्यः। भैमसेनिः। भैमसेन्यः। तन्तुवाय्या अपत्यं तान्तुवायिः तान्तुवाय्य इत्यादि ॥ १०२ ॥ सुयाम्नः सौवीरेष्वायनिञ् ॥ ६ । १ । १०३ ॥ सुयामन्शब्दात्सौवीरेषु जनपदे योऽर्थस्तस्मिन् वर्तमानादपत्ये आयनिञ् प्रत्ययो भवति। सौयामायनिः। सौवीरेभ्योऽन्यत्र सौयामः ॥ १०३ ॥ *पाण्टाहृतिमिमताण्णश्च ॥ ६ । १ । १०४ ॥ पाण्टाहृतिशब्दादिञन्तान्मिमतशब्दाच्च सौवीरेषु जनपदे योऽर्थस्तस्मिन्वर्तमानाभ्यामपत्येऽण् आयनिञ् च प्रत्ययौ

---

शायति ॥ केशा अस्या सन्ति। मन्यते कवते मन्यादित्वादिः। वध्यात् हन्ति। पिण्डते अप् गौरादित्वात् ङ्या पिण्डी। इन्द्र जलति तस्यापत्य, धनो राशेर्जात तस्यापत्यम्। विराजते तस्यापत्यम्। दामयुक्तमुष्णीष यस्य तस्यापत्यम्। गणान् करोति तस्यापत्यम्। किशोरस्यापत्यम्। कपिजलनादस्ते तस्यापत्यम्। गर्ग राति। हन्ति 'पुत'—इति। 'खलिफलि' इति मञ्जूष। अवीनामजानामारकः। दकारो द्वि। 'नाम्युपान्त्य'—इति के कुट। 'तृपिवपि'—इति कुटल। 'कृत्वजि'—इति। सर्पं नयति कर्म्मणोऽण्। श्याम पिङ्गल नयति। श्याव पिङ्गलो रथो यस्य। श्यायन्ते श्या गाढकास्तै प्रथते। श्यावै पिङ्गलैः प्रथते। श्या गलर पत्र पुत्रो यस्य। सत्य वलभी कर्णोन्पन्थानं बृहती करोति। वान्ता आर्द्रा वृक्षा यस्या, मुह्यति स्म। शक्यते आराधयितुम् ॥—नापितायनिरिति। परत्वात् 'अवृद्धादोर्नवा' इत्यपि ॥—कैशिन्य इति। पुंवद्भावे तु कैश्य इति स्यात् स्थिते तु 'अवर्णेवर्णस्य' इति स्वरादेशस्य स्थानित्वात् 'नोपदस्य'—इति न भवति ॥—लुक्प्रतिषेधात् इति। अयमर्थ केशिन्शब्दस्यापि अन्त्यस्वरादिलुक्प्रतिषेधोऽनर्थकः स्यात् यद्यस्मात्ञ्य स्यात् ॥—सेनान्त—॥—हारिषेणिरिति। 'एत्यक' इति पत्लम् ॥—जातिवाचिन एवेति। रथकारशब्दोऽजातिवाची वास्ति इत्याह ॥—पाण्टाहृतिमिमता—॥ पण्टेन आहृत, फाण्टेन अनायाससाध्येनेति तु शाकटायनः। भाष्यकारस्तु यथासङ्ख्यं मन्यते। ततो णित्वस्य प्रयोजनं पान्टाहृताभार्य इत्यत्र पुंवन्निषेध।

भवतः। पाण्टाहृतेरपत्यं युवा सौवीरगोत्रः पाण्टाहृतः पाण्टाहृन्तायनिर्वा। मिमतस्य मैमतः मैमतायनिर्वा। सौवीरेष्वित्येव। पाण्टाहृतायनः। 'यञिञः' (६-१-५४) इत्यायनण्। मैमतायनः। अत्र नडादित्वात्। अनन्तरो मैमतिः॥ १०४॥ *भागवित्तितार्णबिन्दवाकशापेयान्निन्दायामिकण्वा॥ ६। १। १०५॥ भागवित्ति तार्णबिन्दव आकशापेय इत्येतेभ्यः सौवीरेषु वृद्धे वर्तमानेभ्यो यून्यपत्ये इकण् प्रत्ययो वा भवति निन्दायां गम्यमानायाम्। भागवित्तेरपत्यं युवा निन्दितः भागवित्तिकः भागवित्तायनो वा जाल्मः। तार्णबिन्दविकः तार्णबिन्दविर्वा। *आकशापेयिकः आकशापेयिर्वा। निन्दायामिति किम्। अन्यत्र भागवित्तायनः तार्णबिन्दविः आकशापेयिः इत्येव भवति॥ १०५॥ सौयामायनियामुन्दायनिवार्ष्यायणेरीयश्च वा॥ ६। १। १०६॥ एभ्य आयनिञन्तेभ्यः सौवीरेषु वृद्धे वर्तमानेभ्यो यून्यपत्ये ईयश्चकारादिकण् च प्रत्ययो वा भवति ताभ्यां मुक्तेऽण् प्रत्ययः निन्दायां गम्यमानायाम्। सुयाम्नोऽपत्यं सौयामायनिस्तस्यापत्यं युवा निन्दितः सौयामायनीयः। सौयामायनिकः। सौयामायनिर्वा। अणो लुप्। यमुन्दस्यापत्यं यामुन्दायनिः। तिकादित्वादायनिञ्। तस्यापत्यं युवा निन्दितः यामुन्दायनीयः। यामुन्दायनिकः। यामुन्दायनिर्वा। वृषस्यापत्यं वार्ष्यायणिः। दगुकोसलादिसूत्रेण यकारादिरायनिञ्। तस्य वार्ष्यायणीयः। वार्ष्यायणिकः। वार्ष्यायणिर्वा। कश्चित्त्वन्येभ्योऽपीच्छति। तैकायनेरपत्यं युवा तैकायनीयः। निन्दायामित्येव। अन्यत्र सौयामायनिः यामुन्दायनिः वार्ष्यायणिर्युवा। अणेव। 'ञिदार्षादणिञोः' (६-१-१४०) इति तस्य लुप्॥ १०६॥ *तिकादेरायनिञ्॥ ६। १। १०७॥ तिक इत्येवमादिभ्योऽपत्ये आयनिञ् प्रत्ययो भवति। इञादेरपवादः। तैकायनिः। कैतवायनिः। तिक कितव संज्ञा बाल शिखा बालशिख उरश शाट्य *सैन्धव यमुन्द रूप्य पूर्णिक ग्राम्य नील अमित्र गोकक्ष्य कुरु देवर दैवर धेवर धैवर देवरथ तैतिल शैलाल औरश कौरव्य भौरिकि भौलिकि चौपयत चैतयत चैटयत शैकयत क्षैतयत ध्वाज वत ध्वाजवत चन्द्रमस् शुभ शुभ गङ्ग गङ्गा वरेण्य वन्ध्या विम्बा अरद्ध अरद्धा आरद्ध वह्यका खल्य लोमका उदन्य यज्ञ नीड आरथ्य लङ्कव भीत उतथ्य सुयामन् उखा खल्यका शल्यका जाजल वसु उरस्। इति तिकादिः। शाट्यशब्दो यञन्तो ष्यणन्तो वा। *शाट्यायनिः। यञन्तादायनणेवेत्येके। शाट्यायनः। औरशशब्देन क्षत्रियप्रत्ययान्तेन साहचर्यात् कौरव्यशब्दः क्षत्रियप्रत्ययान्त एव गृह्यते। अन्यस्मादिञेव। तस्य च 'ञिदार्षादणिञोः' (६-१-१४०) इति लुप्। कौरव्यः पिता। कौरव्यः पुत्रः। आयनिञस्तु 'अब्राह्मणात्' (६-१-१४१) इति प्राप्तापि लुप् न भवति *विधानसामर्थ्यात्। नहीञ आयनिञो वा लुपि कश्चिद्विशेषः। कौरव्यः पिता। कौरव्यायणिः पुत्रः॥ १००॥ दगुकोशलकर्मारच्छागवृषाद्याद्यादिः॥ ६। १। १०८॥ दगु कोशल कर्मार छाग वृष इत्येतेभ्योऽपत्ये यकारादिरायनिञ् प्रत्ययो भवति। दागव्यायनिः। कौशल्यायनिः। जनपदसमानशब्दात् क्षत्रियात् 'दुनादि'—(६-१-११८) इत्यादिना ञ्य एव। कौशल्य इति। कार्मार्यायणिः। छाग्यायनिः। वार्ष्यायणिः

---

मीयते परिच्छिद्यते ऋपित्वेन 'पुतपित्त'—इति। मया लक्ष्म्या मन्यते स्म पृषोदरादित्वाद्वा॥—भाग—॥—आकशापेयिक इति। अकं दुःखं शपति अण् अकशापस्यापत्यं वृद्धं शुभ्रादिभ्य एयण्॥—तिका—॥—सैन्धवेति। सिन्धुषु भव 'कोपान्त्याच्चाण्'। नृनृस्थाभ्यामन्य। नरि नृस्थे तु विशेषविधानात्कच्छादित्वादकञ् स्यात्। सिन्धुराभिजनो निवासोऽस्य 'सिन्ध्वादेरञ्' वा॥—शाट्यायनिरिति। शद रुजा० अच् तस्यापत्यं वृद्धम् गर्गादिर्यञ्॥—विधानसामर्थ्यादिति। लुपि हि अक्षत्रियवचनस्य कौरव्यशब्दस्य परिहारे फलं न स्यात्॥

॥१०८॥ *द्विस्वरादणः ॥ ६ । १ । १०९ ॥ द्विस्वरादणन्तादपत्ये आयनिञ् प्रत्ययो भवति । कर्तुरपत्यं कार्त्रः । तस्य *कार्त्रायणिः । हर्तुः हार्त्रः । तस्य हार्त्रायणिः । पौत्रः । पौत्रायणिः । औत्सर्गिकोऽण् । यास्कायनिः । शिवाद्यण् । द्विस्वरादिति किम् । औपगविः । अण इति किम् । दाक्षेः दाक्षायणः । प्लाक्षेः प्लाक्षायणः । वृद्धादेवायं निधिः । अवृद्धात्तूत्तरेण विकल्प एव । अङ्गानां राजा आङ्गः । तस्याङ्गिः आङ्गायनिर्वा ॥ १०९ ॥ अवृद्धाद्दोर्नवा ॥ ६ । १ । ११० ॥ अवृद्धवाचिनो दुसंज्ञकादपत्ये आयनिञ् प्रत्ययो वा भवति । आम्रगुप्तायनिः । आम्रगुप्तिः । शालगुप्तायनिः । शालगुप्तिः । वायुरथायनिः । वायुरथिः । पञ्चालानां राजा पाञ्चालस्तस्यापत्यं पाञ्चालायनिः । पाञ्चालिः । नापितस्यापत्यं नापितायनिः । नापित्यः । पक्षे नापितशब्दस्येञ् नास्ति तद्बाधनार्थं हि कुर्वादिषु तस्य पाठः । अवृद्धादिति किम् । दाक्षेः दाक्षायणः । प्लाक्षेः प्लाक्षायणः । दोरिति किम् । अकम्पनस्यापत्यमाकम्पनिः ॥ ११० ॥ पुत्रान्तात् ॥ ६ । १ । १११ ॥ पुत्रशब्दान्तात् दुसंज्ञकादपत्ये आयनिञ् प्रत्ययो वा भवति । गार्गीपुत्रायणिः । गार्गीपुत्रिः । वासवदत्तापुत्रायणिः । वासवदत्तापुत्रिः। पूर्वेणायनिञि सिद्धे वचनमिदमुत्तरसूत्रमाप्तकागमाभावार्थम् । उत्तरेण च कागमोऽपि । एवं च गार्गीपुत्रकायणिरिति तार्तीयीकमपि रूपं भवति ॥ १११ ॥ *चर्मिवर्मिगारेटकार्कट्यकाकलङ्कावाकिनाच्च कश्चान्तोऽन्त्यस्वरात् ॥ ६ । १ । ११२ ॥ चर्मिन् वर्मिन् गारेट कार्कट्य काक लङ्का वाकिन इत्येतेभ्यः पुत्रान्ताच्च दुसंज्ञकादपत्ये आयनिञ् प्रत्ययो वा भवति तत्संनियोगे चैषामन्त्यस्वरात्परः ककारोऽन्तो भवति । चार्मिकायणिः । चार्मिणः । वार्मिकायणिः । वार्मिणः । 'संयोगादिनः' (७-४-५३) इति प्रतिषेधादणि अन्त्यस्वरादिलोपो न भवति । गारेटकायनिः । गारेटिः । कर्कटस्यापत्यं कार्कट्यः । तस्यापत्यं कार्कट्यकायनिः । कार्कट्यायनः । यदा त्वव्युत्पन्नः कार्कट्यशब्दस्तदा पक्षे इञेव । कार्कट्यिः । काककायनिः । काकिः । लाङ्ककायनिः । लाङ्केयः । लङ्कशब्दं केचिदकारान्तमिच्छन्ति । तन्मते लाङ्ककायनिः । लाङ्किः । वाकिनकायनिः । वाकिनिः । पुत्रान्तादो;, गार्गीपुत्रकायणिः । गार्गीपुत्रिः । ककारस्यान्त्यस्वरात्परतो विधानं चर्मिवर्मिणोः *नकारस्य लोपार्थम् । यद्येवं *परादिरेव क्रियेत । नैनम् । तथा सति प्रत्ययस्य व्यञ्जनादित्वात्पुंवद्भावो न सिध्येत् । चर्मिण्या अपत्यं चार्मिकायणिः । वर्मिण्या अपत्यं वार्मिकायणिः ॥ ११२ ॥ *अदोरायनिः प्रायः ॥ ६ । १ । ११३ ॥ अदुसंज्ञकादपत्ये आयनिः प्रत्ययो वा भवति प्रायः । ग्लुचुकायनिः । ग्लौचुकिः । म्लुचुकायनिः । म्लौचुकिः । अहिचुम्बकायनिः । आहिचुम्बकिः । त्रिपृष्ठायनिः । त्रैपृष्ठिः । श्रीविजयायनिः । श्रैविजयिः । अदोरिति किम् । औपगविः । रामदत्तिः । रामदत्तायनिः पिता । *रामदत्तायनिः पुत्रः । आयनिञन्तादणो लुप् । प्रायोग्रहणात्क्वचिन्न भवति । दाक्षिः । प्लाक्षिः ॥ ११३ ॥ *राष्ट्रक्षत्रियात्सरूपाद्राजापत्ये द्रिरञ् ॥ ६ । १ । ११४ ॥ क्षत्रियवाचिसरूपाद्राष्ट्रवाचिनो राष्ट्रवाचिसरूपाच्च क्षत्रियवाचिनो यथासंख्यं राजनि क्षत्रियेऽपत्ये चाञ् प्रत्ययो भवति स च द्रिसंज्ञः । *चेति निवृत्तम् । विदे-

---

द्विस्वरादणः ॥—कात्रायाणीरिति । ब्राह्मणलात्'अब्राह्मणात्' इति न लुप् । एवमुत्तरेष्वपि ॥—चर्मिवर्मिगारे—॥—अन्तग्रहणाभावे कस्य प्रत्ययत्वं स्यात् । ततश्च लाङ्ककायनिरित्यत्र 'ङ्यादीदूत — इति ह्रस्वत्वं स्यात् । अत एव च 'अनन्त' पञ्चम्या प्रत्यय-' इत्यत्रान्तग्रहणं सफलम् ॥—नकारस्य लोपार्थमिति । अन्त्यस्वरादेर्लोप इति वक्तव्येऽपि विशेषाभावान्नकारस्य लोपार्थमित्युक्तमिति शकटः ॥ —परादिरेवेति । कश्चादिरित्येव क्रियता कि कशान्तोऽन्त्यस्वरादिति गुरुणा सूत्रेण । ततश्च 'नाम सिदय्व्यञ्जने' इति पदसंज्ञाया 'नाम्नो नोऽनह्नः' इत्यनेनैव नलोपो भविष्यति ॥—अदो—॥—रामदत्तायनिः पुत्र इति । वृद्धस्य रामदत्तस्यापत्यं 'अवृद्धाद्दोर्नवा' इत्यायनिञ् । ततो युवार्थे ञसोऽणो लुप् ॥—राष्ट्र—॥—चेति निवृत्तमिति । अपत्येऽनुवर्तमाने राजनीत्यधिकार्थस्य भणनात् ॥

हानां राष्ट्रस्य राजा वैदेहः । वैदेहौ । विदेहाः । बहुत्वे 'बहुष्वस्त्रियाम्' (६-१-१२४) इति लुप् । विदेहस्य राज्ञोऽपत्यं वैदेहः । वैदेहौ । विदेहाः । एवम् *ऐक्ष्वाकः । ऐक्ष्वाकौ । इक्ष्वाकवः । पाञ्चालः । पाञ्चालौ । पञ्चालाः । राष्ट्रक्षत्रियादिति किम् । *पञ्चालस्य ब्राह्मणस्य राजा पाञ्चालः । 'तस्येदम्' (६-३-१५९) इत्यण् । पञ्चालस्य ब्राह्मणस्यापत्यं पाञ्चालिः । सरूपादिति किम् । सुराष्ट्राणां राजा सौराष्ट्रकः । आदर्शस्य राष्ट्रस्य राजा आदर्शकः । दशरथस्य क्षत्रियस्यापत्यं दाशरथिः । त्रिपृष्ठस्य त्रैपृष्ठिः । द्रिसंज्ञाः 'द्रेरञणोऽप्राच्यभर्गादेः' (६-१-१२३) इत्यादयः ॥ ११४ ॥ *गान्धारिसाल्वेयाभ्याम् ॥ ६ । १ । ११५ ॥ गान्धारिसाल्वेयशब्दौ *इञेयणन्तौ सरूपौ राष्ट्रक्षत्रियवचनौ । ताभ्यां राष्ट्राद्राजनि क्षत्रियादपत्ये अञ् प्रत्ययो भवति स च द्रिसंज्ञः । दुलक्षणस्य ञ्यस्यापवादः । वचनभेदो यथासंख्यनिवृत्त्यर्थः । गान्धारीणां राजा गान्धारे राज्ञोऽपत्यं च गान्धारः । गान्धारौ । गान्धारयः । बहुष्वञो लुप् । एवं साल्वेयः । साल्वेयौ । साल्वेयाः । एकत्वद्वित्वयोस्त्वपत्यार्थविवक्षायामब्राह्मणादिति लुप् न भवति *विधानसामर्थ्यात् । *अन्यथा ञ्यविधावेवानयोः प्रतिषेधः क्रियेत । तथा पूर्वेणैवाञ् सिध्यति ॥ ११५ ॥ *पुरुमगधकलिङ्गशूरमसद्विस्वरादण् ॥ ६ । १ । ११६ ॥ पुरुमगधकलिङ्गशूरमस इत्येतेभ्यो द्विस्वरेभ्यश्च शब्देभ्यो राष्ट्रवाचिभ्यः क्षत्रियवाचिभ्यश्च सरूपेभ्यो यथासंख्यं राजन्यपत्ये चार्थे द्रिरण् भवति । अञोऽपवादः । पुरोरपत्यं पौरवः । पौरवौ । पुरवः । मगधानां राजा मगधस्यापत्यं वा मागधः । मागधौ । मगधाः । एवं कालिङ्गः । कालिङ्गौ । कलिङ्गाः । शौरमसः । शौरमसौ । शूरमसाः । द्विस्वर, अङ्गानां राजा अङ्गस्यापत्यं वा आङ्गः । अङ्गाः । वाङ्गः । वङ्गाः । सौह्मः । सुह्माः । पौण्ड्रः । पुण्ड्राः । दारदः । दरदः । भार्गः । भर्गाः । साल्वः । साल्वाः । सर्वत्र बहुषु लुप् । पुरुग्रहणमराष्ट्रसरूपार्थम् । अस्ति राजा पुरुर्नाम न तु राष्ट्रम् । तस्यौत्सर्गिकेणैवाणा सिद्धे बहुषु लुबर्थमिदमणविधानम् । अत्रैव सिद्धेऽण्विधानं संघाद्यण्वाधनार्थम् । तेनाकञ् भवति । *पौरवकम् । मागधकम् । कालिङ्गकम् । शौरमसकम् । आङ्गकम् । वाङ्गकम् । अजन्ताद्धि गोत्रात् 'अन्यात्रिञः' (६-३-१७२) इत्यण् बाधकः स्यात् ॥ ११६ ॥ *साल्वांशप्रत्यग्रथकलकूटाश्मकादिञ् ॥ ६ । १ । ११७ ॥ साल्वा नाम जनपदस्तदंशास्तदवयवा उदुम्बरादयस्तेभ्यः प्रत्यग्रथकलकूटाश्मक इत्येतेभ्यश्च राष्ट्रवाचिभ्यः क्षत्रियवाचिभ्यश्च सरूपेभ्यो यथासंख्यं राजन्यपत्ये च इञ् प्रत्ययो भवति स च द्रिसंज्ञः । उदुम्बराणां राजा उदुम्बरस्यापत्यं वा औदुम्बरिः । *उदुम्बराः । एवं तैलखलिः । *तिलख-

---

—ऐक्ष्वाक इति । 'सारवैक्ष्वाक'—इति उलोप ॥—पञ्चालस्य ब्राह्मणस्य राजा पाञ्चाल इति । 'उत्सादे' इत्यप्यण् न तत्रापि राष्ट्रस्वरूपग्रहणात् ॥—गान्धारि—॥—इञेयणन्तौ सरूपाविति । गन्धमियर्त्ति अण् । तस्यापत्यमिञ् । साल्वाया अपत्यम् । 'द्विस्वरादनद्याः' । अपत्यप्रत्ययान्तावप्युपचाराद्राष्ट्रे वर्त्तेते ॥—विधानसामर्थ्यादिति । ननु गान्धार इत्यत्र लुब्भावे फलमस्ति यतो लुपि गान्धारिरिति स्यात् स्थिते तु गान्धार साल्वेय इत्यत्र तु किं फलम् । उच्यते । अत्रालुपि सघादिविवक्षायामण् लुपि तु 'गोत्राददण्ड'—इत्यकञ् स्यात् । ननु दुलक्षणञ्यस्य बाधनेन विधानमिदं चरितार्थमिति कुतो विधानसामर्थ्यादित्युक्तमित्याह—अन्यथा ञ्यविधाविति । अगान्धारिसाल्वेयदुनादिकुर्वितकोशलाजादाञ्य इत्यनया युक्त्या प्रतिषेधे कृते राष्ट्रक्षत्रियादित्यनेनाञ् भविष्यतीत्यर्थः ॥—पुरु—॥—पौरवकमिति । पुरोरपत्यानि अण् लुप् । पुरूणां सघादि 'गोत्राददण्ड'—इत्यकञ्विषये 'न प्राग्जितीये'—इति अणो लुप् निवर्त्तते ॥—साल्वां—॥—उदुम्बरा इति । उन्दन्ति आर्द्रीभवन्ति ऋध्या 'तीवर'—इति । यद्वा उल्लङ्घिताम्बरा प्रासादे 'पृषोदर'—इत्यादिना निपात ॥—तिलखला इति । तिला एव खला यत्र प्रचुरत्वात् । तिला खल्यन्ते यत्र 'गोचर'—इति निपात तिलै खलन्ति सचिता

लाः । माद्रकारिः । *मद्रकाराः । यौगन्धरिः । युगन्धराः । भौलिङ्गिः । *भुलिङ्गाः । शारदण्डिः । *शरदण्डाः । आजमीढिः । *अजमीढाः । आजकुन्दिः । *अजकुन्दाः । *बौधिः । बुधाः । इति साल्वांशाः । *प्रात्यग्रथिः । प्रत्यग्रथाः । *कालकूटिः । कलकूटाः । *आश्मकिः । अश्मकाः । सर्वत्र बहुषु लुप् । उदुम्बरास्तिलखला मद्रकारा युगंधराः ॥ भुलिङ्गाः शरदण्डाश्च साल्वांशा इति कीर्तिताः ॥ १ ॥ अजमीढाजकुन्दबुधास्तूदुम्बरादिविशेषाः । *तेऽपि साल्वांशा एव । प्रत्यग्रथादिग्रहणमसाल्वांशार्थम् ॥ ११७॥ *दुनादिकुर्वित्कोशलाजादाञ् ञ्यः ॥ ६ । १ । ११८ ॥ दुसंज्ञकेभ्यो नकारादिभ्यः कुरुशब्दादिकारान्तेभ्यः कोशल अजाद इत्येताभ्यां च राष्ट्रवाचिभ्यः क्षत्रियवाचिभ्यश्च सरूपेभ्यो यथासंख्यं राजन्यपत्ये च ञ्यः प्रत्ययो भवति स च द्रिसंज्ञः । दु, आम्बष्ठानां राजा आम्बष्ठस्यापत्यं वा आम्बष्ठ्यः । आम्बष्ठाः । सौवीराणां सौवीरस्य वा सौवीर्यः । सौवीराः । एवं काम्बव्यः । काम्बवाः । दार्व्यः । दार्वाः । द्विस्वरलक्षणोऽण् परत्वादनेन बाध्यते । नादि, निषधानां निषधस्य वा नैषध्यः । निषधाः । नैचक्यः । निचकाः । नैप्यः । नीपाः । कुरूणां कुरोर्वा कौरव्यः । कुरवः । इत्, अवन्तीनामवन्तेर्वा आवन्त्यः । अवन्तयः । कौन्त्यः । कुन्तयः । वासात्यः । वसातयः । चैद्यः । चेदयः । काश्यः । काशयः । कोशलानां कोशलस्य वा कौशल्यः । कोशलाः । अजादानामजादस्य वा आजाद्यः । अजादाः । एभ्य इति किम् । कुमारी नाम जनपदः *क्षत्रिया च ततो राजन्यपत्ये चाऽेव भवति । कौमारः ॥ ११८ ॥ *पाण्डोर्ड्यण् ॥ ६ । १ । ११९ ॥ पाण्डुशब्दाद्राष्ट्रक्षत्रियवाचिनः सरूपाद्यथासंख्यं राजन्यपत्ये चार्थे ड्यण् प्रत्ययो भवति स च द्रिसंज्ञः । पाण्डूनां राजा पाण्डोरपत्यं वा पाण्ड्यः । पाण्ड्यौ । पाण्डवः । कथं पाण्डवाः यस्य दासाः । तस्य क्षत्रियस्य राष्ट्रसरूपस्य य ईश्यो जनपदो यश्च तस्य क्षत्रियसरूपस्य राष्ट्रस्येशिता क्षत्रियः स एव गृह्यते *प्रत्यासत्तेः । अत्र तु कुरवो जनपदस्तस्य राजा पाण्डुरिति शिवाद्यण् भवति । डकारोऽन्त्यस्वरादिलोपार्थः । णकारो वृद्धिनिमित्तपुंवद्भावप्रतिषेधार्थः । पाण्ड्याभार्यः ॥११९॥ *शकादिभ्यो द्रेर्लुप् ॥ ६ । १ । १२० ॥ शक इत्येवमादिभ्यः परस्य द्रेः प्रत्ययस्य लुप् भवति । शकानां राजा शकस्यापत्यं वा शकः । यवनः । जर्तः । कम्बोजः । चोलः । केरलः । आधारयः । विधारयः । उपधारयः । अपधारयः । मुरलः । खसः । शकादयः प्रयोगगम्याः ॥ १२० ॥ *कुन्त्यवन्तेः स्त्रियाम् ॥ ६ । १ । १२१ ॥ कुन्ति अवन्ति इत्येताभ्यां परस्य द्रेर्ञ्यस्य लुप् भवति स्त्रियामभिधेयायाम् । कुन्तेरपत्यं स्त्री कुन्ती । एवमवन्ती । स्त्रियामिति किम् । कौन्त्यः । आप त्य' । प्रकृतस्य द्रेर्लुप्विज्ञानात् स्वार्थिकस्य ञ्यटोऽद्रिसंज्ञकस्य न भवति । *कौन्ती ॥१२१॥ कुरोर्वा ॥ ६ । १ । १२२ ॥

---

भवन्ति वा ॥—मद्रकारा इति । मद्रं कुर्वन्ति । 'शेषादिव'—इति अण् । युगं धारयति 'धारेर्धर्च' ख ॥—भुलिङ्गा इति । लभेरिदुतौ चात ॥—शरदण्डा इति । शरै दण्डयन्ति ॥—अजमीढा इति । अजैर्मिह्यन्ते स्म क्त 'कारक कृता' स ॥—अजकुदा इति । अजा एव कुदा यत्र ॥—बौधिरिति । बुध्यन्ते इति 'नाम्युपान्त्य'—इति क ॥—प्रात्यग्रथिरिति । प्रत्यग्र रथो यस्य ॥—कालकूटिरिति । कूटयन्ति अच् । कल्पप्रधाना कूटा ॥—आश्मकिरिति । अश्मन कायन्ति । 'आतो ड'—इति ड ॥—तेऽपि साल्वांशा एवेति । अवयवावयवोऽप्यवयविनोऽवयव एव ॥—दुनादि ॥—कुमारी नाम जनपद इति जनपदवाचकस्य गौरादित्वात् क्षत्रियवाचकात् 'जातेरयान्त'—इति ङी ॥—क्षत्रिया चेति । नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायात् क्षत्रियासरूपस्यापि ग्रह ॥—पाण्डोर्ड्यण्—॥—प्रत्यासत्तेरिति । अयमर्थ । यदि राष्ट्रक्षत्रिययोरेकशब्दवाच्यता भवति तदानी ड्यण् भवति ॥—शकादिभ्यो—॥ यवनादिषु यथायोगं 'राष्ट्रक्षत्रियात्' इत्यनेन 'पुरुमगध'—इत्यनेन चाम्णौ । आधारय इत्यत्र 'दुनादि'—ञ्य ॥—कुन्त्यवतेः—॥—अद्रिसंज्ञकस्य न भवतीति । प्राकरणिकाप्राकरणिकयो प्राकरणिकस्यैव ग्रहणमिति न्यायात् ॥—कौन्तीति ।

कुरुशब्दात्परस्य द्रेर्ञ्यस्य स्त्रियां वा लुप् भवति । कुरोरपत्यं स्त्री कुरूः । कौरव्यायणी । 'कौरव्यमाण्डूकासुरेः' (२-४-७०) इति डायन् ॥१२२॥ *द्रेरञणोऽप्राच्यभर्गादेः ॥ ६ । १ । १२३ ॥ प्राच्यान् भर्गादींश्च वर्जयित्वान्यस्मात्परस्याञोऽणश्च द्रेः स्त्रियां लुप् भवति । अञ्, शूरसेनस्यापत्यं स्त्री शूरसेनी । एवमपाच्या । अण्, मद्री । दरत् । मत्सी । द्रेरिति किम् । औत्सी । औपगवी । द्रावनुवर्तमाने पुनर्द्रिग्रहणं भिन्नप्रकरणस्यापि द्रेर्लुबर्थम् । *पर्शूः । रक्षाः । असुरी । पर्शु रक्षस् असुर इति राष्ट्रसरूपक्षात्रियवाचिनः । एषामपत्यं संघः स्त्रीत्वविशिष्टो विवक्षित इति *अणञोः *'शकादिभ्यो द्रेर्लुप्' ( ६-१-१२० ) इति लुपि पुनः पर्श्वादिलक्षणः स्वार्थिकोऽण् । तस्यापि *स्त्रियामनेन लुप् । अञण इति किम् । औदुम्बरी । साल्वांशत्वादिञ् । अप्राच्यभर्गादेरिति किम् । पाञ्चाली । वैदेही । पैप्पली । मागधी । कालिङ्गी । वैदर्भी । आङ्गी । वाङ्गी । सौह्मी । पौण्ड्री । शौरमसी । पाञ्चलादयः प्राच्या राष्ट्रसरूपाः क्षत्रियाः । भर्गादि, भार्गी । कारूषी । भर्ग । करूप । करूश । केकय । कश्मीर । साल्व । सुस्थाल । उरश । यौधेय । शौक्रेय । शौभ्रेय । घार्तेय । धार्तेय । ज्यावानेय । त्रिगर्त । भरत । उशीनर । इति भर्गादिः । यौधेयादिज्यावानेयान्तानां स्वार्थिकस्याञो द्रेः *लुप् प्रतिपिध्यते । *यौधेयीनां संघादि यौधेयमिति संघाद्यणर्थम् । लुपि हि सत्यामञन्तत्वाभावात् संघाद्यण् न स्यात् । *प्रकृतस्य तु *अञः प्रसङ्गाभावात् न प्रतिषेधः । *भरतोशीनरशब्दावुत्सादिषु पठ्येते । तयोरिहोपादानात् सत्यप्यणपवादे चेत्यस्मिन् उत्साद्यञं बाधित्वा *द्रिसंज्ञक एवाञ्

कुन्तेरपत्यानि बहवो माणवका 'दुनादि'—इति ञ्य । 'बहुष्वस्त्रियां' लुक् ॥ ते शस्त्रजीविसंघः स्त्रीत्वविशिष्टो विवक्षित ॥ 'पूगादमुख्यकाञ्ञ्यो द्रि' इत्यधिकारे 'शस्त्रजीविसघात्' इति ञ्यट् । यद्वा कुन्तेरपत्य बहवो माणवकास्ते शस्त्रजीविसघ स्त्रीत्वविशिष्टो विवक्षित । अनेन लुप् । 'नुजातेः' ङी । ततः शस्त्रजीविसघाञ्ञ्यट् । 'अवर्णेवर्णस्य' 'अणञेय'—इति ङी । 'अस्य ङ्याम्' 'व्यञ्जनात्तद्धितस्य' इति यलोप ॥—द्रेरञणो—॥—पर्शूरिति । पर्शोरपत्य बहवो माणवका 'पुरुमगध'—इत्यण् । शकादित्वाल्लुपि पर्शव ते शस्त्रजीविसघ स्त्रीत्वविशिष्टो विवक्षित । 'पर्श्वादेरण्' अनेन लुप् । 'उतोऽप्राणिनश्च'—इति ऊङ् । एवमुत्तरयोरपि ॥—अणञोरिति । पर्शुरक्षसो । 'पुरुमगध'—इत्यण असुरात्तु राष्ट्रक्षत्रियादञ ॥—शकादिभ्य इति । स्त्रीत्वेऽपि प्राच्यत्वात् 'द्रेरञण'—इति न भवति ॥—स्त्रियामनेन लुबिति । लुप्ताणञन्ताना पर्श्वादीना प्राच्यादावपाठात् 'द्रेरञण'—इत्यनेन लुग् भवत्येव ॥—लुप् प्रतिपिध्यत इति । सा किमर्थमित्याह—यौधेयीनां संघादीति । । युधाया अपत्यानि 'द्विस्वरादनद्याः' । यौधेया शस्त्रजीविसघा स्त्रीत्वविशिष्टा विवक्षिताः । 'यौधेयादेरञ्' 'अणञेय'—इति ङी । यौधेयीना सघादि सघाद्यण् न स्यादिति न वाच्यं लुपि सत्यामपि प्रत्ययलोप इति अञः स्थानित्वात् 'सघघोष'—इत्यणेव भविष्यति न 'गोत्राददण्ड'—इत्यकञ् । यतो 'द्विगोरनपत्य'—इत्यत्राद्विरितिकरणात् 'स्वरस्य' इति परिभाषाया अनित्यत्वम् ॥—प्रकृतस्येति । 'राष्ट्रक्षत्रिय'—इति विहितस्य ॥—अञः प्रसङ्गाभावादिति । अमीषा राष्ट्रक्षत्रियस्वरूपत्वाभावे प्राप्त्यभावादित्यर्थ । यद्वा सन्ति यौधेयादयो राष्ट्रस्वरूपवचना पर स्त्रिया लुबुच्यते । यौधेयादयश्चापत्यप्रत्ययान्ता न पुनरपत्ये प्रत्ययमुत्पादयितुं समर्था 'वृद्धाद्यूनि' इति वचनात् । स्त्रियाश्च युवसंज्ञानिषेधात् । न वाच्यमपत्ये मा भवतु राष्ट्रसरूपत्वात् राजन्यर्थे भविष्यति यतस्तदापि परत्वादञं बाधित्वा दुसञ्ज्ञत्वात् 'दुनादि'—इति ञ्य एव स्यात् नाञ् । न च ञ्यस्यानेन लुबस्ति अतोऽप्राकरणिकस्यैवाञो लुप्प्रतिषेध ॥—भरतोशीनरशब्दाविति । ननु भरतोशीनरशब्दयो राष्ट्रक्षत्रियवाचित्वे उत्सादिपाठादपत्येपि द्रिसञ्ज्ञमञ बाधित्वाणपवादे चेति वचनादुत्साद्यञेव भवति तस्य च द्रिसंज्ञाया अभावाल्लुबभावात्तयोरुपादानमनर्थकम् । उच्यते । अत एव लुब्विधानादुत्साद्यञ बाधित्वायमेव भवतीत्यत आह—भरतोशीनरशब्दावित्यादि ॥—द्रिसंज्ञक एवाञ् भवतीति । प्रथमं 'प्राग् जितादण्' प्राप्नोति तस्य बाधको

भवतीति ज्ञाप्यते । *तेन भरतानां राजानो भरता उशीनराणामुशीनरा इति राज्ञि विहितस्याञ *उत्तरसूत्रेण लुप् सिद्धा भवति । उत्साद्यञस्तु द्विसंज्ञाया अभावान्न स्यात् । *नापि 'यञञः'—( ६-१-१२६ ) इत्यादिना प्राप्तिः राज्ञामगोत्रत्वात् ॥ १२३ ॥ *बहुष्वस्त्रियाम् ॥ ६ । १ । १२४ ॥ द्र्यन्तस्य शब्दस्य बहुषु वर्तमानस्य यो द्रिः प्रत्ययस्तस्यास्त्रियां लुप् भवति । पञ्चालानां राजानः पञ्चालस्यापत्यानि वा पञ्चालाः । एवं पुरवः । अङ्गाः । लोहध्वज एव लौहध्वज्यः । लौहध्वज्यौ । लोहध्वजाः । बहुष्विति द्र्यन्तस्य विशेषणं न निमित्तम् । तत्र हि पञ्चालानां निवासः पञ्चालनिवासः, प्रिया वङ्गा यस्य स प्रियवङ्गः, अङ्गानतिक्रान्तोऽत्यङ्गः, पञ्चालेभ्य आगतं पञ्चालमयम्, पञ्चालरूप्यम्, लोहध्वजमयं, लोहध्वजरूप्यमित्यादौ पञ्चाल अञ् आम् निवास इत्यादिस्थिते 'अन्तरङ्गानपि विधीन् *बहिरङ्गा लुप् बाधते' इति बहुवचनस्य लुपि द्रेर्लुप् न स्यात् । द्रेरिति पूर्ववदेव भिन्नप्रकरणस्यापि परिग्रहः । बहुष्विति किम् । पाञ्चालः । लौहध्वज्यः । प्रियो वाङ्गो येषां ते प्रियवाङ्गा इत्यत्र न द्र्यन्तं बहुषु किं तर्हि समास इति लुप् न भवति । प्रत्ययः प्रकृत्यादेरिति नियमाद्धि न समासो द्र्यन्तो भवति । पञ्चालस्यापत्यं पाञ्चालस्तस्य तयोर्वापत्यानि पञ्चाला इत्यत्र तु इञि लुप्तेऽञन्तमेव बहुषु वर्तत इति अञोऽपि लुप् । द्रेः प्रत्ययस्य बहुषु वर्तमानस्य *इति तु विज्ञायमाने न स्यात् । अस्त्रियामिति किम् । पञ्चालस्यापत्यानि स्त्रियः पाञ्चाल्यः । लौहध्वज्याः स्त्रियः । पञ्चभिः पाञ्चालीभिः क्रीतः पञ्चपञ्चाल इत्यत्र तु इकणो लुपः पित्त्वात् पुंवद्भावेन स्त्रीत्वनिवृत्तेर्लुप् भवत्येव ॥ १२४ ॥ *यस्कादेर्गोत्रे ॥ ६ । १ । १२५ ॥ यस्कादिभ्यो यः प्रत्ययो विहितस्तदन्तस्य बहुत्वविशिष्टे गोत्रेऽर्थे वर्तमानस्य यस्कादेर्यः स प्रत्ययस्तस्यास्त्रियां विषये लुप् भवति । यस्कस्यापत्यं यास्कः । यास्कौ । यस्काः । लाह्यः । लाह्यौ । लह्याः । शिवाद्यण् । यस्कादेरिति किम् । उपगोरपत्यमौपगवः । औपगवौ । औपगवाः । यास्कायनयः । लाह्यायनयः । गोत्र इति किम् । *यास्काश्छात्राः । यस्कस्यापत्यानि यस्काः, तत्प्रतिकृतयो यास्का इत्यत्र गोत्रे उत्पन्नस्यापि प्रत्ययस्य नेदानीं तदन्तं प्रतिकृतिषु वर्तमानं गोत्र इति न भवति । अस्त्रियामित्येव । यास्क्यः स्त्रियः । *यस्क *लह्य *द्रुह्य अयस्थूण तृणकर्ण भलन्दन । एभ्यः शिवाद्यणो

'राष्ट्रक्षत्रिय'—इत्यण् । इदं द्वयमपि बाधित्वोत्सादित्वादञ् प्राप्नोति अणपवादे चेति वचनादिति स्थिते गणपाठात् 'राष्ट्रक्षत्रिय'—इत्यणेव भवति ॥—तेनोत्तरसूत्रेणेति । तेनेत्यादिना ज्ञापकसिद्धं फलं दर्शयति । उत्तरसूत्रेणेति 'बहुष्वस्त्रियाम्' इत्यनेन । न च तस्याप्यनेन निषेध । अत्र स्त्रियामित्यधिकारात् ॥—नापि यञञ इति । अयमर्थ- । उत्साद्यञोपि 'यञञोऽश्यापर्ण'—इत्यादिना लुप् भविष्यतीति न वाच्यम् । तत्र गोत्राधिकारादपत्यस्यैव लुप् भवति न राजनि विहितस्येति ॥—बहुष्वस्त्रियाम्—॥—बहिरङ्गा लुप् बाधते इति । अत्र प्रकृतेः पूर्वं पूर्वमित्यन्तरङ्गत्वं बहिरङ्गत्वं च । ननु द्वे अपि लुपौ तत्कथं बाध्यबाधकभाव- । उच्यते । विधीनिति सामान्यभणनात् अन्तरङ्गा लुप् बाध्यते ॥—इति तु विज्ञायमाने न स्यादिति । यदाप्येवं विवक्ष्यते तदापि न भवति । पञ्चालस्यापत्यानि पञ्चालाः । अञ्, तेषामपत्यं युवा 'अत इञ्' अत्र प्रथमस्याञो न लुप् 'न प्राग्जितीय'—इति निषेधात् । 'भिदापं'—इति इञि लुप्तेऽपि न भवति बहुत्वाभावात् । तत- पाञ्चाल इत्येव भवति ॥—यस्कादेर्गोत्रे—॥—यास्का इति । अत्र यदि गोत्रे उत्पन्नस्य प्रत्ययस्य लुविति व्याख्यायेत तदात्रापि प्राप्नोति गोत्रे प्रत्ययस्योत्पन्नत्वात् न त्वेवं व्याख्यायतेऽपि तु प्रत्ययान्तस्य गोत्रे बहुषु वर्तमानस्येति । ततश्च नेह प्रत्ययान्तं गोत्रबहुत्वे किं तर्हि प्रकृतिबहुत्व इति । अथ यस्कादिगणो विवियते । यस्यति 'निष्क'—इति यस्कः । लहि- सौत्रः । लह्यति द्रुह्यति 'शिक्य'—इति लह्यः ।

लुप् । खरप । असान्नडाद्यायनणः । *भडिल । *भण्डिल । *भडित । *भण्डित । एभ्योऽश्वाद्यायनञः । *सदामत्त *कम्बलहार पर्णाढक कर्णाढक पिण्डीजङ्घ वकसक्थ रक्षोमुख जङ्घारथ उत्काश *कटुमन्थ *कटुकमन्थ विपपुट निकप (किपकः) कपकः उपरिमेखल *कडम *कुश *पटाक क्रोष्टुपाद क्रोष्टुमाय शीर्षमाय स्थगल *पदक वर्म्मक । एभ्योऽत इञः । पुष्करसद् । अस्माद्बाह्वादीञः । *विश्रि *कुद्रि अजवस्ति मित्रयु एभ्यो गृष्ट्याद्येयञः । इति यस्कादिः ॥१२५॥ *यञञोऽश्यापर्णान्तगोपवनादेः॥६।१।१२६॥ यञन्तस्याञन्तस्य च बहुत्वविशिष्टे गोत्रेऽर्थे वर्तमानस्य यः स प्रत्ययस्तस्यास्त्रियां लुप् भवति गोपवनादिभ्यः श्यापर्णान्तेभ्यो विहितं वर्जयित्वा । गोपवनादिर्बिदाद्यन्तर्गणः । गार्ग्यः । गार्ग्यौ । गर्गाः । वात्स्यः । वात्स्यौ । वत्साः । बैदः । बैदौ । बिदाः । और्वः । और्वौ । उर्वाः । गर्गमयम् । गर्गरूप्यम् । अश्यापर्णान्तगोपवनादेरिति किम् । गौपवनाः । शैग्रवाः । बैन्दवाः । ताजमाः । आश्ववतानाः । श्यामाकाः । श्यापर्णाः । केचित्तु मठरराजमाऽवतानाऽश्वश्याम्याकशब्दानपि गोपवनादिषु पठन्ति । माठरा इत्यादि । श्यापर्णान्तग्रहणं किम् । हारितः । हारितौ । हरिताः । गोपवनादिग्रहणं किम् । धैनवः । धैनवौ । धेनवः । बहुष्वित्येव । गार्ग्यः । बैदः । बैदस्य बैदयोर्वापत्यानि बिदा इत्यत्र त्विञि लुप्तेऽञन्तं बहुष्विति लुप् । बिदानामपत्यं बैदः बैदौ इत्यत्र त्विञि लुप्तेऽञन्तं न बहुष्विति लुप् न भवति । इञ्प्रत्ययविषयेऽप्यञो लुप् न भवति 'न प्राग्जितीये स्वरे' (६-१-१३५) इति प्रतिषेधात् । बिदानामपत्यं बहवो माणवका बिदा इत्यत्र चाञन्तं बहुष्विति भवत्येव । कश्यपप्रतिकृतयः काश्यपा इत्यत्र यद्यपि प्रत्ययो गोत्र उत्पन्नस्तथापि तदन्तं नेदानीं गोत्रबहुत्वे क्व तर्हि प्रतिकृतिष्विति लुप् न भवति । अस्त्रियामित्येव । गार्ग्यः, बैद्यः स्त्रियः । पञ्चभिर्गार्गीभिः क्रीतः पञ्चगर्गः दशगर्गः पट इत्यत्र त्विकणो लुपः पित्त्वात्पुंवद्भावेन *स्त्रीत्वनिवृत्तेर्लुप् । गोत्र इत्येव । औत्सास्छात्राः । उत्सादेरञ् । पौनर्भवाः । पौत्राः । दौहित्राः । नानान्द्राः । 'पुनर्भूपुत्रदुहितृननान्दुरनन्तरेऽञ्' (६-१-३९) । पारशवाः । 'परस्त्रियाः परशुश्चासावर्ण्ये' (६-१-४०) इत्यञ् । कथं प्रियो गार्ग्यो गार्ग्यौ वा येषां ते प्रियगार्ग्या इति । अत्र हि यञन्तस्य बहुविषयत्वात् लुप् प्राप्नोति । नैवम् । न यञन्तं बहुषु किं तर्हि समासः । स च 'प्रत्ययः प्रकृत्यादेः' (७-४-११९) इति नियमात् यञन्तो न भवतीति लुप् न भवति । प्रिया गर्गा यस्य स प्रियगर्ग इत्यत्र तु यञन्तस्य बहुत्वाद्भवत्येव ॥ १२६ ॥ *कौण्डिन्यागस्त्ययोः कुण्डिनाग-

---

द्रुह्यः । अयस स्थूणा यत्र । तृणवत्कर्णौ यस्य । भलिण् अच् भळमन्दति नन्द्यादित्वादन । 'भण्डेर्नलुक् च वा' इति भडिलः । भण्डिलः । भड्ड् 'पुत'—इति भडितः । भण्ड्यते स्म भण्डितः । सदा माद्यति स्म सदामत्तः । कम्बलं हरति कम्बलहारः । पर्णवत् आढको देयोऽस्य । कर्ण्यते कर्ण. कर्णवदाढको भेयोऽस्य । वकवत्सक्थ्यस्य । रक्षोवन्मुख यस्य । जङ्घा रथो यस्य । उत्काशते अच् । कं सुख ददाति 'पृक'—इति कटुः । त मथ्नाति । 'मिवमि'—इति कटुक त मथ्नाति । विपं पुटति । मूळे निकपन्ति अत्रेति । 'गोचरसचर'—इति कप कायति । उपरि मेखला यस्य । कडति 'सृपृप्रथि'—इति कडम. । कुश्यति 'नाम्युपान्त्य'—इति के कुशः । पटति 'शालिपलि'—इति पटाकः । क्रोष्टुना पद्यते 'पदरुज'—इति क्रोष्टुवत्पादौ यस्य । क्रोष्टुवन्माया यस्य । शीर्षं मिमीते । परेष्ठगे स्थग सवारक लाति । पदयते पदक' । वर्म गपु कायति । पुष्करे सीदति । विशत् प्रवेशने । 'तङ्कि —इत्यधिकारे रि विश्रि क्रादीयते कुद्रिः । अजस्येव वस्तिरस्य ॥—यञञोऽश्याप—॥—स्त्रीत्वनिवृत्तेर्लुविति । यदा पञ्चभिर्गार्गीभि क्रीता इकण् लुप् पुवत् ततो बाप्यप्रयापेधयाप् पञ्चगार्ग्या दशगार्ग्या इत्येव भवतीति न्यास. । अत्र सूत्रे गोपवादो दुसमकाना पूर्वाचार्यानुरोधात् पाठ । यावता नास्ति विशेष । यतोऽपि लुरि सत्यामपि 'न प्राग्जितीय'—इति निषेधात् 'सत्योप —इत्यादिनाणेव भाव्यम् ॥—कौण्डिन्याग-

स्ती च ॥ ७ । १ । १२७ ॥ कौण्डिन्य आगस्त्य इत्येतयोर्बहुत्वविशिष्टे गोत्रेऽर्थे वर्तमानयोर्यञोऽणश्चास्त्रियां लुब् भवति तयोश्च कुण्डिनीअगस्त्यशब्दयोः कुण्डिन अगस्ति इत्येतावादेशौ भवतः । आगस्त्यशब्दस्य ऋष्यणन्तत्वात् *यञञौ न संभवतः । कुण्डिन्या अपत्यं गर्गादित्वाद्यञ् । अत एव निर्देशात्पुंवद्भावाभावः । कौण्डिन्यः । कौण्डिन्यौ । कुण्डिनाः । आगस्त्यः । आगस्त्यौ । अगस्तयः । प्रत्ययलुपं कृत्वादेशकरणमगस्तीनामिमे आगस्तीया इत्येवमर्थम् । प्रत्ययान्तादेशे हि कृते अगास्तिशब्दस्यादेराकारस्याभावात् 'वृद्धिर्यस्य स्वरेष्वादिः' ( ६-१-८ ) इति दुसंज्ञा न स्यात् । तदभावे च तन्निमित्तो 'दोरीयः' ( ६-३-३१ ) इतीयः प्रत्ययोऽपि न स्यात् । यदा तु प्रत्ययस्य लुब् विधीयते तदा स्वरादावीयप्रत्यये भाविनि 'न प्राग्जितीये स्वरे' ( ६-१-१३५ ) इति प्रतिषेधात् प्रत्ययस्य लुब् न भवति । तथा च सति दुसंज्ञत्वात् ईयः सिद्धो भवति । *कुण्डिन्यामविशेषः । प्रत्ययान्तादेशे हि कुण्डिनशब्दाददुसंज्ञकात् 'तस्येदम्' ( ६-३-१५९ ) इत्यणा भवितव्यम् । प्रत्ययस्य तु लुपि 'न प्राग्जितीये स्वरे' ( ६-१-१३५ ) इति लुप्प्रतिषेधे सत्यामपि दुसंज्ञायामीयप्रत्ययापवादः शकलादित्वादञेव स्यात् अतो न विशेषः । अस्त्रियामित्येव । कौण्डिन्यः, आगस्त्यः स्त्रियः ॥ १२७ ॥ *भृग्वङ्गिरस्कुत्सवसिष्ठगोतमात्रेः ॥ ६ । १ । १२८ ॥ भृगु आङ्गिरस् कुत्स वसिष्ठ गोतम अत्रि इत्येतेभ्यो यः प्रत्ययस्तदन्तस्य बहुत्वविशिष्टे गोत्रेऽर्थे वर्तमानस्य यः स प्रत्ययस्तस्यास्त्रियां लुब् भवति । भार्गवः । भार्गवौ । भृगवः । एवमाङ्गिरसः । कुत्साः । वसिष्ठाः । गोतमाः । एभ्योऽणो लुप् । अत्रयः । एयणो लुप् । अस्त्रियामित्येव । भार्गव्यः आङ्गिरस्यः आत्रेय्यः स्त्रियः । बहुष्वित्येव । भार्गवः । आत्रेयः । गोत्रे इत्येव । भार्गवाश्छात्राः । भृग्वादीन् यस्कादिष्वपठित्वेदं वचनं 'द्व्येकेषु षष्ठ्यास्तत्पुरुषे यञादेर्वा' ( ६-१-१३४ ) इत्येवमर्थम् । अन्यथा *भृगुकुलं भार्गवकुलमिति *न सिध्येत् ॥ १२८ ॥ *प्राग्भरते बहुस्वरादिञः ॥ ६ । १ । १२९ ॥ बहुस्वरान्नाम्नो य इञ् प्रत्ययस्तदन्तस्य बहुत्वविशिष्टेऽर्थे प्राग्गोत्रे भरतगोत्रे च वर्तमानस्य यः स प्रत्ययस्तस्यास्त्रियां लुप् भवति । क्षैरकलम्भिः । क्षैरकलम्भी । क्षीरकलम्भाः । पान्नागारिः । पान्नागारी । पन्नागाराः । मान्थरेषणिः । मान्थरेषणी । मन्थरेषणाः । सर्वेष्वत इञः । भरत, यौधिष्ठिरिः । यौधिष्ठिरी । युधिष्ठिराः । आर्जुनिः । आर्जुनी । अर्जुनाः । औद्दालकिः । औद्दालकी । उद्दालकाः । एभ्यो बाह्वादीञः । प्राग्भरत इति किम् । बालाकयः । हास्तिदासयः । कथं तौल्वलयः तैल्वलयः तैल्वकयः इत्यादिषु लुब् न भवति । उच्यते । यस्कादिषु पुष्करसच्छब्दपाठात् । अस्य हि बहुस्वरत्वादनेनैवञ्लोपे सिद्धे तदर्थो यस्कादिपाठो ज्ञापयति तौल्वल्यादीनामिञो लुप् न भवतीति । भरताः प्राच्या एव तेषां पृथगुपादानं *प्राग्ग्रहणेनाग्रहणार्थम् । तेन यौधिष्ठिरिः पिता यौधिष्ठिरायणः पुत्र इत्यत्र 'प्राच्येञोऽतौल्वल्यादेः' ( ६-१-१४३ ) इति लुप् न भवति । अपरे त्वाहुः । प्राग्ग्रहणं भरतविशेषणम् । क्षीरकलम्भादयो वैश्याः प्राग्भरताः । युधिष्ठिरादयो राजान उदग्भरताः । तत्र प्राग्ग्रहणादुदीच्यभरतेषु *राजसु लुब् न भवति । यौधिष्ठिरयः । आर्जुनयः । भरतग्रहणात्तु

---

स्त्ययोः—॥—यञञौ न संभवत इति । तेनास्याण एव लुबित्यर्थः ॥—कुण्डिन्यामविशेष इति । ईयप्रत्ययापेक्षमिदमुक्तम् अविशेष इति न प्रत्ययान्तरे । यत प्रत्ययलोपेऽपि हि 'न प्राग्जितीय'—इति लोपनिषेधे यञन्तात्कुण्डिनानामयं संघादि· इति विवक्षायामण् भवति तथाच कौण्डिनमिति भवति । सप्रत्ययादेशे हि अयञन्तात् 'गोत्राददण्ड'—इत्यकञ् स्यात् तदा कौण्डिनकमिति भवत्यतो विशेष· ॥—भृग्वङ्गिर—॥—भृगुकुलमिति । भृगोरपत्यमपत्ये वा ऋष्यण् । भार्गवस्य भार्गवयोर्वा कुलम् ॥—न सिध्येदिति । तदाऽयञादित्वात् तत्र हि यञादेर्वेत्युक्तम् । ततश्च 'यञञोऽश्यापर्ण'—इत्यारभ्य येषा बहुत्वे लुप् तेषामेकत्वद्वित्वयोरपि लुप् ॥—प्राग्भरते—॥—प्राग्ग्रहणेनाग्रहणार्थमिति । अयमर्थ· । अन्यत्र सूत्रे प्राग्ग्रहणेन भरताग्रहणमित्याह—राजसु लुब्न भवतीति ।

प्राच्येषु राजसु न भवति । मारसंवन्धयः । भागवित्तयः । वहुस्वरादिति किम् । चैङ्क्यः । पौष्पयः । काशयः । वाशयः । इञ इति किम् । शान्तनवाः ॥ १२९ ॥ *वोपकादेः ॥ ६ । १ । १३० ॥ उपक इत्येवमादिभ्यो यः प्रत्ययस्तदन्तस्य बहुत्वविशिष्टे गोत्रे वर्तमानस्य यः स प्रत्ययस्तस्यास्त्रियां लुप् न भवति वा । उपकाः । औपकायनाः । लमकाः । लामकायनाः । अस्त्रियामित्येव । औपकायिन्यः स्त्रियः । उपक लमक । आभ्यां नडाद्यायनणो लुप् । भ्रष्टक कपिष्ठल कृष्णाजिन कृष्णसुन्दर पिङ्गलक कृष्णपिङ्गल कलशीकण्ठ दामकण्ठ जनुक कनक मदाघ अपजग्ध *अडारक *वटारक *प्रातिलोम *अनुलोम *प्रतान अनुपद अभिहित अनभिहित खारीजङ्घ कशकृत्स्न शलाथल *कमन्दक *कमन्तक *कवन्तक पिञ्जूलक *अडड्डक *अवव्वक *पतञ्जल *पदञ्जल वर्णक पर्णक *कठेरित । एभ्योऽत इञः । *कुषीतक । अत्र काश्यपेऽर्थे 'विकर्णकुषीतकात्काश्यपे' (६-१-७५) इत्येयञः । अन्यत्रेञः । लेखाभ्रूः । अत्र शुभ्राद्येयणः । पिष्ट *सुपिष्ट *मसुरकर्ण कर्णक पर्णक *जटिलक *बधिरक । एभ्यः शिवाद्यणः । *कठेलिति *पतञ्जलि *खरीखन । एभ्य औतसर्गिकाणः । *इत्युपकादिः ॥ १३० ॥ *तिककितवादौ द्वन्द्वे ॥ ६ । १ । १३१ ॥ तिककितवादिषु द्वन्द्ववृत्तिषु बहुषु गोत्रापत्येषु वर्तमानेषु तैकायनिकैतवायनीत्यादीनां यः स प्रत्ययस्तस्यास्त्रियां लुप् भवति । तैकायनयश्च कैतवायनयश्च तिककितवाः । तिकाद्यायनिञो लुप् । औब्जयश्च काकुभाश्च उब्जककुभाः । उब्जादिञः ककुभाच्छिवाद्यणः । औरशायनयश्च लाङ्कटयश्च उरशलङ्कटाः । उरशात्तिकाद्यायनिञः लङ्कटात् इञः । अग्निवेशाश्च दाशेरकयश्च अग्निवेशदशेरकाः । शण्डिलाश्च काशकृत्स्नयश्च शण्डिलकशकृत्स्नाः । अग्निवेशशण्डिलाभ्यां गर्गादियञः दशेरककशकृत्स्नाभ्यां त्वत इञः । 'वान्येन'—(६-१-१३३) इति यञो *लुब्विकल्पे प्राप्ते नित्यार्थः पाठः । औपकायनाश्च लामकायनाश्च उपकलमकाः । अत्र नडाद्यायनणः । भ्राष्टकयश्च कापिष्ठलयश्च भ्रष्टककपिष्ठलाः । कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च कृष्णाजिनकृष्णसुन्दराः । वाङ्खरयश्च भाण्डीरथयश्च वङ्खरभण्डीरथाः । पाहकयश्च नारकयश्च पहकनरकाः । बाकनखयश्च स्वागुदपारिणद्धयश्च वकनखस्वगुदपरिणद्धाः । अन्येषां बाकनखयश्च स्वागुदयश्च पारिणद्धयश्चेति त्रिपदो द्वन्द्वः । (ता)लाङ्कयश्च शान्तमुखयश्च

---

प्राच्या भरता द्वेधा वैश्या राजानश्च । ततो वैश्येषु वाच्येषु लुङ् भवति न राजसु । उदीच्यभरता राजान एवोच्यन्ते तेषु प्राग्ग्रहणान्न लुप् ॥—वोपकादे ॥ अथ गण । उपकायति । कपेरिव स्थलमस्य । कृष्णमजति 'विपिन'—इति कृष्णमजिनमस्य वा । अपकृष्टं जग्धं यस्य अपात्ति स्मेति वापजग्ध । अडत्यच् । अडं वृश्चिकलाङ्गूलमियर्ति अडारकः । वटारस्य तुल्यो वटारकः । प्रतेगत लोमानुगतं लोम 'प्रत्यन्ववात्सामलोम्न.' प्रतिलोम अनुलोम । 'तन्व्यधि'—प्रतानः । अभिदधाति अनभिधीयते स्म 'शीरी'—इति । खारीवजङ्घा यस्य । कमन्दति कमन्दकः । कमन्तति कमन्तकः । कौति कव कवमन्तति कवन्तकः । 'पिञ्जिमञ्जि'—इति पिञ्जूल । अडति उद्यतते अड् अडमड्डति अडड्डकः । अवमवति 'कीचक'—इति अवव्वकः । पतो जलात् पतञ्जलः । पदं जलति 'मूलविभुजा'—इति पदञ्जलः । वर्णयति वर्णकः । कठेन ईरित कठेरितः । 'कुषे किन्' कुषीतकः । शोभन पिष्टं यस्य सुपिष्टः । मसुरवत्कर्णौ यस्य मसुरकर्णः । णके कर्णक । जटिलं बधिरं च कायति बधिरस्य तुल्यो वा जटिलकः बधिरकः । कठमेनमिल्यात् कठेलितिः । पतोऽञ्जले पतञ्जलिः । खरी खनति खरीखनः । इत्युपकादि । पर्णकशब्दस्य ऋपिवचनस्य शिवादौ पाठात्क्रियावचनादत इञेव । अत पर्णाति करोतीति वाक्यम् अत्र गर्गेऽर्थभेदान्न्यासकारैर्द्विरुपात्त ॥—तिककितवादौ—। समासकालेऽपि बहुत्वाद्वृत्तित्वात् 'यञञ.'—इति यञो लुपि अग्निवेशाश्च शण्डिलाश्चेति समासः ॥—लुब्विकल्पे प्राप्ते इति । द्वयोरग्निवेशशण्डिलशब्दयोर्यञन्तयोरित्यर्थ । अयञन्ताना तु अकयन्तत्वान्न ॥

(ता)लाङ्कुशान्तमुखाः । एषु सर्वेष्वत इञ् । उपकलमकाः भ्रष्टककपिष्ठलाः कृष्णाजिनकृष्णसुन्दरा इत्येषामुपकादिष्वद्वन्द्वार्थः पाठः द्वन्द्वे त्वयमेव नित्यो विधिः । तिककितव उब्जककुभ उरशलङ्कट अग्निवेशदशेरक शण्डिलकशकृतल उपकलमक भ्रष्टककपिष्ठल कृष्णाजिनकृष्णसुन्दर वड्बरभण्डीरथ पहकनरक वकनख स्वगुदपरिणद्ध (ता)लङ्कुशान्तमुख । इति तिककितवादिः ॥ १३१ ॥ *ग्यादेस्तथा ॥ ६ । १ । १३२ ॥ *ग्यादिप्रत्ययान्तानां द्वन्द्वेऽबहुष्वर्थेषु वर्तमाने यः स ग्यादिप्रत्ययस्तस्य लुप् भवति तथा *यथापूर्वम् । वार्केण्यश्च लौहध्वज्यश्च कौण्डीवृस्यश्च वृकलोहध्वजकुण्डीवृशाः । अत्र 'वृकाट्टेण्यण्' ( ७–३–६४ ) इति टेण्यणः 'पूगादमुख्यकाञ्ञ्यो द्रिः' ( ७–३–६० ) इति ञ्यस्य 'वाहीकेष्वब्राह्मणराजन्येभ्यः' ( ७–३–६३ ) इति ञ्यटश्च लुप् । आङ्गश्च वाङ्गश्च सौह्मश्च अङ्गवङ्गसुह्माः । अत्र द्विस्वरलक्षणस्याणः । एवं गर्गवत्सवाजाः । अत्र यञः । विदगर्गयस्काः । अत्राञो यञोऽणश्च । तथेति किम् । यास्कलाह्यारछात्राः । अत्र 'तस्येदम्' ( ६–३–१५९ ) इत्यणो लुप् न भवति 'यस्कादेर्गोत्रे' ( ६–१–१२५ ) इत्यत्र गोत्रे उत्पन्नस्येति प्रत्ययस्य विशेषणात् । गार्गीवत्सवाजाः । अत्र वत्सवाजयोरेव यञो लुप् न गार्गी इत्यत्र तत्राऽस्त्रियामिति प्रतिषेधात् । शैब्रवगौपवनाः । अत्र 'अश्यापर्णान्तगोपवनादेः' इति प्रतिषेधात् अञो लुप् न भवति । वालाकिहास्तिदासयः । अत्र प्राग्भरतेति वचनात् अप्राग्भरते न भवति । *ग्यादिग्रहणमगोत्रेऽपि यथा स्यादित्येवमर्थम् । अबह्वर्थं वचनम् ॥ १३२ ॥ *वान्येन ॥ ६ । १ । १३३ ॥ ग्यादेरन्येन सह ग्यादीनां द्वन्द्वे बहुष्वर्थेषु वर्तमाने य स ग्यादिप्रत्ययस्तस्य तथा वा लुग् भवति यथा पूर्वम् । अङ्गवङ्गदाक्षयः । आङ्गवाङ्गदाक्षयः । गर्गवत्सौपगवाः । गार्ग्यवात्स्यौपगवाः । भृगुवत्साग्रायणाः । भार्गववात्स्याग्रायणाः । गर्गकश्यपगालवाः । गार्ग्यकाश्यपगालवाः । पूर्वेण नित्ये प्राप्ते *विकल्पार्थं वचनम् ॥ १३३ ॥ *द्व्येकेषु षष्ठ्यास्तत्पुरुषे यञादेर्वा ॥ ६ । १ । १३४ ॥ षष्ठीतत्पुरुषे यत्पदं तस्याः षष्ठ्या विषये द्वयोरेकस्मिन्वर्तते तस्य यः स यञादिः प्रत्ययस्तस्य तथा वा लुक् भवति यथा पूर्वम् । गार्ग्यस्य गार्ग्ययोर्वा कुलं गर्गकुलम् । गार्ग्यकुलम् । एवं विदकुलम् । वैदकुलम् । अगस्तिकुलम् । आगस्त्यकुलम् । भृगुकुलम् । भार्गवकुलम् । द्व्येकेष्विति किम् । गर्गाणां कुलम् गर्गकुलम् । षष्ठ्या इति किम् । गार्ग्यहितम् । परमगार्ग्यः । षष्ठ्या इति तत्पुरुषस्य विशेषणेन प्रतिपदोक्तस्यैव षष्ठीतत्पुरुषस्य परिग्रहादिह न भवति । गार्गस्य गार्ग्ययोर्वान्तर्गतः अन्तर्गार्ग्यः । *'प्रात्यव'—( ३–१–४७ ) इत्यादिना समासः । द्व्येकेष्वित्यस्य षष्ठ्या इति विशेषणं किम् । देवदत्तस्य गार्ग्यः देवदत्तगार्ग्यः । देवदत्तगार्ग्यौ । तत्पुरुष इति किम् । गार्ग्यस्य समीपमुपगार्ग्यम् । यञादेरिति किम् । आङ्गकुलम् । यास्ककुलम् ॥ १३४ ॥

—ग्यादेस्तथा—॥—ग्यादिप्रत्ययान्तानामिति । 'बहुष्वस्त्रियाम्' इत्यारभ्य ये केचन लोपनीयाः प्रत्ययास्ते ग्यादयो ज्ञेयाः । 'द्रेरणः'—इत्यनेन तु एकत्वद्वित्वबहुत्वसामान्ये लुगुक्तानेनापि तथैवेति न तत्रास्य कश्चिदुपयोगोऽतो 'बहुष्वस्त्रियाम्' इत्यारभ्योदाह्रियते ॥—यथापूर्वमिति । पूर्वप्रत्ययान्तबहुत्वे यस्य लुप् भवति द्वन्द्वे बहुत्वेऽपि तस्यैव भवति यस्य न भवति तस्य न भवत्येव यस्यादेशेन सह तस्यादेशेन सहैव यस्य विकल्पस्तस्य विकल्प एवेत्यर्थः ॥—ग्यादिग्रहणमगोत्रेपीति । ननु तथेति भणनादेषा पूर्वं बहुषु लुगुक्ता तेषामेव भविष्यति किं ग्यादिग्रहणेनेत्याह ॥ अयमर्थः । यदि ग्यादिग्रहणं न क्रियेत तदा 'यस्कादेर्गोत्रे' इत्यतो गोत्र इत्यनुवर्तमाने गोत्र एव लुप्स्यात् यथा अङ्गवङ्गसुह्मा इति नागोत्रे यथा वृकलोहध्वजकुण्डीवृशा इति ॥—वान्ये—॥—विकल्पार्थमिति । पूर्वेण 'ग्यादेः' इति सामान्यभणनादत्रापि सिद्धे यत्रान्येन सह द्वंद्व तत्रानेन विकल्प एवेत्यर्थः ॥—द्व्येके—॥—प्रात्यवेत्यादिना समास इति । बाहुलकात् पञ्चम्यन्तेन समासः । यतस्तत्र पञ्चम्यन्ता-

*न प्राग्जितीये स्वरे ॥ ६ । १ । १३५ ॥ गोत्र इति वर्तते । गोत्रे उत्पन्नस्य बहुषु या लुगुक्ता सा प्राग्जितीयेऽर्थे यो विधीयते स्वरादिस्तद्धितस्तस्मिन् विषयभूते न भवति । गर्गाणां छात्राः *गार्गीयाः । वात्सीयाः । आत्रेयीयाः । आगस्तीयाः । खारपायणीयाः । हारितीयाः । प्राग्जितीये इति किम् । आत्रिभ्यो हितः अत्रीयः । अगस्तीयः । गर्गीयः । वत्सीयः । स्वर इति किम् । गर्गेभ्य आगतं गर्गमयम् । गर्गरूप्यम् । बिदानामपत्यं युवा बैदः बैदा- विदाः तु इञि विषयभूतेऽनेन प्रतिषेधः । इञस्तु लुपि सत्यामञन्तं न बहुषु वर्तते इति लुपः प्राप्तिरेव नास्ति । यत्र त्वस्ति तत्र भवत्येव । बिदानामपत्यानि बिदाः । अथेह कस्मान्न भवति अत्रीणां भरद्वाजानां च विवाहः अत्रिभरद्वाजिका वसिष्ठकश्यपिका भृग्वङ्गिरसिका कुत्सकुशिकिकेति । उच्यते । प्रत्यासत्तेर्यस्य प्रत्ययस्य लुप् प्रतिषिध्यते *तल्लोपिप्रत्ययान्तादेव विधीयमाने स्वरादौ प्रतिषेधः । अत्र द्वन्द्वाद्विधीयते न तल्लोपिप्रत्ययान्तादिति प्रतिषेधो न भवति । *'गर्गभार्गविका' ( ६-१-१३६ ) इत्युत्तरसूत्रं वा नियमार्थं व्याख्यायते । गर्गभार्गविकाया अन्यत्र द्वन्द्वे वृद्धे यूनि वा प्रतिषेधो न भवति । गोत्र इत्येव । कुवल्याः फलं कुवलम् । तस्येदं कौवलम् ॥ १३५ ॥ *गर्गभार्गविका ॥ ६ । १ । १३६ ॥ गर्गभार्गविकेति द्वन्द्वात् प्राग्जितीये विवाहे यो विधीयतेऽकल् प्रत्ययस्तस्मिन् अणो लुप्प्रतिषेधो निपात्यते । गर्गाणां वृद्धानां भृगूणां वृद्धानां यूनां च विवाहो गर्गभार्गविका । अत्रिभरद्वाजिकादिवदभासः प्रतिषेधो निपात्यते ॥ १३६ ॥ *यूनि लुप् ॥ ६ । २ । ॥ १३७ ॥ यून्यपत्ये विहितस्य प्रत्ययस्य प्राग्जितीये स्वरादौ प्रत्यये विषयभूतेऽनुत्पन्न एव लुप् भवति । लुपि सत्यां यो यतः प्राप्नोति स तत उत्पद्यते । पाण्टाहृतस्यापत्यं पाण्टाहृतिः । तस्यापत्यं युवा पाण्टाहृतः । 'पाण्टाहृतिमिमताणणश्च ( ६-१-१०४ ) ति णः । तस्य छात्रा इति प्राग्जितीये स्वरादौ चिकीर्षिते णस्य लुप् । तत इञन्तं प्रकृतिरूपं संपन्नम् इति 'वृद्धेञः' ( ६-३-२८ ) इत्यञ् भवति । पाण्टाहृताः । भगवित्तस्यापत्यं भागवित्तिः तस्यापत्यं युवा भागवित्तिकः । 'भागवित्तितार्णबिन्दव'—( ६-१-१०५ ) इत्यादिना इकण् । तस्य छात्रा इति पूर्ववदिकणि निवृत्तेऽञ् । भागवित्ताः । वृषस्यापत्यं वार्ष्यायणिः । *तस्यापत्यं युवा वार्ष्यायणीयः । 'सौयागायनि'—( ६-१-१०६ ) इत्यादिनेयः । तस्य छात्रा इति पूर्ववदीयस्य लुपि 'दोरीयः' ( ६-३-३१ ) इतीयः । *वार्ष्यायणीयाः । कपिञ्जलादस्यापत्यं कापिञ्जलादिस्तस्यापत्यं युवा कापिञ्जलाद्यः । कुर्वादित्वात् ञ्यः । तस्य छात्राः पूर्ववत् ञ्यस्य लुपि 'वृद्धेञः' ( ६-३-२८ ) इत्यञ् । कापिञ्जलादाः । ग्लुचुक- स्यापत्यं ग्लुचुकायनिः तस्यापत्यं युवा ग्लौचुकायनः । औत्सर्गिकोऽण् । तस्य छात्रा इति पूर्ववदणो लुपि पुनः शैषिकोऽणेव भवति । ग्लौचुकायनाः । स्वर इत्येव । पाण्टाहृतमयम् । वार्ष्यायणीयरूप्यम् । प्राग्जितीय इत्येव । भागवित्तिकाय हितं भागवित्तिकीयम् ॥ १३७ ॥ *वायनणायनिञोः ॥ ६ । १ । १३८ ॥ आयनण

न्तैरेव समास उक्त ॥—न प्रा—॥—गार्गीया इति । ननु गार्गीया इत्यादौ विषयव्याख्यानादुत्पन्ने प्रत्यये पश्चाल्लोप कथ न भवति । उच्यते । विषयव्याख्यानेन त्रैकाल्यमपि गृह्यते । तेन यो वर्त्तते यो भूतो यश्च भावी तस्मिन् सर्वस्मिन् न लोपो भवतीत्यर्थ ॥—तल्लोपिप्रत्ययान्तादिति । स लोपी प्रत्ययोऽन्ते यस्य तस्मादित्यर्थ ॥—गर्गभार्गविकेत्युत्तरसूत्रं वेति । यदा कश्चित् प्रत्यासत्तिममन्यमानो ढौकते तदेदमुत्तरम् । यद्वा यदा द्वन्द्वपदाना कुक्कुटमयूर्यावित्यादिवत् कृत्स्नमादेशत्वं विवक्ष्यते । यद्वा यदा द्वन्द्वात्परं पद श्रूयमाणं प्रत्येकमभिसंबध्यते तदा एवमुत्तरम् ॥—गर्ग—॥गर्गस्य यूनि गार्ग्यायणनामिति प्राप्नोतीति गर्गाणा वृद्धानामित्येवाह । भृगोस्तु यून्यपि 'भिदार्षात्'—इति लुबिति यूना चेत्याह ॥—यूनि—॥—तस्यापत्यं युवेति ॥ वार्ष्यायणे सौवीरदेशस्थस्यापत्यं युवा निन्दितः ॥—वार्ष्यायणीया इति । न वाच्यं 'प्रस्थपुर'—इत्यकञ प्राप्तियंतस्तेन देशवाचकाद्भवतीति ॥—वाय—॥

आयनिञश्च यून्यपत्ये विहितस्य प्राग्जितीये स्वरादौ प्रत्यये विषयभूते लुक् वा भवति । गर्गस्यापत्यं गार्ग्यः तस्यापत्यं युवा गार्ग्यायणः । 'यञिञः' ( ६–१–५४ ) इत्यायनण् । तस्य छात्रा गार्गीयाः गार्ग्यायणीया वा । 'दोरीयः' ( ६–३–३१ ) इतीयः । चिङ्कस्यापत्यं चैङ्किः तस्यापत्यं युवा चैङ्कायनः । तस्य छात्राः *चैङ्कीयाः चैङ्कायनीया वा । आयनिञः खल्वपि । होतुरपत्यं हौत्रः तस्यापत्यं युवा हौत्रायणिः । 'द्विस्वरादणः' ( ६–१–१०९ ) इत्यायनिञ् । तस्य छात्राः हौत्रीयाः हौत्रायणीया वा । 'दोरीयः' ( ६–३–३१ ) इतीयः । आयनणो णित उपादानात् ञितः पूर्वेण नित्यमेव लुप् । अत्रेरपत्यमात्रेयः । तस्यापत्यं भारद्वाजो युवा आत्रेयायणः । 'आत्रेयाद्भारद्वाजे' ( ६–१–५२ ) इत्यायनञ् । तस्य छात्राः आत्रेयीयाः ॥ १३८ ॥ *द्रीञो वा ॥ ६ । १ । १३९ ॥ *प्राग्जितीये स्वर इति निवृत्तम् । द्रिसंज्ञो य इञ् तदन्तात्परस्य युवप्रत्ययस्य लुक् वा भवति । उदुम्बरस्यापत्यमौदुम्बरिः । 'साल्वांश'—( ६–१–११७ ) इत्यादिनेञ् । तस्यापत्यं युवा औदुम्बरिः औदुम्बरायणो वा । 'यञिञः' ( ६–१–५४ ) इत्यायनण् । द्रिग्रहणं किम् । दाक्षेरपत्यं दाक्षायणः । इञ इति किम् । अङ्गस्यापत्यमाङ्गः । 'पुरुमगध'—( ६–१–११६ ) इत्यादिना अण् । तस्यापत्यमिति 'द्विस्वरादणः' ( ६–१–१०९ ) इत्यायनिञ् । तस्य 'अब्राह्मणात्' ( ६–१–१४१ ) इति नित्यं लुप् । आङ्गः पिता । आङ्गः पुत्रः । 'अब्राह्मणात्' इति नित्यं लुपि प्राप्तायां विकल्पार्थं वचनम् ॥ १३९ ॥

॥ ञिदार्षादणिञोः ॥ ६ । १ । १४० ॥ ञित आर्षश्च योऽपत्यप्रत्ययस्तदन्तात्परस्य युवप्रत्ययस्य अण इञश्च लुप् भवति । वचनभेदाद्यथासंख्याभावः । ञितः, तिकस्यापत्यं तैकायनिः । तिकादेरायनिञ् । तस्यापत्यमौत्सर्गिकोऽण् । तस्य लुप् । तैकायनिः पिता । तैकायनिः पुत्रः । विदस्यापत्यं वैदः । विदादित्वादञ् । तस्यापत्यम् 'अत' ( ६–१–३१ ) इतीञ् । तस्य लुप् । वैदः पिता । वैदः पुत्रः । कुरोरपत्यं कौरव्यः । 'कुर्वादेर्ञ्यः' ( ६–१–१०० ) । कौरव्यस्यापत्यम् 'अत इञ्' ( ६–१–३१ ) तस्य लुप् । कौरव्यः पिता । कौरव्यः पुत्रः । तिकादिषु औरशशब्दसाहचर्यात् कौरव्यशब्दः क्षत्रियगोत्रवृत्तिर्विज्ञायते अयं तु ब्राह्मणगोत्रवृत्तिरिति अत आयनिञ् न भवति । आर्षात्, वासिष्ठः पिता । वासिष्ठः पुत्रः । वैश्वामित्रः पिता । वैश्वामित्रः पुत्रः । ऋष्यणन्तादिञ् तस्य लुप् । आत्रेयः पिता । आत्रेयः पुत्रः । 'इतोऽनिञः' ( ६–१–७२ ) इत्येयणन्तादिञ् । तस्य लुप् । ञिदार्षादिति किम् । औपगवः पिता । औपगविः पुत्रः । औत्सर्गिकाणन्तादिञ् । कौहडः पिता । कौहडिः पुत्रः । शिवाद्यणन्तादिञ् । अणिञोरिति किम् । दाक्षेरपत्यं दाक्षायणः ॥ १४० ॥ अब्राह्मणात् ॥ ६ । १ । १४१ ॥ अब्राह्मणवाचिनो वृद्धप्रत्ययान्ताद्यूनि विहितस्य प्रत्ययस्य लुप् भवति । अङ्गस्यापत्यमाङ्गः । 'पुरुमगध'—इत्यादिनाण् । तस्यापत्यं 'द्विस्वरादणः' ( ६–१–१०९ ) इत्यायनिञ् । तस्य लुप् । आङ्गः पिता । आङ्गः पुत्रः । एवं सौह्मः पिता । सौह्मः पुत्रः । मगधस्यापत्यं मागधः । 'पुरुमगध'—( ६–१–११६ ) इत्यादिनाण् । तस्यापत्यम् 'अत इञ्' ( ६–१–३१ ) । तस्य लुप् । मागधः पिता । मागधः पुत्रः । एवं कालिङ्गः पिता । कालिङ्गः पुत्रः । शौरमसः पिता । शौरमसः पुत्रः ।

---

—चैङ्कीया इति । 'वृद्धेञ' इत्यञ् न भवति 'न द्विस्वरात्' इति प्रतिषेधात् ॥—द्रीञो—॥—प्राग्जितीये स्वर इति निवृत्तमिति । अस्य सूत्रस्य करणात् । अन्यथेञन्तात् आयनणैव भाव्यमिति पूर्वेणैव सिद्धे इद न कुर्यात् । नन्वायनणैव भाव्यमिति न वाच्यं यत उदुम्बरस्यापत्यं स्त्री इञ् । तदन्तेर्ङी तदा ङ्यन्ताद् 'ङ्याप्त्यूङ' इति एयण् प्राप्नोति इति प्राग्जितीये स्वरादौ प्रत्यये एतद्विना लोपो न प्राप्नो-

तथा नाकुलः पिता । नाकुलः पुत्रः । साहदेवः पिता । साहदेवः पुत्रः । वासुदेवः पिता । वासुदेवः पुत्रः । आनिरुद्धः पिता । आनिरुद्धः पुत्रः । रान्धसः पिता । रान्धसः पुत्रः । श्वाफल्कः पिता । श्वाफल्कः पुत्रः । एभ्यः 'ऋषिवृष्ण्यन्धककुरुभ्यः' (६-१-६१) इत्यण् । तत इञो लुप् । भाण्डीजाङ्घिः पिता । भाण्डीजाङ्घिः पुत्रः । कार्णखारिः पिता । कार्णखारिः पुत्रः । मायूरिः पिता । मायूरिः पुत्रः । कापिञ्जलिः पिता । कापिञ्जलिः पुत्रः । अत्रात इञितीञ् । तत आयनणो लुप् । श्वशुर्यः पिता । श्वशुर्यः पुत्रः । कुलीनः पिता । कुलीनः पुत्रः । अनेजो लुप् । अब्राह्मणादिति किम् । गार्ग्यः पिता । गार्ग्यायणः पुत्रः ॥ १४१ ॥

*पैलादेः ॥ ६ । १ । १४२ ॥ पैलादिभ्यो यूनि विहितस्य प्रत्ययस्य लुब् भवति । ब्राह्मणार्थमप्राच्यार्थं वचनम् । पीलाया अपत्यं पैलः । 'पीलासाल्वामण्डूकाद्वा' (६-१-६८) इत्यण् । तस्यापत्यं 'द्विस्वरादणः' (६-१-१०९) इत्यायनिञ् तस्य लुप् । पैलः पिता । पैलः पुत्रः । शलङ्कोरपत्यं शालङ्किः । 'शालङ्क्यौदि'—(६-१-३७) इत्यादिना निपातनात् । तस्यापत्यं 'यञिञः' (६-१-५४) इत्यायनण् । तस्य लुप् । शालङ्किः पिता । शालङ्किः पुत्रः । पैल शालङ्कि *सात्यकि *सात्यंकामि औदन्वि *औदञ्चि औदमज्जि औदव्रजि औदभृज्जि औदमेघि औदशुद्धि औदकशुद्धि दैवस्थानि पैङ्गलौदयनि राणि राहक्षिति भौलिङ्गि औद्गाहमानि औज्जिहानि औज्जहानि । इति पैलादिः ॥ १४२ ॥

*प्राच्येञोऽतौल्वल्यादेः ॥ ६ । १ । १४३ ॥ प्राच्यगोत्रे य इञ् तदन्तात्तौल्वल्यादिवर्जितात् यूनपत्ये विहितस्य प्रत्ययस्य लुब् भवति । ब्राह्मणार्थं वचनम् । पान्नागारिः पिता । पान्नागारिः पुत्रः । मान्थरेषणिः पिता । मान्थरेषणिः पुत्रः । क्षैरकलम्भिः पिता । क्षैरकलम्भिः पुत्रः । 'अत इञ्' (६-१-३१) ततो 'यञिञः' (६-१-५४) इत्यायनण् । तस्य लुप् । प्राच्यग्रहणं किम् । दाक्षिः पिता । दाक्षायणः पुत्रः । इञ इति किम् । राघवः पिता । राघविः पुत्रः । तौल्वल्यादिवर्जनं किम् । तौल्वलिः पिता । तौल्वलायनिः पुत्रः । तैल्वलिः पिता । तैल्वलायनः पुत्रः । दालीपिः पिता । दालीपायनः पुत्रः । अत्र दिलीपशब्दस्यात एव निपातनादिञि वृद्धिराकारः । अपरे दलीप इति प्रकृत्यन्तरमाहुः । तौल्वलि तैल्वलि तैल्वकि धारणि रामणि दालीपि दैवोति दैवमति दैवयशि प्राटाहति प्रादाहति चाफट्टकि

तौल्येतदर्थं कस्मान्न भवति । सत्यम् । यद्येतदर्थं स्यात्तदा यूनि लुगित्यधस्तादेवेदं कुर्यात् ॥—पैला—॥ पैलादिगणो विवियते । सत्यं कायति तस्यापत्यं सात्यकिः । सत्यंशब्दो मकारान्तोऽव्ययोऽस्ति सत्यं कामयते 'शीलिकामि'—तस्यापत्यं सात्यंकामि । उदकमिच्छति क्यनि अचि उदन्यायाः अपत्यं बाह्वादीञ् । यदा तु उदन्यशब्दः पुंलिङ्गस्तदा सत्यपि तिकादित्वे अपवादविषये क्वचिदुत्सर्गोऽपि इतीञेव । उदञ्चतीति क्विप् । बाह्वादित्वादाचार्यामपि नलोपो न उदञ्चोऽपत्य बाह्वादीञि औदञ्चि । उदकेन मज्जति 'नाम्न्युत्तरपद'—इति उदभाव । उदके व्रजति उदकं वा व्रजति । उदकं भृज्जति । मूलविभुजादय । उदकस्य मेघ । उदकेन शुद्ध उदशुद्ध । सज्ञाया अभावे उदादेशाभावे सति उदकशुद्ध । तिष्ठत्यत्र स्थानं देवाना स्थानम् । उदयते उदेति वा नन्द्यादित्वादने पिङ्गलश्चासावुदयनश्च पिङ्गलोदयन । रणत्यच् रण । रहक्षित इति चिन्त्यम् । 'भलेरिदुतौ च'—इति भुलिङ्ग । उद्गाहते आनशि उद्गाहमान । उज्जिहीते आनशि उज्जिहान । उज्जहे 'तत्र क्वसुकानौ' इति उज्जहान । सर्वत्र अपत्यार्थे अत इञिति इञेव ॥—प्राच्ये—॥—तौल्वल्यादिर्गणो विचार्यते । तुलण् 'तुल्यलेल्वल'—इति तुल्वल । तिलट् स्नेहने । तिलति 'तुल्वल'—इति निपातनात् तिल्वलः । तिलति 'फीचक'—इति तिल्वकः । धरति नन्द्यादित्वादने धरणः । रमते रम्यादित्वादनटि रमणः । 'दलेरीयो दिल् च' इति दिलीपः । एके तु इदादेशं न मन्यन्ते । तन्मते इञि निपातनाभावेऽपि दलीपप्रकृतिः सिद्धा । देवेन उत । देवेन मन्यते स्म देवमतः । देवेनेज्यते देवयशः । प्रकर्षेण टीकते 'क्वचित्' इति डे प्रट । तेनाहन्यते स्म प्रटाहतः । प्रकर्षेण ददाति । 'उपसर्ग'—इति डे प्रद तेनाहन्यते स्म प्रदाहत । चपति 'फीचक'—इति चफट्टकः ।

आसुरि पौष्करसादि आनुराहति आनुति नैमिश्रि नैमिश्लि नैमिशि आशि बान्धकि यासि बाद्धकि आसिनासि आसिबद्धकि चौङ्कि पौष्पि आहिंसि वैराकि वैलकि वैशीति वैहति वैकर्णि वार्कलि कारेणुपालि । इति तौल्वल्यादिः ॥ १४३ ॥ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ षष्ठस्याध्यायस्य प्रथमः पादः ॥ ६ । १ ॥ श्रीविक्रमादित्यनरेश्वरस्य त्वया न किंचित् प्रकृतं नरेन्द्र ॥ यशांस्यहार्षीः प्रथमं समंतात्क्षणादभाङ्क्षीरथ राजधानीम् ॥ १ ॥

# ॥ द्वितीयः पादः ॥

*रागाट्टो रक्ते ॥ ६ । २ । १ ॥ *शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः । रज्यतेऽनेनेति रागः कुसुम्भादिः । रागविशेषवाचिनो नाम्नष्ट इति *तृतीयान्ताद्रक्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । कुसुम्भेन रक्तं वस्त्रं कौसुम्भम् । एवं काषायम् । कौङ्कुमम् । माञ्जिष्ठम् । हारिद्रम् । माहारजनम् । वाधिकारात्पक्षे वाक्यं समासश्च भवति।कुसुम्भेन रक्तम् कुसुम्भरक्तम् इत्यादि । रागादिति किम् । चैत्रेण रक्तम्।पाणिना रक्तम्।रागशब्देन प्रसिद्धा एव कुसुम्भादयो रागा गृह्यन्ते । तेनेह न भवति । कृष्णेन रक्तम् । लोहितेन रक्तम् । पीतेन रक्तमिति । एते हि वर्णा*द्रव्यवृत्तयो*न तु रागाख्याः । कथं काषायौ गर्दभस्य कर्णौ हारिद्रौ कुक्कुटस्य पादाविति । काषायाविव काषायौ हारिद्राविव हारिद्रौ इत्युपमानोपमेयभावेन तद्गुणाध्यारोपाद्भविष्यति ॥ १ ॥ लाक्षारोचनादिकण् ॥ ६ । २ । २ ॥ लाक्षारोचना इत्येताभ्यां तृतीयान्ताभ्यां रक्तमित्येतस्मिन्नर्थे इकण् प्रत्ययो भवति । अणोऽपवादः । लाक्षया रक्तं लाक्षिकम् । रोचनया रक्तम् रौचनिकम् ॥ २ ॥ *शकलकर्दमाद्वा ॥ ६ । २ । ३ ॥ शकल कर्दम इत्येताभ्यां तृतीयान्ताभ्यां रागविशेषवाचिभ्यां रक्तमित्येतस्मिन्नर्थे इकण् प्रत्ययो वा भवति ।

---

असुरस्यापत्य बाह्वादि । पुष्करे सीदति बाह्वादि । अनुरहति शतरि बाह्वादित्वात् । आनूयते स्म आनुत । नियमेन मिश्रयति अचि निमिश्र । रस्य लत्वे निमिश्लः । नियमेन मेशतीति निमिश. । अस्यति असतीति वा असः । ' दुकनस्र् '—इति बन्धकः । यस्यति यस. । बद्ध कायति वद्धकः । असि नासते आसिनास. । असिना बद्धः आसिबद्ध कायति असिबद्धकः । चकते अचि पृषोदरादित्वात् चिङ्कः । पुष्यति पुष्प । न विद्यते हिंसा यस्य न हिनस्तीति वा अहिंस. । वीरयते वीरक' । रस्य लत्वे वीलकः । विगतं शीत यस्य विशीत । विशेषेण हन्यते स्म विहत. । विविधौ विशिष्टौ वा कर्णौ यस्य विकर्णः । वृकं लाति वृकला । बाह्वादित्वादिञ् । करेणु पालयति करेणुपाल' । सर्वत्र ' अत इञ् '—इति इञ् । इति तौल्वल्यादिगणः सपूर्णः ॥ इत्याचार्य० षष्ठस्याध्यायस्य प्रथमः पादः सपूर्ण ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रागा—॥—शुक्लस्य वर्णान्तरापादनमिति । उपलक्षणमिदमन्येषामपि वर्णानां वर्णान्तरापादनमिह रञ्जेरर्थ. ॥—तृतीयान्तादिति । टइत्येकदेशेन समुदायोपलक्षणत्वात्तृतीया लभ्यते ॥—द्रव्यवृत्तय इति । द्रव्येषु कुसुम्भादिषु वृत्तिर्येषां द्रव्याश्रयी गुण इति कृत्वा ॥—न तु रागाख्या इति । रज्यते अनेनेति रागशब्दव्युत्पत्तेरघटनात् ॥—शक—॥ शकल रक्तचन्दनं

शकलेन रक्तम् शाकलिकम् । शाकलम् । कार्दमिकम् । कार्दमम् ॥ ३ ॥ *नीलपीतादकम् ॥ ६ । २ । ४ ॥ नीलपीतशब्दाभ्यां रागविशेषवाचिभ्यां तृतीयान्ताभ्यां रक्तमित्येतस्मिन्नर्थे यथासंख्यम् अ क इत्येतौ प्रत्ययौ भवतः । नीलेन लिङ्गविशिष्टग्रहणान्नील्या वा रक्तं नीलम् । पीतेन रक्तं पीतकम् । *केचित्तु पीतकशब्दादप्यप्रत्ययमिच्छन्ति । पीतकेन कुसुम्भप्रथमनिर्यासेन रक्तं पीतकम् । गुणवचनत्वात्केन च सिद्धे *अणपवादार्थं वचनम् ॥ ४ ॥ उदितगुरोर्भाद्युक्तेऽब्दे ॥ ६ । २ । ५ ॥ उदितो गुरुर्बृहस्पतिर्यस्मिन् भे नक्षत्रे तद्वाचिनस्तृतीयान्तात् युक्तेऽर्थे यथाविहितं प्रत्ययो भवति स चेद्युक्तोऽर्थोऽब्दः संवत्सरः स्यात् । पुष्येणोदितगुरुणा युक्तं वर्षं पौषं वर्षम् । फल्गुनीभिरुदितगुरुभिर्युक्तः फाल्गुनः संवत्सरः । उदितगुरोरिति किम् । उदितशनैश्चरेण पुष्येण युक्तं वर्षमित्यत्र न भवति । भादिति किम् । उदितगुरुणा पूर्वरात्रेण युक्तं वर्षम् । अब्द इति किम् । मासे दिवसे वा न भवति ॥ ५ ॥ *चन्द्रयुक्तात्काले लुप्त्वप्रयुक्ते ॥ ६ । २ । ६ ॥ चन्द्रेण युक्तं यन्नक्षत्रं तद्वाचिनस्तृतीयान्ताद्युक्तेऽर्थे यथाविहितं प्रत्ययो भवति स चेद्युक्तोऽर्थः कालो भवति अप्रयुक्ते तु कालवाचके शब्दे लुब् भवति । पुष्येण चन्द्रयुक्तेन युक्तमहः पौषमहः । एवं पौषी रात्रिः । पौषो*ऽहोरात्रः । पौषः कालः । माघमहः । माघी रात्रिः । माघोऽहोरात्रः । माघः कालः । चन्द्रयुक्तादिति किम् । शुक्रयुक्तेन पुष्येण युक्तः कालः । भादित्येव । चन्द्रयुक्तेन शुक्रेण युक्तः कालः । काल इति किम् । चन्द्रयुक्तेन पुष्येण युक्तो ग्रहः । लुप् त्वप्रयुक्ते, *अद्य पुष्यः । अद्य मघाः । दिवा कृत्तिकाः । रात्रौ *फल्गुन्यः । *पुष्ये पायसमश्नीयात् मघासु पललौदनम् । अप्रयुक्त इति किम् । पौषमहः । पौषी रात्रिः । पौषोऽहोरात्रः । पौषः कालः ॥ ६ ॥ *द्वन्द्वादीयः ॥ ६ । २ । ७ ॥ चन्द्रयुक्तं यन्नक्षत्रं तद्द्वन्द्वात्तृतीयान्ताद्युक्ते कालेऽर्थे ईयः प्रत्ययो भवति । राधानुराधाभिश्चन्द्रयुक्ताभिर्युक्तमहः *राधानुराधीयमहः । अद्य *राधानुराधीयम् । एवं तिष्यपुनर्वसवीया रात्रिः । अद्य तिष्यपुनर्वसवीयम् ॥ ७ ॥ *श्रवणाश्वत्थान्नाम्न्यः ॥ ६ । २ । ८ ॥ चन्द्रयुक्तनक्षत्रवाचिनः श्रवणशब्दादश्वत्थशब्दाच्च तृतीयान्ताद्युक्ते काले अकारः प्रत्ययो भवति नाम्नि प्रत्ययान्तं चेत् कस्यचित्कालविशेषस्य नाम भवति । श्रवणेन चन्द्रयुक्तेन युक्ता श्रवणा रात्रिः । श्रवणा *पौर्णमासी । श्रवणो मुहूर्तः । अश्वत्थेन चन्द्रयुक्तेन युक्ता अश्व-

---

कर्बुरवर्णो वा कर्दमस्तु मृत्तिकाविशेषः स च पाण्ड्यमण्डले प्रसिद्ध इति विश्रान्त ॥—नील-॥—केचित्त्विति । ते हि नीलपीतकाद पीतात्क इति द्वे सूत्रे विरचयन्ति॥—अणपवादार्थमिति । अयमर्थ एवं सूत्र विनापि नीलपीतगुणयोगान्नील पीत च पीतात् तु स्वार्थिकेन कुत्सितार्थेन वा कपा पीतकमिति प सेत्स्यतीत्याशङ्का॥—चन्द्रयुक्तात्काले—॥—अहोरात्र इति । एकान्नात्र समाहार इति पुंस्त्रीत्वं, कथ दीर्घाण्यहोरात्राणीति समाहाराभावे निकायरानपृत्ता इति पुस्त्वमेव प्राप्तम् । सत्यम् । अहोरात्र च ३ इत्येकशेषे ॥—अद्य पुष्य इति । अत्र अद्येत्यस्याधारत्वमेव न सामानाधिकरण्यम् ॥—फल्गुन्य इति । ' फल्गुनीप्रोष्ठ—' इति बहुवचनभाव ॥—पुष्ये पायसमिति । पयसि संस्कृत 'संस्कृते भक्ष्ये' अण् । पयसा संस्कृतमिति तु कृते ' संस्कृते ' इत्यनेनेकण् स्यात् ॥—द्वन्द्वा—॥—राधानुराधीयमिति । राधाभि चन्द्रयुक्ताभिर्युक्त' काल ' चन्द्रयुक्त—' इत्यण् । अप्रयुक्ते लुप् । ततो राधाश्च अनुराधाश्च राधानुराधा ताभिः । एवं सर्वत्र ॥—श्रव—॥—पौर्णमासीति । माति मिमीते वा असित्यस् । पूर्णो माश्चन्द्रोऽस्यामास्ति पूर्णमासोऽण् । पूर्णमास इयमिति वा ' तस्येदम् ' इत्यण् । पूर्णो मा मासोऽस्यां पूर्णमासा

तथा रात्रिः । अश्वत्था पौर्णमासी । अश्वत्थो मुहूर्तः । सत्यपि अन्वर्थयोगे न कालमात्रमेव उच्यते अपि तु कालविशेष एवेति नामत्वम् । नाम्नीति किम् । श्रावणमहः । श्रावणी रात्रिः । आश्वत्थमहः । आश्वत्थी रात्रिः ॥ ८ ॥ *षष्ठयाः समूहे ॥ ६ । २ । ९ ॥ षष्ठ्यन्तान्नाम्नः समूहेऽर्थे यथाविहितं प्रत्यया भवन्ति । गोत्रादकञ् वक्ष्यते अचित्तादिकण् *प्रतिपदं केदाराण्यश्चेत्येवमादयः । ततोऽन्यदिहोदाहरणं द्रष्टव्यम् । चाषाणां समूहश्चाषम् । एवं काकं बाकम् शौकं भैक्षुकम् वाडवम् । वनस्पतीनां समूहो वानस्पत्यम् । स्त्रैणम् । पौंस्नम् । पञ्चानां कुमाराणां समूहः पञ्चकुमारीत्यत्र तु *समूहः समाहार एव । स च समासार्थः समासेनैव च गत इति तद्धितो नोत्पद्यते । यद्युत्पद्येत को दोषः स्यात् उत्पन्नस्यापि ह्यस्य ' द्विगोरनपत्ये यस्वरादेर्लुगद्विः ' (६–१–२४) इति लुपा भवितव्यम् तथा चाविशेषः । नैवम् । ' ङ्यादेर्गौणस्य '—(२–४–९४) इत्यादिना *ङीनिवृत्तिः स्यात् । ' तस्येदम् ' (६–३–१५९) इत्येवाणादिसिद्धौ समूहविवक्षायां *तदपवादबाधनार्थो योगः ॥ ९ ॥ *भिक्षादेः ॥ ६ । २ । १० ॥ भिक्षादिभ्यः षष्ठ्यन्तेभ्यः समूहेऽर्थे यथाविहितं प्रत्ययो भवति । भिक्षाणां समूहो भैक्षम् । *गार्भिणम् । यौवतम् । अचित्तेकणो बाधनार्थं वचनम् । औलूक्यशब्दस्य गोत्राकञो बाधनार्थः पाठः । युवतेरण् सिद्ध एव । पुंवद्भावबाधनार्थस्तु पाठः । अन्ये तु युवतिशब्दं न पठन्ति । तन्मते पुंवद्भावे सति युवतीनां समूहो यौवनमित्येव भवति । सुरूपगतिनेपथ्यं कलाकुशलयौधनम् ॥ यस्य पुण्यकृतः प्रैष्यं सफलं तस्य यौवनम् ॥ १ ॥ भिक्षा भिक्षशब्दोऽकारान्तोऽपीत्येके । गर्भिणी युवति क्षेत्र करीष अङ्गार चर्मन् वर्मन् चर्मिन् वर्मिन् पद्धति सहस्र अथर्वन् दक्षिणा खण्डिक युग वरत्रा युगवरत्रा हल बन्ध हलबन्ध औलूक्य । इति भिक्षादिः ॥ १० ॥ *क्षुद्रकमालवात्सेनानाम्नि ॥ ६ । २ । ११ ॥ क्षुद्रकमालवशब्दात् षष्ठ्यन्तात्समूहेऽर्थे यथाविहितमण् प्रत्ययो भवति सेनाया नाम्नि संज्ञायाम् । क्षुद्रकाश्च मालवाश्च क्षुद्रकमालवास्तेषां समूहः क्षौद्रकमालवी एवंनामा काचित्सेना । सेनानाम्नीति किम् । क्षौद्रकमालवकमन्यत् । गोत्राकञ्बाधनार्थं वचनम् । समूहाधिकारे हि *तदन्तस्यापि ग्रहणम् । ' धेनोरनञः ' (६—१—१५) इति प्रतिषेधात् ॥ ११ ॥ *गोत्रोक्षवत्सोष्ट्रवृद्धाजोरभ्रमनुष्यराजराजन्यराजपुत्रादकञ् ॥ ६ । २ । १२ ॥ स्वापत्यसंतानस्य स्वव्यपदेशकारिणः प्रथमपुरुषस्यापत्यं गोत्रम् । गोत्रप्रत्ययान्तेभ्य उक्षादिभ्यश्च समूहेऽकञ् प्रत्ययो भवति । अणोऽपवादः । गोत्र, औपगवानां समूह औपगवकम् । कापटवकम् । गार्गकम् । वात्सकम् । गार्ग्यायणकम् । वात्स्यायनकम् ।

---

था युक्ता ' सास्य पौर्णमासी ' इत्यणि निपातो वा ॥—षष्ठ्याः—॥—प्रतिपद केदाराण्यश्च इति । उक्षकवचिप्रभृतयः प्रतिपदोक्तत्वात् केदाराण्यश्चेत्यादिपु द्रष्टव्या इति ' गोत्रादकञ् ' इत्यत्र न उक्ता ॥—समूह समाहार एवेति । द्वयोरप्येकार्थत्वात्समूह एव समाहार इत्यर्थ ॥—ङीनिवृत्ति स्यादिति । तद्धितलुकि सत्यामिति शेष ॥—तदपवादबाधनार्थ इति । ईयादीनामित्यर्थः ॥—भिक्षा—॥—गार्भिणमिति । अत्र गर्भिणीशब्दो मेघमालाशालिपङ्क्त्यादिवाचकत्वादचित्तविशेषवचन इतीकण्प्राप्तौ तद्बाधकोऽनेनाण् । ततो ' जातिश्च णि—' इति पुंवद्भावे ' सयोगादिन ' इत्यन्तलोपप्रतिषेध । गर्भवतीस्त्रीवचनात्तु इकणोऽप्राप्तेरौत्सर्गिक एवाण् ॥—क्षुद्र—॥—तदन्तस्यापीति । अन्यथा ' प्रत्यय प्रकृत्यादेः ' इति न्यायात् समुदायस्यागोत्रत्वात् क्षौद्रकमालवकमिति न सिध्येत् ॥—गोत्र—॥ मनुष्यराजन्यशब्दौ औणादिको इति पृथगुपादानम् । अपत्यप्रत्ययान्तयोस्तु गोत्रद्वारेण सिद्धम् ॥

उक्षन् औक्षकम् । वत्स वात्सकम् । उष्ट्र औष्ट्रकम् । वृद्ध वार्धकम् । अज आजकम् । उरभ्र औरभ्रकम् । मनुष्य मानुष्यकम् । राजन् राजकम् । राजन्य राजन्यकम् । राजपुत्र राजपुत्रकम् ॥ १२ ॥ केदाराण्ण्यञ्च ॥ ६ । २ । १३ ॥ केदारशब्दात्समूहेऽर्थे ण्योऽकञ् च प्रत्ययौ भवतः । अचित्तेकणोऽपवादः । कैदार्यम् । कैदारकम् ॥ १३ ॥ *कवचिहस्त्यचित्ताच्चेकण् ॥ ६ । २ । १४ ॥ कवचिन् हस्तिन् इत्येताभ्यामचित्तवाचिभ्यः केदाराच्च समूहे इकण् प्रत्ययो भवति । कवचान्येषां सन्तीति कवचिनः । तेषां समूहः कावचिकम् । हस्तिनां लिङ्गविशिष्टस्यापि ग्रहणाद् हस्तिनीनां वा समूहः हास्तिकम् । अचित्तात् आपूपिकम् । शाष्कुलिकम् । केदारात् कैदारिकम् । एवं केदारस्य त्रैरूप्यं भवति । ण्याकञ्भ्यां बाधा माभूदिति केदारात् *इकण्विधानम् ॥ १४ ॥ *धेनोरनञः ॥ ६ । २ । १५ ॥ धेनुशब्दात्समूहे इकण् प्रत्ययो भवति न चेत् स धेनुशब्दो नञः परो भवति । धेनूनां समूहो धैनुकम् । अनञ इति किम् । अधेनूनां समूहः*आधैनवम् । उत्सादित्वादञ् । 'धेनोरनञः' (६—१—१५) इति प्रतिषेधो लिङ्गम् समूहे तदन्तस्यापि भवतीति । तेन क्षौद्रकमालवकम् *ब्राह्मणराजन्यकम् वानरहस्तिकम् गौधेनुकम् ॥ १५ ॥ ब्राह्मणमाणववाडवाद्यः ॥ ६ । २ । १६ ॥ ब्राह्मणमाणववाडव इत्येतेभ्यः समूहे यः प्रत्ययो भवति । ब्राह्मण्यम् । माणव्यम् । वाडव्यम् ॥ १६ ॥ *गणिकाया ण्यः ॥ ६ । २ । १७ ॥ गणिकाशब्दात्समूहे ण्यः प्रत्ययो भवति । गाणिक्यम् । ब्राह्मणादीनां यविधानं पुंवद्भावार्थम् । ब्राह्मणाः भक्ता अस्यां यात्रायां 'तयोः समूहवच्च बहुषु' (७—३—३) इति यः प्रत्ययः । ब्राह्मण्या यात्रा यस्य स ब्राह्मण्ययात्रः। माणव्ययात्रः । वाडव्ययात्रः। ण्ये हि*पुंवद्भावो न स्यात् यथा गाणिक्यायात्रः ॥ १७ ॥ केशाद्वा ॥ ६ । २ । १८॥ केशशब्दात् समूहे ण्यः प्रत्ययो वा भवति । केशानां समूहः कैश्यं कैशिकम् । अचित्तलक्षण इकण् ॥ १८ ॥ वाश्वादीयः ॥ ६ । २ । १९ ॥ अश्वशब्दात्समूहे ईयः प्रत्ययो वा भवति । अश्वीयम् । आश्वम् ॥ १९ ॥ *पर्श्वा ड्वण् ॥ ६ । २ । २० ॥ पर्शुशब्दात्समूहे ड्वण् प्रत्ययो भवति । इकणोऽपवादः । पर्शूनां समूहः पार्श्वम् । डित्करणमन्त्यस्वरादिलोपार्थम् ॥ २० ॥ ईनोऽह्नः क्रतौ ॥ ६ । २ । २१ ॥ अहन्शब्दात्समूहे क्रतौ वाच्ये ईनः प्रत्ययो भवति । अह्नां समूहोऽहीनः क्रतुः । क्रताविति किम् । आह्नमन्यत् । *खादिपाठादञ् ॥२१॥ पृष्ठाद्यः ॥ ६ । २ । २२ ॥ पृष्ठशब्दात्समूहे क्रतौ वाच्ये यः प्रत्ययो भवति । पृष्ठानां समूहः पृष्ठ्यः क्रतुः । पृष्ठशब्दोऽहःपर्यायः । रथन्तरादिसामपर्याय इत्यन्ये । क्रतावित्येव । पार्ष्ठिकम् ॥ २२ ॥ *चरणाद्धर्मवत् ॥ ६ । २ । २३ ॥ चरणं कठकालापादि तस्माद्यथा धर्मे प्रत्यया भवन्ति तथा समूहेऽपि ।*वत्सर्वसादृश्यार्थः । तेन यकाभ्यः प्रकृतिभ्यो यः प्रत्ययो यथा धर्मे भवति ताभ्य एव प्रकृतिभ्यः स एव प्रत्ययस्तथैव भवति । यथा कठानां धर्मः काठकम् कालापकम् छान्दोग्यम् *औक्थिक्यम्

—कव-॥-इकण्विधानमिति।अन्यथा अचित्तद्वारा सिध्यतीत्याशङ्क्याह ॥ धेनो-॥-आ धैनवमिति ' वच्छ्य दसनासे 'इत्या समासवचनादुत्सादयञ् तदन्तादपि।अनुशतिकादीनामुभयपदवृद्धि ॥-ब्राह्मणराजन्यकमिति । ' राजन्यमनुष्ययोः ' इति यलोपाभाव ॥-गणि-॥-पुंवद्भावो न स्यादिति । 'तद्धित स्वरवृद्धि-' इति निषेधात्॥-पर्श्वा ड्वण्॥ पार्श्वास्थिवाचिनः पर्शुशब्दादूड्॥-चर-॥ परार्थे प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्तीत्याह—वत्सर्वसादृश्यार्थ इति॥—औक्थिक्यमिति । उक्थमधीते केचिदूक्थिक्यस्यापीति उक्थिक्य वाधीते ' याज्ञिकौक्थिक '—

*बाह्वृच्यम्*आथर्वणम् तथा समूहेऽपि काठकमित्यादि ॥ २३ ॥ गोरथवातात्त्रल्कट्यल्तूलम् ॥ ६ । २ । २४ ॥ गोरथवात इत्येतेभ्यः समूहे यथासंख्यं त्रल् कट्यल् ऊल इत्येते प्रत्यया भवन्ति । गवा समूहो गोत्रा। रथानां रथकट्या। लकारौ स्त्रीत्वार्थौ। वातानां वातूलः॥२४॥ पाशादेश्च ल्यः ।।६।२।२५॥ पाशादिभ्यो गोरथवातशब्देभ्यश्च समूहे ल्यः प्रत्ययो भवति । इकणादेरपवादः । पाशानां समूहः पाश्या । तृण्या । खल्या । गव्या । रथ्या । वात्या । पाश तृण खल धूम अङ्गार पोटगल पिटक पिटाक शकट हल नल वन । इति पाशादिः । भिक्षादिपाठादङ्गारहलाभ्यामणपि । आङ्गारम् । हालम् । लकारः स्त्रीत्वार्थः ॥ २५ ॥ *श्वादिभ्योऽञ् ॥ ६ । २ । २६ ॥ श्वन्प्रकारेभ्यः समूहेऽञ् प्रत्ययो भवति । शुनां समूहः शौवम् । अनागाहम् । दण्डिनां दाण्डम् । चक्रिणां चाक्रम् । अणैव सिद्धे 'नोऽपदस्य तद्धिते' (७–४–६१) इति *अन्त्यस्वरादिलोपार्थमञ्वचनम् अणपवादबाधनार्थं च । श्वादयः प्रयोगगम्याः ॥ २६ ॥ खलादिभ्यो लिन् ॥ ६ । २ । २७ ॥ खलप्रकारेभ्यः समूहे लिन् प्रत्ययो भवति । लकारः स्त्रीत्वार्थः । खलानां समूहः खलिनी । पाशादित्वाल्ल्योऽपि । खल्या । ऊकानाम् ऊकिनी । कुटुम्बानां कुटुम्बिनी। खलादयः प्रयोगगम्याः ॥ २७ ॥ ग्रामजनबन्धुगजसहायात्तल् ॥ ६ । २ । २८ ॥ एभ्यः समूहे तल् भवति । ग्रामाणां समूहः ग्रामता । जनता । बन्धुता । गजता । सहायता । लकारः स्त्रीत्वार्थः ॥ २८ ॥ पुरुषात्कृतहितवधविकारे चैयञ् ॥ ६ । २ । २९ ॥ पुरुषशब्दात्कृते हिते वधे विकारे चकारात्समूहे च एयञ् प्रत्ययो भवति । कृतादौ यथाभिधानं विभक्तियोगः । पुरुषेण कृतः पौरुषेयो ग्रन्थः । पुरुषाय हितं पौरुषेयमार्हतं शासनम् । पुरुषस्य वधः पौरुषेयो वधः। पुरुषस्य विकारः पौरुषेयो विकारः।पुरुषाणां समूहः पौरुषेयम् ॥२९॥*विकारे॥६।२।३०॥ षष्ठ्यन्ताद्विकारे यथाविहितं प्रत्यया भवन्ति।द्रव्यस्यावस्थान्तरं विकारः। अश्मनो विकारः आश्मनः।आश्मः।'वाश्मनो विकारे' (७–४–६३) इत्यन्त्यस्वरादिलोपः।भस्मनो भास्मनः।मृत्तिकायाः मार्त्तिकः। अर्धस्य आर्धः । हलस्य हालः । सीरस्य सैरः । चेदीनां चैदः । वृजीनां वार्जः । त्रिगर्तानां त्रैगर्तः।रङ्कूणां राङ्कवः।'तस्येदम्' (६–३–१५९)इत्येवाण।दिसिद्धावर्धादिषु विकारे *अणपवादबाधनार्थं

इति इकणन्तो निपात ॥—बाह्वृच्यमिति । बह्व्य ऋचो यस्य । 'नञ्बहोर्ऋचो माणवचरण ' अप् समासान्त ।' नाप्रियादौ' इति पुंवद्भावनिषेधः कथं न भवति । सत्यम् । प्रियादिसाहचर्याद्प्रत्ययान्तमपि स्वरान्त गृह्यते । अत्र तु व्यञ्जनान्तादप् प्रियादयो हि स्वरान्ता तेषा धर्मः॥ आथर्वणमिति । अथर्वाणं वेत्त्यधीते वा न्यायादेरिकण् 'इकण्यथर्वण 'इत्यन्त्यस्वरादिलुगभाव ॥–श्वादि—॥—अन्त्यस्वरादिलोपार्थमिति । अन्यथाऽणीत्यादिभि सूत्रैरन्त्यस्वरादिलोपनिषेध स्यात् ॥—अणपवादबाधनार्थं चेति । सूत्राभावे अहन्शब्दात्कृतोरन्यत्र समूहेऽचित्तत्वादणोपवाद इकण्स्यात् ॥—विका—॥—प्रत्यया भवन्तीति । बहुवचनात् कर्केर्विकार ' कल्यग्नेरेयण् ' उत्लस्य विकार ' उत्सादेरञ् ' स्त्रीणां पुसा वा विकार. ' प्राग्वत. स्त्रीपुंसा –' कालेयः । औत्स. स्त्रैण. पौंस्न इत्याद्यपि ज्ञेयम् ॥—अणपवादबाधनार्थमिति । अयमर्थो मार्त्तिक इत्यादीनि सिध्यन्ति आर्द्ध इत्यादिषु तु अर्धशब्दात् ' अर्धाद्यः ' हलसीराभ्या ' हलसीरादिकण् ' चेदिवृजिभ्या राष्ट्रवाचित्वात् ' बहुविषयेभ्यः ' इत्यकाञि प्राप्ते तदपवादो चेदिशब्दस्य काशादिपाठाण्णिकेकणौ वृजेस्तु ' वृजिमद्रात्–' इति क त्रिगर्तात् ' बहुविषयेभ्य. ' इत्यकञ् रङ्कोस्तु ऊवर्णादिकणोपवादो ' रङ्कोः प्राणिनि वा ' इति दायनणित्येते प्रत्ययाः प्राप्नुवन्ति ते साभूवन्नित्येवमर्थम् ॥

वचनम् ॥ ३० ॥ *प्राण्यौपधिवृक्षेभ्योऽवयवे च ॥ ६ । २ । ३१ ॥ प्राणिन्–ओपधिवृक्षवाचिभ्यः षष्ठ्यन्तेभ्योऽवयवे विकारे च यथाविहितं प्रत्यया भवन्ति । प्राणिभ्यः कापोतं सक्थि । कापोतं मांसम् । मायूरं सक्थि । मायूरं मांसम् । आविकं सक्थि । आविकं मांसम् । अविशब्दादणनभिधानान्न भवति । ओपधिभ्यः, दौर्वं काण्डं दौर्वं भस्म । मौर्वं काण्डं मौर्वं भस्म । वृक्षेभ्यः, कारीरं काण्डं कारीरं भस्म । बैल्वं काण्डं बैल्वं भस्म । प्राण्यौपधिवृक्षेभ्य इति किम् । पाटलपुत्रस्यावयवः पाटलिपुत्रकः प्राकारः । 'तस्येदम्' (६–३–१५९) इति विवक्षायामकञ् । एवं पाटलिपुत्रकः प्रासादः । इतः परं विकारे प्राण्यौपधिवृक्षेभ्योऽवयवे चेति द्वयमप्यधिक्रियते । तेनोत्तरे प्रत्ययाः प्राण्यौपधिवृक्षेभ्योऽवयवविकारयोरन्येभ्यस्तु विकारमात्रे भवन्तीति वेदितव्यम् । प्राणिनश्चेतनावन्तः । ओपधयः फलपाकान्ताः । वृक्षाः पुष्पवन्तः फलवन्तश्च । *वृक्षविशेषत्वात् वनस्पतिवीरुधामपि वृक्षग्रहणेन ग्रहणम् । प्राणिग्रहणेनैव चेतनावत्त्वेन वृक्षौपधिग्रहणे सिद्धे तदुपादानमिह शास्त्रे प्राणिग्रहणेन त्रसा एव गृह्यन्ते न स्थावरा इति ज्ञापनार्थम् ॥ ३१ ॥ *तालाद्धनुषि ॥ ६ । २ । ३२ ॥ तालशब्दाद्धनुषि विकारे यथाविहितमण् प्रत्ययो भवति । दुलक्षणस्य मयटोऽपवादः । *तालस्य विकारस्तालं धनुः । धनुषीति किम् । तालमयं काण्डम् ॥ ३२ ॥ त्रपुजतोः षोऽन्तश्च ॥ ६ । २ । ३३ ॥ त्रपुजतु इत्येताभ्यां विकारे यथाविहितमण् प्रत्ययो भवति तयोश्च षोऽन्तो भवति । त्रपुणो विकारः त्रापुषम् । जतुनो विकारः जातुषम् । अण् सिद्ध एव षागमार्थं वचनम् । चकारः संनियोगार्थः ॥ ३३ ॥ शम्याष्ट्लः ॥ ६ । २ । ३४ ॥ शमीशब्दाद्विकारेऽवयवे च यथाविहितमञ् प्रत्ययो भवति तत्संनियोगे चास्य लोऽन्तः । शम्या विकारोऽवयवो वा शामीलं भस्म । शामीली शाखा ॥ ३४ ॥ पयोद्रोर्यः ॥ ६ । २ । ३५ ॥ पयस् द्रु इत्येताभ्यां विकारे यः प्रत्ययो भवति । पयसोऽणोऽपवादः । द्रोरेकस्वरमयटः । पयसो विकारः पयस्यम् । द्रोर्दारुणो विकारो द्रव्यम् ॥ ३५ ॥ उष्ट्रादकञ् ॥ ६ । २ । ३६ ॥ उष्ट्रशब्दाद्विकारेऽवयवे चाकञ् प्रत्ययो भवति । उष्ट्रस्य उष्ट्र्या वा विकारोऽवयवो वा औष्ट्रकं मांसम् । औष्ट्रिका जङ्घा ॥ ३६ ॥ *उमोर्णाद्वा ॥ ६ । २ । ३७ ॥ उमा ऊर्णा इत्येताभ्यां यथासंभवं विकारेऽवयवे च वा अकञ् प्रत्ययो भवति । उमा अतसी तस्या विकारोऽवयवो वा औमकम् । औमम् । *ऊर्णाया विकारः और्णकम् । और्णः कम्बलः ॥ ३७ ॥ एण्या एयञ् ॥ ६ । २ । ३८ ॥ एणीशब्दाद्विकारेऽवयवे च एयञ् प्रत्ययो भवति । अणोऽपवादः । एण्या विकारोऽवयवो वा ऐणेयं मांसम् । ऐणेयी जङ्घा । स्त्रीलिङ्गनिर्देशात्पुंलिङ्गादणेव । ऐणं मांसम् । ऐणी जङ्घा ॥ ३८ ॥ कौशेयम् ॥ ६ । २ । ३९ ॥ कोशशब्दाद्विकारे एयञ् प्रत्ययो निपात्यते । कोशस्य विकारः कौशेयम् वस्त्रं सूत्रं वा । निपातनं रूढ्यर्थम् । तेन वस्त्रसूत्राभ्यामन्यत्र भस्मादौ न भवति ॥३९॥ *परशव्याद्यलुक् च ॥ ६ । २ । ४० ॥ परशवे इदं परशव्यम् । तस्माद्विकारे यथाविहितमण् प्रत्ययो भवति यकारस्य च लुक् । परशव्यस्यायसो विकारः पारशवम् ।

—प्राण्यौ—॥—वृक्षविशेषत्वादिति । एकदेशेन फलवत्तया ऐक्यं न तु पुष्पवत्तया ॥—ताला—॥—तालस्य विकार इति । तालस्य तालवृक्षकाष्ठस्य विकारः यतो धनुर्दारो सम्भवति न वृक्षात् । यदा तु तालशब्दो वृक्ष इति व्याख्यायते तदावयवार्थोऽपि घटते पारपर्येण धनुरवयवो भवति वृक्षस्यापि ॥—उमो—॥—ऊर्णाया विकार इति । ऊर्वतीति णे 'राल्लुक्' इति वलोपे 'भ्वादेः–' इति बाहुलकाद्दीर्घः अन्यथा मोमेतिवत् गुणः स्यात् ॥—परशव्यात्—॥

अण् सिद्ध एव यलुगर्थं वचनम् । अथेह यग्रहणे किमर्थम् तदभावेऽप्यवर्णेवर्णस्य [ ७-४-६८ ] इत्यन्तलुक्सिद्धौ लुग्ग्रहणात् *अन्त्याभावेऽन्त्य*सदेशस्यापि यकारस्य लुग् भविष्यति । सत्यम् । यग्रहणं यशब्दस्य समुदायस्यैव लोपार्थम् । *तेनोत्तरसूत्रे ‘ स्वरस्य परे प्राग्विधौ ’ (७-४-११०) इत्यस्यानुपस्थानाद्यकारलोपे ‘ अवर्णेवर्णस्य ’ ( ७-४-६८ ) इतीकारलोपो भवति ॥ ४० ॥ **कंसीयान्ञ्यः** ॥ ६ । २ । ४१ ॥ कंसाय इदं कंसीयं ‘ परिणामिनि तदर्थे ’ (७-१-४४) इतीयः । कंसीयशब्दाद्विकारे ञ्यः प्रत्ययो भवति तत्संनियोगे यशब्दस्य लुक् च । कंसीयस्य विकारः कांस्यम् ॥ ४१ ॥ **हेमार्थान्माने** ॥ ६ । २ । ४२ ॥ हेमवाचिनः शब्दान्माने विकारे वाच्ये यथाविहितमण् प्रत्ययो भवति । दुमयटोऽपवादः । हाटकस्य विकारः हाटको निष्कः । हाटकं कार्षापणम् । जातरूपो निष्कः । जातरूपं कार्षापणम् । *हैमो निष्कः हैमं कार्षापणमित्यत्र परत्वाद्धेमादिलक्षणोऽञेव । अर्थग्रहणं स्वरूपविधिन्युदासार्थम् । मान इति किम् । हाटकमयी यष्टिः ॥ ४२ ॥ ***द्रोर्वयः** ॥ ६ । २ । ४३ ॥ द्रुशब्दान्माने विकारे वयः प्रत्ययो भवति । *यस्यापवादः । द्रोर्विकारो द्रुवयं मानम् ॥ ४३ ॥ ***मानात्क्रीतवत्** ॥ ६ । २ । ४४ ॥ मीयते परिच्छिद्यते येन तन्मानम् इयत्तापरिच्छित्तिहेतुः संख्यादिरुच्यते । मानवाचिनः शब्दाद्विकारे क्रीतवत्प्रत्ययविधिर्भवति । शतेन क्रीतं शत्यं शतिकम् । शतस्य विकारः शत्यः शतिकः । एवं साहस्रः नैष्किकः । वत्सर्वविधिसादृश्यार्थः । तेन लुबादिकस्याप्यतिदेशो भवति । *द्विशतः । *त्रिशतः । *द्विसहस्रः। द्विसाहस्रः । *द्विनिष्कः। द्विनैष्किकः ॥ ४४ ॥ ***हेमादिभ्योऽञ्** ॥ ६ । २ । ४५ ॥ हेमन् इत्येवमादिभ्यो यथायोगं विकारेऽवयवे चार्थे*नित्यमञ् प्रत्ययो भवति । हेम्नो विकारो हैमं शरासनम् । हैमी यष्टिः । रजतस्य राजतः । हेमन् रजत उदुम्बर नीवुदार रोहीतक विभीतक कण्डकार गवीधुका पाटली श्यामाक बार्हिण । इति हेमादयः ॥ बहुवचनम् *आकृतिगणार्थम् । हेम्नोऽण्बाधनार्थमञ्वचनम् । अणि हि सति ‘ अणि ’ (७—४—५२) इत्यन्त्यस्वरादेर्लुग् न स्यात् । पाटलीश्यामाकबार्हिणानां दुलक्षणस्य शेषाणां तु वैकल्पिकस्य मयटो बाधनार्थम् ॥ ४५ ॥

---

—सदेशस्यापीति । समीपस्यापीत्यर्थः ॥—अन्त्याभावे इति । न वाच्य ‘स्वरस्य—’ इत्यकारस्य स्थानित्वं यविधित्वान्न सधीत्यस्यावस्थानात् । यद्वास्य लुक्ग्रहणस्य नैरर्थक्यात्॥—तेनोत्तरेति । अयमर्थोऽत्र परशब्याल्लुकूचेत्येवमपि कृते सिध्यति । उत्तरत्र तु कंसीयशब्दात् ञ्ये सत्यस्य लोपे कृते ‘ स्वरस्य परे–’ इत्यादिवशान् ईलोपो न स्यात् ॥—हैमो निष्क इति । हेम्नो विकारः । हेमादिभ्योऽञ् । ‘ नोपदस्य–’ इत्यन्लुप् । यद्यनेनाण् स्यात्तदाणीत्यन्त्यस्वरादिलुगभावः स्यात् । अकारान्तात्तु अनेनैवाण् हैम' ॥—द्रोर्वयः ॥—यस्यापवाद इति । ‘ पयोद्रोर्ये ’ इति प्राप्तस्य । मानादन्यत्र सोऽपि चरितार्थ इति ॥—माना—॥—द्विशत इति । द्वाभ्यां शताभ्यां क्रीतः ‘शताद्यः’ इति विकल्पेन यः प्राप्त परं तस्य विधानसामर्थ्याल्लुप् न स्यादिति । ‘ सख्याडतेः–’ कः । ‘ अनाम्न्यद्विः प्लुप् ’ एव त्रिशत· द्विसहस्र इति । क्रीते ‘ सहस्रशत–’ इत्यण् ‘ नवाणः ’ इति विकल्पेन लुप् । लुबभावे ‘ मानसंवत्सर– ’ इत्युत्तरपदवृद्धिः ॥—द्विनिष्क इति । ‘ द्वित्रिबहोः–’ इति वा इकणो लुप् ॥–हेमा—॥ ननु रजतादीनामञि अणि वा नास्ति विशेषः ततस्तेषामौत्सर्गिकोऽणेव भविष्यति किमत्र पाठेन । सत्यम् । अभक्ष्याच्छादनविवक्षायाम् ‘ अभक्ष्याच्छादने–’—इति वा मयट् स्यात्तद्विकल्पेऽण् स्यात् गणपाठे तु गणपाठसामर्थ्यादञेव भवति न मयट् । अत एवाह—नित्यमञ्प्रत्ययो भवतीति ॥—आकृतिगणार्थमि-

अभक्ष्याच्छादने वा मयट् ॥६।२।४६॥ षष्ठ्यन्ताद्भक्ष्याच्छादनवर्जिते यथायोगं विकारेऽवयवे च मयट् प्रत्ययो वा भवति । भस्मनो विकारः भस्ममयं भास्मनम् । अश्मनो विकारः अश्ममयम् आश्मम् । कपोतस्य विकारोऽवयवो वा कपोतमयम् कापोतम् । दूर्वाया विकारोऽवयवो वा दूर्वामयम् दौर्वम् । मूर्वामयम् मौर्वम् । करीरमयं कारीरम् । शिरीषमयम् शैरीषम् । अभक्ष्याच्छादन इति किम् । मौद्गः सूपः । कार्पासः पटः । भक्ष्याच्छादनयोर्मयडभावपक्षे च 'तालाद्धनुषि' [६-२-३२] इत्यादिको विधिः सावकाशः । अयं च भस्ममयमित्यादौ । तत्रोभयप्राप्तौ परत्वादनेन मयट् भवति । तालमयं धनुः । त्रपुमयम् । जतुमयम् । शमीमयम् । पयोमयम् । द्रुमयम् । उष्ट्रमयम् । उमामयम् । ऊर्णामयम् । एणीमयम् । कोशमयम् । परशव्यमयम् । कंसीयमयम् । शतमयम् । एके तु तालाद्धनुषि द्रोः प्राणिवाचिभ्यश्च मयटं नेच्छन्ति ॥ ४६ ॥ *शरदर्भकूदीतृणसोमबल्वजात् ॥ ६ । २ । ४७ ॥ शरादिभ्यो यथायोगं भक्ष्याच्छादनवर्जिते विकारेऽवयवे च नित्यं मयट् प्रत्ययो भवति । अणोऽपवादः । शरमयम् । दर्भमयम् । कूदीमयम् । तृणमयम् । सोममयम् । बल्वजमयम् ॥ ४७ ॥ एकस्वरात् ॥ ६ । २ । ४८ ॥ एकस्वरान्नाम्नो यथासंभवं भक्ष्याच्छादनवर्जिते विकारेऽवयवे च नित्यं मयट् प्रत्ययो भवति । वाङ्मयम् । त्वङ्मयम् । मृन्मयम् । स्रुङ्मयम् । गीर्मयम् । धूर्मयम् ॥ ४८ ॥ दोरप्राणिनः ॥ ६ । २ । ४९ ॥ दुसंज्ञकादप्राणिवाचिनो यथायोगं भक्ष्याच्छादनवर्जिते विकारेऽवयवे च मयट् प्रत्ययो भवति । अणोऽपवादः । आम्रमयम् । शालमयम् । शाकमयम् । काशमयम् । तन्मयम् । यन्मयम् । अप्राणिन इति किम् । श्वाविधो विकारोऽवयवो वा शौवाविधम् श्वाविन्मयम् । चाषं चाषमयम् । वा(भा)सं वा(भा)समयम् ॥४९॥ *गोः पुरीषे ॥ ६ । २ । ५० ॥ गोशब्दात्पुरीषेऽर्थे मयट् प्रत्ययो भवति । गोः पुरीषं गोमयम् । पुरीष इति किम् । गव्यं पयः । गव्यं सक्थि । 'गोः स्वरे यः' [६—१—२७] इति यः । यद्यपि पुरीषं *विकारत्वेन न प्रसिद्धं तथापि दोषधातुमलमूलं शरीरमिति विवक्षायां तात्स्थ्यात्तद्वदुपचार इति गोः पुरीषं पयश्च विकारो भवति । 'एकस्वरात्' [६-२-४८] इत्येव सिद्धे पुरीषे नियमार्थं वचनम् ॥५०॥ व्रीहेः पुरोडाशे ॥६।२।५१॥ व्रीहिशब्दात्पुरोडाशे विकारे नित्यं मयट् प्रत्ययो भवति । अणोऽपवादः । व्रीहिमयः पुरोडाशः । पुरोडाश इति किम् । व्रैह ओदनः । व्रैहं भस्म ॥५१॥ तिलयवादनाम्नि ॥६।२।५२॥ तिलयव इत्येताभ्यां विकारेऽवयवे च मयट् प्रत्ययो भवति अनाम्नि । अणोऽपवादः । तिलमयम् । यवमयम् । अनाम्नीति किम् । तैलम् । यवानां विकारो यावः स एव यावकः ॥५२॥ पिष्टात् ॥६।२।५३॥ पिष्टशब्दाद्विकारे मयट् प्रत्ययो भवति अनाम्नि । अणोऽपवादः । पिष्टमयम् ॥५३॥ नाम्नि कः ॥६।२।५४॥ पिष्टशब्दान्नाम्नि विकारे कः प्रत्ययो भवति । पिष्टस्य विकारः पिष्टिका ॥५४॥ *ह्योगोदोहादीनञ् हियङ्गुश्चास्य ॥६।२।५५॥ ह्योगोदोहशब्दाद्विकारे नाम्नि ईनञ् प्रत्ययो भवति तत्संनियोगे च प्रकृतेर्हियङ्गु इत्यादेशः । ह्योगोदोहस्य विकारः *हैयङ्गवीनं *नवनीतं

ति । वाचिकवार्त्तिकेन हेमादौ काञ्चनमिति निरटङ्कि तेन काञ्चनी वासयष्टिरिति सिद्धम् । अन्यथाऽणपवादो 'दोरप्राणिन' इति मयट् स्यात् ॥—शर—॥ ननूत्तरेण सह एकयोगः कथं न क्रियते ॥ उच्यते । एकयोगे शरदर्भादीनामदुसंज्ञकानां साहचर्यादेकस्वराणामपि अदुसंज्ञकाना स्यात्ततो वाङ्मयमित्यादि न स्यात् ॥—गो पु—॥—विकारत्वेनेति । गोर्विकारत्वेन न प्रसिद्ध किंतु आहारादिविकार इति ॥—ह्योगो—॥—हैयङ्गवीनमिति । न ह्योगोदोहविकारमात्रं किंतु किंचिदेवेत्याह—नवनीतेति । तेनाभ्यामन्यत्र न भवतीति प्रत्युदाहरति

घृतं वा । नाम्नीत्येव । श्चोगोदोहस्य विकार इदमुदश्वित् श्चौगोदोहमिसणेव भवति ॥ ५५ ॥ अपो यञ् वा ॥ ६ । २ । ५६ ॥ अप्शब्दाद्विकारे यञ् प्रत्ययो वा भवति । एकस्वरमयटोऽपवादः । अपां विकारः आप्यम् । अम्मयम् ॥ ५६ ॥*लुब्बहुलं पुष्पमूले ॥ ६ । २ । ५७ ॥ विकारावयवयोर्विहितस्य प्रत्ययस्य पुष्पे मूले वा विकारतयावयवतया वा विवक्षिते बहुलं लुप् भवति । मल्लिकाया विकारोऽवयवो वा पुष्पं *मल्लिका । *यूथिका । *नवमालिका । *मालती । एषु*अणो मयटो वा लुपि 'ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणीसूच्योः' ( २-४-९४ ) इति स्त्रीप्रत्ययनिवृत्तौ लुबन्तस्य स्त्रीत्वात्पुनः स्त्रीप्रत्ययः । जातेर्ङीतिः । *पाटल्याः पाटलाया वा पाटलं पाटला वा। यदाहुः—पुष्पे*क्लीबेऽपि पाटला। पाटलीत्यपि । कुन्दम् । सिन्दुवारम् । कदम्बम्। करवीरम् । अशोकम् । चम्पकम् । कर्णिकारम् । कोविदारम् । विदार्या मूलं विदारी । अंशुमती । बृहती । हरिद्रा । माधवी । मुस्ता । क्वचिन्न भवति । वरणस्य पुष्पाणि वारणानि । एरण्डस्य मूलानि ऐरण्डानि, विल्वस्य वैल्वानि । क्वचिद्विकल्पः । शिरीषस्य पुष्पाणि शिरीषाणि । शैरीषाणि । ह्रीबेरस्य मूलानि ह्रीबेराणि । ह्रैबेराणि । क्वचित्पुष्पमूलाभ्यामन्यत्रापि भवति । आमलकस्य विकारो वृक्षः आमलकी । बदरी । व्रीहेर्विकारः स्तम्बः व्रीहिः ॥ ५७ ॥ *फले ॥ ६ । २ । ५८ ॥ विकारेऽवयवे वा फले विवक्षिते प्रत्ययस्य लुप् भवति । आमलक्या विकारोऽवयवो वा फलमामलकम् । बदर्या बदरम् । कुवल्याः कुवलम् । भल्लातक्याः भल्लातकम् । व्रीहिः । यवः । मुद्गः । माषः । गोधूमः । निष्पावः । तिलः । कुलत्थः । हरीतकी । पिप्पली । कोशातकी । श्वेतपाकी । अर्जुनपाकी । कर्कटी । नखरजनी । शष्कण्डी । दण्डी । दोडी । दाडी । पथ्या । अम्लिका । चिञ्चा । द्राक्षा । ध्रुक्षा । ध्वाङ्क्षा ।मृद्वीका । कणावला । एला । शाला । काला । गर्गरिका। कण्टकारिका । शेफालिका । ओषधिः । कर्कारुः । हरीतक्यादिभ्यो लुपि प्रकृतिलिङ्गमेव। तत्र पूर्वस्य स्त्रीप्रत्ययस्य लुपि पुनः स एव स्त्रीप्रत्ययः । यद्यप्यामलकादीनि प्रकृत्यन्तराणि सन्ति तथाप्यामलक्यादिभ्यः प्रत्ययश्रुतिनिवृत्त्यर्थं लुब्वचनम् ॥ ५८ ॥ प्लक्षादेरण् ॥ ६ । २ । ५९ ॥ प्लक्ष इत्येवमादिभ्यो विकारेऽवयवे वा फले विवक्षितेऽण् प्रत्ययो भवति । मयटोऽपवादः । विधानसामर्थ्याच्चास्य लुप् न भवति । प्लक्षस्य विकारोऽवयवो वा फलं प्लाक्षम् । एवं नैयग्रोधम् । प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी वेणु बृहती सगु रु(स)रु कक्रतु । इति प्लक्षादिः ॥ ५९ ॥ जम्ब्वा वा ॥ ६ । २ । ६० ॥ जम्बूशब्दाद्विकारेऽवयवे वा फले विवक्षिते वाण् प्रत्ययो भवति पक्षे यथाप्राप्तं प्रत्ययस्तस्य च लुप् । जम्ब्वा विकारोऽवयवो वा फलं जाम्बवम् । पक्षे जम्बु जम्बूः । लुपि स्त्रीनपुंसकते ॥ ६० ॥

---

॥–लुब्बहुल–॥ मल्ल्यते नूर्द्धे 'पदिपीठी' इति के 'दृकृनृ च–' इत्यके वा मल्लिका।यूयते 'पथयूथ–' इति थे यूथी के यूथिका।यूथो जालकमस्त्यस्या वा।नवा मालाऽस्यां नवमालिका।मां लाति 'पृषिरञ्जि–' इति किद्ते गौरादित्वाद् ङ्या मालयत्यामोदैर्वा 'पुतपित्त–' इति मालती ॥—अणो मयटो वेति। मालत्या द्रुमयटोऽन्येभ्यस्तु 'प्राण्यौषधि–' इत्यणोऽभक्ष्याच्छादनविवक्षायां तु मयटो लुप् । पुनर्गौरादित्वात्ङी ॥—पाटल्या इति । मतान्तरेण 'नवा शोणादे ' इति ङीविकल्पात् । एके तु गौरादौ अन्ये तु अजादौ । पाटल्या हेमादिभ्योऽञ् । पाटलायास्तु मयट्॥— क्लीबेपीति । न केवल पुष्पे वर्त्तमान. क्लीलिङ्गः ॥—फले ॥ बदरकुवलशब्दौ हेमादौ द्रष्टव्यौ अभक्ष्याच्छादनमयड्बाधनार्थम् ॥

*न द्विरद्रुवयगोमयफलात् ॥ ६।२।६१॥ द्रुवयं गोमयं फलवाचि च वर्जयित्वाऽन्यस्मान्नाम्नो विकारावयवयोर्द्विः प्रत्ययो न भवति । कपोतस्य विकारोऽवयवो वा कापोतः कापोतस्य विकारोऽवयवो वेति 'दोरप्राणिनः' (६-२-४९) इति मयट् न भवति । एवं बैल्वः । ऐणेयः । शामीलः । औष्ट्रकः । कांस्यः । पारशवः । अद्रुवयगोमयफलादिति किम् । द्रौवयं खण्डम् । गौमयं भस्म । कापित्थो रसः । कथं कपोतस्य मांसं कापोतम् तस्य विकारः कापोतो रसः पलाशस्यावयवः पालाशी शाखा तस्या अवयवः पालाशी समित् इति । विकारेऽपि प्रकृतिशब्दो वर्तते । यथा मुद्गैः शालीन् भुङ्क्ते । मुद्गविकारैः शालिविकारानिति गम्यते । गोभिः सन्नद्धो वहति । गोविकारैश्चर्मभिरिति गम्यते । *अवयवेऽप्यवयविशब्दो वर्तते । पूर्वे पञ्चालाः उत्तरे पञ्चालाः ग्रामो दग्धः पटो दग्ध इति । तत्र विकारवृत्तेः प्रकृतिशब्दादवयववृत्तेरवयविशब्दाच्च प्रत्ययो भविष्यति । विकारविकारोऽपि वा *विकार एव अवयवावयवोऽप्यवयव इति ॥ ६१ ॥ *पितृमातुर्व्यड्डुलं भ्रातरि ॥ ६।२।६२ ॥ पितृमातृशब्दाभ्यां षष्ठ्यन्ताभ्यां भ्रातरि वाच्ये यथासंख्यं व्यड्डुल इत्येतौ प्रत्ययौ भवतः । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । डकारोऽन्त्यस्वरादिलोपार्थः ॥ ६२ ॥ पित्रोर्डामहट् ॥ ६।२।६३ ॥ पितृमातृशब्दाभ्यां षष्ठ्यन्ताभ्यां मातापित्रोर्वाच्ययोर्डामहट् प्रत्ययो भवति । पितुः पिता पितामहः । पितुर्माता पितामही । मातुः पिता मातामहः । मातुर्माता मातामही । द्विवचनटित्त्वाभ्यां मातापित्रोरिति विज्ञायते । डकारोऽन्त्यस्वरादिलोपार्थः । टकारो ङ्यर्थः ॥ ६३ ॥ अवेर्दुग्धे सोढदूसमरीसम् ॥ ६।२।६४॥ अविशब्दात् षष्ठ्यन्तात् दुग्धेऽर्थे सोढ दूस मरीस इत्येते प्रत्यया भवन्ति । अवेर्दुग्धम् अविसोढम् । अविदूसम् । अविमरीसम् ॥ ६४ ॥ *राष्ट्रेऽनङ्गादिभ्यः ॥ ६।२।६५ ॥ राष्ट्रं जनपदः । षष्ठ्यन्तादङ्गादिवर्जितान्नाम्नो राष्ट्रेऽभिधेये यथाविहितमण् प्रत्ययो भवति । शिवीनां राष्ट्रं *शैवम् । उपुष्टानामौपुष्टम् । गान्धारीणां गान्धारम् । अनङ्गादिभ्य इति किम् । अङ्गानां राष्ट्रं वङ्गानां राष्ट्रमिति वाक्यमेव भवति । अङ्ग वङ्ग सुह्म पुण्ड्र इति । अङ्गादयः प्रयोगगम्याः । केचित्तु अङ्गादिप्रतिषेधं नेच्छन्ति । अङ्गानां राष्ट्रमाङ्गम् । वाङ्गमित्यादि । *उत्तरत्र निवास इत्यभिधानात् *ईशितव्ये राष्ट्रेऽयं विधिः । *उभयथा हि राष्ट्रसंबन्धो भवति ॥ ६५ ॥ राजन्यादिभ्योऽकञ् ॥ ६।२।६६ ॥ राजन्य इत्येवमादिभ्यो राष्ट्रे वाच्येऽकञ् प्रत्ययो भवति । अणोऽपवादः । राजन्यानां राष्ट्रं राजन्यकम् । दैवयातवकम् । राजन्य दैवयातव देवयात आव्रीतक वात्रव शालङ्कायन बाभ्रव्य जालन्धरायण जानंधरायण कौन्ताल आत्मकामेय अम्बरीपुत्र आम्बरीपुत्र अम्बरीषपुत्र वैल्ववन शैलूषज उदुम्बर औदुम्बर तैतल सं-

—न द्वि—॥—अवयवेपीति । कापोत प्रति उत्तर दत्त्वा पालाशी प्रत्याह—विकार एवेति । प्रकृतेरपीत्यर्थः॥—पितृ-॥ विकल्पादेकशेष सूत्रत्वाद्वा 'आ द्वद्वे' इति च न ॥—राष्ट्रे—॥—शैवमिति।शिबे राज्ञोऽपत्यानि 'दुनादि'—इति ञ्य । 'बहुष्वस्त्रियाम्' इति लुप् । ततो राष्ट्रे वाच्येऽनेनाण् । एतद्विषये 'न प्रागजितीये' इति ञ्यस्य स्थानित्व न कुत. एके न प्राग्जितीय इत्यत्र वृत्तौ गोत्र इति पद द्विधा व्याख्याय गोत्रे उत्पन्नस्य 'यस्कादेर्गोत्रे' इत्यारभ्य यः प्रत्ययलोप प्राप्नोति तस्य 'न प्रागजितीये' इत्यनेन लुप प्रतिषेधन्ति । ञ्यो हि 'यस्कादेर्गोत्रे' इत्यतः प्राग्विहित एवेति स्थानित्व न । यदा तु शिबीनां राजान इति क्रियते तदागोत्रत्वात् 'न प्रागजितीये-' इत्यस्य प्राप्तिरेव नास्ति । एवमुत्तरेष्वपि ॥—उत्तरत्रेति 'निवासादूरभवे' इत्यत्र ॥—ईशितव्ये इति । यथेच्छ विनियोज्ये ॥— उभयथा हीति । परिपालनेन निवासेन च

प्रिय दाक्षि ऊर्णनाभ ऊर्णनाभि आर्जुनायन विराट मालव त्रिगर्त । इति राजन्यादिः । बहुवचनमाकृतिगणार्थम् ॥ ६६ ॥ वसातेर्वा ॥६ । २ । ६७ ॥ वसातिश-ब्दाद्राष्ट्रे वाच्येऽकञ् प्रत्ययो वा भवति । वसातीनां राष्ट्रं वासातकं वासातम् ॥ ६७ ॥ भौरिक्यैषुकार्यादेर्विधभक्तम् ॥ ६ । २ । ६८ ॥ भौरिकि इत्येवमादि-भ्य ऐषुकारि इत्येवमादिभ्यश्च राष्ट्रे वाच्ये यथासङ्ख्यं विध भक्त इत्येतौ प्रत्ययौ भवतः । अणोऽपवादः । भौरिकीणां राष्ट्रं भौरिकिविधम् । भौलिकिविधम् । स्व-भावान्नपुंसकता । ऐषुकारीणां राष्ट्रमैषुकारिभक्तम् । सारसायनभक्तम् । भौरिकि भौलिकि चौपयत चौदयत चैटयत चैकयत सैकयत क्षैतयत काणेय वालिकाद्य वा-णिजक। इति भौरिक्यादिः । ऐषुकारि सारसायन चान्द्रायण ताक्ष्यायण त्र्याक्षायण त्र्याक्षायण त्र्यक्षायण त्र्यक्षायण औलायन सौवीर दासमित्रि दासमित्रायण शौद्रकायण शयण्ड शाण्ड शायाण्ड शायण्डायन खादायन गौ(मा)लुकायन विश्व वैश्वधेनव वैश्वमाणव वैश्वदेव तुण्ड देव तुण्डदेव शायाण्डी शायण्डी वायौविद । इत्यैषुकार्यादिः ॥ ६८ ॥ *निवासादूरभवे इति देशे नाम्नि ॥ ६ । २ । ६९ ॥ षष्ठ्यन्तान्नाम्नो निवास अदूरभव इत्येतयोरर्थयोर्य-थाविहितं प्रत्ययो भवति देशे नाम्नि प्रत्ययान्तं चेद्देशस्य नामधेयं भवति । *इतिकरणो विवक्षार्थः । तेनानुवृत्ते व्यवहारमनुपतिते नाम्नि विज्ञेयम् न संगीते । निवसन्त्यस्मिन् इति निवासः। तत्र, *ऋजुनाव *ऋजुनावानां वा निवास आर्जुनावः। शिवीनां शैवः । उपुष्टस्य औपुष्टः । शकलायाः शाकलः। अदूरभवे, विदिशाया अदूरभवं वैदिशं नगरम् । वैदिशो जनपदः । *वरणास्योः वारणसी । व्रीहिमत्या व्रैहिमतम् । यवमत्या यावमतम् ।'इह केचिदङ्गानां निवासः अङ्गाः ।वङ्गाः । कलिङ्गाः।सुह्माः। मगधाः।पुण्ड्राः। कुरवः । पञ्चालाः । मत्स्याः । वरणानामदूरभवं वरणा नगरम् । शृङ्गशाल्मलीनां शृङ्गशाल्मलयो ग्रामः । गोदयोर्ह्रदयोर्गोदौ ग्रामः । आलन्यायनपर्णानामालन्याय-नपर्णा ग्रामाः । शफण्ड्याः शफण्डी । जालपदाया जालपदा । मथुरायाः मथुरा । उज्जयन्या उज्जयनी । गयानां गया । उरशायाः उरशा । तक्षशिलायाः तक्षशिला । कटुकबदर्याः कटुकबदरी । खलतिकस्य खलतिकं वनानीत्यादिषु प्रत्ययमुत्पाद्य लुपमारभन्ते। सत्यां च लुपि प्रकृतिवल्लिङ्गवचने च मन्यन्ते' । तदयुक्तम्। अत्र हि*प्रकृतिमात्रमेव देशनाम न प्रत्ययान्तम् प्रत्ययान्तस्य च देशनामत्वे प्रत्ययो विधीयते इति न भवति । तस्य निवास इत्यादिविवक्षायां तु वाक्यमेव । प्रत्ययाभावाच्च लुबपि न वक्तव्या । *अङ्गवरणादीनां च क्षत्रियवृक्षादिवज्जनपदनगरादौ स्वत एव वृत्तिर्न प्रत्ययप्रयोगात् लिङ्गसंख्योपादानं च स्वगतमेवेति ॥६९॥ तदत्रास्ति ॥ ६ । २ । ७० ॥ तदिति प्रथमान्तादत्रेति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेदस्तीति भवति देशे नाम्नि प्रत्ययान्तं चेत् देशस्य नाम भवति । अत्रापीतिकरणो विवक्षार्थोऽनुवर्तत एव। तेन प्रसिद्धे नाम्नि भूमादौ चार्थे भवति । अत एव चोभयप्राप्तौ परोऽपि मत्वर्थीयोऽनेन बाध्यते ।

---

॥——निवासा——॥—इतिकरण इति । क्रियतेऽनेनार्थप्रतीतिरिति करण शब्द' ॥—ऋजुनाव इति । ऋज्व्यो नावो यस्य । एकत्वे तु ' पुमनडुन्नौ— ' इति कप् स्यात् ॥—ऋजुनावानामिति । ऋजुम् आर्जवयुक्त नुवन्ति ' कर्मणोऽण् ' ॥—वरणास्योरिति । वरणा चासिश्च वरणासी । तयोरदूरभवा पृषोदरादित्वाद्वस्य दीर्घो णस्य तु ह्रस्व.॥—प्रकृतिमात्रमेवेति। केवलैव प्रकृतिः प्रत्ययमन्तरेण देशनाम इत्यर्थः ॥— अङ्गवरणादीनां चेति । स्वमतमेव प्रकटयन्नाह ॥

उदुम्बरा अस्मिन् देशे सन्ति औदुम्बरं नगरम् । औदुम्बरो जनपदः । औदुम्बरः पर्वतः ॥ ७० ॥ तेन निर्वृत्ते च ॥ ६ । २ । ७१ ॥ तेनेति तृतीयान्तान्निर्वृत्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति देशे नाम्नि प्रत्ययान्तं चेद्देशस्य नाम भवति । यदा अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्तीति कर्मणि निर्वृत्तशब्दो व्युत्पाद्यते तदा तेनेति कर्तरि करणे वा तृतीया । यदा त्वकर्मकविवक्षया कर्तरि निर्वृत्तशब्दस्तदा हेतौ तृतीया । कुशाम्बेन निर्वृत्ता कौशाम्बी । ककन्देन काकन्दी । मकन्देन माकन्दी । सगरैः सागरः । सहस्रेण निर्वृत्ता साहस्री परिखा । चकारश्चतुर्णां योगानामुत्तरत्रानुवृत्त्यर्थः । तेनोत्तरे प्रत्यया यथायोगं चतुर्ष्वर्थेषु भवन्ति ॥ ७१ ॥ नद्यां मतुः ॥ ६ । २ । ७२ ॥ तस्य निवासः तस्यादूरभवः तदत्रास्ति तेन निर्वृत्तं चेत्येष्वर्थेषु यथायोगं मतुः प्रत्ययो भवति नद्यां देशे नाम्नि प्रत्ययान्तं चेन्नदीविषयं देशस्य नाम भवति । नदीनामेत्यर्थः । अणोऽपवादः। उदुम्बरा अस्यां सन्ति उदुम्बरावती नदी । मशकावती । वीरणावती । पुष्करावती । इक्षुमती । द्रुमवती । शरावती । इरावती । भगीरथेन निर्वृत्ता भागीरथी। भैमरथी ।जाह्नवी। सौवास्तवी । अमत्वन्तान्येव भागीरथ्यादीनि नदीनामानीति मतुर्न भवति ॥ ७२ ॥ *मध्वादेः ॥ ६ । २ । ७३ ॥ मध्वादिभ्यो मतुः प्रत्ययो भवति*चातुरर्थिकः देशे नाम्नि प्रत्ययान्तं चेद्देशस्य नाम भवति । अणोऽपवादः । अनद्यर्थश्चारम्भः।मधुमान् बिसवान् स्थाणुमान्। *मधु*बिस *स्थाणु*ऋषि *इक्षु*वेणु *कर्कन्धु *कर्कन्धू *शमी *करीर*हिम *किसर*सार्पण *रुवत् *पार्दा *कीशरु *इष्टका *पार्दाकी *शरु *शुक्ति *आसुति *सुत्या *आसन्दी शकली *वेट *पीडा अक्षशिल अक्षशिला तक्षशिला आमिषी। इति मध्वादिः ॥ ७३ ॥ *नडकुमुदवेतसमहिषाड्डित् ॥ ६ । २ । ७४ ॥ नडादिभ्यो डिन् मतुः प्रत्ययो भवति चातुरर्थिकः देशे नाम्नि । *अणाद्यपवादः । नड्वान् कुमुद्वान् वेतस्वान् महिष्मान् देशः । तत्र भवा माहिष्मती नगरी । डित्वमन्त्यस्वरादिलोपार्थम् ॥ ७४ ॥ *नडशादाद्वलः ॥ ६ । २ । ७५ ॥ नड शाद इत्येताभ्यां डित् वलः प्रत्ययो भवति चातुरर्थिको देशे नाम्नि। *मत्वणाद्यपवादः । नड्वलम् । शाद्वलम् ॥ ७५ ॥ *शिखायाः ॥ ६ । २ ।७६ ॥ शिखाशब्दाद्वलः

---

–मध्वादे.॥–चातुरर्थिक इति। चतुर्ष्वर्थेषु भव अभ्यारमादित्वादिकण्।विधानतो 'द्विगोः–'इति न लुप्।अथ गणो विव्रियते।'मनिजनिभ्याम्'–इति मधु' पटिवीभ्यामिति विसं निस्च् खण्डने वा।'आजिस्था '–इति स्थाणुः 'माम्युपान्य–' इति ऋषि।'मस्जि–' इति इक्षुः।'आजिस्था–'इति वेणु।कर्कस्य अन्धुरिव कर्कन्धु'।'कृग' कादिः 'कर्कन्धू'।शमयति शमी । 'दृशृ–' करीरः । ' क्षुहिभ्यां या ' हिम.। कस्य भार्या की सरति ' क्यापो बहुलम्–' इति किसरा । सहार्पणेन वर्त्तते सार्प्पण' । रौति शतरि रुवत् । पर्वते पाडुलकादीर्घे पार्दा । कुत्सित. शरुः कीशरु । पृषोदरादिः । ' पृच्यशि–' इति इष्टका। पार्दामकति पार्दाकी । ' भृमृ ' इति शरु । ' दृसुपि–' इति शुक्ति' । ' समिणा–' इति आसूयते आसुति' । ' समज–' इति सुत्या । आसिक् ' कुमुद–' इति आसन्दी । आसं दयते वा योगविभागान्मोन्त' । विट शब्दे लिहाद्यचि वेट । 'भीप–' इति पीडा ॥—नडकुमुद—॥—अणाद्यपवाद इति । आदिपदात् नडशब्दात् ' नडशाद्वल. ' कुमुदात् 'कुमुदादेरिक ' इत्यादिग्रह । महिष्मानित्यत्र ' धुटस्तृतीय ' इति दत्व न भवति असिद्ध बहिरङ्गमन्तरङ्गमिति अकारस्य स्थानित्वेन पदान्तत्वाभावात् । न वाच्य'स्वरस्य—' इति स्थानित्वं न ' सधि–' इत्यस्यावस्थानात् ॥——नडशाद——॥——मत्वणाद्येति। आदिपदात् ' नडादे कीयः ' इति ॥——शिखाया

प्रत्ययो भवति चातुरर्थिकः देशे नाम्नि । अणोऽपवादः । पृथग्योगाद्विदिति निर्वृत्तम् । शिखावलं नाम नगरम् । मतुप्प्रकरणे शिखाया वलच् *वक्ष्यति तत् *अदेशार्थं वचनम् ॥ ७६ ॥ शिरीषादिकक्कणौ ॥ ६ । २ । ७७ ॥ शिरीषशब्दादिकक्कण् इत्येतौ प्रत्ययौ भवतः चातुरर्थिकौ देशे नाम्नि । शिरीषाणामदूरभवो ग्रामः शिरीषिकः । शैरीषकः ॥ ७७ ॥ *शर्करायाः इकणीयाण् च ॥ ६ । २ । ७८ ॥ शर्कराशब्दादिकण् ईय अण् चकारात् इक कण् इत्येते प्रत्यया भवन्ति चातुरर्थिका देशे नाम्नि । शर्करा अस्मिन्देशे सन्ति शार्करिकः । शर्करीयः । शार्करः । शर्करिकः । शार्करकः । *शिरीषाः शर्करा इति प्रत्ययोगमन्तरेणापि देशे वृत्तिरिति पूर्ववत्प्रत्ययो न भवति ॥७८॥ रोऽश्मादेः ॥६।२।७९॥ अश्मादिभ्यो रः प्रत्ययो भवति चातुरर्थिको देशे नाम्नि । अश्मरः । यूपरः।अश्मन् यूप ऊष यूथ मीन मुद दर्भ कूट गुहा वृन्द नग कुण्ड गड कन्द पामन् । इत्यश्मादिः ॥७९॥ प्रेक्षादेरिन् ॥ ६।२। ८० ॥ प्रेक्षादिभ्य इन् प्रत्ययो भवति चातुरर्थिको देशे नाम्नि । प्रेक्षी । फलकी । प्रेक्षा फलका बन्धुका ध्रुवका धुवका क्षिपका कूप धुक धुक इकट कङ्कट संकट मह गर्त न्यग्रोध परिवाप यवाप हिरण्य।इति प्रेक्षादिः॥८०॥ तृणादेः सल् ॥ ६ । २ । ८१ ॥ तृणादिभ्यश्चातुरर्थिकः सल् प्रत्ययो भवति देशे नाम्नि । तृणसा । नदसा । तृण नद जन पर्ण वर्ण अर्णस् वरण बिल तुस वन पुल। इति तृणादिः ॥ ८१ ॥ काशादेरिलः ॥ ६ । २ । ८२ ॥ काशादिभ्यश्चातुरर्थिक इलः प्रत्ययो भवति देशे नाम्नि । काशिलम् । वाशिलम् । काश वाश अश्वत्थ पलाश पीयूक्षा पाश विश तृण नल वन नलवन कर्दम कर्पूर वर्बर वर्तूल शीपाल कण्टक गुहा कपित्थ ।इति काश्यादिः ॥ ८२ ॥ अरीहणादेरकण् ॥ ६ । २ । ८३ ॥ अरीहणादिभ्यश्चातुरर्थिकोऽकण् प्रत्ययो भवति देशे नाम्नि । आरीहणकं, खाण्डवकम् । अरीहण खण्ड खण्डु दुघण किरण खदिर भगल भलन्दन उलुन्द खाबुरायण खापुरायण खानुरायण कौष्टायन कौद्रायण भास्त्रायण त्रैगर्तायन रैवत रायस्पोष विपथ विपाश उद्दण्ड उदश्वन ऐडायन जाम्ववत जाम्बवत् शिंशपा वीरण धौमतायन यज्ञदत्त सुयज्ञ वधिर बिल्व जम्बू साम्बुरायण सौशायन सौमायन शाण्डिल्यायन भित्रायणि साम्बरायण कश कृत्स्न सुशर्मन् । इत्यरीहणादिः ॥८३॥*सुपन्थ्यादेर्ञ्यः॥६।२।८४॥ सुपन्थिन् इत्यादिभ्यश्चातुरर्थिको ञ्यः प्रत्ययो भवति देशे नाम्नि। सौपन्थ्यम्।सौवन्थ्यम्।सुपथिन्शब्दस्यात एव निपातनात् पकारात्परो नागमः पस्य च वा वकारः।सांकाश्यम्।काम्पील्यम्।*सुपन्थिन् *सुवन्थिन् *संकाश *कम्पील *सुपरि *यूप अश्मन् अश्व*अङ्ग*नाथ कुण्ट *कुट *कूट *मादित *मृष्टि

॥–वक्ष्यतीति।कृष्यादिभ्यो वलच् ॥–अदेशार्थमिति । न वाच्य सामान्येनोत्तरेण देशेऽप्यदेशेपि भविष्यतीति यतोत्राणोपवाद इत्युक्तम् ततश्चादेशे तस्य चरितार्थत्वात् देशे 'निवासादूरभवे ' इत्यादय स्यु ॥–शर्करायाः–॥–शिरीषाः शर्करा इति । नन्वेतविधान्यपि देशनामानि दृश्यन्ते तदर्थं प्रत्ययलुप् वक्तव्येत्याशङ्का॥—सुपन्थ्यादेर्ञ्यः । सुपन्थ्यादिर्विचार्यते । शोभनः पन्थाः सुपन्था. सुपन्थिन् गणपाठात् वत्वे सुवन्थिन् । सकाशते अच् सकाशः । क सुख पीलति कंपीलः । सुष्ठु पिपर्त्ति ' स्वरेभ्य इ ' सुपरि । ' युसुकु–' इति यूप । ' गम्यमि–' इति ' उखनख–' इति वा अङ्गः । नाथति अच् नाथः । कुटति ' नाम्युपान्त्य'– इति के कुटः । कूटयति अचि कूटः । माद्यन्त प्रयुङ्क्ते माद्यते स्म मादितः । मार्जन मर्शन मर्षण वा मृष्टिः ।

*आगस्त्य *शूर *विरन्त *विकर *नासिका *प्रगदिन् *मगदिन् *कटिद *कटिप *कटिव *चूदार *मदार *मजार *कोविदार कश्मीर शूरसेन
कुम्भ सीर सुर कसमल अंस नासा रोमन् लोमन् तीर्थ पुलिन मालिन अगस्ति सुपथिन् दश नल सकर्ण कलिव खडिव गडिव ।
इति सुपन्थ्यादिः ॥ ८४ ॥ सुतंगमादेरिञ् ॥ ६ । २ । ८५ ॥ सुतंगमादिभ्यश्चातुरर्थिक इञ् प्रत्ययो भवति देशे नाम्नि । सौतंगमिः
मौनिवित्तिः।सुतंगम मुनिवित्त विप्रचित्त महावित्त महापुत्र शुक्र श्वेत विग्र श्वन् विग्रश्वन् अर्जुन अजिर गदिक बीज वाप बीजवाप वाजवाप कर्ण।इति सुतंगमादिः॥८५॥
बलादेर्यः ॥ ६ । २ । ८६ । बलादिभ्यश्चातुरर्थिको यः प्रत्ययो भवति देशे नाम्नि । बल्यं, पुल्यम् । बल पुल मुल उल कुल दुल नल दल उरल लकुल वन
इति बलादिः ॥ ८६ ॥ *अहरादिभ्योऽञ् ॥ ६ । २ । ८७ ॥ अहन् इत्येवमादिभ्यश्चातुरर्थिकोऽञ् प्रत्ययो भवति देशे नाम्नि । आह्नम् । लौमम् । तेन निर्वृत्तमि-
त्यर्थेऽह्नशब्दाद्देशे नाम्नि विहितोऽयमञ् विशेषविहितत्वात् निर्वृत्त इति सामान्यविहितस्य काले*कणोऽपवादः । अहन् लोमन् वेमन् गङ्गा। इत्यहरादिराकृतिगणः
॥ ८७ ॥ सख्यादेरेयण् ॥ ६ । २ । ८८ ॥ सखि इत्येवमादिभ्यश्चातुरर्थिक एयण् प्रत्ययो भवति देशे नाम्नि । साखेयः । साखिदत्तेयः । सखि सखिदत्त दत्त
अग्नि अग्निदत्त वादस्त वायुदत्ता गोफिल भल्ल भल्लिपाल चक्र चक्रवाक छगल अशोक सीरक सरक वीर वीरसरस समल रोह तमाल कदल करवीर कुशीरक
सुरसा सरम सपूल । इति सख्यादिः ॥ ८८ ॥ पन्थ्यादेरायनण् ॥ ६ । २ । ८९॥ पन्थ्यादिभ्यश्चातुरर्थिक आयनण् प्रत्ययो भवति देशे नाम्नि । पान्थायनः ।
पथिन्शब्दस्य प्रत्यययोगे पकारात्परो नागमोऽत एव निपातनात् । पाक्षायणः । तौषायणः । पथिन् पक्ष तुष अण्डक वालिक पाक चित्र चित्रा अतिश्व कुम्भ सी-
रक लोमन् रोमन् लोमक हंसक सकर्ण सकर्णक सरक सहक सरस समल अंशुक कुण्ड यमल विल हस्त हस्तिन् सिंहक । इति पन्थ्यादिः ॥ ८९ ॥ कर्णादेराय-
निञ् ॥ ६ । २ । ९० ॥ कर्णादिभ्यश्चातुरर्थिक आयनिञ् प्रत्ययो भवति देशे नाम्नि । कार्णायनिः । वासिष्ठायनिः । कर्ण वसिष्ठ अर्क लुस अर्कलुस द्रुपद आ-
नडुह्य पाञ्चजन्य स्फिग् स्फिज कुलिश आकनीकुम्भ जित्वन् जित्य जैत्र आण्डीवत् जीवन्त । इति कर्णादिः ॥ ९० ॥ उत्करादेरीयः ॥ ६ । २ । ९१ ॥ उत्करा-
दिभ्यश्चातुरर्थिक ईयः प्रत्ययो भवति देशे नाम्नि । उत्करीयः । संकरीयः । उत्कर संकर संपर संपल सफर संफल संफुल पिप्पल मूल पिप्पलमूल अर्क अश्मन्
सुवर्ण सुपर्ण पर्ण सुपर्णपर्ण हिरण्यपर्ण इडा अजिर इडाजिर अग्नि तिक कितव आतप अनेक पलाश तिकाकितव वातपान एक पलाश अनेकपलाश अंशक त्रैवण

' अगपुलाभ्याम्–' इति अगस्त्य तस्यापत्यमृष्यण् आगस्त्य । शूरयतेऽच् शूर । विरमति ' पुतपित्त–' इति यद्वा विरमतीति औणादिके तृप्रत्यये विरन्तरमाचष्टे णिजि विरन्तयति । अचि
विरन्त । विकरोति अचि विशिष्टौ करौ यस्य वा विकर. । नसते ' नसिवासि–' इति नासिका । प्रगदतीत्येवशील प्रगदी। मा गदतीत्येवशील. ' ङयापो बहुल नाम्नि ' इति ह्रस्वे
मगदी। कटि ददाति पाति वाति वा कटिद' । कटिप । कटिव । चुदण् ' द्वार–' इति चूदार' । ' अगयद्गि–' इति मदार । मृजुमजशब्दे । मजति 'अगयद्गि' इति बहुवचनात्
' द्वार–द्ववि वा मजार। । कने. ' कोविद्–' इति कोविदार. ॥—अहरादिभ्यो—॥—इकणोपवाद इति । वेन हस्ताद इत्यत. तृतीयान्तमनुवर्तते । कालात्परिजय्येत्यत कालाद्रिति च

पिचुक अश्वत्थ काश क्षुद्रा काशक्षुद्रा भस्त्रा विशाल शाला अरण्य अजिन अरण्याजिन जन्यजनक आर्जेन खण्डाजिन चलयण उत्क्रोश क्षान्ध रु [ख] ण्ड खादिर सूपर्णाय श्यावनाय नैवाकव नितान्त वृक्ष नितान्तवृक्ष आर्द्रवृक्ष इन्द्रवृक्ष अश्विवृक्ष मत्रणार्ह अरीहग वातागर विजिगीषा संस्रव रोहिद्धर्त नीवापक अणक निशान्त खल जिन वैराणक अवरोहित जन्य इन्द्रवर्म गर्त । इत्युत्करादिः ॥ ९१ ॥ नडादेः कीयः ॥ ६ । २ । ९२ ॥ नड इत्येवमादिभ्यश्चातुरर्थिकः कीयः प्रत्ययो भवति देशे नाम्नि । नडकीयः । प्लक्षकीयः । नड प्लक्ष बिल्व वेणु वेत्र वेतस त्रि तक्षन् इक्षु काष्ठ कपोत क्रुञ्च क्रुञ्चाशब्दस्यात एव गणपाठात् ह्रस्वत्वम् । इति नडादिः ॥ ९२ ॥ कृशाश्वादेरीयण् ॥ ६ । २ । ९३ ॥ कृशाश्वादिभ्यश्चातुरर्थिक ईयण् प्रत्ययो भवति देशे नाम्नि । कार्शाश्वीयः । आरिष्टीयः । कृशाश्व अरिष्ट अरिष्य वेष्य विशाल रोमक लोमक रोमश शबल शिवल कूट चर्चुल पूगर शूकर धूकर पूकर संदृश सदृश पुरगा पूरवा । धूम धूम्र विनीत आविनत विकूच्या अयस् सायम् इरस् उरस् अरुष्य ऐरास इर आस मुद्गल मौद्गल्य सुवर्चल मतर अजिन अवनत विकुड्याङ्कुश पराशर । इति कृशाश्वादिः ॥ ९३ ॥ ऋश्यादेः कः ॥ ६।२।९४॥ ऋश्य इत्यादिभ्यश्चातुरर्थिकः कः प्रत्ययो भवति देशे नाम्नि । ऋश्यकः। न्यग्रोधकः। ऋश्य न्यग्रोध शर निलीन निवात विनद्ध सित शित नद्ध निनद्ध परिगूढ उपगूढ उत्तर अश्मन् उत्तराश्मन् स्थूल वाहु स्थूलवाहु खादिर अरदु अनडुह् परिवंश खण्ड वीरण कर्दम शर्करा निवन्ध अशनि खण्ड दण्ड वेणु परिवृत वेश्मन् अंशु। इति ऋश्यादिः ॥ ९४॥ वराहादेः कण् ॥ ६ । २।९५ ॥ वराहादिभ्यश्चातुरर्थिकः कण् प्रत्ययो भवति देशे नाम्नि । वाराहकः । पालाशकः । वराह पलाश विनद्ध निवद्ध स्थूल बाहु स्थूलबाहु खदिर विदग्ध विजग्ध विभग्न विभक्त पिनद्ध निमग्न । इति वराहादिः ॥ ९५ ॥ कुमुदादेरिकः ॥ ६ । २ । ९६ ॥ कुमुद इत्येवमादिभ्यश्चातुरर्थिक इकः प्रत्ययो भवति देशे नाम्नि । कुमुदिकम्। इक्कटिकम् । बल्वजिकम् । केचिदमुं न पठन्ति । बाल्वजः । कुमुद इक्कट नियास कङ्कट संकट गर्त परिवाप यवाप कूप विकङ्कत बल्वज अश्वत्थ न्यग्रोध बीज दशा शाल्मलि मुनि स्थल ग्राम । इति कुमुदादिः ॥ ९६ ॥ *अश्वत्थादेरिकण् ॥ ६ । २ । ९७ ॥ अश्वत्थ इत्यादिभ्यश्चातुरर्थिक इकण् प्रत्ययो भवति देशे नाम्नि। आश्वत्थिकम् । कौमुदिकम् । अश्वत्थ कुमुद गोमठ रथकार दाश ग्राम घास कुन्द शाल्मलि मुनि स्थल मुनिस्थल कुट मुचुकर्ण मुचुकर्णि कुण्डल शुचिकर्ण । इत्यश्वत्थादिः । इतिकरणाद्यथादर्शनं प्रत्ययव्यवस्थायामर्थप्रकृत्युपादानं प्रपञ्चार्थम् ॥ ९७ ॥ *सास्य पौर्णमासी ॥ ६ । २ । ९८ ॥ इति शब्दो नाम्नीति चानुवर्तते । देश इति निवृत्तम् । सेति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेत्पौर्णमासी भवति नाम्नि, प्रत्ययान्तं चेन्नाम स्यात् । इतिकरणो विवक्षार्थः । *तेन मासार्धमासयोरेव *संवत्सरपर्वणोः प्रत्ययः । संवत्सरेऽप्यन्ये । अस्येत्यवयवावयविसंबन्धे षष्ठी । पौषी

ततो निर्वृत्तेइत्यनेन कालसामान्यविहित इकण् प्राप्तस्तस्य बाधकोयम् ॥—अश्वत्थादेरिकण् ॥—इतिकरणादिति । पूर्वे प्रत्यया एव विहिता न प्रकृतीनामुपादानं कृतमितीतिकरणस्य विवक्षार्थत्वाल्लौकिकप्रत्ययानुसारेणार्थप्रकृतयोऽनुमीयन्त इति । अत एव च प्रत्युपादानेऽपि केश्चिद्धीना कैश्चिदधिका. पठिता इति न मतिव्यामोहो विधेयः । यथादर्शनं तु प्रयोगव्यवस्था । अत एव बाल्वजिक बाल्वजमित्याद्युपदर्शितम्॥—सास्य पौर्णमासी ॥—तेनेत्यादि । मास' त्रिंशद्रात्ररूप । मासस्यार्धमर्धमास पञ्चदशरात्ररूप । अत्रैव प्रत्ययो भवति नान्यत्र पञ्चरात्रादौ मासार्धमासा वयनेकरूपत्वादित्याह— —संवत्सरपर्वणोरिति । संवत्सरस्य वर्षस्य पर्वभूतो मास' सूर्याचन्द्रमसोः सश्लिष्य पुन. सश्लिष्टयोर्विश्लिष्य पुनर्विश्लिष्टयोर्वा यौ तौ सश्लेषौ विश्लेषौ वा तयोरन्तरालकालः ।

पौर्णमासी अस्य पौषो मासः । पौषोऽर्धमासः । एवं माघः वैशाखः आषाढ इति । नाम्नीत्येव । पौषी पौर्णमासी अस्य पञ्चरात्रस्य दशरात्रस्य भृतकमासस्य वेति
वाक्यमेव । पौर्णमासीति पूर्णो माश्चन्द्रोऽस्यामस्तीति ' पूर्णमासोऽण् ' ( ७-२-५५ ) इत्यण् । पूर्णमास इयमिति वा ' तस्येदम् ( ६-३-१५९ ) इत्यण् ।
पूर्णो मा मासो वास्यां पूर्णमासा वा युक्तेति अत एव निपातनादण् ॥ ९८ ॥ *आग्रहायण्यश्वत्थादिकण् ॥ ६ । २ । ९९ ॥ आग्रहायणी अश्वत्था इत्येताभ्यां
सेति प्रथमान्ताभ्यामस्येति षष्ठ्यर्थे इकण् प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेत्पौर्णमासी भवति नाम्नि प्रत्ययान्तं चेत् नाम स्यात् । आग्रहायणी पौर्णमासी
अस्य आग्रहायणिको मासोऽर्धमासो वा । अश्वत्था पौर्णमासी अस्य आश्वत्थिको मासोऽर्धमासो वा । आग्रहायणी मार्गशीर्षी । अश्वत्था आश्वयुजी । अन्ये तु
अश्वत्थशब्दमप्रत्ययान्तं पौर्णमास्यामपि पुंलिङ्गमिच्छन्ति । अश्वत्थः पौर्णमासी ॥ ९९ ॥ चैत्रीकार्तिकीफाल्गुनीश्रवणाद्वा ॥ ६ ।२। १०० ॥ एभ्य इकण्
प्रत्ययो भवति वा सास्य पौर्णमासीति अस्मिन् विषये नाम्नि । चैत्री पौर्णमासी अस्य चैत्रिकः चैत्रो वा मासोऽर्धमासो वा।एवं कार्तिक्याः कार्तिकिकः।कार्तिकः।फाल्गुन्याः
फाल्गुनिकः फाल्गुनः । श्रवणायाः श्रावणिकः श्रावण ॥१००॥ देवता ॥६।२।१०१॥ सास्येत्यनुवर्तते ।सेति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति
यत्तत्प्रथमान्तं देवता चेत्सा भवति । अर्हन् देवता अस्य आर्हतः । जैनः । आग्नेयो ब्राह्मणः । ऐन्द्रं हविः । ऐन्द्रः पुरोडाशः । वारुणश्चरुः । आदित्यः । बार्हस्पत्यः ।
गव्यम् । द्वीन्द्रम् ॥ १०१ ॥ *पैङ्गाक्षीपुत्रादेरीयः ॥ ६ । २ । १०२ ॥ पैङ्गाक्षीपुत्र इत्येवमादिभ्य ईयः प्रत्ययो भवति सास्य देवतेत्यस्मिन्
विषये । अणोऽपवादः । पैङ्गाक्षीपुत्रो देवतास्य पैङ्गाक्षीपुत्रीयं हविः । तार्णविन्दवो देवतास्य तार्णविन्दवीयं हविः । एवं पैङ्गीपुत्रीयम् । पैङ्गाक्षीपुत्रादयः
प्रयोगगम्याः ॥ १०२ ॥ शुक्रादियः ॥ ६ । २ । १०३ ॥ शुक्रशब्दादियः प्रत्ययो भवति सास्य देवतेत्यस्मिन् विषये । शुक्रियं हविः । शुक्रियोऽध्यायः ॥ १०३ ॥
शतरुद्रात्तौ ॥ ६ । २ । १०४ ॥ शतरुद्रशब्दात्तौ ईय इय इत्येतौ प्रत्ययौ भवतः सास्य देवतेत्यस्मिन् विषये । शतसंख्या रुद्राः शतरुद्राः । ते देवता अस्य
शतरुद्रीयं शतरुद्रियम् । शतं रुद्रा देवतास्येति द्विगावपि विधानसामर्थ्यात् लुब् न भवति ॥ १०४ ॥ *अपोनपादपान्नपातस्तृ चातः ॥ ६ । २ । १०५ ॥
अपोनपादपान्नपात् इत्येताभ्यां तौ प्रत्ययौ भवतः सास्य देवतेत्यस्मिन् विषये तत्संनियोगे चानयोराच्छब्दस्य तृ इत्ययमादेशो भवति । अपोनपात् देवतास्य
अपोनप्त्रीयम् अपोनप्त्रियम् अपांनप्त्रीयम् अपान्नप्त्रियम् ॥ १०५ ॥ महेन्द्राद्वा ॥ ६ । २ । १०६ ॥ महेन्द्रशब्दात्सास्य देवतेत्यस्मिन् विषये तौ प्रत्ययौ वा

अर्धमासश्च सश्लेषविश्लेषयोरन्तरमतो भृतकमासादेर्न भवति संवत्सरपर्वाभावात् ॥—आग्रहायण्य—॥—आग्रहायणीति । अत्र हायनस्य ' द्वित्रिचतुष्पूरण-' इति स॰ ' प्रथमोक्तम्-' इति
अग्रस्य पूर्वनिपात । ' पूर्वपदस्था-' इति णत्वम् अग्रहायण एव प्रज्ञादिभ्योऽण् ङी ॥ —पैङ्गाक्षीपुत्रादे -॥ पिङ्गे अक्षिणी यस्य ' सक्थ्यक्ष्ण' स्वाङ्गे'ट पिङ्गाक्षस्यापत्य वृद्ध स्त्री अत इञ्
' अनार्षे वृद्धे ' इति ष्य । आप् पिङ्गाक्ष्याः पुत्र ' ष्या पुत्रपत्योरीच्-' । अनन्तरापत्ये वा इञ् । तदा ' नुर्जातेर्ङी ' पिङ्गाक्ष्याः पुत्र ॥—अपोनपाद—॥—अपोनप्त्रीयमिति । न
पातीति शतृ नखादित्वादद्भाव । ततोऽप कर्मतापन्ना नपात् । अत एव निर्देशादलुप् । यद्वाऽपकृष्टमूनमपोन तत्पातयति क्विप् अपकृष्टमन्नमपान्न तत्पातयति क्विप् ॥

भवतः। महेन्द्रीयम् । महेन्द्रियम् । पक्षे अण् । माहेन्द्रं हविः ॥१०६॥ *कसोमात् ट्यण् ॥६।२।१०७॥ कशब्दात्सोमशब्दाच्च सास्य देवतेत्यस्मिन् विषये ट्यण् प्रत्ययो भवति । अणोऽपवादः। टकारो ङ्यर्थः। कः प्रजापतिर्देवतास्य कायं हविः। कायी इष्टिः। कशब्दं प्रति णित्त्वस्य वैयर्थ्यादालोपो न भवति। सोमो देवतास्य सौम्यं हविः। सौम्यं सूक्तम्। सौमी ऋक् ॥१०७॥ द्यावापृथिवीशुनासीराग्नीषोममरुत्वद्वास्तोष्पतिगृहमेधादीययौ ॥६।२।१०८॥ एभ्यः सास्य देवते अस्मिन् विषये ईय य इत्येतौ प्रत्ययौ भवतः। अणोऽस्य चापवादः। द्यौश्च पृथिवी च द्यावापृथिव्यौ ते देवते अस्य द्यावापृथिवीयम् हविः द्यावापृथिव्यम्। शुनश्च वायुः सीरश्चादित्यः शुनासीरौ तौ देवता अस्य शुनासीरीयम् शुनासीर्यम् । अग्निश्च सोमश्च अग्नीषोमौ तौ देवता अस्य अग्नीषोमीयम् । अग्नीषोम्यम् । मरुत्वान् देवतास्य मरुत्वतीयम् । मरुत्वत्यम् । वास्तोष्पतिर्देवतास्येति वास्तोष्पतीयम् वास्तोष्पत्यम् । गृहमेधो देवतास्य गृहमेधीयम् गृहमेध्यम् ॥१०८॥ *वाय्वृतुपित्रुषसो यः ॥६।२।१०९॥ वायु ऋतु पितृ उषस् इत्येतेभ्यः सास्य देवतेत्यस्मिन् विषये यः प्रत्ययो भवति । अणोऽपवादः । वायुर्देवतास्य वायव्यम् । एवम् ऋतव्यम् । पित्र्यम् । *उषस्यम् ॥ १०९ ॥ *महाराजप्रोष्ठपदादिकण् ॥ ६ । २ । ११० ॥ महाराज प्रोष्ठपद इत्येताभ्यां सास्य देवतेत्यस्मिन् विषये इकण् प्रत्ययो भवति । अणोऽपवादः । महाराजो देवतास्य माहाराजिकः । माहाराजिकी । *प्रौष्ठपदिकः । प्रौष्ठपदिकी ॥ ११० ॥ कालाद्भववत् ॥ ६ । २ । १११ ॥ कालविशेषवाचिभ्यो नामभ्यो यथा भवेऽर्थे प्रत्यया वक्ष्यन्ते तथा सास्य देवतेत्यस्मिन् विषये भवन्ति । नत्सर्वरात्रवृत्त्यर्थः । तेन यकाभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया भवेऽर्थे भवन्ति ताभ्य एव प्रकृतिभ्यस्तेनैव विशेषणेन त एव प्रत्यया इह भवन्ति । यथा मासे भवं मासिकम् सांवत्सरिकम् हैमनम् वासन्तम् प्रावृषेण्यम् तथा मासो देवतास्य मासिकम् सांवत्सरिकम् हैमनम् वासन्तम् प्रावृषेण्यम् ॥ १११ । *आदेश्छन्दसः प्रगाथे ॥ ६ । २ । ११२ ॥ सेति प्रकृतिरस्येति प्रत्ययार्थश्चानुवर्तते । तयोर्यथाक्रमं विशेषणे आदेश्छन्दस इति प्रगाथे इति च। सेति प्रथमान्तादादिभूतात् छन्दसोऽस्येति षष्ठ्यर्थे प्रगाथेऽभिधेये यथाविहित प्रत्ययो भवति। यत्र द्वे ऋचौ *प्रग्रन्थनेन *प्रकर्षगानेन वा तिस्रः क्रियन्ते स मन्त्रविशेषः प्रगाथः। पङ्क्तिरादिर्यस्य प्रगाथस्य स पाङ्क्तः प्रगाथः। एवमानुष्टुभः। जागतः। आदेरिति किम्। अनुष्टुब् मध्यमस्य प्रगाथस्य। छन्दस इति किम्। उदित्ययं शब्द आदिरस्य प्रगाथस्य। प्रगाथ इति किम्। पङ्क्तिरादिरस्य *अनुवाकस्य॥११२॥ योद्धृप्रयोजनाद्युद्धे॥६।२।११३॥सेति प्रथमा-

---

-कसोमाट्ट्यण्॥ -अथ कायमित्यत्र लोपात्स्वरादेश इति न्यायेन लोपात्पूर्वं वृद्धौ कृतायां पश्चादाकारलोप कस्मान्न भवतीत्याह-कशब्दं प्रतीति।अकारस्याकारस्य वा लोपे विशेषाभावात्।यद्वा सकृद्गते स्पर्धे यद्बाधित तद्बाधितमेवेत्युपतिष्ठते ॥-वाय्वृतुपित्रु-॥-उषस्यमिति। सन्ध्यावाचक· स्त्रीलिङ्ग प्रभातवाचकस्तु नपुंसकलिङ्ग ।उषा देवतास्येति विग्रह ॥-महाराज-॥-प्रौष्ठपदिक इति।प्रोष्ठो गौस्तस्येव पादावस्य सुप्रातसुश्व-' इति डे निपात प्रोष्ठपदः पुंरूप नामग्रहणेपि स्त्रीलिङ्गोपि नक्षत्रवाची प्रोष्ठपदाशब्दो ग्राह्य । यदा प्रोष्ठपदासु जात ' जाते ' इत्यण् तदा ' प्रोष्ठभद्राज्जाते ' इत्युत्तरपदवृद्धौ प्रोष्ठपाद इति स्यात् । बहुलग्रहणाद्बहुलमन्येभ्य इति जातार्थीयस्याणो न लुप् । बहुलग्रहणस्य लक्ष्यानुसारार्थत्वेन व्याख्यातत्वात् ॥—आदेश्छन्दस-॥—प्रगाथे इति । प्रग्रथ्यते घञ् । अत एव निर्देशात् रनकारयोर्लोप. प्रगीयते वा कामिगुणाभ्यस्य ॥— प्रग्रन्थनेन प्रकृष्टरचनाविशेषेण ॥-प्रकर्षगानेन उच्चारविशेषेणेत्यर्थ ॥—अनुवाकस्येति । अनुवाक पाठविशेष. तस्य ॥—

न्तात् योद्धवाचिनः प्रयोजनवाचिनश्चास्येति पष्ठ्यर्थे युद्धेऽभिधेये यथाविहितं प्रत्ययो भवति। विद्याधरा योद्धारः अस्य युद्धस्य वैद्याधरं युद्धम्। भारतं युद्धम्। प्रयोजनं
प्रवृत्तिसाध्यं फलम्। सुभद्रा प्रयोजनमस्य युद्धस्य सौभद्रं युद्धम्। सौतारं युद्धम्। अत्र सुभद्रादिशब्दस्तत्प्राप्तौ वर्तत इति प्रयोजनम् । योद्धृप्रयोजनादिति किम्।
मासोऽस्य युद्धस्य। युद्ध इति किम्। सुभद्रा प्रयोजनमस्य वैरस्य ॥ ११३ ॥ *भावघञोऽस्यां णः ॥ ६ । २ । ११४॥ सेति प्रकृतिविशेषणमनुवर्तते । भावे
यो घञ् तदन्तात् प्रथमान्तादस्यामिति स्त्रीलिङ्गे सप्तम्यर्थे णः प्रत्ययो भवति। प्रपातोऽस्यां वर्तते तिथौ *प्रापाता। एवं दाण्डाघाता। मौसलपाता भूमिः। भाव-
ग्रहणं किम्। प्राकारोऽस्याम्। प्रासादोऽस्याम्। घञ इति किम्। श्येनपतनमस्याम्। स्त्रीलिङ्गग्रहणादिह न भवति। दण्डपातोऽस्मिन् दिवसे। इतिकरणानुवृत्तेः
क्वचिन्न भवति। द्रोणपाकोऽस्यां स्थाल्याम्। केवलाच्च भावे घञन्तान्न भवति॥ ११४ ॥ श्यैनंपाता तैलंपाता ॥ ६ । २ । ११५ ॥ श्येनशब्दस्य तिलशब्दस्य
च भावघञन्ते पातशब्दे परे मान्तो निपात्यते। प्रत्ययस्तु पूर्वेणैव सिद्धः। श्येनपातोऽस्यां वर्तते श्यैनंपाता । तिलपातोऽस्यां वर्तते तैलंपाता तिथिः क्रियाभूमिः
क्रीडा वा॥११५॥ *प्रहरणात् क्रीडायां णः॥६।२।११६ ॥ प्रहरणवाचिनः प्रथमान्तादस्यामिति सप्तम्यर्थे क्रीडायां णःप्रत्ययो भवति।दण्डः प्रहरणमस्यां क्रीडायां
दाण्डा।एवं मौष्टा पादा क्रीडा। प्रहरणादिति किम्। माला भूषणमस्या क्रीडायाम्। क्रीडायामिति किम्। खड्गः प्रहरणमस्यां सेनायाम्। यत्राद्रोहेण घातप्रतिघातौ
स्यातां सा क्रीडा। 'भावघञोऽस्यां णः' (६-२-११४) इत्यनन्तरो णो नानुवर्तते क्रीडाया अर्थान्तरत्वात् यथा पूर्वसूत्रोपात्तः *समूहाद्यर्थेषु ततो यथाविहितमेव
प्रत्ययो भवेदितीह पुनर्णग्रहणम् ॥ ११६ ॥ *तद्वेत्त्यधीते ॥ ६ । २ । ११७ ॥ तदिति द्वितीयान्तात् वेत्ति अधीते वेत्त्येतयोरर्थयोर्यथाविहितं प्रत्ययो भवति ।
मुहूर्तं वेत्ति मौहूर्तः। एवमौत्पातः। नैमित्तः। केचित्तु मुहूर्तनिमित्तशब्दौ न्यायादौ पठन्ति तन्मते मौहूर्तिकः नैमित्तिकः। छन्दोऽधीते छान्दसः। व्याकरणं वेत्य-
धीते वा वैयाकरणः। नैरुक्तः। घटं वेत्ति पटं वेत्तीत्यादावनभिधानान्न भवति। केचित्तु वेदनाध्ययनयोरेकविषयतायामेवेच्छन्ति। तन्मते *अग्निष्टोमं यज्ञं वेत्तीत्यादावपि
प्रत्ययो न भवति ॥ ११७ ॥ *न्यायादेरिकण् ॥ ६ ॥ २ । ११८ ॥ न्यायादिभ्यो वेत्त्यधीते वेत्यर्थे इकण् प्रत्ययो भवति । न्यायं वेत्त्यधीते वा नैयायिकः ।
नैयासिकः। न्याय न्यास लोकायत पुनरुक्त परिषद् चर्चा क्रमेतर श्लक्ष्ण संहिता पदे पद क्रम संघट संघटा वृत्ति संग्रह आयुर्वेद गण गुण स्वागम इतिहास पुरा-
ण भारत ब्रह्माण्ड आख्यान द्विपदा ज्योतिष गणित अनस्त लक्ष्य लक्षण अनुलक्ष्य सुलक्ष्य वसन्त वर्षा शरद् वर्षाशरद् हेमन्त शिशिर प्रथम चरम प्रथमगुण

---

भावघञोस्या ण ॥—प्रापातेति।यद्यपि प्रत्यय प्रकृत्यादेरिति न्यायेन पात इत्येतदेव घञन्त न समुदायस्तथापि कृत्सगतिकारकस्यापीति प्रपातादि समुदायो घञन्त एव॥—प्रहरणात् ॥—समूहाद्यर्थेष्वि-
ति । 'श्रवणाश्वत्थान्नाम्न्य ' इत्यनेनोपात्तोऽप्रत्यय. 'षष्ठ्याः समूहे' इत्यत्र यथा नानुवर्तते । अन्यथा भावघञोस्या ण इत्यतोधिकारायातेनैव सिध्यति —॥—तद्वेत्त्यधीते ॥—अग्निष्टोमं
यज्ञमिति । यज्ञो हि क्रियारूपस्तस्य च ज्ञानमेव घटते नाध्ययनम्। ते च यत्र ज्ञानाध्ययने द्वे अपि घटेते तत्रैव प्रत्ययमिच्छन्ति नान्यत्र ॥—न्यायादेरिकण् ॥ ननु न्याय' प्रतिपत्त्युपाय
प्रज्ञाविशेषः कश्चिदुच्यते । तस्य च वेदनमेव संभवति नाध्ययन तत्कथमुच्यते न्यायं वेत्त्यधीते वेति । नैष दोष. । न्यायाभिप्रायिशास्त्रस्यापि तादर्थ्यान्न्यायशब्देनाभिधानात्तस्य च वेदनाध्ययनयो

चरमगुण अनुगुण अथर्वन् आथर्वण । इति न्यायादिः ॥ ११८ ॥ *पदकल्पलक्षणान्तक्रत्वाख्यानाख्यायिकात् ॥ ६ । २ । ११९ ॥ पदकल्पलक्षणशब्दान्तेभ्यः क्रत्वाख्यानाख्यायिकावाचिभ्यश्च वेत्त्यधीते वेत्यर्थे इकण् प्रत्ययो भवति । पदान्त, पौर्वपदिकः । औत्तरपदिकः । आनुपदिकः । बहुप्रत्ययपूर्वोत्पदशब्दान्न भवति *अनभिधानात् । कल्पान्त, मातृकल्पिकः । पैतृकल्पिकः । पाराशरकल्पिकः । श्राद्धकल्पिकः । लक्षणान्त, गौलक्षणिकः । आश्वलक्षणिकः । हास्तिलक्षणिकः । आनुलक्षणिकः । सौलक्षणिकः । लाक्षणिक इति न्यायादित्वात् सिद्धम् । क्रतु, आग्निष्टोमिकः । वाजपेयिकः । ज्यौतिष्टोमिकः । राजसूयिकः । *आख्यान, *यावक्रीतिकः । *यावक्रिकः । प्रैयंगविकः । प्रैयंगुकः । आग्निमारकिकः । आख्यायिका, वासवदत्तिकः । सौमनोहरिकः ॥ ११९ ॥ *अकल्पात् सूत्रात् ॥ ६ । २ । १२० ॥ कल्पशब्दवर्जितात्परो यः सूत्रशब्दस्तदन्ताद्वेत्त्यधीते वेत्यर्थे इकण् प्रत्ययो भवति । वार्तिसूत्रिकः । सांग्रहसूत्रिकः । अकल्पादिति किम् । *सौत्रः । काल्पसौत्रः ॥ १२० ॥ अधर्मक्षत्रत्रिसंसर्गाङ्गाद्विद्यायाः ॥ ६ । २ । १२१ ॥ धर्म क्षत्र त्रि संसर्ग अङ्ग इत्येतच्छब्दवर्जितात्परो यो विद्याशब्दस्तदन्ताद्वेत्त्यधीते वेत्यर्थे इकण् प्रत्ययो भवति । वायसविद्यिकः।सार्पविद्यिकः । अधर्मादेरिति किम्।वैद्यः।धार्मविद्यः।क्षात्रविद्यः।त्र्यवयवा विद्या त्रिविद्या तां वेत्त्यधीते वा त्रैविद्यः। अत्र त्रिविद्याशब्दस्य कर्मधारयस्यैव ग्रहणम् न द्विगोः । तत्र लुपि सत्यामणिकणोर्विशेषाभावात् । त्रिविद्यः । सांसर्गविद्यः । आङ्गविद्यः ॥ १२१ ॥ *याज्ञिकौक्थिकलौकायितिकम् ॥ ६ । २ । १२२ ॥ याज्ञिकादयः शब्दा वेत्त्यधीते वेत्यर्थे इकणप्रत्ययान्ता निपात्यन्ते । याज्ञिकेति यज्ञशब्दाद्याज्ञिक्यशब्दाच्चेकण् इकयलोपश्च निपात्यते । यज्ञं याज्ञिक्यं वा वेत्त्यधीते वा याज्ञिकः । औक्थिकेति उक्थशब्दः केषुचिदेव सामसु रूढः । यज्ञायज्ञीयात्*परेण यानि गीयन्ते न च तेषु वर्तमानात्प्रत्यय इष्यते किं तर्हि तद्व्याख्याने औक्थिक्ये उपचारेण वर्तमानात् । उक्थमधीते औक्थिकः । औक्थिक्यमधीते इत्यर्थः । औक्थिक्यशब्दात्तु प्रत्ययो न भवत्यनभिधानात् । तस्मादपीच्छन्त्येके । औक्थिक्यमधीते औक्थिकः । लौकायितिकेति लोकायतशब्दादिकण् यकाराकारस्य चेकारो निपात्यते । लोकायतं वेत्त्यधीते वा लौकायितिकः । लौकायतिका इति तु न्यायादिपाठात्सिद्धम् ॥ १२२ ॥ अनुब्राह्मणादिन् ॥ ६ । २ । १२३ ॥ अनुब्राह्मणशब्दाद्वेत्त्यधीते वेत्यर्थे इन् प्रत्ययो भवति । ब्रह्मणा प्रोक्तो ग्रन्थो ब्राह्मणम् । ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणम् । सदृशार्थेऽव्ययीभावः । तद्वेत्त्यधीते वानुब्राह्मणी । अनुब्राह्मणिनौ । अनुब्राह्मणिनः । मत्वर्थीयेनैवेना सिद्धे अनभिधानाच्च इकस्याप्रवृत्तावण्बाधनार्थमिनो विधानम् ॥ १२३ ॥ शतषष्टेः पथ इकट् ॥ ६ । २ । १२४ ॥ शतषष्टि इत्ये-

---

सभवादिति । एवं पूर्वसूत्रेऽप्यग्निष्टोमप्रतिपादकग्रन्थस्य वेदनाध्ययने सभवतः । न्यायशास्त्र वा ॥—पदकल्प—॥—अनभिधानादिति । यथा ईषदपरिसमाप्तं पद बहुपदं तद्वेत्त्यधीते वा ॥—आख्यानेति । अभिनयति गायन् पठन् यदेको ग्रन्थकृस्तदाख्यानम् । आख्यानशब्दस्य न्यायादिपाठादेव इकण् सिद्ध इत्यर्थप्रधानोयम् । एतत्साहचर्याच्च क्रत्वादीनामप्यर्थप्रधानानां ग्रहः ॥—यावक्रीतिक इति । यवैः क्रीतं यवाः क्रीता अस्मिन्निति वा यवक्रीतनामाख्यानम् । यवान् क्रीणातीति यवक्रीस्तमधिकृत्य कृतमाख्यानम् ‘ अमोधिकृत्य–’ इत्यणि यावक्र ततस्तद्वेत्त्यधीते वेतीकणि यावक्रिकः ॥—अकल्पात्सूत्रात् ॥—सौत्र इति । अकल्पादिति पर्युदासेन पूर्वपदाभावे न भवति ॥—याज्ञिकौक्थिक—॥—परेणेति । अन्यत्र. पराणीत्यर्थ. ॥

ताभ्यां परो यः पथिन् शब्दस्तदन्तात्तद्वेत्त्यधीते वेत्यर्थे इकट् प्रत्ययो भवति । शतपथिकः । शतपथिकी । षष्टिपथिकः । षष्टिपथिकी ॥ १२४ ॥ *पदोत्तरपदेभ्य इकः ॥ ६ । २ । १२५ ॥ पदशब्द उत्तरपदं यस्य तस्मात्पदशब्दात्पदोत्तरपदशब्दाच्च वेत्त्यधीते वेत्यर्थे इकः प्रत्ययो भवति।पूर्वपादिकः ।उत्तरपदिकः । पूर्वपदिका । उत्तरपदिका । पद पादिकः । पदिका । पदोत्तरपदिकः । पदोत्तरपदिका । बहुवचनं सर्वभङ्गपरिग्रहार्थम् ॥ १२५ ॥ *पदक्रमशिक्षामीमांसासाम्नोऽकः ॥ ६ । २ । १२६ ॥ पद क्रम शिक्षा मीमांसा सामन् इत्येतेभ्यो तद्वेत्त्यधीते वेत्यर्थेऽकः प्रत्ययो भवति । पदकः । क्रमकः। शिक्षकः । मीमांसकः । सामकः । उपनिषच्छब्दादपीच्छति कश्चित् । उपनिषदकः। के सति शिक्षाका शिक्षिका शिक्षका।मीमांसाका मीमांसिका मीमांसकेति *रूपत्रयं स्यात् । शिक्षिका मीमांसिकेति चेष्यते । तदर्थमेकवचनम् ॥ १२६ ॥ ससर्वपूर्वाल्लुप् ॥ ६ । २ । १२७ ॥ सपूर्वात्सर्वपूर्वाच्च वेत्त्यधीते वेत्यर्थे विहितस्य प्रत्ययस्य लुप् भवति ।सवार्तिकमधीते सवार्तिकः। ससंग्रहः । अणो लुप् । सकल्पः । अत्रेकणः । सर्ववेदः । सर्वतन्त्रः । अत्राणः । सर्वविद्यः । अत्रेकणः । कथं द्विवेदः पञ्चव्याकरण इति । ' द्विगोरनपत्ये यस्वरादेर्लुबद्विः ' ( ६-१-२४ ) इति लुपि भविष्यति ॥ १२७ ॥ *संख्याकात्सूत्रे ॥ ६ । २ । १२८॥ संख्यायाः परो यः कः प्रत्ययो विहितस्तदन्तात्सूत्रे वर्तमानात् नाम्नो वेत्त्यधीते वेत्यर्थे उत्पन्नस्य प्रत्ययस्य लुब् भवति। *अप्रोक्तार्थ आरम्भः।अष्टावध्यायाःपरिमाणमस्य अष्टकं सूत्रम्।तद्विदन्ति अधीयते वा अष्टकाःपाणिनीयाः। आपिशलीयाः। त्रिकाः काशकृत्स्नाः।दशका उमास्वातीयाः।द्वादशका आर्हताः।संख्याग्रहणं किम् । *माहावार्तिकाः। *कालापकाः। कादिति किम् । चतुष्टयं सूत्रमधीयते चातुष्टयाः ॥१२८॥ *प्रोक्तात् ॥६।२।१२९॥ प्रोक्तार्थविहितः प्रत्यय उपचारात् प्रोक्त इत्युच्यते । तदन्तान्नाम्नो वेत्त्यधीते वेत्यर्थे उत्पन्नस्य प्रत्ययस्य लुब् भवति। गोतमेन प्रोक्तं गौतमम् । तद्वेत्त्यधीते वा गौतमः । *सुधर्मेण सुधर्मणा वा प्रोक्तं सौधर्मम् सौधर्मणं वा तद्वेत्त्यधीते वा सौधर्मः सौधर्मणः । एवं भाद्रबाहवः । पाणिनीयः । आपिशलः । *स्त्रियां विशेषः । गौतमा सौधर्मा सौधर्मणा स्त्री इत्यादि । अणो लुप्यणन्तत्वाभावात् *ङीर्न भवति ॥ १२९ ॥ *वेदेन्ब्राह्मणमत्रैव ॥ ६ । २ । १३० ॥ प्रोक्तग्रहणमिहानुवर्तते । तच्च *प्रथमान्तं विपरिणम्यते । प्रोक्तप्रत्ययान्तं वेदवाचि इनन्तं च ब्राह्मणवाचि अत्रैव वेत्त्यधीते वेत्येतद्विषये एव

---

*-पदोत्तरपदेभ्य ॥ पदशब्द उत्तरपद यस्य पदोत्तरपदश्च पदश्च पदोत्तरपदश्च सूनत्वादेकशेष ॥—पदक्रम—॥—रूपत्रयमिति ' इचापुंसोनित्क्याप्परे ' इत्यनेन ॥—संख्याका—॥-अप्रोक्तार्थ आरम्भ इति । अन्यथोत्तरेणैव सिध्यति । त्रयोदश चाध्याया मानमस्य अवयवात्तयट्बाधक सख्याउते' क' । त्रिक दशक च विदन्त्यधीयते वा त्रिका दशका ॥—माहावार्त्तिका इति । महद्वार्त्तिकमस्य सूत्रस्य तद्विदन्तीत्यादि ॥—कालापका इति । वृहत्तन्त्रात् कलामापिबन्ति ' कीचक-' इति साधु । कलापकाः शास्त्राणि तान् विदन्त्यधीयते वा यदा तु ' क्वचित् ' इति डे कलापोस्यास्ति कलापिना प्रोक्त ' तेन प्रोक्त-' इत्यण् ' कलापि-' इत्यन्त्यस्वरादिलुप् । कुत्सित कालाप कालापक तद्विदन्ति अधीयते वा तदा लुप्यलुपि वा न विशेषो वृद्धेस्तथैव सद्भावात्॥-प्रोक्तात्—॥-सुधर्मेणेति । शोभनो धर्मो यस्य ' द्विपदाद्धर्मादन् ' इत्यस्यैकेषां मते विकल्पः ॥—स्त्रियां विशेष इति । नन्वत्र प्रत्ययलुप्यलुपि वाऽविशेषस्तत्किमर्थमिद सूत्रमित्याशङ्का ॥—ङीर्न भवति ।अत्र हि यस्यां स्त्रिया योऽण् विहित, स लुप्त. यश्च विद्यते तस्य न स्त्री॥—वेदेन्ब्राह्मण—॥—प्रथमान्तमिति । अर्थवशाद्विभक्तिपरिणाम ॥

प्रयुज्यते । तेन *स्वातन्त्र्यम् *उपाध्यन्तरयोगो वाक्यं च निवर्तते । वेद, कठेन प्रोक्तं वेदं विदन्त्यधीयते वा कठाः । एवं कलापिना कालापाः । *मौदेन मौदाः। *पैप्पलादेन पैप्पलादाः । *ऋचाभेन आर्चाभिनः । वाजसनेयेन वाजसनेयिनः । इन् ब्राह्मणं खल्वपि । ताण्ड्येन प्रोक्तं ब्राह्मणं विदन्त्यधीयते वा ताण्डिनः । भाल्लविना भाल्लविनः । शाट्यायनिना शाट्यायनेन वा शाट्यायनिनः । ऐतरेयेण *ऐतरेयिणः । इन्ग्रहणं किम् । याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानि । 'शकलादेर्यञः' (६-३-२७) इत्यञ् । सौलाभेन सौलाभानि । 'मौदादिभ्यः' (६-३-१८०) इत्यण् । ब्राह्मणमिति किम् । पिङ्गेन प्रोक्तः पैङ्गी कल्पः । ब्राह्मणं वेद एव तत्र वेद इत्येव सिद्धे अनिनन्तस्य नियमनिवृत्त्यर्थमिनब्राह्मणग्रहणम् । *प्रोक्तानुवर्तनं किमर्थम् ।ऋचः यजूंषि सामानि मन्त्राः वेदः ।आरम्भसामर्थ्यादवधारणे सिद्धे उभयावधारणार्थमेवकारः । प्रोक्तप्रत्ययान्तस्यात्रैव वृत्तिर्नान्यत्र तथात्र वृत्तिरेव न केवलस्य प्रोक्तप्रत्ययान्तस्यावस्थानम् । अन्यत्र त्वनियमात्कचित्स्वातन्त्र्यं भवति । अर्हता प्रोक्तमार्हतं शास्त्रम् । क्वचिदुपाध्यन्तरयोगः । आर्हतं महत्सुविहितमिति । क्वचिद्वाक्यम् । आर्हतमधीते । क्वचिद्वृत्तिः *आर्हत इति । इह पुनर्नियमाद्युगपदेव विग्रहः । कठेन प्रोक्तमधीयते कठा इति ॥ १३० ॥ *तेन छन्ने रथे ॥ ६ । २ । १३१ ॥ छन्न इति प्रत्ययार्थो रथ इति तस्य विशेषणम् । तेनेति तृतीयान्तात् छन्ने रथेऽभिधेये यथाभिहितं प्रत्ययो भवति । वस्त्रेण छन्नो रथः वास्त्रः । काम्बलः । चार्मणः । द्वैपेन चर्मणा द्वैपः । वैयाघ्रेण वैयाघ्रः । रथ इति किम् । वस्त्रेण छन्नः कायः । छन्नशब्देन समन्ताद्वेष्टितं व्याप्तमुच्यते । तेनेह न भवति । पुत्रैः परिवृतो रथः । इह *कथमण् भवति । न विद्यते पूर्वः पतिर्यस्याः सा अपूर्वा कुमारी तादृशीं कुमारीमुपपन्नः कौमारः पतिरिति । तत्र 'भवे' (६-३-१२२) इत्यण् भविष्यति । कुमार्यां भवः कौमारः पतिः धवयोगे तु कौमारी भार्येत्यपि सिद्धम् ॥ १३१ ॥ पाण्डुकम्बलादिन् ॥ ६ । २ । १३२ ॥ पाण्डुकम्बलशब्दात्तृतीयान्ताच्छन्ने रथे वाच्ये इन् प्रत्ययो भवति । अणोऽपवादः ।

---

-स्वातन्त्र्यमिति।वेत्यधीते वेत्यर्थरहितं न प्रयुज्यत इत्यर्थ ॥-उपाध्यन्तरयोग इति । कठेन प्रोक्त शोभनं वेद विदन्त्यधीयते वा इति विशेषणयोगो न भवतीत्यर्थ । मुदपिप्पलादाभ्यामृष्याणि मौद ।पैप्पलादः। ततो 'मौदादिभ्य' इतीयापवादोऽण् । ऋग्भिराभातीति ऋगाभ । पृषोदरादित्वात् गस्य चत्वे ऋचाभ । तत. प्रोक्ते शौनकादित्वाण्णिन्।तदन्तादणो लुप्।वाजसनाया अपत्यं 'ड्याप्यूड' एयण्।शौनकादित्वाण्णिन् ततोऽण् लुप् । तण्डिन्शब्दाद्गर्गादियञन्तात्शौनकादित्वाण्णिनि ततोऽणो लुप् । भल्लवशब्दादिञन्तात्प्रोक्तार्थे पूर्ववण्णिनादय ॥—शाट्यायनिन इति । शटशब्दात् गर्गादियञन्तात् तिकाद्यायनिञ् । एके त्वयञन्त तिकादौ पठन्ति तन्मते 'यञिञ'इत्यायनणि पूर्ववत् शौनकादित्वात् णिन्नादौ शाट्यायनिन. । इतरस्यापत्य शुभ्रादित्वादेयणि ऐतरेय । ततः पूर्ववण्णिनादौ ऐतरेयिणः ॥—इन्ग्रहणमिति । तेन याज्ञवल्कानि ब्राह्मणानीत्यनिनन्तस्य वेद इति नियमो निवर्त्तते ॥—प्रोक्तानुवर्त्तनमिति । अयमर्थः ऋगादयः शब्दा वेदवाचिनो भवन्ति न तु प्रोक्तप्रत्ययान्ता इति । यदि प्रोक्तग्रहण नानुवर्त्तेत तदात्रापि वेत्यधीते वेत्येतद्विषय एवेति प्रयोगनियमः प्रसज्येत ततश्च ऋचस्तिष्ठन्ति इत्यादि वक्तु न लभ्येत ॥—आर्हत इतीति । अर्हता प्रोक्त 'तेन प्रोक्त-' इत्यण् आर्हत वेत्यधीते वा अण् तस्य लुप् ॥—तेन—॥—वैयाघ्रेणेति । व्याघ्रस्य विकार. 'प्राण्यौषधि-इत्यण् । इदमर्थे त्वीय स्यात् ॥—कथमण् भवतीति । परैस्तावदत्र कौमारापूर्ववचन इति कौमारशब्दोऽणन्तो वृत्तिप्रदर्शितेऽर्थे निपात्यते । स्वमते त्वस्मिन्नर्थेऽणविधायकसूत्राभावात् कथमित्याशङ्का ॥

पाण्डुकम्बलेन छन्नः पाण्डुकम्बली रथः ॥ १३२ ॥ *दृष्टे साम्नि नाम्नि ॥ ६ । २ । १३३ ॥ दृष्ट इति प्रत्ययार्थस्तस्य साम्नीति विशेषणम्। तेनेति तृतीयान्तात् दृष्टं सामेत्यस्मिन् अर्थे यथाविहितं प्रत्ययो भवति नाम्नि प्रत्ययान्तं चेत्साम्नो नाम भवति । *क्रुञ्चेन दृष्टं साम क्रौञ्चम् । मृगीयुणा मार्गीयवम् । एवं मायूरम् । तैत्तिरम् । वासिष्ठम् । वैश्वामित्रम् । कालेयम् । आग्नेयम् । एवंनामानि सामानि ॥ १३३ ॥ गोत्रादङ्कवत् ॥ ६ । १ । १३४ ॥ गोत्रवाचिनस्तृतीयान्तात् दृष्टं सामेत्यस्मिन्नर्थे अङ्कवत् प्रत्ययो भवति । यथा तस्यायमङ्क इत्यत्रेदमर्थे प्रत्ययो भवति तथा दृष्टं सामेत्येतस्मिन्नर्थेऽपि । औपगवेन दृष्टं साम औपगवकम् । कापटवकम् । वाहतवकम् । अङ्क इति विशेषोपादानेऽपि तस्येदमित्यर्थमात्रं परिगृह्यते ॥ १३४ ॥ वामदेवाद्यः ॥ ६ । २ । १३५ ॥ वामदेवशब्दात्तृतीयान्तात् दृष्टे सामनि यः प्रत्ययो भवति । वामदेवेन दृष्टं साम वामदेव्यम् ॥ १३५ ॥ डिद्वाण् ॥ ६ ॥ २ । १३६ ॥ दृष्टं सामेत्यस्मिन्नर्थे योऽण् प्रत्ययो विहितः स डिद्वा भवति । उशनसा दृष्टं साम औशनम् । औशनसम् ॥ १३६ ॥ * वा जाते द्विः ॥ ६ । २ । १३७ ॥ जात इत्यस्मिन्नर्थे योऽण् प्रत्ययो द्विर्विहित उत्सर्गेण प्राप्तोऽपवादेन बाधितः सन् पुनर्विहितः स डिद्वा भवति । शतभिषजि जातः *शातभिषः शातभिषजः । द्विरिति किम् । हिमवति जातो हैमवतः । केचित्तु द्विर्डित्त्वमिच्छन्ति । तन्मते द्विर्डित्त्वात् द्विरन्त्यस्वरादिलोपे शातभ इत्यपि भवति । एवं पूर्वसूत्रेऽपि । औशं साम । एवं च योगद्वयेऽपि त्रैरूप्यं सिद्धम् ॥ १३७ ॥ तत्रोद्धृते पात्रेभ्यः ॥ ६ । २ । १३८ ॥ तत्रेति सप्तम्यन्तात्पात्रवाचिनः उद्धृत इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । शरावेषु उद्धृत ओदनः शारावः । माल्लकः । कार्परः । पात्रेभ्य इति किम् । पाणावुद्धृत ओदनः । बहुवचनं पात्रविशेषपरिग्रहार्थम् ॥१३८॥ स्थण्डिलाच्छेते व्रती ॥६। २ ।१३९ ॥ स्थण्डिलशब्दात्सप्तम्यन्ताच्छेते इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति योऽसौ शेते स चेद्व्रती भवति । तत्र शयनव्रतोऽन्यत्र शयनान्निवृत्त इत्यर्थः । स्थण्डिल एव शेते स्थाण्डिलो भिक्षुः । व्रती इति किम् । स्थण्डिले शेते बालः ॥ १३९ ॥ संस्कृते भक्ष्ये ॥ ६ । २ । १४० ॥ संस्कृत इति प्रत्ययार्थः । तस्य विशेषणं भक्ष्य इति । तत्रेति सप्तम्यन्तात्संस्कृते भक्ष्ये यथाविहितं प्रत्ययो भवति । सत उत्कर्षाधानं संस्कारः । भ्राष्ट्रे संस्कृता भ्राष्ट्रा अपूपाः । एवं कैलासाः । पात्राः । भक्ष्ये किम् । फलके संस्कृता माला ॥ १४० ॥ शूलोखाद्यः ॥ ६ । २ । १४१ ॥ शूलोखाशब्दाभ्यां सप्तम्यन्ताभ्यां संस्कृते भक्ष्ये यः प्रत्ययो भवति । शूले संस्कृतं शूल्यं मांसम् । उखायाम् उख्यम् ॥ १४१ ॥ क्षीरादेयण् ॥ ६ । २ । १४२ ॥ क्षीरशब्दात्सप्तम्यन्तात्संस्कृते भक्ष्ये एयण् प्रत्ययो भवति । क्षीरे संस्कृतं भक्ष्यं क्षैरेयम् । क्षैरेयी यवागूः ॥ १४२ ॥ दध्न इकण् ॥ ६ । २ । १४३ ॥ दधिशब्दात्सप्तम्यन्तात् संस्कृते भक्ष्ये इकण् प्रत्ययो भवति । दध्नि संस्कृतं भक्ष्यं दाधिकम् । ननु च संस्कृतार्थे इकण्

---

--दृष्टे--॥--क्रुञ्चेनेति । नड्वादिगणपाठात् क्रुञ्चाशब्दस्य ह्रस्व ॥--षा जा --॥--शातभिष इति । शत भिषजोऽस्याः शतभिषजा चन्द्रयुक्तया युक्त कालेऽण् लुप् । 'जाते' इत्यणो बाधको 'वर्षाकालेभ्य.' इकण्पुनस्तद्बाधको 'भर्तुसन्ध्यादेरण्' इत्याचार्यश्रीहेमचन्द्र० षष्ठस्याध्यायस्य द्वितीय' पाद समाप्तः ॥ दृष्ट ॥ ॥ ॥ ॥ ॥ ॥

वक्ष्यते तेनैव सिद्धम् । न सिध्यति । दध्ना हि तत्संस्कृतं यस्य दधिकृतमेवोत्कर्षाधानम् । इह तु दधि केवलमाधारभूतं द्रव्यान्तरेण तु लवणादिना संस्कारः क्रियते ॥ १४३ ॥ वोदश्वितः ॥ ६ । २ । १४४ ॥ उदश्वित्छब्दात्सप्तम्यन्तात् संस्कृते भक्ष्ये इकण् प्रत्ययो वा भवति । उदकेन श्वयति उदश्वित् । अत एव निर्देशाद्धत्वदभावः तत्र संस्कृतं भक्ष्यमौदश्वितम् औदश्वित्कम् ॥ १४४ ॥ क्वचित् ॥ ६ । २ । १४५ ॥ अपत्यादिभ्योऽन्यत्राप्यर्थे क्वचिद्यथाविहितं प्रत्ययो भवति । चक्षुषा गृह्यत इति चाक्षुषं रूपम् । श्रावणः शब्दः । रासनो रसः । दृषदि पिष्टा दार्षदाः सक्तवः । उदूखले क्षुण्ण औदूखलो यावकः । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । चतुर्भिरुह्यते चातुरं शकटम् । अश्वैरुह्यते आश्वो रथः । संप्रति युज्यते सांप्रतम् सांप्रतः ॥ १४५ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ षष्ठस्याध्यायस्य द्वितीयः पादः ॥ ६ । २ ॥ ६ ॥ मृदित्वा दोःकण्डूं समरभुवि वैरिक्षितिभुजाम् भुजादण्डे दधुः कति न नवखण्डां वसुमतीम् ॥ यदेवं साम्राज्ये विजयिनि वितृष्णेन मनसा यशो योगीशानां पिबसि नृप तत्कस्य सदृशम् ॥१॥

## ॥ तृतीयः पादः ॥

*शेषे ॥६।३।१॥ अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमिष्यामः शेषेऽर्थे तद्वेदितव्यम् । उपयुक्तादन्यः शेषः । अपत्यादिभ्यः संस्कृतभक्ष्यपर्यन्तेभ्यो योऽन्योऽर्थः स शेषः । *तस्येदंविशेषा ह्यपत्यसमूहादयः *तेषु वक्ष्यमाणा एयणादयो मा भूवन्निति शेषाधिकारः क्रियते । *किंच सर्वेषु प्राक् जितात् कृतादिषु वक्ष्यमाणाः प्रत्यया यथा स्युः अनन्तरेणैवार्थनिर्देशेन कृतार्थता माविज्ञायि इति साकल्यार्थं शेषवचनम् ॥१॥ *नद्यादेरेयण् ॥६।३।२॥ नद्यादिभ्यो यथासंभवं प्राग्जितीये शेषेऽर्थे एयण् प्रत्ययो भवति । नद्यां जातो भवो वा नादेयः । माहेयः । वानेयः । वन्य इति तु साधौ यः । शेष इति किम् । नदीनां समूहो नादिकम् । *नदी मही वाराणसी श्रावस्ती कौशाम्बी

---

शेषे॥-तस्येदमिति । एयणादयश्च तस्येदमित्यर्थे विहितास्ततश्चापत्यसमूहादिष्वपि प्राप्नुवन्ति तद्विशेषत्वात्तेषाम् ॥—तेष्विति । अपत्यसमूहादिषु अन्यथापि प्रयुक्तत्वात्तेषाम् ॥ न केवलमपत्यादिषु एयणादीना निवृत्तये शेषाधिकारः क्रियते यावत्सर्वेषु कृतजातादिषु अस्येति षष्ठ्यर्थपर्यन्तेष्वेयणादीनां प्रवृत्त्यर्थश्चेत्याह—किंचेत्यादि ॥ अयमर्थः सन्निहितत्वात् कृतलब्धक्रीतादिष्वर्थेषु एयणादीनां प्रवृत्तेरर्थवाहितेष्वर्थेषु प्रवृत्तिर्न भविष्यतीत्येव शङ्का माभूदित्यर्थः ॥—नद्या—॥ अथ गणः । नदति शब्दायते अवगाह्यमाना सती अचि नदी । मह्यते पूज्यते राजभिः महि मह इत्यकारान्तात्वा ङी मही ॥ वर आणः शब्दो येषां वराणा वृक्षाः।तेऽत्र सन्ति वराणसा भट्टारिका तस्या अदूरभवा नगरी वाराणसी ।शृण्वन्तं प्रयुङ्क्ते श्रावयति श्रावः असि श्रावसं तायते 'क्वचित्' डे गौरादित्वात् ङ्यां श्रावस्ती । कुशेनाम्बो यस्य कुशयति वा 'तुम्बस्तुम्ब' इति कुशाम्बस्तेन निर्वृत्ता कौशाम्बी नगरी वनप्रधाना कौशाम्बी नगरी वनप्रधाना कौशाम्बी कौ

वनकौशाम्बी *वनवासी *काशफरी *खादिरी पूर्वनगर *पूर्वनगरी *पुर *वन *गिरि पुर् वनगिरि *पूर्वनगिरि *पावा *मावा *माल्वा *दार्वा *सेतकी *सैतवी । इति नद्यादिः । इतः प्रभृति प्रकृतिविशेषोपादानमात्रेण प्रत्यया विधास्यन्ते तेषां कृतादयोऽर्था विभक्तयश्च परस्ताद्वक्ष्यन्ते ॥ २ ॥ राष्ट्रादियः ॥ ६ । ३ । ३ ॥ राष्ट्रशब्दात्प्राग्जितीये शेषेऽर्थे इयः प्रत्ययो भवति । राष्ट्रे क्रीतः कुशलो जातो भवो वा राष्ट्रियः । शेषे इत्येव । राष्ट्रस्यापत्यं राष्ट्रिः ॥ ३ ॥ दूरादेत्यः ॥ ६ । ३ । ४ ॥ दूरशब्दात् शेषेऽर्थे एत्यः प्रत्ययो भवति । दूरे भवो दूरेत्यः ॥ ४ ॥ *उत्तरादाहञ् ॥ ६ । ३ । ५ ॥ उत्तरशब्दाच्छेषेऽर्थे आहञ् प्रत्ययो भवति । औत्तराहः । औत्तराहा स्त्री । औत्तराहीति *उत्तराहिशब्दाद्भवार्थेऽणि ॥ ५ ॥ पारावारादीनः ॥ ६ । ३ । ६ ॥ पारावारशब्दाच्छेषेऽर्थे ईनः प्रत्ययो भवति । अवारस्समुद्रस्तस्य पारम् राजदन्तादित्वात्पारावारस्तत्र भवो जातो वा पारावारीणः ॥ ६ ॥ *व्यस्तव्यत्यस्तात् ॥ ६ । ३ । ७ ॥ पारावारशब्दाद्व्यस्ताद्विपर्यस्ताच्च ईनः प्रत्ययो भवति । पारीणः । अवारीणः । *अवारपारीणः ॥ ७ ॥ *द्युप्रागपागुदक्प्रतीचो यः ॥ ६ । ३ । ८ ॥ दिव्शब्दात् प्राच् अपाच् उदच् प्रत्यच् इत्येतेभ्यश्चाव्ययानव्ययेभ्यः शेषेऽर्थे यः प्रत्ययो भवति । दिवि भवं दिव्यम् । प्राचि प्राग्वा भवं प्राच्यम् । एवमपाच्यम् । उदीच्यम् । प्रतीच्यम् । दिग्देशवृत्तेः प्रागादेरयं यः कालवृत्तेस्त्वव्ययात्परत्वात् ' सायम् '—( ६–३–८७ ) इत्यादिना तनट् । अनव्ययात्तु ' वर्षाकालेभ्यः ' ( ६–३–७९ ) इतीकण् । प्राक्तनम् प्राचिकमित्यादि ॥ ८ ॥ ग्रामादीनञ् च ॥६।३।९॥ ग्रामशब्दाच्छेषेऽर्थे ईनञ् चकाराद्यश्च प्रत्ययो भवति । ग्रामीणः ग्राम्यः । ञकारः पुंवद्भावप्रतिषेधार्थः । ग्रामीणा भार्याऽस्य ग्रामीणाभार्यः॥ ९॥ *कत्र्यादेश्चैयकञ् ॥६।३।१०॥ कत्रि इत्येवमादिभ्यो ग्रामशब्दाच्च शेषेऽर्थे एयकञ् प्रत्ययो भवति । कात्रेयकः पौष्करेयकः । ग्राम, ग्रामेयकः । एवं च ग्रामशब्दस्य त्रैरूप्यं भवति । *कत्रि पुष्कर पुष्कल *पौदन

---

पृथिव्यां शाम्यति ' शम्यमे ' कुशाम्बस्तेन निर्वृत्ता कौशाम्बी नगरी वनप्रधाना कौशाम्बी । वन वासयति ' कर्मणोऽण् । ' वनवासी अटवी । ' शपेः फ च' इति शफरः । कु ईषत् शफरो मत्स्यो यस्याः ' अल्पे ' कादेशे काशफरी । खदिरा अत्र सन्ति । ' तदत्रास्ति ' खादिरी । पूर्वं च तत् नगर च । पूर्वनगर । पूर्वति 'निघृषि–' इति वापूर्वः नश्यन्ति अत्र चौरा इति नगरी । पूर्वा चासौ नगरी च । पूर्वनगरी पूर्वनगिरीति ' नाम्युपान्त्य–' इति प्रासाधि । पूर्यते । 'गृपृदुर्वी इति पुर । वन्यते ' वर्णादयः' इति वनं गिरन्ति श्वापदा अत्र ' नाम्युपान्त्य– इति गिरिः । वनप्रधानो गिरिः । वनगिरिः । न विद्यते गिरिर्यस्य नगिरिः । न गृणाति वा नगिरिः । पूर्वश्चासौ नगिरिश्च । पवमान मवमान मवन्त वा प्रयुङ्क्ते पावयति मावयति पावा । मावा । मलमान प्रयुङ्क्ते मालयति । ' प्रह्व–' इति माल्वा । दृणाति ' प्रह्व–' इति दार्वा । सा लक्ष्मीमित प्राप्त सेत को ब्रह्मा यस्यां सेतकी । गौरादित्वात्ङ्याम् । सेतु सेतुबन्धोऽत्रास्ति ' तदत्रास्ति ' सैतवी । इति नद्यादि ॥—उत्त—॥—उत्तराहिशब्दादिति । उत्तरा दिग्देशो वा रमणीय' ' वोत्तरात् ' इत्याहि प्रत्ययः । कालार्थत्वे त्वाहिप्रत्ययान्तात् ' सायंचिरम्–'इति तनडेव न त्वण् ॥—व्यस्त—॥—अवारपारीण इति । राजदन्तादित्वाद्विकल्पेन पूर्वनिपातो न ॥—द्युप्रा—॥ प्रागादय क्विबन्तास्ते धाप्रत्ययान्ता अव्ययसञ्ज्ञास्तदनुरूपत्तावमव्ययसञ्ज्ञा । विशेषानुपादानाद्भयेषामपि ग्रहणम् ॥—कत्र्या—॥ कत्र्यादिगणो विव्रियते । कुत्सितास्त्रयो धर्मार्थकामा यस्य कत्रिः । पांक् क्विप् । पा ओदनो यस्य पौदनः उभत् ।

उम्बि उम्भि औम्भि कुम्भी *कुण्डिना नगरं महिष्मती वर्मवती चर्मण्वती । इति कत्र्यादिः । नगरशब्दो महिष्मत्यादिसाहचर्यात् संज्ञायामेयकञमुत्पादयति अन्यत्राणमेव ॥ १० ॥ कुण्ड्यादिभ्यो यलुक् च ॥ ६ । ३ । ११ ॥ कुण्ड्यादिभ्यः शेषेऽर्थे एयकञ् प्रत्ययो भवति तत्संनियोगे यलुक् चैषां भवति । कौण्डेयकः । कौणेयकः । कुण्ड्या कुण्या उड्या भाण्ड्या ग्रामकुड्या तृण्या वन्या पल्या पुल्या मुल्या । इति कुण्ड्यादिः । बहुवचनं प्रयोगानुसरणार्थम् ॥ ११ ॥ कुलकुक्षिग्रीवाच्छ्वास्यलङ्कारे ॥ ६ । ३ । १२ ॥ कुलकुक्षिग्रीवा इत्येतेभ्यो यथासंख्यं श्वास्यलङ्कारविशिष्टे प्राग्जितीये शेषेऽर्थे एयकञ् प्रत्ययो भवति । अणोऽपवादः । कुले शुद्धान्वये भवो जातो वा कौलेयकः श्वा । कौलोऽन्यः । कौक्षेयकोऽसिः । यः कङ्ककुक्षिनिजीर्णेनायसा कृतः । कौक्षोऽन्यः । ग्रैवेयकोऽलंकारः । ग्रैवोऽन्यः ॥ १२ ॥ दक्षिणापश्चात्पुरसस्त्यण् ॥ ६ । ३ । १३ ॥ एभ्यः शेषेऽर्थे त्यण् प्रत्ययो भवति । अणोपवादः । दक्षिणा दिक् तस्यां भवो दाक्षिणात्यः । अथवा दक्षिणस्यां दिशि वसति ' वा दक्षिणात्प्रथमासप्तम्या आ ' ( ) इत्याप्रत्यये दक्षिणा तत्र भवो दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः । पश्चात्पुरःशब्दसाहचर्याद्दक्षिणा इति दिक्शब्दोऽव्ययं वा गृह्यते । तेनेह न भवति । दक्षिणायां भवानि दाक्षिणानि जुहोति । अत्र दक्षिणाशब्दो गवादिवचनः । अव्ययादेवेच्छन्त्येके ॥ १३ ॥ वहीऊर्दिपर्दिकापिश्याष्टायनण् ॥ ६ । ३ । १४ ॥ वहि ऊर्दि पर्दि *कापिशी इत्येतेभ्यः शेषेऽर्थे टायनण प्रत्ययो भवति । वाह्लायनः । वाह्लायनी । और्दायनः । और्दायनी । पार्दायनः । पार्दायनी । कापिशायनं मधु । कापिशायनी द्राक्षा । वल्हीति ऊष्मोपान्त्यः । केचिदत्र वकारं दीर्घान्तं पठन्ति ॥ १४ ॥ रङ्कोः प्राणिनि वा ॥ ६ । ३ । १५ ॥ रङ्कुशब्दात्प्राणिविशिष्टे शेषेऽर्थे टायनण् प्रत्ययो वा भवति । राङ्कवायणः । पक्षेऽण् । राङ्कवो गौः । प्राणिनीति किम् । राङ्कवः कम्बलः । मनुष्ये तु प्राणिन्यपि कच्छादिपाठात् ' कच्छादेर्नृनृस्थे ' ( ६-३-५४ ) इति परत्वादकञेव भवति । राङ्कवका मनुष्यः ॥ १५ ॥ क्वेहामात्रतसस्त्यच् ॥ ६ । ३ । १६ ॥ क्व इह अमा इत्येतेभ्यस्त्रतसप्रत्ययान्तेभ्यश्च शेषेऽर्थे त्यच् प्रत्ययो भवति । क्वत्यः । इहत्यः । अमात्यः । तत्रत्यः । यत्रत्यः । ततस्त्यः । यतस्त्यः । कुतस्त्यः । आविश्शब्दादपि

---

'पदिपठि-' इति मण्यादित्वादौ भस्य वा पत्वे उम्बि । उम्भि । उम्भस्यापत्यम् इञि औम्भि कुम्भाज्जातौ ङ्यां कुम्भी । कुडुङ् ' विपिन-' इति कुण्डिना । महिषा अत्र सन्ति महिष्मती । चर्माणि तनोति ' क्वचित् ' इति डे गौरादिङ्याम् ॥—संज्ञायामिति । अथमर्थो महिष्मत्यादयो नगर्यादिवाचका सज्ञाशब्दास्तत्साहचर्यान्नगरशब्दोऽपि स्थानविशेषवाची प्रत्यय जनयति न सामान्यपत्तनवाची तर्हि कथ नागरो ब्राह्मण । सत्यम् । देवतार्थे भविष्यति ॥—कुल—॥ कुक्षौ ग्रीवाया जात भवे तु ' दृतिकुक्षि ' इति ' ग्रीवातोऽण्च ' स्यात् ॥—दक्षि—॥—दाक्षिणात्य इति । 'कौण्डिन्यागस्त्ययो ' इति कोण्डिन्यनिर्देशात्पुंभावोऽनित्य । तेन ' सर्वादयोऽस्यादौ ' न । यदा त्वाप्रत्ययस्तदा अव्ययत्वात् ङेर्लुपि दक्षिणाभव पुंभावोपि न असर्वादित्वात् ॥—पाश्चात्य इति । अपरा दिक् देशो वा रमणीय । ' अधरापराच्चात् ' पूर्वा पूर्वो वा दिक् देशो वा रमणीय । ' पूर्वावराधरेभ्य-' इत्यस् । पश्चाद्भवः पुरोभव ॥—वहल्यू—॥ वल्हि· देशविशेष. । ऊर्दि· क्रीडा । पर्दि· पर्दनक्रीडा ॥ कपिशा मर्कटा अत्र सन्ति तदत्रास्ति कापिशी अटवी ॥—क्वेहा—॥ अत्र तसितसू सानुबन्धित्वान्न गृह्येते । कोश्चिप्रातस्त्यप्

कश्चित् । आविष्ट्यः । चकारस्त्यण्त्यचोः *सामान्यग्रहणाविघातार्थः ॥ १६ ॥ नेर्ध्रुवे ॥ ६ । ३ । १७ ॥ निशब्दात् ध्रुवेऽर्थे त्यच् प्रत्ययो भवति । नित्यं ध्रुवम् ॥ १७ ॥ निसो गते ॥ ६ । ३ । १८ ॥ निस्शब्दाद्गतेऽर्थे त्यच् प्रत्ययो भवति । निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चण्डालः ॥ १८ ॥ ऐषमोह्यःश्वसो वा ॥ ६ । ३ । १९ ॥ ऐषमस् ह्यस् श्वस् इत्येतेभ्यः शेषेर्थे त्यच् प्रत्ययो वा भवति । ऐषमस्त्यम् । ऐषमस्तनम् । ह्यस्त्यम् । ह्यस्तनम् । श्वस्त्यम् । श्वस्तनम् । 'श्वसस्तादिः' ( ६-३-८३ ) इति इकणपि भवति । शौवस्तिकम् । ॥ १९ ॥ कन्थाया इकण् ॥ ६ । ३ । २० ॥ कन्था ग्रामविशेषः । कन्थाशब्दात् शेषेऽर्थे इकण् प्रत्ययो भवति । कान्थिकः ॥ २० ॥ वर्णावकञ् ॥ ६ । ३ । २१ ॥ वर्णुर्नाम ह्रदः । तस्य समीपो देशोऽपि वर्णुः तत्र या कन्था ततः शेषेऽर्थेऽकञ् प्रत्ययो भवति । इकणोऽपवादः । कान्थकः ॥ २१ ॥ रूप्योत्तरपदारण्याण्णः ॥ ६।३।२२॥ रूप्योत्तरपदादरण्यशब्दाच्च शेषेऽर्थे णः प्रत्ययो भवति ।वार्करूप्य' वार्करूप्या । शैविरूप्यम् । शैवरूप्यम् । आरण्याः सुमनसः । आरण्याः पशवः । माणिरूप्ये जातो माणिरूप्यक इत्यत्र तु दुसंज्ञकत्वेन परत्वात् 'प्रस्थपुर'—( ६-३-४२ ) इत्यादिना ञ्योपान्त्यलक्षणोऽकञेव भवति । अन्तग्रहणेनैव सिद्धे उत्तरपदग्रहणं बहुप्रत्ययपूर्वनिवृत्त्यर्थम् । बाहुरूप्यी ॥ २२ ॥ दिक्पूर्वपदादनाम्नः ॥ ६ । ३ । २३ ॥ दिक्पूर्वपदादनाम्नोऽसंज्ञाविषयाच्छेषेऽर्थे णः प्रत्ययो भवति । अणोऽपवादः । पौर्वशालः । पौर्वशाला । आपरशालः । आपरशाला । अनाम्न इति किम् । पूर्वेषुकामशमी नाम ग्रामः । तस्यां भवः पूर्वेषुकामशमः । एवमपरेषुकामशमः । पूर्वकार्ष्णमृत्तिका । अपरकार्ष्णमृत्तिका । 'प्राग्ग्रामाणाम्' ( ७-४-१७ ) इत्युत्तरपदवृद्धिः ॥ २३ ॥ *मद्रादञ् ॥ ६ । ३ । २४ ॥ मद्रान्ताद्दिक्पूर्वपदाच्छेषेऽर्थेऽञ् प्रत्ययो भवति । पूर्वेषु मद्रेषु भवः पौर्वमद्रः । पौर्वमद्री । 'बहुविषयेभ्यः' (६-३-४४) इत्यकञ् प्राप्तस्तदपवादे 'वृजिमद्राद्देशात्कः' (६-३-३७) इति के प्राप्तेऽनुवचनम् । केवलादेव मद्रादकञ्कविधिरिति चेत् तर्हीदमेव ज्ञापकं सुमवार्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधेः । तेन सुपाञ्चालकः सर्वपाञ्चालकः अर्धपाञ्चालकः पूर्वपाञ्चालकः अपरपाञ्चालकः सुमागधकः सर्वमागधकः सुवृजिकः सुमद्रकः इत्यादि सिद्धम् ॥ २४ ॥ उदग्ग्रामाद्यकृल्लोम्नः ॥६ । ३ । २५ ॥ उदग्ग्रामवाचिनो यकृल्लोमन्शब्दाच्छेषेऽर्थेऽञ् प्रत्ययो भवति । याकृल्लोमः । उदग्ग्रामादिति किम् । अन्यस्मादणेव । याकृल्लोमनः । यकृल्लोम्न इति किम् । भैक्षिणि भवः भैक्षिणः । कौष्ठिन्यां भवः कौष्ठिनः ॥ २५ ॥ गौष्ठीतैकीनैकेतीगोमतीशूर-

इति सूत्र व्यधायि । तेन प्रातस्त्य इत्यपि सिद्धम् । स्वमते तु 'क्वेह-इत्याद्यव्ययोपलक्षणम् । तेन यथादर्शनमन्येषामपि अव्ययाना भवति ॥—सामान्यग्रहणेति । अन्यथा 'स्वज्ञाजभस्त्र-' इत्यादौ त्यग्रहणे निरनुबन्धत्वादस्यैव ग्रह स्यात् ॥—दिक्पू—॥—पौर्वशाला इति । यदा पूर्वशब्दो देशकालवाची तदा पूर्वशालाया भवाणि पौर्वशालीति भवति । यदा तु पूर्वशब्दो दिक्शब्दस्तदा पूर्वस्या शालाया भवस्तद्धितविषये 'दिगधिकम्' इति तत्पुरुषकर्मधारयौ द्विगुस्तु न सख्यापूर्वपदत्वाभावात् तदाऽनेन ण ॥—मद्रा—॥ ननु अधिकारायातो ण एव भविष्यति किमञ्करणेन । सत्यम् ॥ णाधिकारे अञ्वचन व्यर्थम् । तथापि न कर्त्तव्य मद्रादित्येव कृते यथाविहित प्राग्जितादणेव भविष्यति न तु णः । कुत । दिक्पूर्वान्मद्राच्चानाम्न इत्येकयोगाकरणात् । सत्यम् ॥ मद्रादित्येव सिद्धो यो हि येन बाधितो न प्राप्नोति तदर्थमिद स्यादिति कबाधिताकञर्थं स्यात् । स माभूदित्येवमर्थम् । उत्तरार्थं चेति शकट ॥—गौष्ठी—॥

सेनवाहीकरोमकपटच्चरात् ॥ ६ । ३ । २६ ॥ गं एष्यादिभ्यः शेषेऽर्थेऽञ् प्रत्ययो भवति । गौष्टः । तैकः । नैकेतः । एभ्यो वाहीकग्रामलक्षणयोर्णिकेकणोस्तैक्याः कोपान्त्यलक्षणस्येयस्य चापवादः । गौमतः । अस्मिन्नीलक्षणस्याकञः । शौरसेन. । अत्र राष्ट्राकञः । वाहीकः । रौमकः । *अत्र दुलक्षणस्येयस्य । पाटच्चरः । अत्र रोपान्त्यलक्षणस्याकञः । एके तु गौष्ठीस्थाने गोष्ठीं तैकीस्थाने तैकीं नैवीं च पठन्ति ॥ २६ ॥ शकलादेर्यञः ॥ ६ । ३ । २७ ॥ शकलादिभ्यो यञन्तेभ्यः शेषेऽर्थेऽञ् प्रत्ययो भवति । ईयस्यापवादः । गर्गाद्यन्तर्गणः शकलादिः । शकलस्यापत्यं वृद्धं शाकल्यः । तस्य छात्राः शाकलाः । एवं काण्ठाः । गौकक्षाः । वामरथाः । यञ इति किम् । शकलो देवतास्य शाकलः । तस्येदं शाकलीयम् । कण्ठादागतः काण्ठः तस्य छात्राः काण्ठीयाः २७ ॥ *वृद्धेञः ॥ ६ । ३ । २८ ॥ वृद्धे य इञ् विहितस्तदन्ताच्छेषेऽर्थेऽञ् प्रत्ययो भवति । ईयस्यापवादः । दक्षस्यापत्यं वृद्धं दाक्षिस्तस्य छात्राः दाक्षाः । प्लाक्षाः । वृद्धेति किम् । सुतंगमेन निर्वृत्ता सौतंगमी नगरी तस्या भवः सौतंगमीयः । शालङ्केरपत्यं युवा शालङ्किः । 'यञिञः' (६-१-५४) इत्यायनणः पैलादिपाठाल्लुप् । तस्य छात्राः शालङ्का इत्यत्र तु आयनणि लुप्ते यद्यपीञन्तं *यूनि वर्तते तथापीञ् वृद्ध इत्यञेव भवति ॥ २८ ॥ न द्विस्वरात् प्रागभरतात् ॥ ६ । ३ । २९ ॥ प्राच्यगोत्रवाचिनो भरतगोत्रवाचिनश्च नाम्नो वृद्धेञन्ताद्द्विस्वरादञ् प्रत्ययो न भवति । पूर्वेण प्राप्तस्य प्रतिषेधः । प्राचः चैङ्कीयाः । पौष्पीयाः । चिङ्कपुष्पशब्दावावन्तावपि तत्र बाह्वादित्वादिञ् । भरतात्, काश काशीयाः । वाश वाशीयाः । द्विस्वरादिति किम् । पान्नागारेश्छात्राः पान्नागाराः । मान्थरेषणाः । प्रागभरतादिति किम् । दाक्षाः । प्लाक्षाः । प्राग्ग्रहणे भरतानां ग्रहणं न भवतीति स्वशब्देन ग्रहणम् ॥ २९ ॥ भवतोरिकणीयसौ ॥ ६ । ३ । ३० ॥ भवतुशब्दाच्छेषेऽर्थे इकण् ईयस् इत्येतौ प्रत्ययौ भवतः। ईयापवादौ । भवतः भवत्या वा इदं भावत्कम् । भावत्की । भवदीयः । भवदीया । सकारो 'नाम सिदय्व्यञ्जने' (१-१-२१) इति पदत्वार्थः । उकारान्तग्रहणात् शत्रन्तान्न भवति । भवत इदं भावतम् ॥ ३० ॥ परजनराज्ञोऽकीयः ॥ ६ । ३ । ३१ ॥ एभ्यः शेषेऽर्थेऽकीयः प्रत्ययो भवति । परकीयः । जनकीयः। राजकीयः। अकारः पुंवद्भावार्थः । राज्ञ्या इदं राजकीयम् । स्वकीयं देवकीयमिति तु स्वकदेवकयोर्गहादित्वात् सिद्धम् । ये तु स्वदेवशब्दाभ्यामकीयमिच्छन्ति तेषां स्वस्येदं सौवम् दैवमायुः दैवी वाक् इत्यादि न सिध्यति ॥ ३१ ॥ दोरीयः ॥ ६ । ३ । ३२ ॥ दुसंज्ञकाच्छेषेऽर्थे ईय प्रत्ययो भवति । देवदत्तीयः । जिन-

---

-अत्र दुलक्षणेति।वाहीकशब्दस्य पुरुषवाचिनो'दोरीय 'इत्यस्य देशवाचिनस्तु कखोपान्त्येत्यस्याप्यपवाद तदुभयमपि दुलक्षणस्येत्यनेन श्लिष्टनिर्देशेन सगृहीतमायत उभाभ्यामपि दुसज्ञाया विधानात् । रोमकस्य तु ' कखोपान्त्य'-इत्यस्यैव । यतस्तस्य पुरुषवाचिनो दुसज्ञा न प्राप्नोति । देशवाचिनस्तु ' प्राग्देशे ' इति दुसज्ञा ॥—वृद्धेञ. ॥—यूनि वर्त्तत इति । 'वृद्धाद्यूनि' इत्यत्र यूनोपि वृद्धसज्ञाकार्यदर्शनादत्र इञन्तस्य वृद्धेपि वर्त्तनमित्याश्रयणे औपगवस्यापत्य युवा औपगविस्तस्य छात्रा औपगवीया एव पाणनीया इत्यादावपि स्यात् । अतो मुख्यत्वाद्वृद्धे एवेति व्याख्येयम्॥—भव—॥—शत्रन्तान्न भवतीति । ननु तर्हि यदा मत्वन्तता क्रियते भमस्यास्तीति भवत् तदा कथ न भवति यत उकारानुबन्धोऽस्ति । न । तदा मतुरेवोकारानुबन्धो न तु तदन्तः । अथ मतुरुकारानुबन्धस्तद्योगाद्भवच्छब्दोपि तथोच्यते । नैवम् । लाक्षणिकत्वाल्लक्षणप्रतिपदोक्तयोरिति न्यायात् । यद्येव तर्हि औणादिकस्यापि न प्राप्नोति । यतो ह्यवतुरयमुकारानुबन्ध.

दत्तीयः । तदीयः । यदीयः । गार्गीयः । वात्सीयः । शालीयः । गौनर्दीयः । भोजकटीयः । दोरिति किम् । सभासन्नयने भवः साभासन्नयनः । अणपवादो योगः ॥ ३२ ॥ उष्णादिभ्यः कालात् ॥ ६ । ३ । ३३ ॥ उष्णादिपूर्वपदात्कालान्ताच्छेषेऽर्थे ईयः प्रत्ययो भवति । उष्णकालीयः । बहुवचनं प्रयोगानुसरणार्थम् ॥ ३३ ॥ व्यादिभ्यो णिकेकणौ ॥ ६ । ३ । ३४ ॥ वि इत्येवमादिभ्यः परो यः कालशब्दस्तदन्ताच्छेषेऽर्थे णिक इकण् इत्येतौ प्रत्ययौ भवतः । उभयोः स्त्रियां विशेषः । वैकालिकः । वैकालिका । वैकालिकी । आनुकालिकः । आनुकालिका । आनुकालिकी । ऐदंकालिका । ऐदंकालिकी । धौमकालिका । धौमकालिकी । आपत्कालिका । आपत्कालिकी । सांपत्कालिका । सांपत्कालिकी । कौपकालिका । कौपकालिकी । क्रौधकालिका । क्रौधकालिकी । और्ध्वकालिका । और्ध्वकालिकी । पौर्वकालिका । पौर्वकालिकी । तात्कालिका । तात्कालिकी । क्रौरकालिका । क्रौरकालिकी । व्यादय प्रयोगगम्या ॥ ३४ ॥ *काश्यादेः ॥ ६ । ३ । ३५ ॥ दोरिति वर्तते । पूर्वयोगयोस्तु न सबध्यते । *व्यापारासंभवात् । काशीत्येवमादिभ्यो दुसंज्ञकेभ्यः शेषेऽर्थे णिक इकण् इत्येतौ प्रत्ययौ भवतः । काशिकः । काशिका । काशिकी । चैदिकः । चैदिका । चैदिकी । दोरित्येव । देवदत्तं नाम वाहीकग्रामः । तत्र जातो दैवदत्तः । देवदत्तशब्दस्य प्राग्देशे एव दुसंज्ञा न वाहीकेष्विति न भवति । नाप्युत्तरेण । तत्रापि दोरित्यनुवर्तनात् । प्राग्ग्रामेषु तु दुसंज्ञकत्वेन काश्यादित्वाद्भवत्येव । दैवदत्तिका । दैवदत्तिकी । येषां तु काश्यादीनां दुसंज्ञा न संभवति तेषां पाठसामर्थ्याद्भवति । चेदिशब्दसाहचर्याच्च काशिशब्दो जनपद एव वर्तमान इमौ प्रत्ययावुत्पादयति नान्यत्र।काशीयाश्छात्राः।*काशि चेदि *देवदत्त *सायाति सांवाह *अच्युत मोदमान *श्वकुलाल *शकुलाद *हस्तिकर्पू *कौनाम हिरण्य करण *हैहिरण्यः करणे *अरिंदम *सधमित्र दाशमित्र *सिन्धुमित्र *दासमित्र *छागमित्र *दासग्राम *शौवावतान *गौवाशन गौवासन *ताराङ्गि *भाराङ्गि *युवराज *उपराज *देवराज । इति काश्यादिः ॥ ३५ ॥

सत्यम् ॥ अव्युत्पत्तिपक्षाश्रयणाददोष ॥—काश्या—॥—व्यापारासंभवादिति । फलाभावादित्यथ । पूर्वयोगयोर्हि दुसज्ञस्यादुसज्ञस्य च भवति । गणपाठसामर्थ्यात् । अनेन तु येषां दुसज्ञत्वमदुसज्ञत्व च तेषा देवदत्त इत्यादीना दु सज्ञानामेव । अथ गण । काशते । ‘ पदिपठि–’ इति काशि । चदेग् । मण्यादित्वादि एत्व च ॥ देवा एन देयासुर्देवदत्त’ । सयाति स्म सैयातस्यापत्यम् इञि सांयाति’ । न च्यवते स्म अच्युतो विष्णु मोदते मोदमान’ । शुना कुल श्वकुलमलति श्वकुलाल ‘ हृपिवृपि-’ इति शकुल’ शकुलान् मत्स्यान् आदत्ते अत्ति वा शकुलाद । हस्तिन कर्पूरिव नदी इव स देशो हस्तिकर्पू । कु पृथ्वी नामयति कुनामोऽत्रास्ति कौनाम । हिरण्यस्य करण हिरण्यकरण । हिनोति हे' तस्य हिरण्य तदत्रास्त हैहिरण्य करणइति । कोऽर्थ । करणार्थे हिरण्य प्रशस्यते । अन्ये त्वाहु । हिरण्यकरण एवविधो ध्वनिः समस्त एवात्र पठ्यते । तदेव सश्लिष्टनिर्देशेन सगृहीतम् ॥ सिन्धुर्मित्रमस्य सिन्धुमित्र । अरीन् दमयति । ‘ भृवृजि–’ इति अरिंदम । धान धा ‘क्रुत्सप-’ इति क्विप् ।सह धा वर्त्तते सध’।सधो मित्रमस्य सधमित्र ।दाशो दासो मित्रमस्य दाशमित्र दासमित्र। छागो मित्रमस्य छागमित्र । दासस्य ग्राम दासग्राम. शुन' सकोचस्तमवतनोति शौवावतान । गा वाश्यत इति नन्द्यादित्वादने गोवाशनोऽत्रास्ति गौवाशन । वासण् । गा वासयति सोऽत्रास्ति गौवासन । तरङ्गस्यापत्य ताराङ्गि । भृश् स्वादित्वादङ्गे भरङ्गस्यापत्य भाराङ्गि ।युवा चासौ राजा च युवराज । राज्ञ. समीपमुपराजम् । देवस्य राजा देवराज

*वाहीकेषु ग्रामात् ॥६।३।३६॥ वाहीकदेशे ग्रामवाचिभ्यो दुसंज्ञकेभ्यः शेषेऽर्थे णिक इकण् इत्येतौ प्रत्ययौ भवतः। कारन्तपिकः। कारंतपिका। कारंतपिकी। शाकलिकः। शाकलिका। शाकलिकी। मान्थविकः। मान्थविका। मान्थविकी। आरात्कः। आरात्का। आरात्की। सैपुरिकः। सैपुरिका। सैपुरिकी स्कौनगरिकः। स्कौनगरिका। स्कौनगरिकी। नापितवास्तुकः इत्यत्र तु परत्वात् 'उवर्णादिकण्' (६-३-३८) इतीकण्। वातानुप्रस्थकः नान्दीपुरकः कौकुटीवहकः दासरूप्यकः इत्येतेषु 'प्रस्थपुरवहान्तयोपान्त्यधन्वार्थात्' (६-३-४२) इति परत्वादकञ्। सौसुकीय इत्यत्र कोपान्त्यलक्षण ईयोऽपवादत्वाच्च भवति। कथं मौञ्जीयम्। मौञ्जं नाम वाहीकाद्बहिरन्यदीयो ग्रामो न वाहीकग्राम इत्येके। अन्ये तु दश द्वादश वा ग्रामा विशिष्टसंनिवेशावस्थाना मौञ्जं नामेति ग्रामसमूह एवायं न ग्रामः, नापि राष्ट्रम् येन राष्ट्रलक्षणोऽकञ् स्यात् इति मन्यन्ते। दोरित्येव। देवदत्तं नाम वाहीकग्रामः तत्र जातो दैवदत्तः॥ ३६ ॥ वोशीनरेषु ॥ ६ । ३ ।३७॥ उशीनरेषु जनपदे यो ग्रामस्तद्वाचिनो दुसंज्ञकाच्छेषेऽर्थे णिकेकणौ प्रत्ययौ वा भवतः। आह्वजालिकः। आह्वजालिका।आह्वजालिकी।सौदर्शनिकः। सौदर्शनिका। सौदर्शनिकी। पक्षे आह्वजालीयः सौदर्शनीयः॥ ३७॥ वृजिमद्राद्देशात्कः॥६।३।३८॥ वृजिमद्रशब्दाभ्यां देशवाचिभ्यां शेषेऽर्थे कः प्रत्ययो भवति। राष्ट्राकञोऽपवादः। दोरिति निवृत्तम्। वृजिकः। मद्रकः। सुसर्वार्धदिक्शब्देभ्यो जनपदवाचिनः प्रत्ययो भवति। तत्र मद्रात् दिक्पूर्वपदात् 'मद्रादञ्' (६-३-२४) इत्यञ् विहितः शेषपूर्वपदात्त्वयं भवति। सुमद्रकः। सर्वमद्रकः। अर्धमद्रकः। सुवृजिकः। सर्ववृजिकः। अर्धवृजिकः। पूर्ववृजिकः। अपरवृजिकः। देशादिति किम्। मनुष्यवृत्तेर्वार्जिमाद्रः॥ ३८ ॥ *उवर्णादिकण् ॥ ६ । ३ । ३९ ॥ उवर्णान्ताद्देशवाचिनः शेषेऽर्थे इकण् प्रत्ययो भवति। अणोऽपवादः परत्वादीयणिकेकणोऽपि बाधते। शबरजम्ब्वां भवः शाबरजम्बुकः। निषादकर्ष्वां भवः नैषादकर्षुकः। दाक्षिकर्ष्वां दाक्षिकर्षुकः। प्लाक्षिकर्ष्वां प्लाक्षिकर्षुकः। नापितवास्तुर्वाहीकग्रामः तत्र भवो नापितवास्तुकः। यस्तु प्राग्ग्रामस्तस्मादुत्तरेण भवति। आत्रीतमायौ भवः आत्रीतमायकः। जिह्नुपु जैह्नवक इति परत्वाद्योपान्त्यलक्षणो राष्ट्रलक्षणश्चाकञ्। ऐक्ष्वाक इत्यत्र तु कोपान्त्यलक्षणोऽण्। उवर्णादिति किम्। दैवदत्तः। देशादित्येव। पटोश्छात्राः पाटवाः॥ ३९ ॥ *दोरेव प्राचः ॥६।३।४० ॥ शरावत्या नद्याः प्राच्यां दिशि दशः प्राग्देशः तद्वाचिन उवर्णान्ताद्दुसंज्ञकादेव इकण् प्रत्ययो भवति। आषाढजम्ब्वां भवः *आषाढजम्बुकः। नापितवास्तौ जातः नापितवास्तुकः। पूर्वेण सिद्धे नियमार्थं वचनम्। इह न भवति। मल्लवास्तुः प्राग्ग्रामः माल्लवास्तवः। एवकार इष्टावधारणार्थः। दोः प्राच एवेति नियमो मा भूत्॥ ४० ॥ ईतोऽकञ् ॥ ६ । ३ । ४१ ॥ दोर्देशात्प्राच इति च वर्तते। ईकारान्तात्प्राग्देशवाचिनो दुसंज्ञकाच्छेषेऽर्थेऽकञ् प्रत्ययो भवति। ईयस्यापवादः। काकन्द्यां भवः काकन्दकः। माकन्द्यां भवः माकन्दकः। प्राच इत्येव। दात्तामित्र्यां भवः दात्तामित्रीयः॥ ४१ ॥ रोपान्त्यात् ॥ ६ । ३ । ४२॥ रेफोपान्त्यात्प्राग्देश-

॥—वाही—॥—अपवादत्वाच्चेति। न केवल परत्वान्नापि राष्ट्रमिति विवादस्यैव ग्रामसमुदायस्य राष्ट्रत्वात्॥—उवर्णा—॥ ननु 'अवर्णावर्ण-' इति इकारलोपेन भाव्य ततः ञणित्येव क्रियताम्। ना स्त्रियां ङीर्न स्यात्॥ शाबरजम्बुक इत्यत्र औत्सर्गिकाऽणो दाक्षिकर्षुक इत्यत्रेयस्य नापितवास्तुक इत्यत्र 'वाहीकेषु-' इति णिकेकणोः प्राप्तिः ॥—दोरे—॥—आषाढजम्बुक इति ।

प्रस्थपुरवहान्तयोपान्त्यधन्वार्थात् ॥ ६ । ३ । ४३ ॥
वाचिनो दुसंज्ञकाच्छेपेऽर्थेऽकञ् प्रत्ययो भवति । ईयस्यापवादः । पाठलिपुत्रकः । ऐकचक्रकः ॥ ४२ ॥ *प्रस्थपुरवहान्तयोपान्त्यधन्वार्थात् ॥ ६ । ३ । ४३ ॥
दोर्देशादिति च वर्तते । प्रस्थपुरवह इत्येतदन्तात् यकारोपान्त्याद्धन्ववाचिनश्च देशवाचिनो दुसंज्ञकाच्छेषेऽर्थेऽकञ् प्रत्ययो भवति । धन्वन्शब्दो मरुदेशवाची ।
प्रस्थान्त, मालाप्रस्थकः शोणप्रस्थकः । काञ्चीप्रस्थकः । वातानुप्रस्थकः । वाणप्रस्थकः । पुरान्त, नान्दीपुरकः । वार्तीपुरकः । वहान्त, पैलुवहकः । *फाल्गुनीव-
हकः । कौक्कुटीवहकः । कौङ्कुचीवहकः । योपान्त्य, सांकाश्यकः । काम्पील्यकः । माणिरूप्यकः । दासरूप्यकः । आत्रीतमायवकः । धन्ववाचि, पारेधन्व अपारे-
धन्व पारेधन्वनि भवः पारेधन्वकः । आपारेधन्वकः । ऐरावतकः । सुप्रचष्टे डे सुप्रख्येन निर्वृत्त इत्यणि सौप्रख्ये भवः सौप्रख्यीय इति तु गहादित्वात् । एवं कामप्र-
स्थीयः । पुरग्रहणमप्राच्यार्थम् । प्राच्याद्धि रोपान्त्यत्वेनैव सिद्धम् । अत एव हि प्राच इति नानुवर्तते । ईयबाधनार्थं वचनम् ॥ ४३ ॥ राष्ट्रेभ्यः ॥६ । ३ । ४४ ॥
दोर्देशादिति च वर्तते । राष्ट्रेभ्यो देशेभ्यो दुसंज्ञकेभ्यः शेषेऽर्थेऽकञ् प्रत्ययो भवति । ईयस्यापवादः । आभिसारे भवः आभिसारकः । आदर्शे आदर्शकः । औपुष्ट-
श्यामायने राष्ट्रावधी अपि राष्ट्रे । औपुष्टे औपुष्टकः । श्यामायने श्यामायनकः । बहुवचनमकञः प्रकृतिबहुत्वं द्योतयदपवादविषयेऽपि प्रापणार्थम् । तेनेहापि भवति ।
आभिसारगर्तकः। अत्र गर्तोत्तरपदलक्षण ईयो न भवति । राष्ट्रसमुदायो न राष्ट्रग्रहणेन गृह्यते इतीह न भवति।काशिकोशलीयः॥४४॥ *बहुविषयेभ्यः॥६।३।४५॥दोरिति
निवृत्तम्। योगविभागात् । अतः परं दोरदोश्च विधानम् । देशादिति तु वर्तते । राष्ट्रेभ्यो देशेभ्यो बहुत्वविषयेभ्यः शेषेऽर्थेऽकञ् प्रत्ययो भवति । *अणाद्यपवादः । अङ्गेषु जातः
आङ्गकः । वङ्गेषु जातः वाङ्गकः । दार्वेषु दार्वकः । काम्बवेषु काम्बवकः । जिन्हुषु जैन्हवकः । अजमीढेषु आजमीढकः । अजकुन्देषु आजकुन्दकः । कालञ्जरेषु कालञ्जरकः ।
वैकुलिशेषु वैकुलिशकः । विषयग्रहणम् अनन्यत्र भावार्थम् । तेन य एकत्वद्वित्वयोरपि वर्तते ततो माभूत् । वर्तनी च वर्तनी च वर्तनी च वर्तन्यः तासु भवो वार्तनः ।
बहुवचनमपवादविषयेऽपि प्रापणार्थम् । त्रिगर्तेषु त्रैगर्तकः । अत्र गर्तोत्तरपदलक्षण ईयो बाध्यते ॥४५॥ धूमादेः ॥६।३।४६॥ देशादिति वर्तते । धूमादिभ्यो देशवाचिभ्यः
शेषेऽर्थेऽकञ् प्रत्ययो भवति अणाद्यपवाद । धौमकः । पाडण्डकः । *धूम षडण्ड षडाण्ड *अवतण्ड *त्वण्डक वतण्डव शशादन *अर्जुन *आर्जुनाव *दाण्डायन

॥—प्रस्थ—॥—फाल्गुनीवहक इति । फल्गुनीभ्यां ' चन्द्र-' इत्यण् लुप्
' चन्द्रयुक्त-' इत्याणि आषाढा प्रयोजनमस्य ' विशाखाषाढा-' इत्यण् । तस्य जम्बूस्तत्र भव ॥—बहु—॥—अणाद्यपवाद इति । आदिशब्दा-
डीनिवृत्ति । पुनर्डी । फल्गुन्योर्जाता ' फल्गुन्याष्ट ' इति प्राप्तौ मतान्तरेण ' भर्तुसंध्यादेरण् ' भवति । ततो ' वृद्धिर्यस्य-' इति दु संज्ञा ॥—धूमा—॥—धार्त्तराष्ट्रीति । ननु नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहण
जिह्वो उवर्णादिकण ॥—अनन्यत्रेति । न विद्यते बहुत्वविषयादन्यत्र भावो यस्य स तथा सोऽर्थ प्रयोजन यस्य । अत्र तु धार्तराष्ट्रीशब्देन काचिन्नगरी उच्यते । धार्त्तराष्ट्रशब्देन तु कश्चित् ग्राम इति भिन्नश-
भविष्यति किं द्वयोरुपादानेन। नैवम्। नामग्रहणेति न्यायस्तदा आश्रीयते यदा द्वयोरप्येकोर्थो भवति । अवतण्डयति आचि अवतण्ड' । तण्डते तण्डक । अवतण्डते'कैरव-'
ब्दोपादानम् ॥ अथ धूमादिगणो विव्रियते । ' विलिभिलि-' इति धूम । षड् अण्डा आण्डाश्च यत्र षडण्ड । षडाण्ड' । ' श्रादिभ्योऽ ' दाण्डमयते अनेनेति दाण्डायन' ।
इति वतण्डव. । शशान् अत्ति शशादन.। ' यम्यजि-' इति अर्जुनः । ऋजुनावाना निवास आर्जुनावः । दण्डाना समूहो दाण्डम् ॥

*स्थली दाण्डायनस्थली मानकस्थली आनकस्थली माहकस्थली मद्रकस्थली माषस्थली घोषस्थली राजस्थली अट्टस्थली मानस्थली माणवकस्थली राजगृह सत्रासाह *सात्रासाह भक्ष्यादी भक्ष्यली भक्ष्याली भद्राली मद्रकुल अञ्जीकुल *द्व्याहाव त्र्याहाव द्वियाहाव त्रियाहाव *संस्फीय *बर्वंड गर्त *वर्ज्य* शकुन्ति *विनाद *इमकान्त *विदेह *आनर्त *वादूरः *खाडूर *माठर पाठेय पाथेय *घोष घोषमित्र शिष्य *वणिय पल्ली *अराज्ञी *आराज्ञी *धार्तराज्ञी *धार्तराष्ट्री धार्तराष्ट्र अवया तीर्थकुक्षि *समुद्रकुक्षि द्वीप अन्तरीप अरुण *उज्जयनी *दक्षिणापथ *साकेत। इति धूमादिः। दाण्डायनस्थलीत्यादीनां दुसंज्ञकाना-मीकारान्तानां वादूरखाडूरमाठराणां च पाठोऽप्राच्यार्थः। प्राच्यानां त्वीद्रोपान्त्यलक्षणोऽकञ् सिद्ध एव। विदेहानर्तयो राष्ट्रेऽकञ् सिद्ध एव। सामर्थ्याददेशार्थः पाठः। विदेहानामानर्तानां च क्षत्रियाणामिदं वैदेहकम्। आनर्तकम्। पाठेयपाथेययोर्योपान्त्यत्वादकञ् सिद्धोऽदेशार्थः पाठः। पठेः पठाया वापत्यं पाठेयः। तस्येदं पाठेयकम् ॥ ४६ ॥ सौवीरेषु कूलात् ॥ ६ । ३ । ४७ ॥ सौवीरदेशवाचिनः कूलशब्दाच्छेषेऽर्थेऽकञ् प्रत्ययो भवति। कौलकः सौवीरेषु। कौलोऽन्यत्र ॥ ४७॥ समुद्रान्नृनावोः ॥ ६ । ३ । ४८ ॥ समुद्रशब्दाद्देशवाचिनः शेषेऽर्थेऽकञ्प्रत्ययो भवति स चेत् प्रत्ययान्तवाच्यो ना मनुष्यो नौर्वा भवति। सामुद्रको मनुष्यः। सामुद्रिका नौः। नृनावोरिति किम्। सामुद्रं लवणम् ॥४८॥ नगरात्कुत्सादाक्ष्ये ॥६।३।४९॥ नगरशब्दाद्देशवाचिनः शेषेऽर्थेऽकञ् प्रत्ययो भवति प्रत्ययार्थस्य कुत्सायां दाक्ष्ये च गम्यमाने। कुत्सा निन्दा। दाक्ष्यं नैपुण्यम्। केनायं मुषित इह नगरे मनुष्येण संभाव्यते एतन्नागरके। चौरा हि नागरका भवन्ति। केनेदं चित्रं लिखितमिह नगरे मनुष्येण संभाव्यते एतन्नागरके। दक्षा हि नागरका भवन्ति। कुत्सादाक्ष्य इति किम्। नागरः पुरुषः। संज्ञाशब्दात्तु कत्र्यादिपाठादेयकञ्। नागरेयकः ॥ ४९ ॥ *कच्छाग्निवक्त्रवर्तोत्तरपदात् ॥ ६ । ३ । ५० ॥ कच्छ अग्नि वक्त्र वर्त इत्येतदुत्तरपदाद्देशवाचिनः शेषेऽर्थेऽकञ् प्रत्ययो भवति। *ईयाणोरपवादः।

---

स्थलति स्थली। दाण्डायनस्य स्थली। मान कायति मा अविद्यमाना आनका येषां वा मानकास्तेषां स्थली। आनकाना स्थली। महन्ति माहकास्तेषां स्थली। मद्रेषु भवा. मद्रकास्तेषां स्थली। स्थल्युत्तरपदानां सर्वत्र षष्ठीसमासः। व्युत्पत्तिस्तु सान्वया। राज्ञो गृहम्। सत्राशब्द आकारान्तोऽव्यय। सत्रा साकं सह्यते सत्रासाह। सत्रासाहोऽस्त्यास्ति सात्रासाह.। भक्ष्याणि आदत्ते लाति अलाति भद्रमलति 'कर्मणोऽण्'। मद्रभूत कुल यत्र। अनक्ति अञ्च् डी। अञ्ज्याः कुलम्। द्वौ त्रयोऽह्नो वा यत्र। केचित्तु इवर्णादिभ्य' यवरलानि-च्छन्ति तन्मते द्वियाहाव इत्यादि। सस्फायते क्विप् तस्मै हितः संस्फीयः। बर्बतीति 'विहोड—' इति बर्वंड। वर्ज्यते वर्ज्य। शकेरुन्ति शकुन्ति। विनादयति विनाद.। इश्च मा च ताभ्यां कान्त' पृषो० इमकान्त। विदिह्यन्ते विदेहाः। एत्य नृत्यन्त्यत्र आनर्त्त'। वट वेष्टने खाद 'सिन्दूर—' इति वादूरः। खाडूर। मठरोऽत्रास्ति। माठर.। घुष्यत इति घोषः। स मित्रमस्या'। 'इकिस्तव्—' इति वणि याति वणिय'। न विद्यते राजा यस्या 'नाम्नि' इति ड्याम् अराज्ञी। आगता राजानो यस्या सा आराज्ञी। धृतो राजा येन धृतराजा सोऽत्रास्तीति धार्त्तराज्ञी। धृतराष्ट्रोऽत्रास्ति धार्त्तराष्ट्री। धार्त्तराष्ट्र'। अवयाति अवया'। समुद्रवत्कुक्षिरस्य समुद्रकुक्षि। उज्जीयतेऽनया उज्जयनी। रस्यादित्वादुज्जयति वा। दक्षिणस्याः पन्था दाक्षिणापथः। साया. लक्ष्म्या. केतो निवास. साकेत. ॥—कच्छा—॥—ईयाणोरपवाद इति। यत्र पूर्वपदस्य दुसज्ञा तत्रेयस्यान्यत्र त्वणः। अत्र प्रथमप्रयोगे ईयस्य द्वितीये त्वण. प्राप्ति.॥—

अग्नि, काण्डाग्नौ काण्डाग्नकः । विभुजाग्नौ वैभुजाग्नकः । वक्त्र, भारुकच्छे भवो भारुकच्छकः । पिप्पलीयकच्छे पैप्पलीयकच्छकः । वर्त, वाहुवर्ते बाहुवर्तकः । चक्रवर्ते चाक्रवर्तकः । उत्तरपदग्रहणमवहुप्रत्ययपूर्वार्थम् । ईषदसमाप्तः ऐन्दुवक्त्रे भवः ऐन्दुवक्त्रकः । तिन्दुवक्त्रे तैन्दुवक्त्रकः । कच्छो वहुकच्छो देशः ततोऽकञ् न भवति ॥ ५० ॥ अरण्यात्पथिन्यायाध्यायेभनरविहारे ॥ ६ । ३ । ५१ ॥ अरण्यशब्दादेशवाचिनः पथ्यादिषु वाच्येषु शेषेऽर्थेऽकञ् प्रत्ययो भवति । आरण्यकः पन्थाः न्यायोऽध्यायः इभो नरो विहारो वा । पथ्यादाविति किम् । आरण्याः सुमनसः । आरण्याः पशवः ॥ ५१ ॥ गोमये वा ॥ ६ । ३ । ५२ ॥ अरण्यशब्दादेशवाचिनः शेषेऽर्थे गोमये वाच्येऽकञ् प्रत्ययो भवति । आरण्यका गोमयाः । आरण्यानि गोमयानि । केचित्तु हस्तिन्या-मपि विकल्पमिच्छन्ति । आरण्या आरण्यका हस्तिनी । एके तु नरवर्जं पूर्वसूत्रेऽपि विकल्पमाहुः । आरण्यः आरण्यकः पन्था इत्यादि ॥ ५२ ॥ कुरुयुगन्धराद्वा ॥ ६ । ३ । ५३ ॥ कुरुयुगन्धरशब्दाभ्यां देशवाचिभ्यां शेषेऽर्थेऽकञ् प्रत्ययो वा भवति । कुरुषु भवः कौरवकः कौरवः । युगन्धरेषु भवः यौगन्धरकः । यौगन्धरः । राष्ट्रशब्दावेतौ वहुविषयौ च तत्र युगन्धरात् ' वहुविषयेभ्यः ( ६-३-४४ ) इति नित्यमकञि प्राप्ते विकल्पः । कुरोस्त्वकञः कच्छाद्यणा वाधितस्य प्रतिप्रसवार्थं वचनम् । तथा च विकल्पः सिद्ध एव । युगन्धरार्थात्तु विभाषा । नृनृस्थयोस्तु कुरोः परत्वादकञेव । कौरवको मनुष्यः कौरवकमस्य हसितम् ॥ ५३ ॥ *साल्वाद्गोयवाग्वपत्तौ ॥ ६ । ३ । ५४ ॥ साल्वशब्दादेशवाचिनो गवि यवाग्वां पत्तिवर्जिते च मनुष्ये शेषेऽर्थेऽकञ् प्रत्ययो भवति । साल्वको गौः । साल्विका यवागूः । साल्वको मनुष्यः । गोयवाग्वपत्ताविति किम् । साल्वा व्रीहयः । साल्वः पत्तिः । राष्ट्रेभ्योऽकञि कच्छाद्यणा वाधिते गोयवागूग्रहणं प्रतिप्रसवार्थम् । एवं च गोयवाग्वोः पत्तिवर्जिते च मनुष्ये *मनुष्यस्थे च नरि*नियमार्थमपत्तिग्रहणम् । अपत्तीति पत्तिप्रतिषेधात् तत्सदृशे मनुष्ये विधिः । तत्र चोत्तरेण सिद्ध एवाकञि हसितादौ साल्वकः अन्यत्र साल्व इति स्थितम् । अयं च विभागः*सल्वशब्दस्यादोरपि विज्ञेयः ॥५४॥ *कच्छादेर्नृनृस्थे ॥६।३।५५॥ कच्छादिभ्यो देशवाचिभ्यो नरि मनुष्ये नृस्थे मनुष्यस्थे च शेषेऽर्थेऽकञ् प्रत्ययो भवति । *अणोऽपवादः । काच्छको मनुष्यः । काच्छकमस्य हसितम् । स्मितं जल्पितम् ईक्षितम् । काच्छिका चूला । सैन्धवको मनुष्यः । सैन्धवकमस्य हसितम् । सैन्धविका चूला । नृनृस्थ इति किम् । काच्छो गौः । सैन्धवं लवणम् । *कच्छ *सिन्धु वर्णु । *मधुमत् कम्बोज *साल्व*कुरु*अनुषण्ड

साल्वा—॥—नियमार्थमिति । नरि साल्वशब्दात् यद्यकञ् भवति तदा अपत्तावेव न पत्तौ ॥—मनुष्यस्थे चेति । ननु गोयवाग्वपत्तावित्युच्यमाने मनुष्यस्थः कथ न लभ्यते । नहि मनुष्यस्थ प्रहासादिर्गौर्यवागूरपत्तिर्वा भवति । न च पत्तेरन्यमात्रमपत्ति अपि तु मनुष्योऽन्यथा साल्वा व्रीहय इत्यत्राप्यकञ् प्राप्नोति तथा च गोयवागूग्रहणमनर्थकं स्यात्तत्राप्यपत्तावित्येव सिद्धेः। उच्यते । अपत्तिग्रहण ' कच्छादेर्नृनृस्थे ' इत्यकञि सिद्धे पत्तेर्व्यावृत्त्यर्थं क्रियते न तु विध्यर्थं तेन यथा अपत्तौ मनुष्ये भवति तथा मनुष्यस्थेऽपि । तत प्रत्ययस्याऽव्यावर्त्तितत्वात् ॥—सल्वशब्दस्येति । उपलक्षणत्वादेकदेशविकृतस्यानन्यत्वाद्वा ॥—कच्छा—॥—अणोपवाद इति । ' कोपान्त्याच्चाण् ' इति सामान्येन प्राप्तस्य । अथ कच्छादिगणो विव्रियते । ' तुदिमदि ' इति कच्छ' । स्यन्दि सृजिभ्याम् —' इति सिन्धु । 'अजिरथा—' इति वर्णु । मधु अस्यास्ति मधुमत् । ' सलेर्णिद्वा ' साल्वः ' कृग-' इति कुरुः । अनुरूपा षण्डा यत्र अनुषण्ड । घातुलकादीर्घत्वे

*अनूपण्ड *कश्मीर *विजापक*द्वीप*अनूप*अजवाह*कुलूत*रङ्कु ( इकु ) *गन्धार *साल्वेय *यौधेय*सस्थाल*सिन्ध्वन्त । इति कच्छादिः । कच्छादयो ये बहुविषया राष्ट्रशब्दास्तेभ्यो 'बहुविषयेभ्यः ( ६-२-४४ ) इत्यकञ् सिद्ध एव । उत्तरेण त्वणा बाधा माभूदिति पुनर्विधीयते। वर्णुसिन्धुभ्याम् 'उवर्णादिकण्' ( ६-२-३८ ) इतीकणि तदपवादे कच्छाद्यणि, कुरोः 'कुरुयुगन्धराद्वा' ( ६-३-५२ ) इति विकल्पे, विजापकस्य कोपान्त्यलक्षणेऽणि, कच्छस्यौत्सर्गिकाणि प्राप्तेऽकञ्विधिः । अपरे कच्छमपि बहुविषयं राष्ट्रशब्दमाहुस्तदा*पूर्वोक्तमेव पाठफलम् ॥ ५५ ॥ *कोपान्त्याचाण् ॥६।३।५६॥ देशादित्येव वर्तते न नृनृस्थे इति । कोपान्त्यात्कच्छादेश्च देशवाचिनः शेषेऽर्थेऽण् प्रत्ययो भवति । *इकणकञोरपवादः। कोपान्त्यः, ऋषिका जनपदः तेषु जातः आर्षिकः । महिषकेषु माहिषकः । अश्मकेषु आश्मकः । इक्ष्वाकुषु ऐक्ष्वाकः । कच्छादि, काच्छः । सैन्धवः । वार्णवः । अथाणग्रहणं किमर्थम् यो हि *अन्येन बाधितो न प्राप्नोति तदर्थमिदं स्यात् स चाणेव । न चानन्तरोऽकञेव स्यादित्याशङ्कनीयम् । एवं हि पूर्वकमकञ्विधानम् *अनर्थकं स्यात् । नैवम् । असत्यणग्रहणे इक्ष्वाकोरुवर्णलक्षण *इकण् स्यात् । स हि ततो राष्ट्राकञा बाधितः ॥ ५६ ॥ गर्तोत्तरपदादीयः ॥ ६ । ३ । ५७ ॥ गर्त्तोत्तरपदाद्देशवाचिनः शेषेऽर्थे ईयः प्रत्ययो भवति । अणोऽपवादः । श्वाविद्गर्तात्तु वाहीकग्रामलक्षणौ णिकेकणौ परत्वाद्बाधते । श्वाविद्गर्ते भवः श्वाविद्गर्तीयः। वृकगर्तीयः । शृगालगर्तीयः । रौहिद्गर्तीयः । आभिसारगर्तकः त्रैगर्तकः इत्यत्राकञ् 'राष्ट्रेभ्यः' ( ६-३-४३ ) इति बहुविषयेभ्य इति बहुवचनसामर्थ्यात् भवतीत्युक्तम् । उत्तरपदग्रहणं बहुप्रत्ययपूर्वनिरासार्थम् । बाहुगर्तः ॥५७॥ कटपूर्वात्प्राचः ॥६।३।५८॥ कटपूर्वपदात्प्राग्देशवाचिनो नाम्नः शेषेऽर्थे ईयः प्रत्ययो भवति । अणोऽपवादः । कटनगरीयः । कटग्रामीयः । कटघोषीयः । कटवर्तकीयः । कटपल्वलीयः । प्राच इति किम् । काटनगरः ॥५८॥ *कखोपान्त्यकन्थापलदनगरग्रामह्रदोत्तरपदाद्दोः॥६।३।५९॥ ककारखकारोपान्त्यात्कन्थापलदनगरग्रामह्रद इत्येतदुत्तरपदाच्च देशवाचिनो दुसञ्ज्ञकात् शेषेऽर्थे ईयः प्रत्ययो भवति । *बाधकबाधनार्थ

---

अनूपण्ड 'कशेर्मोऽन्तश्च' कश्मीराः । विजापयन्ति विजापका । द्विधा गता अनुगता आपो यत्र द्वीपः अनूप । अजान्वहति अजवाहः । कुत्सिता लूता यत्र कुलूतः । 'केशीशमि—' इति रङ्कुः। गन्धानियर्त्ति गन्धार । साल्वाया अपत्य साल्वेयः । युधाया अपत्य यौधेय । सह स्थालेन वर्तते सस्थाल' । सिन्धुशब्दोन्ते यस्य सिन्ध्वन्त सिन्धुशब्दान्तो गृह्यते । न तु सिन्धोरन्त इति कृत्वा सिन्ध्वन्त इत्यखण्डः । तदा हि 'हृद्भगसिन्धो' इत्यत्र साक्तुसैन्धव पानसैन्धव इत्यादिषु कच्छादो तदन्तविधेरपीष्टत्वात् इति यदुक्तं तदुपपन्नं स्यात् ॥—पूर्वोक्तमेवेति । उत्तरेण त्वणा बाधा माभूदित्येवरूपम् ॥—कोपा—॥—इकणकञोरिति । 'उवर्णादिकण्' 'बहुविषयेभ्य' इत्यनयोः ॥—अन्येन बाधित इति, । प्राग्जितात्-' इति प्राप्तोऽन्येनाकञादिना बाधित इत्यर्थः ॥—अनर्थक स्यादिति । यदि हि नृनृस्थे अन्यत्र वाकञेव स्यात् तदा किं पूर्वसूत्रेण । अनेनैव कच्छादिकोपान्त्याच्चइत्येवरूपेण सिद्धत्वात्—॥ इकण्स्यादिति । यत इक्ष्वाकोरिकणप्यनेनाकञा बाध्यमानो विद्यते एव ततश्च सोप्यनेन स्यादिति ॥—कखो—॥—बाधकबाधनार्थ इति । 'दोरीय' इति ईयस्य ये बाधकाः कोपान्त्याच्चे-

आरम्भः । कोपान्त्यात् कोपान्त्यलक्षणेऽणि प्राप्ते । आरोहणकीयः । द्रौघणकीयः । आश्वत्थिकीयः । शाल्मलिकीयः । सौषुकीयः । *आष्टकीयः । ब्राह्मणकीयः । बालकीयः । खोपान्त्यात् वाहीकग्रामलक्षणयोर्णिकेकणोः, कौटशिखीयः । माटिशिखीयः । अयोमुखीयः । कन्थापलदोत्तरपदात्तयोरेव । दाक्षिकन्थीयः । माहकिकन्थीयः । दाक्षिपलदीयः । माहकिपलदीयः । नगरोत्तरपदाद्रोपान्त्यलक्षणेऽकञि, दाक्षिनगरीयः । माहकिनगरीयः । ग्रामह्रदोत्तरपदात् णिकेकणोरेव । दाक्षिग्रामीयः । माहकिग्रामीयः । दाक्षिह्रदीयः । माहकिह्रदीयः । दोरिति किम् । आर्पिकः । माडनगरः ॥ ५९ ॥ **पर्वतात् ॥ ६ । ३ । ६० ॥** पर्वतशब्दाद्देशवाचिनः शेषेऽर्थे ईयः प्रत्ययो भवति । अणोऽपवादः । पर्वतीयो राजा । पर्वतीयः पुमान् ॥ ६० ॥ **अनरे वा ॥ ६ । ३ । ६१ ॥** पर्वताद्देशवाचिनो नरवर्जिते शेषेऽर्थे ईयः प्रत्ययो भवति वा । पर्वतीयानि पार्वतानि फलानि । पर्वतीयं पार्वतमुदकम् । अनर इति किम् । पर्वतीयो मनुष्यः ॥ ६१ ॥ **पर्णकृकणाद्भारद्वाजात् ॥ ६ ॥ ३ । ६२ ॥** पर्णकृकण इत्येताभ्यां भारद्वाजदेशवाचिभ्यां शेषेऽर्थे ईयः प्रत्ययो भवति । अणोऽपवादः । पर्णीयः । कृकणीयः । भारद्वाजादिति किम् । पार्णः । कार्कणः ॥ ६२ ॥ ***गहादिभ्यः ॥ ६ । ३ । ६३ ॥** देशादिति वर्तते । तद्गहादीनां यथासंभवं विशेषणम् । गहादिभ्यो यथासंभवं देशवाचिभ्यः शेषेऽर्थे ईयः प्रत्ययो भवति । अणाद्यपवादः । गहीयः । अन्तस्थीयः । *गह *अन्तस्थ *अन्तस्था *सम *विषम *उत्तम *अङ्गमगध *शुक्लपक्ष *पूर्वपक्ष *अपरपक्ष* कृष्णशकुन अधमशाख उत्तमशाख समानशाख एकशाख *समानग्राम *एकग्राम *एकवृक्ष *एकपलाश *इष्वग्र *दन्ताग्र *इष्वनीक अवस्यन्द *कामप्रस्थ *सौप्रस्थ खाडायनि *काठेरणि *काठेरिणि *लावेरणि *लावेरिणि *लावीरणि *शैशिरि *शौङ्गि *शौङ्गिशैशिरि *आसुरि *आहिंसि *आमित्रि

---

स्येवमादयस्तेषां बाधन बाधस्तदर्थोऽयमारभ्यत इत्यर्थ । एतदेव कोपान्त्यादित्यादिना स्पष्टयन्नुदाहरति ॥—आष्टकीय इति । ' इष्यशि-' इति तकिक साध्य अष्टौ कायति वा । अष्टावध्याया मानमस्येति वा पश्चात् ' तदत्रास्ति ' इत्यण् । इहान्तग्रहणादेव केवलस्य निवृत्तौ दुरवाप गर्त्तोत्तरपदवद्बहुपूर्वनिवृत्त्यर्थमित्याशङ्काया अभावे उत्तरपदग्रहण कन्थाद्यन्तोत्तरपदाग्रहणार्थम् । ' प्रस्थपुरवहान्त-' इत्यत्र त्वन्तग्रहणात् प्रस्थाद्यन्तोत्तरपदग्रहणस्यापीष्टत्वात् ॥—गहा—॥ अथ गण । गाह्यते घञ् । पृषोदरादित्वात् ह्रस्वत्वे गह । अन्ते तिष्ठति अन्तस्थ' । अन्तस्थाः । समति अच् सम विगत समात् विषमः । उत्तास्यति वहूना प्रकृष्ट उत्कृष्टो वा उत्तमो देश । अङ्गाश्च मगधाश्च अङ्गमगधा' । शुक्लश्चासौ पक्षश्च शुक्लपक्ष । एव पूर्वपक्ष. । अपरपक्षः । कृष्णशकुन । अधमा उत्तमा समाना एका शाखा यस्य । समानश्चासो ग्रामश्च समानग्राम । अस्य देशवाचिन एवास्मिन् गणे पाठ' । अन्यत्र ' समानपूर्व-' इति इकण् । एकश्चासौ ग्रामश्च वृक्षश्च पलाशश्च एकग्राम एकवृक्ष एकपलाश. । इषुभिरग्र प्रधानम् । इष्वग्र' । दन्तैरग्रः । दन्ताग्र । इषुप्रधानान्यनीकानि यत्र इष्वनीक । अवस्यन्दतेऽत्र अवस्यन्दः । कामेषु प्रतिष्ठते कामप्रस्थ' । सुप्रचष्टे सुप्रख्य सोऽत्रास्ति तस्य निवासो वा सौप्रख्य । कठमीरयति । नन्द्यादित्वात् कठेरणस्तस्यापत्य काठेरणि । ' ऋद्रहे कित् ' इरिणि कठस्य इरिणमिव ऊपरमिव कठेरिणस्तस्यापत्य काठेरिणि । लूयते लव । लवमीरयति लवेरणस्तस्यापत्य लावेरणि । लवस्येरिणमिव लवेरिणस्तस्यापत्य लावेरिणि' । लवोऽस्यास्तीति लवी लाविनमीरयति लवीरणस्तस्यापत्य लावीरणि । शिशिरस्यापत्य शैशिरिः । शुङ्गस्यापत्य शौङ्गि । शुङ्गस्य शुङ्गाया वापत्य ' शुङ्गाभ्या भारद्वाजे ' अण् शौङ्गश्चासौ शैशिरिश्च । असुरस्यापत्यमासुरिः । बाह्वादित्वादिञ् । न हिनस्ति न विद्यते हिंसा यस्य वा अहिंसस्तस्यापत्यमाहिंसि. । न मित्रममित्रः । पसो वा तस्यापत्यम् आमित्रि. । न्यङ्कस्यापत्यम् भोजस्य भूर्जस्य

व्याडि भौङ्गि भौजि भौजि आध्यश्वि आश्वत्थि औद्राहमानि औपविन्दवि आग्निशर्मि दैवशर्मि *श्रौति वाटारकि वाल्मीकि *क्षैमधृत्वि *उत्तर *अन्तर मुखतस् पार्श्वतस् *एकतस् *अनन्तर *आनृशंसि *साटि *सौमित्रि *परपक्ष स्वक देवक। इति गहादयः। वहुवचनमाकृतिगणार्थम् ॥ ६३ ॥ पृथिवीमध्यान्मध्यमश्चास्य ॥ ६ । ३ । ६४ ॥ पृथिवीमध्यशब्दाद्देशवाचिनः शेषेऽर्थे ईयः प्रत्ययो भवति मध्यमादेशश्चास्य पृथिवीमध्यशब्दस्य भवति । पृथिवीमध्ये जातो भवो वा मध्यमीयः ॥ ६४ ॥ निवासाच्चरणेऽण् ॥ ६ । ३ । ६५ ॥ पृथिवीमध्यान्निवासभूताद्देशवाचिनश्चरणे निवस्तरि शेषेऽर्थेऽण् प्रत्ययो भवति मध्यमादेशश्चास्य पृथिवीमध्यशब्दस्य। पृथिवीमध्यं निवास एषां चरणानां माध्यमाश्चरणाः। त्रयः प्राच्याः त्रयः उदीच्याः त्रयो माध्यमाः। निवासादिति किम्। पृथिवीमध्यादागतो मध्यमीयः कठः। चरण इति किम्। पृथिवीमध्यं निवासोऽस्य मध्यमीयः शूद्रः ॥ ६६ ॥ वेणुकादिभ्य ईयण् ॥ ६ । ३ । ६६ ॥ वेणुक इत्येवमादिभ्यो यथायोगं देशवाचिभ्यः शेषेऽर्थे ईयण् प्रत्ययो भवति। वैणुकीयः। वैत्रकीयः। औत्तरपदीयः। औत्तरीयः। औत्तरकीयः। प्रास्थीयः। प्रास्थकीयः। माध्यमकीयः। माध्यमिकीयः। नैपुणकीयः। वहुवचनं प्रयोगानुसरणार्थम् ॥ ६६ ॥ वा युष्मदस्मदोऽञीनञौ युष्माकास्माकौ चास्यैकत्वे तु तवकममकम् ॥ ६ । ३ । ६७ ॥ देशादिति निवृत्तम्। युष्मद् अस्मद् इत्येताभ्यां शेषेऽर्थे अञ् ईनञ् इत्येतौ प्रत्ययौ वा भवतः तत्संनियोगे च यथासंख्यं युष्मदस्मदोर्युष्माकास्माकौ, एकत्वविशिष्टे त्वर्थे वर्तमानयोस्तवकममकावादेशौ भवतः। प्रत्ययौ प्रति यथासंख्यं नास्ति वचनभेदात्। युष्माकमयं युवयोर्वा यौष्माकः। यौष्माकीणः। अस्माकमयमावयोर्वा आस्माकः आस्माकीनः। पक्षे त्यदादित्वेन दुसंज्ञकत्वादीयः। युष्मदीयः। अस्मदीयः। एकत्वे तु तवकममकम्। तवायं तावकः। ममायं मामकः। तावकीनः। मामकीनः। पक्षे त्वदीयः। मदीयः ॥ ६७ ॥ द्वीपादनुसमुद्रं ण्यः ॥ ६ । ३ । ६८ ॥ समुद्रसमीपे यो द्वीपस्तद्वाचिनः शेषेऽर्थे ण्यः प्रत्ययो भवति। कच्छाद्यकञणोरपवादः। द्वैप्यो मनुष्यः। द्वैप्यमस्य हसितम्। द्वैप्यम्। अनुसमुद्रमिति किम्। अनुनदि यो द्वीपस्तस्मात् द्वैपको व्यासः। द्वैपकमस्य हसितम्। द्वैपम् ॥ ६८ ॥ अर्धाद्यः ॥ ६ । ३ । ६९ ॥ अर्धशब्दाच्छेषेऽर्थे यः प्रत्ययो भवति। अर्ध्यम् ॥ ६९ ॥ सपूर्वादिकण् ॥ ६ । ३ । ७० ॥ सपूर्वपदादर्धशब्दात् शेषेऽर्थे इकण् प्रत्ययो भवति। पौष्करार्धिकः। वैजयार्धिकः। बालेयार्धिकः। गौतमार्धिकः। क्षैत्रार्धिकः

---

अध्यश्वस्य अश्वत्थस्य उद्राहमानस्यापत्यम् 'अत इञ्' उपविन्दो अग्निशर्मणो देवशर्मणोऽपत्य बाह्वादित्वादिञ्। श्रुतस्यापत्य श्रौति। वटार कायति तस्यापत्य वल्मीकस्यापत्यमत इञ्। क्षेमं धृतवान् क्षेमधृत्वा तस्यापत्य बाह्वादित्वादिञ्। क्षैमधृत्वि। उत्तरति उत्तरः। 'अनिकाभ्यां तर' इति अन्तं राति वा अन्तरः। एक तस्यति क्विप् एकता। न अन्तरः। अनन्तरः। नृन् शसति नृशस न नृशस। अनृशसस्तस्यापत्यमानृशंसि.। षट् अवयवे। सटति सटस्तस्यापत्य साटिः। सुमित्राया अपत्य सौमित्रि.। बाह्वादित्वादिञ्। परस्य पक्ष परपक्ष। इति गहादिगण ॥—निवा—॥ नन्वण्ग्रहण किमर्थं यतो यो हि अन्येन बाधितो न प्राप्नोति तदर्थमिद स चाणेव। सत्यम्। निवासाच्चरण इति कृते पूर्वसूत्रेणैव सिद्धे नियमार्थं स्यात्। पृथिवीमध्यान्निवासभूतदेशवाचिनश्चरणे एव निवस्तरि नान्यत्र ततश्च मध्यमीयाश्चरणा माध्यम. शूद्र इति वैपरीत्य स्यादतस्तन्मा भूदित्यण्ग्रहणम् ॥—वेणु—॥ वेणव सन्त्यत्र उत्तरा-

यौवनाधिकः ॥ ७० ॥ दिक्पूर्वपदात्तौ ॥ ६ । ३ । ७१ ॥ दिक्पूर्वपदादर्धशब्दाच्छेषेऽर्थे तौ य इकण् इत्येतौ प्रत्ययौ भवतः । पूर्वार्ध्यम् । पौर्वार्धिकम् दक्षिणार्ध्यम् । दाक्षिणार्धिकम् । पश्चार्ध्यम् । पाश्चार्धिकम् ॥ ७१ ॥ ग्रामराष्ट्रांशादणिकणौ ॥ ६ । ३ । ७२ ॥ ग्रामराष्ट्रैकदेशवाचिनोऽर्धशब्दाद्दिक्पूर्वात् शेषेऽर्थेऽण् इकण् इत्येतौ प्रत्ययौ भवतः । यापवादौ । ग्रामस्य राष्ट्रस्य वा पूर्वार्धे भवः पौर्वार्धः । पौर्वार्धिकः । दाक्षिणार्धः । दाक्षिणार्धिकः ॥ ७२ ॥ *परावराधमोत्तमादेर्यः॥६।३।७३॥ पर अवर अधम उत्तम इत्येतत्पूर्वादर्धशब्दाच्छेषेऽर्थे यः प्रत्ययो भवति । इकणोऽपवादः । परार्ध्यम् । अवरार्ध्यम् । अधमार्ध्यम् । उत्तमार्ध्यम् । परावरयोः *दिक्शब्दत्वेऽपि परत्वादयमेव यः ॥ ७३ ॥ *अमोऽन्तावोधसः ॥ ६ । ३ । ७४ ॥ अन्त अवस् अधस् इत्येतेभ्यः शेषेऽर्थेऽमः प्रत्ययो भवति । *अन्तमः । अवमः । अधमः । *अकारादित्वमवोऽधसोऽन्त्यस्वरादिलोपार्थम् ॥ ७४ ॥ पश्चादाद्यन्ताग्रादिमः ॥६।३।७५॥ पश्चात् आदि अन्त अग्र इत्येतेभ्यः शेषेऽर्थे इमः प्रत्ययो भवति । पश्चिमः । अत्राव्ययत्वादन्त्यस्वरादिलोपः । आदिमः । अन्तिमः । अग्रिमः । आद्यन्ताभ्यां भवादन्यत्रायं विधिः । भवे तु परत्वाद्दिगादिय एव ॥ ७५ ॥ मध्यान्मः ॥ ६ । ३ । ७६ ॥ मध्यशब्दाच्छेषेऽर्थे मः प्रत्ययो भवति । मध्यमः । भवे दिनणादिर्वक्ष्यते । ततोऽन्यत्रायं विधिः ॥ ७६ ॥ *मध्य उत्कर्षापकर्षयोरः ॥ ६ । ३ । ७७ ॥ उत्कर्षापकर्षयोर्मध्ये वर्तमानान्मध्यशब्दाच्छेषेऽर्थे अ इत्ययं प्रत्ययो भवति । मापवादः । नात्युत्कृष्टो नात्यपकृष्टो मध्यपरिमाणो मध्यो वैयाकरणः । मध्या गुणाः । मध्या स्त्री । नातिदीर्घं नातिह्रस्वं मध्यममाणं मध्यं काष्ठम् । नातिस्थूलो नातिकृशो मध्यः कायः । *यद्यपि मध्यशब्दो मध्यपरिणामवाचिन्यपि वर्तते तथाप्यवस्थावस्थावतोः स्याद्वादाद्भेदविवक्षायामवस्थावाचिभक्तेरवस्थावति प्रत्ययार्थे पूर्वेण मो माभूदिति वचनम् ॥ ७७ ॥ *अध्यात्मादिभ्य इकण् ॥ ६ । ३ । ७८ ॥ अध्यात्म इत्यादिभ्यः शेषेऽर्थे इकण् प्रत्ययो भवति । अध्यात्मं भवमाध्यात्मिकम् । एवमाधिदैविकम् । आधिभौतिकम् । अनुशतिकादित्वादनयोरुभयपदवृद्धिः । और्ध्वदमिकः और्ध्वदेहिकः । और्ध्वदमिकः और्ध्वदेहिकः । अत एव पाठादूर्ध्वशब्दस्य दमदेहयोर्वा मोऽन्तः। केचिदूर्ध्वदमोर्ध्वदेहावनुशतिकादिषु पठन्त उभयपदवृद्धिमिच्छन्ति । और्ध्वदामिकः । और्ध्वदैहिकः । ऊर्ध्वमौहूर्तिकः । अत्र 'सप्तमी चोर्ध्वमौहूर्तिके' (७-३-१२) इति ज्ञापकादुत्तरपदस्यैव वृद्धिः । अकस्मात् हेतुशुन्यः कालः तत्र भवमाकस्मिकम् । अमुष्मिन्परलोके भवम्

---

ण्यत्र सन्ति । 'ऋप्यादे फ' '। प्रस्थस्य तुल्य'। मध्यम एव । मध्यममस्यास्ति 'अतोनेक- इरीक' । अल्पो निपुणः । 'कुत्सिताल्पे-' इति कप् । तत्र भव' ॥—परावरा—॥— दिक्शब्दत्वेपीति । न केवल परावरयोर्यथाक्रम शब्दधर्मार्थयोरनेन प्रत्यय इत्यपेरर्थ ॥—अमो—॥ यत्र प्रकृतिविशेषो नोपादीयते तत्र 'प्राग्जात्' इति प्रवर्त्तते इत्यत्र प्रकृतिविशेषोपादानादम इत्यस्य प्रथमान्तनिर्देशेऽपि न प्रकृतिभाव' ॥—अन्तम इति । अन्तशब्दात् भवादन्यत्राय विधि । भवे तु दिगादिम एव । तथा अवोध शब्दयोर्दिग्देशवृत्त्योरिह ग्रहण कालवृत्त्योस्तु परत्वात् 'सायंचिरम्-' इति तनडेव ॥—अकारादीति । अन्यथाम इति कृते 'नाम सिदय्व्यञ्जने' इत्यनेन पदत्वात् 'प्रायोऽव्ययस्य' इत्यन्त्यस्वरादिलोपो न स्यात् । नोऽपदस्य-' इत्यतोऽपद इत्यनुवर्त्तनात् ॥—मध्ये—॥—यद्यपीति । नन्वाधाराधेययोरभेदविवक्षया मध्यवर्त्तिकाष्ठाद्यपि मध्यशब्देनोच्य' तत् किमनेनेत्याशङ्का ॥—अध्यात्मा—॥ आत्मनि इति विगृह्य 'अनः'

*आमुष्मिकम् । *एवमामुत्रिकम् । पारत्रिकम् । इहँ भवमैहिकम्।शैषिकम्।पाठसामर्थ्यात्सप्तम्या अलुप्।अव्यात्मादयः प्रयोगगम्याः ॥७८ ॥ **समानपूर्वलोकोत्तरपदात्** ॥६।३।७९॥ समानपूर्वपदेभ्यो लोकशब्दोत्तरपदेभ्यश्च शेषेऽर्थे इकण् प्रत्ययो भवति। समानग्रामे कृतो भवो वा सामानग्रामिकः। सामानदेशिकः । इह लोके कृतो भवो वा ऐहलौकिकः । पारलौकिकः । सार्वलौकिकः । योगद्वयेऽपि भवार्थ एव प्रत्यय इत्यन्ये ॥७९॥ *वर्षाकालेभ्यः ॥६।३।८०॥ वर्षाशब्दात्कालविशेषवाचिभ्यश्च शेषेऽर्थे इकण् प्रत्ययो भवति । अणपवादः दोरीयमपि परत्वाद्बाधते । वर्षासु भवो वार्षिकः । ऋतोर्ञ्णित् प्रत्ययस्तदवयवादेर्ऋत्वन्तादपि भवत्यभिधानात्। *पूर्ववार्षिकः। अपरवार्षिकः। एवमुत्तरत्रापि । कालवाचि, मासिकः ॥ आर्धमासिकः । सांवत्सरिकः । आह्निकः । दैवसिकः । वर्षाग्रहणमृत्वण्बाधनार्थम् । कालशब्दः काल*विशेषवाची । 'भर्तुसंध्यादेरण्' ( ६–३–८८ ) इत्यत्र संध्यादिग्रहणात् । स्वरूपग्रहणे हि काललक्षणेकण्बाधकं संध्यादिग्रहणमनर्थकं स्यात । बहुवचनं तु *यथाकथंचित् कालवृत्तिभ्यः प्रत्ययप्रापणार्थं, निशासहचरितमध्ययनं निशा प्रदोषसहचरितं प्रदोषः तत्र जयी नैशिकः प्रादोषिकः । कदम्बपुष्पसहचरितः कालः कदम्बपुष्पं व्रीहिपलालसहचरितः कालो व्रीहिपलालम् । तत्र देयमृणं कादम्बपुष्पिकं व्रैहिपलालिकम् । कालशब्दात्तु कालार्थादकालार्थाच्च कालतः, *अकालादपि कालार्थात् 'कालेभ्यः' इति *यो विधिः ॥ ८० ॥ **शरदः श्राद्धे कर्मणि** ॥ ६ । ३ । ८१ ॥ शरच्छब्दात्कालवाचिनः श्राद्धे कर्मणि पितृकार्ये शेषेऽर्थे इकण् प्रत्ययो भवति । ऋत्वणोऽपवादः। शारदिकं श्राद्धम् । कर्मणीति किम् । शारदः श्राद्धः।श्रद्धावानित्यर्थः।श्राद्ध इति किम् । शारदं विरेचनम् ॥८१॥ **नवा रोगातपे** ६ । ३ । ८२ ॥ शरच्छब्दात्कालवाचिनो रोगे आतपे च शेषेऽर्थे इकण् प्रत्ययो भवति वा । ऋत्वणोऽपवादः । शारदिकः शारदो वा रोगः।शारदिकः शारद आतपः । रोगातप इति किम् । शारदं दधि ॥ ८२ ॥ **निशाप्रदोषात्** ॥ ६ । ३ । ८३ ॥ निशाप्रदोषशब्दाभ्यां कालवाचिभ्यां शेषेऽर्थे 'वर्षाकालेभ्यः' ( ६–३–७९ ) इति नित्यं प्राप्त इकण् वा भवति । नैशिकः नैशः । प्रादोषिकः प्रादोषः ॥ ८३ ॥ **श्वसस्तादिः** ॥ ६ । ३ । ८४ ॥ श्वस् इत्येतस्मात्कालवाचिनः शेषेऽर्थे इकण् प्रत्ययो वा भवति स च तादिः । शौवस्तिकः । पक्षे 'ऐषमोह्यःश्वसो वा' ( ६–३–१८ ) इति त्यच् । श्वस्त्यम् । तत्रापि वाग्रहणात् पक्षे 'सायम्'–

इत्यत् समासान्तः ततः सप्तम्यर्थस्योक्तत्वात् सिप्रत्यय । यद्वा स्याद्वादात् प्रकृतिभेदेन कारकभेदे सप्तम्यन्तादिकण् ॥—आमुष्मिकमिति । ननु 'नोपदस्य–' इति कथमन्त्यस्वरादिलोपः 'सदन्तं पदम्' इति पदत्वास प्राप्नोति । न । 'नाम सिन्–' इति नियमात्पदत्वाभाव ॥—एवमामुत्रिकमिति । एवंशब्द परलोकलक्षण सादृश्यमवगमयति द्वयोः ॥—वर्षा——॥—— पूर्ववार्षिक इति । पूर्वाश्च ता वर्षाश्च 'पूर्वापरप्रथम–' इति समास । पूर्वासु वर्षासु भव इति तद्धितविषये 'दिगधिकम्–' इत्यनेन वा । वर्षाणां पूर्वत्वमिति 'पूर्वापराध–' इत्यादिना तत्पुरुषो वा 'अंशादृतोः' इत्युत्तरपदवृद्धिः । विशेषविहितत्वात्परत्वाच्चानेन 'दिक्पूर्वात्–' इति बाध्यते ॥—विशेषवाचीति । गृग्त इति शेप । मासाद्यपेक्षया कालशब्दोऽपि कालविशेषवाची तेन कालिक इत्यपि ॥—यथाकथचिदिति । यथाकथंचित् गुणवृत्त्या मुख्यवृत्त्या वा ये काले वर्त्तन्त इत्यर्थ. ॥—अकालादपीति । अकालशब्दश्च यदा कालमुपलक्षणीकृत्य काले वर्त्तते गुणवृत्त्यैव तदाकालशब्दात् कालार्थात् प्रत्ययो भवति यथादर्शितान् कदम्बपुष्पादेः ॥—यो विधिरिति । कालेभ्य इत्यशेन यो विधिः स तस्माद्भवतीति

( ६-३-८७ ) इत्यादिना तनट् । श्वस्तनम् ॥ ८४ ॥ *चिरपरुत्परारेस्त्नः ॥ ६ । ३ । ८५ ॥ चिरपरुत्परारि इत्येतेभ्यः कालवाचिभ्यः शेषेऽर्थे त्नः प्रत्ययो भवति वा । चिरत्नं परुत्नं परारित्नम् । पक्षे 'सायम्' [ ६-३-८७ ] इत्यादिना तनट् । चिरंतनम् । परुत्तनम् । परारितनम् । परुत्परारिभ्यां विकल्पं नेच्छन्त्यन्ये । परारेस्तु रिलोप इत्येके । परात्नः । केचित्तु परुत्परार्योस्तनट्यन्त्यस्वरात्परं *म्वागममिच्छन्ति । परुन्तनम् । परारितनम् ॥ ८५ ॥ पुरो नः ॥ ६ । ३ । ८६ ॥ पुराशब्दात्कालवाचिनोऽव्ययाच्छेषेऽर्थे नः प्रत्ययो भवति वा । पुरा भवं पुराणम् । पुरातनम् ॥ ८६ ॥ पूर्वाह्णापराह्णात्तनट् ॥ ६ । ३ । ८७ ॥ पूर्वाह्ण अपराह्ण इत्येताभ्यां कालवाचिभ्यां शेषेऽर्थे तनट् प्रत्ययो वा भवति । 'वर्षाकालेभ्यः' ( ६-३-७९ ) इति नित्यमिकणि प्राप्ते विकल्पः । तेन पक्षे सोऽपि भवति । पूर्वाह्णे जातो भवो वा पूर्वाह्णेतनः । पूर्वाह्णतनः । अपराह्णेतनः । अपराह्णतनः । 'कालात्तन'—( ३-२-२४ ) इत्यादिना वा सप्तम्या अलुप् । पूर्वाह्णे जयी पूर्वाह्णतनः । अपराह्णतनः । अत्र जयिनि वाच्ये तत्र व्यवस्थितविभाषाविज्ञानात् नित्यं सप्तम्या लुप् । पक्षे पौर्वाह्णिकः। आपराह्णिकः। टकारो ङ्यर्थः। पूर्वाह्णेतनी । अपराह्णेतनी ॥ ८७ ॥ सायंचिरंप्राह्णेप्रगेऽव्ययात् ॥ ६ । ३ । ८८ ॥ योगविभागाद्वेति निवृत्तम् । सायंचिरंप्राह्णेप्रगे इत्येतेभ्योऽव्ययेभ्यश्च कालवाचिभ्यः शेषेऽर्थे तनट् प्रत्ययो नित्यं भवति । साये भवं सायन्तनम् । चिरे चिरन्तनम् । अत एव निर्देशान्मान्तत्वं निपात्यते । प्राह्णेतनम् । प्रगेतनम् । अनयोरेकारान्तत्वम् । अव्यय, दिवातनम् । दोषातनम् । नक्तंतनम् । पुनस्तनम् । प्रातस्तनम् । प्राक्तनम् । कालेभ्य इत्येव । स्वर्भवं सौवम् । सायंचिरंप्राह्णेप्रगे इत्यव्ययेभ्योऽव्ययादित्येव सिद्धे सायचिरप्राह्णप्रगशब्देभ्यस्तनट्विधानं कालेकण्बाधनार्थम् ॥ ८८ ॥ *भर्तुसंध्यादेरण् ॥ ६ ३ । ८९ ॥ भं नक्षत्रं तद्वाचिभ्य ऋतुवाचिभ्यः संध्यादिभ्यश्च कालवाचिभ्यः शेषेऽर्थेऽण् प्रत्ययो भवति । इकणोऽपवादः । पुष्येण चन्द्रयुक्तेन युक्तः कालः पुष्यः । 'चन्द्रयुक्त'—( ६-२-७ ) इत्यादिनाण् । तस्य लुप् । पुष्ये भवः पौषः। एवं तैषः आश्विनः रौहिणः सौवातः । ऋतु, ग्रैष्मः शैशिरः वासन्तः। ऋतोर्ङ्णित्व प्रत्ययस्तदवयवादेरपि भवति । पूर्वग्रैष्मः अपरशैशिरः । 'अंशादृतोः ( ७-४-१४ ) इत्युत्तरपदवृद्धिः । सन्ध्यादि, सान्ध्यः। सान्धिवेलः । आमावास्यः । *एकदेशविकृतस्यानन्यत्वादमावस्याशब्दादपि भवति । आमावस्यः। *अणग्रहणं स्वातिराधार्द्रापौर्णमासीभ्य*ईयबाधनार्थम् । यथाविहितमित्युच्यमाने दोरीय इतीयः प्राप्नोति । कालेभ्य इत्येव । स्वातेरिदमुदयस्थानम् स्वातीयम् । एवं राधीयम् । आर्द्रीयम् । सन्ध्या सन्धिवेला अमावास्या त्रयोदशी चतुर्दशी पञ्चदशी पौर्णमासी प्रतिपत् शश्वत् । इति संध्यादिः । 'ऋवर्णोवर्णात्'—( ७-४-७१ ) इति सूत्रेऽशश्वदिति प्रतिषेधाच्छश्वच्छब्दात्*इकणपि ।

॥-चिर-॥-म्वागममिति । मोऽर्दित्करण 'तौ मुम'-इत्यनुस्वारार्थम् । अन्यथाऽपदान्तत्वान्न स्यात्।'नाम सित्-' इत्यनेनापि मस्य पदान्तत्वम् परारितनमित्यत्रैव स्यात् । परुत्तनमित्यत्र तु अन्त्यस्वरात्परस्य तकाराच्च प्राक् स्थितस्य न स्यात् ॥-भर्तु-॥-एकदेशविकृतस्येति ।'वाधारेमावस्या' इति ह्रस्वत्वे एकदेशविकृतत्वम्॥-अणग्रहणमिति।अन्यथा योन्येन बाधितो न प्राप्नोति स भवति स चाणेवेति न्यायात्सिद्धम् । किं तद्ग्रहणेन ॥-ईयबाधनार्थमिति । ननु कालेकण् प्राप्नोति तत् किमुक्तम् ईयबाधनार्थमिति । सत्यम् । सूत्रकरणात् कालेकण् न भवति ॥-इकणपीति ।

शाश्वतम् । शाश्वतिकम् ॥ ८९ ॥ संवत्सरात्फलपर्वणोः ॥ ६ । ३ । ९० ॥ संवत्सरशब्दात्फले पर्वणि च शेषेऽर्थेऽण् प्रत्ययो भवति । सांवत्सरं फलम् । सांवत्सरं पर्व । फलपर्वणोरिति किम् । सांवत्सरिकं श्राद्धम् ॥ ९० ॥ हेमन्ताद्वा तलुक् च ॥ ६ । ३ । ९१ ॥ हेमन्तशब्दादृतुविशेषवाचिनः शेषेऽर्थेऽण् वा भवति तत्संनियोगे च तकारस्य लुग्वा भवति । नित्यमणि प्राप्ते विभाषा । तथा च त्रैरूप्यम् । हैमनम् । हैमन्तम् । हैमन्तिकम् । तदन्तविधिना पूर्वहैमनम् । 'अंशादृतोः' [ ७-४-१४ ] इत्युत्तरपदवृद्धिः ॥ ९१ ॥ *प्रावृष एण्यः ॥ ६ । ३ । ९२ ॥ प्रावृष् इत्येतस्मात् ऋतुवाचिनः शेषेऽर्थे एण्यः प्रत्ययो भवति । अणोऽपवादः । प्रावृषि भवः प्रावृषेण्यः । जाते तु परत्वादिक एव । प्रावृषि जातः प्रावृषिकः । एण्य इति प्रत्यये मूर्धन्यो णकारो *निर्निमित्तकः प्रावृषेण्ययतीति ण्यन्तात् क्विपि प्रावृषेण् इति मूर्धन्यार्थः ॥ ९२ ॥ स्थामाजिनान्ताल्लुप् ॥ ६ । ३ । ९३ ॥ स्थामन्शब्दान्तादजिनान्ताच्च परस्य शैषिकस्य प्रत्ययस्य लुप् भवति । अश्वत्थाम्नि भवो जातो वा अश्वत्थामा । 'अः स्थाम्नः' [ ६-१-२२ ] इत्यः । तस्य लुप् । सिंहाजिने भवो जातो वा सिंहाजिनः । उलाजिनः । वृकाजिनः । भवार्थस्यैव लुपमिच्छन्त्यन्ये तन्मते अश्वत्थाम्नोऽयं तत आगतो वा अश्वत्थामः । एवं सैंहाजिनः वार्काजिनः इत्यादौ न भवति ॥ ९३ ॥ *तत्र कृतलब्धक्रीतसंभूते ॥ ६ । ३ । ९४ ॥ अणादय एयणादयश्च सविशेषणा अनुवर्तन्ते । तत्रेति सप्तम्यन्तात् कृते लब्धे क्रीते संभूते चार्थे यथायोगमणादय एयणादयश्च प्रत्यया भवन्ति । यदन्येनोत्पादितं तत्कृतम् । यत्प्रतिग्रहादिना प्राप्तं तल्लब्धम् । यन्मूल्येन स्वीकृतम् तत् क्रीतम् । *यत्संभाव्यते *संमाति वा *तत्संभूतम् । स्रुघ्ने कृतो लब्धः क्रीतः संभूतो वा स्रौघ्नः । एवं माथुरः । अत्राण् । औत्सः । उत्सादित्वादञ् । बाह्यः । बाहीकः । 'बहिषष्टीकण्च' ( ६-१-१६ ) । नादेयः नद्यादित्वादेयण् । राष्ट्रियः । 'राष्ट्रादियः' ( ६-३-३ ) । पारावारीणः । 'पारावारादीनः' ( ६-३-६ ) । तत्रेति किम् । देवदत्तेन क्रीतः । कृतलब्धक्रीतसंभूत इति किम् । शयने शेते । आसने आस्ते ॥ ९४ ॥ कुशले ॥ ६ । ३ । ९५ ॥ तत्रेति सप्तम्यन्तात्कुशलेऽर्थे यथाविहितमणादय एयणादयश्च प्रत्यया भवन्ति । स्रुघ्ने कुशलः स्रौघ्नः । माथुरः । नादेयः । राष्ट्रियः । योगविभाग उत्तरार्थः ॥ ९५ ॥ पथोऽकः ॥ ६ । ३ । ९६ ॥ तत्रेति सप्तम्यन्तात्पथिन्शब्दात्कुशलेऽर्थेऽकः प्रत्ययो भवति । अणोऽपवादः । पथि कुशलः पथकः ॥ ९६ ॥ *कोऽश्मादेः ॥ ६ । ३ । ९७ ॥ तत्रेति सप्तम्यन्तेभ्योऽश्मन् इत्यादिभ्यः कुशलेऽर्थे कः प्रत्ययो भवति । अणादेरपवादः । अश्मनि कुशलः अश्मकः । अशनिकः । आकर्षकः । अश्मादय उपचारात्तद्विषयायां क्रियायां वर्तमानाः प्रत्ययमुत्पादयन्ति । तत्रैव कुशलार्थयोगात् । *प्रत्ययान्तरकरणमिकारोकारान्तशब्दार्थम् ॥ अन्यथा तेषु *अनिष्टं रूपमापद्येत । अश्मन् अशनि आकर्ष

'वर्षाकालेभ्य' ' इत्यनेन । न वाच्य प्रयोजनकणि चरितार्थ. । यत. प्रयोजनार्थे इकण् अस्माक्षेप्यत एव ॥—प्रावृ—॥—निर्निमित्तक इति । न तु 'रपृवर्ण–' इत्यनेन मूर्धन्यार्थं इति । अन्यथा नलोपरूपे परे कार्ये 'णषम–' इति णत्वस्यासत्त्वादन्त्यत्वाच्च 'रपृवर्ण–' इत्यप्रवृत्तौ 'नाम्नो नोनह्नः' इति नलोपेऽनिष्ट रूप स्यात् ॥—तत्र—॥—यत्सभाव्यते इति । उत्पत्तिज्ञान सभावना॥– तत्र उत्पद्यते।तत्र घटते इत्यर्थः ॥—संमाति वेति । प्रमाणानतिरेकेणावतिष्ठते॥—तत्संभूतमिति । समात्यर्थे अकर्मकत्वाच्छील्यादित्वात्सति कर्त्तरि क्त । इतरे तु अन्तर्भूतण्यर्थत्वात्कर्म्मणि क्तः ॥—कोऽश्म—॥—प्रत्ययान्तरकरणमिति । ननु 'पथोकः' इत्यतोऽकेनैव साध्यसिद्धिर्भविष्यति किं करणेनेति ॥—अनिष्टमिति । 'अवर्णेवर्णस्य–' इति प्रसङ्गात् ॥—

तक्षरु पिशाच पिचण्ड पाद शकुनि निचय जय नय ह्राद ह्लाद । इत्यश्मादिः ॥ ९७ ॥ जाते ॥ ६ । ३ । ९८ ॥ तत्रेति सप्तम्यन्ताज्जातेऽर्थे यथाविहितमणादय एयणादयश्च प्रत्यया भवन्ति । स्रुघ्ने जातः स्रौघ्नः । एवं माथुरः । अण् । औत्सः । औदपानः । अञ् । बाह्यः । बाह्लीकः । ञ्यटीकणौ । कालेयः । आग्नेयः । 'कल्यग्नेरेयण्' ( ६-१-१७ ) । स्त्रैणः । पौंस्नः । 'प्राग्वतः स्त्रीपुंसान्नञ्स्नञ्' ( ६-१-२५ ) । नादेयः । एयण् । राष्ट्रियः । इयः । पारावारीणः । ईनः । ग्राम्यः । ग्रामीणः । येनञौ । कान्त्रेयकः । 'कन्त्र्यादेश्चैयकञ्' ( ६-३-१० ) । तत्रेत्येव । चैत्राज्जातः । जात इति किम् । शयने शेते । आसने आस्ते । स्वयमुत्पर्णाजितस्यार्थ इति कृतादिभ्यो भेदः ॥ ९८ ॥ प्रावृष इकः ॥ ६ । ३ । ९९ ॥ तत्रेति सप्तम्यन्तात्प्रावृष्शब्दाज्जातेऽर्थे इकः प्रत्ययो भवति । एण्यस्यापवादः । प्रावृषि जातः प्रावृषिकः ॥ ९९ ॥ नाम्नि शरदोऽकञ् ॥ ६ । ३ । १०० ॥ शरदित्येतस्मात्सप्तम्यन्ताज्जातेऽर्थेऽकञ् प्रत्ययो भवति नाम्नि प्रकृतिप्रत्ययसमुदायश्चेत्कस्यचिन्नाम भवति । ऋत्वणोऽपवादः । शारदका दर्भाः । शारदका मुद्गाः । दर्भविशेषाणां मुद्गविशेषाणां चेयं संज्ञा । नाम्नीति किम् । शारदं सस्यम् ॥ १०० ॥ सिन्ध्वपकरात्काणौ ॥६।३।१०१॥ सिन्धुअपकर इत्येताभ्यां सप्तम्यन्ताभ्यां जातेऽर्थे क अण् इत्यतौ प्रत्ययौ भवतः नाम्नि । सिन्धोः कच्छाद्यकञणोः अपकराच्चौत्सर्गिकाणोऽपवादः । वचनभेदाद्यथासंख्याभावः । सिन्धौ जातः सिन्धुकः । सैन्धवः । अपकरे कचवरे जातः अपकरकः । आपकरः । नाम्नीत्येव । सैन्धवको मनुष्यः । नाम्नीत्यधिकारः 'कालाद्देये ऋणे' (६-३-११२) इति सूत्रं यावत् । अन्ये तु नाम्नीत्यधिकारं नेच्छन्ति ॥ १०१ ॥ पूर्वाह्णापराह्णार्द्राभूलप्रदोषावस्करादकः ॥६।३।१०२॥ तत्रेति सप्तम्यन्तेभ्यः पूर्वाह्णादिभ्यो जातेऽर्थेऽकः प्रत्ययो भवति नाम्नि । इकणादेरपवादः । पूर्वाह्णे जातः पूर्वाह्णकः । अपराह्णकः । अत्रेकण्तनटोरपवादः । आर्द्रकः । मूलकः । अत्र भाणः । प्रदोषकः । अत्रेकणणोः । अवस्करकः । अत्रौत्सर्गिकाणः । नाम्नीत्येव । पौर्वाह्णिकम् । पूर्वाह्णेतनम् । आपराह्णिकम् अपराह्णेतनम् आर्द्रं मौलं प्रादोषिकं प्रादोषम् आवस्करम् । केनैव सिद्धेऽकविधानमार्द्रिकेत्येवमर्थम् । अन्यथा खट्वाका खट्वका खट्विकेतिवत् के रूपत्रयं स्यात् ॥१०२॥ पथः पन्थ च ॥ ६ । ३ । १०३ ॥ पथिन्शब्दात्सप्तम्यन्ताज्जातेऽर्थेऽकः प्रत्ययो भवति पथिन्शब्दस्य च पन्थादेशो नाम्नि । अणोऽपवादः । पथि जातः पन्थकः ॥ १०३ ॥ *अश्च वाऽमावास्यायाः ॥ ६ । ३ । १०४ ॥ अमावास्याशब्दात्सप्तम्यन्ताज्जातेऽर्थेऽकारोऽकश्च प्रत्ययौ वा भवतः नाम्नि । सन्ध्याद्यणोऽपवादः । अमावास्यायां जातः अमावास्यः । अमावास्यकः । पक्षे संध्याद्यण् । आमावास्यः । एकदेशविकृतस्यानन्यत्वात् *अमावस्याशब्दादपि भवति । अमावस्यः । अमावस्यकः । आमावस्यः । नाम्नीत्येव । आमावास्यः ॥ १०४ ॥ *श्रविष्ठाषाढादीयण्च ॥ ६ । ३ । १०५ ॥ *श्रविष्ठा अषाढा इत्येताभ्यां जातेऽर्थे ईयण् चकारादश्च प्रत्ययौ भवतः नाम्नि । भाणोऽपवादः । श्रनिष्ठाः धनिष्ठाः । ताभिश्चन्द्रयुक्ताभिर्युक्तः कालः श्रविष्ठाः तासु

अश्च—॥—अमावस्यादाग्न्यादिति । 'आधारेमावस्या' इति घ्यणि वाग्रस्वत्वानिपातनात् ॥—श्रविष्ठाषाढा—॥—श्रविष्ठा इति । शृणोत्यनेनाखिजिति वा 'पुन्नाम्नि' इति घः । श्रवो विपुले अस्यां मतुर्वी. । 'मावर्ण-' इति वादेशे श्रवयती । ततो आतिशायिके इष्ठे 'जाति-' इति पुवद्भावे 'विन्मतोर्णीष्ठेयसौ-' इति मतोर्लुपि श्रविष्ठा ताभिः

जातः श्राविष्ठीयः । श्रविष्ठः । एवम् *अषाढायामषाढयोरषाढासु वा जातः आषाढीयः अषाढः । अणमपीच्छन्त्येके । श्राविष्ठः । आषाढः ॥ १०५ ॥ **फल्गुन्याष्टः** ॥ ६ । ३ । १०६ ॥ फल्गुनीशब्दात्सप्तम्यन्ताज्जातेऽर्थे टः प्रत्ययो भवति नाम्नि । भाणोऽपवादः । फल्गुन्योर्जातः फल्गुनः । फल्गुनी स्त्री । अणमपीच्छन्त्येके । फाल्गुनः । टकारो ङ्यर्थः ॥ १०६ ॥ ***बहुलानुराधापुष्यार्थपुनर्वसुहस्तविशाखास्वातेर्लुप्** ॥ ६ ॥ ३ । १०७ ॥ बहुलादिभ्यः सप्तम्यन्तेभ्यः परस्य भाणो जातेऽर्थे लुप् भवति नाम्नि । बहुलाः कृत्तिकाः ताभिश्चन्द्रयुक्ताभिर्युक्तः कालो बहुलाः तासु जातो बहुलः । अत्राणो लुपि 'ङ्यादेर्गौणस्य'—( २-४-९४ ) इत्यादिनापोऽपि लुप् । एवमनुराधासु अनुराधः । 'घञ्युपसर्गस्य बहुलम्' ( ३—२—८६ ) इति दीर्घत्वे अनूराधाः । तासु अनूराधः। पुष्यार्थे, पुष्ये पुष्यः । तिष्यः । सिध्यः । *पुनर्वसौ पुनर्वसुः। हस्ते हस्तः। विशाखायां विशाखः। स्वातौ स्वातिः ॥१०७॥ **चित्रारेवतीरोहिण्याः स्त्रियाम्** ॥ ६ । ३ । १०८ ॥ चित्रादिभ्यः सप्तम्यन्तेभ्यः परस्य भाणो जातेऽर्थे स्त्रियां लुप् भवति नाम्नि । चित्रायां जाता चित्रा माणविका । रेवत्यां रेवती । रोहिण्यां रोहिणी। स्त्रियामिति किम्। चैत्रः रैवतः रौहिणः। पुंस्येषां विकल्प इत्येके। तन्मते चित्रः रेवतः रोहिण इत्यपि भवति ॥१०८॥ **बहुलमन्येभ्यः**॥६। ३।१०९ ॥ श्रविष्ठादिभ्यो येऽन्ये नक्षत्रशब्दास्तेभ्यः सप्तम्यन्तेभ्यः परस्य भाणो जातेऽर्थे बहुलं लुप् भवति नाम्नि । अभिजिति जातोऽभिजित् । आभिजितः । अश्वयुजि जातः अश्वयुक् । आश्वयुजः। शतभिषजि शतभिषक् शातभिषजः । शातभिषः । 'वा जाते द्विः' ( ६-२-१३७ ) इति विकल्पेनाणो द्विस्वादन्त्यस्वरादिलोपः । कृत्तिकासु कृत्तिकः । कार्तिकः । मृगशिरसि मृगशिराः मार्गशीर्षः। एषु वा लोपः । क्वचिन्नित्यम् । अश्विनीषु जातः अश्विनः । अश्विनी । राधः । राधा । श्रवणः। श्रवणा । उत्तरः । उत्तरा । क्वचिन्न भवति । मघासु माघः । अश्वत्थे आश्वत्थः । प्रोष्ठपदासु प्रोष्ठपादः । भद्रपादः । 'प्रोष्ठभद्राज्जाते' ( ७-४-१३ ) इत्युत्तरपद-वृद्धिः ॥ १०९ ॥ ***स्थानान्तगोशालखरशालात्** ॥ ६ । ३ । ११० ॥ स्थानशब्दान्तान्नाम्नो गोशालखरशाल इत्येताभ्यां च सप्तम्यन्ताभ्यां परस्य जातेऽर्थे प्रत्ययस्य लुब्भवति नाम्नि । गोस्थाने जातो गोस्थानः । अश्वस्थानः । *गोशाले गोशालः । खरशाले खरशालः । लिङ्गविशिष्टस्यापि ग्रहणाद्गोस्थान्यां गोस्थानः । गोशालायां गोशालः । खरशालायां खरशालः । 'ङ्यादेर्गौणस्य' ( २-४-९४ ) इत्यादिना स्त्रीप्रत्ययस्यापि लुक् ॥ ११० ॥ **वत्सशालाद्वा** ॥ ६ । ३ । १११ ॥ वत्सशालशब्दात्सप्तम्यन्तात्परस्य जातेऽर्थे प्रत्ययस्य वा लुप् भवति नाम्नि । वत्सशालः । वात्सशालः ॥ १११ ॥ **सोदर्यसमानोदर्यौ** ॥ ६ । ३ । ११२ ॥ सोदर्यसमानोदर्यशब्दौ जातेऽर्थे यप्रत्ययान्तौ निपात्येते । समानोदरे जातः सोदर्यः । समानोदर्यः । निपातनात्पक्षे समानस्य सभावः । तत एव च जातार्थमात्रत्वेऽपि भ्रातृष्वेवाभिधानम् न कृमिमलादिषु । नाम्नीत्यधिकाराद्वा ॥ ११२ ॥ **कालाद्देये ऋणे** ॥ ६ । ३ । ११३ ॥ तत्रेति वर्तते । तत्रेति

॥—अषाढायामिति। अषाढा नक्षत्रमेकद्वित्रितारकं च मन्यन्ते ॥—बहु—॥—पुनर्वसाविति । अत्र प्रागेव एकैव तारा विवक्षितेति 'पुष्यार्थात्' इति सूत्रं विनापि सिद्धं पुल्लिङ्गत्वम् ॥—स्थाना—॥— गोशाले इति । अत्र तत्पुरुषे कृते परवल्लिङ्गतायां प्राप्तायां 'सेनाशाला-' इति पक्षे नपुंसकत्वात्ह्रस्वत्वे गोशाले जात इत्यादिविग्रह ॥

सप्तम्यन्तात्कालविशेषवाचिनो देयेऽर्थे यथाविहितं प्रत्ययो भवति यत्तद्देयमृणं चेत्तद्भवति । नाम्नीति निवृत्तम् । मासे देयमृणं मासिकम् । आर्धमासिकम् । सांवत्सरिकमृणम् । मासादिके गते देयमित्यर्थः । ऋण इति किम् । मासे देया भिक्षा । स्वातौ देयं स्वस्तिवाचनम् ॥११३॥ *कलाप्यश्वत्थयवबुसोमाव्यासैषमसोऽकः ॥ ६ । ३ । ११४ ॥ कलापिन् अश्वत्थ यवबुस उमाव्यास ऐषमस् इत्येतेभ्यः कालवाचिभ्यः सप्तम्यन्तेभ्यो देय ऋणेऽकः प्रत्ययो भवति । *इकणादेरपवादः । यस्मिन्काले मयूराः केदाराः इक्षवः कलापिनो भवन्ति स कालस्तत्साहचर्यात्कलापी तत्र देयमृणं कलापकम् । यस्मिन्कालेऽश्वत्थाः फलन्ति स कालोऽश्वत्थफलसहचरितोऽश्वत्थः तत्र देयमृणमश्वत्थकम् । यस्मिन्काले यवानां बुसं भवति स कालो यवबुसम् तत्र देयमृणं यवबुसकम् । उमा व्यस्यन्ते विक्षिप्यन्ते यस्मिन्स काल उमाव्यासस्तत्र देयमृणमुमाव्यासकम् । *ऐषमोऽस्मिन्संवत्सरे देयमृणमैषमकम् ॥ ११४ ॥ ग्रीष्मावरसमादकञ् ॥ ६ । ३ । ११५ ॥ ग्रीष्म अवरसमा इत्येताभ्यां कालवाचिभ्यां सप्तम्यन्ताभ्यां देये ऋणेऽकञ् प्रत्ययो भवति । अणिकणोरपवादः । ञकारो वृद्ध्यर्थः । ग्रीष्मे देयमृणं ग्रैष्मकम् । अवरा समा अवरसमा समाया अवरत्वमित्यवरसमं वा । तत्रावरसमकम् । अपरसमादपीच्छन्त्येके । आपरसमकम् ॥ ११५ ॥ *संवत्सराग्रहायण्या इकण् च ॥ ६ । ३ । ११६ ॥ संवत्सर आग्रहायणी इत्येताभ्यां सप्तम्यन्ताभ्यां देये ऋणे इकण् चकारादकञ्च प्रत्ययौ भवतः । अणिकणोरपवादः । संवत्सराद्धि फले पर्वणि च ऋणेण् प्राप्नोति । संवत्सरे देयमृणं फलं पर्व वा सांवत्सरिकम् । सांवत्सरकम् । आग्रहायणिकम् । आग्रहायणकम् । *वेत्यकृत्वा इकण् वेति विधानं ' संवत्सरात्फलपर्वणोः ' ( ६-३-८९ ) इत्यण्बाधनार्थम् ॥ ११६ ॥ साधुपुष्यत्पच्यमाने ॥ ६ । ३ । ११७ ॥ कालादिति वर्तते । तत्रेति सप्तम्यन्तात्कालविशेषवाचिनः साधौ पुष्यति पच्यमाने चार्थे यथाविहितं प्रत्यया भवन्ति । हेमन्ते साधु हैमनमनुलेपनम् । हैमन्तं हैमन्तिकम् । वसन्ते पुष्यन्ति वासन्त्यः कुन्दलताः । ग्रैष्म्यः पाटलाः । शरदि पच्यन्ते शारदाः शालयः । शैशिरा मुद्गाः ॥ ११७ ॥ उप्ते ॥ ६ । ३ । ११८ ॥ तत्रेति सप्तम्यन्तात्कालवाचिन उप्तेऽर्थे यथाविहितं प्रत्ययो भवति । शरद्युप्ताः शारदा यवाः । हेमन्ते हैमनाः । ग्रैष्माः । नैदाघाः । योगविभाग उत्तरार्थः ॥ ११८ ॥ *आश्वयुज्या अकञ् ॥ ६ । ३ । ११९ ॥ आश्वयुजीशब्दात्सप्तम्यन्तादुप्तेऽर्थेऽकञ् प्रत्ययो भवति । इकणोऽपवादः । अश्विनीभिश्चन्द्रयुक्ताभिर्युक्ता या पौर्णमासी सा आश्वयुजी । अश्विनीपर्यायोऽश्वयुक्शब्दः । *आश्वयुज्यां कौमुद्यामुप्ता आश्वयुजका माषाः ॥ ११९ ॥ ग्रीष्मवसन्ताद्वा ॥ ६ । ३ । १२० ॥ आभ्यां सप्तम्यन्ताभ्यामुप्तेऽर्थेऽकञ् प्रत्ययो भवति वा । ऋत्वणोऽपवादः । ग्रैष्मकं ग्रैष्मम् सस्यम् । वासन्तकं वासन्तं सस्यम् ॥ १२० ॥ व्याहरति मृगे ॥ ६ । ३ । १२१ ॥ तत्रेति वर्तते कालादिति च । तत्रेति सप्तम्यन्तात्कालवाचिनो व्याहरत्यर्थे यथाविहितं प्रत्ययो भवति व्याहरंश्चेन्मृगो भवति । निशायां व्याहरति नैशिको

—फला—॥—इकणादेरिति । आदिशब्दात् ' ऐषमोह्यःश्वसो वा ' इति त्यच्तनटौ ॥—ऐषम इति । सामान्यविशेषभावेन भूय सप्तमी । एके तु विशेषाभाव मन्वाना. सप्तम्यर्थादपि प्रत्यय इति च व्याचख्यु ॥—संव—॥—वेत्यकृत्वेति । नन्वाग्रहायण्या वेत्यपि कृते साध्यसिद्धिर्भविष्यतीत्याशङ्का॥—आश्व—॥—आश्वयुज्यामिति । अत एव निर्देशात् 'चन्द्रयुक्तात्–' इति न लुप्

नैशो वा शृगालः । प्रादोषिकः प्रादोषो वा शृगालः । मृग इति किम् । वसन्ते व्याहरति कोकिलः ॥ १११ ॥ *जयिनि च ॥ ६ । ३ । ११२ ॥ जयः प्रसहनमभ्यासः । सोऽस्यास्तीति जयी । तत्रेति सप्तम्यन्तात्कालवाचिनो जयिनि वाच्ये यथाविहितं प्रत्ययो भवति । निशासहचरितमध्ययनं निशा तत्र जयी साभ्यासः नैशिकः नैशः । प्रादोषिकः । प्रादोषः । वासन्तः । वार्षिकः । केवलकालविषयस्य *जयस्यायोगान्निशादिसहचरिताध्ययनादिवृत्तयो निशादयः शब्दाः प्रत्ययमुत्पादयन्ति । चकारः कालादित्यनुकर्षणार्थः तेन चानुकृष्टत्वान्नोत्तरत्रानुवर्तते ॥ ११२ ॥ भवे ॥ ६ । ३ । ११३ ॥ तत्रेत्यनुवर्तते । तत्रेति सप्तम्यन्ताद्भवेऽर्थे यथाविहितमणादय एयणादयश्च प्रत्यया भवन्ति । सत्ता भवत्यर्थो गृह्यते न जन्म जात इत्यनेन गतार्थत्वात् । स्रुघ्ने भवः स्रौघ्नः । माथुरः । औत्सः । नादेयः । राष्ट्रियः । पारावारीणः । ग्राम्यः । ग्रामीणः ॥११३॥ *दिगादिदेहांशाद्यः ॥ ६ । ३ । ११४ ॥ दिगादिभ्यो देहावयववाचिनश्च सप्तम्यन्ताद्भवेऽर्थे यः प्रत्ययो भवति । अणीयादेरपवादः । दिशि भवो दिश्यः । वर्ग्यः । अप्सु भवोऽप्सव्यः । 'अपो ययोनिमतिचरे' ( ३-२-२८ ) इति सप्तम्यलुप् । देहांश, मूर्धन्यः । " अनोऽस्ये ये " ( ७-४-५१ ) इत्यनो लोपाभावः । दन्त्यः । कर्ण्यः । ओष्ठ्यः । पाण्यः । पद्यः । तालव्यः । मुख्यः । जघन्यः । देहांशात्तदन्तादपीच्छन्त्येके । कण्ठतालव्यः । दन्तोष्ठ्यः । दिश् वर्ग पूग गण यूथ पक्ष धाय्या मित्र धाय्यमित्र मेधा न्याय अन्तर् पथिन् रहस् अलीक उख उखा साक्षिन् आदि अन्त मुख जघन मेघ वंश अनुवंश देश काल वेश आकाश अप् । इति दिगादिः ॥ मुखजघनवंशानुवंशानाम् *अदेहांशार्थः पाठः । सेनाया यन्मुखं तत्र भवो मुख्यः । सेनाया यज्जघनं तत्र भवो जघन्यः । वंशोऽन्वयस्तत्र भवो वंश्यः । एवमनुवंश्यः ॥ ११४ ॥ *नाम्न्युदकात् ॥ ६ । ३ । ११५ ॥ उदकशब्दात्सप्तम्यन्ताद्भवेऽर्थे यः प्रत्ययो भवति नाम्नि । *उदक्या रजस्वला । नाम्नीति किम् । औदको मत्स्यः ॥ ११५ ॥ मध्यादिनण्णेया मोऽन्तश्च ॥ ६ । ३ । ११६ ॥ मध्यशब्दात्सप्तम्यन्ताद्भवेऽर्थे दिनण् ण ईय इत्येते प्रत्यया भवन्ति तत्संनियोगे च मागमो भवति । मध्ये भवा माध्यंदिना उद्गायन्ति । माध्यमः । मध्यमीयः । अन्ये तु दिनं णितं नेच्छन्ति । मध्यंदिनः ॥ ११६ ॥ *जिह्वामूलाङ्गुलेश्चेयः ॥ ६ । ३ । ११७ ॥ जिह्वामूल अङ्गुलि इत्येताभ्यां मध्यशब्दाच्च भवेऽर्थे ईयः प्रत्ययो भवति । *यापवादः । जिह्वामूले भवो जिह्वामूलीयः । अङ्गुलीयः । मध्यीयः । चकारेण मध्यशब्दानुकर्षणं मागमाभावार्थम् ॥११७॥ वर्गान्तात् ॥ ६ । ३ । ११८ ॥ वर्गशब्दान्तात्सप्तम्यन्ताद्भवेऽर्थे ईयः प्रत्ययो भवति । अणोऽपवादः । कवर्गीयः । पवर्गीयो वर्णः ॥ ११८ ॥ ईनयौ चाऽशब्दे ॥ ६ । ३ । ११९ ॥ वर्गशब्दान्तात्सप्तम्यन्ताद्भवेऽर्थे ईनय इत्येतौ चकारादीयश्च प्रत्यया भवन्ति अशब्दे न चेत्स भवार्थः शब्दो भवति । भरतवर्गीणः । भरतवर्ग्यः । भरतवर्गीयः । बाहुबलिवर्गीणः । बाहुबलिवर्ग्यः । बाहुबलिवर्गीयः । युष्मद्वर्गीणः । युष्मद्वर्ग्यः । युष्मद्वर्गीयः । अस्मद्वर्गीणः । अस्मद्वर्ग्यः । अस्मद्वर्गीयः ।

---

॥—जयि—॥—जयस्यायोगादिति । जयो हि क्रिया सा च केवलस्य न संभवतीत्यर्थः ॥—दिगा—॥—अदेहांशार्थ इति । देहांशार्थत्वे तु अनुवशस्य मताभिप्रायेण यस्य सिद्धिः स्वमते तदन्तविधिनिरासात् ॥—नाम्न्यु—॥—उदक्येति । उदके भवा नैमित्तिक आधारः ॥—जिह्वा—॥—यापवाद इति ' दिगादि-' इति प्राप्तस्य

अशब्द इति किम् । कवर्गीयः ॥ १२९ ॥ *दृतिकुक्षिकलशिवस्त्यहेरेयण् ॥ ६ । ३ । १३० ॥ एभ्यः सप्तम्यन्तेभ्यो भवेऽर्थे एयण् प्रत्ययो भवति । अणादीनामपवादः । दृतौ चर्मखल्वायां भवं दार्तेयं जलम् । कुक्षौ देहांशे भवः कौक्षेयो व्याधिः । देशार्थादपि भवे परत्वात् *अयमेव न धूमाद्यकञ् । *असावप्ययमेव न कुलकुक्ष्याद्येयकञ् । असि कौक्षेयमुद्यम्य । *कलश्यां मन्थन्यां भवं कालशेयं तक्रम् । वस्तौ पुरीषनिर्गमरन्ध्रे भवं वास्तेयं पुरीषम् । अहौ भवमाहेयं विषम् ॥ १३० ॥ आस्तेयम् ॥ ६ । ३ । १३१ ॥ अस्तिशब्दात्तिवन्तप्रतिरूपकादव्ययाद्धनविद्यमानपर्यायात्तत्र भवे एयण् प्रत्ययो निपात्यते असृज्शब्दस्य वास्त्यादेशश्च । धने वा विद्यमाने वा असृजि वा भवमास्तेयम् ॥ १३१ ॥ *ग्रीवातोण् च ॥६।३।१३२॥ ग्रीवाशब्दाद्भवेऽर्थेऽण् चकारादेयण् च प्रत्ययौ भवतः । देहांशयापवादः । ग्रीवायां ग्रीवासु वा भवं *ग्रैवं ग्रैवेयम् । ग्रीवाशब्दो यदा शिरोधमनीवचनस्तदा तासां बहुत्वाद्बहुवचनम् ॥१३२॥ चतुर्मासान्नाम्नि ॥६।३।१३३॥ चतुर्मासशब्दात्तत्र भवेऽण् प्रत्ययो भवति नाम्नि समुदायश्चेन्नाम भवति। चतुर्षु मासेषु भवा चातुर्मासी आषाढी कार्तिकी फाल्गुनी च पौर्णमासी भण्यते । अत्र विधानसामर्थ्यात् ' द्विगोरनपत्ये '—(६—१—२४) इत्यादिना प्रत्ययस्य लुब् न भवति। नाम्नीति किम् । चतुर्षु मासेषु भवश्चतुर्मासः। अत्र ' वर्षाकालेभ्यः ' (६—३—७९) इतीकण् । तस्य लुप् ॥ १३३ ॥ यज्ञे ञ्यः ॥ ६ । ३ । १३४ ॥ चतुर्मासशब्दात्तत्र भवे यज्ञे ञ्यः प्रत्ययो भवति । चतुर्षु मासेषु भवानि चातुर्मास्यानि यज्ञकर्माणि ॥ १३४ ॥ *गम्भीरपञ्चजनबहिर्देवात् ॥ ६ । ३ । १३५ ॥ गम्भीरपञ्चजनबहिर्देव इत्येतेभ्यस्तत्र भवे ञ्यः प्रत्ययो भवति । अणाद्यपवादः । गम्भीरे भवो गाम्भीर्यः । पाञ्चजन्यः । बाह्यः । दैव्यः । भवादन्यत्र गाम्भीरः । पाञ्चजनः । *द्विगौ त्वणो लुपि पञ्चजनः । बाहीकः । दैवः । भवेऽपि बाहीक इत्येके ॥ १३५ ॥ *परिमुखादेरव्ययीभावात् ॥ ६ । ३ । १३६ ॥ परिमुख इत्येवमादिभ्योऽव्ययीभावेभ्यस्तत्र भवे ञ्यः प्रत्ययो भवति । अणोऽपवादः । परितः सर्वतो मुखं परिमुखम् । *अत एव वचनादव्ययीभावः । वर्जनार्थो वा परिः । मुखात् परि परिमुखम् । ' पर्यपाङ् '—( ३—१—३२ ) इत्यादिनाव्ययीभावः । परिमुखे भवः पारिमुख्यः । पारिहनव्यः । पार्योष्ठ्यः । परिमुखादेरिति किम् । औपकूलम् । औपमूलम् । औपशाखम् । औपकुम्भम् । औपखलम्। आनुकुम्भम्। आनुकूलम्। आनुखलम्। अव्ययीभावादिति किम्। परिग्लानो मुखाय परिमुखः तत्र भवो पारिमुखः। परिमुख परिहनु पर्योष्ठ पर्युलूखल परिरथ *परिसिर

॥–दृति–॥–अयमेवेति।भवादन्यत्र जातादावर्थे तस्य चरितार्थत्वात्॥–असावपीति।खड्गेपीत्यर्थ –॥–कलश्यामिति।कल्यते स्म क्ते कलितः।कलितं क्षिप्तं परिच्छिन्नमश्नुते व्याप्नोतीति कर्मणोणि कलिताशी । पृषोदरादित्वात्कलशिरित्यादेश ॥–ग्रीवा–॥–ग्रैवमिति।'ग्रीवेभ्योण्च' इति पाणिनीयसूत्रे बहुवचनेन ज्ञापितत्वात् ग्रीवासु भवमिति बहुत्वे एव प्रत्ययो न ग्रीवाया भव इत्येकत्वे ॥–गम्भी–॥–द्विगौ त्वणो लुपीति।यदा पञ्चजनशब्द पातालवाचकः रथकारपञ्चमस्य चातुर्वर्णस्य वा इति व्याख्या तदा न द्विगु असंज्ञाया तस्य विधानात्।यदा तु पञ्चसु जनेषु भवस्तदा द्विगोय अस्य विधानसामर्थ्यान्न लुप्॥–परि–॥—अत एव वचनाद्वि । न तु ' पर्यपाङ्–' इत्यादिना पञ्चम्यन्तेन सह तेन विधानात् परेश्चात्र वर्जनार्थाभावात् ' पर्यपाभ्याम्–' इति पञ्चम्यभाव. ॥—परिसिरेति । सिनोते

परिसीर उपसीर अनुसीर उपस्थूण उपस्थूल उपकलाप उपकपाल अनुपथ अनुगङ्ग अनुतिल अनुसीत ( अनुशीत ) अनुमाष अनुयव अनुयूप अनुवंश अनुपद । इति परिमुखादिः । अनुवंशादिगणादित्वाद्वोऽपि । अनुवंश्यः ॥ १३६ ॥ *अन्तःपूर्वादिकण् ॥ ६ । ३ । १३७ ॥ अन्तःशब्दपूर्वपदादव्ययीभावात्तत्र भवे इकण् प्रत्ययो भवति । अणोऽपवादः । अगारस्यान्तः अन्तरगारम् । तत्र भव आन्तरगारिकः । आन्तर्गेहिकः । *आन्तर्वेश्मिकः । आन्तपुरिकः । अव्ययीभावादित्येव । अन्तर्गतमगारस्य अन्तःस्थं वागारमन्तरगारम् तत्र भवमान्तरगारम् । आन्तःपुरम् । आन्तःकरणम् ॥ १३७ ॥ पर्यनोर्ग्रामात् ॥ ६ । ३।१३८॥ परि अनु इत्येताभ्यां परो यो ग्रामशब्दस्तदन्तादव्ययीभावात्तत्र भवे इकण् प्रत्ययो भवति । अणोऽपवादः । ग्रामात्परि परिग्रामम् । ग्रामस्य समीपमनुग्रामम् । तत्र भवः पारिग्रामिकः । आनुग्रामिकः । अव्ययीभावादित्येव । परिगतो ग्रामः परिग्रामस्तत्र भवः पारिग्रामः । आनुग्रामः ॥ १३८ ॥ उपाज्जानुनीविकर्णात् प्रायेण ॥ ६ । ३ । १३९ ॥ उप इत्येतस्मात्परे ये जानुनीविकर्णशब्दास्तदन्तादव्ययीभावादिकण् प्रत्ययो भवति प्रायेण तत्र भवे यस्तत्र बाहुल्येन भवति अन्यत्र च कदाचिद्भवति तस्मिन्नित्यर्थः । जानुनः समीपमुपजानु । प्रायेणोपजानु भवति औपजानुकः सेवकः । औपजानुकं शाटकम् । औपनीविकं ग्रीवादाम । औपनीविकं कार्षापणम् । औपकर्णिकः सूचकः । प्रायेणेति किम् । नित्यं भवे माभूत् । औपजानवं मांसम् । औपजानवं गडु । जानुशब्दो देहावयवो नोपजानुशब्द इति यो न भवति ॥ १३९ ॥ *रूढावन्तःपुरादिकः ॥ ६ । ३ । १४० ॥ अन्तःपुरशब्दात्तत्र भवे इकः प्रत्ययो भवति रूढौ स चेदन्तःपुरशब्दः क्वचिद्रूढो भवति । क चायं रूढः एकपुरुषपरिग्रहे स्त्रीसमुदाये । उपचारात्तन्निवासेऽपि । अन्तःपुरे भवा अन्तःपुरिका स्त्री । रूढाविति किम् । पुरस्यान्तर्गतम् , अन्तःपुरम् यथान्तरङ्गुलो नख इति । तत्र भवः आन्तःपुरः । पुरस्यान्तरन्तःपुरमिति *अव्ययीभावात्विकण् भवति । आन्तःपुरिक इति ॥ १४० ॥ *कर्णललाटात्कल् ॥ ६ । ३ । १४१ रूढाविति वर्तते । सेह रूढिः प्रकृतिप्रत्ययसमुदायस्य विशेषणम् । कर्णललाटशब्दाभ्यां तत्र भवे कल् भवति रूढौ प्रकृतिप्रत्ययसमुदायश्चेत्क्वचिद्रूढो भवति । कर्णिका कर्णाभरणविशेषः *पद्माद्यवयवश्च । ललाटिका ललाटमण्डनम् । रूढावित्येव । कर्णे भवं कर्ण्यम् । ललाट्यम् । लकारः स्त्रीत्वार्थः ॥ १४१ ॥ *तस्य व्याख्याने च ग्रन्थात् ॥६।३।१४२॥ ग्रन्थः शब्दसंदर्भःस व्याख्यायतेऽवयवशः कथ्यते येन तद्व्याख्यानम् । तस्येति षष्ठ्यन्ताद्व्याख्यानेऽर्थे तत्रेति सप्तम्यन्ताच्च भवेऽर्थे ग्रन्थवाचिनो यथाविहितं प्रत्ययो भवति। चकारस्तत्र भव इत्यस्यानुकर्षणार्थः । वाक्यार्थसमीपे चकारः श्रूयमाणः पूर्ववाक्यार्थमेव समुच्चिनोति। कृतां व्याख्यानं

' स्यजि-' इति किति रे सिरा ॥—परिसीरेति । सिनोते ' विजि-' इति दीर्घत्वे च सीरा ॥—अन्त —॥—आन्तर्वैश्मिक इति । वेश्मनोऽन्त ' नपुंसकाद्वा ' अत् । अन्तर्वेश्मे अन्तर्वेश्म ' सप्तम्या वा ' अम् । अंतर्वेश्म वा भव ॥—रूढा—॥—अन्त-पुरमिति । पुरस्य शरीरस्य अन्तर्गत चित्तस्थ गृहस्य वाऽन्तर्गतम् ॥—अव्ययीभावादिति । रूढाविति वचनात् अव्ययीभावादिति निवृत्तम् । अव्ययीभावे रूढेरसंभवात् । अन्तःपुरमिति ह्यत्र राज्ञोऽन्त पुरमिति राज्ञ स्त्रीवर्ग उच्यते नासावव्ययीभावार्थो भवति । अव्ययीभावो हि पूर्वपदार्थप्रधानोन्तरर्थप्रधान इति पूर्वेणेकणेव भवतीति ॥—कर्णललाटा——॥——पद्माद्यवयवश्चेति । कर्णे भवेति भवार्थस्तु व्युत्पत्तिमात्र पद्माद्यवयवस्य कर्णे अभावात् ॥——तस्य—॥

कृत्सु भवं वा कार्तम् । प्रातिपदिकीयम् । ननु च तस्य व्याख्यानेऽर्थे 'तस्येदम्' (६-३-१६९) इत्यनेनैव प्रत्ययविधिः सिद्धः चकारानुकृष्टेऽपि तत्र भवेऽर्थे पूर्वमेव प्रत्ययविधिरुक्तस्तत्किमनयोर्युगपदुपादानम् । उच्यते । वक्ष्यमाणः सकलोऽप्यपवादविधिरनयोरर्थयोर्यथा स्यात् इत्येवमर्थम् । उत्तरेणैकयोगत्वे चानुकृष्टत्वात्तत्र भव इत्यस्य ततः परं नानुवृत्तिः स्यात् । योगविभागे त्विहानुवृत्तिरनर्थिकेति द्वयोरुत्तरत्रानुवृत्तिर्भवति । उदाहरणोपन्यासस्तु *अनुवादमात्रम् । ग्रन्थादिति किम् । पाटलिपुत्रस्य *व्याख्यानी सुकोसला । पाटलिपुत्रमेवंसंनिवेशमिति सुकोसलया प्रतिच्छन्दकभूतया व्याख्यायते न तु पाटलिपुत्रं ग्रन्थ इत्युत्तरेणापवादिक *इकण् न भवति ॥ १४२ ॥ *प्रायो बहुस्वरादिकण् ॥ ६ । ३ । १४३ ॥ बहुस्वराद्ग्रन्थवाचिनस्तस्य व्याख्याने तत्र भवे चार्थे प्राय इकण् प्रत्ययो भवति । अणादेरपवादः । षत्वणत्वयोर्व्याख्यानं तत्र भवं वा षात्वणत्विकम् । एवं *नातानतिकम् । उदात्तानुदात्तयोः स्वरयोरेते नतानतसंज्ञे । आत्मनेपदपरस्मैपदिकम् । आव्ययीभावतत्पुरुषिकम् । नामाख्यातिकम् । आख्यातिकम् । ब्राह्मणिकम् । प्राथमिकम् । आध्वरिकम् । *पौरश्चरणिकम् । प्रायोवचनात्क्वचिन्न भवति । सांहितम् । प्रातिपदिकीयम् ॥ १४३ ॥ *ऋगृद्द्विस्वरयागेभ्यः ॥ ६ । ३ । १४४ ॥ ऋच् इत्येतस्मात् ऋकारान्तात् द्विस्वरात् यागशब्देभ्यश्च ग्रन्थवाचिभ्यस्तस्य व्याख्याने तत्र भवे चार्थे इकण् प्रत्ययो भवति । अणादेरपवादः । ऋचां व्याख्यानमृक्षु भवं वा आर्चिकम् । ऋकारान्त, चतुर्षु होतृषु भव इत्यणो लुपि चतुर्होता ग्रन्थः । तस्य व्याख्यानं तत्र भवं वा चातुर्होतृकम् । एवं पाञ्चहोतृकम् । द्विस्वर, आङ्गिकम् । पौर्विकम् । सौत्रिकम् । तार्किकम् । नामिकम् । याग, आग्निष्टोमिकम् । राजसूयिकम् । वाजपेयिकम् । पाकयज्ञिकम् । *नावयज्ञिकम् । पाञ्चौदनिकम् । दाशौदनिकम् । *ऋद्यागग्रहणं *पूर्वस्यैव प्रपञ्चः । यागेभ्य इति बहुवचनं ससोमकानामग्निष्टोमादीनाम् *असोमकानां पञ्चौदनादीनां च परिग्रहार्थम् ॥ १४४ ॥ *ऋषेरध्याये ॥ ६ । ३ । १४५ ॥ ऋषिशब्देभ्यो ग्रन्थवाचिभ्यस्तस्य व्याख्याने तत्र भवे चाध्याये इकण् प्रत्ययो भवति । वसिष्ठस्य*ग्रन्थस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकोऽध्यायः । वैश्वामित्रिकोऽध्यायः । अध्याय इति किम् । वसिष्ठस्य व्याख्यानी तत्र भवा वा वासिष्ठी ऋक् । 'प्रायो बहुस्वरात्' (६-३-४२) इति प्रायोग्रहणादप्राप्तिकल्पनायां विध्यर्थम् *प्राप्तिकल्पनायामध्याय एवेति नियमार्थं वचनम् ।

---

—उदाहरणोपन्यास इति।ननु कथमनर्थकत्व भवानुवर्त्तनस्य यदि हि भव इति नानुवर्त्तते तदा प्रातिपदिकीयम् इत्यत्रापवादभूत इकण् प्राप्नोति।न।तत्र प्रायोग्रहणादेव न भविष्यति।तर्हि किमर्थं तदुदाहरण दर्श्यते इत्याह—अनुवादमात्रम् ॥—व्याख्यानीति । व्याख्यायते अनया वाच्यलिङ्ग ॥—इकण् न भवतीति । किंतु 'रोपान्त्यात्' इत्यकञ् ॥—प्रायो—॥—नातानतिकमिति । नतोऽनुदात्त अनतस्तूदात्तोऽल्पस्वरत्वान्नतस्य पूर्वनिपात ॥—पौरश्चरणिकमिति । पुरो विपाककालादर्वाक् चर्यते पुरश्चरण 'भुजिपत्यादिभ्य' प्रायश्चित्त । तत्प्रतिपादको ग्रन्थोऽपि॥—ऋगृद्—॥-नावयज्ञिकमित्यादि ॥ नवसु यज्ञेषु पञ्चसु दशसु ओदनेषु भव' अण् तस्य 'द्विगो -' इति लुप् ॥—ऋद्यागग्रहणमिति । ऋदन्तानां यागवाचिना च द्विस्वराणा द्विस्वरेत्यशेन बहुस्वराणा तु 'प्रायो बहुस्वरात्' इति सिध्यति एकस्वरास्तु न सभवन्त्येव तत् किमर्थमिदमित्याह—पूर्वस्यैवेति । 'प्रायो बहुस्वरात्' इत्यस्येत्यर्थ ॥—असोमकानामिति । अन्यथा गौणमुख्ययोरिति न्यायेन ससोमकाना मुख्यानामग्निष्टोमादीनामेव ग्रहण स्यादिति ॥—ऋषे—॥—ग्रन्थस्येति । वसिष्ठादिसाहचर्यात् ग्रन्थोपि तथोच्यते ॥—प्राप्तिकल्पनायामिति । प्रायोग्रहस्य यादृच्छि-

॥१४५॥ *पुरोडाशपौरोडाशादिकेकटौ ॥६।३।१४६॥ आभ्यां ग्रन्थवाचिभ्यां तस्य व्याख्याने तत्र भवे चार्थे इक इकट् इत्येतौ प्रत्ययौ भवतः ।*अणयियोरिकणोऽपवादः । वचनभेदाद्यथासंख्याभावः । इकेकटोः स्त्रियां विशेषः । पुरोडाशाः पिष्टपिण्डाः । तैः सहचरितो मन्त्रः पुरोडाशः तस्य व्याख्यानस्तत्र भवो वा पुरोडाशिकः । पुरोडाशिकी । पुरोडाशानामयं तत्र भवो वा पौरोडाशः तत्संस्कारको मन्त्रस्तस्य व्याख्यानस्तत्र भवो वा पौरोडाशिकः । पौरोडाशिका। पौरोडाशिकी ॥ १४६ ॥ छन्दसो यः ॥ ६ । ३ । १४७ ॥ छन्दःशब्दाद्ग्रन्थवाचिनस्तस्य व्याख्याने तत्र भवे च यः प्रत्ययो भवति । द्विस्वरेकणोऽपवादः । छन्दसो व्याख्यानस्तत्र भवो वा छन्दस्यः ॥ १४७ ॥ *शिक्षादेश्चाण् ॥ ६ । ३ । १४८ ॥ शिक्षा इत्येवमादिभ्यश्छन्दःशब्दाच्च ग्रन्थवाचिनस्तस्य व्याख्याने तत्र भवे चार्थेण् प्रत्ययो भवति। इकणोपवादः । शिक्षाया व्याख्यानस्तत्र भवो वा शैक्षः । आर्गयनः । छन्दस्, छान्दसः । एवं छन्दस्शब्दस्य द्वैरूप्यं भवति। *अण्ग्रहणमीयबाधनार्थम् । नैयायः । वास्तुविद्यः । शिक्षा ऋगयन पद व्याख्यान पदव्याख्यान छन्दोव्याख्यान छन्दोमान छन्दोभाप छन्दोविचिति छन्दोविचिती छन्दोविजिति न्याय पुनरुक्त निरुक्त व्याकरण निगम वास्तुविद्या अङ्गविद्या क्षत्रविद्या त्रिविद्या विद्या उत्पात उत्पाद संवत्सर मुहूर्त निमित्त उपनिषद् ऋषि यज्ञ चर्चा क्रमेतर श्लक्ष्ण । इति शिक्षादिः । बहुस्वराणामदुसंज्ञकानामुपादानं प्रायोग्रहणस्य*प्रपञ्चः ॥ १४८ ॥ तत आगते ॥ ६ । ३ । १४९ ॥ तत इति पञ्चम्यन्तादागतेऽर्थे यथाविहितमणादय एयणादयश्च प्रत्यया भवन्ति । स्रुघ्नादागतः स्रौघ्नः । माथुरः । औत्सः । गव्यः । दैत्यः । बाह्यः । कालेयः । आग्नेयः । स्त्रैणः । पौंस्नः । नादेयः । राष्ट्रियः । ग्रामीणः । ग्राम्यः । मुख्यापादानपरिग्रहात्स्रुघ्नादागच्छन् वृक्षमूलादागत इत्यत्र वृक्षमूलान्नान्तरीयकापादानान्न भवति ॥ १४९ ॥ *विद्यायोनिसंबन्धादकञ् ॥ ६ । ३ । १५० ॥ *विद्याकृतो योनिकृतश्च संबन्धो येषां तद्वाचिभ्यः पञ्चम्यन्तेभ्य आगतेऽर्थेऽकञ् प्रत्ययो भवति । अणोऽपवादः । ईयं तु परत्वाद्बाधते । विद्यासंबन्धः, आचार्यादागतमाचार्यकम् । औपाध्यायकम् । शैष्यकम् । आर्त्विजकम् । आन्तेवासकम् । योनिसंबन्ध, पैतामहकम् । मातामहकम् । पैतृव्यकम् । मातुलकम् ॥ १५० ॥ पितुर्यो वा ॥ ६ । ३ । १५१ ॥ पितृशब्दाद्योनिसंबन्धवाचिनः पञ्चम्यन्तादागतेऽर्थे यः प्रत्ययो वा भवति । इकणोऽपवादः । पितुरागतं पित्र्यम् । 'ऋतो रस्तद्धिते (१—२—२६) इति रत्वम् । पक्षे पैतृकम् ॥ १५१ ॥ ऋत इकण् ॥ ६ । ३ । १५२ ॥ ऋकारान्ताद्विद्यायोनिसंबन्धवाचिनः पञ्चम्यन्तादागतेऽर्थे इकण् प्रत्ययो भवति । अकञोऽपवादः । होतुरागतं हौतृ-

---

कत्वात् ॥—पुरो—॥—अणीययोरिति । पुरोडाशादण. पौरोडाशादीयस्य प्राप्तिकल्पनाया तु द्वाभ्यामपि प्रायोबहुस्वरादिकणोऽपवादोऽयम् ॥—शिक्षा—॥—अणग्रहणमिति । ननु किमर्थमत्राणग्रहण योन्येन बाधितो न प्राप्नोतीति न्यायादणेव भविष्यतीत्याशङ्का॥—प्रपञ्च इति । ननु दुसज्ञानामीयबाधनार्थं क्रियतां पाठः । ये तु बहुस्वरा अदुसज्ञकास्तेषामुपादान कथ कृतं यत 'प्रायो बहुस्वरात् ' इति सूत्रे प्रायोग्रहणादेश न भविष्यतीकण् किं तु अणेवेत्याशङ्का ॥—विद्या—॥—विद्याकृत इति । विद्या च योनिश्च सबन्धो यस्येति बहुव्रीहिः । अत्र विद्याकृते सबन्धे विद्याशब्दो योनिकृते च योनिशब्द उपचारादर्थे च कार्यासभवाद्विद्यायोनिसबन्धवाचिनः प्रतिपत्तिरित्याह—विद्याकृतइत्यादि

कम् । पैतृकम् । प्राशास्तृकम् । प्रातिहर्तृकम् । शास्तृकम् । योनिसंबन्ध, मातृकम् । भ्रातृकम् । स्वास्तृकम् । दौहितृकम् । जामातृकम् । नानान्दृकम् । मातुरागता
मातृकी विद्या । इकणन्तत्वात् ङीप्रत्ययः ॥ १५२ ॥ *आयस्थानात् ॥ ६ । ३ । १५३ ॥ स्वाभिग्राह्यो भाग आयः स यस्मिन्नुत्पद्यते तदायस्थानम् । तद्वाचिनः
पञ्चम्यन्तादागतेऽर्थे इकण् प्रत्ययो भवति । अणोऽपवादः । ईयं तु परत्वाद्बाधते । एत्य तरन्त्यस्मिन्नित्यातरो नदीतीर्थम् । तत आगतम् आतरिकम् । शौल्कशा-
लिकम् । आपणिकम् । दौवारिकम् । आयस्थानत्वेनाप्रसिद्धादपि ताद्रूप्येण विवक्षिताद्भवतीति काश्चित् । सौधिनक ॥ १५३ ॥ *शुण्डिकादेरण् ॥ ६ । ३ । १५४ ॥
शुण्डिक इत्येवमादिभ्यः पञ्चम्यन्तेभ्य आगतेऽर्थेऽण् प्रत्ययो भवति । इकणादेरपवादः । शुण्डः शुण्डा वा सुरा ततो मत्वर्थीये शुण्डिकः शुण्डिका वा सुरापणः
सुराविक्रयी चोच्यते । तत आगतं शौण्डिकम् । औदपानम् । कार्कणम् । अण्ग्रहणं *विस्पष्टार्थम् । *यदि ह्यनेनाप्यायस्थानादिकण्तीर्थाद्धूमाद्यकञ् पर्णक्रकणाभ्यां
चैयः स्यात् वचनमिदम् *अनर्थकं स्यात् । न चोदपानादिहान्यणि वा विशेषोऽस्तीति । यदा तु शुण्डिकादीनि सर्वाण्यायस्थानान्येव तदा *अकञीयबाधनार्थम् ।
शुण्डिका उदपान पर्ण क्रकण उलप तृण तीर्थ स्थण्डिल उपल उदक भूमि पिप्पल । इति शुण्डिकादिः ॥ १५४ ॥ *गोत्रादङ्कवत् ॥ ६ । ३ । १५५ ॥ गोत्रवा-
चिनः शब्दात्पञ्चम्यन्तादागतेऽर्थे अङ्क इव प्रत्ययविधिर्भवति । यथा भवति विदानामङ्कः बैदः गार्गः दाक्ष इति 'संघघोषाङ्क'—(६-३-१७१) इत्यादिनाण्
तथेहापि विदेभ्य आगतं बैदम् । गार्गम् । दाक्षम् । अङ्कग्रहणेन तस्येदमित्यर्थसामान्यं लक्ष्यते । तेनाकञोऽप्यतिदेशः । अन्यथा संघाद्यण् एव स्यात । तेन यथा
भवति औपगवकः कापटवकः नाडायनकः गार्ग्यायणक इति 'गोत्राददण्ड'—६—३—१६८) इत्यादिनाऽकञ् तथेहापि औपगवेभ्य आगत औपगवकः कापटवकः नाडा-
यनकः गार्ग्यायणकः । एवं 'रैवतिकादेरीयः'(६-३-१६९)। रैवतिकेभ्य आगतं रैवतिकीयम् । गौरग्रीवीयम् । 'कौपिञ्जलहास्तिपदादण्' (६—३—१७०)
कौपिञ्जलादागतं *कौपिञ्जलम् हास्तिपदम् ॥ १५५ ॥ *नृहेतुभ्यो रूप्यमयटौ वा ॥ ६ । ३ । १५६ ॥ नृवाचिभ्यो हेतुवाचिभ्यश्च पञ्चम्यन्तेभ्य आगतेऽर्थे
रूप्य मयट् इत्येतौ प्रत्ययौ वा भवतः । ताभ्यां मुक्ते यथाप्राप्तम् । वचनभेदाद्यथासंख्याभावः । हेतुः कारणम् । नृग्रहणमहेत्वर्थम् । देवदत्तादागतं

॥—आय—॥एति ऐति वा स्वामिन 'तनूव्यधी—' इति णे। आयाति वा 'उपसर्गा—' इति उः आयस्तिष्ठत्यस्मिन्निति स्थानम् आयस्य स्थानम् ॥—शुण्डिकादेरण् ॥—विस्पष्टार्थमिति। ननु यद्यण्ग्रहण न क्रियते तदानीम्
'आयस्थानात्—' इत्यादिभिरिकणादय प्राप्नुवन्तीत्याह—यदीति ॥—अनर्थकं स्यादिति । तैरेव सूत्रैरमीषा प्रत्ययाना सिद्धत्वात्। किंचानन्तर इकण् नानुवर्त्तते । अनायस्थानत्वे हि सूत्रारम्भात्
आयस्थानशुण्डिकादिभ्यामित्येकयोगाकरणाच्च । तस्मात् विस्पष्टार्थमिति सूक्तम् ॥—अकञीयबाधनार्थमिति ॥ अयमर्थ. । यदा शुण्डिकादीनि सर्वाण्यप्यायस्थानान्येव तदा तीर्थाद्धूमाद्यकञ
पर्णक्रकणाभ्यामिति च ईयस्यापवादे आयस्थानादितीकणि प्राप्ते अयमारम्भ इत्यारम्भादिकणो निवृत्तेर्यथाप्राप्तमिति ततोऽकञीयौ प्राप्नुत । अतस्तौ बाधित्वा ततोऽप्यणेव यथा स्यादित्येवमर्थमण्
ग्रहणमित्यर्थ. ॥—गोत्रा—॥—कौपिञ्जलमिति । कुपिञ्जलस्यापत्यं हस्तिपादस्यापत्यम् अत इञि प्राप्ते अत एव निपातनादण् पादस्य पद्भावश्च तस्येद' कौपिञ्जलहास्तिपदादण्'॥— नृहे—॥

देवदत्तरूप्यम् । देवदत्तमयम् । दैवदत्तम् । अत्रापादाने पञ्चमी । हेतु, *समादागतं समरूप्यम् । समयम् । विषमरूप्यं विषममयम् । पक्षे गहादिपाठादीयः । समीयम् । विषमीयम् । पापरूप्यम् पापमयम् । पक्षे 'दोरीयः' (६—३—३१) पापीयम् । अत्र हेतौ पञ्चमी । टकारो ङ्यर्थः । जिनदत्तमयी । सममयी । बहुवचनं स्वरूपव्युदासार्थम् ॥१५६॥ प्रभवति ॥६।२।१५७॥ तत इति वर्तते तत इति पञ्चम्यन्तात्प्रभवति प्रथमं प्रकाशमानेऽर्थे यथाविहितं प्रत्यया भवन्ति । प्रथममुपलभ्यमानता प्रभवः । अन्ये प्रभवति जायमाने इत्याहुः । 'जाते' (६—३—९७) इति भूते सप्तम्यन्तात्प्रत्ययः अयं तु पञ्चम्यन्ताद्वर्तमाने इति विशेषः । हिमवतः प्रभवति हैमवती गङ्गा । । दारदी सिन्धुः । काश्मीरी वितस्ता । कश्मीरशब्दात् 'बहुविषयेभ्यः (६—३—४४) इति अकञोऽपवादः कच्छाद्यण् ॥ १५७ ॥ *वैडूर्यः ॥६।३।१५८॥ विडूरशब्दात्पञ्चम्यन्तात्प्रभवत्यर्थे ञ्यः प्रत्ययो निपात्यते। विडूरात्प्रभवति वैडूर्यो मणिः । विडूरग्रामे ह्ययं संस्क्रियमाणो मणितया ततः प्रथमं प्रकाशते। वालवायात्तु पर्वतादसौ प्रभवन्नसौ न मणिः किंतु पाषाणः। यदा तु जायमानतार्थः प्रभवशब्दस्तदा वालवायशब्दस्य ञ्यस्तत्संनियोगे विडूरादेशश्च निपात्यते। वालवायपर्याय एव वा विडूरशब्दः । *प्रतिनियतविषयाश्च रूढय इति वैयाकरणानामेव *प्रसिद्धिः । यथा जित्वरीशब्दस्य वाराणस्यां वणिजामेव । वालवायशब्दात्तु ईयप्रत्ययोऽनभिधानान्न भवति ॥ १५८ ॥ त्यदादेर्मयट् ॥ ६ । ३ । १५९ ॥ त्यदादिभ्यः पञ्चम्यन्तेभ्यः प्रभवत्यर्थे मयट् प्रत्ययो भवति । तन्मयम् । तन्मयी । भवन्मयम् । भवन्मयी ॥ १५९ ॥ तस्येदम् ॥ ६ । ३ । १६० ॥ तस्येति षष्ठ्यन्तादिदमित्यर्थे यथाविहितमणादय एयणादयश्च प्रत्यया भवन्ति । उपगोरिदमौपगवम् । कापटवम् । स्रौघ्नम् । माथुरम् । दैत्यम् । बार्हस्पत्यम् । कालेयम् । आग्नेयम् । औत्सम् । स्त्रैणम् । पौंस्नम् । गव्यम् । नादेयम् । राष्ट्रियम् । पारीणः । भानवीयः । श्यामगवीयः । पाटलिपुत्रकः प्राकारः । इह त्वनभिधानान्न भवति । देवदत्तस्यानन्तरः । ग्रामस्य समीपम् । विंशतेरवयव एकः । शतस्य द्वौ । सहस्रस्य पञ्च । तस्येति षष्ठ्यर्थमात्रमिदमिति षष्ठ्यर्थसंबन्धिमात्रं च विवक्षितम् । यदन्यल्लिङ्गसंख्याप्रत्यक्षपरोक्षत्वादिकं तदविवक्षितम् ॥ १६० ॥ हलसीरादिकण् ॥ ६ । ३ । १६१ ॥ आभ्यां षष्ठ्यन्ताभ्यामिदमित्यर्थे इकण् प्रत्ययो भवति । अणोऽपवादः । हालिकम् । सैरिकम् ॥ १६१ ॥ समिध आधाने टेन्यण् ॥ ६ । ३ । १६२ ॥ आधीयते येन समित्तदाधानम् । समिध् इत्येतस्मात्तस्येदमित्यर्थे टेन्यण् प्रत्ययो भवति तच्चेदिदमाधानं भवति । अणोऽपवादः । टकारो ङ्यर्थः । समिधामाधानो मन्त्रः साभिधेन्यो मन्त्रः । सामिधेनी ऋक् । सामिधेनीरन्वाह । पञ्चदश सामिधेन्यः ॥ १६२ ॥ विवाहे द्वन्द्वादकल् ॥६।३।१६३॥ द्वन्द्वात्तस्येदमित्यर्थे विवाहेऽभिधेयेऽकल् प्रत्ययो भवति । अणोऽपवादः । अत्रिभरद्वाजानां विवाहोऽत्रिभरद्वाजिका । वशिष्ठकश्यपिका । भृग्वङ्गिरसिका । कुत्सकुशिकिका । गर्गभार्गविका । कुरुवृष्णिका । कुरुकाशिका । लकारः स्त्रीत्वार्थः ॥ १६३ ॥ अदेवासुरादिभ्यो वैरे ॥ ६ । ३ । १६४ ॥ द्वन्द्वात्षष्ठ्यन्तादे-

---

—समादागतमिति । यदा समत्वमृण तदा ऋणाद्धेतोः' इति पञ्चमी । अथ गुणवाचकस्तदा 'गुणादस्त्रियां नवा' इत्यनेन ॥—वैडू—॥—प्रतिनियतेति । यद्येव तर्हि किं सर्वत्रापि वालवायपर्यायो विडूरशब्दः प्रयुज्यते इत्याशङ्क्याह—प्रसिद्धिरिति । इति वैयाकरणानामेव विडूरशब्दस्य वालवाये प्रसिद्धिर्नान्येषां यथा जित्वरीशब्देन वणिज एव वाणारसी व्यवहरन्ति

वासुरादिवर्जितादिदमर्थे वैरेऽकल् प्रत्ययो भवति । अणोऽपवादः। ईयं तु परत्वाद्वाधते । वाभ्रवशालङ्कायनानामिदं वैरम् वाभ्रवशालङ्कायनिका । काकोलूकस्येदं वैरम् काकोलूकिका। श्वावराहिका। श्वसृगालिका। अहिनकुलिका। अदेवासुरादिभ्य इति किम् । दैवासुरम् । राक्षोऽसुरम् । देवासुरादयः प्रयोगगम्याः ॥ १६४ ॥ नटान्नृत्ते ञ्यः॥६।३।१६५॥ नटशब्दात्तस्येदमित्यर्थे नृत्ते ञ्यः प्रत्ययो भवति। नटानामिदं नृत्यं नाट्यम् । नृत्त इति किम् । नटानामिदं गृहम् ॥ १६५ ॥ छन्दोगौक्थिकयाज्ञिकबह्वृचाच्च धर्माम्नायसंघे ॥ ६ । ३ । १६६ ॥ छन्दोगादिभ्यश्चरणेभ्यो नटशब्दाच्च तस्येदमित्यर्थे धर्मादौ ञ्यः प्रत्ययो भवति । छन्दोगादिभ्यश्चरणाकञो नटादणोऽपवादः । छन्दोगानां धर्म आम्नायः संघो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् । धर्मादिष्विति किम् । छन्दोगानां गृहं छान्दोगम् ॥ १६६ ॥ आथर्वणिकादणिकलुक् च ॥ ६ । ३ । १६७ ॥ आथर्वणिकशब्दात्तस्येदमित्यर्थे धर्मादावण्प्रत्यय इकलोपश्चास्य भवति । अथर्वणा प्रोक्तं वेदं वेत्त्यधीते वा आथर्वणिकः । न्यायादित्वादिकण् । अत एव निपातनाद्गणपाठसामर्थ्याद्वा प्रोक्ताल्लुप् न भवति । आथर्वणिकाना धर्म आम्नायः सघो वा आथर्वणः । चरणादकञि प्राप्ते वचनम् ॥ १६७ ॥ चरणादकञ् ॥ ६ । ३ । १६८ ॥ चरणशब्दो वेदशाखावचनस्तद्योगात्तदध्यायिषु वर्तते । चरणवाचिनस्तस्येदमित्यर्थे धर्मादावकञ् प्रत्ययो भवति । अणोऽपवादः । ईयं तु परत्वाद्बाधते । कठानां धर्म आम्नायः संघो वा काठकः । चरकाणां चारकः । कलापानां कालापकः । पैप्पलादानां पैप्पलादकः । मौदानां मौदकः । आर्चाभिनामार्चाभकः । वाजसनेयिनां वाजसनेयकः ॥ १६८ ॥ गोत्राददण्डमाणवशिष्ये ॥ ६ । ३ । १६९ ॥ गोत्रवाचिनस्तस्येदमित्यर्थे दण्डमाणवशिष्यवर्जितेऽकञ् प्रत्ययो भवति । अणोऽपवादः । ईयाञौ तु परत्वाद्बाधते । औपगवस्येदमौपगवकम् । कापटवकम् । दाक्षकम् । प्लाक्षकम् । गार्गकम् । गार्ग्यायणकम् । ग्लौचुकायनकम् । म्लौचुकायनकम् । अदण्डमाणवशिष्ये इति किम् । काण्व्यस्येमे काण्वा दण्डमाणवाः शिष्या वा । एवं गौकक्षाः । शकलादेर्यञः ' ( ६-३-२६ ) इत्यञ् । दाक्षेरिमे दाक्षाः । प्लाक्षाः । माहकाः । ' वृद्धेञः ' ( ६-३-२७ ) इत्यञ् । दण्डप्रधाना माणवा दण्डमाणवाः आश्रमिणां रक्षापरिचरणार्थाः । शिष्या अध्ययनार्था अन्तेवासिनः ॥ १६९ ॥ *रैवतिकादेरीयः ॥ ६ । ३ । १७० ॥ रैवतिकादेर्गोत्रवाचिनस्तस्येदमित्यर्थे ईयः प्रत्ययो भवति । अकञादेरपवादः । रैवतिकस्येदं । रैवतिकीयम् शकटम् । रैवतिकीयः संघादिः । रैवतिकीया दण्डमाणवशिष्याः । गौरग्रीवीयं शकटम् । गौरग्रीवीयः संघादिः । गौरग्रीवीया दण्डमाणवशिष्याः । रैवतिक गौरग्रीवि स्वापिशिष्य क्षैमधृति औदमेघि औदवाहि वैजवापि । इति रैवतिकादिः ॥ १७० ॥ कौपिञ्जलहास्तिपदादण् ॥ ६ । ३ । १७१ ॥ आभ्यां गोत्रवाचिभ्यां तस्येदमित्यर्थेऽण् प्रत्ययो भवति । अकञादेरपवादः । कुपिञ्जलस्यापत्यं कौपिञ्जलः । हस्तिपादस्यापत्यं हास्तिपदः । अतो निपातनादेवाण् पादस्य च पद्भावः । तयोरिदं कौपिञ्जलं शकटम् ।

॥—आथ—॥ आथर्वणिकादणू लुक् चेति क्रियता किमिकोपादानेन । यतोऽणो विधानसामर्थ्याल्लुक् न भविष्यति । ततश्च प्रत्ययाप्रत्ययोरिति न्यायात् इकस्यैव लोपो भविष्यति। न च वाच्यमुभयोरपि प्राप्नोति यदि स्यात्तदा विधानस्य न किमपि फलम् । नैवम् । विधानस्य एतदेव फलमकञभावस्तत उभयोरपि लोपेनिष्ट स्यात् रूपम् । अत इकग्रहण विधातव्यम् ॥—रैव—॥—अकञादेरिति। आदिशब्दादणञो ॥

युगम् । औष्ट्ररथम् । रासभरथम् ॥ १७७ ॥ *वाहनात् ॥ ६ । ३ । १७८ ॥ वाहनवाचिनस्तस्येदमित्यर्थेऽञ् प्रत्ययो भवति । *अणादेरपवादः । उष्ट्रस्यायमौष्ट्रः । रासभः । हास्तो रथः ॥ १७८ ॥ *वाह्यपथ्युपकरणे ॥ ६ । ३ । १७९ ॥ नियमसूत्रमिदम् । वाहनाद्योऽयं प्रत्यय उक्तः स वाह्ये पथि उपकरणे एव चेदमर्थे भवति नान्यत्र । अश्वस्यायमाश्वो रथः । आश्वः पन्थाः । । आश्वं पल्ययनम् । आश्वी कशा । वाह्यपथ्युपकरण एवेति नियमादन्यत्र वाक्यमेव न प्रत्ययः । अश्वानां घासः ॥ १७९ ॥ *वहेस्तुरिश्चादिः ॥ ६ । ३ । १८० ॥ वहेः परो यस्तृचस्तृनो वा तृशब्दस्तदन्तान्नाम्नस्तस्येदमित्यर्थेऽञ्प्रत्ययस्तृशब्दस्य चादिरिकारो भवति । संवोढुः सारथेरिदं सांवहित्रम् ॥ १८० ॥ तेन प्रोक्ते ॥ ६ । ३ । १८१ ॥ प्रकर्षेण व्याख्यातमध्यापितं वा प्रोक्तम् न तु कृतम् । तत्र कृत इत्येव गतत्वात् । तस्मिन्नर्थे तेनेति तृतीयान्तान्नाम्नो यथाविहितं प्रत्यया भवन्ति । भद्रबाहुना प्रोक्तानि भाद्रबाहवानि उत्तराध्ययनानि । गणधरप्रत्येकबुद्धादिभिः कृतानि तेन व्याख्यातानीत्यर्थः । याज्ञवल्क्येन याज्ञवल्क्यानि ब्राह्मणानि । पाणिनेन पाणिनीयम् । आपिशलिना आपिशलम् । काशकृत्स्निना काशकृत्स्नम् । उशनसा औशनसम् । बृहस्पतिना बार्हस्पत्यम् ॥ १८१ ॥ *मौदादिभ्यः ॥ ६ । ३ । १८२ ॥ मौदइत्येवमादिभ्यस्तेन प्रोक्ते यथाविहितं प्रत्ययो भवति । स चापवादैर्बाधितोऽणेव । अपवादस्यैव भावे वचनानर्थक्यात् । मौदेन प्रोक्तं वेदं विदन्त्यधीयते वा मौदाः । 'वेदेन्ब्राह्मणमत्रैव' (६–२–१३०) इति नियमात् अत्र वेदित्रध्येतृविषय एवाण् । एवं पैप्पलादाः । जाजलाः । माथुरेण प्रोक्ता माथुरी वृत्तिः । सौलभानि ब्राह्मणानि । मौदादयः प्रयोगगम्याः ॥ १८२ ॥ कठादिभ्यो वेदे लुप् ॥ ६ । ३ । १८३ ॥ कठ इत्येवमादिभ्यः प्रोक्ते यः प्रत्ययस्तस्य लुप् भवति स चेत्प्रोक्तो वेदो भवति । कठेन प्रोक्तं वेदं विदन्त्यधीयते वा कठाः । चरकाः । कर्कराः । धेनुकण्ठाः । गोगडाः । 'वेदेन्ब्राह्मणमत्रैव' (६–२–१३०) इति नियमात् वेदित्रध्येत्रोरेव विषये प्रत्ययस्य लुप् । वेद इति किम् । चरकेण प्रोक्ताश्चारकाः श्लोकाः । चरको वैशम्पायनः । कठादयः प्रयोगगम्याः ॥ १८३ ॥ तित्तिरिवरतन्तुखण्डिकोखादीयण् ॥ ६ । ३ । १८४ ॥ तित्तिरिवरतन्तु खण्डिक उख इत्येतेभ्यस्तेन प्रोक्तेऽर्थे ईयण् प्रत्ययो भवति अणोऽपवादः स चेत्प्रोक्तो वेदो भवति । तित्तिरिणा प्रोक्तं वेदं विदन्त्यधीयते वा तैत्तिरीयाः । वारतन्तवीयाः । खाण्डिकीयाः । औखीयाः । वेदे इत्येव । तित्तिरिणा प्रोक्तास्तैत्तिराः श्लोकाः । अत्रापि 'वेदेन्ब्राह्मणमत्रैव' (६–२–१३०) इत्युपतिष्ठते ॥ १८४ ॥ छगालिनो णेयिन् ॥ ६ । ३ । १८५ ॥ छगालिन्शब्दात्तेन प्रोक्ते वेदे णेयिन् प्रत्ययो भवति ।

उत्तरसूत्रे हास्तो रथ इत्यत्र 'सयोगादिन' इति निषेधः स्यात् ॥—वाह—॥—अणादेरिति । आदिशब्दादीयञ्यो. । ईये रासभ इति ञ्ये औष्ट्रपतमिति द्रष्टव्यमिति ॥—वाह्य—॥यदि पूर्वेण सह एकयोग कुर्यात्तदानीं वाहनवाचिनो वाह्यपथ्युपकरणे अन्यत्रान्यत्र यथाप्राप्तमेव स्यात् । पृथग्योगे तु नियमार्थम् ॥—वहे—॥—सांवहित्रमिति । अत्र परे इकारागमे कर्त्तव्ये ढरवादिशास्त्रमसत् । इकारागमे च कृते न प्राप्नोति ॥—मौदा—॥—जाजल इति । जात जलमस्य पृषोदरादित्वात्साधु' । 'जजल–' इति निपातनाद्वा । जजलस्यापत्यमृष्यणि जाजलः । यद्वा जजलेन प्रोक्त जाजल तदस्यास्ति इन् । जाजलेन जाजलिना वा प्रोक्त वेद 'कलापि–' इत्यन्त्यस्वरादिलोपः

कौपिञ्जला दण्डमाणवशिष्याः। हास्तिपदं शकटम् । हास्तिपदा दण्डमाणवशिष्याः । अथाण्ग्रहणं किमर्थम् । यथाविहितमित्येव ह्यण् सिद्धः । न चेयः प्राप्नोति । तदभीष्टौ हि रैवतिकादावेवैतौ पठ्येयाताम् । अकञ्प्राप्तौ वचनमनर्थकं स्यात् । नैवम् । असत्यण्ग्रहणे दण्डमाणवकशिष्येष्वकञर्थमेतत् स्यात् । तत्र ह्यकञ् प्रतिषिद्ध इति । णित्त्वं ङयर्थं पुंवद्भावाभावार्थं च । कौपिञ्जलीस्थूणः । हस्तिपदीस्थूणः ॥ १७१ ॥ *संघघोषाङ्कलक्षणेऽञ्यञिञः ॥ ६ । ३ । १७२ ॥ अञन्ताद्यञन्तादिञन्ताच्च गोत्रवाचिनस्तस्येदमित्यर्थे संघादावण् प्रत्ययो भवति । अकञोऽपवादः । अञ् विदानामयं वैदः संघो घोषोऽङ्को वा । वैदं लक्षणम् । यञ् गर्गाणामयं गार्गः संघो घोषोऽङ्को वा । गार्गं लक्षणम् । इञ्, दाक्षीणामयं दाक्षः संघो घोषोऽङ्को वा । दाक्षं लक्षणम् । संघादिष्विति किम् । विदानां गृहम् । अञ्यञिञ इति किम् । औपगवकः संघादिः । गोत्रादित्येव । सौतंगमीयः संघादिः । अथाङ्कलक्षणयोः को विशेषः । लक्षणं लक्ष्यस्यैव स्वम् । यथा शिखादि । अङ्कस्तु स्वामिविशेषविज्ञापकः । स्वस्तिकादिर्गवादिस्थो न गवादीनामेव *स्वं भवति ॥ १७२ ॥ *शाकलादकञ् च ॥ ६ । ३ । १७३ ॥ शाकलशब्दात्तस्येदमित्यर्थे संघादावण् अकञ् च प्रत्ययो भवति । शाकल्येन प्रोक्तं वेदं विदन्त्यधीयते वा शाकलाः । तेषां संघो घोषोऽङ्को वा शाकलः शाकलकः । शाकलं शाकलकं लक्षणम् ॥ १७३ ॥ गृहेऽग्नीधो रण् धश्च ॥ ६ । ३ ।१७४ ॥ अग्नीध् ऋत्विग्विशेषः । तस्मात्तस्येदमित्यर्थे गृहे रण् प्रत्ययो भवति अन्तस्य च तृतीयबाधनार्थं धादेशः । अग्नीध इदं गृहमाग्नीध्रम् ॥१७४॥ *रथात्सादेश्च वोढ्रङ्गे ॥ ६ । ३ । १७५ ॥ *नियमसूत्रमेतत् । रथात्केवलात्सपूर्वाच्च षष्ठ्यन्तादिदमर्थे यः प्रत्ययः स रथस्य वोढरि रथाङ्गे एव च भवति । रथस्यायं वोढा रथ्योऽश्वः । रथस्येदं रथ्यं चक्रम् । रथ्यं युगम् । सादि, द्वयो रथयोर्वोढा द्विरथः । त्रिरथः । 'द्विगोरनपत्ये यस्वर--' ( ६—१–२४) इत्यादिना यलुप् । अन्ये तु स्वरादेरेव लुपमिच्छन्ति । तन्मते द्विरथ्यः । त्रिरथ्यः । परमरथस्येदं परमरथ्यम् । उत्तमरथ्यम् । आश्वरथम् चक्रम् । वोढ्रङ्ग एव इति नियमात् अन्यत्र वाक्यमेव न प्रत्ययः । रथस्येदं स्थानम् । अश्वरथस्य स्वामी ॥ १७५ ॥ यः ॥ ६ । ३ । १७६ ॥ रथात्केवलात्सादेश्च षष्ठ्यन्तादिदमर्थे यः प्रत्ययो भवति । अणाद्यपवादः । रथस्यायं वोढा रथ्यः । द्वयो रथयोर्वोढा द्विरथः । त्रिरथः । रथ्यम् । परमरथ्यम् । काष्ठरथ्यं चक्रम् ॥ १७६ ॥ *पत्रपूर्वादञ् ॥ ६ । ३ । १७७ ॥ पत्रं वाहनम् । तत्पूर्वाद्रथशब्दात्षष्ठ्यन्तादिदमर्थेऽञ् प्रत्ययो भवति । यापवादः । अश्वरथस्येदमाश्वरथं चक्रम् । आश्वरथं

॥---संघ---॥---स्वं भवतीति । स्वमात्मीयं सामान्यनिर्देशान्नपुंसकत्वम् ॥---शाक---॥ ननु शाकलाद्वेति क्रियतां विकल्पात् पक्षे ' चरणादकञ् ' इति अकञ् भविष्यति । सत्यम् । इह सूत्रे संघघोषाङ्कलक्षणाश्चत्वारोऽर्था चरणादकञित्यत्र तु धर्माम्नायसंघास्त्रयोर्थास्ततश्चामीषां चतुर्णामेतत्सूत्रोपात्तार्थाना मध्यात्तत्र एक संघ एवार्थः पप्रथे नान्ये इति अन्यार्थार्थोऽकञ् । अन्यथा संघार्थादन्यत्रार्थे विकल्पपक्षे ईय स्यात् ॥—रथा—॥—नियमसूत्रमिति । प्रत्ययस्तूत्तरेणैव तर्ह्येक एव योग क्रियताम् । नैवम् । रथात्सादेश्च वोढ्रङ्गे य इति कृते विधिसूत्र स्यात् । ततश्च वोढ्रङ्गद्वयस्य व्यावृत्तौ रथस्येदं स्थानमिति कृते अण् प्राप्येत । नियमे वाक्यमेव ॥—पत्र—॥—नत्वञ्करणं किमर्थं प्राग्जितादित्येव सेत्स्यति । सत्यम् ।

अणोऽपवादः । छगलिना प्रोक्तं वेदं विदन्त्यधीयते वा छागलेयिनः ॥ १८५ ॥ *शौनकादिभ्यो णिन् ॥ ६ । ३ । १८६ ॥ शौनक इत्येवमादिभ्यस्तेन प्रोक्ते वेदे णिन् प्रत्ययो भवति । अणाद्यपवादः । शौनकेन प्रोक्तं वेदं विदन्त्यधीयते वा शौनकिनः । शाङ्गरविणः । वाजसनेयिनः । वेद इत्येव । शौनकीया शिक्षा । शौनक शाङ्गरव वाजसनेय शापेय काकेय (शाफेय) शाष्पेय शालफेय स्कन्ध स्कम्भ देवदर्श रज्जुभार रज्जुतार रज्जुकण्ठ दामकण्ठ कठ शाठ कुशाठ कुशाप कुशायन आश्वपश्चम तलवकार परुपांसक पुरुपांसक हरिद्र तुम्बुरु उपलप आलम्बि पलिङ्ग कमल ऋचाभ आरुणि ताण्डय श्यामायन खादायन कषायतल स्तम्भ । इति शौनकादयः । आकृतिगणोऽयम् । तेन भाल्लविना प्रोक्तं ब्राह्मणं विदन्त्यधीयते वा भाल्लविनः *शाट्यायनिनः ऐतरेयिणः इत्यादि सिद्धं भवति । *ब्राह्मणमपि वेद एव । मन्त्रब्राह्मणं हि वेदः ॥ १८६ ॥ पुराणे कल्पे ॥ ६ । ३ । १८७ ॥ तेनेति तृतीयान्तात्प्रोक्तेऽर्थे णिन् प्रत्ययो भवति। अणाद्यपवादः । स चेत्प्रोक्तः पुराणः कल्पो भवति । पिङ्गेन प्रोक्तः कल्पः पुराणः पैङ्गी कल्पः । तृणपिङ्गेन तार्णपिङ्गी कल्पः । अरुणपराजेन आरुणपराजी कल्पः । येऽपि पैङ्गिनं कल्पं विदन्त्यधीयते वा तेऽपि पैङ्गिनः । आरुणपराजिनः । प्रोक्ताद्धि लुबुक्तैव । पुराण इति किम् । आश्मरथः कल्पः । आश्मरथ्येन प्रोक्तः कल्प उत्तरकल्पेभ्य आरातीय इति श्रूयते ॥ १८७ ॥ *काश्यपकौशिकाद्वेदवच्च ॥ ६ । ३ । १८८ ॥ आभ्यां तेन प्रोक्ते पुराणे कल्पे णिन् प्रत्ययो भवति । ईयापवादः । वेदवच्चास्मिन्कल्पे कार्यं भवति । काश्यपेन प्रोक्तं पुराणं कल्पं विदन्त्यधीयते वा काश्यपिनः । कौशिकेन कौशिकिनः । काश्यपिनां धर्म आम्नायः संघो वा काश्यपकः । कौशिकिनां कौशिककः । वेदवच्चेत्यतिदेशाद्वेदेन् ब्राह्मणमन्त्रैवेति नियमाद्वेदित्रध्येतृविषयता 'चरणादकञ्' (६-३-१६७) इत्यकञ् च भवति । कल्प इत्येव । काश्यपीया संहिता । पुराण इत्येव । इदानींतनेन गोत्रकाश्यपेन प्रोक्तः कल्पः काश्यपीयः । वेदवच्चेति*अतिदेशार्थं वचनम् ॥ १८८ ॥ *शिलालिपाराशर्यान्नटभिक्षुसूत्रे ॥ ६ । ३ । १८९ ॥ शिलालिन्पाराशर्य इत्येताभ्यां तेन प्रोक्ते यथासंख्यं नटसूत्रे भिक्षुसूत्रे च णिन् प्रत्ययो भवति । *अणअपवादः । वेदवच्चास्मिन् कार्यं भवति । नटानामध्ययनं नटसूत्रम् । भिक्षूणामध्ययनं भिक्षुसूत्रम् । शिलालिना प्रोक्तं नटसूत्रं विदन्त्यधीयते वा शैलालिनो नटाः । पाराशर्येण प्रोक्तं भिक्षुसूत्रं विदन्त्यधीयते वा पाराशरिणो भिक्षवः । शैलालिनां धर्मः आम्नायः संघो वा शैलालकम् । पाराशरकम् । अतिदेशाद्वेदित्रध्येतृ-विषयता चरणादकञ् च भवति । नटभिक्षुसूत्र इति किम् । शैलालं पाराशरम् ॥ १८९ ॥ कृशाश्वकर्मन्दादिन् ॥ ६ । ३ । १९० ॥ आभ्यां तेन प्रोक्ते यथासंख्यं नटसूत्रे भिक्षुसूत्रे च इन् प्रत्ययो भवति । अणोऽपवादः । वेदवच्चास्मिन् कार्यं भवति । कृशाश्वेन प्रोक्तं नटसूत्रं विदन्त्यधीयते वा कृशाश्विनो नटाः ।

॥-शौन-॥-शाट्यायनिन इति।घ्यणन्तात् 'तिकादेरायनिञ्'गर्गादियञन्तात्तु'यञिञः'इत्याणन्।शाट्यायनिना शाट्यायनेन वा प्रोक्त वेद विदन्त्यधीयते वा।नन्वनेन वेदे प्रत्ययोऽभ्यधायि तत्कथं भाल्लविना प्रोक्तं ब्राह्मणमित्याह—ब्राह्मणमपीति॥ - काश्य—॥—अतिदेशार्थमिति।' पुराणे कल्पे'इत्यनेनैव सिद्धत्वात्॥— शिला—॥—अणअपवाद इति।शिलालिन्शब्दात्तेन प्रोक्ते पाराशर्यात्तु शकलादेर्यञ

कर्मन्देन प्रोक्तं भिक्षुसूत्रं विदन्त्यधीयते वा कर्मन्दिनो भिक्षवः । अतिदेशादकञ् च । काशश्विकम् । कार्मन्दकम् । नटसूत्रे कापिलेयशब्दादपीच्छन्त्येके । कापिलेयिनो नटाः । कापिलेयक आम्नायः ॥ १९० ॥ *उपज्ञाते ॥ ६ । ३ । १९१ ॥ तेनेति वर्तते । प्रथमत उपदेशेन विना वा ज्ञातमुपज्ञातम् प्रथमतः कृतं वोपज्ञातम् । तस्मिन्नर्थे तृतीयान्ताद्यथाविहितं प्रत्ययो भवति । पाणिनेन पाणिनिना वोपज्ञातं पाणिनीयम् *अकालकं व्याकरणम् । *काशकृत्स्नं *गुरुलाघवम् ॥ १९१ ॥ कृते ॥ ६ । ३ । १९२ ॥ तेनेति तृतीयान्तात्कृते उत्पादितेऽर्थे यथाविहितमणादयो भवन्ति । शिवेन कृतो ग्रन्थः शैवः । वाररुचानि वाक्यानि । जलूकेन जलूकया वा कृता जालूकाः श्लोकाः । जालुकिना जालुकाः । अत्र 'वृद्धेञः' (६—३—२७) इत्यञ् । सिद्धसेनीयः स्तवः । इष्टकाभिः कृतः प्रासाद ऐष्टकः । नारदेन कृतं गीतं नारदीयम् । मनसा कृता मानसी कन्या । तक्ष्णा कृतः प्रासाद इत्यादावनभिधानान्न भवति । कृते ग्रन्थे एवेच्छन्त्यन्ये ॥ १९२ ॥ नाम्नि मक्षिकादिभ्यः ॥ ६ । ३ । १९३ ॥ मक्षिकादिभ्यस्तृतीयान्तेभ्यः कृतेऽर्थे यथाविहितं प्रत्ययो भवति नाम्नि प्रत्ययान्तं चेन्नाम भवति । मक्षिकाभिः कृतं माक्षिकं मधु । सरघाभिः सारघम् । गर्मुद्भिर्गार्मुतम् । नर्मुकाभिर्नार्मुकम् । नाम्नीति किम् । मक्षिकाभिः कृतं शकृत् । वातपैः कृतं वातपमित्यत्राणन्तं नाम नेयान्तमितीयो न भवति । मक्षिका सरघा गर्मुत् नर्मुका पुत्तिका क्षुद्रा भ्रमर वटर वातप । इति मक्षिकादयः प्रयोगगम्याः ॥१९३॥ *कुलालादेरकञ् ॥ ६ ।३। १९४॥ कुलाल इत्येवमादिभ्यस्तेन कृतेऽर्थेऽकञ् प्रत्ययो भवति नाम्नि संज्ञायाम् । कुलालेन कृतं कौलालकम् । वारुटकम् । नाम्नीत्यभिधेयनियमार्थम् । तेन घटघटीशरावोदञ्चनाद्येव भाण्डं कौलालकम् न यत्किञ्चित्कुलालकृतम् । शूर्पपिटकपटलिकापिच्छिकाद्येव भाण्डं वारुटकम् नान्यत् । एवमन्यत्राप्यभिधेयनियमः । कुलाल वरुट कर्मार निषाद चण्डाल सेना सिरन्ध्र देवराजन् देवराज परिषद् वधू भद्र अनडुह् ब्रह्मन् कुम्भकार अश्वपाक रुरु । इति कुलालादिः ॥ १९४ ॥ सर्वचर्मण ईनेनञौ ॥ ६ । ३ । १९५ ॥ सर्वचर्मन्शब्दात्तेन कृते इन ईनञ् इत्येतौ प्रत्ययौ भवतः । नाम्नीत्यधिकारादभिधेयनियमः । सर्वश्चर्मणा कृतः सर्वचर्मीणः सार्वचर्मीणः । अत्र सर्वशब्दस्य कृतापेक्षस्य चर्मशब्देनायोगिनापि 'नाम नाम्ना'–(३—१—१८) इत्यादिना समासः ॥ १९५ ॥ उरसो याणौ ॥ ६ । ३ । १९६ ॥ उरस्शब्दात्तेन कृते य अण् इत्येतौ प्रत्ययौ भवतो नाम्नि । उरसा कृतः उरस्यः औरसः ॥ १९६ ॥ *छन्दस्यः ॥ ६ । ३ । १९७ ॥ छन्दस्शब्दात्तेन कृते यः प्रत्ययो निपात्यते नाम्नि । छन्दसा इच्छया कृतश्छन्दस्यः । न तु प्रवचनेन गायत्र्यादिना वा । नाम्नीत्यधिकारादभिधेयव्यवस्था ।

॥—उप—॥— अकालकमिति । न विद्यते काल' कालाधिकारो यत्र । पाणिने. पूर्वे आचार्या कालपरिभाषा कुर्वन्ति स्म आ न्याय्यादुत्थानादा न्याय्याच्च संवेशनादेपोऽद्यतन काल' । अन्ये पुनराहु । उभयतोऽर्द्धरात्र वेति । तत्पाणिनि' प्रत्याचष्टे । तदशिष्यं लोकतोऽर्थगतेस्तदेव कालपरिभाषारहितमकालक व्याकरण पाणिनिना प्रथम ज्ञात स्वयमेव वोपदेशेन विना ज्ञात प्रथमत कृत वेत्यर्थ । एव काशकृत्स्निनोपज्ञात काशकृत्स्नम् । 'वृद्धेञ.' इत्यञ् ॥—गुरुलाघवमिति । 'अशाद्यतोः' इत्यत्र गुरुश्च गुरुत्व लाघव च गुरोर्लाघव चेति दर्शिष्यते ॥—कुला—॥—सिरन्ध्रेति । सितानि बद्धानि रन्ध्राणि यस्य सितरन्ध्र. । पृषोदरादित्वात्तस्य लोप । 'अदासो दासवृत्तिर्य' स सिरन्ध्र इति स्मृतः' ॥—छन्दस्य'—॥

निपातनात् क्वचिदन्यत्रापि भवति। ओश्रावयेति चतुरक्षरम् अस्तु श्रौषट् इति चतुरक्षरं ये यजामहे इति पञ्चाक्षरम् यजेति द्व्यक्षरम् द्व्यक्षरो वषट्कारः, एष वै सप्तदशाक्षरश्छन्दस्यो *यज्ञमनुविहितः। अत्र स्वार्थे यः। यथानुष्टुबादिरक्षरसमूहश्छन्दस्तथैषां सप्तदशानामक्षराणां समूहश्छन्दस्य उच्यते ॥१९७॥ *अमोऽधिकृत्य ग्रन्थे ॥ ६ । ३ । १९८ ॥ कृत इति वर्त्तते। अम इति द्वितीयान्तादधिकृत्य कृते ग्रन्थेऽर्थे यथाविहितं प्रत्ययो भवति। अधिकृत्य प्रस्तुत्य उद्दिश्येत्यर्थः। तदपेक्षा द्वितीया। सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रः। भद्रां भाद्रः। सुतारां सौतारः। भीमरथामधिकृत्य कृताख्यायिका भैमरथी। ग्रन्थ इति किम्। सुभद्रामधिकृत्य कृतः प्रासादः। कथं वासवदत्तामधिकृत्य कृताख्यायिका वासवदत्ता उर्वशी सुमनोहरा बलिबन्धनं सीताहरणमिति। *उपचाराद्ग्रन्थे *ताच्छब्द्यं भविष्यति ॥ १९८ ॥ ज्योतिषम् ॥ ६ । ३ । १९९ ॥ ज्योतिःशब्दादमोऽधिकृत्य कृते ग्रन्थेऽण् प्रत्ययो वृद्ध्यभावश्च निपात्यते। ज्योतींष्यधिकृत्य कृतो ग्रन्थो ज्योतिषम् ॥१९९॥ *शिशुक्रन्दादिभ्य ईयः ॥६।३।२००॥ शिशुक्रन्द इत्येवमादिभ्यो द्वितीयान्तेभ्योऽधिकृत्य कृते ग्रन्थे ईयः प्रत्ययो भवति। शिशुक्रन्दमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः। *यमसभीयः। इन्द्रजननीयः। प्रद्युम्नप्रत्यागमनीयः। प्रद्युम्नोदयनीयः। सीताहरणीयः। सीतान्वेषणीयः। शिशुक्रन्दादयः प्रयोगतोऽनुसर्तव्याः। शिशुक्रन्दशब्दात्केचिन्नेच्छन्ति शैशुक्रन्दम् ॥२००॥ *द्वंद्वात्प्रायः ॥६।३।२०१॥ द्वन्द्वात्समासादमोऽधिकृत्य कृते ग्रन्थे प्राय ईयः प्रत्ययो भवति। अणोऽपवादः। वाक्यपदीयम्। द्रव्यपर्यायीयम्। शब्दार्थसंबन्धीयम्। *श्येनकपोतीयम्। प्राय इति किम्। दैवासुरम्। राक्षोसुरम्। *गौणमुख्यम् ॥ २०१ ॥ *अभिनिष्क्रामति द्वारे। ।६। ३ । २०२ ॥ द्वितीयान्तादभिनिष्क्रामति अभिनिर्गच्छत्यर्थे यथाविहितं प्रत्ययो भवति तच्चेदभिनिष्क्रामद्द्वारं भवति। स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कन्यकुब्जद्वारम्। माथुरम्। नादेयम्। राष्ट्रियं द्वारम्। करणभूतस्यापि द्वारस्याभिनिष्क्रमणक्रियायां स्वातन्त्र्यविवक्षा। यथा साध्वसिश्छिनत्तीति। रचनाबहिर्भावे वा निष्क्रमिः। यथा गृहकोणो *निष्क्रान्तः। द्वार इति किम्। स्रुघ्नमभिनिष्क्रामति चैत्रः ॥ २०२ ॥ गच्छति पथि दूते ॥ ६ । ३ । २०३ ॥ द्वितीयान्ताद्गच्छत्यर्थे यथाविहितं प्रत्ययो भवति योऽसौ गच्छति स चेत्पन्था दूतो वा भवति। स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा। माथुरः। नादेयः। राष्ट्रियः। पथिस्थेषु गच्छत्सु तद्धेतुः पन्था अभिगच्छतीत्युच्यते। स्रुघ्नादिप्राप्तिर्वा पथो गमनम्। पथिदूत इति किम्। स्रुघ्नं गच्छति साधुः। पाटलिपुत्रं गच्छति नौः पण्यं वाणिग्वा ॥ २०३ ॥ भजति ॥ ६ । ३ । २०४ ॥ द्वितीयान्ताद्भजत्यर्थे यथाविहितं प्रत्ययो भवति। स्रुघ्नं भजति स्रौघ्नः। माथुरः। नादेयः। राष्ट्रियः ॥ २०४ ॥ महाराजादिकण् ॥ ६ । ३ । २०५॥

---

—यज्ञमनुविहित इति। यज्ञमनुलक्ष्यीकृत्य विहितो अनुगत इत्यर्थः ॥—अमो—॥—उपचारादिति। अन्यैः प्रत्ययमुत्पाद्य लुबुक्ता तत्स्वमते कथमित्याह—ताच्छब्द्यमिति। स चासौ शब्दश्च तस्य भावः। अयमर्थः। स एव वासवदत्तादिशब्दो ग्रन्थे वर्त्तते ॥—शिशु—॥—यमसभीय इति। यमस्य सभा यमसभ शाला विना सभा राजवर्जितेत्यादिना राक्षसादित्वात् क्लीबत्वम् ॥—द्वंद्व—॥—श्येनकपोतीयमिति। श्येनकपोतावधिकृत्येति शकट। उत्पलस्तु नित्यवैरस्येत्येकवद्भावमिच्छति। तत श्येनकपोतमिति वा ॥—गौणमुख्यमिति। सञ्ज्ञापूर्वको विधिरनित्य. इति न दोरीय.। गुणमुख्याद्वा प्रत्यय. ॥—अभि—॥—निष्क्रान्त इति। रचनाया बहिर्निर्गत इत्यर्थः

महाराजशब्दात् द्वितीयान्ताद्भजत्यर्थे इकण् प्रत्ययो भवति । महाराजं भजति माहाराजिकः ॥ २०५ ॥ अचित्तादेशकालात् ॥ ६ । ३ । २०६ ॥ देशकालवर्जितं यदचित्तमचेतनं तद्वाचिनो द्वितीयान्ताद्भजत्यर्थे इकण् प्रत्ययो भवति । अणादेर्बाधकः । अपूपान्भजति आपूपिकः । शाष्कुलिकः । मौदकिकः । पायासिकः । अचित्तादिति किम् । दैवदत्तः । अदेशकालादिति किम् । स्रौघ्नः । हैमनः ॥ २०६ ॥ *वासुदेवार्जुनादकः ॥ ६ । ३ । २०७॥ आभ्यां द्वितीयान्ताभ्यां भजत्यर्थेऽकः प्रत्ययो भवति । ईयाकञोरपवादः । वासुदेवं भजति वासुदेवकः । यदा वासुदेवशब्दः संज्ञाशब्दोऽक्षत्रियवचनस्तदोत्तरेणाकञ् न प्राप्नोति किं तु 'दोरीयः' ( ६-३-३१ ) इतीयः स्यात् इति तद्ग्रहणम् । अर्जुनं भजति अर्जुनकः । अर्जुनशब्दः क्षत्रियवाचीत्युत्तरेणाकञ् स्यादिति केनैव सिद्धेऽकविधानं वासुदेवीं भजति वासुदेवकःअर्जुनीमर्जुनक इति*एवमर्थम् ॥ २०७ ॥ गोत्रक्षत्रियेभ्योऽकञ् प्रायः ॥ ६ । ३ । २०८ ॥ गोत्रवाचिभ्यः क्षत्रियवाचिभ्यश्च द्वितीयान्तेभ्यो भजत्यर्थेऽकञ् प्रत्ययो भवति प्रायः । अणाद्यपवादः । ग्लुचुकायनिं भजति ग्लौचुकायनकः । औपगवकः । दाक्षकः । गार्गकः । गार्ग्यायणकः । क्षत्रिय, नाकुलकः । साहदेवकः । दौर्योधनकः । दौःशासनकः । बहुवचनं क्षत्रियविशेषपरिग्रहार्थम् । प्राय इति किम् । पणिनोऽपत्यं पाणिनः तं भजति पाणिनीयः। पौरवीयः ॥ २०८॥ *सरूपाद् द्रेः सर्वं राष्ट्रवत् ॥ ६ । ३ । २०९ ॥ 'राष्ट्रक्षत्रियात्सरूपाद्राजापत्ये द्रिरञ्' ( ६-१-११४ ) इति प्रस्तुत्य सरूपाद्यो द्रिः प्रत्यय उक्तस्तदन्तस्य द्वितीयान्तस्य भजतीत्यर्थे सर्वं प्रत्ययः प्रकृतिश्च राष्ट्रवद्भवति । राष्ट्रवाचिनी या प्रकृतिर्वृजि इत्यादिस्ततश्च यः प्रत्ययो 'वृजिमद्राद्देशात्कः' ( ६-३-३७ ) इत्यादिना विहितस्तदुभयं वार्ज्य इत्येवमादेः सरूपस्य द्रिप्रत्ययान्तस्य भजतीत्यस्मिन् विषये भवतीत्यर्थः । वार्ज्यं वार्ज्यौ वृजीन् वा भजति वृजिकः । माद्रं माद्रौ मद्रान्वा भजति मद्रकः । अत्र कप्रत्ययः । पाण्ड्यं पाण्ड्यौ पाण्डून्वा भजति पाण्डवकः । *आङ्गकः । वाङ्गकः । पाञ्चालकः । वैदेहकः । औदुम्बरकः । तैलखलकः । अत्र 'बहुविषयेभ्यः' (६-३-४४) इत्यकञ् । *कौरवकः । कौरवः । *यौगन्धरकः । यौगन्धरः । अत्र 'कुरुयुगंधराद्वा' (६-३-५२) इति वाकञ् । ऐक्ष्वाकः । अत्र 'कोपान्त्याच्चाण्' (६-३-५५) इत्यण् । सरूपादिति किम् । पौरवीयम् । अत्र पुरु राजा अनुखण्डो जनपद इति सारूप्यं नास्ति । अत एव 'पुरुमगध'—इत्यादौ द्विस्वरत्वेनैव सिद्धे पुरुग्रहणमसरूपार्थं कृतम्।द्रेरिति किम्।पञ्चालान् ब्राह्मणान् भजति पाञ्चालः।अत्र 'बहुविषयेभ्यः' इत्यकञ् न भवति।सर्वग्रहणं प्रकृत्य*तिदेशार्थम्।

॥——वासु——॥——एवमर्थमिति। कप्रत्यये 'इयादीदूतः के' इति ह्रस्वत्व स्यात् । अकप्रत्यये तु 'जातिश्च-' इति पुंवद्भवति ॥——सरूपाद्रे——॥—— सरूपादिति सूत्रांशेन राष्ट्रक्षत्रियादित्युपलक्ष्यते ॥—बहुविषेभ्य इति ॥ पाण्ड्यं पाण्ड्याविति एकत्वद्वित्वयोरपि राष्ट्रवदित्यतिदेशादबहुवत्ता तथैव इति बहुविषयेभ्य इति अकञ् भवत्येव॥— कौरवक इति । कुरोरपत्य कुरूणा राजा वा 'दुनादि-' इति ञ्य' कौरव्य भजति मनुष्ये वाच्ये 'कच्छादेर्नृनृस्थे' नित्यमकञ् । अन्यत्र तु 'कुरुयुगधराद्वा' इति वा अकञ् । पक्षे 'कोपान्त्याच्चाण्'॥-यौगन्धरक इति । युगधराणा राजा युगधरस्यापत्य वा 'साल्वांश-' इति इञ् त भजति औत्सर्गिकाण् ॥—अतिदेशार्थमिति । तेन वृजिकमद्रकपाण्डवक इति सिद्धम्।

तच्च वार्ज्यमाद्रपाण्ड्यकौरव्याः प्रयोजयन्ति । अन्यत्र हि *नास्ति विशेषः ॥ २०९ ॥ दस्तुल्यदिशि ॥ ६ । ३ । २१० ॥ ट इति सहार्थे-तृतीयान्तात्तुल्यदिश्यर्थे यथाविहितं प्रत्ययो भवति । तुल्या समाना साधारणा दिक् यस्य स तुल्यदिक् । एकदिगित्यर्थः । सुदाम्ना एकदिक् सौदामनी विद्युत् । सुदामा नाम पर्वतो यस्यां दिशि तस्यां विद्युत् । तेन सा सुदाम्ना सहैकदिगुच्यते । सूर्येण सहैकदिक् सौरी बलाका । हिमवता एकदिक् हैमवती गङ्गा । त्रिककुदा एकदिक् त्रैककुदी लङ्का ॥ २१० ॥ तसिः ॥ ६ । ३ । २११ ॥ ट इति तृतीयान्तात्तुल्यदिश्यर्थे तसिरित्ययं प्रत्ययो भवति । पूर्वेण यथास्वमणादय एयणादयश्च विहिताः प्रत्ययान्तरमिदं सर्वप्रकृतिविषयं विधीयते । सुदाम्ना एकदिक् सुदामतः । सूर्यतः । हिमवत्तः । त्रिककुत्तः । पीलुमूलतः । पार्श्वतः । पृष्ठतः । इकारो ' वत्तस्याम् ' ( १-१-३४ ) इत्यत्र विशेषणार्थः ॥ २११ ॥ यश्चोरसः ॥ ६ । ३ । २१२ ॥ उरस् इत्येतस्मात्तृतीयान्तात्तुल्यदिश्यर्थे यः प्रत्ययश्चकारात्तसिश्च भवतः । अणोऽपवादः । उरसा एकदिक् उरस्यः । उरस्तः ॥ २१२ ॥ सेर्निवासादस्य ॥ ६ । ३ । २१३ ॥ सेरिति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्तत्प्रथमान्तं निवासश्चेत्स भवति । निवसन्त्यस्मिन्निति निवासो देश उच्यते । स्रुघ्नो निवासोऽस्य स्रौघ्नः । माथुरः । नादेयः । राष्ट्रियः ॥ २१३ ॥ आभिजनात् ॥ ६ । ३ । २१४ ॥ सेर्निवासादस्येति वर्तते । अभिजनः पूर्वबान्धवाः । तेषामयमाभिजनः । सेः प्रथमान्तादाभिजनान्निवासादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । स्रुघ्नोऽस्याभिजनो निवासः स्रौघ्नः । माथुरः । नादेयः । राष्ट्रियः ॥ २१४ ॥ शण्डिकादेर्ण्यः ॥ ६ । ३ ।२१५॥ शण्डिक इत्येवमादिभ्यः प्रथमान्तेभ्य आभिजननिवासवाचिभ्योऽस्येत्यस्मिन्नर्थे ण्यः प्रत्ययो भवति । अणाद्यपवादः । शण्डिक आभिजनो निवासोऽस्य शाण्डिक्यः। कौचवार्यः । शण्डिक कूचवार सर्वसेन सर्वकेश शङ्ख शक शट रक चरण शंकर बोध । इति शण्डिकादिः ॥ २१५ ॥ * सिन्ध्वादेरञ् ॥ ६ । ३ । २१६ ॥ सिन्ध्वादिभ्यः प्रथमान्तेभ्य आभिजननिवासवाचिभ्योऽस्येत्यस्मिन्नर्थेऽञ् प्रत्ययो भवति । सिन्धुराभिजनो निवासोऽस्य सैन्धवः । वार्णवः । सिन्धु वर्णु मधुमत् कम्बोज कुलूज गन्धार कश्मीर सल्व किष्किन्ध गब्दिक उरस् दरद् ग्रामणी काण्डवरक । सल्वान्तेभ्यो नृनृस्थाकञोपवादोऽञ् । शेषेभ्यो बहुविषयराष्ट्रलक्षणस्याकञो ग्रामणीकाण्डवरकाभ्यामीयस्य । तक्षशिलादिभ्यस्तु अञ् नोच्यते उत्सर्गेणैव सिद्धत्वात् ॥२१६॥ सलातुरादीयण् ॥ ६ । ६ । २१७ ॥ सलातुरशब्दात्प्रथमान्तादाभिजननिवासवाचिनोऽस्येत्यस्मिन्नर्थे ईयण् प्रत्ययो भवति । सलातुर आभिजनो निवासोऽस्य सालातुरीयः पाणिनिः ॥ २१७ ॥ तूदीवर्मत्या एयण् ॥ ६ । ३ । २१८ ॥तूदीवर्मतीशब्दाभ्यां प्रथमान्ताभ्यामाभिजननिवासवाचिभ्यामस्येत्यर्थे एयण् प्रत्ययो भवति । तूदी आभिजनो निवासोऽस्य तौदेयः । वार्मतेयः ॥ २१८ ॥

---

अन्यथा पाण्ड्यक इत्यादौ यकारश्रुतिः स्यात् । न वाच्य ' तद्धितयस्वरे ' इति यलोपप्राप्ति अनापत्यत्वात् यकारस्य ॥— नास्ति विशेष इति ॥ आङ्गक इत्यादि लिखितापेक्षया एतदुक्त यावता आवन्तक इत्यादावस्त्येव विशेषः । अनापत्यत्वादावन्त्य इति स्थिते यलोपाप्रसङ्गात् ॥—सिन्ध्वादेरञ् ॥—अञ् नोच्यत इति । केचित्तक्षशिलादिभ्योऽञ ब्रुवते । तन्न । बाधकप्रत्ययान्तराप्राप्त्या ' प्राग्जितात् ' इत्येव सिद्धत्वात् ॥—सलातुरा—॥—सलातुरेति । सालैस्तत सालतत तच्च तत्पुर च सालतत्पुरम् । पृषोदरादित्वात्सलातुरः ॥— तूदीवर्म—॥ तावानायामो यस्या.

*गिरेरीयोऽस्त्राजीवे ॥ ६ । ३ । २१९ ॥ गिरिर्य आभिजनो निवासस्तदभिधायिनः प्रथमान्तादस्येति षष्ठ्यर्थे ईयः प्रत्ययो भवति अस्त्राजीवे अस्त्रमाजीवो जीविका यस्य तस्मिन्नायुधजीविन्यभिधेय इत्यर्थः । हृद्गोलः पर्वत आभिजनो निवासोऽस्याऽस्त्राजीवस्य हृद्गोलीयः । एवं भोजकटीयः । रोहितगिरीयः । *अन्धश्मीयः । गिरेरिति किम् । सांकाश्यकोऽस्त्राजीवः । 'प्रस्थपुर'—( ६-३-४२ ) इत्यादिनाकञ् । अस्त्राजीव इति किम् । ऋक्षोदः पर्वत आभिजनो निवासोऽस्य आर्क्षोदो ब्राह्मणः । पृथुः पर्वत आभिजनो निवासोऽस्य पार्थवः ॥ २१९ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ षष्ठस्याध्यायस्य तृतीयः पादः ॥ ६ । ३ ॥ जयस्तम्भान् सीमन्यनुजलधिवेलं निहितवान् वितानैर्ब्रह्माण्डं शुचिगुणगरिष्ठैः पिहितवान् ॥ यशस्तेजोरूपैरलिपत जगन्त्यर्धघुसृणैः कृतो यात्रानन्दो विरमति न किं सिद्धनृपतिः ॥ १ ॥ ॥

## ॥ चतुर्थः पादः ॥

*इकण् ॥ ६ । ४ । १ ॥ अणः पूर्वोऽवधिः । अधिकारोऽयम् आ पादपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्रापवादविषयं परिहृत्येकणित्यधिकृतं वेदितव्यम् ॥ १ ॥ *तेन जितजयद्दीव्यत्खनत्सु ॥ ६ । ४ । २ ॥ तेनेति तृतीयान्ताज्जिते जयति दीव्यति खनति चार्थे इकण् प्रत्ययो भवति । अक्षैर्जितमाक्षिकम् । शालाकिकम् । अक्षैर्जयति* आक्षिकः । शालाकिकः । अक्षैर्दीव्यति आक्षिकः । शालाकिकः । अभ्र्या खनति आभ्रिकः । *कौद्दालिकः । अभ्री काष्ठमयी तीक्ष्णाग्रा । इह तेनेति करणे तृतीया वेदितव्या नान्यत्रानभिधानात् । तेन देवदत्तेन जितम् धनेन जितमित्यत्र न भवति । अभ्र्या खनन्नङ्गुल्या खनतीत्यत्र तु सत्यप्यङ्गुलेः करणत्वे मुख्यकरणभावोऽभ्र्या एव नाङ्गुलेरित्यङ्गुलिशब्दान्न भवति । यथा सुघ्नादागच्छन्वृक्षमूलादागत इति । जयदादिषु त्रिषु कालो*न विवक्षितः जिते तु विवक्षितः । बहुवचनं पृथगर्थताभिव्यक्त्यर्थम् ॥ २ ॥ संस्कृते ॥ ६ । ४ । ३ ॥ तेनेति तृतीयान्तात्संस्कृतेऽर्थे इकण् प्रत्ययो भवति ।

सा तावदायामा । पृषोदरादित्वात्तूदादेशः गोरादित्वात् ङी । चर्म तनोति 'क्वचित्' इति डे गोरादित्वात् च वमतो ॥—गिरे—॥—अन्धश्मीय इति । अन्धा अश्मानो यत्र पर्वते सोऽन्धश्मा । पृषो०अलोपः । अन्धश्मा आभिजनो निवासोऽस्य ॥ इत्याचार्य० षष्ठस्याध्यायस्य तृतीयः पादः ॥ ८८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अर्ह ॥—इकण् ॥—तेन—॥—आक्षिक इति । अक्षैर्जयन् दीव्यन् वा आक्षिक । एवमन्येऽपि । जयतीत्यादि तु वृत्तावर्थकथनं विग्रहः शतन्तेनैव द्रव्यप्रधानेन कर्त्तव्य ॥—कौद्दालिक इति । कु दालयति कर्मण्यणि पृषोदरादित्वात् पूर्वपदस्य दागमः । तेन खनन् ॥—न विवक्षित इति । कर्त्ता तु विवक्षितोऽत एव जयद्ग्रहणे सत्यपि कर्मण्यपि इकणप्रत्ययार्थं जितग्रहणम् । अयमर्थः । जयतीत्युक्ते जयति जेष्यति अजैषीदिति लभ्यते किं जितग्रहणेन । उच्यते । भूते कर्मण्यपि वाच्ये यथा स्यादित्येवमर्थम् ॥ विवक्षित इति अतीतः काल ॥—

सत उत्कर्षाधानं संस्कारः। दध्ना संस्कृतं दाधिकम्। मारिचिकम्। शार्ङ्गवेरिकम्। उपाध्यायेन संस्कृतः औपाध्यायिकः शिष्यः। विद्यया संस्कृतो वैद्यिकः। योगविभाग उत्तरार्थः ॥ ३ ॥ *कुलत्थकोपान्त्यादण् ॥६।४।४॥ कुलत्थशब्दात्ककारोपान्त्याच्च शब्दरूपात्तेन संस्कृतेऽर्थेऽण् प्रत्ययो भवति । इकणोऽपवादः। कुलत्थैः संस्कृतं कौलत्थम्। अन्ये तु कुलत्थशब्दात्सकाराक्रान्तथकारात्प्रत्ययं मन्यन्ते। कौलस्थः। कोपान्त्य, तित्तिडीकेन तित्तिडीकाभिर्वा संस्कृतं तैत्तिडीकम्। दर्दुरूकेण दार्दुरूकम्। मरण्डूकेन मारण्डूकम्। अन्ये तु कवर्गोपान्त्यादपीच्छन्ति। मौद्गम्। *सारघम् ॥ ४ ॥ *संसृष्टे ॥ ६ । ४ । ५ ॥ तेनेति तृतीयान्तात्संसृष्टेऽर्थे इकण् प्रत्ययो भवति। मिश्रणमात्रं संसर्ग इति पूर्वोक्तात्संस्कृताद्भेदः। दध्ना संसृष्टं *दाधिकम्। शार्ङ्गवेरिकम्। पैप्पलिकम्। वैपिका भिक्षाः। *आशुचिकमन्नम् ॥ ५ ॥ लवणादः ॥६।४।६॥ लवणशब्दात्तेन संसृष्टे अकारः प्रत्ययो भवति। लवणेन संसृष्टो लवणः सूपः। लवणः शाकः। लवणा यवागूः। लवणशब्दो द्रव्यशब्दो गुणशब्दश्च तत्र द्रव्यवाची लवणशब्दः प्रत्ययं प्रयोजयति न गुणवाची। गुणेन विश्लेषपूर्वकस्य संसर्गस्याभावात् ॥ ६ ॥ *चूर्णमुद्गाभ्यामिनणौ ॥ ६ । ४ । ७ ॥ आभ्यां तेन संसृष्टे यथासंख्यमिन् अण् इत्येतौ प्रत्ययौ भवतः । चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः। चूर्णिन्यो धानाः। मुद्गैः संसृष्टो मौद्ग ओदनः। मौद्गी यवागूः ॥ ७ ॥ *व्यञ्जनेभ्य उपसिक्ते ॥ ६ । ४ । ८ ॥ व्यञ्जनवाचिनस्तृतीयान्तादुपसिक्तेऽर्थे इकण् प्रत्ययो भवति । सूपेन उपसिक्तः सौपिक ओदनः। दाधिक ओदनः। घार्तिकः सूपः। तैलिकं शाकम्। व्यञ्जनेभ्य इति किम्। उदकेन उपसिक्त ओदनः। व्यञ्जनशब्दो रूढ्या सूपादौ वर्तते। उपसिक्त इति किम्। सूपेन संसृष्टा स्थाली। उपसिक्तमिति यद्भोजनार्थमुपादीयते भोज्यादि तदुच्यते न स्थाल्यादि। उपसिक्तं संसृष्टमेव तत्र 'संसृष्टे' ( ६ । ४ । ५ ) इत्येव सिद्धे नियमार्थं वचनम्। व्यञ्जनैः संसृष्टे *उपसिक्त एव उपसिक्ते च *व्यञ्जनैरेव । बहुवचनं स्वरूपविधेर्निरासार्थम् ॥ ८ ॥ तरति ॥ ६ । ४ । ९ ॥ तेनेति तृतीयान्तात्तरत्यर्थे इकण् प्रत्ययो भवति । उडुपेन तरति औडुपिकः काण्डप्लविकः । शारप्लविकः। गौपुच्छिकः ॥ ९ ॥ नौद्विस्वरादिकः ॥ ६ । ४ । १० ॥ नौशब्दाद्द्विस्वराच्च नाम्नस्तृतीयान्तात्तरत्यर्थे इकः प्रत्ययो भवति। नावा तरति नाविकः। नाविका। द्विस्वर, घटिकः। प्लविकः। दृतिकः। वाहुकः। वाहुका ॥ १० ॥ चरति ॥ ६ । ४ । ११ ॥ तेनेति तृतीयान्ताच्चरत्यर्थे इकण् प्रत्ययो भवति। चरतिरिह गत्यर्थो भक्ष्यार्थश्च गृह्यते। गत्यर्थे, हस्तिना चरति हास्तिकः। शाकटिकः। घाण्टिकः। आकर्षिकः। आकषः सुवर्णनिकषोपलः औषधपेषणपाषाणश्च। भक्ष्यर्थे, दध्ना चरति दाधिकः। शार्ङ्गवेरिकः ॥ ११ ॥ पर्पादेरिकट् ॥६।४।१२॥ पर्प इत्येवमादिभ्यस्तृतीयान्तेभ्यश्चरत्यर्थे इकट् प्रत्ययो भवति। पर्पेण चरति पर्पिकः। पर्पिकी। अश्विकः। अश्विकी। पर्प अश्व अश्वत्थ रथ अर्घ्य व्याल व्याम। इति

कुल—॥—सारघमिति । सरघाभिः कृत 'नाम्नि मक्षिकादिभ्य' इत्यण्। सारघेण मधुना संस्कृतः ॥—संसृ—॥—दाधिकमिति। अत्र संसृष्ट शाकादि भक्ष्य विवक्षितम् । अन्यथा 'व्यञ्जनेभ्य उपसिक्ते' इति नियम स्यात् ॥—आशुचिकमिति । नात्रान्नं भोज्यार्थं पश्चाद्धावनायामभक्ष्यत्वादतोऽनियम ॥—चूर्ण—॥ मत्वर्थीयेनैव इना सिद्धे संसृष्टविवक्षायामिकणबाधनार्थम् ॥—व्यञ्ज—॥—उपसिक्त एवेति। सूपेन संसृष्टा स्थालीत्यनुपसिक्ते संसृष्टे प्रत्ययो न भवतीति प्रत्ययार्थव्यवस्था ॥—व्यञ्जनैरेवेति। उदकेनोपसिक्त ओदन इत्युदकादव्यञ्जनान्न भवतीति प्रकृतिव्यवस्था

पर्पादिः॥१२॥ पादिकः॥६।४।१३॥ पादशब्दात्तेन चरत्यर्थे इकट् प्रत्ययो भवति अस्य पद्भावश्च निपात्यते । पादाभ्यां चरति पदिकः ॥१३॥ श्वगणाद्वा॥६।४।१४॥ श्वगणशब्दात्तेन चरत्यर्थे इकट् प्रत्ययो वा भवति । श्वगणेन चरति श्वगणिकः । श्वगणिकी । पक्षे इकण् श्वागणिकः । श्वागणिकी । 'श्वादेरिति' (७-४-१०) इति वात्भागौर्न भवति ॥ १४ ॥ वेतनादेर्जीवति ॥ ६ । ४ । १५ ॥ तेनेति वर्तते । वेतन इत्येवमादिभ्यस्तृतीयान्तेभ्यो जीवत्यर्थे इकण् प्रत्ययो भवति । वेतनेन जीवति वैतनिकः । वाहिकः । वेतन वाह अर्धवाह धनुस् दण्ड धनुर्दण्ड जाल वेश उपवेश प्रेषण भृति उपवेष उपस्था उपास्ति उपस्थान सुख शय्या सुखशय्या शक्ति उपनिषत् उपरिजन स्फिज स्फिग वाल पुतचाल उपदेश पाद उपहस्त । इति वेतनादिः ॥ १५ ॥ व्यस्ताच्च क्रयविक्रयादिकः ॥ ६ । ४ । १६ ॥ क्रयविक्रयशब्दात्समस्ताद्व्यस्ताच्च तेन जीवत्यर्थे इकःप्रत्ययोभवति । क्रयविक्रयेण जीवति क्रयविक्रयिकः । क्रयिकः । विक्रयिकः ॥ १६ ॥ वस्नात् ॥६।४ । १७ ॥ वस्नात्तेन जीवत्यर्थे इकः प्रत्ययो भवति । वस्नं मूल्यं तेन जीवति वस्निकः ॥ १७ ॥ *आयुधादीयश्च ॥ ६ । ४ ।१८॥ आयुधशब्दात्तेन जीवत्यर्थे ईयश्चकारादिकश्च प्रत्ययौ भवतः । आयुधीयः । आयुधिकः । आयुधिका । आयुधादिकेकणोः *स्त्रियां विशेषः ॥ १८ ॥ व्रातादीनञ् ॥ ६ । ४ । १९ ॥ व्रातशब्दात्तेन जीवत्यर्थे ईनञ् प्रत्ययो भवति । नानाजातीया अनियतवृत्तयः शरीरायासजीविनः संघा व्राताः । तत्साहचर्यात्तत्कर्मापि व्रातम् । तेन जीवति व्रातीनः । ञकारो वृद्ध्यर्थः । तेन 'तद्धितः स्वरवृद्धि—'(३-२-५५) इत्यादिना पुंवद्भावो न भवति । व्रातीनाभार्यः ॥ १९ ॥ निर्वृत्तेऽक्षद्यूतादेः ॥ ६ । ४ । २० ॥ अक्षद्यूत इत्येवमादिभ्यस्तृतीयान्तेभ्यो निर्वृत्तेऽर्थे इकण् प्रत्ययो भवति । अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम् । जाङ्घाप्रहतिकं वैरम् । अक्षद्यूत जङ्घाप्रहत जङ्घाप्रहृत जङ्घाप्रहार पादस्वेद पादस्वेदन कण्टकमर्द कण्टकमर्दन शर्करामर्दन गत आगत गतागत यात उपयात यातोपयात गतानुगत अनुगत । इत्यक्षद्यूतादिः ॥ २० ॥ भावादिमः॥ । ६ । ४ । २१ ॥ भाववाचिनस्तेन निर्वृत्तेऽर्थे इमः प्रत्ययो भवति । पाकेन निर्वृत्तं पाकिमम् । सेकिमम् । त्यागिमम् । रोगिमम् । कुट्टिमम् । संमूर्छिमम् ॥ २१ ॥ *याचितापमित्यात्कण् ॥ ६ । ४ । २२ ॥ याचित*अपमित्य इत्येताभ्यां तेन निर्वृत्ते कण् प्रत्ययो भवति । याचितेन याच्ञया निर्वृत्तं याचितकम् । अपमित्येति यबन्तम् । अपमित्य प्रतिदानेन निर्वृत्तमापमित्यकम् ॥ २२ ॥ हरत्युत्सङ्गादेः ॥ ६ । ४ । २३ ॥ उत्सङ्गादिभ्यस्तृतीयान्तेभ्यो हरत्यर्थे इकण् प्रत्ययो भवति । उत्सङ्गेन हरत्यौत्सङ्गिकः । उत्रुपेन औत्रुपिकः । उडुपेन औडुपिकः । उत्सङ्ग उत्रुप उडुप उत्पुत उत्पुट पिटक पिटाक । इत्युत्सङ्गादिः ॥ २३ ॥ भस्त्रादेरिकट् ॥ ६ ।४।२४॥ भस्त्रादिभ्यस्तृतीयान्तेभ्यो हरत्यर्थे इकट् प्रत्ययो भवति । भस्त्रया हरति भस्त्रिकः । भस्त्रिकी । भरटिकः । भरटिकी । भस्त्रा भरट भरण शीर्षभार शीर्षेभार अङ्गभार अङ्गेभार अंसभार अंसेभार । इति भस्त्रादिः ॥२४॥ *विवधवीवधाद्वा ॥६।४।२५॥ विवधवीवध इत्येताभ्यां तेन हरत्यर्थे इकट् प्रत्ययो वा भवति । विवधेन

॥-आयुधादीयश्च-॥-स्त्रियां विशेष इति। नन्वायुधादीयो चेति क्रियता पक्षे इकणापि सेत्स्यतीत्याशङ्का॥-याचि-॥-अपमित्येति। अपमान 'निमील्यादिमेङ' क्त्वा 'मेङो वा मित्'॥-विविधवीवधाद्वा

हरति विवधिकः । विवधिकी । वीवधिकः । वीवधिकी । *पक्षे इकण् वैवधिकः ववधिकी । विवधवीवधशब्दौ समानार्थौ पथि पर्याहारे च वर्तेते ॥ २५ ॥ कुटिलिकाया अण् ॥ ६ । ४ । २६ ॥ कुटिलिकाशब्दात्तृतीयान्ताद्धरत्यर्थेऽण् प्रत्ययो भवति । कुटिलिकाशब्देनाग्रेवक्रा लोहादिमयी अङ्गाराकर्षणी यष्टिर्वा कुटिला गतिर्वा पलालोत्क्षेपणोऽग्रेवक्रो दण्डो वा परिव्राजकोपकरणविशेषो वा चौराणां नौगृहाद्यारोहणार्थं दामाग्रप्रतिबद्ध आयसोऽर्द्धाङ्कुशो वोच्यते । कुटिलिकया हरत्यङ्गारान् कौटिलिकः कर्मारः । कुटिलिकया हरति व्याधं कौटिलिको मृगः । कुटिलिकया हरति पलालं कौटिलिकः कर्षकः । कुटिलिकया हरति पुष्पाणि कौटिलिकः परिव्राजकः । कुटिलिकया हरति नावं कौटिलिकश्चौरः ॥ २६ ॥ ओजःसहोऽम्भसो वर्तते ॥ ६ । ४ । २७ ॥ ओजस् सहस् अम्भस् इत्येतेभ्यस्तृतीयान्तेभ्यो वर्तते इत्यर्थे इकण् प्रत्ययो भवति । वृत्तिरात्मयापना चेष्टा वा । ओजसा बलेन वर्तते औजसिकः । सहसा प्रसहनेन पराभिभवेन वा साहसिकः । अम्भसा जलेन आम्भसिकः ॥ २७ ॥ *तं प्रत्यनोर्लोमेपकूलात् ॥ ६ । ४ । २८ ॥ तेनेति निवृत्तम् । तमिति द्वितीयान्तात्प्रति अनु इत्येताभ्यां परो यो लोमशब्द ईपशब्दः कूलशब्दश्च तदन्ताद्वर्तते इत्यर्थे इकण् प्रत्ययो भवति । प्रतिलोमं वर्तते प्रातिलोमिकः । आनुलोमिकः । प्रातीपिकः । आन्वीपिकः । प्रातिकूलिकः । आनुकूलिकः । अकर्मकस्यापि वृत्तेर्योगे प्रतिलोमादेः क्रियाविशेषणत्वात् द्वितीया । तमिति पुंलिङ्गनिर्देशो*ऽसंदेहार्थः ॥ २८ ॥ *परेर्मुखपार्श्वात् ॥ ६ । ४ । २९ ॥ परिशब्दाद्यो मुखशब्दः पार्श्वशब्दश्च तदन्तात् द्वितीयान्तात् वर्तते इत्यर्थे इकण् प्रत्ययो भवति । *परिमुखं वर्तते पारिमुखिकः । परिपार्श्वं वर्तते पारिपार्श्विकः । परिर्वर्जने सर्वतोभावे वा । स्वामिनो मुखं वर्जयित्वा वर्तमानोऽथवा यतोयतः स्वामिमुखं ततस्ततो वर्तमानः पारिमुखिकः सेवकः । एवं पारिपार्श्विकः ॥ २९ ॥ रक्षदुञ्छतोः ॥ ६ । ४ । ३० ॥ तमिति द्वितीयान्ताद्रक्षति उञ्छति चार्थे इकण् प्रत्ययो भवति । समाजं रक्षति सामाजिकः । सामवायिकः । नागरिकः । सांनिवेशिकः । बदराण्युञ्छति उच्चिनोति बादरिकः । श्यामाकिकः । नैवारिकः ॥ ३० ॥ *पक्षिमत्स्यमृगार्थाद् घ्नति ॥ ६ । ४ । ३१ ॥ तमिति द्वितीयान्तेभ्यः पक्ष्यर्थेभ्यो मत्स्यार्थेभ्यो मृगार्थेभ्यश्च घ्नत्यर्थे इकण् प्रत्ययो भवति । पक्षिणो हन्ति पाक्षिकः । मात्सिकः । मार्गिकः । अर्थग्रहणात्तत्पर्यायेभ्यो विशेषेभ्यश्च भवति । शाकुनिकः । मायूरिकः । तैत्तिरिकः । मैनिकः । शाफरिकः । शाकुलिकः । हारिणिकः । सौकरिकः । नैयङ्कुकः । अथाजिह्मान् हन्ति अनिमिषान् हन्तीत्यत्र कस्मान्न भवति । नैतन्मत्स्येत्यस्य स्वरूपं न विशेषो* न पर्यायः अपि त्वसाधारणं विशेषणं यथा जिह्मगा भुजगाः अनिमिषा देवा

॥—पक्षे इकणिति । अत्र वाग्रहणसामर्थ्यात् अन्येनाप्राप्तोपि पक्षे इकण् । अन्यथा वाग्रहणमनर्थकं स्यात् ॥—तं प्र—॥—असंदेहार्थ इति । तदिति कृते हि प्रथमान्तस्यैतद्रूपं द्वितीयान्तस्य वेति संदेहः । यत स्यमोरपि नपुंसके साधारणं तदिति रूपम् ॥—परे—॥— परिमुखमिति । मुखात्परि 'पर्यपाङ्—' इत्यव्ययीभाव । परित सर्वतो मुखं परिमुखं तदा 'परिमुखादेरव्ययीभावात्' इति' वचनादव्ययीभाव ॥—पक्षि—॥—न पर्याय इति । यः किल पर्यायशब्दः स व्युत्पत्तिमन्तरेणापि तावन्तमर्थं गमयत्ययं तु व्युत्पत्त्यपेक्ष एव गमयति ॥—विशेषणमिति । यत्रापि अजिह्मादिशब्देभ्यो मत्स्यादिप्रतीतिस्तत्राप्यसाधारणविशेषणत्वेनैव न पर्यायत्वेन

परिपन्थशब्दाद्द्वितीयान्तात्तिष्ठति घ्नति चार्थे इकण् प्रत्ययो भवति । *परिपन्थं तिष्ठति हन्ति वा
इति ॥ ३१ ॥ *परिपन्थात्तिष्ठति च ॥ ६ । ४ । ३२ ॥ तेन परिपन्थं गच्छति परिपन्थं पश्यति इत्याद्यपि भवति ॥ ३२ ॥
पारिपन्थिकश्चौरः । अत एव निर्देशात् परिपथशब्दस्येकणोऽन्यत्रापि वा परिपन्थादेशः । परिर्वर्जने सर्वतोभावे वा । पथः परि सर्वतः पन्थानं
परिपथात् ॥ ६ । ४ । ३३ ॥ तिष्ठतीति वर्तते । परिपथशब्दाद्द्वितीयान्तात्तिष्ठत्यर्थे इकण् प्रत्ययो भवति । *अवृद्धेर्गृह्णाति गर्ह्ये ॥ ६ । ४ । ३४ ॥ तमिति द्वितीयान्ता-
वा परिपथम् । परिपथं तिष्ठति पारिपथिकः । पन्थानं वर्जयित्वा व्याप्य वा तिष्ठतीत्यर्थः ॥ ३३ ॥ द्विगुणं गृह्णाति द्वैगुणिकः । त्रैगुणिकः । *वृधुषीं वृद्धिं
द्वृद्धिशब्दवर्जिताद्गृह्णत्यर्थे इकण् प्रत्ययो भवति योऽसौ गृह्णाति स चेदन्यायेन ग्रहणाद्गर्ह्यो निन्द्यो भवति । गर्ह्ये इति किम् । दत्तं गृह्णाति ॥ ३४ ॥
गृह्णाति वार्धुषिकः । अल्पं दत्त्वा प्रभूतं गृह्णन्नन्यायकारी निन्द्यते । अवृद्धेरिति किम् । वृद्धिं गृह्णातीति वाक्यमेव । कुसीदं वृद्धिस्तदर्थं द्रव्यमपि कुसीदम् । तद्गृह्णाति कुसीदिकः ।
कुसीदादिकट् ॥ ६ । ४ । ३५ ॥ तमिति द्वितीयान्तात्कुसीदशब्दाद्गर्ह्ये गृह्णत्यर्थे इकट् प्रत्ययो भवति । दशैकादशादिकश्च ॥ ६ । ४ । ३६ ॥ तमिति द्वितीयान्ताद्दशैकादशशब्दाद्गर्ह्ये गृह्णत्यर्थे इकश्चकारादिकट् च प्रत्ययो
कुसीदिकी । टकारो ङ्यर्थः ॥ ३५ ॥ दशैकादशिकः । दशैकादशिका । दशैकादशिकी । दशैकादशादित्यत एव निपातनादकारान्तत्वम् । तच्च वाक्ये
भवति । दशभिरेकादश दशैकादशाः । तान्गृह्णाति दशैकादशिकः । तदपि अबाधकान्यपि निपातनानि भवन्तीति न्यायादुपपद्यते ॥ ३६ ॥ *अर्थपदपदोत्तर-
प्रयोगार्थम् । दशैकादशान् गृह्णाति । अन्ये दशैकादश गृह्णातीति विगृह्णन्ति । अर्थात्पदात्पदशब्द उत्तरपदं यस्य तस्मात् ललामात् प्रतिकण्ठाच्च द्वितीयान्ताद्गृह्णत्यर्थे इकण्
पदललामप्रतिकण्ठात् ॥ ६ । ४ । ३७ ॥ गर्ह्ये इति निवृत्तम् । औत्तरपदिकः । आदिपदिकः । आन्तपदिकः । *ललाम लालामिकः ।
प्रत्ययो भवति । अर्थं गृह्णाति आर्थिकः । पदं पादिकः । पदोत्तरपद, पूर्वपदं पौर्वपदिकः । उत्तरपदग्रहणाद्बहुप्रत्ययपूर्वान्न भवति । बहुपदं
*प्रतिकण्ठं प्रातिकण्ठिकः । अव्ययीभावसमासाश्रयणादिह न भवति । *प्रतिगतः कण्ठं प्रतिकण्ठः तं गृह्णाति । परदारान् गच्छति पारदारिकः ।
गृह्णाति ॥ ३७ ॥ *परदारादिभ्यो गच्छति ॥ ६ । ४ । ३८ ॥ परदारादिभ्यो द्वितीयान्तेभ्यो गच्छत्यर्थ इकण् प्रत्ययो भवति । प्रतिपथादिकश्च ॥ ६ । ४ । ३९ ॥
गौरुदारिकः । गौरुतल्पिकः । सभर्तृकां गच्छति साभर्तृकिकः । भ्रातृजायिकः । परदारादयः प्रयोगगम्याः ॥ ३८ ॥ तद्गच्छति प्रतिपथिकः प्रातिपथिको
प्रतिपथशब्दाद्द्वितीयान्ताद्गच्छत्यर्थे इकः प्रत्ययो भवति । चकाराद्यथाप्राप्त इकण् । पन्थानं२ प्रति पथोऽभिमुखमिति वा प्रतिपथम् ।

॥-परि-॥-परिपन्थमिति । पथ परिशब्दो वर्जनार्थे तदा 'पर्यपाभ्या वर्ज्ये' इति पञ्चमी । 'पर्यपाङ्बहि' इति समास । यदा तु परित पन्थानमिति सर्वतोऽर्थे परि तदा 'सर्वोभयाभिपरिणा तसा' द्वितीया । सूत्रसामर्थ्यादव्ययीभाव 'न,क्पू पथ्यपोऽत्' ॥-अवृ-॥-वृधुषीमिति । प्रयुक्त धन पुष्णातीति प्रयुक्तधनपोषी तस्य पृषोदरादित्वात् वृधुषीशब्द आदेश ॥-अर्थ-॥ कण्ठकण्ठ प्रति 'योग्यतावीप्सा-' इति 'लक्षणेनाभिप्रति-' इत्यव्ययीभाव ॥-प्रतिकण्ठमिति । कण्ठ प्रति प्रातकण्ठ ललिणो नित्यण्यन्तात् कर्मणि के ललस्तममति प्राप्नोति ललाम ॥-पर-॥-भ्रातृजायिक इति । भ्रातु सकाशात् भ्रातरि वा जायेति कृत्यम् । पष्ठीसमासे तु 'ऋता विद्या-' इत्यलुप् स्यात् । 'प्रात्य-' इति समासस्तत्पुरुष ॥-प्रतिगत कण्ठमिति । वा समास

वा ॥ ३९ ॥ *माथोत्तरपदपदव्याक्रन्दाद्धावति ॥ ६ । ४ । ४० ॥ तमिति वर्तते । माथ उत्तरपदं यस्य तस्मात्प्रातिपदिकात् पदवीशब्दादाक्रन्दशब्दाच्च द्वितीयान्ताद्धावत्यर्थे इकण् प्रत्ययो भवति । दण्डमाथं धावति दाण्डमाथिकः । शौल्कमाथिकः । माथशब्दः पथिपर्यायः । दण्ड इव माथो *दण्डमाथः ऋजुमार्ग उच्यते । पदवीं धावति पादविकः । आक्रन्दन्ति यत्र स देश आक्रन्दः आक्रन्द्यते इति वा आक्रन्दः आर्तायनं शरणमुच्यते । आक्रन्दं धावति आक्रन्दिकः। उत्तरपदग्रहणाद्बहुप्रत्ययपूर्वान्न भवति । बहुमाथं धावति ॥ ४० ॥ पश्चात्यनुपदात् ॥ ६ । ४ । ४१ ॥ पश्चातीति प्रकृतिविशेषणम् । पश्चादर्थः पश्चात् । पश्चादर्थे वर्तमानादनुपदशब्दाद्द्वितीयान्ताद्धावत्यर्थे इकण् प्रत्ययो भवति। पदस्य पश्चादनुपदम् । अनुपदं धावति आनुपदिकः । प्रत्यासत्त्या धावतीत्यर्थः । पश्चातीति किम् । अनुपदं धावति । अत्र 'दैर्घ्येऽनु.' (३—१—३४) समीपे 'प्रात्यव—' (३—१—४७) इत्यादिना वा समासः ॥ ४१ ॥ सुस्नातादिभ्यः पृच्छति ॥ ६ । ४ । ४२ ॥ तमिति वर्तते । सुस्नातादिभ्यो द्वितीयान्तेभ्यः पृच्छत्यर्थे इकण् प्रत्ययो भवति । सुस्नातं पृच्छति सौस्नातिकः । सौखरात्रिकः । सौखशायनिकः । सौखशाय्यिकः । सुस्नातादयः प्रयोगगम्याः ॥ ४२ ॥ *प्रभूतादिभ्यो ब्रुवति ॥ ६ । ४ । ४३ ॥ प्रभूतादिभ्यो द्वितीयान्तेभ्यो ब्रुवत्यर्थे इकण् प्रत्ययो भवति । प्रभूतं ब्रूते प्राभूतिकः । पर्याप्तं ब्रूते पार्याप्तिकः । वैपुलिकः । वैचित्रिकः । नैपुणिकः । क्रियाविशेषणादयमिष्यते । तेनेह न भवति । प्रभूतमर्थं ब्रूते पर्याप्तमर्थं ब्रूत इति । क्वचिदक्रियाविशेषणादपि । स्वर्गमनं ब्रूते सौवर्गमनिकः । स्वागतिकः । *सौवस्तिकः । प्रभूतादयः प्रयोगगम्याः ॥ ४३ ॥ *माशब्दइत्यादिभ्यः ॥ ६ । ४ । ४४ ॥ माशब्द इत्यादिभ्यो ब्रुवत्यर्थे इकण् प्रत्ययो भवति । इति शब्दो वाक्यपरामर्शार्थः। माशब्द इति ब्रूते माशब्दिकः। मा शब्दः क्रियतामिति ब्रूत इत्यर्थः। कार्यः शब्द इति ब्रूते कार्यशब्दिकः। नित्यः शब्द इति ब्रूते नैत्यशब्दिकः। माशब्द इत्यादयः प्रयोगगम्याः । *वाक्यात्प्रत्ययविधानार्थं वचनम् ॥४४॥ शाब्दिकदार्दरिकलालाटिककौक्कुटिकम् ॥६।४।४५॥ शाब्दिकादयः शब्दा यथास्वं प्रसिद्धेऽर्थविशेषे इकण्प्रत्ययान्ता निपात्यन्ते। शब्दं करोति शाब्दिकः। यः कश्चिच्छब्दं करोति न स सर्वः शाब्दिकः किं तर्हि यः शब्दं जानाति वैयाकरणः स एवाविनष्टं शब्दमुच्चारयन् शाब्दिक उच्यते। एवं दार्दरिकः। दर्दरो घटो वादित्रं च तत्र वादित्रं कुर्वन्नेवमुच्यते। ललाटं पश्यति लालाटिकः। ललाटदर्शनेन दूरावस्थानं लक्ष्यते तेन च कार्येष्वनुपस्थानम्। यः सेवको दृष्ट्वा स्वामिनो ललाटमिति दूरतो याति न स्वामिकार्येषूपतिष्ठते स एवमुच्यते। ललाटमेव वा कोपप्रसादलक्षणाय यः पश्यति स लालाटिकः । कुक्कुटीं पश्यति कौक्कुटिकः । कुक्कुटीशब्देन कुक्कुटीपातो लक्ष्यते । तेन च देशस्याल्पता । यो हि भिक्षुरविक्षिप्तदृष्टिः पादविक्षेपे देशे चक्षुः संयम्य पुरो युगमात्रदेशप्रेक्षी गच्छति स एवमुच्यते । यो वा तथाविधमात्मानमतथाविधोऽपि संदर्शयति सोऽपि कौक्कुटिकः। दाम्भिकचेष्टा वा मिथ्याशौचादिः कुक्कुटी । तामाचरन् कौक्कुटिकः । हृदसाम्ययो वा कुक्कुटी तां पश्यति कौक्कुटिको भिक्षुः । निभृत इत्यर्थः । तदेतत्सर्वं निपातनाल्लभ्यते

॥—माथोत्तरपद—॥—दण्डमाथ इति । मथ्यते अवगाह्यते पादै' घञि माथ. । दण्ड इव माथ' । उपमान सामान्यैरेवेति नियमादप्राप्तोपि 'मयूरव्यंसक-' इति स ॥—प्रभू—॥—सौवस्तिक इति । स्वस्तीति ब्रूते व्युत्पत्तिपक्षे 'य्व पदान्तात्-' इति अव्युत्पत्तिपक्षे तु 'द्वारादे' ' इत्यैत् ॥—माश—॥—वाक्यादिति । पूर्वेण हि पदात्प्रत्यय इत्यर्थः

॥ ४५ ॥ *समूहार्थात्समवेते ॥ ६ । ४ । ४६ ॥ समूहवाचिभ्यो द्वितीयान्तेभ्यः समवेते तादात्म्यात्तदेकदेशीभूतेऽर्थे इकण् प्रत्ययो भवति । समूहं समवैति सामूहिकः । सामाजिकः । सांसदिकः । सामवायिकः । गौष्ठिकः । तदेकदेशीभावमनुभवन्नेवमुच्यते । *समवेत्यापगते तु समवेतशब्दो न वर्तते यथा सुप्तोत्थिते सुप्तशब्द इति तत्र न भवति ॥ ४६ ॥ पर्षदो ण्यः ॥ ६ । ४ । ४७ ॥ पर्षच्छब्दाद्द्वितीयान्तात्समवेतेऽर्थे ण्यः प्रत्ययो भवति। पर्षदं समवैति पार्षद्यः। परिषच्छब्दादपीच्छन्त्यन्ये । पारिषद्यः ॥४७॥ सेनाया वा ॥ ६। ४ । ४८ ॥ सेनाशब्दाद्द्वितीयान्तात्समवेतेऽर्थे ण्यः प्रत्ययो वा भवति । सेनां समवैति सैन्यः। पक्षे समूहार्थात्समवेते इतीकण् । सैनिकः । सेनैव सैन्यमिति तु भेषजादित्वात्स्वार्थे ट्यण् ॥४८॥ धर्माधर्माच्चरति ॥ ६ । ४ । ४९ ॥ धर्म अधर्म इत्येताभ्यां द्वितीयान्ताभ्यां चरत्यर्थे इकण् प्रत्ययो भवति । चरतिस्तात्पर्येणानुष्ठाने । धर्मं चरति धार्मिकः । आधर्मिकः ॥ ४९ ॥ षष्ठ्या धर्म्ये ॥ ६ । ४ । ५० ॥ षष्ठ्यन्ताद्धर्म्येऽर्थे इकण् प्रत्ययो भवति । धर्मो न्यायोऽनुवृत्त आचारस्तस्मादनपेतं धर्म्यम् । शुल्कशालाया धर्म्यम् शौल्कशालिकम् । आपणिकम् । गौल्मिकम् । आतरिकम् ॥ ५० ॥ ऋन्नरादेरण् ॥ ६ । ४ । ५१ ॥ ऋकारान्तेभ्यो नरादिभ्यश्च षष्ठ्यन्तेभ्यो धर्म्येऽर्थेऽण् प्रत्ययो भवति । नुर्धर्म्यं नारम् । स्त्रियां नारी । मातुर्मात्रम् । पितुः पैत्रम् । शास्तुः शास्त्रम् । विकर्तुः वैकर्त्रम् । होतुर्हौत्रम् । पोतुः पौत्रम् । उद्गातुः औद्गात्रम् । नरादि । नरस्य धर्म्यम् नारम् । स्त्रियां नारी । नृशब्देनैव रूपद्वये सिद्धे नरशब्दादिकण् माभूदिति तद्ग्रहणम् । माहिष्या माहिषम् । नर माहिषी प्रजावती प्रजापति विलेपिका प्रलेपिका अनुलेपिका वर्णक पेषिका वर्णकपेषिका मणिपाली पुरोहित अनुचारक अनुवाक यजमान होतृयजमान । इति नरादिः ॥ ५१ ॥ *विभाजयितृ-विशसितुर्णिड्लुक् च ॥ ६ । ४ । ५२ ॥ आभ्यां षष्ठ्यन्ताभ्यां धर्म्येऽर्थेऽण् प्रत्ययो भवति तत्संनियोगे च विभाजयितु*र्णिलुक् विशसितु-श्चेड्लुक् भवति । विभाजयितुर्धर्म्यं वैभाजित्रम् । विशसितुर्वैशस्त्रम् ॥ ५२ ॥ *अवक्रये ॥ ६ । ४ । ५३ ॥ अवक्रियते येनेच्छानियमितेन द्रव्येण कियन्तमपि कालमापणादि सोऽवक्रयः । *भोगनिर्वेशो भाटकमिति यावत् । षष्ठ्यन्तान्नाम्नोऽवक्रयेऽर्थे इकण् प्रत्ययो भवति । आपणस्यावक्रयः आपणिकः । शौल्कशालिकः । आतरिकः । गौल्मिकः । लोकपीडया धर्मातिक्रमेणापि अवक्रयो भवतीत्ययं *धर्म्याद्भिद्यते ॥ ५३ ॥ तदस्य पण्यम् ॥ ६ । ४ । ५४ ॥ तदिति प्रथमान्तादस्येति षष्ठ्यर्थे इकण् प्रत्ययो भवति । तच्चेत् प्रथमान्तं पण्यं विक्रेयं भवति । अपूपाः पण्यमस्य आपूपिकः । पण्यार्थो वृत्तावन्तर्भूत इति पण्यशब्दस्याप्रयोगः। एवं शाष्कुलिकः । मौदकिकः । लावणिकः ॥ ५४ ॥ किशरादेरिकट् ॥ ६ । ४ । ५५ ॥ किशर इत्येवमादि-

॥-समू-॥ कैश्चिदत्र प्रत्ययलोप कृत तत स्वमते कथमित्याह-समवेत्येति ॥-विभा-॥ विपूर्वो भजण् । ततो णिच् तृच् विभाजयितृ ॥-णिलुकिति । नन्वत्र इट्लोप एव विधीयतां किं णिलोपेन विभाजयितृ इत्यत्रापि इट्लोपे णिचा सस्वरत्वे वैभाजित्रमिति सिध्यति । नैवम् । णिलोपाभावो गुणः स्यात् ततोऽनिष्ट रूप स्यात् । णिलोपे तु इटो धातुत्वाभावात् गुणो न भवतीति सिध्यति ॥-अव-॥-भोगनिर्वेश इति । भुज्यत इति भोगो गृहादि निर्विश्यते अनेन व्यञ्जनाद् घञि निर्वेशः । तत. षष्ठीसमासः ॥-धर्म्याद्भिद्यते इति । तत. 'षष्ठ्या धर्म्ये' इत्यनेन न सिध्यतीति पृथग् योग इत्यर्थ ॥—

भ्यस्तदस्य पण्यमित्यस्मिन् विषये इकट्प्रत्ययो भवति । किशरादयो गन्धद्रव्यविशेषवचनाः ।किशरं किशरो वा पण्यमस्य किशरिकः । किशरिकी स्त्री । तगरिकः । तगरिकी स्त्री । किशर तगर स्थगर उशीर हरिद्रा हरिद्रु हरिद्रुपर्णी गुग्गुलु गुग्गुल नलद इति किशरादिः ॥ टकारो ङ्यर्थः ॥ ५५ ॥ शलालुनो वा ॥ ६ । ४ । ५६ ॥ शलालुशब्दाद्गन्धविशेषवाचिनस्तदस्य पण्यमित्यस्मिन् विषये इकट् प्रत्ययो भवति वा । शलालु पण्यमस्य शलालुकः । शलालुकी । पक्षे इकण् । शालालुकी ॥ ५६ ॥ *शिल्पम् ॥ ६ । ४ । ५७ ॥ तदस्येति वर्तते । तदिति प्रथमान्तादस्येत्यर्थे इकण् प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेच्छिल्पं भवति । शिल्पं कौशलम् विज्ञानप्रकर्षः । अनेन तन्निर्वर्त्यः क्रियाविशेषो लक्ष्यते । नृत्तं शिल्पमस्य नार्तिकः । गीतं गैतिकः। वादनं वादनिकः । मृदङ्गो मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । पाणविकः । मौरजिकः । वैणिकः । *मृदङ्गादिशब्दा वादनार्थवृत्तयः प्रत्ययमुत्पादयन्ति *न द्रव्यवृत्तयः । उत्पादनार्थवृत्तिभ्यस्त्वनभिधानान्न भवति । अत एव *कुम्भकारादावभिधेये मृदङ्ग करणादिभ्य एव प्रत्ययः। मृदङ्गकरणं शिल्पमस्य मार्दङ्गकरणिकः । वैणाकरणिकः । मृदङ्गवादनादिभ्योऽप्यनभिधानान्न भवति । शिल्पार्थो वृत्तावन्तर्भूत इति शिल्पशब्दस्याप्रयोगः ॥ ५७ ॥ मड्डुकझर्झराद्वाण् ॥ ६ । ४ । ५८॥ मड्डुकझर्झर इत्येताभ्यां तदस्य शिल्पमित्येतस्मिन् विषये अण् प्रत्ययो वा भवति । मड्डुकवादनं शिल्पमस्य माड्डुकः । झार्झरः । पक्षे इकण् । माड्डुकिकः । झार्झरिकः ॥ ५८ ॥ शीलम् ॥ ६ । ४ । ५९ ॥ तदिति प्रथमान्तादस्येति षष्ठ्यर्थे इकण् प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेच्छीलं भवति । शीलं प्राणिनां स्वभावः । फलनिरपेक्षा प्रवृत्तिरिति यावत् । अपूपा अपूपभक्षणं शीलमस्य आपूपिकः । शाष्कुलिकः । मौदकिक' । ताम्बूलिकः । परुषवचनं शीलमस्य पारुषिकः । एवमाक्रोशिकः । मृदङ्गादिवदपूपादयः शब्दाः क्रियावृत्तयः प्रत्ययमुत्पादयन्ति । शीलार्थो वृत्तावन्तर्भूत इति शीलशब्दस्याप्रयोगः ॥ ५९ ॥ *अङ्स्थाच्छत्रादेरञ् ॥ ६ । ४ । ६० ॥ अङ्प्रत्ययान्तात्तिष्ठते-श्छत्र इत्यादिभ्यश्च तदस्य शीलमित्यस्मिन् विषयेऽञ् प्रत्ययो भवति । आस्था शीलमस्य आस्थः । सांस्थः । आवस्थः । सायास्थः । वैयवस्थः । नैष्ठ' । वैष्ठः । ' उपसर्गादातः ' (५-३-११०) इत्यङ् । आन्तस्थः । भिदादित्वादङ् । छत्रादि, छत्रं शीलमस्य छात्रः । छत्रशब्देन गुरुकार्येष्ववहितस्य शिष्यस्य छत्रक्रियातुल्या गुरुच्छिद्राच्छादनाऽपायरक्षणादिका क्रियोच्यते उपचारात् । शिष्यो हि छत्रवद् गुरुच्छिद्रावरणादिप्रवृत्तश्छात्र इत्युच्यते । *अभ्यासापेक्षाऽपि क्रिया शीलमित्युच्यते।यथा शीलिता विद्येति।चुराशीलः चौरः ।तपःशीलः तापसः ।कर्मशील' कार्मः । स्त्रियां छात्री चौरी तापसी । छत्र चुरा तपस् कर्मन् शिक्षा *चुक्षा *चिक्षा

शिल्पम् ॥—मृदङ्गादिशब्दा इति । आदिशब्दात् व्याकरणकरणादि शिल्पमस्येति वैयाकरणिकादग ॥—न द्रव्यवृत्तय इति । द्रव्यस्य शिल्पायोगात्तद्विषयाया' क्रियाया. शिल्पत्वमिति वादनार्थवृत्तय इत्युक्तम् ॥—कुम्भकारादाविति । केषुचिद्ग्रामेषु मृन्मया मृदङ्गा भवन्ति । तेषा कुम्भकारादुत्पत्ति ॥—करणादिभ्य एवेति । न तु मृदङ्गशब्दादित्यर्थ' ॥—अङ्स्था—॥ अङ्चासौ स्थाश्च ॥ छत्रम् आदिर्यस्य अङ्स्थाश्च छत्रादिश्च तस्मात् । अन्तर्मध्ये स्थान भिदाद्यङि'व्यत्यये लुग्वा ' इति रलोप । अन्तस्थान वा अन्तस्था शीलमस्य ॥—अभ्यासापेक्षापीति । शील हि प्राणिनां स्वभाव. । छात्रस्य तु न स स्वभाव इत्याशङ्क्योक्तम् ॥—चुक्षेति । चुक्षिः सौत्रो निर्मलीकरणे चुक्षा शौचम् चिक्षेति केचित् शिक्षीत्यस्य स्थाने चिक्षीति पठन्ति धात्वन्तर

भिक्षा भक्षा तितिक्षा बुभुक्षा विश्वधा उद्स्थान उपस्थान पुरोडा कुपि मन्द्र शस्य अनृत विशिख विशिखा प्ररोह । इति छत्रादिः ॥ ६० ॥

तूष्णीकः ॥ ६ । ४ । ६१ ॥ तूष्णींशब्दात्तदस्य शीलमित्यस्मिन्विषये कः प्रत्ययो मकारलोपश्च निपात्यते । तूष्णींभावः शीलमस्य तूष्णीकः ॥ ६१ ॥

प्रहरणम् ॥ ६ । ४ । ६२ ॥ तदिति प्रथमान्तादस्येति षष्ठ्यर्थे इकण् प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेत्प्रहरणं भवति । असिः प्रहरणमस्य आसिकः । प्रासिकः । चाक्रिकः । मौष्टिकः । धानुष्कः । मौद्गरिकः । मौसलिकः । चरतीत्यत्र *व्यापारसाधनात् प्रत्ययो यथा अश्वेन चरतीति । शिल्पमित्यत्र तु विज्ञानातिशये यथा नृत्तं शिल्पमस्येति । अनेन तु *व्यापाराभावेऽपि परिज्ञानमात्रे प्रत्ययः ॥ ६२ ॥

परश्वधाद्वाण् ॥ ६ । ४ । ६३ ॥ परश्वधशब्दात्तदस्य प्रहरणमित्यस्मिन्विषयेऽण् प्रत्ययो वा भवति । परश्वधः प्रहरणमस्य पारश्वधः । पक्षे इकण् । पारश्वधिकः ॥ ६३ ॥

*शक्तियष्टेष्टीकण् ॥ ६ । ४ । ६४ ॥ शक्ति यष्टि इत्येताभ्यां तदस्य प्रहरणमित्यस्मिन् विषये टीकण् प्रत्ययो भवति । शक्तिः प्रहरणमस्य शाक्तीकः । शाक्तीकी । याष्टीकः । याष्टीकी । कथं शाक्तिकः शक्त्या जीवतीति वेतनादीकणा भविष्यति ॥ ६४ ॥

वेष्ट्यादिभ्यः ॥ ६ । ४ । ६५ ॥ इष्टि इसेवमादिभ्यस्तदस्य प्रहरणमित्यस्मिन्विषये टीकण् वा भवति । पक्षे प्रहरणमितीकण् । इष्टिः प्रहरणमस्य ऐष्टीकः । ऐष्टीकी । ऐष्टिकः । ईषा प्रहरणमस्य ऐषीकः । ऐषीकी । ऐषिकः । कम्पन प्रहरणमस्य काम्पनीकः । काम्पनीकी । काम्पनिकः । अम्भःप्रहरणः आम्भसीकः । आम्भसीकी । आम्भसिकः । दण्डप्रहरणः दाण्डीकः । दाण्डीकी । दाण्डिकः । इष्ट्यादयः प्रयोगगम्याः ॥ ६५ ॥

*नास्तिकास्तिकदैष्टिकम् ॥ ६ । ४ । ६६ ॥ एते शब्दास्तदस्येत्यस्मिन्विषये इकण्प्रत्ययान्ता निपात्यन्ते । निपातनं रूढ्यर्थम् । नास्ति परलोकः पुण्यं पापमिति वा मतिरस्य नास्तिकः । अस्ति परलोकः पुण्यं पापमिति वा मतिरस्य आस्तिकः । नास्त्यस्तिशब्दौ तिवादिप्रतिरूपकौ *अव्ययौ । निपातनादेव वा तदिति प्रथमाधिकारेऽपि आख्यातान्नास्तीति पदसमुदायाच्च प्रत्ययः । दिष्टं दैवं तत्प्रमाणमिति मतिरस्य दिष्टं वा प्रमाणानुपातिनी मतिरस्य दैष्टिकः ॥ ६६ ॥

वृत्तोऽपपाठोऽनुयोगे ॥ ६ । ४ । ६७ ॥ तदस्येति वर्तते । तदिति प्रथमान्तादस्येति षष्ठ्यर्थे इकण् प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेदनुयोगविषये वृत्तोऽपपाठो भवति । अनुयोगः परीक्षा । एकमन्यदपपाठोऽनुयोगे वृत्तमस्य ऐकान्यिकः । द्वैयन्यिकः । त्रैयन्यिकः । संख्यान्यशब्दयोस्तद्धिते विषयभूते समासः । ततस्तद्धितः । वृत्तोऽपपाठोऽनुयोग इत्यस्य तु वृत्तावन्तर्भावादप्रयोगः। अन्यत्वं चापपाठस्य सम्यक्पाठापेक्षम्। वृत्त इति किम् । वर्तमाने वर्त्स्यति च न भवति । अपपाठ इति किम् । एकमन्यदस्य दुःखमनुयोगे वृत्तम् । जयोऽनुयोगे वृत्तः । अनुयोग इति किम् ।

---

षा चिक्षि । चिक्षा शिक्षेत्यर्थ ॥—प्रह—॥—व्यापारसाधनादिति । व्यापारप्ररणरूप साध्यते यन तस्मात् । अयमथ । चरत्यर्थे व्यापार साधयन्नेव शब्द प्रत्ययमुत्पादयति ॥—व्यापाराभावेपीति । प्रहरणस्य हि व्यापार' परप्रहरणरूप' । तस्याभावेपि प्रहरणाभावेपीत्यर्थ । विज्ञानातिशयश्च प्रहारवेचक्षण्य तदभावेपि तन्मात्रेपीत्यर्थ ॥—शक्ति—॥ ननु टिकणिति मानालघु प्रत्ययो विधीयताम् । एवमपि कृते शाक्तीकादय सेत्स्यन्ति । न वाच्यम् 'अवर्णेवर्णस्य–' इत्यस्य प्रसङ्ग । यतष्टकारो हि ङ्यर्थ । स तु इकण्द्वारा सिद्ध इत्यधिकस्य टकारस्यैतदेव फल यत् 'अवर्णेवर्णस्य—' इति इलोप बाधित्वा 'समानानाम्' इति दीर्घेण टिकणि कृतेपि शाक्तीकादयो भवन्ति । परमुत्तरत्र आम्भसीक इति सिद्ध्यर्थं टीकण्करणम् ॥—नास्ति—॥—अव्यये इति ।

स्वैरःध्ययने माभूत् । अन्ये त्वपपाठादन्यत्राप्यध्ययनमात्रे प्रत्ययमिच्छन्ति । एकं रूपमध्ययने वृत्तमस्य ऐकरूपिकः । ऐकग्रन्थिकः ॥ ६७ ॥ **बहुस्वरपूर्वादिकः** ॥ ६ । ४ । ६८ ॥ बहुस्वरं पूर्वपदं यस्य तस्मान्नाम्नः प्रथमान्तादस्येति षष्ठ्यर्थे इकः प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेद्वृत्तोपपाठोऽनुयोगे भवति । एकादशान्यान्यपपाठरूपाण्यनुयोगेऽस्य वृत्तानि एकादशान्यिकः । एकादशान्यिका स्त्री । द्वादशान्यिकः । द्वादशान्यिका स्त्री।त्रयोदशान्यिकः । त्रयोदशान्यिका। चतुर्दशान्यिकः । चतुर्दशान्यिका । अत्राप्यन्ये पूर्ववदन्यत्रापीच्छन्ति । द्वादश रूपाण्यध्ययने वृत्तान्यस्य द्वादशरूपिकः ॥ ६८ ॥ ***भक्ष्यं हितमस्मै** ॥ ६ । ४ । ६९ ॥ तदिति वर्तते। तदिति प्रथमान्तादस्मै इति चतुर्थ्यर्थे इकण् प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेद्भक्ष्यं हितं भवति । अपूपा भक्ष्यं हितमस्मै आपूपिकः । शाष्कुलिकः । मौदकिकः । गौडधानिकः । भक्ष्यमिति किम् । देवदत्तो हितोऽस्मै । हितमिति किम् । अपूपा भक्ष्यमहितमस्मै । हितार्थो भक्षणक्रिया च तद्धितवृत्तावेवान्तर्भवति ॥ ६९ ॥ **नियुक्तं दीयते** ॥ ६ । ४ । ७० ॥ तदिति अस्मै इति च वर्तते । तदिति प्रथमान्तादस्मै इति चतुर्थ्यर्थे इकण् प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेन्नियुक्तमव्यभिचारेण नित्यं वा दीयते । अग्रभोजनमस्मै नियुक्तं दीयते आग्रभोजनिकः । आग्रफलिकः । मांसिकः । आपूपिकः । शाष्कुलिकः । ग्रामिकः । आग्रहारिकः । अस्मै इत्येव । रजकस्य वस्त्रं नित्यं दीयते । अर्प्यते इत्यर्थः ॥ ७० ॥ **श्राणामांसौदनादिको वा** ॥ ६ । ४ । ७१ ॥ श्राणामांसौदन इत्येताभ्यां तदस्मै नियुक्तं दीयत इत्यस्मिन् विषये इकः प्रत्ययो वा भवति । श्राणा नियुक्तमस्मै दीयते श्राणिकः पथ्याशी । श्राणिका । मांसौदनिकः । मांसौदनिका । पक्षे इकण् । श्राणिकी । मांसौदनिकी । इकेकणोः स्त्रियां विशेषः । अन्ये त्विकं नेच्छन्ति ॥ ७१ ॥ **भक्तौदनाद्वाणिकट्** ॥ ६ । ४ । ७२ ॥ भक्त ओदन इत्येताभ्यां यथासंख्यमण् इकट् प्रत्ययौ वा भवतः तदस्मै नियुक्तं दीयते इत्यस्मिन्विषये । भक्तमस्मै नियुक्तं दीयते भाक्तः । औदनिकः । औदनिकी । पक्षे इकण् । भाक्तिकः । औदनिकः । ओदनशब्दादिकणं नेच्छन्त्यन्ये ॥ ७२ ॥ **नवयज्ञादयोऽस्मिन्वर्तन्ते** ॥ ६ । ४ । ७३ ॥ नवयज्ञादिभ्यः प्रथमान्तेभ्यो वर्तन्त इत्येतदुपाधिभ्योऽस्मिन्निति सप्तम्यर्थे इकण् प्रत्ययो भवति । नवा यज्ञा अस्मिन्वर्तन्ते नावयज्ञिकः । पाकयज्ञिकः । नवयज्ञादयः प्रयोगगम्याः ॥ ७३ ॥ **तत्र नियुक्ते** ॥ ६ । ४ । ७४ ॥ तत्रेति सप्तम्यन्तान्नियुक्तेऽर्थे इकण् प्रत्ययो भवति । नियुक्तोऽधिकृतो व्यापारित इत्यर्थः । पूर्वकस्य नियुक्तमित्यस्य क्रियाविशेषणरूपस्याव्यभिचारो नित्यमिति चार्थः । प्रत्ययार्थश्चायम् । स तु प्रकृत्यर्थोपाधिः । शुल्कशालायां नियुक्तः शौल्कशालिकः । आपणिकः । आतरिकः । दौवारिकः । आक्षपटलिकः ॥ ७४ ॥ **अगारान्तादिकः** ॥ ६ । ४ । ७५ ॥ अगारान्तात्तत्र नियुक्तेऽर्थे इकः प्रत्ययो भवति । देवागारिकः । देवागारिका । भाण्डागारिकः । भाण्डागारिका । आयुधागारिकः । आयुधागारिका । कोष्ठागारिकः । कोष्ठागारिका ॥ ७५ ॥

---

तयोश्च परत प्रथमैकवचनम् ॥—भक्ष्यम्—॥ अथास्येत्यनुवर्त्तमानस्य हितमित्येतद्योगेऽर्थवशात् 'हितसुखाभ्याम्' इति चतुर्थीपरिणामेनास्मायिति लभ्यते इति किमर्थमस्योपादानम् । सत्यम् । उत्तरार्थत्वाददोषः । उत्तरत्र हि नियुक्त दीयते इति षष्ठ्यन्तस्यापि संबन्धोपपत्तेरस्मै इति न लभ्यते इति सम्प्रदानप्रतिपत्त्यर्थम् अस्मायिति कर्त्तव्यं तदुत्तरार्थं सदिह सूत्रेपि

*अदेशकालादध्यायिनि ॥ ६ । ४ । ७६ ॥ तत्रेति वर्तते।*अध्ययनस्य यौ प्रतिषिद्धौ देशकालौ तावदेशकालौ । तद्वाचिनः सप्तम्यन्तादध्यायिन्यर्थे इकण् प्रत्ययो भवति।अदेश, अशुचावध्यायी आशुचिकः । श्मशानेऽध्यायी श्माशानिकः । श्मशानाभ्यासिकः।अकालः,सान्ध्यिकः।औत्पातिकः।आनध्यायिकः । अदेशकालादिति किम् । स्वाध्यायभूमावध्यायी । पूर्वाह्णेऽध्यायी ॥ ७६ ॥ निकटादिषु वसति ॥ ६ । ४ । ७७ ॥ निकटादिभ्यः सप्तम्यन्तेभ्यो वसत्यर्थे इकण् प्रत्ययो भवति । निकटे वसति नैकटिकः । आरण्यकेन भिक्षुणा ग्रामात्क्रोशे वस्तव्यमिति यस्य शास्त्रितो वासः स एवोच्यते । एतदर्थ एव च तत्रेत्यधिकारे सप्तमीनिर्देशः । वृक्षमूले वसति वार्क्षमूलिकः । श्माशानिकः । आभ्यवकाशिकः । आवसथिकः । निकटादयः प्रयोगगम्याः ॥७७॥ सतीर्थ्यः॥६।४।७८॥ सतीर्थ्य इति समानतीर्थशब्दात्तत्र वसत्यर्थे यः प्रत्ययो निपात्यते समानशब्दस्य च सभावः । समानतीर्थे वसति सतीर्थ्यः । तीर्थमिह गुरुरुच्यते ॥ ७८ ॥ *प्रस्तारसंस्थानतदन्तकठिनान्तेभ्यो व्यवहरति ॥ ६ । ४ । ७९ ॥ प्रस्तारसंस्थान इत्येताभ्यां प्रस्तारान्तात् संस्थानान्तात् कठिनान्ताच्च व्यवहरत्यर्थे इकण् प्रत्ययो भवति । *व्यवहरतिरिह क्रियातत्त्वे क्रियाया अविपरीतस्वभावे। यथा लौकिको व्यवहार इत्यत्र । प्रस्तारे व्यवहरति प्रास्तारिकः।सांस्थानिकः। तदन्त, कांस्यप्रस्तारिकः। लौहप्रस्तारिकः । गौसंस्थानिकः । आश्वसंस्थानिकः । कठिनान्त, वांशकठिनिकः । वार्ध्रकठिनिकः । कठिनं तापसभाजनं पीठं वा । बहुवचनं कठिनान्तेति स्वरूपग्रहणव्युदासार्थम् *रूढ्यर्थं च । प्रस्तारसंस्थानाभ्यां तदन्ताभ्यां केचिन्नेच्छन्ति ॥ ७९ ॥ *संख्यादेश्चार्हदलुचः ॥ ६ । ४ । ८० ॥ आ अर्हदर्थादित ऊर्ध्वं या प्रकृतिरुपादास्यते तस्याः केवलायास्तदन्तायाश्च संख्यापूर्वाया वक्ष्यमाणः प्रत्ययो भवतीति वेदितव्यम् न चेत्सा लुगन्ता भवति । चन्द्रायणं चरति चान्द्रायणिकः । द्वे चन्द्रायणे चरति *द्वैचन्द्रायणिकः । पारायणमधीते पारायणिकः । द्वे पारायणे अधीते द्वैपारायणिकः।संख्यादेरिति किम् ।परमपारायणमधीते। महापारायणमधीते । चकारः केवलार्थः । आर्हत इत्यत्राकारोऽभिविधौ । तेनार्हदर्थेऽपि भवति । द्वे सहस्रे द्विसहस्रं वार्हति द्विसाहस्रः। अलुच इति किम्। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । अत्र 'शूर्पाद्वाञ्' (६-४-१३७) इत्यञ् । 'अनाम्न्यद्विः प्लुप्' (६-४-१४१) इति लुप् । द्विशूर्पेण क्रीतं द्विशौर्पिकम् ।

विभक्तिपरिणामक्लेशमन्तरेण सोऽर्थः प्रतीयते इति क्रियते ॥—अदे—॥—अध्ययनस्येति । अध्यायिनश्च देशकालावेवाधारो भवत । ताभ्यामन्यत्राध्येतुमशक्यत्वात् । तत्र देशकालयोराधाराभावेन प्रतिषिद्धयोः क्वान्यत्राध्यायी अधीयीतेति विरोधमाशङ्क्याह—अध्ययनस्येति । एतेन प्रतिषिद्धदेशवाचकात् प्रतिषिद्धकालवाचकाच्च सप्तम्यन्तादध्येतरि प्रत्यय' ॥—प्रस्ता—॥ —व्यवहरतिरिति । व्यवहरतिरयमस्ति विनिमये । यथा शत व्यवहरति शतस्य व्यवहरति इति । अस्ति विवादे । यथा व्यवहारे पराजित इति । अस्ति विक्षेपे । यथा शलाका व्यवहरति । अस्ति क्रियातत्त्वे । यथा लौकिको व्यवहार इति । तत्रेह क्रियातत्त्वे वर्तमान आश्रीयते । क्रियायास्तत्त्वमविपरीत' स्वभाव' । यथेत्यादिनाऽत्रैव व्यवहरति निदर्शयति । अस्य त्वर्थस्य ग्रहणे हेतु' प्रत्ययान्तादविपरीतस्वरूपक्रियानुष्ठातु प्रतिपत्ति ॥—रूढ्यर्थं चेति । रूढिश्च तापसभाजनेत्यादि तेन कठिने कठोरे न ॥—संख्या—॥—द्वैचन्द्रायणिक इति । 'द्विगोरनपत्ये' इत्यनेन न लुप् । प्राग्जितीयेऽर्थे तस्य विधानात् । 'अनाम्न्यद्विः' इत्यपि न यतोऽनाम्न्येति सूत्रेणास्मादेव सूत्रात् येऽर्थास्तमर्हतीति यावत् तेष्वेव लुप् त्वेषु तेन नात्र लुप्

त्रिशौर्पिकम् । पुनरपि ' शूर्पाद्वाञ् ' ( ६-४-१३७ ) इत्यञ् न भवति ॥ ८० ॥ *गोदानादीनां ब्रह्मचर्ये ॥ ६ । ४ । ८१ ॥ गोदानादिभ्यो निर्देशात् षष्ठ्यन्तेभ्यो ब्रह्मचर्येऽभिधेये इकण् प्रत्ययो भवति । गोदानस्य ब्रह्मचर्यं गौदानिकम् । आदित्यव्रतानामादित्यव्रतिकम् । महानाम्नीनां माहानाम्निकम् । गोदानादयः प्रयोगगम्याः । येभ्योऽस्मिन्नर्थे इकण् दृश्यते ते गोदानादयः ॥ ८१ ॥ चन्द्रायणं च चरति ॥ ६ । ४ । ८२ ॥ चन्द्रायणशब्दान्निर्देशादेव द्वितीयान्ताद्गोदानादिभ्यश्चार्थात् द्वितीयान्तेभ्यश्चरत्यर्थे इकण् प्रत्ययो भवति । चन्द्रायणं चरति चान्द्रायणिकः । गोदानं चरति गौदानिकः । आदित्यव्रतिकः । महानाम्न्यो नाम ऋचः । तत्साहचर्यात्तासां व्रतमपि महानाम्न्यः । महानाम्नीव्रतं चरति माहानाम्निकः ॥ ८२ ॥ देवव्रतादीन् डिन् ॥ ६ । ४ । ८३ ॥ देवव्रतादिभ्यो निर्देशादेव द्वितीयान्तेभ्यश्चरत्यर्थे डिन् प्रत्ययो भवति । देवव्रतं चरति देवव्रती । तिलव्रती । अवान्तरदीक्षी । महाव्रती । देवव्रतादयः प्रयोगगम्याः। डित्करणमुत्तरत्रान्त्यस्वरादिलोपार्थम् ॥ ८३ ॥ डकश्चाष्टाचत्वारिंशतं वर्षाणाम् ॥ ६ । ४ । ८४॥ वर्षाणां संबन्धिनोऽष्टाचत्वारिंशच्छब्दाद्व्रतवृत्तेर्निर्देशादेव द्वितीयान्ताच्चरत्यर्थे डकश्चकाराड्डिन् च प्रत्ययो भवति । अष्टाचत्वारिंशद्वर्षसहितं व्रतमष्टाचत्वारिंशत् तच्चरति अष्टाचत्वारिंशकः । अष्टाचत्वारिंशी ॥ ८४ ॥ चातुर्मास्यं तौ यलुक् च ॥ ६ ।४ ।८५॥ चातुर्मास्यशब्दाद्व्रतवृत्तेर्निर्देशादेव द्वितीयान्ताच्चरत्यर्थे तौ डकडिनौ प्रत्ययौ यलोपश्च भवति । चतुर्षु मासेषु भवानि ' यज्ञे ञ्यः ' (६—३—१३३) इति ञ्यः चातुर्मास्यानि नाम यज्ञाः । तत्सहचरितानि व्रतानि चातुर्मास्यानि तानि चरति चातुर्मासकः चातुर्मासी ॥ ८५ ॥ क्रोशयोजनपूर्वाच्छताद्योजनाच्चाभिगमार्हे ॥ ६ । ४ । ८६ ॥ क्रोशशब्दपूर्वाद्योजनशब्दपूर्वाच्च शताद्योजनशब्दाच्च निर्देशादेव पञ्चम्यन्तादभिगमार्हेऽर्थे इकण् प्रत्ययो भवति । क्रोशशतादभिगमनमर्हति क्रौशशतिको मुनिः । यौजनशतिको मुनिः । यौजनिकः साधुः ॥ ८६ ॥ तद्यात्येभ्यः ॥ ६ । ४ । ८७ ॥ तदिति द्वितीयान्तेभ्य एभ्यः क्रोशशत योजनशत योजन इत्येतेभ्यो याति गच्छत्यर्थे इकण् प्रत्ययो भवति । क्रोशशतं याति क्रौशशतिकः । यौजनशतिकः । यौजनिको दूतः । एभ्य इति किम् । नगरं याति चैत्रः ॥ ८७ ॥ पथ इकट् ॥६।४।८८ ॥ पथिन्शब्दात्तदिति द्वितीयान्ताद्यात्यर्थे इकट् प्रत्ययो भवति । पन्थानं याति पथिकः। पथिकी स्त्री । टकारो ङ्यर्थः । द्वौ पन्थानौ याति द्विपथिकः । द्विपथिकी स्त्री । कटमकृत्वा इकड्वचनं परत्वात्समासान्ते कृतेऽपि यथा स्यादित्येवमर्थम् ॥ ८८ ॥ नित्यं णः पन्थश्च ॥ ६ । ४ । ८९ ॥ नित्यमिति प्रत्ययार्थविशेषणम् । पथिन्शब्दाद्द्वितीयान्तान्नित्यं यात्यर्थे णः प्रत्ययो भवति पथिन्शब्दस्य च पन्थादेशः । पन्थानं नित्यं याति पान्थः । पान्था स्त्री । द्वौ पन्थानौ नित्यं याति द्वैपन्थः । द्वैपन्था स्त्री । नित्यमिति किम् । पथिकः ॥ ८९ ॥ शङ्कूत्तरकान्ताराजवारिस्थलजङ्गलादेस्तेनाहृते च ॥ ६ । ४ । ९० ॥ शङ्कु उत्तर कान्तार अज वारि स्थल जङ्गल इत्येतत्पूर्वपदात् पथिन्नन्तात्तेनेति तृतीयान्तादाहृते याति चार्थे इकण् प्रत्ययो भवति । शङ्कुपथेनाहृतो याति वा शाङ्कुपथिकः । औत्तरपथिकः । कान्तारपथिकः । आजपथिकः ।

॥——गोदा——॥——गोदानस्येति । गाव इति लोमनामाख्या गवा लोम्ना दान लवने वपनमित्यर्थः । यावत् गोदान न करोति तावद्ब्रह्मचर्यमित्यर्थः

वारिपथिकः । स्थालपथिकः । जाङ्गलपथिकः ॥ ९० ॥ स्थलादेर्मधुकमरिचेऽण् ॥ ६ । ४ । ९१ ॥ स्थलपूर्वपदात्पथिन्नन्तात्तृतीयान्तादाहृतेऽर्थेऽण् प्रत्ययो भवति तच्चेदाहृतं मधुकं मरिचं वा भवति । स्थलपथेनाहृतं मधुकं मरिचं वा स्थालपथम् । मधुकमरिच इति किम् । स्थालपथिकमन्यत् ॥ ९१ ॥ तुरायणपारायणं यजमानाधीयाने ॥ ६ । ४ । ९२ ॥ आभ्यां निर्देशादेव द्वितीयान्ताभ्यां यथासंख्यं यजमानेऽधीयाने चार्थे इकण् प्रत्ययो भवति । तुरायणं नाम यज्ञस्तं यजते तौरायणिकः । पारायणमधीते पारायणिकः ॥ ९२ ॥ संशयं प्राप्ते ज्ञेये ॥ ६ । ४ । ९३ ॥ संशयमिति द्वितीयान्तात्प्राप्तेऽर्थे इकण् प्रत्ययो भवति स चेत्प्राप्तोऽर्थो ज्ञेयो भवति । संशयं प्राप्तः सांशयिकः । सांशयिकोऽयमूर्ध्वो न जाने स्थाणुरुत पुरुष इति । सांशयिकश्चैत्रो न जाने जीवति उत मृत इति । ज्ञेय इति । किम् । संशयितरि माभूत् । सोऽपि हि संशयं प्राप्तो भवति । तस्य तत्र भावात् ॥ ९३ ॥ तस्मै योगादेः शक्ते ॥ ६ । ४ । ९४ ॥ योगादिभ्यस्तस्मै इति चतुर्थ्यन्तेभ्यः शक्तेऽर्थे इकण् प्रत्ययो भवति।योगाय शक्तः यौगिकः।सांतापिकः । योग सन्ताप सन्नाह संग्राम संयोग संपराय संघात संपाद संपादन संक्रम संपेष संवेश संमोदन निष्पेष निःसर्ग निर्घोष निसर्ग विसर्ग उपसर्ग प्रवास उपवास सक्तु मांस ओदन मांसौदन सक्तुमांसौदन । इति योगादिः ॥ ९४ ॥ योगकर्मभ्यां योकञौ ॥ ६ । ४ । ९५ ॥ आभ्यां चतुर्थ्यन्ताभ्यां शक्तेऽर्थे यथाक्रमं य उकञ् इसेतौ प्रत्ययौ भवतः । योगाय शक्तः योग्यः । कर्मणे शक्तं कार्मुकम् । एवं योगशब्दस्य द्वैरूप्यम् ॥ ९५ ॥ *यज्ञानां दक्षिणायाम् ॥ ६ । ४ । ९६ ॥ यज्ञवाचिभ्यो निर्देशादेव षष्ठ्यन्तेभ्यो दक्षिणायामर्थे इकण् प्रत्ययो भवति । यज्ञकर्मकृतां वेतनादानं दक्षिणा । अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी । वाजपेयिकी । राजसूयिकी । *नावयज्ञिकी । *पाञ्चौदनिकी । *ऐकादशाहिकी । द्वादशाहिकी । *द्वैवाजपेयिकी । बहुवचनं स्वरूपविधेर्व्युदासार्थम् ॥ ९६ ॥ *तेषु देये ॥ ६ । ४ । ९७ ॥ यज्ञवाचिभ्यस्तेष्विति निर्देशादेव सप्तम्यन्तेभ्यो देयेऽर्थे इकण् प्रत्ययो भवति।अग्निष्टोमे देयम् आग्निष्टोमिकम्।वाजपेयिकं भक्तम्।।९७।। काले कार्ये च भववत् ॥६।४।९८॥कालवाचिनो निर्देशादेव सप्तम्यन्ताद्देये कार्ये चार्थे भववत्प्रत्यया भवन्ति । यकाभ्यः प्रकृतिभ्यो येन विशेषेण ये प्रत्यया भवेऽर्थे भवन्ति ताभ्यः प्रकृतिभ्यस्तेन विशेषेण कार्ये देये चार्थे ते प्रत्यया भवन्ति । वाद्धि सर्वसादृश्यार्थः।यथा वर्षासु भवं वार्षिकम् मासिकम् शारदिकम् श्राद्धं कर्म शारदिकः शारदो वा रोग आतपो वा नैश नैशिकम् प्रादोषं प्रादोषिकम् शौवस्तिकम् चिरत्नम् परुत्नम् पुराणम् पूर्वाह्णेतनम् सायंतनम् चिरन्तनम् पौषम् शैशिरम् सान्ध्यम् सांवत्सरम् फलं पर्व वा हैमन्तम् हैमनम् प्रावृषेण्यमिति भवति एवं वर्षासु देयं कार्यं

॥–यज्ञा ॥–नावयज्ञिकीति । नवाना यज्ञाना दक्षिणा तद्धितविषये स ॥–पाञ्चौदनिकीति । पञ्चसु ओदनेपु भवः अण् तस्य लुप् । पञ्चौदनस्य दक्षिणा ॥–ऐकादशाहिकीति । एकादशानामह्नां समाहार । 'द्विगोरन्नह्न' इत्यट् । एकादशाहेन निर्वर्त्यो यागोप्येकादशाह । तस्य दक्षिणा ॥—द्वैवाजपेयिकीति । द्वयोर्वाजपेययोर्दक्षिणा इति तद्धितविपये द्विगु ॥—तेषु—॥ ननु यदग्निष्टोमे देय तदग्निष्टोमे भवति तत्र 'ऋगृद्द्विस्वरयागेभ्य' इतीकण् भविष्यति किमर्थमिद वचनम् । उच्यते । तत्र 'तस्य व्याख्याने च–' इत्यतो ग्रन्थादित्यधिकृतेऽग्निष्टोमादिविधायके ग्रन्थे वर्तमानादग्निष्टोमादेरिकण् विहित । इह त्वर्थात्मन इति विपयभेद । किंच द्वयोर्वाजपेययोर्देयं द्वैवाजपेयिकमिति इकण् न स्यात् । अत्र तु 'सख्यादेश्च–' इति भवति। देयत्व च प्रत्ययार्थो यथा स्यादिति वचनम्

वा वार्षिकम् मासिकमित्यादि भवति। प्रत्ययस्य भावोऽत्रातिदिश्यते नाभाव इति द्विगोः परस्य लुप् न भवति। द्वयोर्मासयोर्देयं कार्यं वा द्वैमासिकम्। त्रैमासिकम् ॥ ९८ ॥ *व्युष्टादिष्वण् ॥ ६ । ४ । ९९ ॥ व्युष्टादिभ्यो निर्देशादेव सप्तम्यन्तेभ्यो देये कार्ये चार्थेऽण् प्रत्ययो भवति। व्युष्टे देयं कार्यं वा वैयुष्टम्। नैत्यम्। व्युष्टसाहचर्यान्नित्यशब्दः कालवाची गृह्यते ततः सप्तम्यपवादेन 'कालाध्वनोर्व्याप्तौ' ( २-२-४२ ) इत्यनेन द्वितीयाविधानात् नित्यं देयं कार्यं वेति द्वितीयान्तादेव प्रत्ययः। अन्ये तु सप्तम्यन्तादपीच्छन्ति। नित्ये *विषुवति पङ्क्ष्वराचरैर्मुहूर्तैरनाक्रम्यमाणे देयं कार्यं वा नैत्यम्। व्युष्ट नित्य निष्क्रमण प्रवेशन तीर्थ संग्राम संघात अग्निपद पीलुमूल प्रवास उपवास। इति व्युष्टादिः। बहुवचनादाकृतिगणोऽयम् ॥ ९९ ॥ यथाकथाचाण्णः ॥ ६ । ४ । १०० ॥ यथाकथाचशब्दोऽव्ययसमुदायोऽनादरेणेत्यर्थे वर्तते तस्माद्देये कार्ये चार्थे णः प्रत्ययो भवति। यथाकथाच दीयते याथाकथाचम्। याथाकथाचा दक्षिणा ॥ १०० ॥ तेन हस्ताद्यः ॥ ६ । ४ । १०१ ॥ तेनेति तृतीयान्ताद्धस्तशब्दाद्देये कार्ये चार्थे यः प्रत्ययो भवति। हस्तेन देयं कार्यं वा हस्त्यम् ॥ १०१ ॥ *शोभमाने ॥ ६ । ४ । १०२ ॥ तेनेति तृतीयान्ताच्छोभमानेऽर्थे इकण् प्रत्ययो भवति। *कर्णवेष्टकाभ्यां शोभते कार्णवेष्टकिकं मुखम्। एवं वास्त्रयुगिकं शरीरम्। औपानहिकौ पादौ। *असमर्थनञ्समासोऽप्यस्मिन्विषये भवति। कर्णवेष्टकाभ्यां न शोभते *अकार्णवेष्टकिकम्। अवास्त्रयुगिकम् ॥ १०२ ॥ कर्मवेषाद्यः ॥ ६ । ४ । १०३ ॥ कर्मन् वेष इत्येताभ्यां तृतीयान्ताभ्यां शोभमानेऽर्थे यः प्रत्ययो भवति। कर्मणा शोभते कर्मण्यं शौर्यम्। वेषेण शोभते वेष्यो नटः। पूर्ववन्नञ्समासो भवति। अकर्मण्यः। अवेष्यः। केचिद्वेषस्थाने वेशं पठन्ति। वेश्या नर्तकी ॥ १०३ ॥ कालात्परिजय्यलभ्यकार्यसुकरे ॥ ६ । ४ । १०४ ॥ कालविशेषवाचिनः शब्दात्तेनेति तृतीयान्तात्परिजय्ये लभ्ये कार्ये सुकरे चार्थे इकण् प्रत्ययो भवति। परितो जेतुं शक्यं परिजय्यम्। शक्ते कृत्यः। लभ्यकार्ययोः शक्तेऽर्हे वा। अकृच्छ्रेण क्रियते यत्तत्सुकरम्। मासेन परिजय्यो मासिको व्याधिः। आर्धमासिकः। सांवत्सरिकः। मासेन लभ्यो मासिकः पटः। मासेन कार्यं मासिकं चान्द्रायणम्। मासेन सुकरः मासिकः प्रासादः। कालादिति किम्। चैत्रेण परिजय्यम् ॥ १०४ ॥ *निर्वृत्ते ॥ ६ । ४ । १०५ ॥ तेनेति कालादिति च वर्तते। कालवाचिनस्तृतीयान्तान्निर्वृत्तेऽर्थे इकण् प्रत्ययो भवति। अह्ना निर्वृत्तमाह्निकम्। मासिकम्। आर्धमासिकम्। सांवत्सरिकम्। योगविभाग उत्तरत्रास्यानुवृत्त्यर्थः ॥ १०५ ॥ *तं भाविभूते ॥ ६ । ४ । १०६ ॥ कालादिति वर्तते। तमिति द्वितीयान्तात्कालवाचिनो भाविनि भूते चार्थे इकण् प्रत्ययो भवति। स्वसत्तया *व्याप्स्यमानकालो भावी। *व्याप्तकालो भूतः। मासं भावी मासिक उत्सवः। मासं भूतो मा-

॥—व्युष्टा-॥—विषुवतीति। विषुर्नाम मुहूर्तं। सोऽस्यास्ति विषुवत्। समरात्रिदिव काल पुंनपुंसक। यद्वैजयन्ती 'पुरीतत् महिमा हेम विषुवत् कर्म्म लोम दो 'नृषण्ढलिङ्गा' ॥—शोभ—॥—कर्णवेष्टकाभ्यामिति। कर्णौ वेष्टते 'कर्म्मणोऽण्'। तावेव कर्णवेष्टकौ ताभ्याम्। अथवा वेष्टते णक वेष्टकौ कर्णयोर्वेष्टकौ ताभ्याम् ॥—असमर्थेति। अन हि नन् शोभमाने इत्यनेन सबद्धत्वादसमर्थ। तत्समासोपि गमकत्वादभिधानाद्भवतीत्यर्थः ॥—अकार्णवेष्टकिकमिति। इकणमानीय पश्चान्नञ्समास ॥—निर्वृ—॥ अत्र सूत्रे अन्ये कालादिति न मन्यन्ते तन्मते तात्त्विका ऐर्यापथिकीत्यादयः स्वमते 'प्रयोजनम्' इत्यनेन सिद्धा. ॥—तं भा—॥—व्याप्स्यमानेति। व्याप्स्यमान. कालो येन भाविना उत्सवेन स व्याप्स्यमान. कालो भावी ॥—व्याप्तकाल इति। अत्रापि

सिको न्याधि ॥ १०६ ॥ **तस्मै भृताधीष्टे च** ॥ ६ । ४ । १०७ ॥ कालादिति वर्त्तते । तस्मै इति तादर्थ्यचतुर्थ्यन्तात्कालवाचिनो भृतेऽधीष्टे चार्थे इकण् प्रत्ययो भवति । भृतो वेतनेन क्रीतः । अधीष्टः सत्कृत्य व्यापारितः । मासाय भृतः मासिकः कर्मकरः । मासं कर्मणे भृत इत्यर्थः । मासायाधीष्टो मासिक उपाध्यायः । मासमध्यापनायाधीष्ट इत्यर्थः । एवं वार्षिकः । सांवत्सरिकः । चकारस्तेन निर्वृत्ते तं भाविभूते तस्मै भृताधीष्टे चेति सूत्रत्रयस्याप्युत्तरत्रानुवृत्त्यर्थः ॥ १०७ ॥ **षण्मासादवयसि ण्येकौ** ॥ ६ । ४ । १०८ ॥ षण्मासशब्दात्कालवाचिनस्तेन निर्वृत्ते तं भाविभूते तस्मै भृताधीष्टे चेत्यस्मिन्विषयेऽवयसि गम्यमाने ण्य इक इत्येतौ प्रत्ययौ भवतः । षड्भिर्मासैर्निर्वृत्तः षण्मासान् भावी भूतो वा षण्मासेभ्यो भृतोऽधीष्टो वा षाण्मास्यः । षण्मासिकः । अवयसीति किम् । षण्मासान् भूतः षण्मास्यः । 'षण्मासाद्ययणिकण्' (६-४-११५) इति यः ॥ १०८ ॥ **समाया ईनः** ॥ ६ । ४ । १०९ ॥ समाशब्दात्तेन निर्वृत्त इत्यादिपञ्चकविषय ईनः प्रत्ययो भवति । समया निर्वृत्तः समा भूतो भावी वा समायै भृतोऽधीष्टो वा समीनः ॥ १०९ ॥ *राज्यहःसंवत्सराच्च **द्विगोर्वा** ॥ ६ । ४ । ११० ॥ रात्रि अहन् संवत्सर इत्येतदन्तात्समाशब्दान्ताच्च द्विगोस्तेन निर्वृत्त इत्यादिपञ्चकविषये ईनः प्रत्ययो वा भवति । द्वाभ्यां रात्रिभ्यां निर्वृत्तो द्वे रात्री भूतो भावी वा द्वाभ्या रात्रिभ्यां भृतोऽधीष्टो वा द्विरात्रीणः । त्रिरात्रीणः । एवं द्व्यहीनः । द्विसंवत्सरीणः । द्विसमीनः । पक्षे इकण् । द्वैरात्रिकः । द्वैयह्निकः । द्वैयहिक इति तु द्व्यहशब्दात्समाहारद्विगोरिकणि भवति । द्विसांवत्सरिकः । 'मानसंवत्सरस्य' ( ७-४-१९ ) इत्यादिनोत्तरपदवृद्धिः । द्वैसमिकः । राज्यन्तादहरन्ताच्च परमपि*समासान्तं बाधित्वा*अनवकाशत्वादीन एव भवति । तथा च समासान्तसंनियोगे उच्यमानः 'सर्वांशसंख्याव्ययात्' (७-३-११८) इत्यह्नादेशो न भवति । समान्तात्पूर्वेण नित्ये प्राप्ते शेषेभ्योऽप्राप्ते विकल्पः ॥ ११० ॥ **वर्षादश्च वा** ॥ ६ । ४ । १११ ॥ वर्षशब्दो यः कालवाची तदन्ताद्द्विगोस्तेन निर्वृत्त इत्यादिपञ्चकविषयेऽकारश्चकारादीनश्च वा भवति । पक्षे इकण् । एवं त्रैरूप्यं भवति । द्वाभ्यां वर्षाभ्यां निर्वृत्तो द्वौ वर्षौ द्वे वर्षे वा भूतो भावी वा द्वाभ्यां वर्षाभ्यां भृतोऽधीष्टो वा द्विवर्षः । द्विवर्षीणः । द्विवार्षिकः त्रिवर्षः । त्रिवर्षीणः । त्रिवार्षिकः । 'संख्याधिकाभ्यां वर्षस्याभाविनि' (७-४-१८) इत्युत्तरपदवृद्धिः । भाविनि तु प्रतिषेधात् द्वैवर्षिकः । त्रैवर्षिकः ॥ १११ ॥ **प्राणिनि भूते** ॥ ६ । ४ । ११२ ॥ कालवाचिवर्षशब्दान्ताद् द्विगोर्भूतेऽर्थे अः प्रत्ययो भवति स चेद्भूतः प्राणी भवति । द्वे वर्षे भूतो द्विवर्षो दारकः । त्रिवर्षो

---

स्वसत्तयेत्यपेक्ष्यते । ततश्च भूतभाविनोऽर्थस्य स्वया सत्तया व्याप्स्यमानः कालो येन भूतभाविनाऽर्थेन स तथोक्तः । इह काल इति यः काले वर्त्तते ततः प्रत्ययः उत काल एव वर्त्तते कालान्न व्यभिचरति ततः प्रत्ययः । किंचातः यदि काले यो वर्त्तते ततः प्रत्ययो रमणीयं वर्षं भूतः शोभनं वर्षं भूत इति रमणीयादेरपि प्राप्नोति । यदा यः काल एव वर्त्तते ततः प्रत्ययः तदा षष्टिं वर्षाणि भूतो षाष्टिकः द्विषष्टिं वर्षाणि भूतो द्विषाष्टिकः साप्ततिको द्विसाप्ततिक इति न स्यात् । तत्र संख्यायाः कालवृत्तेः प्रत्ययो वक्तव्यः । उच्यते । यः काले वर्त्तते ततः प्रत्ययः । तेन षाष्टिक इत्यादौ कालवृत्तेः संख्यायाः प्रत्ययः सिद्धो भवति । रमणीयं वर्षं भूत इत्यादौ त्वनभिधानान्न भवति ॥—राज्य—॥—समासान्तं बाधित्वेति । रात्रिशब्दात् 'संख्यातैक—' इत्यनेन प्राप्तम् अहस्तु 'सर्वांश—' इत्यनेन ॥—अनवकाशत्वादिति । अन्यथा राज्यन्ताहरन्ताभावान्न भवति । एकदेशेऽप्यदि नोपतिष्ठते न्यायानामनित्यत्वात्

वत्सः । माणिनीति किम् । द्विवर्षः द्विवर्षीणः द्विवार्षिकः सरकः । भूत इति किम् । शेषेष्वर्थेषु पूर्वेण विकल्प एव । द्विवर्षः । द्विवर्षीणः । द्विवार्षिको मनुष्यः । भाविन्यपि केचिदिच्छन्ति । एवमुत्तरेष्वपि त्रिषु । पूर्वेण विकल्पे प्राप्ते नित्यार्थो विधिः ॥ ११२ ॥ मासाद्वयसि यः ॥ ६ । ४ । ११३ ॥ मासशब्दान्ताद्द्विगो-र्भूतेऽर्थे यः प्रत्ययो भवति वयसि गम्यमाने। द्वौ मासौ भूतो द्विमास्यः । त्रिमास्यो दारकः । वयसीति किम् । द्वैमासिको व्याधिः । त्रैमासिको व्याधिः । द्वैमासिको नायकः । भूत इत्येव । द्वौ मासौ भावी द्वैमासिको युवा ॥ ११३ ॥ ईनञ् च ॥ ६ । ४ । ११४ ॥ द्विगोरिति निवृत्तम् योगविभागात् । मासशब्दाद्भूतेऽर्थे ईनञ् चकाराद्यश्च प्रत्ययो भवति वयसि गम्यमाने । मासं भूतो मासीनः मास्यो दारकः। अकारो वृद्धिहेतुत्वेन पुंवद्भावाभावार्थः । मासीना स्वसाऽस्य मासीनास्वसृकः । वयसीत्येव । मासिको नायकः ॥ ११४ ॥ षण्मासाद्यण्णिकण् ॥ ६ । ४ । ११५ ॥ षण्मासशब्दात्कालवाचिनो भूतेऽर्थे य यण् इकण् इत्येते प्रत्यया भवन्ति वयसि गम्यमाने । षण्मासान् भूतः षण्मास्यः । षाण्मास्यः । षाण्मासिकः । भूत इत्येव । षण्मासान् भावी । वयसीत्येव । षाण्मास्यः षाण्मासिको नायकः ॥११५॥ सोऽस्य ब्रह्मचर्यतद्वतोः ॥ ६ । ४ । ११६ ॥ स इति प्रथमान्तात्कालवाचिनोऽस्येति षष्ठ्यर्थे इकण् प्रत्ययो भवति ब्रह्मचर्ये तद्वति चाभिधेये यत्तदस्येति निर्दिष्टं तच्चेद्ब्रह्मचर्यम् ब्रह्मचारी वा भवतीत्यर्थः । मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम् । आर्धमासिकम् । सांवत्सरिकम् । मासोऽस्य ब्रह्मचारिणो मासिको ब्रह्मचारी । मासं ब्रह्मचर्यमस्येत्यर्थः । एवमार्धमासिकः । सांवत्सरिकः ॥ ११६ ॥ प्रयोजनम् ॥ ६ । ४ । ११७ ॥ सोऽस्येति वर्तते । स इति प्रथमान्ताद-स्येति षष्ठ्यर्थे इकण् प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेत्प्रयोजनं स्यात् । प्रयोजनं प्रयोजकम् प्रवर्तनम् जनकमुत्पादकम् । जिनमहः प्रयोजनमस्य जैनमाहिकम् । ऐन्द्रमहिकम् । आभिषेचनिकम् । दैपोत्सविकम् ॥ ११७ ॥ एकागाराच्चौरे ॥ ६ । ४ । ११८ ॥ एकागारशब्दात्तदस्य प्रयोजनमित्यस्मिन् विषये इकण् प्रत्ययो भवति चौरे यत्तदस्येति निर्दिष्टं स चेव चौरो भवति । एकमसहायमगारं प्रयोजनमस्य ऐकागारिकश्चौरः । ऐकागारिकी । चौरे नियमार्थं वचनम् । तेनान्यत्र न भवति । एकागारं प्रयोजनमस्य भिक्षोरिति वाक्यमेव ॥ ११८ ॥ चूडादिभ्योऽण् ॥ ६ । ४ । ११९ ॥ चूडादिभ्यस्तदस्य प्रयोजनमित्यस्मिन् विषयेऽण् प्रत्ययो भवति । चूडा प्रयोजनमस्य चौडम् । चूला चौलम् । उपनयनम् औपनयनम् । श्रद्धा श्राद्धम् । चूडादयः प्रयोगगम्याः ॥ ११९ ॥ विशाखाषाढान्मन्थदण्डे ॥ ६ । ४ । १२० ॥ विशाखा आषाढा इत्येताभ्यां तदस्य प्रयोजनमित्यस्मिन् विषयेऽण् प्रत्ययो भवति यथासंख्यं मन्थे दण्डे चाभिधेये। मन्थो विलोडनं दण्डो वा।विशाखा प्रयोजनमस्य वैशाखो मन्थः।आषाढा आषाढे आषाढाः प्रयोजनमस्य आषाढो दण्डः॥१२०॥उत्थापनादेरीयः॥६। ४।१२१॥उत्थापन इत्येवमादिभ्यस्तदस्य प्रयोजनमित्यस्मिन् विषये ईय प्रत्ययो भवति।उत्थापनं प्रयोजनमस्योत्थापनीयः।उपस्थापनीयः ।उत्थापन उपस्थापन अनुप्रवचन अनुवाचन अनुवदन अनुवादन अनुपान अनुवासन आरम्भण समारम्भण। इत्युत्थापनादि ॥ १२१ ॥ विशिरुहिपदिपूरिसमापेरनात् सपूर्वपदात्

॥-षण्मा-॥ षण्मासाद्यण् चेति सिद्धे इकण्ग्रहणं व्यावृत्युदाहरणे इकण्निवृत्त्यर्थम् । अत एव व्यावृत्युदाहरणे वाक्यमेव दर्शितम् ॥-एका-॥-नियमार्थमिति । 'प्रयोजनम्' इत्येव सिद्धत्वात्

विशि, गृहप्रवेशनं प्रयोजनमस्य
॥ ६ । ४ । १२२ ॥ विशिरुहिपदिपूरिसमापि इत्येतेभ्योऽनप्रत्ययान्तेभ्यः सपूर्वपदेभ्यस्तदस्य प्रयोजनमित्यर्थे ईयः प्रत्ययो भवति । विशि, गृहप्रवेशनं प्रयोजनमस्य
गृहप्रवेशनीयम् । संवेशनीयम् । अनुवेशनीयम्।अनुप्रवेशनीयम्।समावेशनीयम्।रुहि, प्रासादारोहणीयम्।आरोहणीयम्।प्ररोहणीयम्। अनुरोहणीयम् । अन्वारोहणीयम् ।
पदि, अश्वप्रपदनीयम् । गोप्रपदनीयम् । पूरि, प्रपापूरणीयम् । महापूरणीयम् । समापि, अङ्गसमापनीयम् । श्रुतस्कन्धसमापनीयम् । व्याकरणसमापनीयम् ॥
१२२ ॥ स्वर्गस्वस्तिवाचनादिभ्यो यलुपौ ॥ ६ । ४ । १२३ ॥ स्वर्गादिभ्यः स्वस्तिवाचनादिभ्यश्च यथासंख्यं तदस्य प्रयोजनमित्यस्मिन् विषये यः
प्रत्ययो लुप् च भवतः । स्वर्गादिभ्यो यः । स्वर्गः प्रयोजनमस्य स्वर्ग्यम् । यशस्यम् । आयुष्यम् । काम्यम् । धन्यम् । स्वस्तिवाचनादिभ्य इकणो लुप् । स्वस्ति-
वाचनं प्रयोजनमस्य स्वस्तिवाचनम् । शान्तिवाचनम् । पुण्याहवाचनम् । स्वर्गादयः स्वस्तिवाचनादयश्च प्रयोगगम्याः । गणद्वयोपादानाद्वचनभेदेऽपि यथासंख्यम्
॥ १२३ ॥ समयात् प्राप्तः ॥ ६ । ४ । १२४ ॥ सोऽस्येत्यनुवर्तते । समयशब्दात्प्रथमान्तादस्येति षष्ठ्यर्थे इकण् प्रत्ययो भवति योऽसौ प्रथमान्तः प्राप्तश्चेत्स
भवति । समयः प्राप्तोऽस्य सामयिकं कार्यम् । उपनतकालमित्यर्थः ॥ १२४ ॥ *ऋत्वादिभ्योऽण् ॥ ६ । ४ । १२५ ॥ ऋतु इत्येवमादिभ्यः सोऽस्य प्राप्त
इत्यर्थे अण् प्रत्ययो भवति । ऋतुः प्राप्तोऽस्य आर्तवं पुष्पफलम् । उपवस्ता प्राप्तोऽस्य *औपवस्त्रम् । प्राशिता प्राप्तोऽस्य *प्राशित्रम्।ऋत्वादयः प्रयोगगम्याः॥ १२५॥
कालाद्यः ॥ ६ । ४ । १२६ ॥ कालशब्दात्सोऽस्य प्राप्त इत्यर्थे यः प्रत्ययो भवति । कालः प्राप्तोऽस्य काल्यस्तापसः । काल्या मेघाः ॥ १२६ ॥
दीर्घः ॥ ६ ॥ ४। १२७ ॥ कालशब्दात्प्रथमान्तादस्येति षष्ठ्यर्थे इकण् प्रत्ययो भवति योऽसौ प्रथमान्तः स चेद्दीर्घो भवति।दीर्घः कालोस्य कालिकमृणम् । कालिकं
वैरम् । कालिकी संपत् । योगाविभागादिकण् । यविधाने हि कालाद्यो दीर्घश्चेत्येकमेव सूत्रं क्रियेत ॥ १२७ ॥ *आकालिकमिकश्चाद्यन्ते ॥ ६ । ४ । १२८ ॥
आकालिकमिति शब्दरूपमिकान्तमिकणन्तं च निपात्यते । आकालशब्दादिक इकण् च भवत्यर्थे भवतीत्यर्थः । आद्यन्ते आदिरेव यद्यन्तो गम्यते । कथं चादिरे-
वान्तो भवति ।यस्मिन्काले यत् प्रवृत्तमनध्यायादि *तस्मिन्नेव काले प्रत्यावृत्ते यदि तदुपरमेत । यदि वा यस्मिन्नेव काले क्षणादौ विद्युदादेर्जन्म यदि तस्मिन्नेव
काले विनश्येन्नात्मलाभकालादूर्ध्वं तिष्ठेदित्यर्थः । आकालं भवति आकालिकोऽनध्यायः । पूर्वेद्युर्यस्मिन्काले तृतीये चतुर्थे वा यामे प्रवृत्तः पुनरपरेद्युरपि आ
तस्मात्कालाद्भवन् आकालिकोऽनध्याय उच्यते । आकालिका आकालिकी वा वृष्टिः । स्त्रियामिकेकणोर्विशेषः । आकालिका आकालिकी वा विद्युत् । आजन्म-
कालमेव भवन्ती जन्मानन्तरविनाशिनी ऊर्ध्वमननुवर्तमाना एवमुच्यते । एवं च द्वेधाप्यादिरेवान्तो भवति । आद्यन्त इति किम् । सर्वकालभाविनि माभूत् । निपात-
नमादावन्ते चेति *द्वन्द्वनिवृत्त्यर्थम्।अथवा निपातनस्येष्टविषयत्वात् समानकालशब्दस्याकालादेशः। आद्यन्त इति च द्वन्द्वः प्रकृतिविशेषणम्।आद्यन्तयोर्वर्तमानात्समान-

॥–ऋत्वा–॥–औपवस्त्रमिति । उपोषितपारणके यद्भक्ष्यद्रव्यं तदौपवस्त्रं यद्वैदिक 'मापान्नमधुमसूराश्च वर्जयेदौपवस्त्रके' पुरुषस्तूपवस्ता॥–प्राशित्रमिति। बालस्य यत्प्रथम भोजन तदुच्यते प्राशित्रम् ॥–आका–॥
–तस्मिन्नेवेति । इह यद्यपि गत. कालो न प्रत्यावर्त्तते तथापि सामान्येन तुल्य. काल स एवोच्यते । तथाच वक्तारो भवन्ति । अद्य यस्मिन् काले भवानागात. श्व सोऽपि तस्मिन्नेव काले समागमिष्यति ॥–द्वंद्वनिवृ-

कालशब्दात् प्रथमान्तादस्येति षष्ठ्यर्थे इकेकणौ प्रत्ययौ निपात्येते समानकालशब्दस्य चाकालादेशः । समानकालावाद्यन्तावस्याकालिकोऽनध्यायः । आकालिका आकालिकी वा विद्युत् । समानकालताद्यन्तयोः पूर्ववद्वेदितव्या ॥ ११८ ॥ *त्रिंशद्विंशतेर्डकोऽसंज्ञायामाहर्दर्थे ॥ ६ । ४ । १२९ ॥ त्रिंशद्विंशति इत्येताभ्यामा अर्हदर्थाद्योऽर्थो वक्ष्यते तस्मिन् डकः प्रत्ययो भवति कापवादः असंज्ञायां विषये न चेत्प्रत्ययान्तं कस्यचित्संज्ञा भवति । त्रिंशता क्रीतं त्रिंशकम् । विंशत्या क्रीतं विंशकम् । त्रिंशतमर्हति त्रिंशकः । विंशकः । *आर्हदर्थ इत्यभिविधावाकारः । असंज्ञायामिति किम् । त्रिंशत्कम् । विंशतिकम् । ॥ १२९ ॥ *संख्याडतेश्चाशत्तिष्टेः कः ॥ ६ ।४।१३०॥ शदन्तत्यन्तनष्ट्यन्तवर्जितायाः संख्याया डतिप्रत्ययान्ताच्च शब्दाच्चकारात्त्रिंशद्विंशतिभ्यां च आर्हदर्थे कः प्रत्ययो भवति । इकणोऽपवादः । संख्या, द्वाभ्यां क्रीतं द्विकम् । त्रिकम् । पञ्चकम् । बहुकम् । गणकम् । यावत्कम् । तावत्कम् । अध्यर्धकम् । अर्धपञ्चमकम् । डति, कतिभिः क्रीतं कतिकम् । त्रिंशत् त्रिंशत्कम् । विंशति विंशतिकम् । अशत्तिष्टेरिति प्रतिषेधे प्राप्ते डतित्रिंशद्विंशतीनामुपादानम् । अशत्तिष्टेरिति किम् । चात्वारिंशत्कम् । पाञ्चाशत्कम् । साप्ततिकम् । आशीतिकम् । नावतिकम् । षाष्टिकम् ॥ १३० ॥ *शतात्केवलादतस्मिन्येकौ ॥ ६ । ४ । १३१ ॥ आ अर्हदर्थाद्योऽर्थो वक्ष्यते तस्मिन्केवलाच्छतशब्दात् य इक इत्येतौ प्रत्ययौ भवतः कापवादौ अतस्मिन् स चेदर्थो वस्तुतः प्रकृत्यर्थादभिन्नो न भवति।शतेन क्रीतं शत्यम् शातिकम् । शतमर्हति शत्यः शतिकः । शतं वर्षाणि मानमस्य शत्यः शतिकः पुरुषः । केवलादिति किम् । द्व्युत्तरं शतं द्विशतम् । तेन क्रीतं द्विशतकम् । संख्यादेश्चार्हदलुच इति प्राप्नोति । अतस्मिन्निति किम् । शतं मानमस्य शतकम् स्तोत्रम् । शतकं निदानम् । अत्र हि प्रकृत्यर्थ एव श्लोकाध्यायशतं *प्रत्ययान्तेनाभिधीयते । अन्यस्मिंस्तु शते भवत्येव । शतेन क्रीतं शाटकशतम् शत्यम् शतिकम् ॥ १३१ ॥ षातोरिकः ॥ ६ । ४ । १३२ ॥ अत्वन्तायाः संख्याया आ अर्हदर्थाद्योऽर्थो वक्ष्यते तस्मिन्निकः प्रत्ययो वा भवति । यावतिकम् । यावत्कम् । तावतिकम् । तावत्कम् ।विधानसामर्थ्यादिकारलोपो न भवति ॥१३२॥ कार्षा-

त्यर्थमिति । यद्येवमाकालिकमिति निपातनं किमर्थम् आकालादिकश्चाद्यन्तइत्युच्यमानेपि सिध्यति । उच्यते । निपातनाभावे आद्यन्त इति द्वन्द्वोपि विज्ञायेत ततश्चाकालादिकश्च भवति आदौ अन्ते च गम्यमाने इत्यपि स्यात् । ततश्च यत् कुतश्चिदारभ्य कुतश्चित्कालाद्भवति तत्रापि प्रत्ययः प्रसज्येत ॥—त्रिंश—॥—आर्हदर्थे इति । अर्हश्चासावर्थश्चार्हदर्थात् आर्हदर्थ तस्मिन् ॥—संख्याड—॥ ननु डतिग्रहणं किमर्थं संख्याद्वारेणापि गतत्वात् त्यन्तद्वारेण प्रतिषेध स्यादिति न वाच्यम् अर्थवद्ग्रहणेति न्यायेन ते सार्थकस्योपादानात् । उच्यते । ष्टयन्तद्वारेण षष्टिवर्जनं ज्ञापयति । अत्राव्युत्पत्तिपक्ष अव्युत्पत्तिपक्षे च न्यायस्याप्रवृत्ति । किंच न्यायस्यानित्यत्वज्ञापनार्थं डतिग्रहणं तेन एकसप्ततिरित्यत्र त्यन्तद्वारेण प्रतिषेधः सिद्ध. । अन्यथा सप्ततिरित्येव त्यन्तो नैकसप्ततिरिति न स्यात् । अव्युत्पत्तिपक्षश्च कस्मान्निभीयते । षष्टिग्रहणात् । अन्यथा षष्टिशब्दस्य तिप्रत्ययान्तत्वात्त्यन्तद्वारेण प्रतिषेधे सिद्धे अस्योपादानमनर्थकं स्यादिति भावार्थः ॥—शता—॥—वस्तुत इति । वस्तुत इति परमार्थवृत्त्या यद्यपि अभिन्नेपि वस्तुनि कथंचिद्भेदविवक्षया भेदो भवत्येव तथापि न स गृह्यत इत्यर्थ. ॥—प्रत्ययान्तेनेति । शतकमिति कप्रत्ययान्तेन । अयमर्थ. । अत्रास्येति षष्ठ्यर्थे प्रत्ययो विहित इति स एव प्रत्ययार्थ. । ततश्च शतरूपात् प्रकृत्यर्थात् अस्य स्तोत्रस्येत्येवरूप प्रत्ययार्थोऽभिन्न एव । यतो यदेव शतं तदेव स्तोत्रं न खलु शता-

पणादिकट् प्रतिश्चास्य वा॥६।४।१३३॥ कार्षापणशब्दादार्हदर्थे इकट् प्रत्ययो भवति अस्य च कार्षापणशब्दस्य प्रति इत्यादेशो वा भवति। कार्षापणिकम्। कार्षापणिकी। प्रतिकम्। प्रतिकी। चकार आदेशस्य प्रत्ययसंनियोगशिष्टत्वार्थः। अत एव द्विगोर्ऽपि प्रत्यादेशो न भवति। द्विकार्षापणम्। अध्यर्धकार्षापणम्। अस्येति स्थानिप्रतिपत्त्यर्थम्। अन्यथा प्रतिः प्रत्ययान्तरं विज्ञायेत। टकारो ङ्यर्थः॥ १३३॥ अर्धात्पलकंसकर्षात्॥ ६। ४। १३४॥ अर्धशब्दपूर्वात्पलकंसकर्ष इत्येवमन्तान्नाम्न आर्हदर्थे इकट् प्रत्ययो भवति। अर्धपलिकम्। अर्धपलिकी। अर्धकंसिकम् अर्धकंसिकी। अर्धकर्षिकम्। अर्धकर्षिकी॥ १३४॥ कंसार्धात्॥ ६। ४। १३५॥ कंस अर्ध इत्येताभ्यामार्हदर्थे इकट् प्रत्ययो भवति। कंसिकम्। कंसिकी। आर्धिकम्। आर्धिकी॥ १३५॥ *सहस्रशतमानादण्॥६।४।१३६॥ सहस्रशतमान इत्येताभ्यामार्हदर्थेऽण् प्रत्ययो भवति। केकणोरपवादः। सहस्रेण क्रीतः साहस्रः। शतमानेन शातमानः। 'वसनात्' (६।४।१३६) इत्यत्र सहस्रशतमानग्रहणमकृत्वाऽण्वचनम् 'नवाणः' (६-४-१४२) इति एवमर्थम्॥ १३६॥ शूर्पाद्वाञ्॥ ६। ४। १३७॥ शूर्पशब्दादार्हदर्थेऽण् प्रत्ययो वा भवति। इकणोऽपवादः। शौर्पम्। शौर्पिकम्॥ १३७॥ वसनात्॥ ६। ४। १३८॥ वसनशब्दादार्हदर्थेऽञ् प्रत्ययो भवति। वसनेन क्रीतं वासनम्॥१३८॥ विंशतिकात्॥ ६। ४। १३९॥ विंशतिकशब्दादार्हदर्थेऽञ् प्रत्ययो भवति। विंशतिर्मानमस्य विंशतिकम् तेन क्रीतं वैंशतिकम्। योगविभाग उत्तरार्थः॥ १३९॥ द्विगोरीनः॥ ६। ४। १४०॥ विंशतिकशब्दान्तात् द्विगोरार्हदर्थे ईनः प्रत्ययो भवति। अञोऽपवादः॥ विधानसामर्थ्याल्लुप् न भवति। द्विविंशतिकीनम्। त्रिविंशतिकीनम्। अध्यर्धविंशतिकीनम्। अर्धपञ्चमविंशतिकीनम्॥ १४०॥ *अनाम्न्यद्विः प्लुप्॥ ६। ४। १४१॥ द्विगोः समासादार्हदर्थे उत्पन्नस्य प्रत्ययस्य पिल्लुप् सकृद्भवति न तु द्विः अनाम्नि न चेत्प्रत्ययान्तं कस्यचिन्नाम भवति। द्वाभ्यां कंसाभ्यां द्विकंस्या वा क्रीतम् द्विकंसम्। त्रिकंसम्। अध्यर्धकंसम्। *अर्धपञ्चमकंसम्। द्विशूर्पम्। त्रिशूर्पम्। अध्यर्धशूर्पम्। अर्धपञ्चमशूर्पम्। अद्विरिति किम्। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। अञ्लुप्। द्विशूर्पेण क्रीतं द्विशौर्पिकम्। अनाम्नि इति किम्। पञ्च लोहिन्यः परिमाणमस्य पाञ्चलोहितिकम्। 'जातिश्च णि'-(३-२-५१) इत्यादिना पुंवद्भावः। पञ्च कलायाः परिमाणमस्य पाञ्चकलायिकम्। परिमाणविशेषनाम्नी एते। अत एव 'मानसंवत्सर—(७-४-१९) इत्यादिना नोत्तरपदवृद्धिः। लुपः पित्वात् पञ्चभिर्गर्गीभिः क्रीतः पञ्चगर्ग इत्यत्रेकणो लुपि *पुंवद्भावो भवति। संख्यान्तात् द्विगोर्लुपं नेच्छन्त्येके। द्वाभ्यां षष्टिभ्यां क्रीतं द्विषाष्टिकम्। त्रिषाष्टिकम्॥१४१॥ *नवाणः॥६।४।१४२॥ द्विगोः परस्यार्हदर्थे विहितस्याणः

दन्यद्रूप स्तोनस्येति ॥—सह—॥—केकणोरपवाद इति। 'सत्याऽऽते' इति 'मूल्ये क्रीते' इति अनेन प्राप्तयो ॥—एवमर्थमिति। 'नवाणः' इत्यनेनाण्प्रत्ययस्य वा लुप्। अञस्तु 'अनाम्न्यद्वि' इति नित्य लुप् स्यादित्यर्थ ॥—अना—॥—अध्यर्धकंसम्। अर्धपञ्चमकंसमिति। 'कंसमास' इति 'अर्धपूर्व-' इति च सख्यावत्त्वाद्द्विगो 'सख्यादेश्च-' इत्यातिदेशात् 'कंसार्धादिकट्।' एव पूर्वोदाहरणद्वयेपि द्विशूर्पमित्यादो 'द्विशूर्पाद्वाञ्' विकल्पपक्षे इकण् च द्विशौर्पिकामिति। 'सख्यादेश्च-' इत्यत्राऽलुच इति भणनाल्लुचि सत्या शूर्पाद्वाञ् न भवति। 'मानसंवत्सर-' इत्युत्तरपदवृद्धिः ॥—पुभावो भवतीति। 'क्यङ्मानि-' इत्यनेन पुभावे कृते 'यजज' इति यजो लुप्—॥—नवा—॥

पिलुप् वा भवति न तु द्विः । द्विसहस्रम् । द्विसाहस्रम् । अध्यर्धसहस्रम् । अध्यर्धसाहस्रम् । अर्धपञ्चसाहस्रम् । अर्धपञ्चसाहस्रम् । द्विशतमानम् । द्विशातमानम् । अध्यर्धशतमानम् । अध्यर्धशातमानम् । अर्धपञ्चशतमानम् । अर्धपञ्चशातमानम् । अण इति किम् । द्वौ द्रोणौ पचति द्विद्रोणः । अध्यर्धद्रोणः । पूर्वेण नित्यमेव लुप् ॥ १४२ ॥ सुवर्णकार्षापणात् ॥ ६ । ४ । १४३ ॥ सुवर्णान्तात्कार्षापणान्ताच्च द्विगोः परस्याहदर्थे विहितस्य प्रत्ययस्य वा लुप् भवति न तु द्विः । द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसुवर्णम् । द्विसौवर्णिकम् । अध्यर्धसुवर्णम् । अध्यर्धसौवर्णिकम् । द्विकार्षापणम् । द्विकार्षापणिकम् । द्विपति । द्विप्रतिकम् । अध्यर्धकार्षापणम् । अध्यर्धकार्षापणिकम् । अध्यर्धप्रतिकम् ॥ १४३ ॥ द्वित्रिबहोर्निष्कविस्तात् ॥ ६ । ४ । १४४ ॥ द्वित्रिबहु इत्येतेभ्यः परो यौ निष्कविस्तशब्दौ तदन्तात् द्विगोराहदर्थे उत्पन्नस्य प्रत्ययस्य लुप् वा भवति न तु द्विः । द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् । बहुनिष्कम् । बहुनैष्किकम् । द्विविस्तम् । द्विवैस्तिकम् । त्रिविस्तम् । त्रैवैस्तिकम् । बहुविस्तम् । बहुवैस्तिकम् ॥ १४४ ॥ शताद्यः ॥ ६ । ४ ॥ १४५ ॥ शतान्तात् द्विगोराहदर्थे यः प्रत्ययो वा भवति । पक्षे संख्यालक्षणः कः तस्य लुप् भवति । अस्य तु विधानसामर्थ्यान्न भवति । द्वाभ्यां शताभ्यां क्रीतम् द्विशत्यम् । द्विशतम् । अध्यर्धशत्यम् । अध्यर्धशतम् । अर्धपञ्चशत्यम् । अर्धपञ्चशतम् ॥ १४५ ॥ शाणात् ॥ ६ । ४ । १४६ ॥ शाणान्ताद्द्विगोराहदर्थे यः प्रत्ययो वा भवति । पक्षे इकण् । तस्य लुप् । अस्य तु न भवति विधानसामर्थ्यात् । पञ्चशाणम् । पञ्चशाण्यम् । अध्यर्धशाण्यम् । अध्यर्धशाणम् । अर्धपञ्चमशाण्यम् । अर्धपञ्चमशाणम् । योगविभाग उत्तरार्थः ॥ १४६ ॥ *द्वित्र्यादेर्याण् वा ॥ ६ । ४ । १४७ ॥ द्वित्रि इत्येतत्पूर्वो यः शाणशब्दस्तदन्ताद्द्विगोराहदर्थे यअण् इत्येतौ प्रत्ययौ वा भवतः । वाग्रहणमुत्तरत्र वानिवृत्त्यर्थम् । द्वाभ्यां शाणाभ्यां क्रीतं द्विशाण्यम् । द्वैशाणम् । पक्षे इकण् तस्य लुप् । द्विशाणम् । एवं त्रिशाण्यम् । त्रैशाणम् । त्रिशाणम् । एवं च त्रैरूप्यं भवति ॥ १४७ ॥ पणपादमाषाद्यः ॥ ६ । ४ । १४८ ॥ पणपादमाष इत्येवमन्ताद्द्विगोराहदर्थे यः प्रत्ययो भवति । विधानसामर्थ्यान्न लुप् । द्वाभ्यां पणाभ्यां क्रीतं द्विपण्यम् । त्रिपण्यम् । अध्यर्धपण्यम् । अर्धपञ्चपण्यम् । द्विपाद्यम् । त्रिपाद्यम् । अध्यर्धपाद्यम् । माषपणसाहचर्यात्पादः परिमाणं गृह्यते न प्राण्यङ्गम् । तेन 'हिमहतिकाषिये पद्' (३—२—९६) इति पद्भावो न भवति तत्र प्राण्यङ्गस्यैव ग्रहणात् । यद्वा पादसंबन्धी यकारस्तत्र गृह्यते अयं तु द्विगुसंबन्धीति न भवति । द्विमाष्यम् । त्रिमाष्यम् । अध्यर्धमाष्यम् ॥ १४८ ॥ खारीकाकणीभ्यः कच् ॥ ६ । ४ । १४९ ॥ खारीकाकणी इत्येवमन्तात् द्विगोर्बहुवचनात्केवलाभ्यां च खारीकाकणीभ्यामाहदर्थे कच् प्रत्ययो भवति विधानसामर्थ्याच्च न लुप् । द्वाभ्यां खारीभ्यां क्रीतं द्विखारीकम् । त्रिखारीकम् । अध्यर्धखारीकम् । अर्धतृतीयखारीकम् । एवं द्विकाकणीकम् । त्रिकाकणीकम् । अध्यर्धकाकणीकम् । अर्धतृतीयकाकणीकम् । केवलाभ्याम्, खारीकम् । काकणीकम् । चकारो 'न कचि' (२-४-१०४) इति प्रतिषेधार्थः ॥ १४९ ॥ मूल्यैः क्रीते ॥ ६ । ४ । १५० ॥ मूल्यवाचिनो निर्देशादेव

—द्विशातमानमिति । द्वाभ्यां शतमानाभ्यां क्रीत 'सहस्रशतमानादण्' सर्वत्र प्रकरणे 'मानसवत्सर–' इत्युत्तरपदवृद्धि ॥–द्वित्र्यादेर्याण्वा॥ द्वित्र्यादेरण्वेति क्रियतां द्वित्र्यादिर्यं शाणशब्दस्तदन्तादनेनाण् शाणाद्वेति यः विकल्पपक्षे चेकणिति रूपत्रय सिध्यति । उच्यते । तक्रकौण्डिन्यन्यायेन यप्रत्ययस्य बाधा आशङ्क्येत । यप्रत्ययबाधको ऽणमा भवति तन्निवृत्त्यर्थं यग्रहणम् ॥-मूल्यैः —॥ मूल्यैरिति बहुवचन-

सप्तत्या साप्ततिकम् । आशीतिकम् । नैष्किकम् । तृतीयान्तात् क्रीतेऽर्थे यथाविहितमिकणादयः प्रत्यया भवन्ति । प्रस्थेन क्रीतं प्रास्थिकम् । देवदत्तेन क्रीतम् । पाणिना क्रीपाणिकम् । पादिकम् । त्रिंशकम् । विंशकम् । द्विकम् । त्रिकम् । शत्यम् । शतिकम् । मूल्यैरिति किम् । यत्र तु संख्याविशेषावगमे प्रमाणमस्ति तत्र तम् । वृत्तौ *संख्याविशेषानवगमात् द्विवचनबहुवचनान्तान्न भवति । प्रस्थाभ्यां प्रस्थैर्वा क्रीतमिति । यथा मुद्गैः क्रीतं मौद्गिकम् । माषिकम् । न ह्येकेन भवत्येव । द्वाभ्या क्रीतं द्विकम् । त्रिकम् । द्वाभ्यां प्रस्थाभ्यां क्रीतं द्विप्रस्थम् । त्रिप्रस्थम् । उप्यतेऽस्मिन्निति मुद्गेन माषेण वा क्रयः संभवति ॥ १५० ॥ तस्य वापे ॥ ६ । ४ । १५१ ॥ तस्येति षष्ठ्यन्ताद्वापेऽर्थे यथाविधि इकणादयो भवन्ति । वापः क्षेत्रम् । प्रस्थस्य वापः प्रास्थिकम् । द्रौणिकम् । मौद्गिकम् । शत्यम् । शतिकम् । खारीकम् ॥१५१॥ वातपित्तश्लेष्मसंनिपाताच्छमनकोपने ॥ ६ । ४ । १५२ ॥ वातादिभ्यस्तस्येति षष्ठ्यन्तेभ्यः शमने कोपने चार्थे यथाविहितमिकण् प्रत्ययो भवति । शाम्यति येन तच्छमनम् । कुप्यति येन तत्कोपनम् । वातस्य शमनं कोपनं वा वातिकम् । पैत्तिकम् । श्लैष्मिकम् । सान्निपातिकम् । पथ्यमपथ्यं च द्रव्याद्येवमभिधीयते प्रकरणात्तु विशेषगतिः ॥१५२॥ हेतौ संयोगोत्पाते ॥ ६ । ४ । १५३ ॥ तस्येति षष्ठ्यन्ताद्धेतावर्थे यथाविहितं प्रत्ययो भवति योऽसौ हेतुः स चेत् संयोग उत्पातो वा भवति । हेतुर्निमित्तम् । संयोगः संबन्धः । प्राणिनां शुभाशुभसूचको महाभूतपरिणाम उत्पातः । शतस्य हेतुरीश्वरसंयोगः शत्यः शतिकः । साहस्रः । उत्पात, सोमग्रहणस्य हेतुरुत्पातः सोमग्रहणिको भूमिकम्पः । सांग्रामिकमिन्द्रधनुः । सौभिक्षिकः परिवेषः । शतस्य हेतुर्दक्षिणाक्षिस्पन्दनम् शत्यं शतिकम् । साहस्रम् । संयोगोत्पात इति किम् । शतस्य हेतुश्चैत्रः ॥ १५३ ॥ पुत्राद्येयौ ॥ ६ । ४ । १५४ ॥ पुत्रशब्दात्तस्येति षष्ठ्यन्ताद्धेतावर्थे य ईय इत्येतौ प्रत्ययौ भवतः स चेद्धेतुः संयोग उत्पातो वा भवति । पुत्रस्य हेतुः संयोग उत्पातो वा पुत्र्यः पुत्रीयः ॥ १५४ ॥ *द्विस्वरब्रह्मवर्चसाद्योऽसंख्यापरिमाणाश्वादेः ॥ ६ । ४ । १५५ ॥ संख्यापरिमाणाश्वादिवर्जिताद्द्विस्वरान्नाम्नो ब्रह्मवर्चसशब्दाच्च तस्येति षष्ठ्यन्ताद्धेतावर्थे य. प्रत्ययो भवति स चेद्धेतुः संयोग उत्पातो वा भवति । इकणादीनामपवादः । धनस्य हेतुः संयोग उत्पातो वा धन्यः । यशस्यः । आयुष्यः । वात्या विद्युत् । ब्रह्मवर्चसस्य हेतुः संयोग उत्पातो वा ब्रह्मवर्चस्यः । कथं गोर्हेतुः संयोग उत्पातो वा गव्यः। द्विस्वराभावात्'गोः स्वरे यः' (६-१-२७) इति भविष्यति । द्विस्वरेति किम् । विजयस्य हेतु' संयोग उत्पातो वा वैजयिकः । आभ्युदयिकः । ब्रह्मवर्चसग्रहणमद्विस्वरार्थम् । असंख्यापरिमाणाश्वादेरिति किम् । संख्या, पञ्चानां हेतुः संयोग उत्पातो वा पञ्चकः । सप्तकः । परिमाण, प्रास्थिकः । खारीकः । *'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ' इति *संख्यापरिमाणयोर्विशेषः । अश्वादि, आश्विकः । गाणिकः । वासुकः । अश्व गण वसु वस्त्र ऊर्णा उमा भङ्गा वर्षा

॥-द्विस्व ॥-ऊर्ध्वमानमिति निर्देशो लाघवार्थं । स्वरूपग्रहणव्युदासार्थश्च ॥-सख्याविशेषाऽनवगमादिति । प्रत्यये सति न ज्ञायते वृत्तिर्द्विवचनेन बहुवचनेन वा कृतेत्येकवचनान्तादेव प्रत्यय इत्यर्थः ॥-संख्येति । इह सख्याग्रहण किमर्थ परिमाणग्रहणेनैव सख्या गृह्यते । सख्या हि परिमाण भवति । परिमीयते परिच्छिद्यते इयत्तावधार्यते येन तद्धि परिमाण सख्ययापि चेयत्तावधार्यत इत्याह—

अश्मन् । इत्यश्वादिः ॥ १५५ ॥ *पृथिवीसर्वभूमेरीशज्ञातयोश्चाञ् ॥ ६ । ४ । १५६ ॥ पृथिवीसर्वभूमिशब्दाभ्यां षष्ठ्यन्ताभ्यामीशज्ञातयोस्तस्य हेतुस्संयोग उत्पात इत्यस्मिन् विषये चाञ् प्रत्ययो भवति । ईशः स्वामी । पृथिव्या ईशः पार्थिवः । सर्वभूमेः सार्वभौमः । सर्वभूमेरनुशतिकादित्वादुभयपदवृद्धिः । पृथिव्या ज्ञातः पार्थिवः । कर्तरि षष्ठी संबन्धविवक्षायां वा । एवं सार्वभौमः । पृथिव्या हेतुः संयोग उत्पातो वा पार्थिवः । सार्वभौमः । ईशज्ञातयोरिति द्विवचनं हेतुविशेषणत्वशङ्का*व्यवच्छेदार्थम् ॥ १५६ ॥ लोकसर्वलोकाज्ज्ञाते ॥ ६ । ४ । १५७ ॥ लोकसर्वलोकशब्दाभ्यां तस्येति षष्ठ्यन्ताभ्यां ज्ञातेऽर्थे यथाविहितमिकण् प्रत्ययो भवति । लोकस्य ज्ञातो लौकिकः । सार्वलौकिकः । सर्वलोकशब्दस्यानुशतिकादित्वादुभयपदवृद्धिः ॥ १५७ ॥ तदत्रास्मै वा वृद्ध्यायलाभोपदाशुल्कं देयम् ॥ ६ । ४ । १५८ ॥ तदिति प्रथमान्तादत्रेति सप्तम्यर्थे अस्मै इति चतुर्थ्यर्थे वा यथाविहितं प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेद्वृद्धिरायो लाभ उपदा शुल्कं वा देयं भवति । अधमर्णेनोत्तमर्णाय गृहीतधनातिरिक्तं देयं वृद्धिः । ग्रामादिषु स्वामिग्राह्यो भाग आयः । पटादीनामुपादानं मूल्यातिरिक्तं प्राप्तं द्रव्यं लाभः । उपदा उत्कोचः । लञ्च उत्कोट इति यावत् । वणिजां रक्षानिर्वेशो राजभागः शुल्कम् । पञ्चास्मिन् शते वृद्धिः पञ्चकं शतम् । पञ्चास्मिन् ग्रामे आयः पञ्चको ग्रामः । पञ्चास्मिन् पटे लाभः पञ्चकः पटः । पञ्चास्मिन् व्यवहारे उपदा पञ्चको व्यवहारः । पञ्चास्मिन् शते शुल्कं पञ्चकं शतम् । एवं शतमस्मिन् वृद्धिरायो लाभ उपदा शुल्कं वा देयम् शत्यं शतिकम् । साहस्रम् । प्रास्थिकम् । द्रौणिकम् । अस्मै, पञ्चास्मै देवदत्ताय वृद्धिरायो लाभ उपदा शुल्कं वा देयम् पञ्चको देवदत्तः । शत्यः । शतिकः । साहस्रः । प्रास्थिकः । द्रौणिकः । वृद्ध्यादिग्रहणं किम् । पञ्च मूल्यमस्मिन्नस्मै वा दीयते ॥ १५८ ॥ पूरणार्द्धादिकः ॥ ६ । ४ । १५९ ॥ पूरणप्रत्ययान्तादर्धशब्दाच्च तदिति प्रथमान्तादस्मिन्नस्मै वा दीयत इत्यर्थयोरिकः प्रत्ययो भवति यत्तत्प्रथमान्तं वृद्ध्यादि चेत्तद्भवति । *इकणिकटोरपवादः । द्वितीयमस्मिन्नस्मै वा वृद्धिरायो लाभ उपदा शुल्कं वा देयम् द्वितीयिकः । तृतीयिकः । पञ्चमिकः । षष्ठिकः । अर्धं, अर्धिकः । अर्धिका स्त्री । अर्धशब्दो रूपकार्धे रूढः ॥ १५९ ॥ भागाद्येकौ ॥ ६ । ४ । १६० ॥ भागशब्दात्तदस्मिन्नस्मै वा वृद्ध्यादीनामन्यतमं देयमिति विषये य इक इत्येतौ प्रत्ययौ भवतः । इकणोऽपवादौ । भागोऽस्मिन्नस्मै वा वृद्ध्यादीनामन्यतमं देयं भाग्यः । भागिकः । भागिका स्त्री । भागशब्दोऽपि रूपकार्धस्य वाचकः ॥ १६० ॥ तं पचति द्रोणाद्वाञ् ॥ ६ । ४ । १६१ ॥ तमिति द्वितीयान्ताद्द्रोणशब्दात्पचत्यर्थे अञ् प्रत्ययो वा भवति । पक्षे इकण् । द्रोणं पचति । द्रौणः । द्रौणिकः । द्रौणी द्रौणिकी स्थाली गृहिणी वा । द्वौ द्रोणौ पचति द्विद्रोणी । 'अनाम्न्यद्विः प्लुप्' ( ६-४-१४१ ) इति अञिकणोर्लुप् ॥ १६१ ॥ *संभवदवहरतोश्च ॥ ६ । ४ । १६२ ॥ तमिति द्वितीयान्तान्नाम्नः पचति संभवदवहरतोश्चार्थयोर्यथाविहितमिकणादयो भवन्ति । तत्राधेयस्य प्रमाणानतिरेकेण

॥—पृथिवीसर्वभूमे—॥—व्यवच्छेदार्थमिति । हेतुविशेषणत्वे हि संयोग उत्पात ईश ज्ञातेत्यर्थचतुष्टयं विज्ञायेत ततश्च स चेद्धेतु संयोग उत्पात ईशो ज्ञाता वा भवतीत्यर्थः स्यात्॥—पूर—॥—इकणिकटोरिति । पूरणप्रत्ययान्तेभ्यः पूर्वेणेकण् । अर्द्धात्तु 'कंसार्द्धात्' इतीकट् ॥—संभ—॥—अकर्मक इति । यथा प्रस्थोऽत्र संभवति माति नातिरिच्यत इति अकर्मकः ।

धारणं संभवः । अतिरेकेणावहारः । प्रस्थं पचति संभवत्यवहरति वा प्रास्थिकः कटाहः । प्रास्थिकी स्थाली । एवं खारीकः । कौडविकः । रांभवतिः *अकर्मकः सकर्मकश्च संभवति । तत्र सकर्मक इह ग्राह्यः । संभवत्यवगृह्णातीत्यर्थः । चकारः पचता संभवदवहरतोः *समुच्चयार्थः । तेनोत्तरत्रार्थत्रयस्याप्यनुवृत्तिः ॥ १६२ ॥ पात्राचिताढकादीनो वा ॥ ६ । ४ । १६३ ॥ पात्र आचित आढक इत्येतेभ्यो द्वितीयान्तेभ्यः पचत्संभवदवहरत्स्वर्थेषु ईनः प्रत्ययो वा भवति । पक्षे इकण् । पात्रं पचति संभवत्यवहरति वा पात्रीणः ।पात्रिकः। पात्रीणा । पात्रिकी स्थाली । आचितीना । आचितिकी । आढकीना । आढकिकी । पात्रादयः परिमाणशब्दाः ॥ १६३ ॥ *द्विगोरीनेकटौ वा ॥ ६ । ४ । १६४ ॥ पात्राचिताढकान्तात् द्विगोर्द्वितीयान्तात्पचदादिषु त्रिष्वर्थेषु ईन इकट् इत्येतौ प्रत्ययौ वा भवतः । पक्षे इकण् । तस्य च 'अनाम्न्यद्विः प्लुप्' ( ६–४–१४१ ) इति लुप् नानयोर्विधानसामर्थ्यात् । द्वे पात्रे पचति संभवत्यवहरति वा द्विपात्रीणः । द्विपात्रिकः । द्विपात्रः । द्विपात्रीणा । द्विपात्रिकी । द्विपात्री । द्व्याचितीना । द्व्याचितिका । द्व्याचिता । आचितान्तात् ङीर्न भवति अविस्ताचित-कम्बल्यादिति प्रतिषेधात् । द्व्याढकीना । द्व्याढकिकी । द्व्याढकी । टकारो ङ्यर्थः ॥ १६४ ॥ *कुलिजाद्वा लुप् च ॥ ६ । ४ । १६५॥ कुलिजान्ताद्द्विगोर्द्वितीया-न्तात्पचदादिषु त्रिष्वर्थेषु ईन इकट् इत्येतौ प्रत्ययौ वा भवतः । पक्षे इकण् । *तस्य च लुप् वा भवति । तेन चातूरूप्यं संपद्यते । द्वे कुलिजे पचति संभवत्यवहरति वा द्विकुलिजीना द्विकुलिजिकी । पक्षे द्विकुलिजी । द्वैकुलिजिकी । लुपि 'परिमाण'—( २–३–२३ ) इत्यादिना ङीः । अन्ये तु लुप्विकल्पं न मन्यन्ते । तन्मते त्रैरूप्यमेव ॥१६५॥ वंशादेर्भाराद्धरद्वहदावहत्सु॥६।४।१६६॥वंशादिभ्यः परो यो भारशब्दस्तदन्ताद् द्वितीयान्तान्नाम्नो हरति वहति आवहति चार्थे यथाविहितं प्रत्ययो भवति । वंशभारं हरति वहति आवहति वा वांशभारिकः । कौटभारिकः । वंशादेरिति किम् । भारं वहति । भारादिति किम् । वंशं हरति । अपरोऽर्थः । भारभूतेभ्यो वंशादिभ्यो द्वितीयान्तेभ्यो हरदादिष्वर्थेषु यथाविहितं प्रत्ययो भवति । भारभूतान् वंशान् हरति वहति आवहति वा वांशिकः । कौटिकः । वाल्वजि-कः । भारादिति किम् । एकं वंशं हरति । हरतिर्देशान्तरप्रापणे चौर्ये वा । वहतिरुत्क्षिप्य धारणे । आवहतिरुपादाने । वंश कुट कुटज बल्वज मूल स्थूणा अक्ष अ-श्मन् इक्षु खट्वा श्लक्ष्ण । इति वंशादिः ॥ बहुवचनमर्थत्रयसूचनार्थम् ॥ १६६ ॥ द्रव्यवस्नात्केकम् ॥ ६ । ४ । १६७॥ द्रव्यवस्न इत्येताभ्यां द्वितीयान्ताभ्यां हरति वहति आवहति चार्थे यथासंख्यं क इक इत्येतौ प्रत्ययौ भवतः । द्रव्यं हरति वहति आवहति वा द्रव्यकः। एवं वस्निकः ॥ १६७॥ सोऽस्य भृतिवस्नांशम् ॥ ६ । ४ । १६८ ॥ स इति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितमिकणादयो भवन्ति । यत्तत्प्रथमान्तं तच्चेद्भृतिर्वस्नमंशो वा भवति । भृतिर्वेतनम् । वस्नो निय-

प्रस्थमय सभवत्यवगृह्णाति न निर्वमति नातिरेचयतीति सकर्मक ॥—समुच्चयार्थ इति । न त्वाकर्षणार्थ । तेन चानुकृष्टमित्यस्याप्रवृत्ति ॥—द्विगो—॥ नन्विह ईनग्रहण किमर्थम् ईनो वेति प्रकृत तत्र लाघवात् द्विगोरिकट्च वेति वक्तव्यम् । एव च द्विगोरिकट् चकारादीनश्च वा भवतीति विज्ञायते । अत्रोच्यते । इह चशब्देन ईने समुच्चीयमाने 'कुलिजाद्वा' इत्युत्तरसूत्रे इकडेव विज्ञायेत न त्वीन इत्युत्तरार्थमीनग्रहणम् ॥—कुलि—॥—तस्य चेति । तस्येकणो लुप्वा भवतीत्यर्थ. । न चेनेकटोरपि विकल्पेन विधानात्तयो. यदि हि लुबभीष्टा स्यात्तदा नित्य विदध्यात् । न

तत्कालक्रयमूल्यम् । अंशो भागः । पञ्चास्य भृतिः पञ्चकः कर्मकरः । पञ्चास्य वस्नं पञ्चकः पटः । पञ्चास्यांशाः पञ्चकं नगरम् । एवं सप्तकः । अष्टकः । शत्यः शतिकः । साहस्रः । प्रास्थिकः ॥ १६८ ॥ *मानम् ॥ ६ । ४ । १६९ ॥ सोऽस्येति वर्तते । स इति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेन्मानं भवति । मीयते येन तन्मानम् । प्रस्थो मानमस्य प्रास्थिको राशिः । द्रौणिकः । खारीकः । खारीशतिकः । खारीसहस्रिकः । वर्षशतं मानमस्य वार्षशतिको देवदत्तः । वार्षसहस्रिकः । पञ्च लोहितानि पञ्च लोहिन्यो वा मानमस्य पाञ्चलोहितिकम् । पाञ्चकलायिकम् । अनयोः संज्ञाशब्दत्वात् ' अनाम्न्यद्विः प्लुप् ( ६-४-१४१ ) इति लुप् न भवति । अथ मासो मानमस्य वर्षं मानमस्येत्यादौ कस्मात्प्रत्ययो न भवति । *न कालो मानग्रहणेन गृह्यते 'मानसंवत्सरस्य—' (७—४—१९) इत्यादौ मानग्रहणे सत्यपि संवत्सरग्रहणात् ॥ १६९ ॥ *जीवितस्य सन् ॥ ६ । ४ । १७० ॥ जीवितस्य यन्मानं ततः प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति स च सन् तस्य ' अनाम्न्यद्विः प्लुप् ' ( ६—४—१४१ ) इति लुप् प्राप्ता न भवतीत्यर्थः । षाष्टिर्जीवितमानमस्य षाष्टिकः । साप्ततिकः । वार्षशतिकः । वार्षसहस्रिकः । द्वे षष्टी जीवितमानमस्य द्विषाष्टिकः । त्रिषाष्टिकः । द्विसाप्ततिकः । त्रिसाप्ततिकः । द्विवार्षशतिकः । त्रिवार्षशतिकः । द्विवार्षसहस्रिकः । त्रिवार्षसहस्रिकः । *कथं पुनः षष्ट्यादयो जीवितमानं भवन्ति । *वृत्तौ वर्षशब्दलोपात् । यथा शतायुर्वै पुरुष इति । एवं तर्हि मानमित्यनेनैव सिद्धे किमर्थमिदम् । नैवम् । प्रास्थिक इत्यादौ व्रीह्यादय एव मेयाः त एव च प्रत्ययार्थः । अत्र तु जीवितं मेयं पुरुषस्तु प्रत्ययार्थ *इत्येतदर्थं लुबभावार्थं च ॥ १७० ॥ *संख्यायाः संघसूत्रपाठे ॥ ६ । ४ । १७१ ॥ संख्यावाचिनः प्रथमान्तादस्य मानमित्यर्थे यथाविहितं प्रत्ययो भवति यत्तदस्येति निर्दिष्टं तच्चेत्संघः सूत्रं पाठो वा भवति । संघः प्राणिनां समूहः । सूत्रं शास्त्रग्रन्थः । पाठोऽधीतिरध्ययनम् । पञ्च गावो मानमस्य पञ्चकः संघः । सप्तकः । अष्टावध्याया मानमस्याष्टकं पाणिनीयं सूत्रम् । दशकं वैयाघ्रपदीयम् । शतकं निदानम् । अष्टौ रूपाणि वारा मानमस्याष्टकः पाठोऽधीतः । संघसूत्रपाठ इति किम् । पञ्च वर्णा मानमस्य पञ्चतयं पदम् । पदं न संघो न सूत्रं न पाठ इति को न भवति । अपि तु तयडेव । एवं चतुष्टयी शब्दानां प्रवृत्तिः । पञ्चादीनां संख्येयानामवयवतया संघादेर्मानत्वान्मानमित्यनेनैव सिध्यति परत्वात्तु तयट् प्राप्नोति तद्बाधनार्थं वचनम् । *न चातिप्रसङ्गः । अभेदरूपापन्ने संघादौ तयायटोर्बाधकमिदम् । भेदरूपापन्ने तु तयडेव । चतुष्टये ब्राह्मणक्षत्रियविट्शूद्राः । द्वये देवमनुष्याः । स्याद्वादाश्रयणाच्चात्र भेदाभेदयोः संभव इति ॥ १७१ ॥ नाम्नि ॥ ६ । ४ । १७२ ॥ संख्यावाचिनस्तदस्य मानमित्यर्थे *यथाविहितं प्रत्ययो भवति नाम्नि समुदायश्चेन्नाम भवति । पञ्चेति संख्या मानमेषां पञ्चकाः शकुनयः । त्रिकाः शालङ्कायनाः । सप्तका ब्रह्मवृक्षाः । अष्टका राजर्षयः ।

---

वाच्यं विधानादेव लुप् न भविष्यतीति । लुपोऽपि विकल्पविधानेन पक्षे चरितार्थत्वात् ॥—मानम् ॥—न काल इति । मीयते येनानया व्युत्पत्त्या कालस्यापि ग्रहणं प्राप्नोति ॥—जीवि—॥—कथमिति । दिनादीनामपि कथं षष्ट्यादिर्न लभ्यत इत्याह-वृत्तौ वर्षेति । यथा शतं वर्षाण्यायुर्यस्यासौ शतायुरित्यत्र समासवृत्तौ गतार्थत्वात् वर्षशब्दलोपः ॥—एतदर्थमिति । पूर्वसूत्रे मेयः प्रत्ययार्थोऽत्र तु मानवाचिनी प्रकृतिः जीवितं मेयं प्रत्ययार्थस्तु मेयवानित्यर्थः ॥—संख्यायाः ॥—न चातिप्रसङ्ग इति । संघे वाच्ये क एवेति

प्रत्ययो भवति ॥ १७२ ॥ *विंशत्यादयः ॥ ६ । ४ । १७३ ॥ विंशत्यादयः

योगविभागकरणात् संज्ञायां पञ्चैव पञ्चकाः त्रय एव त्रिका इति स्वार्थे एव वा प्रत्ययो भवति ॥ १७२ ॥ *विंशत्यादयः ॥ ६ । ४ । १७३ ॥ विंशत्यादयः

शब्दा नाम्नि विषये तदस्य मानमित्यर्थे साधवो भवन्ति । द्वेर्दशदर्थे विंभावः शतिश्च प्रत्ययः । द्वौ दशतौ मानमेषां संख्येयानामस्य वा संख्यानस्य विंशतिः ।

त्रेस्त्रिंभावः शच्च प्रत्ययः। त्रयो दशतो मानमेषां संख्येयानामस्य वा संख्यानस्य त्रिंशत् । चतुरश्चत्वारिंभावः शच्च प्रत्ययः। चत्वारो दशतो मानमेषां संख्येयानामस्य

वा संख्यानस्य चत्वारिंशत्। पञ्चन आत्वं चापश्च दशतो मानमेषां संख्येयानामस्य वा संख्यानस्य पञ्चाशत्। षषस्तिः षष् च । षट् दशतो मानमेषां संख्येयानामस्य वा

संख्यानस्य षष्टिः । सप्तनस्तिः। सप्त दशतो मानमेषां संख्येयानामस्य वा संख्यानस्य सप्तति । अष्टनोऽशी च । अष्टौ दशतो मानमेषां संख्येयानामस्य वा संख्यानस्य

अशीतिः । नवनास्तिः। नव दशतो मानमेषां संख्येयानामस्य वा संख्यानस्य नवतिः। दशनः शभावस्तश्च प्रत्ययः। दश दशतो मानमेषां संख्येयानामस्य वा संख्यानस्य

शतम् । दश शतानि मानमेषां संख्येयानामस्य वा संख्यानस्य सहस्रम् । एवं दश सहस्राण्ययुतम् । दशायुतानि नियुतम्। दश नियुतानि प्रयुतम्।दश प्रयुतान्यर्बुदम्।

दशार्बुदानि न्यर्बुदम् । *बहुवचनाल्लक्षकोटिखर्वनिखर्वादयो भवन्ति । पञ्च पादा मानमस्याः पङ्क्तिश्छन्दः । पिपीलिकापङ्क्तिरित्यादौ तु पचुण् विस्तारे इत्यस्मात्

क्त्यन्ताद्भवति । यदत्र लक्षणेनानुत्पन्नं तत्सर्वं निपातनात्सिद्धम् ॥ लिङ्गसंख्यानियमश्च विंशत्याद्या शतादिति सिद्धः ॥ १७३ ॥ त्रैंशं चात्वारिंशम्

॥ ६ । ४ । १७४ ॥ त्रिंशच्चत्वारिंशदित्येताभ्यां तदस्य मानमित्यर्थे डण् निपात्यते प्रत्ययान्तं चेत्कस्यचिन्नाम भवति । त्रिंशदध्याया मानमेषां त्रैंशानि चात्वारिं-

शानि कानिचित् ब्राह्मणान्येवमुच्यन्ते ॥ १७४ ॥ पञ्चद्दशद्वर्गे वा ॥ ६ । ४ । १७५ ॥ पञ्चद्दशदित्येतौ शब्दौ तदस्य मानमित्येतस्मिन् विषये वर्गेऽभिधेये

दत्प्रत्ययान्तौ निपात्येते वा । पक्षे को भवति । पञ्च मानमस्य वर्गस्य पञ्चद्वर्गः । पञ्चको वर्गः । दशद्वर्गः। दशको वर्गः ॥ १७५ ॥ स्तोमे डट् ॥ ६ । ४।१७६॥

संख्यावाचिनः प्रथमान्तात्तदस्य मानमित्यस्मिन् विषये स्तोमेऽभिधेये डट् प्रत्ययो भवति । ऋगादीनां समूहः स्तोमः । पञ्चदश ऋचो मानमस्य पञ्चदशः स्तोमः ।

विंशः । पञ्चविंशः । त्रिंशः । पञ्चदशी पङ्क्तिः । डकारोऽन्त्यस्वरादिलोपार्थः । टकारो ङ्यर्थः ॥१७६॥ तमर्हति ॥६ । ४ । १७७ ॥ तमिति द्वितीयान्तादर्हदर्थे

यथाविधि प्रत्ययो भवति । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः । वैषिकः । वास्त्रिकः । वास्त्रयुगिकः । आभिषेचनिकः । बालीवर्दिकः । चामारिकः । शत्यः शतिकः ।

साहस्रः । भोजनमर्हति पानमर्हतीत्यादावनभिधानान्न भवति ॥१७७॥ दण्डादेर्यः ॥६।४।१७८॥ दण्डादिभ्यो द्वितीयान्तेभ्योऽर्हत्यर्थे यः प्रत्ययो भवति।इकणोऽ-

पवादः । दण्डमर्हति दण्ड्यः । मुसल्यः । दण्ड मुसल मेधा वध मधुपर्क अर्घ मेघ(थ) उदक इभ कशा युग। इति दण्डादिः ॥ १७८ ॥ यज्ञादियः ॥ ६ ।४।१७९॥

यज्ञशब्दाद्द्वितीयान्तादर्हत्यर्थे इयः प्रत्ययो भवति । यज्ञमर्हति यज्ञियो देशः । यज्ञियो यजमानः। यज्ञो नाम क्रियासमुदायः कश्चित् तदभिव्यङ्ग्यं वापूर्वम् इत्याहुः

॥ १७९ ॥ पात्रात्तौ ॥ ६ । ४ । १८० ॥ पात्रशब्दाद्द्वितीयान्तादर्हत्यर्थे तौ य इय इत्येतौ प्रत्ययौ भवतः । पात्रमर्हति पात्र्यः । पात्रियः ॥ १८० ॥ दक्षिणा-

॥—विंश—॥—बहुवचनादिति । दशायुतानि लक्ष दश प्रयुतानि कोटि । दशाब्जानि खर्वम् । दश खर्वाणि निखर्वम्

कडङ्गरस्थालीविलादीययौ ॥ ६ । ४ । १८१ ॥ दक्षिणाकडङ्गर स्थालीविल इत्येतेभ्यो द्वितीयान्तेभ्योऽर्हत्यर्थे इय य इत्येतौ प्रत्ययौ भवतः । दक्षिणामर्हति दक्षिणीयो दक्षिण्यो गुरुः । कडङ्गरीयो कडङ्गर्यो गौः । कडङ्गरं माषादिकाष्ठम् । स्थालीविलीयाः स्थालीविल्यास्तण्डुलाः पाकार्हा इत्यर्थः ॥ १८१ ॥ छेदादेर्नित्यम् ॥ ६ । ४ । १८२ ॥ नित्यमित्यर्हतीत्यस्य विशेषणम् । छेदादिभ्यो द्वितीयान्तेभ्यो नित्यमर्हत्यर्थे यथाविहितं प्रत्ययो भवति । छेदं नित्यमर्हति छैदिकः । भैदिकः । छेद भेद द्रोह दोह नर्त गोनर्त कर्ष विकर्ष प्रकर्ष विप्रकर्ष प्रयोग विप्रयोग संप्रयोग प्रेक्षण संप्रश्न विप्रश्न । इति छेदादिः ॥ १८२ ॥ विरागाद्विरङ्गश्च ॥ ६ । ४ । १८३ ॥ विरागशब्दाद्द्वितीयान्तान्नित्यमर्हत्यर्थे यथाविधि प्रत्ययः तत्संनियोगे च विरागशब्दस्य विरङ्गादेशो भवति । नित्यं विरागमर्हति वैरङ्गिकः ॥ १८३ ॥ शीर्षच्छेदाद्यो वा ॥ ६ । ४ । १८४ ॥ शीर्षच्छेदाद्द्वितीयान्तान्नित्यमर्हत्यर्थे यः प्रत्ययो वा भवति । पक्षे इकण् । शीर्षच्छेदं नित्यमर्हति शीर्षच्छेद्यः चौरः । शैर्षच्छेदिकः ॥ १८४ ॥ ॥शालीनकौपीनार्त्विजीनम् ॥ ६ । ४ । १८५ ॥ शालीन कौपीन आर्त्विजीन इत्येते शब्दास्तमर्हत्यर्थे ईनञ्प्रत्ययान्ता निपात्यन्ते । नित्यमिति निवृत्तम् । निपातनस्येष्टविषयत्वात् । शालीन इति शालाप्रवेशनशब्दादीनञ् उत्तरपदस्य च लुक् । शालाप्रवेशनमर्हति शालीनः । ञकारस्य वृद्धिनिमित्तत्वात्पुंवद्भावो न भवति । शालीनाभार्यः । शालीनशब्दोऽधृष्टपर्यायः । कौपीन इति कूपप्रवेशनमर्हति कौपीनः। कौपीनशब्दः पापकर्मणि गोपनीयपायूपस्थे तदावरणे च चीवरखण्डे वर्तते।आर्त्विजीन इति ऋत्विज्शब्दात् ऋत्विक्कर्मशब्दाद्वा ईनञ् प्रत्ययः कर्मशब्दलोपश्च निपात्यते । ऋत्विजमर्हत्यार्त्विजीनो यजमानः । ऋत्विक्कर्मार्हति आर्त्विजीनः ऋत्विगेव ॥ १८५ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ षष्ठस्याध्यायस्य चतुर्थः पादः॥६।४॥ भूमिं कामगवि स्वगोमयरसैरासिञ्च रत्नाकरा मुक्तास्वस्तिकमातनुध्वमुडुप त्वं पूर्णकुम्भीभव॥धृत्वा कल्पतरोर्दलानि सरलैर्दिग्वारणास्तोरणान्याधत्त स्वकरैर्विजित्य जगतीं नन्वेति सिद्धाधिपः॥१॥

॥—शाली—॥—गोपनीयेति । उपस्थशब्देन सर्वेषस्तूनां मध्यभागोऽभिधीयते इति गुह्यप्रतिपत्त्यर्थं गोपनीयग्रहणम् ॥ इत्याचार्य० षष्ठस्याध्यायस्य चतुर्थः पादः ॥ ॥ ॥

# ॥ अथ सप्तमोऽध्यायः ॥

*यः ॥ ७ । १ । १ ॥ अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमिष्यामो यावत् *प्रकृतिसामान्यविषयमनुपात्तप्रकृतिविशेषं प्रत्ययान्तरमीयोऽधिकरिष्यते तावत् तत्र य इत्येतदपवादविषयं परिहृत्याधिकृतं वेदितव्यम् ॥ १ ॥ *वहति रथयुगप्रासङ्गात् ॥ ७ । १ । २ ॥ तमित्यनुवर्तते । तमिति द्वितीयान्तेभ्यो रथयुगप्रासङ्ग इत्येतेभ्यो वहत्यर्थे यः प्रत्ययो भवति । रथं वहति रथ्यः । द्वौ रथौ वहति द्विरथ्यः । युगं वहति युग्यः । इहानभिधानान्न भवति । कालसंज्ञकं युगं वहति राजा, *युगं वहति मनुष्यः । 'कुप्यभिद्य '—(५–१–३९) इत्यादिनिपातनादेव युग्य इति सिद्धे इदमर्थविवक्षायामण्बाधनार्थं युगग्रहणम् । यो हि युगं वहति स युगस्य संबन्धी भवति । प्रसज्यते इति प्रासङ्गः । यत्काष्ठं वत्सानां दमनकाले स्कन्ध आसज्यते । तत् वहति यः स प्रासङ्ग्यः । यत्त्वन्यत् यत्प्रसङ्गादागतं प्रासङ्गमिति तद्वहति न भवत्यनभिधानात् । ननु यो रथं वहति स रथस्य वोढा भवति । तत्र ' रथात्सादेश्च वोढ्ङ्गे' 'यः '—(६–३–१७५) इत्येव सिद्धम् तत्किं रथस्य ग्रहणेन । सत्यम् । अलुवर्थं तु तस्य ग्रहणं, तेन हिं ये विधीयमाने 'द्विगोरनपत्ये यस्वरादेर्लुबद्विः '—(६–१–२४) इति लुपा भवितव्यम् । द्वयो रथयोर्वोढा द्विरथः । *अनेन तु विधीयमाने न भवति अप्राग्जितीयत्वात् । एवं च द्विगौ रूपद्वयं संपन्नं भवति ॥ २ ॥ धुरो यैयण् ॥ ७ । १ । ३ ॥ धुर् इत्येतस्मात् द्वितीयान्तात् वहत्यर्थे य एयण् इत्येतौ प्रत्ययौ भवतः । धुरं वहति धुर्यः धौरेयः । एयण् वेत्यकृत्वा यग्रहणमिदमर्थविवक्षायां वहसर्थेऽण्बाधनार्थम् । यो हि यद्वहति स तस्य संबन्धी । कश्चित् तु यडेयकगावपीच्छति तन्मते धुर्यः । स्त्रियां टित्त्वान् ङी धुरी । धौरेयकः ॥ ३ ॥ *वामाद्यादेरीनः ॥ ७ । १ । ४ ॥ वाम आदिर्येषां ते वामादयः । तत्पूर्वात् *धुर् इत्येतदन्ताद् द्वितीयान्ताद्वहत्यर्थे ईनः प्रत्ययो भवति । वामा धूर्वामधुरा । समासान्तादाप् । वामधुरां वहति वामधुरीणः । एवं सर्वधुरीणः । उत्तरधुरीणः । दक्षिणधुरीणः । वामादयः प्रयोगगम्याः । सर्वधुर्य इत्यत्र यप्रत्ययोऽपीति कश्चित् ॥ धुरीण इति केवलादपीन इत्यन्यः ॥ ४ ॥ अश्चैकादेः ॥ ७ । १ । ५ ॥ एकशब्दादेर्धुर् इत्येतदन्ताद्द्वितीयान्ताद्वहत्यर्थे अः प्रत्ययो भवति चकारादीनश्च । एका एकस्य वा धूरेकधुरा । एका धूरस्मिन्नेकधुरम् । तां तद्वा वहति एकधुरः । एकधुरीणः ॥ ५ ॥ हलसीरादिकण् ॥ ७ । १ । ६ ॥ हलसीर इत्येताभ्यां द्वितीयान्ताभ्यां वहत्यर्थे इकण् प्रत्ययो भवति । हलं वहति हालिकः । सैरि-

---

॥—यः ॥—प्रकृतिसामान्येति । प्रकृतिसामान्य विषयो यस्य अत एवानुपात्त प्रकृतिविशेषो यत्र तत्प्रत्ययान्तरमीयलक्षणमित्यर्थः ॥—वह—॥—युगं वहति मनुष्य इति । अकालसञ्ज्ञकेपि युगे मनुष्ये वोढरि न भवतीत्यर्थ ॥—अनेन त्विति । नन्वत्र ग्रहणवता नाम्नेति न्यायादेव तदन्तस्य यो न भविष्यति तत्कथमुच्यते अलुवर्थमिति । उच्यते । एतदेव सूत्रकरण ज्ञापयति यत्तदन्तादपि भवति ॥—वामा—॥—धुर् इत्येतदन्तादिति । ननु च वामधुरादिसमुदाय समासान्तादापि कृते धुरन्तो न भवति तत्र कथ धुरन्तादुच्यमानः

कः ॥६॥ *शकटादण् ॥७।१।७॥ शकटशब्दाद्द्वितीयान्ताद्वहत्यर्थेऽण् प्रत्ययो भवति। शकटं वहति शाकटो गौः। ननु च 'तस्येदम्' (६-३-१५९) इति शकटादण् हलसीरादिकण् (६-३-१६०) इति हलसीराभ्याम् इकण् च सिद्ध एव। यो हि यद्वहति स तस्य संबन्धी भवति। सत्यम्। रथवदेव *तदन्तार्थमुपादानम्। तेनात्रापि द्विगौ द्वैरूप्यं भवति। द्वयोः शकटयोर्हलयोः सीरयोर्वा वोढा *द्विशकटः। द्विहलः। द्विसीरः। द्वे शकटे हले सीरे वा वहति द्वैशकटः। द्वैहलिकः। द्वैसीरिकः। *अन्ये तु शकटहलसीरेभ्य इदमर्थविवक्षायां प्रत्ययमिच्छन्ति न वहत्यर्थे तन्मते *द्विशकट इत्येव भवति। हलसीराभ्यां तु तदन्तविधिं नेच्छन्त्येव ॥७॥ *विध्यत्यनन्येन ॥७।१।८॥ तमिति वर्तते। तमिति द्वितीयान्ताद्विध्यत्यर्थे यः प्रत्ययो भवति। स चेद्विध्यन्नात्मनोऽन्येन करणेन न विध्यति। पादौ विध्यन्ति पद्याः शर्कराः। ऊरू विध्यन्ति ऊरव्याः कण्टकाः। उरो विध्यन्ति उरस्या वाताः। अनन्येनेति किम्। चौरं विध्यति चैत्रः। अत्र हि चैत्रश्चौरं विध्यन् धनुषा पाषाणेन वा विध्यति। शर्करादयस्तु न करणेन विध्यन्ति। यच्च मुखतैक्ष्ण्यादि करणम् तत्तेषामात्मनो नान्यत्। यद्येवं पादौ विध्यन्ति शर्कराः मुखेनेति करणप्रयोगे कस्मान्न भवति अस्ति हि अत्रानन्यत्करणमिति। उच्यते। अत्राप्रधानस्य सापेक्षत्वात्। *साधनप्रधाने हि तद्धिते क्रियाऽप्रधानमेव। *अनभिधानाद्वा। मुखेन पद्या इत्युक्ते हि मुखस्योपलक्षणत्वं सहयोगो वा प्रतीयते न व्यधनं प्रति करणत्वमिति ॥८॥ धनगणाल्लब्धरि ॥७।१।९॥ द्वितीयान्ताद्धनशब्दाद्गणशब्दाच्च लब्धर्यर्थे यः प्रत्ययो भवति। धनं लब्धा धन्यः। गणं लब्धा गण्यः। लब्धेति तृन्नन्तम् ॥९॥ णोऽन्नात् ॥७।१।१०॥ अन्नशब्दाद्द्वितीयान्ताल्लब्धरि णः प्रत्ययो भवति। अन्नं लब्धा आन्नः ॥१०॥ हृद्यपद्यतुल्यमूल्यवश्यपथ्यवयस्यधेनुष्यागार्हपत्यजन्यधर्म्यम् ॥७।१।११॥ हृद्यादयः शब्दा यथास्वमर्थविशेषेषु यप्रत्ययान्ता निपात्यन्ते। हृद्य इति हृदयशब्दात् षष्ठ्यन्तात् प्रियेऽर्थे बन्धने च वशीकरणमन्त्रे यः प्रत्ययो निपात्यते। हृदयस्य प्रियं हृद्यमौषधम्। हृद्यो देशः। हृदयस्य बन्धनो हृद्यो वशीकरणमन्त्रः। 'हृदयस्य हृल्लासलेखाण्ये'-(३-२-९४) इति हृदादेशः। निपातनं रूढ्यर्थं तेनेह न भवति। हृदयस्य प्रियः पुत्रः। पद्य इति पदशब्दात्प्रथमान्तात् दृश्यत्वोपाधिकादस्मिन्निति सप्तम्यर्थे यः। पदमस्मिन् दृश्यं पद्यः कर्दमः। नातिद्रवो नातिशुष्को यत्र प्रतिमुद्रोत्पादनेन

---

प्राप्नोति प्रत्यय । उच्यते । 'धुरोऽनक्षस्य'इति समासान्तेन भाव्यमेव तत समासान्तत्वे मुख्यान्तत्वायोगात् तत्समीपवर्ती समासान्तो धुरन्त इत्यदोषः ॥—शक—॥—इकण् चेति । तृतीयपादोक्तेन 'हलसीरादिकण्' इति सूत्रेणेत्यर्थः ॥—तदन्तार्थमिति । अलुगर्थमित्यर्थं । यतस्तदन्तस्यैव लुप्प्रसङ्ग. ॥—द्विशकट इति । त्रिष्वपि 'तस्येदम्' इत्यणो लुप् न तु 'हलसीराभ्याम्' इति शैषिकेण सूत्रेण विहितस्येकण केवलाभ्यामेव हलसीराभ्यां तेन विधानात् ॥—अन्ये त्विति । अयमभिप्रायः ते हि हलसीराभ्यामिकण् इति इदमर्थप्रस्ताव एवारभन्ते । शकटात्तु औत्सर्गिकोऽण् सिद्ध एव । ततश्च यथा रथात्सपूर्वादपि यप्रत्यय दृश्यते न तथा हलसीराभ्यामिति वचनान्न केवल तदन्ताभ्यामिकण्न भवति औत्सर्गिकोऽणपीति द्विहल त्रिहल इत्यादि न भवति ॥—विध्य—॥—सापेक्षत्वादिति । अप्रधानस्य व्यधनस्य कोऽर्थोऽप्रधानाया व्यधक्रियाया मुखस्यापेक्षमाणत्वात् । अप्राधान्य च कुत इत्याह—साधनप्रधाने हीति । यत पद्या इत्युक्ते व्यधनक्रियाविशिष्ट. कर्तोच्यते अत कर्तैव प्रधान तद्धिते ॥-अनभिधानाद्वेति । अप्रतिपादनादित्यर्थ. ॥

पदं द्रष्टुं शक्यते । तुल्य इति तुलाशब्दात्संमितेऽर्थे यः । तुलया संमितं तुल्यं भाण्डम् । निपातनं रूढ्यर्थम् । तेन न तुलासंमित एवोच्यते किं तु सदृशार्थोऽपि तुल्यशब्दः । गिरिणा तुल्यो हस्ती । मूल्यमिति मूलशब्दात्प्रथमान्त दस्येति पञ्च्यर्थे यः तच्च यद्युत्पादनयोग्यं भवति । मूलमेषामुत्पाद्यं मूल्या मुद्गाः । तृतीयान्ताच्चानाम्ये समे च । मूलेनानाम्यं मूल्यम् । मूलं पटाद्युत्पत्तिकारणम् । तेनानाम्यं यत्पटादेर्विक्रयात्प्राप्यते सुवर्णादि तन्मूल्यम् । मूलेन समो मूल्यः पटः । उपादानेन समानफल इत्यर्थः । वश्य इति वशशब्दाद्द्वितीयान्ताद्गतेऽर्थे यः । वशं गतो वश्यो गौर्विधेयः इच्छानुवर्तीति यावत् । निपातनं रूढ्यर्थं तेनेह न भवति । वशं गतः । इच्छां प्राप्तः । अभिमेतं गत इत्यर्थः । पथ्य इति पथिन्शब्दादनपेते यः । पथोऽनपेतं पथ्यम् ओदनादि । निपातनादिह न भवति । पथोऽनपेतं शकटादि । वयस्य इति वयःशब्दात्तृतीयान्तात्तुल्येऽर्थे यः । वयसा तुल्यो वयस्यः सखा । निपातनादिह न भवति । वयसा तुल्यः शत्रुः । धेनुष्येति धेनुशब्दाद्विशिष्टायां धेनौ यः षोऽन्तश्च । धेनुष्या या गोमता गोपालायाधमर्णेन चोत्तमर्णाय आ ऋणप्रदानाद्दोहार्थं धेनुर्दीयते सा धेनुरेव धेनुष्या । पीतदुग्धेति यस्याः प्रसिद्धिः । गार्हपत्य इति गृहपतिशब्दात्तृतीयान्तात्संयुक्तेऽर्थे ञ्यः प्रत्ययः । गृहपतिना संयुक्तो गार्हपत्य एवंनामा कश्चिदग्निः । निपातनादन्यत्र न भवति । जन्य इति जनीशब्दाद्वधूवाचिनो द्वितीयान्ताद्वहत्सु अभिधेयेषु जनशब्दाच्च षष्ठ्यन्ताज्जल्पेऽर्थे यः । जनीं वहन्ति जन्याः जामातुर्वयस्या उच्यन्ते । जनस्य जल्पः जन्यः । निपातनादन्यत्र न भवति । धर्म्य इति धर्मशब्दात्तृतीयान्तात्प्राप्येऽर्थे पञ्चम्यन्ताच्चानपेतेऽर्थे यः । धर्मेण प्राप्यं धर्म्यम् सुखम् । धर्मादनपेतं च धर्म्यम् । यद्धर्ममनुवर्तते ॥ ११॥ **नौविषेण तार्यवध्ये** ॥ ७ । १ । १२ ॥ नौविष इत्येताभ्यां निर्देशादेव तृतीयान्ताभ्यां यथासंख्यं तार्ये वध्ये चार्थे यः प्रत्ययो भवति । नावा तार्यं नाव्यमुदकम् । नाव्या नदी । विषेण वध्यो वधार्हो विष्यः ॥ १२ ॥ **न्यायार्थादनपेते** ॥ ७ । १ । १३ ॥ न्याय अर्थ इत्येताभ्यां निर्देशादेव पञ्चम्यन्ताभ्यामनपेतेऽर्थे यः प्रत्ययो भवति । न्यायादनपेतं न्याय्यम् । अर्थादनपेतमर्थ्यम् ॥ १३ ॥ **मतमदस्य करणे** ॥ ७ । १ । १४ ॥ मतमदशब्दाभ्यां निर्देशादेव षष्ठ्यन्ताभ्यां करणेऽर्थे यः प्रत्ययो भवति । इष्टं *साम्यं ज्ञानं मतिर्वा मतशब्देनोच्यते । करणं साधकतमं कृतिर्वा । मतस्य करणं मत्यम् । मदस्य करणम् मद्यम् ॥ १४ ॥ **तत्र साधौ** ॥७।१।१५॥ तत्रेति सप्तम्यन्तात्साधावर्थे यः प्रत्ययो भवति । साधुः प्रवीणो योग्य उपकारको वा । सामनि साधुः सामन्यः । वेमनि साधुर्वेमन्यः । कर्मणि कर्मण्यः । सभायां सभ्यः । शरणे शरण्यः ॥ १५ ॥ **पथ्यतिथिवसतिस्वपतेरेयण्** ॥ ७ । १ । १६ ॥ पथिन् अतिथि वसति स्वपति इत्येतेभ्यस्तत्र साधौ एयण् प्रत्ययो भवति । पथि साधु पाथेयम् । आतिथेयम् । वासतेयम् । स्वापतेयम् ॥ १६ ॥ **भक्ताण्णः** ॥ ७ । १ । १७ ॥ भक्तशब्दात्तत्र साधौ णः प्रत्ययो भवति । भक्ते साधुर्भाक्तः शालिः । भाक्तास्तण्डुलाः ॥ १७ ॥ **पर्षदो ण्यणौ** ॥ ७ । १ । १८ ॥ पर्षच्छब्दात्तत्र साधौ ण्यणेत्येतौ प्रत्ययौ भवतः । पर्षदि साधुः पार्षद्यः । पार्षदः । परिषदोऽपीच्छन्त्यन्ये । पारिषद्यः । पारिषदः ॥ १८ ॥ **सर्वजनाण्ण्येनञौ** ॥ ७ । १ । १९ ॥ सर्वजनशब्दात्तत्र साधौ ण्य ईनञ् इत्येतौ

---

—मत—॥—साम्यमिति । मनन मतम् धातूनामनेकार्थत्वेन मतशब्द. साम्येऽपि यथा मतीकृता समीकृतेत्यर्थः

प्रत्ययौ भवतः। सार्वजन्यः । सार्वजनीनः ॥ १९ ॥ *प्रतिजनादेरीनञ् ॥ ७ । १ । २० ॥ प्रतिजनादिभ्यस्तत्र साधावीनञ् प्रत्ययो भवति । प्रतिजने साधुः प्रातिजनीनः । अनुजने साधुः आनुजनीनः । इदंयुगे साधुः ऐदंयुगीनः । प्रतिजन अनुजन विश्वजन पाञ्चजन महाजन इदंयुग संयुग समयुग परयुग परकुल *परस्यकुल *अमुष्यकुल इति प्रतिजनादिः ॥ २० ॥ कथादेरिकण् ॥ ७ । १ । २१ ॥ कथादिभ्यः सप्तम्यन्तेभ्यः साधावर्थे इकण् प्रत्ययो भवति । कथायां साधुः काथिकः । वैकथिकः । कथा विकथा विश्वकथा संकथा वितण्डा जनेवाद जनवाद (जनोवाद) भृशोवाद जनभृशोवाद वृत्ति संग्रह गुण गण आयुर्वेद गुड कुल्माष गुल्मास इक्षु सक्तु वेणु अपूप मांसौदन मांस ओदन संग्राम संघात संवाह प्रवास निवास उपवास इति कथादिः ॥ २१ ॥ *देवतान्तात्तदर्थे ॥ ७ । १ । २२ ॥ देवतान्ताच्छब्दरूपात्तदर्थेऽर्थे यः प्रत्ययो भवति।*अर्थाचतुर्थ्यन्तात् प्रत्ययः। अग्निदेवतायै इदमग्निदेवत्यम्। पितृदेवत्यम्। देवदेवत्यम्। देवताशब्देन देयस्य हविरादेः प्रतिग्रहीता स्वामी संप्रदानमुच्यते ॥२२॥ पाद्यार्घ्ये ॥७।१।२३॥ पाद्य अर्घ्य इत्येतौ तदर्थे यप्रत्ययान्तौ निपात्येते। पादार्थमुदकं पाद्यम्। निपातनादेव ये पदादेशो न भवति। अर्घो मूल्यं पूजनं वा। अर्घार्थं रत्नमर्घ्यम् ॥२३॥ ण्योऽतिथेः ॥७१।२४॥ अतिथिशब्दात्तदर्थे ण्यः प्रत्ययो भवति । अतिथ्यर्थमातिथ्यम् ॥ २४ ॥ सादेश्चा तदः ॥ ७ । १ । २५ ॥ अधिकारोऽयम् यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र आ तदस्तदिति सूत्रं यावत्केवलस्य सादेश्च विधिर्वेदितव्यः॥ २५॥*हलस्य कर्षे ॥ ७ । १ । २६ ॥ हलशब्दात्केवलात्सादेश्च निर्देशादेव षष्ठ्यन्तात्कर्षेऽर्थे यः प्रत्ययो भवति । हलस्य कर्षो हल्या हल्यो वा । द्वयोर्द्विहल्या । त्रिहल्या । परमहल्या । उत्तमहल्या । बहुहल्यः । यत्र हलं *कृष्टं स मार्गः कर्षः । कृष्यते इति कर्षः क्षेत्रमित्यन्ये ॥ २६ ॥ सीतया संगते ॥ ७ । १ । २७ ॥ सीताशब्दात्केवलात्सादेश्च निर्देशादेव तृतीयान्तात्संगतेऽर्थे यः प्रत्ययो भवति । सीतया संगतं सीत्यम् । द्वाभ्यां सीताभ्यां संगतं द्विसीत्यम्। त्रिसीत्यम् । परमसीत्यम् । यस्य पूर्णोऽवधिः ॥ २७ ॥ ईयः ॥ ७ । १ । २८ ॥ आ तद इत्यनुवर्तते । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्रातदोऽर्थेषु ईय इत्यधिकृतं वेदितव्यम् ॥ २८ ॥ *हविरन्नभेदापूपादेर्यो वा ॥ ७ । १ । २९ ॥ हविर्भेदवाचिभ्योऽन्नभेदवाचिभ्योऽपूपादिभ्यश्च शब्देभ्यः आ तदोऽर्थेषु वा यः प्रत्ययोऽभिक्रियते । ईयापवादः । हविर्भेदः *आमिक्षायै इदं दधि आमिक्ष्यम् । आमिक्षीयम् । पुरोडाशाय इमे पुरोडाश्याः पुरोडाशीयास्तण्डुलाः । हविस्शब्दात्तु परत्वाद्युगादिपाठान्नित्यमेव यः । अन्नभेद, ओदनाय इमे ओदन्या ओदनीयास्तण्डुलाः। कृशरायै कृशर्याः कृशरीयास्तण्डुलाः। सुरायै सुर्याः सुरीयास्तण्डुलाः। अपूपादि, अपूपायेदमपूप्यम् अपूपीयम् । तण्डुलाय तण्डुल्यम् तण्डुलीयम् । सादेश्चेत्यधिकारात्तदन्तादपि भवति । यवापूप्यम् यवापूपीयम् । व्रीहितण्डुल्यम् व्रीहितण्डुलीयम् । उवर्णान्तात्तु हविरन्नभेदात्परत्वान्नित्यो यो भवति । चरव्यास्तण्डुलाः । सक्तव्या धानाः । अपूप तण्डुल ओदन पृथुक अभ्यूष अभ्योष अवोष किण्व मुसल कटक शकट कर्णवेष्टक ईर्गल इल्वल स्थूणा यूप सूप

॥—प्रति—॥—परस्यकुलेति । गणपाठात्षष्ठ्यलुप् । 'षष्ठ्या' क्षेपे' इति वा यदा परकुलसबन्धित्वेनाक्षिप्यते । एवममुष्यकुलेति ॥—देव—॥—अर्थादिति तदर्थ इति प्रत्ययार्थाद्देवेत्यर्थ. ॥ हल—॥—कृष्टमिति । कृष्ट गतमित्यर्थ. । कर्ष इत्यधिकरणे घञ् न तु कर्ष इति पलस्य चतुर्थो भाग. परिमाणमिह गृह्यते अनभिधानात् ॥—हवि—॥—आमिक्षेति ।

दीप प्रदीप अश्वपत्र इत्यपूपादिः। अपूपादिषु येऽन्नभेदशब्दा अपूपादयस्तेषां केनचिदाकारसादृश्येन*अर्थान्तरवृत्तौ प्रत्ययार्थमुपादानम्। केचित्तु अपूपादिपाठ-तान्नभेदव्यतिरिक्तानामन्नभेदानां*तदन्तविधिं नेच्छन्ति। यवसुरीयम् पिष्टसुरीयम्। यो न भवति ॥ २९ ॥ *उवर्णयुगादेर्यः ॥ ७ । १ । ३० ॥ उवर्णान्तायुगादिभ्यश्चा तदोऽर्थेषु यो भवति। ईयापवादः। उवर्ण, शङ्कवे इदं शङ्कव्यं दारु। पिचव्यः कर्पासः। परशव्यमयः। कमण्डलव्या मृत्तिका। चरव्यास्तण्डुलाः। सक्तव्या धानाः। युगादि, युगाय हितं युगार्थं युगोऽस्य स्यादिति वा युग्यम्। हविष्यम्। सादेश्चेत्यधिकारात्सुयुग्यम्। अतियुग्यम्। युग हविस् अष्टका बर्हिस् मेधा स्रुच् बीज कूप क्षर अक्षर खद स्खद विष दाय खर असुर दर अध्वन् गो। इति युगादिः। 'गोः स्वरे यः' (६-१-२७) इत्यनेनैव सिद्धे गोग्रहणं तदन्तार्थम्। तेन सुगव्यम् अतिगव्यम् इत्यपि सिद्धम्। इह यग्रहणं बाधक*बाधनार्थम्। सनङ्गवे इदं सनङ्गव्यं चर्म। अत्र हि परत्वात् 'चर्मण्यञ्' (७-१-४५) इति प्राप्नोति ॥ ३० ॥ *नाभेर्नभ् चादेहांशात् ॥ ७ । १ । ३१ ॥ नाभिशब्दाददेहांशवाचिन आ तदो वक्ष्यमाणेष्वर्थेषु यः प्रत्ययो भवति नाभिशब्दस्य च नभ् इत्यादेशो भवति। नाभ्यै नाभये वा हितं नभ्यमञ्जनम्। नभ्योऽक्षः। नाभये इदं नभ्यं दारु। अरकमध्यवर्ती अक्षधारणश्चक्रावयवो नाभिस्तदर्थं नभ्यम्। यत्तु अरकगण्डरहितं चक्रम्*एककाष्ठं तत्र न नाभिरिति तदर्थे नभ्यमित्युपचारात्। *नभ्यो वृक्षः नभ्या शिंशपेति नभ्यार्थे वृक्षादौ ताच्छब्द्यान्नभ्यत्वम् इन्द्रार्थ्यां स्थूणायामिन्द्रवत्। अदेहांशादिति किम्। नाभये हितं नाभ्यं तैलम्। अत्र नभादेशो न भवति। यस्तु 'प्राण्यङ्ग'-(७-१-३७) इत्यादिना भवति ॥ ३१ ॥ *न् चोधसः ॥ ७ । १ । ३२ ॥ ऊधस्शब्दात् आ तदोऽर्थेषु यः प्रत्ययो नकारश्चान्तादेशो भवति। *ईयापवादः। ऊधसे हितम् ऊधन्यम् ॥ ३२ ॥ *शुनो वश्चोदूत् ॥ ७ । १ । ३३ ॥ श्वन्शब्दादा तदोऽर्थेषु यः प्रत्ययो भवति वकारस्य उकार ऊकाररूपो भवति। अभेदनिर्देशः सर्वादेशार्थः। शुने हितं शुन्यम्। शून्यम्। नाभि ऊधस् श्वन्शब्दान्*युगादिषु पठित्वापि शक्यः प्रत्ययः आदेशार्थास्तु योगाः ॥ ३३ ॥ कम्बलान्नाम्नि ॥ ७ । १ । ३४ ॥ कम्बलशब्दादा तदोऽर्थेषु यः प्रत्ययो भवति ईयापवादः नाम्नि संज्ञायां विषये। कम्बलोऽस्य स्यात् कम्बल्यं परिमाणम् ऊर्णापलशतमुच्यते। अशीतिशतमित्यन्ये। षट्षष्टिशतमित्यपरे। नाम्नीति किम्। कम्बलीया ऊर्णा ॥ ३४ ॥ *तस्मै हिते ॥ ७ । १ । ३५ ॥ हित उपकारकः।

---

आमिश्रितं क्षीरं काञ्जिकेन यस्या सा आमिश्रितक्षीरा गतार्थत्वात् काञ्जिकशब्दस्य लोपः। पृषोदरादित्वादामिक्षादेशः ॥—अर्थान्तरवृत्ताविति। अपूपाकारं घर्मांद्यपूपमित्येवम् ॥—तदन्तविधिमिति। कोऽर्थः। ये अपूपादिषु पठिता अन्नभेदास्तेषां तदन्तानां विधिर्भवति। अन्नभेदवाचिना तु अपूपादिष्वपठितानां तदन्तविधिर्न भवतीत्यर्थ ॥—उव—॥—बाधनार्थमिति। उवर्णान्तत्वादनेन यः प्राप्तस्तं बाधित्वा चर्मण्यञ् प्राप्त इति तद्बाधनार्थम् ॥—नाभे—॥—एककाष्ठमिति। पाषाणानयनशकटस्य रहट्ट इति प्रसिद्धस्य ॥—नभ्यो वृक्ष इति। शाखायेव नाभये हित न समस्तो वृक्ष इति प्रश्नाशय. ॥—न् चोध—॥—ईयापवाद इति। यदा प्राण्यङ्गवाची तदा य सिद्ध एव नकारादेशोऽनेन विधीयते। यदा तु न प्राण्यङ्गवाची किंतु तदाकार किंचिदङ्गादि विवक्ष्यते तदा ईयः प्राप्नोति अतस्तदपवादः ॥—शुनो—॥—युगादिष्विति। नाभ्यूधसोः प्राण्यङ्गत्वाभावे युगादिपाठ आश्रयेत। प्राण्यङ्गार्थत्वे तु 'प्राण्यङ्गरथ-'इत्यनेनैव य' सिध्येत् ॥—तस्मै

तस्मै इति चतुर्थ्यन्तान्नाम्नो हितेऽर्थे यथाधिकृतं प्रत्ययो भवति । वत्सेभ्यो हितो वत्सीयः । करभीयः । पित्रीयः । मात्रीयः । आमिक्ष्यः । आमिक्षीयः । ओदन्यः । ओदनीयः । अपूप्यः । अपूपीयः । हविष्यः । युग्यः । शुन्यः । शून्यः । ऊधन्यः । वत्सेभ्यो न हितः *अवत्सीयः । एवमकरभीयः ॥ ३५ ॥ न राजाचार्यब्राह्मणवृष्णः ॥ ७ । १ ॥ ३६ ॥ राजन् आचार्य ब्राह्मण वृषन् इत्येतेभ्यश्चतुर्थ्यन्तेभ्यो हितेऽर्थेऽधिकृत प्रत्ययो न भवति । राज्ञे हितः आचार्याय हितः ब्राह्मणाय हितः वृष्णे हितः इति वाक्यमेव भवति ॥ ३६ ॥ *प्राण्यङ्गरथखलतिलयववृषब्रह्ममाषाद्यः ॥ ७ । १ । ३७ ॥ प्राण्यङ्गवाचिभ्यो रथादिभ्यश्च चतुर्थ्यन्तेभ्यो हितेऽर्थे यः प्रत्ययो भवति । दन्तेभ्यो हितं दन्त्यम् । कर्ण्यम् । चक्षुष्यम् । कण्ठ्यम् । ओष्ठ्यम् । नाभ्यम् । रथाय हिता रथ्या भूमिः । खलाय हितं खल्यम् अग्निरक्षणम् । तिलेभ्यो हितः तिल्यो वायुः । यवेभ्यो हितो यव्यस्तुषारः । वृषाय हितं वृष्यं क्षीरपाणम् । ब्रह्मणे हितो ब्रह्मण्यो देशः । माषेभ्यो हितो माष्यो वातः । सादेश्चेत्यधिकारात् राजदन्त्यम् । *शङ्खनाभ्यम् । अश्वरथ्या भूमिः । कृष्णतिल्यः । राजमाष्यः ॥ ३७ ॥ *अव्यजात्थ्यप् ॥ ७ । १ । ३८ ॥ अवि अज इत्येताभ्यां तस्मै हिते थ्यप् प्रत्ययो भवति । अविभ्यो हितम् अविथ्यम् । अजेभ्यो हितम् अजथ्यम् । पकारः पुंवद्भावार्थः । अजाभ्यो हिता *अजथ्या यूतिः ॥ ३८ ॥ चरकमाणवादीनञ् ॥ ७ । १ । ३९ ॥ आभ्यां तस्मै हितेऽर्थे ईनञ् प्रत्ययो भवति । चरकेभ्यो हितश्चारकीणः । माणवीनः ॥ ३९ ॥ भोगोत्तरपदात्मभ्यामीनः ॥ ७ । १ । ४० ॥ भोगोत्तरपदादात्मन्शब्दाच्च तस्मै हितेऽर्थे ईनः प्रत्ययो भवति । मातृभोगाय हितो मातृभोगीणः । पितृभोगीणः । ग्रामणिभोगीनः । सेनानिभोगीनः । आचार्यभोगीनः । अत्र क्षुभ्नादित्वान्न णत्वम् । आत्मन्, आत्मने हितः आत्मनीनः । अनात्मनीनः । 'ईनेऽध्वात्मनो' (७-४-४८) इत्यन्त्यस्वरादिलोपाभावः ॥ ४० ॥ *पञ्चसर्वविश्वाज्जनात्कर्मधारये ॥ ७ । १ । ४१ ॥ पञ्च सर्व विश्व इत्येतेभ्यः पराज्जनशब्दात्कर्मधारये वर्तमानात्तस्मै हिते ईनः प्रत्ययो भवति । ईयापवादः । पञ्चजनेभ्यः पञ्चजनाय वा हितः पञ्चजनीनः । *रथकारपञ्चमस्य चातुर्वर्ण्यस्य पञ्चजन इति संज्ञा । एवं सर्वजनीनः । विश्वजनीनः । कर्मधारय इति किम् । पञ्चानां जनः पञ्चजनः तस्मै हितः पञ्चजनीयः । सर्वो जनोऽस्य सर्वेषां वा जनः सर्वजनः तस्मै हितः सर्वजनीयः । एवं विश्वजनीयः ॥ ४१ ॥ महत्सर्वादिकण् ॥ ७ । १ । ४२ ॥ महतः सर्वाच्च यो जनशब्दस्तदन्तात्कर्मधारये वर्तमानात्तस्मै हिते इकण् प्रत्ययो भवति । महते

—॥—अवत्सीय इति । ननु हिते प्रत्यय 'उच्यमानो निषिध्यमाने तस्मिन् कथ स्यादिति चेत् । न । विवक्षोपारोहिण्यर्थे शब्दप्रयोगाद्बाह्यवस्तुनिषेधेऽपि न तन्निषेध । अन्यथा निषिध्यमानाभिधायिशब्दप्रयोगान्निर्विषयप्रतिषेध कथमिव शक्यक्रिय स्यात् । प्रत्ययार्थस्य च प्रकृत्यर्थेन सापेक्षत्वेऽपि न प्रत्ययार्थेनासामर्थ्यम् । एतदेव हि प्राधान्य यद्युगपत्कालोपकारकसंबन्धसहत्व नाम । एव हितार्थे नञर्थापेक्षेऽपि प्रत्ययोत्पत्तिरविरुद्धा ॥—प्राण्य-॥—शङ्खनाभ्यमिति । शङ्खो नाभिश्च देहांशो तत शङ्खश्च नाभिश्च 'प्राणितूर्याङ्गाणाम्' इति समाहारे शङ्खनाभिने हितम् शङ्खाकारा नाभिर्वा तदा शङ्खनाभये हितम् ॥—अव्य—॥—अजथ्येति । पित्करणसामर्थ्यात् 'स्वाङ्गान्डीर् –'इत्यनेन निषिद्धोऽपि 'क्यङ्मानि'–इत्यनेन पुंवद्भाव ॥-पञ्च—॥—रथकारपञ्चमस्येति । द्वादशधा भिन्नस्य शूद्रस्य त्रैवर्ण्यस्य च मध्ये न पततीति रथकारस्य पृथगुपादानम् यत आरथकृन्मिश्रजातय इत्युक्तम् । रथकारस्य तु किं लक्षणमिति चेत् । उच्यते । माहिष्येण तु जात. स्यात् करण्या रथका-

जनाय हितः माहाजनिकः । सर्वस्मै जनाय हितः सार्वजनिकः । एवं च सर्वजनात्पूर्वेण ईनः अनेनेव ठञिति द्वैरूप्यम् । कर्मधारय इत्येव । महान् जनोऽस्य महाजनः तस्मै हितः महाजनीयः । सर्वेषां जनाय हितं सर्वजनीयम् ॥ ४२ ॥ सर्वाण्णो वा ॥ ७ । १ । ४३ ॥ जनात्कर्मधारय इति च निवृत्तम् । सर्वशब्दात्तस्मै हिते णः प्रत्ययो वा भवति । सर्वस्मै हितः सार्वः । पक्षे ईयः । सर्वीयः ॥ ४३ ॥ *परिणामिनि तदर्थे ॥ ७ । १ । ४४ ॥ हित इति निवृत्तम् । तद्भावः परिणामस्सोऽस्यास्तीति परिणामि द्रव्यमुच्यते । तस्मै इति चतुर्थ्यन्तात्तदर्थे चतुर्थ्यन्तार्थार्थे परिणामिनि कारणद्रव्येऽभिधेये यथाधिकृतं प्रत्ययो भवति । अङ्गारेभ्य इमानि अङ्गारीयाणि काष्ठानि । अङ्गारार्थानीत्यर्थः । एवं प्राकारीया इष्टकाः । शङ्कव्यं दारु । पिचव्यः कर्पासः । आमिक्ष्यम् आमिक्षीयं दधि । ओदन्या ओदनीयास्तण्डुलाः । अपूप्यम् अपूपीयम् पिष्टम् । परिणामिनीति किम् । उदकाय कूपः । असये कोशी । न कूपः कोशी वा उदकासिभावेन परिणमेते । तदर्थे इति किम् । मूत्राय यवागूः । उच्चाराय यवान्नम् । पादरोगाय नड्वलोदकम् । यवाग्वादि मूत्रादितया परिणमति न तु तदर्थम् । *अथवा तदर्थे इति चतुर्थीविशेषणम् । तदर्थे या चतुर्थी तदन्तात्प्रत्ययः । इह तु संपद्यतौ चतुर्थीति न भवति । तस्मै इत्येव । सक्तूनां धानाः । धानानां यवाः । अत्र सत्यपि तादर्थ्ये संबन्धमात्रविवक्षायां षष्ठी यथा गुरोरिदं गुर्वर्थमिति । भवति च सतोऽप्यविवक्षा यथानुदरा कन्येति ॥ ४४ ॥ *चर्मण्यञ् ॥ ७ । १ । ४५ । तस्मै इति चतुर्थ्यन्तात्परिणामिनि तदर्थे चर्मण्यभिधेये अञ् प्रत्ययो भवति । वर्ध्र्यायेदं वार्ध्रम् चर्म । वरत्रायै इदं वारत्रं चर्म । रथोपस्थायेदं *राथोपस्थं चर्म । हलबन्धायेदं हालबन्धं चर्म । *सनङ्गवे इदं सनङ्गव्यं चर्मेति 'उवर्णयुगादेर्यः' ( ७-१-३० ) इति यग्रहणाद्य एव भवति । सनङ्गु*श्चर्मविकारः ॥ ४५ ॥ ऋषभोपानहाञ्ञ्यः ॥ ७ । १ । ४६ ॥ ऋषभ उपानह् इत्येताभ्यां चतुर्थ्यन्ताभ्यां परिणामिनि तदर्थे अभिधेये ञ्यः प्रत्ययो भवति । ऋषभाय अयम् आर्षभ्यो वत्सः । औपानह्यो मुञ्जः । औपानह्यम् काष्ठम् । औपानह्यं चर्मेति चर्मण्यपि परिणामिनि परत्वादयमेव भवति ॥ ४६ ॥ छदिर्बलेरेयण् ॥ ७ । १ । ४७ ॥ छदिस् बलि इत्येताभ्यां चतुर्थ्यन्ताभ्यां परिणामिनि तदर्थे एयण् प्रत्ययो भवति । छदिषे इमानि छादिषेयाणि तृणानि । बलये इमे बालेयास्तण्डुलाः । चर्मण्यपि परत्वादयमेव भवति । छादिषेयं चर्म । कथमौपधेयः । उपधीयत इत्युपधेयः । स एव प्रज्ञाद्यणि स्वार्थिके औपधेयः । उपधिः रथाङ्गमिति यावत् । अत उपधेः स्वार्थे एयणिति नारम्भणीयम् ॥ ४७ ॥ *परिखास्य स्यात् ॥ ७ । १ । ४८ । परिखाशब्दान्निर्देशादेव प्रथमान्तादस्येति षष्ठ्यर्थे परिणामिनि एयण् प्रत्ययो भवति या सा परिखा सा चेत्स्यादिति योग्यतया सभाव्यते । तदित्यनेन यथाधिकृतस्य प्रत्ययस्य विधास्यमानत्वादिहोत्तरत्र च *एयणेवानुवर्तते । परिखा आसामिष्टकानां स्यादिति पारिखेय्य इष्टकाः । स्यादिति

रक' ॥ वैश्याया क्षत्रियाजातो माहिष्य उच्यते । वृषलस्त्रिया वैश्यात्तु करणः स्त्री चेत् करणी ॥—परि—॥—अथवेति । पूर्वं हि तदर्थे इति परिणामिशब्दस्य विशेषणम् ॥—चर्म—॥—राथोपस्थमिति । अत्राधिकारायातत्वात् परिणामिनीति योजितमपि यथासभव योज्यम् । तेनात्र चर्मणो रथोपस्थरूपेण परिणामाभावेप्यञ् भवति ॥—सनङ्गवे इति । अङ्गेषु सन ' राजदन्तादिषु'इति सप्तम्यन्तस्य परनिपात. । पृषोदरादित्वात् सनङ्गुशब्द आदेश ॥—चर्मविकार इति । स्यालादीनां रक्षार्थ कोश. ॥—परि—॥—एयणेवेति । एतत्सूत्रोत्तरसूत्रकरणात् । अन्यथा

संभावने सप्तमी। इष्टकानां बहुत्वेन संभाव्यत एतत्परिखासां स्यादिति। स्यादिति किम्। परिखा इष्टकानाम्। परिणामिनीत्येव। परिखास्य नगरस्य स्यात् ॥ ४८ ॥ *अत्र च ॥ ७ । १ । ४९ ॥ परिखाशब्दानिर्देशादेव प्रथमान्तादत्रेति सप्तम्यर्थे एयण् प्रत्ययो भवति सा चेत्परिखा स्यादिति संभाव्यते । परिखास्यां स्यात् पारिखेयी भूमिः । योगविभागः परिणामिनीसस्येह *असंबन्धार्थः । चकार उत्तरत्रास्य स्यादिति परिणामिन्यत्र स्यादिति चोभयस्याप्यनुवृत्त्यर्थः ॥ ४९ ॥ तद् ॥ ७ । १ । ५० ॥ तदिति प्रथमान्तादस्येति षष्ठ्यर्थे परिणामिनि अत्रेति सप्तम्यर्थे च यथाधिकृतं प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेत्स्यादिति संभाव्यते । प्राकार आसामिष्टकानां स्यात्प्राकारीया इष्टकाः । प्रासादीयं दारु । परशव्यमयः । प्रासादोऽस्मिन्देशे स्यात् प्रासादीयो देशः । प्रासादीया भूमिः । स्यादित्येव । प्राकार इष्टकानाम् । परिणामिनीत्येव । प्रासादोऽस्य चैत्रस्य स्यात् ॥ ५० ॥ *तस्यार्हे क्रियायां वत् ॥ ७ । १ । ५१ ॥ ईयस्य पूर्णोऽवधिः । अर्हतीत्यर्हम् । 'अच्'-( ५-१-४९ ) इत्यच् । तस्येति षष्ठ्यन्तादर्हेऽर्थे वत् प्रत्ययो भवति यत्तदर्हं तच्चेत् क्रिया भवति । राज्ञोऽर्हं राजवत् वृत्तमस्य राज्ञः । राजत्वस्य युक्तमस्य राज्ञो वृत्तमित्यर्थः । राजवदवर्तत भरतः । *राजार्हं वर्तते स्मेत्यर्थः । एवं कुलीनवत्, साधुवत् । स शिरांसि द्विषामाजौ चिच्छेद छलहस्तवत् । राज्ञि एकस्मिन्नुपमानोपमेयभावासंभवादुत्तरेण न सिध्यतीति वचनम् । यदा तु राज्ञः सगरादेर्वृत्तस्यार्हं इदानीतनः कश्चिद्राजेति भेदो विवक्ष्यते तदोत्तरेणैव सिद्धम् । क्रियायामिति किम् । शतस्यार्हो देवदत्तः । राज्ञोऽर्हो मणिः ॥ ५१ ॥ *स्यादेरिवे ॥ ७ । १ । ५२ ॥ स्याद्यन्तादिवार्थे वत्प्रत्ययो भवति । इवशब्दः सादृश्यं द्योतयति । तच्चेत्सादृश्यं क्रियायां क्रियाविषयं क्रियागतं भवति । क्षत्रिया इव क्षत्रियवद्युध्यन्ते ब्राह्मणाः । अश्ववद्धावति चैत्रः । देवमिव देववत्पश्यन्ति मुनिम् । साधुनेव साधुवदाचरितं मैत्रेण । ब्राह्मणायेव ब्राह्मणवद्दत्तं क्षत्रियाय । पर्वतादिव पर्वतवदवरोहति आसनात् । स्यादेरिति किम् । गच्छन्नास्त इव मन्दत्वादीप्सितदेशस्य *असंप्राप्तेः । अधीयानो नृत्यतीव अङ्गविकारप्रायत्वात् । क्रियायामित्येव । गौरिव गवयः । देवदत्त इव गोमान् । हस्तीव स्थूलः । अत्र द्रव्यगुणविषये सादृश्ये न भवति । कथं देवदत्तवत्स्थूल. यज्ञदत्तवद्गोमान् इति । अत्र तुल्यायामस्तौ भवतौ चाध्याह्रियमाणायां प्रत्ययो भविष्यति । अथोपमानोपमेयक्रिययोः *साधनभेदापेक्षायामिह कस्मान्न भवति ऋचं ब्राह्मणवदयं गाथामधीत इति । *सापेक्षत्वात् ॥ ५२ ॥ *तत्र ॥ ७ । १ । ५३ ॥ तत्रेति सप्तम्यन्तादिवार्थे वत्प्रत्ययो भवति । मथुरायामिव मथुरावत्पाटलिपुत्रे प्रासादाः । स्रुघ्न इव साकेते परिखा स्रुघ्नवत् । गुरुवद्गुरुपुत्रे वर्तितव्यमित्यादिषु क्रियासादृश्ये पूर्वेणैव सिद्धम् । *अक्रियार्थ-

---

तदित्यनेनैव यथाधिकृतस्य सिद्धत्वादिदं सूत्रद्वय व्यर्थम् ॥—अत्र च—॥—असंबन्धार्थ इति । तेनेह परिणामिनि अपरिणामिनि च भवतीत्यर्थ ॥—तस्या—॥-राजार्हमिति । अत्राद्यत्वात् न भरतस्योपमानमन्यो राजाऽस्ति स एव सर्वेषा राज्ञामुपमानभूतस्तत्र राजाविदिति । राज्ञ आत्मन एवार्हं वृत्तमवर्त्ततेत्यर्थ ॥—स्यादेरि—॥—असप्राप्तेरिति । यथा आसीनोऽभिमतं देश न प्राप्नोति तथैव गच्छन्नपि॥-साधनभेदापेक्षायामिति । यद्यपि वस्तुवृत्त्या अध्ययनमेकमेव तथापि साधनभेदाद्व्याप्यलक्षणभेदाद् भेद एव॥—सापेक्षत्वादिति । ब्राह्मणवत् अय गाथामधीत इत्युक्ते हि ऋच. कर्मणोऽपेक्षा भवति ॥—तत्र-॥-अक्रियार्थ इति । तथापि नारम्भणीयमिद सूत्र षष्ठीसप्तम्योरर्थाभेदात्सप्तमीविषये षष्ठीप्रवृत्तेर्दर्शनात् उत्तरसूत्रेणैव भविष्यति । न । अधिकरणविवक्षायां सप्तम्यन्तादपि

स्वारम्भः ॥ ५३ ॥ तस्य ॥ ७ । १ । ५४ ॥ तस्येति षष्ठ्यन्तादिवार्थे वत्प्रत्ययो भवति । चैत्रस्येव मैत्रस्य गावश्चैत्रवत् । ब्राह्मणस्येव क्षत्रियस्य दन्ताः ब्राह्मणवत् । अक्रियाविषयसादृश्यार्थ आरम्भः । योगविभाग उत्तरार्थः ॥ ५४ ॥ *भावे त्वतल् ॥ ७ । १ । ५५ ॥ तस्येति षष्ठ्यन्ताद्भावेऽभिधेये त्व तल् इत्येतौ प्रत्ययौ भवतः । भवतोऽस्मात् , अभिधानप्रत्ययौ इति भावः शब्दस्य प्रवृत्तिनिमित्तम् द्रव्यसंसर्गी भेदको गुणः । यदाहुः यस्य गुणस्य हि भावात् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलाविति । तत्र 'जातिगुणाज्जातिगुणे, समासकृत्तद्धितात्तु संबन्धे ॥ डित्थादेः स्वे रूपे, त्वतलादीनां विधिर्भवति' ॥ १ ॥ तत्र जातिवचनेभ्यो जातौ, गोः शब्दस्य भावो गोत्वम् गोता । अत्र गोशब्दजातिर्भावः । गोरर्थस्य भावो गोत्वम् गोता । अत्र गवार्थजातिर्भावः । एवमश्वत्वमश्वता । शुक्लस्य गुणस्य भावः शुक्लत्वं शुक्लतेत्यत्र शुक्लगुणजातिः । रूपस्य भावो रूपत्वम् रूपता । रसस्य रसत्वम् । रसता । अत्र रूपादिगुणजातिः । कत्वं खत्वमिति भिन्नवर्णव्यक्तिसमवेता जातिः । कवर्गत्वं चवर्गत्वमिति ककारादिवर्गव्यक्तिसमवेता जातिः संहतिः । गुणशब्देभ्यो गुणे, शुक्लस्य पटस्य भावः शुक्लत्वम् शुक्लता । अत्र शुक्लो गुणो भावः । एवं शुक्लतरत्वं शुक्लतमत्वमिति स एव प्रकृष्टः । अणुत्वं महत्त्वमिति परिमाणलक्षणो गुणः । एकत्वं द्वित्वमिति संख्यालक्षणः । पृथक्त्वं नानात्वमिति भेदलक्षणः । उच्चैस्त्वं नीचैस्त्वमिति उच्छ्रयादिलक्षणः । वृत्तौ पृथगादिशब्दाः *पृथग्भूताद्यर्थे सत्वे वर्तन्ते इति प्रत्ययः विग्रहस्तु पृथग्भूतस्य भाव इत्यादि । पट्वादयोऽपि गुणा एवेति पटुत्वं मृदुत्वं तीक्ष्णत्वमित्यादिष्वपि गुणो भावः । समासात्संबन्धे, राजपुरुषत्वं चित्रगुत्वम् । अत्र स्वस्वामिसंबन्धः । कृतः संबन्धे, पाचकत्वं पक्तृत्वं कार्यत्वं साधनत्वम् । अत्र क्रियाकारकसंबन्धः । तद्धितात्संबन्धे, औपगवत्वम् दण्डित्वं विषाणित्वम् । अत्रोपगुदण्डादिसंबन्धः । *डित्थादेः स्वरूपे, डित्थादेस्तु यदृच्छाशब्दादन्यस्य प्रवृत्तिनिमित्तस्यासंभवात्तस्मिन्नेव स्वरूपे डित्थशब्दवाच्यतया *अध्यवसितभेदे*ऽव्यतिरिक्तेऽपि व्यतिरिक्त इव *शब्दप्रत्ययबलात् बुद्ध्यावगृहीते धर्मे प्रत्ययः । डित्थस्य भावः स्वरूपं

---

यथा स्यादित्येवमर्थम् । न च सप्तमीविषये षष्ठ्या नियमेन समावेश । यथा नभसीवोदके शशीति ॥—भावे-॥—अभिधानप्रत्ययाविति । यद्यपि पूर्वं ज्ञान पश्चाच्छब्द इति क्रमस्तथापि स्वराद्यदन्तत्वात् अभिधानस्य 'लघ्वक्षर'-इति पूर्वनिपात एवमाह ॥—पृथग्भूताद्यर्थे इति । ननु पृथगादिशब्दानामव्ययानामसत्ववाचित्वात् कथमत्र भावप्रत्ययो नह्यसत्वादसत्वे प्रत्ययो भावो ह्यस स्वरूप इति आशङ्का ॥—डित्थादेः स्वरूपे इति । डित्थादेस्तस्मिन्नेव स्वरूपे धर्म्मे प्रत्ययो भवति । कथभूतात् डित्थादेर्यदृच्छाशब्दादत एवान्यस्य प्रवृत्तिनिमित्तस्यासभवात् । ननु यदि स्वरूप एव प्रत्ययो भवति तर्हि डित्थस्य भाव इति वाक्ये भावशब्दोपादान न प्राप्नोति यतो डित्थशब्देनापि स्वरूपमभिधीयते भावशब्देनापि तदेवोच्यते तत्कथ भावशब्दोपादानमित्याह—अध्यवसितभेदे ॥ कोऽर्थोऽध्यवसित आरोपितो भेदो यस्य स्वरूपस्य तदध्यवसितभेद तत्र कया डित्थशब्दवाच्यतया डित्थशब्देन वाच्यत्वेन कोऽर्थो डित्थशब्दस्य यदेव स्वरूप प्रवृत्तिनिमित्त तदेवाश्रित्य डित्थशब्द प्रवृत्त इत्यर्थ । ततो डित्थशब्दवाच्यतया कृत्वा अध्यवसितभेदे आरोपितभेदे । कोऽर्थ स्वरूपमेव विशेष्य विशेषण चात्र यतो भावो वर्त्तते इति विशेषण कस्य डित्थस्य । इद च विशेष्यम् । नाहि डित्थशब्दाद्व्यतिरिक्त किंचिद्भावशब्देनाभिधीयते अपि तर्हि तदेव परमध्यवसितभेदात्तदेव विशेष्य विशेषण च भवति । किंविशिष्टेऽध्यवसितभेदेऽव्यतिरिक्तेऽपि व्यतिरिक्त इव । क इव यथा शिलापुत्रकस्य शरीरमित्यत्राव्यतिरिक्तेऽपि वस्तुनि व्यतिरिक्ते प्रत्ययो जायते तथात्रापि । पर कस्मादित्याह—शब्दप्रत्ययबलात् ॥ बुद्ध्यावगृहीते शब्देन कृत्वा प्रत्ययो ज्ञान

डित्थत्वं डवित्थत्वम् । एवं गोजातेर्भावो गोत्वम् गोतेति *गोशब्दस्य स्वरूपम् । शुक्लजातेर्भावः शुक्लत्वं शुक्लतेति शुक्लशब्दस्य स्वरूपम् । गवादयो हि यदा जातिमात्रवाचिनस्तदा तेषां शब्दस्वरूपमेव प्रवृत्तिनिमित्तम् । तथाह्यर्थजातौ *शब्दार्थयोरभेदेन शब्दस्वरूपमध्यवस्यते यो गोशब्दः स एवार्थ इति । एवं देवदत्तत्वं चन्द्रत्वं सूर्यत्वं दिक्त्वम् आकाशत्वम् अभावत्वमिति स्वरूपमेवोच्यते । एके तु यदृच्छाशब्देषु शब्दस्वरूपं संज्ञासंज्ञिसंबन्धो वा प्रवृत्तिनिमित्तमिति मन्यन्ते । अन्ये तु डित्थत्वं देवदत्तत्वमिति *वयोऽवस्थाभेदभिन्नव्यक्तिसमवेतं सामान्यम्, चन्द्रत्वं सूर्यत्वमिति कालावस्थाभेदभिन्नव्यक्तिसमवेतं सामान्यं, दिक्त्वम् आकाशत्वम् अभावत्वम् इति *उपचरितभेदव्यक्तिसमवेतं सामान्यं प्रत्ययार्थ इति वदन्तोऽत्रापि जातिमेव त्वतलादिप्रत्ययप्रवृत्तिनिमित्तमभिदधति ॥ ननु च समासकृत्तद्धितेभ्योऽपि भावप्रत्ययेन जातिरेवाभिधीयते गौरखरत्वं लोहितशालित्वं सप्तपर्णत्वं धवखदिरत्वमिति, कुम्भकारत्वं तन्तुवायत्वं स्तम्बेरमत्वं पङ्कजत्वमिति, हस्तित्वं मानुषत्वं क्षत्रियत्वं राजन्यत्वमिति । उच्यते । समासकृत्तद्धितेषु संबन्धाभिधानमन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसंबन्धेभ्यः । तत्र रूढयो गौरखरादय उदाहृता एव । अभिन्नरूपास्तु तद्धितान्ता एव लुबादिभिः संभवन्ति गर्गत्वं पञ्चालत्वमिति । *अत्र गर्गादयः शब्दा यञोऽलुपि यद्यपि तद्धितान्तास्तथापि मूलप्रकृत्या सह *सहविवक्षायामभिन्नरूपत्वात् प्रत्ययोत्पत्तिहेतुः संबन्धो न्यग्भूत इति अभिन्नशब्दाभिधेयतैव भावप्रत्ययात्प्रतीयते न संबन्धः । अथ पञ्चालशब्दात् *युगपदपत्यजनपदाभिधायिनो भावप्रत्ययेन किमभिधीयते । *प्रवृत्तिनिमित्तसंघातः यथा धवखदिरत्वमिति जातिसंहतिः । एतेन *अक्षत्वं पादत्वं माषत्वमित्यादीन्यपि व्याख्यातानि ।

---

तद्बलात् । अनेव प्रस्तावे गोजातेर्भावो गोत्वं गोतेति गोशब्दस्य स्वरूपमित्युक्तम् । ततश्च गोशब्दस्य स्वरूप कोऽर्थो गोजाते स्वरूपमिति हि किलात्रार्थे । ननु गोशब्दस्य स्वरूपमित्युक्ते गोजाते स्वरूपमिति कथ लभ्यत इत्याह–शब्दार्थयोरभेदेन । जातिलक्षणोऽर्थस्ततो जातिलक्षणेनार्थेन गोशब्दस्याभेद· य एव गोशब्द स एव जातिलक्षणोऽर्थ इति । अत एव शब्दस्वरूप प्रवृत्तिनिमित्त कोऽर्थो·गोशब्दस्य स्वरूपं जातिस्तदेव प्रवृत्तिनिमित्तम् ॥—अवस्थाभेदभिन्नव्यक्तिसमवेतमिति । नित्यमेकमनेकवृत्ति सामान्यमित्यनेकवृत्तित्वज्ञापनायाह—वयो बाल्ययौवनवार्धकलक्षणमिति । मान्धकार्यलम्बकर्णादयो भेदा अवस्थाः । एवमुत्तरेषु भावना कार्या ॥—उपचरितभेदव्यक्तिसमवेतमिति । आकाशदिशोरेकत्वादुपचार आश्रीयते ॥—अत्र गर्गादय इति । आदिशब्दादुपचारो गृह्यते । यदा गर्गशब्देन गर्गे उपचारात्तदपत्यानि वा अभिधीयन्ते तदापि भावप्रत्ययान्तस्य जातिरेव प्रवृत्तिनिमित्तम् । ननु उपचारे आश्रिते समासकृत्तद्धितात्तु सबन्ध इति लक्षणस्य प्रवृत्तिरेव नास्ति तत्कथमादिशब्देनोपचारो गृह्यते । यतस्तद्धितप्रत्ययान्तोऽपि तदा गर्गशब्दो नास्ति । उच्यते । तद्धितप्रत्ययान्तत्व योग्यतया व्याख्यातव्य ततो योग्यतयाऽत्राप्यस्ति ॥—सहविवक्षायामिति । युगपद्विवक्षायामित्यर्थ । सा च कथमित्युच्यते । गर्गशब्देनापि सोऽप्यभिधीयते गर्गस्यापत्यानि गर्गाश्चेत्यनया विवक्षया । स एवेति कृत्वाऽभिन्नस्वरूपत्वम् ॥—युगपदपत्यजनपदाभिधायिन इति । युगपदभिधायित्व च कथमित्युच्यते पञ्चालस्यापत्यानि पञ्चाला द्वितीयपञ्चालशब्दस्तु प्रत्ययरहितो जनपदवाची तत· पञ्चालाश्च पञ्चालाश्चेत्येकशेषे कृते युगपदभिधान भवति ॥—प्रवृत्तिनिमित्तसंघात इति । अपत्यजनपदरूप ॥—अक्षत्वमिति । अक्षशब्देनेन्द्रियपाशबिभीतकादीन्युच्यन्ते । पादशब्देन चरणकिरणश्लोकचतुर्थांशप्रत्यन्तपर्वता· । माषशब्देन धान्यविशेषदशार्धगुञ्जवृक्षाविशेषा उच्यन्ते । तत एकशेषे त्वप्रत्ययः । ननु यथा धवखदिरत्वमिति दृष्टान्त उक्तस्ततश्चात्र जातिसहतिर्वाच्या कथ भवति । यतः समासकृत्तद्धितात्तु सबन्ध

यभिचरितसंबन्धास्तु प्रायः कृत्स्नेव भवन्ति । सतो भावः सत्त्वं सत्ता विद्यमानत्वं विद्यमानता । अत्र हि जातावेव भावप्रत्ययः । न हि सद्वस्तु सत्तासंबन्धस्य व्यभिचरतीति त्तासंबन्धानपेक्षणान्न संबन्धे । पाचक इत्यादौ तु संबन्धस्य कादाचित्कत्वात् तदपेक्षः पाचकादिशब्दः स्वार्थमभिधत्त इति ततः सम्बन्धे प्रत्ययो युक्तः । तस्मात्सत्सु वेद्यमानेषु च पदार्थेषु नित्यसमवायिनी शब्दप्रवृत्तिहेतुः सत्तैव भावप्रत्ययवाच्या न तु सत्सत्तयोः संबन्धः कश्चित् इति । ततः स्थितमेतत् रूढ्यादिभ्योऽन्यत्रैव कृत्तद्धितसमासेषु संबन्धाभिधानमिति । 'त्वे वा' ( ६–१–२६ ) इति वचनात्स्त्रीपुंसाभ्यां पक्षे नञ्स्नञावपि भवतः । स्त्रीत्वं स्त्रीता स्त्रैणम् । पुंस्त्वं पुंस्ता पौंस्नम् इति । लकारः त्वार्थः । त्वान्तम् 'आ त्वाच्चादिः' इति नपुंसकम् ॥ ५५ ॥ *प्राक्त्वादगडुलादेः ॥ ७ । १ । ५६ ॥ त्वतलित्यनुवर्तते । ब्रह्मणस्त्व इत्यत्र त्वसंशब्दनं तस्मात् प्राक् त्वतल् इत्येतौ प्रत्ययावधिकृतौ वेदितव्यौ गडुलादीन् वर्जयित्वा । *ते उत्तरत्रैवोदाहरिष्यन्ते । अपवादैः समावेशार्थः कर्मणि वधानार्थश्चाधिकारः । अगडुलादेरिति किम् । गाडुल्यम् । कामण्डलवम् । गडुल विशस्त दायाद वालिश संवादिन् बहुभाषिन् शीर्षघातिन् 'शीर्षघातिन्' कमण्डलु । इति डुलादिः ॥ एषु कमण्डलोः 'य्वृवर्णाल्लघ्वादेः' ( ७—१—६९ ) इत्यण् । शेषेभ्यस्तु राजादेराकृतिगणत्वात् व्यण् । गडुलादेरपि केचिदिच्छन्ति । गडुलत्वम् गडुलता ॥ ५६ ॥*नञ्तत्पुरुषादबुधादेः ॥ ७ । १ । ५७ ॥ प्राक्त्वान्नञ्पूर्वात्तत्पुरुषाद्बुधाद्यन्तवर्जितात्त्वतलौ भवत इत्ययमधिकारो वेदितव्यः व्यणादिबाधनार्थम् । न शुक्लोऽशुक्लस्तस्य भावोऽशुक्लत्वमशुक्लता । वर्णलक्षणव्यण्बाधया त्वतलावेव । अशौक्ल्यम् अकार्ष्ण्यमिति च व्यणन्तेन समासः । समासात्तु व्यणि नञो वृद्धिः प्रसज्ज्येत । एवमपतेर्भावः कर्म वा अपतित्वम् अपतिता । अत्र पत्यन्तलक्षणव्यण्बाधया । अनाधिपत्यम् अगाणपत्यमिति व्यणन्तेन समासः । अराजत्वमराजता । अत्र राजान्तलक्षणव्यण्बाधया । अनाधिराज्यमयौवराज्यमिति व्यणन्तेन समासः । अमूर्खत्वममूर्खता । अत्र गुणाङ्गलक्षणव्यण्बाधया । अमौर्ख्यमजाड्यमिति व्यणन्तेन समासः । अस्थविरत्वमस्थविरता । *अत्र वयोवचनलक्षणाञ्बाधया । अस्थाविरमकैशोरमित्यणन्तेन समासः । अहायनत्वमहायनता । अत्र हायनान्तलक्षणाण्बाधया । अद्वैहायनम् *अत्रैहायनमित्यणन्तेन समासः । अपटुत्वमपटुता । अत्र य्वृवर्णलक्षणाण्बाधया । अपाटवमलाघवमित्यणन्तेन समासः । अरमणीयत्वमरमणीयता । अत्र योपान्त्यलक्षणाकञ्बाधया । अरामणीयकम् अकामनीयकमित्यकञन्तेन समासः । नञ्ग्रहणं किम् । प्राजापत्यम् सैनापत्यम् । तत्पुरुषादिति किम् । न विद्यते पतिरस्य अपतिर्ग्रामः तस्य भावः कर्म वा आपत्यम् । एवमाराज्यम् आहायनम् आरमणीयकम् । अबुधादेरिति किम् । न बुधः अबुधः तस्य भावः कर्म वा आबुध्यम् । आचतुर्यम् । बुध चतुर संगत लवण वड कत रस लस यथा तथा

इति लक्षणात्संबन्ध एव प्रवृत्तिनिमित्तं प्राप्नोति । उच्यते । प्रायिकमेतत् ज्ञातव्यं ततो द्वन्द्वेपि संबन्धो नाभिधीयते किंतु जातिसहतिरेवोच्यते ॥—त्वे वेति वचनादिति । 'प्राग्वतः स्त्रीपुंसाभ्यां नञ्स्नञ्' इत्यस्मादग्रेतनेन सूत्रेणेत्यर्थ ॥—प्राक्त्वा—॥ – ते उत्तरत्रैवेति । प्रत्यययोर्द्वित्वेपि प्रतिसूत्रं व्यक्त्यपेक्षया बहुवचनम् । यद्वा त्वतल्प्रत्ययान्ताः शब्दा' ॥—नञ्त—॥—अत्र वयोवचनेति । स्थविरशब्दस्य केवलस्यैव युवादौ पाठादत्र नञ्पूर्वस्य वयोलक्षणस्याञ एव प्राप्तिस्तेनास्थाविरमित्यत्र युवाद्यण् ॥—अत्रैहायनमिति । त्रयो हायना यस्य गृहस्य त्रिहायनस्य भावः ।

यथातथ यथापुर ईश्वर क्षेत्रज्ञ संवादिन् संवेशिन् संभाषिन् बहुभाषिन् शीर्षघातिन् समस्थ विषमस्थ पुरस्थ परमस्थ मध्यस्थ मध्यमस्थ दुष्पुरुष कापुरुष विशाल । इति बुधादिः । एभ्यो नञ्तत्पुरुषेभ्यो राजादित्वात् ध्यण् । गड्डुलविशस्तदायादानामपि पाठं केचित् इच्छन्ति । अन्ये तु बुधादीनामष्टानामेव प्रतिषेधमिच्छन्ति । एषामेव च विकल्पमपरे । अथ ध्यणन्तानामेषां नञ्समासो भवति वा नवा बुधस्य भावः कर्म वा बौध्यम् न बौध्यम् अबौध्यमिति । भवतीत्येके । न भवतीत्यन्ये ॥ ५७ ॥ पृथ्वादेरिमन् वा ॥ ७ । १ । ५८ । पृथु इत्येवमादिभ्यस्तस्य भावे इमन् प्रत्ययो वा भवति । प्राक्त्वादित्यधिकारात् त्वतलौ च । वावचनाद्यथाणादिः प्राप्नोति सोऽपि भवति । पृथोर्भावः प्रथिमा पृथुत्वं पृथुता पार्थवम् । म्रदिमा मृदुत्वं मृदुता मार्दवम् । बहुलस्य भावो बंहिमा । इमनि बहुलस्य 'प्रियस्थिर' ( ७—४—३८ ) इत्यादिना बंहभावः । बहुलत्वं बहुलता बाहुल्यम् । ध्यण् । वत्सिमा वत्सत्वं वत्सता वात्सं, वयोलक्षणोऽञ् । पृथु मृदु पटु महि तनु लघु बहु साधु आशु उरु गुरु खण्डु पाण्डु बहुल चण्ड खण्ड अकिंचन बाल होड पाक वत्स मन्द स्वादु ऋजु वृष कटु ह्रस्व दीर्घ क्षिप्र क्षुद्र प्रिय महत् अणु चारु वक्र वृद्ध काल तृप्त । इति पृथ्वादिः ॥ ५८ ॥ *वर्णदृढादिभ्यष्ट्यण् च वा ॥ ७ । १ । ५९ ॥ वर्णविशेषवाचिभ्यो दृढादिभ्यश्च तस्य भावे ट्यण् इमन् च इत्येतौ प्रत्ययौ वा भवतः । प्राक्त्वादित्यधिकारात् त्वतलौ च । वावचनाद्यथाण् प्राप्नोति सोऽपि भवति । शुक्लस्य भावः शौक्ल्यं शुक्लिमा शुक्लत्वं शुक्लता । कार्ष्ण्यं कृष्णिमा कृष्णत्वं कृष्णता । काद्रव्यं कद्रिमा कद्रुत्वं कद्रुता । शितेर्भावः शैत्यं शितिमा शितित्वं शितिता शैतम् । वावचनादुवर्णान्तस्य पाश्वरूप्यम् । दृढादि, दार्ढ्यं द्रढिमा दृढत्वं दृढता । वार्ढ्यं *व्रढिमा वृढत्वं वृढता । पारिवृढ्यं परिव्रढिमा परिवृढत्वं परिवृढता । वैमत्यं विमतिमा विमतित्वं विमतिता वैमतम् । सांमत्यं संमतिमा संमतित्वं संमतिता सांमतम् । यवर्णान्तलक्षणोऽण् । टकारो ङ्यर्थः । अर्हतो भावः कर्म वा आर्हन्त्यम् ङी चेत् आर्हन्ती । एवमौचिती यथाकामी सामग्री शैली पारिख्याती आनुपूर्वी । दृढ वृढ परिवृढ कृश भृश चुक्र शुक्र आम्र ताम्र अम्ल लवण शीत उष्ण तृष्णा जड बधिर मूक मूर्ख पण्डित मधुर वियात विलात विमनस् विशारद विमति संमति संमनस् । इति दृढादिः । बहुवचनादाकृतिगणोऽयम् । तेन स्थैर्यं स्थेमेत्याद्यपि सिद्धम् ॥ ५९ ॥ *पतिराजान्तगुणाङ्गराजादिभ्यः कर्मणि च ॥ ७ । १ । ६० ॥ पत्यन्तेभ्यो राजान्तेभ्यो गुणाङ्गेभ्यो राजादिभ्यश्च तस्येति षष्ठ्यन्तेभ्यो भावे कर्मणि च क्रियायां ध्यण् प्रत्ययो भवति । प्राक्त्वादित्यधिकारात् त्वतलौ च । पत्यन्त, अधिपतेर्भावः कर्म वा आधिपत्यम् । अधिपतित्वम् । अधिपतिता । एवं नारपत्यम् बार्हस्पत्यम् प्राजापत्यम् सैनापत्यम् । राजान्त, आधिराज्यम् । अधिराजत्वम् । अधिराजता । एवं सौराज्यम् यौवराज्यम् । गुणाङ्ग, *द्रव्याश्रयी गुणः । गुणोऽङ्गं निमित्तं येषां प्रवृत्तौ ते गुणाङ्गाः गुणद्वारेण ये गुणिनि वर्तन्ते

अत्रावयोऽर्थत्वात् 'चतुस्त्र्येहायनस्य वयसि' इति न णत्वम् ॥—वर्ण—॥—व्रढिमेति । अत्र मतान्तरेण रत्वम् । एतच्च 'पृथुमृदु'—इत्यत्र कथयिष्यते ॥—पतिराजान्त—॥—द्रव्याश्रयी गुण इति । द्रव्याणामेवाश्रय एवास्यास्तीति । ततो द्रव्यमेवाश्रयो यस्येति जातेर्व्यवच्छेदः । अथ चैवकारोऽन्ययोग व्यवच्छेदयति । नहि जातिर्द्रव्यमेवाश्रयति किंतु गुणमपि इति जातिर्गुणो न भवति ।

*न तु गुणवचना एव। मौढ्यम् मूढत्वम् मूढता। मौखर्यम्। वैदुष्यम्। राजादि, राज्यम् राजत्वं राजता। काव्यं कवित्वं कविता। ब्राह्मण्यं ब्राह्मणत्वं ब्राह्मणता। चकारो भावे कर्मणि चेत्युभयसमुच्चयार्थः। राजन् कवि ब्राह्मण माणव दण्डमाणव वाडव चौर धूर्त *आराधय विराधय उपराधय अपिराधय *अनृशंस कुशल चपल निपुण पिशुन *चौक्ष स्वस्थ विश्वस्त विफल विशस्य पुरोहित ग्रामिक खण्डिक दण्डिक कर्मिक चर्मिक वर्मिक शिलिक सूतक अजिनिक अञ्जनिक अञ्जलिक छत्रिक सूचक सुहित वाल मन्द होड। राजादिराकृतिगणः॥ ६०॥ अर्हतस्तोन्त् च ॥ ७।१।६१॥ अर्हत्शब्दात् षष्ठ्यन्ताद्भावे कर्मणि चार्थे त्यण् प्रत्ययो भवति तत्संनियोगे च तकारस्य न्त् इत्यादेशो भवति। अरिहननात् रजोहननात् रहस्याभावाच्च अर्हन् पृषोदरादित्वात्। यद्वा, चतुस्त्रिंशतमतिशयान् सुरेन्द्रादिकृतां पूजां वार्हतीति अर्हन्। तस्य भावः कर्म वा आर्हन्त्यम्। आर्हन्ती। प्राक्त्वादिति त्वतलौ च। अर्हत्त्वम्। अर्हत्ता ॥ ६१ ॥ सहायाद्वा ॥ ७।१।६२॥ सहायशब्दात्तस्य भावे कर्मणि च त्यण् प्रत्ययो वा भवति। वावचनात्पक्षे योपान्त्यलक्षणोऽकञ्। प्राक्त्वादिति त्वतलौ च। सहायस्य भावः कर्म वा साहाय्यम्। साहायकम्। सहायत्वम्। सहायता ॥ ६२॥ सखिवणिग्दूताद्यः॥ ७।१।६३॥ सखिवणिज्दूत इत्येतेभ्यस्तस्य भावे कर्मणि च यः प्रत्ययो भवति प्राक्त्वादिति त्वतलौ च। सख्युर्भावः कर्म वा सख्यम् सखित्वम् सखिता। वणिज्या वणिज्यम् वणिक्त्वं वणिक्ता। दूत्यम् दूतत्वं दूतता। राजादेराकृतिगणत्वात् त्यणपि। वाणिज्यम्। दौत्यम्॥ ६३॥ स्तेनान्नलुक् च॥७।१।६४॥ स्तेनशब्दात्तस्य भावे कर्मणि च यः प्रत्ययो भवति तत्संनियोगे च न इत्येतस्य लुग् भवति। प्राक्त्वादिति त्वतलौ च। स्तेनस्य भावः कर्म वा स्तेयम्। स्तेनत्वम्। स्तेनता। राजादिदर्शनात् स्तैन्यमित्यपि भवति ॥ ६४ ॥ *कपिज्ञातेरेयण्॥ ७।१। ६५ ॥ कपि ज्ञाति इत्येताभ्यां तस्य भावे कर्मणि च एयण् प्रत्ययो भवति त्वतलौ च। कपेर्भावः कर्म वा कापेयम्। कपित्वम्। कपिता। ज्ञातेयम्। ज्ञातित्वम्। ज्ञातिता। कपेः *इकारान्तत्वादणि प्राप्ते ज्ञातेश्च प्राणिजातित्वादञि प्राप्ते वचनम् ॥ ६५ ॥ प्राणिजातिवयोर्थादञ् ॥ ७।१।६६॥ प्राणिजातिवाचिनो वयोवचनाच्च तस्य भावे कर्मणि चाञ् प्रत्ययो भवति त्वतलौ च। अश्वस्य भावः कर्म वा आश्वम् अश्वत्वम् अश्वता। गार्दभम्। माहिषम्। द्वीपिनो द्वैपम्। हस्तिनो हास्तम्। अत्र 'नोऽपदस्य तद्धिते' (७-४-६१) इति अन्त्यस्वरादिलोपः। वयोऽर्थ, कुमारस्य भावः कर्म वा कौमारम्। कुमारत्वम्। कुमारता। कैशोरम्। शावम्। वार्करम्। कालभम्। प्राणिग्रहणं किम्। तृणत्वम्। तृणता। जातिग्रहणं किम्। देवदत्तत्वम्। देवदत्तता॥ ६६॥ *युवादेरण्॥ ७।१।६७॥

आश्रय एवेति किमुक्तं भवति केवलो गुणो न भवति किंतु द्रव्यमेवाश्रयति। अनेन चायोगव्यवच्छेदः। तेनोत्क्षेपणावक्षेपणेति या तार्किकाणां क्रिया तस्या गुणसंज्ञा न भवति। यत्तस्या आश्रय एव नास्ति॥—न तु गुणवचना एवेति। नहि मूढो गुणोऽपि भण्यते किंतु मोहगुणद्वारेण गुणिन्येव वर्तते। अतो गुणोऽङ्ग प्रवृत्तिनिमित्तमस्यापि विद्यते इति गुणाङ्गः न तु गुणवचनः। गुणवचना हि पूर्वं गुणे पश्चाद् गुणिनि वर्तन्ते। एतावता रूपादीनां व्युदासः॥—आराधयेति। आङ्पूर्वाद्राधेर्ण्यन्तादत एव निपातनात् शः एवमुत्तरत्रयेऽपि॥—अनृशंसेति। नञ्समासः। तत्रो नञ् योग॥—चौक्षेति। चुक्षा शीलमस्य 'अकृत्या'—इत्यञ्॥—कपि-॥-इकारान्तत्वादिति। यद्यपि कपिशब्दस्य प्राणिजातित्वं तथापि विशेषपरत्वात् 'रथ्युवर्ण'—इत्यणि प्राप्ते॥-युवा॥-

युवादिभ्यः शब्देभ्यस्तस्य भावे कर्मणि चाण् प्रत्ययो भवति त्वतलौ च । यूनो लिङ्गविशिष्टस्यापि ग्रहणात् युवतेर्भावः कर्म वा यौवनम् युवत्वं युवता । चौरादिपाठाद्यौवनिकेऽपि भवति । स्थाविरम् । स्थविरत्वम् । स्थविरता । युवन् स्थविर यजमान कुतुक श्रमण श्रमणक श्रवण कमण्डलुक कुस्त्री दुःस्त्री सुस्त्री सुहृदय दुर्हृदय सुहृत् दुर्हृत् सुभ्रातृ दुर्भ्रातृ वपल परिव्राजक सब्रह्मचारिन् अनृशंस चपल कुशल निपुण पिशुन कुतूहल क्षेत्रज्ञ उद्गातृ उन्नेतृ प्रशास्तृ प्रतिहर्तृ होतृ पोतृ भ्रातृ भर्तृ रथगणक पत्तिगणक सुष्ठु दुष्ठु अध्वर्यु कर्तृ मिथुन कुलीन सहस्र 'सहस्र' कण्डुक कितव । इति युवादिः । स्थविरश्रमणपिशुननिपुणकुशल-चपल-अनृशंसेभ्यो राजादिदर्शनात् व्यणपि भवति । स्थाविर्यं श्रामण्यमित्यादि । पूर्वत्रापि द्वैपादि न सिध्यति । इह त्वञि यौवनादि इत्यत्रणोरुपादानम् ॥ ६७ ॥

हायनान्तात् ॥ ७ । १ । ६८ ॥ हायनान्तेभ्यः शब्देभ्यस्तस्य भावे कर्मणि चाण् प्रत्ययो भवति त्वतलौ च । द्वैहायनम् । द्विहायनत्वम् । द्विहायनता । त्रैहायनम् । चातुर्हायनम् । अत्रावयोवाचित्वात् 'चतुस्त्रेर्हायनस्य वयसि'-(२—३—७५) इति णत्वं न भवति । वयसि तु पूर्वेणाञ् । त्रैहायणम् । चातुर्हायणम् ॥ ६८ ॥

वृवर्णाल्लघ्वादेः ॥ ७ । १ । ६९ ॥ लघुरादिर्यस्येवर्णोवर्णर्वर्णस्य तदन्तान्नाम्नस्तस्य भावे कर्मणि चाण् प्रत्ययो भवति त्वतलौ च । शुचेर्भावः कर्म वा शौचम् शुचित्वं शुचिता । शकुनेः शाकुनम् । मुनेर्भावः कर्म वा मौनम् । संमतेः साम्मतम् । कवेर्भावः कर्म वा काव्यमिति तु राजादिपाठात् । नखरजन्या नाखरजनम् । हरीतक्या हारीतकम् । तितउनस्तैतवम् । पृथोः पार्थवम् । पटोः पाटवम् । लघोर्लाघवम् । वध्वा वाधवम् । पितुः पैत्रम् । आदिग्रहणं समीपमात्रार्थम् । तेन तितउ इत्यत्रा-व्यवहिते शुच्यादौ चैकवर्णव्यवहिते लघुनि भवति । वृवर्णादिति किम् । घटत्वं, पटत्वम् । लघ्वादेरिति किम् । पाण्डुत्वं, कण्डूत्वम् । केचित्तु कृशानोर्भावः कर्म वा कार्शानवम् अरत्नेरारत्नम् अरातेरारातम् इत्यादिष्वपीच्छन्ति । तन्मतसंग्रहार्थं लघ्वादेरिति प्रकृतेर्विशेषणम् न वृवर्णस्येति व्याख्येयम् । तन्मते साम्मतमिति न भवति ॥६९॥

*पुरुषहृदयादसमासे ॥ ७ । १ । ७० ॥ पुरुषहृदय इत्येताभ्यां तस्य भावे कर्मणि चाण् भवति त्वतलौ च *असमासे न चेदनयोः समासो विषयभूतो भवति । पुरुषस्य भावः कर्म वा पौरुषम् पुरुषत्वं पुरुषता । हृदयस्य भावः कर्म वा *हार्दम् । 'हृदयस्य हृल्लासलेखाण्ये' (३—२—९४) इति हृद्भावः । हृदयत्वम् हृदयता । असमास इति किम् । परमपुरुषत्वम् परमहृदयत्वम् सत्पुरुषत्वम् सौहृदय्यम् । *परमपौरुषम् परमहार्दम् इत्यादि मा भूत् ।

सुहृदयदुर्हृदयशब्दयोरणि 'हृदयस्य'-इत्यादेशे 'हृद्ग'-इत्युभयपदवृद्धौ सौहार्दं दौहार्दमिति । एवमुत्तरयोरपि । ततश्च एकतरद्वयोपादानेनैव सिद्धे यत् युगलद्वयोपादानं तदर्थभेदार्थम् ॥—पुरु—॥—असमास इति । प्रसज्य प्रतिषेधः न पर्युदासः । तत्र हि समासादन्यत्र कस्यांचिद्वृत्तौ स्यात् यथा दयो बहुपुरुष इति इह न स्यात् ॥—पौरुषम् । हार्दमिति । असमास इति च विषयसप्तमीयं न सत्सप्तमी । अस्या हि ग्रहणवता नाम्नेति न्यायेन केवलाभ्यामेवाण उक्तत्वात् परमश्चासौ पुरुषश्च परमपुरुषादेः प्राप्तिरेव नास्ति अतो विषयग्रहणात्समासावगवस्थायां परमस्य पुरुषस्य भाव इत्येवंविधायां प्रत्यय' प्रकृत्यादेरिति परिभाषया परमपौरुषमिति स्यात् । ननु परम च तत् पौरुष चेति कृते परमपौरुषमिति भवति वा नवा । उच्यते । साङ्कर्यान्न भवति । एवं हि कृते परमस्य पुरुषस्य भाव. परम च तत्पौरुषं चेति वा कृतमिति विशेषो न ज्ञायते ॥—परमपौरुषं माभूदिति । ततश्च परमस्य पुरुषस्य भाव इति वाक्ये 'सन्महत्'-इ॰

*अत एव निषेधात् *सापेक्षादपि भावप्रत्ययो विज्ञायते । तेन काकस्य कार्ष्ण्यम् वलाकायाः शौक्ल्यम् इत्यादि सिद्धम् । पौरुषमिति प्राणिजात्यणपि सिद्धम् । समासविषये प्रतिषेधार्थं पुरुषोपादानम् ॥ ७० ॥ श्रोत्रियाद्यलुक् च ॥ ७ । १ । ७१ ॥ श्रोत्रियशब्दात्तस्य भावे कर्मणि चाण् प्रत्ययो भवति तत्संनियोगे च य इत्यस्य लोपो भवति त्वतलौ च । श्रोत्रियस्य भावः कर्म वा श्रौत्रम् । श्रोत्रियत्वं श्रोत्रियता । चौरादिपाठादकञपि । श्रौत्रियकम् ॥ ७१ ॥ *योपान्त्याद्गुरूपोत्तमादसुप्रख्यादकञ् ॥ ७ । १ । ७२ ॥ त्रिप्रभृतीनामन्त्यमुत्तमम् तत्समीपमुपोत्तमम्, उपोत्तमं गुरुर्यस्य तस्मात् यकारोपान्त्यात् सुप्रख्यवर्जितात् तस्य भावे कर्मणि चाकञ् प्रत्ययो भवति त्वतलौ च । रमणीयस्य भावः कर्म वा रामणीयकम् । रमणीयत्वम् । रमणीयता । दार्शनीयकम् । कामनीयकम् । औपाध्यायकम् । पानीयकम् । गुरुग्रहणादनेकव्यञ्जनव्यधानेऽपि भवति । आचार्यकम् । गुरुग्रहणं हि दीर्घपरिग्रहार्थं *संयोगपरपरिग्रहार्थं च । अन्यथा दीर्घोपोत्तमादित्युच्येत । योपान्त्यादिति किम् । कापोतं, विमानत्वम् । गुरूपोत्तमादिति किम् । क्षत्रियत्वम् । *कायत्वम् । असुप्रख्यादिति किम् । सुप्रख्यत्वम् । गुणाङ्गत्वात् ट्यणपि । सौप्रख्यम् ॥ ७२ ॥ चौरादेः ॥७।१।७३॥ चौरादिभ्यस्तस्य भावे कर्मणि चाकञ् प्रत्ययो भवति त्वतलौ च । चौरस्य भावः कर्म वा चौरिका चौरकम् । धौर्तिका धौर्तकम् । मानोज्ञकम् । प्रैयरूपकम् । चौरत्वम् । चौरता । चौर धूर्त युवन् ग्रामपुत्र ग्रामसण्ड ग्रामसाण्ड ग्रामकुमार ग्रामकुल ग्रामकुलाल अमुष्यपुत्र अमुष्यकुल शरपत्र शारपत्र मनोज्ञ प्रियरूप अदोरूप अभिरूप बहुल मेधाविन् कल्याण आढ्य सुकुमार छान्दस छात्र श्रोत्रिय विश्वदेव ग्रामिक कुलपुत्र सारपुत्र वृद्ध अवश्यम् । इति चौरादिः ॥ मनोज्ञादीनामकञन्तानां नपुंसकत्वमेव । पूर्वेषां तु 'चौराद्यमनोज्ञाद्यकञिति स्त्रीनपुंसकते' । चौर्यं धौर्त्यं ग्रामिक्यमिति राजादित्वात् ट्यणपि ॥ ७३ ॥ *द्वन्द्वाल्लित् ॥ ७ । १ । ७४ ॥ द्वन्द्वसमासात्तस्य भावे कर्मणि चाकञ् प्रत्ययो भवति स च लित् त्वतलौ च । लित्करणं स्त्रीत्वार्थम् । गोपालपशुपालानां भावः कर्म वा गौपालपशुपालिका । शैष्योपाध्यायिका । *कौत्सकुशिकिका । विश्व पक्षी ना च नरः त्रिश्रोर्भावः कर्म वा वैत्रिका । अत्र 'वृवर्णाल्लघ्वादेः' (७-१-६९) इत्यणि प्राप्ते परत्वादकञ् । *एवं भारतबाहुबलिका । गोपालपशुपालत्वम् । गोपालपशुपालता ॥ ७४ ॥

---

त्यादिना समासविषयो यतो भावपदापेक्षया षष्ठी ततः सामानाधिकरण्यम् इति 'सन्महत्' इति प्राप्ति । ततस्त्वे समानीते सति पुरुषत्व एवंविधेन शब्देन सह परमशब्दस्य समासः । 'षष्ठ्ययत्नाच्छेषे' इत्यनेनैव परमस्यैवाविधस्य पुरुषत्वेन शब्देन सह समासो न भवति 'सन्महत्'—इति सूत्रेण विशेषणविशेष्याभावात् । विशेषणविशेष्यत्व च समानाधिकरण्ये सति सभवति । अत्र पुरुषत्व परमस्येति वैयधिकरण्यम् अत 'षष्ठ्ययत्ना'-इत्यनेनैव समास इति प्रकारद्वयेनापि समासविषयो भवति ॥—अत एवेति । ननु समासे चिकीर्षिते पुरुषद्वयशब्दौ पदान्तरापेक्षौ भवतस्तत्र सापेक्षत्वादेव न भविष्यति किं प्रतिषेधेनेत्याह —सापेक्षादपीत्यादि ॥—योपा —॥ गुरूपोत्तम इत्यत्र 'विशेषणसर्वादि'-इति गुरोः पूर्वनिपात. ॥—संयोगपरेति । संयोगे गुरुरित्यर्थः । तेनाचार्यकमित्यादावनेकव्यञ्जनव्यवधानेऽपि ॥—क्षत्रियत्वम् । कायत्वमिति । प्रथमे गुरुर्नास्ति द्वितीये तु उपोत्तमत्व नास्ति ॥—द्वंद्वा —॥—कौत्सकुशिकिकेति । कुत्सस्य कुशिकस्य चापत्यानि प्रथमे ऋष्यण् द्वितीये विदाद्यञ् । 'भृग्वङ्गिरस्कुत्स'-'यञञोऽश्यापर्णे'-इति च यथाक्रम लुक् ॥—एवमिति । अत्राप्यणि प्राप्ते इत्यर्थः । अत्र बाहुबलिशब्द इकारान्तो ग्राह्य. अन्य-

भत्राचिनश्चरणवाचिनश्च शब्दात्तस्य भावे कर्मणि च लिदकञ् प्रत्ययो भवति त्वतलौ च श्लाघादिषु *विष-
*गोत्रचरणाच्छलाघात्याकारप्राप्त्यवगमे॥७।१।७५॥ गोत्रवाचिनश्चरणवाचिनश्च शब्दात्तस्य भावे कर्मणि च लिदकञ् प्रत्ययो भवति त्वतलौ च श्लाघादिषु *विष-
यभूतेषु। श्लाघा विकत्थनम्। अत्याकारः पराधिक्षेपः। विषयभावः पुनः श्लाघादीनां क्रियारूपाणां भावकर्मणी प्रति *साध्यत्वात्। गोत्रमपत्यम् प्रवराध्याय*पठितं च। चरणं
शाखानिमित्तं कठादि। गार्ग्यस्य भावः कर्म वा गार्गिका तया श्लाघते। काठिकया विकत्थते। गार्गिकयात्याकुरुते। काठिकयाधिक्षिपति। गार्गिका प्राप्तवान्।
काठिकामधिगतवान्। गार्गिकामवगतवान्। काठिकां विज्ञातवान्। गार्ग्यत्वेन गार्ग्यतया कठत्वेन कठतया श्लाघते। श्लाघादिष्विति किम्। गार्गम्। काठम्।
प्राणिजातिलक्षणोऽञ्॥७५॥ *होत्राभ्य ईयः॥७।१।७६॥ होत्राशब्द *ऋत्विग्विशेषवचनः। ऋत्विग्विशेषवाचिभ्यस्तस्य भावे कर्मणि च ईयः प्रत्ययो भवति त्वतलौ च।
मैत्रावरुणस्य भावः कर्म वा मैत्रावरुणीयम्। मैत्रावरुणत्वम्। मैत्रावरुणता॥ अग्नीधः अग्नीधीयम्। नेष्टुः नेष्ट्रीयम्। पोतुः पोत्रीयम्। ब्राह्मणाच्छंसिनो ब्राह्मणाच्छंसी-
यम्। हूयते आभिरिति होत्रा ऋच इत्येके। तान्येवोदाहरणानि। मैत्रावरुणादयस्तु ऋग्वचनाः। बहुवचनं स्वरूपविधिनिरासार्थम्॥७६॥ *ब्रह्मणस्त्वः
॥७।१।७७॥ होत्राभ्य इति वर्तते। ब्रह्मन् इत्येतस्मादृत्विग्वाचिनस्तस्य भावे कर्मणि च त्वः प्रत्ययो भवति। *ईयापवादः। ब्रह्मणो भावः कर्म वा ब्रह्मत्वम्।
होत्राधिकाराद् ब्राह्मणपर्यायाज्जातिवाचिनो ब्रह्मन्शब्दात् *तलपि भवति। ब्रह्मत्वम् ब्रह्मता॥७७॥ शाकटशाकिनौ क्षेत्रे॥७।१।७८॥ तस्येति वर्तते। क्षेत्रं धान्या-
दीनामुत्पत्त्याधारभूमिः। तस्येति षष्ठ्यन्तात्क्षेत्रेऽर्थे शाकटशाकिन इत्येतौ प्रत्ययौ भवतः। इक्षूणां क्षेत्रम् इक्षुशाकटम्। इक्षुशाकिनम्। मूलकशाकटं मूलक-
शाकिनम्। शाकशाकटम्। शाकशाकिनम्॥७८॥ धान्येभ्य ईनञ्॥७।१।७९॥ धान्यवाचिभ्यः षष्ठ्यन्तेभ्यः क्षेत्रेऽर्थे ईनञ् प्रत्ययो भवति। कुलत्थानां
क्षेत्रं कौलत्थीनम्। मौद्गीनम्। प्रैयङ्गवीणम्। नैवारीणम्। कौद्रवीणम्॥७९॥ व्रीहिशालेरेयण्॥७।१।८०॥ व्रीहिशालि इत्येताभ्यां तस्य क्षेत्रे एयण्
प्रत्ययो भवति। ईनञोऽपवादः। व्रीहेः क्षेत्रं व्रैहेयम्। शालेयम्॥८०॥ यवयवकषष्टिकाद्यः॥७।१।८१॥ यवयवकषष्टिक इत्येतेभ्यस्तस्य क्षेत्रे यः

---

यणोऽप्राप्ति ॥—गोत्रचरणा—॥—विषयभूतेष्विति ॥ न विशेषणेषु। यतो विशेषणानि न घटन्ते। कुत इति चेत्। उच्यते। भाव इति शब्दस्य प्रवृत्तिनिमित्तमिह गृह्यते। गार्गिकाइत्या-
दिषु न श्लाघादयः प्रवृत्तिनिमित्तान्यपि तर्हि गर्गत्वमिति। कर्म्म इति च क्रिया गृह्यते अत क्रिया क्रियाविशेषणं न सम्भवतीति श्लाघादिषु विषयभूतेष्विति व्याख्यातम्॥—साध्यत्वादिति। भाव-
कर्म्मभ्यां कर्तृभ्या श्लाघादयो यत्र साध्यन्ते इति तात्पर्यम्। विषयभावइत्यादिना श्लाघादीनां भावकर्म्मणी प्रति विषयमाह। एषां च भावकर्म्मणी प्रति विषयत्व भावकर्म्मसाध्यत्वात्। क्रियारूप-
त्वाच्च तेषां भावकर्म्मणी प्रति साध्यत्वमुपपद्यत एव भावकर्म्मणो सत्त्वात्मनोस्तत्र कारकत्वोपपत्तेरिति श्लाघादीनां कारके भावे कर्म्मणि च प्रत्यय इत्यर्थ। अयमर्थः। श्लाघाया हि क्रियात्वाश्च
कारकैरेव साध्या। कारकाणि चात्र भावकर्म्मरूपाण्येवेति तै. साध्यत्वम्॥—पठित चेति। प्रवरसाध्य गोत्र तस्याध्यायस्तत्र पठित यत् गोत्रं तदप्यभिधीयते। एतेन किमुक्त भवति द्विविध-
मिह गोत्र गृह्यते तेन मित्रयोर्भावः कर्म वेति कृते मैत्रेयिकेत्यत्र प्रयोजनम्॥—होत्रा—॥—ऋत्विग्विशेषवचन इति। स्त्रीलिङ्गोपि सन् ऋत्विजः प्राह॥—ब्रह्म—॥—ईयापवाद इति। ईयेत्युपलक्ष-
ण तलोऽप्ययमपवादः। अन्यथा ईयस्यैव प्रतिषेधे ब्रह्मणो नेति सूत्र कुर्यात्॥—तलपीति। न केवल 'भावे त्वतल्' इत्यनेन त्वः किन्तु तलपि। अयमर्थः। ऋत्विग्वचनस्य ब्राह्मण-

प्रत्ययो भवति। ईनञोऽपवादः । यवानां क्षेत्रं यव्यं. यवक्यं, षष्टिक्यम् । षष्टिरात्रेण पच्यमाना व्रीहयः षष्टिकाः । अत एव निपातनादि सिद्धिः ॥ ८१ ॥ वाणुमाषात् ॥ ७ । १ । ८२ ॥ अणुमाष इत्येताभ्यां षष्ठ्यन्ताभ्यां क्षेत्रेऽर्थे यः प्रत्ययो भवति वा । पक्षे ईनञ् । अणूनां क्षेत्रमणव्यम् । आणवीनम् । माष्यम् । माषीणम् ॥ ८२ ॥ वोमाभङ्गातिलात् ॥ ७ । १ । ८३ ॥ उमाभङ्गातिल इत्येतेभ्यः षष्ठ्यन्तेभ्यः क्षेत्रेऽर्थे यः प्रत्ययो वा भवति । पक्षे ईनञ् ॥ उमाभङ्गे अपि धान्ये एवेष्येते। उमानां क्षेत्रम् उम्यम् औमीनम्। भङ्ग्यम्। भाङ्गीनम्। तिल्यम्। तैलीनम्। योगविभाग उत्तरार्थः॥८३॥ अलाब्वाश्च कटो रजसि॥७।१।८४॥ अलाबूशब्दाच्चकारादुमाभङ्गातिलेभ्यश्च षष्ठ्यन्तेभ्यो रजस्यर्थे कटः प्रत्ययो भवति । अलाबूनां रजः अलाबूकटम् । उमाकटम् । भङ्गाकटम् । तिलकटम् ॥ ८४ ॥ अह्ना गम्येऽश्वादीनञ् ॥ ७ । १ । ८५ ॥ तस्येति षष्ठ्यन्तादश्वशब्दादेकेनाह्ना गम्येऽर्थे ईनञ् प्रत्ययो भवति । अश्वस्यैकेनाह्ना गम्यः आश्वीनोऽध्वा । अह्नेति किम् । अश्वस्य मासेन गम्यः ॥ ८५ ॥ कुलाज्जल्पे॥७।१।८६ ॥ तस्येति षष्ठ्यन्तात्कुलशब्दाज्जल्पेऽर्थे ईनञ् प्रत्ययो भवति । कुलस्य जल्पः कौलीनम्॥ ८६ ॥ पील्वादेः कुणः पाके ॥ ७ । १ । ८७ ॥ पीलु इत्यादिभ्यः षष्ठ्यन्तेभ्यः पाकेऽर्थे कुणः प्रत्ययो भवति । पीलूनां पाकः पीलुकुणः । कर्कन्धुकुणः । पीलु कर्कन्धु शमी करीर बदर कुवल अश्वत्थ खदिर । इति पील्वादिः ॥ ८७ ॥ कर्णादेर्मूले जाहः ॥ ७ । १ । ८८ ॥ कर्णादिभ्यः षष्ठ्यन्तेभ्यो मूलेऽर्थे जाहः प्रत्ययो भवति । कर्णस्य मूलं कर्णजाहम् । अक्षिजाहम् । कर्ण अक्षि आस्य वक्त्र नख मुख केश दन्त ओष्ठ भ्रू शृङ्ग पाद गुल्फ पुष्प फल । इति कर्णादिः ॥ ८८ ॥ *पक्षात्तिः ॥ ७ । १ । ८९ ॥ पक्षशब्दात्षष्ठ्यन्तान्मूलेऽर्थे तिः प्रत्ययो भवति । पक्षस्य मूलं *पक्षतिः ॥ ८९ ॥ हिमादेलुः सहे ॥ ७ । १ । ९० ॥ हिमशब्दात्षष्ठ्यन्तात्सहे सहमानार्थे एलुः प्रत्ययो भवति । हिमस्य सहः हिमं सहमानः हिमेलुः ॥ ९० ॥ *बलवातादूलः ॥ ७ । १ । ९१ ॥ बलवात इत्येताभ्यां षष्ठ्यन्ताभ्यां सहेऽर्थे ऊलः प्रत्ययो भवति । बलस्य सहः बलं सहमानः बलूलः । *वातूलः ॥ ९१ ॥ शीतोष्णतृप्रादालुरसहे ॥ ७ । १ । ९२ ॥ शीत उष्ण तृप्र इत्येतेभ्यः षष्ठ्यन्तेभ्योऽसहेऽसहमानेऽर्थे आलुः प्रत्ययो भवति । शीतस्यासहः शीतमसहमानः शीतालुः । उष्णालुः । तृप्रालुः । तृप्रम् दुःखम् ॥ ९२ ॥ *यथामुखसंमुखादीनस्तद्दृश्यतेऽस्मिन्॥७।१।९३॥ यथामुखसंमुख इत्येताभ्यां तदिति प्रथमान्ताभ्यामस्मिन्निति सप्तम्यर्थे ईनः प्रत्ययो भवति यत्तत्प्रथमान्तं दृश्यते सत्तद्भवति। यथामुखं दृश्यतेऽस्मिन् यथामुखीनः आदर्शादिः। मुखस्य सदृशोऽर्थो यथामुखं प्रतिबिम्ब उच्यते। अत एव निपातनाद्यथाथा (३-१-४१) इति प्रतिषेधेऽप्यव्ययीभावः । समं मुखं संमुखम् समं मुखमस्यानेनेति वा संमुखं प्रतिबिम्बमेव । अत एव निपातनात्समशब्दस्य *अन्तलोपः । संमुखं दृश्यतेऽस्मिन्निति संमुखीनः । यथामुखीनः सीताया इति । संमुखीनो हि जयो रन्ध्रप्रहारिणामिति च उपमानात् ॥ ९३ ॥ सर्वादेः पथ्यङ्गकर्मपत्रपात्रशरावं व्याप्नोति ॥ ७ । १ । ९४ ॥

वचनस्य च त्वप्रत्ययः समान. तेन जातिवचनस्य तलपि भवतीत्यर्थ । उपलक्षण चेद तेन ब्राह्मणो भाव. कर्म वा प्राणिजात्याजि ब्राह्ममित्यपि ॥—पक्षा—॥—पक्षतिरेति । मूलेऽप्यभिधेये शब्दशक्तिस्वाभाव्यात् स्त्रीलिङ्गः ॥—बल—॥—वातूल इति । वातसहः । वातासहोऽप्येतदर्थ एवेति शब्दभेद. ॥—यथा—॥—अन्तलोप इति । ननु समशब्द एव वृत्तिविषये समशब्दस्यार्थे

सर्वशब्दपूर्वेभ्यः पथिन् अङ्ग कर्मन् पत्र पात्र शराव इत्येतदन्तेभ्यो निर्देशादेव द्वितीयान्तेभ्यो व्याप्नोतीत्यर्थे ईनः प्रत्ययो भवति । सर्वपथं व्याप्नोति सर्वपथीनो रथः । सर्वपथान् व्याप्नोति सर्वपथीनमुदकम् । एवं सर्वाङ्गीणस्तापः । सर्वकर्मीणः पुरुषः । सर्वपत्रीणः सारथिः । सर्वपात्रीण ओदनः । सर्वशरावीण ओदनः । सर्वादेरिति किम् । पन्थानं व्याप्नोति ॥ ९४ ॥ आप्रपदम् ॥ ७ । १ । ९५ ॥ प्रगतं पदं प्रपदम् । पदाग्रमित्यर्थः । अथवा प्रवृद्धं पदं प्रपदम् पदस्योपरिष्टात् संस्था खलुको गुल्फ इति यावत् । आङ् मर्यादायामभिविधौ वा । आ प्रपदात् आप्रपदम् 'पर्यपाङ्'—( ३-१-३२ ) इत्यव्ययीभावः । आप्रपदशब्दान्निर्देशादेव द्वितीयान्तात् व्याप्नोतीत्यर्थे ईनः प्रत्ययो भवति । आप्रपदं व्याप्नोति न तदतिवर्तते यः स आप्रपदीनः पटः । अनेन पटस्य प्रमाणमाख्यायते ॥ ९५ ॥ *अनुपदं बद्धा ॥ ७ । १ । ९६ ॥ अनुपदशब्दान्निर्देशादेव द्वितीयान्ताद्बद्धा इत्येतस्मिन्नर्थे ईनः प्रत्ययो भवति । *अनुपदं बद्धा अनुपदीना उपानत् । पदप्रमाणेत्यर्थः । अनुपदमिति 'दैर्घ्येऽनुः'—( ३—१—३४ ) इत्यव्ययीभावः ॥ ९६ ॥ *अयानयं नेयः ॥ ७ । १ । ९७ ॥ अयानयशब्दान्निर्देशादेव द्वितीयान्तान्नेय इत्येतस्मिन्नर्थे ईनः प्रत्ययो भवति । *अयानयं नेयोऽयानयीनः शारः । फलकशिरसि स्थित उच्यते । अयः प्रदक्षिणं गमनम् । अनयः प्रसव्यं वामम् । शारिद्यूते हि केचिच्छाराः प्रदक्षिणं गच्छन्ति केचित्प्रसव्यम् । तेषां गतिरयसहितोऽनयोऽयानय इत्युच्यते । *यास्मिन् परशारैः पदानामप्रवेशः तदुभयं नेयः अयानयीन इति *रूढिः । अथवा अयः शुभं दैवम् । अनयोऽशुभम् । शुभाद्दैवादपवर्ततेऽशुभं दैवं यस्मिन् कर्मणि तदयानयं शान्तिकर्म चतुःशरणप्रतिपत्तिरनाघातघोषणं देवगुरुपूजा तपो दानं ब्रह्मचर्यादिनियमः तत्रो नेयः कारयितव्यः सोऽयानयीन ईश्वर इति ॥ ९७ ॥ सर्वान्नमत्ति ॥ ७ । १ । ९८ ॥ सर्वान्नशब्दाद्द्वितीयान्तात् अत्तीत्यस्मिन्नर्थे ईनः प्रत्ययो भवति । सर्वशब्दः प्रकारकात्स्न्ये । सर्वप्रकारमन्नं सर्वान्नम् तदत्ति सर्वान्नीनो भिक्षुः नियमरहितः ॥ ९८ ॥ *परोवरीणपरंपरीणपुत्रपौत्रीणम् ॥ ७ । १ । ९९ ॥ परोवरीणादयः शब्दा अनुभवत्यर्थे ईनप्रत्ययान्ता निपात्यन्ते । परावरशब्दाद्द्वितीयान्तादनुभवत्यर्थे ईनः प्रत्ययोऽवरशब्दाकारस्य चोत्वं प्रत्ययसंनियोगे निपात्यते । परांश्चावरांश्चानुभवति परोवरीणः । *पारोवर्यमित्यत्रातीतक्रमवाचि परोवरमिति शब्दान्तरम् । परंपरीणेति परपरतरशब्दात् द्वितीयान्तादनुभवत्यर्थे ईनः परंपरभावश्च । परान् परतरांश्चानुभवति परंपरीणः । मात्रिपरम्परा

वर्णिष्यते ततः किं समस्यान्तलोपेन । उच्यते । समशब्दस्यापि विशेषणसमासादौ मुखशब्देन संमुख इति यथा स्यादित्येवमर्थम् ॥—अनु—॥—अनुपदमिति । पद लक्ष्यीकृत्यायतं बन्धनमिति क्रियाविशेषणत्वात् द्वितीयाभेदोपचाराद्बद्धेत्युच्यते ॥—अया—॥—अयानयं नेय इति । कर्म्मणि द्वितीया । यद्यपि नेयशब्देन कर्म्माभिधीयते तथापि अयानयशब्दाद्द्वितीया भवत्येव द्विकर्म्मकत्वात् । शार इत्येतदेव हि कर्म्माभिहितं नेतरत् ॥—यास्मिन्निति । दक्षिणगमने वामगमने च परशारा बाधिता भवन्ति । तस्मिन् परशारैः कर्तृभिः पदानां गृहकाणां कर्म्मभूतानां स्वशारैर्व्याप्तत्वात् अप्रवेश ॥—रूढिरिति । प्रदक्षिणप्रसव्यगामी च शारो नीयमानो न सर्वोऽयानयीन इत्युच्यते अपि तु कश्चिदेवेति । अयमर्थः । यत्र फलके अक्षैर्दीव्यन्ति तस्य यच्छिरोभूतं स्थानं कितवानां प्रसिद्धं तत्रस्थ एव शारोऽयानयीनः ॥—परो—॥—पारोवर्यमिति । यदि प्रत्ययसंनियोगे ओत्वं तत्कथमत्र तदभावे इत्याशङ्का ॥

मन्त्रं भिनत्तीत्यत्र परम्पराशब्द आवन्तो बाहुल्यार्थः प्रकृत्यन्तरम् ॥ पुत्रपौत्रीणेति पुत्रपौत्रशब्दात् द्वितीयान्तादनुभवत्यर्थे ईनः। पुत्रांश्च पौत्रांश्चानुभवति पुत्रपौत्रीणः ॥ ९९ ॥ **यथाकामानुकामात्यन्तं गामिनि ॥ ७ । १ । १०० ॥** यथाकामानुकाम असन्त इत्येतेभ्यो निर्देशादेव द्वितीयान्तेभ्यो गामिन्यर्थे ईनः प्रत्ययो भवति। यथाकामं गामी यथाकामीनः, अनुकामीनः। यथेच्छं गामीत्यर्थः । अत्यन्तं गामी अत्यन्तीनः। भृशं गन्तेत्यर्थः ॥ १०० ॥ **पारावारं व्यस्तव्यत्यस्तं च ॥ ७ । १ । १०१ ॥** पारावारशब्दात्समस्ताद्व्यस्ताद्व्यत्यस्ताच्च निर्देशादेव द्वितीयान्ताद्गामिन्यर्थे ईनः प्रत्ययो भवति । पारावारं गामी पारावारीणः । पारीणः। अवारीणः। अवारपारीणः ॥ १०१ ॥ **अनुग्वलम् ॥ ७ । १ । १०२ ॥** अनुगुशब्दाद्द्वितीयान्तादलंगामिनि ईनः प्रत्ययो भवति। अलं पर्याप्तमित्यर्थः । गवां पश्चादनुगु तदलं गामी अनुगवीनो गोपालकः ॥ १०२ ॥ **अध्वानं येनौ ॥ ७ । १ । १०३ ॥** अलं गामिनीति वर्तते। अध्वन्शब्दान्निर्देशादेव द्वितीयान्तादलंगामिनि य ईन इत्येतौ प्रत्ययौ भवतः। अध्वानमलं गामी अध्वन्यः अध्वनीनः ॥ १०३ ॥ **अभ्यमित्रमीयश्च ॥ ७ । १ । १०४ ॥** अभ्यमित्रशब्दान्निर्देशादेव द्वितीयान्तादलंगामिनि ईयः प्रत्ययो भवति चकाराद्येनौ च। अभ्यमित्रमलंगामी अभ्यमित्रीयः । अभ्यमित्र्यः। अभ्यमित्रीणः। अमित्राभिमुखं भृशं गन्तेत्यर्थः ॥ १०४ ॥ ***समांसमीनाद्यश्वीनाद्यप्रातीनागवीनसाप्तपदीनम् ॥ ७ । १ । १०५ ॥** समांसमीनादयः शब्दा ईनप्रत्ययान्ता निपात्यन्ते। साप्तपदीनस्त्वीनञ्प्रत्ययान्तः। समांसमीनेति समांसमामिति वीप्साद्वितीयान्तात्समुदायाद्गर्भं धारयत्यर्थे ईनः पूर्वपदविभक्तेश्चालुप्। समां समां गर्भं धारयति समांसमीना गौः। समामिति 'कालाध्वनोर्व्याप्तौ' (२—२—४२) इति* द्वितीया। अन्ये समायां समायां विजायते गर्भं विमुञ्चति समांसमीनेति पूर्वपदस्य यलोपमाहुः । व्याप्त्यभावाचाधिकरणे सप्तमी । अद्यश्वीनेति अद्यश्वःशब्दयोरर्थे समासः विजनिष्यमाणेऽर्थे विजननस्य प्रत्यासत्तौ गम्यमानायामीनः। अद्य श्वो वा विजनिष्यमाणा अद्यश्वीना गौः । *एवं नाम प्रत्यासन्नप्रसवेत्यर्थः । अन्ये तु प्रत्यासत्तौ गम्यमानायां भविष्यत्यर्थे प्रत्ययमाहुः। अद्य श्वो वा भविष्यति अद्यश्वीनो लाभः। अद्यश्वीनं मरणम् । एवमद्यप्रातःशब्दादीनः। अद्यप्रातीना गौः । अद्यप्रातीनो लाभः। अद्यप्रातीनं मरणम्। आगवीनेति आगोप्रतिदानशब्दात्कारिण्यर्थे ईनः प्रतिदानशब्दस्य च लुक्। आगोप्रतिदानं कारी आगवीनः कर्मकरः। गवा भृतो य आ तस्या गोः प्रत्यर्पणात्कर्म करोति स आगवीनः । रूढिशब्दोऽयम् । यत्किंचिदादाया तस्य प्रतिदानात्कर्मकर एवमुच्यते इत्येके। अन्ये तु आ गोः प्राप्तेः कर्म कारी आगवीन इत्याहुः। साप्तपदीनेति सप्तपदशब्दात्तृतीयान्तात्तदवाप्येऽर्थे ईनञ् यत्तदवाप्यं तच्चेत्सख्यं सखा वा भवति। सप्तभिः पदैरवाप्यम् साप्तपदीनं सख्यम् । साप्तपदीनः सखा । साप्तपदीनं मित्रम् ॥ १०५ ॥ **अषडक्षाशितंग्वलंकर्मालंपुरुषादीनः ॥ ७ । १ । १०६ ॥** अषडक्ष आशितंगु अलंकर्मन् अलंपुरुष इत्येतेभ्यः स्वार्थे ईनः प्रत्ययो भवति। अविद्यमानानि षडक्षीण्यस्मिन् अषडक्षीणो मन्त्रः। 'सक्थ्यक्ष्णः स्वाङ्गे' (७-३-१२६) इति टान्तादीनः। अषडक्षीणा क्रीडा। द्वाभ्यां साध्यत

—समां-॥—द्वितीयेति । ननु समायाः कथ व्याप्तिरेकादशे एव गर्भग्रहणात्। सत्यम् । अवयवे समुदायोपचारात् ॥—एवमिति । पूर्वोक्तरीत्या विजनिष्यमाणे भविष्यति चार्थे इत्यर्थः ॥

इत्यर्थः । अपदक्षीणः कन्दुकः । येन द्वौ क्रीडतः । अदृश्यानि पदक्षीणस्य अपडक्षीणश्चैत्रः पितुः पितामहस्य पुत्रस्य वा ध्रुवोच्यते । इन्द्रियपर्यायो वाक्षशब्दः । अविद्यमानानि पदक्षाण्यस्यापडक्षीणोऽमनस्कः । विचारेण विना प्रवर्तते इत्यर्थः । आशिता गावोऽस्मिन्निति आशितंगु । अस्मादेव निपातनात्पूर्वपदस्य मोऽन्तः । तत ईनः । आशितंगवीनमरण्यम् । अलं कर्मणे अलं पुरुषाय 'मात्यवपरि'—( ३-१-४७ ) इत्यादिना समासः तत ईनः । अलंकर्मीणः । अलंपुरुषीणः । राजाधीनमिति स्वधीनेन शौण्डादित्वात्सप्तमीसमासः । अस्ति चाधीनशब्दः । अस्मास्वधीनं किमु निःस्पृहाणाम् इति, वाक्यं हि वक्तर्यधीनं भवति इति, तदेतत् प्रयोक्तर्यधीनं भवतीति ॥ १०६ ॥ *अदिक्स्त्रियां वाञ्चः ॥ ७ । १ । १०७ ॥ अञ्चत्यन्तान्नाम्न ईनः प्रत्यया वा भवति स्वार्थे न चेत्स दिशि स्त्रियां वर्तते । प्राक् प्राचीनम् । प्रत्यक् प्रतीचीनम् । उदक् उदीचीनम् । अवाङ् अवाचीनम् । सम्यङ् समीचीनः । अदिक्स्त्रियामिति किम् । प्राची उदीची दिक् । दिग्ग्रहणं किम् । प्राचीना शाखा । अवाचीना ब्राह्मणी ।*स्त्रीग्रहणं किम् ।*प्राक् प्राचीनं रमणीयम् । दिश्यपि लुबन्तं स्वभावात् *नपुंसकम् । वाघात्(६-१-११) इति विकल्पे लब्धे वाग्रहणं पूर्वत्र *नित्यार्थम् ॥ १०७ ॥ *तस्य तुल्ये कः संज्ञाप्रतिकृत्योः ॥ ७ । १ । १०८ ॥ तस्येति षष्ठ्यन्तात्तुल्ये सदृशेऽर्थे कः प्रत्ययो भवति संज्ञाप्रतिकृत्योः संज्ञायां प्रतिकृतौ च विषये । प्रतिकृतिः काष्ठादिमयं प्रतिच्छन्दकम् । अश्वस्य तुल्यः अश्वकः । उष्ट्रकः । गर्दभकः । अश्वादिसदृशस्य *संज्ञा एताः । प्रतिकृतिः, अश्वकम् रूपम् । अश्विका प्रतिमा । अश्वकानि रूपाणि । तुल्य इति किम् । *इन्द्रदेवः । एवंनामा कश्चित् । नात्र सादृश्यम् । संज्ञाप्रतिकृत्योरिति किम् । *गोस्तुल्यो गवयः । संज्ञाग्रहणमप्रतिकृत्यर्थम् । एके त्वाहुः । तुल्यमात्रे प्रत्ययः । शिव इव शिवकः ॥१०८॥ *न नृपूजार्थध्वजचित्रे ॥७।१।१०९॥ नारि मनुष्ये पूजार्थे ध्वजे चित्रे च चित्रकर्मणि अभिधेये कः प्रत्ययो न भवति । *तत्र 'सोऽयमित्येवाभिसंबन्धः । संज्ञाप्रतिकृत्योरिति *यथासंभवं प्राप्ते प्रतिषेधोयम् । नृ, चञ्चा तृणमयः पुरुषः । यः क्षेत्ररक्षणाय क्रियते । चञ्चातुल्यः पुरुषश्चञ्चा । एवं वध्रिका । खरकुटी । पूजार्थ, अर्हन् । शिवः । स्कन्दः । पूजनार्थाः प्रतिकृतय उच्यन्ते । ध्वज, गरुडः सिंहः तालो ध्वजः । चित्र, दुर्योधनः भीमसेनः॥१०९॥ अपण्ये जीवने ॥७।१।११०॥ जीवन्त्यनेनेति जीवनम् । पण्यं विक्रेतव्यम् । पण्यवर्जितं यज्जीवनं तस्मिन् कः प्रत्ययो न भवति । वासुदेवसदृशः वासुदेवः । शिवः स्कन्दः विष्णुः । देवलकानां जीविकार्थाः प्रतिकृतय उच्यन्ते । अपण्य इति किम् । हस्तिकान् विक्रीणीते । जीवन इति किम् । क्रीडने निषेधो

—अदिग्-॥ प्रसज्योऽयं नञ् दिग्लक्षणा स्त्री चेन्न भवतीति न तु अदिग्लक्षणाया स्त्रियामितिपर्युदासस्तेन पुंक्लीबयोरपि भवति । ननु दिशः स्त्रीत्वमव्यभिचारि तत्किमत्र स्त्रीग्रहणेनेत्याह-स्त्रीग्रहणमिति । स्त्रीलिङ्गरहितायां दिश्यञ्चत्यन्तवाच्यायां प्रत्युदाहरति-प्राक्प्राचीन रमणीयमित्यादिना ॥-नपुंसकमिति । प्रागिति धातुबन्तम् । अव्ययत्वाल्लिङ्गायोग्य, प्राचीन च स्वार्थिकान्तत्वात् तद्वत् तथापि स्वभावान्नपुंसकम् अन्यथा अभेदे अलिङ्गत्वं भेदे तु स्त्रीलिङ्गत्वं स्यात् ॥-नित्यार्थमिति । 'अपडक्ष-'इत्यत्र सूत्रे वाक्य त्वलौकिकम् ॥-तस्य-॥-संज्ञा एता इति । एवंनामानः पशुविशेषा न तु प्रतिबिम्बानि ॥—इन्द्रदेव इति । षष्ठ्यन्तादभेदे इन्द्रदेवस्य सबन्धी इन्द्रदेवः । इन्द्रदेवक इत्युक्तेऽपि संज्ञा प्रतीयत इति न अङ्गविकलता ॥—गोस्तुल्य इति । नहि गोक इति कप्रत्ययान्तेन सज्ञा प्रतीयते ॥—न नृ—॥—तत्रेति । निषेधे सतीत्यर्थः ॥—सोऽयमिति । चञ्चातुल्यः पुरुषोऽभेदोपचारेण चञ्चा । अतश्चञ्चा पुरुष इत्यादौ सामानाधिकरण्यम् । तथा चान्यैरिव प्रत्ययस्य लुप्न वक्तव्या ॥—यथासंभवमिति ।

मा भूत् । हस्तिकः ॥ ११० ॥ देवपथादिभ्यः ॥ ७ । १ । १११ ॥ देवपथ इत्येवमादिभ्यस्तुल्ये संज्ञाप्रतिकृत्योः कः प्रत्ययो न भवति । देवपथस्य तुल्यः देवपथः । एवं हंसपथः । देवपथ हंसपथ अजपथ वारिपथ राजपथ शतपथ शङ्कुपथ स्थलपथ सिन्धुपथ उष्ट्रग्रीवा वामरज्जु हंस (हस्त) इन्द्र दण्ड पथ्य (पुष्प) मत्स्य, इति देवपथादिः । बहुवचनमाकृतिगणार्थम् । पूर्वयोगावस्यैव प्रपञ्चः ॥ १११ ॥ *वस्तेरेयञ् ॥ ७ । १ । ११२ ॥ तस्य तुल्य इति वर्तते *न संज्ञाप्रतिकृत्योरिति । वस्तिशब्दात्पष्ठयन्तात्तुल्येऽर्थे एयञ् प्रत्ययो भवति । वस्तेस्तुल्यं वास्तेयम् । वास्तेयी प्रणालिका ॥ ११२ ॥ *शिलाया एयच्च ॥ ७ । १ । ११३ ॥ शिलाशब्दात्पष्ठयन्तात्तुल्येऽर्थे एयच् प्रत्ययो भवति चकारादेयञ् च । शिलायास्तुल्यं *शिलेयं दधि । शिलेयी इष्टका । शैलेयं दधि । शैलेयी इष्टका । चकारः 'अणञेयेकण्'—(२-४-२०) इति एयस्य सामान्यग्रहणाविघातार्थः । अन्यथा ह्रस्वैव स्यात् । अन्ये तु *द्रव्यशब्दवदेयजन्तं स्त्रियां नास्तीत्याहुः ॥ ११३ ॥ शाखादेर्यः ॥ ७ । १ । ११४ ॥ शाखा इत्येवमादिभ्यस्तस्य तुल्ये यः प्रत्ययो भवति । पुरुषस्कन्धस्य वृक्षस्कन्धस्य वा तिर्यक् प्रसृतमङ्गं शाखेत्युच्यते । तद्यथा शाखा पार्श्वायता तथा कुलस्य यः पार्श्वायतोऽङ्गभूतः स शाखायास्तुल्यः शाख्यः । मुख्यः । जघन्यः । शाखा मुख जघन स्कन्द स्कन्ध मेघ शृङ्ग चरण शरण उरस् शिरस् अग्र । इति शाखादिः ॥ ११४ ॥ द्रोर्भव्ये ॥ ७ । १ । ११५ ॥ द्रुशब्दात्तस्य तुल्ये भव्येऽभिधेये यः प्रत्ययो भवति । विशिष्टेष्टपरिणामेन भवतीति भव्यम् अभिप्रेतानामर्थानां पात्रम् । द्रुतुल्यः द्रव्यमयं माणवकः । द्रव्यं कार्षापणम् । यथा द्रु अग्रन्थि अजिह्मं दारु उपकल्प्यमानविशिष्टेष्टरूपं भवति तथा माणवकोऽपि विनीयमानो विद्यालक्ष्म्यादिभाजनं भवतीति द्रव्यमुच्यते ॥ कार्षापणमपि विनियुज्यमानं विशिष्टेष्टमाल्याद्युपभोगफलं भवति इति द्रव्यमुच्यते । द्रुरिव द्रव्यं राजपुत्रः । यथा द्रुमः पुष्पफलादिभिरर्थिनः कृतार्थयति एवमन्योऽपि यः सोऽपि द्रव्यमुच्यते । भव्य इति किम् । द्रुतुल्योऽयं न चेतयते ॥ ११५ ॥ कुशाग्रादीयः ॥ ७ । १ । ११६ ॥ कुशाग्रशब्दात्तस्य तुल्ये ईयः प्रत्ययो भवति । कुशाग्रस्य तुल्यं कुशाग्रीयं शस्त्रम् तदाकारत्वात् । कुशाग्रीया बुद्धिः । तीक्ष्णत्वात् ॥ ११६ ॥ काकतालीयादयः ॥ ७ । १ । ११७ ॥ काकतालीयादयः शब्दा ईयप्रत्ययान्ताः साधवो भवन्ति तस्य तुल्येऽभिधेये ॥ काकश्च तालश्च काकतालम् । यथा कथंचिद्व्रजतः काकस्य निपतता तालेनातर्कितोपनतश्चित्रीयमाणः संयोगो लक्षणयोच्यते तत्तुल्यं काकतालीयम् । एवं खलतिबिल्वीयम् । अन्धकश्च वर्तिका च अन्धकवर्तिकम् । अन्धकस्य वर्तिकाया उपरि अतर्कितः पादन्यास उच्यते । अन्धकस्य बाहूत्क्षेपे वर्तिकायाः करे निलयनं वा तत्तुल्यमन्धकवर्तिकीयम् । अजया पादेनावकिरत्यात्मवधाय कृपाणस्य दर्शनमजाकृपाणम् तत्तुल्यमजाकृपाणीयम् । एवंविधचित्रीकरणविषयाः काकतालीयादयः । निपातनं रूढ्यर्थम् । बहुवचनादन्येऽपि । अर्धजरतीयम् । घुणाक्षरीयमित्यादि ॥ ११७ ॥ शर्करादेरण् ॥ ७ । १ । ११८ ॥ शर्करादिभ्यस्तस्य तुल्येऽण् प्रत्ययो भवति । शर्करायास्तुल्यं शार्करं दधि मधुरत्वात् । शार्करी मृत्तिका कठिनत्वात् । शर्करा कपालिका कम्वाष्टिका गोपुच्छ गोलोमन् पुण्डरीक शतपत्र नराची नकुल सिकता कपाटिका । इति शर्करादिः ॥ ११८ ॥ अः सपत्न्याः

---

मनुष्ये सज्ञायां पूजार्थादिषु प्रतिकृतौ प्राप्तिः ॥—वस्ते—॥—न संज्ञेति । प्रत्ययान्तरोपादानात् ॥—शिला—॥—द्रव्यशब्दवदिति । यथा द्रोर्भव्ये इति तुल्यार्थे ये द्रव्यशब्दो

॥ ७ । १ । ११९ ॥ सपत्नीशब्दात्तस्य तुल्ये अः प्रत्ययो भवति । सपत्न्यास्तुल्यः सपत्नः ॥ ११९ ॥ **एकशालाया इकः** ॥ ७ । १ ।१२० ॥ एकशालाशब्दात्तस्य तुल्ये इकः प्रत्ययो भवति । एकशालायास्तुल्यमेकशालिकम् ॥ १२० ॥ **गोण्यादेश्चेकण्** ॥ ७ । १ । १२१ ॥ गोण्यादिभ्य एकशालाशब्दाच्च तस्य तुल्ये इकण् प्रत्ययो भवति । गोण्यास्तुल्यं गौणिकम् । अङ्गुलेरङ्गुल्या वा आङ्गुलिकम् । एकशालाया ऐकशालिकम् । गोणी अङ्गुली भरुजा बभ्रु बभ्रु वल्गु मण्डर मण्डल शष्कुली हरि मण्डु कपि भरु खल उदश्वित् तरस् कुलिश मुनि रुरु । इति गोण्यादिः ॥ १२१ ॥ *__कर्कलोहितादटीकण् च__ ॥ ७ । १ । १२२ ॥ कर्कलोहितशब्दाभ्यां तस्य तुल्ये टीकण् प्रत्ययो भवति चकारादिकण् च ॥ शुक्लोऽश्वः कर्कः । तस्य तुल्यः कार्कीकः । कार्किकः । लौहितीकः । लौहितिकः । स्फटिकादिः *अलोहितवर्णोऽप्युपाश्रयवशाद्यस्तथावभासते स एवमुच्यते । टकारो ङ्यर्थः । कार्कीकी । लौहितीकी ॥ १२२ ॥ **वेर्विस्तृते शालशङ्कटौ** ॥ ७ । १ । १२३ ॥ विशब्दाद्विस्तृतेऽर्थे शाल शङ्कट इत्येतौ प्रत्ययौ भवतः । विशालः । विशङ्कटः । विस्तृत इत्यर्थः ॥ विनानानेत्यव्यये पृथग्भावे वर्तेते इति विनञ्भ्यां नानाञौ प्रत्ययौ न वक्तव्यौ ॥ १२३ ॥ **कटः** ॥ ७ । १ । १२४ ॥ विशब्दाद्विस्तृतेऽर्थे कटः प्रत्ययो भवति । विकटः ॥ १२४ ॥ **संप्रोन्नेः संकीर्णप्रकाशाधिकसमीपे** ॥ ७ । १ । १२५ ॥ सम् प्र उद् नि इत्येतेभ्यो यथासंख्यं संकीर्णादिष्वर्थेषु कटः प्रत्ययो भवति । समः संकीर्णे संकटः । प्रात्प्रकाशे, प्रकटः । उदोऽधिके, उत्कटः । नेः समीपे निकटम् ॥ १२५ ॥ **अवात्कुटारश्चावनते** ॥ ७ । १ । १२६ ॥ अवशब्दादवनतेऽर्थे कुटारश्चकारात्कटश्च प्रत्ययो भवति । अवकुटारः । अवकटः ॥ १२६ ॥ **नासानतितद्वतोष्टीटनाटभ्रटम्** ॥ ७ । १ । १२७ ॥ अवशब्दान्नासानतौ तद्वति च वाच्ये टीट नाट भ्रट इत्येते प्रत्यया भवन्ति नासानतौ । नासाया नमनम् अवटीटम् अवनाटम् अवभ्रटम् । सा नासानतिर्विद्यते यस्मिन् स तद्वान् नासा पुरुषः । अपकृष्टो वार्थः । तत्र अवटीटा अवनाटा अवभ्रटा नासिका । अवटीटः अवनाटः अवभ्रटः पुरुषः । अवटीटम् अवनाटम् अवभ्रटं वा ब्रह्मदेयम् । अपकृष्टमपि हि वस्तु दृष्ट्वा लोको नासिकां नामयति ॥ १२७ ॥ *__नेरिनपिटकाश्चिक्चिचिकश्चास्य__ ॥ ७ । १ । १२८ ॥ निशब्दान्नासानतौ तद्वति चाभिधेये इन पिट क इत्येते प्रत्यया भवन्ति तत्संनियोगे चास्य नेर्यथासंख्यं चिक् चि चिक् इत्येते आदेशा भवन्ति । *चिकिनम् चिपिटम् चिक्कम् नासिकानमनम् । चिकिना चिपिटा चिक्का नासिका । चिकिनः चिपिटः चिक्कः पुरुषः । बहुवचनं *रुढ्यर्थम् ॥ १२८ ॥ **बिडबिरीसौ नीरन्ध्रे च** ॥ ७ । १ । १२९ ॥ निशब्दान्नीरन्ध्रेऽर्थे नासानतितद्वतोश्च बिडबिरीस इत्येतौ प्रत्ययौ भवतः । निबिडाः निबिरीसाः केशाः । निबिडम् निबिरीसम् वस्त्रम् । *नासिकाया नमनं निबिडम् निबिरीसम् । निबिडा निबिरीसा नासिका । निबिडो निबिरीसो मैत्रः । विधानसामर्थ्यात् षत्वं न भवति

नियतं लिङ्गमाह एव शिलेयमिति ॥—कर्क—॥ ननु लोहितेन तुल्यस्य संभवो नास्ति । लोहितगुणयुक्तश्चेत् स्वयमेव लोहितो गुणान्तरयुक्तश्चेत् कथं लोहितेन तुल्य स्यादित्याशङ्क्य स्फटिकादेर्लोहितगुणयुक्तेन द्रव्येण तुल्यत्वं समर्थयितुमाह—अलोहितवर्णोपीत्यादि ॥—नेरिन—॥—चिकिनमिति ॥—नासिकाया नमनं शब्दान्तरेण निशब्दस्यार्थकथनम् ॥— रूढ्यर्थमिति ।

॥ १२९ ॥ क्लिन्नाल्लश्चक्षुषि चिल् पिल् चुल् चास्य ॥ ७ । १ । १३० ॥ क्लिन्नशब्दाच्चक्षुषि वाच्ये लः प्रत्ययो भवति तत्संनियोगे चास्य चिल् पिल् चुल् इत्येते आदेशा भवन्ति । चिल्लम् पिल्लम् चुल्लम् चक्षुः । तद्योगात्पुरुषोऽपि चिल्लः पिल्लः चुल्लः ॥ १३० ॥ उपत्यकाधित्यके ॥ ७ । १ । १३१ ॥ उपत्यका अधित्यका इत्येतौ शब्दौ निपात्येते । उपाधिशब्दाभ्यां यथासंख्यम् पर्वतस्यासन्नायामधिरूढायां च भुवि त्यकः प्रत्ययो निपात्यते । उपत्यका । अधित्यका । क्षिपकादित्वादित्वाभावः । स्वभावतः स्त्रीलिङ्गावेतौ । पुंलिङ्गावपीति कश्चित् । उपत्यको देशः । अधित्यकः पन्थाः । निपातनं रूढ्यर्थम् ॥ १३१ ॥ *अवेः संघातविस्तारे कटपटम् ॥ ७ । १ । १३२ ॥ अविशब्दात् *सामर्थ्यात्षष्ठ्यन्तात्संघाते विस्तारे चार्थे यथासंख्यं कटपट इत्येतौ प्रत्ययौ भवतः । अवीनां संघातः अविकटः । अवीनां विस्तारः अविपटः । *संघाते *सामूहिकानां विस्तारे *ऐदमर्थिकानां चापवादो योगः ॥ १३२ ॥ पशुभ्यः स्थाने गोष्ठः ॥ ७ । १ । १३३ ॥ पशुनामभ्यः षष्ठ्यन्तेभ्यः स्थानेऽर्थे गोष्ठः प्रत्ययो भवति । इदमर्थानामपवादः । गवां स्थानं गोगोष्ठम् । महिषीगोष्ठम् । अश्वगोष्ठम् ॥ १३३ ॥ द्वित्वे गोयुगः ॥ ७ । १ । १३४ ॥ पशुनामभ्यः षष्ठ्यन्तेभ्यो द्वित्वेऽर्थे गोयुगः प्रत्ययो भवति । इदमर्थानामपवादः । गवोर्द्वित्वं गोगोयुगम् । अश्वगोयुगम् । उष्ट्रगोयुगम् ॥ ॥ १३४ ॥ षट्त्वे षड्गवः ॥ ७ । १ । १३५ ॥ पशुनामभ्यः षष्ठ्यन्तेभ्यः षट्त्वे गम्यमाने षड्गवः प्रत्ययो भवति । उष्ट्राणां षट्त्वम् उष्ट्रषड्गवम् । हस्तिषड्गवम् । अश्वषड्गवम् । इदमर्थानामपवादः ॥ १३५ ॥ तिलादिभ्यः स्नेहे तैलः ॥ ७ । १ । १३६ ॥ तिलादिभ्यः सामर्थ्यात्षष्ठ्यन्तेभ्यः स्नेहेऽर्थे तैल इति प्रत्ययो भवति । विकारप्रत्ययापवादः । तिलानां स्नेहो विकारस्तिलतैलम् । सर्षपतैलम् । इङ्गुदतैलम् । एरण्डतैलम् ॥ १३६ ॥ तत्र घटते कर्मणष्ठः ॥ ७ । १ । १३७ ॥ कर्मन्शब्दात्तत्रेति सप्तम्यन्ताद्घटते इत्यर्थे ठः प्रत्ययो भवति । कर्मणि घटते कर्मठः ॥ १३७ ॥ तदस्य संजातं तारकादिभ्य इतः ॥ ७ । १ । १३८ ॥ तदिति प्रथमान्तेभ्यस्तारका इत्यादिभ्योऽस्येति षष्ठ्यर्थे इतः प्रत्ययो भवति यत्तत्प्रथमान्तं संजातं चेत्तद्भवति । तारका संजाता अस्य तारकितं नभः । पुष्पाणि संजातान्यस्य पुष्पितस्तरुः । तारका पुष्प कर्णक ऋजीष मूत्र पुरीष निष्क्रमण उच्चार विचार प्रचार आराल कुड्मल कुसुम मुकुल वकुल स्तबक पल्लव किशलय वेश वेग निद्रा तन्द्रा श्रद्धा बुभुक्षा पिपासा अभ्र श्वभ्र रोग अङ्गारक अङ्गार पर्णक द्रोह सुख दुःख उत्कण्ठा भर तरङ्ग व्याधि व्रण कण्डूक कण्टक मञ्जरी कोरक अङ्कुर हस्तक पुलक रोमाञ्च हर्ष उत्कर्ष गर्व कल्लोल शृङ्गार अन्धकार कन्दल शैवल कुतूहल कुवलय कलङ्क कज्जल कर्दम सीमन्त राग क्षुध् तृष् ज्वर गर दोह शास्त्र पण्डा मुकुर मुद्रा गर्भ फल तिलक चन्द्रक । इति तारकादिः ॥ बहुवचनमाकृतिगणार्थम् ॥ १३८ ॥ गर्भादप्राणिनि ॥ ७ ॥ १ । १३९ ॥ गर्भशब्दात्तदस्य संजातमित्यर्थे इतः प्रत्ययो भवति । अप्राणिनि स चेत्षष्ठ्यर्थः

---

तेनाप्रकृष्टे अर्थे प्रह्लादेयलक्षणे चिकिनमित्यादयो न भवन्ति ॥—अवे संघात—॥—सामर्थ्यादिति । षष्ठीमन्तरेण संघातविस्तारार्थयोरप्रतीतेः षष्ठ्यैव च प्रतीतेरित्यर्थः ॥—संघात इति । अविशब्दस्य कटपटशब्दाभ्यां सिद्धस्वरूपाभ्यां षष्ठीसमासे अविकट इत्यादि सिध्यति किमर्थो योग इत्याह —सामूहिकानामिति । 'षष्ठ्या. समूहे' इत्यादीनाम् ॥—ऐदमर्थिकाना

प्राणी न भवति । गर्भः संजातोऽस्य गर्भितो व्रीहिः । गर्भिताः शालयः । अप्राणिनीति किम् । गर्भः संजातोऽस्या दास्या इति वाक्यमेव ॥ १३९ ॥ प्रमाणान्मात्रट् ॥ ७ । १ । १४० ॥ तदस्येति वर्तते । तदिति प्रथमान्तात्प्रमाणवाचिनो नाम्नोऽस्येति षष्ठ्यर्थे मात्रट् प्रत्ययो भवति । आयाममानं प्रमाणं, तद्द्विविधम् ऊर्ध्वमानं तिर्यग्मानं च । तत्रोर्ध्वमानात्, जानुनी प्रमाणमस्य जानुमात्रमुदकम् । जानुमात्री खाता । ऊरुमात्रमुदकम् । ऊरुमात्री खाता । तिर्यग्मानात्, रज्जुमात्री भूमिः । तन्मात्री । तावन्मात्री । टकारो ङ्यर्थः ॥ १४० ॥ *हस्तिपुरुषाद्वाण् ॥ ७ । १ । १४१ ॥ तदिति प्रथमान्तात्प्रमाणवाचिनो हस्तिशब्दात्पुरुषशब्दाच्चास्येति षष्ठ्यर्थेऽण् प्रत्ययो वा भवति । पक्षे यथाप्राप्तम् । हस्ती प्रमाणमस्य हास्तिनं हस्तिमात्रम् हस्तिदघ्नं हस्तिद्वयसमुदकम् । हास्तिनी हस्तिमात्री हस्तिदघ्नी हस्तिद्वयसी खाता । पौरुषम् पुरुषमात्रम् पुरुषदघ्नम् पुरुषद्वयसमुदकम् । पौरुषी पुरुषमात्री पुरुषदघ्नी पुरुषद्वयसी खाता । *पौरुषी पुरुषमात्री छाया ॥१४१॥ *वोर्ध्वे दघ्नट् द्वयसट् ॥ ७ । १ । १४२ ॥ ऊर्ध्वं यत्प्रमाणं तद्वाचिनो नाम्नः प्रथमान्तादस्येति षष्ठ्यर्थे दघ्नट् द्वयसट् इत्येतौ प्रत्ययौ वा भवतः । पक्षे मात्रट् । ऊरुः प्रमाणमस्य ऊरुदघ्नम् ऊरुद्वयसम् ऊरुमात्रमुदकम् । ऊरुदघ्नी ऊरुद्वयसी ऊरुमात्री खाता । तद्दघ्नी तद्द्वयसी तन्मात्री । तावद्दघ्नी तावद्द्वयसी तावन्मात्री । *वाग्रहणमण्मात्रटोरबाधनार्थम् । तेन पुरुषदघ्नम् पुरुषद्वयसम् पुरुषमात्रम् पौरुषमिति पुरुषहस्तिनोश्चातूरूप्यं भवति । ऊर्ध्वमिति किम् । रज्जुमात्री भूमिः ॥ १४२ ॥ *मानादसंशये लुप् ॥ ७ । १ । १४३ ॥ प्रमाणादिति वर्तते । *मानवाच्येव साक्षाद्यः प्रमाणशब्दो हस्तवितस्त्यादिः प्रसिद्धो न तु रज्ज्वादिर्यो लक्षणया प्रमाणे वर्तते तस्मात्प्रस्तुतस्य मात्रडादेः प्रत्ययस्यासंशये गम्यमाने लुप् भवति । हस्तः प्रमाणमस्य हस्तः । वितस्तिः । दिष्टिः । शमः चतुर्विंशतिरङ्गुलानि । मानादिति किम् । ऊरुमात्रमुदकम् । रज्जुमात्री भूमिः । असंशय इति किम् । शमः प्रमाणमस्य स्यात् शममात्रम् । दिष्टिमात्रम् । वितस्तिमात्रम् । केचित्तु मानमात्रान्मात्रटं तस्यासंशये लुब्विकल्पं चेच्छन्ति । प्रस्थः प्रस्थमात्रो वा व्रीहिः । हस्तः हस्तमात्रं वा काष्ठम् । पलं पलमात्रं वा सुवर्णम् । शतं शतमात्रा वा गावः ॥१४३॥ *द्विगोः संशये च ॥७।१।१४४॥ मानादिति वर्तते । प्रमाणादिति निवृत्तम् 'पुरुषाद्वा'-(२-४-२५) इत्यत्र *उपचरितप्रमाणात्पुरुषाल्लुपि ङीविधानात् । तदनुवृत्तौ तु तस्य मानेन विशेषणात् प्रसिद्धादेव हस्तादेः *लुप् स्यात् । मानान्ताद्द्विगोः संशये चकारादसंशये च प्रस्तुतस्य मात्रडादेः प्रत्ययस्य लुप् भवति । द्वौ शमौ प्रमाणमस्य द्वौ शमौ प्रमाणमस्य स्यादिति वा *द्विशमः । द्विदिष्टिः । द्विवितस्तिः । द्विकाण्डा क्षेत्रभक्तिः । द्विकाण्डी रज्जुः । *द्विपुरुषी द्विपुरुषा खाता । द्विहस्तिनी । त्रिहस्तिनी ।

मिति । 'तस्येदम्' इत्यादीना 'दोरीय' इति च दुसञ्ज्ञाविवक्षायाम् ॥—हस्ति—॥—पौरुषी पुरुषमात्री छायेति । अत्र तिर्यग्मानमिति ऊर्ध्वे माने विधीयमानौ दघ्नट्द्वयसटौ न भवत किंतु मात्रडेव ॥—वोर्ध्वे—॥—वाग्रहणमिति । अन्यथा ऊर्ध्वमानाभावेऽण्मात्रटो सावकाशाविति तौ बाधित्वा इमावेव स्याताम् ॥—माना—॥—मानवाच्येवेति । प्रमाणादित्यधिकारे मानग्रहणमवधारणार्थमिति ॥—द्विगो—॥—उपचरितप्रमाणादिति । पुरुषशब्दस्य हि प्रमाणत्वमुपचरितमेव न साक्षात्प्रमाणमेव ॥—लुप् स्यादिति । तदभावे च ङीर्न स्यात् ॥—द्विशम इति । 'मात्रट्' इति मात्रट् संशयविवक्षायां सर्वत्र । अन्यत्र यथासम्भव मात्रट् दघ्नट् द्वयसट् च । एव सर्वत्र ॥—द्विपुरुषीति । अत्र 'हस्तिपुरुषाद्वाण्' म । तत्र तद्वस्ताविधे-

द्वौ प्रस्थौ मानमस्य स्यात् द्विप्रस्थः। द्विपलम्। द्विशतः। मीयतेऽनेन मानं प्रमाणम् परिमाणम् उन्मानं संख्या चेह गृह्यते। 'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः' ॥१॥ अन्ये तु रूढप्रमाणान्तादेव द्विगोरिच्छन्ति तन्मते द्विप्रस्थमात्रम् द्विपलमात्रं द्विशतमात्रं स्यादित्यादौ लुप् न भवति॥१४४॥

*मात्रट् ॥ ७।१।१४५॥ मानात् संशये इति च वर्तते। तदिति प्रथमान्तान्मानवाचिनो नाम्नः पष्ठ्यर्थे मात्रट् प्रत्ययो भवति संशये। प्रस्थो मानमस्य स्यात् प्रस्थमात्रम् धान्यम्। प्रस्थमात्रा व्रीहयः। कुडवमात्रम्। पलमात्रम्। कर्पमात्रम्। पञ्चमात्राः। शतमात्राः। शतमात्रम्। दिष्टिमात्रम्। मात्रदघ्नद्वयसानि नामान्यपि सन्ति। अनुबन्धासञ्जनार्थं तु प्रत्ययविधानम्। तेन च स्त्रियां विशेषः। *वैश्वदेवमात्रा भिक्षा ॥ १४५॥ शन्शद्विंशतेः ॥ ७।१।१४६॥ शन्नन्ताच्छदन्ताच्च संख्याशब्दाद्विंशतिशब्दाच्च मानवृत्तेस्तदिति प्रथमान्तादस्येति षष्ठ्यर्थे संशये गम्यमाने मात्रट् प्रत्ययो भवति। डिनोऽपवादः। दश मानमेषां स्यात् दशमात्राः। पञ्चदशमात्राः। त्रिंशन्मात्राः। त्रयस्त्रिंशन्मात्राः। विंशतिमात्राः ॥ १४६॥ *डिन् ॥ ७।१।१४७॥ संशये इति निवृत्तम्। *योगविभागात्। शन्नन्ताच्छदन्ताच्च संख्याशब्दाद्विंशतिशब्दाच्च मानवृत्तेस्तदिति प्रथमान्तादस्येति षष्ठ्यर्थे डिन् प्रत्ययो भवति। पञ्चदशाहोरात्राः परिमाणमस्य पञ्चदशी अर्धमासः। पञ्चदशिनौ, पञ्चदशिनः। एवं त्रिंशी त्रिंशिनौ त्रिंशिनो मासाः। त्रयस्त्रिंशिनो देवविशेषाः। विंशिनो भवनेन्द्राः ॥ १४७॥ *इदंकिमोऽतुरिय् किय् चास्य ॥ ७।१।१४८॥ तदस्य मानादिति वर्तते। तदिति प्रथमान्तादिदंशब्दात् किंशब्दाच्च मानवृत्तेरस्येति षष्ठ्यर्थे मेयेऽतुः प्रत्ययो भवति तत्संनियोगे च इदम्किम्शब्दयोरिय् किय् इत्येतावादेशौ भवतः। चतुर्विधं मानं, तत्र प्रमाणात्, इदं मानमस्य इयान् पटः। किं मानमस्य कियान् पटः। परिमाणात्, इयद्धान्यम्। कियद्धान्यम्। उन्मानात्, इयत्सुवर्णम्। कियत्सुवर्णम्। संख्यायाः, इयन्तो गुणिनः। कियन्तो गुणिनः। इयती। कियती। उदित्करणं *दीर्घत्वाद्यर्थम् ॥ १४८॥ *यत्तदेतदो डावादिः ॥ ७।१।१४९॥ यत्तदेतदित्येतेभ्यस्तदिति प्रथमान्तेभ्यो मानवृत्तिभ्योऽस्येति षष्ठ्यर्थे मेयेऽतुः प्रत्ययो भवति स च डावादिः। यत्तदेतद्वा प्रमाणमस्य यावान् पटः। तावान्। एतावान्। यावत् तावत् एतावत् धान्यम्। यावत् तावत् एतावत् सुवर्णम्। यावन्ति तावन्ति एतावन्ति अधिकरणानि। यावती तावती एतावती। *ननु मात्रडादयोऽपि दृश्यन्ते इदं प्रमाणमस्य इदंमात्रं किंमात्रम् यन्मात्रम् तन्मात्रम् एतन्मात्रम् यद्घ्नम् यद्द्वयसमित्यादि। सत्यम्। स्वविषये मानविशेषे प्रमाणे मात्रडादयो भवन्त्येव मानसामान्येऽतुरेवेति विभागः ॥ १४९॥ *यत्तत्किमः संख्याया डतिर्वा ॥ ७।१।१५०॥ संख्यारूपं यन्मानं तद्वृत्तिभ्यो यत्तत्किम् इत्येतेभ्यः प्रथमान्तेभ्योऽस्येति षष्ठ्यर्थे संख्येये मेये डतिः प्रत्ययो भवति वा। पक्षे यथाविहितोऽतुश्च। या संख्या मानमेषां यति। यावन्तः। सा संख्या मानमेषां तति तावन्तः। का संख्या मानमेषां कति कियन्तः। *एतौ चातुडति प्रत्ययौ स्वभावाद्बहुवचनविषयावेव भवतः।

---

रनाश्रवणाद्विति मात्रडादेर्लुप् ॥-मात्रट् ॥-वैश्वदेवमात्रेति। विश्वे देवा देवता अस्याण् वैश्वदेवो मात्र मात्राऽवास्या' ॥-डिन् ॥-योगविभागादिति। अन्यथा शन्शद्विंशतेर्डिन्वेत्येक एव योगः क्रियेत॥-इदंकिमो ॥-दीर्घत्वाद्यर्थमिति। आदिशब्दात् 'ऋदुदित' इति मागम. 'अधातूदृदितः' इति ङीश्च गृह्यते॥-यत्तदे-॥-नन्विति। मानवाचिनोऽताशुच्यमाने कथ मात्रडादय इत्याशङ्का ॥-यत्त-॥-एतौ चेति।

संख्याया इति किम्। कियान् यावान् तावान् पटः। मानादिति संख्याया विशेषणं किम्। क्षेपे मा भूत्। का संख्या येषां दशानाम्॥ १५०॥ **अवयवात्तयट्**॥ ७।१।१५१॥ तदस्येति संख्याया इति च वर्तते । मानादिति निवृत्तम् । अवयवादिति विशेषणान्तरोपादानात् । अवयवे वर्तमानात्संख्यावाचिनो नाम्नस्तदिति प्रथमान्तात् अस्येति षष्ठ्यर्थे अवयविनि तयट् प्रत्ययो भवति। चत्वारोऽवयवा अस्याः चतुष्टयी शब्दानां प्रवृत्तिः । चतुष्टयी रज्जुः । पञ्चतयो यमः । सप्ततयी नयप्रवृत्तिः। दशतयो धर्मः। द्वादशतयः सिद्धान्तः॥ १५१॥ *द्वित्रिभ्यामयट् वा॥ ७। १। १५२॥ द्वित्रि इत्येताभ्यामवयववृत्तिभ्यां प्रथमान्ताभ्यामस्येति षष्ठ्यर्थे अवयविनि अयट् प्रत्ययो वा भवति। द्वाववयवावस्य द्वयम् द्वितयम् तपः। त्रयं त्रितयम् जगत्। त्रयः त्रितयो मोक्षमार्गः। टकारो ङ्यर्थः। द्वयी द्वितयी। त्रयी त्रितयी रज्जुः। अवयवा अवयविनि संबद्धा इति सामर्थ्यादवयवी प्रत्ययार्थ इति विज्ञायते। *त्रयाणि पानानि यथातथा पिबेदित्यत्र तु देशकालादिभेदेन समुदायाभिधानात् *बहुवचनम्। द्वये पदार्था जीवा अजीवाश्चेत्यत्र तु जीवाजीवतया द्वैराश्योपादानात् बहूनामपि द्वाववयवौ भवतः। *कथमुभयो मणिः उभये देवमनुष्याः उभयी दृष्टिरिति। उभयशब्दः सर्वादिषु उभयट् इति पठ्यमानः शब्दान्तरमेव विज्ञेयम् । तथा चास्य 'नेमार्ध'—(१-४-१०) इत्यादिना जस इकारविकल्पो न भवति॥ १५२॥ *आदेर्गुणान्मूल्यक्रेये मयट्॥ ७। १। १५३॥ संख्याया इति वर्तते। आदेः संख्याशब्दाद्गुणवृत्तेस्तदिति प्रथमान्तादस्येति षष्ठ्यर्थे मयट् प्रत्ययो भवति स चेत्संख्याशब्दो *मूल्ये क्रेये वा वर्तते । यवानां द्वौ गुणौ मूल्यमस्योदश्वितः क्रेयस्य द्विमयमुदश्विद्यवानाम्। एवं त्रिमयम्। चतुर्मयम्। उदश्वितो द्वौ गुणौ क्रेयावेषां यवानां द्विमया यवा उदश्वितः । एवं त्रिमयाः । चतुर्मयाः । आदिपदस्य सापेक्षस्यापि नित्यसापेक्षत्वेन गमकत्वाद्वृत्तिः। आदेरिति किम्। यवानामेको गुणो मूल्यमस्योदश्वित उदश्वित एको गुणः क्रेय एषां यवानाम्। गुणादिति किम्। द्वौ व्रीहियवौ मूल्यमस्योदश्वितः। द्वे घृतोदश्विती क्रेये एषां यवानाम्। मूल्यक्रेय इति किम्। क्षीरस्य द्वौ गुणौ तैलस्य पाक्यस्य॥ अपरः प्रकारः। मूल्यक्रेय इति *प्रत्ययार्थविशेषणम्। आदेः संख्याशब्दाद्गुणवृत्तेस्तदिति प्रथमान्तादस्येति षष्ठ्यर्थे मयट् प्रत्ययो भवति स चेत् षष्ठ्यर्थो मूल्यं क्रेयं वा भवति। द्वौ गुणावेषां मूल्यभूतानां यवानामुदश्वितः द्विमया यवा उदश्वितो मूल्यम्। त्रिमयाः। चतुर्मयाः। द्वौ गुणावस्योदश्वितः क्रेयभूतस्य द्विमयमुदश्विद्यवानाम् क्रेयम् । त्रिमयम् । चतुर्मयम् । आदेरिति किम्। एकगुणा यवा उदश्वितो मूल्यम् एकगुणमुदश्विद्यवानाम् क्रेयम्। *गुणादिति किम्। उदश्वितस्त्रयाणां भागानां *द्वौ भागौ यवानां मूल्यभूतानाम्। यवानां

अनेन सख्यावृत्तिभ्यो विहितो मानवृत्तेस्तु 'इदकिमोतु--'इत्यादिना एकत्वादावपि ॥—द्वित्रि—॥--पयश्च दिव्य शुचि मेघसभव स्वतिप्रसन्ना परमां च वारुणीम् । ममातुल धारि च वक्त्रसभवं त्रयाणि पानानि यथातथा पिबेत् ॥—बहुवचनमिति । पानस्यैकत्वात् कथ बहुवचनमित्याशङ्कार्थं ॥—कथमिति । इह केचित्तु भमशब्दान्नित्यमयटमिच्छन्ति उभो शुक्लकृष्णौ अवयवावस्य तत् स्वमते कथमित्याशङ्का ॥--आदे—॥—मूल्ये क्रेये वेति । यदा मूल्ये संख्याशब्दस्तदा क्रेय प्रत्ययार्थः क्रेये तु मूल्य प्रत्ययार्थः ॥—प्रत्ययार्थविशेषणमिति । पूर्वं तु प्रकृतिविशेषणम् ॥—गुणादिति किम्। भागादिति क्रियतामित्यर्थः ॥—द्वौ भागौ यवानामिति। यत्र साक्षात्गुणः प्रयुज्यते तत्र भवतीति भाग-

त्रयाणां भागानां द्वौ भागौ उदश्वितः क्रेयस्य । द्वौ गुणाविति क्रयं मूल्यं चैकगुणं कृत्वा तदपेक्षया मूल्यक्रेययोर्द्विस्तावत्तोच्यते । मूल्यक्रेय इति किम् । द्विगुणं क्षीरं तैलस्य पाक्यस्य ॥ १५३ ॥ *अधिकं तत्संख्यमस्मिन् शतसहस्रे शतिशद्दशान्ताया डः ॥ ७ । १ । १५४ ॥ संख्याया इति वर्तते तदिति च । तदिति प्रथमान्तात् शतिशद्दशन् इत्येवमन्तात्संख्याशब्दादस्मिन् इति सप्तम्यर्थे शते सहस्रे च डः प्रत्ययो भवति यत्तत् प्रथमान्तं तच्चेदधिकं तत्संख्यं च भवति । सा शतसहस्रलक्षणा संख्या यस्य योजनादेस्तत्तत्संख्यं शतं सहस्रमिति च यत्संख्यायते तदेव यद्यधिकमपि भवतीत्यर्थः । योजनानां विंशतिर्योजनानि वा विंशतिरधिकास्मिन्योजनशते शते वा योजनेषु विंशं योजनशतम् विंशं शतं योजनानि । एवं विंशं योजनसहस्रम् विंशं सहस्रं योजनानि। विंशं कार्षापणशतम् विंशं शतं कार्षापणानि । विंशं कार्षापणसहस्रम् विंशं सहस्रं कार्षापणानि । †संख्यासमुदायोऽपि संख्यैव संख्यायतेऽनयेति कृत्वेत्यत्रापि भवति । एकविंशम् द्वाविंशं शतम् । शत्, त्रिंशं शतं त्रिंशं सहस्रम् । एकत्रिंशम् । चत्वारिंशम् । पञ्चाशम् । दशन्, एकादशं शतम् । एकादशं सहस्रम् । द्वादशम् त्रयोदशम् शतं सहस्रं वा । योजनादीनामिव शतानामपि सहस्रे भवति । विंशतिः शतान्यधिकान्यस्मिन् शतानां सहस्रे विंशं शतसहस्रम् । त्रिंशम् एकादशम् । एवं सहस्राणामपि शते भवति । विंशतिः सहस्राण्यधिकान्यस्मिन्सहस्राणां शते विंशं शतसहस्रम् । त्रिंशम् । एकादशम् । राजदन्तादिषु पाठाच्छतशब्दस्य *पूर्वनिपातः । अधिकमिति किम् । विंशतिः त्रिंशत् एकादश वा *ऊना अस्मिन् शते । तत्संख्यमिति किम् । विंशतिर्दण्डा अधिका अस्मिन् योजनशते, त्रिंशत्पणा अधिका अस्मिन् कार्षापणसहस्रे, एकादश माषा अधिका अस्मिन् कार्षापणशते । अस्मिन्निति किम् । विंशतिरधिकास्माच्छतात् । शतसहस्र इति किम् । एकादशाधिका अस्यां त्रिंशति । शतिशद्दशान्ताया इति किम् । षडधिका अस्मिन् शते । दशाधिका अस्मिन्सहस्रे । व्यपदेशिवद्भावाद्दशान्तत्वे शन्नित्येव क्रियेत न तु दशन्निति । संख्याया इत्येव । गोविंशतिः अधिका अस्मिन् गोशते । न गोविंशतिशब्द एकविंशत्यादिवत्संख्याशब्दः ॥ १५४ ॥ संख्यापूरणे डट् ॥ ७ । १ । १५५ ॥ संख्या पूर्यते येन तत्संख्यापूरणम् । संख्याया इति वर्तते । संख्याशब्दात्संख्यापूरणेऽभिधेये डट् प्रत्ययो भवति । अत्र सामर्थ्यात् षष्ठ्यन्तात्प्रत्ययो विज्ञायते । अत एव तदिति निवृत्तम् । एकादशानां पूरणः एकादशः । एकादशसंख्यापूरण इत्यर्थः । एवं द्वादशः । त्रयोदशः । चतुर्दशः । एकादशी स्त्री। संख्याग्रहणं किम् । एकादशानामुष्ट्रिकाणां पूरणो घटः । एकस्य तु पूरणाभावान्न ग्रहणम् । व्यादेरित्यननुवृत्तेर्वा ॥ १५५ ॥ विंशत्यादेर्वा तमट् ॥ ७ । १ । १५६ ॥

शब्दप्रयोगे माभूदित्यर्थं ॥—अधि—॥ ननु दशान्तशतिशत इत्युक्तेऽपि शतिशतो प्रत्ययत्वात् प्रत्ययग्रहणपरिभाषया तदन्तप्रतिपत्तिर्भविष्यति किं तयोरन्तसम्बन्धेन । सत्यम् । अन्तग्रहणाभावे विंशतित्रिंशदादेरेव स्यात् न त्वेकविंशत्येकत्रिंशदादे' । अन्तग्रहणे तु यावत शतिशच्छब्दावन्तौ स्तस्तावतो ग्रहणं सिद्धम् । भवत्येव तथापि संख्यानुवृत्ते संख्याशब्दादुच्यमानः प्रत्यय' संख्यासमुदायादेकविंशत्यादेर्न स्यादित्याशङ्क्याह—संख्यासमुदायोपीत्यादि । एकविंशत्यादेः समुदायस्य लोके पृथक् संख्यात्वेन रूढत्वादिति भाव' ॥—पूर्वनिपात इति । सहस्राणां शतमिति कृते 'षष्ठ्ययत्नाच्छेषे' इति समासे प्रथमोक्तत्वात्सहस्रस्य पूर्वनिपाते प्राप्ते ॥—ऊना अस्मिन् शते इति । योजनेष्वित्याध्याहार्यमन्यथा तत्संख्यत्वं न स्यात्

विंशत्येवमादिकायाः संख्यायाः संख्यापूरणे तमट् प्रत्ययो वा भवति । पक्षे डट् । विंशतेः पूरणः विंशतितमः । विंशः । विंशतितमी, विंशी स्त्री । एकविंशतितमः ।
एकविंशः । द्वाविंशतितमः । द्वाविंशः । एकान्नत्रिंशत्तमः । एकान्नत्रिंशः । त्रिंशत्तमः । त्रिंशः । चत्वारिंशत्तमः । चत्वारिंशः । द्वाचत्वारिंशत्तमः । द्वाचत्वारिंशः ।
पञ्चाशत्तमः । पञ्चाशः । अष्टपञ्चाशत्तमः । अष्टपञ्चाशः ॥ १५६ ॥ **शतादिमासार्धमाससंवत्सरात् ॥ ७ । १ । १५७ ॥** शतादिभ्यः संख्याशब्देभ्यो मास
अर्धमास संवत्सर इत्येतेभ्यश्च संख्यापूरणे तमट् प्रत्ययो भवति । शतस्य पूरणः शततमः । शततमी । एकशततमः । सहस्रतमः । लक्षतमः । मासस्य पूरणो मासतमो
दिवसः । अर्धमासतमः । संवत्सरतमः । षष्ठ्यादेरित्येव सिद्धे शतादिग्रहणं संख्याद्यर्थम् ॥ १५७ ॥ **षष्ट्यादेरसंख्यादेः ॥ ७ । १ । १५८ ॥** संख्या आदिरवयवो
यस्य स संख्यादिः । ततोऽन्यस्मात् षष्ट्यादेः षष्टिप्रभृतिभ्यः संख्याशब्देभ्यः संख्यापूरणे तमट् प्रत्ययो भवति । विकल्पापवादः । षष्टेः पूरणः षष्टितमः ।
सप्ततितमः । अशीतितमः । नवतितमः । असंख्यादेरिति किम् । एकषष्टितमः । एकषष्टः । एकसप्ततितमः । एकसप्ततः । विंशत्यादेरिति विकल्प एव ॥ १५८ ॥
**नो मट् ॥ ७ । १ । १५९ ॥** असंख्यादेः संख्याशब्दान्नकारान्तात्संख्यापूरणे मट् प्रत्ययो भवति । डटोऽपवादः । पञ्चानां पूरणः पञ्चमः ।
पञ्चमी । सप्तमः । अष्टमः । नवमः । दशमः । न इति किम् । विंशः । असंख्यादेरित्येव । एकादशः । द्वादशः ॥ १५९ ॥ **पित्तिथट् बहुगणपूगसंघात्**
**॥ ७ । १ । १६० ॥** बहुगणपूगसंघ इत्येतेभ्यः संख्यापूरणे तिथट् प्रत्ययो भवति स च पित् । बहूनां पूरणः बहुतिथः । बह्वीनां पूरणी बहुतिथी ।
गणतिथः । गणतिथी । पूगतिथः । पूगतिथी । संघतिथः । संघतिथी । संख्याविशेषणं संभवापेक्षम् । पित्करणं पुंवद्भावार्थम् । टकारो ङ्यर्थः ॥ १६० ॥
**अतोरिथट् ॥ ७ । १ । १६१ ॥** अत्वन्तात्संख्याशब्दात्संख्यापूरणे इथट् प्रत्ययो भवति स च पित् । डटोऽपवादः । इयतां पूरणः इयतिथः । इयतीनां
पूरणी इयतिथी । कियतिथः । कियतिथी । यावतिथः । यावतिथी । तावतिथः । तावतिथी । एतावतिथः । एतावतिथी ॥ १६१ ॥ **षट्कतिकतिपयात्थट्**
**॥ ७ । १ । १६२ ॥** षट् कति कतिपय इत्येतेभ्यः संख्यापूरणे थट् प्रत्ययो भवति स च पित् । षण्णां पूरणः षष्ठः। षष्ठी । कतीनां पूरणः कतिथः । कतिथी । कति-
पयथः । कतिपयानां स्त्रीणां पूरणी कतिपयथी ॥ 'षष्ठी वानादरे' (२—२—१०८) 'चतुर्थी' ( २-२-५३ ) इति च निर्देशात्थटि 'नाम सिदय्व्यञ्जने'
( १—१—२१ ) इति पदत्वं न भवति ॥ १६२ ॥ **चतुरः ॥ ७ । १ । १६३ ॥** चतुर् इत्येतस्मात्संख्यापूरणे थट् प्रत्ययो भवति । चतुर्णां पूरणः चतुर्थः ।
चतसृणां पूरणी चतुर्थी । योगविभाग उत्तरार्थः ॥ १६३ ॥ **येयौ चलुक् च ॥ ७ । १ । १६४ ॥** चतुर् इत्येतस्मात्संख्यापूरणे य ईय इत्येतौ प्रत्ययौ भवतः च
इत्येतस्य लुक् च भवति । चतुर्णां पूरणः तुर्यः तुरीयः । तुर्या तुरीया । एवं च त्रैरूप्यं भवति ॥ १६४ ॥ **द्वेस्तीयः ॥ ७ । १ । १६५ ॥** द्विशब्दात्संख्यापूरणे

तीयः प्रत्ययो भवति । द्वयोः पूरणः द्वितीयः द्वितीया ॥ १६५ ॥ **त्रेस्तृ च** ॥७।१।१६६॥ त्रि इत्येतस्मात्संख्यापूरणे तीयः प्रत्ययो भवति । तत्संनियोगे च त्रेस्तृ इत्ययमादेशो भवति । त्रयाणां पूरणः तृतीयः । तिसृणां पूरणी तृतीया ॥ १६६ ॥ **पूर्वमनेन सादेश्चेन्** ॥ ७ । १ । १६७ ॥ पूर्वमिति क्रियाविशेषणान्निर्देशादेव द्वितीयान्तात्केवलात्सादेः सपूर्वाच्चानेनेति तृतीयार्थे कर्तरि इन् प्रत्ययो भवति । केवलात्, पूर्वमनेन पूर्वी । पूर्विणौ । पूर्विणः । अनेनेति कर्तृपदं, कर्ता च क्रियामन्तरेण न भवतीति कृतं भुक्तं पीतं चेति कांचित्क्रियामपेक्षते । विशेषावगमस्तु अर्थात् प्रकरणात् शब्दान्तरसंनिधेर्वा भवति । पूर्वी कटम् । पूर्वी ओदनम् । पूर्वी पयः । सादेः, कृतं पूर्वमनेन कृतपूर्वी कटम् । भुक्तं पूर्वमनेन भुक्तपूर्वी ओदनम् । पीतं पूर्वमनेन पीतपूर्वी पयः । कृतपूर्वादिसमासात् प्रत्ययः क्तान्तं येनैव समानाधिकरणं तस्यैव कर्मतां वक्ति । न च वृत्तौ क्तान्तं कटादिना समानाधिकरणमिति कटादिगतं कर्मानुक्तमिति अतो द्वितीया ॥ १६७ ॥ **इष्टादेः** ॥ ७ । १ । १६८ ॥ इष्ट इत्येवमादिभ्यः सामर्थ्यात्प्रथमान्तेभ्योऽनेनेति तृतीयार्थे कर्तरि इन् प्रत्ययो भवति । इष्टमनेन इष्टी यज्ञे । पूर्ती श्राद्धे । 'व्याप्ये क्तेनः' (२–२–९९) इति कर्मणि सप्तमी । इष्ट पूर्त उपपादित उपसादित उपासित निगदित परिगदित निकटित संकलित परिकलित संरक्षित परिरक्षित अर्चित अगणित अवगणित अवकीर्ण अवमुक्त आयुक्त गृहीत अधीत आम्नात श्रुत आसेवित अवधारित अवकल्पित कृत निराकृत उपकृत उपाकृत अनुयुक्त अनुगुणित अनुगणित गणित परिगणित अनुपठित निपठित पठित व्याकुलित उद्गृहीत कथित निकथित निषादित । इतीष्टादिः ॥१६८॥ **श्राद्धमद्य भुक्तमिकेनौ** ॥७।१।१६९॥ श्राद्धशब्दात्प्रथमान्तादद्यभुक्तमित्येवमुपाधिकादनेनेति तृतीयार्थे कर्तरि इक इन् इत्येतौ प्रत्ययौ भवतः । श्राद्धशब्दः कर्मनामधेयं तत्साधने द्रव्ये वर्तित्वा प्रत्ययमुत्पादयति । श्राद्धमनेनाद्य भुक्तं श्राद्धिकः श्राद्धी । अद्यग्रहणादद्य भुक्ते श्राद्धे श्वः श्राद्धिकः श्राद्धी इति न भवति । भुक्तमिति किम् । श्राद्धमनेनाद्य कृतम् ॥ १६९ ॥ **अनुपद्यन्वेष्टा** ॥ ७ । १ । १७० ॥ अनुपदीति इन्नन्तं निपात्यते अन्वेष्टा चेत्प्रत्ययार्थो भवति । अनुपदमन्वेष्टा अनुपदी उष्ट्राणाम् । अनुपदी गवाम् ॥ १७० ॥ **दाण्डाजिनिकायःशूलिकपार्श्वकम्** ॥ ७ । १ । १७१ ॥ दाण्डाजिनिकायःशूलिकशब्दौ इकण्प्रत्ययान्तौ पार्श्वकशब्दश्च कप्रत्ययान्तो निपात्यते अन्वेष्टा चेत्प्रत्ययार्थो भवति । दण्डाजिनं दम्भः तेनान्वेष्टा दाण्डाजिनिकः । यो मिथ्याव्रती परप्रसादार्थं दण्डाजिनमुपादायार्थानन्विच्छति स दाम्भिक उच्यते । निपातनं रूढ्यर्थं तेन शैवभागवतादौ न भवति । आयःशूलिक इति, तीक्ष्ण उपायोऽयःशूलसाम्यादयःशूलम् तेनान्वेष्टा आयःशूलिकः । यो मृदुनोपायेनान्वेष्टव्यानर्थान्तीक्ष्णोपायेनान्विच्छति राभसिकः स एवमुच्यते । केचिद्दण्डाजिनायःशूलाभ्यामिकमेवाहुः तन्मते दण्डाजिनिकः दण्डाजिनिका अयःशूलिकः अयःशूलिका । पार्श्वक इति पार्श्वमनृजुरुपाय लञ्चादिः तेनान्वेष्टा पार्श्वकः । ऋजुनोपायेनान्वेष्टव्यानर्थाननृजुनोपायेन योऽन्विच्छति स पार्श्वक उच्यते । यस्तु राज्ञः पार्श्वेनार्थान-

न्विच्छति स राजपुरुषस्तत्र न भवति ॥ १७१ ॥ क्षेत्रेऽन्यस्मिन्नाश्य इयः ॥ ७ । १ । १७२ ॥ क्षेत्रशब्दान्निर्देशादेव सप्तम्यन्तादन्योपाधिकान्नाश्येऽर्थे इयः प्रत्ययो भवति । अन्यस्मिन् क्षेत्रे नाश्यः क्षेत्रियो व्याधिः । क्षेत्रं शरीरम् । अन्यदिति जन्मान्तरशरीरमुच्यते । तत्र नाश्यो नेहेत्यसाध्यो व्याधिरुच्यते । क्षेत्रियं विषम् । तद्धि स्वशरीरादन्यस्मिन्परशरीरे संक्रमय्य किंचिन्नाश्यं चिकित्स्यं भवति । क्षेत्रियाणि तृणानि । तानि हि सस्यक्षेत्रेऽन्यस्मिन्नुत्पन्नानि नाश्यान्युत्पाद्यानि भवन्ति । क्षेत्रियः पारदारिकः । स हि स्वक्षेत्रादन्यस्मिन् क्षेत्रे परदारेषु प्रवर्तमानस्तत्र नाश्यो निग्राह्यो भवति । दाराः क्षेत्रम् ॥ १७२ ॥ छन्दोऽधीते श्रोत्रश्च वा ॥ ७ । १ । १७३ ॥ छन्दस्शब्दान्निर्देशादेव द्वितीयान्तादधीत इत्यस्मिन्नर्थे इयः प्रत्ययो वा भवति तत्संनियोगे च छन्दस्शब्दस्य श्रोत्रभावः । छन्दोऽधीते श्रोत्रियः । पक्षेऽण् । छान्दसः ॥ १७३ ॥ इन्द्रियम् ॥ ७ । १ । १७४ ॥ इन्द्रियमितीन्द्रशब्दादियप्रत्ययो निपात्यते । निपातनं रूढ्यर्थं, तेन यथायोगमर्थकल्पना । इन्द्र आत्मा इन्द्रस्य लिङ्गमिन्द्रियम् चक्षुराद्युच्यते । तेन हि करणेनात्मानुमीयते नाकर्तृकं करणमिति । इन्द्रेण दृष्टमिन्द्रियम् । आत्मा हि चक्षुरादीनि दृष्ट्वा स्वविषये नियुङ्क्ते । इन्द्रेण सृष्टमिन्द्रियम् । आत्मकृतेन हि शुभाशुभेन कर्मणा तथाविधविषयोपभोगायास्य चक्षुरादीनि भवन्ति । इन्द्रेण जुष्टमिन्द्रियम्, तद्द्वारेणास्य विज्ञानोत्पादात् । इन्द्रेण दत्तमिन्द्रियम्, विषयग्रहणाय विषयेभ्यः समर्पणात् । इन्द्रस्यावरणक्षयोपशमसाधनमिन्द्रियम् । एवं सति संभवेऽन्यापि व्युत्पत्तिः कर्तव्या ॥ १७४ ॥ तेन वित्ते चञ्चुचणौ ॥ ७ । १ । १७५ ॥ तेनेति तृतीयान्ताद्वित्तेऽर्थे चञ्चुचण इत्येतौ प्रत्ययौ भवतः । वित्तो ज्ञातः प्रकाश इत्यर्थः । विद्यया वित्तः विद्याचञ्चुः । विद्याचणः । केशचञ्चुः । केशचणः ॥ १७५ ॥ पूरणाद्ग्रन्थस्य ग्राहके को लुक्चास्य ॥ ७ । १ । १७६ ॥ तेनेति तृतीयान्तात्पूरणप्रत्ययान्तात् ग्रन्थस्य ग्राहकेऽर्थे कः प्रत्ययो भवति तत्संनियोगे च पूरणप्रत्ययस्य लुक् । द्वितीयेन रूपेण ग्रन्थस्य ग्राहकः द्विकः । त्रिकः चतुष्कः पञ्चकः षट्कः वैयाकरणः । ग्रन्थस्येति किम् । पञ्चमेन दिनेन शत्रूणां ग्राहकः ॥ १७६ ॥ ग्रहणाद्वा ॥ ७ । १ । १७७ ॥ ग्रन्थस्येति वर्तते पूरणादिति च । गृह्यतेऽनेनेति ग्रहणं रूपादि । ग्रन्थस्य ग्रहणाद् ग्रहणे वर्तमानात्पूरणप्रत्ययान्तान्नाम्नः कः प्रत्ययो भवति स्वार्थे प्रकृत्यर्थ एव अर्थान्तरानिर्देशात् तत्संनियोगे च पूरणप्रत्ययस्य वा लुक् । वेति लुकैव संबन्ध्यते न प्रत्ययेन । पक्षे प्रत्ययानुत्पत्तेर्महाविभाषयैव सिद्धत्वात् । द्वितीयमेव द्विकम् ग्रन्थग्रहणमस्य । द्वितीयकम् ग्रन्थग्रहणमस्य । एवं त्रिकं व्याकरणस्य ग्रहणम् । तृतीयकं व्याकरणस्य ग्रहणम् । चतुष्कं चतुर्थकं पञ्चकं पञ्चमकम् । ग्रन्थस्येत्येव । द्वितीयं ग्रहणं धान्यस्य ॥ १७७ ॥ *सस्याद्गुणात्परिजाते ॥ ७ । १ । १७८ ॥ सस्यशब्दाद्गुणवाचिनस्तेनेति तृतीयान्तात्परिजातेऽर्थे कः प्रत्ययो भवति । परिः सर्वतोभावे । जनिः संपत्तौ । सस्येन परिजातः सस्यकः शालिः । यः सर्वतो गुणैः संपन्नो न यस्य किंचिदपि वैगुण्यमस्ति स एवमुच्यते । एवं सस्यको देशः । सस्यको वत्सः । सस्यकं सीधु । सस्यको मणिः । *रूढिशब्दश्चायं मणिविषये । सस्यकः खड्गः सर्वतः सारेण

॥——सस्या——॥——रूढिशब्दश्चेति । गुणेन परिजातोऽस्तु वा मा वा समुदायप्रसिद्ध्या तु मणिविशेषस्य सञ्ज्ञा

संवद्धः। गुणादिति किम्। धान्यवचनान्मा भूत्। सस्येन परिजातं क्षेत्रम् ॥ १७८ ॥ **धनहिरण्ये कामे** ॥ ७ । १ । १७९ ॥ धन हिरण्य इत्येताभ्यां निर्देशादेव सप्तम्यन्ताभ्यां कामेऽभिलाषेऽर्थे कः प्रत्ययो भवति। धने कामः धनकः चैत्रस्य । हिरण्यको मैत्रस्य ॥ १७९ ॥ **स्वाङ्गेषु सक्ते** ॥ ७ । १ । १८० ॥ स्वाङ्गवाचिभ्यो नामभ्यो निर्देशादेव सप्तम्यन्तेभ्यः सक्ते तत्परेऽर्थे कः प्रत्ययो भवति । केशेषु सक्तः केशकः। नखकः। दन्तकः। केशादिरचनायां प्रसक्त उच्यते। बहुवचनात्स्वाङ्गसमुदायादपि भवति। दन्तौष्ठकः। केशनखकः ॥ १८० ॥ **उदरे त्विकणाद्यूने** ॥ ७ । १ । १८१ ॥ उदरशब्दान्निर्देशादेव सप्तम्यन्तात्सक्तेऽर्थे इकण् प्रत्ययो भवति सक्तश्चेदाद्यूनो भवति । उदरे सक्तः औदरिकः आद्यूनः अविजिगीषुः यो बुभुक्षयात्यन्तं पीड्यते । औदरिकी । आद्यून इति किम् । उदरकोऽन्यः। तुशब्दः पूर्वयोगशेषतामस्य कथयति । तेन काधिकारो न बाध्यते ॥ १८१ ॥ *अंशं हारिणि ॥ ७ । १ । १८२ ॥ अंशशब्दान्निर्देशादेव द्वितीयान्ताद्धारिण्यर्थे कः प्रत्ययो भवति । अंशं हारी अंशको दायादः । हारीत्यावश्यके णिन् ॥ १८२ ॥ **तन्त्रादचिरोद्धृते** ॥ ७ । १ । १८३ ॥ तन्त्रशब्दान्निर्देशादेव पञ्चम्यन्तादचिरोद्धृतेऽचिरादुत्तीर्णेऽर्थे कः प्रत्ययो भवति । तन्त्रात्पटवानोपकरणादचिरोत्तीर्णः तन्त्रकः पटः । प्रत्यग्र इत्यर्थः ॥ १८३ ॥ **ब्राह्मणान्नाम्नि** ॥ ७ । १ । १८४ ॥ ब्राह्मणशब्दान्निर्देशादेव पञ्चम्यन्तादचिरोद्धृतेऽर्थे नाम्नि संज्ञायां कः प्रत्ययो भवति । सदाचारब्राह्मणेभ्यस्तदानीमेवोद्धृत्य पृथक्कृतः ब्राह्मणको नाम देशः । यत्रायुधजीविनः काण्डस्पृष्टा नाम ब्राह्मणा भवन्ति । आयुधजीवी ब्राह्मण एव ब्राह्मणक इत्यन्ये ॥ १८४ ॥ **उष्णात्** ॥ ७ । १ । १८५ ॥ उष्णशब्दात्पञ्चम्यन्तादचिरोद्धृतेऽर्थे कः प्रत्ययो भवति नाम्नि । उष्णादग्नेरचिरोद्धृता उष्णिका यवागूः । अल्पान्ना पेया विलेपिकेति यावत् । उष्णकुण्डान्निसृता नदीति केचित् ॥ १८५ ॥ **शीताच्च कारिणि** ॥ ७ । १ । १८६ ॥ शीतादुष्णाच्च सामर्थ्यात् द्वितीयान्तात्कारिण्यर्थे कः प्रत्ययो भवति नाम्नि। शीतं मन्दं करोति शीतकः अलसः। उष्णं क्षिप्रं करोति उष्णकः दक्षः। नाम्नीत्यनुवृत्तेः शीतोष्णशब्दाविह मान्द्यशीघ्रवचनौ गृह्येते न स्पर्शवचनौ। क्रियाविशेषणत्वात् द्वितीया। कारीत्यावश्यके णिन् ॥ १८६ ॥ *अधेरारूढे ॥ ७ । १ । १८७ ॥ अधिशब्दादारूढेऽर्थे वर्तमानात्स्वार्थे कः प्रत्ययो भवति। आरूढशब्दः कर्तरि कर्मणि च क्तप्रत्यये सिद्धः। तत्र यदा कर्तरि तदा अधिको द्रोणः *खार्याः अधिको द्रोणः *खार्यामिति च भवति। यदा तु कर्मणि तदा अधिका खारी *द्रोणेनेति भवति ॥१८७॥ **अनोः कमितरि** ॥७।१। १८८ ॥ अनुशब्दात्कः प्रत्ययो भवति समुदायेन चेत्कमिता गम्यते। अनुकामयतेऽनुकः ॥१८८॥ **अभेरीश्च वा** ॥७।१।१८९॥ अभिशब्दात्कः प्रत्ययो भवति ईकारश्चास्य वा भवति समुदायेन चेत्कमिता गम्यते। अभिकामयते अभिकः, अभीकः ॥ १८९ ॥ **सोऽस्य मुख्यः** ॥ ७ । १ । १९० ॥ स इति प्रथमान्तादस्येति षष्ठ्यर्थे कः प्रत्ययो भवति यत्तत्प्रथमान्तं स चेन्मुख्यः प्रधानं ग्रामणीर्भवति। देवदत्तो मुख्योऽस्य देवदत्तकः संघः। जिनदत्तकः। देवदत्तो मुख्य एषां देवदत्तकाः। जिनदत्तकाः। मुख्य

॥-अंशं-॥अवश्य हरिष्यति णिन्। 'एष्यदृणेन.' इति षष्ठ्या निषेध.। शीलार्थे तु षष्ठी स्यात् ॥-अधे-॥-खार्याः॥ खार्यामिति चेति। 'अधिकेन भूयसस्ते' पञ्चमीसप्तम्यौ ॥-द्रोणेनेति। 'तृतीयाल्पीयस.'

इति किम् । देवदत्तः शत्रुरेपाम् ॥ १९० ॥ शृङ्खलकः करभे ॥ ७ । १ । १९१ ॥ शृङ्खलकशब्दः कप्रत्ययान्तो निपात्यते करभे उष्ट्रशिशौ वाच्ये । शृङ्खलं वन्धनमस्य शृङ्खलकः करभ उच्यते । करभाणां काष्ठमयं पादवन्धनं शृङ्खलम् । वयःशब्दश्चायम् । शृङ्खलं वन्धनं भवतु वा माभूत् ॥ १९१ ॥ उदुत्सोरुन्मनसि ॥ ७ । १ । १९२ ॥ उत् उत्सु इत्येताभ्यामस्येत्युन्मनस्याभिधेये कः प्रत्ययो भवति । उद्गतं मनोऽस्य उत्कः । उत्सुगतं मनोऽस्य उत्सुकः। उन्मना इत्यर्थः ॥ १९२ ॥ *कालहेतुफलाद्रोगे ॥ ७ । १ । १९३ ॥ -स इति वर्तते । स इति प्रथमान्तेभ्यः कालविशेषवाचिभ्यो हेतुवाचिभ्यः फलवाचिभ्यश्चास्येति षष्ठ्यर्थे कः प्रत्ययो भवति यत्तदस्येति निर्दिष्टं रोगश्चेत्तद्भवति। द्वितीयो दिवसोऽस्याविर्भावाय। द्वितीयकः। तृतीयकः। चतुर्थको ज्वरः। सततः कालोऽस्य सततको ज्वरः। हेतु, विषपुष्पं हेतुः कारणमस्य विषपुष्पकः। काशपुष्पकः। पर्वतको रोगः। फल, शीतं फलं कार्यमस्य शीतकः। उष्णको ज्वरः। रोग इति किम्। द्वितीयो दिवसोऽस्य जातस्य बालकस्य ॥ १९३ ॥ *प्रायोऽन्नमस्मिन्नाम्नि ॥ ७ । १ । १९४ ॥ स इति वर्तते। स इति प्रथमान्तादस्मिन्निति सप्तम्यर्थे नाम्नि संज्ञायां विषये कः प्रत्ययो भवति यत्तत्प्रथमान्तं तच्चेदन्नं प्रायः प्रायेण भवति। प्रायशब्दोऽत्रान्नसमानाधिकरणो *नियतलिङ्गसंख्यः। प्रायः अकृत्स्नबहुत्वम्। गुडापूपाः प्रायेण प्रायो वान्नमस्यां गुडापूपिका पौर्णमासी। तिलापूपिका। कृशरिका। त्रिपुटिका। नाम्नीति किम्। अपूपाः प्रायेण प्रायो वान्नमवन्तिषु॥१९४॥ कुल्मासादण्॥७।१।१९५॥ कुल्मासशब्दात्प्रथमान्तात्प्रायोऽन्नमस्मिन्नित्यर्थेऽण् प्रत्ययो भवति नाम्नि। कुल्मासाः प्रायेण प्रायो वान्नमस्यां पौर्णमास्यां कौल्मासी। कुल्माष इति मूर्धन्योपान्त्योप्यस्ति॥१९५॥ वटकादिन्॥७। १। १९६॥ वटकशब्दात्प्रथमान्तात्प्रायोऽन्नमस्मिन्नित्यर्थे इन् प्रत्ययो भवति नाम्नि। वटकानि प्रायेण प्रायो वान्नमस्यां वटकिनी॥ १९६॥ साक्षाद्द्रष्टा॥ ७। १। १९७॥ साक्षाच्छब्दादद्रष्टेत्यस्मिन्नर्थे इन् प्रत्ययो भवति। साक्षाद्द्रष्टा साक्षी। साक्षिणौ। साक्षिणः। 'प्रायोऽव्ययस्य' (७-४-६५) इत्यन्त्यस्वरादिलोपः। नाम्नीत्येव। साक्षाद्द्रष्टा ॥ १९७ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ सप्तमस्याध्यायस्य प्रथमः पादः समाप्तः ७ । १ ॥ लब्धलक्षा विपक्षेषु विलक्षास्त्वयि मार्गणाः ॥ तथापि तव सिद्धेन्द्र दातंत्युक्तंधरं यशः ॥ १ ॥

---

॥—काल—॥—स इति वर्त्तते इति । अत कारगान्निर्देशादेव पञ्चम्यन्तेभ्य इति न लभ्यते । ननु कालस्यापि रोगकारणत्वाद्धेतुग्रहणेनैव तद्ग्रहणे सिद्धे किं कालग्रहणेन । न । अन्यतो भवतोऽपि रोगस्यायमस्य काल इति रोगाधिकरणभूतस्य कालस्यासम्बन्धित्वे विज्ञायमानेऽपि यथा स्यादित्येवमर्थम् ॥—प्रायो—॥— नियतलिङ्गसंख्य इति । अनव्यय पुलिङ्ग एकवचनान्तोऽदन्तश्च पूर्वस्तु सान्तोऽव्ययत्वादलिङ्गश्च ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञ० स० प्रथमः पादः ॥ ॥

# ॥ द्वितीयः पादः ॥

*तदस्यास्त्यस्मिन्निति मतुः ॥ ७ । २ । १ ॥ तदिति प्रथमान्तादस्येति षष्ठ्यर्थेऽस्मिन्निति सप्तम्यर्थे वा मतुः प्रत्ययो भवति यत्तत्प्रथमान्तमस्तीति चेत्तद्भवति अस्तिसमानाधिकरणं भवतीत्यर्थः । गावोऽस्य सन्ति गोमान् । यवमान् । वृक्षा अस्मिन् सन्ति वृक्षवान् प्लक्षवान् पर्वतः । अस्ति धनमस्य अस्तिमान् । स्वस्ति आरोग्यमस्यास्ति स्वस्तिमान् । अत्रास्तिस्वस्ती अव्ययौ धनारोग्यवचनौ । *अस्तीति च *सामान्याभिधायि । विशेषास्तेश्च सामान्यास्तिना सामानाधिकरण्यमुपपद्यत एव । *अस्तीति वर्तमानकालोपादानात् वर्तमानसत्तायां प्रत्ययो भवति न भूतभविष्यत्सत्तायाम् गावोऽस्यासन् गावोऽस्य भवितार इति । न तर्हि इदानीमिदं भवति गोमानासीत् गोमान् भवितेति । भवति, न त्वेतस्मिन्वाक्ये भवति । तथा सति हि यथा गोमान् यवमानित्यत्रास्तेः प्रयोगो न भवति एवं गोमानासीत् गोमान् भवितेत्यत्रापि न स्यात् । भवतु वा प्रयोगः तथापि गावोऽस्यासन् गावोऽस्य भवितार इतिवत् गोमानासीदित्यादिष्वपि बहुवचनं श्रूयेत । का तर्हीयं वाचोयुक्तिः गोमानासीत् गोमान् भवितेति । *एषैषा वाचोयुक्तिः । नैषा गवांसत्ता कथ्यते गोमत्सत्तैषा कथ्यते । तर्हि *कथं मतुः । अस्त्यत्र वर्तमानकालोक्तिः । कथं तर्हि भूतभविष्यत्कालता गम्यते । '*धातोः संबन्धे प्रत्ययाः' ( ५–४–४१ ) इति । अथेह कस्मान्न भवति । चित्रा गावोऽस्य सन्ति स चित्रगुः *शबलगुरिति । बहुव्रीहिणैव मत्वर्थस्योक्तत्वात् । एवं पूर्वशालः अपरशालः पञ्चगुः दशगुरित्यत्राप्यस्तीतिपदसापेक्षं तद्धितद्विगुं द्वैमातुर इत्यादौ सावकाशं बाधित्वा अस्तिपदनिरपेक्षत्वादन्तरङ्गेण बहुव्रीहिणा भवता उक्तार्थत्वान्मतुर्न भवति । अस्तीति किम् । गावोऽस्यानन्तराः, गावोऽस्य समीपाः । अनन्तरादिष्वपि स्यात् । इतिकरणो

---

॥ अर्ह ॥--तद--॥—अस्तीति चेति । यदा अस्तिशब्दो धनार्थस्तदास्तिमानित्युपपद्यते । यदा तु विद्यमानार्थस्तदा कथ द्वयोरेकार्थत्वादित्याह—सामान्याभिधायीति । अस्तीति क्रियापद सामान्याभिधायि सामान्येनास्तित्वमात्रप्रतिपादनात् । प्रकृतिभूतस्य स्वव्ययस्य विशेषाभिधायित्व विद्यमानत्वरूपविशेषस्याभिधानात् ॥—अस्तीति वर्त्तमानेति । यद्यपि सूत्रे लिङ्ग सख्या कालश्चातन्त्राणि तथापीह सूत्रे वर्त्तमानकालस्यैव प्राधान्यमस्तीतिपदोपादानादन्यथा किमनेन । न खलु पदार्थ. सत्ता व्यभिचरति । तत' सत्ताया निसर्गसिद्धायां यत्पुनरस्तीति ग्रहणं तद्वर्त्तमानकालार्थम् ॥—एषैषेति । एषा या त्वया पृष्टा सा एषा वक्ष्यमाणेत्यर्थ ॥—कथं मतुरिति । वर्त्तमानत्वाभावादित्यर्थ ॥—धातोः सबन्ध इति । अनेन सूत्रेणायथाकालमपि प्रत्यया भवन्तीत्यर्थः । तेन प्रत्ययस्य वर्त्तमानकालत्वेऽपि भूतभविष्यत्कालतावगम' ॥—शबलगुरिति । शबलशब्दाद्वर्णवाचिनो गौरादित्वात् ङ्या शबल्यो गावोऽस्य सन्तीत्येव कार्यम् । यदा तु शबलशब्दो गवि वर्त्तते तदा गौरादित्वाभावादापि सति 'तद्धिताककोपान्त्य–'इत्यनेन आख्याद्वारेण पुवत्त्वनिषेधात् शबलागुरित्येव स्यात् । शशोदककुदावर्त्तौ द्वे

विवक्षार्थः। तेन 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ॥ संसर्गेऽस्तिविवक्षायां प्रायो मत्वादयो मताः' ॥ १ ॥ भूम्नि, गोमान् यवमान्। निन्दायाम्, शङ्खोदकी, ककुदावर्ती । प्रशंसायाम्, रूपवती शीलवती कन्या । नित्ययोगे, क्षीरिणो वृक्षाः कण्टकिनः । अतिशायने, उदरिणी कन्या । बलवान् मल्लः। संसर्गे, दण्डी छत्री। प्रायिकमेतद्भूमादिदर्शनं सत्तामात्रेऽपि मत्ययो दृश्यते । व्याघ्रवान् पर्वतः। स्पर्शरसगन्धवर्णवन्तः पुद्गलाः। रूपरसगन्धस्पर्शवती पृथिवी। रूपरसस्पर्शवत्य आपः। रूपस्पर्शवत्तेजः। स्पर्शवान् वायुः। यवमतीभिरद्भिर्यूपं प्रोक्षन्ति ॥ तथा मत्वर्थीयान्मत्वर्थीयः सरूपो न भवति। गाव एषां सन्तीति गोमन्तः गोमन्तोऽत्र सन्तीति मतुर्न भवति। दण्ड एषामस्तीति दाण्डिकाः दाण्डिका अत्र सन्तीति इको न भवति । विरूपस्तु भवत्येव । दाण्डिमती शाला। हस्तिमती उपत्यका। विरूपोऽपि मत्वर्थीयः *समानायां वृत्तौ न भवति। दण्ड एषामस्तीति दाण्डिकाः दाण्डिनः। दाण्डिका अस्य सन्ति दाण्डिनोऽस्य सन्तीति इन्मतू न भवतः ॥ 'शैषिकाच्छैषिको नेष्टः सरूपः प्रत्ययः क्वचित् ॥ *समानवृत्तौ मत्वर्थान्मत्वर्थीयोऽपि नेष्यते' ॥ १ ॥ क्वचिदिति समानायामसमानायां च वृत्तौ। शालायां भवः शालीयः । 'दोरीयः' (६-३-३२) इतीये सति पुनः शालीये भवः शालीयस्यायं वेतीयो न भवति। विरूपस्तु भवति । अहिच्छत्रे भव आहिच्छत्रः तत्र भव आहिच्छत्रीयः ॥ तथा *असंज्ञाभूतात् *कर्मधारयान्मत्वर्थीयो न भवति। वीरपुरुषा अस्मिन् ग्रामे सन्ति। अत्र बहुव्रीहिरेव भवति। वीरपुरुषको ग्रामः। संज्ञायास्तु भवत्येव। गौरखरवदरण्यम्। कृष्णसर्पवान् वल्मीकः। लोहितशालिमान् ग्रामः। *कथमेकगविकः सर्वधनीति। 'एकादेः कर्मधारयात्' (७-२-५८) इत्याद्यारम्भसामर्थ्याद्भविष्यति। तथा गुणे गुणिनि च ये गुणशब्दा वर्तन्ते तेभ्यो मत्वर्थीयो न भवति। शुक्लो वर्णोऽस्यास्तीति तिक्तो रसोऽस्यास्तीति प्रत्ययमन्तरेणाप्येषां तदभिधाने सामर्थ्यात्। ये तु गुणमात्रे तेभ्यो भवत्येव। रूपवान् रसवान् शौक्ल्यवान् कार्ष्ण्यवानिति ॥ १ ॥ *आ यात् ॥ ७ । २ ।

---

अपि अश्वस्यापलक्षणे ॥—समानायां वृत्ताविति । अत्र एषामस्येति च उभयत्रापि षष्ठ्या सद्भावात् समाना वृत्तिः ॥—समानवृत्तावित्यादि । पूर्वार्द्धे यत्सरूप इति पदं तदुत्तरार्द्धेऽपि योज्य, ततोऽयमर्थः—न केवल सरूपो मत्वर्थीयो मत्वर्थीयात्समानवृत्तौ न भवति मत्वर्थीयोऽपीत्यत्रापिशब्दाद्विरूपोऽपि इति । विषमवृत्तौ सरूपो मत्वर्थीयो न भवतीति तु कारिकया न सजगृहे। अथवा पूर्वार्द्धात्सरूप इति नाधिक्रियते किं तु मत्वर्थीयोऽपि नेष्यत इति सामान्येन भणनात्सरूपो विरूपश्च नेष्यत इत्येव व्याख्यायते । अपिशब्दस्तु शापिकापेक्षया समुच्चये व्याख्येयः ॥—असंज्ञाभूतादिति । द्विविधः कर्मधारय संज्ञाभूतोऽसंज्ञाभूतश्च । तत्र संज्ञाभूतो यः समुदायप्रसिद्ध्या प्रवर्त्तते यथा गौरखरादय. । असंज्ञाभूतो योऽवयवार्थयोगेन प्रवर्त्तते न पृथक्समुदायप्रसिद्ध्या यथा वीरपुरुषादिः ॥—कर्मधारयादित्यादि । उपलक्षणमिदं यत्कर्मधारयान्मत्वर्थीयो न भवतीति । यावता नञ्तत्पुरुषादपि बहुव्रीहिणैव भाव्यम् यथा अघोषा इति । अत्र हि न घोषोऽघोष. सोऽस्यास्ति इति कृते बहुव्रीहिरेव न मतु. । यत्र त्वर्थविशेषो मत्वर्थीयेनाभिधीयते तत्र नञ्तत्पुरुषादप्यसौ भवति यथानरवन्ति चक्राणीति । अत्र हि नञ्तत्पुरुषेण चक्रेश्वरकाभाव सामान्येनोच्यते । मत्वर्थीयेन त्वत्यन्त मूलतोऽप्यरकाभाव इति यावत् । तथा यद्यप्यसंज्ञाभूतात्कर्मधारयान्मत्वर्थीयो न भवतीत्युक्तम् तथापि प्रायेण दृश्यते यथा बिसकिसलयच्छेदपाथेयवन्त इति। अत्र हि बिसकिसलयच्छेदाश्च ते पाथेयं चेति कर्मधारये सति मतुरिति वल्लभेन निश्चिक्ये ॥ कथमिति। अत्राप्यसंज्ञाभूत. कर्मधारयोऽस्तीत्यभिप्रायः ॥-आ यात्।

२ ॥ 'गुणादिभ्यो यः' ( ७-२-५३ ) रूपात्प्रशस्ताहतात् ( ७-२-५४ ) इत्या एतस्मात्प्रत्ययात् याः प्रकृतयो निर्दिश्यन्ते ताभ्यो मतुः प्रत्ययो भवति तदस्यास्ति तदस्मिन्नस्तीत्यस्मिन्विषये । कुमारीमान् । व्रीहिमान् । दण्डवान् । अशीर्षवान् । वातवान् । चूडावान् । सिध्मवान् । गोमान् । गुणवान् । आ यादि-त्यभिविधावाङ् । अपवादैर्बाधा माभूदिति वचनम् । तेन *यथाभिधानमुत्तरत्र मतुरपि भवति ॥ २ ॥ *नावादेरिकः ॥ ७ । २ । ३ ॥ नौ इत्येवमादिभ्यो मत्वर्थे इकः प्रत्ययो भवति मतुश्च । नौरस्यास्मिन्वास्तीति नाविकः । नौमान् । कुमारिकः । कुमारीमान् । *यवखदिकः । यवखदावान् । नौकुमारीभ्याम् *इनं केचिदाहुः नावी । कुमारी । नौ कुमारी यवखदा सभा करण इति नावादिः ॥ ३ ॥ *शिखादिभ्य इन् ॥ ७ । २ । ४ ॥ शिखा इत्येवमादिभ्यो मत्वर्थे इन् प्रत्ययो भवति मतुश्च । शिखी । शिखावान् । माली । मालीवान् । शिखा माला शाला मेखला शाखा वीणा संज्ञा वडवा अष्टका बलाका पताका कर्मन् चर्मन् वर्मन् बल उत्साह उद्भास उज्ज्ञास उल मुल मूल आयाम व्यायाम प्रयाम आरोह अवरोह परिणाह शृङ्ग द्वन्द्व गदा निचुल मुकुल कूल फल अल मान मनीषा व्रत धन्वन् चूडा केका दंष्ट्रा सूना घृणा करुणा जरा आयास (आयस) स्तवक उपयाम उद्यम । इति शिखादिराकृतिगणः । केचित्तु वडवा अष्टका कर्मन् वर्मन् चर्मन् इत्येतेभ्य *इकमपीच्छन्ति ॥ ४ ॥ व्रीह्यादिभ्यस्तौ ॥ ७ । २ । ५ ॥ व्रीह्यादिभ्यो मत्वर्थे तौ इक इन् इत्येतौ प्रत्ययौ भवतः मतुश्च । व्रीहयोऽस्यास्मिन्वा सन्ति व्रीहिकः । व्रीही । व्रीहिमान् । मायिकः । मायी । मायावान् । मायावीति विन् । व्रीह्यादयः प्रयोगगम्याः ॥ ५ ॥ *अतोऽनेकस्वरात् ॥ ७ । २ । ६ ॥ अकारान्तादनेकस्वरान्मत्वर्थे तौ इक इन् इत्येतौ प्रत्ययौ भवतः मतुश्च । दण्डिकः । दण्डी । दण्डवान् । छत्रिकः । छत्री । छत्रवान् । अत इति किम् । खट्वावान् । मालावान् । अनेकस्वरादिति किम् । स्ववान् । *स्ववान् । अभिधानार्थस्येतिकरणस्यानुवृत्तेः कृदन्तान्न भवतः । राप्यवान् । लाप्यवान् लव्यवान् हव्यवान कृत्यवान् भृत्यवान् कारकवान् हारकवान् कुम्भकारवान् धान्यमायवान् हिंस्रवान् ईश्वरवान् पाकवान् स्नेहवान् । क्वचिद्भवतः । कार्यिकः । कार्यी । हार्यिकः । हार्यी । गृहिकः । गृही । दात्रिकः । दात्री । पात्रिकः । पात्री । भोगिकः । भोगी । तरिकः । तरी । विजयिकः । विजयी । संयमिकः । संयमी । स्थानिकः । स्थानी इति । जातिशब्देभ्यो न भवतः । व्याघ्रवान् । सिंहवान् । वृक्षवान् । प्लक्षवान् । *तथा द्रव्यवान् । क्रव्यवान् । सस्यवान् । धान्यवान् । माल्यवान् । पुण्यवान् । सत्यवान् । अपत्यवान् । धनवान् । क्वचिद्भवतः । तण्डुलि-

---

अत्र कुमारीमानित्यादिप्रयोगेषु यथाक्रमं 'नावादेरिक.' 'व्रीह्यादिभ्यस्तौ' 'अतोऽनेकस्वरात्' 'अशिरसोऽशीर्षश्च' 'बलवातदन्तललाटादूल' 'प्राण्यङ्गादातो ल' 'सिध्मादिक्षुद्रजन्तुरुग्भ्य' 'गो.' 'गुणादिभ्यो य' इत्यादिसूत्रविहितप्रत्ययविषये पक्षे आ यादित्यनेन मतुर्विधीयते ॥—यथाभिधानमिति । 'कालाजटा-'इत्यादिभि' कैश्चित्सूत्रैरर्थविशेषे प्रत्ययोऽभिहित स च मतुना न गम्यत इति तदर्थप्रतिपादनाय तत्सूत्रविहित एव प्रत्ययो भवति न तु मतुरित्याशय' ॥—नावा—॥—इनं केचिदाहुरिति । ते ह्यनयो' शिखादौ पाठ-मिच्छन्ति ॥—यवखदिक इति । खदन भिदायाङ् । यवाना खदा यवखदा यवाभ्योप ॥—शिखा—॥—इकमपीच्छन्ति इति । ते ह्येतान् व्रीह्यादौ पठन्ति ॥—अतो—॥—स्ववानिति । अत्र स्वामित्वाविवक्षणात् 'स्वान्मिन्नीशे' इति न मिन् ॥—तथा द्रव्यवानिति । व्याघ्रादयो लोकप्रसिद्ध्या जातिशब्दा द्रव्यादयस्तु शास्त्रप्रसिद्ध्या इति द्रव्यादीनामपि शास्त्रप्रसिद्ध्या

दण्डोऽस्मिन्नस्ति दण्डवद्गृहम्। वीरवान् ग्रामः। क्वचिद्भवतः।
कः। तण्डुली। कर्पटिकः। कर्पटी। धनादुत्तमर्णे भवतः। धनिकः। धनी। सप्तम्यर्थे च न भवतः। रसिको नटः। रसी इक्षुः। रूपिको दारकः।
खलिनी भूमिः। शाद्वलिनी भूमिः। रसरूपवर्णगन्धस्पर्शशब्दस्नेहेभ्यो गुणवाचिभ्यो न भवतः। क्वचिद्भवतः। तदेवं व्यभिचारे सूत्रणादभिधानमेव श्रेयः ॥ ६ ॥
रूपिणी कन्या। रूपिप्रवधिः। *रूपिसमवायाच्चाक्षुपाणि। स्पार्शिको वायुः। गन्धिकः। गन्धी। तत्संनियोगे चाशिरःशब्दस्याशीर्ष इत्ययमादेशो भवति।
अशिरसोऽशीर्षश्च ॥ ७। २। ७ ॥ अशिरःशब्दान्मत्वर्थे तौ इक इन् इत्येतौ प्रत्ययौ भवतः मतुश्च इति शीर्षादेशो विहित एव, मतौ त्वशिरसोऽशीर्षभावोऽनेन विधीयते ॥ ७ ॥
अशीर्षिकः। अशीर्षी। अशीर्षवान्। इकेनोः 'शीर्षः स्वरे तद्धिते' (३-२-१०३) इति शीर्षादेशो विहित एव, मतौ त्वशिरसोऽशीर्षभावोऽनेन विधीयते। नियमार्थमिदम्। 'उभयथा चायं नियमो
अर्थार्थान्ताद्भावात् ॥ ७। २। ८ ॥ अर्थशब्दादर्थान्ताच्च भाववाचिनो मत्वर्थे तौ इक इन् इत्येतौ प्रत्ययौ भवतः। अर्थेणि उपयाचने। अर्थनमर्थः। सोऽस्यास्तीत्यर्थिकः। अर्थी। प्रतीपमर्थनं
वाक्यभेदेन क्रियते। भाववाचिन एवैतौ प्रत्ययौ भवतः। भाववाचिनश्चैतावेव भवतः। भावादेवेति नियमादतो द्रव्यवाचिन इकेनौ न भवतः। अर्थो हिरण्यादिरस्यास्तीति
प्रत्यर्थः। सोऽस्यास्तीति प्रत्यर्थिकः। प्रत्यर्थी। इकेनावेवेति नियमादतो मतुर्न भवति। व्रीहिवाचिभ्यस्तुन्दादिभ्यश्च मत्वर्थे इलः प्रत्ययो भवति *चकारात्तौ चेकेनौ आ
अर्थवान् इति मतुरेव भवति ॥ ८ ॥ *व्रीह्यर्थतुन्दादेरिलश्च ॥ ७। २। ९ ॥ शालिलः। शालिकः। शाली। शालिमान्। व्रीहिशब्दोऽपि व्रीह्यर्थो
यादिति मतुश्च। व्रीह्यर्थे, कलमा अस्यास्मिन्वा सन्ति कलमिलः। कलमिकः। कलमी। कलमवान्। व्रीहिलः। तुन्दादि, तुन्दिलः। तुन्दिकः। तुन्दी। तुन्दवान्।
भवति किंतु तस्य पूर्वत्रोपादानादिलो न भवति। भावे हि तत्रोपादानमनर्थकं स्यात्। भवतीत्येके। इति तुन्दादिः ॥ ९ ॥ स्वाङ्गाद्विवृद्धात्ते ॥ ७। २। १० ॥
उदरिलः। उदरिकः। उदरी। उदरवान्। तुन्द उदर पिचण्ड यव व्रीह पङ्क गुहा कला काक। कर्णिलः कर्णिकः कर्णी कर्णवान्। ओष्ठिलः ओष्ठिकः
स्वाङ्गाद्विवृद्धोपाधिकान्मत्वर्थे ते इल इक इन् इत्येते प्रत्यया भवन्ति मतुश्च। विवृद्धौ महान्तौ कर्णावस्य स्तः इतीकेन्मतव एव भवन्ति ॥ १० ॥ वृन्दादारकः ॥ ७। २।
ओष्ठी ओष्ठवान्। विवृद्धादिति किम्। अन्यत्रेलो न भवति। 'अतोऽनेकस्वरात्' (७-२-६) शृङ्गात् ॥ ७। २। १२ ॥ शृङ्गान्मत्वर्थे
११ ॥ वृन्दशब्दान्मत्वर्थे आरकः प्रत्ययो भवति मतुश्च। वृन्दारकः। वृन्दवान्। शिखादित्वात् वृन्दी ॥ ११ ॥ फलबर्हाच्चेनः ॥ ७। २। १३ ॥ फलबर्ह इत्येताभ्यां शृङ्गाच्च मत्वर्थे
आरकः प्रत्ययो भवति मतुश्च। शृङ्गारकः। शृङ्गवान्। शिखादित्वात् शृङ्गी ॥ १२ ॥ शिखादित्वात् फली बर्ही ॥ १३ ॥ मलादीमसश्च
इनः प्रत्ययो भवति मतुश्च। फलिनः। फलवान्। बर्हिणः। बर्हवान्। शृङ्गिणः। शृङ्गवान्। मलिनः। मलवान् ॥ १४ ॥ मरुत्पर्वणस्तः ॥ ७। २। १५ ॥ मरुत्पर्वन्
॥ ७। २। १४ ॥ मलशब्दान्मत्वर्थे ईमस इनश्च प्रत्ययौ भवतः मतुश्च। मलीमसः।

---

॥—रूपिसमवायादिति। सख्या परिमाणानि पृथक्त्वं संयोगवि-जातिशब्दत्वं दर्शयता तथैरुपात्तम् ॥—गुणवाचिभ्यो नेति। यदा तु कस्यचिद्रूप रस इत्यादि नाम भवति तदा भवत्येव ॥—पूर्वत्रेति। व्रीह्यादिभ्यस्तावित्यत्र। ननु तर्हि अर्थग्रहणाभावेऽपि व्रीहिशब्दोपा-भागो कर्म्म च रूपिसमवायाच्चाक्षुपाणीति ॥—व्रीह्य—॥—चकारात्तौ चेति। अत्र चशब्दोऽन्यर्थे तावपीत्यर्थः।

इत्येताभ्यो मत्वर्थे तः प्रत्ययो भवति मतुश्च । मरुत्तः । मरुत्वान् । पर्वतः । पर्ववान् ॥ १५ ॥ *वलिवटितुण्डेर्भः ॥ ७ । २ । १६ ॥ वलिवटितुण्डि इत्येतेभ्यो मत्वर्थे भः प्रत्ययो भवति । वलिभः । वलिन इत्यङ्गादित्वान्नः । वटिभः । तुण्डिभः । सिध्मादिपाठाल्ले तुण्डिलः । मतुश्च । वलिवान् । । प्रवृद्धा नाभिस्तुण्डिः ॥ १६ ॥ ऊर्णाहंशुभमो युस् ॥ ७ । २ । १७ ॥ ऊर्णा अहम् शुभम् इत्येतेभ्यो मत्वर्थे युस् प्रत्ययो भवति । ऊर्णायुः उरभ्रः । अहंयुः अहंकारी । शुभंयुः कल्याणबुद्धिः ॥ १७ ॥ कंशंभ्यां युस्तियस्तुतवभम् ॥ ७ ॥ २ । १८ ॥ कम् शम् इत्येताभ्यां मत्वर्थे युस् ति यस् तु त व भ इत्येते प्रत्यया भवन्ति । कंयुः । शंयुः । कन्तिः । शंतिः । कंयः । शंयः । कंतुः । शन्तुः । कन्तः । शन्तः । कंवः । शंवः । कंभः । शंभः । युस्यसोः सकारो 'नाम सिद्व्यञ्जने'-( १—१—२१ ) इति पदत्वार्थः । तेन 'तौ मुमो व्यञ्जने स्वौ'-( १-३-१४ ) इत्यनुस्वारानुनासिकौ सिद्धौ । कंयुः । कय्युः । शंयः । शय्यः ॥ १८ ॥ बलवातदन्तललाटादूलः ॥ ७ । २ । १९ ॥ एभ्यो मत्वर्थे ऊलः प्रत्ययो भवति । बलूलः । वातूलः । दन्तूलः । ललाटूलः । मतुश्च । बलवान् । वातवान् । दन्तवान् । ललाटवान् ॥ १९ ॥ *प्राण्यङ्गादातो लः ॥ ७ । २ । २० ॥ प्राण्यङ्गवाचिन आकारान्तान्मत्वर्थे लः प्रत्ययो भवति मतुश्च । *चूडालः । जङ्घालः । *शिखालः । चूडावान् । जङ्घावान् । शिखावान् । प्राण्यङ्गादिति किम् । जङ्घावान् प्रासादः । शिखावान् प्रदीपः । अङ्गग्रहणं किम् । इच्छावान् । वासनावान् । कर्णिकाल इत्यत्र कर्णिकाशब्दः प्राण्यङ्गस्यैव वाचक इत्याहुः । आत इति किम् । हस्तवान् । पादवान् ॥ २० ॥ *सिध्मादिक्षुद्रजन्तुरुग्भ्यः ॥ ७ । २ । २१ ॥ सिध्मादेर्गणात् क्षुद्रजन्तुवाचिभ्यो रुग्वाचिभ्यश्च मत्वर्थे लः प्रत्ययो भवति मतुश्च । सिध्मान्यस्य सन्ति सिध्मलः । सिध्मवान् । वर्ध्मलः । वर्ध्मवान् । अङ्गादित्वान्ने वर्ध्मनः । गडुलः । गडुमान् । पार्ष्णीधमनीशब्दौ दीर्घान्तावेव गणे पठ्येते तेन दीर्घान्ताभ्यामेव लः । पार्ष्णीलः । धमनीलः । ह्रस्वान्ताभ्यां तु मतुरेव । पार्ष्णिमान् । धमनिमान् । क्षुद्रजन्तु, यूकालः । यूकावान् । मक्षिकालः । मक्षिकावान् । आ नकुलात् क्षुद्रजन्तुः । रुक्, मूर्च्छालः । मूर्च्छावान् । विचर्चिकालः । विचर्चिकावान् । रुग्भ्य इति बहुवचनं स्वरूपविधिनिषेधार्थम् । सिध्म वर्ध्मन् गडु तुण्डि मणि नाभि बीज निष्पाद् निष्पद् निष्प पांशु हनु पर्शु पार्ष्णी धमनी सक्तु मांस पत्र वात पित्त श्लेष्मन् पार्श्व कर्ण सक्थि स्नेह शीत कृष्ण श्याम पिङ्ग पक्ष्मन् पृथु मृदु मञ्जु वट्ठ कण्डू । इति सिध्मादिः । कथं वत्सलः स्नेहवान् अंसलो बलवान् । नात्र कश्चिद्वत्साद्यर्थोऽस्ति इति *पेशलकुशलादिवदेतौ

दानेऽपि व्रीह्यर्थग्रहणे लब्धे किमर्थग्रहणेन । न । प्रतिपत्तिगौरवनिरासार्थत्वादर्थग्रहणस्य ॥—वलिव-॥ वटिरुन्नतनाभ्यर्थः । एकदेशेतिन्यायात्तुन्दिशब्दादपि भे तुन्दिभ इति क्षीर ॥—प्राण्य—॥—चूडाल इति । शाखादिपाठेन न बाध्यते इतिकरणात् ॥-शिखाल इति । इदमुदाहृतं शकटोत्पलभोजैः । मूलोदाहरण तु भोजनैव ततश्चैव ज्ञायते यथा शिखाया वलच् सञ्ज्ञायां तथा इत्रापि वह्नो मयूर इति नियते अर्थे द्रष्टव्य इत्यवधार्यमितिकरणात् ॥—प्राण्यङ्गस्यैवेति । न तु कर्णाभरणस्येत्यर्थ ॥—सिध्मा ॥—ननु सिध्मशब्दस्य दुर्भित्तार्थत्वात् रुग्द्वारेणेव ल सिद्ध कि गणपाठेन । सत्यम् । अस्यादन्तत्वात् 'प्राणिस्थादस्वाङ्गात्' इतीन् स्यात्तद्बाधनार्थम् । वर्ध्मन्शब्दस्यापि दुर्भित्तार्थत्वात् कण्डूशब्दस्य च तथैव सिद्ध किं त्वाभ्यां यथाक्रम 'नोऽगाङ्दे' 'मध्वादिभ्यो रः' इत्येव स्यात् । तथाऽत्र गडुशब्दो गडुलत्वरूपे गुणे वर्त्तते इति रुग्द्वारेण न सिध्यति ॥—पेशलकुशलादिवदिति । यथा पेश लाति कुश लाति इत्येवमनयोर्व्युत्पत्तिरेव

यथाकथंचिन्नुत्पादनीयौ सिध्मादिषु वा पठनीयौ ॥ २१ ॥ प्रज्ञापर्णोदकफेनाल्लेलौ ॥ ७ । २ । २२ ॥ प्रज्ञा पर्ण उदक फेन इत्येतेभ्यो मत्वर्थे ल इल इत्येतौ प्रत्ययौ भवतः मतुश्च । प्रज्ञालः । प्रज्ञिलः । प्रज्ञावान् । पर्णलः । पर्णिलः । पर्णवान् । उदकलः । उदकिलः । उदकवान् । फेनलः । फेनिलः । फेनवान् ॥ २२ ॥ *कालाजटाघाटात्क्षेपे ॥ ७ । २ । २३ ॥ कालाजटाघाटा इत्येतेभ्यो ल इल इत्येतौ प्रत्ययौ भवतः क्षेपे प्रत्ययार्थस्य निन्दायां गम्यमानायाम् । *कालालः । कालिलः । कालेति डोपान्त्यं केचित्पठन्ति । काडालः । काडिलः । *जटालः । जटिलः । *घाटालः । घाटिलः । मतुना क्षेपो न गम्यते इति क्षेपे मतुर्न भवति । क्षेप इति किम् । कालावान् । जटावान् । घाटावान् ॥ २३ ॥ वाच आलाटौ ॥ ७ । २ । २४ ॥ वाच् इत्येतस्मान्मत्वर्थे आल आट इत्येतौ प्रत्ययौ भवतः क्षेपे गम्यमाने । ग्मिनोऽपवादः । वाचालः । वाचाटः । यो बहु निःसारं भाषते स एवं क्षिप्यते । मतुना क्षेपो न गम्यते इति क्षेपे मतुर्न भवति । क्षेपे इत्येव । वाग्मी । वाग्वान् ॥ २४ ॥ *ग्मिन् ॥ ७ । २ । २५ ॥ वाचो मत्वर्थे ग्मिन् प्रत्ययो भवति मतुश्च । वाग्मी । वाग्वान् । गकारः 'प्रत्यये च' (१-३-२) इति अनुनासिक*निवृत्त्यर्थः । *क्षेप इति निवृत्तम् ॥ २५ ॥ *मध्वादिभ्यो रः ॥ ७ । २ । २६ ॥ मध्वादिभ्यो मत्वर्थे रः प्रत्ययो भवति । *मधुरो रसः । अत्र मधुशब्दः स्वादुत्वे गुणत्वे गुणसामान्ये वर्तते । मधुरं मधु । मधुरं क्षीरम् । अत्र गुणे । क्षौद्रादिद्रव्यवृत्तेस्तु मतुरेव इतिकरणानुवृत्तेः । मधुमान् घटः । *एवं खं महत् कण्ठविवरमस्यास्ति खरः गर्दभः । खवानन्यः । मुखं सर्वस्मिन् वक्तव्ये यस्यास्तीति मुखरः वाचालः । मुखवानन्यः । कुञ्जावस्य स्तः कुञ्जरो हस्ती । कुञ्जशब्दोऽत्र हनुपर्यायः । कुञ्जवानन्यः । नगरं पुरं, नगवदन्यत् । ऊषरं क्षेत्रम्, ऊषवदन्यत् । मुष्करः पशुः, मुष्कवानन्यः । शुषिरं शुषिमत्काष्ठम् । कण्डूरः कण्डूमान् । *पाण्डुरः पाण्डुमान् । पांशुरः पांशुमान् । मध्वादयः प्रयोगगम्याः ॥ २६ ॥ *कृष्यादिभ्यो वलच् ॥ ७ । २ । २७ ॥ कृष्यादिभ्यो मत्वर्थे वलच् प्रत्ययो भवति । कृषीवलः कुटुम्बी । कृषिमत्क्षेत्रम् । आसुतीवलः कल्यपालः । आसुतिमान् । परिषद्वलः । परिषद्वान् । पर्षद्वलः । पर्षद्वान् । परिषद्वलं तीर्थं पङ्किलमित्यर्थः । परिषद्वत् । रजस्वला स्त्री । रजस्वान् ग्रामः । केचित्तु रजस्वलो देशः रजस्वला भूमिः रजस्वान् रजस्वतीति सर्वत्राविशेषेण वृत्तिमिच्छन्ति । दन्तावलो नाम राजा हस्ती च । शिखावलं नगरम् । *शिखावलो मयूरः । शिखावला स्थूणा ।

वत्सलांसलयोरपि । औणादिकौ वा मनोज्ञमेधाविवाचिनौ ॥—काला—॥—कालाल इति । कडत् णिग् भिदायङ् । 'ऋफिड-'इति ले काला पादत्रसाविशेष । अस्मान्मतौ 'प्राण्यङ्ग-'इति ले अभायकारे च प्राप्ते लेलौ ॥—जटाल इति । लोकवञ्चनाय जटा अस्यास्ति ॥—घाटाल इति । निन्द्या घाटा कृकाटिकास्यास्ति ॥—ग्मिन्—॥—निवृत्त्यर्थ इति । द्वितीयगश्रवण न स्यादिति न वाच्य रूपमेव हि भिद्यते न श्रुति शब्दस्य श्रोत्रग्राह्यत्वादिति पूर्वन्यासा ॥—क्षेप इति निवृत्तम् । पृथग्योगादितिकरणानुवृत्तेश्च प्रशंसायामेवाय न स्वरूपमात्रे॥—मध्वा—॥—मधुर इति । मधुशब्दो माधुर्येऽर्थे पुलिङ्ग क्षौद्राद्यर्थे तु नपुंसक । तस्मान्माधुर्येऽर्थे पुलिङ्गेन वाक्यं कार्यं मधुरस्यास्तीति । स्वादुत्वे इत्यस्य गुणत्व इति गुणसामान्ये इति च पर्यायद्वयम् ॥—एवमिति । इतिकरणानुवृत्तेः । खर इत्यादिषु अर्थविशेषे रप्रत्ययोऽन्यत्र मतुरेवेत्यर्थः ॥—पाण्डुर इति । अत्र पाण्डुशब्दः पाण्डुरस्वरूपे गुणे वर्त्तते ॥—कृष्या—॥—शिखावलो मयूर इति ।

*दन्तवान्। शिखावानन्यः। मातृवलः मातृमान्। एवं पितृवलः। भ्रातृवलः। उत्साहवलः। पुत्रवलः। उत्सङ्गवलः। विशेष इतिकरणात्सिद्धः। कृष्यादयः प्रयोगगम्याः ॥ २७ ॥ *लोमपिच्छादेः शेलम् ॥ ७ । २ । २८ ॥ लोमादिभ्यः पिच्छादिभ्यश्च मत्वर्थे यथासंख्यं श इल इत्येतौ प्रत्ययौ भवतः मतुश्च । लोमशः लोमवान्। रोमशः रोमवान्। *पिच्छिलः पिच्छवान्। उरसिलः उरस्वान्। लोमन् रोमन् बभ्रु वल्गु हरि कपि मुनि गिरि ऊरु कर्क। इति लोमादिः। पिच्छ उरस् ध्रुवका ध्रुवका पक्ष चूर्ण। इति पिच्छादिः ॥ २८ ॥ *नोऽङ्गादेः ॥ ७ । २ । २९ ॥ अङ्ग इत्येवमादिभ्यो मत्वर्थे नः प्रत्ययो भवति मतुश्च। अङ्गान्यस्याः सन्ति अङ्गना। खाङ्गशब्दोऽयं, कल्याणाङ्गी स्त्री उच्यते इतिकरणात् अन्यत्राङ्गवती। पामनः पामवान्। *वामनः वामवान्। अङ्ग पामन् वामन् हेमन् श्लेष्मन् सामन् वर्ष्मन् (वर्धमन्) शाकिन् पलालिन् पलाशिन् ऊष्मन् कद्रु बलि इत्यङ्गादिः। *योगविभाग उत्तरार्थः ॥ २९ ॥ *शाकीपलालीदद्र्वा ह्रस्वश्च ॥ ७ ॥ २ ॥ ३० ॥ शाकी पलाली दद्रू इत्येतेभ्यो मत्वर्थे नः प्रत्ययो भवति मतुश्च नप्रत्ययसंनियोगे चैषां ह्रस्वोऽन्तादेशः। महच्छाकं शाकसमूहो वा *शाकी। महत्पलालं पलालक्षोदो वा पलाली। दद्रूर्नाम व्याधिः। शाकिनः। शाकीमान्। पलालिनः। पलालीमान्। दद्रुणः। दद्रूमान्। केचित्तु शाकीपलाल्योर्ह्रस्वत्वं नेच्छन्ति। तन्मते शाकीनः। पलालीनः ॥ ३० ॥ *विष्वचो विषुश्च ॥ ७ । २ । ३१ ॥ विष्वच् इत्येतस्मान्मत्वर्थे नः प्रत्ययो भवति विषु इत्ययं चादेशो भवति। विषु अञ्चतीति *विष्वक्। विष्वञ्चो रश्मयो विष्वग्गतानि वा अस्य सन्ति इति विषुणः आदित्यः। विषुणः वायुः। विषुशब्दो निपातो नानात्वे वर्तते। विष्वगिति *अखण्डमव्ययं वा। नकारसंनियोगे आदेशस्य विधानात् मतौ विष्वग्वान्। कथं विषुमानहोरात्रप्रविभाग इति। विषुर्नाम मुहूर्तस्तस्माद्भविष्यति ॥ ३१ ॥ लक्ष्म्या अनः ॥ ७ । २ । ३२ ॥ लक्ष्मीशब्दान्मत्वर्थेऽनः प्रत्ययो भवति। लक्ष्मीरस्यास्तीति लक्ष्मणः। मतौ लक्ष्मीवान् ॥ ३२ ॥ प्रज्ञाश्रद्धार्चावृत्तेर्णः ॥ ७ । २ । ३३ ॥ प्रज्ञाश्रद्धार्चावृत्ति इत्येतेभ्यो मत्वर्थे णः प्रत्ययो भवति मतुश्च। प्राज्ञः। प्रज्ञावान्। श्राद्धः। श्रद्धावान्। आर्चः। अर्चावान्। वार्त्तः। वृत्तिमान्। स्त्री तु प्राज्ञा श्राद्धा आर्चा वार्ता। प्राज्ञीति स्वार्थिकाणन्तात् ॥ ३३ ॥ ज्योत्स्नादिभ्योऽण् ॥ ७ । २ । ३४ ॥ ज्योत्स्ना इत्येवमादिभ्यो मत्वर्थेऽण् प्रत्ययो भवति। ज्योत्स्ना अस्मिन्नस्ति ज्यौत्स्नः पक्षः। ज्यौत्स्नी रात्रिः। तामिस्रः पक्षः। तामिस्री रात्रिः। तामिस्राणि गुहामुखानि। वैसर्पो व्याधिः। वैपादिकं कुष्ठम्। कौतुपं गृहम्। कौण्डलो युवा। तापसः पाखण्डी। साहस्रो देवदत्तः। मतौ ज्योत्स्नावान् तमिस्रावानित्यादि। तापस इति रूढिशब्दो रूढिविषये च मतुन भवति। कुण्डली सहस्री चेति शिखादित्वात्। ज्योत्स्नादयः प्रयोगगम्याः ॥ ३४ ॥ सिकताशर्करात् ॥ ७ । २ । ३५ ॥ सिकताशर्करा इत्येताभ्यां मत्वर्थेऽण् प्रत्ययो

---

इतिकरणात् प्राण्यङ्गार्थादपि शिखाशब्दात् वलच् न तु लः ॥ एव दन्तवान् शिखावानन्य इति । दन्तशिखाभ्यां संज्ञायामिति पूर्वैरुक्तत्वात् ॥—लोम—॥—पिच्छिल इति । पिच्छं चिक्कणत्वमस्यास्ति । यद्वा पिच्छं मयूरादिस्तकमस्यास्त्युपमानतया ॥—नोऽङ्गा—॥—वामन इति । वामानि नीचान्यर्थादङ्गान्यस्य ॥—योगविभाग इति । एकयोगस्तु लोमपिच्छाङ्गादेः शेलेनमित्येवंविधः स्यात् ॥-शाकी-॥-शाकीति। महत्त्वे समूहेपि तदद्गुलमिति स्त्रीत्वे गौरादित्वात् ङी ॥-विष्व-॥-विष्वक् इति । अत्र रूपमित्यध्याहारात् क्लीबत्वे सेर्लुपि मागमाभाव ॥-अखण्डमिति

भवति मतुश्च । सैकतः । सिकतावान् देशः । शार्करः शर्करावानोदनः ॥ ३५ ॥ *इलश्च देशे ॥ ७ । २ । ३६ ॥ सिकताशर्कराभ्यां देशे मत्वर्थे इलश्चकारादण्
च प्रत्ययौ भवतः मतुश्च । सिकतिलः सैकतः सिकतावान् देशः । शर्करिलः शार्करः शर्करावान् देशः । सिकताः देशः शर्कराः देशः इत्यभेदो*पचारात्
॥ ३६ ॥ द्युद्रोर्मः ॥ ७ । २ । ३७ ॥ द्यु इति दिवः कृतोकारस्य निर्देशः द्युशब्द उकारान्तोऽहःपर्यायः प्रकृत्यन्तरं वा । द्युद्रुशब्दाभ्यां मत्वर्थे मः प्रत्ययो
प्रत्ययो भवति । द्यौर्द्युर्वास्यास्मिन्वास्तीति द्युमः। द्रूणि दारूण्यस्यास्मिन्वा सन्तीति द्रुमः। रूढिशब्दाविमौ रूढिविषये च मतुर्न भवति। अन्यत्र तु मतुरेव । द्युमान् ।
द्रुमान् ॥ ३७ ॥ *काण्डाण्डभाण्डादीरः ॥ ७ । २ । ३८ ॥ काण्ड आण्ड भाण्ड इत्येतेभ्यो मत्वर्थे ईरः प्रत्ययो भवति मतुश्च । काण्डीरः । काण्डवान् । *आण्डीरः
आण्डवान् । भाण्डीरः । भाण्डवान् । आण्डौ मुष्कौ ॥ ३८ ॥ कच्छ्वा डुरः ॥ ७ । २ । ३९ ॥ कच्छूशब्दान्मत्वर्थे डुरः प्रत्ययो भवति । कच्छुरः । कच्छूमान्
॥ ३९ ॥ *दन्तादुन्नतात् ॥ ७ । २ । ४० ॥ उन्नतत्वोपाधिकाद्दन्तशब्दान्मत्वर्थे डुरः प्रत्ययो भवति । उन्नता दन्ता अस्य सन्ति दन्तुरः । उन्नतादिति किम् ।
*दन्तवान् ॥ ४० ॥ मेधारथान्नवेरः ॥ ७ । २ । ४१ ॥ मेधारथ इत्येताभ्यां मत्वर्थे इरः प्रत्ययो वा भवति। वावचनाद्यथाप्राप्तमिकेनौ आ यादिति मतुश्च । मेधिरः ।
मेधावान् । उत्तरसूत्रेण विन्नपि । मेधावी । रथिरः । रथिकः । रथी । रथवान् ॥ ४१ ॥ कृपाहृदयादालुः ॥ ७ । २ । ४२ ॥ कृपाहृदयशब्दाभ्यां मत्वर्थे आलुः
प्रत्ययो वा भवति मतुश्च । कृपालुः । कृपावान् । हृदयालुः । हृदयिकः । हृदयी । हृदयवान् ॥ ४२ ॥ *केशाद्वः ॥ ७ । २ । ४३ ॥ केशशब्दान्मत्वर्थे वः
प्रत्ययो वा भवति मतुश्च । केशवः । केशिकः । केशी । केशवान् । केशव इति *रूढिशब्दोऽपि विष्णुवाची ॥ ४३ ॥ मण्यादिभ्यः ॥ ७ ।
२ । ४४ ॥ मण्यादिभ्यो मत्वर्थे वः प्रत्ययो वा भवति मतुश्च । योगविभागाद्वेति निवृत्तम् । मणिवः । मणिमान् । सिध्मादिपाठात् मणिलः ।
हिरण्यवः । हिरण्यवान् । बिम्बावम् । कुररावम् । कुरवावम् । 'घञ्युपसर्गस्य बहुलम्' (३—२—८६) इति बाहुलकाद्दीर्घः । राजीवम् । इष्टकावम् । गाण्डिवम् ।
गाण्डीवम् । अजकावम् । बिम्बावम् । इत्यादयो रूढिशब्दाः । रूढिशब्दविषये च मतुर्न भवति। विषयान्तरे तु भवत्येव । बिम्बवानित्यादि। मणि हिरण्य बिम्ब कुरर
कुरव राजी इष्टका गाण्डि गाण्डी अजका इति। मण्यादयः प्रयोगगम्याः ॥ ४४ ॥ हीनात्स्वाङ्गादः ॥ ७ । २ । ४५ ॥ हीनोपाधिकात् स्वाङ्गान्मत्वर्थे अः प्रत्ययो

---

चकारान्तमित्यर्थः । चकारान्तस्यैव सूत्रे ग्रहणात् ॥—इल—॥—ननु पूर्वसूत्रेण सामान्येन भणनादेशेऽपि 'सिकताशर्कराभ्यामण्' सिद्ध एवेति किमन तदनुकर्षणार्थेन चश-
ब्देन। सत्यम् । यद्यत्र चकारो न स्यात्तदनुकर्षणार्थस्तदा देशेऽसावेव स्यान्न त्वण् । ननु सिकता देश इत्याद्यर्थं मत्वर्थीयस्य पक्षे लुप् लुबन्तस्य च प्रकृतिलिङ्गसङ्ख्ये वक्तव्ये इत्याह—उपचारा
दिति । रूढिवशाच्च बहुवचनान्त इति ॥—काण्डा—॥—आण्डीर इति। एकदेशेति न्यायात् श्लिष्टनिर्देशाद्वा अण्डीर इत्यपि गौडजयौ ॥—दन्ता—॥—दन्तवानिति । निर्गतत्वमुन्नतत्वम् ।
प्रमाणातिरेकस्तु वृद्धिरिति भिन्नत्वम् तस्योन्नतत्वे दन्तुर । नितृद्धिविवक्षायां तु 'स्वाङ्गाद्विवृद्धात्' इति 'आ यात्' इति च दन्तिको दन्तवानिति
यथायोग भवति । उपतार्थो मतुना न गम्यते इत्यत्र मतुर्न भवति ॥—केशा—॥—रूढिशब्दोपीति । न केवल यस्य केशा. सन्ति स केशव किंतु विष्णुरपि

भवति । खण्डः कर्णोऽस्यास्ति कर्णः । छिन्ना नासिकास्यास्ति नासिकः । हीनादिति किम् । कर्णवान् नासिकावानित्येव भवति ॥ ४५ ॥ **अभ्रादिभ्यः** ॥ ७ । २ ।
४६ ॥ अभ्र इत्येवमादिभ्यो मत्वर्थे अः प्रत्ययो भवति यथादर्शनं मतुश्च । अभ्राण्यस्मिन् सन्ति अभ्रं नभः । अर्शांस्यस्य सन्ति अर्शसो देवदत्तः । उरसः । उर-
स्वान् । अभ्र अर्शस् उरस् तुन्द चतुर पलित जटा घाटा कर्दम काम वल घटा अम्ल लवण । इत्यभ्रादिराकृतिगण ॥ ४६ ॥ *अस्तपोमायामेधास्रजो विन्
॥ ७ । २ । ४७ ॥ असन्तेभ्यस्तपस्मायामेधास्रज् इत्येतेभ्यश्च मत्वर्थे विन् प्रत्ययो भवति मतुश्च । असन्त, यशस्वी । यशस्वान् । सरस्वी सरस्वान् *सरस्वती ।
एवं तेजस्वी वर्चस्वी । तपस्वी । तपस्वान् । असन्तत्वेनैव सिद्धे तपसो ग्रहणं ज्योत्स्नाद्यणा बाधो माभूदित्येवमर्थम् । मायावी । मायावान् । मायी मायिक इति
व्रीह्यादिपाठात् । मेधावी । मेधावान् । स्रग्वी । स्रग्वान ॥ ४७ ॥ **आमयादीर्घश्च** ॥ ७ । २ । ४८ ॥ आमयशब्दान्मत्वर्थे विन् प्रत्ययो दीर्घश्चामयशब्दस्य भवति
मतुश्च । आमयावी । आमयवान् ॥ ४८ ॥ **स्वान्मिन्नीशे** ॥ ७ । २ । ४९ ॥ स्वशब्दान्मत्वर्थे ईशे वाच्ये मिन् प्रत्ययो भवति दीर्घश्चास्य । स्वमस्यास्तीति स्वा-
मी । ईश इति किम् । स्ववान् ॥ ४९ ॥ **गोः** ॥ ७ । २ । ५० ॥ गोशब्दान्मत्वर्थे मिन् प्रत्ययो भवति । गावोऽस्य सन्ति गोमी । मतुश्च । गोमान् । पूज्य एव
मिनमिच्छन्त्यन्ये ॥ ५० ॥ ***ऊर्जो विन्वलावश्चान्तः** ॥ ७ । २ । ५१ ॥ ऊर्ज्शब्दान्मत्वर्थे विन्वल इसेतौ प्रत्ययौ भवतः तत्संनियोगे चास्यास् चान्तो भव-
ति । ऊर्जस्वी । ऊर्जस्वलः । मतुश्च । ऊर्ग्वान् । कथमूर्जस्वान् । ऊर्जयतेः *असुप्रत्ययान्तस्य मतौ ॥ ५१ ॥ **तमिस्रार्णवज्योत्स्ना** ॥ ७ । २ । ५२ ॥ तमिस्रार्ण-
वज्योत्स्ना इत्येते शब्दा निपात्यन्ते । तमिस्रेति तमश्शब्दाद्रः उपान्त्यस्य चेत्वम् । तमोऽत्रास्तीति तमिस्रा रात्रिः । तमिस्रं तमःसमूहः । तमिस्राणि गुहामुखानि ।
मतुश्च । तमस्वान् । अर्णवेति अर्णसो वः प्रत्ययः अन्त्यस्य च लोपः। अर्णवः समुद्रः । ज्योत्स्नेति ज्योतिःशब्दान्नः प्रत्यय उपान्त्यलोपश्च निपात्यते । ज्योत्स्ना
चन्द्रप्रभा । अन्यत्र ज्योतिष्मती रात्रिः निपातनस्येष्टविषयत्वात् ॥ ५२ ॥ **गुणादिभ्यो यः** ॥ ७ । २ । ५३ ॥ गुणादिभ्यो मत्वर्थे यः प्रत्ययो भवति । गुण्यः
पुरुषः । हिम्य. पर्वतः । मतुश्च । गुणवान् । हिमवान् । कथं को गुणिनो नार्चयेत् इति इन्, शिखादित्वेन भविष्यति । गुणादयः प्रयोगगम्याः ॥ ५३ ॥
**रूपात्प्रशस्ताहतात्** ॥ ७ । २ । ५४ ॥ प्रशस्तोपाधिकादाहतोपाधिकाच्च रूपान्मत्वर्थे यः प्रत्यया भवति । प्रशस्तं रूपमस्यास्ति रूप्यो गौः । रूप्यः पुरुषः । आहतं
रूपमस्यास्ति रूप्यः कार्षापणः । निघातिकाताडनादीनारादिषु यद्रूपमुत्पद्यते तदाहतं रूप्यम् । प्रशस्ताहतादिति किम् । रूपवान् । प्रशंसायां मतुरपि भवति ।
रूपवती कन्या । आहते न भवति इतिकरणात् । कथं रूपिणी कन्या रूपिको दारक इति । व्रीह्यादित्वाद्भविष्यति । आ यादित्यस्य पूर्णोऽवधिः अतः परं मतुर्नास्ति
॥ ५४ ॥ **पूर्णमासोऽण्** ॥ ७ । २ । ५५ ॥ पूर्णमास्शब्दान्मत्वर्थेऽण् प्रत्ययो भवति । पूर्णो माश्चन्द्रमा अस्यामस्ति पौर्णमासी ॥ ५५ ॥ *गोपूर्वादत इकण्

---

॥-अस्त-॥-सरस्वतीति । यदा नदी तदा सरः सरण गमनमस्यास्तीति वाक्य, यदा तु भारती तदा सरो मानसाद्यस्यास्तीति ॥ ऊर्जो-॥-असुप्रत्ययान्तस्येति । यद्येव ऊर्जयतेरसन्तस्यास्तपोमायेत्यनेन असन्तत्वाद्विन् सिद्ध एव किमत्र सूत्रे ऊर्ज्शब्दाद्विन्विधानेन । सत्यम् । असन्तस्य ऊर्जयतेर्नियत एव प्रयोग इति ततोऽनेन विन्विधानम् एतच्च ऊर्ज्शब्दाद्विन्विधानेनैव ज्ञाप्यते ॥-गोपू-॥

॥ ७ । १ । ५६ ॥ गोशब्दपूर्वादकारान्तान्मत्वर्थे इकण् प्रत्ययो भवति । मत्वादीनामपवादः । गौशतिकः । गौसहस्रिकः । अत इति किम् । गोविंशतिमान् । कथं गौशकटिकः । शकटीशब्देन समानार्थः शकटशब्दोऽस्ति । *शकटीशब्दात्तु मतुः* अनभिधानान्न भवति । केचित्तु गवादेरनकारान्तादपीच्छन्ति । गवां समूहो गोत्रा सा विद्यते यस्य गौत्रिकः । गावो वयांसि चास्य सन्ति गौवयसिकः ॥ ५६ ॥ *निष्कादेः शतसहस्रात् ॥ ७ । २ । ५७ ॥ निष्को य आदिस्ततः परं यच्छतं सहस्रं च तदन्तान्मत्वर्थे इकण् प्रत्ययो भवति । नैष्कशतिकः । नैष्कसहस्रिकः । निष्कादेरिति किम् । शती । सहस्री । *आदिग्रहणात्सुवर्णनिष्कशतमस्यास्तीत्यत्र न भवति ॥ ५७ ॥ *एकादेः कर्मधारयात् ॥ ७ । २ । ५८ ॥ एकादेः कर्मधारयादकारान्तान्मत्वर्थे इकण् प्रत्ययो भवति । एको गौरेकगवः सोऽस्यास्त्यैककगविकः । ऐकशतिकः । ऐकसहस्रिकः । कर्मधारयादिति किम् । एकस्य गौरेकगवः सोऽस्यास्ति इति न भवति । अत इत्येव । एकविंशतिरस्यास्तीति न भवति । कथमेकद्रव्यवत्त्वादिति । एकेन द्रव्यवत्त्वमिति *समासे भविष्यति ॥ ५८ ॥ सर्वादेरिन् ॥ ७ । २ । ५९ ॥ सर्वादेरकारान्तात्कर्मधारयान्मत्वर्थे इन् प्रत्ययो भवति । सर्वं धनं सर्वधनम् तदस्यास्तीति सर्वधनी । सर्वबीजी । सर्वकेशी नटः ॥ ५९ ॥ *प्राणिस्थादस्वाङ्गाद्द्वन्द्वरुग्निन्द्यात् ॥ ७ । २ । ६० ॥ प्राणिस्थोऽस्वाङ्गवाची अकारान्तो यो द्वन्द्वः समासो यश्च रुग्वाची निन्द्यवाची च शब्दस्तस्मान्मत्वर्थे इन् प्रत्ययो भवति । द्वन्द्व, कटकवलयिनी । *शंखनूपुरिणी । रुक्, कुष्ठी । किलासी । निन्द्य, ककुदावर्ती । काकतालुकी । प्राणिस्थादिति किम् । पुष्पफलवान् वृक्षः । अस्वाङ्गादिति किम् । स्तनकेशवती । अत इत्येव । चित्रकललाटिकावती । विपादिकावती । काकतालुमती । 'अतोऽनेकस्वरात्' (७—२—६) इत्येव सिद्धे इकादिबाधनार्थं वचनम् ॥ ६० ॥ *वातातीसारपिशाचात्कश्चान्तः ॥ ७ । २ । ६१ ॥ वात अतीसार पिशाच इत्येतेभ्यो मत्वर्थे इन् प्रत्ययो भवति ककारश्चान्तः । वातातीसारयो रुक्त्वात् पूर्वेणेन् सिद्धः कार्थमुपादानम् । पिशाचस्य तूभयार्थम् । वातकी । अतीसारकी । पिशाचकी ॥ ६१ ॥ *पूरणाद्वयसि ॥ ७ । २ । ६२ ॥ पूरणप्रत्ययान्ताद्वयसि गम्यमाने मत्वर्थे इन्नेव प्रत्ययो भवति । पञ्चमो मासः संवत्सरो वास्यास्तीति पञ्चमी बालकः । दशमी करभः ॥ ६२ ॥ सुखादेः ॥ ७।२।६३ ॥ सुखादिभ्यो मत्वर्थे इन्नेव प्रत्ययो भवति । सुखी ।

—कथमिति । अदन्तादिहित इकण् कथं शकटीशब्दाद्भवतीत्याशयः ॥—शकटीशब्दादिति । शकटीशब्दात्तावददन्तत्वाभावादिकण् न भवति परं मतुर्भवति नो चेत्याह—अनभिधानादिति ॥—निष्का—॥ निष्कश्चासावादिश्च बहुव्रीहिर्वा । ननु बहुव्रीहौ सुवर्णनिष्कशतशब्दादपि प्राप्नोति । सत्यम् । आदिशब्दोऽवयवार्थः निष्कशब्दश्च शतसहस्रशब्दयोरवयवयोरवयवः समास एव सति भवति प्राग्ये तस्य स्वातन्त्र्यात् । समासश्च सुवर्णनिष्कशब्देन शतशब्देन चारभ्यत इति शतशब्दान्तसमासापेक्षया सुवर्णनिष्कशब्दस्यैवावयवत्वम् न तु निष्कशब्दस्येति सुवर्णनिष्कशतशब्दान्नेकण् । अथवाऽऽदिशब्दः प्राथम्यार्थोऽपि व्याख्यायते प्राथम्यं च सुवर्णनिष्कशतशब्दे शतशब्दापेक्षया निष्कशब्दस्यास्त्येवेतीकण् प्राप्नोतीति तन्निवृत्त्यर्थं सावधारणं व्याख्येयं निष्क एवादिर्यस्येति अत्र तु न निष्क एवादिः किंतु सुवर्णशब्दोऽपीति न भवति । एवमुत्तरत्रापि ॥—आदिग्रहणादित्यादि ॥ सुवर्णस्य निष्कास्तेषां शतमिति विग्रहः ॥—एका—॥—समासे इति । 'ऊनार्थपूर्वाद्यैः' इत्यनेन ॥—प्राणि—॥—शङ्खनूपुरिणीति । अनुपरतो रवो यस्य यस्माद्वा तदनुपरतरवं तस्य पृषोदरादित्वान्नूपुरादेशः 'नूपुर—'इति निपातनाद्वा ॥—वाता—॥ अत्र एकदेशविकृतेति न्यायादतिसारकीत्यपि ॥—पूर—॥—

दुःखी । सुख दुःख तृप्र कृच्छ्र अस्र अलीक कृपण सोढ प्रतीप प्रणय हस्त (हल) आस्र कक्ष शील इत्येके । इति सुखादिः ॥ ६३ ॥ **मालायाः क्षेपे** ॥ ७ । ५ । ६४ ॥ मालाशब्दात्क्षेपे गम्यमाने मत्वर्थे इन्नेव प्रत्ययो भवति । माली । क्षेप इति किम् । मालावान् । मालाशब्दः शिखादिः । ततः क्षेपे मतुनिवृत्त्यर्थं वचनम् ॥ ६४ ॥ **धर्मशीलवर्णान्तात्** ॥ ७ । २ । ६५ ॥ धर्मशीलवर्ण इत्येतदन्तान्मत्वर्थे इन्नेव भवति । मुनिधर्मी । यतिशीली । ब्राह्मणवर्णी ॥ ६५ ॥ **बाह्वर्वादेर्बलात्** ॥ ७ । २ । ६६ । बाहु-ऊरुपूर्वाद्बलान्तान्नाम्नो मत्वर्थे इन्नेव भवति । बाहुवली । ऊरुवली ॥ ६६ ॥ ***मन्माब्जादेर्नाम्नि** ॥ ७ । २ । ६७ ॥ मन्नन्तेभ्यो मान्तेभ्योऽब्जादिभ्यश्च मत्वर्थे इन्नेव भवति नाम्नि समुदायश्चेत्कस्यचिन्नाम भवति । मन्नन्त, दामिनी । सामिनी । प्रथिमिनी । महिमिनी । धर्मिणी । कर्मिणी । मान्त, प्रथमिनी । भामिनी । कामिनी । यामिनी । सोमिनी । अब्जादि । अब्जिनी । कमलिनी । सरोरुहिणी । सरोजिनी । अम्भोजिनी । राजीविनी । अरविन्दिनी । पङ्कजिनी । पुटकिनी । नालीकिनी । मृणालिनी । बिसिनी । तामरसिनी । यवासिनी । नाम्नीति किम् । सामवान् । सोमवान् । अब्जवान् ॥ ६७ ॥ ***हस्तदन्तकराज्जातौ** ॥ ७ । २ । ६८ ॥ हस्त दन्त कर इत्येतेभ्यो मत्वर्थे इन्नेव भवति समुदायेन चेज्जातिरभिधीयते । हस्तोऽस्यास्तीति हस्ती । दन्ती । करी । जाताविति किम् । हस्तवान् । दन्तवान् । करवान् नरः ॥ ६८ ॥ ***वर्णाद्ब्रह्मचारिणि** ॥ ७ । २ । ६९ ॥ वर्णशब्दान्मत्वर्थे इन् भवति ब्रह्मचारी चेदभिधेयो भवति । वर्णशब्दो ब्रह्मचर्यपर्यायः । वर्णो ब्रह्मचर्यमस्यास्ति वर्णी । ब्रह्मचारीत्यर्थः । अन्ये तु वर्णशब्दो ब्राह्मणादिवर्णवचनः । तत्र ब्रह्मचारीत्यनेन शूद्रव्यवच्छेदः क्रियते इति मन्यन्ते तेन *त्रैवर्णिको वर्णीत्युच्यते । स हि *विद्याग्रहणार्थमुपनीतो ब्रह्म चरति न शूद्र इति । ब्रह्मचारिणीति किम् । वर्णवान् ॥ ६९ ॥ ***पुष्करादेर्देशे** ॥ ७ । २ । ७० ॥ पुष्करादिभ्यो मत्वर्थे इन्नेव भवति देशेऽभिधेये । *पुष्करिणी । पद्मिनी । देश इति किम् । पुष्करवान् हस्ती । पुष्कर पद्म उत्पल तमाल कुमुद कैरव नल कपित्थ बिस मृणाल कर्दम शालूक विवर्ह करीष शिरीष यवास यवाष यव माष हिरण्य तट तरङ्ग कल्लोल इति पुष्करादिः । *कथं कुमुद्वती सरसी कुमुद्वान् ह्रदः नड्वान् नड्वलमिति । 'नडकुमुद'—( ६—२—७४ ) इत्यादिना चातुरर्थिकेन मतुना भविष्यति ॥ ७० ॥

---

ननु 'अतोऽनेकस्वरात्' इत्यनेनेन् सिद्ध एव किमनेन । सत्यम् । इन्नेवेति नियमार्थं तेन हि इन्विधाने इकोऽपि स्यादिति ॥—मन्म—॥ प्रत्ययाप्रत्यययोरिति न्यायात् मन्नन्तेभ्य इत्युक्तेपि मन्प्रत्ययान्तेभ्य इति द्वयम् । अब्जिन्यादय' कमलिनीवाचकाः यवासिनी त्वौषधिः ॥—हस्त—ननु हस्ती इत्यादिभिर्जातिमानेवाभिधीयते न जातिस्तत्कथमनेनेन् । सत्यम् । जातिमत्युच्यमाने गौणवृत्त्या जातिरप्युच्यते । गौणमुख्यन्यायस्तु मुख्यया वृत्त्या इन्प्रत्ययान्तेन हस्त इत्यादिना प्रतिपादनासंभवान्नाद्रियते । यद्वा निर्विशेषं न सामान्यं भवेच्छशविषाणवदिति न्यायात्समुदायेन चेज्जातिरभिधीयते इत्युक्तेऽपि जातिमती व्यक्तिरुच्यत इति द्रष्टव्यं निर्विशेषायास्तस्या जातेः असत्कल्पत्वात्॥—वर्णात्—॥—त्रैवर्णिक इति । त्रिषु वर्णेषु भवः अध्यात्मादिभ्य इतीकण्विधानसामर्थ्यात् 'द्विगोरनपत्ये–' इत्यनेन न लुप् 'प्रयोजनम्' इति चेकण् प्राग्जितीयत्वाभावात् 'द्विगोरनपत्ये–' इत्यस्य लुप प्रसङ्ग एव नास्ति ॥—विद्याग्रहणार्थमिति । एवमुक्तेऽपि वेदविद्याग्रहणार्थमिति व्याख्येयम्॥—पुष्क-॥-पुष्करिणी । पद्मिनी च देशविशेषौ । यवासशब्दोऽब्जादिगणे पुष्करादिगणे चाधीतस्तत्रौषधौ पूर्वसूत्रं प्रवर्त्तते देशविशेषे त्विदमिति विवेक.॥-कथमिति।अत्र

परितः सर्वत इत्यर्थः । अभितः उभयत इत्यर्थः । सर्वोभय इति किम् । वृक्षं परि । वृक्षमभि ॥ ८३ ॥ *आद्यादिभ्यः ॥ ७ । २ । ८४ ॥ आद्यादिभ्यः संभवद्विभक्त्यन्तेभ्यस्तसुः प्रत्ययो भवति । आदौ आदेर्वा आदितः । एवं मध्यतः । अन्ततः । अग्रतः । वक्षस्तः । पार्श्वतः । पृष्ठतः । मुखतः । सर्वतः । विश्वतः । उभयतः । अन्यतः। पूर्वतः । एकतः । इतः । प्रमाणेन प्रमाणाद्वा प्रमाणतः । पृष्ठेन पृष्ठतोऽर्कं सेवेत । एवं पार्श्वतः । इतः। दुष्टः शब्दः स्वरतो वर्णतो वा । शब्दतः। अर्थतः। अभिधानतः । येन यस्मिन्वा यतः । ततः । पृषोदरादित्वात् दलोपः । आद्यादयः प्रयोगगम्याः ॥ ८४ ॥ क्षेपातिग्रहाव्यथेष्वकर्तुस्तृतीयायाः ॥७।२।८५॥ तृतीयान्तादकर्तृवाचिनः क्षेपातिग्रहाव्यथाविषये तसुः प्रत्ययो भवति । क्षेपो निन्दा, वृत्तेन क्षिप्तः वृत्ततः क्षिप्तः। वृत्तेन निन्दित इत्यर्थः । अतिक्रम्य ग्रहणमतिग्रहः । वृत्तेनातिगृह्यते वृत्ततोऽतिगृह्यते । साधुवृत्तोऽन्यानतिक्रम्य वृत्तेन गृह्यते । साध्वाचार इति संभाव्यत इत्यर्थः । अतिशयेन वा ग्रहणमतिग्रहः । तत्रातिशयेन गृह्यत इत्यर्थः । अचलनमक्षोभणमव्यथा अभीतिर्वा । वृत्तेन न व्यथते वृत्ततो न व्यथते । वृत्तेन न चलति न बिभेति चेत्यर्थः। क्षेपातिग्रहाव्यथेष्विति किम् । वृत्तेन भिन्नः । अकर्तुरिति किम् । देवदत्तेन क्षिप्तः । तृतीयाया इति किम् । देवदत्तं क्षिपति ॥ ८५ ॥ *पापहीयमानेन ॥ ७ । २ । ८६ ॥ अकर्तृवाचिनस्तृतीयान्तात्पापहीयमानाभ्यां योगे तसुः प्रत्ययो भवति । वृत्तेन पापः वृत्ततः पापः । वृत्तेन हीयते वृत्ततो हीयते । शब्दतो हीनः स्वरतो वर्णतो वा । पापहीयमानेनेति किम् । चारित्रेण शुद्धः । अकर्तुरित्येव । चैत्रेण हीयते । तृतीयाया इत्येव । ग्रामे हीयते । क्षेपस्याविवक्षायां *तत्त्वाख्याने यथा स्यादिति वचनम् ॥ ८६ ॥ प्रतिना पञ्चम्याः ॥७। २ । ८७ ॥ प्रतिना योगे या पञ्चमी विहिता तदन्तात्तसुः प्रत्ययो भवति वा । अभिमन्युरर्जुनात्प्रति अभिमन्युरर्जुनतः प्रति । अर्जुनस्य प्रतिनिधिरित्यर्थः । माषानस्मै तिलेभ्यः प्रति यच्छति तिलतः प्रति यच्छति।पञ्चम्या इति किम् । वृक्षं प्रति विद्योतते । ॥८७॥ *अहीयरुहोऽपादाने ॥७।२।८८॥आपादाने या पञ्चमी विहिता तदन्तात्तसुः प्रत्ययो भवति वा तच्चेदपादानं हीयरुहोः संबन्धि न भवति । ग्रामादागच्छति ग्रामत आगच्छति । चौराद्बिभेति चौरतो बिभेति । अहीयरुह इति किम् । सार्थाद् *हीयते सार्थाद्धीनः । पर्वतादवरोहति । सार्थादिति कर्तुरपायेऽवधिविवक्षा । सार्थेन हीयते देवदत्तः इत्यर्थः । *हीयते इति कर्मकर्तरीत्यन्ये । सार्थात्स्वयमेव हीयते देवदत्त इत्यर्थः। हीयेति क्यान्तस्य जहातेर्निर्देशो जिहीते इत्यस्य व्युदासार्थः। तेन तत्र प्रतिषेधो न भवति। भूमित उज्जिहीते। हागिति निर्देशेनैव हाङो निवृत्तिसिद्धौ हीयेति निर्देशो यत्रैव भावे कर्मणि कर्मकर्तरि च जहातेः प्रयोगस्तत्रैवापायविवक्षा नान्यत्रेत्येवमर्थम् । *तेन सार्थाज्जहातीति न भवति। अपादान इति किम्। ऋते धर्मात्कुतः सुखम् । आ पाटलिपुत्राद्दृष्टो देवः ॥ ८८ ॥ *किमद्व्यादिसर्वाद्यवैपुल्यबहोः पित्तस् ॥ ७ । २ । ८९ ॥ पञ्चम्या इत्यनुवर्तते । किंशब्दात् द्व्यादिवर्जितेभ्यः सर्वादिभ्योऽवैपुल्यवाचिनो बहुशब्दाच्च पञ्चम्यन्तात्तस् प्रत्ययो भवति स च पित् । किम्, कस्मात् कुतः । सर्वादि, सर्वतः । विश्वतः । यतः । ततः । बहु, बहुभ्यः

॥-आद्या ॥-दलोप इति । 'आ द्वेर' इति तु न तसादावित्यधिकारात् । अय तु उदनुबन्ध ॥-पाप-॥पापहीयमानाभ्यां योगे क्षेपस्य प्रतीयमानत्वात् पूर्वेणैव सिध्यतीत्याह-तत्वाख्याने इति॥-अही-॥-हीयत इति । जहाति सार्थो देवदत्त स एव विवक्षते नाहं जहामि किंतु स्वयमेव हीयते ॥-तेन सार्थाज्जहातीति न भवतीति । सार्थो जहातीति वक्तव्ये ॥-किम-॥-

बहुतः । किमः सर्वादित्वेऽपि द्व्यादिवर्जनान्न प्राप्नोतीति पृथगुपादानम् । द्व्यादिवर्जनं किम् । द्वाभ्याम् । त्वत् । मत् । युष्मत् । अस्मत् । भवतः । कथं द्वितः त्वत्तः मत्तः युष्मत्तः अस्मत्त इति । 'अहीयरुहोऽपादाने' (७-२-८८) इति भविष्यति । अनेन हि तस्विधाने 'आ द्वेः' (२-१-४१) इत्यत्वं स्यात् । तसावप्यत्वमिच्छन्त्येके । बहोर्वैपुल्यप्रतिषेधः किम् । बहोः सूपात् । किमद्व्यादिसर्वाद्यवैपुल्यबहोरिति किम् । वृक्षाद्विना । किंसर्वादिबहोश्च *तसुविषयेऽपि परत्वादयमेव तस् । यतः प्रति । ततः प्रति । यत आगच्छति। तत आगच्छति । निरनुबन्धप्रत्ययान्तरकरणमत्वार्थम् । पित्करणं पुंवद्भावार्थम् । बह्वीभ्यो बहुतः । पञ्चम्यन्तमात्रादयं विधिः । सर्वतो हीयते । सर्वतो रोहति । सर्वतो हेतोः । सर्वतः पूर्वः ॥ ८९ ॥ इतोऽत्कुतः ॥ ७ । २ । ९० ॥ इतस् अतस् कुतस् इत्येते शब्दा निपात्यन्ते । इत इति इदमस्तसि इः सर्वादेशो निपात्यते । अस्मादितः । इमकस्मादितः । अत इति एतदः अः सर्वादेशः । एतस्मादतः । एतकस्मादतः । कुत इति किमः कुरित्यादेशः । कस्मात्कुतः । इह पञ्चम्या इति नानुवर्तते । लक्षणान्तरेण तसि तसौ वा सिद्धे आदेशमात्रं विधीयते । तेनोत्तरसूत्रेण तसि इतोभवान् अतोभवान् आद्यादितसौ इत आस्यतामिति भवति ॥ ९० ॥ *भवत्वायुष्मद्दीर्घायुर्देवानांप्रियैकार्थात् ॥ ७ । २ । ९१ ॥ भवतु आयुष्मत् दीर्घायुस् देवानांप्रिय इत्येतैः समानाधिकरणात् किमद्व्यादिसर्वाद्यवैपुल्यबहोः सर्वविभक्त्यन्तात्तिपत्तस् प्रत्ययो वा भवति । स भवान् ततोभवान् । तौ भवन्तौ ततोभवन्तौ । ते भवन्तः ततोभवन्तः । तं भवन्तं ततोभवन्तम् । तेन भवता ततोभवता । तस्मै भवते ततोभवते । तस्माद्भवतः ततोभवतः । तस्य भवतः ततोभवतः । एवमयं भवान् इतोभवान् को भवान् कुतोभवान् इत्याद्युदाहार्यम् । तथा स आयुष्मान् ततआयुष्मान् । स दीर्घायु. ततोदीर्घायुः । स देवानांप्रियः ततोदेवानांप्रियः । अयमायुष्मान् इतआयुष्मान् । क आयुष्मान् कुतआयुष्मान् । एवं दीर्घायुर्देवानांप्रियाभ्यामपि । भवत्वित्युकारः सर्वादिपरिग्रहार्थः । तेन मतुबन्तव्युदासः ॥ ९१ ॥ त्रप् च ॥ ७ । २ । ९२ ॥ भवत्वायुष्मद्दीर्घायुर्देवानांप्रियैः समानाधिकरणात् किमद्व्यादिसर्वाद्यवैपुल्यबहोः सर्वविभक्त्यन्तात् त्रप् प्रत्ययो वा भवति । स भवान् तत्रभवान् । तौ भवन्तौ तत्रभवन्तौ । ते भवन्तः तत्रभवन्तः । तं भवन्तम् तत्रभवन्तम् । तेन भवता तत्रभवता । तस्मै भवते तत्रभवते । तस्माद्भवतः तत्रभवतः । तस्य भवतः तत्रभवतः । तस्मिन् भवति तत्रभवति । एवमायुष्मद्दीर्घायुर्देवानांप्रियैरप्युदाहार्यम् । योगविभागश्चकारेण पुनस्तस्विधानार्थः । तेन सप्तम्यन्तादपि तस् भवति । ततोभवति तत्रभवति । अन्यथा हि ततः 'सप्तम्याः' (७-२-९४) इति परत्वात्त्रवेव स्यात् । रूढिशब्दाश्चैते ततोभवदादयः समुदायाः पूजावचना यथाकथंचित् व्युत्पाद्यन्ते । *अत एव पुनस्त्य-

द्विरादिर्यस्य द्व्यादिस्ततो नञा योग । सर्व आदिर्यस्य सर्वादि । अद्व्यादिश्चासौ सर्वादिश्च अद्व्यादिसर्वादि' । अवैपुल्ये बहुः अवैपुल्यबहु । किम् च अद्व्यादिसर्वादिश्च अवैपुल्यबहुश्च । तस्मात् ॥–तसुविषयेपीति । 'प्रतिना पञ्चम्या. ' 'अहीयरुहोपादाने' इति विहितस्य॥–पञ्चम्यन्तमात्रादिति। न त्वपादान एव विहितपञ्चम्यन्तात्॥–भवत्वा–॥उकारोपादानात् मुख्यवृत्त्या उदनुबन्धस्य भवतुशब्दस्य सर्वादिपठितस्य औणादिकत्वात् अव्युत्पन्नस्य ग्रहण न तु भशब्दात् मतौ भवतुशब्दस्य । अन प्रत्ययस्येव उदित्व शब्दस्य तूपचारेण, यद्वा श्रुतानुमितेति न्यायात्॥—त्रप्च॥—अत

दादिरनुप्रयुज्यते । स तत्रभवान् । तं तत्रभवन्तम् । केचित्तु भवच्छब्दस्यामन्त्रणे सौ भो इत्यादेशं कुर्वन्ति तन्मते तत्रभोः तत्रभोः इत्यत्रापि भवति । केचित्तु भवदाद्ययोगेऽपि त्रपमिच्छन्ति । क गमिष्यसि कं देशं गमिष्यसीत्यादि ॥ ९२ ॥ *क कुत्रात्रेह ॥ ७ । २ । ९३ ॥ क कुत्र अत्र इह इत्येते शब्दास्त्रबन्ता निपात्यन्ते । केति किमः कादेशः त्रपश्चाकारः । कस्मिन् क । कुत्रेति किम' कु इत्यादेशः । कस्मिन् कुत्र । अत्रेति एतदोऽकारादेशः । एतस्मिन् अत्र । एतकस्मिन् अत्र । इहेति इदम इकारादेशः त्रपश्च हादेशः । अस्मिन् इह । इमकस्मिन्निह । एषु 'सप्तम्याः' (७—२—९४) इति त्रप् । त्रप्मात्रे चैते आदेशा विधीयन्ते तेन भवदादियोगेऽपि भवन्ति । *कभवान् । कुत्रभवान् । अत्रभवान् । इहभवान् । कायुष्मान् । कुत्रायुष्मान् । अत्रायुष्मान् । इहायुष्मान् । कदीर्घायुः । कुत्रदीर्घायुः । अत्रदीर्घायुः । इहदीर्घायुः इत्यादि ॥ ९३ ॥ सप्तम्याः ॥ ७ । २ । ९४ ॥ सप्तम्यन्तात् किमव्यादिसर्वाद्यवैपुल्यबहोस्त्रप् भवति । कस्मिन्कुत्र । सर्वत्र । तत्र । बहुषु बहुत्र । पकारस्य पुंवद्भावार्थत्वात् वह्वीषु बहुत्र ॥ ९४ ॥ किंयत्तत्सर्वैकान्यात्काले दा ॥ ७ । २ । ९५ ॥ किंयत्तत्सर्व एक अन्य इत्येतेभ्यः सप्तम्यन्तेभ्यः काले वाच्ये दा प्रत्ययो भवति । कस्मिन् काले कदा । यदा तदा सर्वदा एकदा अन्यदा । काल इति किम् । क देशे ॥ ९५ ॥ सदाधुनेदानींतदानीमेतर्हि ॥ ७ । २ । ९६ ॥ सदा अधुना इदानीं तदानीम् एतर्हि इत्येते शब्दाः काले वाच्ये निपात्यन्ते । सदेति सर्वशब्दाद्दा प्रत्ययः सभावश्चास्य । सर्वस्मिन् काले सदा । सर्वदेत्यपि पूर्वेण । अधुनेति इदमो धुना प्रत्ययोऽकारादेशश्च । अस्मिन्कालेऽधुना । इदानीमिति इदमो दानी प्रत्यय. इकारादेशश्च । अस्मिन्काले इदानीम् । तदानीमिति तदो दानीम् प्रत्ययः । तस्मिन् काले तदानीम् । एतर्हीति इदमोर्हिः प्रत्ययः एतादेशश्च । अस्मिन्काले एतर्हि ॥ ९६ ॥ सद्योऽद्यपरेद्यव्यह्नि ॥ ७ । २ । ९७ ॥ सद्यस् अद्य परेद्यवि इत्येतेऽह्नि काले निपात्यन्ते । सद्य इति समानशब्दात् सप्तम्यन्तादह्नि काले वर्तमानात् द्यस् प्रत्ययः समानस्य च सभावो निपात्यते । समानेऽह्नि सद्यः । अद्येति इदम्शब्दात् द्यः प्रत्ययःअकारादेशश्चास्य । अस्मिन्नहनि अद्य । परेद्यवीति परशब्दात् एद्यवि प्रत्ययः । परस्मिन्नहनि परेद्यवि । सद्य इति केचित्कालमात्रे निपातयन्ति ॥ ९७ ॥ पूर्वापराधरोत्तरान्यान्यतरेतरादेद्युस् ॥ ७ । २ । ९८ ॥ पूर्व अपर अधर उत्तर अन्य अन्यतर इतर इत्येतेभ्यः सप्तम्यन्तेभ्योऽह्नि काले वर्तमानेभ्य एद्युस् प्रत्ययो भवति । पूर्वस्मिन्नहनि पूर्वेद्युः । अपरेद्युः । अधरेद्युः । उत्तरेद्युः । अन्येद्युः । अन्यतरेद्युः । इतरेद्युः ॥ ९८ ॥ उभयाद् द्युस्च ॥ ७ । २ । ९९ ॥ उभयशब्दादह्नि काले द्युस् चकारादेद्युस् च प्रत्ययो भवति । उभयस्मिन्नहनि उभयद्युः । उभयेद्युः ॥ ९९ ॥ ऐषमःपरुत्परारि वर्षे ॥ ७ । २ । १०० ॥ ऐषमस् परुत् परारि इत्येते वर्षे संवत्सरे काले निपात्यन्ते । ऐषमसिति इदम्शब्दात्सप्तम्यन्ताद्वर्षे वर्तमानात् समसिण् प्रत्ययः इदमश्चैकारादेशः । अस्मिन् संवत्सरे ऐषमः इमकस्मिन् संवत्सरे ऐषमः । परुदिति पूर्वशब्दात् परशब्दाद्वा उत् प्रत्ययस्तस्य च पर इत्यादेशः ।

पत्रेति । यद्येते रूढिशब्दा न स्युरवयवार्थयोगेन प्रवर्त्तेरन् तदा स तत्रभवान् तं तत्रभवन्तमिति पुनस्तद प्रयोगोऽनुपपन्न स्यात् । प्रकृत्यैव तदर्थस्यावगतत्वात् । रूढिशब्दत्वे तु न तत्रावयवार्थोऽस्ति किंतु समुदायोय विशिष्ट' पूजां गमयतीति तदर्थप्रतिपादनाय पुनस्तच्छब्दप्रयोग उपपद्यते ॥ ककु—॥—कभवानिति । 'त्रप्प—' इत्यनेन सर्वविभक्तिद्वारेणापि त्रपा योगे कादेशः ॥—

पूर्वस्मिन् परस्मिन् वा संवत्सरे परुत् । परारीति पूर्वतरशब्दात्परतरशब्दाद्वा आरिप्रत्ययः तस्य च परादेशः । पूर्वतरे परतरे वा संवत्सरे परारि ॥ १०० ॥ *अनद्यतने र्हिः ॥ ७ । २ । १०१ ॥ सप्तम्यन्तादनद्यतने काले वर्तमानात् यथासंभवं किमद्व्यादिसर्वाद्यवैपुल्यबहोः र्हिः प्रत्ययो भवति । कस्मिन्ननद्यतने काले कर्हि । यर्हि । तर्हि । अन्यर्हि । एतस्मिन् काले एतर्हि । एतदः साको नेष्यते । अमुष्मिन् काले अमुर्हि । इदमस्तु *अनेन नेष्यते । *बहुषु कालेषु बहुर्हि । किंयत्तदेतदन्येभ्य एवेच्छन्त्यन्ये । काल इत्येव । यस्मिन्ननद्यतने भोजने यत्र । अनद्यतन इति किम् । यस्मिन् काले यदा । अनद्यतनेऽपि काले कालमात्रविवक्षायाम् दादिः प्रत्ययो भवति । कदा यदा तदा तदानीम् अन्यदा । सप्तम्यर्थमात्रविवक्षायां त्रवपि भवति । अमुत्र काले ॥ १०१ ॥ *प्रकारे था ॥७।२। १०२ ॥ सप्तम्या इति निवृत्तम् । यथासंभवं विभक्तिः । सामान्यस्य भिद्यमानस्य भेदान्तरानुप्रवृत्तो भेदः प्रकारः तस्मिन्वर्तमानात् किमद्व्यादिसर्वाद्यवैपुल्यबहोः था प्रत्ययो भवति । सर्वेण प्रकारेण सर्वथा । यथा । तथा । उभयथा । अन्यथा । अपरथा । इतरथा । *बहोस्तु परत्वाद्धा भवति ॥ १०२ ॥ **कथमित्थम्** ॥ ७ । २ । १०३ ॥ कथमित्थमिति प्रकारे निपात्यते । कथमिति किमस्थापवादस्थम् निपात्यते । केन प्रकारेण कथम् । इत्थमिति इदम एतदो वा थम् प्रत्यय इदादेशश्च । अनेन एतेन वा प्रकारेण इत्थम् ॥ १०३ ॥ *संख्याया धा ॥७।२। १०४ ॥ संख्यावाचिनो नाम्नः प्रकारे वर्तमानाद्धा प्रत्ययो भवति । एकेन प्रकारेण एकधा । द्विधा । त्रिधा । चतुर्धा । पञ्चधा । शतधा । बहुधा । गणधा । कतिधा । तावद्धा ॥ १०४ ॥ *विचाले च ॥७।२।१०५॥ विचलनं विचालः । द्रव्यस्य पूर्वसंख्यायाः प्रच्युतिः संख्यान्तरापत्तिः एकस्यानेकीभावः अनेकस्य चैकीभावः । तस्मिन् गम्यमाने संख्यावाचिनो नाम्नो धाप्रत्ययो वा भवति । एको राशिर्द्वौ क्रियते द्विधा क्रियते । त्रिधा क्रियते । एको राशिर्द्वौ भवति द्विधा भवति । त्रिधा भवति । एकं राशिं द्वौ करोति द्विधा करोति । त्रिधा करोति । शतेन शतधा । 'यदि मे यते मानाय वचन न करिष्यसि ॥ उन्मत्त शतधा मूर्धा तवैषोऽद्य फलिष्यति ' ॥ १ ॥ अनेक एकः क्रियते एकधा क्रियते । अनेक एको भवति एकधा भवति । अनेकमेकं करोति एकधा करोति । पञ्च राशयस्त्रयो द्वौ एको वा क्रियन्ते त्रिधा द्विधा एकधा क्रियन्ते । एवं त्रिधा द्विधा एकधा वा भवन्ति । त्रिधा द्विधा एकधा वा करोति । एवं बहुधा । गणधा । कतिधा । तावद्धा । चकार उत्तरत्र *प्रकारे विचाले चेत्युभयोः समुच्चयार्थः ॥ १०५ ॥ ***वैकाद् ध्यमञ्*** ॥ ७ । २ । १०६ ॥ एक इत्येतस्मात्*संख्यावाचिनः प्रकारे वर्तमानाद्विचाले च गम्यमाने ध्यमञ् प्रत्ययो भवति वा । एकेन प्रकारेण ~~ऐकध्यम् एकधा भुङ्क्ते~~ । अनेकमेकं करोति ऐकध्यं करोति । एकधा करोति । वाग्रहणं धार्थम् ॥ १०६ ॥ **द्वित्रेर्धमञेधौ वा** ॥ ७ । २ । १०७ ॥ द्वि त्रि इत्येताभ्यां संख्यावाचिभ्यां प्रकारे वर्तमानाभ्यां विचाले च गम्यमाने धमञ् एधा इत्येतौ प्रत्ययौ वा

अन-॥—अनेन नेष्यते इति । किंतु 'सदाधुनेदानींतदानीम्-' इति सामान्यकाले भवति॥—बहुषु कालेष्विति। बहुवचनेनावैपुल्य दर्श्यते॥—प्रका-॥—बहोस्तु परत्वादिति । 'संख्याया धा' इत्यनेन ॥—संख्या—॥—द्विधेति । 'किमः कस्तसादौ च' इत्यत्रादिशब्दो व्यवस्थावाचीति थमवसाना एव तसादयो ग्राह्याः तेनात्र धाप्रत्यये ' आ द्वेर ' इत्यत्वं न भवति तसाद्यभावात् ॥-विचा-॥—प्रकारे विचाले चेति । प्रकारो अवस्थितस्य धर्मिणो भवति । विचाले तु अवस्थित एव धर्मी (धर्मः, पृथक्क्रियते ॥—वैका-॥-संख्यावाचिन इति । अन्यादावप्यसौ वर्तते इति

भवतः । वचनभेदाद्यथासंख्यं नास्ति । द्वाभ्यां प्रकाराभ्यां द्वैधम्, त्रैधम्, द्वेधा, त्रेधा, भुङ्क्ते । वावचनात् द्विधा. त्रिधा । एकं राशिं द्वौ करोति द्वैधम् त्रैधम् द्वेधा त्रेधा द्विधा त्रिधा करोति ॥ १०७ ॥ तद्वति धण् ॥ ७ । २ । १०८ ॥ द्वित्रिभ्यां संख्यावाचिभ्यां तद्वति प्रकारवति विचालवति चाभिधेये धण् प्रत्ययो भवति । द्वौ प्रकारौ विभागौ वा एषा द्वैधानि ।त्रैधानि राजद्वैधानि । राजत्रैधानि । द्वैधीभावः । त्रैधीभावः ॥ १०८॥ *वारे कृत्वस् ॥ ७ । २ । १०९ ॥ संख्याया इति वर्तते । वारो धात्वर्थस्यायौगपद्येन वृत्तिः, *तत्कालो वा । तस्मिन्वर्तमानात्संख्याशब्दात् तद्वति वारवति धात्वर्थे क्रियायामर्थे कृत्वस् प्रत्ययो भवति । पञ्च वारा अस्य पञ्चकृत्वो भुङ्क्ते । षट्कृत्वः । शतकृत्वः सहस्रकृत्वोऽधीते । बहुकृत्वः । गणकृत्वः । कतिकृत्वः । तावत्कृत्वः । भुज्यर्थो वारवानिति भुज्यर्थस्य *इदं विशेषणम् । तद्वतीत्येव । *भोजनस्य पञ्च वाराः । संख्याया इत्येव । भूयो वारा अस्य भोजनस्य ॥ १०९ ॥ *द्वित्रिचतुरः सुच् ॥ ७ । २ । ११० ॥ द्वित्रिचतुर् इत्येतेभ्यः संख्याशब्देभ्यो वारे वर्तमानेभ्यस्तद्वति सुच् प्रत्ययो भवति । कृत्वसोऽपवादः । द्वौ वारावस्य द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । चतुर्भुङ्क्ते । इह तु द्विस्तावान् प्रासादः द्विर्दशेति *गम्यमानेऽपि वारे भवति । चकारः 'सुचो वा'–( २—३—१० ) इत्यत्र विशेषणार्थः ॥ ११० ॥ एकात्सकृच्चास्य ॥ ७ । २ । १११ ॥ एकशब्दाद्वारे वर्तमानात्तद्वत्यभिधेये सुच्प्रत्ययः सकृदिति चास्यादेशो भवति । कृत्वसोऽपवादः । एकवारं भुङ्क्ते सकृद्भुङ्क्ते ॥ १११ ॥ बहोर्धासन्ने ॥ ७ । २ । ११२॥ बहुशब्दात्संख्यावाचिन आसन्ने अविदूरेऽविप्रकृष्टकाले वारे क्रियाप्रवृत्तौ तत्काले वाविप्रकृष्टे वर्तमानात्तद्वति धा प्रत्ययो भवति । बहव आसन्ना वारा अस्य बहुधा भुङ्क्ते । बहुधा पिबति । आसन्न इति किम् । बहुकृत्वो मासस्य भुङ्क्ते । आसन्नवारेऽपि वारमात्रे द्योत्ये कृत्वस् प्रत्ययो भवत्येव । बहुकृत्वोऽह्नो भुङ्क्ते । आसन्नता तु प्रकरणादिना गम्यते । एके तु गणधा भुङ्क्ते तावद्धा भुङ्क्ते इत्यत्रापीच्छन्ति ॥ ११२ ॥ *दिक्शब्दाद्दिग्देशकालेषु प्रथमापञ्चमीसप्तम्याः ॥ ७ । २ । ११३॥ दिक्शब्दाद्दिशि प्रसिद्धाच्छब्दाद्दिशि देशे काले च वर्तमानात् प्रथमापञ्चमीसप्तम्यन्तात् स्वार्थे धा प्रत्ययो भवति । प्राची दिग् रमणीया *प्राग्रमणीयम् । प्राङ् देशो रमणीयः प्राग्रमणीयम् । प्राङ् कालो रमणीयः प्राग्रमणीयम् । प्राच्या दिश आगतः प्रागागतः । प्राचो देशादागतः प्रागागतः । प्राचः कालादागतः प्रागागतः । प्राच्यां दिशि वसति प्राग्वसति । प्राचि देशे वसति प्राग्वसति । प्राचि काले वसति

संख्याविशेषणं सार्थकम् ॥—वारे—॥—तत्कालो वेति । तस्य धात्वर्थस्यायौगपद्येन वृत्तेः काल ॥—इदं विशेषणमिति । पञ्चकृत्व इत्यादिकम् ॥—भोजनस्य पञ्च वारा इति । इह वारे पञ्चेति संख्याया वृत्तिरस्ति न तु वारवानुच्यते भोजनस्य वारेण सम्बन्धमात्रस्यैव विद्यमानत्वात् ॥—द्वित्रि—॥—गम्यमानेपीति । धात्वर्थस्यायौगपद्येन वृत्तिर्वारं इह तु न धात्वर्थस्य वृत्तिरपि तु दशेति संख्यार्थस्येत्याशङ्का ॥—दिग्श—॥ ननु दिग्देशकालेष्विति दिग्ग्रहणं किमर्थं यो हि दिग्शब्दः स दिशि वर्त्तत एव । नैवम् । नहि दिग्शब्दो दिश्येव वर्त्ततेऽपि तु देशादावपि तत्र दिग्ग्रहणं विना देशकाल इत्युच्यमाने यदा दिक्शब्दो देशे काले वा वर्त्तते तदैव प्रत्ययः स्यात् । यदा तु दिशि तदा न स्यात् । ततो दिग्देशकालेषु त्रिष्वेव वर्त्तमाना दिक्शब्दा गृह्यन्ते तेन केवलायां दिशि ककुभ्प्रभृतिभ्यो न भवति ॥—प्राग्रमणीयमिति । एषु क्रियाव्ययविशेषण इत्यनेनाव्ययविशेषणत्वात् नपुंसकत्वम् ॥

प्राग्वसति । 'लुबञ्चेः'—( ७-२-१२३) इति धाप्रत्ययस्य लुप् । लुपि 'ङ्यादेः'–( २-४-९४ ) इत्यादिना ङीलुक् । दिक्शब्दादिति किम् । ऐन्द्री दिक् । दिग्देशकालेष्विति किम् । प्राङ् वृक्षः । प्रथमापञ्चमीसप्तम्या इति किम् । प्राचीं दिशं पश्यति । प्राच्या दिशा प्रज्वलितम् । प्राच्यै दिशे देहि । प्राच्या दिशः स्वम् । दिग्देशकालेष्विति बहुवचनं प्रथमादिभिर्यथासंख्यानिवृत्त्यर्थम् ॥ ११३ ॥ ऊर्ध्वाद्रिरिष्टातावुपश्चास्य ॥ ७ । २ । ११४ ॥ ऊर्ध्वशब्दाद्दिग्देशकालेषु वर्तमानात् प्रथमापञ्चमीसप्तम्यन्तात् रि रिष्टात् इत्येतौ प्रत्ययौ धापवादौ भवतः अस्य चोर्ध्वशब्दस्योपादेशो भवति । ऊर्ध्वा दिग्देशः कालो वा रमणीयः उपरि रमणीयम् उपरिष्टात् रमणीयम् । एवम् उपर्यागतः । उपरिष्टादागतः । उपरि वसति उपरिष्टाद्वसति ॥ ११४ ॥ पूर्वावराधरेभ्योऽसस्तातौ पुरवधश्चैषाम् ॥७।२। ११५॥ पूर्व अवर अधर इत्येतेभ्यः प्रत्येकं दिग्देशकालवृत्तिभ्यः प्रथमापञ्चमीसप्तम्यन्तेभ्योऽस् अस्तात् इत्येतौ प्रत्ययौ भवतः एषां च पूर्वावराधरशब्दानां यथासंख्यं पुर् अव् अध् इत्येते आदेशा भवन्ति । पूर्वा दिग्देशः कालो वा रमणीयः पुरो रमणीयम् पुरस्ताद्रमणीयम् । पुर आगतः पुरस्तादागतः । पुरो वसति पुरस्ताद्वसति । अवरा दिग्देशः कालो वा रमणीयः अवो रमणीयम् अवस्ताद्रमणीयम् । अव आगतः अवस्तादागतः । अवो वसति अवस्ताद्वसति । अधरा दिग्देशः कालो वा रमणीयः अधो रमणीयम् । अधस्ताद्रमणीयम् । अध आगतः । अधस्तादागतः । अधो वसति । अधस्ताद्वसति ॥ ११५ ॥ परावरात्स्तात् ॥ ७ । २ । ११६ ॥ परअवर इत्येताभ्यां दिग्देशकालेषु वर्तमानाभ्यां प्रथमापञ्चमीसप्तम्यन्ताभ्यां स्वार्थे स्तात्प्रत्ययो भवति । परा दिग्देशः कालो वा रमणीयः परस्ताद्रमणीयम् । परस्तादागतः । परस्ताद्वसति । एवमवरस्ताद्रमणीयम् । अवरस्तादागतः । अवरस्ताद्वसति ॥ ११६ ॥ *दक्षिणोत्तराचातस् ॥ ७ । २ । ११७ ॥ दक्षिण उत्तर इत्येताभ्यां चकारात्परावराभ्यां च दिग्देशकालेषु वर्तमानाभ्याम् प्रथमापञ्चमीसप्तम्यन्ताभ्यां स्वार्थेऽतस् प्रत्ययो भवति । दक्षिणशब्दः काले न संभवतीति दिग्देशवृत्तिर्गृह्यते । दक्षिणा दिग्देशो वा रमणीयः दक्षिणतो रमणीयम् । दक्षिणत आगतः । दक्षिणतो वसति । उत्तरा दिग्देशः कालो वा रमणीयः उत्तरतो रमणीयम् । उत्तरत आगतः । उत्तरतो वसति । परतो रमणीयम् । परत आगतः । परतो वसति । अवरतो रमणीयम् । अवरत आगतः । अवरतो वसति । एवं चावरशब्दस्य *चातूरूप्यं भवति । अकारस्तसोऽस्य भेदार्थः । तेनातः 'क्वेहामात्रतसस्त्यच्'–( ६-३-१६ ) इति त्यच् न भवति परतो भवं पारतमित्यणेव ॥ ११७ ॥ *अधरापराचात् ॥ ७ । २ । ११८ ॥ अधर अपर इत्येताभ्यां दिग्देशकालवृत्तिभ्यां प्रथमापञ्चमीसप्तम्यन्ताभ्यामात्प्रत्ययो भवति चकाराद्दक्षिणोत्तराभ्यां च । अधरा दिग्देशः कालो वा रमणीयः अधराद्रमणीयम् । अधरादागतः । अधराद्वसति । एवं चाधरशब्दस्य *त्रैरूप्यम् । अपरा दिग्देशः कालो वा रमणीयः *पश्चाद्रमणीयम् । पश्चादागतः । पश्चाद्वसति । दक्षिणपश्चाद्रमणीयम् । *दक्षिणपश्चादागतः । दक्षिणपश्चाद्वसति । 'पश्चोऽपरस्य'—( ७-२-१२४ )

–दक्षि—॥–चातूरूप्यमिति । अवः अवस्तात् अवरस्तात् अवरत.–॥–अध—॥—त्रैरूप्यमिति।अध अधस्तात् अधरात् ॥—पश्चाद्रमणीयमिति।पश्चादेशोदन्त' कार्य पश्चार्धमित्यादिसिद्ध्यर्थ तत 'अपर्णवर्णस्य'॥– दक्षिणपश्चादिति । दक्षिणा च सा अपरा च दक्षिणापरा । 'सर्वादयोऽस्यादौ' इति पुंभावे दक्षिणापरा दिग्रमणीया । 'पश्चोऽपरस्य–' इतिसूचनात्तदन्तादपि प्रत्यय. ॥

इत्यादिना पश्चादेशः । दाक्षिणाद्रमणीयम् । दाक्षिणादागतः । दाक्षिणाद्वसति । उत्तराद्रमणीयम् । उत्तरादागतः । उत्तराद्वसति ॥ ११८ ॥ **वा दक्षिणात्प्रथमासप्तम्या आः** ॥ ७ । २ । ११९ ॥ दक्षिणशब्दाद्दिग्देशवृत्तेः प्रथमान्तात्सप्तम्यन्ताच्च आः प्रत्ययो भवति वा । दक्षिणा रमणीयम् । दक्षिणा वसति । पक्षे अतसातौ । दक्षिणतो रमणीयम् । दक्षिणतो वसति । दक्षिणाद्रमणीयम् । दाक्षिणाद्वसति । पञ्चम्यां सावकाशावतसातावाकारो बाधेतेति वाग्रहणम् । प्रथमासप्तम्या इति किम् । दक्षिणत आगतः । दक्षिणादागतः ॥ ११९ ॥ *आही दूरे ॥ ७ । २ । १२० ॥ दिक्शब्दा *अवध्यपेक्षाः । तत्रावधेर्दूरे दिशि देशे वा वर्तमानात् प्रथमासप्तम्यन्तात् दक्षिणशब्दादा आहि इत्येतौ प्रत्ययौ भवतः । ग्रामाद्दूरा दक्षिणा दिग्देशो वा रमणीय. ग्रामाद्दक्षिणा रमणीयम् । दक्षिणाहि रमणीयम् । दक्षिणा वसति । दक्षिणाहि वसति । दूर इति किम् । दक्षिणतः दक्षिणात् दक्षिणा रमणीयम् । आहिर्न भवति । आकारस्तु पूर्वेण सामान्येन विधानाद्भवत्येव । यद्येवमिहाकारग्रहणं किमर्थम् । विशेषविहितेनाहिना बाधो मा भूदित्येवमर्थम् उत्तरार्थं च । प्रथमासप्तम्या इत्येव । दाक्षिणत आगतः ॥ १२० ॥ **वोत्तरात्** ॥ ७ । २ । १२१ ॥ उत्तरशब्दात्प्रथमासप्तम्यन्तात् आ आहि इत्येतौ प्रत्ययौ वा भवतः । योगविभागाद्दूर इति नानुवर्तते । उत्तरा रमणीयम् । उत्तरा वसति । उत्तराहि रमणीयम् । उत्तराहि वसति । पक्षे अतसातौ । उत्तरतः । उत्तरात् । प्रथमासप्तम्या इत्येव । उत्तरतः । उत्तरादागत ॥ १२१ ॥ **अदूरे एनः** ॥ ७ । २ । १२२ ॥ वोत्तरादिति *नानुवर्तते । दिक्शब्दाद्दिग्देशकालवृत्तेः प्रथमासप्तम्यन्तादवधेरदूरे वर्तमानादेनः प्रत्ययो भवति । अस्मात् पूर्वा अदूरा दिक् रमणीया देशः कालो वा पूर्वेणास्य रमणीयम् । पूर्वेणास्य वसति । अपरेणास्य रमणीयम् । अपरेणास्य वसति । एवं दक्षिणेन उत्तरेण अधरेण । अदूर इति किम् । पुरो रमणीयम् । पुरो वसति । प्रथमासप्तम्या इत्येव । पुर आगतः । दिग्देशकालमात्रे द्योत्ये ये सामान्यप्रत्यया उक्ता अदूरे अपि सामान्यविवक्षायां ते भवन्त्येव प्रकरणादेश्चादूरता गम्यत इति *नार्थो वाग्रहणेन । अन्ये तु दक्षिणोत्तराधरशब्देभ्य एव एनप्रत्ययमिच्छन्ति ॥ १२२ ॥ **लुबञ्चेः** ॥ ७ । २ । १२३ ॥ अञ्चत्यन्ताद्दिक्शब्दाद्दिग्देशकालेषु वर्तमानात्प्रथमापञ्चमीसप्तम्यन्ताद्यः प्रत्ययो विहितो धा एनो वा तस्य लुप् भवति । प्राची दिक् दूरादूरा वा रमणीया देशः कालो वा प्राग्रमणीयम् । प्रागागतः । प्राग्वसति । एवं प्रत्यक् अवाक् उदक् । लुपि च सत्यां स्त्रीप्रत्ययस्यापि लुप् भवति ॥ १२३ ॥ **पश्चोऽपरस्य दिक्पूर्वस्य चाति** ॥ ७ । २ । १२४ ॥ अपरशब्दस्य केवलस्य दिक्पूर्वपदस्य च आति प्रत्यये परे पश्चादेशो भवति । अपरा दिग्देशः कालो वा रमणीयः पश्चाद्रमणीयम् । पश्चादागतः । पश्चाद्वसति । दिक्पूर्वात्, दक्षिणा च सा अपरा च दक्षिणापरा दिग्देशो वा रमणीयः दक्षिणपश्चाद्रमणीयम् । दक्षिणपश्चादागतः । दक्षिणपश्चाद्वसति । उत्तरपश्चाद्रमणीयम् । उत्तरपश्चादागतः । उत्तरपश्चाद्वसति ॥ १२४ ॥ **वोत्तरपदेऽर्धे** ॥ ७ । २ । १२५ ॥ अपरशब्दस्य

---

—आही—॥—अवध्यपेक्षा इति । यथायमस्मात्पूर्व इत्यादि॥—अदूरे—॥—नानुवर्त्तत इति । 'द्वितीयाषष्ठ्यावेनेनानञ्चे' इत्यत्राञ्चेर्वर्जनात्॥—नार्थो वा ग्रहणेनेति । एव तर्हि 'आही दूरे' इत्यत्र कथमुक्त विशेषविहितेन आहिना बाधो माभूदित्येवमर्थमिति अनेनैव प्रकारेण सिद्धत्वात् । सत्यम् । सोपि प्रकारोऽस्तीति ज्ञापनार्थम् ॥—

दक्षिणापरस्या अर्धः दक्षिणपश्चार्धः दक्षिणापरार्धः । 
केवलस्य दिक्पूर्वपदस्य च अर्धशब्दे उत्तरपदे पश्चादेशो वा भवति । अपरमर्धं पश्चार्धम् अपरार्धम् ।
उत्तरपश्चार्धः । उत्तरापरार्धः । उत्तरपदे इति किम् । अपरा अर्धे शोभते । असमासोऽयम् । पूर्वपदमुत्तरपदमिति हि समासे भवति ॥ १२५ ॥
*कृभ्वस्तिभ्यां कर्मकर्तृभ्यां प्रागतत्तत्त्वे च्विः ॥ ७ । २ । १२६ ॥ भूश्च अस्तिश्च भ्वस्ति का च भ्वस्ति च कृभ्वस्तिनी ताभ्यां कृभ्वस्तिभ्याम् । द्विवचनं
कर्मकर्तृभ्यामिति यथासंख्यार्थम् । करोतिकर्मणो भ्वस्तिकर्तुश्च प्राक् पूर्वमतस्य तत्त्वेऽभूततद्भावे गम्यमाने कृभ्वस्तिभ्यां च योगे च्विः प्रत्ययो भवति । द्रव्यस्य
गुणक्रियाद्रव्यसंबन्धसमूहविकारयोगे प्रागतत्तत्त्वमुदाहार्यम् । शुक्लीकरोति पटम् । प्रागशुक्लं शुक्लं करोतीत्यर्थः । शुक्लीक्रियते पटः । प्रागशुक्लः शुक्लः क्रियत
इत्यर्थः । शुक्लीकरणम् । शुक्लीभवति पटः । प्रागशुक्लः पट इदानीं शुक्लो भवतीत्यर्थः । शुक्लीभवनम् । शुक्लीस्यात्पटः । प्रागशुक्लः पट इदानीं शुक्लः स्यादित्यर्थः ।
एवं कारकीकरोति चैत्रम् । कारकीभवति कारकीस्याच्चैत्रः । *दण्डीकरोति चैत्रम् । दण्डीभवति दण्डीस्यात् चैत्रः । राजपुरुषीकरोति चैत्रम् । राजपुरुषीभवति राजपुरुषीस्या-
च्चैत्रः । संघीकरोति गाः । संघीभवन्ति संघीस्युर्गावः । घटीकरोति मृदम् । घटीभवति घटी स्यान्मृत् । पटीकरोति तन्तून् । पटीभवन्ति पटीस्युस्तन्तवः । भस्मीकरोति
काष्ठम् । भस्मीभवति काष्ठम् । भस्मीस्यात् काष्ठम् । कृभ्वस्तिभ्यामिति किम् । अशुक्लं शुक्लं संपादयति । अशुक्लः शुक्लः संपद्यते । कर्मकर्तृभ्यामिति किम् ।
प्रागदेवकुले इदानीं देवकुले करोति । प्रागदेवकुले इदानीं देवकुले भवति । *कथं समीपीभवति दूरीभवति अभ्यासीभवति । अत्रापि *उपचारात्तत्स्थे द्रव्ये वर्तमानानां
समीपादीनां कर्तृत्वम् । प्रागतत्तत्त्व इति किम् । शुक्लं करोति । शुक्लो भवति । शुक्लः स्यात् । प्राग्ग्रहणं किम् । अशुक्लं शुक्लं करोति । एककालमतत्तत्त्वे न
भवति । भवति हि एको भावः कश्चिदेककालं शुक्लोऽशुक्लश्च देशभेदेन चित्रपटीवत् । अभद्रं भद्रं करोति भद्राकरोति शिरः अनिष्कुलं
निष्कुलं करोति निष्कुलाकरोति दाडिममित्यत्र परत्वात् डाजेव ॥ १२६ ॥ अरुर्मनश्चक्षुश्चेतोरहोरजसां लुक् च्वौ ॥ ७ । २ । १२७ ॥ अरुस् मनस् चक्षुस्
चेतस् रहस् रजस् इत्येतेषां च्वौ परेऽन्तस्य लुग्भवति । अनरुः अरुः करोति । अरूकरोति । अरूभवति अरूस्यात् । महारूकरोति । महारूभवति ।
महारूस्यात् । मनीकरोति । मनीभवति । मनीस्यात् । उन्मनीकरोति । उन्मनीभवति । उन्मनीस्यात् । चक्षूकरोति । चक्षूभवति । चक्षूस्यात् ।
उच्चक्षूकरोति । उच्चक्षूभवति । उच्चक्षूस्यात् । चेतीकरोति । चेतीभवति । चेतीस्यात् । विचेतीकरोति । विचेतीभवति । विचेतीस्यात् । रहीकरोति । रही-
भवति । रहीस्यात् । विरहीकरोति । विरहीभवति । विरहीस्यात् । रजीकरोति । रजीभवति । रजीस्यात् । विरजीकरोति । विरजीभवति । विरजीस्यात् ।

---

प्राग् अस प्रागस' । 'अव्यय प्रवृद्धादिभिः' इति सः । प्रागतस्य तत्त्व प्रागतत्तत्त्व
कृभ्व—॥—प्रागतत्तत्त्वे इति । तस्य भावस्तत्त्वम् न स अस । तस्मिन् ॥—दण्डीकरोतीति । असत्पर इत्यधिकारस्य 'रात्स' इत्यवस्थितत्वात् 'दीर्घश्च्वि—' इति दीर्घ ॥—कथमिति । नन्वत्र प्रागतत्तत्त्वं नास्ति प्रकृति
विकाराभावात् । नह्यसमीप समीप भवति कि तर्हि असमीपस्थ समीपस्थ भवतीति समीपादिभ्य. च्वि प्रत्ययो वक्तव्य इत्याशङ्क्याह—उपचारादिति । समीपशब्द' समीपस्थे

च्वाविति किम् । अरुः करोति । बहुवचनं तदन्तानामपि परिग्रहार्थम् । अन्यथा ग्रहणवता न तदन्तविधिरित्युपतिष्ठेत ॥ १२७ ॥ इसुसोर्बहुलम् ॥ ७ । २ । १२८ ॥ इस् उस् इत्येवमन्तस्य च्वौ परे बहुलमन्तस्य लुक् भवति । असर्पिः सर्पिः करोति सर्पीकरोति नवनीतम् । धनूभवति वंशः । न च भवति सर्पिर्भवति धनुर्भवति । बहुलग्रहणं प्रयोगानुसरणार्थम् ॥ १२८ ॥ *व्यञ्जनस्यान्त ई ॥ ७ । २ । १२९ ॥ व्यञ्जनान्तस्य च्वौ परे बहुलमीकारोऽन्तो भवति । दृषदीभवति शिला । समिधीभवति काष्ठम् । न च भवति दृषद्भवति समिद्भवति ॥ १२९ ॥ व्याप्तौ स्सात् ॥ ७ । २ । १३० ॥ कृभ्वस्तिभ्यां कर्मकर्तृभ्यां प्रागतत्तत्त्वे इति वर्तते । एतस्मिन्विषये सकारादिः सात् प्रत्ययो भवति व्याप्तौ प्रागतत्तत्त्वस्य चेद्व्याप्तिः सर्वात्मना द्रव्येणाभिसंबन्धो गम्यते । द्विसकारपाठः षत्वनिषेधार्थः । सर्वं काष्ठं प्रागनग्निमग्निं करोति अग्निसात्करोति काष्ठम् । अग्निसाद्भवति । अग्निसात् स्यात् । उदकसात्करोति लवणम् । उदकसाद्भवति । उदकसात् स्यात् । व्याप्ताविति किम् । अग्नीकरोति काष्ठम् । अग्नीभवति अग्नीस्यात्काष्ठम् । सत्यामपि वस्तुनि व्याप्तौ प्रागतत्तत्त्वमात्रे च्विर्भवत्येवेति नार्थो वावचनेन । अग्नीकरोति अग्नीभवति अग्नीस्यात्काष्ठम् । उदकीकरोति उदकीभवति उदकीस्याल्लवणम् । व्याप्तिस्तु प्रकरणादेर्गम्यते ॥ १३० ॥ जातेः संपदा च ॥ ७ । २ । १३१ ॥ कृभ्वस्तिभिः संपदा च योगे करोतिकर्मणो भ्वस्तिकर्तुः संपदिकर्तुश्च प्रागतत्तत्त्वेन जातेः सामान्यस्य व्याप्तौ स्सात्प्रत्ययो भवति । अस्यां सेनायां सर्वं शस्त्रमग्निसात्करोति दैवम् । अस्यां सेनायां सर्वं शस्त्रमग्निसाद्भवति अग्निसात् स्यात् । अस्यां सेनायां सर्वं शस्त्रमग्निसात्संपद्यते । वर्षासु सर्वं लवणमुदकसात्करोति मेघः । उदकसाद्भवति । उदकसात् स्यात् । उदकसात्संपद्यते । यथैव ह्येकस्य द्रव्यस्य सर्वावयवाभिसंबन्धे प्रागतत्तत्त्वेन व्याप्तिर्भवति तथा जातेः सामान्यस्य सर्वव्यक्तिसंबन्धे भवति । एवं च व्याप्ताविति सामान्योपादानात् कृभ्वस्तियोगे पूर्वेणैव स्सातिसिद्धः संपदर्थं तु वचनम् । चकार उत्तरत्रोभयोः समुच्चयार्थः ॥ १३१ ॥ *तत्राधीने ॥ ७ । २ । १३२ ॥ कृभ्वस्तिभ्यां संपदा चेत्यनुवर्तते । कर्मकर्तृभ्यां प्रागतत्तत्त्वे इति च निवृत्तम् । तत्रेति सप्तम्यन्तादधीने आयत्तेऽर्थे कृभ्वस्तिसंपद्भिर्योगे स्सात्प्रत्ययो भवति । राजन्यधीनं करोति राजसात्करोति । राजस्वामिकं करोतीत्यर्थः । राजसाद्भवति राजसात्स्यात् । राजसात्संपद्यते । आचार्यसात्करोति । आचार्यसाद्भवति । आचार्यसात् स्यात् । आचार्यसात्संपद्यते ॥ १३२ ॥ देये त्रा च ॥ ७ । २ । १३३ ॥ तत्रेति सप्तम्यन्तादेयोपाधिकेऽधीनेऽर्थे कृभ्वस्तिसंपद्भिर्योगे त्राप्रत्ययो भवति । चकारो न स्सातोऽनुकर्षणार्थः तस्याधीनतामात्रविवक्षायां पूर्वेणैव सिद्धत्वात् । किंतु कृभ्वस्तिभ्यां संपदा चेत्यस्यानुकर्षणार्थः । तेनोत्तरत्र नानुवर्तते । देवेऽधीनं देयं करोति देवत्रा करोति द्रव्यम् । देवाय दातव्यमिति यत् स्थापितं तदिदानीं देवाय ददातीत्यर्थः । देवेऽधीनं देयं भवति देवत्रा भवति । देवत्रा स्यात् । देवत्रा संपद्यते । गुरुत्रा करोति । गुरुत्रा भवति । गुरुत्रा स्यात् । गुरुत्रा संपद्यते । देय इति किम् । राजसाद्भवति राष्ट्रम् ॥ १३३ ॥

---

वस्तुनि वर्तते इत्यर्थ ॥—व्यञ्ज—॥ नन्वन्तग्रहणं किमर्थम् । सत्यम् । व्यञ्जनादेरिति कृत प्रकृतेः प्रत्ययस्वात् दरदोऽपत्य स्त्री 'पुरुमगध–' इत्यणि 'द्रेरञणो–' इति लुपि अदरद् दरद् भवतीति च्वावनेन ईप्रत्यये 'जातिश्च णि–' इति पुंभाव. स्यात्तथा दारदीति स्यात् दरदीति चेष्यते॥—तत्र—॥—निवृत्तमिति॥ तत्रेति भणनात् कर्मकर्तृभ्यामिति अधीने इत्यभिन्नार्थोपादानाच्च प्रागतत्तत्व

**सप्तमीद्वितीयाद्देवादिभ्यः** ॥ ७ । २ । १३४ ॥ सप्तम्यन्तेभ्यो द्वितीयान्तेभ्यश्च देवादिभ्यस्त्रा प्रत्ययो वा भवति स्वार्थे । देवेषु वसति देवत्रा वसति । देवेषु भवति देवत्रा भवति । देवेषु स्याद्देवत्रा स्यात् । देवान् करोति देवत्रा करोति । देवान् गच्छति देवत्रा गच्छति । एवं मनुष्यत्रा वसति । मनुष्यत्रा गच्छति । मर्त्यत्रा वसति मर्त्यत्रा गच्छति । पुरुषत्रा वसति । पुरुषत्रा गच्छति । पुरुत्रा वसति पुरुत्रागच्छति । बहुत्रा वसति । बहुत्रा गच्छति । देवादयः शिष्टप्रयोगगम्याः ॥ १३४ ॥ **तीयशम्बबीजात् कृगा कृषौ डाच्** ॥ ७ । २ । १३५ ॥ *तीयप्रत्ययान्तात् शम्बबीज इत्येताभ्यां च करोतिना योगे कृषिविषये डाच् प्रत्ययो भवति । द्वितीयं वारं करोति क्षेत्रं द्वितीयाकरोति क्षेत्रम् द्वितीयं वारं कृषतीत्यर्थः। *तृतीयाकरोति क्षेत्रम् । तृतीयं वारं कृषतीत्यर्थः । शम्बाकरोति क्षेत्रम् । अनुलोमकृष्टं पुनस्तिर्यक् कृषतीत्यर्थः । अन्ये त्वाहुः *शम्बसाधनः कृषिरिति शम्बेन कृषतीत्यर्थः। एके तु शम्बाकरोति कुलिवमित्युदाहरन्ति । लोहकं वा वध्रकुण्डलिका वा शंबम् तत् कुलिवस्य करोतीत्यर्थः। बीजाकरोति क्षेत्रम् । उप्ते पश्चाद्बीजैः सह कृषतीत्यर्थः । *यदाप्येवं विग्रहः क्षेत्रस्य द्वितीयां कृषिं कर्ष कर्षणं करोति शम्बं करोति क्षेत्रस्य कुलिवस्य वा बीजं करोति क्षेत्रस्येति तदापि द्वितीयाकरोति क्षेत्रमित्यादौ क्षेत्रात् द्वितीया भवति । द्वितीयाकरोतीत्यादयो हि मुण्डयतीत्यादिवत् क्रियाशब्दास्तेषां च क्षेत्रादि कर्म भवति । कृगेति किम् । द्वितीयं वारं कृषति । कृषाविति किम् । द्वितीयं पटं करोति । चकारो 'डाच्यादौ'—(७—२—१४९) इत्यत्र विशेषणार्थः ॥ १३५ ॥ **संख्यादेर्गुणात्** ॥ ७ । २ । १३६ ॥ संख्याया आद्यवयवात्परो यो गुणशब्दस्तदन्तात् कृगो योगे कृषिविषये डाच् प्रत्ययो भवति । द्विगुणं कर्षणं करोति क्षेत्रस्य द्विगुणाकरोति क्षेत्रम् । त्रिगुणाकरोति क्षेत्रम् । क्षेत्रस्य द्विगुणं त्रिगुणं च विलेखनं करोतीत्यर्थः । कृषावित्येव । द्विगुणां रज्जुं करोति ॥ १३६ ॥ **समयाद्यापनायाम्** ॥ ७ । २ । १३७ ॥ समयशब्दाद्यापनायां कालहरणे गम्यमाने कृगा योगे डाच् प्रत्ययो भवति । समयाकरोति तन्तुवायः । अद्य श्वस्ते पटं दास्यामीति कालक्षेपं करोति इत्यर्थः । यापनायामिति किम् । समयं करोति ॥ १३७ ॥ **सपत्रनिष्पत्रादतिव्यथने** ॥ ७ । २ । १३८ ॥ सपत्रनिष्पत्र इत्येताभ्यां कृगा योगेऽतिव्यथनेऽतिपीडने गम्यमाने डाच् प्रत्ययो भवति । सपत्राकरोति मृगम् । पत्रं शरः सह पत्रमनेनेति सपत्रः तं करोति शरमस्य शरीरे प्रवेशयतीत्यर्थः । निष्पत्राकरोति । निर्गतं पत्रमस्मादिति निष्पत्रः तं करोति शरमस्यापरपार्श्वेन निष्क्रमयतीत्यर्थः । सपत्राकरोति वृक्षं वायुः । निष्पत्राकरोति वृक्षं वायुः । अत्र पत्रशातनमेवातिव्यथनम् । सपत्राकरोतीत्यपि मङ्गलाभिप्रायेण वृक्षस्य निष्पत्राकरणमेवोच्यते । यथा दीपो नन्दतीति विध्वंसः । अतिव्यथन इति किम् । सपत्रं करोति वृक्षं जलसेकः । निष्पत्रं करोति वृक्षमनलं भूमिशोधकः ॥ १३८ ॥ **निष्कुलान्निष्कोषणे** ॥ ७ । २ । १३९ निष्कुलशब्दात्कृगा योगे निष्कोषणेऽर्थे डाच् प्रत्ययो भवति । निष्कृष्टं कुलमवयवसंघातोऽस्मादिति निष्कुलम् । अन्तरवयवानां बहिर्निष्कासनं निष्कोषणम् । निष्कुलं करोति

इति ॥—तीय—॥—प्रत्ययान्तादिति । 'द्वेस्तीयः' इत्यादिविहितात् यस्तु मुखतीय इत्यादौ तीयस्तदन्तादनर्थकत्वान्न भवति ॥—शम्बसाधन इति । शम्बो हलभेदः स साधनं कारकं यस्य ॥—यद्याप्येवं विग्रह इति । ननु प्रथमं षष्ठी डाचि उत्पन्ने कथं द्वितीयेत्याशङ्का ॥

निष्कुलाकरोति दाडिमम् निष्कुष्णातीत्यर्थः । एवं निष्कुलाकरोति पशुं चण्डालः । निष्कोपण इति किम् । निष्कुलं करोति शत्रुम् ॥ १३९ ॥ *प्रियसुखादानुकूल्ये ॥ ७ । २ । १४० ॥ प्रियसुख इत्येताभ्यां कृगा योगे आनुकूल्ये गम्यमाने डाच् प्रत्ययो भवति । प्रियाकरोति गुरुम् । सुखाकरोति गुरुम् । गुरोरानुकूल्यं करोति तमाराधयतीत्यर्थः । आनुकूल्य इति किम् । प्रियं करोति *सामवचनम् । सुखं करोत्यौषधपानम् ॥ १४० ॥ दुःखात् प्रातिकूल्ये ॥ ७ । २ । १४१ ॥ दुःखशब्दात् प्रातिकूल्ये गम्यमाने कृगा योगे डाच् प्रत्ययो भवति । दुःखाकरोति शत्रुम् । शत्रोः प्रातिकूल्यं करोति । प्रतिकूलमाचरति । अनभिमतानुष्ठानेन तं पीडयतीत्यर्थः । प्रातिकूल्य इति किम् । दुःखं करोति रोगः ॥ १४१ ॥ शूलात्पाके ॥ ७ । २ । १४२ ॥ शूलशब्दात्पाके गम्यमाने कृगा योगे डाच् प्रत्ययो भवति । शूलाकरोति मांसम् । शूले पचतीत्यर्थः । पाक इति किम् । शूलं करोति कदन्नम् ॥ १४२ ॥ सत्यादशपथे ॥ ७ । २ । १४३ ॥ सत्यशब्दाच्छपथादन्यत्र वर्तमानात् कृगा योगे डाच् प्रत्ययो भवति । सत्याकरोति वणिग् भाण्डम् । कार्षापणादिदानेन मयावश्यमेवैतत्क्रेतव्यमिति विक्रेतारं प्रत्याययति । अशपथ इति किम् । सत्यं करोति । यदीदमेवं न स्यात् इदं मे इष्टं माभूत् अनिष्टं वा भवत्विति शपथं करोतीत्यर्थः ॥ १४३ ॥ मद्रभद्राद्वपने ॥ ७ । २ । १४४ ॥ मद्रभद्रशब्दाभ्यां वपने मुण्डने गम्यमाने कृगा योगे डाच् प्रत्ययो भवति । मद्रं वपनं करोति मद्राकरोति, भद्राकरोति नापितः । शिशोर्मङ्गल्यं केशच्छेदनं करोतीत्यर्थः । मद्रभद्रशब्दौ मङ्गल्यवचनौ । वपन इति किम् । मद्रं करोति । भद्रं करोति साधुः ॥ १४४ ॥ *अव्यक्तानुकरणादनेकस्वरात् कृभ्वस्तिनानितौ द्विश्च ॥ ७ । २ । १४५ ॥ यस्मिन् ध्वनावकारादयो वर्णा विशेषरूपेण नाभिव्यज्यन्ते सोऽव्यक्तः तस्यानुकरणमव्यक्तानुकरणम् । तस्मादनेकस्वरादनितिपरात् कृभूअस्ति इत्येतैर्धातुभिर्योगे डाच् प्रत्ययो वा भवति द्विश्चास्य प्रकृतिरुच्यते । प्रत्ययस्य द्विर्वचना*नर्थक्यात् । पटत् करोति पटपटा करोति । पटपटा भवति । पटपटा स्यात् । दमत् करोति । दमदमाकरोति । दमदमाभवति । दमदमास्यात् । एवं मसत् करोति मसमसा करोति । खरटत् करोति खरटखरटा करोति । *अव्यक्तवर्णस्यापि *कथंचिद् ध्वनिमात्रसादृश्यात् व्यक्तवर्णमनुकरणं भवति । अव्यक्तानुकरणादिति किम् । दृषत्करोति । अत्र व्यक्तवर्णमनुकार्यम् । अनेकस्वरादिति किम् । श्रत्करोति । खाट् करोति । कृभ्वस्तिनेति किम् । पटज्जायते । अनिताविति किम् । *पटिति करोति ॥ १४५ ॥ इतावतो लुक् ॥ ७ । २ । १४६ ॥ अव्यक्तानुकरणस्यानेकस्वरस्य योऽत् इत्ययं शब्दस्तस्य इतिशब्दे परे लुग् भवति । पटत् इति पटिति । झटत् इति झटिति । एवं छमत् छमिति । घटत् घटिति । असिद्धं बहिरङ्गमन्तरङ्गे इति लुकि सति तृतीयत्वं न भवति । अव्यक्तानुकरणस्येत्येव । जगदिति । अनेकस्वरस्येत्येव । छत् इति छदिति ।

—प्रिय—॥—सामवचनमिति ॥ आनुकूल्य हि चेतनधर्म्मः । तदत्र नास्ति । एवमुत्तरेपि ॥—अव्य—॥—आनर्थक्यादिति । डाच्प्रत्ययस्य द्विर्भक्ति क्रियते तथापि समानानामिति दीर्घत्वे एकस्यैव श्रुतिर्भवति ॥—अव्यक्तवर्णस्यापीति । अथ पटदित्यादि व्यक्तवर्णमव्यक्तवर्णस्य कथमनुकरणमनुकरणस्यानुकार्यसदृशत्वादन्यथातिप्रसङ्ग. स्यादित्याह—कथंचिदिति ॥—पटिति करोतीति । न च परत्वात् ' इतावतो लुक् ' इति लुका भाव्यमिति वाच्यम् । कृभ्वस्तीनामभावे तस्य चारितार्थत्वात् ॥—

। सत् इति सदिति । अत इति किम् । महत् इति महदिति । शरद् इति शरदिति । इताविति किम् । पटदत्र । कथं घटदिति गम्भीरमम्बुदैर्नदितं, चकदिति तडितापि कृतम् इति । दकारान्तावेतौ द्रष्टव्यौ ॥ १४६ ॥ न द्वित्वे ॥ ७ । २ । १४७ ॥ अव्यक्तानुकरणस्यानेकस्वरस्य द्वित्वे द्विर्वचने कृते इतिशब्दे परे योऽत् शब्दस्तस्य लुग् न भवति । पटत्पटदिति । घटत्घटदिति । झटत्झटदिति । वीप्सायां द्विर्वचनम् । द्वित्वे इति किम् । पटिति । कथं चटच्चटिति । धगद्धगिति । पटत्पटिति । नात्र द्वित्वमपि तु समुदायानुकरणमिति भवति ॥ १४७ ॥ तो वा ॥ ७ । २ । १४८ ॥ द्वित्वे सति अव्यक्तानुकरणस्यानेकस्वरस्य योऽच्छब्दस्तस्य संबन्धिनस्तकारस्येतौ परे वा लुग् भवति । पटत्पटेति करोति । पटत्पटदिति करोति । घटद्घटेति करोति । घटत्घटदिति करोति ॥ १४८ ॥ डाच्यादौ ॥ ७ । २ । १४९ ॥ अव्यक्तानुकरणस्यानेकस्वरस्याच्छब्दान्तस्य द्वित्वे सति आदौ पूर्वपदे योऽतस्तका-रस्तस्य डाचि परे लुग्भवति । पटपटा करोति । दमदमा करोति । आदाविति किम् । पतपता करोति । डाच्यन्त्यस्वरादिलोपे मूलप्रकृतेस्तकारस्य लुग् न भवति ॥ १४९ ॥ बह्वल्पार्थात्कारकादिष्टानिष्टे प्शस् ॥ ७ । २ । १५० ॥ बह्वर्थादल्पार्थाच्च कारकाभिधायिनो नाम्नः प्शस् प्रत्ययो वा भवति यथासंख्यमिष्टेऽनिष्टे च विषये । इष्टं प्राशित्रादि । अनिष्टं श्राद्धादि । ग्रामे बहवो ददाति बहुशो ददति । बहु धनं ददाति बहुशो धनं ददाति । विवाहे बहून् कार्षापणान ददाति बहुशः कार्षापणान् ददाति । विवाहे बहुभिर्भुक्तमतिथिभिः बहुशो भुक्तमतिथिभिः । बहुभ्योऽतिथिभ्यो ददाति बहुशोऽतिथिभ्यो ददाति । बहुभ्यो ग्रामेभ्य आगच्छति बहुशो ग्रामेभ्य आगच्छति । बहुषु ग्रामेषु वसति बहुशो ग्रामेषु वसति । एवं भूरिशः । प्रभूतशः । गणशः । अल्पार्थे, अल्प आगच्छति अल्पश आगच्छति । अल्पं धनं ददाति अल्पशो धनं ददाति । श्राद्धे अल्पैर्भुक्तम् अल्पशो भुक्तम् । अल्पेभ्यो ददाति अल्पशो ददाति । अल्पेभ्य आगतम् अल्पश आगतम् । अल्पेषु वसति अल्पशो वसति । एवं स्तोकशः । कतिपयशः । बह्वल्पार्थादिति किम् । गां ददाति । अश्वं ददाति । कारकादिति किम् । बहूनां स्वामी । इष्टानिष्ट इति किम् । बहु ददाति श्राद्धे । अल्पं ददाति प्राशित्रादौ । पकारः पित्कार्यार्थः ॥ १५० ॥ संख्यैकार्थाद्वीप्सायां शस् ॥ ७ । २ । १५१ ॥ संख्यावाचिन एकत्वविशिष्टार्थवाचिनश्च कारकाभिधायिनो नाम्नो वीप्सायां द्योत्यायां शस् प्रत्ययो भवति । वीप्सायां द्विर्वचनस्य प्राप्तौ तदपवादोऽयम् । वाधिकारात्पक्षे द्विर्वचनमपि भवति । एकैकं ददाति एकशो ददाति । द्वौद्वौ द्विशः । एवं त्रिशः । तावच्छः । कतिशः । गणशः । एकैकेन दीयते एकशो दीयते । द्वाभ्यां द्वाभ्यां द्विशः । त्रिशः । तावच्छः । एवं कतिशः । गणशः । एकार्थे, मापं मापं देहि मापशो देहि । कार्षापणशः । पणशः । पादशः । पलशः । प्रस्थशः । अर्धशः । पर्वशः । तिलशः । संघशः । पूगशः । वृन्दशः । पङ्क्तिशः । वनशः प्रविशति । कूपीशः खनति । कुम्भीशः कलशीशो ददाति । क्रमश इति क्रमवतां भेदात् क्रमेणक्रमेणेति वीप्सा भवति । संख्यैकार्थादिति किम् । मापौ मापौ ददाति । वीप्सायामिति किम् । द्वौ ददाति । मापं

ददाति। तानेकैकशः पृच्छेत् एकैशोऽपि निघ्नन्ति*एकैकशो ददातीति वीप्सायां द्विरुक्तात्पूर्वेणाल्पार्थादिति प्रशस्। वीप्सितवीप्सायां वानेनैव शस्। एकैकम् एकैकं पृच्छेदित्यर्थः। कारकादित्येव। द्वयोर्द्वयोः स्वामी। माषस्य माषस्येष्टे ॥ १५१ ॥ *संख्यादेः पादादिभ्यो दानदण्डे चाकल् लुक् च ॥ ७ । २ । १५२ ॥ संख्यायाः प्रकृत्याद्यवयवात्परे ये पादादयस्तदन्तान्नाम्नो दानदण्डे चकाराद्वीप्सायां च विषयेऽकल् प्रत्ययो भवति तत्संनियोगे च प्रकृतेरन्तस्य लुग्भवति। द्वौ द्वौ पादौ ददाति द्विपदिकां ददाति, त्रिपदिकां ददाति। द्वे शते व्यवसृजति द्विशतिकां व्यवसृजति। द्विमोदकिकाम् त्रिमोदकिकाम् त्यजति। दण्डे, द्वौ पादौ दण्डितः द्विपदिकां दण्डितः। एवं त्रिपदिकाम् द्विशतिकाम् त्रिशतिकाम्। द्विमोदकिकाम्। त्रिमोदकिकाम्। वीप्सायां, द्वौ द्वौ पादौ भुङ्क्ते द्विपदिका भुङ्क्ते। त्रिपदिकाम्। द्विशतिकाम्। त्रिशतिकाम्। द्विमोदकिकाम्। त्रिमोदकिकाम्। संख्यादेरिति किम्। पादं ददाति। पादं दण्डितः। पादं पादं भुङ्क्ते। पादादिभ्य इति किम्। द्वौ द्वौ माषौ ददाति। दानदण्डे चेति किम्। द्वौ पादौ भुङ्क्ते। चकारो वीप्साया अनुकर्षणार्थः। लकारः स्त्रीत्वार्थः। लुग्वचनम्*अनिमित्तलुगर्थम्। तेन पादः पद्भावो भवति। परनिमित्ताया तु लुचि स्थानिवद्भावो न स्यात्। पादादयः प्रयोगतोऽनुसर्तव्याः ॥ १५२ *तीयाट्टीकण् न विद्या चेत् ॥ ७ । २ । १५३ ॥ तीयप्रत्ययान्तात्स्वार्थे टीकण् प्रत्ययो वा भवति न चेत्तीयान्तस्य विद्या विषयो भवति। द्वितीयम् द्वैतीयीकम्। तृतीयं तार्तीयीकम्। टकारो ङ्यर्थः। द्वैतीयीकी तार्तीयीकी शाटी। न विद्या चेदिति किम्। द्वितीया विद्या। तृतीया विद्या। *मुखतीयः पार्श्वतीय इति तीयस्यानर्थकत्वान्न भवति ॥ १५३ ॥ निष्फले तिलात् पिञ्जपेजौ ॥ ७ । २ । १५४ ॥ तिलशब्दान्निष्फलेऽर्थे वर्तमानात् पिञ्जपेज इत्येतौ प्रत्ययौ भवतः। निष्फलस्तिलः तिलपिञ्जः। तिलपेजः ॥ १५४ ॥ *प्रायोऽतोर्द्वयसट्मात्रट् ॥ ७ । २ । १५५ ॥ अतुप्रत्ययान्तात् स्वार्थे द्वयसट् मात्रट् इत्येतौ प्रत्ययौ भवतः प्रायः। यावदेव*यावद्द्वयसम्। यावन्मात्रम्। तावदेव तावद्द्वयसम्। तावन्मात्रम्। एतावदेव एतावद्द्वयसम्। एतावन्मात्रम्। कियद्द्वयसम्। कियन्मात्रम्। प्रायोग्रहणं प्रयोगानुसरणार्थम् ॥ १५५ ॥ *वर्णाव्ययात्स्वरूपे कारः ॥ ७ । २ । १५६ ॥ वर्णेभ्योऽव्ययेभ्यश्च स्वरूपार्थवृत्तिभ्यः स्वार्थे कारः प्रत्ययो भवति। अकारः। इकारः। ककारः। खकारः। ककारादिष्वकार उच्चारणार्थः। अव्यय, ओंकारः। स्वाहाकारः। स्वधाकारः। वषट्कारः। हन्तकारः। *नमस्कारः। चकारः। इतिकारः। एवकारः। हुंकारः। पूत्कारः। सीत्कारः। सूत्कारः। ननु यथा हुंकृतिः पूत्कृतिः सूत्कृतम् सीत्कृतमिति भवन्ति तथा कारशब्देन घञन्तेन समासे ओंकारादयो भविष्यन्ति। सत्यम्। किंतु *ओंकारमुच्चारयति वषट्कारमभिधत्ते हुंकारं करोतीत्यादि न सिध्यति। स्वरूप इति किम्। अः विष्णुः इः कामः कः

---

सरूयै—॥—एकैकश इति। 'प्लुप्वादावेकस्य स्यादे' इति द्विर्वचने आदिविभक्तेर्लुक् ॥—संख्या—॥—अनिमित्तलुगर्थमिति। नन्वकालि 'अवर्णेवर्णस्य—' इति प्रकृत्यन्तस्य लुप्भविष्यति किमर्थं लुग्वचनमित्याशङ्का ॥—तीया—॥—मुखतीय इत्यादि ॥ मुखे मुखत आद्यादिभ्यस्तस् मुखतो भव. गहादिभ्य ईय 'प्रायोऽव्ययस्य' इत्यन्तलोप. । एव पार्श्वतीय ॥—प्रायो—॥—यावद्द्वयसमिति। स्त्रियां यावतीद्वयसी। सामान्यविवक्षाया प्रत्यये पश्चात् स्त्रीत्वे यावद्द्वयसीत्यपि ॥—वर्णा—॥—नमस्कार इति। कस्कादित्वात् स. न तु 'प्रत्यये' इत्यनेन तत्रानव्ययस्येत्यधिकारात् ॥—ओंकारमुच्चारयतीति। यद्यत्र कृ इत्यस्य कार इति निष्पद्यते तदा ओमिति करणस्य किमुच्चारण भवतीति न सगच्छते ॥

ब्रह्म खम् आकाशम् ओं ब्रह्म वषडिन्द्राय स्वाहाग्नये स्वधा पितृभ्य इत्यर्थपरतायां न भवति । प्रायोऽनुवृत्तेरन्यत्रापि भवति । मन एव *मनस्कारः । अहमेवाहंकारः ॥ १५६ ॥ राद्देफः ॥ ७ । २ । १५७ ॥ रशब्दाद्देफः प्रत्ययो वा भवति । रेफः । प्रायोवचनाद्रकार इत्यपि ॥ १५७ ॥ **नामरूपभागाद्धेयः ॥ ७ । २ । १५८ ॥** नामन् रूप भाग इत्येतेभ्यः स्वार्थे धेयः प्रत्ययो वा भवति । नामैव नामधेयम् । रूपमेव रूपधेयम् । भाग एव भागधेयम् ॥ १५८॥ **मर्तादिभ्यो यः ॥ ७ । २ । १५९ ॥** मर्त इत्येवमादिभ्यः स्वार्थे यः प्रत्ययो वा भवति । मर्त एव मर्त्यः । सूर एव सूर्यः । एवं क्षेम्यः । यविष्ठ्यः । भाग्यम् । अपराध्यम् । रव्यम् । लव्यम् । मर्तादयः प्रयोगगम्याः ॥ १५९ ॥ **नवादीनतनत्नं च नू चास्य ॥ ७ । २ । १६० ॥** नवशब्दात्स्वार्थे ईन तन त्न चकाराद्यश्च प्रत्यया वा भवन्ति तत्संनियोगे च नवशब्दस्य नू इत्ययमादेशो भवति । नवमेव नवीनम् । नूतनम् । नूत्नम् । नव्यम् ॥ १६० ॥ **प्रात्पुराणे नश्च ॥ ७ । २ । १६१ ॥** प्रशब्दात्पुराणेऽर्थे वर्तमानात् स्वार्थे नः प्रत्ययो भवति चकारादीनतनत्नाश्च । प्रगतं कालेनेति प्रशब्देन पुराणमुच्यते । प्रणं प्रीणं प्रतनम् प्रत्नम् ॥ १६१ ॥ **देवात्तल् ॥ ७ । २ । १६२ ॥** देवशब्दात् स्वार्थे तल् प्रत्ययो वा भवति । देव एव देवता । लित्करणं स्त्र्यर्थम् ॥ १६२ ॥ **होत्राया ईयः ॥ ७ । २ । १६३ ॥** होत्राशब्दात्स्वार्थे ईयः प्रत्ययो वा भवति । होत्रैव होत्रीयम् ॥ १६३ ॥ ***भेषजादिभ्यष्ट्यण् ॥ ७ । २ । १६४ ॥** भेषज इत्येवमादिभ्यः स्वार्थे ट्यण् प्रत्ययो भवति वा । भेषजमेव भैषज्यम् । अनन्त एव आनन्त्यम् । आवसथ एव आवसथ्यम् । इतिह इसेव ऐतिह्यम् । इतीहेति निपातसमुदाय उपदेशपारंपर्ये वर्तते । चत्वार एव वर्णाश्चातुर्वर्ण्यम् । चातुराश्रम्यम् । चत्वारो वेदाश्चतस्रो विद्या वा *चातुर्वैद्यम् । एवं त्रैवेद्यम् । अनुशातिकादित्वादुभयपदवृद्धिः । त्रैलोक्यम् । ऐकभाव्यम् । द्वैभाव्यम् । त्रैभाव्यम् आन्यभाव्यम् । सार्ववैद्यम् । सार्वलौक्यम् । षाड्गुण्यम् । शीलमेव शैलीयम् आचार्यस्य । भैषज्यानन्त्यावसथ्यैतिह्यशब्दा यदि स्त्रियां स्युस्तदा -अजादिषु द्रष्टव्याः ॥ भेषजादयः शिष्टप्रयोगगम्याः ॥ १६४ ॥ **प्रज्ञादिभ्योऽण् ॥ ७ । २ । १६५ ॥** प्रज्ञ इत्येवमादिभ्यः स्वार्थेऽण् प्रत्ययो वा भवति । प्रजानातीति प्रज्ञः प्रज्ञ एव प्राज्ञः । प्राज्ञी कन्या । प्रज्ञास्या अस्तीति णे प्राज्ञा कन्या । वणिगेव वाणिजः । प्रज्ञ वणिज् उशिज् प्रत्यक्ष विद्वस् विदत् विदन्त द्विदत् षोडत् विद्या मनस् जुहृत् चिकीर्षत् चिकीर्षति वसु मरुत् (वसुमत्) सत्वस् सन्वतु सर्व दशार्ह क्रुञ्च वयस् रक्षस् असुर शत्रु चोर योध चक्षुस् पिशाच अशनि कर्षापण देवता बन्धु अनुजा वर अनुपृक् चतुष्प्रास्य रक्षोघ्न त्रियात विकृत विक्रांत व्याकृत वारिवस्कृत अग्रायण अग्रहायण संतपन मधुप द्वधा ( ता ) चण्डाल गायत्री उष्णिह् अनुष्टुभ् बृहती पङ्क्ति त्रिष्टुभ् जगती इति। प्रज्ञादिराकृतिगणः ॥ तेन आग्नीध्री आग्नीध्रा वा शाला साधारणी साधारणा वा भूमिरित्यादि सिद्धम् ॥ १६५ ॥ **श्रोत्रौषधिकृष्णाच्छरीरभेषजमृगे ॥ ७ । २ । १६६ ॥** श्रोत्र ओषधि कृष्ण इत्येतेभ्यो

---

—मनस्कार इति । मनस् शब्द स्वरादित्वात् अव्ययश्चित्ताभोगे वर्तते । कस्कादित्वात्स.॥—भेष-॥—चातुर्वैद्यमिति । 'व्यञ्जनात्पञ्चमान्तस्थाया सरूपे वा' इति यलोप । अथ भैषज्यादय आवन्ता. स्त्रिया दृश्यन्ते ते कथमित्याह—अजादिष्वित्यादि ॥ अन्यथा ट्यणन्तत्वात् ङी स्यात् ॥ इत्याचार्यश्रीहेमचन्द्रविरचिताया बृहद्वृत्तावचूर्णिकाया सप्तमस्याध्यायस्य द्वितीय. पादः समाप्त.॥ ॥

यथासंख्यं शरीरे भेषजे मृगे च वर्तमानेभ्यः स्वार्थेऽण् प्रत्ययो वा भवति । श्रोत्राच्छरीरे । श्रोत्रमेव श्रौत्रं शरीरम् । श्रोत्रमेवान्यत् । ओषधेर्भेषजे ओषधिरेवौषधम् भेषजम्
। ओषधिरेवान्यत् । कृष्णान्मृगे । कृष्ण एव कार्ष्णो मृगः । कृष्ण एवान्यः ॥ १६६ ॥ कर्मणः संदिष्टे ॥ ७ । २ । १६७ ॥ संदिष्टेऽर्थे वर्तमानात्कर्मणः
स्वार्थेऽण् प्रत्ययो भवति । अन्येनान्योन्यस्मै यदाह त्वयेदं कर्तव्यमिति तत्संदिष्टं कर्म । कर्मैव कार्मणं करोति । संदिष्टं कर्म करोतीत्यर्थः । वशीकरणमपि वृद्धपरंप-
रोपदेशात् क्रियते इति कार्मणमुच्यते । संदिष्ट इति किम् । कर्म करोति । सत्यपि महावाधिकारे विशिष्टोऽर्थः प्रत्ययमन्तरेण न प्रतीयते इत्यस्मिन् विषये नित्य
एव प्रत्ययः ॥ १६७ ॥ वाच इकण् ॥ ७ । २ । १६८ ॥ संदिष्टेऽर्थे वर्तमानाद्वाच्शब्दात्स्वार्थे इकण् प्रत्ययो भवति । अन्येनान्योऽन्यस्मै यामाह सा संदिष्टा
वाक् । वागेव वाचिकं कथयति । संदिष्टां वाचं कथयतीत्यर्थः । संदिष्ट इत्येव । चित्रा वाक् चैत्रस्य । अत्रापि पूर्ववन्नित्यो विधिः ॥ १६८ ॥ विनयादिभ्यः ॥
॥ ७ । २ । १६९ ॥ विनय इत्येवमादिभ्यः स्वार्थे इकण् प्रत्ययो वा भवति । विनय एव वैनयिकम् । समय एव सामयिकम् । विनय समय समाय कथंचित्
अकस्मात् उपचार व्यवहार समाचार संप्रदाय समुत्कर्ष संगति संग्राम समूह विशेष अव्यय अत्यय अनुगादिन् इति । विनयादिराकृतिगणः ॥ १६९ ॥
उपायाद्ध्रस्वश्च ॥ ७ । २ । १७० ॥ उपायशब्दात्स्वार्थे इकण् प्रत्ययो वा भवति तत्संनियोगे च ह्रस्वः । उपाय एव औपयिकम् ॥ १७० ॥
मृदस्तिकः ॥ ७ । २ । १७१ । मृच्छब्दात्स्वार्थे तिकः प्रत्ययो वा भवति । मृदेव मृत्तिका ॥ १७१ ॥ सस्नौ प्रशस्ते ॥ ७ । २ । १७२ ॥ मृद् इत्येतस्मात्
प्रशस्तेऽर्थे वर्तमानात् स स्न इत्येतौ प्रत्ययौ वा भवतः । रूपप्रत्ययापवादः । प्रशस्ता मृत् मृत्सा मृत्स्ना ॥ केचित्तु रूपमपीच्छन्ति प्रशस्ता मृत् मृद्रूपा ॥ १७२ ॥
इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ सप्तमाध्यायस्य द्वितीयः पादः समाप्तः ॥७।२।१७२ ॥
यस्मात्फलं न खलु मालवमात्रमेव श्रीपर्वतोऽपि तव कन्दुककेलिपात्रम् ॥ १ ॥
उत्साहसाहसवता भवता नरेन्द्र धाराव्रतं किमपि तद्विषमं सिषेवे ॥

## ॥ तृतीयः पादः ॥

*प्रकृते मयट् ॥ ७ । ३ । १ ॥ प्राचुर्येण प्राधान्येन वा कृतं प्रकृतम् । प्रकृतेऽर्थे वर्तमानान्नाम्नः स्वार्थे मयट् प्रत्ययो भवति । अन्नं प्रकृतम् *अन्नमयम् ।
अपूपाः घृतमयम् । दधिमयम् । टकारो ङ्यर्थः । यवागूमयी । *अतिवर्तन्तेऽपि स्वार्थिकाः प्रकृतिलिङ्गवचनानीति यवागूः प्रकृता यवागूमयम् । एवमुत्तरत्रापि ।

॥—प्रकृते—॥—अन्नमयमिति । अत्र प्रचुर प्रधान वेत्यर्थ ॥—अतिवर्त्तन्ते इति । इहान्नमयमित्यादिषु युक्तमन्नादेर्नपुंसकत्वात् प्रत्ययस्यापि तत्रैव वृत्तिरिति । यवागूमयीत्यपि युक्तमेव प्रकृत्यर्थस्य स्त्रीत्वात् प्रत्ययस्य स्वार्थिकस्य तत्रैव स्त्रियां वृत्ते, यवागूमयमिति त्वयुक्त यवाग्वर्थस्य स्त्रीत्वात् स्वार्थिकस्य प्रत्ययस्यापि

मकृतेऽर्थे वर्तमानान्नाम्नोऽस्मिन्निति सप्तम्यर्थे मयट् प्रत्ययो भवति। अन्नं प्रकृतमस्मिन्नन्नमयं भोजनम् । अपूपमयं पर्व। वटकमयी यात्रा। यवागूमयी इष्टिः ॥ २ ॥ तयोः समूहवच्च बहुषु ॥ ७ । ३ । ३ ॥ तयोः 'प्रकृते' 'अस्मिन्' इत्येतयोर्विषययोर्बहुषु वर्तमानान्नाम्नः समूहवत्प्रत्ययो भवति चकारान्मयट् च। अपूपाः प्रकृताः आपूपिकम् अपूपमयम् । शष्कुल्यः प्रकृताः शाष्कुलिकम् शष्कुलीमयम् । प्रकृत इति किम् । अन्नम् घृतम् ॥ १ ॥ अस्मिन् ॥ ७ । ३ । २ ॥ आपूपिकम् । अपूपमयम् । मौदकिकम् । मोदकमयम् । शाष्कुलिकम् । शष्कुलीमयम् । 'कवचिहस्त्यचित्ताच्चेकण्' । धैनुकम् धेनुमयम् । 'धेनोरनञः' । अपूपाः प्रकृता अस्मिन् आपूपिकम् अपूपमयं पर्व । मौदकिकी मोदकमयी पूजा । गणिकाः प्रकृता यस्यां यात्रायां गाणिक्या गणिकामयी यात्रा । 'गणिकाया ण्यः' । अश्वीया अश्वमयी यात्रा । 'वाश्वादीयः' ॥३॥ *निन्द्ये पाशप् ॥ ७ । ३ । ४ ॥ निन्द्येऽर्थे वर्तमानान्नाम्नः स्वार्थे पाशप् प्रत्ययो भवति । निन्द्यो वैयाकरणः वैयाकरणपाशः। छान्दसपाशः । निन्द्य इति किम् । साधुर्वैयाकरणः । प्रत्यासत्तेः शब्दप्रवृत्तिनिमित्तकुत्सायामयमिष्यते। तेनेह न भवति । वैयाकरणश्चौरः । नह्यत्र चौर्येण वैयाकरणत्वं कुत्स्यते किं तर्हि शीलमिति । पकारः पुंवद्भावार्थः । कुत्सिता कुमारी कुमारपाशा । किशोरपाशा । अथेह वयोवचनत्वात्पुनर्ङीः कस्मान्न भवति । कुमारादयो वयोवचना न कुमारपाशादयः । निन्दावचना हि ते *इति न भवति ॥ ४ ॥ *प्रकृष्टे तमप् ॥ ७ । ३ । ५ ॥ प्रकृष्टे प्रकर्षवत्यर्थे वर्तमानान्नाम्नस्तमप् प्रत्ययो भवति । प्रकर्षोऽतिशयः । स च गुणक्रिययोरेव न जातिद्रव्ययोः । सर्वे इमे शुक्लाः अयमेषां प्रकृष्टः शुक्लः शुक्लतमः । शुक्लतमौ । शुक्लतमाः । एवमाढ्यतमः । सुकुमारतमः । कारकतमः । साधकतमः । प्रकृष्टतमः । जातिद्रव्यवचनेभ्योऽपि गुणक्रियाप्रकर्षविवक्षायां भवति । गौरयं यः *सुसंनहनः शकटं वहति । गोतमोऽयं यः सुलक्षणः शकटं सीरं च वहति। गोतमेयं या *समांसमां विजायते *स्त्रीवत्सा च । *द्रव्यान्तरसमवायिना च प्रकृष्टेन गुणेन कृत्वा प्रकृष्टे द्रव्ये *तद्वतः प्रत्ययो भवति। अतिशयेन सूक्ष्माणि वस्त्राण्यस्य सूक्ष्मवस्त्रतमः। प्रकर्षप्रत्ययान्ताच्च प्रकर्षस्यापि प्रकर्षविवक्षायां प्रत्ययो भवति। यथा युधिष्ठिरः श्रेष्ठतमः *कुरूणाम्। *तरवन्तात्तु तरप् न भवति । अनभिधानात् । *तथा यथा पूर्वपदातिशये पूर्वपदाद्बहुव्रीहेर्वा आतिशायिकः प्रत्ययो भवति सूक्ष्मतमवस्त्रः सूक्ष्मवस्त्रतमो वा न तथोत्तरपदातिशये बहुव्रीहेः । द्वयोः प्रकर्षे तरपो 'बह्वाढ्यकतम इति किंतूत्तरपदादेव । बहव आढ्यतमा यत्र *बह्वाढ्यतमकः । *केचित्तु पूर्वपदातिशये बहुव्रीहेरेवातिशायिकमिच्छन्ति

---

तत्रैव वृत्तेर्नपुंसकत्वायोगादित्याशङ्का ॥—निन्द्ये—॥—इति न भवतीति । ननु पाशप प्रत्ययस्य स्वार्थे उत्पन्नत्वात् कुमारपाशादयोऽपि वयोवचना इति प्राप्नोति । सत्यम् ॥ यत्र केवलवयोवाचित्वं तत्रैव ङी गौणमुख्ययोरिति न्यायात् । कुमारपाशादयस्तु निन्दाविशिष्टवयोवाचिन इति ॥—प्रकृ—॥—सुसन्नहन इति । सुसवद्ध इत्यर्थ ॥—समांसमामिति । अत्र ' कालाध्वभाव–' इत्याधारस्य कर्मत्वे द्वितीयान्तस्य वीप्साया द्वित्वम् ॥—स्त्रीवत्सा चेति । स्त्री वत्सा यस्याः सा तथा ॥ सवत्सेत्युच्यमाने सह वत्सेन वत्सया वा वर्तते इति संशयः स्यात् तन्निरासाय स्त्रीवत्सेत्युक्तम् ॥—द्रव्यान्तरेति । देवदत्तरूपात् द्रव्यादन्यद्द्रव्य वस्त्रादि तत्र समवायो यो गुण सूक्ष्मत्वादि तेन ॥—तद्वत इति । प्रकृष्टगुणवद्द्रव्यवतश्चेत्रादे । परमार्थवृत्त्याऽस्यैव प्रकर्ष इत्यर्थ ॥—कुरूणामिति । कुरोरपत्यानि ' दुनादि–' इति ञ्य । ' बहुष्वस्त्रियाम् ' इति तस्य लुप् ॥—तरवन्तात्त्वित्यादि । द्वयो शुक्लतरयोर्मध्ये प्रकृष्ट शुक्लतर इति विग्रहे सतीति ज्ञेयम् ॥—तथेति । अनभिधानादित्यर्थ ॥—बह्वाढ्यकतम इति । प्रयोगे बहुव्रीहिज्ञापनाय कप् दर्शित ॥—केचित्त्वित्यादि । तन्मते सूक्ष्मतमवस्त्र इति प्रयोगः

विधानात् बहूना प्रकर्षेऽयं विधिः । *कथं तर्हि प्रधानमयं ग्रामः प्रधानतमोऽयं ग्रामे, आढ्यं नगरम् आढ्यतमोऽयं नगरे । एकस्मिन्नपि निर्दिष्टे समुदाये तदन्तर्गतावयवान्तरापेक्षया प्रकर्षे भविष्यति । प्रकृष्ट इति किम् । महत्सर्षपं ,महान्हिमवानिति । शुक्लापेक्षया च कृष्णे माभूत् । अदूरविप्रकर्षे समानगुणक्रिययोश्च स्पर्धा भवति । नहि निष्कधनः शतनिष्कधनेन स्पर्धते । आढ्याभिरूपौ वा गन्तृपाचकौ वा । तथा च तन्निमित्तः प्रकर्षोऽपि नास्ति । कथं तर्हि शुक्लकृष्णयोः कृष्णो भास्वरतर इति । भास्वरत्वमेकजातीयम् तदपेक्षो भविष्यति । *कथमन्धानां काणतमः अन्धशब्दस्य काणपर्यायत्वात्काणशब्दस्य चान्धपर्यायत्वाददोषः । *कथमहिंसकः श्रेयान् पापीयान् प्राणिनां हन्तेत्यत्र तरबर्थे ईयस् । नैतयोः परस्पर स्पर्धा किं तर्हि *अन्यापेक्षा । पकार पुंवद्भावार्थः । शुक्लतमा शाटी ॥ ५ ॥ *द्वयोर्विभज्ये च तरप् ॥ ७ । २ । ६ ॥ द्वयो*स्तद्गुणयोरर्थयोर्मध्ये यः प्रकृष्टस्तस्मिन् विभज्ये च विभक्तव्ये च प्रकृष्टेऽर्थे वर्तमानान्नाम्नस्तरप् प्रत्ययो भवति । तमपोऽपवादः । द्वाविमौ पटू अयमनयोः प्रकृष्टः पटुः पटुतरः । एवं सुकुमारतरः । पाचकतरः । गोतरो यः शकटं वहति सीरं च । गोतरा या समांसमां विजायते स्त्रीवत्सा च । दन्ताश्च ओष्ठौ च दन्तौष्ठम् । दन्तौष्ठस्य दन्ताः स्निग्धतराः । पाणी च पादौ च पाणिपादम् । पाणिपादस्य पाणी सुकुमारतरौ । अत्र यद्यपि विग्रहे बहुत्वसंख्या प्रतीयते तथापि समाहारेऽवयवौ स्वार्थमात्रं दन्तत्वादिलक्षणम् *अभेदैकत्वसंख्यायोग्युपाददाते न संख्याभेदमिति द्वयोरेव प्रकर्षः । यदा पुनरितरेतरयोगस्तदा बह्वर्थप्रकर्ष इति तमबेव भवति । अस्माकं च देवदत्तस्य च देवदत्तोऽभिरूपतरः । अत्रास्माकमित्येकस्यैव ' अविशेषणे द्वौ चास्मदः ' ( २-२-१२२ ) इति बहुद्भावः । परुद्भवान्पटुरासीत् पटुतर ऐषमः । अत्रैकस्यापि *पर्यायार्थार्पणया द्वित्वमिति द्वयोरेव प्रकर्षः । विभज्ये, सांकाश्यकेभ्यः पाटलिपुत्रका आढ्यतराः अभिरूपतराः सुकुमारतराः । सांकाश्यकेभ्यः पाटलिपुत्रकेभ्यश्च माथुरा आढ्यतराः अभिरूपतराः सुकुमारतराः । सांकाश्यकादिषु पाटलिपुत्रकादीनामप्रवेशात् विभागः । विभज्यस्य च विशेषणमप्याढ्याद्यर्थः प्रकृष्टं विभज्यं भवति ततः प्रत्ययः । द्वयोर्विभज्ये चेति किम् । *गवां कृष्णा संपन्नक्षीरतमा । *सांकाश्यकानां

न भवति॥—कथमिति । यदि बहूना प्रकर्षेऽय विधिस्तर्हि प्रधानतमोय ग्राम इत्यत्र ग्रामपुरुषयोर्द्वयो प्रकर्षे न प्राप्नोतीति कथमर्थ उतर तु सुगममेव॥–महान् हिमवानिति । अत्र सर्षपापेक्षया हिमवतो महत्त्वात् महच्छब्दात्तरप् प्राप्नोति तर्ह्युत्तरसूत्रेऽय विचारो युक्तस्तरप उत्तरेण विधानात् । सत्यम् । प्रकर्षस्यात्र प्रस्तुतत्वात्तद्विचारे प्रस्तावे उक्त इति न दोष । विषमगुणयो स्पर्धाया अभावात् प्रकर्षाभावे तमप् न प्राप्नोतीत्याह —कथमन्धानामिति—॥—कथमहिंसक इत्यादि । द्वयोर्वाक्ययो पृथक्प्राप्तयो । श्रेय पापीयसोर्विषमगुणयो परस्परापेक्षया प्रकर्ष प्रतिपद्यमान पर प्राह —कथमित्यादि—॥—अन्यापेक्षेति । अन्यमहिंसकान्तरमपेक्षते । 'शीलिकामि–' इति ण ॥—द्वयोः—॥—तद्गुणयोरिति । स विवक्षित समानो गुणो ययोरिति विग्रहः ॥—अभेदैकत्वसंख्येति । न विद्यते भेदो यस्या सा अभेदा सा चासायेकत्वसंख्या च । यथौषधिरसा सर्वे मधुन्याहितशक्तय । अविभागेन वर्त्तन्ते तां सख्या तादृशी विदु ॥ चैत्रेण चैत्राभ्या चैत्रैर्वा भूयत इत्यत्र या सख्या सा अभेदैकत्वसख्येति ॥—पर्यायार्थार्पणयेति । पर्यायेषु पटुपटुतरादिषु अर्थस्य विशेषस्य चैत्रादेरर्पणा ढौकनम् ॥—गवा कृष्णेति । अत्र यथा द्वयोरर्थयोर्मध्ये प्रकृष्टत्व नास्ति तथा विभज्योऽपि नास्ति । स हि भेदरूपमापन्नाना भवति । अत्र तु गोत्वेन सर्वा अपि कृष्णा गावोऽभिन्ना ॥—सांकाश्यकानां पाटलिपुत्रकाणां चेति । प्रकर्षद्वारेण विभज्यद्वारे-

पाटलिपुत्रकाणां च पाटलिपुत्रका आढ्यतमा इत्यत्र राश्यपेक्षया द्वित्वेऽपि शब्देन बहुत्वोपादानात्तरप् न भवति । *विभज्यग्रहणमद्वित्वार्थम् । प्रकृष्टे इत्येव । अयमनयोः पटुः । सांकाश्यकेभ्यः पाटलिपुत्रका आढ्याः । पकारः पुंवद्भावार्थः । शुक्लतरा शाटी ॥ ६ ॥ क्वचित् ॥ ७ । ३ । ७ ॥ स्वार्थेऽपि तरप् प्रत्ययो भवति । प्रकृष्टे सिद्ध एव । अभिन्नमेवाभिन्नतरकम् । उपपन्नमेवोपपन्नतरकम् । उच्चैरेवोच्चैस्तराम् । क्वचिद्ग्रहणं शिष्टप्रयोगानुसरणार्थम् ॥ ७ ॥ *किंत्याद्येऽव्ययाद-सत्त्वे तयोरन्तस्याम् ॥७।३।८॥ किंशब्दात् त्याद्यन्तात् एकारान्तादव्ययेभ्यश्च परयोस्तमप्तरपोरन्तस्यामित्ययमादेशो भवति असत्त्वे न चेत्तौ सत्वे द्रव्ये इदंतदिति-परामर्शयोग्ये प्रकृष्टे वर्तेते । इदमनयोरतिशयेन किं पचति किंतरां पचति । इदमेषामतिशयेन किं पचति किंतमां पचति । त्यादि, द्वाविमौ पचतः अयमनयोरतिशयेन पचति पचतितराम् । सर्वे इमे पचन्ति । अयमेषां प्रकृष्टं पचति पचतितमाम् ।*अस्मादेव वचनात् त्याद्यन्तादपि द्व्यर्थप्रकर्षे तरप् बह्वर्थप्रकर्षे तमप् भवति । पूर्वाह्णेतरां भुङ्क्ते । पूर्वाह्णेतमाम् भुङ्क्ते । अपराह्णेतराम् । अपराह्णेतमाम् । प्राह्णेतराम् । प्राह्णेतमाम् । प्रगेतराम् । प्रगेतमाम् । अग्रेतराम् । अग्रेतमाम् । एग्रहणसामर्थ्यात् काले सत्वेऽप्याम् भवति नान्यस्मिन्नेदन्ताभावात् । अग्रेशब्दोऽपि कालवाची । *अथवा विभक्त्यर्थो न द्रव्यम् । तत्प्रकर्षेऽत्र तरप्तमपौ । शोभनो हेशब्दो यस्य स सुहेतर इत्यत्रानभिधानान्न भवति । क्रियाशब्देभ्यश्च, जयतीति विचि जेः जेतर इत्यादि । अव्यय, नितराम् । सुतराम् । अतितराम् अतितमाम् । अतीवतराम् । नतराम् । उच्चैस्तराम् । उच्चैस्तमाम् । किंत्याद्येऽव्ययादिति किम् । शीघ्रतरं गच्छति । असत्त्व इति किम् । किंतरं दारु । उच्चैस्तरः उच्चैस्तमो वृक्षः । उत्तरः । उत्तमः ॥ ८ ॥ *गुणाङ्गाद्वेष्ठेयसू ॥ ७ । ३ । ९ ॥ तयोरिति सप्तम्या विपरिणम्यते । गुणोऽङ्गं प्रवृत्तिनिमित्तं यस्य स गुणाङ्गः । यः शब्दो गुणमभिधाय द्रव्ये वर्तते । तस्मात्तयोस्तमप्तरपोर्विषये यथासंख्यमिष्ठ ईयसु इत्येतौ प्रत्ययौ वा भवतः । पक्षे यथाप्राप्तं तमप्तरपौ च । तमवर्थे इष्ठः । अयमेषामतिशयेन पटुः पटिष्ठः । पटुतमः । पटिष्ठौ । पटुतमौ । पटिष्ठाः । पटुतमाः । एवं लघिष्ठः । लघुतमः । गरिष्ठः । गुरुतमः । म्रदिष्ठः । मृदुतमः । तरवर्थे ईयसुः । अयमनयोरतिशयेन पटुः पटीयान् । पटुतरः । गरीयान् । गुरुतरः । लघीयान् । लघुतरः । म्रदीयान् । मृदुतरः । परुद्भवान् पटुरासीत् पटीयानैषमः । पटुतरः । माथुरेभ्यः पाटलिपुत्रकाः पटीयांसः । पटुतराः । गुणग्रहणं किम् । गोतमः । गोतरः । पाचकतमः । पाचकतरः । दन्तोष्ठस्य दन्ताः स्निग्धतराः । परुद्भवान् विद्वानासीत् ऐषमो विद्वत्तर इति । अत्र जातिक्रियाङ्गत्वान्न भवति । अङ्गग्रहणं किम् । शुक्लतमम् । शुक्लतरं रूपम् । अत्र हि गुण एव वृत्तिर्न *तदुपसर्जने द्रव्य

---

णापि न भवति । षष्ठ्यन्तपदाभ्यां समुदायस्याभिन्नस्यैव प्रतिपादनात् । न त्वत्राप्यपायप्रतिपादिका पञ्चम्यस्ति अपि तु चकारेणाविभाग प्रतीयते । ननु द्वयोरित्युक्तेपि अत्र न भविष्यति किं विभज्यग्रहणेनेत्याह —विभज्यग्रहणमित्यादि । विभज्ये इत्यसति द्वयोरेव प्रकृष्टे स्यात् । ततश्चासत्यपि हि द्वित्वे विभज्ये यथा स्यादित्येवमर्थम् ॥—किंत्याद्येऽव्ययाद—॥—अस्मादेवेति । नामप्रस्तावात् ' त्यादेश्च प्रशस्ते रूपप् ' इति वचनाच्च नाम्न एव प्राप्नुत इति प्रश्नाशय. ॥—अथवेति । यद्यपि पूर्वाह्णोपराह्ण इति कालः सत्वमत्र नामार्थे तथापि विभक्त्यर्थो याऽधिकरणशक्तिर्न सा आधेयपरतन्त्रा इति तस्या असत्त्वात्तत्र प्रत्यय इति ॥—गुणा—॥—तदुपसर्जन इति । स गुण उपसर्जन यत्र तत्र ॥

इति न भवति । ईयसोरुकार उदित्कार्यार्थः । पटीयसी ॥ ९ ॥ त्यादेश्च प्रशस्ते रूपप् ॥ ७ । ३ । १० ॥ त्याद्यन्तान्नाम्नश्च प्रशस्तेऽर्थे वर्तमानाद्रूपप् प्रत्ययो भवति । प्रशस्तं पचति पचतिरूपम् । पचतोरूपम् । पचन्तिरूपम् । त्याद्यन्तानां क्रियाप्रधानत्वात्तस्याश्च साध्यत्वेन लिङ्गसंख्याभ्यामयोगात् रूपवन्तस्यौत्सर्गिकमेकवचनं नपुंसकलिङ्गं च भवति । प्रशस्तो वैयाकरणो वैयाकरणरूपः । पण्डितरूपः । प्रकृते प्रवृत्तिनिमित्तस्य वैस्पष्ट्यम् परिपूर्णता प्रशस्तत्वम् । तेनात्रापि भवति । वृषलरूपोऽयमपि पलाण्डुना सुरां पिबेत् । दस्युरूपोऽयमप्यक्ष्णोरञ्जनं हरेत् । पटुतमरूपः । पटुतररूपः । पकारः पुंवद्भावार्थः । शोभनरूपा । दर्शनीयरूपा ॥ १० ॥ *अतमबादेरीषदसमाप्ते कल्पप् देश्यप् देशीयर् ॥ ७ । ३ । ११ ॥ त्यादेश्चेति वर्तते । संपूर्णता पदार्थानां समाप्तिः । सा किंचिदूना ईषदसमाप्तिः । तद्विशिष्टेऽर्थे वर्तमानात्त्याद्यन्तान्नाम्नश्च तमबाद्यन्तवर्जितात् कल्पप् देश्यप् देशीयर् इत्येते प्रत्यया भवन्ति । ईषदसमाप्तं पचति पचतिकल्पम् । पचतिदेश्यम् । पचतिदेशीयम् । *पचतःकल्पम् । पचतोदेश्यम् । पचतोदेशीयम् । पचन्तिकल्पम् । पचन्तिदेश्यम् । पचन्तिदेशीयम् । पक्ष्यतिकल्पम् । अपाक्षीत्कल्पमित्यादि । पूर्ववन्नपुंसकत्वमेकवचनं च । इदमेव त्यादिग्रहणं ज्ञापकम् शेषस्तद्धितो नाम्न एव भवति । ईषदसमाप्तः पटुः पटुकल्पः पटुदेश्यः पटुदेशीयः । कारककल्पः कारकदेश्यः कारकदेशीयः । कृतकल्पं भुक्तदेश्यम् पीतदेशीयम् । ईषदसमाप्तो गुडो गुडकल्पा द्राक्षा । गुडदेश्या । गुडदेशीया । पयस्कल्पा यवागूः । चन्द्रकल्पं मुखम् । तैलकल्पा प्रसन्ना । गुडादिधर्माणां माधुर्यादीनां द्राक्षादिष्वीषदसमाप्तत्वात् गुडादित्वेनेषदसमाप्ता द्राक्षादय एवमुच्यन्ते । कल्पबाद्यन्तमुपमेये वर्तमानमुपमेयलिङ्गसंख्यम् । बहुप्रत्ययपूर्वं तु प्रकृतिलिङ्गसंख्यम् । स्वभावाच्छब्दशक्तिरेषा यदुत स्वार्थिकाः केचित् प्रकृतिलिङ्गान्यतिवर्तन्ते यथा कुटीरः शुण्डारः शमीरुः शमीरः दैवतम् औपयिकम् औषधम् वाचिकमिति । केचित्तु नातिवर्तन्ते यावकः मणिकः वृहतिका मृत्तिका कासूतरी गोणीतरी व्यावक्रोशी व्यावहासीति । अतमबादेरिति किम् । यदा प्रकर्षादिविशिष्टस्येषदसमाप्तिविवक्षा भवति तदा तमबादिभ्यः कल्पबादयः प्राप्नुवन्त्यतस्ते मा भूवन् । यदा त्वीषदसमाप्तस्य प्रकर्षादयो विवक्ष्यन्ते तदा कल्पबाद्यन्तेभ्यस्तमबादयो भवन्त्येव । पटुकल्पतमः । पटुकल्पतरः । पटुदेश्यतमः । पटुदेश्यतरः । पटुकल्परूपः । पटुदेश्यरूपः । पकारौ पुंवद्भावार्थौ । दर्शनीयकल्पा । दर्शनीयदेश्या । केचिद्देश्यं पितं नेच्छन्ति तन्मते दर्शनीयादेश्येत्येव भवति । देशीयरिति रेफो 'रिति' (३–२–५८) इत्यत्र विशेषणार्थः । *सौघ्रदेशीया । पञ्चमदेशीया ॥ ११ ॥ नाम्नः प्राग्बहुर्वा ॥ ७ । ३ । १२ ॥ ईषदसमाप्तेऽर्थे वर्तमानान्नाम्नो बहुप्रत्ययो वा भवति स च प्राक् पुरस्तादेव न परस्तात् । ईषदसमाप्तः पटुः बहुपटुः । बहुमृदुः । बहुभुक्तम् । बहुपीतम् । बहुगुडो द्राक्षा । बहुतैलं प्रसन्ना । बहुपयो यवागूः । बहुचन्द्रो मुखम् । नामग्रहणं त्याद्यन्तनिवृत्त्यर्थम् । त्याद्यन्तेषु सावकाशाः कल्पबादयो बहुना मा बाधिषतेति वावचनम् । तेन पक्षे तेऽपि भवन्ति ॥ १२ ॥ न तमबादिः कपोऽच्छिन्नादिभ्यः ॥ ७ । ३ । १३ ॥ छिन्नादीन् वर्जयित्वान्यस्माद्यः कप् प्रत्ययस्तदन्तात्तमबादिः प्रत्ययो न भवति । अयमेषां प्रकृष्टः पटुकः । अयमनयोः प्रकृष्टः पटुकः । प्रकर्षादिमतः कुत्सितत्वादिविवक्षायां तमबा-

–अत– ॥ –पचतःकल्पमिति । 'प्रत्यये' इत्यनेन सो न भवति अव्ययपर्युदासेन नाम्नो ग्रहणात् । अव्ययं नाम तद्वर्जनेनान्यदपि नाम गृह्यते ॥ –सौघ्रदेशीयेति । ईषदसमाप्ता स्रुघ्नी पञ्चमी वा । अनयो

घन्तेभ्यः कप् भवत्येव । अयमेषामतिशयेन पटुः कुत्सितः पटुतमकः । अयमनयोः पटुतरकः । पटुरूपकः । पटुकल्पकः । पटुदेश्यकः । पटुदेशीयकः । कप इति किम् । कुटीरतमः । पकारः किम् । लोहितकतमो मणिः । लोहितकतममक्षि कोपेन । अच्छिन्नादिभ्य इति किम् । कुत्सितोऽल्पोऽज्ञातो वा छिन्नः छिन्नकः । अयमेषामतिशयेन छिन्नकः छिन्नकतमः । छिन्नकतरः । छिन्नकरूपः । छिन्नककल्पः । छिन्नादयः प्रयोगगम्याः ॥ १३ ॥ अनत्यन्ते ॥ ७ । ३ । १४ ॥ अनत्यन्तेऽर्थे यः कप् तदन्तात्तमबादिर्न भवति । छिन्नाद्यर्थं वचनम् । अनत्यन्तं छिन्नं छिन्नकम् । अनत्यन्तं भिन्नं भिन्नकम् । इदमेषां प्रकृष्टं छिन्नकम् प्रकृष्टं भिन्नकम् । इदमनयोः प्रकृष्टं छिन्नकम् प्रकृष्टं भिन्नकम् । यदा तु प्रकर्षवतोऽनत्यन्तविशिष्टविवक्षा तदा तमबाद्यन्तात् 'क्तात्तमबादेश्चानत्यन्ते' (७-३-५६) इति कब् भवत्येव । छिन्नतमकम् । छिन्नतरकम् । भिन्नतमकम् । भिन्नतरकम् ॥ १४ ॥ यावादिभ्यः कः ॥ ७ । ३ । १५ ॥ याव इत्येवमादिभ्यः स्वार्थे कः प्रत्ययो भवति । याव एव यावकः । मणिरेव मणिकः । अविरेव अविकः । याव मणि अवि अस्थि छात्र पात्र पीत स्तब्ध ज्ञात अज्ञात पुण्य नित्य सत्वत् दशार्ह वयम् चन्द्र जानु भूत भिक्षु इति । यावादिराकृतिगणः । तेनाभिन्नतरकम् बहुतरकमित्यादि सिद्धम् ॥ १५ ॥ *कुमारीक्रीडनेयसोः ॥ ७ । ३ । १६ ॥ कुमारीणां यानि क्रीडनानि तद्वाचिभ्य ईयसुप्रत्ययान्तेभ्यश्च स्वार्थे कः प्रत्ययो भवति । कन्दुरेव कन्दुकः । उत्कण्टकः । गिरिकः । समुद्गकः । *दोलिका । भ्रमरकः । शृङ्गकम् । ईयसु, श्रेयानेव श्रेयस्कः । *ज्यायस्कः । *भूयस्कः ॥ १६ ॥ लोहितान्मणौ ॥ ७ । ३ । १७ ॥ लोहितशब्दान्मणौ वर्तमानात् स्वार्थे कः प्रत्ययो वा भवति । लोहित एव लोहितको मणिः । लिङ्गविशिष्टस्यापि ग्रहणाल्लोहिन्येव लोहिनिका मणिः । लोहितैव लोहितिका मणिः । मणेर्विशेषणमेतदित्येके । नामधेयमित्यन्ये । वाधिकारान्न भवत्यपि । लोहितो मणिः । मणाविति किम् । लोहिता गौः ॥ १७ ॥ *रक्तानित्यवर्णयोः ॥ ७ । ३ । १८ ॥ रक्ते द्रव्यान्तरेण लाक्षादिना वर्णान्तरमापादितेऽनित्ये च वर्णे वर्तमानाल्लोहितशब्दात्कः प्रत्ययो वा भवति । रक्ते, लोहित एव लोहितकः पटः । लिङ्गविशिष्टस्यापि ग्रहणात् लोहिनिका शाटी । लोहितिका पटी । अनित्यवर्णे, लोहितकमक्ष्णो रूपं कोपेन । लोहितकमक्षि कोपेन । लोहिनिका लोहितिका कन्या कोपेन । वाधिकारान्न भवत्यपि । लोहिता लोहिनी वा कोपेन । *नित्योऽपि रक्तो वर्णोऽस्ति यथा कृमिरागादिरक्ते पट इति रक्तग्रहणम् । अनित्यग्रहणं किम् । लोहित इन्द्रगोपकः । *सत्येवाश्रयद्रव्येऽपयन्निहानित्य उच्यते । अन्यथा रक्तग्रहणस्यानर्थक्यात् । वर्णग्रहणं द्रव्यनिवृत्त्यर्थम् । असति वर्णग्रहणे स्त्रीणामार्तवे द्रव्ये स्यात् । तद्धि सत्येवाश्रये स्त्रियां कदाचिन्न भवति लोहितशब्दवाच्यं च ॥ १८ ॥ कालात् ॥ ७ । ३ । १९ । कालशब्दात्कज्जलादिना रक्ते अनित्यवर्णे चार्थे वर्तमानात्कः प्रत्ययो वा भवति । रक्ते, काल एव कालकः पटः । अनित्यवर्णे, कालकं मुखं वैलक्ष्येण ।

---

'तद्धित स्वरवृद्धि –' इति 'तद्धिताककोपान्त्य–' इत्याभ्यां निषिद्धोपि 'रिति' इत्यनेन पुवद्भावः ॥–कुमा–॥–दोलिकेति । दोलैव 'इच्चापुंसोनि–' इति वा इत्वम् ॥–ज्यायस्क इति । द्वयोर्मध्ये प्रकृष्टो वृद्धः प्रशस्यो वा ईयसुः ' वृद्धस्य च ज्य.' 'ज्यायान् ' इति ईकारस्य आकारः । ज्यायानेव ' प्रत्यये ' इति सूत्रेण स. ॥—भूयस्क इति । द्वयोर्मध्ये प्रकृष्टो बहु. ईयसि ' भूर्लुक् चेवर्णस्य ' भूरादेश ईलोपश्च ॥–रक्ता–॥—नित्योपीत्यादि ॥ ननु रक्ते वस्तुनि अनित्य एव वर्णो भवति यथा हरिद्रादो । तत्रानित्यवर्णे इत्येव प्रत्यय. सिध्यति किमर्थं रक्तग्रहणमित्याशङ्का ॥–सत्येवेति ।

वाधिकाराच्च भवत्यपि । कालः पटः । कालं मुखम् ॥१९॥ शीतोष्णादृतौ ॥७।३।२०॥ शीतोष्णशब्दाभ्यामृतौ वर्तमानाभ्यां कः प्रत्ययो वा भवति । शीत एव शीतक ऋतुः । उष्णक ऋतुः । ऋताविति किम् । शीतो वायुः । उष्णः स्पर्शः ॥२०॥ लूनवियातात्पशौ ॥७।३।२१॥ लूनवियातशब्दाभ्यां पशौ वर्तमानाभ्यां स्वार्थे कः प्रत्ययो वा भवति । लून एव लूनकः । वियातकः पशुः । पशाविति किम् । लूनो यवः । वियातो वटुः । विहानशब्दादपीच्छन्त्येके । विहानकः पशुः । विहान एवान्यत्र ॥२१॥ स्नाताद्वेदसमासौ ॥ ७ । ३ । २२ ॥ स्नातशब्दाद्वेदसमाप्तौ गम्यमानायां कः प्रत्ययो भवति । वेदं समाप्य स्नातः स्नातकः । वेदसमाप्ताविति किम् । तीर्थे स्नातः ॥ २२ ॥ *तनुपुत्राणुबृहतीशून्यात् सूत्रकृत्रिमनिपुणाच्छादनरिक्ते ॥ ७ । ३ । २३ ॥ तनुपुत्राणुबृहतीशून्य इत्येतेभ्यो यथासंख्यं सूत्रकृत्रिमनिपुणाच्छादनरिक्त इत्येतेष्वर्थेषु वर्तमानेभ्यः स्वार्थे कः प्रत्ययो भवति । तनोः सूत्रे, तनु सूत्रं तनुकम् भङ्गादिमयं कल्पादि च । सूत्र इति किम् । तनुर्वंशः । पुत्रात् कृत्रिमे, कृत्रिमस्तक्षादिव्यापारनिष्पादितः । कृत्रिमः पुत्रः पुत्रकः । कृत्रिम इति किम् । औरसः पुत्रः । अणोर्निपुणे, निपुणो निष्णातोऽणुः अणुकः । निपुण इति किम् । अणुर्व्रीहिः । बृहत्या आच्छादने, बृहतिका आच्छादनविशेषः । प्रत्ययमन्तरेणार्थानवगमात् *नित्य एवायं विधिः । आच्छादन इति किम् । बृहती छन्दः । बृहती ओषधिः । शून्याद्रिक्ते, रिक्तो धनमज्ञादिना, शून्य एव शून्यकः रिक्तश्चेत् । रिक्त इति किम् । शुने हितं शून्यम् । अन्ये तु सूत्रादयोऽर्थाः प्रत्ययमन्तरेण न प्रतीयन्ते इति तद्विषये तन्वादिभ्यो नित्य एव प्रत्ययविधिरिति मन्यन्ते । एवं पूर्वसूत्रेऽपि ॥ २३ ॥ भागेऽष्टमाञ्ञः ॥ ७ । ३ । २४ ॥ अष्टमशब्दाद्भागेऽशे वर्तमानात्स्वार्थे ञः प्रत्ययो वा भवति । अष्टम एवाष्टमो भागः । भाग इति किम् । अष्टमो जिनः चन्द्रप्रभः ॥ २४ ॥ षष्ठात् ॥ ७ । ३ । २५ ॥ षष्ठशब्दाद्भागे वर्तमानात्स्वार्थे ञः प्रत्ययो वा भवति । षष्ठ एव षाष्ठो भागः । भाग इति किम् । षष्ठो जिनः पद्मप्रभः । योगविभाग उत्तरार्थः ॥ २५ ॥ माने कश्च ॥ ७।३।२६ ॥ मीयते येन तन्मानम् । तस्मिन् माने भागे वर्तमानात् षष्ठशब्दात्कश्चकाराञ्जश्च प्रत्ययौ वा भवतः । षष्ठ एव षष्ठकः षाष्ठो भागः मानं चेत् । मान इति किम् । षष्ठ एव षाष्ठो भागोन्यः ॥ २६ ॥ एकादाकिन् चासहाये ॥ ७ । ३ । २७ ॥ एकशब्दादसहायार्थवाचिन आकिन् प्रत्ययो भवति चकारात्कश्च । एक एव एकाकी एककः । असहाय इति किम् । एक आचार्यः । एको द्वौ बहवः ॥ २७ ॥ *प्राग् नित्यात्कप् ॥ ७ । ३ । २८ ॥ नित्यशब्दसंकीर्तनात् प्राग्येऽर्थास्तेषु द्योत्येषु कप् प्रत्ययोऽधिकृतो वेदितव्यः । कुत्सितोऽल्पोऽज्ञातो वा अश्वः अश्वकः । गर्दभकः । पकारः पुंवद्भावार्थः । कुत्सिता दरद् *दारदिका । प्राग्नित्यादित्यवध्यर्थम् । अन्यथापवादबाधितो नात्तरत्रानुवर्तेत । परतोऽपि चानुवर्तते ॥ २८ ॥ *त्यादिसर्वादेः स्वरेष्वन्त्यात्पूर्वोऽक् ॥ ७ । ३ । २९ ॥ त्याद्यन्तस्य

---

इन्द्रगोपकाभावे लोहितत्वनिवृत्तावपि नानित्यत्वमिति ॥—तनु—॥—नित्य एवायमिति । आच्छादनरूपस्यार्थस्यानवगमात् ॥—प्राग्नि—॥—दारदिकेति । दरदां राज्ञी 'पुरुमगध–' इत्यण् । 'द्रेरञणो–' इति लुप् । ततोनेन कपि 'क्यङ्मानि–' इत्यनेन अण्लोपनिवृत्तिरूपे पुंवद्भावे 'आत्' इत्याप् । 'अस्यायत्तत्–' इत्वम् । यदा त्वपत्ये अण् तदा गोत्र च चरणे सहेति जातित्वे 'स्वाङ्गात् ङीर्जातिश्च–' इति पुंवन्निषेधः स्यात् ॥—त्यादि—॥ प्रकृतिविशेषादिषु बहुव्रीहिवर्जं समासः कार्यः बहुव्रीहौ तु 'ऋन्नित्यादितः' कच् स्यात् ॥

सर्वादीनां च स्वरेषु स्वराणां मध्ये योऽन्त्यस्वरस्तस्मात् पूर्वोऽक् प्रत्ययो भवति । प्रागिनित्यात् कपोऽपवादः । कुत्सितमल्पमज्ञातं वा पचति पचतकि । पचतकः । पचन्तकि । सर्वादि, सर्वके । विश्वके । सर्वकस्मै । विश्वकस्मै । यकत्पिता । तकत्पिता । त्वकत्पिता । मकत्पिता । परमसर्वके । परमविश्वके । तदन्तस्यापि सर्वादित्वमस्तीत्यत्राप्यक् । स्वरेष्वन्त्यादिति किम् । त्याद्यन्तात्सर्वादेश्च पूर्वं माभूत् । पूर्व इति किम् । परो माभूत् ॥ २९ ॥ युष्मदस्मदोऽसोभादिस्यादेः ॥ ७ । ३ । ३० ॥ युष्मदस्मदित्येतयोः सकाराद्योकारादिभकारादिवर्जितस्याद्यन्तयोः स्वरेष्वन्त्यात्पूर्वोऽक् प्रत्ययो भवति । युष्मदस्मदो. स्वरेष्वन्त्यात्पूर्वस्यापवादः । त्वयका । मयका । त्वयकि । मयकि । युष्माककम् । अस्माककम् । परमत्वयका । परममयका । युष्मदस्मद इति किम् । तकया । यकया । सर्वकेण । विश्वकेन । इमकेन । अमुकेन । इमकैः । अमुकैः । भवकन्तौ । भवकन्तः । केचिद्भवच्छब्दस्यापि स्याद्यन्तस्यान्त्यस्वरात्पूर्वमकमिच्छन्ति । तन्मते , भवतका भवतके भवतकः भवतकीत्यपि भवति । असोभादिस्यादेरिति किम् । युष्मकासु । अस्मकासु । युवकयोः । आवकयोः । युवकाभ्याम् । आवकाभ्याम् । युष्मकाभिः । अस्मकाभिः ॥ ३० ॥ अव्ययस्य को द् च ॥ ७ । ३ । ३१ ॥ प्राङ्नित्याद्येऽर्थास्तेषु द्योत्येषु अव्ययस्य स्वरेष्वन्त्यात्स्वरात्पूर्वमक् प्रत्ययो भवति तत्संनियोगे यत्ककारान्तमव्ययं तस्य दकारोऽन्तादेशो भवति । कपोऽपवादः । कुत्सितमल्पमज्ञातं वा उच्चैः उच्चकैः । नीचैस्, नीचकैः । धिक् धकित् । हिरुक् हिरकुद् । पृथक् पृथकद् । चकारोऽन्वाचये तेन सर्वस्याव्ययस्याक् भवति । ककारान्तस्य त्वक् दान्तादेशश्च । योगविभागस्त्यादेर्दादेशाभावार्थः । शकलंद् शक्तौ । यङ् लुप् दिव् । अशाशक् । अकि, अशाशकक् ॥ ३१ ॥ तूष्णीकाम् ॥ ७ । ३ । ३२ ॥ तूष्णीकामिति तूष्णीमो मकारात्पूर्वं का इत्यागमो निपात्यते प्राङ्नित्यात् । अकोऽपवादः । कुत्सितमल्पमज्ञातं वा तूष्णीं तूष्णीकाम् आस्ते । तूष्णीकां तिष्ठति ॥ ३२ ॥ *कुत्सिताल्पाज्ञाते ॥ ७ । ३ । ३३ ॥ कुत्सितं निन्दितम् । अल्पं महत्प्रतियोगि । अज्ञातं प्रकृत्युपात्तधर्मव्यतिरेकेण केनचित् स्वत्वादिना धर्मेणानिश्चितम् । सर्वथा त्वज्ञाते प्रयोगायोगात् । कुत्सिताल्पाज्ञातोपाधिकेऽर्थे वर्तमानाद्यथायोगं कबादयः प्रत्यया भवन्ति । कुत्सितोऽल्पोऽज्ञातो वाश्वः अश्वकः । गर्दभकः । घृतकम् । तैलकम् । पचतकि । भिन्धकि । सर्वके । विश्वके । उच्चकैः । नीचकैः । तूष्णीकाम् । *कथं कुत्सितकः । अल्पकः । अज्ञातकः । कुत्सादीनां भेदोपपत्तेः कुत्सितादिभ्योऽपि कुत्सितादौ प्रत्ययो भवति प्रकृष्टतर इत्यादौ प्रकर्षभेदे तरपादिवत् । राधकः पूर्णकः शूद्रक इत्यादौ सत्यामपि संज्ञायां *कुत्सायोगात् कुत्सित इत्येव कप् । व्याकरणकेन नाम त्वं गर्वितः याज्ञिक्यकेन नाम त्वं विकत्थसे इत्यादौ *अवक्षेपणमपि कुत्सितमेव । तद्धि कुत्सितेनावक्षिप्यते ॥ ३३ ॥ *अनुकम्पातद्युक्तनीत्योः ॥ ७ । ३ । ३४ ॥ अनुकम्पा कारुण्येन परस्यानुग्रहः । तया अनुकम्पया युक्ता नीतिस्तद्युक्तनीतिः । नीतिः सामादिप्रयोगः । तत्रानुकम्पायां सामोपप्रदाने एव

---

-कुत्सि-॥-कथमिति । कुत्सितादे प्रकृत्यैव गतार्थत्वात् प्रत्ययस्यार्थाभावाच्च तदर्थद्योती प्रत्ययोऽत्र युक्त इत्याशङ्का॥-कुत्सायोगादिति । तेनान्यैरिव संज्ञायां कम विधातव्य । यथा 'अज्ञाते कुत्सिते चैव संज्ञायामनुकम्पने । तद्युक्तनीतावप्यल्पे वाच्ये ह्रस्वे च क स्मृत. ॥ १ ॥—अवक्षेपणमपीति । व्याकरण कुत्सन. वैयाकरणस्तु कुत्सित इति व्याकरणात् कथ प्रत्यय इत्याशङ्का॥—अनु—॥—

न भेददण्डौ तयोः अनुकम्पाया अयोगात् । अनुकम्पायां तद्युक्तायां नीतौ च गम्यमानायां यथायोगं कवादयः प्रत्यया भवन्ति । अनुकम्पा तन्नीतिश्च प्रयोक्तृधर्मौ वेदितव्यौ । पुत्रकः । वत्सकः । वालकः । बुभुक्षितकः । ज्वरितकः । शनकैः । तूष्णीकाम् । स्वपितकि । स्वपिपकि । जल्पतकि । एहकि । अनुकम्पमान एवं प्रयुङ्क्ते पुत्रक एहकि उत्सङ्गके उपविश कर्दमकेनासि दिग्धकः कण्टकस्ते लग्नकः । वत्सक तूष्णीका तिष्ठ ओदनं भोक्ष्यसे हन्त ते *गुडका हन्त ते *धानका अद्धकि । अत्रोपविश असि तिष्ठ ओदनं भोक्ष्यसे हन्त ते इत्येतेष्वनभिधानान्न भवति । यत्र त्वभिधानं तत्र भवति । नक त्वकं पुत्रक पश्यसकि । असकौ काकको वृक्षके उच्चकैः प्रणिलीयते । अनुकम्पायां प्रत्यासत्तेरनुकम्प्यमानादेव स्यात् नान्यस्मात् उत्सङ्गादेस्ततोऽपि यथा स्यादिति तद्युक्तनीतिग्रहणम् ॥ ३४ ॥ *अजातेर्नृनाम्नो बहुस्वरादियेकेलं वा ॥ ७ । ३ । ३५ ॥ *तद्युक्तनीताविति न वर्तते अनुकम्प्यादेव प्रत्ययविधानात् । नृनाम्नो मनुष्यनामधेयाद्बहुस्वरादनुकम्पायां गम्यमानायां इय इक इल इत्येते प्रत्यया भवन्ति वा अजातेः न चेन्मनुष्यनाम जातिशब्दो भवति । अनुकम्पितो देवदत्तः देवियः । देविकः । देविलः । वावचनात्कवपि । देवदत्तकः । जिनियः । जिनिकः । जिनिलः । जिनदत्तकः । अजातेरिति किम् । महिषकः । वराहकः । शरभकः । सूकरकः । गर्दभकः । एते जातिशब्दा मनुष्यनामानि च । अजातेरिति प्रायिको निषेध इत्यन्ये । *व्याघ्रिलः सिंहिल इति हि दृश्यते । तन्मते बहुस्वरादित्यपि प्रायिकम् । नृनाम्न इति किम् । सुसीमकः । सीमा स्फटा । नृग्रहणं किम् । अनुकम्पितो *देवदत्तो हस्ती देवदत्तकः । नामग्रहणं किम् । मद्रवाहुकः । विशेषणमेतन्न नाम । बहुस्वरादिति किम् । रामकः । गुप्तकः ॥ ३५ ॥ *वोपादेरडाकौ च ॥ ७ । ३ । ३६ ॥ उपपूर्वादजातिरूपान्मनुष्यनामधेयाद्बहुस्वरादनुकम्पायां गम्यमानायां अड अक चकारात् इय इक इल इत्येते प्रत्यया वा भवन्ति । अनुकम्पित उपेन्द्रदत्तः *उपडः । उपकः । उपियः । उपिकः । उपिलः । वावचनात्पक्षे कवपि । उपेन्द्रदत्तकः ॥ ३६ ॥ ऋवर्णोवर्णात्स्वरादेरादेर्लुक् प्रकृत्या च ॥ ७ । ३ । ३७ ॥ ऋवर्णान्तादुवर्णान्ताच्च परस्यानुकम्पायां विहितस्य स्वरादेः प्रत्ययस्यादेर्लुग् भवति तच्च ऋवर्णोवर्णान्तं लुकि सति प्रकृत्या तिष्ठति । न विकारमापद्यत इत्यर्थः । अनुकम्पितो मातृदत्तः मातृयः । मातृकः । मातृलः । अनुकम्पितः पितृदत्तः पितृयः । पितृकः । पितृलः । अनुकम्पितो वायुदत्तः वायुयः । वायुकः । वायुलः । अनुकम्पितो भानुदत्तः भानुयः भानुकः भानुलः । प्रकृतिवद्भावात्* रेफावादेशौ न भवतः । ऋवर्णोवर्णादिति किम् । अनुकम्पितो देवदत्तो देवियः । देविकः । देविलः । अनुकम्पितो वागाशीः वाचियः वाचिकः वाचिलः । स्वरादेरिति किम् । *मद्रवाहुकः । आदेरिति किम् । सर्वस्य माभूत् ॥ ३७ ॥

गुडका इति । गुडेन मिश्रा धाना इति विग्रहे ' ते लुग्वा ' इति धानाशब्दस्य लुकि अनेन कप् ॥—धानका इति । अत्र गुडशब्दलोपे कपि ' ङ्याापुंसोनि-' इति नवा ह्रस्वो ॥—अजा—॥—तद्युक्तनीताविति न वर्त्तते इति । नृनाम्न इत्युक्ते । नृनाम्नो हि अनुकम्प्यैव घटते न तद्युक्तनीति' ॥—व्याघ्रिल इत्यादि । अत्र व्याघ्रसिंहइत्येवंविधा द्विस्वरैव प्रकृतिर्न तु व्याघ्रदत्त-सिंहदत्तेत्यनेकस्वरा द्विस्वरयोरेवानयोर्जातिवाचित्वात् बहुस्वरादित्यपि प्रायिकमित्यस्यासंगतार्थत्वापत्तेश्च ॥—देवदत्तो हस्तीति । कस्यचित् हस्तिनो देवदत्त इति नाम ॥—वोपा ॥—उपड इति । 'आतो नेन्द्र-' इति ज्ञापकाद्द्रवसधेरेव 'द्वितीयात्स्वराद्दूर्ध्वम् '—इति इन्द्रदत्तेत्यस्य लुक् ॥—ऋवर्णो—॥—रेफावादेशाविति । 'ऋतो रस्तद्धिते' इति अपदान्ते वर्त्तमानस्य ' अस्वभ्रुवोव्' इति च ॥—मद्रवाहुक इति ।

लुक्युत्तरपदस्य कप्‌न् ॥ ७ । ३ । ३८ ॥ नृनाम्नो यदुत्तरपदं तस्य ते लुग्वेति लुकि सति ततः कप्‌न् प्रत्ययो भवति अनुकम्पायां गम्यमानायाम् । कत्रादीनामपवादः । देवदत्तो देवः । अत्र 'ते लुग्वा' ( ३-२-१०८ ) इत्युत्तरपदलोपः । अनुकम्पितो देवः देवकः । एवमनुकम्पितो यज्ञः यज्ञकः । पकारः पुंवद्भावार्थः । नकारः 'इच्चापुंसोऽनित्क्याप्परे' ( २-४-१०६ ) इत्यत्र पर्युदासार्थः । अनुकम्पिता देवी देवका । अत्र कप्नि सति पित्त्वात्पुंवद्भावे नित्त्वादाप्परेऽपि ककारे इत्वं न भवति । उत्तरपदस्येति किम् । देवदत्ता दत्ता । अत्र 'ते लुग्वा' ( ३-२-१०८ ) इति पूर्वपदस्य लुक् । अनुकम्पिता दत्ता दत्तिका । पूर्वेण कप् ॥ ३८ ॥ *लुक् चाजिनान्तात् ॥ ७ । ३ । ३९ ॥ अजिनशब्दान्तान्मनुष्यनाम्नोऽनुकम्पायां गम्यमानायां कप्‌न् प्रत्ययो भवति तत्संनियोगे लुक् चोत्तरपदस्य । व्याघ्राजिनो व्याघ्रमहाजिनो वा नाम मनुष्यः सोऽनुकम्पितो व्याघ्रकः । एवं सिंहकः । शरभकः । वृककः । कृष्णकः । उलकः अनुकम्पिता व्याघ्राजिना व्याघ्रमहाजिना वा व्याघ्रका । सिंहका । 'आतो नेन्द्रवरुणस्य' ( ७-४-२९ ) इत्यत्र ज्ञापनादकृतसंधेरेवोत्तरपदस्य लुक् ॥ ३९ ॥ *षड्वर्जैकस्वरपूर्वपदस्य स्वरे ॥ ७ । ३ । ४० ॥ षट्छब्दवर्जितमेकस्वरं पूर्वपदं यस्य तत्संबन्धिन उत्तरपदस्यानुकम्पायां विहिते स्वरादौ प्रत्यये लुग् भवति । उत्तरसूत्रस्यापवादः । अनुकम्पितो वागाशीः वाग्दत्तः वागाशीर्दत्तो वा* वाचियः । वाचिकः । वाचिलः । एवं त्वचियः । त्वचिकः । त्वचिलः । सुचियः । सुचिकः । सुचिलः । षड्वर्जैकस्वरपूर्वपदस्येति किम् । उपेन्द्रेण दत्तः उपेन्द्रदत्तः । सोऽनुकम्पितः उपडः उपकः उपियः उपिकः उपिलः । उत्तरेण लुक् । षड्वर्जेति किम् । अनुकम्पितः षडङ्गुलिः षडियः । षडिकः । षडिलः । अत्रोत्तरेण द्वितीयस्वरादूर्ध्वं लोपः । तथा चावर्णेवर्णस्येत्यल्लुचः स्थानिवद्भावात्पदत्वस्यानिवृत्तेस्तृतीयत्वं न निवर्तते । षड्वर्जनादेव च पदत्वे संधिविधावपि अल्लुकः स्थानित्वनिषेधो न भवति । स्वर इति किम् । वागाशीकः वागाशीर्दत्तकः ॥ ४० ॥ *द्वितीयात्स्वरादूर्ध्वम् ॥ ७ । ३ । ४१ ॥ अनुकम्पायां विहिते स्वरादौ प्रत्यये परतः प्रकृतेर्द्वितीयात्स्वरादूर्ध्वं शब्दस्वरूपस्य लुग् भवति । अनुकम्पितो देवदत्तो देवियः । देविकः ।

---

मन्डूकप्लुतिन्यायेनाधिकारानुवृत्तिरिति नृनामेति पद न सबध्यते । ततोऽत्र विशेषणशब्दत्वेन नृनामत्वाभावेपि व्यावृत्तेर्न व्यङ्गविकलता । यदा तु नृनामेत्यत्रापि संबध्यते तदेदमपि नृनाम विवक्ष्यते । ततः 'अजातेर्नृनाम्नः' इत्यनेन इयादौ प्रत्यये विकल्पेन सति मद्रिय मद्रबाहुक इत्यादीन्यपि भवन्ति ॥—लुक्चा —॥ पूर्वत्रोत्तरपदस्य लुकि कप्नि देवकः लुगभावे तु कपि देवदत्तकः एव च रूपद्वय स्यादिति । अत्र हि अजिनान्तादेव कप्नि नित्य लुकि व्याघ्रक एवेति । अयमत्र भाव· अजिनान्तस्यानुकम्पायां कप्संनियोग एव लुक् । तेन व्याघ्राजिनक इति न भवति ॥—षड्व—॥—वाचिय इति । नन्वत्र एकस्वरादूर्ध्वं लोपे सति 'चज' कगम्' इति कथ न भवति यतोऽन्तवर्त्तिविभक्तिमाश्रित्य पदसज्ञाऽस्ति । उच्यते । यदि प्रत्यये परभावभाजि अन्तवर्त्तिनी विभक्तिमाश्रित्य पदसज्ञा स्यात्तर्हि सित्येवेति नियमान्न भवति पदत्वम् ॥ अथेत्थं भणिष्यन्ति सित्येवेति नियमस्तदा प्रवर्त्तते यदा वागाशीर्दत्तएवंविधस्य प्राप्नोति किञ्चित् । यतः 'प्रत्ययः प्रकृत्यादे.' इति । नेवम् । यतः षड्वर्जनात् पूर्वपदस्यापि पदसज्ञायां कर्त्तव्यायां सित्येवेति नियम प्रवर्त्तते यतोऽत्र षडिक इत्यादिसिद्ध्यर्थं षट्वर्जनं क्रियते । तच्च तदभावेपि सेत्स्यति। यतोऽनेन सूत्रेणाङ्गुलि लोपेपि 'प्रत्यय.प्रकृत्यादेः' इति परिभाषया पदत्वस्यानिवृत्ते। यद्वाऽवयवसमुदाययोरभेदोपचारात्समुदायस्य विभक्तिरवयवात् द्रष्टव्या ततःसित्येवेति नियमः प्रवर्त्तते॥—द्विती—॥

पितृदत्तः पितृयः । पितृकः । पितृलः । एवं वायुयः । वायुकः । वायुलः ।
देविलः । अनुकम्पित उपेन्द्रदत्त *उपडः उपकः उपियः उपिकः उपिलः । अनुकम्पितः
प्रकृतेर्द्वितीयात्संध्यक्षररूपात्स्वरादूर्ध्वं
ऊर्ध्वग्रहणं सर्वलोपार्थम् ॥ ४१ ॥ संध्यक्षरात्तेन ॥ ७ ॥ २ । ४२ ॥ अनुकम्पायां विहिते स्वरादौ प्रत्यये परतः
शब्दरूपस्य तेन द्वितीयेन संध्यक्षरेण सह लुग् भवति । अनुकम्पितः कुबेरदत्तः कुबियः । कुबिक । कुबिलः । अनुकम्पितः कहोडः कहियः काहिकः
कहिलः । अनुकम्पितो लहोडः लहियः लहिकः लहिलः । अनुकम्पितः कपोतरोमा कपियः कपिकः कपिलः । अनुकम्पितोऽमोघः अमोघदत्तः अमोघ-
जिह्वो वा अमियः । अमिकः । अमिलः । सन्ध्यक्षरादिति किम् । अनुकम्पितो गुरुदत्तः गुरुयः गुरुकः गुरुलः ॥ ४२ ॥ *शेवलाद्यादेस्तृतीयात् ॥ ७ । ३ ।
४३ ॥ शेवलादिपूर्वपदस्य मनुष्यनाम्नोऽनुकम्पायां विहिते स्वरादौ प्रत्यये परे तृतीयात्स्वरादूर्ध्वं लुग्भवति । द्वितीयात्स्वरादूर्ध्वमित्यस्यापवादः । अनुकम्पितः
शेवलदत्तः शेवलियः शेवलिकः शेवलिलः । एवं *सुपरिदत्तः सुपरियः सुपरिकः सुपरिलः । विशालदत्तः विशालियः विशालिकः विशालिलः । वरुणदत्तः
वरुणियः वरुणिकः वरुणिलः । अर्यमदत्तः अर्यमिय. अर्यमिकः अर्यमिलः । अत्राप्यकृतसंधेरेव लोपः शेवलेन्द्रदत्तोऽनुकम्पितः शेवलिक इति यथा स्यात् शेवल-
यिक इति माभूत्, सुपर्याशीर्दत्तोऽनुकम्पितः सुपरिक इति यथा स्यात् सुपर्यिक इति मा भूत् । शेवल सुपरि विलाश वरुण अर्यमन् । इति शेवलादिः । क्वचित्तु
विशाखिलः कुमारिल इत्यत्रापीच्छन्ति ॥ ४३ ॥ क्वचित्तुर्यात् ॥ ७ । ३ । ४४ ॥ अनुकम्पायां विहिते स्वरादौ प्रत्यये परे क्वचिल्लक्ष्यानुसारेण तुर्याच्चतुर्था-
त्स्वरादूर्ध्वं लुग्भवति । अनुकम्पितो बृहस्पतिदत्तो बृहस्पतिशर्मा वा बृहस्पतियः बृहस्पतिकः बृहस्पतिलः । एवं प्रजापतियः । प्रजापतिकः । प्रजापतिलः ।
अकृतसन्धिरित्येव पूर्ववत् प्रजापत्याशीर्दत्तोऽनुकम्पितः प्रजापतिक इति यथा स्यात् प्रजापत्यिक इति मा भूत् । क्वचिद्ग्रहणादिह न भवति । अनुकम्पितः
उपेन्द्रदत्तः उपडः उपकः उपियः उपिलः ॥ ४४ ॥ *पूर्वपदस्य वा ॥ ७ । ३ । ४५ ॥ अनुकम्पायां विहिते स्वरादौ प्रत्यये परे पूर्वपदस्य लुग् वा भवति ।
अनुकम्पितो देवदत्तः *दत्तियः दत्तिक दत्तिलः । वावचनाद्यथाप्राप्तम् । देवियः । देविकः । देविलः 'द्वितीयात्स्वरादूर्ध्वम्' ( ७-३-४१ ) इति लुक्
॥ ४५ ॥ *ह्रस्वे ॥ ७ । ३ । ४६ ॥ दीर्घप्रतियोगि ह्रस्वम् । ह्रस्वेऽर्थे वर्तमानाच्छब्दरूपाद्यथायोगं कवादयः प्रत्यया भवन्ति । ह्रस्वः पटः पटकः । शाटकः ।
ह्रस्वं पचति पचतकि । ह्रस्वकालयोगात्क्रिया ह्रस्वेत्युच्यते । ह्रस्वाः सर्वे सर्वके । विश्वके । उच्चकैः । नीचकैः । तूष्णीकाम् । संज्ञायामपि ह्रस्वत्वयोगात्कप्, स
ह्रस्व इत्येव*सिद्धः । वंशकः । वेणुकः । नडकः ( नरक ) । ललकः । वरकः ॥ ४६ ॥ कुटीशुण्डाद्रः ॥ ७ । ३ । ४७ ॥ कुटीशुण्डा इत्येताभ्यां ह्रस्वेऽर्थे

---

—उपड इति । अकृतसंधेरेव लुबित्युत्तरेणाप्राप्तिः । तृतीयत्व च पूर्ववन्न भवति ॥—शेव—॥—सुपरिदत्त इति । सुष्ठु पिपर्त्ति सुपरीति पूर्व पद नोप
सर्गद्वयम् ॥—पूर्व—॥—दत्तिय इति । 'ते लुग्वा' इति पूर्वं लुकि बहुस्वरत्वाभावादियादिर्न स्यादिति वचनम् ॥—ह्रस्वे ॥—दीर्घप्रतियोगि ह्रस्वमिति । लोहादिक ह्रस्व च महच्च
सभवतीति महत्प्रतियोगिनि 'अल्पे' इति न सिध्यति ॥—सिद्ध इति।ये हि सञ्ज्ञाया कप्प्रत्यय विदधति तेपि ह्रस्वत्वोपाधिकायां सञ्ज्ञायामिति व्याख्यान्तीति सञ्ज्ञायामप्यनेनैव कप् सिद्ध इत्यर्थः॥

वर्तमानाभ्यां रः प्रत्ययो भवति। कपोऽपवादः। ह्रस्वा कुटी कुटीरः। शुण्डारः। केचित्तु कुटीस्थाने कुदीं पठन्ति। कुदीरः॥ ४७॥ शम्या रुरो॥ ७। ३।
४८॥ शमीशब्दात् ह्रस्वेऽर्थे वर्तमानात् रुर इत्येतौ प्रत्ययौ भवतः। ह्रस्वा शमी शमीरुः शमीरः॥ ४८॥ कुत्वा डुपः॥ ७। ३। ४९॥ कुतूशब्दाद्ध्रस्वेऽर्थे
वर्तमानात्स्वार्थे डुपः प्रत्ययो भवति। ह्रस्वा कुतूः कुतुपः। कुतूरिति चर्ममयं तैलाद्यात्रपनमुच्यते॥ ४९॥ कासूगोणीभ्यां तरट्॥ ७। ३।
५०॥ कासूगोणी इत्येताभ्यां ह्रस्वेऽर्थे वर्तमानाभ्या तरट् प्रत्ययो भवति। ह्रस्वा कासूः कासूतरी। गोणीतरी। पुंलिङ्गमपि दृश्यत इत्येके।
कासूतरः। गोणीतरः। कासूः शक्तिर्नामायुधम्। गोणी धान्यावपनम्। टकारो ङ्यर्थः॥ ५०॥ वत्सोक्षाश्वर्षभाद्ध्रासे पित्॥ ७। ३।
५१॥ वत्स उक्षन् अश्व ऋषभ इत्येतेभ्यः शब्दप्रवृत्तिनिमित्तस्य स्वार्थस्य ह्रासे गम्यमाने तरट् प्रत्ययो भवति स च पित्। ह्रसितो वत्सः वत्सतरः। वत्सः
प्रथमवयस्को गौः तस्य ह्रासो द्वितीयवयःप्राप्तिः। ह्रसित उक्षा उक्षतरः। उक्षा द्वितीयवयास्तरुणस्तस्य ह्रासस्तृतीयवयःप्राप्तिः। ह्रसितोऽश्वोऽश्वतरः।
अश्वेनाश्वायां जातोऽश्वस्तस्य ह्रासो गर्दभपितृकता। आशुगमनाद्धाश्वस्तस्य ह्रासो गमने मन्दता। सर्वथाश्वतरशब्दो जातिशब्दः। ह्रसित ऋषभः ऋषभतरः।
ऋषभोऽनड्वान् बलीयान् तस्य ह्रासो भारवहने मन्दशक्तिता। प्रत्यासत्तेः शब्दप्रवृत्तिनिमित्तस्य ह्रासे भवति। इह माभूत् कृशो वत्सो वत्सतर इति। पित्करणं
पुंवद्भावार्थम्। ह्रसिता वत्सा वत्सतरी। ह्रसिताश्वा अश्वतरी॥ ५१॥ ⁺वैकाद् द्वयोर्निर्धार्ये डतरः॥ ७। ३। ५२॥ समुदायादेकदेशो जातिगुणक्रियासंज्ञा-
द्रव्यैर्निष्कृष्य बुद्ध्या पृथक्क्रियमाणो निर्धार्यः। एकशब्दात् द्वयोर्मध्ये निर्धार्येऽर्थे वर्तमानात् डतरः प्रत्ययो वा भवति। एकतरो भवतोः कठः पटुर्गन्ता देवदत्तो
दण्डी वा। वावचनम् ⁺अगर्थम्। एकको भवतोः कठः पटुर्वा। महावाधिकारान्न भवत्यपि। एको भवतोः पटुः। द्वयोरिति किम्। एकोऽस्मिन् ग्रामे प्रधानम्।
निर्धार्य इति किम्। एकोऽनयोर्ग्रामयोः स्वामी॥ ५२॥ यत्तत्किमन्यात्॥ ७। ३। ५३। यद् तद् किम् अन्य इत्येतेभ्यो द्वयोरेकस्मिन् निर्धार्येऽर्थे वर्तमानेभ्यो
डतरः प्रत्ययो भवति। यतरो भवतोः कठः पटुर्गन्ता देवदत्तो दण्डी वा ततर आगच्छतु। कतरो भवतोः कठः पटुर्गन्ता देवदत्तो दण्डी वा। अन्यतरो
भवतोः कठः पटुर्गन्ता देवदत्तो दण्डी वा। महावाधिकारात्प्रत्ययो न भवत्यपि। यो भवतोः पटुः स आगच्छतु। को भवतोः पटुः। अन्यो भवतोः पटुः। द्वयोरित्येव
। योऽस्मिन् ग्रामे प्रधानं स आगच्छतु। निर्धार्य इत्येव। योऽनयोर्ग्रामयोः स्वामी स आगच्छतु॥ ५३॥ बहूनां प्रश्ने डतमश्च वा॥ ७। ३। ५४॥
यद् तद् किम् अन्य इत्येतेभ्यो बहूनां मध्ये निर्धार्येऽर्थे वर्तमानेभ्यः प्रश्नविषये डतमः प्रत्ययो वा भवति चकाराड्डतरश्च। यतमो यतरो वा भवतां कठस्ततमस्त-
तरो वा आगच्छतु। कतमः कतरो वा भवतां कठः। प्रमाणान्तरात् प्रतिपत्तौ बहूनामप्रयोगेऽपि भवति। यथा बहुष्वासीनेषु कश्चित्कंचित्पृच्छति कतमो देवदत्तः
कतरो देवदत्तः। अन्यतमोऽन्यतरो वा भवतां कठः। शुचिवल्कवीतवपुरन्यतमस्तिमिरच्छिदामिव गिरौ भवतः। वृद्धस्तु व्याधितो वा राजा मातृबन्धुकुल्यगुणव-
त्सामन्तानामन्यतमेन क्षेत्रे बीजमुत्पादयेत्। वावचनमगर्थम्। यको भवतां कठः सक आगच्छतु। अन्यक एषां कालापः। किमस्तु साकः कादेश उक्तः। महावा-

—वैकाद् द्वयो—॥—अगर्थमिति । महावाधिकारेणैव सिद्धे किमर्थं वावचनमित्याशङ्का ॥—

विकारात् प्रत्ययो न भवत्यपि। यो भवतां कठः स आगच्छतु। बहूनामिति किम्। योऽस्मिन् ग्रामे कठः स आगच्छतु। प्रश्न इति किम्। क्षेपे मा भूत्। को भवतां कठः कुत्सित इत्यर्थः। प्रश्नग्रहणं किमो विशेषणं नान्यस्यासंभवात्। अन्ये त्वाहुः यत्तत्किंभ्यो जातावेव डतमः, डतरस्तु बहूनां निर्धार्ये किम एव न यत्तद्भ्याम्, स च जातावेव, अन्यशब्दादपि बहुविषये डतम एव न तु डतरः, डतरडतमौ च निर्धार्ये अन्यशब्दान्नित्यावेव नाकृ, नापि केवलस्य प्रयोगः, एके त्वविशेषेणेत्यत्राभिधानमनुसर्तव्यम् ॥ ५४ ॥ वैकात् ॥ ७ । ३ । ५५ ॥ एकशब्दात् बहूनामेकस्मिन् निधार्येऽर्थे वर्तमानात् डतमः प्रत्ययो वा भवति। एकतमो भवतां कठः पटुर्गन्ता देवदत्तो दण्डी वा। वावचनादक्। एककः। महाविभाषया भवत्यपि। एको भवतां कठः। पृथग्योगो डतरनिवृत्त्यर्थः ॥ ५५ ॥ क्तात्तमबादेश्चानत्यन्ते ॥ ७ । ३ । ५६ ॥ क्तान्तात्केवलात्तमबाद्यन्ताच्चानत्यन्तेऽर्थे वर्तमानात् कप् प्रत्ययो भवति। क्रियायाः स्वेनाश्रयेण साकल्येनानभिसंबन्धोऽनत्यन्तता। अनत्यन्तं भिन्नं भिन्नकम्। अनत्यन्तं छिन्नं छिन्नकम्। अनत्यन्तं भिन्ना भिन्निका घटी। छिन्निका रज्जुः। तमबाद्यन्तात् क्तात्, अनत्यन्तं भिन्नतमं भिन्नतमकम्। एवं भिन्नतरकम्। भिन्नकल्पकम्। छिन्नतमकम्। छिन्नतरकम् छिन्नकल्पकम्। तमबाद्यन्तेषु क्तान्तता नास्तीति तमबादिग्रहणम्। असमासस्तमबादेरित्यत्रापि क्तादित्यस्य संबन्धार्थः। तेनेह न भवति। अनत्यन्तं शुक्लतमम् ॥ ५६ ॥ **न सामिवचने** ॥ ७ । ३ । ५७ ॥ सामि अर्धः। सामिवचने उपपदे अनत्यन्तेऽर्थे वर्तमानात् क्तान्तात्केवलात्तमबाद्यन्ताच्च कप् प्रत्ययो न भवति। सामि अनत्यन्तं भिन्नम्। एवं कृतं भुक्तं पीतम्। भिन्नतमम्। भिन्नतरम्। वचनग्रहणं पर्यायार्थम्। अर्धमनत्यन्तं भिन्नम्। नेममनत्यन्तं भिन्नम्। एवं शकलं खण्डमित्यादि। अन्ये तु समास एवोदाहरन्ति। सामिकृतम् अर्धकृतमिति। ननु साम्यादिभिरेवानन्तताया अभिहितत्वादुक्तार्थत्वेन कप् न प्राप्नोतीति व्यर्थः प्रतिषेधः। उच्यते। साम्यादिभिः समुदायविषयक्रियाया एवानत्यन्तता प्रतीयते न स्वविषये। तत्रानत्यन्तविवक्षायां कप् प्राप्नोतीति प्रतिषेधवचनम् ॥ ५७ ॥ **नित्यं ञ्जिनोऽण्** ॥ ७ । ३ । ५८॥ ञ्जिन् इत्येतत्प्रत्ययान्तात्स्वार्थे नित्यमण् प्रत्ययो भवति। नित्यग्रहणान्महाविभाषा निवृत्ता। व्यावक्रोशी। व्यावलेखी। व्यावहासी वर्तते। ञिन्, सांकोटिनम्। सांराविणम्। सामार्जिनम् ॥५८॥ **विसारिणो मत्स्ये** ॥७।३।५९॥ विसारिन् शब्दान्मत्स्ये वर्तमानात्स्वार्थेऽण् प्रत्ययो भवति। विसरतीति विसारी। ग्रहादित्वाण्णिन्। मत्स्यश्चेत् वैसारिणः। मत्स्य इति किम्। विसारी देवदत्तः ॥ ५९ ॥ **पूगादमुख्यकाञ्ञ्यो द्रिः** ॥ ७ । ३ । ६० ॥ नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः संघाः पूगाः। पूगवाचिनो नाम्नः स्वार्थे ञ्यः प्रत्ययो भवति स च द्रिसंज्ञः न चेत्पूगवाचि नाम 'सोऽस्य मुख्यः' ( ७-१-१९० ) इति विहितकप्प्रत्ययान्तं भवति। लोहध्वजाः पूगाः। लौहध्वज्यः। लौहध्वज्यौ। लोहध्वजाः। शैब्यः। शैब्यौ। शिबयः। वातक्यः। वातक्यौ। वातकाः। द्रित्वात् बहुष्वस्त्रियां लुप्। अमुख्यकादिति किम्। देवदत्तो मुख्योऽस्य देवदत्तकः, इन्द्रामिलकः पूगः ॥ ६० ॥ **व्रातादस्त्रियाम्** ॥ ७ ॥ ३ । ६१ ॥ नानाजातीया अनियतवृत्तयः

शरीरायासजीविनः संघा व्राताः । व्रातवाचिनोऽस्त्रियां वर्तमानात् स्वार्थे ञ्यः प्रत्ययो भवति स च द्विसंज्ञः । कापोतपाक्यः । कापोतपाक्यौ । कपोतपाकाः । व्रैहिमत्यः । व्रैहिमत्यौ । व्रीहिमताः । अस्त्रियामिति किम् । कपोतपाका । व्रीहिमता स्त्री ॥ ६१ ॥ *शस्त्रजीविसंघाञ्ञ्यड् वा ॥ ७ । २ । ६२ ॥ शस्त्रजीविनां यः संघस्तद्वाचिनः स्वार्थे ञ्यट् प्रत्ययो वा भवति स च द्विसंज्ञः । शबराः शस्त्रजीविसंघः । शाबर्यः । शाबर्यौ । शबराः । पौलिन्द्यः । पौलिन्द्यौ । पुलिन्दाः । कुन्तेरपत्यं बहवो माणवकाः कुन्तयः । ते शस्त्रजीविसंघः कौन्त्यः । कौन्त्यौ । कुन्तयः । पक्षे शबरः । पुलिन्दः । शस्त्रजीविग्रहणं किम् । मल्लाः संघः । मल्लः । मल्लौ । मल्लाः । शयण्डः । शयण्डौ । शयण्डाः । संघादिति किम् । सम्राट् । वागुर । वागुरौ । वागुराः । नैते श्रेणिबद्धा इति न संघः । टकारो ङ्यर्थः । शाबरी । पौलिन्दी । कौन्ती ॥ ६२ ॥ वाहीकेष्वब्राह्मणराजन्येभ्यः ॥ ७ । २ । ६३ ॥ वाहीकेषु यः शस्त्रजीविसंघो ब्राह्मणराजन्यवर्जितस्तद्वाचिनः स्वार्थे ञ्यट् प्रत्ययो नित्यं भवति स च द्विसंज्ञः । कुण्डीविशाः शस्त्रजीविसंघः । कौण्डीविश्यः । कौण्डीविश्यौ । कुण्डीविशाः । क्षौद्रक्यः । क्षौद्रक्यौ । क्षुद्रकाः । मालव्यः । मालव्यौ । मालवाः । वाहीकेष्विति किम् । शबराः शस्त्रजीविसंघ । शबरः । शबरौ । पुलिन्दः । पुलिन्दौ । अब्राह्मणराजन्येभ्य इति किम् । गौपालिः । गौपाली । शालङ्कायनः । शालङ्कायनौ । राजन्य । राजन्यौ । काम्बव्यः । काम्बव्यौ । स्त्रिया राजन्या काम्बव्या । ञ्यटि तु ङीः स्यात् । ब्राह्मणप्रतिषेधे ब्राह्मणविशेषप्रतिषेधः । न हि ब्राह्मणशब्दवाच्यो वाहीकेषु शस्त्रजीविसंघोऽस्ति । राजन्ये तु स्वरूपस्य विशेषस्य च प्रतिषेधः । तदर्थमेव बहुवचनम् । शस्त्रजीविसंघादित्येव । [illegible]लः । शयण्डः । सम्राट् । वागुरः ॥ ६३ ॥ वृकाट्टेण्यण् ॥ ७ । ३ । ६४ ॥ वृकशब्दाच्छस्त्रजीविसंघवाचिनः स्वार्थे टेण्यण् प्रत्ययो भवति स च द्विः । वार्केण्यः । वार्केण्यौ । वृकाः । टकारो ङ्यर्थः । वार्केणी स्त्री । शस्त्रजीविसंघादित्येव । कामक्रोधौ मनुष्याणां खादितारौ वृकाविव । वाहीकत्वे नियमवाहीकत्वे तु विकल्पेन ञ्यटि प्राप्ते वचनम् । एवमुत्तरसूत्रत्रयमपि ॥ ६४ ॥ यौधेयादेरञ् ॥ ७ । ३ । ६५ ॥ यौधेयादिभ्यः शस्त्रजीविसंघवाचिभ्योऽञ् प्रत्ययो भवति स च द्विः । युधाया अपत्यं बहवः कुमारास्ते शस्त्रजीविसंघः यौधेयः । यौधेयौ । यौधयाः । एवं शौभ्रेयः । शौक्रेयः घार्त्तेयः । धार्त्तेयः । ज्यावनेयः । अनुवचनं 'संघघोपाङ्कलक्षणेञ्यञिञः ' (६-३-१७१) इत्यणर्थम् । तेन यौधेयस्य संघादियौंधेय इति भवति । ननु यौधेयादयः संघवचनाः कथं गोत्रं भवन्ति । उच्यते । भर्गात्रन्तर्गणो यौधेयादिस्तत्र येऽपत्यप्रत्ययान्तास्ते गोत्रं भवन्ति औपगवादिवत् । अपत्यं हि गोत्रम् । अपत्यप्रत्ययान्ताच्च स्वार्थिकोऽप्यपत्यग्रहणेन गृह्यते । अत्र चेदमेव *अनुवचनं

---

शस्त्र—॥—कुन्तय इति । एतत्सूत्रायातस्यापि ञ्यटो ' बहुष्वस्त्रियाम् ' इति लुप् ॥—शयण्ड इति । शयण्डा योद्धृविशेषा येषा लोके चउकडियाइति प्रसिद्धि —॥—कौन्तीति । कुन्तेरपत्यं बहवो माणवकास्ते शस्त्रजाविसघ स्त्रीत्वविशिष्टो विवक्षित' । ' दुनादि-' इति ञ्य । ' कुन्त्यवन्ते' स्त्रियाम् ' इति लुप् । ' नुजांते ' डी । तत' ' शस्त्रजीविसघाञ्ञ्यट् वा ' ' अवर्णवर्णस्य ' ' अणञेये- ' इति डी । व्यञ्जनात्तद्धितस्य- ' इति यलुप् ॥—यौधे—॥—अनुवचनमिति । अथ यौधेयादिभ्योऽनुवचन किमर्थम् । यौधेयादिपु ये तावदेयणन्तास्तेष्वञ्भावाभावयोरविशेष । यत तदेव हि रूप स एव चार्थ' प्रत्ययस्य स्वार्थिकत्वात् । त्रिगर्त्तभरतोशीनरेषु तु रूपभेदास्ति तान् पर्श्वादौ प्रक्षिप्य तेभ्योण् विधेयो न हि त्रगर्त्त त्रैगर्तौ त्रिगर्त्ता इत्यादावणञोर्विशेषोऽस्ति । अथ यौधेयादिभ्य शस्त्रजीविसघवाचिभ्यो वाहीकत्वावाहीकत्वाभ्या नित्यो विकल्पितो वा ञ्यट् प्राप्नोतीत्यञ

लिङ्गम् ॥ ६५ ॥ *पर्श्वादेरण् ॥ ७ । ३ । ६६ ॥ पर्शुइत्येवमादिभ्यः शस्त्रजीविसंघवाचिभ्यः स्वार्थेऽण् प्रत्ययो भवति स च द्रिः । पर्शोरपत्यं बहवो माणवकाः पर्शव. । द्विस्वरत्वादण् *लुप् । शस्त्रजीविसंघः । पार्शवः । पार्शवौ । पर्शवः । राक्षसः । राक्षसौ । रक्षांसि । स्त्रियां तु 'द्रेरञणोऽप्राच्यभर्गादेः' ( ६-१-१२३ ) इति लुप् । पर्शूः । अणो लुपि 'उतोऽप्राणिनश्च—' ( २-४-७३ ) इत्यादिनोङ् । पर्शु रक्षस् असुर वह्लिक वयस् ( वचस् ) वसु मरुत् सत्वन् सत्वन्तु दशार्ह पिशाच अशनि कार्षापण । इति पर्श्वादिः ॥ ६६ ॥ दामन्यादेरीयः ॥ ७ । ३ । ६७ ॥ दामन्यादिभ्यः शस्त्रजीविसंघेभ्यः स्वार्थे ईयः प्रत्ययो भवति स च द्रिः । दमनस्यापत्यं बहवः कुमारास्ते शस्त्रजीविसंघः दामनीय' । दामनीयौ । दामनयः । औलपीयः । औलपीयौ । औलपयः । दामनि औलपि औपलि वैजवापि औदकि आच्युतन्ति काकन्दि काकन्दकि ककुन्दि ककुन्दकि शाक्रन्तपि ( शत्रुन्तपि ) सार्वसेनि बिन्दु तुलभा मौञ्जायन औदमेघि औपबिन्दि सावित्रीपुत्र कौण्ठोपरथ कौण्डोपरथ कौण्ठारथ दाण्डकि कौष्टकि जालमानि जारमाणि ब्रह्मगुप्त ब्राह्मगुप्त जानकि । इति दामन्यादिः ॥ ६७ ॥ **श्रुमच्छमीवच्छिखावच्छालावदूर्णावद्विदभृदभिजितो गोत्रेऽणो यञ्** ॥ ७ । ३ । ६८ ॥ शस्त्रजीविसंघादिति निवृत्तम् । श्रुमच्छमीवच्छिखावच्छालावदूर्णावद्विदभृदभिजिदित्येतेभ्यो गोत्रे योऽण् तदन्तेभ्यः स्वार्थे यञ् प्रत्ययो भवति स च द्रिः । श्रुमतोऽपत्यमण् तदन्ताद्यञ् । श्रौमत्यः । श्रौमत्यौ । श्रौमताः । श्रीमच्छब्दादपि केचिदिच्छन्ति । श्रैमत्यः । श्रैमत्यौ । श्रैमताः । शामीवत्यः । शामीवत्यौ । शामीवताः । शैखावत्यः । शैखावत्यौ । शैखावताः । शालावत्यः । शालावत्यौ । शालावताः । और्णावत्यः । और्णावत्यौ । और्णावताः । वैदभृत्यः । वैदभृत्यौ । वैदभृता. । आभिजित्यः । आभिजित्यौ । आभिजिताः । गोत्रग्रहणं किम् । श्रुमत इदं श्रौमतम् । आभिजितो मुहूर्तः । आभिजितः स्थालीपाकः । अपत्यप्रत्ययान्तात्स्वार्थिकोऽपत्य एव वर्तते इति तदाश्रयः प्रत्ययो भवति । श्रौमत्यस्यापत्यं युवा श्रौमत्यायनः । आभिजित्यायनः । अत्र 'यञिञः' (६-१-५४) इत्यायनण् । श्रौमत्यस्यायं श्रौमतकः । आभिजितकः । अत्र 'गोत्राददण्ड'-(६-३-१६८) इत्यादिनाऽकञ् । श्रौमतानां समूहः श्रौमतकम् । आभिजितकम् । अत्र 'गोत्रोक्ष'-(६-२-१२) इत्यादिनाऽकञ् । श्रौमत्यस्य संघादि श्रौमतम् । आभिजितम् । अत्र 'संघघोषाङ्कलक्षणेऽञ्यञिञः (६-३-१७१) इत्यण् ॥६८॥ *समासान्तः ॥ ७ । ३ ॥ ६९ ॥ अधिकारोऽयमा पादपरिसमाप्तेः । अतः परं ये प्रत्ययास्ते समासस्यान्ता अवयवा भवन्ति तद्ग्रहणेन गृह्यन्ते । प्रयोजनं बहुव्रीह्यव्ययीभावद्विगु*द्वन्द्वसंज्ञाः । सुजम्भे सुजम्भानौ स्त्रियौ । अत्रानो बहुव्रीहिग्रहणेन ग्रहणात् डाब्ङीविकल्पः सिद्धः । उपधुरम् उपशरदम् । अत्रातोऽव्ययीभावग्रहणेन ग्रहणाद्विभक्तीनामम्भावः । द्विधुरी । त्रिधुरी । अत्र द्विगुग्रहणेन ग्रहणान्ङीः । वाग्दृषदिनी स्रक्त्वचिनी । अत्र द्वन्द्वग्रहणेन ग्रहणादिन् ॥ ६९ ॥ न किमः क्षेपे ॥ ७ । ३ । ७० ॥ निन्दाया यः किंशब्दस्तस्मात् पर य ऋगादयो यानुपादाय समासान्तो विधास्यते तदन्ताद्वक्ष्यमाणः समासान्तो न भवति । किंधूर्या न तथा गुर्वी । किंराजा यो न रक्षति । स किंसखा योऽभिद्रुह्यति । किंगौर्यो न वहति । का कुत्सिता धूरस्य किंधूः शकटम् । के कुत्सिते अक्षिणी अस्य

विधेयस्तर्हि तानपि पर्श्वादिषु प्रक्षिप्य तेभ्योऽप्यण् विधेय इत्याशङ्का ॥—पर्श्वा—॥—लुबिति । स्त्रियामेकत्वेऽपि लुप्भवतीत्यर्थ ॥—समा—॥—द्वंद्वसंज्ञा इति । उपलक्षण चेद् कर्मधारयादिसंज्ञा

किमक्षिर्ब्राह्मणः । किम इति किम् । कुराजः । दुःसखः । क्षेपे इति किम् । केषां राजा किराजः । किंसखः । किंगवः ॥ ७० ॥ *नञ्तत्पुरुषात् ॥ ७ । ३ । ७१ । नञ्तत्पुरुषाद्वक्ष्यमाणः समासान्तो न भवति । न ऋक् अनृक् । अराजा । असखा । अपन्थाः । अपथमिति पथशब्दस्य यथा *कुपथम् । तत्पुरुषादिति किम् । न विद्यते धूरस्य अधुरं शकटम् । अपथोऽयमुद्देशः । राज्ञामभावोऽराजं वर्तते ॥ ७१ ॥ पूजास्वतेः प्राक् टात् ॥ ७ । ३ । ७२ ॥ पूजायां यौ स्वती ताभ्यां परे य ऋगादयस्तदन्तात्समासात् ' बहुव्रीहेः काष्ठे टः ' ( ७-३-१२५ ) इति टप्रत्ययात्प्राक् यः समासान्तो वक्ष्यते स न भवति । शोभना धूः सुधूः । अतिधूः । सुराजा । अतिराजा । सुधूः शकटम् । अतिधूः शकटम् । सुसखा । अतिसखा । सुगौः । अतिगौः । पूजाग्रहणं किम् । अतिक्रान्तो राजानमतिराजः । अतिसखः । अतिगवः । स्वतेरिति किम् । परमधुरा । परमराजः । परमसखः । परमगवः । प्राक्टादिति किम् । स्वङ्गुलं काष्ठम् । अत्यङ्गुलं काष्ठम् । सुसक्थः । अतिसक्थः । स्वक्षः । अत्यक्षः ॥ ७२ ॥ *बहोर्डे ॥ ७ । ३ । ७३ ॥ डे डविषये डप्रसङ्गो यत्र ततो बह्वन्तात्समासान्तो डः कच् च न भवति । आसन्ना बहवो येषां ते *आसन्नबहवः । *उपबहवः । बहोरिति किम् । द्वित्राः । उपदशाः । ड इति किम् । प्रिया बहवोऽस्य प्रियबहुकः ॥ ७३ ॥ *इच् युद्धे ॥ ७ । ३ । ७४ । युद्धे यः समासो विहितस्तस्मादिच् समासान्तो भवति । केशाकेशि । दण्डादण्डि । मुसलामुसलि । मुष्टामुष्टि । अस्यासि । चकारः ' इच्यस्वरे दीर्घ आच ' (३—२—७२) इत्यत्र *विशेषणार्थः ॥ ७४ ॥ द्विदण्ड्यादिः ॥ ७ । ३ । ७५ ॥ द्विदण्डि इत्येवमादयः समासा इजन्ताः साधवो भवति । द्वौ दण्डावस्मिन् प्रहरणे द्विदण्डि प्रहरति । एवं द्विमुसलि । उभादन्ति उभयादन्ति । उभाबाहु । उभयाबाहु । उभौ हस्तावस्मिन्पाने उभाहस्ति पिबति । एवमुभयाहस्ति । उभापाणि *उभयापाणि । उभाञ्जलि । उभयाञ्जलि । उभौ कर्णावस्मिन् श्रवणे उभाकर्णि शृणोति । एवमुभयाकर्णि । अन्ते वासोऽस्मिन्स्थानेऽन्तेवासि तिष्ठति । अन्तेवासी गुरोरिति ताच्छीलिकान्तोऽन्य एव शब्दः । संहितानि पुच्छान्यस्मिन् सरणे संहितपुच्छि धावन्ति । एकः पादोऽस्मिन् गमने एकपादि गच्छति । समानौ पादावस्मिन्सपादि गच्छति । आच्यपादौ आच्यपादि शेते । एवं प्रोह्यपादि हस्तिनं वाहयति । निकुच्य कर्णौ निकुच्यकर्णि धावति । तिष्ठद्ग्वादित्वादव्ययीभावः । उभाबाहु उभयाबाह्वित्यत्र निपातनादिज्लुपि स्याद्विबद्धावादिजन्तत्वेनाव्ययीभावसंज्ञा । विभक्त्यलुक् पादस्य पद्भावः समानस्य

---

अपि भवन्ति ॥—नञ्—॥—कुपथमिति । यद्यत्र पथिन्शब्द स्यात्तदा ' काक्षपथो ' इति प्रवर्तेत॥—बहो—॥—आसन्नबहव इति । 'आसन्नादूर'-इति स । 'बहुगण भेदे' इति सख्या यद्भावात् 'प्रमाणीसख्याड् ड' इति डप्रत्ययः प्राप्नोति । तस्मिन्निषिद्धे ' शेषाद्वा ' इति कच् प्राप्नोति । उभयस्यापि सामान्येनाय प्रतिषेध इत्युभयमपि न भवति ॥—उपबहव इति । ' अव्ययम्' इति समास ॥—प्रियबहुक इति ' एकार्थं चानेकं च' इति सामान्यसमास' । तत 'प्रमाणीसख्याड्ड' ' इत्यत्र प्रतिपदोक्तबहुव्रीहेर्ग्रहणात् बहोर्वैपुल्यार्थत्वेन वा सख्यात्वाभावे ड समासान्तो न भवति किंतु कच् ॥—इच् यु—॥—विशेषणार्थ इति । अथ तत्रापि इरित्येव क्रियताम् । न। तथा सति ' दतिनाथारपशावि' ' इत्यस्मिन्नपीकारे दीर्घप्रसङ्ग. ॥—द्विद—॥—उभयापाणीति । उभस्य उभयोऽद्वित्वे इत्यनुपदकारसूत्र ततः उभय पाणि उभये वा पाणयो यस्मिन्नित्येकत्वे बहुत्वे एव वाक्य कार्यम् । एवमन्यत्रापि ॥

समाननैत्यादि सर्वं निपातनात् सिद्धम्। क्रियाविशेषणाच्चान्यत्र न भवति। द्वौ दण्डावस्यां शालायां। द्विदण्डा । द्विमुसला ॥ ७५ ॥ *ऋक्पूःपथ्यपोऽत्
॥ ७ । ३ । ७६ ॥ ऋच् पुर् पथिन् अप इत्येतदन्तात्समासादत् अकारः समासान्तो भवति। ऋचोऽर्धम् अर्धर्चः। ऋचः समीपमुपर्चम्। सप्तर्चं सूक्तम्। उच्चारितर्चः।
पुर्, श्रियाः पूः श्रीश्चासौ पूश्चेति वा श्रीपुरम्। पितृपुरम्। *त्रिपुरम्। स्फीतपुरो देशः। पथिन्, जलपथः। स्थलपथः। उपपथम्। प्रतिपथम्। विशालपथं नगरम्।
अप्, द्विर्गता आपोऽस्मिन् द्वीपम्। समीपम्। प्रतीपम्। बह्वपं तडागम्। पुरपथशब्दाभ्यां सिद्धे पुर् पथिन् इत्येतयोरुपादानमेतद्विषये *प्रयोगानिवृत्त्यर्थम् ॥ ७६ ॥
*धुरोऽनक्षस्य ॥ ७ । ३ । ७७ ॥ धुरन्तात्समासादत् समासान्तो भवति सा चेद्धूः*अक्षसंबन्धिनी न भवति। राज्यधुरा। रणधुरा। *द्विधुरी। त्रिधुरी।
उपधुरम्। महाधुरं शकटम्। अनक्षस्येति किम्। अक्षधूः। दृढधूरक्षः ॥ ७७ ॥ संख्यापाण्डूदक्कृष्णाद्भूमेः ॥ ७ । ३ । ७८ ॥ संख्यावाचिभ्यः पाण्डु उदच्
कृष्ण इत्येतेभ्यश्च नामभ्यः परो यो भूमिशब्दस्तदन्तात्समासादत्समासान्तो भवति। द्वयोर्भूम्योः समाहारो द्विभूमम्। त्रिभूमम्। द्वे भूमी अस्य द्विभूमः त्रिभूमः
प्रासादः। पाण्डुर्भूमिः पाण्डुभूमम्। पाण्डुभूमो देशः। उदीची भूमिः उदग्भूमम्। उदग्भूमो देशः। कृष्णा भूमिः कृष्णभूमम्। कृष्णभूमो देशः। भूमोऽसंख्यान एकार्थे इति
पाण्डुभूमादेर्नपुंसकत्वम्। सङ्ख्यादिभ्य इति किम्। सर्वभूमिः ॥ ७८ ॥ उपसर्गादध्वनः ॥ ७ । ३ । ७९ ॥ उपसर्गात् धातुयोगे यः प्रादिरुपसर्गसंज्ञां लभते
तस्मात्परादध्वनोऽत् समासान्तो भवति। प्रगतमध्वानं प्राध्वं शकटम्। प्राध्वो रथः। उपक्रान्तमध्वानमुपाध्वम्। निरध्वम्। अत्यध्वम् ॥ ७९ ॥ *समवान्धात्तमसः
॥ ७ । ३ । ८० ॥ सम् अव अन्ध इत्येतेभ्यः परो यस्तमस्शब्दस्तदन्तात्समासादत् समासान्तो भवति। सततं तमः संततं तमसा संततं तमोऽस्मिन्निति वा संतमसम्। अवहीनं
तमोऽवहीनं तमसा अवहीनं तमोऽस्मिन्निति वा अवतमसम्। *अन्धं करोतीत्यन्धम्। अन्धं च तत्तमश्च अन्धं तमोऽस्मिन्निति वा अन्धतमसम्। अन्धश्च तमश्चेति अन्धतमसम्
अन्धतमसे वा ॥ ८० ॥ तप्तान्ववाद्रहसः ॥ ७ । ३ । ८१ ॥ रह इति अप्रकाश्यं विजनं वा। तप्त अनु अव इत्येतत्पूर्वो यो रहःशब्दस्तदन्तादत्समासान्तो भवति। तप्तं
तप्ताय इवानाधिगम्यं रहः तप्तरहसम्। तप्तं रहोऽस्येति तप्तरहसः। अनुगतं रहोऽनुगतं रहसा वा अनुरहसम्। अनुगतं रहोऽस्येति अनुरहसः। अवहीनं रहोऽवहीनं
रहसा वा अवरहसम्। अवहीनं रहोऽस्येत्यवरहसः ॥ ८१ ॥ *प्रत्यन्ववात्सामलोम्नः ॥ ७ । ३ । ८२ ॥ प्रति अनु अव इत्येतेभ्यः परौ यौ सामन्लोमन्शब्दौ
तदन्तात्समासादत्समासान्तो भवति। प्रतिगतं साम प्रतिसामम्। प्रतिगतं सामास्य प्रतिसामः। एवमनुसामम् अनुसामः। अवसामम् अवसामः। प्रतिलोमम्
प्रतिलोमः। अनुलोमम् अनुलोमः। अवलोमम् अवलोमः। अव्ययीभावे तु परत्वाद्विकल्पः। साम साम प्रति साम्नोऽभिमुखं वा प्रतिसाम प्रतिसामम्। साम सामानु

---

–ऋक्पू –॥–त्रिपुरमिति ॥ तिसृणां पुरां समाहार ॥ उत्तरपदस्यादन्तत्वाभावात् ङीत्वाभाव । किंतु अन्यस्तु सर्वो नपुंसक ॥–प्रयोगानिवृत्त्यर्थमिति।समासान्तविषये व्यञ्जनान्तयो प्रयोगो न भवतीत्यर्थ
॥–धुरो–॥–अक्षसबन्धिनी नेति। शब्दद्वारकमेतन्नार्थद्वारकम्।तेन महाधुर शकटमिति सिद्धम्॥–द्विधुरीत्यादि।द्वयोर्धुरो समाहार ।तिसृणां धुरां समाहार।अन्यस्तु सर्वो नपुंसक इति वचने सत्यपि
तद्बहुलमिति स्त्रीत्वे ' द्विगो. –ङ्यति ङी ॥—सम—॥—अन्ध करोतीति । अन्धण् इत्येतस्याचि तत करोत्यर्थे णिचि ततोऽचि सामानाधिकरण्यम् ॥—प्रत्य—॥ विलोमेनेति तु पृषोदरा-

साम्नः समीपं साम्ना तुल्यायामं वा अनुसाम अनुसामम् । एवं प्रतिलोम प्रतिलोमम् । अनुलोम अनुलोमम् । प्रत्यन्ववादिति किम् । निःपाम वचनम् । निर्लोमा पुरुषः । सामलोम्न इति किम् । प्रतिकर्म ॥ ८२ ॥ ब्रह्महस्तिराजपल्याद्वर्चसः ॥ ७ । ३ । ८३ ॥ ब्रह्मन् हस्तिन् राजन् पल्य इत्येतेभ्यः परो यो वर्चस्शब्दस्तदन्तात्समासादत्समासान्तो भवति । वर्चस्तेजो बलं वा । ब्रह्मणो वर्चः ब्रह्मवर्चसम् । एवं हस्तिवर्चसम् । राजवर्चसम् । पल्यवर्चसम् । पल्यं कटकृतं पलालवर्तिकृतं वा धान्यभाजनम् । हस्तिविधा वा । ब्रह्मादिभ्य इति किम् । नृपाः सोमार्कवर्चसः । कथं त्विषिमान् राजवर्चस्वीति । समासान्तविधेरनित्यत्वात् । एतच्च 'ऋक्पूःपथ्यपोऽत्'—( ७–३–७६ ) इति निर्देशात्सिद्धम् ॥ ८३ ॥ प्रतेरुरसः सप्तम्याः ॥ ७ । ३ । ८४ ॥ प्रतिशब्दात्परो य उरस्शब्दः सप्तम्यन्तस्तदन्तात्समासादत्समासान्तो भवति । उरसि वर्तते प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः । उरसि प्रतिष्ठितं प्रत्युरसम् । 'प्रात्यव'—( ३–१–४७ ) इत्यादिना तत्पुरुषः । सप्तम्या इति किम् । प्रतिगतमुरः उरः प्रति वा प्रत्युरः ॥ ८४ ॥ अक्ष्णोऽप्राण्यङ्गे ॥ ७ । ३ । ८५ ॥ अक्षिशब्दान्तात्समासादत्समासान्तो भवति अप्राण्यङ्गे न चेत् सोऽक्षिशब्दः प्राण्यङ्गे वर्तते । लवणस्याक्षि लवणमक्षीवेति वा लवणाक्षम् । पुष्कराक्षम् । गवाक्षः । रुद्राक्षम् । महिषाक्षो गुग्गुलः । कचराक्षमश्वानां मुखप्रच्छादनं बहुच्छिद्रकम् । अप्राण्यङ्ग इति किम् । अजाक्षि । उपाक्षि । वामाक्षि ॥ ८५ ॥ संकटाभ्याम् ॥ ७ । ३ । ८६ ॥ संकट इत्येतत्पूर्वादक्षिशब्दादत्समासान्तो भवति । संगतमक्ष्णा समीपमक्ष्णो वा समक्षम् । कटस्याक्षि कटाक्षः । प्राण्यङ्गार्थं वचनम् ॥ ८६ ॥ प्रतिपरोऽनोरव्ययीभावात् ॥ ७ । ३ । ८७ ॥ प्रति परस् अनु इत्येतत्पूर्वो योऽक्षिशब्दस्तदन्तादव्ययीभावसमासादत्समासान्तो भवति । अक्षिणी प्रति प्रत्यक्षम् । परसमानार्थः परस्शब्दोऽव्ययम् । अक्ष्णोः परं परोक्षम् । अत्ययेऽव्ययीभावः । अक्ष्णः समीपमन्वक्षम् । कथं प्रत्यक्षोऽर्थः परोक्षः काल इत्यादेरव्ययीभावस्य सत्ववचनता । अभ्रादेराकृतिगणत्वादप्रत्ययेन भविष्यति ॥ अक्षशब्देनेन्द्रियपर्यायेण सिद्धे प्रत्यादिभ्यः परस्याक्षिशब्दस्याव्ययीभावे प्रयोगो मा भूदिति वचनम् ॥ ८७ ॥ अनः ॥ ७ । ३ । ८८ ॥ अन्नन्तादव्ययीभावादत्समासान्तो भवति । उपराजम् । उपतक्षम् । अध्यात्मम् । प्रत्यात्मम् ॥ ८८ ॥ नपुंसकाद्वा ॥ ७ । ३ । ८९ ॥ अन्नन्तं यन्नपुंसकं तदन्तादव्ययीभावादत्समासान्तो वा भवति । उपचर्मम् । उपचर्म । प्रतिकर्मम् प्रतिकर्म । प्रतिसाम । प्रतिसामम् । अनुलोम । अनुलोमम् । प्रतिलोम । प्रतिलोमम् । पूर्वेण नित्ये प्राप्ते विकल्पः ॥ ८९ ॥ *गिरिनदीपौर्णमास्याग्रहायण्यपञ्चमवर्ग्याद्वा ॥ ७ । ३ । ९० ॥ गिरि नदी पौर्णमासी आग्रहायणी इत्येतच्छब्दान्तात्पञ्चमरहिता ये वर्ग्यास्तदन्ताच्चाव्ययीभावात्समासादत्समासान्तो भवति वा । गिरेरन्तः अन्तर्गिरम् । अन्तर्गिरि । गिरेः समीपमुपगिरम् । उपगिरि । एवमुपनदम् । उपनदि । उपपौर्णमासम् । उपपौर्णमासि । उपाग्रहायणम् । उपाग्रहायणि । अपञ्चमवर्ग्य, उपस्रुचम् उपस्रुक् । अधिस्रजम् । अधिस्रक् । *उपैडविडम् । उपैडविड् । प्रतिमरुतम् । प्रतिमरुत् । उपदृषदम् । उपदृषद् । उपसमिधम् । उपसमित् । उपककुभम् । उपककुब्

दित्वात् लोम्न न्यद्भावो वा विलोम 'नपुंसकाद्वा' इति समासान्ते तद्योगात् ॥—गिरिन—॥—उपैडविडमिति । द्रुडविडोऽपत्य स्त्री 'राष्ट्रक्षत्रिय–' इत्यञ् 'द्रेरञणः–' इति लुप् । अनेनात्वविषये 'जातिश्च

॥ ९० ॥ **संख्याया नदीगोदावरीभ्याम्** ॥ ७ । ३ । ९१ ॥ संख्यावाचिनः परौ यौ नदीगोदावरीशब्दौ तदन्तादव्ययीभावसमासादत्समासान्तो भवति । पञ्च नद्यः पञ्चनदम् । सप्तनदम् । द्विगोदावरम् । त्रिगोदावरम् । संख्याया इति किम् । उपनदि । अव्ययीभावादित्येव । एकनदी । इह नदीग्रहणं नित्यार्थम् ॥ ९१ ॥ *शरदादेः ॥ ७ । ३ । ९२॥ शरदाद्यन्तादव्ययीभावसमासादत्समासान्तो भवति । शरदः समीपमुपशरदम् । प्रतिशरदम् । उपत्यदम् । प्रतित्यदम् । शरद् त्यद् तद् यद् कियत् हिरुक् हिमवत् उपसद् सदस् अदस् अनस् मनस् *विपाश् दिश् दृश् विश् उपानह् अनडुह् चतुर् दिव् । अत्रापञ्चमवर्ग्यान्तपाठो नित्यार्थः । अव्ययीभावादित्येव । परमशरद् ॥९२॥ **जराया जरस् च** ॥ ७ । ३ । ९३॥ जराशब्दान्तादव्ययीभावसमासादत्समासान्तो भवति तत्संनियोगे च जराशब्दस्य जरसादेशः ॥ उपजरसम् । प्रतिजरसम् ॥९३॥ **सरजसोपशुनानुगवम्** ॥ ७ । ३ । ९४ ॥ सरजस उपशुन अनुगव इत्येतेऽव्ययीभावा अदन्ता निपात्यन्ते । सह रजसा सरजसमभ्यवहरति । साकल्येऽव्ययीभावः । शुनः समीपे उपशुनं तिष्ठति । अत्र निपातनाद्वस्योत्वम् । गामन्वायतमनुगवम् । 'दैर्घ्येऽनुः' ( ३-१-३४ ) इत्यव्ययीभावः । दैर्घ्यादन्यत्र न भवति । गवां पश्चादनुगु यानम् ॥९४॥ **जातमहद्वृद्धादुक्ष्णः कर्मधारयात्** ॥७।३।९५॥ जातमहद्वृद्ध इत्येतेभ्यः परो य उक्षन्शब्दस्तदन्तात्कर्मधारयादत्समासान्तो भवति । जातश्चासावुक्षा च जातोक्षः । महोक्षः । वृद्धोक्षः । जातादिभ्य इति किम् । परमोक्षा । उत्तमोक्षा । उक्ष्ण इति किम् । महाश्मश्रु । कर्मधारयादिति किम् । जातस्योक्षा जातोक्षा । महदुक्षा । वृद्धोक्षा ॥९५॥ **स्त्रियाः पुंसो द्वन्द्वाच्च** ॥७।३।९६॥ स्त्रीशब्दात्परो यः पुम्स्शब्दस्तदन्ताद्द्वन्द्वात्कर्मधारयाच्चात् समासान्तो भवति । स्त्री च पुमांश्च स्त्रीपुंसं स्त्रीपुंसौ स्त्रीपुंसाः । कर्मधारयात् स्त्री चासौ पुमांश्च स्त्रीपुंसः शिखण्डी । स्त्रीपुंसं विद्धि राक्षसम् । द्वन्द्वाच्चेति किम् । स्त्रियाः पुमान् स्त्रीपुमान् ॥९६॥ *ऋक्सामर्ग्यजुषधेन्वनडुहवाङ्मनसाहोरात्ररात्रिंदिवनक्तंदिवाहर्दिवोर्वष्ठीवपदष्ठीवाक्षिभ्रुवदारगवम्* ॥ ७ । ३ । ९७ ॥ ऋक्सामादयो द्वन्द्वा अत्प्रत्ययान्ता निपात्यन्ते । ऋक् च साम च ऋक्सामे । ऋक् च यजुश्च ऋग्यजुषमधीयानान् । धेनुश्च अनड्वांश्च धेन्वनडुहौ । धेन्वनडुहाः । असमाहारार्थं धेन्वनडुहग्रहणम् । समाहारे तूत्तरेणैव सिद्धम् । वाक् च मनश्च वाङ्मनसे । अहश्च रात्रिश्च अहोरात्रः । पुण्याविमावहोरात्रौ । रात्रिश्च दिवा च रात्रिंदिवम् । रात्रिंदिवानि पश्यति । निपातनात्पूर्वपदस्य मोऽन्तः । नक्तं च दिवा च नक्तंदिवम् । अत्रापि मोऽन्तः । अहश्च दिवा च अहर्दिवम् । *पर्याययोरपि वीप्सायां द्वन्द्वो निपातनात् । अहरहरित्यर्थः । रात्रिपर्यायोऽत्रान्यतर इत्येके । अहर्निशमित्यर्थः । ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम् । निपातनादन्त्यस्वरादिलोपः । पादौ चाष्ठीवन्तौ च पदष्ठीवम् । अत्र पद्भावश्च । अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् । दाराश्च गावश्च दारगवम् । अत्र भ्रूशब्दस्य निपातनादुवादेशोऽक्षिदारशब्दयोश्च *पूर्वनिपातः । द्वन्द्वादित्येव । ऋक्

णि-'इति पुवद्भावेऽज्प्रत्यावृत्ति ततो वर्गान्तत्वाभावादद् न भवति । पुवद्भाव एव चाऽस्य फलम् ॥-शरदा॥-त्वपाशिति । पाश पाशाद्वा विमोचयति णिच् वसिठ विपाशितवती 'विशिविपाशिभ्याम् '-इति वा क्विप् ॥—ऋक्सा—॥ ननु चाहर्दिवशब्दौ तुल्यार्थौ तयोश्चोक्तार्थानामप्रयोग इति वा 'समानाम्'-इत्येकशेषारम्भाद्वा द्वन्द्वो नोपपद्यत इत्याह—पर्याययोरपीत्यादि॥—पूर्वनिपात इति ।

साम यस्य ऋक्सामा सुग्धः । ऋग्यजुर्यस्य स ऋग्यजुः । धेनोरनड्वान् धेन्वनड्वान् ॥ ९७ ॥ *चवर्गदषहः समाहारे ॥ ७ । ३ । ९८ ॥ चवर्गदकारषकारहकारान्ताद्द्वन्द्वात्समाहारेर्थे वर्तमानादत्समासान्तो भवति । वाक् च त्वक् च वाक्त्वचम्। वाक् च समुच्च वाक्समुच्छम्। श्रीस्रजम्। द्, समिद्दृषदम् । संपद्विपदम् । ष, वाक्त्विषम् । वाग्विप्रुषम् । ह्, छत्रोपानहम् । *गोगोदुहम् । समासान्तत्वेन प्रत्ययस्य द्वन्द्वावयवत्वात् छत्रोपानहिनीति द्वन्द्वलक्षणो मत्वर्थीय इन् भवति । चवर्गदषह इति किम् । दृषत्समित् । यकृन्मेदः । समाहारे इति किम् । प्रावृट्शरद्भ्याम् । अश्वानडुद्भ्याम् । द्वन्द्वादित्येव । पञ्च वाचः समाहृताः पञ्चवाक् ॥ ९८ ॥

द्विगोरनह्नोऽट् ॥ ७ । ३ । ९९ ॥ अन्नन्तादहन्शब्दान्ताच्च द्विगोः समाहारे वर्तमानादट् समासान्तो भवति । पञ्च तक्षाणः समाहृताः पञ्चतक्षी । पञ्चतक्षम् । दशोक्षी । दशोक्षम् । शतराजी । शतराजम् । द्व्यहः । त्र्यहः । द्विगोरिति किम् । समाहृतास्तक्षाणः संतक्षाणः । समाहृतान्यहानि समहाः । 'सर्वांशसंख्याव्ययात्' ( ७-३-११८ ) इत्यट् । समाहार इत्येव । द्वाभ्यामुक्षभ्यां क्रीतः द्व्युक्षा । त्र्युक्षा । द्वयोरह्नोर्भवः द्व्यहः । त्र्यहः । अन्नन्तत्वेनैव सिद्धेऽह्न इदमह्विधानं समाहारे 'सर्वांशसंख्याव्ययात्' ( ७-३-११८ ) इति परस्याप्यटो बाधनार्थम् । तस्मिन् हि सत्यह्नादेशः स्यात् ॥ ९९ ॥ द्वित्रेरायुषः ॥ ७ । ३ । १०० ॥ द्वित्रि इत्येताभ्यां परो य आयुष्शब्दस्तदन्तात् द्विगोः समाहारे वर्तमानादट् समासान्तो भवति । द्वयोरायुषोः समाहारो द्व्यायुषम् । त्र्यायुषम् । द्वित्रेरिति किम् । चतुरायुः । समाहारे इत्येव । द्व्यायुःप्रियः । त्र्यायुःप्रियः ॥ १०० ॥ *वाञ्जलेरलुकः ॥ ७ । ३ । १०१ ॥ द्वित्रिभ्यां परो योऽञ्जलिशब्दस्तदन्तात् द्विगोरट् समासान्तो वा भवति न चेत्स द्विगुस्तद्धितलुगन्तो भवति । द्वयोरञ्जल्योः समाहारः द्व्यञ्जलम् । द्व्यञ्जलि । त्र्यञ्जलम् । त्र्यञ्जलि । द्वाभ्यामञ्जलिभ्यामागतं द्व्यञ्जलमयम् । द्व्यञ्जलिमयम् । द्व्यञ्जलरूप्यम् । द्व्यञ्जलिरूप्यम् । त्र्यञ्जलमयम् । त्र्यञ्जलिमयम् । त्र्यञ्जलरूप्यम् । त्र्यञ्जलिरूप्यम् । द्वावञ्जली प्रियौ यस्य द्व्यञ्जलप्रियः द्व्यञ्जलिप्रियः । त्र्यञ्जलप्रियः त्र्यञ्जलिप्रियः । अलुक इति किम् । द्वाभ्यामञ्जलिभ्यां क्रीतः द्व्यञ्जलिर्घटः । त्र्यञ्जलिर्घटः । *द्विगोरित्येव । द्वयोरञ्जलिः द्व्यञ्जलिः । त्र्यञ्जलिः । द्वावञ्जली अस्य द्व्यञ्जलिकः । त्र्यञ्जलिकः । नित्योऽयं विधिरित्येके ॥ १०१ ॥ *खार्या वा ॥ ७ । ३ । १०२ ॥ पृथग्योगाद्द्वित्रेरिति निवृत्तम् । खारीशब्दान्तात् द्विगोरलुकोऽट् समासान्तो वा भवति । द्विखारम् । पक्षे 'क्लीबे' ( २-४-९६ ) इति ह्रस्वत्वे द्विखारि । केचिदत्र *पुंस्त्वमपीच्छन्ति । तन्मते 'गोश्चान्ते'—( २-४-९६ ) इत्यादिना ह्रस्वत्वे द्विखारिः ।

---

'लघ्वक्षर-' इत्यादिना अल्पस्वरत्वेन भ्रूगोशब्दयो पूर्वनिपाते प्राप्ते ॥—चव—॥—वाक्समुच्छमिति । उच्छेत् विवास इत्यस्य क्विप् 'अनुनासिके च-' इति शत्वस्यानित्यत्वात् समुच्छोर्विचि वा ॥—गोगोदुहमिति । अत्र गोशब्द' किरणादिपर्यायस्तत' समाहारो भवति । अन्यथा तु गवि वर्त्तमानस्य स्वेरिति व्यावृत्तिविषयत्वान्न स्यात्समाहर' । एव दारगवमित्यत्रापि । यद्वा गोधुक् वत्सा गा दोग्धीति व्युत्पत्त्या ॥—वाञ्ज—॥—द्विगोरिति । अत्र समाहारो नानुवर्त्तते अपेक्षात इति वचनात् ॥ समाहारे लुक्स भवतीति अलुक इति वचनादेवेति न वाच्य समाहारादपि तद्धितलोपसंभवात् यथा द्व्यञ्जलेन क्रीत इकणो लुपि समासान्तनिवृत्तौ द्व्यञ्जलिर्घट इत्यत्र, अलुकइत्यस्य चारितार्थत्वात् ॥-खार्या—॥—पुंस्त्वमपीच्छन्तीति ।

एवं पञ्चखारम् पञ्चखारी । द्विखारमयम् । द्विखारीमयम् ।
सीत्वमप्यन्ये । तन्मते पूर्ववद्ध्रस्वत्वे 'इतोऽक्त्यर्थात्' ( २-४-३२ ) इति ङ्यां च द्विखारी । एवं पञ्चखारम् पञ्चखारी । द्विखारमयम् । द्विखारीमयम् ।
पञ्चखाररूप्यम् । पञ्चखारीरूप्यम् । द्विखारप्रियः । द्विखारीप्रियः । पञ्चखारधनः । पञ्चखारीधनः । द्विगोरित्येव । उपखारि । अधिखारि । अलुक् इत्यस्य
प्रत्युदाहरणं नास्ति विशेषाभावात् । यतस्ताद्धितलुग्गडभावेऽपि 'ङ्यादेः'—(२—४—९४) इत्यादिना ङीलुकि पुन्नपुंसकयोः *द्विखारः द्विखारम्, स्त्रियां तु
'परिमाणात्तद्धितलुकि'-(२-३-२३) इत्यादिना ङीप्रत्यये *द्विखारीति भवति । एतच्च त्रैरूप्यमव्यपि भवति । *इदन्तात् ङ्यां खारीत्येके । तदा तु *अस्त्येव
विशेषः ॥ १०२ ॥ वार्धाच्च ॥ ७ । ३ । १०३ ॥ अर्धशब्दात्परो यः खारीशब्दस्तदन्ताच्च समासादलुकोऽद् समासान्तो वा भवति । 'समेंऽशेऽर्धं नवा'
(३-१-५४) इत्यर्धशब्दे यः *प्रतिपदं समास उक्त*स्तत्रायं विधिः । अर्धं खार्योः अर्धखारम् अर्धखारी । विधानसामर्थ्याददन्तस्य न स्त्रियां वृत्तिः । चकारो
द्विगोरनुकर्षणार्थः । तेनोत्तरत्र *द्वयमप्यनुवर्तते ॥ १०३ ॥ *नावः । ७ । ३ । १०४ ॥ अर्धशब्दात्परो यो नौशब्दस्तदन्तात्समासात् द्विगोश्च नौशब्दान्तादलु-
कोऽद् समासान्तो भवति । अर्धं नावः *अर्धनावम् अर्धनावी । द्विगोः, द्विनावम् । पञ्चनावम् । द्विनावमयम् । पञ्चनावमयम् । द्विनावरूप्यम् । पञ्चनावरूप्यम् ।
द्विनावप्रियः । द्विनावधनः । अलुक इत्येव । द्वाभ्यां नौभ्यां क्रीतः द्विनौः । पञ्चनौः । द्विगोरित्येव । द्वयोर्नौः द्विनौः । अर्धादित्येव । राजनौः । परमनौः । टकारो
ङ्यर्थः । अर्धनावम् अर्धनावीति हि स्त्रीनपुंसकयोर्दृश्यते ॥ १०४ ॥ गोस्तत्पुरुषात् ॥ ७ । ३ । १०५ ॥ गोशब्दान्तात्तत्पुरुषादलुकोऽद् समासान्तो
भवति । राज्ञो गौ राजगवः । राजगवी । पुंगवः । स्त्रीगवी । आतिगवः । अतिगवी । पञ्चगवम् । दशगवम् । पञ्चगवमयम् । पञ्चगवरूप्यम् । पञ्चगववनः । दशगवधनः ।
दशगवप्रियः । तत्पुरुषादिति किम् । चित्रगुः । अलुक इत्येव । पञ्चभिर्गोभिः क्रीतः पञ्चगुः ॥ १०५ ॥ *राजन्सखेः ॥ ७ । ३ । १०६ ॥ अलुक इति निवृत्तम्
पृथग्योगात् । राजन् सखि इत्येतदन्तात्तत्पुरुषादद् समासान्तो भवति । देवानां राजा देवराजः । महांश्चासौ राजा च महाराजः । अतिक्रान्तो राजान-
मतिराजः । अतिराजी । पञ्चानां राज्ञां समाहारः पञ्चराजी । दशराजी । पञ्चभी राजभिः क्रीतः पञ्चराजः । पञ्चराजी । पञ्चराजप्रियः ।
सखि, राजसखः । महासखः । अतिसखः । अतिसखी । पञ्चसखम् । दशसखम् । पञ्चसखः । पञ्चसखी । पञ्चसखप्रियः । राजन्निति *नान्त-

भवेदमर्थादावण् क्रीते त्वर्थे 'खारीकाकणीभ्य कच्' प्राप्नोति तस्य च विधानसामर्थ्यात् लुप्
स्थिते तु अन्यस्तु सर्वो नपुसक इति क्लीबत्वमेव—॥—द्विखार इति । भवेदमर्थादावण् क्रीते त्वर्थे 'खारीकाकणीभ्य कच्' प्राप्नोति तस्य च विधानसामर्थ्यात् लुप्
न भवति 'द्विगोरपत्ये-' इत्यणो लुप् ॥—द्विखारीति । 'द्वे खार्यौ मानमस्या स्यात् । 'मात्रट्' इति मात्रट् 'द्विगोः सशये च' इति लुप् 'परिमाणात्-' इति
ङी ॥--इदन्तात् ङ्यामिति । स्वमते तु खारउितिनिपातने टानुबन्धात् टिद्द्वारेण ङी ॥— अस्त्येव विशेष इति । यतस्तद्धितलुकि इदन्ता प्रकृतिरवतिष्ठते ॥—वार्धा—
॥-प्रतिपदमिति । लक्षणप्रतिपदोक्तयोरिति न्यायात् ॥—तत्राय विधिरिति । न बहुव्रीह्यादो ॥-द्वयमपीति । इह तु न प्रयोजनम् ॥—नाव ॥—अर्धनावमित्यादि । अर्धपूर्वपदो
नाव इति स्त्रीक्लीबत्वे भवत ॥—राजन्—॥—नान्तनिर्देशादिति ॥ नामग्रहण इति न्यायादटि सति 'जातिश्च णि'-इति पुंवद्भावे मद्रराजीति प्राप्नोतीत्याश-

निर्देशादनकारान्तान्न भवति । मद्राणां राज्ञी मद्रराज्ञी । विद्याराज्ञी । महाराज्ञी । सखीशब्दात्त्वटि सत्यसति वा *न रूपभेदः ॥ १०६ ॥ राष्ट्राख्याद्ब्रह्मणः ॥ ७ । ३ । १०७ ॥ राष्ट्रवाचिनः परो यो ब्रह्मन्शब्दस्तदन्तात्तत्पुरुषादट् समासान्तो भवति । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः । यः सुराष्ट्रेषु वसति स सौराष्ट्रिको ब्राह्मण इत्यर्थः ॥ एवमवन्तिब्रह्मः । काशिब्रह्मः । राष्ट्राख्यादिति किम् । देवब्रह्मा नारदः । आख्यग्रहणं राष्ट्रवाच्यर्थम् ॥ १०७ ॥ कुमहद्भ्यां वा ॥ ७ । ३ । १०८॥ कु महदित्येताभ्यां परो यो ब्रह्मन्शब्दस्तदन्तात्तत्पुरुषाद्वाट् समासान्तो भवति । पापो ब्रह्मा कुब्रह्मा कुब्रह्मः । महान् ब्रह्मा महाब्रह्मः महाब्रह्मा । पापो महांश्च ब्राह्मण एवमुच्यते ॥ १०८ ॥ ग्रामकौटात्तक्ष्णः ॥ ७ । ३ । १०९ ॥ ग्रामकौट इत्येताभ्यां परो यस्तक्षन्शब्दस्तदन्तात्तत्पुरुषादट् समासान्तो भवति । ग्रामस्य तक्षा ग्रामतक्षः । ग्रामसाधारण इत्यर्थः । कुटी शाला तस्यां भवः कौटः कौटस्तक्षा कौटतक्षः । स्वापणशालायां यः कर्म करोति स्वतन्त्रो न कस्यचित्प्रतिबद्ध इत्यर्थः । ग्रामकौटादिति किम् । राजतक्षा । तत्पुरुषादित्येव । ग्रामश्च तक्षा च ग्रामतक्षाणौ । कौटस्तक्षास्य कौटतक्षा ॥ १०९ ॥ गोष्ठातेः शुनः ॥ ७ । ३ । ११० ॥ गोष्ठ अति इत्येताभ्यां परो यः श्वन्शब्दस्तदन्तात्तत्पुरुषादट् समासान्तो भवति । गोष्ठे श्वा गोष्ठश्वः । अतिक्रान्तः श्वानम् अतिश्वो वराहः । अतिजवन इत्यर्थः । अतिश्वः सेवकः । सुष्ठु स्वामिभक्त इत्यर्थः । अतिश्वी सेवा । अतिनीचेत्यर्थः ॥ ११० ॥ *प्राणिन उपमानात् ॥ ७ । ३ । १११ ॥ प्राणिवाचिन उपमानात्परो यः श्वन्शब्दस्तदन्तात्तत्पुरुषादट् समासान्तो भवति । व्याघ्र इव व्याघ्रः स चासौ श्वा च व्याघ्रश्वः । 'उपमेयं व्याघ्राद्यैः साम्यानुक्तौ' ( ३-१-१०२ ) इति समासः । अत एव वचनात् श्वन्शब्दस्य *परनिपातः । मयूरव्यंसकादित्वाद्वा समासः । एवं सिंहश्वः । वृकश्वः । प्राणिन उपमानादिति पूर्वपदविज्ञानादिह न भवति । वानरः श्वेव वानरश्वा । प्राणिन इति किम् । फलकमिव श्वा फलकश्वा । उपमानग्रहणं किम् । देवदत्तश्वा । प्राणी उपमानभूतो यः श्वाशब्दः तदन्तात्तत्पुरुषादिच्छन्त्येके । व्याघ्रः श्वेव व्याघ्रश्वः । एवं सिंहश्वः । वृकश्वः । पुरुषश्वः । तन्मते वानरश्वेत्यत्र समासान्तविधेरनित्यत्वान्न भवति ॥ १११ ॥ *अप्राणिनि ॥ ७ । ३ । ११२ ॥ पूर्वसूत्रे उपमानादिति पूर्वपदस्य विशेषणम् इह तु शुनः । अप्राणिनि वर्तते य उपमानवाची श्वन्शब्दस्तदन्तात्तत्पुरुषादट् समासान्तो भवति । श्वेव श्वा आकर्षश्चासौ श्वा च आकर्षश्वः । एवं फलकश्वः । शकटश्वः । अप्राणिनीति किम् । वानरः श्वेव वानरश्वा । उपमानादित्येव । आकर्षे श्वा आकर्षश्वा । कुक्कुरवच्छारेऽपि श्वन्शब्दो रूढो नोपमानम् । तत्राप्युपमानादेव वर्तत इत्येके । तन्मते आकर्षश्व इत्येव भवति । केचित्तूपमानादिति नापेक्षन्ते तन्मते आकर्षे श्वा आकर्षश्वः शकटश्व इत्येव भवति । अन्ये तूपमानादप्राणिनीति *एकमेव योगमारभन्ते । तन्मते व्याघ्रश्व इत्यादि न भवति ॥ ११२ ॥ *पूर्वोत्तरमृगाच्च सक्थ्नः ॥ ७ । ३ । ११३ ॥

---

ह्का ॥—न रूपभेद इति । सखीशब्दस्य ईकारान्तस्यापि पञ्चाना सखीना समाहार इति 'क्लीबे' इति ह्रस्वत्वे इदन्तादेवाट् भवति । तथा च पञ्चसखमिति । तथा सखीमतिक्रान्त इति कृते सखीशब्दादड्भावेऽपि 'गोश्चान्ते'—इति कृते सखिद्वारेणाट् प्राप्नोत्येव । तथा पञ्चानां सखी इत्यपि कृते अटि अडभावेऽपि तत्पुरुषस्योत्तरपदप्रधानत्वात् पञ्चसखीत्येव रूपम् । एवमन्यदपि रूपभेदाहेतुकमभ्यूह्यम् ॥ —प्राणि-॥—परनिपात इति । प्रथमोक्तत्वेन उपमेयस्य पूर्वनिपाते प्राप्ते ॥—अप्रा—॥—एकमेव योगमिति । ते हि अस्यैव सूत्रस्य विषयमाद्रियन्ते न तु पूर्वस्य 'प्राणिन उपमानात्'—इत्यस्य ॥—पूर्वोत्तर-

पूर्वोत्तरमृग इत्येतेभ्य उपमानवाचिनश्च शब्दात्परो यः सक्थिशब्दस्तदन्तात्तत्पुरुषादट् समासान्तो भवति। पूर्वं सक्थि सक्थ्नः पूर्वं वा पूर्वसक्थम्। एवमुत्तरसक्थम्।
मृगस्य सक्थि मृगसक्थम्। उपमानात्, फलकमिव फलकम् फलकं च तत् सक्थि च फलकसक्थम्। ᵎव्याघ्रश्वादिवत्समासः। पूर्वशब्दान्नेच्छन्त्येके। कुक्कुटादपीच्छ-
न्त्यन्ये। कुक्कुटसक्थम् ॥ ११३ ॥ उरसोऽग्रे ॥ ७ । ३ । ११४ ॥ अग्रं मुखं प्रधानं वा तत्र वर्तमानो य उरसशब्दस्तदन्तात्तत्पुरुषादट् समासान्तो भवति।
अश्वाश्च ते उरश्च अश्वोरसं दृश्यते । सेनाया अश्वा मुखमित्यर्थः । अश्वानामुरः अश्वोरसं वर्णयेत् । अश्वानां मुखमग्रदेशमित्यर्थः ॥ अश्वानामुरः अश्वोरसम्।
अश्वानां प्रधानमित्यर्थः। एवं हस्त्युरसम्। रथोरसम्। अग्र इति किम्। अश्वोरस्यावर्तः ॥ ११४ ॥ सरोऽनोऽश्मायसो जातिनाम्नोः ॥ ७ । ३ । ११५ ॥
सरस् अनस् अश्मन् अयस् इत्येतदन्तात्तत्पुरुषादट् समासान्तो भवति जातावभिधेयायां नाम्नि च विषये । इदं च *यथासंभवं विशेषणम् । जातसरसम् ।
मण्डूकसरसम् । एवंनाम्नी सरसी । मण्डूकसरसमिति जातिरित्येके । उपानसमिति अन्नविशेषस्य संज्ञा जातिर्वा । *महानसं पाकस्थानस्य संज्ञा । राज्ञ
उपस्थितमित्येके । ᵎगोनस जातिः। स्थूलाश्मः अमृताश्मः कनकाश्मः। अश्मजातिविशेषा एत। पिण्डाश्मः संज्ञा जातिर्वा। कालायसम् लोहितायसम् तीक्ष्णायसम्।
अयो जातिविशेषा एते। लोहितायसमिति नामेत्येके। जातिनाम्नोरिति किम्। परमसरः। सदनः। सदश्मा। कथं बिन्दुसरः वक्रसर इति । नैषा संज्ञा। । रूढ्या
ह्यत्र संज्ञाविज्ञानं शूर्पनखीवत् ॥ ११५ ॥ अह्नः ॥ ७ । ३ । ११६ ॥ अहन्शब्दान्तात्तत्पुरुषादट् समासान्तो भवति। परमाहः। उत्तमाहः। एकाहम् । पुण्याहम्।
सुदिनाहम् ॥ ११६ ॥ ᵎसंख्याताद‍ह्नश्च वा ॥ ७ । ३ । ११७ ॥ संख्यातशब्दात्परो योऽहन्शब्दस्तदन्तात्तत्पुरुषादट् समासान्तो भवति तस्य चाहन्शब्दस्याह्ना-
देशो वा भवति । संख्यातमहः संख्याताह्नः संख्याताहः । अह्नादेशार्थं वचनम् । अट् तु पूर्वेणैव सिद्धः । चकार उत्तरत्राह्नादेशस्याट्संनियोगशिष्टत्वार्थः ।
अन्यथा ह्यटोऽपवादोᵎऽह्नादेशो विज्ञायेत। तथा च स्त्रियां ङीर्न स्यात् ॥ ११७ ॥ सर्वांशसंख्याव्ययात् ॥ ७।३। ११८ ॥ सर्वशब्दादंश एकदेशस्तद्वाचिभ्यः
संख्यावाचिभ्योऽव्ययेभ्यश्च परो योऽहन्शब्दस्तदन्तात् तत्पुरुषादट् समासान्तो भवति तस्य चाहन्शब्दस्य नित्यमह्नादेशो भवति । सर्वमहः सर्वाह्नः । अंश,
पूर्वाह्णः। अपराह्णः। मध्याह्नः। सायाह्नः। संख्या, द्वयोरह्नोर्भवः द्व्यह्नः पटः। द्व्यह्नी अष्टका । एवं त्र्यह्नः। त्र्यह्नी । द्वे अहनी प्रिये यस्य स द्व्यह्नप्रियः।
त्र्यह्नप्रियः। द्वे अहनी जातस्य द्व्यह्नजातः। त्र्यह्नजातः। अव्यय, अत्यह्नः । अत्यह्नी कथा । निरह्नः। निरह्नी वेला । व्यह्नः । व्यह्नी ॥ ११८ ॥
संख्यातैकपुण्यवर्षादीर्घाच्च रात्रेरत् ॥ ७ । ३ । ११९ ॥ संख्यात एक पुण्य वर्षा दीर्घ इत्येतेभ्यश्चकारात्सर्वांशादिभ्यश्च परो यो रात्रिशब्दस्तदन्तात्तत्पुरुषादत्
समासान्तो भवति। संख्याता रात्रिः संख्यातरात्रः। एकरात्रः। पुण्यरात्रः। वर्षाणां रात्रिः वर्षारात्रः। दीर्घरात्रः। सर्वरात्रः। अंश, पूर्वरात्रः। अपररात्रः। अर्धरात्रः।

॥—सरो—॥—यथासंभवमिति । क्वापि जातो
॥—व्याघ्रश्वादिवदिति । वचनसामर्थ्यान्मयूरव्यसकादित्वाद्वेत्यर्थ. । एतच्च ' प्राणिन उपमानात् ' इत्यत्र दर्शितमस्ति
क्वापि नाम्नि चेत्यर्थ ॥— महानसमिति । अन इवानः महच्च तदनश्च ॥—गोनसमिति । गवामन इव गोनसमहिजातिः । बाहुलकान्नपुंसक ॥—संख्या—॥—अह्नादेश

द्वितीयरात्रः । संख्या, द्वयो रात्र्योः समाहारः द्विरात्रः । त्रिरात्रः । द्वयो रात्र्योर्भवः द्विरात्रः । द्विरात्रा । त्रिरात्रः । त्रिरात्रा । द्विरात्रप्रियः । त्रिरात्रप्रियः । द्विरात्रजातः । त्रिरात्रजातः । अव्यय, अतिरात्रः । अतिरात्रा । नीरात्रः । नीरात्रा । एकग्रहणं संख्याग्रहणेनानेकस्याग्रहणार्थम् । तेन पूर्वसूत्रे संख्याशब्देनैकस्याग्रहणम् । एकमहः एकाहम् । अटि प्रकृतेऽत्वविधानं स्त्रियां ङ्यभावार्थम् ॥ ११९ ॥ **पुरुषायुषद्विस्तावत्रिस्तावम्** ॥ ७ । ३ । १२० ॥ एतेऽप्रत्ययान्तास्तत्पुरुषा निपात्यन्ते । पुरुषस्यायुः पुरुषायुषम् । द्विस्तावती द्विस्तावा । त्रिस्तावा वेदिः । वेद्यामनयोः प्रयोगः । अतीशब्दलोपो निपातनात् । प्रकृतौ यावती वेदिस्तावती द्विगुणा त्रिगुणा वा कस्यांचिद्विकृतौ भवति । प्रकृतिविकृती यागविशेषौ । अन्यत्रापि दृश्यते । द्विस्तावोऽग्निः । त्रिस्तावोऽग्निः ॥ १२० ॥ **श्वसो वसीयसः** ॥ ७ । ३ । १२१ ॥ श्वसः परो यो वसीयस्शब्दस्तदन्तात्तत्पुरुषादत्समासान्तो भवति । वसुमच्छब्दादीयसौ मतोरन्त्यस्वरादेश्च लोपे वसीयः । शोभनं वसीयः श्वोवसीयसं कल्याणम् ॥ १२१ ॥ **निसश्च श्रेयसः** ॥ ७ । ३ । १२२ ॥ निस्शब्दात् श्वस्शब्दाच्च परो यः श्रेयस्शब्दस्तदन्तात्तत्पुरुषादत् समासान्तो भवति । निश्चितं श्रेयः निःश्रेयसं निर्वाणम् । शोभनं श्रेयः श्वःश्रेयसम् ॥ १२२ ॥ *नञव्ययात्संख्याया डः ॥ ७ । ३ । १२३ ॥ नञोऽव्ययाच्च परो यः संख्याशब्दस्तदन्तात्तत्पुरुषात् डः समासान्तो भवति । न दश अदशाः । अनवाः । न्यूना दश न्यूना नव इत्यर्थः । नञ्पूर्वोऽयं वैकल्ये दृश्यते । अव्यय, निर्गतास्त्रिंशतोऽङ्गुलिभ्यः निस्त्रिंशः खड्गः । निस्त्रिंश इव क्रूरकर्मा निस्त्रिंशः खलः । त्रिंशतो निर्गतानि निस्त्रिंशानि वर्षाणि । निस्त्रिंशान्यहानि । निश्चत्वारिंशानि । निष्पञ्चाशानि । नञव्ययादिति किम् । गोत्रिंशत् । *नञ्ग्रहणं 'नञ्तत्पुरुषात्' (७-३-७१) 'इति प्रतिषेधे प्राप्ते प्रतिप्रसवार्थम् । संख्याया इति किम् । निःशक्रत् । तत्पुरुषादित्येव । न विद्यन्ते त्रयो यस्य सोऽत्रिः । शोभनास्त्रयो यस्य सुत्रिः निर्गतास्त्रिंशदस्य निस्त्रिंशत् । डित्वमन्त्यस्वरादिलोपार्थम् ॥ १२३ ॥ **संख्याव्ययादङ्गुलेः** ॥ ७ । ३ । १२४ ॥ संख्याया अव्ययाच्च परो योऽङ्गुलिशब्दस्तदन्तात्तत्पुरुषात् डः समासान्तो भवति । द्वयोरङ्गुल्योः समाहारः द्व्यङ्गुलम् । त्र्यङ्गुलम् । द्वे अङ्गुली प्रमाणमस्य मात्रट् तस्य लुप् । ततः समासान्तः । द्व्यङ्गुलम् । त्र्यङ्गुलम् । द्व्यङ्गुलप्रियः । त्र्यङ्गुलप्रियः । अव्यय, निरङ्गुलम् । अत्यङ्गुलम् । तत्पुरुषादित्येव । उपाङ्गुलि । पञ्चाङ्गुलिर्हस्तः । अनङ्गुलिः पुरुषः । कथमात्माङ्गुलं प्रमाणाङ्गुलम् उत्सेधाङ्गुलमिति । अङ्गुलशब्दः प्रमाणवाची प्रकृत्यन्तरम् । यथा 'स्वेनाङ्गुलप्रमाणेनाङ्गुलानां शतं पुमान्' । हस्तोऽङ्गुलविंशत्येति ॥ १२४ ॥ **बहुव्रीहेः काष्ठे टः** ॥ ७ । ३ । १२५ ॥ अङ्गुल्यन्ताद्बहुव्रीहेः काष्ठे वर्तमानात् टः समासान्तो भवति । द्वे अङ्गुली यस्य द्व्यङ्गुलम् । त्र्यङ्गुलं चतुरङ्गुलम् पञ्चाङ्गुलम् । अङ्गुलिसदृशावयवं धान्यकण्टकादीनां विक्षेपणकाष्ठमेवमुच्यते । बहुव्रीहेरिति किम् । उपाङ्गुलि । अत्यङ्गुला यष्टिः । काष्ठ इति किम् । पञ्चाङ्गुलिर्हस्तः । अङ्गुलेरिति निर्देशादङ्गुलीशब्दान्तान्न भवति । द्वावङ्गुलीसदृशाववयवौ यस्य तत् द्व्यङ्गुलीकम् दारु । 'न कपि' (२-४-१०४) इति ह्रस्वाभावः । टकारो ङ्यर्थः । दीर्घाङ्गुली ।

इति । 'अतोऽहस्य-' इति 'सख्यासायने-' इति च ज्ञापकान्न प्रत्ययशङ्का-॥—नञ—॥ —नञ्ग्रहणमिति । अव्ययद्वारेणापि सिद्धे

तीक्ष्णाङ्गुली यष्टिः ॥ १२५ ॥ *सक्थ्यक्ष्णः स्वाङ्गे ॥ ७ । ३ । १२६ ॥ स्वाङ्गवाची यः सक्थिशब्दोऽक्षिशब्दश्च तदन्ताद्बहुव्रीहेष्टः समासान्तो भवति । दीर्घं सक्थि यस्य दीर्घसक्थः । दीर्घसक्थी । गौरसक्थः । गौरसक्थी । विशालाक्षः । विशालाक्षी । कमलाक्षः । कमलाक्षी । स्वक्षः । स्वक्षी । सक्थ्यक्ष्ण इति किम् । सुबाहुः । दीर्घजानुः । स्वाङ्ग इति किम् । दीर्घसक्थि शकटम् । *स्थूलास्थिरिक्षुः । बहुव्रीहेरित्येव । परमसक्थि । सदक्षि ॥ १२६ ॥ द्वित्रेर्मूर्ध्नो वा ॥ ७ । ३ । १२७ ॥ द्वि त्रि इत्येताभ्यां परो यो मूर्धन्शब्दस्तदन्ताद्बहुव्रीहेष्टः समासान्तो वा भवति । द्विमूर्धः । द्विमूर्धा । त्रिमूर्धः । त्रिमूर्धा । द्विमूर्धी स्त्री । बहुव्रीहेरित्येव । द्वयोर्मूर्धा द्विमूर्धा ॥ १२७ ॥ *प्रमाणीसंख्याड्डः ॥ ७ । ३ । १२८ ॥ प्रमाणीशब्दान्तात्संख्यावाचिशब्दान्ताच्च बहुव्रीहेर्डः समासान्तो भवति । स्त्री प्रमाणी येषां ते स्त्रीप्रमाणाः कुटुम्बिनः । भार्याप्रमाणाः श्रेणयः । कल्याणी प्रमाण्यस्य कल्याणप्रमाण. । संख्या, द्वौ वा त्रयो वा द्वित्राः । पञ्चषाः । द्विदशाः त्रिदशाः । आसन्नदशाः । अदूरदशाः । अधिकदशाः । उपदशाः । उपगणाः । प्रमाणशब्देन सिद्धे प्रमाणीशब्दान्तात्कजभावार्थं वचनम् । संख्यान्तस्य प्रतिपदोक्तस्य बहुव्रीहेर्ग्रहणादिह न भवति । *आत्रिः । सुत्रिः । प्रियपञ्चानः । *प्रियपषः । बहुव्रीहेरित्येव । द्वादश । त्रयोदश ॥ १२८ ॥ सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदभद्रपदम् ॥ ७ । ३ । १२९ ॥ सुप्रातादयो बहुव्रीहयो डप्रत्ययान्ता निपात्यन्ते । शोभनं कर्म प्रातरस्य सुप्रातः । शोभनं कर्म श्वोऽस्य सुश्वः । शोभनं कर्म दिवाऽस्य सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रोऽश्रयो यस्य चतुरश्रः । एण्या इव पादावस्य एणीपदः । एवमजपदः । प्रोष्ठौ गौस्तस्येव पादावस्य प्रोष्ठपदः । भद्रौ पादावस्यः भद्रपदः । निपातनात्पद्भावो विषयव्यवस्था च भवति ॥ १२९ ॥ पूरणीभ्यस्तत्प्राधान्येऽप् ॥ ७ । ३ । १३० ॥ पूरणप्रत्ययान्तः स्त्रीलिङ्गशब्दः पूरणी तदन्ताद्बहुव्रीहेरप् समासान्तो भवति तत्प्राधान्ये तस्याः पूरण्याः प्राधान्ये । समासेनाभिधीयमानो ह्यर्थः प्रधानं भवति । कल्याणी पञ्चमी रात्रिर्यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः । अत्र रात्रयः समासार्थः । तासु पञ्चम्यपि रात्रित्वेनानुप्रविष्टेति प्रधानम् । एवं कल्याणीदशमाः । कल्याणीतुर्याः । कल्याणीतुरीयाः । कल्याणीद्वितीयाः । कल्याणीतृतीयाः । पूरणीभ्य इति किम् । द्वितीया गार्यो कल्याणी यासां भार्याणां ता द्वितीयाकल्याणीकाः । स्त्रीत्वनिर्देशः किम् । कल्याणपञ्चमका दिवसाः । कल्याणद्वितीयकान्यहानि । बहुवचनं व्याप्त्यर्थम् । तेन कल्याणीपञ्चमा रात्रय इत्यत्र 'ऋन्नित्यदितः' (७-३-१७१) इति परोऽपि कच् न भवति । तत्प्राधान्य इति किम् । कल्याणपञ्चमीकः पक्षः । पकारो 'नप्प्रियादौ' (३-२-५३) इति पर्युदासार्थः ॥ १३० ॥ *नञ्सुव्युपत्रेश्चतुरः ॥ ७ । ३ । १३१ ॥ नञ् सु वि उप त्रि इत्येतेभ्यः परो यश्चतुःशब्दस्तदन्ताद् बहुव्रीहेरप् समासान्तो भवति । अविद्यमानानि अदृश्यानि

॥—सक्थ्य-॥-स्थूलाक्षिरिक्षुरिति । समासान्तविधेरनित्यत्वात् 'अक्ष्णोऽप्राण्यङ्गे' इत्यनेनापि न भवति ॥-प्रमा-॥-आत्रिरिति तत्र संख्यावाचिना नाम्ना संख्येयेऽन्यपदार्थे इति व्याख्यानात् 'अव्ययम्' इति न समासः । अत्र तूत्तरपदं संख्येयवाचि॥-प्रियपष इति । स्त्रीत्वेऽपि 'ङ्यापः-' इति ह्रस्वः । अन्यथा पप उपादानानुपादानयोरविशेष इति लिङ्गानुशासने षण्मता संख्येत्यत्रानुपपन्नं स्यात् ॥-नञ्सु-॥ अत्र सामान्यो बहुव्रीहिः । प्रतिपदोक्तग्रहणे तु 'एकार्थं चानेकं च' इति चकारेण विधीयमाने बहुव्रीहौ अचतुर इत्यादयो न स्युः ॥

वा चत्वारि यस्य सोऽचतुरः । सुदृशानि शोभनानि वा चत्वारि यस्य सुचतुरः । विसदृशानि विगतानि वा चत्वारि यस्य विचतुरः । चत्वारः समीपे येषां संख्येयानां ते उपचतुराः । त्रयो वा चत्वारो वा त्रिचतुराः । समासान्तविधेरनित्यत्वादिह न भवति । त्रयश्चत्वारो यस्य स त्रिचत्वा उन्मुग्धः । उपगताश्चत्वारो येन स उपचत्वाः ॥ १३१ ॥ **अन्तर्बहिर्भ्यां लोम्नः** ॥ ७ । ३ । १३२ ॥ अन्तर् बहिस् इत्येताभ्यां परो यो लोमन्शब्दस्तदन्ताद्बहुव्रीहेरप् समासान्तो भवति । अन्तर्लोमान्यस्य अन्तर्लोमः । बहिर्लोमः प्रावारः ॥ १३२ ॥ **भान्नेतुः** ॥ ७ । ३ । १३३ ॥ भान्नक्षत्रवाचिनः परो यो नेतृशब्दस्तदन्ताद्बहुव्रीहेरप् समासान्तो भवति । मृगो नेता आसां मृगनेत्रा रात्रयः । पुष्यनेत्राः । भादिति किम् । देवदत्तनेतृकः । नेत्रशब्देनैव सिद्धे नेतृशब्दात्कच् मा भूदिति वचनम् ॥ १३३ ॥ **नाभेर्नाम्नि** ॥ ७।३।१३४॥ नाभ्यन्ताद्बहुव्रीहेरप् समासान्तो भवति नाम्नि अनेन चेत् संज्ञा गम्यते । पद्मनाभः । ऊर्णनाभः । हेमनाभः । वज्रनाभः । हिरण्यनाभः । नाम्नीति किम् । विकसितवारिजनाभिः । अधोनाभं प्रहृतवानिति अव्ययीभावेऽपि तिष्ठद्ग्वादिषु तथापाठात् सिद्धम् ॥ १३४ ॥ *नञ्बहोर्ऋचो माणवचरणे ॥ ७ । ३ । १३५॥ नञ् बहु इत्येताभ्यां परो य ऋच्शब्दस्तदन्ताद्बहुव्रीहेरप् समासान्तो भवति यथासंख्यं माणवे चरणे च वाच्ये । न विद्यन्ते ऋचोऽस्य अनृचो माणवः । बह्वृचश्चरणः । माणवचरण इति किम् । अनृक्कं साम । बह्वृक्कं सूक्तम् । ‘ ऋक्पूःपथ्यपोऽत् ’ ( ७-३-७६ ) इत्येव सिद्धे *नियमार्थं वचनम् ॥ १३५ ॥ ***नञ्सुदुर्भ्यः सक्तिसक्थिहलेर्वा** ॥ ७ । ३ । १३६ ॥ नञ् सु दुर् इत्येतेभ्यः परे ये सक्तिसक्थिहलिशब्दास्तदन्ताद्बहुव्रीहेरप् समासान्तो भवति वा । सञ्जनं सक्तिः । अविद्यमाना सक्तिरस्य असक्तः । असक्तिः । सुसक्तः । सुसक्तिः । दुःसक्तः । दुःसक्तिः । असक्थः । असक्थिः । सुसक्थः । सुसक्थिः । दुःसक्थः । दुःसक्थिः । अहलः । अहलिः । सुहलः । सुहलिः । दुर्हलः । दुर्हलिः । नञ्सुदुर्भ्य इति किम् । गौरसक्थी स्त्री । दीर्घसक्थि शकटम् । बहुहलिः पुरुषः । हलसक्त-शब्दाभ्यां सिद्धे *कजभावार्थं वचनम् । तेन न विद्यते हलमस्य अहलक इत्यादि न भवति । सक्तिशब्दान्नेच्छन्त्यन्ये । वचनभेदो यथासंख्यनिवृत्त्यर्थः ॥ १३६ ॥ **प्रजाया अस्** ॥ ७ । ३ । १३७ ॥ नञादिभ्यः परो यः प्रजाशब्दस्तदन्ताद्बहुव्रीहेरस् समासान्तो भवति । अविद्यमानाः प्रजा अस्य अप्रजाः । अप्रजसौ । अप्रजसः । एवं सुप्रजसौ । दुष्प्रजसौ ॥ १३७ ॥ **मन्दाल्पाच्च मेधायाः** ॥ ७ । ३ । १३८ ॥ मन्द अल्प इत्येताभ्यां नञादिभ्यश्च परो यो मेधाशब्दस्तदन्ताद्बहुव्रीहेरस् समासान्तो भवति । मन्दा मेधास्य मन्दमेधाः । मन्दमेधसौ । मन्दमेधसः । एवमल्पमेधाः अमेधाः सुमेधाः दुर्मेधाः ॥ १३८ ॥ ***जातेरीयः सामान्यवति** ॥ ७ । ३ । १३९ ॥

---

—नञ्बहो—॥—नियमार्थमिति । उभयथापि नियम ॥—नञ्सु—॥—कजभावार्थमिति । अत्राहल इति साध्य तच्च हलशब्दस्यापि सिध्यति इति सिद्धौ सत्यां यत् हलिशब्दो पादान तज्ज्ञापयति हलादपि कच्न भवति । हलिं प्रति तु विचाराशङ्कापि न तेन हल्यन्ताद्वैकल्पिक कज्भवति ॥—जाते—॥यदि सामान्यवतीद विधानं कथम् अजातीय इति । अत्र हि

ऽनुवृत्त्यर्थः ॥ १५२ ॥ श्यावारोकाद्वा ॥ ७ । ३ । १५३ ॥ श्याव अरोक इत्येताभ्यां परो यो दन्तशब्दस्तस्य बहुव्रीहौ दत्रादेशः समासान्तो वा भवति नाम्नि संज्ञायां विषये । श्यावाः कपिशा दन्ता अस्य श्यावदन् । श्यावदन्तः । अरोका निर्दीप्तयो निश्छिद्रा वा दन्ता अस्य अरोकदन् । अरोकदन्तः । नाम्नीत्येव । श्यावदन्तः । अरोकदन्तः ॥ १५३ ॥ वाग्रान्तशुद्धशुभ्रवृषवराहाहिमूषिकाशिखरात् ॥ ७ । ३ । १५४ ॥ अग्रान्तेभ्यः शुद्ध शुभ्र वृष वराह अहि मूषिक शिखर इत्येतेभ्यश्च परो यो दन्तशब्दस्तस्य बहुव्रीहौ दत्रादेशः समासान्तो वा भवति । कुड्मलाग्रमिव दन्ता अस्य कुड्मलाग्रदन् । कुड्मलाग्रदन्तः।शिखराग्रा दन्ता अस्य शिखराग्रदन् । शिखराग्रदन्तः । शुद्धा दन्ता अस्य शुद्धदन् । शुद्धदन्तः । शुभ्रदन् । शुभ्रदन्तः । वृषस्येव दन्ता अस्य वृषदन् । वृषदन्तः । एवं वराहदन् । वराहदन्तः । अहिदन् । अहिदन्तः । मूषिकदन् । मूषिकदन्तः । शिखरदन् । शिखरदन्तः । योगविभागान्नाम्नीति निवृत्तम् ॥ १५४ ॥ संप्राज्जानोर्ज्ञुज्ञौ ॥ ७ । ३ । १५५ । संप्र इत्येताभ्यां परस्य जानुशब्दस्य बहुव्रीहौ ज्ञु ज्ञ इत्येतावादेशौ समासान्तौ भवतः। संगते जानुनी अस्य संज्ञुः । संज्ञः । प्रगते प्रवृद्धे प्रणते प्रकृष्टे वा जानुनी अस्य प्रज्ञुः प्रज्ञः। संप्रादिति किम् । विजानुः । वचनभेदाद्यथासंख्याभावः ॥ १५५ ॥ वोर्ध्वात् ॥ ७ । ३ । १५६॥ ऊर्ध्वशब्दात्परो यो जानुशब्दस्तस्य बहुव्रीहौ ज्ञु ज्ञ इत्येतावादेशौ समासान्तौ वा भवतः । ऊर्ध्वे जानुनी अस्य ऊर्ध्वज्ञुः । ऊर्ध्वज्ञः । ऊर्ध्वजानुः ॥ १५६ ॥ सुहृद्दुर्हृन्मित्रामित्रे ॥ ७ । ३ । १५७ ॥ सुहृत् दुर्हृदिति सुपूर्वस्य दुष्पूर्वस्य च हृदयशब्दस्य बहुव्रीहौ यथासंख्यं मित्रे सख्यौ अमित्रे शत्रौ चाभिधेये हृदित्ययमादेशः समासान्तो निपात्यते । शोभनं हृदयं यस्य सुहृन्मित्रम् । दुर्हृदमित्रः । मित्रामित्र इति किम् । सुहृदयो मुनिः । दुर्हृदयो व्याधः ॥ १५७ ॥ धनुषो धन्वन् ॥ ७ । ३ । १५८ ॥ धनुःशब्दस्य बहुव्रीहौ धन्वन् इत्ययमादेशः समासान्तो भवति । शार्ङ्गं धनुरस्य शार्ङ्गधन्वा । पिनाकधन्वा।अजकावधन्वा । गाण्डीवधन्वा । कथं गाण्डीवधनुषः खेभ्यो निश्चचार हुताशनः इति । संज्ञात्वविवक्षायामुत्तरेण विकल्पो भविष्यति ॥ १५८ ॥ वा नाम्नि ॥ ७ । ३ । १५९ ॥ धनुस्शब्दस्य बहुव्रीहौ धन्वन्नित्ययमादेशः समासान्तो वा भवति नाम्नि संज्ञायां विषये । शतधन्वा । शतधनुः । पुष्पधन्वा । पुष्पधनुः ॥ १५९ ॥ खरखुरान्नासिकाया नस् ॥ ७ । ३ । १६० ॥ खर खुर इत्येताभ्यां परस्य नासिकाशब्दस्य बहुव्रीहौ नस् इत्ययमादेशः समासान्तो भवति नाम्नि । खरा खरस्येव वा नासिका अस्य खरणाः । खरणसौ । खुर इव नासिकास्य खुरणाः । खुरणसौ । 'पूर्वपदस्थान्नाम्न्यगः' (२-३-६५) इति णत्वम् । नाम्नीत्येव । खरनासिकः । खुरनासिकः ॥ १६० ॥ *अस्थूलाच्च नसः ॥ ७ । ३ । १६१॥ स्थूलशब्दवर्जितात्पूर्वपदात्खरखुरशब्दाभ्यां च परस्य नासिकाशब्दस्य बहुव्रीहौ नस इत्ययमादेशः समासान्तो भवति नाम्नि । द्रुरिव नासिकास्य द्रुणसः । वार्ध्रीव नासिकास्य *वार्ध्रीणसः । 'तद्धितः स्वर'-(३-२-५५) इत्यादिना पुंवद्भावाभावः । गोरिव नासिकास्य गोनसः । कुम्भीनसः । खरणसः । खुरणसः । अस्थूलादिति किम् । स्थूलनासिकः । नाम्नीत्येव । तुङ्गा नासि-

—अस्थू—॥—वार्ध्रीणस इति ॥ वर्ध्रस्येयं रज्जुरिति रज्जुविशेषणेन वार्ध्रीशब्दः परतः स्त्रीति पुंभावप्राप्तिः । तद्वत्सिरस्थिर्नासा अस्य ॥

कास्य तुङ्गनासिकः ॥ कथं गोनासः । यथास्ति नासाशब्देन भविष्यति । चकारः पूर्वेणास्य बाधानिवृत्त्यर्थः ॥ १६१ ॥ उपसर्गात् ॥ ७ । ३ । १६२ ॥ धातुयोगे यः प्रादिरुपसर्गसंज्ञो भवति तस्मात्परस्य नासिकाशब्दस्य बहुव्रीहौ नस इत्ययमादेशः समासान्तो भवति । प्रगता प्रवृद्धा वा नासिका अस्य प्रणसं मुखम् । 'नसस्य' ( २-३-६६ ) इति णः । उन्नता उद्गता वा नासिकास्य उन्नसं मुखम् । असंज्ञार्थं वचनम् ॥ १६२ ॥ वेः खुख्रग्रम् ॥ ७ । ३ । १६३ ॥ विशब्दादुपसर्गात्परस्य नासिकाशब्दस्य बहुव्रीहौ खुख्रग्र इत्येते आदेशाः समासान्ता भवन्ति । विगता नासिकास्य विखुः विख्रः । विग्रः । उपसर्गादित्येव । वेः पक्षिण इव नासिकास्य विनासिकः ॥ १६३ ॥ जायाया जानिः ॥ ७ । ३ । १६४ ॥ जायाशब्दस्य बहुव्रीहौ जानिरित्ययमादेशः समासान्तो भवति । युवतिर्जाया अस्य युवजानिः । प्रियजानिः । शोभनजानिः । वधूजानिः । अनन्यजानिः ॥ १६४ ॥ व्युदः काकुदस्य लुक् ॥ ७ । ३ । १६५ ॥ वि उद् इत्येताभ्यां परस्य काकुदशब्दस्य बहुव्रीहौ लुक् समासान्तो भवति । विगतं काकुदं तालुवस्य विकाकुत् । उत्काकुत् ॥ १६५ ॥ पूर्णाद्वा ॥ ७ । ३ । १६६ ॥ पूर्णशब्दात्परस्य काकुदशब्दस्य बहुव्रीहौ लुक् समासान्तो वा भवति । पूर्णं काकुदमस्य पूर्णकाकुत् । पूर्णकाकुदः । पूर्णादिति किम् । रक्तकाकुदः ॥ १६६ ॥ ककुदस्यावस्थायाम् ॥ ७ । ३ । १६७ ॥ अवस्था वयः । ककुदशब्दस्य बहुव्रीहावस्थाया गम्यमानायां लुक् समासान्तो भवति । न संजातं ककुदमस्य असंजातककुद्बालः । पूर्णककुद् युवा । स्थूलककुद्बलवान् । यष्टिककुद् । नातिस्थूलो नातिकृशः । सन्नककुद् कृशः । पन्नककुद्वृद्धः । अवस्थायामिति किम् । श्वेतककुदः । ककुच्छब्देनैव सिद्धे ककुदशब्दस्यास्मिन्विषये प्रयोगनिवृत्त्यर्थं वचनम् ॥ १६७ ॥ त्रिककुद्गिरौ ॥ ७ । ३ । १६८ ॥ गिरौ पर्वतेऽभिधेये ककुदशब्दस्य त्रिशब्दात्परस्य बहुव्रीहौ ककुदादेशः समासान्तो निपात्यते । त्रीणि ककुदानि ककुदाकाराणि शिखराण्यस्य त्रिककुत्पर्वतः । त्रेर्गिराविति सिद्धे निपातनं गिरिविशेषप्रतिपत्त्यर्थम् । तेनान्यस्मिन् त्रिककुद इत्येव भवति ॥ १६८ ॥ स्त्रियामूधसो न् ॥ ७ । ३ । १६९ ॥ स्त्रियां वर्तमानस्य ऊधस्शब्दस्य बहुव्रीहौ नकारादेशः समासान्तो भवति । कुण्डमिवोधोऽस्याः कुण्डोध्नी । घटोध्नी । पीवरमूधोऽस्याः पीवरोध्नी । महोध्नी गौः । स्त्रियामिति किम् । महोधाः पर्जन्यः । बहुव्रीहेरित्येव । ऊधः प्राप्ता प्राप्तोधा गौः ॥ १६९ ॥ इनः कच् ॥ ७ । ३ । १७० ॥ इन्नन्ताद्बहुव्रीहेः स्त्रियां वर्तमानात्कच् प्रत्ययः समासान्तो भवति । बहवो दण्डिनोऽस्यां बहुदण्डिका । बहुच्छत्रिका सेना । बहुरासभरात्रिका शाला । 'अनिनस्मनग्रहणान्यर्थवतानर्थकेन च तदन्तविधिं प्रयोजयन्ति । बहुस्वामिका बहुवाग्मिका पुरी । स्त्रियामित्येव । बहुदन्डी बहुदण्डिको राजा । चकारो 'न कचि' ( २-४-१०४ ) इति विशेषणार्थः ॥ १७० ॥ ऋन्नित्यदितः ॥ ७ । ३ । १७१ ॥ ऋकारान्तान्नित्यं दिदादेशो यस्मात्तदन्ताच्च बहुव्रीहेः कच् समासान्तो भवति । ऋत्, बहुकर्तृकः । बहुहर्तृकः । नित्यदित्, बहुकुमारीकः । बहुब्रह्मबन्धूको ग्रामः । नित्यग्रहणं किम् । पृथुश्रीः पृथुश्रीकः । लम्बभ्रूः । लम्बभ्रूकः । पूर्वत्र स्त्रियां विधिरिति योगविभागः । केचिन्नित्यदितां ङ्यूङन्तानामेव कचमिच्छन्ति । तन्मते बहुतन्त्रीः बहुतन्त्रीक इति 'शेषाद्वा' ( ७-३-१७५ ) इति विकल्पः ॥ १७१ ॥

दध्युरःसर्पिर्मधूपानच्छालेः ॥ ७ । ३ । १७२ ॥ दधि उरस् सर्पिस् मधु उपानह् शालि इत्येतदन्ताद्बहुव्रीहेः कच् समासान्तो भवति । प्रियदधिकः । प्रियोरस्कः । प्रियसर्पिष्कः । प्रियमधुकः । प्रियोपानत्कः । प्रियशालिकः ॥ १७२ ॥ *पुमनडुन्नौपयोलक्ष्म्या एकत्वे ॥ ७ । ३ । १७३ ॥ एकत्वविषये पुम्स् अनडुह् नौ पयस् लक्ष्मी शब्दास्तदन्ताद्बहुव्रीहेः कच् समासान्तो भवति । प्रियः पुमानस्य प्रियपुंस्कः । प्रियानडुत्कः । प्रियनौकः । प्रियपयस्कः । प्रियलक्ष्मीकः । एकत्व इति किम् । द्विपुमान् द्विपुस्कः। वह्वनड्वान् । वहनडुत्कः । वहुनौः । वहुनौकः। वहुपयाः। वहुपयस्कः। वहुलक्ष्मीः। वहूलक्ष्मीकः । 'शेपाद्वा' (७-३-१७५) इति विकल्पः । केचिल्लक्ष्मीशब्दात् द्वित्वबहुत्वयोरपि नित्यं कचमिच्छन्ति । अपरे तुल्ययोगेऽपि । सलक्ष्मीको विनाशितः ॥ १७३ ॥ नञोऽर्थात् ॥ ७ । ३ । १७४ ॥ नञः परो योऽर्थशब्दस्तदन्ताद्बहुव्रीहेः कच् समासान्तो भवति । न विद्यतेऽर्थो यस्यानर्थकं वचः। नञ इति किम् । अपार्थम् । अपार्थकम् ॥ १७४ ॥ शेषाद्वा ॥ ७ । ३ । १७५ । यस्माद्बहुव्रीहेः समासान्तः प्रत्यय आदेशो वा न विहितस्तस्माच्छेपात् कच् प्रत्ययः समासान्तो वा भवति । वह्व्यः खट्वा अस्मिन् बहुखट्वकः । वहुखट्वः । वहुमालकः । वहूमालः । वहुवीणकः । वहुवीणः । शेपादिति किम् । प्रियपथः । प्रियधुरः । व्याघ्रपाद् । सिंहपाद् । असति शेपग्रहणे पक्षे परत्वात् कच् स्यात् ॥ १७५ ॥ न नाम्नि ॥ ७ । ३ । १७६ ॥ नाम्नि संज्ञायां विपये कच् समासान्तो न भवति । बहुदेवदत्तः । विश्वदेवदत्तः । वहुविष्णुमित्रः । विश्वविष्णुमित्रः । एवंनामानो ग्रामाः ॥ विश्वदेवः । विश्वयशाः । एवंनामानौ पुरुषौ । पञ्चश्रीः । एवंनामा स्त्री । श्वेताश्वतरिः स्त्री पुरुषो वा ॥ १७६ ॥ ईयसोः ॥ ७ । ३ । १७७ ॥ ईयस्वन्तात्समासात्कच् समासान्तो न भवति । वहुश्रेयान् । वहुप्रेयान् । लिङ्गविशिष्टस्यापि ग्रहणात् वहुश्रेयसी । वहुप्रेयसी ॥ १७७ ॥ *सहात्तुल्ययोगे ॥ ७ । ३ । १७८ । तुल्ययोगे यः सहशब्दः सामर्थ्यात्तदादेर्बहुव्रीहेः कच् समासान्तो न भवति । तुल्ययोगो *वर्तिपदार्थस्य पुत्रादेर्वृत्त्यर्थेन पित्रादिना सह क्रियागुणजातिद्रव्यैः साधारणः संवन्धः । सपुत्र आगतः । सपुत्रः स्थूलः । सपुत्रो ब्राह्मणः । सपुत्रो गोमान् । सहादिति किम् । श्वेताश्वको देवदत्त आगतः । तुल्ययोग इति किम् । सह विद्यमानानि लोमान्यस्य सलोमकः । सपक्षकः । सकर्मकः ॥ १७८ ॥ भ्रातुः स्तुतौ ॥ ७ । ३ । १७९ ॥ भ्रात्रन्तात्समासात्कच् समासान्तो न भवति स्तुतौ भ्रातुः समासार्थस्य वा प्रशंसायां गम्यमानायाम् । शोभनो भ्रातास्य सुभ्राता । कल्याणभ्राता । प्रियभ्राता । वहुभ्राता । भ्रातुरिति किम् । सुमातृकः । स्तुताविति किम् । मूर्खभ्रातृकः ॥ १७९ ॥ *नाडीतन्त्रीभ्यां स्वाङ्गे ॥ ७ । ३ । १८० ॥ स्वाङ्गे यो नाडीतन्त्रीशब्दौ तदन्तात्समासात्कच् समासान्तो न भवति । वह्व्यो नाड्यो यस्मिन् वहुनाडिः कायः । बहुतन्त्रीर्ग्रीवा । तन्त्रीर्धमनिः । ङ्याद्यन्ताभावाद्ध्रस्वो न भवति । स्वाङ्ग इति किम् । वहुनाडीकः स्तम्बः । वहुतन्त्रीका वीणा । अन्ये त्वाहुर्न पारिभाषिकं स्वाङ्गमिह गृह्यते किंतु स्वमात्मीयमङ्गं स्वाङ्गम् । *आत्मा चेह *अन्यपदार्थः तस्याङ्गमवयवस्तस्मिन्निति । तेषां

-पुम--॥--तुल्ययोगेपीति । स्वमते तु 'सहात्तुल्ययोगे' इति निषेधात्कच भवति॥— सहा--॥--वर्त्तिपदार्थस्येति । वर्त्तन्ते 'पूर्वपदोत्तरपदान्यस्मिन् ' विदिवृत्तेर्वाङ्गः' वर्धि. समासस्तस्य पदानि तेषामर्थः॥—-नाडी-॥-— आत्मा चेहेति । ननु स्वमात्मीयमङ्ग स्वाङ्गमित्युक्त ततश्च कोऽसावात्मेत्याह—अन्येति ॥

बहुनाडिः स्तम्बः बहुतन्त्रीर्वीणा । प्रत्युदाहरणं तु बहुनाडीकः कुविन्दः बहुतन्त्रीको नटः ॥ १८० ॥ निष्प्रवाणिः ॥७।३। १८१ ॥ निष्प्रवाणिरिति कजभावो निपात्यते । प्रोयतेऽस्यामिति प्रवाणी तन्तुवायशलाका सा निर्गतास्मादिति निष्प्रवाणिः कम्बलः । निष्प्रवाणिः पटः । तन्त्रादचिरोद्धृत इत्यर्थः । 'गोश्चान्ते ह्रस्वः'—( २-४-९६ ) इत्यादिना ह्रस्वः । ऊयते अस्यामिति वानिः । प्रभृता वानिः प्रवाणिः । सा निर्गता तन्तुभ्योऽस्येति निष्प्रवाणिः सदश इत्येके । निर्गतः प्रवाण्या निष्प्रवाणिरिति तत्पुरुषेण सिद्धे बहुव्रीहौ कच् मा भूदिति वचनम् ॥ १८१ ॥ *सुभ्र्वादिभ्यः ॥ ७ । ३ । १८२ ॥ सुभ्रु इत्येवमादिभ्यः कच् समासान्तो न भवति । *सुभ्रूः । लेखाभ्रूः । शलाकाभ्रूः । कोमलोरूः । संहितोरूः । वरोरूः । पीवरोरूः । जातिवचनत्वादूङन्ता एते । एवं हि आमन्त्र्ये सौ ह्रस्वो भवति । हे सुभ्रु । हे वरोरु । बहुवचनमाकृतिगणार्थम् । तेन करभोरूः संहितोरूः इत्यादयोऽपि भवन्ति ॥ १८२ ॥ इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनबृहद्वृत्तौ सप्तमस्याध्यायस्य तृतीयः पादः ॥ ७ । ३ ॥ अयमवनिपतीन्दो मालवेन्द्रावरोधस्तनकलशपवित्रां पत्रवल्लीं लुनातु ॥ कथमखिलमहीभृन्मौलिमाणिक्यभेदे घटयति पाटिमानं भग्नधारस्तवासिः ॥ १ ॥

---

—सुभ्र्वा—॥—सुभ्रूरिति । शोभन भ्रु भ्रमण यस्या अत्र ऊङ 'शेषाद्वा' इति काचि प्राप्ते प्रतिषेध' । न च ऊङयप्यानीते नित्यदिद्द्वारेण कच्प्रसङ्गः तत्रोत्तरपदस्थस्यैव नित्यदित्त्वग्रहणात् । ननु 'उतोऽप्राणिनश्च–' इत्यत्र उङ् इत्येव विधीयता कि दीर्घनिर्देशेन । सत्यम् । ऊङ् ऊकारान्त एव भवति न तद्विषये प्रत्ययान्तरम् । एवं तर्हि दीर्घनिर्देशादेव कच् न भविष्यति किं निषेधकरणेन । सत्यम् । शोभने भ्रुवौ यस्या सा सुभ्रूरिति 'शेषाद्वा' इति पक्षेऽपि कच् न भवति इति प्रतिषेधकरण सार्थकम् । सुभ्रु इत्येवमादिभ्य इति तु विवरण विशेषव्याख्यानानपेक्षया कृतम् ॥ इत्याचार्य० सप्तमस्याध्यायस्य तृतीय पादः ॥——॥

# ॥ चतुर्थः पादः ॥



*वृद्धिः स्वरेष्वादेञ्णिति तद्धिते ॥ ७ । ४ । १ ॥ ञिति णिति च तद्धिते प्रत्यये परे पूर्वो यः प्रकृतिभागस्तस्य स्वरेषु स्वराणां मध्ये य आदिः स्वरस्तस्य वृद्धिरादेशो भवति । ञिति, दाक्षिः । प्लाक्षिः । कार्ष्णिः । नैचाकविः । चौलिः । णिति, कापटवः । भार्गवः । शैवः । औपगवः । श्रीर्देवता अस्य श्रायः स्थालीपाकः । एवं ह्रायः । स्वरेष्विति व्यञ्जनापेक्षाव्युदासार्थम् । तेन व्यञ्जनादेरपि भवति । ञ्णितीति किम् । शङ्कव्यं दारु । तद्धित इति किम् । चिकीर्षकः ॥ १ ॥ केकयमित्रयुप्रलयस्य यादेरिय् च ॥ ७ । ४ । २॥ केकयमित्रयुप्रलय इत्येतेषां ञ्णिति तद्धिते परे स्वरेष्वादेः स्वरस्य वृद्धिर्यादेश्च शब्दरूपस्य इयादेशो भवति । केकयस्यापत्यं कैकेयः । 'राष्ट्रक्षत्रियात्'—(६-१-११४) इत्यादिनाञ् । मित्रयोर्भावः मैत्रेयिकया श्लाघते । 'गोत्रचरण'—(७-१-७५) इत्यादिनाकञ् । प्रलयादागतं प्रालेयं हिमम् । 'तत आगते' (६-३-१४८) इत्यण् । ञ्णितीत्येव । केकयत्वम् ॥ २ ॥ *देविकाशिंशपादीर्घसत्रश्रेयसस्तत्प्रासावाः ॥ ७ । ४ । ३ ॥ देविकाशिंशपादीर्घसत्रश्रेयस् इत्येतेषां स्वरेष्वादेः स्वरस्य ञ्णिति तद्धिते निमित्ते तत्प्राप्तौ वृद्धिप्रसङ्गे आकार आदेशो भवति । देविकायां भवं दाविकमुदकम् । देविकाकूले भवा दाविकाकूलाः शालयः । पूर्वदेविका नाम प्राच्यग्रामस्तत्र भवः पूर्वदाविकः । अत्र 'प्राग्ग्रामाणाम्' (७-४-१७) इत्युत्तरपदवृद्धिप्राप्तिः । शिंशपाया विकारः शांशपः स्तम्भः । शिंशपास्थले भवाः शांशपास्थलाः शालयः । पूर्वशिंशपा नाम प्राच्यग्रामस्तत्र भवः पूर्वशांशपः । दीर्घसत्रे भवं दार्घसत्रम् । श्रेयोऽधिकृत्य कृतं श्रायसं द्वादशाङ्गम् । तत्प्राप्ताविति किमर्थम् । सुदेविकायां भवः सौदेविक इत्यत्र निषेधार्थम् पूर्वोत्तरपदानामपि यथा स्यादित्येवमर्थं च । अन्यथा हि *केवलानामेव स्यात् ॥ ३ ॥ वहीनरस्यैत् ॥ ७ । ४ । ४ ॥ वहीनरशब्दस्य ञ्णिति तद्धिते परे स्वरेष्वादेः स्वरस्य ऐकार आदेशो भवति । वहीनरस्यापत्यं वैहीनरिः । वहीनरस्येदं वैहीनरम् । विहीनरस्य वृद्ध्या सिध्यति, वहीनरस्य वाहीनरिर्माभूदिति वचनम् ॥४॥ *य्वः पदान्तात्प्रागैदौत् ॥ ७ । ४ । ५ ॥ ञ्णिति तद्धिते इवर्णोवर्णयोस्तत्प्राप्तौ वृद्धिप्रसङ्गे तयोरेव स्थाने यौ यकारवकारौ पदान्तौ ताभ्यां प्राक् यथासंख्यम् ऐत् औत् इत्येतावागमौ भवतः । यकारात्प्रागैकारः वकारात्प्रागौकार इत्यर्थः । व्याकरणं वेत्त्यधीते वा वैयाकरणः । नैयायिकः । नैयासिकः । व्यसने भवं वैयसनम् । स्वागमं वेत्त्यधीते वा सौवागमिकः । स्वश्वस्यापत्यं सौवश्विः । स्वश्वस्यायं सौवश्वः । पूर्वन्यलिन्दो नाम प्राग्ग्रामः तत्र भवः पूर्वनैयलिन्दः । *परत्वान्नित्यत्वाच्च वृद्धेः प्रागेव सर्वत्र

अर्ह ॥—वृद्धिः स्वरे—॥—देवि—॥—केवलानामेवेति । ग्रहणवतेति न्यायात् ॥—य्व प—॥ ननु वैयाकरण सौवाश्विरित्यादिषु व्याकरणादिशब्दसाधनकाल एव यत्ववत्वभावादिवर्णोवर्णयोः कथं वृद्धिप्राप्तिः ॥ सत्यम् ॥ 'आतो नेन्द्रवरुणस्य' इत्यत्र ज्ञापयिष्यन्ते पूर्वोत्तरपदकार्ये कृते तत साधकार्यमिति वृद्धिरूपे पूर्वपदकार्ये कृते यत्वमिति वृद्धिप्राप्तिः । तत्प्राप्तौ च सत्यामेतत्सूत्रसामर्थ्यात् वृद्धिं बाधित्वा यत्ववत्वे भवतः । तत ऐदौतौ ॥—परत्वान्नित्यत्वाच्चेति । 'वृद्धिः स्वर-' इति सूत्रापेक्षया हेतुद्वयमपि द्रष्टव्यम् 'य्वः पदान्तात्—' इत्यस्य परत्वात् तथा

*अनेनैदौतौ। य्व इति किम्। सौपर्णेयः। पदान्तादिति किम्। यत इमे *याताश्छात्राः। यत इतीणः शत्रन्तस्य रूपम्। तत्प्राप्ताविन्त्येव। दाध्यश्विः माध्वश्विः। अत्रेदुतोरनादित्वाद्वृद्धिप्राप्तिर्नास्ति। द्वाभ्यामशीतिभ्यां निर्वृत्तो द्वाभ्यामशीतिभ्यामधीष्टो भृतो वा द्वे अशीती भूतो भावी वा *द्व्याशीतिकः त्र्याशीतिकः। अत्रापि 'मानसंवत्सरस्याशाणकुलिजस्यानाम्नि' (७-४-१९) इत्युत्तरपदवृद्धौ यकारस्थानिन इकारस्य वृद्धिप्रसङ्गो नास्तीति। *प्राप्तिश्चाकृते यत्ववत्वे इति वेदितव्यम्। कृते ह्मिवर्णोवर्णयोरभावान्नास्ति प्राप्तिः वृद्ध्यपवादश्चैदौदागमः। तेन तद्धितस्य स्वरवृद्धिहेतुत्वाभावात् पुंवद्भावप्रतिषेधो न भवति। वैयाकरणभार्यः। शौवश्वभार्यः॥५॥

*द्वारादेः॥७।४।६॥ द्वार इत्येवमादीनां यौ यकारवकारौ तयोः समीपस्य स्वरेष्वादेः स्वरस्य तत्प्राप्तौ वृद्धिप्रसङ्गे ताभ्यामेव प्राक् ऐत् औत् इत्येतावागमौ भवतः ञ्णिति तद्धिते परे। द्वारे नियुक्तः दौवारिकः। स्वरमधिकृत्य कृतो ग्रन्थः सौवरः। स्वर्भवः *सौवः। 'प्रायोऽव्ययस्य'—(७-४-६५) इत्यन्त्यस्वरादिलोपः। स्वस्तीत्याह सौवस्तिकः। अव्युत्पन्नोऽयम्। सुपूर्वस्य तु पूर्वेणैव सिद्धम्। स्वादुमृदोऽपत्यं सौवादुमृदः। व्यल्कसे भवो *वैयल्कसः। *विपूर्वस्य तु पूर्वेणैव सिद्धम्। श्वो भवः शौवस्तिकः। 'श्वसस्तादिः'-(६-३-८३) इति तिकण्। शुन इदं *शौवनं मांसम्। स्फ्यकृतस्यापत्यं स्फैयकृतः। ऋष्यण्। स्वस्येदं सौवम्। स्वाध्यायेन

---

यकारवकाराभ्यामप्रेतनस्वरस्य 'वृद्धिः स्वरे-' इत्यनेन वृद्धिर्भवतु मा वा तथापि 'य्वः पदान्तात्-' इति ऐदौदागमेन भाव्यमेव प्रथम तु ऐदौदागमात् वृद्ध्या न भाव्यं तद्बाधकत्वादैदौदागमस्येति कृताकृतप्रसङ्गित्वेन नित्यत्वमप्यस्ति पूर्वत्रैयलिन्द इत्यादौ तु यत्वे कृते अलिन्दशब्दसन्निधिमोऽस्य 'प्राग्ग्रामाणाम्' इति वृद्धौ चिकीर्षितायां नित्यत्वाद्दित्येक एव हेतुर्द्रष्टव्यः॥—अनेनैदौताविति। एतच्च 'आतो नेन्द्रवरुणस्य' इत्यत्र यत्पूर्वं सधिकार्यं न भवतीति ज्ञापित तस्यानाश्रयणेन ज्ञापकज्ञापितत्वात् तस्य ज्ञापकस्य समाश्रयणे वा पूर्वं यत्ववत्वाभावे ऐदौतः प्राप्तेरभावात् पूर्वमिवर्णोवर्णयोर्वृद्धौ तत आयावादेशे च य्व प्रागैदौति आत ऐत्वौत्वे तान्येव रूपाण्यतः पूर्वं वृद्धिरेव न यत्ववत्वे इत्याग्रहो न कार्य इति॥—याता इति। नन्वत्र वृद्धिप्राप्त्यभावात् व्यङ्गविकलता प्राप्नोति। सत्यम्। यत इमे इति वाक्यकाले यद्यपि कृतयत्वस्येणो रूप तथापि इ अत् ङस् अण् इत्येव द्रष्टव्य यतोऽन्तरङ्गानपि विधीन् बहिरङ्गापि लुप् बाधत इति न्यायेनान्तरङ्गस्यापि 'ह्विणोरप्विति—' विधीयमानस्य यत्वस्य 'ऐकार्थ्ये' इति विधीयमानया ङस्प्रत्ययस्य लुपा बाधितत्वात्। ततो ङसो लुपि ञ्णित्प्रत्ययमाश्रित्य वृद्धिप्राप्तिः। ततोऽन्तरङ्गत्वाद्वृद्धिं बाधित्वा यत्वमजनिष्ट। एतच्च वैयाकरण इत्यादिष्वपि ज्ञेय-तथाहि वि आकरण अम् अण् इति स्थितो अन्तरङ्गमपि यत्व बाधित्वा तेनैव न्यायेन प्रथममभो लुप् ततो वृद्धिप्राप्ताव न्तरङ्गत्वात् यत्वमिति॥—द्व्याशीतीक इत्यादि। एषु 'निर्वृत्ते' इत्यादिभिरिकण्। अत्राशीतिशब्दो दिवसार्द्धमासमासादे कालस्य संख्या ब्रूते इति काले वर्त्तमानत्वादशीतिशब्दात् 'कालात्परिजय्य-'इति कालाधिकारविहितस्तेन 'हस्वाद्य' इति तृतीयान्ताधिकारे 'निर्वृत्ते' इत्यादिसूत्रैर्निर्वृत्ताद्यर्थे इकण्॥—प्राप्तिश्चाकृते इति। वैयाकरण इत्यादिषु य्वोः स्थानिनोरिवर्णोवर्णयोर्वृद्धिप्रसङ्ग इत्यर्थः॥—द्वारा—॥—सौव इति। अत्र भवे अण्। अथ स्वर्शब्दस्याव्ययत्वात् 'सायचिरम्'-इत्यनेन कथं न तनट्॥ सत्यम्। 'वर्षाकालेभ्य' इत्यत कालाधिकारात्॥—वैयल्कस इति। अत्र यकारस्वरस्य वृद्धिप्राप्तिरिति यात्प्रागेकारः न तु वात् प्रागौकारः। वकारसमीपे स्वरस्यैवाभावेन वृद्धिप्राप्तिर्नास्तीति॥—विपूर्वस्येति। विगतोऽर्के व्यर्के स्यति। 'आतो ड'-इति डः ऋफिडादित्वाल्लस्य लः॥—शौवनमिति। सकोच एवान्त्यस्वरादिलोपविधानादत्र सोले वाच्ये न भवति॥

जयति सौवाध्यायिकः । ' तेन जित '-(६—४—२) इत्यादिनेकण् । स्वग्रामे भवः सौवग्रामिकः । अध्यात्मादित्वादिकण् । ' *श्वादेरिति ' (७—४—१०) इति प्रतिषेधात् द्वारादिपूर्वाणामपि भवति । द्वारपालस्यापत्यं दौवारपालिः । ' अत इञ् '-(६—१—३१) । द्वारपाल्या अपत्यं दौवारपालिकः । रेवत्यादित्वादिकण् । स्वराध्याये भवः सौवराध्यायः । स्वर्गमनमाह सौवर्गमनिकः । प्रभूतादित्वादिकण् । श्वादंष्ट्रायां भवः *शौवादंष्ट्रो मणिः । *शौवभस्त्रः । य्वोः समीपस्य वृद्धिमाप्ता-निति विज्ञानात् वैयल्कस इत्यत्र वकारात्प्रागौकारो न भवति । स्वपाठेनैव सिद्धे स्वाध्यायस्वग्रामपाठात् स्वापतेयं स्वाजन्यमित्यादौ न भवति । द्वार स्वर स्वर् स्व-स्ति स्वादुमृदु व्यल्कस श्वस् श्वन् स्पयकृत स्व स्वाध्याय स्वग्राम । इति द्वारादिः ॥ ६ ॥ *न्यग्रोधस्य केवलस्य ॥ ७ । ४ । ७ ॥ न्यग्रोधशब्दस्य केवलस्य यो यकारस्तस्य स्थानी अव्युत्पत्तिपक्षे तु समीपो यः स्वरेष्वादिः स्वरस्तस्य तत्प्राप्तौ वृद्धिप्राप्तौ तस्मादेव यकारात् प्राक् ऐकार आगमो भवति ञ्णिति तद्धिते परे । न्यग्रोधस्य विकारो नैयग्रोधो दण्डः । नैयग्रोधः कषायः । केवलस्येति किम् । न्यग्रोधमूले भवा न्याग्रोधमूलाः शालयः । न्यग्रोधाः सन्त्यस्मिन् ऋश्यादित्वाचातुर-र्थिकः कः । न्यग्रोधकम् । तत्र भवो न्याग्रोधकः । *इदमपि द्वारादीनां तदादिविधेर्ज्ञापकम् । *न्यग्रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थम् । केवलस्यैवेति । अव्युत्पत्तिपक्षे तु विध्यर्थं वचनम् ॥ ७ ॥ *न्यङ्कोर्वा ॥ ७ । ४ । ८ ॥ न्यङ्कुशब्दस्य तद्धिते ञ्णिति परे यकारात्प्रागैकारो वा भवति । न्यङ्कोरिदं नैयङ्कवम् । न्याङ्कवम् ॥८॥ न ञस्वङ्गादेः ॥ ७ । ४।९॥ ञप्रत्ययान्तस्य स्वङ्गादेश्च ञ्णिति तद्धिते परे य्वः प्रागैकारौकारौ न भवतः।ञ, व्यावक्रोशी॥ व्यावलेखी। व्यावचर्ची। व्यावहासी । व्यात्युक्षी । ' व्यतिहारेऽनीहादिभ्यो ञः '-(५-३-११६) इति ञः । ततो ' नित्यं ञञिनोऽण् '-(७-३-५८) इत्यण् । स्वङ्गादि, स्वङ्गस्यापत्यं स्वाङ्गिः । व्याङ्गिः । व्याडिः । स्वागतमित्याह स्वागतिकः । स्वध्वरेण चरति स्वाध्वरिकः । व्यवहारेण चरति व्यावहारिकः । व्यायामः प्रयोजनमस्याः व्यायामिकी विद्या ॥ स्वङ्ग व्यङ्ग व्यड स्वागत स्वध्वर व्यवहार व्यायाम । इति स्वङ्गादिः ॥ ९ ॥ श्वादेरिति ॥ ७।४ १० ॥ श्वन्शब्द आदिरवयवो यस्य तस्य श्वादेर्नाम्न इति इकारादौ ञ्णिति तद्धिते प्रत्यये परे वः प्रागौकारो न भवति । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । श्वाशीर्षिः । श्वादंष्ट्रिः । श्वगणेन चरति श्वागणिकः । श्वायूथिकः । आदिग्रहणं किम् । श्वभिश्चरति शौविकः । इतीति किम् । श्वहानस्येदं शौवहानम् । शौवभस्त्रम् श्वादंष्ट्रायाः विकारः शौवादंष्ट्रो मणिः ॥ १० ॥

---

-श्वादेरितीति । श्वन्शब्दोपि द्वारादिस्तत्र तदादेः कार्यप्रतिषेधात् तत्प्राप्तिर्विज्ञायत इत्यर्थः ॥-शौवादंष्ट्र इति । अत्र यद्यपि श्वादंष्ट्रायां भव इति वाक्ये श्वन्शब्दस्यात्वं दृश्यते तथापि 'शुन' इत्यस्मिन्नात्व-विधायके सूत्रे बहुलाधिकारादणि प्रत्यय एव सत्यात्वं भवति । अन्यथा प्रथममात्वे कृते 'दौरीवः' इतीव स्यात् ॥- शौवभस्त्र इति ॥ शेव भस्त्रा यस्य बाहुलकात् 'शुनः' इति न दीर्घः ॥-न्यग्रोधस्य—॥ -इदमपीति । न केवलं 'श्वादेः' इति निषेधः किंतु केवलग्रहणमपीत्यर्थः । नन्वेतत्सूत्रमपि किमर्थं कृतमित्याह—न्यग्रोहतीत्यादि । अयमर्थः यदा व्युत्पत्तिपक्ष आश्रीयते तदा न्यक्शब्दसाधनकाले या निशब्दात् प्रथमा तदपेक्षया निमित्तनिधन इकारस्य पदान्तत्वात् तत्स्थानप्रादुर्भावात् यस्यापि पदान्तत्वे ' य्वः पदान्तात् -' इत्यनेनैवैदागमे सिद्धे सतीदं सूत्रं नियमार्थम् । अव्युत्पत्तिपक्षे तु यस्यापदान्तत्वात् ' य्वः पदान्तात् ' इति न सिध्यतीति विध्यर्थमिदम् ॥—न्यङ्को—॥ न्यञ्चतीति 'नेरञ्चेरु' ' न्यङ्कुः-' इति कः । व्युत्पत्तिपक्षे पूर्वेण प्राप्ते विभाषा अव्युत्पत्ति

*इञः ॥७।४।११॥ श्वादेरिञ्प्रत्ययान्तस्य ञिणति तद्धिते परे वकारात्प्रागौकारो न भवति। श्वाभस्रेरिदं श्वाभस्रम्। *श्वाकर्णेः श्वाकर्णम्। इकारादौ निमित्त उच्यमानः पूर्वेण प्रतिषेध इञन्तस्य प्रत्ययान्तरे न प्राप्नोतीति वचनम् ॥ ११ ॥ *पदान्तस्यान्यतरस्याम् वा ॥७।४।१२॥ पदशब्दान्तस्य श्वादेः शब्दस्य इकारादिवर्जिते ञिणति तद्धिते परे वकारात्प्रागौकारो वा भवति। शुन इव पदमस्य श्वापदम्। तस्य विकारः श्वापदं, शौवापदम्। अनितीति किम्। श्वापदेन चरति श्वापदिकः। श्वन्शब्दस्य द्वारादिषु पाठात् तत्र तदादिविधेर्ज्ञापितत्वान्नित्यमौकारागमे प्राप्ते विकल्पः ॥ १२ ॥ *प्रोष्ठभद्राज्जाते ॥ ७।४।१३॥ वृद्धिरित्यनुवर्तते। प्रोष्ठशब्दाद् भद्रशब्दाच्च परस्य पदशब्दस्योत्तरपदस्य स्वरेष्वादेः स्वरस्य स्थाने जातेऽर्थे विहिते ञिणति तद्धिते परे वृद्धिर्भवति। प्रोष्ठपदासु जातः प्रोष्ठपादः। भद्रपादो माणवकः। जात इति किम्। प्रोष्ठपदासु भवः प्रौष्ठपदो मेघः। ऊर्ध्वमौहूर्तिक इति ‘ सप्तमी चोर्ध्वमौहूर्तिके ’ (५-४-३०) इति निपातनात्, गुरुलाघवमिति गुरोर्लाघवं गुरुश्च गुरुत्वं लाघवं चेति वा, संहतपारार्थ्यमिति संहते पारार्थ्यमिति सिद्धमतो नार्थ उत्तरपदवृद्धिविधानेन ॥ १३ ॥ *अंशादृतोः ॥ ७।४।१४॥ अंशवाचिनः शब्दात्परस्य ऋतुवाचिन उत्तरपदस्य स्वरेष्वादेः स्वरस्य स्थाने ञिणति तद्धिते परे वृद्धिर्भवति। *पूर्वासु वर्षासु भवः पूर्ववार्षिकः। अपरवार्षिकः। ‘वर्षाकालेभ्यः’ (६-३-७९) इतीकण्। पूर्वशारदः। अपरशारदः। पूर्वनैदाघः। अपरनैदाघः। पूर्वहैमनः। अपरहैमनः। *ऋत्वण्। अंशादिति किम्। पूर्वासु *ऋत्वन्तरैर्व्यवहितासु वर्षासु भवः पौर्ववर्षिकः। सुवर्षासु भवः सौवर्षिकः। ऋतोरिति किम्। पूर्वपिप्पल्या इदं पौर्वपिप्पलम्। आर्धपिप्पलम् ॥ १४ ॥ *सुसर्वार्धाद्राष्ट्रस्य ॥ ७।४।१५ ॥ सु सर्व अर्ध इत्येतेभ्यः परस्य राष्ट्रवाचिन उत्तरपदस्य ञिणति तद्धिते परे स्वरेष्वादेः स्वरस्य वृद्धिर्भवति। सुपञ्चालेषु भवः *सुपाञ्चालकः। सर्वपाञ्चालकः। अर्धपाञ्चालकः। सुमागधकः। सर्वमागधकः। अर्धमागधकः। ‘ *बहुविषयेभ्यः ’ (६-३-४४) इत्यकञ्। राष्ट्रस्येति किम्। सुगन्धाः पण्यमस्य सौगन्धिकः। अर्धपिप्पल्यां भवः आर्धपिप्पलः ॥ १५ ॥ *अमद्रस्य दिशः ॥ ७।४।१६ ॥ दिग्वाचिनः परस्य राष्ट्रवाचिनो मद्रशब्दवर्जितस्य ञिणति तद्धिते परे स्वरेष्वादेः स्वरस्य वृद्धिर्भवति। पूर्वपाञ्चालकः। अपरपाञ्चालकः। दाक्षिणपाञ्चालकः। उत्तरपाञ्चालकः। अमद्रस्येति किम्। पौर्वमद्रः। दिश इति किम्। *पूर्वं पञ्चालानां पूर्वपञ्चालाः। अंशिसमासः। तेषु भवः पौर्वपञ्चालकः। *अवयववृत्तेरपि पूर्वशब्दस्य दिशि दृष्टत्वेन दिक्शब्दत्वात्तदन्तविधौ

पक्षे त्वप्राप्ते ॥—इञ—॥—श्वाकर्णेरिति । वाक्ये पूर्वेण औत्प्रतिषेध ॥—पद—॥ श्वापदशब्दो बाहुलकात्पुनपुंसकं ॥—प्रोष्ठ—॥ प्रकृतिर्हरीतक्यादिरिति वचनात् कालेऽपि प्रोष्ठपदादय स्त्रीलिङ्गा.॥-अंशा—॥– पूर्वासु वर्षास्विति । अर्थकथनमिद यावता ‘ पूर्वापरप्रथम-’ इत्यनेन कर्मधारये पूर्ववर्षासु भवः पूर्व भागान्तर वर्षाणा वा इति कार्यम्। अन्यथाशवाचकत्वेन पूर्वस्या दिग्वाचित्वाभावात् ‘ दिगधिकम्—’ इति न स्यात् । एन पूर्वशारद इत्यादावपि यथा पूर्व भागान्तर शरद पूर्व भागान्तर निदाघस्य तत्र भव ॥—ऋत्वन्तरैर्व्यवहितास्विति । अत्र हि पूर्वशब्दो न वर्षाणामेकदेश ब्रूते किंतु व्यवहितत्वमिति न पूर्वशब्दोऽशवचन ॥—सुस—॥—सुपाञ्चालक इति। उत्सादौ पञ्चालशब्दो ब्राह्मणवाच्येव गृह्यत इति केचित् । तन्मतेन नात्राञ् किंत्वकञेव ॥—बहुविषयेभ्य इति । ‘सुसर्वार्धदिक्शब्देभ्यो जनपदस्य’ इति ज्ञापकात्तदन्तस्यापि भवति ॥—अम—॥—पूर्वं पञ्चालानामिति । अत्र पूर्वशब्दस्य भागान्तरवाचित्वेन दिग्शब्दत्वाभावात् ‘ सुसर्वार्धदिक्शब्देभ्यो जनपदस्य ’ इति न्यायेन दिक्शब्दात्परतो जनपदस्य तदन्तविधिर्विधीयमानो न प्राप्नोतीति कथ ‘ बहुविषयेभ्य ’ इत्यकञ् इत्याह— अवयववृत्तेर-

सति ' वर्त्तुविषयेभ्यः ' ६-३-४४ ) इत्यकञ् । एके त्वस्य दिक्शब्दत्वं नेच्छन्ति । तन्मते तदन्तविध्यभावेऽणेव । पौर्वपञ्चालः ॥ १६ ॥ प्राग्ग्रामाणाम् ॥ ७ । ४ । १७ ॥ प्राग्देशग्रामवाचिनां योऽवयवो दिग्वाची ततः परस्यावयवस्य दिशः परेषां च प्राग्ग्रामवाचिनां ञ्णिति तद्धिते परे स्वरेष्वादेः स्वरस्य वृद्धिर्भवति। पूर्वकृष्णमृत्तिका नाम प्राच्यु ग्रामः तत्र भवः पूर्वकार्ष्णमृत्तिकः ।एवमपरकार्ष्णमृत्तिकः। पूर्वेषुकामशमी नाम प्राग्ग्रामस्तत्र भवःपूर्वैषुकामशमः।एवमपरैषुकामशमः।बहुवचनाद् ग्रामग्रहणेन नगरमपि गृह्यते । पूर्वस्मिन्कन्यकुब्जे भवः पूर्वकान्यकुब्जः । अपरकान्यकुब्जः। एवं पूर्वपाटलिपुत्रकः । अपरपाटलिपुत्रकः।प्राग्ग्रहणं किम् । देवदत्तं नाम वाहीकग्रामः पूर्वस्मिन्देवदत्ते भवः पौर्वदेवदत्तः । आपरदेवदत्तः ॥ १७ ॥ संख्याधिकाभ्यां वर्षस्याभाविनि ॥ ७ । ४ । १८ ॥ संख्यावाचिनोऽधिकशब्दाच्च परस्य वर्षशब्दस्य ञ्णिति तद्धिते परे स्वरेष्वादेः स्वरस्य वृद्धिर्भवति अभाविनि न चेत्स तद्धितो भावीत्यस्मिन्नर्थे विहितो भवति । द्वाभ्यां वर्षाभ्यां निर्वृत्तः द्वाभ्यां वर्षाभ्यां भृतोऽधीष्टो वा द्वे वर्षे भूतो वा द्विवार्षिकः। त्रिवार्षिकः। अधिकवार्षिकः। अभाविनीति किम् । द्वे वर्षे भावि द्वैवर्षिकं त्रैवर्षिकम् धान्यम् । द्वाभ्यां वर्षाभ्यां भृतोऽधीष्टो वा कर्म करिष्यति द्विवार्षिको मनुष्य इति। अधीष्टभृतयोः प्रत्ययो नभाविनीति प्रतिषेधो न भवति। गम्यते ह्यत्र भविष्यत्ता न तु प्रत्ययार्थः॥१८॥ मानसंवत्सरस्याशाणकुलिजस्यानाम्नि ॥ ७ । ४ । १९ ॥ मीयते परिच्छिद्यते येन तन्मानम् परिमाणादि । संख्याया अधिकशब्दाच्च परस्य शाणकुलिजशब्दवर्जितस्य मानवाचिनः संवत्सरशब्दस्य च ञ्णिति तद्धिते परे स्वरेष्वादेः स्वरस्य वृद्धिर्भवति अनाम्नि असंज्ञायां विषये । संख्याधिकाभ्यां मानसंवत्सरस्य वचनभेदान्न यथासंख्यम् । द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः । त्रिकौडविकः । अधिककौडविकः । द्वाभ्यां सुवर्णाभ्यां क्रीतं*द्विसौवर्णिकं त्रिसौवर्णिकम् । अधिकसौवर्णिकम् । द्वाभ्यां षष्टिभ्यां निर्वृत्तो द्वाभ्यां षष्टिभ्यां भृतोऽधीष्टो वा द्वे षष्टी भूतो भावी वा द्विषाष्टिकः । त्रिषाष्टिकः । अधिकषाष्टिकः । द्विसाप्ततिकः । अधिकसाप्ततिकः । द्विषष्ट्यादिशब्दाः संख्येये काले वर्तन्त इति कालाधिकारविहितं प्रत्ययमुत्पादयन्ति । द्वाभ्यां नवतिभ्यां क्रीतमिति ' मूल्यैः क्रीते ' (६-४-

---

पीत्यादि । तत्र हि दिक्शब्देभ्य इत्युक्त न तु दिग्वाचिन इति ॥—प्राग्ग्रा—॥ अत्र सूत्रार्थद्वय तत्रावयवस्येत्यन्त प्रथम' सूत्रार्थ । दिश परेषामित्यादिस्तु द्वितीय । तत्र प्रथमसूत्रार्थापेक्षया-परैषुकामशम इत्यन्तानि यतः पूर्वकृष्णमृत्तिकादीनि अखण्डानि प्राग्ग्रामनामानि । एषु सर्वेषु भवेऽण्। द्वितीयसूत्रार्थापेक्षया पूर्वकान्यकुब्ज इत्यादीनि। एषु सर्वेषु भवेऽण। पूर्वपाटलिपुत्रक इत्यत्र ' सज्ञा दुर्वा ' इति वा दुसज्ञाया ' रोपान्त्यादकञ् ' दुसज्ञाया अभावे त्वणन्तात्स्वार्थे क ॥—सख्या ॥—ननु द्विवार्षिक इत्यादो ' निर्वृत्ते ' इत्यादिभिरिकण् न प्राप्नोति। तत्र ' कालात्परिजय्य-' इत्यतः कालादिति अधिकारात् । अत्र तु वर्षशब्द एव कालवाची न तु द्विवर्षेत्यादिरिति । सत्यम् । ' सख्यादेश्चार्हदलुच' ' इत्यनेन सख्यादेरपि कालवाचिनो भवतीति । तर्हि अधिकवार्षिक इत्यत्र कथ न ह्यधिकशब्द संख्यावाचीति । सत्यम् । अभाविनीतिव्यावृत्तिसामर्थ्यात् । अभाविनीतिव्यावृत्तेर्द्वैवर्षिक इत्यादिषु चरितार्थत्वमिति चेत्। तर्हि अभाविनीतिव्यावृत्तेर्व्यर्थया प्रवृत्तेरिकण् भविष्यतीति ॥—मान—॥—द्विसौवर्णिकमित्यादि । अत्र तु ' सुवर्णकार्षापणात् ' इत्यनेनेकणो वा लुप्भवति ॥—द्विषष्ट्यादिशब्दा इति । द्वे षष्टी सप्तती वा दिवसाना मासानामर्धमासाना वेति विवक्षया कालवृत्तित्वम् ॥—कालाधिकारविहितमिति । ' कालात्परिजय्य-'इत्यस्मिन् कालाधिकारे विहित ' निर्वृत्ते ' इत्यादिभि. प्रत्ययमिकणूरूपम् ॥—

१५० ) इतीकण् । तस्य ' अनाम्न्यद्धिः प्लुप् ' ( ६-४-१४१ ) इति लुपि द्विनवति द्रव्यम् तेन द्वौ च नवतिश्च द्विनवतिस्तया वा क्रीतं द्विनावतिकम् । एवं त्रिनावतिकम् । संवत्सर, द्वाभ्यां संवत्सराभ्यां भृतोऽधीष्टो वा द्वौ संवत्सरौ भूतो भावी वा द्विसांवत्सरिकः । त्रिसांवत्सरिकः । संवत्सरग्रहणात् *कालो मानग्रहणेन न गृह्यते तेन द्वैसमिकः त्रैसमिकः *द्वैरात्रिकः त्रैरात्रिकः । अशाणकुलिजस्येति किम् । द्वाभ्यां शाणाभ्यां क्रीतं *द्वैशाणं, त्रैशाणम् । द्वे कुलिजे पचति संभवत्यवहरति च *द्वैकुलिजिकः त्रैकुलिजिकः । अनाम्नीति किम् । पञ्च लोहिन्यः परिमाणमस्य *पाञ्चलोहितिकम् । *पाञ्चकलायिकम् । तद्धितान्तमिदं परिमाणविशेषस्य नाम ॥ १९ ॥ *अर्धात्परिमाणस्यानतो वा त्वादेः ॥ ७ । ४ । २० ॥ अर्धशब्दात्परस्य परिमाणवाचिनः कुडवादेः शब्दरूपस्य ञ्णिति तद्धिते परे स्वरेष्वादेः स्वरस्यानतोऽकाररहितस्य वृद्धिर्भवति वा त्वादेः परिमाणात्पूर्वस्य त्वर्धशब्दस्य वा भवति । अर्धकुडवेन क्रीतम् अर्धकौडविकम् । आर्धकौडविकम् । अर्धमौष्टिकम् । आर्धमौष्टिकम् । अर्धद्रौणिकम् । आर्धद्रौणिकम् । परिमाणस्येति किम् । अर्धक्रोशः प्रयोजनमस्य आर्धक्रो [ क्रौ ] शिकम् । अनत इति किम् । अर्धप्रस्थिकम् । आर्धप्रस्थिकम् । *अर्धकंसिकम् । आर्धकंसिकम् । अर्धचमसिकम् । आर्धचमसिकम् । आदिविकल्प उत्तरवृद्ध्यनपेक्ष इति भवत्येव । अतः प्रतिषेधादाकारस्य वृद्धिर्भवत्येव । अर्धखार्यां भवः अर्धखारीकः । पुनरत्र विशेषः सत्यामसत्यां वा वृद्धौ । उच्यते । अर्धखारी भार्यास्य अर्धखारीभार्य इति । यत्र वृद्धिप्रतिषेधः स्यात् अयं तद्धितो न वृद्धिहेतुरिति पुंवद्भावप्रतिषेधो न स्यात् । यथार्धप्रस्थे भवार्धप्रस्थी सा भार्यास्य *अर्धप्रस्थभार्य इति ॥ २० ॥ प्राद्वाहणस्यैये ॥७।४।२१॥ वा त्वादेरिति वर्तते । प्रशब्दात्परस्य वाहणशब्दस्य एये ञ्णिति तद्धिते परे स्वरेष्वादेः स्वरस्य वृद्धिर्भवति आदेः पूर्वस्य तु प्रशब्दस्य वा भवति । प्रवाहयतीति प्रवाहणः प्रवाहणस्यापत्यं प्रवाहणेयः । प्रावाहणेयः । शुभ्रादित्वादेयण् । अत्राप्युत्तरपदवृद्धेः पूर्वोक्तमेव प्रयोजनम् । तेन प्रवाहणेयी भार्या यस्य प्रवाहणेयीभार्य इति पुंवद्भावप्रतिषेधो भवति ॥२१॥ *एयस्य ॥७।४।२२॥ एयप्रत्ययान्तावयवात्प्रशब्दात्परस्य वाहणशब्दस्य ञ्णिति तद्धिते परे स्वरेष्वादेः स्वरस्य वृद्धिर्भवति आदेस्तु प्रशब्दस्य वा भवति । प्रवाहणेयस्यापत्यं युवा *प्रवाहणेयिः प्रावाहणेयिः । प्रवाहणेयस्येदं संघादि तस्य भावो वा प्रवाहणेयकम् । प्रावहणेयकम् । *बाह्यतद्धितनिमित्ता

---

कालो मानग्रहणेनेति । मीयते अनेनेति व्युत्पत्त्या मानग्रहणेन कालस्यापि ग्रहणप्रसङ्गे सतीत्यर्थ ॥—द्वैरात्रिक इत्यादि । अत्र ' सख्यातै–' इत्यत् । तत इकण् ॥—द्वैशाणमिति । 'द्विन्यादेर्याण्च ' इत्यण् तस्य च विधानसामर्थ्यात् ' अनाम्न्यद्धि प्लुप् ' इति लुवभाव' ॥–द्वैकुलिज इति । अत्र 'सभव–' इति इकण् । 'कुलिजाद्वा' इति वा लुप् ॥—पाञ्चलोहितिकामिति । अत्र ' मानम् ' इतीकण् ' जातिश्च णि–' इति पुवद्भाव ॥—पाञ्चकलायिकामिति । कलायो धान्यविशेपो मालविकप्रसिद्ध । तत्कणाना पञ्चाना यावत्परिमाण भवति तावन्मात्रस्य परिमाण विशेपस्येद नाम । अत एव ' अनाम्न्यद्धि प्लुप् ' इति लुवपि न भवति ॥—अर्द्धा—॥—अर्द्धकंसिकामिति । अर्द्धकसशब्दात् क्रीतेऽर्थे इकण्न भवति । 'अर्द्धात्पलकसकर्पात्' इतीकटा बाधितत्वात्तत प्रयोजनेऽर्थे इकण् इश्य' ॥—अर्द्धप्रस्थभार्य इति । अत्रानत इति भणनान्नोत्तरपदवृद्धि । पूर्वपदस्यापि 'वा त्वादे. ' इति वचनान्न भवति । ततस्ताद्धितस्य स्वरवृद्धिहेतुत्वाभावान्न पुवन्निपेध ॥—एय—॥—प्रवाहणेयिरिति । अत्र ब्राह्मणत्वात् ' अब्राह्मणात् ' इत्यनेन इञो न लुप् ॥—वाह्यतद्धितेति । बाह्यस्तद्धित एयव्यतिरिक्तस्तन्निमित्ता वृद्धि. ' वृद्धि स्वर–' इत्यनेन

वृद्धिरेयाश्रयेण विकल्पेनास्वया वाचितुमिति सूत्रारम्भः ॥ २२ ॥ ॰नञः क्षेत्रज्ञेश्वरकुशलचपलनिपुणशुचेः ॥ ७ । ४ । २३ ॥ नञः परेषां क्षेत्रज्ञ ईश्वर कुशल चपल निपुण शुचि इत्येतेषां प्रकृत्यवयवानां ञ्णिति तद्धिते परे स्वरेष्वादेः स्वरस्य वृद्धिर्भवति आदेस्तु नञो वा । अक्षेत्रज्ञस्येदं *अक्षैत्रज्ञम् । आक्षैत्रज्ञम् । अक्षेत्रज्ञस्य भावः कर्म वा अक्षैत्रज्ञ्यम् आक्षैत्रज्ञ्यम् । राजादित्वात् व्यण् । एवमनैश्वरम् । आनैश्वरम् । अनैश्वर्यम् आनैश्वर्यम् । अकुशलस्येदम् अकौशलम् आकौशलम् । एवमचापलम् आचापलम् । अनैपुणम् । आनैपुणम् । न शुचिरशुचिस्तस्येदम् अशौचम् आशौचम् । *न विद्यते शुचिरस्येति वा अशुचिस्तस्य भावः कर्म वा अशौचम् । आशौचम् । क्षेत्रज्ञकुशलचपलनैपुणानां नञ्पूर्वाणामपि युवादिपाठादणमिच्छन्त्येके । आयथातथ्यमिति समासात्प्रत्ययः । अयाथातथ्यमिति प्रत्ययान्तेन समासः । एवम् आयथापुर्यम् अयाथापुर्यम् यथा आचातुर्यम् अचातुर्यम् इति । यथातथा यथापुरा इत्यखण्डमव्ययं वा 'नाम नाम्ना'—(३-१-१८) इति वा समासो 'यथाऽथा' (३-१-४१) इति*अव्ययीभावो वा *अकारान्तः ॥२३॥ ॰जङ्गलधेनुवलजस्योत्तरपदस्य तु वा ॥७।४।२४॥ आदेरित्यनुवर्तते । वेति तु निवृत्तम् । उत्तरपदस्य चेत्यकरणात् । जङ्गल धेनु वलज इत्येतदुत्तरपदानां शब्दानामादेः पूर्वपदस्य ञ्णिति तद्धिते परे स्वरेष्वादेः स्वरस्य नित्यं वृद्धिर्भवति उत्तरपदस्य पुनर्वा भवति । कुरुजङ्गलेषु भवः कौरुजङ्गलः । कौरुजाङ्गलः । वैश्वधेनवः । *वैश्वधैनवः । सौवर्णवलजः । सौवर्णवालजः ॥ २४ ॥ हृद्भगसिन्धोः ॥ ७।४।२५॥ आदेरुत्तरपदस्येति च द्वयमनुवर्तते । हृद्भगसिन्धु इत्येवमन्तानां ञ्णिति तद्धिते परे आदेः पूर्वपदस्योत्तरपदस्य च स्वरेष्वादेः स्वरस्य वृद्धिर्भवति । सुहृदः *सुहृदयस्य वा इदं भावः कर्म वा 'तस्येदम्' (६-३-१५९) इत्यणि युवाद्यणि वा सौहार्दम् । एवं दौहार्दम् । सुहृदो भावः कर्म वा राजादित्वात् ट्यणि *सौहार्द्यम् । दौहार्द्यम् । *बहुलाधिकारात् *मित्रामित्रार्थयोः सुहृद्दुर्हृच्छब्दयोः सौहृदम् दौर्हृदमित्यपि भवति । सुभगस्य भावः सौभाग्यम् । दौर्भाग्यम् । सुभगाया अपत्यं सौभागिनेयः । दौर्भागिणेयः । एकपदत्वाण्णत्वम् । सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः तेषु भवः साक्तुसैन्धवः । पानसैन्धवः । लावणसैन्धवः । माहासैन्धवः ।

नित्य प्राप्ता एयाश्रयेण विकल्पेन 'प्राद्वाहणस्य' इति विहितेनेति योजना ॥—नञ—॥—अक्षैत्रज्ञमिति । 'नञ्तत्पुरुषादबुधादे' इत्यनेन व्यण् न बाध्यते । क्षेत्रज्ञेश्वरयोर्युवादिपाठात् ॥—न विद्यते शुचिरस्येति वेति । पूर्वप्रयोगापेक्षया वा न तु वाक्यापेक्षया नञ्तत्पुरुषे हि 'नञ्तत्पुरुषात्'-इति त्वतलावेव स्यातामतो बहुव्रीहिरेव कार्यः ॥—अव्ययीभावो वेति । तथेत्यस्य योग्यत्व पुरेत्यस्य योग्यत्व तथेत्यस्य पुरेत्यस्य चानतिक्रम इति वा यथातथम् यथापुरम् ॥—अकारान्त इति । अव्ययीभावस्य नपुंसकत्वे 'क्लीबे' इत्यनेन ह्रस्व ॥—जङ्गल—॥—वैश्वधैनव इत्यत्र 'उत्सादेरञ्' शेषेषु 'भवे' अण् ॥—हृद्भ—॥—सुहृदयस्य वेति । मित्रार्थत्वाभावान्न 'सुहृद्दुर्हृत्'-इत्यनेन सुहृदादेश । तथा चाणि सति 'हृदयस्य—' इति हृदादेश ॥—सौहार्द्यमिति । अथ सुहृच्छब्दस्यैव प्रयोग सुहृदयशब्दस्य तु व्यणि सौहृदय्यमित्येव भवति । 'हृदयस्य हृल्लास—' इत्यत्र निरनुबन्धग्रहण इति न्यायाच्चिरनुबन्धस्य यस्य ग्रहणेन व्यणि हृदादेशाभावात् ॥—बहुलाधिकारादिति 'इसुसोर्बहुलम्—' इत्यतोऽनुवृत्तात् ॥—मित्रामित्रार्थयोरिति । ननु सुहृद्दुर्हृच्छब्दयोर्मित्रामित्रार्थयोरिति विशेषण किमर्थं मित्रामित्रार्थयोरेव सुहृद्दुर्हृद्रूपसमासान्तविधानेनाव्यभिचारात् ॥ सत्यम् ॥ सुहृदयदुर्हृदयशब्दयो क्रूराक्रूरार्थयोर्यदा 'तस्येदम्' इत्यणि 'हृदयस्य हृल्लास—'इत्यनेन हृदादेशस्तदापि सुहृद्दुर्हृच्छब्दौ स्त इति तद्व्यवच्छेदार्थं मित्रामित्रार्थयोरित्युक्तम् ॥—

सौरसैन्धवः । कच्छादित्वादण् । *तत्र तदन्तविधेरपीष्टत्वात् ॥ २५ ॥ *प्राचां नगरस्य ॥ ७ । ४ । २६ ॥ प्राचां देशे वर्तमानस्य नगरान्तस्य शब्दस्य ञ्णिति तद्धिते परे आदेः पूर्वपदस्योत्तरपदस्य च स्वरेष्वादेः स्वरस्य वृद्धिर्भवति । सुह्मनगरे भवः सौह्मनागरः । पौण्डनागरः । वाजु ( व्रांज ) नागरः । वैराटनागरः । गैरिनागरः । प्राचामिति किम् । उदीचां माडनागरः ॥ २६॥ *अनुशातिकादीनाम् ॥७।४।२७॥ अनुशातिक इत्येवमादीनां शब्दानां ञ्णिति तद्धिते परे पूर्वपदस्योत्तरपदस्य च स्वरेष्वादेः स्वरस्य वृद्धिर्भवति । अनुशतिकस्येदमानुशातिकम् । अनुशतिकस्यापत्यमानुशातिकिः । अनुहोडेन चरति आनुहौडिकः । अनुशतिक अनुहोड अनुसंवत्सर अनुसंवरण अनुरहत् अगारवेणु असिहत्या अस्य ( स्य ) हत्य अस्यहेति अस्यहेतु अनिषाद अधेनु कुरुकत कुरुपञ्चाल अधिदेव अधिभूत इहलोक परलोक सर्वलोक सर्वपुरुष सर्वभूमि वद्योग प्रयोग अभिगम परस्त्री पुष्करसद् उदकशुद्ध सूत्रनड चतुर्विद्या शातकुम्भ सुखशयन । इत्यनुशतिकादिः । आकृतिगणोऽयम् । तेन राजपौरुष्यादयष्ट्यणन्ता अत्रैव पठ्यन्ते । राजपौरुष्यम् । *पारिमाण्डल्यम् । *प्रातिभाव्यम् । *सार्ववैद्यम् । प्रत्ययान्तरे त्वादेरेव वृद्धिः । राजपुरुषस्यापत्यं राजपुरुषायणिः ॥ २७ ॥ *देवतानामात्वादौ ॥ ७ । ४ । २८ ॥ देवतार्थानां शब्दानामात्वादौ विषये ञ्णिति तद्धिते परे आदेः पूर्वपदस्योत्तरपदस्य च स्वरेष्वादेः स्वरस्य वृद्धिर्भवति । अग्निश्च विष्णुश्च देवता अस्य आग्नावैष्णवं सूक्तम् । ऐन्द्रापौष्णं हविः । आग्निमारुतं कर्म । आग्निवारुणीमनड्वाहीमालभेत । आत्वादाविति किम् । स्कन्दविशाखयोरिदं स्कान्दविशाखम् । *ब्राह्मप्राजापत्यम् । 'वेदसहश्रुतावायुदेवतानाम्' ( ३—२—४१ ) इत्यत आरभ्य 'उषासोषसः' (३—२—४६) इति यावदात्वादयः ॥२८॥ *आतो नेन्द्रवरुणस्य ॥७।४।२९॥ आकारान्तात्पूर्वपदात्परस्य इन्द्रशब्दस्य वरुणशब्दस्य चोत्तरपदस्य स्वरेष्वादेः स्वरस्य वृद्धिर्न भवति । अग्निश्च इन्द्रश्च अग्नेन्द्रौ । तौ देवता अस्य आग्नेन्द्रम् सूक्तम् । सौमेन्द्रं हविः । ऐन्द्रावरुणम् । मैत्रावरुणम् । आत इति

---

तत्र तदन्तविधेरिति । न केवल सिन्धु इत्यस्य केवलस्य कच्छादौ पाठात् केवलात्प्रत्यय किन्तु सिन्ध्वन्तेति पाठात्तदन्तादपीत्यर्थः ॥—प्राचां—॥ पुण्ड्रामडाश्च पुरुषविशेषाः ॥—अनु—॥—पारिमाण्डल्यमिति । परिमण्डलमणूना परिमाण तद्योगात्परमाणवोपि परिमण्डलास्तेषां भाव ॥—प्रातिभाव्यमिति । प्रतिभुवो भाव ष्यणि उभयपदवृद्धौ ' स्यक्ये ' इत्यावादेश । अस्वयभुवोऽव् ' इति कृते पश्चादुभयपदवृद्धिर्वा ॥—सार्ववैद्यमिति । सर्वे वेदा सर्वा विद्या वा भेषजादिभ्यष्ट्यणि ' अवर्णेवर्णस्य ' । यदा विद्या तदा ' व्यञ्जनात् पञ्चम'–इति यस्य लुक् ॥—राजपुरुषायणिरिति । अत्र 'अवृद्धात्–' इत्यायनिञ् ॥—देव—॥ विशाख' स्कन्दमित्रम् ॥—ब्राह्मप्राजापत्यमिति । अत्र पत्यन्तावयोगात् प्रजापतिशब्दोपि पतिरिति 'अनिदम्य–' इति ञ्य. । भावे ' पतिराजान्त–' इति ट्यण् वा ॥—आतो—॥—आग्नेन्द्रं सूक्तमिति । नन्वग्निश्चेन्द्रश्चाग्नेन्द्रो तो देवते अस्येति विग्रहे आकारो न प्राप्नोति । यतोऽन्तरङ्गानपि विधीन् बहिरङ्गापि लुब्बाधत इति न्यायादन्तरङ्गमपि अकार बहिरङ्गापि लुप् बाधते । ततोऽण् तस्मिन् सति ' देवतानामात्वादौ ' इति सूत्रेण प्रथममेव वृद्धि. कथ न भवति । तस्या च सत्याम् ' इर्वृद्धिमत्यविष्णौ ' इति इः कथ न स्यात् यथा आग्निवारुणमिति व्यावृत्त्युदाहरणे । अथ सूत्रसामर्थ्यादाकारा भविष्यतीति चेत् । न । सूत्रमन्यत्रापि चरितार्थं यथा सौमेन्द्र हविरिति । अथ ' इर्वृद्धिमति–' इति इः प्राप्नोति न शब्दोऽग्निशब्दस्य प्रत्ययादि ' ई पोम–' इति सूत्रादग्नेरित्यनुवृत्तेः । उच्यते । ' आतो नेन्द्र'–इति सूत्र व्यक्तौ प्रावर्तिष्ट तत एवतत्सूत्रादाकारो भवत्येव ॥

रिम् । आग्निवारुणम् । उत्तरपदस्येत्येव । ऐन्द्राग्नम् *एकादशकपालं पुरोडाशं निर्वपेत् । ननु चेन्द्रशब्दस्य द्वौ स्वरौ तत्राद्यः संधिकार्येण ह्रियतेऽपरो- 'ऽवर्णेवर्णस्य' (७—४—६८) इत्यतोऽस्वर एवेन्द्रशब्दस्तस्य किं वृद्धिप्रतिषेधेन। सत्यम्। किन्त्वनेनैतज्ज्ञाप्यते। बहिरङ्गमपि पूर्वं पूर्वोत्तरपयोः कार्यं भवति पश्चात्सन्धिकार्यम्। तेन *पूर्वेषुकामशम इत्यादि सिद्धं भवति ॥ २९ ॥ सारवैक्ष्वाकमैत्रेयभ्रौणहत्यधैवत्यहिरण्मयम् ॥ ७ । ४ । ३० ॥ सारवादयः शब्दा अणादिप्रत्ययान्ताः कृताऽलोपादयो निपात्यन्ते । सरय्वां भवं सारवमुदकम् । सरयूशब्दस्याणि प्रत्ययेऽयित्यस्य लोपः । इक्ष्वाकोरपत्यमैक्ष्वाकः । 'राष्ट्रक्षत्रियात्'—(६—१—११४) इत्यादिनाञ् । इक्ष्वाकोरिदमैक्ष्वाकम् । इक्ष्वाकुशब्दस्य अञि अणि चोकारलोपः । मित्रयोरपत्यं मैत्रेयः । मित्रयुशब्दस्य गृष्ट्यादित्वादेयञि युलोपः । अथ मित्रयुशब्दो बिदादिषु किं न पठ्यते । तथा च 'कक्रयमित्रयुमलय'-( ७-४-२ ) इत्यादिनैयादेशेनैव सिध्यतीति नेदं निपातनमारब्धव्यं भवति । यस्कादिषु च मित्रयुशब्दो बहुषु लुबर्थं न पठितव्यो भवति 'यञञः' (६-१-१२६) इत्यादिनैव सिद्धत्वात् । उच्यते । अञि सति मित्रयूणां संघो मैत्रेयकमित्यत्राकञ् बाधित्वाण् स्यादिति बिदादिषु न पठ्यते । भ्रूणघ्नो भावः कर्म वा भ्रौणहत्यम् । धीव्नो भावः कर्म वा धैवत्यम् । अत्र ट्याणि नकारस्य तकारः । हिरण्यस्य विकारो हिरण्मयम् । अत्र मयटि यशब्दलोपः ॥ ३० ॥ *वान्तमान्तितमान्तितोऽन्तियान्तिषद् ॥ ७ । ४ । ३१ ॥ अन्तमादयः शब्दास्तमवादिप्रत्ययान्ताः कृततिकादिलोपादयो वा निपात्यन्ते । अयमेषामतिशयेनान्तिकः अन्तमः पक्षे अन्तिकतमः । अत्रान्तिकशब्दस्य तमप्प्रत्यये तिकशब्दलोपो 'नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे' इति *सकाराभावश्च निपात्यते । अयमेषामतिशयेनान्तिकः अन्तितमः । अत्र कशब्दस्य लोपः । पक्षे अन्तिकतमः । अन्तिकादागच्छति अन्तित आगच्छति । अत्रापादानलक्षणे तसौ कशब्दस्य लोपः । पक्षेऽन्तिकत आगच्छति । अन्तिके साधुः अन्तियः । अत्र यप्रत्यये कशब्दस्य लोपः इकारस्य च लोपाभावः । पक्षे अन्तिक्यः । अन्तिके सीदति अन्तिषद् । अत्र सदिति क्विबन्ते कलोपः सस्य षत्वं च । पक्षे अन्तिकसत् ॥ ३१ ॥ *विन्मतोर्णीष्ठेयसौ लुप् ॥ ७ । ४ । ३२ ॥ विन्मतु इत्येतयोः प्रत्यययोर्णि इष्ठ इयसु इत्येतेषु प्रत्ययेषु परेषु लुप् भवति । स्रग्विणमाचष्टे स्रजयति । अयमेषां स्रग्विणामतिशयेन स्रग्वी *स्रजिष्ठः । अयमनयोः स्रग्विणोरतिशयेन स्रग्वी स्रजीयान् । त्वग्वन्तमाचष्टे त्वचयति । अयमेषामतिशयेन त्वग्वान् त्वचिष्ठः ।

—आग्निवारुणमिति। अग्निश्च वरुणश्च देवताऽस्येति विग्रहेऽणि सति 'ऐकार्थ्ये' इत्यनेन विभक्तिलोप 'ई. षोमवरुणेऽग्नेः' इत्यन्तरङ्गमीत्वं च ततोऽन्तरङ्गानपि विधीन् बहिरङ्गापि लुब्बाधत इति न्यायात् लुबेव प्रवर्तते । ततो विभक्तिलोपे सति ईत्व 'देवतानामात्वादौ' इत्युभयपदवृद्धिश्च प्राप्नोति द्वयो प्राप्तो परत्वादुभयपदवृद्धिः क्रियते । तस्यां च सत्या विशेषविहितत्वात् 'इर्वृद्धिमत्यविष्णौ' इति इकार एव ॥—एकादशकपालमिति । एकादशसु कपालेषु संस्कृत 'संस्कृते भक्ष्ये' इत्यण् 'द्विगो'-इति लुप् ॥—पूर्वेषुकामशम इत्यादीति । अत्र भवेऽण् 'प्राग्ग्रामाणाम्' इत्युत्तरपदवृद्धिः । अत्र यदि पूर्वं संधिः स्यात्तदा इकारस्य पूर्वपदत्वात् पुसम्बन्धिन उकारस्य वृद्धिः स्यात् ॥—वान्त—॥—सकाराभावश्चेति । 'नाम सिदय्व्यञ्जने' इति पदत्वात्सकारः प्राप्तः ॥—विन्म—॥—स्रजिष्ठ इति । अनान्तर्यात्त्विभक्त्यपेक्षया यथा विजन्तस्य इष्ठप्रत्यये प्राप्तस्य पदत्वस्य सिद्येवेति नियमेन निषेधस्तथा विड्लोपेऽपि । न च 'प्रत्यय. प्रकृत्यादे' इति विजन्ता-

अयमनयोरतिशयेन तरवान् तरवीयान् । कुमुद्वन्तमाचष्टे कुमुदयति । कुमुदिष्ठः । कुमुदीयान् । अत एव वचनादगुणाङ्गादपीष्ठेयसू । निर्दिश्यमानत्वात् प्रत्ययमात्रस्य लुप् ॥ ३२ ॥ *अल्पयूनोः कन्वा ॥ ७ । ४ । ३३ ॥ अल्प युवन् इत्येतयोर्णि इष्ठ ईयसु इत्येतेषु परेषु कन् इत्ययमादेशो वा भवति । कनयति । कनिष्ठः । कनीयान् । पक्षे, अल्पयति । अल्पिष्ठः । अल्पीयान् । यवयति । यविष्ठः । यवीयान् ॥ ३३ ॥ प्रशस्यस्य श्रः ॥ ७ । ४ । ३४ ॥ प्रशस्यशब्दस्य णीष्ठेयसुषु परतः श्र इत्ययमादेशो भवति । श्रयति । श्रेष्ठः । श्रेयान् ॥ ३४ ॥ वृद्धस्य च ज्यः ॥ ७ । ४ । ३५ ॥ वृद्धशब्दस्य प्रशस्यशब्दस्य च णीष्ठेयसुषु परतो ज्य इत्यादेशो भवति । ज्ययति । ज्येष्ठः ॥ ३५ ॥ *ज्यायान् ॥ ७ । ४ । ३६ । ज्यायानिति पूर्वसूत्रेण विहिताज्ज्यादेशात्परस्येयसोरीकारस्य *आकारादेशो निपात्यते । अयमनयोरतिशयेन प्रशस्यो वृद्धो वा ज्यायान् । ज्यायसी ॥ ३६ ॥ *बाढान्तिकयोः साधनेदौ ॥ ७ । ४ । ३७ ॥ बाढ अन्तिक इत्येतयोर्णीष्ठेयसुषु परतो यथासङ्ख्यं *साधनेद इत्येतावादेशौ भवतः । साधयति । साधिष्ठः । साधीयान् । नेदयति । नेदिष्ठः । नेदीयान् ॥ ३७ ॥ *प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घवृद्धवृन्दारकस्येमनि च प्रास्थास्फावरगरबंहत्रपद्राघवर्षवृन्दम् ॥ ७ । ४ । ३८ ॥ प्रियादीनां यथासंभवमिमनि णीष्ठेयसुषु च यथासंख्यं प्रा इत्यादय आदेशा भवन्ति । प्रियस्य प्रा, प्रेमा । प्रापयति । प्रेष्ठः । प्रेयान् । स्थिरस्य स्था, *स्थेमा । स्थापयति । स्थेष्ठः । स्थेयान् । स्फिरस्य स्फा, स्फापयति । स्फेष्ठः । स्फेयान् । उरोर्वर्, वरिमा । वरयति । वरिष्ठः । वरीयान् । गुरोर्गर्, गरिमा । गरयति । गरिष्ठः । गरीयान् । बहुलस्य बंह, बंहिमा । बंहयति । बंहिष्ठः । बंहीयान् । तृप्रस्य त्रप्, त्रपिमा । त्रपयति । त्रपिष्ठः । त्रपीयान् । दीर्घस्य द्राघ् । द्राघिमा । द्राघयति । द्राघिष्ठः । द्राघीयान् । वृद्धस्य वर्ष् । वर्षिमा । वर्षयति । वर्षिष्ठः । वर्षीयान् । वृन्दारकस्य वृन्द् । वृन्दिमा । वृन्दयति । वृन्दिष्ठः । वृन्दीयान् । स्फिरशब्दस्यावर्णत्वादपृथ्वादित्वाददृढादित्वाच्च नेमन् प्रत्ययः । वरादीनामकार उच्चारणार्थः । कश्चित्तु करोत्यर्थे णौ प्राद्यादेशं नेच्छति । तन्मते प्रिययति, स्थिरयतीत्यादि ॥ ३८ ॥ *पृथुमृदुभृशकृशदृढपरिवृढस्य ऋतो रः ॥ ७ । ४ । ३९ ॥ पृथ्वादीनामृकारस्येमनि णीष्ठेयसुषु च परेषु रशब्द आदेशो भवति । प्रथिमा । प्रथयति । प्रथिष्ठः । प्रथीयान् । म्रदिमा । म्रदयति । म्रदिष्ठः । म्रदीयान् । भ्रशिमा । भ्रशयति । भ्रशिष्ठः । भ्रशीयान् । क्रशिमा । क्रशयति । क्रशिष्ठः । क्रशीयान् । द्रढिमा । द्रढयति । द्रढिष्ठः । द्रढीयान् । परिव्रढिमा । परिव्रढयति । परिव्रढिष्ठः । परिव्रढीयान् । केचित्तु वृढशब्दस्यापीच्छन्ति । व्रढिमा । व्रढयति । व्रढिष्ठः । व्रढीयान् ।

---

दिष्ठगत्वगो विहितोऽतस्तस्यैव नियमेन पदत्वाभावो न तु विन्लोपे पाश्चात्यस्येति यत ' प्रत्यय. प्रकृत्यादे ' इति परिभाषाया ' पद्धवर्जैक-' इत्यत्र पद्धवर्जनेनानित्यत्वज्ञापनात् । एव त्वचिष्ठ इत्यादिष्वपि दृश्यम् ॥-अल्प-॥ अत्रापि अगुणाङ्गादपि इष्ठेयसू वचनसामर्थ्याद्भवत । अन्यथा 'स्थूलदूर-' इत्यनेनान्तस्थादेरवयवस्य लुबपि न स्यात् तयोरभावात् । एवमुत्तरेष्वपि दृश्यम् ॥-ज्याया-॥-शाकारादेश इति । अत्राकारस्यापि निपातने ज्यायानिति सिध्यति ' लुगस्यादेत्यपदे ' इत्यस्याकारकरणादेदाप्रवृत्ते प्रक्रियानिरासार्थं त्वाकारकरणम् ॥-बाढा-॥-साधनेद इति । अदन्तावेताविति समानलोपित्वादसमाधवित्यत्र ऽपरे णो सन्वदादिकार्याभावः ॥-प्रिय-॥-स्थेमेति । अत्र बहुवचनसामर्थ्यात् 'वर्णदृढादिभ्य.-' इतीमन् । शेषेषु 'पृथ्वादेरिमन्वा' वृन्दारकात् ' वर्णदृढादिभ्यः ष्यण् च वा ' इत्यनेनेमन् ॥-पृथु-॥

ऋत इति
पृथ्वादीनामिति किम् । ऋजिमा । ऋजयति । ऋजिष्ठः । ऋजीयान् । कृष्णिमा । कृष्णयति । कृष्णिष्ठः । कृष्णीयान् । *अनृचीयान् । स्नृचीयान् । ऋत इति
किम् । सर्वस्य मा भूत् ॥ ३९ ॥ *बहोर्णीष्ठे भूय् ॥ ७ । ४ । ४० ॥ बहुशब्दस्य णीष्ठयोः परयोर्भूय् इत्ययमादेशो भवति । भूभावापवादः । भूययति ।
भूयिष्ठः । *बहोराख्यानं भूयनम् । णौ केचिद्विकल्पमाहुः । भूययति । भूयनम् । पक्षे बहयति । बहनम् । बहोर्णौ भाविति कश्चित् । भावयति ॥ ४० ॥
*भूर्लुक् चेवर्णस्य ॥ ७ । ४ । ४१ । बहुशब्दस्य*ईयसाविमनि च परे भू इत्ययमादेशो भवति अनयोश्चेवर्णस्य लुग्भवति । भूयान् । भूयांसौ । भूयांसः ।
भूमा । भू ऊ इति*ऊकारप्रश्लेषादवादेशो न भवति । इवर्णस्येति किम् । सर्वस्य माभूत् ॥ ४१ ॥ *स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्रस्यान्तस्थादेर्गुणश्च नामिनः
॥ ७ । ४ । ४२ ॥ स्थूलादीनां यथासंभवमिमनि णीष्ठेयस्सु च परेष्वन्तस्थादेरवयवस्य लुग् नामिनश्च गुणो भवति । स्थूल, स्थवयति । स्थविष्ठः । स्थवीयान् ।
दूर, दवयति । दविष्ठः । दवीयान् । युवन्, यवयति । यविष्ठः । यवीयान् । ह्रस्व, ह्रसिमा । ह्रसयति । ह्रसिष्ठः । ह्रसीयान् । क्षिप्र, क्षेपिमा । क्षेपयति ।
क्षेपिष्ठः । क्षेपीयान् । क्षुद्र, क्षोदिमा । क्षोदयति । क्षोदिष्ठः । क्षोदीयान् । ह्रस्वादिभ्यः पृथ्वादित्वादिमन् । उत्तरेणान्त्यस्वरस्यानेनार्थाद-
न्तस्थाया लोपे सिद्धे *अन्तस्थादेरिति किमर्थम् । येन नाप्राप्तिन्यायेनान्त्यस्वरादिलोपं बाधित्वानेनान्तस्थाया एव लोपो मा भूदित्येवमर्थम् ।
नामिन इति किम् । ह्रस्वक्षिप्रक्षुद्राणां सकारपकार*दकाराणां माभूत् । केचित्तु स्थूलदूरयूनां करोत्यर्थे णौ नेच्छन्ति । स्थूलं करोति
स्थूलयति । दूरयति । युवयति ॥ ४२ ॥ *त्र्यन्त्यस्वरादेः ॥ ७ । ४ । ४३ ॥ तृप्रत्ययस्यान्त्यस्वरादेश्चावयवस्येमनि णीष्ठेयस्सु च परेषु
लुग्भवति । कर्तृमन्तमाचष्टे करयति । करिष्ठः । करीयान् । कर्तारमाचष्टे करयति । भ्रातयति भ्रातयतीत्यत्र*अनर्थकत्वात् तृशब्दस्य न भवति ।
पटिमा । पटयति । पटिष्ठः । पटीयान् । लघिमा । लघयति । लघिष्ठः । लघीयान् । विगनसो भावो विमनिमा । सन्मनसो भावः सन्मनिमा । दृढादित्वादिमन् ।
विन्मतोर्लुपि अनेकस्वरस्यान्त्यस्वरादेर्लुचं च विकल्पेनेच्छन्त्येके, लुगभावपक्षे णौ गुणं नेच्छन्ति ॥ पयस्विनमाचष्टे पययति । पयसयति । पयिष्ठः । पयसिष्ठः ।

---

—अनृचीयानित्यादि । न विद्यते ऋगस्य ' नञ्बहो.-' इत्यप् । शोभना ऋगस्य स्नृक् । आभ्यामप्यगुणाङ्गत्वेऽपि ' विन्मतो-—' इति ज्ञापकस्य सर्वादिष्टत्वादीयस्
॥—बहो—॥—बहोराख्यानमिति । णिचोऽनटश्चैकमेवेद वाक्यम् । बहून् बहुमाचष्टे णिच् भूय्वत इत्यनट् ॥—भूर्लु ॥—' प्रियास्थिर-' इत्यतः सूत्रादिमन्णिष्ठईयसवर्जारवारो-
ऽनुवर्तन्ते तेषु च णीष्ठयो. पूर्वसूत्राग्रातत्वात् परिशेष्यादिमनीयसोरेवाय विधिरित्याह—ईयसा.विमनि चेति ॥—ऊकारप्रश्लेषादिति । न च भू इत्यादेशविधानादत्र न
भविष्यति इति यतो भूमेत्यत्र परत्वादपदं उक्त. ' भ्रुवयभुवोत् ' इति अव् न भविष्यतीति । अत्र भू आदेशस्य चरितार्थत्वात् भूवानित्यादावव् स्यादिति भूमाद्यभ्रेति प्रश्लेषव्याख्या
मम् ॥—स्थूल—॥—अन्तस्थादेरिति किमर्थमिति । अन्त्यस्वरस्य तावद् ' त्र्यन्त्यस्वरादेः ' इत्यनेन लुपि सत्यामन्तस्थामात्रमेवावशिष्यते । ततश्चात्रादिग्रहण निरर्थक किंतु अन्तस्थादेरित्य
पनीयान्तस्थाया इति कर्तुमुचितमिति प्रश्नाशयः ॥—दकाराणां माभूदिति । सर्वत्रैकस्थानमप्यर्णमित्येकदेशेन प्रत्यासत्त्या सकारदकारयोरपकारस्य लोपं स्यात् ॥—त्र्यन्त्य—॥—अनर्थकत्वादि-

पयीयान् । पयसीयान् । वसुमन्तमाचष्टे वसयति । मतवयति । वसिष्ठः । वसविष्ठः । वसीयान् । वसवीयान् ॥ ४३ ॥ *नैकस्वरस्य ॥ ७ । ४ । ४४ ॥ एकस्वरस्य शब्दरूपस्य योऽन्त्यस्वरादिरवयवस्तस्येमनि णीष्ठेयस्सु च परेषु लुग्न भवति । स्रग्विणमाचष्टे स्रजयति । स्रजिष्ठः । स्रजीयान् । स्रुग्वन्तमाचष्टे स्रुचयति । स्रुचिष्ठः । स्रुचीयान् । एकस्वरस्येति किम् । वसुमन्तमाचष्टे वसयति । वसिष्ठः । वसीयान् । इमनि चेत्येव । अस्यापत्यम् इः । इो देवतास्य इः । श्रिये हितः श्रीयः । *योगविभागात् 'अवर्णेवर्णस्य' ( ७-४-६८ ) इति लोपस्यापि प्रतिषेधः । श्रेष्ठः । श्रेयान् ॥ ४४ ॥ *दण्डिहस्तिनोरायने ॥ ७ । ४ । ४५ ॥ दण्डिन् हस्तिन् इत्येतयोरायने प्रत्ययेऽन्त्यस्वरादेर्लुग् न भवति । 'नोपदस्य-' ( ७-४-६१ ) इति प्राप्तौ प्रतिषेधः । दण्डिनोऽपत्यं दाण्डिनायनः । हास्तिनायनः । नडाद्यायनण् । आयन इति किम् । दण्डिनां समूहो *दाण्डम् । हास्तिकम् ॥ ४५ ॥ वाशिन आयनौ ॥ ७ । ४ । ४६ ॥ वाशिन्शब्दस्यायनिप्रत्यये परेऽन्त्यस्वरादेर्लुग् न भवति । वाशिनोऽपत्यं वाशिनायनिः । 'अवृद्धाद्दोर्नवा' ( ६-१-११० ) इत्यायनिञ् ॥ ४६ ॥ एये जिह्माशिनः ॥ ७ । ४ । ४७ ॥ जिह्माशिन्शब्दस्य एये प्रत्यये परेऽन्त्यस्वरादेर्लुग् न भवति । जिह्माशिनोऽपत्यं जैह्माशिनेयः । शुभ्रादित्वादेयण् ॥ ४७ ॥ ईनेऽध्वात्मनोः ॥ ७ । ४ । ४८ ॥ अध्वन् आत्मन् इत्येतयोरीनप्रत्यये परेऽन्त्यस्वरादेर्लुग् न भवति । अध्वानमलंगामी अध्वनीनः । 'अध्वानं येनौ' ( ७-१-१०३ ) इतीनः । आत्मने हित आत्मनीनः । 'भोगोत्तरपदात्मभ्यामीनः' ( ७-१-४० ) इतीनः । ईन इति किम् । माध्वम् । अध्यात्मम् ॥ ४८ ॥ इकण्यथर्वणः ॥ ७ । ४ । ४९ ॥ अथर्वन्शब्दस्येकणि प्रत्यये परेऽन्त्यस्वरादेर्लुग् न भवति । अथर्वाणं वेत्त्यधीते वा आथर्वणिकः । न्यायादित्वादिकण् ॥ ४९ ॥ *यूनोऽके ॥ ७ । ४ । ५० ॥ युवन्शब्दस्याके प्रत्ययेऽन्त्यस्वरादेर्लुग् न भवति । यूनो भावः *यौवनिका । चौरादित्वादकञ् । अक इति किम् । युवा प्रयोजनमस्य यौविकम् ॥ ५० ॥ अनोऽट्ये ये ॥ ७ । ४ । ५१ ॥ अन् इत्येतदन्तस्य ट्यवर्जिते ये प्रत्यये परेऽन्त्यस्वरादेर्लुग्न भवति । सामनि साधुः सामन्यः । एवं वेमन्यः । मूर्धनि भवः मूर्धन्यः। तक्ष्णोऽपत्यं ताक्षण्यः । कुर्वादित्वात् ञ्यः । अट्य इति वचनात् सानुबन्धेऽपि प्रतिषेधः । अन इति किम् । छत्रिषु साधुः छत्र्यः । अट्य इति किम् । राज्ञो भावः कर्म वा राज्यम् । दौरात्म्यम् । य इति किम् । परमराजः । द्विमूर्धः ॥ ५१ ॥ अणि ॥ ७ । ४ । ५२ ॥ अन् इत्येतदन्तस्याणि तद्धिते परेऽन्त्यस्वरादेर्लुग्न भवति । सुत्वनोऽपत्य सौत्वनः । याज्वनः । साम देवतास्य सामनः । वैमनः । संदिष्टं कर्म कार्मणम् । पर्वणि भवः पार्वणः । अणीति किम् । कर्म शीलमस्य कार्मः। छत्रादित्वादन् । कर्मणे शक्तं कार्मुकम् । 'योगकर्मभ्यां योकञौ' ( ६-४-९९ ) इत्युकञ् । योगविभाग उत्तरार्थः ॥ ५२ ॥ संयोगादिनः ॥ ७ । ४ । ५३ ॥ संयोगात्परो य इन् तदन्तस्याणि परेऽन्त्यस्वरादेर्लुग् न भवति । शङ्खिनोऽपत्यं शाङ्खिनः । चाक्रिणः । वाज्रिणः । स्राग्वि-

ति । अनर्थकत्व वास्याप्युपलक्षत्वात् । तृप्रत्ययश्च वर्णानुपूर्वीविज्ञानार्थ. ॥—नैक—॥—योगविभागादिति । अन्यथा ग्रन्त्यस्वरादेरनेकस्वरस्येत्येव कुर्यात् ॥—दण्डि—॥—दाण्डम् । हास्तिकम् । 'आदिभ्योऽञ्' 'कचवि-' इतीकण् 'नोपदस्य-' इत्यन्त्यलोपः ॥—यूनो—॥—यौवनिकेति । चौराद्यमनोज्ञादकञिति स्त्रीक्लीबत्वम् ॥

णः । माद्रिणः । भाद्रिणः । संयोगादिति किम् । मेधाविनोऽपत्यं मैधावः । मायावः । अणीत्येव । शाकारमर्दिनोऽपत्यं शाकारमर्दिः । वाह्वादित्वादिञ् । अनपत्ये उत्तरेण सिद्धत्वादपत्यार्थोऽयमारम्भः ॥ ५३ ॥ गाथिविदथिकेशिपणिगणिनः ॥ ७ । ४ । ५४ ॥ गाथिन् विदथिन् केशिन् पणिन् गणिन् इत्येतेषामिन्नन्तानामणि परेऽन्त्यस्वरादेर्लुग् न भवति । गाथिनोऽपत्यं गाथिनः । वैदथिनः । कैशिनः । पाणिनः । गाणिनः ॥ ५४ ॥ *अनपत्ये ॥ ७ । ४ । ५५ ॥ इन्नन्तस्यापत्यादन्यत्रार्थे योऽण् तस्मिन् परेऽन्त्यस्वरादेर्लुग् न भवति । शाकुटिनं वर्तते । सांकौटिनम् । सांराविणम् । सांमार्जिनम् । गर्भिणीनां समूहो *गार्भिणम् । भिक्षादित्वादण् । शुणिन इदं शौणिनम् । स्राग्विण इदं स्राग्विणम् । अनपत्ये इति किम् । मेधाविनोऽपत्यं मैधावः । अणीत्येव । गर्भिणां समूहो गार्भम् । दण्डिनां दाण्डम् । चक्रिणां चाक्रम् । 'खादिभ्योऽञ्' (६-२-२६) इत्यञ् ॥ ५५ ॥ उक्ष्णो लुक् ॥ ७ । ४ । ५६ ॥ उक्षन्शब्दस्यानपत्येऽणि परेऽन्त्यस्वरादेर्लुग् भवति । उक्ष्ण इदमौक्षं पदम् । अनपत्य इत्येव । उक्ष्णोऽपत्यमौक्ष्णः ॥ ५६ ॥ ब्रह्मणः ॥ ७ । ४ । ५७ ॥ ब्रह्मन्शब्दस्यानपत्येऽणि परेऽन्त्यस्वरादेर्लुग् भवति । ब्रह्मण इदं ब्राह्ममस्त्रम् । ब्राह्मो मन्त्रः । योगविभाग उत्तरार्थः ॥ ५७ ॥ *जातौ ॥ ७ । ४ । ५८ ॥ ब्रह्मन्शब्दस्य जातावभिधेयायामनपत्ये एवाणि परेऽन्त्यस्वरादेर्लुग् भवति । ब्रह्मण इयं ब्राह्मी ओषधिः । पूर्वेण सिद्धे जातावनपत्ये एवेति *नियमार्थं वचनम् । तेनोत्तरसूत्रेणापत्ये लुग् न भवति । ब्रह्मणोऽपत्यं ब्राह्मणः । जाताविति किम् । ब्रह्मणोऽपत्यं ब्राह्मो नारदः ॥ ५८ ॥ *अवर्मणो मनोऽपत्ये ॥ ७ । ४ । ५९ ॥ वर्मन्शब्दवर्जितस्य मन्नन्तस्यापत्यार्थविहितेऽणि परेऽन्त्यस्वरादेर्लुग् भवति । सुषाम्णोऽपत्यं सौषामः । माद्रसामः । भाद्रसामः । अवर्मण इति किम् । चक्रवर्मणोऽपत्यं चाक्रवर्मणः । मन इति किम् । सुत्वनोऽपत्यं सौत्वनः । याज्वनः । अपत्य इति किम् । चर्मणा छन्नश्चार्मणो रथः ॥ ५९ ॥ हितनाम्नो वा ॥ ७ । ४ । ६० ॥ हितनामन्शब्दस्यापत्येऽणि परेऽन्त्यस्वरादेर्लुग् भवति वा । हितनाम्नोऽपत्यं हैतनामनः । हैतनामः । अपत्य इति किम् । हैतनामनः ॥ ६० ॥ नोऽपदस्य तद्धिते ॥ ७ । ४ । ६१ ॥ नकारान्तानामपदसंज्ञकानां तद्धिते परेऽन्त्यस्वरादेर्लुग् भवति । मेधाविनोऽपत्यं मैधावः । मायावः । औडुलोमिः । शारलोमिः । आग्निशर्मिः । द्वयोरह्नोः समाहारो द्व्यहः । त्र्यहः । हस्तिनां समूहो हास्तिकम् । न इति किम् । वैद्युत तेजः । अपदस्येति किम् । मेधाविरूप्यम् मेधाविमयम् । तद्धित इति किम् । हस्तिना । हस्तिने ॥ ६१ ॥ कलापिकुथुमितैतलिजाजलिलाङ्गलिशिखण्डिशिलालिसब्रह्मचारिपीठसर्पिसूकरसद्मसुपर्वणः ॥ ७ । ४ । ६२ ॥ कलाप्यादीनां नकारान्तानामपदसंज्ञकानां तद्धिते परेऽन्त्यस्वरादेर्लुग् भवति । अत्र ये इन्नन्तास्तेषामनपत्य इति शिखण्डिपीठसर्पिणोरपत्येऽपि 'संयोगादिनः' ( ७-४-५३ ) इति सूकरसद्मसुपर्वणोस्त्वणि ( ७-४-५२ ) इति निषेधे प्राप्ते लुग्वचनम् । कलापिना प्रोक्तं वेदमधीयते कालापाः । कौथुमाः । तैतली जाजली लाङ्गली

—अन—॥—गार्भिणमिति । 'जातिश्च—' इति पुंवत् । अन्यथा 'स्वरस्य—' इति स्थानित्वात् प्राप्तिरेव न ॥—जातौ—॥—नियमार्थमिति । व्याकिचाचिनस्तु ब्रह्मणोऽपत्येऽणि ब्राह्म इति भवत्युत्तरेण लोपात् । सूत्राकरणे तु ब्राह्मण इति न स्यात् ॥—अवर्म—॥—चाक्रवर्मण इति । अत्र व्याकृतौ सर्वत्र 'नोपदस्य—' इत्यनेनापि नान्त्यस्वरादिलोपः 'अणि' इत्यनेन निषेधात् ॥

चाचार्याः । तत्कृतो ग्रन्थोऽप्युपचारात् तच्छब्देनोच्यते । तमधीयते तैतलाः । जाजलाः । लाङ्गलाः । शिखण्डिन इमेऽपत्यानि वा शैखण्डाः । शिलालिनः शैलालाः । सब्रह्मचारिणः साब्रह्मचाराः । पीठसर्पिणः पैठसर्पाः । सूकरसद्मनः सौकरसद्माः । सुपर्वणः सौपर्वाः ॥ ६२ ॥ वाश्मनो विकारे ॥ ७ । ४ । ६३ ॥ अश्मन्शब्दस्यापदस्य विकारे विहिते तद्धिते परेऽन्त्यस्वरादेर्लुग्वा भवति । अश्मनो विकारः आश्मः । आश्मनो वा । विकार इति किम् । आश्मनो मन्त्रः । नित्यमिच्छन्त्येके ॥ ६३ ॥ चर्मशुनः कोशसंकोचे ॥ ७ । ४ । ६४ ॥ चर्मन् श्वन् इत्येतयोरपदभूतयोर्यथासंख्यं कोशे संकोचे चार्थे तद्धिते परेऽन्त्यस्वरादेर्लुग् भवति । चर्मणो विकारः कोशश्चार्मः । कोशादन्यत्र चार्मणः । शुनोऽयं शौवः संकोचः । संकोचादन्यत्र शौवनः । कथं शुनो विकारोऽवयवो वा शौवं मासम् शौवं पुच्छमिति । हेमादत्वादञि 'नोऽपदस्य'—( ७-४-६१ ) इत्येव भविष्यति ॥ ६४ ॥ *प्रायोऽव्ययस्य ॥ ७ । ४ । ६५ ॥ अव्ययस्यापदसंज्ञकस्य तद्धिते परेऽन्त्यस्वरादेः प्रायो लुग् भवति । स्वर्भवः सौवः । बहिर्जातो बाह्यः । बाहीकः । *सायंप्रातिकः । पौनःपुनिकः । 'वर्षाकालेभ्यः' ( ६-३-७९ ) इतीकण् । *अनभिधानादव्ययलक्षणस्तन्न भवति । पौनःपुन्यम् । उपरिष्टादागतः औपरिष्टः । परत आगतः पारतः । *एकैकश्यम् । प्रायोग्रहणं प्रयोगानुसरणार्थम् । तेनेह न भवति । *आरातीयः । शाश्वतिकः । शाश्वतः । पार्थक्यम् । अपदस्येत्येव । कंयुः । शंयुः । अहंयुः ॥ ६५ ॥ *अनीनादट्यह्नोऽतः ॥ ७ । ४ । ६६ ॥ इन-अत्-अट्वर्जिते तद्धिते परेऽपदस्याह्नो योऽकारस्तस्य लुग् भवति । अह्नां समूहः आह्नम् । अह्ना निर्वृत्तम् आह्निकम् । अनीनादटीति किम् । द्वाभ्यामहोभ्यां निर्वृत्तः द्वाभ्यामहोभ्यां भृतोऽधीष्टो द्वे अहनी भूतो भावी वा *द्व्यहीनः । त्र्यहीणः । 'राज्यहः'—( ७-४-११० ) इत्यादिनेनः । अति, *अन्वहम् । प्रत्यहम् । अटि, द्वयोरह्नोः समाहारः *द्व्यहः । *त्र्यहः । उत्तमाहः । परमाहः । पुण्याहम् । सुदिनाहम् ॥ ६६ ॥ विंशतेस्तेर्डिति ॥ ७ । ४ । ६७ ॥ विंशतिशब्दस्यापदसंज्ञकस्य यस्तिशब्दस्तस्य डिति तद्धिते परे लुग् भवति । विंशत्या क्रीतः विंशकः । विंशतिरधिकास्मिन् शते विंशं शतम् । एकविंशम् । विंशतेः पूरणः विंशः । एकविंशः । आसन्ना विंशतिरेषामासन्नविंशाः । विंशतेरिति किम् । एकसप्ततेः पूरणः एकसप्ततः । एकाशीतः । तद्धित इत्येव । विंशतौ ॥ ६७ ॥ अवर्णेवर्णस्य ॥ ७ । ४ । ६८ ॥ अवर्णान्तस्येवर्णान्तस्य चापदस्य तद्धिते परे लुग्भवति । निर्दिश्यमानत्वादवर्णेवर्णयोरेव । दक्ष, दाक्षिः । प्लक्ष, प्लाक्षिः । चूडा, चौडिः । बलाका, बालाकिः । इवर्ण, नाभि, नाभेयः । संकृतिः, सांकृत्यः । दुली, दौलेयः । रोहिणी, रौहिणेयः । वत्सान् प्रीणातीति वत्सप्रीः तस्या अपत्यं वात्सप्रेयः । अत्र 'चतुष्पाद्भ्य एयञ्' ( ६-१-८३ ) । पर-

---

-प्रायो-॥-सायंप्रातिक इत्यादि ॥ अथाव्ययसमुदायोऽव्ययग्रहणेन गृह्यते इति सायंचिरम्–'इति सायप्रातराद्भ्यस्तनट् कस्मान्न भवति इत्याह–अनभिधानादित्यादि ॥—एकैकश्यमिति । एकमेकं ददाति एकशब्दस्यामन्तस्य वीप्सायां द्वित्वे 'प्लुप्चादावेक-' इत्यसो लुपि 'बह्वल्पार्थात्–' इति कारके शस् । एकैकशो भावः ष्यञ् ॥—आरातीय इत्यादि । भवार्थे 'दोरीय' 'वर्षाकालेभ्य' इतीकण्, 'भर्तुसन्ध्यादेरण्'—॥ -अनी-॥-द्व्यहीन इति । 'सर्वांशसंख्या'–इति विहितमट् परमपि समासान्तं बाधित्वानवकाशत्वात् 'राज्यह संवत्सर–' इतीन एव ॥—अन्वहमित्यादि ॥ अहरहरनु । अहरहः प्रति 'योग्यता'–इति वीप्सायामव्ययीभावे 'नपुंसकाद्वा' इत्यत् । यदा तु अनुगतं प्रतिगतमहः तदा 'अत्' इत्यट् बाधित्वाऽव्ययद्वारेण 'सर्वांश–' इत्यट् अह्नादेशश्च स्यात् ॥—द्व्यह । त्र्यहः । 'द्विगोर-

स्वाेवादेशो बाध्यते । श्रायं हविरित्यादिषु तु विशेषविहितत्वात् 'वृद्धिः स्वरे' ( ७-४-१ ) इत्यादिना वृद्धिरेव । अपदस्येत्येव । शुक्रतमः । ऊर्णायुः । शुचितरः । तद्धित इत्येव । वृक्षे । अग्न्योः ॥ ६८ ॥ अकद्रूपाण्ड्वोरुवर्णस्यैये ॥ ७ । ४ । ६९ ॥ कद्रूपाण्डुशब्दवर्जितस्य उवर्णान्तस्य एये तद्धिते परे लुग् भवति । कमण्डल्वा अपत्यं कामण्डलेयः । मद्रबाह्वा माद्रबाहेयः । शितिबाह्वाः शैतिबाहेयः । जम्ब्वा जाम्बेयः । लेखाभ्रुवः लैखाभ्रेयः । अत्र परत्वादुवादेशो बाध्यते । अकद्रूपाण्ड्वोरिति किम् । काद्रवेयः । पाण्डवेयः । उवर्णस्येति किम् । वैमात्रेयः । एय इति किम् । माण्डव्यः ॥ ६९ ॥ अस्वयंभुवोऽव् ॥ ७ । ४ । ७० ॥ स्वयंभूशब्दवर्जितस्यापदसंज्ञकस्योवर्णान्तस्य तद्धिते परे अव् इत्ययमादेशो भवति । उपगोरपत्यमौपगवः । कापटवः । बाभ्रव्यः । माण्डव्यः । शङ्कव्यं दारु । पिचव्यः कर्पासः । बाहविः । औपबिन्दविः (औपबाहविः)। अस्वयंभुव इति किम् । स्वायंभुवः ॥ ७० ॥ ऋवर्णोवर्णदोसिसुसशश्वदकस्मात्त इकस्येतो लुक् ॥७।४।७१ ॥ ऋवर्णान्तादुवर्णान्ताद्दोस्शब्दादिसन्तादुसन्ताच्छश्वदकस्माद्विवर्जितात्तकारान्ताच्च परस्येकप्रत्ययस्य संबन्धिन इत इकारस्य लुग्भवति । मातुरागतं मातृकम् । पैतृकम् । 'ऋत इकण्'(६-३-१५१)। उवर्ण,निषाद कर्ष्वा भवः नैषादकर्षुकः।शाबरजम्बुकः। 'उवर्णादिकण्'(६-३-३८)।दोस्, दोर्भ्यां तरति दौष्कः । इस्, सर्पिः पण्यमस्य सार्पिष्कः । बार्हिष्कः।उस्, धनुः प्रहरणमस्य धानुष्कः । याजुष्कः । उदश्विता संस्कृत ओदन औदश्वित्कः । शकृता संसृष्टः शाकृत्कः । याकृत्कः । शश्वदकस्मात्प्रतिषेधः किम् । शश्वद्भवं शाश्वतिकम् । 'वर्षाकालेभ्यः' ( ६-३-७९ ) इतीकण् । आकस्मिकम् । अध्यात्मादित्वादिकण् । प्रत्यययोरिसुसोर्ग्रहणादिह न भवति । आशिषा चरति आशिषिकः । वसेः क्विप् उस्, उषा चरति औषिकः । मथितं पण्यमस्य माथितिकः इत्यत्रापि तान्तत्वस्य लाक्षणिकत्वात् न भवति ॥ ७१ ॥ *असकृत्संभ्रमे ॥ ७ । ४ । ७२ ॥ भयादिभिश्चित्तव्याक्षेपात् भयोक्तुस्त्वरणं संभ्रमः । तस्मिन्द्योत्ये यत् प्रवर्तते पदं वाक्यं वा तदसकृदनेकवारं प्रयुज्यते । अहिरहिः । बुध्यस्वबुध्यस्व । अहिरहिरहिः । बुध्यस्व बुध्यस्व बुध्यस्व । हस्त्यागच्छति हस्त्यागच्छति । लघु पलायध्वं लघु पलायध्वम् । संभ्रमादौ पदं वाक्यं वा वर्तते न पदावयव इति नासौ *असकृद्द्विर्भवति । तच्च पदं वाक्यं वा परिनिष्पन्नं सत्तत्र वर्तते नापरिनिष्पन्नमिति कृतेषु यत्वादिकार्येषु तदसकृद्द्विर्भवति नाकृतेषु । तेन द्रोग्धा द्रोग्धा, द्रोढा द्रोढेत्येव भवति न तु द्रोग्धा द्रोढा द्रोढा द्रोग्धा । एवं माषवापाणि माषवापाणि । मातुःष्वसा मातुःष्वसा । हीणो हीणः । कृताद्विर्वचनानामपि रूपार्थयोरभेदेन स्थानिवद्भावेन चैकपदत्वात् *कौतस्कुतः पौनःपुन्यम् पौनःपुनिकः इत्यादिषु तद्धितः सिद्धो भवति ॥ ७२ ॥ *भृशाभीक्ष्ण्याविच्छेदे द्विः प्राक्तमबादेः ॥ ७ । ४ । ७३ ॥ क्रियायाः साकल्यमवयवक्रियाणां कार्त्स्न्यं भृशार्थः । पौनःपुन्यमाभीक्ष्ण्यम् । सातत्यं क्रियान्तरैरव्यवधानमविच्छेदः । एतेषु द्योत्येषु

मह्योऽद् ' ॥—अस—॥—असकृद्द्विर्वेति । अनेनासकृत् वक्ष्यमाणेस्तु द्विः ॥—कौतस्कुत इति । कस्कादौ कौतस्कुतेति पाठादागतेऽर्थे अणेव न तु 'केदामाव- ' इति ठञ् ॥—भृशाभीक्ष्ण्या—॥ आभीक्ष्ण्यं विच्छेदेनापि स्थित्वा २ क्रियाकरणे सम्भवति । अविच्छेदस्तु निरन्तरक्रियाकरणे सम्भवति इत्यनयोर्भेदः ॥

यत्पदं वाक्यं वा वर्तते तत्तमबादिप्रत्ययेभ्यः प्रागेव द्विरुच्यते । भृशे, लुनीहिलुनीहीत्येवायं लुनाति । अधीष्वाधीष्वेत्येवायमधीते । आभीक्ष्ण्ये, भोजं भोजं व्रजति । भुक्त्वा भुक्त्वा व्रजति । अविच्छेदे, पचति पचति । अधीते अधीते । ब्रह्मचर्यं चरति चरति । प्रपचति प्रपचति । सत्करोति सत्करोति । अलंकरोति अलंकरोति । भृशादयश्च क्रियाधर्मा इति क्रियापदमेवात्र संबध्यते । *क्रियाविशेषणस्यापि क्रियात्वेनाध्यवसायात् भृशादियोगे द्विर्वचनं भवति । यथा पुनःपुनः पचति । भूयो भूयः पठति । वारंवारं भुङ्क्ते । मुहुर्मुहुः पिबति । शनैः शनैर्गच्छति । मन्दं मन्दं तुदति । स्तोकं स्तोकं चलति । पृथक्पृथगभिधत्ते । यदा तु क्रियारूपता न विवक्ष्यते तदा 'नवा गुणः सदृशे रित्' ( ७–४–८६ ) इति सादृश्ये द्विर्वचनं भवति । मन्दं मन्दं तुदति । स्तोकं स्तोकम् *अस्तमयति इति । एतेष्विति किम् । लुनीहि, भुक्त्वा व्रजति । पचति । भृशाभीक्ष्ण्ययोर्यङिति यङन्तमुक्तार्थत्वान्न द्विरुच्यते । यदा तु भृशार्थे यङ् तदाभीक्ष्ण्यार्थाभिव्यक्तये *द्विर्वचनम् पापच्यते पापच्यत इति । यदा तु तत्प्रतिपादनाय पञ्चमी विधीयते तदा तस्या द्विर्वचनसहायाया एवाभीक्ष्ण्यप्रतिपादने सामर्थ्यं क्त्वाणमोरिवेति द्विर्वचनमपि भवति पापच्यस्व पापच्यस्वेति । प्राक्तमबादेरिति किम् । पचतिपचतितमाम् । पचतिपचतितराम् । अत्र तमबादेरातिशायिकात्पूर्वमेव द्विर्वचनम् पश्चात्तमबादिः । अन्यथा ह्यनियमः स्यात् ॥ ७३॥ नानावधारणे ॥ ७।४।७४॥ नाना *भूतानां भेदेनेयत्तापरिच्छेदो नानावधारणम् । तस्मिन्यच्छब्दरूपं वर्तते तद्द्विरुच्यते । योगविभागात्प्राक्तमबादेरिति नानुवर्तते । अस्मात्कार्षापणादिह भवद्भ्यां माषं माषं देहि । प्रत्येकं माषमात्रं देहि नाधिकमित्यर्थः । द्वौ द्वौ देहि । त्रीन् त्रीन् देहि । *एषु कार्षापणसंबन्धिनो माषा न साकल्येन दित्सिताः किं तर्हि प्रत्येकं माषमात्रमेव द्वावेव त्रय एव वेति न वीप्साऽस्ति । नानाग्रहणं किम् । अस्मात्कार्षापणादिह भवद्भ्यां माषं देहि । एकमेवेत्यर्थः । अवधारण इति किम् । अस्मात्कार्षापणादिह भवद्भ्यां माषं द्वौ त्रीन्वा देहि ॥७४॥ आधिक्यानुपूर्व्ये ॥७।४।७५॥ आधिक्यं प्रकर्षः । आनुपूर्व्यं क्रमानुल्लङ्घनम् । एतयोर्यच्छब्दरूपं वर्तते तद्द्विरुच्यते । आधिक्ये, नमो नमः । आधिकं नम इत्यर्थः । कन्या दर्शनीया कन्या दर्शनीया । अहोदर्शनीया अहोदर्शनीया । मह्यं रोचते मह्यं रोचते । एष तवाञ्जलिरेष तवाञ्जलिः । मह्यं रोचतेतराम् मह्यं रोचतेतराम् । अत्र प्रागातिशायिकः पश्चाद्द्वित्वम् । आनुपूर्व्ये, मूले मूले स्थूलाः । *अग्रे अग्रे सूक्ष्माः । ज्येष्ठं ज्येष्ठमनुप्रवेशय । कनिष्ठं कनिष्ठमासय । मूलाद्यानुपूर्व्येणैषां स्थौल्यादय इत्यर्थः । अग्रमूलमध्यानि त्रयो भागाः तत्रैकमेव मुख्यमग्रं मूलं च । अन्येषां तु

---

–क्रियाविशेषणस्येति । यदि क्रियापदमेवात्र सबध्यते तर्हि पुन पचतीत्यत्र कथ क्रियाविशेषणस्य द्विर्वचनमित्याशङ्का ॥–अस्तमयतीति । इण्क् गतौ । अयनमय. अस्तमयोऽस्तमयः।स इवाचरति क्विपि रूपमिदम् इ दु इत्यस्य वा ॥–द्विर्वचनमिति । यदा तु आभीक्ष्ण्ये यङ् तदा भृशार्थस्यावयवक्रियासाकल्यरूपस्य मध्यपातित्वेन गतार्थत्वाद्विचारो न कृत ॥–नाना–॥–भूतानामित्यादि ॥ नानाशब्दो नानाभूते माषादौ वर्तते तस्यावधारणमेकत्वादि नानावधारणमिति न वीप्साऽस्तीति॥ इह सत्यपि नानावधरणे वीप्साऽस्त्येव । द्वावपि हि तौ माषौ प्रत्येक दानेन वीप्स्येते । ततो वीप्सायामेव द्विर्वचन भविष्यति किमर्थमिदमित्याह एषु कार्षापणसंबन्धिन इत्यादि । वीप्सा हि द्विरुच्यमानस्य यावन्तोऽर्थभेदास्तावता प्रत्येक क्रियादिना व्याप्तुमिच्छा सा न द्वयोस्त्रयाणां वा सबन्धे भवति । अपि तु सर्वेषामेव । अत्र च कार्षापणो नामानेकमाषसमुदायरूपस्तत्र तत्सबन्धिनो माषा. सर्वे एव न दातुमिष्टा. किंतु द्वावेव, वीप्सायां तु सर्वं दद्यात्येव ॥–आधि–॥–अग्रेअग्रे इति। विरामविवक्षणात् 'न सधि' इति सधिनिषेधः

भगानामपेक्षाकृतोऽग्रमूलव्यपदेशः । अधःसन्निविष्टमपेक्ष्याग्रव्यपदेशः । उपरिसंनिविष्टमपेक्ष्य मूलव्यपदेशः । न चैकरूपं भागानां स्थौल्यं सौक्ष्म्यं वा किं तर्हि यथामूलमुपचीयते स्थौल्यम् यथाग्रं च सौक्ष्म्योपचय इति *वीप्सा नास्ति । एवं ज्येष्ठत्वकनिष्ठत्वयोरपि *आपेक्षिकत्वाद्वीप्सा नास्तीति वचनम् ॥ ७५ ॥ **डतरडतमौ समानां स्त्रीभावप्रश्ने** ॥ ७।४।७६ ॥ समानां केनचिद्गुणेन तुल्यतया संप्रधारिताना स्त्रीलिङ्गस्य भावस्य प्रश्ने यद्वर्तते डतरान्तं डतमान्तं च शब्दरूपं तद्द्विरुच्यते । उभाविमावाढ्यौ कतरा कतरा अनयोराढ्यता किं दैवकृता उत पौरुषकृतेत्यर्थः। कतमा कतमा अनयोराढ्यता किं साधनसंबन्धकृता उतान्यसंबन्धकृता आहोस्विदुभयसंबन्धकृतेत्यर्थः । एवं सर्वे इमे आढ्याः कतरा कतरा एषामाढ्यता। कतमा कतमा एषामाढ्यता । सर्वे इमे आढ्याः यतरा यतरा एषां विभूतिः ततरा ततरा कथ्यताम् । यतमा यतमा एषां संपत् ततमा ततमा कथ्यताम् । डतरडतमाविति किम् । उभाविमावाढ्यौ कानयोराढ्यता । समानामिति किम् । आढ्योऽयं कतरास्याढ्यता। कतमास्याढ्यता। स्त्रीग्रहणं किम् । उभाविमावाढ्यौ कतरदनयोराढ्यत्वम्।कतमोऽनयोर्विभवः। भावग्रहणं किम्। उभाविमौ लक्ष्मीवन्तौ कतरानयोर्लक्ष्मीः। कतमानयोर्लक्ष्मीः । लक्ष्यतेऽनया पुण्यकर्मेति लक्ष्मीः। इयं स्त्री भवति न भाव इति । प्रश्न इति किम् । उभाविमावाढ्यौ यतरानयोराढ्यता ततरा श्रूयताम् । केचिड्डतरडतमाभ्यां स्त्रीलिङ्गाच्चान्यत्रापीच्छन्ति । उभाविमावाढ्यौ कीदृशी कीदृशी अनयोराढ्यता । कतरत्कतरदनयोराढ्यत्वम् । कतमः कतमोऽनयोर्विभवः । कतरानयोराढ्यतेत्यादौ प्राप्ते स्वार्थिकं द्विर्वचनम् ॥ ७६ ॥ ***पूर्वप्रथमावन्यतोऽतिशये** ॥ ७ । ४ । ७७ ॥ पूर्वशब्दः प्रथमशब्दश्चान्यतोऽतिशये *तदर्थस्य प्रकर्षे द्योत्ये द्विरुच्यते । आतिशायिकापवादः । पूर्वं पूर्वं पुष्यन्ति । प्रथमं प्रथमं पच्यन्ते । अन्येभ्यः पूर्वतरं पुष्यन्ति, प्रथमतरं पच्यन्त इत्यर्थः । अन्यत इति किम् । पूर्वतरं पुष्यन्ति । प्रथमतरं पच्यन्ते । अत्र स्वव्यापारापेक्षातिशयो गम्यते *न तावदिमे किशलयिता यावत्पुष्पिताः, न तावदिमे पुष्पिता यावत्पका इति । अतिशय इति किम् । पूर्वं, प्रथमम् । अन्येऽतिशयमात्रेऽपि द्विर्वचनमिच्छन्ति तमप्तरवर्थे च विकल्पम् ॥ ७७ ॥ **प्रोपोत्सं पादपूरणे** ॥ ७ । ४ । ७८ ॥ प्र उप उत् सम् इत्येतान्युपसर्गरूपाणि द्विरुच्यन्ते तेन चेत् पादः पूर्यते॥ प्रप्रशान्तकषायाग्नेरुपोपप्लववर्जितम् ॥ उदुज्ज्वलं तपो यस्य संसंश्रयत तं जिनम् ॥१॥ पादपूरण इति किम् । प्रणम्य सच्छासनवर्धमानम् । इदं छन्दसीति कश्चित् ॥ ७८ ॥ **सामीप्येऽधोऽध्युपरि** ॥ ७ । ४ । ७९ ॥ अधस् अधि उपरि इत्येतानि शब्दरूपाणि द्विरुच्यन्ते सामीप्ये विवक्षिते । सामीप्यं देशकृता कालकृता वा प्रत्यासत्तिः । अधोऽधो ग्रामम् । अध्यधि ग्रामम् । उपर्युपरि ग्रामम् । उपर्युपरि दुःखानि। सामीप्य इति किम् । अधः पन्नगाः । अधि ब्रह्मदत्ते पञ्चालाः । उपरि चन्द्रमाः। कथमुपरि शिरसो घट इति । अत्रौत्तराधर्यमात्रं विवक्षितम् न सदपि सामीप्यमिति न भवति । यथायथमिति मकारान्तमव्ययं यथास्वमित्यर्थे आश्रीयते इति यथास्वे यथायथमिति नारभ्यते ॥ ७९ ॥ ***वीप्सायाम्** ॥ ७।४।८० ॥ पृथक्संख्यायुक्तानां

॥-वीप्सा नास्तीति। साकल्येन व्याप्त्यभावात्॥—आपेक्षिकत्वादिति ॥ साकल्य नास्ति । नहि ये वृद्धास्तेवृद्धा एव ये च कनिष्ठास्ते कनिष्ठा एवेति॥-पूर्व—॥—तदर्थस्येति। प्रकर्षो ह्यर्थस्य भवति तद्धर्मत्वात्। ततश्च द्विर्वचनभाजोः पूर्वप्रथमशब्दयोरेव प्रत्यासत्तेर्विज्ञायत इति ॥-न तावदिमे इति। क्रमो हि किशलयानन्तर पुष्प तत्त्यागे न प्रथममेव पुष्पमेवं पुष्पपरित्यागे न फलमिति॥-वीप्सायाम् ॥

बहूनां सजातीयानामर्थानां साकल्येन प्रत्येकं क्रियया गुणेन द्रव्येण जात्या वा युगपत्प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा । तस्यां यद्वर्तते शब्दरूपं तद्द्विरुच्यते । वीप्सा च स्याद्यन्तेष्वेव भवतीति तेषामेव द्विर्वचनम् । वृक्षं वृक्षं सिञ्चति । ग्रामो ग्रामो रमणीयः । गृहे गृहे अश्वाः । योद्धा योद्धा क्षत्रियः । तथा रूपं रूपं पश्यति । शुक्लं शुक्लमानयति। क्रियां क्रियामारभते । *उपचारतभेदस्यापि भवति । खिन्नः खिन्नो विश्राम्यति । क्षीणः क्षीणः पयः पिबति । *व्यापकधर्मस्यापि व्याप्येनाभेदोपचाराद्भेदे सति व्यापकान्तरापेक्षायां वीप्सा भवति । स एवान्योऽन्यः संपद्यते । नवो नवो भवति जायमान इति । आढ्यतरमाढ्यतरमानय । अत्र द्विर्वचनात्प्रागातिशायिकः । वीप्सायामिति किम् । वृक्षं सिञ्चति । जात्येकशेषतरेतरयोगक्रमाभिधानेषु सत्यामपि व्याप्तौ यथोक्तलक्षणवीप्साया अभावान्न भवति । तथाहि—संपन्नो यवः संपन्ना यवा इति जातेरेकत्वात् बह्वर्थाभिधानं नास्ति । अस्मिन्वने वृक्षाः शोभना इति एकशेषे साकल्येन व्याप्तिर्नास्ति । तथाहि—कतिपयेष्वपि वृक्षेषु शोभनेष्वयं प्रयोगो भवति । एवमितरेतरयोगेऽपि । अस्मिन्वने धवखदिरपलाशाः शोभना इति न वीप्सा । तथास्मिन्वनेऽयं वृक्षः शोभनोऽयं वृक्षः शोभन इति क्रमाभिधाने साकल्येनापि व्याप्तौ यौगपद्याभावान्न भवति । अस्मिन्वने सर्वे वृक्षाः शोभना इत्यत्र तु सर्वशब्देन वीप्सार्थाभिधानान्न भवति । यथा तद्धितसमासाभ्याम् । तद्धितेन तावत्, द्वौ द्वौ पादौ ददाति द्विपदिकां ददाति । एकैकं ददाति एकशो ददाति । एकैकशो ददातीत्यत्र वीप्सायां द्विर्वचने कृते ' बह्वल्पार्थात् '–(७–२–१५०) इति कारके प्शस् भविष्यति । समासेनापि, अर्थमर्थं प्रति प्रत्यर्थम् । गेहंगेहमनुप्रवेशमास्ते गेहानुप्रवेशमास्ते । क्वचित्तु वीप्स्यमानमपि समासेनाभिधीयते । पर्वणि पर्वणि सप्त पर्णान्यस्य सप्तपर्णः । पङ्क्तौ पङ्क्तौ अष्टौ पदान्यस्य अष्टापदः । ननु च वृक्षं वृक्षं सिञ्चतीत्यादौ वीप्सायां बहवोऽर्थाः प्रतीयन्ते तत्र बहुषु बहुवचनं प्राप्नोति । उच्यते । पृथक्संख्यायुक्तानामिति वचनात् परिगृहीतैकत्वादिसंख्यानां पदार्थानां वीप्सया योग इति पुनः समुदायाद्बहुवचनं न भवति ॥ ८० ॥ *प्लुप् चादावेकस्य स्यादेः ॥ ७ । ४ । ८१ ॥ एकशब्दस्य वीप्सायां द्विरुक्तस्यादौ वर्तते य एकशब्दस्तत्संबन्धिनः स्यादेः प्लुप् भवति । पित्करणं पुंवद्भावार्थम् । अत एवातद्धितेऽपि लुपि पुंवद्भावः । एकैकः। एकैका । एकैकस्याः । एकएका । एकएकस्याः।

—उपचरितभेदस्येति । एकस्यापि देशकालावस्थादिभेदेन भेदोपचारादनेकत्वाद्वीप्साया द्विर्वचनाविरोध इत्यर्थ ॥—व्यापकधर्म्मस्यापीत्यादि ॥ अत्रेयमाशङ्का यदुतान्योन्य सपद्यत इत्यादिषु अन्यत्वादिधर्म्म एक एव तत्कथ वीप्सा इत्याह—व्यापकधर्मोऽन्यत्वादि ॥ जीवश्च व्याप्य॰ स च जीव॰ कदाचिद्धस्ती भवति कदाचिन्नर॰ कदाचित् शृगाल इत्यनेकभेद. ।व्यापकधर्मस्य व्याप्येन सहाभेदोपचारात् भेदत्व ततो व्यापकधर्म्मस्य भेदे नानात्वे सति व्यापकान्तरापेक्षायां भवति संपद्यत इत्यादिक्रियारूपाया वीप्सा भवति।यत क्रियादिना व्याप्तुमिच्छा वीप्सा इति क्रियादिर्व्यापक । यथाऽन्योन्य. सपद्यते स एव जीवोऽन्योन्यो भवति । कोऽर्थो कदाचिद्धस्ती नर श्वा च भवतीति व्याप्यभूतो जीवोऽनेकप्रकारः तदभेदाद् व्यापकधर्मोप्यनेकप्रकारः । ततो बहूनामर्थानामित्यादि यद्वीप्सालक्षण तद् घटत एव । एव नवोनवो भवति जायमान इत्यत्रापि । ननु तस्यैवान्यत्वमन्यत्व सपद्यत इत्यर्थः तस्य च जायमानस्य नवत्वं भवतीत्यर्थ इत्यनयोः प्रयोगयोरर्थः तत्कथ स एवान्योन्य. सपद्यते स एव नवो २ भवति जायमान इति सामानाधिकरण्य स्यात् । उच्यते । धर्मधर्मिणोरभेदनयेन भविष्यतीति॥—प्लुप्चा—

अत्र विरामस्य विवक्षितत्वात्पुंवद्भावे सति संधिकार्यं न भवति । यथा अग्रे अग्रे सूक्ष्माः । यथा वा, ऋक् ऋगिति । *आदिपदस्य स्यादेः प्लुप्युत्तरेणाभेदाश्रयणे स्याद्यन्तत्वात् 'सर्वादयोऽस्यादौ' ( ३—२—६१ ) इति पुंवद्भावो न प्राप्नोतीति लुपः पित्त्वं विधीयते । चकार उत्तरत्र प्लुप्द्विर्वचनयोः समुच्चयार्थः । इह तु द्विर्वचनं पूर्वेणैव सिद्धम् । प्लुप्मात्रं विधीयते । आदाविति किम् । उत्तरोक्तौ मा भूत् ॥ ८१ ॥ द्वन्द्वं वा ॥ ७ । ४ । ८२ ॥ द्वन्द्वमिति वीप्सायां द्विरुक्तस्य द्विशब्दस्यादौ स्यादेः प्लुप् इकारस्याम्भाव उत्तरत्रेकारस्यात्वं स्यादेश्चाम्भावो वा निपात्यते । द्वन्द्वं तिष्ठतः । द्वौ द्वौ तिष्ठतः । नरकपटलान्यधोऽधो द्वन्द्वं हीनानि । द्वाभ्यां द्वाभ्यां हीनानि । द्वन्द्वं युद्धं वर्तते । द्वयोर्द्वयोर्युद्धं वर्तते । द्वन्द्वं कृतं द्वाभ्यां द्वाभ्यां कृतम् । द्वन्द्वं स्थितं द्वयोर्द्वयोः स्थितम् ॥ ८२ ॥ *रहस्यमर्यादोक्तिव्युत्क्रान्तियज्ञपात्रप्रयोगे ॥ ७ । ४ । ८३ ॥ वीप्सायामिति निवृत्तम् । द्वन्द्वमिति द्विशब्दस्य द्विर्वचनं शेषं पूर्ववत् रहस्यादिषु गम्यमानेषु निपात्यते । रहस्ये, द्वन्द्वं मन्त्रयन्ते । *रहस्यं मन्त्रयन्त इत्यर्थः । मर्यादोक्तौ, आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते । माता पुत्रेण पौत्रेण प्रपौत्रेण तत्पुत्रेण च मैथुनं यातीत्यर्थः । व्युत्क्रान्तौ, द्वन्द्वं व्युत्क्रान्ताः द्वैराश्येन भिन्ना इत्यर्थः । व्युत्क्रान्तिर्भेदः । यज्ञपात्रप्रयोगे, द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । द्वे द्वे प्रयुनक्तीत्यर्थः । रहस्यादिष्विति किम् । द्वौ तिष्ठतः । उक्तिग्रहणं शब्दोपात्तायां मर्यादायां यथा स्यात् प्रकरणादिगम्यायां मा भूदित्येवमर्थम् । द्वन्द्वः समासः । द्वन्द्वः कलहः । द्वन्द्वं युद्धं, द्वन्द्वं युग्मम् । द्वन्द्वानि सहते । दुःखानीत्यर्थः । अत्र द्वन्द्व इति शब्दान्तरम् ॥ ८३ ॥ लोकज्ञातेऽत्यन्तसाहचर्ये ॥ ७ । ४ । ८४ ॥ लोकज्ञातेऽत्यन्तसाहचर्ये द्योत्ये द्विशब्दस्य पूर्ववत् द्वन्द्वमिति निपात्यते । द्वन्द्वं नारदपर्वतौ । द्वन्द्वं रामलक्ष्मणौ । द्वन्द्वं बलदेववासुदेवौ । द्वन्द्वं स्कन्दविशाखौ । द्वन्द्वं शिववैश्रवणौ । लोकज्ञात इति किम् । द्वौ चैत्रमैत्रौ । अत्यन्तसाहचर्य इति किम् । द्वौ युधिष्ठिरार्जुनौ । द्वन्द्वमिति च सूत्रत्रयेऽपि नपुंसकत्वं वेदितव्यमनुप्रयोगस्य नपुंसकत्वार्थम् ॥ ८४ ॥ *आबाधे ॥ ७ । ४ । ८५ ॥ आबाधो मनःपीडा प्रयोक्तृधर्मः । तस्मिन् विषये वर्तमानं शब्दरूपं द्विरुच्यते तत्र चादौ पूर्वपदे स्यादेः प्लुप् भवति । ऋक् ऋक् । पूः पूः । गतगतः । नष्टनष्टः । गतगता । नष्टनष्टा । नन करोमि । ऋगादेर्दुरुच्चारणादिना पीड्यमानः प्रयोक्ता एवं प्रयुङ्क्ते । अष्टमी अष्टमी कालिका कालिका इत्यत्र तु पूरणप्रत्ययान्तत्वात् कोपान्त्यत्वाच्च पुंवद्भावो न भवति ॥ ८५ ॥ *नवा गुणः सदृशे रित् ॥ ७ । ४ । ८६ ॥ गुणशब्दो मुख्यसदृशे गुणे गुणिनि वा वर्तमानो वा द्विरुच्यते तत्र चादौ वर्तमानस्य स्यादेः प्लुप् भवति सा च रित् । रित्करणं प्रतिषिद्धस्यापि पुंवद्भावस्य 'रिति' ( ३—२—५८ ) इति विधानार्थम् । शुक्लशुक्लं रूपम् । शुक्लशुक्लः पटः । *कालककालिका । शुक्लादिरादृशमपरिपूर्णगुणमेवमुच्यते । वाग्रहणात्पक्षे जातीयरपि भवति । शुक्लजातीयः । पटुजातीयः । गुण इति किम् । अग्निर्माणवकः ।

॥—आदिपदस्येत्यादि । ननु चात्र स्यादेर्लुपा निवृत्ते ' सर्वादयोस्यादौ ' इति पुंवद्भावो भविष्यति किं पित्त्वविधानेनेत्याशङ्का ॥——रहस्य——॥——रहस्यं मन्त्रयन्त इत्यर्थ इति । अत्र द्वन्द्वशब्दो रहस्यार्थे न तु द्विशब्दार्थे सख्या कान्चिदस्ति । यदनेकार्थे 'द्वन्द्वं स द्वन्द्वमाहवे रहस्ये मिथुने युग्मे' इति ॥-आबा-॥—कालिकाकालिकेति । ' गौरादिभ्य ' इति ङ्या काल्येव ' यावादिभ्य क ' ॥—नवा—॥—कालककालिकेति । ' भाजगो-' इति ' ङ्या काल्येव कालिका ॥

गौर्वाहीकः। सदा गुणवाची यः स इह गुणशब्दो गृह्यते। अयं तूपमानात्प्राग्द्रव्यवाची पश्चात्तु तैक्ष्ण्यजाड्यादिगुणवाचीति न भवति। सदृश इति किम्। शुक्लः पटः। पटुश्चैत्रः ॥ ८६ ॥ **प्रियसुखे चाकृच्छ्रे** ॥ ७। ४। ८७ ॥ प्रियसुखशब्दौ अकृच्छ्रे क्लेशाभावे वा द्विरुच्येते तत्र चादौ शब्दरूपस्य स्यादेः प्लुप् भवति। प्रियप्रियेण ददाति।प्रियेण ददाति।सुखसुखेनाधीते।सुखेनाधीते।अक्लेशेनाधीते इत्यर्थः।अकृच्छ्र इति किम्। प्रियः पुत्रः।सुखो रथः। चकारः प्लुप् चादौ स्यादेः इत्यस्यानुकर्षणार्थः ॥ ८७ ॥ **वाक्यस्य परिर्वर्जने** ॥ ७। ४। ८८ ॥ वाक्यस्यावयवो यः परिशब्दो न पदस्य स वर्जने वर्तमानो वा द्विरुच्यते। परिपरि त्रिगर्तेभ्यो वृष्टो मेघः। परि त्रिगर्तेभ्यो वृष्टो मेघः। परिपरि सौवीरेभ्यः। परि सौवीरेभ्यः। वाक्यस्येति किम्। परित्रिगर्तं वृष्टो मेघः। *वाक्यस्यैवेत्यवधारणविज्ञानात्पदावयवे न भवति। परिरिति किम्। अप त्रिगर्तेभ्यो वृष्टो मेघः। वर्जन इति किम्। साधुर्देवदत्तो मातरं परि ॥ ८८ ॥ **संमत्यसूयाकोपकुत्सनेष्वाद्यामन्त्र्यमादौ स्वरेष्वन्त्यश्च प्लुतः** ॥ ७। ४। ८९ ॥ कार्येष्वाभिमत्यं सम्मतिः पूजनं वा। परगुणासहनमसूया। कोपः क्रोधः। निन्दा कुत्सनम्। एते प्रयोक्तृधर्मा नाभिधेयधर्माः। एतेष्वर्थेषु वर्तमानस्य वाक्यस्यादिभूतमामन्त्र्यमामन्त्रणीयार्थं पदं द्विरुच्यते। तत्र द्विर्वचने आदौ पूर्वोक्तौ स्वरेषु स्वराणां मध्ये योऽन्त्यस्वरः स प्लुतो वा भवति। संमत्यसूयाकोपकुत्सनेष्विति बहुवचनात् द्विर्वचने विकल्पो न संबध्यते। संमतौ, माणवक ३ माणवक माणवक माणवक अभिरूपक ३ अभिरूपक अभिरूपक अभिरूपक शोभनः खल्वसि। असूयायाम्, माणवक ३ माणवक माणवक माणवक अभिरूपक ३ अभिरूपक अभिरूपक अभिरूपक रिक्तं ते आभिरूप्यम्। कोपे, माणवक ३ माणवक माणवक माणवक अविनीतक ३ अविनीतक अविनीतक अविनीतक इदानीं ज्ञास्यसि जाल्म। कुत्सने, शक्तिके ३ शक्तिके शक्तिके शक्तिके यष्टिके ३ यष्टिके यष्टिके यष्टिके रिक्ता ते शक्तिः। संमत्यसूयाकोपकुत्सनेष्विति किम्। देवदत्त गामभ्याज शुक्लां दण्डेन। आदीति किम्। शोभनः खल्वसि माणवक। आमन्त्र्यमिति किम्। उदारो देवदत्त। आदाविति किम्। उत्तरोक्तौ मा भूत्। स्वरेष्विति किम्। व्यञ्जनान्तस्यापि यथा स्यात्। अन्त्य इति किम्। आदिर्मध्यो वा मा भूत्। चकारो द्विर्वचनानुकर्षणार्थः। तथा च चानुकृष्टत्वादुत्तरत्र नानुवर्तते ॥ ८९ ॥ **भर्त्सने पर्यायेण** ॥ ७। ४। ९० ॥ भर्त्सनं कोपेन दण्डाविष्करणम्। तत्र द्विर्वचनं सिद्धमेव प्लुतार्थं आरम्भः। भर्त्सने वर्तमानस्य वाक्यस्य यदामन्त्र्यं पदं तद्द्विरुच्यते। तत्र पर्यायेण पूर्वस्यामुत्तरस्यां वोक्तौ स्वरेष्वन्त्यः स्वरः प्लुतो वा भवति। चौर ३ चौर, चौर चौर ३, चौर चौर, दस्यो ३ दस्यो, दस्यो दस्यो ३, दस्यो दस्यो घातयिष्यामि त्वां, बन्धयिष्यामि त्वाम् ॥ ९० ॥

---

–वाक्य–॥–वाक्यस्यैवेति। यद्यपि य पदावयव स वाक्यस्यापि तथापि यो वाक्यस्यैव भवतीति। ननु परिशब्दो नावाक्यावयवः कश्चिदस्ति सर्वमपि हि पद वाक्यावयवे प्रयुज्यते वाक्यावयवत्वात् संव्यवहारस्य संव्यवहारार्थत्वाच्च शब्दप्रयोगस्य। न च परिशब्द केवल प्रयुज्यमानो वर्जन गमयति द्योतकत्वात्। द्योतको हि कस्यचित् संनिधावेव प्रयुज्यमानो द्योत्य द्योतयतीति वाक्यावयवत्वे सिद्धे वाक्यावयवत्वप्रतिपत्त्यर्थं

*त्यादेः साकाङ्क्षस्याङ्गेन ॥७। ४ ।९१॥ वाक्यस्य स्वरेष्वन्त्यः प्लुतो वेत्यनुवर्तते भर्त्सने इति च । भर्त्सने वर्तमानस्य वाक्यस्य स्वरेष्वन्त्यः स्वरस्त्याद्यन्तस्य
पदस्य वाक्यान्तराकाङ्क्षस्य अङ्ग इत्यनेन निपातेन युक्तस्य संबन्धी प्लुतो वा भवति । अङ्ग कूज ३ अङ्ग कूज इदानीं ज्ञास्यसि जाल्म। अङ्ग व्याहर ३ अङ्ग व्या-
हर इदानीं ज्ञास्यसि जाल्म । त्यादेरिति किम् । अङ्ग देवदत्त मिथ्या वदसि । साकाङ्क्षस्येति किम् । *अङ्ग पच, नैतदपरमाकाङ्क्षति । अङ्गेनेति किम् । *दे-
वदत्त कूजेदानी ज्ञास्यसि जाल्म । भर्त्सन इत्येव । अङ्गाधीष्व मोदकं ते दास्यामि ॥ ९१ ॥ क्षियाशीः प्रैषे ॥ ७ । ४ । ९२ ॥ क्षिया आचारभ्रेषः । आशीः
प्रार्थनाविशेषः । प्रैषोऽसत्कारपूर्विका व्यापारणा । एतेषु वर्तमानस्य वाक्यस्य स्वरेष्वन्त्यः स्वरस्त्याद्यन्तस्य पदस्य वाक्यान्तराकाङ्क्षस्य संबन्धी प्लुतो वा
भवति । क्षियायाम्, स्वयं ह रथेन याति ३ उपाध्यायं पदातिं गमयति । स्वयं ह रथेन याति उपाध्यायं पदातिं गमयति । स्वयं ह ओदनं भुङ्क्ते ३ उपाध्यायं
सक्तून् पाययति।स्वयं ह ओदनं भुङ्क्ते उपाध्यायं सक्तून् पाययति।आशिषि,सिद्धान्तमध्येषीष्ठाः३व्याकरणं च तात।सिद्धान्तमध्येषीष्ठा व्याकरणं च तात।पुत्रांश्च लप्सी-
ष्ठाः३धनं च तात।पुत्रांश्च लप्सीष्ठाःधनं च तात। प्रैषे,त्वं ह पूर्वं ग्रामं गच्छ ३चैत्रो दक्षिणम् । त्वं ह पूर्वं ग्रामं गच्छ चैत्रो दक्षिणम् । कटं च कुरु ३ग्रामं च गच्छ३ ।कटं च
कुरु ग्रामं च गच्छ । त्यादेरित्येव । भवता खलु कटः कर्तव्यः ग्रामश्च गन्तव्यः । साकाङ्क्षस्येत्येव । दीर्घं ते आयुरस्तु ॥ ९२ ॥ चितीवार्थे ॥ ७ । ४ ।९३॥
इवार्थे उपमायां वर्तमाने चित् इत्यस्मिन्निपाते प्रयुज्यमाने वाक्यस्य स्वरेष्वन्त्यः स्वरः प्लुतो वा भवति । अग्निश्चिद्भाया३त् अग्निश्चिद्भायात् । राजा चिद्ब्रूया३त् ।
राजा चिद्ब्रूयात् । अग्निरिव राजेवेत्यर्थः । चितीति किम् । अग्निरिव भायात् । चितीति रूपसत्ताश्रयणादप्रयोगे न भवति । अग्निर्माणवको भायात् । इवार्थ
इति किम् । कर्णवेष्टकांश्चित्कारय। कर्णवेष्टकानेवेत्यर्थः । कथंचिदाहुः कृच्छ्रेणाहुरित्यर्थः ॥ ९३ ॥ प्रतिश्रवणनिगृह्यानुयोगे ॥ ७ । ४ । ९४ ॥ प्रतिश्रवणं
परोक्तस्याभ्युपगमः स्वयं प्रतिज्ञानं श्रवणाभिमुख्यं च । निगृह्य स्वमतात्प्रच्याव्यानुयोगो निग्रहपदस्याविष्करणं निगृह्यानुयोगः । उपालम्भ इति यावत् ।एतयोर्वर्त-
मानस्य वाक्यस्य स्वरेष्वन्त्यस्वरः प्लुतो वा भवति । अभ्युपगमे, गां मे देहि भोः । हन्त ते ददामि ३। हन्त ते ददामि । स्वयं प्रतिज्ञाने, नित्यः शब्दो भवितुमर्हति
३ । नित्यः शब्दो भवितुमर्हति । श्रवणाभिमुख्ये, भो देवदत्त किं मार्ष ३ । किं मार्ष । मार्षेति श्रवणाभिमुख्यद्योतको निपातः । निगृह्यानुयोगे, अद्य श्राद्धमित्या-
त्थ ३ । अद्य श्राद्धमित्यात्थ । अद्य श्राद्धेति वादी युक्त्या स्वमतात्प्रच्याव्यैवमुपालभ्यते ॥ ९४ ॥ विचारे पूर्वस्य ॥ ७ । ४ । ९५ ॥ किमिदं स्यात् किमिदमिति
निरूपणं विचारः संशय इति यावत् । तस्मिन् विषये संशय्यमानस्य यत्पूर्वं तस्य स्वरेष्वन्त्यः स्वरः प्लुतो वा भवति। अहिर्नु ३ रज्जुर्नु । आहिर्नु रज्जुर्नु ।स्थाणुर्नु३ पुरुषो नु।

वाक्यस्येत्यनर्थकम् । ततश्च सिद्धे सति नियम ॥—त्यादे —॥—अङ्ग पचेति । अत्राङ्गशब्दात् ' सम्मत्यसूया- ' इति ' भर्त्सने प ' इति च सूत्रेण प्लुतो द्विर्वचन च न भवति।यतोऽनयोरामन्त्र्ये आमन्त्रणीयार्थे यत्पद वर्त्तते तद् गृह्यते । अङ्गेति च पदमामन्त्रणमेव द्योतयति न त्वामन्त्र्यम् ॥—देवदत्त कूजेत्यादि ॥ नन्वत्र भर्त्सनस्य विद्यमानत्वात् ' सम्मत्यसूया- ' इत्यनेनाद्यामन्त्र्यस्य द्वित्व प्लुतश्च कस्मान्न भवति । उच्यते । वाक्यैकदेशत्वान्न भवति । अत्र हि परमदेवदत्तेत्यादि महद्वाक्यमस्तीति न प्लुत

स्थाणुर्नु पुरुषो३नु॥९५॥ *ओमःप्रारम्भे॥७।४।९६॥ प्रारम्भे *प्रणामादेरभ्यादाने वर्तमानस्य ओमशब्दस्य स्वरेष्वन्त्यः स्वरः प्लुतो वा भवति। ओ ३ म् ऋषभं पवित्रम्। ओमृषभं पवित्रम्। एवम् ओ ३ म् ऋषभमृषभगामिनं प्रणमत २। ओ ३ म् अग्निमीले पुरोहितम्। प्रारम्भ इति किम्। ओं ददामि। ओमत्राभ्युपगमे ॥ ९६ ॥

*हेः प्रश्नाख्याने ॥ ७ । ४ । ९७ ॥ प्रश्नस्याख्याने पृष्टप्रतिवचने वर्तमानस्य वाक्यस्य स्वरेष्वन्त्यः स्वरो हिशब्दसंबन्धी प्लुतो वा भवति। अकार्षीः कटं देवदत्त। अकार्षं हि ३। अकार्षं हि। अलावीः केदारं देवदत्त। अलाविषं हि ३। अलाविषं हि। हेरिति किम्। अकार्षीः कटं देवदत्त, करोमि ननु। प्रश्नग्रहणं किम्। कटं देवदत्ताकार्षं हि। अप्रश्नपूर्वक आख्याने न भवति। आख्यानग्रहणं किम्। देवदत्त कटमकार्षीर्हि। उत्तरेण सिद्धे नियमार्थं वचनम्। हेः प्रश्नाख्यान एव हेः प्रश्नाख्याने वाक्यस्य स्वरेष्वन्त्य एव प्लुत इति च ॥ ९७ ॥ प्रश्ने च प्रतिपदम् ॥ ७ । ४ । ९८ ॥ प्रश्ने प्रश्नाख्याने च वर्तमानस्य वाक्यस्य संबन्धिनः पदस्य स्वरेष्वन्त्यः स्वरः प्लुतो वा भवति। प्रश्ने, अगमः ३ पूर्वा ३ न् ग्रामा ३ न् देवदत्त ३। अगमः पूर्वान् ग्रामान् देवदत्त। प्रश्नाख्याने, अगम३म् पूर्वा ३ न् ग्रामा ३ न् जिनदत्त ३। अगमम्पूर्वान् ग्रामान् जिनदत्त। प्रश्ने चेति किम्। देवदत्त ग्रामं गच्छ। प्रतिपदमिति किम्। वाक्यस्यैवान्त्यः स्वरः प्लुतो मा भूत् ॥ ९८ ॥ *दूरादामन्त्र्यस्य गुरुर्वैकोऽनन्त्योऽपि लनृत् ॥ ७ । ४ । ९९ ॥ यत्र प्राकृतात्प्रयत्नात्प्रयत्नविशेषे आश्रीयमाणे संदेहो भवति किमयं श्रोष्यति नवेति तद्दूरम्। वाक्यस्य यः स्वरेष्वन्त्यः स्वरो दूरादामन्त्र्यस्य पदस्य संबन्धी गुरुर्वानन्त्योऽपि *ऋकारवर्जितः स्वर लृकारश्चैको दूरादामन्त्र्यस्यैव संबन्धी स प्लुतो वा भवति। आगच्छ भो माणव कपिलक ३। आगच्छ भो माणव कपिलक। आगच्छ भो देवदत्त ३। आगच्छ भो देवदत्त। आगच्छ भो इन्द्रभूते ३। आगच्छ भो इन्द्रभूते। आगच्छ भोः कॢप्तशिख ३। आगच्छ भोः कॢप्तशिख। गुरुर्वैकोऽनन्त्योऽपि लनृत्, सक्तून् पिब दे ३ वदत्त। सक्तून् पिब देवदत्त। आगच्छ भो इ३ न्द्रभूते, आगच्छ भो इन्द्रभू ३ ते। आगच्छ भो नृ ३ षभ। आगच्छ भो नृषभ। आगच्छ भोः कॢ३प्तशिख। आगच्छ भोः कॢप्तशिख। महाविभाषयैव प्लुतविकल्पे सिद्धे वाग्रहणं न विकल्पार्थं किं त्वन्त्यप्लुतेन सह गुरोः *असमावेशार्थम्। तेन कॢ३प्तशिख ३ इति न भवति। दूरादिति किम्। शृणु देवदत्त। आमन्त्र्यस्येति किम्। आगच्छतु देवदत्तः। प्रधाने कार्यसंप्रत्ययादिह न भवति। आगच्छ भोः कपिलक माणव। अत्र माणवेति कपिलक इत्यस्य विशेषणमित्यप्रधानता। गुरुरिति किम्। अनन्त्यस्य लघोर्मा भूत्। एक इति किम्। अनेकस्य गुरोर्यौगपद्येन मा भूत्। अनन्त्योऽपीति किम्। अन्त्यस्यैव मा भूत्। लृकारग्रहणमनृ-

---

॥—ओमः—॥—प्रणामादेरिति। ओम् इत्यस्य प्लुतविधानात्प्रणामादेरेव प्रारम्भो गम्यते ॥—हेः प्र—॥—नियमार्थमिति। अत्र हे प्रश्नाख्यान एवेति नियमेन देवदत्त कटमकार्षीर्हीति प्रश्ने प्लुतो निवर्त्यते हेः प्रश्नाख्याने वाक्यस्य स्वरेष्वन्त्य एव प्लुत इत्यनेन तु अकार्षं हि कटमित्यनन्त्यस्य न भवति। एतन्नियमद्वयमुपलक्षण हेरेव प्रश्नाख्याने वाक्यस्य स्वरेष्वन्त्यः स्वर प्लुतो भवतीत्यपि नियमो द्रष्टव्यस्तेन करोमि नन्विति हि सजातीयस्य निपातान्तरस्य प्लुतो निवर्त्यते। अगम ३ पूर्वा ३ न् ग्रामा ३ नित्यादावनिपातस्य विजातीयस्य भवत्येव ॥—दूरा—॥—ऋकारवर्जित इति। गुरोरेव विशेषणम् ॥ ऋकारवर्जितः स्वर लृकारश्चेति ॥—असमावेशार्थमिति। तेन यदान्त्यस्य प्लुतस्तदान्त्यस्यैव न तु गुरोः। यदा तु गुरोस्तदा गुरोरेव न त्वन्त्यस्येत्यर्थः ॥

इदमेव ज्ञापकमृवर्णग्रहणे लृवर्णस्यापि ग्रहणं भवतीति । तेनाचीक्लृपदित्यादौ
दिति प्रतिषेधनिवृत्त्यर्थम् । अथ ऋतः प्रतिषेधे लृकारस्य कः प्रसङ्गः । उच्यते । इदमेव ज्ञापकमृवर्णग्रहणे लृवर्णस्यापि ग्रहणं भवति । अनृदिति गुरुर्विशिष्यते न स्वरेष्वन्त्यस्तेनेहापि भवति । आगच्छ
*ऋवर्णकार्यम् *लृवर्णस्यापि सिद्धं भवति । अनृदिति किम् । कृष्णमि ३ त्र । कृष्णमित्र ३। अनृदिति गुरुर्विशिष्यते न स्वरेष्वन्त्यस्तेनेहापि भवति । देवदत्त अहो आगच्छ । अभिपूजितेऽपि दूरादामन्त्र्यस्यैव प्लुत इष्यते इति
भोः कर्तृ ३। आगच्छ भोः कर्तृ । वाक्यस्य स्वरेष्वन्त्यः प्लुत इत्यनुवृत्तेरिह न भवति । देवदत्त अहो आगच्छ । अभिपूजितेऽपि दूरादामन्त्र्यस्यैव प्लुत इष्यते इति
अभिपूजिते चेति नारम्भणीयम् । शोभनः खल्वसि माणवक ३। शोभनः खल्वसि माणवक ॥ ९९ ॥ *हेहैष्वेषामेव ॥ ७ । ४ । १०० ॥ दूरादामन्त्र्यस्य
संबन्धिनौ यौ हेहैशब्दौ कौ च तौ यौ तदामन्त्रणे वर्तेते तयोः प्रयुज्यमानयोस्तयोरेव वाक्ये यत्रतत्रस्थयोरन्त्यः स्वरः प्लुतो वा भवति । हे ३ देवदत्त आगच्छ ।
आगच्छ हे ३ देवदत्त । आगच्छ देवदत्त हे ३ । है ३ देवदत्त आगच्छ । आगच्छ है ३ देवदत्त । आगच्छ देवदत्त है ३ । हेहैष्वित्यवधारणस्य विषयार्थम् ।
*एषामिति स्थानिनिर्देशार्थम् । बहुवचनं ह इ हे हए है इति लाक्षणिकयोरपि परिग्रहार्थम् । एवकारोऽन्यस्य प्लुतस्य व्युदासार्थः । अत एव चैवकारात् *यत्रतत्र-
स्थयोः प्लुतो विज्ञायते ॥ १०० ॥ *अस्त्रीशूद्रे प्रत्यभिवादे भोगोत्रनाम्नो वा ॥ ७ ।४।१०१॥ यदभिवाद्यमानो गुरुः कुशलानुयोगेनाशिषा वा युक्तं वाक्यं
प्रयुङ्क्ते स प्रत्यभिवादः । तस्मिन्नस्त्रीशूद्रविषये वर्तमानस्य वाक्यस्य स्वरेष्वन्त्यः स्वरो भोःशब्दस्य गोत्रस्य नाम्नो वामन्त्र्यस्य संबन्धी प्लुतो वा भवति ।
अभिवादये देवदत्तोऽहं भोः ३। अभिवादये देवदत्तोऽहं भोः । आयुष्मानेधि भोः ३। आयुष्मानेधि भोः । आयुष्मानेधि देवदत्त भोः ३ । आयुष्मानेधि
देवदत्त भोः । गोत्रे, अभिवादये गार्ग्योऽहं भोः, कुशल्यसि गार्ग्य ३। कुशल्यसि गार्ग्य। आयुष्मानेधि गार्ग्य ३।आयुष्मानेधि गार्ग्य। राजन्यविशोरपि गोत्रत्वमेव।
अभिवादयेऽहमिन्द्रवर्मा भोः । आयुष्मानेधीन्द्रवर्म ३ न् । इन्द्रवर्मन् । अभिवादये इन्द्रपालितोऽहं भोः, आयुष्मानेधीन्द्रपालित ३ । इन्द्रपालित । नाम, अभिवादये
देवदत्तोऽहं भोः, आयुष्मानेधि देवदत्त ३ । देवदत्त । स्त्रीशूद्रवर्जनं किम् । अभिवादये गार्ग्यहं भोः, आयुष्मती भव गार्गि। अभिवादय तुषजकोऽहं भोः, आयुष्मा-
नेधि कुशल्यसि तुषजक । प्रत्यभिवादे इति किम् । अभिवादये स्थाल्यहं भोः । आयुष्मानेधि स्थालि ३ । अभिवादयिताह खरकुटीवन्न ममेकारान्ता संज्ञा का
तर्हि दण्डिवन्नकारान्ता । पुनर्गुरुराह आयुष्मानेधि स्थालि ३ न् स पुनराह ईकारान्तैव मम संज्ञा, स प्रत्युच्यते, असूयकस्त्वमसि जाल्म । न त्वं प्रत्यभिवादमर्हसि।
भिद्यस्व वृषल स्थालि । भोगोत्रनाम्न इति किम् । *देवदत्त कुशल्यसि । देवदत्तायुष्मानेधि । पुनर्वाग्रहणमुत्तरत्र वाधिकारनिवृत्त्यर्थम् ॥ ॥ १०१ ॥ *प्रश्नाचार्चावि-

—ऋवर्णकार्यमिति ॥—लृवर्णस्येति ' ऋतोऽत् ' इत्येवविधम् ' ऋवर्णस्य–' इत्यनेन लृकारस्यापि मध्ये गुणबाधनार्थं लृकार ॥—हेहै–॥—एषामितीति । हेहायामेवेत्येव कृते पूर्वसूत्रेण
सामान्येन प्लुतप्राप्तौ द्योतकाना चेत्प्लुत स्यात् तदा हेहायामेवेति नियमार्थं स्यात्तेन हे ३ देवदत्त आगच्छ हे ३ देवदत्त इत्यादि सिद्धम् । पूर्वं हि देवदत्त ३ इत्यादौ चरितार्थं भो.प्रभृतिषु
तु न स्यात्॥—यत्रतत्रस्थयोरिति । यदि पुनरन्तभूतानामेव हेहाया प्लुत स्यात्तदाऽपरस्यान्त्यभूतस्यासंभवात् प्राप्तिरेव नास्ति किमेवकारेण ॥—अस्त्री—॥—देवदत्त कुशल्यसीत्यादि ।
अत्र एधि असीति क्रियापदेन आमन्त्र्य हति अङ्गविकलता व्यावृत्तेरिति न वाच्यम् । यतोऽनाव्यये स्वामित्यस्य अर्थस्य वाचके इत्यामन्त्र्यता । यद्वा वाक्यैकदेशो भव्य इत्याद्यध्याहार्य ॥—प्रश्ना—॥—

चारे च संधेयसंध्यक्षरस्यादिदुत्परः ॥ ७ । ४ । १०२ ॥ संधेयः *संधियोग्यः यः कचित्स्वरे परे विकारमापद्यते । प्रश्नेऽर्चायां विचारे प्रत्यभिवादे च वर्तमानस्य वाक्यस्य संबन्धिनः स्वरेष्वन्त्यस्वरस्य संधेयसंध्यक्षरस्य प्लुतो भवन् आकार इदुत्परः प्लुतो भवति । स च प्रत्यासत्त्या एकारैकारयोरिकारपर ओकारौकारयोरुकारपरो भवति । प्रश्ने, अगमः ३ पूर्वान् ३ ग्रामा ३ नग्निभूता ३ इ । पटा ३ उ । अदा ३ स्तस्रा ३ इ । अपचा ३ इ । पटा ३ उ । अहौपी ३ रया ३ उ । 'प्रश्ने च प्रतिपदम्' (७-४-९८) इति प्लुतः । अर्चा पूजा तस्यां 'दूरादामन्त्र्यस्य' (७-४-९९) इति प्लुतः । शोभनः खल्वसि अग्निभूता ३ इ । पटा ३ उ । विचारे, वस्तव्यं किं निर्ग्रन्थस्य सागारिका ३ इ उतानागारिके । प्रत्यभिवादे, आयुष्मानेधि अग्निभूता ३ इ । पटा ३ उ । आयुष्मन्तौ भूयास्तां देवदत्तजिनदत्ता ३ उ । प्रश्नार्चाविचारे चेति किम् । आगच्छ भो अग्निभूते ३ ।संधेयग्रहणं किम् । कच्चि ३ त् कुशल ३ म् भवत्योः ३ कन्ये ३ । आगमः ३ पूर्वा-३ न् ग्रामा ३ नहो ३ भद्रकाऽसि गौः ३ । आयुष्मानेधि भो ३ः । संध्यक्षरस्येति किम् । भद्रिकासि कुमारि ३ । वाक्यस्य स्वरेष्वन्त्यस्वर इति विज्ञानादिह न भवति । अगमः ३ पूर्वौ ३ ग्रामौ ३ देवदत्त ३ ॥ १०२ ॥ **तयोर्य्वौ स्वरे संहितायाम्** ॥ ७ । ४ । १०३ ॥ तयोः प्लुताकारात्परयोरिदुतोः स्थाने स्वरे परे संहितायां विषये यथासंख्यं यकारवकारावादेशौ भवतः । अविरामः संहिता । अगम ३ अग्निभूता ३ यत्रागच्छ । अगम ३ अग्निभूता ३ यिहागच्छ । अगमः ३ पटा ३ वत्रागच्छ । अगमः ३ पटा ३ वुदकमानय । स्त्रे दीर्घत्वस्यास्वे स्वरे ह्रस्वत्वस्य बाधनार्थं वचनम् । स्वर इति किम् । अग्ना ३ इ । पटा ३ उ । संहितायामिति किम् । अग्ना ३ इ इन्द्रम् । पटा ३ उ उदकम् । अग्ना ३ इ अत्र । पटा उ अत्र । केचिदैदौतोश्चतुर्मात्रं प्लुतमिच्छन्ति । ऐ ४ तिकायन । औ ४ पगव ॥ १०३ ॥ **पञ्चम्या निर्दिष्टे परस्य** ॥ ७ । ४ । १०४ ॥ पञ्चम्या निर्दिष्टे यत्कार्यमुच्यते तत्परस्य स्थाने भवति । अतो 'भिस ऐस्' (१-४-२) वृक्षैः । प्लक्षैः । इह न भवति । मालाभिरत्र । निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादिह न भवति । दृषद्भिः । व्यवहितेऽपि हि परशब्दो दृश्यते । यथा महोदयात्परं साकेतमिति । अत इत्यादौ दिग्योगलक्षणा पञ्चमी । तत्र पूर्वस्य च परस्य च कार्यं स्यादिति नियमार्थं वचनम् ॥ १०४ ॥ ***सप्तम्या पूर्वस्य** ॥ ७ । ४ । १०५ ॥ सप्तम्या निर्दिष्टे यत्कार्यमुच्यते तत्पूर्वस्यानन्तरस्य स्थाने भवति । 'इवर्णादेरस्वे स्वरे यवरलम्' (१-२-२१) दध्यत्र । मध्वत्र । निर्दिष्टाधिकारादिह न भवति । समिदत्र । त्रिष्टुबत्र । व्यवहितेऽपि पूर्वशब्दो दृश्यते । मथुरायाः पूर्वं पाटलिपुत्रमिति । स्वर इत्यादौ औपश्लेषिकमधिकरणं पूर्वं परं च संभवति तत्र परमेव ग्राह्यमिति नियमार्थं वचनम् ॥ १०५ ॥ **षष्ठ्यान्त्यस्य** ॥ ७ । ४ । १०६ ॥ षष्ठ्या निर्दिष्टे यत्कार्यमुच्यते तदन्त्यस्य षष्ठीनिर्दिष्टस्यैव योऽन्त्यो वर्णस्तस्य स्थाने भवति न तु समस्तस्य ।

---

संधियोग्य इति । यस्य 'ईदूदेत्-' इत्येवमादिभिर्निषेधो नास्ति ॥—सप्त—॥—नन्वत्र दध्यत्रेत्यादौ सूत्रमन्तरेणापि यत्वादि सिध्यति । यत 'इवर्णादे.—' इत्यत्र स्वरे इत्यौपश्लेषिकमधिकरण तच्च पूर्व परं च संभवति । तत्र. स्वरः परो विद्यते। न च मध्विदमित्यादौ पूर्वस्मिन् स्वरे निमित्ते उत्तरस्य इकारस्य यत्व स्यादित्याशङ्कनीय यतः प्रकृते. पूर्वं पूर्वमिति न्यायात् पूर्वस्य उकारस्य वत्व भविष्यति। उच्यते। अष्टाभिरष्टप्रिय इत्यत्र

'वाष्टन आः स्यादौ'(१-४-५२)। अष्टाभिः। अष्टासु ॥१०६॥ *अनेकवर्णः सर्वस्य ॥७।४।१०७॥ अनेकवर्ण आदेशः षष्ठ्या निर्दिष्टस्य सर्वस्यैव स्थाने भवति।
'त्रिचतुरस्तिसृचतसृ स्यादौ' (२-१-१) तिसृभिः । चतसृभिः । सर्वस्येति निर्दिश्यमानापेक्षम् । तेन व्याघ्रपादित्यत्र 'पात्पादस्याहस्त्यादेः'
(७-३-१४८) इति निर्दिष्टस्य पादशब्दस्य भवति न तु समुदायस्य। 'ऋतां क्ङितीर्'(४-४-११७)।किरति।पूर्वस्यापवादोऽयम्। एवमुत्तरोऽपि॥१०७॥प्रत्ययस्य
॥ ७ । ४ । १०८ ॥ प्रत्ययस्थाने विधीयमान आदेशः सर्वस्य भवति । सर्वे । अष्टौ।कति ॥ १०८ ॥ *स्थानीवावर्णविधौ ॥ ७ । ४ । १०९ ॥ स्थानं प्रसङ्गः ।
सोऽस्यातीति स्थानी आदेशी । आदेशस्थानिनोः पृथक्त्वात्स्थानिकार्यमादेशे न प्राप्नोतीत्यतिदिश्यते। आदेशः स्थानिवद्भवति स्थान्याश्रयाणि कार्याणि प्रतिप-
द्यते 'अवर्णविधौ' *न चेत्तानि स्थानिवर्णाश्रयाणि भवन्ति। तत्र धातुप्रकृतिविभक्तिकृदव्ययपदादेशा उदाहरणम्। धात्वादेशो धातुवद्भवति । 'अस्तिब्रुवोर्भूव-
चावशिति' ( ४-४-१ ) भूवचोस्तृजादयो भवन्ति। भविता । भवितुम्। भवितव्यम्। वक्ता। वक्तुम् । वक्तव्यम् । प्रकृत्यादेशः प्रकृतिवत् । कस्मै । के
केषाम्। किमः कादेशे कृते सर्वादित्वात्स्मायादयो भवन्ति । विभक्त्यादेशो विभक्तिवत्। वृक्षाय । प्लक्षाय। राजा। अत्र स्यादित्वाद्दीर्घत्वं पदत्वं च भवति ।
पचेयम्। पचेयुः। अत्र साद्यन्तत्वात्पदत्वम्। कृदादेशः कृद्वत्। प्रकृत्य।प्रहृत्य।अत्र क्त्वो यबादेशे 'ह्रस्वस्य तः पित्कृति'(४-४-११४)इति तोऽन्तो भवति।अव्ययादे-
शोऽव्ययवत्। प्रस्तुत्य। उपस्तुत्य । अत्र 'अव्ययस्य' ( ३-२-७ ) इति सेर्लुप् भवति । पदादेशः पदवत् । धर्मो वो रक्षतु । धर्मो नो रक्षतु । पदत्वात्सो
रुत्वम्। *इवग्रहणं स्वाश्रयार्थम्। अन्यथा स्थानीत्यादेशस्य संज्ञा विज्ञायेत। तेन आहत आवधिष्टेत्यादौ 'आङो यमहनः स्वेऽङ्गे च ( ३—३—८६ ) इत्यनेना-
त्मनेपदं भवति।अन्यथा वधेरेव स्यात्।अवर्णविधाविति किम्।वर्णाश्रयो विधिर्वर्णविधिरिति समासस्याश्रयणाद्वर्णात्परस्य विधिर्वर्णे परतो विधिर्वर्णस्य स्थाने
विधिर्वर्णेन विधिरप्रधानवर्णाश्रयो वा विधिर्वर्णविधिरिति सर्वत्रावर्णविधाविति प्रतिषेधो भवति। तत्र वर्णात्परस्य विधिः। द्यौः। पन्थाः। सः। अत्र औत्वात्व-

पूर्वस्मिन् भिसि परे उत्तरस्याष्टन्शब्दस्य 'वाष्टन' इत्यात्वं स्यादिति सूत्रं सफलम् ॥—अने—॥ एकशब्दोऽप्रारापितत्वादिवृत्तिर्नञा न एकोऽनेक इति विगृह्य नञ्समासः क्रियते । तस्मिन्
कृते विषयगतायाः सङ्ख्याया अग्रहणे स्वसङ्ख्याया अपरित्यागादेकवचनोपपत्तिः । अन्ये तु विषयगतां सङ्ख्यामाश्रित्य द्विवचनबहुवचनयोरुत्पत्तिमिच्छन्ति अनेकौ अनेके इति। तेन कदाचिदनेको वर्णोऽ
स्येति बहुव्रीहिः कदाचिदनेके वर्णा अस्येति ॥—स्थानी—॥ अवर्णविधावित्यस्यार्थमाह—न चेत् तानीत्यादि । वर्णाश्रयाणि कार्याणि त्रिविधानि विद्यन्ते आदेशवर्णाश्रयाणि अनुबन्धवर्णा-
श्रयाणि स्थानिवर्णाश्रयाणि च। तत्र स्थान्याश्रयाणां कार्याणामतिदेशप्रस्तावेन स्थानिवर्णाश्रयाणामेवावर्णविधाविति प्रतिषेधो न्याय्यो न त्वादेशाश्रयणामनुबन्धाश्रयाणां चेति मनसिकृत्य स्थानिव
र्णाश्रयाणीत्युक्तम्। तेन सर्वेषां प्रभिद्येत्यादौ सामादेशे क्त्वो यबादेशे च कृते स्थानिवद्भावात्ककाराश्रयमेत्वम् अस्त्विति इति गुणप्रतिषेधश्च भवत्येव।कार्यशब्दं पुनः २ प्रयुञ्जानः कार्यातिदेशतामभ्या
चष्टे। एवं च यत् कार्यं वर्णमुच्चार्य विधीयते तद्वर्णाश्रयमस्तु । यत्तु धात्वादिसमुदायोच्चारेण न तद्वर्णाश्रयं वर्णस्य तत्र शब्देनासंसर्गात् । ननु अग्निर्माणवक इतिवदिवग्रहणमन्तरेणापीवार्थानुमान
भविष्यति किमिवग्रहणेनेत्याशङ्क्याह—इवग्रहणं स्वाश्रयार्थमिति। स्वस्य स्थानिस्वरूपस्य हन्इत्यादेराश्रयः आश्रयणं तदर्थम्। अन्यथा इवग्रहणाभावे संज्ञासंज्ञिसम्बन्धो विज्ञायेत । आदेश

स्यदाद्यत्वेषु कृतेषु स्थानिवद्भावाद्व्यञ्जनात्परस्य सेर्लोपः प्राप्नोति स न भवतीति । वर्णे परतो विधिः । क इष्टः । स उप्तः । अत्र यत्वे कृते 'घोषवति' (१-१-२१) इति रोरुत्वम् 'एतदश्च—' (१-३-४६) इत्यादिना सेर्लोपश्च न भवति । वर्णस्य स्थाने विधिः । श्रीर्देवतास्य श्रायं हविः । अत्रेकारस्य वृद्धौ कृतायां स्थानिवद्भावादवर्णेवर्णस्य(७-४-६८)इति लोपः प्राप्तो न भवति।वर्णेन विधिः।उरःकेण।उरःपेण।उरु ≍ केण।उर ⨯ पेण।अत्र सकारादेशानां विसर्जनीय-जिह्वामूलीयोपध्मानीयानां स्थानिवद्भावप्रतिषेधादलचटतवर्गशसान्तरे इति णत्वप्रतिषेधो न भवति । व्यूढोरस्केन महोरस्केनेत्यत्र तु सकारे कृते *स्वाश्रयः प्रतिषेधः प्रवर्तते । अप्रधानवर्णाश्रयो विधिः । प्रदीव्य । प्रसीव्य । अत्र स्त्वादीत्यन्यपदार्थस्याशितः प्राधान्यात् स्तोरप्राधान्यमिति स्थानिवद्भाव*प्रतिषेधो भवति । स्थानि-वर्णाश्रयकार्यप्रतिषेधादादेशवर्णाश्रयाणि स्थान्यनुबन्धाश्रयाणि च कार्याणि भवन्त्येव । आदेशवर्णाश्रयाणि । सर्वेषाम् । अत्र सामादेशे कृते सकाराश्रयमेत्वं भवति । स्थान्यनुबन्धाश्रयाणि । प्रभिद्य । निरुध्य । प्रणीय । प्रलूय । अत्र क्त्वो यबादेशे कृते स्थानिवद्भावेन क्ङितीति *गुणप्रतिषेधो भवति । *अनुबन्धा असन्त एव गुणाभावादिकं कार्यं कुर्वन्ति । अथ कथमग्रहीदित्यत्रेटो दीर्घत्वे स्थानिवद्भावादिट ईटीति सिचो लोपो भवति, *वर्णविधिर्ह्येषः । उच्यते । नायं वर्णवि-धिः । विशिष्टं ह्येष समुदायमवर्णमाश्रयते इटं नाम । अथ शोभना दृषदोऽस्य सुदृषदित्यत्र जस्लुपः स्थानिवद्भावेनासन्तत्वात् 'अत्वसन्तस्य चाधातोः' सौ (६-४-१०) इति दीर्घः कस्मान्न भवति । 'लुप्यय्वृल्लेनत्' (७-४-११२) इति प्रतिषेधात् । भ्वादिप्रतिषेधेन *श्रूयमाणासन्तपरिग्रहाच्च न भवति । सुदृषद्वानित्यत्र तु इतिकरणसाम-र्थ्यादसन्तलक्षणो विधिर्न भवति ॥ १०९ ॥ *स्वरस्य परे प्राग्विधौ ॥ ७ । ४ । ११० ॥ स्वरस्यादेशः परे परनिमित्तको व्यवहितेऽव्यवहिते वा पूर्वस्य विधौ कर्तव्ये स्थानीव भवति । कथयति । अवधीत् । अत्राल्लुकः स्थानिवद्भावादुपान्त्यलक्षणा *वृद्धिर्न भवति । स्पृहयति । मृगयते । अत्र लघूपान्त्यलक्षणो गुणो न भवति । पादाभ्यां तरति पादिकः । अत्र पद्भावो न भवति । शातनी । पातनी । अत्रानोऽस्य लुग् न भवति।धरणस्यापत्यं धारणिः । रवणस्यापत्यं रावणिः । अत्र 'नोऽपदस्य'—(७-४-६१) इत्यन्त्यस्वरादिलोपो न भवति । स्रंस्यते । ध्वंस्यते । अत्र णिलुकः स्थानिवद्भावादुपान्त्यनकारलोपो न भवति । याज्यते । वाप्यते । अत्र य्वृन्न भवति । निरादनं पूर्वं निराद्य । समाद्य । अत्र जग्धादेशो न भवति । घात्यात् । अत्र वधादेशो न भवति । निगार्यते । निगाल्यते । अत्र

इति सञ्ज्ञी स्थानीति च सञ्ज्ञा ततो यत्रादेश स्थानी च स्यात्तत्र स्थानीत्यादेशस्य सञ्ज्ञा विज्ञायेतेतीवग्रहणम् ॥—स्वाश्रय प्रतिषेध इति । 'प्रत्यये' इत्यनेन यः कृतः सकारस्तदाश्रयो णत्व-निषेधो न तु मूलभूतसकाराश्रयः तस्य वर्णत्वात् वर्णाश्रये च स्थानत्वनिषेधात् ॥—प्रतिषेधो भवतीति । स्थानिवद्भावप्रतिषेधाच्च प्रदीव्येत्यादौ 'ऊदितो वा' इतीट् प्राप्त सकारतकाररूपा प्रधानवर्णाश्रयत्वात् स्थानित्वाभावे न भवति ॥—गुणप्रतिषेध इति । अत्रापि न स्थानिवर्णाश्रय किमपि कार्यं विधीयते किंतु स्थानिनो योऽनुबन्ध ककारादिलक्षणस्तदाश्रय एव गुणप्रतिषेध-स्तत्र च स्थानित्वमेव । अथानुबन्धानामप्रयोगित्वात् कथ तेष्वसत्सु तदाश्रय कार्यमुच्यत इत्यत आह—अनुबन्धा इत्यादि ॥—वर्णविधिर्ह्येष इति । वर्णात्परतो विधिरिति समासात् ॥—श्रूयमाणासन्तेति । भ्वादयो हि तावत्पिदम्, चर्मव इत्यादय. श्रूयमाणासन्त एव प्रतिषिध्यन्ते ततश्च गृह्यन्तेऽपि श्रूयमाणासन्त एव ॥—स्वर—॥—वृद्धिर्न भवतीति । 'ञ्णिति'

'नवा स्वरे' (२-३-१०३) इति पक्षे लत्वम्। चातुरौ। आनडुहौ। अत्र औत्वादेशस्य स्थानिवद्भावात् 'वाः शषे' (१-४-८२) इति वा न भवति। पादे। अत्र एत्वादेशस्य स्थानिवद्भावात्पद्भावो न भवति। उभयजन्यत्वेऽपि अन्यतरव्यपदेशात् *औत्वैत्वयोः परनिमित्तत्वम्। अवीवददद्वीणां परिवादकेनेत्यत्र तु णिजात्याश्रयणादुपान्त्यस्य ह्रस्वो भवति। द्वाभ्यामित्यत्र तु निमित्तापेक्षया प्राग्विधावात्वेऽत्वस्य न स्थानित्वम्। 'वैकत्र द्वयोः' (२-२-८५) इति निर्देशात्। स्वरस्येति किम्। अक्राष्टाम्। अद्राष्टाम्। अत्र सिज्लोपो न स्वरादेश इति 'पढोः कः सि' (२-१-६२) इति कत्वे स्थानी न भवति। आगत्य। अभिमत्य। अत्र पञ्चमलोपो ह्रस्वलक्षणे तकारे स्थानी न भवति। पर इति किम्। द्वौ पादौ ददाति द्विपदिकां ददाति। अत्राल्लुचः परनिमित्तत्वाभावात् स्थानित्वाभावे पदादेशो भवति। प्राग्विधाविति किम्। बाभ्रव्यस्य छात्राः बाभ्रवीयाः। अत्र 'तद्धितयस्वरेऽनाति' (२-४-९१) इति यलोपे परविधौ कर्तव्येऽन्यादेशः स्थानी न भवति। निधानं निधिः। तस्यापत्यं नैधेयः। निधिकः। अत्र 'इडेत्पुसि चातो लुक्' (४-३-९४) इत्याकारलोपो द्विस्वरलक्षणएयणिकप्रत्ययविधौ परस्मिन् स्थानी न भवति। अन्यथा त्रिस्वरत्वात्प्रत्ययौ न स्याताम्। इलुकाया अदूरभवं नगरमैलूकम्। परिखायाः पारिखम्। तत्र भवः ऐलूकीयः पारिखीयः। अत्राण्याकारलोपः परविधौ कखोपान्त्यलक्षणे ईये स्थानी न भवति। पूर्वस्माद्विधिः प्राग्विधिरित्यप्याश्रीयते। तेन अधुक्षन्तेति 'स्वरेऽतः' (४-३-७९) इति सकोऽकारलोपस्य परमप्यदादेशं प्रति स्थानिवद्भाव इति स न भवति। पूर्वत्रावर्णविधाविति प्रतिषेधाद्वर्णत्रिध्यर्थं वचनम् ॥ ११० ॥

*न संधिङीयक्विद्विदीर्घासद्विधावस्क्लुकि ॥ ७। ४। १११ ॥ पूर्वेणातिप्रसक्तः स्थानिवद्भावः प्रतिषिध्यते। संधिविधौ ङीविधौ यविधौ क्विविधौ द्वयोर्द्वित्वस्य विधौ दीर्घविधौ 'संयोगस्यादौ स्कोर्लुक्' (२-१-८८) इति स्क्लुग्वर्जितेऽसद्विधौ च स्वरस्यादेशः स्थानीव न भवति। 'लि लौ' (१-३-६५) इति यावत्संधिविधिः। तत्र वियन्ति। अपयन्ति। अत्रेणो यत्वं स्वरादेशः परनिमित्तकः पूर्वविधौ दीर्घत्वे एत्वे च कर्तव्ये स्थानीव न भवति। तानि सन्ति, तौ स्तः। अत्रास्तेरल्लोपो यत्वे आवादेशे च कर्तव्ये स्थानी न भवति। वैयाकरणः, सौवश्वः। अत्र यत्ववत्वयोः स्थानिवद्भावाभावादैदौतोरायावादेशौ न भवतः। शिण्ढि, पिण्ढि। अत्र श्नस्याकारलोपो 'म्नां धुड्वर्गेऽन्त्योऽपदान्ते' (१-३-३९) इति वर्गान्ते कर्तव्ये स्थानी न भवति। शिंषन्ति पिंषन्ति इत्यत्र त्वनुस्वारे। जक्षतुः, जक्षुः। अत्र प्रथमत्वे घसेरुपान्त्यलोपः। निमित्तापेक्षयापि प्राग्विधिरिष्यते। तेन नयनं लवनमित्यत्र गुणस्य स्थानिवद्भावप्रतिषेधादयवादेशौ सिद्धौ। स्थानिवद्भावे त्वियुवादेशौ स्याताम्। ङीविधौ, बिम्ब्याः फलं बिम्बम्। हेमादित्वादञ्। 'फले' (६-२-५८) इति लुप्। ङ्यादेरित्यादिना ङीलुप्। तस्य परनिमित्तत्वेऽपि स्थानिवद्भावनिषेधात् 'अस्य ङ्यां लुक्' (२-४-८६) इत्यकारस्य लुग् न भवति। एवमामलक्याः फलमामलकम्। 'दोरप्राणिनः' (६-२-४९) इति मयट्। पञ्चभिः खारीभिः क्रीतः पञ्चखारः। 'क्रीते' (६-३-१९०) इत्यण्। 'द्विगोः'—(६-१-२४) इत्यादिना लुप्। पञ्चेन्द्रा-

[1]व्यञ्जनादेर्वोपान्त्यस्यात. ' इत्याभ्याम् ॥—ओदैत्वयोरिति । इत्यसिद्ध्यर्थमकारस्यत्र व्यपदेश. कार्य. न त्वौकारैकारयो. ॥—न सं—॥

ण्योऽग्न्योर्वा देवतास्य पञ्चेन्द्रः । पञ्चाग्निः । अत्र 'देवता' (६-२-१०१) इत्यण् । तस्य लुपि ङीप्प्रत्ययस्यापि लुक् । तस्य स्थानिवद्भावप्रतिषेधात् तत्संनियुक्त आनागम ऐकारादेशश्च न भवति । यविधौ, कण्डूतिः । कण्डूयतेः क्तावतो लोपः परनिमित्तको 'य्वोः प्वय्व्यञ्जने लुक्' (४-४-१२२) इति लोपे कर्तव्ये न स्थानिवद्भवति । सूर्येणैकदिक् सौरी बलाका । अत्रैकोऽण्यकारलोपो द्वितीयो ङ्यां तयोः स्थानिवत्त्वाद्यकारस्यानन्तरो ङीर्न भवतीति यलोपो न स्यात् स्थानिवद्भावनिषेधाच्च भवति । क्विविधौ, देवयतेः क्विप्, दयूः । लवमाचष्टे लवयतेः क्विप् लौः । अत्र णिलुगल्लुचौ क्विब्विधावूटि कर्तव्ये न स्थानिवद्भवतः । द्वित्वविधौ, दद्ध्यत्र । मद्ध्वत्र । अत्र यत्ववत्वयोः स्थानिवद्भावाभावादेकव्यञ्जनलक्षणं धकारस्य द्वित्वं भवति । द्वित्वस्य संधिकार्यत्वेनैव स्थानिवद्भावप्रतिषेधे सिद्धे द्विग्रहणमसिद्धं बहिरङ्गमन्तरङ्ग इति न्यायबाधनार्थम् । तेनान्तरङ्गे द्वित्वे क्रियमाणे यकारवकारौ परपदाश्रितत्वेन बहिरङ्गावपि नासिद्धौ भवतः । दीर्घविधौ, शामंशामम् । अशाभि । शंशामंशंशामम् । अशंशामि । अत्र णिगन्ताद्यङन्ताच्च णिगि णम्क्विचोः परयोर्णिग्लुग्यङो लुक् च स्थानिवन्न भवति । असदधिकारे विहितो विधिरसद्विधिः तत्र, यायज्यतेर्यायष्टिः । नास्ति तिक् । पापच्यतेः पापक्तिः । याजयतेर्याष्टिः । पाचयतेः पाक्तिः । अत्राल्लोपणिलोपयोः स्थानिवद्भावप्रतिषेधात् षत्वकत्वे भवतः । देहयतेर्देग्धिः । लेहयतेर्लेढिः । अत्र णिलोपस्य स्थानिवद्भावप्रतिषेधात् धुड्निमित्ते घत्वढत्वे भवतः । प्रतिदीव्ना । प्रतिदीव्ने । अत्र 'अनोऽस्य' (२-१-१०७) इति अलोपो 'भ्वादेर्नामिनः'-(२-१-६३) इत्यादिना दीर्घत्वे स्थानी न भवति । स्कुक्विधेः प्रतिषेधः किम् । सुकुस्मयतेः क्विप् । सुकूः । काष्ठं तक्षयति क्विप्, काष्ठतक् । अत्र संयोगाद्योः स्कोर्लुकि णिलुकः स्थानिवद्भावप्रतिषेधाभावात् स्कोर्लुम्न भवति । संयोगान्तलोपस्त्वसद्विधौ स्थानिवद्भावप्रतिषेधात् भवत्येव । काष्ठतडिति अण्यन्तस्य । प्रायिकोऽयं निषेधः । नेन मधुश्चयतीति क्विप् । *मधुक् । अत्र शलोपः सिद्धः । वेतस्वानित्यल्लुकः स्थानिवद्भावाभावेऽपि 'न स्तं मत्वर्थे' (१-१-२३) इति पदत्वाभावात्सो रुर्न भवति । ब्रह्मबन्ध्वौ ब्रह्मबन्ध्व इति *ऊङादेशस्य वकारस्य स्थानिवद्भावाभावेऽप्यन्तरङ्गे धस्य तृतीयत्वे लुकि च बहिरङ्गत्वेनासिद्धत्वम् । एवं किर्योः गिर्योरिति नामिनो दीर्घत्वे । काक्यर्थं वाप्यर्थमित्यत्र तु पदस्येति यलोपे यत्वस्यासिद्धत्वम् । अथ सखीयतीति क्विप् अल्लुको यविधौ स्थानिवत्त्वाभावाच्चलुकि ङसि 'योऽनेकस्वरस्य' (२-१-५६) इति यस्य 'य्वोः' (४-४-११२) इत्यादिना क्विबाश्रयो लुक् कथम्न भवति । बहिःप्रत्ययाश्रयत्वेन बहिरङ्गस्य यस्य अन्तःक्विबाश्रये लुक्यसिद्धत्वात् ॥ १११ ॥ *लुप्यय्वृल्लेनत् ॥ ७ । ४ । ११२ ॥ परस्य प्रत्ययस्य लुपि सत्यां लुब्भूतपरनिमित्तकं पूर्वकार्यं न भवति 'अय्वृल्लेनत्' य्वृल्लत्वमेनच्च वर्जयित्वा । तद् । अत्र स्थानिवद्भावप्रतिषेधात् त्यदाद्यत्वसत्त्वे न भवतः । गर्गस्यापत्यानि गर्गाः । गर्गादित्वाद्यञ् । 'यञञोऽश्यापर्णान्तगोपवनादेः' (६-१-१२६) इति लुप् । कुवल्याः विकारः फलं कुवलम् ।

---

—मधुक् इति । अत्र 'न सन्धि-' इत्यनेन स्थानित्वनिषेधः प्रवर्तते । असद्विधिकार्ये सल्लुकि णिलुक स्थानिवत् न भवति ॥—ऊङादेशस्येति । ऊङ्प्रत्ययादेशो वकारोऽपि - प्रत्ययस्तस्मिन् भस्य पदत्वे 'धुट. स्तृतीय.' इति धस्य दत्वं तन्निषेधे संयोगान्तत्वात् 'पदस्य' इति लुग्वा प्राप्नोतीत्याशङ्क्य ॥—लुप्यय्वृ—॥

रैमादित्वादण् । ' फले ' ( ६-२-५८ ) इति तस्य लुप् । अत्र वृद्धिर्न भवति । प्लुप्यपि लुब्रूपतास्त्येव । तेन*पञ्चगोणिरित्यत्रेकणः प्लुपि वृद्धिर्न भवति । लुपीति वचनाल्लुकि भवत्यवे । गोमान् । यवमान् । अत्र सिलुकि तन्निमित्तं दीर्घत्वं भवति । लुपीति सप्तमीनिर्देशात् पूर्वस्य यत्कार्यं प्राप्तं तन्निषिध्यते । समुदायस्य तु भवत्येव । पयः । साम । पथ्य । सप्त । अत्र पदसंज्ञा तथा च तन्निबन्धनानि रुत्वनलोपादीनि भवन्ति । कथं पापक्ति पापचीतीत्यत्र द्वित्वम् । नेदं यङि निमित्ते किंतु यङन्तस्य । अय्त्क्लेनादिति किम् । व्रश्च, व्यध्, वेविद्धि । श्वि, शोशवीति । ग्रह, जरीगृहीति । ल्, गॄ, निजागलीति । एनत्, एनत्पश्य । *एनच्छितकः । स्थानीवावर्णविधाविति लुपः स्थानिवद्भावेन प्राप्तानां पूर्वेषां कार्याणां प्रतिषेधार्थं वचनम् ॥ ११२ ॥ *विशेषणमन्तः ॥ ७ । ४ । ११३ ॥ विशिष्यतेऽनेनेति विशेषणम् । विशेषणं विशेष्यस्य समुदायस्यान्तोऽवयवो भवति । इह शास्त्रे धात्वादिः समुदायोऽभेदेनावयवविशेषणक उपादीयते । तत्र सोऽवयवस्तत्समुदायस्यान्तत्वेन नियम्यते । अतः स्यमोऽम् । कुण्डं तिष्ठति । कुण्डं पश्य । इह न भवति । तद् । 'युवर्णवृदृवशरणगमृद्ग्रहः' । जयः । स्तवः । इह न भवति । सेकः । योगः। इणोऽलि अय इत्यादौ व्यवदेशिवद्भावाद्भवति ॥ ११३ ॥ सप्तम्या आदिः ॥ ७ । ४ । ११४ ॥ सप्तम्यन्तस्य विशेष्यस्य यद्विशेषणं तत्तस्यादिरवयवो भवतीति वेदितव्यम् । इन् ङीस्वरे लुक् । पथः । पथाम् । इह न भवति । पथिषु । ' ब्युक्तोपान्त्यस्य शिति स्वरे ' ( ४-३-१४ ) नेनिजानि । अनेनिजम् । इह न भवति । नेनेक्ति । ' उत औविंति व्यञ्जनेऽद्वेः ' ( ४—३—५९ ) यौति । रौति । इह न भवति अस्तवीत् । पथा, अयौदित्यादौ व्यपदेशिवद्भावाद्भवति । अन्तत्वापवादो योगः ॥ ११४ ॥ *प्रत्ययः प्रकृत्यादेः ॥ ७ । ४ । ११५ ॥ यस्माद्यः प्रत्ययो विधीयते सा तस्य प्रकृतिः । प्रत्ययः *प्रकृत्यादेः समुदायस्य विशेषणं वेदितव्यम् नोनाधिकस्य । मातुर्भोगो मातृभोगस्तस्मै हितो मातृभोगीणः । ' भोगोत्तरपदात्मभ्यामीनः ' ( ७-१-४० ) । खरपस्यापत्यं खारपायणः । नडादित्वादायनण् । अत्र ' तदन्तं पदम् ' ( १-१-२० ) इति पदसंज्ञा समुदायस्य भवति न तूनस्य भोगीण इत्यादिरूपस्य तेनैकपदत्वात् *णत्वं सिद्धम् । राज्ञः पुरुषः राजपुरुषः । ' षष्ठ्ययत्नाच्छेषे ' ( ३-१-७६ ) इति समासः । अधिकस्य न

---

—पञ्चगोणिरिति । 'क्यङ्मानि–' इति पुंवन्न भवति ङ्यादेर्गौणस्येत्यत्र गोणीशब्दवर्जनात् ॥—एनच्छितक इति । नन्वनैतच्छब्दस्य साकाङ्क्षस्यासमर्थत्वात् कथं समास एनदादेशश्च । उच्यते । अर्थात्प्रकरणाद्वा अपेक्ष्ये निर्ज्ञाते समास एनदादेशश्च भवत्येव ॥—विशे—॥ इह शास्त्रे धात्वादि समुदाय उपादीयते कथंभूतोवयवो विशेषणं यस्य स तथा केनाभेदेन तादात्म्येन कोऽभिप्राय किल 'नामिनो गुण–' इत्यत्र धातुर्नामीत्यभिधीयते । नाम्यवयवयोगात्समुदायोऽपि धातुलक्षणो नामीत्यभिधीयते इत्येकदेशेन सामानाधिकरण्येनावयवविशेषणक उपादीयते इति तत्सामानाधिकरण्ये सति नामी आदौ मध्ये अन्ते च संभवति तत्र सोऽवयवस्तस्य समुदायस्य अन्तत्वेन नियम्यते ॥–प्रत्य–॥–प्रकृत्यादेरिति। आदिशब्दात्प्रत्ययो गृह्यते। ततः प्रकृतिप्रत्ययसमुदायस्य प्रत्ययो विशेषणं भवतीति सिद्धम्। ननु प्रत्ययः प्रकृतेर्विशेषणं भवतीति किं न पूर्यते किमादिग्रहणात् प्रत्ययग्रहणेन । उच्यते । आदिशब्दाभावे प्रत्ययः प्रकृतेर्विशेषणमिति कोऽर्थः प्रत्ययः पूर्वं प्रकृतिं विशेषयतीत्यर्थः स्यात्तथा च स्यादौ पूर्वस्याः प्रकृतेः स्याद्यन्तत्वं स्यात्ततः पयांसि इत्यादौ जसि पूर्वस्याः प्रकृतेर्विभक्त्यन्तत्वात् 'सो रुः' इति रुत्वं स्यात् यतः किं हि वचनात्र सिध्यतीति आदिग्रहणेन प्रत्ययो गृह्यते॥–णत्वं सिद्धमिति।अन्यथा 'रषृवर्णे–'

भवति । ऋद्धस्य राज्ञः पुरुषः । गार्ग्यस्यापत्यं गार्ग्यायणः । ' यञिञः ' ( ६-१-५४ ) इत्यायनण् । अधिकात्समुदायान्न भवति । परमगार्ग्यस्यापत्यम् । पुत्रमिच्छति पुत्रकाम्यति । अधिकान्न भवति । महान्तं पुत्रमिच्छति । न्यूनाधिकव्यवच्छेदार्थं वचनम् । तदन्तत्वं च ' विशेषणमन्तः ( ७-४-११३ ) इत्येव सिद्धम् ॥ ११५ ॥ गौणो ङ्यादिः ॥ ७ । ४ । ११६ ॥ ङीमारभ्य ष्यं यावत् ङ्यादिः प्रत्ययः स गौण उपसर्जनं सन् प्रकृत्यादेः समुदायस्य विशेषणं भवति नोनाधिकस्य । कारीषगन्ध्यामतिक्रान्तः स बन्धुरस्य अतिकारीषगन्ध्यबन्धुः । अतिकौमुदगन्ध्यबन्धुः । अत्र ष्येणाधिकस्याग्रहणात् ' बन्धौ बहुव्रीहौ ' ( २-४-८३ ) इति इच् न भवति । गौण इति किम् । अगौणोऽधिकस्यापि समुदायस्य विशेषणं भवति । परमकारीषगन्धीबन्धुः परमकौमुदगन्धीबन्धुः । पूर्वेणैव सिद्धेऽगौणस्याधिकपरिग्रहार्थं वचनम् ॥ ११६ ॥ *कृत्सगतिकारकस्यापि ॥ ७ । ४ । ११७ ॥ कृत्प्रत्ययः प्रकृत्यादेः समुदायस्य गतिकारकपूर्वस्य अपिशब्दात्केवलस्यापि विशेषणं भवति । यथेह समासो भवति भस्मनिहुतम् प्रवाहेमूत्रितम् तथा उदकेविशीर्णम् अवतप्तेनकुलस्थितमिति सगतिकेन सकारकेण च क्तान्तेन ' क्तेन ' (३-१-९२) इति समासः सिद्धो भवति । तथा व्यावक्रोशी व्यावहासी सांकोटिनं सांराविणमिति 'नित्यं ञिनोऽण्' (७-३-५८) इति अण् सिद्धः । 'प्रत्ययः प्रकृत्यादेः ' (७-४-११५) इत्यतोऽप्राप्ते वचनम् ॥ ११७ ॥ परः ॥ ७ । ४ । ११८ ॥ यः प्रत्ययः स प्रकृतेः पर एव भवति । अजा । खट्वा । वृक्षः । वृक्षौ । वृक्षाः । जुगुप्सते । मीमांसते । कार्यम् । गम्यम् । औपगवः ॥ ११८ ॥ *स्पर्धे ॥ ७ । ४ । ११९ ॥ द्वयोर्विध्योरन्यत्र सावकाशयोस्तुल्यबलयोः *एकत्र *अनेकत्र च *उपनिपातः स्पर्धः तत्र यः सूत्रपाठे परः स विधिर्भवति । ' शसोऽता सश्च नः पुंसि ' ( १-४-४९ ) इत्यस्यावकाशो वृक्षान् मुनीन् । ' नपुंसकस्य शिः ' ( १-४-५५ ) इत्यस्य तु महान्ति यशांसि । इहोभयं प्राप्नोति वनानि मधूनि । तत्र परत्वाच्छिरेव भवति । अयं तावदेकस्य द्विकार्ययोगे स्पर्ध उक्तः । अनेकस्याप्यसंभवे सति भवति । ' ईः षोमवरुणेऽग्नेः' [३-२-४२] इत्यस्यावकाशोऽग्नीवरुणौ । ' देवतानामात्वादौ ' ( ७-४-२८ ) इति वृद्धेरवकाश आग्नावैष्णवं हविः । इहोभयं प्राप्नोति । आग्निवारुणीमनड्वाहीमालभेत । परत्वात्तु वृद्धिर्भवति । अत्र ह्यग्नेरीत्वं वरुणशब्दस्य च वृद्धिरिति नैको द्विकार्ययुक्तः । असंभवस्त्वस्ति वृद्धौ सत्याम् 'इर्वृद्धिमत्यविष्णौ' [३-२-४३] इति अग्नेरीत्वापवाद इर्भवति। परस्परप्रतिबन्धेनाप्रवृत्तौ पर्याये वा प्राप्ते वचनम् ॥ ११९ ॥ *आसन्नः ।७।४।१२०॥ इह आसन्नानासन्नप्रसङ्गे यथास्वं स्थानार्थप्रमाणादिभिरासन्न एव विधिर्भवति । तत्र स्थानेन, दण्डाग्रम् क्षुधाग्रम् । कण्ठ्ययोरकारयोः कण्ठ्य एवाकारो दीर्घो भवति। अर्थेन, वातण्ड्ययुवतिः । दारदवृन्दारिका । अत्र वतण्डीशब्दस्य दरच्छब्दस्य च 'पुंवत्कर्मधारये ' [३-२-५७] इति पुंवद्भावे कर्तव्ये अर्थत आसन्नो वातण्ड्यभावो *दारदभावश्च भवति। प्रमाणेन, अमुष्मै । अमूभ्याम् 'मादुवर्णोऽनु' ( २-१-४७ ) इति मात्रिकस्य मात्रिको द्विमात्रस्य च द्विमात्रः ॥ १२० ॥ संबन्धिनां संबन्धे ॥ ७ ।

---

इति एकपदत्वाभावात् णत्वं न स्यात् ॥—कृत्सग—॥—भस्मनिहुतमित्यादिषु ' तत्पुरुषे कृति ' इति सर्वत्रालुप् ॥—स्पर्धे॥—एकत्रेति । एकत्र एकस्मिन् स्थानिनि ॥—उपनिपातः प्रसङ्गो द्वयोर्विध्योरित्यर्थः. ॥—अनेकत्र चेति । अनेकस्मिन् स्थानिनि उपनिपातो द्वयोर्विध्योरित्यर्थः. ॥—आस—॥—दारदभावश्चेति । न तु वतण्डदरद्भावः पुंस्त्वं तु तस्यापि विद्यत एव

४ । १११ ॥ संबन्धिशब्दानां यत्कार्यमुक्तं तत्संबन्ध एव सति भवति नान्यथा । 'श्वशुराद्यः' । श्वशुरस्यापत्यं श्वशुर्यः । संज्ञाशब्दात्तु इञेव । श्वाशुरिः । 'मातृपितुः स्वसुः' ( २-३-१८ ) मातृष्वसा । धान्यमातुः स्वसुस्तु न भवति । मातृस्वसा ॥ १२१ ॥ *समर्थः पदविधिः ॥ ७ । ४ । १२२ ॥ समर्थपदाश्रितत्वात्समर्थः । पदसबन्धी विधिः पदविधिः । तेन यः पदाद्विधिः यश्च पदे यश्च पदस्य पदयोः पदानां वा स सर्वः पदविधिरेव । सर्वः पदविधिः समर्थो वेदितव्यः । समर्थानां पदानां विधिर्वेदितव्य इत्यर्थः । तच्च सामर्थ्यं *व्यपेक्षा एकार्थीभावश्च । अत्र व्यपेक्षायां *संबद्धार्थः *संप्रेक्षितार्थो वा पदविधिः साधुर्भवति । एकार्थीभावे तु विग्रहवाक्यार्थाभिधाने यः शक्तः *संगतार्थः संसृष्टार्थो वा पदविधिः स साधुर्भवति । अत्र च पदानि उपसर्जनीभूतस्वार्थानि निवृत्तस्वार्थानि वा प्रधानार्थोपादानात् *अर्थानि*अर्थान्तराभिधायीनि वा भवन्ति । पदविधिश्च समासनामधातुकृत्तद्धितोपपदविभक्तियुष्मदस्मदादेशप्लुतरूपो भवति । तत्र समासः, द्वितीया 'श्रितादिभिः' । धर्मं श्रितः धर्मश्रितः । 'तृतीया तत्कृतैः' ।शङ्कुलया कृतः खण्डः शङ्कुलाखण्डः।'चतुर्थी प्रकृत्या' यूपाय दारु यूपदारु। 'पञ्चमी भयाद्यैः' वृकाद्भयं वृकभयम् । 'षष्ठ्ययत्नाच्छेषे' । राज्ञः पुरुषः राजपुरुषः । 'सप्तमी शौण्डाद्यैः' । अक्षेषु शौण्डः अक्षशौण्डः । 'विशेषणं विशेष्येणैकार्थं कर्मधारयश्च' । नीलं च तदुत्पलं च नीलोत्पलम् । एषु पूर्वोत्तरपदयोर्वाक्यावस्थायां परस्पराकाङ्क्षालक्षणा व्यपेक्षा।वृत्त्यवस्थायां तु पृथगर्थानां सतामेकार्थीभाव इति । तथा हि—धर्ममित्येतत्साधनत्वात्साध्यभूतां क्रियामपेक्षते । श्रित इत्येतदपि श्रयणक्रियोपसर्जनकर्तृवाचि स्वक्रियाविषयं साधनमपेक्षते । तयोश्च परस्परसंसर्गाद्*मूर्छितावयव इव वृत्तावेकार्थीभावो भवति । धर्मं श्रितो धर्मश्रितश्चैत्र इति । एवं शङ्कुलया कृतः खण्डः शङ्कुलाखण्ड इति । कर्तृकर्मणोर्गम्यमानकरोतिक्रियाकृता वाक्ये व्यपेक्षा । वृत्तावेकार्थीभावः । एवं चतुर्थीसमासादावपि यूपायेत्यादि सामान्यमवच्छेदाय भेदानाकाङ्क्षति किं यूपाय गच्छत्यागच्छति पुष्पं दारु वेति । दार्वपि यूपाय गृहाय दाहाय वेति भेदानाकाङ्क्षति।एवं सर्वत्र*उपसर्जनानां प्रधानानां च परस्परमाकाङ्क्षावतां क्वचित्प्रकृतिविकारभावलक्षणः क्वचिदवध्यवधिमद्भा-

परमसमासो गोत्राभिधानात् ॥—सम—॥—व्यपेक्षेति । परस्पराकाङ्क्षेत्यर्थ सा च वाक्ये संभवति । एकार्थीभावस्तु समासे ॥—संबद्धार्थ इति । संबद्धोऽर्थो यस्य यत्र झटित्येव पदानामन्वयः प्रतीयते राज्ञ पुरुष इत्यादौ संबद्धार्थः पदविधि ॥—संप्रेक्षितार्थ इति । संप्रेक्षित कष्टकल्पनया प्रतीतोऽर्थो यत्र यथा 'राजोत्पले हरिभुजामिह के शवस्य यस्योरसीन्दुरदन च जटाकलापे॥सं खाम्बरोऽपि पवनादरिनाथसूनु. कान्ता स वोऽगतनया विपुल ददातु' इत्यादौ क्लिष्टकाव्ये कष्टकल्पनयार्थः प्रतीयते।अस्य काव्यस्य व्याख्या ॥ यस्योरसि हरिभुजां वायुभुजां सर्पाणां राजा शेष । यस्य च जटाकलापे इन्दुर्यस्य च शवस्य के मृतकस्य के मस्तके उत्पले निर्मांसे अदन भक्षण, यस्य च कान्तागतनयाद्रिसुता स खाम्बरोपि विपुल श सुख वो ददातु पवनात् सर्पस्तस्यारिर्मयूरस्तस्य नाथ. कार्त्तिकेयः स सूनुर्यस्येत्यर्थः ॥—संगतार्थो गतार्थ. । यथा वीरपुरुषको ग्राम अतिखट्व इति । अत्र हि पदानामर्थः सर्वोऽपि गतः समासार्थ एव प्रतीयते । संसृष्टार्थस्तु मिलितार्थ । यथा राजपुरुषइति ॥—अर्थानीति । प्रधानोऽर्थ समासार्थलक्षणस्तदुपादानात् अर्थानीति ॥ अयमर्थः एकस्तावत् प्रधानोऽर्थः पर स्वार्थ इति अर्थता ॥—अर्थान्तराभिधायीनीति । अर्थान्तर समासार्थलक्षण तदभिधायीनीति ॥—मूर्च्छितावयव इवेति । मूर्च्छितभिन्नपदार्थावयव इत्यर्थः॥—उपसर्जनानां प्रधानानां चेति ।

वात्मकः क्वचित्स्वस्वामिभावः क्वचिद्विषयविषयिभावरूपः संबन्धो वाक्ये व्यपेक्षा । वृत्तौ त्वेकार्थीभावः । एवं नीलमित्येतद्विशेषणं गुणत्वात् *द्रव्यमाकाङ्क्षति । उत्पलमित्येतदपि सर्वोत्पलावग्रहरूपेण प्रवृत्तं सद्विशेष्यत्वाद्विशेषणं गुणमाकाङ्क्षति । वृत्तौ पुनरेकार्थीभावेन पांसूदकवदविभागापन्नौ तावुभावप्यर्थावेकस्मिन्नधिकरणे मूर्छिताविव भवतः । नीलं च तदुत्पलं च नीलोत्पलमिति । तदेतत्सामर्थ्यमविशेषोक्तमपि लोकव्यपेक्षया वृत्त्यवृत्त्योः स्वभावेन विभक्तमवतिष्ठते । यत्र त्वसामर्थ्यं तत्र समासो न भवति । पश्य धर्मम् श्रितो मैत्रो गुरुकुलम् । किं ते शङ्कुलया खण्डो मैत्र उपलेन । गच्छ यूपाय दारु शोभनं शैले । निवर्तस्व व्याघ्रात् भयं चैत्रस्य मैत्रात् । भार्या राज्ञः पुरुषो देवदत्तस्य । सक्तस्त्वमक्षेषु शौण्डः पिबति पानागारे इति । नामधातुः, पुत्रमिच्छति पुत्रीयति । श्येन इवाचरति श्येनायते । समर्थ इति किम् । पश्यति पुत्रमिच्छति सुखम् । कृत्, कुम्भं करोति कुम्भकारः । समर्थ इति किम् । पश्य कुम्भं करोति कटम् । तद्धितः, उपगोरपत्यमौपगवः । समर्थ इति किम् । गृहमुपगोरपत्यं तव । उपपदविभक्तिः । नमो देवेभ्यः।अभिजानासि देवदत्त काश्मीरेषु वत्स्यामः।उपाध्यायश्चेदागच्छेदाशंसे युक्तोऽधीयीय । समर्थ इति किम् । इदं नमो देवाः शृणुत । देवदत्त मातरं स्मरसि । अवसाम दीर्घं मगधेषु । युष्मदस्मदादेशः, धर्मस्ते स्वं धर्मो मे स्वम् । धर्मो वः स्वं धर्मो नः स्वम् । समर्थ इति किम् । ओदनं पच तव भविष्यति । मम भविष्यति । प्लुत, अङ्ग कूज ३ इदानीं ज्ञास्यसि जाल्म । समर्थ इति किम् । *अङ्ग कूजसयमिदानीं ज्ञास्यति जाल्मः । पदग्रहणाद्वर्णविधिरसामर्थ्येऽपि भवति । तिष्ठतु दध्यशान त्वं शाकेन । तिष्ठतु कुमारीच्छत्रं हर देवदत्तेति । यत्वं द्वित्वं च भवति । एवं समासनामधातुकृत्तद्धितेषु वाक्ये व्यपेक्षा वृत्तावेकार्थीभावः । शेषेषु पुनर्व्यपेक्षैव सामर्थ्यं भवति । ननु च राज्ञः पुरुषमानयेत्युक्ते योऽर्थ आनीयते राजपुरुषमानयेत्यप्युक्ते स एव तत्कोऽत्र व्यपेक्षैकार्थीभावयोर्विशेषः । उच्यते । संख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं चयोगश्चेति । तत्र राज्ञः पुरुषः राज्ञोः पुरुषः राज्ञां पुरुषः इति वाक्ये संख्याविशेषो भवति । समासे न भवति । राजपुरुषः । वाक्ये ह्युपसर्जनानि विभक्तार्थाभिधायित्वात्संख्याविशेषयुक्तं स्वार्थं प्रतिपादयन्ति । समासेऽन्तर्भूतस्वार्थं प्रधानार्थमभिदधतीत्यभेदैकत्वसंख्यां गमयन्ति । संख्याविशेषाणामविभागेनावस्थानमभेदैकत्वसंख्या ॥ ' यथौषधरसाः सर्वे मधुन्याहितशक्तयः । अविभागेन वर्तन्ते तां संख्यां तादृशीं विदुः ' ॥ १ ॥ विभक्तिवाच्यैव तु संख्या वृत्तौ निवर्तते नामादिगम्या तु न निवर्तते । यथा द्विपुत्रः पञ्चपुत्र इत्यादौ नामार्थ एव संख्याविशेषः । तावकीनो मामकीन इत्यादेशाभिव्यङ्ग्यमेकत्वम् । शौर्पिकः मासजात इति *परिमाणस्वाभाव्यादेकत्वसंख्यावगमः । कारकमध्यं व्यञ्जनमध्यमित्यादौ मध्यान्यथानुपपत्त्या द्वित्वावगमः । यत्रापि वृत्तौ विभक्तेर्लुग् नास्ति दास्याःपुत्रः देवानांप्रियः आमुष्यायणः अप्सव्यः गोषुचरः वर्षासुज इति तत्रापि संख्याविशेषो नास्ति सामान्येन विशेषणमात्रप्रतीतेः । अत एव वृत्तौ संख्याभेदाभावात्स्वभावतो निवृत्ता विभक्तिर्लुप्ता

द्वितीयाद्यन्तानां विशेषणानां प्रथमान्तानां विशेष्याणां चेत्यर्थ ॥—द्रव्यमाकाङ्क्षतीति।द्रव्याश्रयो गुण इति गुणलक्षणात् ॥—अङ्ग कूजत्ययमिति । अत्र 'स्यादेः' साकाङ्क्षस्य—इत्यनेन सूत्रेणायमित्यनेन आकाङ्क्ष्यमाणस्य इदानीं ज्ञास्यतीत्यस्य वाक्यस्य भेदकत्वेनासामर्थ्यात् प्लुतो न भवति ॥—परिमाणस्वाभाव्यादिति । यद्यपि सूर्पाभ्यां सूर्पैर्वा क्रीत इति

*अन्वाख्यायते।अलुप्समासे तु शब्दान्तरं विभक्त्यन्तमतिरूपावयवमनेनोपायेन प्रतिपाद्यते।तथा वाक्ये व्यक्ताभिधानं भवति।ब्राह्मणस्य कम्बलस्तिष्ठति ।समासे पुन-
रव्यक्तं ब्राह्मणकम्बलस्तिष्ठतीति । सदिह्यतेऽत्र षष्ठीसमासो वा संबोधनं वेति।किंचित्पुनरव्यक्तं वाक्ये।यथार्धं पशोर्देवदत्तस्येति।पशुगुणस्य वा देवदत्तस्य यदर्धं यो
वा संज्ञीभूतो पशुस्तस्य यदर्धमिति । तच्च समासे व्यक्तम् अर्धपशु देवदत्तस्येति । तथा वाक्ये उपसर्जनविशेषणं भवति । ऋद्धस्य राज्ञः पुरुषः । समासे न भवति ।
राजपुरुषः । यथाहुः—' सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यत इति' । विशेषणयोगे हि सापेक्षत्वेनागमकत्वात्सामर्थ्यं न भवति । यत्र च काचिद्वि-
शेषणयोगेऽपि गमकत्वं तत्र भवत्येव समासः यथा देवदत्तस्य गुरुकुलम्, यज्ञदत्तस्य दासभार्या । यदाह—' संबन्धिशब्दः सापेक्षो नित्यं सर्वः प्रवर्तते । स्वार्थव-
त्सा व्यपेक्षास्य वृत्तावपि न हीयते ॥ १ ॥ तथा वाक्ये *चयोगो भवति स्वचयोगः स्वामिचयोगश्च । राज्ञो गौश्चाश्वश्च पुरुषश्च । चैत्रस्य मैत्रस्य मित्रस्य च गौः ।
समासे न भवति । राज्ञो गोश्वपुरुषाः । चैत्रमैत्रमित्राणां गौरिति । यदि समर्थः पदविधिः *कथमसामर्थ्ये सूर्यं न पश्यन्त्यसूर्यंपश्या राजदाराः, *पुनर्न गीयन्तेऽ-
पुनर्गेयाः श्लोकाः, श्राद्धं न भुङ्क्तेऽश्राद्धभोजी, अलवणभोजी, सर्वेश्चर्मणा कृतः सार्वचर्मीणो रथः, कृतः पूर्वं कटोऽनेनेति कृतपूर्वी कटम् इत्याद्या वृत्तयो
भवन्ति । *किं हि वचनान्न भवति ॥ १२२ ॥ ये तु शास्त्रे सूचिता लोकसिद्धाश्च न्याया न तदर्थं यत्नः क्रियते ॥ ॥ स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ १ ॥ सुस-
र्वार्द्धदिक्शब्देभ्यो जनपदस्य ॥ २ ॥ ऋतोर्वृद्धिमद्विधाववयवेभ्यः ॥ ३ ॥ स्वरस्य ह्रस्वदीर्घप्लुताः ॥ ४ ॥ आद्यन्तवदेकस्मिन् ॥ ५ ॥ प्रकृतिवदनुकरणम् ॥ ६ ॥

---

मासो मासा वा जातस्येति विग्रहे संख्याविशेषोऽस्ति तथापि वृत्तौ परिमाणस्याभाव्यादेकत्वमेव प्रतीयते ॥—अन्वाख्यायत इति । नहि विद्यमानेऽर्थे विभक्तेर्लुबन्वाख्यायते अपि तु संख्याभेदा-
भावात् कोऽर्थः एकत्वद्वित्वबहुत्वाभावात्स्वत एव निवृत्ता विभक्ति ' ऐकार्थ्ये ' इति लुपान्वाख्यायते ॥—चयोगो भवतीति । वाक्ये भिन्नत्वात्पदार्थानां भेदानिबन्धनसमुच्चयद्योतनाय चशब्द
प्रयुज्यते।वृत्तौ तु समूहलक्षणैकार्थप्रादुर्भावात् भेदस्य निवर्तनात् द्योत्यार्थाभावात् द्योतकस्य चशब्दस्य निवृत्ति ॥—कथमसामर्थ्ये इत्यादि।अत्र हि सूर्यकार्मिकया दर्शिक्रियया नञ संबन्ध न सूर्यस
सया ॥—पुनर्न गीयन्त इति । गानेन नञ सबन्धो न पुन शब्दार्थेन॥ अश्राद्धभोजीत्यादौ तु भुजिना नञ सबन्धो न श्राद्धादिना श्राद्धादिभोजननिषेधावगमात्।एवं सार्वचर्मीण कृतपूर्वीत्यत्र
सर्वशब्दस्य कृतशब्देन कृतशब्दस्य कटशब्देन च सबन्धो न चर्मपूर्वशब्दाभ्यामिति ॥—किं हि वचनान्न भवतीति । गमकत्वात् 'नञ्' इत्यनेनासामर्थ्येऽपि बाहुलकात्प्रवर्ततीत्यर्थ ॥इति व्याकर-
णस्य सारोद्धारप्रकरणे सप्तमस्याध्यायस्य चतुर्थ पाद समाप्त ॥ आसीद्वादिद्विरदपुतनापाटने पञ्चवक्त्रश्रान्द्रे गच्छेऽच्छतरधिषणो धर्मसूरिर्मुनीन्द्र । पदे तस्याजनि जनमनोऽनोकहानन्दकन्द सूरि
सम्यग्गुणगणनिधि ख्यातिभाग्रत्नसिंह ॥ १॥ यस्योपरागसीमायमुदयः परभागभाग् । देवेन्द्रसूरिस्तत्पदे जज्ञे नव्यो नभोमणि ॥ २ ॥ इतश्च, निर्वीराधनमुक्तिशास्त्ररचनाभीयाबधोरसर्पणाश्रीकोमार-
विहारमण्डितमहीभूपप्रबोधाधिका । क्षीरोदोदधिमुद्रितेऽवनितले यस्योर्जिता केलय सोभूत्सीर्शकरानुकारिरचन श्रीहेमचन्द्रो गुरु ॥ ३ ॥ किंच, भूपालमौलिमाणिक्यमालालालितशासन ।
दर्शनषट्कनिस्तन्द्रो हेमचन्द्रो मुनीश्वर ॥४॥ तेषामुदयचन्द्रोऽस्ति शिष्य सख्यावता वर ॥ यावज्जीवमभूत्स्य व्याख्या ज्ञानामृतप्रपा ॥५॥ तस्योपदेशाद्देवेन्द्रसूरिः शिष्यलवो व्यधात् ॥ न्याससारस-
मुद्धार मनीषी कनकप्रभः ॥ ६ ॥ तद्वितावचूर्णिका समाप्ता ॥ ॥ इति लघुन्यासप्रशस्तिः ॥

